न्तेवासी सुश्रुतो वा तादात्विकं प्रसिद्धतरमाचार्यं धन्वन्तरिं दिवोदासं च तत्रायुर्वेदकर्तृषु कथं नाम्नाऽपि नोदलेखिष्यत् । सुश्रुतसंहिताया निबन्धा सुश्रुतोऽपि अश्वशास्त्रविभागीयत्वेऽपि वैद्यके एकप्रस्थानप्रायतया तथाप्रसिद्धं स्वस्य पितरमाचार्यं वा शालिहोत्रं किमिति कापि प्रसङ्गेनापि न निरदेक्ष्यत् । आचार्यान्तरवैद्यकविषयैरपि सम्भृते पश्चात्सम्बद्धे उत्तरतन्त्रेऽपि सुश्रुतेन सौश्रुतेन संस्कर्त्रा वा किमिति तन्नाम नोल्लिखितं स्यात् । तेन शालिहोत्रस्योपदेश्यः पुत्रः सुश्रुतः, धन्वन्तरेरुपदेश्यो विश्वामित्रपुत्रः सुश्रुतश्च विभिन्नौ दृश्येते । दुर्लभगणकृते सिद्धोपदेशसङ्ग्रहनामकेऽश्ववैद्यकग्रन्थे—

"शालिहोत्रेण गर्गेण सुश्रुतेन च भाषितम् । तत्त्वं यद्वाजिशास्त्रस्य तत्सर्वमिह संस्थितम् ॥"

इति निर्देशेन सुश्रुतस्याप्यश्ववैद्यकोपदेष्टृत्वमायाति, परमाग्नेयपुराणोक्त्या धन्वन्तरिशिष्यस्य सुश्रुतस्याप्यश्ववैद्यकविषयेनोपलम्भादेतन्निर्दिष्टः सुश्रुतः शालिहोत्रीयो धान्वन्तरो वेति स्पष्टं न परिच्छिद्यते । अस्तु वा दुर्लभगणोक्तः सुश्रुतः शालिहोत्रगर्गसाहचर्याच्छालिहोत्रीयः, तदुक्त्या एतदीयोऽपि कश्चनाश्वशास्त्रग्रन्थः स्यात्, परमस्य शालिहोत्रपुत्रस्य सुश्रुतस्य ग्रन्थो न कोऽपि साम्प्रतमुपलभ्यते, तदीयस्य ग्रन्थस्योल्लेखो वचनस्योद्धारोऽपि, किं बहुना नाममात्रमपि गणकृतग्रन्थं विना नान्यत्राश्वायुर्वेदीयग्रन्थेष्वप्युपलभ्यते । ततस्तस्य सुश्रुतस्य विषये सम्प्रति किमपि वक्तुं न शक्यते । धान्वन्तरसुश्रुतस्य तु ग्रन्थोपलम्भतः, ग्रन्थान्तरनिर्देशतः, आचार्यान्तरोपग्रहणतः, शिलालेखाद्युल्लेखतश्च यथा प्रसिद्धिरस्ति, न तथा तस्य शालिहोत्रपुत्रस्य सुश्रुतस्य प्रसिद्धिर्दृश्यते । अतो यत्र सुश्रुतस्य कीर्तनं तत्र साधकबाधकान्तरोपलम्भमन्तरा शल्यप्रस्थानाचार्यो धान्वन्तरः सुश्रुत एव बुद्धावुपतिष्ठते ॥

अनयोः सुश्रुतयोरैक्यं मनसि कृत्वा शालिहोत्रलेखतः सुश्रुतस्य शालिहोत्रपुत्रत्वं नकुलकृतेऽश्वचिकित्सिते—

"पायाद्वः स तुरङ्गघोषतनयः श्रीशालिहोत्रो मुनिः ।"

इति प्रारम्भपद्यलेखदर्शनेन तुरङ्गघोषशब्देनाश्वघोषमुपादाय शालिहोत्रस्याश्वघोषपुत्रत्वं च सङ्गृध्य तुरङ्गघोषो हयघोषोऽश्वघोषश्चैकः, तत्पुत्रः शालिहोत्रः, तत्पुत्रः सुश्रुत इति कनिष्कसामयिकादश्वघोषादपि शालिहोत्रसुश्रुतयोरर्वाग्भावसाधकं व्यूहनकौशलमपि कस्यचिद्दृश्यते । परं नेपालदेशोपलब्धेऽश्वचिकित्सितस्य पुस्तकद्वये मङ्गलाचरणोक्तं तत्पद्यमेव नास्तीति मूले कुठारः, अस्तु वा तत्पद्यं, तथाऽपि शालिहोत्रग्रन्थेऽश्वचिकित्सितादौ च ब्रह्मणा इन्द्रेण वा सह सम्बद्धो मूलसंहिताकर्तृतया निर्दिष्टः शालिहोत्रः प्राचीन आचार्यः कीर्त्यते, शालिहोत्रग्रन्थे इक्ष्वाकुसगरयोः शालिहोत्रसकाशे प्रश्नस्य निर्देशोऽपि प्राक्तनत्वं दर्शयति । शालिहोत्रस्य न केवलं पञ्चतन्त्रादावेवोल्लेखोऽपि तु महाभारतेऽपि वैनपर्वणि अश्वहृदयविदो नलस्योपाख्याने तदुल्लेखोऽस्ति । तत्राश्वकुलवित्त्वेन विशेषणात् प्रकरणवशाच्च तत्रोल्लिखितः शालिहोत्रः स एवायमाचार्य इति निश्चीयते । उपलभ्यमाना शालिहोत्रसंहिता शालिहोत्रस्यैव हस्तलेखरूपा, किंवा संस्कारेण रूपान्तरमापन्ना, अथवा तदीयसम्प्रदायपरम्परागतोपदेशरूपेति त्वन्यदेतत्, परमश्वशास्त्रस्य परमाचार्यः शालिहोत्रः प्राचीनतर इत्यत्र न संशयः । ईदृशस्य प्राचीनस्य मुनेर्युधिष्ठिरभ्रात्रा नकुलेन स्वग्रन्थे मङ्गलाचरणे आचार्यभावेन संमाननमपि युज्यते, पूर्वापरग्रन्थसंगमनं च भवति । ईदृशं पुरासमयात् प्रसिद्धं प्राचीनमाचार्यं विहाय तुरङ्गघोषशब्देन अश्वघोषं कल्पयित्वा शालिहोत्रसुश्रुतयोस्तत्पुत्रपौत्रभावकल्पनमितिहासमेव विप्लावयति । अश्वशास्त्रस्य प्रथमप्रवर्तकः शालिहोत्रः, स चेदश्वघोषपुत्रस्तर्हि कनिष्कोत्तरमेवास्य प्रस्थानस्योदयेन भवितव्यं, तथाचाभ्युपगते कौटिलीयेऽर्थशास्त्रेऽपि अश्वानां शालानिर्माणमाहारकल्पना कुलजात्युल्लेखश्चैवमादयो बहवः शालिहोत्रीयविषयाः संक्षेपेण निर्दिष्टा दृश्यन्ते, अश्वानां चिकित्सका अपि गृहीताः सन्ति, तेषां तत्र कुत उद्गमो वक्तव्यः । अशोकनृपतिना भारतीयभैषज्यमुपादाय स्वदेश इव देशान्तरेष्वपि शिलालेखेन प्रमाणीकृतमश्वादिपशुचिकित्सालयानामुद्घाटनं कं नाम विद्याधारमाश्रयेत । अश्वघोषो बुद्धसाम्प्रदायिकः प्रधानाचार्य इति स्पष्टमेव । शालिहोत्रलेखेऽश्वाभिषेकप्रकरणे श्रौतानामेव महर्षीणां नामानि, ब्रह्मघोषः, श्रौतं यज्ञविधानं, वाजिनां देवरूपत्वनिर्देशोऽपि श्रौतस्मार्तदेवानामेवोल्लेखश्च दृश्यमानः शालिहोत्राचार्यस्य वेदमार्गानुयायित्वमेव निश्चाययति । शालिहोत्रीये लेखे सुश्रुतसंहितायामपि बौद्धच्छायाया अनुपलम्भोऽनयोरश्वघोषस्य बुद्धाचार्यस्यापत्यत्वं व्याघट्टयति । अश्वघोषः साकेतवर्ती, शालिहोत्रः पश्चिमोत्तरप्रदेशीय इत्यनयोः प्रदेशविभेदोऽपि विसंवादमेव दर्शयति । अश्वघोषपुत्रतया कल्पितस्य शालिहोत्रस्य पुत्रेण सुश्रुतेन सह शल्यप्रस्थानाचार्यस्य सुश्रुतस्याभेदेऽभ्युपगम्यमाने कनिष्काश्वघोषयोः सामयिकेन नागार्जुनेन तत्पौत्रतया सम्भावितस्य सुश्रुतस्य सुप्रसिद्धभिषक्त्वेनाचार्यदशा महिमगानं कथं समर्थ्येत, नागार्जुनेन सुश्रुतसंहितायाः संस्करणस्य प्रवादोऽपि विपर्यस्येत् । द्वयोः सुश्रुतयोरभेदे कनिष्कसामयिकत्वे च सति पाणिनिवार्तिकभाष्यकाराणां सुश्रुतशब्दोपादानं किमालम्बनमासादयेत् । तेन न किञ्चिदेतदिति विरम्यते ॥

---

१ शालिहोत्रोऽथ किन्तु स्याद्धयानां कुलतत्त्ववित् । ( वनपर्वणि ७२ अध्याये )

२ कौटिलीये अश्वाध्यक्षप्रकरणे ३० अध्याये, साङ्ग्रामिकेऽपि ३७ पृष्ठे हस्त्यश्वयोः कुलजात्युल्लेखोऽस्ति.

अन्ततो विक्रमाब्दारम्भात् पूर्वं षष्ठशताब्द्यां सुश्रुतस्य समयं सोपपत्तिकं साधयतो हार्नले( A. F. Rudold Hoernel ) नामकस्य पाश्चात्यविदुषो लेखादपि ततोऽनर्वाचीनत्वं सिध्यति । केचेन यथावदनिश्चीयमानोऽपि सुश्रुतस्य समय ईशवीयाब्दोपक्रमात् षट्शताब्दीपूर्वं एव नतु ततोऽर्वाचीन इति; अन्ये सुश्रुते सप्तविधकुष्ठनिरूपणं दृश्यते, यस्य रोगस्य भारतीयैश्चीनदेशीयैरपि २५०० वर्षपूर्वं ज्ञानमुपलब्धमासीदिति सुश्रुतस्योपसार्धद्विसहस्रवर्षपूर्वत्वं सम्भाव्यते इत्यपि निर्दिशन्ति । सुश्रुतसंहिताया लेटिनभाषायामनुवादको ह्यार्सलर ( Hessler ) नामकः पाश्चात्त्यविद्वांस्तथा श्रीयुतगिरीन्द्रनाथमुखोपाध्यायोऽपि ईशवीयाब्दारम्भादुपसहस्रवर्ष( B. C. 1000 )पूर्वतनः सुश्रुत इति निर्दिशति ॥

एवंविधैर्विवेकविदुषामुपन्यासैर्विचारदृष्ट्या च सुश्रुतसंहितायाः पूर्वो भाग अन्ततो गत्वाऽपि इतः २६०० वर्षपूर्वोऽवगम्यते ॥

सुश्रुते पूर्वाचार्येषु निर्दिष्टः सुभूतिगौतमः शाक्यसिंहस्य शिष्य इति बुद्धोत्तरभावित्वं सुश्रुतस्येति केचिन्निदर्शयन्ति । अष्टसाहस्रिकाशतसाहस्रादिके बौद्धग्रन्थे सुभूतेर्नाम उपलभ्यते नाम । परं तत्र आयुष्मत्सुभूतिस्थविरसुभूतिशब्दैरेव व्यवहारः कृतोऽस्ति, नतु सुभूतिगौतमस्य तत्रोल्लेखो दृश्यते । बौद्धग्रन्थेषु सुभूतेरध्यात्मविषय एवोल्लेखोऽस्ति, वैद्यविद्याचार्यत्वं न कुत्रापि निर्दिष्टमिति सुश्रुतोक्तः सुभूतिगौतमो न बौद्धोऽन्य एव प्राचीनो वैद्याचार्यः । सुभूतिगौतमस्य बौद्धत्वे तमपि पूर्वाचार्यदृशा पश्यतः सुश्रुतस्य लेखे बौद्धसंप्रदायच्छायाः कथं नोपलभ्येरन्? । प्रत्युत अत्र बौद्धच्छायानुपलम्भ एवास्य सुभूतेरबौद्धत्वं द्रढयति । स्थविरसुभूतेर्व्याकरणमुपलभ्यते इति नामसाम्यमात्रेण सोऽपि सुभूतिः प्राचीनो बुद्धस्य प्रधानशिष्य इति वक्तुं शक्येत किमु? ॥

वैद्यकटीकाकृद्भिः क्वचिद्विहितस्य वृद्धसुश्रुतोक्तवचनोद्धारस्य दर्शनेन तदुद्धृतवचनानां वर्तमानसुश्रुतसंहितायामनुपलम्भेन औपधेनवमौरभ्रमिति सुश्रुतोक्तपद्ये सौश्रुतस्य पृथङ्निर्देशेन च वर्तमानसुश्रुतसंहितातः पृथगेव वृद्धसुश्रुतस्य सौश्रुततन्त्रं पूर्वमासीदिति कथयितुमपि सुश्रुतसंहितायां वृद्धसुश्रुतस्य पूर्वाचार्यत्वेनानिर्देशात्, महाभारतादावपि विश्वामित्रपुत्रत्वेन सुश्रुतस्यैवोल्लेखात्, महाभाष्यकारनावनीतकनागार्जुनवाग्भटज्वरसमुच्चयादिलेखेऽपि सुश्रुतनाम्नैव निर्देशात्, एतदीयवचनानामेव तेषु संवादाच्च, आरब्यादिदूरदेशान्तरेष्वप्यस्यैव सुश्रुतस्य संहिताया अनुवादात् प्रचाराच्च, कम्बोडियादिगतयशोवर्मशिलालेखेऽपि सुश्रुतस्यैवोल्लेखात्, वृद्धसुश्रुतनाम्नोपलब्धेषु वचनेषु प्राचीनरचनारूपप्रौढेरदर्शनेन, तद्वचनविषयतो वृद्धसुश्रुतस्य शल्यप्रस्थानाचार्यत्वानिर्धारणात्, सुश्रुतसंहिताया उपक्रमे काशिराजं दिवोदासमुपेतानामौपधेनवैतरणौरभ्रपौष्कलावतकरवीर्यगोपुररक्षितसुश्रुतप्रभृतीनामन्तेवासितया निर्देशोत्तरम्—

"औपधेनवमौरभ्रं सौश्रुतं पौष्कलावतम् । शेषाणां शल्यतन्त्राणां मूलान्येतानि निर्दिशेत् ॥"

इति औपधेनवौरभ्रपुष्कलावतसुश्रुताचार्यप्रणीततन्त्राणि तदीयार्थकप्रत्ययान्तैः सौश्रुतादिपदैः प्रदर्श्य एतेषां सर्वेषु शल्यतन्त्रेषु प्राधान्यनिर्देशेन तन्निर्दिष्टस्य सौश्रुतस्यान्यदीयपूर्वतन्त्रत्वे तन्न्यायेन औपधेनवादितन्त्राणामपि औपधेनवाद्याचार्यतन्त्रेभ्यः पृथक्त्वेन पूर्वसिद्धानां वक्तव्यत्वापातात्, कौटिलीयादिप्राचीनग्रन्थेष्वपि स्वीयग्रन्थे स्वीयनामोल्लेखदर्शनस्य प्रायिकतया स्वीयसौश्रुततन्त्रस्य औपधेनवादितन्त्राणामिव प्राधान्यावबोधाय निर्देशौचित्याच्च, टीकाकारैरर्वाचीननिबन्धकारैश्च क्वचन गृहीतो वृद्धसुश्रुतस्तु कतमः, कदा सम्भूतः, कश्चास्य ग्रन्थः, कस्मिन्प्रस्थाने तस्याचार्यत्वमिति सर्वैस्यास्य निलीनतया पूर्वोद्दिष्टं प्रसिद्धं दिवोदासान्तेवासितया सुश्रुतं सुश्रुतं परित्यज्यापरिच्छेद्यस्य वृद्धसुश्रुतस्य शल्यप्रस्थाने पूर्वाचार्यत्वसाधकं दृढं साधनान्तरमपेक्ष्यते । उपलभ्यमानसुश्रुतसंहितायां क्वचनार्वाचीनविषयप्रतिभासोऽपि संस्करणवशेन प्रतिफलितः, क्वचन पाठभेददोषोऽपीत्यत्र संस्करणप्रकरणे दिग्दर्शनं विधास्यते ॥

वैदिक्यामवस्थायामार्यनिवासस्थलस्य परिस्थित्यनुसारेण विभक्तानां वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिराख्यानां षण्णामृतूनामुल्लेखो वैदिके साहित्ये दृश्यते । एषु 'वसन्तमन्यं वोपक्रम्य जात एक ऋतुपर्यावर्तः संवत्सरात्मको भवति,

१ Studies in Medicine of Ancient India Part I.
२ History of Indian Medicine III P. 576. by G. N. Mukhopadhyaya.
३ „ „ „ P. 578.
४ „ „ „ P. 578.
५ Surgical Instruments of the Hindus. by G. Mukhopadhyaya P. 15.
६ यजुर्वेदे—वसन्तेन ऋतुना इत्यादि ( २१. २३–२८ ) मन्त्रेषु, वसन्तायेति ( २४. २० ) मन्त्रे च ।
सामवेदे—वसन्त इन्नुरन्त्यो ग्रीष्म इन्नुरन्त्यः । वर्षाण्यनु शरदो हेमन्तशिशिर इन्नुरन्त्यः ॥ ( ६।१३।२ )

प्राचीनपरिस्थितौ कल्पितोऽयमृतुविभागः पश्चादप्यनुवर्तमानो 'वसन्तादिभ्यष्ठक् ( ४. २. ६३ )' इति सूत्रे पाणिनिनाऽपि गृहीतः, अद्यापि लोके प्रचलति च । सुश्रुतसंहिताया ऋतुचर्याध्याये उत्तरायणादिमारभ्य शिशिरादयो हेमन्तान्ताः प्रचलितप्रक्रियानुरूपाः षडृतवः पूर्वं निर्दिष्टाः, तदनुपदमेव शीतोष्णवर्षारूपसमयभेदेन त्रिदोषाणामुपचयप्रकोपसंशमनावस्थामुपादाय अस्मिन्समये उपचयप्रकोपौ भजत्ययं दोषोऽस्मिन्समये संशमनीय इति भैषज्यप्रक्रियोपयोगिविज्ञानाय इह त्वित्यादिना दक्षिणायनोपक्रमं विभागान्तरमपि पुनर्दर्शितम् । तत्र वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृडाख्यानां षडृतूनामुल्लेखेन प्राथमिक्यां प्रक्रियायां चतुरो मासान् शीतस्य, मासद्वयं वृष्टेः, द्वितीयप्रक्रियायां तु मासद्वयं शीतस्य, चतुरो मासान् वृष्टेः समय इति विशेष आयाति । द्वितीया प्रक्रिया भैषज्यविज्ञानोपयोगायोपात्ता दृश्यते । काश्यपीये ऋतुविमानग्रन्थस्य खण्डितत्वेऽपि आत्रेयभेडसंहितयोरपि ऋतुविमाने भैषज्यसंबद्धा द्वितीयैव प्रक्रिया गृहीताऽस्ति । एवञ्चायुर्वेदीयपद्धतौ भैषज्यदशा हिमशिशिरयोरभेदं प्रावृड्वर्षयोर्विभेदं भजत ऋतुविशेषक्रमस्याचार्यैरुपग्रहणमवबोधयितुम् "इह तु" इति पदेनायुर्वेदीयं पन्थानमुद्दिश्य स्वदेशानुरूपो विभागः सुश्रुते दर्शितः । इदम्परत्वमेवेहशब्दस्य केनचिट्टीकाकृताऽभ्युपगतं च । परं शास्त्रविशेषे सार्वदेशिकस्यैकरूप्येण ऋतुविभागस्य बोधने न सामञ्जस्यमायाति । न हि भारतेऽन्यत्र वा सर्वत्रैकरूप ऋतुविभागः । देशभेदेन शीतोष्णदशयोर्विभेदादार्तवलक्षणानि बहुशो भिद्यन्ते । सिंहल( सीलोन )प्रदेशे प्रायः सर्वदा समया शीतोष्णदशया समप्रायाः षडृतवो भवन्तीति नैवंभावः सर्वत्र । क्वचन शैत्यमतिशयानं बहुसमयं हृदयमाकम्पयति, क्वचनौष्ण्यमभिवृद्धं बहुकालं सर्वतस्तापयति, क्वचन वृष्टिर्बहुलतां वहति । मद्रासादिप्रदेशेषु मार्गशीर्षपौषयोराम्रमञ्जर्य उद्गच्छन्ति, फाल्गुने चैत्रे तत्फलानि पच्यन्ते । यथायथोत्तरीयः पर्वतीयः प्रदेशस्तथा तथा पश्चाद्भावः । येन नेपाले पार्वतप्रदेशे वैशाखे आम्रमञ्जर्युद्भवः, अन्ततो भाद्राश्विनयोस्तत्फलानि पच्यन्ते । एवमेव शाकपुष्पफलौषध्यादीनामपि देशभेदेन विभिन्नः समयोऽनुभूयते । प्रदेशविशेषितः शीतोष्णजलवाय्वादीनां परिवृत्त्या यत्र यादृशी परिस्थितिस्तदनुसारेणैव गुणागुणान् विज्ञाय भिषग्भिः प्रवर्तनीयं भवति । तेन "इह तु" इत्यनेन तदुपदेशस्थलमवबोधयितुं युज्यते । पूर्वप्रचलितां पद्धतिमादौ निर्दिश्य इह त्विति उपदेशस्थलविशेषे प्रावृड्वर्षारूपवृष्टिसमयद्वैगुण्यप्रदर्शनेन शीतसमयस्य द्वैमासिकत्वं वर्षासमयस्य चातुर्मास्यत्वं तत्र बोध्यते इत्येवावगन्तुं युज्यते । स्थानभेदेन वर्षासमयस्य तारतम्यमप्यनुभूयत एव । भारतेऽपि ग्रीष्मान्ते वङ्गोपसागरस्य आरब्योपसागरस्य वा जलं निपीय प्रस्थितो जलदो वायवीयां गतिमनुगच्छँस्तत्तत्प्रदेशेषु क्रमशो वर्षन् स्वीययात्रायां हिमाद्रेरन्येषां वोच्चगिरीणां शिखरैः प्रतिरुद्धपराग्गतिश्चिरापुञ्ज्यादिप्रदेशेष्विव स्थाने स्थाने चिरं बहुलतया च जलं वर्षति । यथा यथा तथाभावः तथा तथा वृष्टिसमयस्य बाहुल्यमुपजायते इति प्राकृतिकपरिस्थित्यनुरूपो वैज्ञानिकानां सिद्धान्तः । सौश्रुते तन्त्रे भैषज्यानुकूले ऋतुविभागे वर्षाप्रावृषोः स्वरूपविशेषः पृथक्तया प्रदर्श्यते । काशीप्रदेशे तु वर्षासमयस्य द्वैगुण्याभावेन वर्षाप्रावृड्घटितो द्वितीयो विभागोऽननुकूलतां वहन् इहेति तदनुरूपमेव प्रदेशान्तरं दर्शयदवगमयति । सुश्रुतटीकायां काश्यपवचनत्वेन निर्दिष्टाभ्यां—

"भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे जलम् । तेन प्रावृषवर्षाख्यौ ऋतू तेषां प्रकल्पितौ ॥
गङ्गाया उत्तरे कूले हिमवद्धिमसङ्कुले । भूयः शीतमतस्तेषां हेमन्तशिशिरावृतू ॥"

इति श्लोकाभ्यां गङ्गाया उत्तरतो हिमालयपरिसरप्रदेशे हिमशिशिरयोः, गङ्गाया दक्षिणतः प्रदेशे प्रावृड्वर्षयोः परिस्थितिर्बोध्यते । अत्र गङ्गापदेन वाराणसेयगङ्गोपादाने तु तद्दक्षिणोत्तरयोरेवं विभेदस्य दुर्वचतया तत्र गङ्गापदेन गङ्गाद्वारादुपरिवर्तिनीं गङ्गामादाय तत उत्तरतो हिमसमयद्वैगुण्यं, तद्दक्षिणकूलभागे वृष्टिसमयद्वैगुण्यं प्रदर्शितं सम्भवति । एतत्समानन्यायेन इह त्विति निर्दिष्टं वृष्टिसमयद्वैगुण्योपलक्षितं स्थलं गङ्गादक्षिणविभागीयं स्थानं स्यादिति सम्भाव्यते ॥

यद्यपि भावप्रकाशकृता काश्यां दिवोदाससकाशाद्वैद्यकविद्याध्ययनाय विश्वामित्रेण पुत्रस्य सुश्रुतस्य मुनिसूनुशतेन साकं प्रेषणस्य निर्देशेन, सुश्रुतसंहितायामाश्रमस्थं काशिराजं दिवोदासमुपेत्य सुश्रुतादीनां प्रश्नस्योपदेशलाभस्योल्लेखनेन च काश्यां क्वचनाश्रमे सुश्रुतस्योपदेशनमपि सम्भवति । परं तथात्वे इह त्विति पश्चान्निर्दिष्टस्य चातुर्मास्यवृष्टिमतो देशस्य काश्यामननुकूलतया, महाभारतादिगतदिवोदासकथायां हैहयैराक्रान्तस्य दिवोदासस्य राज्यभ्रंशे भरद्वाजाश्रमोपगमस्य लाभेन च राज्यभ्रंशेन मुन्याश्रमोपगमे, किंवा पूर्वेषां राज्ञामन्तिमे वयसि वानप्रस्थचर्याया दर्शनेन वानप्रस्थमुपादाय तपोवनोपगमे, वृष्टिसमयप्राचुर्यवति गङ्गाद्वारदक्षिणप्रदेशे दिवोदासेन सुश्रुतस्योपदेशनं विहितं किलेति

१ विश्वामित्रो मुनिस्तेषु पुत्रं सुश्रुतमुक्तवान् । वत्स वाराणसीं गच्छ त्वं विश्वेश्वरवल्लभाम् ॥
तत्र नाम्ना दिवोदासः काशिराजोऽस्ति बाहुजः । स हि धन्वन्तरिः साक्षादायुर्वेदविदां वरः ॥
पितुर्वचनमाकर्ण्य सुश्रुतः काशिकां गतः । तेन सार्धं समध्येतुं मुनिसूनुशतं ययौ ॥ ( भावप्रकाशे )

सम्भाव्यते । तेन इह स्थिति आश्रमस्थमिति च समन्वेति । आश्रमस्थलमुपेत्योपदिशतोऽपि दिवोदासस्य पूर्वाधिपत्यमुपादाय सुश्रुते काशिराजत्वेन निर्देशनमपि युज्यते । महाभाष्यकृता शाकपार्थिवादि( २. ३. ७० )गणोदाहरणे 'कुतपवासाः सौश्रुतः कुतपसौश्रुतः' इति निर्दिश्य सुश्रुतसम्बन्धिनां सौश्रुतानां कम्बलरूपकुतपप्राधान्योल्लेखेन सौश्रुतानामपि हिमवद्विप्रकृष्टदेशवासित्वं ज्ञायते । प्रचण्डग्रीष्मोष्मणा भर्जनकपालायितायां वाराणस्यां वसतः कुतपप्राधान्यवादे न नाम किमपि यौक्तिकमालम्बनं भवेत् ॥

अत्रैवमृतुविभागद्वयोल्लेखो गणितप्रक्रियया संहितानिर्माणस्य संस्करणस्य च १५०० वर्षान्तरितं कालभेदं व्यनक्तीति श्रीयुतस्य एकेन्द्रनाथघोषमहाशयस्य विचारविशेषो दृश्यते । पूर्वोपदर्शितरीत्या बहुपुरुषानन्तरितानां धन्वन्तरिदिवोदाससुश्रुतानां तु नैतावत्समयान्तरालं सम्भवति । सुश्रुतानुयायिना सौश्रुतेनान्येन वा केनचित्पश्चात्संस्करणे इदं संभवति । परमुत्तरतन्त्रसंहिताया वर्तमानसुश्रुतसंहिताया एव सप्तमाष्टमशताब्द्योः आरब्यादिदेशान्तरेष्वप्यनूदिततया, कम्बोडियागतयशोवर्मशिलालेखेऽप्युल्लेखेन तावद्दूरदेशान्तरेष्वपि प्रचलितुं कालविशेषस्याप्यपेक्षिततया, वाग्भटज्वरसमुच्चयादिलेखेष्वप्युत्तरतन्त्रसहिताया एवास्याः संवादेन च नागार्जुनविहितसंस्कारप्रवादाभ्युपगमेनापि संस्कारनिष्पन्नैतत्स्वरूपस्थितेरन्ततो गत्वा सप्तदशाष्टादशशतवर्षपूर्वत्वनिश्चयेन तदुपरिगणितप्रक्रियागतपञ्चदशशतवर्षयोजने मूलसंहिताया द्वात्रिंशच्छतवर्षप्राग्भाव आयाति ॥

धन्वन्तरेर्दिवोदासस्य, वार्योविदस्य वामकस्यापि काशीपतित्वेन निर्देशादीदृशैर्बहुभिर्वैद्याचार्यैः राजर्षिभिः काश्यां पुराकाले वैद्यविद्यायाः प्रतिष्ठापनमवगम्यते । बुद्धकालिकस्य काशीयुवराजस्य ब्रह्मदत्तस्यायुर्वेदविद्याध्ययनाय तक्षशिलागमनस्य जातकग्रन्थे निर्देशोपलम्भेन पूर्वपरम्परानुवृत्तामायुर्वेदविद्यां रक्षितुं काशिराजकुले चिरकालमनुरागोऽवगम्यते । औपधेनवौरभ्रसौश्रुतपौष्कलावतानां चतुर्णां सुश्रुते समप्राधान्यनिर्देशेन पूर्वपुरुषीयं सौश्रुतमौपधेनवादिकं वा कतमत्तन्त्रं तत्र प्रसृतमासीदिति विशेषोल्लेखानुपलम्भेऽपि नागार्जुनभाष्यकारादिभिः सुश्रुतसौश्रुतानां विशेषतो ग्रहणेन औपधेनवादीनां नाम्नाऽप्यनिर्देशेन च सौश्रुतः सम्प्रदायः पश्चिमदिग्भागेऽपि विशेषतः पूर्वप्रदेशे प्रचलित आसीदित्यूहितुं शक्यते । पश्चिमप्रदेशे कायचिकित्साप्रस्थानं, काश्यादिपूर्वप्रदेशेषु सौश्रुतं शल्यप्रस्थानं प्रचलितमासीदिति तु नियन्तुं नैव शक्यते । काशिस्थधन्वन्तरिसम्प्रदायेऽप्यष्टप्रस्थानोल्लेखो दृश्यते । "विविधानि शास्त्राणि भिषजां प्रचरन्ति लोके" (पृ. २५७) इत्यात्रेयोऽपि सर्वतो नानाविधभैषज्यविद्यायाः प्रचारं स्वमुखेनोद्गिरति । चरकसंहितालेखात् पाञ्चालकाम्पिल्यादिषु, भेडलेखाद्गान्धारेषु, काश्यपलेखाद्गङ्गाद्वारकनखलादिष्वायुर्वेदविद्योपदेशस्य दर्शनेन तत्रापि सा विद्या प्रतिष्ठिता दृश्यते । तेन गान्धारादारभ्य, न केवलं गान्धारादपि तु बाल्हीकभिषजः काङ्कायनस्यापि तदात्वे उपलम्भेन बाल्हीकात् काशीपर्यन्तं पश्चिमोत्तरप्रदेशेषु भैषज्यविद्यायाः प्रचारः समुन्नतिश्च पूर्वमासीदित्यनुमातुं शक्यते । परं काशीयुवराजेन ब्रह्मदत्तेन तक्षशिलां गत्वा वैद्यविद्याया अध्ययनस्य जातकग्रन्थात्, मगधाद्विर्गतेन बुद्धसामयिकेन जीवकेन सन्निकृष्टां काशीमुपेक्ष्य तक्षशिलामुपेत्य भैषज्यविद्यायां विशेषवैदुष्यस्य संपादनस्य, ततोऽधीत्य निवृत्तेन तेन जीवकेन विद्यां लब्ध्वा राजपदस्थस्य ब्रह्मदत्तस्य समये कस्यचिच्छ्रेष्ठिपुत्रस्योदरं विदार्य काश्यां शस्त्रचिकित्सयोल्लाघनस्य, अन्येषामपि बहुशो रोगिणां तत्र तत्र शस्त्रचिकित्सया कायचिकित्सया च जीवकस्य ख्यातेश्च महावग्गलेखतोऽवगमेन, जातकग्रन्थेभ्यो देशदेशान्तरतोऽप्यधिजिगमिषूणां तत्रोपगमवृत्तोपलम्भेन च विद्यान्तराणामिव भैषज्यविद्यायाः कालक्रमेण बुद्धसन्निकृष्टसमये काश्यपेक्षया शल्यप्रस्थानीयविद्याया अपि तक्षशिलादिषु विज्ञानगौरवं प्रतीयते । काश्यां पश्चात् समये समये राज्योपप्लवस्येतिहासतोऽप्यवगमेन समयवशाद्ध्रासः, आचार्यविशेषैश्चर्चाबाहुल्येन तक्षशिलादिष्वतिशयस्याधानमपि सम्भवति । अन्ततो गत्वा अशोकनृपसमये स्वदेश इव विदेशपर्यन्तमपि चिकित्सालयादीनामुद्घाटनेनेयं भैषज्यविद्या दूरदूरं प्रससार च । परं तादृशे विद्यापीठे तक्षशिलादिपरिसरप्रदेशेऽपि पश्चात्समयान्तरे विद्या ह्रासमुपजगाम । तत्रापीतिहासलभ्येन राज्यविप्लवादिनैव हेतुना भवितव्यम् । तथैव बुद्धसमये तक्षशिलापेक्षया काश्यां तस्यां विद्याया ह्रास इवानुभूयते ॥" ( काश्यपसंहिताया उपोद्घाते ग्रन्थपरिचयसहिते आचार्यपरिच्छेदे पृ. ६३-७७ )

सुश्रुतसंहितायाः स्थूलकालनिर्णयेऽस्त्येकं साधनम् । भारतवर्षे रविसोमभौमादिवारगणनाप्रचारात् पूर्वं सुश्रुतसंहिताया रचनाकाल इति वक्तुं शक्यते । यतोऽस्मिंस्तन्त्रे यथा तिथिनक्षत्रकरणाद्याश्रितं शुभाशुभमुपवर्णितं न तथा वारगतम् । यथा सूत्रस्थानस्य द्वितीये तथा पञ्चमेऽध्याये "प्रशस्तेषु तिथिकरणमुहूर्त-

१ Indian Historical Quarterly vol IV p. 557.

२ काश्यपसंहितायां ( ३३ ) पृष्ठे–"काशिराजं महामुनिः" इति ॥

३ चरके "काशीपतिर्वामकः" इति ( सूत्र. अ. २५ ) ॥

नक्षत्रेषु" इति, तथा सूत्रस्थानस्य २९तमेऽध्याये "वैद्यस्य दैवे पैत्र्ये वा कार्ये चोत्पातदर्शने । मध्याह्ने चार्धरात्रे वा संध्ययोः कृत्तिकासु च ॥ आर्द्राश्लेषामघामूलपूर्वासु भरणीषु च । चतुर्थ्यां वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ॥ वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः" इत्यादौ तिथिनक्षत्रकरणानामेवोल्लेखो दृश्यते न तु वाराणाम् । यदि वारगणनाप्रचारस्तत्समये स्यात्तदा अर्वाचीनग्रन्थेषु यथा 'न वैद्यो बुधसोमयोः' इत्यादौ वारगतं शुभाशुभत्वमुपवर्णितं तथाऽस्मिंस्तन्त्रेऽपि तदवश्यमेवोपवर्णितं स्यात् । भारतवर्षे वारगणनाप्रवृत्तिः शकारम्भकालात् सहस्रवत्सरेभ्यः पूर्वमुपजातेति **भारतीयज्योतिःशास्त्रेतिहास**नाम्नि ग्रन्थे श्रीशङ्करबालकृष्णदीक्षितः ।

अन्यच्च सुश्रुतसंहितायाः सूत्रस्थानस्य षष्ठे ऋतुचर्याध्याये कालगणनावसरे "अथ खल्वयने द्वे युगपत् संवत्सरो भवति । ते तु पञ्च युगमिति संज्ञां लभन्ते" इति डल्हणचक्रपाणिदत्तसंमतः पाठो दृश्यते । नेपालदेशोपलब्धेऽतिप्राचीने ताडपत्रपुस्तके "ते द्वे अयने वर्षः । संवत्सरः, परिवत्सरः, इदावत्सरः, इद्वत्सरः, वत्सरः, इत्येवं पञ्च वत्सराः । ते पञ्च युगमिति संज्ञां लभन्ते" इत्येवं पाठो दृश्यते । एवं सुश्रुतसंहितायां संवत्सरादिपञ्चवर्षाणामेव युगसंज्ञा दृश्यते; कृतत्रेतादियुगसंज्ञास्तु नैवोपलभ्यन्ते । संवत्सरादिपञ्चवर्षात्मकस्य कालस्य युगसंज्ञा वेदाङ्गज्योतिषे एवोपलभ्यते । तथा च तस्य मङ्गलाचरणश्लोकः—"पञ्चसंवत्सरमययुगाध्यक्षं प्रजापतिम् । दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः" (ऋग्वेदज्योतिष श्लो० १) । वाजसनेयसंहितायां ब्राह्मणग्रन्थेषु च संवत्सरादिपञ्चवर्षाणां नामान्युपलभ्यन्ते । इतोऽपि ब्राह्मणकालः वेदाङ्गज्यौतिषकालो वा सुश्रुतसंहिताया रचनाकाल इति वक्तुं शक्यते । वेदाङ्गज्यौतिषकालस्तु शकारम्भकालात् पूर्वं सार्धसहस्रवत्सरादारभ्य पञ्चशतवर्षपर्यन्तमासीदिति **भारतीयज्योतिःशास्त्रेतिहास**नाम्नि ग्रन्थे **'श्रीशङ्कर बालकृष्ण दीक्षित'** इत्यनेन प्रतिपादितमस्ति । अतः शकारम्भकालात् सहस्रवत्सरेभ्यः पूर्वं सुश्रुततन्त्रं विरचितमिति सामान्यतो वक्तुं शक्यते ॥

सुश्रुतसंहितायाः पुनः प्रतिसंस्करणविषये काश्यपसंहिताया उपोद्घाते नेपालराजगुरुभिः पण्डितवर्यैः **श्रीहेमराजशर्मभि**र्यल्लिखितं तदप्यत्राविकलमेवोद्ध्रियते—

"सुश्रुतसंहितायास्तु संस्करणे न स्पष्टतया ग्रन्थलेखोऽस्ति । केवलं 'प्रतिसंस्कर्ताऽपीह नागार्जुनः' इति डल्हनलेखमुपलभ्य सुश्रुतसंहितायाः प्रतिसंस्कर्तारं नागार्जुनं केचिन्मन्यन्ते । नागार्जुनस्य प्रतिसंस्कर्तृभावेऽपि सुश्रुतस्य ततः पूर्वतनत्वं सिध्यति । किन्तु वर्तमाना सुश्रुतसंहिता नागार्जुनेन प्रतिसंस्कृतेत्यत्र न किमपि बलवत्साधनमुपलभ्यते इति पूर्वमेवोक्तम् । यदि स प्रतिसंस्कर्ताऽभविष्यत् तदा चरके "अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते" इति लेखवदत्रापि स्वस्य प्रतिसंस्कर्तृतां कथं नोदलेखिष्यत् । आर्यनागार्जुनस्य अन्यनागार्जुनस्यापि ग्रन्थान्तरेषु शल्यविषयसूचनाऽपि क्वचन नोपलभ्यते । आर्यनागार्जुनस्य उपायहृदये सुश्रुतस्य नामकीर्तनेऽपि पूर्वनिर्दिष्टभैषज्यविद्यानिरूपणे शल्यविषयः पृथक्तया नोपात्तः । शान्तिप्रधाने बौद्धमार्गे परिनिष्ठितो बोधिसत्त्वस्थानीयो विद्वान् शस्त्रसाध्यायां शल्यविद्यायां कुतो वा प्रवृत्तः स्यादित्यपि सन्देग्धि चेतः । आर्यनागार्जुनेनान्येन तान्त्रिकनागार्जुनेन वाऽस्याः संस्करणे दृढवासनानुस्यूता बौद्धीच्छायाऽवश्यमस्यां प्रवेष्टुमर्हति । न खल्वस्यां संहितायां क्वचन लेशतोऽपि बौद्धसम्प्रदायच्छायोपलभ्यते, प्रत्युत—

---

१ "वार ज्यांत नाहींत ते शकापूर्वी १००० वर्षांहूनही प्राचीन असावे असें सामान्यतः म्हणण्यास हरकत नाहीं." भारतीयज्योतिःशास्त्राचा इतिहास पृ. १३९. पं. २० ।

२ 'वेदाङ्गज्योतिषाचा काल सुमारें शकापूर्वी १५०० वर्षे हा होय'; 'सारांश शकापूर्वी ५०० वें वर्ष ही वेदाङ्गकालची उत्तरमर्यादा होय' पृ. १३९ । ( भारतीयज्योतिःशास्त्राचा इतिहास पृ. १४७ )

३ विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम् । संस्कर्ता कुरुते तन्त्रं पुराणं च पुनर्नवम् ॥ ( च. चि. अ. १२ )

४ उत्तरतन्त्रे ३३तमेऽध्याये "जीर्णां च भिक्षुसंघाटीं धूपनायोपकल्पयेत्" इत्यत्र भिक्षुशब्दोल्लेखो दृश्यते । व्याख्यातं चात्र डल्हणेन—"जीर्णां च भिक्षुसंघाटीमिति भिक्षुरत्र शाक्यभिक्षुर्बौद्धापरनामा परिव्राजकश्च, भिक्षुरत्र शाक्यभिक्षुरेवेति जेज्जटः" इति । परं भिक्षुशब्दस्य वैदिकधर्मानुयायिनि परिव्राजकेऽपि प्रयोगदर्शनात्, उत्तरतन्त्रस्य पश्चात्प्रतिसंस्कृतत्वादुपबृंहितत्वाद्वा नैतावन्मात्रेण मूलभूतं सुश्रुततन्त्रं बुद्धोत्तरकालीनमिति निश्चेतुं शक्यते । यादवशर्मा ।

"महेन्द्ररामकृष्णानां ब्राह्मणानां गवामपि । तपसा तेजसा वाऽपि प्रशाम्यध्वं शिवाय वै ॥"

इति रामकृष्णादीनां महिमोल्लेखस्तत्र तत्र वैदिकमन्त्रप्रयोगः, अध्यात्मविषये सांख्यदर्शनग्रहणं च दृश्यते । तदेवं नागार्जुनस्य सुश्रुतसंहिताप्रतिसंस्कर्तृभाव आत्मनः साधनाय बलवत्प्रमाणमपेक्षते । सुश्रुतस्य पुनःसंस्करणमुपलभ्यतेऽस्माभिरिति बहूनां प्राच्यानां पाश्चात्यानां च विदुषामभिप्रायः । क्वचिदर्वाचीनविषयाणामप्यनुप्रवेशदर्शनेनात्रापि संस्करणलेखनी प्रविष्टा इति ममाप्यभिप्रेतम् । परमेतदीये संस्करणे चरकसंहितायामिव न पौनरुक्त्यात्मकं संस्करणं प्रायः समीक्ष्यते । संस्कर्ता च उत्तरतन्त्रभागयोजकश्च अयमिति स्पष्टं तु न ज्ञायते, परं मस्तकाशस्थे ६३३ नेवारसंवल्लिखिते ताडपत्रीये सुश्रुतपुस्तके पुष्पिकायां पूर्वभागे 'सुश्रुते शल्यतन्त्रे' इति, उत्तरतन्त्रान्ते 'इति सौश्रुते म(स)होत्तरतन्त्रे चतुःषष्टितमोऽध्यायः, अतो निघण्टुर्भविष्यति' इति, तदुत्तरगते निघण्टुभागे समाप्ते 'सौश्रुत्यां संहितायां म(स)होत्तरायां निघण्टुः समाप्तः' इति लेखो दृश्यते । इदमर्थप्रत्ययान्तेन सौश्रुतशब्देन सुश्रुतग्रन्थस्यापि ग्रहणं सम्भवति, परं पूर्वापरभागयोरेकनिबन्धभावे एकेनैव रूपेणोल्लेखस्य समुचिततया पूर्वभागे सुश्रुतशब्देन, उत्तरभागे सौश्रुतशब्देन विभिन्नतया निर्देशः पूर्वभागः सुश्रुताचार्यस्य, उत्तरभागस्तद्वंश्यस्य सौश्रुताचार्यस्येति बुद्धावारोहयति । निघण्टुभागे उपक्रमे दिवोदासोपदेशसम्बन्धस्योल्लेखदर्शनेऽपि मूलाचार्यस्यैकतया ग्रन्थस्य समूलत्वेन प्रामाण्यविशेषमाधातुं तथा निर्देशनस्य सम्भवितया, एतदीयलेखस्य किञ्चिदवतीर्णतया, तस्मिन्निघण्टुभागे उत्तरभागीयशब्दविशेषाणामपि प्रविष्टतया च स निघण्टुभागोऽपि सौश्रुतस्यैव भवितुमर्हति । उत्तरतन्त्रं संयोज्यापूर्णांशपूरकेण सौश्रुताचार्येण पूर्वभागेऽपि क्वचन संस्करणविशेषोऽपि विहितः स्यात् । महाभाष्यकृता सौश्रुतशब्दघटितनिदर्शनस्य दर्शनेन सौश्रुतानामपि पूर्वं प्रसिद्धिः, सुश्रुतवंश्यानां सौश्रुतानां शल्यविद्याविदां पार्थिवैः सह सम्बन्धमादाय सौश्रुतपार्थिवा इति पूर्वतः प्रसिद्धिरिति पूर्वं दर्शितमेव । तेन सुश्रुतस्य वंश्येन साम्प्रदायिकेन वा सौश्रुताचार्येण सुश्रुतस्य पूर्वतन्त्रं संस्कृतमुत्तरतन्त्रं निघण्टुभागश्च योजिते इत्यनुमीयते ॥

पूर्वाचार्यसंहितामुपलभ्यापि प्रस्थानान्तरीयाचार्यग्रन्थेभ्यो विशेषान्तराणामवगमे तान्यप्यनुप्रवेश्य पूर्वसंहिताया न्यूनतापरिहारेण सर्वाङ्गपूर्तये प्रयत्नस्य साधुतया दर्शनेन किल पश्चाद्योजकेन तन्त्रान्तरावगतविषयाणामपि संयोजनं, पूर्वतन्यां दिवोदाससंहितामुपादाय निबद्धायां सुश्रुतसंहितायामुत्तरतन्त्ररूपेण विहितं स्यात् । उत्तरभागे निविष्टा विषया विदेहाधिपादिकीर्तितशाल्याक्यादितन्त्रान्तरसम्बद्धा इति तदुक्त्यैव स्पष्टीभवति । तत्रत्ये कौमारभृत्यप्रकरणे मूले आचार्यान्तरनिर्देशे कुमाराबाधहेतव इति सामान्यत उल्लेखेऽपि तट्टीकाकृता पार्वतकबन्धकजीवकादिभिरिति निर्देशनेन जीवकस्यैतद्ग्रन्थोपलम्भेन च काश्यपजीवकादिप्रोक्तांस्तदीयविषयानप्युपादायोत्तरतन्त्रे योजनं कृतं सम्भाव्यते ॥

सुश्रुतोत्तरतन्त्रे रसप्रभेददर्शनपरस्य चतुःषष्ट्यध्यायस्य दोषप्रभेददर्शनपरस्यान्तिमस्य अध्यायस्य चान्तरा पञ्चषष्टितमोऽध्यायस्तन्त्रयुक्त्यध्यायः । कौटिलीयार्थशास्त्रेऽप्यन्तिमस्तन्त्रयुक्त्यध्यायः । उभयोर्युगपदालोचने उभयत्र द्वात्रिंशद्विधानां तन्त्रयुक्तीनामधिकरणादीनामूह्यान्तानां तदन्तर्गतानामुद्देशनिर्देशोपदेशापदेशप्रदेशातिदेशादीनां ग्रन्थान्तरेष्वदृष्टानामसाधारणप्रभेदानामन्येषां च पदार्थानां केवलं स्वस्ववैद्यकनैतिकविषयकोदाहरणवर्जं निर्वचनसाम्यं दृश्यमानमेकस्यापरत्र च्छायानुवेधमनुमापयति । तत्र कतरस्यान्यतरस्मिञ्छायानुवेध इति पर्यालोचने कौटिलीये औपनिषदाधिकरणसमाप्तौ ग्रन्थान्ते शास्त्रीययुक्तिप्रदर्शनमिव सुश्रुतोत्तरतन्त्रे सहप्रवेष्टुमर्हयो रसभेददोषभेदप्रकरणयोरन्तरा तन्त्रयुक्त्यध्यायप्रवेशः पूर्वापरसङ्गतिदार्ढ्यमनुपपद्यन्नन्यदीयच्छायानुवेधेन संस्करणान्तरे वाऽनुप्रवेशं सम्भावयति । चरकसंहितायामपि ग्रन्थान्ते तन्त्रयुक्तेर्विषया उद्देशमात्रेण निविष्टा दृश्यन्ते । तेऽपि दृढबलपूरितांश एव । पश्चात्तनेऽप्युत्तरतन्त्रे धन्वन्तर्युक्तिरूपतया पूर्वभागसम्बन्धेन प्रामाणिकत्वविशेषमवगमयितुं 'यथोवाच भगवान् धन्वन्तरिः' इति पूर्वभागवदुल्लेखोऽत्राप्यनुप्रवेशितो लेखकेनेति सम्भाव्यते । तदस्यां सुश्रुतसंहितायामनुप्रवेश्य विषयान्तराणि मूलग्रन्थोत्तरमुत्तरतन्त्ररूपेण पृथक्तयैव संयोजितानि न तु चरक इव तन्त्रान्तरालेष्वेवैकशरीरतामापाद्य । येन नवपुराणयोर्विषययोः संहितान्तरसंगृहीतविषयाणामपि परिच्छेदेन दर्शनं सुकरमुपजायते । सुश्रुतसंहितायां प्रथमाध्यायान्ते "सविंशमध्यायशतं पञ्चसु स्थानेषु संविभज्य उत्तरे तन्त्रे शेषानर्थान् व्याख्यास्यामः" इति मुद्रितपुस्तकपाठदर्शने पूर्वसंहितासमये उत्तरतन्त्रस्यापि सद्भावप्रतीत्या द्वयोर्भागयोः समकालत्वमेवायाति । परं मदीयसङ्ग्रहालयगते प्राचीनताडपत्रपुस्तके तत्र तत्र बहुशः पाठभेदाः सन्ति । अत्रापि"……संविभज्य उत्तरे वक्ष्यामः" इति पाठोऽस्ति । येन १२० अध्यायान् पञ्चस्थानेषु विभज्य अत उत्तरं वक्ष्यामः" इत्येव ग्रन्थाशयो, न किलोत्तरतन्त्रनिर्देश इति प्रतिभाति । तृतीयाध्यायादौ अध्यायगणने मुद्रितपुस्तके दृश्यमानः "तदुत्तरं षट्षष्टिः" इत्यंशोऽपि ताडपुस्तके नास्ति । किन्तु 'अतः परं स्वनाम्नैव तन्त्रमुत्तरमुच्यते' इत्यारम्भविहिता उत्तरतन्त्राध्यायविषयसङ्ग्राहकाः 'विधिनाऽधीत्य युञ्जाना भवन्ति प्राणदा भुवि' इत्यन्ताः श्लोकास्तु ताडपुस्तकेऽपि सन्ति । पश्चादुत्तरतन्त्रभागयोजनोत्तरं तद्विषयसूचीश्लोका इमेऽप्यनुप्रविष्टा बहुशः सम्भवन्ति ॥ ( काश्यपसंहिताया उपोद्घाते संस्कारतुलनादिसहिते विषयपरिच्छेदे पृ. १११–११२ )

सुश्रुततन्त्रं पूर्वं पञ्चस्थानात्मकमेवासीत्, तस्योत्तरतन्त्रं तु बहोः कालात् पश्चात् केनचित् प्रतिसंस्कर्त्रा संयोजितमिति विद्यते बहूनां प्राचां नवीनानां च विदुषां मतम् । श्रीमतां नेपालराजगुरूणां पण्डितवर्य-श्रीहेमराजशर्मणां मतमुपरि निर्दिष्टमेव। श्रीमधुसूदनसरस्वतिना स्वविरचिते प्रस्थानभेदाख्ये ग्रन्थे 'तत्रैव सुश्रुतेन पञ्चस्थानात्मकं प्रस्थानान्तरं कृतम्' ( आनन्दाश्रममुद्रिते पुस्तके ८ पृष्ठे ) इति लिखितं दृश्यते । इयं मधुसूदनोक्तिः किम्मूलकेति न ज्ञायते । परं सहस्रवत्सरेभ्यः पूर्वं समुद्भूतैर्जेज्जट-गयदासादिभिष्टीकाकारैर्वर्तमानसमये समुपलभ्यमानस्य समग्रोत्तरतन्त्रस्य व्याख्यातत्वात् ख्रिष्टस्य पञ्चम-शताब्द्यां समुद्भूतेन वाग्भटेनोत्तरतन्त्रस्थानां बहूनां विषयाणामुपादानाच्च यद्युत्तरतन्त्रं पश्चात्संयोजितं स्यात् तथाऽपि तत् सार्धसहस्रवत्सरेभ्यः पूर्वमेव संयोजितमित्यत्र नास्ति संदेहः । अस्मन्मते तु शालाक्या-द्यन्याङ्गप्रतिपादकमुत्तरतन्त्रमपि भगवता धन्वन्तरिणैवोपदिष्टं तच्छिष्येण सुश्रुतेनैव च विरचितम् । अन्यथा केवलशल्यतन्त्रात्मकस्य पूर्वतन्त्रस्यैव सुश्रुतप्रणीतत्वे शालाक्याद्यन्याङ्गप्रतिपादकस्योत्तरतन्त्रस्य पश्चात् प्रति-संस्कर्त्रा संयोजितत्वे हरिवंशपुराणादिषूक्तं भगवतो धन्वन्तरेरष्टाङ्गायुर्वेदप्रवर्तकत्वं, तथाऽत्रैव सूत्रस्था-नस्य प्रथमाध्यायोक्तं "अस्माकं सर्वेषां शल्यज्ञानं मूलं कृत्वोपदिशतु भगवान्" इति, तथा "अहं हि धन्वतरिरादिदेवो जरारुजामृत्युहरोऽमराणाम् । शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम्" इति च वचो व्याहन्येत । किञ्च "कार्तिककुण्डस्त्वेनं योगमन्यथा पठति व्याख्यानयति च । स च ग्रन्थगौर-वभयान्न लिखितः । केचिदेनं योगमनार्षं वदन्ति; तन्न, सुकीरसुधीरादिभिष्टीकाकारैरार्षत्वेन वर्णितत्वात्" ( पृ. ७९१ ) इत्यस्माद् डल्हणलेखात् प्रतीयते यत्—सुकीरसुधीरादयः प्राचीनव्याख्यातार उत्तरतन्त्र-मार्षं ( सुश्रुतप्रणीतं ) मन्यन्ते स्मेति । अतिसारप्रतिषेधोक्तात् "एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः । केचित् प्राहुर्नैकरूपप्रकारं नैवेत्येवं काशिराजस्त्ववोचत्" ( पृ. ६९६ ) इत्यस्माच्छ्लो-कादप्युत्तरतन्त्रस्य धन्वन्तर्युपदिष्टत्वं सिध्यति । इदं तु संभवति—यथा चरकप्रतिसंस्कृतेऽग्निवेशतन्त्रे कालवशाद्विलुप्ताश्चिकित्सास्थानस्य सप्तदशाध्यायाः कल्पस्थानं सिद्धिस्थानं च पश्चाद्दृढबलेन संपूरितं, तथा सुश्रुततन्त्रेऽपि कालवशाद्विलुप्तमुत्तरतन्त्रं पश्चात् केनचित् प्रतिसंस्कर्त्रा ( डल्हणोक्त्यनुसारं नागार्जु-नेन, अन्येन वा सुश्रुतसंप्रदायानुयायिना ) विदेहाधिपोक्तं शालाक्यतन्त्रं, कश्यपाद्युक्तान् कौमारभृत्यत-न्त्रान्, अग्निवेशाद्युक्तान् कायचिकित्सातन्त्रांश्चोपजीव्य संयोजितम्; अथवा सुश्रुतोक्तमुत्तरतन्त्रं संक्षिप्तं स्यात्, तच्च केनापि प्रतिसंस्कर्त्रा पूर्वोक्तरीत्या पश्चादुपबृंहितमिति ॥

सुश्रुततन्त्रस्य संप्रति श्रीडल्हणाचार्यविरचिता निबन्धसंग्रहव्याख्यैव संपूर्णा समुपलभ्यते । श्रीचक्रपा-णिदत्तविरचिताया भानुमतीव्याख्यायाः सूत्रस्थानमात्रं संपूर्णं समुपलब्धम् । अन्यस्थानव्याख्या त्वेताव-त्पर्यन्तमप्राप्तैव । सुश्रुतसंहिताया भानुमतिव्याख्यासमेतं सूत्रस्थानमचिरादेव अस्मत्परममित्रैरायुर्वेद-मार्तण्डैरायुर्वेदाचार्यैः **श्रीलक्ष्मीरामस्वामि**महोदयैः संस्थापितायुर्वेदग्रन्थप्रकाशननिधिव्ययेन मुद्रापितं तद्ग्रन्थमालायाः प्रथमपुष्परूपेण प्रसिद्धिमेष्यति । बीकानेरराजधानीस्थराजप्रासादपुस्तकालयात् श्रीगयदासा-चार्यविरचिताया न्यायचन्द्रिकाख्यपञ्जिकाया निदानस्थानमात्रं समुपलब्धम् । तदप्यस्मिन् तृतीये संस्क-रणे निबन्धसंग्रहव्याख्यया सह संयोजितम् । अन्यास्तु व्याख्या अस्माकं दैवदुर्विपाकवशाल्लुप्तप्राया एव ।

१ एतच्च स्पष्टमेवोक्तमुत्तरतन्त्रारम्भे; यथा—

"निखिलेनोपदिश्यन्ते यत्र रोगाः पृथग्विधाः । शालाक्यतन्त्राभिहिता विदेहाधिपकीर्तिताः ॥

ये च विस्तरशो दृ(दि)ष्टाः कुमाराबाधहेतवः । षट्सु कायचिकित्सासु ये चोक्ताः परमर्षिभिः ॥" ( पृ. ५९५ )

निबन्धसंग्रहव्याख्याप्रणेत्रा श्रीडल्हणाचार्येण ग्रन्थारम्भे स्वपरिचय इत्थं दत्तः—

"समस्तजनपदतिलककल्पे श्रीभादानकदेशे नगरीवरमथुरासमीपे अङ्कोलानामकं वैद्यस्थानमस्ति । यत्र सौरवंशजा ब्राह्मणाः समस्तभूमिपतिमान्या अश्विनीकुमारसमानाः पार्वणचन्द्ररुचियशःप्रसाधितदिङ्मण्डला वैद्या अभूवन् । तदन्वये गोविन्दनामा चिकित्सकशिरोमणिरभूत्, ततस्तत्पुत्रो भिषक्शिरोमुकुटमणिर्जयपालः समजनि, तत्तनयश्च समस्तशास्त्रार्थतत्त्वज्ञो भरतपालः संजातः, तत्पुत्रः स्वकुलनभस्तलचन्द्रमा विवेकबृहस्पतिः श्रीसहपालदेवनृपतिवल्लभः श्रीडल्हणः समभूत् । तेन **श्रीजेज्जटं** टीकाकारं **श्रीगयदासभास्करौ** च पञ्जिकाकारौ **श्रीमाधवब्रह्मदेवादीन्** टिप्पणकारांश्चोपजीव्य, आयुर्वेदशास्त्रसुश्रुतव्याख्यानाय निबन्धसंग्रहः क्रियते ।"

सोऽयं डल्हणः खिष्टस्यैकादशशताब्द्यां संभूत इतीतिहासविदां मतम् ।

श्रीगयदासविरचिताया व्याख्याया न्यायचन्द्रिका, नयचन्द्रिका, चन्द्रिका, पञ्जिका, इति नामभिरुल्लेखः कृतस्तद्वचनोद्धारे टीकाकृद्भिर्डल्हणविजयरक्षितप्रभृतिभिः । पञ्जिकाशब्दार्थस्तु व्याख्यातोऽभिधानचिन्तामणौ—"पञ्जिका पदभञ्जिका" ( का. २, श्लो. १७० ) इति । 'पञ्ज्यन्ते व्यक्तीक्रियन्ते पदार्था अनयेति पञ्जिका । अर्थाद् विषमाण्येव पदानि भनक्ति पञ्जिका ।' गयदासो डल्हणात् प्राचीनः, बहुषु स्थलेषु तत्पाठोद्धारात्, जेज्जटाच्चार्वाचीनः, पञ्जिकायां बहुषु स्थलेषु जेज्जटमतस्य दूषितत्वात्; अतोऽनयोर्मध्यकालीन इत्यनुमीयते ।

इदं तृतीयं संस्करणं प्रारम्भतश्चिकित्सास्थानस्य दशमाध्यायपर्यन्तं मयैव संशोधितं, शेषोंऽशस्तु पुस्तकप्रसिद्धीकरणार्थं त्वरमाणैर्निर्णयसागरमुद्रणयन्त्रालयाधिपतिभिः निर्णयसागरस्थ-श्री.**नारायण राम आचार्य-"काव्यतीर्थ"**द्वारा प्रायो द्वितीयसंस्करणमनुसृत्यैव संशोधयित्वा प्रसिद्धिं नीतः ।

अन्यत्र निर्दिष्टानामादर्शपुस्तकानां साहाय्येन पुस्तकस्यास्य संशोधने यथामति कृतो यत्नः । तथाऽपि भ्रमप्रमादादिदोषाज्जातानि स्खलनानि गुणैकपक्षपातिभिः सुधीभिः क्षन्तव्यानि, सफलयितव्यश्च ममायं प्रयासो ग्रन्थस्यास्य पठनपाठनादिनेत्यभ्यर्थ्यते—

कालबादेवीरोड
मुंबई २७-१०-१९३८ (इ. स.)

भिषजामनुग्राह्यो
**यादवशर्मा**

## निबन्धसंग्रहाख्यव्याख्यासमेतायाः सुश्रुतसंहितायाः

### प्रथमसंस्करणावसरे संशोधनार्थमधोलिखितानामादर्शपुस्तकानां साहाय्यमवलम्बितम् ।

१ कलकत्तानगरस्थरॉयलएशियाटिकसोसाइटीपुस्तकालयात् प्राप्तं सूत्र-निदान-शरीर-कल्पस्थानात्मकम् ।

२ जयपुरराजकीयसंस्कृतमहाविद्यालये आयुर्वेदाध्यापकानां राजवैद्यानां स्वर्गवासिनां पं. गङ्गाधरभट्ट-शर्मणां सकाशात् प्राप्तं चिकित्सास्थानोत्तरतन्त्रात्मकम् ।

३ बुन्दीराजधानीनिवासिनामस्मत्परमसुहृदां राजवैद्यानां पं. श्रीप्रसादशर्मणां सकाशात् प्राप्तमुत्तरतन्त्रात्मकम् ।

### द्वितीयसंस्करणावसरे संशोधनार्थमधोलिखितानामादर्शपुस्तकानां साहाय्यमवलम्बितम् ।

१ निदानस्थानमुत्तरतन्त्रं च निबन्धसंग्रहव्याख्यासमेतं वाराणसीवास्तव्यानां साहित्याचार्य पं० गौरीनाथ-पाठकमहोदयानां सकाशात्समुपलब्धम् ।

२ शारीरस्थानं निबन्धसंग्रहव्याख्यासमेतमहमदाबादनिवासिनामस्मत्सुहृदां स्व. वा. वैद्य रणछोडलाल मोती-लालशर्मणां सकाशात्प्राप्तम् ।

३ शारीरस्थानं मूलमात्रमतिप्राचीनमस्मत्परमसुहृदां स्व. वा. वैद्य मुरारजीशर्मणां ग्रन्थसंग्रहात्प्राप्तम् ।

४ शारीरस्थानं निबन्धसंग्रहव्याख्यासमेतं पुण्यपत्तन(पूना)स्थभाण्डारकररिसर्चइन्स्टिट्यूटपुस्तकालयात्प्राप्तम् ।

५ सम्पूर्णं निबन्धसंग्रहव्याख्यासमेतं पुण्यपत्तनस्थभाण्डारकररिसर्चइन्स्टिट्यूटपुस्तकालयात्प्राप्तं क्वचित् क्वचित्खण्डितपत्रम् ।

६ मुंबईनगरस्थरॉयलएशियाटिकसोसाइटीपुस्तकालयात्प्राप्तम्, अपूर्णम् ।

७ चिकित्सास्थानं वाराणसीवास्तव्यानां भिषग्वर्याणां वैद्यरत्नश्रीत्र्यम्बकशास्त्रिमहोदयानां हस्तलिखितपुस्तकतो व्याकरणाचार्यसाहित्याचार्यायुर्वेदाचार्यतर्करत्नश्रीगुरुप्रसादशास्त्रिभिः पाठान्तरादिभिः संयोज्य संशोध्य प्रेषितम् ।

८ कलकत्तानगरस्थैः कविराजश्रीहाराणचन्द्रचक्रवर्तिमहोदयैर्विरचितेन सुश्रुतार्थसंदीपनभाष्येण समेतं सम्पूर्णम् ।

९ सूत्रस्थानस्य ४३ अध्यायपर्यन्तं वङ्गाक्षरैर्मुद्रितं भानुमतीव्याख्यया निबन्धसंग्रहव्याख्यया च समेतं स्व. वा. महामहोपाध्यायकविराजश्रीविजयरत्नसेनमहोदयैस्तथा कविराजश्रीनिशिकान्तसेनमहोदयैश्च संपादितम् ।

### तृतीयसंस्करणावसरेऽधोलिखितानामादर्शपुस्तकानां साहाय्यमवलम्बितम् ।

१ ग्वालियरराजधानीवासिनामस्मत्परमसुहृदां राजवैद्यानामायुर्वेदाचार्याणां पं. रामेश्वरशास्त्रिशुक्लमहोदयानां ग्रन्थसंग्रहात् प्राप्तं सूत्र-निदान-शारीर-चिकित्सा-कल्पस्थानात्मकम् ।

२ श्रीगदासाचार्यविरचितन्यायचन्द्रिकापञ्जिकाख्यव्याख्याया निदानस्थानं बीकानेरराजधानीस्थराजप्रासाद-पुस्तकालयादायुर्वेदाचार्य पं. चन्द्रशेखरशास्त्रिद्वारा प्राप्तम् ।

३ नेपालराजगुरुभिः मान्यवरपं. श्रीहेमराजशर्ममहोदयैः स्वीयग्रन्थसंग्रहालयस्थातिप्राचीनताडपत्रपुस्तकानु-सारेण स्व. ब्रा. पं. नित्यानन्दशर्मा जोशी आयुर्वेदाचार्यद्वारा पाठान्तरैः संयोज्य प्रेषितं प्रारम्भत-श्चिकित्सास्थानस्य नवमाध्यायपर्यन्तम् ।

यैरुपरिनिर्दिष्टैर्महोदयैरादर्शपुस्तकप्रेषणेनास्मिन् कर्मणि साहाय्यं प्रदत्तं तेषां तं महान्तमुपकारं स्मारं स्मारं परःशतैर्धन्यवादैस्तानभिनन्दयामीति ।

## सुश्रुततन्त्रे मूले समागतानां तन्त्रान्तराणामाचार्यान्तराणां च नामानि ।



## निबन्धसंग्रहव्याख्यायां प्रमाणतयोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च स्थानोल्लेखपूर्वकं नामानि ।

मनुः ५०९-२-३१ इत्यत्र ।
सुवीरः ३१८-२-१७; इत्यत्र ।
नन्दिः ३१८-२-१७; इत्यत्र ।
वराहः ३१८-२-१७; इत्यत्र ।
श्रीपतिः ३४०-२-४०; इत्यत्र ।
वृद्धसुश्रुतः ५०९-१-३६, ५३०-१-२८, ६५२-१-३२; इत्यादौ ।
क्षारपाणिः ५३७-२-१५, ६७४-१-१८; इत्यादौ ।
लघुवाग्भटः ४९४-१-११, ४५८-२-२४, इत्यादौ ।
अग्निवेशः ५४०-१-४०; इत्यत्र ।
पराशरः ५४०-२-२, ५४८-१-२३, इत्यादौ ।
हारीतः ५४५-१-२०; इत्यादौ ।
निमिः ५५२-२-२५, ६५५-१-३५; इत्यादौ ।
दृढबलः ५५५-१-५, ६५५-२-१; इत्यादौ ।
कृष्णात्रेयः ५५९-२-१८; इत्यत्र ।
उशनाः ५६३-२-११; इत्यत्र ।
अमरकोषः ५५९-१-३२; इत्यत्र ।
सावित्रं ( तन्त्रं ) ५६७-२-२५; इत्यत्र ।
नागार्जुनः ५८२-२-३२; इत्यत्र ।
आलम्बायनः ५८२-२-५, ५९३-१-२७; इत्यादौ ।
करालः ५९५-२-५; इत्यत्र ।
पार्वतकः ५९५-२-६; इत्यत्र ।
जीवकः ५९५-२-६; इत्यत्र ।
बन्धकः ५९२-२-६; इत्यत्र ।
सात्यकिः ६०७-२-२२, ६५५-२-१३; इत्यादौ ।
कार्तिकाचार्यः ७०३-१-३७; इत्यत्र ।
वृद्धभोजः ७१४-२-२२, ७८४-२-२१; इत्यादौ ।
कार्तिककुण्डः ७४४-२-१४, ७५५-१-२१; इत्यादौ ।
चन्द्रिकाकारः ( गयदासः ? ) ७५६-२-१३; इत्यत्र ।
चक्रपाणिः ७५६-२-१४; इत्यत्र ।
काश्यपीयं ( तन्त्रं ) ७८५-२-४०; इत्यत्र ।
सुकीरः ७९१-२-२५; इत्यत्र ।
चन्द्रनन्दनः ८१७-२-३७; इत्यत्र ।

## न्यायचन्द्रिकाव्याख्यायां प्रमाणतयोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च स्थानोल्लेखपूर्वकं नामानि ।

चरकः २५९-२-२३, २६०-१-३; इत्यादौ ।
पातञ्जलमहाभाष्यं २६०-२-११; इत्यत्र ।
भालुकिः २७२-२-२, २८७-२-५, ३२६-१-२१; इत्यादौ ।
दृढबलः २६५-२-१४; इत्यत्र ।
पाणिनीयाष्टाध्यायी २७६-२-३८, २९६-२-३३; इत्यादौ ।
नागार्जुनः २७९-१-३; २९९-२-२६; इत्यत्र ।
भोजः २८३-१-१७, २८५-१-११, ३३६-१-८; इत्यादौ ।
विदेहः ३२२-२-१०; इत्यत्र ।
जेज्जटः २८६-२-६; इत्यादौ ।
विश्वामित्रः २८७-१-११; इत्यादौ ।
विदेहः ३२२-२-१०; इत्यादौ ।

श्रीः

# सुश्रुतसंहिताया विषयानुक्रमः ।

## सूत्रस्थानम् १

## चतुर्दशोऽध्यायः १४



## पञ्चदशोऽध्यायः १५



## षोडशोऽध्यायः १६

विषयाः — पृष्ठं

## पञ्चविंशोऽध्यायः २५



विषयाः — पृष्ठं

## षड्विंशोऽध्यायः २६



## सप्तविंशोऽध्यायः २७



विषयाः — पृष्ठं



## अष्टाविंशोऽध्यायः २८

### अथ शाकवर्गः ४

## अथ निदानस्थानम् (2)

### प्रथमोऽध्यायः १



### द्वितीयोऽध्यायः २

## अष्टमोऽध्यायः ८



## नवमोऽध्यायः ९



## दशमोऽध्यायः १०



## एकादशोऽध्यायः ११

समाप्तमिदं निदानस्थानम्।

---

## अथ शारीरस्थानम्।

### प्रथमोऽध्यायः १



### द्वितीयोऽध्यायः २

### तृतीयोऽध्यायः ३



### चतुर्थोऽध्यायः ४

समाप्तं शारीरस्थानम् ।

## अथ चिकित्सास्थानम् ।

### प्रथमोऽध्यायः १

## द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः ४



## पञ्चमोऽध्यायः ५



## षष्ठोऽध्यायः ६

## सप्तदशोऽध्यायः १७



## अष्टादशोऽध्यायः १८



## एकोनविंशोऽध्यायः १९



## विंशतितमोऽध्यायः २०

## चतुस्त्रिंशत्तमोऽध्यायः ३४



## पञ्चत्रिंशोऽध्यायः ३५



## षट्त्रिंशत्तमोऽध्यायः ३६



## सप्तत्रिंशत्तमोऽध्यायः ३७

---

## अथ कल्पस्थानम् ५

### प्रथमोऽध्यायः १



### द्वितीयोऽध्यायः २



### तृतीयोऽध्यायः ३

### षष्ठोऽध्यायः ६



### सप्तमोऽध्यायः ७



### अष्टमोऽध्यायः ८

इति कल्पस्थानं समाप्तम् ।

## अथोत्तरतन्त्रम् ।

### प्रथमोऽध्यायः १



### द्वितीयोऽध्यायः २



### तृतीयोऽध्यायः ३

## षोडशोऽध्यायः १६



## सप्तदशोऽध्यायः १७



## अष्टादशोऽध्यायः १८

### चत्वारिंशत्तमोऽध्यायः ४०

विषयाः — पृष्ठं



### एकचत्वारिंशोऽध्यायः ४१



### द्विचत्वारिंशत्तमोऽध्यायः ४२

## त्रिचत्वारिंशत्तमोऽध्यायः ४३



## चतुश्चत्वारिंशत्तमोऽध्यायः ४४



## पञ्चचत्वारिंशत्तमोऽध्यायः ४५



## षट्चत्वारिंशत्तमोऽध्यायः ४६



## सप्तचत्वारिंशत्तमोऽध्यायः ४७

## अष्टचत्वारिंशत्तमोऽध्यायः ४८



## एकोनपञ्चाशत्तमोऽध्यायः ४९



## पञ्चाशत्तमोऽध्यायः ५०



## एकपञ्चाशत्तमोऽध्यायः ५१



## द्विपञ्चाशत्तमोऽध्यायः ५२

## एकोनषष्टितमोऽध्यायः ५९



## षष्टितमोऽध्यायः ६०



## एकषष्टितमोऽध्यायः ६१



## द्विषष्टितमोऽध्यायः ६२



## त्रिषष्टितमोऽध्यायः ६३



## चतुःषष्टितमोऽध्यायः ६४

॥ इति सुश्रुतसंहिताविषयानुक्रमः समाप्तः ॥

॥ श्रीः ॥

निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता ।

## सूत्रस्थानम् ।

### प्रथमोऽध्यायः ।

सहस्रांक्षं गणाधीशं स्वगुरुं च सरस्वतीम् ।
जनकं जनयित्रीं च शास्त्रादौ प्रणमाम्यहम् ॥

समस्तजनपदतिलककल्पे श्रीभादानकदेशे नगरीवरमथुरासमीपे अङ्कोलानामकं वैद्यस्थानमस्ति । यत्र सौरवंशजा ब्राह्मणाः समस्तभूमिपतिमान्या अश्विनीकुमारसमानाः पार्वणचन्द्ररुचियशःप्रसाधितदिङ्मण्डला वैद्या अभूवन् । तदन्वये गोविन्दनामा चिकित्सकशिरोमणिरभूत्, ततस्तत्पुत्रो भिषक्शिरोमुकुटमणिर्जयपालः समजनि, तत्तनयश्च समस्तशास्त्रार्थतत्त्वज्ञो भरतपालः संजातः, तत्पुत्रः स्वकुलनभस्तलचन्द्रमा विवेकबृहस्पतिः श्रीसहपालदेवनृपतिवल्लभः श्रीडल्हणः समभूत् । तेन श्रीजेज्जटं टीकाकारं श्रीगयदासभास्करौ च पञ्जिकाकारौ श्रीमाधवब्रह्मदेवादीन् टीप्पनकारांश्चोपजीव्य, आयुर्वेदशास्त्रसुश्रुतव्याख्यानाय निबन्धसंग्रहः क्रियते । यद्यपि सुश्रुतोपरि जेज्जटादिभिष्टीका रचिताः, तथाऽपि तासां कुशाग्रीयधियामभिगम्यत्वादल्पमेधसामनुग्रहाय सुश्रुतं व्याख्यातुकामस्य मम प्रयासः सफलः ।

**अथातो वेदोत्पत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथातो वेदोत्पत्तिमध्यायं व्याख्यास्याम इति । ननु, कतमत् सूत्रमिदं? चतुर्विधानि हि सूत्राणि भवन्ति; तद्यथा,—प्रतिसंस्कर्तृसूत्रम्, एकीयसूत्रं, शिष्यसूत्रं, गुरुसूत्रं चेति । इह प्रतिसंस्कर्तृसूत्रं नास्त्येवेत्येके, अन्ये त्वस्तीति भाषन्ते, यथा च तदस्ति तथेहैव नैकध्येन कथयिष्यामः; एकीयसूत्रं यथा,—'तत्र लोहितकपिलपाण्डुपीतनीलशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासंख्यमुदकानि भवन्तीत्येके भाषन्ते' ( सू० अ० ४५ )—इति; शिष्यसूत्रं यथा,—'वायोः प्रकृतिभूतस्य व्यापन्नस्य च लक्षणम् । स्थानं कर्म च रोगांश्च वदस्व वदतांवर' ( नि० अ० १ )—इति; गुरुसूत्रं यथा,—'देहे विचरतस्तस्य लक्षणानि निबोध मे' ( नि० अ० १ )—इति; एवं सूत्राणामनेकत्वात् कस्येदं सूत्रम्? उच्यते,—गुरोरेवैतत् सूत्रं, शिष्येण ग्रन्थं चिकीर्षता लिखितम् । अन्ये तु शिष्यस्यैवेदं सूत्रमित्याहुः, स ह्यात्मशिष्येषु धन्वन्तरिप्रशिष्येषु प्रतिज्ञां कृतवान्; तन्नेच्छति गयी । किमेतत् स्वकपोलकल्पितं सुश्रुतेनोक्तम्, अथवा यथैव गुरुणोदीरितमिति पृष्टः प्रतिसंस्कर्ता सुश्रुतमुखेनेदमाह—यथोवाच भगवान् धन्वन्तरिरिति । इदं प्रतिसंस्कर्तृसूत्रं, यत्र यत्र परोक्षे लिट्प्रयोगस्तत्र तत्रैव प्रतिसंस्कर्तृसूत्रं ज्ञातव्यमिति; प्रतिसंस्कर्ताऽपीह नागार्जुन एव । अथशब्दोऽनन्तरार्थ एव । अतो युष्मच्छल्यतन्त्रोपदेशकामितादनन्तरम् । वेदोत्पत्तिमिति अस्यादौ आयुःशब्दो लुप्तो ज्ञेयः; तेन, आयुर्वेदोत्पत्तिमिति । उत्पत्तिरत्राभिव्यक्तिः, न त्वभूतप्रादुर्भावः । अधीयन्तेऽस्मिन्नर्था इत्यध्यायः । व्याख्यास्याम इति विर्विशेषे, आङ् अभिव्याप्तौ, व्याख्यास्यामः प्रकथयिष्यामः । अन्ये तु, अथशब्दः शिष्यप्रश्नानन्तर्ये, अतःशब्दो हेत्वर्थः, यत एते शिष्याः प्रजाहितार्थमायुर्वेदं गुरुं पप्रच्छुः, अतो हेतोरित्यर्थः; अपरे तु विर्विविधप्रकारे, आङ् आभिमुख्ये, शेषं समम् । एतेनातः शल्यतन्त्रोपदेशकामितादनन्तरम्, आयुर्वेदाभिव्यक्तिमधिकृत्य कृतो योऽध्यायस्तं विशेषाभिव्याप्त्या प्रकथयिष्यामः । द्वितीयव्याख्यानपक्षेऽपीत्थं योजनीयम् । यथोवाचेति याद्दगुक्तवान् । भगवान् धन्वन्तरिरिति समस्तैश्वर्यमाहात्म्ययशःश्रीकामार्थप्रयत्नैर्युक्तो 'भगवान्' इत्युच्यते; अन्ये तु ज्ञानातिशयवान् पुरुषातिशयो भगवान्; अपरे तु, अष्टगुणैश्वर्यवानेवात्र भगवान् । अथात इत्यादिकं प्रतिज्ञासूत्रं यद्यप्यध्यायादौ लिखितं, तथाऽपि 'वत्स सुश्रुत' ( सू० अ० १, सू० १४ ) इत्यनन्तरं द्रष्टव्यम्; अन्ये तु 'अध्याप्याश्च भवन्तो वत्साः' ( सू० अ० १, सू० ५ ) इत्यनन्तरं पठन्ति, तन्नेच्छति गयी । अत्र केचिद् 'वेदोत्पत्तिं नामाध्यायं' इति पठन्ति ॥ १ ॥ २ ॥

**अथ खलु भगवन्तममरवरमृषिगणपरिवृतमाश्रमस्थं काशिराजं दिवोदासं धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकरवीर्य( र )गोपुररक्षितसुश्रुतप्रभृतय ऊचुः ॥ ३ ॥**

अथ खल्वित्यादि । अथेति मङ्गलार्थः, तत्तु श्रोतृव्याख्यात्रोः क्रियाफलसिद्धिं कथयति । खलु वाक्यशोभार्थः, अन्ये तु निश्च-

१ 'सहस्रांशुं' इति पा० । २ '°चन्द्रविवेकबृहस्पतिश्रीसहपालदेवनृपतिवल्लभः' इति पा० । ३ 'वेदोत्पत्तिनामाध्यायं' इति, 'वेदोत्पत्तिं नामाध्यायं' इति च पा० ।

१ '°नन्तरार्थः' इति पा० ।

यार्थः । अमरवरं देवश्रेष्ठं, पूर्वजन्मन्यमृतोद्धरणात्; अन्ये तु ब्रह्मणोऽवतारत्वात् । ऋषिगणपरिवृतं देवर्षिब्रह्मर्षिराजर्षिसमूहैर्वेष्टितं, तपोज्ञानबाहुल्यादुपादेयवाक्यत्वाच्च । आश्रमस्थं वानप्रस्थाश्रमस्थम्, एतेन राज्यचिन्तापरित्यागादनाकुलचित्तत्वं राजर्षित्वं च सूचितम् । काशिराजं वाराणसीजनपदनृपतिं, काशिराजस्य निर्वाणपदाभिलाषित्वात्तत्पुत्रत्वमापन्नमिति काशिराजम् । काशिराजानामनेकत्वाद्विशेषणमाह—दिवोदासम् ।—दिवितिशब्देनात्र तैत्स्थानदेवाः कथ्यन्ते, तैः पूजाकाम्यया संप्रदीयते यस्मै स दिवोदासस्तम्; अन्ये तु दास(श)ति कर्माणि यत्नेन करोतीति दासः(शः), दिवः स्वर्गस्य दासो दिवोदास(श)स्तम् । सर्वजनप्रसिद्धं विशेषणमाह—धन्वन्तरिमिति ।—धनुः शल्यशास्त्रं, तस्य अन्तं पारम् इयर्ति गच्छतीति धैन्वन्तरिः, तम्; अपरा व्युत्पत्तिर्विस्तरभयान्न लिखिता । औपधेनवादयः सुश्रुतान्ताः सप्त शिष्या ऊचुः उक्तवन्तः । प्रभृतिशब्देन भोजादयः । अन्ये तु 'गोपुररक्षितौ' इति नामद्वयं मन्यन्ते, इत्यौपधेनवादयोऽष्टौ; प्रभृतिग्रहणान्निमिकाङ्कायनगार्ग्यगालवाः; एवमेतान् द्वादश शिष्यानाहुः । ननु, प्रश्नकर्तृतया सुश्रुतस्य मुख्यत्वादादावस्य नामग्रहणमुचितं स्यात्; कथमौपधेनवादिनामान्यादावुक्तानि? सत्यं, देवर्षयस्ते राजर्षीणां पूज्या इति न दोषः ॥ ३ ॥

**भगवन्! शारीरमानसागन्तुभिर्व्याधिभिर्विविधवेदनाभिघातोपद्रुतान् सनाथानप्यनाथवद्विचेष्टमानान् विक्रोशतश्च मानवानभिसमीक्ष्य मनसि नः पीडा भवति, तेषां सुखैषिणां रोगोपशमार्थमात्मनश्च प्राणयात्रार्थं प्रजाहितहेतोरायुर्वेदं श्रोतुमिच्छाम इहोपदिश्यमानम्, अत्रायत्तमैहिकमामुष्मिकं च श्रेयः; तद्भगवन्तमुपपन्नाः स्मः शिष्यत्वेनेति ॥ ४ ॥**

ऋषयस्ते तं काशिराजं प्रति किमूचुरित्याह—भगवन्नित्यादि ।—भगवन्निति संबोधने । तत्र शारीरा वातादिवैषम्यनिमित्ताः, मानसा रजस्तमःसंभूताः कामादयः, आगन्तवो व्याघ्रादिकृताः शस्त्रादिकृताश्च । स्वाभाविकानामत्राग्रहणमस्मिञ्छास्त्रे तत्प्रतीकारस्याप्राधान्यसूचनार्थम्; अथवा 'आत्मनश्च प्राणयात्रार्थं' इत्यत्रैवावरोधाच्च, ऋषीणां हि शारीरमानसागन्तुव्याध्यसंभवात् केवलं स्वाभाविकव्याधिनिषेधेनैव प्राणयात्राऽभिप्रेता । उपद्रुतान् उपसृष्टान् । सनाथानपि समित्रादिकानपि । अनाथवत् एकाकिजनवत् । विचेष्टमानान् विरुद्धां क्रियां कुर्वाणान् । एतेनायुर्वेदं विना मित्रादयोऽप्यनर्थका इति । विक्रोशतश्च विशेषादार्तस्वरं रुदतश्च । नः अस्माकम् । आत्मनश्च प्राणयात्रार्थं प्राणानामग्नीषोमादीनां यात्रार्थं व्यवहारार्थं स्वस्ववृत्तानुवर्तनार्थम् । अत्र केचित् 'आत्मप्रजाहितहेतोः' इति पठन्ति । उपदिश्यमानं संक्षेपतः कथ्यमानम् । अत्रायत्तमिति अत्रायुर्वेदोपदेशे, आयत्तं अधीनम् । ऐहिकम् इहलोकभवम्, आमुष्मिकं परलोकभवं, श्रेयः कल्याणलाभः । अर्थकामौ मित्रादिलाभो यशश्च ऐहिकं श्रेयः; स्वर्गादि विशिष्टं जन्मान्तरज्ञानादयश्च आमुष्मिकं श्रेयः, अमरत्वं च । तदिति हेतौ, यस्मादायुर्वेदोपदेशाद्द्विविधं श्रेय आयत्तं, तस्मात्; उपपन्नाः स्मः समीपमागताः स्मः; शिष्यत्वेन छात्रभावेनेति ॥ ४ ॥

**तानुवाच भगवान्—स्वागतं वः; सर्वे एवामीमांस्या अध्याप्याश्च भवन्तो वत्साः ॥ ५ ॥**

तेषामौपधेनवादीनां समीपगतानां काशिराजेन किं कृतमित्याह—तानुवाच भगवानिति । स्वागतं शोभनमागतं, वः युष्माकम् । अमीमांस्या अविचारणीयाः, प्रसिद्धजात्यादिवत्त्वात् । अध्याप्याश्च अध्यापनार्हाश्च । वत्सा इति पक्षपातातिशयत्वसूचकं संबोधनम्; अथवा वत्साः प्रथमवयसो गवां पुत्राः, वत्सा इव वत्साः; अनेन विशेषणेन प्रथमवयस्त्वं पुत्रसादृश्यं दमनीयत्वं च सूचयति ॥ ५ ॥

**इह खल्वायुर्वेदं नामोपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रं च कृतवान् स्वयम्भूः, ततोऽल्पायुष्ट्वमल्पमेधस्त्वं चालोक्य नराणां भूयोऽष्टधा प्रणीतवान् ॥ ६ ॥**

इदानीमायुर्वेदस्य सामान्यं लक्षणं दर्शयन्नाह—इह खल्वित्यादि ।—इह खल्विति वाक्यालङ्कारे, वक्ष्यमाणं वाक्यमलङ्करोति; अन्ये तु इह मयि सूत्रकारे, खलु एवार्थः; एतेन मय्येव आयुर्वेदोऽष्टाङ्गो नान्येषु सूत्रकारेषु, अन्येषामेकैकस्यैवाङ्गस्य प्रणेतृत्वात् । इहेति वाक्योपक्रमे, खलु संबोधने, इत्यपरे । उपाङ्गम् अङ्गमेवाल्पत्वादुपाङ्गं; तद्यथा—देहस्य बाहुजङ्घे शिर इत्यङ्गानि, करचरणनासिकादीन्युपाङ्गानि, एतेनोपाङ्गमित्युक्तम्; उपाङ्गमङ्गसमीपमित्येके । अनुत्पाद्यैव प्रजाः लोकसृष्टेः प्राक्, आयुर्वेदं प्रदर्श्य प्रजाः पश्चात् सृष्टवानित्यर्थः । कृतवान् संस्कृतवान्, न तु पूर्वमुत्पादितवान्; कुतः? नित्यत्वात् । स्वयम्भूः ब्रह्मा । ततोऽल्पायुष्ट्वमिति ततः प्राक्तनकरणादनन्तरमधर्मप्रवृत्तौ सत्याम्, अल्पायुष्ट्वम् अल्पजीवितत्वम्, अल्पमेधस्त्वं स्वल्पबुद्धित्वं, भूयः पुनः, अष्टधा अष्टभिः प्रकारैः ॥ ६ ॥

**तद्यथा—शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रं, रसायनतन्त्रं, वाजीकरणतन्त्रमिति ॥ ७ ॥**

अथ के तेऽष्टौ प्रकाराः? इत्याह—तद्यथेत्यादि । शल्यमिति शल्याहरणप्रधानं तन्त्रं शल्यतन्त्रम् । शलाकायाः कर्म शालाक्यं, तत्प्रधानं तन्त्रमपि शालाक्यम् । कायोऽत्राग्निरुच्यते, तस्य चिकित्सा कायचिकित्सा; अथवा कायो देहः, तस्य चिकित्सा कायचिकित्सा । भूतानि देवासुरगन्धर्वयक्षरक्षःपितृनागपिशाचा

१ 'दिवशब्देनात्र तत्स्थदेवाः' इति । २ 'धनुः शस्त्रं तात्पर्याच्छल्यशास्त्रं वा, तस्यान्तमियर्तीति पृषोदरादित्वात् साधु' इति हाराणचन्द्रः । ३ हाराणचन्द्रस्तु 'शारीरमानसागन्तुस्वाभाविकैः' इति पठति ।

१ 'नाम यदुपाङ्गं' इति, 'आयुर्वेदमष्टाङ्गमुपाङ्गमथर्ववेदस्य' इति च पा० ।

अष्टौ, तानि वेत्त्यनयेति भूतविद्या; अथवा भूतावेशापाकरणार्था विद्या भूतविद्या । कुमाराः बालाः, तेषां भृतिर्धारणं पोषणं च, तस्या भृत्या इदं तन्त्रमिति कौमारभृत्यम् । अगदो विषप्रतीकारः, तदर्थं तन्त्रमगदतन्त्रम्; अन्ये विषगरवैरोधिकसंप्रयोगो गदः, गदस्याभावः अगदः, अगदाय तन्त्रमगदतन्त्रमित्याचक्षते । रसानां रसरक्तादीनामयनमाप्यायनं रसायनं, तदर्थं तन्त्रं रसायनतन्त्रम्; अथवा रसानां रसवीर्यविपाकादीनामायुःप्रभृतिकारणानामयनं विशिष्टलाभोपायो रसायनं, तदर्थं तन्त्रं रसायनतन्त्रम् । वाजीकरणतन्त्रमिति येन स्त्रीषु विषये वाजीव नरः सामर्थ्यं प्राप्नोति तद् वाजीकरणं, येनात्यर्थं व्यज्यते स्त्रीषु तद् वाजीकरणम्; अन्ये तु वजनं वाजो वेगः प्रकर्षेणाच्छुक्रस्य, स विद्यते येषां ते वाजिनः, अवाजिनो वाजिनः क्रियन्तेऽनेनेति वाजीकरणम्; अन्ये तु वाजीशब्देन शुक्रमभिधीयते, तेन शुक्ररहितस्य वाजी शुक्रं क्रियतेऽनेनेति वाजीकरणं, तदर्थं तन्त्रं वाजीकरणतन्त्रम् । इतिशब्दोऽष्टाङ्गपरिसमाप्तौ ॥७॥

**अथास्य प्रत्यङ्गलक्षणसमासः[२] ।—**

अथेत्यादि ।—अथेत्यानन्तर्ये, अस्य आयुर्वेदस्य, प्रत्यङ्गलक्षणसमासः एकमेकमङ्गं प्रति लक्षणसंक्षेपः ॥—

**तत्र, शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावदुष्टव्रणान्तर्गर्भशल्योद्धरणार्थं[३], यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थं च (॥ १ ॥);**

किं तदेकमेकमङ्गं प्रति लक्षणं संक्षेपेणेत्याह—तत्रेत्यादि । तत्र तेष्वङ्गेषु । नामशब्दः प्रतिपादने, शल्यं प्रतिपाद्यते कथ्यत इत्यर्थः । विविधतृणादीनां पूयास्रावान्तानां दुष्टव्रणस्यान्तर्मध्यादुद्धरणार्थमुद्धरणप्रयोजनं, तथा गर्भशल्यस्यापि । उद्धरणार्थमित्यस्याग्रे 'षष्ठ्या विधानैः' इति केचित् पठन्ति, व्याख्यानयन्ति च—अपतर्पणाद्यै रक्षाविधानान्तैर्द्विव्रणीयोक्तैरित्यर्थः । प्रणिधानार्थं निवेशनार्थम् । न केवलं काष्ठतृणादि शल्यं, किंतु "अतिप्रवृद्धं मलदोषजं वा शरीरिणां स्थावरजङ्गमानाम् । यत्किंचिदाबाधकरं शरीरे तत् सर्वमेव प्रवदन्ति शल्यम्"—इति (॥ १ ॥)॥

**शालाक्यं नामोर्ध्वजत्रुगतानां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थम् (॥२॥);**

शालाक्यमित्यादि । जत्रु ग्रीवामूलम्, अन्ये वक्षोंऽससन्धिमाहुः । वदनमत्र मुखकुहरमाहुः । घ्राणादिसंश्रितानामित्यत्र आदिशब्दाच्छिरःकपालादिसंश्रितानाम् (॥ २ ॥) ॥

**कायचिकित्सा नाम सर्वाङ्गसंश्रितानां व्याधीनां ज्वररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहातिसारादीनामुपशमनार्थम् (॥ ३ ॥);**

कायचिकित्सेत्यादि । केचिज्ज्वरानन्तरमतिसारं पठन्ति; तन्न, पञ्जिकया दूषितत्वात् (॥ ३ ॥) ॥

**भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादिग्रहोपशमनार्थम् (॥ ४ ॥);**

भूतविद्येत्यादि । असुरा दैत्याः, गन्धर्वा देवगायकाः, यक्षा धनदादयः, रक्षांसि रावणप्रभृतीनि, पितरः अग्निष्वात्तादयः, पिशाचाः पिशिताशनाः; एते ग्रहणाद् ग्रहाः प्रोच्यन्ते । शान्तिकर्मबलिहरणादिग्रहोपशमनार्थं शान्तिकर्मादिभिरष्टग्रहोपशमनप्रयोजनम् (॥ ४ ॥) ॥

**कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामुपशमनार्थम् (॥ ५ ॥);**

कौमारभृत्यमित्यादि । दुष्टस्तन्यग्रहसमुत्थानां चेति दुष्टस्तन्येन दुष्टग्रहेण च जातानामित्यर्थः; तत्र दुष्टस्तन्येन शारीराः, दुष्टग्रहेणागन्तवः (॥ ५ ॥) ॥

**अगदतन्त्रं नाम सर्पकीटलूतामूषकादिदष्टविषव्यञ्जनार्थं[१] विविधविषसंयोगोपशमनार्थं च (॥६॥);**

अगदतन्त्रमित्यादि । कीटा वृश्चिकादयः; लूता मर्कटः, कीटभेदो वा । विविधविषसंयोगोपशमनार्थमिति विविधानां नानाप्रकाराणां स्थावरजङ्गमानां विषाणां, संयोगः सङ्गमः, तदुपशमाय । अन्ये तु 'विविधविषसंयोगविषोपहतोपशमार्थं च' इति पठन्ति । संयोगविषं समानमद्युष्टादि (॥ ६ ॥) ॥

**रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थं च (॥ ७ ॥);**

रसायनतन्त्रमित्यादि । वयःस्थापनं वर्षशतमायुःस्थापनम् । आयुष्करं शताधिकमपि करोति । अन्ये तु वयःस्थापनं जरापहरणं, तारुण्यं बहुकालं स्थापयतीत्यर्थः (॥ ७ ॥) ॥

**वाजीकरणतन्त्रं नामाल्पदुष्टक्षीणविशुष्करेतसामाप्यायनप्रसादोपचयजननिमित्तं प्रहर्षजननार्थं[२] च (॥ ८ ॥) ॥ ८ ॥**

वाजीकरणतन्त्रमित्यादि । अल्परेतसः प्रकृत्यैव स्तोकरेतसः, तेषामाप्यायननिमित्तं; दुष्टरेतसो वातादिदुष्टरेतसः, तेषां प्रसादनिमित्तं; क्षीणरेतसः कारणैः स्वमानादल्पीभूतरेतसः, तेषामुपचयनिमित्तं; विशुष्करेतसः स्वमानादत्यर्थं क्षीणरेतसः, तेषां जनननिमित्तम् । अथवाऽल्परेतसः पञ्चविंशतिमप्राप्ताः, क्षीणरेतसस्तु मध्यवयसः कारणादल्पीभूतरेतसः, शुष्करेतसो वृद्धाः । प्रहर्षजननार्थं चेति स्वस्थस्य शुक्रवृद्धिस्रुतिकरणार्थं चेत्यर्थः (॥ ८ ॥) ॥ ८ ॥

**एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते; अत्र कस्मै किमुच्यतामिति ॥ ९ ॥**

१ 'प्रस्तावात्' इति पा० । २ 'अथास्य प्रत्यङ्गलक्षणं समासेनोपदेक्ष्यामः' इति, 'प्रत्येकाङ्गलक्षणसमासः' इति, 'प्रत्येकमङ्गलक्षणसमासः' इति च पा० । ३ 'पूयास्रावगर्भशल्योद्धरणार्थं' इति, 'पूयास्रावान्तर्गर्भशल्योद्धरणार्थं' इति च पा० ।

१ '°लूतावृश्चिक°' इति पा० । २ 'विशुष्कं ग्रन्थीभूततया विशेषेण शुष्कमिव, क्षीणं व्याध्यादिभिः स्वमानाद्धीनं' इति हाराणचन्द्रः ।

एवमयमिति ।—एवमनेन प्रकारेण । अत्रेति एषु मध्ये । किमङ्ग कस्मै शिष्यायोपदिश्यतां व्याख्यायताम् । इतिशब्दः सामान्येन ॥ ९ ॥

**त ऊचुः—अस्माकं सर्वेषामेव शल्यज्ञानं मूलं कृत्वोपदिशतु भगवानिति ॥ १० ॥**

**स उवाचैवमस्त्विति ॥ ११ ॥**

त ऊचुः ते शिष्या धन्वन्तरिं प्रति ऊचुः उक्तवन्तः । शल्यज्ञानं मूलं कृत्वा शल्यज्ञानमादौ कृत्वा । सः धन्वन्तरिः, उवाच उक्तवान्, एवमस्त्विति एवं भवत्विति । 'स होवाच' इति केचित् पठन्ति; तैः शिष्यैः सहेत्यर्थः ॥ १० ॥ ११ ॥

**त ऊचुर्भूयोऽपि भगवन्तम्—अस्माकमेकमतीनां मतमभिसमीक्ष्य सुश्रुतो भगवन्तं प्रक्ष्यति, अस्मै चोपदिश्यमानं वयमप्युपधारयिष्यामः ॥ १२ ॥**

**स उवाचैवमस्त्विति ॥ १३ ॥**

प्रक्ष्यति पृच्छां करिष्यति ॥ १२ ॥ १३ ॥

**वत्स सुश्रुत ! इह खल्वायुर्वेदप्रयोजनं—व्याध्युपसृष्टानां व्याधिपरिमोक्षः, स्वस्थस्य रक्षणं च ॥१४॥**

'वत्स सुश्रुत' इति संबोधने । अस्याग्रे 'अथात' इत्यादिका प्रतिज्ञा ज्ञातव्येति पूर्वमेवोक्तम् । इह खल्वित्यधिकारे, इह खलु आयुर्वेदोत्पत्त्यधिकारे इत्यर्थः । व्याधिशब्दोऽयं दुष्टेषु वातादिषु, तत्कार्येषु ज्वरादिषु क्लेशेषु, रागादिषु दुःखेषु संसारानुवृत्तिजनकेषु च, वर्तते; परिमोक्षो निवृत्तिः । ननु, व्याधिपरिमोक्षस्वस्थरक्षणाभ्यामन्यदपि प्रयोजनमस्ति, किं तत् ? याप्यव्याधितरक्षा रसायनादायुरुत्कर्षश्च, तदिदं वक्तव्यम्; उच्यते—स्वस्थस्य रक्षणं चेति चकारोऽनुक्तसमुच्चयार्थः, तेन याप्यव्याधितरक्षणं रसायनादायुरुत्कर्षश्च; अथवा साध्यव्याधौ क्रियैकत्वाद् याप्यावरोधः, रसायनादायुरुत्कर्षस्तु स्वस्थरक्षयैव गृह्यते ॥१४॥

**'आयुरस्मिन् विद्यते, अनेन वाऽऽयुर्विन्दन्ति' इत्यायुर्वेदः ॥ १५ ॥**

आयुर्वेदस्य निरुक्तिं दर्शयन्नाह—आयुरस्मिन्नित्यादि । आयुः शरीरेन्द्रियसत्त्वात्मसंयोगः, तदस्मिन्नायुर्वेदे विद्यते अस्तीत्यायुर्वेदः; अथवा आयुर्विद्यते ज्ञायते अनेनेत्यायुर्वेदः; आयुर्विद्यते विचार्यते अनेन वेत्यायुर्वेदः; आयुरनेन विन्दति प्राप्नोतीति वाऽऽयुर्वेदः ॥ १५ ॥

**तस्याङ्गवरमाद्यं प्रत्यक्षागमानुमानोपमानैरविरुद्धमुच्यमानमुपधारय ॥ १६ ॥**

तस्याङ्गवरमित्यादि ।—अङ्गवरम् अङ्गश्रेष्ठम् । आद्यम् आदिभवम् । प्रत्यक्षागमानुमानोपमानैरविरुद्धमिति अनेन शल्येनाङ्गवरेण योऽर्थः प्रतिपाद्यते स खलु प्रत्यक्षादिभिरपि तथा ऽवगम्यत इत्यर्थः । प्रत्यक्षमिति यत्किंचिदेवार्थस्य साक्षात्कारिज्ञानं तदेव प्रत्यक्षं, तथाहि,–"मनोऽक्षगतमभ्रान्तं वस्तु प्रत्यक्षमुच्यते । इन्द्रियाणामसंज्ञानं वस्तुतत्त्वे भ्रमः स्मृतः—" इति; प्रत्यक्षाविरुद्धं यथा,—सूर्यावलोकनान्नासान्तः सूत्रवर्तिप्रवेशनाच्च क्षुतः प्रादुर्भावः । आगमो वेदः, आप्तानां शास्त्रं वा; तथाहि,—"सिद्धं सिद्धैः प्रमाणैस्तु हितं चात्र परत्र च । आगमः शास्त्रमाप्तानामाप्तास्तत्त्वार्थवेदिनः"—इति; आगमाविरुद्धं यथा—पुराणादिष्वपि श्रूयते—"रुद्रेण यज्ञस्य शिरश्छिन्नमश्विभ्यां संहितम्" इति । आगमस्य प्रत्यक्षफलत्वाद् वरीयस्त्वं, तेनानुमानात् पूर्वं निर्दिष्टवान् । अनु पश्चाद्व्यभिचारिलिङ्गालिङ्गी मीयते ज्ञायते येन तदनुमानं; तेनानुमानेनाविरुद्धं यथा—प्रनष्टे शल्ये चन्दनघृतोपदिग्धायां त्वचि विशोषणविलयनाभ्यामनुमीयते—अत्र शल्यमिति । प्रसिद्धसाधर्म्यात् सूक्ष्मव्यवहितविप्रकृष्टस्यार्थस्य साधनमुपमानं; तेनाविरुद्धं यथा—माषवन्मषकः, तिलमात्रस्तिलकालकः, विदारीकन्दवद् विदारीरोगः, शालूकवत् पनसिकेत्यादि । उच्यमानम् उपदिश्यमानम् । मया धन्वन्तरिणेत्यर्थः ॥ १६ ॥

**एतद्ध्यङ्गं प्रथमं, प्रागभिघातव्रणसंरोहाद्यज्ञशिरःसन्धानाच्च । श्रूयते हि यथा—"रुद्रेण यज्ञस्य शिरश्छिन्नमिति, ततो देवा अश्विनावभिगम्योचुः—भगवन्तौ नः श्रेष्ठतमौ युवां भविष्यथः, भवद्भ्यां यज्ञस्य शिरः सन्धातव्यमिति । तावूचतुरेवमस्त्विति । अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रासादयन् । ताभ्यां यज्ञस्य शिरः संहितम्" इति १७**

शल्याङ्गस्याद्यत्वं प्रतिपादयन्नाह—एतद्धीत्यादि ।—हिशब्दोऽवधारणे, एतेनैतदेवाङ्गं प्रथममाद्यं प्रधानं वा । कस्मात् प्रथमं ? प्रागभिघातव्रणसंरोहात् ।–शारीरव्याधीनां प्रागेव देवासुरसंग्रामेऽभिघातव्रणोत्पत्तिः, तत्संरोहात् । द्वितीयहेतुमाह—यज्ञशिरःसंधानाच्चेति । अत्रापि प्रागिति संबध्यते । अन्ये त्वत्र 'यज्ञप्रधानशिरःसंधानाच्च' इति पठन्ति । यतः प्राग्यज्ञस्य प्रधानभूतस्य शिरसः संधानं तस्मादिदमाद्यम् । अत्रैव पारम्पर्योपदेशमाह—श्रूयते हीत्यादि यावत्संहितमिति । अत्र केचित् 'संहितं' इत्यत्र 'सन्धितं' इति पठन्ति ॥ १७ ॥

**अष्टास्वपि चायुर्वेदतन्त्रेष्वेतदेवाधिकमभिमतम्, आशुक्रियाकरणाद्यन्त्रशस्त्रक्षाराग्निप्रणिधानात् सर्वतन्त्रसामान्याच्च ॥ १८ ॥**

इदानीं वरत्वे प्रतिज्ञातं हेतुं प्रतिपादयन्नाह—अष्टास्वित्यादि । एतदेवाधिकमिति एतदेवाधिकं नान्यच्छालाक्यादि । कस्मात् ? आशुक्रियाकरणात् । कुतोऽस्य पुनराशुक्रियाकरणत्वं ? यन्त्रादिप्रणिधानात्, न हि यन्त्रादिषु प्रणिधाने मन्दा क्रिया कर्तुं युक्ता, मन्दकारित्वे ह्यातुरस्य व्यापत्तिः स्यात् । वरत्वे द्वितीयं हेतुमाह—सर्वतन्त्रसामान्याच्च; शालाक्यादितन्त्रतुल्यत्वाच्च । 'अधिकक्रियाकरणात्' इति केचित् पठन्ति । अधिकक्रियाकरणमप्य-

---

१ 'स्वास्थ्यरक्षणं च' इति पा० । २ 'आगमप्रत्यक्षानुमानोपमानैः' इति पा० ।

स्य यन्त्रादिप्रणिधानात् सर्वतन्त्रसामान्याच्च हेतुभ्याम् । अन्ये तु वरत्वे आशुक्रियाकरणादिति हेतुत्रयमाहुः; आशुक्रियाकरणात् शीघ्रं छेदादिक्रियाकरणादिति व्याख्यानयन्ति ॥ १८ ॥

**तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरं चेति ॥ १९ ॥**

अतः शिष्योत्साहनाय यथाभूतां प्रशंसामाह—तदिदमित्यादि ।—तदिदं शल्यतन्त्रं; शाश्वतम् अविनाशि, अथवा शाश्वतशब्देन मोक्षोऽभिधीयते, तत्संपादनाच्छाश्वतं; पुण्यं पुण्यहेतुत्वात्; स्वर्गस्य निमित्तं स्वर्गाय हितं वा स्वर्ग्यं; यशसो निमित्तं यशसे हितं वा यशस्यम्; आयुषो निमित्तमायुषे हितं वा आयुष्यं; वृत्तिकरं चेति निर्वाहकरम् ॥ १९ ॥

**ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे, तस्मादश्विनौ, अश्विभ्यामिन्द्रः, इन्द्रादहं, मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः ॥ २० ॥**

इदानीं क्रमागतिं प्रतिपादयन्नाह—ब्रह्मा प्रोवाचेत्यादि । प्रोवाच प्रथमं कथितवान् । तस्मात् प्रजापतिरधिजगे इति प्रजापतिर्दक्षः, अधिजगे अधीतवान् । मया त्विहेति स्वर्गे ब्रह्मणैवार्थिभ्यः प्रथमं दत्तं, मया धन्वन्तरिणा पुनरिह मर्त्यलोके प्रदेयं प्रथमं दातव्यमिति ॥ २० ॥

**भवति चात्र—**

**अहं हि धन्वन्तरिरादिदेवो**
**जरारुजामृत्युहरोऽमराणाम् ॥**
**शल्याङ्गमङ्गैरपरैरुपेतं**
**प्राप्तोऽस्मि गां भूय इहोपदेष्टुम् ॥ २१ ॥**

अथ काशिराजः शिष्यप्रतीत्यर्थं श्लोकमाह—भवति चात्रेत्यादि । आदिदेवः शङ्करः; अन्ये तु, आदिदेवा ब्रह्मादयः, कर्मदेवाः शतक्रतुप्रभृतयः, प्रजननदेवास्तु प्रयोजनजनिताः स्कन्दादयः, तेषामहमादिदेवः; आदिदेवत्वेऽपि काशिराजत्वमुपपन्नमवतारान्तरमापन्नत्वात् । जरारुजामृत्युहरोऽमराणामिति एतेनैतदुक्तं—देवानामपि पुरा जरादयस्तस्थुः, ते च मया आदिदेवेन हृताः । प्राप्तोऽस्मि गां भूय इहोपदेष्टुमिति पूर्वमहं देवकार्यार्थं स्वर्गं प्राप्तः, इदानीं गां पृथिवीं, भूयः पुनः, प्राप्तोऽस्मि आगतोऽस्मि; इह मर्त्यलोके, मनुष्यकार्यार्थमुपदेष्टुम् । अन्ये 'शल्यं महच्छास्त्रवरं गृहीत्वा' इति पठन्ति । स्वमाहात्म्यप्रकाशनमपि परार्थत्वाद्यथाभूतत्वाच्च न दोषाय ॥ २१ ॥

**अस्मिञ्छास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते । तस्मिन् क्रिया, सोऽधिष्ठानं; कस्मात्? लोकस्य द्वैविध्यात्; लोको हि द्विविधः स्थावरो जङ्गमश्च; द्विविधात्मक एवाग्नेयः सौम्यश्च, तद्भूयस्त्वात्; पञ्चात्मको वा; तत्र चतुर्विधो भूतग्रामः संस्वेदजजरायुजाण्डजोद्भिज्जसंज्ञः; तत्र पुरुषः प्रधानं, तस्योपकरणमन्यत्; तस्मात् पुरुषोऽधिष्ठानम् ॥ २२ ॥**

अस्मिञ्छास्त्रे पञ्चमहाभूतेत्यादि । पञ्चमहाभूतानि पृथिव्यादीनि, शरीरी आत्मा, समवायः संयोगः । अन्ये तु 'तत्रास्मिञ्छास्त्रे' इति पठन्ति; तत्रेत्यनेन शल्यतन्त्रमधिक्रियते, तस्मिन् शल्यशास्त्रे, अस्मिन्निति अस्मिन्नधिकारे; किं विशेषवति? उच्यते—क्रियाधिकारे व्याध्यधिष्ठानप्रस्तावे च । तस्मिन् क्रियेति तस्मिन्निति पूर्वनिर्दिष्टे पुरुषे, क्रिया शास्त्रोदितं कर्म, किं तत्? भेषजशस्त्रक्षाराग्निनिर्वर्त्यं स्वास्थ्यवृत्तिकरं च । कस्मात् तस्मिन्नेव क्रियेत्याह—सोऽधिष्ठानमिति ।—यस्मात् सः पुरुषः, अधिष्ठानं आश्रयः; कस्य? व्याधेः स्वास्थ्यस्य च । अधिष्ठानत्वे हेतुमाह—कस्मादिति । लोकस्य जगतः, द्वैविध्याद् द्विप्रकारत्वात् । लोको हीत्यादि हि यस्मादर्थे । स्थावरो वृक्षादिः, जङ्गमो मनुष्यादिः । चिकित्सोपयोगिधर्मद्वयं प्रतिपादयितुमाह—द्विविधात्मक एवेत्यादि । अग्निभूताधिदैवतस्वभावमाग्नेयं, सोमभूताधिदैवत-

(१)………'पुरुषशब्देन चेह सामान्येन प्राणिवाचिनाऽपि प्रकरणान्मनुष्यरूप एव पुरुष उच्यते । यतो 'मानवानभिसमीक्ष्य' इत्यादिना तथा 'तस्योपकरणमन्यत्' इत्यादिना नरजातिरेवात्र पुरुषोऽधिकृतः । सामान्यशब्दोऽपि प्रकरणाद्विशेषे वर्तत एव ।… … तस्मादेवंभूत एवात्र पुरुष उच्यते, न पुनश्चेतनाधातुमात्ररूपः प्राणिमात्ररूपो वेत्याह—तस्मिन् क्रियेति ।……कुतः पुनस्तस्मिन्नेव क्रिया न पुनर्हस्त्यश्वादावपि प्राणिमात्रे इत्याशङ्कायां हेतुगर्भं विशेषणमाह—सोऽधिष्ठानमिति । स एव नरजातिः पुरुषो यस्मादिहायुर्वेदविधेयचिकित्सारूपायाः क्रियायास्तथा क्रियाफलस्यास्यारोग्यादेरधिष्ठानमाश्रयो न तु गजादिः, तस्मात्तस्मिन्नेव क्रिया । अथ कथं गजादयो वृक्षादयश्च नास्याधिष्ठानमित्याशङ्का, ततः प्रश्नः—कस्मादिति । तदत्र प्रधानत्वेन नर एवाधिकारीति दर्शयन्नाह—लोकस्य द्वैविध्यादित्यादि । लोकद्वैविध्येन नरव्यतिरिक्तस्य स्थावरजङ्गमस्य यस्मान्नरोपकरणत्वं, नरस्तूपकार्यः, तस्मान्नर एव प्रधानत्वादधिष्ठानमिति प्रकरणार्थः । प्रधाननरविवेचनार्थमुक्तद्वैविध्यं विभजते—स्थावरो जङ्गमश्चेति ।… …द्विविधताविवरणप्रस्तावाच्चिकित्सोपयुक्तं प्रकारान्तरेण द्वैविध्यमाह—द्विविधात्मक एवाग्नेयः सौम्यश्च । द्विविध आत्मा अग्नीषोमरूपः स्वभावो यस्य स तथा । पृथिव्यादिगुणोत्कर्षतया पञ्चात्मकत्वमपि भवतीत्याह—पञ्चात्मको वेति ।… जङ्गमप्रभेदं वर्णयितुं जङ्गमप्रकारानाह—तत्रेत्यादि । एवं प्रपञ्चिते लोके तस्य प्रधानत्वमाह—तत्र पुरुषः प्रधानं तस्योपकरणमन्यदिति । अन्यत् पश्वादि वृक्षादि चेह शास्त्रे नरोपकरणतया प्रतिपादनीयं,… अपि च नर एव धर्मार्थकाममोक्षसाधकतया उपदेशानुष्ठानक्षमतया च विशेषेणोपकारविषयमधिकरोति ।… … सोऽधिष्ठानमिति प्रतिज्ञातमर्थमितरलोकोपकरणीयतया व्यवस्थापितं निगमनेन पुनर्दर्शयति—तस्मात् पुरुषोऽधिष्ठानमिति" इति भानुमत्यां चक्रः । "अत्रायमाशयः—मनुष्याधिकारकमिदं शास्त्रं, मनुष्यलोके च चतुर्विध एव भूतग्रामः, तत्र च मनुष्यसंज्ञकः पुरुषः प्रधानं, तदुपपन्नं तस्याधिष्ठानत्वं, द्विविधे तु लोके 'बुद्धिमत्सु नराः श्रेष्ठाः' (म. अ. १, श्लो. ९६) इति मनूक्तेः मनुष्याणामेव प्राधान्यमिति तस्याधिष्ठानत्वेऽलोकिर्नासङ्गता" इति हाराणचन्द्रः ।

१ 'तद्विधेयत्वात्' इति गणनाथसेनसंमतः पाठः । २ 'स्वेदजाण्डजोद्भिज्जजरायुजसंज्ञः' इति पा० ।

स्वभावं सौम्यम् । अन्ये द्विविधात्मको द्विविधहेतुक इति व्याख्यानयन्ति; तन्न, पञ्जिकया दूषितत्वात् । ननु, सर्वभूतानां सर्वत्र सान्निध्यमस्ति तत् कथं द्विविधात्मक इत्याह—तद्भूयस्त्वादिति । तद्बाहुल्यादित्यर्थः । प्रायेण हि सर्वं द्रव्यं शीतमुष्णं न तृतीयो राशिरस्ति, अतो द्वावेव अग्नीषोमौ भूयांसौ । अधुनाऽविशेषेण द्वितीयं पक्षमाह—पञ्चात्मको वेति ।—वाशब्दः पक्षान्तरे; तेन स द्विविधोऽपि लोकः पञ्चात्मकः पञ्चस्वभाव इत्ययं वा पक्षः । इदानीं जङ्गमान् पृथक्कर्तुमाह—तत्रेत्यादि ।—तत्र तयोः स्थावरजङ्गमयोर्मध्ये, चतुर्विधः चतुष्प्रकारः, भूतग्रामः प्राणिसमूहः । अथ के ते चत्वारः प्रकारा इत्याह—संस्वेदजेत्यादि ।—भुवः शरीरस्य च संस्वेदादूष्मणो जाताः संस्वेदजाः; जरायोर्जाता जरायुजाः, जरायुर्गर्भाशयः; अण्डाज्जाता अण्डजाः, अण्डं प्राण्याधारो वर्तुलं; भुवमुद्भिद्य जाता उद्भिज्जाः; संज्ञाशब्दः प्रत्येकं संबध्यते । चतुर्धा निपतितानामूष्माणं विना कस्यचित् सिद्धिर्नास्तीति संस्वेदजस्य प्राङ्निर्देशः; केचिदन्यथाक्रमं पठन्ति; तन्न, पञ्जिकया दूषितत्वात् । लोकद्वैविध्यादिति प्रागुद्दिष्टहेत्वर्थं स्फुटीकुर्वन्नाह—तत्र पुरुष इति ।—तत्र तयोः स्थावरजङ्गमयोर्मध्ये पुरुषः प्राधान्येन गुणेन पृथक् क्रियते । यद्यप्यत्र पञ्चमहाभूतशरीरिसमवायः पुरुष इति सामान्येन पुरुषशब्देन पश्वादिरपि वाच्यः, तथाऽपि मनुष्यजातिरेवात्र पुरुषशब्देनोच्यते, तस्योपकार्यत्वात्; इतरस्य चाप्राधान्यम्, उपकरणत्वात्; अत एवाह—तस्योपकरणमन्यदिति ।—तस्य मनुष्यजातेः पुरुषस्य, अन्यत् स्थावरसंस्वेदजादि, उपकरणम् । उपकरणत्वादप्रधानत्वमित्यत आह—तस्मात् पुरुषोऽधिष्ठानम् । तत्र पुरुषः प्रधानमित्यत्र 'तेषु चतुर्षु संस्वेदजादिषु मध्ये' इत्यन्ये व्याख्यानयन्ति ॥ २२ ॥

**तद्दुःखसंयोगा व्याधय उच्यन्ते ॥ २३ ॥**

ननु, के ते व्याधयो येषां पुरुषोऽधिष्ठानमित्याह—तद्दुःखेत्यादि ।—तच्छब्देनानन्तरनिर्दिष्टः पुरुषोऽधिक्रियते, दुःखं कायवाङ्मानसी पीडा । विविधं दुःखमादधतीति व्याधयः, तस्य पुरुषस्य दुःखाय संयोगो येषामागन्तुप्रभृतीनां ते व्याधयः; अथवा तस्य पुरुषस्य येषु सत्सु, यैर्वा करणभूतैः, येभ्यो वा दुःखं जायते, ते व्याधयः । एतौ वाक्यार्थौ न्याय्यौ । अन्ये तु तस्य पुरुषस्य दुःखानां वेदनानां ये संयोगास्ते व्याधयः; अपरे तु दुर्दुष्टानि खानि स्रोतांसि दुःखानि, तस्य पुरुषस्य दुःखानां दुष्टस्रोतसां निमित्तं संयोगो येषां ते तथोक्ताः । एतावन्याय्यौ, पञ्जिकया दूषितत्वात् ॥ २३ ॥

**ते चतुर्विधाः—आगन्तवः, शारीराः, मानसाः, स्वाभाविकाश्चेति ॥ २४ ॥**

ते चतुर्विधा इत्यादि । पूर्वमुत्पन्नत्वादागन्तोः प्रागभिधानं; ततः शारीराः, शरीरस्य प्राधान्यात्; ततः शेषाविति । स्वभावेन भवन्तीति स्वाभाविकाः, स्वभावो ह्यत्र सहजो धर्मः । आगन्तुप्रभृतयः पूर्वं व्याख्याताः । स्वाभाविकाश्चेति चकारः स्वाभाविकस्य व्याधेरागन्तुप्रभृतिभिः सहातुल्यबलतां सूचयति । इतिशब्दश्चतुष्प्रकारसमाप्तौ ॥ २४ ॥

**तेषामागन्तवोऽभिघातनिमित्ताः (॥ १ ॥);**

इदानीमागन्तुप्रभृतीनेव विवरितुमाह—तेषामित्यादि । अभिघातनिमित्ता इति अभिघातः अभिहननं शरादिप्रहारः, स एव निमित्तं येषां ते तथोक्ताः (॥ १ ॥) ॥

**शारीरास्त्वन्नपानमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः (॥ २ ॥);**

अन्नपानमूला इति सामर्थ्याद्विषमान्नहेतवः, न ह्यन्नसाम्यं व्याधिहेतुः । तच्चान्नवैषम्यं स्वस्थवृत्तवैषम्यमुपलक्षयति, तेन कालवैषम्यं कायवाङ्मनोविहारवैषम्यमिन्द्रियार्थवैषम्यं च लक्षयति । 'शारीराणां विकाराणामेष वर्गश्चतुर्विधः । प्रकोपे प्रशमे चैव हेतुरुक्तश्चिकित्सकैः'—इत्येषां ग्रहणमकृत्वा, अन्नग्रहणेनैतानुपलक्षयन्नेतल्लक्षयति—यथाऽन्नमेवैषां संभवे प्रधानहेतुस्तथा नान्ये । वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ता इति वातादीनां सन्निपातान्तानां वैषम्यं विषमता तदेव निमित्तं येषां ते तथोक्ताः; ते पुनर्वातादीनां संचयादिज्ञापका वातपूर्णकोष्ठतादयो व्याधयः । तच्च वैषम्यं क्षयेण वृद्ध्या वा । दोषप्रस्तावे दूष्यशोणितग्रहणे हेतुर्वक्तव्यः ? उच्यते—एतद्धि शल्यतन्त्रं, शल्यतन्त्रे च व्रणः प्रधानभूतः, व्रणे च दूष्येषु मध्ये रक्तस्य प्राधान्यमिति शोणितोपादानम्; अन्ये तु दोषदूषितत्वाद्रक्तमपि व्याध्युत्पत्तिनिमित्तं भवति, वक्ष्यति चैवं,—"दोषदूषितेष्वत्यर्थं धातुषु संज्ञा क्रियते—रसजोऽयं, शोणितजोऽयम्" ( सू० अ० २४ ) इत्यादि; शोणितजोऽयमित्यादिव्यपदेशो घृतादिदग्धवत् । अन्यनिबन्धकारैर्बहूक्तं, तच्च शिष्यबुद्धिव्याकुलत्वहेतुत्वादस्माभिरुपेक्षितम् (॥ २ ॥) ॥

**मानसास्तु क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतय इच्छाद्वेषभेदैर्भवन्ति (॥ ३ ॥);**

मानसान् प्रतिपादयन्नाह—मानसास्त्वित्यादि । क्रोधः पराभिद्रोहलक्षणः, शोकः पुत्रादिवियोगे चित्तोद्वेगः, भयं परस्मात्रासः, हर्ष उत्सेकः, निर्निमित्तमन्यस्य दोषोत्पादनेनात्मनः प्रीतिजननं वा हर्षः, असिद्धिभयाद्विविधेषु कर्मसु सादोऽप्रवृत्तिः विषादः, ईर्ष्या परसंपत्तावसहिष्णुता, छिद्रान्वेषितया परगुणेषु दोषारोपणमसूया, दैन्यं क्लिष्टचित्तता, मात्सर्यं परगुणेष्वमाध्यस्थ्यं क्रौर्यं वा, काम इन्द्रियार्थेष्वभिकाङ्क्षा, लोभः परस्वग्रहणाभिलाषः, आदिग्रहणान्मानमददम्भादयः । इच्छाद्वेषभेदैर्भवन्तीति इच्छा सातिशयोऽर्थाभिलाषः, सा च नानावस्त्ववलम्बिनी नानाकामतश्च भिन्ना भवति; तत्र हर्षशोकदैन्यकामलोभादय इच्छाभेदेन; द्वेषः अप्रीतिः, सोऽपि नानावस्त्ववलम्बी नानारूपो भवति, क्रोधभयविषादेर्ष्यासूयामात्सर्याणि द्वेषभेदेन । अन्ये तु 'मानसाः क्रोधशोकभयदैन्येर्ष्यासूयामात्सर्यकामादयः' इति पठन्ति (॥ ३ ॥)

**स्वाभाविकास्तु क्षुत्पिपासाजरामृत्युनिद्राप्रकृ(भृ)तयः (॥ ४ ॥) ॥ २५ ॥**

१ 'भूयांसौ अमुना विशेषेण ।' इति पा० । २ 'चतुर्योनिनिपतितानां' इति पा० । ३ 'अत्र प्रागागन्तुकरणं, प्रागेवाभिघातव्याधेरुत्पन्नत्वात्' इति पा० । ४ 'पूर्वं' इति पा० ।

१ 'अन्नपानवैषम्यं तु' इति पा० ।

स्वाभाविकान् व्याख्यातुमाह—स्वाभाविकास्त्वित्यादि । क्षुद् भोक्तुमिच्छा, पिपासा पातुमिच्छा, जरा वार्धक्यं, मृत्युः[1] शरीरेन्द्रियात्ममनसां वियोगः, निद्रा मेध्यानाडीमनःसंयोगाद्देहेन्द्रियाणां सुखभोगः; प्रकृतिग्रहणात् प्रकृतिभवा रोगा गृह्यन्ते, ते च कदाचित् स्वाभाविकाः कदाचिद्दोषजाः । तत्र, यदा प्रवृद्धपित्तस्य क्षीणश्लेष्मणो भस्मकानलेन बुभुक्षा भवति सा प्रतीकार्या दोषजत्वात्, पिपासाऽपि यदा दोषैः क्रियते तस्या अपि दोषतः प्रसाधनं कर्तव्यं, जराऽपि यदाऽकाले भवति सा प्रतीकार्या, मृत्युरप्यकालजः प्रतीकार्यः, निद्राऽपि दोषजा प्रतीकारादुपशमं याति; तत्र यदैते सर्वे दोषेभ्यो जायन्ते तदा शारीराः प्रतीकार्याश्च; यदा तु स्वभावतस्तदा निष्प्रतीकारा रसायनतोऽपि न प्रतीकार्याः । त एते स्वभावसंभूतत्वात् स्वाभाविकाः कथ्यन्ते । यद्यपि क्षुत्पिपासाजरासु स्वभावसंभूतास्वपि पित्तजत्वं निद्रायां श्लेष्मतमोभवत्वमस्ति; तथाऽप्यल्पदोषारब्धत्वाददोषजत्वमुच्यते, एकतण्डुलाहारिणामनशनव्यपदेशवत् । मृत्युस्तु महद्भिरपि स्वभावानुवर्तिभिर्दोषैरारब्धोऽपि न दोषजव्यपदेशं लभते; यथा राजानुवर्तिभिर्महद्भिरपि पुरुषैः संपादितं जयादिकं राजव्यपदेशं लभते—राज्ञा जितमिति, तद्वदत्रापि; आगन्तुमृत्योः संभवत्वाच्च नावश्यं दोषजव्यपदेशं लभते । अन्ये 'निद्राप्रकृतय' इत्यत्र 'निद्राप्रभृतय' इति पठन्ति; प्रभृतिग्रहणाद्रात्रिजागरणादय इति व्याख्यानयन्ति ( ॥ ४ ॥ ) ॥ २५ ॥

**त एते मनःशरीराधिष्ठानाः ॥ २६ ॥**

व्याधीनामाश्रयमाह—त एते इत्यादि । त एते अनन्तरोक्ता व्याधयः । तत्र मनोऽधिष्ठानाः क्रोधादयः, शरीराधिष्ठाना ज्वरादयः, उभयाधिष्ठाना अपस्मारादयः । यद्यपि मानसा अपि शरीरं पीडयन्ति, शारीरा अपि मनः पीडयन्ति; तथाऽपि प्राङ्मानसा एव मनः पीडयन्ति पश्चाच्छरीरम्, एवं शारीरा अपि, इति न दोषः । आत्मनि तु व्याध्यधिष्ठानत्वं नास्ति, निर्विकारत्वात् ॥ २६ ॥

**तेषां संशोधनसंशमनाहाराचाराः सम्यक्प्रयुक्ता निग्रहहेतवः ॥ २७ ॥**

व्याधीन् निर्दिश्य चिकित्सां निर्देष्टुमाह—तेषामित्यादि । तेषां व्याधीनाम् । सम्यक् शोधयतीति संशोधनं; तद्द्विविधं—बहिराश्रयमभ्यन्तराश्रयं च । तत्र बहिराश्रयं शस्त्रक्षाराग्निप्रलेपादयः; अभ्यन्तराश्रयं चतुष्प्रकारं-वमनं, विरेचनम्, आस्थापनं, शोणितमोक्षणं च; अन्ये तु शोणितमोक्षणमित्यत्र शिरोविरेचनं मन्यन्ते । यत् किंचित् पीतलीढादिकमनिर्हृत्य दोषं शमयति तत् संशमनं; यदुक्तं,—"न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति क्रुद्धांश्च तत् संशमनमुच्यते—" इति । तदपि द्विविधं बाह्यमाभ्यन्तरं च । तत्र बाह्यमालेपपरिषेकावगाहाभ्यङ्गशिरोबस्तिकवलग्रहगण्डूषादिकम्, आभ्यन्तरं तु पाचनलेखनबृंहणरसायनवाजीकरणविषप्रशमनादिकम् । आहारश्चतुर्विधः, पेयलेह्याद्यभक्ष्यभेदात्; स पुनस्त्रिविधः-दोषप्रशमनो, व्याधिप्रशमनः, स्वस्थवृत्तिकरश्चेति । दोषसंशमनत्वात् संशमनग्रहणेनैवाहारे लब्धे पृथक्करणं संशोधनादिष्वाहारस्य प्राधान्यसूचनार्थम्; अथवा स्वस्थे पुरुषे दोषव्याधिप्रशमाभावादाहारस्य पृथग्ग्रहणम् । आचारः कायवाङ्मानसं कर्म; तत्रोत्क्षेपणावक्षेपणादिकं कायिकं कर्म, पाठस्वाध्यायादि वाचिकं, ध्येयचिन्त्यसंकल्पादि मानसम् । सम्यक्प्रयुक्ता इति आयुरादीन् वीक्ष्य प्रयुक्ताः ॥ २७ ॥

**प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च । स षट्सु रसेष्वायत्तः; रसाः पुनर्द्रव्याश्रयाः; द्रव्याणि पुनरोषधयः । तास्तु द्विविधाः—स्थावरा जङ्गमाश्च ॥ २८ ॥**

संशोधनादिष्वाहारस्य प्राधान्यं दर्शयितुमाह—प्राणिनामित्यादि । मूलमिति मूलमिव मूलं, संभवहेतुत्वात्; शुक्रशोणितं तावदाहारादेव जायते यद्गर्भजननसमर्थम् । न केवलं प्राणिनां मूलं बलवर्णौजसां च । एतेन प्राणिनामाहारादेवोत्पत्तिस्थिती निदर्शिते । बलं कर्मसाधनशक्तिर्व्यायामानुमेया, वर्णो गौरादिः, ओजः सोमात्मकं रसादिशुक्रान्तसर्वधातुधामभूतं हृदिस्थम् । अन्ये तु बलं शरीरोपचयोऽत्राभिप्रेत इति वदन्ति । एवं परमार्थतो बलौजसोर्भेदेऽपि दोषधातुमलक्षयवृद्धिविज्ञानीये चिकित्सैक्यार्थमभेद उक्तः । स षट्सु रसेष्वायत्त इति स आहारः, रसेषु मधुरादिषु, आयत्तः अधीनः । द्रव्याणि पुनरोषधय इति ओषधिशब्दोऽत्र सान्निध्याद् वक्ष्यमाणस्थावरजङ्गमराशिद्वय एव वर्तते, न पुनर्यावदोषधिमात्रे; अन्यथा हि पार्थिवेष्वप्योषधिशब्दो वर्तेत इति पार्थिवानामुपादानं पृथङ्न स्यात् । अन्ये तु पार्थिवेष्वपि ओषधिशब्दो वर्तेत इत्याहुः । तास्त्वित्यादि ता इति ओषधयः । स्थावराणां बहुतरोपयोगात् प्रागुपादानम् ॥ २८ ॥

**तासां स्थावराश्चतुर्विधाः—वनस्पतयो, वृक्षा, वीरुध, ओषधय इति । तासु, अपुष्पाः[1] फलवन्तो वनस्पतयः, पुष्पफलवन्तो वृक्षाः, प्रतानवत्यः स्तम्बिन्यश्च वीरुधः, फलपाकनिष्ठा ओषधय इति ॥ २९ ॥**

तासामिति द्विविधानामोषधीनां मध्ये । के ते चत्वारः प्रकारा इत्याह—वनस्पतय इत्यादि । तानेव विवरितुमाह—तास्विति; तासु मध्ये । अपुष्पा इति अविद्यमानपुष्पाः, फलवन्त इति फलं येषामस्ति ते वनस्पतय इति; के पुनरीदृशाः? प्लक्षोदुम्बरादयः । पुष्पफलवन्तो वृक्षा इति उभययुक्ता वृक्षाः; के ते? आम्रजम्बूप्रभृतयः । प्रतानवत्य इत्यादि प्रतानवत्यो विस्तारवत्यः वीरुधः, न केवलं प्रतानवत्यो वीरुधः स्तम्बिन्यश्च गुल्मिन्यश्च, गुल्मः पुनः वर्तुलैर्लतासन्ततिविटपः[2], ताश्च विदारीकोलवल्लीशालपर्णी-

---

१ 'मृत्युशब्देन चेह मृत्युप्रत्यासन्ना मर्मभेदादयो गृह्यन्ते' इति चक्रः ।

१ अपुष्पा इति पुष्पाणामतिसूक्ष्मतया पुष्पाधारकर्णिकया (Receptacles) आच्छादितत्वाच्च अदृश्यपुष्पा इत्यर्थः । २ 'वर्तुललतासंततिविशिष्टः' इति पा० ।

पृश्निपर्णीप्रभृतयः । केचित् 'स्तम्बिन्यश्च' इत्यत्र 'गुल्मिन्यश्च' इति पठन्ति, तत्रापि स एवार्थः । फलपाकनिष्ठा इति निष्ठा नाशः, फलपाकेन परिणत्या नाशो यासां तास्तथोक्ताः; ते पुनर्गोधूमादयः । अन्ये तु निष्ठाशब्दं प्रत्येकं संबध्नन्ति, फलनिष्ठाः पाकनिष्ठा इति; तत्र फलनिष्ठाः शालितिलकुलत्थादयः, पाकनिष्ठाः कवकादयः; कवकश्छत्रक उच्यते ॥ २९ ॥

**जङ्गमाः खल्वपि चतुर्विधाः—जरायुजाण्डजस्वेदजोद्भिज्जाः । तत्र पशुमनुष्यव्यालादयो जरायुजाः, खगसर्पसरीसृपप्रभृतयोऽण्डजाः, कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः, इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः ॥ ३० ॥**

जङ्गमाः खल्वपीत्यादि ।—खलुशब्दः शिष्यसंबोधने, हे सुश्रुत, जङ्गमा अपि चतुर्विधाः चतुष्प्रकाराः । तानाह—जरायुजेत्यादि । एतच्च पूर्वं व्याख्यातम् । जरायुजादिषु पूर्वोक्तसंस्वेदजादिक्रमत्यागो योनिसंकरं बोधयति; तेन पक्षिषु बलाका जरायुजा अण्डजा चेति, सर्पजातिषु अहिपताका जरायुजा, संस्वेदजेष्वपि काश्चित् पिपीलिका अण्डजा उद्भिज्जाश्च । व्यालादय इति व्याला हिंस्रपशुव्याघ्रादयः, अन्ये तु पशुग्रहणादेव हिंस्रपशूनामपि ग्रहणमिति व्यालशब्देन सर्पविशेषमाहुः । तदुक्तं—"सर्पजातिषु अहिपताका जरायुजा—" इति । आदिग्रहणाद् बलाकाजतुकादयः । इहोपकरणप्रस्तावे पशूनां प्राधान्यमिति प्राङ्निर्देशः, प्राग्भूतग्रामप्रसङ्गेन पुरुषप्राधान्यख्यापनार्थम्, अत्र पुनर्जरायुजाण्डजेत्यादिपाठ ओषधित्वख्यापनायेति न पौनरुक्त्यम् । खगसर्पेत्यादि खगाः पक्षिणः, सर्पा मन्दगामिनोऽजगरप्रभृतयः, सरीसृपाः शीघ्रगामिनः कृष्णसर्पादयः, मीनमकरादयो वा; प्रभृतिग्रहणात् कूर्मनक्रादीनां ग्रहणं; केचित् प्रभृतिशब्दमपठित्वा लुप्तनिर्दिष्टेनादिशब्देन कूर्मादीन् गृह्णन्ति । कृमिकीटेत्यादि कृमयः कोष्ठपुरीषादिबाष्पसंभवाः, कीटा वृश्चिकषड्बिन्दुप्रभृतयः, पिपीलिकाश्चिटिकाः, प्रभृतिग्रहणादेवंविधा अन्येऽपि दृश्यन्ते । इन्द्रगोप इत्यादि इन्द्रगोपाः प्रावृट्कालजा अतिरक्तकृमयः 'इन्द्रवधू' इति लोके, प्रभृतिग्रहणादीदृशा अन्येऽपि ॥ ३० ॥

**तत्र स्थावरेभ्यस्त्वक्पत्रपुष्पफलमूलकन्दनिर्यासस्वरसादयः प्रयोजनवन्तः; जङ्गमेभ्यश्चर्मनखरोमरुधिरादयः ॥ ३१ ॥**

स्थावरजङ्गमयोर्निर्दिष्टयोश्चिकित्सोपयोगिनोऽवयवविशेषान् दर्शयितुमाह—तत्र स्थावरेभ्य इत्यादि । स्वरसादय इत्यादिग्रहणात्तैलक्षारभस्मकण्टकप्रभृतीनां ग्रहणम् । केचित् कन्दं सूत्रे न पठन्ति, आदिशब्दाच्च गृह्णन्ति । रोमरुधिरादय इत्यादिशब्दान्मांसवसाघृतास्थिखुरादयः ॥ ३१ ॥

**पार्थिवाः सुवर्णरजतमणिमुक्ता[1]मनःशिलामृत्कपालादयः ॥ ३२ ॥**

रसाधिकारिकमौषधिवर्गं स्थावरजङ्गमं प्रतिपाद्य, परिशिष्टं प्रतिपादयितुमाह—पार्थिवा इत्यादि । पृथिव्या विकाराः पार्थिवाः, रजतं रौप्यं, मणिः स्फटिकादिः, मुक्ता मौक्तिकं, मृत् मृत्तिका, कपालं कर्परम् । सुवर्णस्येह पार्थिवत्वमेवाङ्गीक्रियते गुरुत्वकाठिन्यस्थैर्यादिहेतुभिः । सूत्रे आदिग्रहणाल्लोहमलसिकतासुधाहरिताललवणगैरिकरसाञ्जन[1]प्रभृतीनां ग्रहणम् । यद्यपि स्थितिशीलत्वात्तथा लोकरूढिसमाख्यानेऽपृथगुक्तत्वाच्च स्थावरशब्देनैव पार्थिवा उच्यन्ते, तथाऽप्यत्र प्रकरणाद्येष्वाहारोपयोगित्वं फलमूलाद्यवयवेषु रसप्रधानतया तत्रैव चतुर्विधे वनस्पत्यादिगणे स्थावरशब्दो वर्तते न तु पार्थिवेष्वपि, तेषामाहारेषु प्रायेणानुपयोगात्; अन्यदपि समाधानान्तरमस्ति, तच्च विस्तरभयान्न लिखितम् ॥ ३२ ॥

**कालकृताः प्रवातनिवातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाहोरात्रपक्षमासर्त्वयनादयः संवत्सरविशेषाः[2] ॥ ३३ ॥**

कालकृता इत्यादि । आदिग्रहणान्निमेषकाष्ठाकलामुहूर्तादयः । अन्ये त्वेतद्द्वयमन्यथा पठन्ति व्याख्यानयन्ति च; तच्च वर्तमानप्रतिष्वप्रसिद्धमित्यस्माभिरुपेक्षितम् ॥ ३३ ॥

**त एते स्वभावत एव दोषाणां संचयप्रकोपप्रशमप्रतीकारहेतवः प्रयोजनवन्तश्च ॥ ३४ ॥**

एषां प्रयोजनं दर्शयितुमाह—त एत इत्यादि । स्वभावत एवेति स्वलक्षणत एव । दूषयन्ति कायवाक्चित्तानीति दोषा वातादयः; तदारब्धाश्च ज्वरादयः । संचयः स्थानवृद्धिः; प्रकोपणं प्रकोपः, प्रकोपशब्देन प्रकोपप्रसरस्थानसंश्रयव्यक्तिभेदाः पञ्चोच्यन्ते; प्रकोपः स्थानादुन्मार्गगमनं; प्रसरः पञ्चदशप्रकारो व्रणप्रश्ने वक्ष्यते; ज्वरातीसारादीनां सामान्यलक्षणं व्यक्तिः, यथा—संतापलक्षणो ज्वरः, सरणलक्षणोऽतिसार इत्यादि; विशेषणं भेदः, यथा-अष्टौ ज्वरा इत्यादि; प्रशमनं प्रशमः स्वयमुपशमः; हेतुव्याधिविपरीतं कर्म प्रतीकारः; अन्ये तु प्रशमप्रतीकारयोरैकार्थ्यतां मन्यमानाः प्रतीकारं न पठन्ति; तन्न, यस्माज्ज्वरादीनामप्यस्ति स्वभावोपशमः; तद्यथा—कफज्वरप्रतीकारो वसन्ते पूर्वाह्णे च, स्वभावेन प्रशमस्तु ग्रीष्मे मध्याह्ने चेत्यादि; तस्मात् प्रशमनप्रतीकारयोरर्थभेदोऽस्त्येव । प्रयोजनवन्तश्चेति चिकित्सोपकारिण इत्यर्थः । तद्यथा-'लाजोत्पलोशीरकुचन्दनानि दत्त्वा प्रवाते निशि वासयेच्च' ( उ. त. अ. ४८ ); तथा 'निवाते देशे निचितिं कृत्वा ( सू. अ. ११ ), तथा 'मदनफलानामातपपरिशुष्काणां–' ( सू. अ. ४३ ) इत्यादि प्रयोजनं ज्ञातव्यम् ॥ ३४ ॥

**भवन्ति चात्र श्लोकाः—**

**शारीराणां विकाराणामेष वर्गश्चतुर्विधः ।**
**[3]प्रकोपे प्रशमे चैव हेतुरुक्तश्चिकित्सकैः ॥ ३५ ॥**

१ अत्र पार्थिवेषु मुक्तायाः पाठोऽनार्षः प्रतिभाति, मुक्तायाः शुक्त्याख्यजलचरप्राणिजन्यत्वात् ।

१ रसाञ्जनशब्देनेह तदाख्यं धातुद्रव्यमभिप्रेतं, न तु दार्वीक्वाथोद्भवम् । २ 'कालविशेषाः' इति पा० । ३ 'चये कोपे शमे चैव' इति पा० ।

इदानीं गद्ये विस्तरेण प्रतिपादितमर्थं श्लोकैः प्रकटीकुर्वन्नाह—भवन्ति चात्र श्लोका इत्यादि । यद्यपि सुश्रुते भवन्ति चात्रेति विनाऽपि श्लोका भवन्ति, तथाऽप्यत्र मन्दमतीनां गद्यपद्यभेदकथनाय भवन्ति चात्र श्लोका इति कृतम्; अन्ये तु वेदादिधर्मसंवादार्थमिति वदन्ति । अथ के ते श्लोका इत्याह—शारीराणामित्यादि । न चात्र द्विरुक्तिः, पूर्वोक्तस्य गूढार्थस्याभिव्यक्तिकरत्वात् । शारीराणामिति शरीरसंभवानाम् । विकाराणामिति विकृतयो विकाराः, तेन विकारा अत्र कुपिता दोषा व्याधयोऽपि गृह्यन्ते । एषः पूर्वोक्तः । वर्गश्चतुर्विधः चतुष्प्रकारः, आहाराचारपार्थिवकालकृतभेदात्; 'स्थावरजङ्गमपार्थिवकालकृतभेदाच्चतुर्विधः' इति जेज्जटः; पञ्जिकाकारस्त्विदं न मन्यते । अत्रापि प्रकोपशब्दः प्रकोपप्रसरस्थानसंश्रयव्यक्तिभेदेषु वर्तते । प्रशमशब्दोऽत्र रोगोपघातमात्रस्योपलक्षणं; तेन साध्यानां सिद्धिः, याप्यानां यापनं, स्वस्थवृत्तं च गृह्यते ॥ ३५ ॥

**आगन्तवस्तु ये रोगास्ते द्विधा निपतन्ति हि ॥**
**मनस्यन्ये शरीरेऽन्ये तेषां तु द्विविधा क्रिया ३६**
**शरीरपतितानां तु शारीरवदुपक्रमः ॥**
**मानसानां तु शब्दादिरिष्टो वर्गः सुखावहः ॥३७॥**

इदानीमागन्तूनामाश्रयभेदेन चिकित्सां वक्तुमाह—आगन्तवस्त्वित्यादि । मनस्यन्ये इति एके, शरीरेऽन्ये इत्यपरे । शरीरपतितानामागन्तूनां खड्गाद्यभिघातजानां शारीराणामिव, मानसानां मनःसंभूतानां शब्दादिवर्गः शब्दस्पर्शरूपरसगन्धाः; इष्ट इत्यभिप्रेतश्चिकित्सात्वेन । सुखावह इति सुखकारी । अन्ये तु चशब्दमनुक्तसमुच्चयार्थमाचक्षते, तेन धैर्यस्मृतिप्रभृतयोऽपि मानसान् चिकित्सितुं निर्दिष्टाः ॥ ३६ ॥ ३७ ॥

**एवमेतत् पुरुषो व्याधिरौषधं क्रियाकाल इति चतुष्टयं समासेन व्याख्यातम् । तत्र पुरुषग्रहणात् तत्संभवद्रव्यसमूहो भूतादिरुक्तस्तदङ्गप्रत्यङ्गविकल्पाश्च त्वङ्मांसास्थिसिरास्नायुप्रभृतयः, व्याधिग्रहणाद्वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः सर्व एव व्याधयो व्याख्याताः, औषधग्रहणाद्द्रव्यरसगुणवीर्यविपाकानामादेशः, क्रियाग्रहणात् स्नेहादीनि च्छेद्यादीनि च कर्माणि व्याख्यातानि, कालग्रहणात् सर्वक्रियाकालानामादेशः ॥ ३८ ॥**

इदानीं व्याख्यातमर्थमुपसंहरन्नाह—एवमित्यादि । एवमिति अनेन प्रकारेण । एतदिति पूर्वनिर्दिष्टं, चतुष्टयमिति चतुरवयवं; यद्यप्यत्र पुरुषादयः पञ्च, तथाऽपि चतुष्टयं ज्ञेयं; तथाहि—"नान्यः कालः क्रियातोऽस्ति क्रिया नान्याऽथवौषधात् । प्राधान्यात् पुरुषस्यात्र(थ) ततो व्याधिचतुष्टयम् ॥ क्रियाविशिष्टः कालो वा कालो वा तच्चतुष्टयम्"–इति; अतो न संख्यातिरेकः । तत्र येन यदुपगृहीतं तत्र तदुपदर्शयितुमाह—तत्रेत्यादि । तत्रेति तस्मिन् चतुष्टयमध्ये । तत्संभवद्रव्यसमूह इति तस्य पुरुषस्य संभव उत्पत्तिस्तदर्थो द्रव्यसमूहः स तथा । कः पुनरसावित्याह—भूतादिरिति ।—भूतानि आदीनि प्रथमानि प्रधानानि वा यस्य स भूतादिरिति वाक्यार्थः; तेन शुक्रार्तवपञ्चमहाभूतानीह गृह्यन्ते । अन्ये त्वन्यथा व्याख्यानयन्ति—तस्य पुरुषस्य संभवद्रव्याणि शुक्रशोणितादीनि, तेषां समूहः संयोगविशेषः, कथंभूतः सः ? भूतादिः; भूतं महाभूतं पृथिव्यादिकम्, आदिर्मूलकारणं यस्य स तथा; अथवा तत्संभवद्रव्यसमूहः शुक्रशोणितादिसंयोगः स भूतानां प्राणिनामादिः मूलकारणं, तत्र व्यक्तीभावात् । भूतादिरित्यत्रैके भूतानामादिर्भूतादिः, अव्यक्तादारभ्य यावत् 'स एष कर्मपुरुषश्चिकित्साधिकृतः' ( शा. अ. १ ) इति वदन्ति; तन्न, पञ्जिकया निरस्तत्वात् । तदङ्गप्रत्यङ्गविकल्पाश्चेति अङ्गानि मस्तकादीनि, प्रत्यङ्गानि चिबुकादीनि । त्वङ्मांससिरास्नायुप्रभृतय इति त्वचः सप्त, मांसं पेशीशतानि पञ्च, सिराशतानि सप्त, स्नायुशतानि नव; प्रभृतिग्रहणात् स्रोतोधमन्यादयः । सर्व एवेति सर्वग्रहणादागन्तुमानसस्वाभाविकानां ग्रहणम् । द्रव्यं स्थावरादि, रसा मधुरादयः, गुणा गुर्वादयः, वीर्याणि शीतोष्णादीनि, द्वौ विपाकौ गुरुलघू; औषधग्रहणं क्रियाविशेषणम्, अतो न संख्यातिरेकः । अयमर्थः पुरुषादिचतुष्टयप्रस्तावे व्याख्यातः । क्रियाग्रहणादिति क्रियाकालशब्दोपात्तादित्यर्थः । स्नेहादीनीत्यादिशब्दात् स्वेदनवमनविरेचनास्थापनानुवासनधूमनस्यकवलग्रहगण्डूषपाचनसंशमनादीनां ग्रहणं; छेद्यादीनीत्यादिशब्दाद्भेद्यलेख्यैष्याहार्यविस्राव्यसीव्यादीनां ग्रहणम् । कालग्रहणादिति स्नेहनस्वेदनवमनविरेचनादीनां कर्मणां तथा शस्त्रादिकर्मणां च वक्ष्यमाणसमयनिर्देशः । तत्र स्नेहस्य 'प्रतप्तचामीकरपीतलोहिते सवितरि' ( चि. अ. ३१ ) इति वचनात् कालनिर्देशः, सर्वस्वेदानां जीर्णान्नकालः, वमनस्य पूर्वाह्णकालः, विरेचनस्य प्रातः, प्रातरिति दिनस्यादित्रयो मुहूर्ताः, आस्थापनं तु मध्याह्ने तृतीये प्रहरे, अनुवासनं सायाह्ने क्वचित्प्रदोषेऽपि, तथा भुक्तवन्तमातुरमुपवेश्येत्याद्यनुसर्तव्यम् ॥ ३८ ॥

**भवति चात्र—**

**बीजं चिकित्सितस्यैतत्समासेन प्रकीर्तितम् ॥**
**सविंशमध्यायशतमस्य व्याख्या भविष्यति ॥ ३९ ॥**

अनेन चतुष्टयेन सकलमेव शास्त्रं व्याप्तमिति निदर्शयितुमाह—भवति चात्रेत्यादि । बीजमिव बीजं, यथैकं बीजं भूमौ निक्षिप्तं मूलकाण्डशाखापत्रैर्दूरतरविसारितमुपजायते, तथेदमपि चिकित्सितबीजं सूत्रनिदानशारीरचिकित्साकल्पस्थानाद्यैर्विस्तृतमारोग्यफलं भवतीति । समासेन संक्षेपेण । सविंशमध्यायशतमिति विंशत्यधिकमध्यायशतमित्यर्थः । सविंशमिति सहशब्देन किं प्रयोजनम् ? उच्यते, सहशब्देनात्रोत्तरतन्त्रेण सह विंशत्यधिकमिति उत्तरतन्त्रसहितत्वं प्रकाश्यते । ननु, अत्र पक्षे बीजक-

१ "गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते । तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गर्ह्यते ॥" च. नि. स्था. अ. १ । २ 'मानसानां चिकित्सितत्वेन' इति पा० ।

१ 'औषधविशेषादित्यर्थः' इति पा० । २ 'सहशब्देनात्रोत्तरतन्त्रसहितत्वं प्रकाश्यते' इति पा० ।

थनेनैवाद्याध्यायस्य गतत्वात् कथं विंशत्यधिकमध्यायशतं पूर्यते ? नैवं, सर्वतन्त्रोपलक्षणत्वात्तस्येति नात्रोनत्वम् । अन्ये तु सशब्दमूनार्थमाचक्षते, यथा—सलवणं सतिक्तं सक्षारमिति । कथमत्रोनता ? उच्यते, वेदोत्पत्तिमध्यायं विहाय विंशत्यधिकमध्यायशतं न पूर्यते, एकेनोनत्वात्; तस्मादूनविंशत्यधिकमध्यायशतमस्य व्याख्या भविष्यतीति । यद्येवं तर्हि उत्तरतन्त्रस्य कथं प्राप्तिः ? उच्यते, अर्थवशात् । ननु, कः पुनरर्थो यद्वशात् प्राप्तिः ? उच्यते—शेषा अर्था उत्तरे तन्त्रे प्रतिपादनीया इति । उत्तरतन्त्रप्राप्तावन्यो योऽर्थोऽस्ति स च न लिखितो ग्रन्थगौरवभयात् ॥ ३९ ॥

**तच्च सविंशमध्यायशतं पञ्चसु स्थानेषु । तत्र सूत्रनिदानशारीरचिकित्सितकल्पेष्वर्थवशात् संविभज्योत्तरे तन्त्रे शेषानर्थान् वक्ष्यामः ॥ ४० ॥**

तच्च सविंशमित्यादि । तच्च सोत्तरतन्त्रं[2] विंशत्यधिकमध्यायशतं पञ्चसु स्थानेषु । ननु कथमेतत् ? उत्तरतन्त्रस्य पञ्चभ्यः स्थानेभ्यः पृथगुक्तत्वात्; नैवं, कुतः ? पञ्चस्वेवेति नियमाभावात् । अत एवाग्रे वक्ष्यति—उत्तरे तन्त्रे शेषानर्थान् वक्ष्याम इति । शेषानर्थानिति शेषशब्देन रसभेदादयः स्वस्थवृत्तादयश्च ज्ञेयाः ॥ ४० ॥

**भवति चात्र—**

**स्वयम्भुवा प्रोक्तमिदं सनातनं**
**पठेद्धि यः काशिपतिप्रकाशितम् ।**
**स पुण्यकर्मा भुवि पूजितो नृपै-**
**रसुक्षये शक्रसलोकतां व्रजेत् ॥ ४१ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने वेदोत्पत्तिर्नाम प्रथमोऽध्यायः ॥ १ ॥**

इदानीं वेदोत्पत्त्यध्याये निदर्शितस्य चिकित्साबीजोपदेशन्यायेन शास्त्रस्य पाठानुशंसामाह—स्वयम्भुवेत्यादि । स्वयम्भुवा ब्रह्मणा, प्रोक्तम् उपदिष्टम्, इदमिति शास्त्रं, सनातनं नित्यं, यः पठेत् अधीयीत; अन्ये तु पठधातुरत्र चैतुर्ष्वर्थेषु[3], तथाहि—पाठे, अर्थज्ञाने, कर्मदर्शने, अभ्यासे च । हि स्फुटम् । काशिपतिप्रकाशितम् आदिदेवेन धन्वन्तरिणा प्रकाशितम् । भुवि पृथिव्याम् । पूजितो नृपैरिति नृपैः नरेन्द्रैः, एतेन ऐहिकं फलं दर्शयति । असुक्षये प्राणक्षये । शक्रसलोकताम् इन्द्रसमानलोकतां व्रजति, एतेन पारलौकिकं श्रेयो दर्शयति । अन्ये तु 'शक्रसुलोकतां व्रजेत्' इति पठन्ति; सुशब्दः पूजावचनः, तेन शक्रलोकपूज्यतां व्रजेत् प्राप्नुयादित्यर्थः । एतेन भुवि नरेन्द्रैः स्वर्गे च देवैः पूजितो भवेदित्यर्थः ॥ ४१ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने वेदोत्पत्तिर्नाम प्रथमोऽध्यायः ॥ १ ॥

---

१ 'प्राप्तिरित्याह' इति पा० । २ 'सोत्तरतन्त्रं' इति केषुचित्पुस्तकेषु न पठ्यते । ३ 'चतुर्षा' इति पा० ।

## द्वितीयोऽध्यायः ।

**अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः ॥ १ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । यथोवाच भगवान् धन्वन्तरिरिति प्रत्यध्यायं बोद्धव्यम् । अथशब्दोऽत्र पूर्वाध्यायादानन्तर्ये, अतःशब्दो हेत्वर्थे, स च हेतुः पूर्वाध्याये विस्तरेण व्याख्यातः; एवं प्रत्यध्यायं अथातःशब्दौ ज्ञातव्यौ । शिष्योपनयनीयमिति शिष्यस्य उपनयनं दीक्षा, तदधिकृत्य कृतोऽध्यायः शिष्योपनयनीयस्तं तथा; अन्ये तु उपनयनमात्मवत्तया अर्थां( ङ्गी )करणम् । यद्यपि ब्राह्मणादयः प्रागुपनीताः, तथाऽप्यायुर्वेदपठनारम्भे पुनरुपनयनं, यथा ऋग्यजुःसामान्यधीत्य अथर्वारम्भे पुनर्व्रतावतरणं धनुर्वेदारम्भे च, तद्वदत्रापि ॥ १ ॥ २ ॥

**ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वयवयःशीलशौर्यशौचाचारविनयशक्तिबलमेधाधृतिस्मृतिमतिप्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रमृजुवक्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेशसहं च भिषक् शिष्यमुपनयेत् । अतो विपरीतगुणं नोपनयेत् ॥ ३ ॥**

ब्राह्मणक्षत्रियवैश्यानामित्यादि । ब्राह्मणादिषु मध्ये अन्यतममेकतमम् । अन्वयादियुक्तं; तत्र, अन्वयः आयुर्वेदाध्यायिकुलम्, अन्ये वंशशुद्धिमाहुः; वयोऽत्र बाल्यं तारुण्यं वा; शीलं शास्त्रार्थानुसारिणोऽविपरीतस्वभावः; शौर्यं शूरत्वं, सर्वत्राविषादिता; शौचं शुचिता, तच्च द्विविधं बाह्यमाभ्यन्तरं च, तत्र बाह्यं स्नानादिकम्, आभ्यन्तरं मनःशुद्धिः; आचारः कुलदेशाद्यनुगतं लौकिकं विधानम्, अन्ये तु कायवाङ्मानसिकं शुभव्यापारलक्षणं त्रिविधमाहुः, श्रुतिस्मृतिविहितानुष्ठानमित्येके; विनयः इन्द्रियवशित्वं; शक्तिः उत्साहशक्तिः; बलं क्रियानिर्वर्तनक्षमता, अन्ये शक्तिबलयोर्विपर्ययमाहुः; मेधा ग्रन्थावधारणकर्षणसामर्थ्यं; धृतिः मनःसंतुष्टिः, अन्ये नियमात्मिकां बुद्धिमाहुः; स्मृतिः पूर्वानुभूतस्य स्मरणम्, अर्थधारणशक्तिरित्यन्ये; मतिः अनागतार्थेद्दिशः, त्रिकालविषया बुद्धिरित्यन्ये; प्रतिपत्तिः अर्थावबोधप्रागल्भ्यमनुष्ठानं वा । तनुजिह्वौष्ठदन्ताग्रमिति तनुशब्दो जिह्वादिभिः प्रत्येकं संबध्यते, 'तनुजिह्वौष्ठदन्तं' इत्येके पठन्ति । प्रसन्नचित्तवाक्चेष्टमिति प्रसन्नशब्दोऽपि चित्तादिभिः सह प्रत्येकं संबध्यते; चेष्टा कायपरिस्पन्दः । क्लेशसहं दुःखसहम् । उपनयेत् दीक्षेत् । अत इति अत एवंगुणविशिष्टाच्छिष्यात्, विपरीतगुणं विसदृशगुणं, नोपनयेत् न दीक्षेत् । अन्वयादियुक्तं शिष्यमुपनयेदित्युक्ते गुणहीनस्य निषेधे सिद्धे पुनर्निषेधवचनं नियमार्थं, तेन विपरीतगुणं नोपनयेदेव ॥ ३ ॥

**उपनयनीयं तु ब्राह्मणं[1] प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतु-**

---

१ 'उपनयनीयस्तु ब्राह्मणः' इति पा० ।

**हस्तं चतुरस्रं स्थण्डिलमुपलिप्य गोमयेन, दर्भैः संस्तीर्य, रत्नपुष्पलाजभक्तैर्देवताः पूजयित्वा विप्रान् भिषजश्च, तत्रोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्रह्माणं स्थापयित्वाऽग्निमुपसमाधाय, खदिरपलाशदेवदारुबिल्वानां समिद्भिश्चतुर्णां वा क्षीरिवृक्षाणां (न्यग्रोधोदुम्बराश्वत्थमधूकानां) दधिमधुघृताक्ताभिर्दार्वीहौमिकेन विधिना सप्रणवाभिर्महाव्याहृतिभिः स्रुवेणाज्याहुतीर्जुहुयात्, ततः प्रतिदैवतमृषींश्च स्वाहाकारं कुर्यात्, शिष्यमपि कारयेत् ॥ ४ ॥**

शिष्यगुणसंपदमभिधाय, उपनयनविधिं वक्तुमाह—उपनयनीयं त्वित्यादि ।—उपनयनीयम् उपनयनार्हं पूर्वोदितगुणसंपन्नं ब्राह्मणं शिष्यं भिषक् स्वाहाकारं कारयेदिति संबन्धः । कदा कारयेदित्याह,—प्रशस्तेष्वित्यादि । किं कृत्वेत्याह—प्रशस्तायामित्यादि, तदनु रत्नपुष्पेत्यादि, ततश्च तत्रोल्लिख्येत्यादि, तदनन्तरमग्निमुपसमाधाय खदिरादीनां क्षीरिवृक्षाणां वा दधिमधुघृताक्ताभिः समिद्भिः कृत्वा दार्वीहौमिकेन विधिना जुहुयात्, तथा सप्रणवाभिर्महाव्याहृतिभिरुपलक्षिताः स्रुवेण कृत्वा आज्याहुतीरेव जुहुयादिति संबन्धः । अन्ये तु 'उपनयनीयस्तु ब्राह्मणः' इति पठन्ति, व्याख्यानयन्ति च—उपनयनीय इति कर्तरि प्रयोगः; तेन उपनेता ब्राह्मण इदमिदं कृत्वा आज्याहुतीर्जुहुयादिति क्रियापदेन संबन्धः । प्राक् ब्राह्मणग्रहणं वर्णेषु मध्ये तस्य श्रेष्ठत्वात् । प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेष्विति तिथयः प्रतिपदाद्याः, करणानि बवबालवादीनि, मुहूर्तास्त्रिंशत् शिवाद्या अनिलपर्यन्ताः, नक्षत्राणि अश्विनीप्रभृतीनि; एषां प्रशस्तत्वं ज्योतिःशास्त्रविदां वचनादुन्नेयम् । प्रशस्तायां दिशि प्राच्यामुदीच्यां वा । चतुरस्रं चतुष्कोणम् । गोमयेन गोपुरीषेण । स्थण्डिलं व्रतसाधनपिण्डिकां, गोचर्ममात्रभूप्रदेशः स्थण्डिलमित्यन्ये; एके चतुर्हस्तस्थाने 'गोचर्ममात्रं' इति पठित्वा गोचर्ममात्रस्थण्डिलयोर्व्याख्यानं कुर्वन्ति—गोचर्ममात्रं चतुर्हस्तप्रमाणं, स्थण्डिलं संस्कृता भूः । तत्रेति तस्मिन् स्थण्डिले; उल्लिख्य ऊर्ध्वमुखीं लेखां कृत्वा; अभ्युक्ष्य जलेन सिक्त्वा । अग्निमुपसमाधाय सन्निधाने आरोप्य । चतुर्णां वा क्षीरिवृक्षाणामिति न्यग्रोधोदुम्बराश्वत्थमधूकानाम् । दार्वीहौमिकेन विधिनेति दार्वीहोमप्रोक्तकल्पेन; दार्वीहौमिको विधिस्तु ब्राह्मणानां छन्दोविदां प्रसिद्धः । सप्रणवाभिः सोङ्काराभिः, महाव्याहृतिभिः भूः स्वाहेत्यादिभिः; तथाहि—ॐ भूः स्वाहा, ॐ भुवः स्वाहा, ॐ स्वः स्वाहा, ॐ भूर्भुवः स्वः स्वाहा, इति । स्रुवेणाज्याहुतीर्जुहुयादिति दारुहस्तकेन घृताहुतीर्दद्यात् । प्रतिदैवतमृषींश्चेति चकारात् ऋषींश्चेत्यत्रापि प्रतिशब्दः संबध्यते; तेन प्रतिदैवतं प्रतिऋषीनित्यर्थः । तत्र प्रतिदैवतं ब्रह्मणे स्वाहा, प्रजापतये स्वाहा, अश्विभ्यां स्वाहा, इन्द्राय स्वाहा; प्रतिऋषीनिति धन्वन्तरये स्वाहा, भरद्वाजाय स्वाहा, आत्रेयाय स्वाहा, इत्यादि ॥ ४ ॥

१ 'पुष्पैर्लाजभक्तै रत्नैश्च' इति पा० । २ 'इति पठन्ति, पठित्वा' इति पा० ।

**ब्राह्मणस्त्रयाणां वर्णानामुपनयनं कर्तुमर्हति, (राजन्यो द्वयस्य, वैश्यो वैश्यस्यैवेति;) शूद्रमपि कुलगुणसंपन्नं मन्त्रवर्जमनुपनीतमध्यापयेदित्येके ॥ ५ ॥**

ब्राह्मणस्त्रयाणामित्यादि । अन्ये त्वस्याग्रे 'राजन्यो द्वयस्य, वैश्यो वैश्यस्यैव' इति पठन्ति, स च निबन्धैरनार्षीकृतः । शूद्रमपि कुलगुणसंपन्नमित्यादि कुलगुणसंपन्नमिति संपन्नशब्दः कुलगुणाभ्यां प्रत्येकं संबध्यते, कुलसंपन्नमायुर्वेदाध्यायिकुलसंयुक्तं, गुणसंपन्नं वयःशौचादिशिष्यगुणसंयुक्तम् । अनुपनीतं दीक्षारहितम् । 'शूद्रमपि गुणसंपन्नं मन्त्रवर्जमुपनीयाध्यापयेदित्येके' इति केचित् पठन्ति ॥ ५ ॥

**ततोऽग्निं त्रिः परिणीयाग्निसाक्षिकं शिष्यं ब्रूयात्—कामक्रोधलोभमोहमानाहङ्कारेर्ष्यापारुष्यपैशुन्यानृतालस्यायशस्यानि हित्वा, नीचनखरोम्णा शुचिना कषायवाससा सत्यव्रतब्रह्मचर्याभिवादनतत्परेणावश्यं भवितव्यं, मदनुमतस्थानगमनशयनासनभोजनाध्ययनपरेण भूत्वा मत्प्रियहितेषु वर्तितव्यम्; अतोऽन्यथा ते वर्तमानस्याधर्मो भवति, अफला च विद्या, न च प्राकाश्यं प्राप्नोति ॥ ६ ॥**

ततोऽग्निमित्यादि । त्रिः परिणीय त्रीन् वारान् प्रदक्षिणीकृत्य, अग्निसाक्षिकं शिष्यं ब्रूयादिति अग्निसाक्षिकं यथा स्यादेवं शिष्यं ब्रूयात् । किं ब्रूयादित्याह—कामादीन् हित्वा परित्यज्य, मत्प्रियहितेषु वर्तितव्यमिति ।—कामः विशिष्टस्त्रीविषयस्पर्शसंकल्पः, अथवा शब्दादिषु ग्रहणप्रवृत्तिर्वा, स्वबान्धवकृतस्नेहो वा कामः; क्रोधः परस्यापकारपूर्वकं हृदयोत्तेजः; लोभः परस्वग्रहणेच्छा; मोहस्तु तत्त्वज्ञाने मूढता, सा पुनस्त्रिभिः कारणैः—अज्ञानात्, संशयज्ञानात्, मिथ्याज्ञानाच्च; मानः सर्वत्रोत्कर्षेणात्मनो ज्ञानं; कार्येऽपरामर्शतोऽहमिति प्रवृत्तिरहङ्कारः; ईर्ष्या परसंपत्तावसहिष्णुता; पारुष्यं वाग्रूक्षता; पैशुन्यं सूचकता; अनृतमसत्यं; आलस्यं कर्मण्यनुत्साहः; अयशस्यानि वाच्यस्थानप्रवर्तनानि । हित्वा परित्यज्य । नीचनखरोम्णेति कृत्तत्वान्नीचमल्पं नखादि यस्य स तथा, तेन । सत्यव्रतब्रह्मचर्याभिवादनतत्परेणेति तत्परशब्दः सत्यादिभिः प्रत्येकं संबध्यते; ब्रह्मचर्यं समस्तेन्द्रियसंयमः । अवश्यमिति नान्यथेत्यर्थः । मदनुमतानि मयाऽनुज्ञातानि मत्कथितानीत्यर्थः; स्थानादिपरेण भूत्वा तन्निष्ठेन भूत्वा । प्राकाश्यं प्रसिद्धिम् ॥ ६ ॥

**अहं वा त्वयि सम्यग्वर्तमाने यद्यन्यथादर्शी स्यामेनोभाग्भवेयमफलविद्यश्च ॥ ७ ॥**

शिष्यप्रवृत्तिमात्मविषये नियम्य, शिष्यविषये आत्मप्रवृत्तिं नियमयन्नाह—अहं वेत्यादि । यद्यन्यथादर्शी स्याम् अन्यप्रकारदर्शी भवेयं, तदा एनोभाग्भवेयं पापभाजनं भवामीत्यर्थः ॥७॥

**द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथाभ्युपगतानां चात्मबान्धवानामिव स्वभेषजैः प्रतिकर्तव्यम्, एवं साधु भवति; व्याधशाकुनिकपतित-**

**पापकारिणां च न प्रतिकर्तव्यम्; एवं विद्या प्रकाशते मित्रयशोधर्मार्थकामांश्च प्राप्नोति ॥ ८ ॥**

शिष्यस्य आतुरे प्रवृत्तिं नियमयन्नाह—द्विजेत्यादि । प्रव्रजिताः तपस्विनः, उपनताः सन्निधाने प्रणययुक्ताः, साधवः सत्पुरुषाः, अनाथा एकाकिनः, अभ्युपगता दूरादायाताः संतोऽङ्गीकृताः; एषां प्रतिकर्तव्यं प्रतिविधातव्यम् । एवं साधु भवति अनेन प्रकारेण शोभनं भवति । इदानीमप्रवृत्तिं दर्शयन्नाह—व्याधेत्यादि ।—व्याधादिषु सत्यप्यर्थलाभे न प्रतिकर्तव्यम् । व्याधा वागुरिकादयः, शाकुनिकाः पक्षिणां हन्तारः, पतिताः स्वकीयाचारभ्रष्टाः, पापकारिणः गुरुतल्पगादयः । न प्रतिकर्तव्यं नोपचरणीयम् । एवं विद्या प्रकाशते अनेन प्रकारेण विद्या स्वयमेव प्रकाशं याति, केचित् 'प्रकाश्यते' इति पठन्ति ॥ ८ ॥

**भवतश्चात्र—**

**कृष्णेऽष्टमी तन्निधनेऽहनी द्वे**
**शुक्ले तथाऽप्येवमहर्द्विसन्ध्यम् ।**
**अकालविद्युत्स्तनयित्नुघोषे**
**स्वतन्त्रराष्ट्रक्षितिपव्यथासु ॥ ९ ॥**
**श्मशानयानायतनाहवेषु**
**महोत्सवौत्पातिकदर्शनेषु ।**
**नाध्येयमन्येषु च येषु विप्रा**
**नाधीयते नाशुचिना च नित्यम् ॥ १० ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने शिष्योपनयनीयो नाम द्वितीयोऽध्यायः ॥ २ ॥**

इदानीमनध्ययनकालमाह—कृष्णे इत्यादि । कृष्णेऽष्टमीति कृष्णपक्षे या अष्टमी, तन्निधने कृष्णपक्षावसाने, अहनी द्वे चतुर्दश्यमावस्ये; शुक्ले शुक्लपक्षेऽपि, तथा तेनैव प्रकारेण, नाध्येयमिति; तेनात्रापि अष्टमीचतुर्दशीपौर्णमासीषु नाध्येयमिति । तत्प्रतिपदोस्तु पाठनिषेधः 'अन्येषु च येषु विप्रा नाधीयते' इत्यनेन गम्यते; अन्ये तु प्रतिपदावन्यथा गृहीतुं व्याख्यानयन्ति—तन्निधने इति कृष्णपक्षावसाने अहनि नाध्येयं, तेन अमावास्या गृहीता; अहनी द्वे इति कृष्णपक्षावसानसमीपे यौ द्वौ दिवसौ तयोरपि नाध्येयं, तेन चतुर्दशीप्रतिपदौ । अहानि नियम्य अहरवयवान्नियन्तुमाह—अहर्द्विसन्ध्यमिति ।—अहनि द्वयोः सन्ध्ययोर्नाध्येयमिति । अकालविद्युत्स्तनयित्नुघोषे इति अकालशब्दो विद्युत्स्तनयित्नुघोषाभ्यां सह संबध्यते; अकालविद्युत् अनार्तवा विद्युत्; विद्युद्ग्रहणमुपलक्षणं, तेनाकालिकी वृष्टिर्गृह्यते, अकालवृष्टिः अनृतुवृष्टिः, सा तु हेमन्तशिशिरयोः; तथा चोक्तं,—"पौषादिचतुरो मासान् स्मृता वृष्टिरकालिकी"—इति; अकालस्तनयित्नुघोष इति अनृतुमेघगर्जितम्, अन्ये सन्ध्यामेघगर्जितमाचक्षते । स्वतन्त्रराष्ट्रक्षितिपव्यथास्विति स्वशब्दस्तन्त्रादिभिः प्रत्येकं संबध्यते; तेनात्मीयलोकदेशभूपपीडासु । श्मशानयानायतनाहवेष्विति श्मशानं मृतमर्त्यदाहस्थानं, यानं हस्त्यादि, आयतनं वधस्थानम्, आहवः संग्रामः । महोत्सवौत्पातिकदर्शनेष्विति महोत्सवाः शक्रोत्सवादयः; तथाहि—भाद्रपदपौर्णमास्यां शक्रस्य महोत्सवः, आश्विन्यां कौमुदीमहोत्सवः, उत्तरायणसंक्रान्तौ कुबेरमहोत्सवः, चैत्रशुक्लत्रयोदश्यां मदनमहोत्सवः, इत्यादयः; उत्पातः अनिष्टसूचकनिमित्तं निर्घातादि; अन्ये तूत्पातं त्रिविधमाचक्षते–भौमम्, आन्तरिक्षं, दिव्यमिति; तेषु मध्ये भौम उत्पातः स्थिराजातः, आन्तरिक्षो गन्धर्वपुरेन्द्रचापादि, दिव्यो ग्रहनक्षत्रवैकृतमुत्पातादिश्च; उत्पात एव औत्पातिकः । अनुक्तसंग्रहार्थमाह—नाध्येयमन्येषु चेत्यादि । ते च कालविशेषाश्छन्दोगानां वचनादेवावगन्तव्या इति । अन्ये त्वत्र उच्छिष्टादिभोजवचनमाश्रयन्ति । कृष्णाष्टमीति केचित् पठन्ति ॥ ९ ॥ १० ॥

इति श्रीडल्ह(ह्ल)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

**अथातोऽध्ययनसंप्रदानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । अधीयत इत्यध्ययनं शास्त्रम् । सम्यक् प्रविभज्य दानं संप्रदानम् ॥ १ ॥ २ ॥

**प्रागभिहितं सविंशमध्यायशतं पञ्चसु स्थानेषु । तत्र सूत्रस्थानमध्यायाः षट्चत्वारिंशत्, षोडश निदानानि, दश शारीराणि, चत्वारिंशच्चिकित्सितानि, अष्टौ कल्पाः, तदुत्तरं षट्षष्टिः ॥ ३ ॥**

अविभक्तमध्ययनं दातुमशक्यम्, अतस्तद्विभागायाह—प्रागित्यादि । अस्य च वाक्यस्यार्थ आद्याध्याये उक्तः । प्रतिस्थानमध्यायान् संख्यातुमाह—तत्रेत्यादि ॥ ३ ॥

**वेदोत्पत्तिः शिष्यनयस्तथाऽध्ययनदानिकः ॥**
**प्रभाषणाग्रहरणावृतुचर्याऽथ यान्त्रिकः ॥ ४ ॥**
**शस्त्रावचारणं योग्या विशिखा क्षारकल्पनम् ॥**
**अग्निकर्म जलौकाख्यो ह्यध्यायो रक्तवर्णनम् ॥५॥**
**दोषधातुमलाद्यानां विज्ञानाध्याय एव च ॥**
**कर्णव्यधामपक्वैषावालेपो व्रण्युपासनम् ॥ ६ ॥**
**हिताहितो व्रणप्रश्नो व्रणास्रावश्च यः पृथक् ॥**
**कृत्याकृत्यविधिर्व्याधिसमुद्देशीय एव च ॥ ७ ॥**
**विनिश्चयः शस्त्रविधौ प्रनष्टज्ञानिकस्तथा ॥**
**शल्योद्धृतिर्व्रणज्ञानं दूतस्वप्ननिदर्शनम् ॥ ८ ॥**

---

१ 'एते त्वया सन्तोषीकृता इत्यर्थः' इति पा० । २ 'कृष्णेतरे' इति पा० । ३ '०ध्ववनाहवेषु' इति पा० ।

१ 'तन्त्रं बलम्' इति चक्रः । २ 'अवभवोऽयतनः आहवो युद्धं यज्ञो वा यत्र नगरे ग्रामे वा तेषु' इति हाराणचन्द्रः । ३ 'प्रपूज्य' इति पा० । ४ 'श्लोकस्थानं' इति पा० ।

पञ्चेन्द्रियं तथा छाया स्वभावाद्वैकृतं तथा-॥
ऽवारणो युक्तसेनीय आतुरक्रमभूमिकौ ॥ ९ ॥
मिश्रकाख्यो द्रव्यगणः संशुद्धौ शमने च यः ॥
द्रव्यादीनां च विज्ञानं विशेषो द्रव्यगोऽपरः ॥१०
रसज्ञानं वमनार्थमध्यायो रेचनाय च ॥
द्रवद्रव्यविधिस्तद्वदन्नपानविधिस्तथा ॥ ११ ॥
सूचनात् सूत्रणाच्चैव सवनाच्चार्थसन्ततेः ॥
षट्चत्वारिंशदध्यायं सूत्रस्थानं प्रचक्षते ॥ १२ ॥

प्रतिस्थानोक्तानामध्यायानां नामानि निर्देष्टुमाह—वेदोत्पत्तिरित्यादि । शिष्यनयः शिष्योपनयनीयः । अध्ययनदानिकः अध्ययनसंप्रदानीयः । प्रभाषणः प्रभाषणीयः । अग्रहरणः अग्रोपहरणीयः । ऋतुचर्या ऋतुचर्याध्यायः । यान्त्रिकः यन्त्रविधिः । शस्त्रावचारणः शस्त्रावचारणीयः । योग्या योग्यासूत्रीयः । विशिखा विशिखानुप्रवेशनीयः । क्षारकल्पनं क्षारपाकविधिः । अग्निकर्म अग्निकर्मविधिः । जलौकाख्यः जलौकोवचारणीयः । अध्यायो रक्तवर्णनं शोणितवर्णनीयोऽध्यायः । दोषधातुमलाख्यानां विज्ञानाध्यायः दोषधातुमलक्षयवृद्धिविज्ञानीयः । कर्णव्यधः कर्णव्यधबन्धविधिः । आमपक्वैषः आमपक्वैषणीयः । आलेपः व्रणालेपनबन्धविधिः । व्रण्युपासनं व्रणितोपासनीयः । हिताहितः हिताहितीयाध्यायः । व्रणास्रावः व्रणास्रावविज्ञानीयः । विनिश्चयः शस्त्रविधौ अष्टविधशस्त्रकर्मीयः । प्रनष्टज्ञानिकः प्रनष्टशल्यविज्ञानीयः । शल्योद्धृतिः शल्यापनयनीयः । व्रणज्ञानं विपरीताविपरीतव्रणविज्ञानीयः । दूतस्वप्ननिदर्शनं विपरीताविपरीतदूतस्वप्ननिदर्शनीयः । पञ्चेन्द्रियं पञ्चेन्द्रियार्थविप्रतिपत्तिः । छाया छायाविप्रतिपत्तिः । स्वभावाद्वैकृतं स्वभावविप्रतिपत्तिः । अवारणः अवारणीयाध्यायः । आतुरक्रमः आतुरोपक्रमणीयाध्यायः । भूमिको भूमिप्रविभागीयः । द्रव्यगणः द्रव्यसंग्रहणीयः । संशुद्धौ शमने च यः संशोधनसंशमनीयः । द्रव्यादीनां च विज्ञानं द्रव्यगुणरसवीर्यविपाकविज्ञानीयः । विशेषो द्रव्यगोऽपरः द्रव्यविशेषविज्ञानीयः । रसज्ञानं रसविशेषविज्ञानीयः । वमनार्थमध्यायः वमनद्रव्यविकल्पविज्ञानीयः । रेचनाय च विरेचनद्रव्यविकल्पविज्ञानीयः । शेषास्तु निर्दिष्टनामप्रसिद्धा इति नोक्ताः । 'आतुरक्रममिश्रकौ' इति केचित् पठन्ति; तन्न, यतः पूर्वनिबन्धकारैरेष क्रमो नाङ्गीकृतः । सूत्रस्थानस्य निरुक्तिं कर्तुमाह—सूचनादिति । सूचनात् लेशतोऽर्थप्रकाशनात् । सूत्रणात् अर्थानां यथास्थानं निवेशनात् । सवनात् जननात् । अर्थसन्ततेः अर्थसमूहस्य । सूत्रस्थानमध्यायाः षट्चत्वारिंशदिति प्रागेव संख्यानिर्देशात् पुनः षट्चत्वारिंशदध्यायं सूत्रस्थानमिति संख्याकरणं नियमार्थं; तेन द्रवद्रव्यान्नपानिकानामुदकगोरसतैलादिप्रकरणानां प्रत्येकमध्यायत्वं निराकृतम् ॥ ४—१२ ॥

वातव्याधिकमर्शांसि साश्मरिश्च भगन्दरः ॥
कुष्ठमेहोदरं मूढो विद्रधिः परिसर्पणम् ॥ १३ ॥
ग्रन्थिवृद्धिक्षुद्रशूकभग्नांश्च मुखरोगिकम् ॥
हेतुलक्षणनिर्देशान्निदानानीति षोडश ॥ १४ ॥

कानि पुनस्तानि षोडश निदानानीत्याह—वातव्याधिकमित्यादि । मूढगर्भादीनामेकदेशेन समुदायसूचनं लाघवार्थम्; एवमुत्तरत्रापि बोद्धव्यम् । मूढः मूढगर्भनिदानम् । परिसर्पणं विसर्पनाडीस्तनरोगनिदानम् । ग्रन्थिरिति ग्रन्थ्यपच्यर्बुदगलगण्डनिदानम् । वृद्धिरिति वृद्ध्युपदंशश्लीपदनिदानम् । शूकः शूकदोषनिदानम् । निदाननिरुक्तिं प्रतिपादयन्नाह—हेत्वित्यादि । हेतव इति कारकहेतवो बलवद्विग्रहक्रोधदिवास्वप्नादयः; लक्षणानि ज्ञापकहेतवः, ते च पूर्वरूपरूपोपशयसंप्राप्तयः । निर्देशात् विवरणात् ॥ १३ ॥ १४ ॥

भूतचिन्ता रजःशुद्धिर्गर्भावक्रान्तिरेव च ॥
व्याकरणं च गर्भस्य शरीरस्य च यत्स्मृतम् ॥१५॥
प्रत्येकं मर्मनिर्देशः सिरावर्णनमेव च ॥
सिराव्यधो धमनीनां गर्भिण्या व्याकृतिस्तथा १६
निर्दिष्टानि दशैतानि शारीराणि महर्षिणा ॥
विज्ञानार्थं शरीरस्य भिषजां योगिनामपि ॥ १७ ॥

कानि पुनः शारीराणीत्याह—भूतचिन्तेत्यादि । भूतचिन्ता सर्वभूतचिन्ताशारीरम् । रजःशुद्धिः शुक्रशोणितशुद्धिशारीरम् । गर्भावक्रान्तिरिति अनेनैव नाम्ना प्रसिद्धः, गर्भावक्रान्तिः गर्भान्तः(नु)प्रवेश इत्यर्थः । व्याकरणं च गर्भस्य गर्भव्याकरणं शारीरं, व्याकरणं विवरणम् । शरीरस्य च यत् स्मृतं शरीरसंख्याव्याकरणं शारीरम् । सिरावर्णनं सिरावर्णनविभक्तिशारीरम् । सिराव्यधः सिराव्यधविधिशारीरम् । व्याकृतिशब्दो धमनीगर्भिणीभ्यां प्रत्येकं संबध्यते; तेन धमनीव्याकृतिः धमनीव्याकरणं शारीरं, गर्भिणीव्याकृतिः गर्भिणीव्याकरणं शारीरम् । महर्षिणेति महच्छब्दः पूजावचनः; तेन पूज्येन धन्वन्तरिणा । विज्ञानार्थं विशिष्टज्ञानार्थम् । योगः समाधिः, स विद्यते येषां ते योगिनः, तेषाम् ॥ १५—१७ ॥

द्विव्रणीयो व्रणः सद्यो भग्नानां वातरोगिकम् ॥
महावातिकमर्शांसि साश्मरिश्च भगन्दरः ॥१८॥
कुष्ठानां महतां चापि मैहिकं पैडिकं तथा ॥
मधुमेहचिकित्सा च तथा चोदरिणामपि ॥ १९ ॥
मूढगर्भचिकित्सा च विद्रधीनां विसर्पिणाम् ॥
ग्रन्थिवृद्ध्युपदंशानां तथा च क्षुद्ररोगिणाम् २०॥
शूकदोषचिकित्सा च तथा च मुखरोगिणाम् ॥
शोफस्यानागतानां च निषेधो मिश्रकं तथा ॥२१॥

---

१ 'आतुरक्रममिश्रकौ' इति पा० । २ 'भूमिभागो' इति पा० । ३ 'सन्धानाच्चार्थसन्ततेः' इति पा० । 'सरणाच्चार्थसन्ततेः' इति चक्रसंमतः पाठः । 'सरणं प्रतीतार्थगतिलभ्यमानं, यथा—'औषधग्रहणाद्द्रव्यरस-गुण-वीर्य-विपाकानामादेशः' इति, अत्र हि औषधं रसादीन् प्रत्याख्याय न भवतीति रसादिलाभः' इति तत्कृतव्याख्या ।

१ 'मूढविद्रध्यः' इति पा० । २ 'ग्रन्थिवृद्धिभग्नशूकक्षुद्राश्च' इति पा० ।

**वाजीकरं च यत् क्षीणे सर्वाबाधशमोऽपि च ॥**
**मेधायुष्करणं चापि स्वभावव्याधिवारणम् ॥२२॥**
**निवृत्तसंतापकरं कीर्तितं च रसायनम् ॥**
**स्नेहोपयौगिकः स्वेदो वमने सविरेचने ॥ २३ ॥**
**तयोर्व्यापच्चिकित्सा च नेत्रबस्तिविभागिकः ॥**
**नेत्रबस्तिविपत्सिद्धिस्तथा चोत्तरबस्तिकः ॥२४॥**
**निरूहक्रमसंज्ञश्च तथैवातुरसंज्ञकः ॥**
**धूमनस्यविधिश्चान्त्यैश्चत्वारिंशदिति स्मृताः २५**
**प्रायश्चित्तं प्रशमनं चिकित्सा शान्तिकर्म च ॥**
**पर्यायास्तस्य निर्देशाच्चिकित्सास्थानमुच्यते ॥२६**

कानि पुनश्चिकित्सितानीत्याह—द्विव्रणीय इत्यादि । व्रणः सद्यः सद्योव्रणचिकित्सितम् । भग्नानां भग्नचिकित्सितम् । वातरोगिकं वातव्याधिचिकित्सितम् । महावातिकं महावातव्याधिचिकित्सितम् । महतां चापि महाकुष्ठचिकित्सितम् । मैहिकं प्रमेहचिकित्सितम् । पैडिकं प्रमेहपिडकाचिकित्सितम् । विसर्पिणां विसर्पनाडीस्तनरोगचिकित्सितम् । ग्रन्थिरिति ग्रन्थ्यपच्यर्बुदगलगण्डचिकित्सितम् । वृद्ध्युपदंशानां वृद्ध्युपदंशश्लीपदचिकित्सितम् । अनागतानां निषेधः अनागताबाधप्रतिषेधचिकित्सितम् । मिश्रकं मिश्रकचिकित्सितम् । वाजीकरं च यत् क्षीणे क्षीणबलीयवाजीकरणचिकित्सितम् । सर्वाबाधशमोऽपि सर्वाबाधशमनीयं रसायनम् । मेधायुष्करणं चापि मेधायुष्कामीयं रसायनम् । स्वभावव्याधिवारणं स्वभावव्याधिप्रतिषेधनीयं रसायनम् । निवृत्तसंतापकरं कीर्तितं च रसायनं निवृत्तसंतापीयं रसायनम् । स्वेदः स्वेदावचारणीयं चिकित्सितम् । वमने सविरेचने वमनविरेचनसाध्योपद्रवचिकित्सितम् । तयोर्व्यापच्चिकित्सा च वमनविरेचनव्यापच्चिकित्सितम् । नेत्रबस्तिविभागिकः नेत्रबस्तिप्रमाणप्रविभागचिकित्सितम् । नेत्रबस्तिविपत्सिद्धिः नेत्रबस्तिव्यापच्चिकित्सितम् । तथा चोत्तरबस्तिकः अनुवासनोत्तरबस्तिचिकित्सितम् । निरूहक्रमसंज्ञश्च निरूहोपक्रमचिकित्सितम् । तथैवातुरसंज्ञितः आतुरोपद्रवचिकित्सितम् । धूमनस्यविधिश्चान्त्यः धूमनस्यकवड(ल)ग्रहचिकित्सितम्; अन्ते भवोऽन्त्यः । चिकित्सितस्य पर्यायान्तरं दर्शयितुमाह—प्रायश्चित्तमित्यादि । एते प्रायश्चित्तादयस्तस्य चिकित्सितस्य पर्यायाः । तस्यैवंपर्यायविनिर्दिष्टस्य चिकित्सितस्य निर्देशाद् विवरणाच्चिकित्सास्थानं कथ्यते ॥ १८—२६ ॥

**अन्नस्य रक्षा विज्ञानं स्थावरस्येतरस्य च ॥**
**सर्पदष्टविषज्ञानं तस्यैव च चिकित्सितम् ॥ २७ ॥**
**दुन्दुभेर्मूषिकाणां च कीटानां कल्प एव च ॥**
**अष्टौ कल्पाः समाख्याता विषभेषजकल्पनात् ॥**

के पुनः कल्पा इत्याह—अन्नस्येत्यादि । अन्नस्य रक्षा अन्नपानैरक्षाकल्पः । विज्ञानं स्थावरस्य स्थावरविषविज्ञानीयः कल्पः । इतरस्य च जङ्गमविषविज्ञानीयः कल्पः । तस्यैव च चिकित्सितं सर्पदष्टचिकित्साकल्पः । दुन्दुभेः दुन्दुभिस्वनीयः कल्पः । मूषिकाणां च मूषिककल्पः । कल्पनिरुक्तिं प्रतिपादयन्नाह—विषभेषजकल्पनादिति; विषौषधविज्ञानात् ॥ २७ ॥ २८ ॥

**अध्यायानां शतं विंशमेवमेतदुदीरितम् ॥**

पूर्वप्रतिज्ञातमुपसंहरन्नाह—अध्यायानामित्यादि । एवमेतदिति अनन्तरोक्तम् ॥—

**अतः परं स्वनाम्नैव तन्त्रमुत्तरमुच्यते ॥ २९ ॥**
**अधिकृत्य कृतं यस्मात्तन्त्रमेतदुपद्रवान् ॥**
**औपद्रविक इत्येष तस्याद्यत्वान्निरुच्यते ॥ ३० ॥**
**सन्धौ वर्त्मनि शुक्ले च कृष्णे सर्वत्र दृष्टिषु ॥**
**संविज्ञानार्थमध्याया गदानां तु प्रति प्रति ॥३१॥**
**चिकित्साप्रविभागीयो वाताभिष्यन्दवारणः ॥**
**पैत्तस्य श्लैष्मिकस्यापि रौधिरस्य तथैव च ॥३२॥**
**लेख्यभेद्यनिषेधौ च छेद्यानां वर्त्मदृष्टिषु ॥**
**क्रियाकल्पोऽभिघातश्च कर्णोत्थास्तच्चिकित्सितम्**
**घ्राणोत्थानां च विज्ञानं तद्वद्प्रतिषेधनम् ॥**
**प्रतिश्यायनिषेधश्च शिरोगदविवेचनम् ॥ ३४ ॥**
**चिकित्सा तद्गदानां च शालाक्यं तन्त्रमुच्यते ॥**

शल्यतन्त्रं प्रतिपाद्य तदुत्तरमर्थवशादागतं प्रतिपादयन्नाह—अतः परमिति । अतः परम् उक्तस्थानपञ्चकादनन्तरं, स्वनाम्नैव स्वसंज्ञयैव तन्त्रमुच्यते । किं तदात्मीयमस्य नाम येनोच्यते तत्तन्त्रमित्याह—उत्तरतन्त्रमिति; न शल्यतन्त्रसंज्ञया । कुतः पुनरौपद्रविकाध्यायस्योत्तरतन्त्रस्यादौ स्थितस्य 'औपद्रविक' इति नाम कृतमित्याह—अधिकृत्येत्यादि । अधिकृत्य अङ्गीकृत्य, उपद्रवान् रोगान्, यस्मात्तन्त्रमेतदुत्तरतन्त्रं कृतम्, अतस्तस्योत्तरतन्त्रस्याद्यत्वात् प्रथमत्वात्, 'औपद्रविक' इत्यध्यायो निरुच्यते निरुक्त्या कथ्यते; उपद्रवाधिकृततन्त्रस्य प्रथमत्वादध्यायस्य 'औपद्रविक' इति नाम कृतमित्यर्थः । सन्धौ वर्त्मनीत्यादिषु गतानां गदानां तु प्रति प्रति सम्यग्विज्ञानार्थमध्याया इति संबन्धः । तेनायमर्थः—सन्धाविति सन्धिगतरोगविज्ञानीयाध्यायः, वर्त्मनीति वर्त्मगतरोगविज्ञानीयाध्यायः, शुक्ले चेति शुक्लगतरोगविज्ञानीयाध्यायः, कृष्णे इति कृष्णगतरोगविज्ञानीयाध्यायः, सर्वत्रेति सर्वगतरोगविज्ञानीयाध्यायः, दृष्टिष्विति दृष्टिगतरोगविज्ञानीयाध्यायः । पैत्तस्येत्यादिषु अभिष्यन्दवारण इति संबन्धः; तेन पैत्तस्येति पित्ताभिष्यन्दप्रतिषेधाध्यायः, श्लैष्मिकस्येति श्लेष्माभिष्यन्दप्रतिषेधाध्यायः, रौधिरस्येति रक्ताभिष्यन्दप्रतिषेधाध्यायः । लेख्यभेद्यनिषेधौ चेति लेख्यरोगप्रतिषेधाध्यायः, भेद्यरोगप्रतिषेधाध्यायः । छेद्यानामिति छेद्यरोगप्रतिषेधाध्यायः । वर्त्मदृष्टिष्विति वर्त्मगतरोगप्रतिषेधाध्यायः, दृष्टिगतरोगप्रतिषेधाध्यायः । अभिघातश्चेति नयनाभिघातप्रतिषेधाध्यायः । कर्णोत्था इति कर्णगतरोगविज्ञानीयाध्यायः । तच्चिकित्सितमिति

---

१ हाराणचन्द्रस्तु 'अद्याः' इति पठित्वा 'अद्याः श्रेष्ठाः, अद्यत्वं तु रुक्प्रतीकाररूपमुख्यकर्मार्थकत्वात्' इति व्याख्यानयति ।
२ 'सर्वोपघातशमनीयं' इति पा० । ३ 'अन्नपानरक्षाविज्ञानीयः कल्पः' इति पा० ।

१ 'सविंशमध्यायशत०' इति पाठान्तरम् ।

कर्णगतरोगप्रतिषेधाध्यायः । घ्राणोत्थानां च विज्ञानमिति नासागतरोगविज्ञानीयाध्यायः । तद्वद्प्रतिषेधनमिति नासागतरोगप्रतिषेधाध्यायः । प्रतिश्यायनिषेधश्चेति प्रतिश्यायप्रतिषेधाध्यायः । शिरोगदविवेचनमिति शिरोरोगविज्ञानीयाध्यायः । चिकित्सा तद्गदानां चेति शिरोरोगप्रतिषेधाध्यायः ॥ २९-३४ ॥—

**नवग्रहाकृतिज्ञानं स्कन्दस्य च निषेधनम् ॥ ३५ ॥**
**अपस्मारशकुन्योश्च रेवत्याश्च पुनः पृथक् ॥**
**पूतनायास्तथाऽन्धायाः शीतपूतनमण्डिका ॥३६**
**नैगमेषचिकित्सा च ग्रहोत्पत्तिः सयोनिजा ॥**
**कुमारतन्त्रमित्येतच्छारीरेषु च कीर्तितम् ॥ ३७॥**

शालाक्यतन्त्रं समाप्य कुमारतन्त्रं दर्शयन्नाह—नवग्रहेत्यादि । स्कन्दस्य च निषेधनं स्कन्दग्रहप्रतिषेधाध्यायः । अपस्मारशकुन्योश्चेति स्कन्दापस्मारप्रतिषेधाध्यायः, शकुनिप्रतिषेधाध्यायः । रेवत्याश्च पुनः पृथगिति रेवतीप्रतिषेधाध्यायः । पूतनाया इति पूतनाप्रतिषेधाध्यायः । तथाऽन्धाया इत्यत्रापि पूतनाशब्दः संबध्यते; तेन, अन्धपूतनाप्रतिषेधाध्यायः । शीतपूतनेति शीतपूतनाप्रतिषेधाध्यायः, मण्डिकेति मुखमण्डिकाप्रतिषेधाध्यायः । नैगमेषचिकित्सा चेति नैगमेषप्रतिषेधाध्यायः । ग्रहोत्पत्तिरिति ग्रहोत्पत्त्यध्यायः । सयोनिजेति योनिव्यापत्प्रतिषेधाध्यायः, सशब्दः सहार्थः । कुमारतन्त्रमिति अत्रेतिशब्दः कुमारतन्त्रपरिसमाप्तौ । किमेतावदेव कुमारतन्त्रमथवाऽन्यदप्यस्तीति पृष्ट आह—शारीरेषु च कीर्तितमिति । किं तच्छरीरेपूक्तं ? तद्यथा—रजःशुद्धिः, गर्भावक्रान्तिरित्यादि ॥ ३५-३७ ॥

**ज्वरातिसारशोषाणां गुल्महृद्रोगिणामपि ॥**
**पाण्डूनां रक्तपित्तस्य मूर्च्छायाः पानजाश्च ये ३८**
**तृष्णायाश्छर्दिंहिक्कानां निषेधः श्वासकासयोः ॥**
**स्वरभेदचिकित्सा च कृम्युदावर्तिनोः पृथक् ३९**
**विसूचिकारोचकयोर्मूत्राघातविकृच्छ्रयोः ॥**
**इति कायचिकित्सायाः शेषमत्र प्रकीर्तितम् ४०**

का पुनरुत्तरतन्त्रे कायचिकित्सेति दर्शयन्नाह—ज्वरेत्यादि । निषेधः प्रतिषेधः, स च ज्वरादिभिः सह प्रत्येकं संबध्यते; तेन ज्वरप्रतिषेधोऽतीसारप्रतिषेध इत्यादि द्रष्टव्यम् । पानजाश्च य इति मद्यपानजाश्च ये रोगास्तेषां प्रतिषेधः, एतेन पानात्ययप्रतिषेध इत्युक्तम् । स्वरभेदचिकित्सा चेति स्वरभेदप्रतिषेधः । मूत्राघातविकृच्छ्रयोरिति विशब्दश्छन्दःपूर्तये; तेन मूत्राघातप्रतिषेधः, मूत्रकृच्छ्रप्रतिषेधः । इति कायचिकित्सायाः शेषमत्र प्रकीर्तितमिति इतिशब्दः समाप्तौ; अत्र उत्तरतन्त्रे, कायचिकित्सायाः शेषं प्रकीर्तितं निर्दिष्टं; शेषशब्देन शल्येऽपि निर्दिष्टमिति बोधयति ॥ ३८-४० ॥

**अमानुषनिषेधश्च तथाऽऽपस्मारिकोऽपरः ॥**
**उन्मादप्रतिषेधश्च भूतविद्या निरुच्यते ॥ ४१ ॥**

कायचिकित्सां समाप्य भूतविद्यां प्रतिपादयन्नाह—अमानुषेत्यादि । अमानुषनिषेधः [1]अमानुषोपसर्गप्रतिषेधः । आपस्मारिकः अपस्मारप्रतिषेधः ॥ ४१ ॥

**रसभेदाः स्वस्थवृत्तं युक्तयस्तान्त्रिकाश्च याः ॥**
**दोषभेदा इति ज्ञेया अध्यायास्तन्त्रभूषणाः ॥४२॥**

तन्त्रभूषणाध्यायानाह—रसभेदा इत्यादि । रसभेदाः रसभेदविकल्पः । इतिशब्दः समाप्तौ । एते अध्यायास्तन्त्रभूषणाः शास्त्रस्यालङ्करणाः ॥ ४२ ॥

**श्रेष्ठत्वादुत्तरं ह्येतत्तन्त्रमाहुर्महर्षयः ॥**
**बह्वर्थसंग्रहाच्छ्रेष्ठमुत्तरं वाऽपि पश्चिमम् ॥ ४३ ॥**

उत्तरतन्त्रस्य निरुक्तिं प्रतिपादयन्नाह—श्रेष्ठत्वादित्यादि । श्रेष्ठत्वादिति एतत्तन्त्रं महर्षयः श्रेष्ठत्वादुत्तरं ब्रुवन्ति । कुतः पुनरस्य श्रेष्ठत्वमित्याह—बह्वर्थसंग्रहाच्छ्रेष्ठमिति । शालाक्यकुमाराबाधकायचिकित्साभूतविद्यातन्त्रभूषणाध्यायनिर्दिष्टानामर्थानां संग्रहाच्छ्रेष्ठमुत्तरतन्त्रम् । तस्य निरुक्तिपक्षान्तरं वक्तुमाह—उत्तरं वाऽपि पश्चिममिति ।–पश्चिमत्वाद्वा इदं तन्त्रमुत्तरम् । 'शेषत्वादुत्तरं ह्येतत्' इति केचित् पठन्ति, पूर्वतन्त्रशेषत्वादिदं तन्त्रमुत्तरं श्रैष्ठ्याद्वेति व्याख्यानयन्ति ॥ ४३ ॥

**शालाक्यतन्त्रं कौमारं चिकित्सा कायिकी च या**
**भूतविद्येति चत्वारि तन्त्रे तूत्तरसंज्ञिते ॥ ४४ ॥**
**वाजीकरं चिकित्सासु रसायनविधिस्तथा ॥**
**विषतन्त्रं पुनः कल्पाः शल्यज्ञानं समन्ततः ॥४५॥**
**इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम् ॥**
**विधिनाऽधीत्य युञ्जाना भवन्ति प्राणदा भुवि ४६**

अष्टाङ्गस्यायुर्वेदस्य विस्तरेण प्रतिपादितस्य संक्षेपेण तन्त्रद्वयेऽवस्थानं नियमयन्नाह—शालाक्यतन्त्रमित्यादि । इति चत्वारि तन्त्राणि उत्तरसंज्ञके तन्त्रे सन्ति । उत्तरतन्त्रे चतुर्णां तन्त्राणामवस्थानं प्रतिपाद्य पूर्वेऽपि शल्यतन्त्रे चतुर्णां तन्त्राणामवस्थानं प्रतिपादयन्नाह—वाजीकरमित्यादि ।—वाजीकरं तन्त्रं चिकित्सासु यदुक्तं, तथा रसायनविधिश्च यश्चिकित्सासूक्तः, तथा विषतन्त्रं कल्पाः कल्पस्थानोक्तं विषतन्त्रम्, एतत्त्रयं पूर्वे शल्यतन्त्रे प्रतिपादितम् । शल्यज्ञानं शल्याङ्गज्ञानं, समन्ततः सर्वत्र । इत्यष्टाङ्गमिदमित्यादि इत्यनेन प्रकारेण । आदिदेवप्रकाशितं धन्वन्तरिणा प्रकटीकृतम् । युञ्जानाः प्रयोगं कुर्वाणाः ॥ ४४-४६ ॥

**एतद्ध्यवश्यमध्येयम्, अधीत्य च कर्माप्यवश्यमुपासितव्यम्, उभयज्ञो हि भिषग् राजार्हो भवति ४७**

एतद्धीति एतत् तन्त्रं, हि स्फुटम्, अवश्यमध्येयमिति निश्चयेन पठनीयम् । उपासितव्यमिति अभ्यसनीयम् । हि यस्मादर्थे । राजार्हः राजयोग्यो भवति राजपूज्य इत्यर्थः ॥ ४७ ॥

---

१ 'अमानुषाबाधप्रतिषेधः' इति पा० ।

**भवन्ति चात्र—**
**यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥**
**स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ॥४८॥**
**यस्तु कर्मसु निष्णातो धार्ष्ट्याच्छास्त्रबहिष्कृतः ॥**
**स सत्सु पूजां नाप्नोति वधं चर्च्छति राजतः ४९**
**उभावेतावनिपुणावसमर्थौ स्वकर्मणि ॥**
**अर्धवेदधरावेतावेकपक्षाविव द्विजौ ॥ ५० ॥**

भवन्ति चात्रेत्यादि । कर्मस्वपरिनिष्ठित इति कर्मसु विषये अनिष्पन्नः अशिक्षित इत्यर्थः, अदृष्टकर्मेत्यन्ये । आहवं संग्रामम् । यस्तु कर्मसु निष्णात इति यः पुनः कर्मसु विषये सुशिक्षितः, शास्त्रबहिष्कृतः शास्त्रे च बहिर्भूतः, धार्ष्ट्यात् प्रागल्भ्यात् कर्म करोति, स राजतः राज्ञः सकाशात्, वधं चर्च्छति वधं प्राप्नोति । उभावेतावनिपुणौ उभौ द्वौ, एतौ इमौ, अनिपुणौ अशिक्षितौ, स्वकर्मणि चिकित्सायाम् । अर्धवेदधराविति वेदशब्दोऽत्र ज्ञानार्थः; तेन, अर्धज्ञानधरौ शास्त्रज्ञः कर्मज्ञो वा । काविवैतावर्धवेदधरौ स्वकर्मण्यसमर्थौ ? आह—एतावेकपक्षाविव द्विजाविति ।—यथैकपक्षौ द्विजौ पक्षिणौ, एतौ सर्वतो गमनेऽसमर्थौ तद्वदित्यर्थः ॥ ४८—५० ॥

**ओषध्योऽमृतकल्पास्तु शस्त्राशनिविषोपमाः ॥**
**भवन्त्यज्ञैरुपहृतास्तस्मादेतान् विवर्जयेत् ॥ ५१ ॥**

कुतः कारणाच्छास्त्रबहिष्कृतो वधमृच्छति राजत इति हेतुं प्रतिपादयन्नाह—ओषध्य इत्यादि । अमृतकल्पाः अमृततुल्याः । अज्ञैरुपहृताः औषधविषयाज्ञैः प्रयुक्ताः, ओषधेरज्ञानं च शास्त्रविहीनत्वात् । तथाचोक्तं—यस्तु कर्मसु निष्णातो धार्ष्ट्याच्छास्त्रबहिष्कृत इति । ओषधीनां ज्ञानमपि नामरूपयोगभेदात्रिविधं; तत्र नामादिषु मध्ये योगज्ञानं प्रधानम्, इदं च योगज्ञानं शास्त्रज्ञाने सति भवति । तस्मादेतान् विवर्जयेदिति एताञ्छास्त्रज्ञानबहिष्कृतान् विशेषेण परिहरेत् । दृष्टान्तत्रयोपादानं चोर्ध्वाधोभयभागव्यापन्निदर्शनार्थमित्येके; संशोधनपाचनसंशमनीयौषधव्यापन्निदर्शनार्थमित्यपरे, अनेककालानेकावस्थानत्वसूचनार्थमित्यन्ये । इतरे त्वत्र श्लोकाभ्यामन्यथा समाधानं दधति । तथाहि,—"अथवैतत्रयं यद्वन्मिलितं मृत्युकारणम् । दुष्प्रयुक्तास्तु तास्तद्वन्नियतं मृत्युकारणम् ॥ अप्रसिद्धं क्वचित् किंचिदित्यर्थं व्याप्य तत्रयम् । गरुडाधिष्ठिते देशे विषमप्यविषं यथा"—इति । अन्ये तु पुनरोषध्योऽमृतकल्पास्तथा स्नेहादिष्वनभिज्ञो य इत्युभयत्र उभावपि कर्मशास्त्रानभिज्ञावधिकुर्वते, 'तस्मादेतौ विवर्जयेत्'—इति च पठन्ति, एतौ पूर्वोक्तौ केवलशास्त्रज्ञकर्मज्ञौ विवर्जयेदिति व्याख्यानयन्ति । एष पक्षः पञ्जिकायां विस्तरेणाप्याहृतः । यद्यप्योषधिशब्दः फलपाकान्तेषु द्रव्येषु वर्तते, तथाऽप्यत्र समस्तद्रव्यवाची ग्रहीतव्यः, कुतः ? विशेषस्यानुपादानात् ॥ ५१ ॥

**स्नेहादिष्वनभिज्ञो यश्छेद्यादिषु च कर्मसु ॥**
**स निहन्ति जनं लोभात् कुवैद्यो नृपदोषतः ॥ ५२**

इदानीं शास्त्रज्ञं कर्मानभिज्ञमधिकृत्याह—स्नेहादिष्वित्यादि । छेद्यादिभ्यः स्नेहादीनि कर्माणि प्रागुपयुज्यन्त इति स्नेहादीनां प्रागुपादानं; केचिच्छेद्यादीनां ग्रहणं प्राक् पठन्ति । कुवैद्य इति कुशब्दः कुत्सावचनः, तेन शास्त्रज्ञस्यापि कर्माज्ञानेन कुत्सितत्वं प्रतिपादयति । नृपदोषत इति राज्ञामयं दोषो येन नाज्ञातकर्मणि प्रवर्तयितुं वैद्यान्निवारयन्ति भूपा इति । केचित् कर्तृपदं सर्वत्र बहुवचनान्तं पठन्ति 'स्नेहादिष्वनभिज्ञा ये' इत्यादि ॥ ५२ ॥

**यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने ॥**
**आहवे कर्म निर्वोढुं द्विचक्रः स्यन्दनो यथा ॥५३॥**

इदानीं शास्त्रज्ञकर्मज्ञस्य गुणं निदर्शयन्नाह—यस्तूभयज्ञ इत्यादि । उभयज्ञः शास्त्रज्ञः कर्मज्ञश्च । मतिवान् ऊहापोहक्षम इत्यर्थः । अर्थसाधने आरोग्यकरणे । दृष्टान्तमाह—आहवे कर्मनिर्वोढुमित्यादि ।—आहवे संग्रामे, कर्म निर्वोढुं कर्म प्रवर्तयितुं, स्यन्दनः रथः ॥ ५३ ॥

**अथ वत्स ! तदेतदध्येयं यथा तथोपधारय मया प्रोच्यमानं-अथ शुचये कृतोत्तरासङ्गायाव्याकुलायोपस्थितायाध्ययनकाले शिष्याय यथाशक्ति गुरुरुपदिशेत् पदं पादं श्लोकं वा; ते च पदपादश्लोका भूयः क्रमेणानुसंधेयाः, एवमेकैकशो घटयेदात्मना चानुपठेत्; अद्रुतमविलम्बितमविशङ्कितमननुनासिकं सुव्यक्ताक्षरमपीडितवर्णमक्षिभ्रुवौष्ठहस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नातिनीचैश्च स्वरैः पठेत् । न चान्तरेण कश्चिद्व्रजेत् तयोरधीयानयोः ॥ ५४ ॥**

इदानीं प्रकृतमध्ययनं प्रस्तौति—अथ वत्सेत्यादि । अथेति आह्निकाद्यावश्यकादानन्तर्ये, आवश्यकमाह्निकं कृत्वेत्यर्थः । शुचये कृताह्निकत्वेन पवित्राय । कृतोत्तरासङ्गाय गृहीतोत्तरीयवस्त्राय । अव्याकुलाय एकचित्ताय । उपस्थिताय समीपस्थिताय, दूरस्थितावन्तरायसंभवः; उपस्थिताय अभिवादनानन्तरं कृतोपस्थानायेत्यन्ये । अध्ययनकाले प्रातरादावनध्ययनवर्जिते । शिष्याय उपनयनविधानेनाग्निसाक्षिकमनुशिष्टाय । यथाशक्ति शिष्यस्य शक्त्यनतिक्रमेण । पदं पादं श्लोकं वेति अनेन त्रिविधां ग्रहणशक्तिं स्थापयति; तेन हीनशक्तये पदं, तच्च पदं स्याद्यन्तं त्याद्यन्तं वा; तथाहि—"शुचये कृतोत्तरासङ्गाय" इत्यादि स्याद्यन्तं भवति, उपदिश्यते इति त्याद्यन्तं; मध्यमशक्तये पादं श्लोकचतुर्थांशम्; उत्तमशक्तये श्लोकं चतुष्पादपरिपूर्णम् । ते च पदपादश्लोका उपदिष्टाः, भूयः पुनः पुनः, अनु क्रमेण, सन्धेयाः सन्धानीयाः; तथाहि—पदेन पादः सन्धानीयः, पदपादाभ्यां श्लोकः सन्धानीयः । एवमेकैकशो घटयेत् अनेन प्रकारेण एकमेकं शिष्यं प्रति योजनिकां कारयेत् । आत्मना

१ 'चाईति' इति पा० । २ 'एतौ' इति पा० । ३ 'अत्यर्थं बाऽथ' इति पा० । ४ 'विस्तरेणापहृतः' इति पा० ।

१ 'येन नाज्ञातकर्माणं विशिखां प्रवेशयेदिति' इति पा० ।

चानुपठेत् पठतः शिष्यस्य पश्चादाचार्यः स्वयं पठेत् शिष्यस्य सुखेपठनार्थम्। कायमनोभ्यां शिष्यं नियम्य पाठे वाचि नियन्तुमाह—अद्रुतमित्यादि ।–अद्रुतम् असन्निकृष्टवर्णपदपादोच्चारणम् । अविलम्बितं नातिविस्रस्तम् । अशङ्कितं त्रासरहितम् । अननुनासिकं ङञणनमान् वर्जयित्वा नासिकोच्चरितवर्ज्यम् । अपीडितवर्णं वर्णमपीडयन् । अक्षिभ्रुवौष्ठहस्तैरनभिनीतम् अक्ष्यादिभिर्नर्तक इवाभिनयं न कुर्यादित्यर्थः । सुसंस्कृतम् अक्लिष्टवर्णश्रुतिकम्। नात्युच्चैर्नातिनीचैरिति एतेनैतदुक्तं—मध्यमेन स्वरेण पठेत् । न चान्तरेणेत्यादि तयोर्गुरुशिष्ययोर्मध्ये न कश्चिद्गच्छेदित्यर्थः । अन्ये त्वन्यथा पठन्ति व्याख्यानयन्ति च—शास्त्रमुद्दिश्य तस्य संप्रदानायाह—अथ वत्सेत्यादि ।—वत्स सुश्रुत इति गम्यते, शास्त्रप्रश्ने तस्याधिकृतत्वात् । कस्मै तद्देयमित्याह—शुचय इत्यादि ॥ ५४ ॥

भवतश्चात्र—

शुचिर्गुरुपरो दक्षस्तन्द्रानिद्राविवर्जितः ॥
पठन्नेतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात् ५५

पठतः शिष्यस्य शास्त्रान्तावाप्तिहेतुमाह—भवतश्चात्रेत्यादि । शुचिः बाह्याभ्यन्तरशौचयुक्तः । गुरुपरः गुरुकार्यरतः । दक्षः नित्याभियुक्तः । तन्द्रा आलस्यम् ॥ ५५ ॥

वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्मनैपुणे ॥
तदभ्यासे च सिद्धौ च यतेताध्ययनान्तगः ॥५६॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽध्ययनसंप्रदानीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

अध्ययनान्तगः शिष्यः किं कुर्यादित्याह—वागित्यादि । वाक्सौष्ठवे अतिस्पष्टवाक्त्वे । प्रागल्भ्ये धार्ष्ट्ये; प्रागल्भ्यान्महतोऽपि रोगान् साध्यानुत्साही साधयति । तदभ्यासे कर्माभ्यासे, चशब्दात् कर्मदर्शनेऽपि । सिद्धौ चेति आरब्धाभिप्रेतार्थसाधनं सिद्धिः; चकारोऽत्रासाध्यानामनारम्भमनुक्तं समुच्चिनोति ॥ ५६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

अथातः प्रभाषणीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अधीतशास्त्रस्य पुनरर्थतो व्याख्यानं प्रभाषणं, तदधिकृत्य कृतोऽध्यायः प्रभाषणीयः ॥ १ ॥ २ ॥

अधिगतमप्यध्ययनमप्रभाषितमर्थतः खरस्य चन्दनभार इव केवलं परिश्रमकरं भवति ॥ ३ ॥

भवति चात्र—

यथा खरश्चन्दनभारवाही
भारस्य वेत्ता न तु चन्दनस्य ।
एवं हि शास्त्राणि बहून्यधीत्य
चार्थेषु मूढाः खरवद्वहन्ति ॥ ४ ॥

इदानीं प्रभाषणस्य प्रयोजनं दर्शयितुमाह—अधिगतमित्यादि । एतेनैतदुक्तं-सगुणमपि चन्दनं वोढुर्गर्दभस्य तद्गुणानजानतः केवलं यथा भारो भवति, तद्वदधीतमपि शास्त्रमर्थद्वारेणाप्रभाषितं तदध्येतुः पुरुषस्य केवलं परिश्रमकरं भवतीत्यर्थः । अन्ये तु 'अप्रभाषितं' इत्यत्र 'अननुभाषितं' इति पठन्ति, व्याख्यानयन्ति च—अनुशब्दः पश्चादर्थः; तेनाध्ययनस्यानु पश्चादर्थतः प्रकर्षेण भाषणमनुभाषणं, न कथमपि प्रथमम् । अर्थेषु मूढा अज्ञानाद् गर्दभवच्छास्त्रं वहन्ति ॥ ३ ॥ ४ ॥

तस्मात् सविंशमध्यायशतमनुपदपादश्लोकमनुवर्णयितव्यमनुश्रोतव्यं च; कस्मात्? सूक्ष्मा हि द्रव्यरसगुणवीर्यविपाकदोषधातुमलाशयमर्मसिरास्नायुसन्ध्यस्थिगर्भसंभवद्रव्यसमूहविभागास्तथा प्रनष्टशल्योद्धरणव्रणविनिश्चयभग्नविकल्पाः साध्ययाप्यप्रत्याख्येयता च विकाराणामेवमादयश्चान्ये विशेषाः सहस्रशो ये विचिन्त्यमाना विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्युः किं पुनरल्पबुद्धेः, तस्मादवश्यमनुपदपादश्लोकमनुवर्णयितव्यमनुश्रोतव्यं च ॥ ५ ॥

तस्मादित्यादि । सविंशमध्यायशतं सहोत्तरतन्त्रेण विंशत्यधिकमध्यायशतम् । अनुपदपादश्लोकम् अनुशब्दो वीप्सार्थः, तेनायमर्थः-पदं पदं पादं पादं श्लोकं श्लोकमनुवर्णयितव्यमाचार्येण व्याख्यातव्यमित्यर्थः । हिशब्दो यस्मादर्थे, यस्मात् सूक्ष्मा द्रव्यादिविभागास्तस्मादनुवर्णयितव्यमिति पिण्डार्थः । तत्र, द्रव्यं स्थावरादि; रसाः षण्मधुरादयः; गुणा गुर्वादयः; वीर्यं शीतोष्णं द्विविधमष्टविधं वा; द्वौ विपाकौ मधुरकटू; दोषा वातादयः; धातवो रसादयः, धातुग्रहणात् स्तन्यार्तवलसीकावसादयश्चोपधातवो गृह्यन्ते; द्वौ मलौ शकृन्मूत्रे, अन्ये तु सप्त मलानाचक्षते, तत्र द्वौ पूर्वोक्तौ, पञ्चानां चेन्द्रियाधिष्ठानानां पञ्च, तथाहि—दूषिकासिङ्घान(सिङ्घाण)कर्णगूथरोमकूपप्रजननमलाश्चेति, मलाः पुरीषादयो धातुमलाश्चेत्येके; आशयाः सप्त शारीरोक्ता वातादीनां, स्त्रीणामष्टमो गर्भाशयः; सप्तोत्तरं मर्मशतं; सप्त सिराशतानि; नव स्नायुशतानि; सन्धयो दशोत्तरे द्वे शते; अस्थीनि शतानि त्रीणि; आशयादीनां व्यक्तिं शारीरे वक्ष्यति; गर्भसंभवद्रव्याणि शुक्रशोणितादीनि, आत्मपञ्चमहाभूतमनांसी-

---

१ 'सुखलक्षणार्थम्' इति पा० ।

१ 'वहतः' इति पा० २–३ '°श्लोकार्धश्लोक°' इति पा० ।

त्यन्ये; समूहः संघातः, एतेषां विभागा भेदाः । यस्मात् सूक्ष्मा इति हेतुपदं सर्वत्र संबध्यते । तथा प्रनष्टशल्योद्धरणादिविकल्पा इति प्रनष्टशल्यं त्वगादिषु निलीनं; व्रणविनिश्चयो वातादिभेदेन शुद्ध्या च षोडशविधः; भग्नं संक्षेपेण द्विविधं—सन्धिमुक्तं, काण्डभग्नं च; प्रनष्टशल्योद्धरणादिभिः सह विकल्पशब्दः प्रत्येकं संबध्यते, विकल्पाः भेदाः । साध्ययाप्यप्रत्याख्येयता च विकाराणामिति अत्र चशब्दात् सुखसाध्यता कृच्छ्रसाध्यता च गृह्यते । किमेत एव परं सूक्ष्मा इत्यनुक्तं गृह्णन्नाह—एवमादयश्चान्ये विशेषा इति । आदिशब्दः प्रकारवाची, तेन एवंप्रकाराश्चान्ये विशेषाः सूक्ष्मा इति प्रकारवाचिना आदिशब्देन द्योत्यन्ते, ते च शस्त्रकर्मणामष्टविधतादयो भेदाः । सहस्रशो ये विचिन्त्यमाना इति सहस्रशः सहस्रवारान्, ये इति द्रव्यादीनां भेदाः, विचिन्त्यमाना 'गुरुं विना' इति शेषः । विमलविपुलबुद्धेरपीति विमला बुद्धिर्मिथ्यासंशयज्ञानवर्जिता । इत्थंभूतस्यापि पुरुषस्य बुद्धिं व्याकुलीकुर्युः, अल्पबुद्धेस्तु का कथा । 'सहस्रशो येऽनुचिन्त्यमाना' इत्यन्ये पठन्ति, व्याख्यानयन्ति च—श्रुतस्य पश्चादपि चिन्त्यमानाः, किं पुनरश्रुता इत्यनुशब्दार्थः । अनुपदपादेत्यादिपुनरुक्तिः शास्त्रस्य विषमत्वख्यापनाय ॥ ५ ॥

**अन्यशास्त्रोपपन्नानां चार्थानामिहोपनीतानामर्थवशात्तेषां तद्विद्येभ्य एव व्याख्यानमनुश्रोतव्यं, कस्मात्? न ह्येकस्मिन् शास्त्रे शक्यः सर्वशास्त्राणामवरोधः कर्तुम् ॥ ६ ॥**

इदानीमन्यशास्त्रोपपन्नानामर्थानां शिष्यहितत्वेन विज्ञानोपायमाह—अन्यशास्त्रोपपन्नानामित्यादि ।—अन्यशास्त्राणि व्याकरणसांख्यवैशेषिकज्योतिःशास्त्रादीनि; अन्यशास्त्राणि कायचिकित्सादीनीत्यन्ये । उपपन्ना निबद्धाः । इहोपनीतानाम् अत्रानीतानाम् । अर्थवशात् प्रयोजनाधीनत्वात् । तेषामिति अर्थानाम् । तद्विद्येभ्यः व्याकरणादिविद्येभ्यः । 'अन्यशास्त्रोपपन्नानां'—इत्यत्र 'अन्यशास्त्रविषयोपपन्नानां'—इति केचित् पठन्ति; 'इहोपनीतानां'—इत्यत्र च 'इहोपपतितानां'—इति । न हीति हिशब्दो यस्मादर्थे ॥ ६ ॥

**भवन्ति चात्र—**

**एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम् ॥**
**तस्माद्बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः ॥ ७ ॥**

अमुमेवार्थं श्लोकेन स्पष्टीकर्तुमाह—एकमित्यादि । नह्यबहुश्रुतोऽत्र संक्षिप्तानप्यर्थान् बीजभूतानन्यशास्त्रासंस्कारादनायासेनावगच्छति ॥ ७ ॥

**शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत् ॥**
**यः कर्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः ॥ ८ ॥**

न कथंचिदनधीतशास्त्रो बहुश्रुतमात्रेणैव वैद्यो भवति; कथं न भवतीति दर्शयन्नाह—शास्त्रं गुरुमुखोद्गीर्णमित्यादि । रोगान् शास्तीति उपवेदोऽपि शास्त्रमुच्यते, आयुरारोग्यदानेन धर्मार्थकामादीनां शासनाद्वा शास्त्रं, मरणात्त्रायत इति वा शास्त्रम् । उद्गीर्णम् उपदिष्टम् । आदाय गृहीत्वा, नह्यादानमात्रेण गृहीतं, किंतु उपास्य च पाठतोऽर्थतश्चाभ्यस्य । असकृत् अनेकवारम् । अन्ये तु तस्करा इति अन्ये पुनर्वैद्यास्तस्कराश्चौराः; कस्मात्? व्याधितेभ्यो वैद्यच्छद्मना वित्तापहरणात्, प्राणहन्तृत्वाच्च ॥ ८ ॥

**औपधेनवमौरभ्रं सौश्रुतं पौष्कलावतम् ॥**
**शेषाणां शल्यतन्त्राणां मूलान्येतानि निर्दिशेत् ॥ ९ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने प्रभाषणीयो नाम चतुर्थोऽध्यायः ॥ ४ ॥**

अन्यशास्त्रोपपन्नार्थविज्ञानोपायमभिधाय स्वशास्त्रोपपन्नानामर्थानां मिथ्याज्ञाने सम्यग्ज्ञानार्थं समानतन्त्राणि दर्शयितुमाह—औपधेनवमित्यादि । एतैश्चतुर्भिरौपधेनवादिभिः समानतन्त्रैः स्वकीयशास्त्रार्थानां मिथ्याज्ञानसंशयज्ञानानि स्फोटनीयानि । अन्ये तु गुरोरेव प्रभाषणस्य मिथ्याज्ञानादय औपधेनवादिशास्त्रैर्निवर्तन्त इति व्याख्यानयन्ति । एतेनैतदुक्तं-औपधेनवादिशास्त्रैर्निवृत्तमिथ्याज्ञानादिना गुरुणा प्रभाषणं कर्तव्यमिति । यद्यपि गुरुमुखादेव शिष्यस्य मिथ्याज्ञानादयो निवृत्ताः, तथाऽप्यागमान्तरप्रत्ययार्थमौपधेनवादिशास्त्राणि निर्दिष्टानि । एतान्येव परतन्त्राण्यागमान्तरप्रत्ययार्थं कुत इत्याह—शेषाणां शल्यतन्त्राणामित्यादि । शेषाणां करवीर्य(र)गोपुररक्षितप्रभृतिप्रणीतशल्यतन्त्राणां, प्रत्यये तु प्रत्ययो न भवति, कस्मात्? तेषां तन्त्राणामेतन्मूलत्वात् । अन्ये तु शेषाणां करवीर्यादिप्रणीतानां शल्यतन्त्राणां मध्ये औपधेनवादितन्त्राणि सुव्याख्यातत्वेन मूलानि प्रधानानीति व्याख्यानयन्ति ॥ ९ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने प्रभाषणीयो नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

**अथातोऽग्रोपहरणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथातोऽग्रोपहरणीयमिति कर्मणोऽग्रे प्रथमतः, उपहरणं यन्त्रादिसम्भारस्य, तदधिकृत्य कृतोऽध्यायः अग्रोपहरणीयः ॥१॥२

**त्रिविधं कर्म—पूर्वकर्म, प्रधानकर्म, पश्चात्कर्मेति; तद्व्याधिं प्रत्युपदेक्ष्यामः ॥ ३ ॥**

---

१ 'द्योतिताः' इति पा० । २ 'इत्यर्थः' इति पा० । ३ 'व्याकरणादिविद्यावद्भ्यः' इति पा० ।

१ 'बाहुश्रुत्यमात्रेणैव तद्विद्यो' इति पा० । २ 'कर्मणामग्रे उपहरणं येषां यन्त्रशस्त्रादीनां तान्यग्रोपहरणानि, तान्यधिकृत्य कृतोऽध्यायोऽग्रोपहरणीयः' इति चक्रः ।

पूर्वकर्मेत्यादि तत्रैके,—"लङ्घनादि विरेकान्तं पूर्वकर्म व्रणस्य च । पाटनं रोपणं यच्च प्रधानं कर्म तत् स्मृतम् ॥ बलवर्णाग्निकार्यं तु पश्चात्कर्म समादिशेत्"—इति; अन्ये तु संशोध्यस्य पाचनस्नेहनस्वेदनानि पूर्वकर्म, वमनविरेचनबस्तिनस्यसिरामोक्षणानि प्रधानं कर्म, पेयाद्यन्नसंसर्जनं पश्चात्कर्म; अपरे तु चयादीनां पूर्वरूपान्तानामातङ्कोत्पत्तेः प्राग्यत् क्रियते तत् पूर्वकर्म, आतङ्कोत्पत्तौ यत् तत् प्रधानं कर्म, निवृत्तातङ्कस्यानुबन्धोपचरणाय यत् तत् पश्चात्कर्म । इदं तत् पूर्वकर्मेत्यादि इह कथं नोदाह्रियत इति प्रष्टुरुत्तरमाह—तद्व्याधिमित्यादि ।—तदिति त्रिविधं कर्म व्याधिं व्याधिं प्रत्युपदेक्ष्यामः; न इह, ग्रन्थगौरवभयात् ॥ ३ ॥

**अस्य तु शास्त्रस्य शस्त्रकर्मप्राधान्याच्छस्त्रकर्मैव तावत् पूर्वमुपदेक्ष्यामस्तत्सम्भारांश्च ॥ ४ ॥**

ननु, छेद्यादीनां कर्मणां तत्सम्भाराणामेव चात्र पूर्वमुपादानं, कुतो न स्नेहादीनां तत्कर्मणां चेत्याह—अस्य तु शास्त्रस्येत्यादि ॥ ४ ॥

**तच्च शस्त्रकर्माष्टविधं; तद्यथा—छेद्यं, भेद्यं, लेख्यं, वेध्यम्, एष्यम्, आहार्यं, विस्राव्यं, सीव्यमिति ॥ ५ ॥**

तत्तु शस्त्रनिर्वर्त्यं कर्म नियताकृतिविशेषेण नानाविधप्रयोजनेन भिन्नं प्रदर्शयन्नाह—तच्च शस्त्रकर्मेत्यादि । छेद्यं निःशेषतश्छेदनीयमर्शःप्रभृति; भेद्यं भेदनीयं, विद्रध्यादि; लेख्यं लेखनीयं, रोहिण्यादि; वेध्यम् अल्पमुखैः शस्त्रैर्व्यधनीयं, सिरादि; वेध्यस्थाने 'व्यध्यं' इत्येके पठन्ति; एष्यम् एषणीयं, नाड्यादि; आहार्यम् आहरणीयं, शर्करादि; विस्राव्यं विस्रावणीयं, तच्च विद्रधिकुष्ठादि; सीव्यं सीवनीयं, तच्च "सीव्या मेदःसमुत्थाश्च भित्त्वा सुलिखिता गदाः" ( सू. अ. २५ ) इति । यद्यपि छेद्यादयः शब्दा व्याधिवाचकाः[1], तथाऽप्यभेदोपचाराच्छस्त्रकर्मव्यपदेशं लभन्ते । एषणाहरणे शस्त्रकर्मणि यद्यपि केचिन्न मन्यन्ते, तथाऽपि छित्त्वा भित्त्वाऽप्येषणाहरणे क्रियेते, अतोऽत्र शस्त्रकर्मणि निर्दिष्टे ॥ ५ ॥

**अतोऽन्यतमं कर्म चिकीर्षता वैद्येन पूर्वमेवोपकल्पयितव्यानि भवन्ति, तद्यथा—यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गजलौकालाबूजाम्बवौष्ठपिचुप्रोतसूत्रपत्रपट्टमधुघृतवसापयस्तैलतर्पणकषायालेपनकल्कव्यजनशीतोष्णोदककटाहादीनि, परिकर्मिणश्च स्निग्धाः स्थिरा बलवन्तः ॥ ६ ॥**

अतोऽन्यतममित्यादि ।—अतः एषां मध्ये, अन्यतमम् एकतमं, कर्म छेद्यादिकं, चिकीर्षता कर्तुमिच्छता, पूर्वमेवोपकल्पयितव्यानि समीपमानेतव्यानि । जाम्बवौष्ठं जम्बुफलसदृशमुखाग्रा कृष्णपाषाणरचिता वर्तिः, पिचुः 'तुलं' इति लोके, प्रोतं कर्पटं, पट्टः व्रणबन्धनद्रव्यं, तर्पणं जलप्लुतं शक्तुक्षीरादि, कषायैः[2] औषधक्वथितमुदकं, व्यजनं वंशादिरचितं, कटाहो लौहादिनिर्मितः;

1 'छेद्यादिशब्दा भाव एव कृत्यान्तारछेदादिवाचकाः' इति चक्रः । 2 व्रणादिप्रक्षालनार्थः ।

आदिशब्दात् कवलिकामृत्कपालकलसस्थालीशयनासनादि । यन्त्रादिषु मध्ये कानिचिदुपकरणानि कर्माङ्गानि, कानिचिद् व्यापत्प्रशमनानि । परिकर्मिणश्चेति न केवलं यन्त्रादीन्येवोपकल्पयितव्यानि किंतु परिकर्मिणश्च सर्वकर्मणां कर्तारः परिचारकाः; किंविशिष्टास्ते ? स्निग्धा अनुरक्ताः, स्थिरा अचलाः, बलवन्तः सर्वकार्येषु समर्थाः ॥ ६ ॥

**ततः प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु दध्यक्षतान्नपानरत्नैरग्निं विप्रान् भिषजश्चार्चयित्वा, कृतबलिमङ्गलस्वस्तिवाचनं लघुभुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य[1], यन्त्रयित्वा[2], प्रत्यङ्मुखो वैद्यो मर्मसिरास्नाय्युसन्ध्यस्थिधमनीः परिहरन्, अनुलोमं[3] शस्त्रं निदध्यादापूयदर्शनात्[4], सकृदेवापहरेच्छस्त्रमाशु च; महत्स्वपि च पाकेषु द्व्यङ्गुलान्तरं त्र्यङ्गुलान्तरं[5] वा शस्त्रपदमुक्तम् ॥ ७ ॥**

ततः प्रशस्तेष्वित्यादि ।—ततः यन्त्रादिसम्भारोपकल्पनानन्तरम् । तिथयः प्रतिपदादयः, करणानि बवादीनि, मुहूर्ताः त्रिंशच्छिवाद्याः, नक्षत्राणि अश्विनीप्रभृतीनि; प्रशस्तत्वं चैषां ज्योतिःशास्त्रविदां वचनाज्ज्ञेयम् । अक्षतानि यवधान्यानि, रत्नानि माणिक्यमौक्तिकादीनि । कृतबलिमङ्गलस्वस्तिवाचनमिति बलिः पूजोपहारः, मङ्गलं गीतादि, स्वस्तिवाचनमाशीर्वादोच्चारणं, कृतशब्दो बलिप्रभृतिभिः सह प्रत्येकं संबध्यते । मर्माणि सप्तोत्तरशतभेदभिन्नानि, सिराः सप्तशतभेदभिन्नाः, नवशतभेदभिन्नाः स्नायवः, सन्धयः दशोत्तरद्विशतभेदभिन्नाः, अस्थीनि शतत्रयभेदभिन्नानि, धमन्यः नाभिप्रभवाश्चतुर्विंशतिभेदभिन्नाः; एताः परित्यजन् । अनुलोममिति लोमानुकूल्येन, येनैवावर्तेन लोमानि सन्ति तेनैवावर्तेनेत्यर्थः; प्रतिलोमं तु लोमभिरेव प्रतिहतधारं शस्त्रं कुण्ठीभवति व्यथां चोत्पादयति । निदध्यात् प्रवेशयेत् । कियद्दूरं शस्त्रं निदध्यादित्याह—आपूयदर्शनादिति । सकृत् एकवारं, न पुनः पुनरित्यर्थः । आशु चेति चशब्द एवार्थः, तेनोभयत्रापि नियमः; एतेन सकृदेव शस्त्रमपहरेत्, आश्वेव शस्त्रमपहरेदित्युक्तम् । शस्त्रं प्रणिदध्यादित्यत्र शस्त्रप्रणिधानमात्रमुक्तम्, अपहरेच्छस्त्रमाशु चेत्यत्र शस्त्रशब्द आश्वपहरणक्रियया संबध्यत इति न पौनरुक्त्यम् । इदानीं

1 'प्राङ्मुखत्वमातुरस्य प्रत्यङ्मुखत्वं वैद्यस्य च पूर्वोक्तविषयमित्याहुः, आलोकेन शस्त्रनिपातस्थाननिरीक्षणसुकरत्वात्, तेनापराह्णे विपर्ययं विद्यात्' इति हाराणचन्द्रः । 2 'शस्त्रपातपीडया चलनेनान्यत्र शस्त्राघातशङ्कानिवारणार्थं यन्त्रयित्वेति' इति चक्रः । 3 'अनुलोमं यथाक्रमं, क्रमस्त्वत्रानन्तरमुपदेक्ष्यमाणशास्त्रापेक्षो विचारापेक्षश्च, तेन यथायोगमिति तात्पर्यार्थः' इति हाराणचन्द्रः । 4 'आपूयदर्शादित्यनेन पूयप्राप्त्यनन्तरं शस्त्रप्रणिधानं निषेधयति' चक्रः । 5 'द्व्यङ्गुलं त्र्यङ्गुलं वेति आयतत्वेन पाकप्रमाणापेक्षया विकल्पनीयं, न तु गाम्भीर्येण; शस्त्रं निदध्यादापूयदर्शनादित्यनेनैव तदुपलब्धेः' इति हाराणचन्द्रः । 'अङ्गुलद्वयमथवाऽङ्गुलत्रयमन्तरीकृत्य पुनरन्यव्रणं कुर्यान्न त्वासन्नम्' इत्यरुणदत्तः । 'द्व्यङ्गुलं त्र्यङ्गुलं वा' इति पा०।

सुदूरशस्त्रपातेऽनर्थं संभावयन्नवधिमाह—महत्स्वपि च पाकेष्वित्यादि । अन्तरशब्दोऽयमवकाशवाची; तेन शस्त्रपदं शस्त्रस्थानं, द्व्यङ्गुलावकाशं त्र्यङ्गुलावकाशं चेत्युक्तं तत्र द्व्यङ्गुलावकाशं नाल्पवगाढे, त्र्यङ्गुलावकाशमवगाढे इति । केचिदन्तरशब्दं न पठन्ति ॥ ७ ॥

**तत्रायतो विशालः समः सुविभक्तो निरा[1]श्रय इति व्रण[2]गुणाः ॥ ८ ॥**

व्रणकर्मणि प्रशस्त[3]माकृतिविशेषैराह,—तत्रेत्यादि ।—तत्रेति शस्त्रकर्मणि, एते आयतत्वादयो व्रणगुणाः । आयतो दीर्घः; विशालो विस्तीर्णः; सम इति समपाकः, असमपाको हि किंचित्पक्वः किंचिदपक्वः शस्त्रपातनाय सुखो न भवति । अन्ये तु विशालशब्देन चतुरस्रमाचक्षते, समशब्देन वृत्तम् । तदुक्तम्,—"आयतश्चतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः" (सू. अ. २२)—इति; इह चतस्रो व्रणाकृतयो व्रणगुणत्वेन कर्मणि निर्दिष्टाः । अन्ये तु समो गोमूत्रसर्पणवन्न विषमगतिः । स च आयते व्रणे सम इति विशेषणम् । सुवि[4]भक्तः सुव्यक्तः, सुष्ठु पृथग्भूतसकलावयवः । निराश्रयः जिह्वादन्तसन्ध्याद्यप्राप्यदेशमनाश्रितः । अन्ये त्वन्यथा व्याख्यानयन्ति—वैद्यकृतव्रणगुणानाह—तत्रायत इत्यादि ।—समो निम्नोन्नतत्वरहितः । सुविभक्तो हीनातिदोषत्वक्तः । इत्थम्भूते वैद्यकृते व्रणे कल्ककषायाद्यवचारणं सुखं क्रियते । अतो विपरीता व्रणदोषाः । शेषं सुगमम् ॥ ८ ॥

भवतश्चात्र—

**आयतश्च विशालश्च सुविभक्तो निरा[5]श्रयः ॥**
**[6]प्राप्तकालकृतश्चापि व्रणः कर्मणि शस्यते ॥ ९ ॥**

अमुमेवार्थं श्लोकेन स्फुटीकुर्वन्नाह—आयतश्चेत्यादि । एवंविधो व्रणः शस्त्रकर्मणि प्रशस्यते । आयतश्च विशालश्चेति द्विचकारेण आयतोऽपि विशालोऽपि आयतविशाल इति प्रतिपादयति । निराश्रयो मर्माद्यनाश्रितः; 'निराशय' इत्यन्ये, तत्रानुपपन्नोऽर्थः । प्राप्तकालकृतश्चापीति युक्ते काले कृतः; एतेन शस्त्रक्षाराग्निसाध्यो बालवृद्धयोरप्राप्तकालः, तयोर्व्रणे शस्त्रादिनिषेधात्; अथवा शीतकालेऽग्निसाध्यो व्रणः, ग्रीष्मे स एवाप्राप्तकालः । अन्ये तु 'युक्तकालकृतः' इति पठन्ति; तत्र सम[7]पाँक इत्याचक्षते, युक्तकालकृतः सम्यक्पाककृतप्रतिक्रिय इत्यपरे । आयतश्च विशालश्चेत्यादिश्लोकं केचिन्न पठन्ति ॥ ९ ॥

**शौर्यमाशुक्रिया शस्त्रतै[1]क्ष्ण्यमस्वेदवेपथु ॥**
**असंमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ॥ १० ॥**

अथ ये वैद्यगुणाः शस्त्रकर्मणि तानाह—शौर्यमित्यादि । एते शौर्यादयो गुणा वैद्यस्य शस्त्रकर्मणि श्लाध्यन्ते । शौर्यं निर्भयत्वं, भयभीतो हि साध्यमपि व्रणमवगाढमूलं नारभते, आरब्धं वा अवशेषयति । आशुक्रिया लघुहस्तता शीघ्रं शस्त्रकर्मकरणम्, आशुक्रिययाऽऽतुरस्य चिरं क्लमो न भवति । शस्त्रतैक्ष्ण्यं सुनिशितत्वं सुधारत्वं च, तेन रुजा न भवति । असंमोहः असंमूढता, स चामपक्वव्रणपरिज्ञाने तथा प्राप्तानुष्ठाने च; व्रणच्छेदादिषु रक्तादिदर्शनेऽसंमोह इत्यन्ये । अमुमपि श्लोकं केचिन्न पठन्ति ॥ १० ॥

**एकेन वा व्रणेनाशुध्यमाने नाऽन्त[2]रा बुद्ध्याऽवेक्ष्यापरान् व्रणान् कुर्यात् ॥ ११ ॥**

भवति चात्र—

**यतो यतो गँ[3]तिं विद्यादुत्सङ्गो यत्र यत्र च ॥**
**तत्र तत्र व्रणं कुर्याद्यथा दोषो न तिष्ठति ॥ १२ ॥**

अशुद्धावन्येऽपि व्रणाः कार्या इत्याह—एकेन वा व्रणेनेत्यादि । ना पुरुषः । अन्तरा मध्ये । भवति चात्रेत्यादि । गतिं नाडीम् । उत्सङ्ग इवोत्सङ्गः; व्रणाशये हि चिरकालपूयावस्थानेनाममवदारितमन्तःप्रदेशान्तरं निम्नमुत्सङ्गतुल्यत्वादुत्सङ्ग इत्युच्यते; उत् ऊर्ध्वं पूयस्य सङ्ग उत्सङ्ग इत्यन्ये । यथा दोषो न तिष्ठतीति दोषोऽत्र पूयः, पूयावस्थानाद् वातादयो दोषा अनुबध्नन्तीति पूय एव दोषशब्देनोच्यते, कारणे कार्योपचारात् ॥ ११ ॥ १२ ॥

**तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टककक्षाकुक्षिवङ्क्षणेषु तिर्यक् छे[4]दे उक्तः ॥ १३ ॥**

**( चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत् ॥**
**अर्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान् ॥ १४ ॥ )**

**अन्यथा तु सिरास्नायुच्छेदनम्, अतिमात्रं वेदना, चिराद्व्रणसंरोहो, मांसकन्दीप्रादुर्भावश्चेति ॥ १५ ॥**

तिर्यक्छेदो व्यापत्सूक्तः (सू. अ. २५), तस्य विशिष्टविषये प्रतिप्रसवं कुर्वन्नाह—तत्र भ्रूगण्डेत्यादि ।—गण्डः कपोलः, अक्षिपुटः अक्षिवर्त्म, दन्तवेष्टको दन्तवेष्टनमांसं, कक्षा

१ अत्र 'निराश्रयः' इति पदं हाराणचन्द्रो न पठति । २ 'व्रणगुणा इति व्रणे कर्तव्ये शोथगुणाः, अत्र शोथोऽपि व्रणहेतुतया व्रण इत्युच्यते' इति चक्रः । ३ 'व्रणकर्मणि प्राशस्त्य०' इति पा० । ४ 'सुष्ठु विभक्तौ पार्श्वापरपार्श्वादिविभागौ यस्य तं तथाविधम्' इत्यरुणदत्तः । 'सुविभक्तः उत्सङ्गादिदोषरहितः' इति चक्रः । ५ 'निराश्रय इति अङ्गुल्याऽवमर्दनेनोन्मूलिताशेषपूयाश्रयः' इति हाराणचन्द्रः । ६ 'प्राप्तकाले पाककाले कृतः' इति चक्रः । ७ 'समकालपाकः' इति पा० ।

१ शस्त्रतैक्ष्ण्यं तु परमार्थतः शस्त्रगुणोऽपि वैद्यायत्तत्वाद्वैद्यगुणत्वेनोक्तम् । २ 'नान्तरेति समीपे हि कृतो व्रणोऽपार्थको भवतीति मध्यनिकटार्थयोर्निकटार्थस्यैवान्तराशब्दस्य नञर्थ-न-शब्देन समासान्मध्ये दूरे वेत्यर्थः' इति हाराणचन्द्रः । ३ 'यतो गतां गतिं' इति वाग्भटे पाठः । 'यतो दोषगतिं' इति पा० । ४ "तिर्यक् छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि । कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवंक्षणे ॥ अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम्" (सू. अ. २९) इति वाग्भटः ।

बाहुमूलं, कुक्षिः उदरं, वङ्क्षणम् ऊरुसन्धिः । ( चन्द्रमण्डलवच्छेदानित्यादि सुगमम् । ) अन्यथा त्वित्यादि । मांसकन्दीप्रादुर्भावः कन्दाकारमांसाङ्कुरसंभवः; कन्द एव कन्दी, अल्पत्वात् । 'अन्यथा तु' इत्यत्र 'अन्यत्र तु' इति केचित् पठन्ति व्याख्यानयन्ति च—अन्यत्र यदि छेदनं क्रियते इत्यर्थः । 'छेदनं' इत्यत्र च 'क्षणनं' इति पठन्ति, क्षणनं हिंसनम् ॥ १३—१५ ॥

**मूढगर्भोदरार्शोऽश्मरीभगन्दरमुखरोगेष्वभुक्तवतः कर्म कुर्वीत ॥ १६ ॥**

भुक्तवतः कर्म कुर्वीतेत्युक्तं, तस्य विषयान्तरे प्रतिषेधं दर्शयन्नाह—मूढगर्भेत्यादि ।—मूढगर्भादिषु षट्खन्नपूर्णकोष्ठत्वाद्यन्त्रदानादिभिः कष्टं मरणं वा प्राप्नोत्यातुरः, अनिलश्च प्रकोपमेति; मुखरोगेष्वाहारोऽङ्गुल्यादिपीडनेन घृणया च निष्काशितः कर्मघातं करोति ॥ १६ ॥

**ततः शस्त्रमवचार्य,शीताभिरद्भिरातुरमाश्वास्य, समन्तात् परिपीड्याङ्गुल्या, व्रणमभिमृद्य(ज्य), प्रक्षाल्य कषायेण, प्लोतेनोदकमादाय, तिलकल्कमधुसर्पिःप्रगाढामौषधयुक्तां नातिस्निग्धां नातिरूक्षां वर्तिं प्रणिदध्यात्; ततः कल्केनाच्छाद्य, घनां कवलिकां दत्त्वा, वस्त्रपट्टेन बध्नीयात्; वेदनारक्षोघ्नैर्धूपैर्धूपयेत्, रक्षोघ्नैश्च मन्त्रै रक्षां कुर्वीत ॥ १७ ॥**

इदानीं व्रणकर्मविधानमाह—ततः शस्त्रमित्यादि । ततः अनन्तरं शस्त्रकर्म कृत्वा; आश्वास्य शस्त्रकर्मजनितखेदमपनीय, मूर्च्छादिप्रतिबन्धार्थं; समन्तात् परिपीड्य सर्वत्र परिपीडयित्वा, स्रावनिर्गमनार्थं; व्रणमभिमृद्य व्रणमर्दनं कृत्वा, शस्त्रपदसमीकरणार्थं; 'व्रणमभिमृज्य'-इति केचित् पठन्ति, बालास्थिगत्युरस्त्रादिविज्ञानार्थमिति च व्याख्यानयन्ति; प्रक्षाल्य कषायेण सप्तरात्रं सद्योव्रणविहितेन, तदूर्ध्वं यथास्वदोषहरौषधसिद्धेन कषायेण; वस्त्रेणोदकमादाय व्रणान्तर्गतं; तिलकल्कमधुसर्पिःप्रगाढां तिलकल्कादिभिरत्यर्थलिप्ताम्; औषधयुक्तां मिश्रकोक्ता '(अ)-अगन्धाऽजशृङ्गी च' ( सू. अ. ३७ ) इत्यादिसंशोधनौषधयुक्तां; वर्तिं प्रणिदध्यात् प्रवेशयेत्; कल्केन सद्योव्रणौषधपिण्डेन; कवलिका व्रणकल्कौषधाच्छादनद्रव्यं, सा चौषधस्रंसनिःसरणनिवारणार्थं भग्नोक्तपलाशोदुम्बरादीनां त्वक्पत्रादिकृता, अन्ये द्विगुणचतुर्गुणमृदुकर्पटविरचितां कवलिकामाहुः, भृष्टयवशक्तुभिर्घृताक्तां घनां कवलिकां दद्यादित्यपरे । वेदनारक्षोघ्नैरिति वेदनाघ्नानि रुजाघ्नानि हिङ्गुलवणादीनि, रक्षोघ्नानि राक्षसघ्नानि वचादीनि, तैः ॥ १७ ॥

**ततो गुग्गुल्वगुरुसर्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रविमिश्रैराज्ययुक्तैर्धूपयेत्; आज्यशेषेण चास्य प्राणान् समालभेत ॥ १८ ॥**

धूपनद्रव्याण्याह—ततो गुग्गुल्वित्यादि । न केवलं व्रणं धूपयेत् शयनाद्यपि व्रणदौर्गन्ध्यापगमार्थं नीलमक्षिकादिपरिहारार्थं च, अन्यथा नीलमक्षिकोपसर्पणाद्व्रणे क्रिमयः पतन्ति । आज्यशेषेणेत्यादि ।—आज्यशेषेण धूपनद्रव्येभ्य आज्यमिश्रेभ्यः परिशिष्टेन घृतेन । प्राणशब्देनात्र हृदयादय उच्यन्ते, प्राणाधिष्ठानत्वात्; तान् समालभेत म्रक्षयेदभ्यञ्जयेदित्यर्थः, प्राणाप्यायनार्थम् ॥ १८ ॥

**उदकुम्भाच्चापो गृहीत्वा प्रोक्षयन् रक्षाकर्म कुर्यात्; तद्वक्ष्यामः— ॥ १९ ॥**

**कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च ॥**
**रक्षाकर्म करिष्यामि ब्रह्मा तदनुमन्यताम् ॥ २० ॥**
**नागाः पिशाचा गन्धर्वाः पितरो यक्षराक्षसाः ॥**
**अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा ॥२१॥**
**पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः ॥**
**दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः॥२२॥**
**पान्तु त्वां मुनयो ब्राह्म्या दिव्या राजर्षयस्तथा ॥**
**पर्वताश्चैव नद्यश्च सर्वाः सर्वे च सागराः ॥ २३ ॥**
**अग्नी रक्षतु ते जिह्वां प्राणान् वायुस्तथैव च ॥**
**सोमो व्यानमपानं ते पर्जन्यः परिरक्षतु ॥ २४ ॥**
**उदानं विद्युतः पान्तु समानं स्तनयित्नवः ॥**
**बलमिन्द्रो बलपतिर्मनुर्मन्ये मतिं तथा ॥ २५ ॥**
**कामांस्ते पान्तु गन्धर्वाः सत्त्वमिन्द्रोऽभिरक्षतु ॥**
**प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम् ॥ २६ ॥**
**चक्षुः सूर्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः ॥**
**नक्षत्राणि सदा रूपं छायां पान्तु निशास्तव ॥ २७ ॥**
**रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा ॥**
**आकाशं खानि ते पान्तु देहं तव वसुन्धरा ॥ २८ ॥**
**वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम् ॥**
**पौरुषं पुरुषश्रेष्ठो ब्रह्माऽऽत्मानं ध्रुवो भ्रुवौ ॥ २९ ॥**
**एता देहे विशेषेण तव नित्या हि देवताः ॥**
**एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि ॥ ३० ॥**
**स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्वताम् ॥**
**( स्वस्ति ते चन्द्रसूर्यौ च स्वस्ति नारदपर्वतौ ॥ )**
**स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवाः सहेन्द्रगाः ॥३१॥**
**पितामहकृता रक्षा स्वस्त्यायुर्वर्धतां तव ॥**
**ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः ॥ ३२ ॥**

**इति स्वाहा ॥**

१ अयं पाठो हस्तलिखितपुस्तकेषु नोपलभ्यते । २ 'केनचिदत्रार्शोभगन्दरावपि पठ्येते, तदयुक्तं, चिकित्सिते तयोः शस्त्रकर्मणः प्राग्भोजनविधानादेतदर्थानुवादिना वाग्भटेनाप्यपठितत्वाच्च' इति हाराणचन्द्रः । 'अर्शोधिकारे त्वनिलप्रशमनार्थं 'स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तं' इति वचनं तु तथाभोजनं दर्शयतीति न विरोधः' इति चक्रः । ३ 'उदकं व्रणान्तर्गतमनिःसृतं प्रक्षालनोदकं' इति हाराणचन्द्रः । ४ विकेशिकामित्यर्थः ।

१ 'स्वस्ति नारदपर्वतौ' इति पा० । २ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

**एतैर्वेदात्मकैर्मन्त्रैः कृत्याव्याधिविनाशनैः ॥**
**मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥ ३३ ॥**

इदानीं व्रणितस्य शोणितपूयादिसंभवाद्रक्षोभयपरिहारार्थं रक्षाकर्म निदर्शयन्नाह—उदकुम्भाचेत्यादि ।—उदकुम्भात् पानीयकुम्भात्, आपः जलं, गृहीत्वा आदाय, प्रोक्षयन् प्रमार्जयन् । रक्षाकर्मनिर्दिष्टपदानां मन्त्रत्वाद्विवरणं न करणीयमिति केचित्; अन्ये तु व्याख्यानयन्ति ।—कृत्यानामिति कुपितमन्त्रिणोऽभिचारकर्मजनिता राक्षसी 'कृत्या' इत्युच्यते । प्रतिघातार्थं निवारणार्थम्, अत्र 'परिरक्षार्थं' इति केचित् पठन्ति । तथा रक्षोभयस्य चेति राक्षसभयस्य च प्रतिघातार्थमित्यर्थः । ब्रह्मा तदनुमन्यतामिति तद्रक्षाकर्म ब्रह्मा अङ्गीकरोतु । नागा इत्यादि । ये ये नागादयस्त्वामभिद्रवन्ति पीडयन्ति तान् ब्रह्माद्या देवा घ्नन्त्विति पिण्डार्थः । तत्र नागाः वासुक्यादयः, पिशाचाः पिशिताशनाः, गन्धर्वाः देवगायना हाहाहूहूप्रभृतयः, पितरः अग्निष्वात्तादयः, यक्षाः धनदादयः, राक्षसाः रावणप्रभृतयः । दिक्ष्वित्यत्र ये चरन्तीति संबध्यते । वास्तुनिवासाः गृहभूमिनिवासिनः । प्राणानिति अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः, अत्र द्वादशप्राणेषु मध्ये सामान्यवातवाच्योऽपि वातशब्दः प्राणाख्ये वातविशेषे वर्तते; कुतः? चतुर्णां व्यानादीनामग्रे वक्ष्यमाणत्वात् । सोमः चन्द्रमाः । ते तव । पर्जन्यः वृष्टिमान् मेघः, इन्द्र इत्यन्ये । स्तनयित्नवः मेघाः । बलपतिरिति इन्द्रस्य विशेषणम् । मनुः प्रजापतिः, मन्ये ग्रीवापश्चिमभागाश्रिते द्वे सिरे 'मन्ये' इत्युच्येते, मतिं तथा स एव मनुर्मतिं रक्षत्विति संबन्धः; 'तथा मनुर्मतिं रक्षतु' इत्यहं मन्ये, इति व्याख्यानयन्ति केचित् । सत्त्वं गुणविशेषः । मनः चित्तम् । रूपमिह लावण्यं विवक्षितं, यत्पर्यायः सौन्दर्यम् । छाया प्रभाभेदः; तदुक्तम्,—"आसन्ना लक्ष्यते छाया प्रभा दूरात् प्रकाशते" ( च. इं. अ. ७ )—इति । रेतः शुक्रम्, आपः पानीयानि, आप्याययन्तु वर्धयन्तु । खानि स्रोतांसि, इन्द्रियाणीत्यन्ये । पराक्रमः सामर्थ्यम् । पौरुषं मेढ्रं, पुरुषश्रेष्ठः नारायणः । आत्मानं जीवम् । ध्रुवः ताराविशेषः । एताः पूर्वोक्ता देवताः, नित्याः सततस्थिताः । स्वस्ति ते भगवान् ब्रह्मेति स्वस्ति मङ्गलं, भगवान् विशिष्टज्ञानवान्, देवाः सहेन्द्रगा इन्द्रानुयायिन इत्यर्थः । पितामहः ब्रह्मा । ईतयः अन्नादिक्षयहेतवोऽतिवृष्ट्यादयः; तदुक्तम्,—"अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः खगाः । स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः"—इति ॥ १९—३३ ॥

**ततः कृतरक्षमातुरमागारं प्रवेश्य, आचारिकमादिशेत् ॥ ३४ ॥**

इदानीं कृतरक्षस्येतिकर्तव्यतां दर्शयन्नाह,—ततः कृतरक्षमित्यादि । आगारं गृहम् । आचारिकं द्विविधमाहारविहारलक्षणं व्रणितोपासनीयनिर्दिष्टम् ॥ ३४ ॥

**ततस्तृतीयेऽहनि विमुच्यैवमेव बध्नीयाद्वस्त्रपट्टेन; न चैनं त्वरमाणोऽपरेद्युर्मोक्षयेत् ॥ ३५ ॥**

नचैनमिति एनं व्रणं, त्वरमाणः शीघ्रीभवन्, अपरेद्युः द्वितीयदिवसे, न मोक्षयेत् । 'ततस्तृतीयेऽहनि विमुच्य प्रक्षाल्य कषायेणैवमेव बध्नीयाद्वस्त्रपट्टेन' इति केचित् पठन्ति । कषायेण सद्योव्रणोक्तानां द्रव्याणां क्वाथेन, एवमेव पूर्ववत् ॥ ३५ ॥

**द्वितीयदिवसपरिमोक्षणाद्विग्रथितो व्रणश्चिरादुपसंरोहति, तीव्ररुजश्च भवति ॥ ३६ ॥**

द्वितीये दिवसे मोक्षणाद्दोषं वक्तुमाह—द्वितीयेत्यादि । विग्रथितः ग्रन्थितः । अन्ये तु विग्रथित इत्यत्र विशब्दस्य स्थाने हिशब्दं पठन्ति व्याख्यानयन्ति च,–हिशब्दो यस्मादर्थे, यस्माद् ग्रथितः सम्यगनङ्कुरितो ग्रन्थिभूतस्तस्मान्न संरोहति; उग्रवेदनश्च व्रणो भवतीत्यर्थः ॥ ३६ ॥

**अत ऊर्ध्वं दोषकालबलादीनवेक्ष्य कषायालेपनबन्धाहाराचारान् विदध्यात् ॥ ३७ ॥**

अत ऊर्ध्वमित्यादि । अत ऊर्ध्वं तृतीयदिवसानन्तरं, दोषाः वातादयः, कालः हेमन्तादिकः, बलं हीनमध्यमोत्तमम्, आदिशब्दाद् वयःसात्म्यादीनि, अवेक्ष्य परीक्ष्य, विदध्यात् कुर्यात्, यावद्व्रणसंरोहणं भवति । अन्ये त्वन्यथा पठन्ति,–'अत ऊर्ध्वं दोषकालबलादीन्यवेक्ष्य कषायादीन् विदध्यात्'–इति, व्याख्यानयन्ति च—अत ऊर्ध्वमिति तृतीयबन्धादनन्तरं चतुर्थबन्धे दोषादीनि परीक्ष्य कषायादीन् विदध्यात्, कषायादीनित्यादिशब्दात् कल्कस्नेहादीनां ग्रहणम् ॥ ३७ ॥

**न चैनं त्वरमाणः सान्तर्दोषं रोपयेत्; स ह्यल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति ॥ ३८ ॥**

न चैनमित्यादि । सान्तर्दोषम् अभ्यन्तरपूयसहितम् । अल्पेनाप्यपचारेणेति स्तोकेनापि विरुद्धकर्मणा । भूयः पुनः । विकरोति विकृतिं याति ॥ ३८ ॥

**भवन्ति चात्र—**

**तस्मादन्तर्बहिश्चैव सुशुद्धं रोपयेद्व्रणम् ॥**
**रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ॥**
**हर्षं क्रोधं भयं चापि यावत् स्थैर्योपसंभवात् ॥ ३९ ॥**

---

१ 'प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः' इति पा० ।
२ 'एवमाहारविहारौ कर्तव्याविति उपदिशेत् । आचारशब्देन चरतेर्गतिभक्षणार्थत्वादाहारोऽपि लभ्यः' चक्रः ।

१ 'विग्रथितो ग्रन्थिरूपः सम्यगनङ्कुरित इति यावत्' चक्रः । २ 'उत्सङ्गं पाकावदारणादिभिः क्रोडवच्छिद्रं कृत्वा, विकरोति विकृतत्वेन परिणमति' इति हाराणचन्द्रः । ३ 'यावदास्थैर्यसंभवात्' इति पा० ।

भवन्ति चात्रेत्यादि । सुशुद्धमिति बहिरभ्यन्तरं च । तत्राभ्यन्तरशुद्धिलक्षणं वातादिवेदनापगमः; बहिःशुद्धिलक्षणं विशुद्धवर्णरसस्थानगन्धाश्चत्वारः । केचित् 'हर्षं क्रोधं भयं' इत्यादिश्लोकं न पठन्ति, व्यवायादीनित्यादिशब्दाच्च भयहर्षादीनि गृह्णन्ति ॥ ३९ ॥

**हेमन्ते शिशिरे चैव वसन्ते चापि मोक्षयेत् ॥**
**त्र्यहाद्द्व्यहाच्छरद्ग्रीष्मवर्षास्वपि च बुद्धिमान् ॥४०**

ननु, किं सर्वदैव त्र्यहान्मोक्तव्योऽथ किंचिदन्तरेणेत्याह—हेमन्ते शिशिरे चैवेत्यादि । हेमन्तादिषु त्र्यहान्मोक्षयेत्, तेषु शीतत्वेन शीघ्रपाकभयाभावात् । शरदादिषु द्व्यहान्मोक्षयेत्, तेषामुष्णत्वेन शीघ्रपाकागमभयात् । हेमन्ते शिशिरे चैवेति एवशब्दो हेमन्तशिशिरयोस्त्र्यहे एव मोक्ष इति नियमयति, चकारस्तु पैत्तिकव्रणस्य नियमं व्यभिचारयति; तेन पैत्तिकस्य हेमन्तशिशिरयोर्यथार्हं मोक्ष इति । वसन्ते चापीति अपिशब्दाद् वैशाखस्योष्णत्वात् कदाचिद् द्व्यहेऽपि मोक्षः सर्वव्रणानां; तथा पैत्तिकस्य द्विरह्नो बन्ध इति च समुच्चिनोति । शरद्ग्रीष्मवर्षास्वपि चेति अपिचग्रहणं क्वचिद् द्व्यहमोक्षणविधिमपि व्यभिचारयति, तेन पैत्तिकं व्रणं ग्रीष्मे एकस्मिन्नेव दिने द्वौ वारौ बध्नीयात् । अन्ये तु शिशिरग्रहणमपास्य 'हेमन्ते च वसन्ते च प्रावृट्काले च मोक्षयेत्' इति पठन्ति; तन्न, पञ्जिकया दूषितत्वात् । ननु, हेमन्तादयः शरदादयश्च न समानास्तत् कथं तेषु तुल्यकालं व्रणमोक्षणम्? उच्यते, त्र्यहादेव द्व्यहादेवेति नियमो न कृतः, तेन हेमन्तादीनां शरदादीनां चोत्कर्षापकर्षान् समीक्ष्य व्रणमोक्षणं कर्तव्यमित्यदोषः ॥ ४० ॥

**अतिपातिषु रोगेषु नेच्छेद्विधिमिमं भिषक् ।**
**प्रदीप्तागारवच्छीघ्रं तत्र कुर्यात् प्रतिक्रियाम् ॥४१॥**

ननु, कथं सर्वत्रैव संभृतसम्भारस्य छेद्यादि कर्तव्यमुतान्यथाऽपीत्याह,—अतिपातिष्वित्यादि । अतिपातिषु आशुकारिषु । अथवा, अतिपातिषु रोगेषु बन्धकालादिनियमव्यभिचारार्थ एवायं श्लोक इति ॥ ४१ ॥

**या वेदना शस्त्रनिपातजाता**
**तीव्रा शरीरं प्रदुनोति जन्तोः ॥**
**घृतेन सा शान्तिमुपैति सिक्ता**
**कोष्णेन यष्टीमधुकान्वितेन ॥ ४२ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थानेऽग्रोपहरणीयो नाम पञ्चमोऽध्यायः ॥ ५ ॥**

शस्त्रपातेऽवस्थां चिकित्सितुमाह—या वेदनेत्यादि । प्रदुनोति उपतापयति; क्वचित् 'प्रतनोति' इति पाठः, तत्र व्याप्नोतीत्यर्थः ॥ ४२ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां
सुश्रुतव्याख्यायां सूत्रस्थानेऽग्रोपहरणीयो
नाम पञ्चमोऽध्यायः ॥ ५ ॥

१ 'किञ्चिदवेक्ष्यमाणेनेत्याह' इति पा० ।

## षष्ठोऽध्यायः ।

**अथात ऋतुचर्यमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । ऋतवो द्विमासिकाः शिशिरादयो हेमन्तान्ताः षट्, वर्षादयः प्रावृडन्ता वा; तेषु चर्या चरणं वर्तनं; तदधिकृत्य कृतोऽध्यायः ऋतुचर्यः, तं व्याख्यास्यामः । ऋतुचर्यमिति केचिदन्यथा व्याख्यानयन्ति—चरधातोर्गतिभक्षणार्थस्य चर्यमिति रूपं; तेन, आहारो विहारश्च चर्यशब्देनोच्यते । अन्ये तु 'अथात ऋतुचर्यानामाध्यायम्' इति पठन्ति, व्याख्यानयन्ति च—चर्या शास्त्रनियमित आचारः, ऋतुषु ऋतूनां वा चर्या ऋतुचर्या, ऋतुचर्यार्थोऽध्यायः ऋतुचर्या; यथा प्रदीपार्था मल्लिका प्रदीप इति; नामशब्दः संज्ञायाम् । ऋतुचर्या नाम स्वस्थवृत्तेऽपि वक्ष्यति ॥ १ ॥ २ ॥

**कालो हि नाम (भगवान्)[1] स्वयम्भुरनादिमध्यनिधनः । अत्र रसव्यापत्संपत्ती जीवितमरणे च मनुष्याणामायत्ते[2] । स सूक्ष्मामपि कलां न लीयत[3] इति कालः, संकलयति कालयति वा भूतानीति कालः ॥ ३ ॥**

तत्र यदङ्गभूता ऋतवस्तमेव प्रथमं स्वगुणकर्मनिरुक्तिभिर्दर्शयन्नाह,—कालो हि नामेत्यादि । हि उपदर्शने, नामशब्दः प्रसिद्धौ, काल इति प्रसिद्ध उपदर्श्यते । स्वयम्भूरिति न केनाप्युत्पाद्यते । अनादिमध्येत्यादि—आदिः उत्पत्तिः, आद्यन्तयोरन्तरा मध्यं, निधनं विनाशः, एतैर्वर्जितः । स्वधर्मेण कालमुक्त्वा कर्मणा चिकित्सोपयोगितां निदर्शयन्नाह,—अत्र रसव्यापदित्यादि ।—अत्र काले । रसस्य मधुरादेः, रसशब्देनात्र रसवद्द्रव्यमुच्यतेऽभेदोपचारादित्यन्ये; व्यापद् विपन्नता, संपत्तिः संपन्नता, आयत्ते अधीने । जीवितमरणे चेति चकारोऽत्रशब्दमिहानुवर्तयति, तेन जीवितमरणे अत्र काले आयत्ते; जीवितस्योत्पत्त्यधीनत्वादिति सामर्थ्यादुत्पत्तिरपि कालाधीनैव । कथमेकस्मात् कालद्रव्यात् संपद्व्यापत्ती जीवितमरणे च परस्परविरुद्धे स्यातां? न ह्येकस्मादग्नेः शीतोष्णौ, एकस्माद्वा प्रदीपात् प्रकाशतमसी, इति । सत्यं, कालशब्देनात्र कालत्वोपाधिः शीतादिभेदभिन्नः शिशिरादिरभिधीयते, तस्य च सम्यङ्मिथ्याभ्यां योगाभ्यामन्योन्यविरुद्धयोरपि कार्ययोः संभव इत्यदोषः । कालस्य निरुक्तिं कुर्वन्नाह,—स सूक्ष्मामित्यादि ।—सः कालः, सूक्ष्मामपि स्तोकामपि, कलां भागं, न लीयते गतिमत्त्वात् श्लिष्टो न भवति; अन्ये तु 'न लीयते' इत्यत्र 'कलीयते' इति पठन्ति व्याख्यानयन्ति च—कलीयते संख्यायते इति कालः । निरुक्तिपक्षान्तरमाह,—संकलयतीत्यादि ।—संकलयति संहरणादेकराशीक-

१ 'भगवान्' इति हस्तलिखितपुस्तके न पठ्यते । २ 'मनुष्याणामिति अत्राधिकृतत्वान्निर्देशः, तेन पश्वादीनामपि जीवितमरणे कालाधीने ज्ञेये' इति चक्रः । ३ हाराणचन्द्रस्तु 'सूक्ष्मामपि कलां लीयते' इति पठति, व्याख्यानयति च—'सूक्ष्मामपि कलां कालांशविशेषं लीयते क्लिश्यति कालस्य सर्वमूर्तसंयोगित्वात्' इति ।

रोति भूतानीति वा कालः, संकलयति सुखदुःखाभ्यां भूतानि योजयतीति वा कालः, कालयति संक्षिपतीति वा कालः, अथवा कालयति मृत्युसमीपं नयतीति वा कालः; अन्ये तु 'कालयति' इत्यत्र 'कलयति' इति पठन्ति, 'कलयति संख्यातीति वा काल' इति च व्याख्यानयन्ति ॥ ३ ॥

**तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकलामुहूर्ताहोरात्रपक्षमासर्त्वयनसंवत्सरयुगप्रविभागं करोति ॥ ४ ॥**

तस्य संवत्सरेत्यादि। तस्य कालस्य। किंविशिष्टस्य? संवत्सरात्मनः संवत्सरस्वरूपस्य; संवत्सरात्मनः संवत्सरशरीरस्येत्यन्ये। भगवानादित्य इत्युपलक्षणं; तेन चन्द्रोऽपि गृह्यते, निशाकरणत्वादिहेतुत्वात्; अथवा रविरेव भगवान् माहात्म्यवान् स्वरश्मिभिः शीतोष्णवर्षाः कुरुते, कालविभागं च गतिविशेषेणात्मीयेनोदयास्तगमनलक्षणेन। ननु, संवत्सरात्मन इति किमुक्तं? येन, ऋत्वावृत्तिर्दिवसावृत्तिर्वा कालः, तेन ऋत्वात्मनो दिनात्मनो वेति वक्तव्यं; नैतदस्ति, न ह्येकस्मिनृतौ दिने वा ऋत्वन्तराणां दिनान्तराणां वा सर्वेषां धर्मावरोधः; कुतः? शीतोष्णवृष्टिभेदेन तेषामत्यन्तभिन्नत्वात्; संवत्सरे पुनरेकस्मिन्नेव सर्वेषां भूतभवद्भविष्यतां दिवसानामृतूनां संवत्सरान्तराणां च धर्मोऽवरुध्यत इति यथोक्तमेव न्याय्यम् ॥ ४ ॥

**तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः, पञ्चदशाक्षिनिमेषाः काष्ठा, त्रिंशत्काष्ठाः कला, विंशतिकलो मुहूर्तः कलादशभागश्च, त्रिंशन्मुहूर्तमहोरात्रं, पञ्चदशाहोरात्राणि पक्षः, स च द्विविधः—शुक्लः कृष्णश्च, तौ मासः ॥ ५ ॥**

इदानीं संवत्सरांशान् निमेषादीन् विवरितुमाह,—तत्र लघ्वक्षरेत्यादि। तत्र तेषु मध्ये। लघ्वक्षरमकारादि, तस्योच्चारणं कण्ठताल्वादिव्यापारेणोदीरणं, तत्प्रमाणो निमेषः। ननु, लघ्वक्षरोच्चारणादिना निमेषादयो विभज्यन्ते, तत् कथं भगवानादित्यो गतिविशेषेण निमेषादीनां विभागं करोतीत्युक्तं? नैष दोषः, यतो ज्यौतिषिका निमेषादिप्रविभागेन शङ्कुच्छायामागमोक्तामर्कगत्याऽपि प्रमाणयन्ति; सा पुनः सर्वजनप्रसिद्धेति न निर्दिष्टा। कलादशभागश्चेति कलाया दशमो भागस्त्रिंशः काष्ठाः। 'त्रिंशत्कलो मुहूर्त' इति पाठो निबन्धैर्विस्तरेण दूषितः। 'शुक्लः कृष्णश्च' इति पक्षक्रमोऽमावास्यावधिं मासं ज्ञापयति; अन्ये तु 'कृष्णः शुक्लश्च' इति पठन्ति ॥ ५ ॥

**तत्र माघाद्यो द्वादश मासाः, द्विमासिकमृतुं कृत्वा षडृतवो भवन्ति; ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः; तेषां तपस्तपस्यौ शिशिरः, मधुमाधवौ वसन्तः, शुचिशुक्रौ ग्रीष्मः, नभोनभस्यौ वर्षाः, इषोर्जौ शरत्, सहःसहस्यौ हेमन्त इति ॥ ६ ॥**

१ 'संवत्सरः आत्मा स्वरूपं यस्य तस्य महाकालस्य संवत्सररूपेण व्यवहारपथारूढस्येत्यर्थः।' इति हाराणचन्द्रः।

तत्र माघादय इत्यादि। तत्र तेषामृतूनां मध्ये। तपाः माघः, तपस्यः फाल्गुनः। मधुः चैत्रः, माधवः वैशाखः। शुचिः ज्येष्ठः, शुक्रः आषाढः; अन्ये तु शुक्रो ज्येष्ठः, शुचिराषाढ इति मन्यन्ते। नभाः श्रावणः, नभस्यः भाद्रपदः। इषः आश्विनः, ऊर्जः कार्तिकः। सहाः मार्गशीर्षः, सहस्यः पौषः। शिशिरादिरयमृतुविभागो रसबलमधिकृत्योक्तः। चरकेऽपि तस्याशितीये (सू. अ. ६) रसबलनिष्पत्त्यर्थं शिशिरादिविभागो दर्शितः। अन्ये त्वन्यथा व्याख्यानयन्ति—तत्रेति गङ्गाया उत्तरे देशे शिशिराद्यृतुविभागो बोद्धव्य इति; अयमर्थो गयदासाचार्येण बहुधा दूषितः ॥ ६ ॥

**त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरं च। तयोर्दक्षिणं वर्षाशरद्धेमन्ताः; तेषु भगवानाप्यायते**

१ "इह खलु संवत्सरं षडङ्गमृतुविभागेन विद्यात्; तत्रादित्यस्योदगयनमादानं च त्रीनृतूञ्छिशिरादीन् ग्रीष्मान्तान् व्यवस्येत्, वर्षादीन् पुनर्हेमन्तान्तान् दक्षिणायनं विसर्गं च। विसर्गे पुनर्वायवो नातिरूक्षाः प्रवान्तीतरे पुनरादाने, सोमश्चाव्याहतबलः शिशिराभिर्भाभिरापूरयन् जगदाप्याययति शश्वदतो विसर्गः सौम्यः। आदानं पुनराग्नेयं, तावेवार्कवायू सोमश्च कालस्वभावमार्गपरिगृहीताः कालर्तुरसदोषदेहबलनिर्वृत्तिप्रत्ययभूताः समुपदिश्यन्ते; तत्र रविर्भाभिराददानो जगतः स्नेहं वायवस्तीव्ररूक्षाश्चोपशोषयन्तः शिशिरवसन्तग्रीष्मेष्वृतुषु यथाक्रमं रौक्ष्यमुत्पादयन्तो रूक्षान् रसान् तिक्तकषायकटुकांश्चाभिवर्धयन्तो नृणां दौर्बल्यमावहन्ति; वर्षाशरद्धेमन्तेषु ऋतुषु तु दक्षिणाभिमुखेऽर्के कालमार्गमेघवातवर्षाभिहतप्रतापे, शशिनि चाव्याहतबले, माहेन्द्रसलिलप्रशान्तसंतापे जगत्यरूक्षा रसाः प्रवर्धन्तेऽम्ललवणमधुराः, यथाक्रमं तत्र बलमुपचीयते नृणामिति। भवति चात्र—आदावन्ते च दौर्बल्यं विसर्गादानयोर्नृणाम्। मध्ये मध्यबलं त्वन्ते श्रेष्ठमग्रे च निर्दिशेत्–" चरकसंहिता, सूत्रस्थानं, अध्यायः ६।

२ गङ्गाया दक्षिणकूले वर्षा बहु भवति तेन तत्र प्रावृडादिक्रमः, गङ्गोत्तरकूले शीतं बहु भवति तेन तत्र हेमन्तशिशिरौ भवतः; उक्तं हि काश्यपेन—"भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे जलम्। तेन वर्षाप्रावृडाख्यौ ऋतू तेषां प्रकल्पितौ ॥ गङ्गाया उत्तरे कूले हिमवद्धिमसंकुले। भूयः शीतमतस्तेषां हेमन्तशिशिरावृतू"—इति ॥

३ 'चन्द्रादित्ययोः कालविभागकरत्वात् क्लेदनशोषणादिना चन्द्रादित्ययोः शीतोष्णादिप्रभेदकरत्वात्। शीतोष्णवर्षलक्षणाः अतिशीतोष्णवर्षलक्षणास्त्रयो मन्दशीतोष्णवर्षलक्षणास्त्रय इति षडृतवो दक्षिणमुत्तरं च द्वे अयने भवत इति योजना। न तु चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतः, चन्द्रस्यायनकर्तृत्वेनानभिधानात्।...इदमत्रावधेयं—द्वादशराश्यात्मकस्य राशिचक्रस्यार्धं कर्कटादिधनुःपर्यन्तं राशिषट्कं क्रमेण दक्षिणावनतं, तत्र स्थित आदित्यो यदा स्वगत्या प्राचीं गच्छन्नपि किञ्चित्किञ्चित्तिर्यग्गत्या दक्षिणामयते स कालो दक्षिणायनम्। तथा मकरादिमिथुनपर्यन्तं राशिषट्कं क्रमेणोत्तरावनतं, तत्र स्थित आदित्यो यदा प्राग्वदुत्तरामयते स काल उत्तरमयनम्' इति हाराणचन्द्रः।

**सोमः, अम्ललवणमधुराश्च रसा बलवन्तो भवन्ति, उत्तरोत्तरं च सर्वप्राणिनां बलमभिवर्धते । उत्तरं च शिशिरवसन्तग्रीष्माः, तेषु भगवानाप्यायतेऽर्कः, तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्ति, उत्तरोत्तरं च सर्वप्राणिनां बलमपहीयते ॥ ७ ॥**

त एते शीतोष्णवर्षेत्यादि । त एते षडृतवः, शीतोष्णवर्षलक्षणैर्लक्षिताः; अत्र शीतं वातकृतम्, औष्ण्यमादित्यकृतं, वर्षश्चन्द्रकृतः; शीतवर्षौ चन्द्रकृतावित्यन्ये । एतैश्च षडृतुभिर्द्वे अयने भवतः । कुत इत्याह—चन्द्रादित्ययोः कालविभागकरत्वात् । के ते द्वे अयने इति पृष्ट आह—दक्षिणमुत्तरं च । अत्र दक्षिणमयनं चन्द्रकालं विभागयति, उत्तरमयनमादित्यकालमिति । तयोर्दक्षिणमित्यादि ।—तयोर्दक्षिणोत्तरायणयोर्मध्ये वर्षाशरद्धेमन्ता दक्षिणायनं; तेषु वर्षादिषूत्तरोत्तरं भगवान् सोम आप्यायते अधिकबलो भवति, न केवलं सोम एव बलवान् भवति रसाश्चाम्लादयो वर्षादिषु यथासंख्यमुत्तरोत्तरं बलवन्तो भवन्ति; उत्तरोत्तरं चेति चकारो व्यतिक्रमेण संबन्धनीयः, तेन सर्वप्राणिनां चोत्तरोत्तरं बलमभिवर्धत इत्यर्थः । उत्तरमित्यादि ।—शिशिरवसन्तग्रीष्मा उत्तरायणं, तेषु शिशिरादिषूत्तरोत्तरं भगवानर्क आप्यायते अधिकबलो भवति; तिक्तादयो रसाश्च शिशिरादिषु यथासंख्यमुत्तरोत्तरं च बलवन्तो भवन्ति । बलमपहीयते बलहानिर्भवति । 'ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः' इति सूत्रे यद्यपि प्रागुत्तरायणं पठितं, तथाऽपि भाष्ये यत् प्रथमं दक्षिणायनस्य व्याख्यानं तदुत्तरायणतोऽपि दक्षिणायनस्य वैशिष्ट्यं प्रतिपादयति; कुतः? विसर्गत्वात् प्राणिनां बलकरत्वाच्चेति ॥ ७ ॥

**भवति चात्र—**

**शीतांशुः क्लेदयत्युर्वीं विवस्वान् शोषयत्यपि ॥**
**तावुभावपि संश्रित्य वायुः[1] पालयति प्रजाः ॥ ८ ॥**

अमुमेवार्थमुपसंहरन्नाह,—भवति चात्रेत्यादि । शीतांशुः चन्द्रः । क्लेदयति आर्द्रीकरोति । उर्वीं भूमिम् । विवस्वान् आदित्यः शोषयति । तावुभावपीति तौ चन्द्रसूर्यौ । संश्रित्य आश्रित्य, वायुः प्रजाः पालयति रक्षति । चन्द्रमाश्रित्याप्यायनं जगतः करोति, सूर्यमाश्रित्य शोषणं; ततो यथाकालं रसाभिनिर्वृत्तिः, तेन प्रजा वर्धयतीति पिण्डार्थः ॥ ८ ॥

**अथ खल्वयने द्वे युगपत् संवत्सरो भवति । ते तु पञ्च युगमिति संज्ञां लभन्ते । स एष निमेषादिर्युगपर्यन्तः कालश्चक्रवत् परिवर्तमानः कालचक्रमित्युच्यत इत्येके[2] ॥ ९ ॥**

परिशिष्टं पूर्वसूत्राव्याख्यातुमाह—अथ खल्वयने इत्यादि । युगपदेककालमयनद्वयं संवत्सरः, न पृथग् दक्षिणायनमुत्तरायणं वा । ननु, 'माघादयो द्वादशमासाः संवत्सरः' इत्युक्तं, तत् किं पुनरभिधानेन? उच्यते, पूर्वोदिते हि माघादयो द्वादश मासा व्यस्ता अक्रमपठिताश्च संवत्सर इत्याशङ्का स्यात्, 'अथ खल्वयने द्वे' इत्यादिनिर्देशे क्रियमाणे येन क्रमेण षडृतुविभागेऽयनद्वयमुक्तं तेनैव चेदयनद्वयं युगपत् स्यात्तदा संवत्सर इति व्यस्तानामक्रमपठितानां च माघादीनां संवत्सरत्वं निरस्तमिति । इदानीं युगप्रविभागं दर्शयन्नाह—ते त्वित्यादि । ते पुनः पञ्च संवत्सरा युगमिति संज्ञां प्राप्नुवन्ति । इयं च युगस्य पारिभाषिकी संज्ञा, परमार्थतस्तु कृतादयश्चत्वारो युगविशेषाः । स एष इत्यादि स एषः कालः ॥ ९ ॥

**इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षडृतवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तं[1]; ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः; तद्यथा—भाद्रपदाश्वयुजौ वर्षाः, कार्तिकमार्गशीर्षौ शरत्, पौषमाघौ हेमन्तः, फाल्गुनचैत्रौ वसन्तः, वैशाखज्येष्ठौ ग्रीष्मः, आषाढश्रावणौ प्रावृडिति ॥ १० ॥**

संशोधनाश्रयं दर्शनं दर्शयन्नाह-इहेत्यादि । इह अस्मिन्नध्याये, तुशब्दः पुनरर्थः । अस्मिन्नध्याये पुनः किमर्थं वर्षादयः ऋतव इत्याह,—दोषोपचयाद्यर्थम् । ननु, इदं दर्शनं व्याधिहेतुवातादिसंचयाद्यर्थत्वात् प्राक् कर्तुं युज्यते । नैवं, तत्र वातादिहेतूनां रसानां निष्पत्तेस्तदेव दर्शनं प्राक् कृतं, अथवा 'हेमन्ते शिशिरे चैव वसन्ते चापि मोक्षयेत्'-( सू. अ. ५ ) इत्यादिश्लोके शिशिरादीनामादौ निर्दिष्टत्वात् । ननु, प्रावृड्वर्षयोः को भेदः? उच्यते, प्रथमः प्रवृष्टेः कालः प्रावृड्, तस्यानुबन्धो वर्षाः । संचयात् प्रकोपो बलवान्, तस्य चिकित्सितं संशोधनैरित्यत्र वर्षादयो ऋतव उक्ताः, तथा चरकेऽपि रोगभिषग्जितीये विमाने संशोधनमधिकृत्य[2] वर्षादयोऽभिहिताः । यद्यपि दोषसंचयादिनिमित्तं वर्षादयः कथिताः, तथाऽपि संचयादिषु संशोधनं कार्यमित्यस्य प्राधान्यं; शिशिरादयस्तु रसं बलं चाधिकृत्योक्ताः, वर्षादयस्तु संशोधनमधिकृत्य संचयाद्यर्थमिति तात्पर्यार्थः । अन्ये त्वन्यथा व्याख्यानयन्ति,—गङ्गाया दक्षिणे देशे वर्षाद्यृतुविभागो[3] ज्ञातव्य इति; अयमपि गयदासाचार्येण दूषितः ॥ १० ॥

**तत्र, वर्षास्वोषधयस्तरुण्योऽल्पवीर्या आपश्चाप्रशान्ताः[4] क्षितिमलप्रायाः, ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भिताग्नीनां[5] विदह्यन्ते, विदाहात्**

१ 'वायोरुभयार्थकर्तृत्वं योगवाहितया ज्ञेयम्' इति चक्रः ।
२ 'एके इति रसबलादिजनकशिशिराद्यृतुक्रमवादिनः' इति चक्रः ।

१ 'अयं च दोषचयादिक्रमो रसोत्पादक्रमाद्भवति, तेन हेतुतया रसोत्पादक्रमः प्रथममुच्यते, दोषचयादिक्रमस्तु कार्यतया कारणाधीन इति पश्चादुच्यते' इति चक्रः । २ 'संशोधनमधिकृत्यैते वर्षादयोऽभिहिताः' इति पा० । ३ 'हेमन्तो ग्रीष्मो वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रयः ऋतवो भवन्ति; तेषामन्तरेष्वितरे साधारणलक्षणास्त्रयः ऋतवः प्रावृड्शरद्वसन्ता इति; प्रावृडिति प्रथमः प्रवृष्टेः कालः, तस्यानुबन्धो हि वर्षाः; एवमेते संशोधनमधिकृत्य षड् विभज्यन्ते ऋतवः' च. वि. स्था. अ. ८ । ४ 'आपश्चाप्रसन्नाः' इति पा० । ५ 'शीतवातविष्टब्धाग्नीनां' इति पा० ।

**पित्तसंचयमापादयन्ति; स संचयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीञ्जनयति। ता एवौषधयः कालपरिणामात् परिणतवीर्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रशान्ताः स्निग्धा अत्यर्थं गुर्व्यश्च, ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मसंचयमापादयन्ति; स संचयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीञ्जनयति। ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च, ता उपयुज्यमानाः सूर्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाच्च वायोः संचयमापादयन्ति; स संचयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां देहिनां शीतवातवर्षेरितो वातिकान् व्याधीञ्जनयति। एवमेष दोषाणां संचयप्रकोपहेतुरुक्तः ॥ ११ ॥**

पित्तादीनां संचयप्रकोपौ वर्षादिषु यथा सहेतुकौ भवतस्तथा निर्दिशन्नाह—तत्र वर्षास्वित्यादि। तत्र तेषु ऋतुषु मध्ये, ओषधयो गोधूमचणकशाल्यादयः, तरुण्यः अभिनवाः, अल्पवीर्या अल्पशक्तयः, 'भवन्ति' इत्यध्याहारः; अन्ये तु वीर्यशब्दं शीतोष्णाख्यवीर्यवाचिनं मन्यन्ते। ननु, वर्षासु गोधूमादयः पुरातना एव भवन्ति, कथमभिनवा इत्युच्यन्ते? नैष दोषः, गोधूमचणकशाल्यादयोऽन्तःसूक्ष्मजलप्रवेशान्म्रदिमानमुपगताः किंचित्तिरस्कृतशक्तयः प्ररोहधर्मिण्यः प्रोच्छूनतामुपगता अनवा अपि तैरुण्य इत्युच्यन्ते, शाकादयस्तु नूतना एव प्रयुज्यन्ते। आपश्चाप्रशान्ता अपरिणताः, नवत्वात्; अप्रसन्नाः कलुषा इत्यन्ये; क्षितिमलप्रायाः पृथिव्यास्तृणपर्णोत्करशवकोथादिमलबहुलाः, अत्रापि 'भवन्ति' इत्यध्याहारः। ता उपयुज्यमाना इत्यादि। विदह्यन्ते अम्लपाकमुपयान्ति। कास्ताः? पूर्वोक्ता ओषधय आपश्च। किं क्रियमाणाः? उपयुज्यमानाः। केषामम्लपाकमुपयान्ति? देहिनां; किंविशिष्टानां? शीतवातविष्टम्भिताग्नीनां; शीतेन कुपितो वातः शीतवातः (शारीरैः), तेन मन्दवेगीकृताग्नीनां; न पुनर्बाह्येन शीतवातेन, यतस्तेन बहिर्लोमकूपरोधेनोष्मणोऽनिर्गमादन्तरग्निर्बलमेधते। पुनः किंभूतानां देहिनां? क्लिन्नदेहानाम् आर्द्रीभूतशरीराणाम्। कस्यां सत्यां? भूमौ। किंविशिष्टायां? जलप्रक्लिन्नायां; पानीयेन सुष्ठु स्तिमितायाम्। क्व सति? नभसि, आकाशे। किंविशिष्टे? मेघावतते, मेघव्याप्ते। विदाहात् अम्लपाकात्। पित्तसंचयमिति संहतिरूपा वृद्धिः संचयः; स्वस्थानवृद्धिरित्यन्ये। संचीयमानमपि पित्तमृतुशैत्यात्तस्मिन् काले न कुप्यति। स संचय इत्यादि। स एव पित्तस्य वर्षाकालोपचितः संचयः, शरद्यल्पमेघे आकाशे सूर्यरश्मिभिः प्रविलायितः सन् पित्तोद्भवान् व्याधीनुत्पादयति। ता एवेत्यादि ता एवौषधयः पूर्वोक्ताः। कालपरिणामात् कालपरिपाकात्। परिणतवीर्याः संजातशक्तिकाः। बलवत्यो देहोपचयहेतवः, अन्यथा परिणतवीर्यबलवतोरेकार्थत्वात् पुनरुक्तिः स्यात्। आपश्च प्रशान्ताः स्वच्छाः; क्षितिमलापगमादित्यन्ये। ता इति पूर्वोक्ता ओषधय आपश्च। उपयुज्यमानाः खाद्यमानाः पीयमानाश्च। सतुषारपवनोपस्तम्भितदेहानामिति सतुषारपवनेन हिमार्द्रवातेनोपस्तम्भितान्याप्यायितानि देहानि शरीराणि येषां ते तथोक्ताः। ता ओषधय आपश्च किंविशिष्टाः? अविदग्धाः, मधुरपाकमुपगताः। ऋत्वादिस्वभावात् कफस्य संचीयमानस्य हिमानीवशात्तदानीं स्त्यानतैव भवति न प्रकोपः। स संचय इत्यादि। अर्करश्मिप्रविलायित इति स्त्यानघृतवद्विलयनमात्रं वसन्ते भवति, न तूपशोषणाख्यः प्रशमः, कस्मात्? अर्कस्य नातितीक्ष्णत्वाच्छ्लेष्मप्राचुर्याच्च। श्लैष्मिकान् व्याधीन् अन्नद्वेषहृदयोत्क्लेदादीन्। ता एवौषधय इत्यादि। निदाघे ग्रीष्मे। निःसारा निर्गतसाराः, सारोऽत्र गौरवम्। रूक्षा निःस्नेहाः। न केवलमोषधय एवंविधा भवन्ति आपश्च भवन्तीत्यर्थः। ता उपयुज्यमाना इत्यादि।—ता अनन्तरनिर्दिष्टा ओषधयो रौक्ष्यलघुत्वाभ्यां हेतुभ्यां सूर्यप्रतापोपशोषितदेहानां देहिनां नृणां वातसंचयमापादयन्तीति पिण्डार्थः। यद्यपि शीतस्य वायोरुष्णे ग्रीष्मे संचयो न युज्यते, तथाऽपि वातगुणेषु सर्वेषु रौक्ष्यं प्रधानं, तेनौषधीनामत्यर्थरौक्ष्येण रूक्षस्य वायोर्ग्रीष्मे संचयः स्यादित्यदोषः। स संचयः प्रावृषीत्यादि। स वातसंचयः शीतवातवर्षेरितो वातिकान् व्याधीन् कोष्ठतोदसंचरणादीन् जनयति। क्व काले? प्रावृषि; केषां वातिकान् व्याधीन् जनयति? देहिनां; किंविशिष्टानां? क्लिन्नदेहानां; कस्यां सत्यां? भूमावत्यर्थं जलोपक्लिन्नायाम्। एवमेष इत्यादि। एवमनेन प्रकारेण, एष इति कालस्वभावकृतौषधितारुण्यादिर्यावच्छीतवातवर्षेरितो वातिकान् व्याधीञ्जनयतीति दोषाणां यौ संचयप्रकोपौ तयोरयं हेतुरुक्तः। ननु, दोषोपचयप्रकोपोपशमनिमित्तमिति त्रयाणां चयादीनां प्रतिज्ञातत्वात् कथं संचयप्रकोपौ व्याख्यायोपसंहारः? नैष दोषः, प्रकोपे हि संशोधनं कार्यं; तत्र यदि यथाप्रतिज्ञं त्रीन् प्रशम-

१ 'सतुषारोपस्तम्भितदेहानां' इति पा०। २ 'रौक्ष्याल्लघुत्वाद्वैशद्याच्च' इति पा०। ३ 'ओषधयोऽत्र पूर्वमनाहृता वनस्पत्यादय एव तरुण्योऽभिनवा अजातसारा इति यावत्, नत्वन्तःप्रवेशिवातानुगतसूक्ष्मजलसंपर्कात् पूर्वमाहृता गोधूमादयोऽपि, तेषां प्रावृड्हितत्वेनोपदेक्ष्यमाणत्वादेव वर्षाहितत्वेनाप्यभ्युपगमात्, वर्षा हि प्रायेण प्रावृडिव प्रतिभान्ति' इति हाराणचन्द्रः। ४ 'आपश्चाप्रसन्नाः' इति पा०। ५ 'शारीरः' इति हस्तलिखितपुस्तकेषु न पठ्यते।

१ 'प्रसन्नाः' इति पा०। २ 'सतुषारोपस्तम्भितदेहानामिति सह तुषारेण वर्तत इति सतुषारश्चन्द्रः, तेन सतुषारेण उपस्तम्भितानि आप्यायितानि शरीराणि येषां तथोक्ताः' इति चक्रः। ३ 'निःसारा इति अपगतसौम्यांशाः' इति चक्रः। ४ 'भवति' इति पा०। ५ 'रौक्ष्याल्लघुत्वाद्वैशद्याच्चेति हेतुत्रयोपन्यासेन वातविरुद्धस्यैकस्य निदाघोष्ण्यस्यावजितत्वं सूचितं भवति, विरुद्धगुणसन्निपाते हि भूयसाऽल्पमवजीयत इति न्यायात्' इति हाराणचन्द्रः।

सहितान् व्याख्याति, तदा प्रशमान्तरितः प्रकोपोपक्रमविधिः स्यात्; तस्मात् संचयप्रकोपावेव तावत् पृथगाख्याति ॥ ११ ॥

**तत्र वर्षाहेमन्तग्रीष्मेषु संचितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्तव्यम्॥१२**

प्रकोपे यथावसरं संशोधनविधेरासंजनार्थं तमेव विधिं वक्तुमाह—तत्र वर्षेत्यादि । वर्षादिषु ये संचिता दोषास्त एव यदा शरदादिषु प्रकुपिता भवन्ति तदा निर्हरणं कर्तव्यम् । निर्हरणमाकर्षणं वमनादिना । प्रकुपितानामिति प्रशब्दो बहुदोषाणामेव संशोधनमिति दर्शयति; मध्यदोषेषु पाचनादि, अल्पदोषेषु पुनर्लङ्घनपिपासानिग्रहादि यथर्तुविधिसमाचारश्चेति चकारो दर्शयति। ननु, वर्षादिषु शरदादिषु चयप्रकोपयोरनन्तरमेवोक्तत्वात् किमर्थमत्र वर्षाहेमन्तग्रीष्मेष्वित्यादिपाठः ? प्रकुपितानां निर्हरणं कर्तव्यमित्येव वक्तुं युक्तम् । सत्यं, शरदादिष्वेव प्रकुपितानां निर्हरणं यथा स्यादन्यत्र माभूदिति नियमार्थं पुनः शरदादिग्रहणं; यदि पुनः शरदादिग्रहणं न क्रियेत, तदा ग्रीष्मादिषु हेतुबाहुल्यात् प्रकुपितेषु दोषेषु वमनादयो विधीयेरन्; न चैतदिष्यते, ग्रीष्मादिषु हि वमनादयो विधीयमाना व्यापदं मरणं वोत्पादयन्ति । प्रावृट्सु चेति चकारः संशोधनसाध्येष्वतिपातिषु रोगेषु ग्रीष्मादिष्वपि संशोधनं कर्तव्यमिति ज्ञापयति । वर्षादिषु संचयस्य पूर्वमेवोक्तत्वात् पुनर्वर्षादिग्रहणं यथास्वमृतुविहित आहाराचाराख्यः स्वस्थवृत्तोदितो विधिः कर्तव्य इति सूचयति । शरदादीनामृतूनां द्वितीयमासे संशोधनं कर्तव्यं; तत्र पित्तसंशोधनं मार्गशीर्षे, कफनिर्हरणं चैत्रे, वातस्य श्रावणे; एवं हि साधारणः कालः, त्रिमासान्तरिताश्च दोषा भवन्ति । तथा चाह—"ग्रीष्मादिसंचितान् दोषान् त्रिमासान्तरितान् हरेत्"—इति ॥ १२ ॥

**तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे, वातिकानां शरदि, स्वभावत एव; त एते संचयप्रकोपोपशमा व्याख्याताः ॥ १३ ॥**

उपशमं व्याख्यातुकाम आह—तत्र पैत्तिकानामित्यादि । स्वभावतः स्वलक्षणतः, स्वलक्षणं पुनरेषां शीतोष्णवर्षादि । ननु, यदि कालस्वभावादेव दोषाणामुपशमस्तर्हि शास्त्रवैयर्थ्यं स्यात्; न च वैयर्थ्यं दृश्यते, तदुक्तविधानादप्युपशमदर्शनात् । सत्यमेतत्, दोषाणां स्वभावविनाशित्वेऽपि चयादिविसदृशसन्तानोत्पत्तौ शास्त्रं हेतुतया व्याप्रियमाणं नानर्थकं; विनाशकारणाभावेऽपि हि घटादीनां विसदृशकपाललक्षणोत्पादे मुद्गरादिहेत्वन्तरसाफल्यमस्ति ॥ १३ ॥

**तत्र, पूर्वाह्णे वसन्तस्य लिङ्गं, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकं, शारदमर्धरात्रे, प्रत्युषसि हैमन्तमुपलक्षयेत्; एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात् ॥ १४ ॥**

सांवत्सरिकं विधिं दिनेऽप्यतिदेष्टुमाह—तत्र पूर्वाह्ण इत्यादि। तत्रेति अहोरात्रे । शारदमर्धरात्र इति भूगोलाधःस्थितसूर्यत्वादर्धरात्रे शारदं लिङ्गमातपाभावेऽपि गोलकगणितविदो ज्योतिर्विदो मन्यन्ते; भिषजस्तु कालस्वभावादाहारवशाच्चेति । अहोरात्रमपि वर्षमिवेत्यादि ।—शीतोष्णवर्षैर्दोषोपचयप्रकोपोपशमैस्तैरहोरात्रमपि वर्षमिव जानीयादिति संबन्धः । एतेनाहोरात्रिके संचयादावनागताबाधोक्तदन्तधावनादिप्रतीकारैर्निर्हरणं कर्तव्यमित्युक्तम् । ननु, प्रतिदिनं दोषाणां संचयप्रकोपप्रशमेषु सत्सु कथमार्तवाः संचयादयो भवन्ति, दिवसैरेवर्तूनामारब्धत्वात्, आह्निकचयकोपयोः प्रत्यहमेव प्रतीतत्वात् । सत्यम्, आह्निकौ चयप्रकोपावहोरात्रमाश्रित्य सोमसूर्यानिलानामुष्णादिगुणमात्रोत्पन्नत्वादल्पकारणौ, अल्पेनैवानागताबाधविधानेन शान्तिमुपयातः; ऋतुभवौ तु चयप्रकोपौ मार्गान्तरगतसोमसूर्यानिलकृतैर्द्रव्यरसगुणवीर्यविपाकप्रभावैर्निरन्तरोपचितत्वादहोरात्रमात्राश्रितार्कादिगुणादत्यन्तभिन्नैरारभ्यमाणौ महाकारणकौ महतैव संशोधनादिविधिना शान्तिं गच्छतः ॥ १४ ॥

**तत्र, अव्यापन्नेषु ऋतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च; ता उपयुज्यमानाः प्राणायुर्बलवीर्यौजस्कर्यो भवन्ति ॥ १५ ॥**

सोऽयं दोषचयादिरव्यापन्नेषु ऋतुषु भवतीति दर्शयन्नाह—तत्राव्यापन्नेष्वित्यादि । प्राणा अग्नीषोमादयः, आयुः शरीरेन्द्रियसत्त्वात्ममनसां संयोगः, बलमुत्साहोपचयलक्षणं, वीर्यं शक्तिः, ओजः हृदयाश्रितं सप्तधातुस्नेहः ॥ १५ ॥

**तेषां पुनर्व्यापदोऽदृष्टकारिताः, शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च ॥१६॥**

१ 'वर्षादिषु' इति पा० । २ 'शरदादीनां द्वितीयमासे संशोधनाभिधानं संपूर्णप्रकोपे भूते निर्हरणोपदेशार्थं, प्रथमेषु हि मासेषु फाल्गुनाषाढकार्तिकेषु प्रकोपः प्रकर्षप्राप्तो न भवति, चितस्य ह्यसम्यक्प्रकुपितस्याविलीनस्य सम्यङ्निर्हरणं न भवति पुनश्च सञ्चीयते कालप्रकर्षेण । यत्तु 'संचयेऽपहृता दोषा लभन्ते नोत्तरा गतीः' इति वक्ष्यति, तत्तु हेत्वन्तरकुपितदोषविषयमिति न विरोधः । ३ 'तत्र साधारणेष्वृतुषु वमनादीनां प्रवृत्तिर्विधीयते, निवृत्तिरितरेषु; साधारणलक्षणा हि मन्दशीतोष्णवर्षत्वात् सुखतमाश्च भवन्त्यविकल्पकाश्च शरीरौषधानाम्, इतरे पुनरत्यर्थशीतोष्णवर्षत्वाद्दुःखतमाश्च भवन्ति विकल्पकाश्च शरीरौषधानाम्' च. वि. स्था. अ. ८ । ४ 'घनात्यये' इति पा० । ५ एतदनन्तरं 'चयप्रकोपोपशमा दोषाणां हि द्वयोरपि । सन्धौ साधारणा वत्स भविष्यद्वर्तमानयोः ॥ ऋतुसन्धौ तु दोषाणां चयाद्याः परिकल्पनाः । एवंप्रकारा व्याख्याता विधिं वक्ष्याम्यतः परम् ॥ ह्रासयेदल्पशोऽभ्यस्तं वर्तमानर्तुकं विधिम् । भविष्यदृतुकं चापि वर्तेताभ्यासकारणात् ॥ यावन्तं ह्रासयेत्पूर्वं तावन्तं स भजेत्परम् । स्यू रोगास्त्यागसेवाभ्यां सहसाऽसात्म्यसंभवाः ॥ वह्निप्रणाशवैषम्ये स्यातां चासात्म्यसेवनात् । तस्माद्यथोक्तमभ्यसेदृतुसन्धौ विधिं नरः' इत्यधिकः पाठ उपलभ्यते क्वचित्पुस्तके ।

१ 'पदार्थस्वभावविनाशित्वेऽपि' इति पा० । २ 'प्रावृषेण्यं' इति पा० । ३ 'खलु' इति क्वचित्पुस्तके न पठ्यते ।

कुतः पुनः ऋतूनां व्यापद इत्याह—तेषां पुनरित्यादि । तेषां ऋतूनाम् । व्यापदः शीतोष्णवातवर्षाणामेव वैपरीत्यम् । अदृष्टेन सर्वजनसामान्येनाधर्मेण, कारिताः कर्तुं प्रयोजिताः । शीतोष्णेत्यादि । विपरीतानि हीनमिथ्यातियुक्तानि, ओषधीरपश्च व्यापादयन्ति विरुद्धतां प्रापयन्ति । अन्ये तु शीतोष्णवातवर्षाणीत्यादिपाठमन्यथा कृत्वाऽऽपातनिकापूर्वं पठन्ति । तद्यथा,—अधर्मस्तावद् व्यापदां संभवे प्रयोजकः कर्ता, कः पुनः स्वतन्त्रः कर्ता ? इत्याह—शीतोष्णवर्षाणां वैपरीत्यमोषधीर्व्यापादयत्यपश्च ॥१६॥

**तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेदिति ॥ १७ ॥**

व्यापन्नानामोषधीनामपां चोपयोगाद्दोषं वक्तुमाह,—तासामुपयोगादित्यादि ॥ १७ ॥

**तत्र, अव्यापन्नानामोषधीनामपां चोपयोगः ॥१८**

ऋतुव्यापदां चिकित्सासूत्रं दर्शयन्नाह—तत्राव्यापन्नानामित्यादि । अव्यापन्नशब्द उभयत्र संबध्यते; तेन, अव्यापन्नाः पुराणा ओषधयः, आपश्चाव्यापन्नाः क्वथिताः । अन्ये तु 'तत्राव्यापन्नानामोषधीनामपां चोपयोग' इत्यत्र 'तत्र पुराणाभिरोषधिभिरनुपहतवीर्याभिः क्रियाः कार्याः' इत्यादिपाठं पठन्ति; स चात्यर्थमप्रसिद्ध इति न लिखितः ॥ १८ ॥

**कदाचिदव्यापन्नेष्वपि ऋतुषु कृत्याभिशापरक्षःक्रोधाधर्मैरुपध्वस्यन्ते जनपदाः, विषौषधिपुष्पगन्धेन वा वायुनोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते, ग्रहनक्षत्रचरितैर्वा, गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावैर्वा ॥ १९ ॥**

ऋतुव्यापद्भ्योऽन्यैरपि हेतुभिर्व्याधिसंभवं दर्शयन्नाह—कदाचिदित्यादि । कदाचिन्न सर्वकालम् । कृत्या कुपितमन्त्रिणोऽभिचारकर्मजनितो राक्षसीविशेषः, अन्ये तु सर्वराष्ट्रच्छेद्यभिचारः, अभिचारस्त्वेकपुरुषव्यापादक एव; अभिशापो गुरुसिद्धादीनामाक्रोशः; रक्षांसि हिंसाविहाराणि हेतिप्रहेतिकुलजातानि, तेषां क्रोधो रक्षःक्रोधः; अधर्मः कायवाङ्मनसां दुश्चरितम् । उपध्वस्यन्ते उपद्रूयन्ते । जनपदा लोकाः । विषौषधिपुष्पगन्धेनेत्यादि । विषाणामोषधीनां च यानि पुष्पाणि तेषां गन्धेन । किंविशिष्टेन ? वायुनोपनीतेन वायुना समीपमानीतेन; तेन ये श्वासकासादयस्तैरुपतप्यन्ते जनपदाः । ओषधयः सुविलिन्दवृक्षादयः । अन्ये तु कासश्वासेत्यादिपाठमन्यथा पठन्ति—'कासश्वासप्रतिश्यायगन्धाज्ञानभ्रमशिरोरुग्ज्वरमसूरिकादिभिरुपतप्यन्ते' इति, व्याख्यानयन्ति च—तत्र नासारन्ध्रानुगतेन वायुना कासश्वासप्रतिश्यायगन्धाज्ञानभ्रमशिरोरुजः, त्वगिन्द्रियगतेन ज्वरमसूरिकादयः । ग्रहनक्षत्रचरितैर्वेति ग्रहाणां शनैश्चरादीनां गर्हितस्थानस्थितानां प्रचारो ग्रहचरितं; नक्षत्राणि अश्विन्यादीनि, तेषां चरितमुल्कापातादिभिर्जन्मनक्षत्राभिहननम् । गृहदारेत्यादि गृहादीनां यानि गर्हितानि निन्दितानि लक्षणानि चिह्नानि तन्निमित्तं प्रादुर्भाव उत्पत्तिर्येषां व्याधीनां तैर्वा उपतप्यन्ते जनपदाः; दारा भार्याः, शयनं खट्वा, आसनं पीठं, यानं दोलारथादि, वाहनं हस्त्यश्वादि, मणिः स्फटिकादिः, गृहादयो मणिपर्यन्तास्त एव रत्नानीति समासः, अन्यथा मणिरत्नयोरेकार्थत्वात् पुनरुक्तता स्यात्; अन्ये तु मणयः सर्पादीनां प्रशस्तावयवविशेषाः, रत्नानि माणिक्यादीनि; उपकरणानि घटपिठरशूर्पादीनि; अथवा गृहादीन्येवोपकरणानि । अन्ये तु गृहदारेत्यादिगद्ये गृहदारशब्दौ निमित्तशब्दं च परित्यज्य 'शयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणप्रादुर्भावैर्वा' इति पठन्ति ॥ १९ ॥

१ "विषौषध्यः कल्पोक्ता वेत्रादयः, तासां पुष्पगन्धेन" इति हाराणचन्द्रः । "गन्धेन गन्धवद्द्रव्यं सूक्ष्मं गृह्यते, निराश्रयस्य गन्धस्य गत्यभावात्" इति चक्रः ।

**तत्र, स्थानपरित्यागशान्तिकर्मप्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यम्, एवं साधु भवति ॥ २० ॥**

इदानीमृतुव्यापदादिकृतानां रोगाणां सामान्येन चिकित्सां दर्शयन्नाह,—तत्र स्थानेत्यादि । ऋतुकोपस्याधर्मकारित्वात्तत्र दैवव्यपाश्रयं भेषजम् । शान्तिरिन्द्रियविजयः, अथवा वेदोक्तमन्त्रैर्यजनादिकं; प्रायश्चित्तं प्राक्तनकर्मोपशमार्थं स्मार्तवचनेन चान्द्रायणादि, अथवा "प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्"—इति; मङ्गलं प्रशस्तौषधमणिधारणादि; जप ओङ्कारपूर्वकमृग्यजुःसामावर्तनं; होमो लक्षकोटिप्रयुतोपलक्षितः; उपहारः देवादिषु गवाश्वप्रभृतीनामुपा( न )यनम्, अन्ये उपहारो देवतानां सपशुर्बलिः; इज्या यागः; अञ्जलिः भक्त्या करसंपुटविधानं; नमस्कारो देवद्विजगुरुभ्यः कायवाङ्मनसः प्रणामः; तपः तापनालक्षणमुपवासादि; नियमः शास्त्रोदितो विधिर्मौनादिः, दया प्राणिषु कृपा; दानं यथाविभवं वित्तविसर्गः; दीक्षा गुरुतो मन्त्रादिग्रहणम्; अभ्युपगमः गुरुवाक्यादीनामङ्गीकारः; परशब्दः स्थानपरित्यागादिभिः प्रत्येकं संबध्यते । एवं साधु भवति एवं कुशलं भवतीत्यर्थः ॥ २० ॥

**अत ऊर्ध्वमव्यापन्नानामृतूनां लक्षणान्युपदेक्ष्यामः ॥ २१ ॥**

अत ऊर्ध्वमित्यादि । अव्यापन्नाः प्रसन्नाः ॥ २१ ॥

**वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः ॥**
**छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः ॥ २२ ॥**
**दर्पिता ध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जराः ॥**
**रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये ॥ २३ ॥**

ऋतुप्रकोपे हि पूर्वं शान्त्यादिकमुक्तम्, अधुना प्रसन्नर्तुलक्षणान्याह—वायुर्वात्युत्तर इत्यादि । तत्र षड्‌ऋतुषु मध्ये, हेमन्ते उत्तरदिशो जातत्वादुत्तरो वायुर्वाति वहति । रजः धूलिः;

१ 'शान्त्यादिभिः' इति पा० ।

आकुला व्याप्ताः । हिमानद्धा हिमसंबद्धाः । दर्पिता हर्षिताः । ध्वाङ्क्षः काकः, खङ्गः गण्डकः, उरभ्रो मेषः । पुन्नाग इति नागकेशरम् । हिमसाह्वये हेमन्ते ॥ २२ ॥ २३ ॥

शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः ।
शेषं हेमन्तवत् सर्वं विज्ञेयं लक्षणं बुधैः ॥ २४ ॥

प्रसन्नशिशिरर्तुलक्षणमाह—शिशिर इत्यादि । वातवृष्ट्येति वातेन मिश्रिता वृष्टिर्वातवृष्टिः ॥ २४ ॥

सिद्धविद्याधरवधूचरणालक्तकाङ्किते ॥
मलये चन्दनलतापरिष्वङ्गाधिवासिते ॥ २५ ॥
वाति कामिजनानन्दजननोऽनङ्गदीपनः ॥
दम्पत्योर्मानभिदुरो वसन्ते दक्षिणोऽनिलः॥२६॥
दिशो वसन्ते विमलाः काननैरुपशोभिताः ।
किंशुकाम्भोजबकुलचूताशोकादिपुष्पितैः ॥२७॥
कोकिलाषट्पदगणैरुपगीता मनोहराः ॥
दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः२८

अधुना वसन्तलक्षणमाह—सिद्धेत्यादि । वसन्ते दक्षिणदिशो जातत्वान्मलयपर्वतस्थितचन्दनसुरभिर्दक्षिणो वायुर्वाति । अन्यदपि वसन्तलक्षणमाह,—दिशो वसन्त इत्यादि । वसन्ते दिशो विमला रजोधूमादिवर्जितत्वान्निर्मला भवन्ति । दिश एव च किंशुकादिवृक्षपुष्पितैः काननैरुपशोभिता भूषिता भवन्ति । ता एव दिशः कोकिलाषट्पदगणैरुपगीता मधुरध्वनियुक्ता भवन्ति । दक्षिणानिलसंवीता दक्षिणवातेनावृता दिश इत्यर्थः । सुमुखाः शोभनावकाशाः । पल्लवोज्ज्वलाः पल्लवैः कृता श्रृङ्गारिताः ॥ २५—२८ ॥

ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः ॥
भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव॥२९॥
भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः ॥
ध्वस्तवीरुत्तृणलता विपर्णाङ्कितपादपाः ॥ ३० ॥

अव्यापन्नग्रीष्मर्तुलक्षणमाह—ग्रीष्म इत्यादि । असुख इति ग्रीष्मे हि नैर्ऋतो वायुरसुखप्रदो भवति । तन्व्यः अल्पप्रवाहाः । भ्रान्तचक्राह्वयुगला इति जलाशयान्वेषितया भ्रान्तचक्रवाकयुगला दिशो भवन्ति । पयःपानाकुला इति उदकपानाय व्यग्रा मृगा भवन्ति । ध्वस्तवीरुत्तृणलता इति वीरुधः विटपाः, तृणानि प्रसिद्धानि, लता वल्ली, एते वीरुदादयो ध्वस्ता अधःपतिता भवन्ति । विपर्णाङ्कितपादपा इति विपर्णैर्विगलितपत्रैः, अङ्किताश्चिह्निताः, पादपा वृक्षा भवन्ति ॥ २९ ॥ ३० ॥

प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः ॥
अम्बुदैर्विद्युदुद्द्योतप्रस्रुतैस्तुमुलस्वनैः ॥ ३१ ॥
कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही ।
कदम्बनीपकुटजसर्जकेतकिभूषिता ॥ ३२ ॥

अव्यापन्नप्रावृडृतुलक्षणमाह—प्रावृषीत्यादि । पश्चिमानिलकर्षितैरम्बुदैरम्बरमाकाशं प्रावृषि आनद्धमाच्छादितं भवति । कथंभूतैरम्बुदैरित्याह—विद्युदुद्द्योतेत्यादि ।—विद्युदुद्द्योतेन सह प्रस्रुतैः क्षरितैः, तुमुलस्वनैः प्रचण्डगर्जितैः । मही च प्रावृषि कथम्भूता भवतीत्याह—कोमलेत्यादि ।—शष्पं बालतृणम्, आढ्या समृद्धा । शक्रगोप इन्द्रवधूः, अन्ये ज्योतिरिङ्गणमाहुः । नीपो धूलीकदम्बः ॥ ३१ ॥ ३२ ॥

तत्र वर्षासु नद्योऽम्भश्छन्नोत्खाततटद्रुमाः ॥
वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः॥३३॥
भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता ॥
नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः ॥ ३४ ॥

अव्यापन्नवर्षालक्षणमाह—तत्र वर्षास्वित्यादि ।—वर्षासु अम्भसा पानीयेन छन्ना उत्खाततटद्रुमाश्च नद्यो भवन्ति । सोपानसहिताः कूपविशेषा वाप्यः । भूरव्यक्तस्थलश्वभ्रेति भूमिश्च अदृश्यस्थलगर्ता भवति । नातिगर्जदित्यादि अतिगर्जितवर्जितं पर्जन्यो योऽसौ मेघस्तेन निरुद्धार्कग्रहं नभो भवति ॥३३॥३४॥

बभ्रुरुष्णः शरद्यर्कः श्वेताभ्रविमलं नभः ॥
तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः ॥ ३५ ॥
पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः ।
बाणसप्ताह्वबन्धूककाशासनविराजिता ॥ ३६ ॥

शरल्लक्षणमाह–बभ्रुरित्यादि ।–बभ्रुः कपिलपिङ्गलः । श्वेताभ्रविमलं नभ इति नभ आकाशं, श्वेताभ्रं विमलं च भवति । हंसांसघट्टितैरिति हंसस्कन्धचलितैः । पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूरिति निम्नादिषु प्रदेशेषु यथासङ्ख्यं पङ्कादिकीर्णा भवति; द्रुमाश्च वल्मीककारिण्यः सूक्ष्माः पिपीलिकाः । बाणेत्यादि बाणः सहचरः, सप्ताह्वः सप्तपर्णः, बन्धूकः बन्धुजीवकः, 'बाँदुली' इति लोके । ''मत्स्याम्लभोजिनः प्राच्या नित्यं चानूपसेविनः । श्लीपदं गलगण्डाश्च प्रायस्तेषु भवन्ति हि ॥ निम्नतोयगतान् मत्स्यान् भक्षयन्ति समुद्रजान् । प्रायशः कुष्ठिनस्तेन मनुष्या दक्षिणापथे ॥ तैलाम्लभोजिनो नित्यं गोधूमविदलाशिनः । भूयिष्ठमर्शसास्तेन खञ्जाश्चावन्तिजा नराः ॥ मांसकामाः सुराकामाः स्त्रीकामाः साहसे रताः । मागधास्तेन भूयिष्ठं दृश्यन्ते राजयक्ष्मिणः ॥ तीक्ष्णान्यन्नानि सेवन्ते बाह्लीकास्तु विशेषतः । अभिष्यन्दीनि मांसानि तथा धान्योदकानि च ॥ प्रकृत्या चाप्य-

१ 'पद्मकेशरं' इति पा० । २ एतदनन्तरं 'अवेमैदावह्नोऽत्यर्थं केवलं रासभोष्ट्रयोः' इत्यधिकं पठ्यते क्वचित्पुस्तके । ३ एतदनन्तरं 'कुर्वद्भिश्चातकान् हृष्टान् हंसान्मानसगामिनः । भीमसंतमसे सायं पथि दुर्गमकर्दमे ॥ जघनोद्वहनक्रान्ताः प्रमृष्टासारमण्डनाः । तडित्प्रभाहतालोकनिमीलन्नयनोत्पलाः ॥ गर्जितध्वनिना त्रस्तहृदयाश्चाभिसारिकाः । मेचकप्रोतसंकाशैर्मेघैरुच्चाम्बुभूषणैः ॥ जितहंसावलीकान्तिबलाकापंक्तिसारितैः । केकागर्जत्स्वल(गर्भगलो)द्वीवनृत्यद्बर्हिणवीक्षितैः' इत्यधिकः पाठ उपलभ्यते क्वचित्पुस्तके ॥

१ 'ततो वर्षासु' इति पा० । २ 'नद्यम्भःपूरोद्भग्नतटद्रुमाः' इति पा० । ३ 'निरुद्धर्क्षग्रहं' इति पा० । ४ 'निरुद्धर्क्षग्रहं' इति पा० । ५ '°पक्वशस्यविराजिता ।' इति पा० । ६ 'मजनिया' इति पा० । ७ 'बाह्लीकास्तु' इति पा० । ८ 'चाप्यभिष्यन्दान्' इति पा० ।

भिष्यण्णाः सेवन्ते मानवाः सदा । तेन बाह्लीकदेशेषु प्रायो व्याधिर्बलासकः ॥ नानादेशस्वभावा ये नानाहारास्तथैव च । नानाचारा नैकसत्त्वा धर्मिणोऽधर्मिणस्तथा ॥ तेषां सात्म्यं च सत्त्वं च ऋतुकालं च लक्षयेत् । भैषज्यं तु ततः कुर्यादिहं विज्ञाय देहिनाम् ॥ यस्य देशस्य यत्सात्म्यं यथास्य चरितं भवेत् । तेन भैषजसंयुक्तं भैषज्यमुपकल्पयेत् ॥ आरोग्यं तेन वर्णौजो बलं वीर्यं च जायते । वर्जनादृतुसात्म्यानां कृशो नित्यं सुदुर्बलः ॥ नित्यं रोगाभिभूतश्च पुमान् सात्म्यविवर्जनात् । तस्मात् सात्म्यं निषेवेत ह्यसात्म्यं परिवर्जयेत् ॥ सात्म्यसेवी जितक्रोधो नित्यं चापि जितेन्द्रियः । जीर्णभोजी मितस्वप्नः सुखं जीवत्यनामयः ॥ ऋतवः प्राग्विनिर्दिष्टा बलयोगस्वभावतः । तेषु गर्भा निषिक्तास्तु तथारूपास्तथायुषः । तान् विज्ञाय ततो बुद्ध्या प्रशस्ताश्चिन्दितानपि ॥ ततोऽस्याहारसंयुक्तं भेषजं चावचारयेत् । ततोऽस्यारोगता देहे बलं वीर्यं च वर्धते"—इति ॥ ३५ ॥ ३६ ॥

**स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः ॥**
**विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम् ॥३७॥**

इदानीमध्यायपरिसमाप्तौ व्यापत्संग्रहश्लोकः—स्वगुणैरित्यादि । स्वगुणैरतियुक्तेष्विति स्वगुणा ऋतूनामनन्तरोक्ताः, तैरतियुक्तेषु अतिशययुक्तेषु ऋतुषु, दोषा देहिनां कुप्यन्तीति सर्वत्र संबन्धनीयम्; अथवा ऋतूनां स्वगुणाः शीतोष्णवर्षाणि, तैरतियुक्तेषु । विपरीतेष्विति मन्दशीतादियुक्तेषु; अन्ये तु शीते उष्णम्, उष्णे शीतं, वर्षास्ववृष्टिरिति ऋतुवैपरीत्यमाहुः । विषमेष्वपीति वैषम्यं पुनः ऋतूनां वर्षालिङ्गं शरदि, शरल्लिङ्गं हेमन्ते, अन्यर्तुलिङ्गमन्यस्मिन्; एवमनुलोमविलोमाभ्यां शेषमृतुवैषम्यमुदाहार्यम्; अन्ये तु, ऋतूनां यथोक्तलिङ्गानामेकस्मिन्नृतौ सर्वेषां लिङ्गानां भावोऽभावश्चेति वैषम्यमाहुः । एतेन स्वगुणातियोगादृतूनां षड् व्यापत्तयः, विपरीतेषु षड्, विषमेषु च षडेव; इति ऋतूनामष्टादश व्यापत्तय उक्ताः ॥ ३७ ॥

**हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् ॥**
**वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात् ॥ ३८ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने ऋतुचर्या नाम षष्ठोऽध्यायः ॥ ६ ॥**

हरेद्वसन्ते श्लेष्माणमित्यादि सुगमम् ॥ ३८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने ऋतुचर्याध्यायः षष्ठः ॥ ६ ॥

---

## सप्तमोऽध्यायः

**अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । यन्त्रं शल्यानामाहरणोपायः, विधिः कल्पनं भेदो वा ॥ १ ॥ २ ॥

**यन्त्रशतमेकोत्तरम्; अत्र हस्तमेव प्रधानतमं यन्त्राणामवगच्छ, ( किं कारणं ? यस्माद्धस्तादृते यन्त्राणामप्रवृत्तिरेव) तदधीनत्वाद्यन्त्रकर्मणाम् ॥३॥**

यन्त्राणां संख्यामाह,—यन्त्रशतमित्यादि । एकोत्तरमेकाधिकम्; अन्ये तु शतशब्दोऽसङ्ख्येयवाची, उत्तरशब्दः प्रधानवाची; एतेन यन्त्राणामसंख्येयत्वमुक्तमेकस्य प्रधानत्वं चेति व्याख्यानयन्ति । अत्र यत् प्रधानं तदेव दर्शयति—अत्र हस्तमेवेत्यादि । प्रधानतममतिशयेन प्रधानम् । अवगच्छ जानीहि । यद्यप्यग्रे कङ्कमुखस्य प्रधानत्वमुक्तमस्ति, तथाऽपि हस्तस्य प्राधान्यं न विरुध्यते, प्रधानतमत्वात्तस्येति । प्रधानत्वे हेतुमाह—तदधीनत्वाद्यन्त्रकर्मणामिति ।—हस्तायत्तत्वाद्यन्त्रकर्मणामित्यर्थः । अन्ये त्वन्यथा पठन्ति,—'किं कारणं ? यस्माद्धस्तादृते यन्त्राणामप्रवृत्तिरेव, तदधीनत्वाद्यन्त्रकर्मणाम्' इति ॥ ३ ॥

**तत्र, मनःशरीराबाधकराणि शल्यानि; तेषामाहरणोपायो यन्त्राणि ॥ ४ ॥**

इदानीं यन्त्रव्याप्तिलक्षणपरिभाषां प्रतिपादयन्नाह—तत्र मन इत्यादि । तत्रेति तस्मिन् वक्ष्यमाणे शल्यविनिश्चये ॥ ४ ॥

**तानि षट्प्रकाराणि; तद्यथा —स्वस्तिकयन्त्राणि, संदंशयन्त्राणि, तालयन्त्राणि, नाडीयन्त्राणि, शलाकायन्त्राणि, उपयन्त्राणि, चेति ॥ ५ ॥**

तानीत्यादि । प्रकारो भेदः सादृश्यं च, तेषां षड्भेदाः स्वस्तिकादयः, सादृश्यानि वा षट् स्वस्तिकादीनां सादृश्यादेव । प्रतिज्ञातान् षट्प्रकारान् दर्शयितुमाह—तद्यथेत्यादि । स्वस्तिकं चतुरङ्गं पिष्टघटितं, तदाकृतीनि चतुरवयवानि स्वस्तिकयन्त्राण्युच्यन्ते । शेषाणामपि नामभिरेवाकृतयो ज्ञातव्याः ॥ ५ ॥

**तत्र चतुर्विंशतिः स्वस्तिकयन्त्राणि, द्वे संदंशयन्त्रे, द्वे एव तालयन्त्रे, विंशतिर्नाड्यः, अष्टाविंशतिः शलाकाः, पञ्चविंशतिरुपयन्त्राणि ॥ ६ ॥**

---

१ 'बाह्लिकदेशेषु' इति पा० ।　२ 'निर्हरेद्वायुं' इति पा० ।

१ 'नन्वनन्तरमुपयन्त्रेषु पठिष्यमाणो हस्तः कथं प्रधानतम इति पृच्छति–किं कारणमिति, उत्तरयति–यस्मादिति ।' इति डल्हण-चन्द्रः ॥ अयं पाठो हस्तलिखितपुस्तकेषु न पठ्यते ।

२ अनेकान्येव यन्त्राणि । यदाह वृद्धवाग्भटः,—"अतः कर्मवशात्तेषामियत्ताऽवधारणमशक्यम्"—इति । तस्मादत्रोक्ता यन्त्राणां शतसंख्या निदर्शनार्था, न त्वियत्तावधारणपरेति ज्ञेयम् ॥ ३ अत्राह वाग्भटः,—"नानाविधानां शल्यानां नानादेशप्रबाधिनाम् । आहर्तुमभ्युपायो यस्तद्यन्त्रं, यच्च दर्शने ॥ अर्शोभगन्दरादीनां, शस्त्रक्षाराग्नियोजने । शेषाङ्गपरिरक्षायां, तथा वस्त्यादिकर्मणि । घटिकालाबुशृङ्गं च जाम्बवौष्ठादिकानि च"—इति । ( वा. सू. स्था. अ. २५ )। ४ यानि यन्त्राणि मध्ये कीलबद्धत्वादुद्घाटितानि स्वस्तिका-(Cross)काराणि जायन्ते तानि स्वस्तिकयन्त्राणि । 'स्वस्तिकमिव स्वस्तिकं; दक्षिणस्य बाहोर्वामे गमनं, वामस्य दक्षिणे इति स्वस्तिकता' इत्यष्टाङ्गसंग्रहव्याख्यायामिन्दुः । ५ 'द्वे एव तालयन्त्रे' इत्येवकारेणास्य द्वित्वायोगव्यवच्छेदात्तत्सन्निधायनियमेन द्वित्वेनोपदिष्टस्य संदंशयन्त्रस्य बहुत्वमप्युररीकुर्वन्ति । अत एव शास्त्रमिदमनुवदता वाग्भटेन 'कीलबद्धविमुक्ताग्रौ' इत्यादिना चत्वारि संदंशयन्त्राण्युपदिष्टानि ।

तत्र चतुर्विंशतिरित्यादि । द्वे एव तालयन्त्रे इति, ननु एव-शब्दं विनाऽपि द्वे तालयन्त्रे लब्धे, तत् किमेवशब्देन ? उच्यते,- एवशब्दोऽयं स्वस्तिकादिषु निर्दिष्टां संख्यां व्यभिचारयति, तेन शल्याकृतिमवेक्ष्य स्वस्तिकादीनि यन्त्राण्यधिकान्यपि कार्याणि, तालयन्त्रे द्वे एव, एवं सति न दोषः ॥ ६ ॥

**तानि प्रायशो लौहानि भवन्ति, तत्प्रतिरूपकाणि वा तदलाभे ॥ ७ ॥**

किंद्रव्याणि पुनर्यन्त्राणि कर्तव्यानीत्याह—तानि प्रायश इत्यादि । लोहाः पञ्च सुवर्णादयः, तत्कृतानि लौहानीत्युच्यन्ते । तत्प्रतिरूपकाणि लोहप्रतिरूपकाणि वा लोहाभावे; तानि दन्तशृङ्गदारूणि यन्त्रयोनित्वेनोक्तानीति व्याख्यानयन्ति । ( लोहवेणुवृक्षसूत्रशृङ्गवल्कलतृणानि स्नायुप्रताना अश्मानश्चेत्येतेभ्यो यन्त्राणि निष्पाद्यन्ते ) ॥ ७ ॥

**तत्र, नानाप्रकाराणां व्यालानां मृगपक्षिणां मुखैर्मुखानि यन्त्राणां प्रायशः सदृशानि; तस्मात्तत्सारूप्यादागमादुपदेशादन्ययन्त्रदर्शनाद्युक्तितश्च कारयेत् ॥ ८ ॥**

तत्र यन्त्राणां समासेनाकृतिं प्रसिद्धसाधर्म्यादुदाहर्तुमिच्छुराह—तत्र नानाप्रकाराणामित्यादि । नानाप्रकाराणां विविधभेदानां, व्यालानां मृगपक्षिणां हिंस्राणां पशुविहङ्गमानां, मुखैः सदृशानि यन्त्राणां मुखानि, 'भवन्ति' इत्यध्याहारः । अत्र मृगाः सिंहादयः पशवः, पक्षिणो वायसादयः । व्यालानामिति पशूनामेव विशेषणं, नतु पक्षिणामित्येके । तस्मादित्यादि । तत्सारूप्यादिति व्यालपशुपक्षिमुखसादृश्यात् । आगमादिति शास्त्रात्, तथाहि,—'स्वस्तिकयन्त्राण्यष्टादशाङ्गुलानि' । उपदेशादिति वृद्धवैद्यवचनोपदेशात् । युक्तितश्चेति प्रयोजनतः, पुरुषवयोऽवयवादिविभागविचारतश्च ॥ ८ ॥

**समाहितानि यन्त्राणि खरश्लक्ष्णमुखानि च ॥**
**सुदृढानि सुरूपाणि सुग्रहाणि च कारयेत् ॥ ९ ॥**

गद्योक्तं श्लोकेनोपसंहरन्नाह,—समाहितानीत्यादि । समाहि-

एवं चोद्देशे संदंशयन्त्राणीति नानुपपन्नं, तद्गतभेदेन बहुत्वात्; तालयन्त्राणीति बहुवचनं तु नक्षत्रेषु फल्गुनीप्रोष्ठपदानामिवान्यतरस्यां भूम्नि विषयत्वादित्यवश्यं वक्तव्यं' इति हाराणचन्द्रः ।

१ अयं पाठः केषुचित्पुस्तकेषु नोपलभ्यते ।

२ व्यालमुखसादृश्यं तु स्वस्तिकयन्त्राणां मुखान्तर्भाग एव ज्ञेयं, न तु बाह्यतोऽपि ।

सिंहमुखस्वस्तिकयन्त्रम् ।

Lion Forceps ( लायन् फोर्सेप्स् )



३ 'प्रायशोग्रहणाद्विनाऽपि व्यालमुखसादृश्यं नाडीयन्त्रादीनि भवन्तीति दर्शयति, व्यालमुखसादृश्यं तु वक्ष्यमाणस्वस्तिकयन्त्राणामेव ।

तानि न्यूनातिरिक्तमानवर्जितानि । खरश्लक्ष्णमुखानि दृढमसृणमुखानि, अन्ये तु कार्यभेदात् कानिचित् खरमुखानि कानिचित् श्लक्ष्णमुखानि; तत्र खरमुखानि कङ्कमुखादीनि, श्लक्ष्णमुखानि सिंहमुखादीनि । सुदृढानि समुदायेन । सुग्रहाणि सुवारङ्गाणि ॥ ९ ॥

**तत्र स्वस्तिकयन्त्राणि-अष्टादशाङ्गुलप्रमाणानि, सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्जारशृगालमृगैर्वारुककाककङ्ककुररचासभासशशघात्युलूकचिल्लिश्येनगृध्रक्रौञ्चभृङ्गराजाञ्जलिकर्णावभञ्जननन्दीमुखमुखानि, मसूराकृतिभिः कीलैरवबद्धानि, मूलेऽङ्कुशवदावृत्तवारङ्गाणि, अस्थिविदष्टशल्योद्धरणार्थमुपदिश्यन्ते ॥ १० ॥**

तत्र स्वस्तिकयन्त्राण्येव प्रमाणाकाराभ्यां दर्शयन्नाह—तत्र स्वस्तिकेत्यादि । तत्र सिंहादयो नव व्यालमृगाः, काकादयः पञ्चदश पक्षिणः, एषां मुखसादृश्याच्चतुर्विंशतिः । तरक्षुः 'जरख' इति लोके; ऋक्षः भल्लूकोऽतिलोशमः, 'रींछ' इति लोके; द्वीपी चित्रव्याघ्रः, 'चित्रक' ( चिता ) इति लोके; मार्जारः बिडालः; मृगैर्वारुकः 'हरिणद्रु' इति लोके; कङ्कः कङ्कमल्लो दीर्घचञ्चुर्महाप्रमाणः, दद्दा(ग्ध)काकमन्ये; कुररश्चिरिल्लाकारो नादोत्थापितमत्स्यः, 'कुरल' इति लोके; भासः गोकुलचारी गृध्रविशेषः; शशघाती, 'शशारि' इति लोके; चिल्लिः 'चिल्ह' इति लोके; श्येनः सिचानो गरुडान्वये; गृध्रः महाप्रमाणः स तु योजनदृष्टिरामिषाशी च; क्रौञ्चः 'कुरञ्ज' ( कोंचि ) इति लोके; भृंगराजः 'कालचटक' इति पारियात्रीयाः, कान्यकुब्जास्तु 'पेंगि' इति; अञ्जलिकर्णावभञ्जनयोः सुश्रुतचरकादिटीकासु पर्यायो न दृश्यते तस्माद्देशान्तरे लोकादवगन्तव्यौ; नन्दीमुखः पत्राटी । मसूराकृतिभिः कीलैः शल्यैरवबद्धानि कीलितानि, 'स्कन्धप्रदेशे' इति वाक्यशेषः; अन्ये तु 'तृतीये भागे' इति वाक्यशेषं मन्यन्ते । मूलेऽङ्कुशवदावृत्तवारङ्गाणीति अङ्कुशवदावृत्तं वक्रं वारङ्ग

अन्ययन्त्रदर्शनादिति अन्ययन्त्रदर्शनं तु विनाऽपि सारूप्यं शास्त्रवचनं वृद्धोपदेशं वा प्रामाणिककृतमिदं यन्त्रमिति कृत्वा यन्त्रकरणं प्रयोजयतीति हेत्वन्तरं भवति' इति चक्रः ।

१ 'समाहितानि यथास्थानं निविष्टावयवानि' इति चक्रः ।

२ '०भृङ्गराजाञ्जलीककर्णावभञ्जन०' इति पा० ।

३ मसूराकृतिभिः कीलैरिति मसूराकारप्रान्तैः कीलैरित्यर्थः । तथा च वाग्भटः,—"मसूराकारपर्यन्तैः कण्ठे बद्धानि कीलकैः"— इति ॥

४ 'वारङ्गं ग्रहणस्थानम्' (Handle–हेन्डल) इत्यष्टाङ्गसङ्ग्रहव्याख्यायामिन्दुः । 'वारङ्गः खड्गादिमुष्टौ' इति शब्दार्थचिन्तामणिः । 'आवृत्तवारङ्गाणि भुग्नवारङ्गाणि' इति चक्रः ।

५ 'तेषां सिंहव्याघ्रभुजङ्गमकरादिमुखानि दृढवारङ्गेषु प्रयोजयेत्, इतरेषु तु व्रणाकारानुरोधेन कङ्ककाककुररादिमुखानि' इत्यष्टाङ्गसंग्रहे ( सू. अ. ३४ ) वृद्धवाग्भटः ।

६ अस्याग्रे 'अञ्जलीको जलकुक्कुटः, कर्णावभञ्जनः तित्तिरिः' इत्यधिकः पाठ उपलभ्यते क्वचित्पुस्तके ।

ग्रहणस्थानं येषां तानि तथोक्तानि । अस्थिविदष्टम् अस्थिनिमग्नम् ॥ १० ॥

**सनिग्रहोऽनिग्रहश्च संदंशौ षोडशाङ्गुलौ भवतः, त्वङ्मांससिरास्नायुगतशल्योद्धरणार्थमुपदिश्येते[2] ॥ ११ ॥**

सनिग्रहोऽनिग्रहश्चेति सनिग्रहानिग्रहौ द्वौ संदंशौ, एकः सनिग्रहः सवारङ्गो नापितस्येव, अन्यश्चानिग्रहोऽनिबन्धनः सुवर्णकारस्येव; अन्ये तु सनिग्रहो लोहकारसंदंश इव कीलबद्धः इति मन्यन्ते ॥ ११ ॥

**तालयन्त्रे-द्वादशाङ्गुले मत्स्यतालवदेकतालद्वितालके, कर्णनासानाडीशल्यानामाहरणार्थम् ॥१२॥**

१ 'सनिबन्धनोऽनिबन्धनश्च संदंशौ' इति हस्तलिखितपुस्तके पाठ उपलभ्यते, वृद्धवाग्भटेऽपि "सनिबन्धनो निर्निबन्धनश्च संदंशौ द्वौ षोडशाङ्गुलौ भवतः"—इत्येव पठ्यते। सनिग्रहसंदंशयन्त्रं संप्रति आङ्ग्लभाषायां Dissection forceps with catch इति नाम्ना प्रसिद्धम्, अनिग्रहसंदंशयन्त्रं च Dissection forceps without cacth इति नाम्ना प्रसिद्धम् ॥

सनिग्रहसंदंशयन्त्रम् ।





अनिग्रहसंदंशयन्त्रम् ।



२ वृद्धवाग्भटे संदंशद्वयमधिकमुक्तम् । यथा,—"तथाऽन्यः संदंशः षडङ्गुलोऽर्धाङ्गुलविस्तृतो वक्रद्विबाहुरङ्गुष्ठाङ्गुलिप्रान्तसमागमाकृतिः सूक्ष्मशल्याक्षिपक्ष्मव्रणाधिमांसहरणे । तद्वच्च मुचुण्डी, सा तु ऋजुश्लक्ष्णा सूक्ष्मदन्ता सक्तद्विभुजा मूले रुचक( teeth )नद्धा वलयपीडनाच्छिन्नाशेषगम्भीरव्रणाधिमांसहरणे" ( अष्टाङ्गसंग्रहः, सूत्रस्थानम्, अध्यायः ३४ )—इति ॥

३ ये सनिग्रहसंदंशयन्त्रं मध्ये कीलबद्धं मन्यन्ते तेषां मते तस्य स्वस्तिकयन्त्राद्भेदो दुरुपपाद एव । संदंशयन्त्रं सामान्यत आङ्ग्लभाषायां Pincers 'पिन्सर्स्' इति नाम्ना प्रसिद्धम् ।

४ तालयन्त्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'स्कूप्'(Scoop) इत्याख्येन यन्त्रेण सह सादृश्यमुपलभ्यते । तालपदं च लोके गर्तवाचकं ह्रदवाचकं वा दृष्टम्–यथा भीमतालादिपदे । 'मत्स्यतालवदिति मत्स्यचक्रवदेकतालमनवबद्धे शल्ये, द्वितालं तु अवबद्धे शल्ये' इति चक्रः । 'मत्स्यगलतालकवत्' इत्यष्टाङ्गसंग्रहे ।

तालयन्त्रम्



तालयन्त्रे इत्यादि । तालसंज्ञके द्वे यन्त्रे, द्वे अपि द्वादशाङ्गुलप्रमाणे । तयोराकारमाह—मत्स्यतालवदिति । तालमत्र शकलमाहुः, मत्स्यस्य मीनस्य, तालतुल्ये प्रतनुमुखे इत्यर्थः । के ते द्वे इत्याह—एकतालद्वितालके इति । अत्र तालशब्देन प्रदेश उच्यते; एतेन एकं तालम् एकः प्रदेशो यस्य तदेकतालं, द्वे ताले द्वौ प्रदेशौ यस्य तद्द्वितालकम्; एतेन मत्स्यस्य शकलवत्प्रतनुमुखैकप्रदेशमेकतालं, मत्स्यशकलवत्प्रतनुमुखद्विप्रदेशं द्वितालमित्युक्तम् । परिणाहस्तु कर्णादिप्रवेशी ज्ञेयः । अन्ये तु 'मत्स्यतालुकवदेकतालकद्वितालके' इति पठन्ति, व्याख्यानयन्ति च—मत्स्योऽत्र भेदुलिर्नाममत्स्यः, तस्य लौहमयतालकाकारं मुखं भवति, अतस्तन्मुखार्धाकारं यन्त्रमेकतालकं, सर्वमुखाकारं द्वितालकं, तालकोऽत्रापवारकादिकपाटसन्धिबन्धनं लौहमयमुच्यते । कर्णनासाशल्यं गूथकेशादि ॥ १२ ॥

**नाडीयन्त्राणि-अनेकप्रकाराणि, अनेकप्रयोजनानि, एकतोमुखान्युभयतोमुखानि च; तानि स्रोतोगतशल्योद्धरणार्थं, रोगदर्शनार्थम्, आचूषणार्थं, क्रियासौकर्यार्थं चेति; तानि स्रोतोद्वारपरिणाहानि, यथायोगदीर्घाणि च। तत्र भगन्दरार्शोव्रणबस्त्युत्तरबस्तिमूत्रवृद्धिदकोदरधूमनिरुद्धप्रकशसन्निरुद्धगुदयन्त्राण्यलाबूश्टङ्गयन्त्राणि चोपरिष्टाद्वक्ष्यामः ॥ १३ ॥**

१ 'नाडीवन्मध्यशुषिराणि नाडीयन्त्राणि' इति चक्रः । नाडीयन्त्रं संप्रति आङ्ग्लभाषायां 'ट्युब्युलर्' (Tubular) इति नाम्ना प्रसिद्धम् ॥

२ रोगदर्शनार्थं व्यवह्रियमाणानि नाडीयन्त्राणि आङ्ग्लभाषायां 'स्पेक्युलम्' (Speculum) इति नाम्ना प्रसिद्धानि ॥

३ आचूषणार्थं व्यवह्रियमाणानि यन्त्राणि आङ्ग्लभाषायां सामान्यतः Aspirator's 'ॲस्पिरेटर्स्' इति नाम्ना प्रसिद्धानि ।

४ भगन्दरयन्त्रादीनां तन्त्रान्तरोक्तलक्षणादिकं, प्रतिकृतिः, संप्रति पाश्चात्यैस्तदर्थं व्यवह्रियमाणयन्त्रैः सह सादृश्यादिकं च तत्र तत्रैव दर्शयिष्यामः ॥

५ व्रणबस्तियन्त्रलक्षणं वृद्धवाग्भटे एवं पठ्यते; यथा,—"नाडीव्रणप्रक्षालनाभ्यञ्जनयन्त्रे षडङ्गुले बस्तियन्त्राकारे मुखतोऽकर्णिके मूलमुखयोरङ्गुष्ठकलायप्रवेशस्रोतसी मूले निबद्धमृदुचर्मणी च—"इति ॥

व्रणप्रक्षालनार्थं संप्रति व्यवह्रियमाणं व्रणबस्तियन्त्रम् ।

Syringe ( सिरिञ्ज् )



६ वृद्धवाग्भटे त्वेतानि नाडीयन्त्राण्यधिकान्युक्तानि । यथा,—"कण्ठशल्यदर्शनार्थं नाडीं दशाङ्गुलायतां पञ्चाङ्गुलपरिणाहाम् । द्विकर्णस्य तु वारङ्गस्य संग्रहार्थं त्रिच्छिद्रमुखां नाडीं तत्प्रमाणतः कुर्यात्, तथा चतुष्कर्णस्य पञ्चच्छिद्रमुखाम् । शल्यनिर्घातनीं तु पद्मकर्णिकाकारशीर्षां द्वादशाङ्गुलां त्र्यङ्गुलसुषिराम् । तथाऽङ्गुलित्राणक(फिंगर् गार्ड् Finger guard)मङ्गुलिप्रवेशनं(शितं) किंचित्स्थूलवृत्तोष्ठ-

नाडीयन्त्राण्यपीत्यादि । नाडी(ली)यन्त्राणीति नाडी(ली)वन्मध्यच्छिद्राणि । एकतोमुखानि रक्ताहरणार्थान्यलावूभगन्दरार्शोयन्त्रादीनि; उभयतोमुखानि बस्त्युत्तरबस्तिधूमयन्त्रादीनि । तानि स्रोतोगतशल्योद्धरणार्थमिति तानि नाडीयन्त्राणि स्रोतोगतशल्योद्धरणप्रयोजनानि; तथाहि,—'लाक्षाशल्ये कण्ठासक्ते कण्ठे नाडीं दत्त्वा तप्तया लोहशलाकयाऽऽकर्षयेत्-' ( सू. अ. २७ ) इत्यादिकम् । रोगदर्शनार्थमिति रोगा आभ्यन्तरार्शःप्रभृतयः । आचूषणार्थमिति अस्थिगतवायोर्दुष्टरक्तस्तन्ययोराकर्ष(चूष)णार्थम् । क्रियासौकर्यार्थमिति आभ्यन्तरार्शःप्रभृतिषु शस्त्रक्षाराग्न्यादिक्रियायाः सुकरत्वाय सुखकरणायेत्यर्थः । तानि स्रोतोद्वारपरिणाहानीति वर्तुलत्वेन स्रोतोद्वारतुल्यानि । ननु, 'विंशतिर्नाड्यः' इति पूर्वमेवोक्तम्, इह तु भगन्दरार्शोव्रणेत्यादिना नाडीयन्त्राण्यलावुशृङ्गान्तानि द्वादश, तत् कथं विंशतिः पूर्यते ? उच्यते, भगन्दरयन्त्रे द्वे एकमेकच्छिद्रम्, अपरं द्विच्छिद्रम्; अर्शोयन्त्रे अपि द्वे एकच्छिद्रद्विच्छिद्रभेदेन; व्रणयन्त्रमेकं व्रणच्छिद्रायामपरिणाहं; बस्तिनेत्रं चतुर्विधं वयोभेदेन, अन्ये त्रिविधमाहुः; उत्तरबस्तिनेत्रं द्विविधं पुंसां स्त्रीणां च, एके त्रिविधमाहुः; मूत्रवृद्धिदकोदरयोर्द्वे-मूत्रवृद्धिस्रावणार्थमेकं, दकोदरस्रावणार्थं चैकं; धूमनेत्राणि त्रीणि एकं वैरेचनिकम्, अपरं स्नैहिकम्, अन्यच्च प्रायोगिकं; निरुद्धप्रकशयन्त्रमेकं; सन्निरुद्धगुदयन्त्रमेकम्; अलावुयन्त्रमेकं, शृङ्गयन्त्रमेकम्; एवं विंशतिर्नाडीयन्त्राणि ॥ १३ ॥

**शलाकायन्त्राण्यपि नानाप्रकाराणि, नानाप्रयोजनानि, यथायोगपरिणाहदीर्घाणि च; तेषां गण्डूपदसर्पफणशरपुङ्खबडिशमुखे द्वे द्वे, एषणव्यूहनचालनाहरणार्थमुपदिश्येते; मसूरदलमात्रमुखे द्वे किंचिदानताग्रे स्रोतोगतशल्योद्धरणार्थं; षट् का-**

मूर्ध्वाधश्छिद्रं गोस्तनाकृति चतुरङ्गुलं दान्तं शार्ङ्गं वार्क्षं वा, तद्गुडेन सूत्रेण मणिबन्धप्रतिबद्धमास्यविवृतौ योज्यम् । योनिव्रणदर्शने यन्त्रं षोडशाङ्गुलं मध्ये सुषिरं चतुर्भित्तं चतुःशलाकं संचारिण्या मुद्रयोर्ध्वं निबद्धमुत्पलमुकुलवक्त्रं मूले शलाकाक्रमणादूर्ध्वविकासि च" । एषां मध्ये वाग्भटोक्तयोनिव्रणेक्षणयन्त्रस्य संप्रति पाश्चात्यैर्योन्येक्षणार्थं व्यवहियमाणेन 'वेजिनल् स्पेक्युलम्-Vaginal speculum' इत्याख्येन यन्त्रेण सह सादृश्यमुपलभ्यते । एतच्च यन्त्रं संप्रति चतुर्भित्तं द्विभित्तं वृत्तमित्याद्यनेकविधं व्यवहियते, तेषां मध्ये चतुर्भित्तस्येयं प्रतिकृतिः ।

योन्येक्षणयन्त्रम् ।



१ स्तन्यचूषणार्थं संप्रति पाश्चात्यैः 'ब्रेस्ट् पम्प्' वा 'ब्रेस्ट् रिलीवर्-Breast pump, or reliver' इत्याख्यं नाडीयन्त्रमुपयुज्यते ।

२ "अर्शोयन्त्रे द्वे स्त्रीपुंसावधिकृत्य; बस्तियन्त्राणि प्राधान्येन चत्वारि षडष्टदशद्वादशाङ्गुलप्रमाणभेदात्; उत्तरबस्तियन्त्राणि पुंसां द्वे मेढ्रायामचतुर्दशाङ्गुलत्वभेदात्, स्त्रीणां द्वे मूत्रापत्यमार्गोपयोगित्वभेदात्, कन्यानां चैकमिति पञ्च; दकोदरयन्त्रमेकं; धूमयन्त्राणि पञ्च; तत्र त्रीणि प्रायोगिकस्नैहिकवैरेचनिकभेदात्, एकं कासघ्नवामनीययोरविशेषात्, एकं च व्रणधूपनार्थं; निरुद्धप्रकशयन्त्रम्, अलावुयन्त्रं, शृङ्गयन्त्रं चैकैकमिति विंशतिर्नाडीयन्त्राणि" इति हाराणचन्द्रः ।

१ बस्त्यर्थं प्राचीनैर्व्यवहियमाणस्य यन्त्रस्य संप्रति पाश्चात्यैर्व्यवहियमाणेन 'Ball syringe बॉल् सिरीञ्' इत्याख्येन यन्त्रेण सादृश्यमुपलभ्यते ।

२ गण्डूपदमुखमेषणीयन्त्रमाङ्ग्लभाषायां 'ब्लन्ट् प्रोब्-Blunt Probe' इति नाम्ना प्रसिद्धम् ।

एषणी ।

३ 'सर्पफणमुखे ( Retractor and veetes ) द्वे' इति एकं षोडशाङ्गुलमपरं द्वादशाङ्गुलमिति भेदेन सर्पफणमुखस्य द्वैविध्यं ज्ञेयं; यदाह वाग्भटः,—"उभौ तेषां षोडशद्वादशाङ्गुलौ । व्यूहनेऽहिफणावक्त्रौ—" ( सू० अ० २६ ) इति ॥

४ 'शरपुङ्खमुखे द्वे' इति एकं दशाङ्गुलमपरं द्वादशाङ्गुलमिति भेदेन शरपुङ्खमुखस्य द्वैविध्यं ज्ञेयम् । यदाह वाग्भटः,—"द्वौ दशद्वादशाङ्गुलौ । चालने शरपुङ्खास्यौ—" इति ॥

५ 'बडिशमुखे द्वे' इति स्वानतनात्यानतभेदेन बडिशमुखस्य द्वैविध्यं ज्ञेयम् । बडिशमाङ्ग्लभाषायां 'हुक्-Hook' इति नाम्ना प्रसिद्धम् ॥

बडिशं नात्यानतम् ।



बडिशं स्वानतम् ।



६ हाराणचन्द्रस्तु 'गण्डूपदशरपुङ्खसर्पफणबडिशमुखे द्वे द्वे' इति पठति, व्याख्याति च-'एषणादिकर्मैषां यथायोगमेव बोध्यं न तु यथासंख्यम्' इति ।

७ 'मसूरदलमात्रमुखे द्वे' इति एकमष्टाङ्गुलमपरं नवाङ्गुलं; यदाह वाग्भटः,—"स्रोतोभ्यः शल्यहारिणी ॥ मसूरदलवक्त्रे द्वे स्यातामष्टनवाङ्गुले—" इति ।

८ अत्राह वाग्भटः,—"कार्पासविहितोष्णीषाः शलाकाः षट्

**र्पासकृतोष्णीषाणि, प्रमार्जनक्रियासु; त्रीणि दर्व्याकृतीनि खलुमुखानि, क्षारौषधप्रणिधानार्थं; त्रीण्यन्यानि जाम्बववदनानि, त्रीण्यङ्कुशवदनानि, षडेवाग्निकर्मस्वभिप्रेतानि; नासार्बुदहरणार्थमेकं कोलास्थिदलमात्रमुखं खलुतीक्ष्णौष्ठं; अञ्जनार्थमेकं कलायपरिमण्डलमुभयतो मुकुलाग्रं; मूत्रमार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति ॥ १४ ॥**

शलाकायन्त्राणि निर्देष्टुमाह—शलाकायन्त्राण्यपीत्यादि। यथायोगपरिणाहदीर्घाणीति परिणाहो वर्तुलता। तेषां शलाकायन्त्राणां मध्ये। गण्डूपदेत्यादौ मुखशब्दो गण्डूपदादिभिः सह प्रत्येकं संबध्यते; तेन गण्डूपदमुखे द्वे, सर्पफणमुखे द्वे, एवं शेषयोरपि। शरपुङ्खः शरगुणसन्धानस्थानम्। बडिशो मत्स्यबन्धनम्। तेषां चतुर्णां गण्डूपदमुखादीनां यथासंख्येन प्रयोजनमाह,—एषणेत्यादि। —एषणं गम्भीरपाकादौ पूयाद्यन्वेषणं; व्यूहन-

प्रमार्जने। पायावासन्नदूरार्थे द्वे दशद्वादशाङ्गुले ॥ द्वे षट्सप्ताङ्गुले घ्राणे, द्वे कर्णेऽष्टनवाङ्गुले—" इति ॥

१ अत्राह वाग्भटः,—"अष्टाङ्गुला निम्नमुखास्तिस्रः क्षारौषधक्रमे। कनीनीमध्यमानामीनखमानसमैर्मुखैः—" इति ॥ एतच्छलाकायन्त्रमाङ्ग्लभाषायां 'Spoon-स्पून्' इति नाम्ना प्रसिद्धम्। 'खलुमुखानीति खलुमौषधमर्दनपात्रमिव मुखं येषां तानि तथोक्तानि' इति डाराणचन्द्रः।

२ अत्राह वाग्भटः,—"शलाकाजाम्बवौष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् ॥ युञ्ज्यात् स्थूलाणुदीर्घाणाम्—" इति ॥

३ अस्य यन्त्रस्य संप्रति 'Sharp Spoon शार्प् स्पून्' इति नाम्ना व्यवह्रियमाणयन्त्रेण सह सादृश्यमुपलभ्यते। "नासेत्यादिनोक्तमप्यग्निकर्मस्वभिप्रेयते; यदुक्तं "कोलास्थिदलतुल्यास्या नासाशोऽर्बुदहृद्भवेत् (वा. सू. अ. २५)" इति" डाराणचन्द्रः।

४ मूत्रमार्गशोधनार्थं संप्रति पाश्चात्यैः 'युरिथ्रल् साउण्ड्–Urethral Sound' इत्याख्यं शलाकायन्त्रं, 'कैथेटर्–Catheter' इत्याख्यं नाडीयन्त्रं च व्यवह्रियते ॥

कैथेटर।



५ वाग्भटे कर्णशोधनं, गर्भशङ्कुः, अन्त्रवर्ध्मशलाकेति शलाकायन्त्रत्रयमधिकमुक्तम्। यदाह—"कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननम्"—इति। तथा "नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः। अष्टाङ्गुलायतस्तेन मूढगर्भं हरेत् स्त्रियाः—" इति। गर्भशङ्कोः संप्रति पाश्चात्यैर्मूढगर्भाहरणार्थं व्यवह्रियमाणेन 'क्रोचेट्–Crotchet' इत्याख्येन यन्त्रेण सह सादृश्यमुपलभ्यते। तथा—"शलाकामन्त्रवर्ध्मनि। मध्योर्ध्ववृत्तदण्डां च मूले चार्धेन्दुसन्निभाम्" इति। अन्त्रवर्ध्मशलाका अप्राप्तफलकोशायामन्त्रवृध्यां दाहार्थमुपयुज्यते। यथोक्तं चिकित्सिते (अ. १९) 'तत्र या वंक्षणस्था तां दहेदर्धेन्दुवक्रया' इति।

६ 'गण्डूपदेत्यादौ सादृश्यं च यन्त्रमुखे ज्ञेयम्' इति चक्रः।

७ 'अश्मरीनिर्दिष्टं यन्त्रमग्रकं सर्पफणमुखमेव' इति चक्रः।

मूर्च्छीकरणं छित्त्वोत्तुण्डितस्योद्धरणार्थं, वारङ्गेणानुसरणमित्येके। मसूरदलेति मसूरस्य दलितस्य निस्तुषखण्डं दलमित्युच्यते। किंचिदानताग्रे इति मनागवक्राग्रे। षट् कार्पासकृतोष्णीषाणीति तूलवेष्टिताग्राणि, प्रमार्जनक्रियासु प्रोञ्छनक्रियासु। त्रीणि दर्व्याकृतीनीति दर्वी दारुहस्तकः। खलुमुखानि निम्नमुखानि। जाम्बववदनानीति जम्बुफलमुखाकृतीनि। कोलास्थिदलमात्रमुखमिति बदरास्थिमज्जविदलप्रमाणं; खलुतीक्ष्णोष्ठमिति खलुं निम्नं मध्ये बोद्धव्यं, तीक्ष्णौष्ठं लन्ते। कलायपरिमण्डलमिति कलायमात्रं परितो मण्डलं वर्तुलम्, उभयतो मुकुलाग्रमिति द्वयोरन्तयोः कलिकावदग्रं; दैर्घ्येण त्वष्टाङ्गुलं, शलाक्योक्तत्वात्। गण्डूपदमुखादीनामङ्कुशवदनान्तानां शलाकायन्त्राणां तुल्याकृतित्वेऽपि द्विलषट्त्वादीनि कार्यापेक्षीणि ॥ १४ ॥

**उपयन्त्राण्यपि—रज्जुवेणिकापट्टचर्मान्तवल्कललतावस्त्राष्ठीलाश्ममुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तनखमुखबालाश्वकटकशाखाष्ठीवनप्रवाहणहर्षायस्कान्तमयानि क्षाराग्निभेषजानि चेति ॥ १५ ॥**

**एतानि देहे सर्वस्मिन् देहस्यावयवे तथा ॥**
**संधौ कोष्ठे धमन्यां च यथायोगं प्रयोजयेत् ॥ १६ ॥**

उपयन्त्राणि निर्देष्टुमाह—उपयन्त्राण्यपीत्यादि। उपयन्त्राणीति यन्त्रसमीपवर्तीनि, हीनयन्त्राणीत्यन्ये। रज्जुः मुञ्जादिविरचितो गुणः; वेणिका गुणत्रयप्रथिता; चर्मान्तं चर्मावयवः, अत्र 'वर्मान्तम्' इत्येके पठन्ति, वर्म सन्नाहः; वल्कलं पलाशोदुम्बरादीनां त्वक्, सा च भग्नादिबन्धनयन्त्रार्थं; लता प्रतानिनी 'वेलि' इति लोके; वस्त्रं कर्पटः; अष्ठीलाश्मेति अष्ठीला दीर्घवर्तुलपाषाणः, अन्ये लौहकाराणां लौहीं दीर्घवर्तुलभाण्डिकामाहुः, तया तुल्योऽश्मा अष्ठीलाश्मा, स चाष्ठीलाश्मा प्रसिद्धः; मुद्गरः काष्ठादिकृतः, अयमस्थिविदष्टशल्यस्य चालनार्थं; पाणिपादतलमिति तलशब्दः पाणिपादाभ्यां सह प्रत्येकं संबध्यते; अश्वकटकः घोटककविकाचूडकं, शाखा वृक्षस्य, अनयोः प्रयोजनं शल्यापनयनीये वक्ष्यति; ष्ठीवनं श्लेष्मादिनिरसनं; प्रवाहणं वमनविरेचनाश्रुप्रवर्तनादि यथासंख्यं कफपित्ताक्षिरजःशल्यादिषु; हर्षः तुष्टिः; अयस्कान्तः पाषाणविशेषः, आकर्षकद्रावकचुम्बकभ्रामकभेदाच्चतुर्विधः। इतिशब्दः समाप्तौ, समाप्तानि यन्त्राणीति। स्वभावपाचनप्रमार्जनादयोऽनवबद्धशल्योद्धरणहेतवो रज्ज्वाद्युपयन्त्रेष्वेवान्तर्भूता इति पृथङ्नोक्ताः। तद्यथा—प्रवाहणग्रहणेन तावदश्रुक्षवथुप्रभृतीनामप्यत्र ग्रहणमित्यादिकं बोद्धव्यम् ॥ १५ ॥ १६ ॥

१ 'व्यूहनं तु चूर्णिताश्मर्यादीनां संग्रहणं' इति डाराणचन्द्रः। 'व्रणौष्ठयोः सन्निहितीकरणम्' इति गणनाथसेनः, 'विपरीतस्थानां मांसादीनां सम्यग्रचनम्' इत्यष्टाङ्गसंग्रहव्याख्यायामिन्दुः, 'व्यूहनं प्रसृतमांसादीनां यथास्थानं विन्यासः' इति हेमाद्रिः।

२ 'अत्र शलाकायन्त्रेषु तुल्यरूपाणामपि यन्त्राणां षडादिसंख्यानियमः प्रावस्तावत्तैव कर्मसमाप्तिं सूचयति' इति चक्रः।

३ 'उपमितानि यन्त्रैरित्युपयन्त्राणि' इति डाराणचन्द्रः। 'अनुयन्त्राणि' इति वाग्भटे पाठः।

**यन्त्रकर्माणि तु—निर्घातनपूरणबन्धनव्यूहनवर्तनचालनविवर्तनविवरणपीडनमार्गविशोधनविकर्षणाहरणाञ्छनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणदारणर्जूकरणप्रक्षालनप्रधमनप्रमार्जनानि चतुर्विंशतिः ॥ १७ ॥**

कानि पुनर्यन्त्राणां कर्माणीत्याह,—यन्त्रकर्माणि त्वित्यादि । निर्घातनम् इतश्चेतश्च विचाल्य निर्हरणम्, इतश्चेतश्च घट्टनमित्येके; पूरणं बस्तिनेत्रप्रभृतिभिस्तैलादिना; बन्धनं रज्ज्वादिना; व्यूहनम् अत्रैवाध्याये व्याख्यातं प्राक्; वर्तनं[1] विसृतस्य वर्तुलीकरणं; चालनं स्थानात् स्थानान्तरनयनम्, अन्ये शल्यकम्पनमाहुः; विवर्तनं कर्णवायोर्निष्कासयितुमिष्टस्य कर्णलग्नस्य पुनर्निवर्तनम्, अन्ये यन्त्रस्य भ्रामणमन्तरे वा; विवरणं प्रकाशनं, मांसच्छेदावकाशदानेन विवरणमित्येके, 'विवरणं प्रसारणम्' इति लक्ष्मणटिप्पणकेनोक्तं; पीडनं व्रणस्य पूयादिनिर्गमनार्थमङ्गुल्यादिना; मार्गविशोधनं मूत्रपुरीषसङ्गे; विकर्षणं विगृह्य कर्षणम्, अन्ये मांसादिप्रतिबद्धशल्यस्य मोचनमाहुः; आहरणमानयनम्; आञ्छनम् ईषन्मुखानयनम्, ईषन्मुखे आनयनमित्यर्थः; उन्नमनमधःस्थितस्य शरकर्णादेरूर्ध्वं नयनं; विनमनं निम्री-(नम्री)करणं; भञ्जनं शरकर्णादेरामर्दनं, समन्ततो मर्दनमित्यन्ये; उन्मथनं प्रनष्टस्य शल्यस्य मार्गे शलाकादिभिरालोडनम्; आचूषणं विषदुष्टस्तन्यरुधिरेषु शृङ्गालाबूभ्यां मुखेन वा; एषणं गण्डूपदमुखेन गतिव्रणोत्सङ्गशल्यादीनां; दारणं शरकर्णादिद्विधाकरणम्; ऋजूकरणं कुटिलशल्यस्य; प्रक्षालनं तोयादिभिर्व्रणोत्सङ्गादीनां; प्रधमनं श्लेष्मशल्यसङ्गे नासिकायां नाड्या चूर्णक्षेपणं; प्रमार्जनं प्रोञ्छनं बालाङ्गुलिवस्त्रैरक्षिरजःशल्यादिषु ॥१७॥

**स्वबुद्ध्या चापि विभजेद्यन्त्रकर्माणि बुद्धिमान् ॥**
**असंख्येयविकल्पत्वाच्छल्यानामिति निश्चयः १८**

इदानीं नानाविधशल्याकारेण कर्मणां बहुत्वात् संख्यायामनियमं दर्शयन्नाह—स्वबुद्ध्या चापीत्यादि ॥ १८ ॥

**तत्र, अतिस्थूलम्, असारम्, अतिदीर्घम्, अतिह्रस्वम्, अग्राहि, विषमग्राहि, वक्रं, शिथिलम्, अत्युन्नतम्, मृदुकीलं, मृदुमुखं, मृदुपाशम्, इति द्वादश यन्त्रदोषाः ॥ १९ ॥**

यन्त्रदोषान् वक्तुमाह—तत्रातिस्थूलमित्यादि । असारमगुरुलोहादिघटितम् । अग्राहि विकृतमुखम् । विषमग्राहि एकदेशग्राहि । वक्रम् अनृजु । शिथिलं पीडनाक्षमम् । अत्युन्नतम् उच्छ्रितकीलकादि । मृदुकीलं दुर्बलशल्यम् । अन्ये तु 'वक्रशिथिलात्युन्नतमृदुकीलं' इति पठन्ति, व्याख्यानयन्ति च—अत्र कीलशब्दो वक्रादिभिः सह प्रत्येकं संबध्यते; तेन वक्रकीलमित्यादि योज्यम् । मृदुपाशं तनुपाशम् । मृदुमुखं शल्यपीडनासहमुखम् । एते प्रायेण स्वस्तिकयन्त्राणां दोषा बोद्धव्याः ॥ १९ ॥

**एतैर्दोषैर्विनिर्मुक्तं यन्त्रमष्टादशाङ्गुलम् ॥**
**प्रशस्तं भिषजा ज्ञेयं तद्धि कर्मसु योजयेत् ॥२०॥**

यन्त्रस्य प्रशस्तत्वं वक्तुमाह—एतैर्दोषैरित्यादि ॥ २० ॥

**दृश्यं सिंहमुखाद्यैस्तु गूढं कङ्कमुखादिभिः ॥**
**निर्हरेत[1] शनैः शल्यं शास्त्रयुक्तिव्यपेक्षया ॥ २१ ॥**

स्वस्तिकयन्त्राणां विषयभेदं दर्शयन्नाह—दृश्यमित्यादि । दृश्यं दर्शनगतं शल्यं, गूढम् अदृश्यम् । कङ्कमुखादिभिरिति अत्रादिशब्दः प्रधानवाची, तेन कङ्कमुखमादि प्रधानं येषां तैर्निर्हरेदित्यर्थः, यदि पुनरिहादिशब्दः प्रधानवाची न स्यात्तदा काकमुखस्य ग्रहणं न स्यादिति । शास्त्रयुक्तिव्यपेक्षयेति विविधा अपेक्षा व्यपेक्षा, विशिष्टा अपेक्षा वा ॥ २१ ॥

**नि(वि)वर्तते साध्ववगाहते च**
**शल्यं निगृह्योद्धरते च यस्मात् ॥**
**यन्त्रेष्वतः कङ्कमुखं प्रधानं**
**स्थानेषु सर्वेष्वधि(वि)कारि चैव ॥ २२ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने यन्त्रविधिर्नाम सप्तमोऽध्यायः ॥ ७ ॥**

कङ्कमुखस्य प्राधान्यं दर्शयन्नाह,—निवर्तत इत्यादि । निवर्तते साध्विति साधु झटिति निःसरतीत्यर्थः, अवगाहते प्रविशति च साधु, अन्येषां सिंहमुखादीनां स्थूलमुखत्वेन साध्ववगाहनसाधुनिवर्तनाभावात्; अन्ये विवर्तते वृत्तत्वादन्तर्भ्रमतीत्याहुः । शल्यं निगृह्य गृहीत्वा, उद्धरते आकर्षति । स्थानेषु सर्वेष्विति सन्धिधमन्यादिषु । अधिकारि अस्य कङ्कमुखस्य अधिकारोऽस्ति नान्यस्य; अन्ये तु 'अविकारि' इति पठन्ति, तत्रापि स एव तात्पर्यार्थ इति ॥ २२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

**अथातः शस्त्रावचारणीयमध्यायं व्याख्यास्यामः यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । शस्त्राणामवचारणं शस्त्रावचारणं, तदस्मिन्नध्यायेऽस्ति स शस्त्रावचारणीयः, तं व्याख्यास्यामः ॥ १ ॥ २ ॥

**विंशतिः[2] शस्त्राणि; तद्यथा—मण्डलाग्रकरपत्रवृ-**

---

१ 'वर्तनं भग्नास्थ्यादीनां यथायथं स्थापनं, चालनं गलादाववबद्धास्थिशल्यादीनामपनयनं, विवर्तनं पराङ्मुखीभूतस्यास्थ्यादेरपवर्तनम्, आञ्छनमतिक्षिप्तस्यास्थ्नः कुञ्चितस्य वाऽङ्गुल्यादेरायमनं, भञ्जनं शल्यकर्णादेरापोथनं खण्डनं वा, दारणं विषमसंहितानामस्थ्नां द्विधाकरणम्, ऋजुकरणं कुञ्चितस्य गात्रस्य बन्धनादिना सरलीकरणम्' इति हाराणचन्द्रः ।

१ 'शल्यं स्वस्तिकयन्त्रैस्तु निर्हरेत भिषग्वरः' इति ताडपत्रपुस्तके पाठः ।

२ 'षड्विंशतिः शस्त्राणि; तद्यथा—मण्डलाग्रार्धमण्डलकरपत्र०' इति ताडपत्रपुस्तके पाठः । वाग्भटे (सू. अ. २६) सर्पास्यं, लिङ्गनाशव्यधनी शलाका, कूर्चः, खजः, कर्णपालीव्यधनं, कर्णवेधनी चेति षट्शस्त्राण्यधिकान्युक्तानि । तेषां लक्षणानि क्रमशो यथा—'सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धाङ्गुलं फले' इति; 'ताम्री शलाका द्विमुखी

**द्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधारसूचिकुशपत्राटीमुखशरारिमुखान्तर्मुखत्रिकूर्चककुठारिकाव्रीहिमुखारावेतसपत्रकबडिशदन्तशङ्क्वेषण्य इति**

कियन्ति पुनस्तानि शस्त्राणीत्याह—विंशतिरित्यादि। शस्त्राणि मण्डलाग्रादीनि; मण्डलाग्रे द्वे, सूच्यस्तिस्रः, इत्याद्यवान्तरभेदेन तु बहून्यपि स्युः। तानि नामभिर्निर्देष्टुमाह—तद्यथा मण्डलाग्रेत्यादि। 'तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः', तथा 'तत्र नखशस्त्रैषण्यावष्टाङ्गुले' इत्यादिवाक्येन शस्त्राणामाकारं प्रमाणं च यद्यप्यग्रे वक्ष्यति, तथाऽपीहैव परतन्त्रोक्तं शस्त्राकारप्रमाणलक्षणं सुखावबोधार्थमुपदेक्ष्यामः। मण्डलाग्रमिति मण्डलमिवाग्रं यस्य तन्मण्डलाग्रं, तच्च द्विविधम्। तथाहि,—"यदग्रे[1] मण्डलं वृत्तं क्षुरसंस्थानमेव च। मण्डलाग्रस्य जानीयात् प्रमाणं तु षडङ्गुलम्—" इति। द्विधा मण्डलाग्रं—षडङ्गुलप्रमाणमेकं वृत्तमुखं, द्वितीयं क्षुराकारम्। [2]करपत्रमिति करवत् पत्रं यस्य तत् करपत्रं, यथा करोऽङ्गुलिभिराचितो भवति तद्वत् कण्टकैराचितं स्यात्तत् करपत्रमुच्यते; अन्ये तु करपत्रशस्त्रं करपत्राकारमेव, तच्च द्वादशाङ्गुलं[1] तन्त्रान्तरवचनात्; ननु, यदि तन्त्रान्तराद्वादशाङ्गुलं करपत्रमुच्यते तर्हि स्वतन्त्रे विरोधः, कुतः? स्वतन्त्रे करपत्रस्यानिर्दिष्टप्रमाणत्वात्; 'शेषाणि तु षडङ्गुलानि—' इत्यनेन वाक्येन षडङ्गुलमेव करपत्रं स्यान्न द्वादशाङ्गुलम्। नैवं, 'तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः'—इत्यस्मात् सूत्रात् प्रायःशब्दोऽनुवर्तते, तेनायमर्थः—शेषाणि प्रायेण षडङ्गुलानि; एवं शस्त्रमानेऽन्यत्राप्यविरोधः। वृद्धिपत्रमिति वृद्धेः पत्रमिव वृद्धिपत्रं; तच्च द्विविधम्—एकमञ्चिताग्रं, द्वितीयं प्रयताग्रं; द्वे अपि सप्ताङ्गुलप्रमाणे, द्वयोरपि "अर्धपञ्चाङ्गुलं वृन्तं कार्यं सार्धाङ्गुलं फलम्"—इति; अनयोर्मध्येऽञ्चिताग्रं वृद्धिपत्रं क्षुरमाहुः[2]। [3]नख-

मुखे कुरुवकाकृतिः। लिङ्गनाशं तया विध्येत्'; 'सर्ववृत्तास्ताश्चतुरङ्गुलाः। कूर्चो वृत्तैकपीठस्थाः सप्ताष्टौ वा सुबन्धनाः। संयोज्यो नीलिकाव्यङ्गकेशशातेषु कुट्टने', ताः सूच्यः; 'अर्धाङ्गुलमुखैर्वृत्तैरष्टाभिः कण्टकैः खजः। पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक्'; 'व्यधनं कर्णपालीनां यूथिकामुकुलाननम्'; 'बहलायाश्च शस्यते। सूची त्रिभागसुषिरा त्र्यङ्गुला कर्णवेधनी' इति। 'सूचीकूर्चो वृत्तैकमूलोऽग्रे सुनिबद्धसप्ताष्टसूचिकः कुष्ठश्वित्रेन्द्रलुप्तसुप्तादिषु। खजस्त्वर्धाङ्गुलायताष्टकण्टकमुखस्ताम्रो लौहो वा नासाभ्यन्तरगतशोणितमोक्षार्थः। कर्णव्यधनं त्र्यङ्गुलायतमङ्गुलशुषिरं घनं यूथिकामुकुलाग्रम्" (वृ. वा. सू. अ. ३४)। "कर्णव्यधनं शुषिरभागे मेर्याकृति" इति इन्दुः।

१ 'षट्भागे' इति पा०। एतच्च भालुकीवचनमिति चक्रः। मण्डलाग्रलक्षणं वाग्भटे एवं पठ्यते—"मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृति। लेखने छेदने योज्यं पोथकीशुण्डिकादिषु—" इति। 'द्वे मण्डलाग्रे ये प्रोक्ते एकं वृत्तमुखं तयोः। तीक्ष्णधारं दृढं कार्यमेकं तच्च क्षुराकृति' इति भानुमत्यां भोजः। "मण्डलाग्रं प्रदेशिन्यन्तर्नखविस्तृतफलं, तल्लेखनच्छेदनयोर्वर्त्मरोगोत्सन्नदन्तमांसदुर्निविष्टव्रणगलशुण्डिकादिषु प्रयोज्यम्" (अष्टाङ्गसंग्रह, सू. अ. ३४)। 'अन्तर्नखं मांसनिकटं, तदाकृति फलं यस्य तत्तथोक्तम्' इति तद्व्याख्यायामिन्दुः। मण्डलाग्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'Sharp curette—शार्प् क्युरेट्' इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते॥

मण्डलाग्रम्।



२ करपत्रलक्षणं वाग्भटे एवं पठ्यते,—"छेदेऽस्थ्नां करपत्रं तु खरधारं दशाङ्गुलम्॥ विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धनम्—" इति। "त्सरुर्मुष्टिः, बन्धनं ग्रहणं, शोभने त्सरुबन्धने यस्य तत् सुत्सरुबन्धनम्। अभिधानकोशे यद्यपि 'त्सरुरसिमुष्टिः' इत्यभ्यधायि, तथाऽपि मुष्टिमात्रस्येहोपलक्षणार्थत्वान्मुष्टावप्युपपन्नमेव" इत्यरुणदत्तः॥

१ 'द्वादशाङ्गुलदीर्घं स्यात्तत्तु चाचितकण्टकम्। करपत्रं विजानीयाद्भिषगाकृतिमानतः' इति भोजवचनं भानुमत्याम्। करपत्रमाङ्ग्लभाषायां 'सो Saw' इति नाम्ना प्रसिद्धम्॥

करपत्रम्।



२ 'अत्र तन्त्रान्तरं 'सप्ताङ्गुलं प्रमाणेन वृद्धिपत्रं द्विलक्षणम्। अञ्चितं चायताग्रं च कारयेत् कुशलो भिषक्॥ सप्ताङ्गुलं विभज्यैतत् प्रमाणं वृद्धिपत्रयोः। अर्धमेकाधिकं वृन्तं फलं त्रिषु च कारयेत्' इति एकाधिकमिति एकाङ्गुलाधिकत्र्यङ्गुलरूपमर्धम्, एवं सप्ताङ्गुले वृद्धिपत्रे चतुरङ्गुलस्य वृन्तेन गतत्वात् त्र्यङ्गुलफलमुक्तमुपपन्नं भवति। अत्रैवायताग्रं वृद्धिपत्रं क्षुरमाहुः, अत एव 'क्षुरकर्तरिकासंदंशैः' इत्याचार्यवचनं क्षुरसंज्ञान्तरवचनादुपपन्नं भवति' इति चक्रः। 'वृद्धिपत्रमिति वृद्धिरायतत्वेन समृद्धिः पत्रे पत्राकारे फले यस्य तद्वृद्धिपत्रम्' इति हाराणचन्द्रः। वृद्धिपत्रलक्षणं वाग्भटे एवं पठ्यते,—"वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने। ऋज्वग्रमुन्नते शोथे, गम्भीरे च तदन्यथा॥ नताग्रं पृष्ठतः—" इति। "वृद्धिपत्रं क्षुराकारं तत्तून्नते श्वयथौ ऋजु सूच्यग्रमिष्टं, विपरीते तु पृष्ठतोऽवनतधारम्" (अ. सं. सू. अ. ३४)। अञ्चिताग्रवृद्धिपत्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'Bistoury—बिस्तुरी' इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते; प्रयताग्रस्य च वृद्धिपत्रस्य 'Scalpel—स्केल्पल्' इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते॥

अञ्चिताग्रं वृद्धिपत्रम्।



प्रयताग्रं वृद्धिपत्रम्।



३ नखशस्त्रलक्षणं वाग्भटे एवं पठ्यते,—"वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम्। सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने"—इति। "नखानां छेदने कार्यं शस्त्रमष्टाङ्गुलायतम्। अर्धाङ्गुलं मुखं

शस्त्रमिति नखानां छेदनाय शस्त्रं नखशस्त्रं, तस्य फलं द्व्यङ्गुलायाममेकाङ्गुलविस्तृतम् । मुद्रिकां स्वयमेवाग्रे वक्ष्यति । उत्पलपत्रमिव पत्रमस्येत्युत्पलपत्रकं, तथा च तन्त्रान्तरं, "तुल्यमुत्पलपत्रेण तीक्ष्णधारं समाहितम् । षडङ्गुलं प्रमाणेन शस्त्रमुत्पलपत्रकम्॥ तत्फलं त्र्यङ्गुलायामं कार्यमङ्गुलविस्तृतम्"-इति । अर्धधारमिति अर्धे धरा यस्य तदर्धधारं, वक्रधारमिति प्रसिद्धं; तच्चाष्टाङ्गुलायतम्, उरस्यङ्गुलविस्तारं, द्व्यङ्गुलफलम्; अन्ये तु 'अध्यर्धधारम्' इति पठन्ति, अधिकमर्धं धारा यस्य तदध्यर्धधारम् । सूची अग्रे वक्ष्यते । कुशपत्रमिति कुशपत्रतुल्यं कुशपत्रं; तन्मानमाह-"द्व्यङ्गुलं रुचकं विद्याद (त्र्य) ङ्गुलं फलमुच्यते । वृन्तं स्यात्त्र्य(ष्य)ङ्गुलं मध्ये कुशपत्रस्य लक्षणम्"-इति । आटी(टा)मुखमिति आटी(टा) जलवर्धनी नाम पक्षिविशेषः, तन्मुखवन्मुखं यस्य तदाटीमुखं; तथा चोक्तं—"वृन्तं सप्ताङ्गुलं विद्यात्तस्याग्रे फलमिष्यते । आटी-(टा)मुखप्रकारं हि फलमङ्गुष्ठमायतम् । आटी(टा)मुखं विजानीयात्तत्स्रावणविधौ मतम्"—इति । शरारिमुखमिति शरारिर्दीर्घचञ्चुः पक्षिविशेषः; स द्विविधः-धवलस्कन्धो रक्तशीर्षश्च, धवलस्कन्धस्य 'शरारी(रिः)' इति संज्ञा, तन्मुखवन्मुखं यस्य तच्छरारिमुखं, तस्य शस्त्रस्य लोके कर्तरीति संज्ञा; तां च द्वादशाङ्गुलां चलत्पाशां कुर्यात् । अन्तर्मुखमिति मध्यमुखं, तल्लक्षणमाह—"अष्टा(सप्ता)ङ्गुलं प्रमाणेन जिह्मधारेण चाङ्गुतम् । शस्त्रमन्तर्मुखं नाम चन्द्रार्धमिव चोद्गतम्"—इति । त्रिकूर्चकमिति त्रयः कूर्चा यस्य तत् त्रिकूर्चकम्; अत्र तन्त्रान्तरं—"अङ्गुलानि तथाऽष्टौ च शस्त्रं कार्यं त्रिकूर्चकम् । फलैरन्तर्मुखाकारैरङ्गुलैरन्वि(राचि)तं त्रिभिः ॥ एकैकस्य फलस्यैषामन्तरं व्रीहिसंमितम् । वृन्तं पञ्चाङ्गुलायामं कार्यं रुचकभूषितम्"-इति । कुठारिकेति कुठारतुल्या कुठारिका, अत्र तन्त्रान्तरं, "कुठारिकाया वृन्तं स्यात् सार्धसप्ताङ्गुलायतम् । फलमर्धाङ्गुलायामं गोदन्तसदृशं समम्"—इति । व्रीहिमुखमिति

तस्य तीक्ष्णधारं तु कल्पयेत्' इति भानुमत्यां भोजः । नखशस्त्रमाङ्ग्लभाषायां 'नेल् पेरर्-Nail Parer' इति नाम्ना प्रसिद्धम् ॥

१ 'तस्य दैर्घ्यमष्टाङ्गुलप्रमाणं, मुखं चार्धाङ्गुलम् । मुद्रिकाशस्त्रं मुद्रिकया बद्धं वृद्धिपत्रतुल्यलक्षणं द्व्यङ्गुलं क्षुराकारं, तच्च लोके 'क्षुरप्र' इति प्रसिद्धम् । उत्पलपत्रमिति उत्पलपत्रेण तुल्यमुत्पलपत्रकं, षडङ्गुलदीर्घं, मध्ये चतुरङ्गुलं वृन्तं, फलं द्व्यङ्गुलायाममेकाङ्गुलविस्तृतम्' इति पा० ।

२ 'अत्रैव स्यातामङ्गुलिशस्त्रावरोधः' इति चक्रः ।

३ "अर्धधारं तु कर्तव्यं शस्त्रमष्टाङ्गुलायतम् । उरस्यङ्गुलविस्तारं फले तद्व्यङ्गुलं भवेत्" इति भानुमत्यां भोजः । 'उरसीति क्रोडे' इति चक्रः ।

४ 'सूचीमग्रे वक्ष्यति' इति पा० ।

५ "तीक्ष्णाग्रं कुशपत्रार्धमङ्गुलं दैर्घ्यतः फलम् । वृन्तं स्यात्त्र्यङ्गुलं यस्य कुशपत्रं तदुच्यते" इत्युक्तलक्षणम्" इति हाराणचन्द्रः । "कुशपत्रे तन्त्रान्तरं-'वृन्तं स्यात्त्र्यङ्गुलं मध्ये कुशपत्रसलक्षणम्" इति चक्रः । कुशपत्राटीमुखयोर्लक्षणं वाग्भटे एवं पठ्यते,—"कुशाटावदने स्यात्त्र्ये द्व्यङ्गुलं स्यात्तयोः फलम्"—इति । "कुशपत्राटामुखे द्व्यङ्गुलफले" इति वृद्धवाग्भटः । कुशपत्रस्याङ्ग्लभाषायां 'पेजेट्स् नाइफ्-Paget's Knife' इति प्रसिद्धेन शस्त्रेण सह सादृश्यमुपलभ्यते ।

६ 'अत्र तन्त्रान्तरम्-'आनुपूर्व्यायतां तीक्ष्णां प्रमाणेन दशाङ्गुलाम् । त्रिभागे कीलयोगं हि जानीयात् कर्तरीं भिषक्" इति, पाशवती बद्धकीलवती च कर्तरी' इति चक्रः । 'शरारिर्नाम पक्षी 'सरल' इति विज्ञायते, तन्मुखमिव मुखमस्येति शरारिमुखम् । शरारिमुखसादृश्यस्यात्र ऋजुत्वे तात्पर्यं नत्वायामे, 'शेषाणि तु षडङ्गुलानि' इत्यनन्तरोक्तेः' इति हाराणचन्द्रः । वाग्भटे तु शरार्यास्यं कर्तरी चेति पृथगेव शस्त्रद्वयं पठ्यते । यथा—"स्राव्ये शरार्यास्यत्रिकूर्चके", तथा—"स्नायुसूत्रकचच्छेदे कर्तरी कर्तरीनिभा-" इति । "कर्तरी त्रिभागपाशा व्रणस्नायुकेशसूत्रच्छेदनार्था" इति वृद्धवाग्भटः । कर्माप्युभयोर्भिन्नमेवोक्तं शरार्यास्यस्य विस्रावणं, कर्तर्याश्च छेदनम्; अत्रापि शस्त्राणामष्टविधकर्माणि विषयभेदकथनावसरे 'सूचीकुशपत्राटीमुखशरारिमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे' इति वाक्येन शरारिमुखस्य विस्रावणमेव कर्मोक्तं, कर्तर्यास्तु कर्म छेदनमेव; तस्मादेतच्छस्त्रद्वयं पृथगेव भवितुमर्हति ॥

कर्तरी ( Scissors-सिझर्स् ) ।



१ 'सप्ताङ्गुलप्रमाणेन' इति भानुमत्यां पाठः । अन्तर्मुखलक्षणं वाग्भटे एवं पठ्यते,—"तद्वदन्तर्मुखं तस्य फलमध्यर्धमङ्गुलम् । अर्धचन्द्राननं चैतत्-" ( वा. सू. अ. २६ ) इति ॥

२ 'चन्द्रशृङ्गमिवोन्नतम्' इति पा० ।

३ 'त्रयः कूर्चाः क्षुद्रच्छुरिका यस्य तत्त्रिकूर्चकम्' इति हाराणचन्द्रः ।

४ कुठारिकालक्षणं वाग्भटे एवं पठ्यते,—"पृथुः कुठारी गोदन्तसदृशाऽर्धाङ्गुलानना । तयोर्ध्वदण्डया विध्येदुपर्यस्थां स्थितां सिराम्"—इति । कुठारिकाशस्त्रमाङ्ग्लभाषायां-'एक्स्शेप्ड् नाइफ्-Axe shaped Knife' इति, 'चिझल्-Chisle' इति वा नाम्ना प्रसिद्धम् ॥

कुठारिका ।



५ 'व्रीहिविस्तारं मुखमस्येति व्रीहिमुखम्' इति हाराणचन्द्रः । व्रीहिमुखलक्षणं वृद्धवाग्भटे एवं पठ्यते,—"व्रीहिमुखमध्यर्धाङ्गुलफलं मांसलप्रदेशसिराव्यधार्थं वृद्ध्युदरगुल्मविद्रध्यादिव्यधनभेदनार्थं च-" इति । व्रीहिमुखमाङ्ग्लभाषायां 'ट्रोकर्-Trocar' इति नाम्ना प्रसिद्धम् ॥

व्रीहिमुखम् ( Trocar )



व्रीहिमुखमिव मुखं यस्य तद्व्रीहिमुखम्; अत्र भोजः,-"शस्त्रं व्रीहिमुखं कार्यमङ्गुलानि षडायतम्। द्व्यङ्गुलं तस्य वृन्तं स्यात्तत्फलं चतुरङ्गुलम्। तन्मुखं व्रीहिविस्तारं तनुसंगू(मू)ढकण्टकम्—" इति। आरेति आरेव आरा, आरा चर्मकाराणां शस्त्रम्; अत्र तन्त्रान्तरम्,-"आरा ह्यष्टाङ्गुलायामा कर्तव्या तु विशांपते!। तिलप्रमाणं तु फलं तस्याः कार्यं समाहितम्। दूर्वाङ्कुरपरीणाहं वृन्तं गोपुच्छसन्निभम्—" इति। वेतसपत्रमिति वेतसपत्रमिव वेतसपत्रम्; अत्र भोजः,—"तीक्ष्णमङ्गुलविस्तारं चतुरङ्गुलमायतम्। अङ्गुलानि तु चत्वारि वृन्तं कार्यं विजानता—" इति। बडिशमिति बडिशतुल्यं बडिशं, बडिशं मत्स्यवेधनमाहुः; अत्र तन्त्रान्तरं,—"बडिशे चापि कर्तव्ये प्रमाणेन षडङ्गुले। स्वानतं तु तयोरेकमेकं नात्यानतं भवेत्॥ अर्धपञ्चाङ्गुलं वृन्तं शेषं कार्यं मुखं तयोः। अर्धचन्द्राकृति वक्रं (मुखं) कार्यं नात्यानतस्य तु॥ स्वानतं नामयेत्तत्र बडिशं च भिषग्वरः। वृन्ताग्रयोरन्तरं स्याद्यावदर्धाङ्गुलं म(मि)तम्"-इति। दन्तशङ्कुरिति कपालिकाशर्करादिदन्तदोषहरणाय शङ्कुर्दन्तशङ्कुः; अत्र भोजः-"कार्यः षडङ्गुलायामो दन्तशङ्कुर्विजानता। शङ्कुवच्च मुखं तस्य कार्यमर्धाङ्गुलायतम्॥ चतुरस्रं समं चैव तीक्ष्णधारं समाहितम्। वृन्ताग्रं तस्य कर्तव्यं शस्त्रव्रीहिमुखाकृति॥ कपालिकां शर्करां च दन्तस्थां तेन शोधयेत्"—इति। एषणीति 'एष्यते अनया' इति एषणी; अत्र तन्त्रान्तरं,-"व्रणैस्तासां परीणाहो मुखं गण्डूपदाकृति-" इति॥ ३॥

**तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च, वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधाराणि छेदने भेदने च, सूचीकुशपत्राटी(टा)मुखशरारिमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे, कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूची च, बडिशं दन्तशङ्कुश्चाहरणे, एषण्येषणे आनुलोम्ये च, सूच्यः सीवने; इत्यष्टविधे कर्मण्युपयोगः शस्त्राणां व्याख्यातः॥ ४॥**

तेषां विषयभेदमष्टविधे कर्मणि दर्शयितुमाह,—तत्रेत्यादि। तत्र तेषु मध्ये, स्यातां भवेताम्। चकारः कर्मान्तरं समुच्चिनोति। वृद्धिपत्रेत्यादि। चकाराल्लेखने च। सूची चेति चकारः कुशपत्रोत्पलपत्रकादींश्च व्यधने समुच्चिनोति। ननु, उभयत्राप्येकार्थत्वात् किमर्थं यन्त्रशस्त्रयोर्मध्ये बडिशस्य पाठः? उच्यते, यन्त्रपठितं बडिशं यथायोगपरिणाहदैर्घ्यं, शस्त्रपठितं तु षडङ्गुलमेव तीक्ष्णकण्टकमुखमेवेत्यदोषः। एषणीति आनुलोम्यमत्र विस्रावणमभिप्रेतं, न तु ऋजुकरणं; कस्मात्? ऋजुकरणस्य शस्त्रकर्मत्वनिर्दिष्टत्वात्; यदि कथंचित् स्यात्, तदा शस्त्रकर्मणां नवत्वप्रसङ्गः, तस्मादाद्य एव पक्षो न्याय्य इति; चकारा-

१ आरालक्षणं वाग्भटे एवं पठ्यते,—"आराऽर्धाङ्गुलवृत्तास्या तत्प्रवेशा तथोर्ध्वतः। चतुरस्रा तया विध्येच्छोफं पक्वामसंशये॥ कर्णपालिं च बहलाम्"—इति। आरा आङ्ग्लभाषायां 'ऑल्-Awl' इति नाम्ना प्रसिद्धा॥

२ वेतसपत्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'नेरोब्लेडेड् नाइफ्-Narrow bladed Knife' इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते।

वेतसपत्रम्।



३ बडिशलक्षणं वृद्धवाग्भटे एवं पठ्यते,—"बडिशोऽत्यवनतमुखः सूचीतीक्ष्णाग्रो ग्रहणे गलशुण्डिकार्मादेः" इति। बडिशशस्त्रमाङ्गलभाषायां 'शार्प् हुक्-Sharp Hook' इति नाम्ना प्रसिद्धम्॥

४ 'दशाङ्गुले' इति भानुमत्यां पाठः।

५ 'तस्माद्' इति पा०।

६ दन्तशङ्कुशस्त्रं वाग्भटे दन्तलेखनकमिति नाम्ना प्रसिद्धम्। तल्लक्षणं च तत्रैवं पठ्यते,—"एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः। दन्तलेखनकं तेन शोधयेद्दन्तशर्कराम्-" इति। दन्तशङ्कुराङ्ग्लभाषायां 'Tooth Scaler-टूथ्-स्केलर्' इति नाम्ना प्रसिद्धः॥

७ एषणीलक्षणं वाग्भटे एवं पठ्यते—"गतेरन्वेषणे श्लक्ष्णा गण्डूपदमुखैषणी। भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा" इति। 'भेदनं त्वत्र क्षाराक्तसूत्रप्रवेशनेन' इति तद्व्याख्यायां हेमाद्रिः। "एषण्यौ द्वे सुश्लक्ष्णस्पर्शे, तयोरेकाऽष्टाङ्गुला गतिकोशशल्यत्वावबद्धु व्रणेषु शुषिरान्वेषणे, अन्या सूचीसंस्थाना क्षाराक्तसूत्रप्रतिबद्धा नाडीनां भगन्दरगतीनां च भेदने" ( वृ. वा. सू. अ. ३४ )॥

१ 'अर्धमण्डलाग्रमण्डलाग्रकरपत्राणि च्छेदने लेखने च' इति ताडपत्रपुस्तके पाठः।

२ एषणे इति अपाटितेऽविदीर्णे वा व्रणशोथे भेदनपूर्वकमेषणे तीक्ष्णकण्टकमुखी एषणी (शार्प् प्रोब्-Sharp probe) स्यादित्यर्थः; पाटितानां विदीर्णानां वा व्रणानामेषणे तु यन्त्राध्यायपठिता गण्डूपदाकारमुखी ( ब्लन्ट् प्रोब्-Blunt probe ) एव प्रयुज्यते; आनुलोम्ये तु प्रथमयवपत्रमुखी ( डायरेक्टर्-Director ) स्यादिति ज्ञेयम्। 'अन्ये पुनः एषणीनां तीक्ष्णकण्टकमुखत्व-प्रथमयवपत्रमुखत्व-गण्डूपदमुखत्व-भेदाद्बहुत्वं, तेन 'एषण्यः एषणे' इति बहुवचनं पठन्ति' इति चक्रः। "आनुलोम्ये तेषामेव ( भगन्दरादीनां ) छेदानुक्रमे, त एव छेषण्यनुसारिणा शस्त्रेण यथाक्रममामूलं छिद्यन्ते, वक्ष्यति च 'एषणीं ( डायरेक्टर् ) दत्त्वा शस्त्रं पातयेत्" इति डाराणचन्द्रः।

३ "शस्त्राणि तु षड्विंशतिर्भवन्ति। तद्यथा—दन्तलेखनमण्डलाग्रवृद्धिपत्रोत्पलपत्राध्यर्धधारमुद्रिकाकर्तरीसर्पवक्त्रकरपत्रकुशपत्राटामुखान्तर्मुखशरारिमुखत्रिकूर्चककुठारिकाव्रीहिमुखशलाकावेतसपत्रारकर्णव्यधनसूचीसूचीकूर्चखजैषणीबडिशनखशस्त्राणि चेति। तत्र प्रथमाद्यं लेखने, वृद्धिपत्रादीनि त्रीणि पाटने, चत्वारि भेदने, मण्डलाग्रादीन्यष्टौ छेदने, कुशपत्रादीनि पञ्च प्रच्छाने, कुठारिकादीनि षट् व्यधने, तेषामाराव्रीहिमुखे भेदने छेदने च, सूच्यः सीवने, सूचीकूर्चः कुट्टने, खजो मथने, एषण्येषणे भेदने च, बडिशो ग्रहणे, नखशस्त्रमुद्धरणे छेदभेदलेख्यप्रच्छानेषु च; इति द्वादशविधे शस्त्रकर्मण्युपयोगः" इति वृ. वा. सू. अ. ३४॥

ह्यधनेऽपि । ननु, एषणी यन्त्रशस्त्रयोः पठ्यते, प्रयोजनं चोभयत्राप्येषणमेव, तस्मादुभयपाठे को विशेषः ? उच्यते—यन्त्रपठिताया एषण्या आकृतिर्गण्डूपदमुखी, प्रमाणं तु यथायोगपरिणाहदैर्घ्यं; शस्त्रेषु पुनरेषण्याः प्रमाणमष्टाङ्गुलम्, आकृतिस्तु तीक्ष्णकण्टकयवपत्रमुखी चेत्यदोषः । द्व्यङ्गुलादिभेदेन सूचीनां बहुत्वात् 'सूच्य' इति बहुत्वेन निर्देशः ॥ ४ ॥

**तेषामथ यथायोगं ग्रहणसमासोपायः कर्मसु वक्ष्यते—तत्र वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयात्, भेदनान्येवं सर्वाणि, वृद्धिपत्रं मण्डलाग्रं च किंचिदुत्तानेन पाणिना लेखने बहुशोऽवचार्यं, वृन्ताग्रे विस्रावणानि, विशेषेण तु बालवृद्धसुकुमारभीरुनारीणां राज्ञां राजमा(पु)त्राणां च त्रिकूर्चकेन विस्रावयेत्, तलप्रच्छादितवृन्तमङ्गुष्ठप्रदेशिनीभ्यां व्रीहिमुखं, कुठारिकां वामहस्तन्यस्तामितरहस्तमध्यमाङ्गुल्याऽङ्गुष्ठविष्टब्धयाऽभिहन्यात्, आराकरपत्रैषण्यो मूले, शेषाणि तु यथायोगं गृह्णीयात् ॥ ५ ॥**

तेषामित्यादि । वृन्तफलसाधारणे भागे इति वृन्तफलयोर्मध्यदेश इत्यर्थः । एवम् इत्थमेव, यथा वृद्धिपत्रं वृन्तफलयोर्मध्यदेशे गृह्यते तथा भेदनान्यपीत्येवंशब्दार्थः । बहुश इति बहून् वारान्, 'सकृदपहरेत्' ( सू. अ. ५ ) इत्यस्यापवादः । वृन्ताग्रे वारङ्गाग्रे, 'गृह्णीयात्' इत्यध्याहारः । तलप्रच्छादितवृन्तमिति हस्ततलपिहितवृन्तम्; अङ्गुष्ठप्रदेशिनीभ्यां 'गृह्णीयात्' इत्यध्याहारः । अङ्गुष्ठविष्टब्धयेति अङ्गुष्ठाग्रे विष्टम्भितवेगया । मूलं, त्सरु, वारङ्गं, वृन्तमिति पर्यायाः । यथायोगमिति योगानतिक्रमेण । तद्यथा—कानिचिद्वृन्ताग्रे, कानिचिद्वृन्तमध्ये, कानिचिद्वृन्तमूले, कर्मयोगापेक्षयेत्यर्थः ॥ ५ ॥

**तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ ६ ॥**

संक्षेपेण शस्त्राकारं दर्शयन्नाह—तेषां नामभिरित्यादि । तेषां शस्त्राणाम्, आकृतयो लक्षणानि, नामभिरेव प्रायेण व्याख्याताः ॥ ६ ॥

**तत्र नखशस्त्रैषण्यावष्टाङ्गुले, सूच्यो वक्ष्यन्ते, (प्रदेशिन्यग्रपर्वप्रदेशप्रमाणा मुद्रिका, दशाङ्गुला शरारिमुखी सा च (या सा) कर्तरीति कथ्यते ।), शेषाणि तु षडङ्गुलानि ॥ ७ ॥**

तेषां प्रमाणानि दर्शयन्नाह,—तत्र नखशस्त्रेत्यादि । अन्ये तु नखशस्त्रस्थाने नखवर्धनीति पठन्ति व्याख्यानयन्ति च—नखवर्धनी नखच्छेदनी । सूच्यो वक्ष्यन्त इति अष्टविधशस्त्रकर्मीये ( सू. अ. २५ ) 'द्व्यङ्गुला त्र्यङ्गुला' इत्यादिना सूच्यो वक्ष्यन्त इति । एतस्याग्रे मुद्रिकाकर्तरीशस्त्रयोः केचिन्मानं पठन्ति । तदुच्यते,—"प्रदेशिन्यग्रपर्वप्रदेशप्रमाणा मुद्रिका, दशाङ्गुला शरारिमुखी सा च ( या सा ) कर्तरीति कथ्यते"—इति । शेषाणीति निर्दिष्टप्रमाणेभ्यो नखवर्धन्येषणीसूचीभ्योऽन्यानि शेषाणि ॥ ७ ॥

---

१ 'तेषां यथायोगं ग्रहणं कर्मसु; एष शस्त्रग्रहणसमासः । वृद्धिपत्रं तु' इति ताडपत्रपुस्तके पाठः । 'यथायोगमिति यथा भेद्यादि शस्त्रकर्म युक्तं योग्यं भवति तथा शस्त्रग्रहणं वक्तव्यमित्यर्थः' इति चक्रः ।

२ 'विष्टब्धयेति स्तम्भनाभिवर्धितवेगया' इति चक्रः ।

३ 'यथायोगमिति यथा सम्यग्योगः' इति चक्रः । अत्राह वाग्भटः,—"छेदभेदनलेख्यार्थं शस्त्रं वृन्तफलान्तरे । तर्जनीमध्यमाङ्गुष्ठैर्गृह्णीयात् सुसमाहितः ॥ विस्रावणानि वृन्ताग्रे तर्जन्यङ्गुष्ठकेन च । तलप्रच्छन्नवृन्ताग्रं ग्राह्यं व्रीहिमुखं मुखे ॥ मूलेष्वाहरणार्थानि क्रियासौकर्यतोऽपरम्"—( वा. सू. अ. २६ ) इति ॥

४ 'प्रायेणेति वचनादागममेतत्तन्त्रमागमान्तरं च शस्त्राकाराभिधायकं दर्शयति' इति चक्रः ।

५ 'चक्रस्तु 'नखवर्धन्येषण्यौ' इति पठति व्याख्याति च—'वर्धनी छेदनी, 'वृधु' छेदने, इत्यस्मात् साध्यम्' इति । "नखशस्त्रमष्टाङ्गुलमेकतोऽश्वकर्णमुखमन्यतो वत्सदन्तमुखं सूक्ष्मशल्योद्धृतौ" ( वृ. वा. सू. अ. ३४ ) इत्यष्टाङ्गसंग्रहे ।

१ "मुद्रिकायां निवद्धं स्याद्वृद्धिपत्रसलक्षणम् । द्व्यङ्गुलं मुद्रिकाशस्त्रं क्षुरसंस्थानमेव च" इति भानुमत्यां भालुकिः । मुद्रिकाशस्त्रं वाग्भटेऽङ्गुलिशस्त्रमिति नाम्ना पठ्यते । तल्लक्षणं यथा-"कुर्यादङ्गुलिशस्त्रकम् । मुद्रिकानिर्गतमुखं फले स्वर्धाङ्गुलायतम् । योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम् । सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने-" इति । "अङ्गुलीशस्त्रकं मुद्रिकानिर्गतमुखं वृद्धिपत्रमण्डलाग्राध्यर्धधारान्यतमतुल्यार्धाङ्गुलायतधारं प्रदेशिनीप्रथमपर्वप्रमाणापर्णवृत्तमुद्रिकं दृढसूत्रप्रतिबद्धं कण्ठरोगेषु प्रयुज्यते" ( वृ. वा. सू. अ. ३४ ) इत्यष्टाङ्गसंग्रहे ।

मुद्रिकाशस्त्रम् Finger Knife ( फिंगर् नाइफ् ) ।



२ 'प्रस्तुतानि शस्त्राणि व्याख्याय, अनन्तरमुपयोगित्वेनानुपेक्ष्यत्वाच्छरारिमुखावान्तरभेदभिन्नं शस्त्रान्तरमुपदिशति-दशेत्यादिना । कर्तरी रोमादिच्छेदार्थः शस्त्रविशेषः' इति हाराणचन्द्रः ।

३ "वृत्ता गूढदृढाः पाशे तिस्रः सूच्योऽत्र सीवने । मांसलानां प्रदेशानां त्र्यस्रा ( Needle with triangular point ) त्र्यङ्गुलमायता ॥ अल्पमांसास्थिसन्धिस्थव्रणानां द्व्यङ्गुलायता ॥ व्रीहिवक्त्रा ( Needle with round point ) धनुर्वक्रा (Curved needle) पक्वामाशयमर्मसु । सा सार्धद्व्यङ्गुला" इति वाग्भटः ( सू. अ. २६ ) । 'निगूढः पाशो यस्याः, तस्यां पाशस्य पार्श्वयोर्भग्नं सूत्रं न दृश्यते । धनुर्वक्राऽभ्यधिकं न प्रविशति, प्रविशत्येव द्वितीयेन व्रणोष्ठेनागच्छति' इतीन्दुः ।

४ अत्राह वाग्भटः,—"बाहुल्येनाङ्गुलानि षट्," तथा "स्वोन्मानार्धचतुर्थांशफलानि"—इति । बाहुल्येन प्रायेण विशेषप्रमाणानुक्तौ तानि शस्त्राणि षडङ्गुलानि कार्याणीत्यर्थः, यत्र विशेषप्रमाणमुक्तं तत्र तत्प्रमाणान्येव कार्याणि । स्वोन्मानार्धचतुर्थांशफलानीति स्वं च तदुन्मानं च स्वोन्मानम्, उन्मानं दैर्घ्यं, तस्यार्धं चतुर्थांशं वा फलं येषां तानि स्वोन्मानार्धचतुर्थांशफलानि ॥

**तानि सुग्रहाणि, सुलोहानि, सुधाराणि, सुरूपाणि, सुसमाहितमुखाग्राणि, अकरालानि, चेति शस्त्रसंपत् ॥ ८ ॥**

प्रमाणाकाराभ्यां शस्त्राणि निर्दिश्य शेषशस्त्रगुणसंपदं दर्शयितुमाह—तानि सुग्रहाणीत्यादि । सुग्रहाणि शोभनवाराङ्गाणि । सुलोहानि शोभनलोहानि । सुधाराणि शोभनधाराणि । सुसमाहितमुखानि पिण्डीकृतमुखानि, अन्ये तु सुष्ठु सम्यगाहितं मुखं येषां तानि तथोक्तानि । अकरालानि अदन्तुराणि । शस्त्रसंपत् शस्त्रगुणः ॥ ८ ॥

**तत्र वक्रं, कुण्ठं, खण्डं, खरधारम्, अतिस्थूलम्, अत्यल्पम्, अतिदीर्घम्, अतिह्रस्वम्, इत्यष्टौ शस्त्रदोषाः । अतो विपरीतगुणमाददीत, अन्यत्र करपत्रात्; तद्धि खरधारमस्थिच्छेदनार्थम् ॥ ९ ॥**

शस्त्रदोषान्निर्दिशन्नाह—तत्र वक्रमित्यादि । कुण्ठं स्थूलधारत्वेनारोमवाहि । खण्डम् असमग्रम् । खरधारं कर्कशधारम् । अत्यल्पम् अतितनु । अतो विपरीतमिति वक्रादिशस्त्रेभ्यो विपरीतगुणम् ऋजुतीक्ष्णसकलमसृणधारादिगुणम् । किं सर्वाण्येव विपरीतगुणान्याददीतेत्याह—अन्यत्र करपत्रादिति । कुतः पुनरेतत् ? तद्धीत्यादि ।—तच्छब्दो यस्मादर्थे, हिशब्दो हेतौ, यस्मात् करपत्रमस्थिच्छेदनार्थमतो हेतोः खरधारम् ॥ ९ ॥

**तत्र धारा भेदनानां मासूरी, लेखनानामर्धमासूरी, व्यधनानां विस्रावणानां च कैशिकी, छेदनानामर्धकैशिकीति ॥ १० ॥**

अष्टविधे कर्मणि सुकर्मनिष्पादकत्वेन यथा शस्त्राणां सुधारत्वं भवति तथा निर्दिशन्नाह—तत्र धारेत्यादि । भेदनानां वृद्धिपत्रनखशस्त्रादीनाम् । मासूरी मसूरदलधारातन्वी । लेखनानां मण्डलाग्रादीनाम् । अर्धमासूरी मसूरदलधारार्धतन्वी । व्यधनानां कुठारिकादीनाम् । विस्रावणानां सूचीकुशपत्रादीनाम् । कैशिकी केशप्रमाणा । छेदनानामिति अत्र छेदनानि वृद्धिपत्रादीन्येव, तानि यदा छेदने प्रयुज्यन्ते तदा तेषां धारा अर्धकैशिकी अर्धकेशप्रमाणा तन्वी कर्तव्या ॥ १० ॥

**बडिशं दन्तशङ्कुश्चानताग्रे । तीक्ष्णकण्टकप्रथमयवपत्रमुख्येषणी ( गण्डूपदाकारमुखी च )॥ ११ ॥**

आहरणे एषणे च शस्त्राणां धाराविशेषं दर्शयन्नाह,—बडिशं दन्तशङ्कुरित्यादि । अत्र आनताग्रे इति बडिशस्यैव विशेषणं, न दन्तशङ्कोः, कुतः ? शङ्कुतुल्यत्वेनैव तस्यानतत्वदर्शनात् । एषणी त्रिविधा भवति तीक्ष्णकण्टकमुखी, प्रथमयवपत्रमुखी, गण्डूपदाकारमुखी च । अन्ये तु 'तीक्ष्णकण्टकप्रथमयवपत्रमुखे' इति पठन्ति, व्याख्यानयन्ति च—एतद्विशेषणद्वयं बडिशदन्तशङ्क्वोः; तेन तीक्ष्णकण्टकमुखं बडिशं, प्रथमयवपत्रमुखो दन्तशङ्कुः, प्रथमयवपत्रमुखत्वेन दन्तशङ्कोर्मुखतनुत्वमाकारश्च कथितः, तेन गण्डूपदाकारमुखी चेति चकारादेतद्विशेषणद्वयमेषण्यामपि संबध्नन्ति । अन्ये तु 'तत्र धारा भेदनानां मासूरी' इत्यादिग्रन्थं 'एषणी गण्डूपदाकारमुखी च' इति यावन्न पठन्ति ॥ ११ ॥

**तेषां पायना त्रिविधा क्षारोदकतैलेषु । तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु, उदकपायितं मांसच्छेदनभेदनपाटनेषु, तैलपायितं सिराव्यधनस्नायुच्छेदनेषु ॥ १२ ॥**

तत्र पायनायास्तीक्ष्णत्वादयो गुणाः कर्मविशेषोत्कर्षहेतवो भवन्तीति तामाह—तेषां पायनेत्यादि । पायना पातुं प्रयोजना, सा च लौहकाराणां प्रसिद्धा केचित् क्षारतैलपायनयोरनार्षत्वमाचक्षते । क्षारादिपायनानां कर्मविशेषविषयं दर्शयन्नाह—तत्र क्षारपायितमित्यादि ॥ १२ ॥

---

१ 'गृह्यतेऽसिन्निति ग्रहो वारङ्गं' इति चक्रः ।

२ 'अतितुच्छम्' इति पा० ।

३ वृद्धवाग्भटे तु "धारा पुनश्छेदनानां मासूरी, लेखनानामर्धमासूरी, व्यधनानां विस्रावणानां च कैशिकी"—इति पठ्यते ।

४ 'मसूरधारातन्वी' इति पा० ।

५ 'मसूरदलधारातन्वी' इति पा० ।

६ अत्रैषणीलक्षणे 'गण्डूपदाकारमुखी च' इति पाठोऽनार्षः, गण्डूपदाकारमुख्या एषण्या धाराराहित्येन शस्त्रत्वाभावात् । तस्माद्गण्डूपदाकारमुखी एषणी यन्त्रमेव, तीक्ष्णकण्टकमुखी 'शार्प् प्रोब्–Sharp Probe,' प्रथमयवपत्रमुखी 'डायरेक्टर्–Director' चेति द्विविधमेव एषणीशस्त्रम् । 'अत्र शस्त्रे बडिशं पठ्यते यन्त्रे च, उभयत्रापि चाहरणं कर्म कर्तव्यं, तथा एषण्यपि शस्त्रे यन्त्रे च पठ्यते, एषणं च उभयत्रापि कर्मोक्तं, तत् कथमनयोर्भेदः ... ...परं यन्त्रकर्माहरणमेषणं च शरीराहिंसाव्यतिरेकेण क्रियमाणं ज्ञेयं; शस्त्रकर्माहरणमेषणं च शरीरहिंसायुक्तं, शस्त्रं हि शरीरहिंसकमिति 'शसु' हिंसायामिति धात्वर्थादपि भवति । तेन यन्त्राहरणे एषणे वा शरीरावयवहिंसा तच्छस्त्रकर्म, शरीराहिंसकं तु यन्त्रकर्म, अनेनैव च कर्मभेदेन यन्त्रशस्त्रयोरपि भेद इति पश्यामः' इति चक्रः । डाराणचन्द्रस्तु 'बडिशं दन्तशङ्कुश्चानताग्रे तीक्ष्णकण्टप्रथमयवपत्रमुखे, एषणी गण्डूपदाकारमुखी' इति पठति व्याख्यानयति च–"शङ्कुः कीलक इवेति शङ्कुः, दन्तशोधनः शङ्कुर्दन्तशङ्कुरिति शाकपार्थिवादित्वाद्रूपसिद्धिः । आनताग्रं बडिशमानताग्रश्च दन्तशङ्कुरित्यानताग्रे 'नपुंसकमनपुंसकेन' इति क्लीबशेषः । ते पुनस्तीक्ष्णकण्टकप्रथमयवपत्रमुखे इत्यन्वयः । तथा च तीक्ष्णकण्टकमुखं बडिशं प्रथमयवपत्रमुखश्च दन्तशङ्कुरित्यर्थः । अत्र गण्डूपदाकारमुखत्वेन शस्त्राभावेऽप्येषण्याः शस्त्रत्वेन व्यपदेशः प्रणिधानदोषाच्छस्त्रवत्कार्यकरी भवतीत्याख्यातुं, अतोऽवहितेनैषा प्रणिधेयेति" ।

१ 'निर्वृत्तानां शस्त्राणां (अग्नितप्तानां) तत्क्षणाद्द्रवद्रव्येषु निर्वापणं पायना' इति डाराणचन्द्रः । ( पायना=Tempering ) ।

२ 'कर्मविशेषसौकर्यहेतवः' इति पा० ।

**तेषां निशानार्थं श्लक्ष्णशिला माषवर्णा; धारासंस्थापनार्थं शाल्मलीफलकमिति ॥ १३ ॥**

सुधाराणीति प्रागुक्तं, कथं धारा शोभना कर्तव्येत्यत्राह—तेषामित्यादि । श्लक्ष्णा अकर्कशा । धारासंस्थापनार्थं स्थिरीकरणार्थम् । फलकं पट्टकम् । तत्रानिशितधाराणां निशानार्थं श्लक्ष्णशिला, निशितानां संस्थापनार्थं शाल्मलीफलकम् । अन्ये तु 'तेषां निशानी श्लक्ष्णशिलिका माषयूषप्रभा, धारासंस्थापनं शाल्मलीफलकम्' इति पठन्ति, व्याख्यानयन्ति च—श्लक्ष्णशिलिका नापितशिलिका, माषयूषप्रभा कृष्णकपिलेत्यर्थः ॥ १३ ॥

**भवति चात्र—**

**यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम् ॥**
**सुगृहीतं प्रमाणेन तदा कर्मसु योजयेत् ॥ १४ ॥**

कथं पुनः शस्त्रं संस्थापितधारं ज्ञातव्यमित्याह—भवति चात्रेत्यादि । यदा शस्त्रं रोमच्छेदि भवति तदा सुनिशितं भवति, यावद्रोमाणि न छिनत्ति तावन्निशातव्यमित्यर्थः । सुसंस्थितं शोभनाकारम् । सुगृहीतं ग्रहणं शस्त्राणां प्रागुक्तं, तद्यथा—'वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयात्' इत्यादि । प्रमाणेनेति प्रमाणेन लक्षितं, शस्त्रप्रमाणं 'तेषां नखशस्त्रैषण्यावष्टाङ्गुले' इत्यादि । अन्ये तु सुगृहीतं प्रमाणेनेति प्रमाणेन सुगृहीतमिति व्याख्यानयन्ति; तत्र वृद्धिपत्रादि वृन्तफलसाधारणभागादिग्रहणप्रमाणेनेत्यर्थः । केचित् 'रोमच्छेदि' इत्यस्य स्थाने 'रोमवाहि'—इति पठन्ति ॥ १४ ॥

**अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकोऽग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलय इति ॥ १५ ॥**

अशस्त्रावचारणीयेषु शिशुप्रभृतिष्वलाभाद्वा शस्त्राणां तत्कर्मसाधकद्रव्यान्तरेण शस्त्रातिदेशं कुर्वन्नाह—अनुशस्त्राणीत्यादि । अनुशस्त्राणि हीनशस्त्राणि शस्त्रसदृशानि वा । त्वक्सारः वंशः; कुरुविन्दः पाषाणविशेषः, येन निशितानि लोहानि तीक्ष्णानि भवन्ति, अन्ये तु कुरुविन्दं लोहिताश्म रत्नप्रधानं; गोजी गोजिह्वा, अन्ये शाखोटकमाहुः; शेफालिका रक्तवृन्ता शारदकुसुमा; शाको महावृक्षः कर्कशपत्रः; पत्रशब्दो गोजीप्रभृतिभिः सह प्रत्येकं संबध्यते; करीरः अङ्कुरः ॥ १५ ॥

**शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत् ॥**
**त्वक्सारादिचतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान् ॥१६**
**आहार्यच्छेद्यभेद्येषु नखं शक्येषु योजयेत् ॥**
**विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम्॥१७**
**ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये ॥**
**गोजीशेफालिकाशाकपत्रैर्विस्रावयेत्तु तान् ॥ १८**
**एष्येष्वेषण्यलाभे तु बालाङ्गुल्यङ्कुरा हिताः ॥**

तेषां विषयमाह—शिशूनामित्यादि । त्वक्सारादिचतुर्वर्गमिति वंशस्फटिककाचकुरुविन्दानि । आहार्यच्छेद्यभेद्येषु नखं शक्येष्विति आहार्यादिषु नखशक्येषु नखं प्रयोजयेदित्यर्थः । नेत्रवर्त्म नेत्रपक्ष्म । एष्येष्वेषण्यलाभे त्वित्यादि एष्येषु शल्येषु एषण्या अलाभे बालादयो हिताः ॥ १६–१८ ॥—

**शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु ॥**
**कारयेत् करणप्राप्तं कर्मारं कर्मकोविदम् ॥ १९ ॥**

इदानीं शस्त्राणां गुणसंपत्कारणं वक्तुमाह—शस्त्राण्येतानीत्यादि । कारयेत् कर्तुं प्रयोजयेत् । कः कर्तुं प्रयोजयेत् ? बुद्धिमान् वैद्य इत्यर्थः । कं ? कर्मारं लौहकारम् । किंविशिष्टं कर्मारं ? करणप्राप्तं; करणे प्राप्तं स्वकर्मणि निपुणमित्यर्थः । पुनः किंविशिष्टं ? कर्मकोविदं कर्मपण्डितं, यतः स्वकर्मणि निपुणमत एव कर्मकोविदम् । कानि कारयेत् ? शस्त्राणि । एतानि पूर्वोक्तानि । किंभूतानि शस्त्राणि कारयेदित्याह,—शुद्धशैक्यायसानि त्विति; शुद्धं मलरहितं, शैक्यं तीक्ष्णम्; अन्ये तु शैक्यायसानि सारमयलौहघटितानि । केचिच्छ्लोकार्धमन्यथा पठन्ति;—"कारयेत् करणैः प्रोक्तैः कर्मारैः कर्मकोविदैः"—इति, व्याख्यानयन्ति च—करणैरुपकरणैः; शेषं समम् ॥ १९ ॥

**प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः ॥**
**तस्मात् परिचयं कुर्याच्छस्त्राणां ग्रहणे सदा २०**

**इति सुश्रुतसंहितायां सूत्रस्थाने शस्त्रावचारणीयो नामाष्टमोऽध्यायः ॥ ८ ॥**

प्रयोगज्ञस्येत्यादि । प्रयोगः प्रकृष्टो योगः योजना, तज्ज्ञस्य । सिद्धिः आरोग्यसंपादनम् । नित्यशः सर्वदा । परिचयं शस्त्रग्रहणाभ्यासम् । अन्ये 'प्रमाणज्ञस्य वैद्यस्य–' इति पठन्ति; प्रमाणज्ञस्य शस्त्रग्रहणमानज्ञस्य ॥ २० ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने शस्त्रावचारणीयो नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

**अथातो योग्यासूत्रीयमध्यायं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

---

१ 'धारासंपादनार्थं' इति ताडपत्रपुस्तके पाठः । २ वाग्भटे शस्त्रसंस्थापनार्थं शस्त्रकोशोऽप्युक्तः । यथा,–"स्यान्नवाङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः । क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ विन्यस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः । शलाकापिहितास्यश्च शस्त्रकोशः (Swrgical cese) सुसंचयः"—इति ॥ 'सान्तराणि सव्यवधानानि, ऊर्णास्थानि शस्त्राणि यस्मिन् स सान्तरोर्णास्थशस्त्रकः' इत्यरुणदत्तः । ३ 'रोम वोढुं स्वभावो यस्येति रोमवाहि' इति चक्रः । ४ कुरुविन्दः 'कुरुन्द' (Corundum) इति प्रसिद्धोऽतिकठिनः पाषाणविशेषः । ५ शेफालिका महाराष्ट्रभाषायां 'पारिजात' इति, हिन्दीभाषायां च 'हारशृङ्गार' इति ख्याता ।

१ 'पश्चादग्निक्षारजलौकसाम्' इति पा० । २ 'शस्त्राणामादितः' इति पा० । ३ "कर्तव्यकर्मणः सम्यग्योगाय तत्सदृशकर्माभ्यासो योगः, तेन योगाय प्रभवतीति योग्या; प्रभवतीत्यर्थे तद्धितः, स्त्रीत्वं स्वभावात् मैत्रीवत्; तस्याः सूत्रं योग्यासूत्रं; तदधिकृत्य कृतो ग्रन्थस्तं तथा" इति चक्रः ।

अथात इति । योग्या सम्यक्कर्माभ्यासः, योग्यायाः सूत्रं, तद्विद्यते यस्मिन् स तथा; अन्ये तु योग्याख्यापकं सूत्रं योग्यासूत्रं, तदधिकृत्य कृतोऽध्यायो योग्यासूत्रीयः, तं तथा ॥ १ ॥ २ ॥

**अधिगतसर्वशास्त्रार्थमपि शिष्यं योग्यां कारयेत्। स्नेहादिषु छेद्यादिषु च कर्मपथमुपदिशेत् । सुबहुश्रुतोऽप्यकृतयोग्यः कर्मस्वयोग्यो भवति ॥ ३ ॥**

अधिगतेत्यादि । स्नेहादिष्विति आदिशब्दात् स्वेदवमनविरेचनास्थापनानुवासनादीनां ग्रहणं, छेद्यादिष्विति आदिशब्दाद्भेद्यादीनां सप्तानां ग्रहणं; यद्यप्यस्मिन् तन्त्रे छेद्यादिकर्मणां प्राधान्यं तथाऽपि छेद्यादिष्वपि प्राक् स्नेहादि प्रयुज्यत इति प्राक् स्नेहादिग्रहणम्; अन्ये 'छेद्यादिषु स्नेहादिषु च' इति पठन्ति । कर्मपथं क्रियामार्गम् । कुतोऽधिगतसर्वशास्त्रार्थमपि शिष्यं योग्यां कारयेदित्याह,—सुबहुश्रुतोऽपीत्यादि । अकृतयोग्यः अकृतकर्माभ्यासः । कर्मसु क्रियासु ॥ ३ ॥

**तत्र, पुष्पफलालाबूकालिन्दकत्रपुसै(सो)र्वारुककर्कारुकप्रभृतिषु छेद्यविशेषान् दर्शयेत्, उत्कर्तनापकर्तनानि चोपदिशेत्; दृतिबस्तिप्रसेवकप्रभृतिषूदकपङ्कपूर्णेषु भेद्ययोग्यां; सरोम्णि चर्मण्याततेलेख्यस्य; मृतपशुसिरासूत्पलनालेषु च वेध्यस्य; घुणोपहतकाष्ठवेणुनलनालीशुष्कालाबूमुखेष्वेष्यस्य; पनसबिम्बीबिल्वफलमज्जमृतपशुदन्तेष्वाहार्यस्य; मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य; सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्मान्तयोश्च सीव्यस्य; पुस्तमयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धनयोग्यां; मृदुषु मांसखण्डेष्वग्निक्षारयोग्यां, मृदुचर्ममांसपेशीषूत्पलनालेषु च कर्णसन्धिबन्धयोग्याम्; उदकपूर्णघटपार्श्वस्रोतस्यलाबूमुखादिषु च नेत्रप्रणिधानबस्तिव्रणबस्तिपीडनयोग्यामिति ॥ ४ ॥**

शल्यतन्त्रस्य छेद्यादिकर्मप्राधान्यात् प्राक् छेद्यादियोग्यामुपदर्शयन्नाह—तत्र पुष्पफलेत्यादि । पुष्पफलं कूष्माण्डः, कालिन्दको जोन्नालः कूष्माण्डभेदः, त्रपुसादयः कर्कटीभेदाः, प्रभृतिग्रहणाच्छीर्णवृन्तादीनां ग्रहणम् । छेद्यविशेषानिति गोतीर्थार्धलाङ्गलकप्रभृतीन् । उत्कर्तनम् ऊर्ध्वकर्तनम्, अपरकर्तनम् अधश्छेदः । दृतिबस्तीत्यादि दृतिः चर्मपुटकं, बस्तिः मूत्रपुटकं, प्रसेवकः चर्मखल्लपुटः, उदकपङ्कमिति उदकमिश्रः पङ्क उदकपङ्कः । सरोम्णीत्यादि । आतते प्रसारिते । मृतपशुसिरास्विति मृताः पशवोऽजादयस्तेषां सिरासु । पनसेत्यादि पनसो बहिःकण्टकी महाफलः 'कटहल' इति लोके; पनसादीनां फलानि तेषां मज्जा । मधूच्छिष्टेत्यादि मधूच्छिष्टं मधुसिक्थकम् । शाल्मलीफलके शाल्मलीपट्टके । पुस्तमयेत्यादि पुस्तमयः पुरुषो वस्त्रादिरचितो मनुष्यः । मृदुचर्मेत्यादि मांसपेशी मांसवर्तिः । उदकेत्यादि । नेत्रप्रणिधानं नेत्रप्रवेशनं, बस्तिव्रणबस्तिपीडनं च, अनयोर्योग्यां कारयेत्; क्व कारयेत्? उदकपूर्णघटपार्श्वस्रोतसि; न केवलं जलपूर्णघटपार्श्वच्छिद्रे अलाबूमुखादिषु चेत्यर्थः ॥ ४ ॥

भवतश्चात्र—

**एवमादिषु मेधावी योग्यार्हेषु यथाविधि ॥**
**द्रव्येषु योग्यां कुर्वाणो न प्रमुह्यति कर्मसु ॥ ५ ॥**

भवतश्चात्रेत्यादि । एवमादिष्विति आदिशब्दः प्रकारे, एवंप्रकारेषु योग्यार्हेषु पुष्पफलादिषु ॥ ५ ॥

**तस्मात् कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्मसु ॥**
**यस्य यत्रेह साधर्म्यं तत्र योग्यां समाचरेत् ॥ ६ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने योग्यासूत्रीयो नाम नवमोऽध्यायः ॥ ९ ॥**

तस्मादित्यादि । यस्य कर्मणः, यत्र यस्मिन् द्रव्ये, साधर्म्यं साम्यं, तस्य तत्र योग्यां समाचरेदिति । केचिदेवमादिषु मेधावीत्यादिश्लोकस्याग्रे आपातनिकापूर्वं श्लोकमेकं पठन्ति; तद्यथा—अनुक्तं योग्याविषयमुपग्रहीतुमाह—'दृष्टान्तमात्रमुद्दिष्टं–' इत्यादि; स च वर्तमानेषु पुस्तकेषु न पठ्यत इत्यस्माभिरुपेक्षितः ॥ ६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने योग्यासूत्रीयो नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

**अथातो विशिखानुप्रवेशनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । विशिखाऽत्र कर्ममार्गः, विशिखाया ( यां ) अनुप्रवेशनं तदधिकृत्य कृतोऽध्यायो विशिखानुप्रवेशनीयः; तं व्याख्यास्यामः ॥ १ ॥ २ ॥

**अधिगततन्त्रेणोपासिततन्त्रार्थेन दृष्टकर्मणा कृतयोग्येन शास्त्रं निगदता राजानुज्ञातेन नीचनख-**

---

१ 'योगाय सम्यग्योगाय प्रभवतीति योग्यः, तद्विरुद्धोऽयोग्यः' इति चक्रः । २ 'उत्कर्तनपरिकर्तनानि' इति पा० । ३ 'सरोम्णीत्यनेन लेख्यस्यानुलोमकर्तव्यतां सूचयति, प्रतिलोमे हि लेख्ये रुजाप्रादुर्भावो रक्तातिप्रवृत्तिश्च' इति हाराणचन्द्रः । ४ 'परिकर्तनं' इति पा० । ५ 'खल्लापदादि चर्म' इति पा० । ६ 'चर्मखल्लटकः' इति पा० ।

१ "विशिखाऽत्र कर्ममार्ग उच्यते, तदुद्दिश्यानुप्रवेशनं; यदि वा विशिखा रथ्यैव, तस्यां चिकित्सार्थमनुप्रवेशनम्" इति चक्रः । "प्रशस्तवर्त्मापरपर्यायोऽपि विशिखाशब्दोऽत्रातुरावासवर्त्ममात्रे प्रवर्तते, गमकत्वात्" इति हाराणचन्द्रः । २ 'शास्त्रार्थं निगदता' पा० । ३ "निष्पन्नेन वैद्येन प्रजापालके राज्ञि आत्मा गुणतो दर्शनीयः, ततो राज्ञा परीक्ष्य वैद्यः प्रजारक्षार्थमनुमन्तव्य एष धर्मः; अनिष्पन्नवैद्यगुणश्चिकित्सां कुर्वाणो लोकापकारकतया राज्ञा शासनीयः" इति चक्रः ।

**रोम्णा शुचिना शुक्लवस्त्रपरिहितेन छत्रवता दण्डहस्तेन सोपानत्केनानुद्धतवेशेन[1] सुमनसा कल्याणाभिव्याहारेणाकुहकेन बन्धुभूतेन भूतानां सुसहायवता वैद्येन विशिखाऽनुप्रवेष्टव्या ॥ ३ ॥**

यादृशस्य वैद्यस्य कर्ममार्गप्रवेशाधिकारस्तादृशं वक्तुमाह—अधिगततन्त्रेणेत्यादि । अधिगततन्त्रेण पठितशास्त्रेण । उपासिततन्त्रार्थेन गुरुपार्श्वादभ्यस्तशास्त्रार्थेन, दृष्टकर्मणा दृष्टच्छेद्यादिस्नेहादिकर्मणा, कृतयोग्येन कृतकर्माभ्यासेन, शास्त्रं निगदता पाठार्थाभ्यां नियमेनादेशेन शास्त्रं वदता, एतेन स्वावर्तितशास्त्रता उक्ता भवति; अन्ये तु 'शास्त्रार्थं निगदता' इति पठन्ति, 'शास्त्राणि निगदता' इत्यपरे । राजानुज्ञातेन राज्ञा अभिमतेन, राजा हि प्रजापालनतत्परः, तत्प्रमादाद्वैद्यप्रतिरूपका राष्ट्रं चरन्ति कण्टकभूता लोकस्य, तस्माद्राज्ञा परीक्ष्यानुज्ञातेन विशिखाऽनुप्रवेष्टव्येति । कर्मज्ञतां शास्त्रज्ञतां च वैद्यस्याभिधाय बाह्यवेशमधिकृत्याह—नीचनखरोम्णेत्यादि । कृत्तलाञ्छितमल्पं नखं रोम च यस्य तेन; नीचनखत्वाच्छुचिता कर्मसौकर्यं च, नीचरोमत्वादार्जवं, रसवत्तामबाध इत्यपरे । शुचिनेति बाह्यस्नानादिशौचयुक्तेन; कुतः? बाह्यवेशाधिकारात्; बाह्यशौचायोगाल्लोके विगर्हणीयः, अन्तःशौचं तु सुमनसेत्यनेनैव बोद्धव्यम् । शुक्लवस्त्रपरिधानं मङ्गलार्थं शौचार्जवार्थं वा । छत्रवता आतपरजोवर्षापन्नगादिनिषेधार्थं छत्रयुक्तेन । दण्डहस्तेन दण्डोऽवलम्बनदण्डः, तस्य धारणं स्खलितादिनिषेधार्थम् । सोपानत्केन प्राणिहितासहितेन, प्राणिहिताधारणं कण्टकादिनिषेधार्थम् । अनुद्धतवेशेन साधुजनवेशेन, एतेनायुक्तकायवेशनिषेधः; अन्ये तु नानावस्त्राङ्गरागमाल्यानुलेपनविचित्रभूषणादिभिरुद्धतो वेशः, अतो विपर्ययेणानुद्धत इति मन्यन्ते । कायं नियम्य मनो नियमयन्नाह—सुमनसा शोभनमनसा, अक्रौर्यादिगुणयुक्तमनसेत्यर्थः; दौर्मनस्यं तु यात्रायां न प्रशस्यत इति सुमनसा भवितव्यम् । वाचं नियमयन्नाह—कल्याणाभिव्याहारेणेति ।–कल्याणं मङ्गलम्, अभिव्याहारो भाषितं, यस्य स तथा; तच्च सर्वजनहृदयग्रहणार्थम् । कायवाङ्मनःसु त्रिष्वपि नियमयन्नाह—अकुहकेनेति; कुहकः शास्त्रहीनः परमविश्वासकारको मायावी, न कुहकोऽकुहकः; अन्ये त्वकुहकेन अविस्मापकेन, दम्भाद्ययोगादविस्मापककायादिवेशेनेत्यर्थः । सुसहायवता साधुसहायेन, अन्यथाऽन्तःपुरचारिणो वैद्यस्य सहायदोषेण दोषः स्यात्; सहायश्चात्मरक्षार्थमातुरपरिचर्यार्थं च । ननु, प्राणिनां जीवतामेव सद्यस्करुधिरोपदेशात् कथं 'बन्धुभूतेन भूतानाम्' इत्युक्तं? सत्यं, विधिप्रापितत्वाददोषः, आलम्भयोगे पशुहननवत् ॥ ३ ॥

**ततो दूतनिमित्तशकुनमङ्गलानुलोम्येनातुरगृहमभिगम्य, उपविश्य, आतुरमभिपश्येत् स्पृशेत् पृच्छेच्च; त्रिभिरेतैर्विज्ञानोपायै रोगाः प्रायशो वेदितव्या इत्येके; तत्तु न सम्यक्, षड्विधो हि रोगाणां विज्ञानोपायः, तद्यथा—पञ्चभिः श्रोत्रादिभिः प्रश्नेन चेति ॥ ४ ॥**

ततो दूतनिमित्तेत्यादि । गमनाय प्रश्नाय वा आगतः पुरुषो दूतः, निमित्तमनुकूलं सुरभिवातादि, शकुनं पक्षिविशेषप्रशस्तवाक्यादि, मङ्गलं स्वस्तिकपूर्णकुम्भादि, एषामानुलोम्येन प्रशस्ततयेत्यर्थः । त्रिभिरेतैरित्यादि त्रिभिरेतैर्विज्ञानोपायैरनन्तरोक्तैर्दर्शनस्पर्शनप्रश्नैः । हिशब्दो यस्मादर्थे । श्रोत्रादिभिरिति आदिशब्दात्त्वक्चक्षुरसनघ्राणानि गृह्यन्ते ॥ ४ ॥

**तत्र श्रोत्रेन्द्रियविज्ञेया[1] विशेषा रोगेषु व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते—'तत्र सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छति'(सू. अ. २६)इत्येवमादयः, स्पर्शनेन्द्रियविज्ञेयाः शीतोष्णश्लक्ष्णकर्कशमृदुकठिनत्वादयः (स्पर्शविशेषा[2])ज्वरशोफादिषु, चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षणबलवर्णविकारादयः, रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः, घ्राणेन्द्रियविज्ञेया[3] अरिष्टलिङ्गादिषु व्रणानामव्रणानां च गन्धविशेषाः, प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलमन्तरग्निं[4] वातमूत्रपुरीषाणां प्रवृत्तिमप्रवृत्तिं कालप्रकर्षादींश्च विशेषान् । आत्मसदृशेषु[5] विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयात् ॥ ५ ॥**

तत्र श्रोत्रेत्यादि । शब्देन्द्रियविज्ञेया विशेषाः सन्ति रोगेषु, ते व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते इति संबन्धः । शरीरोपचयेत्यादि उपचयः स्थौल्यम्, अपचयः कार्श्यं, बलमत्रोत्साहः । ननु प्रमेहादिषु रसा मधुरादयो मक्षिकापिपीलिकाद्युपसर्पणेन भिषग्भिरनुमेयाः, तत् कथं रसनेन्द्रियविज्ञेया इति? उच्यते, नात्र भिषजां रसनेन्द्रियं किंतु पिपीलिकादीनामित्यदोषः । अरिष्टलिङ्गादिषु ये व्रणानामव्रणानां च गन्धविशेषास्ते घ्राणेन्द्रियविज्ञेया[6] इति संबन्धः । देशस्त्रिविधो जाङ्गलानूपसाधारण-

१ 'अनुद्धतानामार्याणां वेशो वस्त्रकेशादिरचना अनुद्धतवेशः' इति चक्रः ।

१ 'शब्देन्द्रियविज्ञेया' इति पा० । २ 'स्पर्शविशेषाः' इति हस्तलिखितपुस्तके न पठ्यते । ३–६ 'गन्धेन्द्रियविज्ञेया' इति पा० । ४ 'दीप्ताग्निं' इति पा० । ५ "डाराणचन्द्रस्तु 'आत्मासदृशेषु' इति पठति व्याख्याति च—"नन्वात्मनो हीनेन्द्रियत्वे का गतिरित्याह—आत्मासदृशेष्वित्यादि । उचितापरपर्यायोऽयं सदृशशब्दः 'सदृशं समे उचिते' इति मेदिनी । ततश्चात्मासदृशेषु आत्मनोऽनुचितेषु अयुक्तेषु हीनेष्विति यावत्, विज्ञानाभ्युपायेषु विज्ञानोपायेष्विन्द्रियेषु सत्स्वित्यर्थः, तत्स्थानीयैरातुरावासस्थैः पुरुषैर्जानीयात् तांस्तानिन्द्रियविज्ञेयान् विषयान् भिषगित्यर्थः । 'आत्मसदृशेषु' इति प्रामादिकः पाठः" इति । "त्रिभिरेतैर्विज्ञानोपायैर्दीर्घायुषोऽल्पायुषश्च वेदितव्याः । तत्र दृष्ट्वा शरीरोपचयापचयौ वर्णविकृतिं छायां चातुरस्य भिषग्जानीयात्, स्पृष्ट्वा शीतोष्णादीन् स्पर्शविशेषान् विपरीताविपरीतान् ज्वरशोफादिषु, पृष्ट्वा देशं कालं जातिसात्म्यमातङ्क-

भेदात् । जातिशब्दो ब्राह्मणादिषु वर्तते । कालो द्विविधो नित्यग आवस्थिकश्च; नित्यगः ऋतुलक्षणः; आवस्थिको द्विविधः—स्वस्थस्य बाल्यादिभेदेन, व्याधितस्य ज्वरारम्भादिकालावस्थया च । सात्म्यमिति यद्यस्य सेवितं सत् सुखाय संपद्यते तत्तस्य सात्म्यं; तच्च द्विविधं चेष्टाख्यमाहाराख्यं च; चेष्टाख्यं कायवाङ्मनोभेदात्रिविधम्, आहाराख्यं रसभेदात् षड्विधम् । आतङ्कसमुत्पत्तिमिति समुत्पत्तिः कारणमुच्यते, तच्च बलवद्विग्रहादि । वेदनासमुच्छ्रायमिति वेदना वातादिवेदनास्तोदादयः, तासां समुच्छ्राय उद्भूतिः । बलं व्यायामगम्या शक्तिः । अन्तरग्निमिति कीदृशोऽन्तरग्निः ? समो विषमो मन्दो वा । वातमूत्रपुरीषाणामित्यत्रादिशब्दो लुप्तो ज्ञेयः, तेनार्तवाधोगतरक्तपित्तादीनां ग्रहणम् । कालप्रकर्षादींश्च विशेषानिति कियान् कालोऽस्मिन् व्याधावुत्पन्न इत्यादीन् भेदान्, चकाराद्दुष्टदेशप्रवृत्तपूयादीनां ग्रहणम् । अन्ये तु 'देशकालजातिसात्म्यं' इति समासान्तं पठन्ति, सात्म्यशब्दो देशादिभिः सह प्रत्येकं संबध्यते; देशस्त्रिविधो जाङ्गलादिभेदेन, तद्वैपरीत्येन देशसात्म्यमित्यादि व्याख्यानयन्ति । अपरे तु 'देशकालजातं' इति पठन्ति, व्याख्यानयन्ति च–जातशब्दो देशकालाभ्यां सह प्रत्येकं संबध्यते; देशो भूमिरातुरश्च; कस्मिन् देशे जाङ्गलेऽनूपे साधारणे वाऽयं दोषः संचितः ? कस्मिन् प्रकुपितः ? कस्मिन्नयं व्याधिरुत्पन्न ? इति; तथा, आतुरेऽपि गलादौ कस्मिन्नवयवे श्लेष्मस्थाने पित्तस्थाने वा ? । आत्मसदृशेषु दोषसदृशेषु, विज्ञानाभ्युपायेषु षड्विधेषु श्रोत्रत्वक्चक्षूरसनघ्राणप्रश्नेषु । तत्र वातसदृशेषु विज्ञानाभ्युपायेषु पञ्चेन्द्रियप्रश्नेषु व्रणे सशब्दफेनरक्तानिलादिनिर्गमनं श्रवणेन्द्रियग्राह्यं, पारुष्यरौक्ष्यादिकं त्वगिन्द्रियग्राह्यं, भस्मकपोतास्थिसवर्णत्वं चक्षुरिन्द्रियग्राह्यं, कटुगन्धत्वाजगन्धादित्वं घ्राणेन्द्रियग्राह्यं, कषायरसत्वं रसनेन्द्रियग्राह्यं, तोदनभेदनच्छेदनादिवेदनाविशेषाः प्रश्नग्राह्याः; पित्तसदृशेषु विज्ञानाभ्युपायेषु श्वयथुव्रणादीनामौष्ण्यं त्वगिन्द्रियग्राह्यं, नीलपीतवर्णत्वं चक्षुरिन्द्रियग्राह्यं, कट्वम्लरसत्वं रसनेन्द्रियग्राह्यं, तीक्ष्णातसीगन्धत्वं घ्राणेन्द्रियग्राह्यम्, ओषचोषपरिदाहादिका[1] वेदनाविशेषाः प्रश्नग्राह्याः; श्लेष्मसदृशेषु विज्ञानाभ्युपायेषु स्निग्धपैच्छिल्यादिकं त्वगिन्द्रियग्राह्यं, श्वेतत्वं चक्षुरिन्द्रियग्राह्यं, माधुर्यादि रसनेन्द्रियग्राह्यं, विस्रगन्धादित्वं घ्राणेन्द्रियग्राह्यं, कण्डूगुरुत्वादिवेदनाविशेषाः प्रश्नग्राह्या इति । वैद्यो जानीयादिति कान् ? व्याधीन्; अधिकारवशादक्षरैरनुक्तानपि; केषु सत्सु ? षड्विधेष्वपि विज्ञानाभ्युपायेष्वात्मसदृशेषु वातपित्तश्लेष्मसदृशेषु; कैर्जानीयात् ? तत्स्थानीयैः; तेषां शब्दादीनां स्थानानि श्रोत्रादीनि, तेष्वधिकृतैः शब्दस्पर्शरूपरसगन्धैः तत्स्थानीयैः; एतेनैतदुक्तं- वातादिलिङ्गैरायुर्वेदेष्वनिर्दिष्टनामधेयानपि व्याधीन् कुशाग्रमतिर्वैद्यो जानीयादिति । पञ्जिकाकारस्तु दर्शनादिपरीक्षां त्रिविधामेव पठति । 'मिथ्यादृष्टा विकारा हि' इत्यादिश्लोकान्ते "तस्मात् परीक्ष्याः सततं भिषजा सिद्धिमिच्छता । युक्त्यैव व्याधयः सर्वैः(र्वे) प्रमाणैर्दर्शनादिभिः—" इति श्लोकमधीते, व्याख्यानयति च—दर्शनादिभिरित्येवं कर्तव्ये यत् 'प्रमाणैः' इत्यधिकं करोति, तदधिकप्रमाणग्राह्यर्थं, तेन गन्धरसशब्दानामप्यवरोधः; ये त्वत्राक्षरैः षड्विधामपि परीक्षां पठन्ति, तेषां सम्यक् शास्त्रावबोधो नास्तीति भाषते । 'आत्मसदृशेषु विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयात्' इत्यपि न पञ्जिकाकारः पठति ॥ ५ ॥

**एवमभिसमीक्ष्य साध्यान् साधयेत्, याप्यान् यापयेत्, असाध्यान्नैवोपक्रमेत, परिसंवत्सरोत्थितांश्च विकारान् प्रायशो वर्जयेत् ॥ ६ ॥**

एवमित्यादि । साध्यं द्विविधं-सुसाध्यं, दुःसाध्यं च; असाध्यं द्विविधं-याप्यं, प्रत्याख्येयं च । परिसंवत्सरेत्यादि परिसंवत्सरोत्थिताः संवत्सरातीताः सर्वर्तु च महाबला ये तान् परिवर्जयेदिति; यदि ह्येकदोषजास्ते भवेयुरेवं तेषां तद्दोषप्रशमनर्तुषु प्रशमो भवेदल्पता वा, स च न भवति, तेन तेषां त्रिदोषजत्वाधिगमः, अतस्तान् परिवर्जयेत्; अथवा संवत्सरेणोत्तरोत्तरधात्वनुक्रमादसाध्यत्वं प्रायशः । प्रायशो बाहुल्येन, नावश्यतया; तेन केचिद्रक्तगुल्मादयः संवत्सरानन्तरमुपक्रमयोग्या भवन्ति, अर्दितस्तु त्रिभिर्वर्षैः साध्य इति ॥ ६ ॥

**भवति चात्र—**

**मिथ्यादृष्टा[1] विकारा हि दुराख्यातास्तथैव च ॥**
**तथा दुष्परिमृष्टाश्च मोहयेयुश्चिकित्सकम् ॥ ७ ॥**

मिथ्यादृष्टा इति रोगिणो विकारा ये मिथ्यादृष्टा असम्यग्दृष्टाः, तथा दुराख्याता रोगिणा न याथातथ्येनोक्ताः, तथा दुष्परिमृष्टाः दुष्परिमर्शिताः[2], ते चिकित्सकं मोहयेयुः, एवमविज्ञाता ये रोगास्तान् परिवर्जयेत् ॥ ७ ॥

**तत्र साध्या अपि व्याधयः प्रायेणैषां दुश्चिकित्स्यतमा भवन्ति । तद्यथा—श्रोत्रियनृपतिस्त्रीबालवृद्धभीरुराजसेवककितवदुर्बलवैद्यविदग्धव्याधिगोपकदरिद्रकृपणक्रोधनानामनात्मवतामनाथानां च; एवं निरूप्य चिकित्सां कुर्वन् धर्मार्थकामयशांसि प्राप्नोति ॥ ८ ॥**

तत्र साध्या इत्यादि । श्रोत्रियस्य वेदार्थपरिपालनपरस्य नित्यं स्नानादिभिर्व्याधिपरिवृद्धिः; नृपतेरपि स्वातन्त्र्याद्यत्किंचनकारित्वात्, अन्ये तु सौकुमार्यात् क्रियाऽसहत्वात्; स्त्रीणां लज्जया वेगाद्युपरोधाद्गुह्यव्याधेरप्रकाशनाच्च; बालवृद्धयोर्विरेचनादिक्रियायोग्यत्वेनाल्पक्रियत्वात्, अन्ये तु बालवृद्धवनिताः सुकु-

समुत्पत्तिं वेदनासमुच्छ्रायं बलाबलमग्निं वातमूत्रपुरीषाणामप्रवृत्तिं प्रवृत्तिं चेति' इति ताडपत्रपुस्तके पाठः ।

१ 'ओषचोषपरिग्रहादिकाः' इति पा० ।

१ "मिथ्येत्यादि ।–दृशिरत्र प्रत्यक्षपरः, पञ्चेन्द्रियविज्ञानाधिकारात् । तदयमर्थः–मिथ्यादृष्टा याथातथ्येनाविज्ञाताः, दुराख्याताः सम्यङ्नाख्याताः, दुःपरिमृष्टाः दुष्पृष्टाः । पूर्वेणैवोपलब्धे पुनर्दुष्परिमृष्टेति विशेषणं ह्रिया जुगुप्सया वा अल्पीयसोऽप्यवयवस्य परिमृश्यत्वेऽपरिहार्यत्वमाविष्कर्तुमित्याहुः, सिद्धे सत्यारम्भो नियमायेति न्यायात्" इति हाराणचन्द्रः । २ 'दुर्विचारिताः' इति पा० ।

मारशरीरत्वाद्भेषजासहिष्णवः; भीरुरल्पसत्त्वत्वान्न शक्नोति सोढुं क्रियां; राजसेवकस्य राजायत्तत्वात्; कितवस्य व्यसनित्वात्, कितवो द्यूतकारः; दुर्बलस्य बालवृद्धयोरिव; वैद्यविदग्धस्याभिमानेन निर्दिष्टान्यथाकारित्वात्, वैद्यविदग्धो वैद्याभिमानी, पल्लवग्राहीत्यर्थः; व्याधिगोपकस्य व्याधेरकथनादेव; दरिद्रस्य द्रव्याभावत्वे औषधाभावात्; कृपणस्य लोभेन भैषज्यानुपादानात्; क्रोधनस्य कोपेन रोगपरिवृद्धेः; अनात्मवतोऽपथ्याचरणत्वात्, अनात्मवान् अजितेन्द्रियः; अनाथानां परिचारकाभावात्, अनाथा एकाकिनः ॥ ८ ॥

**भवति चात्र—**

**स्त्रीभिः सहास्यां संवासं परिहासं च वर्जयेत् ॥**
**दत्तं च ताभ्यो नादेयमन्नादन्यद्भिषग्वरैः ॥ ९ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने विशिखानुप्रवेशनीयो नाम दशमोऽध्यायः ॥ १० ॥**

इदानीं वैद्यस्य विशिखायामन्तःपुरचारिणः प्रमाददोषद्वारं नियमयन्नाह,—भवति चात्रेत्यादि । सहास्यामेकत्र स्थितिं, संवासं प्रतिवेशवासितां, परिहासं हास्यम् । अन्नादन्यदिति अन्नमन्नपानद्रव्यं गृह्णीयात्, तस्य वृत्तिहेतुत्वात्; राज्ञाऽनुमतं तु सर्वमेव गृह्णीयादिति । संवासमित्यत्र केचित् संवादमिति पठन्ति ॥ ९ ॥

इति श्रीडल्ह(ह्ल)नविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने विशिखानुप्रवेशनीयो नाम दशमोऽध्यायः समाप्तः ॥ १० ॥

---

## एकादशोऽध्यायः ।

**अथातः क्षारपाकविधिमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । क्षारशब्दः पाकविधिभ्यां सह संबध्यते ॥

**शस्त्रानुशस्त्रेभ्यः क्षारः प्रधानतमः, छेद्यभेद्यलेख्यकरणात्त्रिदोषघ्नत्वाद्विशेषक्रियावचारणाच्च ॥३॥**

शस्त्रानुशस्त्रेभ्य इति शस्त्राणि मण्डलाग्रादीनि, अनुशस्त्राणि त्वक्सारादीनि, तेभ्यः क्षारः प्रधानतमः, द्वे पुनरनुशस्त्रे अग्निजलौकाख्ये परिशिष्टे; तदुक्तं—'विधिः प्रवक्ष्यते पश्चादग्निक्षारजलौकसाम्' (सू. अ. ८)—इति; एषां त्रयाणामपि प्राधान्यमस्ति, अत एवैषां पृथगध्यायः; अत्र जलौकसः प्रधानम्, अग्निः प्रधानतरः, क्षारः प्रधानतमः; 'क्षारादग्निर्गरीयान्' ( सू. अ. १२ ) इत्यत्र यथा न विरोधस्तथा तत्रैव वक्ष्यामः । कस्मात् क्षारस्य प्राधान्यमित्यत आह—छेद्येत्यादि । छेद्यादीनि कर्माण्यग्निजलौकसोर्न संभवन्ति, तेन ताभ्यां सकाशात् क्षारस्य प्राधान्यं, त्रिदोषघ्नत्वं क्षारस्य नानौषधिसमवायादित्यादिना साधयिष्यति, विशेषक्रियावचारणं यथा पित्तार्शःसु विशेषेणावचारणम् ॥ ३ ॥

**तत्र क्षरणात् क्षणनाद्वा क्षारः ॥ ४ ॥**

क्षारस्य निरुक्तिं कुर्वन्नाह—तत्र क्षरणादित्यादि । क्षरणाद् दुष्टत्वङ्मांसादिचालनात्, शातनादित्यर्थः; अन्ये तु क्षरणाद्दोषाणां चालनात् । क्षणनात् त्वङ्मांसादिहिंसनात् । 'क्षरणात्' इत्यत्र 'क्षपणात्' इति केचित् पठन्ति; क्षपणं शोधनमभिप्रेतम् ॥४॥

**नानौषधिसमवायात्त्रिदोषघ्नः, शुक्लत्वात् सौम्यः, तस्य सौम्यस्यापि सतो दहनपचनदारणादिशक्तिरविरुद्धा, आग्नेयौषधिगुणभूयिष्ठत्वात् कटुक उष्णस्तीक्ष्णः पाचनो विलयनः शोधनो रोपणः शोषणः स्तम्भनो लेखनः कृम्यामकफकुष्ठविषमेदसामुपहन्ता पुंस्त्वस्य चातिसेवितः ॥ ५ ॥**

क्षारगुणकर्माह—नानौषधिसमवायादित्यादि । समवायः संयोगः; यतोऽयं क्षारोऽनेकौषधिसमवायात्त्रिदोषघ्नः, अतः पित्तार्शःस्वपि यौगिकत्वमस्य । शुक्लत्वात् सौम्य इत्यस्याग्रे केचिदपिशब्दं लुप्तनिर्दिष्टं वर्णयन्ति, व्याख्यानयन्ति च—न केवलमुष्णः सौम्योऽपीति, तेनास्य वक्ष्यमाणमुष्णत्वमपि न विरुध्यते । दहनपचनदारणशक्तिरविरुद्धा हिमानीवत् । पाचन इति द्विविधोऽपि क्षारः; अत्र व्रणशोथस्य प्रतिसारणीयः पाचनः, अन्नाजीर्णस्य पानीयः । विलयनः शोफस्य वातकफभूयिष्ठस्य । शोधनो दुष्टव्रणस्य, रोपणः शुद्धव्रणस्य, अत्र योगशक्तिप्रभावात्तिलयवकल्कवत् क्षारस्य शोधनरोपणत्वं न विरुध्यते; शोधन एवायं क्षारः, शुद्धस्तु व्रणः स्वयमेव रोहतीत्यन्ये; न हि शुद्धे व्रणे रोपणार्थं क्षारोऽवचार्यते सिरादिक्षणनभयात्, तस्मात्

---

१ 'दत्तं ताभ्यो न गृह्णीयादन्नादन्यद्भिषक् सदा । वेदोत्पत्तिः शिष्यदीक्षा दानमध्ययनस्य च । प्रभाषणं चाग्रहरमृतुचर्या तथैव च । यन्त्रशस्त्रावचारं च योग्यासूत्रीयमेव च । विशिखानुप्रवेशं च दशकः प्रथमो मतः' इति ताडपत्रपुस्तके पाठः । २ पचनं पाकः, विधिरवचारणं, क्षारस्य पाकविधी यत्र तं क्षारपाकविधिम् । ३ "छेद्यादिकर्तृत्वं क्षारस्य भगन्दरच्छेदनाडीदारणकुष्ठलेखनादिना" इति चक्रः । ४ 'तै पुनर्द्वे अनुशस्त्रे' इति पा० ।

१ विशेषक्रियायां पानाख्यायामप्यवचार्यते क्षारः, शस्त्रानुशस्त्राणि तु पाने नोपयुज्यन्ते, अतः सिद्धमस्य विशेषक्रियावचारणं; तदुक्तं वाग्भटेन—"सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत् । छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ दुःखावचार्यशस्त्रेषु तेन सिद्धिमयात्सु च । अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्यते ( वा. सू. अ. ३० )" इति । २ "नच वाच्यं यद्यातइरादिक्षारद्रव्याणां दग्धत्वान्न तद्गुणान्वयो भस्मनीति, दृष्टो हि भस्मन्यपि प्रकृतिगुणान्वयः, उक्तं हि 'सक्षौद्रमिन्दीवरभस्मवारि निहन्ति रक्तं' ( उ. तं. अ. ४५ ) इत्यादि" इति चक्रः । ३ 'दहनपचनादिकर्तृतया आग्नेयत्वं क्षारस्य स्फुटं, पित्तजयाय त्वगुणं सौम्यत्वमस्फुटं स्फोरयन्नाह—शुक्लत्वात् सौम्य इति । सौम्यत्वेऽप्यस्य नहि शीतत्वम्, उष्णत्वस्यैव दर्शनात्; भूतानां चादृष्टविशेषयन्त्रितो मेलकविशेषः समानाश्रयमपि गुणं नारभते; यथा आमलके अम्लत्वमारभते नोष्णत्वम्' इति चक्रः । ४ 'स खल्वा°' इति पा० । ५ 'स्तम्भनः सिराच्छेदादतिप्रवृत्तस्य शोणितस्य, क्षारो हि छिन्नं सिरामुखं पाचयित्वा शोणितगतिं निरुणद्धि' इति हाराणचन्द्रः ।

पारम्पर्येण रोपण इति; केचिदस्य रोपणत्वं न पठन्त्येव। शोषणो व्रणक्लेदस्य। स्तम्भनः शोणितातिप्रवृत्तेः। उपहन्तृशब्दः कृम्यादिभिः सह प्रत्येकं संबध्यते; कृमयो बाह्याभ्यन्तराः, तेषां द्विविधः क्षार उपहन्ता; आमः अपक्वरसः, मेदसः पानीय एवोपहन्ता, पुंस्त्वस्य शुक्रस्य ॥ ५ ॥

**स द्विविधः—प्रतिसारणीयः, पानीयश्च ॥ ६ ॥**

इदानीमुक्तगुणकर्मणः क्षारस्य द्वैविध्यं दर्शयन्नाह—स द्विविध इत्यादि। प्रतिसारणीयः प्रतिसारणार्हः; पानीयः पानार्हः, क्षारोदकमित्यर्थः; ये चान्येऽपि पाक्यसर्जिकायवक्षारा यथारोगं वक्तव्यास्तेषां चूर्णवटकावलेहादिषु प्रयोगः कर्तव्यः ॥ ६ ॥

**तत्र प्रतिसारणीयः कुष्ठकिटिभदद्रुमण्डलकिलासभगन्दरार्बुदार्शोदुष्टव्रणनाडीचर्मकीलतिलकालकन्यच्छव्यङ्गमशकबाह्यविद्रधिकृमिविषादिषूपदिश्यते सप्तसु च मुखरोगेषूपजिह्वाधिजिह्वोपकुशदन्तवैदर्भेषु तिसृषु च रोहिणीषु, एतेष्वेवानुशस्त्रप्रणिधानमुक्तम् ॥ ७ ॥**

प्रतिसारणीयस्य विषयं दर्शयन्नाह,—तत्र प्रतिसारणीय इत्यादि। किटिभः कुष्ठविशेषः, तस्य पृथगविधानं नियमेन प्रतिसारणीयसाध्यत्वज्ञापनार्थं; दद्रु मण्डलं दद्रुमण्डलं; किलासं त्वग्गतं श्वित्रकुष्ठं; चर्मकीलः अर्शोनिदानपठितः; न्यच्छव्यङ्गौ क्षुद्ररोगनिदानोक्तौ; बाह्यशब्दः विद्रधिकृमिविषैः प्रत्येकं संबध्यते। विषादिष्वित्यादिशब्दाद्वल्मीकादीनां ग्रहणम्। 'बाह्यकृमिविशेषादिषु' इति केचित् पठन्ति। के ते सप्त मुखरोगा येषु क्षार उपयुज्यते, इत्याह—उपजिह्वेत्यादि।—उपजिह्वादीन् रोगान् मुखरोगनिदाने वक्ष्यति। तिसृणां रोहिणीनां ग्रहणं सन्निपातरक्तजयोरसाध्यत्वज्ञापनार्थम्। कुतः पुनरुपजिह्वादिभ्योऽन्येषु मुखरोगेषु क्षारो नोपयुज्यत इत्याह—एतेष्वेवेत्यादि। अत्रानुशस्त्रं क्षार एव। 'एतेष्वनुशस्त्रनिपातनम्' इति क्वचित् पाठः ॥ ७ ॥

**पानीयस्तु गरगुल्मोदराग्निसङ्गाजीर्णारोचकानाहशर्कराश्मर्याभ्यन्तरविद्रधिकृमिविषार्शःसूपयुज्यते ॥ ८ ॥**

पानीयविषयं दर्शयन्नाह—पानीयस्त्वित्यादि। गरः कृत्रिमं विषं, दूषीविषमित्यन्ये; अग्निसङ्ग इति अग्निः सज्यते लीयते यस्माद्येन यस्मिन् वा सोऽग्निसङ्गः, तेन वातश्लैष्मिकग्रहणीविसूचिकालसकविलम्बिकादिविकारा गृह्यन्ते; शर्करा वातेन भिन्नाऽश्मरी शर्करेत्युच्यते ॥ ८ ॥

**अहितस्तु रक्तपित्तज्वरितपित्तप्रकृतिबालवृद्धदुर्बलभ्रममदमूर्च्छातिमिरपरीतेभ्योऽन्येभ्यश्चैवंविधेभ्यः ॥ ९ ॥**

क्षारस्य येष्वयौगिकत्वं तानाह—अहितस्त्वित्यादि। भ्रमश्चक्रारूढस्येव भ्रमणं, मदो विषमद्यशोणितोत्थो विकारः पूगफलेनेव मत्तता, मूर्च्छा चेतनाच्युतिः, परीतशब्दो भ्रमादिभिः सह प्रत्येकं संबध्यते ॥ ९ ॥

**तं चेतरक्षारवद्दग्ध्वा परिस्रावयेत्; तस्य विस्तरोऽन्यत्र ॥ १० ॥**

तत्र पानीयक्षारपाकं विधिं च संक्षेपेण दर्शयितुमाह—तं चेतरक्षारवदित्यादि। इतरक्षारवत् प्रतिसारणीयवत्; यथा प्रतिसारणीयस्य काष्ठदाहः षड्गुणोदकपाकस्त्रिभागावशेषानन्तरं परिस्रावणं च, तद्वत् पानीयस्यापि पाकविधिः स्रावणं च द्वितीयपाकवर्जं; पानीयक्षारोदकप्रमाणमुत्तमा मात्रा पलं, मध्यमा कर्षत्रयम्, अधमा अर्धपलम्। अन्यत्र गुल्मादिष्वध्यायेषु ॥१०॥

**अथेतरस्त्रिविधो मृदुर्मध्यस्तीक्ष्णश्च। तं चिकीर्षुः शरदि गिरिसानुजं शुचिरुपोष्य प्रशस्तेऽहनि प्रशस्तदेशजातमनुपहतं मध्यमवयसं महान्तमसितमुष्ककमधिवास्यापरेद्युः पाटयित्वा खण्डशः प्रकल्प्यावपाट्य निवाते देशे निचितिं कृत्वा सुधाशर्कराश्च प्रक्षिप्य तिलनालैरादीपयेत्। अथोपशान्तेऽग्नौ तद्भस्म पृथग्गृह्णीयाद्भस्मशर्कराश्च। अथानेनैव विधानेन कुटजपलाशाश्वकर्णपारिभद्रकबिभीतकारग्वधतिल्वकार्कस्नुह्यपामार्गपाटलानक्तमालवृषकदलीचित्रकपूतीकेन्द्रवृक्षास्फोताश्वमारकसप्तच्छदाग्निमन्थगुञ्जाश्चतस्रश्च कोशातकीः समूलफलपत्रशाखा दहेत्। ततः क्षारद्रोणमुदकद्रोणैः षड्भिरालोड्य मूत्रैर्वा यथोक्तैरेकविंशतिकृत्वः परिस्राव्य, महति कटाहे शनैर्दर्व्याऽवघट्टयन् विपचेत्। स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्च, तमादाय महति वस्त्रे परिस्राव्येतरं विभज्य पुनरग्नावधिश्रयेत्। तत एव क्षारोदकात् कुडवमध्यर्धं वाऽपनयेत्। ततः कटशर्कराभस्मशर्कराक्षीरपाकशङ्खना-**

१ अत्र विद्रधिशब्दो न पठ्यते हस्तलिखितपुस्तकेषु। २ 'क्षारो हि शोणितेन सह संभूय तानि तानि कर्माणि करोतीत्याह—एतेष्वित्यादि। एतेषु कुष्ठादिषु, चकारात् कठिनाश्रयेषु ताद्वशेषु कठिनोत्सन्नव्रणमांसादिषु चैवानुशस्त्रप्रणिधानं यथायोगं शस्त्रानुशस्त्रप्रणिधानानन्तरं क्षारप्रणिधानमुक्तं पूर्वाचार्यैरिति शेषः।' इति हाराणचन्द्रः। ३ 'कृमिविषाभ्यां' इति पा०। ४ अत्रारोचकविद्रधिशब्दौ न पठ्येते केषुचित्पुस्तकेषु।

१ 'मात्रा तु पलत्रिकर्षार्धपलरूपा उत्तममध्यमाधमबलेषु' इति चक्रः। २ 'अथेतरो मृदुर्मध्यस्तीक्ष्णश्च' इति पा०। ३ 'शुचिरुपवसन्निति क्षारद्रुमस्थितभूतविघ्नोपशमार्थं, एवमेव च ग्रहणे भैषज्यं गुणयुक्तं भवतीति दर्शयितुं' इति चक्रः। ४ 'असितमोक्षकं' इति पा०। ५ "अधिवास्येति समन्त्रबलिकर्मादिनाऽधिवासनं कृत्वा' इति चक्रः। ६ 'ततोऽपरेद्युः' इति पा०। ७ हाराणचन्द्रस्तु 'निचितं कृत्वा' इति पठति, व्याख्यानयति च–निचितं कृत्वा राशीकृत्य'। ८ 'कल्पेन' इति पा०।

**भीरग्निवर्णाः कृत्वाऽऽयसे पात्रे तस्मिन्नेव क्षारोदके निषिच्य पिष्ट्वा तेनैव द्विद्रोणेऽष्टपलसंमितं शङ्खनाभ्यादीनां प्रमाणं प्रतिवाप्य, सततमप्रमत्तश्चैनमवघट्टयन् विपचेत् । स यथा नातिसान्द्रो नातिद्रवश्च भवति तथा प्रयतेत । अथैनमागतपाकमवतार्यानुगुप्तमायसे कुम्भे संवृतमुखे निदध्यादेष मध्यमः ॥ ११ ॥**

**एष चैवाप्रतीवापः पक्वः संव्यूहिमो मृदुः ॥१२॥**

अथेतर इत्यादि । इतरः प्रतिसारणीयः; अथेतरो मृदुरित्यत्र केचिन्न पठन्ति । प्रतिसारणीयस्य पाकविधिं निर्देष्टुमाह—तं चिकीर्षुरित्यादि । तं प्रतिसारणीयं, चिकीर्षुः कर्तुमिच्छुः; तं चिकीर्षुरित्यत्र 'अथेतरं चिकीर्षुः' इति केचित् पठन्ति; अथशब्दो मङ्गलार्थः, इतरं प्रतिसारणीयम् । गिरिसानुजं पर्वतोपरिजातं, "गिरिसानुजमिति जाङ्गलदेशोपलक्षणम्" इत्यन्ये । 'शुचिरुपोष्य' इत्यत्र 'शुचिरुपवसन्' इति केचित् पठन्ति । अनुपहतं कृमिदवाग्निगराद्यनुपहतम् । असितमुष्ककं कृष्णपुष्पमोक्षकं, न श्वेतादिपुष्पम् । अधिवास्य मन्त्रवद्बलिकर्मोपहरेदित्यर्थः । केचिदस्याग्रे "मन्त्रेणानेनाभिमन्त्र्य—अग्निवीर्य ! महावीर्य ! मा ते वीर्यं प्रणश्यतु । इहैव तिष्ठ कल्याण ! मम कार्यं करिष्यसि ॥ मम कार्ये कृते पश्चाद्देवलोकं गमिष्यसि । श्वेतरक्तपुष्पसहस्रं जुहुयात्" इति पठन्ति; अयं च निबन्धेषु न पठ्यते । अन्ये त्वत्र "प्राङ्मुखोपगतस्तत्र बलिं दत्त्वा चतुर्दिशम् । वृक्षाभ्याशे ततो ब्रूयात् प्राञ्जलिः प्रयतः शुचिः ॥ निवसन्तीह भूतानि यान्यस्मिन् कानिचिद्द्रुमे । अपक्रामन्त्वयं छेद्यः पैरार्थे श्वो मया द्रुमः । एवमामन्त्रितं वृक्षं लाजाधूपैः सुरासवैः । प्रभाते वैकृतं तत्र न पश्येच्छेदयेत्ततः । शान्ते नीहारतिमिरे युगमात्रोदिते रवौ । पूर्वाग्रमुत्तराग्रस्थं तं तरुं पात(ट)येद्द्रुतम्" इत्यधिवासनमन्त्रं पठन्ति, भोजेऽप्येवमेवं पठ्यते" इति च वदन्ति । अपरेद्युरपरस्मिन् दिने । खण्डशः प्रकल्प्य बहून् खण्डान् कृत्वा । अवपाट्य तान् खण्डान् पुनः पाटयित्वा; 'अपरेद्युः पाटयित्वा' इत्यस्य स्थाने 'प्रभाते वैकृतमद्भुतं न पश्येत्तदोपकल्पयेत्' इति क्वचित् पाठः । वैकृतं तरुशाखाभङ्गादि, अद्भुतं रुधिरवर्षादि, इति च तस्य व्याख्यानम् । निचितिः काष्ठानामौत्तराधर्येणावस्थितिः; केचिदत्र 'चितिं कृत्वा' इति पठन्ति, चितिं दाहस्थानमिति व्याख्यानयन्ति । तिलनालैरादीपयेत् तिलनालदीपनाच्छक्त्यतिशयो भवति । निचितिं कृत्वेत्यस्याग्रे केचित् 'सुधाशर्कराः प्रक्षिप्य' इति पठन्ति, व्याख्यानयन्ति च—सुधाशर्कराः सुधापाषाणाः । भस्मशर्कराश्चेति दह्यमानार्द्रकाष्ठरसाच्छर्करैवान्योन्यसंहतं भस्मजातं भस्मशर्करेत्युच्यते, तां च पृथक् गृह्णीयात्; पृथग्ग्रहणं भिन्नप्रयोजनार्थं; तेन भस्मनः क्षारोदककरणं, भस्मशर्करा पुनः क्षारद्रव्यसमावापिनी । अन्ये तु 'पृथग्गृह्णीयात्' इत्यस्याग्रे 'कटशर्करा भस्मशर्कराश्च' इति पठन्ति, 'कटशर्करा अदग्धसुधापाषाणाः, भस्मशर्करास्तु क्षारद्रव्यैः सह दग्धाश्चूर्णपाषाणाः' इति च व्याख्यानयन्ति । एष दाहकल्पः । अथानेनैवेत्यादि । अथानेनैव विधानेनेत्यनेन निवातदेशनिचितिस्तिलनालदीपनं च लभ्यते, गिरिसानुजमित्यस्य जाङ्गलदेशोपलक्षणत्वं, तेनेहापि कुटजादीन्यपि जाङ्गलानि गृह्यन्ते । मुष्ककस्य कुटजादीनां चैकदेशकल्पनत्वेऽपि पृथग्दाहविधानं कुटजादिभस्मनो मुष्ककभस्मनो भागाधिक्यख्यापनार्थं, भागाधिक्यं च 'ततः क्षारद्रोणमुदकद्रोणैः षड्भिः'—इत्यत्र वक्ष्यामः । अन्ये तु मुष्ककेणैकेनापि क्षारो भवतीति पृथग्विधानं बोधयति । पलाशः किंशुकः; अश्वकर्णः पूर्वदेशे गन्धमुण्डः पिप्पलसदृशैः; पारिभद्रको देवदारुः, अन्ये तु रक्तकुसुमः कण्टकीवृक्षविशेषः स्वनाम्ना प्रसिद्धः; तिल्वकः स्वनामप्रसिद्धः; इन्द्रवृक्षः कुटज एव, द्विविधो हि कुटजो बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान्, अणुफलवृन्ता श्यावारुणपुष्पा स्त्री; आस्फोता सारिवा; कोशातकी घोषकः; सा चतुर्विधा-बृहत्फला, अल्पफला, पीतपुष्पा, श्वेतपुष्पा, इति । समूलफलपत्रशाखा इति कुटजादिभिः सह प्रत्येकं संबध्यते । केचित् कुटजादिकोशातक्यन्तं समस्य पठन्ति । ततः क्षारद्रोणमित्यादि ततो मुष्ककुटजादिदाहानन्तरम् । क्षारद्रोणमिति मुष्ककभस्मनो द्वौ भागौ कुटजादिभस्मन एको भाग इति मिश्रीकृतं क्षारद्रोणमुच्यते । उदकद्रोणैः षड्भिरिति भस्मद्रव्यात् षड्गुणोदकपरिभाषेयम्, अनयैवान्यत्रापि क्षारपाकविधौ क्षारकल्पनं; पक्षान्तरं दर्शयति,—मूत्रैर्वा यथोक्तैरिति दुन्दुभिस्वनीयकल्पोक्तैरित्यर्थः; तथाहि—'गवां मूत्रेण क्षारकल्पेन परिस्राव्य विपचेत्' ( क. अ. ६ )—इति; अत्रापि क्षारकल्पेनेति वचनाद्भस्मद्रव्यान्मूत्रस्य षड्गुणत्वमुक्तम् । एकविंशतिकृत्वः परिस्राव्येति एकविंशतिवारान् वस्त्रेण गालयित्वा । अवघट्टयन् चालयन्, तावत् पचेत् स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्चेति । एतेऽच्छादयो गुणास्त्रिभागावशेषे क्षारोदके भवन्ति । तं क्षारक्वाथम् । आदाय गृहीत्वा । इतरं विभज्य क्षारभस्मकल्कं;

१ "अत्र गुणोत्कर्षार्थमनुक्तान्यपि दक्षशकृदादीन्यावाप्यान्याहुः—'श्लक्ष्णं शकृद्दक्षशिखिगृध्रकङ्ककपोतजम् । चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च' (वा. सू. अ. ३०) इति प्रक्षेपाधिकारे तन्त्रान्तरानुशासनात्" इति डल्हण/हाराणचन्द्रः । २ "आयसे पात्रे इति लौहपात्रस्यैवातिदृढत्वेन क्षाराभेद्यत्वात्; किंवा लौहपात्रे एव शक्त्यतिशयः क्षारस्य भवतीत्येतद्वचनादुन्नीयते" इति चक्रः । ३ "क्षारो द्विविधः सप्रतीवापोऽप्रतीवापश्च; आवापानन्तरं यत्पुनः शक्त्यतिशयार्थं दीयते स प्रतीवापः; तत्राप्रतीवापो मृदुः संव्यूहिमसंज्ञः, सप्रतीवापश्च पाक्यसंज्ञस्तीक्ष्णः" इति चक्रः । ४ 'असितमोक्षकं' इति पा० । ५ 'पूजनार्थे मया' इति पा० । ६ 'भोजेऽप्ययमेव' इति पा० ।

१ "काष्ठरसो भस्मनि गलितो दग्धः शर्करासदृशत्वाद्भस्मशर्करोच्यते । तथाच निघण्टुः,—'मुष्ककाद्दह्यमानात्तु रसः प्रच्यवते हि यः । भस्मना सह संयुक्तः काठिन्यमुपगच्छति ॥ तां भस्मशर्करामाहुः' इत्यादि" इति चक्रः । २ 'अश्वकर्णः सर्जभेदः' इति चक्रः । 'शालभेदः' इति हाराणचन्द्रः । ३ 'अन्नपानोक्तैर्गवादिमूत्रैरित्यर्थः' इति चक्रः ।

'इतरद्विसृज्य' इति क्वचित् पाठः, तत्रेतरत् भस्म किट्टभूतम् । अधिश्रयेत् आरोपयेत् । तत एव क्षारोदकात् कुडवमध्यर्धं वाऽपनयेदिति कुडवमष्टौ पलान्यपनयेत्; अध्यर्धमित्यत्र कुडवमिति संबध्यते, तेनाध्यर्धं कुडवं द्वादशपलानि वाऽपनयेत् । अन्ये त्वत्र द्वैगुण्यं न मन्यन्ते । एतच्च क्षारोदकापनयनं कटशर्करादीनां निषेकार्थं पेषणार्थं च; अन्ये तु कटशर्करादीनां भागप्रमाणज्ञापनार्थमिति वदन्ति, तेन कटशर्करादीनि द्रव्याणि प्रत्येकं कुडवप्रमाणान्यध्यर्धकुडवप्रमाणानि वा आवपेदित्यर्थः । ततः कटशर्करेत्यादि कटशर्करा गाङ्गेष्ठी, भस्मशर्करा अत्रैवाध्याये पूर्वं व्याख्याता; अन्ये तु कटशर्कराभस्मशर्करयोरन्यथा व्याख्यानं कुर्वन्ति, तदप्यत्रैवाध्याये कथितम् । क्षीरपाको जलशुक्तिः । आयसे पात्रे लौहे भाजने, एते अग्निवर्णाः कृत्वा, तस्मिन्नेव क्षारोदके पूर्वोपनीते कुडवेऽध्यर्धकुडवे वा, निषिच्य प्रक्षिप्य । अत्रैषां कटशर्करादीनामनिर्दिष्टप्रमाणत्वात् समा भागा इत्येके; समभागश्चात्र प्रत्येकमष्टौ पलानि; एवं च द्वात्रिंशत् पलानि भवन्ति; एतेन द्विद्रोणेऽष्टपलसंमितमित्यपि प्रमाणमनुकूलितं भवति; द्विद्रोणे षोडशांशश्चावापभागो ज्ञापितो भवति । अन्ये त्वष्टपलसंमितमिति कटशर्करादीनां प्रत्येकं द्वे द्वे पले इत्येवमष्टपलत्वं मन्यन्ते । तन्न, शङ्खनाभिप्रधानत्वादेव क्षारस्य; एवं च विश्वामित्रभोजोक्तभागकल्पना निरस्ता; तदुक्तभागग्रहणेऽपि शङ्खनाभेरप्राधान्यं स्यात् । द्विद्रोणग्रहणेन त्रिभागावशेषं क्षारोदकं सर्वत्र परिभाषयन्ति वृद्धाः, प्रायेण हि विमिश्रितं क्षारद्रोणमाहुः; उदकद्रोणैः षड्भिरिति षट्त्रिंशदधिकपञ्चदशशतोदकपलैः सह विपचेदित्यर्थः; ततस्तस्य पच्यमानस्य तैक्ष्ण्याच्छरक्तपिच्छिलादयो गुणाः षोडशांशावशिष्टे षण्णवतिपलप्रमाणे भवन्ति । अन्ये तु वदन्ति—न चात्र चतुर्भागाद्यवशेषणादिपरिभाषा व्याप्रियते, तस्माच्छनैः शनैस्तावद्विपचेद्यावद्रागादिगुणयुक्तः क्वाथो भवति क्षारसंज्ञित इति । षण्णवतिपलप्रमाणे तु क्षारोदके कटशर्करादीनां समभागानां चतुर्थांशमावापमिच्छन्ति ॥ ११ ॥ १२ ॥

**प्रतीवापे यथालाभं दन्तीद्रवन्तीचित्रकलाङ्गलीपूतिकप्रवालतालपत्रीविडसुवर्चिकाकनकक्षीरीहिङ्गुवचातिविषाः समाः श्लक्ष्णचूर्णाः शुक्तिप्रमाणाः प्रतीवापः । स एव सप्रतीवापः पक्वः पाक्यस्तीक्ष्णः ॥ १३ ॥**

सप्रतीवापं पाक्यसंज्ञं तीक्ष्णं प्रतिपादयन्नाह—प्रतीवापे यथालाभमित्यादि । प्रतीवापे इति क्षिप्ते आवापे पुनरपरद्रव्यप्रक्षेपः प्रतीवापः । द्रवन्ती दन्तीभेदः, संवरीति भाद्रानके; लाङ्गली कलिका(हा)रिका; पूतीकप्रवालाः कण्टकिकरञ्जपल्लवाः, अन्ये तु 'चिरबिल्वपल्लवपत्रं च' इति पठन्ति; तालपत्री मूषली, कर्णकक्षीरी सुवर्णक्षीरी, कङ्कुष्ठमित्यन्ये । शुक्तिप्रमाणाः प्रत्येकमर्धपलप्रमाणाः । स एव सप्रतीवापः पक्वः पाक्यस्तीक्ष्ण इति स एव संव्यूहिमसंज्ञः क्षारो दन्त्यादिद्रव्यप्रतीवापेन सहितः पक्वः पाक्यसंज्ञो भवति तीक्ष्णश्चेत्यर्थः । न चास्य तीक्ष्णदोषः, कुतः? अतितीक्ष्णः क्षारस्य दोषः । अन्ये तु 'स एव सप्रतीवाप' इत्यादिपाठस्थाने 'स च पूर्ववत् पक्वस्तीक्ष्ण' इति पठन्ति ॥ १३ ॥

**तेषां यथाव्याधिबलमुपयोगः ॥ १४ ॥**

तेषां क्षाराणाम् ॥ १४ ॥

**क्षीणबले तु क्षारोदकमावपेद्बलकरणार्थम् ॥ १५ ॥**

कालवशाद्धीनौषधिवशाद्वा मृदौ क्षारे बलकरणायावापमाह—क्षीणबले त्वित्यादि । क्षीणबले हीनशक्तौ क्षारे क्षारोदकमावपेत्, पूर्वकल्पेन कृतं क्षारोदकं प्रक्षिपेत्, प्रक्षिप्य पुनर्विपचेदिति । बलकरणार्थं तीक्ष्णादिशक्त्युपचयार्थम् ॥ १५ ॥

**भवतश्चात्र—**

**नैवातितीक्ष्णो न मृदुः शुक्लः श्लक्ष्णोऽथ पिच्छिलः ॥**
**अविष्यन्दी शिवः शीघ्रः क्षारो ह्यष्टगुणः स्मृतः १६**

क्षारगुणदोषान् प्रतिपादयन्नाह,—भवतश्चात्र नैवातीत्यादि । अतिशब्दस्तीक्ष्णमृदुशुक्लैः सह प्रत्येकं संबध्यते, अनतिशुक्लत्वात् प्रतिवापाल्पता सूचिता भवति; अन्ये त्वनतिशब्दं शुक्लेन संबध्नन्ति । श्लक्ष्णः अकर्कशः; अन्ये तु श्लक्ष्णस्थाने 'मृत्स्न' इति पठन्ति, मृत्स्नस्त्वगिन्द्रियसुखः । अविष्यन्दी योऽवचारितो न प्रसर्पति । शिव इति सौम्य उच्यते; शिवस्थाने केचित् 'सम' इति पठन्ति, तत्र नातिसान्द्रो नातिद्रव इत्यर्थः । शीघ्रः शीघ्रकारी । केचित् क्षारगुणेषु मध्ये 'सुखनिर्वाप्यो दोषघ्नः' इति गुणद्वयं पठन्ति; 'सुखनिर्वाप्यः सुखनिर्वर्त्यः, दोषघ्नो दोषमात्रानुसारी; दोषशब्दोऽत्र व्याधौ वर्तते' इति च व्याख्यानयन्ति । नैवातितीक्ष्ण इत्यादिनैवाष्टसंख्या लब्धा 'पुनरष्टगुण' इति यत् कृतं तत् कटुरसादिगुणातिरेकत्वनिषेधार्थम् ॥ १६ ॥

**अतिमार्दवश्वैत्यौष्ण्यतैक्ष्ण्यपैच्छिल्यसर्पिताः ॥**
**सान्द्रताऽपक्वता हीनद्रव्यता दोष उच्यते ॥ १७ ॥**

परिहारार्थं दोषानधिकृत्याह,—अतिमार्दवेत्यादि । अतिशब्दो मार्दवश्वैत्यादिभिः सह प्रत्येकं संबध्यते । श्वैत्यं शुक्लता । केचित् क्षारदोषान् सार्धश्लोकेनाधीयते । तद्यथा,—"अत्यौष्ण्यमतिपैच्छिल्यमतितैक्ष्ण्यं विसर्पिता । अत्यर्थं मार्दवं श्वैत्यमत्यर्थं सान्द्रमेव च ॥ हीनौषधविपक्वत्वं क्षारदोषा नव स्मृताः"—इति । अत्यर्थशब्दः प्रत्येकं संबध्यते । संख्येयनिर्देशादेव संख्या प्राप्ता, पुनर्नवेति संख्याकरणं क्षारातिसेवया पुंस्त्वहन्तृत्वदोष-

१ 'अथैषां' इति पा० । २ 'चत्वारिंशत्पलानि' इति पा० । ३ 'चतुर्थांशे आवापमिच्छन्ति' इति पा० । ४ 'कनकक्षीरी 'कङ्कुष्ठ' इति व्यवह्रियते' इति चक्रः ।

१ "क्षीणबलत्वमत्र द्रवक्षयादेव लक्षणीयं; तदुक्तं वाग्भटे—'बलार्थं क्षीणपानीये क्षाराम्बु पुनरावपेत्' इति" इति हाराणचन्द्रः । २ "क्षारस्यातितीक्ष्णत्वं वाक्शतात् प्रागेरण्डनालदाहात्, मृदुत्वं चावागप्यदाहाल्लक्षणीयं; यदुक्तं 'यथैरण्डजनालमेष दहति क्षारो वरो वाक्शतात्' इति । वाक्शतावधि दहति तर्हि वरः श्रेष्ठोऽन्यथा त्ववरोऽतितीक्ष्णत्वेन मृदुत्वेन चेति तात्पर्यम्" इति हाराणचन्द्रः ।

संख्याशङ्कानिरासार्थम् । केचित् क्षारदोषान्न पठन्ति, उक्तगुणविपर्ययेणैव दोषाणां लब्धत्वादिति ॥ १७ ॥

**तत्र क्षारसाध्यव्याधिव्याधितमुपवेश्य निवातातपे देशेऽसंबाधेऽग्रोपहरणीयोक्तेन विधानेनोपसंभृतसंभारं, ततोऽस्य तमवकाशं निरीक्ष्यावघृष्यावलिख्य प्रच्छयित्वा, शलाकया क्षारं प्रतिसारयेत्, दत्त्वा वाक्शतमात्रमुपेक्षेत ॥ १८ ॥**

इदानीं क्षारप्रतिसारणविधिमधिकृत्याह,—तत्र क्षारसाध्येत्यादि । क्षारसाध्यव्याधिव्याधितमिति क्षारस्य साध्यो यो व्याधिस्तेन व्याधितं दुःखितम् । निवातातपे देशे इति निशब्दो वातातपाभ्यां सह प्रत्येकं संबध्यते । असंबाधेऽसंकीर्णदेशे, अग्रोपहरणीयोक्तेन विधानेनेति 'प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु' ( सू. अ. ५ ) इत्यादिकेन विधिना; अस्य च क्षारं प्रतिसारयेदित्यनया क्रियया संबन्धः । उपसंभृतसंभारमिति यन्त्रशस्त्रक्षाराग्निशलाकेत्यादिसमीपस्थापितोपकरणम् । ततः संभृतसंभारानन्तरम् । अस्य व्याधितस्य, तमवकाशं तं प्रदेशं, निरीक्ष्येति व्याध्याकारविज्ञानार्थम्, अवघृष्येति पित्तदुष्टम्[1], अवलिख्येति वातदुष्टं सुप्तकठिनत्वचं, प्रच्छयित्वेति कफदुष्टं कण्डूश्वयथुप्रबलं, पश्चाच्छलाकया क्षारं प्रतिसारयेदित्यर्थः; 'क्षारं प्रतिसारयेत्' इत्यस्य स्थाने 'क्षारं पातयित्वा' इति केचित् पठन्ति । कालावधिं प्रतिपादयति—दत्त्वा वाक्शतमात्रमित्यादि ।—वाक्[2] लघ्वक्षरोच्चारणं; वाक्शतमात्रमिति मात्रग्रहणेनैतद्बोधयति—एतावता कालेन यो दहति स यथोक्तगुणः क्षारः । अन्ये मात्रस्थाने एवशब्दं पठन्ति, "वाक्शतमेव नाधिकं न न्यूनं च" इति च व्याख्यानयन्ति । इदानीं क्षारस्य प्रतिदोषं लेपप्रमाणमवचारणकालं च नियमयन्नाह,—पद्मपत्रसम इत्यादि । इमं च पाठं केचिदाचार्या न पठन्ति, स चाभावात् समग्रो न लिखित इति ॥ १८ ॥

**तस्मिन्निपतिते[3] व्याधौ कृष्णता दग्धलक्षणम् ॥**

सम्यग्दग्धलक्षणं वक्तुमाह,—तस्मिन्निपतित इत्यादि । व्याधिशब्दोऽत्र दुष्टमांसादिषु वर्तते, नतु दुःखसंज्ञिके व्याधौ; कुतः? तत्र कृष्णताभावात् । एतत्तु[4] सामान्यं सम्यग्दग्धलक्षणम् ।—

**तत्राम्लवर्गः शमनः सर्पिर्मधुकसंयुतः ॥ १९ ॥**
**अथ चेत् स्थिरमूलत्वात्[5] क्षारदग्धं न शीर्यते ॥**
**इदमालेपनं तत्र समग्रमवचारयेत् ॥ २० ॥**
**अम्लकाञ्जिकबीजानि तिलान् मधुकमेव च ॥**
**प्रपेष्य समभागानि तेनैनमनुलेपयेत् ॥ २१ ॥**

सम्यग्दग्धे पश्चात्कर्माह—तत्राम्लवर्ग इत्यादि । अम्लवर्गः सौवीरकतुषोदकधान्याम्लादिः । स्थिरमूलत्वात् दृढमूलत्वादित्यर्थः । न शीर्यते न शटति । इदमिति अग्रे वक्ष्यमाणम् । तत्रेति अशीर्यमाणे क्षारदग्धे । समग्रं सर्वम् । अवचारयेत् प्रयोजयेत् । तदेवालेपनमाह,—अम्लेत्यादि । अम्लकाञ्जिकबीजानीति अम्लकाञ्जिकाधःस्थितं द्रव्यम् । तेनेति समभागपिष्टेनाम्लकाञ्जिकबीजादिना । एनं क्षारदग्धम् ॥ १९-२१ ॥

**तिलकल्कः समधुको घृताक्तो व्रणरोपणः ॥**

क्षारकृतव्रणरोपणोपायमाह,—तिलकल्क इत्यादि ॥—

**रसेनाम्लेन तीक्ष्णेन वीर्योष्णेन च योजितः ॥२२॥**
**आग्नेयेनाग्निना तुल्यः कथं क्षारः प्रशाम्यति ॥**
**एवं चेन्मन्यसे वत्स! प्रोच्यमानं निबोध मे २३**
**अम्लवर्जान् रसान् क्षारे सर्वानेव विभावयेत् ॥**
**कटुकस्तत्र भूयिष्ठो लवणोऽनुरसस्तथा ॥**
**अम्लेन सह संयुक्तः स[1] तीक्ष्णलवणो रसे ॥ २४ ॥**
**माधुर्यं भजतेऽत्यर्थं तीक्ष्णभावं विमुञ्चति ।**
**माधुर्याच्छममाप्नोति[2] वह्निरद्भिरिवाप्लुतः ॥ २५ ॥**

अग्नितुल्यस्य क्षारस्याग्नेयेन काञ्जिकेन कथं शमनमित्याशङ्क्याह,—रसेनेत्यादि । अम्लेन तीक्ष्णेन वीर्योष्णेनाग्नेयेन रसेन योजितोऽग्नितुल्यः क्षारः कथं प्रशाम्यतीत्यर्थपिण्डः । उत्तरमाह,—एवं चेन्मन्यसे वत्सेत्यादि । विभावयेत् जानीयादित्यर्थः । कटुकस्तत्र भूयिष्ठ इति तत्र पञ्चरसे क्षारे कटुकोऽनुरसः, लवणस्तु भूयिष्ठ इति योज्यं; केचित् कटुकमेव भूयिष्ठं मन्यन्ते; तन्न, यतो जना अम्लभक्षणे माधुर्यार्थं लवणमेव रसं प्रयुञ्जते, लवणवर्गे क्षारस्य पठितत्वाच्च, कटुवर्गे चापठितत्वात्; यद्येवं 'स खल्वाग्नेयौषधिभूयिष्ठत्वात् कटुक' इति तर्हि कथम्? उच्यते, लवणवर्गपाठादेव क्षारस्य लवणत्वे सिद्धे कटुक इति विष्यर्थमेव । स तीक्ष्णलवणो रसे इति स क्षार एवंगुणः । अद्भिः पानीयैः, आप्लुतो 'बोलि(डि)त' इति लोके ॥ २२-२५ ॥

**तत्र सम्यग्दग्धे विकारोपशमो लाघवमनास्रावश्च॥—**

इदानीं चिकित्सान्तरकथनाय पुनः सम्यग्दग्धलक्षणमाह,—तत्र सम्यग्दग्ध इत्यादि । तत्रेति सम्यग्दग्धादिमध्ये । लाघवमज्ञानाम् । कृते क्षारनिर्वापण एते विकारोपशमादयो लक्षणान्युत्तरकालं ज्ञेयानि; "एतद्विकारोपशमादिकं किंचित्तात्कालिकं लक्षणं, किंचिदुत्तरकालिकम्" इत्यन्ये ॥—

१ "अवघृष्येत्यादिपक्षत्रये पित्तदुष्टमुत्तानमवघृष्य, वातदुष्टमनत्यवगाढं वाऽवलिख्य, कफदुष्टमवगाढं च प्रच्छयित्वेति व्यवस्था" इति चक्रः । २ 'वाक्शतमात्रमिति शताक्षरोच्चारणपर्याप्तं कालं क्षारावचारणम्' इति पा० । ३ "निपतिते इति क्षारापनीते व्याधौ कृष्णता दग्धलक्षणं ज्ञेयम्, एतच्च दाहे ज्ञेयं लक्षणं; विकारोपशमाद्युदर्कज्ञेयमग्रे वक्ष्यति" इति चक्रः । ४ 'एतत्त्वसामान्यं' इति पा० । ५ "स्थिरमूलत्वेन दग्धलक्षणं भवति नच निःशेषव्याधिशातनं, तत्रायं लेपः—अम्लकाञ्जिकेत्यादि" इति चक्रः ।

१ 'स तीक्ष्णलवणो रसः' इति पा० । २ 'एतच्च बहिरन्तश्चाम्लेन क्षारमाधुर्यानयनात् क्षारविकारहननमुच्यते; यदुक्तं चरके मदात्ययचिकित्सिते अम्लेन मद्येनान्तरक्षारविकारशमनं, तथा हि "क्षारो हि याति माधुर्यं शीघ्रमम्लोपसंहितः" ( च. चि. अ. २४ ) इति । बाह्ये तु क्षारे शीतस्पर्शत्वादपि अम्लं क्षारदाहं हन्ति; यदुक्तं विश्वामित्रे—"यतश्चोष्णतमः क्षारः शैत्यं चाम्ले रसेऽधिकम् । तस्मात् सेकप्रदेहाभ्याममम्लः क्षारं निवर्तयेत्" इति' इति चक्रः ।

**हीनदग्धे तोदकण्डुजाड्यानि व्याधिवृद्धिश्च ॥—**

हीनदग्धलक्षणमाह,—हीनदग्धे इत्यादि । हीनदग्धे तोदादयो वातश्लैष्मिकाः । जाड्यं जडता । अन्ये त्वत्र 'दुर्दग्धे तोददाहकण्डूजाड्यानि व्याधिवृद्धिश्च' इति पठन्ति, "तस्मिन् स्थाने एतानि वातपित्तरक्तकफप्रकोपकार्याणि" इति च व्याख्यानयन्ति ॥—

**अतिदग्धे दाहपाकरागस्रावाङ्गमर्दक्लमपिपासामूर्च्छाः स्युर्मरणं वा ॥ २६ ॥**

अतिदग्धलक्षणमाह,—अतिदग्धे दाहेत्यादि । अतिदग्धे दाहपाकादयः पैत्तिकाः, रागो रक्तता, अङ्गमर्दो वेदनाविशेषः, क्लमो ग्लानिः ॥ २६ ॥

**क्षारदग्धव्रणं तु यथादोषं यथाव्याधि चोपक्रमेत् ॥ २७ ॥**

क्षारदग्धव्रणव्यापच्चिकित्सां वक्तुमाह,—क्षारदग्धव्रणमित्यादि । अन्ये तु 'यथाविधि यथादोषम्' इति पठन्ति, "हेतुव्याधिप्रत्यनीकेन विधिना" इति व्याख्यानयन्ति ॥ २७ ॥

**अथ नैते क्षारकृत्याः—तद्यथा—दुर्बलबालस्थविरभीरुसर्वाङ्गशूनोदरिरक्तपित्तिगर्भिण्यृतुमतीप्रवृद्धज्वरिप्रमेहिरूक्षक्षतक्षीणतृष्णामूर्च्छोपद्रुतक्लीबापवृत्तोद्वृत्तफलयोनयः ॥ २८ ॥**

अतः क्षारस्य द्विविधस्यापि येषु प्रतिषेधस्तानाह,—अथ नैते क्षारकृत्या इत्यादि । एषु च यथादोषं केषुचिदेव प्रतिसारणीयक्षारनिषेधः, केषुचित् पानीयनिषेधः, केषुचिदुभयनिषेधः । सर्वाङ्गशूनोदरीति सर्वाङ्गेन शूनो य उदरी तस्यैव क्षारनिषेधः कृतः; क्षत उरःक्षतः, तेन क्षीणः; तृष्णामूर्च्छोपद्रुत इति उपद्रुतशब्दस्तृष्णामूर्च्छाभ्यां सह प्रत्येकं संबध्यते; क्लीबः क्षीणशुक्रः, अशुक्रस्य पुनः क्षाराधिकार एव नास्ति; उद्वृत्तापवृत्तफलयोनय इति उद्वृत्तापवृत्तशब्दौ फलयोनिभ्यां सह प्रत्येकं संबध्येते; फलमण्डं, योनिर्गर्भाशयः; उद्वृत्तफलः स्थानादूर्ध्वगताण्डः, अपवृत्तफलः स्थानात् स्रस्ताण्डः; उद्वृत्तयोनिः स्थानादूर्ध्वगतयोनिः, अपवृत्तयोनिः स्थानात् स्रस्तयोनिः; अन्ये तु फलयोनिशब्देन समुदितेन गर्भाशयमाचक्षते, तत्रायमर्थः—उद्वृत्तफलयोनिः स्थानादूर्ध्वगतगर्भाशया, अपवृत्तफलयोनिः स्थानात् स्रस्तगर्भाशयेत्यर्थः; अपरे तु फलशब्दं रजसि वर्तयन्ति, कुतः ? गर्भस्य फलसाधनत्वात्; तेन यस्याः योनेः सकाशात् फलं रज उद्वृत्तमूर्ध्वगतम्, अपवृत्तमधोगतं, सा उद्वृत्तापवृत्तफलयोनिः ॥२८॥

**तथा मर्मसिरास्नायुसन्धितरुणास्थिसेवनीधमनीगलनाभिनखान्तःशेफःस्रोतःस्वल्पमांसेषु च देशेष्वक्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगात् ॥ २९ ॥**

व्याधिपुरुषविशेषेण निषेधमुक्त्वा प्रदेशविशेषेण वक्तुमाह,—तथेत्यादि । तरुणास्थीनि घ्राणकर्णग्रीवाक्षिपुटेषु तरुणसंज्ञान्यस्थीनि; सेवन्यः सप्त, पञ्च शिरसि, एका जिह्वायाम्, एका शेफसि; धमन्यश्चतुर्विंशतिर्नाभिप्रभवाः; नाभिरिति मर्मग्रहणादेव नाभिः प्राप्ता, पुनर्नाभिग्रहणं नाभ्यां दोषातिशयसूचनार्थं; शेफो मेढ्रः । अनुक्तमुपगृह्णन्नाह—अल्पमांसेषु च प्रदेशेषु जानुपादोपरि ललाटादिषु च । अक्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगादिति अन्यत्रान्यस्मिन् रोगे, वर्त्मरोगे पुनरक्ष्णोरपि क्षारं दद्यादित्यर्थः ॥२९॥

**तत्र क्षारसाध्येष्वपि व्याधिषु शूनगात्रमस्थिशूलिनमन्नद्वेषिणं हृदयसन्धिपीडोपद्रुतं च क्षारो न साधयति ( दुर्बलबालस्थविरादीन् प्रतिसारणीयं इति ) ॥ ३० ॥**

अवस्थावशान्निषेधार्थं दर्शयन्नाह,—तत्र क्षारसाध्येष्वित्यादि ॥ ३० ॥

**भवति चात्र—**

**विषाग्निशस्त्राशनिमृत्युकल्पः**
**क्षारो भवत्यल्पमतिप्रयुक्तः ॥**
**स धीमता सम्यगनुप्रयुक्तो**
**रोगान्निहन्यादचिरेण घोरान् ॥ ३१ ॥**

**इति श्रीसुश्रुतसंहितायां सूत्रस्थाने क्षारपाकविधिर्नामैकादशोऽध्यायः ॥ ११ ॥**

इदानीं सम्यक्प्रयुक्तस्य क्षारस्य महागुणत्वमसम्यक्प्रयुक्तस्य तु महादोषत्वं निदर्शयन्नाह,—भवति चात्रेत्यादि । विषाग्निशस्त्राशनिमृत्युकल्प इति मृत्युशब्दो विषादिभिः सह प्रत्येकं संबध्यते, तेनायमर्थः—विषादिभिः कृत्वा यो मृत्युस्तेन मृत्युना कल्पः सदृशो भवति; तत्र विषवद्वेदनाभिः सर्वाङ्गानुसारी भूत्वा मारयति, अग्निवद्विस्फोटकादिकारणो भूत्वा, शस्त्रवत् सिरादिच्छेदी भूत्वा, अशनिवत् सद्यो मारयतीति दृष्टान्तचतुष्टयमुपन्यस्तम् ॥ ३१ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने क्षारपाकविधिर्नामैकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ।

**अथातोऽग्निकर्मविधिमध्यायं व्याख्यास्यामः॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । अग्निना कृत्वा यत् कर्म, अग्नेः संबन्धि वा यत् कर्म, तदग्निकर्म; तस्य विधिर्विधानं, तद्यस्मिन्नध्याये विद्यते तं व्याख्यास्यामः । 'अग्निकर्मीयम्' इत्यन्ये पठन्ति, "अग्निकर्माधिकृत्य कृतोऽग्निकर्मीयः" इति व्याख्यानयन्ति च ॥ १ ॥ २ ॥

१ "क्षारदग्धव्रणमिति हीनातिदाहजं व्रणं" इति चक्रः । २ "प्लीहोदरे क्षारविधानात्" इति चक्रः । ३ "क्लीबोऽत्राल्पशुक्रः, तस्य क्षारः सर्वथा पुंस्त्वं हन्यात्; अशुक्रस्य पुंस्त्वाभावादेव न तद्बाधा" इति चक्रः । ४ "केचित्तु फलशब्देनेहार्त्रं ग्राहयन्त्युपचाराद्गत्रायां घोष इतिवत्" इति हाराणचन्द्रः ।

१ अयं पाठो मुद्रितपुस्तकेषु न पठ्यते । २ अस्याग्रे 'चक्रादुर्बलबालस्थविरादीन् प्रतिसारणीय इति' इत्यधिकं पठ्यते मुद्रितपुस्तकेषु । ३ 'कृतं' इति पा० ।

**क्षारादग्निर्गरीयान् क्रियासु व्याख्यातः, तद्दग्धानां रोगाणामपुनर्भावाद्भेषजशस्त्रक्षारैरसाध्यानां तत्साध्यत्वाच्च ॥ ३ ॥**

अग्निकर्ममाहात्म्यमाह,—क्षारादित्यादि ।–क्षाराद्गुरोः सकाशादग्निर्गरीयान् गुरुतरः । कुत्र पुनः क्षारादग्निर्गरीयानित्याह—क्रियासु कर्मसु, न तु गुणेषु; गुणेषु पुनस्त्रिदोषघ्नच्छेद्यभेद्यलेख्यकरणादिषु क्षार एव प्रधानः; एतेन स्वे स्वे कृत्ये द्वयोरपि प्राधान्यमित्युक्तं; यथा—दृढप्रहारित्वेनार्जुनात् कर्णः, कर्णाद्दूरपातित्वेनार्जुनः प्रधानमिति । व्याख्यात इति कथित इत्यर्थः । प्रतिज्ञातस्य गरीयस्त्वस्य साधकं हेतुमाह–तद्दग्धानामिति ।–अग्निदग्धानाम्; अपुनर्भावादिति अपुनर्भावस्तु साध्यानां सम्यग्दग्धानाम्, एतद्विपर्यये त्वग्निदग्धस्यापि पुनरुद्भवः; अन्ये त्वन्यथा समादधति—अर्बुदादयोऽग्निना समूलमुन्मूलिता मिथ्याहारादिभिः पुनर्दोषप्रकोपात्तत्स्थान एवान्ये जायमानास्तद्वदुपलभ्यन्ते । हेत्वन्तरं समुच्चिन्वन्नाह,—भेषजेत्यादि । तत्साध्यत्वात् अग्निसाध्यत्वादित्यर्थः । अन्ये तु 'स्वेदशस्त्रक्षारैः' इति पठन्ति, तत्रायमर्थः—भगन्दरार्शसादयः पूर्वं स्विद्यन्ते, पश्चात्तेषु शस्त्रमवचार्यते; अथवा स्वेदग्रहणं भेषजोपलक्षणं, भेषजाशक्तौ शस्त्रावचारणं, शस्त्राशक्तावशेषव्याधिशमनाय क्षारः, क्षाराशक्त्येऽवगाढमूले व्याधावग्निरिति ॥ ३ ॥

**अथेमानि दहनोपकरणानि भवन्ति—तद्यथा—पिप्पल्यजाशकृद्गोदन्तशरशलाकाजाम्बवौष्ठेतरलौहाः क्षौद्रगुडस्नेहाश्च । तत्र, पिप्पल्यजाशकृद्गोदन्तशरशलाकास्त्वग्गतानां, जाम्बवौष्ठेतरलौहा मांसगतानां, क्षौद्रगुडस्नेहाः सिरास्नायुसन्ध्यस्थिगतानाम् ॥ ४ ॥**

अग्न्यवचारणोपकरणानि निदर्शयन्नाह,—अथेमानीत्यादि । अजाशकृत् छागपुरीषं; जाम्बवौष्ठं जम्बूफलसदृशमुखाग्रा कृष्णपाषाणरचिता वर्तिः; इतरलौहास्ताम्ररजतादयः, तेषां विकारा लौहाः; क्षौद्रगुडस्नेहाश्चेति चकारात् सर्जरसमधूच्छिष्टादयः । अग्न्युपकरणराशित्रयस्य प्रत्येकं विषयं दर्शयन्नाह—तत्रेत्यादि । त्वग्गतानामिति वातकफकृतानां सुप्त्यादिविकाराणाम् । मांसगतानां वातकफजविकाराणाम् । क्षौद्रगुडस्नेहा इत्यत्रापि वातकफसंभूतानामिति बोद्धव्यम् । ननु, काश्यपेन मुनिना सिरादिष्वग्निकर्म प्रतिषिद्धं; तथा च तद्वचनं,—"न सिरास्नायुसन्ध्यस्थिमर्मस्वपि कथंचन । दंशस्योत्कर्तनं कार्यं दाहो वा भिषजाऽग्निना"—इति; इह तु सिरादिष्वप्यग्निकर्मोक्तम्, इत्थं च शास्त्रान्तरविरोधः; तन्न, अत्रापि सिरास्नायुसन्ध्यस्थिच्छेदाद्रक्तातिप्रवृत्तौ व्यापत्प्रतीकारायाग्निकर्मोक्तं, न पुनः सिरादिगतरोगोच्छेदनाय, यतो मांसदाहादेव सिरादिगतरोगोच्छेदो जायत एव; तथा च भद्रशौनकः,—"त्वङ्मांससंश्रितो वायुस्त्वग्दाहेनैव शाम्यति । मांसे दग्धे हि शाम्यन्ति सिरास्नाय्वस्थिसन्धिजाः"—इति ॥ ४ ॥

**तत्राग्निकर्म सर्वर्तुषु कुर्यादन्यत्र शरद्ग्रीष्माभ्यां; तत्राप्यात्ययिकेऽग्निकर्मसाध्ये व्याधौ तत्प्रत्यनीकं विधिं कृत्वा ॥ ५ ॥**

तस्य कालं सापवादं निर्दिशन्नाह,—तत्राग्नीत्यादि । तत्राग्निकर्म सर्वर्तुषु कुर्यादित्युत्सर्गः, अन्यत्र शरद्ग्रीष्माभ्यामित्यपवादः । शरद्ग्रीष्मयोरप्यवस्थायां प्रवृत्तिमाह,—तत्रापीत्यादि । तत्रापीति शरद्ग्रीष्मयोरपि, आत्ययिके आशुप्राणविनाशके, तत्प्रत्यनीकविधिं कृत्वेति तस्याग्निसमानस्य शरद्ग्रीष्माभिधानस्यर्तोः, प्रत्यनीकविधिं विपरीतविधानं शीताच्छादनभोजनप्रदेहादिकं कृत्वा; 'अग्निकर्म कुर्यात्' इत्यनुवर्तते । अत्र पाठे केचिद्विधिशब्दं न पठन्ति ॥ ५ ॥

**सर्वव्याधिष्वृतुषु च पिच्छिलमन्नं भुक्तवतः; मूढगर्भाश्मरीभगन्दरोदरार्शोमुखरोगेष्वभुक्तवतः कर्म कुर्वीत ॥ ६ ॥**

सर्वाग्निकर्माङ्गविधिमाह,—सर्वव्याधिष्वित्यादि । अत्रापि 'अग्निकर्म कुर्यात्' इति प्रत्येकं संबध्यते । पिच्छिलमन्नं पिच्छिलवीर्यमन्नं; शीतमृदुपिच्छिलानां वीर्याणां पित्तघ्नत्वात् । तत्र प्रदेशेषु भोजनस्य प्रतिषेधमाह—मूढगर्भाश्मरीत्यादि । एषु भोजने कृते ऊर्ध्वाधोवेगाभ्यां कर्मविघातः स्यात् क्वचिदुदरानवकाशत्वात् । केचिदत्र 'मूढगर्भाश्मरी' इत्यादिपाठं न पठन्ति ॥६॥

**तत्र द्विविधमग्निकर्माहुरेके—त्वग्दग्धं, मांसदग्धं**

---

१ '°रशक्यानां' इति पा० । २ 'कुतः' इति पा० । ३ 'तत्र मशतिलकालकचर्मकीलतरकृत्तास्थप्रम्लानाङ्गाभिष्यन्दाधिमन्थशिरोभ्रूललाटरुजादिकेषु सूर्यकान्तपिप्पल्यजाशकृद्गोदन्तशरशलाकाभिस्त्वग्दाहो यथास्वमभिष्यन्दादिषु तु भ्रूशङ्खललाटदेशेषु; ग्रन्थ्यर्बुदार्शोभगन्दरगण्डमालाश्लीपदाण्त्रवृद्धिदुष्टव्रणगतिनाड्यवगाढपूयालसकेषु जाम्बवौष्ठसूचीशलाकाघृतगुडमधुमधूच्छिष्टतैलवसाहेमताम्रायोरूप्यकांस्यैर्मांसदाहः, सिरास्नायुसन्ध्यस्थिच्छेदशोणितातिप्रवृत्तिदन्तनाडीश्लिष्टवर्त्मोपपक्ष्मलगणलिङ्गनाशासम्यग्व्यधेषु जाम्बवौष्ठसूचीशलाकामधुमधूच्छिष्टगुडस्नेहैः सिरादिदाहः ।······अथ दाहार्थमातुरं कृतस्वस्त्ययनमुपहृतसर्वोपकरणं प्राक्शिरःसंविष्टमाप्तावलम्बितं कृत्वा वैद्यो निर्धूमवृहत्स्थिरदीप्तखदिरबदराद्यङ्गारैरयोघटनप्रकारेण भस्त्रानिलाध्मातैर्व्यजनेन चोर्ध्वानिर्गच्छज्ज्वालतयाऽऽपादितापाद्यमानभासुराग्निवर्णैर्जाम्बवौष्ठादिभिर्व्याधिप्रदेशाद्वलयार्धचन्द्रस्वस्तिकाष्टापदबिन्दुरेखाप्रतिसारणविकल्पेन मुहुर्मुहुर्हितोपहिताभिर्वाग्भिरद्भिश्चातुरमाश्वासयन् दहेदासम्यग्दाहलिङ्गोत्पत्तेः । उच्छूनसुषिरप्रलूनदन्तनाडीसजन्तुदुष्टव्रणेषु तु स्नेहमधूच्छिष्टगुडैः पूरयित्वा दहेत् । सम्यग्दग्धे च मधुसर्पिषी दद्याच्छीतस्निग्धांश्च प्रदेहान्' इत्यष्टाङ्गसंग्रहे ( सू. स्था. अ. ४० ) ।

१ 'एतच्च पिच्छिलान्नभोजनमग्नेरनुशस्त्रत्वेन शस्त्रकर्मणि विहितभोजनान् व्याधीन् प्रति ज्ञेयं, तेनार्शःप्रभृतिष्वभुक्तवतामेव दाहः' इति चक्रः । हाराणचन्द्रस्तु 'अश्मरीभगन्दरार्शोमुखरोगेष्वभुक्तवतः' इति पठति, व्याख्यानयति च—'मूढगर्भाश्मरीत्येवमादिस्त्वनाकरः पाठः, अविवक्षिताग्निकर्मकत्वान्मूढगर्भस्येत्यवधेयम्' इति ।

**च; इह तु सिरास्नायुसन्ध्यस्थिष्वपि न प्रतिषिद्धोऽग्निः ॥ ७ ॥**

अग्निकर्मण्येकीयमतं दर्शयन्नाह,—तत्र द्विविधमित्यादि । स्वतन्त्रसिद्धान्तं दर्शयन्नाह—इह तु सिरेत्यादि । सिरादिष्वप्यग्निकर्म कर्तव्यमित्यर्थः पूर्वं व्याख्यातः; "सिरादिष्वप्यग्निकर्मविधिरात्ययिके व्याधावेव, नान्यत्र" इत्यन्ये व्याख्यानयन्ति ॥७॥

**तत्र, शब्दप्रादुर्भावो दुर्गन्धता त्वक्संकोचश्च त्वग्दग्धे, कपोतवर्णताऽल्पश्वयथुवेदना शुष्कसंकुचितव्रणता च मांसदग्धे, कृष्णोन्नतव्रणता स्रावसन्निरोधश्च सिरास्नायुदग्धे, रूक्षारुणता कर्कशस्थिरव्रणता च सन्ध्यस्थिदग्धे ॥ ८ ॥**

त्वगादिषु कर्मणि कृते प्रतिविषयं भेदलक्षणं दर्शयन्नाह,—तत्र शब्देत्यादि । स्थिरव्रणता कठिनव्रणता ॥ ८ ॥

**तत्र शिरोरोगाधिमन्थयोर्भ्रूललाटशङ्खप्रदेशेषु दहेत्, वर्त्मरोगेष्वार्द्रालक्तकप्रतिच्छन्नां दृष्टिं कृत्वा वर्त्मरोमकूपान् ॥ ९ ॥**

रोगभेदाच्छरीरावयवविशेषेष्वग्न्यवचारणं दर्शयन्नाह,—तत्र शिरोरोगेत्यादि । अधिमन्थः अक्षिरोगोऽभिष्यन्दपूर्वकः । भ्रुवौ अक्षिकूटोपरि रोमराजी, शङ्खौ भ्रूकर्णयोर्मध्यम् । वर्त्मदेशे यथाऽग्न्यवचारणं तथा दर्शयन्नाह,—वर्त्मरोगेष्वित्यादि । 'दहेत्' इत्यनुवर्तते । वर्त्म नेत्रच्छादनम् । आर्द्रालक्तक आर्द्रकर्पटः ॥ ९ ॥

**त्वङ्मांससिरास्नायुसन्ध्यस्थिस्थितेऽत्युग्ररुजि वायावुच्छ्रितकठिनसुप्तमांसे व्रणे ग्रन्थ्यर्शोऽर्बुदभगन्दरापचीश्लीपदचर्मकीलतिलकालकान्त्रवृद्धिसन्धिसिराच्छेदनादिषु नाडीशोणितातिप्रवृत्तिषु चाग्निकर्म कुर्यात् ॥ १० ॥**

शेषविषयमवस्थाभेदेन दर्शयन्नाह,—त्वङ्मांसेत्यादि । अत्युग्ररुजे वायौ इति उग्रशूले वायौ । उच्छ्रितकठिनसुप्तमांसे इति उच्छ्रितमुत्सेधवत्, सुप्तमचेतनम् । नाडीति व्रणविशेषः ॥ १० ॥

**तत्र वलय-बिन्दु-विलेखा-प्रतिसारणानीति दहनविशेषाः ॥ ११ ॥**

प्रणिधानाकारविशेषमाह—तत्र वलयेत्यादि । व्याधिमूले वलयमिव वलयं, शलाकाग्रनिर्मितो बिन्दुरिव बिन्दुः, तिर्यगृजुवक्रा विविधा लेखा विलेखा, तप्तशलाकाप्रभृतिभिरवघर्षणं प्रतिसारणं; विशेषा इति आश्रयव्याधिवशेनाकृतिभेदाः । तत्र वलयेत्यादिगयस्यादौ केचित् 'रोगाकृतिमवेक्ष्य' इति पठन्ति; स च निबन्धकारैर्न पठितः, कुतः ? तस्यार्थस्याग्रिमश्लोकेनैवोक्तत्वात् ॥ ११ ॥

**भवति चात्र—**

**रोगस्य संस्थानमवेक्ष्य सम्य-**
**ङ्नरस्य मर्माणि बलाबलं च ॥**
**व्याधिं तथर्तुं च समीक्ष्य सम्यक्**
**ततोऽव्यवस्येद्भिषगग्निकर्म ॥ १२ ॥**

वलयादिदहनविशेषारम्भहेतुं परिहार्याणि च दर्शयितुमाह,—भवति चात्रेत्यादि । रोगस्य ग्रन्थ्यादेः । संस्थानम् आयताद्याकारम् । एतेन वलयाद्यारम्भहेतुः कथितः । परिहार्याणि च कथयन्नाह,—नरस्य मर्माणीत्यादि । बलाबलमिति 'आतुरस्य' इति शेषः, बलवत्यातुरे कर्माधिकारः, अबलवति परिहारः । व्याधिं वातकफात्मकं, तत्राग्निकर्माधिकारः, परिहारस्तु रक्तपित्तादौ । ऋतुमिति हेमन्तादिप्रवृत्तिविषयम्, अप्रवृत्तिस्तु शरद्ग्रीष्मयोः । अवेक्ष्य सम्यगिति अत्रैकस्मिन्नेव श्लोके एकार्थशब्दद्वयकरणं प्रवृत्तिनिवृत्तिविषययोरुभयोरप्यवेक्षणे यत्नः कार्य इति प्रतिपादनार्थम् । अध्यवस्येत् कुर्यादित्यर्थः । प्रथमस्य 'अवेक्ष्य सम्यक्' इत्येतस्य स्थाने 'अथो विदित्वा' इति केचित् पठन्ति, विदित्वा ज्ञात्वा ॥ १२ ॥

**तत्र सम्यग्दग्धे मधुसर्पिर्भ्यामभ्यङ्गः ॥ १३ ॥**

इदानीं सम्यग्दग्धं चिकित्सन्नाह,—तत्र सम्यग्दग्धे इत्यादि । अग्निकर्म दूषितरक्तपित्तयोः प्रसादाय वेदनोपशमाय च ॥ १३ ॥

**अथेमानग्निना परिहरेत्—पित्तप्रकृतिमन्तःशोणितं भिन्नकोष्ठमनुद्धृतशल्यं दुर्बलं बालं वृद्धं भीरुमनेकव्रणपीडितमस्वेद्यांश्चेति ॥ १४ ॥**

अग्नेर्निवृत्तिविषयं दर्शयन्नाह—अथेमानित्यादि । अन्तःशोणितं भिन्नकोष्ठमिति इत्थंभूतस्य पुरुषस्य शोणितनिरोधेन दाहपाकादिसंभवात् । 'अनेकव्रणपीडितम्' इत्यस्य स्थाने केचित् 'अनेकव्याधिपरिपीडितम्' इति पठन्ति । अस्वेद्याः 'पाण्डुर्मेही रक्तपित्ती तृषार्तः' ( चि. अ. ३२ ) इत्यादयः ॥ १४ ॥

**अत ऊर्ध्वमितरथादग्धलक्षणं वक्ष्यामः । तत्र, स्निग्धं रूक्षं वाऽऽ(चा)श्रित्य द्रव्यमग्निर्दहति; अग्निसंतप्तो हि स्नेहः सूक्ष्मसिरानुसारित्वात्त्वगा-**

१ 'विहित इति भाषां त्यक्त्वा 'न प्रतिषिद्ध' इति भाषया केवलात्ययिकरोग एव परं सिरादौ क्षौद्रादिद्रव्यनियमेन चाग्निर्दातव्य इति दर्शयति' चक्रः । २ 'दुष्टव्रणोच्छ्रितकठिनमांसग्रन्थ्यर्बुदापचीगलगण्डगृध्रसीमशकयुग्मोदरभगन्दरार्शःसन्धिश्लीपदचर्मकीलतिलकालकसिराच्छेदनाडीशोणितातिप्रवृत्तिषु' इति ताडपत्रपुस्तके पाठः ।

१ 'इतरथेति वलयादि परित्यज्य स्नेहादिदाहेनान्यथादाहः' इति चक्रः । 'इतरथा वैद्यप्रयत्ननिरपेक्षतया भिन्नप्रकारेण दग्धमितरथादग्धमाकस्मिकदग्धमित्यर्थः, तस्य लक्षणमितरथादग्धलक्षणम् । अत्राग्निर्दहतीति स्वतन्त्रत्वेनोपदेशो वैद्यनिपेक्षत्वेनाकस्मिकत्वमाविष्कर्तुम्' इति हाराणचन्द्रः । 'इतरथादग्धं' इति पा० । २ 'रूक्षदाहस्य वलयादिना व्याप्तत्वाद्वलयाद्यभ्यासं स्निग्धदाहमाह—अग्निसंतप्तो हीत्यादि' इति चक्रः । ३ 'सूक्ष्ममार्गानुसारित्वात्' इति ताडपत्रपुस्तके पाठः ।

**दीननुप्रविश्याशु दहति; तस्मात् स्नेहदग्धेऽधिका रुजो भवन्ति ॥ १५ ॥**

वलयादिप्रकारात् प्रकारान्तरेणाग्निदग्धलक्षणं वक्तुमाह,—अत ऊर्ध्वमित्यादि । इतरथा दग्धमिति प्रकारान्तरेण वैद्याद्दते प्रमादाद्दग्धम् । तत्रेत्यादि द्रव्यं स्निग्धं सर्पिरादि, रूक्षं द्रव्यं काष्ठपाषाणलोष्टादि ॥ १५ ॥

**तत्र प्लुष्टं दुर्दग्धं सम्यग्दग्धमतिदग्धं चेति चतुर्विधमग्निदग्धम् । तत्र यद्विवर्णं प्लुष्यतेऽतिमात्रं तत् प्लुष्टं; यत्रोत्तिष्ठन्ति स्फोटास्तीव्राश्चोषदाहरागपाकवेदनाश्चिराच्चोपशाम्यन्ति तद्दुर्दग्धं; सम्यग्दग्धमनवगाढं तालवर्णं सुसंस्थितं पूर्वलक्षणयुक्तं च; अतिदग्धे मांसावलम्बनं गात्रविश्लेषः सिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति, व्रणश्चास्य चिरेण रोहति, रूढश्च विवर्णो भवति । तदेतच्चतुर्विधमग्निदग्धलक्षणमात्मकर्मप्रसाधकं भवति ॥ १६ ॥**

तत्राग्निदग्धं वैद्यदोषात् प्रमादाद्वा चतुर्विधं दर्शयन्नाह—तत्र प्लुष्टमित्यादि । प्लुष्टदुर्दग्धयोर्हीनदग्धत्वेऽपि पृथक्करणं लक्षणचिकित्साभेदात् । 'तत्र प्लुष्टम्' इत्यादिगणनयैव चतुःसंख्या लब्धा, पुनः 'चतुर्विधम्' इतिकरणं प्लुष्टदुर्दग्धाभ्यां भेदाभ्यां हीनदग्धस्य त्रिप्रकारदाहशङ्कानिरासार्थम् । एषां लक्षणमाह,—तत्र यद्विवर्णमित्यादि । तत्र तेषु मध्ये । विवर्णं प्राकृतवर्णादन्यवर्णम् । प्लुष्यतेऽतिमात्रम् अत्यर्थं दह्यते न च स्फोटोत्पत्तिः स्यात् । अन्ये त्वत्र 'प्लुष्टमतिमात्रं विवर्णं यत् प्लुष्यते' इति पठन्ति व्याख्यानयन्ति च—अतिमात्रं विवर्णं यत् प्लुष्यत इति अग्नितापेनोत्स्विन्नमिव भवति; विवर्णमत्र पाण्डुवर्णम् । यत्रेत्यादि । चोष आकृष्यत इव वेदनाविशेषः, दाहो भस्मसाद्भवतीव, रागो रक्तता, वेदना ओषादयः । सम्यग्दग्धमित्यादि । अनवगाढम् अतिदग्धलक्षणरहितम् । तालवर्णं पक्वतालफलवर्णमित्यर्थः; 'पक्वतालवर्णं' इत्येके पठन्ति, अपरे तु 'तालपक्वफलवर्णं' इति । सुसंस्थितम् अत्युन्नतावनतादिदोषवर्जितम् । पूर्वलक्षणयुक्तं चेति त्वङ्मांससिरास्नायुसन्ध्यस्थिदाहलिङ्गयुक्तम् । अतिदग्धे इत्यादि । गात्रविश्लेषो विघटनं, व्यापादनं हिंसनम् । अतिमात्रशब्दो ज्वरादिभिः सह प्रत्येकं संबध्यते । मूर्च्छाश्चेति चकाराच्छोणितस्रावादयश्च । तदेतदित्यादि । प्लुष्टादिभेदेन चतुर्विधमप्यग्निकर्म वैद्यस्य यदात्मकर्म चिकित्सारूपं तस्य प्रसाधकं भवतीत्यर्थः । ननु, सम्यग्दग्धलक्षणमेव वैद्यस्यात्मकर्मप्रसाधकं भवति, न पुनः प्लुष्टदुर्दग्धातिदग्धलक्षणं; सत्यं, सम्यग्दग्धलक्षणं वैद्यकर्मप्रसाधकमुपादेयत्वेन, प्लुष्टदुर्दग्धातिदग्धलक्षणं परिहार्यत्वेनेति न दोषः । अन्ये चान्यथा पठन्ति—'तदेतच्चतुर्विधमग्निदग्धलक्षणं पूर्वोक्तकर्मप्रसाधकं भवति'—इति, व्याख्यानयन्ति च—"पूर्वोक्तं त्वङ्मांसाश्रितं यदग्निकर्म तल्लक्षणप्रसाधकं द्योतकं भवति; अथवा पूर्वोक्तेष्वग्निसाध्येषु शिरोरोगाधिमन्थादिषु यदग्निकर्म तत्प्रसाधकं हेयोपादेयरूपतयेत्यर्थः" इति । अपरे तु 'तदेतच्चतुर्विधमग्निदग्धलक्षणं पूर्वोक्तकर्मप्रसाधनं च भवति' इति चकारं पठन्ति व्याख्यानयन्ति च; तेषां मते यदेतच्चतुर्विधमग्निकर्म तत्कथं चिकित्सनीयमित्याह,—पूर्वोक्तकर्मप्रसाधनं; पूर्वप्रतिपादिता या क्रिया तत्प्रतीकारं तच्चिकित्सितमित्यर्थः । पूर्वप्रतिपादितक्रिया तु 'सम्यग्दग्धे मधुसर्पिर्भ्यामभ्यङ्ग' इत्यादिका । चकाराद्वक्ष्यमाणापराग्निप्लुष्टप्रतपनादिकर्मप्रसाधकमिति ज्ञेयम् ॥ १६ ॥

**भवन्ति चात्र—**

**अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति ॥**
**ततस्तेनैव वेगेन पित्तमस्याभ्युदीर्यते ॥ १७ ॥**
**तुल्यवीर्ये उभे ह्येते रसतो द्रव्यतस्तथा ॥**
**तेनास्य वेदनास्तीव्राः प्रकृत्या च विदह्यते ॥१८॥**
**स्फोटाः शीघ्रं प्रजायन्ते ज्वरस्तृष्णा च बाधते ॥**

इदानीं सर्वाग्निदग्धेषु चिकित्सार्थं विशिष्टदूष्यदोषयोर्दुष्टिं दर्शयन्नाह,—भवन्ति चात्रेत्यादि । ततस्तदनन्तरं; तेनैवाग्निना रक्तेन चेत्यर्थः । कुतः पुनः प्राधान्येनाग्निदग्धे पित्तमेवोदीर्यत इत्याह—तुल्यवीर्ये इत्यादि । हि यस्मात् कारणात्, एते द्वे अप्यग्निपित्ते, तुल्यवीर्ये उष्णवीर्ये, रसतो रसात् द्वे अपि कटुके, द्रव्यतो द्रव्यादपि तुल्ये; तथाहि,—सदृश एवाधारो वह्नेः पित्तस्यापि, द्रव्यं चात्र रसाद्याधार उच्यते; ततः कारणात्तेनाग्निनाऽस्य पित्तस्य कोपितस्य वेदना दाहादिका 'भवन्ति' इति वाक्यशेषः । प्रकृत्या च विदह्यत इति प्रकृत्या स्वभावेन, विदह्यते विदाहमुपयाति । ताभ्यामेव रक्तपित्ताभ्यां स्फोटा ज्वरादयश्च शीघ्रं प्रजायन्त इति । अन्ये तु 'उभे' इत्यत्र 'रक्तपित्ते' इति व्याख्यानयन्ति । उष्णवीर्यत्वं च मधुररसस्यापि रक्तपित्तस्य याम्त्रिकेक्षुरसवद्विदाहित्वात् । द्रव्यत इति एते द्वे अपि रक्तपित्ते द्रव्यादपि तुल्ये, द्रव्यशब्देनात्र हेत्वाधारौ कथ्येते; तद्यथा—रक्तपित्तयोर्द्वयोरपि तेजो हेतुः, आधारश्च द्वयोरपि तेज एवेति ॥ १७ ॥ १८ ॥—

**दग्धस्योपशमार्थाय चिकित्सा संप्रवक्ष्यते ॥१९॥**
**प्लुष्टस्याग्निप्रतपनं कार्यमुष्णं तथौषधम् ॥**
**शरीरे स्विन्नभूयिष्ठे स्विन्नं भवति शोणितम् ॥२०॥**

१ 'प्लुष्यत इत्यग्नितापेन स्विद्यत इव' इति चक्रः । २ 'व्यापदात्मकेऽप्यस्मिन् सम्यग्दग्धत्वं नानुपपन्नं, घुणाक्षरन्यायेन कदाचित्त्वगादीनां यथावद्दाहात्' इति हाराणचन्द्रः । ३ 'पक्वतालफलवर्णं' इति पा० । ४ 'पूर्वकर्मप्रसाधकं' इति पा० ।

१ 'प्रधावति' इति पा० । २ 'स्विन्नभूयिष्ठे इति स्तोकास्विन्ने, उदकमिति दाहप्रत्यनीकतयाऽवज्ञातमानमुदकं, स्कन्दयतीति स्त्यानीकरोति, स्कन्नेन च शोणितेनानिर्गच्छता तैजसाऽऽवृतमार्गेण च वायुना पच्यमानं दाहादि करोति; उष्णक्रियया तु रक्तं विलीयते, तेजोऽपैति, वायुरनुलोमो भवति, इत्युष्णैरल्पशः क्रिया सुखयतीति वाक्यार्थः; इयमेव च विरुद्धार्थकारिणी क्रिया शास्त्रे उच्यते' इति चक्रः।

**प्रकृत्या ह्युदकं शीतं स्कन्दयत्यतिशोणितम् ॥**
**तस्मात् सुखयति ह्युष्णं ननु शीतं कथंचन॥२१॥**

दग्धस्येत्यादि । अग्निप्रतपनं स्वेदनम् । उष्णं तथौषधमिति आलेपनान्नपानादिकम् । कुतः कारणादत्र शरीरमुपचर्यते नाग्निकोपितं रक्तपित्तमित्याह,—शरीरे इत्यादि । खिन्नभूयिष्ठे अत्यर्थं खिन्ने । स्वल्पमपि रक्तं यद्यखिन्नं भवति तदा रक्तपित्तोपशमनेन शीतोपचारेण दुःखमुत्पादयतीति दर्शयन्नाह,—प्रकृत्येत्यादि । स्कन्दयत्यतिशोणितमिति रक्तमत्यर्थं स्त्यानतां नयतीत्यर्थः; स्त्यानेन रक्तेन च रुद्धमार्गो वायुरूष्माऽप्यनिर्गच्छन् क्रुद्धे शूलशोफरागादिकां वेदनां करोति, अतः शीतक्रिया न सुखं करोति; उष्णक्रिया पुना रक्तविलयनकरी भवति, अत ऊष्मनिःसरणवातानुलोमहेतुः साऽतिसुखयति ॥ १९—२१ ॥

**शीतामुष्णां च दुर्दग्धे क्रियां कुर्याद्भिषक् पुनः॥**
**घृतालेपनसेकांस्तु शीतानेवास्य कारयेत् ॥२२॥**

दुर्दग्धक्रियां निर्दिशन्नाह,—शीतामित्यादि । दुर्दग्धेऽवगाढमूलदग्धभागस्य खिन्नरक्तस्य निर्वापणार्थं शीतां क्रियां कुर्यात्, अनवगाढमूलदग्धभागस्याखिन्नरक्तस्य विलयनार्थमुष्णां क्रियां कुर्यात्; अन्ये तु शीतां दाहातिशये, नातिदाहे उष्णामिति । पुनः किं कुर्यादित्याह,—घृतालेपनादीनपि शीतानेव कारयेदिति । एवं सुखीभवति व्रणरोहणं च ॥ २२ ॥

**सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः ॥**
**सामृतैः सर्पिषा स्निग्धैरालेपं कारयेद्भिषक्॥२३॥**
**ग्राम्यानूपौदकैश्चैनं पिष्टैर्मांसैः प्रलेपयेत् ॥**
**पित्तविद्रधिवच्चैनं संततोष्माणमाचरेत् ॥ २४ ॥**

सम्यग्दग्धे चिकित्सामाह—सम्यग्दग्ध इत्यादि । तुगाक्षीरी वंशरोचना, अन्ये तु वंशरोचनानुकारि पार्थिवं द्रव्यं, प्लक्षः पर्कटी, चन्दनं रक्तचन्दनं, सामृतैरिति गुडूचीसहितैः; एतैस्तुगाक्षीर्यादिद्रव्यैर्घृतस्निग्धीकृतैः पित्तप्रत्यनीकमविशोषिणं लेपं सम्यग्दग्धे कारयेदित्यर्थः । वातशान्त्यर्थं प्रलेपमाह,—ग्राम्येत्यादि । ग्राम्या अश्वादयः, आनूपा वराहमहिषादयः, औदकाः कूर्मादयः । पित्तविद्रधिवदित्यादि । एनं सम्यग्दग्धं संततोष्माणं बलवत्तरोष्माणम् ॥ २३ ॥ २४ ॥

**अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम्॥**
**क्रियां कुर्याद्भिषक् पश्चाच्छालितण्डुलकण्डनैः ॥**
**तिन्दुकीत्वक्कपालैर्वा घृतमिश्रैः प्रलेपयेत् ॥**
**व्रणं गुडूचीपत्रैर्वा छादयेदथवौदकैः ॥ २६ ॥**
**क्रियां च निखिलां कुर्याद्भिषक् पित्तविसर्पवत् ॥**

अतिदग्धे चिकित्सामाह,—अतिदग्धे इत्यादि । विशीर्णानि अवलम्बितानि । शालितण्डुलकण्डनैरिति शालितण्डुलकण्डनोद्भवैर्गुण्डनैः कणैरित्यर्थः; कणैश्च चूर्णप्रयोगकाले 'अवचूर्णयेत्' इत्यध्याहारः । तिन्दुकीत्वक्कपालैर्वेति तिन्दुकीवल्कलकर्परैः; 'तिन्दुकीत्वचा तिन्दुकीवल्कलेन, कपालैर्मृत्खर्परैः' इत्यन्ये । 'तिन्दुकीत्वक्कषायैर्वा' इति केचित् पठन्ति; तिन्दुक्या या त्वक् तया प्रलेपयेत्, कषायाः कषायवृक्षाश्च ये तैरपीत्यर्थः । अन्ये तु कषायशब्देन चूर्णमाहुः; तत्र तिन्दुकीवल्कलचूर्णैरित्यर्थः । औदकैः पद्मोत्पलादिपत्रैः; पित्तरक्तोपद्रुतो व्रणो गुडूच्यादिपत्रच्छादनेनोष्माणं त्यक्त्वा सुखं संरोहति ॥ २५ ॥ २६ ॥—

**मधूच्छिष्टं समधुकं रोध्रं सर्जरसं तथा ॥ २७ ॥**
**मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत् ॥**
**सर्वेषामग्निदग्धानामेतद्रोपणमुत्तमम् ॥ २८ ॥**

सर्वेष्वग्निदग्धेषु रोपणार्थं चिकित्सां दर्शयन्नाह,—मधूच्छिष्टमित्यादि । इदं च सामान्यं रोपणं घृतं केचित् पठन्ति, न तु निबन्धकारा इति; सुंपयोगित्वान्मयाऽपि लिखितम् ॥ २७॥२८॥

**स्नेहदग्धे क्रियां रूक्षां विशेषेणावचारयेत् ॥**

स्नेहदग्धे चिकित्सामाह,—स्नेहदग्धे इत्यादि । रूक्षदग्धे पुनरनुक्तामपि स्निग्धां क्रियामवचारयेत् ।—

**अत ऊर्ध्वं प्रवक्ष्यामि धूमोपहतलक्षणम् ॥ २९ ॥**
**श्वसिति क्षौति चात्यर्थमप्याधमति कासते ॥**
**चक्षुषोः परिदाहश्च रागश्चैवोपजायते ॥ ३० ॥**
**सधूमकं निश्वसिति घ्रेयमन्यन्न वेत्ति च ॥**
**तथैव च रसान् सर्वान् श्रुतिश्चास्योपहन्यते ॥३१॥**
**तृष्णादाहज्वरयुतः सीदत्यथ च मूर्च्छति ॥**
**धूमोपहत इत्येषः, शृणु तस्य चिकित्सितम्॥३२॥**
**सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा ॥**
**मधुराम्लौ रसौ वाऽपि वमनाय प्रदापयेत् ॥३३॥**
**वमतः कोष्ठशुद्धिः स्याद्धूमगन्धश्च नश्यति ॥**
**विधिनाऽनेन शाम्यन्ति सदनक्षवथुज्वराः ॥३४॥**
**दाहमूर्च्छातृडाध्मानश्वासकासाश्च दारुणाः ॥**
**मधुरैर्लवणाम्लैश्च कटुकैः कवलग्रहैः ॥ ३५ ॥**
**सम्यग्गृह्णातीन्द्रियार्थान् मनश्चास्य प्रसीदति ॥**
**शिरोविरेचनं चास्मै दद्याद्योगेन शास्त्रवित् ॥३६॥**
**दृष्टिर्विशुध्यते चास्य शिरोग्रीवं च देहिनः ॥**
**अविदाहि लघु स्निग्धमाहारं चास्य कल्पयेत्३७**

इदानीं कण्ठनासादिषु कर्मणि कृते धूमोपघातलक्षणं चिकित्सां च दर्शयन्नाह,—अत ऊर्ध्वमित्यादि । श्वसिति श्वासं करोति । क्षौति चात्यर्थमिति अतिशयेन छिक्कति । आधमति आध्मान-

१ 'कुर्यात्ततः पुनः' इति पा० । २ 'नातिशये' इति, 'शान्ते दाहे' इति च पा० । ३ 'युक्तैः' इति पा० । ४ 'प्रशान्तोष्माणं' इति ताडपत्रपुस्तके पाठः ।

१ 'सोपयोगित्वात्' इति पा० । २ 'एते च श्वासादयो यथायोग्यतया कोष्ठघ्राणचक्षुरादीनां धूमोपघातात्तर्कणीयाः' चक्रः । 'श्वसित्याध्माति चात्यर्थं कासते क्षवते भृशम्' इति पा० । ३ 'इत्येवं' इति पा० । ४ 'विषयान्' इति पा० । ५ 'क्षौति हिक्कतीत्यर्थः' इति हाराणचन्द्रः ।

युक्तो भवति । रागः पीतलोहिततां[1] अक्ष्णोः । घ्रेयमन्यन्न वेत्ति चेति नासागतदोषेण धूमादन्यद् घ्रेयं न वेत्ति, 'घ्रेयं तावन्न वेत्ति अन्यत् स्पृश्यं दृश्यं च न वेत्ति' इत्यन्ये। रसान् सर्वानित्यत्र 'न वेत्ति' इति संबध्यते। श्रुतिश्चास्योपहन्यत इति न शृणोतीत्यर्थः; श्रोत्रगतदोषेण। तृष्णादाहज्वरयुत इति स्पर्शदोषेण। सीदति क्रियास्वसमर्थो भवतीत्यर्थः। शृणु तस्येत्यादि। सर्पिरिक्षुरसमिश्रैको योगः, द्राक्षां पयो वेति द्वितीयः, शर्करांम्बु वेति तृतीयः, मधुराम्लौ रसौ वाऽपीति चतुर्थः। सदनम् अङ्गग्लानिः। योगेन मात्रया ॥ २९-३७ ॥

उष्णवातातपैर्दग्धे शीतः कार्यो विधिः सदा ॥
शीतवर्षानिलैर्दग्धे स्निग्धमुष्णं च शस्यते ॥ ३८॥
तथाऽतितेजसा दग्धे सिद्धिर्नास्ति कथंचन[2] ॥
इन्द्रवज्राग्निदग्धेऽपि जीवति प्रतिकारयेत् ॥
स्नेहाभ्यङ्गपरीषेकैः प्रदेहैश्च तथा भिषक् ॥ ३९॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थानेऽग्निकर्मविधिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

इदानीं दग्धचिकित्साप्रसङ्गेन दग्धसदृशस्य चिकित्सां दर्शयन्नाह,—उष्णेत्यादि। उष्णवातो ग्रैष्मिकः शारदो वा; उष्णवातेनातपेन च दग्ध इव दग्धः; उष्णवातातपाभ्यामिति द्विवचने प्राप्ते बहुवचनमनुक्तोष्णप्रापणार्थम्। सदास्थाने केचिद् 'व्रणे' इति पठन्ति व्याख्यानयन्ति च-व्रणे इति त्वगादिव्रणवस्तुनि। शीतवर्षानिलैर्दग्धे इति शीतं हिमं, हिमदग्धस्तुषारदग्ध इति लोकोक्त्या हिमदग्धेऽपि दाहसादृश्यमस्ति; वर्षानिल इति वृष्टिसंयुक्तो वातः, अत्रापि बहुवचनमनुक्तशीतप्रापणार्थम्। 'दग्धे' इत्यस्य स्थाने केचित् 'हते' इति पठन्ति। तथाऽतितेजसा दग्धे इति अतितेजसा वज्राग्निना। 'तथाऽतितेजसा दग्धे न सिध्यति कथंचन' इति यत् कृतं तत् किंचिद्दग्धे सिद्धिरपि भवतीति ज्ञापनार्थम्। तत्र च पूर्वोक्तेन विधिना शीतोष्णादिना प्रतिकर्तव्यमिति। अस्याग्रे केचित् "इन्द्रवज्राग्निदग्धेऽपि जिवति प्रतिकारयेत्। स्नेहाभ्यङ्गपरीषेकैः प्रदेहैश्च तथा भिषक्"—इति पठन्ति; तं च निबन्धकारा न पठन्ति ॥ ३८ ॥ ३९ ॥

इति श्रीडल्ह(ह)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ।

अथातो जलौकावचारणीयमध्यायं व्याख्यास्यामः॥ १
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि ॥ १ ॥ २ ॥

नृपाढ्यबालस्थविरभीरुदुर्बलनारीसुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः[1] ॥ ३ ॥

जलौकसां विषयं निर्दिशन्नाह,—नृपाढ्येत्यादि। अनुग्रहार्थमिति उपकारार्थम्। परमसुकुमारोऽयमिति प्रधानमृदुरित्यर्थः; शृङ्गालाबू सुकुमारोपायौ, जलौकसस्तु परमसुकुमारोपायः; असुकुमारोपायस्तु प्रच्छनं सिराव्यधनं च ॥ ३ ॥

तत्र[2] वातपित्तकफदुष्टशोणितं यथासंख्यं शृङ्गजलौकालाबुभिरवसेचयेत्, [3]सर्वाणि सर्वैर्वा (विशेषस्तु विस्राव्यं शृङ्गजलौकालाबुभिर्गृह्णीयात्) ॥ ४॥

दोषविशेषेणापि जलौकसां तत्प्रसङ्गेनागतस्य शृङ्गस्यालाब्वाश्च विषयं दर्शयितुमाह,—तत्र वातेत्यादि। अस्याग्रे केचित् 'स्निग्धशीतरूक्षत्वात्' इति हेतुमुदाहरन्ति, अमुं च निबन्धकारा न पठन्ति। पक्षान्तरं दर्शयन्नाह—सर्वाणीत्यादि। सर्वाणि वातपित्तकफदुष्टानि शोणितानि, सर्वैरिति शृङ्गादिभिर्यथालाभम्। ननु यथासंख्यमित्यभिधाय सर्वाणि सर्वैर्वेत्युक्तमनियतं वचनं स्यादित्यभिप्रायेणाह,—विशेषतस्तु विस्राव्यं शृङ्गजलौकालाबुभिर्गृह्णीयादिति; अतिशयेन विस्रावणार्हं यद्भवति शोणितमतिप्रबलतया तच्छृङ्गादिभिर्गृह्णीयान्निर्हरेदित्यर्थः। विशेषतस्त्वित्यादि पाठस्तु कैश्चिदेव निबन्धकारैः कथंचिदेव व्याख्यातः, बहुभिस्तु जेज्जटादिभिः परिहृत एव ॥ ४ ॥

भवन्ति चात्र श्लोकाः—

उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्तितम् ॥
तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥ ५ ॥
शीताधिवासा मधुरा[4] जलौका वारिसंभवा[5] ॥
तस्मात् पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥६॥
अलाबु कटुकं रूक्षं तीक्ष्णं च परिकीर्तितम् ॥
तस्माच्छ्लेष्मोपसृष्टे तु हितं तदवसेचने ॥ ७ ॥

तत्र वातादिदुष्टे सहेतुशृङ्गाद्यवचारणं दर्शयन्नाह—भवन्ति

---

१ 'लोहितता' इति पा०। २ 'सिद्धिर्नैकान्तिकी मता' इति चक्रसंमतः पाठः। ३ 'विद्युदग्निना' इति पा०।

१ 'यज्जलौकसः' इति पा०। २ अत्राह वाग्भटः,—"प्रच्छानेनैकदेशस्थं ग्रथितं जलजन्मभिः। हरेच्छृङ्गादिभिः सुप्तमसृग्व्यापि सिराव्यधैः॥ प्रच्छानं पिण्डिते वा स्यादवगाढे जलौकसः। त्वक्स्थेऽलाबुघटीशृङ्गं सिरैव व्यापकेऽसृजि॥ वातादिधाम वा शृङ्गजलौकालाबुभिः क्रमात्" (वा. सू. अ. २६) इति॥ ३ 'सर्वाणि सर्वैर्वेति वातादिदुष्टे शृङ्गादिनियमं निषेधयति। उक्ताप्राप्तावयोग्यतायां वा यत्प्राप्यते यद्वा योग्यं भवति तेनैव कर्तव्यमित्यर्थः, विशेषतस्तु विस्राव्यमिति पूर्वेण संबध्यते। तेन वातादिदुष्टे शृङ्गादिविधानं मुख्यं; उक्तं हि चरके—'भिषग्वातान्वितं रक्तं शृङ्गेणाशु विनिर्हरेत्। पित्तान्वितं जलौकोभिरलाबूभिः कफान्वितम् (च. चि. अ. २९)' इति चक्रः। ४ अस्याग्रे 'अर्धचन्द्राकृति महत्तनु सप्ताङ्गुलायतम्। प्रच्छिते दापयेच्छृङ्गमास्येनाचूषयेद्वली' इति ताडपत्रपुस्तकेऽधिकः पाठ उपलभ्यते। ५ 'मधुरेति मधुरार्थक्रियाकारित्वात्। वारिसंभवेति तृणजलौकाप्रतिषेधार्थं' इति चक्रः।

चात्रेत्यादि । समधुरम् ईषत्स्निग्धं; केचित् 'स्निग्धं श्लक्ष्णं समधुरं' इति पठन्ति । शीताधिवासा शीतगृहा ॥ ५-७ ॥

**तत्र प्रच्छिते तंनुवस्त्रपटलावनद्धेन श्रृङ्गेण शोणितमवसेचयेदाचूषणात्, सान्तर्दीपयाऽलाब्वा । ( जलायुका वक्ष्यन्ते ) ॥ ८ ॥**

वातादिदोषदुष्टरुधिरस्रावणप्रसङ्गागतयोः शृङ्गालाबुकयोरवचारणं दर्शयन्नाह,—तत्र प्रच्छिते इत्यादि । बस्तिरत्र मूत्राशयः, पटलं घनं शुभ्रं मर्कटिकाजालकं, तनुशब्दस्तु द्वयोरपि संबध्यते । अन्ये तु 'तनुवस्त्रपटलावनद्धेन' इति पठन्ति, व्याख्यानयन्ति च—सूक्ष्मवस्त्रावरणपिहितेन । सान्तर्दीपया मध्यदीपसहितया, शोणितमवसेचयेदिति संबन्धः । केचिदलाब्वा अवचारणमन्यथा पठन्ति; तथाहि-भूर्जपत्रशणतुलानामित्यादि । अयं पाठोऽभावात् समग्रो न लिखितः । शृङ्गालाबुप्रमाणं भालुकिसकाशादवगन्तव्यम् । तथाच तद्वचः,—"विषाणं श्वेतगोरिन्दुवक्रं सप्ताङ्गुलायतम् । क्षिप्तान्तःपिचुपेशीकं योज्यं वातयुतेऽसृजि ॥ अङ्गुष्ठमूलवन्मूले छिद्रमग्रेऽस्य मुद्गवत्"—इति; "अष्टाङ्गुलपरिणाहा चतुरङ्गुलनालसंमिता सुमुखी । कृष्णमृदालिप्ततनुः श्रेष्ठा रक्तावसेचनेऽलाबुः"—इति । अन्ये तु शृङ्गालाबुप्रमाणमत्रैव पठन्ति, तथा वातादिदुष्टरक्तलक्षणं च, स च पाठोऽस्माभिरभावान्न लिखितः ॥ ८ ॥

**जलमासामायुरिति जलायुकाः, जलमासामोक इति जलौकसः ॥ ९ ॥**

जलौकसां निरुक्तिमाह,—जलमासामायुरित्यादि ।-आसां जलौकसां जलमायुरिति जलायुकाः, 'कथ्यन्ते' इत्यध्याहारः । निरुक्तिपक्षान्तरमाह,—जलमासामोक इति जलौकसः ॥ ९ ॥

**ता द्वादश; तासां सविषाः षट्, तावत्य एव निर्विषाः ॥ १० ॥**

इदानीं चिकित्सोपयोगिनीं जलौकसां संख्यां निर्देष्टुमाह,—ता द्वादशेत्यादि । तासामेव सविषनिर्विषभेदाद्द्विविधत्वमाह—तासामित्यादि । एवशब्दोऽत्र परतन्त्रोक्तसविषाष्टजलौकाशङ्कानिरासार्थम् ॥ १० ॥

**तत्र सविषाः—कृष्णा, कर्बुरा, अलगर्दा, इन्द्रायुधा, सामुद्रिका, गोचन्दना चेति । तासु, अञ्जनचूर्णवर्णा पृथुशिराः कृष्णा; वर्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्बुरा; रोमशा महापार्श्वा कृष्णमुखी अलगर्दा; इन्द्रायुधवदूर्ध्वराजिभिश्चित्रा इन्द्रायुधा; ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिकाः; गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति । ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्दिर्मदः सदनमिति लिङ्गानि भवन्ति । तत्र महागदः पानालेपननस्यकर्मादिषूपयोज्यः । इन्द्रायुधादष्टमसाध्यम् । इत्येताः सविषाः सचिकित्सिता व्याख्याताः ॥ ११ ॥**

सविषाणां पोषणावचारणनिषेधार्थं प्रमादतस्तवचारितानां स्वयं वा लग्नानां व्यापच्चिकित्सार्थं नाम्ना निर्देशं कुर्वन्नाह,—तत्र सविषा इत्यादि । तासामाकृतिं निर्देष्टुमाह,—तास्वञ्जनेत्यादि । अञ्जनं कज्जलं, पृथुशिरा महामस्तका । वर्मिमत्स्यः सर्पाकारः, अन्ये रोहितमत्स्यमाहुः; छिन्नोन्नतकुक्षिरिति क्वचिच्छिन्नकुक्षिः क्वचिदुन्नतकुक्षिः । रोमशेति वलियुक्तत्वाद्रोमावततेव प्रतिभाति । इन्द्रायुधं शक्रधनुः; चित्रा चित्रिता मण्डितेत्यर्थः । विचित्रपुष्पाकृतिचित्रेति नानासंस्थानधवलबिन्दुचित्रा । गोवृषणवदधोभागे द्विधाभूताकृतिरिति वृषभाण्ड इवाधोभागे द्विप्रकारभूताकृतिः । तासां दंशे विषोपद्रवं निर्दिशन्नाह;—ताभिर्दष्टे इत्यादि । अतिमात्रशब्दः कण्ड्वादिभिः सह प्रत्येकं संबध्यते । मदः पूगफलेनेव मत्तता । सदनमङ्गग्लानिः । तासां दंशविषे चिकित्सां वक्तुमाह—तत्र महागद इत्यादि । तत्र तस्मिन् विषे महागदः 'त्रिवृद्विशल्ये मधुकं हरिद्रे' ( क. अ. ५ ) इत्यादिना कल्पस्थानोक्तः । नस्यकर्मादिष्वित्यत्रादिशब्दात् परिषेकावगाहादिषु योज्यः । इन्द्रायुधेत्यादि असाध्यम् असाधनार्हम् । तद्दंशलिङ्गं त्वसाध्यसर्पदष्टविषवेगविज्ञानवद्वेदितव्यम्; अन्ये तु श्वयथ्वादीनां संपूर्णलिङ्गत्वादरिष्टाद्युपपत्तेर्महागदावचारणेनाप्यनुपशान्तेस्तल्लिङ्गज्ञानमित्याहुः ॥ ११ ॥

**अथ निर्विषाः—कपिला, पिङ्गला, शङ्कुमुखी, मूषिका, पुण्डरीकमुखी, सावरिका चेति । तत्र, मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धा मुद्गवर्णा कपिला; किंचिद्रक्ता वृत्तकाया पिङ्गाऽऽशुगा च पिङ्गला; यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी; मूषिकाकृतिवर्णाऽनिष्टगन्धा च मूषिका; मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी; स्निग्धा पद्मपत्रवर्णाऽष्टादशाङ्गुलप्रमाणा सावरिका, सा च पश्वर्थे; इत्येता अविषा व्याख्याताः ॥ १२ ॥**

उपादानार्थं निर्विषाणां नामानि निर्दिशन्नाह—अथेत्यादि । ता एव लक्षणैर्निर्दिशन्नाह—तत्रेत्यादि । मुद्गवर्णा हरितमुद्गवर्णा । पिङ्गला कपिला । आशुगा शीघ्रगामिनी । यकृद्वर्णा नीललोहितवर्णा । मूषिकाकृतिवर्णेति मूषिकाकृतिर्मूषिकवर्णा चेत्यर्थः । पुण्डरीकतुल्यवक्त्रेति पद्मवद्विस्तीर्णमुखी । सावरिकाया विषय-

१ 'तनुवस्त्रपटलसूत्रावनद्धेन' इति हाराणचन्द्रसंमतः पाठः । २ अत्राह वाग्भटः,—"त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशाङ्गुलम् । अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति ॥ स्याद्द्वादशाङ्गुलोऽलाबुर्नाहे त्वष्टादशाङ्गुलः । चतुरुत्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तःश्लेष्मरक्तहृत्" (वा. सू. अ. २५) इति ॥ ३ 'सप्तदशाङ्गुलम्' इति पा० ।

१ 'मूषिकाकृतिवर्णेति मूषिकलाङ्गूलाकृतिस्तद्वर्णा चेति' चक्रः ।

माह—सा चेत्यादि । पक्षर्थे हस्त्यश्वादीनामर्थे, न पुनर्मनुष्याणाम् ॥ १२ ॥

**तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि; तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना[1] निर्विषाश्च विशेषेण भवन्ति ॥ १३ ॥**

निर्विषाणां प्रशस्तानि क्षेत्राण्याह,—तासामित्यादि । यवनः तुरुष्कदेशः, पाण्ड्यो दक्षिणदिग्विभागीयो देशः, सह्यो नर्मदायाः पारे पर्वतविशेषः, पौतनो मथुराप्रदेशः । यवनादिक्षेत्रेषु कीदृशा जलौका भवन्तीत्याह—तेष्वित्यादि । केचिद्यवनादीनि क्षेत्राणि न पठन्ति; कुतः? सविषाणां सविषकीटादिकोथस्य क्षेत्रत्वात्, निर्विषाणां तु पद्मोत्पलादिकोथस्य क्षेत्रत्वादयुक्तं यवनादिक्षेत्रकथनमिति वदन्ति ॥ १३ ॥

**तत्र, सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भस्सु च सविषाः; पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवलकोथजाता विमलेष्वम्भःसु च निर्विषाः ॥ १४ ॥**

**भवति चात्र—**

**क्षेत्रेषु विचरन्त्येताः सलिलाढ्यसुगन्धिषु ॥**
**न च संकीर्णचारिण्यो न च पङ्केशयाः सुखाः ॥ १५**

इदानीं सविषनिर्विषकोथकलुषनिर्मलजलोत्पन्नानां जलौकसां सविषनिर्विषत्वं दर्शयन्नाह,—तत्र सविषेत्यादि । कोथः पूतिभावः । कलुषेषु मलिनेषु । पद्मोत्पलेत्यादि पद्ममीषच्छुक्लम्, उत्पलमीषन्नीलं, नलिनमीषद्रक्तं, कुमुदं 'कुइआ' इति लोके, सौगन्धिकं गर्दभपुष्पाभिधानमत्यन्तसुरभि चन्द्रोदयविकाशि, कुवलयं रक्तोत्पलं, पुण्डरीकम् अतिश्वेतपद्मं, शैवलं शैवालं, कोथजाता इति एषां पूतिभावजाताः । इदानीं क्षेत्रसंग्रहश्लोकमाह,—भवति चात्रेत्यादि । एता इति पूर्वोक्ता निर्विषा जलौकाः, सुगन्धिषु शोभनगन्धिषु । न च सङ्कीर्णचारिण्य इति न विषादिविरुद्धाहारभुजः, शैवलाद्यशनत्वात् । न च पङ्के स्वपन्ति, तृणोदकपत्रशयनत्वात् । सुखा इति सुखहेतुत्वात्, सुखकारिण्य इत्यर्थः ॥ १४ ॥ १५ ॥

**तासां ग्रहणमार्द्रचर्मणा, अन्यैर्वा प्रयोगैर्गृह्णीयात् ॥ १६ ॥**

तासां ग्रहणोपायं दर्शयन्नाह,—तासां ग्रहणमित्यादि । ग्रहणं चासां शरत्काले, तन्त्रान्तरवचनात् । अन्यैर्वा प्रयोगैरिति सद्योहतजन्तुमांसपेशीनवनीतघृतक्षीराद्यभ्यक्तजङ्घाद्यवयवैर्वा ॥ १६ ॥

**अथैनां[2] नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात्; भक्ष्यार्थे चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य; शय्यार्थं तृणमौदकानि च पत्राणि; त्र्यहात्त्र्यहाच्चाभ्योऽन्यज्जलं भक्ष्यं च दद्यात्[1]; सप्तरात्रात् सप्तरात्राच्च घटमन्यं संक्रामयेत् ॥ १७ ॥**

पोषणं दर्शयन्नाह—अथैनामित्यादि । आवाप्य प्रक्षिप्य । निदध्यात् स्थापयेत् । वल्लूरं शुष्कमांसम् । संक्रामयेत् संचारयेत् ॥ १७ ॥

**भवति चात्र—**

**स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः ॥**
**अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः[2] १८**

तास्वयोग्या निदर्शयन्नाह,—भवति चात्रेत्यादि । परिक्लिष्टा अमनोज्ञदर्शनाः, पृथ्व्यो विस्तीर्णाः, मन्दविचेष्टिता मन्दगामिन्यः, न पूजिता न श्लाघिताः ॥ १८ ॥

**अथ जलौकोवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा, विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात् । गृहीताश्च ताः[4] सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः[5] सलिलसरकमध्ये मुहूर्तस्थिता विगतक्लमा[6] ज्ञात्वा ताभी रोगं ग्राहयेत् । श्लक्ष्णशुक्लार्द्र[7]पिचुप्रोतावच्छन्नां कृत्वा मुखमपावृणुयात्; अगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्यात्, शस्त्रपदानि वा कुर्वीत; यद्येवमपि न गृह्णीयात्तदाऽन्यां ग्राहयेत् ॥ १९ ॥**

तासामवचारणमुद्दिशन्नाह,—अथेत्यादि । संवेश्य शाययित्वा । अरुजमव्रणं, सव्रणे तु गन्धक्लेदाभ्यामेव गृह्णन्ति; अथवा रुजावति विरूक्षणेन रुजातिवृद्धिः । सलिलसरकं जलपात्रं; केचित् सलिलसरकस्थाने 'सरकमध्ये चारिण्यः' इति पठन्ति, सरकं जलपूर्णपात्रम् । रोगोऽत्र रोगाधिष्ठानं दोषाधिष्ठानं वा । श्लक्ष्णेत्यादि । पिचुः तूलं बीजहीनः कार्पासः, प्रोतं वस्त्रम् । अपावृणुयात् आच्छादयेत् ॥ १९ ॥

**यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद्गृह्णातीति; गृह्णन्तीं चार्द्रवस्त्रावच्छन्नां कृत्वा धारयेत् ॥ २० ॥**

रोगाधिष्ठाने तासां ग्रहणलक्षणमाह,—यदेत्यादि । निविशते लगतीत्यर्थः, गृह्णाति विध्यतीत्यर्थः । गृह्णन्तीं शोणितमाददानामित्यर्थः । आर्द्रवस्त्रावच्छन्नामिति इत्थं सुखिता शीघ्रं रक्तं पिबति; जलौकास्त्वात्मप्रभावेण प्राग्दुष्टमेव रक्तं पिबन्ति, यथा दुग्धमिश्रितोदकाद्धंसो दुग्धमेव पिबतीत्यर्थः ॥ २० ॥

१ 'महाशना' इति हस्तलिखितपुस्तके न पठ्यते । २ 'नवघटस्थापनादिविधानं तथैव जलौकसां सम्यगरोगत्वेनावस्थानात्, निर्विषत्वाच्च' इति चक्रः ।

१ 'जलं भक्तं च दद्यात्' इति पा० । २ 'तन्व्यश्चाक्षेत्रजाश्च याः' इति पा० । ३ 'पोषयेत्' इति पा० । ४ ता इत्यस्याग्रे 'शुद्रकल्कसंयुतेन सलिलेन प्रक्षाल्य' इत्यधिकः पाठ उपलभ्यते कचित् पुस्तके । ५ 'सर्षपरजनीकल्कलेपनादि निर्विषत्वाय, विगतमला इत्यपगतबाह्यमलाः' इति चक्रः । ६ 'विगतमलाः कृत्वा' इति तालपत्रपुस्तके पाठः । ७ 'सूक्ष्मशुक्लार्द्र०' इति पा० । ८ यदाह वाग्भटः,—"संपृक्ताद्दुष्टशुद्धास्त्राज्जलौका दुष्टशोणितम् । आदत्ते

**दंशे तोदकण्डुप्रादुर्भावैर्जानीयाच्छुद्धमियमादत्त इति; शुद्धमाददानामपनयेत्; अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत् ॥ २१ ॥**

तासां विशुद्धरक्तादाने विज्ञानोपायं दर्शयन्नाह—तोदेत्यादि । तोदो व्यथा, स धातुक्षयोत्पन्नेन वायुना । शुद्धरक्तक्षयात् श्लेष्मकार्यं कण्डूरिह न स्यादिति केचित् कण्डूग्रहणं न कुर्वन्ति; अन्ये तु वदन्ति—आग्नेयरक्तधातुक्षयात् कफधातोः सौम्यस्य जलौकामुखक्लेदवर्धितस्य वृद्धेः कण्डूसंभव इति; अन्ये तु 'दंशतोदकण्डूप्रादुर्भावैः' इति पठन्ति, व्याख्यानयन्ति च—दंशो वनमक्षिका, दंशेन कृतो यस्तोदो व्यथा, तस्मिन् तोदे यादृशी कण्डूस्तादृशी कण्डूर्यदा स्यात्, तदा शुद्धरक्तादानं जानीयात् । तत्र किं कुर्यादित्याह,—शुद्धमित्यादि । अवकिरेत् अवचूर्णयेत् । अन्ये तु 'शोणितगर्धेन' इति पठन्ति, गर्धेनाभिकाङ्क्षया, वदन्ति च—'गन्धेन' इत्ययुक्तः पाठः, कुतः ? यस्माज्जलौकसां गन्धेन्द्रियं नास्तीति ॥ २१ ॥

**अथैनां पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलिभ्यां शनैः शनैरनुलोममनुमार्जयेदामुखात्, वामयेत् तावद्यावत् सम्यग्वान्तलिङ्गानीति । सम्यग्वान्ता सलिलसरके न्यस्ता भोक्तुकामा सती चरेत् । या सीदती न चेष्टते सा दुर्वान्ता, तां पुनः सम्यग्वामयेत् । दुर्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति । अथ सुवान्तां पूर्ववत् सन्निदध्यात् ॥ २२ ॥**

पतिताया रुधिरापहरणविधानायाह—अथ पतितामित्यादि । तण्डुलकण्डनं गुण्डनं 'कणा' इत्यर्थः । अनुलोमम् अनुकूलम्, अनुमार्जयेत् प्रोञ्छयेत्, आमुखादिति मुखं यावदित्यर्थः । सम्यग्वान्तलिङ्गान्याह—सम्यगित्यादि सलिलसरकन्यस्ता जलपूर्णशरावेऽर्पिता । चरेत् गच्छेत् । दुर्वान्ताया लिङ्गान्याह,—या सीदतीत्यादि । सीदति निमज्जति । दुर्वान्तावचाराद्व्याधिविशेषमाह,—दुर्वान्ताया इत्यादि । "अस्य तु व्याधेः शास्त्रे लक्षणानिर्देशान्न पठनीयः" इत्येके । अथ सुवान्ता किं कार्येत्याह,—सुवान्तामिति । पूर्ववदिति यथा—'नवे महति घटे' इत्यादौ ॥२२॥

**शोणितस्य योगायोगानवेक्ष्य शतधौतघृताभ्यङ्गः, तत्पिचुधारणं वा; जलौकोव्रणान् मधुनाऽवघट्टयेत्, शीताभिरद्भिः परिषेचयेद्बध्नीत वा, कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति ॥ २३ ॥**

शोणितावसेचने उत्तरकर्माणि निर्दिशन्नाह,—शोणितस्येत्यादि । योगः सम्यक्स्रुतिः; अयोगो योगादन्यः, स त्रिविधो हीनातिमिथ्यायोगभेदात् । तत्र योगे शतधौतघृताभ्यङ्गः, शतधौतघृताक्तपिचुधारणं वा । हीनयोगे किं कुर्यादित्याह,—जलौकोव्रणान् मधुना अवघट्टयेत् चालयेत् स्रावणार्थम् । अतियोगे किं कुर्यादित्याह,—शीताभिरद्भिश्च परिषेचयेद्बध्नीत वेति; शीतलजलपरिषेचनं बन्धनं च जलौकोमुखपदस्य रक्तस्थित्यर्थम् । मिथ्यायोगे उपक्रममाह—कषायेत्यादि । प्रदिह्यात् लिम्पेत् । अत्र कषायप्रदेहः शेषदुष्टरक्तप्रसादार्थं, मधुरैः प्रदेहः स्रुतादुष्टरक्तवर्धनार्थं; अन्ये तु "मूर्च्छाद्युपद्रवपरिहारार्थं शीतलजलसेकः, मधुनाऽवघट्टनं कषायादिलेपनं च सन्धानार्थम्" इति व्याख्यानयन्ति । शोणितस्रावणमपि पुरुषबलप्रमाणाद्दोषबलप्रमाणाद्वा वातादिजनितव्याधिबलप्रमाणाद्वा यावच्छोणितस्य सम्यक्शुद्धिर्भवति तावद्वा रोगाशयं वा समीक्ष्य । तद्यथा—अल्पीयसि रोगाशयेऽल्पं रक्तमाहरणीयं, महति पुनर्बह्विति । रक्तमोक्षणं च पलादिमानेन, पलं चात्र पञ्चसप्तगुञ्जाफलप्रमाणमाषकेण, तान्यपि चार्धत्रयोदशपलानि प्रस्थः; रक्तप्रस्थश्चैकैकस्यां सिरायां मोक्षणीयः, तदपि द्वाभ्यां दिवसाभ्यां; प्रस्थश्चात्रोत्तममात्रा; मध्यमा मात्राऽर्धप्रस्थः, अर्धप्रस्थश्चात्र कर्षाधिकषट्पलानि, एतदपि द्वाभ्यामहोभ्यां स्रावणीयम्; अधममात्रा कुडवं, कुडवश्चात्राष्टमाषाधिकानि त्रीणि पलानि; इदमपि दिनद्वयेन मोक्षणीयम्; इति प्रसिद्धः कर्ममार्गः ॥ २३ ॥

**भवति चात्र—**

**क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम् ॥**
**जलौकसां च यो वेत्ति तत्साध्यान् स जयेद्गदान् २४**

**इति सुश्रुतसंहितायां सूत्रस्थाने जलौकावचारणीयो नाम त्रयोदशोऽध्यायः ।**

इदानीं संग्रहश्लोकमाह—भवति चात्रेत्यादि । क्षेत्राणीति सविषाणां क्षेत्राणि 'तत्र सविषकीट' इत्यादि, निर्विषाणां 'पद्मोत्पलपत्र' इत्यादि । ग्रहणमिति 'तासां ग्रहणमार्द्रचर्मणा' इत्यादि । जातयः सविषाणां 'कृष्णा कर्बुरा' इत्यादि; निर्विषाणां 'कपिला पिङ्गला' इत्यादि । पोषणमिति 'नवे महति घटे' इत्यादि । अवचारणमिति 'अथ जलौकोऽवसेकसाध्य' इत्यादि, चकारात् पश्चात्कर्मादि ॥ २४ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने जलौकावचारणीयो नाम त्रयोदशोऽध्यायः ।

---

प्रथमं हंसः क्षीरं क्षीरोदकादिव-" इति ॥ वा. सू. अ. २६ ।

१ 'प्रादुर्भावैरिति प्रकर्षेण तोदाद्युद्भवैः, मनाक्तोदादि दुष्टरक्तग्रहणेऽपि भवति' इति चक्रः । २ 'तामपनयेत्' इति पा० । ३ 'अथैनां शालितण्डुलकण्डनप्रदिग्धगात्रीं' इति पा० । ४ अस्याग्रे 'अप्रहृष्टशिरःपादकायेनोद्दिष्टते सकृत् । या चोष्णं कुरुते तापं तस्यामिन्द्रमदः स्मृतः' इत्यधिकः पाठ उपलभ्यते ताडपत्रपुस्तके । ५ 'दुर्वान्ताया लक्षणमाह'—इति पा० ।

## चतुर्दशोऽध्यायः ।

**अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः ॥१॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**तत्र[1] पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य[2] द्विविधवीर्यस्याष्टविधवीर्यस्य वाऽनेकगुणस्योपयुक्तस्याहारस्य सम्यक्परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स 'रसः' इत्युच्यते, तस्य हृदयं स्थानं, स हृदयाच्चतुर्विंशतिधमनीरनुप्रविश्योर्ध्वगा दश दशाधोगामिन्यश्चतस्रश्च तिर्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्धयति धारयति[3] यापयति चादृष्टहेतुकेन कर्मणा । तस्य शरीरमनुसरतोऽनुमानाद्गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः । तस्मिन् सर्वशरीरावयवदोषधातुमलाशयानुसारिणि रसे जिज्ञासा—किमयं सौम्यस्तैजस? इति । अत्रोच्यते —स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते ॥ ३ ॥**

शोणितोत्पत्तेः रसाधीनत्वाद्रसमेव दर्शयन्नाह,—तत्रेत्यादि । इत्थंभूतस्याहारस्य यः सारः स 'रस' इत्युच्यत इति पिण्डार्थः । पाञ्चभौतिकस्येति पृथिव्यादिभूतद्रव्यभेदेन, चतुर्विधस्येति पेयलेह्यभोज्यभक्ष्यभेदेन, षड्रसस्येति मधुरादिरसभेदेन, द्विविधवीर्यस्येति शीतोष्णवीर्यभेदेन, पक्षान्तरमाह,—अष्टविधवीर्यस्य वेति शीतोष्णस्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णभेदेन, अनेकगुणस्येति शीतादिद्रवादिगुणभेदेन विंशतिगुणस्य, उपयुक्तस्येति सम्यक्परिणतस्येत्यनेनैवोपयुक्तपदार्थस्य लब्धत्वाद्यदुपयुक्तग्रहणं करोति तत् सम्यग्योगं स्वास्थ्यवृत्तीयद्वादशविधाशनप्रविचारमपेक्ष्योपयोगं प्रापयति । तेजोभूत इति तेजसा भूतस्तेजोभूतो वह्निसंभूत इत्यर्थः; अन्ये तु तेजःशब्देन घृतमाहुः, तत्र तेजोभूतो घृतवदुत्पन्न इत्यर्थः; अन्ये तु वदन्ति—भूतशब्दोऽत्रोपमानार्थः, तत्र तेजोभूतो घृताकार इत्यर्थः । सार इति विडादिमलरहित इत्यर्थः । परमसूक्ष्म इति अतिशयेनास्थूलावयवः, सूक्ष्मस्रोतोऽनुसारीत्यर्थः । रसस्य स्थानमाह—तस्येत्यादि । तस्य रसस्य सर्वदेहानुसारित्वेऽपि हृदयं स्थानं; हृदयशब्देनात्र हृदयोपलक्षितः प्रदेश उच्यते, न तु साक्षाद्धृदयं; कुतः ? हृदयस्यौजःस्थानत्वात् । रसस्य क्रियां निर्दिशन्नाह—स हृदयादित्यादि । तर्पयतीति बालमध्यस्थविरान् सर्वानेव प्रीणयति; अन्ये गर्भं तर्पयतीति मन्यन्ते, तस्याहारासंभवात्; वर्धयतीति बालं; धारयतीति मध्यं संपूर्णधातुत्वात्, केचित् 'धारयति' इत्यत्र 'जीवयति' इति पठन्ति, अत्रापि स एवार्थः; यापयतीति वृद्धं क्षीयमाणदेहत्वात् । केचिदत्र 'हृदयात्' इत्यादि पाठं 'चतस्रश्च तिर्यग्गाः' इत्यन्तं न पठन्ति, 'कृत्स्नं शरीरं' इत्यादि च पठन्ति । कुतः पुनरयं तर्पणादि करोतीत्याह,—अदृष्टहेतुकेन कर्मणा; प्राक्तनकर्मणेत्यर्थः । अन्ये तु केषांचिदेव मर्तुमिच्छूनां कुतो न तर्पणादि करोतीति पृष्ट आह—अदृष्टहेतुकेन कर्मणेति । तस्य शरीरमित्यादि तस्येति रसस्य । अनुसरतः अनुगच्छतः । क्षयवृद्धिवैकृतैरिति वैकृतं विकारः; क्षयविकारैः 'रसक्षये हृत्पीडा कम्प' इत्यादिभिः, वृद्धिविकारैः 'हृदयोत्क्लेदं' इत्यादिभिः । तत्र क्षयवृद्धिविकारैर्विकृतस्य; क्षयवृद्धिवैकृतैश्चेत्यत्र चकारो द्रष्टव्यः, तेन सर्वशरीरतर्पणादिभिश्चाविकृतस्य गतिरनुमन्तव्येत्यर्थः । रसस्वभावं विनिर्देष्टुमाह,—तस्मिन्नित्यादि । तस्मिन्निति पूर्वोक्ते रसे । जिज्ञासा ज्ञातुमिच्छा । किमयं सौम्यः कफवत्, अथवा तैजसः पित्तवत्? इति संशयः । अत्रोच्यत इत्यादि । अनुसारी अनुसरणशीलः, स्नेहनः स्नेहयतीति, जीवनो जीवयतीति, तर्पणः प्रीणनः शरीरस्य, आदिशब्दादवष्टम्भनादयः । विशेषैः भेदैः । अवगम्यते अवबुध्यते ॥ ३ ॥

**स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैति ॥ ४ ॥**

इदानीं क्रमनिष्पत्त्या शोणितं दर्शयन्नाह—स खल्वित्यादि । खलुशब्दोऽप्यर्थः । आप्योऽपि रसो रागमुपैति लोहितत्वं गच्छति ॥ ४ ॥

**श्लोकौ चात्र भवतः—**

**रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् ॥**
**अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥ ५ ॥**

तमेवार्थं श्लोकेन स्पष्टीकुर्वन्नाह,—भवतश्चात्रेत्यादि । शरीरस्थेन यकृत्प्लीहस्थेनैव, प्रसन्नेन प्रकृतिस्थेन, इत्थंभूतेन तेजसा रञ्जकनाम्ना, अव्यापन्ना एवंगुणविशिष्टा आपो रञ्जिता लोहितीकृताः सत्यो रक्तमित्युच्यते । आपोऽत्र रसः ॥ ५ ॥

**रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्तते ॥**
**तद्वर्षाद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ६ ॥**

रक्तार्तवयोरभेदं दर्शयन्नाह,—रसादेवेत्यादि । रजःसंज्ञमिति संज्ञान्तरमेतत् स्त्रीयोनिप्रवृत्तस्य रक्तस्य, ऋतुकालजं रक्तमेव रजःसंज्ञमुच्यत इत्यर्थः । तद्वर्षाद्द्वादशादूर्ध्वमिति तद्रजःसंज्ञं शोणितं द्वादशवर्षादनन्तरं प्रवर्तत इति संबन्धः । तस्य निवृत्तिकालमाह—याति पञ्चाशतः क्षयमिति । "रसादेव रजः स्त्रीणां मासि मासि त्र्यहं स्रवेत् । तद्वर्षाद्द्वादशादूर्ध्वं यावत् पञ्चाशतं समाः"—इत्यन्ये पठन्ति । समाः वर्षाणि ॥ ६ ॥

**आर्तवं शोणितं त्वाग्नेयम्, अग्नीषोमीयत्वाद्गर्भस्य ॥ ७ ॥**

रक्तार्तवयोः सौम्यरससंभूतयोरपि स्वभावभेदं दर्शयन्नाह,—आर्तवमित्यादि । तुशब्दोऽत्र भेदे, तेन रसात् सौम्याज्जातम-

---

१ 'तत्र' इति ताडपत्रपुस्तके न पठ्यते । २ 'षड्रसोपेतस्य' इति ताडपत्रपुस्तके पाठः । ३ 'जीवयति' इति पा० । ४ पोष्यस्य धातुरसस्यैव हृदयं स्थानं नतु पोषकस्याहाररसस्य, तस्य तु धमन्य एव स्थानं, यदाह चक्रः,—"तत् स्थानं तु धमन्य एव; पोषकाहाररसस्य च पृथग्रसादिधातुभ्यः प्रदेशान्तरग्रहणं न क्रियते, रसादिकारणरूपतया रसादिग्रहणेनैव तद्ग्रहणात्—" इति ।

प्यार्तवं शोणितं चाग्नेयम् । कुतः कारणादित्याह,—अग्नीषोमीयत्वाद्गर्भस्येति ।—आर्तवमाग्नेयं, शुक्रं सौम्यं, ताभ्यामग्नीषोमीयो गर्भो भवति । ननु यद्यार्तवमपि सौम्यं भवति, तदा सौम्यारब्धः सौम्य एव गर्भो भवति; न चैवम्, अग्नीषोमीयत्वाद्गर्भस्येत्यत्रार्तवस्याग्नेयत्वमुच्यते, आर्तवशोणितयोः स्वभावाभेदादार्तवस्याग्नेयत्वे उक्ते शोणितस्याप्याग्नेयत्वमुक्तमेवेति । 'आर्तवशोणितं त्वाग्नेयम्'-इत्यन्ये पठन्ति; "आर्तवं च तच्छोणितं चेत्यार्तवशोणितं; तुशब्दोऽत्रावधारणे, तेनार्तवस्याग्नेयत्वमवधारयति" इति व्याख्यानयन्ति । रक्तं पुनरनुष्णशीतमेवमाचार्या मन्यन्ते ॥ ७ ॥

**पाञ्चभौतिकं त्वपरे जीवरक्तमाहुराचार्याः ॥ ८ ॥**

शोणितस्वभावे मतान्तरमाह—पाञ्चभौतिकमित्यादि । जीवरक्तमिति जीवतुल्यं रक्तम् । कुतः? जीवच्छरीरे रक्तदर्शनात्, मृतशरीरे चादर्शनात्; ननु जीवरक्तमोज इति, एवं प्रस्तुतस्यैव रक्तस्य लक्षणमनुक्तं स्यात् ॥ ८ ॥

**विस्रता द्रवता रागः स्पन्दनं लघुता तथा ॥**
**भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते ॥ ९ ॥**

तदेव पाञ्चभौतिकत्वं सुखबोधार्थं स्पष्टयितुमाह,—विस्रतेत्यादि । विस्रता आमगन्धता, भूमिगुणः; द्रवता द्रवभावः, अयमम्बुगुणः; रागो रक्तता, तेजोगुणः; स्पन्दनं किंचिच्चलनं, वातगुणः; लघुता अगुरुत्वम्, आकाशगुणः । भूम्यादीनामित्यत्रादिशब्देनाप्तेजोवाय्वाकाशा गृह्यन्ते । हि यस्मादर्थे, यस्मादेते विस्रतादयः पृथिव्यादीनां गुणा अत्र शोणिते दृश्यन्ते, तस्माद्रक्तं पाञ्चभौतिकमिति ॥ ९ ॥

**रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते ॥**
**मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रं तु जायते १०**

---

१ 'तनुता' इति पा० । २ 'पृथिव्यादिगुणास्त्वेते दृश्यन्ते शोणिते यतः' इति ताडपत्रपुस्तके पाठः । ३ 'अत्र प्रजायते इति प्रशब्दः प्रकर्षवाची, तेन रसादिगतमलांशात् 'कफः पित्तं मलाः खेषु' (सू. अ. ४६) इत्यादिना वक्ष्यमाणमलोत्पत्तिरप्यपकृष्टांशजन्या सूचिता भवति । यदुक्तं चरके "रसात् स्तन्यं तथा रक्तमसृजः कण्डराः सिराः । मांसाद्वसा त्वचः षट् च मेदसः स्नायुसंधयः" (च. चि. अ. १५) इति । शुक्रं तु जायते इत्यनेन पुनरुत्पादाभिधानेन शुक्रस्य विशिष्टमलांशरहितमुत्पादं दर्शयति । यत्तु श्मश्रु शुक्रमलतया कैश्चिदुच्यते, तन्न, शास्त्रेऽनभिहितत्वात्, तथा स्त्रीणां च सशुक्रतया श्मश्रुप्रसक्तेः; तस्मात् श्मश्रु लोमविशेषतयाऽस्थिमलमेव ।' इति भानुमत्यां चक्रः । 'तत्र पाकजन्यैः प्रसादांशैर्येन क्रमेण ये ये जन्यन्ते तानाह—रसादित्यादि । प्रसादज इत्यस्य लिङ्गविपरिणामेन रक्तमित्यादिषु सर्वत्र संबन्धः । प्रसादजश्च सारभागः । तेन रसाद्रक्तं प्रसादजं, ततो रक्तान्मांसं प्रसादजं, मांसाच्च मेदः प्रसादजमित्यादि योज्यम् । रसाद्रक्तं प्रसादजमिति रसात् पाकेन जायते यः प्रसादांशस्तस्माद्रक्तं जायते; एवं रक्तात् पाकेन जायते यः प्रसादांशस्तस्माच्च मांसं जायत इत्यादि व्याख्येयम् । अनिश्चायं पोषण एव वर्तते नापूर्वोत्पादे; यतो रक्तादयो गर्भात् प्रभृत्येवोत्पन्ना रसादिभिः पोष्यन्ते । अन्ये तु 'गर्भप्रसादजम्'इति पठित्वा गर्भप्रसादजमिति समस्तपदेन ओज आचक्षते । अस्मिंस्तु पक्षे प्रसादजशब्दस्य न सर्वत्रान्वयः । ननु, "पुष्यन्ति त्वाहाररसात्" (च. सू. अ. २८) इत्यादिना चरके रसेन रसपोषणमुक्तम्, अत्र तु रसाद्रक्तमित्यादिना रसेन रक्तपोषणमुच्यत इति विरोधः । नैवम्, एक एवायमाहाररसो द्विप्रस्थानः पोष्यपोषकभेदेन; तत्रान्नपानादुत्पन्नो रसः पोषकः, रक्तादिवत् स्थायी यः स पोष्यः, तस्यैव हृदयं स्थानमुक्तम् ( पोषकाहाररसस्य तु धमन्य एव स्थानम् ) । अत एव पोष्यस्थायिरसव्यवच्छेदार्थमाहारेति रसविशेषणमुक्तं चरकेण । यत्तु 'रसाद्रक्तं' इत्यादिवचनं तद्रसत्वेनाभेदविवक्षया रसं परित्यज्य रक्तमेव पठितं, न तु पोष्यस्य रसाख्यधातोरभावादिति । न चैवमष्टधातुकत्वं शरीरस्येति वाच्यं; यतः स्थायिरसभागपोषकरसभागयोः स्थानभेदाद्भिन्नभेदाद्यभावादेकत्वमेवेति सप्तधातुकमेव शरीरमित्युच्यत इति । अत्र च रसाद्रक्ताद्युत्पादे केचिदिदं वदन्ति—यद्रसोऽग्निपच्यमानः सर्वात्मना रक्ततां याति, रक्तं च मांसतामित्यादि पूर्वपूर्वधातुपरिणामेनोत्तरोत्तरधातूत्पादः, यथा—सर्वात्मना क्षीराद्दधि भवति, दध्नो नवनीतं, नवनीताद्घृतं, घृताच्च घृतमण्डः, इत्येकः पक्षः; किंवा रस एव रक्तं प्रथमं प्लावयति, तत्र रक्तस्थानसंबन्धाद्रक्तसादृश्यं रक्तव्यपदेशं चानुभवति, रक्तं च रक्तसमानेन स्तोकेनांशेनास्य पोषयति, ततो रक्तमाप्लाव्य मांसमाप्लावयति, तत्रापि मांससमानेनांशेन मांसपोषणं करोति मांससादृश्यं मांसशब्दाभिधेयतां चानुभवति, एवमुत्तरोत्तरधातून् रस एव प्लावयति, यथा—केदारनिषिक्तं कुल्याजलं प्रत्यासन्नां केदारीमाप्लावयतीति द्वितीयः पक्षः; एतदेवोक्तं हारीते यत्, "रसः सप्ताहादर्वाक् परिवर्तमानः श्वेतकपोतहरितहारिद्रपद्मकिंशुकालक्तकरसप्रख्यश्चायं यथाक्रमं दिवसपरिवर्ताद्वर्णपरिवर्तमापद्यमानः पित्तोष्मोपरागाच्छोणितत्वमापद्यते—" इति, तथा सुश्रुतेऽपि,–'तत्रैषां धातूनाम्—' इत्यादिना तथा 'स खलु त्रीणि त्रीणि—' ( सु. सू. स्था. अ. १४ ) इत्यादिना रसेनैव रक्तादिधातुपोषणमनेन न्यायेनोक्तं; किंवा, आहाररस उत्पन्नो भिन्नैरेव मार्गैः स्थायिरसरुधिरमांसादीन् रसरुधिरादिसमानांशेन तर्पयति, तत्र यः प्रत्यासन्नो धातुस्तत्पोषको भागस्तं शीघ्रं पुष्णाति, यस्तु विदूरधातुस्तस्य सूक्ष्मविदूरमार्गतया चिरेण पोषणं भवति, एवं भिन्नैरेव मार्गैर्धातुपोषणं भवति; तेन रक्तपोषणकालादुत्तरकालं मांसपोषको रसभागो मांसं पोषयति, तथा मांसपोषणकालादुत्तरकालं मेदःपोषको रसभागो मेदः पोषयतीत्यादि; तेन रसाद्रक्तमित्यादिवचनस्यायमर्थो यत्—रसपुष्टिकालादुत्तरकालं रक्तं प्रवर्तते, रक्तपुष्टिकालादुत्तरकालं मांसं प्रवर्तते इत्यादि; अस्मिंस्तु पक्षे—"विण्मूत्रमाहारमलः सारः प्रागीरितो रसः । स तु व्यानेन विक्षिप्तः सर्वान् धातून् प्रतर्पयेत्" ( सु. सू. अ. ४६ ) इत्यादिवचनं मुख्यार्थमेव घटते ( तथा 'तस्मिन् धातुमलाशयानुसारिणि रसे' इति च मुख्यार्थं भवति, तथा चरकेऽपि 'स्रोतसा च यथास्वेन धातुः पुष्यति धातुना' ( च. चि. अ. ८ ) इति च मुख्यार्थं भवति ); तेन यथा खले उपचितानां कपोतानां भिन्नदिग्गामिनां स्वीयस्वीयमार्गेणैव गच्छतां गम्यदेशस्य प्रत्यासन्नत्वविप्रकृ-

शोणितप्रसङ्गेनान्येषामपि धातूनां क्रमेणोत्पत्तिं दर्शयन्नाह,— रसाद्रक्तमित्यादि । स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैतीत्यनेनैव रसादेव रक्तस्य भवने उक्ते रसात् पुनः शोणितसंभवनवचनं नियमार्थम् । तेन रसात् क्रमोत्पत्त्या शोणितमेव भवति न परे धातव इति । एतेन युगपदेव सर्वधातुषु रससंचाराद्रसेनैव सर्वधातुपोषणमिति तन्त्रान्तरीयं वचो निरस्तम् । ननु, यदि परिणमन्ति रसादयो रक्तादिभावेन, तर्हि सर्वेषामुत्सादः स्यात्? सन्तत्या परिणाम इति चेत्तर्हि सर्वेषां पूर्वेषामल्पता स्यादुत्तरेषां बाहुल्यमिति? नैतदस्ति । तेषां[1] रसादीनां मलस्थूलाणुभागविशेषेण त्रिविधः परिणामो भवति; तद्यथा—अन्नात् पच्यमानाद्विण्मूत्रं मलः, सारो रसः; रसादभिपक्वान्मलः कफः, स्थूलो भागो रसः, अणुभागो रक्तं; रक्तादभिपक्वान्मलः पित्तं, स्थूलभागः शोणितम्, अणुभागस्तु मांसमिति; ततोऽप्यात्मपावकपच्यमानान्मलः[1] श्रोत्रनासाकर्णाक्षिप्रजननादिस्रोतोमलः, स्थूलभागो मांसं, सूक्ष्मो मेदः; ततोऽपि निजवह्निपच्यमानान्मलः स्वेदः, स्थूलोंऽशो मेद एव, सूक्ष्मभागोऽस्थि; ततोऽपि पच्यमानान्मलः केशलोमश्मश्रूणि, स्थूलोऽस्थि, सूक्ष्मस्तु मज्जा; ततोऽपि मज्ज्ञः पावकपच्यमानान्मलो नयनपुरीषत्वचां स्नेहः, स्थूलो भागो मज्जा, सूक्ष्मः शुक्रं; ततः पुनः पच्यमानादुपमलो नोत्पद्यते सहस्रधाध्मातसुवर्णवत्, स्थूलो भागः शुक्रमेव, स्नेहभागः सूक्ष्मस्तेजोभूतमोजः । पूर्वोक्त एवार्थः श्लोकाभ्यां कथ्यते,—"स्थूलाण्वंशमलैः सर्वे भिद्यन्ते धातवस्त्रिधा । स्वः स्थूलोंऽशः परं सूक्ष्मस्तन्मलं याति तन्मलः ॥ स्वाग्निभिः पच्यमानेषु मलः षट्सु रसादिषु । न शुक्रे पच्यमानेऽपि हेमनीवाक्षये मलः"[2]—इति । आकृष्टाण्डकोषस्य पुंसः श्मश्रुपाताच्छ्मश्रु शुक्रमल इत्येके । तन्न, श्मश्रुहीनस्यापि शुक्रदर्शनात् । ननु, मांसान्मेदः प्रजायत इत्यनर्थकं, 'मज्ज्ञः शुक्रं तु जायते' इत्येकेनैव क्रियापदेन प्रजायत इत्यस्यार्थस्य लब्धत्वात् । सत्यं, प्रजायत इति क्रियापदं रसादीनां मेदःपर्यन्तानां विशिष्टकार्यान्तरोत्पाददर्शनार्थम्, एभ्य एवोपधातवः स्वभावादुत्पद्यन्ते न पुनरस्थ्यादिभ्य इति । तथाहि,—रसात् स्तन्यमार्तवं च, रक्तात् कण्डराः सिराश्च,[3]

---

इत्वादिभेदेन शीघ्रं चिरेण वा गमनं भवति तद्वत्; इति क्षीरदधिन्यायकेदारीकुल्यान्यायखलेकपोतन्यायात्त्रिधा धातुपोषणक्रमः । तत्र, एतेषु पक्षेषु सर्वात्मपरिणामे त्रिचतुरोपवासेनैव देहस्य नीरसत्वं स्यात्, मासोपवासाच्च शुक्रम(क्ष)यं शरीरं स्यादित्युपेक्षणीय एव प्रथमः पक्षः; केदारीकुल्यान्यायपक्षे तु रसाद्रक्तादिपोषणं मुख्यार्थतया भवति, यदपि रक्तादेर्मांसादिपोषणं तदपि रसादेव रक्तादिधर्मतया रक्तादिव्यपदेशभाजो भवतीति व्युत्पादितमेव, यत्तु रसस्य सर्वधातुपोषकत्वमुक्तं ( सर्वधातुदोषमलाशयानुसारित्वमुक्तं ) तदपि रक्तादिपोषकतया तथा हृदयस्थस्यायिरसस्य कृत्स्नदेहव्यापकतया चोपपन्नं; एवं चरकेऽप्युक्तम्;—"व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा । युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा—" ( च. चि. स्था. अ. १५ ) इत्यादि, तदप्युक्तन्यायादेवोपपन्नं; यदपि मांसादिना समानेन मांसादेरेव पोषणं, तदपि धात्वाप्लावनन्यायेन गच्छताऽपि रसेन तद्धातुसमानेनांशेन तद्धातुपोषणादुपपन्नम् । वृष्यं तु प्रभावाद्यथा खलेकपोतन्याये विदूरमपि शुक्रं प्रभावाच्छीघ्रं याति, तथाऽत्रापि शीघ्रमेव वृष्योत्पन्नो रसो रक्तादिधातून् शीघ्रमाप्लावयतीति सुघटम् । एवमनया दिशाऽन्यदप्यत्र दूषणमुद्धार्यम् । तेनायं पक्षस्तावत् साधुः । खलेकपोतपक्षेऽपि यथा रसाद्रक्तमित्यादि गौणतया भवति तद्दर्शितमेव । यत्तु चरके "रक्तं विबद्धमार्गत्वान्मांसादीन् न प्रपद्यते" ( च. चि. अ. ८ )—इत्युक्तं, तत् कृत्स्नदेहचारिशोणिताभिप्रायेण, न तु पोषकरक्ताभिप्रायेणेति व्यवस्थाप्यते । यत्तु "एकैकस्मिन् धातौ त्रीणि त्रीणि"—इत्यादिना धाताववस्थानकाल उक्तः, स पूर्वपूर्वरक्तादिधातुलङ्घनकालो विदूरगामिरसस्येति व्यवस्थाप्यते । एवमनयोः पक्षयोर्मैहाजनपरिगृहीतयोर्गतिरुपदर्शिता; स्वरसस्त्वस्माकं केदारीकुल्यान्याये । यत्त्वन्यैः खलेकपोतन्यायस्वीकारेण चरके संततज्वरस्य द्वादशाश्रयत्वं युक्तमित्याद्युक्तं, तत्र ब्रूमहे, संततज्वरस्य द्वादशाश्रयत्वं दोषमहिम्ना कृत्स्नदेहव्यापकतया "यथा धातूंस्तथा मूत्रं पुरीषं चानिलादयः"—( च. चि. स्था. अ. ३ ) इत्यादिनोक्तम् । दोषाणां च कुपितानां संप्राप्तिविशेषात् किमगम्यमस्ति देहे, येन तावद्रसमेव परं सर्वधात्वादिव्यापकं सर्वधातुदूषणेऽपेक्षन्त इति" इति चक्रदत्तविरचितद्रव्यगुणसंग्रहव्याख्यायां शिवदाससेनः ।

१ 'तेषां रसादीनां' इति हस्तलिखितपुस्तके न पठ्यते ।

१ 'आत्मपाचकपच्यमानात्' इति पा० । २ यदाह चरकः,—"किट्टमन्नस्य विण्मूत्रं, रसस्य तु कफोऽसृजः । पित्तं, मांसस्य खमला, मलः स्वेदस्तु मेदसः ॥ स्यात् किट्टं केशलोमास्थ्नो, मज्ज्ञः स्नेहोऽक्षिविट् त्वचाम्" ( च. चि. अ. १५ ) इति । ३ "रसात् स्तन्यं तथा रक्तमसृजः कण्डराः सिराः । मांसाद्वसा त्वचः षट् च मेदसः स्नायुसम्भवः"—इति । संप्रति प्रसादजन्यतां धातूनामभिधायोपधातूनामप्याह—रसादित्यादि । अत्रापि रसात् स्तन्यं प्रसादजमित्यादि योज्यम् । रक्तमिति स्त्रीणां रजःसंज्ञं रक्तमप्युपधातुरूपं रसादेव प्रसादभागजन्यमित्यर्थः । उक्तं च सुश्रुते,—"रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्तते" ( सु. सू. स्था. अ. १४ ) इति । एतच्च रजोरूपं रक्तं रसजन्यमपि धातुशोणितवन्न शीघ्रं जायते, किंतु शुक्रवन्मासेनैव । तदुक्तं सुश्रुते,—"एवं मासेन रसः शुक्रीभवति स्त्रीणां च चार्तवम्—" इति । अन्ये तु—"घृतकुम्भो यथैवाग्निमाश्रितः प्रविलीयते । विसर्पत्यार्तवं स्त्रीणां तथा पुंसां समागमे" ( शा. अ. २ ) इत्यत्र यथाऽऽर्तवशब्देन शुक्रमुच्यते तथा स्त्रीणां चार्तवमित्यत्राप्यार्तवशब्दः शुक्र एव वर्तते न तु रजसि, रजो हि रसाद्रक्तवच्छीघ्रमेव जायते न तु मासेनेत्याहुः । तन्नेत्यन्ये, विसर्पत्यार्तवमित्यादावपि स्त्रीणामार्तवं पुंसां समागमे सति विसर्पतीति योजनयाऽऽर्तवशब्दस्य रजोवचनत्वेनाप्युपपत्तेः । वस्तुतस्त्वार्तवस्य रक्तरूपता यद्यपि मासादर्वाग्भवति तथाऽपि तस्यार्तवरूपता गर्भाशयप्राप्त्यैव भवति, गर्भाशयप्राप्तिस्तु मासेनैव भवतीति कृत्वा मासेनार्तवं भवतीति सुश्रुतेनोक्तम् । उक्तं हि विश्वामित्रेण,—"सूक्ष्माः केशप्रतीकाशा बीजरक्तवहाः सिराः । गर्भाशयं पूरयन्ति मासाद्बीजाय कल्पते—" इति । तत्र बीजभूतरक्तं बीजरक्तमार्तवमित्यर्थः ।

मांसाद्वसात्वचौ, मेदसः स्नायुसन्धी इति । शुक्रं तु जायत इति द्वितीयजायतेग्रहणेन शुक्रे विशिष्टधर्मवत्ता उक्ता; शुक्रं हि स्वाभिपच्यमानमपि नाणुभागमुत्पादयति । अन्ये तु 'मेदः प्रजायते' इत्यत्र 'प्रवर्तते' इति पठन्ति, 'शुक्रं तु जायते' इत्यत्र 'शुक्रस्य संभव' इति पठन्ति, व्याख्यानयन्ति च—संभवशब्दोऽत्र पोषणे न त्वपूर्वोत्पादने, यतो रसादीनां शुक्रान्तानामागर्भादेवोत्पत्तिरिति ॥ १० ॥

**तत्रैतेषां धातूनामन्नपानरसः प्रीणयिता ॥ ११ ॥**

**रसजं पुरुषं विद्याद्रसं रक्षेत् प्रयत्नतः ।**
**अन्नात्पानाच्च मतिमानाचाराच्चाप्यतन्द्रितः १२**

रसस्य निर्दिष्टस्य प्राधान्यं दर्शयितुमाह,—तत्रैषामित्यादि । तत्र तेषु धातुषु मध्ये । एतेषां धातूनां प्रागुक्तानां रक्तादीनाम् । अन्नपानरसः अन्नपानस्य सारः । प्रीणयिता तर्पयितेत्यर्थः । अतन्द्रितोऽनलस इत्यर्थः ॥ ११ ॥ १२ ॥

**तत्र 'रस'गतौ धातुः, अहरहर्गच्छतीत्यतो रसः ॥ १३ ॥**

रसस्यैव निरुक्तिमाह—तत्र रसगतावित्यादि ॥ १३ ॥

**स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धाताववतिष्ठते; एवं मासेन रसः शुक्रं स्त्रीणां चार्तवं भवति ॥ १४ ॥**

**भवति चात्र—**

**अष्टादशसहस्राणि सङ्ख्या ह्यस्मिन् समुच्चये ॥**
**कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः ॥ १५ ॥**

रसधातुर्धात्वन्तराणां स्वभावं जनयन्नेकैकस्मिन् धातौ कियन्तं कालमवतिष्ठत इत्याह,—स खल्वित्यादि । अवतिष्ठते अवस्थितिं करोतीत्यर्थः, परिणामं गच्छन्नेव तिष्ठति पच्यमानस्थालीतण्डुलवत्, न पुनरस्य गमननिवृत्तिः । त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला इत्यस्यार्थः—रसः किलैकाहेनैव संपद्यते, तदनन्तरं ये षड्धातवस्ते प्रत्येकं पञ्चभिः पञ्चभिरहोभिः संपद्यन्ते । यावता कालेन रसः शुक्रतां याति तावन्तं वक्तुमाह,—एवं मासेनेत्यादि । अत्रार्तवशब्दोऽयं शुक्रे वर्तते न तु रजसि, रजो हि रसाद्रक्तवत् सप्तमेऽहनि जायते; अथवा यद्ययमार्तवशब्दः शुक्रे न वर्तते तदाऽत्र शुक्रोत्पत्त्यधिकारे स्त्रीणां शुक्रस्यानुक्तत्वात् षड्धातुत्वं स्यात्, तस्मादार्तवशब्दः शुक्रे वर्तते; अन्ये तु पुनरत्रार्तवशब्दं रजस्येव वर्तयन्ति, चकारेण स्त्रीशुक्रं समुच्चिन्वन्ति शुक्रेऽपि गर्भजननशक्तिद्योतनार्थम् । तथा-

---

असृजः कण्डरा इति स्थूलस्नायवः । मेदसः स्नायुसन्धय इत्यनेन तु मेदसः सूक्ष्मस्नायुपोषणमिति ज्ञेयम् । चरके हि कण्डराशब्दः स्थूलस्नायुवाची, सुश्रुते च स्थूलसिरावाचीति ज्ञेयम् । एते च स्तन्यादयः शरीरधारका अप्युपधातुशब्देनैवोच्यन्ते, न तु धातुशब्देन; धातुशब्दप्रवृत्तेर्धारणपोषणनिमित्तत्वात् । तेन ये शरीरं धारयन्ति धातूंश्च पुष्णन्ति रसादयस्त एव मुख्यतया धातुशब्दवाच्या न स्तन्यादयः, ते हि शरीरं धारयन्त्येव न तु किंचित् पुष्णन्ति । उक्तं हि भोजे,—"सिरास्नायुरजःस्तन्यत्वचो गतिविवर्जिताः । धातुभ्यश्चोपजायन्ते तस्मात्त उपधातवः"—इति । अत्र गतिविवर्जिता इत्यनेन धात्वन्तरपोषणाख्या गतिर्निषिध्यते । अत एव धातुभ्यश्चोपजायन्त एव न तु परं जनयन्तीत्यर्थः । यत्तु "किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम्" ( च. सू. अ. १ ) इत्यत्र धातुशब्देन दोषाणामपि ग्रहणं, तद्गौणधातुशब्दप्रयोगाज्ज्ञेयम् । उक्तं हि,—"दोषा अपि धातुसंज्ञां लभन्ते"—इति । शुक्रस्याप्योजःपोषकतया धारणपोषणयोगोऽस्तीति धातुत्वमखण्डितमेव । ओजस्तु यद्यपि न धातुषु नाप्युपधातुषु पठितं, तथाऽपि तत् सप्तधातुसाररूपतया सप्तधात्वन्तर्गतमेवेति ज्ञेयम् । अत एव तस्याग्निरपि पृथङ्नोक्तः" इति चक्रपाणिदत्तकृतद्रव्यगुणसंग्रहव्याख्यायां शिवदाससेनः ।

१ 'अन्नपानादेकाहेनोत्पन्नो रसोऽन्नपानरसः । सर्वधातूनामित्यत्र सर्वशब्देन स्थायिरसमपि गृह्णाति । यदुक्तं चरके,—"पुष्यन्ति त्वाहाररसाद्रसरुधिरमांस" ( च. सू. अ. २८ ) इत्यादि । ननु यद्येवं तत् किं रसद्वयं ? तथा सत्यष्टधातुत्वं शरीरस्य; नैवम्, एक एवायमाहाररसो द्विप्रस्थानः पोष्यपोषकभेदेन; तत्र पोष्यो रसांशः सर्वशरीरचारी पोषकेण रसांशेन समानेन नित्यं पाकान्तरानपेक्षेणैवाल्पीयसा पुष्यते, अवशिष्टस्तु रक्तादिपोषको रक्तं याति, तत्र रक्तस्थेनाग्निना यथावक्ष्यमाणकालजातपाकात् कफं मलं त्यक्त्वा रक्तसमानांशेनाल्पीयसा सर्वथा रक्तीभूतेन रक्तं पोषयति, शेषस्तु मांसादिसमानरसभागो मांसादीन् याति, तत्रापीदृश्येव पाकव्यवस्था, तेन स्थायिरसपोषकरसयोः कर्मभेदाद्भेदोऽभिधीयते, पाकान्तरस्थानान्तरगत्यन्तराभावाच्चैकताऽपि । तेन क्वचिद्भेदविवक्षया पुष्यन्ति त्वाहाररसादित्याद्युक्तं, अभेदविवक्षया तु रसाद्रक्तमित्याद्युक्तमिति युक्तम्' इति चक्रः ।

१ 'रसः शुक्रीभवति स्त्रीणां चार्तवं' इति पा० । 'स्त्रीणां चार्तवमिति मासेन रसः स्त्रीणामार्तवतां यातीत्यर्थः, यद्यपि रसादार्तवं मासादर्वागेव भवति, तथाऽपि रजसः सूक्ष्मविप्रकृष्टमार्गतया मासेन भवनम् । यदुक्तं विश्वामित्रेण—"सूक्ष्मकेशप्रतीकाशा बीजरक्तवहाः सिराः । गर्भाशयं पूरयन्ति मासाद्बीजाय कल्पते—" इति । अत्र बीजभूतरक्तं बीजरक्तमार्तवमित्यर्थः । अत्र यदि नामार्तवस्य रक्तरूपता स्तोकेनापि कालेन भवति तथाऽपि तस्य गर्भाशयप्राप्तिर्मासेनैव भवति, गर्भाशयगतं च तन्मुख्यार्तवशब्दवाच्यम्, अतो मासेन तद्भवनाभिधानं युक्तम् । अन्ये मासेनोपचयादाविर्भावमार्तवस्य मासेनेति वदन्ति । ये तु आर्तवशब्दं स्त्रीशुक्रे वर्तयन्ति तन्मते अशाब्दीया व्याख्या । यदपि "घृतकुम्भो यथैवाग्निमाश्रितः प्रविलीयते । विसर्पत्यार्तवं स्त्रीणां तथा पुंसां समागमे" ( शा. अ. २ ) इति कैश्चित् पठ्यते, तद्यद्यार्षं तदा तत्रार्तवशब्देन रज एवोच्यते, तद्धि मैथुनसमये पुरुषबीजग्रहणाय विसर्पति । स्त्रीशुक्रं तु शुक्रशब्देन पुरुषस्त्रीसाधारणेन मांसादिवत् प्राप्तमेव । यत्तु स्त्रीशुक्रस्य गर्भानारम्भकत्वं तद्वचनादेव तथा नारीरजसो गर्भारम्भकत्वादेव लब्धम् । उक्तं च तन्त्रान्तरे "स्त्रीणां शुक्रं न गर्भाय भवेद्गर्भाय चार्तवम्" इति । स्त्रीशुक्रं च क्वचिदाश्रयीभूतं गर्भारम्भकं वक्तव्यम् । यथा "मुञ्चतः शुक्रमन्योन्यमनस्थिस्तत्र जायते" इति भानुमत्यां चक्रः ।

चोक्तं,—"यदा नार्यावुपेयातां वृषस्यन्त्यौ कथंचन । मुञ्चतः शुक्रमन्योऽन्यमनस्थिस्तत्र जायते" (शा. अ. २)—इति । अस्मिन् पक्षे मासेनार्तवस्य भवनमुपचयोऽभिप्रेतः प्रकाशश्च; यस्मादार्तवस्य रक्तवत् सप्ताहेनैवोत्पत्तिरिति । इदानीं समुदायसंख्यामाह,—अष्टादशेत्यादि । अष्टादशसहस्राणीत्यादिना त्रिंशद्दिनानि कथितानि । स्वतन्त्रपरतन्त्रयोरिति समानतन्त्रासमानतन्त्रयोरित्यर्थः ॥ १४ ॥ १५ ॥

**स शब्दार्चिर्जलसन्तानवदणुना विशेषेणानुधावत्येवं शरीरं केवलम् ॥ १६ ॥**

दृष्टान्तत्रयेण शरीरे रसगतिं त्रिधा दर्शयन्नाह,—स सब्दार्चिर्जलसंतानवदित्यादि । सः रसः, संतानशब्दः शब्दादिभिः सह प्रत्येकं संबध्यते । अणुना विशेषेण सूक्ष्मप्रकारेण । अनुधावति संचरति । एवंशब्दो नियमार्थः । शरीरं केवलं सकलमित्यर्थः । तत्र शब्दसंतानवदित्यनेन तिर्यग्गामित्वं रसस्योक्तम्, अर्चिःसंतानवदित्यनेनोर्ध्वगामित्वं, जलसंतानवदित्यनेनाधोगामित्वमिति । केचिदन्यथा व्याख्यानयन्ति–"शब्दादिदृष्टान्तत्रयेण तीक्ष्णमध्यमन्दाग्नयो निर्दिष्टाः । शब्दसंतानवत्तीक्ष्णाग्नीनां रसः संचरति, अर्चिःसंतानवन्मध्याग्नीनां, जलसंतानवन्मन्दाग्नीनाम्" इति । तेन तीक्ष्णाग्नीनामष्टाहेनैव रसः शुक्रीभवति, मन्दाग्नेर्मासेनैवं । अयमर्थो गयदासाचार्येण बहुधा दूषितः । दीप्ताग्नेस्तु किंचिन्न्यूनेन मासेन शुक्रं भवति, मन्दाग्नेस्तु किंचिदधिकेन मासेनेत्ययमर्थो न्याय्य इति ॥ १६ ॥

१ 'ननु तन्त्रान्तरे अष्टाहाच्छुक्रोत्पत्तिरुक्ता, यदुक्तं पराशरे–"आहारोऽद्यतनो यः स श्वो रसत्वं नियच्छति । शोणितत्वं तृतीयेऽह्नि चतुर्थे मांसतामपि ॥ मेदस्त्वं पञ्चमे षष्ठे त्वस्थित्वं सप्तमे व्रियात् । मज्जत्वं शुक्रतां यायान्नियमात्त्वष्टमे नृणाम्" इति; चरकेऽप्युक्तम्–"षड्भिः केचिदहोरात्रैः केचित् सप्तभिरेव च । इच्छन्ति मुनयः प्रायो रसस्य परिवर्तनम्" ( च. चि. अ. १५ )–इति । तदेतदाशङ्क्याह–स शब्दार्चिर्जलसंतानवदित्यादि । यदेतन्मासेन रसस्य शुक्रत्वाभिधानं तत् पराकाष्ठया ज्ञेयम्, अर्वागपि त्वग्निप्रकर्षस्रोतःशुद्धिप्रकर्षाद्रसस्य शुक्रतोत्पत्तिर्भवति; यदुक्तं चरके,–'संतत्या पोष्यधातूनां परिवृत्तिस्तु चक्रवत्' ( च. चि. अ. १५ ) इति; अत्र हि चक्रस्य वाहवाहकप्रकर्षाप्रकर्षाभ्यां यथा परिवृत्तिः शीघ्रं चिरेण वा भवति, तथा रसस्यापीति वाक्यार्थः । तेनेहापि शब्दवदनुसरतीत्यनेन मध्यः परावृत्तिक्रम उच्यते; अर्चिर्वदित्यनेन शीघ्रः, अर्चिःसंतानो हि शब्दसंतानादपि शीघ्रः; जलसंतानवदित्यनेन चातिमन्दः परो मासेन परावृत्तिरूपः क्रम उच्यते । तथाऽन्यत्राप्युक्तम्–"केचिदाहुरहोरात्रात् षडहादपरे परे । मासात् प्रयाति शुक्रत्वमन्नं पाकक्रमादिति" । अणुना विशेषेणेति सूक्ष्मेण सूक्ष्मबुद्धिगम्येनेति यावत् । यच्छब्दसंतानवत्तिर्यग्गमनं रसस्य, अर्चिःसंतानवच्चोर्ध्वगमनं, जलसंतानवच्चाधोगमनमुच्यते, तच्छब्दस्य सर्वदिग्गामित्वादनुपपन्नम् । ऊर्ध्वाधस्तिर्यग्गमनं च रसस्य 'स हृदयाच्चतुर्विंशतिं धमनीः' इत्यादिनोक्तम्' इति चक्रः । अर्चिःसंतानवद्धमनीषु ( आर्टरी ), शब्दसंतानवत्सिरासु ( वेईन ), जलसंतानवत्स्रोतःसु ( केपिलरी ) रससंचरणमिति केचन नव्याः; चरकेऽप्युक्तं 'ध्मानाद्धमन्यः स्रोतांसि स्रवणात् सरणात् सिराः' ( च. सू. अ. ३० ) इति ।

**वाजीकरण्यस्त्वोषधयः स्वबलगुणोत्कर्षाद्विरेचनवदुपयुक्ताः शुक्रं शीघ्रं विरेचयन्ति ॥ १७ ॥**

यदि मासेन रसः शुक्रीभवति तर्हि वाजीकरीणां महौषधीनां प्रयोगो निष्फलः स्यादित्याह—वाजीकरण्य इत्यादि । वाजीकरण्यस्त्वोषधय इति याभिरोषधिभिः स्त्रीषु नरो वाजीव समर्थो भवति ता वाजीकरण्यः । स्वबलगुणोत्कर्षादिति स्वशब्दो बलगुणाभ्यां सह प्रत्येकं संबध्यते, उत्कर्षशब्दोऽपि । अत्र काश्चिदोषधयः स्वबलोत्कर्षात्, काश्चित् स्वगुणोत्कर्षात्, काश्चित् स्वबलगुणोत्कर्षात् । तत्र संकल्पपादलेपविशिष्टकान्तास्पर्शादयः स्वबलोत्कर्षात्, स्वप्रभावोत्कर्षादित्यर्थः; घृतक्षीरादयः स्वगुणोत्कर्षात्, स्वस्नेहाद्युत्कर्षादित्यर्थः; माषादयः स्वबलगुणोत्कर्षात्, स्वप्रभावस्नेहाद्युत्कर्षादित्यर्थः; उत्कर्ष आधिक्यम् । वाजीकरण्य इति बहुवचनमाद्यर्थं, तेन बल्यबृंहणीयजीवनसंग्रहणादयोऽपि तद्वद्ग्राह्या इति ॥ १७ ॥

**यथाहि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं, नैव नास्तीति; अथ चास्ति, सतां भावानामभिव्यक्तिरिति ज्ञात्वा, केवलं सौक्ष्म्यान्नाभिव्यज्यते; स एव विवृतपत्रकेशरे पुष्पे कालान्तरेणाभिव्यक्तिं गच्छति; एवं बालानामपि वयःपरिणामाच्छुक्रप्रादुर्भावो भवति, रोमराज्यादयश्च विशेषा नारीणाम् ॥ १८ ॥**

ननु, यदि मासेन रसः शुक्रीभवति तर्हि बालानामश्नतामपि तत् कथं न दृश्यत इति दृष्टान्तमाह,—यथेत्यादि । यथाहीत्यव्ययं यथादृष्टान्तताप्रतिपादनार्थम् । पुष्पमुकुलस्थ इति कुसुमकलिकामध्यस्थः । इहेति पुष्पमुकुले, गन्धोऽस्त्येवेति नास्त्येवेति च वक्तुं न शक्यम् । पारमार्थिकं रूपमाह,—अथ चास्तीति ।—

१ 'वाजीकारिण्यः' इति 'वाजीकरिण्यः' इति च पा० । २ 'सामर्थ्यं प्राप्नोति' इति पा० । ३ 'स्वबलं द्रव्यस्वभावः, गुणोत्कर्षो गुणस्वभावः, तस्मात् स्वबलगुणोत्कर्षाद् व्यस्तात् समस्ताच्च । यदुक्तं चरके–"द्रव्याणि हि द्रव्यप्रभावाद् गुणप्रभावात् द्रव्यगुणप्रभावाच्च कार्मुकाणि भवन्ति" (च. सू. अ. २६) इति । शुक्रमाशु विरेचयन्तीति विरेचनमिह विरेचनदृष्टान्तानुगुणतया वृष्यकर्मोपलक्षणमुक्तं; तेन शुक्रवृद्धिः, शुक्रस्रुतिः, तथा शुक्रस्रुतिवृद्धी च लक्ष्यति । यदुक्तं "शुक्रस्रुतिकरं किंचित् किंचिच्छुक्रविवर्धनम् । स्रुतिवृद्धिकरं किंचित्त्रिविधं वृष्यमुच्यते"—इति । ४ 'अथ चास्तीति 'सतामेवाविर्भावः' इति सांख्यदर्शनेनेत्यर्थः' इति चक्रः । ५ 'कृत्वा' इति पा० । ६ 'यथाहीति दृष्टान्तताप्रतिपादनार्थम्' इति पा० । ७ 'गन्धोऽस्ति न वाऽस्त्येवेति च' इति पा० ।

अथशब्दः संबोधने[1]; चशब्द एवार्थे, अस्त्येवेत्यर्थः । युक्तिमाह,—सतां भावानामभिव्यक्तिरिति ज्ञात्वेति; पूर्वं सन्त एव भावाः पश्चाद्धेतुमासाद्याभिव्यज्यन्ते, यथा—तिलेषु तैलमित्यादि । यद्यस्त्येवेति तर्हि मुकुलावस्थायामेव कथं नाभिव्यज्यत इत्याह—केवलं सौक्ष्म्यान्नाभिव्यज्यत इति । स एवेत्यादि । स एव गन्धो विवृतपत्रकेशरे कुसुमे कालान्तरेणोपचितोऽभिव्यक्तिं गच्छति । एवं बालानामित्यादि इत्थं बालानामपि वयःपरिणामाच्छुक्रप्रादुर्भावो व्यक्तीभावो भवति । रोमराज्यादयश्च विशेषा भावा वयःपरिणामान्नारीणामपि प्रादुर्भवन्ति, आदिशब्दात् स्तन्यार्तवादयः; रोमराज्यादयश्चेति चकारो नारीणां चेत्यत्र द्रष्टव्यः; तेन पुरुषाणामपि श्मश्रुप्रभृतयो गृह्यन्ते । अत्र केचित् 'रजसि चोपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति–' इति पठन्ति, न तु निबन्धकाराः, कुतः? आदिशब्दात्तदर्थस्य लब्धत्वादिति ॥ १८ ॥

**स एवान्नरसो वृद्धानां (जरा)परिपक्कशरीरत्वादप्रीणनो भवति ॥ १९ ॥**

ननु रसस्योपचयकरत्वाद्वृद्धेनापि वर्धितव्यमित्याह,—स एवान्नरस इत्यादि । स एवान्नरस इति अशेषधातुपोषकोऽपि वृद्धानामप्रीणन ईषत्प्रीणनो भवति, जीवनमात्रं करोतीत्यर्थः । कुत इत्याह,—परिपक्कशरीरत्वात् ॥ १९ ॥

**त एते शरीरधारणाद्धातव इत्युच्यन्ते ॥ २० ॥**

रसादिधातूनां निरुक्तिं कुर्वन्नाह,—त एते शरीरधारणादित्यादि । यद्यपि क्वचिददुष्टा दोषा अपि देहधारणाद्धातुशब्देनोच्यन्ते, तथाऽप्यत्र रसादीनामधिकृतत्वात्त एव धातवः कथ्यन्ते ॥ २० ॥

**तेषां क्षयवृद्धी शोणितनिमित्ते, तस्मात्तदधिकृत्य वक्ष्यामः । तत्र, फेनिलमरुणं कृष्णं परुषं तनु शीघ्रगमस्कन्दि च वातेन दुष्टं; नीलं पीतं हरितं श्यावं विस्रमनिष्टं पिपीलिकामक्षिकाणामस्कन्दि च पित्तेन दुष्टं; गैरिकोदकप्रतीकाशं[3] स्निग्धं शीतलं बहलं पिच्छिलं चिरस्रावि मांसपेशीप्रभं च श्लेष्मदुष्टं; सर्वलक्षणसंयुक्तं काञ्जिकाभं विशेषतो दुर्गन्धि च सन्निपातदुष्टं; द्विदोषलिङ्गं संसृष्टम् ॥ २१ ॥**

प्रस्तुतं शोणितमेवाधिकर्तुमाह,—तेषामित्यादि । तेषामिति धातूनाम् । तदधिकृत्येति शोणितमधिकृतं कृत्वेत्यर्थः । तत्र फेनिलमित्यादि । फेनिलं फेनसहितम् । अरुणम् ईषद्रक्तम्; तदेवै[1] पाकाभिमुखं कृष्णम् । परुषम् अपिच्छिलं, रूक्षमित्यन्ये । तनु अच्छम् । शीघ्रगम् आशुप्रसृति । अस्कन्दि चेति स्त्यानत्वरहितम् । नीलमित्यादि ।—नीलं हरितं, श्यावं सामपित्तदुष्टं, पीतं निरामपित्तदुष्टं, श्यावं हरितकृष्णम् । विस्रम् आमगन्धि । अनिष्टं पिपीलिकादीनामननुसरणादवगन्तव्यम् । अस्कन्दि चेति स्त्यानत्वरहितम् । गैरिकेत्यादि ।—गैरिकोदकप्रतीकाशं पाण्डुलोहितम् । बहलं घनम् । मांसपेशीप्रभं स्त्यानत्वात् । सर्वेत्यादि ।—सर्वलक्षणयुक्तं वातादिलक्षणयुक्तम् । अत्र केचित् 'पित्तैवद्रक्तेनातिकृष्णं'[2] इति पठन्ति, न तु निबन्धकाराः । द्विदोषलिङ्गमित्यादि ।—संसृष्टं दोषद्वययुक्तमित्यर्थः । अत्र क्वचित् 'जीवशोणितमन्यत्रोपदेक्ष्यामः' इति पाठः, न तु निबन्धेषु ॥ २१ ॥

**इन्द्रगोपकप्रतीकाशमसंहतमविवर्णं च प्रकृतिस्थं जानीयात् ॥ २२ ॥**

रक्तविकृतीरभिधाय प्रकृतिं वक्तुमाह,—इन्द्रगोपकप्रतीकाशमित्यादि । इन्द्रगोपकः प्रावृट्कालज उद्भिज्जः 'इन्द्रवधूः' इति लोके, स चानेकप्रकारवर्णः, अत्र तु रक्त एव गृह्यते । असंहतं नात्यच्छं नातिघनं, न स्त्यायतीत्यन्ये । अविवर्णमिति इन्द्रगोपकवर्णमपीषद्विविधवर्णम्, एतेन पद्मालक्तकगुञ्जाफलवर्णमित्युक्तम्; अथवा वस्त्रादिलग्नं सत् प्रक्षाल्यमानमपि न विवर्णतां यातीत्यविवर्णम् ॥ २२ ॥

**विस्राव्याण्यन्यत्र वक्ष्यामः ॥ २३ ॥**

शोणितस्य स्रावणविषयमतिदेशेन दर्शयन्नाह,—विस्राव्याणीत्यादि । अन्यत्रेति अष्टविधशस्त्रकर्मीये ॥ २३ ॥

**अथाविस्राव्याः—सर्वाङ्गशोफः, क्षीणस्य चाम्लभोजननिमित्तः, पाण्डुरोग्यर्शसोदरिशोषिगर्भिणीनां च श्वयथवः ॥ २४ ॥**

विस्राव्यनिषेधविषयं दर्शयन्नाह,—अथाविस्राव्या इत्यादि । क्षीणस्य पुंसोऽम्लभोजननिमित्तो यः सोऽविस्राव्य इत्यर्थः । तथा पाण्डुरोग्यादीनां शोथा अविस्राव्याः; एतेषां व्रणशोथा एकाङ्गजा अपि न स्राव्याः ॥ २४ ॥

**शस्त्रविस्रावणं द्विविधं—प्रच्छानं[3], सिराव्यधनं च ॥ २५ ॥**

शस्त्रविस्रावणस्य द्वैविध्यमाह,—शस्त्रेत्यादि ॥ २५ ॥

---

१ 'संबन्धने' इति पा० । २ 'धारणादिति धारणप्रकर्षात्, तेन दोषाणां साम्यावस्थितानां देहधारकाणामपि धारकत्वप्रकर्षाभावान्न मुख्यं धातुत्वं; यत्तु 'किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम्'' (च. सू. अ. १) इत्यत्र धातुशब्देन दोषाणामपि ग्रहणं, तद्गौणधातुशब्दप्रयोगाज्ज्ञेयम्; उक्तं हि "दोषा अपि धातुशब्दं लभन्ते" इति । धारणशब्देन धारणं पोषणं चेह विवक्षितं, तेनोपधातूनां किंचिद्धारणत्वेऽपि पोषणाभावान्न धातुत्वं, उक्तं च भोजे "सिरास्नायुवसास्तन्यत्वचो गतिविवर्जिताः । धातुभ्यश्चोपजायन्ते तस्मात्ते ह्युपधातवः" इति । अत्र गतिविवर्जिता इत्यनेन धात्वन्तरपोषणार्था गतिर्निषिध्यते, शुक्रं त्वोजःपोषकतया धारणपोषणयोगाद्धातुरेव' इति चक्रः । ३ '°प्रकाशं' इति पा० ।

१ 'तदेवातिपाकात् कृष्णं' इति पा० । २ 'पित्तवद्रक्तेनेति पाठपक्षे प्रदेशान्तरदुष्टेन रक्तेन यदा प्रदेशान्तरे रक्तं दुष्यति तदा लक्षणं ज्ञेयम्' इति चक्रः । ३ 'प्रच्छन्नं' इति पा० ।

**तत्र, ऋज्वसंकीर्णं सूक्ष्मं सममनवगाढमनुत्ता[1]नमाशु च शस्त्रं पातयेन्मर्मसिरास्नायुसन्धीनां चानुपघाति ॥ २६ ॥**

अत्र प्र[2]च्छानमधिकृत्याह,—तत्रेत्यादि । ऋजु प्राञ्जलम् । अ[3]संकीर्णं न संकटं, विशालमित्यर्थः; अन्ये परस्परासंसृष्टमित्याहुः । सूक्ष्मं नातिमहामुखशस्त्रकृतम् । समं तुल्यरेखम् । अनवगाढम् अदूरगतिकम् । अनुत्ता[4]नं किंचिन्मांसस्पृगित्यर्थः । आशु अविलम्बितं यथा भवत्येवं शस्त्रं पातयेत् ॥ २६ ॥

**तत्र, दुर्दिने दु[5]र्विद्धे शीतवातयोरस्विन्ने भुक्तमात्रे स्कन्दत्वाच्छोणितं न स्रवत्यल्पं वा स्रवति २७**

**मदमूर्च्छाश्रमार्तानां वातविण्मूत्रसंगिनाम् ॥**
**निद्राभिभूतभीतानां नृणां नासृक् प्रवर्तते ॥ २८ ॥**

रक्तस्रायोगं चिकित्सार्थमाह,—तत्र दुर्दिन इत्यादि । दुर्दिन इति नित्यगकालदोषः । केचिद् 'दुर्दिने' इति न पठन्ति । दुर्विद्धे इति वैद्यक्रियादोषः । शीतवातयोरिति कालकृतो दोषः । भुक्तमात्र इति आवस्थिककालदोषः; 'अभुक्तवत' इत्यन्ये पठन्ति । स्कन्दत्वात् स्त्यानत्वात् । मदो विषमद्यजो विकारः, आर्तानां पीडितानाम् । वातविण्मूत्रसंगिनामिति संगोऽप्रवर्तनम् ॥ २७ ॥ २८ ॥

**तद्दुष्टं शोणितमनिर्ह्रियमाणं शोफदाहरागपाकवेदना जनयेत् ॥ २९ ॥**

दुष्टरक्तस्यास्रुतिदोषमुपदिशन्नाह,—तद्दुष्टमित्यादि ॥ २९ ॥

**अ[6]त्युष्णेऽतिस्विन्नेऽतिविद्धेऽज्ञैर्विस्रावितमतिप्रवर्तते; तदतिप्रवृत्तं शिरोऽभितापमान्ध्यमधिमन्थतिमिरप्रादुर्भावं धातुक्षयमाक्षेपकं दाहं पक्षाघातमेकाङ्गविकारं हिक्कां श्वासकासौ पाण्डुरोगं मरणं चापादयति ॥ ३० ॥**

अतियोगं व्यापदश्चोपदिशन्नाह,—अत्युष्ण इत्यादि । अत्युष्णे अत्युष्णकाले । अतिस्विन्ने अतिस्वेदिते । अतिविद्धेऽज्ञैरिति अज्ञा अदृष्टकर्माणः । शिरोऽभितापं शिरःशूलम् । आन्ध्यम् अन्धताम् । अधिमन्थः चक्षूरोगोऽभिष्यन्दपूर्वकः, तिमिरं लिङ्गनाशः, प्रादुर्भावशब्दोऽधिमन्थतिमिराभ्यां संबध्यते । शिरोभितापादीन् शिरस्यतिहृतं रक्तं करोति, धातुक्षयं सर्वत्रैवातिहृतम् । एकाङ्गविकारमिति एकस्मिन्नङ्गे य उत्पद्यते स एकाङ्गविकारः, स चात्र वातजनितः ॥ ३० ॥

**तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते ॥**
**यवागूं प्रतिपीतस्य शोणितं मोक्षयेद्भिषक् ॥ ३१ ॥**

अयोगातियोगौ सहेतुकौ निर्दिश्य सम्यग्योगं सहेतुकं निर्दिशन्नाह,—तस्मादित्यादि । न शीते नात्युष्णे साधारणे काले । नास्विन्ने नातिस्वेदिते । नातितापिते सूर्यतापादिभिः । यवागूरत्र तिलयवागूः, तस्याः सद्यःस्नेहनीयत्वाद्रक्तोत्क्लेशकरत्वाच्च । प्रतिपीतस्येति प्रतिशब्दोऽत्र पानान्तरं सूचयति; तेन यवाग्वा द्वितीयपानानन्तरं तृतीयपानानन्तरं वेत्यर्थः; अन्ये तु "यवागूर्विरलद्रवा बहुसिक्था, तां प्रतिपीतस्य, सा हि प्रायशः प्रक्लेदनात्मिका स्वेदत्वाद्द्रवोष्णत्वाच्च शोणितं विलाययति; प्रतिशब्दोऽत्र मात्रार्थः, तेन यवागूं मात्रया पीतवत इत्यर्थः" ॥ ३१ ॥

**सम्यग्गत्वा यदा रक्तं स्वयमेवावतिष्ठते ॥**
**शुद्धं तदा विजानीयात् सम्यग्विस्रावितं च तत् ३२**

इदानीं सम्यग्योगस्य सुविशुद्धस्य चैकेनैव वाक्येन लक्षणं वक्तुमाह,—सम्यगित्यादि । सम्यग्गत्वा यदा रक्तमिति गत्वा निःसृत्य, यदा सम्यग्रक्तं रक्तवर्णं शोणितं भवति तदा शुद्धं विजानीयात्; सम्यग्विस्रावितपक्षे त्वयमर्थः—सम्यग्गत्वेति सम्यक् प्रवर्तनं कृत्वा, यदा रक्तं रुधिरं, स्वयमेवावतिष्ठते अवस्थितिं करोति, तदा सम्यग्विस्रावितं च तद्रक्तं विजानीयात् । चकारेणैतल्लक्षणद्वयं लभ्यते । अन्ये तु सम्यग्गत्वेत्यादिश्लोकस्य व्याख्यानमन्यथा कृत्वा सार्धश्लोकेन व्याख्यानयन्ति,–"न चातिवेगं नावेगं सम्यग्युक्त्या विनिःसृतम् । विहाय दुष्टतां स्वेन रूपेण ह्यवतिष्ठते ॥ प्रयत्नमनपेक्ष्यासृक् तदा शुद्धं विनिर्दिशेत्"—इति ॥ ३२ ॥

**लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः ॥**
**सम्यग्विस्राविते लिङ्गं प्रसादो मनसस्तथा ॥ ३३ ॥**

आभ्यन्तरमपरमपि रक्तशुद्धिस्रावणस्य लक्षणं दर्शयन्नाह,—लाघवमित्यादि । एतच्छारीरं सम्यग्विस्राविते लिङ्गं; प्रसादो मनसस्तश्चेति पुनर्मानसम् ॥ ३३ ॥

**त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये ॥**
**रक्तमोक्षणशीलानां न भवन्ति कदाचन ॥ ३४ ॥**

शोणितस्रावणफलं दर्शयन्नाह—त्वग्दोषा इत्यादि । त्वग्दोषा अष्टादश कुष्ठानि न्यच्छनीलिकादयश्च, ग्रन्थयो वातादिनिमित्ता सिराग्रन्थिश्च । शोणितजा रोगा रक्तगुल्मविद्रधिविसर्पादयः । रक्तमोक्षणशीलानां रक्तस्रावणाभ्यासकारिणाम् ॥ ३४ ॥

**अथ खल्वप्रवर्तमाने रक्ते एलाशीतशिवकुष्ठतगरपाठाभद्रदारुविडङ्गचित्रकत्रिकटुकागारधूमहरिद्रार्काङ्कुरनक्तमालफलैर्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैर्लवणतैलप्रगाढैर्व्रणमुखमवघर्षयेत्, एवं सम्यक् प्रवर्तते ॥ ३५ ॥**

इदानीमप्रवृत्तरक्तस्य प्रवर्तनायाह,—अथ खल्वित्यादि । शीतशिवं कर्पूरं, नक्तमालो बृहत्करञ्जः । त्रिभिश्चतुर्भिरिति एतेनैकद्विद्रव्यनिषेधः कृतः । लवणतैलप्रगाढैरिति सैन्धवतिलतैलोत्कटैरित्यर्थः ॥ ३५ ॥

१ 'नोत्तानं' इति पा० । २ 'प्रच्छन्नमधिकृत्याह' इति पा० । ३ 'असङ्कीर्णं नातिप्रत्यासन्नम्' इति चक्रः । ४ 'नोत्तानं' इति पा० । ५ 'दुर्विद्धे इति पार्श्वतोऽन्यत्र वा विद्धे' इति चक्रः । ६ 'अत्युष्णातिस्विन्नातिविद्धेषु' इति पा० ।

**अथातिप्रवृत्ते रोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकसर्जरसरसाञ्जनशाल्मलीपुष्पशङ्खशुक्तिमाषयवगोधूमचूर्णैः शनैः शनैर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेत् सालसर्जार्जुनारिमेदमेषशृङ्गधवधन्वनत्वग्भिर्वा चूर्णिताभिः क्षौमेण वा ध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा, यथोक्तैर्व्रणबन्धनद्रव्यैर्गाढं बध्नीयात्, शीताच्छादनभोजनागारैः शीतैः प्रदेहपरिषेकैश्चोपचरेत्, क्षारेणाग्निना वा दहेद्यथोक्तं, व्यधादनन्तरं तामेवातिप्रवृत्तां सिरां विध्येत्; काकोल्यादिक्वाथं वा शर्करामधुमधुरं पाययेत्, एणहरिणोरभ्रशशमहिषवराहाणां वा रुधिरं; क्षीरयूषरसैः सुस्निग्धैश्चाश्नीयात्; उपद्रवांश्च यथास्वमुपचरेत् ॥ ३६ ॥**

**भवन्ति चात्र—**

**धातुक्षयात् स्रुते रक्ते मन्दः संजायतेऽनलः ॥**
**पवनश्च परं कोपं याति तस्मात् प्रयत्नतः ॥ ३७ ॥**
**तं नातिशीतैर्लघुभिः स्निग्धैः शोणितवर्धनैः ॥**
**ईषदम्लैरनम्लैर्वा भोजनैः समुपाचरेत् ॥ ३८ ॥**

अतिप्रवृत्तौ रक्तास्थापनाय चिकित्सां दर्शयन्नाह,—अथेत्यादि। पत्तङ्गं रक्तचन्दनं, सर्जरसो राला, शुक्तिर्जलशुक्तिः। सालः शङ्कुः, सर्जः शालभेदः, अर्जुनः ककुभः, अरिमेदः 'अरिमञ' इति लोके प्रसिद्धः, मेषशृङ्गः कर्कटशृङ्गः, धन्वनः 'धम्मण' इति प्रसिद्धः; सालादित्वग्भिश्चूर्णीकृताभिः 'व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेत्' इत्यत्रापि संबध्यते। क्षौमेण वा ध्मापितेन अतसीवस्त्रेण दग्धेन 'व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेत्' इत्यत्रापि संबध्यते। यथोक्तैर्वा व्रणबन्धनद्रव्यैरिति क्षौमकार्पासवस्त्रादिभिः। आच्छादनं वस्त्रादि, प्रदेहो लेपः, परिषेको धारासेकः। यथोक्तं वलयबिन्द्वादिभेदेनेत्यर्थः। व्यधादनन्तरं[1] प्राकृतव्यधनादर्धः[2]स्थाने, तामेव पूर्वविद्धां सिरां विध्येत्, रक्तगतिच्छेदनार्थम्। रक्तातिस्रुतावाभ्यन्तरं भेषजं दर्शयन्नाह,—काकोल्यादीत्यादि। एणः कृष्णहरिणः, हरिणस्ताम्रवर्णः; एणादिरक्तं पाययेदिति संबन्धः, रक्ताप्यायनार्थं; तच्चादुष्टमसंस्कृतं च। रक्तातिप्रवृत्तौ भोजनं नियमयन्नाह,—क्षीरेत्यादि। यूषो मुद्गयूषः, रसो मांसरसः। सुस्निग्धैरिति शोभनं कृत्वा घृतेन स्निग्धीकृतैः। अश्नीयादिति क्षीरादिसिक्तमोदनं भुञ्जीत। पित्तदुष्टरक्तस्यैवातिप्रवृत्तावतिप्रवृत्तरक्तस्य क्षीरभोजनम्, अथवा पित्तप्रकृतिकस्यैव रक्तातिप्रवृत्तौ क्षीरभोजनं; कफदुष्टरक्तस्यैवातिप्रवृत्तावतिप्रवृत्तरक्तस्य यूषभोजनं, श्लेष्मप्रकृतिकस्यैव वा; वातदुष्टरक्तस्यैवातिप्रवृत्तावतिप्रवृत्तरक्तस्य रसभोजनं, वातप्रकृतिकस्यैव वा; अन्ये तु दीप्तमध्यमन्दाग्नीनां यथासंख्यं क्षीरादिसिक्तमोदनं भोजनमाहुः; सात्म्यापेक्षयेत्येके। अतिस्रुतरक्तस्योपद्रवान् चिकित्सितुमाह,—उपद्रवांश्चेत्यादि। उपद्रवान् शिरोऽभितापादीन्। यथास्वमिति स्वकीयेन स्वकीयेनोपचारेणेत्यर्थः। धातुक्षयादित्यादि। तस्मादनतिशीतादिभोजनैः प्रयत्नतस्तं पुरुषमुपाचरेदिति संबन्धः, अग्निसन्धुक्षणार्थं शोणिताप्यायनार्थमुपद्रवपरिहारार्थं च। ईषदम्लैर्दाडिमामलकैः, तेषामेवाम्लेषु प्रधानत्वात् ॥ ३६—३८ ॥

**चतुर्विधं यदेतद्धि रुधिरस्य निवारणम् ॥**
**संधानं स्कन्दनं चैव पाचनं दहनं तथा ॥ ३९ ॥**
**व्रणं कषायः संधत्ते रक्तं स्कन्दयते हिमम् ॥**
**तथा संपाचयेद्भस्म दाहः संकोचयेत् सिराः ॥४०॥**

चतुर्विधमित्यादि। संधानं शस्त्रपदस्य, स्कन्दनं शोणितस्य स्त्यानीकरणं, पाचनं दहनं च शस्त्रपदस्य। कषायः कषायरसद्रव्यं, तच्च लोध्रादिकम्; अन्ये तु हरीतक्यादिकं पञ्चवल्कलादिकं चाहुः। हिमं शीतम्। भस्म क्षौमादिजनितम्। दहनं शलाकाप्रभृतिभिः ॥ ३९ ॥ ४० ॥

**अस्कन्दमाने रुधिरे संधानानि प्रयोजयेत् ॥**
**संधाने भ्रश्यमाने तु पाचनैः समुपाचरेत् ॥ ४१ ॥**
**कल्पैरेतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि ॥**
**असिद्धिमत्सु चैतेषु दाहः परम इष्यते ॥ ४२ ॥**

इदानीं पूर्वपूर्वासिद्धावुत्तरोत्तरं विध्यवसरं प्रतिपादयन्नाह,—अस्कन्दमाने इत्यादि। तत्र प्रथमं शीतोपचारादि कर्तव्यं, तेन यदा स्त्यानीभूय रक्तं न तिष्ठति तदा हरीतक्यादि पञ्चवल्कलादि वा प्रयोजयेत्; सन्धानेन चेन्न तिष्ठति रक्तं तदा पाचनं भस्म प्रयोजयेत्; एभिस्त्रिभिर्विधानैर्यदि न तिष्ठति रक्तं तदा दहनं शोणितस्थापनार्थं कर्तव्यमित्यर्थः ॥ ४१ ॥ ४२ ॥

**शेषदोषे[1] यतो रक्ते न व्याधिरतिवर्तते ॥**
**सावशेषे ततः स्थेयं न तु कुर्यादतिक्रमम् ॥ ४३ ॥**

इदानीं रक्तातिस्रावदोषं दर्शयन्नाह,—शेषेत्यादि। न व्याधिरतिवर्तते न वृद्धिं याति। सावशेषे ततः स्थेयमिति सावशेषे दोषे रक्तं पुनः संशमनादिभिर्जयेत् ॥ ४३ ॥

**देहस्य रुधिरं मूलं रुधिरेणैव धार्यते ॥**
**तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः ॥ ४४ ॥**

कुतः पुनः शोणितस्रावणेऽतिक्रमो न करणीय इत्याह,—देहस्येत्यादि। मूलमिति उत्पत्तिस्थितिप्रलयेषु शोणितमेव हेतुः, अनेनैव धार्यते स्थाप्यते ॥ ४४ ॥

**स्रुतरक्तस्य सेकाद्यैः शीतैः प्रकुपितेऽनिले ॥**
**शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत् ॥ ४५ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने शोणितवर्णनीयो नाम चतुर्दशोऽध्यायः ॥ १४ ॥**

---

१ 'यथोक्तव्यधादनन्तरं' इति पा०। २ 'प्राकृतव्यधनादपरस्थाने' इति पा०। 'तामेव वा सिरां विध्येद् व्यधात्तस्मादनन्तरम्।' ( वा. सू. अ. २७ ) इत्यष्टाङ्गहृदये। "व्यधादनन्तरं व्यधनस्य पश्चिमभागे" इत्यष्टाङ्गसंग्रहव्याख्यायामिन्दुः।

१ 'सशेषदोषे रुधिरे' इति पा०।

शोणितावसेके पश्चात्कर्म दर्शयन्नाह,—स्रुतरक्तस्येत्यादि॥४५
इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने शोणितवर्णनीयो नाम चतुर्दशोऽध्यायः १४

## पञ्चदशोऽध्यायः ।

**अथातो दोषधातुमलक्षयवृद्धिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । दोषा वातादयः, धातवो रसादय उपधातवश्च, मलाः पुरीषादयः; तेषां क्षयवृद्धिविज्ञानं यस्मिन्नस्ति स तथा । अन्ये तु 'मलशब्दाग्रे आदिशब्दो लुप्तो द्रष्टव्यः, तेन स्तन्यार्तवगर्भादयोऽपि धातवो गृह्यन्ते' इति वदन्ति ॥१॥२॥

**दोषधातुमलमूलं हि शरीरं, तस्मादेतेषां लक्षणमुच्यमानमुपधारय ॥ ३ ॥**

कुतः पुनरेषां क्षयवृद्धी वक्तव्ये इत्याह,—दोषेत्यादि । हि यस्मादर्थे, यस्माच्छरीरं दोषादिमूलं; यथा वृक्षादीनां संभवस्थितिप्रलयेषु मूलं प्रधानं, तथा शरीरस्य वातादय इत्यर्थः ॥ ३ ॥

**तत्र[1], प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति; ( ॥ १ ॥ )**

दोषधातुमलादीनां साम्यक्षयवृद्धयः स्वभावाख्यलिङ्गेन कर्माख्यलिङ्गेन च ज्ञेयाः, तस्मात् साम्यादिज्ञाने एतल्लिङ्गद्वयं वाच्यं; तथाहि,—वातस्य स्वभावाख्यं लिङ्गं 'रूक्षः शीत' ( नि. अ. १ ) इत्यादि वातव्याधौ वक्ष्यते; पित्तस्य तु 'पित्तं तीक्ष्णं द्रवं' ( सू. अ. २१ ) इत्यादि व्रणप्रश्ने; तथा कफस्य 'श्लेष्मा शीतो गुरुः' (सू. अ. २१) इत्यादि; एवं धातुमलयोरपि स्वभावाख्यं लिङ्गं दर्शनीयम्; इह तु दोषादीनां कर्माख्यं लिङ्गं दर्शयन्नाह,—तत्र प्रस्पन्दनेत्यादि । प्रस्पन्दनं शरीरस्य चलनम्, इदं व्यानस्य कर्म; उद्वहनमिन्द्रियार्थानां धारणम्, उदानस्य कर्म; पूरणमाहारेण, प्राणस्य कर्म; विवेको रसमूत्रपुरीषाणां पृथक्करणं, समानस्य कर्म; शुक्रमूत्रादीनां वेगकाले कर्षणमवेगकाले धारणम्[3], अपानस्य । पञ्चधा प्रविभक्त इति प्राणोदानसमानव्यानापानभेदेन । अन्ये तु सामान्यं सर्ववायूनां प्रस्पन्दनादिकर्म आहुः; प्रस्पन्दनं श्वासप्रश्वासादिभावेन चलनम्, उद्वहनं दोषधातुमलानामितो नयनं, पूरणम् आहाररसादीनां खेषु खेष्वाशयेषु नयनं, विवेकः पूर्ववदत्रापि, धारणं शरीरयन्त्रस्य[4] । कथमित्याह,—पञ्चधा प्रविभक्त इत्यादि ( ॥ १ ॥ ) ॥—

**रागपक्त्योजस्तेजोमेधोष्मकृत् पित्तं पञ्चधा प्रविभक्तमग्निकर्मणाऽनुग्रहं करोति; ( ॥ २ ॥ )**

प्रकृतिस्थस्य पित्तस्य कर्म निर्देष्टुमाह,—रागेत्यादि । कृच्छब्दो रागादिभिः प्रत्येकं संबध्यते । रागकृत् रसस्य रञ्जकाग्निसंज्ञं पित्तं; पक्तिकृत् आहारस्य पाचकाग्निसंज्ञं पित्तं; ओजःकृत् साधकाग्निसंज्ञं पित्तम्, ओजो हृदिस्थं सोमात्मकं; तेजःकृत् आलोचकाग्निसंज्ञं पित्तं, तेजो दृष्टिः, तदुक्तं—"तेजो दृष्टिरिति ख्यातं तेजः शुक्रं प्रकीर्तितम्"—इति; मेधाकृत् मेधा ग्रन्थाकर्षणसामर्थ्यं, तस्या अपि साधकाग्निसंज्ञमेव पित्तं कारकम्; ऊष्मकृत् त्वक्स्थं पित्तं भ्राजकाग्निसंज्ञम्, ऊष्मा शरीरस्यौष्ण्यम् । पञ्चधा प्रविभक्तमिति पाचकरञ्जकसाधकालोचकभ्राजकभेदेन । अग्निकर्मणेति रागादि यदग्निकर्म तेन कृत्वेत्यर्थः । अनुग्रहम् उपकारं करोति, 'शरीरस्य' इत्यनुवर्तते । अन्ये तु तेजःशब्देन वर्णप्रकाशिनीं त्वक्स्थां दीप्तिमाहुः; "इदं च रागादिकर्म सामान्यं सर्वपित्तानाम्" इति वदन्ति ( ॥ २ ॥ ) ॥—

**सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्यकृच्छ्लेष्मा पञ्चधा प्रविभक्त उदककर्मणाऽनुग्रहं करोति ॥ ४ ॥**

प्रकृतिस्थस्य कफस्य कर्म निर्दिशन्नाह,—सन्धीत्यादि । कृच्छब्दः सन्धिसंश्लेषणादिभिः प्रत्येकं संबध्यते । सन्धिसंश्लेषणकृत् सन्धिबन्धनं करोति; यद्यपि सन्धिसंश्लेषणं श्लेष्मकर्म व्रणप्रश्नेऽप्युक्तं, तथाऽपीह तद्वचनं व्यानस्य सन्धिचारित्वात्तस्यापि सन्धिश्लेषणं कर्मेति शङ्कानिरासार्थम् । स्नेहनकृदिति शरीरस्य स्नैग्ध्यं करोति, स्निग्धत्वात् । रोपणकृत् व्रणस्य, सौम्यत्वात् । पूरणकृत् शरीरस्य, बहुत्वान्मूर्तत्वाच्च । बलकृत् पुष्टिकृत् । स्थैर्यकृत् त्रिकसन्धिदार्ढ्यकृत्, कफस्थानानां स्वकार्यसामर्थ्यं वा । पञ्चधा प्रविभक्त आशयभेदेन आमाशयोरःशिरःकण्ठसन्धिभेदेनेत्यर्थः । अन्ये तु तस्यैव कफस्याशयभेदेन पञ्चधाभिन्नस्य श्लेषकक्लेदकबोधकतर्पकावलम्बकनामान्याहुः[2] । केचिदत्र कफकर्मसु बृंहणं तर्पणं च पठन्ति, व्याख्यानयन्ति च—"बृंहणः शरीरस्य, द्रवत्वमूर्तिमत्त्वाभ्यां; तर्पणः तृप्तिजनको धातूनाम्" ॥ ४ ॥

**रसस्तुष्टिं प्रीणनं रक्तपुष्टिं च करोति, रक्तं वर्णप्रसादं मांसपुष्टिं जीवयति च, मांसं शरीरपुष्टिं मेदसश्च, मेदः स्नेहस्वेदौ दृढत्वं पुष्टिमस्थ्नां च, अस्थीनि देहधारणं मज्ज्ञः पुष्टिं च, मज्जा स्नेहं बलं शुक्रपुष्टिं पूरणमस्थ्नां च करोति, शुक्रं धैर्यं च्यवनं[3] प्रीतिं देहबलं हर्षं बीजार्थं च; ( ॥ १ ॥ )**

इदानीं धातूनां प्रकृतिस्थानां प्राकृतं कर्म निर्दिशन्नाह—रसस्तुष्टिमित्यादि । धैर्यं शौर्यं शूरत्वम्, अत एव क्लीबा अधीराः;

१ 'स्वरूपं हि वातादीनां कार्यगम्यमेव, तेन कार्यमेवात्र प्राधान्यादुच्यते—तत्रेत्यादि ।' इति चक्रः । २ 'तदाह' इति पा० । ३ 'धारणमिति अर्थादपानस्य' इति पा० । ४ '°शरीरमात्रस्य' इति पा० ।

१ '°पूरणबृंहणतर्पणबलस्थैर्यकृत्' इति चक्रसंमतः पाठः । "बृंहणं सौम्यस्नेहनत्वाभ्यां शरीरस्य, तर्पणत्वमपि सौम्यत्वाद्बलकारित्वं; चरकेऽप्युक्तं—"प्राकृतस्तु बलं श्लेष्मा" (च. सू. अ. १७) इति चक्रः । २ '°स्नानान्याहुः' इति पा० । ३ 'धैर्यच्यवनं मैथुनप्रयोजकतया' इति चक्रः ।

च्यवनं शीघ्रत्वेनावस्रंसनं, प्रीतिं स्नेहं प्रमदासु; देहबलमुत्साहोपचयलक्षणं; हर्षं पुनरुत्कण्ठाजननं प्रमदास्वेव; बीजार्थं चेति बीजप्रयोजनं, यथा-ऋतुक्षेत्रादिसंपत्तौ बीजमङ्कुरजननं स्यात्, एवं शुक्रमपि गर्भजनकमित्यर्थः। अन्ये त्वन्यथा पठन्ति— "रसः प्रीणयति, रक्तं जीवयति, मांसं लेपयति, मेदः स्नेहयति, अस्थि धारयति, मज्जा अस्थीनि पूरयति, शुक्रं धैर्यच्यवनं प्रीतिदेहबलहर्षबीजार्थकृत्"-इति; व्याख्यानयन्ति च—"रसः प्रीणयति धातूंस्तर्पयतीत्यर्थः, रक्तं जीवयति प्राणानुवर्तनं करोति, मांसं लेपयति अस्थ्यादीन्, मेदः स्नेहयति स्नेहात्, अस्थि धारयति शरीरमित्यर्थः, धैर्यच्यवनमिति धैर्यस्य च्यवनं धैर्यच्यवनं च्युतिः प्रमदासु विषय इत्यर्थः"। अयं पाठो निबन्धकारैः सादरं पठितः (॥ १ ॥) ॥—

**पुरीषमुपस्तम्भं वाय्वग्निधारणं च, बस्तिपूरणविक्लेदकृन्मूत्रं, स्वेदः क्लेदत्वक्सौकुमार्यकृत्; (॥२॥)**

अत ऊर्ध्वं मलानां प्राकृतं कर्मोच्यते-पुरीषमित्यादि। 'करोति' इत्यनुवर्तते। उपस्तम्भः अवष्टम्भः शरीरधारणमित्यर्थः। केचित् पुरीषकर्मसु प्रीणनं पठन्ति, न त्वाचार्याः। कश्चिदाचार्योऽत्रोपस्तम्भं न पठति। बस्तिर्मूत्राशयः, तस्य पूरणं, विक्लेदमार्द्रत्वं च, मूत्रं करोतीत्यर्थः। अन्ये तु 'क्लेदविवेकजं बस्तिपूरणकृन्मूत्रं' इति पठन्ति, क्लेदविवेकजमिति क्लेद आर्द्रत्वं स चाहारस्य, तस्य विवेकात् पृथक्त्वाज्जातं मूत्रम्। केचित् 'स्वेदः क्लेदयति' इति पठन्ति (॥ २ ॥) ॥—

**रक्तलक्षणमार्तवं गर्भकृच्च, गर्भो गर्भलक्षणं, स्तन्यं स्तनयोरापीनत्वजननं जीवनं चेति ॥ ५ ॥**

अत उपधातूनां प्राकृतं कर्माह,—रक्तलक्षणमित्यादि। रक्तलक्षणमार्तवमिति रक्तस्य यानि लक्षणानि तान्यस्य संभवन्तीति स्वभावकथनम्। गर्भकृच्चेति प्राकृतकर्मकथनम्। चकाराद्रक्तकर्मापि जीवनसंज्ञं करोति। केचिदाचार्या "रक्तलक्षणमार्तवं यथोक्तमकृत्रिमं गर्भकृच्च" इति पठन्ति, व्याख्यानयन्ति च—"यथोक्तमिति 'शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम्'—( शा. अ. २ ) इत्याद्युक्तलक्षणम्, अकृत्रिममिति वातपित्तकफैरधःप्रवृत्तैरष्टधाऽऽर्तवदूषकैरसृग्दररूपतया वा कृतं कृत्रिमं, न कृत्रिममकृत्रिमं शुद्धं, गर्भकृद्भवतीत्यर्थः"। गर्भो गर्भलक्षणमिति 'स्तनयोः श्यावमुखता' ( शा. अ. ३ ) इत्यादिकं 'करोति' इत्यध्याहारः। स्तन्यमित्यादि आपीनत्वजननं मांसलत्वजननम्। जीवनं बालानां, तेषामेव स्त्रीक्षीरसात्म्यत्वात् ॥ ५ ॥

**तत्र विधिवत् परिरक्षणं कुर्वीत ॥ ६ ॥**

प्रकृतिस्थानां रक्षणमाह—तत्रेत्यादि। तत्रेति तेषु वातादिषु प्रकृतिस्थेषु। विधिवत् विधिनोपपन्नं; विधिरत्र स्वास्थ्यैवृत्तिकः। परिरक्षणं सर्वतो रक्षणम् ॥ ६ ॥

**अत ऊर्ध्वमेषां क्षीणलक्षणं वक्ष्यामः। तत्र, वातक्षये मन्दचेष्टताऽल्पवाक्त्वमप्रहर्षो मूढसंज्ञता च, पित्तक्षये मन्दोष्माग्निता निष्प्रभता च, श्लेष्मक्षये रूक्षताऽन्तर्दाह आमाशयेतरश्लेष्माशयशून्यता सन्धिशैथिल्यं ( तृष्णा दौर्बल्यं प्रजागरणं ) च ॥ ७ ॥**

अत ऊर्ध्वमित्यादि। केचिदत्र "क्षयः पुनरेषामतिसंशोधनातिसंशमनवेगविधारणासात्म्यान्नमनस्तापव्यायामानशनातिमैथुनैर्भवति"—इति क्षयकारणानि पठन्ति। "एतानि प्रायो वायोर्वृद्धिं कुर्वन्ति, पित्तकफयोस्तु क्षयमिति; तस्माद्यथासंभवं कारणं ज्ञेयं; नास्मिन् पाठे प्रयोजनम्" इत्याचार्या वदन्ति। तत्रेत्यादि। मन्दचेष्टता मन्दकायव्यापारता। अप्रहर्षः अतुष्टिः। मूढसंज्ञता नष्टसम्यग्ज्ञानता। चकारात् प्राकृतकर्महानिस्तद्विरोधिनश्च श्लेष्मणः प्राकृतकर्मवृद्धिरिति चकारः समुच्चिनोति। एवं पित्तादिक्षयेष्वपि चकारप्रयोजनं ज्ञेयम्। पित्तक्षय इत्यादि निष्प्रभता प्रभाहानिः। श्लेष्मक्षय इत्यादि आमाशयो यत्राशितादि पच्यते, इतराशया उरःकण्ठशिरःसन्धय इति; श्लेष्माशयशून्यतेति कृते सति आमाशयो लब्धः, यदामाशयस्य पृथगुपादानं तद्विशेषेण शून्यताख्यापनार्थम्। केचिच्छिरःशब्दं सूत्रे पठन्ति, शिरसोऽपि सर्वेन्द्रियाधिष्ठानत्वेन प्राधान्यात् पृथगभिधानम् ॥ ७ ॥

**तत्र स्वयोनिवर्धनान्येव प्रतीकारः ॥ ८ ॥**

१ 'मज्जा पूरयति, बीजार्थहर्षकृच्छुक्रम्' इति ताडपत्रपुस्तके पाठः। २ 'पुरीषं निःसारमप्याशयबलकारितया वाय्वग्निधारणमुपस्तम्भं च करोति; तदुक्तं-'सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम्' ( च. चि. अ. ८ ) इति चक्रः। 'प्राणवाय्वग्निधारणावष्टम्भकृत् पुरीषम्' इति ताडपत्रपुस्तके पाठः। ३ 'विवेकत्वात्' इति पा०। ४ चक्रस्तु 'यथोक्तरक्तलक्षणं' इति पठति, व्याख्याति च-'यथोक्तरक्तलक्षणमिति आर्तवरूपरक्तस्य यल्लक्षणमुक्तं 'मासि मासि व्यहं स्रवेत्' इत्यादि, तदेवास्य प्रकृतिस्थस्य लक्षणम्' इति।

१ 'तेषां' इति पा०। २ 'स्वास्थ्यप्रवर्तकः' इति, 'स्वास्थ्यप्रवृत्तिकः' इति च पा०। ३ 'आमाशयेतराशयानां शून्यता' इति हाराणचन्द्रसंमतः पाठः। 'आमाशयेतराशयशून्यता शिरसश्च' इति ताडपत्रपुस्तके पाठः। ४ 'तृष्णा दौर्बल्यं प्रजागरणं' इति कचिद्धस्तलिखितपुस्तके न पठ्यते। ५ 'मन्दचेष्टता सकलप्राकृतवातक्रियाणामल्पता, मूढसंज्ञता असम्यग्ज्ञानम्, एतच्च प्राकृतवायोरिन्द्रियार्थसंप्राप्तिकरस्य वैगुण्यादुपपन्नम्' इति चक्रः। ६ 'स्वयोनिवर्धनद्रव्याणि' इति पा०। 'स्वयोनीतिवक्तव्ये यद्वर्धनमित्यधिकं करोति, तेन स्वयोनिश्च यद्वातादीनां कषायादि तथाऽऽमलकादि प्रतिभाति तन्निरासार्थं, तद्धि स्वयोनिरपि पथ्यत्वप्रभावबाधितत्वान्न वर्धनं, तथा प्रभावादपि वत्कफादिवर्धनं मत्स्यादि तदपि गृह्यते......तत्र वायोर्वायुरेव योनिः, पित्तस्याग्निः, कफस्यापः, रक्तं तेजोजलात्मकं, मांसं पार्थिवं, मेदो जलपृथिव्यात्मकम्, अस्थि पृथिव्यनिलात्मकं, मज्जा शुक्रं चाप्यं, मूत्रं जलानलात्मकं, पुरीषं पार्थिवम्, आर्तवमाग्नेयं, स्वेदः स्तन्यं चाप्यम्' इति चक्रः।

दोषक्षये चिकित्सामाह,—तत्रेत्यादि । स्वयोनिवर्धनान्येवेति शीतरूक्षादीनि । प्रतीकारश्चिकित्सितम् । न पुनः स्वयोनिवर्धनान्यपि कटुकादीनि, कुतः ? भूयस्त्वेनान्यदोषप्रकोपणत्वात् । तथाचोक्तं,—"वातक्षये शीतरूक्षैर्न लघ्वैः कटुकादिभिः । पित्तक्षयेऽपि कटुकैरुष्णैर्न लवणादिभिः ॥ क्षीरादिभिः स्निग्धशीतैः प्रतिकुर्यात् कफक्षये"–इति । अन्ये तु व्याख्यानयन्ति—"स्वयोनिवर्धनानीति स्वयोनिरात्महेतुः; तत्र वायोर्वायुरेव हेतुः, पित्तस्याग्निर्हेतुः, कफस्य हेतुरापः; वातक्षये वातवर्धनानि, पित्तक्षये पित्तवर्धनानि, कफक्षये कफवर्धनानि" इति । "कफस्य योनी रसः, पित्तस्य रक्तम्" इत्यपरे; रसरक्तयोरपि वर्धनान्याप्यतैजसद्रव्याणीति स एवार्थः ॥ ८ ॥

**रसक्षये हृत्पीडाकम्पशून्यतास्तृष्णा च, शोणितक्षये त्वक्पारुष्यमम्लशीतप्रार्थना सिराशैथिल्यं च, मांसक्षये स्फिग्गण्डौष्ठोपस्थोरुवक्षःकक्षापिण्डिकोदरग्रीवाशुष्कता रौक्ष्यतोदौ गात्राणां सदनं धमनीशैथिल्यं[1] च, मेदःक्षये प्लीहाभिवृद्धिः[2] सन्धिशून्यता रौक्ष्यं मेदुरमांसप्रार्थना च, अस्थिक्षयेऽस्थिशूलं[3] दन्तनखभङ्गो[4] रौक्ष्यं च, मज्जक्षयेऽल्पशुक्रता पर्वभेदोऽस्थिनिस्तोदोऽस्थिशून्यता च, शुक्रक्षये मेढ्रवृषणवेदनाऽशक्तिर्मैथुने चिराद्वा प्रसेकः प्रसेके चाल्परक्तशुक्रदर्शनम्[5] ॥ ९ ॥**

इदानीं धातुक्षयं दर्शयति—रसक्षय इत्यादि । हृच्छब्दः[6] पीडादिभिः शून्यतान्तैः प्रत्येकं संबध्यते । तृष्णा उदकपानाभिलाषः । चकार[7]प्रयोजनं दोषक्षयप्रस्तावे दर्शितम् । अन्ये तु "रसक्षये हृत्पीडा कम्पः शोषः शून्यता तृष्णा च" इति पठन्ति, व्याख्यानयन्ति च—"शोषः शरीरस्य, शून्यता आमाशयस्य मनसो वा इति," शेषं समम् । शोणितक्षय इत्यादि । अम्लशीत[8]प्रार्थनेति शोणितक्षये सति वातवृद्धौ तत्प्रत्यनीकाम्लरसेच्छा, तथा रक्तस्य द्रवत्वात्तत्क्षये तेजोवृद्धौ शीतप्रार्थनाऽपि; केचित् "अग्नीषोमीयत्वाद्रक्तस्य तत्तुल्यगुणयोरम्लशीतयोः प्रार्थना[9]" इति वदन्ति । चकाराद्वह्निमान्द्यादिकं च शोणितवर्णनीयोक्तमप्यत्र द्रष्टव्यम् । मांसक्षय इत्यादि । स्फिचौ कटिप्रोथौ, गण्डौ गल्लौ, उपस्थो योनिः, ऊरुः लोके 'जङ्घा' इति व्याख्याता, वक्षः उरः, पिण्डिका जानुगुल्फयोरन्तरं; शुष्कशब्दः स्फिगादिभिः प्रत्येकं संबध्यते । मेदःक्षय इत्यादि रौक्ष्यं त्वचः । मेदुरमांसप्रार्थनेति मेदुरं स्निग्धतमं; प्रार्थना अभिलाषः । अस्थिक्षय इत्यादि । रौक्ष्यं देहस्य दन्तनखानां च; दन्तादीनामस्थिमयत्वोद्भवः । मज्जक्षय इत्यादि । पर्वभेदो ग्रन्थिपीडा; अस्थिशून्यता रिक्तता, पूरणाभावात् । शुक्रक्षय इत्यादि । चिराद्वा प्रसेक इति कथंचित् प्रवृत्तावपि चिरकालेन क्षरणम्; अल्परक्तशुक्रदर्शनं शुक्रं क्षीणं मज्जमिश्रमल्परक्तत्वमृच्छति; अन्ये तु "अल्पशुक्ररक्तदर्शनमिति धातुक्षयात् कुपितो वायुः शोणितमल्पशुक्रमिश्रं निःस्रावयति" इति; मेढ्रवृषणवेदनेति शुक्रस्य सर्वशरीरव्यापिनोऽपि विशेषाधारत्वा[1]न्मेढ्रवृषणनिर्देशः ॥ ९ ॥

**तत्रापि स्वयोनिवर्धनद्रव्योपयोगः (प्रतीकारः[2]) ॥ १० ॥**

चिकित्सासूत्रं निर्दिशन्नाह,—तत्रापीत्यादि । स्वयोनिवर्धनमपि समानेन द्रव्येण समानगुणेन समानगुणभूयिष्ठेन वा । समानेन द्रव्येण यथा–रक्तं रक्तेन वर्धते, मांसं मांसेन, मेदो मेदसा, अस्थि तरुणसंज्ञकेनास्थ्ना, मज्जा मज्ज्ञा, शुक्रं शुक्रेण; समानगुणेन यथा—रक्तक्षये तैजसद्रव्योपयोगः, तेजोगुणभूयिष्ठद्रव्योपयोगो वेत्यादि बोद्धव्यम् । द्रव्यग्रहणमुपलक्षणं, तेन कर्मापि यद्यस्य धातोरभिवृद्धिकरं तत्क्षये तत् सेव्यम् । तत्र स्वयोनिद्रव्याणामवबोधार्थं धातुमलोपधातुषु श्लोकाः कथ्यन्ते,—"यद्यपि पञ्चभूतानां वाच्यः पाको द्विधा पुनः । तथाऽप्यपां प्रधानत्वाद्रसः सौम्योऽभिधीयते ॥ अतिरिक्ता गुणा रक्ते वह्नेर्मांसे तु पार्थिवाः । मेदस्यम्बुभुवोरस्थ्नि पृथिव्यनिलतेजसाम् ॥ मज्ज्ञि शुक्रे च सोमस्य[3] मूत्रेऽम्बुशिखिनोर्गुणाः । भुवो विश्यार्तवे त्वग्नेः प्रस्वेदस्त्वन्ययोरपाम् ॥ इति धातुमलेषूक्ता गुणाः प्राधान्यतः स्थिताः । प्रायेण भूगुणा गर्भे स्तोका[4] ह्यन्यगुणा अपि—" इति ॥ १० ॥

**पुरीषक्षये हृदयपार्श्वपीडा सशब्दस्य च वायोरूर्ध्वगमनं कुक्षौ संचरणं च, मूत्रक्षये बस्तितोदोऽल्पमूत्रता च; अत्रापि स्वयोनिवर्धनद्रव्योपयोगः । स्वेदक्षये स्तब्धरोमकूपता त्वक्शोषः स्पर्शवैगुण्यं[5] स्वेदनाशश्च; तत्राभ्यङ्गः स्वेदोपयोगश्च ॥ ११ ॥**

मलक्षयं दर्शयन्नाह,—पुरीषक्षय इत्यादि । कुक्षिरत्र जठरम् । अत्र चिकित्सासूत्रं निर्दिशन्नाह,—अत्रापीत्यादि । पुरीषक्षये माषकुल्माषादीनां, मूत्रक्षये इक्षुत्रपुसादीनामुपयोगः । स्वेदक्षय इत्यादि । स्पर्शवैगुण्यं स्पर्शहानिः । चिकित्सामाह,—तत्राभ्यङ्ग

---

१ 'धमनीशैथिल्यं मांसक्षये शुषिराधारतया' इति चक्रः । २ 'प्लीहाभिवृद्धिरुदरे मेदःक्षये वृद्धवातेनोदरशून्यतया च प्लीहा स्थानाद्भ्रष्टो वर्धते' इति चक्रः । ३ 'अस्थितोदः' इति हाराणचन्द्रसंमतः पाठः । ४ 'दन्तभङ्गोऽपि तत्प्रभवास्थिक्षयादेव' इति चक्रः । ५ 'अल्पशुक्ररक्तदर्शनं च शुक्रक्षये कुपितेन वायुना हर्षोदीरितेन च रक्तानयनाद्भवति' इति चक्रः । ६ 'हृच्छब्दः पीडाकम्पशोषशून्यताभिर्योज्यः । एते च रसक्षये वृद्धवाताद्धि भवन्ति' इति चक्रः । ७ 'चकारादिहान्यत्र च स्वकर्महानिः, परधात्वपचयश्च ज्ञेयः' इति चक्रः । ८ 'अम्लशीतप्रार्थना सौम्याग्नेयत्वाद्रक्तस्य स्वयोनितया भवति, सिराशैथिल्यं पूरकरक्ताल्पतया' इति चक्रः । ९ 'अभिलाषः' इति पा० ।

१ 'अस्थिवत्त्वात्' इति पा० । २ 'प्रतीकारः' इति हस्तलिखितपुस्तके न पठ्यते । ३ 'सौम्यस्य' इति पा० । ४ 'स्तोकस्तोकाद्यनुग्रहः' इति पा० । ५ 'स्पर्शवैगुण्यमिति स्वेदक्षये वृद्धवातेन ज्ञेयम्, स्तब्धरोमकूपता स्वेदक्षयेण तेषां शुष्कत्वात्' इति चक्रः ।

इत्यादि । चकारात् स्वेदजननकुक्कुटवराहादिमांसोपयोगश्चाभ्यन्तरो लभ्यते ॥ ११ ॥

**आर्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च; तत्र संशोधनमाग्नेयानां च द्रव्याणां विधिवदुपयोगः । स्तनक्षये स्तनयोर्म्लानता स्तन्यासंभवोऽल्पता वा; तत्र श्लेष्मवर्धनद्रव्योपयोगः । गर्भक्षये गर्भास्पन्दनमनुन्नतकुक्षिता च; तत्र प्राप्तबस्तिकालायाः क्षीरबस्तिप्रयोगो मेद्यान्नोपयोगश्चेति ॥ १२ ॥**

उपधातुक्षयमाह,—आर्तवक्षय इत्यादि । यथोचितकालो मासि मासि त्र्यहस्रवणम् । चिकित्सामाह,—तत्र संशोधनमित्यादि । "संशोधनमिह सामान्यम्" इति केचित्; "संशोधनमिह वमनं न विरेकः" इत्यपरे, कुतः ? विरेचनेन हि पित्तक्षयादार्तवस्य क्षय एव स्यादिति, वमनेन तु सौम्यधातौ निर्हृते आग्नेयधातौ वृद्धे आर्तवमाप्याय्यते । आग्नेयानां च द्रव्याणामिति तिलमाषसुराशुक्तादीनाम् । स्तन्यक्षय इत्यादि । म्लानता अनुन्नतिः । चिकित्सामाह,—तत्र श्लेष्मवर्धनेत्यादि । स्तन्यस्य रसजत्वात् । गर्भक्षय इत्यादि । अत्र चिकित्सामाह,—तत्रेत्यादि । प्राप्तबस्तिकालाया इति प्राप्ताष्टममासाया इत्यर्थः । मेद्यान्नोपयोग इति स्निग्धान्नोपयोगः; "मेध्याण्डोपयोग" इत्यन्ये पठन्ति, "मेध्याण्डानि वृष्याण्डानि, बस्तमत्स्याण्डादीनि" इति च व्याख्यानयन्ति ॥ १२ ॥

**अत ऊर्ध्वमतिवृद्धानां दोषधातुमलानां लक्षणं वक्ष्यामः । वृद्धिः पुनरेषां स्वयोनिवर्धनात्युपसेवनाद्भवति । तत्र, वातवृद्धौ वाक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमुष्णकामि(म)ता निद्रानाशोऽल्पबलत्वं गाढवर्चस्त्वं च; पित्तवृद्धौ पीतावभासता संतापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्बल्यं पीतविण्मूत्रनेत्रत्वं च; श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्यं गौरवमवसादस्तन्द्रा निद्रा सन्धिविश्लेषश्च ॥ १३ ॥**

अत ऊर्ध्वमित्यादि । गाढवर्चस्त्वं चेति चकारोऽयं वातस्य प्रकृतिकर्मणोऽतिशयत्वं समुच्चिनोति, एवं पित्तकफरसादिष्वपि चकारप्रयोजनम् । वाक्पारुष्यं वचनकार्कश्यं, केचिद्वाक्पारुष्यं न पठन्ति । कार्श्यं मांसक्षयः । कार्ष्ण्यं कृष्णत्वं शरीरे । अल्पबलत्वम् उत्साहहानिः । पित्तवृद्धावित्यादि । अल्पनिद्रता किंचित् स्निग्धत्वात् पित्तस्य । मूर्च्छा सर्वेन्द्रियशक्तेस्तिरस्कारः । बलहानिरिह ओजोहानिः, संतापात्तत्क्षयोपपत्तेः । श्लेष्मवृद्धावित्यादि । शौक्ल्यशैत्ये त्वगादीनाम् । स्थैर्यं गात्राणां स्तम्भः । अवसादः चित्तदेहयोर्ग्लानिः । तन्द्रा निद्राभेदः । सन्धिविश्लेषः अत्यन्तक्लेदेन विघ(घ)टनम् । 'सन्ध्यस्थिश्लिष्टता' इति केचित् पठन्ति, व्याख्यानयन्ति च—'कफोपचितत्वात् सुष्ठु सङ्घट्टनं सन्ध्यस्थ्नोर्भवति' इति । 'अध्यस्थिश्लिष्टता' इति क्वचित् पाठः ॥ १३ ॥

**रसोऽतिवृद्धो हृदयोत्क्लेदं प्रसेकं चापादयति; रक्तं रक्ताङ्गाक्षितां सिरापूर्णत्वं च; मांसं स्फिग्गण्डौष्ठोपस्थोरुबाहुजङ्घासु वृद्धिं गुरुगात्रतां च; मेदः स्निग्धाङ्गतामुदरपार्श्ववृद्धिं कासश्वासादीन् दौर्गन्ध्यं च; अस्थ्यध्यस्थीन्यधिदन्तांश्च; मज्जा सर्वाङ्गनेत्रगौरवं च; शुक्रं शुक्राश्मरीमतिप्रादुर्भावं च ॥ १४ ॥**

धातूनामतिवृद्धिं दर्शयन्नाह,—रसोऽतिवृद्ध इत्यादि । हृदयोत्क्लेदं हृल्लासम्, अन्ये छर्दिमाहुः । प्रसेकं लालास्रावमित्यर्थः । आपादयतीति क्रियापदं गर्भो जठराभिवृद्धिं स्वेदं चेत्यन्तं यावदनुवर्तते । अध्यस्थीनि अधिकास्थीनि । अधिदन्तानिति अधिकान् दन्तान्; चकारात् केशनखयोरप्यतिवृद्धिर्ज्ञेया । शुक्रमित्यादि ।—अतिप्रादुर्भावमिति अतिप्रवृत्तिं शुक्रस्येत्यर्थः ॥ १४ ॥

**पुरीषमाटोपं कुक्षौ शूलं च; मूत्रं मूत्रवृद्धिं मुहुर्मुहुः प्रवृत्तिं बस्तितोदमाध्मानं च; स्वेदस्त्वचो दौर्गन्ध्यं कण्डूं च ॥ १५ ॥**

मलानामतिवृद्धिं दर्शयन्नाह,—पुरीषमित्यादि । आटोपम् आध्मानं, क्षोभमित्यन्ये । मूत्रमित्यादि आध्मानमिह बस्तेरेव ॥ १५ ॥

**आर्तवमङ्गमर्दमतिप्रवृत्तिं दौर्गन्ध्यं च; स्तन्यं स्तनयोरापीनत्वं मुहुर्मुहुः प्रवृत्तिं तोदं च; गर्भो जठराभिवृद्धिं स्वेदं च ॥ १६ ॥**

उपधातूनामतिवृद्धिं निर्देष्टुमाह,—आर्तवमित्यादि । अङ्गमर्दो वेदनाविशेषः । दौर्गन्ध्यं पित्तधर्मत्वादार्तवस्य, तदुक्तम्—"ईषत्कृष्णं विगन्धं च" ( शा. अ. ३ ) इत्यादि; 'दौर्बल्यम्' इत्यन्ये पठन्ति । चकाराद्रक्तगुल्मादीनपि ॥ १६ ॥

**तेषां यथास्वं संशोधनं क्षपणं च क्षयादविरुद्धैः क्रियाविशेषैः प्रकुर्वीत ॥ १७ ॥**

---

१ 'तत्र संशोधनमित्यनेन स्रोतःशुद्ध्यर्थं शोधनं, तच्च वमनं विरेचनमूर्ध्वाधो वा स्रोतःशुद्धिकरतया' इति चक्रः । २ 'स्वक्पारुष्यं' इति पा० । ३ 'निद्रा मनसो निवृत्त्या भवति, यदुक्तं–'यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः । विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः' ( च. सू. अ. २१ ) इति; तत्र वायुना मनोभ्रमणान्निद्रा न भवति, पित्तस्याप्युष्णतया मनोविक्षेपान्निद्रा स्वल्पा भवति' चक्रः ।

१ 'सन्ध्यस्थिश्लिष्टता सन्धिश्लेषणकफवृद्धया युक्तैव' इति चक्रः । २ 'आटोपमीषत्सशब्दमाध्मानम्' इति चक्रः । ३ 'मूत्रवृद्धिं प्रचुरमूत्रनिर्गमम्' इति चक्रः । 'मूत्रवृद्धिं' इति हस्तलिखितपुस्तके न पठ्यते । ४ 'आर्तवं वृद्धतया वातरोधादङ्गमर्दं करोति' इति चक्रः । ५ 'अविरुद्धैरिति वृद्धस्य तथा क्षपणं कर्तव्यं यथाऽन्यदोषस्य धातोर्वा वृद्धिः क्षयो वा न भवतीति भावः, प्रतिकर्तव्यमिति प्रतिक्षणं च बहुदोषे संशोधनेनाल्पे च संशमनेन कर्तव्यम् । यद्यपि वृद्धिर्व्याधिरूपतया दोषकृतैव, तथाऽपि रसाद्याश्रयवशादपि तत्तद्दोषाणां चिकित्साविशेषो भवतीति ज्ञेयम्' इति चक्रः ।

चिकित्सासूत्रं निर्दिशन्नाह—तेषामित्यादि । यथास्वं यद्यदस्यात्मीयम् । क्षपणमत्र संशमनम् । क्षयादविरुद्धैः क्रियाविशेषैरिति तन्त्रान्तरोक्तैः । तथाहि,—"छिन्नाविश्वादिभिर्वायुं, पित्तं क्षौद्रफलत्रिकैः । कफं गुडार्द्रकाद्यैश्च जयेद्दोषाविरोधिभिः—" इति । अन्ये त्वेवं पठन्ति,—"तेषां क्षपणमविरुद्धैः क्रियाविशेषैः कुर्वीत"। क्रियाविशेषैरिति क्रियाः संशोधनसंशमनाहाराचाराख्याः ॥१७॥

**पूर्वः पूर्वोऽतिवृद्धत्वाद्वर्धयेद्धि परं परम् ॥**
**तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम् ॥१८॥**

स्वयं तावदेते वृद्धा अनर्थकराः, परम्परया वर्धिताः पूर्वपरधातुभिरपि महानर्थकारिण इति दर्शयन्नाह,—पूर्व इत्यादि । हि यस्मादर्थे । ह्रासनमिति ह्रासोऽत्र वृद्धेर्हानिः । पूर्वः पूर्व इत्याद्युपलक्षणम् । तेन परोऽपि वृद्धः प्रतिस्रोतःसरिद्बन्धः(ध) स्थलप्लावनन्यायेन पूर्वं वर्धयति, तथा परोऽपि क्षीणः पूर्वं क्षपयति, तथा पूर्वः क्षीणः परं क्षपयति । केचिदमुं श्लोकं 'यस्य धातुक्षयाद्वायुः' इत्यादिश्लोकस्याग्रे पठन्ति ॥ १८ ॥

**बललक्षणं बलक्षयलक्षणं चात ऊर्ध्वमुपदेक्ष्यामः । तत्र रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजस्तदेव बलमित्युच्यते, स्वशास्त्रसिद्धान्तात् ॥ १९ ॥**

बललक्षणमित्यादि । परम् उत्कृष्टं, तेज इव तेजः, तेजो घृतं वा, घृतं यथा कृत्स्नक्षीरस्नेहस्तथैवौजोऽपि कृत्स्नधातुस्नेह इत्यर्थः; "यत् परं तेज इति यदुत्कृष्टं सारः" इत्यन्ये व्याख्यानयन्ति । तत् खल्वोजस्तदेव बलमित्युच्यत इति, इयं चाभेदोक्तिश्चिकित्सैक्यार्था, परमार्थस्तु बलौजसोर्भेद एव; यथा भेदस्तदुच्यते—सर्वधातुस्नेहभूतस्योपचयलक्षणस्यौजसो रूपरसौ वीर्यादि च विद्यते, बलस्य तु भारहरणादिशक्तिगम्यस्य रसवीर्यवर्णादिगुणा न विद्यन्ते, अतोऽनयोर्भेदोऽस्त्येवेति; तथाच बलौजसोर्भेदो वेदोत्पत्तावध्याये उक्तः, "प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च" (सू. अ. १)—इति । तन्त्रान्तरे तु ओजःशब्देन रसोऽप्युच्यते, जीवशोणितमप्योजःशब्देनामनन्ति केचित्, ऊष्माणमप्योजःशब्देनापरे वदन्ति ॥ १९ ॥

**तत्र बलेन स्थिरोपचितमांसता सर्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो बाह्यानामाभ्यन्तराणां च करणानामात्मकार्यप्रतिपत्तिर्भवति ॥ २० ॥**

बलस्य प्राकृतं कर्म निर्देष्टुमाह—तत्र बलेनेत्यादि । स्थिरोपचितमांसतेति एतत्सर्वधातुसारोपचयलक्षणेन बलेन; सर्वचेष्टास्विति कायवाङ्मनोव्यापारेषु, अप्रतिघातोऽप्रतिहतशक्तित्वम्, एतद्भारहरणादिशक्तिलक्षणेन बलेन; स्वरवर्णप्रसाद इति प्रसादो नैर्मल्यम्, एतदुभयात्मकेन बलेन । बाह्यानामित्यादि ।–बाह्यानां करणानां कर्मेन्द्रियाणाम्, आभ्यन्तराणां बुद्धीन्द्रियाणाम्। आत्मकार्यप्रतिपत्तिः स्वकीयकार्यावबोधो भवति; 'प्रतिपत्तिरत्रानुष्ठानम्' इत्यन्ये । तत्र बाह्यानां वाक्पाणिपादपायूपस्थानामात्मकार्याणि वचनादानगमनविसर्गानन्दनानि, आभ्यन्तराणां करणानां श्रोत्रत्वक्चक्षुर्जिह्वानासिकानामात्मकार्याणि शब्दस्पर्शरूपरसगन्धग्रहणानि; एतदप्युभयात्मकेन बलेन । केचिदन्यथा व्याख्यानयन्ति—"बाह्यानां श्रोत्रत्वक्चक्षुर्जिह्वानासिकावाक्पाणिपादपायूपस्थानाम्, आभ्यन्तराणां मनोबुद्धिप्रभृतीनां, बलकारणभूतमोजः" इति ॥ २० ॥

**भवन्ति चात्र—**

**ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम् ॥**
**विविक्तं मृदु मृत्स्नं च प्राणायतनमुत्तमम् ॥२१॥**
**देहः सावयवस्तेन व्याप्तो भवति देहिनः ।**
**तदभावाच्च शीर्यन्ते शरीराणि शरीरिणाम् ॥२२॥**

बलचिकित्सार्थं स्वचिकित्सार्थमपि च प्राकृतैर्गुणैर्निर्दिशन्नाह,—ओज इत्यादि । सोमात्मकं सौम्यम् । स्निग्धं स्नेहगुणयुक्तम् । शुक्लम् अतिश्वेतम् । यत्तु चरके—"हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम् (सू. अ. १७)—" इत्यादिश्लोकेनौजस्त्रिवर्णं पठितं; तत्र हि शुद्धग्रहणेन शुक्लमुक्तम्, अतः शुक्लपीतरक्तवर्णास्त्रय उक्ताः; अत्राप्योजसस्त्रय एव वर्णाः, येनात्र 'शुक्लमोजः' इति पठितं, शुक्रौजसोरभेदादपरं तैलक्षौद्रवर्णद्वयं प्राप्तं; तेनात्रापि शुक्लरक्तपीतवर्णास्त्रय एवौजस उक्ताः; न चात्र शुक्रौजसोर्भेदोऽङ्गीकर्तव्यः, तस्मिन् सत्यष्टधातुत्वं स्यात्, तस्माद्रसादिधातुस्नेहपरम्पराहैतुकः स्नेहः शुक्रं, क्षीरस्थघृतमिवाभिन्नमोजः शुक्रेण । अपरे शुक्लस्थाने शुक्रं पठन्ति; युक्तं चैतत्, शुक्रवर्णैनैवौजोवर्णानां निर्दिष्टत्वात् । शीतं शीतवीर्यम् । स्थिरं शरीरावयवस्थैर्यकारि । सरं प्रसरणशीलम् । अन्ये त्वत्र 'रसं'

१ 'संप्रति धातुसारभूतत्वेन धात्वभिन्नस्यौजसस्तथा तत्कार्यस्य बलस्य च प्रयोजनवशादभेदेन स्वरूपं क्षयं च चिकित्सार्थमाह—बलेत्यादि । यत्परं तेजः सारं घृतमधुस्थानीयं प्रत्येकमेव रसादीनां यदुत्कृष्टोऽशः सारभागः स मिलित्वा हृदयप्रधानस्थानत्वात्तत्रस्थ एव च धमनीभिर्हृदयमूलाभिः कृत्स्नं शरीरं तर्पयति बलहेतुश्च धातूनां भवति, शुक्रशोणितसंसर्गात्प्रभृति शरीरमधितिष्ठते स्वकर्मणा तदोजः' इति चक्रः। २ 'मांसं चेह बहिर्दृश्यमानकार्यतयोक्तं, तेनेतरेषामपि धातूनां स्थिरत्वमुपचितत्वमनेनैवोक्तं ज्ञेयम् ।...सर्वचेष्टास्वप्रतीघात इति अत्र बलरूपतयौजसो बलसंपाद्यक्रियास्वप्रतिघातो ज्ञेयः । बाह्यानां पाय्वादीनां कर्मेन्द्रियरूपकरणानाम्, आभ्यन्तराणां चक्षुरादीनां मनःसहितानाम्, आत्मकार्यमेषां विसर्गादि तथा बुद्ध्यादि तथा चिन्तनादि च; प्रतिपत्तिरत्रानुष्ठानं, तेन सर्वेन्द्रियाणां स्वकार्यप्रतिपत्तिरोजोनुग्रहाद्भवतीति वाक्यार्थः । तत्रेन्द्रियाणि यदि भौतिकानि तदा विशिष्टभूतमयेनौजसा तद्बलबृंहणं युक्तमेव । यदुक्तं चरके "शरीरं ह्यपि सत्त्वमनुविधीयते सत्त्वं च शरीरम्" (च. शा. अ. ४) इति चक्रः ।

१ 'शुक्लमिति प्राधान्येन शुक्लं, तेन तन्त्रान्तरोक्तरक्ताद्यनुगमोऽप्यविरुद्धः । अन्ये शुक्लस्थाने 'स्वच्छम्' इति पठन्ति, तच्च चरके 'प्रसन्नम्' इति पाठाद्युक्तम् । स्थिरमिति स्थायि । सरमिति देहव्यापकतया' इति चक्रः । 'स्थिरं सुखदुःखयोरचञ्चलं करोतीति स्थिरं, णिचि पचाद्यच्; विविक्तं पूतं निर्मलमिति यावत्' इति हाराणचन्द्रः ।

इति पठन्ति, 'प्रधानरसकल्पनया मधुरम्' इति व्याख्यानयन्ति च। विविक्तं श्रेष्ठैर्गुणैर्युक्तम्; अन्ये पुनर्विविक्तं प्रत्यग्रमाहुः, ततः प्रत्यग्रैरेवान्नादिभिराप्यायनम् । मृदु कोमलम्। मृत्स्नं चेति पिच्छिलम्। चकाराद्गुर्वादयो गुणा अनुक्ताः समुच्चीयन्ते। प्राणानाम् अग्नीषोमादीनाम्, आयतनं स्थानम्। उत्तमं श्रेष्ठम्। तत्र बलेनेत्यादिवाक्येन स्थितौ हेतुत्वं प्रतिपादयति। देह इत्यादि। तेन ओजसा। भवति उत्पद्यते । इदानीं प्रलये तस्यैव हेतुत्वं दर्शयन्नाह—तदभावादित्यादि । शीर्यन्ते विनश्यन्ति । अयं पाठोऽभावात् समग्रो न लिखितः ॥ २१ ॥ २२ ॥

**अभि[1]घातात्क्षयात्कोपाच्छोकाद्ध्यानाच्छ्रमात्क्षुधः।**
**ओजः संक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् ॥**
**तेजः समीरितं तस्माद्विस्रंसयति देहिनः ॥ २३ ॥**

इदानीमभिघातादिभिर्हेतुभिरोजसः क्षयं निर्दिशन्नाह—अभिघातादित्यादि। एभ्योऽभिघातादिहेतुभ्यः। धातुग्रहणमिति धातवो गृह्यन्ते यैस्तानि धातुग्रहणानि धातुवाहीनि स्रोतांसि, तेभ्यो निःसृतं निर्गतं सर्वधातुस्नेहपरम्परारूपेण; अथवा धातुग्रहणं हृदयं धातुवहस्रोतसां स्थानत्वात्, तस्माद्धृदयान्निःसृतं स्रोतसो मुखैरेव। अन्यैस्तु हृदयमेव धातून् गृह्णातीति धातुग्रहणशब्देनैव हृदयमुच्यते। तेजः पित्तं, समीरितं सम्यक्प्रेरितं 'वातेन' इति शेषः। तस्मात् हृदयात्; विस्रंसयति च्यावयति ॥ २३ ॥

**त[2]स्य विस्रंसो व्यापत् क्षय इति ( त्रयो दोषाः; )**

१ "कुतः खल्विदं क्षीयते येन शरीराणि शीर्यन्त इत्याह–अभिघातादित्यादि। क्षयादतिरमणादिना धात्वपचयात्। नन्वेवं चेत्तत्वं कथं तर्ह्येभिर्हेतुभिरुपतप्ता सर्वक्रियास्वसमर्था अप्यातुराः सद्यो न म्रियन्त इत्याशङ्क्याह–हीत्यादि। सर्वं वाक्यं सावधारणमिति न्यायात्। एभ्योऽभिघातादिभ्य एवेत्यर्थः। हि यस्मात्। तेजः सर्वधातूनां दीप्तोंऽशः; 'ओज' इति निष्कर्षः, वायुना चालितं सत् धातुग्रहणनिःसृतं धातवो गृह्यन्त एभिरिति धातुग्रहणानि वक्ष्यमाणानि स्रोतांसि, तेभ्यो निःसृतं निर्गतं भवति, तस्माद्देहिनो विस्रंसयति सर्वेभ्य एव कर्मभ्यो बहिष्करोति न तु सद्यो मारयतीति तात्पर्यम्। एतेनौजसः क्षये म्रियते, मूलस्थानात्प्रच्याविते तु सर्वकर्मणामतिपतितो भवतीत्युक्तं भवति। वक्ष्यति च 'क्रियासन्निरोधश्च विस्रंसे'' इति हाराणचन्द्रः। "धातवो गृह्यन्ते यैस्तानि धातुग्रहणानि स्रोतांसि ओजोवाहीनि; यदुक्तं–'ओजोवहा विधम्यन्ते शरीरेऽस्मिन् समन्ततः' (च. सू. अ. ३०) इति। किंवा धातुग्रहणस्रोतःस्थानतया धातुग्रहणं हृदयं, ततो निःसृतं धमनीभिरेव; किंवा 'निष्ठितम्' इति पाठः; तदा ओजोवाहिस्रोतःसु हृदि स्थितमित्यर्थः' इति चक्रः। २ 'व्यापद्दोषदुष्टत्वे गुणहीनत्वं, लिङ्गानि भवन्तीत्युत्तरेण सन्धिविश्लेषादिना योज्यम्' चक्रः। 'विस्रंसो व्यापच्च क्षयभेदौ दोषदुष्टतया गुणापचयेनोत्पत्तेरित्यप्रस्तुतप्रस्तावापत्तिर्नाशङ्कनीया, क्षयो हि नाम यथाकथंचिदपचय इत्यवोचाम। दोषाणां वातादीनां स्वस्थानादपगमो दोषच्यवनं, क्रिया वाङ्मनःशरीरचेष्टाः, तासामसम्यङ्नाशः क्रियाऽसन्निरोधः, 'न निरोधो न चोत्पत्तिः' इत्यादौ नाशार्थे निरोधप्रयोगदर्शनात्। वक्ष्यति–'अप्राचुर्यं क्रियाणां च' इति हाराणचन्द्रः।

**लि[1]ङ्गानि भवन्ति संन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विस्रंसे, स्तब्धगुरुगात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने, मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति च क्षये ॥ २४ ॥**

तस्यौजसः क्षयभेदान् साध्यासाध्यज्ञानार्थं स्वलक्षणैर्निर्दिशन्नाह,—तस्येत्यादि । विस्रंसः स्थानाच्युतिरभिघातादिभिरेव । व्यापदन्यथापत्तिः, सा दुष्टदोषदूष्यसंसर्गात्। क्षयः स्वप्रमाणात् शोकध्यानक्षयादिभिः। 'लिङ्गानि व्यापन्नस्य भवन्ति' इति केचित् पठन्ति; व्यापन्नस्य दोषदूषितस्य। विस्रंसादीनामोजःक्षयभेदानां किं लिङ्गमित्याह,—सन्धिविश्लेष इत्यादि । सन्धिविश्लेषः सन्धीनां विघटनम्। दोषच्यवनं स्वस्थानाद्वातादीनां भ्रंशः, अन्ये "दोषैः कृत्वा च्यवनमोजसः" इति वदन्ति, "दोषच्यवनं मलानां च्यवनम्" इति केचित् । क्रियाणां कायवाङ्मानसीनां सन्निरोधः; "क्रियाशब्दाग्रे नञ् लुप्तो द्रष्टव्यः; नञ् ईषदर्थे, तेन क्रियाणामीषत्सन्निरोधः" इत्यन्ये व्याचक्षते। चकाराद्बलस्य प्राकृतकर्महानिः। एवं व्यापत्तौ क्षये च चकारप्रयोजनम् । एतानि विस्रंसे लिङ्गानि भवन्तीति योज्यम् । स्तब्धगुरुगात्रतेति स्तब्धगुरुभ्यां गात्रतेति संबध्यते; स्तब्धगात्रता जान्वादेरनमनसामर्थ्यम् । वर्णभेदो गौरादिवर्णान्यत्वम् । ग्लानिः अप्रहर्षः। तन्द्रा इन्द्रियार्थेऽकर्मण्यता। व्यापन्ने 'लिङ्गानि भवन्ति' इत्यनुवर्तते। मूर्च्छेत्यादि मूर्च्छा विज्ञानेन्द्रियनिरोधः। मोहः वैचित्त्यम् । प्रलपः असंबद्धभाषणम् । क्षये 'लिङ्गानि भवन्ति' इत्यनुवर्तते ॥ २४ ॥

**भवन्ति चात्र—**

**त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः ॥**
**विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः ॥२५॥**
**अप्राचुर्यं क्रियाणां च ब[2]लविस्रंसलक्षणम् ॥**
**गुरुत्वं स्तब्धताऽङ्गेषु ग्लानिर्वर्णस्य भेदनम् २६**
**तन्द्रा निद्रा वातशोफो बलव्यापदि लक्षणम् ॥**
**मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च २७**
**पूर्वोक्तानि च लिङ्गानि मरणं च बलक्षये ॥**

गद्योक्तमेवार्थं श्लोकैराह,—भवन्ति चात्रेत्यादि। त्रयो दोषाः तिस्रो विकृतयः। विश्लेषसादावित्यादि। पूर्वोक्तानि विस्रंसव्यापदोर्लिङ्गानीत्यर्थः ॥ २५–२७ ॥

**तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरु[3]द्धैर्बल-**

१ 'लिङ्गानि सन्धिविश्लेषः' इत्यादिस्ताडपत्रपुस्तके पाठः । २ 'मतं विस्रंसलक्षणम्' इति पा० । ३ 'अविरुद्धैरोजोनुकूलैः, अत्र मूढसंज्ञमिति विशेषणं तदवस्थायामेव वर्जनार्थम्' इति हाराणचन्द्रः। 'क्रियाविशेषैरिति ओजोवर्धकैस्तद्विशोधकैश्च, अविरुद्धैरिति अभ्यासविरुद्धैः, बलमिति ओजः' इति चक्रः।

**माप्याययेत्; इतरं तु मूढसंज्ञं वर्जयेत् ॥ २८ ॥**

चिकित्सासूत्रं निर्दिशन्नाह,—तत्रेत्यादि । क्रियाविशेषै रसायनवाजीकरणादिभिः । अविरुद्धैरभ्याद्यविरुद्धैः । बलं शक्त्युपचयलक्षणम् । आप्याययेत् वर्धयेत् । क्षीणस्यावस्थायां वर्जनमाह,—इतरं त्वित्यादि ।—इतरं क्षीणं वर्जयेत् । किंभूतं वर्जयेदित्याह—मूढसंज्ञं नष्टसंज्ञं, पूर्वं मोहस्योक्तत्वात् । मूढसंज्ञं वर्जयेदित्येतस्याग्रे केचित् सुश्रुताध्यायिनः "तेजोऽप्याग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं वसाख्यं स्त्रीणां विशेषतो भवति; तेन मार्दवसौकुमार्यमृद्वल्परोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति; तत् कषायतिक्तगुरुशीतरूक्षविष्टम्भिवेगविघातव्यवायव्यायामव्याधिकर्षणै(र्शनै)श्च विक्रियते; तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभत्वानि विस्रंसने भवन्ति, कार्श्यं मन्दाग्निताऽधस्तिर्यक्च प्रच्युतिर्व्यापत्तौ, दृष्ट्यग्निबलहान्यनिलप्रकोपमरणानि क्षये । तत्र स्नेहपानाभ्यङ्गप्रदेहपरिषेकस्निग्धलघ्वन्नानि क्षयादृते विदधीत" इत्यमुं पठन्ति । अयं तु पाठो न पठनीयः, कुतः ? निबन्धकारैरनार्षीकृतत्वात् ॥ २८ ॥

**दोषधातुमलक्षीणो बलक्षीणोऽपि वा नरः ॥**
**स्वयोनिवर्धनं यत्तदन्नपानं प्रकाङ्क्षति ॥ २९ ॥**
**यद्यदाहारजातं तु क्षीणः प्रार्थयते नरः ॥**
**तस्य तस्य स लाभे तु तं तं क्षयमपोहति ॥ ३० ॥**
**यस्य³ धातुक्षयाद्वायुः संज्ञां कर्म च नाशयेत् ॥**
**प्रक्षीणं च बलं यस्य नासौ शक्यश्चिकित्सितुम् ३१**

दोषेत्यादि । स्वयोनिवर्धनम् आत्मकारणवर्धनं यदन्नपानं तदभिलषति । यद्यदित्यादि । आहारजातमाहारसमूहम् । केचिदाचार्या अमुं श्लोकं न पठन्ति । केचित् सुश्रुताध्यायिनोऽत्र दोषधात्वादिक्षयविनाशार्थं देयमन्नादिकं पठन्ति,—"यवान् मुद्गान् हरेणूंश्च रूक्षं च लघुभोजनम् । कषायकटुतिक्तं च वातक्षीणोऽभिकाङ्क्षति ॥ तिलमाषकुलत्थादि पिष्टान्नविकृतिं तथा । मस्तुशुक्ताम्लतक्राणि पित्तक्षीणस्तथा दधि ॥ मांसं माहिषवाराहमाजं गुडगुरूणि च । श्लेष्मक्षीणोऽभिलषति क्षीरस्निग्धदधीनि च ॥ इक्षुं मांसरसं मन्थं मधु सर्पिर्गुडोदकम् । अस्वच्छमांसं यवागूं च रसक्षीणोऽभिवाञ्छति ॥ द्राक्षादाडिमयुक्तानि सस्नेहलवणानि च । रक्तसिद्धानि मांसानि रक्तक्षीणोऽभिकाङ्क्षति ॥ अम्लानि दधिसिद्धानि तथा षाडवकानि च । स्थूलक्रव्यादमांसानि मांसक्षीणोऽभिकाङ्क्षति ॥ मेदःसिद्धानि मांसानि ग्राम्यानूपौदकानि च । सक्षाराणि विशेषेण मेदःक्षीणोऽभिकाङ्क्षति ॥ रसान् सुसिद्धान् सास्थीनि मांसानीहाभिकाङ्क्षति ॥ अस्थिक्षीणस्तथा मांसं मज्जास्थिस्नेहसंयुतम् । स्वाद्वम्लसंयुतं द्रव्यं मज्जक्षीणोऽभिकाङ्क्षति ॥ मयूरकुक्कुटाण्डानि हंससारसयोस्तथा । ग्राम्यानूपौदकानां च शुक्रक्षीणोऽभिकाङ्क्षति ॥ यवानि यवकान्नानि शाकानि विविधानि च । मायूरं माषयूषं च वर्चःक्षीणोऽभिकाङ्क्षति ॥ पेयामिक्षुरसं क्षीरं सगुडं बदरोदकम् । मूत्रक्षीणोऽभिलषति त्रपुसैर्वारुकाणि च ॥ अभ्यङ्गं मर्दनं मद्यं निवातशयनासनम् । गुरुप्रावरणं चैव स्वेदक्षीणोऽभिकाङ्क्षति ॥ कट्वम्ललवणाम्लानि विदाहीनि गुरूणि च । फलशाकानुपानानि स्त्री वाञ्छत्यार्तवक्षये ॥ मृगाजाविवराहाणां गर्भान् वाञ्छति संस्कृतान् । वसाशूल्यप्रकारादीन् भोक्तुं गर्भपरिक्षये ॥ सुराशाल्यन्नमांसानि गोक्षीरं शर्करां तथा । आसवं दधि हृद्यानि क्षये स्तन्यस्य वाञ्छति" इति । यस्येत्यादि 'इतरं तु मूढसंज्ञं वर्जयेत्' इत्यनेनैवास्योक्तार्थत्वात् केचिदमुं न पठन्ति, "सर्वधातुक्षयव्यापकत्वाद्भिन्नविषयोऽयं श्लोकः, तस्मात् पठनीयः" इत्यन्ये ॥ २९-३१ ॥

**रसनिमित्तमेव स्थौल्यं कार्श्यं च । तत्र श्लेष्मलाहारसेविनोऽध्यशनशीलस्याव्यायामिनो दिवास्वप्नरतस्य चाम¹ एवान्नरसो मधुरतरश्च शरीरमनुक्रामन्नतिस्नेहान्मेदो जनयति, तदतिस्थौल्यमापादयति;² तमतिस्थूलं क्षुद्रश्वासपिपासाक्षुत्स्वप्नस्वेदगात्रदौर्गन्ध्यक्रथनगात्रसादगद्गदत्वानि क्षिप्रमेवाविशन्ति, सौकुमार्यान्मेदसः सर्वक्रियास्वसमर्थः, कफमेदोनिरुद्धमार्गत्वाच्चाल्पव्यवायो भवति, आवृतमार्गत्वादेव शेषा धातवो नाप्यायन्तेऽत्यर्थमतोऽल्पप्राणो भवति, प्रमेहपिडकाज्वरभगन्दरविद्रधिवातविकाराणामन्यतमं प्राप्य पञ्चत्वमुपयाति, सर्व एव चास्य रोगा बलवन्तो³ भवन्त्यावृतमार्गत्वात् स्रोतसाम्; अतस्तस्योत्पत्तिहेतुं परिहरेत् । उत्पन्ने तु शिलाजतुगुग्गुलुगोमूत्रत्रिफलालोहरजोरसाञ्जनमधुयवमुद्गकोरदूषकश्यामाकोद्दालकादीनां विरूक्षणच्छेदनीयानां च द्रव्याणां विधिवदुपयोगो व्यायामो लेखनबस्त्युपयोगश्चेति⁴ ॥ ३२ ॥**

रसनिमित्तमित्यादि । चकारान्मध्यशरीरत्वं च । ननु, कथमेक एव रसः परस्परविरुद्धयोः स्थौल्यकार्श्ययोर्हेतुरित्यत आह,—तत्रेत्यादि । अध्यशनशीलस्येति अजीर्णभोजनाभ्यासिन इत्यर्थः । ननु, मेदस्विनो दीप्ताग्नित्वे कथमामरससंभवः ? नैष दोषः, दीप्ताग्नित्वेऽप्यध्यशनशीलत्वादामरसो भवति । तर्हि कथं रस-

१ 'नष्टसंज्ञमितरं तु' इति पा० । २ अस्याग्रे 'इतरं त्वित्यादिपाठाग्रेऽसौ पठितव्यः' इत्यधिकः पाठ उपलभ्यते कस्मिंश्चित्पुस्तके । ३ 'धातुक्षयादिति ओजःक्षयात् । संज्ञा ज्ञानं, कर्म व्यापारः, एतयोरुपरम एव मूर्च्छा । बलं शक्तिः । अत्र दोषादिक्षयवृद्धिप्रकरणे प्रतिकर्तव्या ओजसो वृद्धिर्नाभिहिता, तस्यायुर्वृद्धिवन्निर्विकारत्वेनाभिमतत्वादेव' इति चक्रः ।

१ 'आम एवेति इवार्थोऽयमेवशब्दः, रक्तादिरूपेणापरिणततया अपक्व इवेत्यर्थः; न तु 'आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः' इत्यादिनोक्तः, तस्य रोगहेतुतयाऽऽमाशयस्थत्वेन च मेदोजनकत्वायोगात्' इति चक्रः । २ 'मेदसोऽतिप्रवृद्धत्वाज्जाठर्यमापादयति । तमतिजाठरं क्षुद्रश्वास°' इत्यादिस्ताडपत्रपुस्तके पाठः । 'जाठर्यमिति वृद्धजठरत्वं' इति चक्रः । ३ 'बलवत्तराः' इति पा० । ४ 'चकारात् 'गुरु चातर्पणं श्रेष्ठं स्थूलानां कर्शनं प्रति' (च. सू. अ. २१) इति समुच्चिनोति' इति चक्रः ।

श्चापकश्चेति विरोधनीयवचनं ? न ह्यपक्को रसव्यपदेशं लभते । सत्यं, जाठरेणाग्निना रसः कट्टभावेन कृत एव, किंतु धात्वग्निभिरपाकादाम इत्युच्यते । शरीरमनुक्रामन्निति तं तं शरीरदेशं गच्छन्नित्यर्थः । मेदो जनयति विशिष्टाहारवशाददृष्टवशान्मेदसाऽऽवृतमार्गत्वाच धातुद्वयमतिक्रम्य मेद एव वर्धयति । तदतिस्थौल्यमापादयतीति तत् मेदः, आपादयति करोति । क्रथनं स्वपतः कण्ठे घुर्घुरारवः, अन्ये त्वकस्माच्छ्वासावरोधं क्रथनं कथयन्ति । गद्गदत्वम् अव्यक्तवचनत्वम् । क्षिप्रमेवाविशन्तीति एते क्षुद्रश्वासादयस्तं स्थूलं शीघ्रमेव प्रविशन्ति, स्थूले भवन्तीत्यर्थः । शेषधातवो नाप्यायन्तेऽत्यर्थमिति शेषधातवोऽस्थ्यादयः । वातविकाराणामिति अत्र वातविकारा मेदःकृतमार्गावरणनिमित्तवातकोपविकारा इत्यर्थः । अन्यतममिति एषामेकम् । पञ्चत्वमुपयातीति मरणमुपगच्छतीत्यर्थः । तस्य चिकित्सामाह,—अत इत्यादि । तस्योत्पत्तिहेतुं परिहरेदित्यनेन निदानपरिवर्जनेनानागताबाधचिकित्सोक्ता । उत्पन्ने जाते पुनरित्यर्थः । उद्दालकादीनामिति उद्दालक आरण्यकोद्रवः, आदिशब्दाद्वेणुकादीनां ग्रहणम् । विरूक्षणच्छेदनीयानामिति विरूक्षणं मेदोघ्नं, छेदनीयं स्रोतोविशोधनीयम् । विधिवदुपयोग इति पुरुषाग्निबलमात्राविधानवानुपयोग इत्यर्थः । लेखनबस्त्युपयोगश्च लेखनबस्तयश्चिकित्सितोक्ताः, "त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमन्विताः । ऊषकादिप्रतीवापा बस्तयो लेखनाः स्मृताः" ( चि. अ. ३८ ) इति । चकाराद्व्यायामादयो मृदवः काङ्कायनसक्तवश्च ॥ ३२ ॥

**तत्र पुनर्वातलाहारसेविनोऽतिव्यायामव्यवायाध्ययनभयशोकध्यानरात्रिजागरणपिपासाक्षुत्कषायाल्पाशनप्रभृतिभिरुपशोषितो रसधातुः शरीरमननुक्रामन्नल्पत्वान्न प्रीणाति, तस्मादतिकार्श्यं भवति; सोऽतिकृशः क्षुत्पिपासाशीतोष्णवातवर्षभारादानेष्वसहिष्णुर्वातरोगप्रायोऽल्पप्राणश्च क्रियासु भवति, श्वासकासशोषप्लीहोदराग्निसादगुल्मरक्तपित्तानामन्यतममासाद्य मरणमुपयाति, सर्वे एव चास्य रोगा बलवन्तो भवन्त्यल्पप्राणत्वात्; अतस्तस्योत्पत्तिहेतुं परिहरेत् । उत्पन्ने तु पयस्याश्वगन्धाविदारिगन्धाशतावरीबलातिबलानागबलानां मधुराणामन्यासां चौषधीनामुपयोगः, क्षीरदधिघृतमांसशालिषष्टिकयवगोधूमानां च, दिवास्वप्नब्रह्मचर्याव्यायामबृंहणबस्त्युपयोगश्चेति ॥ ३३ ॥**

कार्श्यनिमित्तं दर्शयन्नाह,—तत्र पुनरित्यादि । वातलाहारसेविन इति अतिरूक्षाहारसेविनः । अतिव्यायामेत्यादि अतिशब्दो व्यायामादिभिः प्रत्येकं संबध्यते । क्षयो धातुक्षयः । उपशोषितो रसधातुरिति अतिरूक्षीकृतोऽल्पीकृतश्च । न प्रीणाति ईषत्प्रीणातीत्यर्थः । सोऽतिकृश इत्यनेनोपचयलक्षणबलाभावो दर्शितः । वातरोगप्राय इति वातरोगबहुल इत्यर्थः । अल्पप्राणश्च क्रियासु भवतीति कायवाङ्मानसीषु क्रियासु विषयेऽल्पशक्तिर्भवति; एतेन शक्तिलक्षणबलाभाव उक्तः । शोषो राजयक्ष्मा । उत्पन्ने त्विति 'कार्श्ये' इति शेषः । पयस्या अर्कपुष्पी, क्षीरकाकोलीत्यन्ये । विदारिगन्धा शालिपर्णी । मधुराणामित्यादि ऋद्धिवृद्धिजीवकादीनाम् । बृंहणबस्त्युपयोगश्चेति बृंहणबस्तिर्यथा,—"बृंहणद्रव्यनिःक्वाथास्तत्कल्कस्नेहसैन्धवैः । युक्ताः खजप्रमथिता बस्तयो बृंहणा मताः" ( चि. अ. ३८ ) इति । चकारात् संतर्पणमपि लघु कर्तव्यम् ॥ ३३ ॥

**यः पुनरुभयसाधारणान्यासेवेत तस्यान्नरसः शरीरमनुक्रामन् समान् धातूनुपचिनोति, समधातुत्वान्मध्यशरीरो भवति सर्वक्रियासु समर्थः क्षुत्पिपासाशीतोष्णवातवर्षातपसहो बलवांश्च, स सततमनुपालयितव्य इति ॥ ३४ ॥**

मध्यशरीरस्य हेतुं गुणं च दर्शयन्नाह,—यः पुनरित्यादि । उभयसाधारणानि नातिस्निग्धरूक्षाणि स्वास्थ्यवृत्तिकानि द्रव्याणि षष्टिकरक्तशालिलावकदाडिमतण्डुलीयकादीनि, अदिवास्वप्नादींश्च विहारविशेषान् । सर्वक्रियासु समर्थ इत्यनेनैव बलवत्त्वे लब्धे यद्बलवांश्चेति करोति तन्नियमार्थम्; एवंभूताहारविहारसेवी बलवानेव भवतीत्यर्थः । मध्यशरीरस्य चिकित्सामाह,—स सततमनुपालयितव्य इति 'स्वस्थवृत्तानुवर्तनेन' इति शेषः ॥ ३४ ॥

**भवन्ति चात्र—**

**अत्यन्तगर्हितावेतौ[1] सदा स्थूलकृशौ नरौ ॥**
**श्रेष्ठो मध्यशरीरस्तु कृशः स्थूलात्तु पूजितः ॥ ३५ ॥**

तयोर्द्वयोः कृशस्थूलयोर्दोषवत्त्वेऽपि स्थूलस्यातिशयदोषवत्त्वं मध्यशरीरस्य च गुणवत्त्वं निर्देष्टुमाह,—अत्यन्तेत्यादि । कुतः स्थूलात् कृशः पूजितः ? उच्यते—स्थूलस्य क्रियाऽक्षमत्वात्, अतिशयेन व्याधिपीडनाच्च ॥ ३५ ॥

**दोषः प्रकुपितो धातून् क्षपयत्यात्मतेजसा ॥**
**इद्धः स्वतेजसा वह्निरुखागतमिवोदकम् ॥ ३६ ॥**

दोषादीनां क्षयवृद्ध्योरेकत्र निर्देशेऽपि दोषा एव धातुमलक्षयहेतव इति दर्शयन्नाह,—दोष इत्यादि । दोषो वातपित्तकफसंज्ञकः । धातूनिति धातुशब्दोऽत्र समेषु मलेष्वपि वर्तते, देहधारणसामर्थ्यात्; अथवा धातुशब्द उपलक्षणम्, तेन मला अपि प्राप्यन्ते । क्षपयतीति क्षपणं वृद्धिसाम्ययोः ह्रासः । आत्मतेजसेति आत्मशक्त्या । तत्र पित्तं कटुकोष्णत्वाद्धातून् क्षपयति, वायुश्च शोषणहेतुत्वात्, कफो मार्गावरोधकत्वात् । इद्धो दीप्तः । उखागतं स्थालीस्थम् ॥ ३६ ॥

**वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च[2] ।**
**दोषधातुमलानां तु परिमाणं न विद्यते ॥ ३७ ॥**

१ अत्र 'कट्टभावेन' इति, 'क्लेदभावेन' इति, 'किट्टभावेन' इति च पाठान्तरत्रयमुपलभ्यते ।

१ 'द्वावपि गर्हितावेतौ' इति चक्रसंमतः पाठः । २ 'अथ क्षयवृद्धी प्राकृतमानापेक्षे, तचेह नोक्तं, कुत इत्याह—वैलक्षण्यादि-

कुतः पुनः पलादिमानेन दोषादीनां प्रमाणं न निर्दिष्टमित्याह—वैलक्षण्यादित्यादि ।—वैलक्षण्यात् विसदृशत्वात्, विसदृशत्वं चात्र वातादिप्रकृति-रसरक्तादिसार-संहनन-दीर्घह्रस्वादि-कायभेदेन । अस्थायित्वात्तथैव चेति अनवस्थितत्वात्, अस्थायित्वं च द्विविधेऽपि काले नित्यग आवस्थिकेऽपि च; तत्र नित्यगे प्रातः श्लेष्मोपचीयते मध्याह्ने पित्तमित्यादि प्रत्यहमाह्निकचयादिभेदेन, तथा हेमन्ते श्लेष्मोपचीयते ग्रीष्मे वायुरित्यार्तवचयादिभेदेन; तथाऽऽवस्थिकेऽपि बाल्ये श्लेष्माऽभिवर्धते, तथा बाल्ये शुक्राल्पत्वं, कन्यानामार्तवस्तन्याभावः, युवसु पित्तमुपचीयते, वृद्धेषु वायुरित्यादिना । परिमाणमिति स्वं सर्वतो मानं न विद्यते; तेन[1] कस्यचिदेव क्वचिदेव मानं कर्तुं शक्यते, न सर्वत इत्यर्थः ॥ ३७ ॥

**एषां समत्वं यच्चापि भिषग्भिरवधार्यते ॥**
**न तत् स्वास्थ्यादृते शक्यं वक्तुमन्येन हेतुना॥३८॥**

ननु, दोषादीनां पलादिमानं विना साम्यं कथं ज्ञेयमित्याह,—एषामित्यादि । एषामिति दोषधातुमलानाम् । न तदित्यादि तदपि साम्यं; स्वास्थ्यादृते स्वास्थ्यं विना ॥ ३८ ॥

**दोषादीनां त्वसमतामनुमानेन लक्षयेत् ॥**
**अप्रसन्नेन्द्रियं[3] वीक्ष्य पुरुषं कुशलो भिषक् ॥३९॥**

क्षयवृद्धिभेदात्मकमसाम्यमनुमानेन दर्शयन्नाह,—दोषादीनामित्यादि । दोषादीनामिति आदिशब्देन धातुमलानां ग्रहणम् । तुशब्दः पुनरर्थे । असमतां क्षयवृद्धिलक्षणाम् । 'अप्रसन्नेन्द्रियं' इत्यत्र 'अप्रसन्नतनुं' इति यत्न कृतं तदिन्द्रियाधिष्ठानानामिन्द्रियशक्तीनां च प्रसन्नत्वं बोधयति । वीक्ष्येत्यनेन वर्णादि सर्वमुक्तं भवति । 'वीक्ष्य' इत्यत्र 'ज्ञात्वा' इत्येके पठन्ति ॥ ३९ ॥

**(स्वस्थस्य रक्षणं कुर्यादस्वस्थस्य तु बुद्धिमान्॥)**
**क्षपयेद्बृंहयेच्चापि दोषधातुमलान् भिषक् ॥**
**तावद्यावदरोगः स्या[4]देतत्साम्यस्य लक्षणम् ॥४०॥**

असाम्यं वृद्धिक्षयात्मकमित्यनुमानेन प्रतिपाद्य किं कुर्यादित्याह—क्षपयेदित्यादि ।—क्षपयेदिति वृद्धान् दोषधातुमलान् ह्रासयेदित्यर्थः । बृंहयेदिति तानेव क्षीणान् वर्धयेत् । क्षपणबृंहणयोर्मात्रावधिं दर्शयन्नाह,—तावदित्यादि । कुतः पुनरारोग्यमवधिरित्याह,—एतत् साम्यस्य लक्षणमित्यादि । अयं पाठः समग्रोऽभावान्न लिखितः ॥ ४० ॥

**समदोषः समाग्निश्च समधातुमलक्रियः[1] ॥**
**प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते[2] ॥ ४१ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने दोषधातुमलक्षयवृद्धिविज्ञानीयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥**

दोषादिसाम्यं स्वास्थ्यं, तद्दर्शयितुमाह,—समदोष इत्यादि । ननु, द्विविधेऽपि काले नित्यं दोषचयाद्यनुबन्धात् कथं समदोषत्वं ? तथाहि नित्यगे—आह्निके तावत् प्रातः कफः कुप्यति, मध्याह्ने पित्तमित्यादि; तथाऽऽर्तवेऽपि हेमन्ते कफश्चीयते वसन्ते स एव कुप्यतीति; तथाऽऽवस्थिके च काले 'बाले (ल्ये) विवर्धते श्लेष्मा' ( सू. अ. ३५ ) इत्याद्युक्तत्वात् । उच्यते,—दोषचयादेरल्पत्वादतद्व्यपदेश इति, एकतण्डुलाभ्यवहारेऽनशनव्यपदेशवत् । अन्ये त्वेवं वदन्ति,—"आर्तवे चयादौ स्वस्थवृत्तोक्तविधिभिराहोरात्रिके पुनरनागताबाधोक्तदन्तधावनादिविधानेन दोषाणां साम्यमुपपन्नमेव" इति । समधातुमलक्रिय इति समा धातुमलानां क्रिया यस्य स तथा । क्रिया स्वप्नजागरणादिकेति केचिद्भिन्नं क्रियाशब्दं व्याख्यानयन्ति । प्रसन्नात्मेन्द्रियमना इति आत्मा देहः, अन्ये कर्मात्मा बद्धपुरुषः; तस्य निर्विकारस्यापि शरीरगुणदोषाभ्यां बद्धत्वमाचार्यैर्बहुधोक्तम्, अस्माभिर्ग्रन्थगौरवभयान्नोच्यते । इन्द्रियाणि भौतिकाधिष्ठानशक्तिरूपाणि, मनस्त्विन्द्रियानुग्राहकमन्तःकरणम् । एवंभूतः पुरुषः स्वस्थ इत्यभिधीयते 'पूर्वाचार्यैः' इति शेषः । दोषसाम्येनैवाग्न्यादिसाम्यं लब्धं तत् किं पृथगाचार्यः प्राह ? उच्यते, न दोषैः समा अग्न्यादयो भवितुमर्हन्तीति; कुतः ? पृथक्चिकित्सितत्वात्; पित्तहरणमपि सर्पिरजापयश्चाग्निं वर्ध-

---

त्यादि । दीर्घह्रस्वस्थूलकृशबालवृद्धादीनां शरीरवैलक्षण्यात्, शरीरवैलक्षण्ये च तद्दोषादिमानवैलक्षण्यमित्यर्थः । अस्थायित्वादिति दोषादिभिः संबध्यते । तेन पूर्वाह्णे वसन्ते च कफो वृद्धः, ग्रीष्मे सायं च क्षीणः, इत्यादिना तत्तद्वृद्धिक्षयहेतुप्राप्त्याऽपि दोषधातुमलानामनियतमानत्वादित्यर्थः । न विद्यते इति नियतं मानं न विद्यते यद् शास्त्रकारेण निर्देश्येतेति भावः । अथ कथं तर्हि दोषादिसाम्यव्यवहार इत्याह—एषामित्यादि ।' इति चक्रः ।

१ 'येन' इति पा० । २ 'अभिधीयते' इति पा० । ३ 'अप्रसन्नेन्द्रियत्वं सर्वदोषादिविकारमानागतत्वेनोक्तं, यतोऽवश्यं विकारे दुःखकारिणि मनोवाक्स्पर्शादिषु वाऽन्यतममिन्द्रियं विकृततया अप्रसन्नं भवति' इति चक्रः । ४ 'स्यान्नरो रोगसमन्वितः' इति पा० । 'एतदरोगत्वं दोषधातुमलसाम्यस्वास्थ्यस्य लक्षणं, स्वास्थ्यार्था च चिकित्सेति भावः' इति चक्रः ।

१ 'समधातुमलक्रिय इति समा प्राकृतधातूनां मलानां च क्रिया प्राकृतकर्मरूपा यस्य स तथा, अत्र क्रियाग्रहणं समक्रिययैव धातुमलानां परोक्षाणां प्रायः साम्यावगतिरिति सूचनार्थम् । धातुग्रहणेन उपधात्वादीनां धारकाणां ग्रहणम् । अग्न्यादिसमतयैव दोषाः समा लक्ष्यन्ते । अथ समाग्नित्वाद्यप्यन्तर्वर्तितया दुर्विज्ञेयं कथं ज्ञेयमित्याह—प्रसन्नात्मेन्द्रियमना इति; आत्मादिप्रसन्नता हि दुःखरूपाग्न्यादिवैषम्यात्मकविकारविरहितत्वेन भवति, नहि दुःखयोगे सत्यात्मादिप्रसन्नता संभवति ।...आत्मादित्रयाभिधानं च त्रिभिरेव मिलितैर्निर्दुःखताज्ञानरूपप्रसन्नतानुभवात् । यदुक्तम् 'आत्मा ज्ञः करणैर्योगात् ज्ञानमस्य प्रवर्तते' ( च. शा. अ. १ ) इति । करणानि ज्ञाने मनःसमाहितानीन्द्रियाणि । तेन प्रसन्नात्मेन्द्रियमनस्त्वमेव स्वास्थ्यलक्षणमव्यभिचारि व्यक्तं च; तत्परिकरतया वैद्यकसिद्धान्तोपयुक्ततया च समदोषाद्यभिधानमिति युक्तं पश्यामः' इति चक्रः । २ 'पद्मपद्धत्वमाचार्यैर्बहुधोक्तं' इति पा० ।

यति । अत्र **श्रीमाधवः** प्राह,-"लब्धाश्चेत् समदोषत्वे समाग्नित्वादयस्तदा । पृथगुक्ताः किमर्थं ते भक्तिरेषा निरर्थका"—इति; समाधानमाह,—"दोषेभ्यस्ते यतो भिन्नाः पृथगुक्ता अतस्तु ते । प्रकृत्या तादृशाः केचिदत्यर्थं वा न दूषणम्"—इति । 'दोषाधीनां त्वसमताम्' इत्यादिश्लोकं 'वैलक्षण्याच्छरीराणाम्' इत्यादिश्लोकाग्रे केचिदन्यथा पठन्ति । तथाहि, "पलादिमानाभावात् कथमेषां साम्यं ज्ञेयमित्याह,—'दोषादीनां तु समतामनुमानेन लक्षयेत्' इति श्लोकार्धमेव दोषसाम्यज्ञानार्थं पठन्ति । येनानुमानेन समता ज्ञेया तदेव दर्शयन्नाह,—एषां समत्वं यच्चापीत्यादि । एतेन साम्यकार्येण स्वास्थ्येन दोषाणां समता ज्ञातव्येत्यर्थः । अतोऽनन्तरं 'समदोषः समाग्निश्च' इत्यादि पठन्ति । व्याख्यानं चास्य पूर्वमेवोक्तम् । इदानीं स्वस्थप्रतिपालनायास्वस्थस्य च स्वास्थ्यकरणायाह,—'स्वस्थस्य रक्षणं कुर्यादस्वस्थस्य तु बुद्धिमान् । क्षपयेद्बृंहयेच्चापि' इत्यादि;" ईदृशं कृत्वा केचित् पाठक्रमं पठन्ति ॥ ४१ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने दोषधातुमलक्षयवृद्धिविज्ञानीयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

**अथातः कर्णव्यधबन्धविधिमध्यायं व्याख्यास्यामः १ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अत्राधिकारानुवृत्तिः संबन्धहेतुः । कथं? स्वस्थाधिकारः; स्वस्थस्य निर्दोषशरीरस्य कर्णव्यधः कर्तव्यः । तदुक्तं **भोजे**—"कालेष्वेतेष्वदोषाणां बालानां कर्णयोर्व्यधे । सह गात्रैर्विवर्धन्ते कर्णपाल्यश्च खानि च" इति । तस्मादत्र स्वस्थवृत्तानुवृत्तिरेव संबन्धकारणम् । पञ्चैव हि संबन्धकारणान्युक्तानि; तद्यथा—अधिकारानुवृत्तिः, शेषत्वं, तादर्थ्यं, जात्यभेदो, नामसंकीर्तनं चेति । भवति चात्र—"तादर्थ्यं जात्यभेदश्च शेषत्वं नामकीर्तनम् । अधिकारानुवृत्तिश्च पञ्च संबन्धहेतवः—" इति ॥ १ ॥ २ ॥

**रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते । तौ षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु कृतमङ्गलस्वस्तिवाचनं धात्र्यङ्के कुमारधराङ्के वा कुमारमुपवेश्य बालक्रीडनकैः प्रलोभ्याभिसान्त्वयन् भिषग्वामहस्तेनाकृष्य कर्णं दैवकृते छिद्र आदित्यकरावभासिते शनैः शनैर्दक्षिणहस्तेनर्जु विध्येत्, प्रतनुकं सूच्या, बहलमारया; पूर्वं दक्षिणं कुमारस्य, वामं कुमार्याः; ततः पिचुवर्तिं प्रवेशयेत् ॥ ३ ॥**

१ 'न किमेतन्निरर्थकम्' इति पा० । २ 'पूर्वाध्यायोक्तस्वस्थाधिकारात्स्वस्थविषयकर्णव्यधबन्धविधिरुच्यते; तेनाधिकारानुवृत्तिरिह संबन्धः' इति चक्रः । ३ 'रक्षेत्याद्यर्थे कुमारतन्त्रं,—"कर्णव्यधे कृते बालो न ग्रहैरभिभूयते । भूष्यतेऽस्य मुखं तस्मात् कार्यस्तत्कर्णयोर्व्यधः" इति । यद्यपि कर्णव्यधेन व्रणिनि बाले रक्षोभयं भवति, तथाऽपि तदल्पकालं प्रतिकर्तव्यं च, तेन चिरकालरक्षार्थं तदल्पं लङ्घ्यत एव' इति चक्रः । ४ 'कुमारधराङ्के' इति ताडपत्रपुस्तके न पठ्यते ।

किंनिमित्तं बालस्य कर्णौ विध्येदित्याह–रक्षेत्यादि । रक्षाभूषणनिमित्तमिति निमित्तशब्दो रक्षाभूषणाभ्यां सह प्रत्येकं संबध्यते; अन्ये तु रक्षणार्थं भूषणानि रक्षाभूषणानि, तन्निमित्तमित्यर्थः । यद्यपि विद्धकर्णत्वाद्व्रणिनि बाले रक्तमांसप्रियत्वाद्रक्षोभयमस्त्येव, तथाऽपि व्रणस्याल्पकालत्वाद्दैवकृतच्छिद्रत्वाद्वा रक्षणार्थं भवति । कस्मिन् काले कर्णस्य व्यधः कर्तव्य इत्याह,—तौ षष्ठे मासि सप्तमे वा शुक्लपक्ष इति; ताविति तौ कर्णौ, षष्ठे मासे सप्तमे वेति नायं जन्मकालादूर्ध्वं किंतु संवत्सरादेर्भाद्रपदाद्यः षष्ठो मासो माघः सप्तमः फाल्गुनस्तयोर्मध्य एकस्मिन्निति । मङ्गलं गीतादि । स्वस्तिवाचनमाशीर्वादोच्चारणम् । धात्र्यङ्के इति धात्री कुमारस्य स्तनपायिनी स्त्री तस्या अङ्के, कुमारधराङ्के वेति बालग्राहिपुरुषस्योत्सङ्गे । बालक्रीडनकैरिति कृत्रिमहस्त्यश्वबलीवर्दशुकादिभिः । अस्याग्रे 'भक्ष्यविशेषैर्वा' इति केचित् पठन्ति, भक्ष्यविशेषैर्मोदकादिभिः । दैवकृते छिद्र इति प्राक्तनजन्मकर्मकृते इत्यर्थः । ऋजु अवक्रम् । कर्णविशेषेण सूचीविशेषविषयं नियमयन्नाह,—प्रतनुकं सूच्येति ।—प्रकर्षेण तनुं कर्णं सूच्या विध्येदित्यर्थः; बहलमारयेति स्थूलकर्णमारया विध्येदित्यर्थः; आरा चर्मकाराणां चर्मभेदनं शस्त्रं, बहलं कठिनमिति **लक्ष्मणटिप्पणकेनोक्तम्** । पुरुषस्त्रीभेदेन प्राक्कर्णव्यधने प्रशस्तत्वेन विशेषमाह,—पूर्वं दक्षिणमित्यादि । कर्णे विद्धे सति किं कार्यमित्याह,—तत इत्यादि । विद्ध्वा च पिचुवर्तिं प्रवेशयेत् ॥ ३ ॥

**शोणितबहुत्वेन वेदनया चान्यदेशविद्धमिति जानीयात्, निरुपद्रवतया तद्देशविद्धमिति ॥ ४ ॥**

अन्यदेशविद्धस्य विज्ञानोपायमाह,—शोणितबहुत्वेनेत्यादि । दैवकृतच्छिद्रविद्धस्य विज्ञानमाह,—निरुपद्रवतयेत्यादि । तद्देशविद्धमिति दैवकृतच्छिद्रविद्धं, 'जानीयात्' इत्यनुवर्तते ॥ ४ ॥

**तत्राज्ञेन यदृच्छया विद्धासु सिरासु कालिकामर्मरिकालोहितिकास्तूपद्रवा भवन्ति । तत्र, कालि-**

१ 'दैवकृते छिद्रे इति दैवेन कर्णव्यधार्थं सूर्यालोकदृश्यमानप्रतनुप्रदेशरूपं सिरादिभी रहितं निर्लोहितागमनं च छिद्रं कृतमस्तीति भावः' इति चक्रः । २ 'पिचुवर्तिरिह तूलसूत्ररूपैव प्रवेशनाहरणसौकर्यात्' इति **हाराणचन्द्रः** । ३ 'ततो वर्तिं प्रवेश्य सम्यग्विद्धमामतैलेन परिषेचयेत्' इति पा० । ४ 'विद्धायां सिरायां ज्वरो दाहः श्वयथुर्वेदना ग्रन्थयो मन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति' इति ताडपत्रपुस्तके पाठः । ५ 'ननु सिराव्यधाध्याये 'कर्णयोश्चतस्रः, तासां शब्दवहामेकैकां परिहरेत्' इत्युक्तं, तदधिकसिराभिधानमिहायुक्तं? न, यतस्तत्र स्थूलविभागेन सिराचतुष्कमुक्तं, इह तु सूक्ष्मसिराभेदेनाधिकं वक्तव्यम्' इति चक्रः ॥

**कायां ज्वरो दाहः श्वयथुर्वेदना च भवति; मर्मरिकायां वेदना ज्वरो ग्रन्थयश्च; लोहितिकायां मन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति । तेषु यथास्वं प्रतिकुर्वीत ॥ ५ ॥**

सिरासु दोषं वक्तुमाह,—तत्राज्ञेनेत्यादि । ज्ञेन तु कालिकालोहितिकयोर्वर्णेनैव परिहारः कर्तव्यः, मर्मरिकायास्तु वर्णानुक्तौ दैवकृतच्छिद्रव्यधनेनेति । प्रत्येकमुपद्रवान् वक्तुमाह,—तत्र कालिकायां ज्वर इत्यादि । कालिकादिव्यधोपद्रवचिकित्सामाह,—तेषु यथास्वमित्यादि । तेषु ज्वरादिषु व्याधिषु; यथास्वं प्रतिकुर्वीतेति यस्य ज्वरादिव्याधेर्यः प्रतीकारस्तेन तं प्रतिकुर्वीतेत्यर्थः ॥५॥

**क्लिष्टजिह्माप्रशस्तसूचीव्यधाद्गाढतरवर्तित्वाद्दोषसमुदायादप्रशस्तव्यधाद्वा यत्र संरम्भो वेदना वा भवति तत्र वर्तिमुपहृत्याशु मधुकैरण्डमूलमञ्जिष्ठायवतिलकल्कैर्मधुघृतप्रगाढैरालेपयेत्तावद्यावत् सुरूढ इति; सुरूढं चैनं पुनर्विध्येत्; विधानं तु पूर्वोक्तमेव ॥ ६ ॥**

कालिकादिव्यधादन्यथाऽपि व्यापदं तच्चिकित्सां च निर्दिशन्नाह,—क्लिष्टजिह्माप्रशस्तेत्यादि । क्लिष्टा अमनोज्ञा, जिह्मा वक्रतमा, अप्रशस्ता यथोक्तगुणहीना । दोषसमुदायादिति दोषप्रकोपात् । अप्रशस्तव्यधाद्वेति अदैवकृतच्छिद्रे व्यधाद् गर्हितशस्त्रादिव्यधाद्वा । संरम्भः श्वयथुः । केचित् 'क्लिष्टजिह्माप्रशस्तसूचीव्यधाद्गाढतरवर्तित्वात्' इति न पठन्ति, 'दोषसमुदायात्' इत्यादि च पठन्ति, 'सुरूढं चैनं पुनर्विध्येत्' इति च न पठन्ति ॥ ६ ॥

**तत्र सम्यग्विद्धमामतैलेन परिषेचयेत्, त्र्यहात्र्यहाच्च वर्तिं स्थूलतरां दद्यात्, परिषेकं च तमेव ७**

दुर्विद्धे व्यापच्चिकित्सां प्रतिपाद्य सम्यग्विद्धे चिकित्सामाह,—तत्रेत्यादि । आमतैलेनेति अपक्वतैलेन, तिलकल्कनिष्पीडनेन सुष्ठितः परिस्रुतेनेत्यर्थः; तमेवेति आमतैलपरिषेकमेवेत्यर्थः ॥७॥

**अथ व्यपगतदोषोपद्रवे कर्णे वर्धनार्थं लघु वर्धनकं कुर्यात् ॥ ८ ॥**

गतोपद्रवे कर्णे वर्धनोपायमाह,—अथेत्यादि । लघुवर्धनकमिति दोषविशेषादपामार्गनिम्बकार्पासादीनां काष्ठानामन्यतमस्य, अथवा सीसकादिघटितं धत्तूरपुष्पाकृतिं कुर्यात् ॥ ८ ॥

**एवं विवर्धितः कर्णश्छिद्यते तु द्विधा नृणाम् ॥
दोषतो वाऽभिघाताद्वा सन्धानं तस्य मे शृणु ९**

एवमित्यादि । दोषत इति दोषशब्दो व्याधिष्वपि वर्तते, तेन दोषैर्वातादिभिस्तज्जनितव्याधिभिर्वेत्यर्थः । अभिघाताद्वेति पतनपीडनादिभिः ॥ ९ ॥

१ 'संरम्भः श्वयथुदाहादियोगः' इति चक्रः । २ 'आमतैलमिति अभिनवापक्वतैलम्' इति चक्रः । ३ 'दोषापेक्षया प्रकृत्यपेक्षया वा' इति चक्रः । ४ 'सीसकादिवीटिकां' इति पा० । ५ 'दोषत इति शरीरदोषक्षोभात्' इति चक्रः ।

**तत्र समासेन पञ्चदशकर्णबन्धाकृतयः । तद्यथा—नेमिसन्धानक उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्यो निर्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति । तेषु, पृथुलायतसमोभयपालिर्नेमिसन्धानकः; वृत्तायतसमोभयपालिरुत्पलभेद्यकः; ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः; अभ्यन्तरदीर्घैकपालिरासङ्गिमः; बाह्यदीर्घैकपालिर्गण्डकर्णः; अपालिरुभयतोऽप्याहार्यः; पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्वेधिमः; स्थूलाणुसमविषमपालिर्व्यायोजिमः; अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः; बाह्यदीर्घैकपालिरितराल्पपालिरर्धकपाटसन्धिकः । तत्र दशैते कर्णबन्धविकल्पाः साध्याः; तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः । संक्षिप्तादयः पञ्चासाध्याः । तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः; अनधिष्ठानपालिः पर्यन्तयोः क्षीणमांसो हीनकर्णः; तनुविषमाल्पपालिर्वल्लीकर्णः; ग्रथितमांसस्तब्धसिराततसूक्ष्मपालिर्यष्टिकर्णः; निर्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठक इति । बद्धेष्वपि तु शोफदाहरागपाकपिडकास्रावयुक्ता न सिद्धिमुपयान्ति ॥ १० ॥**

इदानीं संधेयस्य सन्धानायासंधेयस्य परिहाराय चाह,—तत्रेत्यादि । समासेन संक्षेपेण, विस्तरेण तु कर्णबन्धा अमिताः,

१ 'तत्रेत्यादिना बन्धविशेषार्थं तथाऽसंधेयकर्णपरित्यागार्थं च पाल्याकृतिविशेषानाह । यद्यपि दशकर्णा अत्र बन्धनार्हा वक्तव्याः, पञ्चासाध्यत्वान्न बन्ध्याः, तथाऽपि पञ्चदशकर्णबन्धाकृतय इति वचनादबन्ध्यानामपि बन्धसंभावनामात्रं बन्धसंबन्धाज्ज्ञेयम् । ये तु 'कर्णाकृतयः' इति पठन्ति तद्ग्रन्थः स्पष्ट एव । नेमिसन्धानक इति नेमिसंधानबन्धेन बन्धनीयः; एवमुत्पलभेद्यकादावपि व्याख्येयम् । वृत्तेत्यादौ पूर्वस्माद्वृत्तत्वं पाल्योर्विशेषः, अत एवोत्पलतुल्यतयोत्पलभेद्यको बन्धो भवति । ह्रस्वेत्यादावनतिदीर्घत्वं पूर्वस्माद्विशेषः । आभ्यन्तरैकपालेर्बहिरासञ्जनादासङ्गिमः । बाह्यैकपालेस्तु गण्डात् कृत्तेन मांसेन योजनाद् गण्डकर्णः । अभ्यन्तरो गण्डदेशः, एतद्विपर्ययेण बाह्यः । निर्वेधिम इति पुनः प्रदेशान्तरवेधेन निष्पन्नः । अणुस्थूलसमविषमपालिरिति अणुस्थूलत्वाभ्यां पालिरेका समा अपरा विषमा यस्य स तथा । तत्र वैषम्यं लिखित्वा बन्धेन योज्यत इति व्यायोजिमः । अभ्यन्तरदीर्घैकपाल्या बाह्यपालेः पूर्णपिधानात् कपाटसन्धिकः । बाह्यदीर्घैकपाल्या तु अभ्यन्तरह्रस्वपालेरल्पपिधानादर्धकपाटसंधिको भवति । निर्मांसेत्यादौ काकौष्ठसदृशत्वात् काकौष्ठकः' इति चक्रः । २ 'दशैते साध्याः' इति चक्रसंमतः पाठः । ३ 'शुष्कशष्कुल्यादिवः संकुचितो बन्धः संक्षिप्तः' इति हाराणचन्द्रः । ४ 'संवेधितस्य' इति पा० ।

पुत्रिकाया अधः । तुशब्द एवार्थः । प्रच्छानमेव लिति एव-शब्द ईषदर्थे, ईषच्छेदनं; तुशब्दोऽयमप्यर्थः, तेन कर्णपुत्रिकाया अध एव छेदनं, तदपीषदेव कार्यमित्युक्तं भवति । 'तेषामपाङ्गच्छेद्यं हि कार्यमाभ्यन्तरं भवेत्' इति केचित् पठन्ति, अपाङ्गपुत्रिकाया अधः कर्णानुकूलमाभ्यन्तरं छेद्यं प्रच्छयेद्वा । बाह्यच्छेदं कर्णबाह्यलतिकाच्छेदम् । व्यापदः कर्णलतिकात्रुटनादयः; 'व्याधयः स्युः' इत्यन्ये पठन्ति ॥ २२ ॥ २३ ॥

वद्धमात्रं तु यः कर्णं सहसैवाभिवर्धयेत् ॥
आमकोशी समाध्मातः क्षिप्रमेव विमुच्यते ॥२४॥

अरूढकर्णस्य वर्धने दोषमाह—वद्धमात्रमित्यादि । आमकोशीति असम्यग्रूढमध्यः । केचिदमुं न पठन्ति ॥ २४ ॥

जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः ॥
सुरूढोऽवेदनो यश्च तं कर्णं वर्धयेच्छनैः ॥ २५ ॥

कीदृशः पुनर्वर्धनीयस्तमाह,—जातरोमेत्यादि । सुवर्त्मेति शोभनच्छिद्रः, श्लिष्टसन्धिः संलग्नसन्धिः; समो निम्नोन्नतत्वरहितः, स्थिरो दृढः ॥ २५ ॥

अमिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह ॥
यो यथा सुविशिष्टः स्यात्तं तथा विनियोजयेत् ॥
( कर्णपाल्यामयान्नॄणां पुनर्वक्ष्यामि सुश्रुत ! ॥
कर्णपाल्यां प्रकुपिता वातपित्तकफास्त्रयः ॥ १ ॥
द्विधा वाऽप्यथ संसृष्टाः कुर्वन्ति विविधा रुजः॥
विस्फोटः स्तब्धता शोफः पाल्यां दोषे तु वातिके
दाहविस्फोटजननं शोफः पाकश्च पैत्तिके ॥
कण्डूः सश्वयथुः स्तम्भो गुरुत्वं च कफात्मके॥३॥
यथादोषं च संशोध्य कुर्यात्तेषां चिकित्सितम् ॥
स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः ॥ ४ ॥
मृद्वीं क्रियां बृंहणीयैर्यथास्वं भोजनैस्तथा ॥
य एवं वेत्ति दोषाणां चिकित्सां कर्तुमर्हति ॥ ५ ॥
अत ऊर्ध्वं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान् ॥
उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो भृशम्॥६॥
अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा ॥
स्रावी च दाहवांश्चैव शृण्वेषां क्रमशः क्रियाम्॥७
अपामार्गः सर्जरसः पाटलालकुचत्वचौ ॥
उत्पाटके प्रलेपः स्यात्तैलमेभिश्च पाचयेत् ॥ ८ ॥
शम्पाकशिग्रुपूतीकान् गोधामेदोऽथ तद्वसाम्॥
वाराहं गव्यमैणेयं पित्तं सर्पिश्च संसृजेत् ॥ ९ ॥
लेपमुत्पुटके दद्यात्तैलमेभिश्च साधितम् ॥
गौरीं सुगन्धां सश्यामामनन्तां तण्डुलीयकम्१०
श्यावे प्रलेपनं दद्यात्तैलमेभिश्च साधितम् ॥
पाठां रसाञ्जनं क्षौद्रं तथा स्यादुष्णकाञ्जिकम्११
दद्याल्लेपं सकण्डूके तैलमेभिश्च साधितम् ॥
व्रणीभूतस्य देयं स्यादिदं तैलं विजानता ॥ १२ ॥
मधुकक्षीरकाकोलीजीवकाद्यैर्विपाचितम् ॥
गोधावराहसर्पाणां वसाः स्युः कृतबृंहणे ॥ १३ ॥
प्रलेपनमिदं दद्यादवसिच्यावमन्थके ॥
प्रपौण्डरीकं मधुकं समङ्गां धवमेव च ॥ १४ ॥
तैलमेभिश्च संपक्वं शृणु कण्डूमतः क्रियाम् ॥
सहदेवा विश्वदेवा अजाक्षीरं ससैन्धवम्
एतैरालेपनं दद्यात्तैलमेभिश्च साधितम् ॥ १५ ॥
ग्रन्थिके गुटिकां पूर्वं स्रावयेदवपाट्य तु ॥
ततः सैन्धवचूर्णं तु घृष्ट्वा लेपं प्रदापयेत् ॥ १६ ॥
लिखित्वा तत्स्रुतं घृष्ट्वा चूर्णैर्लोध्रस्य जम्बुले ॥
क्षीरेण प्रतिसार्यैनं शुद्धं संरोपयेत्ततः ॥ १७ ॥
मधुपर्णी मधूकं च मधुकं मधुना सह ॥
लेपः स्राविणि दातव्यस्तैलमेभिश्च साधितम् १८
पञ्चवल्कैः समधुकैः पिष्टैस्तैश्च घृतान्वितैः ॥
जीवकाद्यैः ससर्पिष्कैर्दह्यमानं प्रलेपयेत् ॥ १९ ॥)

कर्णपालिच्छेदविशेषेण कर्णसन्धिबन्धानामपरिमितत्वादनुक्तमपि प्रकारं दर्शयन्नाह,—अमिता इत्यादि । 'सुविशिष्ट' इत्यत्र केचित् 'सुनिविष्टः' इति पठन्ति । केचिदत्रैवाध्याये कर्णपाल्यामयान् परिपोटादीन् पठन्ति, अन्ये तु सलिङ्गचिकित्सितान् मिश्रकचिकित्सिते पठन्ति; तांश्च तत्रैव व्याख्यास्यामः । अन्ये तु सुश्रुताध्यायिनोऽत्र 'कर्णपाल्यामयानन्यान् वक्ष्यामि चतुरः पृथक्' इत्यादिकं ग्रन्थं सचिकित्सितं पठन्ति, स त्वाचार्यैरनार्षीकृतः; तस्मान्न पठनीयः । अपरे पुनरत्रैवोत्पाटकादीन् सचिकित्सितान् पठन्ति, अमुमपि पाठमनार्षमाचार्या वर्णयन्ति, अतोऽयमपि न पठितव्यः ॥ २६ ॥

विश्लेषितायास्त्वथ नासिकाया
वक्ष्यामि सन्धानविधिं यथावत् ॥
नासाप्रमाणं[1] पृथिवीरुहाणां
पत्रं गृहीत्वा त्ववलम्ब्य[2] तस्य ॥ २७ ॥

---

१ 'नासाप्रमाणं नासाया वियोजितांशपरिमितं पृथिवीरुहाणां पत्रं गृहीत्वा, तेन प्रमाणेन गण्डपार्श्वाल्ललाटाद्वा अवलम्ब्य शोणितप्रचारार्थमेकांशेन शरीरसंश्रयि यथा स्यात्तथा उत्कृत्य यथायोगं छित्त्वा 'त्वङ्मांसं' इति शेषः, वद्धं यन्त्रादिना संयतमेव, नासिकाग्रं नासिकाया विश्लेषितांशोपरिभागं तद्गतत्वङ्मात्रमिति यावत् न त्ववगाढमिति तात्पर्यं, अथ कात्स्र्न्येनाशु विलिख्य शस्त्रेण लिखित्वाऽप्रमत्तो भिषग् साधुबन्धैः सूच्यादिप्राशस्त्येनोपपन्नैर्बन्धनैस्तत्प्रागुत्कृत्तं त्वङ्मांसं प्रति अभिमुखीकृत्य, युक्त्या वामतो दक्षिणतो वा आवर्त्यानीय, लिखितावकाशे न्युब्जीकृत्य स्थापयित्वेति यावत्, संदधीत संदध्यात् । अथोऽनन्तरं यथावदभिसमीक्ष्य विमृश्य, नाडीद्वयेनेति श्वासप्रचारार्हैणैवैनां नासिकां प्रोण्णम्य किञ्चिदुन्नतां कृत्वा, सम्यक् सुसंहितं संमिलितं यथास्यात्तथा नाड्यग्रपार्श्वप्रणिहितया पिचुवर्त्या संयम्य, पत्तङ्गादिभिरवचूर्णयेत्' इति हाराणचन्द्रः । २ 'त्ववलम्ब्य' इति पा० ।

तेन प्रमाणेन हि गण्डपार्श्वा-
दुत्कृत्य बद्धं त्वथ नासिकाग्रम्॥
विलिख्य चाशु प्रतिसंदधीत
तत् साधुबन्धैर्भिषगप्रमत्तः॥ २८॥
सुसंहितं सम्यगतो यथाव-
न्नाडीद्वयेनाभिसमीक्ष्य बद्ध्वा॥
प्रोन्नम्य चैनामवचूर्णयेत्तु
पतङ्गयष्टीमधुकाञ्जनैश्च॥ २९॥
संछाद्य सम्यक् पिचुना सितेन
तैलेन सिञ्चेदसकृत्तिलानाम्॥
घृतं च पाय्यः स नरः सुजीर्णे
स्निग्धो विरेच्यः स यथोपदेशम्॥३०॥
रूढं च सन्धानमुपागतं स्या-
त्तदर्धशेषं तु पुनर्निकृन्तेत्॥
हीनां पुनर्वर्धयितुं यतेत
समां च कुर्यादतिवृद्धमांसाम्॥ ३१॥

विश्लेषिताया इत्यादि। विश्लेषिताया इति छिन्नायाः। पृथिवीरुहाणां वृक्षाणाम्। तस्येति छिन्ननासिकस्य पुरुषस्य। तेन प्रमाणेनेति वृक्षपत्रप्रमाणेन। उत्कृत्येति ऊर्ध्वं छेदयित्वा। बद्धमिति संलग्नं यथा स्यात्, 'मांसं' इति शेषः। तदिति नासिकाग्रम्। साधुबन्धैरिति शोभनबन्धैः कृत्वा। अप्रमत्तः सावधानः। सुसंहितमित्यादि। सुसंहितं सम्यगभिसमीक्ष्य, नाडीद्वयेन यथावद्बद्ध्वा, प्रोन्नम्य च प्रकृष्टं यथा स्यादेवमुत्थाप्य, एनां नासिकामवचूर्णयेदिति संबन्धः। नाडीद्वयमत्र नलकृतमेरण्डपत्रनालकृतं वा, न तु सीसकादिवी(वी)टिका; कुतः? सा हि गुरुत्वादधो गच्छति। पतङ्गं रक्तचन्दनम्, अञ्जनं रसाञ्जनम्। सितेन शुक्लेन। तैलेनेत्युक्ते तिलतैलं लब्धं, तिलानामिति यत् कृतं तत् प्रतिनिधितैलनिषेधार्थम्। पाय्यः पाययितव्यः। सुजीर्णे भोजने। अन्ये त्वेवं पठन्ति,—"छिन्नां तु नासिकां दृष्ट्वा वयःस्थस्य शरीरिणः। नासानुरूपं संच्छिद्य पत्रं गण्डे निवेशयेत्"—इत्यादि॥ २७—३१॥

नाडीयोगं विनौष्ठस्य नासासन्धानवद्विधिम्॥
य एवमेव जानीयात् स राज्ञः कर्तुमर्हति॥ ३२॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने कर्णव्यधबन्धविधिर्नाम षोडशोऽध्यायः॥ १६॥

अतश्छिन्नस्यौष्ठस्य संधानमाह,—नाडीयोगमित्यादि। ओष्ठस्य संधानविधिर्नासासन्धानवत् कर्तव्यः; परं नाडीयोगं विना। अर्हति योग्यो भवति। इदं नासासन्धानौष्ठसंधानसूत्रं पूर्वाचार्यैरनार्षीकृतमपि जेज्झटगयदासादिभिरङ्गीकृतं सुबोधत्वाच्च न व्याख्यातं, तैरङ्गीकृतत्वादस्माभिरपि संगृहीतं, सुबोधमपि च वैद्यपुत्रबोधार्थं व्याख्यातम्। दाक्षिणात्यास्तु भिषजः कर्णस्योपरि कोटिव्यधमत्र पठन्ति। सोऽप्यत्राप्रसिद्धेरनार्षः॥ ३२॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने षोडशोऽध्यायः॥ १६॥

## सप्तदशोऽध्यायः।

अथात आमपक्वैषणीयमध्यायं व्याख्यास्यामः १
यथोवाच भगवान् धन्वन्तरिः॥ २॥

अथात इत्यादि। आमशब्दात् पच्यमानोऽप्यत्र बोद्धव्यः। आमश्च पच्यमानश्च पक्वश्च तेषामेषणं विज्ञानं तद्विद्यते यस्मिन्नध्याये तं तथा॥ १॥ २॥

शोफसमुत्थाना ग्रन्थिविद्रध्यलजीप्रभृतयः प्रायेण व्याधयोऽभिहिता अनेकाकृतयः, तैर्विलक्षणः पृथुर्ग्रथितः समो विषमो वा त्वङ्मांसस्थायी दोषसंघातः शरीरैकदेशोत्थितः शोफ इत्युच्यते॥ ३॥

शोफसमुत्थाना इत्यादि। शोफसमुत्थाना इति शोथकारणाः, 'शोफस्यैव समुत्थानं येषाम्' इत्यन्ये। प्रायेणेति बाहुल्येन, कदाचिच्छिन्नसमुत्थाना अपि भवन्ति। तैर्विलक्षण इति तेभ्यो ग्रन्थ्यादिभ्यो व्याधिभ्यः पृथगित्यर्थः; 'तैर्ग्रन्थ्यादिव्याधिभिः कृत्वा विलक्षणो नानाप्रकारः' इत्यन्ये। पृथुर्विस्तीर्णः। ग्रथितो ग्रन्थिरिवोन्नतः, 'जातबहुग्रन्थिः' इत्यन्ये। समः समसंस्थानः, विषमो वेति विषमसंस्थानो वा, एतेन व्रणशोफस्याकृतेरनियम उक्तः। त्वङ्मांसस्थायीति एतत्तु प्रायेण, कुतः? शेषव्रणवस्तुष्वपि व्रणशोफस्य संभवात्। दोषसंघात इति एकस्य द्वयोर्बहूनां वा दोषाणां संघातो दोषसंघातः; संघात उच्छ्रायः। शरीरैकदेशोत्थित इति एतेन सर्वसराद्भिन्नत्वं प्रतिपादयति॥ ३॥

स षड्विधो वातपित्तकफशोणितसन्निपातागन्तुनिमित्तः। तस्य दोषरूपव्यञ्जनैर्लक्षणानि व्याख्यास्यामः। तत्र, वातशोफः कृष्णोऽरुणो वा परुषो मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषा भवन्ति; पित्तशोफः पीतो मृदुः सरक्तो वा शीघ्रानुसार्योषादयश्चात्र वेदनाविशेषा भवन्ति; श्लेष्मश्वयथुः पाण्डुः कठिनः स्निग्धः शीतो

१ 'पूर्वाध्याये 'शोथवान् भवति' इत्यनेन शोथोऽभिहितः; तस्य चामता पक्वता च चिकित्साविशेषार्थं ज्ञेया भवति, अतस्तदभिधानार्थमामपक्वैषणीयोऽभिधीयते।' इति चक्रः। २ 'अभिभाषन्ते' इति पा०। ३ 'शोथरूपतयोत्थिता इति शोथसमुत्थानाः। तेभ्यो विलक्षण इति वक्ष्यमाणविशिष्टलक्षणत्वादेव विलक्षणः। त्वङ्मांसस्थायित्वेन त्वङ्मांसस्थत्वमवश्यंभावितयोक्तम्, एकदेशोत्थितत्वेन सर्वसरशोथादपाकिनो व्यावर्तयति। शोथ इत्युच्यत इति प्रकरणाद् 'व्रणशोथ' इत्युच्यत इति ज्ञेयम्' इति चक्रः। ४ 'तस्येत्यनेन यद्यपि व्रणशोथ इह प्रत्यवमृश्यते, तथाऽपि ग्रन्थ्यादीनामप्येतदेवामादिलक्षणं समानतयोक्तं ज्ञेयम्' इति चक्रः। ५ 'दाहादयः' इति पा०।

स्निग्धो मन्दानुसारी कण्ड्वादयश्चात्र वेदनाविशेषा भवन्ति; सर्ववर्णवेदनः सन्निपातश्वयथुः; पित्तवच्छोणितजोऽतिकृष्णश्च; पित्तरक्तलक्षण आगन्तुर्लोहितावभासश्च ॥ ४ ॥

स इत्यादि । तस्य व्रणशोफस्य । दोषरूपव्यञ्जनैरिति वातादिरूपैर्वातादिलक्षणैश्चेत्यर्थः; 'दोषरूपव्यञ्जनैः दोषाणां वातादीनां रूपाण्याकृतयो व्यज्यन्त एभिरिति व्यञ्जनानि' इत्यन्ये । तत्रेत्यादि । अनवस्थितः चलः । तोदादयश्चेति आदिशब्दाद्भेदनच्छेदनादयः । पित्तशोफ इत्यादि । ओषादयश्चेति आदिशब्दाच्चोषपरिदाहधूमायनानि गृह्यन्ते । श्लेष्मशोफः पाण्डुरित्यादि । कण्ड्वादयश्चेति आदिशब्दाद्गुरुत्वसुप्तत्वादयः । आगन्तुरिति पतनपीडनादिकृतः ॥ ४ ॥

स यदा बाह्याभ्यन्तरैः क्रियाविशेषैर्न संभावितः प्रशमयितुं क्रियाविपर्ययाद्बहुत्वाद्वा दोषाणां तदा पाकाभिमुखो भवति । तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमुपधारय—। तत्र, मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्यं मन्दवेदनताऽल्पशोफता चामलक्षणमुद्दिष्टं; सूचिभिरिव निस्तुद्यते, दश्यत इव पिपीलिकाभिः, ताभिश्च संसर्प्यत इव, छिद्यत इव शस्त्रेण, भिद्यत इव शक्तिभिः, ताड्यत इव दण्डेन, पीड्यत इव पाणिना, घट्ट्यत इव चाङ्गुल्या, दह्यते पच्यत इव चाग्निक्षाराभ्याम्, ओषचोषपरीदाहाश्च भवन्ति, वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति, आध्मातबस्तिरिवाततश्च शोफो भवति, त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासा भक्तारुचिश्च पच्यमानलिङ्गं; वेदनोपशान्तिः पाण्डुताऽल्पशोफता वलीप्रादुर्भावस्त्वक्परिपुटनं निम्नदर्शनमङ्गुल्याऽवपीडिते प्रत्युन्नमनं, बस्ताविवोदकसंचरणं पूयस्य प्रपीडयत्येकमन्तमन्ते चावपीडिते, मुहुर्मुहुस्तोदः कण्डूरुन्नतता व्याधेरुपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्वलिङ्गम् । कफजेषु तु रोगेषु गम्भीरगतित्वादभिघातजेषु वा केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो भिषङ्मोहमुपैति; तत्र हि त्वक्सवर्णता शीतशोफता स्थैर्यमल्परुजताऽश्मवच्च घनता, न मोहमुपेयादिति ॥ ५ ॥

स यदेत्यादि । बाह्याभ्यन्तरैरिति बाह्या आलेपनादयः, आभ्यन्तराः क्वाथपानवमनविरेचनादयः, तैः प्रशमयितुं न संभावितो न पारितः, 'न प्राप्तः' इत्यन्ये । क्रियाविपर्ययादिति अतर्पणादीनामन्यथाभावात् । हेत्वन्तरमाह—बहुत्वाद्वा दोषाणामिति।—न हि बहुदोषा विकाराः शोणितावसेकादिभिरेव प्रशमं यान्ति; यदुक्तम्,—"आलेपनस्रावणशोधनैश्च सम्यक्प्रयुक्तैर्यदि नोपशाम्येत्—" इति । तत्रेत्यादि । स्थैर्यं काठिन्यम् । सूचीभिरिवेत्यादि । निस्तुद्यते भृशं व्यथ्यते, निःशब्दोऽत्र भृशार्थे । ताभिः पिपीलिकाभिः । छिद्यत इव द्विधा क्रियत इव । भिद्यते विदार्यत इव । शक्तिरायुधविशेषः । ताड्यते आहन्यत इव । दण्डो लगुडः । घट्ट्यते चाल्यत इव । दह्यते पच्यत इव च क्षाराग्निभ्यामिति यथासंख्यं व्याख्येयं, तेन दह्यते भस्मसात् क्रियत इवाग्निना, पच्यते अङ्गारतापैरुपतप्यत इव क्षारेण । ओष एकदेशिको दाहः, चोषः चूष्यत इव वेदनाविशेषः । परि समन्ताद्दाहः परिदाहः । आततः त्वक्संकोचरहितः । वेदनोपशान्तिरित्यादि । त्वक्परिपुटनं त्वच उत्पाटनम् । प्रत्युन्नमनम् आभिमुख्येनोर्ध्वं नमनम् । बस्ताविवेत्यादि । यथा बस्तावुदकसंचरणं भवति तद्वद्वैद्ये एकमन्तमवयवं प्रपीडयति सति पूयस्य संचरणं शोफे भवतीत्यर्थः । मुहुर्मुहुस्तोदो वातवेदना; कण्डूः श्लेष्मवेदना; पक्वशोथे विदाहापगमेन पित्ताभावात्तल्लिङ्गाभावः । उन्नतता व्याधेः उन्नतशोफः । उपद्रवा ओषपरिदाहादयः । कफजेष्वित्यादि । कफजेषु रोगेष्विति रोगोऽत्र शोफः । तत्र विषये कफजेष्वतिगम्भीरगतित्वात्, अभिघातजेषु वा केषुचिद्दूरानुप्रविष्टशल्यादिहेतुत्वात् । तत्र हि त्वक्सवर्णतेत्यादि । तत्रेति कफजेऽभिघातजे च शोफे । त्वक्सवर्णता न तु त्वग्वैवर्ण्यं, गम्भीरगतित्वादन्तःपाकः, बहिः पुनस्त्वक्सावर्ण्यमेव । शीतशोफता बहिः, अन्तः पुनरुष्णत्वं, गम्भीरगतित्वात् कफारब्धत्वाच्च । अल्परुजता कफारब्धत्वात् । अश्मवद्घनता शिलावत् काठिन्यं, कफारब्धत्वाद्बहिःपाकत्वाच्चेति । न मोहमुपेयादिति न तत्र मोहं गच्छेत्, एभिः पक्वलक्षणैः पक्वमेव जानीयादित्यर्थः । 'न मोहमुपेयाद्यतस्तं रक्तपाकमाचक्षते वृद्धाः' इत्यन्ये ॥ ५ ॥

भवन्ति चात्र—

आमं विपच्यमानं च सम्यक् पक्वं च यो भिषक् ॥
जानीयात् स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥६॥

१ 'दोषरूपैः कृष्णादिभिः, व्यञ्जनैश्च तदितरैर्वेदनादिभिः' इति चक्रः । २ 'शक्यते' इति पा० । ३ 'संसृप्यत इव' इति पा० । ४ 'छिद्यते भिद्यत इव शक्तिभिः' इति पा० । ५ 'भवति' इति हस्तलिखितपुस्तके न पठ्यते । ६ 'बस्तावुदकसंचरणमिव पूयस्य संचरणमिति योजना, अन्ते एकस्मिन् पार्श्वेऽवपीडिते एकमन्तरमपरपार्श्वं प्रपीडयत्याक्रामति वेगेन पूरयति पूय इत्यर्थः' इति हाराणचन्द्रः । ७ 'कण्डूरनुन्नतता' इति पा० । ८ 'गम्भीरानुगतत्वात्' इति पा० । ९ 'यत्र' इति पा० ।

१ 'न तत्र' इति पा० । २ 'यत्र तु कफजेष्वभिघातजेषु वा रोगेषु गम्भीरगतित्वात् प्रपाकप्रतियोगीन्येतानि लिङ्गानि दृश्यन्ते न तत्र मोहमुपेयात्, शेषलक्षणेनैव पक्वं विजानीयादित्यर्थः' इति हाराणचन्द्रः । 'कफजे गम्भीरे तथा शस्त्रजे च गम्भीरे अन्तःपाके शीततादि भवति, तत्रान्तर्दाहादिना पाकादिकावधारणं, न तत्र मोहमुपेयादिति शेषविदाहादिपूर्वलक्षणैः पाकं जानीयात्' इति चक्रः ।

आमादिलक्षणज्ञाने गुणमज्ञाने दोषं च दर्शयन्नाह—आममित्यादि । शेषा अन्ये आमादिज्ञानवर्जिताः । तस्कराश्चौराः, तेषामिव वृत्तिर्येषां, प्राणधनापहारित्वात् ॥ ६ ॥

**[1]वाताहते नास्ति रुजा न पाकः**
**पित्ताहते नास्ति कफाच्च पूयः ॥**
**तस्मात् समस्तान् परिपाककाले**
**पचन्ति शोफांस्त्रय एव दोषाः ॥ ७ ॥**
**कालान्तरेणाभ्युदितं तु पित्तं**
**कृत्वा वशे वातकफौ प्रसह्य ॥**
**पचत्यतः शोणितमेव पाको**
**मतोऽपरेषां विदुषां द्वितीयः[2] ॥ ८ ॥**

एकदोषारब्धा अपि पाककाले सर्वदोषाश्लिष्टा भवन्तीत्याह—वातादित्यादि । ऋतेशब्दः कफाच्चेत्यत्रापि संबध्यते । 'त्रिभिरेव शोणितचतुर्थैः शरीरमिदं धार्यते' ( सू. अ. २१ ) इति द्वितीयं दर्शनं दर्शयन्नाह—कालान्तरेणेत्यादि । कालान्तरेणेति अन्तरशब्दोऽत्रावधिवाची, प्रकोपप्रसरस्थानसंश्रयकालावधिना । अभ्युदितं तु पित्तमिति समन्ततो भावेन पुनरुद्धतं पित्तं, कृत्वा वशे वातकफौ वातश्लेष्माणौ हीनौ कृत्वा, प्रसह्य बलात्कारेण वशे कृत्वा, 'कोडीकृत्य' इत्यन्ये । मतः संमतः ॥ ७ ॥ ८ ॥

**तत्र, आमच्छेदे मांससिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं शोणितातिप्रवृत्तिर्वेदनाप्रादुर्भावोऽवदरणमनेकोपद्रवदर्शनं क्षतविद्रधिर्वा भवति । स यदा भय[3]मोहाभ्यां पकमप्यपकमिति मन्यमानश्चिरमुपेक्षते व्याधिं वैद्यस्तदा गम्भीरानुगतो द्वारमलभमानः पूयः स्वमाश्रयमवदार्योत्सङ्गं महान्तमवकाशं कृत्वा नाडीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति ॥ ९ ॥**

आमं न छिन्द्यात् पक्कं नोपेक्षेतेति दर्शयन्नाह,—तत्रेत्यादि । आमच्छेदे इति आमशब्दात् पच्यमानस्यापि ग्रहणात्तत्राप्येते[1] दोषाः । व्यापादनं हिंसनम् । अवदरणं विदरणम् । क्षतविद्रधिः 'तैस्तैर्भावैरभिहते क्षते वा' ( नि. अ. ९ ) इत्यादिविद्रधिनिदानोक्तः । स यदेत्यादि । मोहः अज्ञानम् । चिरं प्रभूतकालम् । गम्भीरानुगतः दूरानुप्रविष्टः । उत्सङ्ग इवोत्सङ्गः, व्रणाशये हि चिरकालं पूयावस्थानेनावदारितमन्तःप्रदेशान्तरं निम्नमुत्सङ्गतुल्यत्वात् 'उत्सङ्ग' इत्युच्यते; 'उत् ऊर्ध्वं पूयस्य सङ्ग उत्सङ्गः' इत्यन्ये । अवकाशम् अन्तरालम् ॥ ९ ॥

**भवति चात्र—**
**यश्छिनत्त्याममज्ञानाद्यश्च पक्कमुपेक्षते ॥**
**श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥१०॥**

अस्यैवार्थस्य निन्दार्थवादपरं श्लोकमाह—यश्छिनत्त्याममित्यादि । पक्कं शोफं शस्त्रकर्मार्हम् । श्वपचाविव चण्डालाविव । मन्तव्यौ ज्ञातव्यौ । तौ द्वौ । अनिश्चितकारिणौ आमच्छेदनपक्कोपेक्षणात्; अन्ये तु 'तौ नरौ श्वपचतुल्यावातुरव्यापादनात् । तद्व्यापादनं तौ कुतो विधत इत्याह—अनिश्चितकारिणौ यतोऽसमीक्ष्य विधायिनौ वैद्यौ' ॥ १० ॥

**प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदातुरं भिषक् ॥**
**मद्यपं पाययेन्मद्यं तीक्ष्णं यो वेदनाऽसहः[2] ॥११॥**
**न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥**
**तस्मादवश्यं भोक्तव्यं रोगेषूक्तेषु कर्मणि ॥ १२ ॥**
**[3]प्राणो ह्याभ्यन्तरो नृणां बाह्यप्राणगुणान्वितः ॥**
**धारयत्यविरोधेन शरीरं पाञ्चभौतिकम् ॥ १३ ॥**

पक्के शोफे शस्त्रकर्मार्हे पूर्वकर्माह—प्रागित्यादि । इष्टं हितं हितकारि; अन्ये त्विष्टमभिप्रेतमपथ्यमपि तद्बलाधानार्थं भोजयेत् । यो वेदनां न सहते तं तीक्ष्णं मद्यं पाययेत् परं मद्यपम् । अस्यैव च फलमाह—न मूर्च्छत्यन्नसंयोगादित्यादि । शस्त्रं न बुध्यते शस्त्रवेदनां न जानातीत्यर्थः । रोगेषूक्तेष्विति मूढगर्भोदरार्शोऽश्मर्यादिवर्जितेषु, कर्मणि शस्त्रप्रयोगे प्राप्ते, अवश्यं ध्रुवं भोक्तव्यम् । कस्मादुक्तेषु रोगेषु भोजयेदित्याह,—प्राण इत्यादि ।—प्राणो ह्याभ्यन्तर इति अत्राभ्यन्तरः प्राणो बलं, तच्चौजोजनितं भारहरणादिशक्तिलक्षणम् । बाह्यप्राणगुणान्वित इति बाह्यप्राणोऽत्र बाह्यं बलमुपचयलक्षणं पाञ्चभौतिकाहारजनितं, गुणाः शरीरदार्ढ्यादिकाः, तैरन्वितः संयुक्तः सन्नाभ्यन्तरः प्राणः शक्तिलक्षणः शरीरं धारयतीत्यर्थः । अन्ये त्वन्यथा व्याख्यानयन्ति—प्राणो ह्याभ्यन्तर इति; 'संपन्नो यवः' इतिवज्जातिविवक्षयेहैकवचनं, तेनात्राग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेत्याभ्यन्तराः प्राणाः, बाह्यप्राणा आग्नेयसौम्यवायव्यद्रव्याणि दिवसो वायू रात्रिः शब्दस्पर्शरूपरसगन्धाश्चेति, तेषां गुणाः, तैरन्वितोऽनुगतः सन्नाभ्यन्तरः प्राणः शरीरं धारयतीत्यर्थः ।

---

१ 'नर्ते रुजा वातमृते च पित्तं पाकः कफं चापि विना न पूयः । तस्माद्विपाकं परिपाककाले प्रयान्ति शोफास्त्रिभिरेव दोषैः' इति ताडपत्रपुस्तके पाठान्तरम् । २ अस्याग्रे ताडपत्रपुस्तके 'द्रव्याणां चन्दनादीनां दग्धानां श्वेतता यथा । तद्वत् पित्तोष्मणा दग्धं रक्तं पूयमिहोच्यते' इत्यधिकः पाठ उपलभ्यते । ३ 'भयमोहाभ्यामिति भयादपि पाटनभीरुतया पक्कमप्यपक्कमेव दूषयति' इति चक्रः । ४ 'यद्यप्यत्र वातादीनां त्रयाणामपि कारणत्वमुक्तं, तथाऽपि पाके कारणतया पित्तं प्रधानमेव, पूयं च श्वेतत्वघनत्वाभ्यां कफकार्यम् । कालान्तरं विदाहावस्था, तत्र पित्तप्रकोपो विदाहकारणतया पित्तस्य भवति । वशे कृत्वा आयत्तौ कृत्वा, शीतत्वेन पाकप्रतिबन्धकावभिभूयेति यावत् । शोणितं पचतीत्यनेन शोणिताधारमांसादिपाकोऽपि लभ्यते, शोणितं तु मतान्तरे दोषतया प्राधान्येन साक्षादुक्तम्; एतच्च मतान्तरमप्रतिषेधेनानुमतमेव । पूर्वोक्तपाकेऽपि हि पित्तप्राधान्यमस्त्येव, पाकतया च शोणितमपि तत्र लभ्यत एव' इति चक्रः ।

१ 'अत्रामग्रहणेन पच्यमानस्यापि ग्रहणम्' इति चक्रः । २ 'ऽवेदनासहः' इति पा० । ३ 'प्राण इति बलं; बाह्यप्राण आहारः, बलहेतुत्वात्' इति पा० ।

तत्र बाह्यप्राणस्याग्नेर्गुणैः कट्वम्ललवणादिभिरनुगतः सन्नन्तरग्निः शरीरं धारयतीत्यादिना बाह्यप्राणगुणानुगतत्वेनाभ्यन्तरप्राणस्य शरीरधारकत्वं दर्शयन्ति, अस्माभिस्तु विस्तरभयान्न दर्शितम् । **लक्ष्मणटिप्पणकारस्तु**—आभ्यन्तरः प्राणोऽग्नीषोमादिः, येन प्राणी जीवति, बाह्यप्राणोऽन्नं, तद्गुणाः प्रीणनादयः, तैरन्वितः सन्नाभ्यन्तरः प्राणः शरीरं धारयतीत्यर्थः ॥ ११—१३ ॥

**अल्पो[1] महान् वा क्रियया विना यः**
**समुच्छ्रितः पाकमुपैति शोफः ॥**
**विशालमूलो विषमं विदग्धः**
**स कृच्छ्रतां यात्यवगाढदोषः ॥ १४ ॥**

महति शोफेऽल्पे वाऽप्रतिक्रियमाणे सति बहुं दोषमाह,—अल्प इत्यादि । विषमं विदग्ध इति विषमविदाहो विषमपाक इत्यर्थः । अवगाढदोष इति आभ्यन्तरपूय इत्यर्थः । 'यो ह्युत्थितोऽल्पो यदि वा महान् वा क्रियां विना पाकमुपैति शोथः' इति केचित् पठन्ति ॥ १४ ॥

**आलेपविस्रावणशोधनैस्तु**
**सम्यक् प्रयुक्तैर्यदि नोपशाम्येत् ॥**
**पच्येत शीघ्रं सममल्पमूलः**
**स पिण्डितश्चोपरि चोन्नतः स्यात्[2] ॥ १५ ॥**

शोफानामालेपनादिक्रियासमूहावचारणेऽपि पक्वानामुपक्रमसाफल्यं दर्शयन्नाह,—आलेपनेत्यादि । पच्येत शीघ्रं सममिति एतेन समपाकत्वमुक्तं, स शोफः, पिण्डितो वर्तुलीभवति[3] ॥१५॥

**कक्षं समासाद्य यथैव वह्नि-**
**र्वाय्वीरितः संदहति प्रसह्य ॥**
**तथैव पूयोऽप्यविनिःसृतो हि**
**मांसं सिराः स्नायु च खादतीह ॥ १६ ॥**

पक्वस्याप्युपेक्षणे शोफस्य प्रागुक्तमेव दोषं दृष्टान्तेन दर्शयन्नाह—कक्षमित्यादि । कक्षस्तृणादिबहुलः प्रदेशः । इहेति पक्वशोफे ॥ १६ ॥

**आदौ विम्लापनं कुर्याद्द्वितीयमवसेचनम् ॥**
**तृतीयमुपनाहं तु चतुर्थीं पाटनक्रियाम् ॥ १७ ॥**
**पञ्चमं शोधनं कुर्यात् षष्ठं रोपणमिष्यते ॥**
**एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥१८॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने आमपक्वैषणीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥**

व्रणस्य षष्टेरुपक्रमाणां सूत्रस्थाने सूत्रणार्थं विम्लापनादीनुपक्रमान्निर्दिशन्नाह—आदावित्यादि । आदौ विम्लापनमङ्गुल्यादिमर्दनेन शोफविलयनम् । अवसेचनं जलौकादिभी रक्तविस्रावणम् । उपनाहो बन्धनं पाचनाय । वैकृतापहमिति सवर्णकरणरोमसंजननादि । अन्ये त्वन्यथाऽऽपातनिकां गृह्णन्त्यन्यथैव च व्याख्यानयन्ति—तत्र व्रणस्य षष्टेरुपक्रमाणां सुखबोधार्थं लक्षणान्तरेण सप्तत्वं दर्शयन्नाह,—आदावित्यादि । विम्लापनशब्दोऽत्र बहिःप्रमार्जने शोफविलयनकरे लेपपरिषेकाभ्यङ्गस्वेदादौ वर्तते, न तु मन्दवेदनस्य स्निग्धस्विन्नस्य शोफस्य द्विव्रणीयपठितवेणुनालाङ्गुष्ठादिमर्दने । अवसेचनं विस्रावणम्, अवसेचनशब्दोऽप्यत्र वमनविरेकशोणितविस्रावणाद्यन्तर्बहिःप्रमार्जने वर्तते, न तु केवल एव विस्रावणे । एवं शेषेष्वप्युपक्रमेषूपक्रमान्तराणि समानेषु समानान्यन्तर्भाव्यानि ॥ १७ ॥ १८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

**अथातो[1] व्रणालेपनबन्धविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**आलेप आद्य उपक्रमः[2], एष सर्वशोफानां सामान्यः प्रधानतमश्च, तं च प्रतिरोगं वक्ष्यामः ततो बन्धः प्रधानं, तेन शुद्धिर्व्रणरोपणमस्थिसंधिस्थैर्यं च ॥ ३ ॥**

अथात इत्यादि । एष आलेपः । नन्वेष आलेप आद्य उपक्रमः कथं ? द्विव्रणीयेऽपतर्पणस्याद्यत्वेन पठितत्वात्; उच्यते—औषधद्रव्येभ्यो बहिरन्तःप्रमार्जनेभ्य आलेप आद्य इत्यर्थः; आद्यसमीपत्वाच्छ्रेष्ठत्वाद्वाऽऽलेप आद्य इत्युच्यते । सर्वशोफानां सामान्य इति वातादिशोफानां तुल्यः, आलेपत्वेनाभेदात् । प्रधानतमश्च सर्वोपक्रमेभ्य आशुपीडाहरत्वात् । तं च प्रतिरोगं वक्ष्याम इति तमालेपं, प्रतिरोगं रोगे रोगे, वक्ष्यामः कथयिष्यामः, अस्मिन् स्थाने चिकित्सिते च । ततः तस्मादालेपात् । अस्थिसन्धिस्थैर्यं चेति अस्थ्नः सन्धेर्दार्ढ्यं 'भवति' इत्यध्याहारः । केचिदाचार्या इमं न पठन्ति ॥ १–३ ॥

**तत्र[3] प्रतिलोममालिम्पेत् । प्रतिलोमे हि सम्यगौ-**

---

१ 'यो ह्युत्थितोऽल्पो यदि वा महान् स्यात् क्रियां विना पाकमुपैति शोथः' इति पा० । २ 'शीघ्रपाकादयो गुणा आलेपनादिना दोषक्षपणाद् भवन्ति' इति चक्रः । ३ 'वर्तुलीभूतः' इति पा० ।

१ 'अथात आलेपनव्रणबन्धविधिं व्याख्यास्यामः' इति ताडपत्रपुस्तके पाठः । 'पूर्वाध्यायोक्तव्रणोपक्रमतया आलेपनं तदनुषङ्गेण च बन्धमभिधातुं आलेपनीयोऽभिधीयते । आलेपनमधिकृत्य कृत इत्यालेपनीयः, तेन व्रणबन्धविधानमिह नोत्सूत्रम्; अन्ये तु 'आलेपबन्धविधिं' इति पठन्ति' इति चक्रः । २ 'आलेप आद्य उपक्रम इति शोथभेषजप्रयोगापेक्षयाऽऽलेपस्याद्यत्वमुक्तं, तेन द्विव्रणीयेऽपतर्पणस्याद्यत्वमुक्तं न विरोधि । प्रधानतमत्वमस्य प्रथमभूतशोथावस्थाप्रशमकत्वादेव । तं प्रतिरोगं वक्ष्याम इति इह तु तस्य विधिमात्रं वक्ष्यामो न तु तत्प्रयोगानिति भावः' इति चक्रः । ३ 'प्रविशति रोमकूपैः; तस्य प्रमाणं माहिषार्द्रचर्मोत्सेधमुपदिशन्ति ।' इति ताडपत्रपुस्तके पाठः ।

**षधमवतिष्ठतेऽनुप्रविशति च रोमकूपान् स्वेदवाहिभिश्च सिरामुखैर्वीर्यं प्राप्नोति ॥ ४ ॥**

इदानीमालेपावचारणं तत्फलं च निर्देष्टुमाह,—तत्रेत्यादि । प्रतिलोममालिम्पेदिति लोमाभिमुखमालिम्पेत् । हि यस्मादर्थे । अवतिष्ठते अवस्थितिं करोति, अनुप्रविशति च 'औषधं' इत्यनुवर्तते ॥ ४ ॥

**न च शुष्यमाणमुपेक्षेत, अन्यत्र पीडयितव्यात्; शुष्को ह्यपार्थको रुक्करश्च ॥ ५ ॥**

आलेपस्यावस्थायां कर्तव्यतामाह,—न चेत्यादि । अन्यत्र पीडयितव्यादिति पीडनद्रव्यैर्मिश्रकोत्कैर्यो व्रणः पीडनीयो भवति तस्मादन्यत्र शुष्यमाणं नोपेक्षेतेत्यर्थः । हि यस्मादर्थे । अपार्थको निष्फलः ॥ ५ ॥

**स त्रिविधः—प्रलेपः, प्रदेह, आलेपश्च । प्रलेपप्रदेहयोरन्तरं—तत्र प्रलेपः शीतस्तनुरविशोषी विशोषी वा; प्रदेहस्तूष्णः शीतो वा बहलोऽबहुरविशोषी च; मध्यमोऽत्रालेपः । तत्र, रक्तपित्तप्रसादकृदालेपः; प्रदेहो वातश्लेष्मप्रशमनः शोधनो रोपणः शोफवेदनापहश्च, तस्योपयोगः क्षताक्षतेषु; यस्तु क्षतेषूपयुज्यते स भूयः 'कल्क' इति संज्ञां लभते निरुद्धालेपनसंज्ञः, तेनास्रावसन्निरोधो मृदुता पूतिमांसापकर्षणमनन्तर्दोषता व्रणशुद्धिश्च भवति ॥ ६ ॥**

तद्भेदानाह—स त्रिविध इत्यादि । प्रलेपप्रदेहयोर्वास्तवाभेदेऽपि व्यावहारिकं भेदं दर्शयन्नाह—तत्र प्रलेप इत्यादि । अन्तरं भेदः, स्थानासनवत् । प्रलेपं लक्षणैर्निर्दिशन्नाह,—प्रलेप इत्यादि । अविशोषी अपीडयितव्ये व्रणशोफे, विशोषी पीडयितव्ये; एतेन येन कल्केन चन्दनवल्लिप्यते स प्रलेपः; अन्ये 'शीतस्तनुः' इत्यादिलक्षणं प्रदेहस्य' इति वदन्ति । लक्षणैः प्रदेहं निर्दिशन्नाह,—प्रदेह इत्यादि । उष्णः शीतो वेति विषयापेक्षया; तत्र वातबहुले कफबहुले वा उष्णः, पित्तरक्तबहुले शीतः । बहलः स्थूलः, एतेन यस्तु कल्कः पिण्डीकृत्य व्रणस्योपरि दीयते स प्रदेहः । 'उष्णः शीतो वा' इत्यादिलक्षणं 'प्रलेपस्य' इति केचिन्मन्यन्ते । लक्षणान्तरं निर्दिश्य कार्यभेदं निर्दिशन्नाह,—तत्रेत्यादि । तत्रेति तयोर्मध्ये । केचिदत्रालेपनस्थाने 'प्रदेह' इति पठन्ति, अन्ये तु प्रदेहस्थाने आलेपं पठन्ति । आलेपस्य सामान्यविषयं दर्शयन्नाह,—तस्येत्यादि । क्षताक्षतेषु

१ 'ऽरुष्करश्च' इति पा० । २ 'तेषामन्तरं–प्रलेपः शीतः' इति पा० । ३ 'अबहुर्बहलो नातिबहलः, आलेपात्किञ्चिद्बहल इत्येतत्तात्पर्यम्' इति हाराणचन्द्रः । 'बहलो बहुरविशोषी' इति पा० । बहलत्वेनायं बहिर्निर्गच्छदूष्मरोधाद्वातकफहन्ता । तदुक्तं चरके—''श्लक्ष्णसूक्ष्मघनो लेपश्चन्दनस्यापि दाहकृत् । त्वग्गतस्योष्मणो रोधाच्छीतकृच्चान्यथाऽगुरोः'' (च. चि. अ. ३०) इति चक्रः । ४ 'तेषामित्यादि' इति पा० ।

व्रणव्रणशोफेष्वित्यर्थः । विषयान्तरेणालेपस्य नामान्तरमाह,—यस्त्वित्यादि । तुशब्दोऽवधारणे । भूयःशब्दोऽत्र पुनरर्थे । निरुद्धा निषिद्धा । अन्ये त्वत्र 'निरोध्यालेपनसंज्ञां' इति पठन्ति; तत्रापि स एवार्थः । कल्कसंज्ञस्यालेपस्य कर्म आह,—तेनेत्यादि । आस्रावसन्निरोध इति आस्रावो रक्ताद्यास्रावः । अनन्तर्दोषतेति दोषोऽत्र पूयः, तेनाभ्यन्तरपूयवर्जितत्वम् । व्रणशुद्धिश्चेति दोषदुष्टिनिवृत्तिः; चकाराद्व्रणरोपणस्य ग्रहणम् ॥ ६ ॥

**अविदग्धेषु शोफेषु हितमालेपनं भवेत् ॥**
**यथास्वं दोषशमनं दाहकण्डूरुजापहम् ॥ ७ ॥**
**त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम् ॥**
**दाहप्रशमनं श्रेष्ठं रुजाकण्डूविनाशनम् ॥ ८ ॥**
**मर्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम् ॥**
**संशोधनाय तेषां हि कुर्यादालेपनं भिषक् ॥ ९ ॥**
**(षड्भागं पैत्तिके स्नेहं चतुर्भागं तु वातिके ॥**
**अष्टभागं तु कफजे स्नेहमात्रां प्रदापयेत् ॥१०॥)**

आलेपस्यात्मविषये कालावधिमाह—अविदग्धेष्वित्यादि । अविदग्धेष्वालेपनं हितं, विदग्धेषु पुनः प्रदेह एव, यस्य 'उपनाह' इति संज्ञान्तरम् । यथास्वं दोषशमनमिति वातादिदोषेषु मध्ये यदालेपनं द्रव्यगुणापेक्षया यस्य दोषस्य शमनं भवेत् तत् तत्र हितमित्यर्थः । दाहकण्डूरुजापहमिति दाहः पित्तस्य, कण्डूः कफस्य, रुजा वातस्य, एता अपहन्ति । दूष्यप्रसादनत्वमालेपस्य निर्देष्टुमाह,—त्वक्प्रसादनमेवाग्र्यमिति ।—अग्र्यं प्रधानम् । दाहकण्डूरुजापहमिति पूर्वस्मिन्नेव श्लोके दाहादीनां पठितत्वादिह पुनः पाठो दूष्यकृता अपि दाहादयो भवन्तीति बोधनार्थम् ॥ ७–१० ॥

**तस्य प्रमाणं महिषार्द्रचर्मोत्सेधमुपदिशन्ति ११**

तनुत्वमालेपस्य गुणः, तनुत्वं किं प्रमाणमित्याह—तस्येत्यादि । प्रदेहस्तु महिषार्द्रचर्मोच्छ्रायापेक्षया स्थूल इति । ये तु तनुत्वं प्रदेहगुणं मन्यते, तेषां मते प्रदेहस्यैतत् प्रमाणम् ॥११॥

**न चालेपं रात्रौ प्रयुञ्जीत, मा भूच्छैत्यविहतोष्मणस्तदनिर्गमाद्विकारप्रवृत्तिरिति ॥ १२ ॥**

**प्रदेहसाध्ये व्याधौ तु हितमालेपनं दिवा ॥**
**पित्तरक्ताभिघातोत्थे सविषे च विशेषतः ॥१३॥**
**न च पर्युषितं लेपं कदाचिदवचारयेत् ॥**
**उपर्युपरि लेपं च न कदाचित् प्रदापयेत् ॥ १४ ॥**

१ हाराणचन्द्रसंमतोऽयं पाठः । २ 'तस्य प्रमाणं महिषार्द्रचर्मोच्छ्रायापेक्षयाऽस्थूल इति' इति पा० । 'अत्र महिषचर्मोत्सेधता परं प्रमाणं लेपस्य, तनुत्वं यद्वक्ष्यमाणमालेपस्य तदुक्तमानादपकर्षेण' इति चक्रः । ३ 'रात्रिस्वाभाविकशैत्यात् संवृतरोमकूपात् पुनरालेपनेऽपि व्रणोष्मा बहिरनिर्गच्छन्नवरुद्धो विवृद्धः स्वभितरव्रणे व्रणशोथे वा दाहपाकौ करोतीति भावः । यस्तु प्रदेहो वातश्लेष्मविषयः स रात्रावपि देयोऽविरुद्धत्वात् । पाचनलेपस्तु पाचकत्वादेव दातव्यः, तथा घृतप्रदेहो निर्वापणतया दीयत एव क्षीरशीतजलादिसेकश्च, तथा व्रणकल्कोऽप्यहोरात्रस्याविरुध्यविहित एव' इति चक्रः ।

**ऊष्माणं वेदनां दाहं घनत्वाज्जनयेत् स हि ॥**
**न च तेनैव लेपेन प्रदेहं दापयेत् पुनः ॥**
**शुष्कभावात्स निर्वीर्यो युक्तोऽपि स्यादपार्थकः॥१५**

विशिष्टे काले आलेपावचारणविधिनिषेधे, कथंचित्क्रियमाणे च दोषमाह,—न चेत्यादि । एतेनास्य विधिः सूच्यते; तेन वातश्लैष्मिकापाकिशोथे रात्रौ प्रदेह उपयोक्तव्यः, तथा विदह्यमाने शोथे प्रदेहो देय एव, क्षतेषु कल्कोऽपि रात्रौ दातव्य इति, तथा पित्तजे शोथे वातपित्तजे च शतधौतघृताभ्यङ्गादि दातव्यमिति । शैत्याविहतोष्मण इति 'शोफस्य' इति शेषः । तदनिर्गमात् शोफोष्मानिःसरणात् । विकारप्रवृत्तिर्विकाराभिवृद्धिः । शैत्यरुद्धरोमकूपत्वादनिर्गच्छन्नूष्मा आलेपेनान्तर्नीतोऽत्यर्थं शोफं पचतीत्यर्थः । स्वेदवाहिभिः सिरामुखैश्च वीर्यं प्राप्नोतीत्यत ऊर्ध्वं बहुषु प्रतिषु निबन्धपाठक्रमाव्यतिक्रमेण पाठक्रमोऽधिकश्च पाठो दृश्यते; स उच्यते—"तस्य प्रमाणं महिषार्द्रचर्मोत्सेधमुपदिशन्ति । न च शुष्यमाणमुपेक्षेतान्यत्र पीडयितव्यात्; शुष्को ह्यपार्थो रुक्करश्च । स त्रिविध आलेपः प्रदेहो लेपश्च । तेषामन्तरं-आलेपः शीतस्तनुरविशोषी विशोषी च, प्रदेहस्तूष्णः शीतो वा बहुलो बहुरविशोषी च, मध्यमो लेप इति । विशेषतो रक्तपित्तप्रसादकृदालेपः; प्रलेपो वातश्लेष्मप्रशमनः शोधनो रोपणः शोफवेदनापहश्च, तस्योपयोगः क्षताक्षतेषु; यस्तु क्षतेषूपयुज्यते स भूयः 'कल्क' इति संज्ञा लभते निरुद्धालेपनसंज्ञः, तेनास्रावसंनिरोधो मृदुता पूतिमांसापकर्षणमनन्तर्दोषता व्रणशुद्धिश्च भवति । उभयगुणो लेपः । न चालेपं रात्रौ प्रयुञ्जीत, माभूच्छैत्यविहतोष्मणस्तदनिर्गमाद्विकारप्रवृत्तिरिति । त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम् । दाहप्रशमनं श्रेष्ठं तोदकण्डूविनाशनम् ॥ मर्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम् । संशोधनाय तेषां हि कुर्यादालेपनं भिषक् ॥ अविदग्धेषु शोथेषु हितमालेपनं भवेत् । यथास्वं दोषशमनं दाहकण्डूविनाशनम् ॥ षड्भागं पैत्तिके स्नेहं चतुर्भागं तु वातजे । अष्टभागं तु कफजे स्नेहमात्रां प्रदापयेत्"—इति । अयं पाठो वर्तमानेषु पुस्तकेषु सर्वेष्वेव पठ्यत इत्यस्माभिः क्रममात्रं दर्शितं; न त्वयं पठनीयः; पठनीयः पुनः प्राक्तनपाठ एव, सर्वपूर्वाचार्यसंमतत्वात् ॥ १२-१५ ॥

**अत ऊर्ध्वं व्रणबन्धनद्रव्याण्युपदेक्ष्यामः; तद्यथा—क्षौमकार्पासाविकदुकूलकौशेयपत्रोर्णचीनपट्टचर्मान्तर्वल्कलालाबूशकललताविदलरज्जुतूलफलसन्तानिकालौहानीति; तेषां व्याधिं कालं चावेक्ष्योपयोगः; प्रकरणतश्चैषामादेशः ॥ १६ ॥**

इदानीं व्रणबन्धविधिः प्रस्तूयते, स च द्रव्याधीनः, अतस्तान्येव प्रागुपदेष्टुमाह,—क्षौमेत्यादि । क्षौमम् अतसीतन्तुभिर्व्यूतं, अन्ये वस्त्रान्तरमाहुः; कार्पासं कार्पासतन्तुरचितम्; आविकम् उरभ्ररोमव्यूतं; दुकूलं पट्टवस्त्रम्, अन्ये वल्कलमाहुः; कौशेयं कोशकारकृमिलालोद्भूतं, यत् 'त्रसर' इति लोके; पत्रोर्णो रल्लूकाख्यः कम्बलः, अन्ये तु 'यैर्हरितादीनि देवाङ्गान्युप्यन्ते ते पत्रोर्णाः', 'धौतकौशेयम्' इत्यपरे, 'मागधपौण्ड्रकादिदेशेषु नागवृक्षादयश्चत्वारो वृक्षास्तत्पत्रेभ्यो जातैर्हरिततन्तुभिरूर्णारूपैर्वयते यत्तत् पत्रोर्णम्' इत्येके; चीनपट्टं चीनदेश एवोत्पद्यते, तद्देशजनास्तु 'चीनयुगपट्टम्' इति वदन्ति, स च पत्रोर्णस्यैव भेदः, अन्ये नेत्रमाहुः; चर्म एणादीनाम्, अपरे चर्मवद्बन्धनद्रव्यम्, अथवा सुवर्णपिष्टिकालिप्तचर्मतन्तुभिस्तुरुष्कैर्यानि वयन्ते तानि चर्मशब्देनोच्यन्ते; बाह्यवल्कलमन्त्यं च त्यक्त्वा मध्यं यद्गृह्यते तदन्तर्वल्कलम्; अलाबूशकलं तुम्बीफलकर्परिका; लताविदलं श्यामलतादिपाटितार्धं; केचिद्विदलशब्दं चर्मादिभिः सह संबध्नन्ति, अन्ये तु विदलशब्देन वंशवेत्रादिकम्बिकामाहुः; लताशब्देन च श्यामलतादीनां ग्रहणं; रज्जुर्मुञ्जवल्वजादिवलितः; तूलफलं शाल्मलीफलादि; सन्तानिका क्षीरसन्तानिका, अन्ये 'कुशलसन्तानिका' इति पठन्ति, कुशलसन्तानिका कोलिकवृत्तिः द्वित्रितन्तुरचिता 'वय' इति लोके प्रसिद्धा, मर्कटवासं केचिदाहुः; लोहानि सुवर्णत्रपुसीसादीनि । क्व पुनस्तेषामुपयोग इत्याह—तेषामित्यादि । तेषां क्षौमादीनाम् । व्याधिं कालं चावेक्ष्योपयोग इति तत्र वातश्लैष्मिकं व्याधिं कालं च शीतमवेक्ष्य व्रणबन्धनद्रव्याणां घनानामुपयोगः, रक्तपैत्तिकं व्याधिमुष्णं च कालमवेक्ष्य तनूनामुपयोगः; चकाराद्गाढस्थानमवेक्ष्य घनानामुपयोगः, शिथिलस्थानमवेक्ष्य तनूनामुपयोग इति । वर्गोक्तानां व्रणबन्धनद्रव्याणां संक्षेपेणादेशमाह,—प्रकरणतश्चैषामादेश इति ।—प्रकरणतः प्रकरणमवेक्ष्य, एषां व्रणबन्धनद्रव्याणामादेशनं; तद्यथा—सर्पादिदष्टस्यारिष्टाबन्धो रक्षा(ज्या)दिभिः, रक्तातिप्रवृत्तौ रक्तनिवृत्त्यर्थं सन्तानिकया बध्नीयात्, पाटितश्यामलतार्धैर्भग्नसन्धानाय बन्धः कर्तव्यः, लौहैः सुवर्णादिभिर्दन्तान् बध्नीयात्, त्रप्वादिभिरर्बुदग्रन्थ्यादीन्, अलाबुशकलेन शिरोव्रणान् बध्नीयात्; एवमन्येषामपि यथार्हमादेशनम् ॥१६ ॥

**तत्र कोशदामस्वस्तिकानुवेल्लितमु(प्र)तोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणाः**

१ "°रज्जुतूलसन्तानिका°" इति पा० । २ 'चक्रस्तु 'लोहादीनि' इति पठित्वा आदिशब्दादश्वबालादीनां ग्रहणम्' इति व्याख्यानयति । 'दुकूलं वल्कलविशेषोद्भवम्, पत्रोर्णं पतनीति ख्याततन्तुभवं, तूलफलं शाल्मलीफलं, तस्य तूलरचिताम्बरं बन्धार्थमुपयुज्यते' इति चक्रः । 'अन्तर्वल्कलस्य इत्यन्तर्वल्कलं, भूर्जोदुम्बरादित्वङ्मध्यम्' इति हाराणचन्द्रः ।

१ 'बन्धानां दुर्विज्ञेयतया तन्त्रान्तराणि ज्ञानार्थं लिख्यन्ते यथाक्रमम् । तत्र कोशे **भोजः**—"अङ्गुल्यङ्गुष्ठकाग्रेषु कूर्चकूर्परजानुषु । कोषकं कोषकाकारं व्रणबन्धं तु योजयेत् ॥ दामाकृतिश्चतुष्पादो बन्धः स्याद्दामसंज्ञितः । स्वस्तिकं स्वस्तिकाकारं बन्धं कुर्यात् स्तनादिषु ॥ शाखासु तिर्यक्पतितान् प्रहारादिकृतान् भिषक् । तान् प्रसीव्यानुबध्नीयादयं ज्ञेयोऽनुवेल्लितः"—इति । प्रतोलीबन्धे **वैतरणः**—"प्रतोली पु(मु)टिका प्रोक्ता जालवद्बहुरन्ध्रकः ।……चैव ग्रीवायां ललाटे च प्रयोजयेत् ॥ स्थगिकां स्थगिकाकारां मेढ्राङ्गुष्ठाङ्गुलीस्थिताम् । यथास्वमौषधैः पूर्णां कल्पयेत् सुसमाहिताम्"—इति; एवं

**पञ्चाङ्गी चेति चतुर्दश बन्धविशेषाः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ १७ ॥**

भेषजपूर्णां कृत्वा पट्टेन बध्यत इति कोशात् स्थगिकाया विशेषः, कोशस्तु न बध्यते । "यमकव्रणयोः कुर्याद्यमकं मण्डलाकृतिम् । खट्वा तु बहुपादा स्याच्चीराभिर्बहुभिर्वृता । बन्धनं कारयेच्छङ्खहनुगण्डेषु कोविदः । चीनबन्धं विजानीयाच्चीना( रा )भिर्बहुभिर्वृतम् ॥ विबन्धो विविधो बन्धः स तु पृष्ठोदरोरसि । ऊर्ध्वं तिर्यगधश्चापि पट्टचीरावृतः स तु । वितानं तु वितानाभं मूर्ध्नि कुर्यात् सुसंस्थितम् । गोफणां गोफणाकारां युञ्ज्यान्नासौष्ठबस्तिषु । चिबुके चापि पञ्चाङ्गीं हनुसन्धौ विसङ्गते । स्वेदयित्वा स्थिते सन्धौ कुर्यात् पञ्चाङ्कुशावृताम्" इति चक्रः । "कोशोऽत्र बहिर्निर्गन्तुमिच्छुना कोशकारेण दृष्टोपान्तो यः 'कोया' इति समाख्यातः क्रिमिकोशस्तदाकारो बन्धः 'कोश' इति व्यपदिश्यते । दाम मालेवेति दाम । स्वस्तिकः प्रायेण जिह्वामूलीयलक्षणः किञ्चिदानताग्रो जित्वराणां ध्वजचिह्नविशेषः, तदाकारो बन्धः स्वस्तिकः । वेल्लितं वक्रमनुगतमित्यनुवेल्लितं, तदस्यास्तीत्यनुवेल्लितम्; अकारो मत्वर्थीयः, वक्रानुपूर्व्या कृतो बन्ध इत्यर्थः । प्रतोली रथ्येव प्रतोली, यथा च सा विस्तृतत्वान्नरगजादीनां प्रचारसुखा तथैवायमपि बन्धः शैथिल्याद्विण्मूत्रयोरपीति तात्पर्यम् । अत एव वक्ष्यति–ग्रीवामेढ्रयोः प्रतोलीमिति । गोलो बन्धो मण्डलः । स्थगिका ताम्बूलकरङ्कः 'बिडीदानी' इति विज्ञायते, तस्याश्चोपरिभाग एवेह क्रमावनतत्वेनोपयोगिकतयाऽभिप्रेयत इति प्रतीयते, वक्ष्यति हि–अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकामिति । बन्धोऽयं कोशाख्याद्दीर्घत्वेन हीयत इति पृथक्त्वेनोपदिश्यत इत्यनुसन्धेयम् । द्वयोर्व्रणयोः संयमनो यमक इति निरुच्यते । खट्वाकारश्चतुष्पादो बन्धः खट्वा । बहुभिश्चीनांशुकैः कृतो बन्धश्चीनः । ऊर्ध्वाधस्तिर्यक्परिक्षिप्तत्वेन विविधाकारो बन्धो विबन्धः । क्षिरस्त्राकारेण विस्तारो बन्धो वितानः । कौपीनबन्धो नाम गोफणेत्युच्यते स्वशास्त्रसिद्धान्तादिति गम्यते, गुदभ्रंशचिकित्सादौ तदर्थे गोफणाशब्दप्रयोगदर्शनात् । पञ्चानामङ्गानां समाहारः पञ्चाङ्गी, तद्योगाद्बन्धोऽयं पञ्चाङ्गीत्युच्यते" इति **हाराणचन्द्रः** । **अष्टाङ्गसंग्रहे** उत्सङ्गाख्यमधिकं गृहीत्वा पञ्चदश बन्धाः पठिताः । बन्धविषयेषु च 'उत्सङ्गं विलम्बिनि, स्वस्तिकं सन्धिकूर्चभ्रूस्तनान्तरकुक्ष्यक्षिकपोलकर्णेषु, स्थगिकामङ्गुष्ठाङ्गुलिमेढ्राग्रमूत्रवृद्धिषु, वितानं मूर्धादौ पृथुलेऽङ्गे, गोफणां नासौष्ठचिबुकसन्धिषु' इति विशेषः पठ्यते । 'उत्सङ्गमुत्सङ्गमिव, विलम्बिनि बाह्वादौ कण्ठादिलम्बमानं; स्वस्तिकाकृति स्वस्तिकं यदूर्ध्वं दक्षिणादेत्याधो वामं याति पुनः परिवृत्याधो दक्षिणादूर्ध्वं वामं, तत्सन्ध्यादिषु योज्यं; कूर्चो नाम मर्म, अनुवेल्लितं यद्दीर्घं कृत्वा वेष्टनं, मुतोलीव मुतोली तृणमयः फलाधारः, मण्डलमिव मण्डलं तद्वृत्तेऽङ्गे स्तनादौ, स्थगिकेव स्थगिका लम्बमानं ताम्बूलकरङ्कं, यमकं यदेकस्मिन् पट्टके द्विव्रणबन्धे मध्यं दैर्घ्येण विच्छिद्यापनीयते स्वेदाद्यभावाय, खट्वा चतुर्बाहु पट्टकं, चीनं स्तोकविस्तीर्णा आयता पट्टिका, पञ्चाङ्गी यस्मिन् पट्टे चत्वारो बाहवः एका चोर्ध्वे पट्टिका' ( अ. सं. सू. स्था. अ. ३८ ) इत्यष्टाङ्गसंग्रहव्याख्यायामिन्दुः ।

इदानीं बन्धविशेषान् संख्यया निर्देष्टुमाह—तत्र कोशेत्यादि । एषामाकारं निर्देष्टुमाह,—तेषामित्यादि । प्रायोग्रहणान्नात्रैव सर्वेषामाकृतीर्वक्तुं न शक्यते, तस्मात् परतन्त्रोक्तलक्षणमप्यत्रैव सम्यगाकृतिविज्ञानाय श्लोकैरुपदेक्ष्यामः । तद्यथा,—"पूरयित्वौषधैर्बन्धः क्रियते कोशकाकृतिः । कोशकाख्यः स विज्ञेयो वैद्यैर्बन्धनवर्जितः ॥ दामाकृतिं चतुष्पादां दामाख्यं, स्वस्तिकं पुनः । स्वस्तिकाकृतिमासीव्य, पश्चादावेष्ट्य बध्यते ॥ अनुवेल्लितं तद्विद्यात्, मुतोलीलक्षणं शृणु । बह्वङ्घ्रिर्मुटिकाकारो जालवद्बहुरन्ध्रकः ॥ मुतोलीबन्ध एष स्यात् संज्ञान्तरमतः शृणु । गोतुण्डिकां चालनीं च तामेवाहुर्भिषग्वराः ॥ मण्डलं वेष्टनाकारं विदध्यात्, स्थगिकां पुनः । स्थगिकामिव चापूर्य भेषजैः पट्टकेन च ॥ बध्यते मण्डलाकारो यमलव्रणयोस्तु यः । बन्धं यमकनामानं भिषजो वर्णयन्ति तम् ॥ खट्वाकारश्चतुष्पादः खट्वाबन्धः प्रकीर्तितः । चीनबन्धं विजानीयाच्चीराभिर्बहुभिर्वृतम् । विबन्धो विविधो बन्धः स च पैट्चीन्धि(रि)कायुतः ॥ ज्ञेयो वितानसंज्ञस्तु वितानाकारसंयुतः । पाषाणगुडकोत्क्षेपकारिणीं गोफणां विदुः ॥ तदाकृतिं भिषक्कुर्याद्गोफणां, पञ्चकम्बिभिः । पञ्चाङ्गीं तु वृतां कुर्यात् सन्धानाय चिकित्सकः"— इति ॥ १७ ॥

**तत्र कोशमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्, दाम संबाधेऽङ्गे, सन्धिकूर्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम्, अनुवेल्लितं शाखासु, ग्रीवामेढ्रयोः मु-(प्र)तोलीं, वृत्तेऽङ्गे मण्डलम्, अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकां, यमलव्रणयोर्यमकं, हनुशङ्खगण्डेषु खट्वाम्, अपाङ्गयोश्चीनं, पृष्ठोदरोरःसु विबन्धं, मूर्धनि वितानं, चिबुकनासौष्ठांसबस्तिषु गोफणां, जत्रुण ऊर्ध्वं पञ्चाङ्गीमिति; यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति तं तस्मिन् विदध्यात् ॥ १८ ॥**

बन्धविषयमाह,—तत्रेत्यादि । तत्रेति चतुर्दशबन्धेषु मध्ये । पर्वशब्दोऽङ्गुष्ठाङ्गुलिभिः सह संबध्यते । दाम संबाधेऽङ्गे इति संकटेऽङ्गे । संधिकूर्चकभ्रूस्तनान्तरतलकर्णेष्विति क्षिप्रमर्मोपरिष्टादुभयतः कूर्चकः, पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रमिति मर्म; भ्रूस्तनान्तरमिति अन्तरशब्दः प्रत्येकं संबध्यते; तलमिह हस्तपादतलम् । शाखास्विति शाखासु सक्थिबाहुषु । बाहुपार्श्वोदरोरुपृष्ठादिकं वृत्तमङ्गम् । अङ्गुष्ठाङ्गुलिमेढ्राग्रेष्विति अग्रशब्दोऽत्राङ्गुष्ठादिभिः सह प्रत्येकं संबध्यते । हनुशङ्खगण्डेष्विति हनुर्मुखसन्धिः, शङ्खो भ्रूकर्णयोरन्तरं, गण्डो गल्लः । अपाङ्गयोश्चीनमिति अपाङ्गयोर्नेत्रान्तप्रदेशयोः । हृदयोर्ध्वं स्तनयोर्मध्यं ग्रीवामूलादधस्तादुरः । मूर्धा मस्तकम् । चिबुकनासौष्ठांसबस्तिषु गोफणामिति चिबुकमोष्ठाधो मांसास्थिपिण्डिका, अंसो बाहुशिरः, बस्तिर्मूत्रा-

---

१ 'आसिच्य' इति पा० । २ 'स्थगिका पुनः । स्थगिकादिभिरापूर्य भेषजैः पट्टकेन च' इति पा० । ३ 'पट्चीरिकायुतः' इति पा० । ४ 'चिबुकमोष्ठाधः, नासा अक्षिपिण्डिका' इति पा० ।

शयः । जत्रुण ऊर्ध्वं ग्रीवामूलादुपरि । आद्यसूत्रात् 'विदध्यात्' इति क्रियापदं सर्वत्रानुवर्तते । उक्तं देशनियमं प्रयोजनवशेन व्यभिचारयन्नाह—यो वेत्यादि । सुनिविष्टः शोभनाकारः ॥१८॥

**यन्त्रणमूर्ध्वमधस्तिर्यक् च ॥ १९ ॥**

बन्धो मृदुसमावगाढभेदात्रिविधः, स च यन्त्रणमन्तरेण न संभवति, अतो यन्त्रणं निर्देष्टुमाह—यन्त्रणमूर्ध्वमधस्तिर्यक् चेति । यन्त्रणं पट्टग्रन्थैर्बन्धनं, तच्चोर्ध्वादिभेदेन त्रिप्रकारं, व्रणाकृतीनां नानाविधत्वात् । चकार ऊर्ध्वादिभेदानेव समुच्चिनोति ॥ १९ ॥

**तत्र घनां कवलिकां दत्त्वा वामहस्तपरिक्षेपमृजुमनाविद्धमसंकुचितं मृदु पट्टं निवेश्य बध्नीयात्। न च व्रणस्योपरि कुर्याद्ग्रन्थिमाबाधकरं च ॥ २० ॥**

बन्धावचारणं निर्दिशन्नाह,—तत्रेत्यादि ।—तत्रेति वाक्योपक्रमे । घनां कवलिकामिति औषधवस्त्रयोरन्तरे या दीयते औषधसंस्थापनार्थमौदुम्बरादित्वक् पत्राणि वा, सा 'कवलिका' इत्युच्यते; अन्ये द्विगुणचतुर्गुणमृदुकर्पटविरचितां कवलिकामाहुः । वामहस्तपरिक्षेपमिति वामहस्तपरिक्षेपादृष्ट्या रचितो बन्धो मङ्गलमावहति; अन्ये तु 'पट्टे वामहस्तपरिक्षिप्ते दक्षिणहस्तेन साधु बन्धो निष्पद्यते' इत्याचक्षते; अपरे तु वामदक्षिणपरिक्षेपावुभावपि विषये कर्तव्यौ, क्रियासौकर्यार्थं तु वामहस्तपरिक्षेप उक्तः । ऋजुत्वं सन्निवेशविशेषापेक्षम् । अनाविद्धम् अनाकुलितम्, असंकीर्णमित्यपरे । असंकुचितं वलिवर्जितम् । मृदु कोमलम् । वामहस्तपरिक्षेपर्जुत्वादिगुणयुक्तं पट्टं निवेश्य संस्थाप्य बध्नीयादित्यर्थः । आबाधकरं चेति आ समन्ततः पीडाकरं ग्रन्थिं न कुर्यादित्यर्थः । स च वामदक्षिणपार्श्वयोस्तथा पृष्ठेऽपि क्रियमाणः स्वप्नाबाधकरः स्यादिति ॥२०॥

**न च विकेशिकौषधे अतिस्निग्धे अतिरूक्षे विषमे वा कुर्वीत; यस्मादतिस्नेहात् क्लेदो, रौक्ष्याच्छेदो, दुर्न्यासाद्व्रणवर्त्मावघर्षणमिति[3] ॥ २१ ॥**

तत्रौषधकल्कव्रणवर्त्योः स्निग्धादिभावं नियमयन्नाह,—न चेत्यादि । विकेशिकौषधे इति तिलकल्कमधुघृताक्तवस्त्रस्य सूत्रस्य वा वर्तिर्विकेशिका, सा च पूतिमांसोत्सङ्गगतिपूयगर्भेषु व्रणेषु निक्षिप्यते; औषधमिह औषधकल्कः, स च केवलकल्कः पूतिमांसोत्सङ्गगत्यभ्यन्तरपूयवर्जितेषु व्रणेषु दीयते; एतद्विपर्ययव्रणेषु पुनर्विकेशिकौषधकल्कयोरुभयोरप्युपयोगः । विषमे दुर्न्यस्ते; अन्ये 'विषमे' इति न पठन्ति । विकेशिकौषधयोरतिस्निग्धातिरूक्षदुर्न्यस्तयोर्दोषं वक्तुमाह,—यस्मादतिस्नेहात् क्लेद इति ।—क्लेदो व्रणस्यार्द्रत्वम् । छेदः संहतयोर्व्रणौष्ठयोर्द्विधाकरणम् । दुर्न्यासात् दुष्प्रवेशात् । व्रणवर्त्म व्रणमुखम् । **गयदासाचार्य**स्त्वन्यथाऽऽपातनिकां गृहीत्वा पाठमन्यथा पठति—"अतिस्नेहातिरूक्षयोर्विकेशिकौषधयोर्दोषं युक्तियुक्तस्नेहतो गुणं च वक्तुमाह,—कस्मात्? अतिस्नेहात् क्लेदो रौक्ष्याच्छेदो युक्तस्नेहात् सम्यगुपरोह" इति ॥ २१ ॥

**तत्र व्रणायतनविशेषाद्बन्धविशेषस्त्रिविधो भवति—गाढः, समः, शिथिल इति ॥ २२ ॥**

इदानीमुक्तसंख्याकमपि बन्धं व्रणाकृतिविशेषेण त्रिविधं दर्शयन्नाह,—तत्रेत्यादि । व्रणायतनविशेषादिति व्रणानामायतनं स्थानमङ्गप्रत्यङ्गादिकं, तद्विशेषाद्गाढादयो बन्धविशेषा भवन्ति । ननु, दोषकालविशेषादप्यग्रे बन्धविशेषाणां दर्शितत्वाद्दोषकालावप्यत्र वाच्याविति? उच्यते, दोषकालौ हि व्रणायतनविशेषमात्रकराविति न पृथगुक्तौ; अन्ये तु व्रणायतनविशेषादित्यस्याग्रे चकारो लुप्तो द्रष्टव्य इति पठन्ति, तेनानुक्तदोषकालविशेषोऽपि लभ्यते, तस्मादपि बन्धविशेषा भवन्ति । व्रणायतनविशेषादिति अन्येऽन्यथा व्याख्यानयन्ति "व्रणानां वाताद्यारब्धानां विशेषात्तथाऽऽयतनानां स्थानानामङ्गप्रत्यङ्गादिकानां कालविशेषात्त्रयो बन्धविशेषा भवन्ति" इति । 'व्रणायतनं व्रणाकारो व्रणसन्निवेश' इत्यन्ये व्याचक्षते; इदं चासङ्गतमेवेति ॥ २२ ॥

**पीडयन्नरुजो गाढः सोच्छ्वासः शिथिलः स्मृतः॥**
**नैव गाढो न शिथिलः समो बन्धः प्रकीर्तितः॥२३**

गाढादिबन्धानां लक्षणं निर्दिशन्नाह,—पीडयन्नरुजो गाढ इति ।—गाढो बन्धः पीडयन्नप्यवगाढमानोऽपि न रुजति । सोच्छ्वासः अनवगाढकः ॥ २३ ॥

**तत्र स्फिक्कुक्षिकक्षावङ्क्षणोरुशिरःसु गाढः, शाखावदनकर्णकण्ठमेढ्रमुष्कपृष्ठपार्श्वोदरोरःसु समः, अक्ष्णोः सन्धिषु च शिथिल इति ॥ २४ ॥**

प्रागेव व्रणायतनविशेषाद्बन्धविशेषं निर्दिशन्नाह—तत्रेत्यादि । स्फिचौ कटिप्रोथौ, वङ्क्षण ऊरुसन्धिः, मेढ्रो मेहनं, मुष्कोऽण्डकोषः ॥ २४ ॥

**तत्र पैत्तिकं गाढस्थाने समं बध्नीयात्, समस्थाने शिथिलं, शिथिलस्थाने नैव; एवं शोणितदुष्टं च; श्लैष्मिकं शिथिलस्थाने समं, समस्थाने गाढं, गाढस्थाने गाढतरं; एवं वातदुष्टं च ॥ २५ ॥**

दोषविशेषाद्बन्धविशेषं निर्देष्टुमाह,—तत्रेत्यादि ॥ २५ ॥

**तत्र पैत्तिकं शरदि ग्रीष्मे द्विरह्नो बध्नीयात्, रक्तोपद्रुतमप्येवं; श्लैष्मिकं हेमन्त[3]वसन्तयोस्त्र्य-**

१ 'कवलयति क्रोडीकरोतीति 'कवलिका' इति चक्रः । २ 'उक्तं हि चरके—"बन्धस्तु द्विविधः शस्तो व्रणानां वामदक्षिणः" (च. चि. अ. २५) इति । ३ अस्याग्रे 'युक्तस्नेहत्वादाशु रोहति' इति ताडपत्रपुस्तकेऽधिकः पाठ उपलभ्यते । ४ उच्यते हि—'सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम् । व्रणं विशोधयेच्छीघ्रं स्थिता ह्यन्तर्विकेशिका' इति चक्रः ।

१ 'तथाऽनुक्तकालविशेषाच्च' इति पा० । २ 'पीडयन्नपि यो रुजां न करोति स गाढः, सोच्छ्वास इति नातिसंलग्नः' इति चक्रः । सोच्छ्वासः श्लथः । ३ 'हेमन्ते तृतीयेऽह्नि' इति ताडपत्रपुस्तके पाठः ।

ह्वात्, वातोपद्रुतमप्येवम् । एवमभ्यूह्य बन्धविपर्ययं च कुर्यात् ॥ २६ ॥

कालविशेषादपि बन्धविशेषं दर्शयन्नाह,—तत्रेत्यादि । द्विरह्नो बध्नीयादिति दिवसस्य मध्ये द्वौ वारौ बध्नीयादित्यर्थः । एवमभ्यूह्येति एवमनेन प्रकारेण, अभ्यूह्य स्वयमपि वितर्क्य, बन्धविपर्ययं बन्धस्यान्यथात्वमवस्थावशात् कुर्यादिति । तद्यथा—पित्तश्लैष्मिकं द्व्यहाद्बध्नीयात्, प्रातर्ग्रीष्मशरदोः, हेमन्ते पैत्तिकमहरहः, वर्षादिष्वपि श्लैष्मिकं द्व्यहे सायमिति ॥ २६ ॥

तत्र, समशिथिलस्थानेषु गाढं बद्धे विकेशिकौषधनैरर्थक्यं शोफवेदनाप्रादुर्भावश्च, गाढसमस्थानेषु शिथिलं बद्धे विकेशिकौषधपतनं पट्टसंचाराद्व्रणवर्त्मावघर्षणमिति; गाढशिथिलस्थानेषु समं बद्धे गुणाभाव इति ॥ २७ ॥

गाढादिस्थानेऽप्यन्यथाकृतानां बन्धानां दोषं वक्तुमाह,—तत्रेत्यादि । चकारोऽत्र रागं समुच्चिनोति; गाढबन्धदोषोऽयम् ॥ २७ ॥

अविपरीतबन्धे वेदनोपशान्तिरसृक्प्रसादो मार्दवं च ॥ २८ ॥

यथोचितबन्धगुणमाह,—अविपरीतबन्ध इत्यादि ॥ २८ ॥

अबध्यमानो दंशमशकतृणकाष्ठोपलपांशुशीतवातातपप्रभृतिभिर्विशेषैरभिहन्यते व्रणः, विविधवेदनोपद्रुतश्च दुष्टतामुपैति, आलेपनादीनि चास्य विशोषमुपयान्ति ॥ २९ ॥

बन्धव्यतिरेके दोषं वक्तुमाह,—अबध्यमान इत्यादि । दंशो वनमक्षिका, उपलः पाषाणः, पांशुर्धूलिः, आतपो घर्मः । दुष्टतामुपैति वैकृतं याति ॥ २९ ॥

चूर्णितं मथितं भग्नं विश्लिष्टमतिपातितम् ॥
अस्थिस्नायुसिराच्छिन्नमाशु बन्धेन रोहति ॥३०॥
सुखमेवं व्रणी शेते सुखं गच्छति तिष्ठति ॥
सुखं शय्यासनस्थस्य क्षिप्रं संरोहति व्रणः ॥३१॥

बन्धस्यात्यन्तगुणं[1] दर्शयन्नाह,—चूर्णितमित्यादि । चूर्णितं बहुधा खण्डीकृतं, मथितं विलोडितं, भग्नं काण्डभग्नं, विश्लिष्टं सन्धिच्युतम्, अतिपातितं स्थानाच्च्युतमवलम्बमानम् । छिन्नशब्दोऽस्थ्यादिभिः प्रत्येकं संबध्यते । चूर्णितादिषु गमनागमनस्थानशयनेष्वपि चतुर्षु बन्धः प्रशस्त इत्याह,—सुखमित्यादि । शेते स्वपिति, तिष्ठति ऊर्ध्वीभूत आस्ते, शय्यासनस्थस्य सुखं 'भवति' इत्यध्याहारः ॥ ३० ॥ ३१ ॥

अबन्ध्याः पित्तरक्ताभिघातविषनिमित्ता यदा शोफदाहपाकरागतोदवेदनाभिभूताः क्षाराग्निदग्धाः पाकात् प्रकुथितप्रशीर्णमांसाश्च[2] भवन्ति ॥३२॥

येषु बन्ध एवानर्थकरस्तान् दर्शयन्नाह,—अबन्ध्या इत्यादि । निमित्तशब्दः पित्तादिभिः सह प्रत्येकं संबध्यते । कदा पुनरेतेऽबन्धनीया इत्याह,—यदेत्यादि । तोदाख्यैव वेदना तयाऽभिभूता वातानुविद्धा इत्यर्थः । अत्र बन्धेनात्यर्थं तोदोत्पत्तिरेव स्यात्, तस्मान्न बन्धः कर्तव्य इति । 'तोददाहाभिभूता' इत्यन्ये पठन्ति । 'यदा च शोफतोददाहरागपाकवेदनाभिभूता' इति केचित् पठन्ति । पाकात् प्रकुथितप्रशीर्णमांसाश्च भवन्तीति ये व्रणाः पाकात् प्रतिस्रस्तमांसाश्च भवन्ति तेऽपि न बन्ध्या इत्यर्थः ॥ ३२ ॥

कुष्ठिनामग्निदग्धानां पिडका मधुमेहिनाम् ॥
कर्णिकाश्चोन्दुरुविषे विषजुष्टाश्च ये व्रणाः ॥३३॥
मांसपाके न बध्यन्ते गुदपाके च दारुणे ॥
स्वबुद्ध्या चापि विभजेत्कृत्याकृत्यांश्च[1] बुद्धिमान् ॥
देशं दोषं च विज्ञाय व्रणं च व्रणकोविदः ॥
ऋतूंश्च परिसंख्याय ततो बन्धान्निवेशयेत् ॥३५॥

उक्तानुक्तमर्थं सुखपाठार्थं श्लोकैर्निर्दिशन्नाह,—कुष्ठिनामित्यादि । कुष्ठिप्रभृतीनां मांसपाके सति व्रणा न बध्यन्ते । मधुमेहिनां पिडका इति गुदपाके च दारुण इति बन्धो न कार्य इत्यर्थः । कृत्याकृत्यान् साध्यासाध्यान् । देशं स्फिक्कुक्षिकक्षादिकम् । दोषं वातादिकम् । व्रणकोविदो व्रणविद्वान् । ऋतून् शीतोष्णसाधारणान् । परिसंख्याय सम्यग्बुद्ध्वा । निवेशयेत् कुर्यादित्यर्थः ॥ ३३–३५ ॥

ऊर्ध्वं तिर्यगधस्ताच्च यन्त्रणा त्रिविधा स्मृता ॥
यथा च बध्यते बन्धस्तथा वक्ष्याम्यशेषतः ॥ ३६ ॥
घनां कवलिकां दत्त्वा मृदु चैवापि पट्टकम् ॥
विकेशिकामौषधं च नातिस्निग्धं समाचरेत् ॥३७॥
प्रक्लेदयत्यतिस्निग्धा तथा रूक्षा क्षिणोति च ॥
युक्तस्नेहा रोपयति दुर्न्यस्ता वर्त्म घर्षति ॥ ३८ ॥
विषमं च व्रणं कुर्यात् स्तम्भयेत् स्रावयेत्तथा ॥
यथाव्रणं विदित्वा तु योगं वैद्यः प्रयोजयेत् ॥ ३९ ॥
पित्तजे रक्तजे वाऽपि सकृदेव परिक्षिपेत् ॥
असकृत् कफजे वाऽपि वातजे च विचक्षणः ॥४०॥
तलेन प्रतिपीड्याथ स्रावयेदनुलोमतः ॥
सर्वांश्च बन्धान् गूढान्तान् सन्धींश्च विनिवेशयेत् ४१
ओष्ठस्याप्येष सन्धाने यथोद्दिष्टो विधिः स्मृतः ॥
बुद्ध्योत्प्रेक्ष्याभियुक्तेन तथा चास्थिषु जानता ॥४२॥
उत्तिष्ठतो निषण्णस्य शयनं चाधिगच्छतः ॥
गच्छतो विविधैर्यानैर्नास्य दुष्यति स व्रणः ॥ ४३ ॥

[1] 'बन्धस्यान्वये गुणं' इति पा० । [2] 'प्रकुपिताः प्रशीर्णमांसाश्च' इति पा० । 'पित्तादिजनिताश्च यदा तोददाहवेदनावन्तस्तदा न बन्ध्याः, तेन तोदादियुक्ते पैत्तिके विषजुष्टानां च पित्तरक्तबहुतया शीर्णमांसता बन्धेन भवति । प्रमेहिणः श्लथतरधातुत्वाद्बन्धादतीव प्रासुन्नतता (?) भवतीत्याद्यनुसरणीयम् । कर्णिका विषजुष्टमांसाङ्कुरः' इति चक्रः ।

[1] 'कृत्याकृत्यान् करणीयाकरणीयान्' इति चक्रः ।

**ये च[1] स्युर्मांससंस्था वै त्वग्गताश्च तथा व्रणाः ॥**
**सन्ध्यस्थिकोष्ठप्राप्ताश्च सिरास्नायुगतास्तथा ॥४४॥**
**तथाऽवगाढगम्भीराः सर्वतो विषमस्थिताः ॥**
**नैते साधयितुं शक्या ऋते बन्धाद्भवन्ति हि ॥४५॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने व्रणालेपनबन्धविधिर्नामाष्टादशोऽध्यायः ॥ १८ ॥**

केचित् सुश्रुताध्यायिनो गद्योक्तस्यार्थस्य व्यक्त्यर्थं संग्रहश्लोकान् पठन्ति—ऊर्ध्वमित्यादि । विषमं च व्रणं कुर्यादिति वैषम्यमिह निम्नोन्नतत्वेन । स्तम्भयेत् स्रावयेत्तथेति स्तम्भनं स्रावणं चेह पूयस्यैवेति । सकृदेव परिक्षिपेदिति एकवारमेव पट्टेन[2] वेष्टयेदिति । सर्वांश्च बन्धानित्यादि सर्वान् बन्धान् सन्धींश्च सर्वान् गुप्तान्तात् विनिवेशयेत् विनियोजयेत् कुर्यादित्यर्थः । ओष्ठस्येत्यादि ।—एष यथोद्दिष्टो विधिरोष्ठस्यापि संधाने स्मृतः । बुद्ध्योत्प्रेक्ष्येत्यादि । अभियुक्तेन जानता वैद्येन बुद्ध्याऽभ्यूह्यास्थिष्वपि सन्धानाय यथोद्दिष्टो विधिः कर्तव्य इति । तथेत्यादि । अवगाढतया गम्भीरा इत्यर्थः । **गयदासाचार्येण**ायं पाठोऽनार्ष एव कृतः, तन्मतानुसारिणा **ब्रह्मदेवेन** कचिद्व्याख्यातः, ताभ्यां गृहीतत्वादस्माभिर्लिखितो व्याख्यातश्च क्वचिदिति ॥ ३६–४५ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थानेऽष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ।

**अथातो[3] व्रणितोपासनीयमध्यायं व्याख्यास्यामः॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

व्रणितस्य संजातव्रणस्य, उपासनं सेवनं, तच्च गृहशय्यासनादिकं, तद्विद्यते यस्मिन् स तथा ॥ १ ॥ २ ॥

**व्रणितस्य प्रथममेवागारमन्विच्छेत्; तच्चागारं प्रशस्तवास्त्वादिकं[4] कार्यम् ॥ ३ ॥**

शय्यासनादिकं गृहस्थस्य कार्यमिति प्रागेव गृहं निर्देष्टुमाह—व्रणितस्य प्रथममेवेत्यादि । 'व्रणिनः' इत्यन्ये पठन्ति । तच्चागारं प्रशस्तवास्त्वादिकं कार्यम् ॥ ३ ॥

**प्रशस्तवास्तुनि गृहे शुचावातपवर्जिते ॥**
**निवाते न च रोगाः स्युः शारीरागन्तुमानसाः॥४॥**

यतस्तस्मिंस्तथाभूते स्थितस्य व्रणिनः शारीरादयो रोगा न भवेयुरिति दर्शयितुमाह—प्रशस्तवास्तुनीत्यादि । प्रशस्तवास्तुनि गृह इति वास्तुशब्देन देशः कथ्यते, तेन प्रशस्तदेशे गृह इत्यर्थः, प्रशस्तत्वं च देशस्य प्राङ्निम्नत्वमुदङ्निम्नत्वं कृष्णमृत्तिकत्वं सुवर्णमृत्तिकत्वं वेत्यादिकं; 'गृहसन्निवेशार्थो भूमिस्तदधिष्ठातृपुरुषो वा वास्तुशब्देनोच्यते' इत्यन्ये; तस्य प्रशस्तत्वं हि मर्मादिरहितत्वम् ॥ ४ ॥

**तस्मिन् शयनमसंबाधं[1] स्वास्तीर्णं मनोज्ञं प्राक्शिरस्कं सशस्त्रं कुर्वीत ॥ ५ ॥**

शयनस्थस्य व्रणिनः सव्रणान्यङ्गानि सुखमासत इति तदेव निर्दिशन्नाह—तस्मिन्नित्यादि । तस्मिन्निति अगारे । असंबाधम् असंकटम्, स्वास्तीर्णं शोभनैरास्तरणैस्तूलीगण्डोपधानैराच्छादनैश्चाच्छादितं, मनोज्ञं रमणीयं, सशस्त्रं शस्त्रसहितं हिंस्रनिवारणार्थम् ॥ ५ ॥

**सुखचेष्टाप्रचारः स्यात् स्वास्तीर्णे[2] शयने व्रणी ॥**
**प्राच्यां दिशि स्थिता देवास्तत्पूजार्थं च तच्छिरः॥६॥**

इत्थंभूतस्य शयनस्य गुणमाह—सुखचेष्टाप्रचारः स्यादित्यादि । चेष्टाप्रचार इति शयनपरिवर्तनादिगतिः ॥ ६ ॥

**तस्मिन् सुहृद्भिरनुकूलैः प्रियंवदैरुपास्यमानो यथेष्टमासीत ॥ ७ ॥**

तस्मिन् शयने यथा व्रणितेन स्थातव्यं तथोपदिशन्नाह—तस्मिन्नित्यादि । सुहृद्भिरिति मित्रैः । अनुकूलैरिति आत्मनोऽनुम(ग)तवर्तिभिरित्यर्थः । उपास्यमानः सेव्यमानः ॥ ७ ॥

**सुहृदो विक्षिपन्त्याशु कथाभिर्व्रणवेदनाः ॥**
**आश्वासयन्तो बहुशः स्वनुकूलाः[3] प्रियंवदाः ॥८॥**

सुहृदुपासनफलमाह—सुहृद इत्यादि । विक्षिपन्ति विशेषेण प्रेरयन्ति स्फोटयन्तीत्यर्थः; कथाः पूर्वपुरुषवृत्तान्तप्रबन्धरचनाः; आश्वासयन्तः सान्त्वयन्तः ॥ ८ ॥

**न च दिवानिद्रावशगः स्यात् ॥ ९ ॥**

शयने दोषवन्तमाचारं परिहरन्नाह—न चेत्यादि ॥ ९ ॥

**दिवास्वप्नाद्व्रणे कण्डूर्गात्राणां गौरवं तथा ॥**
**श्वयथुर्वेदना रागः स्रावश्चैव भृशं भवेत् ॥ १० ॥**

कथंचिद्दिवास्वप्ने कृते दोषमाह—दिवास्वप्नादित्यादि । अत्र कण्डूगौरवे कफकृते, श्वयथुवेदने वातकृते, रागः पित्तजनितः, स्रावो रक्तकृतः, एतेन दिवास्वप्नस्याखिलदोषकर्तृत्वमुक्तम् ॥ १०॥

**उत्थानसंवेशन[4]परिवर्तनचङ्क्रमणोच्चैर्भाषणाद्यास्वात्मचेष्टास्वप्रमत्तो व्रणं संरक्षेत् ॥ ११ ॥**

१ 'व्रणा ये स्युर्मांससंस्था त्वचि जातास्तथा व्रणाः' इति पा० । २ 'पट्टेन' इति हस्तलिखितपुस्तके न पठ्यते । ३ 'अनन्तरं व्रणलेपनाधिकाराद् कृतव्रणबन्धस्य व्रणिनो विहाराहारोपदर्शनार्थं व्रणितोपासनीयोऽभिधीयते । व्रणितोपासनं व्रणितस्याहाराचारभजनं, तदधिकृत्य कृतोऽध्यायो ज्ञेयः' इति चक्रः । ४ 'प्रशस्तवास्तुनि निविष्टं शुच्यवातातपं च' इति ताडपत्रपुस्तके पाठः ।

१ 'असंबाधं नतोन्नतत्वादिभिर्मत्कुणादिभिश्च संबाधमार्गैरसंसृष्टं' इति हाराणचन्द्रः । २ 'असंकीर्णे' इति पा० । ३ 'पूर्वपुरुषवृत्तान्तप्रबन्धरताः' इति पा० । ४ 'संवेशनं निद्रा, परिवर्तनं पार्श्वपरिवर्तनं, स्थानं दण्डवदवस्थितिः, आसनमुपविश्यावस्थानम्' इति हाराणचन्द्रः ।

सर्वास्ववस्थासु व्रणसंरक्षा करणीयेति दर्शयन्नाह—उत्थानेत्यादि । संवेशनं विश्रमणं, परिवर्तनं वामदक्षिणकट्योर्विलोटनं, चङ्क्रमणं गतागतम्, आत्मचेष्टासूत्थानादिकास्वेव, अप्रमत्तः 'व्रणी' इति शेषः ॥ ११ ॥

**स्थानासनं चङ्क्रमणं दिवास्वप्नं तथैव च ॥**
**व्रणितो न निषेवेत शक्तिमानपि मानवः ॥१२॥**

चतुर्विधामपि व्रणिनः कायचेष्टां नियमयन्नाह—स्थानासनमित्यादि । स्थानम् ऊर्ध्वीभूतस्य स्थितिः, आसनम् उपविष्टस्य स्थितिः । "स्थानासनं चङ्क्रमणं यानयानातिभाषणम् । व्रणवान्न निषेवेत शक्तिमानपि मानवः" इति केचित् पठन्ति । यानयानं रथादिगमनम् ॥ १२ ॥

**उत्थानाद्यासनं स्थानं शय्या चातिनिषेविता ॥**
**प्राप्नुयान्मारुतादङ्गरुजस्तस्माद्विवर्जयेत् ॥ १३ ॥**

उत्थानादीनामतिनिषेवणाद्दोषमाह—उत्थानेत्यादि ॥ १३ ॥

**गम्यानां च स्त्रीणां संदर्शनसंभाषणसंस्पर्शनानि दूरत एव परिहरेत् ॥ १४ ॥**

सामान्याचारान्नियम्य विशिष्टं स्पर्शाश्रयं विहारमतिदोषकरं पृथगेव निर्दिशन्नाह—गम्यानामित्यादि । गम्या गमनार्हा ग्राम्यधर्मयोग्या इत्यर्थः, ताश्च भार्यावेश्याचेटीप्रभृतयः । संदर्शनादिषु संशब्द आभिमुख्यार्थः ॥ १४ ॥

**स्त्रीदर्शनादिभिः शुक्रं कदाचिच्चलितं स्रवेत् ॥**
**ग्राम्यधर्मकृतान्दोषान् सोऽसंसर्गेऽप्यवाप्नुयात् १५**

कस्माद्गम्यस्त्रीणां संदर्शनादि परिहर्तव्यमित्याह—स्त्रीदर्शनादिभिरित्यादि ॥ १५ ॥

**नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाकाम्ललवणकटुकगुडपिष्टविकृतिवल्लूरशुष्कशाकाजाविकानूपौदकमांसवसाशीतोदककृशरापायसदधिदुग्धतक्रप्रभृतीनि परिहरेत् ॥ १६ ॥**

अतिदोषकरमाहारं नियमयन्नाह—नवधान्येत्यादि । कलायोऽत्र त्रिपुटकः, एतेन हरेणुसतीनकयोरप्रतिषेधः; निष्पावशब्देनात्र राजशिम्बी; हरितकमिति "कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणाः । मूलकं चुक्रिका चेति वर्गं हरितकं विदु"–इति । अत्राम्लादयस्त्रयो रसाः । गुडपिष्टविकृतिरिति विकृतिशब्दो गुडपिष्टाभ्यां सह संबध्यते । वल्लूरं शुष्कमांसम् । अजाविकानूपौदकमांसवसेति अजाविके प्रसिद्धे; आनूपशब्दो द्विविधः—व्युत्पादितोऽव्युत्पादितश्च, तत्राव्युत्पादितः पञ्चसु कूलचरादिषु वर्तते, अत्र तु व्युत्पादित एव ग्राह्यः, तदेवाह,—अनुगता आपो यस्मिन् सोऽनूपो देशः, तच्चारिणस्त्वानूपाः; ते च कूलचराः प्लवाश्चेति । औदकशब्देन पुनरत्र कोशस्थाः पादिनो मत्स्याश्चोच्यन्ते । वसा शुद्धमांसस्नेहः । कृशरा तिलतण्डुलमाषैः कृता यवागूः । पायसं क्षीरसिद्धास्तण्डुलाः । अन्ये तु 'अजाङ्गलविकारानूपौदकमांसं' इति पठन्ति । यद्यपि जाङ्गलवर्गोऽष्टविधस्तथाऽप्यत्र जह्वालविष्किरौ जाङ्गलशब्देनोच्येते; कुतः? तयोः प्रधानतमत्वात्, यथा लवणशब्दस्या(ब्देना)विशेषोक्तावपि प्रधानत्वात् सैन्धवं गृह्यते तद्वत्, तेनात्र जह्वालविष्किरौ विहायान्येषां जाङ्गलानां प्रतिषेध इति । आनूपौदकयोरप्यजाङ्गलत्वादेव निषेधे सिद्धे पुनरुपादानं तन्मांसानामत्यर्थं दोषवत्त्वप्रतिपादनार्थम्, अजाङ्गलमांसविकारेति निषेधमुखेन विधिप्रणयनं जह्वालविष्किरयोरप्यवस्थायामुपयोगख्यापनार्थमिति । प्रभृतिग्रहणाद्वरकोद्दालकादीनां परिहारः ॥ १६ ॥

**तक्रान्तो नवधान्यादिर्योऽयं वर्ग उदाहृतः ॥**
**दोषसंजननो ह्येष विज्ञेयः पूयवर्धनः ॥ १७ ॥**

एषां भिन्नजातीयानामपि दोषकरत्वं प्रतिपादयन्नाह—तक्रान्त इत्यादि । ननु 'तक्रप्रभृतीति परिहरेत्' इत्यत्र प्रभृतिग्रहणाद्वरकोद्दालकादीनां ग्रहणम्, अतस्तेषामपि दोषसंजननत्वं चास्ते एवं पूयवर्धनत्वं च, तत् कथं तक्रान्तो नवधान्यादिरिति विच्छेदः कृतः । उच्यते—वरकादिभ्यो नवधान्यादीनां तक्रान्तानामत्यर्थं दोषसंजननत्वपूयवर्धनत्वप्रतिपादनार्थमिति । ननु नवधान्यादौ वर्गे केचिद्वातहराः केचिच्च पित्तहराः केचिच्च कफहरास्तत् कथमुच्यते 'दोषसंजनन' इति? नैष दोषः, यतोऽत्र दोषशब्देन व्रणदुष्टिरेवोच्यते; यद्यपि व्रणदुष्टिरपि दुष्टैरेव दोषैः क्रियते तथाऽपि न दोषः, कस्मात्? निदानद्रव्याणां त्रिविधत्वात्; तद्यथा—किंचिद् द्रव्यं दोषकारि, किंचिद्व्याधिकारि, किंचिदुभयकारीति, किं बहुनोक्तेन; अत्र निबन्धकारैर्बहुधा जल्पितं, तच्चास्माभिर्विस्तरभयान्न दर्शितमिति ॥ १७ ॥

**मद्यपश्च मैरेयारिष्टासवसीधुसुराविकारान् परिहरेत् ॥ १८ ॥**

तत्र विशिष्टविषयेऽतिदोषकरत्वाद्विशिष्टं पानद्रव्यं चाश्रीकृत्य निषेधार्थमाह—मद्यपश्चेत्यादि । शस्त्रकर्मादावेकवारं मद्यपस्य मद्यपानमभिहितम्, अत्र तु व्रणे सति निषेध एव । मैरेयं सुरासवयोरेकस्मिन् भाजने संधानम् । अरिष्टमभयारिष्टादि । आसवाः पलाशक्षारोदकासवादयो महाकुष्ठाद्यभिहिताः । सीधुः सस्यकः, सोऽपि नानाप्रकारः पक्वरसिकशीतरसिकादिभेदेन । सुरा लोहितवर्णा पिष्टकिण्वकल्केन किंचित् कलुषा । अत्र केचिदाचार्या एवं ब्रुवते—"यानि मद्यान्यम्लादिगुण-

१ नवधान्येत्यादौ धान्यशब्दानुगृहीतानामपि माषादीनां पुनरुपादानं तेषां पुराणानामपि निषेधार्थम् । २ 'अजाङ्गलानूपौदकमांस°' इति चक्रसंमतः पाठः । ३ 'चुक्राकश्चुक्रिका चेति' इति पा० ।

१ 'व्रणदुष्टिरपि यद्यपि दोषदुष्टिपूर्विकैव भवति, तथाऽपि द्रव्यमहिम्ना यानि द्रव्याणि व्रणदुष्टिलक्षणव्याधिकारीणि तानीहोच्यन्ते, तेन नवधान्यादीनामिह व्रणदुष्टौ कर्तव्यायां दोषान्तरीयकतया दुष्टेर्दोषकरणमपि भवति;' यथा–मृत् पाण्डुरोगे, विरुद्धाशनं कुष्ठे, अध्यशनमजीर्णे कर्तव्ये दोषमपि तन्नान्तरीयकतया करोति,—तदुक्तं तन्त्रयुक्तिषु माषादीनां दुष्टिकर्तृत्वं–'यथा मृत्पिण्डोऽद्भिः क्लिद्यते, एवं माषतिलदुग्धप्रभृतिभिर्व्रणः' (उ. त. अ. ६५) इति चक्रः । २ 'वर्गाकुल' इति पा० ।

युक्तानि भवन्ति तानि सर्वाण्येव व्रणिभिर्न पातव्यानि, यानि पुनर्द्राक्षारसोद्भवानि मद्यान्यम्लादिगुणविपरीतगुणानि रक्तपित्तादिष्वभिमतानि तानि च व्रणितस्यावस्थायां कदाचिद्दातव्यानीत्ययं ग्रन्थकर्तुरभिप्राय" इति ॥ १८ ॥

**मद्यमम्लं तथा रूक्षं तीक्ष्णमुष्णं च वीर्यतः ॥**
**आशुकारि च तत् पीतं क्षिप्रं व्यापादयेद्व्रणम् १९**

कुतः पुनर्मैरेयादयः परिहरणीया इत्याह—मद्यमित्यादि १९

**वातातपरजोधूमावश्यायातिसेवनातिभोजनानिष्टभोजनश्रवणदर्शनेर्ष्यामर्षभयशोकध्यानरात्रिजागरणविषमाशनशयनोपवासवाग्व्यायामस्थानचङ्क्रमणशीतवातविरुद्धाध्यशनाजीर्णमक्षिकाद्या बाधाः परिहरेत् ॥ २० ॥**

आभ्यन्तराश्रयावाहारविहारौ नियम्य बाह्यानपि परिहर्त्तुमाह,—वातातपेत्यादि। ईर्ष्या परसम्पत्तिष्वसहिष्णुता। अमर्षः क्रोधः। ध्यानम् अनवरतकार्याकार्यचिन्तनम्। विषमाशनशयनमिति विषमशब्दोऽशनशयनाभ्यां सह प्रत्येकं संबध्यते; बहुस्तोकाकालभोजनं विषमाशनं, रात्रिजागरणं दिवास्वप्नश्च विषमशयनं; तत्र विषमशयनं निषिद्धमपि पुनरत्यन्तापथ्यकारित्वेन नियमार्थम्। शीतो वातः। विरुद्धाशनं सममधुघृतादिकम् ॥२०॥

**व्रणिनः संप्रतप्तस्य कारणैरेवमादिभिः ॥**
**क्षीणशोणितमांसस्य भुक्तं सम्यङ्न जीर्यति ॥२१॥**
**अजीर्णात् पवनादीनां विभ्रमो बलवान् भवेत् ॥**
**ततः शोफरुजास्रावदाहपाकानवाप्नुयात् ॥२२॥**

कुतः पुनरेते परिहार्या इत्याह—व्रणिन इत्यादि। संप्रतप्तस्येति सम्यक्प्रकारेण तापितस्य। पवनादीनामिति वातपित्तकफानामित्यर्थः। विभ्रमो व्यापद्विशेषः, वातादीनां स्थानान्तरगमनं वा। शोफरुजे वातस्य, आस्रावः कफस्य, दाहपाकौ पित्तस्येति ॥ २१ ॥ २२ ॥

**सदा नीचनखरोम्णा शुचिना शुक्लवाससा शान्तिमङ्गलदेवताब्राह्मणगुरुपरेण भवितव्यमिति। तत् कस्य हेतोः? हिंसाविहाराणि हि महावीर्याणि रक्षांसि पशुपतिकुबेरकुमारानुचराणि मांसशोणितप्रियत्वात् क्षतजनिमित्तं व्रणिनमुपसर्पन्ति, सत्कारार्थं जिघांसूनि वा कदाचित् ॥ २३ ॥**

आधिदैविकं विशिष्टमागन्तुबाधं परिजिहीर्षुराह—सदेत्यादि। शान्त्यादिपरेण शान्त्यादिरतेनेत्यर्थः। शिष्यहितार्थं गुरुः स्वयमेव प्रश्नं कुर्वन्नाह—तदित्यादि। तत नीचनखरोमादिकरणम्। अन्ये 'अपि तत् कस्य हेतोः' इति पठन्ति; 'अपिशब्दोऽत्र सौनुनयप्रश्ने' इति च व्याख्यानयन्ति। शिष्यहितत्वेन स्वयमेव हेतुसाकाङ्क्षं प्रश्नं कृत्वा सहेतुमुत्तरमाह—हिंसाविहाराणीत्यादि। हिंसाविहाराणि वधक्रीडनानि; अन्ये तु 'हिंसार्थं विहारश्चेष्टा येषां तानि हिंसाविहाराणि'। हि यस्मादर्थे, यस्मात् क्षतजनिमित्तं व्रणिनमुपसर्पन्ति, तस्मान्नीचनखादिना भवितव्यमिति। हिस्थानेऽन्ये तुशब्दं यस्मादर्थे पठन्ति। रक्षांसि पशुपतिकुबेरकुमारानुचराणि महेश्वरधनदकार्त्तिकेयानुगानि तदादेशकारीणीत्यर्थः। क्षतजनिमित्तं शोणितार्थम्। सत्कारार्थं जिघांसूनि वा कदाचित् सत्कारार्थं पूजार्थमायुष्मन्तं व्रणिनमुपसर्पन्ति, गतायुषं तु जिघांसूनीति; अन्ये त्वन्यथा व्याख्यानयन्ति—'कदाचिद्वा जिघांसूनि हन्तुमिच्छून्युपसर्पन्ति सत्कारार्थम्' इति ॥ २३ ॥

**भवति चात्र—**
**तेषां सत्कारकामानां प्रयतेतान्तरात्मना ॥**
**धूपबल्युपहारांश्च भक्ष्यांश्चैवोपहारयेत् ॥ २४ ॥**

तेषां सत्कारदानायाह—तेषामित्यादि। तेषामनुचराणां पूजाभिलाषिणां, प्रयतेतान्तरात्मना विशिष्टो वैद्यो धूपादीनुपहारयेत् दापयेदित्यर्थः। बलिः पशुवर्जिता पूजा, उपहारः सपशुर्बलिः ॥ २४ ॥

**ते तु संतर्पिता आत्मवन्तं न हिंस्युः। तस्मात् सततमतन्द्रितो जनपरिवृतो नित्यं दीपोदकशस्त्रस्रग्दामपुष्पलाजाद्यलङ्कृते वेश्मनि संपन्मङ्गलमनोऽनुकूलाः कथाः शृण्वन्नासीत ॥ २५ ॥**
**संपदाद्यनुकूलाभिः कथाभिः प्रीतमानसः ॥**
**आशावान् व्याधिमोक्षाय क्षिप्रं सुखमवाप्नुयात् २६**

तेषां तर्पणफलमाह—ते त्वित्यादि। आत्मवन्तं रक्षांसि हिंसितुं न शक्नुवन्ति। आत्मवत्ता तु नीचनखरोमादिभिर्भवति। अतन्द्रितः अनलसः। स्रक् मूर्धार्हा पुष्पमाला, दाम ग्रैवेयकादिपुष्पाभरणं, पुष्पाणि अग्रथितानि; आदिशब्दाच्चन्दनादर्शवीणादयः। संपन्मङ्गलमनोऽनुकूला इति अनुकूलशब्दः संपदादिभिः प्रत्येकं संबध्यते। संपदाद्यनुकूलत्वाच्छ्रवणफलमाह,—संपदाद्यनुकूलाभिरित्यादि ॥ २५ ॥ २६ ॥

**ऋग्यजुःसामाथर्ववेदाभिहितैरपरैश्चाशीर्विधानैरुपाध्याया भिषजश्च सन्ध्ययो रक्षां कुर्युः ॥ २७ ॥**

अपरामपि कर्तव्यतामाह—ऋग्यजुरित्यादि। आशीर्विधानैः आशीःकरणैः, आशीर्वादैरित्यर्थः। उपाध्यायाः पुरोहिताः ॥२७॥

**सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च ॥**
**द्विरह्नः कारयेद्धूपं दशरात्रमतन्द्रितः ॥ २८ ॥**

---

१ 'मद्यस्य नवधान्यादिवर्गे साक्षात् प्रभृतिशब्दाद्वा निषेधेऽपि भूरिदोषकर्तृतया पुनर्निषेधः' इति चक्रः। २ 'परिहारानाह' इति पा०।

१ 'सत्कारकामानामित्यनेन हिंसार्थिनोऽसाध्याः सूच्यन्ते, तन्त्रान्तरे हि हिंसार्थगृहीता असाध्या उक्ताः' इति चक्रः। २ 'न हिंस्युः' इति वचनेन सत्कारार्थगृहीतेऽपि यदा बल्यादिना सत्कारा न क्रियन्ते तदा तेऽपि हिंसन्तीति दर्शयति' इति चक्रः। ३ 'संपन्मङ्गल्ययुक्ताभिः' इति ताडपत्रपुस्तके पाठः। ४ 'सप्तरात्रं' इति ताडपत्रपुस्तके पाठः।

मक्षिकादिभ्यो राक्षसादिभ्यश्च रक्षार्थं धूपमाह—सर्षपारिष्टेत्यादि । अरिष्टपत्रं निम्बपत्रम् । लवणेन सैन्धवेन । द्विरह्न इति दिनस्य वारद्वयं प्रातः सायं च दशरात्रम् । सर्षपादिरक्षोघ्ननिर्हतौजांसि रक्षांसि नैव पुनर्व्रणिनमुपसर्पन्ति ॥ २८ ॥

**छत्रामतिच्छत्रां लाङ्(ङ्ग)लीं जटिलां ब्रह्मचारिणीं लक्ष्मीं गुहामतिगुहां वचामतिविषां शतवीर्यां सहस्रवीर्यां सिद्धार्थकांश्च शिरसा धारयेत् ॥ २९ ॥**

छत्रामित्यादि । छत्रातिच्छत्रे द्रोणपुष्पीद्वयं; लाङ्गली कपिकच्छुः; जटिला मांसी; ब्रह्मचारिणी मुण्डितिका, पत्तङ्गकाष्ठमित्यपरे; लक्ष्मीः शमी, लक्ष्मणेत्यन्ये, विष्णुक्रान्तेत्यपरे; गुहातिगुहे शालपर्णीपृश्निपर्ण्यौ; शतवीर्या शतावरी, नीलदूर्वेत्यन्ये; सहस्रवीर्या श्वेतदूर्वा; सिद्धार्थकाः सर्षपाः ॥ २९ ॥

**व्यज्येत बालव्यजनैर्व्रणं न च विघट्टयेत् ॥**
**न तुदेन्न च कण्डूयेच्छयानः परिपालयेत् ॥ ३० ॥**

अन्यदप्याह—व्यज्येतेत्यादि । बालव्यजनैः चामरैः । न च विघट्टयेत् न चालयेत् । न तुदेत् न व्यथयेत् । न कण्डूयेत् न खर्जूयेत्, नखविषभयात् । शयानं स्वपन्तम् । केचिदमुं न पठन्ति ॥ ३० ॥

**अनेन विधिना युक्तमादावेव निशाचराः ॥**
**वनं केशरिणाऽऽक्रान्तं वर्जयन्ति मृगा इव ॥ ३१ ॥**

एतस्य रक्षोघ्नविधेः फलं दर्शयन्नाह—अनेनेत्यादि ॥ ३१ ॥

**जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ॥**
**भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥ ३२ ॥**
**तण्डुलीयकजीवन्तीसुनिषण्णकवास्तुकैः ॥**
**बालमूलकवार्ताकपटोलैः कारवेल्लकैः ॥ ३३ ॥**
**सदाडिमैः सामलकैर्घृतभृष्टैः ससैन्धवैः ॥**
**अन्यैरेवंगुणैर्वाऽपि मुद्गादीनां रसेन वा ॥**
**शक्तून् विलेपीं कुल्माषाञ्जलं चापि शृतं पिबेत् ३४**

आहारविधिविधेयमधिकृत्याह—जीर्णशाल्योदनमित्यादि । जीर्णशाल्योदनमिति नवधान्यनिषेधादेव पुराणशालिर्लब्धः, पुनर्जीर्णग्रहणं प्रपुराणनिषेधार्थं; तेन वर्षोषितं ग्राह्यम् । द्रवोत्तरमिति द्रव उत्तरो यस्मिन् स द्रवोत्तरः, द्रवप्रधान इति केचिद्व्याख्यानयन्ति; इदं च व्याख्यानं **गयदासाचार्यो** न मन्यते, कस्मात्? व्रणिनां तोयपाननिषेधात् । तदुक्तं—"व्रणे च मधुमेहे च पानीयं मन्दमाचरेत्" ( सू. अ. ४५ )—इति, तथा **भोजे**ऽपि "व्रणोदरास्थापनपीडितानां प्रमेहिणां छर्दयतिसारिणां च । द्रवं न दद्यादथवाऽपि कोष्णं स्वल्पं हितं भेषजसंस्कृतं च"–इति; तथा द्वादशाशनप्रविचारेऽपि,—"प्रक्लिन्नदेहान् व्रणिनः शुष्कैर्मेहिन एव च" (उ. तं. अ. ६४) इति, तस्मात् द्रवादुनरो द्रवोत्तरो द्रवहीनो मूर्तप्रधान इति व्याख्येयम् । जाङ्गलमांसभोजनमपि रोपणकाले दातव्यं, "मांसं मांसेन वर्धते" इतिवचनात् । जीवन्ती डोडिका, सुनिषण्णकः शिरिबालिका, चतुष्पर्णीत्यन्ये । घृतभृष्टैरिति एतेन घृतेनैव संस्कारो विधेयो नान्यैरिति । ससैन्धवैरिति सैन्धवमेव लवणेषु ग्राह्यम् । अन्यैरेवंगुणैर्वेति स्वास्थ्यानुवृत्तिकैर्द्रव्यैश्च वेत्राग्रमण्डूकपर्णीकर्कोटकप्रभृतिभिः । मुद्गादीनां रसेन वेति शमीधान्येषु निषेधवर्जं मुद्गादयः । रसेन यूषेण । शक्तूनिति यथासात्म्यं यवसात्म्यानां यवशक्तवः, शाल्यादिसात्म्यानां तल्लाजशक्तव इति । विलेपी स्वल्पद्रवा बहुसिक्था । कुल्माषा यवपिष्टमया उत्स्विन्नाः ॥ ३२–३४ ॥

**दिवा न निद्रावशगो निवातगृहगोचरः ॥**
**व्रणी वैद्यवशे तिष्ठन् शीघ्रं व्रणमपोहति ॥ ३५ ॥**
**(व्रणे श्वयथुरायासात् स च रागश्च जागरात् ॥**
**तौ च रुक् च दिवास्वापात्ताश्च मृत्युश्च मैथुनात् ॥)**
**एवंवृत्तसमाचारो व्रणी संपद्यते सुखी ॥**
**आयुश्च दीर्घमाप्नोति धन्वन्तरिवचो यथा ॥ ३७ ॥**

**इति श्रीसुश्रुतसंहितायां सूत्रस्थाने व्रणितोपासनीयो नामैकोनविंशोऽध्यायः ॥ १९ ॥**

यथोक्ताहाराचारानुवर्तिनो व्रणितस्य फलोपदर्शनपरं श्लोकद्वयमाह—दिवेत्यादि । निवातगृहगोचर इति वातरहितागारविषयः, तत्स्थायीत्यर्थः । एवमनेन प्रकारेण वृत्तः प्राप्तः सम्यगाचार आहारो विहारश्च येन; अथवा, एवमनेन प्रकारेण वृत्तस्य समाचारः समाचरणं व्यवहरणं यस्य स एवंवृत्तसमाचारः । संपद्यते सुखीति सुखीभवतीत्यर्थः । यथेति सत्यम् । कश्चिदाचार्यस्त्वनयोः श्लोकयोर्मध्येऽमुं श्लोकं पठति,—"व्रणे श्वयथुरायासात् स च रागश्च जागरात् । तौ च रुक् च दिवास्वापात्ताश्च मृत्युश्च मैथुनात्"—इति । व्याख्यानयति च—स च श्वयथुः रागश्च रक्तता च जागराद्रात्रिजागराद्भवतः, तौ चेति श्वयथुरागौ रुक् व्यथा च दिवास्वप्राद्भवन्ति, ता इति श्वयथुरागरुजो मृत्युश्च मैथुनात् संभवन्तीत्यर्थः । **श्रीगयदासाचार्य**प्रभृतयस्तु द्वावेव श्लोकौ मन्यन्ते । इमं च क्वासिंश्चित् पुस्तके प्रमादपठितं दृष्ट्वा कश्चिदेवाविचितपाठव्याख्याता व्याख्यानयति । अस्मिंश्चाङ्गीक्रियमाणे निर्णीतपाठव्याख्यातृभिः **श्रीगयदास**प्रभृतिभिः सह विरोधः स्यात्, तस्मादयं न पठनीय इति ॥ ३५–३७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थान एकोनविंशोऽध्यायः ॥ १९ ॥

१ 'मक्षिकादीनां रक्षआदीनां च' इति पा० । २ 'ब्रह्मचारिणी ब्रह्मयष्टिः' इति चक्रः । ३ 'द्रवादुत्तरो द्रवहीन इत्यर्थः, ननु द्रवप्रधानः; किंवा द्रवमुत्तरं भेषमान्तरीक्षादि, तच्चाल्पमेव वचनान्तराज्ज्ञेयम्' इति चक्रः ।

१ 'भोजनकाले' इति पा० ।

## विंशतितमोऽध्यायः।

**अथातो हिताहितीयमध्यायं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । हिताहितान्यधिकृत्य कृतोऽध्यायो, हिताहितानि वाऽस्मिन् विद्यन्त इति हिताहितीयः ॥ १ ॥ २ ॥

**यद्वायोः पथ्यं तत् पित्तस्यापथ्यमित्यनेन हेतुना न किंचिद्द्रव्यमेकान्तेन हितमहितं वाऽस्तीति केचिदाचार्या ब्रुवते । तत्तु न सम्यक्; इह खलु यस्माद्द्रव्याणि स्वभावतः संयोगतश्चैकान्तहितान्येकान्ताहितानि हिताहितानि च भवन्ति ॥ ३ ॥**

प्रथमं परमतमेव दर्शयन्नाह—यद्वायोः पथ्यमित्यादि । यद्वायोः पथ्यं तत् पित्तस्यापथ्यमिति तैलकाञ्जिकमित्यादि । इतिशब्दोऽयमाद्यर्थः । एकान्तेन सातत्येन किंचिदपि द्रव्यं हितं नास्ति, पित्तस्यापथ्यत्वात्; तथैकान्तेनाहितमपि नास्ति, वायोः पथ्यत्वात् । वाशब्दोऽत्र समुच्चयार्थः । परमतनिषेधार्थं स्वमतमाह—तत्त्वित्यादि । इहेति सौश्रुते तन्त्रे । खलु निश्चयेन । स्वभावतः प्रकृतितः; या सर्वावस्थास्वपरित्याज्या सा द्रव्यस्य प्रकृतिः; यथा—वह्नेरुष्णत्वम्, अपां द्रवत्वमित्यादि । संयोगत इति संयोगः एकद्वित्र्यादिद्रव्येण संहतीभावः । चकारेण संयोगेष्वपि स्वभावोऽपि हेतुत्वेन समुच्चीयते, तथा देशकालमात्रासंस्काराश्च स्वभावानुसंबद्धाः समुच्चीयन्ते ॥ ३ ॥

**तत्र, एकान्तहितानि जातिसात्म्यात् सलिलघृतदुग्धौदनप्रभृतीनि; एकान्ताहितानि तु दहनपचनमारणादिषु प्रवृत्तान्यनलक्षारविषादीनि, संयोगादपराणि विषतुल्यानि भवन्ति; हिताहितानि तु यद्वायोः पथ्यं तत् पित्तस्यापथ्यमिति ॥ ४ ॥**

एकान्तहितान्येव प्रथमं दर्शयन्नाह—तत्रैकान्तहितानीत्यादि । तत्रेति हिताहितद्रव्येषु मध्ये । जातिसात्म्यादिति मनुष्यजातिसात्म्यात् । आत्मना देहेन सह स्थितं द्रव्यमविकारि सात्म्यं; यदुक्तं—"आत्मा ह्यभिमतो देह आत्मना सह यत् स्थितम् । न कुर्याद्विकृतिं द्रव्यमुपयुक्तं कथंचन ॥ सात्म्यमित्युच्यते तत्तु" इति । प्रभृतिग्रहणाद्यवगोधूमादयः । एकान्ताहितानि दर्शयन्नाह—एकान्ताहितानीत्यादि । एतान्यग्निक्षारविषादीन्येकान्ताहितानि स्वस्थानां, रोगिणां तु रोगमात्राद्यपेक्षया हितान्येवेति । संयोगादित्यादि । अन्ये त्वेवं पठन्ति,—'तेषामेव संयोगतस्त्वपराणि' इति, व्याख्यानयन्ति च—एकान्ताहितानीति संबध्यते, तुशब्दश्चार्थः; तेन स्वभावसंयोगानुपक्तैर्देशादिभिरप्येकान्ताहितानि भवन्ति । हिताहितानि दर्शयन्नाह—हिताहितानित्यादि । अस्यार्थः प्रागेवात्रैवाध्याये व्याख्यातः ॥ ४ ॥

**अतः सर्वप्राणिनामयमाहारार्थं वर्ग उपदिश्यते; तद्यथा—रक्तशालिषष्टिककङ्गुकमुकुन्दकपाण्डुकपीतकप्रमोदककालकासनपुष्पककर्दमकशकुनाहृतसुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमयववैणवैणहरिणकुरङ्गमृगमातृकाश्वदंष्ट्राकरालकक्रकरकपोतलावतित्तिरिकपिञ्जलवर्तीरवर्तिकामुद्गवनमुद्गमकुष्ठकलायमसूरमङ्गल्यचणकहरेण्वाढकीसतीनाश्चिल्लिवास्तुकसुनिषण्णकजीवन्तीतण्डुलीयकमण्डूकपर्ण्यः, गव्यं घृतं, सैन्धवं, दाडिमामलकमित्येष वर्गः सर्वप्राणिनां सामान्यतः पथ्यतमः ॥ ५ ॥**

अत इत्यादि । रक्तशालिः स्वनाम्ना प्रसिद्धः । षष्टिको गौरषष्टिकः । कङ्गुको गौरकृष्णषष्टिकः । मुकुन्दकः कृष्णषष्टिकः । पाण्डुकः पाण्डुकशालिः, स च पाण्डुतुषयुक्तः । सुगन्धको देवशालिः । कलमः शालिविशेषः 'कलविः' इति लोके प्रसिद्धः । एते षष्टिकादयः शूकधान्येषु । नीवारः प्रसादि(ति)काधान्यमध्ये रक्तशूको भवति, 'तुलजीधान्यम्' इति लोके प्रसिद्धः । उद्दालक आरण्यकोद्रवः । वैणवो वेणुयवः । नीवारादयस्तु कुधान्येषु । एणः कृष्णमृगः । हरिणस्ताम्रवर्णो मृगः ।

१ 'पूर्वाध्याये पुराणरक्तशाल्यादीनां हितत्वं नवधान्यादीनां चाहितत्वमुक्तं, तत्र हिताहिते विवादनिषेधेन स्वमतस्थापनार्थं हिताहितीयोऽभिधीयते' इति चक्रः । २ 'स्वभावत इति प्रकृतेः, प्रकृतिश्च जातिप्रतिबद्धस्वरूपं; यथा रक्तशाले रक्तशालित्वं, तथा तत्र प्रतिबद्धं च लघुत्वत्रिमलापहत्वादि । संयोगो द्रव्याणां मेलकः, स चेह द्रव्यप्रकृत्यतिरिक्तकार्यकारको ज्ञेयः, यथा मधुघृतसमानसंयोगादिः; प्रकृत्यनुगुणसंयोगस्तु प्रकृतिकार्येणैव गृहीतः; संयोगेन चेह संबन्धमात्राभिधायिना देशकालसंस्कारमात्राणां चातिरिक्तफलानां ग्रहणम्' इति चक्रः । ३ 'नवा एकान्तेनाहितमस्ति' इति पा० । ४ 'तत्रैकान्तेत्यादिना एकान्तहितानि, एकान्ताहितानि, हिताहितानीति त्रितयविवरणम् । एकान्ताहितानि स्वभावात् संयोगाच्च जात्यसात्म्यत्वादेव भवन्ति; तत्राग्न्यादीनि स्वभावाद्विरुद्धानि, समधृतमधुघृतादीनि च संयोगाद्विरुद्धानि । विषतुल्यानीति विषवदनर्थकारित्वात् । हिताहितानि त्वित्यादि । यद्वायोरुष्णत्वाम्लत्वादिना पथ्यं मातुलुङ्गं तत्तेनैव पित्ते समानगुणतया अपथ्यम्, तथा संयोगतश्च यन्मांसं तैलतक्रादिसंस्काराद्वायोः पथ्यं तत् पित्तस्यापथ्यमित्याद्युदाहार्यम् । अनेन च प्रकरणेन यत् प्रायः स्वास्थ्यानुवृत्तिकरं तदेकान्तहितं, यत्तु स्वास्थ्यविरुद्धं तदेकान्ताहितं, यत्तु स्वास्थ्याविहितं रोगावस्थानियतोपयोगं तद्धिताहितं; तथैकदोषहरं द्विदोषहरं त्रिदोषहरं व्याधिहरं वा, तत्तदवस्थामात्रे हिततया स्वास्थ्याहिततया च हिताहितं; नहि दशमूलं त्रिदोषहरमपि स्वास्थ्यहितं; यत्तु रक्तशाल्यामलकादि त्रिदोषहरं, तदपि स्वास्थ्ये हिततयैकान्तहितमेव, एवं घृतं कफकरमपि स्वस्थैकान्तहिततयैकान्तहितमेवोक्तम्; एवमश्यापि अर्शआदौ हितमपि स्वास्थ्याहिततयाऽहितमेव' इति चक्रः ।

१ 'एतच्च रक्तशाल्यादीनां सात्म्यत्वमभ्यासापेक्षं, तेनानभ्यासादेशविशेषे आपाततोऽहितत्वं तन्नोद्भावनीयम्' इति चक्रः । २–३ 'सर्वव्रणिनां' इति पा० ।

कुरङ्गः 'चतुरङ्ग' इति लोके प्रसिद्धः । मृगमातृका स्वल्पा पृथूदरा चतुरङ्गस्त्री । श्वदंष्ट्रा चतुर्दंष्ट्रोऽतिदुष्टः 'कर्कटक' इति लोके । करालः कस्तूरीमृगः । तित्तिरिः कृष्णतित्तिरिः । कपिञ्जलो गौरतित्तिरिः । वर्तीरः 'घर्घर' इति लोके; वर्तिका तद्भेदः । एणादयो जाङ्गलमृगमांसेषु । लावादयो जाङ्गलपक्षिषु । मङ्गल्याः पाण्डुवर्णा मसूराः । हरेणुः सतीनभेदो वर्तुलकलायः । आढकी तुवरी । सतीनो वर्तुलकः । मुद्गादयो वैदलसूप्येषु । चिल्ली क्षेत्रवास्तुकः । वास्तुकः टङ्कवास्तुकः । सुनिषण्णकः शिरिवालिका, चतुष्पर्णीत्यपरे । जीवन्ती डोडिका । मण्डूकपर्णी ब्राह्मी । चिल्लीप्रभृतीनि शाकेषु । गव्यं घृतं स्नेहेषु । सैन्धवं लवणेषु । आमलकदाडिमौ फलेषु । ननु, नीवारकोद्रवोद्दालकादीनां वातकरत्वाद्वाताहितत्वं स्यात्, तत् कथं हितानीत्युच्यन्ते ? नैवम्; अल्पवातकरत्वाददोषकरत्वव्यपदेश इति ॥ ५ ॥

**तथा ब्रह्मचर्यनिवातशयनोष्णोदकस्नाननिशास्वप्नव्यायामाश्चैकान्ततः पथ्यतमाः ॥ ६ ॥**

आहारमैकान्तिकं निर्दिश्य विहारं निर्दिशन्नाह—तथेत्यादि । ब्रह्मचर्यं स्त्रीसेवानिवृत्तिः । व्यायामः स्वस्थस्य मात्रया काले च पथ्यतमः । व्यायामाश्चेति चकाराद्वेगाविधारणादीनां ग्रहणम् ॥ ६ ॥

**एकान्तहितान्येकान्ताहितानि तु प्रागुपदिष्टानि, हिताहितानि तु यद्वायोः पथ्यं तत् पित्तस्यापथ्यमिति । ७ ॥**

एकान्तेत्यादि ।—एकान्तहितानि सलिलादीनि । एकान्ताहितानि अग्न्यादीनि; एतानि पूर्वं कथितानि । हिताहितानि त्विति तुशब्दश्चार्थे, तेन हिताहितानि च प्रागुपदिष्टानि । कानि पुनस्तानि हिताहितानि प्रागुपदिष्टानीत्याह—यद्वायोः पथ्यं तत् पित्तस्यापथ्यमिति ॥ ७ ॥

**संयोगतस्त्वपराणि विषतुल्यानि भवन्ति । तद्यथा-वल्लीफलकवककरीराम्लफललवणकुलत्थपिण्याकदधितैलविरोहिपिष्टशुष्कशाकाजाविकमांसमद्यजाम्बवचिलिचिममत्स्यगोधावराहांश्च नैकध्यमश्नीयात् पयसा ॥ ८ ॥**

संयोगतस्त्वित्यादि । विषतुल्यानीति विषतुल्यत्वेनैकान्ताहितत्वमुक्तम् । कुतः ? स्वस्थे विषस्येकान्ताहितत्वात् । तान्येव दर्शयन्नाह—तद्यथेत्यादि । वल्लीफलं कूष्माण्डादिवल्लीजम्, अन्ये शिम्ब्यादिमाहुः; कवकं छत्रकं, 'छत्रकभेदं सुखण्डकसंज्ञम्' इत्यन्ये; करीरो वंशाङ्कुरः; अम्लफलानि आम्रातकादीनि; विरोहि विगतरोहं चणकादिकमङ्कुरितं च; पिष्टं तण्डुलपिष्टं; जाम्बवं जम्बूफलं; चिलिचिममत्स्यः शकली लोहिताक्षः सर्वतो लोहितराजिः प्रायो भूमौ चरति स्थलमीनसंज्ञकः । नैकध्यं नैकस्मिन् काले । एतानि वल्लीफलादीनि वराहान्तानि समस्तव्यस्तान्यपि पयसा सह नाश्नीयात् । केचिदेतस्य वर्गस्यान्ते 'अजाङ्गलं मांसं स्वस्थानामन्यत्र रोगोपसृष्टेभ्यः' इति पठन्ति, व्याख्यानयन्ति च—अजाङ्गलं मांसं जलेशयानूपादिभेदेन पञ्चप्रकारम् ॥ ८ ॥

**रोगं सात्म्यं च देशं च कालं देहं च बुद्धिमान् ॥**
**अवेक्ष्याग्न्यादिकान् भावान् रोगवृत्तेः प्रयोजयेत् ॥९**

विरुद्धस्यापि क्वचित् प्रयोगं दर्शयन्नाह—रोगमित्यादि । रोगम् उदरादिकम् । सात्म्यम् अष्टविधं जात्यातुरौषधान्नरसदेशर्तूदकभेदतः । देशमानूपादिकम् । कालं शीतोष्णवर्षलक्षणम् । देहं स्थूलकृशमध्यभेदभिन्नम् । अग्न्यादिकान् भावानिति अग्न्यादिकान् पदार्थान् । आदिशब्दात् प्रकृतिवयोबलसत्त्वादि गृह्यते । रोगवृत्तेः रोगिण इत्यर्थः । एतेन बुद्धिमानूहापोहवितर्कानुगतधीयुक्तो वैद्यो रोगादीनवेक्ष्यैकान्ताहितमपि रोगिणः प्रयोजयेदिति । तद्यथा—उदरिणस्तिलमात्रविषभक्षणं कृष्णसर्पदष्टेक्षुकाण्डभक्षणं चेत्यादिकं बोद्धव्यम् ॥ ९ ॥

**अवस्थान्तरबाहुल्याद्रोगादीनां व्यवस्थितम् ॥**
**द्रव्यं नेच्छन्ति भिषज इच्छन्ति स्वस्थरक्षणे ॥ १० ॥**
**द्वयोरन्यतरादाने वदन्ति विषदुग्धयोः ॥**
**दुग्धस्यैकान्तहिततां विषमेकान्ततोऽहितम् ॥ ११**
**एवं युक्तरसेष्वेषु द्रव्येषु सलिलादिषु ॥**
**एकान्तहिततां विद्धि वत्स सुश्रुत नान्यथा ॥ १२ ॥**

तस्माद्धिताहितत्वेन व्यवस्थितं द्रव्यं नास्तीत्याह—अवस्थान्तरबाहुल्यादित्यादि । अवस्थान्तरबाहुल्यात् अवस्थाविशेषाणां प्राचुर्यात् । केषामवस्थाविशेषा इत्याह—रोगादीनाम् । आदिशब्दात् सात्म्यदेशादीनां ग्रहणम् । व्यवस्थितं द्रव्यं नेच्छन्तीति हितमेवेदमहितमेवेदमिति वैद्या नेच्छन्ति, अवस्थाविशेषबाहुल्यात् । किं सर्वत्रैव व्यवस्थितं द्रव्यं नेच्छन्तीत्याह—इच्छन्ति स्वस्थरक्षण इति ।—स्वस्थरक्षणे पुनर्व्यवस्थितं द्रव्यं वैद्या इच्छन्त्येवेति । अमुमेवार्थं दर्शयन्नाह—द्वयोरित्यादि । द्वयोः स्वस्थरोगिणोः । अन्यतरादान इति सामान्योक्तावपि स्वस्थस्यैव ग्रहणम् । तेन विषदुग्धयोर्मध्ये स्वस्थे दुग्धस्यैकान्तहिततां भिषजो वदन्ति, विषं पुनरेकान्ततोऽहितमिति वदन्ति । एवं युक्तरसेष्वेष्विति एवमनेन स्वस्थोपयोगप्रकारेण । विद्धि जानीहि । नान्यथेति नास्वस्थोपयोगप्रकारेण ॥ १०–१२ ॥

---

१ 'वल्लीफलादीनामाद्यावन्ते च पयः कालविशेषापेक्षसंयोगविरुद्धमेव' इति चक्रः । २ 'नलमीनसंज्ञकः' इति पा० ।

१ 'जात्यातुररोगधान्यरसदेशर्तूदकभेदतः' इति पा० । २ 'अन्यतरशब्देनेह प्रकृतत्वात् सन्निहितत्वाद्वा स्वस्थ एवाभिप्रेत इति निश्चीयते, अर्थान्तरासंभवात् । तथा द्वयोर्विषदुग्धयोः स्वस्थेनाभ्यवहारोऽन्यतरादानं, तस्मिन् दुग्धस्यैकान्तहिततां विषं चैकान्ततोऽहितं वदन्ति, 'जातिसात्म्यादेकान्ताहितत्वाच्च' इति शेषः' इति हाराणचन्द्रः । ३ युक्तरसेषु दुग्धवत्प्रभावसंसिद्धस्वस्थानुवर्तिरसयुक्तेषु, नान्यथा नान्यत्र न तद्विपरीतेषु विषादिष्वित्यर्थः' इति हाराणचन्द्रः ।

**अतोऽन्यान्यपि संयोगादहितानि वक्ष्यामः—नवविरूढधान्यैर्वसामधुपयोगुडमाषैर्वा ग्राम्यानूपौदकपिशितादीनि नाभ्यवहरेत्; न पयोमधुभ्यां रोहिणीशाकं जातुकशाकं वाऽश्नीयात्, बलाकां वारुणीकुल्माषाभ्यां, काकमाचीं पिप्पलीमरिचाभ्यां; नाडीभङ्गशाककुक्कुटदधीनि च नैकध्यं; मधु चोष्णोदकानुपानं; पित्तेन चाममांसानि; सुराकृशरापायसांश्च नैकध्यं; सौवीरकेण सह तिलशष्कुलीं; मत्स्यैः सहेक्षुविकारान्; गुडेन काकमाचीं, मधुना मूलकं, गुडेन वाराहं मधुना च सह विरुद्धं; क्षीरेण मूलकम्, आम्रजाम्बवश्वाविच्छूकरगोधाश्च; सर्वांश्च मत्स्यान् पयसा, विशेषेण चिलिचिमं; कदलीफलं तालफलेन पयसा दध्ना तक्रेण वा; लकुचफलं पयसा दध्ना माषसूपेन वा, प्राक् पयसः पयसोऽन्ते वा ॥ १३ ॥**

अतोऽन्यान्यपीत्यादि । नवविरूढधान्यैरिति नवविरूढधान्यादिभिः सह ग्राम्यादीनां मांसादीनि नाश्नीयादित्यर्थः । नवधान्यादिभिः समस्तैर्व्यस्तैरपि ग्राम्यादीनां पिशितादीनि विरुद्धानीति । विरूढं विगताङ्कुरमङ्कुरितं च । रोहिणीशाकं कटुकाशाकम् । जातुकशाकं पौष्करशाकम् । बलाकां वारुणीकुल्माषाभ्यामिति बलाका बकभेदः; वारुणी मद्यापरपर्यायः, कुल्माष उत्स्विन्नमाषादिः; आभ्यां सह बलाकां नाश्नीयादिति योज्यम् । काकमाचीमित्यादि पिप्पलीमरिचाभ्यां सह काकमाचीं नाश्नीयादिति योजनीयम् । नाडीभङ्गशाकं नाडीपल्लवशाकं, कुक्कुटस्ताम्रचूडः; एतानि द्विशस्त्रिशोऽपि वा नाश्नीयात् । मधु चेति न हितमित्यर्थः । पित्तं कालखण्डलग्नम् । सुरा मद्यभेदः, कृशरा तिलतण्डुलमाषैः कृता यवागूः, पायसं क्षीरसिद्धास्तण्डुलाः; अमून्यपि त्रिशो द्विशो वाऽपि विरुद्धानि । सौवीरकेणेति सौवीरकं काञ्जिकविशेषो विरेचनाधिकारे वक्ष्यते । इक्षुविकारान् गुडादीन् । गुडेन काकमाचीमित्यादि । अन्ये त्वेवं पठन्ति,—'गुडेन काकमाचीं, मधुना मूलकं, वाराहं क्षीरेण मूलकं च' । अपरे त्वेवं पठन्ति,—'गुडेन काकमाचीं, मधुना मूलकं वाराहं च'; चकारात् 'मधुन' इति पदं वाराहेण काकमाच्या च सह संबध्नन्ति । आम्रजाम्बवेत्यादि 'नैकध्यमश्नीयात्' इति वाक्यशेषः । श्वावित् सेहिका । सर्वांश्च मत्स्यानित्यादि ननु 'सर्वांश्च मत्स्यान् पयसा' इत्यनेनैव चिलिचिममत्स्यविरोधः सिद्धः, तत् किमर्थं वल्लीफलादिषु चिलिचिममत्स्यस्य पयसा विरोधपाठ इत्याह—विशेषेण चिलिचिममिति । कदलीफलमित्यादि तालादिभिः सह कदलीफलं नाश्नीयादित्यर्थः । लकुचेत्यादि दध्यादिभिः सह लकुचफलं नाश्नीयादित्यर्थः । केचिदत्र 'मधुना घृतेन च' इति पठन्ति, लकुचफलं नाश्नीयादिति च व्याख्यानयन्ति । अयं पाठो वर्तमानासु बहुषु प्रतिषु पठ्यते, न तु निबन्धेषु, तस्मान्न पठनीय इति । प्राक् पयसः पयसोऽन्ते वेति 'लकुचफलं नाश्नीयात्' इति शेषः ॥ १३ ॥

**अतः कर्मविरुद्धान् वक्ष्यामः—कपोतान् सर्षपतैलभृष्टान्नाद्यात्; कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्व्यग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात्; कांस्यभाजने दशरात्रपर्युषितं सर्पिः; मधु चोष्णैरुष्णे वा; मत्स्यपरिपचने शृङ्गवेरपरिपचने वा सिद्धां काकमाचीं; तिलकल्कसिद्धमुपोदिकाशाकं; नारिकेलेन वराहवसापरिभृष्टां बलाकां; भासमङ्गारशूल्यं नाश्नीयादिति ॥ १४ ॥**

संयोगविरुद्धानभिधाय कर्मविरुद्धान् वक्तुमाह—अत इत्यादि । कर्मशब्देनात्र संस्कारोऽभिप्रेतः । एरण्डदार्व्यग्निसिद्धा इति एरण्डदारुहरिद्राग्निसिद्धाः; 'एरण्डदार्वग्निसिद्धा' इत्यन्ये पठन्ति, 'एरण्डकाष्ठवह्निना सिद्धाः' इति च व्याख्यानयन्ति । नाद्यात् न खादेत् । दशरात्रपर्युषितमिति दशनिशादिनानि निवासितम् । मधु चोष्णैरिति उष्णैरुष्णस्पर्शद्रव्यैः, उष्णस्पर्शत्वं चाग्न्यादिजनितं ज्ञेयम् । उष्णे उष्णकाले ग्रीष्मे शरदि चेत्यर्थः । मत्स्यपरिपचन इति परिपचनं पात्रमुच्यते । नारिकेलेनेत्यादि वराहवसापरिभृष्टां बलाकां नारिकेलेण सह नाश्नीयादित्यर्थः । भासमिति भासो गृध्रविशेषः खल्पतुण्डो धूसरवर्णः । यच्छूलेन विद्ध्वा अङ्गारेषु पक्वं तदङ्गारशूल्यम् ॥ १४ ॥

**अतो मानविरुद्धान् वक्ष्यामः—मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्; स्नेहौ मधुस्नेहौ जलस्नेहौ वा विशेषादान्तरीक्षोदकानुपानौ ॥ १५ ॥**

जलस्नेहावित्यादि आन्तरीक्षोदकानुपानौ विशेषतो मधुस्नेहौ जलस्नेहौ वा नाश्नीयात् । तदेवं स्वभावापथ्यसंयोगकालसंस्कारमानैः पञ्चप्रकाराणि विरुद्धानि निर्दिष्टानि ॥ १५ ॥

**अत ऊर्ध्वं रसद्वन्द्वानि रसतो वीर्यतो विपाकतश्च विरुद्धानि वक्ष्यामः—तत्र मधुराम्लौ रसवीर्यविरुद्धौ मधुरलवणौ च, मधुरकटुकौ च सर्वतः, मधुरतिक्तौ रसविपाकाभ्यां मधुरकषायौ च, अम्ललवणौ रसतः, अम्लकटुकौ रसविपाकाभ्याम्, अम्लतिक्तावम्लकषायौ च सर्वतः, लवणकटुकौ रसविपाकाभ्यां, लवणतिक्तौ लवणकषायौ च सर्वतः, कटुतिक्तौ रसवीर्याभ्यां कटुकषायौ च, तिक्तकषायौ रसतः ॥ १६ ॥**

अत ऊर्ध्वमित्यादि । मधुरलवणौ चेति चकारेण रसवीर्यविरुद्धाविति समुच्चीयते । सर्वत इति रसवीर्यविपाकतः; एवं सर्वत्र रसद्वन्द्वप्रकरणे सर्वतःशब्दो व्याख्यातव्यः । मधुरकषायौ चेति चकारेण इमावपि रसविपाकाभ्यां विरुद्धाविति समुच्चीयते । कटुकषायौ चेति चकारादेतावपि रसवीर्याभ्यां विरुद्धाविति । मधुराम्लावित्यादिपाठेन दधिशर्करादिद्वन्द्वेषूपयोगार्हेषु न विरोधः, अन्येषु चानुपयोगार्हेषु विरोध इति सूचितम् ।

१ 'कटुकषायौ तिक्तकषायौ च रसतः' इति पा० ।

**श्रीगयदासादय** आचार्या अमुं पाठमनार्षं वर्णयन्ति; कस्मात्? 'आदौ मधुरमश्नीयात्' (सू. अ. ४६) इत्यादिना सर्वरसाभ्यवहारस्य स्वस्थानामुक्तत्वात्, 'न चैकरससेवायां' इत्यादिना चैकरससेवाया निषिद्धत्वात्; तस्मान्न पठनीय एवायं ग्रन्थ इति । **श्रीब्रह्मदेव**स्त्वार्षानार्षचिन्तामकुर्वन्नमुं ग्रन्थं पठति व्याख्यानयति च । तत्पठितव्याख्यातत्वात् सर्वमतदर्शिभिरस्माभिरपि लिखितः क्वचिद्व्याख्यातश्चेति ॥ १६ ॥

**तरतमयोगयुक्तांश्च भावानतिस्निग्धानतिरूक्षानत्युष्णानतिशीतानित्येवमादीन् विवर्जयेत् ॥ १७ ॥**

अतिशयगुणयोगयुक्ता माहिषक्षीरादिपदार्था हिता अपि स्वस्थानामेकान्ताहिता भवन्तीति दर्शयन्नाह—तरतमेत्यादि । तरतमयोगयुक्तांश्च भावानिति अतिशयस्नेहादिगुणसहितानि द्रव्याणीत्यर्थः । तानेवातिशयगुणयुक्तान् विवृण्वन्नाह—अतिस्निग्धानित्यादि । तस्मान्माहिषं दुग्धं गव्यादतिशयस्निग्धं स्वस्थस्य समाग्नेर्वर्ज्यम्, अस्वस्थस्य च तीक्ष्णाग्नेः सेव्यमित्यादि द्रष्टव्यम् । युक्तांश्चेति चकारोऽतिशयगुणयुक्तानामपि पथ्यतमायुष्यतमवृष्यतमानां सेवनं समुच्चिनोति, एषामेकान्तहितत्वात्; एभ्योऽन्येऽतिशयगुणयुक्ताः स्वभावादेवैकान्ताहिता इति । एवमादीनित्यादिशब्दादन्येऽपि वीर्यसंज्ञका गुणाः पिच्छिलविशदतीक्ष्णमृदवो गृह्यन्ते, तथा गुरुलघुवीर्यं च । अन्ये तु 'आदिशब्दादुक्तेभ्योऽन्येऽपि सर्वे गुणा गृह्यन्ते' इति वदन्ति ॥१७॥

**भवन्ति चात्र—**

**विरुद्धान्येवमादीनि वीर्यतो[१] यानि कानिचित् ॥**
**तान्येकान्ताहितान्येव शेषं विद्याद्धिताहितम्[२] १८**

अमुमेवार्थं सुखबोधार्थं संगृह्याह—विरुद्धानीत्यादि । वीर्यत इति वीर्यशब्देनात्र स्निग्धादयोऽष्टौ गुणा उच्यन्ते; अथवा विंशतिगुणाः षड्रसा अप्युच्यन्ते, 'येन कुर्वन्ति तद्वीर्यम्' (सू. अ. ४१) इति वचनात् । एवमादीनीत्युक्ते यानि कानिचिदिति यत् कृतं तत्तन्त्रान्तरोक्ताशेषविरुद्धोपग्रहार्थम् । अन्ये त्वादिशब्दात्तन्त्रान्तरोक्तानि देशकालमात्रादिविरुद्धानि लभ्यन्त इति मन्यन्ते । शेषम् अतोऽन्यन्माषादि हिताहितं जानीयात्, कस्यचिद्दोषस्य प्रकोपकत्वात् कस्यचिद्दोषस्य हरत्वादिति ॥ १८ ॥

**व्याधिमिन्द्रियदौर्बल्यं मरणं चाधिगच्छति ॥**
**विरुद्धरसवीर्याणि भुञ्जानोऽनात्मवान्नरः ॥ १९ ॥**

किं पुनर्विरुद्धं भुक्तं करोतीत्याह—व्याधिमित्यादि । व्याधिमिति पाण्ड्वान्ध्यविसर्पदकोदरविस्फोटकोन्मादभगन्दरादिकम्[३], इन्द्रियदौर्बल्यम् इन्द्रियाधिष्ठानदौर्बल्यमिन्द्रियशक्तिदौर्बल्यं वा, अधिगच्छति प्राप्नोति । विरुद्धरसवीर्याणि भुञ्जान इति रसग्रहणं द्रव्यवीर्यपरिहारार्थं, तेनोष्णस्यापि दुग्धस्य प्रयोगो भवति; क्षीरद्रव्यस्य ह्युष्णत्वं तद्गतमधुररसशैत्येन विरोधिनाऽपि न दुष्यति, एवमुष्णपानीयस्यापीति । अनात्मवान् अबुद्धिमान् । अन्ये 'रसवीर्यादीन्' इति पठन्ति । तेषां मते विपाकयोरपि गुरुलघुसंज्ञयोर्विरोधो वर्जनीय इति । पूर्वप्रतिपादिताध्यायार्थपिण्डदर्शनपरः श्लोकोऽयं; तेनास्मिन्नध्याय एव यानि विरुद्धानि द्रव्याण्युक्तानि तेष्वेव रसवीर्यविरोधो ज्ञेयो, न पुनरिहानुक्तानि यानि तेष्विति ॥ १९ ॥

**यत्किंचिद्दोषमुत्क्लेश्य[२] भुक्तं कायान्न निर्हरेत् ॥**
**रसादिष्वयथार्थं वा तद्विकाराय कल्पते ॥ २० ॥**

न केवलं विरुद्धभोजनमेव व्याधिहेतुः, अपि तु हिताहितादीन्यपीति दर्शयन्नाह—यदित्यादि । यत्किंचिदित्यनेन अशेषमेवाहितं संगृहीतम् । दोषं वातादिकम् । उत्क्लेश्य प्रकोप्य । न निर्हरेदिति मदनफलत्रिवृतादिवदूर्ध्वमधो वा नाकर्षेत्, तद्विकाराय कल्पत इति संबन्धनीयम्; कल्पते संपद्यते । न केवलं दोषकरमेव व्याधये भवति, अपि तु रसादिधातुदुष्टिकरमपि व्याधये भवतीत्याह—रसादिष्वित्यादि । रसादिष्वयथार्थं वेति रसादिधातुष्वयथार्थं प्रयोजनविरुद्धं रसादीनां जीवनादिप्रयोजनविरोधि रसादिधातुदूषणकरमित्यर्थः । दोषदुष्टिकारित्वेन धातुदूषणकरत्वं न लभ्यते, विशिष्टशक्तित्वाद्द्रव्याणां; तथाहि—कानिचिद्दोषदुष्टिकराणि, कानिचिद्धातुदुष्टिकराणीति; तानि चात्र न कथयिष्यामो विस्तरभयात् । अन्ये तु व्याख्यानयन्ति—रसादिष्विति आदिशब्दाद्वीर्यविपाकयोर्ग्रहणं; तेन रसवीर्यविपाकेषु यद्भुक्तं सदयथार्थमनर्थकरं वा भवति, तद्विकाराय कल्पते । **जेज्झटाचार्य**स्त्वमुं श्लोकमनार्षं कथयति, **गयदासाचार्येण** चायमङ्गीकृतः, अतोऽस्माभिरपि लिखितो व्याख्यातश्च ॥ २० ॥

---

१ 'वीर्यत इति स्वभावतः, स च स्वभावो द्रव्यरसवीर्यविपाकाश्रयो ज्ञेयः, यदुक्तं 'येन कुर्वन्ति तद्वीर्यम्' इति चक्रः । २ 'शेषमेकान्तहितैकान्ताहिताहितादन्यत्सर्वम् । विरुद्धं तु प्रभावादेवासमानगुणतया प्रतीयमानमपि कार्यतोऽविरुद्धं भवितुमर्हति; ततश्चैकान्ताहितमिति शास्त्रादेवावधार्यते' इति चक्रः । ३ ''पाण्ड्वान्ध्यवीसर्पदकोदराणां विस्फोटकोन्मादभगन्दराणाम् । मूर्च्छामदाध्मानगलामयानां पाण्ड्वामयस्यामविषस्य चैव ॥ किलासकुष्ठग्रहणीगदानां शोफास्रपित्तज्वरपीनसानाम् । संतानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम्'' इति **चरकः** (सू. अ. २६) ।

१ 'विरुद्धरसवीर्याणीति अत्र वैरोधिकत्वेनोक्तान्येव विरुद्धरसानि विरुद्धवीर्याणि च यथायोग्यतया ऊहनीयानि । न त्वत्रानुक्तेऽपि विरुद्धरसत्वादिकल्पना; तथाहि सति पयोऽपि शीतमुष्णेन विरुद्धं स्यात्, पानकादि मधुराम्लरसं रसविरुद्धत्वाद्विरुद्धं स्यात्' इति **चक्रः** । २ 'दोषमुत्क्लेश्य क्षोभयित्वा । न निर्हरेदित्यनेन दोषहारकमदनत्रिवृतादिभ्यो व्यावर्तकं भुक्तमित्यभिव्यक्तम्; एतच्चोपलक्षणं, तेन विहारोऽप्येवंलक्षणो ज्ञेयः; यदुक्तं चरके,—''यत्किंचिद्दोषमाक्षुभ्य न निर्हरति कायतः । आहारजातमन्यद्वा तत्सर्वमहितं स्मृतम्'' (च. सू. अ. २६) इति । रसादिष्वयथार्थमिति रसादिदूषकमिति यावत्; किंवा रसवीर्यविपाकेष्वयथार्थं विरुद्धमित्यर्थः ।' इति **चक्रः** ।

**विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् ॥**
**वमनं शमनं वाऽपि पूर्वं वा हितसेवनम् ॥ २१ ॥**

विरुद्धाशनादुत्पन्नानां रोगाणां चिकित्सासूत्रमुद्दिशन्नाह—विरुद्धाशनजानित्यादि । प्रतिहन्ति विरेचनमिति विरुद्धाशनजव्याधिप्रत्यनीकं विरेचनं प्रतिशब्देन द्योत्यते; तेन कुष्ठव्याधिप्रत्यनीकं विरेचनं विरुद्धाशनजं कुष्ठं हन्ति, एवमन्यत्रापि योजनीयम् । वमनं शमनं वाऽपीति तत्र विरेकवमने बहुदोषाणां प्राणवतां च, इतरेषां तु शमनमिति । शमनलक्षणमुच्यते;—"न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति क्रुद्धांश्च तत् संशमनमुच्यते"–इति । पूर्वं वा हितसेवनमिति सुवर्णलोहादिविरोधिरोगहरं पूर्वमेव सेवेत । तदुक्तं "न सज्जते हेमपाङ्गे विषं पद्मदलेऽम्बुवत्" ( च. चि. अ. २३ ) । 'पूर्वं वा हितभोजनम्' इत्यन्ये पठन्ति ॥ २१ ॥

**सात्म्यतोऽल्पतया वाऽपि दीप्ताग्नेस्तरुणस्य च ॥**
**स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥२२॥**

विरुद्धाशनं कुर्वतोऽपि कस्यचित् कुतो विरुद्धाशनजा दोषा न भवन्तीत्याह—सात्म्यत इत्यादि । सात्म्यादिभिर्हेतुभिर्विरुद्धं वितथं निष्फलं भवतीति पिण्डार्थः । स्निग्धव्यायामबलिनामिति स्निग्धव्यायामाभ्यां बलिनामिति संबध्यते । तेनायमर्थः—स्निग्धद्रव्याभ्यवहारबलिनां बलवदग्नित्वाद्विरुद्धं निष्फलं भवति । केचित् 'बलिनाम्' इति पदं भिन्नं मन्यन्ते । तेनायमर्थः—स्निग्धानां व्यायामिनां बलिनां च विरुद्धं वितथं भवेदिति । सात्म्यतोऽल्पतयेत्यादिश्लोकस्याग्रे केचिदमुं श्लोकं पठन्ति,—"व्यायामशीलो बलवान् शिशुश्च स्निग्धोऽग्निमांश्चापि महाशनश्च । आप्नोति रोगान्न विरुद्धजातानभ्यासतो वाऽल्पतया च जन्तुः" इति; अयं च न पठनीयः, सर्वनिबन्धकारैरपठितत्वात् ॥ २२ ॥

**अथ वातगुणान् वक्ष्यामः—**

**पूर्वः समधुरः स्निग्धो लवणश्चैव मारुतः ।**
**गुरुर्विदाहजननो रक्तपित्ताभिवर्धनः ॥ २३ ॥**

१ 'प्रतिहन्तीति प्रतिपक्षं सत् हन्ति; तेन कुष्ठादिप्रत्यनीकं विरेचनं कुष्ठादि हन्ति । एवं वमनशमनयोरपि प्रत्ययं व्याख्येयः । पूर्वमेव महाप्रभावरसायनादिसेवया न प्रभवन्त्येवंभूता व्याधय इत्यर्थः' इति चक्रः । 'शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः । द्रव्यैस्तैरेव वा पूर्वं शरीरस्याभिसंस्कृतिः' इति वाग्भटः ( सू. अ. ७ ) ।
२ 'सात्म्यत इत्यभ्याससात्म्यतया; अल्पं हीनशक्तित्वादभिभूतं न करोति कार्यं; तरुणस्य प्रत्यग्रबलत्वाद्वितथं भवति; स्निग्धस्य स्रोतःसु न तिष्ठति दोषः, तथा च दोषविगमाद्विरुद्धं वितथं भवति; व्यायामिनश्च व्यायामेनैव दोषक्षयः, तदुक्तं—'व्यायामं कुर्वतो नित्यं विरुद्धं वितथं भवेत्' इति; बलिनस्तु बलाभिभूता एव दोषा न जायन्ते न कुर्वन्ति वा कार्यम्; यदुक्तं—'बलं ह्यलं निग्रहाय दोषाणां' ( च. चि. अ. ३ ) इति चक्रः ।

**क्षतानां विषजुष्टानां व्रणिनः श्लेष्मलाश्च ये ॥**
**तेषामेव विशेषेण सदा रोगविवर्धनः ॥ २४ ॥**
**वातलानां प्रशस्तश्च श्रान्तानां कफशोषिणाम् ॥**
**मधुरश्चाविदाही च कषायानुरसो लघुः ॥**
**दक्षिणो मारुतः श्रेष्ठश्चक्षुष्यो बलवर्धनः ॥ २५ ॥**
**रक्तपित्तप्रशमनो न च वातप्रकोपणः ॥**
**विशदो रूक्षपरुषः खरः स्नेहबलापहः ॥ २६ ॥**
**पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः ॥**
**सद्यः प्राणक्षयकरः शोषणस्तु शरीरिणाम् ॥२७॥**
**उत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च ॥**
**कषायानुरसः शीतो दोषाणां चाप्रकोपणः ॥२८॥**
**तस्माच्च प्रकृतिस्थानां क्लेदनो बलवर्धनः ॥**
**क्षीणक्षयविषार्तानां विशेषेण तु पूजितः ॥ २९ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने हिताहितीयो नाम विंशोऽध्यायः ॥ २० ॥**

हितस्यापि वातस्य दिक्संयोगादहितत्वं स्यादिति वातगुणान् निर्दिशन्नाह—अथ वातगुणान् वक्ष्याम इत्यादि । "वातस्य दक्षिणोत्तरागतस्य दोषहरत्वेन हितत्वं, पूर्वपश्चिमवातस्याहितत्वम्, अतो हिताहितीयाध्यायपरिसमाप्तौ वातस्य गुणोपवर्णनं निर्देष्टुमाह—अथ वातगुणानित्यादि" इत्यन्ये । 'तेषामेव विशेषेण व्रणक्लेदविवर्धनः' इत्यन्ये पठन्ति । खरः प्रचण्डवेगः । अन्ये त्वाहारद्रव्यप्रकरणादितरसंयोगोऽप्रस्तुत इत्यमुं वातगुणोपवर्णनग्रन्थं न पठन्त्येव । **गयदासाचार्य**स्त्वस्मिन् हिताहितीयाध्यायपाठे पूर्वोक्तं पाठं कियन्तं परित्यज्यान्यं च पाठं कियन्तं निक्षिप्य पूर्वोक्तपाठक्रमव्यतिक्रमेण च पठति । यावता पाठेन व्यतिक्रमस्तावन्तं दर्शयन्नाह,—"वल्लीफलकवककरीराम्लफललवणकुलत्थपिण्याकदधितिलतैलविरोधिशुष्कशाकाजाविकमांसमद्यजाम्बवचिलिचिममत्स्यगोधावराहांश्च नैकध्यमश्नीयात् पयसा, प्राक् पयसोऽन्ते वा । कपोतांश्च सर्षपतैलभृष्टान्नाद्यात् । कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्व्य(वै)ग्निसिद्धा एरण्डतैलसिद्धा वा । मधुघृते समधृते । मधु चान्तरीक्षोदकानुपानम् । कांस्यभाजने दशरात्रपर्युषितं सर्पिः । मधु चोष्णमुष्णेन वा । दधि मद्यं वा । पित्तेन सह मांसानि पक्वानि, आमानि च केवलान्यपि । सुराकृशरापायसांश्च नैकध्यमश्नीयात् । सौवीरकेण सह तिलशष्कुलीः । तक्रेण सह मधुघृतैमत्स्यगोधापृषतमांसानि । मधुना गोधाम् । मत्स्यान् क्षौद्रास-

१ चक्रस्तु **गयदासाचार्य**संमतममुं पाठमवलम्ब्य व्याख्यातवान् । 'संस्काररूपसंयोगविशेषविरुद्धमाह–कपोतांश्चेत्यादि । कपिञ्जलापि संस्कारविरुद्धम् । मधुघृते समधृते इति मात्राप्रधानसंयोगविरुद्धम् । देशकालविशेषवत्संयोगविरुद्धं–कांस्यभाजने इत्यादि । मधु चोष्णमुष्णार्तेनेति उष्णार्तेन पुरुषेण । पित्तेन चाममांसमिति अत्रामस्यानुपयोगादाममिवाममसम्यक्पक्वं ज्ञेयम् ।' इति चक्रः ।
२ 'मधुघृतधानापृषतमांसानि' इति पा० ।

वेन, पृषतमांसं वा तेनैव । तथा मैरेयमाध्वीकाभ्यां बालोपोदक्या वा मत्स्यान् । नेक्षुविकृतीः सर्वा मत्स्यैः सह । सर्पिर्गुडकाकमाचीमधुमूलकानि नैकध्यम् । मधुना वाराहं, दध्ना कौकुटं, मद्येन बलाकां, तिलकल्केन चोपोदिकां सिद्धाम् । न पिप्पलीं मत्स्यवसया, प्रियङ्ग्वनुलिप्तो न पायसमश्नीयात्' इति । अस्याग्रे च 'तरतमयोगयुक्तांश्च भावान्' इत्यादिसूत्राणि पठति, तानि च पूर्वसूत्रैरेव समानानीति नेह प्रदर्शितानि ॥ २३—२९ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने विंशतितमोऽध्यायः ॥ २० ॥

---

## एकविंशतितमोऽध्यायः ।

**अथातो व्रणप्रश्नमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । व्रणविषयः प्रश्नो यस्मिन् स व्रणप्रश्नः । व्रणशब्देनात्र वातादय उच्यन्ते, व्रणकारणत्वात्; तेन वातादिविषयः प्रश्नो यस्मिन्नित्युक्तम् । अन्ये तु व्रणमाश्रित्य प्रश्नो व्रणप्रश्नः, स विद्यते यस्मिन्नित्यर्थे उत्पन्नस्य ईयप्रत्ययस्य लोपं कृत्वा व्रणप्रश्नमिति रूपं पठन्ति । तेनात्र व्रणारम्भकाणां वातादीनां संख्यास्वलक्षणकर्मादीनि व्रणस्य च निरुक्त्यादि च वक्तव्यमित्यर्थः सिद्धः ॥ १ ॥ २ ॥

**वातपित्तश्लेष्माण एव देहसंभवहेतवः । तैरेवाव्यापन्नैरधोमध्योर्ध्वसन्निविष्टैः शरीरमिदं धार्यतेऽगारमिव स्थूणाभिस्तिसृभिः, अतश्च त्रिस्थूणमाहुरेके । त एव च व्यापन्नाः प्रलयहेतवः । तदेभिरेव शोणितचतुर्थैः संभवस्थितिप्रलयेष्वप्यविरहितं शरीरं भवति ॥ ३ ॥**

व्रणकारणानि वातादीनि प्रथमं संख्यादिभिर्निर्दिशन्नाह—वातपित्तश्लेष्माण इत्यादि । देहसंभवहेतवो देहोत्पत्तिहेतवः । ननु, शुक्रशोणिते देहोत्पत्तिहेतू ? तत् कथं वातादयो देहसंभवहेतवः कथ्यन्ते ? उच्यते, अविकृता वातादयः शुक्रार्तवादि-

१ 'गुडं काकमाच्या, मधुना मूलकानि' इति पा० । २ 'पयसा सममश्नीयात्' पा० । ३ 'एवकारो भिन्नक्रमः । तेन संभवहेतव एवेत्यर्थः । अत्र वातादयः शुक्रशोणितगताः प्रकृतिस्थतया गर्भसंभवे हेतवो भवन्ति ।...प्रलये इति देहनाशे । रक्तस्यापि शल्यशास्त्रप्रधानव्रणाधिष्ठानस्य हेतुलिङ्गचिकित्सितविशेषप्रयोजकतया प्राधान्यख्यापनार्थं दोषतुल्यतया संभवादिहेतुत्वं नियमयन्नाह—तदेभिरित्यादि । अविरहितमिति कारणतया अविरहितम् । शोणितस्य देहकारणत्वमार्तवकारणतया व्यक्तमेव । शोणितस्य देहकारकत्वादि चोक्तं शास्त्रे "देहस्य रुधिरं मूलं रुधिरेणैव धार्यते' इति । साक्षाच्चास्य वातादिवत् प्रपञ्चानभिधानेन पारमार्थिकीं दोषतां प्रतिक्षिपति । यदि हि वातादिवद्दोषः स्यात् तदा तेनापि प्रकृतिः स्यादित्यादिदूषणमनुसर्तव्यम्' इति चक्रः ।

सहकारितया देहजनका अभिप्रेता इत्यर्थः । शरीरसंभवे वातादीनां हेतुत्वं प्रतिपाद्य स्थितिकारणत्वं दर्शयन्नाह—तैरेवेत्यादि ।—तैरेव वातपित्तश्लेष्मभिः, अव्यापन्नैः प्रकृतिस्थैरित्यर्थः । अधोमध्योर्ध्वसन्निविष्टैरिति यथाक्रमेण वातपित्तकफैः । दृष्टान्तमाह—अगारमिवेत्यादि ।—अगारं गृहम् । एकीयमतमाह—अतश्च त्रिस्थूणमाहुरेके । चकारोऽयं त्रिस्थूणमित्यत्र योज्यः, तेनायमर्थः—त्रिस्थूणमिति च अत एव हेतोरेके आचार्या आहुः । देहविनाशहेतुत्वमपि वातादीनां निर्दिशन्नाह—त एव च व्यापन्ना इत्यादि । चकारोऽत्र भिन्नक्रमे, तेनायमर्थः—त एव वातादयः, व्यापन्नाश्च विकृतिस्थाः, प्रलयहेतवो विनाशहेतवो 'भवन्ति' इत्यध्याहारः । अन्ये तु 'प्रलयेऽपि' इत्यपिशब्दं पठन्ति । शल्यशास्त्रे व्रणारम्भाधिष्ठानभूतत्वात् कस्यचिद्दूष्यस्य प्राधान्यं दर्शयन्नाह—तदित्यादि । एभिरेव वातपित्तकफैः । शोणितचतुर्थैरिति ननु, पूर्वं शोणितमनुपात्तं, तत्कथमिह संभवादिषु शोणितस्याविरहितत्वमुक्तं ? सत्यं, परमिह शोणितोपादानं कुर्वन्नेकीयमतमिदमिति दर्शयति, तेन व्रणपाके दर्शनद्वयं भवति; तथाहि,—'नर्तेऽनिलाद्रुक्' (सू. अ. १७) इत्यादिना व्रणपाके दोषा एव व्याप्रियन्त इति दर्शितं, 'कालान्तरेणाभ्युदितं तु पित्तं' (सू. अ. १७) इत्यादिना पुनः शोणितचतुर्था एव व्रणपाके व्याप्रियन्त इति । अविरहितं संयुक्तमित्यर्थः ॥ ३ ॥

**भवति चात्र—**

**नर्ते देहः कफादस्ति न पित्तान्न च मारुतात् ॥**
**शोणितादपि वा नित्यं देह एतैस्तु धार्यते ॥ ४ ॥**

एतदेव द्वितीयदर्शनं श्लोकेनापि दर्शयन्नाह—नर्ते इत्यादि । ननु, वातादिक्रमं परित्यज्य कफादिक्रमेण सूत्रणं कस्मादिह कृतम् ? उच्यते—देहस्योर्ध्वमूलत्वमधःशाखत्वं प्रतिपादितम्, ऊर्ध्वभागे च कफाधिष्ठानमस्ति, तेनेह कफ एव प्रथमं दर्शितः । तदुक्तं—"ऊर्ध्वमूलमधःशाखं त्रिस्थूणं पञ्चदैवतम् । क्षेत्रज्ञाधिष्ठितं विद्वान् यो वै वेद स वेदवित्"—इति । न केवलं कफादीन् विना देहो न भवति, अपि तु धारणमप्येतैरेव क्रियत इत्याह—देह एतैस्तु धार्यत इति । तुशब्दश्चार्थो भिन्नक्रमश्च । तेनायमर्थः—धार्यते चैतैरेवाव्यापन्नैः कफपित्तवातरक्तैरित्यर्थः; नर्ते देहः कफादित्येतस्यादौ 'अतो यथोक्तस्यार्थस्य संग्रहश्लोक' इत्यापातनिकां केचिदाचार्याः पठन्ति ॥४॥

**तत्र 'वा' गतिगन्धनयोः, इति धातुः, 'तप' संतापे, 'श्लिष' आलिङ्गने, एतेषां कृद्विहितैः प्रत्ययैर्वातः पित्तं श्लेष्मेति च रूपाणि भवन्ति ॥५॥**

१ 'अस्तीति भवति उत्पद्यते इत्यर्थः । धार्यते इत्यनेन स्थितिहेतुत्वमुक्तं; प्रलयहेतुत्वमनुक्तमप्यनुगम्यमेव' इति चक्रः । २ 'तत्र निरुक्त्या वातस्य चपलत्वं, पित्तस्य तापकत्वं, कफस्य उपश्लेषकत्वमुक्तं भवति' इति चक्रः ।

वातादीनां चिकित्सोपयोगि स्वलक्षणं दर्शयितुं निरुक्तिं कुर्वन्नाह—तत्रेत्यादि । गतिगन्धोपादानार्थस्य 'वा'धातोः 'हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्' ( उ. ३ । ८६ ) इति सूत्रोत्पन्ने 'तन्' प्रत्यये वात इति रूपम्; एतेन च तत्स्वरूपत्वं वातस्य दर्शितम् । संतापार्थस्य 'तप'धातोरच्प्रत्यये अकारस्येत्वे वर्णविपर्यये तस्य च द्वित्वे कृते पित्तमिति रूपम्; एतेन पित्तस्य स्वाभाविकं संतापलक्षणं दर्शितम् । आलिङ्गनार्थस्य 'श्लिष'धातोर्मनिन्प्रत्यये ( 'सर्वधातुभ्यो मनिन्' उ. ४ । १४५ ) गुणे च कृते श्लेष्मेति रूपम् । एतेन श्लेष्मणः सन्ध्यादियोजकत्वं दर्शितम् ॥ ५ ॥

**दोषस्थानान्यत ऊर्ध्वं वक्ष्यामः—तत्र समासेन वातः श्रोणिगुदसंश्रयः; तदुपर्यधो नाभेः पक्वाशयः, पक्वामाशयमध्यं पित्तस्य; आमाशयः श्लेष्मणः ॥६॥**

तत्र कस्य दोषस्य किं स्थानं तदाह,—दोषेत्यादि । 'दोषस्थानानि' इत्येतस्य स्थाने 'तेषां स्थानानि' इति केचित् पठन्ति, तत्रापि स एवार्थः । तत्रेति दोषेषु मध्ये, समासेन संक्षेपेण; विस्तरेण तु स्थानानि वातस्य नाभिमध्यहृदयकण्ठसर्वाङ्गसन्धयोऽपि वातव्याधौ वक्ष्यन्ते । श्रोणिः कटिः, श्रोणिश्च गुदं च श्रोणिगुदं, तत् संश्रयः स्थानं यस्य स तथा । पक्वामाशययोर्मध्यं पित्तस्थानं वक्ष्यति; अतः पक्वाशयमेव प्राग्दर्शयन्नाह,—तदुपर्यधो नाभेः पक्वाशय इति ।—तदुपरि श्रोणीगुदयोरुपरीत्यर्थः । पित्तस्थानं दर्शयन्नाह,—पक्वामाशयमध्यं पित्तस्येति । समासेनेत्यत्रापि संबध्यते । तेनायमर्थः—पक्वामाशयमध्यं पित्तस्थानं संक्षेपेण, विस्तरेण तु यकृत्प्लीहहृदयदृष्टित्वगिन्द्रियाण्यपि पित्तस्य स्थानानीति । कफस्थानं निर्देष्टुमाह,—आमाशयः श्लेष्मण इति ।—'स्थानम्' इति शेषः । यत्राशितपीतादिकं पच्यते स आमाशयः । तथा च मुनिः,—"नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" ( च. वि. अ. २ )-इति । अत्रापि समासेनेति संबध्यते; तेन विस्तरेणोरःशिरःकण्ठसन्धयोऽपि श्लेष्मस्थानम् ॥ ६ ॥

**अतः परं पञ्चधा विभज्यन्ते । तत्र वातस्य वातव्याधौ वक्ष्यामः; पित्तस्य यकृत्प्लीहानौ हृदयं दृष्टिस्त्वक् पूर्वोक्तं च; श्लेष्मण उरः शिरः कण्ठो जिह्वामूलं सन्धय इति पूर्वोक्तं च; एतानि खलु दोषाणां स्थानान्यव्यापन्नानाम् ॥ ७ ॥**

वातादीनां प्रधानानि स्थानानि निर्दिश्याप्रधानानि निर्देष्टुमाह—अतः परमित्यादि । विभज्यन्ते प्रकटीक्रियन्ते वातादीनां स्थानानीत्यर्थः । कानि पुनर्वातस्य स्थानानीति पृष्ट आह,—तत्र वातस्येत्यादि । वातव्याधाविति 'निदाने' इति शेषः । पित्तस्य पञ्चस्थानान्याह,—पित्तस्येत्यादि । यकृत् कालखण्डं, प्लीहा वामपार्श्वाश्रयं मांसखण्डं; हृदयं कमलमुकुलाकारमधोमुखं, दृष्टिः कृष्णतारकान्तर्वर्तिनी मसूरदलमात्रा । चकारात् परतन्त्रोक्तं लसीकाद्यनुक्तं समुच्चीयते । पित्तेन खिन्नमांसात् स्रवदुदकं 'लसीका' इत्युच्यते । कफस्य पञ्चस्थानानि निर्दिशन्नाह,—श्लेष्मण इत्यादि । उरः स्तनयोरन्तरालं, पूर्वोक्तं चेत्यामाशयः । चकारात् परतन्त्रोक्तं मेदः समुच्चीयते । एतानि स्थानानि प्रायेण प्रकृतिस्थानामेव दोषाणां भवन्तीत्याह,—एतानीत्यादि । अव्यापन्नानाम् अकुपितानाम् ॥ ७ ॥

**भवति चात्र—**

**विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ॥**
**धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥ ८ ॥**

विसर्गादानेत्यादि । विसर्गादानविक्षेपैः कर्मभिर्यथासंख्येन चन्द्रादित्यवाता यथा जगद्धारयन्ति, तथा कफादयस्त्रयो यथासंख्येन विसर्गादिभिः कर्मभिर्देहं धारयन्तीति समुदायार्थः । विसर्गः सर्जनं 'बलस्य' इति शेषः; आदानं ग्रहणं बलस्यैव; विक्षेपः शीतोष्णादीनां विविधप्रकारेण प्रेरणम् ॥ ८ ॥

**तत्र जिज्ञास्यं किं पित्तव्यतिरेकादन्योऽग्निः ? आहोस्वित् पित्तमेवाग्निरिति ? । अत्रोच्यते—न खलु पित्तव्यतिरेकादन्योऽग्निरुपलभ्यते, आग्नेयत्वात् पित्ते दहनपचनादिष्वभिप्रवर्तमानेऽग्निवदुपचारः क्रियतेऽन्तरग्निरिति; क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगात्, अतिवृद्धे शीतक्रियोपयोगात्, आगमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति ॥ ९ ॥**

---

१ 'विसर्गः सौम्यांशविसर्जनं चन्द्रस्य कफस्य च, आदानं सौम्यांशशोषणं पित्तस्य सूर्यस्य च, विक्षेपश्च बहिरन्तश्चाचितधातुव्यूहनादि वायोः साधारणम्' इति चक्रः । २ 'न खलु पित्तव्यतिरेकेणान्योऽग्निर्लभ्यत इत्यनेन पित्ताग्न्योर्भेदप्रतिपादकागमाभावं दर्शयति । यत्तु 'तीक्ष्णः पित्तेनाग्निः' इति भेदावभाषकं वचनं तद्यथाश्रुतार्थं न भवतीति भावः । एतदेव पित्तस्याग्निव्यपदेशं सोपपत्तिकमाह—क्षीणे इत्यादि । पित्ताग्न्योर्भेदे प्रमाणाभावं दर्शयित्वा स्वपक्षसाधकमभेदमाह—क्षीणे हीत्यादि । अग्नेर्गुणोऽन्नपाचकलक्षित ऊष्मा, तस्मिन् क्षीणे; तत्समानं पित्तसमानं कटुतीक्ष्णोष्णं नागरादि । अतिवृद्धे इत्यग्निगुणे एव । शीतक्रियोपयोगादित्यनेन पित्ते प्रत्यनीकक्रियातः प्रशमनं दर्शयति । एतेन 'अग्नित्वेन व्यवह्रियमाणं तेजः पित्तानुमेयरूपं, पित्तवर्धनपित्तक्षयकरैर्वृद्धिह्रासयोगित्वात्, प्रदेशान्तरस्थपित्तावयववत्' इत्यनुमानं दर्शितं भवति । अत्रैव साध्ये आगमं प्रमाणमाह—आगमाच्चेति । आगमश्च यथा—'कनकं राजतं ताम्रं कृष्णायसत्रपुसीसकम् । चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात्' ( सु. अ. २६ ) इति, तथा 'षष्ठी कला पित्तधरा' इत्यादिना अग्न्याधारा ग्रहण्युक्ता; भोजेऽपि 'तस्मात्तेजोमयं पित्तं पित्तोष्मा यः स पक्तिमान्' इत्यागमादभेदो ज्ञेयः । पारमार्थिकाभेदे हि तीक्ष्णः पित्तेनाग्निरिति कार्यकारणभावो न स्यात्, तथा 'कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् । आप्लावयद्धन्त्यनलं' ( च. चि. अ. १५ ) इति चरकवचनविरोधः; तथा 'पित्तशमनं घृतमग्निमेधे करोति' इत्युक्तमसंगतं स्यात्, तथा 'समदोषः समाग्निश्च' ( सु. अ. १५ ) इति वचनमसंगतं स्यात् । यदप्यभेदसाधकं 'पित्ततेजःप्रतापनात्'

इदानीमग्निपित्तयोर्भेदविचारप्रतिपादकं ग्रन्थं निर्देष्टुमाह,— तत्रेत्यादि । तत्रेति पित्ताग्न्योर्भेदाभेदविचारे; 'तत्रेति तेषु मध्ये' इत्यन्ये; 'तत्रेत्यादानकर्मणि; विसर्गादानविक्षेपैरित्यादिश्लोकेनादानं कर्म यदुक्तं तत् किं पित्तस्याग्नेर्वेति जिज्ञास्यम्' इत्यपरे । जिज्ञास्यं ज्ञातुमेषणीयम् । आहोस्वित् अथवार्थे । इति संशये । उत्तरमाह,—अत्रोच्यत इत्यादि । दहनं दाहः, पचनं पाक आहारादेः, आदिशब्दाद्रञ्जनदर्शनादीनि गृह्यन्ते । अग्निवदुपचारः अग्निवद्व्यवहारः क्रियते—अन्तरग्निरिति, पित्तमन्तरग्निरित्युपचर्यत इत्यर्थः । न खल्वित्यादिसूत्रेण प्रत्यक्षेणैव पित्तमग्निरित्युक्तम्, अनुमानेनापि पित्तस्याग्नित्वं साधयन्नाह,—क्षीणे ह्यग्निगुण इति ।—अग्नेर्गुणो यस्य तदग्निगुणं पित्तं, तस्मिन् क्षीणे; हि यस्मादर्थे । तत्समानद्रव्योपयोगात् अग्निसमोष्णतीक्ष्णद्रव्योपयोगादित्यर्थः । 'अग्निगुणशब्देनोष्मा कथ्यते' इत्यन्ये; तत्र तत्समानद्रव्योपयोगात् पित्तसमानद्रव्योपयोगादित्यर्थः । अतिप्रवृद्धे शीतक्रियोपयोगादिति 'पित्तमेवाग्निः' इति शेषः । प्रत्यक्षानुमानाभ्यां पित्तस्याग्नित्वं प्रसाध्यागमेनापि प्रसाधयन्नाह—आगमाच्चेति ।—आगमात् समस्तायुर्वेदशास्त्रतः । ननु, यदि पित्ताग्न्योरभेदस्तत् कथं घृतं पित्तशमनमग्निदीपनम्, अजापयश्च; मत्स्यादयश्च पित्तवृद्धिं कुर्वन्ति नचाग्निदीप्तिकराः, दिवास्वप्नश्च पित्तप्रकोपणोऽप्यग्निशमनः; तथेदमपि कथं स्यात्—विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणेति; 'समदोषः समाग्निश्च' ( सू. अ. १५ ) इत्यादिकमपि कथं स्यादिति । नैष दोषः, येनायमग्निः परमार्थतः पित्ताद्भिन्न एव सुश्रुतादिभिरङ्गीकृतः । तदुक्तं,—"क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः । पित्तं च केशान् पचति पलितं तेन जायते" ( नि. अ. १७ ) इति । शरीरोष्मा अग्निः, स चात्र पित्ताद्भिन्न एवोक्तः । तथाऽन्यदपि पित्ताग्न्योर्भेदप्रतिपादकतन्त्रमुच्यते,—"द्रवं स्निग्धमधोगं च पित्तं, वह्निरतोऽन्यथा"—इति । अन्यान्यपि पित्ताग्निभेदप्रतिपादकानि वाक्यानि सन्ति, तानीह विस्तरभयान्न दर्शितानि । यत् पुनरिहाग्निपित्तयोरभेदकथनं कृतं, तद्रसवीर्यादिगुणोपाधियुक्तस्य पित्तस्य चिकित्साद्वारेणाग्नेश्चिकित्सा कार्येति दर्शनार्थम्; अन्यथा रसादिगुणोपाधिरहितस्य वह्नेश्चिकित्सा कर्तुं न पार्यत इति ॥ ९ ॥

**तत्रादृष्टहेतुकेन विशेषेण पक्वामाशयमध्यस्थं पित्तं चतुर्विधमन्नपानं पचति, विवेचयति च दोषरसमूत्रपुरीषाणि; तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणाऽनुग्रहं करोति, तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा; यत्तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा, स रसस्य रागकृदुक्तः; यत् पित्तं हृदयस्थं तस्मिन् साधकोऽग्निरिति संज्ञा, सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः; यद्दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा, स रूपग्रहणाधिकृतः; यत्तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति संज्ञा, सोऽभ्यङ्गपरिषेकावगाहालेपनादीनां क्रियाद्रव्याणां पक्ता छायानां च प्रकाशकः ॥ १० ॥**

अदृष्टहेतुकेन विशेषेणेति विशेषेण भेदेन; किंविशिष्टेन ? अदृष्टहेतुकेन प्राक्तनकर्महेतुकेनेत्यर्थः । पक्वामाशयमध्यस्थमिति नाभिस्थम् । चतुर्विधमन्नपानं पचतीति अशितं खादितं लीढं पीतं च पचतीत्यर्थः । विवेचयति च पृथक्करोति दोषरसमूत्रपुरीषाणि । अत्र केचित् 'अन्नरसमूत्रपुरीषाणि' इति पठन्ति, 'वातमूत्रपुरीषाणि' इत्यपरे । अनुग्रहं करोति उपकारं करोति । यत् पित्तं हृदयेत्यादि । सोऽभिप्रार्थितमनोरथसाधनकृदिति धर्मार्थकाममोक्षलक्षणपुरुषार्थस्य साधक इत्यर्थः; कस्मात् ? हृदयस्थकफतमोऽपनोदविस्पष्टीकृतमनःप्रागुण्यात् । यद्दृष्ट्यां पित्तमित्यादि आलोचको दर्शकः । त्वचीति अवभासिनीनामधेयायां बाह्यत्वचीत्यर्थः । अभ्यङ्गेत्यादि । अभ्यङ्गादीनां क्रियाद्रव्याणां क्रियानिमित्तानां कर्मनिमित्तानामित्यर्थः । छायानां च प्रकाशक इति छायानां पाञ्चभौतिकीनां नीलादीनां, प्रकाशक उत्पादकः; चकारात् प्रभाणां च पाञ्चभौतिकीनां प्रकाशकः । ननु, छायाप्रभयोः को भेदः ? उच्यते,—"आसन्ना लक्ष्यते च्छाया प्रभा दूरात् प्रकाशते । वर्णमाक्रमति च्छाया प्रभा वर्णप्रकाशिनी" ( च. इ. अ. ७ )—इति ॥ १० ॥

**भवति चात्र—**

**पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च ।**
**उष्णं कटुरसं चैव विदग्धं चाम्लमेव च ॥ ११ ॥**

इदानीं पित्तस्य चिकित्सोपयोगि स्वलक्षणं दर्शयन्नाह—पित्तमित्यादि । तीक्ष्णं राजिकामरिचादिवत् । पूति विस्रगन्धि ।

---

इति, तथा 'पित्तोष्मा यः स पक्तिमान्' इति, तदपि पित्ताद्भिन्नस्य तद्धर्मिणस्तेजसोऽग्नित्वं वदति । यच्छमनं पित्तस्य पित्तक्षपणैः पित्तवर्धनैश्च वर्धनं तद्भूतस्य पित्तशमकस्याग्निवर्धकत्वेन कट्वजीर्णविदाह्यम्लस्य च पित्तजननावान्तरव्यापारस्याद्युपघातकत्वेन प्रसिद्धत्वादसिद्धम् । तस्माद्धर्मधर्मिरूपतयैवात्राभेद आचार्यस्य विवक्षितः ।' इति चक्रः ।

१ 'दर्शयिष्यामः' इति पा० । २ 'अदृष्टहेतुकेन विशेषेणेति देहजनकेनादृष्टेन हि बाह्यादग्नेर्विशिष्टोऽयमग्निरारभ्यते, येनैवंविधमन्नपचनरसमलविवेचनाद्यन्तरानुग्रहशरीररक्षणादीनि करोतीति भावः । शेषाणां पित्तस्थानानामिति तथा शरीरस्य चाग्निकर्मणेति पञ्चभूताग्निसमधारयग्निकर्मणा । सोऽभिप्रार्थितसाधनकृदुक्त इति योगवशाद्वशित्वलाभे अभीष्टसाधनं साधकेनाग्निना भवतीत्यागमः । एतच्च परं साधककार्यं, तेन शौर्यादि च तस्य कार्यं ज्ञेयम् । यदुक्तं चरके—'अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति; तद्यथा—पक्तिमपक्तिं दर्शनमदर्शनं मात्रामात्रत्वमूष्मणः प्रकृतिविकृतिवर्णौ शौर्यं भयं क्रोधं हर्षं मोहं प्रसादमित्येवमादीनि चापराणि द्वन्द्वानि' ( च. सू. अ. १२ ) इति । क्रियाद्रव्याणामिति क्रियोपनीतानां बहिःपरिमार्जनद्रव्याणाम्' इति चक्रः ।

नीलं सामावस्थायाम् । पीतं निरामावस्थायाम् । कटुरसं प्रकृतिस्थं पित्तम् । विदग्धं चाम्लमेवेति विरुद्धपाकोपपन्नं पुनरम्लरसं भवति, 'विदग्धाजीर्णसंसृष्टमम्लरसं भवति' इत्यन्ये, विदग्धं पित्तमम्लपित्तमिति रोगविशेषं केचिन्मन्यन्ते । 'द्रव'-स्थाने केचित् 'सरम्' इति पठन्ति ॥ ११ ॥

**अत ऊर्ध्वं श्लेष्मस्थानान्यनुव्याख्यास्यामः। तत्र, आमाशयः पित्ताशयस्योपरिष्टात् तत्प्रत्यनीकत्वादूर्ध्वगतित्वात्तेजसः, चन्द्र इव आदित्यस्य, चतुर्विधस्याहारस्याधारः; स च तत्रौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसंघातः सुखजरो भवति ॥ १२ ॥**

अत ऊर्ध्वमित्यादि । अनुव्याख्यास्यामः अनु क्रमेण व्याख्यास्यामः; येनैव क्रमेण पित्तस्थानान्युक्तानि तेनैव क्रमेणेत्यर्थः । प्रागामाशयः श्लेष्मस्थानमुक्तः, तमेव प्रथमं दर्शयन्नाह,—तत्रामाशय इत्यादि ।—तत्रेति श्लेष्मस्थानेषु पञ्चसु मध्ये, उपरिष्टात् उपरि । कस्मात् कारणात् पित्ताशयोपरीत्याह—तत्प्रत्यनीकत्वादिति ।—तस्य पित्तस्य प्रत्यनीकत्वात् प्रतिपक्षत्वाद्, विकूलत्वादित्यर्थः । द्वितीयं हेतुमाह,—ऊर्ध्वगतित्वाच्च तेजस इति । एतेनैतदुक्तं भवति—यदि हि पार्श्वयोरधो वाऽऽमाशयो भवेत्तदोदकस्याधोगामित्वाग्निप्रत्यनीकत्वं, ततश्च निष्प्रत्यनीकोऽग्निः शरीरमेव दहेदिति । प्रत्यक्षेण पित्ताशयस्योपरि कफाशयं साधयित्वा, उपमानेनापि साधयन्नाह-चन्द्र इवादित्यस्येति । प्रत्यक्षोपमानाभ्यां पित्ताशयस्योपर्यामाशयं प्रसाध्यानुमानेनापि साधयन्नाह,—चतुर्विधस्याहारस्याधारः; चतुर्विधस्याशितपीतलीढखादितस्य, आधारः स्थानम् । तेजस्तावदूर्ध्वगामि, यदि चाध आमाशयो भवेत्तदा चतुर्विधमाहारं न पचेत्, पचति च; तेनानुमीयते—आमाशयः पित्ताशयस्योपर्येवेति । स चेति चतुर्विधाहारः । औदकैर्गुणैरिति द्रवस्नेहादिभिः; द्रवगुणैर्भिन्नसंघातः, स्नेहेन प्रक्लिन्न इति बोद्धव्यम् । सुखजरो भवति सुखेन परिणामं गच्छतीत्यर्थः ॥ १२ ॥

**माधुर्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च ॥**
**आमाशये संभवति श्लेष्मा मधुरशीतलः ॥ १३ ॥**

अथ के औदका गुणा इत्याह—माधुर्यादित्यादि । माधुर्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव चेति 'आहारस्य' इति शेषः । चकारद्वयेन द्रवस्नेहादयो गुणा अनुक्ता अपि समुच्चीयन्ते । संभवतीति प्रकुप्यति, न पुनरभूतप्रादुर्भावेण, कफस्य रसधातुत एवोत्पन्नत्वात् ॥ १३ ॥

**स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्मणाऽनुग्रहं करोति; उरःस्थस्त्रिकसन्धारणमात्मवीर्येणान्नरससहितेन हृदयावलम्बनं करोति; जिह्वामूलकण्ठस्थो जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्तते; शिरःस्थः स्नेहसंतर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्येणानुग्रहं करोति; सन्धिस्थः श्लेष्मा सर्वसन्धिसंश्लेषात् सर्वसन्ध्यनुग्रहं करोति ॥ १४ ॥**

स तत्रस्थ एवेत्यादि । सः श्लेष्मा । तत्रस्थ आमाशयस्थः । स्वशक्त्या आत्मवीर्येण । उदककर्मणेति क्लेदनपूरणादिना । द्वितीयस्थानस्य कर्म दर्शयन्नाह,—उरःस्थ इत्यादि । त्रिकसन्धारणमिति त्रिकं शिरोबाहुद्वयसन्धानस्थानम् । आत्मवीर्येणेति प्राकृतगुणेन । हृदयावलम्बनं हृदयस्य स्वकार्यसामर्थ्यं करोति । स्नेहसंतर्पणाधिकृतत्वात् स्नेहने संतर्पणे चाधिकृतत्वात्; अथवा स्नेहेन संतर्पणं तत्राधिकृतत्वात् । अन्ये तु व्याख्यानयन्ति—'स्नेहो मस्तकमज्जा, तस्य संतर्पणं, तत्राधिकृतत्वात्' । इन्द्रियाणां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानाम् । अनुग्रहं करोति स्वकार्यसामर्थ्यं जनयति । सन्धिस्थः श्लेष्मेत्यादि स्पष्टम् ॥ १४ ॥

**भवति चात्र—**

**श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च ।**
**मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः स्मृतः ॥ १५ ॥**

इदानीं कफलिङ्गज्ञानार्थं चिकित्सार्थं च लक्षणं दर्शयन्नाह,—श्लेष्मा श्वेत इत्यादि । शीत एव चेति चकारो मृदुस्थिरादिगुणसमुच्चयार्थः । अविदग्धः अपक्वो मधुररसो भवति । विदग्धः पक्वो लवण इति । अन्ये त्वन्यथा व्याख्यानयन्ति—अविदग्धः प्रकृतिस्थोऽप्रदुष्टो मधुररसः श्लेष्मा भवति, विदग्धो विकृतिस्थः प्रदुष्टो लवणरसः; अथवा विदग्धान्नपाकाल्लवण इति ॥ १५ ॥

**शोणितस्य स्थानं यकृत्प्लीहानौ, तच्च प्रागभिहितं; तत्रस्थमेव शेषाणां शोणितस्थानानामनुग्रहं करोति ॥ १६ ॥**

तदेवं दोषान् प्रथमदर्शनोक्तानभिधाय 'शोणितचतुर्थैः' इत्यस्य दर्शनस्याभिप्रेतं शोणितस्थानं दर्शयन्नाह,—शोणितस्येत्यादि । प्रागभिहितं शोणितवर्णनीय उक्तम् ॥ १६ ॥

**भवति चात्र—**

**अनुष्णशीतं मधुरं स्निग्धं रक्तं च वर्णतः ॥**
**शोणितं गुरु विस्रं स्याद्विदाहश्चास्य पित्तवत् ॥ १७ ॥**

१ 'तत्प्रत्यनीकत्वादिति तेजोरूपपित्तप्रत्यनीकत्वात्, तथोर्ध्वगतित्वाच्च तेजसो जाठराग्नेः । एतेन दृष्टत्वेन श्लेष्माधारतया पित्तप्रतिबन्धार्थकाशयो निवेशितः । चन्द्र इवादित्यस्येति विषयसाधर्म्यमात्रेण । तत्रामाशये औदकगुणाविर्भाव औदकश्लेष्माशयमहिम्ना ज्ञेयः' इति चक्रः । २ 'एव' इति हस्तलिखितपुस्तकेषु न पठ्यते ।

१ 'स्वशक्त्येति अदृष्टाहितप्रभावेन । अनुग्रहश्चाप्लावनेन । त्रिकमिह पृष्ठास्थिबाहुद्वयसंधानस्थानम् । जिह्वेन्द्रियस्य रसज्ञाने श्लेष्मा सौम्यत्वाद्वर्तते कारणं भवति । इन्द्रियाणि हि स्वजातीयाभिव्यक्तमेव विषयं गृह्णन्ति; यथा तैजसं चक्षुरालोकसहकृतमेव रूपं गृह्णाति; एवमाप्यं रसनं कण्ठगतश्लेष्माभिव्यक्तमेव रसं गृह्णातीत्यर्थः । श्लेष्मणा शिरःस्थेनेन्द्रियाण्यनुग्रहादात्मकार्यं कुर्वन्ति' इति चक्रः । २ 'शोणितस्थानं प्रागभिहितं' इति पा० । ३ 'अनुष्णशीतमिति सौम्याग्नेयत्वाच्छोणितस्य । विदाहश्चास्य पित्तवदिति दुष्टपित्तवदित्यर्थः' इति चक्रः ।

शोणितस्य निदानलिङ्गचिकित्साज्ञानार्थं स्वलक्षणं दर्शयन्नाह,—अनुष्णेत्यादि । अनुष्णशीतमिति साधारणमित्यर्थः । विस्रम् आमगन्धि । विदाहश्चास्य पित्तवदिति पित्तस्येव; पित्तस्य येन वस्तुना यथा च विदाहस्तेन वस्तुना तथा च विदाहः शोणितस्यापीत्युक्तम् ॥ १७ ॥

**एतानि खलु दोषस्थानानि; एषु संचीयन्ते दोषाः । प्राक् संचयहेतुरुक्तः । तत्र संचितानां खलु दोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता चाङ्गानां गौरवमालस्यं चयकारणविद्वेषश्चेति लिङ्गानि भवन्ति । तत्र प्रथमः क्रियाकालः ॥ १८ ॥**

प्रतिपादितं नियमयन्नाह—एतानीत्यादि । एषु संचीयन्ते दोषा इति एषु स्थानेषु दोषाः संचयं यान्तीत्यर्थः । कः पुनर्दोषाणां संचये हेतुरित्याह,—प्राक् संचयहेतुरिति ।—प्रागिति ऋतुचर्याध्याये । संचितानां वातादीनां यथासंख्यं लिङ्गं दर्शयन्नाह,—तत्र संचितानामित्यादि । संहतिरूपा वृद्धिश्चयः, विलयनरूपा वृद्धिः प्रकोपः । स्तब्धपूर्णकोष्ठतेति कोष्ठताशब्दः स्तब्धपूर्णाभ्यां प्रत्येकं संबध्यते, तेन स्तब्धकोष्ठतापूर्णकोष्ठते वायोर्लिङ्गं, पीतावभासता मन्दोष्णता च पित्तस्य, गौरवमालस्यं च श्लेष्मणः । एतानि स्तब्धपूर्णकोष्ठतादिलिङ्गानि सामान्येन सर्वेषामेव संचितानामित्यपि केचिन्मन्यन्ते । चयकारणविद्वेषश्चेति सामान्येन सर्वेषां वातादीनामिदं लिङ्गम् । 'चयकारणविद्वेषश्च' इति वाक्यं केचिन्न पठन्ति । केचिदाचार्या अस्याग्रे चयप्रकोपयोर्लक्षणं श्लोकेन पठन्ति 'स्वस्थानवृद्धिर्दोषाणाम्' इत्यादि । अयं श्लोकोऽभावात् समग्रो न लिखित इति । तत्रेति तत्र वातादीनां संचये । प्रथमः क्रियाकालः आद्यः कर्मावसरः ॥१८॥

**अत ऊर्ध्वं प्रकोपणानि वक्ष्यामः । तत्र बलवद्विग्रहातिव्यायामव्यवायाध्ययनप्रपतनप्रधावनप्रपीडनाभिघातलङ्घनप्लवनप्रतरणरात्रिजागरणभारहरणगजतुरगरथपदातिचर्याकटुकषायतिक्तरूक्षलघुशीतवीर्यशुष्कशाकवल्लूरवरकोद्दालककोरदूषश्यामाकनीवारमुद्गमसूराढकीहरेणुकलायनिष्पावानशनविषमाशनाध्यशनवातमूत्रपुरीषशुक्रच्छर्दिक्षवथूद्गारबाष्पवेगविघातादिभिर्विशेषैर्वायुः प्रकोपमापद्यते ॥ १९ ॥**

१ 'संचीयन्त इति प्रकर्षेण चीयन्ते; तेनान्यत्रापि स्वगादिषु बाह्यदुष्टजलादिना चयः कारणसंभवाद्भवति, सोऽल्पतया नेह कथ्यते । प्राक् संचयहेतुरुक्त इति एतच्च संचयकारणकथनमुक्तोदाहरणानुगुण्यात्, नतु तत्संचयकारणनियमात्; येन मधुरस्निग्धाद्याहारादेः कफादिचयोऽस्ति अन्येष्वपि दुर्निवार एव ।' इति चक्रः । २ 'प्रकोपकारणानि' इति पा० । ३ प्रपीडनेति हस्तलिखितपुस्तके न पठ्यते । ४ 'वेगविघातादिभिर्वायुः' इति पा० ।

कानि पुनस्तानीत्याह,—तत्र बलवद्विग्रहेत्यादि । बलवद्भिर्विग्रहो बलवद्विग्रहः, मल्लादिभिः सह बाहुयुद्धादिः । अतिशब्दो व्यायामादिभिस्त्रिभिः संबध्यते । व्यवायः स्त्रीसेवा । अभिघातो लगुडादिप्रहारः । लङ्घनं रवेण गर्ताद्युत्क्रमणम् । प्लवनम् उत्प्लुत्योत्प्लुत्य गमनम् । प्रतरणं नद्यादीनां बाहुभ्यां तरणम् । अतिचर्या अत्यटनं, सा च गजादिभिः पदात्यन्तैः प्रत्येकं संबध्यते । वल्लूरं शुष्कमांसम् । वरकः वैरटिका कुधान्यविशेषः । उद्दालकः अरण्यकोद्रवः । नीवारः प्रसातिका, धान्यमध्ये रक्तशूको भवति; 'उलजीधान्यम्' इति लोके । आढकी तुवरी । हरेणुः वर्तुलकलायः । कलायः त्रिपुटकः । निष्पावकः राजशिम्बिः । अनशनम् अल्पभोजनमुपवासश्च । विषमाशनं बह्वल्पाकालभोजनम् । अध्यशनं साजीर्णभोजनम् । वेगविघातो वेगावरोधः, स च वातमूत्रादिभिः प्रत्येकं संबध्यते । क्षवथुः छिक्का । बाष्पशब्देन रोदनजलं कथ्यते । आदिशब्दात् क्षुदादिवेगविघातादयो गृह्यन्ते ॥ १९ ॥

**स शीताभ्रप्रवातेषु घर्मान्ते च विशेषतः ॥
प्रत्यूषस्यपराह्णे च जीर्णेऽन्ने च प्रकुप्यति ॥ २० ॥**

वातस्य प्रकोपहेतुं पृथङ्निर्दिशन्नाह,—स शीतेत्यादि । सः वायुः । शीते शीतकाले । अभ्रे मेघोपलक्षितकाले । प्रवाते प्रकृष्टवाते काले । घर्मान्ते वर्षाकाले । विशेषतः अतिशयेन । आर्तवं कालमुक्त्वाऽऽह्निकमाह,—प्रत्यूषस्यपराह्णे चेति । भुक्तापेक्षं कालमाह,—जीर्णेऽन्ने च प्रकुप्यतीति ॥ २० ॥

**क्रोधशोकभयायासोपवासविदग्धमैथुनोपगमनकट्वम्ललवणतीक्ष्णोष्णलघुविदाहितिलतैलपिण्याककुलत्थसर्षपातसीहरितकशाकगोधामत्स्याजाविकमांसदधितक्रकूर्चिकामस्तुसौवीरकसुराविकाराम्लफलकट्वरप्रभृतिभिः पित्तं प्रकोपमापद्यते ॥**

पित्तप्रकोपणानि दर्शयन्नाह,—क्रोधशोकभयेत्यादि । आयासः शरीरपीडा । विदग्धं विदाहः, स च शोथरागाहारादिकृतः । विदाहीति यदम्लोद्गारदाहतृष्णाप्रभृतीनुदीर्य कृच्छ्रात् पाकमुपगच्छति तद्विदाहि । हरितकशाकमिति "कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणाः । चुक्राकक्षुक्षिका चेति वर्गो हरितकं

१ 'बरटिका' इति पा० । २ 'प्रवाते इति प्रवातलक्षिते वर्षाकाले । घर्मान्ते इति प्रावृषि । अत्र बलवद्विग्रहादयो वातं जनयन्तः प्रकृष्टमेव जनयन्तीति प्रकोपहेतवः, न पुनः पूर्वमृतुचर्योक्तचयहेतुचितानामेवैते प्रकोपकाः, तथा सत्येतद्व्यतिरेकेणार्तवचयस्य कोपो न स्यात्; आर्तवचयं विना चैषां वातविकारहेतुता सर्वदृष्टान्तघटिता । तस्माद्बलवद्विग्रहादिभिः प्रबलतया दोषो जन्यमानो न प्रकोपहेत्वन्तरमपेक्षते । स्तोकस्तोकसेवितया ऋत्वादिकारणजनिताश्च दोषा आशये लीनत्वात् प्रकोपकारणमपेक्षन्त एवेति ऋतुचर्येऽपि व्युत्पादितम् । एवं पित्तकफप्रकोपहेतुष्वपि व्याख्येयम्' इति चक्रः । ३ '°वराह°' इति पा० ।

विदुः''-इति । दधि सस्नेहं गव्यं दधि । कूर्चिका विग्रथितं तक्रम् । मस्तु दधिमस्तु । सौवीरकं निस्तुषयवत्रिवृदादिकृतं संधानं धान्याम्लं वा । सुराविकाराः पैष्टिकादयः । अम्लफलानि आम्रातकादीनि । कट्वरमिति अस्नेहं दधि । अन्ये भाषन्ते,-''सौवीराम्लमथाल्पम्लं काञ्जिकं कट्वरं विदुः । अन्ये तु तदधोभागं तक्रं चाल्पम्लतांगतम् ॥ सस्नेहं दधिजं तक्रमाहुरन्ये तु कट्वरम्''-इति । प्रभृतिशब्दाच्चुक्रादीनां ग्रहणम् ॥ २१ ॥

**तदुष्णैरुष्णकाले च घनान्ते च विशेषतः ॥**
**मध्याह्ने चार्धरात्रे च जीर्यत्यन्ने च कुप्यति ॥ २२ ॥**

पित्तप्रकोपस्य कालं दर्शयन्नाह,—तदुष्णैरित्यादि । तदिति पित्तम् । उष्णैरिति उष्णत्वमत्र घर्मादिकृतम् । उष्णकाले ग्रीष्मे । घनान्ते शरदि । आह्निकं पित्तप्रकोपस्य कालमाह,—मध्याह्ने इत्यादि । भुक्तापेक्षं पित्तप्रकोपस्य कालमाह,—जीर्यत्यन्ने च कुप्यतीति । 'पित्तप्रकोपणेषु मध्ये शोकभययोर्वातप्रकोपणयोः पाठोऽनार्षः' इति जेज्झटः; स चान्यैर्निबन्धकारैरनपहृतत्वादस्माभिरपि गृहीत इति ॥ २२ ॥

**दिवास्वप्नाव्यायामालस्यमधुराम्ललवणशीतस्निग्धगुरुपिच्छिलाभिष्यन्दिहायनकयवकनैषधेत्कटमाषमहामाषगोधूम-तिल-पिष्ट-विकृतिदधिदुग्धकृशरापायसेक्षु-विकारानूपौदकमांसवसाबिसमृणालकसेरुकशृङ्गाटकमधुर-वल्ली-फलसमशनाध्यशनप्रभृतिभिः श्लेष्मा प्रकोपमापद्यते ॥ २३ ॥**

कफप्रकोपणानि निर्दिशन्नाह,—दिवास्वप्नाव्यायामेत्यादि । अभिष्यन्दि दोषधातुमलस्रोतसामतिशयक्लेदप्राप्तिजननम् । हायनको घोटकपुच्छः, स च शालिविशेषः । यवकः शूकधान्यविशेषः, तस्य च यवाकारास्तण्डुलाः । नैषधः 'कोरक' इत्याख्यायते, स च धान्यविशेषः । इत्कटः खग्गली । पिष्टं तण्डुलपिष्टम् । कृशरा तिलतण्डुलमाषैः कृता यवागूः । पायसः क्षीरसिद्धास्तण्डुलाः । बिसं पद्ममूलं 'बिसाण्ड' इति लोके । मृणालं पद्ममूलात् स्थूलः प्ररोहाङ्कुरः । शृङ्गाटकं जलमध्ये त्रिकण्टकम् । मधुरवल्लीफलमिति मधुरफलं तालनारिकेलादि; वल्लीफलम् अलाबूप्रभृति, अन्ये कूष्माण्डकादीनि ॥ २३ ॥

**स शीतैः शीतकाले च वसन्ते च विशेषतः ॥**
**पूर्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥ २४ ॥**

कफस्य कोपकालविशेषं निर्दिशन्नाह-स शीतैरित्यादि । शीतैः शीतलद्रव्यैः । पूर्वाह्णे प्रथमप्रहरे । प्रदोषे रजनीमुखे ॥ २४ ॥

**पित्तप्रकोपणैरेव चाभीक्ष्णं द्रवस्निग्धगुरुभिराहारैर्दिवास्वप्नक्रोधानलातपश्रमाभिघाताजीर्णविरुद्धाध्यशनादिभिर्विशेषैरसृक् प्रकोपमापद्यते २५**

द्वितीये दर्शने 'शोणितचतुर्थैः' इत्युक्तेः शोणितस्य चतुर्थस्य कोपनानि दर्शयन्नाह—पित्तेत्यादि । पित्तप्रकोपणैरेव चेति पित्तस्य शोणितसमानत्वात् । तस्यैव विशिष्टमपि हेतुं दर्शयन्नाह—अभीक्ष्णं द्रवेत्यादि । अभीक्ष्णं पुनः पुनः 'सेवितैः' इति शेषः ॥ २५ ॥

**यस्माद्रक्तं विना दोषैर्न कदाचित् प्रकुप्यति ॥**
**तस्मात्तस्य यथादोषं कालं विद्यात् प्रकोपणे ॥ २६ ॥**

न च स्वातन्त्र्येणास्य प्रकोपः, किंतु सर्वदा पारतन्त्र्येणैव, तत्प्रतिपादयन्नाह,—यस्मादित्यादि । तत्र वातदुष्टं वातप्रकोपकाले कुप्यति; एवं पित्तकफदुष्टस्य रक्तस्य पित्तकफकाला इति ॥ २६ ॥

**तेषां प्रकोपात् कोष्ठतोदसंचरणाम्लीकापिपासापरिदाहान्नद्वेषहृदयोत्क्लेदाश्च जायन्ते । तत्र द्वितीयः क्रियाकालः ॥ २७ ॥**

तेषां प्रकोपलिङ्गानि दर्शयन्नाह—तेषां प्रकोपादित्यादि । कोष्ठतोदसंचरणे द्वे वातस्य; संचरणमिति कोष्ठे वातपरिभ्रमणमित्यर्थः । अम्लीकापिपासापरिदाहाः पित्तस्य; अम्लीका अम्लोद्गारः, परिदाहः सर्वतोदाहः, अन्येऽपरिदाह इत्यकारप्रश्लेषं मन्यन्ते, तत्र 'नञ्' ईषदर्थे, यथा 'अनुदरा कन्या' इति, तेनेषद्दाह इति व्याख्यानयन्ति । अन्नद्वेषहृदयोत्क्लेदौ कफस्य, हृदयोत्क्लेदो हृल्लासः । द्वितीयः क्रियाकाल इति द्वितीयश्चिकित्सावसरः ॥ २७ ॥

**अत ऊर्ध्वं प्रसरं वक्ष्यामः-तेषामेभिरातङ्कविशेषैः प्रकुपितानां किण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति । तेषां वायुर्गतिमत्त्वात् प्रसरणहेतुः सत्यप्यचैतन्ये । स हि रजोभूयिष्ठः; रजश्च प्रवर्तकं सर्वभावानाम् । यथा-महानुदकसंचयोऽतिवृद्धः सेतुमवदार्यापरेणोदकेन व्यामिश्रैः**

१ 'पित्तप्रकोपहेतौ भयशोकौ चरके 'कामशोकभयाद्वायुः' इत्यनेन वातकारणहेतुतयोक्तत्वात् केचिन्न पठन्ति, पाठपक्षे तु पूर्वसंचितपित्तस्य प्रकोपकत्वं तयोर्ज्ञेयम्' इति चक्रः । २ 'शीतकाले इति हेमन्ते । एतच्च हेत्वन्तरचितस्य कफस्य वर्धकतया प्रकोपणं, न त्वार्तवचयप्रकोपकत्वमस्य, तत्र चयहेतुत्वेनैवोक्तत्वात्; किंवा शीतकालो दुर्दिनादिः' इति चक्रः ।

१ 'रक्तप्रकोपहेतुषु पित्तप्रकोपणैरिति दुष्टस्य रक्तस्य पित्ततुल्यत्वादुक्तम् । रक्तस्य परमार्थतो दोषैरेव दुष्टिः' इति चक्रः । २ 'क्रियाकालानां द्वितीयादिसंख्याप्रदर्शनमुत्तरोत्तरं गरीयस्त्वप्रदर्शनार्थं, यदुक्तं,—'ते तूत्तरासु गतिषु भवन्ति बलवत्तराः' इति चक्रः । ३ 'आतङ्कविशेषैरिति आतङ्कनातङ्ककारणं बलवद्विग्रहादय उच्यन्ते । पिष्टकिण्वोदकसमवाय इवेति मद्यसंधाने यथा पिष्टादि कालाहितोद्रेकं प्रसरति, तथा दोषा अपि हेतुबलादुद्रिक्ताः प्रसरन्ति देशान्तरे चलन्ति । प्रसरणहेतुरिति प्रसारकः । प्रवर्तकमिति प्रवृत्तिस्वभावम् , अतः प्रवर्तयति' इति चक्रः । ४ 'पर्युषितकिण्वोदकपिष्टसमवाय' इति हाराणचन्द्रसंमतः पाठः । ५ 'अपरेणोदकेन व्यामिश्र इत्यत्र वाशब्दो द्रष्टव्यः, तेन दोषान्तरसहितस्य प्रसरेऽयं पक्षः, केवलप्रसरे तु सेतुमवदार्येत्यन्त एव दृष्टान्तः' इति चक्रः ।

सर्वतः प्रधावति, एवं दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वाऽनेकधा प्रसरन्ति । तद्यथा—वातः, पित्तं, श्लेष्मा, शोणितं, वातपित्ते, वातश्लेष्माणौ, पित्तश्लेष्माणौ, वातशोणिते, पित्तशोणिते, श्लेष्मशोणिते, वातपित्तशोणितानि, वातश्लेष्मशोणितानि, पित्तश्लेष्मशोणितानि, वातपित्तकफाः, वातपित्तकफशोणितानीति; एवं पञ्चदशधा प्रसरन्ति ॥ २८ ॥

अत ऊर्ध्वं प्रकोपविशेषमेव प्रसराख्यं दर्शयन्नाह,—अत ऊर्ध्वमित्यादि । तेषां वातपित्तश्लेष्मणाम् । एभिरातङ्कविशेषैः प्रकुपितानामिति पूर्वोक्तैर्बलवद्विग्रहादिभिः, कोष्ठतोदसंचरणादिभिर्वा । कथं ते प्रसरन्तीत्यत आह—किण्वोदकपिष्टेत्यादि । अन्योन्यगुणानुप्रवेशाद्यथा किण्वोदकपिष्टानामुद्रेकः, एवं दुष्टिहेतूनां समवाये वातादीनामुद्रेको भवति; किण्वं सुराबीजं, पिष्टं तण्डुलपिष्टं, समवायः संयोगः । कुतो दोषाणां मध्ये वायुरेव प्रसरणहेतुरित्याह,—तेषां वायुर्गतिमत्त्वादित्यादि । स हि रजोभूयिष्ठ इति सः वायुः, हि यस्मादर्थे, रजोभूयिष्ठः 'रजोबहुलो वायुः' ( शा. अ. १ ) इत्युक्तत्वात् । सर्वभावानां सर्वपदार्थानाम् । एतेन वायोर्गतिमत्त्वे हेतुरुक्तः । प्रसरस्य पुनर्दृष्टान्तमाह,—यथा महानुदकसंचयोऽतिप्रवृद्ध इत्यादि । सेतुमवदार्येति पालीं भित्त्वा । तमेव संयोगिनां संयोगसंख्यया दर्शयन्नाह,—तद्यथा—वातः, पित्तमित्यादि ॥ २८ ॥

कृत्स्नेऽर्धेऽवयवे वाऽपि यत्राङ्गे कुपितो भृशम् ॥
दोषो विकारं नभसि मेघवत्तत्र वर्षति[1] ॥ २९ ॥
नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति ॥
निष्प्रत्यनीकः[2] कालेन हेतुमासाद्य कुप्यति ॥३०॥

तेषामेकदेशप्रसरणेन दृष्टान्तेनैकदेशे विकारं दर्शयन्नाह,—कृत्स्ने इत्यादि । यत्राङ्गे इति अत्राङ्गशब्देन शिरोबाहुजङ्घाः कथ्यन्ते । किंविशिष्टेऽङ्गे ? इत्याह-कृत्स्न इत्यादि । कृत्स्ने समस्ते, अर्धे इति प्रसिद्धम्, अवयवे चिबुकचरणादौ । प्रसृतोऽपि कोऽपि कोपाल्पत्वान्न सहसा विकारकारीति दर्शयन्नाह—नात्यर्थमित्यादि । लीन एकदेशस्थितः । निष्प्रत्यनीको निष्प्रतिक्रियः ॥ २९ ॥ ३० ॥

तत्र वायोः पित्तस्थानगतस्य पित्तवत् प्रतीकारः, पित्तस्य च कफस्थानगतस्य कफवत्, कफस्य च वातस्थानगतस्य वातवत्[3]; एष क्रियाविभागः ॥३१॥

१ 'सृजति मेघो वृष्टिमिवाम्बरे' इति ताडपत्रपुस्तके पाठः । २ 'लीनत्वेन प्रबलविकारकारितां निषेधयति । निष्प्रत्यनीक इत्यवस्थानहेतुः, यदि हि तत्र भेषजं प्रत्यनीकं भवेत्तदा तस्य लीनस्य नाश एव स्यात् । हेतुमासाद्येति पुनः प्रवर्तकं हेतुं प्राप्य; एतदेवोक्तं चरके-'तत्रस्थाश्च विलम्बन्ते कदाचिन्न समीरिताः । नादेशकाले कुप्यन्ति भूयो हेतुप्रतीक्षिणः' (सू. अ. २८) इति चक्रः । ३ 'अत्रार्थे चरकः-'दोषस्थानगतं दोषं स्थानिवत् समुपाचरेत्' इति चक्रः ।

तत्र प्रसरेणान्यदोषस्थानगतस्य दोषस्य स्थानिवत् प्रतीकारातिदेशं दर्शयन्नाह—तत्र वायोः पित्तस्थानेत्यादि ॥ ३१ ॥

एवं प्रकुपितानां प्रसरतां वायोर्विमार्गगमनाटोपौ, ओषचोषपरिदाहधूमायनानि पित्तस्य, अरोचकाविपाकाङ्गसादाश्छर्दिश्चेति श्लेष्मणो लिङ्गानि भवन्ति; तत्र तृतीयः क्रियाकालः ॥ ३२ ॥

तेषां प्रसरणलिङ्गानि दर्शयन्नाह,—एवं प्रकुपितानामित्यादि । प्रसरप्रस्तावेऽत्र प्रकुपितानामिति यत् कृतं तत् प्रकोपविशेष एव प्रसर इति ज्ञापनार्थम् । प्रकोप-प्रसरयोश्च को भेदः ? उच्यते,—स्त्यानस्य सर्पिषः क्वाथ्यमानस्य प्रथमं संचलनमात्रमेव प्रकोपः, तस्यैव चातिक्वाथ्यमानस्य फेनमण्डलेनोत्सर्पता देशान्तरसरणमिव प्रसरः । वायोर्विमार्गगमनेत्यादि । विमार्गगमनाटोपौ वायोः; प्रकृतवायुमार्गादन्यो विमार्गः, आटोपो रुजापूर्वक उदरक्षोभः । ओषादीनि पित्तस्य; ओष एकदेशिको दाहः, चोषः चूष्यत इव वेदनाविशेषः, धूमायनं धूमोद्गमनमिव । केचिदोषचोषौ न पठन्ति, 'दाहो धूमायनं च पित्तस्य' इति च पठन्ति । अरोचकादयः कफस्य; अङ्गसादः अङ्गग्लानिः । अविपाकाङ्गसादौ केचिन्न पठन्ति, 'अरोचकश्छर्दिश्च' इत्येतदेव च पठन्ति । तत्र प्रसरं यावद्दोषाणामेव हेतुलिङ्गचिकित्सा, तदनन्तरं व्याधेरिति ॥ ३२ ॥

अत ऊर्ध्वं स्थानसंश्रयं[1] वक्ष्यामः । एवं प्रकुपितास्तांस्तान् शरीरप्रदेशानागम्य तांस्तान् व्याधीन् जनयन्ति । ते यदोदरसन्निवेशं कुर्वन्ति तदा गुल्मविद्रध्युदराग्निसङ्गानाहविसूचिकातिसारप्रभृतीञ्जनयन्ति; बस्तिगताः प्रमेहाश्मरीमूत्राघातमूत्रदोषप्रभृतीन्; मेढ्रगता निरुद्धप्रकशोपदंशशूकदोषप्रभृतीन्; गुदगता भगन्दरार्शःप्रभृतीन्; वृषणगता वृद्धीः; ऊर्ध्वजत्रुगतास्तूर्ध्वजान्; त्वङ्मांसशोणितस्थाः क्षुद्ररोगान् कुष्ठानि विसर्पांश्च; मेदोगता ग्रन्थ्यपच्यर्बुदगलगण्डालजीप्रभृतीन्; अस्थिगता विद्रध्यनुशयीप्रभृतीन्; पादगताः श्लीपदवातशोणितवातकण्टकप्रभृतीन्; सर्वाङ्गगता ज्वरसर्वाङ्गरोगप्रभृतीन्; तेषामेवमभिसंनिविष्टानां पूर्वरूपप्रा-

१ 'स्थानसंश्रयः दोषदूष्यस्य संश्रयः ।......उदरसंनिवेशे साधारणेऽपि विद्रध्यादिकार्यभेदात् स्थानसंश्रयभेदः सूक्ष्मो ज्ञेयः; न ह्येकस्मात् स्थानसंश्रयादेकजातिदोषकृताद्भिन्ना रोगा भवितुमर्हन्ति, एवमन्यत्रापि व्याख्येयम् । संश्रयस्तु संशब्दश्च गच्छतो मार्गसंबन्धमात्रस्य व्याधिहेतोर्निरासः' इति चक्रः । २ 'पूर्वरूपमेव स्थानसंश्रयलिङ्गं; यदुक्तं-"स्थानसंश्रयिणः क्रुद्धा भाविव्याधिप्रबोधकम् । दोषाः कुर्वन्ति यल्लिङ्गं पूर्वरूपं तदुच्यते" इति । तच्च दोषगमकं भाविव्याधिगमकं च । यद्वक्ष्यति ज्वरगमकपूर्वरूपमभिधाय 'सामान्यतो विशेषात्तु जृम्भाऽत्यर्थं समीरणात्' (सु. उ. अ. ३९) इत्यादि । तथा—

**दुर्भावः; तं प्रतिरोगं वक्ष्यामः। तत्र पूर्वरूपगतेषु चतुर्थः क्रियाकालः ॥ ३३ ॥**

प्रसृतानां पुनर्दोषाणां स्रोतोवैगुण्याद्यत्र सङ्गः स स्थानसंश्रयः, तं निर्दिशन्नाह,—अत ऊर्ध्वमित्यादि। तत्र स्रोतोवैगुण्याद्यत्र सक्ता यान् यान् रोगान् कुर्वन्ति तांस्तान् निर्देष्टुमाह—ते यदोदरसन्निवेशमित्यादि। सन्निवेशं सम्यक्स्थितिम्। प्रभृतिग्रहणात् प्रवाहिकाविलम्बिकाभृतयः। जत्रु ग्रीवामूलम्। त्वङ्मांसशोणितस्था इति त्वक्शब्देनात्र रसो विवक्षितः। मेदोगतदोषव्याधिपाठानन्तरं 'अस्थिगता विद्रध्यादीन्' इति पाठो युक्तः, सूत्रे चादर्शनात् समग्रो न लिखितः। मज्जशुक्रगतानां दोषाणां व्याधयो न निर्दिष्टाः, स्वल्पत्वात् कादाचित्कत्वाच्चेति। सर्वाङ्गगता इत्यादि सर्वाङ्गरोगः सर्वाङ्गवातव्याधिः, प्रमेहपाण्डुरोगशोषादयो वा। सूक्ष्मत्वात् स्थानसंश्रयस्य न पृथगुक्तं लक्षणं, नापि क्रियाकाल इति। अभिसंनिविष्टानाम् अत्यर्थं सन्निवेशं कृतवताम्। पूर्वरूपप्रादुर्भाव इति 'व्याधेः' इति शेषः। किं तत् पूर्वरूपमिति पृष्टो व्याधिभेदबाहुल्येन पूर्वरूपभेदबाहुल्यात् साक्षान्निर्देशेन दर्शयितुमशक्यमित्यतिदेशेन दर्शयन्नाह—तं प्रतिरोगं वक्ष्यामः; तं पूर्वरूपप्रादुर्भावं, रोगे रोगे प्रतिवक्ष्याम इत्यर्थः, न प्रतिदोषं चयादिलिङ्गवदित्यर्थः। पूर्वरूपगतेष्विति गतेषु ज्ञातेषु; 'पूर्वरूपेषु वर्तमानेषु' इति केचित् पठन्ति। चतुर्थः क्रियाकाल इति चतुर्थश्चिकित्सावसरः। चिकित्सा चात्र दोषस्य दूष्यस्य चेत्युभयाश्रिता ॥ ३३ ॥

**अत ऊर्ध्वं व्याधेर्दर्शनं वक्ष्यामः—शोफार्बुदग्रन्थिविद्रधिविसर्पप्रभृतीनां प्रव्यक्तलक्षणता ज्वरातीसारप्रभृतीनां च। तत्र पञ्चमः क्रियाकालः ॥ ३४ ॥**

व्याधेः प्रव्यक्तं रूपं व्यक्तिः, तां दर्शयन्नाह—अत ऊर्ध्वमित्यादि। व्याधेर्दर्शनं व्याध्युपलब्धिः, शोफादीनां ज्वरादीनां च प्रव्यक्तलक्षणता व्यक्तिः; प्रव्यक्तलक्षणता च व्याधिजातिलक्षणकथनं; तद्यथा—शोफार्बुदादीनां त्वङ्मांसस्थानस्य दोषस्य संघातता, तथा संतापलक्षणो ज्वरः, सरणलक्षणोऽतीसारः, पूरणलक्षणमुदरमिति। अत्र व्याधेः प्रत्यनीकैव चिकित्सा ॥ ३४ ॥

**अत ऊर्ध्वमेतेषामवदीर्णानां व्रणभावमापन्नानां षष्ठः क्रियाकालः, ज्वरातिसारप्रभृतीनां च दीर्घकालानुबन्धः। तत्राप्रतिक्रियमाणेऽसाध्यतामुपयान्ति ॥ ३५ ॥**

व्यक्तिमभिधाय भेदं कथयन्नाह—अत ऊर्ध्वमित्यादि। एतेषां शोफादीनामित्यर्थः। अवदीर्णानां विदरणंगतानां भिन्नानामित्यर्थः। अवदीर्णत्वं च शोफादीनां विशेषलक्षणं, तच्च भेदः। व्रणभावमापन्नानामिति यत एव विदीर्णा अत एव व्रणत्वं गता इत्यर्थः। ज्वरातीसारप्रभृतीनां च दीर्घकालानुबन्ध इति यथा व्यक्तिप्रस्तावे ज्वरादीनां संतापसरणपूरणादिकं सामान्यलक्षणमुक्तं, तथाऽत्र भेदप्रस्तावाद्विशेषलक्षणं दीर्घकालानुबन्धो ज्वरादिजातिषु भेद इति ज्ञातव्यः। केचिदत्र 'दीर्घकालानुबन्धो न प्रतिव्याधिजातिषु संभवतीति वातादिलक्षणभेदाद्भिन्नत्वं भेदः' इत्याचक्षते, यथा—अष्टानां ज्वराणामित्यादि। अत्र पक्षे दीर्घकालानुबन्ध इति स्वरूपकथनम्, एतेन संचयादिष्वप्रतीकाराद्दीर्घकालानुबन्धोऽसाध्यता च भवतीत्युक्तम्। पूर्वासु गतिष्वप्रतीकारेऽपि प्रतीकारावसरोऽस्त्येव, अत्र तूत्तरगत्यभावात् पश्चात् प्रतीकाराशा नास्त्येवेति दर्शयन्नाह,—तत्राप्रतिक्रियमाण इत्यादि।—तत्रेति भेद इत्यर्थः ॥ ३५ ॥

भवति चात्र—

**संचयं च प्रकोपं च प्रसरं स्थानसंश्रयम् ॥**
**व्यक्तिं भेदं च यो वेत्ति दोषाणां स भवेद्भिषक् ३६**

अतीतं संक्षिप्य संग्रहं प्रतिपादयन्नाह—संचयं च प्रकोपं चेत्यादि। चकारेण संचयादिहेतुस्थानाद्यनुक्तं सर्वं समुच्चीयते ३६

**संचयेऽपहृता दोषा लभन्ते नोत्तरा गतीः ॥**
**ते तूत्तरासु गतिषु भवन्ति बलवत्तराः ॥ ३७ ॥**

यथापूर्वं प्रतीकाराल्पत्वं यथोत्तरं प्रतीकारबाहुल्यं दर्शयन्नाह—संचयेऽपहृता दोषा इत्यादि। तेषामपहरणं च बहुदोषे शोधनं, मध्यदोषे लङ्घनपाचनम्, अल्पदोषे संशमनमिति ॥ ३७ ॥

**सर्वैर्भावैस्त्रिभिर्वाऽपि द्वाभ्यामेकेन वा पुनः ॥**
**संसर्गे कुपितः क्रुद्धं दोषं दोषोऽनुधावति ॥ ३८**

इदानीं संसर्गे सन्निपाते च प्रसराभिहितेंऽशांशबलविकल्पेनानुबन्ध्यानुबन्धिभावं चिकित्सार्थं दर्शयन्नाह—सर्वैर्भावैस्त्रिभिर्वेत्यादि। अनुधावति अनुलग्नो भवति। कोऽसौ? दोषः, किंविशिष्टः? कुपितः, कैः कृत्वा? भावैः, कोऽर्थः? स्वभावैः रूक्षोष्णस्निग्धादिभिः, कतिसंख्योपेतैः? त्रिभिः, न केवलं त्रिभिः द्वाभ्यामेकेन वा; एतेन त्र्यादिस्वभावकुपितोऽप्रधानोऽनुबन्धभूतः प्रधानदोषमार्गानुलग्नो भवतीत्युक्तम्। कमनुधावति? इत्याह—दोषं, किंविशिष्टं? क्रुद्धं प्रकोपं गतं, कैः कृत्वा?

---

'व्याधेर्जातिर्बुभूषा च पूर्वरूपेण लक्ष्यते। भावः किमात्मकत्वं च लक्ष्यते लक्षणेन तु' इति। पूर्वरूपगतेषु पूर्वरूपावस्थागतेषु व्याधिजननोन्मुखेषु दोषेषु' इति चक्रः।

१ 'शोथश्चेह व्रणशोथ उच्यते, उत्तरकालमस्यावदीर्णताभिधानात्। प्रव्यक्तलक्षणता व्याधीनां व्यक्तिरित्यर्थः। प्रव्यक्तलक्षणैर्हि व्याधिरुत्पन्नो व्यज्यते, सा च व्याधिव्यक्तिर्व्याध्यारम्भकदोषलिङ्गवती तथा प्रातिस्विकव्याधिलिङ्गवती च' इति चक्रः।

१ 'अत एव' इति पा०। २ 'व्यक्तिभेदावपि दोषाणां दूष्यविशेषादिसहितानामवस्थाभेदौ, येन दोष एव दूष्यविशेषसंमूर्च्छितो व्याधिः, तथा तद्भेदोऽपि दोषभेद एवेति सुव्यक्तं यो वेत्ति दोषाणामिति' इति चक्रः। ३ क्रियाकालानामुत्तरोत्तरगरीयस्त्वमाह—संचयेऽपहृता दोषा इत्यादि। बलवत्तरा इति पूर्वापेक्षया द्वित्वविवक्षया निर्देशः' इति चक्रः। ४ 'प्रधानं दोषमग्रेऽनुलग्नः' इति पा०।

भावैः, कतिसंख्यैः ? इत्याह—सर्वैः, कोऽर्थः ? समस्तैः रूक्षोष्णस्निग्धादिभिः, एतेन सर्वभावकुद्धः प्रधानभूतो व्यक्तलिङ्गोऽनुबन्ध्यो दोष उक्तः । क ? संसर्गे, कोऽर्थः ? दोषद्वयसंयोगे । अत्राप्येवमुक्तं भवति-यदा किल दोषद्वयसंसर्गो भवति तदा प्रधानस्यानुबन्ध्यभूतस्य दोषस्य चिकित्सा कर्तव्या, तत्प्रशमादेवाप्रधानस्यानुबन्धभूतस्य प्रशमो भविष्यतीति; यदा तु सर्वैर्भावैः कुप्यन्ति तदा सर्वे प्रधानभूताः परस्परमनुबन्ध्यभूताश्च भवन्ति, एवं च समसन्निपातो भवति, तदा पित्तमुपचरणीयम् । अन्ये तु सर्वैर्भावैरित्यत्र 'भावा व्याधिहेतवः; ते चाहारविहारदेशकालाश्चत्वारः' इति वर्णयन्ति । अपरे तु रसगुणवीर्यविपाकांश्चतुरो भावान् कथयन्ति । द्रव्यगुणकर्माणि भावा इति चरकव्याख्यातारो **भट्टारकहरिचन्द्र**प्रभृतयः प्रतिपादयन्ति । अन्ये तु 'सर्वैर्भागैः' इति पठन्ति । तत्र, वातस्य रूक्षलघुविशदविष्टम्भा भागाः, पित्तस्य तीक्ष्णद्रवपूतिनीलपीता भागाः, श्लेष्मणः शीतगुरुपिच्छिलस्निग्धादयो भागाः; तत्र वातादयो यदा सर्वैस्त्रिभिर्द्वाभ्यामेकेन वा भागेन कुप्यन्ति तदा तावद्भिस्तद्विपरीतैर्भागैश्चिकित्सा कर्तव्या । तत्र श्लेष्मणः क्षये बलवद्विग्रहादिभिः क्रियमाणे यदा रूक्षो भागो वातस्य कुप्यति तदा स्निग्धेनैकेन भागेन तद्विपरीतेन प्रतिकर्तव्यः; यदा तु रूक्षशीतौ द्वौ भागौ कुप्यतस्तदा स्निग्धोष्णाभ्यां द्वाभ्यां भागाभ्यां चिकित्स्य इत्यादि । सर्वैर्वेति स्वयमूह्यम् । संसर्गे दोषद्वयसंयोगे इत्यर्थः । एतेनैतदुक्तं भवति—यदा क्रुद्धं दोषं कुपितोऽनुगच्छति तदा संसर्गो भवति; स च संसर्गो द्विधा भवति—प्रकृतिसमसमवेततया, विकृतिविषमसमवेततया च; तत्र यदा वायुपित्तयोः संसर्गस्तदा शोषणात्मकतया स्वभावसदृशेन पित्तेन वायुः समवेत इति प्रकृतिसमसमवेत उच्यते, यदा तु पित्तश्लेष्मणोः संयोगस्तदा पित्तमुष्णं शीतेन श्लेष्मणा युक्तमतः स्वभावविपरीतेन समवेत इति विकृतिविषमसमवेत उच्यते ॥ ३८ ॥

**संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत् ॥**
**शेषदोषाविरोधेन सन्निपाते तथैव च ॥ ३९ ॥**

संसर्गसन्निपातयोश्चिकित्सासूत्रमाह—संसर्गे इत्यादि । गरीयानिति गुरुतरः । कथमुपक्रमणीय इत्याह—शेषदोषाविरोधेनेति ।-यथा न कुप्यतीत्यर्थः । संसर्गक्रियां सन्निपातेऽप्यतिदेष्टुमाह—सन्निपाते तथैव चेति । ननु, यदि शेषदोषाविरोधेन संसर्गे यो गरीयान् सोपक्रम्यस्तर्हि कथमिदमुच्यते,-"शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु । दुर्निवारतमं तद्धि ज्वरार्तेषु विशेषतः" (उ. अ. ३९); तथा,-"समवाये हि दोषाणां पूर्वं पित्तमुपाचरेत् । ज्वरे चैवातिसारे च, सर्वत्रान्यत्र

१ 'सर्वभागकुद्धः' इति पा० । २ 'गरीयानित्यभिधानेन भूयसा प्रकोपगरीयस्त्वं चिकित्साभेदप्रयोजनं दर्शयति । उपक्रम्यः स इति प्राधान्येनोपक्रम्यः' इति चक्रः ।

मारुतम्"-(उ. अ. ४०) इति । सत्यं, समसन्निपातमाश्रित्य तत्रोक्तं, न पुनरन्यान् द्वादशेति न दोषः ॥ ३९ ॥

**वृणोति यस्माद्रूढेऽपि व्रणवस्तु न नश्यति ॥**
**आदेहधारणात्तस्माद्व्रण इत्युच्यते बुधैः ॥ ४० ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने व्रणप्रश्नाध्यायो नामैकविंशोऽध्यायः ॥ २१ ॥**

कथं पुनरयं शरीरैकदेशोत्थो दोषसंघातो व्रण इत्युच्यत इत्याह—वृणोतीत्यादि । स वृणोति आच्छादयति यस्मात् तस्मात् 'व्रण' इति; अथवा व्रणवस्तु व्रणचिह्नं, रूढेऽपि न नश्यति तथैवास्ते, आदेहधारणात् यावज्जीवं, तस्मात् 'व्रण' इति ॥ ४० ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने एकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशतितमोऽध्यायः ।

**अथातो व्रणास्रावविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

आदिशब्दः प्रतिज्ञायां लुप्तनिर्दिष्टो द्रष्टव्यः । तेन व्रणस्रावादिविज्ञानीयमित्यर्थः । एतेन वेदनादयोऽपि संगृहीताः ॥ १ ॥ २ ॥

**त्वङ्मांससिरास्नाय्वस्थिसन्धिकोष्ठमर्माणीत्यष्टौ व्रणवस्तूनि । अत्र सर्वव्रणसन्निवेशः ॥ ३ ॥**

त्वगित्यादि । व्रणवस्तूनि व्रणाधिष्ठानानि । अत्र एष्वित्यर्थः । व्रणसंनिवेशो व्रणावस्थानम् ॥ ३ ॥

**तत्र, आद्यैकवस्तुसन्निवेशी त्वग्भेदी व्रणः सूपचरः, शेषाः स्वयमवदीर्यमाणा दुरुपचाराः ॥ ४ ॥**

१ 'वृणोति छादयति, आदेहधारणादिति उत्पन्नो व्रण आदेहधारणं वृणोति । कथं वृणोतीत्याह—यस्माद्रूढेऽपि व्रणवस्तु व्रणकिणमादेहधारणान्न नश्यति, तेन व्रणकार्येण किणेन धारणप्रकर्षाद्व्रणसंज्ञेति फलति' इति चक्रः । २ 'आदेहधारणाज्जन्तोर्व्रणस्तस्मान्निरुच्यते' इति ताडपत्रपुस्तके पाठः । ३ 'व्रणवस्तूनि व्रणोपादानभूतानि द्रव्याणि' इति **हाराणचन्द्रः** । ४ 'यदपि रक्तमेदोमज्जादि व्रणेऽवदृश्यते, तदपि सिरास्नाय्वाश्रयत्वेनैव व्रणे भवति, न तु तदधिकरक्ताद्याश्रयत्वेनेत्येके । अन्ये तु सिरया रुधिरं, स्नायुसंबन्धेन मेदः, अस्थ्ना च तात्स्थ्यान्मज्जा गृह्यते' इति वदन्ति' इति चक्रः । ५ 'आद्यत्वेन त्वचि लब्धायामेकग्रहणं मांसादिगतव्रणानामपि पाककाले त्वग्विदरणेनाद्यत्वगाश्रयत्वस्य लब्धस्य निरासार्थम् । त्वचमेवैकां भेत्तुं शीलमस्येति त्वग्भेदी । एतच्च त्वगाद्याश्रयत्वं वैशेषिकदुष्ट्या ज्ञेयम् । तेन सर्वत्रैव 'पचत्यतः शोणितमेष पाकः' इत्यनेन रक्तपाकाभिधानं सर्वगामितया रक्तस्य युक्तम्' इति चक्रः ।

तेषां मध्ये एकस्मिन्नेव वस्तुनि व्रणस्य सुखोपचर्यत्वं दर्शयन्नाह—तत्रेत्यादि । आयैकवस्तुसन्निवेशीति त्वक्सन्निवेशीत्यर्थः । त्वग्भेदीति पुनर्नियमार्थम्; एतेन त्वगाश्रितमांसभेदी न सूपचरः । अन्ये तु 'आयैकवस्तुसन्निवेशी त्वग्भेदी च' इत्यनयोः पदयोर्मध्ये एकतरपदेनैव त्वग्वस्तु प्राप्यते किं पदद्वयेनेति यत्, पदद्वयं तद्ग्रन्थाधिक्यादर्थाधिक्यं बोधयति, तेन विकृताकृतयोऽपि त्वग्भेदिनो व्रणाः सूपचरा इत्यधिकोऽर्थ उक्तो भवति' इति मन्यन्ते । अपरवस्तुसन्निवेशिनः किंविशिष्टा इत्याह—शेषा इत्यादि । शेषा इति मांसाद्यधिष्ठानाः । स्वयमवदीर्यमाणा इति आलेपस्रावणादिभिर्विना स्वयमेव पक्वाः पश्चाद्भिन्ना इत्यर्थः ॥ ४ ॥

**तत्रायतश्चतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः, शेषास्तु विकृताकृतयो दुरुपक्रमा भवन्ति ॥ ५ ॥**

यथा स्रावज्ञानं चिकित्साहेतुस्तथा व्रणाकृतिरपीति तां दर्शयन्नाह—तत्रायत इत्यादि । आयतो दीर्घः, चतुरस्रश्चतुष्कोणः, वृत्तो वर्तुलः, त्रिपुटकस्त्रिकोणः, इतिशब्द उपसंहारे दोषजव्रणाकृतीनां; समासः संक्षेपः । शेषा इति उक्तेभ्योऽन्ये अर्धचन्द्रस्वस्तिकाद्या व्रणाकृतयो विकृता इत्यर्थः ॥ ५ ॥

**सर्व एव व्रणाः क्षिप्रं संरोहन्त्यात्मवतां सुभिषग्भिश्चोपक्रान्ताः; अनात्मवतामज्ञैश्चोपक्रान्ताः प्रदुष्यन्ति, प्रवृद्धत्वाद्दोषाणाम् ॥ ६ ॥**

व्रणिनामात्मवतां भिषजां गुणसंपदोऽपि चिकित्साहेतव इति दर्शयन्नाह—सर्व इत्यादि । आत्मवतां पथ्याहारविहारसेविनाम् । अनात्मवतामिति अहिताहारविहारसेविनाम् । अज्ञैश्चोपक्रान्ता इति चकारेणात्मवतां सुभिषग्भिरुपक्रान्तानामपि कुष्ठिप्रमेहिणां तथा कदाचिच्छुक्रप्रवृत्तिमात्रादेव व्रणदुष्टिरनुक्ता समुच्चीयते । कुतः पुनरनात्मवतामज्ञभिषगुपक्रान्तानां व्रणानां दुष्टिरित्याह—प्रवृद्धत्वाद्दोषाणामिति । अन्ये त्वेवं योजयन्ति—'न केवलमज्ञैरुपक्रान्ता एव प्रदुष्यन्ति, अपि तु प्रवृद्धत्वाच्च दोषाणाम्' इति ॥ ६ ॥

**तत्रातिसंवृतोऽतिविवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽवसन्नोऽतिशीतोऽत्युष्णः कृष्णरक्तपीतशुक्लादीनां वर्णानामन्यतमवर्णो भैरवः पूतिपूयमांससिरास्नायुप्रभृतिभिः पूर्णः पूतिपूयास्राव्युन्मार्ग्युत्सङ्ग्यमनोज्ञदर्शनगन्धोऽत्यर्थं वेदनावान् दाहपाकरागकण्डूशोफपिडकोपद्रुतोऽत्यर्थं दुष्टशोणितास्रावी दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि ।**

**तस्य दोषोच्छ्रायेण षट्त्वं विभज्य यथास्वं प्रतीकारे प्रयतेत ॥ ७ ॥**

प्रायेण दुष्टेष्वेव व्रणेषु स्रावा भवन्ति, अतस्तेषां दुष्टव्रणानां लक्षणमाह—तत्रातिसंवृत इत्यादि । अतिसंवृतः अतिसंकुचितो वातेन । अतिविवृतो व्यात्तमुखः पित्तशोणितेन । काठिन्यं वातेन । अतिमार्दवं कफेन; अन्ये पित्तशोणितेन मार्दवमिच्छन्ति । उत्सन्न उन्नतमांसः, अवसन्नो हीनमांसो निम्नाकारः, एतौ रक्तपित्तेन; अन्ये वातेनोत्सन्नावसन्नत्वमिच्छन्ति; 'अत्रोत्सन्नत्वं कफेन' इति केचित् । अतिशैत्यं कफवातात् । अत्यौष्ण्यं रक्तपित्तात् । कृष्णादयो वर्णा यथासंभवं वातादिभिर्ज्ञेयाः । भैरवः अनवधारितलिङ्गः । पूतिपूयमांससिरास्नायुप्रभृतिभिः पूर्ण इति पूतिशब्दः प्रत्येकं पूयादिभिरभिसंबध्यते । 'पूतिमांससिरास्नायुप्रतिपूर्ण' इत्येके पठन्ति; पूतिमांससिरास्नायुप्रतिपूर्णत्वं तत्स्राविलं च यथासंभवं वेदितव्यम् । उन्मार्गी तिर्यग्गतिः । उत्सङ्गी ऊर्ध्वगतिः; अन्ये पूयोपेक्षावदारितमांसादिदेशत्वेनातिनिम्नत्वादुत्सङ्गतुल्यत्वादुत्सङ्गः, सोऽस्यास्तीति उत्सङ्गी उन्मार्गी; उत्सङ्गीति कफेन । अमनोज्ञदर्शनगन्ध इति अमनोज्ञदर्शनोऽमनोज्ञगन्धश्चेत्यर्थः; अमनोज्ञदर्शनगन्धत्वं रक्तपित्तेन, अन्ये दोषत्रयेण मन्यन्ते । अत्यर्थं वेदनावानिति वातेन । दाहपाकरागकण्डूशोफेत्यादि, अत्र दाहादिभिः सहोपद्रुतशब्दः प्रत्येकं संबध्यते; अत्र दाहपाकरागोपद्रुतत्वं पित्तरक्तेन, कण्डूपद्रुतत्वं कफेन, शोफोपद्रुतत्वं वातेन, पिडकोपद्रुतत्वं दुष्टशोणितास्रावश्च रक्तपित्तेन, दीर्घकालानुबन्धित्वं दोषत्रयेण । दीर्घकालानुबन्धी चेति चकारेण रोप्यादयो दुष्टव्रणविशेषा गृह्यन्ते । रोप्यलक्षणं तु "बहिः शुद्ध इवाभाति स व्रणो रोप्य उच्यते" (च. चि. अ. २५)—इति चरकेणोक्तम् । व्रणदुष्टौ चिकित्सासूत्रं दर्शयन्नाह—तस्येत्यादि । तस्य व्रणस्य उच्छ्रायेण औत्कट्येन षट्त्वं वातपित्तकफरक्तसन्निपातागन्तुभेदतः । यथास्वं स्वस्य दोषस्यानतिक्रमेण । प्रतीकारे चिकित्सिते, प्रयतेत प्रयत्नं कुर्वीत । अन्ये त्वत्र 'दोषोच्छ्रायमवेक्ष्य' इति पठन्ति ॥ ७ ॥

**अत ऊर्ध्वं सर्वस्रावान् वक्ष्यामः—तत्र घृष्टासु छिन्नासु वा त्वक्षु स्फोटे भिन्ने विदारिते वा सलिलप्रकाशो भवत्यास्रावः किंचिद्विस्रः पीतावभासश्च; मांसगतः सर्पिःप्रकाशः सान्द्रः श्वेतः पिच्छिलश्च; सिरागतः सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः पक्वासु च तोयनाडीभिरिव तोयागमनं पूयस्य, आस्रावश्चात्र तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावोऽवश्यायप्रतिमश्च; स्नायुगतः स्निग्धो घनः सिंघाणकप्रतिमः सरक्तश्च; अस्थिग-**

१ 'अत्रातिसंवृतातिकठिनातिमात्रावसन्नात्यर्थवेदनावानिति वातेन, अतिविवृतात्युष्णरक्तपूतिमांससिरास्नायुप्रतिपूर्णपूतिपूयास्राव्यमनोज्ञदर्शनगन्धात्यर्थदाहपाकरागवेदनावानिति पित्तेन, शेषाः कफेन। उन्मार्गी मुखाद्न्यमुखान्तरवान्, उत्सङ्गः कोटरः' इति चक्रः ।

१ 'तस्य दोषोच्छ्रायमवेक्ष्य' इति ताडपत्रपुस्तके पाठः ।

२ 'श्वेतोऽवसन्नवर्त्माऽतिस्थूलवर्त्माऽतिपिञ्जरः । नीलः श्यावोऽतिपिडको रक्तः कृष्णोऽतिपूतिकः ॥ रोप्यः कुम्भीमुखश्चेति प्रदुष्टा द्वादश स्मृताः' इति चरकः ( चि. अ. २५ ) ।

**तोऽस्थन्यभिहते स्फुटिते भिन्ने दोषावदारिते वा दोषभक्षितत्वादस्थि निःसारं शुक्तिधौतमिवाभाति, आस्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च; संधिगतः पीड्यमानो न प्रवर्तते, आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कासनप्रवाहणैश्च स्रवति, आस्रावश्चात्र पिच्छिलोऽवलम्बी सरुधिरोन्मथितश्च; कोष्ठगतोऽसृङ्मूत्रपुरीषपूयोदकानि स्रवति; मर्मगतस्त्वगादिष्ववरुद्धत्वान्नोच्यते । तत्र त्वगादिगतानामास्रावाणां यथाक्रमं पारुष्यश्यावावश्यायदधिमस्तुक्षारोदकमांसधावनपुलाकोदकसन्निभत्वानि मारुताद्भवन्ति; पित्ताद्गोमेदकगोमूत्रभस्मशङ्खकषायोदकमाध्वीकतैलसन्निभत्वानि; पित्तवद्रक्तादतिविस्रत्वं च; कफान्नवनीतकासीसमज्जपिष्टतिलनालिकेरोदकवराहवसासन्निभत्वानि; सन्निपातान्नालिकेरोदकैर्वारुकरसकाञ्जिकप्रसादारुकोदकप्रियङ्गुफलयकृन्मुद्गयूषसवर्णत्वानीति ॥८॥**

अत्र व्रणदुष्टिरसूत्रिताऽप्युक्ता, तां निर्दिश्य व्रणास्रावान्निर्दिशन्नाह—अत ऊर्ध्वमित्यादि । सर्वस्रावानिति सर्वव्रणवस्तूनां सर्वदोषाणामागन्तोश्च व्रणस्य स्रावानित्यर्थः । घृष्टासु छिन्नास्विलागन्तोः, त्वक्ष्विति संबन्धः; बहुवचनं तु सप्तत्वगपेक्षया । अत्र त्वग्ग्रहणाल्लक्षणया रसाधिष्ठानो व्रण उक्तः । स्फोटे इति त्वक्स्थिते व्रणे, भिन्ने स्वयं भिन्ने, विदारिते यत्नेन विदारिते इत्यर्थः; अत्र भिन्ने विदारिते इति शारीरव्रणस्य । सलिलप्रकाश इति उदकरसयोरच्छयोस्त्वचामधिष्ठानत्वात् । विस्र आमगन्धिः, पीतावभासः पाकारम्भकेण पित्तेनेत्यर्थः । मांसगत इति मांसगत आस्राव इत्यर्थः । सर्पिःप्रकाशस्रावत्वमागन्तोः । सान्द्रश्वेतपिच्छिलत्वं शारीरस्य । सिरागत इत्यादि सिराग्रहणेन रक्ताधिष्ठानो व्रण उक्तः; सद्यश्छिन्नास्विल्यागन्तोः; पक्वास्वित्यादि शारीरस्य । विच्छिन्न इति अल्पाल्पप्रवर्तनम् । अवलम्बी अवलम्बनशीलः । स्नायुगत इत्यादि स्नायुग्रहणेन मेदोऽधिष्ठानो व्रण उक्तः, अन्ये तु 'मेदोमज्जानौ घृतवद्विलीयेते, अतो व्रणाधिष्ठानत्वं नैव तयोः' इति वदन्ति । सिंघाणको रक्तमिश्रो घनीभूतः श्लेष्मा । अस्थिगत इत्यादि । अभिहते इति अभिघातजे व्रणे, भिन्ने विदारिते चेति शारीरे । अस्थि निःसारं कोऽर्थः ? लघु; 'भवति' इत्यध्याहारः । शुक्तिधौतमिवाभाति शुक्तिरिव शोभते तथा धौतमिव शोभतेऽस्थीति संबध्यते । सन्धिगत इत्यादि । उन्नमनमिति बाहुजङ्घादीनामूर्ध्वं नयनम् । विनमनं गात्राणामधःप्रापणम् । प्रवाहणमिति कुन्थनम् । सरुधिरोन्मथितश्चेति रुधिरेणैवोन्मथितश्च । कोष्ठगत इत्यादि कोष्ठगत इति मलधातुसमुदायाधिष्ठानो व्रण उक्तः । उदकमत्र रसक्लेद एव गृह्यते पीतं वा । मर्मगत इत्यादि । अवरुद्ध इति संगृहीत इत्यर्थः । दोषास्रावान्निर्दिशन्नाह—तत्र त्वगादिगतानामित्यादि । तत्र मर्मवर्जितेषु सप्तसु त्वगादिव्रणवस्तुषु वातपित्तकफसन्निपातानां सप्त सप्त स्रावा यथाक्रमेण द्रष्टव्या इत्येके; अन्ये तु त्वगादिषु वातादिलिङ्गानां मध्ये किंचित् क्वचिदिति वर्णयन्ति । पित्ताद्गोमेदेत्यादि ।–गोमेदक इति मणिरापीतः । एर्वारुकरसः कर्कटिकारसः; काञ्जिकप्रसाद इति काञ्जिकस्योपर्यच्छः; आरुकमनेनैव नाम्ना प्रसिद्धम् ॥ ८ ॥

**श्लोकौ चात्र भवतः—**

**पक्वाशयादसाध्यस्तु पुलाकोदकसन्निभः ॥**
**क्षारोदकनिभः स्रावो वर्ज्यो रक्ताशयात्स्रवन् ॥९**
**आमाशयात् कलायाम्भोनिभश्च त्रिकसन्धिजः ॥**
**स्रावानेतान् परीक्ष्यादौ ततः कर्माचरेद्भिषक् १०**

स्थानभेदात् स्रावस्यासाध्यत्वख्यापनाय श्लोकौ प्राह—पक्वाशयादित्यादि । पुलाकोदकं गवेधुकोदकं, गवेधुकस्तृणविशेषः, 'जलगोधूम' इति लोके; अन्ये तु पुलाकशब्देनाप्राप्तपाकं धान्यमाहुः । आमाशयादित्यादि । कलायोऽत्र त्रिपुटकः । त्रिकसन्धिज इति बाहुग्रीवास्थित्रयसंघातोऽत्र त्रिकं, तस्य सन्धौ जात इति ॥ ९ ॥ १० ॥

**अत ऊर्ध्वं सर्वव्रणवेदना वक्ष्यामः—तोदनभेदनताडनच्छेदनायामनमन्थनविक्षेपणचुमुचुमायननिर्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरणस्तम्भनपूरणस्वप्नाकुञ्चनाङ्कुशिकाः संभवन्ति, अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्मुहुर्यत्रागच्छन्ति वेदनाविशेषास्तं वातिकमिति विद्यात्; ओषचोषपरिदाहधूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तवच्च वेदना-**

१ 'अस्थिगते शुक्तिधौतत्वं तथाऽस्थिसारस्रवणं च दोषकृतं, शेषस्तु स्रावः साधारणः । शुक्तिधौतमिति मयूरव्यंसकादिपाठात् पूर्वनिपातो व्यत्ययेन, धौतशुक्तिवदित्यर्थः' इति चक्रः । २ 'सफेनपूयरुधिरोन्मिश्रश्च' इति पा० । ३ 'कोष्ठगतस्तु यथाप्रत्यासत्ति पुरीषादि स्रवति । तत्र रक्तस्रुतिः कोष्ठाश्रययकृत्प्लीहाधिष्ठानतया, उदकस्रावस्तु पानीयस्य सरणात्मकस्य प्रभावात्' इति चक्रः । ४ 'यथाक्रममिति यथासंख्यम् । अत्र मर्मवर्जितेषु त्वगादिषु सप्तसु यथाक्रमं वातपित्तकफशोणितसन्निपातानां सप्त सप्तास्रावा यथोक्ता भवन्ति । शोणिते तु यद्विस्रत्वमधिकमुक्तं तत् सर्वत्वगाद्याश्रयानुगामि । अन्ये तु यथासंख्यमत्र नेच्छन्ति । सन्निपातेनेह ये नारिकेलादिवर्णा उक्तास्ते विकृतिविषमसमवायकृता ज्ञेयाः । अन्यथा हि वातादिकृतवर्णमेलकेनैव सन्निपातवर्णोऽप्युक्तः स्याद्' इति चक्रः ।

१ 'रक्ताशयात् यकृत्प्लीहारूपात् । कलायाम्भोनिभश्च स्रावस्त्रिकसन्धिजः कोष्ठमार्गेण सरन्नसाध्यः । यदुक्तं भोजे—''पुलाकोदकवर्णस्तु यदा कोष्ठात् प्रवर्तते । पक्वाशयात् स्रवत्येवं तं भिषक् परिवर्जयेत् ॥ क्षारोदकनिभः स्रावो यदा कोष्ठात् प्रवर्तते । रक्ताशयात् स्रवत्येवं तं भिषक् परिवर्जयेत् ॥ त्रिकसन्धेस्तु विवरात् कलायोदकसन्निभः । कोष्ठं भित्त्वा विनिर्याति तं भिषक् परिवर्जयेत्' इति चक्रः ।

**विशेषास्तं पैत्तिकमिति विद्यात्; पित्तवद्रक्तसमुत्थं जानीयात्; कण्डूर्गुरुत्वं सुप्तत्वमुपदेहोऽल्पवेदनत्वं स्तम्भः शैत्यं च यत्र तं श्लैष्मिकमिति विद्यात्; यत्र सर्वासां वेदनानामुत्पत्तिस्तं सान्निपातिकमिति विद्यात् ॥ ११ ॥**

स्रावानन्तरं वातादिवेदना निर्दिशन्नाह—अत ऊर्ध्वमित्यादि। तोदनं सूचिभिरिव; भेदनं त्वग्विदारणमिव वेदनाविशेषः; ताडनं दण्डादिभिराहन्यत इवेत्यर्थः; छेदनं द्विधा क्रियत इव शस्त्रादिभिः; आयामनं संकुचिताङ्गदेशस्य दीर्घीकरणमिव; मन्थनं मन्थनकादिभिर्व्रणान्तर्मथ्यत इव; विक्षेपणं प्रेर्यत इव; चुमुचुमायनं सर्षपराजिकाकल्कलिप्त इव; निर्दहनं निःशेषं वह्निना दह्यत इव; अवभञ्जनं संचूर्ण्यत इव; स्फोटनं पाषाणादिभिरिव; विदारणं नखादिभिश्चीर्यत इव; उत्पाटनम् ऊर्ध्वमाकृष्यत इव; कम्पनं वेप्यत इव; विविधशूलविश्लेषणं नानाप्रकारार्तिशूलाहतगात्रस्येव वेदनाविशेषः; विकिरणं व्रणावयवा नानास्थानेषु विकीर्यन्त इवेति; स्तम्भनं स्तब्धता; पूरणं भरणं; स्वपनं प्रसुप्तिः; आकुञ्चनं कुटिलीकरणमिव; अङ्कुशिका खल्लीविशेषः, अन्ये 'अङ्कुशनिपाताकर्षणमिवाङ्कुशिका' इत्याचक्षते। ओषचोषपरिदाहेत्यादि।—ओष एकदेशिको दाहः; चोष आचूषणसमत्वादित्येके, पिपासेत्यन्ये; परि समन्ततो दाहः परिदाहः; धूमायनं धूमोद्गमनमिवाङ्गानाम्। कण्डुर्गुरुत्वमित्यादि।—सुप्तत्वं नखमक्षिकामशकादिदंशवेदनानभिज्ञत्वम्; उपदेहो लिप्तमिवेति ॥ ११ ॥

**अत ऊर्ध्वं व्रणवर्णान् वक्ष्यामः—भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य; नीलः पीतो हरितः श्यावः कृष्णो रक्तः पिङ्गलः कपिल इति रक्तपित्तसमुत्थयोः; श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य; सर्ववर्णोपेतः सान्निपातिक इति ॥ १२ ॥**

वेदनाः प्रतिपाद्य व्रणवर्णान्निर्दिशन्नाह—अत ऊर्ध्वमित्यादि। दोषदूष्यसंयोगराशेरन्यत्वान्मारुतजेऽपि व्रणे वर्णसद्भावः ॥ १२ ॥

**भवति चात्र—**

**न केवलं व्रणेषूक्तो वेदनावर्णसंग्रहः ॥**
**सर्वशोफविकारेषु व्रणवल्लक्षयेद्भिषक् ॥ १३ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने व्रणास्रावविज्ञानीयो नाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥**

सामान्यव्रणनिर्दिष्टान् दोषदुष्टिस्राववेदनावर्णान् शोफविशेषेष्वपि विद्रध्यलजीग्रन्थ्यादिषु निर्दिशन्नाह—न केवलं व्रणेषूक्त इत्यादि। शोथविकारेष्विति शोथारब्धविकारेषु विद्रध्यादिष्विति ॥ १३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने द्वाविंशतितमोऽध्यायः ॥ २२ ॥

१ 'चाल्यत इव' इति पा०।

## त्रयोविंशतितमोऽध्यायः।

**अथातः कृत्याकृत्यविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

तत्र कृत्याः साध्याः; ते द्विविधाः—सुखसाध्याः, कृच्छ्रसाध्याश्च। अकृत्या असाध्याः; तेऽपि द्विविधाः—याप्याः, प्रत्याख्येयाश्च; इति कृत्याकृत्यपदद्वयेन सर्वमुक्तम् ॥ १ ॥ २ ॥

**तत्र, वयःस्थानां दृढानां प्राणवतां सत्त्ववतां (आत्मवतां) च सुचिकित्स्या व्रणाः; एकस्मिन् वा पुरुषे यत्रैतद्गुणचतुष्टयं तस्य सुखसाधनीयतमाः। तत्र, वयःस्थानां प्रत्यग्रधातुत्वादाशु व्रणा रोहन्ति; दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्यमाणं सिरास्नाय्वादिविशेषान्न प्राप्नोति; प्राणवतां वेदनाभिघाताहारयन्त्रणादिभिर्न ग्लानिरुत्पद्यते; सत्त्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति; तस्मादेतेषां सुखसाधनीयतमाः ॥ ३ ॥**

तत्र यथा व्रणस्याकृतिगन्धवर्णादिविशेषाः साध्यासाध्यविधौ भवन्ति, तथाऽऽतुरस्यापि केऽपि केऽपि गुणा भवन्ति, तांस्तान् दर्शयन्नाह—तत्र वयःस्थानामित्यादि। वयःस्थानां तरुणानां; दृढा गूढसन्धिसिरास्नायवः, एतेन सुसंहतसमशरीरा अभिप्रेताः; प्राणवतां शक्तियुक्तानां; सत्त्ववतां व्यसनेऽप्यनाकुलानां; चकारादनुक्ताऽप्यातुरोपक्रमणीयोक्ता आतुरस्य गुणसंपत् समुच्चीयते। प्राणवतामित्यस्याग्रे 'आत्मवतां' इति पञ्चमं गुणं केचित् पठन्ति। तत्र, आत्मवतां जितेन्द्रियाणामित्यर्थः। अत्रैकगुणेन सुखसाध्यत्वं, द्वाभ्यां त्रिभिश्च सुखसाध्यतरत्वं, चतुर्भिः सुखसाध्यतमत्वं च, एतदेव प्रकटयन्नाह—एकस्मिन् वा पुरुष इत्यादि। वाशब्द एकत्र सर्वगुणानां दुष्प्रापत्वख्यापनार्थः। तस्येति पुरुषस्येत्यर्थः। सुखसाधनीयतमा 'व्रणा' इति शेषः। तत्र येषां गुणानां येन येन सुखसाध्यत्वं तत्तन्निर्दिशन्नाह—तत्र वयःस्थानामित्यादि। प्रत्यग्रं नूतनम्। स्थिरम् अचलम्। प्राणवतामित्यादि। ग्लानिरत्र शरीरशैथिल्यम्। अत्रापि

१ 'पूर्वाध्याये स्रावादिना साध्यासाध्यव्रणस्य लेशतोऽभिधानात्तत्प्रसङ्गेन प्रपञ्चेन साध्यासाध्यव्रणविज्ञानार्थं कृत्याकृत्यविधिरभिधीयते; कृत्याश्चिकित्सारूपक्रियार्हाः साध्याः, तद्विपर्ययेणाकृत्या असाध्याः; तयोर्विधिर्भेदः, स च साध्यस्य सुखसाध्यत्वादिरसाध्यस्य याप्यत्वसद्यःप्राणहरत्वादिः' इति चक्रः। २ 'गुणपञ्चकं' इति पा०। ३ 'आत्मवतां पुनर्मिताहारविहारादिभिरुपदेशैर्नान्यथामतिः प्रवर्तते। सर्वं चैषां साधु भवति। तस्मादेतेषां सुखसाधनीयतमाः' इति ताडपत्रपुस्तके पाठः। ४ 'कृत्याकृत्यविधौ' इति पा०। ५ 'एकस्मिन्नित्यादि। सर्ववयस्त्वादिगुणपञ्चकमेलकेन सुखसाध्यतमत्वं दर्शयन् मध्यविधया द्वित्र्यादिगुणेन सुखसाध्यतरत्वादि यथोत्तरं दर्शयति। अत्र वयस्था युवानः, बालानां वेदनार्हत्वाभावात्' इति चक्रः।

'आत्मवताम्' इति पञ्चमगुणस्य केचिद्धेतुं पठन्ति, स चाभावान्न लिखितः । सत्त्ववतामित्यादि । दारुणैर्दुःसहैः, क्रियाविशेषैश्चिकित्साप्रकारैः । तस्मादित्यादि । एतेषां पुरुषाणामित्यर्थः । सुखसाधनीयतमाः 'व्रणा' इति शेषः ॥ ३ ॥

**त एव विपरीतगुणा वृद्धकृशाल्पप्राणभीरुषु द्रष्टव्याः ॥ ४ ॥**

पूर्वोक्तगुणानां विपर्ययमाह—त एव विपरीतगुणा इत्यादि । एकगुणाभावात् कृच्छ्रसाध्यत्वं, द्वित्रिगुणाभावात् कृच्छ्रसाध्यतरत्वं, चतुर्गुणाभावात् कृच्छ्रसाध्यतमत्वम् । अत्र केचित् 'अनात्मवत्सु च' इति पञ्चमं विपरीतगुणं पठन्ति । तेषां मते चकारेणातुरोपक्रमणीयोक्तगुणासंपूर्णताऽनुक्ताऽपि समुच्चीयते ॥ ४ ॥

**स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफलकोषोदरजत्रुमुखाभ्यन्तरसंस्थाः सुखरोपणीया व्रणाः ॥ ५**

आतुरविशेषेण कृत्याकृत्यान् प्रतिपाद्य तदवयवविशेषसंभवत्वेन व्रणानां कृत्यत्वं दर्शयन्नाह—स्फिक्पायुप्रजननेत्यादि । स्फिचौ कटिप्रोथौ 'पोर्दो' इति लोके, पायुर्गुदं, प्रजननं गुह्यप्रदेशः, गण्डौ गल्लौ, फलकोषोऽण्डकोषः, जत्रु ग्रीवामूलम् ॥५॥

**अक्षिदन्तनासापाङ्गश्रोत्रनाभिजठरसेवनीनितम्बपार्श्वकुक्षिवक्षःकक्षास्तनसन्धिभागगताः सफेनपूयरक्तानिलवाहिनोऽन्तःशल्याश्च दुश्चिकित्स्याः, अधोभागाश्चोर्ध्वभागनिर्वाहिणो, रोमान्तोपनखमर्मजङ्घास्थिसंश्रिताश्च, भगन्दरमपि चान्तर्मुखं सेवनीकुटकास्थिसंश्रितम् ॥ ६ ॥**

**कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥**
**व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः ७**

साध्यभेदान् कृच्छ्रसाध्यान् दर्शयन्नाह,—अक्षिदन्तनासेत्यादि । अपाङ्गो भ्रूपुच्छान्तः । नितम्बः कटेः पश्चाद्भागः । वक्ष उरः, सन्धिभागः सन्धिप्रदेशः । वाहिशब्दः सफेनपूयादिभिः सह प्रत्येकं संबध्यते । अन्तःशल्या आभ्यन्तरशल्याः । अधोभागाश्चोर्ध्वभागनिर्वाहिण इति अधोभागगता ये व्रणास्ते यदोर्ध्वमुखा भवन्ति तदोर्ध्वभागनिर्वाहिण उच्यन्ते । रोमान्तोपनखेत्यादि रोमान्तः केशान्तः, उपनखं नखसमीपं, जङ्घास्थि गुल्फजान्वन्तरास्थि । भगन्दरमपि चान्तर्मुखमिति गुदे अभ्यन्तरं मुखं यस्येत्यर्थः । सेवनीकुटकास्थिसंश्रितं 'भगन्दरम्' इति शेषः, कुटकास्थि श्रोणिकाण्डास्थि, 'मयूरास्थि' इति लोको ब्रूते । अन्ये तु 'कुटकास्थिसंश्रितं' इत्यत्र 'उपस्थसंश्रितं' इति पठन्ति; तेषां मते उपस्थो मूत्रमार्गः । विषजुष्टानामिति दूषीविषजुष्टानां पुरुषाणां ये व्रणा इत्यर्थः ॥ ६ ॥ ७ ॥

**अवपाटिकानिरुद्धप्रकशसन्निरुद्धगुदजठराणि, ग्रन्थिक्षतक्रिमयः प्रतिश्यायजाः कोष्ठजाश्च त्वग्दोषिणां प्रमेहिणां वा ये परिक्षतेषु दृश्यन्ते, शर्करा सिकतामेहो वातकुण्डलिकाऽष्ठीला दन्तशर्करोपकुशः कण्ठशालूकं निष्कोषणदूषिताश्च दन्तवेष्टा विसर्पास्थिक्षतोरःक्षतव्रणग्रन्थिप्रभृतयश्च याप्याः ॥ ८ ॥**

साध्यान् द्विविधानभिधायासाध्यभेदं याप्यं दर्शयन्नाह—अवपाटिकेत्यादि । ग्रन्थिक्षतक्रिमय इति ग्रन्थ्युपलक्षितो यो क्षतस्तत्र ये क्रमय इत्यर्थः । प्रतिश्यायजाः कोष्ठजाश्च क्रमय इति संबन्धः । त्वग्दोषिणां प्रमेहिणां वा ये परिक्षतेषु दृश्यन्त इति त्वग्दोषप्रमेहरोगयोः क्षते सति ये क्रमयो दृश्यन्त इत्यर्थः । शर्करेति अश्मरी वातभिन्नेत्यर्थः । सिकतामेहो मेहविशेषः । वातकुण्डलिकाष्ठीले मूत्राघातविशेषौ । निष्कोषणदूषिताश्च दन्तवेष्टा इति निष्कोषणं सविषो दन्तरञ्जकानां शाणोऽभिधीयते; एतेनैतदुक्तं भवति-दन्तान् रञ्जयन्ति ये पुरुषास्तेषां यद्दन्तैनिशानार्थं सविषं दन्तकाष्ठं तेन यदा दूषिता दन्तवेष्टा इत्यर्थः । 'निश्चक्षणदूषिता' इत्यन्ये पठन्ति, 'निष्कर्षणदूषिता' इत्यपरे, तत्रापि स एवार्थः । अत्रावपाटिकेत्यादौ पाठे ये व्रणाः संभवन्ति ते व्रणा एव याप्याः, ये च व्याधयस्तेषु व्याधिषु सत्सु ये व्रणास्ते याप्या इत्यभिप्रायः ॥ ८ ॥

**साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ॥**
**घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥९॥**

त एते निर्दिष्टा न नियमेन साध्याः साध्या एव, याप्या वा याप्या एवेत्युक्तेष्वनियमं क्रियया दर्शयन्नाह—साध्या इत्यादि । घ्नन्ति प्राणानसाध्यास्त्विति कालान्तरप्राणहारिणः सद्यः प्राणान् घ्नन्तीत्यर्थः । अक्रियावतामिति क्रियारहितानां विरुद्धक्रियाकारिणां च ॥ ९ ॥

**यापनीयं विजानीयात् क्रिया धारयते तु यम् ॥**
**क्रियायां तु निवृत्तायां सद्य एव विनश्यति ॥ १० ॥**
**प्राप्ता क्रिया धारयति याप्यव्याधितमातुरम् ॥**
**प्रपतिष्यदिवागारं विष्कम्भः साधुयोजितः ॥ ११ ॥**

अथ कीदृशो याप्यस्तमाह—यापनीयं विजानीयादित्यादि । याप्ये प्राणधारणमेव क्रिया करोति न पुनर्व्याधिमूलोच्छेदमिति दर्शयन्नाह—प्राप्ता क्रियेत्यादि । —प्राप्ता वैद्येन प्रयुक्ता । विष्कम्भः स्थूणा ॥ १० ॥ ११ ॥

**अत ऊर्ध्वमसाध्यान् वक्ष्यामः—मांसपिण्डवदुद्गताः प्रसेकिनोऽन्तःपूयवेदनावन्तोऽश्वापानवदु-**

---

१ 'अत्र चाधिकरणमहिम्नैव सुखसाध्यत्वादिविशेषो भवति' इति चक्रः । २ 'अधोगतानामूर्ध्वमुखेनासम्यक्पूयनिर्गमात् कृच्छ्रत्वम्' इति चक्रः । ३ 'कुष्ठादीनामतिशयदुष्टदूष्यतया व्रणकृच्छ्रत्वम्' इति चक्रः ।

१ 'व्रणयुक्तो ग्रन्थिर्व्रणग्रन्थिः' इति चक्रः । २ 'दन्तनिशातनार्थं' इति पा० । ३ 'क्रियायामिति सम्यक्क्रियायाम् । प्राप्तेति उचिता' इति चक्रः ।

[1]उद्वृत्तौष्ठाः, केचित् कठिना गोशृङ्गवदुद्गतमृदुमांसप्ररोहाः, अपरे दुष्टरुधिरास्राविणस्तनुशीतपिच्छिलास्राविणो वा मध्योन्नताः, केचिद्वसन्नशुषिरपर्यन्ताः शणतूलवत् स्नायुजालवन्तो दुर्दर्शनाः, वसामेदोमज्जमस्तुलुङ्गस्राविणश्च दोषसमुत्थाः, पीतासितमूत्रपुरीषवातवाहिनश्च कोष्ठस्थाः, त एवोभयतोभागव्रणमुखेषु पूयरक्तनिर्वाहिणः, ( क्षीणमांसानां च[2] ) सर्वतोगतयश्चाणुमुखा मांसबुद्बुदवन्तः, सशब्दवातवाहिनश्च शिरःकण्ठस्थाः, क्षीणमांसानां च पूयरक्तनिर्वाहिणोऽरोचकाविपाककासश्वासोपद्रवयुक्ताः, भिन्ने वा शिरःकपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यस्येति ॥ १२ ॥

मांसपिण्डवदुद्गता इत्यादि । प्रसेकिनः स्रावबहुलाः । अश्वापानवत् वडवायोनिवत्, उद्वृत्तौष्ठा उत्सन्नवर्त्मानः । केचिदवसन्नशुषिरपर्यन्ता इति निम्नच्छिद्रावसाना इत्यर्थः । वसा मांसनिर्यासः, मस्तुलुङ्गः अर्धविलीनघृताकारो मस्तकमज्जा । दोषसमुत्था इति वातादिदोषजा न पुनरभिघातजाः, ते ह्येवंभूता अपि सिध्यन्ति । दोषजानसाध्यानभिधाय कोष्ठस्थान् दर्शयितुमाह—पीतासितमूत्रेत्यादि । त एव कोष्ठस्था एव । उभयतोभागव्रणमुखेष्विति गुदवदनोभयमार्गाभ्यां व्रणमुखमार्गेण पूयादिवाहिनः । सर्वव्रणवस्तुगता व्रणाः कीदृशा असाध्या इत्याह—सर्वत इत्यादि । शिरःकण्ठस्थाः कीदृशा असाध्या इत्याह—सशब्देत्यादि । क्षीणमांसानां कीदृशा असाध्या इत्याह—क्षीणेत्यादि । शिरःकपाले भिन्ने । कीदृशा असाध्या इत्याह—भिन्ने वा शिरःकपाल इत्यादि ॥ १२ ॥

भवति चात्र—

वसां मेदोऽथ मज्जानं मस्तुलुङ्गं च यः स्रवेत् ॥
[3]आगन्तुस्तु व्रणः सिध्येन्न सिध्येद्दोषसंभवः ॥ १३ ॥

अनन्तरोक्तमेवार्थं सुखावबोधाय श्लोकेन दर्शयन्नाह—भवति चात्रेत्यादि ॥ १३ ॥

[4]अमर्मोपहिते देशे सिरासन्ध्यस्थिवर्जिते ॥
विकारो योऽनुपर्येति तदसाध्यस्य लक्षणम् ॥ १४ ॥

अपरिगृहीतानामपि व्रणानामवस्थाविशेषप्राप्त्याऽसाध्यत्वं दर्शयन्नाह—अमर्मेत्यादि ।—अमर्मोपहिते न मर्मसमीपव्यवस्थिते, देशे शरीरावयवे त्वचीत्यर्थः । सिरासन्ध्यस्थिवर्जित इत्यत्रादिशब्दो लुप्तो द्रष्टव्यः, तेन सिरासन्ध्यस्थ्यादिवर्जित इत्यर्थः; एतेन स्नायुधमनीवर्जित इत्युक्तम् । अन्ये सिरादिपदेन स्थूलसिरावर्जित इत्याहुः । विकारो योऽनुपर्येति विकारोऽत्र व्रणः, अनुपर्येति सर्वतो धातून् व्याप्नोति चिकित्स्यमानोऽपि, तदसाध्यस्य लक्षणम्; एतेन सुवैद्योपक्रमेऽपि सुप्रदेशजातेऽपि यदा सर्वधातुव्याप्तिर्दृश्यते, तदा ज्ञायते कर्मजोऽयं व्याधिरिति । अन्ये तु विकारशब्देन कुष्ठवातरक्तक्षयादीनपि[1] कथयन्ति ॥ १४ ॥

[2]क्रमेणोपचयं प्राप्य[3] धातूननुगतः शनैः ॥
न शक्य उन्मूलयितुं वृद्धो वृक्ष इवामयः ॥ १५ ॥
स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च ॥
निहन्त्यौषधवीर्याणि मन्त्रान् दुष्टग्रहो[4] यथा ॥ १६ ॥

एवं व्याधेः कस्यचिदुत्पत्तावेवासाध्यत्वं प्रतिपाद्यापरस्यापि व्याधेः साध्यस्याप्युपेक्षयाऽसाध्यत्वं दर्शयन्नाह—क्रमेणेत्यादि । कुतः पुनः कारणाद्दृष्टफलैरौषधैः स व्याधिर्नोपशाम्यतीत्याह—स स्थिरत्वादित्यादि ।—स इति उपेक्षितो व्याधिरित्यर्थः; स्थिरत्वादिति स्थिरत्वमपथ्यकारिणो दोषबाहुल्यात् । कश्चिदनुपेक्षितोऽप्युत्पत्तावेव व्याधिरौषधवीर्याणि हन्तीत्यत्र हेत्वन्तरमाह—महत्त्वाच्चेति ।—महत्त्वं चोदरादिव्याधिनिदानबलप्राक्तनकर्मपरिणामसंप्राप्तिविशेषैर्द्रष्टव्यं, चकारेण रोहिणिकावलयमुखरोगिणामौषधवीर्योपघाते स्वभावोऽपि हेतुरिति समुच्चीयते । धात्वनुक्रमणेन चेति कुष्ठादिषु चैतद्द्रष्टव्यम् । दुष्टग्रह इति स्कन्दापस्मारादिक इत्यर्थः ॥ १५ ॥ १६ ॥

अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते ॥
अबद्धमूलः क्षुपको यद्वदुत्पाटने सुखः ॥ १७ ॥

एतन्निर्दिष्टार्थप्रकरणविपर्ययेणापि सुखसाध्यत्वं दर्शयन्नाह—अतो यो विपरीतः स्यादित्यादि । मर्मसिरास्नायुसंध्यस्थिधमनी-

---

१ 'उद्वृत्तौष्ठेत्यादिनैकोऽसाध्यव्रणः । प्रसेकिनः स्रावबहुलाः । वसादिस्रवणं प्रत्येकं दोषसमुत्थव्रणेऽसाध्यतालक्षणम् । शिरःकण्ठस्था इति अत्र शिरःस्था वा कण्ठस्था वा' इति चक्रः । २ हाराणचन्द्रसंमतोऽयं पाठः । ३ 'अत्रागन्तोः साध्यत्वमदुष्टत्वाद्व्रणदेशस्य सामान्येनैव' इति चक्रः । ४ 'अमर्मोपहिते इति मर्मवर्जिते । देशे इति शरीरप्रदेशे । तस्यैव विशेषणं—सिरेत्यादि । अत्रादिशब्दं लुप्तमिच्छन्ति; तेन सिरास्नाय्वादिवर्जिते त्वचीति लभ्यते, अन्यत्र मांसादौ सिरादीनां विद्यमानत्वात् । विकारो योऽनुपर्येतीति धात्वन्तरेष्ववगाहते कुष्ठवातरक्तादिस्तदसाध्यलक्षणं, तदुक्तं—'एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः । क्रमेण धातून् व्याप्नोति नरस्याप्रतिकारिणः' ( सु. नि. अ. ५ ) इति । अन्ये तु विकारोऽनुपर्येतीत्यनेन प्रतिक्रियाकरणेऽपि यथोक्तसुखसाध्यदेशभूतोऽपि विकारोऽनुपर्येति वर्धते तद्बलवददृष्टारब्धतयाऽसाध्यलक्षणमिति वदन्ति, नहि यथोक्तदेहजातस्य विकारस्य बलवदसाध्यताकारकादृष्टं विना वृद्धिर्युक्ता'' इति चक्रः ।

१ 'कुष्ठवातरक्तज्वरादीनपि' इति पा० । २ 'साध्यस्याप्युपेक्षया धात्ववगाहनेनासाध्यत्वं दर्शयन्नाह—क्रमेणेत्यादि । उपचयं प्राप्त इति धात्ववगाहने हेतुगर्भं विशेषणम्; उपचयश्चाप्रतीकारादेव ज्ञेयः । शनैरित्यनेन चिरेणास्य धात्ववस्थानं दर्शयति । अथ तत्र पुनः पुनर्बह्वौषधं कस्मात् साधकं न भवतीत्याह—स स्थिरत्वादित्यादि । स्थिरत्वे एव हेतुद्वयं महत्त्वाद्धात्वनुक्रमणेन चेति । महत्त्वेन महादोषत्वं, धात्वनुक्रमणेन गम्भीरत्वमुच्यते' इति चक्रः । ३ 'प्राप्तः' इति पा० । ४ 'दुष्टः' इति पा० ।

स्थितो यो नानुपर्येति स सुखसाध्य उच्यते । किंवेदित्याह—अबद्धमूल इत्यादि । क्षुपकः अतिबालवृक्षः ॥ १७ ॥

**त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठः पिडकी समः ॥**
**अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते ॥ १८ ॥**

इदानीं व्रणस्य शुद्धिलक्षणमाह—त्रिभिर्दोषैरनाक्रान्त इत्यादि । दोषशब्दोऽत्र दोषकार्येषु व्रणाकृतिगन्धवर्णस्राववेदनासु वर्तते, कार्ये कारणोपचारात्; यथा—घृतमायुरिति; तैर्दोषाकृतिगन्धादिभिरनाक्रान्तः । 'त्रिभिर्द्वन्द्वैः' इत्यन्ये पठन्ति; ते तु द्वन्द्वशब्दमभिव्यक्तौ वर्णयन्ति, तेन दोषत्रयाभिव्यक्तिभिराकृत्यादिभिरनाक्रान्त इति स एवार्थः । अन्ये तु शीतोष्णं, मृदुकठिनं, संवृतविवृतमिति द्वन्द्वत्रयं मन्यन्ते । अपरे तु 'द्वन्द्वानि दोषाः, ते चात्र वातादयः, तैरनाक्रान्त' इति व्याख्यानयन्ति । श्यावौष्ठ इति किंचित्कृष्णपाण्डुः, प्रसीदच्छोणितत्वात्; अन्ये श्यावौष्ठतां कषायपरिषेकाभ्यङ्गादिकृतां वदन्ति । पिडकाः यस्य सन्ति स पिडकी, पिडका व्रणौष्ठेऽणुमांसाङ्कुराः । 'अपिडकी' इत्यन्ये पठन्ति, तत्र न विद्यन्ते पिडका अस्येति । समः समतलः । अवेदन इति न विद्यते वातादीनां तोदादिवेदना यस्य स अवेदनः, सामान्यशुद्धव्रणवेदना तु विद्यत एव, येन सुरूढे वक्ष्यति,—'अशूनमरुजं व्रणम्' इति ॥ १८ ॥

**कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥**
**स्थिराश्चिपिटिकावन्तो रोहतीति तमादिशेत् ॥ १९ ॥**

रोहद्व्रणलक्षणं निर्दिशन्नाह—कपोतवर्णप्रतिमा इत्यादि ।—कपोतवर्णप्रतिमाः पाण्डुधूसराः । स्थिराः कठिना इत्यर्थः । चिपिटिकावन्त इति चर्मचेलीयुक्ताः; विशुष्यमाणत्वात्त्वचश्चर्मचेलीसंभवः । व्रणे शुष्कसूक्ष्मश्वेता या उच्चटति त्वक् सा 'चर्मचेली' इति कथ्यते । अन्ये तु 'अपिटिकावन्त' इति पठन्ति । रोहति रोहं गच्छति ॥ १९ ॥

**रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ॥**
**त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत् ॥ २० ॥**

सम्यग्रूढव्रणस्य लक्षणं दर्शयन्नाह—रूढवर्त्मानमग्रन्थिमित्यादि । रूढवर्त्मानं रूढमार्गं रूढव्रणवर्त्मेत्यर्थः । अग्रन्थिपदेनोपरिष्टाच्छूनता निषिद्धा । त्वक्सवर्णं त्वचा समानवर्णमित्यर्थः । समतलमिति सदृशं करतलेन जिह्वातलेन वेत्यर्थः, अन्ये 'त्वग्ग्रन्थिपदेनोपरिष्टाच्छूनता निषिद्धा, समतलशब्देनाधोनिम्नता निषिध्यते' इति वदन्ति । तेषां मते 'समस्तले स समतल' इति योज्यते ॥ २० ॥

**दोषप्रकोपाद्व्यायामादभिघातादजीर्णतः ॥**
**हर्षात् क्रोधाद्भयाद्वाऽपि व्रणो रूढोऽपि दीर्यते ॥ २१ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने कृत्याकृत्यविधिर्नाम त्रयोविंशोऽध्यायः ॥ २३ ॥**

१ 'किंवत् ? अतस्त्वाह' इति पा० । २ 'घृतमायुरिवेति' इति पा० । ३ 'अग्रन्थिमिति अनुच्छूनदृढमांसम्' इति चक्रः ।

केचिदत्राध्यायान्ते रूढव्रणव्यापत्पाठं पठन्ति 'दोषप्रकोपात्' इत्यादि; अयं च श्लोकः सर्वेष्वपि निबन्धेष्वपरिगृहीत इत्यनार्षः, तस्मान्न पठनीय इति ॥ २१ ॥

इति श्रीडल्लह(ह)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशतितमोऽध्यायः ।

**अथातो व्याधिसमुद्देशीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

व्याधिसमुद्देशीयमित्यादि । व्याधीनां समासेनोद्देशः कथनं, तदधिकृत्य कृतोऽध्यायो व्याधिसमुद्देशीयः, व्याधिसंक्षेपोद्देशीय इत्यर्थः ॥ १ ॥ २ ॥

**द्विविधास्तु व्याधयः—शस्त्रसाध्याः, स्नेहादिक्रियासाध्याश्च । तत्र शस्त्रसाध्येषु स्नेहादिक्रिया न प्रतिषिध्यते, स्नेहादिक्रियासाध्येषु शस्त्रकर्म न क्रियते ॥ ३ ॥**

शस्त्रसाध्यत्वेन स्नेहादिसाध्यत्वेन च व्याधीनां द्वैविध्यं दर्शयन्नाह,—द्विविधा इत्यादि । शस्त्रसाध्या इति छेद्यादिप्रकारेण; स्नेहादिक्रियासाध्या इति अत्रादिशब्देन स्वेदनवमनविरेचनादयः । तत्रेति तयोर्मध्ये । शस्त्रसाध्येषु अष्टविधशस्त्रकर्मायोक्तेषु भगन्दरग्रन्थिप्रभृतिषु ॥ ३ ॥

**अस्मिन् पुनः शास्त्रे सर्वतन्त्रसामान्यात् सर्वेषां व्याधीनां यथास्थूलमवरोधः क्रियते । प्रागभिहितं 'तद्दुःखसंयोगा व्याधय' (सू. अ. १) इति । तच्च दुःखं त्रिविधम्—आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकमिति । तत्तु सप्तविधे व्याधावुपनिपतति । ते पुनः सप्तविधा व्याधयः; तद्यथा—आदिबलप्रवृत्ताः, जन्मबलप्रवृत्ताः, दोषबलप्रवृत्ताः, संघातबलप्रवृत्ताः, कालबलप्रवृत्ताः, दैवबलप्रवृत्ताः, स्वभावबलप्रवृत्ता इति ॥ ४ ॥**

१ 'पूर्वाध्याये साध्यासाध्यत्वमुक्तं, तच्च व्याधीनां स्नेहादिना शस्त्रेण वा भवतीति तद्भेदप्रतिपादनार्थं प्रवृत्तः सर्वानेव व्याधीनवश्यप्रतिपादनीयान् प्रतिपादयितुं व्याधिसमुद्देशीयमाह' इति चक्रः । २ 'सर्वतन्त्रसामान्यादिति सर्वतन्त्रविषयव्यापकत्वात्; यदुक्तं—'यत् किंचिदाबाधकरं तत् सर्वं शल्यसंज्ञितम् । व्याप्तान्यङ्गान्यतोऽनेन शल्यज्ञानेन भूरिणा' इति चक्रः । ३ 'अध्यात्मशब्देन शरीरं भण्यते । आत्मन्यधिवर्तत इत्यध्यात्मं शारीरमानसादिदोषाः, तत्र भवमाध्यात्मिकम् । भूतानि बाह्यानि वातादीनि पृथिव्यादीनि च; तेन निमित्तेन भूतमाधिभौतिकम् । दुःखमुपदिश्य तत्संबन्धेन व्याधिभेदानाह—तच्चेत्यादि । वक्ष्यमाणसप्तविधे व्याधौ तद्दुःखप्रसरं

शल्यतन्त्रत्वादस्य तन्त्रस्य शस्त्रक्रियैवार्हति न स्नेहादिक्रियेत्याशङ्क्योभयक्रियाधिकारं दर्शयन्नाह—अस्मिन्नित्यादि । अस्मिन्निति सौश्रुते शल्यतन्त्रे । पुनःशब्दोऽत्र एवार्थे । सर्वतन्त्रसामान्यादिति शालाक्यादीनां सामान्यात् तुल्यत्वात् । यथास्थूलमिति स्थूलदृष्ट्या, न सूक्ष्मदृष्ट्येत्यर्थः । एतेन ये सनामका व्याधयस्तेषामवरोधः, निर्नामकानां पुनर्लक्षणद्वारेण, अवरोधः संग्रहः । कः पुनरयं व्याधिरित्याह—प्रागभिहितमित्यादि । तदिति तयोः शरीरशरीरिणोः; 'शरीरमनसोः' इति केचित् । तच्च दुःखं त्रिविधमिति चकारान्न केवलं त्रिविधं सप्तविधं च । आत्मशब्देन समनस्कं शरीरमुच्यते । तत्र वातपित्तकफोत्थाः शरीरभवा आध्यात्मिकाः, तथा रजस्तमोभवाश्च; आत्मन्यधि अध्यात्मं, तत्र भवमाध्यात्मिकम् । भूतानि प्राणिनः, भूतेष्वधिकृत्य यद्वर्तते तदाधिभौतिकम् । देवाः सुराः सुरयोनयश्च, देवेष्वधिकृत्य यद्वर्तते तदाधिदैविकम् । तदेव त्रिविधं दुःखं भेदान्तरहेतुभिर्बहुप्रकारभूते व्याधौ समवैतीत्याह—तदित्यादि ।—तदिति त्रिविधं दुःखम् । उपनिपतति मध्ये निपतति । ते पुनरिति ते त्रिविधा व्याधयः पुनः सप्तविधा भवन्तीत्यर्थः ॥ ४ ॥

**तत्र, आदिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः; तेऽपि द्विविधाः—मातृजाः, पितृजाश्च । जन्मबलप्रवृत्ता ये मातुरपचारात् पङ्ग्वजात्यन्धबधिरमूकमिन्मिनवामनप्रभृतयो जायन्ते; तेऽपि द्विविधाः—रसकृताः, दौहृदापचारकृताश्च । दोषबलप्रवृत्ता ये आतङ्कसमुत्पन्ना मिथ्याहाराचारकृताश्च; तेऽपि द्विविधाः—आमाशयसमुत्थाः, पक्वाशयसमुत्थाश्च; पुनश्च द्विविधाः—शारीरा, मानसाश्च । त एते आध्यात्मिकाः ॥ ५ ॥**

तेषां सप्तविधव्याधीनां क्रमेण लक्षणान्याह—तत्र आदिबलप्रवृत्ता इत्यादि । तत्र तेषु मध्ये । आदिबलप्रवृत्ता दुष्टशुक्रशोणितबलजाताः । के ते इत्याह—ये शुक्रशोणितदोषान्वया इति; शुक्रशोणितस्थितवातादिदोषजनिताः । तानेव नामतो दर्शयति—कुष्ठार्शःप्रभृतय इति ।—प्रभृतिग्रहणान्मेहक्षयादयः । मातृजा इति मातुः शोणितजाः, पितृजाश्चेति पितुः शुक्रजाः । द्वितीयं व्याधिभेदं दर्शयन्नाह—जन्मबलप्रवृत्ता इत्यादि । जन्मबलप्रवृत्ता इति शुक्रशोणितदुष्टिं विनाऽपि मातुरपचारबलजाताः; अपचार इति दुष्टाहाराचारावपचारः । मूका अवाचः, मिन्मिनाः सानुनासिकाः, वामना अत्यन्तह्रस्वशरीराः । दौहृदापचारकृताश्चेति गर्भानुभावान्मातुश्चतुर्थादिमासेष्विन्द्रियार्थप्रार्थना 'दौहृदम्' इत्याचक्षते; तस्यापचारस्तु दौहृदमेवापमानितम्, अपमानितमलब्धं गर्भस्याहितं वा । अत्र 'मूकमिन्मिनवामनप्रभृतयो जायन्ते' इत्यस्याग्रे केचित् 'भुजते' इत्यादि पाठं पठन्ति, स च पूर्णो न दृश्यते निबन्धेष्विति न लिखितः । तृतीयं व्याधिभेदं निर्दिशन्नाह—दोषेत्यादि । दोषा वातादयो रजस्तमसी च, बलं शक्तिः, प्रवृत्ता जाताः । के पुनस्त इत्याह—ये आतङ्कसमुत्पन्ना इति । आतङ्का रोगाः; यथा—प्रतिश्यायात् कासः, कासात् क्षय इत्यादि । एते आध्यात्मिका इति एते आदिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्तास्त्रय आध्यात्मिकाः; शरीरस्थवातादिरजःप्रभृतिदोषजनितत्वात् ॥ ५ ॥

**संघातबलप्रवृत्ता य आगन्तवो[1] दुर्बलस्य बलवद्विग्रहात्; तेऽपि द्विविधाः-शस्त्रकृता, व्यालकृताश्च । एते आधिभौतिकाः ॥ ६ ॥**

चतुर्थं व्याधिभेदं निर्दिशन्नाह—संघातेत्यादि । संघातबलप्रवृत्ता इति प्रहारशक्तिजाताः । के पुनस्त इत्याह—य आगन्तव इत्यादि । व्यालकृता इति व्याला दुष्टव्याघ्रादयः । एते आधिभौतिका इति एते पूर्वोक्ता आगन्तवः; आधिभौतिकत्वं भूतेषु प्राणिष्वधिकृतत्वात् ॥ ६ ॥

**कालबलप्रवृत्ता ये शीतोष्णवातवर्षातपप्रभृतिनिमित्ताः; तेऽपि द्विविधाः—व्यापन्नर्तुकृताः, अव्यापन्नर्तुकृताश्च[2] । दैवबलप्रवृत्ता ये देवद्रोहादभिशप्तका[3] अथर्वणकृता उपसर्गजाश्च; तेऽपि द्विविधाः—विद्युदशनिकृताः, पिशाचादिकृताश्च; पुनश्च द्विविधाः—संसर्गजा, आकस्मिकाश्च[4] । स्वभावबलप्रवृत्ता[5] ये क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः; तेऽपि द्विविधाः—कालजा, अकालजाश्च; तत्र परिरक्षणकृताः कालजाः, अपरिरक्षणकृता अकालजाः । एते आधिदैविकाः[6] । अत्र सर्वव्याध्यवरोधः ॥ ७ ॥**

उपनिपतति उपगतं भवति व्याधिकार्यतया । आदिर्जीवोपक्रमः, स च शुक्रशोणितमेलकः, तस्य बलं प्रकरणाद्व्याधिजनिका शक्तिः, सा च शुक्रशोणितदोषरूपैव, तेनादिबलेन भूता आदिबलप्रवृत्ताः । एवं जन्मनि बलं पूर्वजन्मन्यवस्थिता दोषा एवेत्यादि पूर्ववद् व्याख्येयम् । संहननं संहतिः आगन्तुहेतुसंबन्धः; तद्बलप्रवृत्ताः संघातबलप्रवृत्ताः' इति चक्रः ।

१ 'आमाशयसमुत्था नाभेरुपरिजाः कफपित्तजन्या वा; पक्वाशयसमुत्था नाभ्यधोगता वातजन्या वा' इति चक्रः ।

१ 'ये आगन्तव इति आगन्तुविशेषा इत्यर्थः, अपरागन्तूनां भूतादीनामाधिदैविकेऽभिधानात् । दुर्बलस्य बलवद्विग्रहादित्यागन्तुविशेषकारणोपलक्षणं, तेन पतनादिजन्यानामपि ग्रहणम् । शस्त्रकृता इत्यत्र शस्त्रस्य हिंसकमात्रोपलक्षणतया अतिरिक्ताभिघातपीडनादिकृताश्च गृह्यन्ते' इति चक्रः । २ 'अव्यापन्नर्तुकृताः कालस्वभावकृतपित्तादिचयादिकृताः ।' इति चक्रः । ३ 'अभिशस्तकाः' इति पा० । ४ 'अत्र संसर्गजा औपसर्गिकरोगिसंसर्गजाताः । आकस्मिकाः संसर्गजव्यतिरिक्ता आधिदैविका अपरिदृश्यमानहेतुतया आकस्मिका भण्यन्ते' इति चक्रः । ५ 'स्वभावो मानुषशरीरस्य जातिप्रतिबद्धोऽदृष्टकृतो भावः' इति चक्रः ।' ६ 'दैवं प्राक्तनं कर्माधिकृत्य वर्तते इत्यधिदैवं, तत्र भूतमित्याधिदैविके व्युत्पत्तिमिच्छामः' इति चक्रः ।

पञ्चमं व्याधिभेदं निर्दिशन्नाह—कालबलप्रवृत्ता इत्यादि । कालः शीतोष्णवर्षलक्षणः षडृतुकः । के पुनस्त इत्याह—शीतोष्णवातवर्षातपप्रभृतिनिमित्ताः; ते पुनर्जाड्यदाहकम्पादयः, तथा व्रणज्वराश्च । अत्र व्यापन्नर्तुकृतानां पूर्वोद्धृतान्नपानौषधिभिरुपचारः, यथास्वं च व्याधिविहितं भेषजम्, ऋतुव्यापत्प्रशमनं च, दैवव्यपाश्रयं च होमादि; अव्यापन्नर्तुकृतानां पुनर्यथादोषं यथारोगमेवोपचारः । षष्ठं व्याधिभेदं निर्दिशन्नाह—दैवबलप्रवृत्ता इत्यादि । दैवबलप्रवृत्ता इति दैवशक्तिजाता इत्यर्थः । के पुनस्त इत्याह—ये देवद्रोहादित्यादि । देवगोगुरुसिद्धानां द्रोहात् । अभिशस्तका इति ऋषीणामाक्रोशजाः । आथर्वणकृता अथर्ववेदप्रणीताभिचारिकमन्त्रैः कृता मारणात्मका व्याधयः । उपसर्गजा इति उपसृज्यन्त इत्युपसर्गाः पीडितजनसमीपोत्पन्ना ज्वरादयः । विद्युदशनिकृता इति लताकारा तिर्यक्पतन्ती वह्निरूपा विद्युत्, मुशलवदधःपतनशीलो मारणात्मकोऽशनिः । संसर्गजा इति देवादिद्रोहकजनसंपर्कजा इत्यर्थः । आकस्मिका इति विनैव संसर्गं प्राक्तनकर्मपीडितत्वेन जाता इत्यर्थः । उपसर्गजसंसर्गजयोरयं विशेषः—उपसर्गजा ज्वरादिरोगपीडितजनसंपर्काद्भवन्ति; संसर्गजाश्च देवादिद्रोहकजनसंपर्काद्भवन्ति । 'देवद्रोहादभिशस्तका' इत्यत्र केचित् 'उपसर्गाभिशापाभिचाराभिषङ्गजा' इति पठन्ति, स चाभावान्न लिखितः । सप्तमं व्याधिभेदं दर्शयन्नाह—स्वभावबलप्रवृत्ता इत्यादि । स्वभावबलप्रवृत्ता इति प्रकृतिशक्तिजाता इत्यर्थः । के पुनस्त इत्याह—क्षुत्पिपासेत्यादि । कालजा इति ये समये प्राप्ता भवन्ति । अकालजा असमये जाता इत्यर्थः । तत्र कालजाकालजयोर्हेतुभेदेन भेद इति दर्शयति—तत्र परिरक्षणकृता इत्यादि । परिरक्षणं रक्षाप्रयत्नः, तस्मिन्नपि परिरक्षणे ये भवन्ति ते कालजाः; अत एव कालकृतानां नोपचारोऽस्ति, याप्यत्वैवास्ति भोजनपानरसायनादिभिः, आत्यन्तिकप्रतीकारो वा स्वभावव्याधिचिकित्सितोक्तरसायनविधिना । अपरिरक्षणकृता इति अपरिरक्षणं रक्षणेऽप्रयत्नः, तस्मिन् ये भवन्ति ते अकालकृताः । तेषां च यथादोषं यथारोगं च प्रतीकारः । एते आधिदैविका इति एते क्षुत्पिपासादयो दैवमधिकृत्य भवन्तीत्याधिदैविकाः । केचित् "एत आधिदैविकाः" इत्यमुं पाठं न पठन्ति । तेषां मते स्वभावबलप्रवृत्ताः क्षुत्पिपासादय आध्यात्मिकमध्ये निपतन्ति । तत्र तेष्वेव सप्तसु व्याधिभेदेषु सर्वव्याध्युपरोधं दर्शयन्नाह—अत्र सर्वव्याध्युपरोध इति । अत्रेति अत्रोक्तसप्तविधव्याधौ, उपरोधः संग्रहः ॥ ७ ॥

**सर्वेषां च व्याधीनां वातपित्तश्लेष्माण एव मूलं;[1] तल्लिङ्गत्वाद्दृष्टफलत्वादागमाच्च । यथा हि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते, एवमेव कृत्स्नं विकारजातं विश्वरूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्तन्ते । दोषधातुमलसंसर्गादायतनविशेषान्निमित्ततश्चैषां विकल्पः[1] । दोषदूषितेष्वत्यर्थं धातुषु संज्ञा—रसजोऽयं, शोणितजोऽयं, मांसजोऽयं, मेदोजोऽयं, अस्थिजोऽयं, मज्जजोऽयं, शुक्रजोऽयं व्याधिरिति ॥ ८ ॥**

कथं पुनः सर्वव्याध्युपरोध इत्याह—सर्वेषां च व्याधीनामित्यादि । मूलमिति कारणमित्यर्थः । तल्लिङ्गत्वादिति वातादिलिङ्गत्वात् । लिङ्गं तु वातादीनां रौक्ष्याल्पस्नेहादयः, तथा तोददाहकण्ड्वादीनि कार्याणि च । दृष्टफलत्वादिति वातादिहरौषधैर्वातादिव्याधेरुपशमनदर्शनात् । आगमाच्च सर्विंशत्येकादशशतानां व्याधीनां कार्यभूतानां वातपित्तश्लेष्माणो हि कारणम् । यथाहि कृत्स्नमित्यादि । विकारजातमिति विकारसमूहं; विकाराश्चात्र त्रयोविंशतिर्महदाद्याः । विश्वरूपेणावस्थितमिति जगद्रूपेण व्याप्य स्थितमित्यर्थः । न व्यतिरिच्यन्त इति न पृथग्भवन्तीत्यर्थः । एवमेव कृत्स्नं विकारजातमित्यादि विकारजातमिति रोगसमूहम् । अव्यतिरिच्येति अपरित्यज्येत्यर्थः । एतेन तल्लिङ्गत्वादित्यादिना अनुमानप्रत्यक्षागमोपमानानि चत्वारि प्रमाणान्युक्तानि । ननु, दोषत्रयात् कथमादिबलप्रवृत्तादयोऽनेके व्याधय इत्याह—दोषेत्यादि ।दोषधातुमलसंसर्गादिति संसर्गः संयोगः; तद्यथा—वातादिदोषरसधातुसंसर्गाज्ज्वरादयो रसाधिष्ठानाः, वातादिदोषरसधातुपुरीषमलसंसर्गादतीसारादयः, वातादिदोषरसादिदूष्यमूत्रमलसंसर्गाद्विंशतिर्मेहाः, तथा वातादिदोषरक्तधातुसंसर्गाद्वातरक्तरक्तपित्तविद्रधिरक्तगुल्मादयः । आयतनविशेषादिति आयतनानि स्थानानि, तेषां विशेषो भेद इत्यर्थः; तद्यथा—सप्तस्वायतनेषु पञ्चषष्टिर्मुखरोगाः, चक्षुरिन्द्रियायतनेषु षट्सप्ततिर्नेत्ररोगाः । निमित्ततश्चेति निमित्तानि वातादयः; तद्यथा—प्रत्येकं वातादिज्वरास्त्रयः, सान्निपातिक एकः, द्वन्द्वजास्त्रयः,

---

१ 'मूलमिति कारणम् । आगन्तुकारणे मानसे च कथं वातादिमूलत्वमित्याह—तल्लिङ्गत्वादिति; वातादिलिङ्गयुक्तत्वादित्यर्थः । आगन्तावपि हि वातादिलिङ्गं शरीरक्षोभादवश्यं भवति, परं तत् कियन्तमपि कालं वातादिचिकित्साप्रयोजनकं न भवति; यदुक्तं—'तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयन्' ( च. चि. अ. ३ ) इत्यादि । तथा 'आगन्तुरन्वेति निजं विकारं' ( च. सू. अ. १९ ) इति । मानसेऽपि कामादौ दोषकोपो भवत्येव; यदुक्तं–'कामशोकभयाद्वायुः' ( च. चि. अ. ३ ) इत्यादि । दृष्टफलत्वादिति वातादिक्रियया सर्वविकारेषु साध्येषूपशयरूपफलदर्शनात् । आगन्तावपि कालानुबन्धाद्दोषक्रियया फलं भवति । आगमाच्चेति 'नास्ति रोगो विना दोषैः' ( सू. अ. ३५ ) इत्यादि, चरकेऽप्युक्तं–'विकारो धातुवैषम्यं' (च. सू. अ. ९) इति । अत्र दृष्टान्तमाह–यथेत्यादि । विकारजातमिति महदादीनि सप्त, एकादशेन्द्रियाणि, पञ्चार्थाः, तथा तद्विकाराश्च गोघटादयः । विश्वरूपेणेति स्थावरादिविश्वरूपतया, सत्त्वरजस्तमसामेव हि प्रकृतिरूपाणां महदादि सर्वं परिणाम इति सांख्यनयः । विश्वरूपेणेति ज्वरातिसारव्रणादिरूपेण ।' इति चक्रः ।

१ 'विकल्पा भवन्ति' इति पा० ।

आगन्तुश्चाष्टमः; एवमन्यदपि निमित्ततो व्याधीनां नानात्वं ज्ञेयम् । एषामिति व्याधीनां, विकल्पो भेदः नानात्वमित्यर्थः । दूष्यजन्मसंज्ञा लक्षणया भवतीति दर्शयन्नाह—दोषदूषितेष्वत्यर्थमित्यादि । दोषैरेव दूषितेषु धातुष्वत्यर्थं दोषजेषु विकारेषु रसजादिसंज्ञा; यथा—घृतदग्धस्तैलदग्धस्ताम्रदग्धो लोहदग्ध इति । अत्र घृतादिशब्देन घृतादिस्थो वह्निर्लक्ष्यते, एवं रसादिजो व्याधिरित्यत्र रसादिस्थितवातादिदोषा लक्ष्यन्ते ॥ ८ ॥

**तत्र, अन्नाश्रद्धारोचकाविपाकाङ्गमर्दज्वरहृल्लासतृप्तिगौरवहृत्पाण्डुरोगमार्गोपरोधकार्श्यवैरस्याङ्गसादाकालजवलीपलितदर्शनप्रभृतयो रसदोषजा विकाराः; कुष्ठविसर्पपिडकामशकनीलिकातिलकालकन्यच्छव्यङ्गेन्द्रलुप्तप्लीहविद्रधिगुल्मवातशोणितार्शोऽर्बुदाङ्गमर्दासृग्दररक्तपित्तप्रभृतयो रक्तदोषजाः, गुदमुखमेढ्रपाकाश्च; अधिमांसार्बुदार्शोऽधिजिह्वोपजिह्वोपकुशगलशुण्डिकालजीमांससंघातौष्ठप्रकोपगलगण्डगण्डमालाप्रभृतयो मांसदोषजाः; ग्रन्थिवृद्धिगलगण्डार्बुदमेदोजौष्ठप्रकोपमधुमेहातिस्थौल्यातिस्वेदप्रभृतयो मेदोदोषजाः; अध्यस्थ्यधिदन्तास्थितोदशूलकुनखप्रभृतयोऽस्थिदोषजाः; तमोदर्शनमूर्च्छाभ्रमपर्वस्थूलमूलारुर्जन्मनेत्राभिष्यन्दप्रभृतयो मज्जदोषजाः; क्लैब्याप्रहर्षशुक्राश्मरीशुक्रमेहशुक्रदोषादयश्च तद्दोषाः; त्वग्दोषाः सङ्गोऽतिप्रवृत्तिरयथाप्रवृत्तिर्वा मलायतनदोषाः; इन्द्रियाणामप्रवृत्तिरयथाप्रवृत्तिर्वेन्द्रियायतनदोषाः; इत्येषं समास उक्तः; विस्तरं निमित्तानि चैषां प्रतिरोगं वक्ष्यामः ॥ ९ ॥**

चिकित्साविशेषविज्ञानार्थं सुखसाध्यत्वादिकर्मबोधार्थं च प्रत्येकं रसादिधातुविकारान् दर्शयितुमाह—तत्रान्नाश्रद्धारोचकेत्यादि । अन्नाश्रद्धा अन्नविद्वेषः । अङ्गमर्द इति वेदनाविशेषः 'स्फुटनिका' इति लोके । हृल्लासो हृदयोत्क्लेदोऽसकृत्ष्ठीवनम् । अङ्गसाद इति अङ्गानामनुत्साहः । रसदोषजा इति दोषदूषितरसजाताः । रसजानभिधाय रक्तजानभिधातुमाह—कुष्ठेत्यादि । रक्तजानुक्त्वा मांसजानाह—अधिमांसेत्यादि । मांससंघात इति मांसतानो नाम मुखरोगेषु; 'मांसोच्छ्रायः सामान्य एव' इत्यन्ये । मांसजान् कथयित्वा मेदोजानाह—ग्रन्थीत्यादि । मेदोजानुक्त्वाऽस्थिजानाह–अध्यस्थ्यधिदन्तेत्यादि । अध्यस्थीनि अधिकास्थीनीत्यर्थः । अधिदन्ता इति अधिका दन्ता इत्यर्थः । तोदशूलाभ्यां सहास्थिशब्दः प्रत्येकं संबध्यते । अस्थिदोषानभिधाय मज्जजानाह—तमोदर्शनेत्यादि । तमोदर्शनम् अन्धकारदर्शनम् । मूर्च्छा चेतनाच्युतिः । भ्रमः चक्रारूढस्येव पर्वस्थूलमूलारुर्जन्मेति स्थूलमूलानामरुषां व्रणानां पर्वसु जन्मेत्यर्थः । अन्ये त्वत्र 'पर्वगौरवस्थूलमूलारुर्जन्म' इति पठन्ति । मज्जदोषानभिधाय शुक्रदोषान् दर्शयति—क्लैब्याप्रहर्षेत्यादि । क्लैब्यमिति षण्डतेत्यर्थः । अप्रहर्ष इति स्त्रीविषयेऽनभिलाषः । तद्दोषा इति शुक्रदोषा इत्यर्थः । शुक्रजानुक्त्वा मलायतनदोषानाह—त्वग्दोषा इत्यादि । त्वग्दोषाः कुष्ठानि । कर्णनासामुखाक्षिमलायतनेष्वन्येषु च प्रजननापानपथेष्वप्रवृत्तिः 'सङ्ग' उच्यते । मलायतनदोषानभिधायेन्द्रियायतनदोषानाह—इन्द्रियाणामप्रवृत्तिरित्यादि । समासः संक्षेपः । दोषधातुमलसंसर्गादिति यत् प्रागुक्तं व्याधिनानात्वकारणं, तथाऽऽयतनविशेषादिति यद्द्वितीयं व्याधिनानात्वकारणमुक्तम्, एतद्द्वयमपि संक्षेपेणाभिधाय निमित्ततश्चेति यदुक्तं तृतीयं व्याधिनानात्वकारणं तदभिधातुमाह—विस्तरमित्यादि । निमित्तानि वातादयः तत्कारणानि बलवद्विग्रहादीनि मिथ्याप्रयुक्तानि स्नेहादीनि च; ज्वरे तद्यथा–कामज्वरः क्रोधज्वरो मृत्पाण्डुरोग इत्यादि; तथाऽतीसारे 'गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः' ( उ. त. अ. ४० ) इत्यादि प्रतिरोगं निर्दिष्टानि । प्रतिरोगं वक्ष्याम इति रोगे रोगे वक्ष्यामः ॥ ९ ॥

**भवति चात्र—**

**कुपितानां हि दोषाणां शरीरे परिधावताम् ॥**
**यत्र सङ्गः खवैगुण्याद्व्याधिस्तत्रोपजायते ॥ १० ॥**

वातादीनां शरीरे प्रसरतां स्थानसंश्रयस्य व्याधिनानात्वकारणस्य हेतुं दर्शयन्नाह—कुपितानामित्यादि । खवैगुण्यात् स्रोतोवैगुण्यादित्यर्थः ॥ १० ॥

**भूयोऽत्र जिज्ञास्यं, किं वातादीनां ज्वरादीनां च नित्यः संश्लेषः परिच्छेदो वा? इति; यदि नित्यः संश्लेषः स्यात्तर्हि नित्यातुराः सर्व एव प्राणिनः स्युः; अथाप्यन्यथा वातादीनां ज्वरादीनां च, 'अन्यत्र वर्ते-**

१ 'अरोचकस्त्वाहारेच्छायां सत्यामन्नस्य मुखप्रवेशने अस्वादुत्वावबोधः' इति चक्रः । २ अत्र 'रक्तदोषाः' इति, 'रक्तदोषात्' इति च पा० । एवमग्रेऽपि 'मांसदोषाः', 'मांसदोषात्' इत्यादि ज्ञेयम् । ३ 'इत्येवं' इति पा० । ४ 'विस्तरनिमित्तानि च' इति पा० ।

१ यदुक्तं चरके 'अरुषां स्थूलमूलानां पर्वजानां च दर्शनम्' (च. सू. अ. २८) इति । २ 'स्ववैगुण्यात्' इति पा० । ३ 'एवं दोषधातुसंसर्गान् विकारानभिधाय ज्वरादिना सह वातादीनां संसर्गमाह—भूयोऽत्रेत्यादि । ज्वरादयो वातादिकार्यं, कार्यं च समवायिकारणेन नित्यसंबद्धं, कारणं तु नावश्यं कार्येण; यथा–तन्तुस्त्वनुत्पाद्यैव पटं भवितुमर्हति, किंतु न पुनस्तन्तुं विना पटः; इत्येवमाकारा ज्वरादयो दोषेष्विति दर्शयन्नाह–दोषानित्यादि । अत्र दृष्टान्ते 'आकाशं प्रत्याख्याय' इति वचनमकारणस्याकाशस्य विद्युदादिव्यापकतया उक्तम् । तरङ्गबुद्बुदादयश्चोदकविशेषा इति दोषव्याधिवत् कार्यकारणतया तुल्य एव दृष्टान्तः । निमित्त एवेति ज्वरादिजनकवातादिकारणात् । तत एव वातादेर्भवति नान्यतश्चेत्येवकारार्थः' इति चक्रः । ४ 'अथवा' इति पा० । 'अथेति पक्षोपन्यासार्थम् । वातादीनां ज्वरादीनां चान्यथा परिच्छेदेऽपि 'अन्यत्र वर्तमानानां भावानामन्यत्र लिङ्गं न भवति' इति कृत्वा इति न्यायात् 'वातादयो ज्वरादीनां मूलानि' इति यदुच्यते 'सर्वेषां च व्याधीनां' इत्यादिना प्रागुक्तेन ग्रन्थसंदर्भेण, तन्नोपपद्यते, प्राणिनां वातादि-

**मानानामन्यत्र लिङ्गं न भवति' इति कृत्वा यदुच्यते वातादयो ज्वरादीनां मूलानीति तन्न । अत्रोच्यते —दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति; अथ च न (नित्यः) संबन्धः; यथाहि विद्युद्वाताशनिवर्षाण्याकाशं प्रत्याख्याय न भवन्ति, सत्यप्याकाशे कदाचिन्न भवन्ति, अथ च निमित्ततस्तत एवोत्पत्तिरिति; तरङ्गबुद्बुदादयश्चोदकविशेषा एव; वातादीनां ज्वरादीनां च नाप्येवं संश्लेषो न परिच्छेदः शाश्वतिकः, अथ च निमित्तत एवोत्पत्तिरिति ॥ ११ ॥**

प्रतिपाद्य व्याधीनां दोषाणां च कार्यकारणसंबन्धं पुनरन्यथा जिज्ञास्यमाह—भूय इत्यादि ।—भूयःशब्दः पुनरर्थे । जिज्ञास्यं ज्ञातुमभिलषणीयम् । एतेनैतदुक्तं भवति—प्राक्किल व्याधीनां वातादिमूलत्वं जिज्ञासितम्, अत्रान्यत् पुनरपि ज्ञातुमेष्टव्यमित्यर्थः; अन्ये भूयो बहुतरमिति व्याख्यानयन्ति । केचित् 'भूयोऽत्र जिज्ञास्यते' इति पठन्ति । नित्यः संश्लेष इति सर्वदा अपृथक्त्वं, यथा—सूर्यातपयोश्चन्द्रज्योत्स्नयोः पावकोष्णत्वयोरिति । परिच्छेदो विश्लेषः पृथक्त्वं; यथा—पटकुविन्दकयोर्घटकुम्भकारयोः कुण्डलसुवर्णकारयोरित्यादि । अथाप्यन्यथेति कोऽर्थः ? अनित्यः संश्लेषः । पूर्वपक्षमाशङ्क्य समाधानमाह—अत्रोच्यत इत्यादि । प्रत्याख्यायेति परित्यज्येत्यर्थः । ननु, यदि दोषान् परित्यज्य ज्वरादयो न भवन्ति, तर्हि संबन्धोऽस्तीत्याशङ्कानिराकरणायाह—अथ च न संबन्ध इति ।—'सर्वदा' इति शेषः । कथं न सर्वदा संबन्ध इत्यत्र दृष्टान्तमाह–विद्युद्वातेत्यादि । आकाशशब्देनाकाशस्थो मेघ उच्यते; सत्यप्याकाश इति विद्यमानेऽपि जलद इत्यर्थः । निमित्तत इति सामग्रीत इत्यर्थः । तत एवेति तस्याः सामग्र्या एवेत्यर्थः । अपरदृष्टान्तमाह–तरङ्गबुद्बुदादय इति ।—तरङ्गः जललहरी । शाश्वतिक इति नित्य इत्यर्थः ॥ ११ ॥

**भवति चात्र—**

**विकारपरिमाणं च संख्या चैषां पृथक् पृथक् ॥**
**विस्तरेणोत्तरे तन्त्रे सर्वाबाधाश्च वक्ष्यते ॥ १२ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने व्याधिसमुद्देशीयो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥**

'विस्तरं निमित्तानि चैषां प्रतिरोगं वक्ष्याम' इति यदुक्तं प्राक् तत् प्रतिपादयन्नाह—विकारपरिमाणं चेत्यादि । विकारपरिमाणं चेति इयं समुदायसंख्या, तथा च 'व्याधीनां तु सहस्रं यच्छतं विंशतिरेव च–' ( उ. तं. अ. ६६ ) इत्युत्तरे तन्त्रे वक्ष्यते । संख्या चैषां पृथक् पृथगिति इयमवयवसंख्या; तथा च—षडर्शांसि, चतस्रोऽश्मर्यः, अष्टादश कुष्ठानीति निदानस्थाने वक्ष्यते । सर्वाबाधाश्च वक्ष्यत इति ज्वरातीसारशोषादयः । चकारोऽत्र भिन्नक्रमे । तेन विकारपरिमाणं च सर्वाबाधाश्चोत्तरे तन्त्रे वक्ष्यत इति संबध्यते; न पुनः 'उत्तरे तन्त्रे' इति 'संख्या चैषां पृथक् पृथग्' इत्यत्र संबध्यते । अन्ये तु व्याख्यानयन्ति "विकारा ज्वरादीनामुपद्रवरूपतया तृट्छर्दिप्रभृतयः, तत्परिमाणमधिकमध्यहीनभेदेन विकारपरिमाणम्; 'अष्टौ ज्वराः, षडतीसाराः' इत्यादि संख्या च पृथक् पृथक्; सर्वाबाधाश्च शारीरमानसा इति; सर्वमेतदुत्तरे तन्त्रे वक्ष्यते व्याख्यास्यत्याचार्यः" इति ॥१२॥

इति श्रीडल्ह(ह्)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशतितमोऽध्यायः ।

**अथातोऽष्टविधशस्त्रकर्मीयमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**छेद्या भगन्दरा ग्रन्थिः श्लैष्मिकस्तिलकालकः ॥**
**व्रणवर्त्मार्बुदान्यर्शश्चर्मकीलोऽस्थिमांसगम् ॥ ३ ॥**
**शल्यं जतुमणिर्मांससंघातो गलशुण्डिका ॥**
**स्नायुमांससिराकोथो वल्मीकं शतपोनकः ॥ ४ ॥**
**अध्रुषश्चोपदंशाश्च मांसकन्द्यधिमांसकः ॥**

तत्र पूर्वं छेद्यकर्मण एव दर्शितत्वात्तद्भेदमेव दर्शयन्नाह—छेद्या भगन्दरा इत्यादि । ग्रन्थिः श्लैष्मिक इति आमो न तु पक्वः । तिलकालक इति क्षुद्ररोगपरिपठितः; न तु शूकदोषोक्तः, तस्यासाध्यत्वात् । व्रणवर्त्मेति क्लिन्नो व्रणौष्ठः । अर्बुदानि सर्वाणि । अर्शो वातिकं श्लैष्मिकं च । चर्मकील इति गुदपार्श्ववर्ती मांसाङ्कुरः । स्नाय्वादिभिः सह कोथशब्दः प्रत्येकं संबध्यते, कोथः पूतीभावः । शतपोनक इति शूकदोषपठितः; अन्ये तु "भगन्दरग्रहणेनाप्युपात्तस्य शतपोनकस्य पुनरुपादानमत्यन्तच्छेदनार्थम्, अनन्यप्रतीकारत्वात्" ॥ १-४ ॥—

**भेद्या विद्रधयोऽन्यत्र सर्वजाद्ग्रन्थयस्त्रयः ॥ ५ ॥**
**आदितो ये विसर्पाश्च वृद्धयः सविदारिकाः ॥**
**प्रमेहपिडकाः शोफः स्तनरोगोऽवमन्थकः ॥ ६ ॥**

---

मत्त्वे सत्यपि नित्यातुरत्वेनालक्ष्यमाणत्वात्, ज्वरादीनां वातादिलिङ्गत्वेनैवोपलम्भाच्चेति भावः' इति हाराणचन्द्रः ।

१ कुविन्दकः तन्तुवायः । २ 'अथवा अन्यथेति' इति पा० ।

१ 'अष्टविधशस्त्रकर्मण्यमध्यायं' इति पा० । "अथातः शस्त्रकर्मविधिविनिश्चयमध्यायं व्याख्यास्यामः ॥१॥ छेद्यास्तु भगन्दरार्शोऽर्बुदुष्टव्रणनाडीचर्मकीलतिलकालकमेदोग्रन्थिश्लेष्मनिमित्ताश्चामयास्तथा मांससिरास्नायुकोथो मांसकन्दी मांसास्थिगतमपि शल्यमुरस्तङ्गः शतपोनको जतुमणिर्वल्मीकमध्रुषोऽधिमांसमांससंघातगलशुण्डिका इत्येवमादयो विकाराः ॥२॥ भेद्यास्तु सर्वजावृते विद्रध्यनुशयी प्रमेहपिडका ग्रन्थयश्च विसर्पाश्चादितस्त्रयस्त्रयो वृद्धयश्च विदारिकावमन्थौ पुष्करिका नाड्यः स्तनरोगाश्च सहोपदंशैः शोथाश्च सर्वसराः प्रायशः क्षुद्ररोगास्तालुपुप्पुटतुण्डिकेरीगिलायुप्रभृतयोऽन्तःपूयशल्या ये च मेदःसमुत्था अश्मरीहेतोर्बस्तिश्च ॥ ३ ॥ लेख्याश्चतस्रो रोहिण्यो व्रणनेत्रवर्त्मार्शोऽधिजिह्वोपजिह्वामांसोच्छ्राया: किलासा दन्तवैदर्भः पञ्च मेदोजाश्च ॥४॥ वेध्यास्तु सिरोदरवृद्धिप्रभृतयः ॥५॥ एष्यास्तु गतिमन्तो नाड्यः शल्यानि च ॥ ६ ॥ आहार्यास्तु दन्तान्तःशर्कराश्मरीमूढगर्भकर्णमलशल्यानि पादशर्कराश्च ॥ ७ ॥ विस्राव्या विद्रधिः सर्वा भवेदन्यत्र सर्वजात् ॥८॥" इति ताडपत्रपुस्तके पाठः ।

**कुम्भीकाऽनुशयी नाड्यो वृन्दौ पुष्करिकाऽलजी ॥**
**प्रायशः क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ ॥ ७ ॥**
**तुण्डिकेरी गिलायुश्च पूर्वं ये च प्रपाकिणः ॥**
**बस्तिस्तथाऽश्मरीहेतोर्मेदोजा ये च केचन ॥ ८ ॥**

भेद्यविषयं दर्शयन्नाह—भेद्या इत्यादि । ग्रन्थयस्त्रय इति वातपित्तकफजाः । आदितो ये विसर्पाश्चेति वातपित्तश्लेष्मजाः । विदारिका क्षुद्ररोगेषु । अवमन्थक इति शूकदोषेषु । वृन्दाविति एकवृन्दो वृन्दश्च कण्ठगतरोगेषु । पुष्करिका शूकदोषेषु । पुप्पुटौ तालुदन्तजाविति तालुपुप्पुटो दन्तपुप्पुटश्च । पूर्वं ये च प्रपाकिण इति भगन्दरादयः । बस्तिस्तथाऽश्मरीहेतोरिति अश्मरीनिमित्तमेव बस्तिर्भेद्यो नान्यहेतोः, अभेदे ध्रुवमरणाद्भेदे च संशयात् ॥ ५—८ ॥

**लेख्याश्चतस्रो रोहिण्यः किलासमुपजिह्विका ॥**
**मेदोजो दन्तवैदर्भो ग्रन्थिर्वर्त्माधिजिह्विका ॥ ९ ॥**
**अर्शांसि मण्डलं मांसकन्दी मांसोन्नतिस्तथा ॥**

लेख्यविषयं दर्शयन्नाह—लेख्याश्चतस्र इत्यादि । चतस्रो रोहिण्य इति वातपित्तश्लेष्मसन्निपातोत्थाः, रक्तजा पुनरेकान्तासाध्यत्वादिह नोक्ता । वर्त्म इति व्रणवर्त्म नेत्रवर्त्म चेत्यर्थः । मण्डलं कण्डूकुष्ठादीनाम् । मांसकन्दी स्वल्पमांसाङ्कुरः ॥९॥—

**वेध्याः सिरा बहुविधा मूत्रवृद्धिर्दकोदरम् ॥ १० ॥**

वेध्यविषयं दर्शयन्नाह—वेध्या इत्यादि ॥ १० ॥

**एष्या नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये ॥**

एष्यविषयं दर्शयन्नाह—एष्या इत्यादि । एष्या इति लोहादिशलाकयाऽन्तरन्वेषणीया इत्यर्थः, शल्यस्थितिज्ञानार्थं, सुखेनापकर्षणाय च । उन्मार्गी तिर्यग्गतिः ॥—

**आहार्याः शर्करास्तिस्रो दन्तकर्णमलोऽश्मरी ॥११॥**
**शल्यानि मूढगर्भाश्च वर्चश्च निचितं गुदे ॥**

आहार्यविषयं दर्शयन्नाह—आहार्या इत्यादि । आहार्या आकर्षणीयाः । शर्करास्तिस्र इति मूत्रशर्करा पादशर्करा दन्तशर्करा चेति ॥ ११ ॥—

**स्राव्या विद्रधयः पञ्च भवेयुः सर्वजादृते ॥ १२ ॥**
**कुष्ठानि वायुः सरुजः शोफो यश्चैकदेशजः ॥**
**पाल्यामयाः श्लीपदानि विषजुष्टं च शोणितम् ॥१३॥**
**अर्बुदानि विसर्पाश्च ग्रन्थयश्चादितश्च ते ॥**
**त्रयस्त्रयश्चोपदंशाः स्तनरोगा विदारिका ॥ १४ ॥**
**सु(शु)षिरो गलशालूकं कण्टकाः कृमिदन्तकः ॥**
**दन्तवेष्टः सोपकुशः शीतादो दन्तपुप्पुटः ॥ १५ ॥**
**पित्तासृक्कफजाश्चौष्ठ्याः क्षुद्ररोगाश्च भूयशः ॥**

स्राव्यविषयं दर्शयन्नाह—स्राव्या इत्यादि ॥ १२-१५ ॥

**सीव्या मेदःसमुत्थाश्च भिन्नाः सुलिखिता गदाः १६**
**सद्योव्रणाश्च ये चैव चलसन्धिव्यपाश्रिताः ॥**

सीव्यविषयं दर्शयन्नाह—सीव्या इत्यादि । मेदःसमुत्था इति ये केचन मेदोभवविकाराः । भिन्ना इति विदीर्णा इत्यर्थः । सुलिखिता गदा इति निरवशेषलिखिता इत्यर्थः । व्यपाश्रिता इति विशेषेणाश्रिता इत्यर्थः । 'साध्याः' इति केचित् पठन्ति ॥१६॥—

**न क्षाराग्निविषैर्जुष्टा न च मारुतवाहिनः ॥ १७ ॥**
**नान्तर्लोहितशल्याश्च**

अथ के न सीव्या इत्याह—न क्षारेत्यादि ॥ १७ ॥

**तेषु सम्यग्विशोधनम् ॥**

तेषु किं कर्तव्यमित्याह—तेष्वित्यादि ॥—

**पांशुरोमनखादीनि चलमस्थि भवेच्च यत् ॥ १८ ॥**
**अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम् ॥**
**रुजश्च विविधाः कुर्युस्तस्मादेतान् विशोधयेत् १९**

कान् विशोधयेदित्याह—पांश्वित्यादि । अन्ये 'तृणादीनि' इति पठन्ति । कस्मादेते विशोध्या इत्याह—अहृतानीत्यादि ॥ १८ ॥ १९ ॥

**ततो व्रणं समुन्नम्य स्थापयित्वा यथास्थितम् ॥**
**सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मन्तकस्य वा २०**

---

१ चक्रस्तु 'पञ्च मेदःसमुत्थाश्च' इति पठित्वा, 'गलगण्डग्रन्थ्यपच्यर्बुदवृद्धयः' इति व्याख्यानयति । २ 'कण्टका जिह्वाकण्टकाः' इति चक्रः ।

१ "सीव्या मेदःसमुत्थाश्च भित्वा विलिखिता गदाः । कफग्रन्थिरल्पपालिः कर्णः सद्योव्रणाश्च ये ॥ शिरोललाटाक्षिकूटकर्णौष्ठनासागण्डकृकाटिकाबाहूदररिफक्पायुप्रजननमुष्कादिषु प्रदेशेष्वचलेषु मांसवत्सु च सीव्येत् । जानुकूर्परसन्ध्यादिषु च प्रचलेष्वल्पमांसेषु न सीव्येत् । वायुनिर्वाहिणोऽन्तर्लोहितशल्याः सविषाश्च न सीव्याः । तत्र सीव्यं व्रणमभिसमीक्ष्य चलास्थिपांशुतृणरोमशुष्करक्तादीनपोह्योत्कृष्य यथास्थानं स्थापयित्वा स्नायुसूत्रवालानामन्यतमेन सीव्येत्, तृणाश्मन्तकमूर्वातसीनां वल्कलैः । सूच्यस्तु तिस्र उपदिश्यन्ते—द्व्यङ्गुला त्र्यङ्गुला धनुर्वक्रेति । तत्र मांसलेष्ववकाशेषु त्र्यस्रा, सन्ध्यस्थिस्वल्पमांसेष्ववकाशेषु च द्व्यङ्गुला वृत्ता, पक्वामाशययोर्मर्मसु च धनुर्वक्राऽर्धतृतीयाङ्गुला । गोफणिका तुन्नसेवनी वेल्लितकमृजुग्रन्थिश्चेति समासेन सीवनविकल्पाः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः । तेषां प्रहारमासाद्योपयोगं बुद्ध्वा वन्थे न चातिसन्निकृष्टां विप्रकृष्टामल्पग्राहिणीमतिग्राहिणीं वा सूचीं पातयेत् । भवति चात्र—दूरे निपतिता बाधं संनिकृष्टेऽवलुञ्चनम् । अल्पग्रहात्तद्देव व्रणे कुर्यादतस्त्यजेत् ॥ सम्यक् सीवितमवेक्ष्य मधुघृतैरञ्जनमधुकरोध्रप्रियङ्गुशल्लकीफलरसाञ्जनक्षौममसीचूर्णैः प्रतिसार्य बन्धेनोपचरेत् ॥ भवन्ति चात्र श्लोकाः—एतदष्टविधं कर्म" इत्यादिस्ताडपत्रपुस्तके पाठः । २ 'चलसन्धिव्ययाश्रयाः' इति पा० । ३ 'सूत्रादिभिर्यथायोग्यतया सीव्येदिति योज्यम् । वेल्लितबन्धवद्वेल्लितकम् । त्र्यस्रत्वं बृहत्त्वं च मांसलावकाशस्य दूरवेध्यत्वात् । संध्यादीनामल्पवेध्यतया वृत्तत्वमल्पत्वं च । पक्वाशयादावन्तःप्रवेशतया वक्रा' इति चक्रः ।

**शणजक्षौमसूत्राभ्यां स्नाय्वा वालेन वा पुनः ॥**
**मूर्वागुडूचीतानैर्वा सीव्येद्वेल्लितकं शनैः ॥ २१ ॥**
**सीव्येद्गोफणिकां वाऽपि सीव्येद्वा तुन्नसेवनीम् ॥**
**ऋजुग्रन्थिमथो वाऽपि यथायोगमथापि वा ॥ २२ ॥**
**देशेऽल्पमांसे सन्धौ च सूची वृत्ताऽङ्गुलद्वयम् ॥**
**आयता त्र्यङ्गुला त्र्यस्रा मांसले चाऽपि पूजिता २३**
**धनुर्वक्रा हिता मर्मफलकोशोदरोपरि ॥**
**इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः २४**
**कारयेन्मालतीपुष्पवृन्ताग्रपरिमण्डलाः ॥**
**नातिदूरे निकृष्टे वा सूचीं कर्मणि पातयेत् ॥ २५ ॥**
**दूराद्रुजो व्रणौष्ठस्य सन्निकृष्टेऽवलुञ्चनम् ॥ २६ ॥**

तत्र सप्तानां छेद्यादिकर्मणामवचारणस्यान्यत्र दर्शितत्वात् सीव्यस्य पुनरत्रैव विस्तरेण निर्दिशन्नाह—ततो व्रणमित्यादि । समुन्नम्य उन्नतं कृत्वा । अश्मन्तकः अम्ललोटकसदृशो वृक्षः । क्षौममिति क्षुमा अतसी तस्या इदं क्षौमम् । स्नायुरिति शणाकार उपधातुविशेषः, येन धनूंषि नह्यन्ते । मूर्वा चौरस्नायुः, यया पूर्वदेशे गुणान् कुर्वन्ति धनुषाम् । अन्ये कोविदारसदृशयुग्मपत्रां लताविशेषां मूर्वामाचक्षते । तानैरिति तन्तुभिरित्यर्थः । वेल्लितकं वक्रम् । गोफणिकां गोफणाकाराम् । तुन्नसेवनीमिति यथा वस्त्रं पाटितं तन्तुवायकाः सन्दधति तद्वत्तुन्नसेवनीं सीव्येत् । ऋजुग्रन्थिमिति ऋजुग्रन्थेः सदृशो बन्धो यस्यां सेवन्यां सा ऋजुग्रन्थिः । त्र्यस्रेति त्रिधारेत्यर्थः । फलकोषः अण्डकोषः । सुसमाहिता इति सुहस्ता इत्यर्थः । परिमण्डला इति वर्तुला इत्यर्थः । सन्निकृष्टे इति निकट इत्यर्थः । अवलुञ्चनमिति त्रुटनमित्यर्थः ॥ २०—२६ ॥

**अथ क्षौमपिचुच्छन्नं सुस्यूतं प्रतिसारयेत् ॥**
**प्रियङ्ग्वञ्जनयष्ट्याह्वरोध्रचूर्णैः समन्ततः ॥ २७ ॥**
**शल्लकीफलचूर्णैर्वा क्षौमध्यामेन वा पुनः ॥**
**ततो व्रणं यथायोगं बद्ध्वाऽऽचारिकमादिशेत् ॥२८॥**

सीवनस्य पश्चात्कर्म दर्शयन्नाह—अथ क्षौमेत्यादि । क्षौमेण अतसीवस्त्रेण, पिचुना कार्पासतूलेन, आभ्यां द्वाभ्यां छन्नमित्यर्थः । सुस्यूतमिति 'सम्यक्सीवितम्' इति लोके । प्रतिसारयेत् अवचूर्णयेदित्यर्थः । अवचूर्णनद्रव्याण्याह-प्रियङ्ग्वञ्जनेत्यादि । अञ्जनं सौवीराञ्जनम् । समन्तत इति सर्वत्रेत्यर्थः । क्षौमध्यामेनेति अतसीभववस्त्रभस्मना । आचारिकमादिशेदिति व्रणितोपासनीयोक्तमाचारं कथयेदित्यर्थः । केचिदिह छेद्यादीनि गद्येनैव पठन्ति यावत् 'बद्ध्वाऽऽचारिकमादिशेत्' इति॥२७॥२८॥

**एतदष्टविधं कर्म समासेन प्रकीर्तितम् ॥**
**चिकित्सितेषु कार्त्स्न्येन विस्तरस्तस्य वक्ष्यते ॥२९॥**

संक्षेपोक्तिरियं, विस्तरोऽस्य वक्ष्यत इति दर्शयन्नाह—एतदित्यादि । अष्टग्रहणं पुनर्यदिह कृतं तच्चरकोक्तषट्संख्यानिराकरणार्थम् ॥ २९ ॥

**हीनातिरिक्तं तिर्यक् च गात्रच्छेदनमात्मनः ॥**
**एताश्चतस्रोऽष्टविधे कर्मणि व्यापदः स्मृताः ॥३०॥**

तत्राष्टानामपि कर्मणां व्यापदं दर्शयन्नाह—हीनातिरिक्तमित्यादि । गात्रच्छेदनमात्मन इति शस्त्रकर्म कुर्वतः स्वशरीरच्छेदनमित्यर्थः । चतस्रो व्यापद इति; अन्ये तु 'एता हि तिस्र' इति पठन्ति, स तु प्रमादपाठः ॥ ३० ॥

**अज्ञानलोभाहितवाक्ययोग-**
**भयप्रमोहैरपरैश्च भावैः ॥**
**यदा प्रयुञ्जीत भिषक् कुशस्त्रं**
**तदा स शेषान् कुरुते विकारान् ॥ ३१ ॥**

व्यापदो हेतून् दर्शयन्नाह—अज्ञानेत्यादि । अहितवाक्ययोगः शत्रुवचनप्रयोगः । प्रमोहो वैचित्त्यम् । अपरैश्च भावैरिति प्रयोजनव्यग्रत्वादिभिरित्यर्थः । कुशस्त्रमिति ईषच्छस्त्रम् । स शेषानिति स इति वैद्यः, शेषान् अपरानित्यर्थः ॥ ३१ ॥

**तं क्षारशस्त्राग्निभिरौषधैश्च**
**भूयोऽभियुञ्जानमयुक्तियुक्तम् ॥**
**जिजीविषुर्दूरत एव वैद्यं**
**विवर्जयेदुग्रविषाहितुल्यम् ॥ ३२ ॥**

प्रागुक्ताज्ञानादिदोषदूषितं वैद्यं प्रत्यातुरः किं कुर्यादित्याह—तं क्षारशस्त्राग्निभिरित्यादि । तं तथाविधं भिषक्छद्मचरम् । अयुक्तियुक्तं यथा भवतीत्यर्थः । जिजीविषुः जीवितुमिच्छुः । दूरत एव वैद्यं विवर्जयेदिति तस्मै दर्शनमपि न दद्यात् ॥ ३२ ॥

**तदेव युक्तं त्वति मर्मसन्धीन्**
**हिंस्यात् सिराः स्नायुमथास्थि चैव ॥**
**मूर्खप्रयुक्तं पुरुषं क्षणेन**
**प्राणैर्वियुञ्ज्यादथवा कदाचित् ॥ ३३ ॥**

हीनव्यापदमभिधायातिरिक्तशस्त्रव्यापदं दर्शयन्नाह—तदेवेत्यादि ।—तदेव शस्त्रं, युक्तं प्रयुक्तं, तु पुनरर्थे, अतीति अतिशयेन, प्राणैर्वियुञ्ज्यादिति प्राणैः सह वियोगं कारयेदित्यर्थः ॥ ३३ ॥

**भ्रमः प्रलापः पतनं प्रमोहो**
**विचेष्टनं संलयनोष्णते च ॥**

१ 'संस्यूतं' इति पा० । २ 'अत्र व्रणरोहे क्रमेण सूत्रच्छेदोऽपि ज्ञेयः । यदुक्तं भोजे-"यदा मन्येत संश्लिष्टां पेश्या पेशीं त्वचा त्वचम् । तदा बन्धनमेकं द्वे त्रीणि वा मोक्षयेत् क्रमात्" इति चक्रः ।

१ "पाटनं व्यधनं चैव छेदनं लेखनं तथा । प्रच्छानं सीवनं चैव षड्विधं शस्त्रकर्म तत्" ( च. चि. अ. २५ ) इति । २ 'स्वशरीरोच्छेदनम्' इति पा० । ३ 'सशेषान्' इति हाराणचन्द्रः । ४ 'प्रमोहो ज्ञानवतोऽपि कर्मसमये संमोहः ।' इति चक्रः । ५ 'ईषदर्थोऽयं कुशब्दः क्रियाविशेषणम्' इति हाराणचन्द्रः । ६ हाराणचन्द्रस्तु 'संलपनोष्णते च' इति पठति, 'संलपनं रहसि भाषणं, चित्तविभ्रमादस्पष्टमनन्यापेक्षिभाषणमित्येतत्' इति व्याख्यानयति च ।

स्रस्ताङ्गता मूर्च्छनमूर्ध्ववात-
स्तीव्रा रुजो वातकृताश्च तास्ताः ॥ ३४ ॥
मांसोदकाभं रुधिरं च गच्छेत्
सर्वेन्द्रियार्थोपरमस्तथैव ॥
दशार्धसंख्येष्वपि विक्षतेषु
सामान्यतो मर्मसु लिङ्गमुक्तम् ॥ ३५ ॥

मर्मसन्धिसिरास्नाय्वस्थिपञ्चानां छेदनात् पञ्चप्रकारामतिरिक्तशस्त्रव्यापदं दर्शयित्वेदानीं तेष्वेव मर्मादिषु विद्धेषु यानि लिङ्गानि भवन्ति तानि सामान्येन दर्शयन्नाह—भ्रम इत्यादि।—भ्रमः चक्रारूढस्येव। प्रलापः असंबद्धभाषणम्। पतनम् अनूर्ध्वस्थितिः। प्रमोहः नैवात्यन्तं चित्तनाशः। विचेष्टनं विगतकायपरिस्पन्दनम्। संलयनं सुषुप्तावस्थस्येव चित्तस्याकर्मण्यता। उष्णता शरीरस्य परितापः। स्रस्ताङ्गता शरीरशैथिल्यम्। मूर्च्छनं चेतनाच्युतिः। ऊर्ध्ववात इति श्वासोऽत्राभिप्रेतो न रोगविशेषः। मांसोदकाभं मांसधावनजलसदृशम्। उपरमो निवृत्तिः। दशार्धसंख्येष्विति 'तदेव युक्तं' इत्यादिश्लोकोक्तेषु मर्मसन्धिसिरास्नाय्वस्थिषु पञ्चसु क्षतेषु विद्धेषु ॥ ३४ ॥ ३५ ॥

सुरेन्द्रगोपप्रतिमं प्रभूतं
रक्तं स्रवेद्वै क्षततश्च वायुः ॥
करोति रोगान् विविधान् यथोक्तां-
श्छिन्नासु भिन्नास्वथवा सिरासु ॥ ३६ ॥
कौब्ज्यं शरीरावयवावसादः
क्रियास्वशक्तिस्तुमुला रुजश्च ॥
चिराद्व्रणो रोहति यस्य चापि
तं स्नायुविद्धं मनुजं व्यवस्येत् ॥ ३७ ॥
शोफातिवृद्धिस्तुमुला रुजश्च
बलक्षयः पर्वसु भेदशोफौ ॥
क्षतेषु सन्धिष्वचलाचलेषु
स्यात् सन्धिकर्मोपरतिश्च लिङ्गम् ॥ ३८ ॥
घोरा रुजो यस्य निशादिनेषु
सर्वास्ववस्थासु न शान्तिरस्ति ॥
तृष्णाऽङ्गसादौ श्वयथुश्च रुक् च
तमस्थिविद्धं मनुजं व्यवस्येत् ॥ ३९ ॥

अमर्मविद्धसिरादिलिङ्गं दर्शयन्नाह—सुरेन्द्रेत्यादि। सुरेन्द्रगोपप्रतिममिति इन्द्रगोपकीटसन्निभमित्यर्थः। यथोक्तानिति शोणितवर्णनीयोक्तशिरोरोगाधिमन्थादीन्। कौब्ज्यमित्यादि कौब्ज्यमिति अन्तर्बहिरायामजं द्विधा। अवयवावसाद इति अवयवस्य स्वकर्मण्यसामर्थ्यम्। क्रियास्वशक्तिरिति सामान्येन सर्वशरीरस्य, क्रियाश्चात्रोत्क्षेपणापक्षेपणप्रसारणाकुञ्चनलक्षणाः। तुमुला गहनाः; अन्ये तु "वातपित्तश्लेष्मजनिता एकत्र व्याकुलीभूतवेदनास्तुमुला उच्यन्ते" इति वदन्ति। व्यवस्येत् जानीयादित्यर्थः। शोफातिवृद्धिरित्यादि शोफः प्रसिद्धः। पर्वस्विति सन्धिषु। भेदः स्फुटनमिव। चलेष्विति शाखाहनुकटग्रीवासु चलाः सन्धयः ॥ ३६—३९ ॥

यथास्वमेतानि विभावयेच्च
लिङ्गानि मर्मस्वभिताडितेषु ॥

सिरादीनां मर्मरहितानां विद्धलक्षणमभिधाय, सिरादिमर्मविद्धलक्षणमतिदेशेन दर्शयन्नाह—यथास्वमित्यादि। चकारोऽयं भिन्नक्रमे, एतानि चेत्यत्र द्रष्टव्यः; तेन न केवलं भ्रमप्रलापादीनि पूर्वोक्तानि, किन्तु अवमर्मविद्धसिरादिलिङ्गान्यपि यथास्वं बोद्धव्यानीत्यर्थः ॥—

स्पर्शं न जानाति विपाण्डुवर्णो
यो मांसमर्मण्यभिताडितः स्यात् ॥ ४० ॥

अनुक्तस्य मांसस्य मर्मविद्धलक्षणं दर्शयन्नाह—स्पर्शमित्यादि। सिरादिवन्मांसमपि पूर्वं कुतो न निर्दिष्टमिति चेत्? केवलमांसविद्धस्याव्यापकत्वात्। केचिदाचार्या भ्रमप्रलापादीनि लिङ्गानि सद्यःप्राणहरादीनां मर्मणां मन्यन्ते, अत एव तेषां मते दशार्धसंख्येष्वित्यत्र सद्यःप्राणहरकालान्तरप्राणहरविशल्यप्राणहरवैकल्यकररुजाकराख्येषु पञ्चसु मर्मस्विति व्याख्यानं, तथा तेषां मते यानि सिरादीनां 'सुरेन्द्रगोपप्रतिमं' इत्यादिलक्षणान्युक्तानि तान्यपि सिरादिमर्मविद्धेषु ज्ञातव्यानि, न पुनर्मर्मरहितसिरादिविद्धेषु; अत एव तेषां मते 'यथास्वमेतानि विभावयेच्च' इत्यत्र न चकारार्थं कथयन्ति, किंतु[1] सुरेन्द्रगोपप्रतिममित्याद्युक्तलक्षणेष्वन्तर्भावयन्ति यथास्वमित्यादिपाठम् ॥ ४० ॥

आत्मानमेवाथ जघन्यकारी
शस्त्रेण यो हन्ति हि कर्म कुर्वन् ॥
तमात्मवानात्महनं कुवैद्यं
विवर्जयेदायुरभीप्समानः ॥ ४१ ॥

अतिरिक्तशस्त्रव्यापदमभिधाय वैद्यस्यैवात्मगात्रच्छेदनव्यापदं दर्शयन्नाह—आत्मानमेवेत्यादि। आत्मानमेवेति स्वाङ्गमेवेत्यर्थः; शस्त्रग्रहणधारणावचारणानभिज्ञत्वाद्धिनस्तीत्यर्थः। जघन्यकारी अतिहीनकर्मकारी। तं तथाविधं कुवैद्यम्। आत्मवान् बुद्धिमान्, 'आतुर' इति शेषः। आत्महनम् आत्मच्छेदिनम्; 'आत्मतुदम्' इति केचित् पठन्ति। आयुः जीवितम् ॥ ४१ ॥

तिर्यक्प्रणिहिते शस्त्रे दोषाः पूर्वमुदाहृताः ॥
तस्मात् परिहरन् दोषान् कुर्याच्छस्त्रनिपातनम् ४२

तिर्यक्शस्त्रप्रणिधानकर्मव्यापदं दर्शयन्नाह—तिर्यक्प्रणिहित इत्यादि। दोषाः पूर्वमुदाहृता इति अग्रोपहरणीयाध्याये 'सिरा-

---

१ 'दशार्धसंख्येष्विति सिरास्नाय्वस्थिसन्धिमांसात्मकतया पञ्चसंख्यकेषु मर्मसु' इति हाराणचन्द्रः। २ 'सिरासु च्छिन्नास्वथ विक्षतासु' इति पा०। ३ 'च नैति शान्तिम्' इति पा०। ४ 'रूक्षः' इति पा०।

[1] 'किंतु' इति हस्तलिखितपुस्तके न पठ्यते।

स्नायुच्छेदनम्' ( सू. अ. ५ ) इत्यादयो दोषाः । दोषपरिहारं दर्शयन्नाह—तस्मादित्यादि ॥ ४२ ॥

**मातरं पितरं पुत्रान् बान्धवानपि चातुरः ॥**
**अप्येतानभिशङ्केत वैद्ये विश्वासमेति च ॥ ४३ ॥**
**विसृजत्यात्मनाऽऽत्मानं न चैनं परिशङ्कते ॥**

इदानीं वैद्यं प्रत्यातुरेण किं कर्तव्यमित्याह—मातरमित्यादि । अत्र श्लोके प्रथमोऽपिशब्दः समुच्चये, द्वितीयस्तु संभावनायाम् । विसृजति ददाति । आत्मना स्वयमेव । आत्मानं शरीरम् । एनं वैद्यम् ॥ ४३ ॥—

**तस्मात् पुत्रवदेवैनं पालयेदातुरं भिषक् ॥ ४४ ॥**

वैद्येनैवंविधे आतुरे विश्वस्ते यत् कर्तव्यं तदाह—तस्मादित्यादि । एनमातुरमित्यत्र संबन्धः । साध्वेकपुत्रवत् पालयेदित्यर्थः ॥ ४४ ॥

**धर्मार्थौ कीर्तिमित्यर्थं सतां ग्रहणमुत्तमम् ॥**
**प्राप्नुयात् स्वर्गवासं च हितमारभ्य कर्मणा ॥४५॥**

सम्यक्पालने महदेव फलं भवतीति दर्शयन्नाह—धर्मार्थावित्यादि । सतां ग्रहणमुत्तममिति शिष्टानां मध्ये ग्रहणमुपादानमुत्तमं भवतीत्यर्थः ॥ ४५ ॥

**कर्मणा कश्चिदेकेन द्वाभ्यां कश्चित्त्रिभिस्तथा ॥**
**विकारः साध्यते कश्चिच्चतुर्भिरपि कर्मभिः ४६**

**इति सुश्रुतसंहितायां सूत्रस्थानेऽष्टविधशास्त्रकर्मीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥**

साध्योऽपि व्याधिरनेककर्मसाध्यो भवतीति दर्शयन्नाह—कर्मणेत्यादि । कर्मणेति छेद्यादिकेन स्नेहादिकेन वा; अपिशब्दात् पञ्चादिभिरपि । केचित् 'धर्मार्थौ' इत्यादिश्लोकमध्यायान्ते पठन्ति ॥ ४६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने पञ्चविंशतितमोऽध्यायः ॥ २५ ॥

---

## षड्विंशतितमोऽध्यायः ।

**अथातः प्रनष्टशल्यविज्ञानीयमध्यायं व्याख्यास्यामः॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथातः प्रनष्टशल्येत्यादि ॥ १ ॥ २ ॥

**'शल,' 'श्वल' आशुगमने धातू; तयोरायस्य शल्यमिति रूपम् ॥ ३ ॥**

तत्र शल्यस्य स्वकीयलक्षणबोधार्थं निरुक्तिं दर्शयन्नाह—शलेत्यादि । 'शल' 'श्वल' आशुगमन इति 'शल' 'श्वल' आशुगतौ धातू, अनयोराशुगमनमित्यर्थः, तयोरायस्य शलधातोः शल्यमिति रूपं निष्पद्यत इत्यर्थः; 'शल' हिंसायां धातुः, तस्य शल्यमिति रूपम्' इति केचित् पठन्ति; अपरे 'शल' रुजायाम्' इति पठन्ति ॥ ३ ॥

**तद्द्विविधं शारीरमागन्तुकं च ॥ ४ ॥**

तस्य चिकित्सोपयोगिभेदं दर्शयन्नाह—तदित्यादि ॥ ४ ॥

**सर्वशरीराबाधकरं शल्यं, तदिहोपदिश्यत इत्यतः शल्यशास्त्रम् ॥ ५ ॥**

कथं पुनः शल्यशास्त्रमेतदुच्यत इत्याह—सर्वशरीरेत्यादि ।–सर्वशरीरे येन आबाधा भवति तत् शल्यं; तदिहोपदिश्यते कथ्यतेऽतः शल्यशास्त्रमेतदित्यर्थः ॥ ५ ॥

**तत्र शारीरं दन्तरोमनखादि धातवोऽन्नमला दोषाश्च दुष्टाः; आगन्त्वपि शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्ति ॥ ६ ॥**

शारीरागन्तुकयोर्भेदमाह—तत्रेत्यादि । आदिशब्दात् कैश्चित् श्मश्रुपूयपक्ष्माणि गृह्यन्ते । धातवो रसादयः; मला मूत्रपुरीषकर्णमलस्वेदनेत्रविट्प्रभृतयः, दोषा वातादयः । परमेते धात्वन्नमलदोषा दुष्टाः सन्तः शल्यभूताः; अमुमेवार्थं केचिद्दुष्टाश्चेति चकारात् कथयन्ति । धातवोऽन्नमला इत्यादसमस्तानां पृथगुपादानं यत् कृतं तदुपधातुग्रहणार्थम् । आगन्तुशल्यं प्रतिपादयन्नाह—आगन्त्वपीत्यादि । भावा इति पदार्थास्तृणकाष्ठपाषाणलोहलोष्ट्रप्रभृतयः ॥ ६ ॥

**अधिकारो हि लोहवेणुवृक्षतृणशृङ्गास्थिमयेषु; तत्रापि विशेषतो लोहेष्वेवं, विशसनार्थोपपन्न-**

---

१ 'कीर्तिप्रीत्यर्थं' इति पा० । २ 'पूर्वाध्यायेऽन्तःशल्यम्' इत्युक्तम्, अतस्तेषामन्तःस्थितशल्यानां ज्ञानार्थं प्रनष्टशल्यविज्ञानीयोऽभिधीयते । प्रनष्टमापाततोऽनुपलभ्यमानम्' इति चक्रः । ३ 'तत्र शल्यनिरूपणमेव दर्शयितुमुपतो निरुच्या शल्यरूपमाह–शल हिंसायामित्यादि । अत्र शलधातोश्चौरादिकणिजन्तात् 'एरच्' ( पा. अ. ३।३।५६ ) इत्यचा 'शल' इति रूपं, तेन शलनं हिंसनं शलः; तथा च शलस्य हिंसाया निमित्तं संयोगो यस्य तत् शल्यम् । यत्प्रत्ययात् शल्यमिति रूपसिद्धिः । अस्य द्वयी प्रवृत्तिः; एका निरुक्त्या शल्यं सर्वव्याधीनाह, यदुक्तं—'यत्किंचिदाबाधकरं तत्सर्वं शल्यसंज्ञितम्' इति; अपरा तु रूढ्या शरादौ वर्तते । तत्र निरुक्त्यर्थमेव परिगृह्याह–तद्द्विविधमित्यादि ।' इति चक्रः । 'शलति 'शल' गतौ (भ्वा. ८४३ ) अघ्न्यादित्वात् ( उ. ४।११२ ) यः' इति अमरव्याख्यायां भानुदीक्षितः । 'शल' हिंसायां धातुः, तस्य यत्प्रत्ययस्य शल्यमिति रूपं भवति' इति ताडपत्रपुस्तके पाठः ।

१ 'इत्यतः शल्यशास्त्रमिति अस्मिन्शास्त्रे निरुक्त्यर्थमेव शल्यस्य गृहीत्वा सर्वाबाधविषयतया उपदेश इति भावः' इति चक्रः । २ 'तत्रेत्यादिना शारीरशल्यविवरणे दन्तनखरोमादीनामादौ ग्रहणं दन्तादिषु रूढ्यर्थशल्यशब्दस्यापि योगात् । तथाहि–दन्तश्चलितः शारीरं शल्यम्, अभ्यगात्रप्रविष्टं मुख्यं शल्यं च भवति; एवमुक्तरूढो नखः; तथा अक्षिप्रतिपक्ष्मरोम शारीरं शल्यम्; अन्यत्र शरीरप्रदेशे व्रणान्तर्गतं मुख्यं च शल्यमिति । अन्नं दुष्टं शल्यमेव आबाधकरत्वात् । धात्वादयोऽपि दुष्टाः शल्यम् । आगन्तुशल्योदाहरणे शारीरव्यतिरेकेणेति मानसशोकादिशल्यस्यापि ग्रहणार्थम्' इति चक्रः । ३ 'लोहमयेष्वेव' इति पा० ।

**त्वाल्लोहस्य; लोहानामपि दुर्वारत्वादणुमुखत्वाद्दूरप्रयोजनकरत्वाच्च शर एवाधिकृतः। स च द्विविधः कर्णी, श्लक्ष्णश्च; प्रायेण विविधवृक्षपत्रपुष्पफलतुल्याकृतयो व्याख्याताः, व्यालमृगपक्षिवक्त्रसदृशाश्च ॥ ७ ॥**

तत्रापि प्रसिद्धशल्यभेदान् दर्शयितुमाह—अधिकारो हीत्यादि। अधिकारो योग्यत्वं शल्यत्वेन लोहादिषु। लोहादिभिर्भयशब्दः प्रत्येकं संबध्यते। तेषां मध्ये लौहस्य प्राधान्यं दर्शयन्नाह–तत्रापीति; तेषामपि मध्ये। विशेषत अतिशयेन। लोहेष्वेवेति 'अधिकारः' इत्यनुवर्तते। कथं पुनर्लोहेष्वेवाधिकार इत्यत्र हेतुमाह—विशसनार्थोपपन्नत्वाल्लोहस्येति; मारणार्थयुक्तत्वाल्लोहस्येत्यर्थः। लोहेष्वपि कुन्तादिभेदेनानेकप्रकारेषु शरस्यैव प्राधान्यं दर्शयन्नाह—लोहानामित्यादि।—लोहानामपि कुन्तादीनामपि मध्य इत्यर्थः। शरः काण्डः, अधिकृत इति योग्य इत्यर्थः। अन्ये तु 'दुर्वारत्वात्' इत्यत्र 'निर्वाहित्वात्' इति पठन्ति, व्याख्यानयन्ति च—देशाद्देशान्तरप्रापणशीलत्वादित्यर्थः; अन्ये तु 'निर्वासित्वात्' इति पठन्ति, तत्रापि स एवार्थः। तस्य शरस्यापहरणोपयोगिभेदं दर्शयन्नाह—कर्णीत्यादि।—कर्णीति कर्णयुक्तः, श्लक्ष्णः अकर्ण इत्यर्थः। 'कर्णवान्' इत्यन्ये पठन्ति, तत्रापि स एवार्थः। तदाकृतीनामानन्त्येन दर्शयितुमशक्यत्वात् संक्षेपेण सदृशनानाविधवस्त्वाकृतिसारूप्येण दर्शयन्नाह—प्रायेणेत्यादि। प्रायेणेति बाहुल्येनेत्यर्थः। विविधवृक्षपत्राकृतयः पिप्पलपत्रकरवीरपत्राद्याकाराः, पुष्पाकृतयो मालतीकुमुदोत्पलपत्राद्याकाराः, फलाकृतय एलाद्याकाराः। स्थावरैराकृतिं प्रतिपाद्य जङ्गमैर्दर्शयन्नाह—व्यालवक्त्रसदृशाः; सिंहव्याघ्रादिमुखसदृशाः सर्पफणाकारा वा; मृगवक्त्रसदृशाः शृगालमार्जारादिमुखसमानाः; पक्षिवक्त्रसदृशाः काककङ्कादिवक्त्रसदृशाः ॥ ७ ॥

**सर्वशल्यानां तु महतामणूनां वा पञ्चविधो गतिविशेष ऊर्ध्वमधोऽर्वाचीनस्तिर्यगृजुरिति ॥ ८ ॥**

शराणामाहरणोपयोगिगतिभेदान् दर्शयितुमाह—सर्वशल्यानामित्यादि। तत्र, ऊर्ध्वगतिविशेषोऽधस्तादागतस्य शरस्य, अधोगतिविशेष उपरिष्टादागतस्य शरस्य, अर्वाचीनगतिविशेषः पश्चादागतस्य शरस्य, तिर्यग्गतिविशेषः पार्श्वाभ्यामागतस्य शरस्य, ऋजुगतिविशेषोऽग्रदेशादागतस्य शरस्य। अन्ये तु व्यत्ययेन पञ्चगतिपाठं पठन्ति, किंचिदन्यथा व्याख्यानयन्ति; तच्चास्माभिर्विस्तरभयान्न लिखितम्। अन्ये तु 'शरीरे सर्वशल्यानां' इत्यादिपाठं पठन्ति ॥ ८ ॥

**तानि वेगक्षयात् प्रतिघाताद्वा त्वगादिषु व्रणवस्तुष्ववतिष्ठन्ते, धमनीस्रोतोऽस्थिविवरपेशीप्रभृतिषु वा शरीरप्रदेशेषु ॥ ९ ॥**

यथा शल्यानि शरीरे स्थितिं कुर्वन्ति तथा हेतुं दर्शयन्नाह—तानीत्यादि। तानि शल्यानि मर्मावरणेषु सन्नाहादिषु प्रतिघाताद्वेगनिवृत्तेरित्यर्थः। त्वगादिष्वित्यत्रादिशब्दान्मांससिरास्नायुसन्धिकोष्ठास्थिमर्माणि गृह्यन्ते। अवतिष्ठन्त इति 'शल्यानि' इति शेषः। शल्यावस्थाने त्वगादिभ्योऽधिकमपि स्थानं संभवतीति पक्षान्तरमाह—धमनीत्यादि। धमन्यादिभिस्त्रिभिः सह विवरशब्दः प्रत्येकमभिसंबध्यते; विवरं छिद्रं, पेशी मांसखण्डः, वाशब्देन पक्षान्तरं सूचयति। शरीरप्रदेशेष्विति धमन्यादय एव शरीरप्रदेशास्तेष्वित्यर्थः। अवतिष्ठन्ते शल्यानीति संबध्यते ॥ ९ ॥

**तत्र शल्यलक्षणमुच्यमानमुपधारय। तद्द्विविधं—सामान्यं, वैशेषिकं च। श्यावं पिडकाचितं शोफवेदनावन्तं मुहुर्मुहुः शोणितास्राविणं बुद्बुदवदुन्नतं मृदुमांसं च व्रणं जानीयात् सशल्योऽयमिति; सामान्यमेतल्लक्षणमुक्तम्। वैशेषिकं तु—त्वग्गते विवर्णः शोफो भवत्यायतः कठिनश्च; मांसगते शोफाभि(ति)वृद्धिः शल्यमार्गानुपसंरोहः पीडनासहिष्णुता चोषपाकौ च; पेश्यन्तरस्थेऽप्येतदेव चोषशोफवर्जं; सिरागते सिराध्मानं सिराशूलं सिराशोफश्च; स्नायुगते स्नायुजालोत्क्षेपणं संरम्भश्चोग्रा रुक् च; स्रोतोगते स्रोतसां स्वकर्मगुणहानिः; धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छत्यङ्गमर्दः पिपासा हृल्लासश्च; अस्थिगते विविधवेदनाप्रादुर्भावः शोफश्च; अस्थिविवरगतेऽस्थिपूर्णताऽस्थिनिस्तोदः संहर्षो बलवांश्च; सन्धिगतेऽस्थिवच्चेष्टोपरमश्च; कोष्ठगत आटोपानाहौ मूत्रपुरीषाहारदर्शनं च व्रणमुखात्; मर्मगते मर्मविद्धवच्चेष्टते। सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यस्पष्टानि भवन्ति ॥ १० ॥**

त्वगादिशल्यानां लक्षणानि निर्दिशन्नाह—तत्रेत्यादि। तत्र तेषु त्वगादिष्वित्यर्थः। लक्षणं चिह्नम्। उपधारय शृणु। तत्र प्रथमं सामान्यलक्षणमाह—श्यावमित्यादि। पिडकाचितमिति

---

१ 'कर्णवान्' इति पा०। २ 'मुख्यशल्यशब्दविषयं चिकित्साभेदार्थं पृथक्कुर्वन्नाह–अधिकारो हीत्यादि' इति चक्रः। ३ 'निर्वाहित्वात् शरीरप्रवेशनीयत्वात्; 'निर्वासित्वात्' इति पाठान्तरे कालान्तरावस्थायित्वादित्यर्थः। दूरप्रयोजनकरत्वं दूरे स्थितेन धात्ववगाहकेन शरेण वेदनानिष्पादनादित्यर्थः' इति चक्रः। ४ 'फलाकृतय इति शरस्य अप्रवृद्धफलादिसादृश्यमित्यर्थः। व्यालमृगपक्षिमुखेत्यनेन उद्धृतदंष्ट्राकृतिता शरस्योच्यते' इति चक्रः। ५ 'शरीरे सर्वशल्यानां गतयः पञ्चधा स्मृताः। ऋज्वागतमवाचीनं तिर्यगूर्ध्वमधोगतम्' इति ताडपत्रपुस्तके पाठः।

१ 'तानि यदा वेगक्षयात्.........शरीरप्रदेशेषु, तत्र शल्यलक्षणमुच्यमानमुपधारय' इति हाराणचन्द्रसंमतः पाठः। प्रतिघातादिति अस्थ्यादिना वेगप्रतिबन्धात्; वेगक्षयस्तु स्वत एव। पेशीशब्देन पेश्योर्मध्यम्, अत एव व्रणवस्तुगृहीतमांसादस्य भेदः। प्रभृतिग्रहणात् सिराभ्यन्तरग्रहणम्।' इति चक्रः।

पिडकाव्याप्तम् । सामान्यमभिधाय वैशेषिकं लक्षणमाह—वैशेषिकमित्यादि । चोषः चूष्यत इव वेदनाविशेषः, पिपासेत्यन्ये । चोषशोफवर्जं पाकाभावात् । स्नायुगत इत्यादि । स्नायुजालोत्क्षेपणं स्नायुसमूहस्योर्ध्वं नयनं, संरम्भः श्वयथुः । स्रोतसां स्वकर्मगुणहानिरिति रसादिवहानां स्रोतसां रसादिवहनादिकर्म, गुणाः पुनरेषां वातादिवहानामरुणपीतसितरक्तादयो वर्णाः, तेषां हानिरित्यर्थः । धमनीस्थ इत्यादि । अङ्गमर्दः स्फुटनिका, हृल्लासः असकृत्ष्ठीवनम् । संहर्ष इति मारुतोपद्रवो रोमाञ्चप्रायो वेदनाविशेषः; 'संहर्षः संघटनम्' इत्यन्ये । चेष्टोपरमे इति आकुञ्चनप्रसारणादिहानिः । कोष्ठगत इत्यादि । आटोपः सतोदो वातसंक्षोभः, आनाहो वातमूत्रपुरीषादिनिरोधः । मर्मविद्धवच्चेष्टत इति सिरादिमर्मविद्धे यानि लिङ्गानि भवन्ति तानीत्यर्थः; चेष्टते चेष्टां कुरुते । स्थूलशल्यानां लक्षणमभिधाय सूक्ष्मशल्यलक्षणमाह—सूक्ष्मगतिष्वित्यादि । अस्पष्टानीति अस्फुटानीत्यर्थः ॥ १० ॥

**महान्त्यल्पानि वा शुद्धदेहानामनुलोमसन्निविष्टानि रोहन्ति, विशेषतः कण्ठस्रोतःसिरात्वक्पेश्यस्थिविवरेषु; दोषप्रकोपव्यायामाभिघाताजीर्णेभ्यः प्रचलितानि पुनर्बाधन्ते ॥ ११ ॥**

इदानीं शल्यप्रनष्टस्य हेतुं दर्शयन्नाह—महान्तीत्यादि । शुद्धदेहानामिति वाताद्यदूषितदेहानां पाकाभावाद्रोहन्तीत्यर्थः । अनुलोमसन्निविष्टानीति रोममानुकूल्येन प्रविष्टानीत्यर्थः । विशेषत इत्यतिशयेन, कण्ठादिषु प्रविष्टानि शल्यानि 'रोहन्ति' इति शेषः । केचित् 'महान्ति' इत्यत्र स्थाने 'मृदून्यल्पानि' इति पाठं पठन्ति । यदि रूढान्यप्यदोषकराणि तत् किं तेषां विज्ञानेनाहरणेन चेत्याह—दोषप्रकोपेत्यादि ॥ ११ ॥

**तत्र, त्वक्प्रनष्टे स्निग्धस्विन्नायां मृन्माषयवगोधूमगोमयमृदितायां त्वचि यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्, स्त्यानघृतमृच्चन्दनकल्कैर्वा प्रदिग्धायां शल्योष्मणाऽऽशु विसरति घृतमुपशुष्यति चालेपो यत्र तत्र शल्यं विजानीयात्; मांसप्रनष्टे स्नेहस्वेदादिभिः क्रियाविशेषैरविरुद्धैरातुरमुपपादयेत्, कर्शितस्य तु शिथिलीभूतमनवबद्धं क्षुभ्यमाणं यत्र संरम्भं वेदनां वा जनयति तत्र शल्यं विजानीयात्; कोष्ठास्थिसन्धिपेशीविवरेष्ववस्थितमेवमेव परीक्षेत; सिराधमनीस्रोतःस्नायुप्रनष्टे खण्डचक्रसंयुक्ते याने व्याधितमारोप्याशु विषमेऽध्वनि यायात्, यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्; अस्थिप्रनष्टे स्नेहस्वेदोपपन्नान्यस्थीनि बन्धनपीडनाभ्यां भृशमुपाचरेत्, यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्, सन्धिप्रनष्टे स्नेहस्वेदोपपन्नान् सन्धीन् प्रसरणाकुञ्चनबन्धनपीडनैर्भृशमुपाचरेत्; यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्, मर्मप्रनष्टे त्वनन्यभावान्मर्मणामुक्तं परीक्षणं भवति ॥ १२ ॥**

त्वगादिप्रविष्टानां विज्ञानोपायं दर्शयन्नाह—तत्रेत्यादि । संरम्भो रागशोथाभिसंभवः । आशु विसरतीति शीघ्रं विलीयते । मांसेत्यादि । क्रियाविशेषैः सहातुरमुपपादयेत् योजयेदित्यर्थः । कर्शितस्य आतुरस्येत्यर्थः । शिथिलीभूतमनवबद्धं क्षुभ्यमाणं 'शल्यं' इति शेषः, क्षुभ्यमाणमिति चलदित्यर्थः । एवमेवेति पूर्वोक्तन्यायेनेत्यर्थः । खण्डचक्रसंयुक्ते यान इति खण्डितचक्रसमन्विते रथ इत्यर्थः । आरोप्येति आरोह्येत्यर्थः, विषमेऽध्वनि निम्नोन्नतमार्गे इत्यर्थः । स्नेहस्वेदोपपन्नानि स्नेहस्वेदयुक्तानीत्यर्थः । मर्मप्रनष्टे इत्यादि मर्माणि त्वगादिष्वष्टसु व्रणवस्तुष्वेव भवन्ति नान्यत्र भवन्तीत्यनन्यभावान्मर्मणां प्रनष्टशल्ये त्वगाद्युक्तमेव परीक्षणं कर्तव्यमित्यर्थः ॥ १२ ॥

**सामान्यलक्षणमपि च हस्तिस्कन्धाश्वपृष्ठपर्वतद्रुमारोहणधनुर्व्यायामद्रुतयाननियुद्धाध्वगमनलङ्घनप्लवनप्रतरणव्यायामैर्जृम्भोद्गारकासक्षवथुष्ठीवनहसनप्राणायामैर्वातमूत्रपुरीषशुक्रोत्सर्गैर्वा यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात् ॥ १३ ॥**

सामान्यविज्ञानोपायमपि दर्शयन्नाह—सामान्यलक्षणमित्यादि । अष्टस्वपि त्वगादिव्रणवस्तुष्ववस्थितशल्यस्य लक्षणं सामान्यलक्षणम् । हस्तिस्कन्धादिभिः सहारोहणशब्दः प्रत्येकं संबध्यते । धनुर्व्यायाम इति धनुराकर्षणजनितश्रमः, द्रुतयानमिति शीघ्रगमनं, नियुद्धं बाहुयुद्धं, लङ्घनमिति कुब्यादीनामुल्लङ्घ्यातिक्रमणं, प्लवनम् उत्पतनं, प्रतरणं नद्यादौ, व्यायामः शरीरायासजनकं कर्म । जृम्भेति पीतैकमारुतोच्छ्वासस्य व्यात्तमुखेन परिमोक्षणम्, उद्गारेति उद्गतस्य वायोरुद्गिरणमुद्गारः, कासेति दोषदुष्टोदानानुगतप्राणवायोर्निर्गमनं भिन्नकांस्यध्वनिकं कासः, क्षवथुरिति ऊर्ध्वस्रोतोऽवस्थितप्राणोदानयोराकुलितयोर्नासाविवरतो निर्गमनं क्षवथुः, ष्ठीवनं कफादेस्थूत्करणं, हसनं हासो विकृताङ्गवचःकृत्यजातस्य हास्यरसस्य स्थायीभावोऽङ्गकपोलनासौष्ठस्पन्दनलक्षणः, प्राणायामेति प्राणवायोरायमनमवरोधनं प्राणायामः, उत्सर्गशब्दो वातादिभिः सह प्रत्येकं संबध्यते, उत्सर्गः प्रमोचनम् । केचिद् 'यत्र संरम्भो वेदना वा' इत्यत्र स्थाने 'उत्सर्गैर्वा यत्र तोदादयस्तत्र शल्यं विजानीयात्' इति पाठं पठन्ति, व्याख्यानयन्ति च—आदिशब्दात् पाकरागशोथादयः । श्यावं पिडकाचितमित्यादीनि पूर्वोक्तसामान्यलक्षणानि सन्निकृष्टानि; एतानि पुनर्हस्तिस्कन्धारोहणादीनि विप्रकृष्टानि, यत एतैरेव श्यावं पिडकाचितमित्यादि लक्षयितव्यम्; इत्यनयोः सामान्यलक्षणपाठयोर्न पौनरुक्त्यम् ॥ १३ ॥

१ 'चेष्टोपरमश्चलसन्धिषु ज्ञेयः' इति चक्रः । २ 'कालान्तरकोपे हेतुमाह—दोषेत्यादि । एतदेव च कालान्तरकोपित्वमन्विष्याहरणे इह वक्तव्ये कारणं ज्ञेयम्' इति चक्रः ।

भवन्ति चात्र—

यस्मिंस्तोदादयो देशे सुप्तता गुरुताऽपि च ॥
घट्टते बहुशो यत्र शूयते रुज्यतेऽपि च ॥ १४ ॥
आतुरश्चापि यं देशमभीक्ष्णं परिरक्षति ॥
संवाह्यमानो बहुशस्तत्र शल्यं विनिर्दिशेत् ॥१५॥

प्रनष्टशल्यविज्ञानोपायमुद्दिश्यापराण्यपि राजर्षिः पुनर्लिङ्गानि निश्चयार्थमाह—यस्मिन्नित्यादि । यस्मिन् देशे शरीरावयवे । तोदादयो 'भवन्ति' इत्यध्याहारः । आदिग्रहणाद् रागपाकादयः । सुप्तता स्पर्शनानभिज्ञत्वम् । घट्टते बहुशो यत्रेति यस्मिन् प्रदेशे बहुशो वारंवारं पुरुषः स्वयमेव घट्टते चालयति । तुद्यतेऽपि चेत्यत्र पीडाया अतिशयख्यापनं न पुनरुक्तिः । आतुरश्चापि यं देशमित्यादि आतुरो यं देशमभीक्ष्णमनवरतं रक्षति, किंविशिष्टः? संवाह्यमानो मृद्यमानः, कथं? बहुशो वारंवारम्; एतेन यदा यदाऽऽतुरो मृद्यते तदा तदा तं देशं रक्षतीत्यर्थः ॥ १४ ॥ १५ ॥

अल्पाबाधमशूनं च नीरुजं निरुपद्रवम् ॥
प्रसन्नं मृदुपर्यन्तं निराघट्टमनुन्नतम् ॥ १६ ॥
एषण्या सर्वतो दृष्ट्वा यथामार्गं चिकित्सकः ॥
प्रसाराकुञ्चनान्नूनं निःशल्यमिति निर्दिशेत् १७

निःशल्यस्य लक्षणं दर्शयन्नाह—अल्पाबाधमित्यादि । अल्पाबाधम् अल्पदुःखम् । नीरुजं निर्गतशूलादिवेदनम् । मृदुपर्यन्तं मृद्वन्तम् । निराघट्टं निश्चलम् । एषण्येत्यादि । चिकित्सको वैद्यः, निःशल्यमिति निर्दिशेत् कथयेत्; किं कृत्वा? दृष्ट्वा, कया एषण्या लोहादिशलाकया, सर्वतः सर्वत्र, कथं? यथामार्गं मार्गानतिक्रमेण; कथं कथयेत् नूनं निश्चितं, कस्मात्? प्रसारणादाकुञ्चनाच्च अल्पाऽपि यदि बाधा न भवतीत्यर्थः । 'अल्पबाधं' इत्यत्र 'अल्पतापं' इत्यन्ये पठन्ति, । केचित् 'अनुन्नतम्' इति न पठन्ति, अशूनमित्यनेनैव गतार्थत्वात् ॥ १६ ॥ १७ ॥

अस्थ्यात्मकं भज्यते तु शल्यमन्तश्च शीर्यते ॥
प्रायो निर्भुज्यते शार्ङ्गमायसं चेति निश्चयः १८

आहरणोपयोगिनीं हेतुभेदेनान्तःस्थशल्यावस्थां दर्शयन्नाह—अस्थ्यात्मकमित्यादि । अस्थ्यात्मकम् अस्थिजं; भज्यत इति स्वयं द्विधा त्रिधा वा भवतीत्यर्थः । एतेनैवास्याहरणेऽवयवान्तरं विचार्याहरणं कर्तव्यमित्यभिप्रायः । शीर्यते इति शटतीत्यर्थः । ननु, 'केशास्थिवेणुदारूपलानि तु न विशीर्यन्त' इत्यग्रे वक्ष्यति, अत्र तु 'अन्तश्च शीर्यते' इति कथयति, तत्कथं न विरोधः? उच्यते—अन्तश्च शीर्यत इति चकारो विषयभेदप्रतिपादनार्थः; तेन केषांचिदेवास्थ्नां शीर्णत्वं न सर्वेषामिति नास्ति विरोधः । निर्भुज्यत इति कुटिलीभवति । शार्ङ्गमिति शृङ्गमयम् । आयसं चेति लोहमयमपि निर्भुज्यत इत्यर्थः ॥ १८ ॥

वार्क्षवैणवतार्णानि निर्ह्रियन्ते तु नो यदि ॥
पचन्ति रक्तं मांसं च क्षिप्रमेतानि देहिनाम् १९.

वार्क्षादीनां विशल्यघ्ने मर्मणि पाकात् स्वयं पतितानामवश्यमनिर्हरणीयत्वं दर्शयन्नाह—वार्क्षेत्यादि ।—वार्क्षं वृक्षमयं, वैणवं वेणुमयं, तार्णं तृणमयम् । निर्ह्रियन्ते तु नो यदीति अनिर्हरणं च विशल्यप्राणहरप्रदेशे बोद्धव्यम् । पचन्ति रक्तं मांसं चेत्यादिना वार्क्षादीनि शल्यानि पाकात् स्वयं पतन्तीत्युक्तं भवति ॥ १९ ॥

कानकं राजतं ताम्रं रैत्तिकं त्रपुसीसकम् ॥
चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात् ॥२०॥

विशल्यप्राणहरादिषु प्रदेशेषु कानकादीनामनाहरणेऽदोषं दर्शयन्नाह—कानकमित्यादि । रैतिकमिति रीतिः पित्तलभेदः, तन्मयं रैतिकम् । केचिदत्र 'रैतिकं' इति पदं विहाय 'कृष्णायस्त्रपुसीसकम्' इति पठन्ति ॥ २० ॥

स्वभावशीता मृदवो ये चान्येऽपीदृशा मताः ॥
द्रवीभूताः शरीरेऽस्मिन्नेकत्वं यान्ति धातुभिः

अन्येषामपि कांस्यप्रभृतीनां कानकादिधर्मं दर्शयन्नाह—स्वभावेत्यादि ॥ २१ ॥

विषाणदन्तकेशास्थिवेणुदारूपलानि तु ॥
शल्यानि न विशीर्यन्ते शरीरे मृन्मयानि च २२

अपरेषां चिरकालसंस्थितावपि न शरीरधातुभिरेकत्वमिति दर्शयन्नाह—विषाणेत्यादि ।—विषाणं शृङ्गं, दारु काष्ठम्, उपलः पाषाणः । न विशीर्यन्त इति न शटन्तीत्यर्थः । मृन्मयानि मृत्तिकामयानि ॥ २२ ॥

द्विविधं पञ्चगतिमत्त्वगादिव्रणवस्तुषु ॥
यो वेत्ति विहितं शल्यं स राज्ञः कर्तुमर्हति २३

इति सुश्रुतसंहितायां सूत्रस्थाने प्रनष्टशल्यविज्ञानीयो नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥

अध्यायपिण्डार्थज्ञानेन वैद्यस्तुतिं दर्शयन्नाह—द्विविधमित्यादि ।—द्विविधं द्विप्रकारं कर्णि श्लक्ष्णश्चेति; अन्ये शारीरागन्तुभेदेन द्वैविध्यं मन्यन्ते । पञ्चगतिमदिति ऊर्ध्वाधोऽर्वाचीनतिर्यगृजुगतिकम् । त्वगादिव्रणवस्तुष्विति त्वगादिव्रणवस्तुष्वष्टासु

१ 'घट्टिते' इति पा० । २ 'विदार्याहरणं' इति पा० । ३ 'शीर्यते कणशः स्फुट्यते' इति हाराणचन्द्रः । 'भिद्यत इति विदीर्णं भवति, शीर्यते इति नैकावयवं भवति । यत्तु विषाणेत्यादि अस्थ्यात्मकं न विशीर्यते इति वक्तव्यं, तत्र क्षयं न यातीत्यर्थभेदान्न विरोधः । निर्भुज्यत इति कुब्जं भवति इति' चक्रः ।

१ 'पतनार्थं' इति पा० । २ 'पित्ततेजः जठराग्निरूपपित्ततेजःसहकृतो देहोष्मा' इति चक्रः । ३ 'अनेन च नष्टशल्यावस्थाकथनेन अस्थ्यात्मकमवयवान्तरमन्विष्याहर्तव्यं, शार्ङ्गादि हठात्कृत्वा हर्तव्यं, वार्क्षादि शीघ्रमाहर्तव्यं, कानकादीनां प्रमादभयादनाहरणेऽपि न दोष इति प्रयोजनमुक्तम्' इति चक्रः । ४ 'पञ्चगतिकं' इति पा० ।

विष्ठितं विविधप्रकारं स्थितम् । राजग्रहणं प्रधानसंग्रहार्थम् । कर्तुमिति प्रतीकारं कर्तुमित्यर्थः, अर्हति योग्यो भवति । 'यो वेत्त्यधिष्ठितं शल्यं' इति केचित् पठन्ति ॥ २३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने षड्विंशतितमोऽध्यायः ॥ २६ ॥

---

## सप्तविंशतितमोऽध्यायः ।

**अथातः शल्यापनयनीयमध्यायं व्याख्यास्यामः ॥१॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**शल्यं द्विविधमवबद्धमनवबद्धं च ॥ ३ ॥**

अवबद्धमनवबद्धं चेति तत्रावबद्धं विशेषेणाऽऽसक्तम्; अन्ये तु "अस्थ्यादिप्रविष्टमवबद्धम्, इतरदनवबद्धम्" इति मन्यन्ते ॥ १-३ ॥

**तत्र समासेनानवबद्धशल्योद्धरणार्थं पञ्चदश हेतून् वक्ष्यामः । तद्यथा—स्वभावः, पाचनं, भेदनं, दारणं, पीडनं, प्रमार्जनं, निर्ध्मापनं, वमनं, विरेचनं, प्रक्षालनं, प्रतिमर्शः, प्रवाहणम्, आचूषणम्, अयस्कान्तो, हर्षश्चेति ॥ ४ ॥**

तत्रानवबद्धस्यैव प्रथममङ्गीकृतस्य परिसंख्याय हेतून् परिहरणे दर्शयन्नाह—तत्रेत्यादि । तत्रेति तयोर्मध्ये । स्वभावः प्रकृतिः; पाचनमिति अपक्वशल्यस्य पाचनद्रव्यैः पाकविधानं; भेदनमिति वृद्धिपत्रादिभिः शस्त्रैः स्फोटनं; दारणमिति चिरबिल्वादिभिर्मिश्रकोक्तैरौषधैर्विदारणं; पीडनमिति 'द्रव्याणां पिच्छिलानां' ( सू. अ. ३७ ) इत्यादिमिश्रकोक्तैर्द्रव्यैः कृत्वा पीड्यते यत्; प्रमार्जनमिति बालवस्त्रादिभिः प्रोञ्छनं; निर्ध्मापनमिति प्रधमनम्, एतदुक्तं भवति पिप्पलीकट्फलादिचूर्णस्य नाड्या नासान्तःप्रापणं; प्रतिमर्शः अङ्गुल्यादिघर्षणं; प्रवाहणं वि(नि)कुन्थनम्; आचूषणं मुखशृङ्गैः कृत्वा यच्चूष्यते; अयस्कान्तः पाषाणविशेषः, यद्यप्ययस्कान्त इति सामान्येनोपात्तस्तथाऽप्यत्र कर्षको ग्राह्यः; हर्षस्तुष्टिः ॥ ४ ॥

**तत्राश्रुक्षवथूद्गारकासमूत्रपुरीषानिलैः स्वभावबलप्रवृत्तैर्नयनादिभ्यः पतति । मांसावगाढं शल्यमविदह्यमानं पाचयित्वा प्रकोथात्तस्य पूयशोणितवेगाद्गौरवाद्वा पतति । पक्वमभिद्यमानं भेदयेद्दारयेद्वा । भिन्नमनिरस्यमानं पीडनीयैः पीडयेत् पाणिभिर्वा । अणून्यक्षशल्यानि परिषेचनाध्मापनैर्बालवस्त्रपाणिभिः प्रमार्जयेत् । आहारशेषश्लेष्महीनाणुशल्यानि श्वसनोत्कासनप्रधमनैर्निर्धमेत् । अन्नशल्यानि वमनाङ्गुलिप्रतिमर्शप्रभृतिभिः । विरेचनैः पक्वाशयगतानि । व्रणदोषाशयगतानि प्रक्षालनैः । वातमूत्रपुरीषगर्भसङ्गेषु प्रवाहणमुक्तम् । मारुतोदकरसविषरुधिरदुष्टस्तन्येष्वाचूषणमास्येन विषाणैर्वा । अनुलोममनवबद्धमकर्णमनल्पव्रणमुखमयस्कान्तेन । हृद्यवस्थितमनेककारणोत्पन्नं शोकशल्यं हर्षेणेति ॥ ५ ॥**

स्वभावादिहेतोर्विषयमाह—तत्राश्रुक्षवथूद्गारेत्यादि । तत्र तेषां पञ्चदशानां मध्ये । एतैरश्रुप्रभृतिभिः स्वभावबलं स्वभावशक्तिः, ततः प्रवृत्तैरागतैर्हेतुभिर्नयनादिभ्यः शरीरप्रदेशेभ्यो रजःप्रभृति शल्यं पततीत्यर्थः । पाचनविषयमाह—मांसावगाढमित्यादि । अवगाढम् अभ्यन्तरगतम् । अविदह्यमानम् अपच्यमानम् । प्रकोथात्तस्येति पूतिभावान्मांसस्येत्यर्थः । भेदनदारणयोर्विषयमाह—पक्वमित्यादि । पीडनविषयमाह—भिन्नमित्यादि । अनिरस्यमानम् अनिष्क्रामन्तम् । प्रमार्जनविषयमाह—अणूनीत्यादि । अक्षाणि इन्द्रियाणि । परिषेचनं धाराभिषेचनम् । आध्मापनम् अक्षिषु मुखमारुतस्य प्रापणम् । निर्ध्मापनविषयमाह—आहारशेषेत्यादि ।—भुञ्जानस्य नासान्तरादिस्थितमन्नमाहारशेषः । हीनानां पतितानां भ्रष्टानां शल्यानामल्पावयवा हीनाणुशल्यान्युच्यन्ते । श्वसनं श्वासः, उत्कास उत्कृष्टं कासनम् । निर्धमेत् निष्कासयेत् । वमनप्रतिमर्शयोर्विषयमाह—अन्नशल्यानीत्यादि । अन्नशल्यं वमनेन पतति, अङ्गुलिप्रतिमर्शेन च; अङ्गुलिप्रतिमर्शः अङ्गुल्यादिघर्षणम् । विरेचनविषयं दर्शयन्नाह—विरेचनैः पक्वाशयगतानीति ।—पक्वाशयगतानि 'शल्यानि' इति शेषः । प्रक्षालनविषयमाह—व्रणेत्यादि । व्रणदोषः पूयः, स एव शल्यं, व्रणाशयगतान्यन्यान्यपि शल्यानीत्यर्थः । प्रवाहणविषयमाह—वातेत्यादि । सङ्गः अप्रवृत्तिः । चूषणविषयमाह—मारुतेत्यादि । अयस्कान्तविषयमाह—अनुलोममित्यादि । हर्षविषयमाह—हृद्यवस्थितमित्यादि । केचिदनवबद्धशल्यहरणमध्ये भेदनदारणपीडनवमनविरेचन-

---

१ 'पूर्वाध्यायोक्तविधिना ज्ञातस्य शल्यस्य निर्हरणार्थं शल्यापनयनीयोऽभिधीयते' इति चक्रः । २ 'अस्थ्यादिखदष्टं' इति पा० । ३ ताडपत्रपुस्तके 'नव हेतून् वक्ष्यामः' इति पठ्यते, तत्र भेदनदारणपीडनवमनविरेचनप्रक्षालनानि न पठ्यन्ते । एषां व्याख्यानग्रन्थे ( ५ सूत्रे )ऽपि भेदनदारणपीडनवमनविरेचनप्रक्षालनानां व्याख्यानं न पठ्यते ताडपत्रपुस्तके । 'भेदनदारणपीडनवमनविरेचनप्रक्षालनानि प्रतिक्षिप्यावशिष्टानि ये पठन्ति तेषां भेदनदारणे पाचनोत्तरकर्मतया पाचने, पीडनं प्रमार्जने, वमनं प्रतिमर्शे, विरेचनं प्रवाहणं प्रक्षालनं च परिषेके( प्रमार्जने )ऽन्तर्भावनीयम्' इति चक्रः ।

१ 'अक्षिशल्यानि अक्षिगतशल्यानि । प्रवाहणम् अधःप्रेरणम्' इति चक्रः । २ 'परिषेचनोपधमनैः' इति ताडपत्रपुस्तके पाठः । ३ 'आहारशेषं कण्ठगतं श्लेष्मसिङ्घाणकं निश्वासोत्कासनाभ्यां निर्धमेत्, एतन्निर्धमनं नाम । अन्नशल्यानि वमनाङ्गुलिस्पर्शनप्रभृतिभिः प्रमृज्योद्धरेत्, एष प्रतिमर्शो नाम' इति ताडपत्रपुस्तके पाठः । ४ 'विरेचनैर्वा प्रवाहणेनोद्धरेत्, एतत्प्रवाहणं नाम' इति ताडपत्रपुस्तके पाठः ।

प्रक्षालनानि न मन्यन्ते, तेषां मते भेदनदारणयोरवबद्धशल्यविषयत्वं, पीडनादीनां चतुर्णां यथासंभवमुक्तेष्वेवान्तर्भावः ॥५॥

**सर्वशल्यानां तु महतामणूनां वा द्वावेवाहरणहेतू भवतः—प्रतिलोमोऽनुलोमश्च ॥ ६ ॥**

पञ्चगतीनां शल्यानामपि सर्वेषाममार्गमार्गभेदेन द्विविधमाहरणं दर्शयन्नाह—सर्वशल्यानामित्यादि । प्रवेशमार्गेणैवाहरणं प्रतिलोमं, तद्विपरीतं चानुलोमम् ॥ ६ ॥

**तत्र प्रतिलोममर्वाचीनमानयेत्, अनुलोमं पराचीनम् ॥ ७ ॥**

प्रतिलोमानुलोमाहरणयोर्विषयमाह—तत्रेत्यादि । तत्रेति तयोर्मध्ये । अर्वाचीनमिति नातिदूरप्रवेशात्, निविष्टशल्यद्वारापेक्षया कायस्य पूर्वार्धस्थितं शल्यमर्वाचीनमुच्यते । तत्तु शल्यं प्रतिलोममानयेत् । कोऽर्थः ? पाश्चात्येऽर्वाचीनदेशे आनयेत्, प्रवेशमार्गेणैवानयेत्; अनुलोमेन परार्धेन निर्ह्रियमाणमविद्धमपि बहुतरं प्रदेशं वेधयेत्; तत्र मरणमुपद्रवा वा भवन्ति । अनुलोममित्यादि । पराचीनमिति दूरप्रविष्टं; कायस्य परार्धनिर्गतं

१ 'यथा शल्यं प्रविष्टं तेनाह्रियमाणं प्रतिलोमं, परामुखेनाह्रियमाणमनुलोमम् । प्रतिलोमविषयोऽर्वाचीनं नातिदूरप्रविष्टं, तत्प्रवेशमार्गेणैवाहरणीयम्, एवं च प्रतिलोमाहरणं भवति । पराचीनं तु परानिर्गतमुखं तन्मुखेनैवाहर्तव्यं, तथा चानुलोमं भवति, तस्य पुनः प्रवेशमार्गेणानयनेन स्थूलशल्याग्रेण पुनर्बहुदेशघट्टनं भवतीत्यभिप्रायः । अनिर्गतमुखमपि यथाऽनुलोमं पराचीनमाह्रियते तदाह—उत्तुण्डितमित्यादि । छेदनीयमुखं छेदनार्हदेशमुखम् । एतच्च छेदयित्वाऽऽहरणं कर्णवतः शल्यस्य ज्ञेयम् । तद्धि प्रवेशमार्गेणाह्रियमाणं बहुशरीरप्रदेशं कर्णावष्टब्धं हिनस्ति, तेन पराग्भागमेव स्तोकं छेदयित्वा निर्ह्रियते, तेन कर्णवतः शल्यस्याल्पोपघातेन निर्गमो भवति । यानि स्वकर्णवन्ति परानिर्गतमुखानि तानि छेदनीयमुखान्यपि प्रवेशमार्गेणैव प्रतिलोमं हर्तव्यानि' इति चक्रः । २ 'नह्यर्वाचीनं नामोत्तुण्डितं क्वचिदपि प्रतिलोममाहर्तुं युज्यते, नापि चातिदीर्घं तदनुलोमं छेदानुबन्धेन संघर्षप्रकर्षेण चाशङ्कितत्वात्, तदिदमुच्यते उत्तुण्डितमिति । उत्तुण्डितमुद्गतकण्टकाञ्चितमुखं, छिद्यतेऽनेनेति कुल्यस्युटोर्बाहुल्याच्छेदनीयं धारा मुखे यस्येति छेदनीयमुखं, तादृशादर्वाचीनं शल्यं छित्त्वा निर्घातयेदानुलोम्येनाहरणार्थं पराचीनं कर्तुमिति शेषः । अत्र छित्त्वेति शल्यदैर्घ्यपरिणाहसंघर्षकृतोपतापशङ्काजिहासार्थमिदं छेदनं तावत्यंशे कर्तव्यं यावत्यंशे छिन्ने सुखं शल्यं पराचीनं भवितुमर्हतीति सुधियो मन्यन्ते । न च विधिरयं सर्वत्र सांप्रतं भवतीत्यत आह–छेदनीयेत्यादि । अपिशब्दः पूर्वपक्षव्यावृत्त्यर्थः । हस्तशक्यमिति क्रियाविशेषणं; कुक्ष्याद्यन्तरपतितानि कुक्ष्यादिमध्यपतितानि कुक्ष्यादिष्वर्वाचीनानीति यावत्, चकारादुत्तुण्डितानि शल्यानि छेदनीयमुखानि धारामुखान्यपि, यथामार्गं प्रतिलोमं हस्तेनैवापहर्तुं यतेतेति समन्वयः' इति **हाराणचन्द्रः** । 'अपनयेत्' इति पा० ।

शल्यमुच्यते । तच्छल्यमनुलोममानयेत् । कोऽर्थः ? अग्रेतने पराचीने प्रदेशे आनयेत् ॥ ७ ॥

**उत्तुण्डितं छित्त्वा निर्घातयेच्छेदनीयमुखम् ॥ ८ ॥**

यदा त्वनतिवेगाच्छल्यमग्रेतनप्रदेशेन निर्गतमुत्तुण्डितमुखं च भवति तदा तस्य शल्यस्य छेदनीयमुखस्य छेद्यप्रदेशजटितस्य पराचीनानुलोमहरणे कीदृशं विधानमिति दर्शयन्नाह—उत्तुण्डितमित्यादि । उत्तुण्डितमूर्ध्वं निःसरन्मुखमिव । निर्घातयेदिति इतस्ततश्चालयेद्धस्तेन मुद्गरादिना वा; ततश्चानुलोममाहरेत् । छेदनीयमुखमिति कण्टकखर्जूरीपत्रप्रभृतिकम्, एतेनोत्तुण्डितं छेदनीयमुखं परान्निर्गतमुखं छेद्यप्रदेशजटितं च शल्यं पराचीनानुलोमाहरणविषय इत्युक्तं भवति ॥ ८ ॥

**छेदनीयमुखान्यपि कुक्षिवक्षःकक्षावंक्षणपर्शुकान्तरपतितानि च हस्तशक्यं यथामार्गेण हस्तेनैवापहर्तुं प्रयतेत ॥ ९ ॥**

किं छेदनीयमुखस्य सर्वत्रायं विधिर्नेत्याह—छेदनीयेत्यादि । वक्ष इति हृदयम् । हस्तेनाहर्तुं यच्छक्यते शल्यं तत् हस्तशक्यम् । यथामार्गेणेति प्रवेशमार्गेणेत्यर्थः । हस्तेनैवेति हस्तेनैवोद्धरेत्, न कदाचिन्मुद्गरादिभिश्चालयेत् । प्रयतेत प्रयत्नं कुर्वीत । अन्ये तु 'अच्छेदनीयमुखानि तु' इत्यादि पाठं पठन्ति, व्याख्यानयन्ति च—न केवलमनुत्तुण्डितान्यनिर्घात्यमुखान्यपीति समुच्चीयते तुशब्देन, तानि कुक्ष्यादिपतितानि सर्वाण्येवाच्छेद्यत्वादनिर्घात्याहरणीयानि । एतेनैतदुक्तं भवति–पराचीनानामपि शल्यानामनुलोममाहरणीयानामपि प्रतिलोममेवाहरणं कर्तव्यम्, अनुलोमाहरणे कुक्ष्यादिषु महान् छेदानुबन्धो भवेत् । पर्शुकान्तरपतितानि चेत्यस्याग्रे, "अनुत्तुण्डितशल्यानि छेदनीयमुखानि च । अनिर्घात्यानि जानीयाद्भूयश्छेदानुबन्धतः"—इति **भोजसंहितोक्तं** केचित् पाठं पठन्ति, स च प्रमादपाठः, निबन्धेष्वदर्शनात् ॥ ९ ॥

**हस्तेनैवापहर्तुमशक्यं विशस्य शस्त्रेण यन्त्रेणापहरेत् ॥ १० ॥**

१ 'उत्तुण्डितं शल्यं बुद्बुदवदभिमुखीभूतम्' इति अरुणदत्तः । २ 'कर्णवतोऽप्यच्छेद्यमुखस्य प्रतिलोमं प्रवेशमार्गेणैवाहरणमाह–अच्छेदनीयमुखान्यपीत्यादि । एतेषां मुखच्छेदे महती व्यापन्मरणं वा भवति । तेन प्रवेशमार्गेणैव कर्णमर्दनं कृत्वा यन्त्रेण वा कर्णं यन्त्रयित्वा छेदनीयं; प्रच्छेदनं च कृत्वा प्रतिलोममेव हरणमत्रेत्यर्थः' इति चक्रः । ३ '"छेदनिर्घात्याहरणीयानि' इति पा० । ४ 'शल्यापहरणं हस्तेनैव यथायोग्यतया प्रायः कर्तव्यं, तेनाशक्ये यन्त्रेणेत्याह–हस्तेनेत्यादि । विशस्येति यन्त्रप्रवेशनिरोधकं प्रदेशं शस्त्रेण छित्त्वा' इति चक्रः । ५ 'विमृष्य शस्त्रेण वा' इति पा० । ६ 'अथाहरेत् करप्राप्यं करेणैवेतरत् पुनः । दृश्यं सिंहाहिमकरर्क्षकर्कटकाननैः ॥ अदृश्यं व्रणसंस्थानाद्ग्रहीतुं शक्यते यतः । कङ्कभृङ्गाह्वकुररशरारिवायसाननैः ॥ संदंशाभ्यां त्वगादिस्थं तालाभ्यां सुषिरं हरेत् । सुषिरस्थं तु नलकैः शेषं शेषैर्यथायथम्' ( वाग्भट. सू. अ. २८ ) ॥

हस्तेनापहर्तुमशक्ये शल्ये किं विधानमिति दर्शयति—हस्तेनेत्यादि । विशस्य छित्त्वा शस्त्रेणेत्यर्थः । केचित् 'हस्तेन चाहर्तुमशक्ये अविशस्य यन्त्रेणापहरेत्' इति पाठं मन्यन्ते । तेषां मते अविशस्य अच्छित्त्वेत्यर्थः, हस्तेन चेति चकारेण यन्त्राहरणाशक्यस्य शल्यस्य विशस्येत्युपलभ्यते ॥ १० ॥

**भवति चात्र—**

**शीतलेन जलेनैनं मूर्च्छन्तमवसेचयेत् ॥**
**संरक्षेदस्य[1] मर्माणि मुहुराश्वासयेच्च तम् ॥ ११ ॥**

शल्याहरणे उपद्रवचिकित्सासूत्रं निर्दिशन्नाह—शीतलेनेत्यादि । एनमिति शल्यातुरम् । अवसेचयेदिति सिञ्चेदित्यर्थः । आश्वासयेदिति क्षीरतर्पणादिदानेन । बाहुल्येनामुं पाठं केचिन्न पठन्ति । **गयदासेन** तु पठित्वाऽयं पाठोऽत्रान्तरे व्याख्यातः, युक्तश्चायं, तस्मात् पठनीय एव ॥ ११ ॥

**ततः शल्यमुद्धृत्य निर्लोहितं व्रणं कृत्वा स्वेदार्ह[2]मग्निघृतप्रभृतिभिः संस्वेद्यावदह्य प्रदिह्य सर्पिर्मधुभ्यां बद्ध्वाऽऽचारिकमुपदिशेत् । ( सिरास्नायुविलग्नं शलाकादिभिर्विमोच्यापनयेत्; श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं; दुर्बलवारङ्गं कुशादिभिर्बद्ध्वा । ) ॥ १२ ॥**

हृते शल्ये पश्चात्कर्म दर्शयन्नाह—तत इत्यादि । निर्लोहितमिति अरुधिरवन्तम्[3] । संस्वेद्येति अतिनिःस्रुतशोणितमवेदनं सुखोष्णेन घृतेन, तदितरमग्निना संस्वेद्येति संबन्धः । अवदह्येति अग्निकृत्यान् व्रणान् दग्ध्वेत्यर्थः । प्रदिह्येति लेपयित्वा, अस्वेद्यमतिस्रुतशोणितं च । अत्र केचित् 'अवदह्य' इति न पठन्ति, 'प्रदिह्य' इत्यस्य स्थाने 'तर्पयित्वा' इति पठन्ति । अत्र केचिद्गुरिकाप्रवाहेण **भोजोक्तं** 'सिरास्नायुविलग्नं शलाकाभिर्विमोच्यापनयेत्, श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं, दुर्बलवारङ्गं कुशादिभिर्बद्ध्वा' इति पाठं पठन्ति, प्रवाहपठिता व्याख्यानयन्ति च—वारङ्गं शस्त्रनालम्, अवपीड्य श्वयथुमपनयेदिति संबन्धः; कुशादिभिः बध्वा 'अपनयेत्' इत्यत्रापि योज्यते; कुशा वंशवेत्रादिकम्बी । अयं च विधिस्तन्त्रान्तरादवसेयो न सुश्रुतसंहितायामस्ति, तन्त्रान्तरदर्शनात्सैस्तत्रैवानीय लिखित इत्यत्र न पठनीय एव ॥ १२ ॥

**हृद[4]यमभितो वर्तमानं शल्यं शीतजलादिभिरुद्वेजितस्यापहरेद्यथामार्गं; दुरुपहरमन्यतोऽपबाध्यमानं पाटयित्वोद्धरेत् ॥ १३ ॥**

वक्षःपतितेषु विशेषविधिमाह—हृदयमित्यादि । हृदयमभितो वर्तमानमिति हृदयसमीपे स्थितमित्यर्थः । उद्वेजितस्य उद्विग्नहृदयस्य, शीतजलादुद्वेजनं च क्लमपरिहाराय । यथामार्गमिति येनैव मार्गेण प्रविष्टं तेनैवापहरेदित्यर्थः । तेनाशक्ये उपायान्तरं दर्शयन्नाह—दुरुपहरमित्यादि । दुःखेनोपह्रियते तद्दुरुपहरम् । अन्यत इति अन्यस्मिन्नपि प्रदेशे । अपबाध्यमानमिति मर्मपीडाकरं, 'शल्यं' इति शेषः । पाटयित्वेति दारयित्वेत्यर्थः ॥ १३ ॥

**अस्थिविवरप्रविष्टमस्थिविदष्टं वाऽवगृह्य पादाभ्यां यन्त्रेणापहरेत्, अशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं[1] प्रविभुज्य धनुर्गुणैर्बद्ध्वैकतश्चास्य पञ्चाङ्ग्यामुपसंयतस्याश्वस्य[2] वक्त्रकविके बध्नीयात्, अथैनं कशया ताडयेद्यथोन्नामयन् शिरो वेगेन शल्यमुद्धरति; दृढां वा वृक्षशाखामवनम्य तस्यां पूर्ववद्बद्ध्वोद्धरेत् ॥ १४ ॥**

अवबद्धशल्यस्य हस्तेनापहर्तुमशक्यस्य निर्हरणोपायं दर्शयन्नाह—अस्थीत्यादि । अस्थिविवरप्रविष्टमिति अस्थिच्छिद्रान्तर्गतम् । विदष्टमिति अत्यासक्तम् । सुपरिगृहीतस्य आतुरस्येत्यर्थः । प्रविभुज्य वक्रीकृत्य । धनुर्गुणैरिति मूर्वार्कसूत्रमयैः । एकत एकस्मिन् प्रदेशे । अस्येति शल्यवतो नरस्य । पञ्चाङ्ग्यामिति बन्धविशेषे । उपसंयतस्य बद्धस्य । अश्वस्य घोटकस्य, वक्त्रं मुखं, तत्र कविका कटकं, तत्र बध्नीयात् शल्यमिति संबन्धः । एनम् अश्वं, कशया सट्टया, उन्नामयन्निति उच्चैः कुर्वन् । पक्षान्तरमाह—दृढां वा वृक्षशाखामित्यादि । अवनम्य नमयित्वा, तस्यामिति वृक्षशाखायाम् । अन्ये तु 'दृढां' इत्यस्य स्थाने 'पञ्चाङ्गीं' इति मन्यन्ते; तत्र पञ्चाङ्गीं पञ्चभिः शाखान्तरैर्युतां शाखां वदन्ति । अपरे तु पञ्चाङ्गीं प्लक्षाश्वत्थोदुम्बरन्यग्रोधवेतसानामिति कथयन्ति । अन्ये त्वेवं पठन्ति 'अशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं प्रविभुज्य धनुर्गुणैर्बद्ध्वैकतोऽश्ववक्त्रकविके बध्नीयात्, अथैनं कशया ताडयेद्यथोन्नामयञ्छिरो वेगेन शल्यमुद्धरति, नामितायां पञ्चाङ्ग्यां वृक्षशाखायां वा पूर्ववद्बद्ध्वोद्धरेत्' इति ॥ १४ ॥

**अदे[3]शोत्तुण्डितमष्ठीलाश्ममुद्गराणामन्यतमस्य प्रहारेण विचाल्य यथामार्गमेव यन्त्रेण ॥ १५ ॥**

---

१ 'मर्मसंरक्षणं पानीयघृताभ्यक्ततर्पणादिना' इति **चक्रः** । २ 'स्वेदार्हं संस्वेद्य, अग्निना अवदह्य, घृतेन तर्पयित्वेति योज्यम् । अत्रातिस्रुतरक्ता घृततर्पणीयाः । तत्र **भोजः**—"अग्निकृत्या व्रणा ये तु तेष्वग्निमवचारयेत् । स्वेदयेत्सक्तुपिण्डीभिः स्वेदकृत्यान् समन्ततः ॥ तर्पयेत्तर्पणीयांश्च सुखोष्णेन च सर्पिषा' इति **चक्रः** । ३ 'रुधिरवर्जितम्' इति पा० । ४ 'हृदयमभित इति हृदयसमीपे पार्श्वे इत्यर्थः । हृदयोद्वेजनं च शल्यकार्यपीडापरिज्ञानार्थमित्येके । हृदयोद्वेजनेन लीनस्य यन्त्रस्य संबन्धो न भवतीत्यर्थः । यथामार्गेण दुरुपहरं छेदेन मुखं विशालं कृत्वा हरणीयम् । तत्र तथा छेदनं कर्तव्यं यथा सिराविक्षणनेनान्यदेशापबाधो न भवति' इति **चक्रः** ।

१ 'वारङ्गं शलाकादिमयस्य शल्यस्य शिखाकारं' इत्य**रुणदत्तः** । 'वारङ्गं शस्त्रमस्तके शिखाकारोऽवयवः' इति **हेमाद्रिः** । २ 'पञ्चाङ्ग्या पञ्चानामङ्गानां चतुर्णां पादानां मुखसहितानां समाहारः पञ्चाङ्गी बन्धविशेषः, तया पञ्चाङ्ग्या बद्धस्य' इति **अरुणदत्तः** । ३ 'अदेशोत्तुण्डितमिति पक्षे अच्छेदनीयदेशोत्तुण्डितमित्यर्थः । अस्थिदेशोत्तुण्डितमित्यन्ये; तत्रास्थिरोधोऽस्थ्युत्तुण्डितत्वम्' इति **चक्रः** ।

कुड्यायच्छेदनीयप्रदेशोत्तुण्डितानामस्थ्यादिविदष्टानां यथामार्गापहरणोपायं दर्शयन्नाह—अदेशेत्यादि । यथामार्गमेव यन्त्रेणेति 'अपहरेत्' इति शेषः । 'अस्थिदेशोत्तुण्डितं' इत्यन्ये पठन्ति ॥ १५ ॥

**विमृदितकर्णानि कर्णवन्त्यनाबाधकरदेशोत्तुण्डितानि पुरस्तादेव ॥ १६ ॥**

कर्णवतामाहरणं दर्शयन्नाह—विमृदितेत्यादि । कर्णवच्छल्यं तदनाबाधकरप्रदेशोत्तुण्डितं यदा भवति तदा विमृदितकर्णिकं कृत्वा, कोऽर्थः ? संकुचितकर्णिकं कृत्वा, पुरस्तादेव, कोऽर्थः ? अग्रेतने प्रदेशे एव, 'आकर्षयेत्' इति शेषः ॥ १६ ॥

**जातुषे कण्ठासक्ते कण्ठे नाडीं प्रवेश्याग्नितप्तां च शलाकां, तयाऽवगृह्य शीताभिरद्भिः परिषिच्य स्थिरीभूतं शल्यमुद्धरेत् ॥ १७ ॥**

जातुषशल्यस्य विधानं दर्शयन्नाह—जातुष इत्यादि । जातुषे लाक्षामये । कण्ठासक्ते गललग्ने । नाडीमिति ताम्रादिरचितनलिकां, स्थिरीभूतामुत्पन्नगाढताम् । शिशवो जातुषैः शल्यैः क्रीडन्ति, ते यदा प्रमादान्निगिलन्ति तदाऽयं विधिर्वेदितव्यः । अन्ये तु जातुषाणि सिरादिष्वेव घ(ज)टितानि मन्यन्ते ॥ १७ ॥

**अजातुषं तु जतुमधूच्छिष्टप्रलिप्तया शलाकया पूर्वकल्पेनेत्येके ॥ १८ ॥**

अजातुषे कण्ठासक्ते विधिमाह—अजातुषमित्यादि । जतु लाक्षा, मधूच्छिष्टं सिक्थकम्, पूर्वकल्पेनेति शीतोदकस्थिरीभूतमित्यर्थः ॥ १८ ॥

**अस्थिशल्यमन्यद्वा तिर्यक्कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकदीर्घसूत्रबद्धं द्रवभक्तोपहितं पाययेदाकण्ठात् पूर्णकोष्ठं च वामयेत्, वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्; मृदुना वा दन्तधावनकूर्चकेनापहरेत् प्रणुदेद्वाऽन्तः । क्षतकण्ठाय च मधुसर्पिषी लेढुं प्रयच्छेत्त्रिफलाचूर्णं वा मधुशर्कराविमिश्रम् ॥ १९ ॥**

अस्थ्यादिशल्यस्यात्यन्तं कण्ठासक्तस्याहरणमुद्दिशन्नाह—अस्थिशल्यमित्यादि । केशोण्डुकं बालकृतं बिटुकम् । उपहितं सहितम् । सहसा त्वाक्षिपेदिति शल्यनिर्गमनार्थम् । दन्तधावनकूर्चकेनेति दन्तधावनानां करञ्जकादीनां कुट्टिताग्रं कूर्चकं, तेनापहरेदित्यर्थः । प्रणुदेद्वाऽन्तरिति बहिरनिर्गच्छदन्तः प्रणुदेत् प्रवेशयेदित्यर्थः । 'केशोन्दुकं' इत्यादि केचित् पाठं पठन्ति । आहृतकण्ठशल्यस्य पश्चात्कर्म दर्शयन्नाह—क्षतकण्ठायेत्यादि ॥ १९ ॥

**उदकपूर्णोदरमवाक्शिरसमवपीडयेद्धुनीयाद्वामयेद्वा भस्मराशौ वा निखनेदामुखात् ॥ २० ॥**

उदकं यदाऽन्तर्निविष्टं जलमृतादीनामुदरे भवति तदा तस्यापहरणोपायं दर्शयन्नाह—उदकेत्यादि । अवाक्शिरसमधोमुखीकृतम्, अवपीडयेदुदरं, धुनीयात् कम्पयेत्, वामयेत् घर्षणैरवाक्शिरसमेव, निखनेत् प्रवेशयेत्, आमुखादिति मुखपर्यन्तम् ॥ २० ॥

**ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धं स्कन्धे मुष्टिनाऽभिहन्यात्, स्नेहं मद्यं पानीयं वा पाययेत् ॥ २१ ॥**

कण्ठासक्तग्रासाहरणोपायमाह—ग्रासशल्य इत्यादि । अनवबुद्धमिति अज्ञातं यथा भवति । अभिहन्यादिति प्रहारं दद्यादित्यर्थः ॥ २१ ॥

**बाहुरज्जुलतापाशैः कण्ठपीडनाद्वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि, लालास्रावं फेनागमनं संज्ञानाशं चापादयति; तमभ्यज्य संस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं विदध्याद्रसं च वातघ्नं दद्यादिति ॥ २२ ॥**

बाहुरज्ज्वादिपीडितकण्ठप्रकुपितवायुश्लेष्मापहरणोपायमाह—बाह्वित्यादि । पाशशब्दो बाह्वादिभिः सह प्रत्येकं संबध्यते । केचिदमुं पाठं न पठन्ति ॥ २२ ॥

**भवन्ति चात्र—**

**शल्याकृतिविशेषांश्च स्थानान्यावेक्ष्य बुद्धिमान् ॥**
**तथा यन्त्रपृथक्त्वं च सम्यक् शल्यमथाहरेत् ॥२३॥**
**कर्णवन्ति तु शल्यानि दुःखाहार्याणि यानि च ॥**
**आददीत भिषक् तस्मात्तानि युक्त्या समाहितः २४**
**एतैरुपायैः शल्यं तु नैव निर्यात्यते यदि ॥**
**मत्या निपुणया वैद्यो यन्त्रयोगैश्च निर्हरेत् ॥ २५ ॥**
**शोथपाकौ रुजश्चोग्राः कुर्याच्छल्यमनाहृतम् ॥**
**वैकल्यं मरणं चापि तस्माद्यत्नाद्विनिर्हरेत् ॥ २६ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने शल्यापनयनीयो नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥**

---

१ 'विमृदितकर्णानि कर्णवन्तीत्यच्छेदनीयमुखपतितानि; छेदनीयमुखे तु देशे कर्णवतामनुलोममेव छेदयित्वाऽऽहरणमाह—अनाबाधाकरेत्यादि" इति चक्रः । २ 'केशानां समूहः केशोन्दुकम्' इति अरुणदत्तः । 'केशोन्दुकः केशपुञ्जः' इति हेमाद्रिः । 'उण्डुकं नाम विशेषेण प्रसादकिट्टतः परिणामिमलाश्रयः स्थूलक्षुद्रान्त्रयोरन्तरालस्थो गोलः, वक्ष्यति च—'उण्डुकस्थं विभजते मलं मलधरा कला' इति, तथा च केशोऽयमुण्डुकमिवेति केशोण्डुकं 'पुरुषव्याघ्रः' इतिवत्; 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति पूर्वनिपातः 'केशगुडक' इति निष्कर्षः' इति हाराणचन्द्रः ।

१ 'स्नेहं सुखोदकं वा' इति ताडपत्रपुस्तके पाठः । २ '°ग्रासशल्ये तु' इति पा० । ३ 'दुःखान्याहरणे विदुः' इति पा० । ४ 'निर्ह्रियते' इति पा० ।

शल्याकृतीनामानन्त्यादनुक्तमपि कर्तव्यं दर्शयन्नाह-शल्याकृतीत्यादि । स्थानानि शिरोऽक्षिकर्णनासाहृदयादीनि । कर्णवतां दुराहरत्वं दर्शयन्नाह-कर्णवन्तीत्यादि । आददीतेति संगृह्णीयादित्यर्थः । युक्त्येति योगेन, न तु हीनयोगातियोगमिथ्यायोगैः । समाहितः सावधानः । अवश्यं निर्हरणीयस्य शल्यस्योक्तैः प्रकारैरनाहरणेऽनुक्तोपायमनुक्तयन्त्रकरणसूत्रमुद्दिशन्नाह -एतैरित्यादि । नैव निर्घात्यते यदीति नैव निष्कास्यते यदीत्यर्थः । मत्या निपुणया वैद्य इति मत्या निपुणया स्वकर्मणि प्रवीणया बुद्ध्या युक्तः । यन्त्रयोगैश्च निर्हरेदिति योगैः संयोगैः, योगैश्चेति चकारादनुक्तगुणादिबन्धनादि समुच्चीयते । शल्यस्यानाहरणे दोषं दर्शयन्नाह—शोथपाकावित्यादि । अमुं श्लोकं केचिदत्र न पठन्ति, **न्यायचन्द्रिकायां** तु पठितत्वादवश्यं पठनीय एव ॥ २३—२६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने सप्तविंशतितमोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशतितमोऽध्यायः ।

**अथातो विपरीताविपरीतव्रणविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा ॥**
**ख्यापयन्ति भविष्यत्त्वं तथा रिष्टानि पञ्चताम् ॥ ३ ॥**

नियतानियतभेदेन द्विविधमरिष्टं प्रकाशयितुमाह—फलाग्नीत्यादि । अत्र यथा पुष्पं फलस्य भविष्यत्त्वं ख्यापयति, कोऽर्थः ? पुष्पं फलं भविष्यतीति; यथा च धूमोऽग्निं ख्यापयति, यथाऽम्बुदो जलवृष्टिम्, एवमरिष्टानि पञ्चतां मृत्युं ख्यापयन्ति; 'भाविनीम्' इति शेषः । अरिष्टान्यत्र मरणलक्षणानि । ननु, अत्र किमर्थं पुष्पधूमाम्बुदा इति बहवो दृष्टान्ता उक्ताः ? एकेनैव गतार्थत्वात् । उच्यते, पुष्पाम्बुदौ हेतू फलजलवृष्ट्योर्ज्ञापकावनियतौ, न ह्यवश्यं कारणेन कार्यं कर्तव्यमेव; इत्यनेनानियतदृष्टान्तेन दूतादिनिमित्तजमरिष्टमनियतमुक्तं; धूमात् कार्यादग्नेः कारणस्य यज् ज्ञानं तन्नियतम्, एतेन नियतदृष्टान्तेन दोषजमरिष्टं नियतमुक्तम्; इत्यनियतनियतभेदेन द्विविधमरिष्टं प्रकाशयन्ति बहवो दृष्टान्ता इति न दोषः ॥ १—३ ॥

**तानि सौक्ष्म्यात् प्रमादाद्वा तथैवाशु व्यतिक्रमात् ॥**
**गृह्यन्ते नोद्गतान्यज्ञैर्मुमूर्षोर्न त्वसंभवात् ॥ ४ ॥**
**ध्रुवं तु मरणं रिष्टे**

अवश्यमेवारिष्टस्य मरणभवनं दर्शयन्नाह—तानीत्यादि । मुमूर्षोः मर्तुमिच्छोः प्राणिन उद्गतान्यपि प्रकटितान्यप्यरिष्टान्यज्ञैर्मनुष्यैर्न गृह्यन्ते न ज्ञायन्ते । कुतो हेतोरित्याह—सौक्ष्म्यादिति; परमाणुवत् । प्रमादाद्वेति मदिरामदमत्तस्य वस्तुन्यविमर्श इव । आशु व्यतिक्रमादिति यदैवारिष्टमुत्पन्नं तदैव मरणादिति, उत्पलशतपत्रव्यतिभेदवत्; अन्ये त्वाशुव्यतिक्रमं यदैवारिष्टमुत्पन्नं तदैव निवर्तत इति मन्यन्ते । न त्वसंभवादिति न पुनरसंभवान्न गृह्यन्ते, अपितु संभवन्त्यप्यरिष्टान्युक्तैः कारणैरज्ञैर्न गृह्यन्त इत्यभिप्रायः । दोषजमरिष्टमधिकृत्य अरिष्टेन मरणस्य नियतत्वं दर्शयन्नाह—ध्रुवमित्यादि ॥ ४ ॥—

**ब्राह्मणैस्तत् किलामलैः ॥**
**रसायनतपोजप्यतत्परैर्वा निवार्यते ॥ ५ ॥**

रिष्टेऽपि मरणनिवृत्तिमुपायविशेषैराह—ब्राह्मणैरित्यादि । किलशब्दोऽत्रागमार्थं सूचयति; एवं किल आगमे प्रतिपादितमित्यर्थः । अमलैरिति रागादिदोषरहितैः । ब्राह्मणेभ्योऽपरानपि दर्शयन्नाह—रसायनतपोजप्येत्यादि ।—रसायनपरा इति स्वभावव्याधिनिवारणविशिष्टौषधचिन्तकाः, ते रसवीर्यौषधप्रभावेण मरणं निवारयन्ति । तथा तपःपराः तपस्विनः, तेऽपि विशिष्टतपःप्रभावेण मरणं निवारयन्ति । जप्यपराः सिद्धमन्त्रचिन्तकाः, तेऽपि मन्त्रशक्तियुक्ताः पञ्चत्वं निषेधयन्ति । एतच्च नियतानियतरिष्टविषयं ज्ञेयम् ॥ ५ ॥

**नक्षत्रपीडा बहुधा यथा कालं विपच्यते ॥**
**तथैवारिष्टपाकं च ब्रुवते बहवो जनाः ॥ ६ ॥**

कथं पुनः कालान्तरे पञ्चविंशतिवर्षादावरिष्टपीडा भवतीत्याह-नक्षत्रेत्यादि ।-विपच्यते फलतीत्यर्थः । पाकं फलम् ॥ ६ ॥

---

१ 'पूर्वाध्यायैः समासविस्तराभ्यां व्रणानुद्दिश्यातुरोपक्रमणीयाध्याये चिकित्सा सूत्रयितव्या; सा तु सारिष्टत्वाद्गतायुषि न सिध्यति, अतोऽरिष्टज्ञानार्थं रिष्टप्रतिपादकाध्यायेषु सामान्यारिष्टस्वरूपाभिधायकतया विपरीतव्रणविज्ञानीयोऽभिधीयते । विपरीतो व्रणः साध्यादन्यः सारिष्टतया विवक्षितः' इति **चक्रः** । 'विपरीतव्रणविज्ञानीयं' इति ताडपत्रपुस्तके पाठः । २ 'धूम इह काष्ठमन्थनजन्यः वह्नेश्च पूर्वभावी विवक्षितो भाविवह्निगमकतया' इति चक्रः ।

१ 'अरिष्टस्य मरणादवश्यं प्राग्भावमाह—तानि सौक्ष्म्यादित्यादि । सौक्ष्म्यात् कण्टकादि सदपि सूक्ष्मजिज्ञासां विना नोपलभ्यते । तथा प्रमादादनवहितैः सदपि नोपलभ्यते । आशु व्यतिक्रमादिति भूत्वा क्षणेन नाशात्, एतदपि सर्वथाऽवधानं विना नोपलभ्यते; यथा विद्युदादि क्षणमात्रस्थायिभूतमपि नोपलभ्यते । न त्वसंभवादित्यनेन मरणेऽवश्यंभावित्वमुक्तं, चरकेऽप्युक्तं 'मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम्' (च. इं. अ. २) । तथा रिष्टेऽपि मरणनियममाह—ध्रुवमित्यादि । २ 'तदैव' इति पा० । ३ 'नक्षत्रपीडेति जन्मकालस्थितग्रहविशेषैर्नक्षत्रपीडा यथा कालान्तरभाविमरणसूचिका कालान्तरेणैव पच्यमानदुष्टमरणं गमयति; तथाऽरिष्टान्यपि कानिचित् चिरकालपच्यमानमारककर्मजन्यानि चिरभाविमरणव्यञ्जकानीति वाक्यार्थः । अरिष्टपाकमिति रिष्टकारणमारककर्मप्रपाकम् ।' इति **चक्रः** । ४ 'कालात्' इति पा० । ५ 'बहुधा' इति पा० ।

**असिद्धिमाप्नुयाल्लोके प्रतिकुर्वन् गतायुषः ॥**
**अतोऽरिष्टानि यत्नेन लक्षयेत् कुशलो भिषक् ॥ ७ ॥**

अरिष्टापरिज्ञानदोषं दर्शयन्नाह—असिद्धिमित्यादि। असिद्धिं धर्मार्थकामादीनां हानिम् ॥ ७ ॥

**गन्धवर्णरसादीनां विशेषाणां स्वभावतः ॥**
**वैकृतं यत् तदाचष्टे व्रणिनः पक्वलक्षणम् ॥ ८ ॥**

अस्य तन्त्रस्य शल्यत्वात्तत्र च व्रणस्य प्राधान्यात्तस्यैवारिष्टानि प्राङ्निर्दिष्टुमाह—गन्धेत्यादि। गन्धवर्णरसादीनामिति आदिग्रहणेन शब्दस्पर्शयोरपि संग्रहः; एतेन पञ्चापीन्द्रियार्था उक्ता भवन्ति, रूपस्य वर्णग्रहणेन गृहीतत्वात्। स्वभावतः प्रकृतितो यद्वैकृतमन्यथात्वं, तदाचष्टे तत् कथयति, व्रणिनः पुरुषस्य, पक्वलक्षणं पातलक्षणं, यथा पक्वं फलं पतत्येव तथाऽसावपि व्रणी पतत्येवेत्यर्थः ॥ ८ ॥

**कटुस्तीक्ष्णश्च विस्रश्च गन्धस्तु पवनादिभिः ॥**
**लोहगन्धिस्तु रक्तेन व्यामिश्रः सान्निपातिकः ॥ ९ ॥**
**लाजातसीतैलसमाः किंचिद्विस्राश्च गन्धतः ॥**
**ज्ञेयाः प्रकृतिगन्धाः स्यु-**

तत्र प्राकृतं गन्धं दर्शयन्नाह—कटुरित्यादि। अत्र लाजातसीतैलसमास्त्रयो गन्धा यथासंख्येन वातपैत्तिक-वातश्लैष्मिक-पित्तश्लैष्मिका द्वन्द्वजा ज्ञेयाः। एते त्रयोऽपीषद्विस्राश्च स्वभावाज्ज्ञेयाः। अतसीशब्देनातसीतैलं, तैलं तिलतैलम्। ज्ञेयाः प्रकृतिगन्धाः स्युरिति ज्ञातव्याः प्रकृतिगन्धा भवेयुरिति। 'कटुस्तीव्रश्च' इति केचित् पठन्ति ॥ ९ ॥—

**रतोऽन्यद्गन्धवैकृतम् ॥ १० ॥**
**मद्यागुर्वाज्यसुमनापद्मचन्दनचम्पकैः ॥**
**सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ॥ ११ ॥**
**श्ववाजिमूषिकध्वाङ्क्षपूतिवल्लूरमत्कुणैः ॥**
**सगन्धाः पङ्कगन्धाश्च भूमिगन्धाश्च गर्हिताः ॥ १२ ॥**

विकृतिगन्धान् दर्शयन्नाह—अत इत्यादि। अतोऽन्यद्गन्धवैकृतमिति अत एभ्यः पूर्वोक्तेभ्यः कट्वादिप्राकृतगन्धेभ्योऽन्यद्गन्धवैकृतम्। तानेव विकृतगन्धानाह—मद्येत्यादि। सुमना जाती। सगन्धाः समगन्धाः। दिव्यगन्धा इति अपरोऽपि य उत्तमगन्धः। मुमूर्षूणामिति मर्तुमिच्छूनां प्राणिनाम्। श्वा कुकुरः, ध्वाङ्क्षः काकः, पूतिवल्लूरं पूयसहितं शुष्कमांसं, मत्कुणाः शय्यादिजाः क्षुद्रकीटाः; एतैः समानगन्धा इत्यर्थः ॥ १०—१२ ॥

**कुङ्कुमध्यामकङ्कुष्ठसवर्णाः पित्तकोपतः ॥**
**न दह्यन्ते न चूष्यन्ते भिषक् तान् परिवर्जयेत् ॥ १३ ॥**

१ 'स्वभावतो वैकृतमित्यनेन अस्वाभाविकस्य विकृतस्यापि नातिदुष्टत्वमिति दर्शयति। एतच्च वैकृतमदृश्यमानहेतुकं मारककर्मकृतमेव रिष्टं ज्ञेयम्। पक्वः पातोन्मुखो मरणोन्मुख इति यावत्' इति चक्रः। 'समासतः' इति पा० ॥

**कण्डूमन्तः स्थिराः श्वेताः स्निग्धाः कफनिमित्ततः ॥**
**दूयन्ते वाऽपि दह्यन्ते भिषक् तान् परिवर्जयेत् १४**
**कृष्णास्तु ये तनुस्रावा वातजा मर्मतापिनः ॥**
**स्वल्पामपि न कुर्वन्ति रुजं तान् परिवर्जयेत् ॥ १५ ॥**

वर्णाभिर्निर्देष्टुमाह—कुङ्कुमेत्यादि। ध्याम ईषत्कृष्णः। न दह्यन्ते न दाहयुक्ता भवन्ति। चूष्यन्त इति चूषणमिव वेदनाविशेषः। पित्तवर्णे सति यत् पित्तवेदना दाहादिका न भवन्ति, तद्वैकृतं वर्णस्य। केचित् "श्यामाकुङ्कुमकङ्कुष्ठसवर्णाः पित्तदोषतः। न दह्यन्ते न दूयन्ते भिषक् तान् परिवर्जयेत्—" इति पाठं पठन्ति, व्याख्यानयन्ति च,—"श्यामा प्रियङ्गुः, कङ्कुष्ठं सुवर्णक्षीरिनिर्यासः। न दह्यन्ते नातितप्यन्ते, न दूयन्ते न परितप्यन्ते किंतु परितापमात्रयुक्ता भवन्ति" इति। स च निबन्धेषु न दृश्यते; यत्र तु दृश्यते, तत्र गड्डरिकाप्रवाहः; तस्मात् पूर्वः पाठो न्याय्यः। कण्डूमन्त इत्यादिकाः कफेन, तेषां दाहरुजे वर्णवैकृतं; दूयन्त इति पीडां कुर्वन्ति। कृष्णाश्चेत्यादि। ये वातजा व्रणाः कृष्णास्तनुस्रावा मर्मतापिनश्च यदा स्वल्पामपि पीडां न कुर्वन्ति तदा वातजे वर्णवैकृतम्। अत्र रसवैकृतं यद्यपि नोक्तं तथाऽपि वातपित्तकफव्रणेषु यथाक्रमं कषायकटुमधुरेषु पिपीलिकाद्युपसर्पणादनुक्तमपि ज्ञेयं, गन्धवर्णरसादीनामित्यत्रोद्देशसूत्रे रसस्योक्तत्वात् ॥ १३—१५ ॥

**क्ष्वेडन्ति घुर्घुरायन्ते ज्वलन्तीव च ये व्रणाः ॥**
**त्वङ्मांसस्थाश्च पवनं सशब्दं विसृजन्ति ये ॥ १६ ॥**
**ये च मर्मस्वसंभूता भवन्त्यत्यर्थवेदनाः ॥**

शब्दवैकृतं दर्शयन्नाह—क्ष्वेडन्तीत्यादि। क्ष्वेडन्ति खटखटाशब्दं कुर्वन्ति। घुर्घुरायन्त इति श्वमार्जारादीनां कोपादन्तर्गतशब्दो घुर्घुराशब्द उच्यते। ज्वलन्तीवेति ज्वलन्त इव दृश्यन्ते। त्वङ्मांसस्थानां व्रणानां सशब्दपवनवाहित्वं शब्दवैकृतं, कोष्ठगतानां तु सशब्दपवनवाहित्वं प्रकृतिरेव ॥ १६ ॥—

**दह्यन्ते चान्तरत्यर्थं बहिः शीताश्च ये व्रणाः ॥ १७ ॥**
**दह्यन्ते बहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥**

स्पर्शवैकृतमधिकृत्याह—दह्यन्त इत्यादि ॥ १७ ॥—

**शक्तिध्वजरथाः कुन्तवाजिवारणगोवृषाः ॥ १८ ॥**
**येषु चाप्यवभासेरन् प्रासादाकृतयस्तथा ॥**
**चूर्णावकीर्णा इव ये भान्ति चानवचूर्णिताः ॥ १९ ॥**

आकृतिविशेषवैकृतमधिकृत्याह—शक्तीत्यादि। शक्तिरायुधविशेषः, ध्वजः पताकादण्डः। येषु व्रणेषु। अवभासेरन् शोभन्ते। प्रासादो देवतानरेन्द्राणामधिष्ठानम्, आकृतिरत्र रूपमेव। रूपं च पञ्चेन्द्रियार्थमध्ये। अपरमपि रूपविशेषमाह—चूर्णावकीर्णा इत्यादि। अत्रापि सामान्याकारेण रूपमेव बोद्धव्यम् ॥ १८ ॥ १९ ॥

१ 'कृष्णा ये स्वरुगस्रावा' इति ताडपत्रपुस्तके पाठः।
२ 'वारणपक्षिणः' इति ताडपत्रपुस्तके पाठः।

**प्राणमांसक्षयश्वासकासारोचकपीडिताः ॥**
**प्रवृद्धपूयरुधिरा व्रणा येषां च मर्मसु ॥ २० ॥**

गन्धादिवैकृतं समाप्य, उपद्रवासाध्यत्वं प्रसङ्गतो युक्त्यागतं दर्शयन्नाह—प्राणेत्यादि। प्राणक्षयः शक्तिलक्षणबलक्षयः, मांसक्षय उपचयलक्षणबलक्षयः ॥ २० ॥

**क्रियाभिः सम्यगारब्धा न सिद्ध्यन्ति च ये व्रणाः ॥**
**वर्जयेत्तानपि प्राज्ञः संरक्षन्नात्मनो यशः ॥ २१ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने विपरीताविपरीतव्रणविज्ञानीयो नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥**

अनुक्तमप्यशेषारिष्टमुपगृहन्नाह–क्रियाभिरित्यादि ॥ २१ ॥

इति श्रीडल्ह(ह्)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थानेऽष्टाविंशतितमोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशत्तमोऽध्यायः।

**अथातो विपरीताविपरीतस्वप्ननिदर्शनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि। स्वप्नशब्दानन्तरं लुप्तादिशब्दनिर्देशान्नक्षत्रवेलातिथिनिमित्तशकुनानिलदेशवैद्यवाग्देहमनश्चेष्टा अपि गृह्यन्ते ॥ १ ॥ २ ॥

**दूतदर्शनसंभाषा वेषाश्चेष्टितमेव च ॥**
**ऋक्षं वेला तिथिश्चैव निमित्तं शकुनोऽनिलः ॥ ३ ॥**
**देशो वैद्यस्य वाग्देहमनसां च विचेष्टितम् ॥**
**कथयन्त्यातुरगतं शुभं वा यदि वाऽशुभम् ॥ ४ ॥**

अत्राध्याये निर्देश्यान् दूतादीनुपदर्शयन्नाह—दूतेत्यादि। दूतशब्दोऽत्र दर्शनसंभाषवेशचेष्टितैः सह संबध्यते। गमनाय प्रश्नाय वाऽऽगतः पुरुषो दूतः। चेष्टा चात्र कायकृतो व्यापारः, ऋक्षाणि आर्द्रादीनि, वेला मध्याह्नादिकाः, तिथयः चतुर्थ्यादयः, निमित्तं सर्पादिदर्शनं, देशो वैद्यस्य भूमिभागः, वाग्देहमनसां च विचेष्टितमपि वैद्यस्यैव। आतुरगतमिति आतुराश्रितमित्यर्थः। स्वप्नाः पश्चान्निर्देश्याः ॥ ३ ॥ ४ ॥

**पाख(ष)ण्डाश्रमवर्णानां सपक्षाः कर्मसिद्धये ॥**
**त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ ५ ॥**
**नपुंसकं स्त्री बहवो नैककार्या असूयकाः ॥**
**गर्दभोष्ट्ररथप्राप्ताः प्राप्ता वा स्युः परम्पराः ॥ ६ ॥**
**वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥**

प्रथमं दूतदर्शनमधिकृत्याह—पाखण्डेत्यादि।–पाख(ष)ण्डाः कापालिकादयः, आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थयतयः, वर्णा ब्राह्मणादयः। सपक्षा इति तद्यथा—कापाली कापालिकस्य, ब्रह्मचारी ब्रह्मचारिणः, विप्रो विप्रस्येत्यादयः। कर्मसिद्धये कार्यसिद्ध्यर्थम्। त एव विपरीता इति कापालिकस्य ब्रह्मचारी, ब्रह्मचारिणः कापालीत्यादि। कर्मविपत्तये इति चिकित्सितनाशाय। नपुंसकमिति न पुमान् न च स्त्री। स्त्रीति योषिदित्यर्थः। बहव इति प्रभूता इत्यर्थः। नैककार्या इति नैकस्मिन् कार्ये ये दूताः समागता इत्यर्थः। असूयका इति परस्परं कलहं कुर्वाणाः। गर्दभोष्ट्ररथप्राप्ता इति गर्दभोष्ट्रयुक्तेन रथेनागता इत्यर्थः। प्राप्ता वा स्युः परम्परा इति आगता वा भवेयुः, परम्परा पङ्क्तिः, एतेन पङ्क्तिं कृत्वा यदाऽऽगच्छन्तो भवन्तीत्युक्तम्। वैद्यं य उपसर्पन्तीत्यादि ये दूता एवंगुणविशिष्टा वैद्यमुपसर्पन्ति समीपमागच्छन्ति, ते गर्हिता एवेति संभावनीयाः। अत्र चशब्द एवकारार्थः, अपिशब्दः संभावनायाम् ॥ ५ ॥ ६ ॥—

**पाशदण्डायुधधराः पाण्डुरेतरवाससः ॥ ७ ॥**
**आर्द्रजीर्णापसव्यैकमलिनोद्ध्वस्तवाससः ॥**
**न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः ॥ ८ ॥**

वेषमधिकृत्याह—पाशेत्यादि। पाशो दीर्घः पशूनां बन्धनो रज्जुवलयः, दण्डो लोहादिवलयैर्निबद्धो दीर्घनिष्ठुरकाष्ठयष्टिः, आयुधानि खड्गशक्त्यादीनि। पाण्डुरेतरवासस इति कृष्णपीतरक्तवस्त्राः। आर्द्रजीर्णापसव्यैकमलिनोद्ध्वस्तवासस इति आर्द्रं स्तिमितं, जीर्णं पुरातनम्, अपसव्यं दक्षिणाश्रितमुत्तरीयवासः, एकम् एकवस्त्रधारिणं, मलिनमधौतं, उद्ध्वस्तं पाटितं वस्त्रम्। न्यूनाधिकाङ्गा इति न्यूना हस्ताद्यवयवैर्हीनाः; अधिकाङ्गा इति एकविंशत्यङ्गुल्यादियुक्ताः। उद्विग्ना इति भीताः। विकृता इति पङ्गुकुब्जवामनादयः। रौद्ररूपिण इति भैरवोद्धतकर्कशाः (भयावहरूपिणः) ॥ ७ ॥ ८ ॥

**रूक्षनिष्ठुरवक्तारस्त्वमङ्गल्याभिधायिनः ॥**

दूतसंभाषामधिकुर्वन्नाह—रूक्षेत्यादि। रूक्षं मैत्रीरहितं वचः, निष्ठुरं कठोरवचनम्। अमङ्गल्याभिधायिन इति गतमृतनष्टरुदितेत्यादिवचनममङ्गलम् ॥—

**छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम् ९**
**वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः ॥**
**स्रोतोवरोधहृद्गण्डमूर्धोरःकुक्षिपाणयः ॥ १० ॥**
**कपालोपलभस्मास्थितुषाङ्गारकराश्च ये ॥**

---

१ 'भेषजविकारयुक्तौ रिष्टमाह-क्रियाभिरित्यादि। चरके उपद्रवाश्च भेषजविकारयुक्तिश्च रिष्टाधिकरणतयोक्ता' इति चक्रः। २ 'विपरीतस्वप्ननिदर्शनीयं व्याख्यास्यामः' इति ताडपत्रपुस्तके पाठः। 'विपरीताविपरीतदूतशकुनस्वप्ननिदर्शनीयमध्यायं' इति हाराणचन्द्र-संमतः पाठः। ३ 'गेहे' इति पा०। ४ 'निमित्तं पूर्णकुम्भादि, शकुनः पक्षी' इति चक्रः। ५ 'पाषण्डा वेदबाह्याश्रमाः सौगतादयः' इति चक्रः।

१ 'आगच्छन्तः' इति पा०। २ '°मलिनध्वस्तवाससः' इति पा०। ३ अयं पाठो हस्तलिखितपुस्तके न पठ्यते। ४ '°वादाश्चाप्यमाङ्गल्या०' इति पा०। ५ 'रुदन्तः स्तनयोस्तथा' इति ताडपत्रपुस्तके पाठः।

**विलिखन्तो महीं किंचिन्मुञ्चन्तो लोष्टभेदिनः ॥ ११ ॥**
**तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः ॥**
**फलं पक्वमसारं वा गृहीत्वाऽन्यच्च तद्विधम् ॥ १२ ॥**
**नखैर्नखान्तरं वाऽपि करेण चरणं तथा ॥**
**उपानच्चर्महस्ता वा विकृतव्याधिपीडिताः ॥ १३ ॥**
**वामाचारा रुदन्तश्च श्वासिनो विकृतेक्षणाः ॥**
**याम्यां दिशि प्राञ्जलयो विषमैकपदे स्थिताः ॥ १४ ॥**
**वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥**

चेष्टितमधिकृत्याह,—छिन्दन्त इत्यादि । वस्त्रान्तो दशाहीनस्य वस्त्रस्यान्तम्, अनामिका पवित्राङ्गुलिः, केशा मस्तकवालाः, रोमाणि शरीरोद्भवा वालाः, दशाः सदशस्य वस्त्रस्य प्रान्ताः । स्रोतोवरोधेत्यादि स्रोतोवरोधादिषु निक्षिप्तपाणयः; स्रोतः कर्णादिच्छिद्रम्, अवरोधः स्कन्धदेशः, हृत् कमलमुकुलाकारमधोमुखं, गण्डो गल्लः, मूर्धा मस्तकम्, उरः कण्ठहृदयान्तरालः, कुक्षिर्वङ्क्षणपार्श्वान्तरालः । कपालोपलेत्यादि । करशब्दः कपालादिभिः प्रत्येकं संबध्यते, तेन कपालादिकरा इत्यादि बोद्धव्यं; कपालो मृद्भाण्डखण्डः, उपलः पाषाणः, भस्मेति दग्धकाष्ठादिक्षारः, अस्थि हड्डं, तुषा धान्यादित्वचः, अङ्गारोऽभस्मसात्कृतो दग्धकाष्ठखण्डः । विलिखन्तो महीमिति विलिखन्तो नखादिना विदारयन्तः पृथिवीमित्यर्थः । किंचिन्मुञ्चन्त इति किंचिद्वस्तु हस्तेन गृहीतं मुञ्चन्तः । लोष्टभेदिन इति मृत्पिण्डस्फोटनशीला इत्यर्थः । दिग्धाङ्गा इति लिप्ताङ्गा इत्यर्थः । रक्तस्रगनुलेपना रक्तमालाधारिणो रक्तविलेपनाश्चेत्यर्थः । फलमित्यादि । असारमिति अभ्यन्तरसारवर्जितम् । अन्यच्च तद्विधमिति अन्यदपि वस्तु पक्वमसारं च । नखैर्नखान्तरं वाऽपि करेण चरणं तथेत्यत्र 'गृहीत्वा' इति संबन्धः । उपानदित्यादि ।—उपानत् पादहिता, चर्महस्ता वेति चर्ममयसट्टादिधारिणः । विकृतव्याधिपीडिता इति गलत्कुष्ठादिविकृतव्याधिपीडिताः । वामाचारा इति विपरीतव्यवहाराः । श्वासिन इति श्रम[1]जनितश्वासयुक्ताः । विकृतेक्षणा इति पुष्पितनेत्रादयः । याम्यां दिशि दक्षिणस्यां दिशि, प्राञ्जलयः प्रसारिताञ्जलयः । विषमैकपदे स्थिता इति विषमे एकस्मिन् स्थाने ऊर्ध्वीभूताः । उपसर्पन्ति समीपं गच्छन्ति ॥ ९—१४ ॥

**दक्षिणाभिमुखं देशे त्वशुचौ वा हुताशनम् ॥—**
**ज्वलयन्तं पचन्तं वा क्रूरकर्मणि चोद्यतम् ॥ १५ ॥**
**नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाऽशुचिम् ॥**
**प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव वा ॥ १६ ॥**
**वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥**

चेष्टितमेव चेति चकारेणानुक्ताऽपि वैद्यचेष्टा समुच्चीयते, तां दूतदर्शने निर्दिशन्नाह—दक्षिणेत्यादि ।—दक्षिणाभिमुखमिति दक्षिणदिङ्मुखम् । देशे प्रदेशे । अशुचौ अपवित्रे । हुताशनं ज्वलयन्तम् अग्निं ज्वालयन्तम् । पचन्तमिति पाकं कुर्वाणम् । क्रूरकर्मणि पशुवधादिके । उद्यन्तमुद्यमं कुर्वाणम् । 'क्षुरकर्मणि' इत्येके पठन्ति, तत्र मुण्डनादिकर्मण्युद्यमं कुर्वाणमित्यर्थः । वेगोत्सर्गेष्विति मूत्रपुरीषोत्सर्गेषु । अशुचिमिति अपवित्रम् । प्रकीर्णकेशं विमुक्तकेशम् । अभ्यक्तं तैलादिना । स्विन्नं प्रस्वेदसहितम् । विक्लवं विह्वलम् । वैद्यं य उपसर्पन्तीत्यादि इत्थंभूतं वैद्यं ये दूता उपसर्पन्ति ते गर्हिता निन्दिता भवन्तीत्यर्थः ॥ १५ ॥ १६ ॥—

**वैद्यस्य पैत्र्ये दैवे वा कार्ये चोत्पातदर्शने ॥ १७ ॥**
**मध्याह्ने चार्धरात्रे वा सन्ध्ययोः**

वेलामधिकृत्याह—वैद्यस्येत्यादि । पैत्र्ये पितृकार्ये । दैवे देवकार्ये । उत्पातदर्शन इति उत्पातानां भूमिदिव्यान्तरीक्षाणां दर्शने ॥ १७ ॥—

**कृत्तिकासु च ॥**
**आर्द्राश्लेषामघामूलपूर्वासु भरणीषु च ॥ १८ ॥**

नक्षत्रमधिकृत्याह—कृत्तिकास्वित्यादि ॥ १८ ॥

**[1]चतुर्थ्यां वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ॥**
**वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ १९ ॥**

तिथिमधिकृत्याह—चतुर्थ्यामित्यादि । सन्धिदिनानि देवप्रेतकार्याहाणि ॥ १९ ॥

**स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः ॥**
**गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः ॥ २० ॥**
**त एव कफरोगेषु कर्मसिद्धिकराः स्मृताः ।**
**[2]एतेन शेषं व्याख्यातं बुद्ध्वा संविभजेत्तु तत् ॥ २१ ॥**
**रक्तपित्तातिसारेषु प्रमेहेषु तथैव च ।**
**प्रशस्तो जलरोधेषु दूतवैद्यसमागमः ॥ २२ ॥**
**विज्ञायैवं विभागं तु शेषं बुध्येत पण्डितः ॥**

विशिष्टरोगेषु विशिष्टवेलादि दर्शयन्नाह—स्विन्नेत्यादि । स्विन्नाभितप्ता दूता ज्वलनस्य समीपतः सन्निधानाद्यदा वैद्यं मध्याह्न उपसर्पन्ति तदा गर्हिता इति संबन्धः । एतेन शेषमित्यादि शेषं वातरोगे शीतप्रवातादिष्विति ज्ञेयम्, अशुभमित्यर्थः । रक्तपित्तेत्यादि । जलरोधेषु जलनिरोधयुक्तप्रदेशेषु । विज्ञायेत्यादि । शेषं बुध्येतेति उदावर्तमूत्रकृच्छ्रादौ जलवेगदर्शनादिकं प्रशस्तमिति जानीयात् ॥ २०—२२ ॥—

**शुक्लवासाः शुचिर्गौरः श्यामो वा प्रियदर्शनः ॥२३॥**
**स्वस्यां जातौ स्वगोत्रो वा दूतः कार्यकरः स्मृतः ॥**
**[3]गोयानेनागतस्तुष्टः पादाभ्यां शुभचेष्टितः ॥ २४ ॥**

---

१ 'अध्वजनितश्वासयुक्ताः' इति पा० ।

१ 'नवम्यामथ षष्ठ्यां वा पक्षसन्धिदिनेषु च' इति ताडपत्रपुस्तके पाठः । २ 'एतेन शेषं व्याख्यातमिति व्याधिसमानगुणे देशादौ दूतदर्शनं विगर्हितं, विपरीतगुणे च प्रशस्तं; तेन वातरोगे प्रवातादि निन्दितं, निवातादि प्रशस्तमित्याद्यूह्यमित्यर्थः' इति चक्रः । ३ 'गोयानं गोवाह्यशकटः, एतच्च प्रशस्ततरत्वादुक्तं, तेनानिषिद्धमश्वादियानमप्यविरुद्धमेव' इति चक्रः ।

**स्मृतिमान् विधिकालज्ञः स्वतन्त्रः प्रतिपत्तिमान् ॥**
**अलङ्कृतो मङ्गलवान् दूतः कार्यकरः स्मृतः ॥ २५ ॥**
**स्वस्थं प्राङ्मुखमासीनं समे देशे शुचौ शुचिम् ॥**
**उपसर्पति यो वैद्यं स च कार्यकरः स्मृतः ॥ २६ ॥**

अथाविपरीतदूतदर्शनादिकं निर्दिशन्नाह—शुक्लवासा इत्यादि । गोयानेनेति वृषभारूढो वृषभयुक्तयानारूढो वेत्यर्थः; अन्ये तु 'गोयानेन पशुयानेन' इत्यर्थमाहुः, गोशब्दस्य पशुवाचित्वात्; एतेन याम्यादियानखरोष्ट्रादिकवर्जमश्वादियानमुक्तम् । स्वतन्त्रः स्वप्रधानः । प्रतिपत्तिमानिति प्रतिपत्तिरत्र ज्ञानं प्रगल्भता वा । शुक्लवासाः शुचिर्गौर इत्यादिदर्शनमुक्तम् । शुभचेष्टित इत्यनेन चेष्टोक्ता । अलङ्कृत इति वेष उक्तः । संभाषश्चात्र विपरीतसंभाषविपर्ययादनुक्तोऽपि ज्ञेयः । तथाहि, तत्र 'रूक्षनिष्ठुरवक्कार' इत्युक्तम्, अत्र तु तद्विपर्ययेण 'स्निग्धकोमलाभिधायिन' इत्यविपरीतसंभाषो ज्ञेयः । तथा वेलानक्षत्रतिथीनामुक्तानामेव विपरीतत्वं, ततोऽन्यदविपरीतत्वमिति । कथंभूतं वैद्यमुपसर्पन् दूतः कार्यकारी भवतीत्याह—स्वस्थमित्यादि । स्वस्थम् आधिव्याधिवर्जितम्, आसीनमुपविष्टं, शुचौ पवित्रे देशे, शुचिं वैद्यम्, इत्थंभूतं वैद्यं यो दूत उपसर्पति स कार्यकारी भवति । केचिन्निबन्धकारा अमुं पाठं न पठन्ति ॥ २३—२६ ॥

**मांसोदकुम्भातपत्रविप्रवारणगोवृषाः ॥**
**शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः ॥ २७ ॥**
**स्त्री पुत्रिणी सवत्सा गौर्वर्धमानमलङ्कृता ॥**
**कन्या मत्स्याः फलं चामं स्वस्तिकं मोदका दधि २८**
**हिरण्याक्षतपात्रं वा रत्नानि सुमनो नृपः ॥**
**अप्रशान्तोऽनलो वाजी हंसश्चापः शिखी तथा ॥२९॥**
**ब्रह्मदुन्दुभिजीमूतशङ्खवेणुरथस्वनाः ॥**
**सिंहगोवृषनादाश्च ह्रे(हे)षितं गजबृंहितम् ॥ ३० ॥**
**शस्तं हंसरुतं नृणां कौशिकं चैव वामतः ॥**
**प्रस्थाने यायिनः श्रेष्ठा वाचश्च हृदयङ्गमाः ॥ ३१ ॥**

अथाविपरीतलक्षणान्याह—मांसेत्यादि । मांसमाममत्र । उदकुम्भ इति अत्रोदकुम्भशब्देन पूर्णो रिक्तश्च घटो गृह्यते; तत्रातुरगृहे प्रविशन् पूर्णः, आतुरगृहान्निःसरन् रिक्त इति गृह्यते । आतपत्रं छत्रम् । वृषो वृषभः । शुक्लवर्णाः पदार्थाः कार्पासास्थितक्रभस्मक्षारादिव्यतिरिक्ताः सुमनोदध्यक्षतमौक्तिकादयः । पूज्यन्ते श्लाघ्यन्ते । गताः प्राप्ताः । वर्धमानं शरावः, अन्ये तु विशिष्टमेव दर्पणं मङ्गल्यार्थं चषकं वा वर्धमानमाचक्षते । अलङ्कृता कन्या भूषणवती कन्या । केचित् 'वर्धमानाः स्वलङ्कृता' इति पठन्ति, व्याख्यानयन्ति च—आलेपनधवलत्वादिस्वलङ्कृताः शरावा वर्धमाना इति । स्वस्तिकं मुक्तादामविशेषः, अन्ये स्वस्तिकं स्वस्तिकाकारं दूर्वाशकलमण्डितं धवलं दर्पणसक्तं मृन्मयं गोमयकृतं वा मङ्गल्यमवतारणकार्थं कुर्वते माङ्गलिकस्त्रियः । मोदका लड्डुकाः । हिरण्यं स्वर्णम्, अन्ये कपर्दकान्याहुः; अक्षता लाजाः, अन्येऽक्षतानि यवधान्यान्याहुः; पात्रं तण्डुलभृतशरावादिकम् । अन्ये तु 'अक्षतपात्रम्' इत्येकमेव तण्डुलभृतशरावमिच्छन्ति । रत्नानि माणिक्यादीनि । सुमन इति शोभनमानसमित्यर्थः, 'वैद्यस्य' इति शेषः । नृपः पृथ्वीपतिः, अन्ये तु 'शोभनचित्तो राजा' इत्याहुः । अप्रशान्तोऽनलः प्रज्वलितवैश्वानरः । वाजी घोटकः । चाषः करटासः । शिखी मयूरः । ब्रह्मदुन्दुभीत्यादि ।—ब्रह्मेति वेदः, दुन्दुभिः निःस्वानः, जीमूतो मेघः, एतेषां स्वनाः शब्दाः शस्ताः । सिंहेत्यादि । हेषितं वाजिध्वनिः । गजबृंहितं हस्तिस्वनः । रुतं शब्दः । रुतशब्दः कौशिकं चेत्यत्रापि संबन्धनीयः, तेनोलूकस्य रुतमित्यर्थः । यायिन इति गच्छन्तः पुरुषाः; विपरीतं निमित्तं पश्चाद्दर्शनीयम् ॥ २७–३१ ॥

**पत्रपुष्पफलोपेतान् सक्षीरान्नीरुजो द्रुमान् ॥**
**आश्रिता वा नभोवेश्मध्वजतोरणवेदिकाः ॥ ३२ ॥**
**दिक्षु शान्तासु वक्कारो मधुरं पृष्ठतोऽनुगाः ॥**
**वामा वा दक्षिणा वाऽपि शकुनाः कर्मसिद्धये ॥३३॥**
**शुष्केऽशनिहतेऽपत्रे वल्लीनद्धे सकण्टके ॥**
**वृक्षेऽथवाऽश्मभस्मास्थिविट्तुषाङ्गारपांशुषु ॥ ३४ ॥**
**चैत्यवल्मीकविषमस्थिता दीप्तखरस्वराः ॥**
**पुरतो दिक्षु दीप्तासु वक्कारो नार्थसाधकाः ॥ ३५ ॥**
**पुन्नामानः खगा वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ॥**
**दक्षिणाद्वामगमनं प्रशस्तं श्वशृगालयोः ॥**
**वामं नकुलचाषाणां नोभयं शशसर्पयोः ॥ ३६ ॥**
**भासकौशिकयोश्चैव न प्रशस्तं किलोभयम् ॥**
**दर्शनं वा रुतं वाऽपि न गोधाकृकलासयोः ॥ ३७ ॥**
**दूतैरनिष्टैस्तुल्यानामशस्तं दर्शनं नृणाम् ॥**
**कुलत्थतिलकार्पासतुषपाषाणभस्मनाम् ॥ ३८ ॥**
**पात्रं नेष्टं तथाऽङ्गारतैलकर्दमपूरितम् ॥**
**प्रसन्नेतरमद्यानां पूर्णं वा रक्तसर्षपैः ॥ ३९ ॥**
**शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः ॥**
**नेष्यन्ते पतितान्त्यदीनान्धरिपवस्तथा ॥ ४० ॥**

शकुनान् निर्दिशन्नाह—पत्रेत्यादि । नीरुज इति कृमिदावाग्न्याद्यनुपहतान् । आश्रितशब्दो नभःप्रभृतिभिः सह प्रत्येकं संबध्यते । नभ आकाशं, वेश्म गृहं, ध्वजा पताका देवादीनां, तोरणमार्द्रवंशादिरचितं प्रतोल्याकारं, वेदिका इति

१ 'धृतिमान्' इति पा० । २ 'वर्धमाना स्वलङ्कृता' इति पा० । 'वर्धमाना इति शरावाः, ते च स्वलङ्कृता इति आलेपादिना मण्डिताः । केचिदलङ्कृता इति कन्याविशेषणं मन्यन्ते । अन्ये त्वङ्कारोपितं कुमारं कुमारीं वा वर्धमानमाहुः' इति चक्रः । ३ 'सुमना' इति पा० ।

१ 'अन्ये त्वङ्कारोपितं कुमारं कुमारीं वा वर्धमानमाहुः' इति चक्रः । २ 'राजभवनं' इति पा० ।

विवाहादिनिमित्तमामेष्टकादिरचितश्चतुरकः । दिक्षु शान्तास्विति पूर्वासूत्तरासु चेत्यर्थः; अन्ये तु आलिङ्गिताऽवधूमितदीप्तवर्जितास्वित्याचक्षते । वक्कार इति शब्दायमानाः । पृष्ठतोऽनुगा इति पृष्ठप्रदेशानुगता इत्यर्थः । विपरीतान् शकुनान्निर्दिशन्नाह-शुष्के इत्यादि । अशनिहते वज्रहते । अपत्रे पत्ररहिते । वल्लिनद्धे लतावेष्टिते । सकण्टके कण्टकसहिते । इत्थंभूते वृक्षे 'आश्रिता' इत्यध्याहारः । अश्मा पाषाणः । भस्म रक्षा । विट् विष्ठा । तुषा धान्यत्वचः । पांशुः धूलिः । चैत्यं स्मशानवृक्षः । दीप्तस्वराः कुस्वराः चिचीचीकारादयः, खरस्वराः उत्कटशब्दाः । दिक्षु दीप्तास्विति आग्नेययाम्यनैर्ऋतीषु । पुन्नामानः खगा वामा इति पुन्नामधेयाः पक्षिणो वामपार्श्वे वक्कारः शुभाः; तद्यथा—हंसकारण्डवचक्रवाकादयः । स्त्रीसंज्ञा दक्षिणाः शुभा इति कोकिलाबलाकादयः स्त्रीसंज्ञा दक्षिणपार्श्ववर्तिनः शुभाः । एतेन स्त्रीपुंसंज्ञाः पक्षिण इत्थमेव शुभाः, अन्यथा अशुभाः, इति परमार्थतो विपरीतशकुनमेव कथितं भवति । पूर्वानुक्तविपरीतनिमित्तं निर्दिशन्नाह-दक्षिणादित्यादि । अत्रापि तद्विपर्ययेण दक्षिणगमनं प्रशस्तमित्युक्तं भवति । नोभयमिति उभयमपि वामदक्षिणमपि गमनं न प्रशस्तमित्यर्थः । भासेत्यादि भासो गोकुलचारी गृध्रविशेषः । उभयमिति वामदक्षिणमिति । दर्शनं वा रुतमित्यादि । कृकलासः 'कण्टिकाया' इति लोके; पूर्वदेशीयास्तु गिरिगिटमाचक्षते । गोधाकृकलासयोर्दर्शनं रुतं वामतो दक्षिणतः पुरतः पृष्ठतो वा न प्रशस्तमिति । दूतैरनिष्टैरित्यादि । अनिष्टैरिति नपुंसकगर्दभोष्ट्ररथप्रासादिभिस्तुल्यानां समानानामन्येषामपि नृणां दर्शनं प्रस्थाने न प्रशस्तम् । कुलत्थेत्यादि । कुलत्थादीनां पात्रमङ्गारादिपूरितं च नेष्टं न प्रशस्तमित्यर्थः । प्रसन्नेतरमद्यानामित्यादि । प्रसन्ना मद्यस्योपर्यच्छो भागः; तदितरेषां मद्यानां पूर्णमप्रशस्तं, तथा रक्तसर्षपपूर्णं च न प्रशस्तम् । शवकाष्ठेत्यादि शवादीनां पथि मार्गे संगमाः संयोगा न प्रशस्ताः । शवो मृतकः । काष्ठं दारु, पलाशं पर्णम् । 'शुष्काणां' इत्यत्र स्थाने केचित् 'रूढानां' इति पठन्ति । तेषां मते रूढानां पुराणानामित्यर्थः । नेष्यन्ते न प्रशस्यन्ते । पतिताः पञ्च महापातकिनः । अन्तःस्थाः चण्डालादयः । दीनो निरुत्साहः ॥ ३२—४० ॥

**मृदुः शीतोऽनुकूलश्च सुगन्धिश्चानिलः शुभः ॥**
**खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः ॥ ४१ ॥**

अनिलं निर्दिशन्नाह—मृदुरित्यादि । अनुकूलः पृष्ठानुगामी । प्रतिलोमः अभिमुखः ॥ ४१ ॥

**ग्रन्थ्यर्बुदादिषु सदा छेदशब्दस्तु पूजितः ॥**
**विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च ॥ ४२ ॥**
**रक्तपित्तातिसारेषु रुद्धशब्दः प्रशस्यते ॥**
**एवं व्याधिविशेषेण निमित्तमुपधारयेत् ॥ ४३ ॥**

रोगविशेषादपि निमित्तविशेषमनुक्तं निर्दिशन्नाह-ग्रन्थीत्यादि । व्याधिविशेषेण अनुक्तेन व्याधिभेदेनेत्यर्थः । निमित्तमिति शुभाशुभसूचकम् । अन्ये तु-"एवं व्याधिविशेषेण निमित्तमुपधारयेत्" इत्यमुं पाठमन्यथा पठन्ति व्याख्यानयन्ति च, स चाभावान्न लिखितः ॥ ४२ ॥ ४३ ॥

**तथैवाक्रुष्टहाकष्टमाक्रन्दरुदितस्वनाः ॥**
**छर्द्या वातपुरीषाणां शब्दो वै गर्दभोष्ट्रयोः ॥ ४४ ॥**

सामान्यं शब्दनिमित्तं दर्शयन्नाह-तथैवेत्यादि । आक्रुष्टमाक्रोशः । आक्रुष्टादिभिः स्वनशब्दः प्रत्येकं संबध्यते । हाकष्टंशब्दः खेदार्थः । आक्रन्द आक्रोशस्वनः । अमुं श्लोकं बाहुल्येन न पठन्ति । **पञ्जिकाकारगयदासेन** तु विशिष्टपाठशुद्धिकारेण लिखितो व्याख्यातश्चेत्यत्रापि लिखितः ॥ ४४ ॥

**प्रतिषिद्धं तथा भग्नं[1] क्षुतं स्खलितमाहतम् ॥**
**दौर्मनस्यं च वैद्यस्य यात्रायां न प्रशस्यते ॥ ४५ ॥**

वैद्यस्यापि गेहे वागादिचेष्टितं दर्शयन्नाह-प्रतीत्यादि । प्रतिषिद्धमिति निषेधवचनं 'मागच्छ' इत्यादिकं, भग्नं कीलकादिभङ्गवचनं, क्षुतं छिक्कितं; त्रयमेतद्वाग्विचेष्टितम् । 'भग्नं' इत्यस्य स्थाने केचित् 'लग्नं' इति पठन्ति, व्याख्यानयन्ति च-लग्नं वस्त्रादिसङ्गः । स्खलितमाहतमेतत् कायविचेष्टितम् । स्खलितं लुण्ठनं पादादेः, आहतमिति आहननम् । दौर्मनस्यं चित्तविचेष्टितम् ॥ ४५ ॥

**प्रवेशेऽप्येतदुद्देशादवेक्ष्यं च तथाऽऽतुरे ॥**
**प्रतिद्वारं गृहे चास्य पुनरेतन्न गण्यते ॥ ४६ ॥**

वैद्यगृहविधिमातुरगृहेऽप्यतिदिशन्नाह-प्रवेशे इत्यादि । एतत् पूर्वोक्तं शुभाशुभनिमित्तं, प्रवेशेऽप्यवेक्ष्यं द्रष्टव्यम् । उद्देशात् संक्षेपात् । आतुरे आतुरगृहे । प्रतिद्वारं द्वारं प्रति । गृहे गृहाभ्यन्तरे, अस्य आतुरस्य, एतत् पूर्वोक्तं निमित्तं, न गण्यते न मन्यत इत्यर्थः । केचित् 'प्रतिद्वारं गृहं चास्य' इत्यादि पाठं मन्यन्ते । प्रतिशब्दो लक्षणा(णे)र्थे; तेन द्वारं लक्षीकृत्य, गृहं च लक्षीकृत्येति । अत्रोद्देशात् संक्षेपादातुरेऽप्यवेक्ष्यमिति संबन्धः ॥ ४६ ॥

**केशभस्मास्थिकाष्ठाश्मतुषकार्पासकण्टकाः ॥**
**खट्वोर्ध्वपादा मद्यापो वसा तैलं तिलास्तृणम् ॥४७॥**
**नपुंसकव्यङ्गभग्ननग्नमुण्डासिताम्बराः ॥**
**प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गताः ॥ ४८ ॥**

आतुरगृहे गतस्य यात्रोन्मुखस्य च वैद्यस्य विपरीतनिमित्तं दर्शयन्नाह-केशभस्मेत्यादि । मुण्डा मुण्डितमुण्डाः । असिताम्बरा रक्तवस्त्राः ॥ ४७ ॥ ४८ ॥

**भाण्डानां संकरस्थानां स्थानात् संचारणं तथा ॥**
**निखातोत्पाटनं भङ्गः पतनं निर्गमस्तथा ॥ ४९ ॥**
**वैद्यासनावसादो वा रोगी वा स्यादधोमुखः ॥**
**वैद्यं संभाषमाणोऽङ्गं कुड्यमास्तरणानि वा ॥ ५० ॥**

---

१ 'लग्नं' इति पा० ।

प्रमृज्याद्वा धुनीयाद्वा करौ पृष्ठं शिरस्तथा ॥
हस्तं चाकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि ॥ ५१ ॥
यो वैद्यमुन्मुखः पश्यन्नुन्मार्ष्टि स्वाङ्गमातुरः ॥
न स सिध्यति वैद्यो वा गृहे यस्य न पूज्यते ॥ ५२ ॥
भवने पूज्यते वाऽपि यस्य वैद्यः स सिध्यति ॥

एतत्पुनरातुरगृहेऽपि गण्यत इत्याह-भाण्डानामित्यादि । भाण्डानाम् उपकरणद्रव्याणाम् । संकरस्थानां मिलितानाम् । संचारणम् इतस्ततो नयनम् । निखातस्य भाण्डस्योत्पाटनमुद्धरणमित्यर्थः । भङ्गः स्फुटनम् । पतनं हस्तादेरधोभ्रंशः । निर्गमो गृहाभ्यन्तराद्बाह्यतो गमनम् । अवसादो भङ्गः । वैद्यं संभाषमाणो वैद्येन सहालापं कुर्वाणोऽङ्गं प्रमृज्यात्, कुड्यं भित्तिं वा आस्तरणानि प्रच्छादनवस्त्राणि वा प्रमृज्यात् प्रोञ्छयेदित्यर्थः । धुनीयात् कम्पयेत् । कानित्याह-करौ पृष्ठं शिरस्तथा । न्यसेत् निक्षिपेत् । उन्मुख इति ऊर्ध्वमुखः । उन्मार्ष्टि ऊर्ध्वं प्रोञ्छति । केचिद्वृद्धाः पठन्ति—न स सिध्यतीत्यादि ॥ ४९—५२ ॥—

शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च ॥ ५३ ॥
आतुरस्य ध्रुवं तस्माद्दूतादीन् लक्षयेद्भिषक् ॥

दूतादेः शुभाशुभस्य यथासंख्यं शुभाशुभमेव फलं निर्दिशन्नाह-शुभमित्यादि ॥ ५३ ॥—

स्वप्नानतः प्रवक्ष्यामि मरणाय शुभाय च ॥ ५४ ॥
सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ॥
स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्दभैः ॥ ५५ ॥
वराहैर्महिषैर्वाऽपि यो यायाद्दक्षिणामुखः ॥
रक्ताम्बरधरा कृष्णा हसन्ती मुक्तमूर्धजा ॥ ५६ ॥
यं चाकर्षति बद्ध्वा स्त्री नृत्यन्ती दक्षिणामुखम् ।
अन्तावसायिभिर्यो वाऽऽकृष्यते दक्षिणामुखः ५७
परिष्वजेरन् यं वाऽपि प्रेताः प्रव्रजिता(न)स्तथा ॥
मुहुराघ्रायते यस्तु श्वापदैर्विकृताननैः ॥ ५८ ॥
पिबेन्मधु च तैलं च यो वा पङ्केऽवसीदति ॥
पङ्कप्रदिग्धगात्रो वा प्रनृत्येत् प्रहसेत्तथा ॥ ५९ ॥
निरम्बरश्च यो रक्तां धारयेच्छिरसा स्रजम् ॥
यस्य वंशो नलो वाऽपि तालो वोरसि जायते ॥६०॥
यं वा मत्स्यो ग्रसेद्यो वा जननीं प्रविशेन्नरः ॥
पर्वताग्रात् पतेद्यो वा श्वभ्रे वा तमसाऽऽवृते ॥६१॥
ह्रियेत स्रोतसा यो वा यो वा मौण्ड्यमवाप्नुयात् ॥
पराजीयेत बध्येत काकाद्यैर्वाऽभिभूयते ॥ ६२ ॥
पतनं तारकादीनां प्रणाशं दीपचक्षुषोः ॥
यः पश्येद्देवतानां वा प्रकम्पमवनेस्तथा ॥ ६३ ॥
यस्य छर्दिर्विरेको वा दशनाः प्रपतन्ति वा ॥
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम् ॥ ६४ ॥
पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति ॥
कार्पासतैलपिण्याकलोहानि लवणं तिलान् ॥ ६५ ॥
लभेताश्नीत वा पक्वमन्नं यश्च पिबेत् सुराम् ॥
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ६६

दूतादिशेषं स्वप्नं दर्शयन्नाह-स्वप्नानित्यादि । निद्रोपप्लुतेन रजोयुक्तेन मनसा विषयग्रहणं स्वप्नः । सुहृद्दृष्टाः स्वप्ना निमित्तमात्रमेव; स्वयं दृष्टास्तु प्रकृत्यादिवर्जं गुरुतराः । अशुभस्वप्नाभिदर्शयन्नाह-स्नेहेत्यादि । करभादिष्वारुह्य तैलाभ्यक्तशरीरः सन् यो यायाद्गच्छेत्; अनेन दुःस्वप्नेन षण्मासैर्म्रियते परं राजयक्ष्मणा रोगेण । अन्तावसायिभिः चाण्डालैः । परिष्वजेरन् आलिङ्गेयुः । प्रव्रजिताः शैवपाशुपतादयः । मुहुर्वारंवारम् । आघ्रायते चुम्ब्यते, 'भक्ष्यते' इत्यन्ये । श्वापदैः व्याघ्रादिभिः । पिबेन्मधु च तैलं चेति मधु पुष्परसः । चकारद्वयादेकैकशः पानमत्र ज्ञेयम्; केचिदत्र मधु मद्यमित्याहुः; तन्न, केवलस्य मद्यस्य पानं प्रशस्तं स्वप्नाध्यायशास्त्रेषु कथितं; यत्र तु सुरापानमशोभनमित्युक्तं, तत्र सुरा पिष्टमयी ग्राह्या । पङ्केऽवसीदतीति पङ्के कर्दमे, अवसीदति ब्रुडतीत्यर्थः, पङ्कावसादस्तु सद्योमृत्युकरः । रक्तां स्रजं रक्तपुष्पमालाम् । ग्रसेदिति गिलतीत्यर्थः । जननीं प्रविशेदिति मातुरुदरे प्रविशतीत्यर्थः । श्वभ्रे विवरे । तमसाऽऽवृते अन्धकारवेष्टिते । ह्रियेत नीयेत, स्रोतसा नाद्या । मौण्ड्यं कृत्तकेशता । पराजीयेत पराजितो भवतीत्यर्थः । बध्येत बन्धनं प्राप्नुयादित्यर्थः । तारकादीनामिति आदिग्रहणाच्चन्द्रादिग्रहणम् । प्रणाशं दीपचक्षुषोरिति स्वप्नेऽकस्माद्दीपं नष्टं पश्यति, स्वचक्षुषी विगलिते पश्यतीत्यर्थः । देवतानां प्रकम्पमिति देवतानां देवताप्रतिमानां कम्पमित्यर्थः । अवनेः पृथिव्याः । यूपो यज्ञपशुबन्धनकाष्ठं, पारिभद्रको निम्बवृक्षः, कोविदारः काञ्चनारः । लौहानि लोहमयानि वस्तूनि । पक्वमन्नं सिद्धमित्यर्थः; केचिदन्नस्थाने 'मांसं' इति पठन्ति । सुरा पिष्टमयी न तु मद्यं, तस्य शोभनत्वात् । ऋच्छति प्राप्नोतीत्यर्थः ॥ ५४—६६ ॥

यथास्वं प्रकृतिस्वप्नो विस्मृतो विहतस्तथा ॥
चिन्ताकृतो दिवा दृष्टो भवन्त्यफलदास्तु ते ॥६७॥

---

१ 'प्रमृष्याद्वा' पा० । २ 'कुर्वन्' इति पा० । ३ 'वाऽऽकर्षति' इति पा० । ४ 'मूर्धन्याघ्रायते' इति पा० ।

१ 'योऽधिरोहति मानवः' इति पा० । २ 'प्रासादप्रतिमानां' इति पा० । ३ 'यज्ञपशुहिंसनकाष्ठम्' इति पा० । ४ 'विहतशब्देन तन्त्रान्तरे विफलत्वेनैव कथिता अतिदीर्घस्वप्नादयो ग्राह्याः । उक्तं हि चरके-"दिवास्वप्नमतिह्रस्वमतिदीर्घं तथैव च । दृष्टः प्रथमयामे यः स्वप्नः सोऽप्यफलो भवेत्" (च. इं. अ. ५) इति । चिन्ताकृतशब्देन दृष्टश्रुतानुभूतप्रार्थितकल्पितानां पञ्चानामपि विकल्पानां ग्रहणम् । एतद्व्यतिरिक्तस्य भाविफलसंबन्धस्यैवेह ग्रहणम् । स च स्वप्नोऽरिष्टरूपो मनोवहस्रोतसामतिबलैस्त्रिभिरेव दोषैः पूरितत्वाद्दृश्यते । यदुक्तं चरके-"मनोवहानां दुष्टत्वाद्दोषैरतिबलैस्त्रिभिः । स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे" (च. इं. अ. ५)-इति । ईदृशश्च दोषप्रकोपः पच्यमानमारकादृष्टकृत एव ज्ञेयः । एवं शुभकालेऽपि स्वप्नः पच्यमानशुभकर्मजन्य एव ज्ञेयः । यथा भूतनिमित्तादिपच्यमान-

विफलान् स्वप्नाननरिष्टभूतान् दर्शयन्नाह—यथास्वमित्यादि । स्वस्याः प्रकृतेरनतिक्रमेण यथास्वं, यथा—वातप्रकृतौ 'वियति गच्छति संभ्रमेण च' ( शा. अ. ४ ), पित्तप्रकृतौ 'संपश्येदपि च हुताशविद्युदुल्काः' ( शा. अ. ४ ), श्लेष्मप्रकृतौ 'प्रसुप्तः सन् कमलहंसचक्रवाकान् संपश्येदपि च जलाशयान् मनोज्ञान्' ( शा. अ. ४ )। विस्मृतोऽतिशयेन न स्मृतः । विहतः पूर्वं विरूपो दृष्टः स चानन्तरं विशिष्टेन स्वप्नेन हतः । उक्तं च,—"अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः । सौम्यं पश्येच्छुभाकारं तस्य विद्याच्छुभं फलम्-" ( च. इ. अ. ५ ) इति । तथाग्रहणात् सुस्वप्नं दृष्ट्वाऽस्वपतां सद्यःफलत्वं महाफलत्वं च सूच्यते । अन्ये तु 'विहितश्च यः' इति पठन्ति । दिवादृष्ट इति 'स्वप्नः' इति शेषः । भवन्त्यफलदास्तु ते इति तुशब्दश्चकारार्थः, तेनातिह्रस्वातिदीर्घप्रथमयामदृष्टाश्चाफलाः समुचीयन्ते । 'भवत्य-फल एव स' इति केचित् पठन्ति ॥ ६७ ॥

**ज्वरितानां शुना सख्यं कपिसख्यं तु शोषिणाम् ॥**
**उन्मादे राक्षसैः प्रेतैरपस्मारे प्रवर्तनम् ॥ ६८ ॥**
**मेहातिसारिणां तोयपानं स्नेहस्य कुष्ठिनाम् ॥**
**गुल्मेषु स्थावरोत्पत्तिः कोष्ठे, मूर्ध्नि शिरोरुजि ॥६९॥**
**शष्कुलीभक्षणं छर्द्यामध्वा श्वासपिपासयोः ॥**
**हारिद्रं भोजनं वाऽपि यस्य स्यात् पाण्डुरोगिणः ७०**
**रक्तपित्ती पिबेद्यस्तु शोणितं स विनश्यति ॥**

उत्तरतन्त्रपठितविशिष्टव्याधिषु विशिष्टमेव स्वप्नदर्शनारिष्टं दर्शयन्नाह—ज्वरितानामित्यादि । शुना सख्यमिति कुकुरेण सह मैत्र्यं, कपिसख्यमिति वानरमैत्र्यम् । प्रवर्तनशब्द उन्मादापस्माराभ्यां सह प्रत्येकं संबध्यते । गुल्मेषु गुल्मरोगेषु, स्थावरोत्पत्तिर्वृक्षोत्पत्तिः, कोष्ठे उदरे । मूर्ध्नि मस्तके स्थावरोत्पत्तिः, शिरोरुजि मस्तकव्यथायाम् । छर्द्यां 'चणकादिपिष्टकृता सतिला तैलभृष्टा शष्कुलीत्युच्यते, तस्या भक्षणम् । अध्वा मार्गः, तत्र गमनं, श्वासपिपासयोः । हारिद्रमिति हरिद्रारक्तभोजनभक्षणमित्यर्थः ॥ ६८—७० ॥—

**स्वप्नानेवंविधान् दृष्ट्वा प्रातरुत्थाय यत्नवान् ॥ ७१ ॥**
**दद्यान्माषांस्तिलांल्लोहं विप्रेभ्यः काञ्चनं तथा ॥**
**जपेच्चापि शुभान् मन्त्रान् गायत्रीं त्रिपदां तथा ७२**
**दृष्ट्वा तु प्रथमे यामे स्वप्याद् ध्यात्वा पुनः शुभम् ॥**
**जपेद्वाऽन्यतमं वेदं ब्रह्मचारी समाहितः ॥ ७३ ॥**
**न चाचक्षीत कस्मैचिद्दृष्ट्वा स्वप्नमशोभनम् ॥**

दैवकृतमेव शुभाशुभसूचकं भवति' इति चक्रः । चरके हि सप्तविधं स्वप्नदर्शनमुक्तम्-'दृष्टं श्रुतानुभूतं च कल्पितं प्रार्थितं तथा । भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः' ( च. इं. अ. ५ ) इति । तत्र भाविकमिति भाविफलसूचकम् । भाविकं दोषजं च स्वप्नदर्शनं फलवत्, अन्यत्त्वफलमिति ज्ञेयम् ।

१ 'देवं' इति पा० ।

**देवतायतने चैव वसेद्रात्रित्रयं तथा ॥**
**विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात् प्रविमुच्यते ॥ ७४ ॥**

अशुभस्वप्नदर्शने किंचिच्चिकित्सितमाह—स्वप्नानित्यादि । प्रथमे यामे प्रथमप्रहरे । दृष्ट्वा विलोक्य दुःस्वप्नम् । स्वप्यात् शयीत । किं कृत्वा ? ध्यात्वा शुभं कल्याणमित्यर्थः । यद्यपि प्रथमयामलक्ष्य(दृष्ट)स्वप्नस्य निष्फलत्वं कथितं, तथाऽपि दुःस्वप्नभयादयं विधिः कर्तव्यः । अन्यतमम् एकतमम् । समाहितः सावधानः । न चाचक्षीत न च कथयेत् ॥ ७१—७४ ॥

**अत ऊर्ध्वं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम् ॥**
**देवान् द्विजान्गोवृषभान् जीवतः सुहृदो नृपान् ७५**
**समिद्धमग्निं साधूंश्च निर्मलानि जलानि च ॥**
**पश्येत् कल्याणलाभाय व्याधेरपगमाय च ॥ ७६ ॥**
**मांसं मत्स्यान् स्रजः श्वेता वासांसि च फलानि च॥**
**लभेत धनलाभाय व्याधेरपगमाय च ॥ ७७ ॥**
**महाप्रासादसफलवृक्षवारणपर्वतान् ॥**
**आरोहेद्द्रव्यलाभाय व्याधेरपगमाय च ॥ ७८ ॥**
**नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान् ॥**
**तरेत् कल्याणलाभाय व्याधेरपगमाय च ॥ ७९ ॥**
**उरगो वा जलौको वा भ्रमरो वाऽपि यं दशेत् ॥**
**आरोग्यं निर्दिशेत्तस्य धनलाभं च बुद्धिमान् ॥ ८० ॥**
**एवं रूपाञ् शुभान् स्वप्नान् यः पश्येद्व्याधितो नरः**
**स दीर्घायुरिति ज्ञेयस्तस्मै कर्म समाचरेत् ॥ ८१ ॥**
**इति सुश्रुतसंहितायां सूत्रस्थाने विपरीताविपरीतस्वप्ननिदर्शनीयो नामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥**

अत ऊर्ध्वमित्यादि । सुहृदो मित्राणि । समिद्धमग्निं प्रज्वलितं वह्निम् । कल्याणलाभायेति शुभवस्तुप्राप्तय इत्यर्थः । अपगमो निवृत्तिः । नद्यो गङ्गाद्याः, नदाः शोणाद्याः प्रसिद्धाः, क्षुभितान् प्रचलितान् वृद्धिं गतानित्यर्थः, कलुषोदकान् यत एव क्षुभितानत एवाप्रशस्तोदकानित्यर्थः । उरगः सर्पः, दशेद्भक्षयेत् ॥ ७५-८१॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने एकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

## त्रिंशत्तमोऽध्यायः ।

**अथातः पञ्चेन्द्रियार्थविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥**

१ 'परिमुच्यते' इति पा० । २ 'विप्रांश्च' इति पा० । ३ 'द्विविधं रिष्टं-बाह्यं भूतादिगतमान्तरं शरीरगतं च । तत्र वैधेन प्रथममुपस्थितं भूतादिगतमेव परीक्ष्यत इति पूर्वाध्यायेनोक्तं, तदनु चातुरगृहगतेनातुरगतं परीक्षणीयमिति आतुरगतरिष्टज्ञानार्थं पञ्चेन्द्रियार्थविप्रतिपत्तिरध्यायोऽभिधीयते । पञ्चेन्द्रियार्थाः शब्दादयः, तेषु विरुद्धा प्रतिपत्तिः तथा तेषामेवाऽन्यथाभावो विप्रतिपत्तिः ।' इति चक्रः ।

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पञ्चेन्द्रियाणि श्रोत्रादीनि, तेषामर्थाः शब्दादयः, अर्थानां शब्दादीनां विप्रतिपत्तिर्विपरीतावबोधो हीनातियोगेनेत्यर्थः । पञ्चग्रहणं कर्मेन्द्रियाणामुभयात्मकस्य मनसश्च निषेधार्थं; कर्मेन्द्रियाणां शरीरग्रहणेनैव ग्रहणात्; मनसस्त्विन्द्रियग्रहणेनैव ग्रहणं, मनोव्यतिरेकेणेन्द्रियाणां विषयग्रहणाभावात् ॥ १ ॥ २ ॥

**शरीरशीलयोर्यस्य[1] प्रकृतेर्विकृतिर्भवेत् ॥**
**तत्त्वरिष्टं समासेन, व्यासतस्तु निबोध मे ॥ ३ ॥**

प्रागध्याये दूतादिज्ञेयबाह्यारिष्टं प्रतिपाद्यास्मिन्नध्याये आभ्यन्तरमरिष्टमाश्रयभेदेन त्रिविधं संक्षेपेण दर्शयन्नाह—शरीरशीलयोरित्यादि । शरीरं पाञ्चभौतिकं प्राणिकायः, शीलं मानसो भावः, अन्ये तु 'शीलं समाधानयुक्तं मनः' इत्याचक्षते; प्रकृतिः स्वाभाविकः प्राणिनो निजो धर्मः; एतेषां शरीरशीलप्रकृतीनां त्रयाणां भावानां विकृतिर्वैपरीत्यं यद्भवेत्तदरिष्टं मरणलक्षणं भवति । समासेन संक्षेपेण । अन्ये तु 'शरीरशीलयोर्द्वयोर्या[2] प्रकृतिस्तस्या या विकृतिस्तदरिष्टं मरणलक्षणं भवति' इत्याचक्षते । प्रकृतेः प्रस्तावात् किंचिद्विचारः क्रियते, सा हि प्रकृतिर्जात्यादीन् षडुपाधीनपेक्षते । तदुक्तं चरके,–"प्रकृतिर्हि जातिप्रसक्ता च कुलप्रसक्ता च देशानुपातिनी च कालानुपातिनी च वयोनुपातिनी च प्रत्यात्मनियता च–" ( च. इं. अ. १ ) इति । सर्वभेदेषु चकारकरणमन्योन्यसमावेशार्थं; तत्र जातिप्रसक्ता नाम तासु तासु मनुष्यादिजातिषु ते ते करचरणादयः स्वभावविशेषाः, वचनेषु च नानाविविधा एव व्यक्ताव्यक्तादयो धर्माः, मनसि च धर्माधर्ममैथुनाहारप्रभृतयोऽपि भावाः; कुलप्रसक्ता नाम द्विजकुले तपःप्रियतादयः, क्षत्रियकुले समरप्रियतादयो धर्मविशेषा भवन्ति; देशानुपातिनी नाम लाटकर्णाटादीनां काये वाचि मनसि च ते ते स्वभावविशेषा विशेषेण भवन्ति; कालानुपातिनी नाम देहादिषु दौर्बल्याद्यादानाद्यपेक्षं, गदेषु च दोषमलाद्यपेक्षिणी; वयोनुपातिनी नाम बाल्याद्यवस्थासु बालादौ सौकुमार्यादयो धर्माः; एतेषु त्रिष्वनुपातिशब्दप्रयोगात् संचारित्वं स्वभावगुणानामिष्टं; प्रत्यात्मनियतेति आत्मन्यात्मनि नियता प्रतिपुरुषनियतेत्यर्थः, ते पुनः काये वाचि मनसि च स्वभावविशेषाः प्रतिपुरुषभेदभिन्ना दृश्यन्ते; एवं तावत् षोडा प्रकृतिर्भवत्येव । अन्ये तु "सप्तम्यपि भवेत् प्रायो देहे लक्षणहैतुकी । उत्तमाधममध्यायुर्लिङ्गानां कारणं हि सा–" इति मन्यन्ते । अन्ये तु प्रकृतिं सत्त्वरजस्तमोमयीं वातपित्तश्लेष्ममयीं वा मन्यन्ते । तस्या[3] विकृतिर्वैपरीत्यमन्यथाभावः ॥ ३ ॥

**शृणोति विविधाञ् शब्दान् यो दिव्यानामभावतः ॥**
**समुद्रपुरमेघानामसंपत्तौ च निःस्वनान् ॥ ४ ॥**
**तान् स्वनान्नावगृह्णाति मन्यते चान्यशब्दवत् ॥**
**ग्राम्यारण्यस्वनांश्चापि विपरीताञ् शृणोति च ॥५॥**
**द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति ॥**
**न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥६॥**

आतुरगतग्राह्यविरुद्धशब्दप्रतिपत्तिं निर्दिशन्नाह—शृणोतीत्यादि । विविधान् बहुप्रकारान् संजल्पपाठगीतवाद्यादीन् । दिव्यानां सिद्धकिन्नरगन्धर्वादीनाम् । समुद्रपुरमेघानामित्यत्र समुद्रादिभिः सह निःस्वनशब्दः प्रत्येकं संबध्यते । एतेन समुद्रादीनामसंपत्तावभावेऽपि तेषां शब्दाञ्छृणोतीत्यर्थः । पुरस्वनः पुरवासिप्राणिशब्दः; अन्ये तु पुरस्थाने 'तूर्य' इति पठन्ति; अपरे 'वात' इति पठन्ति । तान् स्वनानित्यादि विद्यमानेषु वा समुद्रादिस्वनेषु तान्न गृह्णाति, वाऽन्यशब्दवन्मन्यते । ग्राम्यस्वनान् ग्रामवासिप्राणिशब्दान्, आरण्यान् अरण्यवासिप्राणिध्वनीन्; विपरीतानिति ग्राम्यानारण्यानिव शृणोति, आरण्यान् ग्राम्यानिव शृणोतीत्यर्थः । द्विषच्छब्देषु शत्रुशब्देषु । सुहृन्मित्रादिः । अकस्माच्छ्रवणरोगं विना ॥ ४—६ ॥

**यस्तूष्णमिव गृह्णाति शीतमुष्णं च शीतवत् ॥**
**संजातशीतपिडको[1] यश्च दाहेन पीड्यते ॥ ७ ॥**
**उष्णगात्रोऽतिमात्रं च यः शीतेन प्रवेपते ।**
**प्रहाराङ्गाभिजानाति योऽङ्गच्छेदमथापि वा ॥ ८ ॥**

आतुरगतग्राह्यविरुद्धस्पर्शप्रतिपत्तिं दर्शयन्नाह—यस्तूष्णमित्यादि । अत्र शीतपिडका हि कफकृताः, तासां जाड्यादयो वेदनाविशेषाः प्राकृताः, दाहस्तु वैकृत इति । प्रहारो लगुडादिकृतः । अङ्गच्छेदः शस्त्रादिकृतः ॥ ७ ॥ ८ ॥

**पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ॥**
**वर्णान्यता[2] वा राज्यो वा यस्य गात्रे भवन्ति हि ॥९॥**

आतुरगतग्राह्यविरुद्धरूपप्रतिपत्तिं दर्शयन्नाह—पांशुनेत्यादि । पांशुर्धूलिः, अवकीर्णानि व्याप्तानि । राज्यो लेखा नीललोहितादयः ॥ ९ ॥

**स्नातानुलिप्तं[3] यं चापि भजन्ते नीलमक्षिकाः ॥**

---

१ 'तत्र प्रथमतः शारीरमानससकलारिष्टलक्षणमेव तावदाह–शरीरशीलयोरित्यादि । शरीरं प्राणिकायः, शीलं मनोवृत्तिः, शीलेन च मनो लक्ष्यते; तेन शरीरमनसोरित्यर्थः । अनयोः प्रकृतिः स्वभावः । सा च जात्यादीनुपाधीनपेक्षते । विकृतिरन्यथाभावः' इति चक्रः । २ 'द्वन्द्वयोः' इति पा० । ३ 'तस्या विकृतिर्वैपरीत्यं; यथा–प्रथमं सत्त्वप्रकृतिस्ततो रजस्तमःप्रकृतिरित्यादि; तथा, आदौ वातप्रकृतिस्ततः पित्तश्लेष्मप्रकृतिरित्यादि' इति पा० ।

१ 'संजातशीतपिडको यश्च दाहेन पीड्यते इति अत्र शीतपिडकोन्वितां शीतवेदनां न वेत्ति, दाहं चानुचितं वेत्तीतीन्द्रियविप्रतिपत्ती रिष्टं, तथा शीतपिडकोन्वितं शैत्यं न भवति दाहश्चानुचितो भवतीति स्पर्शान्यथाभावोऽपि रिष्टम्; एवमुष्णगात्र इत्यादावपि यथायोग्यतया इन्द्रियस्यार्थस्य वा विप्रतिपत्तिर्व्याख्येया' इति चक्रः । २ 'वर्णान्यभावो' इति पा० । ३ 'स्नातानुलिप्तमित्यादौ रिष्टे गन्धस्य रसस्य चान्यथाभावो रिष्टम् । नीलमक्षिका हि अत्यन्तमधुरे दुर्गन्धे च पतन्ति' इति चक्रः ।

आतुरगतामेव विरुद्धरसप्रतिपत्तिं दर्शयन्नाह—स्नातेत्यादि। पूर्वं स्नातः पश्चादनुलिप्त इत्थंभूतमपि सुगन्धिकायं बहिर्मलवर्जितं यदा नीलमक्षिकाः श्रयन्ते तदाऽसौ कालपक्वत्वादतिमधुरीभूतशरीरः, येन निर्मलशरीरोऽपि मक्षिकाभिः काम्यत इति। स्नातानुलिप्तमित्येतदरिष्टं वर्षावधि ॥—

**सुगन्धिर्वा[1]ऽति योऽकस्मात्तं ब्रुवन्ति गतायुषम् १०**

आतुरगतघ्राणविरुद्धगन्धप्रतिपत्तिं दर्शयन्नाह—सुगन्धिरित्यादि। अति सुगन्धिर्वाऽकस्मात् 'सुगन्धिप्रयोगं विना भवति' इति शेषः, इदमपि वार्षिकमरिष्टम् ॥ १० ॥

**विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् ॥**
**उपयुक्ताः क्रमाद्यस्य रसा दोषाभिवृद्धये ॥ ११ ॥**
**यस्य दोषाग्निसाम्यं च कुर्युर्मिथ्योपयोजिताः।**
**यो वा रसान्न संवेत्ति गतासुं तं प्रचक्षते ॥ १२ ॥**

आतुरगतपञ्चेन्द्रियार्थविप्रतिपत्तिं निर्दिश्याऽऽतुरग्राह्यपञ्चेन्द्रियार्थविप्रतिपत्तिनिर्देशाभिप्रायः, तत्र रसस्य देहमूलत्वेन प्रधानत्वात्तस्यैव विप्रतिपत्तिं दर्शयन्नाह—विपरीतेनेत्यादि। विपरीतेनेति मधुरोऽम्लः, अम्लो मधुर इत्यादि। उपयुक्ताः क्रमादिति 'पूर्वं मधुरमश्नीयात्' इत्यादिक्रमः। गतासुं गतप्राणम्। एतदरिष्टं मासिकम् ॥ ११ ॥ १२ ॥

**सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम् ॥**
**गृह्णीते वाऽन्यथा गन्धं शान्ते दीपे च नीरुजः १३**
**यो वा गन्धं न जानाति गतासुं तं विनिर्दिशेत् ॥**

गन्धग्रहणमधिकृत्याह—सुगन्धमित्यादि। शान्ते दीपे निर्वाणे प्रदीपे, यो गन्धं न जानाति। नीरुजो नीरोगः पीनसादिरोगवर्जितः ॥ १३ ॥—

**द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा १४**
**विपरीतेन गृह्णाति भावानन्यांश्च यो नरः ॥**

स्पर्शग्रहणमधिकृत्याह—द्वन्द्वानीत्यादि। द्वन्द्वानि कष्टकराणि; आदिग्रहणात् स्पर्शग्राह्याणि स्निग्धादिवीर्याणि। कालावस्था प्रवातनिर्वातवर्षाद्याः। दिश इति पूर्वादिकाः। अनेन मानसः स्पर्श उक्तः। द्विविधो हि स्पर्शः—स्पर्शेन्द्रियग्राह्यः, मानसश्च। तथा च तन्त्रान्तरम्—"स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च" (च. शा. अ. १) इति। अन्यांश्च भावान् द्रव्यगुणकर्माणि, विपरीतेन गृह्णाति। द्वन्द्वान्युष्णहिमादीन्येतदरिष्टमेकमासिकमिति; दिशो वैपरीत्येन गृह्णात्येतदरिष्टं त्रिमासिकम् ॥ १४ ॥—

**दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति १५**
**रात्रौ सूर्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम् ॥**
**अमेघोपप्लवे यश्च शक्रचापतडिद्गुणान् ॥ १६ ॥**
**तडित्वतोऽसितान् यो वा निर्मले गगने घनान् ॥**

१ 'सुगन्धि वातीति सुगन्धिगन्धमुद्वहति, 'वा' गतिगन्धनयोः, इत्यस्य 'वाति' इति गन्धनार्थे रूपम्' इति चक्रः।

**विमानयानप्रासादैर्यश्च संकुलमम्बरम् ॥ १७ ॥**
**यश्चानिलं मूर्तिमन्तमन्तरिक्षं च पश्यति ॥**
**धूमनीहारवासोभिरावृतामिव मेदिनीम् ॥ १८ ॥**
**प्रदीप्तमिव लोकं च यो वा प्लुतमिवाम्भसा ॥**
**भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति ॥ १९ ॥**
**न पश्यति सनक्षत्रां यश्च देवीमरुन्धतीम् ॥**
**ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम् ॥ २० ॥**
**ज्योत्स्ना[1]दर्शोष्णतोयेषु छायां यश्च न पश्यति ॥**
**पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्त्वजाम् २१**
**श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् ॥**
**पिशाचोरगनागानां भूतानां विकृतामपि ॥ २२ ॥**
**यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते ॥**
**आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात्[2] २३**

### इति सुश्रुतसंहितायां सूत्रस्थाने पञ्चेन्द्रियार्थविप्रतिपत्तिर्नाम त्रिंशोऽध्यायः ॥ ३० ॥

रूपग्रहणमधिकृत्याह—दिवेत्यादि। ज्योतींषि तारकादीनि। चन्द्रवर्चसमिति सूर्यमेव चन्द्रतेजःसमं पश्यतीत्यर्थः। अमेघोपप्लव इत्यादि। मेघैरनावृतेऽपि नभसीन्द्रधनुर्विद्युल्लताः 'पश्यति' इति शेषः। तडित्वतो विद्युद्युक्तान्, असितान् कृष्णान्, मेघानिति संबन्धः। अमेघोपप्लवे शक्रचापतडिल्लतावलोकनमित्यरिष्टं द्वित्रिमासिकम्। संकुलं व्याप्तम्। अम्बरम् आकाशम्। मूर्तिमन्तं देवताकारम्; अन्ये पुरुषाकारमित्याहुः। मेदिनीं पृथिवीं, नीहारः कुहेडी, येन प्रत्यूषकाले दिनं धूमावृतमिव भाति; नेत्ररोगं विनाऽपि धूमादिभिरावृतां मेदिनीं पश्यतीत्यर्थः। लोकं जगत्, प्रदीप्तमिव ग्रीष्मकालादन्तेऽपि ज्वलितमिव। आप्लुतमिव ब्रुडितमिव, अम्भसा पानीयेन। भूमिमष्टापदाकारामिति अष्टापदशब्देन लेखाभिः कोष्ठसंताननिर्मितं चतुरङ्गक्रीडनार्थमुच्यते। अरुन्धतीं वसिष्ठभार्यां, ध्रुवं तारकाविशेषम्, आकाशगङ्गाशब्देन श्लक्ष्णघनतारकासन्ततिर्नद्याकारोच्यते। आदर्शः प्रतिबिम्बदर्शनार्थं संपूर्णचन्द्रमाकारः कांस्यमय उच्यते। उष्णो घर्मः। ज्योत्स्नातपयोस्तु प्रतिच्छायां छायापुरुषं केचिन्मन्यन्ते। विकृतां प्रकृतेरन्यथाभूताम्। अन्यसत्त्वजाम् अन्येभ्यः प्राणिभ्यो जातामन्यसत्त्वजाताम्। श्वा कुकुरः, कङ्कः कङ्कमल्लः; तस्य लक्षणमाह,—"कङ्कः स्यात् कङ्कमल्लाख्यो बाणपक्षार्हपक्षकः। लोहपृष्ठो दीर्घपादः पक्षाधःपाण्डुवर्णभाक्—" इति। भूतानां देवयोनीनाम्, अथवा भूतानि प्राणिनस्तेषां; विकृतामपि विकृतां विकृतिं गतां छायां पश्यतीति संबन्धः। यो वा मयूरकण्ठाभमित्यादि सुदीप्तखदिराङ्गारज्वलितं धूमरहितमपि मयूरकण्ठाभं

१ 'ज्योत्स्नादौ उष्णशब्देन आतपदीपयोर्ग्रहणम्। यदुक्तं चरके—'ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि' (च. इ. अ. ७) इति' चक्रः। २ 'स्वस्थः स लभते व्याधिमित्यत्र सोऽपि व्याधिर्मरणाय भवतीति ज्ञेयम्, अन्यथा मरणव्यभिचरणेन रिष्टत्वानुपपत्तिः स्यात्' इति चक्रः।

नीलं धूमसदृशं पश्यतीत्यर्थः । अत्र 'दिवा ज्योतींषि' इत्यादिना 'विधूमं वह्निमीक्षते' इत्येतत्पर्यन्तेन ग्रन्थेन पञ्चविधं रूपमुक्तम्। तथाहि,–'दिवा ज्योतींषि' इत्यादिनाऽऽकाशस्थरूपिद्रव्यरूपमुक्तम्, आकाशरूपासंभवात्; 'यश्चानिलं' इत्यादिना वायुरूपमुक्तं; 'धूमनीहार' इत्यादिना पृथ्वीरूपमुक्तं; 'प्रदीप्तमिव' इत्यादिना वह्निरूपमुक्तम्, 'आप्लुतमिवाम्भसा' इत्यनेनापां रूपमुक्तं, एवं पञ्चधं रूपमुक्तम् । 'भूमिमष्टापदाकाराम्' इत्यनेन भूमेर्विकृतिदर्शनमुक्तं, पूर्वं तु धूमाद्यावरणदर्शनमेवेति न पौनरुक्त्यम् । 'न पश्यति सनक्षत्राम्' इत्यनेन व्योमस्थानामदर्शनमुक्तं, 'दिवा ज्योतींषि' इत्यादिना तु पूर्वं दर्शनमुक्तम्, अतो न पौनरुक्त्यम् । 'ज्योत्स्नादर्शोष्णतोयेषु' इत्यादिना रूपस्यायोग उक्तः, 'पश्यत्येकाङ्गहीनां वा' इत्यनेन रूपहीनयोग उक्तः, 'विकृतां च' इत्यनेन मिथ्यायोगो रूपस्योक्तः । अग्नेर्मिथ्याग्रहणमधिकृत्योक्तं 'यो वा मयूरकण्ठाभम्' इत्यादिना । एतदरिष्टफलं दर्शयन्नाह—आतुरस्य भवेन्मृत्युरित्यादि ॥ १५–२३ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने त्रिंशत्तमोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशत्तमोऽध्यायः ।

**अथातश्छायाविप्रतिपत्तिमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अत्र छायाशब्दानन्तरं लुप्तादिशब्दनिर्देशाद्ध्रीश्रीतुष्ट्यादिविप्रतिपत्तयो ग्राह्याः । वर्णप्रभाश्रिता या भवति सा छायाशब्देनोच्यते । छायाप्रभयोस्तु भेदः शास्त्रकारैरुक्तः; तथा च—"वर्णमाक्रमति च्छाया प्रभा वर्णप्रकाशिनी । आसन्ना लक्ष्यते च्छाया प्रभा दूराच्च लक्ष्यते" ( च. इ. अ. ७ )—इति । न केवलं वर्णप्रभाच्छायानां लक्षणभेदः, संख्याभेदोऽप्यस्ति; तथाहि,—चतुर्विधो वर्णः—गौरः, कृष्णः, श्यामः, गौरश्याम इति; प्रभा सप्तविधा—रक्ता, पीता, सिता, श्यावा, हरिता, पाण्डुरा, असिता, इति; छाया पञ्चविधा—स्निग्धा, विमला, रूक्षा, मलिना, संक्षिप्ता, इति ॥ १ ॥ २ ॥

**श्यावा लोहितिका नीला पीतिका वाऽपि मानवम्॥**
**अभिद्रवन्ति यं छायाः स परासुरसंशयम् ॥ ३ ॥**

छायाविरुद्धप्रतिपत्तिं दर्शयन्नाह—श्यावेत्यादि । अत्र यद्यपि श्यावा लोहितिका नीलेत्यादयः प्राकृताश्छायाः, तथाऽप्यभूतपूर्वा आकस्मिका विपर्ययेण या पुरुषमभिद्रवन्ति ता इह गृह्यन्ते; अभिद्रवन्ति अनुसरन्ति उपतिष्ठन्तीत्यर्थः । परासुर्गतप्राणः ॥ ३ ॥

**ह्रीरपक्रमते यस्य प्रभास्मृतिधृतिश्रियः ॥**
**अकस्माद्यं भजन्ते वा स गतासुरसंशयम् ॥ ४ ॥**

पूर्वाध्यायनिर्दिष्टशीलविकृतीः, तथा छायासदृशीं प्रभां निर्दिशन्नाह—ह्रीरित्यादि । ह्रीर्लज्जा, प्रभा पूर्वोक्तलक्षणा, स्मृतिः पूर्वानुभूतस्मरणं, धृतिः नियमात्मिका तुष्टिः सन्तोष इत्यर्थः, श्रीः कमनीयता । प्रभाविकृतिं विहायापराः शीलविकृतयो ज्ञेयाः । केचित् पठन्ति,—'ह्रीश्रियौ नश्यतो यस्य तेज ओजः स्मृतिः प्रभाः' इति; शेषं समं पठन्ति, व्याख्यानयन्ति च—श्रीर्धनं; तेजोऽत्र चेष्टालक्षणं बलमभिधीयते; ओजस्तु शुक्लं हृदयस्थं धातुधाम; शोभाधनतेजसां वैपरीत्यं वार्षिकमरिष्टं, स्मृतिबलादिविपर्ययः षाण्मासिकमरिष्टम् ॥ ४ ॥

**यस्याधरौष्ठः पतितः क्षिप्तश्चोर्ध्वं तथोत्तरः ॥**
**उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥ ५ ॥**
**आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति वा ॥**
**खञ्जनप्रतिमा वाऽपि तं गतायुषमादिशेत् ॥ ६ ॥**
**कृष्णा स्तब्धाऽवलिप्ता वा जिह्वा शूना च यस्य वै ॥**
**कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ॥ ७ ॥**
**कुटिला स्फुटिता वाऽपि शुष्का वा यस्य नासिका ॥**
**अवस्फूर्जति मग्ना वा न स जीवति मानवः ॥ ८ ॥**
**संक्षिप्ते विषमे स्तब्धे रक्ते स्रस्ते च लोचने ॥**
**स्यातां वा प्रस्रुते यस्य स गतायुर्नरो ध्रुवम् ॥ ९ ॥**
**केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ ॥**
**लुंण्डन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे १०**

छायादिविप्रतिपत्त्यनन्तरं वैपरीत्यसामान्यादोष्ठादीनामप्यवयवानां विकृतिं दर्शयन्नाह—यस्येत्यादि । अधरौष्ठः अधस्तन ओष्ठः । पतितः लम्बायमानः । उत्तर उपरितन ओष्ठः । ऊर्ध्वं क्षिप्तः ऊर्ध्वं चढि(लि)त इत्यर्थः । जाम्बवाभासाविति पक्वजम्बूफलसदृशवर्णौ । ओष्ठारिष्टेन दन्तारिष्टेन च सान्निपातिककालप्रमाणेन म्रियते । आरक्ता इत्यादि । अत्र श्यावदन्तत्वमरिष्टं सामान्यविषयं, न पुनर्विसूचीविषयमेव । खञ्जनप्रतिमा इति मर्दना-

---

१ 'पूर्वाध्याये 'छायां यश्च न पश्यति' ( सू. अ. ३० ) इत्युक्तं, तेन छाया स्मर्यते, सा च रिष्टाश्रया वक्तव्या, अतश्छायाविप्रतिपत्तिरभिधीयते । छायाविप्रतिपत्त्येह छायावैकृतं लक्ष्यते, तदधिकृत्य कृतोऽध्यायश्छायाविप्रतिपत्तिः । छाया चेयं स्वतन्त्रे शारीरे त्वचां परिसंख्याने पञ्चविधोक्ता; यथा–"प्रथमाऽवभासिनी नाम, या सर्वान्वर्णानवभासयति, पञ्चविधां च छायां प्रकाशयति (शा. अ. ४)" इति । तथा चरकेऽप्युक्तं–'खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः' ( च. इ. अ. ७ ) इत्यादि । इयं च छाया चरकोक्तसप्तविधप्रभायाश्च भिन्ना चरक एवोक्ता–'स्यात्तैजसी प्रभा सर्वा सा तु सप्तविधा मता' (च. इ. अ. ७) इत्यादि । अत्रापि 'ह्रीश्रियौ नश्यतो यस्य ओजस्तेजः स्मृतिः प्रभा' इति वचनाच्छायातो भिन्नैव प्रभा । चरके छायाप्रभयोर्भेदकं लक्षणमुक्तं; यथा–"वर्णमाक्रामति च्छाया भा तु वर्णप्रकाशिनी । आसन्ना लक्ष्यते छाया प्रभा दूरात्तु लक्ष्यते" (च. इ. अ. ७) इति । तदेवं व्यवस्थिते छायागतं रिष्टमाह–श्यावेत्यादि । एताश्च प्रकृतिच्छायोपमर्देन भवन्त्य एव रिष्टम्' इति चक्रः ।

१ 'श्यावदन्तत्वमिह सामान्येन रिष्टं, विसूच्यन्ते यच्छ्यावदन्तत्वं तत्तु प्रायोभावित्वात् पुनर्वक्तव्यम्' इति चक्रः । २ 'लुठन्ति' इति पा० ।

दिना आमागारधूमानुरचितमुपस्तरणं खञ्जनमुच्यते, यं खरजिमित्याहुर्मृदङ्गवादकाः; अन्ये खञ्जरीटमाहुः, तद्वर्णः शुक्लकृष्ण इत्यर्थः । कृष्णेत्यादि । विशेषतस्तु जिह्वा अवलिप्तेवावलिप्ता, न पुनर्मलोत्पत्त्यादिना; प्रमेहपूर्वरूपे तु मलोत्पत्त्याऽनुलेपो लक्ष्यनिमित्तत्वादरिष्टं न भवति । शूना श्वयथुयुक्ता । विजहाति विशेषेण त्यजति । असून् प्राणान् । एतदरिष्टं पाक्षिकम् । कुटिलेत्यादि ।—कुटिला वक्रा । स्फुटिता विकसिता । अवस्फूर्जति शब्दायते । मग्ना बुडिता । एतदरिष्टं चक्षुररिष्टं च सप्तरात्रिकम् । संक्षिप्ते संकुचिते । विषमे निम्नोन्नते । स्तब्धेऽत्र निश्चेष्टे । स्रस्ते अधःपतिते । स्यातां भवेताम् । केशा इत्यादि । सीमन्तः केशमार्गः । संक्षिप्ते संकुचिते, विनते अधःपतिते । लुण्डन्ति अनवरतं चलन्तीत्यर्थः । पक्ष्माणि चक्षुराच्छादनरोमाणि । भ्रुवावपि सीमन्तिन्याविति संवध्नन्ति केचित् । एतदरिष्टं स्वस्थस्य षड्रात्रादातुरस्य त्रिरात्रान्मरणाय । केचिदत्र सीमन्तारिष्टं तथा जिह्वानेत्रविकारारिष्टं च ज्वरविषयमेवाचक्षते, ज्वर एवैषां तेषु प्रदेशेषूक्तत्वात्; नैतदित्यन्ये, पुनर्वचनात्; तेषां ज्वर एवोक्तत्वात् पुनरिह तद्वचनमनर्थकमेव स्यात् ॥ ५—१० ॥

**नाहरत्यन्नमास्यस्थं न धारयति यः शिरः ॥**
**एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान् जहाति सः ॥११॥**
**बलवान् दुर्बलो वाऽपि संमोहं योऽधिगच्छति ॥**
**उत्थाप्यमानो बहुशस्तं पक्वं भिषगादिशेत् ॥ १२ ॥**
**उत्तानः सर्वदा शेते पादौ विकुरुते च यः ॥**
**विप्रसारणशीलो वा न स जीवति मानवः ॥ १३ ॥**
**शीतपादकरोच्छ्वासश्छिन्नोच्छ्वासश्च यो भवेत् ॥**
**काकोच्छ्वासश्च यो मर्त्यस्तं धीरः परिवर्जयेत् ॥१४॥**
**निद्रा न छिद्यते यस्य यो वा जागर्ति सर्वदा ॥**
**मुह्येद्वा वक्तुकामश्च प्रत्याख्येयः स जानता ॥ १५ ॥**
**उत्तरौष्ठं च यो लिह्यादुत्कारांश्च करोति यः ॥**
**प्रेतैर्वा भाषते सार्धं प्रेतरूपं तमादिशेत् ॥ १६ ॥**

कायावयवक्रियाविप्रतिपत्तिमधिकृत्याह—नाहरतीत्यादि ।—नाहरति न गिलति, आस्यस्थं मुखस्थम् । मूढात्मा विस्मृतिशीलः । सद्य इति तस्मिन्नेवाहनि प्राणपरिक्षय इत्यवगन्तव्यम् । बलवानित्यादि । अत्र संमोहं मूर्च्छाम् । बहुशो वारंवारम् । पक्वं कालपक्वं मृत्युग्रस्तमित्यर्थः । अस्मिन्नरिष्टे सप्तरात्रं जीवितावधिः । उत्तान इत्यादि । शेते स्वपिति । विकुरुते मुहुर्मुहुस्तत्प्रसारणसंकोचौ करोति । विप्रसारणशीलः पादसंकोचनशीलः । एतदरिष्टं सद्योमरणकरम् । शीतपादेत्यादि पादौ करावुच्छ्वासश्च त्रयमेतद्यदैकदैव शीतं भवति तदैतदरिष्टं ज्ञेयम् । छिन्नोच्छ्वासश्च छित्वा छित्वा ऊर्ध्वं श्वसितीत्यर्थः । काकोच्छ्वास इति काकवद्व्यात्ताननः श्वसितीत्यर्थः । एतदरिष्टं सद्योमरणकरम् ।

१ 'चक्षुराच्छादनचर्माणि' इति पा० । २ 'धीरः परिवर्जयेत्' इति पा० । ३ 'छिन्नश्वासश्च' इति पा० । ४ 'लिह्यादुद्गारांश्च' इति पा० ।

निद्रेत्यादि । लिह्यात् स्वादयेत् । उत्कारान् उद्गारानित्यर्थः । प्रेतैः मृतैः । सार्धं सहेत्यर्थः ॥ ११—१६ ॥

**खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्तते ॥**
**पुरुषस्याविषार्तस्य सद्यो जह्यात् स जीवितम् ॥१७॥**
**वाताष्ठीला तु हृदये यस्योर्ध्वमनुयायिनी ॥**
**रुजान्नविद्वेषकरी स परासुरसंशयम् ॥ १८ ॥**
**अनन्योपद्रवकृतः शोफः पादसमुत्थितः ॥**
**पुरुषं हन्ति, नारीं तु मुखजो, गुह्यजो द्वयम् ॥१९॥**
**अतिसारो ज्वरो हिक्का छर्दिः शूनाण्डमेढ्रता ॥**
**श्वासिनः कासिनो वाऽपि यस्य तं क्षीणमादिशेत् २०**
**स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम् ॥**
**बलवन्तमपि प्राणैर्वियुञ्जन्ति न संशयः ॥ २१ ॥**
**श्यावा जिह्वा भवेद्यस्य सव्यं चाक्षि निमज्जति ॥**
**मुखं च जायते पूति यस्य तं परिवर्जयेत् ॥ २२**
**वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणावुभौ ॥**
**चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः ॥ २३ ॥**
**अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि वा ॥**
**यस्याकस्मात् स विज्ञेयो गन्ता वैवस्वतालयम् २४**
**पङ्कमत्स्यवसातैलघृतगन्धांश्च ये नराः ॥**
**मृष्टगन्धांश्च ये वान्ति गन्तारस्ते यमालयम् ॥ २५ ॥**
**यूका ललाटमायान्ति बलिं नाश्नन्ति वायसाः ॥**
**येषां चापि रतिर्नास्ति यातारस्ते यमालयम् ॥२६॥**
**ज्वरातिसारशोफाः स्युर्यस्यान्योन्यावसादिनः ॥**
**प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम् ॥२७॥**
**क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा ॥**
**न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥ २८ ॥**
**प्रवाहिका शिरःशूलं कोष्ठशूलं च दारुणम् ॥**
**पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥ २९ ॥**

शरीरदेशविशेषाश्रितव्याधिविशेषानरिष्टकृतान् दर्शयन्नाह—खेभ्य इत्यादि । खेभ्यः स्रोतोभ्यः । जह्यात् त्यजेत् । वाताष्ठीलेत्यादि ।—वाताष्ठीलेव वाताष्ठीला, न तु वातव्याधिपठिता वाताष्ठीलेह गृह्यते; अथ सैव हृदयमागत्यैवंलक्षणा यदा भवति तदाऽरिष्टमिति । रुजान्नविद्वेषकरी चेति रुजाकरी अन्नविद्वेषकरी चेत्यर्थः । अनन्येत्यादि अनन्योपद्रवैः कृतः, कोऽर्थः ? शोफस्यैवोपद्रवैः श्वासपिपासादौर्बल्यादिभिः कृत इत्यर्थः; इत्थंभूतः शोफः पादसमुत्थितः पुरुषं हन्ति, इत्थंभूतः श्वयथुर्मुखजो नारीम्, इत्थंभूत एव शोफो गुह्यजो द्वयं पुरुषं नारीं च हन्तीति संबन्धः । अन्ये तु "अन्यैरुपद्रवैः पाण्डुरोगादिभिः कृतोऽन्योपद्रवकृतः, नान्योपद्रवैः कृतोऽनन्योपद्रवकृतः; पाण्डुरोगोदरार्शःप्रभृति श्वयथुकारणं विहायान्यकारणसमुत्थः पादशोफोऽसाध्यः, पाण्डु-

१ 'गतायुर्न संशयः' इति पा० । २ 'ऽश्रूणामिति करणे षष्ठी, 'नाग्निस्तृप्यति काष्ठानां' इतिवत्' इति हाराणचन्द्रः । 'नेत्रे चास्रेण पूर्येते' इति ताडपत्रपुस्तके पाठः ।

रोगादिकृतस्तु साध्य'' इति मन्यन्ते । अपरे तु 'अनन्योपद्रवगत' इति पठन्ति; अत्रानन्यः स्वकीयोपद्रव उच्यते, तमनन्योपद्रवं स्वकीयोपद्रवं श्वासपिपासादौर्बल्यादिकं गतः प्राप्त इत्यर्थः, स्वकीयोपद्रवं विहायान्योपद्रवपाण्डुरोगादिगतो नारिष्टमिति भावः । अपरे 'आननोपद्रवगत' इति मन्यन्ते, तत्र 'पादाच्छोफ आननं मुखमुपद्रवैः सह गतः प्राप्तः' इत्यर्थः । अतिसार इत्यादि । कासवतः श्वासवतो वा पुरुषस्य यदाऽतिसारादयो भवन्ति तदा तं पुरुषं, क्षीणं मृतमादिशेत् कथयेदित्यर्थः । एतदरिष्टं सप्तरात्रिकम् । स्वेद इत्यादि । बलवान् अतिशयेन । वियुञ्जन्ति प्राणैः सह वियोगं कुर्वन्ति मारयन्तीत्यर्थः । एतदरिष्टं त्रिरात्रिकम् । श्यावेत्यादि । सव्यं चाक्षि निमज्जति वाममक्षि ब्रुडतीत्यर्थः । यस्य मुखं च जायते पूति मुखं शटितं भवतीत्यर्थः; एतत्त्रितयमपि समुदायेनैवारिष्टं; केचिदिदमरिष्टं सान्निपातिकमाहुः; अत एव मरणमर्यादाऽपि तत्प्रमाणेनैव । वक्त्रमित्यादि । आपूर्यते भ्रियते, अश्रूणां चक्षुरम्भसाम् । स्विद्यत इति स्वेदयुक्तौ भवतः । आकुलतां यातीति ओदनमण्डादिनेव पूर्णे अक्षिणीत्यर्थः । गमिष्यतो गन्तुमिच्छतः पुरुषस्य । चरणाविति द्विवचनेन द्वित्वे लब्धे उभशब्दो यौगपद्यज्ञापनार्थः । एतदरिष्टं मौहूर्तिकं प्राहरिकं च । अतिमात्रमित्यादि । अत्र गात्राणि परिचारकैः संवाहकैश्चोत्थाप्यमानान्यकस्मात् कारणं विना लघूनि लघुतराणि, गुरूणि भारवन्ति; अथवा गुरूणि स्थूलानि, लघूनि कृशानि; स्युर्भवेयुः । वैवस्वतो यमः, आलयं गृहं, गन्ता गमिष्यतीत्यर्थः । पङ्केत्यादि । मृष्टान् गन्धान् ये पुरुषा वान्ति शोभनगन्धान् मुञ्चन्तीत्यर्थः । एतदरिष्टं वार्षिकम् । यूकेत्यादि । बलिं काकबलिम् । यस्य रतिर्नास्ति यस्य सुखं नास्ति, न रमते क्वापीत्यर्थः, परलोके बद्धरतित्वात्; एतदरिष्टं वार्षिकम् । ज्वरेत्यादि । अन्योन्यावसादिन इति परस्परोपद्रविणः । बलमुत्साहलक्षणम् । प्रवाहिका अतिसारभेदः । उपस्थितः समीपस्थित इत्यर्थः ॥ १७–२९ ॥

**विषमेणोपचारेण कर्मभिश्च पुराकृतैः ॥**
**अनित्यत्वाच्च जन्तूनां जीवितं निधनं व्रजेत् ॥ ३० ॥**

कस्मादेतान्यरिष्टान्युत्पद्यन्ते येभ्यो जीवितं निधनं यातीत्याह—विषमेणेत्यादि । प्रकृतेर्बलादीन् भावानवेक्ष्य कृत उपचारः समोपचारः, तद्विपरीतो विषमोपचारः । पुराकृतैः पूर्वजन्मार्जितैः, कर्मभिः शरीरस्थापकैः, 'क्षीणैः' इत्यध्याहारः । अनित्यत्वादिति विनाशित्वादित्यर्थः । निधनं विनाशः । अन्ये, अरिष्टादन्यतोऽपि मरणमुत्पद्यत इत्याहुः । तथाहि,—युक्तिव्यपाश्रयं मरणमुक्तं 'विषमेणोपचारेण' इत्यनेन, दैवव्यपाश्रयं तु मरणं 'कर्मभिश्च पुराकृतैः' इत्यनेनोक्तं, स्वभावादप्यनित्यं जीवितं भवतीति 'अनित्यत्वाच्च' इत्यनेनोच्यते, एतेन त्रिहेतुकं मरणमुक्तम् । ननु, सर्वत्रारिष्टमन्ते मरणायोत्पद्यते, तत् कथं मरणे हेत्वन्तराण्युक्तानि? सत्यम्, उल्लङ्घितचिकित्सामार्गैर्दोषैर्जन्यते मरणं, रिष्टमपि च तथाविधैरेव दोषैर्जन्यते, अत एकसामग्रीजनितमेवारिष्टमिति न दोष इति मन्यन्ते ॥ ३० ॥

**प्रेता भूताः पिशाचाश्च रक्षांसि विविधानि च ॥**
**मरणाभिमुखं नित्यमुपसर्पन्ति मानवम् ॥ ३१ ॥**
**तानि भेषजवीर्याणि प्रतिघ्नन्ति जिघांसया ॥**
**तस्मान्मोघाः क्रियाः सर्वा भवन्त्येव गतायुषाम् ३२**

**इति सुश्रुतसंहितायां सूत्रस्थाने छायाविप्रतिपत्तिर्नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥**

कस्मात् पुनर्मरणमप्रतिसाधनमित्यत आह—प्रेता इत्यादि । प्रेताः प्राणिनो विगतिं प्राप्ताः, भूता यमानुचराः, पिशाचाः पिशिताशना देवयोनयः, रक्षांसि रावणानुचरादीनि, उपसर्पन्ति समीपं गच्छन्ति, प्रतिघ्नन्ति विनाशयन्ति, जिघांसया हन्तुमिच्छया, मोघा निष्फलाः । अन्ये व्याख्यानयन्ति,—शारीरव्याधिषु क्रियावैफल्यहेतवः प्रागुक्ताः; तथाहि,–''स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च । निहन्त्यौषधवीर्याणि मन्त्रान् दुष्टग्रहो यथा–'' ( सू. अ. २३ ) इति । आगन्तुषु पुनरत्र भूतानुबन्धाच्च क्रियावैफल्यं दर्शयति—प्रेता इत्यादिना । तत्र प्रेता अकृतैकोद्दिष्टा भविष्यत्पितृभेदाः, भूताः पिशाचभेदाः, रक्षांसि विविधानि चेति ब्रह्मराक्षसादिभेदाद्विविधानि नानाप्रकाराणीत्यर्थः । चकारद्वयमौषधवीर्योपघाते तुल्यसामर्थ्यं समुच्चिनोति । तथाहि—यथा 'स स्थिरत्वात्' इत्यादौ शारीरव्याधिक्रियाप्रतिघातसामर्थ्यमुक्तं, तथाऽऽगन्तुव्याधिक्रियाप्रतिघातसामर्थ्यमप्यत्र 'प्रेता' इत्यादौ ॥ ३१ ॥ ३२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशत्तमोऽध्यायः ।

**अथातः स्वभावविप्रतिपत्तिमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

स्वभावशब्दानन्तरमादिशब्दो लुप्तो द्रष्टव्यः, तेन स्वभावादिविप्रतिपत्तिरित्यर्थः । स्वभावशब्देनात्र प्रकृतिरुच्यते ॥ १ ॥ २ ॥

**स्वभावसिद्धानां शरीरैकदेशानामन्यभावित्वं मरणाय । तद्यथा—शुक्लानां कृष्णत्वं, कृष्णानां शुक्लता, रक्तानामन्यवर्णत्वं, स्थिराणां मृदुत्वं, मृदूनां स्थिरता, चलानामचलत्वम्, अचलानां चलता, पृथूनां संक्षिप्तत्वं, संक्षिप्तानां पृथुता, दीर्घाणां ह्रस्वत्वं, ह्रस्वानां दीर्घता, अपतनधर्मिणां पतनधर्मित्वं, पतनधर्मिणामपतनधर्मित्वमक-**

१ 'पूर्वाध्यायानुक्तां शरीरविकृतिमवयवप्रविभागेन दर्शयितुं स्वभावविप्रतिपत्तिरभिधीयते । तेनाधिकारानुवृत्तिरेवाध्यायसंबन्धः' इति चक्रः । २ 'स्वभावेन प्रकृत्या प्रसिद्धानामिति स्वभावप्रसिद्धानाम्' इति चक्रः । ३ 'अस्थिरत्वं' इति पा० । ४ 'अपतनधर्मणां' इति पा० । ५ 'पतनधर्मत्वं' इति पा० ।

**स्मात्, शैत्यौष्ण्यस्नैग्ध्यरौक्ष्यप्रस्तम्भवैवर्ण्यावसादनं चाङ्गानाम् ॥ ३ ॥**

तां स्वभावविप्रतिपत्तिं संक्षेपेण तावन्निर्देष्टुमाह,—स्वभावसिद्धानामित्यादि । अन्यभावित्वं गुणकर्मभ्यां कृत्वा, तथा विशिष्टद्रव्यान्तरसंयोगाच्च; विशिष्टद्रव्यान्तरसंयोगश्च 'सिराणां दर्शनं ललाटे, नासावंशे वा पिडकोत्पत्तिः' इत्यादिना वक्ष्यमाणः । तत्र स्वभावसिद्धानां शरीरैकदेशानामन्यथाभावित्वं विस्तरेणोपदर्शयन्नाह—तद्यथेत्यादि । अकस्माच्च शुक्लानां नेत्रैकदेशानां निर्निमित्तं कार्ष्ण्यं मरणाय । कृष्णानां लोचनमध्यस्य तारुण्ये केशश्मश्रुलोम्नां च शुक्लत्वमरिष्टम् । रक्तानां नेत्रान्तपादकरतलताल्वोष्ठजिह्वानामाकस्मिकमन्यवर्णत्वं श्वेतपीतकृष्णनीलत्वमरिष्टमिति । स्थिराणां कठिनानां केशश्मश्रुनखदन्तसिरास्नायुस्रोतःप्रभृतीनां मृदुत्वं कोमलत्वमरिष्टमिति । मृदूनां मांसशोणितमेदोमज्जशुक्रनाभिहृदययकृत्प्लीहप्रभृतीनां स्थिरत्वं काठिन्यं विकृतिरिति । केचित् 'मृदूनाम्' इत्यत्र 'अदढानाम्' इति पठन्ति । चलानां वाताशयसिरासन्धिजिह्वादीनामस्पन्दनत्वमरिष्टमिति । सिरा दशैव चला भवन्ति, तास्तु शारीरे वक्ष्यति । अचला मांसमेदोऽस्थिनाभयस्तेषां चलत्वमरिष्टम्, अन्ये तु नासाकर्णमांसादीनामित्याहुः । पृथूनां संक्षिप्तत्वमिति विस्तीर्णानां स्वल्पत्वं; तत्र विस्तीर्णानि शिरोललाटवक्षांसोरःपृष्ठादीनि, तेषां संक्षिप्तत्वमरिष्टम् । संक्षिप्तानां दृष्टिमण्डलनखरोमगुल्फादीनां पृथुत्वमरिष्टम् । दीर्घाणां नयनभुजाङ्गुलिपर्वोच्छ्वासादीनां ह्रस्वत्वमरिष्टम् । ह्रस्वानां जङ्घामेढ्रग्रीवादीनां दीर्घत्वमरिष्टम् । अपतनधर्मिणां पतनधर्मित्वमिति अपतनस्वभावानां पतनस्वभावत्वमित्यर्थः । तत्रापतनधर्मिणः केशश्मश्रुलोमनखादयः, तेषां पतनधर्मित्वमरिष्टम् । पतनधर्मिणामपतनधर्मित्वमिति पतनधर्मिणां स्वेदमूत्रपुरीषादीनामपतनधर्मित्वमरिष्टम् । अकस्मादिति अनिमित्तमित्यर्थः । अकस्मादित्येतदुक्तैः शुक्लानां कृष्णत्वमित्यादिभिर्वक्ष्यमाणैश्च शैत्यौष्ण्यादिभिः सह प्रत्येकं संबध्यते । शैत्येत्यादि । हस्तपादोच्छ्वासादिषु स्वभावोष्णतायुक्तेषु शैत्यं, शीतत्वयुक्तेषु फूत्कारादिषु चौष्ण्यं, स्निग्धतायुक्तेषु नयनतारकादिषु रौक्ष्यम्, अनभ्यक्तकेशत्वगादिषु रूक्षेषु स्निग्धत्वम् । प्रस्तम्भः प्रकर्षेण स्तब्धता । नेत्रयोरङ्गावयवानां च वैवर्ण्यं गौरश्यामादिवर्णानां वैपरीत्यम् । अवसादोऽप्रवृत्तिर्वैकल्यमित्यर्थः । केचित् 'वैवर्ण्योपसर्जनं चाङ्गानाम्' इति पठन्ति, व्याख्यानयन्ति च—उपसर्जनं तद्भावापत्तिरित्यर्थः ॥ ३ ॥

**स्वेभ्यः स्थानेभ्यः शरीरैकदेशानामवस्रस्तोत्क्षिप्तभ्रान्तावक्षिप्तपतितविमुक्तनिर्गतान्तर्गतगुरुलघुत्वानि, प्रवालवर्णव्यङ्गप्रादुर्भावो वाऽप्यकस्मात्, सिराणां च दर्शनं ललाटे, नासावंशे वा पिडकोत्पत्तिः, ललाटे वा प्रभातकाले स्वेदः, नेत्ररोगाद्विना वाऽश्रुप्रवृत्तिः, गोमयचूर्णप्रकाशस्य वा रजसो दर्शनमुत्तमाङ्गे निलयनं वा कपोतकङ्ककाकप्रभृतीनां, मूत्रपुरीषवृद्धिरभुञ्जानानां, तत्प्रणाशो वा भुञ्जानानां, स्तनमूलहृदयोरःसु च शूलोत्पत्तयः, मध्ये शूनत्वमन्तेषु परिम्लायित्वं विपर्ययो वा, तथाऽर्धाङ्गे श्वयथुः शोषोऽङ्गपक्षयोर्वा, नष्टहीनविकलविकृतस्वरता वा, विवर्णपुष्पप्रादुर्भावो वा दन्तमुखनखशरीरेषु, यस्य वाऽप्सु कफपुरीषरेतांसि निमज्जन्ति, यस्य वा दृष्टिमण्डले भिन्नविकृतानि रूपाण्यालोक्यन्ते, स्नेहाभ्यक्तकेशाङ्ग इव यो भाति, यश्च दुर्बलो भक्तद्वेषातिसाराभ्यां पीड्यते, कासमानश्च तृष्णाभिभूतः, क्षीणश्छर्दिभक्तद्वेषयुक्तः सफेनपूयरुधिरोद्वामी हतस्वरः शूलाभिपन्नश्च मनुष्यः, शूनकरचरणवदनः क्षीणोऽन्नद्वेषी स्रस्तपिण्डिकांसपाणिपादो ज्वरकासाभिभूतः, यस्तु पूर्वाह्णे भुक्तमपराह्णे छर्दयत्यविदग्धमतिसार्यते वा स श्वासान्म्रियते, बस्तवद्विलपन् यश्च भूमौ पतति स्रस्तमुष्कः, स्तब्धमेढ्रो भग्नग्रीवः प्रनष्टमेहनश्च मनुष्यः, प्राग्विशुष्यमाणहृदय आर्द्रशरीरः, यश्च लोष्टं लोष्टेनाभिहन्ति काष्ठं काष्ठेन, तृणानि वा छिनत्ति, अधरोष्ठं दशति, उत्तरोष्ठं वा लेढि, आलुञ्चति वा कर्णौ केशांश्च, देवद्विजगुरुसुहृद्वैद्यांश्च द्वेष्टि, यस्य वक्रानुवक्रगा ग्रहा गर्हितस्थानगताः पीडयन्ति जन्मर्क्षं वा, यस्योल्काशनिभ्यामभिहन्यते होरा वा, गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावो वेति ॥ ४ ॥**

स्वेभ्य इत्यादि । अवस्रस्तत्वं भ्रूपक्ष्मप्रभृतीनां स्थानादधः प्रलम्बनम्, उत्क्षिप्तत्वं तेषामेवोर्ध्वगमनं, भ्रान्तत्वं चक्षुरादीनां भ्रमणम्, अवक्षिप्तत्वं तेषामेव तिर्यक्क्षिप्तत्वं, पतितत्वं शिरोग्रीवादीनामधार्यमाणता, विमुक्तत्वं सन्धीनां मोक्षः, निर्गतत्वं बहिर्निःसरणं जिह्वानेत्रप्रभृतीनाम्, अन्तर्गतत्वं जिह्वानेत्रनासादीनामन्तःप्रवेशः, 'अनिर्गतत्वम्' इति केचित् पठन्ति तत्रापि स एवार्थः; गुरुलघुत्वानि गुरूणि बाहुशिरःसक्थ्यादीनि, लघून्यक्षिपक्ष्मादीनि, तेषां विपरीतत्वमरिष्टम्; 'अवक्षिप्तत्वम्' इत्यत्र' 'अवक्षिप्तम्' इति केचित् पठन्ति, तत्रापि स एवार्थः । प्रवालवर्णेत्यादि व्यङ्गानां क्षुद्ररोगविशेषाणामकस्मादनिमित्तं प्रवालसदृशवर्णताप्रादुर्भावो भवतीत्यर्थः; प्रवालो विद्रुमः, स च समुद्रजातोऽत्यन्तरक्तो वल्लीविशेषः; व्यङ्गरोगस्य श्यावत्वं

---

१ 'नासावंशे च पिडका प्रवालवर्णैव बोद्धव्या; यदुक्तं हारीते—'बिम्बीविद्रुमवर्णाभा शक्रगोपप्रभाऽपि वा । नासावंशे भवेद्यस्य पिडका न स सिध्यति' इति चक्रः ।

१ 'भिन्नविकृतानि रूपाणि नेत्रकुमारिकायां ज्ञेयानि' इति चक्रः । २ 'वक्रानुवक्रगा इत्याद्यरिष्टानि अशारीराण्यप्यत्र प्रकरणे महाफलतया असंदिग्धतया च पठितानि' इति चक्रः ।

प्राकृतं, रक्तत्वं वैकृतम् । सिराणामिति प्रवालवर्णानामिति अत्रापि चकारात् संबन्धनीयम्; अथवाऽप्राकृतसिराणां दर्शनमरिष्टमिति । नासेत्यादि 'पिडकायाः प्रवालवर्णायाः' इत्यत्रापि ज्ञेयं, नासावंशो नासास्थिदण्डः, अन्ये तु नासावंशे ललाटे च पिडकाया उत्पत्तिं वाशब्दान्मन्यन्ते । ललाटे इति अत्र 'लेपज्वरिण'[1] इति शेषो ज्ञेयस्तन्त्रान्तरदर्शनात् । नेत्ररोगादित्यादि— अयं पाठो निबन्धेषु न पठितः, वृद्धैः पठितत्वादस्माभिरपि पठितः । गोमयेत्यादि ।—गोमयं गोपुरीषं, तस्य रजःप्रकाशस्येत्यादि प्रथमं मासिकमरिष्टं; निलयनं चेत्यादि द्वितीयम्, 'उत्तमाङ्गे' इत्यत्रापि संबध्यते, निलयनमिति उपविशनम् । स्तनमूलेत्यादि ।—अत्रापि भुञ्जानानामेवेति बोद्धव्यम्, एतच्च मलप्रणाशेन सह यदा समुदितं भवति तदाऽरिष्टमिति ज्ञेयम् । मध्य इत्यादि ।—मध्ये शूनत्वम्, अन्तेषु हस्तपादादिषु परिम्लायित्वं शुष्कता, विपर्ययो वेति अन्ते शूनत्वं मध्ये च परिम्लायित्वमित्यर्थः । एतदरिष्टं मासिकम् । तथेत्यादि ।—अर्धाङ्गे श्वयथौ सत्यर्धे परिम्लायित्वमिति योज्यम् । अङ्गपक्षयोरिति पक्षः शरीरार्धम् । नष्टेत्यादि ।—नष्टस्वरता अत्यन्तस्वराभावः, हीनस्वरता शब्दह्रस्वत्वं, विकलस्वरता गद्गदादिस्वरत्वं, विकृतस्वरता स्वाभाविकस्वरस्य वैपरीत्यम् । विवर्णेत्यादि ।—विवर्णपुष्पप्रादुर्भावः अनुज्ज्वलवर्णबिन्दुप्रादुर्भावो दन्तादिष्वरिष्टम् । यस्येत्यादि ।—यस्य पुरुषस्य, अप्सु पानीयेषु, निमज्जन्ति बुडन्ति; एतदरिष्टं तु यदा त्रयाणामपि निमज्जनं भवति तदा रिष्टमिति ज्ञेयं, मासिकं चैतदरिष्टम् । यस्येत्यादि । भिन्नानि नानाविधानि गवाश्वप्रभृतीनां, विकृतानि बीभत्सानि त्रिभुजत्रिशिरआदित्वेनाधिकाङ्गानि, एकाक्ष्येकभुजैककर्णादित्वेन वा न्यूनाङ्गानि; यस्य पुरुषस्य दृष्टिमण्डलाभ्यन्तर एवंविधानि रूपाण्यालोक्यन्ते दृश्यन्ते तस्यारिष्टम् । अन्ये तु "यस्य वा दृष्टिमण्डलेऽभिन्ने इति दृष्टिमण्डलविशेषणं 'अभिन्ने' इति कुर्वन्ति; तत्राऽभिन्न इत्यत्राभिघातजो भेद आध्यात्मिकदोषेभ्यो वा भेदोऽभिप्रेतः । तत्र विकृतरूपावलोकनं सद्योऽरिष्टं पाञ्चवार्षिकं वा" इति व्याख्यानयन्ति । स्नेहेत्यादि ।—सर्वदा यद्येवं भवति तदेदमरिष्टम् । यश्चेत्यादि ।—यः पुमान् दुर्बलो बलहीनो मांसहीनो वा; तत्र कासतृष्णारुच्यतीसारा इति समुदितमरिष्टं दुर्बले नरे । क्षीणेत्यादि क्षीणे नरे यदा छर्द्यादय उपद्रवाः समुदिता भवन्ति तदाऽरिष्टम् । शूनेत्यादि ।—ज्वरकासाभिभूते क्षीणे नरे यदा शूनकरचरणाद्युपद्रवा भवन्ति तदाऽरिष्टम् । स्रस्तपिण्डिकः शिथिलजानुगुल्फान्तरालस्थितमांसपिण्डः; स्रस्तशब्दः पिण्डिकादिभिः सह प्रत्येकं संबध्यते । अंसः स्कन्धः । यस्त्वित्यादि ।—यथा शौनिकेन व्यापाद्यमानो बस्तश्छगलकः, विलपन् शब्दं कुर्वन्, भूमौ पतति तद्वन्मनुष्योऽप्यरिष्टयुक्त इति । स्रस्तमुष्क इति स्थानाच्युताण्डः, स्तब्धमेढ्रः स्तब्धलिङ्गः, भग्नग्रीव इति नतग्रीवः, प्रनष्टमेहनश्चेति अन्तःप्रविष्टलिङ्ग इत्यर्थः; अत्र चकारो वाशब्दार्थः, तेन स्तब्धमेढ्रो भवति प्रनष्टमेहनो वा भवतीत्यर्थः । अत्रापि श्वासान्म्रियत इति योज्यम् । प्रागित्यादि । यस्य मनुष्यस्य शरीरमार्द्रमेवावतिष्ठते हृदयं प्रथममेव शुष्यति तस्यारिष्टम्, एतदरिष्टं पाक्षिकम् । यश्चेत्यादि ।—तृणानि छिनत्ति 'नखैः' इति शेषः । अधरौष्ठं दशतीति अधस्तनमोष्ठं दन्तैर्गृह्णातीत्यर्थः । उत्तरौष्ठं वा लेढीति उपरितनौष्ठं जिह्वया स्पृशतीत्यर्थः । अयं पाठो निबन्धेषु न दृश्यते, वृद्धैः पठितत्वादस्माभिः पठितः । आलुञ्चतीत्यादि । आलुञ्चति उत्पाटयतीत्यर्थः । देवेत्यादि । सुहृन्मित्रम् । द्वेष्टि अप्रीतो भवति । एतदरिष्टं वार्षिकम् । यस्येत्यादि । समाक्रान्तं राशिं मुक्त्वा पुनः पूर्वमेव भुक्तराशिं नक्षत्रं वा याति सः वक्रगः, पुनश्चानुगत एवोत्तरे स्थानेऽनुवक्रगः; गर्हितस्थानगता इति 'ग्रहा' इति संबध्यते, तच्च गर्हितं निन्दितं स्थानं ज्योतिःशास्त्रादेवावगन्तव्यम् । जन्मर्क्षं जन्मनक्षत्रम् । तेजःपिण्डनिपतनमुल्का, अशनिर्विद्युदग्निभेदः, एताभ्यां यदा आकाशे उदितं जन्मनक्षत्रं जन्मनक्षत्रवेला वा अभिहन्यते तदाऽरिष्टमित्यर्थः । होरा जन्मलग्नं, तदपि यदोल्काशनिभ्यां हन्यत इत्यर्थः । गृहेत्यादि ।—गृहादीनां यानि गर्हितलक्षणानि वास्तुविद्यादिषूक्तानि तन्निमित्तस्तत्कारणः प्रादुर्भाव उत्पत्तिररिष्टस्येत्यर्थः; दारा भार्या, यानं शिबिकारथादि, वाहनं हस्त्यादि, मणयः स्फटिकादयः । रत्न[1]शब्दो गृहादिभिः सह प्रत्येकं संबध्यते । उपकरणानि घटपिठरसूर्पादीनि ॥ ४ ॥

भवन्ति चात्र—

**चिकित्स्यमानः सम्यक् च विकारो योऽभिवर्धते ॥**
**प्रक्षीणबलमांसस्य लक्षणं तद्गतायुषः ॥ ५ ॥**
**निवर्तते महा[2]व्याधिः सहसा यस्य देहिनः ॥**
**न चाहारफलं यस्य दृश्यते स विनश्यति ॥ ६ ॥**

सर्वविकाराणामनुक्तमरिष्टमभिनिर्दिशन्नाह—चिकित्स्यमान इत्यादि । महाव्याधिर्वातव्याधिप्रमेहादिरष्टविधः; शोषादिः कायचिकित्सापठितो वा । सहसा वेगेनेत्यर्थः ॥ ५ ॥ ६ ॥

**एतान्यरिष्टरूपाणि सम्यग् बुध्येत यो भिषक् ॥**
**साध्यासाध्यपरीक्षायां स[3] राज्ञः संमतो भवेत् ॥७॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने स्वभावविप्रतिपत्तिर्नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥**

१ 'गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् । लेपज्वरोपसृष्टस्य दुर्लभं तस्य जीवितम् ॥' इति मधुकोशव्याख्यायां तन्त्रान्तरीयं वचनम् ।

१ 'मणिरेव रत्नं मुक्तामाणिक्यादि' इति चक्रः । २ 'महाव्याधिरिह महामूलो व्याधिः, अख्यातिमूलतया क्रमेण वर्तनं प्रकृतिः, सहसा निवर्तनं विकृतित्वादरिष्टम् । न चाहारफलमिति उपशयशक्तिलक्षणबलजननमाहारफलं, तन्न भवति' इति चक्रः । ३ 'श्लाघ्यः स नृपतेर्भवेत्' इति पा० ।

अरिष्टज्ञानफलं दर्शयन्नाह—एतानीत्यादि । साध्यासाध्येत्यादि स वैद्यः साध्यासाध्ययोः परीक्षायां नृपतेः श्लाघ्यो भवेत् ॥ ७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशत्तमोऽध्यायः ।

**अथातोऽवारणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अवारणीयमिति वारणं चिकित्सा, न विद्यते वारणं येषां ते अवारणा व्याधयः, तानधिकृत्य कृतोऽध्यायोऽवारणीयः; एतेनासाध्यव्याधीनधिकृत्य कृतोऽध्यायोऽवारणीय इत्यर्थः ॥१॥२॥

**उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवार्यताम् ॥**
**रसायनाद्विना वत्स ! तान् शृण्वेकमना मम ॥ ३ ॥**

उपद्रवैरिति यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः; जघन्यकालजात इति पश्चात्कालजात इत्यर्थः । उपद्रवैस्त्विति तुशब्दोऽत्रावधारणार्थः, तेनेदमवधारयति—पूर्वाध्यायेऽरिष्टैर्मरणमभिहितम्, अत्र तूपद्रवैरिति । केचित् 'उपद्रवैश्च' इति तुशब्दस्थाने चकारं पठन्ति, चकारस्तु लक्षणेऽर्थे, तेनोपद्रवैर्लक्षणैर्जुष्टा इत्यर्थः; जुष्टाः सहिताः । रसायनाद्विनेति रसायनेन ह्यसाध्यो व्याधिरपि प्रायः साध्यते । एकमनाः सावधानः । ममेति मम पार्श्वात् । 'व्याधयो यान्त्यसाध्यताम्' इति केचित् पठन्ति ॥ ३ ॥

**वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरम् ॥**
**अश्मरी मूढगर्भश्च तथैवोदरमष्टमम् ॥ ४ ॥**
**अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः ॥**

प्रथमं मूलव्याधयो भवन्ति पश्चादुपद्रवा इति मूलव्याधीन् दर्शयति—वातव्याधिरित्यादि ।—वातव्याधिरत्र महावातव्याधिरभिप्रेतो महच्छब्दलोपात् । अष्टावेत इत्यत्र द्वितीयं पुनरष्टग्रहणं सर्वेषां तुल्यत्वख्यापनार्थम्; अन्ये त्वन्यथा समादधति, तत्तु विस्तरभयान्न लिखितम् । प्रकृत्यैव स्वभावेनैव । महागदा इति मारणात्मकत्वादसाध्यत्वाच्च महत्त्वमेषामिति । 'अष्टावेते महान्तस्तु व्याधयो दुस्तराः सदा'—इति केचित् पठन्ति ॥ ४ ॥—

**प्राणमांसक्षयः शोषस्तृष्णा च्छर्दिर्ज्वरस्तथा ॥ ५ ॥**
**अतीसारश्च मूर्च्छा च हिक्का श्वासस्तथैव च ॥**
**एतैरुपद्रवैर्जुष्टान् सर्वानेव विवर्जयेत् ॥ ६ ॥**

यैरुपद्रवैर्जुष्टा असाध्या भवन्ति वातव्याध्यादयो रोगास्तानुपद्रवानाह—प्राणमांसक्षय इत्यादि ।—उत्साहोपचयक्षय इत्यर्थः । चकारत्रयं वक्ष्यमाणशोफत्वक्पाकादीनां समुच्चयार्थम् । एतैरुपद्रवैर्जुष्टा इत्यत्र बहुवचनं त्रिभिर्वा जुष्टा इति ख्यापनार्थम् । अन्ये 'प्राणमांसक्षयश्वासतृष्णाशोषवमीज्वरैः । मूर्च्छातिसारहिक्काभिः पुनश्चैतैरुपद्रवैः ॥ वर्जनीया विशेषेण भिषजा सिद्धिमिच्छता'-इति पठन्ति ॥ ५ ॥ ६ ॥

**शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम् ॥**
**नरं रुजार्तमन्तश्च वातव्याधिर्विनाशयेत् ॥ ७ ॥**

प्रतिव्याधिनियतं विशिष्टमरिष्टं दर्शयन्नाह—शूनमित्यादि । शूनाद्युपद्रवसहितं पुरुषं वातव्याधिर्विनाशयेदिति संबन्धः । सुप्तत्वचं बधिरत्वचम्, भग्नं वातेन त्रुटितम् । रुजार्तमन्तश्चेति अन्तर्मध्ये रुजार्तं गम्भीरवेदनापीडितं; केचित् 'नरं रुजार्तिमन्तं च' इति पठन्ति; तत्र रुजा तोदादिलक्षणा, अर्तिः शूलः ॥ ७ ॥

**यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव वा ॥**
**पिडकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥ ८ ॥**

यथोक्तोपद्रवाविष्टमिति मक्षिकोपसर्पणादयः श्लैष्मिकाणां, वृषणावदरणादयः पैत्तिकानां, हृद्ग्रहादयो वातिकानां, तैराविष्टं संयुक्तं मानवं प्रमेहो हन्ति । अतिप्रस्रुतमिति सुष्ठु स्रवन्मूत्रम् । पिडकापीडितमिति पिडकाः शराविकाकच्छपिकादयः । गाढम् अतिशयेन ॥ ८ ॥

**प्रभिन्नप्रस्रुताङ्गं च रक्तनेत्रं हतस्वरम् ॥**
**पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ॥ ९ ॥**

प्रभिन्नमित्यादि ।-प्रभिन्नप्रस्रुताभ्यां सहाङ्गशब्दः प्रत्येकं संबध्यते । हतस्वरमिति नष्टस्वरम् । पञ्चकर्मगुणातीतमिति अत्र वमनादीनां पञ्चकर्मणामप्राप्तफलमित्येके; तत्तु न सम्यक्, यतः पञ्चशब्देन पञ्चमधात्ववस्थितं कुष्ठमुक्तं; तत्र कर्माणि संशोधनसंशमनाभ्यङ्गगुग्गुलुशिलाजतुप्रभृतीनि, तेषां गुणाः फलानि, तेभ्योऽतीतम्; एतदुक्तं भवति—अस्थिगतकुष्ठं संशोधनादिभिरप्यप्राप्तविशेषं कुष्ठिनं हन्ति । अन्ये तु 'पूर्वरूपक्रियया सह रसादिधातूनां चतुर्णां क्रियासमूहः पञ्चकर्माणि' इति मन्यन्ते । तद्यथा—पूर्वरूपेषु संशोधनमुभयतः सेवेत; त्वक्प्राप्ते शोधनालेपनानि, अत्र त्वक्शब्देन रसोऽभिधीयते; एवं शोणितमांसमेदसामपि चिकित्सितं निर्दिष्टं दर्शनीयमिति । इहेति अस्मिन् शास्त्रे ॥ ९ ॥

**तृष्णारोचकशूलार्तमतिप्रस्रुतशोणितम् ॥**
**शोफातीसारसंयुक्तमर्शोव्याधिर्विनाशयेत् ॥ १० ॥**

१ 'त्रिप्रकारा व्याधीनामसाध्यता-लिङ्गविशेषयोगात्, उपद्रवविशेषयोगात्, रिष्टविशेषयोगाच्च । तत्र लिङ्गासाध्यता स्वभावासाध्यानां त्रिदोषविसर्पादीनामुत्पत्तिसिद्धलिङ्गैरेवासाध्यता स्वस्वविषय एव दर्शनीया; रिष्टासाध्यता च पूर्वाध्यायैरुक्ता; अवशिष्टामुपद्रवासाध्यतां यथाप्रधानं यथाव्याधिषु दर्शयितुं वारणीयोऽभिधीयते । चिकित्सा वारणीया येषूपद्रवा साङ्ग्येषु व्याधिषु ते वारणीयाः । वारणीयसंज्ञैवाध्यायस्य । अन्ये तु 'अवारणीय' इति व्याख्यातवन्तः' इति चक्रः ।

१ 'यथोक्तोपद्रवाविष्टमिति यस्मिन् प्रमेहे ये उपद्रवा उक्तास्तद्युक्तं सत्, अत्रोक्तोपद्रवयुक्तं मानवं हन्तीति ज्ञेयम्' इति चक्रः ।

तृष्णेत्यादि । तृष्णारोचकाद्युपद्रवसहितं पुरुषमर्शोव्याधिर्विनाशयेदिति संबन्धः ॥ १० ॥

**वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च ॥**
**भगन्दरात् प्रस्रवन्ति यस्य तं परिवर्जयेत् ॥ ११ ॥**

वातेत्यादि ॥ ११ ॥

**प्रशूननाभिवृषणं रुद्धमूत्रं रुगन्वितम् ॥**
**अश्मरी क्षपयत्याशु सिकताशर्करान्विता ॥ १२ ॥**

प्रशूननाभीत्याद्युपद्रवसहितं पुरुषमश्मरी क्षपयति विनाशयति । आशु शीघ्रम् । सिकताशर्करान्वितेति सिकता वालुका, तत्सदृशा या शर्करा तया सहिताऽश्मरीत्यर्थः ॥ १२ ॥

**गर्भकोषपरासङ्गो मक्कल्लो योनिसंवृतिः ॥**
**हन्यात् स्त्रियं मूढगर्भे यथोक्ताश्चाप्युपद्रवाः ॥ १३ ॥**

गर्भेत्यादि । गर्भकोषपरासङ्गप्रभृत्युपद्रवाः स्त्रियं हन्युर्विनाशयेयुः, कस्मिन् सति ? मूढगर्भे; गर्भकोषपरासङ्ग इति गर्भाशयस्य परः श्रेष्ठ आसङ्गोऽतिशयेन निरोध इत्यर्थः; अन्ये तु स्वस्थानात् परस्थानं गत्वा गर्भस्य सङ्गो निरोध उत्पद्यते, अनेन प्रकारेण 'परासङ्ग' इति कथयन्ति[1] । मक्कल्ल इति गर्भिणीव्याकरणोक्तो ज्ञेयः; तत्राप्रजातायाश्चेति चकारान्न केवलं प्रजातायाः, अप्रजाताया अपि मक्कल्लो भवति, तथा गर्भाशयाच्च्युतगर्भाया योनिद्वारसक्तगर्भायाश्च रक्तं स्रुतमन्तःस्थितं पच्यमानं मक्कल्लसंज्ञं भवतीति ज्ञेयम् । योनिसंवृतिः योनिसंकोचनम् । यथोक्ताश्चाप्युपद्रवा इति आक्षेपककासश्वासभ्रमादयो मूढगर्भनिदाने पठिताः । 'हन्युः स्त्रियं मूढगर्भां' इति केचित् पठन्ति; मूढगर्भां मूढगर्भसहिताम् ॥ १३ ॥

**पार्श्वभङ्गान्नविद्वेषशोफातीसारपीडितम् ॥**
**विरिक्तं पूर्यमाणं च वर्जयेदुदरार्दितम् ॥ १४ ॥**

पार्श्वेत्यादि । पार्श्वौ भज्यतेऽनेनेति पार्श्वभङ्गो वेदनाविशेषः । विरिक्तं पूर्यमाणं चेति विरेचनद्रव्यैर्बहुशो विरिक्तं पुनः पूर्यमाणमुदरार्दितं वर्जयेदिति ॥ १४ ॥

**यस्ताम्यति विसंज्ञश्च शेते निपतितोऽपि वा ॥**
**शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥ १५ ॥**
**यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान् ॥**
**नित्यं वक्त्रेण चोच्छ्वस्यात्तं ज्वरो हन्ति मानवम् १६**
**हिक्काश्वासपिपासार्तं मूढं विभ्रान्तलोचनम् ॥**
**संततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥ १७ ॥**
**आविलाक्षं[1] प्रताम्यन्तं निद्रायुक्तमतीव च ॥**
**क्षीणशोणितमांसं च नरं नाशयति ज्वरः ॥ १८ ॥**

कायचिकित्साव्याधीनुपद्रवैरसाध्यान् निर्दिशन्नाह,—यस्ताम्यतीत्यादि । यस्ताम्यति मुहुर्मुहुर्मूर्च्छां गच्छति । विसंज्ञः शेते संज्ञारहितः स्वपितीत्यर्थः । निपतितोऽपि वेति 'संज्ञारहितः'

१ 'सङ्गो गर्भस्यैव स्थानान्तरसंलग्नत्वं' इति चक्रः ।



इति शेषः । शीतार्दितो 'बहिः' इति शेषः । अन्तरुष्णश्चेति अन्तर्दाहयुक्तः । हृष्टरोमा उद्धर्षितरोमा । हृदि संघातशूलवानिति अष्ठीलावत्संहतवस्तुशूलवानित्यर्थः; अन्ये तु महाशूलवानिति मन्यन्ते । नित्यं वक्त्रेण चोच्छ्वस्यादिति सर्वदा मुखेनोर्ध्वं श्वासं कुर्यादित्यर्थः । तं ज्वरो हन्ति मानवमिति तं मानवं ज्वरो हन्ति विनाशयतीत्यर्थः । हिक्केत्यादि । मूढं व्यामोहयुक्तमनसम् । विभ्रान्तलोचनमुच्चलिताक्षम् । क्षपयति ज्वर इति 'तत्क्षणादेव' इति शेषः । आविलाक्षमित्यादि । आविलाक्षम् ओदनमण्डवदश्रुपूर्णेक्षणम् । प्रताम्यन्तं प्रकर्षेण मोहं गच्छन्तम् । अतीव चेति अहर्निशमित्यर्थः । इत्थंभूतमाविलाक्षताद्युपद्रवसहितं नरं नाशयति ज्वर इति संबन्धः ॥ १५–१८ ॥

**श्वासशूलपिपासार्तं क्षीणं ज्वरनिपीडितम् ॥**
**विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥ १९ ॥**

अत्र विशेषेण वृद्धमिति अवृद्धमप्येवंभूतं विनाशयेत्, वृद्धं पुनर्विशेषेणातिशयेनेत्यर्थः; इत्थंभूतं नरं श्वासाद्युपद्रवसहितमतिसारो विनाशयेदिति संबन्धः । 'क्षीणं ज्वरनिपीडितम्' इत्यत्र स्थाने 'क्षीणं विम्बिशीपीडितं' इति पठन्ति केचित् । अत्र विम्बिशीशब्देन प्रवाहिकोच्यते, भेडेनात्रोक्तं,—'प्रवाहिकामिति विदुर्विम्बिशीं त्वपरे बुधाः'—इति ॥ १९ ॥

**शुक्राक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम् ॥**
**कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥ २० ॥**

कृच्छ्रेण बहु मेहन्तमिति कृच्छ्रेण कष्टेन, बहु मेहन्तं क्षरन्तं, 'मलं' इति शेषः । एतेनाहारस्यातिशयमलीभावः कथितः, यस्य चातिशयमलो निष्पद्यते तस्य मांसरक्तक्षयो भवति, स पुनरसाध्यो भवति, इत्थंभूतं नरं शुक्राक्षत्वाद्युपद्रवसहितं यक्ष्मा हन्तीति संबन्धः । इहेति अस्मिन् शास्त्रे ॥ २० ॥

**श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढताः ॥**
**भवन्ति दुर्बलत्वं च गुल्मिनो मृत्युमेष्यतः ॥ २१ ॥**

श्वासेत्यादि । ग्रन्थिमूढतेति गुल्मस्यादर्शनम् । एते श्वासाद्युपद्रवा भवन्ति, कस्येत्याह—गुल्मिनो मृत्युमेष्यत इति ।—गुल्मिनो गुल्मयुक्तस्य पुरुषस्य, मृत्युं मरणम्, एष्यतो गमिष्यत इत्यर्थः ॥ २१ ॥

**आध्मातं बद्धनिष्यन्दं छर्दिहिक्कातृडन्वितम् ॥**
**रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम् ॥ २२ ॥**

आध्मातमित्यादि । बद्धनिष्यन्दं बद्धमूत्रं रुद्धपूयगतिकं वा । कायचिकित्सायां यद्यपि विद्रधिर्न पठितः, तथाऽपीह गुल्मानन्तरमुपद्रवैः सोऽप्यसाध्यो भवतीति पठितः । समाविष्टमिति सहितं नरं, विद्रधिर्नाशयेदिति संबन्धः ॥ २२ ॥

**पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च मानवः ॥**
**पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥ २३ ॥**

१ 'उच्छलिताक्षं' इति पा० ।

पाण्डित्यादि । पाण्डुशब्देन श्वेतत्वमभिधीयते । दन्तनखयोः पाण्डुताऽस्थिगतदोषेण, नेत्रपाण्डुता पाण्डुसंघातदर्शित्वं च मज्जगतदोषेण । पाण्डुसंघातदर्शी चेति पाण्डूनां श्वेतद्रव्याणां संघातः समूहः, तं सर्वासु दिक्षु पश्यतीत्यर्थः ॥ २३ ॥

**लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ॥**
**रक्तानां च दिशां द्रष्टा रक्तपित्ती विनश्यति ॥ २४ ॥**

लोहितमित्यादि । बहुश इति बहुवारम् । लोहितेक्षण इति रक्तनेत्रः, एतच्च पूर्ववन्मज्जगतदोषेणेति । रक्तानां च दिशां द्रष्टेति एतदपि मज्जगतदोषेण । 'रक्तानां च दिशां द्रष्टा' इत्यत्र केचित् 'लोहितोद्गारदर्शी च' इति पठन्ति । तत्रोद्गारेऽपि लोहितागमत्वेन लोहितोद्गारः, लोहितदर्शित्वं च मज्जगतदोषेणैव, लोहितं रक्तं च सर्वं वस्तु पश्यतीत्यर्थः । 'लोहितोत्करदर्शी' इत्यन्ये पठन्ति; व्याख्यानयन्ति च—लोहितं सर्वं वस्तु पश्यतीत्यर्थः । 'लोहिताकारदर्शी च' इत्यपरे पठन्ति ॥ २४ ॥

**अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः ॥**
**जागरिष्णुरसंदेहमुन्मादेन विनश्यति ॥ २५ ॥**

अवागित्यादि ।–अवाङ्मुखस्तु अधोमुखः, उन्मुखो वेति ऊर्ध्वमुखः । बलशब्देनात्रोत्साहः कथ्यते । जागरिष्णुः जागरणशीलः । अन्ये 'अवाञ्ची वाऽप्युदञ्ची वा' इति पठन्ति, तत्रापि स एवार्थः ॥ २५ ॥

**बहुशोऽपस्मरन्तं तु प्रक्षीणं चलितभ्रुवम् ॥**
**नेत्राभ्यां च विकुर्वाणमपस्मारो विनाशयेत् ॥ २६ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थानेऽवारणीयो नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥**

बहुश इत्यादि । बहुशो बहुवारान् । अपस्मरन्तम् अपस्मारवेगवन्तम् । प्रक्षीणं 'पुरुषम्' इति शेषः । नेत्राभ्यां च विकुर्वाणमिति नेत्रद्वयं विकृतियुक्तं करोतीत्यर्थः । इत्थंभूतं पुरुषमपस्मारवेगाद्युपद्रवसहितमपस्मारो विनाशयेदिति संबन्धः । य एते कायचिकित्सारोगोपद्रवास्ते समस्ता एवासाध्या इति ज्ञेयाः ॥ २६ ॥

इति श्रीडल्ह(ह्व)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशत्तमोऽध्यायः ।

**अथातो युक्तसेनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

युक्तसेनीयमिति युक्ता सेना यस्य स युक्तसेनो राजेत्यर्थः; तमधिकृत्य कृतोऽध्यायो युक्तसेनीयः ॥ १ ॥ २ ॥

**नृपतेर्युक्तसेनस्य परानभिजिगीषतः ॥**
**भिषजा रक्षणं कार्यं यथा तदुपदेक्ष्यते ॥ ३ ॥**
**विजिगीषुः सहामात्यैर्यात्रायुक्तः प्रयत्नतः ॥**
**रक्षितव्यो विशेषेण विषादेव नराधिपः ॥ ४ ॥**

युक्तसेनस्येति सन्नसेनस्य, गजतुरगरथपदातिलक्षणचतुरङ्गबलस्येत्यर्थः; अन्ये युक्तसेनस्य मिलितसेनस्येति कथयन्ति । परान् शत्रून्, अभिजिगीषतः जेतुमिच्छत इत्यर्थः । विजिगीषुः जेतुमिच्छुः । सहामात्यैरिति क्रमागतैः पुरुषैः सहेत्यर्थः । यात्रायुक्त इति दत्तप्रयाण इत्यर्थः । रक्षितव्य इति सर्वेभ्य आगन्तुमृत्युभ्यः । विशेषेण अतिशयेन । विषं स्थावरं, जङ्गमं, कृत्रिमं च ॥ ३ ॥ ४ ॥

**पन्थानमुदकं छायां भक्तं यवसमिन्धनम् ।**
**दूषयन्त्यरयस्तच्च जानीयाच्छोधयेत्तथा ॥ ५ ॥**

विषप्रयोगभेदं चिकित्सार्थं दर्शयन्नाह—पन्थानमित्यादि । पन्थानं मार्गं; स च विषेण दूषितोऽश्वादिखुरक्षुण्णरेणुना रोमकूपनासाविवरादिषु प्रविशन् विकारं जनयति । छायामिति विषेण वृक्षादिदूषणाच्छायादोषः, द्रव्यस्वभावाद्वा छायामपि विषं दूषयति; यद्वा भल्लातकच्छाया तत्क्षणाच्छोफकारिणीति । भक्तम् ओदनादिकम् । यवसं बुसादि । दूषयन्ति विकृतिं कुर्वन्ति । अरयः शत्रवः । तच्चेति पन्थादि । जानीयात् 'लिङ्गैः कृत्वा' इति शेषः । शोधयेत् चिकित्सेत् ॥ ५ ॥

**तस्य लिङ्गं चिकित्सा च कल्पस्थाने प्रवक्ष्यते ॥**

किं तल्लिङ्गं, का वा चिकित्सेत्याह—तस्येत्यादि ॥—

**एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते ॥ ६ ॥**
**तत्रैकः कालसंयुक्तः शेषा आगन्तवः स्मृताः ॥**

ननु यद्यकालमृत्युरस्ति तदा विषादिभ्यो नृपतिरक्षणं युक्तं, विषभक्षकस्य लिङ्गचिकित्से च युक्ते, अथ नास्त्यकालमृत्युस्तदा किं निष्फलप्रयासेनेत्याशङ्क्याकालमृत्युं प्रमाणैः साधयन्नादावागममेव प्रमाणमाह—एकोत्तरमित्यादि । एकेनाधिकं मृत्युशतमथर्वाणोऽथर्ववेदविदः पुरुषाः, प्रचक्षते कथयन्ति । तत्रैकः कालसंयुक्त इति तत्र तेषां मृत्यूनां मध्ये एकः कालसंयुक्तः कालमृत्युरित्यर्थः । शेषा आगन्तवः स्मृता इति शेषा उर्वरिता आगन्तवोऽपमृत्यवः स्मृताः कथिता इत्यर्थः । तत्र गर्भवर्षेण सहैकोत्तरशतवर्षैरेकोत्तरशतं मृत्यवः पूर्यन्ते; ततः शतादर्वाग्कालमृत्यवः, शतादनन्तरं कालमृत्युरिति केचिन्मन्यते । अपरे

---

१ 'व्याधितानां मारकमुपद्रवमभिधाय स्वस्थानामप्यागन्तुनिमित्तं यतः प्रायो मरणं भवति तदुपदेष्टुं युक्तसेनीयोऽभिधीयते । अत्र हि सूत्रस्थानेऽवश्यं सूत्रणीयं वक्ष्यमाणकल्पस्थानस्य बीजभूतं स्वस्थोपद्रवभूतं विषमभिधातव्यं, तथा चान्येऽपमृत्यव एकोत्तरशतमित्यादिना सूत्रयितव्याः' इति चक्रः ।

१ 'छायाश्रयवृक्षादीनां दूषणाच्छायादुष्टिर्भवति; दुष्टवृक्षादिच्छायाश्रयिणो वृक्षादिगतेन सविषेण पवनेन बाध्यन्ते । जानीयादिति ज्ञात्वा परिहारार्थं; परिहाराशक्तौ शोधयेदपीत्युक्तं; शोधयेदिति निर्विषीकुर्यात्' इति चक्रः । २ 'प्रविशन्' इति हस्तलिखितपुस्तके न पठ्यते । ३ 'कालसंज्ञस्तु' इति पा० ।

श्रुवते–'शतशब्दोऽत्रासंख्यावाचकः, उत्तरशब्दस्तु प्रधानवाचकः; तेनासंख्या मृत्यवः, कारणानामसंख्येयत्वात्; एकश्च मृत्युः प्रधानं, स च कालमृत्युः कथ्यते । ननु, यो यस्मिन् काले म्रियते स तस्य कालमृत्युरेव, तत् कथमकालमृत्युरित्युच्यते ? तथा चोक्तं—"नाकाले म्रियते कश्चिन्नास्ति मृत्युरकालजः । यो यस्मिन् म्रियते काले मृत्युकालः स तस्य हि-" इति । व्यासभट्टारकेणाप्युक्तं,—"नाकाले म्रियते कश्चिद्विद्धः शरशतैरपि । कालप्राप्तस्य कौन्तेय ! वज्रायन्ते तृणान्यपि"—इति । नैतदस्ति, उपमानादिप्रमाणैर्बहुधाऽऽचार्यैरकालमृत्योः स्थापितत्वात् । तथा-च,—"यथा वर्षमकाले च यथा पुष्पं यथा फलम् । यथा स्याद्दीपनिर्वाणमकाले मरणं तथा"—इति । व्यासवचनमप्यर्जुनप्रोत्साहकमकालमृत्युस्थापकं दृश्यते; तथाहि—"जलमग्निर्विषं शस्त्रं स्त्रियो राजकुलानि च । अकालमृत्यवो ह्येते तेभ्यो बिभ्यति पण्डिताः"–इति । अन्यैरप्युक्तं;–"कालः सुरैरपि हि वञ्चयितुं न शक्यो वक्ष्ये विधानमपमृत्युविनाशनाय । मृत्युर्भवेद्यदि कथंचन नापमृत्युर्व्यर्थास्तदा चरकसुश्रुतवाग्भटाद्याः"—इति । तस्मात् कालाकालयोर्मृत्युर्भवत्येवेति । अपरे 'शेषा आगन्तवः स्मृताः' इत्यस्याग्रतः "विष्वग्वातादिभिर्यद्वद्दीपस्तैलादिसंयुतः । निर्वाप्यते क्षणाद्देही तथैवागन्तुमृत्युभिः"—इति श्लोकं पठन्ति, व्याख्यानयन्ति च–विष्वग्वातः प्रबलवातः । आदिशब्देन शलभादिनिपातः कथ्यते ॥ ६ ॥—

**दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ॥ ७ ॥**
**रक्षेतां नृपतिं नित्यं यत्तौ[1] वैद्यपुरोहितौ ॥**

अथर्ववेदोऽकालमृत्युप्रशमनहेतुः, तदङ्गानि च वैद्यपुरोहितौ पठतः, अतस्तयो राजरक्षणे व्यापारं दर्शयन्नाह—दोषेत्यादि । दोषा वातादयः, आगन्तवो विषाभिघातादयः । रसमन्त्रविशारदाविति यथासंख्येन रसविशारदो वैद्यः, मन्त्रविशारदः पुरोधाः । तत्र केचित् 'रसविशारद' इत्यत्रादिशब्दलोपाद्रसवीर्यविपाकविशारदः; अथवा रसशब्देन रसवन्ति द्रव्याणि कथ्यन्ते, तेषां विशारदः; अथवा रसशब्दोऽत्र विषवाचकः, तद्विशारद इति कथयन्ति । विशारदः पण्डितः । मन्त्राणामृग्यजुःसामोक्तानामथर्ववेदोक्तानां चेत्यर्थः । यत्तौ यत्नपरौ ॥ ७ ॥—

**ब्रह्मा वेदाङ्गमष्टाङ्गमायुर्वेदमभाषत ॥ ८ ॥**
**पुरोहितमते तस्माद्वर्तेत भिषगात्मवान् ॥**

पुरोहितो वेदानधीते, वैद्यस्तु तदङ्गमायुर्वेदमिति वैद्यात् पुरोधसः प्राधान्यं दर्शयन्नाह—ब्रह्मेत्यादि । ब्रह्मा आयुर्वेदमभाषत, किंविशिष्टम् ? अष्टाङ्गं; पुनः किंविशिष्टं ? वेदाङ्गम् । वर्तेत व्यवहरेदित्यर्थः । आत्मवान् बुद्धिमान् ॥ ८ ॥—

**संकरः सर्ववर्णानां प्रणाशो धर्मकर्मणाम् ॥**
**प्रजानामपि चोच्छित्तिर्नृपव्यसनहेतुतः ॥ ९ ॥**

सर्वप्रजानां राजायत्ता स्थितिरिति राजरक्षणं यत्नेन कार्यमिति दर्शयन्नाह—संकर इत्यादि । संकर एकत्वं ब्राह्मणशूद्रादीनां वर्णानां दण्डाभावेनाचारलोपात् । धर्मकर्मणामिति वर्णानामेव धर्मस्य कर्मणामन्येषामपि । अन्ये तु 'धर्मिकर्मणाम्' इति पठन्ति, तत्र धर्मयोगादाश्रमाश्चत्वारो धर्मिणः, ब्रह्मचारिगृहस्थवानप्रस्थयतयश्चत्वार आश्रमाः, तत्कर्मणां प्रणाशः । प्रजानामुच्छित्तिरिति दण्डाभावेन कृषिपाशुपाल्यवाणिज्यराजोपसेवानामभावादुच्छित्तिरुच्छेदो भवतीत्यर्थः । नृपव्यसनहेतुत इति वर्णसंकरादयोऽनर्था राजव्यसनात् कारणाद्भवन्ति, तस्माद्राजा यत्नेन रक्षणीय इत्यर्थः । अन्ये 'नृपव्यसनहेतुका' इति पठन्ति; तत्र, उच्छित्तिरिति संबध्यते ॥ ९ ॥—

**पुरुषाणां नृपाणां च केवलं तुल्यमूर्तिता ॥ १० ॥**
**आज्ञा त्यागः क्षमा धैर्यं विक्रमश्चाप्यमानुषः ॥**
**तस्माद्देवमिवाभीक्ष्णं वाङ्मनःकर्मभिः शुभैः ॥ ११ ॥**
**चिन्तयेन्नृपतिं वैद्यः श्रेयांसीच्छन् विचक्षणः ॥**

राज्ञो मनुजत्वे समानेऽप्यमानुषानुवर्तिभिर्गुणैर्देवत्वं साधयन्नाह—पुरुषाणामित्यादि । केवलं निश्चितं, मूर्तिराकृतिः, आज्ञा अनुल्लङ्घनीय आदेशः, त्यागः कीर्तिधर्मार्थं बहुप्रकारो वित्तविसर्गः, क्षमा सर्वसहता, धैर्यं व्यसनेषु धीरता, विक्रमः पराक्रमः, अमानुष एष गुणसमूहो मानुषेषु न संभवतीत्यर्थः । तस्मादित्यादि ।–अभीक्ष्णमनवरतं, तस्मात् कारणाद्देवमिव नृपतिं वैद्यश्चिन्तयेदिति संबन्धः । कैः कृत्वा चिन्तयेदित्याह—वाङ्मनःकर्मभिः शुभैरिति ।—शुभैः शोभनैरित्यर्थः ॥ १० ॥ ११ ॥—

**स्कन्धावारे च महति राजगेहादनन्तरम् ॥ १२ ॥**
**भवेत्सन्निहितो वैद्यः सर्वोपकरणान्वितः ॥**
**तत्रस्थमेनं ध्वजवद्यशःख्यातिसमुच्छ्रितम् ॥ १३ ॥**
**उपसर्पन्त्यमोहेन विषशल्यामयार्दिताः ॥**
**स्वतन्त्रकुशलोऽन्येषु शास्त्रार्थेष्वबहिष्कृतः ॥ १४ ॥**
**वैद्यो ध्वज इवाभाति नृपतद्विद्यपूजितः ॥**

वैद्यस्य संततोपयोगित्वादुचितप्रदेशवासं निर्दिशन्नाह—स्कन्धावार इत्यादि । स्कन्धावारे कटके । महति गुरुतरे । अनन्तरमिति अव्यवधाने अन्तरायवर्जिते । सर्वोपकरणान्वित इति यन्त्रशस्त्रक्षारौषधागदादियुक्तः । तत्रेत्यादि ।–तत्रस्थं राजगृहसमीपस्थम् । एनमिति वैद्यम् । ध्वजवत् पताकावत् । निर्मलगुणकीर्तनं यशः, ख्यातिः स्वाभाविकी स्तुतिः, समुच्छ्रितं वृद्धिंगतम् । उपसर्पन्ति समीपं गच्छन्ति । अमोहेन निश्चिन्तमनसा । विषशल्यामयार्दिता इति अर्दिताः पीडिताः; तेन विषार्दिताः शल्यार्दिता आमयार्दिताश्चेत्यर्थः । वैद्यं बहुश्रुतं स्तुवन्नाह—स्वतन्त्रेत्यादि । कुशलः प्रवीणः । अबहिष्कृत इति नात्यन्तमकुशलः । नृपतद्विद्यपूजित इति नृपैस्तद्विद्यैश्च पूजितः संमानितः, तद्विद्यैः वैद्यैरित्यर्थः ॥ १२—१४ ॥—

१ 'यत्नात्' इति पा० ।

१ 'नित्यं' इति पा० । २ 'नृपतद्विधपूजितः' इति पा० ।

**वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः ॥ १५ ॥
एते पादाश्चिकित्सायाः कर्मसाधनहेतवः ॥
गुणवद्भिस्त्रिभिः पादैश्चतुर्थो गुणवान् भिषक् ॥१६॥
व्याधिमल्पेन कालेन महान्तमपि साधयेत् ॥**

पादचतुष्टयं चिकित्सासाधनं दर्शयन्नाह—वैद्य इत्यादि । व्याध्युपसृष्टो रोगी; परिचारकः शुश्रूषकः पुरुषः । कर्मसाधनहेतव इति आरोग्यहेतव इत्यर्थः ॥ १५ ॥ १६ ॥—

**वैद्यहीनास्त्रयः पादा गुणवन्तोऽप्यपार्थकाः ॥ १७॥
उद्गातृहोतृब्रह्माणो यथाऽध्वर्युं विनाऽध्वरे ॥**

वैद्यस्य प्राधान्यं दर्शयन्नाह—वैद्येत्यादि । अपार्थका निष्फलाः । उद्गाता सामवित्, होता ऋग्वेदवित्, ब्रह्मा तु त्रयीवित्, अध्वर्युर्यजुर्वेदविदुपाध्यायः सर्वेषामेवोपदेष्टा । अध्वरे यज्ञे ॥ १७ ॥—

**वैद्यस्तु गुणवानेकस्तारयेदातुरं सदा ॥ १८ ॥
प्लवं प्रतितरैर्हीनं कर्णधार इवाम्भसि ॥**

पादत्रयव्यतिरेकेऽपि वैद्यक्रियायाः साफल्यं दर्शयन्नाह—वैद्यस्त्वित्यादि। प्लवं नावं, प्रतितरैरन्तःप्रविष्टजलोत्क्षेपकैः पुरुषैः। कर्णधारो नौकाया नेता ॥ १८ ॥—

**तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयंकृती ॥ १९ ॥
लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः ॥ २० ॥
सत्यधर्मपरो यश्च स भिषक् पाद उच्यते ॥**

वैद्यादीनां गुणानाह—तत्त्वेत्यादि । तत्त्वाधिगतशास्त्रार्थ इति यथावदधीतशास्त्रो यथावज्ज्ञाततदर्थश्चेत्यर्थः । दृष्टकर्मेति छेद्यादौ स्नेहादौ च कुशल इत्यर्थः । स्वयंकृती स्वप्रज्ञया चिकित्सायां प्रवृत्तः । लघुहस्त इति छेद्यादिक्रियासु वेपनादिदोषरहितः । शुचिरिति बाह्याभ्यन्तरशौचयुक्तः । शूरो विषादरहितः । सज्जोपस्करभेषज इति सज्जानि प्रगुणान्युपस्कराण्यग्रोपहरणीयपठितानि यन्त्रशस्त्रादीनि भेषजानि च यस्य स तथा । प्रत्युत्पन्नमतिः योऽवस्थासु न मुह्यति । धीमानिति अनुक्तदुरुक्तोहापोहलक्षणबुद्धियुक्तः । व्यवसायी विषमावस्थास्वपि चिकित्सां कुर्वन्न मुह्यति; अन्ये उत्साहीति मन्यन्ते । विशारदः पण्डितः, कृच्छ्रपदमात्रेषु न मुह्यति । सत्यधर्मपर इति सत्यं मिथ्याभाषणनिवृत्तिः; धर्मः अनेकसाधनसाध्यः ॥१९॥२०॥—

**आयुष्मान् सत्त्ववान् साध्यो द्रव्यवानात्मवानपि २१
आस्तिको वैद्यवाक्यस्थो व्याधितः पाद उच्यते ॥**

आयुष्मानित्यादि ।—आयुष्मान् दीर्घायुः । सत्त्ववान् क्लेशसहिष्णुः । साध्यः साध्यव्याधियुक्त इत्यर्थः । आत्मवान् अलोलुपः । आस्तिक इति दत्तमस्ति हुतमस्ति परलोकोऽस्त्येवं मतिर्यस्य स आस्तिकः । वैद्यवाक्यस्थो वैद्यवचनकर इत्यर्थः ॥२१॥—

१–२ 'प्रतिचरैः' इति पा० । ३ 'तीर्थाधिगतशास्त्रार्थः' इति पा० ।

**प्रशस्तदेशसंभूतं प्रशस्तेऽहनि चोद्धृतम् ॥ २२ ॥
युक्तमात्रं मनस्कान्तं गन्धवर्णरसान्वितम् ॥
दोषघ्नमग्लानिकरमविकारि विपर्यये ॥
समीक्ष्य दत्तं काले च भेषजं पाद उच्यते ॥ २३ ॥**

प्रशस्तदेशसंभूतमित्यादि ।—युक्तमात्रं युक्तप्रमाणम् । मनस्कान्तं मनःप्रियम् । दोषघ्नमिति दोषशब्देन वातादय उच्यन्ते तद्दूषिता धातुमलाश्च, अथवा दोषहरं दुष्टिं हरत्यदुष्टं न च कोपयति । अग्लानिकरं हर्षक्षयं न करोतीत्यर्थः । अविकारि विपर्यय इति विपर्यये व्यापत्तावप्यल्पविकारं निर्विकारं वा । समीक्ष्य दत्तमिति किमभिसमीक्ष्य? आतुरोपक्रमोक्तान् परीक्ष्यानायुरादीन् देशान्तान् कालावस्थाः पूर्वाह्णादिका वा ॥ २२ ॥ २३ ॥

**स्निग्धोऽजुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे ॥
वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृतः ॥ २४ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने युक्तसेनीयो नाम चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥**

स्निग्ध इत्यादि । स्निग्धः प्रीतियुक्तः । अजुगुप्सुरिति अनिन्दकः; एतेन कष्टव्याध्यवस्थास्वप्यातुरं न निन्दतीत्यर्थः । बलवानिति बलवत्त्वात् सर्वक्लेशसहः । युक्तो व्याधितरक्षण इति युक्तो निपुणः, एतेन व्याधितस्य रक्षणे तत्पर इत्यर्थः । वैद्यवाक्यकृदिति वैद्यवाक्यमविकल्पं करोतीत्यर्थः । अश्रान्त इति खेदरहितः । 'पादैश्चतुर्भिः संपूर्णैरेभिः कर्म प्रसिध्यति' इति केचिदध्यायान्ते पठन्ति । एतच्च न पठनीयं, सर्वेषु निबन्धेष्वदर्शनात् ॥ २४ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशत्तमोऽध्यायः ।

**अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः॥१॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

यादृश आतुर उपक्रम्यो भवति तादृशोपक्रमणमधिकृत्य कृतोऽध्याय इत्यर्थः ॥ १ ॥ २ ॥

**आतुरमुपक्रममाणेन भिषजाऽऽयुरादावेव परीक्षितव्यं; सत्यायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशान् परीक्षेत ॥ ३ ॥**

१ चक्रस्तु 'अल्पमात्रं बहुगुणं' इति पठति, व्याख्यानयति च 'अल्पमात्रमपि प्रशस्तगुणयोगाद्बहुगुणकरम्' इति । २ 'पूर्वाध्यायोक्तगुणवद्भेषजादिपादत्रययुक्तभिषजा आतुरश्चिकित्सितुमुपक्रमणीय इत्यातुरोपक्रमणीयोऽभिधीयते । आतुरोपक्रमणं च गतायुषि निरर्थकमयशस्करं चेत्यध्यायप्रतिज्ञानन्तरमायुःपरीक्षोपदेशं करोति—आतुरमित्यादि । आयुःपरीक्षणं च रिष्टसद्भावाभावाभ्यां पूर्वाध्यायैर्यद्यपि कृतमेव तथाऽपि यद्दीर्घायुष्ट्वं तत्तत्र नोक्तं, तदिह प्रतिपादनीयम् ।' इति चक्रः । ३ 'परीक्षेत' इति पा० ।

उपक्रमणं चिकित्सा, सा च दीर्घायुषि कर्तव्येत्याह—आतुरमित्यादि । सत्यायुषीति विद्यमाने सति जीविते व्याध्यादीनां परीक्षा कर्तव्या । तत्र व्याधिः साध्यासाध्यभेदेन; ऋतव इति अग्निवयोदेहबलानामृत्वायत्तत्वात्; अग्निरिति दीप्ताग्निमन्दाग्न्यादिभेदेन; वयो बाल्याद्यवस्थाभेदेन; देहबलं कृशस्थूलादिभेदेन; सत्त्वं गुणः, स चोत्तमादिभेदेन; सात्म्यं प्राणिना सेवितो यो मधुरादिरसो व्यायामादिर्वा सुखाय भवति तत् सात्म्यमुच्यते, एतदपि परीक्ष्यं; प्रकृतिर्वातादिका; भेषजमौषधं, परीक्ष्यमिति संबन्धः, दोषसात्म्यप्रकृत्याद्यपेक्षाणि बलवन्ति भेषजानि भवन्तीति परीक्षा; देशो जाङ्गलानूपभेदेन; 'देशशब्दानन्तरं लुप्तादिशब्दनिर्देशादौषधकालादीन् परीक्षेत' इति केचिद्वदन्ति ॥ ३ ॥

**तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्वोच्छ्वासप्रेक्षणबाहुं, विस्तीर्ण[1]भ्रूस्तनान्तरोरस्कं, ह्रस्वजङ्घामेढ्रग्रीवं, गम्भीरसत्त्व[2]स्वरनाभिम्, अनुच्चैर्बद्धस्तनम्, उपचितमहारोमशकर्णं, पश्चान्मस्तिष्कं, स्नातानुलिप्तं मूर्धानुपूर्व्या विशु[3]ष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति । तमेकान्तेनोपक्रमेत् । एभिर्लक्षणैर्विपरीतैरल्पायुः; मिश्रैर्म[4]ध्यमायुरिति ॥ ४ ॥**

तत्र दीर्घायुषो लक्षणानि निर्देष्टुमाह—तत्रेत्यादि । महच्छब्दः पाणिपादादिभिर्ललाटान्तैः सह प्रत्येकं संबध्यते । महत्त्वं च स्वैरङ्गुलैरुक्तप्रमाणात् किंचिदाधिक्यम् । दीर्घशब्दोऽङ्गुलिप्रभृतिभिर्बाह्वन्तैः सह प्रत्येकं संबध्यते । दीर्घत्वमप्युक्तप्रमाणात् किंचिदाधिक्यं ज्ञेयम् । तत्र महत्त्वं विस्तारेण सह, दैर्घ्यं विस्तारं विना । अङ्गुलिपर्वाणि अङ्गुलिग्रन्थयः । प्रेक्षणानि लोचनानि । विस्तीर्णशब्दो भ्रूप्रभृतिभिरुरोन्तैः सह प्रत्येकं संबध्यते; विस्तीर्णं विपुलम् । स्तनान्तरं स्तनयोर्मध्यम् । उरो हृदयकण्ठान्तरम् । ह्रस्वशब्दो जङ्घादिभिर्ग्रीवान्तैः सह प्रत्येकं संबध्यते । मेढ्रं लिङ्गम् । गम्भीरशब्दोऽपि सत्त्वादिभिर्नाभ्यन्तैः सह प्रत्येकं संबध्यते । गम्भीरं गहनम् । सत्त्वस्य गाम्भीर्यं प्राचुर्यमुच्यते, स्वरस्य गाम्भीर्यं सुस्निग्धानु[5]नादित्वं, नाभेर्गम्भीरत्वं निम्नता । अनुच्चैर्बद्धस्तनमिति किंचिदुच्चनिबिडस्तनम् । उपचितमहारोमशकर्णमिति उपचितौ मांसलौ महान्तौ विस्तीर्णौ लोमशौ कर्णौ यस्य तम् । पश्चान्मस्तिष्कमिति पश्चाद्ग्रीवाभागे मस्तिष्को रोमावर्तो विद्यते यस्य तं; 'पार्श्वमस्तिष्कम्' इत्यन्ये पठन्ति, तत्र पार्श्वयोर्मस्तिष्कौ द्वावावर्तौ चूडाभागे यस्येत्यर्थः; अपरे मस्तिष्कशब्देन मस्तकस्नेहं घृतिकामिति वदन्ति, स पश्चाद्भागे भवतीत्यर्थः; अन्ये तु 'उपचितमहारोमशकर्णपार्श्वमस्तिष्कं' इति समुदितं पदं पठन्ति, व्याख्यानयन्ति च—'उपचिता मांसलाः, महान्तो विस्तीर्णाः, रोमशा लोमवन्तः, कर्णपार्श्वमस्तिष्का यस्य तं; कर्णपार्श्वमस्तिष्कशब्देन कर्णस्य पार्श्वौ द्वौ, तयोरेवोपरितनभागो मस्तिष्कं; 'कालमस्तकम्' इत्यन्ये पठन्ति । स्नातानुलिप्तमित्यादि । मूर्धानुपूर्व्या मस्तकानुक्रमेण, एतेन प्रथमं मस्तकादिशरीरं शुष्यति पश्चाद्धृदयमित्यर्थः । खल्वयमिति खलु निश्चयेन, अयं पुरुषः । दीर्घायुषं ज्ञात्वा किं कुर्यादित्याह—तमित्यादि ।–तं पुरुषम्, एकान्तेन एकनिश्चयेन अदोलायमानहृदयेनेत्यर्थः, उपक्रमेत् चिकित्सेत्; अन्ये त्वाहुः–एकान्तेन सातत्येनेत्यर्थः । अल्पस्यायुषो लक्षणमतिदेशेन निर्दिशन्नाह—एभिरित्यादि । अन्ये 'तत्रैतैर्लक्षणैः'–इत्यादिपाठं पठन्ति । मध्यमायुषो लक्षणमाह—मिश्रैरित्यादि । मिश्रैरिति अल्पायुर्दीर्घायुर्लक्षणैरित्यर्थः ॥ ४ ॥

१ 'भ्रुवोः स्तनयोश्चान्तरं ज्ञेयम्' इति चक्रः । २ 'गम्भीरत्वं सत्त्वस्य व्यसनेऽभ्युदये चाक्षोभ्यता' इति चक्रः । ३ 'विशुष्यमाणावयवं' इति पा० । 'स्नातानुलिप्तमानुपूर्व्या पश्चाद्विशुष्यमाणशरीरहृदयमिति स्नातं वा अनुलिप्तं वा यथानुपूर्व्या सलिलं वा अनुलेपनं वा शरीरे लग्नं तथैव विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयमित्यर्थः' इति चक्रः । ४ 'मध्यमायुषमिति' इति पा० । ५ 'स्निग्धानुद्धतत्वं' इति पा० ।

भवन्ति चात्र—

**गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः ॥**
**उत्त[1]रोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते ॥ ५ ॥**
**गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते ॥**
**शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः ॥ ६ ॥**

प्रागनुक्तं दीर्घायुषो लक्षणमाह—गूढेत्यादि । गूढा गुप्ताः सन्धिसिरास्नायवो यस्येत्यर्थः । संहताङ्गो गूढाङ्गः । स्थिरेन्द्रिय इति अचलेन्द्रिय इत्यर्थः; अन्ये त्विन्द्रियशब्देनेन्द्रियाधिष्ठानं वदन्ति; तेन स्थिरेन्द्रियाधिष्ठान इत्यर्थः । एतेन विमुक्ताक्षित्वादयो भावास्तस्य न सन्तीत्युक्तम् । उत्तरोत्तरसुक्षेत्र इति उत्तरोत्तरं श्रेष्ठाच्छ्रेष्ठं, सुक्षेत्रः शोभनशरीरः । तत्र पादगुल्फौ प्रथमं क्षेत्रं, जङ्घे जानुनी चेति द्वितीयमित्यादि यावत् "केशान्तं च शिरश्चैव दशमं क्षेत्रमुच्यते" इति । गर्भादित्यादि शनैरिति क्रमेण, समुपचीयते वृद्धिं याति । कैः कृत्वेत्याह—शरीरज्ञानविज्ञानैः ।–तत्र शरीरवृद्धिर्मेदःप्रभृतिका; ज्ञानविज्ञाने मानसौ धर्मौ, ज्ञानं तत्त्वावबोधः, विज्ञानं चित्रादिकर्मकौशल्यम् । समासतः संक्षेपतः । विज्ञानशब्दान्तरं लुप्तादिशब्दनिर्देशादन्येऽपि शुभादयः । तदुक्तं,—"व्यञ्जनादि शुभा विद्या मेदो मेधा धनं यशः । अल्पे वयसि यस्यैतन्न स जीवेच्चिरं नरः"–इति ॥ ५ ॥ ६ ॥

**मध्यमस्यायुषो ज्ञानमत ऊर्ध्वं निबोध मे ॥**
**अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः ॥ ७ ॥**
**द्वे वा तिस्रोऽधिका वाऽपि पादौ[2] कर्णौ च मांसलौ ॥**
**नासाग्रमूर्ध्वं च भवेदूर्ध्वं लेखाश्च पृष्ठतः ॥ ८ ॥**
**यस्य स्युस्तस्य परममायुर्भवति सप्ततिः ॥**

१ 'उत्तरोत्तरसुक्षेत्र इति उत्तरोत्तरदीर्घायुःपुरुषकुलजातः, क्षेत्रं प्रभवस्थानमिह कुलपुरुषाः' इति चक्रः । २ 'पादाङ्गुल्यौ' इति पा० ।

प्रागनुक्तस्य मध्यमायुषो लक्षणं निर्दिशन्नाह—मध्यमेत्यादि। अक्षयोः कोष्ठकास्थ्नोः, लेखा राजयः । 'अधस्ताद्वस्तयोः' इत्यादि पाठं केचित् पठन्ति ॥ ७ ॥ ८ ॥—

**जघन्यस्यायुषो ज्ञानमत ऊर्ध्वं निबोध मे ॥ ९ ॥**
**ह्रस्वानि यस्य पर्वाणि सुमहच्चापि मेहनम् ॥**
**तथोरस्यवलीढानि न च स्यात्पृष्ठमायतम् ॥ १० ॥**
**ऊर्ध्वं च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः ॥**
**हसतो जल्पतो वाऽपि दन्तमांसं प्रदृश्यते ॥**
**प्रेक्षते यश्च विभ्रान्तं स जीवेत्पञ्चविंशतिम् ॥ ११ ॥**

प्रागनुक्तस्याल्पायुषो लक्षणं निर्देष्टुमाह—जघन्यस्येत्यादि । जघन्यस्य अल्पस्य । मेहनं मेढ्रम् । तथोरस्यवलीढानीति उरसि वक्षःस्थले, अवलीढानि आवर्तभेदाः प्रतिलोमानुलोमत्वेन । 'तथोरस्यवलीढानि' इत्यत्र स्थाने केचिदन्यथा पाठं पठन्ति, स चाभावान्न लिखितः । विभ्रान्तं विशेषेण मोहयुक्तं यथा भवति । पञ्चविंशतिं 'वर्षाणि' इति शेषः ॥ ९—११ ॥

**अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः । तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि, तदवयवाः प्रत्यङ्गानीति । तत्र, स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते; प्रदेशिन्यास्तु मध्यमानामिकाकनिष्ठिका यथोत्तरं पञ्चमभागहीनाः; चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले; पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः; चतुर्दशाङ्गुलायतः पादः; चतुर्दशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि; अष्टादशाङ्गुला जङ्घा, जानूपरिष्टाच्च द्वात्रिंशदङ्गुलम्, एते पञ्चाशत्; जङ्घायामसमावूरू; द्व्यङ्गुलानि वृषणचिबुकदशननासापुटभागकर्णमूलभ्रूनयनान्तराणि; चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि; द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि; इन्द्रबस्तिपरिणाहांसपीठकूर्परान्तरायामः षोडशाङ्गुलः; चतुर्विंशत्यङ्गुलो हस्तः; द्वात्रिंशदङ्गुलपरिमाणौ भुजौ; द्वात्रिंशत्परिणाहावूरू; मणिबन्धकूर्परान्तरं षोडशाङ्गुलं; तलं षट्चतुरङ्गुलायामविस्तारम्; अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गुल्यौ पञ्चाङ्गुले; अर्धपञ्चाङ्गुले प्रदेशिन्यनामिके; सार्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ; चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवं; त्रिभागाङ्गुलविस्तारा नासापुटमर्यादा; नयनत्रिभागपरिणाहा तारका; नवमस्तारकांशो दृष्टिः; केशान्तमस्तकान्तरमेकादशाङ्गुलं; मस्तकादवटुकेशान्तो दशाङ्गुलः; कर्णावट्वन्तरं चतुर्दशाङ्गुलं; पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः; अष्टादशाङ्गुलविस्तारमुरः; तत्प्रमाणा पुरुषस्य कटी; सविंशमङ्गुलशतं पुरुषायाम इति ॥ १२ ॥**

यदपेक्षया ललाटादीनां महत्त्वह्रस्वत्वाद्युक्तं तदेवाङ्गुलिमानेन निर्दिशन्नाह—अथेत्यादि । साराः सत्त्वादिकाः । कानि पुनस्तान्यङ्गानि प्रत्यङ्गानि चेत्याह—तत्रेत्यादि । अन्तराधिः शरीरमध्यभागः । कटिसन्धिमारभ्य पादाङ्गुलीर्यावत् 'सक्थि' उच्यते । तदवयवा इति अन्तराधिबाहुद्वयसक्थिद्वयशिरसामवयवा इत्यर्थः । तत्र पादाङ्गुष्ठात् प्रभृति यावन्मस्तकमनुक्रमेण मानं दर्शयन्नाह—तत्रेत्यादि । तत्र तेषां प्रत्यङ्गानां मध्ये । पादाङ्गुष्ठः पादस्यैव प्रदेशिनी च, द्व्यङ्गुलायते अङ्गुलद्वयदीर्घे, 'नखं विहाय' इति शेषः । प्रदेशिन्यास्त्विति प्रदेशिन्याः सकाशान्मध्यमाङ्गुली पञ्चमभागहीना, ततोऽपि मध्यमायाः सकाशादनामिका पञ्चमभागहीना, ततोऽप्यनामिकायाः कनिष्ठिका पञ्चमभागहीनेत्यर्थः । पञ्चमभागस्तु अर्धाङ्गुलमात्रः । प्रपदं पादाग्रं, पादतलं पादमध्यम्; अन्ये 'षट्पञ्चाङ्गुलविस्तृते प्रपदपादतले' इति पठन्ति, व्याख्यानयन्ति च—'प्रपदं षडङ्गुलविस्तारं, पञ्चाङ्गुलविस्तारं पादतलम्' इति । पञ्चचतुरङ्गुलायतविस्तृतेति पञ्चाङ्गुलायता चतुरङ्गुलविस्तारेत्यर्थः । पादमध्यगुल्फमध्यजङ्घामध्यजानुमध्यानीत्यर्थः; चतुर्दशाङ्गुलपरिणाहानीति परिणाहो वर्तुलता चतुर्दशाङ्गुलमानरज्ज्वा वेष्टनमित्यर्थः । अन्ये 'त्रयोदशाङ्गुलपरिणाहानि' इति पठन्ति । अष्टेत्यादि । जङ्घाशब्देन गुल्फजानुमध्यमुच्यते, सा अष्टादशाङ्गुलप्रमाणा दैर्घ्येण । अन्ये 'चतुर्विंशत्यङ्गुला जङ्घा' इति पठन्ति । जानूपरिष्टाच्चेत्यादि उपरिष्टादुपरितनविभागः, जानुनोऽधःसन्धिमारभ्य कटिसन्धिं यावद्द्वात्रिंशदङ्गुलो दैर्घ्येणेत्यर्थः; एते पञ्चाशत् जङ्घाजानूपरिष्टाच्चेत्येकत्र मिलिताः पञ्चाशदङ्गुला भवन्ति । जङ्घेत्यादि जङ्घयोरायामेन दैर्घ्येण समावूरू, ऊरू अप्यष्टादशाङ्गुलावित्यर्थः; जानुन उपरि वङ्क्षणसन्धिपर्यन्तमूरू । द्व्यङ्गुलानीत्यादि । वृषणम् अण्डं, विस्तारे द्व्यङ्गुलं; अधरोष्ठादधस्ताच्चिबुकं, तदपि द्व्यङ्गुलम् । अर्धं बहिरर्धं मांसवेष्टितमिति दन्ता द्व्यङ्गुलाः । नासापुटभाग इति द्वयोर्नासापुटयोर्भागो बहिर्भागः प्रत्येकमङ्गुलद्वयप्रमाण इत्यर्थः । नयनान्तराणि नयनयोर्मध्यम् । अत्रापि पाठान्तराणि सन्ति, तानि चाभावान्न लिखितानि । चतुरङ्गुलानीत्यादि । मेहनमुच्छ्रायहीनं चतुरङ्गुलं शशजातेः पुंसः, सोच्छ्रायं

१ 'त्रियवोऽत्राङ्गुलः' इति चक्रः । २ 'पर्वं' इति पा० । ३ 'सार्धचतुरङ्गुले' इति पा० ।

१ 'सविंशमङ्गुलशतं पुरुषायाम' इति पञ्चाङ्गुलायामा पार्ष्णिः, जङ्घा चतुर्विंशत्यङ्गुला, जानु चतुरङ्गुलं, ऊरुश्चतुर्विंशत्यङ्गुलः, मेहननाभ्योरन्तरं द्वादशाङ्गुलं, नाभिहृदयान्तरं तथा ग्रीवाहृदयान्तरं प्रत्येकं द्वादशाङ्गुलं, ग्रीवा चतुरङ्गुलायामा, मुखं द्वादशाङ्गुलायामं, तथा केशान्तचूडास्थानरूपमस्तकान्तरमेकादशाङ्गुलमेवं सविंशमङ्गुलशतमायामः पुरुषस्य । अन्ये विस्तृतबाहुपुरुषायामं सविंशमङ्गुलशतं वदन्ति' इति चक्रः । २ 'गुल्फस्योपरि चतुरङ्गुलजङ्घायास्त्रयोदशाङ्गुलानि परिणाह इत्यर्थः' इति चक्रः ।

तु षडङ्गुलम् । व्यात्तस्य मुखस्यान्तरमपि चतुरङ्गुलं, नासावंशो दैर्घ्येण चतुरङ्गुलः, कर्णललाटग्रीवाणामुच्छ्रायो दीर्घत्वं चतुरङ्गुलं; दृष्ट्यन्तराणीति दृष्टी अत्र कृष्णतारके मसूरदलप्रमाणे भवतः, तयोर्दृष्ट्योरन्तरं चतुरङ्गुलम् । द्वादशेत्यादि । भगो योनिः, तस्य विस्तारो रन्ध्रः, तस्य परिणाहो द्वादशाङ्गुलः, इदं तु भगप्रमाणं हस्तिनीजातिस्त्रिया ज्ञेयं, कामशास्त्रोक्तत्वात् । मेहननाभ्योन्तरं द्वादशाङ्गुलं, तथा नाभिहृदययोर्ग्रीवाहृदययोः स्तनयोश्चान्तरमिति ज्ञेयम् । मुखायामो मुखदैर्घ्यम्, एतच्च चिबुकादारभ्य ललाटान्तं यावद्द्वादशाङ्गुलम् । मणिबन्धप्रकोष्ठाभ्यां सह स्थौल्यशब्दः प्रत्येकं संबध्यते; तत्र मणिबन्धस्य पाणिमूलस्य परिणाहो द्वादशाङ्गुलः, प्रकोष्ठस्य परिणाहो द्वादशाङ्गुलः; प्रकोष्ठो मणिबन्धोपरिष्टाच्चतुरङ्गुले कलाचिके इत्यर्थः । इन्द्रबस्तीत्यादि इन्द्रबस्तेर्जङ्घामध्यस्य परिणाहः षोडशाङ्गुलः । अंसपीठो बाहुशिरः, कूर्परो भुजमध्यं, तयोरन्तरायामो दैर्घ्यं षोडशाङ्गुल इत्यर्थः । 'षोडशाङ्गुल' इत्यस्य स्थाने केचित् 'विंशत्यङ्गुल' इति पठन्ति । पूर्वं 'जङ्घामध्यं चतुर्दशाङ्गुलपरिणाहम्' इति यत्प्रोक्तं तद्गुल्फाश्रितं जङ्घामध्यं ज्ञेयं, इह तु जान्वाश्रितम्, अतो न विरोधः । चतुर्विंशतीत्यादि । हस्तोऽत्र कूर्परादिमध्यमाङ्गुल्यन्तपर्यन्तो ज्ञेयः । द्वात्रिंशदित्यादि । मणिबन्धः पाणिमूलं, कूर्परं कुहणिका, तयोरन्तरं मध्यं षोडशाङ्गुलम्; 'अष्टादशाङ्गुलम्' इत्यपरे । तलमित्यादि तलमत्र हस्ततलं षडङ्गुलायामं, चतुरङ्गुलविस्तारम् । अङ्गुष्ठेत्यादि अङ्गुष्ठमूलस्य प्रदेशिन्याश्चान्तरं पञ्चाङ्गुलं, श्रवणस्य कर्णविवरस्य अपाङ्गस्य भ्रूपुच्छान्तस्य चान्तरं पञ्चाङ्गुलं, मध्यमाङ्गुली पञ्चाङ्गुला चेत्यर्थः । 'अङ्गुष्ठमूलकनिष्ठिका' इत्यादिपाठं केचित् पठन्ति । अर्धेत्यादि । सार्धचतुरङ्गुले प्रदेशिन्यनामिके अङ्गुल्यौ दैर्घ्येणेत्यर्थः । सार्धत्र्यङ्गुलाविति 'दैर्घ्येण' इति शेषः । चतुर्विंशतीत्यादि चतुरङ्गुलिविस्तारं मुखं, विंशत्यङ्गुलपरिणाहा ग्रीवेत्यर्थः; अन्ये 'चतुर्विंशत्यङ्गुलविस्तारमुरः, चतुर्विंशत्यङ्गुलविस्तारा ग्रीवा' इति पाठान्तरमत्र मन्यन्ते । त्रिभागेत्यादि अङ्गुलस्य त्रिभागेन सहाङ्गुलं त्रिभागाङ्गुलं, तावन्मात्रस्तिर्यङ्स्थित एको नासापुटः; अन्ये तु 'त्रिभागहीनाङ्गुलविस्तारा नासापुटमर्यादा' इति पाठं मन्यन्ते; तेषां मते तरुणास्थिहीनस्यैकस्यैव नासारन्ध्रस्य प्रमाणं, न तु तरुणास्थिसहितयोर्द्वयोरपि नासापुटयोः । नयनेत्यादि नयनत्रिभागो द्वियवप्रमाणः, तत्परिणाहा तारका कृष्णभाग इत्यर्थः । नवमेत्यादि तारकानवमांशो दृष्टिमण्डलं शल्यतन्त्राभिहितप्रमाणं, शालाक्यतन्त्रप्रमाणं तु मसूरदलमात्रमेव, अतो न दोषः; अथवा तारकानवांशेनापि मसूरदलमात्रमेव भवति, तारकाशब्देनात्रापि कृष्णविभागः । केशान्तेत्यादि केशान्तः शङ्खयोरुपरि, मस्तकशब्देनात्र मस्तकमध्यविभागो रोमावर्तान्वितः, तत्र केशान्तमस्तकयोरन्तरमेकादशाङ्गुलम् । मस्तकादित्यादि मस्तकात् मस्तकमध्यविभागात् । अवटुकेशान्त इति अवटुः कृकाटिका 'गिंविडिका' इति लोके, तत्केशान्तः तत्केशपर्यन्तः, तयोरन्तरं दशाङ्गुलम् । कर्णेत्यादि कर्णद्वयस्य यौ अवटू गर्तौ, तयोरन्तरं चतुर्दशाङ्गुलं पश्चात्कर्णयोरित्यर्थः; न पुनः कर्णावट्वोरेवान्तरं, तदन्तरस्याल्पप्रमाणत्वात् । पुरुषोर इत्यादि श्रोणिरत्रोरुसन्धेरधस्तात् स्मरमन्दिरोपरितनविभागः । हृदयादूर्ध्वं कण्ठस्याधः पुरुषोरो द्वादशाङ्गुलं, तत्प्रमाणा स्त्रीश्रोणिरित्यर्थः । अन्येषां मते चतुर्विंशत्यङ्गुलविस्तारमुर इति; तन्मते स्त्रीश्रोणिरपि तत्प्रमाणैवेति । अष्टादशेत्यादि अष्टादशाङ्गुलविस्तीर्णमुरः स्त्रिया इत्यर्थः, तत्प्रमाणा अष्टादशाङ्गुलविस्तीर्णा पुरुषस्य कटी । पूर्वोक्तप्रमाणमेकत्वेनाह—सविंशमित्यादि । विंशत्या अङ्गुलैः सह शतं सविंशमङ्गुलशतं, पुरुषायामः पादाग्रस्थितस्योर्ध्वबाहोः पुरुषस्य दैर्घ्यम् ॥ १२ ॥

**भवन्ति चात्र श्लोकाः—**

**पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे ॥**
**समत्वागतवीर्यौ तौ जानीयात् कुशलो भिषक् १३**

तत्र स्त्रीश्रोणिपुरुषोरःप्रभृतीनां यौवन एव यथोक्तप्रमाणता भवति, न त्वल्पे वयसीत्याह—पञ्चविंश इत्यादि । एतेन पञ्चविंशे वर्षे पुरुषं समत्वागतवीर्यं जानीयात्; षोडशे तु वर्षे नारीं समत्वागतवीर्यां जानीयात्, तयोश्च समत्वागतवीर्ययोरेव यथोक्तं प्रमाणं भवति । अन्यत्राप्युक्तं, "वर्षेऽथ पञ्चविंशे नरः समन्वितबलः षोडशे नारी । अर्हति मानोन्मानं जीवितभागे चतुर्थे वा–" इति । समत्वागतवीर्याविति समत्वं परिपूर्णत्वमागतं वीर्यं ययोस्तौ समत्वागतवीर्यौ, रसादिधातुपरिपूर्त्या वीर्यपूर्तिः, परिपूर्णसर्वधातुकावित्यर्थः । अन्ये त्वेवं पठन्ति 'समन्वागतवीर्यौ' इति; "सम्यगनु पश्चादागतं वीर्यमुपचयशक्तिलक्षणं ययोः" इति च व्याख्यानयन्ति ॥ १३ ॥

**देहः स्वैरङ्गुलैरेष यथावदनुकीर्तितः ॥**

कैः पुनरङ्गुलैरिदं मानमुक्तमित्याह—देह इत्यादि । एष देहः स्वैरङ्गुलैर्यथावदुक्तमानेनानुकीर्तितः कथित इत्यर्थः ॥–

**युक्तः प्रमाणेनानेन पुमान् वा यदि वाऽङ्गना ॥१४॥**
**दीर्घमायुरवाप्नोति वित्तं च महदृच्छति ॥**
**मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथाऽवरम् ॥ १५ ॥**

उक्तप्रमाणप्रयोजनं दर्शयन्नाह—युक्त इत्यादि । मध्यमैरिति मध्यमलक्षणैः । वित्तं धनम्; अवरं हीनं भवति । तथा तेन प्रकारेण । कैरित्याह—हीनैः; हीनलक्षणैरित्यर्थः ॥१४॥१५॥

---

१ 'कूर्परांसयोर्मध्यं भुजः' इति चक्रः । २ 'केशान्तेत्यादौ मस्तकं चूडास्थानम् । अवटुर्ग्रीवापश्चाद्भागः । कर्णयोरवटुभागस्य चान्तरं कर्णावट्वन्तरं, तेन कर्णयोः पश्चाद्भागान्तरमिति फलति' इति चक्रः ।

१ 'किरिडिका' इति लोके' इति पा० । २ 'देहः स्वैरङ्गुलैरित्यनेन नारीशरीरं नार्यङ्गुलेन पुरुषशरीरं पुरुषाङ्गुलेन मेयं, किंच बालशरीरं बालाङ्गुलेन मेयमित्यपि सूचितं ज्ञेयम् । स्वाङ्गुलोऽत्राङ्गुलिमध्यप्रदेशो माने ज्ञेयः, एतस्मिंश्च स्वाङ्गुलमाने त्रियवमानताऽङ्गुलस्योक्ता न सङ्गता भवति' इति चक्रः ।

**अथ सारान् वक्ष्यामः—स्मृतिभक्तिप्रज्ञाशौचशौर्योपेतं कल्याणाभिनिवेशं[1] सत्त्वसारं विद्यात्; स्निग्धसंहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण; अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रं च मज्ज्ञा; महाशिरःस्कन्धं दृढदन्तहन्वस्थिनखमस्थिभिः; स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायासासहिष्णुं मेदसा; अच्छिद्रगात्रं गूढास्थिसन्धिं मांसोपचितं च मांसेन; स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलं रक्तेन; सुप्रसन्नमृदुत्वग्रोमाणं त्वक्सारं विद्यादिति। एषां[2] पूर्वं पूर्वं प्रधानमायुःसौभाग्ययोरिति ॥ १६ ॥**

सारेणाप्यायुर्निर्दिशन्नाह—अथेत्यादि । स्मृतिः स्मरणं, प्रज्ञा कालत्रयात्मिका बुद्धिः, शौर्यं सर्वकर्मस्वविषादिता । कल्याणाभिनिवेशं कल्याणविषये यत्नपरम् । सत्त्वसारं विद्यादिति सत्त्वगुणबहुलं जानीयादित्यर्थः । स्निग्धेत्यादि । स्निग्धसंहतश्वेतशब्दास्त्रयोऽप्यस्थिदन्तनखैः सह प्रत्येकं संबध्यन्ते । संहतं घनम् । बहुलकामप्रजमिति बहुकामं बहुप्रजमित्यर्थः । शुक्रेणेति शुक्रेण कृत्वा सारं विद्यादिति संबन्धः । उपपन्नमिति युक्तमित्यर्थः । मज्ज्ञेति मज्जधातुना कृत्वा सारं विद्यादिति संबन्धः । महाशब्दः शिरःस्कन्धाभ्यां सह संबध्यते । दृढशब्दो दन्तहन्वस्थिनखैः सह प्रत्येकं संबध्यते । अस्थिभिः हड्डैः कृत्वा सारं विद्यादिति संबन्धः । स्निग्धेत्यादि । स्निग्धशब्दो मूत्रस्वेदस्वरैः सह प्रत्येकं संबध्यते । बृहच्छरीरमिति प्रबलकायम् । आयासासहिष्णुमिति कष्टकारिकर्माक्षमम् । मेदसेति मेदसा कृत्वा सारं जानीयादिति संबन्धः । अच्छिद्रगात्रमिति अनिम्नशरीरमित्यर्थः । गूढेत्यादि गूढास्थिसन्धिः गुप्तहड्डसन्धिरित्यर्थः । मांसोपचितमिति मांसलशरीरमित्यर्थः । मांसेनेति मांसेन कृत्वा सारं विद्यादिति संबन्धः । स्निग्धेत्यादि । स्निग्धताम्रशब्दौ पाणितलान्तैर्नखादिभिः सह प्रत्येकं संबध्यते । रक्तेनेति रुधिरेण कृत्वा सारं विद्यादित्यर्थः । सुप्रसन्नेत्यादि । सुप्रसन्नमृदुशब्दौ त्वग्रोमभ्यां सह प्रत्येकं संबध्येते । त्वक्सारं रससारं; त्वक्शब्देन त्वक्स्थो रसोऽभिहितः । एषामिति एषां पूर्वोक्तसाराणां मध्ये, पूर्वं पूर्वं प्रधानमिति यो यः पूर्वः सारः स स प्रधानमित्यर्थः । कयोः प्रधानं श्रेष्ठमित्याह—आयुःसौभाग्ययोरिति ।—सौभाग्यं सर्वस्यापि प्रतिभासमानत्वम् ॥ १६ ॥

**विशेषतोऽङ्गप्रत्यङ्गप्रमाणादथ सारतः ॥
परीक्ष्यायुः सुनिपुणो भिषक् सिध्यति कर्मसु ॥१७॥**

अङ्गप्रत्यङ्गमानसारज्ञानफलमाह—विशेषत इत्यादि । विशेषत इति परस्परव्यावर्तनेनेत्यर्थः । एतेन विपरीतव्रणदूतादिच्छायाशरीरस्वभावविप्रतिपत्त्युपद्रवासाध्यतादिभिश्चायुर्निर्थित्य विशेषतो महाललाटेत्यादिलक्षणभेदेन प्रवरावरमध्यमान्यायूंषि परीक्ष्य भिषक् सिध्यतीत्यर्थः । सुनिपुण इति सुष्ठु अतिशयेन निपुणः कुशलः । भिषक् सिध्यति कर्मस्विति वैद्यः कर्मविषये सिद्धिं प्राप्नोतीत्यर्थः । केचित् 'सामान्यतोऽङ्गप्रत्यङ्ग°' इत्यादि पठन्ति । तेषां मते सामान्यतः स्थूलवृत्त्येत्यर्थः ॥ १७ ॥

**व्याधिविशेषास्तु प्रागभिहिताः; सर्वे[1] एवैते त्रिविधाः—साध्या, याप्याः, प्रत्याख्येयाश्च । तत्रैतान् भूयस्त्रिधा परीक्षेत-किमयमौपसर्गिकः, प्राक्केवलः, अन्यलक्षण इति । तत्र, औपसर्गिको नाम यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति, स तन्मूल[2] एवोपद्रवसंज्ञः; प्राक्केवलो नाम यः प्रागेवोत्पन्नो व्याधिरपूर्वरूपोऽनुपद्रवश्च; अन्यलक्षणो नाम यो भविष्यद्व्याधिख्यापकः, स पूर्वरूपसंज्ञः । तत्र, सोपद्रवमन्योन्याविरोधेनोपक्रमेत, बलवन्तमुपद्रवं वा; प्राक्केवलं यथास्वं प्रतिकुर्वीत; अन्यलक्षणे त्वादिव्याधौ प्रयतेत ॥ १८ ॥**

१ 'ते तु सर्व एव त्रिविधा इति सर्वे एव रोगाः साध्ययाप्यप्रत्याख्येयभेदेषु मध्ये एकस्मिन्नवश्यं प्रविशन्तीत्यर्थः; न तु सर्वरोगाणां प्रति साध्यादित्रैविध्यमनेनोच्यते; येन रोहिणीप्रभृतयो न साध्याः, ज्वरादयो न याप्याः, तथा तिलकालकमशकादयः साध्या एव। अत्र प्रथमोत्पन्नो ज्वरादिर्व्याधिः, तं जघन्यकालजातो व्याधिरुपसृजति अनुगतो भवति योऽतिसारादिः, स च तन्मूल एवेति पूर्वोत्पन्नव्याधिकारणकः सन् सोऽतिसारादिरुपद्रव इत्यर्थः । अत्र पूर्वोत्पन्नमिति कृत्वा व्याधिमिति विशेषणमजनितव्याधिदोषावस्थानिषेधार्थम् । जघन्यकालजातमितिपदं व्याधिना सहोत्पन्नारुच्यादिलिङ्गरूपव्याधिनिरासार्थम् । यदुक्तं चरके 'व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः' ( च. नि. अ. ८ ) इति । पुनर्व्याधिरितिपदं व्याध्युत्पादोत्तरकालभावि व्याध्यवस्थानिरासार्थम् । तन्मूल एवेति स्वहेतुबलाद् व्याध्युत्तरकालोत्पन्नसंसर्गिरोगप्रतिषेधार्थम् । यथा—श्लीपदोत्तरकालजमपि कुष्ठं यथोक्तलक्षणमपि नोपद्रवः । एवंभूतोपद्रवलक्षणमेव चरके पठ्यते; यथा—"उपद्रवस्तु रोगान्तरकालजो रोगाश्रयो रोग एव, स स्थूलोऽणुर्वा बहुर्वा पश्चाज्जायत इत्युपद्रवसंज्ञः' (च. चि. अ. २१) इति । प्रागुत्पन्नो व्याधिरित्यनेन ज्वरादय एव व्याधयोऽभिधीयन्ते । अपूर्वरूप इत्यनेन पूर्वरूपादन्यत्वमुच्यते । अनुपद्रव इत्यनेन चोपद्रवादन्यत्वमुच्यते । अन्यलक्षणो नामेत्यनेन सर्वपूर्वरूपाभिधानम् । भविष्यद्व्याधिख्यापक इत्यनेन वर्तमानव्याधिगमकलिङ्गाव्याप्तिः; लिङ्गानां प्रधानव्याधिग्रहणेनैव ग्रहणमित्युक्तमेव, रिष्टानां च मरणपूर्वरूपतया ग्रहणमिति सर्वव्याधिप्राप्तिः' इति चक्रः । २ 'तन्मूलमूलक' इति पा० ।

१ '°निवेशिनं' इति पा० । २ 'एषामिति सत्त्वादिसाराणां यद्यत् पूर्वं तत्तदायुःसौभाग्ययोः प्रकर्षकरम्; एवं यथा यथा द्विव्यादिसारतायोगप्रकर्षस्तथा तथाऽऽयुःसौभाग्यप्रकर्षोऽपि ज्ञेयः, सौभाग्यशब्देन च कमनीयाश्चरके विस्तरप्रतिपादिता बलसौकुमार्यधनित्वादयो गुणा गृहीतव्याः' इति चक्रः ।

व्याधिपरीक्षां निर्दिशन्नाह—व्याधीत्यादि । प्रागभिहिता इति वेदोत्पत्त्यध्याये व्याधिसमुद्देशीये च ये उक्ताः । प्रत्याख्येयाश्चेति चकारात् प्रत्याख्येयानामपि साध्यत्वं दर्शयति; यथा—"वल्यामाभ्यन्तरायां तु प्रत्याख्याय समाचरेत्"; तथा मुखरोगेषु मांसतानालसप्रभृतिषूक्तं—"तेषु चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत्"—( चि. अ. २२ ) इति । एतान् व्याधीन् । भूयः पुनरपि । कथं परीक्षेतेत्याह—किमयमौपसर्गिक इति; किमयमुपद्रव इत्यर्थः । किमयं प्राक्केवल इति किमयं पूर्वरूपेणोपद्रवेण च रहित इत्यर्थः । किमयमन्यलक्षण इति किमयं व्याधेः पूर्वरूपमित्यर्थः । तेषां लक्षणमाह-तत्रेत्यादि । तत्र तेषां मध्ये औपसर्गिकस्तावत् कथ्यते । जघन्यकालजातो व्याधिरिति पश्चात्कालजातो रोग इत्यर्थः । उपसृजति समीपे आत्मानं नयतीत्यर्थः । एतेन तेन सह मिलतीत्युक्तम् । स इति पश्चादुत्पन्नो व्याधिरित्यर्थः । तन्मूल एवेति प्रागुत्पन्नव्याधिहेतुक एवेत्यर्थः । पश्चादुत्पन्नो व्याधिरेवोपद्रवो भवति, न पुनर्मूलव्याधिना सह भूतानि लिङ्गान्युपद्रवसंज्ञानि; लिङ्गान्यपि यदि चिरकालानुबन्धीनि भवन्ति तदा तान्यप्युपद्रवसंज्ञानि भवन्ति । उपसृजतीति अत्रैकवचनादेक एव व्याधिरुपद्रव इति न मन्तव्यम्, अपरेऽपि ये मूलव्याधेरनन्तरमुत्पद्यन्ते व्याधयस्तेऽप्युपद्रवाः; एकवचनस्याप्रधानत्वात् । उपद्रवसंज्ञ इति उपसर्ग इति चैकैव संज्ञेत्यर्थः । अपूर्वरूपः पूर्वरूपरहित इत्यर्थः । अनुपद्रवश्चेति उपद्रवरहित इत्यर्थः । एतेन मशकतिलकालकन्यच्छव्यङ्गादयः प्राक्केवला व्याधयः कथ्यन्ते, व्याधिस्वभावात् पूर्वरूपमन्तरेणापि प्रागेवोत्पद्यन्त इत्यर्थः । अन्यलक्षण इत्यादि यो भाविनं व्याधिं ख्यापयति स पूर्वरूपसंज्ञः । व्याधीनां बहुत्वात् कः प्रथमं प्रतिकरणीय इत्याह-तत्रेत्यादि । सहोपद्रवेण वर्तत इति सोपद्रवो मूलव्याधिरित्यर्थस्तं, तथोपद्रव उत्तरकालजो व्याधिस्तम् । अन्योन्याविरोधेन उभयाविरोधेनेत्यर्थः । बलवन्तमुपद्रवं वेति बलवन्तमुपद्रवं प्रथमं चोपक्रमेतान्योन्याविरोधेनेति संबन्धः । यथास्वं यथात्मीयचिकित्सितम् । अन्यलक्षण इत्यादि अन्यलक्षणे पुनः पूर्वरूपसंज्ञिते, आदिव्याधौ प्रयतेत प्रयत्नं कुर्वीत, 'यथास्वम्' इत्यनुवर्तते ॥ १८ ॥

भवति चात्र—

**नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः ॥**
**अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्[१] ॥ १९ ॥**

व्याधीनामानन्त्याद्दोषभेदेनानुक्तस्य व्याधेर्दोषव्यपेक्षाच्चिकित्सार्थं, तथा रोगकृतस्यापि रोगस्य चिकित्सामपि कर्तुं, न कार्यव्याधिमात्रस्य न.पि तु हेतुव्याधिमात्रस्येति कथयन्नाह—नास्तीत्यादि । अनुक्तमपि व्याधिं दोषाणां लिङ्गैः कृत्वोपाचरेदिति संबन्धः ॥ १९ ॥

**प्रागभिहिता ऋतवः ॥ २० ॥**

ऋतुपरीक्षां निर्दिशन्नाह—प्रागित्यादि । प्रागिति ऋतुचर्याध्याये ॥ २० ॥

**शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम्[१] ॥**
**कृत्वा कुर्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥**

विसदृशकालजस्यात्ययिकस्य व्याधेर्विध्यन्तरमुपदिशन्नाह—शीते इत्यादि । शीते शीतकाले, शीतप्रतीकारं शीतविपर्ययं कृत्वा, उष्णमित्यर्थः; उष्णे उष्णकाले, उष्णनिवारणमुष्णविपर्ययं कृत्वा, शीतमित्यर्थः । कुर्यात् क्रियामिति क्रियामग्निकर्मादिकाम् । तदुक्तं,—"तत्राप्यात्ययिकेऽग्निकर्मसाध्ये व्याधौ तत्प्रत्यनीकं विधिं कृत्वा" ( सू. अ. १२ ) इत्यादि । प्राप्तामिति योग्याम् । काल एवावश्यं क्रिया करणीयेत्याह—क्रियाकालं न हापयेत् ।—न हापयेत् नोल्लङ्घयेत्, अतिक्लेशवैफल्यव्याध्यसाध्यत्वभयात् कालशक्तेरतिशयप्रभविष्णुत्वात् । तद्यथा—अप्राप्ते काले आमज्वरे 'भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्' ( उ. अ. ३९ ) इत्यादि । उष्णे चोष्णनिवारणमित्यत्र चकाराद्वृष्टौ वृष्टिप्रतीकारोऽनुक्तोऽपि समुच्चीयते । अन्ये तु वृष्टेरपि शीतलाच्छीते शीतप्रतीकारमित्यनेनैव तद्ग्रहणमिति मन्यन्ते ॥ २१ ॥

**अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया ॥**
**क्रिया हीनाऽतिरिक्ता वा साध्येष्वपि न सिध्यति २२**

कीदृशी क्रिया न सिध्यतीत्याह—अप्राप्ते वेत्यादि । अप्राप्ते काले अनागते काले, क्रिया कृता साध्येष्वपि न सिध्यतीति संबन्धः । अनागते हि काले क्रिया कृता न सिध्यति, तथाच प्रागुक्तं—भेषजं ह्यामदोषस्येत्यादि । प्राप्ते वा न कृता क्रियेति अतीते काले क्रिया कृतेत्यर्थः; साऽपि साध्येष्वपि व्याधिषु न सिध्यति । यथा—जीर्णज्वरे क्षीरमांसरसस्नेहसाध्ये लङ्घनमिति । क्रिया हीनाऽतिरिक्ता वेति बहुदोषे हीना क्रियाऽकिञ्चित्करी, अल्पदोषे महती रोगिजीवितहरी रोगान्तकारिणी च । चकारान्मिथ्या क्रिया चानुक्ता समुच्चीयते; तद्यथा—शीतसाध्ये उष्णा, उष्णसाध्ये शीता चेति ॥ २२ ॥

**या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च ॥**
**सा क्रिया, न तु या व्याधिं हरत्यन्यमुदीरयेत् ॥२३॥**

क्रियाऽक्रिययोर्लक्षणमाह—येत्यादि । उदीर्णम् उत्कटम् । न तु या व्याधिं हरत्यन्यमुदीरयेदिति न पुनः सा क्रिया कथ्यते, या एकं व्याधिं हरत्यन्यं प्रकोपयतीत्यर्थः । यथा—कृशबृंहणेऽग्निसादमेहातीसारादयः, यथा वा स्थौल्यापकर्षणे मेहचिकित्सापतर्पणे च यक्ष्मवातरोगादयः ॥ २३ ॥

**प्रागभिहितोऽग्निरन्नस्य, पाचकः । स चतुर्विधो भवति-दोषानभिपन्न एकः; विक्रियामापन्नस्त्रि-[२]**

---

१ 'अनुक्तमपि शृङ्गमाहिकयाऽनुक्तमपि' इति चक्रः ।

१ 'प्रतीकारोऽत्र कालगुणविपरीता क्रिया' इति चक्रः ।
२ 'दोषाभिपन्नो विक्रियामापन्नश्च त्रिविधो भवति' इतिपाठश्चक्रसंमतः । 'दोषाभिपन्न इत्येतावदुच्यमाने वातादिप्रकृत्यग्नीनामपि मनाग्दुष्टादीनां ग्रहणं स्यादित्याह-विक्रियामापन्नश्चेति । दोषा-

**विधो भवति-विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः सर्वसाम्यादिति । तत्र, यो यथाकालमुपयुक्तमन्नं सम्यक् पचति स समः, समैर्दोषैः; यः कदाचित् सम्यक् पचति, कदाचिदाध्मानशूलोदावर्तातिसारजठरगौरवान्त्रकूजनप्रवाहणानि कृत्वा, स विषमः; यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्धमानोऽत्यग्निरित्याभाष्यते, स मुहुर्मुहुः प्रभूतमप्युपयुक्तमन्नमाशुतरं पचति, पाकान्ते च गलताल्वोष्ठशोषदाहसंतापाञ्जनयति; यस्त्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्दिगात्रसदनानि कृत्वा महता कालेन पचति, स मन्दः ॥ २४ ॥**

अग्निपरीक्षां निर्दिशन्नाह—प्रागित्यादि । प्राक् व्रणप्रश्ने । पञ्चप्रकारो भ्राजकादिभेदेन । कथं पुनश्चतुर्विध इत्याह—दोषेत्यादि । दोषाभिपन्नो दोषैः प्राप्त एक एवाग्निर्विक्रियामापन्नस्त्रिविधो भवति—विषम इत्यादि । विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, अनेन प्रकारेणेत्यर्थः; चतुर्थः समः सर्वसाम्यादिति । ननु, दोषाभिपन्नत्वेनैव विक्रियामापन्न इति प्राप्यते, तत् किमर्थं विक्रियामापन्न इत्युक्तं? नैष दोषः, वातादिकप्रकृतीनां पुरुषाणां वातादिदोषाभिपन्नत्वं भवति, न च विक्रिया काचिद्भवतीति । तेषां चतुर्णामग्नीनां लक्षणमाह—तत्रेत्यादि । यथाकालमिति कालस्यानुल्लङ्घनेन । प्रथमं प्रकृतिः प्रकृतेरनन्तरं विकृतिरिति ज्ञापनार्थं प्रथमं व्यत्ययेन समाग्निलक्षणमुक्तं—य इत्यादि । विषमाग्नेर्वायुर्यदा न विक्षिपति तदाऽग्निः सम्यक् पचति, यदा पुनरितश्चेतश्च भागशो विक्षिप्तः स्यात्तदा सम्यङ्न पचति; एतान्याध्मानादीनि कृत्वा यः पचति स विषम इति संबन्धः । कूजनं गुडगुडायनशब्दः । प्रवाहणं निकुन्थनम् । उपयुक्तं दत्तम् । तीक्ष्ण इति तीक्ष्णस्तु त्रिविधः—एकस्तीक्ष्ण आशुपाचकः, अन्य उपेक्षितोऽत्यग्निसंज्ञो भस्मकापरपर्यायः, अपर उपेक्षितस्तीक्ष्णतमो मुहुर्मुहुरित्यादिना कथितः । यश्च मुहुर्मुहुः पचति वह्निस्तत्र पाकान्ते गलादिशोषादीन् जनयतीति संबन्धः । 'संतापाञ्जनयति' इत्यस्याग्रे केचिद् 'यथा वातेनानुबध्यते पित्तं तदत्यर्थं द्रवोपेतम्' इत्यादि पाठं पठन्ति, स चाभावान्न लिखितः । यस्त्वित्यादि । प्रसेको लालास्रावः । गात्रसदनम् अङ्गग्लानिः ॥ २४ ॥

**विषमो वातजान् रोगांस्तीक्ष्णः पित्तनिमित्तजान् ।**
**करोत्यग्निस्तथा मन्दो विकारान् कफसंभवान् ॥२५॥**

एते विषमादयोऽग्नय उत्पन्नाः किं कुर्वन्तीत्याह—विषम इत्यादि ॥ २५ ॥

**तत्र, समे परिरक्षणं कुर्वीत; विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्वीत; तीक्ष्णे मधुरस्निग्धशीतैर्विरेकैश्च; एवमेवात्यग्नौ, विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिः; मन्दे कटुतिक्तकषायैर्वमनैश्च ॥ २६ ॥**

समाग्न्यादीनां चिकित्सितमाह—तत्रेत्यादि । परिरक्षणमिति यथा सममेवाग्निस्तिष्ठतीत्यर्थः । एवमेवेति मधुरस्निग्धशीतैस्त्रिभिस्तथा विरेचनैश्चेत्यर्थः ॥ २६ ॥

**जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः ॥**
**सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ॥ २७ ॥**

अग्नेरिदानीं प्रत्यक्षानुपलभ्यस्याप्यस्तित्वमाह—जाठर इत्यादि । जठरमुदरं, तत्र भवो जाठरः । भगवानिति माहात्म्यवानित्यर्थः । ईश्वर इति अष्टमहैश्वर्यगुणयुक्तः, अत एवाणिमादिगुणयुक्त इति । सूक्ष्मत्वान्न दृश्यते, कार्यैरुपलभ्यते । ननु, यद्यसावीश्वरस्तत् कथमस्य मान्द्यादयो दोषा भवन्ति? सत्यं; पुरुषस्य प्राक्तनकर्मणा मान्द्यादयः क्रियन्ते; अथवाऽग्निः पित्ताश्रितः, ततः पित्तविघातादग्निमान्द्यादयो दोषा न स्वत इति । सौक्ष्म्यात् अणिमादिगुणयुक्तत्वात् । रसान् मधुरादीन् । आददान इति परिपक्तुं गृह्णन् । विवेक्तुं नैव शक्यत इति साक्षान्नोपलभ्यत इत्यर्थः; अपि त्वन्नपाकलक्षणेन कार्येणानुमीयतेऽस्त्यग्निरिति ॥ २७ ॥

**प्राणापानसमानैस्तु सर्वतः पवनैस्त्रिभिः ॥**
**ध्मायते पाल्यते चापि स्वां स्वां गतिमवस्थितैः ॥२८॥**

यथा बाह्यस्याग्नेर्वायुः सहायो भवति, तद्वज्जाठरस्यापि वायुसहायत्वं दर्शयन्नाह—प्राणेत्यादि । सर्वतः सर्वासु दिक्षु, अन्ये 'सर्वत इति सर्वेभ्यो वायुभ्य' इत्यर्थं वदन्ति; तेन सर्वेभ्योऽपि वायुभ्यः सकाशात्त्रय एव वाता धमनपालनसमर्था न व्यानोदानावित्युक्तं भवति । ध्मायते प्राणापानाभ्यां; पाल्यते समानेन । स्वां स्वां गतिमवस्थितैः स्वस्वमार्गे स्वस्थाः स्वस्थाः

भिपन्नत्वेनैव विक्रियायां लब्धायां यत् पुनर्विक्रियामापन्नश्चेति करोति, तेन प्रतिकर्तव्याविर्भूतविक्रियापन्नतां दर्शयति, तेन प्राकृताऽग्निविक्रिया अन्या सर्वथाऽप्रतिकार्या च निरस्यते; किंवा दोषाभिपन्नत्वेनाप्राकृती दुष्टिस्त्रिविधा गृह्यते, विक्रियामापन्नश्चेत्यनेन च आगन्तुकी वह्निदुष्टिरुच्यते' इति चक्रः ।

१ 'प्रवाहणं निकुहनं' इति पा० ।

१ 'औदर्यः' इति चक्रसंमतः पाठः । 'उदरे भव औदर्यः । अन्नस्य पाचक इत्यनेन अन्नपाकेन कार्येण लक्ष्यते प्रत्यक्षानुपलभ्यमानोऽपीति दर्शयते । सूक्ष्मत्वमिहानुद्भूतरूपमनुक्षणदाहकरत्वं च ज्ञेयम् । रसानाददान इति रसमलविवेकार्थं रसान् गृह्णन्नित्यर्थः । रसशब्देन रसाधारं द्रव्यमन्नपानरूपमुच्यते । विवेक्तुमिति रुधिरादेरन्यतया गृहीतुम्' इति चक्रः । २ 'अत्र प्राणापानाभ्यां प्रविशच्छिद्रद्वयां वह्नेरुद्दीपनं भस्त्राध्मापनेनेव क्रियते, तदेतद् 'ध्माप्यते' इत्यनेनोक्तम् । समानेन तु वह्निपार्श्ववर्तिना पालनं क्रियते । चरकेऽपि 'समानेनावधूतोऽग्निः' (च. चि. अ. १५) इत्युक्तम् । सर्वत इति सर्वमग्निस्थानं व्याप्य' इति चक्रः ।

क्रियायाः कारकैरविकृतैरित्यर्थः । 'स्वां स्वां गतिमवस्थितैः' इत्यस्याग्रे वह्नेः प्राधान्यख्यापनाय केचित् 'युक्तेऽग्नौ' इत्यादिपाठं पठन्ति, स चाभावान्न लिखितः ॥ २८ ॥

**वयस्तु त्रिविधं-बाल्यं, मध्यं, वृद्धमिति । तत्रोनषोडशवर्षीया बालाः । ते त्रिविधाः—क्षीरपाः, क्षीरान्नादा, अन्नादा इति । तेषु संवत्सरपराः क्षीरपाः, द्विसंवत्सरपराः क्षीरान्नादाः, परतोऽन्नादा इति । षोडशसप्तत्योरन्तरे मध्यं वयः । तस्य विकल्पो-वृद्धिः, यौवनं, संपूर्णता, परिहाणिरिति । तत्र, आविंशतेर्वृद्धिः, आत्रिंशतो यौवनम्, आचत्वारिंशतः सर्वधात्विन्द्रियबलवीर्यसंपूर्णता, अत ऊर्ध्वमीषत्परिहाणिर्यावत् सप्ततिरिति । सप्ततेरूर्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते ॥ २९ ॥**

इदानीं वयःपरीक्षां निर्दिशन्नाह—वयस्त्वित्यादि । तत्रोनषोडशवर्षीया बाला इति पञ्चदशवर्षीया इत्यर्थः । क्षीरान्नादा इति दुग्धान्नभोजिन इत्यर्थः । अन्नादा इति केवलान्नभक्षका इति । क्षीरपाः स्तननिःसृतक्षीरभक्षका इत्यर्थः । तेषामवधिमाह—तेष्वित्यादि । संवत्सरपरा इति परशब्देनात्रावधिरुक्तः । परतोऽन्नादा इति तृतीयादिसंवत्सरेष्वित्यर्थः । अत्रापि केचित् पाठान्तरं मन्यन्ते, तच्चाभावान्न लिखितम् । मध्यमवयसोऽवधिं भेदांश्च कथयन्नाह—षोडशेत्यादि । अन्तरे अन्तराले । मध्यं वयः 'कथ्यते' इति शेषः । विकल्पो भेद इत्यर्थः । वृद्धिर्वर्धनं; यौवनमिति वृद्धिसंपूर्णतयोर्मिश्रीभावः, 'यूनो विकारो यौवनम्' इत्येके; संपूर्णतेति वृद्धानामवयवानामाप्यायनं संपूर्णता । आविंशतेरिति विंशतिवर्षाणि मर्यादीकृत्येत्यर्थः । 'यावत् सप्ततिः' इत्यत्र स्थाने 'यावत् षष्टिः' इति केचित् पठन्ति । सप्ततेरनन्तरं यादृशो भवति यन्नामा च कथ्यते तदाह—सप्ततेरित्यादि । वीर्यं रेतः, वली त्वक्संकोचः, पलितं केशशुक्लत्वं, खालित्यं खल्वाटत्वं 'चान्दिलत्वम्' इति लोके । अभिवृष्टं मेघवृष्ट्या सिक्तमित्यर्थः । अवसीदन्तं पतन्तम् ॥ २९ ॥

**तत्रोत्तरोत्तरासु वयोवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्ति, ऋते च परिहाणेः; तत्राद्यापेक्षया प्रतिकुर्वीत ॥ ३० ॥**

वयोज्ञानस्य भेषजमात्राप्रयोगः फलमिति दर्शयन्नाह,—तत्रेत्यादि । तत्र वयोज्ञाने । उत्तरोत्तरासु वयोवस्थास्विति बाल्ययौवनादिकासु । उत्तरोत्तरा इति उत्कृष्टोत्कृष्टाः, भेषजमात्राविशेषा इति औषधप्रमाणविशेषाः, ऋते च परिहाणेरिति सप्ततेरूर्ध्वं वर्जयित्वेत्यर्थः । तत्राद्यापेक्षया प्रतिकुर्वीतेति तत्र परिहाणौ, आद्यापेक्षया बाल्यापेक्षया, षोडशवर्षवद्भेषजमात्रेत्यर्थः । भेषजमात्रा च तन्त्रान्तरोक्ता ग्राह्या । तद्यथा—"प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका । अवलेह्या तु कर्तव्या मधुक्षीरसिताघृतैः ॥ एकैकां वर्धयेत्तावद्यावत्संवत्सरो भवेत् । तदूर्ध्वं माषवृद्धिः स्याद्यावत् षोडशकाब्दिकः ॥ षोडशाब्दात्ततस्तूर्ध्वं यावदासप्ततेरिति । एवमेव विभागोऽयं तदूर्ध्वं बालवत्क्रिया ॥ मानमेतत् प्रयोक्तव्यं सर्वमानविधावपि" इति । स्वतन्त्रेऽपि सांवत्सरिकाष्टद्विरष्टवर्षाणामित्यादि । अन्ये 'तत्राद्यापेक्षया' इत्यत्र 'अन्त्यापेक्षया' इति पठन्ति, व्याख्यानयन्ति च—परिहाणेरन्त्या वृद्धिरुच्यते, तदपेक्षयेत्यर्थः; एतेन षोडशवर्षवन्मात्रा प्रयोक्तव्येत्यर्थः ॥ ३० ॥

**भवन्ति चात्र—**

**बाले विवर्धते श्लेष्मा मध्यमे पित्तमेव तु ॥**
**भूयिष्ठं वर्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् ॥ ३१ ॥**

दोषचयादावपि वयोज्ञानफलं दर्शयन्नाह—बाले इत्यादि । भूयिष्ठं बहुतरम् । एतेन यथा बाले श्लेष्मा न तथा पित्तवाताविल्यर्थः; एवं शेषयोरपि ॥ ३१ ॥

**अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत् ॥**
**तत्साध्येषु विकारेषु मृद्वीं कुर्यात् क्रियां शनैः ॥ ३२ ॥**

वयोज्ञानफलं क्रियाविशेषेऽपि भवतीत्याह—अग्नीत्यादि । मृद्वीं कुर्यात् क्रियामिति अजाशकृदादिमृदुद्रव्यसंश्रयोऽग्निरपि मृदुः, आश्रयविशेषादप्येषां मार्दवादि भवति; तदुक्तं "स्नेहदग्धेऽधिका रुजो भवन्ति" (सू. अ. १२)—इति । अथवा मृद्वीमिति छेद्यभेद्यादिकां प्रतिनियतभेषजेन; तदुक्तं,—"बालवृद्धासहक्षीणभीरूणां योषितामपि । मर्मोपरि च जातेषु रोगेषूक्तेषु दारणम्—" (चि. अ. १) इति; उक्तेषु दारणमिति मिश्रकोक्तेषु । तद्यथा—"कपोतकङ्कगृध्राणां पुरीषाणि च दारणम्" (सू. अ. ३७) इति । क्षारोऽप्यावापप्रतिवापहीनो मृदुः; एवं विरेकोऽपि चतुरङ्गुलादिमृदुद्रव्याश्रयो मृदुः । शनैर्मन्दमित्यर्थः ॥ ३२ ॥

**देहः स्थूलः, कृशो, मध्य, इति प्रागुपदिष्टः ॥ ३३ ॥**

देहपरीक्षां निर्दिशन्नाह—देह इत्यादि । प्रागुपदिष्ट इति दोषधातुमलक्षयवृद्धिविज्ञानीये ॥ ३३ ॥

**कर्शयेद्बृंहयेच्चापि सदा स्थूलकृशौ नरौ ॥**
**रक्षणं चैव मध्यस्य कुर्वीत सततं भिषक् ॥ ३४ ॥**

तयोरपि करणीयमनिर्दिष्टं निर्दिशन्नाह—कर्शयेदित्यादि ॥ ३४ ॥

---

१ 'परितः सर्वतो धात्विन्द्रियबलादेर्हानिः परिहाणिः' इति चक्रः । २ 'उत्तरोत्तरा इति उत्तरोत्तरं वर्धमाना' इति चक्रः ।

१ 'बालापेक्षया' इति पा० । २ 'विरेकोऽत्र मलविरेचनतया वमनविरेचने; यदुक्तं चरके 'उभयं वा दोषमलविरेचनाद्विरेचनशब्दं लभते' (च. क. अ. १) इति चक्रः ।

**बलमभिहितगुणं; दौर्बल्यं तु स्वभावदोषजरादिभिरवेक्षितव्यम्। यस्माद्बलवतः सर्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम् ॥ ३५ ॥**

बलपरीक्षां निर्दिशन्नाह—बलमित्यादि । अभिहितगुणं कथितगुणम्, 'ओजः सोमात्मकम्' ( सू. अ. १५ ) इत्यादिना । अनुपदिष्टमपि चिकित्सोपयोगि दौर्बल्यं कारणभेदेन निर्दिशन्नाह—दौर्बल्यमित्यादि । स्वभावान्मातृपितृशोणितशुक्रस्वभावादित्यर्थः, दोषैर्वातादिभिः, जरया वार्धक्येन; अवेक्षितव्यं स्वभावादिभिर्ज्ञातव्यमित्यर्थः । अन्ये तु 'अवेक्षितव्यम्' इत्यत्र स्थाने 'जरापेक्षितं भवति' इति पठन्ति, व्याख्यानयन्ति च—यथा क्षीरपात् क्षीरान्नादः, क्षीरान्नादादन्नाद इति । बलप्राधान्यं दर्शयन्नाह—यस्मादित्यादि । प्रवृत्तिः अनुष्ठानं करणमित्यर्थः । अन्ये 'प्रतिपत्तिः' इति पठन्ति; तत्रापि स एवार्थः । अधिकरणानां क्रियाधाराणाम् ॥ ३५ ॥

**केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः ।**
**तस्मात् स्थिरत्वं व्यायामैर्बलं वैद्यः प्रतर्कयेत् ॥ ३६ ॥**

तत्र बलयोरुपचयशक्तिलक्षणयोर्व्यभिचारमाह—केचिदित्यादि । स्थिरत्वमिति स्थैर्यलक्षणं यद्बलं तद् व्यायामैः कृत्वा प्रतर्कयेत् विचारयेदित्यर्थः ॥ ३६ ॥

**सत्त्वं तु व्यसनाभ्युदयक्रियादिस्थानेष्वविक्लवकरम् ॥ ३७ ॥**

**सत्त्ववान् सहते सर्वं संस्तभ्यात्मानमात्मना ॥**
**राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः ॥३८॥**

सत्त्वं दर्शयन्नाह—सत्त्वमित्यादि। सत्त्वं मनोबलं गुणविशेषो रजस्तमसोर्विपक्षः; सत्त्वे सति पीडादिसहिष्णुत्वलक्षणं मनोबलं भवति । व्यसनं दुःखं, सुखस्य हेतुरभ्युदयः, तयोः क्रियास्थानानि, येषु स्थानेषु व्यसनाभ्युदयक्रिये भवतः, तानि व्यसनाभ्युदयक्रियास्थानानि, तेषु । अविक्लवकरम् अग्लानिकरमहर्षकरं च । सत्त्वे उत्तमं मनोबलं, रजसि मध्यमं मनोबलं, तमसि मनोदौर्बल्यमेवेति । त्रयमपि श्लोकेन निर्दिशन्नाह—सत्त्ववानित्यादि । सर्वमिति कायपीडादिकं दुःखमित्यर्थः । संस्तभ्यात्मानमिति संस्तभ्य दृढीकृत्य; कम् ? आत्मानं मन इत्यर्थः । केन मनः संस्तभ्येत्याह—आत्मना, बुद्ध्येत्यर्थः । स्तभ्यमानोऽन्यैरिति अन्यैः पुरुषैर्दृढीक्रियमाणः । नैव तामस इति तामसस्तमोगुणबहुलः; अन्यैरप्यवष्टभ्यमानो न सहत इत्यर्थः ॥ ३७ ॥ ३८ ॥

**सात्म्यानि तु देशकालजात्यृतुरोगव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति ॥ ३९ ॥**

**यो रसः कल्पते यस्य सुखायैव निषेवितः ॥**
**व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्दिशेत्४०**

सात्म्यपरीक्षां निर्दिशन्नाह—सात्म्यानीत्यादि । सात्म्यं नाम सुखं यत् करोति तदुच्यते । तत्र देशसात्म्यं यथा—देशो हि द्विविधः—भूमिः, आतुरशरीरं च । तत्रातुरशरीरसात्म्यं द्विविधं—समुदायस्यैकम्, अन्यदवयवस्य । तत्र समुदायस्य यथा—मधुरो रसः सर्वधातुवर्धनः, अवयवसात्म्यं यथा—चक्षुष्यकेश्यकण्ठ्यादिद्रव्यम् । भूमिसात्म्यमपि समुदायैकदेशभेदेन द्विविधं; तत्र समुदायस्य यथा—जाङ्गलदेशे यौ आहाराचारौ तौ अनूपे विपरीतौ । देशावयवानामपि यथा—बाह्लीकपह्लवचीनादीनां माषगोधूममाध्वीकादिभिः सात्म्यम् । जातिसात्म्यं यथा—मनुष्यजातेः सात्म्यं शाल्यादयः, मृगपक्षिजातीनां च तृणपतङ्गादीनि । ऋतुसात्म्यं यथा—ऋत्वभिहितमन्नपानादि । रोगसात्म्यं यथा—गुल्मिनां क्षीरम्, उदावर्तिनां घृतं, प्रमेहिणां क्षौद्रमित्यादि । व्यायामस्त्रिविधः-कायवाङ्मनोभेदात् । उदकग्रहणमाहारोपलक्षणं, तेन चतुर्विधोऽप्याहारः संगृहीतः । दिवास्वप्नप्रभृतीनीति प्रभृतिग्रहणाज्जागरणादीनां ग्रहणम् । दिवास्वप्नरसप्रभृतीनीति केचिद्रसशब्दं पठन्ति । तेषां मते रसोदकग्रहणाद्रसनेन्द्रियग्राह्यं दुग्धदधिघृतसलिलादन्नपानं गृह्यते । प्रकृतिविरुद्धान्यपीति स्वभावेन विरुद्धानीत्यर्थः; अन्ये तु प्रकृतिः स्वभावतो वातादिभेदेन भिन्नेत्याचक्षते । तदेव सात्म्यं विस्तरोक्तमाहाराचारभेदेन द्विभेदं संक्षिप्य

१ 'दौर्बल्यं बलमेव क्षीणमुच्यते । स्वभावादेव कश्चिन्मातृपितृबीजदोषाद् दैवाद्वा दुर्बलो भवति, कश्चिद्दोषैः क्षपितधातुगुणतया दुर्बलो भवति, जरया वार्धक्येन वा दौर्बल्यं भवति । आदिशब्दात् कालादीनां ग्रहणम् । क्रियाप्रतिपत्तिः क्रियासिद्धिः; चरकेऽप्युक्तं—'बलाधिष्ठानमारोग्यम् । (च. चि.अ.३) इति । आरोग्याधिष्ठानानां शरीराग्निबलादीनां मध्ये एतच्च प्रकरणे प्राधान्यख्यापनं तन्त्रधर्मः, तेन बहेरपि स्वविषये स्तुतिर्न विरुध्यते' इति चक्रः । २ 'स्थिरत्वव्यायामैः' इति पा० । 'स्थिरत्वमभिघातादिभिरविचाल्यत्वम् । केचित् स्थिरत्वमिति व्यस्तं पठन्ति; अत्र स्थैर्यलक्षणं बलं स्थिरत्वमिति वदन्ति' इति चक्रः ३ । 'क्रमागतसत्त्वपरीक्षायां सत्त्वं सत्त्वगुणो मनोगतः, तदुत्कर्षान्मनो बलवद्भवति । अविकल्पोऽविकृतत्वं, सुखदुःखहेतौ निर्भयविकारशून्यता अविक्लवः' इति चक्रः । ४ 'अवैकल्यकरम्' इति पा० ।

१ 'तत्र सात्म्यं नाम यदुपशेते सुखं करोतीत्यर्थः । उक्तं हि चरके 'सात्म्यार्थो ह्युपशयार्थः' (च. वि. अ. १ ) इति; तथा 'यो रसः कल्पते यस्य सुखित्वाय निषेवितः' इत्यनन्तरमेवोक्तम् । सुखं चेहारोग्यम् । यदुक्तं 'सुखसंज्ञकमारोग्यं' ( च. सू. अ. ९ ) इति । तच्चारोग्यरूपं सुखं स्वस्थेऽनागताबाधप्रतिषेधेन तथा व्याधिते व्याध्यपनयनेन सात्म्येन क्रियते । यदपि च 'यत् प्रयाति सहात्मताम्' इति सात्म्यलक्षणं तदप्येवंभूतार्थमेव, येनात्मरूपताऽप्यविकारतैव वक्तव्या । तच्च सात्म्यं संक्षेपतः पञ्चप्रकारं—देशसात्म्यं, जातिसात्म्यम्, ऋतुसात्म्यं, रोगसात्म्यम्, ओकसात्म्यं चेति । तत्र देशसात्म्यादीनि चत्वारि चरकोक्तान्येव, ओकसात्म्यानि 'प्रकृतिविरुद्धान्यपि यान्यबाधकराणि' इत्यनेनोक्तानि; अत्र अभ्यासादबाधकराणीत्यर्थो लभ्यते, विरुद्धान्यप्यभ्यासादेव परमबाधकराणि भवन्ति' इति चक्रः । २ 'रसशब्देन भुज्यमानं सर्वद्रव्यं गृह्णाति' इति चक्रः ।

श्लोकेन दर्शयन्नाह—यो रस इत्यादि । कल्पते भवति । सुखा- यैव निषेवितः सुखकारणमेव सेवितः सन्नित्यर्थः । अन्ये 'सुखा- यैवातिसेवित' इति पठन्ति । व्यायामजातमिति व्यायामसमूहः, अन्यद्वेति देशजात्यादि ॥ ३९ ॥ ४० ॥

**प्रकृतिं भेषजं चोपरिष्टाद्वक्ष्यामः ॥ ४१ ॥**

प्रकृतेर्भेषजस्य च क्व पुनः परीक्षेत्याह—प्रकृतिमित्यादि । प्रकृतिं शारीरे, भेषजं भूमिप्रविभागीये; आतुरोपक्रमणीयाध्या- यादनन्तरं सूत्रस्थानसमाप्तिं यावद्भेषजपरीक्षैवेत्येके ॥ ४१ ॥

**देशस्त्वानूपो जाङ्गलः साधारण इति । तत्र, बहूदकनिम्नोन्नतनदीवर्षगहनो मृदुशीतानिलो बहु- महापर्वतवृक्षो मृदुसुकुमारोपचितशरीरमनुष्य- प्रायः कफवातरोगभूयिष्ठश्चानूपः; आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपा- नोदकप्राय उष्णदारुणवातः प्रविरलाल्पशैलः स्थिर- कृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च जा- ङ्गलः; उभयदेशलक्षणः साधारण इति ॥ ४२ ॥**

देशपरीक्षां निर्दिशन्नाह—देश इत्यादि । तेषां लक्षणमाह —तत्रेत्यादि । बहुशब्द उदकादिभिर्वर्षान्तैः सह प्रत्येकं सम्ब- ध्यते । गहन इति एतैः कृत्वा गहनीभूत इत्यर्थः । आकाशसम इति निरावरणत्वान्निम्नोन्नततारहितत्वेन समभूमिभाग इत्यर्थः । प्रविरलाल्पकण्टकिवृक्षप्राय इति प्रविरला अल्पा कण्टकिनो वृक्षाः प्रायेण यत्र देशे स तथा । अल्पवर्षप्रस्रवणोदपानोदक- प्राय इति अल्पं वर्षायाः प्रस्रवणानां निर्झराणामुदपानानां च कूपानामुदकं प्रायेण यत्र स तथा ॥ ४२ ॥

**भवन्ति चात्र—**

**समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः ॥**
**दोषाणां समता जन्तोस्तस्मात्साधारणो मतः ॥४३॥**

त्रिविधदेशपरिज्ञाने दोषचयादिफलं दर्शयन्नाह—समा इत्यादि ॥ ४३ ॥

**ने[1] तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः ।**
**स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः ॥४४॥**

**उचिते वर्तमानस्य नास्ति देशकृतं भयम् ॥**
**आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति ॥ ४५ ॥**

तुल्यगुणदेशजातस्य रोगस्य विपरीतगुणे देशे सुचिकित्स्यतां दर्शयन्नाह—न तथेत्यादि । जलजा इति आनूपदेशजाताः श्लीपदादयः । स्थलाहृता इति जाङ्गलदेशं नीता इत्यर्थः । उक्तव्याधिकारणदोषचयादेर्विसदृशदेशाश्रयं प्रथमं दर्शयन्नाह— स्वदेश इत्यादि । स्वदेशे इति यथा–आनूपे देशे संचितः कफो जाङ्गलदेशे कुपितः । उचित इति न्याय्य इत्यर्थः । यदि पुनराहारादावनुचिते वर्तते तदा भवत्येव भयं; यथा– अनूपदेशे संचिते कफे जाङ्गलदेशेऽपि दिवास्वप्नादि कुर्वतः पुरु- षस्य भयं भवत्येव । आहारस्वप्नेत्यादि । तद्देशस्य गुणे सति जाङ्गलदेशस्य रौक्ष्यौष्ण्यादौ गुणे सत्यप्युचिते वर्तेत । एतदुक्तं भवति–यद्यप्याहारस्वप्नचेष्टादयो गुणा अपि सन्ति, तथाऽप्यु- चिते वर्तेत कफविपरीतगुणे वर्ततेत्यर्थः ॥ ४४ ॥ ४५ ॥

**देशप्रकृतिसात्म्यर्तुविपरीतोऽचिरोत्थितः ॥**
**संपत्तौ भिषगादीनां बलसत्त्वायुषां तथा ॥ ४६ ॥**
**केवलः समदेहाग्नेः सुखसाध्यतमो गदः ॥**
**अतोऽन्यथा त्वसाध्यः स्यात्कृच्छ्रो व्यामिश्रलक्षणः**

सुखसाध्यादीनां लक्षणमाह—देशेत्यादि । देशविपरीतो यथा—जाङ्गलदेशे कफरोगोत्पत्तिः; प्रकृतिविपरीतो यथा— पित्तप्रकृतेः कफरोगोत्पत्तिः; सात्म्यविपरीतो यथा—कटुसा- त्म्यस्य कफरोगोत्पत्तिः; ऋतुविपर्ययो यथा—शरदि वातिकस्य, हेमन्ते पैत्तिकस्य, ग्रीष्मे श्लैष्मिकस्य व्याधेः प्रादुर्भाव इति । अचिरोत्थितो नव इत्यर्थः । अन्ये तु नवा निर्दिष्टत्वा- द्रक्तगुल्मादिः पुराणोऽपि साध्य इति । संपत्ताविति परिपू- र्णत्वे । बलसत्त्वायुषां तथेत्यत्रापि संपत्ताविति संबध्यते । केवल एकदोषजनितो निरुपद्रवो वा । समदेहाग्नेः समकायाग्नेः । ॥ ४६ ॥ ४७ ॥

**क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् ॥**
**पूर्वस्यां शान्तवेगायां[1] न क्रियासंकरो हितः ॥४८॥**

क्रियाफलं यदा न दृश्यते तदाऽन्या क्रिया कर्तव्या; साऽपि विश्रम्य कालान्तरिता सती कर्तव्येति दर्शयन्नाह—क्रियाया

१ 'इदानीमनुगुणदोषदेशजरोगस्य तद्विगुणदेशसंबन्धे चिकि- त्सितमाह—न तथेत्यादि । जलजा इति जलोपलक्षितानूपदेश- जाताः, स्थलाहृता इति स्थलोपलक्षितजाङ्गलदेशजाताः; वाशब्देन स्थलजा वा जलाहृता इति विपरीतगुणं दर्शयति; तदुदाहरणं यथा- अनूपदेशजं श्लीपदं जाङ्गलदेशजातं सत् प्रबलं न भवति, आनूपगु- णविपरीतगुणजाङ्गलदेशगुणैस्तथा तद्देशीयाहाराचारैश्चानूपविपरीतैः प्रतिबाध्यमानत्वादिति भावः । न केवलं व्याधय एव परं विरुद्धदे- शगता दुर्बला भवन्ति, किंतु दोषा अपि विरुद्धदेशप्राप्तिकुपिता न बलवन्त इत्याह—स्वदेशे इत्यादि । स्वदेशे इत्यनुगुणदेशे, यथा— आनूपोपचितः कफः, अन्यस्मिन्निति तद्विरुद्धे जाङ्गले प्रकुपितः; एवं पित्तवातयोरप्युदाहार्यम्। इदानीं देशसंबन्धस्याप्यस्थिरतया तज्जन्य- रोगशङ्कायां देशसात्म्यसेवयाऽभयं दर्शयन्नाह—उचिते इत्यादि । उचिते इति देशगुणविपरीतसात्म्याहारस्वप्नचेष्टादौ वर्तमानस्य । उचितत्वमेव स्फोरयति—तद्देशस्य गुणे सतीति; तद्देशस्य गुणविपरीत- गुणे आहारादौ सतीत्यर्थः । देशकृतं भयमिति देशगुणजन्यमानरोग- भयं; यदि पुनराहारादावतिवर्तते तदा भवत्येव भयम्' इति चक्रः ।

१ 'शान्तायामिति वक्तव्ये यत् 'शान्तवेगायां' इति करोति, तेन दिनविश्रामं दर्शयति । क्रियासंकरः क्रियामेलकः । अयं च पूर्वक्रियाविरुद्धगुणतया तथा पूर्वक्रियया सहातिमात्रतया अग्निव- धादिहेतुत्वेन चाभिहित इति ज्ञेयम्' इति चक्रः ।

इत्यादि । पञ्चरात्र्यन्तरिता षड्रात्र्यन्तरिता वाऽन्या क्रिया प्रयोक्तव्या । संकरो युगपद्द्वयोः प्रयोगः ॥ ४८ ॥

**गुणालाभेऽपि सपदि यदि सैव क्रिया हिता ॥**
**कर्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि ॥४९॥**

यस्यापि फलं न दृश्यते साऽपि सप्तरात्रं प्रकर्तव्येत्याह—गुणालाभ इत्यादि । सपदि शीघ्रं यदा पुनः कृच्छ्रसाध्यो व्याधिस्तदा गुणस्य क्रियाफलस्यालाभेऽपि हिता या क्रिया सैव प्रयोक्तव्या । अस्मिञ्श्लोके पाठान्तरमस्ति, तच्चाभावान्न लिखितम् ॥ ४९ ॥

**य एवमेनं विधिमेकरूपं**
**बिभर्ति कालादिवशेन धीमान् ।**
**स मृत्युपाशाञ्जगतो गदौघा-**
**ञ्छिनत्ति भैषज्यपरश्वधेन ॥ ५० ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने आतुरोपक्रमणीयो नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥**

अत्र तु स्तुत्यर्थं श्लोकमाह—य एवमित्यादि । एवमनेन प्रकारेण, एनं विधिं पूर्वोक्तं विधानम्, एकरूपं बिभर्ति अप्रकल्पं(म्पं) धारयति, कालादिवशेन कालादिसामर्थ्येनेत्यर्थः, गदौघान् विकारसमूहान्, भैषज्यपरश्वधेनेति औषधकुठारेणेत्यर्थः । केचिदमुं श्लोकं न पठन्ति । एके आचार्या विपरीताविपरीतव्रणावचारणीयपर्यन्तमरिष्टाध्यायान् षट् वदन्ति; अपरे तु आतुरोपक्रमणीयमरिष्टमिति वदन्ति । वृद्धाश्चात्रैवमुपदिशन्ति—अरिष्टाध्याया विघ्नभयाद्गृहाद्बहिः पाठनीया देवालयादिषु ॥ ५० ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशत्तमोऽध्यायः ।

**अथातो भूमिप्रविभागीय[1]मध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

भूमेः प्रकृष्टो विभागो भूमिप्रविभागः, भूमिप्रविभागार्थोऽध्यायो भूमिप्रविभागीयः । पूर्वाध्याये भूमिपरीक्षा भूतकार्यैः शीतोष्णवर्षादिभिस्तथा पर्वतवृक्षादिभिः कृता, इह त्वध्याये भूतगुणैरेव परीक्षा कर्तव्येति । केचिदत्रान्तराले मिश्रकाध्यायं पठन्ति; तन्न, पूर्वाचार्यैरपठितत्वात् ॥ १ ॥ २ ॥

**श्वभ्र[1]शर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमि[2]मौषधग्रहणाय परीक्षेत । तस्यां जातमपि कृमिविषशस्त्रातप[3]पवनदहनतोयसंबाधमार्गै[4]रनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषधमाददीतेत्येष भूमिपरीक्षाविशेषः सामान्यः ॥ ३ ॥**

स भूमिविभागो द्विविधः—सामान्यो विशिष्टश्च । तत्र प्रथमं सामान्यमेव भूमिविभागमाह—श्वभ्रेत्यादि । अनुपहतामिति श्वभ्रादिभिः सिकतान्तैः सह प्रत्येकं संबध्यते । श्वभ्रशर्कराश्मभिर्विषमो निम्नोन्नतः, तेनानुपहतामिति संबन्धः । श्वभ्रं बिलं; शर्करा पक्वभाण्डसूक्ष्मखण्डं शर्करेति लोके; अश्मा पाषाणः; वल्मीकेति, ननु वल्मीकमूर्धन्येव श्वेतकपोती गृह्यते, तत् कथं वल्मीकजातौषधिनिषेधः? सत्यम् । आशीविषविषैस्तस्या दिव्यौषधेर्वीर्यं न हन्यते, अथवा तत्रैव सा विशेषेण वीर्यवती भवतीत्यदोषः; श्मशानं मृतमर्त्यदाहस्थानम्; आघातनं वधस्थानं; सिकता वालुका; अनुपहताम् अनुपद्रुताम्; अनूषराम् ऊषरवर्जिताम्; अभङ्गुरां राजिरहिताम्; अदूरोदकत्वेन साधारणत्वमुक्तम्; स्निग्धां चिक्कणां; प्ररोहवतीं बीजाङ्कुरजननीं; मृद्वीं कोमलाम्; अस्थिरां वाततोयादिभिरचलितमृत्तिकाम्; समाम् अनिम्नोन्नतां; गौरीं सुवर्णवर्णाम्; औषधग्रहणायेति औषधग्रहणार्थम् । न केवलं भूमिगुणैरेव भेषजानि विभजनीयानि, किं तर्हि स्वदोषगुणैरपीति दर्शयन्नाह–तस्यां जातमित्यादि । क्रिम्यादिभिः संबाधमार्गान्तैः सह प्रत्येकमनुपहतशब्दः संबध्यते; संबाधः सङ्कटः । एकरसम् उत्कृष्टरसम् । पृथ्ववगाढमूलं चेति पृथु पृथुवल्कलम्, अवगाढमूलं भूम्यन्तःस्थितं मूलं यस्य तत्तथा; चकारादनुपहतप्रशस्तमूलत्वं च समुच्चीयते । उदीच्यामिति उत्तरस्यां दिशि, एतेनोत्तराभिमुखो भूत्वा गृह्णीयादित्यर्थः । विशेषो भेदः ॥ ३ ॥

**विशेष[5]तस्तु तत्र, अश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा; स्नि-**

---

१ 'मिश्रके भेषजद्रव्यमुक्तं, द्रव्यसंग्रहणीयादौ च वक्तव्यं, तच्च प्रशस्तभूमिजातमेव कार्यकरं भवति, अतो भेषजग्रहणार्थं प्रशस्ताप्रशस्तभूमिविभागीयोऽभिधीयते । भूमिविभागोपदर्शनाधिकारेण चान्यदपि जन्तुजग्धत्वादिभेषजदोषगुणवर्णनमिह भविष्यति । 'भूमिप्रविभागविज्ञानीयं' इति पा० ।

१ 'श्वभ्रादयश्चाल्पवीर्योत्पादकतया भेषजोपघातकाः, वल्मीकादयस्तु अप्राशस्त्येनाप्रशस्ताः, अप्राशस्त्यं च तेषां वचनादेवोन्नीयते' इति चक्रः । २ 'भूमिमौषधार्थं' इति पा० । ३ 'आतपपवनयोरतियोगेन उपघातः, तोयसंबाधोऽतिजलसंबाधः । एकरसमिति वृक्षान्तरानाक्रान्तम् । अवगाढमित्यनुत्तानमूलम्' इति चक्रः । ४ 'आयतनं' इति पा० । ५ 'विशेषतस्त्वित्यादिना भूमिपरीक्षाविशेषः कथ्यते । अयं च वक्ष्यमाणो विशेषः 'पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीत' इत्यादौ प्रयोजनवान् । स्थिरेति कठिना । नानावर्णेति तैजसो नानावर्णकारणत्वात् । प्ररोहोऽङ्कुरः ।' इति चक्रः ।

ग्धा शीतलाऽऽसन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा; नानावर्णा लघ्वश्मवति प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा; रूक्षा भस्मरासभवर्णा तनुवृक्षाल्परसकोटरवृक्षप्रायाऽनिलगुणभूयिष्ठा; मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा ॥ ४ ॥

सामान्यभूमेर्गुणं प्रदर्श्य विशिष्टं प्रतिभूतं गुणं निर्दिशन्नाह—विशेषतस्त्वित्यादि । स्वगुणभूयिष्ठेत्यर्थः । तनुवृक्षा ह्रस्ववृक्षेत्यर्थः । अस्य पाञ्चभौतिकविशेषगुणकथनस्यायमभिप्रायः—पृथिव्याद्युत्कटत्वेन द्रव्याणां स्वस्यां स्वस्यां भूमौ जातं ग्राह्यम्, एवं बलवत्तराण्यौषधानि भवन्ति ॥ ४ ॥

अत्र केचिदाहुराचार्याः-प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासंख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति; तत्तु न सम्यक्, सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीत, आग्नेयान्याग्नेयेषु, एवमव्यापन्नगुणानि भवन्ति । सौम्यान्यौषधानि सौम्येष्वृतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि जायन्ते । एतेन शेषं व्याख्यातम् ॥ ५ ॥

सौम्येषु वर्षाहेमन्तशिशिरेष्वित्यर्थः । आग्नेयेषु शरद्वसन्तग्रीष्मेषु । आत्ययिके कार्ये पुनः पूर्वाह्णादिषु वसन्तादिषु यथायथमौषधान्याददीत । अयमभिप्रायः—आग्नेयान्यौषधान्याग्नेयेषु ऋतुषु गृहीतान्याग्नेयगुणभूयिष्ठायां भूमावतिकटुरूक्षोष्णानि जायन्त इति ॥ ५ ॥

तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीत, अग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि, उभयगुणभूयिष्ठायामुभयतोभागानि, आकाशगुणभूयिष्ठायां संशमनानि, एवं बलवत्तराणि भवन्ति ॥ ६ ॥

वमनादिद्रव्याणि कीदृशायां भूमौ ग्रहीतव्यानीत्याह—तत्रेत्यादि । संशमनानीति यद्द्रव्यं न वामयति न विरेचयति व्याधिना सहैकीभूय तत्स्थमेव व्याधिमुपशमयति तत् संशमनमुच्यते ॥ ६ ॥

सर्वाण्येव चाभिनवानि, अन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्यः ॥ ७ ॥

विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम् ।
शेषमन्यत्त्वभिनवं गृह्णीयाद्दोषवर्जितम् ॥ ८ ॥

( सर्वाण्येव सक्षीराणि वीर्यवन्ति; )तेषामसंपत्तावतिक्रान्तसंवत्सराण्याददीतेति ॥ ९ ॥

सर्वाणीत्यादि । सर्वाण्येव चाभिनवानि 'बलवत्तराणि' इत्यत्रापि संबध्यते । अभिनवमत्र परिणतिकालानन्तरत्वमभिप्रेतं, न पुनर्जन्मनवत्वम् । एतस्यैवापवादसूत्रं दर्शयन्नाह—अन्यत्रेत्यादि । दोषवर्जितमिति कृमिविषशस्त्राद्युपघातादिदोषैस्त्यक्तम् । अत्रान्तरे वृद्धैः पठितः पाठः—सर्वाणीत्यादि । तत्र सक्षीराणि सरसानीत्यर्थः । मध्वादीनि यथोक्तानि यदा न प्राप्यन्ते तदा किं कर्तव्यमित्याह—तेषामित्यादि । तेषां मधुघृतादीनाम्; असंपत्तौ अत्यन्तपुराणानामप्राप्तौ ॥ ७–९ ॥

भवन्ति चात्र—

गोपालास्तापसा व्याधा ये चान्ये वनचारिणः ॥
मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते ॥ १० ॥

कुतः पुनर्भेषजानि ज्ञातव्यानीत्याह—गोपाला इत्यादि । गोपाला गोमहिष्यजादिपालकाः प्रोच्यन्ते, तापसाः तपस्विनो जटाधारिप्रभृतयः, व्याधा वागुरिकादयः, वनचारिणो म्लेच्छादयः ॥ १० ॥

सर्वावयवसाध्येषु पलाशलवणादिषु ॥
व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते ॥ ११ ॥

तत्र केचिदाहुराचार्याः प्रावृड्वर्षाशरद्धेमन्तेत्यादि गद्येन व्यभिचार्य, श्लोकैर्व्यभिचारयितुमाह—सर्वावयवसाध्येष्वित्यादि । सर्वावयवसाध्येषु अशेषमूलाद्यवयवग्राह्येषु योगेष्वित्यर्थः । पलाशलवणादिषु पत्रलवणादिषु; पत्रलवणयोगश्च वातव्याधिपठितो ज्ञेयः । तत्र सर्वो विधीयत इति तत्र तेषु पत्रलवणादियोगेषु,

१ 'भेषजद्रव्यमपि किञ्चित् सौम्यं किञ्चिदाग्नेयम् । तेन यत् सौम्यं तत् सोमगुणातिरिक्तेषु सौम्येषु ऋतुषु संपूर्णवीर्यतया ग्राह्यम्, एवमाग्नेयमाग्नेयेषु, सर्वथा मूलाद्यङ्गे ग्राह्यम् । यत्तु ग्रीष्मादिषु मूलादिग्रहणं तदनुपपत्तिकत्वादसाधु । एतदेव व्याकरोति–तत्र सौम्येत्यादि । सौम्यानां सौम्यग्रहणे गुणातिशयं दर्शयन् समानन्यायतया आग्नेयान्यग्निगुणभूयिष्ठायां भूमौ कटुतराणि रूक्षतराणि च भवन्ति' इति चक्रः । 'तेषां शाखापलाशमचिरप्ररूढं वर्षावसन्तयोर्ग्राह्यं, ग्रीष्मे मूलानि शिशिरे च शीर्णप्ररूढपर्णानां, शरदि त्वक्कन्दक्षीराणि, हेमन्ते साराणि, यथर्तु पुष्पफलम्' (च. क. अ. १) इति चरकः । २ 'विरेचनमधोभागं तदधोगामिपृथिव्यम्बुगुणभूमिष्ठायां बलवत्तरं भवति; अनिलाग्नी तूर्ध्वगौ, तेन तद्गुणभूयिष्ठायामूर्ध्वगं वमनं बलवत्तरं भवति, उभयतोभागहराणि वमनविरेचनकराणि अर्कक्षीरादीनि । आकाशस्य सर्वगतत्वेन शमनौषधकारित्वं, शमनं हि सर्वगतं दोषं तत्रैव शमयति । अभिनवानीति अभिनवत्वमिह संपूर्णवीर्यताकारत्वम् । तेन यत्तु मूलके बिल्वे च बालावस्थायामेव प्रशस्तत्वं तत्तदवस्थागृहीतमेवाभिनवत्वं ज्ञेयम्' इति चक्रः ।

१ 'अनतिक्रान्तसंवत्सराणि' इति पा० । २ तेषां सक्षीराणां, असंपत्तौ अप्राप्तौ । ३ 'मूलान्याहरन्ति कार्यार्थमिति मूलहाराः । भेषजव्यक्तिरिति भेषजाकारनामज्ञानं, रसवीर्यादिद्वारा भेषजव्यक्तिः शास्त्रादेव ज्ञेया' इति चक्रः । ४ तत्र सर्वो विधीयत इति सर्व एव कालः पलाशलवणार्थं गृह्यमाणपलाशे गृह्यते, यदि कालनियमेनाङ्गग्रहणं तदा मिलितवृक्षग्राहकः कालो नास्तीति तत्प्रयोगो न स्यात् । वयःस्थानामिति तरुणानां, बालवृद्धयोस्तु असंपूर्णधातुत्वादेवाप्रशस्तत्वम्' इति चक्रः ।

सर्वः समस्तोऽपि कालः प्रावृडादिर्विधीयते कथ्यत इत्यर्थः । एतेन सर्वस्मिन्नपि काले मेलापकः क्रियत इत्यर्थः ॥ ११ ॥

**गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते ॥**
**तस्माद्भूमिस्वभावेन बीजिनः षड्रसायुताः ॥ १२ ॥**

येन च हेतुना स्वगुणपरित्यागस्तमाह—गन्धेत्यादि । गन्धवर्णरसोपेतेति लुप्तादिशब्दनिर्देशाद् गन्धवर्णरसस्पर्शशब्दोपेता कथिता । षड्विधा पञ्चभूतात्मिका सर्वलक्षणा च । बीजिनो वृक्षादयः । ते च भूमिस्वभावेन युताः षड्रसोपेता भवन्ति; अथवा एते षड्रसा भूमिस्वभावेन युता मिलिताः सन्तो बीजिनो भवन्ति वृक्षादिरूपा भवन्तीत्यर्थः ॥ १२ ॥

**अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः ॥**
**रसः स एव चाव्यक्तो व्यक्तो भूमिरसाद्भवेत् ॥१३॥**

यदि द्रव्याणां परिणामविशेषेण मधुरादिरसता तत्कथमुच्यते आप्यो रस इत्याह—अव्यक्त इत्यादि । अव्यक्त इति मधुरादिभावेनापरिस्फुट इत्यर्थः । किल अवधारणे । निश्चयनिश्चितो रसोऽस्तीत्यर्थः । यद्येवं मधुरादिभेदानुपपत्तिरित्यत आह—रसः स एवेत्यादि । स एवाव्यक्तो रसो व्यक्तो भवति मधुरादिभावं याति । कस्मात्? भूमिरसादिति संबन्धः ॥ १३ ॥

**सर्वलक्षणसंपन्ना भूमिः साधारणा स्मृता ॥**
**द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः ॥ १४ ॥**

भूमिद्रव्ययोः साधारणयोः कारणमाह—सर्वेत्यादि । सर्वलक्षणसंपन्नेति पृथिव्यादिपञ्चमहाभूतलक्षणयुक्तेत्यर्थः । तद्गुणानि साधारणानि द्रव्याणीत्यर्थः ॥ १४ ॥

**विगन्धेनापरामृष्टमविपन्नं रसादिभिः ॥**
**नवं द्रव्यं पुराणं वा ग्राह्यमेवं विनिर्दिशेत् ॥ १५ ॥**

नवं पुराणं वा कीदृशं द्रव्यं गृह्यत इत्याह—विगन्धेनेत्यादि । विगन्धेनापरामृष्टमिति विरोधिना गन्धेनास्पृष्टमित्यर्थः । अविपन्नं रसादिभिरिति अक्षीणं रसादिभिरित्यर्थः ॥ १५ ॥

**जङ्गमानां वयःस्थानां रक्तरोमनखादिकम् ॥**
**क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् ॥ १६ ॥**

स्थावराणि नियम्य जङ्गमानि नियन्तुमाह—जङ्गमानामित्यादि । वयःस्थानामिति तरुणानां, न बालवृद्धानामित्यर्थः ॥ १६ ॥

**प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम् ॥**
**प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते ॥ १७ ॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने भूमिप्रविभागीयो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥**

गृहीतौषधस्थापनोपायं दर्शयन्नाह—प्लोतेत्यादि । प्लोतः कर्पटः । मृद्भाण्डं मृत्तिकापात्रं, फलकं पट्टकं, शङ्कुः कीलकः एतेषु प्लोतादिषु विन्यस्तं धृतमौषधं यस्मिन् गृहे तद्भेषजागारं भेषजगृहमिष्यत इति संबन्धः । प्रशस्तायां पूर्वस्यामुत्तरस्यां वा । शुचौ देशे । भूमिप्रविभागीयाध्याये निबन्धेषु व्यत्ययेन पाठो दृश्यते; अस्माभिस्तु वृद्धक्रमरीत्यैव पाठो लिखित इति । सर्वावयवसाध्येष्वित्यादि यावन्नवं द्रव्यं पुराणं वेति पाठं केचिदाचार्या न पठन्ति ॥ १७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशत्तमोऽध्यायः ।

**अथातो मिश्रकमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

षष्ट्युपक्रमाणां मध्ये विम्लापनपाचनदारणपीडनशोधनरोपणोत्सादनावसादनानामष्टानां प्रधानानामिह निर्दिष्टानां मिश्रीकृत्य कथनान्मिश्रकाख्योऽध्याय इत्यर्थः; अन्ये तु शोफस्य व्रणस्य च मिश्रयोगकथनान्मिश्रक इति वदन्ति ॥ १ ॥ २ ॥

**मातुलुङ्ग्यग्निमन्थौ च भद्रदारु महौषधम ॥**
**अहिंस्रा चैव रास्ना च प्रलेपो वातशोफजित् ॥ ३ ॥**
**दूर्वा च नलमूलं च मधुकं चन्दनं तथा ॥**
**शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोफहृत् ॥ ४ ॥**
**आगन्तुजे रक्तजे च ह्येष एव विधिः स्मृतः ॥**
**विधिर्विषघ्नो विषजे पित्तघ्नोऽपि हितस्तथा ॥ ५ ॥**
**अजगन्धाऽश्वगन्धा च काला सरलया सह ॥**
**एकैषिकाऽजशृङ्गी च प्रलेपः श्लेष्मशोफहृत् ॥ ६ ॥**
**एते वर्गास्त्रयो लोध्रं पथ्या पिण्डीतकानि च ॥**
**अनन्ता चेति लेपोऽयं सान्निपातिकशोफहृत् ॥७॥**

तत्र प्रथमं विम्लापनं क्रमेण वातादिदोषजशोफप्रत्यनीकं दर्शयन्नाह—मातुलुङ्गीत्यादि । मातुलुङ्गी बीजपूरकः, अग्निमन्थः अरणी, भद्रदारु देवदारु, महौषधं शुण्ठी, अहिंस्रा वृहदहिंस्रा, रास्ना सुरभिः । दूर्वेत्यादि । दूर्वादीनि द्रव्याणि प्रसिद्धानि । शीतलाश्च गणा इति काकोल्याद्युत्पलादिन्यग्रोधादयः । पित्तविम्लापनवदागन्तुजरक्तजयोरपि दर्शयन्नाह—आगन्तुज इत्यादि । आगन्तुजे पाकप्रतिबन्धाय शीतविधिः स्मृतः । विषजनितशोथस्यागन्तुभेदस्य वक्ष्यमाणातिदेशेन चिकित्सां दर्शयन्नाह—विधिरित्यादि । विधिर्विषघ्नः कल्पोक्तः । अजगन्धेत्यादि । अजगन्धा बोधयिका, लतौषधीत्येके, अन्ये यवानिकामाहुः; अश्वगन्धा प्रसिद्धा; काला अहिंस्रा; सरला

---

१ 'पूर्वाध्यायोक्तविधिपरीक्षितस्य रोगिणश्चिकित्सा कर्तव्या, तत्र चैतत्तन्त्रे व्रणिनः प्राधान्याद्व्रणचिकित्सामेव विम्लापनपाटनदारणादिकां मिश्रीकृत्य द्रव्यैस्तैस्तैर्मातुलुङ्गादिभिरभिधातुं मिश्रकोऽभिधीयते । अत्रौषधानां मिश्रीकृत्य गणरूपतयाऽभिधानादस्य मिश्रकसंज्ञा ।' इति चक्रः । २ 'आगन्तुजरक्तजयोरपि पित्तप्रधानतया आगन्तुज इत्यादिनाऽतिदेशः कृतः । आगन्तुजेऽपि आदितः पित्तक्षोभादूष्मादिवृद्धौ पित्तहरं लेपनं युक्तमेव पाकप्रतिबन्धार्थम्' इति चक्रः ।

अरुणमूला त्रिवृत्; एकैषिका शुक्लमूला त्रिवृत्; अजशृङ्गी कर्कटशृङ्गी, अन्ये अजशृङ्गी छगलविषाणिका उत्तमारणी 'मेढिका' इति लोके । प्रत्येकदोषजशोथविम्लापनमभिधाय सान्निपातिकस्य विम्लापनं निर्देष्टुमाह—एत इत्यादि । एते वर्गास्त्रयो मातुलुङ्गादयः, लोध्रं प्रसिद्धं, पथ्या हरीतकी, पिण्डीतको मदनः, अनन्ता दुरालभा । केचित् पिण्डीतकत्रयमित्यादि पाठं पठन्ति ॥ ३-७ ॥

**स्निग्धाम्ललवणो वाते कोष्णः, शीतः पयोयुतः ॥**
**पित्ते, चोष्णः कफे क्षारमूत्राढ्यस्तत्प्रशान्तये ॥८॥**

दोषभेदेन लेपस्य संस्कारविशेषं निर्दिशन्नाह—स्निग्धेत्यादि । आढ्यो बहुल इत्यर्थः ॥ ८ ॥

**शणमूलकशिग्रूणां फलानि तिलसर्षपाः ॥**
**सक्तवः किण्वमतसी द्रव्याण्युष्णानि पाचनम् ॥९॥**

विम्लापनमभिधाय पाचनानि निर्दिशन्नाह—शणमूलकेत्यादि । फलशब्दः शणादिभिः सर्षपान्तैः सह प्रत्येकं संबध्यते । शणः परिपाके सस्वनफलः, शिग्रुः शोभाञ्जनकः, किण्वं सुराबीजं यद्वृद्धिः प्रक्षिप्यते, अतसी 'अलसी' इति लोके प्रसिद्धा, द्रव्याण्युष्णानि उष्णवीर्याणि कुष्ठागुरुप्रभृतीनि । एतेनानुक्तपाचनद्रव्यसंग्रह उक्तः । पाचनं शोथस्य । शेषं प्रसिद्धम् । एतेषां व्यस्तानां समस्तानां च पाचनत्वं, सक्तूनां शीतवीर्यत्वेऽपि प्रभावविशेषात् पाचनत्वं संयोगविशेषाद्वा[1] ॥ ९ ॥

**चिरबिल्वोऽग्निको दन्ती चित्रको हयमारकः ॥**
**कपोतकङ्कगृध्राणां पुरीषाणि च दारणम् ॥**
**क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम् ॥१०॥**

पाचनमभिधाय दारणं निर्दिशन्नाह—चिरबिल्व इत्यादि । चिरबिल्वो वृद्धकरञ्जः 'चिरिहिलि' इति लोके; अग्निकः कलिकारिका, अन्ये भल्लातकमाहुः; दन्ती दन्तिनी; चित्रकः प्रसिद्धः; हयमारः करवीरः । पुरीषशब्दः कपोतादिभिः सह प्रत्येकं संबध्यते । कपोतो वनवासी पाण्डुकः; कङ्कः कङ्कमल्लः, न पुनः काकः; गृध्रो मांसाशी पक्षिविशेषः । दारणं विदारणं पक्वशोथस्य । दारणद्रव्ययोगभेदं दर्शयन्नाह—क्षारद्रव्याणीत्यादि । क्षारद्रव्याणि मुष्कककुटजपलाशाश्वकर्णपारिभद्रादीनि । क्षारो वेति एतैर्द्रव्यैः सिद्धः प्रतिसारणीयः । परमिति कृच्छ्रो दारणमित्यर्थः; बालवृद्धादिष्वयोजनीयः । द्विविधं हि पक्वशोथदारणं सुकुमारं कृच्छ्रं चेति; तत्र कपोतपुरीषादि सुकुमारं, क्षारः कृच्छ्रमिति ॥ १० ॥

**द्रव्याणां पिच्छिलानां तु त्वङ्मूलानि प्रपीडनम्[1] ॥**
**यवगोधूममाषाणां चूर्णानि च समासतः ॥ ११ ॥**

ततः परं पीडनं दर्शयन्नाह—द्रव्याणामित्यादि । पिच्छिलद्रव्याणि शाल्मलीशेलुवटपर्णादीनि । प्रपीडनं मर्मादिसमीपसूक्ष्ममुखव्रणपीडनम् । समासतः संक्षेपतः । प्रपीडनं चेत्थं कर्तव्यं-व्रणमुखं बहिःकृत्य लेपयेत्, लिप्त्वा च शोषयेत्, शुष्कं सत् पीडनं भवति ॥ ११ ॥

**शङ्खिन्यङ्कोठसुमनःकरवीरसुवर्चलाः ॥**
**शोधनानि कषायाणि वर्गश्चारग्वधादिकः ॥ १२ ॥**

अथ शोधनं दर्शयन्नाह—शङ्खिनीत्यादि । शङ्खिनी यवतिक्ताभेदः सुदुग्धा बृहत्पत्रा; अङ्कोठः संग्राही चीरितस्वल्पपत्रः, 'अङ्कोल' इति लोके; सुमना जाती; करवीरः प्रसिद्धः; सुवर्चला सूर्यावर्तः, सौव(च)लीति लोके । शङ्खिन्यादीनां कषाया आरग्वधादिश्च धावनादिद्वारेण शोधनः । शोधनं पुनरष्टविधं कषायवर्तिकल्कघृततैलरसक्रियाचूर्णधूपनभेदेन । एतच्चाष्टविधमपि क्रमेणात्रैव वक्ष्यति । कषायस्तु शृतशीतफाण्टस्वरसभेदेन चतुर्विधो ग्राह्यः । कल्कं चात्र पञ्चमं पृथगेव वक्ष्यति ॥ १२ ॥

**अजगन्धाऽजशृङ्गी च गवाक्षी लाङ्गलाह्वया ॥**
**पूतीकश्चित्रकः पाठा विडङ्गैलाहरेणवः ॥ १३ ॥**
**कटुत्रिकं यवक्षारो लवणानि मनःशिला ॥**
**कासीसं त्रिवृता दन्ती हरितालं सुराष्ट्रजा ॥ १४ ॥**
**संशोधनीनां वर्तीनां द्रव्याण्येतानि निर्दिशेत् ॥**

कषायमभिधाय वर्तिमाह—अजगन्धेत्यादि । गवाक्षी इन्द्रवारुणी; लाङ्गलाह्वया कलिकारिका; पूतीकः चिरबिल्वः, 'कण्टकी विटपकरञ्ज' इत्येके; हरेणवो रेणुकाः; लवणानि सैन्धवसौवर्चलविडगडसामुद्रिकाणि पञ्च, अन्ये गडस्थाने काललवणेन सह पञ्चसंख्यामाहुः, काललवणं तु निर्गन्धं सौवर्चलभेदः; सुराष्ट्रजा तुम्बुरुमृत् 'तूरी' इति लोके, अपरे सामान्येन कृष्णमृत्तिकामाहुः । शेषाणि द्रव्याणि किंचित्पूर्वं व्याख्यातानि किंचित्प्रसिद्धानि । एतैर्द्रव्यैः सूत्रवर्तिं लिप्त्वा व्रणे निक्षिपेत्, एवं वर्तिर्भवति ॥ १३ ॥ १४ ॥—

**एतैरेवौषधैः कुर्यात्कल्कानपि च शोधनान् ॥ १५ ॥**

वर्तिमुक्त्वा कल्कमाह—एतैरेवौषधैरित्यादि । एतैरौषधैरजगन्धादिभिः सुराष्ट्रजान्तैः ॥ १५ ॥

---

[1] 'अत्र सक्तवो यद्यपि शीतास्तथाऽपि द्रव्यान्तरसंयोगाद्व्रणपाचना भवन्ति; यथा तिले प्रोक्तं–'शोधयेद्रोपयेच्चैव युक्तः शोधनरोपणैः' (चि. अ. १) इति । सक्तूनां च स्वतन्त्रे 'दधिचुक्रसुराशुक्त' (चि. अ. १) इत्यादिना संयुक्तस्यैव पाचनत्वं वक्तव्यम् । चरकेऽप्युक्तं–"सतिला सातसीबीजदध्यम्भःशक्तुपिण्डिका" (च. चि. अ. २५) इति । तथा शीतत्वेऽपि शक्तूनां व्रणपाचनशक्तिराचार्यवचनादेवोन्नीयते । भवति हि विषयभेदेऽपि भिन्नशक्तित्वं; यथा—काञ्जिकस्योष्णस्यापि बहिःस्पर्शनशीतत्वं, तथा तिलस्य कफपित्तकरस्यापि व्रणविषये त्रिदोषहरत्वम् । यदुक्तं "स माधुर्यात्तथैवौष्ण्यात् स्नेहाच्चानिलनाशनः । कषायभावान्माधुर्यात्तिक्तत्वाच्चापि पित्तनुद् ॥ औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः" इति चक्रः ।

[1] 'द्रव्याणां पिच्छिलानां शाल्मलीशेलुत्वक्प्रभृतीनाम्' इति चक्रः ।

**अर्कोत्तमां [1]स्नुहीक्षीरं पिष्ट्वा क्षारोत्तमानि च ॥**
**जातीमूलं हरिद्रे द्वे कासीसं कटुरोहिणीम् ॥ १६ ॥**
**पूर्वोद्दिष्टानि चान्यानि कुर्यात् संशोधनं घृतम् ॥**

कल्कमभिधाय शोधनघृतमाह—अर्कोत्तमामित्यादि । अर्कः अर्कमूलम्, उत्तमा त्रिफला, अन्ये तु पुनरर्कोत्तममित्यभिन्नपदेन मन्दारकमाहुः; स्नुहीक्षीरं सेहुण्डदुग्धं; क्षारोत्तमानि क्षारश्रेष्ठद्रव्याणि मुष्कककुटजपलाशाश्वकर्णादीनि; जातीमूलं जात्या जटा; अन्ये 'जातुकन्द' इति पठन्ति, तत्र जातुकन्दो गुग्गुलुक उत्तरापथे प्रसिद्धः; पूर्वोद्दिष्टानि शोधनवर्तिनिर्दिष्टानि । शेषं सुगमम् ॥ १६ ॥—

**मयूरको राजवृक्षो निम्बः कोशातकी तिलाः ॥१७॥**
**बृहती कण्टकारी च हरितालं मनःशिला ॥**
**शोधनानि च योज्यानि तैले द्रव्याणि शोधने ॥१८॥**

तैलं शोधनं निर्दिशन्नाह—मयूरक इत्यादि । मयूरकोऽपामार्गः; राजवृक्षः किरमालकः । कोशातकी घोषकः, 'घुसुण्डी' इति लोके । शोधनानि च योज्यानीति शोधनवर्तिनिर्दिष्टानि, वमनविरेचननिर्दिष्टानीत्यन्ये । शेषं प्रसिद्धम् ॥ १७ ॥ १८ ॥

**कासीसे सैन्धवे किण्वे वचायां रजनीद्वये ॥**
**शोधनाङ्गेषु चान्येषु चूर्णं कुर्वीत शोधनम् ॥ १९ ॥**

शोधनचूर्णानि निर्दिशन्नाह—कासीस इत्यादि । शोधनाङ्गेषु चान्येष्विति शोधनवर्तिनिर्दिष्टेषु वमनविरेचनाङ्गद्रव्येषु च; कानिचित् पूर्वं व्याख्यातानि कानिचित् प्रसिद्धानि द्रव्याणि ॥१९॥

**सालसारादिसारेषु पटोलत्रिफलासु च ॥**
**रसक्रिया विधातव्या शोधनी शोधनेषु च ॥ २० ॥**

रसक्रियां शोधनीं निर्दिशन्नाह—सालसारादिसारेष्वित्यादि । [2]रसक्रिया फाणिताकृतिः, 'काकवी' इति लोके । विधातव्या कर्तव्या । शोधनेषु चेति शोधनवर्तिनिर्दिष्टेषु, अथवोर्ध्वाधःशोधनेषु वमनविरेचनद्रव्येषु । शेषं प्रसिद्धम् । रसक्रियाकल्पना चेयं—द्रव्यापेक्षयाऽष्टगुणं षोडशगुणं वा जलं दत्त्वाऽष्टभागावशेषः षोडशभागावशेषो वा क्वाथः कार्यः, ततः पूतं कषायं पुनस्तावत् पचेद्यावत् फाणिताकृतिः ॥ २० ॥

**श्रीवेष्टके सर्जरसे सरले देवदारुणि ॥**
**सारेष्वपि च कुर्वीत मतिमान् व्रणधूपनम् ॥ २१ ॥**

परिशिष्टमष्टमं धूपनं दर्शयन्नाह—श्रीवेष्टक इत्यादि । श्रीवेष्टकः सरलरसो नवनीतपिण्डप्रायः, 'गुग्गुली' इति लोके प्रसिद्धः; सर्जरसः 'राला' इति लोके प्रसिद्धः; सरले सरलवृक्षत्वचीत्यर्थः । सारेष्विति अनुक्तेषु सालसारादिसारेष्वित्यर्थः । शेषं प्रसिद्धम् । अत्र शोधनप्रकरणे केचित् "एतैरेवौषधैः कुर्यात् कल्कानपि च शोधनान्" अस्याग्रे "कासीसकटुरोहिण्योर्जातीकन्दहरिद्रयोः । पूर्वोद्दिष्टेषु चाङ्गेषु कुर्यात्तैलघृतानि वै"—इति पाठं पठन्ति, व्याख्यानयन्ति च-कन्दहरिद्रयोरित्यत्र कन्दशब्दो दारुहरिद्रापरिहाराय । 'जातुकन्दहरिद्रयोः' इत्यन्ये पठन्ति, अत्र जातुकन्दो गुग्गुलुः । पूर्वोद्दिष्टेषु चाङ्गेष्विति शङ्खिन्यादिषु अजगन्धादिषु च । एषां कषायादीनां व्रणधावनादौ द्विव्रणीये यथोक्तविषयमवचारणम् ॥ २१ ॥

**कषायाणामनुष्णानां वृक्षाणां त्वक्षु साधितः ॥**
**शृतः शीतकषायो वा रोपणार्थं प्रशस्यते ॥ २२ ॥**
**सोमामृताश्वगन्धासु काकोल्यादौ गणे तथा ॥**
**क्षीरिप्ररोहेष्वपि च वर्तयो रोपणाः स्मृताः ॥ २३ ॥**

रोपणमपि धूपनवर्ज्यं शोधनमिव सप्तविधं कषायादिभेदेन दर्शयन्नाह—कषायाणामित्यादि । कषायाणामनुष्णानामिति न्यग्रोधोदुम्बराश्वत्थप्लक्षप्रभृतीनाम् । शृतं शीतकषायं चेत्युपलक्षणं, तेन फाण्टस्वरसावपि गृह्येते । द्रव्यमुष्णोदके रात्रौ स्थापितं 'शीतकषायः' इत्युच्यते । रोपणार्थं संरोहणार्थम् । रोपणवर्तीद्रव्याणि निर्दिशन्नाह—सोमेत्यादि । सोमः सोम एव, 'सोमवल्कल' इत्यन्ये, अपरे 'सोमा ब्राह्मी' इत्याहुः; अमृता गुडूची; क्षीरिप्ररोहा न्यग्रोधोदुम्बरादीनामङ्कुराः । शेषं प्रसिद्धम्॥२२॥२३

**समङ्गा सोमसरला सोमवल्कः सचन्दनः ॥**
**काकोल्यादिश्च कल्कः स्यात् प्रशस्तो व्रणरोपणे २४**

रोपणकल्कद्रव्यं निर्दिशन्नाह—समङ्गेत्यादि ।–समङ्गा अञ्जलिकारिका 'लज्जालुकी' इति लोके प्रसिद्धा, वराहक्रान्तामपरे; सोमः सोम एव; सरला सरलः, विशंसिकामन्ये; सोमवल्कः कट्फलः । शेषं प्रसिद्धम् ॥ २४ ॥

**पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता ॥**
**काकोल्यादिश्च योज्यः स्याद्भिषजा रोपणे घृते ॥२५॥**

रोपणघृतं निर्दिशन्नाह—पृथक्पर्ण्यादि । पृथक्पर्णी पृश्निपर्णी, आत्मगुप्ता कपिकच्छूः, मालती जाती, सिता शर्करा, श्वेतदूर्वेत्यन्ये । शेषं प्रसिद्धम् ॥ २५ ॥

**कालानुसार्यागुरुणी हरिद्रे देवदारु च ॥**
**प्रियङ्गवश्च रोध्रं च तैले योज्यानि रोपणे ॥ २६ ॥**

रोपणतैलमुद्दिशन्नाह—कालानुसार्येत्यादि । कालानुसार्यं तगरं, शैलजमिति केचित् । शेषं प्रसिद्धम् ॥ २६ ॥

**कङ्गुका त्रिफला रोध्रं कासीसं श्रवणाह्वया ॥**
**धवाश्वकर्णयोस्त्वक् च रोपणं चूर्णमिष्यते ॥ २७ ॥**
**प्रियङ्गुका सर्जरसः पुष्पकासीसमेव च ॥**
**त्वक्चूर्णं धवजं चैव रोपणार्थं प्रशस्यते ॥ २८ ॥**

रोपणचूर्णमाह—कङ्गुकेत्यादि । कङ्गुकाः कङ्गवः, 'अन्नविशेषा' इत्यपरे । श्रवणाह्वया मुण्डितिका । धवः शकटाख्यः, अनेनैव नाम्ना प्रसिद्धः; अश्वकर्णः पूर्वदेशे गन्धमुण्डोऽश्वत्थसदृशवृक्षः । शेषं प्रसिद्धम् । कङ्गुकास्थाने केचित् 'किंशुका' इति

१ 'सुधाक्षीरं' इति पा० । २ 'रसक्रिया क्वाथ एव घनीभूतः क्रियाकल्पेऽभिधातव्यः' इति चक्रः ।

पठन्ति । द्वितीयं रोपणचूर्णमाह—प्रियङ्गुकेत्यादि । अत्र सर्वं सुबोधम् ॥ २७ ॥ २८ ॥

**त्वक्षु न्यग्रोधवर्गस्य त्रिफलायास्तथैव च ॥**
**रसक्रियां रोपणार्थे विदधीत यथाक्रमम् ॥ २९ ॥**

रसक्रियां रोपणीमाह—त्वक्ष्वित्यादि । रसक्रियावस्थायां रोपणरसक्रिया कर्तव्येत्यर्थः । शेषं सुगमम् ॥ २९ ॥

**अपामार्गोऽश्वगन्धा च तालपत्री सुवर्चला ॥**
**उत्सादने प्रशस्यन्ते काकोल्यादिश्च यो गणः ॥३०॥**

इदानीमुत्सादनमाह—अपामार्ग इत्यादि । अपामार्गस्य मूलं शीतलं गृह्यते; न तु फलं, तस्योष्णवीर्यत्वात् । तालपत्री मुशली । सुवर्चला सूर्यावर्तः; अस्या अपि मूलं न तु फलं, तस्योष्णवीर्यत्वात् । उत्सादन इति उत्सादनं मांसवर्धनं, लेपप्रयोगादुत्सादनं भवति । शेषं सुगमम् ॥ ३० ॥

**कासीसं सैन्धवं किण्वं कुरुविन्दो मनःशिला ॥**
**कुक्कुटाण्डकपालानि सुमनोमुकुलानि च ॥ ३१ ॥**
**फले शैरीषकारञ्जे धातुचूर्णानि यानि च ॥**
**व्रणेषूत्सन्नमांसेषु प्रशस्तान्यवसादने ॥ ३२ ॥**

अवसादनं निर्दिशन्नाह—कासीसमित्यादि । कुरुविन्दो लोहितरत्नं 'पद्मराग' इत्युच्यते । कुक्कुटाण्डकपालानि कुक्कुटाण्डकर्पराणि । सुमनोमुकुलानि चेति जातिकलिकेत्यर्थः । धातुचूर्णानि यानि चेति हरितालपुष्पकासीसरसाञ्जनप्रभृतीनि । उत्सन्नमांसेषु उन्नतमांसेष्वित्यर्थः । अवसादन इति मांसस्फोटने ॥३१॥३२॥

**समस्तं वर्गमर्धं वा यथालाभमथापि वा ॥**
**प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्मसु ॥ ३३ ॥**

एषां शोधनरोपणादिवर्गाणां समस्तानामलाभे कल्पान्तरं दर्शयन्नाह—समस्तमित्यादि । मिश्रकीयेषु द्रव्यगणेषु तथा द्रव्यसंग्रहणीयोक्तेषु, तथा संशोधनसंशमनीयोक्तेषु यानि द्रव्याणि तेषां समस्तानामलाभे त्रिचतुःपञ्चषडादिद्रव्याणामपि योगः कर्तव्य इत्यर्थः । तेनाध्यायत्रयनिर्दिष्टगणविषयिण्येवेयं परिभाषा, न समस्ततन्त्रव्यापिनी । अन्ये समस्तमुत्तमबले व्याधौ, अर्धं मध्यबले, यथालाभं हीनबले, इति कथयन्ति । अयं पक्षो **गयदासाचार्येण** दूषितः । यथालाभमिति यस्य यस्य लाभः स्यात्तत्तत् प्रयुञ्जीतेत्यर्थः । यथोद्दिष्टेषु कर्मस्विति उक्तेषु विम्लापनादिकर्मस्वित्यर्थः ॥ ३३ ॥

**इति श्रीसुश्रुतसंहितायां सूत्रस्थाने मिश्रकाध्यायो नाम सप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥**

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने सप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशत्तमोऽध्यायः ।

**अथातो द्रव्यसंग्रहणीयमध्यायं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

द्रव्याणां संग्रहः संक्षेपः, तमधिकृत्य कृतोऽध्याय इत्यर्थः; विस्तरस्तु चिकित्सिते कथ्यते । तदुक्तं,—"समासेन गणा ह्येते प्रोक्तास्तेषां तु विस्तरम् । चिकित्सितेषु वक्ष्यामि ज्ञात्वा दोषबलाबलम्—" इति ॥ १ ॥ २ ॥

**समासेन सप्तत्रिंशद्द्रव्यगणा भवन्ति ॥ ३ ॥**

तत्रादावध्यायस्य पिण्डार्थं निर्दिशन्नाह—समासेनेत्यादि ।—समासेन संक्षेपेण । गण्यन्त इति गणाः समूहाः । तत्र द्वात्रिंशदनियतावयवाः, पुनः पञ्च पञ्चावयवाः । केचित् पञ्चत्रिंशदिति पठन्ति ( त्रिंशद्वाऽऽमलकादीनि विहायेति ) ॥ ३ ॥

---

१ 'अत्र चोत्सादनं यद्यपि मृदुशीतं द्रव्यं भवति, अपामार्गश्च तीक्ष्णः, तथाऽपि तस्य मूलमिहातीक्ष्णं ग्रहीतव्यं भवति । अङ्गभेदेन द्रव्याणां गुणविशेषो यथा–शोभाञ्जनं मूले फले च तीक्ष्णं, पुष्पं तु तस्य मृद्वपि' इति चक्रः । २ 'संप्रति अत्राध्याये कथितौषधवर्गाणां तथा द्रव्यसंग्रहणीये तथा संशोधनसंशमनीये च ये वर्गाः पठनीयास्तत्र सर्वालाभेऽर्धवर्गेण यथालब्धेन वा द्वित्र्यादिद्रव्येण चिकित्साप्रयोगार्थं परिभाषामाह—समस्तं वर्गमित्यादि । अत्र वर्गशब्देन प्रकरणात् समानक्रियाणां समूह उच्यते । तेनात्रैवाध्याये प्रायेण समानकार्या वर्गा उक्ताः, तेष्वेवेयं परिभाषा । यत्र तु संयोगशक्त्या प्रयोगोपदर्शनं न तत्रार्धवर्गादिप्रयोगः, संयोगशक्तेरन्यतरसंयोग्यपनयेनाप्यपार्थकत्वात् ; नहि पानीयकल्याणघृतादौ यथालाभं पाको भवति; यत्र तु समानवीर्यतया एकत्र प्रयोगो गणोक्तेषु द्रव्येषु भवति, तत्रान्यतरापायेऽपि तच्छक्तीनां द्रव्याणां प्रयोगार्थं साधको भवत्येव । अत एव चरकेऽप्येतद्विषय एवोक्तं–"वर्गमपि वर्गेणोपसृजेद्, उक्तमपि यदयौगिकं मन्येत तदपोद्धरेत्" ( च. वि. अ. ८ ) इत्यादि । एतद् द्रव्यसमूहानां तुल्यवीर्यतया वा प्रयोगं तथा संयोगशक्त्या वा प्रयोगं विवेकेन ज्ञातुमुक्तमत्रापि–भिषक् प्राज्ञ इति । अत्र च यद्यपि अर्धवर्गप्रयोगो यथालाभं प्रयोगोऽपि समस्तवर्गप्रयोगतुल्यतया उक्तः, तथाऽपि समस्तप्रयोगस्यैव महाफलत्वं ज्ञेयं, तस्यैव बहुद्रव्यशक्तियोगेन महागुणत्वात् । समस्तालाभेऽर्धवर्गादिप्रयोगश्चिरेणाल्पसाधको ज्ञेयः; अन्यथा तुल्यफलत्वं स्यात् सर्वस्यार्धादिभिः समं तदा प्रयाससाध्यं सर्वमर्धवर्गादावल्पप्रयाससाध्ये समानफले सति को बालिश उपदिशेदनुतिष्ठेद्वा; तस्मात् सर्वालाभेऽर्धादिविधानमेतत्' इति चक्रः ।

१ भूमिप्रविभागीयोक्तन्यायेन गृहीतानां भेषजानां यत्र यत्र व्याधिप्रशमनादौ कार्ये येषां भेषजानां क्षमत्वं तानि वर्गीकृत्याभिधातुं द्रव्यसंग्रहणीयोऽभिधीयते । अत्र चान्नपानादौ विदारीकन्दशतावरीप्रभृतयः समानगुणा गणतया निर्दिष्टाः, तेषां गणरूपमेलके संयोगमहिम्ना गुणान्तरसंभावनानिरासार्थं तथा तत्राकथितगुणकर्मदर्शनार्थमिह पाठः । दृश्यते हि कैचित् संयोगे प्रकृतिविरुद्धगुणोदयो, यथा–मधुसर्पिषोः । अत्रापि च संपूर्णगणेषु शक्त्युत्कर्षः, तथाऽर्धप्रयोगे यथालाभप्रयोगे वा शक्त्यपकर्षो मिश्रकोक्तन्यायाद् व्याकरणीयः ।' इति चक्रः । २ अयं पाठो हस्तलिखितपुस्तके न पठ्यते ।

**तद्यथा–विदारिगन्धा विदारी विश्वदेवा सहदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डो हंसपादी वृश्चिकाल्यृषभी चेति ॥ ४ ॥**

**विदारिगन्धादिरयं गणः पित्तानिलापहः ॥**
**शोषगुल्माङ्गमर्दोर्ध्वश्वासकासविनाशनः ॥ ५ ॥**

तत्र प्रथमं दोषक्रमेणाद्यं गणं निर्दिशन्नाह—तद्यथेत्यादि । विदारिगन्धा शालपर्णी, विदारी विपादिककन्दः कोहलाकारो लोहितकुसुमः; स च द्विविधः—दीर्घकन्दो बहुक्षीरः, हस्तिपादकोऽल्पक्षीर इति । विश्वदेवा गाङ्गेरुकी प्रसिद्धा, 'गुडशर्करा ( गुलशकरी )' इति पूर्वदेशे, अन्ये सितकुसुमां बलामाहुः । सहदेवी बलाभेदः पीतपुष्पा 'काङ्कसी' इति लोके; अन्ये बलां नीलपुष्पामाहुः । श्वदंष्ट्रा गोक्षुरकः । पृश्निपर्णी पृथक्पर्णी 'पीठवनी' इति लोके । शतावरी सूक्ष्मपत्रा 'शताउरी' इति लोके । सारिवा जम्बूपत्रा दुग्धगर्भा वल्ली स्वनामप्रसिद्धा । कृष्णसारिवा छिलहिण्टापत्रसदृशच्छदा चन्दनगन्धा 'कालवेली' इति लोके; केचित् कृष्णसारिवां न पठन्ति । जीवकः कूर्चशीर्षकः स्वनामख्यातः । ऋषभको वृषभकः, अयमपि स्वनामख्यातः । महासहा माषपर्णी । क्षुद्रसहा मुद्गपर्णी । बृहत्यौ सूक्ष्मफला स्थूलफला च । पुनर्नवा वर्षाभूः 'साटठी' इति लोके । एरण्डः स्वनामप्रसिद्धः । हंसपादी मधुस्रवा हंसपदाकारपत्रा पीतपुष्पा जलयु(मु)क्तदेशजाता 'हंसपाई' इति लोके प्रसिद्धा । वृश्चिकाली[1] कण्टकितमेषशृङ्गयुगाकारफला पाठापत्रा ईषद्रोमशा श्वेतपुष्पगुच्छा दक्षिणावर्तवल्ली मेषशृङ्गीभेदः; वृश्चियाशाकमन्ये । ऋषभी कपिकच्छुः । शृगालविन्नामेके विदारिगन्धादौ पठन्ति, तामपठनीयामेके मन्यन्ते, अन्ये पृथक्पर्णीभेदं दीर्घपत्रां सिंहपुच्छामाहुः । शोषो राजयक्ष्मा, अङ्गमर्दः स्फुटनिका । पित्तानिलहरत्वेन दोषप्रत्यनीकतोक्ता, शोषादिनाशकत्वेन व्याधिप्रत्यनीकत्वं चोक्तम्, एवं दोषयोरुक्तयोर्व्याधिषु चोक्तेष्ववस्थाकालदेशादिभेदेन समस्तैरेतैर्यथालाभं लब्धैर्वा शृतशीतफाण्टस्वरसकल्कचूर्णगुटिकोत्कारिकारसक्रियालेपप्रदेहपरिषेकावगाहनघृततैलादीनि यथायोगं साधनीयानि । एवमन्येष्वपि गणेषु योज्यम् । येषां जीवकर्षभकादिद्रव्याणामन्नपानादौ गुणो न निर्दिष्टः, तेषां समुदितस्य गणस्य गुणाभिधानेनैव पृथग्द्रव्यगुणो ज्ञातव्य इति ॥ ४ ॥ ५ ॥

**आरग्वधमदनगोपघोण्टाकण्टकीकुटजपाठापाटलामूर्वेन्द्रयवसप्तपर्णनिम्बकुरुण्टकदासी-कुरुण्टकगुडूचीचित्रकशार्ङ्ग(र्ङ्गे)ष्टाकरञ्जद्वयपटोलकिराततिक्तकानि सुषवी चेति ॥ ६ ॥**

**आरग्वधादिरित्येष गणः श्लेष्मविषापहः ॥**
**मेहकुष्ठज्वरवमीकण्डूघ्नो व्रणशोधनः ॥ ७ ॥**

आरग्वधेत्यादि । आरग्वधः किरमालकः; मदनः पिण्डीतकः, 'मयणफल' इति लोके; गोपघोण्टा कर्कोटी, बदरभेद इत्यन्ये, 'ग्रामकोलिका' इति प्रसिद्धा, पूगभेदमपरे; कण्टकी विकङ्कतः वृक्षकण्टकारिकेति प्रसिद्धा, 'कांकई' इति लोके; कुटज इन्द्रवृक्षः; पाठा अविद्धकरणी, 'पाढ' इति लोके; पाटला वसन्तदूती स्वनामप्रसिद्धा; मूर्वा धनुर्गुणोपयोग्या, 'दूधउ' इति लोके, अन्ये चोरस्नायुमाहुः; इन्द्रयवः कुटजफलं; सप्तपर्णः शाल्मलीसदृशपर्णो गजमदगन्धपुष्पः शरदि विकसनशील उच्चैर्वृक्षः 'सातवन' इति लोके; निम्बः प्रसिद्धः; कुरुण्टकः पीतपुष्पः, 'कण्टाशेलुआ' इति लोके; नीलपुष्पः स एव दासीकुरुण्टकः; गुडूची प्रसिद्धा; चित्रकः प्रसिद्धः; शार्ङ्ग(र्ङ्गे)ष्टा काकजङ्घा 'विकसवनी' इति लोके, काकमाचीत्यन्ये, अन्ये तु शार्ङ्गेष्टा काकतिक्ता गौरवर्तुलावगुण्ठितफला 'चिरपोटिका' इति प्रसिद्धा, 'भुरुदाका' इति पूर्वदेशे, काकादनीत्यपरे, सा च गुञ्जेति प्रसिद्धा; करञ्जद्वयमिति एकश्चिरबिल्वः, द्वितीयः कण्टकी विटपकरञ्जः; पटोलः कुलकः स्वनामख्यातः; किराततिक्तको भूनिम्बः; सुषवी कारवेल्लकः, अन्ये तु पानीयवल्लीमाहुः ॥६॥७॥

**सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृङ्गतिनिशचन्दनकुचन्दन[1]शिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकं चेति ॥ ८ ॥**

**सालसारादिरित्येष गणः कुष्ठविनाशनः ॥**
**मेहपाण्ड्वामयहरः कफमेदोविशोषणः ॥ ९ ॥**

सालसारेत्यादि । सालः शङ्कुः, तस्य सारः सालसारः; अजकर्णः सर्जः सालभेद एव; खदिरो गायत्री स्वनामख्यातः; कदरः खदिराकारः श्वेतसारः; क्रमुकः पूगः, केचित् 'क्रमुग' इति पठन्ति, अत्रापि स एवार्थः, वृक्षरोध्र इत्यन्ये साराधिकारात्; भूर्जो मृदुत्वक् स्वनामख्यातः, केचित् भूर्जस्थाने 'स्फूर्जक' इति पठन्ति, तत्र स्फूर्जकः श्योनाकनाम्ना प्रसिद्धः ( लकुचाकारपत्रैकाण्डः ); मेषशृङ्गः कर्कटशृङ्गः, स च पुत्रञ्जीवकसदृशस्तरुविशेषः; तिनिशः स्यन्दनः, 'सादण' इति लोके प्रसिद्धः; चन्दनं श्रीचन्दनं 'श्रीखण्ड' इति प्रसिद्धं; कुचन्दनं रक्तचन्दनं; शिंशपा कृष्णसारा 'सीसई' इति लोके; शिरीषो विषघाती, 'शिरस' इति लोके; असनो बीजकः पूर्वदेशे प्रसिद्धः; धवः शकटाख्यः स्वनामप्रसिद्धः; अर्जुनः ककुभः; तालः स्वनामख्यातः; शाकः पूर्वदेशे प्रसिद्धो महाखरपत्रः; नक्तमालो बृहत्करञ्जः; पूतीकः चिरबिल्वः; अश्वकर्णो गन्धमुण्डोऽश्वत्थसदृशः पूर्वदेशे प्रसिद्धः; अगुरु स्वनामख्यातं; कालीयकं 'मलेन्द्रीचन्दनम्' इति प्रसिद्धम् । विनाशनहरणविशोषणानामर्थभेदमाहुः—तत्र कुष्ठविनाशनो मूलोच्छेदेन, हरणो मेहपाण्ड्वादेः संशमनत्वेन निर्मूलनत्वेन वा, शोषणः कफमेदसोर्द्रवस्निग्धयोः ॥ ८ ॥ ९ ॥

**वरुणार्तगलशिग्रुमधुशिग्रुतर्कारीमेषशृङ्गीपूतीकनक्तमालमोरटाग्निमन्थसैरेयकद्वयबिम्बीवसुक-**

---

1 'वृश्चिकाली वृश्चिकपर्णी' इति चक्रः ।

1 अयं पाठो हस्तलिखितपुस्तके न पठ्यते ।

**वसिरचित्रकशतावरीबिल्वाजश्टङ्गीदर्भा बृहतीद्वयं चेति ॥ १० ॥**
**वरुणादिर्गणो ह्येष कफमेदोनिवारणः ॥**
**विनिहन्ति शिरःशूलगुल्माभ्यन्तरविद्रधीन् ॥ ११ ॥**

वरुणेत्यादि । वरुणस्तिक्तसारः शाकद्रुमः 'वरुण' इति लोके; आर्तगलः ककुभः सुगन्धमूलः 'कवहा ( कौहा )' इति नाम्ना पूर्वदेशे प्रसिद्धः; शिग्रुः शोभाञ्जनकः; मधुशिग्रू रक्तशोभाञ्जनकः; तर्कारी अरणिका; मेषशृङ्गी कर्कटशृङ्गी; पूतीकश्चिरबिल्वः; नक्तमालो बृहत्करञ्जः; मोरटोऽङ्कोल्लपुष्पो 'मोइहेर' इति लोके, हस्तिकर्णपलाश इत्यन्ये; अग्निमन्थस्तेजोवृक्षः पूर्वदेशे 'आगथ' इति प्रसिद्धः; सैरेयकद्वयं रक्तपुष्पनीलपुष्पकण्टशेलुआद्वयं; बिम्बी ओष्ठोपमफला 'तिण्डुरिका' इति प्रसिद्धा; चित्रकः प्रसिद्धः; शतावरी प्रसिद्धा; वसुको बुकः 'बकपुष्प' इति लोके, अन्ये तु वसुकोऽर्कः; वशिरो मर्कटपिप्पली तृणजातिः 'अपामार्ग' इति प्रसिद्धः; बिल्वः श्रीफलः; अजशृङ्गी छगलविषाणिका उत्तमारणी 'मेण्ढिका' इति लोके; दर्भः कुशः । बृहतीद्वयं कण्टकारिकाद्वयम्—एका स्थूलफला, द्वितीया ह्रस्वफला ॥ १० ॥ ११ ॥

**वीरतरुसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकुशकाशाश्मभेदकाग्निमन्थमोरटावसुकवसिरभल्लूककुरण्टिकेन्दीवरकपोतवङ्काः श्वदंष्ट्रा चेति ॥ १२ ॥**
**वीरतर्वादिरित्येष गणो वातविकारनुत् ॥**
**अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥ १३ ॥**

वीरेत्यादि । वीरतरुः शरः, अन्ये तु वीरतरुः 'वेल्लन्तर' इति नाम्ना प्रसिद्धो जाङ्गलदेशे नर्मदातटे चर्मण्वतीनदीसमीपे च, तल्लक्षणमुच्यते,—"वेल्लन्तरुर्जगति वीरतरुः प्रसिद्धः श्वेतासितारुणविलोहितपीतपुष्पः । आदारितुल्यकुसुमः शमिसूक्ष्मपत्रः स्यात् कण्टकी विजलदेशज एष वृक्षः—" इति; सहचरद्वयं कण्टशेलुद्वयं; दर्भः प्रसिद्धः; वृक्षादनी बन्दाकः 'कवलेखू' इति लोके, वृक्षफलम्बुकमपरे; गुन्द्रा पादरकभेदो 'गोदर' इति लोके; नलो दूर्वाकाराङ्कुरोऽन्तःशुषिरः स्वनामख्यातः; कुशो ह्रस्वदर्भः; काशः चामरपुष्पः; अश्मभेदकः पाषाणभेदकः, अग्निमन्थः तेजोवृक्षः, 'अङ्गेश्वर' इति लोके; मोरटोऽङ्कोल्लपुष्पः, हस्तिकर्णपलाश इत्येके, इक्षुमूलमित्यपरे; वसुको बुकः 'बकपुष्प' इति लोके; वसिरः अपामार्गः, सूर्यावर्तभेद इत्येके; भल्लूकः श्योनाकः 'शोणा' इति लोके; कुरण्टिका कृष्णसूक्ष्मफला 'सिरिवालिका' इति लोके; इन्दीवरोऽपि तद्भेदो दीर्घपत्रो बहुलपुष्पः; कपोतवङ्का सुवर्चला, अन्ये 'शिरीषसदृशपत्रा स्वल्पविटपा' इति द्रव्यान्तरमाहुः; श्वदंष्ट्रा गोक्षुरकः । अश्मरी बस्तिपाषाणः, सैव वातभिन्ना शर्करा, मूत्राघातो मूत्रावरोधः; रुजाशब्दो रोगवचनः, स चाश्मर्यादिषु प्रत्येकं संबध्यते ॥ १२ ॥ १३ ॥

१ 'तर्कारी जयन्ती' इति चक्रः । २ 'मोखुहर' इति पा० । ३ 'अजशृङ्गी आवर्तनी' इति चक्रः । ४ 'पट्टरकभेदः' इति पा० ।

**लोध्रसावरलोध्रपलाशकुटन्नटाशोकफञ्जीकट्फलैलवालुकशल्लकीजिङ्गिनीकदम्बसालाः कदली चेति ॥ १४ ॥**
**एष रोध्रादिरित्युक्तो मेदःकफहरो गणः ॥**
**योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ १५ ॥**

रोध्रेत्यादि । रोध्रो लाक्षाप्रसादनो रक्तः; सावरलोध्रः श्वेतस्थूलत्वक्; पलाशः किंशुकः; कुटन्नटः स्योनाकः; अशोको लोहितकुसुमः स्वनामख्यातः; फञ्जी भार्गी; कट्फलः 'कायफल' इति लोके; एलवालुकं हरिवालुकं कृष्णगन्धिकट्फलसदृशं; शल्लकी गजभक्ष्या 'साल' इति लोके; जिङ्गिनी गुडमञ्जनिका, 'गुलदुणि' इति लोके, पूर्वदेशे स्वनामप्रसिद्धा; कदम्बो वृक्षकदम्बः; सालः सर्जः; कदली रम्भा स्वनामप्रसिद्धा । स्तम्भी अतिसारादेः स्तम्भनः ॥ १४ ॥ १५ ॥

**अर्कालर्ककरञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणास्तापसवृक्षश्चेति ॥ १६ ॥**
**अर्कादिको गणो ह्येष कफमेदोविषापहः ॥**
**कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ १७ ॥**

अर्केत्यादि । अर्को रक्तपुष्पः प्रसिद्धः; अलर्को मन्दारकः, यस्य क्षीरं न विनश्यति; करञ्जद्वयं वृक्षविटपकरञ्जौ; नागदन्ती दन्तिनी; मयूरकोऽपामार्गः; भार्गी स्वनामख्याता; रास्ना सुरभी स्वनामख्याता; इन्द्रपुष्पी कण्टकी कृष्णपुष्पकरञ्जः, 'कलिकारिका' इत्यन्ये; क्षुद्रश्वेता श्वेतस्यन्दा श्वेतपुष्पा 'सेफन्द' इति लोके; महाश्वेता नीलपुष्पः सेफन्दः, 'वन्ध्याकर्कोटिका' इत्यन्ये; वृश्चिकाली वृश्चियाकः; अलवणा ज्योतिष्मती वर्तुलपक्वरक्तफला पीततैला 'काकमर्दनिका' इति लोके प्रसिद्धा; तापसवृक्ष इङ्गुदः, पुत्रजीवक इत्यन्ये ॥ १६ ॥ १७ ॥

**सुरसाश्वेतसुरसाफणिज्झकार्जकभूस्तृणसुगन्धकसुमुखकालमालकुठेरककासमर्दक्षवकखरपुष्पाविडङ्गकट्फलसुरसीनिर्गुण्डीकुलाहलोन्दुरुकर्णिकाफञ्जीप्राचीबलकाकमाच्यो विषमुष्टिकश्चेति ॥ १८ ॥**
**सुरसादिर्गणो ह्येष कफहृत् कृमिसूदनः ॥**
**प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ १९ ॥**

सुरसेत्यादि । सुरसे द्वे श्वेतकृष्णकुसुमे, ते च लोके 'तुलसी' इति प्रसिद्धे; फणिज्झकस्तीक्ष्णगन्धो 'मरुवक' इति लोके, अन्ये त्वनेनैव नाम्ना प्रसिद्धः; अर्जको बर्बरिकाकारो लघुमञ्जरीकः सूक्ष्मपत्रो निर्गन्धः श्वेतकुठेरकः; भूस्तृणो गुडाकनामधेयो

१ 'कुटन्नटं कैवर्तमुस्तकम्' इति चक्रः । २ 'फणिज्झकः तीक्ष्णपर्णासः, अर्जकः श्वेतपर्णासः, कालमालः कृष्णपुष्पः पर्णासः, कुठेरकः पर्णासः' इति चक्रः ।

द्रोणपुष्पीसदृशः; सुगन्धको द्रोणपुष्पः; अन्ये तु भूस्तृणं रोहिषं, सुगन्धको बृहत्सुगन्धतृणं; सुमुखो राजिका, अन्ये तु वनबर्बरिका 'सउहा' इति नाम्ना जेजीभुक्तौ प्रसिद्धा; कालमालः कृष्णमल्लिका 'बर्बरिका' इति लोके; कासमर्दः स्वनामख्यातः; क्षवकः क्षवथुकारः फणिज्झकाकारः 'चिह्नरियाक' इति पारियात्रे प्रसिद्धः, 'छिक्किनी' इति लोके; खरपुष्पः तस्यैव भेदः, बोवइकामपरे, मरुवकमन्ये; विडङ्गः प्रसिद्धः; कट्फलः सोमवल्कः 'कायफल' इति लोके; सुरसी कपित्थसदृशपत्रा 'बिल्वनासी' इति लोके प्रसिद्धा, श्वेतनिर्गुण्डीत्यन्ये; निर्गुण्डी नीलनिर्गुण्डी; कुलाहलः 'मुण्डिका' इति प्रसिद्धः; उन्दुरुकर्णिका मूषिककर्णिका 'उन्दुरी' इति लोके, उन्दुरकर्णीं द्रवन्तीमाहुरन्ये, अपरे दन्तिनीमाहुः, 'उन्दुरकर्णा' इत्येके पठन्ति, तत्रापि स एवार्थः; फञ्जी भार्गी; प्राचीबलो मत्स्याक्षकः, 'काकजङ्घा, नदीपिप्पली वा' इत्यपरे, केचिदाचार्या एवं वदन्ति—यद्यपि प्राचीबलशब्देन काकजङ्घा गण्डदूर्वा जलपिप्पली चोच्यते, तथाऽप्यत्र काकजङ्घैव, काकमाचीसान्निध्याद्वातकफकृमिबाधिर्यहरत्वाच्च; काकमाची मृष्टफला स्वनामप्रसिद्धा; विषमुष्टिको द्रेका 'राजनिम्ब' इति प्रसिद्धः, बृहदलम्बुषामपरे, कर्कोटीमन्ये । कृमिसूदन इति कृमिघ्न इत्यर्थः ॥ १८ ॥ १९ ॥

**मुष्ककपलाशधवचित्रकमदनवृक्षकशिंशपावज्रवृक्षास्त्रिफला चेति ॥ २० ॥**

**मुष्ककादिर्गणो ह्येष मेदोघ्नः शुक्रदोषहृत् ॥**
**मेहार्शःपाण्डुरोगाश्मशर्करानाशनः परः ॥ २१ ॥**

मुष्ककेत्यादि । मुष्ककः क्षारवृक्षः 'मोखक' इति लोके; पलाशः किंशुकः; धवः स्वनामप्रसिद्धः; चित्रकोऽपि स्वनाम्नैव प्रसिद्धः; मदनः पिण्डीतकः; वृक्षकः कुटजः; 'मदनवृक्ष' इत्यन्ये पठन्ति, मदनवृक्ष इत्यत्र वृक्षशब्दनिर्देशः फलप्रतिषेधार्थमिति व्याख्यानयन्ति; शिंशपा कृष्णसारा स्वनामख्याता; वज्रवृक्षः 'सेहुण्ड' इति लोके; त्रिफला हरीतक्यामलकविभीतकानि ॥ २० ॥ २१ ॥

**पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पलीहरेणुकैलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्बफलहिङ्गुभार्गीमधुरसातिविषावचाविडङ्गानि कटुरोहिणी चेति ॥ २२ ॥**

**पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः ॥**
**निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः ॥ २३ ॥**

पिप्पल्यादि । चव्यं हस्तिपिप्पलीमूलं स्वनामख्यातं; शृङ्गवेरं शुण्ठी; हस्तिपिप्पली गजपिप्पली; अजमोदा स्वनामख्याता, अन्ये यवानिकामाहुः; महानिम्बफलमिति महानिम्बो द्रेका 'पर्वतनिम्ब' इति लोके; मधुरसा मूर्वा । आमपाचन इति आमलक्षणं यथा—"जठरानलदौर्बल्यादविपक्वस्तु यो रसः । स आमसंज्ञको देहे सर्वदोषप्रकोपकः"–इति । शेषं प्रसिद्धम् ॥ २२ ॥ २३ ॥

**एलातगरकुष्ठमांसीध्यामकत्वक्पत्रनागपुष्पप्रियङ्गुहरेणुकाव्याघ्रनखशुक्तिचण्डास्थौणेयकश्रीवेष्टकचोचचोरकवालुकगुग्गुलुसर्जरसतुरुष्ककुन्दुरुकागुरुस्पृक्कोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरं चेति ॥ २४ ॥**

**एलादिको वातकफौ निहन्याद्विषमेव च ॥**
**वर्णप्रसादनः कण्डूपिडकाकोठनाशनः ॥ २५ ॥**

एलेत्यादि । ध्यामकं कतृणं 'रोहिष' इति लोके; त्वक् वराङ्गं 'गुडतज' इति लोके; पत्रं पत्रकं; नागपुष्पं नागकेशरम्, अन्ये नागकेशरपुष्पसमपुष्पो महातरुरित्याहुः; हरेणुका रेणुका; व्याघ्रनखो बृहन्नखः, बृहन्नखीत्यन्ये, शुक्तिस्तद्भेदोऽल्पनखः; चण्डा स्वनामख्यातेषत्कृष्णा चोरकभेदः अजमोदाकारा; स्थौणेयकं थुणेरकः; श्रीवेष्टकः सरलचोपः 'गुग्गुली' इति लोके; चोचस्त्वग्भेदो वनवासिकात्वक्; चोरकः स्वनामख्यातः ग्रन्थिपर्णकभेदो ग्रन्थिपर्णाकार एव; सर्जः सर्जरसः 'राल' इति प्रसिद्धः, अन्तर्लोपात्; रसः गन्धरसः 'बोल' इति लोके; तुरुष्कः सिह्लकः; कुन्दुरुकः शल्लकीचोपः; स्पृक्का कुटिलपुष्पा सुगन्धिद्रव्यमौत्तरापथिकं; भद्रदारु देवदारु; पुन्नागः सुरपर्णिका, सुगन्धिपुष्पा दक्षिणापथे 'सुरपति'( सुरङ्गी )नाम्ना प्रतीता; केशरं बकुलं, केचित् समुदितं व्याख्यानयन्ति—पुन्नागकेशरं पद्मकेशरमित्यर्थः; अन्ये त्वेवं पठन्ति–"पुन्नागनागकेशरं च" इति, पुन्नागं देववल्लभं राजचम्पकमिति लोके, नागकेशरं स्वनामप्रसिद्धम् । कोठनाशन इति अत्र कोठलक्षणमुच्यते,—"वरटीदष्टसङ्काशः कण्डूमान् लोहितोऽस्रकफपित्तात् । क्षिप्रोत्पादविनाशः कोठ इति निगद्यते सद्भिः"—इति ॥ २४ ॥ २५ ॥

**वचामुस्तातिविषाभयाभद्रदारूणि नागकेशरं चेति ॥ २६ ॥**

**हरिद्रादारुहरिद्राकलशीकुटजबीजानि मधुकं चेति ॥ २७ ॥**

**एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ ॥**
**आमातिसारशमनौ विशेषाद्दोषपाचनौ ॥ २८ ॥**

वचेत्यादि । भद्रदारु देवदारु । कलशी पृश्निपर्णी । दोषपाचनाविति आमसंसृष्टानां दोषाणां पाचनौ ॥ २६—२८ ॥

**श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनीतिल्वककम्पिल्लकरम्यकक्रमुकपुत्रश्रेणीगवाक्षीराजवृक्षकरञ्जद्वयगुडूचीसप्तलाच्छगलान्त्रीसुधाः सुवर्णक्षीरी चेति ॥ २९ ॥**

**उक्तः श्यामादिरित्येष गणो गुल्मविषापहः ॥**
**आनाहोदरविड्भेदी तथोदावर्तनाशनः ॥ ३० ॥**

१ 'मुष्कको घण्टापाटलिः' इति चक्रः ।

श्यामेत्यादि । श्यामा श्वेता त्रिवृता; महाश्यामा वृद्धदारकः; त्रिवृत् रक्तमूला त्रिवृत् 'निशोत्र' इति लोके; दन्ती दन्तिनी; शङ्खिनी यवतिक्ताभेदः, 'श्वेतबुध्ना' इत्येके; तिल्वको रोध्रः, अन्ये तिल्वको रोध्राकारो बृहत्पत्रो रक्तत्वको वैरेचनिकः; कम्पिल्लको रोचनिका, स्वनामख्यातः; रम्यको द्रेका 'महानिम्ब' इति लोके प्रसिद्धः, पटोलमूलमित्येके; क्रमुकः पूगफलं; पुत्रश्रेणी द्रवन्ती एरण्डसदृशफलपत्राऽल्पविटपा 'शम्बरी' इति लोके; गवाक्षी इन्द्रवारुणी; राजवृक्षः किरमालकः; करञ्जद्वयं वृक्षविटपकरञ्जौ; गुडूची प्रसिद्धा; सप्तला सातला स्नुहीभेदः; छगलान्त्री वृद्धदार(रु)कभेदः, वृश्चीवभेद इत्यपरे; सुधा सेहुण्डः; सुवर्णक्षीरी अनन्तासदृशपत्रा, कङ्कुष्ठमित्यपरे ॥ २९ ॥ ३० ॥

बृहतीकण्टकारिकाकुटजफलपाठा मधुकं चेति ३१
पाचनीयो बृहत्यादिर्गणः पित्तानिलापहः ॥
कफारोचकहृद्रोगमूत्रकृच्छ्ररुजापहः ॥ ३२ ॥

बृहतीत्यादि । मूले स्पष्ट एव ॥ ३१ ॥ ३२ ॥

पटोलचन्दनकुचन्दनमूर्वागुडूचीपाठाः कटुरोहिणी चेति ॥ ३३ ॥

पटोलादिर्गणः पित्तकफारोचकनाशनः ॥
ज्वरोपशमनो व्रण्यश्छर्दिकण्डूविषापहः ॥ ३४ ॥

पटोलेत्यादि । कुचन्दनं रक्तचन्दनं; मूर्वा दुधौडः, 'चौरस्नायुक' इत्येके । व्रणेभ्यो हितो व्रण्यः । शेषं सुखबोधम् ॥ ३३ ॥ ३४

काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकं चेति ॥ ३५ ॥

काकोल्यादिरयं पित्तशोणितानिलनाशनः ॥
जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥ ३६ ॥

काकोलीत्यादि । काकोली वीरा स्वनाम्ना प्रसिद्धा, क्षीरकाकोली तद्भेदः स्वनामख्याता; जीवकः स्वनामप्रसिद्धः; ऋषभः स्वनामख्यातः; मुद्गपर्णी 'मुगवनी' इति लोके; माषपर्णी 'माषवनी' इति लोके, 'अरण्यमाषस्तम्ब' इत्येके; मेदा महामेदा च स्वनामख्याता; छिन्नरुहा गुडूची; तुगाक्षीरी वंशलोचना; पद्मकं पद्मकाष्ठं; प्रपौण्डरीकं स्वनामख्यातं यष्टीमधुद्रव्यादीषत्स्थूलं मधुररसं नेत्राश्च्योतनार्हं द्रव्यम्, अन्ये श्रीपुष्पमाहुः; मृद्वीका द्राक्षा; जीवन्ती 'डोडिका' इति लोके, लताऽर्कफलाकारसक्षीरफला, अन्ये सुवर्णजीवन्तीमाहुः । जीवनः प्राणधारणः, बृंहणः शरीरवृद्धिकरः । शेषं सुबोधम् ॥ ३५ ॥ ३६ ॥

ऊषकसैन्धवशिलाजतुकासीसद्वयहिङ्गूनि तुत्थकं चेति ॥ ३७ ॥

ऊषकादिः कफं हन्ति गणो मेदोविशोषणः ॥
अश्मरीशर्करामूत्रकृच्छ्रगुल्म[1]प्रणाशनः ॥ ३८ ॥

ऊषकेत्यादि । ऊषकः क्षारमृत्तिका वाराणसीसमीपे बडहरदेशे बाहुल्येन भवति, अन्ये तद्भवं द्रव्यान्तरमाहुः; कासीसद्वयं कासीसं भस्मसदृशं किंचिदम्ललवणरसं, द्वितीयं पुष्पकासीसमीषत्पीतं तुवररसं तद्भेद एव; तुत्थकं कर्परिकातुत्थं 'खपरिया' इति लोके, अन्ये मयूरग्रीवमाहुः । शेषं सुबोधम् ॥ ३७ ॥ ३८ ॥

सारिवामधुकचन्दनकुचन्दनपद्मककाश्मरीफलमधूकपुष्पाण्युशीरं चेति ॥ ३९ ॥

सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः ॥
पित्तज्वरप्रशमनो विशेषाद्दाहनाशनः ॥ ४० ॥

सारिवेत्यादि । चन्दनं रक्तचन्दनम्; अन्ये पद्ममिति पठन्ति, तत्र पद्मं पद्मपुष्पम् । शेषं सुबोधम् ॥ ३९ ॥ ४० ॥

अञ्जनरसाञ्जननागपुष्पप्रियङ्गुनीलोत्पलनलदनलिनकेशराणि मधुकं चेति ॥ ४१ ॥

अञ्जनादिर्गणो ह्येष रक्तपित्तनिबर्हणः ॥
विषोपशमनो दाहं निहन्त्याभ्यन्तरं भृशम् ॥ ४२ ॥

अञ्जनमित्यादि । अञ्जनं सौवीराञ्जनं; रसाञ्जनं दारुहरिद्राक्काथेन कृत्रिमं; अन्ये त्वेवं वदन्ति—रसाञ्जनं द्विविधं—स्रोतोऽञ्जनं कृष्णपाषाणाकृति धातुद्रव्यम्, अन्यद्दारुहरिद्राक्काथेन कृत्रिमं पीतलोहितम्, अत्र धातुद्रव्यमेव सौवीराञ्जनसाहचर्यात्; नागपुष्पं नागकेशरं; नलदं मांसी; नलिनकेशराणि पद्मकेशराणि । शेषं सुबोधम् ॥ ४१ ॥ ४२ ॥

परूषकद्राक्षाकट्[2]फलदाडिमराजादनकतकफलशाकफलानि त्रिफला चेति ॥ ४३ ॥

परूषकादिरित्येष गणोऽनिलविनाशनः ॥
मूत्रदोषहरो हृद्यः पिपासाघ्नो रुचिप्रदः ॥ ४४ ॥

परूषकेत्यादि । परूषको धन्वपत्रकः स्वनाम्नैव प्रसिद्धः, स द्विविधो वृक्षविटपभेदात्; कट्फलः सोमवल्कः 'कायफल' इति लोके; राजादनः क्षीरिका; कतकफलं स्वनामख्यातं शशकपुरीषप्रतिमफलमम्बुप्रसादनं; शाकफलानि शाको मसृणकर्कशोदरपृष्ठदलो वृक्षविशेषः, तस्य फलानि । सर्वेषां फलानि ग्राह्याणि । शेषं सुबोधम् ॥ ४३ ॥ ४४ ॥

प्रियङ्गुसमङ्गाधातकीपुन्नागनागपुष्पचन्दनकुचन्दनमोचरसरसाञ्जनकुम्भीकस्रोतोजपद्मकेसरयोजनवल्ल्यो दीर्घमूला चेति ॥ ४५ ॥

अम्बष्ठाधातकीकुसुमसमङ्गाकट्वङ्गमधुकबिल्वपेशिकासावररोध्रपलाशनन्दीवृक्षाः पद्मकेशराणि चेति ॥ ४६ ॥

---

१ '°हृल्लास°' इति पा० ।

१ 'शूलकगुल्मनुत्' इति पा० । २ 'परूषकादीनां सर्वेषां फलं, तेन कट्फला गाम्भारी, तस्याः फलम्' इति चक्रः ।

**गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ ॥**
**सन्धानीयौ हितौ पित्ते व्रणानां चापि रोपणौ ॥४७॥**

प्रियङ्ग्वित्यादि। समङ्गाऽञ्जलिकारिका 'लज्जालुः' इति लोके; पुन्नागस्तुङ्गः स्वनामख्यातः, अन्ये सुरपर्णिका सुगन्धिपुष्पा दक्षिणापथे सुरपती(सुरङ्गी)ति प्रसिद्धा; नागपुष्पं नागकेशरं; चन्दनं रक्तचन्दनं; कुचन्दनं मलयाद्रिचन्दनं; मोचरसः शाल्मलीक्षुपः; रसाञ्जनं दार्वीक्वाथसमुद्भवं स्वनामख्यातं; कुम्भीकः श्लक्ष्णत्वको रोमशः कुम्भीनामा वृक्षो यस्य त्वग् वस्त्राकारा भवति, अन्ये पाटलामाहुः, अपरे स्वल्पविटपमाहुः; स्रोतोजं सौवीराञ्जनं; पद्मकेशरं स्वनामख्यातं; योजनवल्ली मञ्जिष्ठा; दीर्घमूला दुरालभा, शालिपर्णीत्यपरे। अम्बष्ठेत्यादि।—अम्बष्ठा माचिका 'साङ्करड' इति पश्चिमे प्रसिद्धा, पाठा इत्यपरे; धातकीकुसुमं धातकीपुष्पं; समङ्गाऽञ्जलिकारिका 'लज्जालुः' इति लोके; कट्वङ्गोऽरलुकः; बिल्वपेशिका बालबिल्वगिरः; महारोध्रं केचित् पठन्ति; सावररोध्रो लोध्रस्तस्यैव ग्राहित्वात्, नेतरस्तस्य विरेचनत्वात्; पलाशः किंशुकः; नन्दीवृक्षः काश्मरी, अन्ये गर्दभाण्डमाहुः; पद्मकेशरं स्वनामख्यातम्। सन्धानीयाविति भग्नसन्धानकारकौ ॥ ४५—४७ ॥

**न्यग्रोधोदुम्बराश्वत्थप्लक्षमधुककपीतनककुभाम्रकोशाम्रचोरकपत्रजम्बूद्वयप्रियालमधूकरोहिणीवञ्जुलकदम्बबदरीतिन्दुकीसल्लकीरोध्रसावररोध्रभल्लातकपलाशा नन्दीवृक्षश्चेति ॥ ४८ ॥**

**न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः ॥**
**रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहृत् ॥ ४९ ॥**

न्यग्रोधेत्यादि। न्यग्रोधो वटः; उदुम्बरः प्रसिद्धः; अश्वत्थः पिप्पलः; प्लक्षः पर्कटी; मधुकं प्रसिद्धं; कपीतन आम्रातकः; ककुभः अर्जुनः; आम्रः प्रसिद्धः; कोशाम्रः स्वनामख्यातः; चोरकपत्रो लक्षावृक्षः; जम्बूद्वयमेका राजजम्बूर्बृहत्फला, द्वितीया काकजम्बूः स्वल्पफला, द्वयग्रहणाद्भूमिजम्ब्वास्तृतीयायाः प्रतिषेधः; प्रियालः चारद्रुमः; मधूको गुडपुष्पो 'महुवा' इति लोके; रोहिणी कट्फलः; वञ्जुलो वेतसः; कदम्बः प्रसिद्धः; बदरी प्रसिद्धा; तिन्दुकी तिन्दुकवृक्षः, 'टिम्बरुयणि' इति लोके; नन्दीवृक्षोऽत्र प्ररोही गर्दभाण्डः 'पार्श्वपिप्पल' इति लोके। शेषं प्रसिद्धम् ॥ ४८ ॥ ४९ ॥

**गुडूचीनिम्बकुस्तुम्बुरुचन्दनानि पद्मकं चेति ५० एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ॥**
**हृल्लासारोचकवमीपिपासादाहनाशनः ॥ ५१ ॥**

गुडूचीत्यादि। कुस्तुम्बुरु धान्यकं, चन्दनं रक्तचन्दनम्। हृल्लासस्थूत्करणम्। शेषं प्रसिद्धम् ॥ ५० ॥ ५१ ॥

**उत्पलरक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुकं चेति ॥ ५२ ॥**

**उत्पलादिरयं दाहपित्तरक्तविनाशनः ॥**
**पिपासाविषहृद्रोगच्छर्दिमूर्च्छाहरो गणः ॥ ५३ ॥**

उत्पलेत्यादि। उत्पलं नीलोत्पलं, रक्तोत्पलं लोहितोत्पलं, कुमुदं श्वेतोत्पलं, सौगन्धिकं नीलोत्पलाकारवर्णमुत्पलं सुगन्धि च, कुवलयमीषन्नीलधवलं, पुण्डरीकं श्वेतपद्मं, मधुकं यष्टीमधुकम् ॥ ५२ ॥ ५३ ॥

**मुस्ताहरिद्रादारुहरिद्राहरीतक्यामलकबिभीतककुष्ठहैमवतीवचापाठाकटुरोहिणीशार्ङ्गेष्टातिविषाद्राविडीभल्लातकानि चित्रकश्चेति ॥ ५४ ॥**

**एष मुस्तादिको नाम्ना गणः श्लेष्मनिषूदनः ॥**
**योनिदोषहरः स्तन्यशोधनः पाचनस्तथा ॥ ५५ ॥**

मुस्तेत्यादि। हैमवती श्वेतवचा; वचा स्वनामख्याताऽरुणवर्णा; शार्ङ्ग(र्ङ्गे)ष्टा काकतिक्ता गौरवर्तुलावगुण्ठितफला 'चिरपोटिका' इति प्रसिद्धा, 'झझरुष' इति पूर्वदेशे, काकजङ्घामन्ये, काकमाचीत्यपरे; द्राविडी एला। स्तन्यशोधन इति स्त्रीक्षीरप्रसादनः। शेषं प्रसिद्धम् ॥ ५४ ॥ ५५ ॥

**हरीतक्यामलकबिभीतकानीति त्रिफला ॥ ५६ ॥**
**त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशनी ॥**
**चक्षुष्या दीपनी चैव विषमज्वरनाशनी ॥ ५७ ॥**

हरीतकीत्यादि। त्रिफला प्रसिद्धा। त्रिफलात्रिकटुकयोर्यथालाभपरिभाषा न व्याप्रियते, अत एवानयोर्ग्रन्थकारेण संज्ञा कृतेति ॥ ५६ ॥ ५७ ॥

**पिप्पलीमरिचशृङ्गवेराणीति त्रिकटुकम् ॥ ५८ ॥**
**त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान् ॥**
**निहन्याद्दीपनं गुल्मपीनसाग्न्यल्पतामपि ॥ ५९ ॥**

पिप्पलीत्यादि। त्वगामयान् कुष्ठादीन्। शेषं प्रसिद्धम् ॥ ५८ ॥ ५९ ॥

**आमलकीहरीतकीपिप्पल्यश्चित्रकश्चेति ॥ ६० ॥**
**आमलक्यादिरित्येष गणः सर्वज्वरापहः।**
**चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः ॥ ६१ ॥**

आमलकीत्यादि। मूले स्पष्ट एव ॥ ६० ॥ ६१ ॥

**त्रपुसीसताम्ररजतसुवर्णकृष्णलोहानि लोहमलश्चेति ॥ ६२ ॥**

**गणस्त्रप्वादिरित्येष गरक्रिमिहरः परः ॥**
**पिपासाविषहृद्रोगपाण्डुमेहहरस्तथा ॥ ६३ ॥**

त्रप्वित्यादि। त्रपु वङ्गं, सीसं नागं, ताम्रं प्रसिद्धं, रजतं रूप्यं, सुवर्णं प्रसिद्धं, कृष्णलोहं तीक्ष्णलोहं, लोहमलः प्रसिद्धः 'काट' इति लोके। गरः कृत्रिमं विषम् ॥ ६२ ॥ ६३ ॥

---

१ 'मलेन्द्रीचन्दनं' इति पा०। २ 'रोध्र इह स्वल्परोध्रः, तस्यैव ग्राहित्वात्' इति चक्रः।

१ 'मुस्तादिराख्यातः' इति पा०।

**लाक्षारेवतकुटजाश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति ॥ ६४ ॥**

**कषायतिक्तमधुरः कफपित्तार्तिनाशनः ॥**
**कुष्ठकिमिहरश्चैव दुष्टव्रणविशोधनः ॥ ६५ ॥**

लाक्षेत्यादि । आरेवतः किरमालकः; कुटज इन्द्रयवः; अश्वमारकः करवीरः; कट्फलः सोमवल्कलः 'कायफल' इति लोके; सप्तच्छदः सप्तपर्णः 'सातवन' इति लोके; मालती जाती; त्रायमाणा स्वनामप्रसिद्धा । केचिदत्र त्रिफलां पठन्ति । शेषं प्रसिद्धम् ॥ ६४ ॥ ६५ ॥

**पञ्च पंञ्चमूलान्यत ऊर्ध्वं वक्ष्यामः ।—**

**तत्र त्रिकण्टकबृहतीद्वयपृथक्पर्ण्यो विदारिगन्धा चेति कनीयः ॥ ६६ ॥**

**कषायतिक्तमधुरं कनीयः पञ्चमूलकम् ॥**
**वातघ्नं पित्तशमनं बृंहणं बलवर्धनम् ॥ ६७ ॥**

पञ्चेत्यादि । त्रिकण्टको गोक्षुरकः, विदारिगन्धा शालपर्णी । कनीयः लघुपञ्चमूलमित्यर्थः । केचिद्गोक्षुरकस्थान एरण्डं पठन्ति ॥ ६६ ॥ ६७ ॥

**बिल्वाग्निमन्थटिण्टुकपाटलाः काश्मरी चेति महत् ॥ ६८ ॥**

**सतिक्तं कफवातघ्नं पाके लघ्वग्निदीपनम् ॥**
**मधुरानुरसं चैव पञ्चमूलं महत् स्मृतम् ॥ ६९ ॥**

बिल्वेत्यादि । अग्निमन्थः 'अग्निवधू' इति लोके, टुण्टुकः स्योनाकः । महत् महत्पञ्चमूलमित्यर्थः ॥ ६८ ॥ ६९ ॥

**अनयोर्दशमूलमुच्यते ॥ ७० ॥**

**गणः श्वासहरो ह्येष कफपित्तानिलापहः ॥**
**आमस्य पाचनश्चैव सर्वज्वरविनाशनः ॥ ७१ ॥**

अनयोरित्यादि । तस्य गुणमाह—गण इत्यादि ॥ ७० ॥ ७१ ॥

**विदारीसारिवारजनीगुडूच्योऽजशृङ्गी चेति वल्लीसंज्ञः ॥ ७२ ॥**

**करमर्दीत्रिकण्टकसैरीयकशतावरीगृध्रनख्य इति कण्टकसंज्ञः ॥ ७३ ॥**

**रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ ॥**
**सर्वमेहहरौ चैव शुक्रदोषविनाशनौ ॥ ७४ ॥**

विदारी विदारीकन्दः; रजनी हरिद्रा, 'रञ्जनी' इत्यन्ये पठन्ति, रञ्जनी शिरहलकः; अजशृङ्गी मेढिका, कर्कटशृङ्गीत्यपरे । वल्लीसंज्ञः 'पञ्चमूलम्' इति शेषः । करमर्दी क्षीरफला 'करमदी' इति लोके; त्रिकण्टः गोक्षुरकः; सैरेयकः कण्टसेलियाकः; गृध्रनखी हिंस्रा । कण्टकसंज्ञः 'पञ्चमूलम्' इति शेषः । "वल्लीजं पञ्चमूलं तु प्रशस्तं कफनाशनम् । सृष्टमूत्रानिलहरं वृष्यमिन्द्रियबोधनम् ॥ कण्टकाख्यं पञ्चमूलं कफानिलहरं परम् । मधुरानुरसं चैव पक्वाशयविशोधनम्—" इत्यन्ये पठन्ति ॥ ७२—७४ ॥

**कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः ॥ ७५ ॥**
**मूत्रदोषविकारं च रक्तपित्तं तथैव च ॥**
**अन्त्यः प्रयुक्तः क्षीरेण शीघ्रमेव विनाशयेत् ॥ ७६ ॥**

कुशेत्यादि । कुशो ह्रस्वो मृदुः सूचीपत्र; काशश्चमरपत्रः; नलः स्वनाम्ना ख्यातः; दर्भः पृथुलः खरपत्रो दीर्घः; काण्डेक्षुका महती खगाली, अन्ये इक्षुमेवाहुः, अन्ये तु पठन्ति 'काण्डश्च' इति, तत्र काण्डः शरः । अन्त्यस्तृणपञ्चमूलमित्यर्थः ॥ ७५ ॥ ७६ ॥

**एषां वातहरावाद्यावन्त्यः पित्तविनाशनः ॥**
**पञ्चकौ श्लेष्मशमनावितरौ परिकीर्तितौ ॥ ७७ ॥**

ये प्रतिपञ्चकं गुणश्लोकं न पठन्ति तेषां मते पञ्चकानां गुणानेकेनैव श्लोकेन वक्तुमाह—एषामित्यादि । आद्याविति लघुपञ्चमूलमहापञ्चमूलौ, अन्त्यस्तृणपञ्चमूलमित्यर्थः, इतरौ मध्यौ वल्लीसंज्ञः कण्टकसंज्ञकश्चेत्यर्थः ॥ ७७ ॥

**त्रिवृतादिकमन्यत्रोपदेक्ष्यामः ॥ ७८ ॥**

केचिदत्र वृद्धाः पठन्ति–त्रिवृदादिकमित्यादि ॥ ७८ ॥

**समासेन गणा ह्येते प्रोक्तास्तेषां तु विस्तरम् ॥**
**चिकित्सितेषु वक्ष्यामि,**

अयमेषां संक्षेप इति दर्शयन्नाह—समासेनेत्यादि ।

**ज्ञात्वा दोषबलाबलम् ॥ ७९ ॥**
**एभिर्लेपान् कषायांश्च तैलं सर्पींषि पानकान् ॥**
**प्रविभज्य यथान्यायं कुर्वीत मतिमान् भिषक् ॥ ८० ॥**

किमेभिर्गणैः कर्तव्यमित्याह—ज्ञात्वेत्यादि । दोषबलाबलमिति दोषादिबलाबलमित्यर्थः, तेन सर्वेषामेव परीक्षाणामवरोधः कृतो भवति । कषायशब्देनात्र शृतशीतस्वरसफाण्टकल्कभेदाः पञ्चोच्यन्ते । पीयन्त इति पानका यूषमण्डादयः कथ्यन्ते, कषायांश्चेति चकारादनुक्ता गुडादिसंस्काराः समुच्चीयन्ते ॥ ७९ ॥ ८० ॥

**धूमवर्षानिलक्लेदैः सर्वर्तुष्वनभिद्रुते ॥**
**ग्राहयित्वा गृहे न्यस्येद्विधिनौषधसंग्रहम् ॥ ८१ ॥**

---

१ 'पञ्चसु पञ्चमूलेषु मूलानीति वचनान्मूलमेव परं ग्राह्यम् । इति चक्रः । 'पञ्च पञ्चकान् वक्ष्यामः' इति ताडपत्रपुस्तके पाठः । २ 'चरके गोक्षुरकं चैरण्डस्थाने पठ्यते न सुश्रुतप्रयोगेषु । परं पञ्चमूलीप्रयोगे एरण्डो ग्रहीतव्यः' इति चक्रः । ३ 'अजशृङ्गी 'छागलकर्णी' इति ख्याता छागसदृशगन्धा' इति चक्रः । ४ 'पञ्चमूलः' इति पा० ।

१ 'दोषभेदेन दोषाभिन्नो व्याधिरपि ग्राह्यः । भिन्नानिति भिन्नत्वेनोक्तान् । पृथगिति प्रत्येकम् । मिश्रानिति गणान्तरमिश्रान् । समस्तानिति द्विव्यादीन्; यदुक्तमन्यत्र 'वर्गमपि वर्गेण योजयेदेकेनानेकेन वा' इति । व्यस्तमिति त्रिचतुरादिरहितं, संहतमिति मिलितम् । अयं चार्थो मिश्रकोक्तोऽपि पुनः प्रकरणादभिधीयत इति न पौनरुक्त्यम्' इति चक्रः ।

अत्र केचिद्वृद्धाः पठन्ति—धूमेत्यादि । एतदुक्तं भवति—विधिनौषधसंग्रहं ग्राहयित्वा धूमादिभिरनुपद्रुते गृहे निक्षिपेदिति ॥ ८१ ॥

**समीक्ष्य दोषभेदांश्च भिन्नान् मिश्रान् प्रयोजयेत् ॥ पृथङ्मिश्रान् समस्तान्वा गणं वा व्यस्तसंहृतम् ८२**

**इति सुश्रुतसंहितायां सूत्रस्थाने द्रव्यसंग्रहणीयो नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥**

कथमेते द्रव्यगणा योज्या इत्याह—समीक्ष्येत्यादि । अयमर्थः—दोषभेदान् पृथक् कोऽर्थः ? भिन्नान् दृष्ट्वा, गणान् भिन्नान् अमिश्रान् प्रयोजयेत् । मिश्रान् वा कोऽर्थः ? द्वन्द्वान् दोषभेदान् वा समीक्ष्य मिश्रान् गणान् प्रयोजयेत् । समस्तान् वा दोषभेदान् समीक्ष्य संयुक्तांस्त्रीनेव प्रयोजयेदिति । गणेनापि गणस्य संयोगोऽभिप्रेतः । तदुक्तं,—"वर्गमपि वर्गेण सह योजयेत्" इति । अयं चार्थः प्रतिगणं चकारकरणाल्लभ्यते । एकस्यैव गणस्य यथाऽवचारणं करणीयं तथा निर्दिशन्नाह—गणं वेत्यादि । व्यस्तं द्वित्रिचतुरादिद्रव्ययोगः, संहृतं समस्तद्रव्ययोगः । इयं पुनः परिभाषा गणविषयैव ज्ञेया नान्ययोगेषु । केचित् पुनरिमां परिभाषां नाधीयत इति ॥ ८२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थानेऽष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशत्तमोऽध्यायः ।

**अथातः संशोधनसंशमनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

संशोधनं संशमनं चाधिकृत्य कृतोऽध्यायः संशोधनसंशमनीयः, तस्यारम्भमित्यर्थः ॥ १ ॥ २ ॥

**मदनकुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनसर्षपविडङ्गपिप्पलीकरञ्जप्रपुन्नाडकोविदारकर्बुदारारिष्टाश्वगन्धाविदुलबन्धुजीवकश्वेताशणपुष्पीबिम्बीवचामृगेर्वारवश्चित्रा चेत्यूर्ध्वभागहराणि । तत्र, कोविदारपूर्वाणां फलानि, कोविदारादीनां मूलानि ॥ ३ ॥**

प्राग्द्रव्यसंग्रहणीयाध्याये व्याधिप्रत्यनीका द्रव्यगणा उक्ताः; संशोधनसंशमनीये तु दोषप्रत्यनीकप्रायाः पञ्चकर्मोपयोगिनः शोधनद्रव्यसंग्रहगणा वातादिशमनद्रव्यगणाश्च कथयितव्या इति; तत्र द्विविधं संशोधनं—वमनं विरेचनं च; तत्र वमनपूर्वकत्वाद्विरेचनस्य प्रथमं वमनद्रव्यगणमभिधातुमाह—मदनेत्यादि । जीमूतको देवदाली, इक्ष्वाकुः कटुकालाबूः, धामार्गवः पीतपुष्पा कोषातकी, कृतवेधनः कोषातकीभेदः, सर्षपाः श्वेतसर्षपा विशेषेण वमनार्हाः, कोविदारः काञ्चनारः, कर्बुदारः श्लेष्मान्तकः 'बवहार' इति 'लिहूसाडक' इति च देशभाषया प्रसिद्धः, अरिष्टो निम्बः, विदुलो वेतसः, बन्धुजीवो मध्याह्नपुष्पकः 'मरुनीया' इति लोके, श्वेता श्वेतवचा, शणपुष्पी शणसदृशविटपः 'सणहुली' इति लोके, बिम्बी किन्दुरिका, वचा द्वितीयाऽरुणा, मृगेर्वारुरिन्द्रवारुणी, चित्रा[1] चित्राण्डिका पटोलफलाकारफला आरण्यकचण्डकेत्यर्थः, अन्ये द्रवन्तीमाहुः । शेषं प्रसिद्धम् । ऊर्ध्वभागहराणि वमनकराणीत्यर्थः । ऐषां मध्ये कानिचिद्द्रव्याणि साक्षाद्वामयन्ति कानिचिद्वमनद्रव्यमिलितानि । केचिदाचार्या 'द्वाविंशतिद्रव्याणि' इत्यत्र गणे नियममाहुः । एषामवयवविभागमाह—तत्रेत्यादि ॥ ३ ॥

**त्रिवृताश्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवाक्षीच्छगलान्त्रीस्नुक्सुवर्णक्षीरीचित्रककिणिहीकुशकाशतिल्वककम्पिल्लकरम्यकपाटलापूगहरीतक्यामलकबिभीतकनीलिनीचतुरङ्गुलैरण्डपूतीकमहावृक्षसप्तच्छदार्का ज्योतिष्मती चेत्यधोभागहराणि । तत्र तिल्वकपूर्वाणां मूलानि, तिल्वकादीनां पाटलान्तानां त्वचः, कम्पिल्लकफलरजः, पूगादीनामेरण्डान्तानां फलानि, पूतीकारग्वधयोः पत्राणि, शेषाणां क्षीराणीति ॥ ४ ॥**

विरेचनद्रव्याणि निर्दिशन्नाह—त्रिवृदित्यादि । त्रिवृत् रक्तमूला 'निसोतृ' इति लोके; श्यामा कृष्णमूला त्रिवृत्; दन्ती दन्तिनी; द्रवन्ती दन्तीभेदः 'संवरी' इति लोके; सप्तला सातला सेहुण्डभेदः, अपरे बुभ्रामाहुः; शङ्खिनी यवतिक्ताभेदः, श्वेतबुभ्रेत्यपरे; विषाणिका मेषशृङ्गी; गवाक्षी श्वेतपुष्पेन्द्रवारुणी; छगलान्त्री वृद्धदार(रु)कः; स्नुक् सेहुण्डः; सुवर्णक्षीर्यनन्तासदृशपत्रा 'हियावेलि'[4] इति लोके, 'कङ्कुष्ठ' इत्यपरे; किणिही कटभी; तिल्वकः स्थूलपरोध्रः; कम्पिल्लको रोचनिकः स्वनामख्यातः; रम्यको द्रेका 'बकाइणि' इति लोके, पटोलमूलमित्यपरे; नीलिनी नीलबुभ्रा(ह्ना), 'श्रीफलिका' इति लोके; चतुरङ्गुलः किरमालकः, अत्रैके चतुरङ्गुलस्थाने 'पञ्चाङ्गुल' इति पठन्ति, तेषां मते पञ्चाङ्गुल एरण्डः, अन्ये तु पञ्चाङ्गुलशब्देन पटोलफलसदृशफलां लतां स्निग्धपत्रां शारदफलामाहुः; पूतीकश्चिरबिल्वः; महावृक्षः सेहुण्डभेदः, तस्य क्षीरम्, एतेन न पुनरुक्तदोषः;

---

१ 'चित्रा चित्रफला गोडुम्बा' इति चक्रः । २ 'कृतवेधनान्तानां वमनाध्याये प्राधान्येन प्रयोगाभिधानात् प्राधान्यं, सर्षपादीनां तु वमनद्रव्योपसर्जनत्वम्' इति चक्रः । ३ 'मूलवर्गे स्नुहीपाठान्मूलमपि स्नुह्या गृह्यते, क्षीरवर्गे पाठाच्च क्षीरमपि । कम्पिल्लकस्तु त्वग्वर्गे पाठात्त्वचा ग्राह्य एव, परं वैद्यव्यवहाराच्चरकवचनाच्च तस्य फलरजो गृह्यते । उक्तं हि चरके 'कम्पिल्लकारग्वधयोः फलं यत् कुटजस्य च' ( च. सू. अ. १ ) इति । आरग्वधस्य पत्रं विरेचनं, चरकवचनात् फलं च । पूतिकस्य तु पत्रं विरेचनमुक्तं, चरके तु 'पूतिकः कृष्णगन्धा च' इत्यादिना त्वक् प्रधानमुक्ता, तेनेह प्रयोगेषु ग्रहीतव्या । कोशातक्यादीनां स्वरसा उभयभागहराः । फलं तु कोशातकीदेवदाल्योर्वामनमुक्तम्' इति चक्रः । ४ हियावलिः 'हिरवी' ( Euphorbiea Thompsoniana ) इति काश्मीरे प्रसिद्धा ।

सप्तच्छदः सप्तपर्णः; ज्योतिष्मती काकमर्दनिका । अधोभागहराणीति विरेचनानीत्यर्थः । शेषं सुगमम् । एषामवयवविभागमाह—तत्रेत्यादि ॥ ४ ॥

**कोशातकी सप्तला शङ्खिनी देवदाली कारवेल्लिका चेत्युभयतोभागहराणि । एषां स्वरसा इति ॥ ५ ॥**

उभयभागहराणि निर्दिशन्नाह—कोशातकीत्यादि । कोशातकी घोषकः; सप्तला स्नुहीभेदः, अपरे श्रीफलिकामाहुः; देवदाली स्वनामख्याता, 'देवली' इति लोके । उभयतोभागहराणीति वमनानि विरेचनानि चेत्यर्थः । एतानि कोशातकीप्रभृतीनि नियमेनोभयतोभागहराणि, गवाक्षीप्रभृतीनां पूर्वोक्तानां तु पत्रादिविशेषेण कदाचिद्वामकत्वं कदाचिद्विरेचकत्वमिति न तेषामुभयतोभागहरत्वम् । एषां कोशातक्यादीनां किं गृह्यत इत्याह—एषामित्यादि । तत्र स्वरसग्रहणं कषायादिनिवारणार्थम् ॥ ५ ॥

**पिप्पलीविडङ्गापामार्गशिग्रुसिद्धार्थकशिरीषमरिचकरवीरबिम्बीगिरिकर्णिकाकिणिहीवचाज्योतिष्मतीकरञ्जार्कालर्कलशुनातिविषाशृङ्गवेरतालीशतमालसुरसार्जकेङ्गुदीमेषशृङ्गीमातुलुङ्गीमुरङ्गीपीलुजातीशालतालमधूकलाक्षाहिङ्गुलवणमद्यगोशकृद्रसमूत्राणीति शिरोविरेचनानि । तत्र करवीरपूर्वाणां फलानि, करवीरादीनामर्कान्तानां मूलानि, तालीशपूर्वाणां कन्दाः, तालीशादीनामर्जकान्तानां पत्राणि, इङ्गुदीमेषशृङ्ग्योस्त्वचः, मातुलुङ्गीमुरङ्गीपीलुजातीनां पुष्पाणि, शालतालमधूकानां साराः, हिङ्गुलाक्षे निर्यासौ, लवणानि पार्थिवविशेषाः; मद्यान्यासुतसंयोगाः, शकृद्रसमूत्रे मलाविति ॥ ६ ॥**

शिरोविरेचनद्रव्याणि निर्देष्टुमाह—पिप्पलीत्यादि । अपामार्गः शिखरी 'अन्धडक' इति लोके; शिग्रुः शोभाञ्जनकः; सिद्धार्थः सर्षपः; शिरीषो विषघाती स्वनामख्यातः; करवीरः 'कणवीर' इति लोके; बिम्बी कुन्दुरुका; गिरिकर्णिका सेफन्दः; किणिही कटभी; ज्योतिष्मती ककुन्दनी; अर्कालर्कौ अर्कद्वयं; शृङ्गवेरं शुण्ठी; तालीशं तालीशपत्रं; तमालं तमालपत्रं, पत्रकमिति लोके; सुरसा 'तुलसी' इति लोके; अर्जकः कुठेरकः; इङ्गुदी इङ्गुकः; मेषशृङ्गी मेढश्शृङ्गः पुत्रजीवकसदृशपत्रो वृक्षः, अन्ये कर्कटश्शृङ्गमाहुः; मातुलुङ्गी सुरभिफला वनजाऽरण्यबीजपूरकः; मुरङ्गी रक्तकुसुमः शोभाञ्जनकः; पीलुर्मधुरफलः 'पीलु' इति लोके; जाती मालती; शकृद्रसो गोमयरसः; मूत्रं गोमूत्रम् । शिरोविरेचनानीति नस्यप्रयोगेण शिरस्थं श्लेष्माणं विरेचयन्ति स्रावयन्तीत्यर्थः । शेषं प्रसिद्धम् । एषामवयवविभागमाह—तत्रेत्यादि । निर्यासौ स्वरसावित्यर्थः । लवणानि पार्थिवविशेषा इति पृथिव्या अवयवविशेषाः, एतेन स्वरूपेणैव लवणानि ग्राह्याणीत्युक्तम् । मद्यान्यासुतसंयोगा इति सन्धानकसंयोगो मद्यम्, अत एव तदपि स्वरूपेणैव ग्राह्यम् । शकृद्रसमूत्रे मलाविति एते मलौ, तस्मादेते अपि स्वरूपेण ग्राह्ये ॥ ६ ॥

**संशमनान्यत ऊर्ध्वं वक्ष्यामः—तत्र भद्रदारुकुष्ठहरिद्रावरुणमेषशृङ्गीबलातिबलार्तगलकच्छुराशल्लकीकुबेराक्षीवीरतरुसहचराग्निमन्थवत्सादन्येरण्डाश्मभेदकालर्कार्कशतावरीपुनर्नवावसुकवशिरकाञ्चनकभार्गीकार्पासीवृश्चिकालीपत्तूरबदरयवकोलकुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः ॥ ७ ॥**

संशोधनमभिधाय संशमनं निर्दिशन्नाह—भद्रदार्वित्यादि । संशमनानीति सम्यक् शमयतीति संशमनं, सम्यक्त्वं च दुष्टदोषस्यानिर्हरणपूर्वकं शमनम्, अदुष्टस्यानुदीरणं च; व्याधिसंशमनं तु प्रस्तुतव्याधेः संशमनमप्रस्तुतव्याधेरनुदीरणम् । तदुक्तं—"न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति च क्रुद्धान् तत् संशमनमुच्यते" इति । दोषशब्दोऽत्र दोषेषु दोषकार्येषु व्याधिष्वपि च वर्तते, कार्ये कारणोपचारात् । मेषशृङ्गी मेढश्शृङ्गः पुत्रजीवकतरुसदृशपत्रो वृक्षः, अन्ये कर्कटश्शृङ्गमाहुः; बलातिबले शुक्लपीतपुष्पं बलाद्वयं; आर्तगलः ककुभः, केचिदार्तगलं कण्टकीवृक्षमाचक्षते; कच्छुरा कुक्कुमर्दनिका, 'कच्छुरा शूकशिम्बिः' इत्यन्ये; कुबेराक्षी काष्ठपाटला, पो(पे)टिकेत्यन्ये; वीरतरुर्बिल्वनासिका, शर इत्यन्ये; सहचरः कण्टशेलियाकः; अग्निमन्थः 'अग्निवधूः' इति पूर्वदेशे प्रसिद्धः; वत्सादनी गुडूची, वीर्येण गुडूची वातं हन्ति, रसेन कफपित्ते; अश्मभेदकः पाषाणभेदकः; वसुकः शिवमल्लिका, बकपुष्पमिति लोके; वशिरः सूर्यावर्तः, अपमार्ग इत्यपरे; काञ्चनको धत्तूरकः, 'कर्चूर' इत्यन्ये पठन्ति, कर्चूरः शटी; कार्पासी वनकार्पासिका, कार्पासविटपसदृशी; वृश्चिकाली वृश्चियाकः; पत्तूरः कुचन्दनम् । शेषं प्रसिद्धं, पूर्वं व्याख्यातं च । प्रभृतिग्रहणान्माषतिलातसीप्रभृतीनां ग्रहणम् । समासेन संक्षेपेण, विस्तरेण त्वन्नपानाद्यनिलहरग्रहणश्रुतिप्रतिपादितं यावद्भूजलानलगुणबहुलं द्रव्यं वातसंशमनमिति ॥ ७ ॥

**चन्दनकुचन्दनह्रीबेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीगुन्द्राशैवलकह्लारकुमुदोत्पलकन्द(द)लीदूर्वामूर्वाप्रभृतीनि काकोल्यादिः सारिवादिरञ्जनादिरुत्पलादिर्न्यग्रोधादिस्तृणपञ्चमूलमिति समासेन पित्तसंशमनो वर्गः ॥ ८ ॥**

पित्तसंशमनं निर्दिशन्नाह—चन्दनेत्यादि । चन्दनं श्रीखण्डं; कुचन्दनं रक्तचन्दनं; ह्रीबेरं बालकं; पयस्या क्षीरकाकोली;

---

१ 'हिङ्ग्वादीनां मूलान्तानां स्वरूपकथनेन सर्वाङ्गप्रयोगं दर्शयति' इति चक्रः । २ 'गोमूत्रशकृद्रसौ' इति पा० ।

१ 'संशमनं नाम यद्दोषं दोषग्रहणगृहीतं च व्याधिं संशोधनं विना क्षपयति, समं च नोदीरयति' इति चक्रः ।

विदारी विदारीकन्दः; शैवलं शैवालं; कह्लारं रक्तोत्पलं 'वृहत्पत्रिका' इति लोके, अन्ये सौगन्धिकोत्पलं; कुमुदोत्पलं श्वेतोत्पलं; कन्दली श्वेतश्लक्ष्णबहुपुटकन्दविशेषः 'सर्पच्छत्रकम्' इति लोके; मूर्वा कन्दलीसदृशस्वल्पविटपः 'हथोड' इति लोके। प्रभृतिग्रहणादनुक्तमपि मधुरतिक्तकषायं द्रव्यं ग्राह्यम्। समासग्रहणेन त्वन्नपानादौ पित्तहरत्वेन यदन्यदप्युदितं स्वभूमिजलानिलभूयिष्ठं तदपि पित्तशमनं ग्राह्यम्। ननु, चन्दनकुचन्दने सारिवादौ, पयस्या काकोल्यादौ, उत्पलादीन्युत्पलादिगणे पठितान्येव, तत्कथं पृथङ्निर्देश इति? ब्रूमः, समस्तव्यस्तानां त्रिचतुराणां गुणविशेषज्ञापनाय पृथक् पाठः। यष्टीमधुकं तु शीतकषायादिकल्पनया पित्तं शमयति वामनीयद्रव्यसंयुतं तु वामनीयमिति न दोषः ॥ ८ ॥

**कालेयकागुरुतिलपर्णीकुष्ठहरिद्राशीतशिवशतपुष्पासरलारास्नाप्रकीर्योदकीर्येङ्गुदीसुमनाकाकादनीलाङ्गलकीहस्तिकर्णमुञ्जातकलामज्जकप्रभृतीनि वल्लीकण्टकपञ्चमूल्यौ पिप्पल्यादिर्बृहत्यादिर्मुष्ककादिर्वचादिः सुरसादिरारग्वधादिरिति समासेन श्लेष्मसंशमनो वर्गः ॥ ९ ॥**

कफसंशमनं निर्दिशन्नाह—कालेयकेत्यादि। कालेयकः कृष्णवर्णचन्दनविशेषो 'मलयाद्रिचन्दनम्' इति लोके; तिलपर्णी हुलहुलः; शीतशिवं कर्पूरं, शतपुष्पाभेदमेके, गवेधुकेत्यपरे; सरला त्रिवृत्; प्रकीर्या कण्टकी विटपकरञ्जः; उदकीर्या चिरबिल्वः; इङ्गुदी इङ्गुकः, 'पुत्रजीवक' इत्यन्ये; सुमना जाती; काकादनी हिंस्रा; लाङ्गलकी कलिकारिका; हस्तिकर्णो गजकर्णाकारैकपत्रः, 'भूपलाश' इति लोके, रक्तैरण्ड इत्यन्ये; मुञ्जातकः[1] स्वनामख्यातः स्वल्पकन्द उत्तरापथे; लामज्जकमुशीरभेदः। केषांचिदत्र पिप्पल्यादिवचादिपठितानां पुनर्वचनं विशेषेण कफसंशमनत्वदर्शनार्थं; मुञ्जातकस्य वातपित्तहरत्वेऽपि श्लेष्महरत्वेन प्रायस्त्रिदोषहरत्वं दर्शयन्ति। प्रभृतिग्रहणादनुक्तकटुतिक्तकषायाणामुपसंहारः। समासेनेति विस्तरेण त्वन्नपानादौ तथा तेजोऽनिलाकाशगुणभूयिष्ठमनुक्तमपि द्रव्यं कफसंशमनमिति ॥ ९ ॥

**तत्र सर्वाण्येवौषधानि[2] व्याध्यग्निपुरुषबलान्यभिसमीक्ष्य विदध्यात्[1]। तत्र, व्याधिबलादधिकमौषधमुपयुक्तं तमुपशम्य व्याधिं व्याधिमन्यमावहति; अग्निबलादधिकमजीर्णं विष्टभ्य वा पच्यते; पुरुषबलादधिकं ग्लानिमूर्च्छामदानावहति संशमनम्; एवं संशोधनमतिपातयति। हीनमेभ्यो दत्तमकिंचित्करं भवति। तस्मात् सममेव विदध्यात् ॥ १० ॥**

अतःपरं संशोधनसंशमनद्रव्यमात्रां नियमयन्नाह—तत्रेत्यादि। सर्वाणीति संशोधनानि संशमनानि चेत्यर्थः। व्याध्यग्निपुरुषाणां च बलं शक्तिमभिसमीक्ष्य न्यूनाधिकभावेन, विदध्यात् कुर्यात्। व्याधिशब्देन दोषा रोगाश्च। तेषां व्याध्यादीनां बलादिकमनपेक्ष्य भेषजप्रयोगे क्रियमाणे व्याध्यादिबलादधिके दोषं निर्दिशन्नाह—तत्रेत्यादि। विष्टभ्य वा पच्यत इति चिरकालं स्थिरीभूय शूलादिकं कृत्वेत्यर्थः। ग्लानिः शरीरशैथिल्यं, मूर्च्छा चेतनाच्युतिः, मदो मद्यमत्तस्येव; आवहति करोति। शमनमिति संशमनौषधमित्यर्थः। संशोधनदोषमाह—एवं संशोधनमिति।—एवमेतद्दोषं संशोधनमपि करोतीत्यर्थः। अतिपातयति अतिपातनमप्यधिकं करोत्यातुरबलस्येत्यर्थः। व्याधिबलन्यूनाया औषधमात्राया दाने दोषमाह—हीनेत्यादि। अकिंचित्करं न किंचित् करोति अनर्थकमित्यर्थः; अन्येऽकिंचित्करमल्पार्थकरमित्याहुः; नञ् ईषदर्थे। सिद्धिहेतुमुपाधिं दर्शयन्नाह—तस्मादित्यादि। सममेव रोगादिसमबलमित्यर्थः ॥ १० ॥

भवन्ति चात्र—

**रोगे शोधनसाध्ये तु यो भवेद्दोषदुर्बलः ॥**
**तस्मै देयाद्भिषक् प्राज्ञो दोषप्रच्यावनं मृदु ॥ ११ ॥**

दुर्बलस्य बलवच्छोधनं न कर्तव्यमित्याह—रोग इत्यादि। यो भवेद्दोषदुर्बलः यः पुरुषो दोषैर्दुर्बलो न तूपवासादिभिः; यस्माद्दोषदुर्बले दोषहरणादेव बलं भवति, उपवासादिकृशे त्वपहृतेऽपि दोषे बलं न भवति। दोषप्रच्यावनं विरेचनम्। मृद्विति मृदुवीर्यं चतुरङ्गुलविरेकादि ॥ ११ ॥

---

१ 'मुञ्जातकः उत्तरापथे प्रसिद्धः। अयं तन्त्रान्तरे वातपित्तहरः प्रसिद्धः, तेन नात्र पठनीयः' इति चक्रः। २ 'सर्वाणीति संशोधनानि संशमनानि च। व्याधिशब्देनात्र दोषस्यापि ग्रहणाद्दोषबलमप्यवेक्ष्यम्। तत्र व्याधेर्दोषस्य बलत्वं हेतुबाहुल्याल्लिङ्गबाहुल्याच्च, दुर्बलत्वं तद्विपर्ययात्। अग्नेर्बलत्वं गुरुवृष्यादिजरणशक्त्या, उचिताहारपाकाशक्त्या दुर्बलत्वम्। देहबलं च व्यायामेन, विपर्ययेण दौर्बल्यम्। उपचयापचयाभ्यां च देहबलं ज्ञेयम्। पुरुषग्रहणेन मनसो बलाबले अपि ग्राह्ये। अन्यव्याधिमिति अतियोगजन्यव्याधिं दोषं वा। मदाः शरीरमनोबलभ्रंशकृता ज्ञेयाः। अतिपातयतीति अतिदोषपातनं करोति। संशमनापेक्षया संशोधनमतियुक्तमतिव्यापत्तिकरं भवत्येव। व्याध्यपेक्षया हि प्राधान्येन भेषजमात्रा; सा तु सम्यक्पाकार्थमग्निबलं पुरुषबलं चापेक्षते। ननु, उक्तदोषप्रमाणानुरूपो हि भेषजप्रमाणविकल्पो बलप्रमाणापेक्षो भवति, ततश्च हीनमेभ्यो दत्तमिति बहुवचनमनुपपन्नम्? नैवं, बहुवचनं तावद्बलवति व्याधौ तथा बलवतोर्व्याधिपुरुषबलयोस्तथा बलवत्सु व्याधिपुरुषाग्निषु, इत्यादिविकल्पबहुत्वादप्युपपन्नं; किंतु व्याधिबलमात्रसमं भेषजं बलवत्यग्नौ पुरुषे वा अल्पमात्रतया उपयुक्तं सत् तयोर्बलेनाभिभूयाल्पशक्तिकं क्रियते, तेन व्याधिमपि न तथा शमयति, तेन हीनमेभ्य इति बहुवचनमुपपन्नम्' इति चक्रः।

१ चक्रस्तु 'तं समीक्ष्य भिषग्दद्यात्' इति पठति व्याख्यानयति च–'समीक्ष्येति सम्यग्बलं निरूप्य' इति।

**चले दोषे मृदौ कोष्ठे नेक्षेतात्र बलं नृणाम् ॥**
**अव्याधिदुर्बलस्यापि शोधनं हि तदा भवेत् ॥१२॥**
**स्वयं प्रवृत्तदोषस्य मृदुकोष्ठस्य शोधनम् ॥**
**भवेदल्पबलस्यापि प्रयुक्तं व्याधिनाशनम् ॥१३॥**

अवस्थाविशेषेणाव्याधिदुर्बलेऽपि शोधनं दर्शयन्नाह—चल इत्यादि । चले इति स्वस्थानाच्चलित इत्यर्थः । अत्रेति चले दोषे । मृदौ कोष्ठ इत्यस्यामवस्थायामित्यर्थः । अव्याधिदुर्बलस्यापि उपवासादिदुर्बलस्यापि, हि यस्मादर्थे, तदा भवेत् 'हितम्' इत्यध्याहारः । 'अव्याधिदुर्बलस्यापि' इत्यत्र केचित् 'अव्यापदुर्बलस्यापि' इति पठन्ति । अव्यापच्छोधनं हितं तदा भवतीत्यर्थः; अव्यापच्छोधनं तदुच्यते शूलादीनि यन्न करोति । अत्रान्तरे केचित् पठन्ति—स्वयमित्यादि । न चायं सर्वनिबन्धेषु दृश्यत इति ॥ १२ ॥ १३ ॥

**व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यते ॥**
**बिडालपदकं चूर्णं देयः कल्कोऽक्षसंमितः ॥१४॥**

**इति सुश्रुतसंहितायां सूत्रस्थाने संशोधनसंशमनीयो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥**

व्याध्यग्निपुरुषेषु मध्यमबलेषु कियन्मात्रमौषधं दद्यादित्याह—व्याध्यादिष्वित्यादि । मध्येषु मध्यमबलेषु । क्वाथस्याञ्जलिरिष्यत इति क्वाथग्रहणाच्छृतशीतफाण्टानां, न तु स्वरसक्षीरयोः, ते हि गुरुत्वादल्पप्रमाणे प्रयोक्तव्ये । अञ्जलिश्चत्वारि पलानि । बिडालपदकं कर्षं इत्यर्थः । अक्षसंमित इति कर्षप्रमाण इत्यर्थः, कल्को द्रवपिष्टः । एतेन व्याध्यादिषु हीनबलेष्वञ्जल्यादयोऽप्यपकर्षणीयाः, तेषामेवाधिके बले तूत्कर्षणीया इति । अनुवासनास्थापनशिरोविरेचनादीनामन्यत्र मात्रोद्देशः कार्य इति ॥ १४ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने एकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशत्तमोऽध्यायः ।

**अथातो द्रव्यरसगुणवीर्यविपाकविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । द्रव्यादीनां विज्ञानं विशिष्टज्ञानं तदधिकृत्य कृतोऽध्याय इत्यर्थः । द्रव्यमौषधमुच्यते, रसो मधुरादिकः, गुणाः शीतोष्णस्निग्धरूक्षमन्दतीक्ष्णगुरुलघुपिच्छिलविशदश्लक्ष्णपरुषकठिनमृदुद्रवसान्द्रस्थिरसरस्थूलसूक्ष्मा विंशतिः, वीर्यं चाष्टविधं, तद्यथा—शीतोष्णस्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णानि, विंशतिगुणानां मध्ये एतेषामष्टानां गुणानां वीर्यमिति संज्ञा । ननु, गुणाद्वीर्याणां को भेदः? उच्यते,—य एव गुणा आमलक्यां त एव हरीतक्याम्, अस्ति च वीर्ये विशेषः; तथाहि—उष्णवीर्या हरीतकी, शीतवीर्यमामलकमिति; एतेनैतदुक्तं भवति—द्रव्यरसगुणविपाकैर्यत् कर्म कर्तुं न शक्यते तत् कर्म कुर्वन् प्रभावो वीर्यमुच्यते, तथाहि–"वीर्यं शक्तिरुत्पत्तिविशेषः सामर्थ्यं प्रभाव इत्यनर्थान्तरम्" । यद्द्रव्यं परिणामकाले स्वाभाविकं रसं परित्यज्य रसान्तरं भजते तत्र 'विपाक' इति संज्ञा ॥ १ ॥ २ ॥

**केचिदाचार्या[1] ब्रुवते—द्रव्यं प्रधानं, कस्मात्? व्यवस्थितत्वात्, इह खलु द्रव्यं व्यवस्थितं न रसादयः, यथा[2]—आमे फले ये रसादयस्ते पक्के न सन्ति; नित्यत्वाच्च, नित्यं हि द्रव्यमनित्या गुणाः, यथा कल्कादिप्रविभागः, स एव संपन्नरसगन्धो व्यापन्न[3]रसगन्धो वा भवति; स्वजात्यवस्थानाच्च, यथा**

---

१ 'द्रव्यादीनां प्रत्येकं प्राधान्यमेकीयमतेन दर्शयितुं द्रव्यस्य प्राधान्ये प्रथमं सहेतुकमेकीयमतमाह—केचिदित्यादि । एतच्चैकीयमतोपदर्शनं सम्यग्द्रव्यादिस्वभावज्ञानार्थम्, अभिनिविष्टो हि वादी स्वपक्षसाधनार्थं स्वरूपं प्राधान्यस्यापकं दर्शयति, तेन चान्ते वक्ष्यमाणाचार्यसिद्धान्तसहितेन सम्यगर्थप्रतीतिर्भवति । व्यवस्थितत्वादिति अवस्थाभेदेन रसादिभेदेऽपि द्रव्यस्य व्यवस्थितत्वात्; यथा—आम्रफलं प्रथमं कषायाम्लं, मध्येऽम्लं, ततो मधुरम्, एवं रसान्यथात्वेऽपि द्रव्यमात्ररूपतया व्यवस्थितत्वम् । नित्यत्वाच्चेति नित्यत्वं रसादिनाशेऽप्यवस्थितत्वमिह ज्ञेयं, व्यवस्थितत्वं तु रसान्यथात्वे तद्रूपतया व्यवस्थितत्वमिति भेदः । कालादीत्यत्रादिशब्देन जलवातादयो गृह्यन्ते । स्वजात्यवस्थानादिति परिणामेऽपि द्रव्यं स्वजातावतिष्ठते न जात्यन्तरं भवति, पार्थिवं तु पार्थिवमेव यदाप्यं तदाप्यमेवेत्यादिस्वजात्यपरित्यागः; रसस्तु क्षीरमधुरत्वं परित्यज्याम्लतां यातीत्यनुसरणीयं, जातिश्चेह पार्थिवत्वादिरूपा व्यवस्थिताऽभिप्रेता, तेन क्षीरस्य दधित्वं गुडस्य शर्करात्वमित्यादिजातिभेदो नोद्भवनीयः । पञ्चेन्द्रियग्रहणादित्यत्र पञ्चभिरिन्द्रियैर्द्रव्यं गृह्यते इति चक्षुषा स्पर्शनेन तावद्द्रव्यग्रहणमविवादसिद्धमेव; घ्राणरसनाश्रोत्राणामपि सुरभि चन्दनं, मधुरः कोषकारः, तथा सुस्वरा वीणेत्यादि सामानाधिकरण्यज्ञानेन द्रव्यग्रहणं प्रति स्फुटतरव्यापाराद् द्रव्यग्राहकत्वं ज्ञेयम् । आश्रयत्वाच्चेति रसादीनां द्रव्यमाश्रयः, तेनाश्रिता रसादयः परतन्त्रत्वादप्रधानाः, आश्रयस्तु प्रधानमित्यर्थः । कस्माद्रसादीनामेकदेशेन व्याधयो न साध्यन्त इत्याह—निरवयवत्वादिति । क्रियावद्गुणवत् समवायिकारणं द्रव्यमिति क्रिया कर्म, गुणा रसादयः, समवायिकारणं स्वसमवेतकार्यजनकम्; एते क्रियादयो रसादौ व्यावृत्ता इतीहोक्ताः । सर्वद्रव्यव्यापकविजातीयव्यावृत्तं तु लक्षणमिह—क्रियागुणवत्त्वमेव । एतदेव हि क्रियागुणयोर्धर्मं द्रव्यं व्याप्य क्रिया द्रव्ये विद्यते, गुणाः समवयन्तीति । विद्यते इति सत्तामात्रं व्याप्तिः, समवयन्तीति व्याप्य द्रव्यमवतिष्ठन्ते, नहि निर्गुणं द्रव्यं किञ्चिदस्तीति' इति चक्रः । २ 'तथाहि' इति पा० । ३ 'व्यापन्नरसगन्ध' इति पाठो हस्तलिखितपुस्तके नोपलभ्यते, डल्हणेनापि न व्याख्यातः । 'यथा–कालादिप्रविभागात्तदेव संपन्नरसगन्धं व्यापन्नरसगन्धं वा भवति' इति चक्रसंमतः पाठः ।

**हि पार्थिवं द्रव्यमन्यभावं न गच्छत्येवं शेषाणि; पञ्चेन्द्रियग्रहणाच्च, पञ्चभिरिन्द्रियैर्गृह्यते द्रव्यं न रसादयः; आश्रयत्वाच्च, द्रव्यमाश्रिता रसादयः; आरम्भसामर्थ्याच्च, द्रव्याश्रित आरम्भः, यथा—'विदारिगन्धादिमाहृत्य संक्षुद्य विपचेत्' इत्येवमादिषु न रसादिष्वारम्भः; शास्त्रप्रामाण्याच्च, शास्त्रे हि द्रव्यं प्रधानमुपदेशे योगानां, यथा—'मातुलुङ्गाग्निमन्थौ च' इत्यादौ न रसादय उपदिश्यन्ते; क्रमापेक्षितत्वाच्च रसादीनां, रसादयो हि द्रव्यक्रममपेक्षन्ते, यथा—तरुणे तरुणाः संपूर्णे संपूर्णा इति; एकदेशसाध्यत्वाच्च, द्रव्याणामेकदेशेनापि व्याधयः साध्यन्ते, यथा—महावृक्षक्षीरेणेति; तस्माद्द्रव्यं प्रधानं, न रसादयः, कस्मात्? निरवयवत्वात्। द्रव्यलक्षणं तु 'क्रियागुणवत् समवायिकारणम्' इति ॥ ३ ॥**

तत्र प्रत्येकं द्रव्यादिप्राधान्यमेकीयमतेन प्रतिपादयिष्यन् द्रव्यप्राधान्यं प्रथमं सकारणं प्रतिपादयन्नाह—केचिदित्यादि । व्यवस्थितत्वादिति द्रव्यं हि व्यवतिष्ठते न रसादयः, यथा—आम्रफलमेकमेव प्रथमं कषायाम्लं पश्चादम्लं ततो मधुरमपि भवति, न तु तदेवाम्रफलमाम्रातकं कोशाम्रं वा भवति । द्रव्यप्राधान्ये द्वितीयं हेतुमाह—नित्यत्वादित्यादि ।-नित्यत्वात् कियत्कालावस्थितत्वादित्यर्थः । अनित्या गुणा इति विनाशिन इत्यर्थः । कल्केत्यादि आदिग्रहणात् स्वरसश्रृतशीतफाण्टानामपि ग्रहणम् । स एव कल्कादिप्रविभाग एव । संपन्नरसगन्धो वा भवतीति संयुक्तरसः संयुक्तगन्धो वा भवतीत्यर्थः । एतेनैतदुक्तं भवति,—कल्काद्यवस्थास्वपि द्रव्यं तदेव नान्यतरद्द्रव्यं, रसगन्धौ त्वन्यौ संयुक्तौ भवत इति गुणादनित्यात् द्रव्यं नित्यम् । अन्ये कल्कादिस्थाने 'कालादिप्रविभागात्' इति पठन्ति । तेषां मते आदिग्रहणाज्जलवातदेशसोमसूर्या गृह्यन्ते । तद्यथा—'ता एवौषधयो ग्रीष्मे निःसारा रूक्षा' ( सू. अ. ६ ) इत्यादि । द्रव्यप्राधान्ये तृतीयं हेतुं दर्शयन्नाह—स्वजात्यवस्थानाच्चेति ।-स्वस्यां पार्थिवादिजाताववस्थितत्वादित्यर्थः । अन्यभावं न गच्छति आप्यादिजातिं न गच्छति । चतुर्थं कारणं दर्शयन्नाह–पञ्चेत्यादि । पञ्चभिरिन्द्रियैर्द्रव्यं गृह्यते, द्रव्ये गृहीते तदाश्रया गुणा गृहीता भवन्ति; गुणाश्च शब्दस्पर्शरूपरसगन्धाः । द्रव्ये शब्दोऽप्यस्ति; यथा—पार्थिवद्रव्ये कटकटाशब्दः, आप्ये खलखलाशब्दः, तैजसे तटतटाशब्द इत्यादिकः । वायव्यद्रव्यमाकाशद्रव्यं चानुमानग्राह्यममूर्तत्वात् । न रसादय इति रसगुणवीर्यविपाकास्तु न पञ्चेन्द्रियग्राह्या इत्यर्थः । पञ्चमं हेतुं दर्शयन्नाह—आश्रयत्वादित्यादि । आश्रय इदं द्रव्यं रसादीनाम् । षष्ठं हेतुं दर्शयन्नाह—आरम्भेत्यादि । आरम्भसामर्थ्यात् उपक्रमसामर्थ्यादित्यर्थः । संक्षुद्य चूर्णयित्वेत्यर्थः । सप्तमं हेतुं दर्शयन्नाह—शास्त्रेत्यादि । अष्टमं हेतुं दर्शयन्नाह—क्रमेत्यादि । तरुणे तरुणा इति अभिनवे अभिनवा इत्यर्थः । नवमं हेतुमाह—एकदेशेत्यादि । द्रव्यप्राधान्यमभिधाय द्रव्यलक्षणमाह—द्रव्यलक्षणमित्यादि । क्रियागुणवदिति क्रियागुणवद्द्रव्यमित्यर्थः; क्रिया कर्म, गुणा उक्ता विंशतिः । समवायिकारणमपि द्रव्यमेव; यथा—पटे तन्तवः, घटे मृत्पिण्ड इत्यादि; न च क्रियायां क्रिया समवेता, न गुणेषु गुणाश्च समवेता इति ॥ ३ ॥

**नेत्याहुरन्ये, रसास्तु प्रधानं; कस्मात्? आगमात्, आगमो हि शास्त्रमुच्यते; शास्त्रे हि रसा अधिकृताः, यथा—रसायत्त आहार इति, तस्मिंस्तु प्राणाः; उपदेशाच्च, उपदिश्यन्ते हि रसाः, यथा—मधुराम्ललवणा वातं शमयन्ति; अनुमानाच्च, रसेन ह्यनुमीयते द्रव्यं, यथा—मधुरमिति; ऋषिवचनाच्च, ऋषिवचनं वेदो यथा—किंचिदिज्यार्थं मधुरमाहरेदिति, तस्माद्रसाः प्रधानं; रसेषु गुणसंज्ञा । रसलक्षणमन्यत्रोपदेक्ष्यामः ॥ ४ ॥**

रसप्राधान्ये एकीयं दर्शनं निर्दिशन्नाह—नेत्यादि । नेत्याहुरन्ये द्रव्यप्राधान्यमन्ये न ब्रुवत इत्यर्थः । तस्मिंस्तु प्राणा इति आहारे सति प्राणा इत्यर्थः । रसप्राधान्ये द्वितीयं हेतुमाह—उपदेशादित्यादि । अत्रैव तृतीयं हेतुमाह—अनुमानादित्यादि । चतुर्थं हेतुमाह—ऋषिवचनादित्यादि । इज्यार्थं यागार्थं; मधुरमाहरेदिति मधुररसमाहरेत् आनयेत्, न तु द्रव्यमानयेदिति । गुणस्यापि किमिति न प्राधान्यं साधितमित्याशङ्क्याह—रसेष्वित्यादि । अत्रादिशब्दो लुप्तो द्रष्टव्यः; एतेनैतदुक्तं भवति–रसादिप्राधान्येनैव साधितेन गुणप्राधान्यं साधितं भवति । यथा द्रव्यलक्षणमुक्तं तथा रसस्यापि किमिति नोक्तमित्याह—रसलक्षणमित्यादि । अन्यत्र रसविज्ञानीये ॥ ४ ॥

**नेत्याहुरन्ये, वीर्यं प्रधानमिति । कस्मात्? तद्वशे-**

१ 'गुणा अनित्याः' इति पा० ।

१ 'द्रव्यादपि रसप्राधान्यं दर्शयितुं द्रव्यप्राधान्यं निषेधयति–नेत्याहुरन्ये इति । एते द्रव्यप्राधान्यख्यापका हेतवो वक्तव्यरसप्राधान्यहेत्वपेक्षया अप्रयोजका इत्यभिमानो रसवादिनो ज्ञेयः । एवं वीर्यवादिनस्तथा विपाकवादिनश्च 'नेत्याहुरन्ये' इति वचनमनया दिशा व्याख्येयम् । रसप्राधान्ये आगमादिति हेतुः आगम एव कण्ठरवेण रसस्य प्राधान्यं कथयतीत्याहुः । उपदेशादिति तु रसेन द्रव्यादिसमुदायकार्योपदेशादित्यर्थभेदो नेयः । ऋषिवचनमिह वेदः । ऋषय आप्ताः । तद्वचनता च वेदस्य ऋषिभिः प्रथममुदाहरणात्, न तु ऋषिकार्यतया; किंवा न्यायमते महेश्वररूपर्षिवचनता वेदस्य ज्ञेया । द्रव्यादिप्राधान्यविचारे कस्माद्गुणा नोद्भाविता इत्याह–रसेषु तु गुणसंज्ञेति । रसेष्वित्युपलक्षणं, तेन वीर्यविपाकयोरपि गुणसंज्ञेति बोद्धव्यं, तेन रसादिप्राधान्यव्युत्पादनेन गुणविशेषप्राधान्यं लभ्यत इत्यर्थः ।' इति चक्रः । २ 'वीर्यप्राधान्यवादिमतमाह–नेत्याहुरन्ये इत्यादि । प्राधान्यादिति प्रधानधर्मयोगात्, प्रधा-

**नौषधकर्मनिष्पत्तेः । इहौषधकर्माण्यूर्ध्वाधोभागोभयभागसंशोधनसंशमनसांग्राहिकाग्निदीपनपीडनलेखनबृंहणरसायनवाजीकरणश्वयथुकरविलयनदहनदारणमादनप्राणघ्नविषप्रशमनादीनि वीर्यप्राधान्याद्भवन्ति । तच्च वीर्यं द्विविधमुष्णं शीतं च, अग्नीषोमीयत्वाज्जगतः । केचिदष्टविधमाहुः—शीतमुष्णं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णं**

नधर्मैश्च वीर्यवशेनौषधानां कार्यनिष्पादकत्वम् । अत्र वीर्यशब्देन द्रव्यस्य द्विविधाऽपि चिन्त्या अचिन्त्या च शक्तिरुच्यते । तत्राचिन्त्या शक्तिर्या तन्त्रान्तरे प्रभाव इत्युच्यते सा ग्राह्या, तस्यैव च वीर्यस्य प्रभावाख्यस्य स्वतन्त्रे 'तद्द्रव्यमात्मना किंचित्' इत्यनेन ग्रहणं ज्ञेयम् । रसस्य विपाकस्य च शास्त्रे पृथङ्निर्देशान्न वीर्यव्यवहारः, परिणामसंख्यादयो गुणा न शास्त्रे तथा कार्यकरा इति पृथक्त्वेन द्रव्यरसादिगणनायां गण्यन्ते; चिन्त्यायां वैद्यसंप्रदायेन शीतोष्णलक्षणं द्विविधमष्टविधं वा उष्णशीतस्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णरूपमुच्यते । यदा द्विविधं वीर्यं तदा स्निग्धरूक्षादीनां षण्णामपि परिणामसंख्यादिवदप्राधान्यं विवक्षितं ज्ञेयम् । स्निग्धादीनामप्राधान्यविवक्षायां रसादिधर्मतयैव कार्यग्रहणं; वक्ष्यति हि—'मधुरो रसः स्निग्धः' इत्यादि । अष्टविधवीर्यपक्षे तूष्णादीनां सर्वेषामेव बलवत्कार्यकर्तृविवक्षया वीर्यत्वमिति स्थितिः । संप्रति शास्त्रे व्यवहारसिद्धमेव वीर्यं विवेचयन्नाह—तच्च वीर्यमित्यादि । कथमेतान्युष्णादीनि वीर्याख्यानीत्याह—एतानि खल्वित्यादि । स्वबलगुणोत्कर्षादिति बलं शक्तिः, स एव गुणः प्रशस्तत्वात्; स्वशक्तिरूपगुणोत्कर्षादुष्णादीनि रसमभिभूय स्वकार्यं कुर्वन्ति ।' इति चक्रः ।

'वीर्यं शक्तिः, सा च पृथिव्यादीनां भूतानां यः सारभागस्तदतिशयरूपा बोध्या; सा च द्विविधा, चिन्त्याचिन्त्यक्रियाहेतुत्वेन; तत्र चिन्त्यक्रियाहेतुर्या द्रव्यरसादीनां स्वस्वकर्मणि स्वभावसिद्धा शक्तिः, अचिन्त्यक्रियाहेतुश्च प्रभावापरपर्याया द्रव्याणां रसाद्यननुरूपकार्यकारणशक्तिः । उक्तं च,—"भूतप्रसादातिशयो द्रव्ये पाके रसे स्थितः । चिन्त्याचिन्त्यक्रियाहेतुर्वीर्यं धन्वन्तरेर्मतम्"—इति । एतेन द्रव्यरसपाकानां स्वस्वकार्यकरणसामर्थ्यं वीर्यमित्यर्थः । यत्पुनश्चरके—"वीर्यं तु क्रियते येन या क्रिया"—( च. सू. स्था. अ. २६ ) इत्यनेन रसादीनामपि वीर्यत्वमुक्तं, तद्धर्मधर्मिणोरभेदादेव समर्थनीयम् । न चैवं द्रव्यस्यापि वीर्यत्वप्रसङ्गः; येनेति करणे तृतीया, करणस्यैव शक्तित्वात्, द्रव्यस्य च कर्तृत्वात्; एतेन द्रव्यकर्तृके रसादिकरणके कार्ये रसादीनामपि वीर्यत्वमित्यर्थः । सुश्रुतेऽप्युक्तं—, "येन कुर्वन्ति तद्वीर्यम्"—( सु. सू. स्था. अ. ४१ ) इति । अत्र केचित्—ननु, यदि शक्तिरेव वीर्यं न तर्हि शीतोष्णादिलक्षणम्, अथ शीतोष्णादिलक्षणं न तदा शक्तिलक्षणमिति । सत्यं, परमार्थतः शक्तिरेव वीर्यं, सा पुनर्बलवत्क्रियानिर्वर्तनक्षमा रसादिनाऽयोगान्निरुपाधिरिति तस्याः शीतोष्णादयो गुणा उपाधित्वेनाङ्गीकृताः, ते तु द्रव्यसमवायिनो रसादिषु पुनरुपचरितवृत्तय इति । उक्तं च,—"गुणाः कर्मव्यवस्थायै द्रव्याणां रसपाकयोः । शक्तेः कर्मसु शक्ता ये निरुपाधेरुपाधयः"—इत्याहुः । यत्पुनः "मृदुतीक्ष्णगुरुलघुस्निग्धरूक्षोष्णशीतलम् । वीर्यमष्टविधं केचित् केचिद्द्विविधमास्थिताः ॥ शीतोष्णमिति" ( च. सू. स्था. अ. २६ )—इति मतभेदेनाष्टविधं द्विविधं वा वीर्यमित्युक्तं चरकेण, तत्पारिभाषिकवीर्यपुरस्कारेण । वैद्यके हि रसविपाकप्रभावातिरिक्ते प्रभूतकार्यकारिणि गुणे वीर्यमिति संज्ञा । तेनाष्टविधवीर्यवादिमते पिच्छिलविशदादयो गुणा न रसादिविपरीतं कार्यं प्रायः कुर्वन्तीति तेषां रसाद्युपदेशेनैव ग्रहणं; मृद्वादीनामष्टानां तु रसाद्यभिभावकत्वमस्ति । सुश्रुतेऽप्युक्तम्,—"एतानि खलु वीर्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म कुर्वन्ति"—( सु. सू. स्था. अ. ४० ) इति । शीतोष्णवीर्यवादिमतं त्वग्नीषोमीयत्वाज्जगतः शीतोष्णयोरेव प्राधान्याज्ज्ञेयम् । उक्तं च,—"नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ । व्यक्ताव्यक्तं जगदिव नातिक्रमति जातुचित्"—( वा. सू. स्था. अ. ९ ) इति । प्रथमवादिमते शक्तिमात्रं वीर्यं, तद्योगाद्रसादीनामपि वीर्यसंज्ञा; पारिभाषिकवीर्यवादिमते तु शक्तिविशेषो वीर्यं, तद्योगान्मृदुतीक्ष्णादीनामेव वीर्यसंज्ञा नापरेषां गुणानामिति । शास्त्रे व्यवहारस्तु पारिभाषिकवीर्यनयेनैवेति । भवन्ति चात्र,—"शक्तिमात्रं तु वीर्यं स्यादिति केचिद्बुधा विदुः । तन्मते द्रव्यरसयोः पाकस्य च गुणस्य च ॥ मृद्वादेः स्वक्रियोत्पादे शक्तिर्वीर्यमिति स्थितिः । तदुक्तं चरके—'वीर्यं क्रियते येन या क्रिया ॥ नावीर्यं कुरुते किंचित् सर्वा वीर्यकृता क्रिया' । इत्यनेन रसादीनां वीर्यत्वं तदभेदतः ॥ मृद्वादयो गुणा ह्यष्टौ वीर्याणीत्यूचिरे परे । यस्मात् सर्वगुणोत्कृष्टाः शक्त्युत्कर्षयुता अमी ॥ व्यवहारोपयुक्ताश्च नेदृशास्त्वपरे गुणाः । तस्मात्ते वीर्यसंज्ञा इति शास्त्रविदां मतम् ॥ अन्ये शीतोष्णभेदेन वीर्यं द्विविधमूचिरे । अग्नीषोममयं विश्वं यत एतच्चराचरम्"—इति । प्रभावोऽचिन्त्यक्रियाहेतुर्वीर्यमेवेति शक्तिविशेष एव प्रभाव इत्यभिधीयते । प्रभावसत्त्वे च चरके मानमप्युक्तम् । यथा—"रसवीर्यविपाकनां सामान्यं यत्र लक्ष्यते । विशेषः कर्मणां चैव प्रभावस्तस्य स स्मृतः" ( च. सू. स्था. अ. २६ ) इति । सामान्यमिति तुल्यता, कर्मणां पुनर्विशेषो न तुल्यतेत्यर्थः । एतेन द्रव्ययोर्द्वयो रसादिसाम्ये सत्यप्येकस्मिन् द्रव्ये जायते कार्यविशेषः, इतरत्र तु न जायते, इत्यत्र यत्कारणतया वाच्यं तदेव प्रभाव इत्यर्थः । तथा रसादिसाम्यभावेऽपि रसादिजन्यत्वेन यत्कार्यं नावधारयितुं पार्यते तदपि प्रभावकृतमेव मन्तव्यं; यथा—मण्यादीनां विषहरणादिकं कर्म" इति द्रव्यगुणसंग्रहव्याख्यायां शिवदाससेनः ।

"वीर्यं पुनर्वदन्त्येके गुरु स्निग्धं हिमं मृदु । लघुरूक्षोष्णतीक्ष्णं च तदेवं मतमष्टधा ॥ चरकस्त्वाह वीर्यं तत् क्रियते येन या क्रिया । नावीर्यं कुरुते किञ्चित् सर्वा वीर्यकृता हि सा ॥ गुर्वादिष्वेव वीर्याख्या तेनान्वर्थेति वर्ण्यते । समग्रगुणसारेषु शक्त्युत्कर्षविवर्तिषु ॥ व्यवहाराय मुख्यत्वाद्बह्वग्रग्रहणादपि । अतश्च विपरीतत्वात् संभवत्यपि नैव सा ॥ विवक्ष्यते रसाद्येषु वीर्यं गुर्वादयो ह्यतः ।" इति वाग्भटः ( सू. स्था. अ. ९ ) ॥

१ 'गुरु लघु' इति हाराणचन्द्रसंमतः पाठः । "नेह गुरुलघु-

**चेति । एतानि वीर्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म कुर्वन्ति । यथा तावन्महत्पञ्चमूलं कषायं तिक्तानुरसं वातं शमयति, उष्णवीर्यत्वात्; तथा कुलत्थः कषायः, कटुकः पलाण्डुः, स्नेहभावाच्च; मधुरश्चेक्षुरसो वातं वर्धयति, शीतवीर्यत्वात्; कटुका पिप्पली पित्तं शमयति, मृदुशीतवीर्यत्वात्, अम्लमामलकं लवणं सैन्धवं च; तिक्ता काकमाची पित्तं वर्धयति, उष्णवीर्यत्वात्, मधुरा मत्स्याश्च; कटुकं मूलकं श्लेष्माणं वर्धयति, स्निग्धवीर्यत्वात्; अम्लं कपित्थं श्लेष्माणं शमयति, रूक्षवीर्यत्वात्, मधुरं क्षौद्रं च; तदेतन्निदर्शनमात्रमुक्तम् ॥ ५ ॥**

अपरेषां वीर्यवादिनां मतं निर्दिशन्नाह—नेत्याहुरन्ये इत्यादि ।–ईदशमन्ये न ब्रुवन्ति । तद्वशेनेति वीर्यवशेन । कानि पुनस्तान्यौषधकर्माणीत्याह—इहौषधेत्यादि ।—संशोधनं व्रणादीनां; संशमनमिति वमनविरेचनादिकं विना तत्स्थमेव शमयति संशमनं, संशमनभेदा एव सांग्राहिकादयः; पीडनमिति शाल्मलीत्वगादीनां व्रणे कर्मविशेषः; लेखनं पतलीकरणं; बृंहणं शरीरवृद्धिकरं; रसायनं वयःस्थापनादिकरणं; वाजीकरणं वाजिवद्वेनाप्रतिहतः स्त्रियं याति, अन्ये तु वाजिशब्देन शुक्रमुच्यते, ततोऽवाजिनो वाजिनः क्रियन्ते येनेति वाजीकरणं, शुक्रोत्पादकमित्याहुः; श्वयथुकरविलयनेति करविलयनशब्दौ श्वयथुशब्देन सह प्रत्येकं संबध्येते, 'श्वयथुहरविलयन' इत्येके पठन्ति; दहनं क्षारादिना; दारणं गृध्रपुरीषादिना; मादनं मत्तताकरणम्, एतच्च मदिरादीनां कर्म; प्राणघ्नत्वं विषादेः; विषप्रशमनत्वमगदादीनां; विषप्रशमनादीनीत्यत्रादिशब्देन व्रणरोपणरोमसञ्जननादयो गृह्यन्ते । स्वबलगुणोत्कर्षादिति स्वबलोत्कर्षात् स्वगुणोत्कर्षाच्चेत्यर्थः । आत्मकर्म कुर्वन्ति वातादिदोषशमनं कोपनं वा कुर्वन्ति । अभिभूय निराकरणं कृत्वेत्यर्थः । स्नेहभावाच्चेत्यत्रापि वातं शमयतीति योज्यम् । मधुरश्चेक्षुरस इत्यादि न केवलं वातं शमयतीति वीर्यं रसमभिभूय प्रकोपयत्यपि वातमित्यर्थः । कटुका पिप्पलीत्यादि अत्रार्द्रा पिप्पली यदि गृह्यते तदा तस्याः स्वादुशीतत्वात् कटुकेति विशेषणं युक्तं न स्यात्, अथ शुष्का तदा तस्याः कटूष्णत्वात् पित्तं हन्तीति विशेषणमयुक्तं भवेत्; सत्यं, 'तेषु गुर्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा' इत्यत्र पाठे शीता चेति चकारो द्रष्टव्यः, तेन न केवलं शीता कटुका चेत्यर्थः, ततो नार्द्रपक्षे दोषः; शुष्कपक्षे तु 'शुष्का कफानिलघ्नी सा वृष्या पित्ताविरोधिनी' इत्यत्र पित्तेन सहेषद्विरोधिनीति व्याख्यानान्न दोषः; केषांचिन्मते 'पित्तप्रकोपणी' इति पाठः, तेषां मते

---

शब्दावर्तनेन विशदपिच्छिलयोः पाठो न्याय्यः, शास्त्रेऽस्मिन् क्वचिदपि तयोर्वीर्यत्वेनानुपदेशादुपदेशाच्च गुरुलघुनोः । वक्ष्यति च 'ये रसा' इत्युपक्रम्य 'रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम्' इत्यादि' इति हाराणचन्द्रः ।

पित्तशमनीयत्वं पिप्पल्या वीर्यवादीनां मतं, न पुनः सत्यमेषा पित्तं शमयति; यदि वा आर्द्रा पित्तप्रशमनी शुष्का प्रकोपणीति । अम्लमामलकं लवणं सैन्धवं चेत्यत्रापि मृदुशीतवीर्यत्वात् पित्तं शमयतीति योज्यम् । तिक्ता काकमाचीत्यादि पित्तं वर्धयति केवलं न तु प्रकोपयति, तस्यास्त्रिदोषघ्नत्वात् । अन्ये चात्रैवं वदन्ति—वीर्यवादी एवमुष्णवीर्यां काकमाचीं मन्यते, आचार्यस्तु नात्युष्णशीताम्, अत एव त्रिदोषघ्नत्वं काकमाच्या इति । मधुरा मत्स्याश्चेत्यत्रापि पित्तं वर्धयन्तीति योज्यम् । मूलकं बृहन्मूलकं; न पुनर्बालकं, त्रिदोषघ्नत्वात् ॥ ५ ॥

**भवन्ति चात्र—**

**ये रसा वातशमना भवन्ति यदि तेषु वै ॥**
**रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम् ॥६॥**
**ये रसाः पित्तशमना भवन्ति यदि तेषु वै ॥**
**तैक्ष्ण्यौष्ण्यलघुताश्चैव न ते तत्कर्मकारिणः ॥७॥**
**ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै ॥**
**स्नेहगौरवशैत्यानि न ते तत्कर्मकारिणः ॥ ८ ॥**
**तस्माद्वीर्यं प्रधानमिति ॥ ९ ॥**

द्रव्याश्रितं वीर्यकर्माभिधाय रसाश्रितं वीर्यकर्माह—भवन्ति चात्रेत्यादि । ये रसा वातशमना मधुराम्ललवणाः, ये रसाः पित्तशमना मधुरतिक्तकषायाः, ये रसाः श्लेष्मशमनाः कटुतिक्तकषायाः ॥ ६—९ ॥

**नेत्याहुरन्ये, विपाकः प्रधानमिति । कस्मात्?**

---

१ 'न तु समुदितं' इति पा० । २ 'इदानीं विपाकगुणा वाच्याः, अतो विपाकस्वरूपं निरूप्यते—अवस्थापाकापेक्षया विशिष्टः पाको विपाकः । विपाकशब्देनेह लक्षणया विपाकाधेय आहारस्य रसविशेषो गौरवेण लाघवेन वा युक्तोऽभिधीयते । उक्तं च वाग्भटेन,—"जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः"—( वा. सू. स्था. अ. ९ ) इति । अत्र रसानां परिणामा मधुराम्लकटुरूपास्त्रयोऽवस्थापाकाः षड्रसस्यैवान्नस्यामाशयादिस्थानसंबन्धमहिम्ना जायन्ते, ते च चरके ग्रहणीचिकित्सिते "अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः" ( च. चि. स्था. अ. १५ ) इत्यादिनोक्ता अनुसन्धेयाः, तेषामन्तेऽवसाने पुनर्जाठराग्निसंयोगे सति यद्रसान्तरं रसविशेष उदेति स विपाक इत्यर्थः । चरकेण तु त्रय एव विपाका अङ्गीकृताः कट्वम्लमधुरभेदेन; अतस्तद्वचनमुपन्यस्यते—"कटुतिक्तकषायाणां विपाकः प्रायशः कटुः । अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा"—इति ( च. सू. स्था. अ. २६ ) । प्रायश इति वचनात् पिप्पलीकुलत्थादीनां रसाननुगुणपाकतां दर्शयति । पाकस्तु तेजःसंयोगरूपो रसेषु न संभवतीति कट्वादिशब्दैस्तदाधारद्रव्याण्युच्यन्ते । एतेन यत् कैश्चिदुच्यते—"अवस्थापाकावसाने षड्रसस्यैवान्नस्य कटुरसत्वेन तदानीं तिक्तादिरसानामभावात्तेषां विपाको नोत्पद्यते" इति; तदप्यपास्तं, तिक्तादिरसानामभावेऽपि तदाश्रयद्रव्यस्य विद्यमानत्वादिति । वस्तुतस्तु, अवस्थापाकत्रयेण तत्तदामाशयादिस्थानमहिम्ना मधुराम्लकटु-

**सम्यङ्मिथ्याविपक्वत्वात्; इह सर्वद्रव्याण्यभ्यवहृ-**

रसा उद्भूताः परं क्रियन्ते, न तु सर्वथा प्राकृतरसाभिभवः; अन्यथाऽवस्थापाकेन प्राकृतानां मधुरादिरसानां सर्वथाऽप्राकृतत्वे तेषां कफादिजनकत्वाभिधानं निरवकाशं स्यादिति । ननु, चरके,—"अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः" (च. चि. स्था. अ. १५)—इत्यादिना षण्णामेव रसानामविशेषेणावस्थापाकवशात् कफादिजनकत्वमुक्तं, ततश्चात्र रसविशेषाणामेव दोषविशेषजनकत्वमुक्तं, तथा "कटुतिक्तकषायाणां विपाकः प्रायशः कटुः"—(च. सू. स्था. अ. २६) इत्यादिना च यो विपाक उक्तस्तत् सर्वं विरुध्यते, अवस्थापाकेनैव बाधितत्वादिति । नैवं, नह्यवस्थापाकोऽयं रसस्वभावं निष्ठापाकं बाधते, किंत्ववस्थायां स्वकार्यं करोति; तेन रसादयोऽपि स्वकार्यं कुर्वन्ति, अवस्थापाकोऽपि स्वीयं कार्यं करोति, यथा—मधुरतिक्ताद्यनेकरसे उपयुक्ते मधुरोऽपि स्वकार्यं करोति, तिक्तादयश्च स्वकार्यं कुर्वन्ति; अयं तु विशेषो—यदि मधुराख्यस्यावस्थापाकस्य मधुरादयः श्लेष्मजनका रसा अनुगुणा भवन्ति, तदा स बहुश्लेष्माणं जनयति, यदा तु विपरीतकटुकादिपरिगृहीतो भवति, तदा स्तोकमात्रं कफं जनयति । एवं पित्तजनकावस्थापाकेऽपि वाच्यम् । "कटुतिक्तकषायाणां" (च. सू. स्था. अ. २६) इत्यादिनोक्तश्च निष्ठापाको रसमलविवेकसमकालो, भिन्नकाल एवावस्थापाकैः सममिति न विरोधः । स च भिन्नकालोऽप्यवस्थापाकजन्यदोषानुगुणतया अननुगुणतया वाऽवस्थापाकाहितदोषाणां वर्धनं क्षपणं वा करोतीति निष्ठापाकाभिधानं शास्त्रे प्रयोजनवदेव ।

अन्ये त्वाहुः—यत्—नान्नस्याग्निसंयोगान्मधुराद्यवस्थितं भवति, किंतु कफादिस्थानेषु मनुष्याणां स्वभावादेव मधुरादयो रसास्तिष्ठन्ति, ते चान्नं स्वस्वभावं नीत्वा कफादीन् जनयन्ति । उक्तं हि तन्त्रान्तरे—"मधुरो हृदयादूर्ध्वं रसः कोष्ठे व्यवस्थितः । ततः संवर्धते श्लेष्मा शरीरबलवर्धनः ॥ नाभिहृदयमध्ये हि रसस्त्वम्लो व्यवस्थितः । स्वभावेन मनुष्याणां तत्र पित्तं विवर्धते ॥ अधो नाभ्यास्तु खल्वेकः कटुकोऽवस्थितो रसः । प्रायः श्रेष्ठतमस्तत्र प्राणिनां वर्धतेऽनिलः ॥ तस्माद्विपाकस्त्रिविधो रसानां नात्र संशयः" इति । एतच्च तन्त्रान्तरं श्लेष्मपित्तगतमधुराम्लरसवायुप्राभाविककटुरसाभिप्रायेण वर्णनीयम् । ते च कफादिगता रसा अस्माकमप्यन्याशयपाकसहकारितयाऽनुमता एव, तस्माद्यथोक्त एवार्थो न्याय्य इति । अयं च विपाकाख्यो (रसो) न रसनेन्द्रियग्राह्यः, किंतु तत्तत्कार्येणैवोन्नीयते; यथा—कटुरसाया उष्णवीर्याया अपि शुण्ठ्या वृष्यत्वेन मधुरः पाकोऽनुमीयते, तथा लवणस्य सृष्टविण्मूत्रत्वेन मधुरः पाक उन्नीयते, तथा तिक्तकषाययोर्बद्धविण्मूत्रतया कटुपाक उन्नीयत इति । ननु, लवणस्य मधुरपाकित्वे पित्तरक्तादिकर्तृत्वमनुपपन्नं, तथा तिक्तकषाययोः कटुपाकित्वे च पित्तहन्तृत्वमनुपपन्नम् । नैवं, सत्यपि लवणस्य मधुरपाकित्वे तत्र लवणे उष्णवीर्यं यदस्ति तेन तस्य पित्तरक्तादिकारकत्वं, विपाकस्तु तत्र पित्तरक्तकरणलक्षणे कार्ये बाधितोऽपि सृष्टविण्मूत्रादिलक्षणे लक्ष्यत एव, तथा तिक्तकषाययोरपि कटुविपाको बलवता शीतवीर्येण बाधितत्वान्न पित्तजनकः, बद्धविण्मूत्रतया तु लक्ष्यत एव । एतेन यदुच्यते—लवणादिषु विपाको



**तानि सम्यङ्मिथ्याविपक्वानि गुणं दोषं वा जनयन्ति ।**

यदि रसवीर्याभ्यां बाधितः स्वकार्यकरो न स्यात्, तत् किं तेनोपदिष्टेनेति, तन्निरस्तं भवति; यतोऽस्यैव सृष्टविण्मूत्रतादि तत्कार्यमिति ।

नच त्रय एव विपाकाः कथं भवन्ति, तिक्तादयोऽपि कुतो न स्युरिति वाच्यं; भूतस्वभावस्यापर्यनुयोज्यत्वात् । ननु, यत्र रसविपरीतः पाको यथा—लवणस्य मधुरः, तिक्तकषाययोश्च कटुः, स उच्यतां; यस्तु समानगुणो मधुरस्य मधुरः, अम्लस्याम्लः, कटुकस्य कटुकः, तत्कथनेन किं प्रयोजनं; यतो रसगुणैरेव तत्र विपाकगुणोऽपि ज्ञास्यते । नैवं, लवणादिवद्विसदृशरसान्तरोत्पादशङ्कानिरासार्थमपि तत्रानुगुणोऽपि विपाको वक्तव्य एव । तथा यत्र समानगुणो विपाकस्तत्र बलवत्कार्यं भवति, विपर्यये तु दुर्बलमिति ज्ञेयम् । सुश्रुतेन द्विविध एव विपाकोऽङ्गीकृतो मधुरः कटुकश्चेति, द्वैविध्ये च भूतानां गुरुलाघवेन द्वैविध्यमेव हेतुः; यदुक्तं तेनैव—"तत्र, पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद् गुरुता लघुता च; तत्र पृथिव्यापश्च गुर्व्यः, शेषाणि लघूनि; तस्माद्द्विविध एव विपाको भवति"—इति (सु. सू. स्था. अ. ४०) । अत्रापि सुश्रुतमते यद्यप्यम्ललवणौ मधुरविपाकौ तथाऽपि तयोर्वातहरत्वे सृष्टविण्मूत्रतायां च मधुरकार्यकरत्वं न पुनः पित्तहरत्वे, तथा तिक्तकषाययोः कटुविपाकयोरपि वातकर्तृत्वे बद्धविण्मूत्रतायां च कटुकार्यकरत्वं न पुनः पित्तकर्तृत्वे, अचिन्त्यत्वात् प्रभावस्य । ननु, "पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः । विपक्वः पञ्चधा सम्यक् स्वान् गुणानभिवर्धयेत्" (सु. सू. स्था. अ. ४६)—इत्यनेन पञ्चधाऽपि विपाकस्तेनैवोक्तः, तत्कथं न विरोध इति चेत्; नैवम्, उपाधिभेदेन विरोधाभावात्; तत्र हि भूतभेदमवलम्ब्य पञ्चधात्वं, अत्र तु लाघवगौरवरूपं भूतगुणद्वैविध्यमाश्रित्य द्वैविध्यमुक्तमिति न विरोधः; यथा—पञ्चभूतात्मकत्वेऽपि द्रव्याणां सौम्याग्नेयत्वाद्द्वैविध्यमिति । यत्पुनः सुश्रुतेनाम्लपाको न मन्यते तच्चरकमतानुयायिनो न सहन्ते, यतोऽम्लपाकतयैव व्रीहिकुलत्थादीनां पित्तकर्तृत्वमुपपद्यते, अथ मन्यसे—व्रीह्यादेरुष्णवीर्यत्वेन तत्र पित्तकर्तृत्वं? तदसत्, मधुरस्य व्रीहेस्तन्मते मधुरविपाकस्योष्णवीर्यतायामपि सत्यां न पित्तकर्तृत्वमुपपद्यते, रसविपाकाभ्यामेकस्य वीर्यस्य बाधनीयत्वात्; किंचाम्लपाकत्वाद् व्रीह्यादेः पित्तमम्लगुणमुत्पद्यते, यदि तूष्णवीर्यताकृतं स्यात्तदा कटुगुणभूयिष्ठं पित्तं स्यात्, दृश्यते च—व्रीहिभक्षणादम्लोद्गारादिनाऽम्लगुणभूयिष्ठतैवेति; किंच पृथिवीसोमगुणातिरेकान्मधुरः पाको भवति, वाय्वग्न्याकाशातिरेकाच्च कटुर्भवति—इति पक्षे यदा व्यामिश्रगुणातिरेको भवति, तदा सोमाग्न्यात्मकस्याम्लस्योत्पादः कथं प्रतिक्षेपणीयः; अथवा तन्त्रकारयोः किमनयोरनेन वचनमात्रविरोधेन कर्तव्यं; यतो यदम्लपाकं चरको ब्रूते तत् सुश्रुतेन वीर्योष्णमिति कृत्वा समाधीयते, अनेन न कश्चिद्द्रव्यगुणे विरोधः ।' इति द्रव्यगुणसंग्रहव्याख्यायां **शिवदाससेनः** ।

'विपाक इति पाकः पचनं द्रव्याणां स्वरूपरसयोः परा वृत्तिः । सा च स्वरूपान्तरत्वेन रसान्तरत्वेन च परिणतिः, तस्या विशेषो विपाकः ।......कस्य रसस्य किं रसान्तरत्वेनोदयः परिणामः स्यादित्यत आह—'कटुतिक्तकषायाणां विपाकः प्रायशः कटुः' इत्यादि ।

**तत्राहुरन्ये—प्रति रसं पाक इति। केचित्त्रिविधमिच्छन्ति—मधुरमम्लं कटुकं चेति। तत्तु न सम्यक्, भूतगुणादामाच्चान्योऽम्लो विपाको नास्ति; पित्तं हि विदग्धमम्लतामुपैत्याग्नेयत्वात्; यद्येवं लवणोऽप्यन्यः पाको भविष्यति, श्लेष्मा हि विदग्धो लवणतामुपैतीति। मधुरो मधुरस्याम्लोऽम्लस्यैवं सर्वेषामिति केचिदाहुः; दृष्टान्तं चोपदिशन्ति,—यथा तावत् क्षीरमुखागतं पच्यमानं मधुरमेव स्यात्तथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि**

भुक्तानां द्रव्याणां यः कटुस्तिक्तः कषायो वा रसः स स रसः खलु जाठरेणाग्निना पच्यमानानां भुक्तानां द्रव्याणां रसाख्यधातुरूपेण परिणामे तत्पाकेन पच्यमानः सन् प्रायशः कटुर्विपाकः स्यात्। कटुश्च कटुविशेषेणाभिनिष्पन्नः संस्तत्र रसाख्ये धातौ वर्तते (एवं शेषेष्वपि व्याख्येयम्)...इत्थं च रसपाकाभिप्रायेण त्रिधा विपाक उक्तः (चरकेण); सुश्रुते भूतगुणपाकाभिप्रायेण द्विधा विपाक उक्तो गुरुर्लघुश्चेति क्रमेण मधुरसंज्ञः कटुसंज्ञश्च' इति चरकटीकायां जल्पकल्पतरौ **गङ्गाधरकविराजः**।

"विपाकप्राधान्यवादिमतं वीर्यवादिमतं निषेधयित्वा प्राह—नेत्याहुरन्ये इत्यादि। विपाकः प्रधानमिति प्रतिज्ञा। विपाकशब्देनेह लक्षणया अभ्यवहृतद्रव्यान्तपाकाधेय आहारस्य रसविशेषो गौरवेण लाघवेन वा युक्तोऽभिधीयते, विशिष्टो नैष्ठिकः पाको विपाक इत्यर्थः। अत्र हेतुः—सम्यङ्मिथ्याविपाकत्वादिति। अस्यार्थं व्याकरोति—सर्वद्रव्याणीत्यादि। सम्यग्विपक्वानि गुणं मिथ्याविपक्वानि दोषं जनयन्ति। सम्यक्पाकः समेनाग्निना, मिथ्यापाकस्तु हीनातिपाकरूपो यथाक्रमं मन्देन तीक्ष्णेन चाग्निना क्रियते। तत्र हीनपाके आमविकाराः, तीक्ष्णपाके च भस्मकविकारा दोषाः; समपाके तु धातुसाम्यं गुणश्च। अयं च पाको यद्यपि जठराग्न्यधीनः सर्वाहारसाधारणो नतु द्रव्याधीनो द्रव्यगुणरूपो य इहाधिकृतः 'पिप्पल्या मधुरविपाकः, अर्ध्यं मधु कटुकम्' इत्यादिना प्रतिपादनीयः। अयमेव पाक एतत्प्रकरणसिद्धान्ते च 'तद्द्रव्यमात्मना किञ्चित्' इत्यादौ दर्शितः। तथा ह्युभयोरपि पाकयोरङ्ग्याधेयान्यपाकरूपतया एकतः प्राधान्ये साधितेऽपरत्रापि सिद्धं भवतीति ग्रन्थार्थो नेयः। किंवा सम्यक्पाको द्रव्यगुणानुगुणः पाको, यथा 'चित्रकः कटुकः पाके', तथा 'क्षीरं मधुरं रसपाकयोः' इत्यादि। अत्र हि द्रव्यगुणसदृश एव पाकः। मिथ्यापाकः द्रव्यगुणविसदृशः पाकः, यथा 'पिप्पल्यः कटुकाः सत्यो मधुरविपाकाः' इत्यादौ। गुणं दोषं वा जनयन्तीति सम्यक्पाके तथा मिथ्यापाके च प्रत्येकं योजनीयम्। तेन द्रव्यगुणानुगुणो हि मधुरः पाकः सृष्टविण्मूत्रादिगुणं कफजननं दोषं च करोति, तथा द्रव्यगुणविसदृशश्च पिप्पल्याः कटुकाया मधुरः पाको यथोक्तं गुणं दोषं वा करोति। अस्मिन् व्याख्याने अभिमतव्याख्याधीनपाकप्राधान्ये हेतुरुक्तो भवतीति नासङ्गतार्थत्वमस्य, यस्माद्रसं वीर्यं च तिरस्कृत्यान्त्यो विपाको गुणं दोषं वा जनयति, तेन विपाकः प्रधानमिति। संप्रति स्वाभिमतविपाकस्वरूपं दर्शयितुं पराभिमतविपाकानुपन्यस्यति—तत्राहुरन्ये इत्यादि। प्रतिरसं पाकमेव विवृणोति—मधुरो मधुरस्याम्लोऽम्लस्येत्यादि। अत्र दृष्टान्तमाह—यथेत्यादि। प्रकीर्णा इत्युप्ताः; तेन शालियवादय उप्तप्ररूढाः फलिताश्च शालियवादिस्वरूपा एव भवन्ति, एवं मधुरादयोऽपि निष्ठापाकेऽपि मधुरादिस्वरूपा एव भवन्ति। अत्रैव पक्षे मतान्तरमाह—केचित्पुनरित्यादि। अबलवन्तो रसा अल्पतया बलवतामित्युल्बणानां रसानां वशतां पराधीनतामल्पतामिति यावत्। तेन निष्ठापाकेन बलवता दुर्बलरसाभिभवान्न प्रतिनियमेन मधुरस्य मधुर एव पाकोऽम्लस्य वाऽम्लः पाक इत्यादि प्रतिनियमाभावादनवस्थितः पाक इत्यर्थः। मतान्तरं चरकस्याह—केचित्त्रिविधमित्यादि। एतच्च मधुरादिपाकत्रयं नैष्ठिकं; चरकमतं क्वचिद्रसद्वाराऽभिहितं; यथा—"कटुतिक्तकषायाणां विपाकः प्रायशः कटुः। अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा॥"; क्वचिद्द्रव्यद्वाराऽभिहितं 'पिप्पल्यः कटुका मधुरविपाकाः' इत्यादि। यदवस्थापाके "अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः। मधुरः प्राक् कफोद्भावात् फेनभूत उदीर्यते॥" इत्यादिना चरकोक्तं, तन्नैष्ठिकपाकाभावादेवेहानधिकृतम्। उक्तानि परमतानि दूषयति—तत्तु न सम्यगिति। अत्र हेतुः—भूतगुणादिति। पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवतीत्यादिना वक्तव्यगुरुलघुलक्षणद्वैविध्येन द्विविधस्यैव पाकस्योपपन्नत्वादित्यर्थः। आगमादिति 'आगमस्त्वाह' इत्यादिना दर्शनीयः। पित्तस्य तु विदाहावस्थायामम्लपाकता भवति तया समं पाकत्रैविध्यं येऽभिमन्यन्ते तन्मतं चतुर्थलवणपाकप्रसङ्गेन दूषयन्नाह—पित्तं हि विदग्धमित्यादि। आगमादिति यदुक्तं तद्व्याकरोति—आगमस्त्वित्यादि। आगम इह धन्वन्तरिवचनं 'द्विविध एव पाको मधुरः कटुकश्च' इति। मधुरकटुपाकयोर्यथाक्रमं गुरुतां लघुतां च चिकित्सोपयुक्तां दर्शयति—तयोर्मधुराख्य इत्यादि। मधुरे गौरवस्य कटौ च पाके लाघवस्योपपत्तिं दर्शयन् भूतगुणादिति हेतुं च व्याकरोति—तत्र पृथिवीत्यादि। पञ्चानां भूतानां कथं द्वैविध्यमित्याह—तद्गुणसाधर्म्यादिति। अम्लपाकतया पित्तकरत्वं यथा—'मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः', 'उष्णाः कषायाः पाकेऽम्लाः कफशुक्रानिलापहाः। कुलत्थाः' इत्यादौ, तथा विपाकगुणे "पित्तकृत्सृष्टविण्मूत्रः पाकोऽम्लः शुक्रनाशनः" इति चरकोक्तं, तत् सर्वं सुश्रुते उष्णवीर्यकार्यं क्वचिद्द्रव्यस्वभाव इति स्वीक्रियते। तेन प्रमेये द्रव्यगुणे चरकसुश्रुतयोर्विप्रतिपत्तिर्नास्त्येव। यत्त्वत्र वक्तव्यं 'पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः। विपक्वः पञ्चधा सम्यक् स्वान् गुणानभिवर्धयेत्' इति; अनेन पञ्चधापाकोऽभिहितः, स द्रव्यस्वरूपचिन्तनीयो नैतत्पाकद्वयविरोधि, यथा पञ्चभूतात्मकेऽपि द्रव्याणां सौम्याग्नेयत्वाद् द्वैविध्यं भवति। या तु चरके अवस्थापाकाभिधाने अन्तिमपाके कटुताऽभिहिता—'पक्वाशयं तु प्राप्तस्य शोष्यमाणस्य वह्निना। परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः' इत्यनेन सा वातप्रकोपमात्रे हेतुः, नानेन मधुरपाकाधेयसृष्टमूत्रपुरीषतासम्यक्शुक्रजननादिविरोधिनीति न विरोधः' इति **चक्रः**। 'तत्राहुरन्ये-प्रतिरसं पाक इति मधुरो मधुरस्याम्लोऽम्लस्येत्यादि; यथा-शालियवादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति, तद्वदिति। केचित्पुनरबलवन्तो बलवतां वशमायान्ति तस्मादनवस्थितः पाक इति। केचित्त्रिविधमिच्छन्ति-मधुरमम्लं कटुकं चेति।

न परित्यजन्ति तद्वदिति। केचिद्वदन्ति-अबलवन्तो बलवतां वशमायान्तीति। एवमनवस्थितिः, तस्मादसिद्धान्त एषः। आगमे हि द्विविध एव पाको मधुरः कटुकश्च। तयोर्मधुराख्यो गुरुः, कटुकाख्यो लघुरिति। तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद्गुरुता लघुता च; पृथिव्यापश्च गुर्व्यः, शेषाणि लघूनि; तस्माद्द्विविध एव पाक इति ॥ १० ॥

अपरं विपाकवादिमतं निर्दिशन्नाह—नेत्याहुरित्यादि। नेत्याहुरन्ये वीर्यं प्रधानमिति केचिन्न ब्रुवते। तर्हि किं प्रधानं? विपाकः प्रधानमिति, विशिष्टः पाको विपाकः। सर्वद्रव्याण्यभ्यवहृतानीति इह सर्वशब्दो वामनीयद्रव्याणि वर्जयित्वा ज्ञेयः। गुणं दोषं वा जनयन्ति गुणं सम्यग्विपक्वानि, दोषं मिथ्याविपक्वानि। प्रतिरसं पाक इति रसं रसं प्रति पाक उत्पद्यत इत्यर्थः। तत्तु न सम्यक्, त्रैविध्यं न सम्यगित्यर्थः। कथं पुनस्त्रैविध्यं न सम्यगित्याह—भूतगुणादित्यादि। एतेन त्रैविध्यं निरस्तम्। प्रतिरसं पाक इति पूर्वोक्तं स्थापयन्नाह—मधुरो मधुरस्येत्यादि। अम्लो अम्लस्यैवं सर्वेषामिति केचिदाहुरिति पदच्छेदः। दृष्टान्तं चोपदिशन्तीति प्रतिरसपाके इत्यर्थः। उखागतं स्थालीगतम्। प्रकीर्णा इति भूमौ निक्षिप्ताः फलितपर्यन्ता इत्यर्थः। तद्वदिति एवं रसा अपि जठराग्निपक्वाः स्वं रूपं मधुरादिकं न त्यजन्ति। तस्मादित्यादि।—तस्मात् केचित् प्रतिरसं पाकः, केचित्त्रिविधः, अन्येऽबलवन्तो बलवतां वशमायान्तीति मतानामनियतत्वम्; तस्मादसिद्धान्त एष अनागम एष इत्यर्थः। स्वमतमिदानीं दर्शयन्नाह—आगमे इत्यादि। आगमे शास्त्रे। अन्ये 'आगमस्त्विह' इति पठन्ति; तत्र तुशब्दोऽप्यर्थः, अथवा विशेषार्थस्तुशब्दः, तेन प्रत्यक्षादिप्रमाणाविरुद्धोऽपि शिष्टागम इत्यर्थः; अथवा, आगमशब्दोऽयं सिद्धान्तवचनः, तेन सिद्धान्तः पुनरिहेत्यर्थः। पृथिव्यप्तेज इत्यादि। पृथिव्यादीनां गुणसाधर्म्याद् गुणसमानतया द्वैविध्यं भवतीत्यर्थः। गुणमेवाह—गुरुता लघुता चेति ॥ १० ॥

भवन्ति चात्र—
द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः ॥
निर्वर्तन्तेऽधिकास्तत्र पाको मधुर उच्यते ॥११॥
तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु ॥
निर्वर्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते ॥१२॥

भवन्ति चात्रेत्यादि। निर्वर्तन्तेऽधिका इति जायन्ते उत्कटा इत्यर्थः ॥ ११ ॥ १२ ॥

पृथक्त्वदर्शिनामेष वादिनां वादसंग्रहः ॥

तत्तु न सम्यक्, भूतगुणादागमाच्चान्योऽम्लः पाको नास्ति, पित्तं हि विदग्धमम्लतामुपैत्याग्नेयत्वात्; यद्येवं लवणोऽप्यन्यः पाको भविष्यति, श्लेष्मा हि विदग्धो लवणतामुपैतीति। आगमस्त्विह द्विविध एव पाको मधुरः कटुकश्च' इति चक्रसंमतः पाठः।

१ 'संप्रति द्रव्यादिप्राधान्ये एकीयमतानि दर्शयित्वा स्वमतं सिद्धान्तरूपमाह—पृथक्त्वेत्यादि। पृथक्त्वेन एकैकद्वयोक्तेन द्रव्यादी-

चतुर्णामपि सामग्र्यमिच्छन्त्यत्र विपश्चितः १३

एवं द्रव्यरसवीर्यविपाकवादिनां सविवादहेतूनि मतानि निर्दिश्य स्वमतं द्रव्यादिसामग्र्यलक्षणं निर्दिशन्नाह—पृथक्त्वदर्शिनामित्यादि। पृथक्त्वदर्शिनां भेददर्शिनाम्, एष वादसंग्रह इति योज्यम्। वादसंग्रहश्च द्रव्यं प्रधानं, रसाः प्रधानमित्यादिकः। स्वमतमाह—चतुर्णामित्यादि। चतुर्णां रसगुणवीर्यविपाकानाम्। अपिशब्दः समुच्चये। न केवलमेकस्य द्वयोस्त्रयाणां वा, चतुर्णामपीत्यर्थः। सामग्र्यं समुदायत्वम्। इच्छन्ति मन्यन्ते। अत्र द्रव्ये। विपश्चितः पण्डिताः ॥ १३ ॥

तद्द्रव्यमात्मना किंचित्किंचिद्वीर्येण सेवितम् ॥
किंचिद्रसविपाकाभ्यां दोषं हन्ति करोति वा ॥१४॥

ननु, तर्हि द्रव्यमेव क्रियाकारि न रसादय इत्याशङ्क्याह—तदित्यादि। आत्मना स्वयमेव; द्रव्यमात्मना कृत्वा किंचिद्दोषं हन्ति करोति वा, किंचिद्द्रव्यमेव वीर्येण कृत्वा हन्ति करोति वा, किंचिद्धन्ति करोति वा रसविपाकाभ्यां कृत्वा, सर्वत्र द्रव्यं

नामितरप्राधान्यापवादपूर्वकं प्राधान्यं द्रष्टुं शीलं येषां ते पृथक्त्वदर्शिनः। एष इत्यनन्तरोक्तः। वादसंग्रहः द्रव्यमेव प्रधानमित्यादिरूपो वादपरिग्रहः। एतत्पक्षविपरीतपक्षं सर्वप्राधान्यं सिद्धान्तरूपतया दर्शयन्नेव एकैकप्राधान्यपक्षान्निषेधयन्नाह-चतुर्णामित्यादि। समग्रस्येदं सामग्र्यं मेलकमित्यर्थः। अत्रेति प्राधान्यचिन्तायाम्। विपश्चित इति प्रामाणिकाः। तेन प्रामाणिकेच्छया मेलकस्यैव प्राधान्यं फलति। सामग्र्येण चेह धर्मेण समग्रा धर्मिण एव विवक्षिताः। यत्र द्रव्यप्राधान्यं तत्र रसादीनामप्राधान्यं, यत्र रसप्राधान्यं तत्र द्रव्यादीनामप्राधान्यमित्याद्यनुसरणीयम्' इति चक्रः।

१ 'सामर्थ्यं' इति पा०। २ ''एतदेव स्वस्वविषये द्रव्यादिप्राधान्यमाह—तदित्यादि। तदिति तस्मात् द्रव्यादिसामग्र्यप्राधान्यात्। अत्र द्रव्यमेव पञ्चमहाभूतविकारविशेषमन्नपानभेषजरूपं पाञ्चभौतिकशरीरस्य धातुवैषम्यरूपं दोषं विकारं वा धातुसाम्यरूपं दोषविकारोपशमं समवायिकारणतया कुर्वन् कर्तृत्वेन व्यवस्थाप्यते। तदाश्रितास्तु द्रव्यशक्तिरूपा रसवीर्यविपाका यथायोगं निमित्तकारणतां समवायिकारणतां वा भजन्तो न कर्तृतया व्यपदिश्यन्ते, द्रव्यपराधीनत्वात्। यत्तु 'मधुराम्ललवणा वातं घ्नन्ति' इत्यादिना रसादीनामपि कर्तृत्वं व्यपदिश्यते, तद्रसादिप्राधान्यतया न तु परमार्थतः, तेषां नित्यं द्रव्यपराधीनत्वात्। तेन द्रव्यप्रभावादेव रसादिसाध्ये कार्ये द्रव्यमेव कर्तृतयोपदिशति—द्रव्यमात्मनेत्यादि। किंचिद्द्रव्यमात्मना शक्त्या प्रभावाख्यया दोषं हन्ति करोति वा। दोषमिति दोषशब्देन विकारोऽपि गृह्यते। शक्तिः द्रव्यस्य स्वरूपरूपा सामान्यविशेषात्मिका न्यायदर्शनसिद्धा वा भवतु, भट्टनयसिद्धा वा तदतिरिक्ता कार्यगम्या भवतु, नेह तद्विचारः प्रयोजकः; उभयथाऽपि शक्तिसिद्धेः। इयमेव शक्तिस्तन्त्रान्तरे प्रभावशब्देन, इह चाचिन्त्यशब्देन व्यवह्रियते। रसविपाकाभ्यामिति समासोपदेशेन भूयस्त्वाऽपि द्रव्यादीनां कार्यकर्तृत्वं सूचितम्। अत्र दोषहरणकरणाभ्यामेव सर्वद्रव्यकार्यावरोधः। तद्द्रव्यमात्मनेत्यादिना स्वकार्ये सर्वप्राधान्येऽपि मुख्यकर्तृतया द्रव्यं प्रधानमित्युक्तम्'' इति चक्रः।

हनने करणे च कर्तृकारकं; तत्र द्रव्यमात्मना पार्थिवाप्यतैजसवायव्याकाशीयस्वरूपेण दोषं हन्ति, यथा—खदिरः कुष्ठं, दोषशब्दोऽत्र व्याधावपि वर्तते; वीर्येण द्विविधेनाष्टविधेन वा सेवितं द्रव्यं दोषं हन्ति, तच्च महत्पञ्चमूलादिकमेतस्मिन्नध्याये कथितमेव; रसेन कृत्वा द्रव्यं दोषं हन्ति, यथा—तिक्ता गुडूच्युष्णवीर्याऽपि पित्तं शमयति; विपाकेन कृत्वा द्रव्यं दोषं हन्ति, यथा—शुण्ठी कटुकाऽपि वातं शमयति, मधुरविपाकत्वात् ॥ १४ ॥

**पाको[1] नास्ति विना वीर्याद्वीर्यं नास्ति विना रसात् ॥**
**रसो नास्ति विना द्रव्याद्द्रव्यं श्रेष्ठतमं[2] स्मृतम् १५**

रसादीनां द्रव्यकार्यत्वाद्द्रव्यस्य प्राधान्यं दर्शयन्नाह—पाक इत्यादि । श्रेष्ठतमं प्रशस्यतमम् । एतेनाश्रयो द्रव्यम्, आश्रयिणो रसादयः ॥ १५ ॥

**जन्म[3] तु द्रव्यरसयोरन्योन्यापेक्षिकं स्मृतम् ॥**
**अन्योन्यापेक्षिकं जन्म यथा स्याद्देहदेहिनोः ॥ १६ ॥**
**वीर्यसंज्ञा[4] गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः ॥**
**रसेषु न भवन्त्येते निर्गुणास्तु गुणाः स्मृताः ॥१७॥**
**द्रव्ये[5] द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः ॥**
**श्रेष्ठं द्रव्यमतो ज्ञेयं, शेषा भावास्तदाश्रयाः ॥ १८ ॥**

कार्यकारणभावेऽपि यथाऽग्नेर्धूमो जायते नैवं रसादयो द्रव्याज्जायन्ते, किं तर्हि द्रव्यरसादीनां च सहैव जन्मेति दर्शयन्नाह—जन्म त्वित्यादि । अन्योन्यापेक्षिकमिति अन्योन्याश्रितमेकवेलोत्पत्तिरित्यर्थः । किमिवेत्याह—अन्योन्येत्यादि । देहः शरीरं, देही आत्मा । एवं रसं द्रव्याश्रयं प्रतिपाद्य वीर्यमपि द्रव्याश्रयं प्रतिपादयन्नाह—वीर्यसंज्ञा इत्यादि । अपिशब्दादन्येऽपि स्थूलसूक्ष्मादयो गुणा द्रव्याश्रया एव । निर्गुणास्तु गुणाः स्मृता इति । एते शीतादयः स्थूलसूक्ष्मादयश्चान्ये गुणाः, रसोऽपि गुणः, अतो गुणेषु गुणा न संभवन्ति तस्माद्द्रव्यस्यैवैते शीतादयो गुणा इति । तथा विपाकमपि द्रव्याश्रयमेव प्रतिपादयन्नाह—द्रव्ये इत्यादि । द्रव्ये पञ्चभूतात्मकदेहे, द्रव्याणि आहारद्रव्याणि; न षड्रसाः, निरवयवत्वात् । शेषा भावा इति रसादय इत्यर्थः, तदाश्रया इति द्रव्याश्रया इत्यर्थः । अत्र पाठान्तराणि तद्व्याख्यानान्तराणि च बहूनि सन्ति, तानि विस्तरभयान्न लिखितानि ॥ १६—१८ ॥

**अमीमांस्यान्यचिन्त्यानि[1] प्रसिद्धानि स्वभावतः ॥**
**आगमेनोपयोज्यानि भेषजानि विचक्षणैः ॥ १९ ॥**

यथोक्तभेषजानां स्वबुद्ध्या विचारनिषेधं निदर्शयन्नाह—अमीमांस्यानीत्यादि । अमीमांस्यानि न विचार्याणि, अचिन्त्यानि यान्येवाचिन्त्यानि तान्येवामीमांस्यानि । कानि पुनस्तानि ? खदिरतुवरकरसाञ्जनहरिद्रादीनि कुष्ठघ्नानि, न तु सर्वाणि द्रव्याणि; अन्यथा 'वर्गमपि वर्गेणोपसृजेत्', तथा 'बीजेनानेन मतिमान् कुर्याद्बस्तिशतान्यपि' ( चि. अ. ३८ ) इत्यादि विरुद्धं भवेत् । स्वभावतो जन्मतः । अन्ये तु आगमे यानि भेषजानि प्रसिद्धानि तान्यमीमांसान्यविचारणीयानि; कुतो हेतोरविचार्याणि ? यतः स्वभावतोऽचिन्त्यानि तेषां स्वभावश्चिन्तयितुं न शक्यत इत्यर्थः; यथा द्रवत्वमपामुष्णत्वमग्नेरित्यादि । कथं पुनस्तानि प्रयोज्यानीत्याह—आगमेनोपयोज्यानि; आगमेनैवैकेनोपयोगः कार्य इत्यर्थः ॥ १९ ॥

---

१ 'संप्रति पाकाद्यपेक्षणीयतया पाकाद्याश्रयतया च द्रव्यप्राधान्यं दर्शयन्नाह—पाको नास्तीत्यादि । शीतवीर्यं पृथिवीजलाश्रयं मधुरं गुरुं च पाकं निष्पादयति, तथा उष्णवीर्यमग्न्याश्रयमाकाशलाघवसहितं कटुकलघुपाकं च जनयति । द्रव्यमाधारकारणमिति विपाकवीर्यरसानां सर्वेषामेवाधारकारणतया द्रव्यं प्रधानमित्युक्तं भवति; किंवा विपाकादीनां स्वस्वकार्योपदर्शनमेतत् । यथा–द्रव्योपयोगानन्तरं रसः स्वकार्यं करोति, ततो वीर्यं परिणामावस्थायां कार्यं करोति, ततोऽन्ते विपाकः । तदुक्तं चरके–"रसो निपाते द्रव्याणां विपाकः कर्मनिष्ठया । वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते" इति चक्रः । २ 'श्रेष्ठमतः' इति पा० । ३ 'अथ द्रव्यं चेद्रसस्य कारणं, कारणं च नावश्यं कार्यं जनयति, तत् किं रसं विनाऽपि द्रव्यं भवतीत्याशङ्कां निराकुर्वन्नाह–जन्म त्वित्यादि । तत्र द्रव्यं कार्यद्रव्यं धान्यफलवृक्षादि । जन्मशब्देन चाभिव्यक्तिरुच्यते' इति चक्रः । ४ 'अथ पाको नास्ति विना वीर्यादित्यादिना मुख्यतया रसं द्रव्याश्रयं प्रतिपाद्य रसाश्रयतया वीर्यस्यापि द्रव्याश्रयत्वं परंपरया प्रतिपादितं, संप्रति रसवद्वीर्यस्यापि द्रव्याश्रयत्वं प्रतिपादयन्नाह–वीर्यसंज्ञा इत्यादि । अपिशब्दात् स्थूलसूक्ष्मादयो गुणा द्रव्याश्रयत्वेन गृह्यन्ते । अथ रसाश्रयाः पूर्वममी गुणा उक्ताः, तथा रसगुणकथनेन च 'मधुरो रसः शीतः' इत्यादिना रसाश्रया वीर्यादयो गुणा वक्तव्याः, तत् कथमिह द्रव्या उच्यन्त इत्याह–रसेषु न भवन्तीत्यादि । एतेन परमार्थतो रसगुणे निर्गुणत्वाद् वीर्यरूपा गुणास्तथाऽन्ये संख्यादयो न भवन्त्येव । एकाश्रयतया तूपचारात् सुखेन द्रव्यगुणप्रतीत्यर्थं गौरवतयोच्यन्ते' इति चक्रः । ५ 'विपाकस्यापि द्रव्याश्रयत्वेन द्रव्यप्राधान्यमाह–द्रव्ये द्रव्याणीत्यादि । द्रव्ये आहाररूपे, द्रव्याणि आहारगतानि पृथिव्यादीनि, पच्यन्ते न रसा इति रसानां परतन्त्रत्वेन स्वतन्त्रपाकाविषयत्वात्, द्रव्ये स्वाग्निसंयोगात् पच्यमाने पाकाज्जायमानतया रसः पच्यत इति व्यपदिश्यत इत्यर्थः । यदा 'द्रव्यं द्रव्येण' इति पाठस्तदा द्रव्येणेति जठराग्निना, इति विशेषः । प्रकरणव्युत्पादितं द्रव्यप्राधान्यं निगमयति–द्रव्यं श्रेष्ठतममिति । शेषा भावा रसवीर्यविपाकाः' इति चक्रः ।

१ 'इदानीं द्रव्यविषये परीक्षारूपमीमांसाया दर्शितत्वादचिन्त्यद्रव्यस्वभावेऽपि मीमांसा वो माभूदित्याह–अमीमांस्यानीत्यादि । अचिन्त्यानि यानि भेषजानि यथा दन्ती चित्रकसमाऽपि विरेचयति, लोहाकर्षकमणिर्लोहमाकर्षयतीत्याद्युक्तानि आगमावधारितानि मीमांसया अपरीक्ष्याणि; कथं तर्हि तानि ज्ञातव्यानीत्याह–प्रसिद्धानि स्वभावत इति । आगमादेव परं प्रसिद्धतमा भवन्तीत्यर्थः । एतेन यानि चिन्त्यानि भेषजानि तेषां मीमांसा कर्तव्यैव' इति चक्रः ।

**प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः ॥**
**नौषधीर्हेतुभिर्विद्वान् परीक्षेत कदाचन ॥ २० ॥**
**सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत् ॥**
**तस्मात्तिष्ठेत्तु मतिमानागमे न तु हेतुषु ॥ २१ ॥**

**इति श्रीसुश्रुतसंहितायां सूत्रस्थाने द्रव्यगुणरसवीर्यविपाकविज्ञानीयो नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥**

ननु, अनुमानविरुद्धानि कथमागमैकप्रयोज्यानीत्याशङ्क्य, आगमस्य प्रत्यक्षफलत्वेन बलीयस्त्वं दर्शयन्नाह—प्रत्यक्षेत्यादि । प्रत्यक्षलक्षणफला हिताहितभेदेन । कुतः पुनर्हेतुभिर्न परीक्षणीयं भेषजं प्रसिद्धलक्षणफलमित्याह–सहस्रेणेत्यादि ॥ २० ॥ २१ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशत्तमोऽध्यायः ।

**अथातो द्रव्यविशेषविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । द्रव्यस्य विशेषो भेदः पार्थिवादिकः॥१॥२

**तत्र पृथिव्यप्तेजोवाय्वाकाशानां समुदायाद्द्रव्याभिनिर्वृत्तिः, उत्कर्षस्त्वभिव्यञ्जको भवति—इदं पार्थिवमिदमाप्यमिदं तैजसमिदं वायव्यमिदमाकाशीयमिति ॥ ३ ॥**

तत्र सर्वेषामेव द्रव्याणां पञ्चभूताभिनिर्वृत्तत्वात् पृथग्द्रव्याणां पृथिव्याद्यारब्धानां परमार्थभेदो नास्तीत्युत्कर्षोपाधिभेदं दर्शयन्नाह—तत्रेत्यादि । समुदायात् समवायात् । द्रव्याभिनिर्वृत्तिर्द्रव्यजन्म । अभिव्यञ्जको ज्ञापकः ॥ ३ ॥

**तत्र स्थूलसान्द्रमन्दस्थिरगुरुकठिनं गन्धबहुलमीषत्कषायं प्रायशो मधुरमिति पार्थिवं; तत् स्थैर्यबलगौरवसंघातोपचयकरं विशेषतश्चाधोगतिस्वभावमिति; ॥ (१) ॥**

तत्र प्रभूतं द्रव्याभिव्यक्तिकारणं पृथिव्यादिभूतगुणोत्कर्षं निर्दिशन्नाह—तत्र स्थूलेत्यादि । स्थूलः सूक्ष्मविपरीतः, सान्द्रस्तनुविपर्ययः, मन्दस्तीक्ष्णविपर्ययः, सरविपरीतः स्थिरः, गुरुश्चिरपाकी, कठिनो मृदुविपरीतः । पार्थिवस्य लक्षणाभिधानेन गुणवत्त्वमभिधाय क्रियावत्त्वं दर्शयन्नाह—तत्र स्थैर्येत्यादि । स्थैर्यमचलत्वं, सङ्घातः काठिन्यम्, उपचयो बृंहणम् ॥ (१) ॥

**शीतस्तिमितस्निग्धमन्दगुरुसरसान्द्रमृदुपिच्छिलं रसबहुलमीषत्कषायाम्ललवणं मधुररसप्रायमाप्यं; तत् स्नेहनह्लादनक्लेदनबन्धनविष्यन्दनकरमिति; ॥ (२) ॥**

इदानीमाप्यद्रव्यमप्गुणोत्कर्षेण भिन्नं दर्शयन्नाह—शीतमित्यादि । स्तिमितमार्द्रं, जडमित्यन्ये । आप्यस्य लक्षणाभिधानेन गुणवत्त्वमभिधाय क्रियावत्त्वं दर्शयन्नाह—तत् स्नेहनेत्यादि । ह्लादनं सुखोत्पादनं, क्लेदनमार्द्रभावः, बन्धनं संहत्यापादनं, विष्यन्दनं द्रवस्रुतिः ॥ ( २ ) ॥

**उष्णतीक्ष्णसूक्ष्मरूक्षखरलघुविशदं रूपबहुलमीषदम्ललवणं कटुकरसप्रायं विशेषतश्चोर्ध्वगतिस्वभावमिति तैजसं; तद्दहनपचनदारणतापनप्रकाशनप्रभावर्णकरमिति; ॥ (३) ॥**

आग्नेयद्रव्यलक्षणं तद्भूतगुणोत्कर्षेण दर्शयन्नाह—उष्णेत्यादि । तीक्ष्णं राजिकामरिचादिवत्, सूक्ष्मं स्रोतोनुसरणशीलं, विशदं पिच्छिलविपरीतम् । तस्य क्रियावत्त्वं दर्शयन्नाह—दहनेत्यादि । दहनं भस्मसात्करणं, पचनमाहारादिपाकः, दारणं व्रणादेः, तापनं शरीरादिसंतापनं, प्रकाशनमभिव्यक्तिः, प्रभा तेजः, वर्णो गौरादिः ॥ ( ३ ) ॥

---

१ 'आगमस्यैवात्र बलवत्त्वं दर्शयन्नाह–प्रत्यक्षेत्यादि । प्रत्यक्षेण लक्ष्यते दृश्यते फलं यासां दन्तीविषहरमणिप्रभृतीनां ताः प्रत्यक्षलक्षणफलाः । प्रसिद्धा इत्यागमप्रसिद्धाः । स्वभावत इत्यचिन्त्यस्वरूपतो विरेचकत्वस्तम्भनत्वविषहरत्वादेः । हेतुभिरित्यागमविरुद्धैः कुहेतुभिः । आगमानुगुणैः सद्धेतुभिर्भेषजादीनि सर्वाण्येव परीक्ष्याणि । स्वागमस्यानुमानाबाधनीयत्वमेवोदाहरणेनाह—सहस्रेणेत्यादि । अत्र 'अम्बष्ठादिर्विरेचयति पृथिवीतोयगुणयुक्तत्वात्, त्रिवृतादिवत्' इत्यादि बहुकुहेतुभिरपि आगमबाधितैर्नाम्बष्ठादिर्विरेचयति, किंत्वागमोक्तं संग्रहणमेव करोति' इति चक्रः। २ 'पूर्वाध्यायोक्तद्रव्यस्य तत्रानुक्तविशेषविज्ञानार्थं, तथा तदधिकारेण च वीर्यविपाकयोर्ज्ञानार्थं द्रव्यविशेषविज्ञानीयोऽभिधीयते । द्रव्यस्य पाञ्चभौतिककार्यद्रव्यस्य पार्थिवत्वादय इह विशेषा विवक्षिताः' इति चक्रः । ३ 'सर्वकार्यद्रव्याणां पञ्चभूतारब्धत्वं दर्शयित्वा चिकित्सोपयुक्तं पार्थिवत्वादिविशेषमाह–तत्र पृथिव्यप्तेज इत्यादि । समुदायादिति मेलकात् । पृथिवीजलादीनां च यद्यपि विरुद्धगुणत्वं तथाऽप्यदृष्टवशादेकद्रव्यरूपकार्यारम्भकं दृष्टत्वादेव भवति । यथा वातादीनामेकव्याध्यारम्भकत्वं, शुक्रशोणितयोर्गर्भजनकत्वं, सत्त्वरजस्तमसां वा महदाद्यारम्भकत्वम् । उत्कर्षः प्रत्येकं पृथिव्याद्युत्कर्षः । अभिव्यञ्जक इति पार्थिवत्वाद्यभिव्यञ्जकः' इति चक्रः ।

१ हाराणचन्द्रस्तु 'स्थूलसारसान्द्र' इत्यादि पठति, 'सारं स्थिरांशं पाकादिभिः क्षयापचयरहितमित्येतत्' इति च व्याख्यानयति। २ 'अत्र गुणे गन्धबहुलमिति वचनात् पृथिव्याः सांसिद्धिकेन गन्धबाहुल्येन योगं दर्शयति । एवं जलादिष्वपि सांसिद्धिकेन रसादिविशेषेण योगं दर्शयन् बहुलशब्दं करिष्यति । ईषत्कषायमिति पृथिव्यनिलयोगाज्ज्ञेयं, यद्वक्ष्यति–'पृथिव्यनिलगुणबाहुल्यात् कषायः' इति, प्रायशो मधुरमिति मधुरप्रधानं, पृथिव्या मधुररसकारणत्वात्' इति चक्रः ।

**सूक्ष्मरूक्षखरशिशिरलघुविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतः कषायमिति वायवीयं; तद्वैशद्यलाघवग्लपनविरूक्षणविचारणकरमिति;॥ (४)॥**

वायुगुणोत्कर्षाद्वायव्यं द्रव्यविशेषं दर्शयन्नाह—सूक्ष्मेत्यादि। खरं कर्कोटकफलवत्, शिशिरं शीतं, विशदं धूलिवत्। तस्यैव कर्म दर्शयन्नाह—तद्वैशद्येत्यादि। ग्लपनमवृष्यत्वं, विचारणं मनसोऽनेकविकल्पकारणं; 'विचरणकरम्' इत्यन्ये पठन्ति, तत्र गतिविशेषकरमित्यर्थः; 'विधारणम्' इत्यन्ये॥ (४)॥

**श्लक्ष्णसूक्ष्ममृदुव्यवायिविशदविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयं; तन्मार्दवशौषिर्यलाघवकरमिति॥ (५)॥ ४॥**

आकाशगुणोत्कर्षेणाकाशीयं द्रव्यविशेषं दर्शयन्नाह—श्लक्ष्णेत्यादि। श्लक्ष्णं मसृणं, मृदु कोमलं, व्यवायीति समस्तदेहं व्याप्य पश्चात् पाकं गच्छति विषमद्यवत्, विविक्तं पृथग्भूतम्, अवयवद्वारेण शून्यमित्यन्ये, अव्यक्तरसं मधुरादिरसविशेषानुपलब्धेः। तस्य कर्माणि निर्दिशन्नाह—तन्मार्दवेत्यादि। शौषिर्यं छिद्रभावः॥ (५)॥ ४॥

**अनेनं निदर्शनेन नानौषधीभूतं जगति किंचिद्द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थं चाभिसमीक्ष्य स्ववीर्यगुणयुक्तानि द्रव्याणि कार्मुकाणि भवन्ति। तानि यदा कुर्वन्ति स कालः, यत् कुर्वन्ति तत् कर्म, येन कुर्वन्ति तद्वीर्यं, यत्र कुर्वन्ति तदधिकरणं, यथा कुर्वन्ति स उपायः, यन्निष्पादयन्ति तत् फलमिति॥ ५॥**

इदानीं सर्वस्यैव जगतः स्थावरजङ्गमाख्यस्य पाञ्चभौतिकत्वेन सर्वमौषधं क्रियागुणयोगादिभिर्दर्शयन्नाह—अनेनेत्यादि। नानौषधिभूतमिति अनौषधिभूतं द्रव्यं नास्तीति संबन्धः। युक्तिविशेषमिति युक्तिविशेषो योजनाविशेषस्तोयाग्निसंस्कारवासनभावनामात्राकालाद्यपेक्षः। अर्थं चेति। अर्थः प्रयोजनं नानाव्याधिनिर्वातनं, वीर्यं शक्तिः शीतोष्णादयो वाऽष्टौ शक्तिमन्तो गुणाः, गुणा गुर्वादयः, अन्ये तु वीर्यप्रधाना गुणा वीर्यगुणास्ते पुनः सरत्वादयः। कार्मुकाणि कार्यकराणि। तानि द्रव्याणि यदा यस्मिन् काले, क्रियां कुर्वन्ति स कालः; कालश्च संवत्सरात्मा ऋत्वाख्यः शीतोष्णवर्षलक्षणश्चातुरावस्थिकश्चाभिप्रेतः। यदित्यादि कर्मशब्देनात्र भेषजद्रव्यव्यापारः शोधनादिरुक्तः। येनेत्यादि। वीर्यमिति शक्तिः। यत्रेत्यादि। अधिकरणमिति पञ्चमहाभूतशरीरिसमवायिलक्षणः पुरुषोऽधिकरणम्। यथेत्यादि। येन स्वरसकल्कशृतशीतफाण्टघृततैललेहमोदकोत्कारिकादिप्रकारेण कुर्वन्ति स उपायः। यदिति स्वास्थ्यमस्वास्थ्यं वा॥ ५॥

**तत्र, विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि, पृथिव्यापो गुर्व्यः, तानि गुरुत्वादधो गच्छन्ति, तस्माद्विरेचनमधोगुणभूयिष्ठमनुमानात्; वमनद्रव्याण्यग्निवायुगुणभूयिष्ठानि, अग्निवायू हि लघू, लघुत्वाच्च तान्यूर्ध्वमुत्तिष्ठन्ति, तस्माद्वमनमप्यूर्ध्वगुणभूयिष्ठम्; उभयगुणभूयिष्ठमुभयतोभागम्; आकाशगुणभूयिष्ठं संशमनं; सांग्राहिकमनिलगुणभूयिष्ठम्, अनिलस्य शोषणात्मकत्वात्; दीपनमग्निगुणभूयिष्ठं, तत्समानत्वात्; लेखनमनिलानलगु-**

---

१ 'एवं तदुक्तपार्थिवादिद्रव्यस्वरूपस्य सर्वस्थावरजङ्गमस्य भेषजताप्रतिपत्तिफलं यथा भवति तदाह—अनेनेत्यादि। निदर्श्यन्ते पार्थिवादीनां स्वरूपमनेनेति निदर्शनमागमः। तेनागमेनेति अनन्तरोक्तेन पार्थिवादिद्रव्यस्वरूपप्रतिपादकेनागमेन। नानौषधिभूतमिति प्रतिषेधद्वयेनौषधिस्वरूपमित्यर्थः। एतदौषधित्वं सर्वद्रव्याणां यथा भवति तदाह—इति कृत्वा तं तं युक्तिविशेषमित्यादि। युक्तिविशेषमिति योजनाप्रकारम्। स च योजनाविशेषो बाह्य आभ्यन्तरो वा शास्त्रे उक्तो वक्ष्यमाणः कालाद्यपेक्षः। अर्थमिति साध्यं; तच्च नानाव्याधिघातेन स्वस्थपालनविशेषरूपम्। स्ववीर्यगुणयुक्तानीति स्वशक्त्या प्रभावेण, गुणेन च रसवीर्यविपाकादिना युक्तानि। कर्मकराणीति कर्मणि समर्थानि। किंवा स्ववीर्ययुक्तानीति स्वकीयकार्यकरधर्मयुक्तानि, कार्यक्षमं हि द्रव्यधर्मं 'येन कुर्वन्ति तद्वीर्यं' इत्यनेन वक्ष्यति। गुणशब्दोऽयं धर्मवचनः। एतदेवोक्तं युक्त्यपेक्षकार्यविशेषे वीर्यगुणयुक्तस्य द्रव्यस्य कर्तृत्वं भेदेनाह—तानि यदेत्यादिना तत्फलमित्यन्तेन। येनेति प्रभावेण रसेन वीर्येण विपाकेन वा; अयं च वीर्यशब्दः पारिभाषिकवीर्यवचनो न भवति, किंतु शक्तिमात्रवचनः; तेन प्रभावरसादयः सर्व एव स्वकार्यं कुर्वन्तो द्रव्यस्य शक्तिपर्यायरूपवीर्यवाच्या इति ज्ञेयाः। यन्निष्पादयन्तीति आरोग्यविशेषं स्वस्थानुवृत्तिविशेषं रसायनफलं वा। अत्र सर्वद्रव्यभेषजत्वकथनं विषाग्निप्रभृतीनामपि तत्साध्यं प्रति क्वचिद्धितत्वाद्युक्तमेव। येन विषं विषहरणे उदरे च विधीयत एव। यत्तु मधुघृतादिसंयोगादिना विरुद्धं, तत् प्रत्येकं भेषजं कचिद्भवत्येव; संयुक्तं च वैरोधिकत्वाद्भेषजं न भवतीति न काचित् क्षतिः। नह्यत्र सर्वथा द्रव्याणां भेषजत्वं प्रतिज्ञातं, किन्तु विवक्षितयोजनादियुक्तत्वेनेति' इति चक्रः। २ 'कर्मकराणि' इति पा०।

१ 'वा' इति पा०। २ 'अनुमानाल्लक्षयेदिति विरेचने यानि त्रिवृतादिद्रव्याण्युक्तानि तानि पृथिव्यम्बुगुणगुरुत्वयुक्तान्यनुमानाज्ज्ञेयानि। गुरुत्वानुमानेन च गुरुत्वकार्यान्तरवातशमनाग्न्यननुगुणत्वादि ज्ञायते। यत्तु पृथिव्यम्बुगुणेन गुरुत्वादिभूयिष्ठानुमानं तन्न युज्यते, न हि यत् पृथिव्यम्बुगुणगुरुत्वभूयिष्ठं तत् सर्वं विरेचनं, तथा सति माषादीनामपि गुरुत्वाद्विरेचकत्वप्रसक्तिः; तस्माद्विरेचकत्वप्रभावसहितं गुरुत्वं विरेचकम्। प्रभावप्रतीतिश्च यतः प्रमाणादागमादन्यतो वा तत एव च विरेचकं प्रतिपन्नमिति। लघुत्वादूर्ध्वमुत्तिष्ठते इत्यत्रापि प्रभावसहितादिति ज्ञेयम्। वायुश्च यद्यपि तिर्यग्गतिस्तथाऽप्यूर्ध्वगेनाग्निना युक्तो योगवाहित्वादूर्ध्वं गच्छतीति युक्तम्।' इति चक्रः।

णभूयिष्ठं; बृंहणं पृथिव्यम्बुगुणभूयिष्ठम्; एवमौषधकर्माण्यनुमानात् साधयेत् ॥ ६ ॥

भवन्ति चात्र—

भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः ॥
भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिम् ७
खतेजोनिलजैः श्लेष्मा शममेति शरीरिणाम् ॥
वियत्पवनजाताभ्यां वृद्धिमभ्येति मारुतः ॥ ८ ॥
आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्यते ॥
वसुधाजलजाताभ्यां बलासः परिवर्धते ॥ ९ ॥

तत्रेत्यादि । गुरुत्वादिति गुरुत्वलघुत्वे चेह प्रभावविशेषाधिष्ठिते त्रिवृतादिमदनफलादिद्रव्यसमवेते ग्राह्ये, न तु गुरुत्वलघुत्वमात्रे; अन्यथा मत्स्यपिष्टान्नमसूरादीनां विरेचकत्वं कपिञ्जललावादीनां च वामनीयत्वं स्यात्। अधो गच्छन्ति उपलादिवत्। अधोगुणभूयिष्ठं पृथिव्यम्बुगुणभूयिष्ठमित्यर्थः । वमनेत्यादि ऊर्ध्वमुत्तिष्ठन्तीति धूमवज्ज्वालवच्च । वमनद्रव्यमूर्ध्वगुणभूयिष्ठम् अग्निवायुगुणभूयिष्ठमित्यर्थः । उभयगुणभूयिष्ठमिति विरेचनवमननिर्दिष्टभूतचतुष्टयगुणभूयिष्ठमित्यर्थः । संशमनमिति "न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति क्रुद्धांश्च तत् संशमनमुच्यते" इति । लेखनं कफमेदसोः । निर्वृतिः शान्तिः ॥ ६—९ ॥

एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये विनिश्चितम् ॥
द्विशो वा बहुशो वाऽपि ज्ञात्वा दोषेषु चाचरेत् १०

एवमित्यादि । एवमनेन प्रकारेण । एतत् पूर्वोक्तम् । द्विश इति द्वयोर्द्वयोर्दोषयोः । बहुश इति बहूनां दोषाणामित्यर्थः । दोषेषु चाचरेदिति चकाराद्रोगेष्वप्येवमाचरेदिति समुच्चीयते ॥ १० ॥

तत्र य इमे गुणा वीर्यसंज्ञकाः शीतोष्णस्निग्धरूक्षमृदुतीक्ष्णपिच्छिलविशदास्तेषां तीक्ष्णोष्णावाग्नेयौ, शीतपिच्छिलावम्बुगुणभूयिष्ठौ, पृथिव्यम्बुगुणभूयिष्ठः स्नेहः, तोयाकाशगुणभूयिष्ठं मृदुत्वं, वायुगुणभूयिष्ठं रौक्ष्यं, क्षितिसमीरणगुणभूयिष्ठं वैशद्यं; विपाकावुक्तगुणौ । तत्र, उष्णस्निग्धौ वातघ्नौ, शीतमृदुपिच्छिलाः पित्तघ्नाः, तीक्ष्णरूक्षविशदाः श्लेष्मघ्नाः, गुरुपाको वातपित्तघ्नः, लघुपाकः श्लेष्मघ्नः । तेषां मृदुशीतोष्णाः स्पर्शग्राह्याः, पिच्छिलविशदौ चक्षुःस्पर्शाभ्यां, स्निग्धरूक्षौ चक्षुषा, तीक्ष्णो मुखे दुःखोत्पादनात् । गुरुपाकः सृष्टविण्मूत्रतया कफोत्क्लेशेन च, लघुर्बद्धविण्मूत्रतया मारुतकोपेन च । तत्र तुल्यगुणेषु भूतेषु रसवैशेष्यमुपलक्षयेत्; तद्यथा—मधुरो गुरुश्च पार्थिवः, मधुरः स्निग्धश्चाप्य इति ॥ ११ ॥

तत्रेत्यादि । इमे वक्ष्यमाणाः । विपाकयोर्मधुरकटुकयोः प्रागुक्ता गुणाः । तत्रोष्णेत्यादि उष्णस्निग्धौ वीर्यसंज्ञौ गुणौ । तेषामष्टानां वीर्याणां मध्ये । मुखे दुःखोत्पादनादिति अत्र चार्थो द्रष्टव्यः, तेन घ्राणदुःखोत्पादनाच्चेति द्रष्टव्यम् । स्निग्धश्चेति चकाराद्गुरुश्च ॥ ११ ॥

भवति चात्र—

गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा ॥
स्थानवृद्धिक्षयास्तस्माद्देहिनां द्रव्यहेतुकाः ॥१२॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रव्यविशेषविज्ञानीयो नामैकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥

गुणा इत्यादि । गुणा विंशतिरधिका वा । स्थानं दोषधातुमलसाम्येनावस्थानं, वृद्धिर्दोषादेराधिक्यं, क्षयः ह्रासो दोषादीनाम् । द्रव्यहेतुकाः पाञ्चभौतिकद्रव्यहेतुकाः ॥ १२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां
सुश्रुतव्याख्यायां सूत्रस्थाने एकचत्वा-
रिंशत्तमोऽध्यायः ॥ ४१ ॥

## द्विचत्वारिंशत्तमोऽध्यायः ।

अथातो रसविशेषविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि । रसविशेषो मधुरादिः, तस्य विज्ञानं विशिष्टं ज्ञानम् ॥ १ ॥ २ ॥

आकाशपवनदहनतोयभूमिषु यथासङ्ख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः, तस्मादाप्यो

---

१ 'दोषेष्विति द्रव्यगुणविपरीतगुणेषु, दोषविपरीतगुणं हि द्रव्यं भेषजमिति व्यवस्थितमेव' इति चक्रः । 'दोषेऽवचारयेत्' इति पा० । २ 'गुरुलघुमृदुतीक्ष्णा' इति हाराणचन्द्रसंमतः पाठः । ३ 'गुरुशीतौ पृथिव्यम्बुगुणभूयिष्ठौ' इति हा. पा. । ४ 'अम्बुगुणभूयिष्ठः' इति हा. पा. । ५ 'अब्याकाशसमीरणगुणभूयिष्ठं लघुत्वं' इति हा. पा. । ६ 'गुरूष्णस्निग्धा वातघ्नाः, मृदुशीतौ पित्तघ्नौ, लघुतीक्ष्णरूक्षाः श्लेष्मघ्नाः' इति हा. पा. । ७ 'मृदुशीतोष्णानां स्पर्शेनापि ग्रहणं भवतीति स्पर्शग्राह्या इत्युक्ताः । येन सैन्धवगतं शीतत्वमानुपमांसगतमौष्ण्यमित्यादि न स्पर्शग्राह्यं, किंतु कार्यानुमेयमागमप्रतिपादनीयं वा, एवमस्पर्शादिग्राह्येष्वपि तदुदाहरणमनुसरणीयम्' इति चक्रः ।

१ 'तेषां शीतोष्णस्निग्धा ह्लादनपाचनस्तम्भनादिना, रूक्षगुरुलघवो विरूक्षणोपलेपलेखनादिना, तीक्ष्णो दहनपचनादिना, मृदुस्त्वद्विपर्यासेनानुमीयते' इति हा. पा. । २ 'पूर्वाध्याये द्रव्यवीर्यविपाकानां विशेषमभिधायावशिष्टरसविशेषविज्ञानार्थं रसविज्ञानीयोऽभिधीयते । रसस्य कारणसंभवसंख्यार्थलक्षणादिभिर्विज्ञानार्थो रसविज्ञानीयः ।' इति चक्रः । ३ 'एकैकेन शब्दादिगुणेन उत्तरे उत्तरे भूते परिवृद्धा एकोत्तरपरिवृद्धाः । तत्रोत्तरोत्तरे भूते शब्दादयो गुणाः पूर्वभूतानुप्रवेशकृताः; शब्दादयस्त्वाकाशादीनां यथाक्रमं नैसर्गिकाः; यस्मात्

**रसः। परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्ति, उत्कर्षापकर्षात्तु ग्रहणम्। स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षोढा विभज्यते; तद्यथा-मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति। ते च भूयः परस्परसंसर्गात्त्रिषष्टिधा भिद्यन्ते । तत्र, भूम्यम्बुगुणबाहुल्यान्मधुरः, भूम्यग्निगुणबाहुल्यादम्लः, तोयाग्निगुणबाहुल्याल्लवणः, वाय्वग्निगुणबाहुल्यात् कटुकः, वाय्वाकाशगुणबाहुल्यात्तिक्तः, पृथिव्यनिलगुणबाहुल्यात् कषाय इति ॥ ३ ॥**

रससामान्यस्य प्रथमं कारणसंभवं दर्शयन्नाह—आकाशेत्यादि । आकाशपवनदहनतोयभूमिषु यथासंख्यं शब्दस्पर्शरूपरसगन्धा 'जायन्ते' इति शेषः । किंविशिष्टास्ते ? एकोत्तरपरिवृद्धा इति; तथाहि—शब्दगुणमाकाशं, शब्दस्पर्शगुणो वायुः, शब्दस्पर्शरूपगुणं तेजः, शब्दस्पर्शरूपरसगुणा आपः, शब्दस्पर्शरूपरसगन्धगुणा पृथ्वी; परस्परं भूतानुप्रवेशादित्थमेकोत्तरा वृद्धिर्ज्ञेया । आप्यो जलसंभवः । तत्र सर्वेष्वेव भूतेषु सर्वभूतानां सान्निध्यमस्तीति दर्शयन्नाह—परस्परसंसर्गादित्यादि । परस्परसंसर्गात् अन्योन्यसंयोगात्, परस्परानुग्रहात् अन्योन्योपकारात्, परस्परानुप्रवेशात् अनुप्रवेशादेकात्मीभावात्, सर्वेषु भूतेषु, सर्वेषामाकाशादीनां, सर्वेषु द्रव्येष्वित्यन्ये । सर्वेषु भूतेषु सर्वभूतानां सान्निध्यमस्तीति सर्वे एव गुणाः सर्वेषां भूतानां प्राप्नुवन्तीत्याह—उत्कर्षापकर्षादित्यादि ।—उत्कर्षो वृद्धिः, अपकर्षो ह्रासः; आकाशाधिके द्रव्ये शब्दोऽधिकः, वाताधिके द्रव्ये स्पर्शोऽधिकः, एवं शेषेषु भूतेषु शेषगुणाः; तेन सर्वेषामेव भूतानां सर्वात्मकत्वेऽप्युत्कर्षेणाभिधानादाप्य एव रसः । यदि पुनरसौ रस आप्य एव नान्यभूतजः, स एवमपां स्वभावेनाव्यक्तरसत्वात्तेनाप्यव्यक्तरसेन भवितव्यमित्याह—शेषेत्यादि । पानीयादन्यानि भूतानि शेषभूतानि, तेषां संसर्गो मिलनं, ततो हेतोराप्यो रसोऽव्यक्तोऽपि कालसहायभूमिवियदनिलानलसंसर्गेण परिपाकान्तरं गतः, षोढा विभज्यते षट् प्रकारो भवति । तत्र यस्य यस्य शेषभूतस्य संसर्गाद्यो यो रस उत्पद्यते तं तं रसं दर्शयन्नाह—तत्रेत्यादि । ननु च, शेषभूतसंसर्गः प्रतिपादनीयः, तत् कथमुदकोपादानम्? उच्यते—निष्पत्तावेव तोयप्राधान्यमुक्तं; विशेषे तु न प्राप्नोतीति विशेषेऽपि तोयस्य प्राधान्यप्रतिपादनाय पृथिव्यम्बुगुणबाहुल्यादित्युक्तं, 'तोयाग्निगुणबाहुल्यादम्ल' इत्येके पठन्ति ॥ ३ ॥

**तत्र, मधुराम्ललवणा वातघ्नाः, मधुरतिक्तकषायाः पित्तघ्नाः, कटुतिक्तकषायाः श्लेष्मघ्नाः ॥ ४ ॥**

षण्णां रसानां क्रियाविशेषं दर्शयन्नाह—तत्रेत्यादि ॥ ४ ॥

**तत्र वायोरात्मैवात्मा, पित्तमाग्नेयं, श्लेष्मा सौम्य इति ॥ ५ ॥**

दोषाणामुत्पत्तिकारणमाह—तत्रेत्यादि । आत्मैवात्मेति आत्मैव योनिः, वायुतो वातोत्पत्तिरित्यर्थः; पित्तमाग्नेयमिति अनलः पित्तस्य योनिरित्यर्थः; श्लेष्मा सौम्य इति सोमादुत्पद्यत इत्यर्थः ॥ ५ ॥

**त एते रसाः स्वयोनिवर्धना, अन्ययोनिप्रशमनाश्च ॥ ६ ॥**

त एते इत्यादि । स्वयोनिवर्धना इति येभ्यः कारणेभ्यो मधुरादयो रसा उत्पद्यन्ते तानि वर्धयन्तीत्यर्थः ॥ ६ ॥

**केचिदाहुः—अग्नीषोमीयत्वाज्जगतो रसा द्विविधाः-सौम्या आग्नेयाश्च । मधुरतिक्तकषायाः सौम्याः; कट्वम्ललवणा आग्नेयाः। तत्र मधुराम्ललवणाः स्निग्धा गुरवश्च, कटुतिक्तकषाया रूक्षा लघवश्च; सौम्याः शीताः, आग्नेया उष्णाः ॥ ७ ॥**

केचिदित्यादि । अग्नीषोमीयत्वादिति अग्निश्च सोमश्च योनिर्जगत इत्यर्थः । सौम्याश्चाग्नेयाश्चेति चकारद्वयात् स्नेहरूक्षगुरुलघुत्वैरपि द्वैविध्यं सूचयति ॥ ७ ॥

**तत्र शैत्यरौक्ष्यलाघववैशद्यवैष्टम्भ्यगुणलक्षणो वायुः, तस्य समानयोनिः कषायो रसः; सोऽस्य शैत्याच्छैत्यं वर्धयति, रौक्ष्याद्रौक्ष्यं, लाघवाल्लाघवं, वैशद्याद्वैशद्यं, वैष्टम्भ्याद्वैष्टम्भ्यमिति; ॥ (१) ॥**

मधुरेत्यादि । समानयोनिः तुल्ययोनिरित्यर्थः ॥ (१) ॥

**औष्ण्यतैक्ष्ण्यरौक्ष्यलाघववैशद्यगुणलक्षणं पित्तं, तस्य समानयोनिः कटुको रसः; सोऽस्य औष्ण्या-**

क्रमेण शब्दादयो नैसर्गिकास्तस्मादाप्यो रसः। संप्रत्यपामव्यक्तरसत्वेऽपि यथा मधुरादिविशेषैरनुभवत्याप्यो रसस्तदाह–स खल्वित्यादि । शेषभूतानि जलव्यतिरिक्तानि चत्वारि । विदग्ध इति परिणतः; कालसहितभूम्यादिसंसर्गात् पाकादवस्थान्तरगतः षड्विधो भवतीत्यर्थः । ननु यदि शेषभूतयोगान्मधुरादिषड्विधत्वं, तत् कथं 'पृथिव्यम्बुगुणबाहुल्यान्मधुरो रस' इत्यनेन मधुरेऽपि रसविशेषेऽपां कारणत्वमुच्यते? ब्रूमः—आपो रसानामाधारकारणम्, अपां पृथिव्यमनुप्रवेशात् पृथिव्यप्याधारकारणमेव, तेनाप्क्षिती अपि तदाधारतया रसानामभिव्यक्तौ, अभिव्यक्तेश्च मधुरादिरूपतामन्तरेणासंभवात् मधुरादिविशेषेऽपि कारणे भवतः । अग्न्यादयस्तु त्रयो नीरसतया मधुरादिविशेषे निमित्तकारणं प्राधान्येन भवन्ति, तद्व्यतिरेकेणाम्लादिरसाभावात्। रसाभिव्यक्तेश्चाग्न्यादिभूतत्रयसन्निधानं विनाऽनुपपत्तेरभिव्यक्तावपि कारणत्वमग्न्यादीनां भवति । तदुक्तं चरके-"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा । निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः" (च. सू. अ. १) इति । अत्रहि चकारद्वयाज्जलक्षित्योरपि विशेषे कारणत्वं, तथा खादीनां च निर्वृत्तावपि कारणत्वमुक्तं, तेन मधुरे विशेषेऽप्यां कारणत्वायुक्तमेव 'पृथिव्यम्बुगुणबाहुल्यान्मधुरः' इति' इति चक्रः।

१ 'तोयाग्निगुणबाहुल्यादम्लः, भूम्यग्निगुणबाहुल्याल्लवणः' इति पा० ।

दौष्ण्यं वर्धयति, तैक्ष्ण्यात्तैक्ष्ण्यं, रौक्ष्याद्रौक्ष्यं, लाघवाल्लाघवं, वैशद्याद्वैशद्यमिति ॥ (२) ॥

औष्ण्येत्यादि ॥ ( २ ) ॥

माधुर्यस्नेहगौरवशैत्यपैच्छिल्यगुणलक्षणः श्लेष्मा; तस्य समानयोनिर्मधुरो रसः, सोऽस्य माधुर्यान्माधुर्यं वर्धयति, स्नेहात् स्नेहं, गौरवाद्गौरवं, शैत्याच्छैत्यं, पैच्छिल्यात् पैच्छिल्यमिति ॥ (३) ॥

तस्य पुनरन्योनिः कटुको रसः; स श्लेष्मणः प्रत्यनीकत्वात् कटुकत्वान्माधुर्यमभिभवति, रौक्ष्यात् स्नेहं, लाघवाद्गौरवम्, औष्ण्याच्छैत्यं, वैशद्यात् पैच्छिल्यमिति । तदेतन्निदर्शनमात्रमुक्तं भवति ॥ ८ ॥

माधुर्येत्यादि । तस्य श्लेष्मणः । प्रत्यनीकत्वात् विरुद्धत्वात् । निदर्शनमात्रमुक्तमिति दृष्टान्तमात्रमुक्तम् ॥ ८ ॥

रसलक्षणमत ऊर्ध्वं वक्ष्यामः—तत्र, यः परितोषमुत्पादयति प्रह्लादयति तर्पयति जीवयति मुखोपलेपं जनयति श्लेष्माणं चाभिवर्धयति स मधुरः; यो दन्तहर्षमुत्पादयति मुखास्रावं जनयति श्रद्धां चोत्पादयति सोऽम्लः; यो भक्तरुचिमुत्पादयति कफप्रसेकं जनयति मार्दवं चापादयति स लवणः; यो जिह्वाग्रं बाधते उद्वेगं जनयति शिरो गृह्णीते नासिकां च स्रावयति स कटुकः; यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिं चापादयति हर्षं च स तिक्तः; यो वक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कर्षति पीडयति च स कषाय इति ॥ ९ ॥

रसलक्षणमित्यादि । परितोषः परितुष्टिः । प्रह्लादयति सुखमुत्पादयति । तर्पयति तृप्तिं करोति । जीवयति प्राणान् धारयति । उपलेपो मलवृद्धिः । दन्तहर्षो दन्तकुण्ठता । कफप्रसेकः श्लेष्मास्रावः । शिरो गृह्णीते उद्वेजकत्वेन, न तु कफवातवेदनाभिः । चोष आकर्षणम् । हर्षो रोमहर्षः ॥ ९ ॥

रसगुणानत ऊर्ध्वं वक्ष्यामः-तत्र, मधुरो रसो रसरक्तमांसमेदोऽस्थिमज्जौजःशुक्रस्तन्यवर्धनश्चक्षुष्यः केश्यो वर्ण्यो बलकृत्सन्धानः शोणितरसप्रसादनो बालवृद्धक्षतक्षीणहितः षट्पदपिपीलिकानामिष्टतमस्तृष्णामूर्च्छादाहप्रशमनः षडिन्द्रियप्रसादनः क्रिमिकफकरश्चेति; स एवंगुणोऽप्येक एवात्यर्थमासेव्यमानः कासश्वासालसकवमथुवदनमाधुर्यस्वरोपघातक्रिमिगलगण्डानापादयति तथाऽर्बुदश्लीपदबस्तिगुदोपलेपाभिष्यन्दप्रभृतीञ्जनयति ॥ (१) ॥

रसगुणानित्यादि । षष्ठमिन्द्रियं मनः । तस्येदानीमतिसेव्यमानस्यातिसेवां दोषकरीं निदर्शयन्नाह—स एवंगुण इत्यादि ॥(१)॥

अम्लो जरणः पाचनो दीपनः पवननिग्रहणोऽनुलोमनः कोष्ठविदाही बहिःशीतः क्लेदनः प्रायशो हृद्यश्चेति; स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो दन्तहर्षनयनसंमीलनरोमसंवेजनकफविलयनशरीरशैथिल्यान्यापादयति, तथा क्षताभिहतदग्धदष्टभग्नरुग्णशूनप्रच्युतावमूत्रितविसर्पितच्छिन्नभिन्नविद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात् परिदहति कण्ठमुरो हृदयं चेति ॥ (२) ॥

अम्लस्य सेवितस्य गुणान् दर्शयन्नाह—अम्ल इत्यादि । जरण आहारस्य । पाचनो दोषामयोः शोथस्य वा । अनुलोमनो वातमूत्रपुरीषाणाम् । तस्यैकस्यातिसेवितस्य दोषं निर्दिशन्नाह—स एवंगुण इत्यादि । रोमसंवेजनं रोमाञ्चः । अभिहतमभिघातः, दष्टं व्याडादिभिः, भग्नं काण्डभग्नाद्यनेकधा, रुग्णं वक्रीभूतं, प्रच्युतं भ्रष्टं स्वस्थानात्, अवमूत्रितं मूत्रविषाणां जन्तूनां मूत्रसङ्गः, विसर्पितं स्पर्शविषाणां जन्तूनां विसर्पितसङ्गः, छिन्नं निःशेषतः, भिन्नं कोष्ठादि, विद्धं सिरादि, उत्पिष्टं प्रहारचूर्णितादि ॥ (२) ॥

लवणः संशोधनः पाचनो विश्लेषणः क्लेदनः शैथिल्यकृदुष्णः सर्वरसप्रत्यनीको मार्गविशोधनः सर्वशरीरावयवमार्दवकरश्चेति; स एवंगुणोऽप्येक एवात्यर्थमासेव्यमानो गात्रकण्डूकोठशोफवैवर्ण्यपुंस्त्वोपघातेन्द्रियोपतापमुखाक्षिपाकरक्तपित्तवातशोणिताम्लीकाप्रभृतीनापादयति ॥ (३) ॥

लवणरसगुणकर्माणि दर्शयन्नाह—लवण इत्यादि । संशोधनो वमनविरेचनाभ्यां, व्रणस्य च दुष्टस्य । विश्लेषण इति पृथक्करणः प्रत्यवयवानां, छेदित्वात् । क्लेदनो व्रणस्य । सर्वरसानां प्रत्यनीको विपक्ष उच्छेदक इत्यर्थः । मार्गविशोधनो मूत्रनाडीव्रणादिमार्गविशोधनः । तस्यातिसेव्यमानस्य दोषं दर्शयन्नाह—स एवंगुण इत्यादि । कोठः पीडकाः, पुंस्त्वोपघातः शुक्रक्षयः, इन्द्रियोपतापः चक्षुरादीनां स्वकर्मगुणहानिः, अम्लीकेति अम्लोद्गारः । आपादयति करोति ॥ (३) ॥

कटुको दीपनः पाचनो रोचनः शोधनः स्थौल्यालस्यकफक्रिमिविषकुष्ठकण्डूप्रशमनः सन्धिबन्धविच्छेदनोऽवसादनः स्तन्यशुक्रमेदसामुपहन्ता चेति; स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो भ्रममदगलताल्वोष्ठशोषदाहसंतापबलविघातकम्पतोदभेदकृत् करचरणपार्श्वपृष्ठप्रभृतिषु च वातशूलानापादयति ॥ (४) ॥

---

१ 'रसगुणान् रसधर्मान्' इति चक्रः । २ 'बलसन्धानकृत्' इति पा० ।

१ 'बहिःशीत इति स्पर्शशीतः । नयनसंमीलनं सर्वदा पिहिताक्षत्वम्' इति चक्रः । २ 'सर्वरसप्रत्यनीकता लवणस्य लवणयोगे सर्वेषां रसानामभिभूतत्वादनुभवसिद्धत्वाज्ज्ञेया' इति चक्रः ।

कटुकस्य प्रकृतिकर्म निर्दिशन्नाह—कटुक इत्यादि । अवसादन अनुत्साहकृत् । तस्यैवातिसेवितस्य दोषं निर्दिशन्नाह—स एवंगुण इत्यादि । भ्रमश्चक्रारूढस्येव; मद उन्मादपूर्वरूपं, हर्षक्षयो वा ॥ (४) ॥

**तिक्तश्छेदनो रोचनो दीपनः शोधनः कण्डूकोठतृष्णामूर्च्छाज्वरप्रशमनः स्तन्यशोधनो विण्मूत्रक्लेदमेदोवसापूयोपशोषणश्चेति; स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो गात्रमन्यास्तम्भाक्षेपकार्दितशिरःशूलभ्रमतोदभेदच्छेदास्यवैरस्यान्यापादयति ॥ (५) ॥**

तिक्तस्य प्रकृतिकर्म निर्दिशन्नाह—तिक्त इत्यादि । रोचन इति इतरभक्ष्यवस्तूनां, न पुनः स्वयमेव । तस्याप्यतिसेवितस्य दोषं निर्दिशन्नाह—मन्यास्तम्भेत्यादि । मन्ये द्वे, तयोः स्तम्भ इति ॥ (५) ॥

**कषायः संग्राहको रोपणः स्तम्भनः शोधनो लेखनः शोषणः पीडनः क्लेदोपशोषणश्चेति; स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो हृत्पीडास्यशोषोदराध्मानवाक्यग्रहमन्यास्तम्भगात्रस्फुरणचुमुचुमायनाकुञ्चनाक्षेपणप्रभृतीञ्जनयति ॥ १० ॥**

कषायस्य प्रकृतिकर्म निर्दिशन्नाह—कषाय इत्यादि । रोपणो व्रणस्य । स्तम्भनो गात्राणां, मृदूनां वा दृढीकरणः । शोधनो व्रणस्य । लेखनो व्रणाद्युत्सन्नमांसस्य । शोषणो द्रवधातोः, व्रणमेहादीनां वा । पीडनो व्रणस्य हृदयस्य वा, वातकारित्वात् । तस्याप्यतिसेवया दोषमाह—स एवंगुण इत्यादि । चुमचुमायनं राजिकालिप्तस्येव त्वक्पीडा, आक्षेपणमतिशयेन कम्पनम् । प्रभृतिग्रहणादन्यानपि वातविकारानर्दितादीन् करोति ॥ १० ॥

**अतः सर्वेषामेव द्रव्याण्युपदेक्ष्यामः । तद्यथा—काकोल्यादिः क्षीरघृतवसामज्जशालिषष्टिकयवगोधूममाषश्रृङ्गाटककसेरुकत्रपुसैर्वारुककर्कारुकालाबूकालिन्दकतकगिलोड्यप्रियालपुष्करबीजकाश्मर्यमधूकद्राक्षाखर्जूरराजादनतालनालिकेरेक्षुविकारबलातिबलात्मगुप्ताविदारीपयस्यागोक्षुरकक्षीरमोरटमधूलिकाकूष्माण्डप्रभृतीनि समासेन मधुरो वर्गः; दाडिमामलकमातुलुङ्गाम्रातककपित्थकरमर्दबदरकोलप्राचीनामलकतिन्तिडीककोशाम्रकभव्यपारावतवेत्रफललकुचाम्लवेतसदन्तशठदधितक्रसुराशुक्तसौवीरकतुषोदकधान्याम्लप्रभृतीनि समासेनाम्लो वर्गः; सैन्धवसौवर्चलविडपाक्यरोमकसामुद्रकपक्रिमयवक्षारोषरप्रसूतसुवर्चिकाप्रभृतीनि समासेन लवणो वर्गः; पिप्पल्यादिः सुरसादिः शिग्रुमधुशिग्रुमूलकलशुनसुमुखशीतशिवकुष्ठदेवदारुहरेणुकावल्गुजफलचण्डागुग्गुलुमुस्तलाङ्गलकीशुकनासापीलुप्रभृतीनि सालसारादिश्च प्रायशः कटुको वर्गः; आरग्वधादिर्गुडूच्यादिर्मण्डूकपर्णीवेत्रकरीरहरिद्राद्वयेन्द्रयववरुणस्वादुकण्टकसप्तपर्णबृहतीद्वयशङ्खिनीद्रवन्तीत्रिवृत्कृतवेधनककर्कोटककारवेल्लवार्ताककरीरकरवीरसुमनःशङ्खपुष्प्यपामार्गत्रायमाणाशोकरोहिणीवैजयन्तीसुवर्चलापुनर्नवावृश्चिकालीज्योतिष्मतीप्रभृतीनि समासेन तिक्तो वर्गः; न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादी रोध्रादिस्त्रिफलाशल्लकीजम्ब्वाम्रबकुलतिन्दुकफलानि कतकशाकफलपाषाणभेदकवनस्पतिफलानि सालसारादिश्च प्रायशः कुरुवककोविदारकजीवन्तीचिल्लीपालङ्क्यासुनिषण्णकप्रभृतीनि वरकादयो मुद्गादयश्च समासेन कषायो वर्गः ॥ ११ ॥**

अत इत्यादि । अतोऽनन्तरं, सर्वेषां रसानां द्रव्याण्युपदेक्ष्यामः । क्षीरेत्यादि । श्रृङ्गाटकं द्विविधं स्थूलाल्पभेदेन; त्रपुसं 'तिरैसी' इति लोके; एर्वारुः रोमशा कर्कटी; गिलोड्यः कालङ्कतकः शितोड्यकन्दः प्रावृड्जातः शणपत्रिकाकारवल्लीयुक्तो 'गिल्लोठी' इति लोके; 'अङ्ग(ङ्क)लोड्य' इत्यन्ये पठन्ति, चिचो-(ञ्चो)टकमिति च व्याख्यानयन्ति; प्रियालश्चारः; पुष्करबीजं पद्मबीजं; राजादनः क्षीरिकः; पयस्या विदारीभेदः; क्षीरमोरटः किलाटमस्तु, 'पीलुपर्णी' इत्येके; मधुलिका मर्कटकः । दाडिमेत्यादि प्राचीनामलकः 'पानीयामलक' इति लोके; भव्यफलं 'कर्मरङ्ग' इत्येके, 'तालफलसदृशमहावल्कलं कषायाम्लमधुरं' इत्यन्ये; पारावतः कामरूपे मधुराम्लरसफलं; दन्तशठो जम्बीरः; शुक्तं सन्धानकविशेषश्चुक्रमिति लोके; सौवीरकतुषोदके निस्तुषसतुषयवकृते त्रिवृत्कषायसहिते सन्धाने; धान्याम्लं काञ्जिकं; प्रभृतिग्रहणाच्छाण्डाक्यादीनामवबोधः । सैन्धवेत्यादि पाक्यमुद्भिदं; रोमकं शाकम्भरीदेशोत्थं, श्वेतलवणमित्यन्ये; सामुद्रं समुद्रसमीपभवं गुर्जरराष्ट्रे प्रचुरं भवति; पक्रिमं पाकाभिनिर्वृत्तं 'फुल्लालवणम्' इत्युच्यते; ऊषरप्रसूतमूषरलवणं; प्रभृतिग्रहणाट्टङ्कणक्षारादीनामवबोधः । पिप्पल्यादिरित्यादि । शीतशिवं कर्पूरम्, अवल्गुजफलं बाकुचीबीजं, चण्डा अजमोदाकारा सुगन्धिद्रव्यं, लाङ्गलकी कलिकारिका, शुकनासा स्योनाकः । आरग्वधादिरित्यादि मण्डूकपर्णी ब्राह्मी, वेत्रकरीरो वेत्राङ्कुरः, स्वादुकण्टको विकङ्कतः 'वृक्षकण्टकारिका' इति प्रसिद्धः, शङ्खिनी यवतिक्ताभेदः, कृतवेधनः कोशातकी, सुमना जाती, अशोकरोहिणी कटुका, वैजयन्ती तर्कारी, सुवर्चला सूर्यावर्तः, वृश्चिकाली वृश्चिकपत्री, ज्योतिष्मती काकमर्दनिका । न्यग्रोधादिरित्यादि । कतकः

१ 'आकुञ्चनस्याक्षेपणं निषेध इत्यर्थः; किंवा आकुञ्चनमाक्षेपणं च करोतीत्यर्थः' इति चक्रः । २ 'मोरटः सद्यःप्रसूतगोक्षीरम्' इति चक्रः ।

१ 'नीवारकादयः' इति पा० । २ 'तिवसं' इति पा० । ३ 'गिञ्चो(ञ्छो)ट' इति पा० । ४ 'गुर्जरयात्रायां' इति पा० ।

तोयप्रसादनफलः, शाकः खरमसृणपत्रपृष्ठोदरः, तयोः फलम्; वनस्पतयो न्यग्रोधादयः, तेषां फलानि । सालसारादेस्तिक्तानुसरत्वात् कथं कषायवर्गेऽस्य पाठ इत्याह—प्रायशः; 'कषाय' इति शेषः । कुरुवकः कण्टसेलयाकः, कोविदारः काञ्चनारकः ('कोविदारमपि काञ्चनारकं मल्लिकां विचकिलं विदुर्बुधाः'— इति हलायुधः ।), जीवन्ती डोडी, चिल्ली क्षेत्रवास्तुकः, पालङ्क्या शाकविशेषः 'पालङ्क' इति लोके, सुनिषण्णकः सिरिवालिका, 'चतुष्पर्णी' इत्यपरे, वरकादयः कुधान्यानि, मुद्गादयो वैदलाः ॥ ११ ॥

**तत्रैतेषां रसानां संयोगास्त्रिषष्टिर्भवन्ति । तद्यथा—पञ्चदश द्विकाः, विंशतिस्त्रिकाः, पञ्चदश चतुष्काः, षट् पञ्चकाः, एकशः षड्रसाः, एकः षट्क इति । तेषामन्यत्र प्रयोजनानि वक्ष्यामः ॥ १२ ॥**

तत्रेत्यादि । एषां तु विवरणमुत्तरतन्त्रे स्वयमेवाचार्यः करिष्यति, अस्माभिस्तु ग्रन्थबाहुल्यभयाद्विवरणं न कृतम् । द्विषष्टिदोषभेदेषु द्विषष्टी रसभेदा योज्याः, स्वस्थे तु षडेव समुदिताः ॥ १२ ॥

**भवंति चात्र—**

**जग्धाः षडधिगच्छन्ति बलिनो वश्यतां रसाः ॥**
**यथा प्रकुपिता दोषा वशं यान्ति बलीयसः १३**

**इति सुश्रुतसंहितायां सूत्रस्थाने रसविशेषविज्ञानीयो नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥**

इदानीं रसानामेकैकानामनभ्यासप्रतिपादितबहुतरदोषाणां विशिष्टविषये दोषा न भवन्तीति निर्दिशन्नाह—भवति चात्र जग्धा इत्यादि । जग्धा भक्षिताः, षड्रसा एकैकशः कृत्वा अभ्यस्ता अपि बलिनः शक्त्युपचयबलयुक्तस्य पुरुषस्य, वश्यतां वशभावं, यान्ति गच्छन्ति, दोषकारिणो न भवन्तीत्यर्थः; यथा दोषा एव बलीयसो बलयुक्तस्य पुरुषस्य कार्यकरणक्षमा न भवन्ति, एवं रसा अपीत्यर्थः । 'बलिनो रसस्य' इति केचित् ॥ १३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने रसविशेषविज्ञानीयो नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥

---

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । २ 'इदानीं रसानामुपयोगे बलवानेव रसः कार्यं करोतीति सदृष्टान्तमाह—भवति चात्रेत्यादि । भुक्ता इत्युपयोगोपलक्षणं, तेनाभ्यञ्जनादिप्रयोगो विज्ञेयः । यो रसो वीर्येणोपचयेन वा बलवान् तस्येतरे निर्वीर्या हीनरसा वशतां यान्ति, बलवानेव रसः कार्यं करोतीत्यर्थः; दृष्टान्तेऽपि बलवाननुबन्ध्यरूपप्राप्तो दोषोऽनुबन्धमप्रधानं तिरस्कृत्य कार्यं करोति । अत एवोक्तं 'सन्निपाते तु यो भूयान् स दोषः परिकीर्तितः' इति । अन्ये तु 'बलिनः पुरुषस्य रसा अत्यन्ताभ्यासेऽपि बलवदग्नितया वशतां यान्ति न दोषं कुर्वन्ति; यथा दोषा बलवतः पुरुषस्याग्निबलदेहबलाभिभूतत्वान्न विकारं कुर्वन्ति' इति श्लोकार्थं वर्णयन्ति' इति चक्रः ।

## त्रिचत्वारिंशत्तमोऽध्यायः ।

**अथातो वमनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथातो वमनद्रव्येत्यादि । विकल्पाः प्रयोगाः ॥ १ ॥ २ ॥

**वमनद्रव्याणां फलादीनां मदनफलानि श्रेष्ठतमानि भवन्ति । अथ मदनपुष्पाणामातपपरिशुष्काणां चूर्णप्रकुञ्चं प्रत्यक्पुष्पासदापुष्पीनिम्बकषायाणामन्यतमेनालोड्य मधुसैन्धवयुक्तां पुष्पचूर्णमात्रां पाययित्वा वामयेत् । मदनशलाटुचूर्णान्येवं वा बकुलरम्यकोपयुक्तानि मधुलवणयुक्तान्यभिप्रतप्तानि; मदनशलाटुचूर्णसिद्धां वा तिलतण्डुलयवागूम् । निर्वृत्तानां वा नातिहरितपाण्डूनां कुशमूढावबद्धमृद्गोमयप्रलिप्तानां यवबु(तु)षमुद्गमाषशाल्यादिधान्यराशावष्टरात्रोषितक्लिन्नभिन्नानां फलानां फलपिप्पलीरुद्धृत्यातपे शोषयेत्, तासां दधिमधुपललविमृदितपरिशुष्काणां सुभाजनस्थानामन्तर्नखमुष्टिमुष्णे यष्टीमधुककषाये कोविदारादीनामन्यतमे वा कषाये प्रमृद्य रात्रिपर्युषितं मधुसैन्धवयुक्तमाशीर्भिरभिमन्त्रितमुदङ्मुखः प्राङ्मुखमातुरं पाययेदनेन मन्त्रेणाभिमन्त्र्य—**

**"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानलानिलाः ॥**
**ऋषयः सौषधिग्रामा भूतसंघाश्च पान्तु ते ॥ १ ॥**
**रसायनमिवर्षीणां देवानाममृतं यथा ॥**
**सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ २ ॥"**

**विशेषेण श्लेष्मज्वरप्रतिश्यायान्तर्विद्रधिषु; अप्रवर्तमाने वा दोषे पिप्पलीवचागौरसर्षपकल्कोन्मिश्रैः सलवणैरुष्णाम्बुभिः पुनः पुनः प्रवर्तयेदासम्यग्वान्तलक्षणादिति । मदनफलमज्जचूर्णं वा तत्क्काथपरिभावितं मदनफलकषायेण; मदनफलमज्जसिद्धस्य वा पयसः सन्तानिकां क्षौद्रयुक्तां, मदनफल-**

---

१ 'पुष्पादिपूर्वकत्वात् पक्वमदनफलस्य तत्प्रयोगस्य च वमनत्वात् तत्पुष्पादिप्रयोगानेव क्रमेणाह—तत्र मदनपुष्पाणामित्यादि । प्रत्यक्पुष्पा अपामार्गः, तस्येह मूलम् । निर्वृत्तानां पक्वानाम् । नातिहरितपाण्डूनामित्यनेनाभिमतपाकावस्थोच्यते । क्लिन्नभिन्नानामिति यथोक्तविधिना, अत एवावस्थितत्वेन क्लिन्नानां सतां यत्नेन भिन्नानाम् । पिप्पली मदनफलमध्यबीजम् । रात्रिपर्युषितमित्यनेन शीतकषायं ग्राहयति । विशेषेणेति वचनेन सर्ववामनीयविषयतां चास्य विधेर्दर्शयति । एतेषु वमनप्रयोगेषु वक्ष्यमाणेषु च पूर्वकर्म स्नेहादि उत्तरकर्म च पेयादि वक्ष्यमाणं सर्वं योजनीयम् ।' इति चक्रः । २ 'मधुसैन्धवयुक्तमुदङ्मुखः' इति पा० । ३ 'क्षौद्रयुक्तां' इति कश्चित्पुस्तके न पठ्यते ।

**मज्जसिद्धं वा पयः, मदनफलमज्जसिद्धेन वा पयसा यवागूम्, अधोभागास्रक्पित्तहृद्दाहयोः; मदनफलमज्जसिद्धस्य वा पयसो दधिभावमुपगतस्य दध्युत्तरं दधि वा कफप्रसेकच्छर्दिमूर्च्छातमकेषु; मदनफलमज्जरसं स्नेहं वा[१] भल्लातकस्नेहवदादाय फाणितीभूतं लेहयेत्, आतपपरिशुष्कं वा तमेव जीवन्तीकषायेण, पित्ते कफस्थानगते; मदनफलमज्जक्वाथं वा पिप्पल्यादिप्रतीवापं, तच्चूर्णं वा निम्बरूपिकाकषाययोरन्यतरेण संतर्पणकफजव्याधिहरं, मदनफलमज्जचूर्णं वा मधूककाश्मर्यद्राक्षाकषायेण। मदनफलविधानमुक्तम् ॥ ३ ॥**

वमनेत्यादि। फलादीनामिति फलं मदनफलम्, आदिग्रहणात् कुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनानि गृह्यन्ते । मदनपुष्पाणामिति अत्र पुष्पशब्दः फले वर्तते, कारणे कार्योपचारात्। चूर्णप्रकुञ्चं पुनरस्य मध्यमा मात्रा; प्रकुञ्चः पलं, 'मुष्टिः' इत्येके, 'कराङ्गुलिचतुष्कमूलावधिमितं चूर्णम्' इत्यपरे । प्रत्यक्पुष्पा अपामार्गः, सदापुष्पी अर्कस्तस्य मूलं, निम्बः प्रसिद्धः; कषायाणां त्रित्वाद्योगत्रयमुक्तम्। पुष्पचूर्णमात्रामिति मात्रा च तन्त्रान्तरे चूर्णशरावः, अत्र च मात्राशब्दो यथायोगवचनोऽभिप्रेतः। अस्याग्रे 'अक्रूराशयमुपस्थितदोषं मृदुप्रच्छर्दनं' इति केचित् पठन्ति; तन्न, निबन्धकारैरपठितत्वात्। मदनेत्यादि । शलाटु आमं फलम्। एवमिति एवंशब्दात् प्रत्यक्पुष्पादीनां त्रयः कषाया ज्ञेयाः, तेन योगा अपि त्रयः। रम्यको महानिम्बः। अभिप्रतप्तानि उष्णीकृतानि, 'पाययित्वा वामयेत्' इत्यनुवर्तनीयम् । शलाटुचूर्णेषु योगान्तरं निर्दिशन्नाह—मदनेत्यादि। अत्रापि चूर्णस्य प्रकुञ्च एव, तिलतण्डुलयोस्तु यवागूप्रमाणेन मात्राकल्पनं; लेहयित्वा वामयेदिति ज्ञेयं, लेह्यत्वाद्यवाग्वाः। तदेवं शलाटुचूर्णेषु मदनस्य चत्वारो योगाः। मदनफलानां पक्वानां प्रधानं योगं निर्दिशन्नाह—निर्वृत्तानामित्यादि। निर्वृत्तानां निष्पन्नानां नातिहरितपाण्डुत्वेन, परिपाकातिपाण्डुत्वे हि वीर्यातिक्रमः स्यात्। कुशमूढः कुशविरचितः पुटकः। फलपिप्पलीः मदनफलबीजानि। तासामिति तासां फलपिप्पलीनाम्। अन्तर्नखमुष्टिमिति नखानां मध्ये मुष्टिर्न तु परिभाषिका पलाभिधाना, अन्तर्नखमुष्टिं यष्टीमधुककषाये आतुरं पाययेदिति संबन्धः। कोविदारेत्यादि। कोविदारादीनां संशोधनसंशमनीयोक्तानामेकादशानामन्यतमस्यैकतमस्य कषाये। एतेनैकादशयोगा उक्ताः। प्रमृद्येति फलपिप्पलीनामन्तर्नखमुष्टिमिति संबन्धः। किंविशिष्टमन्तर्नखमुष्टिं? रात्रिपर्युषितं मधुसैन्धवयुक्तं च। आशीर्भिरभिमन्त्रितमिति इष्टाशानिष्पादनमन्त्रोऽप्याशीः, ताभिर्वेदोक्ताभिरभिमन्त्रितमन्तर्नखमुष्टिम्। उदङ्मुख उत्तराभिमुखो वैद्यः, प्राङ्मुखं पूर्वाभिमुखमातुरम् । अभिमन्त्रणमन्त्रमाह—ब्रह्मदक्षेत्यादि । मन्त्रार्थस्त्वदर्शनीयः, आवृत्त्यैव केवलया मन्त्राणां फलदत्वात्। अस्य योगस्य विषयं नियमयन्नाह—विशेषेणेत्यादि। विशेषेण अतिशयेन, श्लेष्मज्वरादिषु 'देय' इत्यध्याहारः। अप्रवर्तमानस्य दोषस्य प्रवर्तने हेतुं दर्शयन्नाह—अप्रवर्तमान इत्यादि। दुर्वमनबहुदोषविषययोगमाह—मदनेत्यादि। मदनफलमज्जा मदनफलमध्यस्य स्निग्धो भागः, 'सकलमेव मदनफलम्' इत्यन्ये। मदनफलकषायेण 'पाययेत्' इत्यध्याहारः । मदनेत्यादि। सन्तानिकामिति लेहयेदिति संबन्धः; सन्तानिका क्षीरस्योपरितनः स्त्यानो भागः। मदनफलमज्जसिद्धं वा पयः पाययेदित्यध्याहारः; अत्रापि प्रकुञ्चः। मदनफलपक्वसिद्धेन वा पयसा यवागूं लेहयेदिति संबन्धः। पयःसन्तानिकायवागूनां विषयमाह—अधोभवरक्तपित्ते पित्तकृतहृदयदाहे च। मदनेत्यादि। दध्युत्तरं सरं, लेहयेदिति संबन्धः। दधि वा 'पाययेत्' इत्यध्याहारः। एतद्योगद्वयमुक्तम्। मदनेत्यादि। मदनफलमज्जरसं फाणितीभूतं काकवीभूतं लेहयेदिति संबन्धः। भल्लातकस्नेहवदादायेति द्विव्रणीयोक्तेन विधिना। आतपेत्यादि जीवन्तीकषायेण आतपविशुष्कं तमेव मदनफलमज्जरसं 'पाययेत्' इति शेषः। जीवन्ती शुष्कयावनालवर्णा लतौषधी पर्ववती। एतयोर्योगयोर्विषयमाह—पित्ते कफस्थानगते इति। मदनफलमज्जक्वाथं वेत्यादि मदनफलमज्जक्वाथं वेत्यादिको योगः। तच्चूर्णं वा निम्बरूपिकाकषाययोरन्यतरेणेति योगद्वयं; तच्चूर्णं मदनफलमज्जचूर्णं, रूपिका अर्कः। एतेषां त्रयाणां योगानां विषयं नियमयन्नाह—संतर्पणेत्यादि । मदनफलमज्जचूर्णं वा मधूककाश्मर्यद्राक्षाकषायेणेत्यादि द्वात्रिंशत्तमं योगं केचित् पठन्ति, तन्नेच्छति **गयी**। व्याख्यातमेवोपसंहरन्नाह—मदनेत्यादि। एतेनाप्रवर्तनव्यापच्चिकित्सां विहाय मदनफलयोगा एकत्रिंशदुक्ताः ॥ ३ ॥

**जीमूतककुसुमचूर्णं पूर्ववदेव क्षीरेण, निर्वृत्तेषु क्षीरयवागूं, रोमशेषु सन्तानिकां, अरोमशेषु दध्युत्तरं, हरितपाण्डुषु दधि, तत्कषायसंसृष्टां वा सुरां कफारोचककासश्वासपाण्डुरोगयक्ष्मसु; पर्यागतेषु मदनफलमज्जवदुपयोगः ॥ ४ ॥**

मदनफलस्य पश्चाज्जीमूतकं दर्शयन्नाह—जीमूतकेत्यादि। जीमूतको देवदाली। पूर्ववदेवेति प्रत्यक्पुष्पादिद्रव्यत्रयक्वाथैस्त्रयो योगाः पुष्पचूर्णस्य। अन्ये तु चरके प्रत्यक्पुष्पादियोगा न सन्तीति क्षीरेणैवान्यमेकं योगमिच्छन्ति, पूर्ववदित्यनेन प्रकुञ्चं मधुसैन्धवादियुक्तं चामनन्ति। निर्वृत्तेष्वित्यादि। निर्वृत्तेषु जातमात्रेषु; क्षीरयवागूं जीमूतशलाटुक्वथितक्षीरयवागूम्। रोमशेष्वित्यादि। रोमशेषु कठिनावस्थां प्राप्तेषु; सन्तानिकामिति जीमूतचूर्णक्वथितक्षीरसन्तानिकाम्। अरोमशेष्वित्यादि अरोमशेषु वृद्धतमेषु, चूर्णक्वथितक्षीरस्य दधिभावं गतस्योत्तरं सरकम्। हरितपाण्डुष्वित्यादि हरितपाण्डुषु कठिनतमेषु तच्चूर्णक्वथितक्षीरस्य दधि। तत्कषायसंसृष्टामिति जीमूतककषायकृताम्।

१ 'मदनफलमज्जरसं स्नेहं वेति योगद्वये मज्जरसं फाणितीभूतं स्नेहं वा भल्लातकस्नेहविधिना गृहीतम् । फाणितीभूतमिति क्वथनात्तन्तुलीभूतम् । भल्लातकस्नेहविधानं च द्विव्रणीये वक्तव्यम्।' इति चक्रः।

तस्यास्तु कल्पनं-जीमूतक्काथे माषाः साधनीयाः, जीमूतकस्य काथेनैव शालितण्डुलाः प्रक्षालनीयाः, माषाः शालितण्डुलास्ते च संक्षुद्यैकत्र पिण्डाः कार्याः, तान् शुष्कचूर्णितान् कृत्वाऽपरशालीतण्डुलचूर्णं पिष्टपाचनिकायां जीमूतककषायोष्मणा सम्यगुत्स्वेद्यावतारयेत्, ततः खिन्नशीतलस्य तस्य पिष्टस्य त्रयो भागाः, किण्वभागश्चतुर्थः, सन्धानार्थं भार्गीक्काथः, तत्सर्वं कलशे निधापितं जातरसं सुरा भवति; पैष्टीयं, तेनात्र नास्ति गुडो न वा मधु; अन्ये पुनः 'अत्रानुक्तोऽपि गुडो दातव्यः' इत्याहुः। गुडप्रमाणं त्वर्शोनिर्दिष्टाभयारिष्टक्काथशेषद्रोणे गुडपलशतद्वयं प्रक्षेपविभागपरिभाषारूपेण सर्वत्र। अन्ये तु 'जीमूतकषायेण सह सुरामेव, न पुनर्जीमूतकषायसाधिताम्' इति वदन्ति। जीमूतकुसुमचूर्णं वेत्यादीनां योगानां विषयमाह—कफेत्यादि। 'दद्यात्' इति शेषः। पर्यागतेषु नातिहरितपाण्डुष्वतिदेशेन योगं निर्दिशन्नाह—पर्यागतेष्वित्यादि। मदनफलमज्जवदितिवत्करणान्मदनपुष्पशलाटुयोगान् वर्जयित्वाऽन्ये ये मदनफलयोगास्ते सर्वे पर्यागतेषु जीमूतकेषु विज्ञेयाः। एतेन पर्यागतजीमूतकयोगाश्चतुर्विंशतिरुक्ताः। 'पर्यागतेषु परिपक्केषु' इत्यन्ये॥ ४॥

**तद्वदेव कुटजफलविधानम्॥ ५॥**

कुटजफलयोगान्निर्दिशन्नाह—तद्वदित्यादि। अत्रापि जीमूतकवच्चतुर्विंशतियोगा ज्ञेयाः॥ ५॥

**कृतवेधनानामप्येष एव कल्पः॥ ६॥**

कृतवेधनयोगान्निर्दिशन्नाह—कृतवेधनानामित्यादि। अत्रापि कुटजवच्चतुर्विंशतियोगा इत्यर्थः। कृतवेधनं कोशातकी॥ ६॥

**इक्ष्वाकुकुसुमचूर्णं वा पूर्ववत्, एवं क्षीरेण, कासश्वासच्छर्दिकफरोगेषूपयोगः॥ ७॥**

इक्ष्वाकुयोगान्निर्दिशन्नाह—इक्ष्वाकित्यादि। इक्ष्वाकुः कटुकालाबूः। एवं क्षीरेण तथा पूर्ववन्मदनफलवत्; न पुनः कुटजवत् कृतवेधनवच्च, तयोः पुष्पशलाटुवर्जनात्। इति मदनफलवदेकत्रिंशत्, तथा पूर्वग्रहणेन सुरा गृह्यते, एतेनेक्ष्वाकुयोगास्त्रयस्त्रिंशदुक्ताः॥ ७॥

**धामार्गवस्यापि मदनफलमज्जवदुपयोगः; विशेषतस्तु गरगुल्मोदरकासश्वासश्लेष्मामयेषु वायौ च कफस्थानगते॥ ८॥**

धामार्गवयोगान्निर्दिशन्नाह—धामार्गवस्येत्यादि। एतेन धामार्गवस्य चतुर्विंशतियोगाः। अपिशब्दात् पुष्पशलाटुक्षीरसुरायोगाश्च। वमनद्रव्येषु सर्वेषामेवातिदेशयोगानां मदनफलतुल्यकल्पानां मदनफलयोगविषय एव विषयो नापूर्वः॥ ८॥

**कृतवेधनफलपिप्पलीनां वमनद्रव्यकषायपरिपीतानां बहुशश्चूर्णमुत्पलादिषु दत्तमाघ्रातं वामयति, तत्त्वनवबद्धदोषेषु यवागूमाकण्ठात्पीतवत्सु च विदध्यात्। वमनविरेचनशिरोविरेचनद्रव्याण्येवं वा प्रधानतमानि भवन्ति॥ ९॥**

कृतवेधनेत्यादि। कृतवेधनग्रहणं समस्तजीमूतकभेदज्ञापकम्। परिपीतानामिति भावितानाम्। उत्पलादिष्विति आदिग्रहणाद्रक्तोत्पलकुमुदपुण्डरीकसौगन्धिकानि गृह्यन्ते। तस्य प्रयोगविशेषस्य विषयं दर्शयन्नाह—तत्त्वित्यादि। तत्तु प्रागुक्तं चूर्णं विदध्यादिति संबन्धः। केषु? अनवबद्धदोषेषु अत्युत्क्लिष्टदोषेषु पुरुषेष्वित्यर्थः। पुनरपि किंविशिष्टेषु? यवागूमाकण्ठात् पीतवत्सु च। 'तदनवबद्धदोषेषु' इति केचित् पठन्ति। भावनायाः फलातिशयं दर्शयन्नाह—वमनेत्यादि। एवमिति तद्द्रव्यस्वरसैर्बहुशो भावितानि॥ ९॥

भवतश्चात्र—

**वमनद्रव्ययोगाणां दिगियं संप्रकीर्तिता॥<br>तान् विभज्य यथाव्याधि कालशक्तिविनिश्चयात्॥ १०<br>कषायैः स्वरसैः कल्कैश्चूर्णैरपि च बुद्धिमान्॥<br>पेयलेह्याद्यभोज्येषु वमनान्युपकल्पयेत्॥ ११**

**इति सुश्रुतसंहितायां सूत्रस्थाने वमनद्रव्यविकल्पविज्ञानीयो नाम त्रिचत्वारिंशत्तमोऽध्यायः॥ ४३॥**

वमनद्रव्येत्यादि। दिगियं संप्रकीर्तितेति इयं दिक् संप्रकीर्तिता कथितेत्यर्थः। तान् वान्तिद्रव्यविकल्पान्[1], विभज्य पृथक् कृत्य, यथाव्याधि 'वमनान्युपकल्पयेत्' इत्यग्रेतनेन संबन्धः। कस्मात्? कालशक्तिविनिश्चयात्। केषु वमनान्युपकल्पयेदित्याह—पेयलेह्याद्यभोज्येषु। कैः कृत्वा? कषायैरित्यादिभिः। कषायैः शृतशीतफाण्टभेदात्रिविधैः, स्वरसैः यन्त्रादिपीडितार्द्रद्रव्योत्थैः, कल्कैर्दृषदि पिष्टैः, चूर्णैः शुष्कपेषणाणूकृतावयवैः। अपिशब्दाद्वमनद्रव्यपक्वैः स्नेहैरित्यनुक्तं समुच्चीयते। भोज्यग्रहणान्मोदकोत्कारिकाशष्कुलीप्रभृतीनां ग्रहणम्॥ १०॥ ११॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने त्रिचत्वारिंशत्तमोऽध्यायः॥ ४३॥

---

## चतुश्चत्वारिंशत्तमोऽध्यायः।

**अथातो विरेचनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः॥ १॥**

**यथोवाच भगवान् धन्वन्तरिः॥ २॥**

अथातो विरेचनद्रव्येत्यादि। विकल्पो भेदः॥ १॥ २॥

**अरुणाभं त्रिवृन्मूलं श्रेष्ठं मूलविरेचने॥<br>प्रधानं तिल्वकस्त्वक्षु फलेष्वपि हरीतकी॥ ३॥<br>तैलेष्वेरण्डजं तैलं स्वरसे कारवेल्लिका॥**

---

१ 'पूर्ववदेव' इति पा०।

[1] 'वान्तिद्रव्यविकल्पानां' इति पा०।

**सुधापयः पयःसूक्तमिति प्राधान्यसंग्रहः ॥**
**तेषां विधानं वक्ष्यामि यथावदनुपूर्वशः ॥ ४ ॥**

अरुणाभमित्यादि । अरुणाभमीषल्लोहितम् । त्रिवृत् 'निशोत्र' इति लोके । मूलविरेचने मूलविरेचनानां मध्ये । तिल्वकः स्वल्परोध्रः । त्वक्ष्विति त्वग्विरेचनानां मध्ये तिल्वकत्वक् प्रधानमित्यर्थः । सुधा 'सेहुण्ड' इति लोके । पयःसूक्तमिति पयःसु क्षीरविरेचनानां मध्ये सुधापयः प्रधानमुक्तमिति संबन्धः । फलेष्वपि हरीतकी अत्राग्रे 'तैलेष्वेरण्डजं तैलं स्वरसे कारवेल्लिका' इति जेज्जटाचार्यः पठति, तन्नेच्छति **गयी** । विधानमिति विधानं प्रयोगकरणम् । एषां त्रिवृदादीनाम् । यथावत् सत्यम् । अनुपूर्वशः अनुक्रमेणेत्यर्थः ॥ ३ ॥ ४ ॥

**वैरेचनद्रव्यरसानुपीतं**
**मूलं महत्त्रैवृतमस्तदोषम् ॥**
**चूर्णीकृतं सैन्धवनागराढ्य-**
**मम्लैः पिबेन्मारुतरोगजुष्टः ॥ ५ ॥**

वैरेचनेत्यादि । वैरेचनद्रव्यरसानुपीतं त्रिवृदादिद्रव्यरसानुभावितम् । अस्तदोषं कृम्यादिदोषरहितम् । आढ्यमधिकम् । अम्लैः शुक्तसौवीरतुषोदकधान्याम्लमद्यमस्तुभिः । 'वैरेचनस्वरसक्काथपीतां गाढमूलां त्रिवृतां कालपुष्टाम् । चूर्णीकृतां नागरसैन्धवाढ्यां पिबेदम्लैरनिलव्याधिजुष्टः' इति क्वचित् पाठः ॥५॥

**इक्षोर्विकारैर्मधुरै रसैस्तत्**
**पैत्ते गदे क्षीरयुतं पिबेच्च ॥**

इक्षोरित्यादि । इक्षोर्विकारैः खण्डादिभिः; न पुनर्गुडेन, उष्णवीर्यत्वात्तस्य; न च फाणितेन, त्रिदोषकरत्वात्तस्य; नापीक्षुरसेन, विदाहित्वात्तस्येति । मधुरै रसैः काकोल्यादिक्काथैः । तदिति त्रिवृन्मूलम् । 'स्वादुक्काथैश्चापि नोष्णैर्विकारे पैत्ते द्राक्षाक्षीरयुक्तां पिबेद्वा' इति केचित् पठन्ति ॥—

**गुडूच्यरिष्टत्रिफलारसेन**
**सव्योषमूत्रं कफजे पिबेत्तत् ॥ ६ ॥**

गुडूचीत्यादि । अरिष्टो निम्बः । रसोऽत्र क्काथः । तत् त्रिवृन्मूलम् । अन्ये तु 'क्षौद्रारिष्टत्रिफलाक्काथयुक्ता मूत्रैः पेया कफजे व्योषगाढा' इति पठन्ति । तत्र त्रिवृतेति संबन्धनीयम् । अन्ये तु द्राक्षारसेनेत्यादि पठन्ति, तत्र पित्तमपि द्रष्टव्यं; तेन पित्ताधिके श्लेष्मणि द्राक्षारसेन, कफाधिके मूत्रैरिति; अयं तु पाठोऽभावात् समग्रो न लिखितः ॥ ६ ॥

**त्रिवर्णकत्र्यूषणयुक्तमेत-**
**द्गुडेन लिह्यादनवेन चूर्णम् ॥**
**प्रस्थे च तन्मूलरसस्य दत्वा**
**तन्मूलकल्कं कुडवप्रमाणम् ॥ ७ ॥**
**कर्षोन्मिते सैन्धवनागरे च**
**विपाच्य कल्कीकृतमेतदद्यात् ॥**

**तत्कल्कभागः समहौषधार्धः**
**ससैन्धवो मूत्रयुतश्च पेयः ॥ ८ ॥**

वातश्लेष्मप्रयोगमाह—त्रिवर्णकेत्यादि । त्रिवर्णं त्रिजातकम् । एतत् त्रिवृन्मूलम् । तत्र त्रिवर्णत्रिकटुकगुडानामेको भागः, अपरास्तु त्रिवृतायाः, तस्याः प्रधानत्वात् । वातश्लेष्मविषयमपरमपि प्रयोगमाह—प्रस्थे चेत्यादि । प्रस्थो द्वात्रिंशत्पलानि, द्रवद्रव्यत्वात् । तन्मूलरसस्य त्रिवृन्मूलक्काथस्य, तन्मूलं त्रिवृन्मूलम् । कुडवश्चत्वारि पलानि । कर्षोन्मित इति प्रत्येकं कर्षप्रमाणे । विपाच्य कल्कीकृतमेतदिति एतत् सर्वं तावत् पक्तव्यं यावत् कल्कावशेषं भवति । अद्यात् भक्षयेत् । अन्ये त्वेवं पठन्ति—"क्काथप्रस्थे कुडवं तस्य दद्याद्युक्त्या दद्यान्नागरं सैन्धवं च । पचेत् सर्वं यावदेतद्घनं स्याल्लेहीभूतं तत् प्रयोज्यं ततस्तु" इति । अन्ये तु 'कुडवं घृतस्य दद्यात्' इति पठन्ति । तत्र कुडवोऽष्टौ पलानि, सैन्धवनागरे च प्रत्येकं पलिके । तन्मते घृतमेतद्विरेचनं, तच्च वातपित्ते, 'वाताधिककफे' इत्यन्ये । वातश्लेष्मविषयमेव योगान्तरमाह—तदित्यादि । तत्कल्कः त्रिवृत्कल्कः । समहौषधार्धः शुण्ठ्याः पलार्धयुक्तः । ससैन्धव इति सैन्धवमपि त्रिवृदर्धम् । अन्ये तु पठन्ति,—'त्रिवृत्कल्को नागरभागयुक्तः ससैन्धवो मूत्रयुतः प्रदेयः'—इति ॥७॥८॥

**समास्त्रिवृन्नागरकाभयाः स्यु-**
**र्भागार्धकं पूगफलं सुपक्कम् ॥**
**विडङ्गसारो मरिचं सदारु**
**योगः ससिन्धूद्भवमूत्रयुक्तः ॥ ९ ॥**
**( विरेचनद्रव्यभवं तु चूर्णं**
**रसेन तेषां भिषजा विमृद्य ॥**
**तन्मूलसिद्धेन च सर्पिषाऽऽक्तं**
**सेव्यं तदाज्ये गुटिकीकृतं च ॥ १० ॥**
**गुडे च पाकाभिमुखे निधाय**
**चूर्णीकृतं सम्यगिदं विपाच्य ॥**
**शीतं त्रिजाताक्तमथो विमृद्य**
**योगानुरूपा गुटिकाः प्रयोज्याः ॥११॥ )**

सर्वविषयान् योगानाह—समा इत्यादि । भागार्धकमिति आदिद्रव्यापेक्षया पूगादिकं प्रत्येकमर्धभागिकं ग्राह्यम् । विडङ्गसारो विडङ्गबीजानि । सिन्धूद्भवं सैन्धवं, तदप्यर्धभागेन ग्राह्यम् । ससैन्धवमूत्रयुक्तो योगः पेय इति संबन्धः । 'समे त्रिवृन्नागरके' इति केचित् पठन्ति । अत्र केचित्पठन्ति—विरेचनेत्यादि । विरेचनद्रव्यभवं चूर्णं यदृच्छया ग्राह्यम् । रसेन तेषां विमृद्येति तेषां विरेचनद्रव्याणां रसेन भावना कार्येत्यर्थः, यावता चूर्णमार्द्रीभवति तावद्रसो देयः । भिषजा वैद्येन योगानुरूपा वटकाः प्रयोज्या इति संबन्धः । तन्मूलसिद्धेन च सर्पिषाऽऽक्तमिति विरेचनद्रव्यजटापक्केन घृतेन पुनरपि भावना कार्येत्यर्थः; यावता स्नैग्ध्यमुत्पद्यते तावन्मात्रं घृतं देयमित्यर्थः । सेव्यं सेवनीयम् । तदाज्ये तस्मिन्नेव घृते । गुटिकीकृतं गुटिकारूपं कृतम् ।

१ 'विधानमेषां वक्ष्यामो' इति पा० ।

निधाय निक्षिप्य। गुडोऽत्र द्विगुणो देयः। त्रिजातकमत्र यावता सौगन्ध्यं भवति ॥ ९—११ ॥

वैरेकीयद्रव्यचूर्णस्य भागं
सिद्धं सार्धं क्वाथभागैश्चतुर्भिः ॥
आमृद्नीयात् सर्पिषा तत्कृतेन
तत्क्वाथोष्मस्वेदितं सामितं च ॥ १२ ॥
पाकप्राप्ते फाणिते चूर्णितं तत्
क्षिप्तं पक्वं चावतार्यं प्रयत्नात् ॥
शीतीभूता मोदका हृद्यगन्धाः
कार्यास्त्वेते भक्ष्यकल्पाः समासात्॥१३

मोदकभक्ष्यान्निर्दिशन्नाह—वैरेकीयेत्यादि । वैरेकीयद्रव्याणां त्रिवृच्छ्यामादीनां ग्रहणम् । क्वाथभागैरिति विरेचनद्रव्यक्वाथभागैश्चतुर्भिर्मन्देऽग्नौ घृतेन विरेचनद्रव्यसिद्धेन, सामिताभागं गोधूमचूर्णं तुल्यभागं प्रक्षिप्य मर्दयित्वा पिष्टपाचनिकायां धृत्वा ऊष्मणा स्वेदयित्वाऽन्यस्मिन् फाणिते पाकप्राप्ते प्रक्षिप्य मोदकाः कार्याः ॥ १२ ॥ १३ ॥

रसेन तेषां परिभाव्य मुद्गान्
यूषः ससिन्धूद्भवसर्पिरिष्टः ॥
वैरेचनेऽन्यैरपि वैदलैः स्या-
देवं विदध्याद्वमनौषधैश्च ॥ १४ ॥

यूषकल्पं निर्दिशन्नाह—रसनेत्यादि । तेषामिति तेषां विरेचनद्रव्याणाम् । अन्ये त्वेवं पठन्ति—'मुद्गानां वा तद्रसे भावितानां यूषः कल्प्यः सघृतः सैन्धवाढ्यः' इति । तद्रसे प्रधानकल्पनया त्रिवृतारसे । वैरेचने इति विरेचनद्रव्यभावितैरन्यैरपि वैदलैर्मसूरादिभिर्यूषः स्यात् भवेदित्यर्थः । एवमित्यादि । एष एव वमनीयादियूषाणां कर्ममार्गः ॥ १४ ॥

भित्त्वा द्विधेक्षुं परिलिप्य कल्कै-
स्त्रिभण्डिजातैः प्रतिबध्य रज्ज्वा ॥
पक्वं च सम्यक् पुटपाकयुक्त्या
खादेत्तु तं पित्तगदी सुशीतम् ॥ १५ ॥

पुटपाकक्रमविरेचनं निर्दिशन्नाह—भित्त्वेत्यादि । भित्त्वा विदार्य । त्रिभण्डी शुक्ला त्रिवृत् । पुटपाकयुक्त्या पुटपाकक्रमेण शालाक्योक्तक्रियाकल्पनिर्दिष्टपुटपाकविधिना; तेन काश्मर्यादिपत्राच्छादनकुशपरिवेष्टनं मृदावलेपनं निर्धूमाङ्गारान्तरुपस्वेदनादि सर्वमतिदेशेन लभ्यते । अन्ये त्वेवं पठन्ति—''इक्षुं द्विधा पाटयित्वाऽवलिप्य त्रिवृत्कल्कैः प्रतिसन्धाय चापि । पक्वं सम्यक् पुटपाकक्रमेण खादेच्छीतं पित्तरोगाभिभूतः'' इति; व्याख्यानयन्ति च,—त्रिवृत्कल्कैरिति बहुवचनात्त्रिवृदादिकल्कैरित्यादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः, तेनान्येषां वैरेचनिकानामयमेव पुटपाकविधिरिति द्योतयति ॥ १५ ॥

१ 'यूषो हृद्यः' इति पा० ।

सिताजगन्धात्वक्क्षीरीविदारीत्रिवृतः समाः ॥
लिह्यान्मधुघृताभ्यां तु तृड्दाहज्वरशान्तये॥१६॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ॥
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥१७॥
पचेल्लेहं सिताक्षौद्रपलार्धकुडवान्वितम् ॥
त्रिवृच्चूर्णयुतं शीतं पित्तघ्नं तद्विरेचनम् ॥ १८ ॥
त्रिवृच्छ्यामाक्षारशुण्ठीपिप्पलीर्मधुनाऽऽप्नुयात्
सर्वश्लेष्मविकाराणां श्रेष्ठमेतद्विरेचनम् ॥ १९ ॥
बीजाढ्यपथ्याकाश्मर्यधात्रीदाडिमकोलजान् ॥
तैलभृष्टान् रसानम्लफलैरावाप्य साधयेत् २०
घनीभूतं त्रिसौगन्ध्यत्रिवृत्क्षौद्रसमन्वितम् ॥
लेह्यमेतत्कफप्रायैः सुकुमारैर्विरेचनम् ॥ २१ ॥
नीलीतुल्यं त्वगेलं च तैस्त्रिवृत्ससितोपला ॥
चूर्णं संतर्पणं क्षौद्रफलाम्लं सन्निपातनुत् ॥२२॥

इदानीं वैरेचनलेहानाह—सितेत्यादि । सिता शर्करा;अजगन्धा जवानिका, 'बोथइका' इत्यन्ये; त्वक्क्षीरी वंशलोचना; विदारी बिडाली ( विराली ); त्रिवृत् 'निशोत्र' इति लोके । शर्करेत्यादि । मरिचांशकमिति अंशश्चतुर्थो भागः । पचेदित्यादि । सिता शर्करा, तस्याः पलं, क्षौद्रं मधु, तस्यार्धकुडवश्चत्वारि पलानि; त्रिवृत् लेहस्य चतुर्थांशेन । अत्र मधुनोऽग्निसंयोगो न विरुध्यते, अनवस्थानात् प्रयोगाभावाच्च । त्रिवृदित्यादि । श्यामा वृद्धदारुकः, क्षारो यवक्षारः, आप्नुयात् लिह्यात् । बीजाढ्येत्यादि बीजाढ्यान् सुपक्वान् पथ्यादीन् सहैव बीजैः साधयेत्; तान् रसान् पथ्याधात्रीदाडिमकोलजानेरण्डतैलभृष्टान्, पुनरम्लफलैर्बीजपूरादिभिः सह आवाप्य प्रक्षिप्य साधयेत्; पथ्यादीनां यदृच्छया मात्रा, जले तु षोडशगुणे तेषां क्वाथः कर्तव्यः, एरण्डतैलमात्रा तु यावता तस्य भर्जनं संभवति, अम्लफलं तु क्वाथस्य चतुर्थांशेन, त्रिसौगन्ध्यमात्रा तु यावता सौगन्ध्यं भवति, त्रिवृत् क्षौद्रं तु प्रत्येकं लेहस्य चतुर्थांशेन । कफप्रायैर्भूयिष्ठकफैः पुरुषैः सेव्यम् । नीलीतुल्यमिति नीलीफलतुल्यं त्वगेलं, नीली श्रीफलिका । तैर्नील्यादिभिः सह तुल्या त्रिवृत् । ससितोपला शर्करायुक्ता । संतर्पणं प्रीणनम् । केचित् 'सतर्पणम्' इति पठन्ति, व्याख्यायन्ति च—तर्पणाः शक्तवः, तैः सह युक्तम् । क्षौद्रफलाम्लं मधुबीजपूराम्लरसेन सह चूर्णं देयम् । सन्निपातनुत् प्रशान्ते सन्निपातेऽनुबन्धपरिरक्षणार्थमित्यर्थः ॥ १६—२२ ॥

त्रिवृच्छ्यामासिताकृष्णात्रिफलामाक्षिकैः समैः॥
मोदकाः सन्निपातोर्ध्वरक्तपित्तज्वरापहाः ॥२३॥

वैरेचनिकमोदकमाह—त्रिवृदित्यादि । श्यामा वृद्धदारुकः । त्रिफलायाः प्रत्येकं भागाः समाः । यद्यप्यत्र भागश्रुतिर्नास्ति तथाऽपि सितामाक्षिके पक्त्वा गुटिकाः कार्याः, सितामाक्षिके समस्तद्रव्येभ्यो द्विगुणे ग्राह्ये ॥ २३ ॥

त्रिवृद्भागास्त्रयः प्रोक्तास्त्रिफला तत्समा तथा ॥
क्षारकृष्णाविडङ्गानि संचूर्ण्य मधुसर्पिषा ॥२४॥

**लिह्याद्गुडेन गुटिकाः कृत्वा वाऽप्यथ भक्षयेत् ॥**
**कफवातकृतान् गुल्मान् प्लीहोदरहलीमकान् २५**
**हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ॥**

लेहगुटिकयोः प्रयोगमाह—त्रिवृदित्यादि । त्रिफलाया अपि त्रयो भागाः, क्षारकृष्णाविडङ्गानामपि त्रयो भागा ग्राह्याः । निरपायं व्यापद्रहितम् ॥ २४ ॥ २५ ॥—

**चूर्णं श्यामा त्रिवृन्नीली कट्वी मुस्ता दुरालभा२६**
**चव्येन्द्रबीजं त्रिफला सर्पिर्मांसरसाम्बुभिः ॥**
**पीतं विरेचनं तद्धि रूक्षाणामपि शस्यते ॥ २७ ॥**

चूर्णमाह—चूर्णमित्यादि । नीली नीलिनी, श्रीफलिकेति लोके । कट्वी कटुरोहिणी । रूक्षाणां सर्पिषा मांसरसेन च, स्निग्धानां पुनरपिशब्दसमुच्चितानामम्बुना पानीयेन सह योगो देयः॥२६ ॥२७॥

**वैरेचनिकनिःक्वाथभागाः शीतास्त्रयो मताः ॥**
**द्वौ फाणितस्य तच्चापि पुनरग्नावधिश्रयेत् ॥२८॥**
**तत् साधुसिद्धं विज्ञाय शीतं कृत्वा निधापयेत् ॥**
**कलसे कृतसंस्कारे विभज्यर्तू हिमाहिमौ ॥ २९ ॥**
**मासादूर्ध्वं जातरसं मधुगन्धं वरासवम् ॥**
**पिबेदसावेव विधिः क्षारमूत्रासवेष्वपि ॥ ३० ॥**

वैरेचनिकं गौडमासवं निर्दिशन्नाह—वैरेचनिकेत्यादि । वैरेचनिकं द्रव्यं सेहुण्डवर्जितं ग्राह्यम्, एकैव त्रिवृदित्येके । शीता इत्यनेन वैरेचनिकक्वाथे उष्णे फाणितं न योजयेदित्युक्तं भवति । द्वौ फाणितस्येति फाणितं काकवी; एतेन पञ्च भागाः कथनीया इत्यर्थः । साधुसिद्धमिति अर्धावशिष्टम् । पुनः शीतग्रहणेनोष्णं न सन्धातव्यमित्युक्तम् । त्रिवृदधिकारे वैरेचनिकक्वाथभागा इति सामान्यशब्दप्रयोगादपरवैरेचनिकानामप्येवमेवासव इति बोधयति । निधापयेत् क ? इत्याह—कलसे । कथंभूते ? कृतसंस्कारे; अन्तःक्षालितशुष्कस्य मधुपिप्पलीलेपोऽगुरुधूपनं चेति संस्कारः । विभज्यर्तू हिमाहिमाविति हिमे मासं धान्यराशौ स्थाप्यम्, अहिमे पुनरुष्णे पक्षमिति । जातरसमुत्पन्नरसं वरासवं पिबेदिति संबन्धः । जातरसस्य लक्षणमाह—मधुगन्धमिति । असावेव विधिः क्षारमूत्रासवेष्विति अयमेव विधिश्चिकित्सितादौ वक्ष्यमाणक्षारोदकासवादिषु गुडमधुयोनिष्वन्येषु च हिमाहिमकालस्थापनस्य पाकप्राप्तिलक्षणस्य चेति ॥ २८—३० ॥

**वैरेचनिकमूलानां क्वाथे माषान् सुभावितान् ॥**
**सुधौतांस्तत्कषायेण शालीनां चापि तण्डुलान् ३१**
**अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान् ॥**
**शालितण्डुलचूर्णं च तत्कषायोष्मसाधितम् ॥ ३२ ॥**
**तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान् ॥**
**मण्डोदकार्थे क्वाथं च दद्यात्तत्सर्वमेकतः ॥ ३३ ॥**

**निदध्यात्कलसे तां तु सुरां जातरसां पिबेत् ॥**
**एष एव सुराकल्पो वमनेष्वपि कीर्तितः ॥ ३४ ॥**

पैष्टीं सुरां वैरेचनीं दर्शयन्नाह—वैरेचनिकेत्यादि । त्रिवृदादिक्वाथेन माषविदलानि विभावयेदित्यर्थः । तत्कषायेणेत्यादि तेनैव वैरेचनिकक्वाथेन । अवक्षुद्यैकतः एकीकृत्य कुट्टयित्वेत्यर्थः । पिण्डान् कृत्वेति किण्वनिमित्तं पिण्डं कृत्वेत्यर्थः । तत्कषायोष्मसाधितमिति त्रिवृदादिक्वाथोष्मस्वेदितम् । तस्य पिष्टस्येत्यादि पिष्टपाचनिकायां शीतलीकृत्य तस्य पिष्टस्य भागांस्त्रीन् पूर्वकिण्वभागेनैकेन मिश्रितान् कृत्वेत्यर्थः । क्वाथं दद्यादिति त्रिवृदादेः । तस्य प्रमाणं तु आसुतीवला एव जानन्ति । एतस्यैव योगस्यान्यत्राप्यतिदेशं निर्दिशन्नाह—एष एवेत्यादि । एष एव सर्वपिष्टसुराणां विधिः; तथा वामनीयेषु मदनफलादिष्वपीत्यर्थः ॥३१—३४॥

**मूलानि त्रिवृदादीनां प्रथमस्य गणस्य च ॥**
**महतः पञ्चमूलस्य मूर्वाशार्ङ्गेष्टयोरपि ॥ ३५ ॥**
**सुधां हैमवतीं चैव त्रिफलातिविषे वचाम् ॥**
**संहृत्यैतानि भागौ द्वौ कारयेदेकमेतयोः ॥ ३६ ॥**
**कुर्यान्निःक्वाथमेकस्मिन्नेकस्मिंश्चूर्णमेव तु ॥**
**क्षुण्णांस्तस्मिंस्तु निःक्वाथे भावयेद्बहुशो यवान्॥३७॥**
**शुष्काणां मृदुभृष्टानां तेषां भागास्त्रयो मताः ॥**
**चतुर्थं भागमावाप्य चूर्णानामत्र कीर्तितम् ॥ ३८ ॥**
**प्रक्षिप्य कलसे सम्यक् ततस्तं तदनन्तरम् ॥**
**तेषामेव कषायेण शीतलेन सुयोजितम् ॥ ३९ ॥**
**पूर्ववत् संनिदध्यात्तु ज्ञेयं सौवीरकं हि तत् ॥**

सौवीरकवैरेचनमम्लसन्धानं निर्दिशन्नाह—मूलानीत्यादि । त्रिवृदादीनां संशोधनसंशमनीयोक्तानां ग्रहणम् । प्रथमो गणो विदारिगन्धादिः । मूर्वा चोरस्नायुः; शार्ङ्गेष्टा विटपकरञ्जः, चिरपोटिकेत्यन्ये, अपरे तु काकजङ्घामाहुः । सुधा सेहुण्डः । हैमवती श्वेतवचा । एतानि सर्वाण्यपि त्रिवृदादीनि संहृत्य एकीकृत्य द्वौ भागौ कारयेत् । ततश्चैतयोर्द्वयोर्भागयोर्मध्य एकस्मिन् भाग एकं निःक्वाथं कुर्यात्, एकस्मिंस्तु भागे चूर्णं कुर्यात् । क्षुण्णान् कुट्टितान् । पूर्वोक्ते निःक्वाथे भावयेत् सप्ताहं यावत् । तेषां यवानाम् । अवाप्य निक्षिप्य । चूर्णानां पूर्वोक्तोर्वरितत्रिवृदादिद्रव्यैकभागचूर्णानाम् । अत्र अस्मिन् शास्त्रे । कीर्तितं कथितम् । सौवीरकं हितं ज्ञेयमिति संबन्धः । ततस्तस्माच्चूर्णभागनिक्षेपणादनन्तरं कलसे प्रक्षिप्य, तत् सौवीरकं तदनन्तरं तेषामेव त्रिवृदादीनामन्यतमस्य कषायेण क्वाथेन शीतलेन सुयोजितं पूर्ववत् संनिदध्यादिति संबन्धः । सौवीरकं सौवीरकसंज्ञम् ॥ ३५—३९ ॥—

**पूर्वोक्तं वर्गमाहृत्य द्विधा कृत्वैकमेतयोः ॥ ४० ॥**
**भागं संक्षुद्य संसृज्य यवैः स्थाल्यामधिश्रयेत् ॥**
**अजशृङ्ग्याः कषायेण तमभ्यासिच्य साधयेत् ॥४१॥**

---

१ 'जातरसमासवं मधुगन्धिकम्' इति पा० । २ 'वकवः' इति पा० ।

१ 'पिण्डं पिण्डं कृत्वेत्यर्थः' इति पा० । २ 'यवान्' इति पा० । ३ 'तानभ्यासिच्य' इति पा० ।

सुसिद्धांश्चावतार्यैतानौषधिभ्यो विवेचयेत् ॥
विमृद्य सतुषान् सम्यक् ततस्तान् पूर्ववन्मितान् ॥
पूर्वोक्तौषधभागस्य चूर्णं दत्त्वा तु पूर्ववत् ॥
तेनैव सह यूषेण कलसे पूर्ववत् क्षिपेत्[1] ॥ ४३ ॥
ज्ञात्वा जातरसं चापि तत्तुषोदकमादिशेत् ॥
तुषाम्बुसौवीरकयोर्विधिरेष प्रकीर्तितः ॥ ४४ ॥
षड्रात्रात् सप्तरात्राद्वा ते च पेये प्रकीर्तिते ॥

तुषोदककल्पं निर्दिशन्नाह—पूर्वोक्तमित्यादि । त्रिवृदादिमूलं विदारिगन्धादिस्तथा महत् पञ्चमूलं मूर्वा शार्ङ्गेष्टा चेति पूर्वोक्तो वर्गः । द्विधा कृत्वा द्वौ भागौ कृत्वेत्यर्थः । एतयोर्भागयोर्मध्ये एकं भागं संक्षुद्य कुट्टयित्वा, सतुषैर्यवैः सह संसृज्य संयद्धी-कृत्य, स्थाल्यामधिश्रयेत् निक्षिपेत् । यवानामेको भागः । अजश्रृङ्गी कर्कटश्रृङ्गी, 'विषाणिका' इत्यपरे । तं पूर्वोक्तं सयवं भागं, साधयेत् रन्धयेत् । सुसिद्धान् सुस्विन्नान्, एतान् यवान्, औषधेभ्यो विवेचयेत् पृथक् कुर्यात् । तान् यवान् । पूर्ववन्मितान् भागद्वयपरिमितान्, 'पूर्वोक्तौषधभागस्योद्ध(र्वै)रितस्य' इति शेषः । पूर्ववत् चतुर्थभागप्रमाणमित्यर्थः[2] । तेनैव सह यूषेणेति प्रोक्तस्वि-न्नौषधवर्गयवाजश्रृङ्गीकषायेणोद्धृतौषधयवेन; स पुनरौषधसंसर्गेण घनत्वाद्यूष इव जातः । जातरसं व्यक्ताम्लम् । तयोः सौवीर-कतुषोदकयोर्व्यक्ताम्लत्वे कालावधिं दर्शयन्नाह—षड्रात्रात् सप्तरात्राद्वा; षड्रात्रसप्तरात्रविकल्पोऽप्युष्णशीतकालापेक्षः । ते चेति सौवीरकतुषोदके ॥ ४०—४४ ॥—

वैरेचनेषु सर्वेषु त्रिवृन्मूलविधिः स्मृतः ॥ ४५ ॥

त्रिवृद्विधानं सप्रपञ्चमुद्दिश्य त्रिवृद्विधानप्रकारातिदेशेनावशि-ष्टवैरेचनमूलानि निर्देष्टुमाह—वैरेचनेष्वित्यादि । वैरेचनेषु सर्वे-ष्विति अवशिष्टेषु श्यामादन्तीद्रवन्तीसप्तलादिषु । त्रिवृन्मूलविधिः स्मृत इति यादृशस्त्रिवृन्मूले विधिरुक्तस्तादृशस्तेष्वपि ज्ञेय इत्यर्थः । तद्यथा—श्यामामूलं श्यामास्वरसभावितं वा चूर्णितं सैन्धवना-गरयुक्तमम्लैरनिलव्याधौ, मधुरक्वाथसहितं शर्करादिभिस्तुल्यभागं गोक्षीरयुक्तं पित्ते, इत्यादिर्यावत् सौवीरकतुषोदकविधिः; एवं प्रतिशेषवैरेचनिकमेवेहोदाहार्यम् । विषयोऽपि तेषां वैरेचनिक-मूलकल्पानां प्रतित्रिवृत्कल्पविषय एवेति ॥ ४५ ॥

दन्तीद्रवन्त्योर्मूलानि विशेषान्मृत्कुशान्तरे ॥
पिप्पलीक्षौद्रयुक्तानि स्विन्नान्युद्धृत्य शोषयेत् ॥
ततस्त्रिवृद्विधानेन योजयेच्छ्लेष्मपित्तयोः ॥

सामान्यातिदेशं निर्दिश्य दन्तीद्रवन्त्योर्विशिष्टं कल्पनमाह—दन्तीत्यादि । दन्तीद्रवन्त्योर्मूलान्युद्धृत्य शोषयेदिति संबन्धः । किंविशिष्टानि? स्विन्नानि, कस्मात्? विशेषादतिशयेन । केत्याह—मृत्कुशान्तरे; मृत्तिकादर्भमध्ये पुटपाकविधानेनेत्यर्थः । पिप्पलीक्षौद्रयुक्तानि स्विन्नानीति संबन्धः । दन्ती प्रसिद्धा, द्रवन्ती चीरितपत्रा 'संवरी' इति लोके ॥ ४६ ॥—

तयोः कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ॥ ४७
सर्पिश्च पक्वं वीसर्पकक्षादाहालजीर्जयेत् ॥
मेहगुल्मानिलश्लेष्मविबन्धांस्तैलमेव च ॥ ४८ ॥
चतुःस्नेहं शकृच्छुक्रवातसंरोधजा रुजः ॥

तयोरित्यादि । तयोर्दन्तीद्रवन्त्योः । कल्ककषायमात्रायां परि-भाषा स्मरणीया; तामाश्रित्य कल्पनोच्यते—तैलपलानि द्वात्रिंशत्, दन्तीद्रवन्तीकल्कपलान्यष्टौ, दन्तीद्रवन्तीक्वाथस्य पलानि शत-मेकमष्टाविंशत्यधिकं, तावत् क्वाथ्यं यावत्तैलपाकलक्षणम् । दन्ती-द्रवन्तीक्वाथस्यायं विधिः—पानीयपलानि पञ्चशतानि द्वादशाधि-कानि, दन्तीद्रवन्तीपलानि शतमेकं, क्वाथशेषमेकशतमष्टाविंश-त्यधिकम्; इति क्वाथकल्पना । अन्यत्राप्यनुक्ततैलादिमाने इयमेव कल्पना ज्ञेया । चक्रतैलमिति चक्रपीडितं तिलतैलं, हस्तादियन्त्र-पीडननिषेधार्थं; चक्रे ह्यभृष्टा एव तिलादयः पीड्यन्ते, ते पुन-र्गुणवत्तरा भवन्ति; यन्त्रेण भर्जनरूक्षितानां तिलानां स्नेहगुरु-त्वादयो गुणा हीयन्त इति । सर्पिश्चेति ताभ्यां दन्तीद्रवन्तीमूल-कल्ककषायाभ्यां प्रत्येकं पक्वं सिद्धं सर्पिर्विसर्पादीञ्जयेत् । पुन-र्दन्त्याः कल्को द्रवन्त्यास्तु कषाय इति बोद्धव्यम् । तैलमेव चेति चक्रतैलं पुनर्मेहगुल्मादीञ्जयेत् । चतुःस्नेहमिति घृततैलवसाम-ज्जानश्चत्वारः स्नेहाः । शकृत् पुरीषम् । चतुःस्नेहं दन्तीद्रवन्ती-मूलसाधितं वातसंरोधजा रुजो जयेदिति संबन्धः । अत्र द्रव-स्यानुक्तत्वाच्चतुर्गुणं जलं देयम् ॥ ४७ ॥ ४८ ॥—

दन्तीद्रवन्तीमरिचकनकाह्वयवासकैः ॥ ४९ ॥
विश्वभेषजमृद्वीकाचित्रकैर्मूत्रभावितम्[1] ॥
सप्ताहं सर्पिषा चूर्णं योज्यमेतद्विरेचनम् ॥ ५० ॥
जीर्णे संतर्पणं क्षौद्रं पित्तश्लेष्मरुजापहम् ॥
अजीर्णपार्श्वरुक्पाण्डुप्लीहोदरनिबर्हणम् ॥ ५१ ॥

दन्तीत्यादि । दन्ती सम्बरी; कनकाह्वयं कङ्कुष्ठं, 'नागकेस-रम्' इत्यन्ये; यवासो दुरालभा; विश्वभेषजं शुण्ठी । सप्ताहं मूत्र-भावितमिति संबन्धः । सर्पिषेति अस्य चूर्णस्य घृतेन वा लेहः कार्य इत्यर्थः । अस्यैव प्रयोगस्य यौगिकमनुसंग्रहमाह—जीर्णे इत्यादि । जीर्णे तस्मिन्नौषधे, संतर्पणं क्षौद्रमिति लाजशक्तुस-हितं मधु देयम् ॥ ४९—५१ ॥

गुडस्याष्टपले पथ्या विंशतिः स्युः पलं पलम् ॥
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ५२ ॥
कृत्वैतान्मोदकानेकं दशमे दशमेऽहनि ॥
ततः खादेदुष्णतोयसेवी निर्यन्त्रणास्त्विमे ॥ ५३ ॥
दोषघ्ना ग्रहणीपाण्डुरोगार्शःकुष्ठनाशनाः ॥

मोदकस्य प्रयोगमाह—गुडस्येत्यादि । अष्टौ पलानि गुडस्य, विंशतिर्हरीतकीफलानि, दन्तीमूलचूर्णपलं, चित्रकमूलचूर्णपलं च, पिप्पलीकर्षः, त्रिवृत्कर्षश्च । अत्र तु सप्तगुञ्जाफलपरिमित-माषकप्रमाणेन पलादिमानं ग्राह्यम् । दश कृत्वैतान्मोदकानित्यादि

---

[1] 'न्यसेत्' इति पा० । [2] 'पूर्ववत् चतुर्भागजातमित्यर्थः' इति पा० ।

[1] 'मूत्रभावितैः' इति पा० ।

दश मोदकान् कृत्वा, एकं मोदकं दशमे दशमेऽहनि खादेदिति संबन्धः । निर्यन्त्रणा वातातपादिनिषेधरहिताः । इमे मोदकाः ॥ ५२ ॥ ५३ ॥—

व्योषं त्रिजातकं मुस्ता विडङ्गामलके तथा ॥५४॥
नवैतानि समांशानि त्रिवृदष्टगुणानि वै ॥
श्लक्ष्णचूर्णीकृतानीह दन्तीभागद्वयं तथा ॥ ५५ ॥
(सर्वाणि चूर्णितानीह गालितानि विमिश्रयेत् ॥)
षड्भिश्च शर्कराभागैरीषत्सैन्धवमाक्षिकैः ॥५६॥
पिण्डितं भक्षयित्वा तु ततः शीताम्बु पाययेत् ॥
वस्तिरुक्तृड्ज्वरच्छर्दिशोषपाण्डुभ्रमापहम् ५७
निर्यन्त्रणमिदं सर्वविषघ्नं तु विरेचनम् ॥
त्रिवृदष्टकसंज्ञोऽयं प्रशस्तः पित्तरोगिणाम् ॥५८॥
भक्ष्यः क्षीरानुपानो वा पित्तश्लेष्मातुरैर्नरैः ॥
भक्ष्यरूपसधर्मत्वादाढ्येष्वेव विधीयते ॥ ५९ ॥

व्योषादिशीतविरेचनं दर्शयन्नाह—व्योषमित्यादि । व्योषादीनि प्रसिद्धानि । त्रिवृदष्टगुणानीति त्रिवृदष्टगुणा येषु तानि तथा । ईषत्सैन्धवमाक्षिकैरिति ईषच्छब्दश्चतुर्थांशवाचकः । भक्ष्यो भक्षणीयः । भक्ष्यरूपसधर्मत्वात् भक्ष्यरूपतुल्यादित्यर्थः । 'वातश्लेष्मातुरैर्नरैः' इति केचित् पठन्ति ॥ ५४—५९ ॥

तिल्वकस्य त्वचं बाह्यामन्तर्वल्कविवर्जिताम् ॥
चूर्णयित्वा तु द्वौ भागौ तत्कषायेण गालयेत् ६०
तृतीयं भावितं तेन भागं शुष्कं तु भावितम् ॥
दशमूलीकषायेण त्रिवृद्वत्संप्रयोजयेत् ॥ ६१ ॥
विधानं त्वक्षु निर्दिष्टं

त्वक्प्रधानकस्य तिल्वकस्य प्रयोगं निर्दिदिक्षुः प्रथमं तस्य संस्कारमेव सर्वप्रयोगविषयमाह—तिल्वकस्येत्यादि । अन्तर्वल्कविवर्जितामिति अभ्यन्तरकठिनत्वग्विवर्जिताम् । भागाविति द्वौ भागावित्यर्थः । तत्कषायेण तिल्वककषायेण । गालयेत् क्षारकल्पेन, गालनं पुनरिहैकविंशतिवारान् पारम्पर्यात् । तृतीयं भावितं तेन भागमिति अपरं चूर्णस्य स्थापितं तृतीयं भागं तेनैव तिल्वककषायजलेन चूर्णभागद्वयगालनलब्धगुणातिशयेन भावितमित्यर्थः । शुष्कं तु भावितं दशमूलकषायेणेति तृतीयं भागं शुष्कं पुनः सन्तं दशमूलीकषायेण भावितं त्रिवृद्वत् संप्रयोजयेदिति संबन्धः ॥ ६० ॥ ६१ ॥—

फलानामथ वक्ष्यते ॥
हरीतक्याः फलं त्वस्थिविमुक्तं दोषवर्जितम् ६२
योज्यं त्रिवृद्विधानेन सर्वव्याधिनिबर्हणम् ॥
रसायनं परं मेध्यं दुष्टान्तर्व्रणशोधनम् ॥ ६३ ॥
हरीतकी विडङ्गानि सैन्धवं नागरं त्रिवृत् ॥

१ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते । २ 'विधानं त्वक्षु निर्दिष्टं फलानामथ वक्ष्यते' इत्यर्धश्लोको हस्तलिखितपुस्तके न पठ्यते ।

मरिचानि च तत्सर्वं गोमूत्रेण विरेचनम् ॥ ६४ ॥
हरीतकी भद्रदारु कुष्ठं पूगफलं तथा ॥
सैन्धवं शृङ्गवेरं च गोमूत्रेण विरेचनम् ॥ ६५ ॥
नीलिनीफलचूर्णं तु नागराभययोस्तथा ॥
लिह्याद्गुडेन सलिलं पश्चादुष्णं पिबेन्नरः ॥ ६६ ॥
पिप्पल्यादिकषायेण पिबेत्पिष्टां हरीतकीम् ॥
सैन्धवोपहितां सद्य एष योगो विरेचयेत् ॥ ६७ ॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ॥
सैन्धवोपहिता वाऽपि सातत्येनाग्निदीपनी ॥६८॥
वातानुलोमनी वृष्या चेन्द्रियाणां प्रसादनी ॥
संतर्पणकृतान् रोगान् प्रायो हन्ति हरीतकी ६९

फलप्रधानहरीतकीकल्पेनाशेषवैरेचनिकफलकल्पं निर्दिशन्नाह—हरीतक्या इत्यादि । व्याधिशब्दोऽयं दोषेषु व्याधिषु च वर्तते । सर्वेषां हरीतकीयोगानां सामान्यं फलं दर्शयन्नाह—रसायनमित्यादि । सुखोपयोज्यान् योगान् सर्वर्तुकान् सार्वधातुकांश्चाह—हरीतकीत्यादि । मात्राप्रमाणं मध्येषु कोष्ठवयोबलेषु चूर्णकर्षः, उत्तमाधमयोर्बुद्ध्या विकल्पनीयः । नीलिनी श्रीफलिका । सातत्येन निरन्तरोपयोगेन । संन्तर्पणकृता रोगास्तृष्ण्यादयः, तानुष्णत्वाद्दीपनत्वाच्च शमयतीति । अत्र नागरगुडसैन्धवादीनां भिन्नकार्याणां दोषदेहधातुबलकालवयोऽवस्थान्तरविकारापेक्षया व्यवस्थितविकल्पः ॥ ६२—६९ ॥

शीतमामलकं रूक्षं पित्तमेदःकफापहम् ॥
विभीतकमनुष्णं तु कफपित्तनिबर्हणम् ॥ ७० ॥
त्रीण्यप्यम्लकषायाणि सतिक्तमधुराणि च ॥

हरीतकीनिर्देशादामलकविभीतकयोरपि गुणनिर्देशमाह—शीतमित्यादि । सतिक्तमधुराणि चेति प्रत्येकं हरीतक्यादीनामुक्ता शक्तिर्गुणतः संयोगतः प्रभावतश्च ॥ ७० ॥—

त्रिफला सर्वरोगघ्नी त्रिभागघृतमूर्च्छिता ॥७१॥
वयसः स्थापनं चापि कुर्यात् संततसेविता ॥

इदानीं त्रिफलायाः प्रयोगमाह—त्रिफलेत्यादि । रोगशब्दोऽत्र त्रिदोषवचनो व्याधिवचनो वा । मूर्च्छिता संयुक्ता ॥७१॥—

हरीतकीविधानेन फलान्येवं प्रयोजयेत् ॥ ७२ ॥
विरेचनानि सर्वाणि

हरीतकीत्यादि ॥ ७२ ॥—

विशेषाच्चतुरङ्गुलात् ॥
फलं काले समुद्धृत्य सिकतायां निधापयेत् ७३
सप्ताहमातपे शुष्कमतो मज्जानमुद्धरेत् ॥
तैलं ग्राह्यं जले पक्त्वा तिलवद्वा प्रपीड्य च ॥७४॥
तस्योपयोगो बालानां यावद्वर्षाणि द्वादश ॥
लिह्यादेरण्डतैलेन कुष्ठत्रिकटुकान्वितम् ॥ ७५ ॥
सुखोदकं चानुपिबेदेष योगो विरेचयेत् ॥

चतुरङ्गुलात् किरमालकात्, समुद्धृत्य 'फलम्' इति शेषः । सिकतायां वालुकायां, निधापयेत् निक्षिपेत्, सप्ताहमिति संबन्धः। अतः अस्माच्चतुरङ्गुलफलात् । लिह्यादित्यादि । एष योगो वातकफप्रशमनः ॥ ७३—७५ ॥—

एरण्डतैलं त्रिफलाक्वाथेन त्रिगुणेन तु ॥ ७६ ॥
युक्तं पीतं तथा क्षीररसाभ्यां तु विरेचयेत् ॥
बालवृद्धक्षतक्षीणसुकुमारेषु योजितम् ॥ ७७ ॥
फलानां विधिरुद्दिष्टः

एरण्डतैलमित्यादि । त्रिगुणेन त्रिफलाक्वाथेन युक्तं तथा क्षीररसाभ्यां युक्तमिति संबन्धः । रसो मांसरसः । बालादिषु योजितमेरण्डतैलं विरेचयेदिति संबन्धः ॥ ७६—७७ ॥—

क्षीराणां शृणु सुश्रुत ! ॥
विरेचनानां तीक्ष्णानां पयः सौधं परं मतम् ॥७८॥
अज्ञप्रयुक्तं तद्धन्ति विषवत् कर्मविभ्रमात् ॥
विजानता प्रयुक्तं तु महान्तमपि संचयम् ॥७९॥
भिनत्त्याश्वेव दोषाणां रोगान् हन्ति च दुस्तरान्

क्षीराणामित्यादि । सौधं सेहुण्डभवम् । कर्मविभ्रमात् कर्माविज्ञानात् । दोषाणां संचयमिति संबन्धः । आश्वेव शीघ्रमेव ॥ ७८ ॥ ७९ ॥—

महत्याः पञ्चमूल्यास्तु बृहत्योश्चैकशः पृथक् ८०
कषायैः समभागं तु तदङ्गारेषु शोषितम्[१] ॥
अम्लादिभिः पूर्ववत्तु प्रयोज्यं कोलसंमितम् ॥८१
महावृक्षपयःपीतैर्यवागूस्तण्डुलैः कृता ॥
पीता विरेचयत्याशु गुडेनोत्कारिका कृता ॥८२॥
लेहो वा साधितः सम्यक् स्नुहीक्षीरपयोघृतैः[२] ॥
भावितास्तु स्नुहीक्षीरे पिप्पल्यो लवणान्विताः ८३
चूर्णं काम्पिल्लकं वाऽपि तत्पीतं गुटिकीकृतम् ॥

महत्या इत्यादि । महती पञ्चमूली बिल्वादिका । बृहत्योरिति स्थूलबृहती लघुबृहती चेति द्वे बृहत्यौ । एकश इत्यादि । एकीकृत्याङ्गारेषु विशोषयेत्, न ज्वलदग्नौ पाकखरताभयात् । तत् सेहुण्डदुग्धं पृथक् कषायैः समभागं ग्राह्यम् । एतेन पञ्चमूलीबृहतीकषायाणां सप्तभागाः, अष्टमस्तु सेहुण्डदुग्धस्य । अम्लादिभिः काञ्जिकमस्तुसुरादिभिः । पूर्ववत् त्रिवृद्वत् । कोलसंमितं कर्षप्रमाणम् । महावृक्षेत्यादि । महावृक्षः सेहुण्डः । पीतैर्भावितैः । गुडे चेत्यादि । गुडे च कृतोत्कारिका विरेचयतीति संबन्धः । उत्कारिका लप्सिका । तस्याः कल्पना—गोधूमान् स्नुहीक्षीरेण भावयित्वा, चूर्णीकृत्य, घृतक्षीरादिभिः संयाववदुत्कारिका पचनीया गुडेन । लेह इत्यादि । लेहस्य कल्पना कथ्यते—स्नुहीक्षीरभावितस्य गोधूमचूर्णस्य लेहः साध्यः । अन्ये तु 'स्नुहीक्षीरसिताघृतैः' इति पठन्ति । तन्मते पयोऽप्युत्कारिकायामिवानुक्तमपि लेहे देयम् । लेहो 'विरेचयति' इत्यत्राप्यनुवर्तते । भाविता इत्यादि 'विरेचयन्ति' इत्यत्राप्यनुवर्तते । चूर्णमित्यादि । तत्पीतं स्नुहीक्षीरभावितम् । अत्रापि 'विरेचयति' इत्यनुवर्तते ॥ ८०—८३ ॥—

सप्तला शङ्खिनी दन्ती त्रिवृदारग्वधं गवाम् ॥८४॥
मूत्रेणाप्लाव्य सप्ताहं स्नुहीक्षीरे ततः परम् ॥
कीर्णं तेनैव चूर्णेन माल्यं वसनमेव च ॥ ८५ ॥
आघ्रायावृत्य वा सम्यङ्मृदुकोष्ठो विरिच्यते ॥

सप्तलेत्यादि । सप्तला सेहुण्डभेदः । शङ्खिनी यवतिक्ता, तस्याः फलं मूलं च विरेचकम्, अन्ये 'शङ्खिनी यवतिक्ताभेदः' इत्याहुः; अपरे तु श्वेतबुध्नामाहुः । दन्ती दन्तिनी । आरग्वधः किरमालकः । आप्लाव्य भावयित्वा । कीर्णमवचूर्णितं, तेनैव सप्तलादिचूर्णेन, माल्यं पुष्पम्, आघ्राय शिङ्घित्वा; तेनैव वा चूर्णेन कीर्णं भावितं वसनं वस्त्रमावृत्य परिधाय; मृदुकोष्ठो विरिच्यते नान्य इत्यर्थः ॥ ८४ ॥ ८५ ॥—

क्षीरत्वक्फलमूलानां विधानैः परिकीर्तितैः ॥
अवेक्ष्य सम्यग्रोगादीन् यथावदुपयोजयेत् ॥८६॥
त्रिवृच्छाणा मितास्तिस्रस्तिस्रश्च त्रिफलात्वचः ॥
विडङ्गपिप्पलीक्षारशाणास्तिस्रश्च चूर्णिताः ॥८७
लिह्यात् सर्पिर्मधुभ्यां च मोदकं वा गुडेन वा ॥
भक्षयेन्निष्परीहारमेतच्छ्रेष्ठं विरेचनम् ॥ ८८ ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ॥
कफवातकृतांश्चान्यान् व्याधीनेतद्व्यपोहति ८९

क्षीरत्वगित्यादि । शाणः कर्षचतुर्थो भागः ॥ ८६—८९ ॥

घृतेषु तैलेषु पयःसु चापि
मद्येषु मूत्रेषु तथा रसेषु ॥
भक्ष्यान्नलेह्येषु च तेषु तेषु
विरेचनान्यग्रमतिर्विदध्यात् ॥ ९० ॥

अनुक्तान्नपानेषु[१] प्रयोगकल्पान्निर्दिशन्नाह—घृतेष्वित्यादि । भक्ष्यं मोदकशष्कुल्यादि । अन्नं भक्तादि । अग्र्यमतिः प्रधानबुद्धिः ॥ ९० ॥

क्षीरं रसः कल्कमथो कषायः
शृतश्च शीतश्च तथैव चूर्णम्[२] ॥
कल्पाः षडेते खलु भेषजानां
यथोत्तरं ते लघवः प्रदिष्टाः ॥ ९१ ॥

इति श्रीसुश्रुतसंहितायां सूत्रस्थाने विरेचनद्रव्यविकल्पविज्ञानीयो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

क्षीरमित्यादि । "यन्त्रादिपीडितद्रव्यरसः स्वरस उच्यते । यः पिण्डश्चार्द्रपिष्टानां स कल्कः परिकीर्तितः ॥ वह्नौ तु क्वथितं

१ 'तदङ्गारैर्विशोषितम्' इति पा० । २ 'स्नुहीक्षीरसिताघृतैः' इति पा० ।

१ 'अनुक्तान्येतेषु' इति पा० । २ 'फाण्टम्' इति पा० ।

द्रव्यं शृतमाहुश्चिकित्सकाः । उपोषितं निशायां तु तोयस्थं शीतमुच्यते ॥ चूर्णमुष्णेन संपृक्तं तत् फाण्टमभिधीयते। अभिभूयाम्बुनोष्णेन क्षणात् पूतमितीतरे" इति। फाण्टलक्षणं तु प्रसङ्गादुक्तम्। कषायो द्विविधः—शृतकषायः, शीतकषायश्च। ते तु षट्कल्पा भवन्ति। कल्पा विधयः। अन्ये त्वेवं पठन्ति "चूर्णं कषायः शिशिरः शृतश्च तथा च कल्कः स्वरसस्तथैव। पञ्चैव कल्पाः खलु भेषजानां यथोत्तरं ते गुरवः प्रदिष्टाः" इति। ते तु स्वरस एव क्षीरमन्तर्भावयन्ति, फाण्टं शीतकषायेऽन्तर्भावयन्ति, ॥ ९१ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतटीकायां सूत्रस्थाने चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

---

## पञ्चचत्वारिंशत्तमोऽध्यायः।

**अथातो द्रवद्रव्यविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि। द्रवद्रव्याणि पानीयक्षीरादीनि, तेषां विधिर्विधानं भेद इत्यर्थः ॥ १ ॥ २ ॥

**पानीयमान्तरीक्षमनिर्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमक्लमपिपासामदमूर्च्छातन्द्रानिद्रादाहप्रशमनमेकान्ततः पथ्यतमं च ॥ ३ ॥**

पानीयमित्यादि। अन्तरीक्षादागतमान्तरीक्षं, न पुनस्तत्र भवं; कुतः? मेघजत्वात्; तत्र जातं चेत्येके। अनिर्देश्यरसम् अव्यक्तरसमप्रकटरसमित्यर्थः, अत्यल्परसत्वात्; न पुनस्तस्य रसो नास्ति। अमृतमिति अमृतमिवेत्यर्थः, अमृतत्वं पुनरस्य दोषप्रकोपस्याकरणात्; 'अमृतं ब्रह्मरूपम्' इत्यन्ये। जीवनं प्राणधारणं, 'सौम्यधातुवृद्धिकरम्' इति केचित्, 'ओजोवृद्धिकरम्' इत्यन्ये। तर्पणं तृप्तिजनकम्। धारणमिति शस्त्रपातादिव्यथासु मूर्च्छितां शरीरं दधातीति धारणम्। आश्वासजननमिति मार्गादिशुष्कदेहानां प्राणजननम्। श्रमेत्यादि प्रशमनशब्दः श्रमादिभिः सह प्रत्येकमभिसंबध्यते, श्रमादीनां प्रशमनमित्यर्थः; बह्वायासकृतं कष्टं श्रमः; अल्पायासकृतः श्रम एव क्लमः; मदः पूगफलेनेव मत्तता, स च विषमद्यशोणितोत्थो विकारः; तन्द्रानिद्रयोः कफवातकृतयोरपि प्रशमनं स्पर्शेन, या तु स्वाभाविकी निद्रा तां करोत्येव पीतं सत्; तन्द्रा निद्राभेदः, निद्रा प्रसिद्धैव। एकान्ततः पथ्यतममिति एकान्ततोऽतिशयेनेत्यर्थः, तर्हि तमप्प्रत्ययः कथं? उच्यते—स्वार्थिकत्वात्; एतेनातिशयेन पथ्यमित्यर्थः; 'अन्येषामाकाशगुणभूयिष्ठभूमिसलिलानां पथ्यानां प्रकृष्टं पथ्यं पथ्यतमम्; एकान्तग्रहणेन सर्वकालदेशपुरुषव्याधिषु प्रयोगोऽस्य द्योत्यते' इत्येके; 'तमप्प्रत्ययेन स्वस्वस्यातिशयेन हितमित्यभिहितम्' इत्यपरे ॥ ३ ॥

**तदेवावनिपतितमन्यतमं रसमुपलभते स्थानविशेषान्नदीनदसरस्तडागवापीकूपचुण्टीप्रस्रवणोद्भिदविकिरकेदारपल्वलादिषु स्थानेष्ववस्थितमिति ४**

तस्यानिर्देश्यरसस्यापि निर्देश्यरसत्वे कारणं निर्दिशन्नाह—तदित्यादि। तदेवावनिपतितमान्तरिक्षं जलं भूमिप्राप्तम्। अन्यतमं मधुरादिष्वेकतमम्। उपलभते प्राप्नोतीत्यर्थः। स्थानविशेषात् देशभेदादित्यर्थः। के पुनस्ते स्थानविशेषा इत्याह—नदीत्यादि। नद्यो गङ्गाद्याः; नदाः सिन्धुशोणादयः; सरो दिव्यख्यातं पुरुषव्यापारं विना; पुरुषव्यापारकृतस्तडागः, 'तलाव' इति लोके, केचिद्विपर्ययेणार्थमाहुः; वापी इष्टकादिभिर्बद्धा ससोपानतीर्था 'पुष्करिणी' इति लोके; कूपो मृत्तिकेष्टकादिभिर्बद्धोऽसोपानः; चुण्टी अवबद्धकूपः, अन्ये 'भुंआ गिरिपल्वलं वा' इत्याहुः, भुंआ नद्याः समीपे तत्कालकृता लघुकूपिका, पल्वलमखातगर्तं इति; प्रस्रवणमुच्चप्रदेशात् प्रस्रवज्जलस्थानं पर्वताश्रितम्; उद्भिदं पुनर्निम्नप्रदेशादूर्ध्वोत्तिष्ठज्जलस्थानं; विकिरं वालुकादि विकीर्य गृह्यमाणोदकस्थानं; केदारः प्रसिद्धः; पल्वलमानूपदेशजं तृणादिच्छन्नं सरः। आदिग्रहणात् ह्रदसमुद्रादिग्रहणम् ॥ ४ ॥

**तत्र, 'लोहितकपिलपाण्डुनीलपीतशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासङ्ख्यमुदकानि संभवन्ति' इत्येके भाषन्ते ॥ ५ ॥**

परमतमाह—तत्रेत्यादि ॥ ५ ॥

**तत्तु न सम्यक्; पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलरसो भवत्युत्कर्षापकर्षेण। तत्र, खलक्षणभूयिष्ठायां भूमावम्लं लवणं च; अम्बुगुणभूयिष्ठायां मधुरं; तेजोगुणभूयिष्ठायां कटुकं तिक्तं च; वायुगुणभूयिष्ठायां कषायम्; आकाशगुणभूयिष्ठायामव्यक्तरसम्, अव्यक्तं ह्याकाशमित्यतः; तत् प्रधानमव्यक्तरसत्वात्, तत्पेयमान्तरीक्षालाभे ॥६॥**

तन्निराकृत्य स्वमतमाह—तत्त्वित्यादि। कृत इति जनितः। उत्कर्षापकर्षेणेति वृद्धिह्रासाभ्याम्। खलक्षणभूयिष्ठायां पृथिव्यामात्मगुणबहुलायाम्। 'तत्र पृथिव्यम्बुगुणबाहुल्यान्मधुर' इत्यादिना रसविज्ञानीय उक्तस्य सामान्यविधेरुत्सर्गाख्यस्य 'तत्र खलक्षणभूयिष्ठायां भूमावम्लम्' इत्यादिको विशेषविधिरपवादाख्योऽत्र प्रोक्तः। अन्ये तु भूतद्वयगुणसंयोगं रसविशेषहेतुमाहुः। तथाहि—'तत्र खलक्षणोदकभूयिष्ठायां भूमौ मधुरं, पृथिव्यनिलभूयिष्ठायामम्लं, जलाग्निगुणभूयिष्ठायां लवणं, वाय्वग्निगुणभूयिष्ठायां कटुकं, पृथिव्यनिलगुणभूयिष्ठायां कषायम्, आकाशगुणभूयिष्ठायामव्यक्तरसम्' इति ॥ ६ ॥

---

१ 'तेन' इति पा०।

१ 'चुआ' इति पा०। २ 'स्वगुणभूयिष्ठायाम्' इति पा०। ३ 'अव्यक्तं ह्याकाशमित्यतः' इति कश्चिद्धस्तलिखितपुस्तके न पठ्यते। ४ 'पृथिव्यंशबहुलायां' इति पा०।

तत्रान्तरीक्षं चतुर्विधम् । तद्यथा—धारं, कारं, तौषारं, हैममिति । तेषां धारं प्रधानं, लघुत्वात्; तत् पुनर्द्विविधं—गाङ्गं, सामुद्रं चेति । तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति । तयोर्द्वयोरपि परीक्षणं कुर्वीत—शाल्योदनपिण्डमकुथितमविदग्धं रजतभाजनोपहितं वर्षति देवे बहिष्कुर्वीत, स यदि मुहूर्तं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यं; वर्णान्यत्वे सिक्थप्रक्लेदे च सामुद्रमिति विद्यात्, तन्नोपादेयम् । सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद्भवति । गाङ्गं पुनः प्रधानं, तदुपाददीताश्वयुजे मासि । शुचिशुक्लविततपटैकदेशच्युतमथवा हर्म्यतलपरिभ्रष्टमन्यैर्वा शुचिभिर्भाजनैर्गृहीतं सौवर्णे राजते मृन्मये वा पात्रे निदध्यात् । तत् सर्वकालमुपयुञ्जीत, तस्यालाभे भौमम् । तच्चाकाशगुणबहुलम् । तत् पुनः सप्तविधम् । तद्यथा—कौपं, नादेयं, सारसं, ताडागं, प्रास्रवणम्, औद्भिदं, चौण्ड्यमिति ॥ ७ ॥

तत्रेत्यादि । धाराभिः पततीति धारम् । करा वर्षोपलाः, तेषां तोयं कारम् । तौषारम् अवश्यायजं निशाजलम् । तदेव संहतावयवत्वेन स्फटिकशिलाशकलसदृशावयवं हिमं, तद्भवं हैमम् । तदित्यादि । गाङ्गमाकाशाधिष्ठानं, सामुद्रं पुनरवन्यधिष्ठानम् । तत्रेत्यादि । एतेन 'गाङ्गमाश्वयुज एव ग्रहीतव्यं न भाद्रपदे मासि' इत्युक्तं भवति । तयोरिति तयोर्गाङ्गसामुद्रयोरित्यर्थः । कथं परीक्षणमित्याह—शाल्योदनेत्यादि । अविदग्धम् अविवर्णम् । रूप्यमये भाजनेऽम्लरसे सामुद्रतोयं विना शाल्यन्नं न कोथमेति । दिनस्य रात्रेश्च पञ्चदशो भागो मुहूर्तः । अवगन्तव्यं ज्ञातव्यमित्यर्थः । वर्णान्यत्वे इत्यादि । प्रक्लेदः कोथः । तन्नोपादेयमिति दोषवत्त्वात् । सामुद्रमित्यादि । एतेन सामुद्रस्यानुपादेयस्यापि कदाचिदेवोपादेयता दर्शिता । आन्तरिक्षस्य ग्रहणोपायं दर्शयन्नाह—शुचीत्यादि । शुचिरनुपहतः । हर्म्यतलपरिभ्रष्टमिति धवलगृहोपरिभूमिकायाः सकाशादधः पतद्गृहीतम् । तदित्यादि कौपमित्यादिकं सर्वं प्रागेव व्याख्यातम् ॥ ७ ॥

तत्र वर्षास्वान्तरिक्षमौद्भिदं वा सेवेत, महागुणत्वात्; शरदि सर्वं, प्रसन्नत्वात्; हेमन्ते सारसं ताडागं वा; वसन्ते कौपं प्रास्रवणं वा; ग्रीष्मेऽप्येवं; प्रावृषि चौण्ड्यमनभिवृष्टं सर्वं चेति ॥ ८ ॥

तत्रेत्यादि । अत्र वर्षाशब्दो वर्षान्ते आश्वयुजे वर्तते न तु भाद्रपदे, तत्रान्तरिक्षजलस्य निषिद्धत्वात्; तदुक्तं,—"बलाहकाद्याः समदाः कीटा लूताश्च खेचराः । तद्विषोत्सर्गसंसर्गाद्ग्राह्यं तत्तदा जलम्" इति । तर्हि भाद्रपदे किं पातव्यम्? अत्रोच्यते—भाद्रपदे मास्याकाशगुणभूयिष्ठभूम्याश्रितमान्तरिक्षवद्भवतीति तत्पयः पेयमिति । अन्ये पुनस्तप्तंशीतमम्भो भाद्रपदे पाययन्ति, पूर्वस्थापितं माहेन्द्रं वा; अन्ये तु 'वर्षास्वान्तरिक्षमौद्भिदं कौपं वा' इति पठन्ति, तत्र कौपं विदाहपरिहारार्थं सक्षौद्रं पेयमिति व्याख्यानयन्ति । शरदि सर्वं 'पातव्यम्' इति शेषः । प्रसन्नत्वादिति प्रसन्नत्वं निर्दोषत्वमगस्त्योदयात् । प्रावृषि चौण्ड्यमनवमनभिवृष्टं सर्वं चेति अनवं पुरातनं, तच्च सारसं ताडागं वा; अनभिवृष्टमनाभसं, तच्च कौपम् । परं यत्र न वृष्टो देवस्तदा सर्वमेव पातव्यं यदि वा संस्कृतं भवेत् क्वथनादिभिः; सर्वत्रैवाभिनवस्य जलस्य प्रविष्टत्वात् । अन्ये तु 'अनवम्' इत्यस्य स्थाने 'अनभिनवम्' इति पठन्ति; अत्रापि स एवार्थः ॥ ८ ॥

कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम् ॥
तृणपर्णोत्करयुतं कलुषं विषसंयुतम् ॥ ९ ॥
योऽवगाहेत वर्षासु पिबेद्वाऽपि नवं जलम् ॥
स बाह्याभ्यन्तरान् रोगान् प्राप्नुयात् क्षिप्रमेव तु १०

इदानीं नवस्य सलिलस्य बाह्याभ्यन्तरप्रयोगे बाह्याभ्यन्तरानेव च रोगान्निर्दिशन्नाह—कीटेत्यादि । कीटादिभिः सह कोथशब्दः प्रत्येकमभिसंबध्यते, कोथः शटितत्वं; कीटाः सविषा वृश्चिकादयः, शवो मृतप्राणिशरीरं, प्रदूषितं विकृतीकृतम् । तृणपर्णोत्करयुतमिति तृणपर्णानामुत्करः समूहस्तेन युतम् । कलुषं मलिनम् । विषसंयुतमिति स्थावरजङ्गमविषयुक्तमित्यर्थः । वर्षास्विति आश्वयुजं विहायाषाढश्रावणभाद्रपदा गृह्यन्ते । वर्षाशब्दोऽयं प्रावृषि वर्षासु च वर्तते । तदाह,—"वर्षासु चतुरो मासान् मात्रावदुदकं पिबेत्" इति । बाह्याभ्यन्तरान् रोगानिति बाह्याः कुष्ठादयः, आभ्यन्तरास्तूदरादयः; ते च यथासंख्यमवगाहपानाभ्यां ज्ञेयाः ॥ ९ ॥ १० ॥

तत्र यत् पङ्कशैवलहठतृणपद्मपत्रप्रभृतिभिरवच्छन्नं रविशशिकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टं तद्व्यापन्नमिति विद्यात् । तस्य स्पर्शरूपरसगन्धवीर्यविपाकदोषाः षट् संभवन्ति । तत्र, खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषः, पङ्कसिकताशैवालबहुवर्णता रूपदोषः; व्यक्तरसता रसदोषः; अनिष्टगन्धता गन्धदोषः; यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्यदोषः; यदुपयुक्तं चिराद्विपच्यते विष्टम्भयति वा स विपाकदोष इति । त एते आन्तरिक्षे न सन्ति ॥ ११ ॥

व्यापन्नलक्षणमाह—तत्रेत्यादि । पङ्कः कर्दमः; शैवालं शैवलं; हठः जलकुम्भिका, 'अभूमिलग्नमूलस्तृणविशेषः' इत्येके । अवच्छन्नम् आच्छादितम् । नाभिजुष्टं न स्पृष्टम् । उपसृष्टं संयुतम् । व्यापन्नं दोषाक्रान्तम् । तानेव षड्दोषान्निर्दिशन्नाह—तत्रेत्यादि । औष्ण्यं भूवाष्पजनितं, न पुनरभ्यातपक्क-

१ 'तप्तावरतं' इति पा० ।

१ 'खस्थापितं' इति पा० ।

तम् । दन्तग्राहिता अतिशीतताऽभिप्रेता । पङ्केत्यादि सिकता वालुका । अनिष्टगन्धता विस्रादिगन्धता । व्यक्तरसता रसनेन्द्रियग्राह्यमधुरादिरसता । यदुपयुक्तमित्यादि कफप्रसेकः श्लेष्मस्रवणम् । वीर्यं चाचिन्त्यक्रियाहेतुः । यदुपयुक्तमित्यादि विष्टम्भो गुड्गुडाशब्दः । त एते इति एते पूर्वोक्ताः षड्दोषाः । आन्तरिक्षे इत्यस्योपलक्षणत्वादाकाशगुणभूयिष्ठेऽपि न संभवन्ति ॥ ११ ॥

**व्यापन्नस्य चाग्निक्कथनं सूर्यातपप्रतापनं तप्तायःपिण्डसिकतालोष्ट्राणां वा निर्वापणं प्रसादनं च कर्तव्यं, नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति ॥ १२ ॥**

व्यापन्नानां प्रसन्नतोपायं दर्शयन्नाह—व्यापन्नानामित्यादि । अग्निक्वथनं महादोषदुष्टस्य, सूर्यातपप्रतापनमल्पदोषे, तप्तायःपिण्डादिनिर्वापणं मध्यदोषे । लोष्टुः कठिनो मृन्मयः । निर्वापणं जले निःक्षेपणमित्यर्थः । प्रसादनं च कर्तव्यमिति अग्निक्वथनादिस्वरूपं प्रसादनं नान्यत् । गन्धापनयने उपायमाह—नागेत्यादि । नागो नागकेशरः, चम्पको राजचम्पकः, उत्पलं सौगन्धिकं; प्रभृतिग्रहणात् केतकीमल्लिकादिपुष्पाणि ॥ १२ ॥

**सौवर्णे राजते ताम्रे कांस्ये मणिमयेऽपि वा ॥**
**पुष्पावतंसं भौमे वा सुगन्धि सलिलं पिबेत्॥१३**

तदुदकं गुणवदपि किम्मयपात्रस्थं पेयमित्याह—सौवर्णे इत्यादि । पुष्पावतंसं पुष्पसुगन्धीकृतम् ॥ १३ ॥

**व्यापन्नं वर्जयेन्नित्यं तोयं यच्चाप्यनार्तवम् ॥**
**दोषसंजननं ह्येतन्नाददीताहितं तु तत् ॥ १४ ॥**
**व्यापन्नमुदकं यस्तु पिबतीहाप्रसादितम् ॥**
**श्वयथुं पाण्डुरोगं च त्वग्दोषमविपाकताम् ॥१५॥**
**श्वासकासप्रतिश्यायशूलगुल्मोदराणि च ॥**
**अन्यान्वा विषमान्रोगान्प्राप्नुयादचिरेण सः ॥१६**

व्यापन्नादिवर्जनमाह—व्यापन्नमित्यादि । अनार्तवमिति ऋतुविशेषानुपयोग्यम्, अऋतुवृष्टमिति केचित् । अप्रसाधितमिति क्वथनाद्यसंस्कृतम् ॥ १४—१६ ॥

**तत्र सप्त कलुषस्य प्रसादनानि भवन्ति । तद्यथा-कतकगोमेदकविसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति ॥ १७ ॥**

तत्रेत्यादि । कतकं शशकपुरीषप्रतिमं फलं; गोमेदकः पुष्परागाभो मणिः, मत्कोलमिति केचित्; विसग्रन्थिः पद्ममूलं; शैवालमूलं प्रसिद्धम्; मुक्ता मौक्तिकं; मणिः स्फटिकादिः । एतेन रूपदोषापनयनोपायो दर्शितः । अन्ये तु विसग्रन्थीत्यस्याग्रे 'पर्णीमूलं' इति पठन्ति; तत्र पर्णी पानीयपृष्ठजा, तस्या मूलं जटा ॥ १७ ॥

**पञ्च निक्षेपणानि भवन्ति । तद्यथा—फलकं, त्र्यष्टकं, मुञ्जवलय, उदकमञ्चिका, शिक्यं चेति॥१८**

पञ्चेत्यादि । निक्षेपणं यत्र जलं निक्षिप्यते स्थाप्यते, तेन भूम्यादिस्पर्शाभावाद्दोषान्तरानुदयः । फलकं शाल्मलीकाष्ठादिविरचितं, त्र्यष्टकम् अष्टास्रदण्डत्रयसंयोगः, मुञ्जवलयो मुञ्जादिविरचितो वलयाकारः, उदकमञ्चिका आकाशान्तराले निरन्तरनिहितवेत्रवेण्वादिविरचिता वेत्रगृहाद्यभिधाना, शिक्यं मुञ्जादिविरचितं प्रसिद्धम् ॥ १८ ॥

**सप्त शीतीकरणानि भवन्ति; तद्यथा—प्रवातस्थापनम्, उदकप्रक्षेपणं, यष्टिकाभ्रामणं, व्यजनं, वस्त्रोद्धरणं, वालुकाप्रक्षेपणं, शिक्यावलम्बनं चेति ॥ १९ ॥**

सप्तेत्यादि । उदकप्रक्षेपणमिति सलिलपूर्णे भाजने वस्त्रादिपीडिते आकण्ठमपरशीतसलिलनिक्षेपः । यष्टिकाभ्रामणं यन्त्रयष्ट्यादिभ्रामणम् । व्यजनमिति व्यजनादिना वातलीकरणम् । वस्त्रोद्धरणं वस्त्रेण गालनम् । वालुकाप्रक्षेपणम् उदकपात्रस्य वालुकामध्ये निक्षेपणम् । शिक्यावलम्बनं प्रसिद्धम् ॥ १९ ॥

**निर्गन्धमव्यक्तरसं तृष्णाघ्नं शुचि शीतलम् ॥**
**अच्छं लघु च हृद्यं च तोयं गुणवदुच्यते ॥ २० ॥**

कीदृशं पुनरुपादेयं भौममित्याह—निर्गन्धमित्यादि । शुचि अनुपहतम् । लघु चेति चकारः समस्तगुणवत्त्वेऽत्यन्तगुणकारि, अल्पगुणवत्त्वे त्वल्पगुणकारीति तारतम्यसूचकः । हृद्यं चेत्यत्र तु क्वथितजलस्य हृदयाप्रियत्वेऽप्युपग्रहणार्थम् । गुणवत् प्रशस्तगुणोपेतम् ॥ २० ॥

**तत्र नद्यः पश्चिमाभिमुखाः पथ्याः, लघूदकत्वात्; पूर्वाभिमुखास्तु न प्रशस्यन्ते, गुरूदकत्वात्; दक्षिणाभिमुखा नातिदोषलाः, साधारणत्वात् । तत्र सह्यप्रभवाः कुष्ठं जनयन्ति, विन्ध्यप्रभवाः कुष्ठं पाण्डुरोगं च, मलयप्रभवाः क्रिमीन्, महेन्द्रप्रभवाः श्लीपदोदराणि, हिमवत्प्रभवा हृद्रोगश्वयथुशिरोरोगश्लीपदगलगण्डान्, प्राच्यावन्त्या अपरावन्त्याश्चार्शांस्युपजनयन्ति, पारियात्रप्रभवाः पथ्या बलारोग्यकर्य इति ॥ २१ ॥**

इदानीं जाङ्गलपश्चिमदेशस्थानूपपूर्वदेशस्थसाधारणमध्यदेशस्थानां नदीनां गुणान्निर्दिशन्नाह—तत्र नद्य इत्यादि । पश्चिमाभिमुखा जाङ्गलपश्चिमदेशस्थाः पश्चिमसमुद्रगाः, पूर्वाभिमुखाः आनूपदेशस्थाः पूर्वसमुद्रगाः, दक्षिणाभिमुखाः मध्यदेशस्थाः । शैलादिभेदेन गुणान्निर्दिशन्नाह—तत्रेत्यादि । मलयप्रभवा इति मलयप्रभवा हि नद्यो द्विविधा भवन्ति—पाषाणसिकतावाहिन्यः, अपाषाणसिकतावाहिन्यश्च; तत्र पाषाणसिकतावाहिन्यः पथ्याः, अपाषाणसिकतावाहिन्यः क्रिमीन् जनयन्ति । हिमवत्प्रभवा इति ता अपि द्विविधाः—हिमवदुपरिभागप्रभवाः पथ्याः, अधोभागप्रभवास्तु हृद्रोगादिहेतवः । विशिष्टदेशाश्रितपर्वतप्रभवाणां

१ 'विविधान्' इति पा० ।

नदीनां सलिलगुणं दर्शयन्नाह—प्राच्येत्यादि । अवन्ती उज्जयिनी तयोपलक्षितो देशस्तस्य पूर्वस्यां जाताः प्राच्यावन्त्याः, पश्चिमस्यां जाता अपरावन्त्याः शैलाः, तेषु या नद्यः; एतेन विशिष्टदेशाश्रितपर्वतप्रभवाणां नदीनां सलिलगुण उक्तः । 'उज्जयिन्युपलक्षिते देशे याः प्राचीं पश्चिमां चाभिमुखं यान्ति ताः प्राच्यावन्त्या अपरावन्त्याश्च, न तु उज्जयिनीप्रभवेषु पर्वतेषु' इत्यन्ये । अयमर्थो **गयदासेन** दूषितः । पारियात्रेत्यादि पारियात्रः पर्वतभेदः, तत्र प्रभवा नद्यो द्विविधाः–तडागजा दरीजाश्च; तत्र तडागजाः पथ्याः, दरीजा दोषलाः ॥ २१ ॥

**नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः ॥**
**गुर्व्यः शैवालसंछन्नाः कलुषा मन्दगाश्च याः ॥ २२ ॥**

नदीनां धन्वानूपसाधारणशैलाश्रयाणां सर्वासामेव शेषीभूतं विशेषं दर्शयन्नाह—नद्य इत्यादि ॥ २२ ॥

**प्रायेण नद्यो मरुषु सतिक्ता लवणान्विताः ॥**
**लघ्व्यः समधुराश्चैव पौरुषेया बले हिताः ॥ २३ ॥**

इदानीं विशिष्टदेशप्रभवाणां नदीनां गुणविशेषं दर्शयन्नाह—प्रायेणेत्यादि । मरुषु प्रसिद्धेषु मरुदेशेषु, नतु जाङ्गलशब्दाभिहितेषु । पौरुषेया वृष्या इत्यर्थः । अन्ये तु 'ईषत्कषाया मधुरा लघुपाका बले हिताः' इति पठन्ति ॥ २३ ॥

**तत्र सर्वेषामेव भौमानां ग्रहणं प्रत्यूषसि, तत्र ह्यमलत्वं शैत्यं चाधिकं भवति, स एव चापां परो गुण इति ॥ २४ ॥**

भौमानां दिनापेक्षं ग्रहणकालं नियमयन्नाह—तत्रेत्यादि । प्रत्यूषसि प्रभाते । स एव चापां परो गुण इति स च शैत्यामलत्वलक्षणोऽपां परमो गुण इत्यर्थः । अन्ये तु 'शैत्यं चापां परो गुणः' इति पठन्ति । तत्र चकारोऽमलसूचनार्थः ॥ २४ ॥

**दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः ॥**
**अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना ॥ २५ ॥**

तत्र भौमानामर्कसोमकरसंस्कारजगुणेनान्तरिक्षतुल्यत्वं तदलाभे उपादानायाह—दिवेत्यादि । अर्कग्रहणे सिद्धे दिवाग्रहणं समस्तदिनप्राप्त्यर्थं, किरणग्रहणं दुर्दिनव्युदासार्थम् । दिवानिशीतिवचनात् सरोऽपि चन्द्रार्ककरसंबद्धं सत्यप्यर्के चन्द्रसंबन्धादरूक्षं, सत्यपि चन्द्रेऽर्कसंबन्धादनभिष्यन्दि । दोषान् व्याधीन् झटिति यदभिष्यन्दते उत्पादयति तदभिष्यन्दि, विपर्ययेणानभिष्यन्दि । निशाग्रहणं समस्तरात्रिप्राप्त्यर्थम् । यद्यपि पौर्णमास्यामेव सकलरात्रौ चन्द्रसंबन्धो नान्यासु, तथाऽपि एकयाऽपि पौर्णमास्या राज्याऽतिशायी संस्कारः कृतोऽन्यास्वप्यनुवर्तते । एतेनातिशीतोष्णस्निग्धरूक्षं निन्दितमित्युक्तं भवति ॥ २५ ॥

**गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने ॥**
**बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम् ॥ २६ ॥**

किंगुणं पुनर्गगनाम्बु येनैतत्तुल्यमुच्यत इत्याह—गगनाम्ब्वित्यादि । बल्यमुपचयौजःशक्तिकरत्वात् । विशिष्टरसाद्युत्पादनाद्रसायनं स्वस्थातुरोपयोगि । मेध्यं पवित्रम् । पात्रापेक्षि ततः परमिति अतिश्रेष्ठभाजने गृहीतमधिकं गुणं करोतीत्यर्थः । अन्ये तु मेध्यस्थाने शीतमिति पठन्ति । पूर्वं दोषशमनादि नोक्तमधुना अगस्त्योदयदर्शनविशेषप्रभावादुक्तम् ॥ २६ ॥

**रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम् ॥**
**चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् ॥ २७ ॥**

चन्द्रकान्तमणिप्रभवजलस्य गुणमाह—रक्षोघ्नमित्यादि । रक्षोघ्नं राक्षसभयहरम् । ह्लादि सुखावहम् । चन्द्रकान्तोद्भवमिति चन्द्रकान्तमणिप्रभवम् । इदं तु चन्द्रकिरणानुप्रवेशान्नाभसं, मणिप्रादुर्भूतत्वाद्भौममित्युभयात्मकम् ॥ २७ ॥

**मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ॥**
**भ्रमक्लमपरीतेषु तमके वमथौ तथा ॥ २८ ॥**
**ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥**

शीतोष्णविषयमाह—मूर्च्छेत्यादि । पित्तोष्णदाहेष्विति उष्णे शरदि ग्रीष्मे च । मदात्यये मद्यविकारे । भ्रमश्चक्रारूढस्येव । परीतेषु युक्तेषु । तमकः श्वासो मोहो वा । वमथौ छर्दिरोगे ॥ २८ ॥—

**पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ॥ २९ ॥**
**आध्माने स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे ॥**
**हिक्कायां स्नेहपीते च शीताम्बु परिवर्जयेत् ॥ ३० ॥**

पार्श्वेत्यादि । स्तिमिते कोष्ठे आमकोष्ठे इत्यर्थः । सद्यःशुद्धे इति यस्मिन् दिने शोधनं कृतं तत्रेत्येके, अपरे तु सप्ताहमित्याहुः । यद्यप्यौष्ण्यं स्पर्शदोष उक्तस्तथाऽप्यवस्थायां व्यवहारार्थत्वेनोपादेयम्; अन्ये तु पूर्वमौष्ण्यं भूबाष्पजनितमेव दोषलेनोक्तम्, इदं त्वग्न्यातपकृतमिति समादधति ॥ २९ ॥ ३० ॥

**नादेयं वातलं रूक्षं दीपनं लघु लेखनम् ॥**
**तदभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम् ॥ ३१ ॥**
**तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु ॥**
**ताडागं वातलं स्वादु कषायं कटुपाकि च ॥ ३२ ॥**
**वातश्लेष्महरं वाप्यं सक्षारं कटु पित्तलम् ॥**
**सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु ॥ ३३ ॥**
**चौण्ड्यमग्निकरं रूक्षं मधुरं कफकृन्न च ॥**
**कफघ्नं दीपनं हृद्यं लघु प्रस्रवणोद्भवम् ॥ ३४ ॥**
**मधुरं पित्तशमनमविदाह्यौद्भिदं स्मृतम् ॥**
**वैकिरं कटु सक्षारं श्लेष्मघ्नं लघु दीपनम् ॥ ३५ ॥**
**कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् ॥**
**तद्वत्पाल्वलमुद्दिष्टं विशेषाद्दोषलं तु तत् ॥ ३६ ॥**
**सामुद्रमुदकं विस्रं लवणं सर्वदोषकृत् ॥**

समस्तनदीनां शेषगुणमाह—नादेयमित्यादि । द्विविधं कौपं सक्षारमव्यक्तरसं च; यत् सक्षारं तत् पित्तलं, इतरन्न पित्तलम् ॥ ३१–३६ ॥—

**अनेकदोषमानूपं वार्यभिष्यन्दि गर्हितम् ॥ ३७ ॥**
**एभिर्दोषैरसंयुक्तं निरवद्यं तु जाङ्गलम् ॥**
**पाकेऽविदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्धनम् ॥ ३८ ॥**
**दीपनं स्वादु शीतं च तोयं साधारणं लघु ॥**

आनूपधन्वसाधारणगुणैर्निर्दिशन्नाह—अनेकेत्यादि । अत्र स्पर्शरूपरसगन्धवीर्यविपाकाः प्रागुक्ता दोषा ज्ञेयाः । एभिरिति एभिः पूर्वोक्तैः स्पर्शादिभिरित्यर्थः । अविदाहि अदाहकारीत्यर्थः ॥ ३७ ॥ ३८ ॥—

**कफमेदोऽनिलामघ्नं दीपनं बस्तिशोधनम् ॥ ३९ ॥**
**श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ॥**

उष्णोदकगुणमाह—कफेत्यादि । पथ्यं हितम् । उष्णोदकमर्धावशिष्टमुदकम् ॥ ३९ ॥—

**यत् क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु ॥ ४० ॥**
**चतुर्भागावशेषं तु तत्तोयं गुणवत् स्मृतम् ॥**

उष्णोदकभेदमाह—यदित्यादि । निर्वेगं निश्चलम् ॥४०॥—

**न च पर्युषितं देयं कदाचिद्वारि जानता ॥ ४१ ॥**
**अम्लीभूतं कफोत्क्लेदि न हितं तत् पिपासवे ॥**

पर्युषितमुष्णोदकं न दातव्यमित्याह—न चेत्यादि । पर्युषितं रात्र्युषितम् ॥ ४१ ॥—

**मद्यपानात्समुद्भूते रोगे पित्तोत्थिते तथा ॥ ४२ ॥**
**सन्निपातसमुत्थे च शृतशीतं प्रशस्यते ॥**

शृतशीतविषयमाह—मद्यपानादित्यादि । पूर्वं मदात्यये शीतम्, अत्र तु मदात्ययसमुद्भूते रोगे शृतशीतं; मदात्यये मदात्ययसमुद्भूते रोगे चोभयस्मिन्नपि शृतशीतं प्रयोक्तव्यमित्यर्थः ॥ ४२ ॥—

**स्निग्धं स्वादु हिमं हृद्यं दीपनं बस्तिशोधनम् ॥ ४३ ॥**
**वृष्यं पित्तपिपासाघ्नं नालिकेरोदकं गुरु ॥**

उदकप्रसङ्गेन नारिकेलफलसलिलस्यापि गुणं निदर्शयन्नाह—स्निग्धमित्यादि । नारिकेलोदकमीषत्पक्वार्द्रनारिकेलफलान्तर्वर्ति सलिलमित्यर्थः । जेज्झटस्तु 'लघु' इति पठति, लघुत्वं च शीघ्रपरिणामित्वमिच्छति ॥ ४३ ॥—

**दाहातीसारपित्तासृङ्मूर्च्छामद्यविषार्तिषु ॥ ४४ ॥**
**शृतशीतं जलं शस्तं तृष्णाच्छर्दिभ्रमेषु च ॥**

अधुना शृतशीतस्य शेषविषयमाह—दाहेत्यादि ॥ ४४ ॥—

**अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥ ४५ ॥**
**मन्देऽग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ॥**
**व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ ४६ ॥**

इति जलवर्गः ।

केषु रोगेषु जलं मन्दं पेयमित्याह—अरोचके इत्यादि । यावत् प्रतिषेधयितुमशक्यं तावदाचरेदिति मन्दार्थः । अयं पानीयवर्गो निबन्धकारैर्विपरीतक्रमेण पठितः । अस्माभिस्तु यथैव गुरुभिः कथितस्तथैव क्रमेण व्याख्यातः । इति पानीयवर्गः ॥ ४५ ॥ ४६ ॥

अथ क्षीरवर्गः ।

**गव्यमाजं तथा चौष्ट्रमाविकं माहिषं च यत् ॥**
**अश्वायाश्चैव नार्याश्च करेणूनां च यत्पयः ॥ ४७ ॥**

इदानीं क्षीरस्याष्टविधां योनिमाह—गव्यमित्यादि । करेणुर्हस्तिनी । अश्वायाश्च नार्याश्च करेणूनां चेति चकारत्रयमनुक्तसमानजातीयक्षीराणां समुच्चयार्थं, तेनाश्वतरीखरीमृगीखड्गिनीक्षीराणामपि ग्रहणम् । तत् पुनर्भूयसा नोपयुज्यत इति न कृतं साक्षात्तद्ग्रहणम् ॥ ४७ ॥

**तत्त्वनेकौषधिरसप्रसादं प्राणदं गुरु ॥**
**मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु ॥**
**सर्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते ॥४८॥**

सर्वेषामेव क्षीराणां दशविधं गुणं निर्दिशन्नाह—तत्त्वित्यादि । तत्त्वनेकौषधिरसप्रसादमिति तुशब्दः पुनरर्थे, ओषधिशब्देन सर्वद्रव्याणि न तु फलपाकावसानाः, रसः सारः किट्टभाव(ग)रहित ओजःशुक्रादिवत्, एतेन शुक्लत्वं द्योत्यते । प्राणदमग्निसोमादिधारणादुपचयादिकरणाद्वा । पिच्छिलं विशदविपरीतम् । श्लक्ष्णं खरविपरीतम् । एवमिदं क्षीरं दशगुणयुक्तं भवति । जेज्झटस्तु "तत्त्वनेकौषधिरसप्रसादः क्षीरतां गतः । सर्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते" इति पठति, व्याख्यानयति च–क्षीरतां गतः क्षीरत्वं प्राप्तः । प्राणभृतां प्राणिनां जरायुजानाम् । सात्म्यं नाम सुखं यत् करोति तदुच्यते ॥४८॥

**तत्र सर्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात्, वातपित्तशोणितमानसेष्वपि विकारेष्वविरुद्धं, जीर्णज्वरकासश्वासशोषक्षयगुल्मोन्मादोदरमूर्च्छाभ्रममददाहपिपासाहृद्बस्तिदोषपाण्डुरोगग्रहणीदोषार्शःशूलोदावर्तातिसारप्रवाहिकायोनिरोगगर्भास्रावरक्तपित्तश्रमक्लमहरं, पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं वयःस्थापनमायुष्यं जीवनं बृंहणं संधानं वमनविरेचनास्थापनं तुल्यगुणत्वाच्चौजसो वर्धनं बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्शितानां च पथ्यतमम् ॥ ४९ ॥**

सर्वेषामेव समानगुणानां क्षीराणां समानकर्म निर्देष्टुमाह—तत्रेत्यादि । सर्वम् अष्टविधमपीत्यर्थः । प्राणिनां जरायुजानाम् । जातिसात्म्यात् मनुष्यादिजातिसुखकरत्वात् । मानसेषु विकारेषु रजस्तमःसंसर्गजेषु । जीर्णज्वरेत्यादि जीर्णशब्दमेके ज्वरेण सह संबध्नन्ति, अन्ये तु क्रमान्तैर्ज्वरादिभिः सह, जीर्णत्वेनैतेषु प्रायेण वातपित्तानुबन्धो भवतीत्याहुः । हरशब्दो ज्वरादिभिः क्रमान्तैः सर्वैः सह प्रत्येकमभिसंबध्यते । कासेति

कासोऽत्र कफकासं त्यक्त्वा, शोषोऽत्र मुखकण्ठतालूनां, क्षयो राजयक्ष्मा, गुल्मोदरयोर्वातपैत्तिकयोः, मूर्च्छाभ्रममदपिपासासु कफामरहितासु, हृदयदोषाणां वातपित्तप्रायाणां, पाण्डुरोगे वातपित्तप्राये, ग्रहणीप्रदोषे जीर्णावस्थायाम्, अर्शस्सु रक्तपित्तप्रबलेषु, अतिसारे वातपित्तशोणितप्राये पक्वावस्थायां, प्रवाहिकायां वातपित्तप्रबलायां, गर्भस्रावे आमान्वयादिना; रक्तपित्ते कफप्रधाने, अग्निमान्द्ये च न देयम्। बल्यं मांसोपचयकरम्, अन्ये ओजसो वर्धनमिति; तन्मते 'ओजसो वर्धनम्' इति पाठोऽग्रे न भवति। वृष्यं शुक्रजनकं, वाजीकरणं शुक्रप्रवर्तनम्, एतेन जनकप्रवर्तकमित्युक्तम्। रसायनं सततोपयोगात्। मेध्यं मेधाजनकं पवित्रं वा। पाप्मापहं पापोपशमनं विशेषतो गव्यम्। वयःस्थापनं जरया विना। आयुष्यं आयुषे हितम्। सन्धानं भग्नस्य। वमनविरेचनास्थापनमिति वमनं वमनद्रव्यसंयोगि; विरेचनं सरत्वान्मृदुकोष्ठस्य, 'रेचनद्रव्यसंयोगाद्विरेचनम्' इत्यन्ये; आस्थापनम् आस्थापनद्रव्यसंयोगि, आस्थापनं निरूहणमित्यनर्थान्तरम्। तुल्यगुणत्वाच्चौजसो वर्धनमिति यावन्त एवौजसो गुणास्तावन्त एव क्षीरस्यापि, तेन तैस्तैरेवात्मगुणैस्तेषां समानानामोजसो गुणानामभिवर्धनम्। जेज्झटस्तु 'गव्यं तु शीतं स्निग्धं मधुरमविदाहि' इति पठति, शेषं तु समं; तन्मते गोक्षीरस्यैव गुणाः ॥ ४९ ॥

**अल्पाभिष्यन्दि गोक्षीरं स्निग्धं गुरु रसायनम् ॥**
**रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥ ५० ॥**
**जीवनीयं तथा वातपित्तघ्नं परमं स्मृतम् ॥**

सामान्येन क्षीरस्य गुणमभिधाय गव्यस्यैव विशिष्टं गुणकर्म निर्दिशन्नाह—गोक्षीरमित्यादि। दोषधातुमलस्रोतसां मन्दक्लेदप्राप्तिजनकमल्पाभिष्यन्दि ॥ ५० ॥—

**गव्यतुल्यगुणं त्वाजं विशेषाच्छोषिणां हितम् ॥५१॥**
**दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् ॥**
**अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ॥ ५२ ॥**
**नात्यम्बुपानाद्व्यायामात् सर्वव्याधिहरं पयः ॥**

अजाक्षीरगुणमाह—गव्यतुल्यगुणमित्यादि। गुणशब्दस्त्वत्कार्ये फले वर्तते। अत्राल्पकायत्वादयः स्वरूपविशेषेण न क्षीरपथ्यत्वे हेतवः, तेषामल्पकायत्वादीनामव्यादिष्वपि संभवात्; अतो द्वयमेव क्षीरपथ्यापथ्यविभागे हेतुर्जातिविशेषो भ्रमणादिविशेषश्च। सर्वव्याधिहरं सर्वदोषहरम् ॥ ५१ ॥ ५२ ॥—

**रूक्षोष्णं लवणं किंचिदौष्ट्रं स्वादुरसं लघु ॥ ५३ ॥**
**शोफगुल्मोदरार्शोघ्नं क्रमिकुष्ठविषापहम् ॥**

इदानीमौष्ट्रक्षीरगुणमाह—रूक्षेत्यादि ॥ ५३ ॥—

**आविकं मधुरं स्निग्धं गुरु पित्तकफावहम् ॥ ५४ ॥**
**पथ्यं केवलवातेषु कासे चानिलसंभवे ॥**

आविकक्षीरगुणमाह—आविकमित्यादि। कफावहं कफकरम्। केवलवातेष्विति केवलेष्वनावृतेषु, असंयुक्तेष्वपीत्यर्थः। अन्ये त्वेवं पठन्ति—"आविकं मधुरं स्निग्धमुष्णं पित्तकफावहम्। गुरु शुद्धेऽनिले पथ्यं सेकश्चानिलशोणिते"—इति। शुद्धेऽनिले अनावृते, अनिलशोणिते रक्तावृते वाते, सेकः परिषेकः ॥ ५४ ॥—

**महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् ॥ ५५ ॥**
**निद्राकरं शीततरं गव्यात् स्निग्धतरं गुरु ॥**

महिषीक्षीरमाह—महाभिष्यन्दीत्यादि। दोषधातुमलस्रोतसामतिशयक्लेदप्राप्तिजनकं महाभिष्यन्दि। गव्यात् स्निग्धतरं गोक्षीरात् स्निग्धतरमित्यर्थः ॥ ५५ ॥—

**उष्णमैकशफं बल्यं शाखावातहरं पयः ॥ ५६ ॥**
**मधुराम्लरसं रूक्षं लवणानुरसं लघु ॥**

अश्वादिक्षीरमाह—उष्णमित्यादि। एकशफा अश्वादयः, शफः खुरः। 'शाखा बाहुजङ्घे, तद्वातहरम्' इत्येके; 'शाखा रक्तादयो धातवः' इत्यन्ये। 'काञ्जिकस्येव प्रभावादाधारप्रभावाच्च शाखायां हन्ति, कोष्ठे करोति' इत्यामनन्ति ॥ ५६ ॥—

**नार्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् ॥ ५७ ॥**
**नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम् ॥**

मानुषं क्षीरमाह—नार्यास्त्वित्यादि। आश्च्योतनमक्षिपूरणम् ॥ ५७ ॥—

**हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु ॥ ५८ ॥**
**स्निग्धं स्थैर्यकरं शीतं चक्षुष्यं बलवर्धनम् ॥**

हस्तिनीक्षीरमाह—हस्तिन्या इत्यादि। स्थैर्यकरं शरीरदार्ढ्यकरम्, अन्ये 'तारुण्यस्थापकम्' इत्याहुः ॥ ५८ ॥—

**प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम् ॥५९॥**
**रात्र्याः सोमगुणत्वाच्च व्यायामाभावतस्तथा ॥**

प्राभातिकं क्षीरमाह—प्राय इत्यादि। विष्टम्भो गुडगुडाशब्दः ॥ ५९ ॥—

**दिवाकराभितप्तानां व्यायामानिलसेवनात् ॥ ६० ॥**
**श्रमघ्नं वातनुच्चैव चक्षुष्यं चापराह्णिकम् ॥**

आपराह्णिकक्षीरमाह—दिवाकरेत्यादि। अपराह्णो दिनान्तभागः। वृद्धानुमतौ पाठाविमौ ॥ ६० ॥—

**पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्तितम् ॥६१॥**

आमक्षीरमाह—पय इत्यादि ॥ ६१ ॥

**तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम् ॥**

पक्वस्य गुणमाह—तदित्यादि। शृतं पक्वम्, आवर्तितमित्यर्थः। अनभिष्यन्दि किंचिदभिष्यन्दीत्यर्थः।—

**वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ॥६२॥**

१ 'गोक्षीरमनभिष्यन्दि' इति पा०। २ 'श्वासकासाम्लपित्तनुत्' इति पा०।

स्त्रीक्षीरे पाकनिषेधमाह—वर्जयित्वेत्यादि । स्त्रियाः स्तन्यं वर्जयित्वाऽन्यदुग्धानि शृतान्येव हितानि भवन्तीत्यर्थः । तत् स्त्रीभवं स्तन्यमाममक्वथितमेव हितम् ॥ ६२ ॥

**धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा ॥**

तेषां सर्वक्षीराणामेव दोहनकालधारापातोष्णानां गुणविशेषं निर्दिशन्नाह—धारोष्णमित्यादि । गुणवत् गुणान्वितं, विपरीतमगुणवत्, अतोऽन्यथेति धारोष्णं यन्न भवति ।—

**तदेवातिशृतं शीतं गुरु बृंहणमुच्यते ॥ ६३ ॥**

अतिपक्वमाह—तदित्यादि । बृंहणं देहवृद्धिकरम् ॥ ६३ ॥

**अनिष्टगन्धमम्लं च विवर्णं विरसं च यत् ॥**
**वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत् ॥ ६४ ॥**

**इति क्षीरवर्गः ।**

कीदृशं क्षीरं वर्ज्यमित्याह—अनिष्टेत्यादि । विवर्णं शुक्लाद्वर्णान्तरमापन्नम् । विरसं मधुरादन्यरसम् । विग्रथितमम्लादिद्रव्यसंयोगेन विग्रथितावयवं, यल्लोके विनष्टमिति प्रसिद्धम् ॥६४॥

**अथ दधिवर्गः ।**

**दधि तु मधुरमम्लमत्यम्लं चेति; तत्कषायानुरसं स्निग्धमुष्णं पीनसविषमज्वरातिसारारोचकमूत्रकृच्छ्रकार्श्यापहं वृष्यं प्राणकरं मङ्गल्यं च ॥६५॥**

अथ दधिभेदानाह—दधीत्यादि । एतेन त्रिप्रकारं दध्युक्तम् । सामान्यदधिगुणमाह—तदित्यादि । उष्णमुष्णवीर्यम् । वृष्यं शुक्रकरम् । मङ्गल्यं मङ्गलहेतुः । अन्ये त्वेवं पठन्ति—'दधि तु मधुरं सृष्टमूत्रपुरीषं गुर्वम्लमभिष्यन्दि श्लेष्मपित्तशोफवर्धनं कार्श्यापहं रोचनं मङ्गल्यं च, तदेव चोद्धृतसारं ग्राह्यनभिष्यन्दि च, ससरं कफमेदःशुक्रकृत्, त्रिदोषकृन्मन्दजातम्' इति ॥६५॥

**महाभिष्यन्दि मधुरं कफमेदोविवर्धनम् ॥**
**कफपित्तकृदम्लं स्यादत्यम्लं रक्तदूषणम् ॥ ६६ ॥**

अथ त्रिप्रकारस्यापि दध्नो गुणमाह—महेत्यादि । महाभिष्यन्दीति पूर्ववद्व्याख्येयम् ॥ ६६ ॥

**विदाहि सृष्टविण्मूत्रं मन्दजातं त्रिदोषकृत् ॥**

मन्दजातगुणमाह—विदाहीत्यादि । त्रिदोषकृदिति दोषान् वातपित्तश्लेष्माणः करोतीति दोषकृदिति सिद्धे त्रिग्रहणमेतज्ज्ञापयति यन्मन्दजातं दधि त्रीनपि दोषान् यौगपद्येन तुल्यबलत्वेन च कोपयति, न पुनः परिपाट्या हीनाधिकभावेन वा ।—

**स्निग्धं विपाके मधुरं दीपनं बलवर्धनम् ॥ ६७ ॥**
**वातापहं पवित्रं च दधि गव्यं रुचिप्रदम् ॥**

गोदध्याह—स्निग्धमित्यादि ॥ ६७ ॥—

**दध्याजं कफपित्तघ्नं लघु वातक्षयापहम् ॥ ६८ ॥**
**दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ॥**

अजादध्याह—दध्याजमित्यादि ॥ ६८ ॥—

**विपाके मधुरं वृष्यं वातपित्तप्रसादनम् ॥ ६९ ॥**
**बलासवर्धनं स्निग्धं विशेषाद्दधि माहिषम् ॥**

महिषीदध्याह—विपाके इत्यादि । बलासः श्लेष्मा । स्निग्धपदबलासवर्धनपदाभ्यां सह 'विशेषात्' इति संबध्यते ॥ ६९ ॥—

**विपाके कटु सक्षारं गुरु मैत्र्यौष्ट्रिकं दधि ॥ ७० ॥**
**वातमर्शांसि कुष्ठानि कृमीन् हन्त्युदराणि च ॥**

उष्ट्रीदध्याह—विपाके इत्यादि । सक्षारमीषत्क्षारम् ॥७०॥—

**कोपनं कफवातानां दुर्नाम्नां चाविकं दधि ॥ ७१ ॥**
**रसे पाके च मधुरमत्यभिष्यन्दि दोषलम् ॥**

मेषीदध्याह—कोपनमित्यादि । दुर्नामानि अर्शांसि । दोषलमपथ्यत्वेन विकारकारि ॥ ७१ ॥—

**दीपनीयमचक्षुष्यं वाडवं दधि वातलम् ॥ ७२ ॥**
**रूक्षमुष्णं कषायं च कफमूत्रापहं च तत् ॥**

अश्वादध्याह—दीपनीयमित्यादि । वाडवमाश्वम् ॥ ७२ ॥—

**स्निग्धं विपाके मधुरं बल्यं संतर्पणं गुरु ॥ ७३ ॥**
**चक्षुष्यमग्र्यं दोषघ्नं दधि नार्या गुणोत्तरम् ॥**

मानुषीदध्याह—स्निग्धमित्यादि । चक्षुष्यमग्र्यं श्रेष्ठं चक्षुष्यमित्यर्थः । गुणोत्तरं गुणोत्कृष्टम् ॥ ७३ ॥—

**लघु पाके बलासघ्नं वीर्योष्णं पक्तिनाशनम् ॥ ७४ ॥**
**कषायानुरसं नाग्या दधि वर्चोविवर्धनम् ॥**

हस्तिनीदध्याह—लघ्वित्यादि ॥ ७४ ॥—

**दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक् ॥७५॥**
**विज्ञेयमेवं सर्वेषु गव्यमेव गुणोत्तरम् ॥**

सर्वेषां गोदधि श्रेष्ठमित्याह—दधीनीत्यादि । एवमेतेन प्रकारेण, एवावधारणे ॥ ७५ ॥—

**वातघ्नं कफकृत् स्निग्धं बृंहणं नातिपित्तकृत् ॥७६॥**
**कुर्याद्भक्ताभिलाषं च दधि यत् सुपरिस्रुतम् ॥**

वस्त्रादिगालितदधिगुणमाह—वातघ्नमित्यादि । सुपरिस्रुतं सुष्ठु गालितं वस्त्रादिभिः ॥ ७६ ॥—

**शृतात् क्षीरात्तु यज्जातं गुणवद्दधि तत् स्मृतम् ७७**
**वातपित्तहरं रुच्यं धात्वग्निबलवर्धनम् ॥**

क्वथितक्षीरजातस्य दध्नो गुणमाह—शृतादित्यादि ॥७७॥—

**दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः ॥ ७८ ॥**
**वह्नेर्विधमनश्चापि कफशुक्रविवर्धनः ॥**

दध्यवयवविशेषाणां गुणविशेषं दर्शयन्नाह—दध्न इत्यादि । सरः दध्न उपरितनो भागः स्नेहबहुलः 'तर' इति प्रसिद्धः । वह्नेर्विधमनः अग्निनाशनः । वृष्यः शुक्रवर्धन इति चोभयमतिवृद्धिकरत्वमात्रप्राप्तये; एतेन जनकप्रवर्तकमुक्तम् ॥ ७८ ॥—

---

१ 'सक्षारमम्लं मैत्र्यौष्ट्रिकं' इति पा० ।

दधि त्वसारं रूक्षं च ग्राहि विष्टम्भि वातलम् ७९
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥

उद्धृतस्नेहस्य दध्नो गुणमाह—दधीत्यादि । असारं साररहितम् । विष्टम्भीति सवाततोदशूला मलस्याप्रवृत्तिर्विष्टम्भः; अन्ये 'विष्टम्भो गुडगुडाशब्दः' इति प्राहुः ॥ ७९ ॥—

शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ॥ ८० ॥
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥

ऋतुभेदेन हेयोपादेयतामाह—शरदित्यादि ॥ ८० ॥—

तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम् ॥ ८१ ॥
अम्लं कषायं मधुरमवृष्यं कफवातनुत् ॥
प्रह्लादनं प्रीणनं च भिनत्त्याशु मलं च तत् ॥
बलमावहते क्षिप्रं भक्तच्छन्दं करोति च ॥ ८२ ॥

स्वाद्वम्लमत्यम्लकमन्दजातं
तथा शृतक्षीरभवं सरश्च ॥
असारमेवं दधि सप्तधाऽस्मिन्
वर्गे स्मृता मस्तुगुणास्तथैव ॥ ८३ ॥

इति दधिवर्गः ।

मस्तुगुणमाह—तृष्णेत्यादि । मस्तु अधोदधि जलमिश्रं; तच्च सप्तविधं दधिभेदात्; अन्ये तु दधितक्रजभेदेन मस्तु द्विविधमिच्छन्ति । मलं मूत्रपुरीषम् । भक्तच्छन्दं भोजनाभिलाषम् ॥ ८१—८३ ॥

अथ तक्रवर्गः ।

तक्रं तु मधुरमम्लं कषायानुरसमुष्णवीर्यं लघु रूक्षमग्निदीपनं गरशोफातिसारग्रहणीपाण्डुरोगार्शःप्लीहगुल्मारोचकविषमज्वरतृष्णाच्छर्दिप्रसेकशूलमेदःश्लेष्मानिलहरं मधुरविपाकं हृद्यं मूत्रकृच्छ्रस्नेहव्यापत्प्रशमनमवृष्यं च ॥ ८४ ॥

अथ तक्रगुणानाह—तक्रमित्यादि । गरं कृत्रिमं विषं, सदाभाविनं वर्जयित्वाऽन्ये विषमज्वराः, प्रसेको लालास्रावः । स्नेहव्यापत् स्नेहातियोगायोगसमुत्थो विकारः । अवृष्यम् अशुक्रलम् । तच्च तन्त्रान्तरे त्रिविधं—"रूक्षमर्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् । तक्रं दोषाग्निबलवित्त्रिविधं तत् प्रयोजयेत्" ( च. चि. अ. १४ )—इति । तन्त्रान्तरे सर्वेषामेवैतेषां पृथग्गुणोपवर्णनं कृतम् ॥ ८४ ॥

मन्थनादिपृथग्भूतस्नेहमर्धोदकं च यत् ॥
नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥
यत्तु सस्नेहमजलं मथितं घोलमुच्यते ॥ ८५ ॥

अथ कीदृक् तक्रं यस्यायं गुणनिर्देशः कृतः ? उच्यते—मन्थनादीत्यादि । घोलमाह—यत्त्वित्यादि । तत्तु दधिगुणमेव । सस्नेहं सजलमुदश्वित्; तद्गुणास्तु मतान्तराद्बोद्धव्याः ॥ ८५ ॥

नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले ॥
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ ८६ ॥

तस्य तक्रस्य निषेधविषयमाह—नैवेत्यादि । उष्णकाले शरद्ग्रीष्मयोः ॥ ८६ ॥

शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च ॥
मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥ ८७ ॥

केषु प्रशस्तमित्याह—शीतकाल इत्यादि । मार्गावरोधे स्रोतःशोधकत्वात् । दुष्टे च वायौ विकृते वाते; स च प्रायः कोष्ठस्थो ज्ञेयः ॥ ८७ ॥

तत् पुनर्मधुरं श्लेष्मप्रकोपणं पित्तप्रशमनं च; अम्लं वातघ्नं पित्तकरं च ॥ ८८ ॥

तक्रस्य रसविशेषेण गुणविशेषमाह—तदित्यादि ॥ ८८ ॥

वातेऽम्लं सैन्धवोपेतं, स्वादु पित्ते सशर्करम् ॥
पिबेत्तक्रं कफे चापि व्योषक्षारसमन्वितम् ॥८९॥

संयोगविशेषेण त्रिदोषहरत्वमाह—वाते इत्यादि ॥ ८९ ॥

ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका ॥

तस्य हेत्वन्तरैर्विग्रथितस्य घनीभूतावयवस्य स्वगुणान् निर्दिशन्नाह—ग्राहिणीत्यादि । विनष्टं तक्रं घनावयवं तक्रकूर्चिका ।—

तक्राल्लघुतरो मण्डः कूर्चिकादधितक्रजः ॥ ९० ॥

इदानीं तक्राद्दधिमस्तुनस्तथा तक्रमस्तुनोऽपि विशेषं गुणेषु दर्शयन्नाह—तक्रादित्यादि । मण्डो मस्तुकः; कूर्चिकाभूतं यद्दधि तक्रं च ताभ्यां जातो यो मण्डः स तक्राल्लघुतरः, प्राकृतदधिजातं पुनर्मस्तु लाघवात्तक्रसममेव । अन्ये त्वेवं पठन्ति, 'दधिकूर्चिकतक्रजः' इति । तत्र प्राकृतदधिजः, कूर्चिकीभूतदधिजः, कूर्चिकीभूततक्रज इति मस्तुत्रयसंग्रहः । 'तक्रतुल्यो दधिमण्डो विष्टम्भारुचिनाशन' इति च क्वचित् पठ्यते । प्राकृतमस्तु च ग्रीष्मादिविदाहेन सुजातस्य दध्नोऽच्छो भाग उच्यते ॥९०॥

गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः ॥

तक्रकूर्चिकाप्रस्तावे क्षीरकूर्चिकामाह—गुरुरित्यादि । कूर्चिकीभूतक्षीरस्य घनभागः किलाटः; यं लोकाः क्षीरांशुमित्याहुः, सूदास्तु 'किलाटी' इति । पुंस्त्वं शुक्रम् ॥—

मधुरौ बृंहणौ वृष्यौ तद्वत्पीयूषमोरटौ ॥ ९१ ॥

पीयूषमोरटावाह-मधुरावित्यादि । तद्वदिति किलाटतुल्यौ । पीयूषः सद्यःप्रसूताया गोः क्षीरं सप्ताहं यावत्, तदेव सप्ताहात् परतो यावत् प्रसन्नतां न गच्छति तावत् 'मोरट' इत्युच्यते । जेज्जटस्तु 'विनष्टक्षीरभवं मस्तु मौरटम्' इत्याह ॥ ९१ ॥

नवनीतं पुनः सद्यस्कं लघु सुकुमारं मधुरं कषायमीषदम्लं शीतलं मेध्यं दीपनं हृद्यं संग्राहि पित्तानिलहरं वृष्यमविदाहि क्षयकासव्रणशोषार्शोऽर्दि-

१ 'सुजातस्यापि' इति पा० ।

**तापहं, चिरोत्थितं गुरु कफमेदोविवर्धनं बलकरं बृंहणं शोषघ्नं विशेषेण बालानां प्रशस्यते ॥ ९२ ॥**

सद्यस्कं नवनीतमाह—नवनीतमित्यादि । सद्यस्कं सद्योभवम् । सुकुमारं देहसौकुमार्यकरम् । संग्राहि प्रभावात्तक्रावयवसंबन्धाच, अत एवाम्लम् । चिरोत्थितस्य नवनीतस्य गुणमाह—गुर्वित्यादि । बलकरमोजस्करम् । बृंहणं देहोपचयकरम् । विशेषेणातिशयेनेत्यर्थः ॥ ९२ ॥

**क्षीरोत्थं पुनर्नवनीतमुत्कृष्टस्नेहमाधुर्यमतिशीतं सौकुमार्यकरं चक्षुष्यं संग्राहि रक्तपित्तनेत्ररोगहरं प्रसादनं च ॥ ९३ ॥**

क्षीरमथनोत्थितस्य नवनीतस्य गुणमाह—क्षीरोत्थमित्यादि । दध्युत्थितनवनीतापेक्षया उत्कृष्टे स्नेहमाधुर्ये यस्मिन् तत्तथा । अतिशीतमपि तदपेक्षयैव । प्रसादनं चेति रक्तपित्तनेत्ररोगयोः । प्रसादनस्थाने 'वर्णप्रसादनीयम्' इति केचित् पठन्ति ॥ ९३ ॥

**संतानिका पुनर्वातघ्नी तर्पणी वृष्या बल्या स्निग्धा रुच्या मधुरा मधुरविपाका रक्तपित्तप्रसादनी गुर्वी च ॥ ९४ ॥**

क्षीरोत्थनवनीतप्रसङ्गेन क्षीरोत्थसंतानिकामाह—संतानिकेत्यादि । संतानिका क्षीरस्योपरि स्त्यानो भागः क्षीरसैर इत्यर्थः । तर्पणी तृप्तिजनिका ॥ ९४ ॥

**विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः ॥**
**विकल्पानवशिष्टांस्तु क्षीरवीर्यात्समादिशेत् ९५**

**इति तक्रवर्गः ।**

ननु चाष्टानां क्षीराणां निर्दिष्टत्वादिह तक्रमस्तुतक्रकूर्चिकाकिलाटपीयूषमोरटनवनीतसंतानिकादयः कस्य क्षीरस्योक्ता इत्याह–विकल्प इत्यादि । विकल्पो भेदः प्रकारः । दधि आदिर्यस्य स दध्यादिः । गव्य इति गोरेव । अभिवर्णितः कथितः । न पुनरजाविप्रभृतीनां, यतः श्रेष्ठः सर्वेभ्यः प्रधानम् । तत् किमजादीनां दध्यादि न संभवतीत्याह–विकल्पानित्यादि । अवशिष्टान् उर्वरितान् । क्षीरवीर्यादिति क्षीरैर्वीर्यं क्षीरगुण इत्यर्थः । यथाऽजादीनां क्षीरगुणस्तदनुगुणस्तत्तक्रादिगुणो वाच्य इत्यर्थः ॥९५॥

**अथ घृतम् ।**

**घृतं तु मधुरं सौम्यं मृदु शीतवीर्यमनभिष्यन्दि स्नेहनमुदावर्तोन्मादापस्मारशूलज्वरानाहवातपित्तप्रशमनमग्निदीपनं स्मृतिमतिमेधाकान्तिस्वरलावण्यसौकुमार्यौजस्तेजोबलकरमायुष्यं वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभिवर्धनं पाप्मालक्ष्मीप्रशमनं विषहरं रक्षोघ्नं च ॥ ९६ ॥**

अथ घृतमाह—घृतं त्वित्यादि । एते सामान्यघृतस्य गुणाः, अन्ये तु गव्यस्यैवेति गुणश्रेष्ठत्वादित्याहुः । सौम्यत्वमुष्णेऽपि यथाऽविक्षीरे, अत एव शीतवीर्यमित्युक्तम् । अनभिष्यन्दीति अत्रेषदर्थे नञ्; तेन, अल्पाभिष्यन्दीत्यर्थः; एतेन दोषधातुमलस्रोतसां मन्दक्लेदप्राप्तिजननम् । स्नेहनं स्निग्धत्वापादकम् । उदावर्तादिप्रशमनं निरामाणामेव नतु सामानाम् । ज्वरस्य जीर्णस्य प्रशमनं शान्तिकरमित्यर्थः । स्मृत्यादिभिर्बलान्तैः सह करशब्दः प्रत्येकमभिसंबध्यते । स्मृतिः अतीतस्मरणम्; अनागतज्ञानं मतिः; मेधा ग्रन्थधारणशक्तिः; कान्तिः शोभा; लावण्यं रूपातिशयः; सौकुमार्यं मार्दवमङ्गानाम्; ओजो हृदिस्थितं धातुधाम; तेजः पराक्रमः, अन्ये प्रभामाहुः, सा च **महापञ्जिकायां** निषिद्धा; बलमुपचयः । मेध्यं पवित्रम् । वयःस्थापनमिति यावदेवायुः प्रमितं तावदेवायुः स्थापयत्यनाबाधम् । पापादीनि हन्ति प्रभावात् । रक्षोघ्नं राक्षसभयहरम् । 'त्रिदोषापकर्षणम्' इति केचित् पठन्ति, स तु नातिप्रसिद्धः पाठः । तत्रापि वातपित्तसंवद्धस्यैव कफस्य हन्तृत्वं, नतु केवलस्य ॥ ९६ ॥

**विपाके मधुरं शीतं वातपित्तविषापहम् ॥**
**चक्षुष्यमग्र्यं बल्यं च गव्यं सर्पिर्गुणोत्तरम् ॥९७॥**

सामान्येन घृतगुणमभिधाय गव्यघृतस्य विशेषगुणमाह—विपाके इत्यादि । चक्षुष्यमग्र्यमिति सर्वचक्षुष्यश्रेष्ठमित्यर्थः । गुणोत्तरं गुणोत्कृष्टम् ॥ ९७ ॥

**आजं घृतं दीपनीयं चक्षुष्यं बलवर्धनम् ॥**
**कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु ९८**

आजं घृतमाह—आजमित्यादि ॥ ९८ ॥

**मधुरं रक्तपित्तघ्नं गुरु पाके कफावहम् ॥**
**वातपित्तप्रशमनं सुशीतं माहिषं घृतम् ॥ ९९ ॥**

माहिषघृतमाह—मधुरमित्यादि ॥ ९९ ॥

**औष्ट्रं कटु घृतं पाके शोफक्रिमिविषापहम् ॥**
**दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥ १०० ॥**

औष्ट्रघृतमाह—औष्ट्रमित्यादि ॥ १०० ॥

**पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपणम् ॥**
**कफेऽनिले योनिदोषे शोषे कम्पे च तद्धितम् १०१**

आविकघृतमाह—पाके इत्यादि ॥ १०१ ॥

**पाके लघूष्णवीर्यं च कषायं कफनाशनम् ॥**
**दीपनं बद्धमूत्रं च विद्यादैकशफं घृतम् ॥ १०२ ॥**

आश्वघृतमाह—पाके इत्यादि । ऐकशफं घृतमश्वाया घृतमित्यर्थः ॥ १०२ ॥

**चक्षुष्यमग्र्यं स्त्रीणां तु सर्पिः स्यादमृतोपमम् ॥**
**वृद्धिं करोति देहाग्न्योर्लघुपाकं विषापहम् १०३**

मानुषीघृतमाह—चक्षुष्यमित्यादि । चक्षुष्यमग्र्यं सर्वचक्षुष्यश्रेष्ठम् ॥ १०३ ॥

---

१ 'कफमेदोविलयनं' इति पा० । २ 'क्षीरस' इति पा० । ३ 'क्षीरस्य वीर्यं गुण इत्यर्थः' इति पा० ।

१ 'शोफे' इति पा० ।

**कषायं बद्धविण्मूत्रं तिक्तमग्निकरं लघु ॥**
**हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रिमीन् १०४**

हास्तिनघृतमाह—कषायमित्यादि । कारेणवं हास्तिनम् ॥ १०४ ॥

**क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगहितं च ॥ १०५ ॥**

क्षीरोत्थघृतगुणमाह—क्षीरघृतमित्यादि । क्षीरमथनात् समुद्भूतनवनीतोत्थितं घृतं क्षीरघृतम् । संग्राहि प्रभावात् । भ्रमः चक्रारूढस्येव । मूर्च्छा चेतनाच्युतिः ॥ १०५ ॥

**सर्पिर्मण्डस्तु मधुरः सरो योनिश्रोत्राक्षिशिरसां शूलघ्नो बस्तिनस्याक्षिपूरणेषूपदिश्यते ॥ १०६ ॥**

घृतमण्डस्य गुणमाह—सर्पिर्मण्डस्त्वित्यादि । विलीनघृतस्य घनीभूत उपरितनो भागो मण्डः ॥ १०६ ॥

**सर्पिः पुराणं सरं कटुविपाकं त्रिदोषापहं मूर्च्छामदोन्मादोदरज्वरगरशोषापस्मारयोनिश्रोत्राक्षिशिरःशूलघ्नं दीपनं बस्तिनस्यपूरणेषूपदिश्यते १०७**

**भवति चात्र—**

**पुराणं तिमिरश्वासपीनसज्वरकासनुत् ॥**
**मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥१०८॥**
**(एकादशशतं चैव वत्सरानुषितं घृतम् ॥**
**रक्षोघ्नं कुम्भसर्पिः स्यात् परतस्तु महाघृतम् १०९**
**पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः ॥**
**बल्यं पवित्रं मेध्यं च विशेषात्तिमिरापहम् ॥११०॥**
**सर्वभूतहरं चैव घृतमेतत् प्रशस्यते ॥ १११ ॥)**

**इति घृतवर्गः ।**

पुराणघृतगुणमाह—सर्पिरित्यादि । पुराणं दशवर्षस्थितम् । विषरुधिरमद्यजा मदात्रयः, गरः संयोगविषम् । पूरणेऽक्षिपूरणे । एकादशशतमिति एकादशोत्तरं शतमित्यर्थः । भूतैः प्राणिभिः । आचार्यस्तु 'कौम्भं तु शतवत्सरम्' इत्याह । अयं पाठो निबन्धेषु न दृश्यते, अस्माभिस्तु बहुवैद्यपठितत्वात् पठितः ॥ १०७–१११ ॥

**अथ तैलानि ।**

**तैलं त्वाग्नेयमुष्णं तीक्ष्णं मधुरं मधुरविपाकं बृंहणं प्रीणनं व्यवायि सूक्ष्मं विशदं गुरु सरं विकासि वृष्यं त्वक्प्रसादनं मेधामार्दवमांसस्थैर्यवर्णबलकरं चक्षुष्यं बद्धमूत्रं लेखनं तिक्तकषायानुरसं पाचनमनिलबलासक्षयकरं क्रिमिघ्नमशितपित्तजननं योनिशिरःकर्णशूलप्रशमनं गर्भाशयशोधनं च, तथा छिन्नभिन्नविद्धोत्पिष्टच्युतमथितक्षतपिच्चितभग्नस्फुटितक्षाराग्निदग्धविश्लिष्टदारिताभिहतदुर्भग्नमृगव्यालविदष्टप्रभृतिषु च परिषेकाभ्यङ्गावगाहादिषु तिलतैलं प्रशस्यते ॥ ११२ ॥**

**तद्वस्तिषु च पानेषु नस्ये कर्णाक्षिपूरणे ॥**
**अन्नपानविधौ चापि प्रयोज्यं वातशान्तये ११३**

जङ्गमस्नेहोत्तमं घृतं निर्दिश्य स्थावरस्नेहोत्तमं तैलं गुणकर्मभ्यां निर्दिशन्नाह—तैलमित्यादि । तिलेषु भवं तैलं तिलतैलम् । आग्नेयमुष्णमिति प्रभा आग्नेयी न चोष्णा, क्षार उष्णः सौम्यश्च, मत्स्या उष्णा न त्वाग्नेयाः, अत एवाग्नेयमुष्णमित्युभयमुक्तम् । बृंहणं धातुपुष्टिकरत्वेन शरीरदार्ढ्यावहत्वात्; न च लेखनत्वमप्यस्य विरुद्धं, मेदोहरत्वात् । न खलु तैलं मेदोघ्नमपि मांसं न करोति, प्रतिनियतशक्तित्वाद्द्रव्याणाम् । प्रीणनं तृप्तिजनकम् । व्यवायि अपरिणतमेव व्याप्य देहं पच्यते । सूक्ष्मं सूक्ष्मस्रोतोनुसारि । विशदं निर्मलम् । विकासि सन्धिबन्धविमोचकम् । वृष्यं शुक्रलम्, अन्ये तु धातुपोषणकरणाद्वृष्यं, सद्यः पुनरवृष्यमेव । यदुक्तं **जातूकर्णेन**—'अशुक्रार्थे तैललवणम्' इति । त्वक्प्रसादनमभ्यङ्गे भोजने च । वर्णो गौरादिः । बलकरमुत्साहकरम् । चक्षुष्यं परिणामे, न तु पूरणेन । लेखनं मेदोहरम् । अनिलबलासक्षयकरमिति मिलितवातबलासयोः क्षयकरं, न केवलस्य वातस्य न च केवलस्य श्लेष्मणः; अथवा क्षयो मार्गः, अनिलबलासस्रोतःशोधनमित्यर्थः । अशितपित्तजननम् अल्पतनूकरणपित्तयोर्जनकं, शितं हि तनूकरणं, नञीषदर्थे, तेनाल्पतनूकरणमिति लभ्यते; केचिदशितमिति पृथक् पठन्ति, तच्च **महापञ्जिकायां** दूषितम् । छिन्नं द्विधाभूतं, भिन्नं विदारितं, विद्धं सूच्यादिभिः, उत्पिष्टं चूर्णितं, च्युतं स्थानादधोगतं, मथितं विलोडितं, क्षतमुरःक्षतादि, पिच्चितं चिप्पटीभूतं 'चिर्पितं' इति लोके, भग्नं सन्धिमुक्तादिभेदं, स्फुटितं बहुधा खण्डीभूतं, विश्लिष्टं सन्धिविश्लेषमात्रयुक्तं, दारितं स्फाटि(डि)तमित्यर्थः, अभिहतं लगुडादिभिः, दुर्भग्नं चूर्णितातिपातितं मज्जानुगतादिकं कृच्छ्रसाध्यं दुष्टं भग्नं, मृगव्यालविदष्टं दुष्टमृगभक्षितम् । परिषेकः अङ्गोपरि तैलधारादिनिपातः, अभ्यङ्गः प्रसिद्धः, अवगाहोऽप्स्वेक्रीडनम् । अन्नपानविधाविति विधौ संस्करणे ॥ ११२ ॥ ११३ ॥

**एरण्डतैलं मधुरमुष्णं तीक्ष्णं दीपनं कटु कषायानुरसं सूक्ष्मं स्रोतोविशोधनं त्वच्यं वृष्यं मधुरविपाकं वयःस्थापनं योनिशुक्रविशोधनमारोग्यमेधाकान्तिस्मृतिबलकरं वातकफहरमधोभागदोषहरं च ॥ ११४ ॥**

एरण्डतैलस्य गुणकर्माण्याह—एरण्डतैलमित्यादि । अधोभागदोषहरं विरेचनेन दोषहरमित्यर्थः ॥ ११४ ॥

---

१ 'कटुपाकि' इति पा० । २ 'तत्परं तु' इति पा० । ३ 'पाचनं' इति हस्तलिखितपुस्तके न पठ्यते । ४ हाराणचन्द्रस्तु 'अशीतपित्तजननं' इति पठति, व्याख्यानयति च–'शीतपित्तोत्पत्तिप्रतिबन्धीत्यशीतपित्तजननं, नञश्चास्य विरोधवाचित्वात् । एतदभ्यञ्जनशीलानां शीतपित्तं न जायत इति निष्कर्षः' इति ।

१ 'अङ्गमुद्रनं' इति पा० ।

**निम्बातसीकुसुम्भमूलकजीमूतकवृक्षककृतवेधनार्ककम्पिल्लकहस्तिकर्णपृथ्वीकापीलुकरञ्जेङ्गुदीशिग्रुसर्षपसुवर्चलाविडङ्गज्योतिष्मतीफलतैलानि तीक्ष्णानि लघून्युष्णवीर्याणि कटूनि कटुविपाकानि सराण्यनिलकफकृमिकुष्ठप्रमेहशिरोरोगापहराणि चेति ॥ ११५ ॥**

निम्बादिफलस्नेहगुणानाह—निम्बेत्यादि । जीमूतको देवदाली, वृक्षकः कुटजः, कृतवेधनः कोशातकी, अर्कः प्रसिद्धः, कम्पिल्लको रेचनिकः, हस्तिकर्णो महापर्णो 'भूपलाश' इत्युच्यते, अन्ये रक्तैरण्डमाहुः, पृथ्वीका कृष्णजीरकः, पीलुः प्रसिद्धः, करञ्जो वृक्षकरञ्जः, इङ्गुदी कण्टकी(क)वृक्षः प्रसिद्धः, अन्ये पुत्रजीवकमाहुः, शिग्रुः शोभाञ्जनफलं, सुवर्चला सूर्यावर्तः, विडङ्गः कृमिहा, ज्योतीष्मती काकमर्दनिका । निम्बतैलं तन्त्रान्तरे पलितहरमुक्तम्, इहापि सामान्येन शिरोरोगापहरत्वेन पलितहरत्वमुच्यते ॥ ११५ ॥

**वातघ्नं मधुरं तेषु क्षौमं तैलं बलापहम् ॥**
**कटुपाकमचक्षुष्यं स्निग्धोष्णं गुरुपित्तलम् ११६**
**कृमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु ॥**
**कफमेदोनिलहरं लेखनं कटु दीपनम् ॥ ११७ ॥**
**कृमिघ्नमिङ्गुदीतैलमीषत्तिक्तं तथा लघु ॥**
**कुष्ठामयकृमिहरं दृष्टिशुक्रबलापहम् ॥ ११८ ॥**
**विपाके कटुकं तैलं कौसुम्भं सर्वदोषकृत् ॥**
**रक्तपित्तकरं तीक्ष्णमचक्षुष्यं विदाहि च ॥११९॥**

एषु केषांचित् सामान्यगुणाद्विशेषं निर्दिशन्नाह—वातघ्नमित्यादि । क्षौममिति अतसीभवम् ॥ ११६—११९ ॥

**किराततिक्तकातिमुक्तकविभीतकनालिकेरकोलाक्षोडजीवन्तीप्रियालकर्बुदारसूर्यवल्लीत्रपुसैर्वारुककर्कारुकूष्माण्डप्रभृतीनां तैलानि मधुराणि मधुरविपाकानि वातपित्तप्रशमनानि शीतवीर्याण्यभिष्यन्दीनि सृष्टमूत्राण्यग्निसादनानि चेति ॥ १२० ॥**

कटून्यभिधाय मधुराणि निर्दिशन्नाह—किरातेत्यादि । अतिमुक्तक आवन्तकः, कोलो बदरमज्जा, अक्षोड उत्तरापथे प्रसिद्धः, जीवन्ती स्वर्णजीवन्तीफलं, प्रियालः प्रसिद्धो मधुराम्लफलः, कर्बुदारः काञ्चनारः; सूर्यवल्ली अर्कपुष्पी, 'सूर्यावर्तभेदः' इत्यन्ये, सुवर्चलायाः पूर्वमेव पठितत्वात्; त्रपुसं कर्कटीफलं 'त्रिपुडी' इति लोके, एर्वारुर्ग्रीष्मकर्कटिका, कर्कारु वाडवं त्रपुसम् । प्रभृतिग्रहणात् कालिङ्गादीनां ग्रहणम् । अग्निसादनानि अग्निमान्द्यकराणि । किराततिक्तकादीनां तिक्तानामपि मधुराणि तैलानि प्रत्यक्षदृष्टत्वात् ॥ १२० ॥

**मधूककाश्मर्यपलाशतैलानि मधुरकषायाणि कफपित्तप्रशमनानि ॥ १२१ ॥**

मधूकादीनां तैलान्याह—मधूकेत्यादि । पलाशः किंशुकः १२१

**तुवरकभल्लातकतैले उष्णे मधुरकषाये तिक्तानुरसे वातकफकुष्ठमेदोमेहकृमिप्रशमने उभयतोभागदोषहरे च ॥ १२२ ॥**

तुवरकादितैलमाह—तुवरकेत्यादि । तुवरकं पश्चिमार्णवतीरजातमाहुः । तदुक्तं,—"पत्रैस्तु केशराकारैः कपित्थसदृशैः फलैः । वृक्षस्तुवरको नाम पश्चिमार्णवतीरजः"—इति । उभयतोभागदोषहरे चेति वमनेन विरेचनेन चेत्यर्थः ॥ १२२ ॥

**सरलदेवदार्वशिंशपागुरुगण्डीरसारस्नेहास्तिक्तकटुकषाया दुष्टव्रणशोधनाः कृमिकफकुष्ठानिलहराश्च ॥ १२३ ॥**

सारस्नेहानाह—सरलेत्यादि । सरलादयः प्रसिद्धाः । गण्डीरः सारप्रधानस्तरुविशेषः । सारस्त्वन्तर्गतः प्रधानभूतोऽवयवविशेषः ॥ १२३ ॥

**तुम्बीकोशाम्रदन्तीद्रवन्तीश्यामासप्तलानीलिकाकम्पिल्लकशङ्खिनीस्नेहास्तिक्तकटुकषाया अधोभागदोषहराः कृमिकफकुष्ठानिलहरा दुष्टव्रणशोधनाश्च ॥ १२४ ॥**

तुम्ब्यादीनां स्नेहमाह—तुम्बीत्यादि । तुम्बी तिक्तालाबुः, कोशाम्रः 'कोशम्ब' इति प्रसिद्धः, दन्ती दन्तिनी, द्रवन्ती शम्बरी, श्यामा वृद्धदारुकः, सप्तला सातलेति प्रसिद्धा, नीलिनी श्रीफलिका, कम्पिल्लकः प्रसिद्धः, शङ्खिनी श्वेतश्रीफलिका, अन्ये यवतिक्तामेदमाहुः । अधोभागदोषहरा इति विरेचनेन दोषहरा इत्यर्थः ॥ १२४ ॥

**यवतिक्तातैलं सर्वदोषप्रशमनमीषत्तिक्तमग्निदीपनं लेखनं मेध्यं पथ्यं च ॥ १२५ ॥**

यवतिक्तातैलमाह—यवतिक्तातैलमित्यादि । यवतिक्ता यवक्षेत्रेषु जायते तिक्तसप्ताष्टपत्रा 'यवेन्तिका' इति प्रसिद्धा १२५

**एकैषिकातैलं मधुरमतिशीतं पित्तहरमनिलप्रकोपणं श्लेष्माभिवर्धनं च ॥ १२६ ॥**

एकैषिकातैलमाह—एकैषिकातैलमित्यादि । एकैषिका अविद्धकर्णी 'पाठा' इति लोके, त्रिवृदिति जेज्झटः ॥ १२६ ॥

**सहकारतैलमीषत्तिक्तमतिसुगन्धि वातकफहरं रूक्षं मधुरकषायं रसवन्नातिपित्तकरं च ॥ १२७ ॥**

आम्रतैलमाह—सहकारतैलमित्यादि । सहकारतैलमाम्रतैलम् । तच्च 'आम्रस्य तरुणफलवृन्तभङ्गमात्रत एव जातम्' इति गयी, 'तत्फलमज्जस्नेहः' इत्यन्ये ॥ १२७ ॥

**फलोद्भवानि तैलानि यान्युक्तानीह कानिचित् ॥**
**गुणान् कर्म च विज्ञाय फलानीवे विनिर्दिशेत् १२८**

फलानामानन्त्यात् फलगुणातिदेशं तैलेऽप्याह—फलोद्भवानीत्यादि । इह जगति । फलानीवेति फलसदृशगुणाः कर्माणि

१ 'फलवचानि निर्दिशेत्' इति पा० ।

चेत्यर्थः; अथवा इह तैलवर्गे यानि कानिचित् फलोद्भवानि तैलान्युक्तानि तानि तावदुक्तगुणकर्मभ्यामेव ज्ञेयानि, शेषाणि तु फलतैलानि फलस्य गुणान् कर्म च विज्ञाय फलानीव विनिर्दिशेदित्यर्थः । केचित्तु 'यान्युक्तानीह कानिचित्' इत्यस्य स्थाने 'यानीत्युक्तानि कानिचित्' इति पठन्ति, शेषं च समम् । तच सुबोधम् ॥ १२८ ॥

**यावन्तः स्थावराः स्नेहाः समासात्परिकीर्तिताः ॥**
**सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः ॥ १२९ ॥**

सर्वेषां स्थावराणां स्नेहानां तिलतैलगुणत्वमाह—यावन्त इत्यादि । सर्वे तैलगुणा ज्ञेया इति एतेन तिलतैले ये केचिद्धर्माः यानि च कानिचित् कर्माणि तान्यपरेष्वपि तैलेषु वर्तन्त इत्युक्तं, न तु सर्वे तिलतैलधर्माः सर्वाणि तिलतैलकर्माणि; अन्ये तु गुणशब्देन सर्वसाधारणीं स्निग्धतामाहुः ॥ १२९ ॥

**सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं विशिष्यते ॥**
**निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥ १३० ॥**

तिलतैलप्राधान्यकथनद्वारेणेतरेषां तैलानामपि तैलत्वमाह—सर्वेभ्यस्त्वित्यादि । निष्पत्तेरिति यथा तैलं तिलानां निष्पद्यते तथैवैरण्डादितैलमपीति निष्पत्तिसाम्यादित्यर्थः । तद्गुणत्वाच्चेति कैश्चित्तिलतैलकर्मभिः कैश्चित्तिलतैलधर्मैश्च समानत्वात् ॥१३०॥

**ग्राम्यानूपौदकानां च वसामेदोमज्जानो गुरूष्णमधुरा वातघ्नाः, जाङ्गलैकशफक्रव्यादादीनां लघुशीतकषाया रक्तपित्तघ्नाः, प्रतुदविष्किराणां श्लेष्मघ्नाः । तत्र घृततैलवसामेदोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च ॥ १३१ ॥**

**इति तैलवर्गः ।**

स्नेहसमानत्वाद्वसादिगुणकर्माह—ग्राम्येत्यादि । ग्राम्या गवोष्ट्रखरादयः, आनूपा महिषादयः, औदका मत्स्यादयः । जाङ्गलेत्यादि जाङ्गला एणादयः, एकशफा अश्वादयः, क्रव्यादा व्याघ्रादयः । प्रतुदेत्यादि प्रतुदाः कपोतपारावतादयः, विष्किरा लावादयः ॥ १३१ ॥

**अथ मधुवर्गः ।**

**मधु तु मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं स्वर्यं लघु सुकुमारं लेखनं हृद्यं वाजीकरणं सन्धानं शोधनं रोपणं (संग्राहि[1]) चक्षुष्यं प्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वासकासातिसारच्छर्दितृष्णाक्रिमिविषप्रशमनं ह्लादि त्रिदोषप्रशमनं च; तत्तु लघुत्वात् कफघ्नं, पैच्छिल्यान्माधुर्यात् कषायभावाच्च वातपित्तघ्नम् ॥ १३२ ॥**

इदानीं मध्वाह, तस्य सामान्यं स्वगुणं निर्दिशन्नाह—मध्वित्यादि । रूक्षदीपनलघुत्वादिगुणयुक्तं पुराणं, नवमेतद्विपरीतमिति । सुकुमारं सौकुमार्यकरम् । लेखनं पत्तलीकरणम् । हृद्यं हृदयप्रियं हितं च । वाजीकरणं शुक्रलम् । सन्धानं भग्नस्य । शोधनं दुष्टव्रणस्य । रोपणं शुद्धव्रणस्य । चक्षुष्यं चक्षुषे हितम् । प्रसादनं चक्षुषोर्देहस्य च । ह्लादि सुखकारि । त्रिदोषशमनमिति यद्यपि शैत्यरौक्ष्यलाघवैर्वातकारित्वं मधुरत्वादिना च कफकारित्वं तथाऽपि द्रव्यगुणोभयप्रभावात्रिदोषघ्नत्वम् ॥ १३२ ॥

**पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च ॥**
**आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ १३३ ॥**

तद्भेदानाह— पौत्तिकमित्यादि । पिङ्गला महत्यो मक्षिकाः पुत्तिकाः, तद्भवं पौत्तिकम्; अन्ये 'मशकोपमा मक्षिकाः कृष्णवर्णाः पुत्तिकाः' इति वदन्ति । भ्रमराः प्रसिद्धाः, तद्भवं भ्रामरम् । मक्षिकाः पिङ्गला एव स्वल्पाः क्षुद्राः, तद्भवं क्षौद्रम् । पिङ्गलवर्णा महत्यो मक्षिकास्तद्भवं माक्षिकम्; अन्ये 'अत्यल्पा मक्षिकाः' इत्याहुः । पीतकपिङ्गला 'बग' इति लोके यत् कुर्वन्ति छत्रकाकारं हैमवते वने मालववने[1] च तच्छात्रम् । "मधूकवृक्षपुष्पेभ्यो जरत्कार्वाश्रमोद्भवाः[2] । स्रवन्त्यार्घ्यं मधु प्राहुः श्वेतकं मालवे जनाः ॥ तीक्ष्णतुण्डास्तु याः पीतवर्णाः षट्पदसन्निभाः । अर्घा नाम च तद्भूतमार्घ्यमित्यपरे जगुः"—इति । उष्णेन सहार्घ्यं न विरुध्यते । यदुक्तं,—"मधून्युष्णैर्विरुध्यन्तेऽन्यत्रार्घ्यात्"—इति । उद्दालकाः कपिलकीटाः स्वल्पाः प्रायशो वल्मीकेष्वन्तर्मधु चिन्वन्ति, तद्भवमौद्दालकम् । दालमिति दलं पत्रं, तदुपरिस्थितं दालम्; अन्ये तु कपिला एव स्वल्पतरा मक्षिकाः प्रायेण वृक्षकोटरोद्भवा 'दला' इत्युच्यन्ते, तद्भवं दालमिति ॥ १३३ ॥

**विशेषात्पौत्तिकं तेषु रूक्षोष्णं सविषान्वयात् ॥**
**वातासृक्पित्तकृच्छेदि विदाहि मदकृन्मधु ॥ १३४ ॥**
**पैच्छिल्यात् स्वादुभूयस्त्वाद्भ्रामरं गुरुसंज्ञितम् ॥**
**क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥ १३५ ॥**
**तस्माल्लघुतरं रूक्षं माक्षिकं प्रवरं स्मृतम् ॥**
**श्वासादिषु च रोगेषु प्रशस्तं तद्विशेषतः ॥ १३६ ॥**
**स्वादुपाकं गुरु हिमं पिच्छिलं रक्तपित्तजित् ॥**
**श्वित्रमेहक्रिमिघ्नं च विद्याच्छात्रं गुणोत्तरम् ॥१३७॥**
**आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम् ॥**
**कषायं कटु पाके च बल्यं तिक्तमवातकृत् ॥ १३८ ॥**
**औद्दालकं रुचिकरं स्वर्यं कुष्ठविषापहम् ॥**
**कषायमम्लमुष्णं च पित्तकृत् कटुपाकि च ॥१३९॥**
**छर्दिमेहप्रशमनं मधु रूक्षं दलोद्भवम् ॥**

तेषां प्रत्येकं गुणमाह—विशेषादित्यादि । सविषान्वयादिति सविषपुष्पाहारमक्षिकासंभवत्वात् । छेदि मेदोग्रन्थ्यादीनाम् । मदकृदिति विषान्वयत्वादेव विषमदकृत् ॥ १३४-१३९ ॥—

**बृंहणीयं मधु नवं नातिश्लेष्महरं समम् ॥ १४० ॥**
**मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम् ॥**

---

१ 'संग्राहि' इति केषुचित्पुस्तकेषु न पठ्यते ।

१ 'हिमाचलवने च' इति पा० । २ 'मधूकवृक्षनिर्यासं जरद्दार्वाश्रयोद्भवाः' इति पा० ।

नवपुराणयोर्गुणमाह—बृंहणीयमित्यादि । आशयात्क्याविःतस्याल्पकालस्थापितत्वेन नवत्वम्, एतद्विपर्ययेण पुराणत्वम् ॥ १४० ॥—

**दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत् ॥ १४१ ॥**

पक्वामयोर्गुणमाह—दोषत्रयहरमित्यादि । पक्वत्वमग्निसंयोगात्, घनीभावादित्येके; 'अग्निसंयोगनिषेधान्निन्दितमेतत्, तस्मान्मधुनः कालविशेषस्थित्या परिणामात् पक्वत्वमामत्वं च ज्ञेयम्' इत्यन्ये ॥ १४१ ॥

**तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून् ॥**
**नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥ १४२ ॥**

अनेककर्मकारिणीं योगवाहितां दर्शयन्नाह—तद्युक्तमित्यादि । योगैरिति औषधसमूहैरित्यर्थः । यादृग्द्रव्येण संयोज्यन्ते तादृक् कर्म कुर्वन्तीति योगवाहित्वं, तेषां मध्ये परमुत्कृष्टं मध्वित्यर्थः ॥ १४२ ॥

**तत्तु नानाद्रव्यरसगुणवीर्यविपाकविरुद्धानां पुष्परसानां मक्षिकासंभवत्वाच्चानुष्णोपचारम् १४३**
**उष्णैर्विरुध्यते सर्वं विषान्वयतया मधु ॥**
**उष्णार्तमुष्णैरुष्णे वा तन्निहन्ति यथा विषम् ॥१४४॥**

**तत्सौकुमार्याच्च तथैव शैत्या-**
**न्नानौषधीनां रससंभवाच्च ॥**
**उष्णैर्विरुध्येत विशेषतश्च**
**तथाऽन्तरीक्षेण जलेन चापि ॥ १४५ ॥**

इदानीमुक्तायामपि हिताहितीये प्रक्रमागतायामनुष्णोपचारतायां हेतुं दर्शयन्नाह—तत्त्वित्यादि । तन्मधु अनुष्णोपचारं भवतीति संबन्धः । कस्मादित्याह—पुष्परसानां मक्षिकासंभवत्वात्, किंभूतानां नानाद्रव्यरसगुणवीर्यविपाकविरुद्धानां; 'पुष्परसविषमक्षिकासंभवत्वात्' इत्यन्ये पठन्ति; पुष्परसविषसञ्चारिण्यो मक्षिकाः पुष्परसविषमक्षिकाः । 'अनुष्णोपचारं योगवाहि च' इति केचिद्द्वयं पठन्ति; तन्न, पूर्वमुक्तत्वाद्योगवाहितायाः । ( मक्षिका हि पुष्परससंचारिण्यस्तत्संभवं मध्वपि वीर्येणोष्णं भवति, तस्मान्मधूष्णद्रव्येण नोपचर्यते युज्यते, उष्णेन सह विरुद्धत्वाद् विषवदिति भावः । ) उष्णेन सह विरोधे हेतुमाह—उष्णैरित्यादि । उष्णैरिति उष्णस्पर्शैः, न तूष्णवीर्यैः । विषान्वयतया विषाहारमक्षिकाप्रसवतया । उष्णार्तं घर्मपीडितम् । उष्णैर्द्रव्यैः सह । उष्णे देशे काले वा । उक्तमेव सुखबोधनार्थमाह—तदित्यादि । सुकुमारं ह्युष्णेन विरुध्यते; यथा नवनीतस्त्यानघृतजलकुसुमानि । शीतस्यापि स्वभावतः शीतेनापि केनचिद्विरोधमाह—तथाऽन्तरीक्षेण जलेन चापि; खजलेन स्वभावतः; अपिशब्दादार्ध्यमुष्णेन सह न विरुध्यते ॥ १४३–१४५ ॥

**उष्णेन मधु संयुक्तं वमनेष्ववचारितम् ॥**
**अपाकादनवस्थानान्न विरुध्येत पूर्ववत् ॥ १४६ ॥**

वमनविषये उष्णेनाप्यविरोधमाह—उष्णेनेत्यादि । यद्यपि वमने उष्णस्य मधुना विरोधो नोक्तः, तथाऽपि वृद्धा न प्रयुञ्जते वमनस्याधोगतिभयात् ॥ १४६ ॥

**मध्वामात्परतस्त्वन्यदामं कष्टं न विद्यते ॥**
**विरुद्धोपक्रमत्वात्तत् सर्वं हन्ति यथा विषम् ॥१४७॥**

**इति मधुवर्गः ।**

अन्येभ्योऽजीर्णेभ्यः सकाशान्मध्वजीर्णं कष्टावहमित्याह—मध्वित्यादि । मध्वामं मध्वजीर्णम् । परत ऊर्ध्वम् । आमस्य स्वेदोष्णोदकादय उपक्रमाः, ते चोष्णत्वान्मधुनो विरुद्धाः । सर्वं प्राणिनम् ॥ १४७ ॥

**अथेक्षुवर्गः ।**

**इक्षवो मधुरा मधुरविपाका गुरवः शीताः स्निग्धा बल्या वृष्या मूत्रला रक्तपित्तप्रशमनाः कृमिकफकराश्चेति । ते चानेकविधाः । तद्यथा— ॥ १४८ ॥**

**पौण्ड्रको भीरुकश्चैव[1] वंशकः श्वेतपोरकः[2] ॥**
**कान्तारस्तापसेक्षुश्च काष्ठेक्षुः[3] सूचिपत्रकः ॥ १४९ ॥**
**नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत् ॥**
**इत्येता जातयः स्थौल्याद्,**

अथेक्षूणां सामान्यं गुणमाह—इक्षव इत्यादि । इतिशब्दः प्रकारवाची, तेन भोरदशतपत्रपाण्डुकवेत्रकोद्रवकचणिप्रभृतयो बहवो जातयो गृह्यन्ते । स्थौल्यादिति स्थौल्यात् सामान्यादेव द्वादशजातयो भवन्तीत्यर्थः ॥ १४८ ॥ ४९१ ॥—

**गुणान् वक्ष्याम्यतः परम् ॥ १५० ॥**
**सुशीतो मधुरः स्निग्धो बृंहणः श्लेष्मलः सरः ॥**
**अविदाही गुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा ॥ १५१ ॥**
**आभ्यां तुल्यगुणः किंचित्सक्षारो वंशको मतः ॥**
**वंशवच्छ्वेतपोरस्तु किंचिदुष्णः स वातहा ॥ १५२ ॥**
**कान्तारतापसाविक्षू वंशकानुगतौ मतौ ॥**
**एवंगुणस्तु काष्ठेक्षुः स तु वातप्रकोपणः ॥ १५३ ॥**
**सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः ॥**
**वातलाः कफपित्तघ्नाः सकषाया विदाहिनः ॥१५४॥**
**कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः ॥**

गुणानित्यादि ॥ १५०–१५४ ॥—

**अतीव मधुरो मूले मध्ये मधुर एव तु ॥ १५५ ॥**
**अग्रेष्वक्षिषु विज्ञेय इक्षूणां लवणो रसः ॥**

तेषामवयवविशेषेण गुणविशेषमाह—अतीवेत्यादि । अग्रेष्वक्षिषु विज्ञेय इति इक्षूणामक्षीणि पर्वसन्धिषु प्ररोहजनन-

---

१ 'सविषमक्षिकासंभवत्वाच्च' इति पा० । २ अयं पाठः कस्मिंश्चिद्धस्तलिखितपुस्तके न पठ्यते ।

१ 'ऽभीरुकः' इति पा० । २ 'शतपोरकः' इति पा० । ३ 'काण्डेक्षुः' इति पा० ।

समर्था अङ्कुराः । अन्ये 'लक्ष्णु च' इति पठन्ति, लक्ष्णु वल्कलेषु ॥ १५६ ॥—

**अविदाही कफकरो वातपित्तनिवारणः ॥**
**वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीडितो रसः ॥ १५७ ॥**

दन्तनिष्पीडितेक्षुरसस्य गुणमाह—अविदाहीत्यादि ।—बृहल्लघुपञ्जिकयोः; जेज्झटस्तु—"कफकृच्चाविदाही च रक्तपित्तनिबर्हणः। शर्करासमवीर्यस्तु दन्तनिष्पीडितो रसः"—इति पठति । शर्करासमवीर्य इत्यत्र वीर्यशब्दः शक्त्यभिधायकः, नतु शीतादिवीर्यवाचकः । कस्मादविदाही ? उच्यते-बहिरस्थायित्वेन वातातपाद्यनुपहतत्वात् ॥ १५७ ॥

**गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्तितः ॥**

यन्त्रपीडितेक्षुरसस्य गुणमाह—गुरुरित्यादि । यन्त्रपीडितस्य बहिश्चिरस्थित्वा वातातपादिसंयोगे त्वगादिभिः सह पीडनाच्च गुरुत्वादयो भवन्ति । गुरुत्वं चिरपाकित्वम् । विदाहीति "द्रव्यस्वभावादथ गौरवाद्वा चिरेण पाकं जठराग्नियोगात् । पित्तप्रकोपं विदहत् करोति तदन्नपानं कथितं विदाहि"—इति । विष्टम्भो गुडगुडाशब्दः, अन्ये तु सवाततोदशूला मलस्याप्रवृत्तिर्विष्टम्भः ॥—

**पक्वो गुरुः सरः स्निग्धः सतीक्ष्णः कफवातनुत् १५८**

तस्याग्निपक्वस्य गुणमाह—पक्व इत्यादि ॥ १५८ ॥

**फाणितं गुरु मधुरमभिष्यन्दि बृंहणमवृष्यं त्रिदोषकृच्च ॥ १५९ ॥**

फाणितस्य गुणमाह—फाणितमित्यादि । फाणितं क्षुद्रगुडः 'काकवी' इति लोके । अस्य त्रिदोषकरत्वं प्रभावात् ॥ १५९ ॥

**गुडः सक्षारमधुरो नातिशीतः स्निग्धो मूत्ररक्तशोधनो नातिपित्तजिद्वातघ्नो मेदःकृमिकफकरो बल्यो वृष्यश्च ॥ १६० ॥**

तस्यैव पाकादतिघनभावं गतस्य गुडसंज्ञा, तमाह—गुड इत्यादि । सक्षार ईषत्क्षारः । एतेऽनिर्मलगुडगुणाः ॥ १६० ॥

**पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः ॥**

निर्मलगुडस्य गुणमाह—पित्तघ्न इत्यादि । शुद्धो निर्मलो धवल इत्यर्थः ॥—

**सपुराणोऽधिकगुणो गुडः पथ्यतमः स्मृतः १६१**

पुराणस्य गुडस्य गुणमाह-सेत्यादि । सपुराण ईषत्पुराणः ॥ १६१ ॥

**मत्स्यण्डिकाखण्डशर्करा विमलजाता उत्तरोत्तरं शीताः स्निग्धाः गुरुतरा मधुरतरा वृष्या रक्तपित्तप्रशमनास्तृष्णाप्रशमनाश्च ॥ १६२ ॥**

तस्य गुडस्य संस्कारविशेषेण नामान्तरं गुणान्तरं चाह—मत्स्यण्डिकेत्यादि । मत्स्यण्डिका द्रवखण्डः 'खण्डद्रव' इति लोके; खण्डः प्रसिद्धः; शर्करा सितोपला 'तवराज' इति लोके । गुडान्मत्स्यण्डिका ततः खण्डस्ततः शर्करेति वैमल्योत्कर्षे शैत्यादिप्रकर्ष इत्यर्थः ॥ १६२ ॥

**यथा यथैषां वैमल्यं मधुरत्वं तथा तथा ॥**
**स्नेहगौरवशैत्यानि सरत्वं च तथा तथा ॥ १६३ ॥**

पूर्वोक्तमेव स्पष्टयति—यथेत्यादि । एषामिक्षुविकाराणाम् । गौरवं वातपित्तहारित्वं, गौरवं मधुरविपाकित्वमित्यन्ये । अन्ये तु 'स्नेहलाघवशैत्यानि' इति पठन्ति ॥ १६३ ॥

**यो यो मत्स्यण्डिकाखण्डशर्कराणां स्वको गुणः ॥**
**तेन तेनैव निर्देश्यस्तेषां विस्रावणो गुणः ॥ १६४ ॥**

मत्स्यण्डिकादीनां करणेऽपनीयमानस्य मलस्य गुणमाह—यो य इत्यादि । स्वको गुणः शीतादिरित्यर्थः । तेन तेनैव स्वकीयेन स्वकीयेनैव गुणेन । को निर्देश्य इत्याह—तेषां विस्रावणो गुण इति; निर्देश्यः कथनीयः । गुणः समलक्षारोऽवयवविशेषः । कथं समलक्षारो गुणः कथ्यते ? उच्यते—यो यत्संबन्धी भवति स तु तद्गुण एव, तत्संभूतत्वात् ॥ १६४ ॥

**सारस्थिता सुविमला निःक्षारा च यथा यथा ॥**
**तथा गुणवती सर्वा विज्ञेया शर्करा बुधैः ॥ १६५ ॥**

शर्कराया उत्कर्षमाह—सारेत्यादि ॥ १६५ ॥

**मधुशर्करा पुनश्छर्द्यतीसारहरी रूक्षा छेदनी प्रसादनी कषायमधुरा मधुरविपाका च ॥ १६६ ॥**

मधुशर्करागुणमाह—मधुशर्करेत्यादि । पाकात् कालान्तरशोषणाद्वा घनीभूतावयवं मधु शर्करातुल्यत्वात् 'मधुशर्करा' इत्युच्यते । छेदनी कफादीनां पिण्डीभूतानां भेदकारिणी ॥ १६६ ॥

**यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति ॥ १६७ ॥**

यवासशर्करागुणमाह—यवासशर्करेत्यादि । यवासक्वाथपाकघनीभावाच्छर्करा कृता यवासशर्करा ॥ १६७ ॥

**यावत्यः शर्कराः प्रोक्ताः सर्वा दाहप्रणाशनाः ॥**
**रक्तपित्तप्रशमनाश्छर्दिमूर्च्छातृषापहाः ॥ १६८ ॥**

अवशिष्टशर्करागुणमाह—यावत्य इत्यादि ॥ १६८ ॥

**रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत् ॥**
**कफघ्नं मधुरं पाके कषायं बस्तिदूषणम् ॥ १६९ ॥**

**इतीक्षुवर्गः ।**

मधूकपुष्पोत्थफाणितस्य गुणमाह—रूक्षमित्यादि । बस्तिदूषणमिति मूत्राशये वातादिप्रकोपकारि ॥ १६९ ॥

---

१ 'मूलाग्रजन्तुजग्धादिपीडनान्मलसंकरात् । किञ्चित्कालं विधृत्या च विकृतिं याति यान्त्रिकः ॥ विदाही गुरुविष्टम्भी तेनासौ' इति वाग्भटः । २ 'कोल्हकपीडितस्य रसस्य' इति पा० । ३ 'स पुराणः' इति पा० ।

१ 'यो यो यस्य संबन्धी भवति तेषां मत्स्यण्डिकादीनां विस्रावणो गुणो निर्मलीकरणः, स तु तद्गुण एव' इति पा० । २ 'ह्लादनी' इति पा० ।

### अथ मद्यवर्गः ।

**सर्वं पित्तकरं मद्यमम्लं रोचनदीपनम् ॥**
**भेदनं कफवातघ्नं हृद्यं बस्तिविशोधनम् ॥ १७० ॥**
**पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम् ॥**
**विकासि सृष्टविण्मूत्रं**

अथ मद्यानि गुणकर्मभ्यां निर्दिशन्नाह—सर्वमित्यादि । सर्वं पैष्टिकं माद्वींकं गौडं च त्रिविधं हि मद्यम् । अम्लमिति लवणवर्ज्यं पञ्चरसत्वेऽप्यम्लस्योत्कटत्वादम्लकार्यकारित्वाच्चाम्लमित्युक्तम् । इन्द्रियबोधनम् इन्द्रियपाटवकरम् । विकासि सन्धिबन्धविमोचकम् । सृष्टविण्मूत्रं विण्मूत्रप्रवर्तकम् । एते सर्वमद्यगुणाः ॥ १७० ॥—

**शृणु तस्य विशेषणम् ॥ १७१ ॥**
**माद्वीकमविदाहित्वान्मधुरान्वयतस्तथा ॥**
**रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते ॥ १७२ ॥**
**मधुरं तद्धि रूक्षं च कषायानुरसं लघु ॥**
**लघुपाकि सरं शोषविषमज्वरनाशनम् ॥ १७३ ॥**

माद्वींकमाह—माद्वींकमित्यादि । माद्वींकमविदाहित्वादिति माद्वींकं द्राक्षोद्भवम् । मधुरान्वयतो मधुरद्रव्यप्रभवत्वात् ॥ १७१—१७३ ॥

**माद्वीकाल्पान्तरं किंचित् खार्जूरं वातकोपनम् ॥**
**तदेव विशदं रुच्यं कफघ्नं कर्शनं लघु ॥ १७४ ॥**
**कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम् ॥**

खार्जूरमाह—माद्वींकेत्यादि । अल्पान्तरं स्तोकभेदम् । कर्शनं कार्श्यकरम् ॥ १७४ ॥—

**कासार्शोग्रहणीदोषमूत्राघातानिलापहा ॥ १७५ ॥**
**स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी ॥**

सुरागुणमाह—कासार्श इत्यादि । सुरा लोहितवर्णा पिष्टकिण्वकल्केन किंचित्कलुषा । एते सर्वसुरागुणाः ॥ १७५ ॥—

**कासार्शोग्रहणीश्वासप्रतिश्यायविनाशनी ॥ १७६ ॥**
**श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा ॥**

श्वेतसुरागुणमाह—कासार्श इत्यादि । श्वेतसुरा श्वेतपुनर्नवादिमूलशालिपिष्टककिण्वप्रभवा 'कतोली' इति प्रसिद्धा ॥ १७६ ॥—

**छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्दनी ॥ १७७ ॥**
**प्रसन्ना कफवातार्शोविबन्धानाहनाशनी ॥**

प्रसन्नागुणमाह—छर्दीत्यादि । तोदः पीडा, शूलं द्वादशप्रकारमुक्तलक्षणम् । प्रसन्ना सुराया मण्ड उपर्यच्छो भागः । निबन्धो वातादीनामप्रवृत्तिः । आनाह उदरापूरः ॥ १७७ ॥—

**पिच्छलाऽल्पकफा रूक्षा यवैर्वातप्रकोपणी ॥ १७८ ॥**
**विष्टम्भिनी सुरा गुर्वी**

पिष्टसुरां कथयित्वा कुधान्यसुरामाह—पित्तलेत्यादि । यवैरिति बहुवचनाद्यवयविकातियवा गृह्यन्ते । सवाततोदशूला मलस्याप्रवृत्तिर्विष्टम्भः, अन्ये गुडगुडाशब्दमाहुः । यवकिण्वेन सुरेयम् ॥—

**श्लेष्मलं तु मधूलकम् ॥**

मधूलकमाह—श्लेष्मलं तु मधूलकमिति । मधूलकः स्वल्पगोधूमो मध्यदेशे 'पीशीका' इति ख्यातः, मर्कटहस्ततृणं वा, तत्फलकिण्वं मधूलकम्; 'असंजातमयं मधूकपुष्पोत्थम्' इति जेज्झटः ॥ १७८ ॥—

**रूक्षा नातिकफा वृष्या पाचनी चाक्षिकी स्मृता १७९**

आक्षिकीं सुरामाह—रूक्षेत्यादि । अक्षस्य बिभीतकस्य वल्कलैः सह कृता आक्षिकी; 'वल्किकी' इति केचित्, अत्रापि स एवार्थः ॥ १७९ ॥

**त्रिदोषो भेद्यवृष्यश्च कोहलो वदनप्रियः ॥**

कोहलगुणमाह—त्रिदोष इत्यादि । यवसक्तुकृतः कोहलः 'कौहलिका' इति लोके, अन्ये पुनर्भक्तसुरामाहुः, यामेव पौण्ड्राः 'काञ्चनाली' इत्याहुः ॥—

**ग्राह्युष्णो जगलः पक्ता रूक्षस्तृट्कफशोफकृत् १८०**
**हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत् ॥**

जगलगुणमाह—ग्राहीत्यादि । जगलोऽधः किट्टं[1] मद्यस्य यो बहिस्त्यज्यते । अन्ये 'किण्वभक्तसुरा जगलमित्युच्यते' । शोफहा लेपेन । शोषः क्षयः ॥ १८० ॥—

**बक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः ॥ १८१ ॥**
**दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः ॥**

बक्कसगुणमाह—बक्कस इत्यादि । बक्कसो जगल एवाद्रवः किण्वौषधमात्रम् ॥ १८१ ॥—

**कषायो मधुरः शीधुर्गौडः पाचनदीपनः ॥ १८२ ॥**

गुडशीधुमाह—कषाय इत्यादि । शीधुः सस्यक इक्षुरसेन क्वथितेन धातक्यादिबद्धपाशः कालान्तरेण निष्पन्नः किंचिद्गुडघृतावापः सस्यकवाच्यः ॥ १८२ ॥

**शार्करो मधुरो रुच्यो दीपनो बस्तिशोधनः ॥**
**वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः ॥ १८३ ॥**

शार्करशीधुमाह—शार्कर इत्यादि । गुडशर्करया खण्डशर्करया वा क्रियत इति शार्करशीधुः । इन्द्रियबोधनः इन्द्रियपाटवजनकः ॥ १८३ ॥

**तद्वत् पक्वरसः शीधुर्बलवर्णकरः सरः ॥**
**शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः १८४**

पक्वरसशीधुमाह—तद्वदित्यादि । तद्वत् शार्करवत् । पक्वरसः पक्वेनेक्षुरसादिना कृतः ॥ १८४ ॥

१ 'किण्वं' इति पा० ।

कर्शनः शीतरसिकः श्वयथूदरनाशनः ॥
वर्णकृज्जरणः स्वर्यो विबन्धघ्नोऽर्शसां हितः ॥ १८५ ॥

अपक्वरसशीधुगुणमाह—कर्शन इत्यादि । शीतरसिकस्त्वपक्वरसकृतः । जरणोऽन्नादिपरिणामकारी ॥ १८५ ॥

आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः ॥
कषायमधुरः शीधुः पित्तघ्नोऽसृक्प्रसादनः ॥१८६॥

आक्षिकशीधुमाह—आक्षिक इत्यादि । विभीतकक्काथगुडकृतो धातकीकुसुमादिकृतसंस्कारः शीधुराक्षिकः । द्रव्यप्रभावादपरमद्यापेक्षया प्रायशः पाण्डुरोगे व्रणे चाविरुद्धः; ग्राहित्वमप्येवं वाच्यम् ॥ १८६ ॥

जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः ॥

जाम्बवशीधुमाह–जाम्बव इत्यादि । जम्बूफलरसतुम्बरुक्काथगुडधातक्यादिकृतसंस्कारो जाम्बवः शीधुरुक्तः । बद्धनिस्यन्दो बद्धमूत्रः । तुवरः कषायः ॥—

तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् १८७
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ॥

आसवमाह—तीक्ष्ण इत्यादि । सुरासवः सुरया सूयते तोयकार्यं क्रियते[2] यस्मिन् सः सुरासवः । स्थिरमदश्चिरकालमत्तताकारी ॥ १८७ ॥—

लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः ॥ १८८ ॥
तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत् ॥

मध्वासवमाह—लघुरित्यादि । मध्वासवो मधुगुडाभ्यां सन्धानम् ॥ १८८ ॥—

तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत् ॥ १८९ ॥
कृमिमेदोनिलहरो मैरेयो मधुरो गुरुः ॥

मैरेयसंज्ञकत्रियोनिमासवमाह—तीक्ष्ण इत्यादि । तत्र मैरेयो नाम सुरासवयोः प्रत्येकनिष्पादितयोरेकीकृत्य पुनः संधानान्मैरेयः । सुरा पैष्टी, आसवश्च गुडयोनिः, मधु च देयमिति त्रियोनित्वम् । यदि वा पैष्टी मध्वासवो गुडश्चेति सन्धानात्त्रियोनित्वेन मैरेयो द्विविधो भवति ॥ १८९ ॥—

बल्यः पित्तहरो वर्ण्यो हृद्यश्चेक्षुरसासवः[1] ॥ १९० ॥

इक्षुरसासवमाह—बल्य इत्यादि । 'मृद्वीकेक्षुरसासवः' इति द्वयमन्ये पठन्ति । मार्द्वीकं मद्यमुक्तम्, अयं त्वासवः ॥१९०॥

शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः ॥
रूक्षः कषायः कफहृद्वातपित्तप्रकोपणः ॥ १९१ ॥

पुष्पयोनिं शीधुमाह—शीधुरित्यादि । अत्र मधूकपुष्पोत्थे केचिद्गुडं नेच्छन्ति, शीधुत्वाद्गुडमिच्छन्त्यन्ये ॥ १९१ ॥

निर्दिशेद्रसतश्चान्यान् कन्दमूलफलासवान् ॥

अनुक्तसंग्रहायाह—निर्दिशेदित्यादि । कन्दाद्युपलक्षणं, तेन काण्डलगासवा अपि गृह्यन्ते ॥—

नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम् ॥ १९२ ॥
अनिष्टगन्धि विरसमहृद्यं च विदाहि च ॥

नवमद्यस्य दोषमाह—नवमित्यादि । नवत्वमजातरसप्रसादत्वेन, अन्ये तु 'अनतीतसंवत्सरं नवम्' इत्याहुः ॥ १९२ ॥—

सुगन्धि दीपनं हृद्यं रोचिष्णु कृमिनाशनम् ॥१९३॥
स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम् ॥

जीर्णस्य गुणमाह—सुगन्धीत्यादि । रोचिष्णु साधु रोचते, तृप्तस्यापि रुचिकरम् । पुराणत्वं जातरसप्रसादनत्वेन गन्धादिसंपत्त्या; 'अतीतसंवत्सरं जीर्णम्' इत्यन्ये वदन्ति ॥ १९३ ॥—

अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः ॥ १९४ ॥
बहुदोषहरश्चैव दोषाणां शमनश्च सः ॥
दीपनः कफवातघ्नः सरः पित्ताविरोधनः ॥ १९५ ॥
शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः ॥

आसवप्रसङ्गेन तत्सदृशारिष्टगुणमाह—अरिष्ट इत्यादि । द्रव्यसंयोगः अभयाचित्रकादिसंयोगः । संस्काराच्च मद्यादधिककर्मता । बहुदोषहरश्चैवेति दोषशब्दो व्याधिवाची । दोषाणां शमन इत्यस्य भाष्यं—कफवातघ्न इति । पित्ताविरोधन इति नञीषदर्थे, तेनेषत् पित्तं हन्तीति मन्यते । बहुव्याधिहर इत्येतस्य तु भाष्यं–शूलाध्मानोदरादीनां हित इति; शूलादिके हित इत्यर्थः, अन्ये 'कफवातघ्नत्वं विशेषतः' इत्याहुः ॥ १९४ ॥ १९५ ॥—

पिप्पल्यादिकृतो गुल्मकफरोगहरः स्मृतः ॥ १९६ ॥

पिप्पल्याद्यरिष्टमाह—पिप्पल्यादीत्यादि ॥ १९६ ॥

चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक् ॥

शेषारिष्टानां स्थानमाह—चिकित्सितेष्वित्यादि ॥—

अरिष्टासवशीधूनां गुणान् कर्माणि चादिशेत् ॥१९७॥
बुद्ध्या यथास्वं संस्कारमवेक्ष्य[1] कुशलो भिषक् ॥

अनुक्तसंग्रहायाह—अरिष्टासवेत्यादि । शीधुशब्देनात्र मद्यमाहुः । द्रव्यप्रधानमरिष्टं, द्रवप्रधान आसवः, उभयप्रधानं मद्यम् । बुद्ध्या अवेक्ष्य ज्ञात्वा, यथास्वमिति यद्यस्य रोगाद्यपेक्षया हितं द्रव्यसंस्कारादि एतेनारिष्टादि विधीयेते, अतस्तदनुरूपं गुणकर्म वाच्यमित्यर्थः ॥ १९७ ॥—

सान्द्रं विदाहि दुर्गन्धं विरसं कृमिलं गुरु ॥ १९८ ॥
अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम् ॥
अल्पौषधं पर्युषितमत्यच्छं पिच्छिलं च यत् ॥१९९॥
तद्वर्ज्यं सर्वथा मद्यं किंचिच्छेषं च यद्भवेत् ॥
तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु ॥ २०० ॥
कफप्रकोपि तन्मद्यं दुर्जरं च विशेषतः ॥
पित्तप्रकोपि बहलं तीक्ष्णमुष्णं विदाहि च ॥ २०१ ॥
अहृद्यं पेलवं पूति कृमिलं[3] विरसं च यत् ॥

१ 'मृद्वीकेक्षुरसासवः' इति पा० ।

१ 'यथास्वौषधसंस्कारं' इति ताडपत्रपुस्तके पाठः । २ 'क्रियते' इति पा० । ३ 'फेनिलं' इति पा० ।

**तथा पर्युषितं चापि विद्यादनिलकोपनम् ॥ २०२ ॥**
**सर्वदोषैरुपेतं तु सर्वदोषप्रकोपणम् ॥**

मद्यदोषानाह—सान्द्रमित्यादि। सान्द्रं घनम्। विदाहोऽस्यास्तीति विदाहि "जठराग्निसंयोगाद्यः पाकमगच्छन् मध्यमायामेव पाकावस्थायां विदह्यमानः पित्तं कुर्वंश्चिरकालमवतिष्ठते न शीघ्रं जरां याति गुरुत्वाद्रूक्षस्वभावाद्वा स विदाहयुक्तो भावो भण्यते" इत्यागमिकाः; अन्ये 'विदाहि विविधसंतापकारि' इत्याहुः। दुर्गन्धं कुत्सितगन्धम्। विरसं विरुद्धरसमनिष्टरसमित्यर्थः। कृमिलं कृमियुक्तम्। गुरु चिरपाकि। अहृद्यम् अप्रियम्। तरुणं नवम्। तीक्ष्णं मुखे दुःखोत्पादकम्। उष्णं स्पर्शतः। दुर्भाजनस्थितं कुत्सितपात्रस्थम्। अल्पौषधं स्तोकधातक्यादिकम्। पर्युषितं सन्धानभाण्डादन्यस्मिन् भाण्डे रात्र्युषितम्। अत्यच्छम् अतितनु। पिच्छिलं श्लेष्मस्पर्शवत्। सर्वथा सर्वैः प्रकारैः। स्तोकसंभारादिदोषफलमाह—तत्रेत्यादि। स्तोकसंभारम् अल्पौषधम्। पेलवम् अच्छम्, अन्ये तरुणमाहुः। सर्वदोषैरिति सर्वदोषैः सान्द्रादिभिः ॥ १९८—२०२ ॥—

**चिरस्थितं जातरसं दीपनं कफवातजित् ॥ २०३ ॥**
**रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ॥**

दोषानभिधायेदानीं मद्यस्य गुणानाह—चिरस्थितमित्यादि। प्रसन्नं निर्मलम्। सुरभि सुगन्धि। मदावहं हर्षकारि। पूर्वदोषान्वितं वर्ज्यम्; एतद्गुणान्वितं सेव्यम् ॥ २०३ ॥—

**तस्यानेकप्रकारस्य मद्यस्य रसवीर्यतः ॥ २०४ ॥**
**सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना**
**समेत्य हृदयं प्राप्य धमनीरूर्ध्वमागतम् ॥**
**विचाल्येन्द्रियचेतांसि वीर्यं मदयतेऽचिरात् ॥ २०५**

इदानीं यथा मद्यं मदयति तदाह—तस्येत्यादि। तस्य एवंविधस्य मद्यस्य, वीर्यं शक्तिः, हृदयं प्राप्याचिरेण मदयति हर्षयतीति संबन्धः। अनेकप्रकारत्वं मृद्वीकादियोनिभेदेन, तथा रसवीर्यतश्च; रसा लवणवर्ज्याः, वीर्यमुष्णरूक्षादि। कथं मदयतीत्याह—विचाल्येन्द्रियचेतांसीति; विचाल्य क्षोभयित्वा[1], इन्द्रियाणि चक्षुरादीनि, चेतो मनः। किंविशिष्टं वीर्यं? धमनीरूर्ध्वमागतमिति। कथं पुनरस्य धमनीभिरूर्ध्वगमनं भवतीत्याह—वह्निना समेत्य मिलित्वा, स्वभावेनैव वह्नेरूर्ध्वगामित्वात्। कथं पुनस्तन्मद्यवीर्यं सूक्ष्माणीन्द्रियचेतांसि मदयतीत्याह—सौक्ष्म्यादिति। ऊर्ध्वगामित्वे द्वितीयं हेतुमाह—औष्ण्यादिति। आग्नेयद्रव्यस्य स्वभावेनैवोर्ध्वगामित्वात्। कुतः पुनरचिरेण मद्यवीर्यं मदयतीत्याह—तैक्ष्ण्यादिति। तीक्ष्णं हि द्रव्यमचिरकारि भवति। मद्यवीर्यस्याचिरकारित्वेऽपरमपि हेतुमाह—विकासित्वादिति।—विकासि सन्धिबन्धविमोचनकारि। चकारेणानुक्तमपि लाघवमूर्ध्वगमने हेतुः समुच्चीयते ॥ २०४ ॥ २०५ ॥

**चिरेण श्लैष्मिके पुंसि पानतो जायते मदः ॥**
**अचिराद्वातिके दृष्टः, पैत्तिके शीघ्रमेव च ॥ २०६ ॥**

शारीरदोषेण मदभेदमाह—चिरेणेत्यादि। श्लैष्मिके श्लेष्मप्रकृतिके। वातिके वातप्रकृतिके। पैत्तिके पित्तप्रकृतिके। शीघ्रमेव चेति चकारात्तीक्ष्णश्च ॥ २०६ ॥

**सात्त्विके शौचदाक्षिण्यहर्षमण्डनलालसः ॥**
**गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः ॥ २०७ ॥**
**राजसे दुःखशीलत्वमात्मत्यागं ससाहसम् ॥**
**कलहं सानुबन्धं तु करोति पुरुषे मदः ॥ २०८ ॥**
**अशौचनिद्रामात्सर्यागम्यागमनलोलताः ॥**
**असत्यभाषणं चापि कुर्याद्धि तामसे मदः ॥ २०९ ॥**

मानसदोषेण मदभेदमाह—सात्त्विक इत्यादि। सात्त्विके सत्त्वप्रकृतिके। दाक्षिण्यं परापेक्षिणी प्रकृतिः। लालसः अभिलाषुकः। सुरतोत्साहो मैथुनोद्यमः। राजसे रजःप्रकृतिके। दुःखशीलत्वं दुःखसेवित्वम्। आत्मत्यागं ससाहसं देहनाशकारि साहसम्। अनुबन्धं निरन्तरम्। मद्यकार्यो मदो मत्ततेत्यर्थः। अशौचेत्यादि। तामसे तामसप्रकृतिके। मात्सर्यं परासहिष्णुता, लोलता अभिलाषः ॥ २०७—२०९ ॥

**रक्तपित्तकरं शुक्तं छेदनं भुक्तपाचनम् ॥**
**वैस्वर्यं जरणं श्लेष्मपाण्डुक्रिमिहरं लघु ॥ २१० ॥**
**तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च ॥**

शुक्तादिकर्माणि दर्शयन्नाह—रक्तपित्तकरमित्यादि। शुक्तं चुक्रमुच्यते; यदुक्तं—"यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम्। धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते" इति; तच्चेक्षुरसमधूकपुष्पपीलुप्रभृतिभिः कषायव्यतिरेकेणासूयते, कन्दाद्यासुतमपि शुक्तमाहुरन्ये। छेदनं कफग्रन्थ्यादीनाम्। वैस्वर्यं विस्वरत्वोत्पादकम्। जरणमामस्य। श्लेष्मपाण्डुः श्लेष्मोत्कटः पाण्डुरोग इत्यर्थः ॥ २१० ॥—

**तद्वत्तदासुतं सर्वं रोचनं च विशेषतः ॥ २११ ॥**

शुक्तसन्धितानां कन्दादीनामपि शुक्तगुणमाह—तद्वदित्यादि। तद्वत् शुक्तवत्। तदासुतं शुक्तसन्धितं कन्दादिकम् ॥ २११ ॥

**गौडानि रसशुक्तानि मधुशुक्तानि यानि च ॥**
**यथापूर्वं गुरुतराण्यभिष्यन्दकराणि च ॥ २१२ ॥**

शुक्तस्य योनिभेदेन गुणमाह—गौडानीत्यादि। गौडानि गुडोद्भवानि; "गुडाम्बुना सतैलेन सन्धानं काञ्जिकं तु यत्। कन्दशाकफलैर्युक्तं गुडशुक्तं तदुच्यते"—इति। रसशुक्तानि इक्षुरसादिकृतानि। गुडशुक्तवदिक्षुरसशुक्तं सन्धेयम्। मधुशुक्तं तु "जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम्। मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् ॥ त्र्यहेण तज्जातरसं मधुशुक्तमु-

१ 'विक्षोभ्य' इति पा०। २ 'विक्षोभ्येन्द्रियचेतांसीति विक्षोभ्य विचाल्य' इति पा०।

१ 'सानवस्थानं' इति ताडपत्रपुस्तके पाठः।

दाहतम्"-इति । ( मधुभाण्डे इति मधुपूर्णप्राये भाण्डे इत्यर्थः; अथवा मधूनि कृत्वा भाण्डे निक्षिप्येति योज्यम् । ) मद्यशुक्तमिति पाठान्तरं; तत्र मद्यशुक्तलक्षणमुच्यते—"सर्वं मद्यं पञ्चरसं कालान्तरवशाद्यदा। त्यक्त्वाऽन्यरसमम्लत्वं याति शुक्तं तदुच्यते" इति । चकारेण धान्ययोनिशुक्तमप्यस्तीति समुच्चीयते । यथापूर्वं यो यः पूर्वः; मद्यशुक्तापेक्षया रसशुक्तं गुरु, तदपेक्षया गौडमित्यर्थः । दोषधातुमलस्रोतसां क्लेदप्राप्तिजननमभिष्यन्दि ॥२१२॥

**तुषाम्बु दीपनं हृद्यं हृत्पाण्डुकृमिरोगनुत् ॥**
**ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा ॥ २१३ ॥**

तुषाम्बुसौवीरकयोर्गुणमाह—तुषाम्ब्वित्यादि । काञ्जिकभेदावेतौ । तुषाम्बुसौवीरके विरेचनाध्यायोक्ते अपि सन्धानसामान्यादधिकगुणकर्मदर्शनायेहोक्ते ॥ २१३ ॥

**धान्याम्लं धान्ययोनित्वाज्जीवनं दाहनाशनम् ॥**
**स्पर्शात् पानात्तु पवनकफतृष्णाहरं लघु ॥ २१४ ॥**
**तैक्ष्ण्याच्च निर्हरेदाशु कफं गण्डूषधारणात् ॥**
**मुखवैरस्यदौर्गन्ध्यमलशोषक्लमापहम् ॥ २१५ ॥**
**दीपनं जरणं भेदि हितमास्थापनेषु च ॥**
**समुद्रमाश्रितानां च जनानां सात्म्यमुच्यते ॥२१६॥**

**इति मद्यवर्गः ।**

धान्याम्लमाह—धान्याम्लमित्यादि । धान्याम्लं काञ्जिकं शालिजूर्णाह्वकोद्रवादिकृतं मद्यम् । जीवनं प्राणधारणं शाल्यादिकृतत्वात् । दाहनाशनं स्पर्शात् । पानात्तु पवनकफतृष्णाहरमिति पानात् सवायुं कफं, तयोस्तृष्णां च हरतीत्यर्थः । शोषो मुखस्य । जरणं पाचनम् । आस्थापनेषु निरूहेषु ॥२१४-२१६॥

**अथ मूत्राणि ।**

**मूत्राणि गोमहिष्यजाविगजहयखरोष्ट्राणां तीक्ष्णान्युष्णानि कटूनि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातकृमिमेदोविषगुल्मार्शउदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च सामान्यतः ॥ २१७ ॥**

**भवतश्चात्र—**

**तत् सर्वं कटु तीक्ष्णोष्णं लवणानुरसं लघु ॥**
**शोधनं कफवातघ्नं कृमिमेदोविषापहम् ॥ २१८ ॥**
**अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम् ॥**
**पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम् ॥ २१९ ॥**

अथ मूत्राण्युच्यन्ते—मूत्राणीत्यादि । अष्टानामपि मूत्राणां सामान्यगुणमाह—तीक्ष्णानीत्यादि । शोधनानि मलशुद्धिकराणि । तत् सर्वमित्यादि । पयोक्तत्वान्न द्विरुक्तम् ॥ २१७—२१९ ॥

**गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम् ॥**
**लघ्वग्निदीपनं मेध्यं पित्तलं कफवातनुत् ॥ २२० ॥**
**शूलगुल्मोदरानाहविरेकास्थापनादिषु ॥**
**मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥ २२१ ॥**

गोमूत्रगुणमाह—गोमूत्रमित्यादि । गोमूत्रं गोरेव न तु वृषभस्य, महिषीसाहचर्यात्, न हि तत्र महिषेति पाठः; अथवा वृद्धव्यवहारादिलेके; आचार्यास्तु गोमहिष्यजावीनां स्त्रीणां, गजहयखरोष्ट्रमानुषाणां पुनः पुंसाम्, अनुक्तव्यक्तिके तु मूत्रपाठे उभयोरपि मूत्राणि ग्राह्याणि, यत्र तु व्यक्त्या स्त्रीपुरुषनिर्देशस्तत्र तस्यैवेति निर्णीतवन्तः ॥ २२० ॥ २२१ ॥

**दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु ॥**
**आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥२२२॥**

माहिषमूत्रमाह—दुर्नामेत्यादि । अविशुद्धिर्वमनादीनाम् ॥ २२२ ॥

**कासश्वासापहं शोफकामलापाण्डुरोगनुत् ॥**
**कटुतिक्तान्वितं छागमीषन्मारुतकोपनम् ॥ २२३ ॥**

छागमूत्रमाह—कासश्वासापहमित्यादि ॥ २२३ ॥

**कासप्लीहोदरश्वासशोषवर्चोग्रहे हितम् ॥**
**सक्षारं तिक्तकटुकमुष्णं वातघ्नमाविकम् ॥ २२४ ॥**

मैषमूत्रमाह—कासेत्यादि ॥ २२४ ॥

**दीपनं कटु तीक्ष्णोष्णं वातचेतोविकारनुत् ॥**
**आश्वं कफहरं मूत्रं कृमिदद्रुषु शस्यते ॥ २२५ ॥**

आश्वमूत्रमाह—दीपनमित्यादि । चेतोविकारा उन्मादादयः ॥ २२५ ॥

**सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् ॥**
**तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत् ॥२२६॥**

गजमूत्रमाह—सतिक्तमित्यादि । किलासं पाण्डुरं कुष्ठम् ॥ २२६ ॥

**गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् ॥**
**दीपनं गार्दभं मूत्रं कृमिवातकफापहम् ॥ २२७ ॥**

गर्दभमूत्रमाह—गरचेत इत्यादि । गरः कृत्रिमं विषम् ॥ २२७ ॥

**शोफकुष्ठोदरोन्मादमारुतक्रिमिनाशनम् ॥**
**अर्शोघ्नं कारभं मूत्रं**

कारभमूत्रमाह—शोफेत्यादि । कारभम् औष्ट्रम् ।

**मानुषं च विषापहम् ॥ २२८ ॥**

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । २ "धान्याम्लं धान्ययोनित्वात् प्राणधारणम्, अम्लत्वाद्दाहघ्नं, विदाहित्वात् पित्तकरं कफघ्नं च, बहिःशीतं, गुरुविपाकं, द्रवत्वात्तृष्णापनयनं, रुचिजननं, समुद्रसंश्रितानां जनानां परं सात्म्यं" इति ताडपत्रपुस्तके पाठः ।

१ 'कण्ठरवेण' इति पा० ।

मानुषमूत्रमाह—मानुषमित्यादि। कारभं मानुषं च मूत्रं विषापहमित्यर्थः। मानुषमष्टानां मूत्राणां मध्येऽनुद्दिष्टमपि 'तत् सर्वम्' इत्यनेनैव पूर्वोक्तेन सूचितत्वाद्वित्रतम्॥ २२८॥

**द्रवद्रव्याणि सर्वाणि समासात् कीर्तितानि तु॥**
**कालदेशविभागज्ञो नृपतेर्दातुमर्हति॥ २२९॥**

**इति श्रीसुश्रुतसंहितायां सूत्रस्थाने द्रवद्रव्यविज्ञानीयो नाम पञ्चचत्वारिंशोऽध्यायः॥ ४५॥**

उक्तानुक्तद्रवाणामूहार्थमाह—द्रवद्रव्याणीत्यादि। देशकालविभागज्ञ इति 'वैद्य' इति शेषः॥ २२९॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने पञ्चचत्वारिंशत्तमोऽध्यायः॥ ४५॥

---

## षट्चत्वारिंशत्तमोऽध्यायः।

**अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः॥१॥**
**यथोवाच भगवान् धन्वन्तरिः॥ २॥**

अन्नं शाल्यादि, पानमनुपानादि, विधिर्विधानं कल्पनं प्रकारो वा॥ १॥ २॥

**धन्वन्तरिमभिवाद्य सुश्रुत उवाच-प्रागभिहितः 'प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च, स षट्सु रसेष्वायत्तः, रसाः पुनर्द्रव्याश्रयिणः,' द्रव्यरसगुणवीर्यविपाकनिमित्ते च क्षयवृद्धी दोषाणां साम्यं च, ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्पत्तिविनाशहेतुः, आहारादेवाभिवृद्धिर्बलमारोग्यं वर्णेन्द्रियप्रसादश्च, तथा ह्याहारवैषम्यादस्वास्थ्यं; तस्याशितपीतलीढखादितस्य नानाद्रव्यात्मकस्यानेकविधविकल्पस्यानेकविधप्रभावस्य पृथक् पृथग्द्रव्यरसगुणवीर्यविपाककर्माणीच्छामि[1] ज्ञातुं, न ह्यनवबुद्धस्वभावा भिषजः स्वस्थानुवृत्तिं[2] रोगनिग्रहणं च कर्तुं समर्थाः; आहारायत्ताश्च सर्वप्राणिनो यस्मात्तस्मादन्नपानविधिमुपदिशतु मे भगवानित्युक्तः प्रोवाच भगवान् धन्वन्तरिः—अथ खलु वत्स सुश्रुत! यथाप्रश्नमुच्यमानमुपधारयस्व—॥ ३॥**

अथ शिष्यो गुरुं प्रति प्रश्नं कुर्वन्नाह—धन्वन्तरिमित्यादि। अभिवाद्य नमस्कृत्य। उवाच उक्तवान्। किमुक्तवानित्याह—प्रागभिहित इत्यादि। मूलं कारणम्। स इति आहारः। निमित्ते चेति चकारादिन्द्रियार्थाः कालो विहारश्चेति त्रयं समुच्चीयते। दोषाणामित्युपलक्षणं, तेन दोषधात्वादीनामित्यर्थः। आहारस्य सर्वापेक्षणीयतामाह—ब्रह्मादेरित्यादि। स्थितिः अवस्थानम्, उत्पत्तिः जन्म, विनाशः प्रलयः; उत्पत्तिहेतुरपि सम्यगुपयोगात् प्रधानधातूत्पत्तेः, विनाशहेतुश्च मिथ्योपयोगात्; देवानां स्थितिहेतुरेव, जरायुजानां स्थित्युत्पत्तिविनाशानां त्रयाणामपि हेतुः; ध्यानाहारत्वेऽपि ब्रह्मादेर्योगादिद्वारेण तृप्तिसंभवादमृतप्राशार्थमाहारः। स्थितिहेतुतामेव विवृण्वन्नाह—आहारादेवेत्यादि। अभिवृद्धिः शरीरस्य। बलमुत्साहोपचयलक्षणम्। आरोग्यं स्वास्थ्यलक्षणम्। वर्णो गौरादिः; इन्द्रियाणां प्रसादः स्वस्वविषयग्रहणसामर्थ्यम्। वैषम्यम् अन्यथोपयोगः। अस्वास्थ्यं दोषादिवैषम्यम्। तस्य चातुर्विध्यमाह—अशितेत्यादि; अशितं भोज्यमोदनादि, पीतं पेयं क्षीरादि, लीढं लेह्यं मध्वादि, खादितं भक्ष्यं मोदकादि। नानाद्रव्यात्मकस्येति बहुविधपृथिव्यादिद्रव्यारब्धस्य। अनेकविधविकल्पस्य अनेकविधा मण्डपेयाविलेपीभक्तादयो विकल्पाः प्रकारा यस्य स तथा। अनेकविधप्रभावस्य नानाप्रकारशक्तिकस्य। न हीति हि यस्मादर्थे। अनवबुद्धस्वभावा आहारस्याज्ञातस्वरूपाः। भिषजो वैद्याः। मे ममेत्यर्थः। भगवानिति धन्वन्तरिं प्रति पूजावचनम्। उत्तरमाह—इत्युक्त इति।—उक्तः पूर्वोक्तवचनैः प्रेरितः। प्रोवाच उक्तवान्। अथेति मङ्गले। खलु वाक्यालङ्कारे॥ ३॥

**तत्र, लोहितशालिकलमकर्दमकपाण्डुकसुगन्धकशकुनाहृतपुष्पाण्डकपुण्डरीकमहाशालिशीतभीरुकरोध्रपुष्पकदीर्घशूककाञ्चनकमहिषमहाशूकहायनकदूषकमहादूषकप्रभृतयः शालयः॥ ४॥**

तत्रेत्यादि। लोहितशाली रक्तशालिः; कलमोऽन्तर्वेद्यां 'कलविः' इति लोके; कर्दमक इति सातिशये पङ्के निष्पद्यत इति कर्दमको लोकतोऽवगन्तव्यः; पाण्डुक इति पाण्डुतुषः पाण्डुशूकश्च पाण्डुकः; सुगन्धको देवशालिः पाञ्चाले; शकुनाहृत उत्तरकुरोः सकाशाद्धंसैरानीतः, अवन्त्यां नगर्यां स एव वक्रनाम्ना प्रसिद्धः, मगधदेशे तु 'पाशक' इति, वृद्धवैद्यास्तु "द्वीपान्तरात् समानीतो गरुडेन महात्मना। शकुनाहृतः स शालिः स्याद्गरुडापरनामकः" इत्याहुः, पुष्पाणीव सुगन्धानि सुकुमाराण्यण्डानि तण्डुलानि यस्य सः पुष्पाण्डको लोकतोऽवगन्तव्यः; पुण्डरीकं श्वेतपद्मं तत्सदृशः सौकुमार्यवर्णसौरभैर्यः सः पुण्डरीको देवग्रहादेव बहुपोषनामा; महातण्डुलको महाशालिः; शीताद्बिभेतीत्येवं शीतभीरुको लोकादवगन्तव्यः; रोध्रपुष्पाकाराः शूका यस्य स रोध्रपुष्पकः; दीर्घाः शूका यस्य स दीर्घशूकः; काञ्चनकः स्वर्णशालिः; महिषशूको मध्यदेशे 'तिलवासी' इति प्रसिद्धः; हायनकः 'शकुवाक' इति लोके, जेज्झटस्तु 'घोटकपुच्छ' इत्याह; दूषकमहादूषकौ लोकादवगन्तव्यौ। प्रभृतिग्रहणाद्यवकनैषधादयः। शालय इति अकण्डितशूका हैमन्ताः, अन्ये तु 'कण्डितशूका अकण्डितशूकाश्च हैमन्ताः शालयः, ग्रैष्माः षष्टिकाः; 'प्रायेण गर्भपाकाः षष्टिकाः' इत्यन्ये; वार्षिकास्तु व्रीहयः, 'कण्डितशूकास्तु व्रीहयः' इत्यन्ये। अत्र लोहितशाल्यादयस्तेषु तेषु देशेषु तैस्तैर्नामभिः प्रसिद्धाः; एकमेव हि द्रव्यं नाना-

१ '°कर्मेच्छामि' इति पा०। २ 'स्वस्थानुवृत्तिं' इति हस्तलिखितपुस्तके न पठ्यते।

देशेषु नानाशब्दैरभिधीयते; यथा—बहवोऽन्नं भक्तमाहुः, दाक्षिणात्यास्तु कूरमिति; तत्र दाक्षिणात्येषु भक्तसंज्ञयैव प्रसिद्धस्तदितरेषु पुनः कूरसंज्ञेति(?); तस्मात्तु शूकशमीकुधान्यानि नानादेशजकृषीवलेभ्यो ज्ञेयानि, मृगास्तु नानादेशीयव्याधेभ्यः, शाकुनिकेभ्यः पक्षिणः, कन्दमूलफलाशिभ्यो वनेचरतपस्विभ्यः कन्दमूलफलानि, शाकानि तु ग्राम्यारण्यवासिभ्यः, कृतान्नानि तु सूदेभ्यः, भेषजद्रव्याणि पुनः क्रय्याणि वणिग्भ्यः, अक्रेयाणि पुनर्मूलादीनि तापसवनेचरेभ्य इति ॥ ४ ॥

**मधुरा वीर्यतः शीता लघुपाका[1] बलावहाः ॥**
**पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्चसः ॥५॥**

तत्र शालीनां सामान्यगुणमाह—मधुरा इत्यादि । पूर्वं हि 'द्रव्यरसगुणवीर्यविपाककर्माणीच्छामि ज्ञातुं' इत्युक्तं, तदेव दर्शयति–तत्र लोहितशालीत्यादि यावत् दूषकमहादूषकप्रभृतयः शालय इति द्रव्यनिर्देशः, 'मधुरा' इति रसनिर्देशः, 'वीर्यतः शीता' इति वीर्यनिर्देशः, 'लघुपाका' इति पाकनिर्देशः, 'स्निग्धा' इत्यादि गुणनिर्देशः, 'पित्तघ्ना' इत्यादि स्वकर्मनिर्देशः । अल्पानिलकफाः अल्पं वातं श्लेष्माणं च कुर्वन्तीत्यर्थः ॥ ५ ॥

**तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः ॥**
**चक्षुष्यो वर्णबलकृत् स्वर्यो हृद्यस्तृषापहः ॥ ६ ॥**
**व्रण्यो ज्वरहरश्चैव सर्वदोषविषापहः ॥**

लोहितशालिगुणमाह—तेषामित्यादि । दोषघ्नस्त्रिदोषघ्नः । सर्वदोषेत्यादि अत्र दोषशब्दो व्याधिषु वर्तते ॥ ६ ॥—

**तस्मादल्पान्तरगुणाः क्रमशः शालयोऽवराः[2] ॥ ७ ॥**

शालीनां तारतम्यमाह—तस्मादित्यादि । तस्मात् लोहितशालेः । अल्पान्तरगुणा इति अल्पमन्तरं भेदः क्रमेणावरत्वेन येषां ते तथोक्ताः । गुणशब्दः कर्मवाची । क्रमशोऽवरा इति क्रमात् क्रमाद्धीना इत्यर्थः ॥ ७ ॥

**षष्टिककाङ्गुकमुकुन्दकपीतकप्रमोदककाकलकासनपुष्पकमहाषष्टिक[3]चूर्णककुरवककेदारप्रभृतयः षष्टिकाः ॥ ८ ॥**

**रसे पाके च मधुराः शमना वातपित्तयोः ॥**
**शालीनां च गुणैस्तुल्या[4] बृंहणाः कफशुक्रलाः ॥९॥**

षष्टिकानाह—षष्टिकेत्यादि । अन्ते षष्टिकाभिधानं सर्वेषां षष्टिकत्वसूचनार्थम् । षष्टिको गौरषष्टिकः, मुकुन्दककाकलकासनपुष्पककुरवककेदाराः कृष्णषष्टिकाः, शेषा गौरकृष्णा इति । प्रभृतिग्रहणाच्चीनदुर्दरशारदादयः । षष्टिको व्रीहिभेद एव, 'षष्टिको व्रीहिषु श्रेष्ठ' इत्युक्तत्वात्; किंतु व्रीहिश्चिरपाकी, षष्टिकस्तु शीघ्रपाकी ॥ ८ ॥ ९ ॥

१ 'विपाककटुकाः स्मृताः' इति ताडपत्रपुस्तके पाठः । २ 'ऽपरे' इति पा० । ३ '°महापिण्डक°' इति पा० । ४ 'गुणतश्चापि समाना बद्धवर्चसः' इति ताडपत्रपुस्तके पाठः ।

**षष्टिकः प्रवरस्तेषां कषायानुरसो लघुः ॥**
**मृदुः स्निग्धस्त्रिदोषघ्नः स्थैर्यकृद्बलवर्धनः ॥ १० ॥**
**विपाके मधुरो ग्राही तुल्यो लोहितशालिभिः ॥**

गौरषष्टिकगुणमाह—षष्टिक इत्यादि । स्थैर्यकृत् देहदार्ढ्यकृत्, तारुण्यस्थापको वा ॥ १० ॥—

**शेषास्त्वल्पान्तरास्तस्मात्[1] षष्टिकाः क्रमशो गुणैः ११**

शेषास्त्वित्यादि । अल्पान्तराः स्तोकभेदा गुणैः कृत्वा । तस्मात् गौरषष्टिकात् ॥ ११ ॥

**कृष्णव्रीहिशालामुखजतुमुखनन्दीमुखलावाक्षकत्वरितककुक्कुटाण्डकपारावतकपाटलप्रभृतयो व्रीहयः ॥ १२ ॥**

व्रीहिविशेषानाह—कृष्णव्रीहीत्यादि । कृष्णव्रीहिः कृष्णतुषतण्डुलः, शालामुखः कृष्णशुक्लाकारतण्डुलः[2], जतु लाक्षा तदाकृति मुखं यस्यासौ जतुमुखः, नन्दीमुखः आढीचञ्चुसदृशमुखतण्डुलः, लावाक्षिसदृशतण्डुलो लावाक्षः, षष्टिकवत्त्वरितं पच्यत इति त्वरितकः, कुक्कुटाण्डानीव वर्णेन वर्तुलतया च तण्डुला यस्य सः कुक्कुटाण्डकः, पारावतवच्छुक्लतण्डुलः पारावतः, पाटलापुष्पवर्णव्रीहिः पाटलः; प्रभृतिग्रहणात् खञ्जरीटखञ्जनकशौमकादयो गृह्यन्ते ॥ १२ ॥

**कषायमधुराः पाकेऽमधुरा वीर्यतोऽहिमाः ॥**
**अल्पाभिष्यन्दिनस्तुल्याः षष्टिकैर्बद्धवर्चसः ॥ १३ ॥**

कषायमधुरा रसे । अमधुराः पाके कटुका इत्यर्थः । वीर्यतोऽहिमा उष्णा इत्यर्थः । अल्पाभिष्यन्दिन इति पूर्ववत् । तुल्याः षष्टिकैरिति एतेन कुधान्येभ्य एषामुत्कर्षः सूच्यते, न तु षष्टिकानां गुणकारिता, चरकार्थैस्त्रिदोषकारित्वेन पाटलस्योक्तत्वात् । 'अनार्षोऽयं पाठः' इति **जेज्झटः** । 'पाटलाशब्दो व्रीहौ सामान्ये विशेषे च वर्तेत इति विशेषवाचिनस्त्रिदोषकर्तृत्वं, सामान्येन व्रीहेस्तूक्त एव गुणः' इति **गयी** । 'यस्त्रिदोषकारी पाटलस्तत्र जात्यन्तरम्, अयं तु यथोक्तगुणः' इति **ब्रह्मदेवः** ॥ १३ ॥

**कृष्णव्रीहिर्वरस्तेषां कषायानुरसो लघुः ॥**
**तस्मादल्पान्तरगुणाः क्रमशो व्रीहयोऽपरे ॥ १४ ॥**

अथ कृष्णव्रीहिगुणमाह—कृष्णव्रीहिरित्यादि ॥ १४ ॥

**दग्धायामवनौ जाताः शालयो लघुपाकिनः ॥**
**कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः ॥१५॥**

अथ भूमिद्वारेण गुणमाह—दग्धायामित्यादि । दग्धायामवनौ जाता इति दग्धभूमावुत्पन्नाः ॥ १५ ॥

**स्थलजाः कफपित्तघ्नाः कषायाः कटुकान्वयाः ॥**
**किंचित्सतिक्तमधुराः[3] पवनानलवर्धनाः ॥ १६ ॥**

१ 'शेषास्त्वल्पान्तरगुणाः' इति पा० । २ 'कृष्णमुखतण्डुलः' इति पा० । ३ 'अम्लाः' इति पा० ।

स्थलजा इत्यादि । स्थलजा जाङ्गलभूमिसंभवाः । सतिक्तमधुरा ईषत्तिक्तमधुराः । पवनानलवर्धना इति अत्र किंचिच्छन्दः संबध्यते ॥ १६ ॥

**कैदारा मधुरा वृष्या बल्याः पित्तनिबर्हणाः ॥**
**ईषत्कषायाल्पमला गुरवः कफशुक्रलाः ॥ १७ ॥**

कैदारा इत्यादि । कैदारा अनूपजा इत्यर्थः । वृष्याः शुक्रवैरेचनिकाः । शुक्रलाः शुक्रवृद्धिकराः ॥ १७ ॥

**रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ॥**
**अदाहिनो दोषहरा बल्या मूत्रविवर्धनाः ॥ १८ ॥**

रोप्यातिरोप्यगुणमाह—रोप्येत्यादि । ये शालय एकवारमुत्पाट्यान्यत्र रोप्यन्ते ते रोप्याः, ये तु द्विस्त्रिर्वाऽन्यत्र रोप्यन्ते तेऽतिरोप्याः । मूत्रविवर्धना इति अदाहित्वात्, 'मूत्रला' इत्येके, अन्ये तु 'मूत्रविवर्धना मूत्रापकर्षणाः प्रमेहिणां हिता इत्यर्थः' ॥ १८ ॥

**शालयश्छिन्नरूढा ये रूक्षास्ते बद्धवर्चसः ॥**
**तिक्ताः कषायाः पित्तघ्ना लघुपाकाः कफापहाः १९**

छिन्नरूढशालिगुणमाह—शालय इत्यादि । छिन्नरूढा इति पूर्वं छिन्नाः पश्चाद्रूढा इत्यर्थः १९ ॥

**विस्तरेणायमुद्दिष्टः शालिवर्गो हिताहितः ॥**
**इति शालिवर्गः ।**

उपसंहारमाह—विस्तरेणेत्यादि । उद्दिष्टः संक्षेपेण कथितः । अयं शालिवर्गः, किंविशिष्टः शालिवर्गः ? विस्तरेण सह सविस्तर इत्यर्थः । सविस्तरता च वक्ष्यमाणश्लोकेन दर्शिता । तयथा "धान्येन मांसेषु फलेषु चैव शाकेषु चानुक्तमिहाप्रमेयात्" इति । अत्र हि अप्रमेयादिति आनन्त्यादित्यर्थः ॥—

**अथ कुधान्यवर्गः ।**

**तद्वत् कुधान्यमुद्रादिमाषादीनां च वक्ष्यते ॥ २० ॥**

तद्वदित्यादि । तद्वदिति सविस्तराणामपि कुधान्यानां मुद्रादीनां माषादीनां चोद्देशमात्रमेव भविष्यतीत्यर्थः । माषादीनां चेति चकारेण मांसफलशाकवर्गेषु चोद्देशमात्रमेव भविष्यतीत्यनुक्तं समुच्चीयते । अनेन पाठेन मुद्रादीनां धान्यत्वं सूच्यते, तेन मुद्रादयः शिम्बीधान्येषु पठ्यन्ते । कुधान्येति कुत्सितानि कुधान्यानि ॥ २० ॥

**कोरदूषकश्यामाकनीवारशान्तनुवरकोद्दालकप्रियङ्गुमधूलिकानन्दीमुखीकुरुविन्दगवेधुकसरवरुकतोद(य)पर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः ॥ २१ ॥**

कुधान्यान्याह—कोरदूषकेत्यादि । कोरदूषकः कोद्रवः; श्यामाकस्त्रिविधः-श्यामाकः, उग्रश्यामाकः, हस्तिश्यामाकश्चेति; श्यामाकशब्देन तोयश्यामाक उच्यते, उग्रश्यामाकः [१]स्थूलश्यामाकः, हस्तिश्यामाकः श्यामिकेति लोके; नीवार उलिकाधान्यं, तद्द्विविधम्—एकं धान्यसदृशविटपं धान्यक्षेत्रजं, द्वितीयं महादलकाण्डं तु सलिलजं; तत्र सलिलजं सलिलवृद्धिमात्रस्तम्बप्ररोहं रक्तशूकं च, तदेव 'प्रशान्तिका' इति तन्त्रान्तरेऽपि पठ्यते; वरको वरटिका[१] शाकम्भरीभूमौ प्रायशः; उद्दालको वनकोद्रवः; प्रियङ्गुः 'कङ्गुनिका' इति लोके; मधूलिका मर्कटहस्ततृणं; तद्भेदो नन्दीमुखी; कुरुविन्दको व्रीहिगुरुः; गवेधुकस्तृणविशेषः; 'गल्गोधूम' इति लोके, देशान्तरे तु 'गरल' इति लोके, अन्ये तु प्रभृतिग्रहणाद्गवेधुकशब्दं गृह्णन्ति; सरः सरकर्णिका; वरुकः 'वरु' इति लोके, अन्ये तु बरुकशब्दं प्रभृतिग्रहणाद्गृह्णन्ति; तोदपर्णी तोयपर्णी स्वनामप्रसिद्धा; मुकुन्दो मुलुन्दः; वेणुयवो वंशफलम् । शेषाणि तु वनचारिभ्यो ज्ञेयानि । प्रभृतिग्रहणेन शुण्ठीधर्मूटीजोन्नलिकादयः ॥ २१ ॥

**उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः ॥**
**श्लेष्मघ्ना बद्धनिस्यन्दा वातपित्तप्रकोपणाः ॥ २२ ॥**
**कषायमधुरस्तेषां शीतः पित्तापहः स्मृतः ॥**
**कोद्रवश्च सनीवारः श्यामाकश्च सशान्तनुः ॥२३॥**

उष्णा इत्यादि । बद्धनिस्यन्दा बद्धमूत्राः । तषामेव केषांचिद्वैशेषिकं गुणमाह—कषायमधुरा इत्यादि । 'सकोरदूषाः श्यामाका नीवारश्च' इति केचित् पठन्ति । तत्र बहुवचनं श्यामाकानां त्रिविधत्वात् ॥ २२ ॥ २३ ॥

**कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः ॥**
**यथोत्तरं प्रधानाः स्यू रूक्षाः कफहराः स्मृताः २४**

कङ्गुनीगुणमाह—कृष्णा इत्यादि । प्राधान्यं कफहरत्वादिगुणापेक्षम् ॥ २४ ॥

**मधूली मधुरा शीता स्निग्धा नन्दीमुखी तथा ॥**

मधूलिकानन्दीमुखीगुणमाह—मधूलीत्यादि । तथा मधुरशीतलस्निग्धेत्यर्थः ॥—

**विशोषी तत्र भूयिष्ठं वरुकः समुकुन्दकः ॥ २५ ॥**

वरुकमुकुन्दकयोर्गुणमाह—विशोषीत्यादि । विशोषी द्रवधातोः । भूयिष्ठमतिशयेन ॥ २५ ॥

**रूक्षा वेणुयवा ज्ञेया वीर्योष्णा कटुपाकिनः ॥**
**बद्धमूत्राः कफहराः कषाया वातकोपनाः ॥ २६ ॥**

वेणुयवगुणमाह—रूक्षा इत्यादि । कुधान्यानां वार्गिकगुणप्रस्तावे 'बद्धनिस्यन्दा' इत्युक्तेऽपि वेणुयवा बद्धमूत्रा इति पृथक्कृत्य यदुक्तं तदतिशयप्रतिपादनार्थम् ॥ २६ ॥

**मुद्गवनमुद्गकलायमकुष्ठमसूरमङ्गल्यचणकसतीनत्रिपुटकहरेण्वाढकीप्रभृतयो वैदलाः ॥ २७ ॥**

शमीधान्यानि गुणकर्मभ्यां निर्दिशन्नाह—मुद्गेत्यादि । मुद्गा नानाविधा हरितपीतकृष्णरक्तभेदेन; वनमुद्गस्तु वने जायते कृष्ण-

---

१ 'चास्य' इति पा० । २ 'स्थलश्यामाकः' इति पा० ।

१ 'वरट्टिका' इति पा० । २ 'स्युः स्निग्धाः कफहराः सराः' इति ताडपत्रपुस्तके पाठः ।

मुद्ग इति प्रसिद्धः, 'मुद्गिका' इति लोके; कलायास्त्रिपुटाः; मकुष्ठको मोठः; मसूरा द्विविधाः—कृष्णाः पाण्डुराश्च, तत्र कृष्णवर्णा मसूराभिधानाः, पाण्डुवर्णा मङ्गल्यकाभिधानाः; चणकः प्रसिद्धः; सतीनो वर्तुलकः; स्वल्पास्त्रिपुटाः; हरेणुः स्वल्पवर्तुलः; आढकी तुवरी । वैदला इति एषां 'वैदला' इति संज्ञा, न पुनरन्वयार्थेन वैदलसंज्ञा; एवं हि विदलानामिति वैदला इति माषकुलत्थादिष्वपि वैदलत्वं स्यात्; तेन "वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम् । वर्जयेच्चालुकं गुल्मी मधुराणि फलानि च" इत्यादिषु वैदलत्वेन मुद्गादिषु निषेधः, तेन गुल्मेषु माषकुलत्थादयो न निषिध्यन्ते, न हि ते वैदलाः ॥ २७ ॥

**कषायमधुराः शीताः कटुपाका मरुत्कराः ॥**
**बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥ २८ ॥**

वैदलानां सामान्यगुणमाह—कषायेत्यादि ॥ २८ ॥

**नात्यर्थं वातलास्तेषु मुद्गा दृष्टिप्रसादनाः ॥**
**प्रधाना हरितास्तत्र वन्या मुद्गसमाः स्मृताः ॥२९॥**

मुद्गगुणमाह—नात्यर्थमित्यादि ॥ २९ ॥

**विपाके मधुराः प्रोक्ता मसूरा बद्धवर्चसः ॥**

मसूरगुणमाह—विपाक इत्यादि ॥—

**मकुष्ठकाः कृमिकराः**

मकुष्ठगुणमाह—मकुष्ठका इत्यादि ॥—

**कलायाः प्रचुरानिलाः ॥ ३० ॥**

कलायगुणमाह—कलाया इत्यादि ॥ ३० ॥

**आढकी कफपित्तघ्नी नातिवातप्रकोपणी ॥**

आढकीगुणमाह—आढकीत्यादि ॥—

**वातलाः शीतमधुराः सकषाया विरूक्षणाः ॥ ३१ ॥**
**कफशोणितपित्तघ्नाश्चणकाः पुंस्त्वनाशनाः ॥**
**त एव घृतसंयुक्तास्त्रिदोषशमनाः परम् ॥ ३२ ॥**

चणकगुणमाह—वातला इत्यादि ॥ ३१ ॥ ३२ ॥

**हरेणवः सतीनाश्च विज्ञेया बद्धवर्चसः ॥**

हरेणुसतीनावाह—हरेणव इत्यादि ॥—

**ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः ॥ ३३ ॥**

ऋते मुद्गमसूरयोराध्मानकरत्वमाह—ऋत इत्यादि । ऋते विना । मुद्गमसूरयोः स्वजात्यपेक्षया आध्माननिषेधः, न पुनः सर्वथाऽऽध्माननिषेधः ॥ ३३ ॥

**माषो गुरुर्भिन्नपुरीषमूत्रः**
**स्निग्धोष्णवृष्यो मधुरोऽनिलघ्नः ॥**
**संतर्पणः स्तन्यकरो विशेषा-**
**द्बलप्रदः शुक्रकफावहश्च ॥ ३४ ॥**

वैदलत्वेनाप्राप्त्यान् माषादीनाह—माष इत्यादि । भिन्नपुरीषमूत्रो द्रवपुरीषमूत्रः । संतर्पणस्तृप्तिकरः । बलप्रदः बलमुपचयशक्तिलक्षणम् । वृष्यत्वशुक्रलत्वे स्रुतिवृद्धिकरत्वेन । 'पित्तकफावहश्च' इति कश्चित् ॥ ३४ ॥

**कषायभावान्न पुरीषभेदी**
**न मूत्रलो नैव कफस्य कर्ता ॥**
**स्वादुर्विपाके मधुरोऽलसान्द्रः**
**संतर्पणः स्तन्यरुचिप्रदश्च ॥ ३५ ॥**

राजमाषानाह—कषायेत्यादि । अलसान्द्रो राजमाषः । कषायरसप्रभावात् कफहारित्वमवृष्यत्वं च ज्ञेयम् । स्वादुरिति रसे ॥ ३५ ॥

**माषैः समानं फलमात्मगुप्त-**
**मुक्तं च काकाण्डफलं तथैव ॥**

आत्मगुप्तकाकाण्डयोर्गुणमाह—माषैरित्यादि । आत्मगुप्ता कपिकच्छुः, तस्याः फलमात्मगुप्तम् । काकाण्डफलमश्वकः; कपिकच्छुसदृशशिम्बः काकाण्डः 'शूकरशिम्बी' इति लोके ॥—

**आरण्यमाषा गुणतः प्रदिष्टा**
**रूक्षाः कषाया अविदाहिनश्च ॥ ३६ ॥**

आरण्यमाषगुणमाह—आरण्यमाषा इत्यादि । आरण्यमाषाणां रूक्षत्वाविदाहित्वे स्वजात्यपेक्षया ॥ ३६ ॥

**उष्णः कुलत्थो रसतः कषायः**
**कटुर्विपाके कफमारुतघ्नः ॥**
**शुक्राश्मरीगुल्मनिषूदनश्च**
**सांग्राहिकः पीनसकासहन्ता ॥ ३७ ॥**

कुलत्थानाह—उष्ण इत्यादि । उष्णो वीर्येण । कफमारुतघ्न इति कफमारुतौ भिन्नौ मिलितौ च हन्तीत्यर्थः ॥ ३७ ॥

**आनाहमेदोगुदकीलहिक्का-**
**श्वासापहः शोणितपित्तकृच्च ॥**
**कफस्य हन्ता नयनामयघ्नो**
**विशेषतो वन्यकुलत्थ उक्तः ॥ ३८ ॥**

वन्यकुलत्थमाह—आनाहेत्यादि । गुदकीला अर्शांसि ॥३८॥

**ईषत्कषायो मधुरः सतिक्तः**
**सांग्राहिकः पित्तकरस्तथोष्णः ॥**
**तिलो विपाके मधुरो बलिष्ठः**
**स्निग्धो व्रणे लेपन एव पथ्यः ॥ ३९ ॥**
**दन्त्योऽग्निमेधाजननोऽल्पमूत्र-**
**स्त्वच्योऽथ केश्योऽनिलहा गुरुश्च ॥**

तिलमाह—ईषदित्यादि । ईषत्कषायोऽनुरसत्वेन, मधुरो मुख्यरसत्वेन, ईषत्तिक्तोऽनुरसत्वेनैव । व्रणे लेपन एव पथ्य इति एतेन तिलानामालेपन एव व्रणे पथ्यत्वम्, अभ्यवहारे पुनरपथ्यत्वमेव; अन्ये पुनः 'स्निग्धो व्रणे सर्वत एव पथ्यः' इति

१ 'कटुपाकानिलापहाः' इति ताडपत्रपुस्तके पाठः । २ अयमर्धश्लोकः कश्चिद्धस्तलिखितपुस्तके न पठ्यते ।

१ 'कटुकः' इति ताडपत्रपुस्तके पाठः । २ 'स्तन्यः' इति पा० ।

पठन्ति, सर्वत इति पञ्चदशधा प्रसरप्रदुष्टेष्वित्यर्थः, अन्ये तु 'द्विव्रणीयोक्तेभ्यो दोषहन्तृभ्यो लेपेभ्यः सर्वेभ्यः पथ्यतम इत्यर्थः' । दन्तेभ्यो हितो दन्त्यः । त्वचे हितस्त्वच्यः । केशेभ्यो हितः केश्यः ॥ ३९ ॥—

तिलेषु सर्वेष्वसितः प्रधानो
मध्यः सितो हीनतरास्तथाऽन्ये ॥ ४० ॥

तिलानामुत्तममध्यमाधमत्वमाह—तिलेष्वित्यादि । असितः कृष्णः । सितः श्वेतः । अन्ये इति पीतहरितलोहिताः ॥ ४० ॥

यवः कषायो मधुरो हिमश्च
कटुर्विपाके कफपित्तहारी ॥
व्रणेषु पथ्यस्तिलवच्च नित्यं
प्रबद्धमूत्रो बहुवातवर्चाः ॥ ४१ ॥
स्थैर्याग्निमेधास्वरवर्णकृच्च
सपिच्छिलः स्थूलविलेखनश्च ॥
मेदोमरुत्तृड्हरणोऽतिरूक्षः
प्रसादनः शोणितपित्तयोश्च ॥ ४२ ॥

यवमाह—यव इत्यादि । हिमश्चेति चकारः कषायानन्तरं बोद्धव्यः; तेन मधुररसाच्चकारसमुच्चितं कषायत्वं हीनमिति ज्ञेयम् । व्रणेषु पथ्यस्तिलवदिति तिलो यथा व्रणे लेपे वातपित्तकफेषु च शस्यते, तथा यवोऽपि । नित्यमिति वचनेनाविदग्धविदग्धाभिन्नाशुद्धत्वाद्यवस्थास्वित्यर्थः; अन्ये तु नित्यग्रहणेन व्रणे यवमभ्यवहारेणापि हितमिच्छन्ति । प्रबद्धमूत्रः अल्पमूत्रः, अत एव प्रमेहिणां हितः । बहुवातवर्चा इति वातोऽत्र कुक्षिवातोऽभिप्रेतः, अन्यथा मेदोमरुत्तृड्हरण इति विरुध्यते । स्थैर्यं वयःस्थापनकारित्वम् । मेदोमरुत्तृड्हरण इति मेदोवातं तृष्णां च हन्तीत्यर्थः; यदि वा मेदसाऽऽवृतो मरुन्मेदोमरुत्तं सावरणं हन्ति, स्रोतःशोधकत्वात्; निरावरणे तु रूक्षशीतकषायकटुपाकैर्नातिवर्धको नातिप्रत्यनीकः । 'यवोऽकषायः' इति केचित्; तत्रेषत्कषायं इत्यर्थः ॥ ४१ ॥ ४२ ॥

एभिर्गुणैर्हीनतरैस्तु किंचि-
द्विद्यायवेभ्योऽतियवानशेषैः ॥

अतियवगुणमाह—एभिरित्यादि । अतियवा निःशूकाः कृष्णारुणयवा एव । अशेषैर्गुणैरतियवान् विद्यादित्यर्थः । अन्ये तु पठन्ति—'यवेभ्योऽपि यवानशेषान्' इति । तत्रातियवयविकादयोऽशेषशब्दवाच्याः । तत्र यविका निःशूकाः स्वल्पाः ॥—

गोधूम उक्तो मधुरो गुरुश्च
बल्यः स्थिरः शुक्ररुचिप्रदश्च ॥ ४३ ॥
स्निग्धोऽतिशीतोऽनिलपित्तहन्ता
सन्धानकृच्छ्लेष्मकरः सरश्च ॥

गोधूमगुणमाह—गोधूम इत्यादि । स्थिरो वयःस्थापनकारी । स्निग्धोऽतिशीत इत्यतिशब्दः काकाक्षिगोलकवदुभयत्रापि संबध्यते । श्लेष्मकर इति नवगोधूमः, पुराणगोधूमस्तु वसन्तेऽप्युपयोगार्हत्वान्न श्लेष्मकरः ॥ ४३ ॥—

रूक्षः कषायो विषशोषशुक्र-
बलासदृष्टिक्षयकृद्विदाही ॥ ४४ ॥
कटुर्विपाके मधुरस्तु शिम्बः
प्रभिन्नविण्मारुतपित्तलश्च ॥

सामान्यशिम्बिगुणमाह—रूक्ष इत्यादि । 'विषशोषमेह°' इति केचित् पठन्ति ॥ ४४ ॥—

सितासिताः पीतकरक्तवर्णा
भवन्ति येऽनेकविधास्तु शिम्बाः ॥ ४५ ॥
यथादितस्ते गुणतः प्रधाना
ज्ञेयाः कटूष्णा रसपाकयोश्च ॥

वर्णविशेषेण शिम्बानां गुणमाह—सितेत्यादि । सिताः शुक्लाः, असिताः कृष्णाः । यथादितस्ते गुणतः प्रधाना इति असितात् कृष्णात् सितः प्रधानः, पीतादसितः प्रधानः, रक्तादपि पीतः । गुणै रसवीर्यविपाकलक्षणैः, प्रधानाः श्रेष्ठाः । अन्ये तु 'यथोदितास्ते गुणतस्तथाऽऽर्द्राः' इति पठन्ति । अत्रायमर्थः—ये शिम्बा येन प्रकारेण रसपाकयोरुदितास्ते तथैवार्द्रा ज्ञेयाः, न तु शुष्काः ॥ ४५ ॥—

सहाह्वयं मूलकजाश्च शिम्बाः
कुशिम्बिवल्लीप्रभवास्तु शिम्बाः ॥ ४६ ॥
ज्ञेया विपाके मधुरा रसे च
बलप्रदाः पित्तनिबर्हणाश्च ॥

सहाह्वयमिति सहाह्वयं मुद्गपर्णीमाषपर्ण्यौ । मूलकजाश्च शिम्बा इति मूलकशिम्बी । कुशिम्बीवल्ली शुकशिम्बी । अन्ये तु 'मूलकपर्णिकाश्च' इति पठन्ति; तत्र मूलकपर्णी शोभाञ्जनकः ॥ ४६ ॥—

विदाहवन्तश्च भृशं विरूक्षा
विष्टभ्य जीर्यन्त्यनिलप्रदाश्च ॥ ४७ ॥
रुचिप्रदाश्चैव सुदुर्जराश्च
सर्वे स्मृता वैदलिकास्तु शिम्बाः ॥

इदानीं वैदलानां मुद्गादीनां सतीनान्तानामार्द्रशिम्बीगुणमाह—विदाहवन्तश्चेत्यादि । विष्टभ्य जीर्यन्ति गुडगुडाशब्दं कृत्वा पाकं गच्छन्तीत्यर्थः; अन्ये 'सवाततोदशूलां मलस्याप्रवृत्तिं कृत्वा पाकं गच्छन्तीत्यर्थः' । वैदलिकास्तु शिम्बा मुद्गादीनामार्द्रफलिकाः । शुष्कनिर्गतत्वचां तु प्रागुक्त एव गुणः ॥ ४७ ॥—

कटुर्विपाके कटुकः कफघ्नो
विदाहिभावादहितः कुसुम्भः ॥ ४८ ॥
उष्णाऽतसी स्वादुरसाऽनिलघ्नी
पित्तोल्बणा स्यात् कटुका विपाके ॥
पाके रसे चापि कटुः प्रदिष्टः
सिद्धार्थकः शोणितपित्तकोपी[1] ॥ ४९ ॥

---

१ 'शोणितपित्तहेतुः' इति पा० ।

**तीक्ष्णोष्णरूक्षः कफमारुतघ्न-**
**स्तथागुणश्चासितसर्षपोऽपि ॥**

शमीधान्यसामान्यादेव कुसुम्भातसीसर्षपगुणमाह—कटु-र्विपाके इत्यादि ।—रसे च पाके च कटुक इत्यर्थः । 'मधुरोऽनि-लघ्नः' इत्यन्ये पठन्ति । सिद्धार्थकः श्वेतसर्षपः । रक्तसर्षपगुण-माह—तथेत्यादि । असितसर्षपो रक्तसर्षपः ॥ ४८ ॥ ४९ ॥

**अनार्तवं व्याधिहतमपर्यागतमेव च ॥**
**अभूमिजं नवं चापि न धान्यं गुणवत् स्मृतम् ५०**

त्याज्यमाह—अनार्तवमित्यादि । अनार्तवम् अन्यर्तुजातम् । व्याधिहतं कुङ्कुमादिना हतम् । अपर्यागतम् अपक्कम् । अभूमि-जम् ऊषरोपलकादिसविषभूमिजं; 'यस्य धान्यस्य या उचिता भूमिस्ततोऽन्यत्र भूमौ जातम्' इत्यपरे । नवं चापीति चकारेण नवस्यानतिदोषकारिता सूच्यते । धान्यशब्देन शूकशमीधान्यानि गृह्यन्ते ॥ ५० ॥

**नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ॥**

नवादीनां गुणमाह—नवमित्यादि । नवमिति वर्षं यावत् । अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजननम् । लघु संवत्स-रोषितमिति लघु पुराणमिति वाच्येऽत्र 'संवत्सरोषितम्' इति यत् करोति तज्ज्ञापयति—प्रथमवर्षादूर्ध्वं द्वितीयं वर्षं यावत् पुराणं गुणवच्च भवति, तदूर्ध्वं तु नीरसत्वान्न गुणकरमिति । उक्तं च—"वर्षोषितं सर्वधान्यं परित्यजति गौरवम् । न तु त्यजति तद्वीर्यं क्रमशो विजहाति तत्" इति; 'माषचणकादयस्तु नूतना एव स्वकार्यकरणसमर्थाः' इत्येके ॥—

**विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम् ॥ ५१ ॥**

विरूढमाह—विदाहीत्यादि । विरूढम् अङ्कुरजननशक्तिरहित-मित्यर्थः, अन्ये 'विरूढमङ्कुरितम्' इत्याहुः, ईषद्भृष्टं चणकमुद्गादि-विरूढमाहुरपरे ॥ ५१ ॥

**शाल्यादेः सर्षपान्तस्य विविधस्यास्य भागशः ॥**
**कालप्रमाणसंस्कारमात्राः संपरिकीर्तिताः ॥ ५२ ॥**

**इति कुधान्यवर्गः ।**

उपसंहारमाह—शाल्यादेरित्यादि । भागशः कालप्रमाणं संव-त्सरोषितमित्यनेनोक्तम् । संस्कारो यथा—गुरोरपि व्रीहेः संस्का-रवशाल्लाजा लघवः, मात्रा पुनरग्निबलापेक्षिणी हीना मध्यमो-त्तमा चेति । "लघु पथ्यतमं प्रोक्तं गुर्वपथ्यतमं स्मृतम् । यद्य-दागच्छति क्षिप्रं तत्तल्लघुतरं स्मृतम्"–इति । कुधान्यवर्गः ॥५२॥

**अथ मांसवर्गः ।**

**अत ऊर्ध्वं मांसवर्गाननुपदेक्ष्यामः; तद्यथा—जले-शया, आनूपा, ग्राम्याः, क्रव्यभुज, एकशफा, जाङ्गलाश्चेति षण्मांसवर्गा भवन्ति । एतेषां वर्गा-णामुत्तरोत्तरा प्रधानतमाः । ते पुनर्द्विविधा जाङ्गला आनूपाश्चेति । तत्र जाङ्गलवर्गोऽष्टविधः । तद्यथा— जङ्गाला, विष्किराः, प्रतुदा, गुहाशयाः, प्रसहाः, पर्णमृगा, बिलेशया, ग्राम्याश्चेति । तेषां जङ्गालवि-ष्किरौ प्रधानतमौ ॥ ५३ ॥**

अन्नं भक्तरूपं चोक्तं, प्रधानव्यञ्जनं मांसमाह—तद्यथे-त्यादि । जलेशयाः कोशस्थाः पादिनो मत्स्याश्च; आनूपाः कूल-चराः प्लवाश्च; ग्राम्यशब्देनैकशफशब्देन च ग्राम्याः, शफः खुरः; क्रव्यभुक्शब्देन च गुहाशयाः प्रसहाश्च, क्रव्यं मांसं; जाङ्गल-शब्देन जङ्गालविष्किरप्रतुदपर्णमृगबिलेशया इति त्रयोदश भेदाः षट्स्वेवान्तर्भूताः । संख्येयनिर्देशादेव षट्संख्यायां लब्धायां षड्ग्रहणं प्रतुदादिभेदा एतेष्वेवावरुध्यन्ते, तेन षड्वर्गा इति नियमार्थम्; 'अन्येऽपि जङ्गालादिभेदा भविष्यन्तीति सूचनार्थम्' इत्यपरे । अयं षोढा भेदः संक्षेपेणोत्तरोत्तरप्राधान्यज्ञापनाय । वर्गाणामुत्तरोत्तरप्राधान्यमाह—एतेषामित्यादि । पुनर्द्वैविध्य-माह—ते पुनरित्यादि । द्वैविध्यकथनं जाङ्गलत्वेनानूपत्वेन च वक्ष्यमाणभेदानां गुणानुगमाय । जाङ्गलस्याष्टविधत्वमाह—तत्रे-त्यादि । ते सर्वेऽत्रैव वक्ष्यन्ते । तेषां मध्ये कस्य प्राधान्यमि-त्याह—तेषामित्यादि । 'जाङ्गलविष्किरौ' इति क्वचित् ॥ ५३ ॥

**तावेणहरिणर्क्षकुरङ्गकरालकृतमालशरभश्वदं-ष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जङ्गाला मृगाः कषाया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृद्या बस्तिशोधनाश्च ॥ ५४ ॥**

जङ्गालविष्किरावाह—तावेणेत्यादिना । ताविति यौ जङ्गालवि-ष्किरौ कथ्येते इत्यर्थः । एणः कृष्णहरिणः, हरिणो गौरहरिणः, ऋक्षो नीलाण्डः 'रोरु' इति प्रसिद्धः, कुरङ्गश्चतुरगतिः 'चतुरङ्ग' इति लोके, करालोऽधोनिष्क्रान्तदन्तो हिमवदादिपर्वतेषु 'कस्तू-रीमृग' इति लोके, कृतमाला बहवः सङ्घातचारिणो मृगा देशा-न्तरे लोकादवगन्तव्याः, शरभोऽष्टापद उष्ट्रप्रमाणो महाशृङ्गः पृष्ठगतचतुष्पादः काश्मीरे प्रसिद्धः, श्वदंष्ट्रश्चतुर्दंष्ट्रोऽतिदुष्टः 'कर्कटक' इति कार्तिकपुरे, पृषतो बिन्दुचित्रितः 'चित्तल' इति लोके, चारुष्कश्चारुशरीरः स्वल्पतनुर्मृगभेद एव, मृगमातृका अल्पा पृथूदरा चतुरङ्गस्त्री 'भेदली' इति लोके । प्रभृतिग्रहणात् कोट्टकारकरामादयः । जङ्गाला इति प्रशस्तजङ्घावन्तः । तेषां सामान्यगुणमाह—कषाया इत्यादि । तीक्ष्णा इति तीक्ष्णगुण-कर्मकरत्वात् । बस्तिशोधना इति अश्मरीशर्करामूत्रकृच्छ्रमू-त्राघातादिषु पथ्याः, मूत्रविरेककारिण इत्यर्थः ॥ ५४ ॥

**कषायमधुरो हृद्यः पित्तासृक्कफरोगहा ॥**
**संग्राही रोचनो बल्यस्तेषामेणो ज्वरापहः ॥ ५५ ॥**

तेषां मध्ये कृष्णहरिणगुणमाह—कषायेत्यादि । एणस्य षड्र-सत्वेऽपि कषायमधुरोत्कटत्वात् कषायमधुर इत्युक्तम् ॥ ५५ ॥

**मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः ॥**
**शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः ॥ ५६ ॥**

१ 'वातकोपनम्' इति ताडपत्रपुस्तके पाठः । २ 'कालः प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते' इति ताडपत्रपुस्तके पाठः ।

१ 'तत्र जङ्गालाः' इति ताडपत्रपुस्तके पाठः ।

गौरहरिणगुणमाह—मधुर इत्यादि । बद्धविण्मूत्र इति एतेनातीसारिणां प्रमेहिणां च हित इत्युक्तम्; एणस्तु प्रमेहिणामहितः बस्तिशोधनत्वात् ॥ ५६ ॥

**एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते ॥**
**यो न कृष्णो न ताम्रश्च कुरङ्गः सोऽभिधीयते ५७**

सूत्रेणैणहरिणयोर्भेदमाह—एण इत्यादि ॥ ५७ ॥

**शीताऽसृक्पित्तशमनी विज्ञेया मृगमातृका ॥**
**सन्निपातक्षयश्वासकासहिक्कारुचिप्रणुत्[1] ॥ ५८ ॥**

मृगमातृकामाह—शीतेत्यादि ॥ ५८ ॥

**लावतित्तिरिकपिञ्जलवर्तीरवर्तिकावर्तकनप्तृकावार्तीकचकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रकुतित्तिरिकुरुवाहकयवालकप्रभृतयश्चयाहला विष्किराः ॥ ५९ ॥**
**लघवः शीतमधुराः कषाया दोषनाशनाः ॥**

लावः प्रसिद्धः; तित्तिरिः कृष्णतित्तिरिश्चित्रपक्षः; कपिञ्जलो गौरतित्तिरिः; वर्तीरः कपिञ्जलानूकः कपिञ्जलादल्पो वर्तिकातः किञ्चिन्महान् वर्तिकासदृश एव, 'घर्घरा' इति लोके; वर्तिकावर्तिकौ तद्भेदौ; नप्तृका लोके घुडुरुकाभिधा हूङ्कारकारिण्यल्पा पाण्डुरोदरा; वार्तीका वर्तिचटकाः स्वल्पाः संघातचारिणः 'वगेडा' इति लोके; चकोरो रक्ताक्षो विषसूचकः स्वनाम्ना ख्यातः; कलविङ्कः कालचटको भृङ्गराजाद्भिन्नः, अपरे भृङ्गराजमाहुः, अन्ये तु रक्तशिरसं कृष्णग्रीवं ग्रामचटकाकारं कलविङ्कमाहुः; मयूरः प्रसिद्धः; क्रकरो लावान्तको कपिञ्जलात् स्थूलः, 'कयर' इति लोके; उपचक्रः क्रकरभेदः कृशचञ्चुर्मंदाविलः; कुक्कुटः प्रसिद्धः; सारङ्गश्चातकः, अन्ये कृष्णकर्बुरश्चातकाकारो विष्किरः; शतपत्रो दार्वाघाटः, 'काष्ठकुट्टक' इति लोके; कुतित्तिरिस्तित्तिरिभेदः पाण्डुः कपिलः; कुरुवाहकः कुरुकुरुकः; यवालको यवगुडुरुकः । प्रभृतिग्रहणेनैवंजातीयाः । विकीर्य भक्षयन्तीति विष्किराः; त्रिभिश्चरणयुगलचञ्चुभिराहलन्ति विलिखन्तीति त्र्याहलाः । एतेषां सामान्यगुणमाह—लघवः शीतमधुरा इत्यादि । अन्ये लावादिवर्तिकादिवर्गयोर्गुणान् श्लोकेन पठन्ति,—"वर्गौ स्वादुरसावेतौ कषायानुरसौ लघू । वातपित्तहरौ नातिशीतलौ बस्तिशोधनौ' इति; अत्रापि स एवार्थः ॥ ५९ ॥

**संग्राही दीपनश्चैव[1] कषायमधुरो लघुः ॥**
**लावः कटुविपाकश्च सन्निपाते तु पूजितः ॥ ६० ॥**

तेषां मध्ये लावकगुणमाह—संग्राहीत्यादि । सन्निपाते तु पूजित इति पूजितः प्रशस्त इत्यर्थः । सामान्यगुणकथने दोषशमन इति वचनादत्र सन्निपातवचनाच्च वातादीन् व्यस्तान् समस्तानपि हन्तीत्यर्थः; अथवा सन्निपातज्वरे निवृत्ते पुनरागमननिवृत्तये प्रयोज्य इत्यर्थः । अत्र केचित् पठन्ति—"गैरिकः पांशुलश्चैव पौण्ड्रको दर्भरस्तथा । लावश्चतुर्विधः प्रोक्तस्तित्तिरिर्द्विविधः स्मृतः—" इति; गैरिकपांशुलौ प्रसिद्धौ, पौण्ड्रकदर्भरौ देशान्तरे लोकादवगन्तव्यौ । तित्तिरिर्व्याख्यातः । अस्याग्रे केचिद् गैरिकपांशुलपौण्ड्रकदर्भरभेदेन गुणान् पृथग्भिन्नान् पठन्ति; एतच्च न बहुसंमतं, तस्मान्न पठनीयम् ॥ ६० ॥

**ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्धनः ॥**
**तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः ॥ ६१ ॥**
**रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः ॥**
**कफोत्थेषु च रोगेषु मन्दवाते च शस्यते ॥ ६२ ॥**
**हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः ॥**

कृष्णतित्तिरिगुणमाह—ईषदित्यादि । ईषद्गुरुत्वं लावकापेक्षया । सर्वग्रहणं रक्तदुष्टिग्लप्राप्तये । गौरतित्तिरिगुणमाह—रक्तेत्यादि ॥ ६१ ॥ ६२ ॥—

**वातपित्तहरा वृष्या मेधाग्निबलवर्धनाः ॥ ६३ ॥**
**लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः ॥**

क्रकरगुणमाह—वातपित्तेत्यादि । उपचक्रगुणमाह—तथेत्यादि । तथेति क्रकरसदृशगुणा इत्यर्थः ॥ ६३ ॥—

**कषायः स्वादुलवणस्त्वच्यः केश्योऽरुचौ हितः ६४**
**मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियदार्ढ्यकृत् ॥**

मयूरगुणमाह—कषाय इत्यादि । दृक्श्रोत्रेन्द्रियदार्ढ्यकृदिति चक्षुःश्रवणेन्द्रियदार्ढ्यकारीत्यर्थः ॥ ६४ ॥

**स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः ॥६५॥**
**बृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः ॥**
**वातरोगक्षयवमीविषमज्वरनाशनः ॥ ६६ ॥**

वनकुक्कुटमाह—स्निग्धेत्यादि । वन्यो वनजातः । ग्राम्यकुक्कुटमाह—तद्वदित्यादि । तद्वदिति वनकुक्कुटवदित्यर्थः । गुरुस्त्विति वन्योऽपि गुरुः, ग्राम्यस्तु गुरुतर इत्यर्थः ॥ ६५ ॥ ६६ ॥

**कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्गगोक्ष्वेडकडिण्डिममाणवकशतपत्रकमातृनिन्दकमेदाशिशुकसारिकावल्गुलीगिरिशालट्वालट्टूषकसुगृहाखञ्जरीटहारीतदात्यूहप्रभृतयः प्रतुदाः ॥ ६७ ॥**

प्रतुदानाह—कपोतेत्यादि । कपोतो वनवासी 'पाण्डुक' इति लोके, स च नानाविधः; पारावतो गृहदेवकुलालयः; भृङ्गराजो भ्रमरको धूम्याटसदृशः 'पक्षिराज' इति लोके; परभृतः कोकिलः; कोयष्टिः कोयङ्गका दीर्घजङ्घा 'कोयङ्ग' इति लोके; कुलिङ्गो वन्यचटको ग्राम्यचटकाकारः; गृहकुलिङ्गः पुण्ड्रचटकः 'ग्रामचटक' इति लोके; गोक्ष्वेडो गोनर्दः; डिण्डिमाणवकः डिण्डिमोत्कटध्वनिः; शतपत्रो राजशुकः; मातृनिन्दकः श्रिया-

[1] 'दीपनः शीतः' इति पा० ।

[1] 'रुचिप्रदः' इति पा० । [2] '°डिडिमानक°' इति पा० । [3] '°मातृलिङ्गक°' इति पा० ।

त्मकः 'पुत्ररञ्जक' इति लोके; भेदाशी पुत्रशुकः, भेकाशीति केचित्, तत्रापि स एवार्थः; शुकसारिके प्रसिद्धे; वल्गुली 'गडुलिका' इति लोके; गिरिशा गिरिवर्तिका, 'पर्वतवाही' इत्येके; लट्वा फेञ्जातको रक्तपुच्छाधोभागः, अन्ये भरद्वाजभेदमाहुः, 'लाट' इति लोके; लट्टूषको द्वितीयफेञ्जातकः, अन्ये सञ्चानचञ्च्वाकृतिचञ्चुभागं दीर्घपुच्छादिलक्षणेन प्रतुदं विहङ्गमाहुः; सुगृहा पीतमस्तका 'वयाँ' इति लोके; खञ्जरीटः सितासितवर्णो द्रुतललितगतिः 'कवडिया' इति लोके; हारीतो हरितपीतवर्णः 'हरिताल' इति लोके; दात्यूहः कालकण्टकः 'रायुक' इति लोके। प्रभृतिग्रहणाद् गोपापुत्रसारपदेन्द्राद्यश्चरकोक्ताः। प्रतुदा इति प्रतुद्य भक्षयन्तीति हेतोः ॥ ६७ ॥

**कषायमधुरा रूक्षाः फलाहारा मरुत्कराः ॥**
**पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः ॥ ६८ ॥**

एषां सामान्यगुणमाह—कषायेत्यादि। फलाहारा मरुत्करा इति फलाहारत्वेन वातकराः, फलाहारत्वं स्वभावकथनं वा; वातकरत्वं न कलायादिवत्, किंतु मांसान्तरापेक्षया न वातं घ्नन्तीत्यर्थः ॥ ६८ ॥

**सर्वदोषकरस्तेषां भेदाशी मलदूषकः ॥**

तेषां मध्ये भेदाशिगुणमाह—सर्वदोषकर इत्यादि। मलदूषक इति वातादिदोषजननो मूत्रादिमलदूषकश्चेति, स्वभावेन दोषाणां मलानां च दूषयितेत्यर्थः। केचित् सर्वदोषकरस्थाने 'सर्वदोषहर' इति प्रमादपाठं दृष्ट्वा सर्वदोषहरस्य च मलदूषकत्वासंभवेन मलदूषकस्थाने 'गलदूषक' इति पठन्ति; तच्च प्रमादजल्पाज्ञादेयम् ॥—

**कषायस्वादुलवणो गुरुः काणकपोतकः ॥ ६९ ॥**

काणकपोतगुणमाह—कषायेत्यादि। चकारोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः, तेन काणकपोतोऽपि त्रिदोषकोपनो मलदूषयितेति चकारेण पूर्वानुवृत्तं समुच्चीयते। काणकपोतो वनवासी पाण्डुकपोतः, अन्येऽरुणवर्णकमपि कपोतमाहुः ॥ ६९ ॥

**रक्तपित्तप्रशमनः कषायविशदोऽपि च ॥**
**विपाके मधुरश्चापि गुरुः पारावतः स्मृतः ॥ ७० ॥**

पारावतगुणमाह—रक्तेत्यादि। विशदः पिच्छिलविपरीतः ७०

**कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्धनः ॥**

वन्यकुलिङ्गगुणमाह—कुलिङ्ग इत्यादि ॥—

**रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः ॥ ७१ ॥**

गृहकुलिङ्गगुणमाह—रक्तेत्यादि। वेश्म गृहम् ॥ ७१ ॥

**सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्जारशृगालमृगेर्वारुकप्रभृतयो गुहाशयाः ॥ ७२ ॥**

गुहाशयानाह—सिंहेत्यादि। सिंहः पराक्रमी निद्रालुः; व्याघ्रो विकृतमुखो निद्रालुर्हिंस्रः; वृकः कुक्कुरसदृशः पशुः क्षुद्रः; तरक्षुर्मृगशत्रुर्व्याघ्रविशेषः 'जरख' इति लोके; ऋक्षो भल्लूकोऽतिलोमशः 'रिंछ' इति लोके; द्वीपी व्याघ्रभेदश्चित्रव्याघ्रः 'चित्रक' इति लोके; मार्जारो बिडालः, अत्र च मार्जारो गुहाशयत्वादरण्यबिडालो बोद्धव्यः; शृगालः प्रसिद्धः; मृगेर्वारुर्मृगभक्षः शृगालाकृतिः 'हरिणडु(द्र)व' इति लोके। प्रभृतिग्रहणाद्वान्तादबभ्रुप्रभृतयः। गुहासु पर्वतविवरेषु शेरत इति गुहाशयाः ७२

**मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः ॥**
**उष्णवीर्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥ ७३ ॥**

तेषां सामान्यगुणमाह—मधुरा इत्यादि ॥ ७३ ॥

**काककङ्ककुररचाषभासशशघात्युलूकचिल्लिश्येनगृध्रप्रभृतयः प्रसहाः ॥ ७४ ॥**

प्रसहानाह—काकेत्यादि। काकः प्रसिद्धः; कङ्को दीर्घचञ्चुर्महाप्रमाणः, उक्तं च,—"कङ्कः स्यात् कङ्कमल्लाख्यो बाणपत्रार्हपक्षकः। लोहपृष्ठो दीर्घपादः पक्षाधः पाण्डुवर्णभाक्"—इति; कुररश्चिल्लयाकारो नादोत्थापितमत्स्यो ह्रस्वमत्स्यग्राही 'कुरल' इति लोके प्रसिद्धः; चाष इन्द्रनीलमणिसदृशपक्षः शस्तदर्शनः 'करटाशन' इति लोके प्रसिद्धः; भासो गोकुलचारी गृध्रविशेषः श्वेतशिखावान्; शशघाती चिल्लयाकारो महाचरणनखः प्रहारेण शशकाहरणशीलः 'शशाभि' इति लोके प्रसिद्धः, अन्ये 'पाजी' इत्याहुः; उलूकः कौशिकः; चिल्लिः चिल्हः; श्येनः सिञ्चानो गरुडान्वयः; गृध्रो मांसाशी योजनदृष्टिः; प्रभृतिग्रहणेन धूमपिर्काकरपत्रिकादयो गृह्यन्ते। प्रसह्य भक्षयन्तीति प्रसहाः ॥ ७४ ॥

**एते सिंहादिभिः सर्वे समाना वायसादयः ॥**
**रसवीर्यविपाकेषु विशेषाच्छोषिणे हिताः ॥ ७५ ॥**

तेषां सामान्यं गुणमाह—एते इत्यादि। एते वायसादयः सिंहादिभिः समानास्तुल्या इति संबन्धः। वायसः काकः। ते केषु समाना इत्याह—रसवीर्यविपाकेषु। विशेषादतिशयेन। शोषिणे राजयक्ष्मिणे ॥ ७५ ॥

**मद्गुमूषिकवृक्षशायिकावकुशपूतिघासवानरप्रभृतयः पर्णमृगाः ॥ ७६ ॥**

पर्णमृगानाह—मद्ग्वित्यादि। मद्गुमूषिको माल्लयासर्पः; अन्ये तु मद्गुमूषिकौ भिन्नावाचक्षेते; तत्र मद्गुः पूर्वार्थ एव, मूषिको वृक्षमूषिकः वृक्षशायिका वृक्षमर्कटिका 'गिली' इति लोके; अवकुशो गोलाङ्गूलो वानरविशेषः; पूतिघासो वृक्षबिडालः सुगन्धिवृषणः 'कर्पूरक' इति लोके; वानरो मर्कटः। प्रभृतिग्रहणादेवंजातीया अन्येऽपि। प्रायेण वृक्षस्थायित्वात् पर्णमृगाः ॥ ७६ ॥

---

१ 'फेचाकः' इति पा०। २ 'द्वितीयफेचाकः' इति पा०। ३ 'वर्यं' इति पा०। ४ 'रसतो मधुरश्चापि' इति ताडपत्रपुस्तके पा०।

१ 'शुभ्रः' इति पा०। २ '°च्चिरल्लि°' इति पा०। ३ 'च्चिरल्लिः' इति पा०। ४ 'धूमार्तांशी' इति पा०।

**मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिणे हिताः ॥**
**सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः ॥ ७७ ॥**

एतेषां सामान्यगुणमाह—मधुरा इत्यादि ॥ ७७ ॥

**श्वाविच्छल्यकगोधाशशवृषदंशलोपाकलोमशकर्णकदलीमृगप्रियकाजगरसर्पमूषिकनकुलमहाबभ्रुप्रभृतयो विलेशयाः ॥ ७८ ॥**

बिलेशयानाह—श्वाविदित्यादि । श्वावित् सूचिसदृशरोमयुक्ता 'सिहै' इति लोके; शल्यको वज्रशकलो बृहद्गोधानुकारी 'साला' इति लोके; गोधाशशौ प्रसिद्धौ; वृषदंशो ग्राममार्जारः, अन्ये वनमार्जारमाहुः; लोपाकः शृगालभेदः, 'लाङ्गलक' इति लोके; लोमशकर्णो नलत्करः; कदली महाबिडालसमो व्याघ्राकारः 'कदलीहुण्ड' इति पौण्ड्रे प्रसिद्धः, अन्ये सर्पविशेषमाहुः, अपरे 'कदलीमृग' इति समस्तं पठन्ति, तत्रापि स एवार्थः; मृगप्रियको गोनसः; अजगरो महासर्पः, सर्पः पुनरल्पो राजिलमण्डलिदर्वीकरभेदात्रिविधः; मूषिको भूमिमूषिकः; नकुलो भुजङ्गशत्रुः; तद्भेदो महाबभ्रुः; प्रभृतिग्रहणाद्गण्डकजाहकप्रभृतयोऽपि द्रष्टव्याः । बिलशायित्वाद्बिलेशयाः ॥ ७८ ॥

**वर्चोमूत्रं संहतं कुर्युरेते**
**वीर्ये चोष्णाः पूर्ववत् स्वादुपाकाः ॥**
**वातं हन्युः श्लेष्मपित्ते च कुर्युः**
**स्निग्धाः कासश्वासकार्श्यापहाश्च ॥ ७९ ॥**

एतेषां सामान्यगुणमाह—वर्च इत्यादि । संहतं सान्द्रम् । अन्ये तु 'सांग्राहिका बद्धमूत्रास्तथैते' इति पठन्ति ॥ ७९ ॥

**कषायमधुरस्तेषां शशः पित्तकफापहः ॥**
**नातिशीतलवीर्यत्वाद्वातसाधारणो मतः ॥ ८० ॥**

तेषामेव केषांचिद्गुणविशेषमाह—कषायेत्यादि । वाते साधारणो मध्यस्थः, साधारणदेशवत्; न चायं वातं कोपयति न च वातशमं करोति; माधुर्याद्वातशमहेतुः, कषायात् सशैत्याद्वाहेतुरिति साधारणत्वम् ॥ ८० ॥

**गोधा विपाके मधुरा कषायकटुका स्मृता ॥**
**वातपित्तप्रशमनी बृंहणी बलवर्धनी ॥ ८१ ॥**
**शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः ।**
**प्रियको मारुते पथ्योऽजगरस्त्वर्शसां हितः ॥ ८२ ॥**
**दुर्नामानिलदोषघ्नाः कृमिदूषीविषापहाः ॥**
**चक्षुष्या मधुराः पाके सर्पा मेधाग्निवर्धनाः ॥ ८३ ॥**
**दर्वीकरा दीपकाश्च तेषूक्ताः कटुपाकिनः ॥**
**मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः ॥ ८४ ॥**

गोधेत्यादि । दूषीविषापहा इति विषमेव दावाग्निवातातपाद्यभिभवेन मन्दतां गतं विषपीतस्य वा विषं दूषीविषम् । सर्पाः सामान्यसर्पाः । दर्वीकराः फणाकरा इत्यर्थः । दीपका राजिमन्तः ॥ ८१—८४ ॥

**अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेदःपुच्छकप्रभृतयो ग्राम्याः ॥ ८५ ॥**

ग्राम्यानाह—अश्वाश्वतरेत्यादि । अश्वो घोटकः; अश्वायां गर्दभेन जनितोऽश्वतरः 'वेसर' इति लोके; गौः प्रसिद्धा; खरो गर्दभः; उष्ट्रः करभः; बस्तश्छागलः, उरभ्रो मेषः; मेदःपुच्छको दुम्बकः, अन्ये एडकमाहुः, प्रभृतिग्रहणाद्वेकप्रभृतयः । प्रायो ग्रामवासित्वाद्ग्राम्याः ॥ ८५ ॥

**ग्राम्या वातहराः सर्वे बृंहणाः कफपित्तलाः ॥**
**मधुरा रसपाकाभ्यां दीपना बलवर्धनाः ॥ ८६ ॥**

तेषां सामान्यं गुणमाह—ग्राम्या इत्यादि ॥.८६ ॥

**नातिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः ॥**
**छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥ ८७ ॥**

अथ छगलगुणमाह—नातिशीत इत्यादि । अल्पस्नेहगौरवाभ्यामल्पकफः, उष्णानुबन्धादल्पशैत्यादल्पपित्तः, कटुतिक्तव्यायामाल्पाम्बुसेवनादनभिष्यन्दी अल्पाभिष्यन्दी दोषधातुमलस्रोतसामल्पक्लेदप्राप्तिजनन इत्यर्थः ॥ ८७ ॥

**बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु ॥**

मेषगुणमाह—बृंहणमित्यादि । औरभ्रं मांसं यद्यपि पित्तश्लेष्मकरमत्रोक्तं, तथाऽपि सातिशयं पित्तं श्लेष्माणं च न करोतीति **व्याप्यचन्द्राचार्य**मतम् ॥—

**मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं गुणैः ॥ ८८ ॥**

मेदःपुच्छगुणमाह—मेद इत्यादि ॥ ८८ ॥

**श्वासकासप्रतिश्यायविषमज्वरनाशनम् ॥**
**श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम् ॥ ८९ ॥**

गव्यगुणमाह—श्वासकासेत्यादि ॥ ८९ ॥

**औरभ्रवत्सलवणं मांसमेकशफोद्भवम् ॥**

सलवणमीषल्लवणम् । शफः खुरः ॥—

**अल्पाभिष्यन्द्ययं वर्गो जाङ्गलः समुदाहृतः ॥ ९० ॥**

अल्पेत्यादि ॥ ९० ॥

**दूरे जनान्तनिलया दूरे पानीयगोचराः ॥**
**ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः ९१**
**अतीवासन्ननिलयाः समीपोदकगोचराः ॥**
**ये मृगाश्च विहङ्गाश्च महाभिष्यन्दिनस्तु ते ॥ ९२ ॥**

सर्वेषामेव जाङ्गलानामल्पाभिष्यन्दित्वं माभूदित्याह—दूर इत्यादि । जनशब्दोऽत्र ग्रामवाची, तेन दूरे ग्रामाद्गृहा इत्यर्थः; अन्ये 'दूरे जनात्तनिलयाः' इति पठित्वा व्याख्यानयन्ति—दूरे जनानामात्तो गृहीतो निलयो यैर्मृगैर्विहङ्गैश्च ते तथा । दूरे पानीयगोचरा इति दूरे पानीयविषयाः पानीयादूरनिवासिन इत्यर्थः । ये मृगाश्चेति चकारात् सर्पादयः । अतीवासन्ननिलया इति अतिशयेन ग्रामासन्नगृहा इत्यर्थः । समीपोदकगोचरा इति पानीयसमीपभूमिचारिण इत्यर्थः । अत्रापि चकाराद्धन्वानूपचारिणाम-

जातिवित्तिरीणां जाङ्गलपठितानामपि मिश्रगोचरत्वान्नात्यभिष्यन्दित्वम् ॥ ९१ ॥ ९२ ॥

**आनूपवर्गस्तु पञ्चविधः । तद्यथा—कूलचराः, प्लवाः, कोषस्थाः, पादिनो, मत्स्याश्चेति ॥ ९३ ॥**

आनूपवर्गप्रकारानाह—आनूपवर्गस्त्वित्यादि । अनुगता आपोऽस्मिन्निति सजलस्थलात्मको देशः, तद्भवा आनूपाः । कूलं नद्यादितटं, तत्र चरन्ति भक्षयन्ति भ्रमन्ति च ये ते कूलचराः । प्लवन्ते पानीये तरन्ति ये ते प्लवाः । कोशः शङ्खादीनां संपुटः, तत्र तिष्ठन्तीति कोशस्थाः । पादिनः पादवन्तः । मत्स्याः प्रसिद्धाः ॥ ९३ ॥

**तत्र गजगवयमहिषरुरुचमरसृमररोहितवराहखड्गिगोकर्णकालपुच्छकोद्रन्यङ्कुरण्यगवयप्रभृतयः कूलचराः पशवः ॥ ९४ ॥**

तत्र कूलचरानाह—तत्रेत्यादि । गजो हस्ती; गवयो गोसदृशः; महिषः प्रसिद्धः; रुरुः शरदि शृङ्गत्यागी, तल्लक्षणं उच्यते—"विकटबहुविषाणः शम्बराकारदेहः सलिलतटचरत्वाच्छम्बरेभ्यो विचित्रः । त्यजति शरदि शृङ्गं रौत्यतोऽसौ रुरुः स्यात् पृथुलमृगविशेषः प्रायशश्चेदिदेशे" इति; चमरः केशसृत्युर्गोसदृशः; सृमरो महाशूकरः, अन्ये तु महाश्वाकारश्रमरान्तकः; रोहितो लोहितवर्णो मृगजातिः, अन्ये तु 'रोहिष' इति पठन्ति व्याख्यानयन्ति च—कच्छशूकर इत्यर्थः, अपरे फलशूकरमाहुः; वराहः शूकरः; खड्गी गण्डकः; गोकर्णो गोसदृशकर्णः 'गोन' इति प्रसिद्धः; कालपुच्छको ललत्कृष्णपुच्छकः; ओद्रः पानीयबिडालः, 'ओदन' इति लोके; न्यङ्कुः 'न्यंगुण' इति लोके; अरण्यगवयो वन्यगवयः ॥ ९४ ॥

**वातपित्तहरा वृष्या मधुरा रसपाकयोः ॥**
**शीतला बलिनः स्निग्धा मूत्रलाः कफवर्धनाः ॥९५॥**

तेषां सामान्यगुणमाह—वातेत्यादि । शीतला इति अत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः, तेनौष्ण्यमपि केषांचिद्रष्टव्यम् ९५

**विरूक्षणो लेखनश्च वीर्योष्णः पित्तदूषणः ॥**
**स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः ॥ ९६ ॥**
**गवयस्य तु मांसं हि स्निग्धं मधुरकासजित् ॥**
**विपाके मधुरं चापि व्यवायस्य तु वर्धनम् ॥ ९७ ॥**

तेषां केषांचिदेव गुणविशेषमाह—विरूक्षण इत्यादि । समुदितौ कफवातौ हन्ति, केवलं तु कफं करोत्येव; गजादिषु विरूक्षणकफघ्नत्वादि स्वजात्यपेक्षं परिणतिविशेषात् ॥ ९६ ॥ ९७ ॥

**स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः ॥**
**निद्रापुंस्त्वबलस्तन्यवर्धनो मांसदार्ढ्यकृत् ॥ ९८ ॥**

स्निग्धोष्णेत्यादि । वृष्यः पुंस्त्ववर्धन इति च द्वयं स्तुतिवृद्धिप्राप्तये ॥ ९८ ॥

**रुरोर्मांसं समधुरं कषायानुरसं स्मृतम् ॥**
**वातपित्तोपशमनं गुरु शुक्रविवर्धनम् ॥ ९९ ॥**
**तथा चमरमांसं तु स्निग्धं मधुरकासजित् ॥**
**विपाके मधुरं चापि वातपित्तप्रणाशनम् ॥ १०० ॥**
**सृमरस्य तु मांसं च कषायानुरसं स्मृतम् ॥**
**वातपित्तोपशमनं गुरु शुक्रविवर्धनम् ॥ १०१ ॥**
**स्वेदनं बृंहणं वृष्यं शीतलं तर्पणं गुरु ॥**
**श्रमानिलहरं स्निग्धं वाराहं बलवर्धनम् ॥ १०२ ॥**
**कफघ्नं खड्गिपिशितं कषायमनिलापहम् ॥**
**पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् ॥ १०३ ॥**
**गोकर्णमांसं मधुरं स्निग्धं मृदु कफावहम् ॥**
**विपाके मधुरं चापि रक्तपित्तविनाशनम् ॥ १०४ ॥**

रुरोर्मांसमित्यादि । स्वेदनं स्वेदजनकम् । बृंहणमिति बृंहणं देहवृद्धिकरम् । वृष्यं शुक्रलम् । तर्पणं तृप्तिजनकम् । पित्र्यमिति पितृभ्यो हितम् ॥ ९९—१०४ ॥

**हंससारसक्रौञ्चचक्रवाककुररकादम्बकारण्डवजीवञ्जीवकबकबलाकापुण्डरीकप्लवशरारीमुखनन्दीमुखमद्गूत्क्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्करशायिकाकोनालकाम्बुकुकुटिकामेघरावश्वेतवारलप्रभृतयः प्लवाः संघातचारिणः १०५ ॥**

प्लवानाह—हंसेत्यादि । हंसः कलस्वरो ललितगतिः प्रसिद्धः; सारसो लक्ष्मणो रक्तशिराः प्रसिद्ध एव; क्रौञ्चः कौञ्चिरः; चक्रवाको द्वन्द्वचरो निशावियोगी; कुररः अस्य प्रसहेष्वपि पाठः, तेनोभयेषामपि गुणा बोद्धव्याः, अन्ये तु कङ्कमल्लसदृशजलचरं कुररमाहुः; कादम्बः कलहंसोऽतिधूसरपक्षः, अन्ये तु रक्तचञ्चुशिरःकृष्णपादादीनां लक्षणेन कृत्वा 'कयंब' इति पठन्ति; कारण्डवः शुक्लहंसभेदोऽल्पः, अन्ये करह(ई)वमाहुः, उक्तं च—"कारण्डवः काकवक्त्रो दीर्घाङ्घ्रिः कृष्णवर्णभाक्—" इति; जीवञ्जीवको विषदर्शनमृत्युः; बकः पाण्डुरपक्षः प्रसिद्धः; बलाका बकभेदः 'बगुली' इति लोके; पुण्डरीको नलिननयनः, प्लवो महाप्रमाणः प्रसेवकगलः 'सगड' इति लोके; शरारीमुखः खदिरवर्णो 'गिर्गराटी' इति लोके; नन्दीमुखः पत्राटी आटीभेदः; मद्गुर्जलकाकः; उत्क्रोशः कुररभेदो मत्स्याशी; काचाक्षः कपर्दियाकः 'बहुडी' इति लोके; मल्लिकाक्षः शुक्लशबलः; शुक्लाक्षस्तद्भेदः, अन्ये तु मलिनचञ्चुचरणो हंसभेद एवेत्याहुः; पुष्करशायिका पद्मपत्रशायिका; कोनालकः श्यामपृष्ठश्वेतोदरः 'पानीयवर्तिका' इति लोके; अम्बुकुक्कुटिका जलकुकुटी कृष्णवर्णा, 'बुडियाक' इति लोके; मेघरावश्चातकः, अन्ये तु चातकं विष्किरेष्वामनन्ति; श्वेतवारलः शुक्लपक्षः प्रसेवकगलः 'ज्येष्ठबलाका' इति लोके । प्रभृतिग्रहणादारामण्डितुण्डिकामृणालकण्ठादयः ॥१०५॥

१ 'सजलात्मकः' इति पा० ।

१ 'वातपित्तविनाशनम्' इति पा० । २ '°श्वेतचरण°' इति पा० ।

**रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः ॥**
**सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः ॥ १०६ ॥**

तेषां सामान्यगुणमाह—रक्तेत्यादि ॥ १०६ ॥

**गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः ॥**
**बृंहणः शुक्रलस्तेषां हंसो वातविकारनुत् ॥ १०७ ॥**

केषांचिद्विशेषगुणमाह—गुरूष्णेत्यादि। अन्ये पुनरत्र सारसक्रौञ्चकुररकारण्डवकादम्बकजीवञ्जीवकानामपि विशिष्टं गुणं पठन्ति, तत्रातिप्रसिद्धमिति न लिखितम् ॥ १०७ ॥

**शङ्खशङ्खनकशुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः ॥ १०८ ॥**

कोशस्थानाह—शङ्खेत्यादि। शङ्खः प्रसिद्धः; शङ्खनकः क्षुद्रशङ्खः शङ्खभेद एव; शुक्तिः समुद्रजा शिम्पिः; शम्बूक आवर्तकोशः, 'सांखुला' इति लोके; भल्लूकः कपर्दकः, अन्ये शम्बूकभेदमाहुः। प्रभृतिग्रहणात् बोडिकजलशुक्तिशम्बूकभेदा बहुविधा गृह्यन्ते ॥ १०८ ॥

**कूर्मकुम्भीरकर्कटककृष्णकर्कटकशिशुमारप्रभृतयः पादिनः ॥ १०९ ॥**

पादिन आह—कूर्मेत्यादि। कूर्मः कच्छपः, स तु नानाविधो वर्तुलदीर्घमहदादिभेदेन; कुम्भीरोऽपि नानाभेदो घडियालगोधादिभेदेन; कर्कटोऽपि द्विविधः कृष्णशुक्लभेदेन; शिशुमारो दलाकारोऽन्तर्वक्त्रो बहिर्निःश्वासमुक्, सोऽपि द्विविधो वर्तुलदीर्घभेदेन, दीर्घ 'फाणित' इति लोकाः प्राहुः, स एवात्र गृह्यते पादित्वात्। प्रभृतिग्रहणाद्ग्राहादयः ॥ १०९ ॥

**शङ्खकूर्मादयः स्वादुरसपाका मरुन्नुदः ॥**
**शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्धनाः ॥**

तेषां कोशस्थानां पादिनां चैकगुणत्वादुभयोर्वर्गयोर्गुणमेकीकृत्याह-शङ्खकूर्मादय इत्यादि ॥ ११० ॥

**कृष्णकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः ॥**
**शुक्रः सन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा १११**

तेषां मध्ये कस्यचिद्गुणमाह—कृष्णेत्यादि ॥ १११ ॥

**मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च ॥ ११२ ॥**

मत्स्यानाह—मत्स्यास्त्वित्यादि ॥ ११२ ॥

**तत्र नादेयाः—रोहितपाठीनपाटलाराजीववर्मिगोमत्स्यकृष्णमत्स्यवागुंजारमुरलसहस्रदंष्ट्रप्रभृतयः ॥ ११३ ॥**

तत्र नादेयानाह—तत्रेत्यादि। रोहितो घनशकलः प्रसिद्धः; पाठीनः पुनरशकल एव दीर्घो निर्मलः सोऽपि 'बोयाल' इति लोके प्रसिद्ध एव; वर्मिः सर्पाकारो मत्स्यः; गोमत्स्यः स्वनामप्रसिद्धः, "कृष्णमत्स्यस्तु शकली बहुकण्टकसंयुतः। कषायवर्णो रक्ताक्षः कथितो मत्स्यवेदिभिः"—इति; वागुञ्जारः 'वाहस' इति लोके; सहस्रदंष्ट्रो महापाठीनः; शेषास्तु कैवर्तेभ्यो ज्ञेयाः; प्रभृतिग्रहणाच्छफरादयः ॥ ११३ ॥

**नादेया मधुरा मत्स्या गुरवो मारुतापहाः ॥**
**रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्चसः ११४**

तेषां सामान्यगुणमाह—नादेया इत्यादि ॥ ११४ ॥

**कषायानुरसस्तेषां शष्पशैवालभोजनः ॥**
**रोहितो मारुतहरो नात्यर्थं पित्तकोपनः ॥ ११५ ॥**

नादेयानामेव केषांचिद्गुणविशेषमाह—कषायेत्यादि। शष्पं बालतृणं, शैवालं शैवलम् ॥ ११५ ॥

**पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः ॥**
**दूषयेद्रक्तपित्तं तु कुष्ठरोगं करोत्यसौ ॥**
**मुरलो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥ ११६ ॥**

पाठीनमाह—पाठीन इत्यादि। पिशिताशनो मांसभक्षकः ॥ ११६ ॥

**सरस्तडागसंभूताः स्निग्धाः स्वादुरसाः स्मृताः ॥**
**महाह्रदेषु बलिनः, स्वल्पेऽम्भस्यबलाः स्मृताः ११७**

सरस्तडागादिजान् मत्स्यानाह—सर इत्यादि। ह्रदः 'द्रह' इति लोके ॥ ११७ ॥

**तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरुलैनन्दिवार(रु)लकमकरगर्गरचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः ॥ ११८ ॥**

सामुद्रानाह—तिमीत्यादि। तिमिर्महत्तमो मत्स्यः; तिमिङ्गिलस्ततोऽपि महत्तमः; कुलिशः 'कुडिश' इति लोके; नन्दिवारलकः 'समुद्रशिम्बाक' इति लोके; मकरो हिंस्रदंष्ट्रकैः; गर्गरः स्वनाम्ना प्रसिद्धः; चन्द्रकः पार्श्वेषु कण्टकवलयितो वर्तुलो मत्स्यः; राजीवो वज्राभो बह्वायतः स्वनामप्रसिद्धः; शेषास्तु समुद्रतीरवासिभ्यो ज्ञेयाः। प्रभृतिग्रहणादन्येऽपि तेभ्य एव ज्ञेयाः ॥ ११८ ॥

**सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः ॥**
**उष्णा वातहरा वृष्या वर्चस्याः श्लेष्मवर्धनाः ११९॥**
**बलावहा विशेषेण मांसाशित्वात् समुद्रजाः ॥**

सामुद्रमत्स्यानां सामान्यगुणमाह—सामुद्रा इत्यादि ॥११९॥

**समुद्रजेभ्यो नादेया बृंहणत्वाद्गुणोत्तराः ॥ १२० ॥**
**तेषामप्यनिलघ्नत्वाच्चौण्ट्यकौप्यौ गुणोत्तरौ ॥**
**स्निग्धत्वात् स्वादुपाकत्वात्तयोर्वाप्या गुणाधिकाः ॥**

सामुद्रादीनां सारतरत्वमाह—समुद्रजेभ्य इत्यादि। गुणोत्तराः गुणोत्कृष्टाः। तेषां नादेयमत्स्यानाम् ॥ १२० ॥ १२१ ॥

---

१ 'वागुजार' इति 'वाकुच' इति च पा०। २ 'वोयाल' इति हस्तलिखितपुस्तके न पठ्यते।

१ 'श्लेष्मलस्तृष्यः' इति पा०। २ '°भिरल°' इति पा०। ३ 'अहिदंष्ट्रकः' इति पा०। ४ 'तेभ्यश्चाप्यनिलघ्नत्वात्' इति पा०। ५ 'ताभ्यां' इति पा०।

**नादेया गुरवो मध्ये यस्मात् पुच्छास्यचारिणः ॥**
**सरस्तडागजानां तु विशेषेण शिरो लघु ॥ १२२ ॥**
**अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः ॥**
**किंचिन्मुक्त्वा शिरोदेशमत्यर्थं गुरवस्तु ते ॥१२३॥**
**अधस्ताद्गुरवो ज्ञेया मत्स्याः सागरसंभवाः ॥**
**उरोविचरणात्तेषां पूर्वमङ्गं लघु स्मृतम् ॥ १२४ ॥**
**इत्यानूपो महाष्यन्दी मांसवर्ग उदीरितः ॥ १२५ ॥**

नादेयादिमत्स्यावयवानां गुरुलाघवमाह—नादेया गुरवो मध्ये इत्यादि । आस्यं मुखम् । अदूरगोचरा अदूरविषया अल्पव्यायामा इत्यर्थः । उत्सोदपानजा गिरिप्रस्रवणजाः । महाभिष्यन्दीति दोषधातुमलस्रोतसामतिशयक्लेदकारीत्यर्थः; अन्ये त्वन्यथा कृत्वा पठन्ति, तदुच्यते—"हृदयस्थान्ननिर्यासवाहिस्रोतोमुखानि यत् । भुक्तं लिम्पति पैच्छिल्यादभिष्यन्दि तदुच्यते ॥ वैशद्यात् कफहन्तृत्वात्तान्येव विवृणोति यत् । तदुक्तमनभिष्यन्दि द्रव्यं द्रव्यविशारदैः"–इति ॥ १२२–१२५ ॥

**तत्र शुष्कपूतिव्याधिविषसर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां च मांसान्यभक्ष्याणि, यस्माद्विगतव्यापन्नापहतपरिणताल्पासंपूर्णवीर्यत्वाद्दोषकराणि भवन्ति; एभ्योऽन्येषामुपादेयं मांसमिति ॥ १२६ ॥**

मांसमनुपादेयमाह—तत्रेत्यादि । पूतिः शटितः; हतशब्दो व्याधिविषसर्पैः प्रत्येकं संबध्यते; दिग्धविद्धः विषादिलिप्तशस्त्रादिविद्धः, जीर्णो वृद्धः, कृशो दुर्बलः, असात्म्यचारिणाम् अनुचिताहारभक्षिणाम् । कस्मादनुपादेयानीत्याह—यस्मादित्यादि । बालानामसंपूर्णवीर्यत्वादित्यर्थः । असात्म्यचारिणामनुपादेयत्वे हेतुः सूत्रकारेण निबन्धकारैश्चानुक्तोऽपि स्वयमूह्यः । मांसमुपादेयमाह—एभ्य इत्यादि । दोषरहितं गुणवत्, ग्राह्यमित्यर्थः ॥ १२६ ॥

**अरोचकं प्रतिश्यायं गुरु शुष्कं प्रकीर्तितम् ॥**
**विषव्याधिहतं मृत्युं बालं छर्दिं च कोपयेत् ॥१२७॥**
**कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम् ॥**
**क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम् ॥ १२८ ॥**

शुष्कादीनां दोषमाह—अरोचकमित्यादि । शुष्कं मांसमरोचकं प्रतिश्यायं च 'करोति' इत्यध्याहारः । मृत्युमिति अत्रापि 'करोति' इत्यध्याहारः । क्लिन्नं शटितम् । उत्क्लेशः थूत्करणम् । असात्म्यचारिणां दोषः स्वयमप्यूह्यः ॥ १२७ ॥ १२८ ॥

**स्त्रियश्चतुष्पात्सु, पुमांसो विहङ्गेषु, महाशरीरेष्वल्पशरीराः, अल्पशरीरेषु महाशरीराः, प्रधानतमाः; एवमेकजातीयानां महाशरीरेभ्यः कृशशरीराः प्रधानतमाः ॥ १२९ ॥**

१ 'इत्यानूपो महाभिष्यन्दी मांसवर्गो व्याख्यातः' इति पा० । २ 'कस्मात्' इति पा० ।



गुणवन्मांसप्रसङ्गेन लिङ्गाद्यधिकृत्याह—स्त्रिय इत्यादि । चतुष्पदां मध्ये स्त्रियः प्रधानतमाः, विहङ्गानां मध्ये पुमांसः पुरुषाः प्रधानतमाः । महाशरीरेष्वित्यादि महाशरीरेषु खड्गिमहिषादिषु, अल्पशरीरा आनूपा एव रुरुप्रभृतयः प्रधानतमाः । अल्पशरीरेष्विति अल्पशरीरा विष्किरा लावादयः, तेषु महाशरीराः; कृशमांसस्य निषिद्धत्वात् ॥ १२९ ॥

**स्थानादिकृतं मांसस्य गुरुलाघवमुपदेक्ष्यामः । तद्यथा-रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तरा गुरुतराः, तथा सक्थिस्कन्धक्रोडशिरःपादकरकटीपृष्ठचर्मकालेयकयकृदन्त्राणि ॥ १३० ॥**

**शिरः स्कन्धं कटी पृष्ठं सक्थिनी चात्मपक्षयोः ॥**
**गुरु पूर्वं विजानीयाद्धातवस्तु यथोत्तरम् ॥ १३१ ॥**
**सर्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृतः ॥**
**पूर्वभागो गुरुः पुंसामधोभागस्तु योषिताम् ॥१३२॥**
**उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम् ॥**
**पक्षोत्क्षेपात्समो दृष्टो मध्यभागस्तु पक्षिणाम् १३३**

स्थानादिकृतमित्यादि । रक्तादिधातूनां गुरुलाघवमुक्त्वेतरावयवानाह—तथेत्यादि । तथेति यथोत्तरं गुरवः । सक्थिनी ऊरू, स्कन्धो बाहुशिरः, क्रोडो हृदयस्थानं, पश्चाद्भागस्थितौ पादौ, अग्रिमभागस्थितौ करौ, कालेयकं वृक्कं, यकृत् कालखण्डं दक्षिणभागस्थितम् । द्वयं द्वयमधिकृत्याह—शिर इत्यादि । स्कन्धाच्छिरो गुरु, पृष्ठात् कटिः । सक्थिनी चात्मपक्षयोरिति सक्थिनी द्वे, ते चात्मपक्षयोः स्वांशयोर्यथापूर्वं गुरुणी ज्ञेये; तेन सक्थ्न उत्तरभागापेक्षया पूर्वो भागो गुरुरित्यर्थः । अन्ये तु 'आमपक्वयोः' इति पठन्ति, 'पक्वादाममांसं गुरु' इति व्याख्यानयन्ति; तन्न, **पञ्जिकाकाराभ्यां** दूषितत्वात् । **जेज्जटस्तु** शिर इत्यादि संग्रहश्लोकत्वेन पठति, तदपि **पञ्जिकाकारौ** न मन्येते । सर्वस्यापि शरीरस्य मध्ये को भागो गुरुरित्याह—सर्वस्येत्यादि । स्त्रीपुरुषविभागेनाह—पूर्वभाग इत्यादि । पूर्वभाग उपरिष्टाद्भागः । पक्षिणामाह—उरोग्रीवमित्यादि । सम इति नातिगुरुर्नातिलघुरित्यर्थः ॥ १३०–१३३ ॥

**अतीव रूक्षं मांसं तु विहङ्गानां फलाशिनाम्**
**बृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् ॥१३४॥**
**मत्स्याशिनां पित्तकरं वातघ्नं धान्यचारिनाम् ॥**

१ 'तत्र स्थानादिकृतं' इति पा० । २ 'तथाऽन्त्रयकृत्कालेयसक्थिकटिपृष्ठचरणशिरांसि । उरः स्कन्धौ कटीपृष्ठं सक्थिनी चामपक्वयोः' इति ताडपत्रपुस्तके पाठः । ३ 'सक्थिमांसाद्गुरुः स्कन्धस्ततः क्रोडस्ततः शिरः । वृषणौ चर्म मेढ्रं च श्रोणी वृक्कौ यकृद्गुदम्' इति चरकः ( सू. अ. २७ ) ॥ ४ अस्याग्रे 'आत्मपक्षग्रहणमन्यत्रापि संबंधनीयम् । धातवस्तु यथोत्तरमित्यत्र रक्तस्य पूर्वभागापेक्षया उत्तरो भागो गुरुः, मांसस्य पूर्वभागापेक्षया उत्तरभागो गुरुरित्यादि' इत्यधिकः पाठ उपलभ्यते क्वचिद्धस्तलिखितपुस्तके । ५ 'धन्वचारिणाम्' इति पा० ।

आहारविशेषेणापि मांसेषु रौक्ष्यादिविशेषमाह–अतीवेत्यादि। फलाशिनां मांसमितरमांसापेक्षया रूक्षम् ॥ १३४ ॥—

**जलजानूपजा ग्राम्या क्रव्यादैकशफास्तथा ॥ १३५ ॥**
**प्रसहा बिलवासाश्च ये च जङ्गालसंज्ञिताः ॥**
**प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम् ॥**
**अल्पाभिष्यन्दिनश्चैव यथापूर्वमतोऽन्यथा ॥ १३६ ॥**

उक्तवर्गाणां गुरुलाघवमाह—जलजेत्यादि । अतोऽस्माल्लघुत्वादल्पाभिष्यन्दित्वाच्च । अन्यथेति महाभिष्यन्दिनो गुरवश्चेत्यर्थः ॥ १३५ ॥ १३६ ॥

**प्रमाणाधिकास्तु स्वजातावल्पसारा गुरवश्च । सर्वप्राणिनां सर्वशरीरेभ्यः प्रधानतमा भवन्ति यकृत्प्रदेशवर्तिनस्तानाददीत; प्रधानालाभे मध्यमवयस्कं सद्यस्कमक्लिष्टमुपादेयं मांसमिति ॥१३७॥**

प्रमाणेत्यादि । स्वजातौ आत्मीयजातौ । अल्पसाराः तुच्छबला इत्यर्थः । सत्यां कृत्स्नशरीरप्राप्तौ गुणवच्छरीरावयवग्रहणं निर्दिशन्नाह—सर्वेत्यादि । यकृत्प्रदेशवर्तिशब्देन यकृत्प्रदेशे या दीर्घाकारा मांसवर्तयो भवन्ति ता इह गृह्यन्ते; एतेन समस्तशरीरप्राप्तावपि विशिष्टशरीरावयवग्रहणमुक्तम् । अन्ये तु 'सर्वप्राणिनां सर्वशरीरेभ्यः प्रधानतमा या वर्तिर्भवति तामाददीत' इति पठन्ति; 'मांसलेष्ववकाशेषु या वर्तयो भवन्ति ता ग्राह्या' इति व्याख्यानयन्ति । तदलाभे मध्यमवयःस्थं सामान्यदेशजमपि ग्राह्यमित्याह—प्रधानालाभे इत्यादि । मध्यमवयस्थं मांसमिति मध्यमवयःस्थस्य प्राणिन इत्यर्थः । अन्ये 'मध्यं वयःस्थं' इति पठन्ति, व्याख्यानयन्ति च–मध्यं ग्राह्यमिति तद्वयःस्थस्य तरुणस्येत्यर्थः । सद्यस्कं सद्योहतमांसम् । अक्लिष्टं मनोऽनुकूलम् ॥ १३७ ॥

**भवति चात्र—**

**चरः शरीरावयवाः स्वभावो धातवः क्रिया ॥**
**लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते[1] १३८**

**इति मांसवर्गः ।**

इदानीमुक्तं सर्वं गुरुलाघवहेतुं सुखस्मरणार्थमेकीकृत्य श्लोकेन निर्दिशन्नाह—चर इत्यादि । परीक्ष्यत इति चरादिभिः सर्वैः प्रत्येकं संबध्यते । चरशब्दोऽत्राहारविहारयोर्वर्तते; तद्यथा—कस्मिन् देशेऽयं विहरति धन्वनि अनूपे वा जले वा वियति वा; किं पुनरयमाहरति अतिगुर्वतिलघु वा, शीतमुष्णं वा, स्निग्धं रूक्षं वा; तत्तदाहारविहारगुणभावितशरीरधातोर्मृगस्य पक्षिणो वा तत्तद्गुणमेव मांसमिति भावः । आहारो यथा—'शष्पशैवालभोजना' इत्यादि । विहारो यथा—'अतीवासन्ननिलया' इत्यादि । शरीरावयवाः परीक्ष्यन्ते; तद्यथा—'उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम्' इत्यादि । स्वभावो यथा–'स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः' इति । स्वभावोऽत्राचार्येण नोक्तः, सर्वत्रैव चरादिष्वष्टास्वपि स्वभावस्यानुषङ्गात् । 'धातवस्तु यथोत्तरम्' इत्यादि धातुपरीक्षा । क्रिया यथा—'उरोविचरणात्तेषां पूर्वमङ्गं लघु स्मृतम्' इत्यादि । लिङ्गं यथा—'स्त्रियश्चतुष्पादेषु, पुमांसो विहङ्गेषु' इति । प्रमाणमिति 'महाशरीरेष्वल्पशरीरा' इत्यादि । संस्कारो यथा—'स्नेहगोरसधान्याम्लफलाम्लैरम्लितं च यत् । यथोत्तरं लघु' इत्यादि । मात्रा चास्मिन्निति 'गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते'; मात्रा चेति चकारादग्निरपि परीक्ष्यते, तेनाग्निबलापेक्षिणी द्रव्यगुरुलाघवापेक्षिणी च मात्रा । तदेवं चरादीन् परीक्ष्य मांसेषु गुरुलाघवं वाच्यमित्यर्थः । इति मांसवर्गः ॥ १३८ ॥

**अथ फलवर्गः ।**

**अत ऊर्ध्वं फलान्युपदेक्ष्यामः[1] । तद्यथा—दाडिमामलकबदरकोलकर्कन्धुसौवीरसिञ्चितिकाफलकपित्थमातुलुङ्गा[2]म्राम्रातककरमर्दप्रियालनारङ्गजम्बीरलकुचभव्यपारावतवेत्रफलप्राचीनामलकतिन्तिडीकनीपकोशाम्राम्लीकाप्रभृतीनि ॥ १३९ ॥**

दाडिमेत्यादि । दाडिमामलके प्रसिद्धे; बदरं महत्; कोलं मध्यप्रमाणं बदरं; कर्कन्धु अल्पं; सौवीरं महत्तममामपक्वावस्थासु मधुरं मरुदेशजं; सिंचितिकाफलं तद्भेद एवातिमधुरो मुष्टिप्रमाण उत्तरापथजः; कपित्थं स्वनामप्रसिद्धं; मातुलुङ्गं बीजपूरकं; आम्रं प्रसिद्धम्; आम्रातकमाम्रफलसदृशम् 'अम्राटकं' इति लोके; करमर्दः स्वनामप्रसिद्धः; प्रियालश्चारो मधुराम्लफलः प्रायशो मगधेषु; नारङ्गजम्बीरलकुचानि प्रसिद्धानि; भव्यमारुकं कार्तिकेयपुरे प्रसिद्धम्, अन्ये तु कर्मरङ्गफलं[3] भव्यमाहुः, 'भव्यं तालफलोपमं केवलवल्कलसंहतिमात्रम्' इत्यपरे; पारावतः कामरूपे फलं पाककाले धवललोहितं मधुराम्लं च; वेत्रफलं पद्मबीजसमं; प्राचीनामलकं प्राग्देशोद्भवं 'पानीयामलकं' इति लोके; तिन्तिडीकं वृक्षाम्लं; नीपं कदम्बफलं; कोशाम्रं 'कौसिम्ब' इति प्रसिद्धं; अम्लिका प्रसिद्धा चिंचा वक्रफला; प्रभृतिग्रहणादेवंजातीयान्यन्यान्यपि ॥ १३९ ॥

**अम्लानि रसतः पाके गुरूण्युष्णानि वीर्यतः ॥**
**पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणि च ॥ १४० ॥**

तेषां सामान्यगुणमाह—अम्लानीत्यादि । अम्लानि अम्लरसोत्कटानि ॥ १४० ॥

**कषायानुरसं तेषां दाडिमं नातिपित्तलम् ॥**
**दीपनीयं रुचिकरं हृद्यं वर्चोविबन्धनम् ॥ १४१ ॥**
**द्विविधं तत्तु विज्ञेयं मधुरं चाम्लमेव च ॥**
**त्रिदोषघ्नं तु मधुरमम्लं वातकफापहम् ॥ १४२ ॥**

एषां केषांचिद्गुणविशेषमाह—कषायानुरसमित्यादि । नातिपित्तलमिति अम्लदाडिमफलविशेषणम्, ईषत् पित्तकरमि-

१ 'परीक्षिता' इति पा० ।

१ 'फलवर्गानुपदेक्ष्यामः' इति पा० । २ '°मातुलिङ्गा°' इति पा० । ३ 'चर्मरङ्गफलं' इति पा० ।

त्यर्थः । चरकेऽपि 'सर्वं पित्तलमम्लमन्यत्र दाडिमामलकात्' (च. सू. अ. २७) इत्यत्र भट्टारहरिचन्द्रेण दाडिमग्रहणं निरस्य 'अन्यत्रामलकात्' इत्येष एव पाठः पुरस्कृत इति पञ्जिकाकारौ, जेज्झटस्तु 'अम्लं दाडिमं पित्तं न करोति न शमयति' इति व्याख्यानयति, ईषत्पित्तलपाठं च युक्तं मन्यते । सर्वमपि मधुराम्लं; मधुररसोत्कटं[1] मधुरमित्युच्यते, अम्लरसोत्कटमम्लमित्युच्यत इति द्विविधम् ॥ १४१॥१४२ ॥

**अम्लं समधुरं तिक्तं कषायं कटुकं सरम् ॥**
**चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् ॥ १४३ ॥**
**हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः ॥**
**कफं रूक्षकषायत्वात् फलेभ्योऽभ्यधिकं च तत् १४४**
**कर्कन्धुकोलबदरमामं पित्तकफावहम् ॥**
**पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम् ॥ १४५ ॥**
**पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु ॥**
**सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित् ॥ १४६ ॥**
**कषायं स्वादु संग्राहि शीतं सिञ्चितिकाफलम् ॥**
**आमं कपित्थमस्वर्यं कफघ्नं ग्राहि वातलम् ॥ १४७ ॥**
**कफानिलहरं पक्वं मधुराम्लरसं गुरु ॥**
**श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् ॥ १४८ ॥**

अम्लमित्यादि । फलेभ्योऽभ्यधिकं च तदिति अपरेभ्यः फलेभ्यो यदामलकीफलं तद्गुणेन कलाऽधिकमित्यर्थः । आमलके प्रभावान्न समानगुणैः कोपः ॥ १४३—१४८ ॥

**लघ्वम्लं दीपनं हृद्यं मातुलुङ्गमुदाहृतम् ॥**
**त्वक् तिक्ता दुर्जरा तस्य वातक्रिमिकफापहा ॥ १४९ ॥**
**स्वादु शीतं गुरु स्निग्धं मांसं मारुतपित्तजित् ॥**
**मेध्यं शूलानिलच्छर्दिकफारोचकनाशनम् ॥ १५० ॥**
**दीपनं लघु संग्राहि गुल्मार्शोघ्नं तु केसरम् ॥**
**शूलाजीर्णविबन्धेषु मन्देऽग्नौ कफमारुते ॥ १५१ ॥**
**अरुचौ च विशेषेण रसस्तस्योपदिश्यते ॥**

मांसं कटाहमित्यर्थः । मेध्यं मेधायै हितम् । केशरं बीजपूरान्तर्गतं तन्तुजालं 'बडुडी' इति लोके ॥ १४९—१५१ ॥—

**पित्तानिलकरं बालं पित्तलं बद्धकेसरम् ॥ १५२ ॥**
**हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् ॥**
**कषायानुरसं स्वादु वातघ्नं बृंहणं गुरु ॥ १५३ ॥**
**पित्ताविरोधि संपक्वमाम्रं शुक्रविवर्धनम् ॥**
**बृंहणं मधुरं बल्यं गुरु विष्टभ्य जीर्यति ॥ १५४ ॥**
**आम्रातकफलं वृष्यं सस्नेहं श्लेष्मवर्धनम् ॥**

पित्तेत्यादि । बद्धकेशरं बद्धतन्तुजालम् । पित्ताविरोधीति ईषत् पित्तविरोधि ईषत् पित्तशमनमित्यर्थः; अन्ये पित्तलं भवतीत्याहुः ॥ १५२—१५४ ॥—

**त्रिदोषविष्टम्भकरं लकुचं शुक्रनाशनम् ॥ १५५ ॥**

त्रिदोषेत्यादि । सवाततोदशूला मलस्याप्रवृत्तिर्विष्टम्भः, अन्ये गुडगुडाशब्दमाहुः ॥ १५५ ॥

**अम्लं तृषापहं रुच्यं पित्तकृत् करमर्दकम् ॥**
**वातपित्तहरं वृष्यं प्रियालं गुरु शीतलम् ॥ १५६ ॥**
**हृद्यं स्वादु कषायाम्लं भव्यमास्यविशोधनम् ॥**
**पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीतलम् ॥ १५७ ॥**
**पारावतं समधुरं रुच्यमत्यग्निवातनुत् ॥**
**गरदोषहरं नीपं प्राचीनामलकं तथा ॥ १५८ ॥**
**वातापहं तिन्तिडीकमामं पित्तबलासकृत् ॥**
**ग्राह्युष्णं दीपनं रुच्यं संपक्वं कफवातनुत् ॥ १५९ ॥**
**तस्मादल्पान्तरगुणं कोशाम्रफलमुच्यते ॥**
**अम्लीकायाः फलं पक्वं तद्वद्भेदि तु केवलम् ॥ १६० ॥**
**अम्लं समधुरं हृद्यं विशदं भक्तरोचनम् ॥**
**वातघ्नं दुर्जरं प्रोक्तं नारङ्गस्य फलं गुरु ॥ १६१ ॥**
**तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणम् ॥**
**वातश्लेष्मविबन्धघ्नं जम्बीरं गुरु पित्तकृत् ॥**
**ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥ १६२ ॥**

अम्लमित्यादि । गरदोषहरमिति गरहरं त्रिदोषहरं च । दुर्जरं दुःखमुत्पाद्य पाकं गच्छति । गुरु चिरपाकि । तृष्णेत्यादि । इमं जम्बीरगुणपाठं पञ्जिकाकारो न मन्यते, 'ऐरावतं दन्तशठमम्लं शोणितपित्तकृत्' इति दन्तशठशब्देन जम्बीरस्य वक्ष्यमाणत्वात्; 'जम्बीरनानाविधत्वादुभयपाठ' इत्यन्ये ॥ १५६—१६२ ॥

**क्षीरवृक्षफलजाम्बवराजादनतोदनशीतफलतिन्दुकबकुलधन्वनाश्मन्तकाश्वकर्णफल्गुपरूषकगाङ्गेरुकीपुष्करवर्तिबिल्वबिम्बीप्रभृतीनि ॥ १६३ ॥**

कषायरसप्रायमाह—क्षीरवृक्षेत्यादि । क्षीरवृक्षा न्यग्रोधोदुम्बराश्वत्थप्लक्षादयः; जाम्बवं जम्बूः; राजादनं क्षीरिका; तोदनं राजप्रियं; शीतफलं 'रावणाम्लिका' इति प्रसिद्धं, 'काश्मीराम्लिका' इत्येके; तिन्दुकः कालसारो वृक्षः; बकुलः स्वनामप्रसिद्धः; धन्वनं धनुर्वृक्षफलं 'धामण' इति लोके; अश्मन्तको यमलपत्रकः 'आसन्त' इति लोके; अश्वकर्णः पूर्वदेशे गन्धमुण्डोऽश्वत्थसदृशः; फल्गुः काकोदुम्बरिका, 'कदुम्बरी'[3] इति लोके । परूषकोऽल्पास्थिर्मृदुफलः 'फालसा' इति लोके; गाङ्गेरुकी नागबला; पुष्करवर्तिः 'आमोदं' इत्युत्तरापथे; बिल्वः प्रसिद्धः; बिम्बी कुन्दुरिका । प्रभृतिग्रहणात् टङ्कादयः ॥ १६३ ॥

**फलान्येतानि शीतानि कफपित्तहराणि च ॥**
**संग्राहकाणि रूक्षाणि कषायमधुराणि च ॥ १६४ ॥**

एषां सामान्यगुणमाह—फलान्येतानीत्यादि ।

१ 'कषायं मधुररसोत्कटं' इति पा० ।

१ 'शुष्कं' इति पा० । २ 'फरसनाम' इति पा० । ३ 'कदुरिका' इति पा० ।

क्षीरवृक्षफलं तेषां गुरु विष्टम्भि शीतलम् ॥
कषायं मधुरं साम्लं नातिमारुतकोपनम् ॥ १६५ ॥
अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ॥
स्निग्धं स्वादु कषायं च राजादनफलं गुरु ॥ १६६ ॥
कषायं मधुरं रूक्षं तोदनं कफवातजित् ॥
अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्धनम् १६७
आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ॥
विपाके गुरु संपक्वं मधुरं कफपित्तजित् ॥ १६८ ॥
मधुरं च कषायं च स्निग्धं संग्राहि बाकुलम् ॥
स्थिरीकरं च दन्तानां विशदं फलमुच्यते ॥ १६९ ॥
सकषायं हिमं स्वादु धान्वनं कफवातजित् ॥
तद्वद्राक्षेरुकं विद्यादश्मन्तकफलानि च ॥ १७० ॥
विष्टम्भि मधुरं स्निग्धं फल्गुजं तर्पणं गुरु ॥
अत्यम्लमीषन्मधुरं कषायानुरसं लघु ॥ १७१ ॥
वातघ्नं पित्तजननमामं विद्यात् परुषकम् ॥
तदेव पक्वं मधुरं वातपित्तनिवर्हणम् ॥ १७२ ॥
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ॥
पौष्करं स्वादु विष्टम्भि बल्यं कफकरं फलम् १७३
कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ॥
कटुतिक्तकषायोष्णं बालं बिल्वमुदाहृतम् ॥ १७४ ॥
विद्यात्तदेव संपक्वं मधुरानुरसं गुरु ॥
विदाहि विष्टम्भकरं दोषकृत् पूतिमारुतम् ॥१७५॥
बिम्बीफलं साश्वकर्णं स्तन्यकृत् कफपित्तजित् ॥
तृड्दाहज्वरपित्तासृक्कासश्वासक्षयापहम् ॥ १७६ ॥

तेषां केषांचिद्गुणविशेषमाह—क्षीरवृक्षफलमित्यादि । पूतिमारुतमिति पूतिः सुगन्धिर्मारुतो यस्येति तत् पूतिमारुतम् । पूतिशब्दोऽयं सुगन्धिवाची; यथा—पूतिः खट्वाशः, वनजा मधुकर्कटी पूतिपुष्पेति सुगन्धिपुष्पेत्यर्थः; एतेन पूतिमारुतं सुगन्धिगन्धं पक्वं भवतीत्यर्थः । केचिद्विगन्धिकुक्षिमारुतकरमित्याहुः, तन्नेच्छति **गयी** । बालपक्वयोर्मध्ये केचित् पठन्ति—'तद्वद्विद्यादसंपक्वं मधुरानुरसं गुरु' इति मध्यावस्थगुणम् । केचिद् 'बालं बिल्वमुदाहृतम्' इत्यस्य स्थाने 'आमं बिल्वमुदाहृतम्' इति पठन्ति; तन्नेच्छति **गयी** ॥ १६४—१७६ ॥

तालनालिकेरपनसमोचप्रभृतीनि ॥ १७७ ॥

मधुरफलान्याह—तालेत्यादि । ताडः( लः ) ताडी; नालिकेरः स्वनामप्रसिद्धाः; पनसो बहिःकण्टकी महाफलः 'कटीहल' इति लोके; मोचः कदलीफलम् । प्रभृतिग्रहणादेवंजातीयान्यन्यानि ॥ १७७ ॥

स्वादुपाकरसान्याहुर्वातपित्तहराणि च ॥
बलप्रदानि स्निग्धानि बृंहणानि हिमानि च ॥१७८॥

तेषां सामान्यगुणमाह—स्वाद्वित्यादि ॥ १७८ ॥

१ 'गुरु' इति पा० ।

फलं स्वादुरसं तेषां तालजं गुरु पित्तजित् ॥
तद्बीजं स्वादुपाकं तु मूत्रलं वातपित्तजित् ॥ १७९ ॥
नालिकेरं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् ॥
बलमांसप्रदं हृद्यं बृंहणं बस्तिशोधनम् ॥ १८० ॥
पनसं सकषायं तु स्निग्धं स्वादुरसं गुरु ॥
मौचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् ॥
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥ १८१ ॥

तेषां कस्यचिद्गुणविशेषमाह—फलमित्यादि ॥१७९-१८१॥

द्राक्षाकाश्मर्यमधूकपुष्पखर्जूरप्रभृतीनि ॥ १८२ ॥

अपराण्यपि मधुराण्याह—द्राक्षेत्यादि । द्राक्षा प्रसिद्धा; काश्मर्यं गम्भारीफलं; मधूकं प्रसिद्धं; खर्जूरं द्विविधं वृक्षविटपभेदेन, त्रिविधमित्यपरे, त्रैविध्यं च वृक्षखर्जूरं द्विविधमिति कृत्वा, तत्र पारसीकेषु देशेषु महत्प्रमाणं स्वादु भिन्नं पिण्डखर्जूरमित्यतो हेतोः ॥ १८२ ॥

रक्तपित्तहराण्याहुर्गुरूणि मधुराणि च ॥

तेषां सामान्यगुणमाह—रक्तेत्यादि ॥—

तेषां द्राक्षा सरा स्वर्या मधुरा स्निग्धशीतला १८३
रक्तपित्तज्वरश्वासतृष्णादाहक्षयापहा ॥
हृद्यं मूत्रविबन्धघ्नं पित्तासृग्वातनाशनम् ॥ १८४ ॥
केश्यं रसायनं मेध्यं काश्मर्यं फलमुच्यते ॥
क्षतक्षयापहं हृद्यं शीतलं तर्पणं गुरु ॥ १८५ ॥
रसे पाके च मधुरं खार्जूरं रक्तपित्तनुत् ॥
बृंहणीयमहृद्यं च मधूककुसुमं गुरु ॥
वातपित्तोपशमनं फलं तस्योपदिश्यते ॥ १८६ ॥

तेषां केषांचिद्गुणविशेषमाह—तेषामित्यादि ॥ १८३—१८६ ॥

वातामाक्षोडाभिषुकनिचुलपिचुनिकोचकोरुमाणप्रभृतीनि ॥ १८७ ॥

अपरानपि मधुरफलविशेषानेकजातीयानाह—वातामेत्यादि । वातामादीन्युरुमाणान्तान्युत्तरापथे जातानि, तत्रैव प्रसिद्धानि । केचिद्व्याख्यानयन्ति—तत्र वातामो मज्जमधुरस्निग्धो दीर्घाकारः; अक्षोडो मदनफलाकारफलो मध्ये किंचिदुन्नतरेखान्वितः पर्वतपिलुः 'अखरोट्' इति लोके; अभिषुकः 'अभिषुः' इति लोके, निकोचकमौत्तरापथिकं कोल्लकफलमुत्तरापथादवगन्तव्यम् । प्रभृतिग्रहणाल्लवलीफलानि ॥ १८७ ॥

पित्तश्लेष्महराण्याहुः स्निग्धोष्णानि गुरूणि च ॥
बृंहणान्यनिलघ्नानि बल्यानि मधुराणि च ॥ १८८ ॥

तेषां सामान्यगुणमाह-पित्तश्लेष्महराण्याहुरित्यादि ॥१८८॥

कषायं कफपित्तघ्नं किंचित्तिक्तं रुचिप्रदम् ॥

१ 'खण्डखर्जूरं' इति पा० । २ 'पित्तासृग्दाहनाशनम्' इति पा० । ३ 'बृंहणं शीतलं गुरु । वृष्यं स्निग्धं समधुरं' इति ताडपत्रपुस्तके पा० । ४ '°मुकुल°' इति पा० ।

हृद्यं सुगन्धि विशदं लवलीफलमुच्यते ॥ १८९ ॥

तेषां मध्ये केषांचिद्गुणविशेषमाह—कषायमित्यादि । लवलीफलं सुगन्धिफलं स्वनामप्रसिद्धम् । तल्लक्षणमुच्यते,—'घनस्निग्धा हरितांशुः प्रपुन्नाटसदृक्च्छदा । सुगन्धिमूला लवली पाण्डुकोमलवल्कला" इति ॥ १८९ ॥

वसिरं शीतपाक्यं च सारुष्करनिबन्धनम् ॥
विष्टम्भि दुर्जरं रूक्षं शीतलं वातकोपनम् ॥ १९० ॥
विपाके मधुरं चापि रक्तपित्तप्रसादनन् ॥

वसिरादीनां गुणमाह—वसिरमित्यादि । वसिरं सूर्यावर्तफलं देशान्तरे ज्ञेयमित्यर्थः । शीतपाक्यं बलाफलम् । अरुष्करनिबन्धनं भल्लातकवृन्तम् ॥ १९० ॥—

ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥ १९१ ॥
शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु ॥
स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमैङ्गुदम् ॥ १९२ ॥
शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ॥
गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥ १९३ ॥

ऐरावतदन्तशठयोर्गुणमाह—ऐरावतमित्यादि । ऐरावतमैरावणिका कृष्णलोहिताल्पफला । दन्तशठं जम्बीरफलम्, अन्ये जम्बीरभेदमाहुः । टङ्कं काश्मीरे स्वनामप्रसिद्धं बहुप्रकारम् । ऐङ्गुदमिङ्गुदीफलम्, अन्ये पुत्रजीवकमाहुः । शमीफलमिति शमीफलं सङ्गरमुच्यते ॥ १९१-१९३ ॥

करीराक्षिकपीलूनि तृणशून्यफलानि च ॥
स्वादुतिक्तकटूष्णानि कफवातहराणि च ॥ १९४ ॥

करीरादिगुणमाह—करीरेत्यादि । करीरो मरुजद्रुमः स्वनामख्यातः; आक्षिकमक्षिकीफलं; पीलु पीलुफलम् । तृणशून्यं मल्लिका, केतकीफलमित्यन्ये । तेषां सामान्यगुणमाह—स्वादुतिक्तमित्यादि ॥ १९४ ॥

तिक्तं पित्तकरं तेषां सरं कटुविपाकि च ॥
तीक्ष्णोष्णं कटुकं पीलु सस्नेहं कफवातजित् १९५

तेषां मध्ये पीलुगुणमाह—तिक्तमित्यादि ॥ १९५ ॥

आरुष्करं तौवरकं कषायं कटुपाकि च ॥
उष्णं कृमिज्वरानाहमेहोदावर्तनाशनम् ॥
कुष्ठगुल्मोदरार्शोघ्नं कटुपाकि तथैव च ॥ १९६ ॥

आरुष्करतौवरफलगुणमाह—आरुष्करमित्यादि । तुवरकः पश्चिमोदधितीरे ॥ १९६ ॥

करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहनुत् ।
अङ्कोलस्य फलं विस्रं गुरु श्लेष्महरं हिमम् ॥१९७॥
रूक्षोष्णं कटुकं पाके लघु वातकफापहम् ॥
तिक्तमीषद्विषहितं विडङ्गं कृमिनाशनम् ॥ १९८ ॥

करञ्जादीनाह—करञ्जेत्यादि । करञ्जो वृक्षकरञ्जः; किंशुकः पलाशः; अरिष्टो निम्बः । अत्र जन्तुशब्दो विंशतिकृमिवाची । विडङ्गमाह—रूक्षोष्णमित्यादि ॥ १९७ ॥ १९८ ॥

व्रण्यमुष्णं सरं मेध्यं दोषघ्नं शोफकुष्ठनुत् ॥
कषायं दीपनं चाम्लं चक्षुष्यं चाभयाफलम् ॥१९९॥

हरीतकीमाह—व्रण्यमित्यादि । व्रणेभ्यो हितं व्रण्यम् । चक्षुषे हितं चक्षुष्यम् ॥ १९९ ॥

भेदनं लघु रूक्षोष्णं वैस्वर्यक्रिमिनाशनम् ॥
चक्षुष्यं स्वादुपाक्याक्षं कषायं कफपित्तजित् २००

बिभीतकफलगुणमाह—भेदनमित्यादि । स्वादुपाक्याक्षमिति आक्षं बिभीतकफलं; कीदृक्? स्वादुपाकि ॥ २०० ॥

कफपित्तहरं रूक्षं वक्त्रक्लेदमलापहम् ॥
कषायमीषन्मधुरं किंचित् पूगफलं सरम् ॥ २०१ ॥

पूगफलमाह—कफपित्तहरमित्यादि ॥ २०१ ॥

जातीकोशोऽथ कर्पूरं जातीकटुकयोः फलम् ॥
कक्को(ङ्को)लकं लवङ्गं च तिक्तं कटु कफापहम् २०२
लघु तृष्णापहं वक्त्रक्लेददौर्गन्ध्यनाशनम् ॥

जातीकोशादीन्याह—जातीकोश इत्यादि । जातीकोशो जातीपत्रिका 'जातिवनी' इति लोके । कर्पूरं प्रसिद्धम् । जातीकटुकयोः फलमिति जातीफलं प्रसिद्धं; कटुकाफलं लताकस्तूरिकेति **पञ्जिकाकारौ, श्रीब्रह्मदेवस्तु** लघुकक्को(ङ्को)लकमाह; कक्को(ङ्को)लकं बृहत्कक्को(ङ्को)लम् । लवङ्गं श्रीचन्दनपुष्पम् ॥२०२॥—

सतिक्तः सुरभिः शीतः कर्पूरो लघु लेखनः ॥२०३॥
तृष्णायां मुखशोषे च वैरस्ये चापि पूजितः ॥

तेषां मध्ये कर्पूरगुणमाह—सतिक्त इत्यादि ॥ २०३ ॥—

लताकस्तूरिका तद्वच्छीता बस्तिविशोधनी ॥२०४॥

लताकस्तूरिकामाह—लताकस्तूरिकेत्यादि । लताकस्तूरिका दक्षिणापथे विटपः, शंकुनापितुल्यः । बस्तिविशोधनी बस्तिविबन्धघ्नी ॥ २०४ ॥

प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥
वैभीतको मदकरः कफमारुतनाशनः ॥ २०५ ॥
कषायमधुरो मज्जा कोलानां पित्तनाशनः ॥
तृष्णाच्छर्द्यनिलघ्नश्च तद्वदामलकस्य च ॥ २०६ ॥
बीजपूरकशम्याकमज्जा कोशाम्रसंभवः ॥
स्वादुपाकोऽग्निबलदः स्निग्धः पित्तानिलापहः २०७

फलानां मज्जानमाह—प्रियालेत्यादि । प्रियालमज्जा 'चारुली' इति लोके प्रसिद्धः । शम्पाकः किरमालकः ॥ २०५-२०७ ॥

यस्य यस्य फलस्येह वीर्यं भवति यादृशम् ॥
तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत् ॥ २०८ ॥

अनुक्तफलमज्जानमाह—यस्येत्यादि । यस्य यस्य फलस्य

---

१ 'विष्टम्भि शीतं रूक्षं च वातपित्तप्रकोपणम्' इति ताडपत्रपुस्तके पा० ।

१ 'शकुलापीतुल्यः' इति पा० ।

ये गुणा यानि कर्माणि चोक्तानि तस्य मज्जोऽपि तान्येव गुणकर्माणि वदेदित्यर्थः, येन कुर्वन्ति तद्वीर्यम् ॥ २०८ ॥

**फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् ॥**
**बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणोत्तरम् ॥**
**ग्राह्युष्णं दीपनं तद्धि कषायकटुतिक्तकम् ॥ २०९ ॥**

किंचिद्विशेषमाह—फलेष्वित्यादि । हि यस्मादर्थे । गुणोत्तरं गुणोत्कृष्टम् । तद्धीति तद् बिल्वं, हि यस्मादर्थे, गुणोत्तरं गुणोत्कृष्टम् । ग्राह्युष्णं दीपनं तद्धीति तत् बिल्वं, हि स्फुटम् ॥ २०९ ॥—

**व्याधितं कृमिजुष्टं च पाकातीतमकालजम् ॥**
**वर्जनीयं फलं सर्वमपर्यागतमेव च ॥ २१० ॥**

**इति फलवर्गः ।**

फलेषु हेयादिदोषज्ञापनार्थमाह—व्याधितमित्यादि । जुष्टं सेवितं; केचित् 'जग्धं' इति पठन्ति, तत्र जग्धं भक्षितमित्यर्थः । पाकातीतं पाकादतीतमतिगतमतीतपाककालमित्यर्थः । अकालजम् अनुचितकालोत्पन्नम् । अपर्यागतम् अपक्वम् । इति फलवर्गः ॥ २१० ॥

**अथ शाकवर्गः ।**

**शाकान्यत ऊर्ध्वं वक्ष्यामः[1] ।—**
**तत्र पुष्पफलालाबुकालिन्दकप्रभृतीनि ॥ २११ ॥**

तत्रेत्यादि । पुष्पफलं कूष्माण्डकः; अलाबूः तुम्बिनी, सा च दीर्घवर्तुलादिभेदादनेकधा; कालिन्दं कृष्णबीजं कूष्माण्डसदृशं 'कलिन्द' इति लोके । प्रभृतिग्रहणादेवंविधान्यपराण्यपि॥२११॥

**पित्तघ्नान्यनिलं कुर्युस्तथा मन्दकफानि च ॥**
**सृष्टमूत्रपुरीषाणि स्वादुपाकरसानि च ॥ २१२ ॥**

एषां सामान्यगुणमाह—पित्तघ्नानीत्यादि । सृष्टमूत्रपुरीषाणि मूत्रपुरीषप्रवृत्तिकराणि ॥ २१२ ॥

**पित्तघ्नं तेषु कूष्माण्डं बालं मध्यं कफावहम् ॥**
**शुक्लं लघूष्णं सक्षारं दीपनं बस्तिशोधनम् ॥२१३॥**
**सर्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम् ॥**
**दृष्टिशुक्रक्षयकरं कालिन्दं कफवातकृत् ॥ २१४ ॥**
**अलाबुर्भिन्नविट्का तु रूक्षा गुर्व्यतिशीतला ॥**
**तिक्तालाबुरहृद्या तु वामिनी वातपित्तजित्॥२१५॥**

तेषां विशिष्टमपि गुणमाह—पित्तघ्नमित्यादि । कफमावहति करोतीति कफावहम् । शुक्लं कार्पासवर्णं परिपक्वमित्यर्थः । सक्षारमीषत्क्षारम् । बस्तिशोधनं बस्तिविबन्धघ्नम् । सर्वदोषहरमिति सर्वग्रहणं रक्तोपसंग्रहार्थं; 'सर्वदोषसहं' इत्यन्ये पठन्ति, तत्रायमर्थः—न करोति न शमयतीत्यर्थः । हृद्यं हृदयाय हितम् । चेतोविकारिणामिति चेतोविकारा उन्मादापस्मारमूर्च्छामदादयः । भिन्नविट्का द्रवमला ॥ २१३–२१५ ॥

**त्रपुसैर्वारुकर्कारुकशीर्णवृन्तप्रभृतीनि ॥ २१६ ॥**

अपराण्यपि फलशाकान्याह—त्रपुसेत्यादि । त्रपुसं सुधावासः, 'तेवसा' इति लोके; ऐर्वारुर्लोमशा कर्कटी; कर्कारुर्वाऽवं त्रपुषं 'खरबारू' इति लोके; शीर्णवृन्तं सुवासकं त्रपुसभेदः, अन्ये तु शीर्णवृन्तं कर्बुरमाहुः, एके तु शीर्णवृन्तं पाकावस्थायां यस्य वृन्तं शटितं भवतीत्यर्थः, अपरे तु कर्बुरभेदं खुदपुत्रकमाहुः; प्रभृतिग्रहणाद् बालपाण्डुवस्थायां गृह्यते ॥ २१६ ॥

**स्वादुतिक्तरसान्याहुः कफवातकराणि च ॥**
**सृष्टमूत्रपुरीषाणि रक्तपित्तहराणि च ॥ २१७ ॥**

तेषां सामान्यगुणमाह—स्वाद्वित्यादि ॥ २१७ ॥

**बालं सनीलं त्रपुसं तेषां पित्तहरं स्मृतम् ॥**
**तत्पाण्डु कफकृज्जीर्णमम्लं वातकफापहम् ॥२१८॥**
**ऐर्वारुकं[2] सकर्कारु संपक्वं कफवातकृत् ॥**
**सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम् ॥ २१९ ॥**

तेषां केषांचिद्गुणविशेषमाह—बालमित्यादि । अयं परिपक्वस्य गुणः, अपक्वस्य तु सामान्यगुणाः ॥ २१८ ॥ २१९ ॥

**सक्षारं मधुरं चैव शीर्णवृन्तं कफापहम् ॥**
**भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु ॥ २२० ॥**

शीर्णवृन्तस्यावस्थात्रयेण गुणमाह—सक्षारमित्यादि । सक्षारमित्यादयो बालस्य गुणाः, भेदनादयो मध्यस्य, आनाहेत्यादि जीर्णस्य । आनाह आमपक्वाशयजो द्विविधः; अष्ठीला मूत्राष्ठीला न पुनरनिलाष्ठीला, शीर्णवृन्तस्य मूत्रविकारहारित्वादवस्थात्रयेऽपि; आनाहश्चाष्ठीला चानाहाष्ठीलं, तन्नुदतीति ॥ २२० ॥

**पिप्पलीमरिचशृङ्गवेरार्द्रकहिङ्गुजीरककुस्तुम्बुरुजम्बीरसुमुखसुरसार्जकभूस्तृणसुगन्धककासमर्दककालमालकुठेरकक्षवककखरपुष्पशिग्रुमधुशिग्रुफणिज्झकसर्षपराजिकाकुलाहलावगुत्थगण्डीरतिलपर्णिकावर्षाभूचित्रकमूलकलशुनकलायपलाण्डुप्रभृतीनि ॥ २२१ ॥**

वृद्धाः पिप्पल्यादीनि वर्गीकृत्य पठन्ति; तत्र किंचित् संस्कारकं, किंचिच्छाकं, किंचिद्भेषजं, किंचिदाहारयोगीति, तान्येवाह—पिप्पलीत्यादि ।—पिप्पलीमरिचे द्वे प्रसिद्धे; शृङ्गवेरकं शुण्ठी; आर्द्रकहिङ्गुजीरकाः प्रसिद्धाः; कुस्तुम्बुरुकं धान्यकं; जम्बीरो हरितशाकमुत्तरापथे जम्बीरगन्धि किंचिदम्लं; सुमुखो वनबर्बरिका; सुरसा सुरभिपर्णी 'तुलसी' इति लोके; अर्जकः श्वेतकुठेरकः; भूस्तृणं रोहिषः, तुम्बाकमन्ये; सुगन्धको गन्धतृणमल्पं भूस्तृणं, सुगन्धितृणमिति केचित्, तत्रापि नार्थभेदः; कासमर्दः प्रसिद्धः; कालमालो बर्बरिका; कुठेरकस्तद्भेद एव; क्षवकश्छिक्काकरः 'छिंकणी' इति लोके; खरपुष्पो मरुबकः, अन्ये क्षवकभेदमाहुः, केचित् 'बोडयिका' इत्याहुः; शिग्रुः शोभाञ्जनकः, सुवासमित्यन्ये; मधुशिग्रुर्लोहितकुसुमोऽल्पविटपः

१ 'अथ शाकवर्गमुपदेक्ष्यामः' इति ताडपत्रपुस्तके पाठः ।

१ 'ईर्वारुः' इति पा० । २ 'गुरुविष्टम्भिशीतानि स्वादूनि कफकृन्ति च । सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च' इति पा० । ३ 'ईर्वारुकं' इति पा० ।

शोभाञ्जनकभेदः; 'शुण्ठ' इत्यत्र क्वचित् ( पठ्यते ), स च स्वनामख्यातः; फणिज्झकः 'फाणिज' इति लोके, अन्ये मरुबकमाहुः; सर्षपराजिके प्रसिद्धे; कुलाहलो मुण्डितिका; अवगुत्थं वेगनामा, काकादनीत्यर्थः; गण्डीरोऽपि द्विविधः स्थलजो जलश्चेति, तत्र स्थलजो हरितशाकं; तिलपर्णिका चोरकः, श्रीहस्तिनीत्यपरे; वर्षाभूः पुनर्नवा; चित्रकमूलकलशुनाः प्रसिद्धाः; कलायोऽत्र त्रिपुटकभेदः; त्रिपुटकस्याग्रे वक्ष्यमाणत्वात्, केचित् पुनरुक्तभयादग्रेतनं पाठं न मन्यन्ते, तेषां मतेऽत्र कलायस्त्रिपुटकः; पलाण्डुर्लशुनभेदः । प्रभृतिग्रहणादेवंजातीयान्यपराणि ॥ २२१ ॥

**कटून्युष्णानि रुच्यानि वातश्लेष्महराणि च ॥**
**कृतान्नेषूपयुज्यन्ते संस्कारार्थमनेकधा ॥ २२२ ॥**

एषां सामान्यगुणमाह—कटूनीत्यादि । कृतान्नेषु मुद्गयूषादिषु ॥ २२२ ॥

**तेषां गुर्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा ॥**
**शुष्का कफानिलघ्नी सा वृष्या पित्ताविरोधिनी २२३**

तेषां मध्ये केषांचिद्गुणविशेषमाह—तेषामित्यादि । कफावहा स्ववर्गापेक्षया । पित्ताविरोधिनी ईषत्पित्तविरोधिनी, ईषत्पित्तशमनीत्यर्थः; 'पित्तप्रकोपणी' इति केचित् पठन्ति, व्याख्यानयन्ति च "सा पित्तशमनी पूर्वं दर्शिता वीर्यवादिना । शास्त्रकारेण निर्दिष्टा सा सत्यं पित्तकोपनी ॥ यद्वाऽऽर्द्रा पित्तशमनी शुष्का पित्तप्रकोपणी"–इति ॥ २२३ ॥

**स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च ॥**
**कटूष्णं लघु तच्छुष्कमवृष्यं कफवातजित् ॥२२४॥**
**नात्युष्णं नातिशीतं च वीर्यतो मरिचं सितम् ॥**
**गुणवन्मरिचेभ्यश्च चक्षुष्यं च विशेषतः ॥ २२५ ॥**

नातीत्यादि । सितं मरिचं शोभाञ्जनकबीजं, 'शुक्लमपि मरिचमस्ति' इत्येके । गुणवन्मरिचेभ्यश्चेति मरिचेभ्यः सकाशादतिशयगुणकारीत्यर्थः ॥ २२४ ॥ २२५ ॥

**नागरं कफवातघ्नं विपाके मधुरं कटु ॥**
**वृष्योष्णं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥ २२६ ॥**
**कफानिलहरं स्वर्यं विबन्धानाहशूलनुत् ॥**
**कटूष्णं रोचनं हृद्यं वृष्यं चैवार्द्रकं स्मृतम् ॥२२७॥**
**लघूष्णं पाचनं हिङ्गु दीपनं कफवातजित् ॥**
**कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत् ॥२२८॥**

नागरमित्यादि । सस्नेहमीषत्स्नेहम् । लघु आर्द्रकादिति बोद्धव्यम् । विबन्धानाहशूलनुदिति विबन्धो वाताद्यप्रवृत्तिः, आनाह उदरापूरः ॥ २२६–२२८ ॥

**तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्धनम् ॥**
**कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् ॥ २२९ ॥**
**कारवी करवी तद्वद्विज्ञेया सोपकुञ्चिका ॥**

१ 'नातिरूक्षं च' इति पा० ।

तीक्ष्णेत्यादि । जीरकद्वयं शुक्लपीतभेदेन । कारवी कृष्णजीरक उत्तरापथे प्रसिद्धः; करवी यवानीत्येके, अजमोदेत्यपरे, अन्ये राजिकामाहुः । उपकुञ्चिका स्थूलजीरक ईषत्कृष्णो 'बृहज्जीरक' इति लोके ॥ २२९ ॥—

**भक्ष्यव्यञ्जनभोज्येषु विविधेष्ववचारिता ॥ २३० ॥**
**आर्द्रा कुस्तुम्बरी कुर्यात् स्वादुसौगन्ध्यहृद्यताम् ॥**
**सा शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशनी २३१**
**दोषघ्नी कटुका किंचित् तिक्ता स्रोतोविशोधनी ॥**

भक्ष्याणि वटकादीनि, व्यञ्जनानि शाकादीनि संस्कृतानि, भोज्यानि अन्नयवागवादीनि, अवचारिता प्रक्षिप्ता । आर्द्रा कुस्तुम्बरीति पुष्पफलोपेतो हरितधान्यविटप आर्द्रा कुस्तुम्बरीत्युच्यते, अल्लेति लोके ॥ २३० ॥ २३१ ॥—

**जम्बीरः पाचनस्तीक्ष्णः कृमिवातकफापहः ॥२३२॥**
**सुरभिर्दीपनो रुच्यो मुखवैशद्यकारकः ॥**
**कफानिलविषश्वासकासदौर्गन्ध्यनाशनः ॥ २३३ ॥**
**पित्तकृत् पार्श्वशूलघ्नः सुरसः समुदाहृतः ॥**
**तद्वत्तु सुमुखो ज्ञेयो विशेषाद्गरनाशनः ॥ २३४ ॥**
**कफघ्ना लघवो रूक्षास्तीक्ष्णोष्णाः पित्तवर्धनाः ॥**
**कटुपाकरसाश्चैव सुरसार्जकभूस्तृणाः ॥ २३५ ॥**
**मधुरः कफवातघ्नः पाचनः कण्ठशोधनः ॥**
**विशेषतः पित्तहरः सतिक्तः कासमर्दकः ॥ २३६ ॥**
**कटुः सक्षारमधुरः शिग्रुस्तिक्तोऽथ पिच्छिलः ॥**
**मधुशिग्रुः सरस्तिक्तः शोफघ्नो दीपनः कटुः ॥२३७॥**

जम्बीर इत्यादि । सुरसे द्वे श्वेतकृष्णकुसुमे । प्रथमा श्वेता, इयं तु कृष्णेति न पौनरुक्त्यप्रसङ्गः ॥ २३२—२३७ ॥

**विदाहि बद्धविण्मूत्रं रूक्षं तीक्ष्णोष्णमेव च ॥**
**त्रिदोषं सार्षपं शाकं गाण्डीरं वेगनाम च ॥ २३८ ॥**
**चित्रकस्तिलपर्णी च कफशोफहरे लघू ॥**

**वर्षाभूः कफवातघ्नी हिता शोफोदरार्शसाम् २३९**

विदाहीत्यादि । त्रिदोषं सार्षपमिति 'कफघ्नं सार्षपं शाकमासुरं शाकमेव च' इति क्वचित् । तत्र आसुरी राजिका ॥ २३८ ॥ २३९ ॥

**कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी ॥**
**सर्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका ॥२४०॥**
**महत्तद्गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत् ॥**
**तदेव स्नेहसिद्धं तु पित्तनुत् कफवातजित् ॥ २४१ ॥**
**त्रिदोषशमनं शुष्कं विषदोषहरं लघु ॥**

१ 'कृमिवातविषापहः' इति पा० । २ 'हृद्यः' इति पा० । ३ 'पिच्छलः' इति पा० । ४ 'कफघ्नं श्सार्षपं शाकं मासुरं शाकमेव च' इति ताडपत्रपुस्तके पाठः । ५ 'स्निग्धसिद्धं' इति पा० । ६ 'श्लेष्मकृद्वातपित्तजित् । शुष्कं तु शोफशमनं' इति ताडपत्रपुस्तके पाठः ।

**विष्टम्भि वातलं शाकं शुष्कमन्यत्र मूलकात् ॥२४२॥**

कण्ठाय हिता कण्ठ्या । मूलकपोतिका बालमूलकम् । आमम् अनग्निपक्वं, स्नेहसिद्धं घृततैलादिपक्वं, मूलकस्य बालमहदामस्नेहसिद्धशुष्कभेदेनात्र गुणोक्तिः । विष्टम्भीत्यादि अमुं केचिदनार्षमाचक्षते, अन्ये तु मन्यन्ते ॥ २४०-२४२ ॥

**पुष्पं च पत्रं च फलं तथैव**
**यथोत्तरं ते गुरवः प्रदिष्टाः ॥**
**तेषां तु पुष्पं कफपित्तहन्तृ**
**फलं निहन्यात् कफमारुतौ तु ॥ २४३ ॥**

पुष्पमित्यादि । मूलकविषयोऽयं, यद्वन्मूलककन्देषु बालमध्यवृद्धस्निग्धसिद्धशुष्केषु फलनिर्देशस्तद्वत् पुष्पपत्रफलेष्वपि वाच्यः ॥ २४३ ॥

**स्निग्धोष्णतीक्ष्णः कटुपिच्छिलश्च**
**गुरुः सरः स्वादुरसश्च बल्यः ॥**
**वृष्यश्च मेधास्वरवर्णचक्षु-**
**र्भग्नास्थिसन्धानकरो रसोनः ॥ २४४ ॥**
**हृद्रोगजीर्णज्वरकुक्षिशूल-**
**विबन्धगुल्मारुचिकासशोफान् ॥**
**दुर्नामकुष्ठानलसादजन्तु-**
**समीरणश्वासकफांश्च हन्ति ॥ २४५ ॥**
**नात्युष्णवीर्योऽनिलहा कटुश्च**
**तीक्ष्णो गुरुर्नातिकफावहश्च ॥**
**बलावहः पित्तकरोऽथ किंचित्**
**पलाण्डुरग्निं च विवर्धयेत्तु ॥ २४६ ॥**
**स्निग्धो रुच्यिष्यः स्थिरधातुकारी**
**बल्योऽथ मेधाकफपुष्टिदश्च ॥**
**स्वादुर्गुरुः शोणितपित्तशस्तः**
**सपिच्छिलः क्षीरपलाण्डुरुक्तः ॥ २४७ ॥**
**कलायशाकं पितघ्नं कफघ्नं वातलं गुरु ॥**
**कषायानुरसं चैव विपाके मधुरं च तत् ॥२४८॥**

रसोनभेदानाह—स्निग्धेत्यादि । रसोनः पञ्चरसः स्वल्पकन्दो लशुन इत्यर्थः । अनलसादोऽग्निमान्द्यम् । जन्तवः कृमयः । नात्युष्णेत्यादि । पलाण्डुः स्थूलनालाग्रपत्रो गुन्द्रालिकाभेदः, स एव सक्षीरो मधुररसः क्षीरपलाण्डुरित्युच्यते ॥ २४४-२४८ ॥

**चुच्चूयूथिकातरुणीजीवन्तीबिम्बीतिकानदी(न्दी)-भल्लातकच्छगलान्त्रीवृक्षादनीफञ्जीशाल्मलीशेलुवनस्पतिप्रसवशणकर्बुदारकोविदारप्रभृतीनि ॥२४९॥**

कषायमधुरशाकमाह—चुच्चित्यादि । चुच्चूर्नाडिकाकारपत्रः, 'चुचु' इति लोके; यूथिका वृक्षविशेषः, सा त्रिधा ईषच्छ्वेतपुष्पा, अतिश्वेतपुष्पा, पीतपुष्पा च; तरुणी स्वनामप्रसिद्धा, अन्ये 'वरुण' इति पठन्ति, वरुणकस्तिक्तशाको जलकूलजः; जीवन्ती जीवा 'तण्डुलीयकसदृशी' इत्यन्ये, 'डोडिका' इत्यपरे; बिम्बीतिका कुन्दुरिका तस्याः पत्राण्यत्र गृह्यन्ते; नदीभल्लातकः ली( लो )जनकः, अन्ये 'अनन्ताभल्लातक' इति पठन्ति, तत्र अनन्ता लाङ्गलिका 'कलिहारी' इति लोके, भल्लातकवृक्षस्य फलान्यामानि पल्लवाश्च शाकत्वेनाभिप्रेताः; छगलान्त्री वृद्धदारकः, तस्य पत्राणि, वुक्केत्यपरे; वृक्षादनी बन्दाकः, वृक्षकलिम्बुकेत्यन्ये; फञ्जीशाको 'वाड' इति प्रसिद्धः, भार्गीमेके मन्यन्ते; शाल्मली प्रसिद्धः; शेलुः श्लेष्मातकः 'लिसाड' इति लोके; वनस्पतिप्रसवाः वनस्पतिरुदुम्बरादिः, तस्य प्रसवाः पल्लवाः; शणः प्रसिद्धः; कर्बुदारः श्लेष्मातकभेदः; कोविदारः काञ्चनारः । प्रभृतिग्रहणादेवंजातीयान्यन्यान्यपि शाकानि ॥ २४९ ॥

**कषायस्वादुतिक्तानि रक्तपित्तहराणि च ॥**
**कफघ्नान्यनिलं कुर्युः संग्राहीणि लघूनि च ॥ २५० ॥**

तेषां सामान्यगुणमाह—कषायेत्यादि ॥ २५० ॥

**लघुः पाके च जन्तुघ्नः पिच्छिलो व्रणिनां हितः ॥**
**कषायमधुरो ग्राही चुच्चूस्तेषां त्रिदोषहा ॥ २५१ ॥**
**चक्षुष्या सर्वदोषघ्नी जीवन्ती समुदाहृता ॥**
**वृक्षादनी वातहरा, फञ्जी त्वल्पबला मता ॥ २५२ ॥**
**क्षीरवृक्षोत्पलादीनां कषायाः पल्लवाः स्मृताः ॥**
**शीताः संग्राहिणः शस्ता रक्तपित्तातिसारिणाम् ॥**

तेषां केषांचिद्गुणविशेषमाह—लघुरित्यादि । क्षीरवृक्षा अश्वत्थादयः; उत्पलानि नीलोत्पलप्रभृतीनि, तेषां पल्लवाः ॥२५१-२५३ ॥

**पुनर्नवावरुणतर्कार्युरुबूकवत्सादनीबिल्वशाकप्रभृतीनि ॥ २५४ ॥**
**उष्णानि स्वादुतिक्तानि वातप्रशमनानि च ॥**

पुनर्नवेत्यादि । पुनर्नवा श्वेतपुनर्नवा; वरुणो वृक्षविशेषः स्वनामप्रसिद्धः; तर्कारी अरणिका; उरुबूकः शुक्लैरण्डः; वत्सादनी वत्सपुत्रकः 'वत्सवतिया' इति लोके, गुडूचीत्यपरे; बिल्वशाकं बिल्वजं; प्रभृतिग्रहणादन्यान्यपि । तेषां सामान्यगुणमाह—उष्णानीत्यादि ॥ २५४ ॥—

**तेषु पौनर्नवं शाकं विशेषाच्छोफनाशनम् ॥ २५५ ॥**

विशेषगुणमाह—तेष्वित्यादि ॥ २५५ ॥

**तण्डुलीयकोपोदकाऽश्वबलाचिल्लीपालङ्क्यावास्तूकप्रभृतीनि ॥ २५६ ॥**

तण्डुलीयकः 'चुलाइ' इति लोके; उपोदिका पोइ; अश्वबला तुरुष्कदेशे बृहत्पत्रा मेथिकाभेद एव 'हिस्फित्थ' इति

---

१ 'स्निग्धसिद्धं घृतमांसादिपक्वं' इति पा० । २ '°स्निग्धसिद्ध°' इति पा० । ३ '°शोषान्' इति ताडपत्रपुस्तके पा० । ४ 'शीतलं' इति पा० ।

१ 'टिंडुका' इति पा० । २ 'नन्दीभल्लातकस्य फलान्यामानि पल्लवाश्च शाकत्वेनाभिप्रेताः' इति पा० । ३ 'पिप्पलादयः' इति पा० ।

लोके, तन्त्रान्तरे मेथिकाहिस्फित्थयोः पृथग्गुणनिर्देशः कृतः—"वातपित्तहरा तिक्ता लघ्वी श्लेष्माविरोधिनी । मेथिका तत्समं किंचिद्धिस्फित्थं पुष्टिदं गुरु"—इति । चिल्ली क्षेत्रवास्तुकः, 'गौडवास्तुक' इत्यन्ये, यवशाकमाहुरेके, अन्ये तु यवशाकान्तरमाहुः; पालङ्क्या 'पालक्' इति लोके; वास्तूकष्टङ्कवास्तूकः 'टङ्कचुचू' इति लोके; प्रभृतिग्रहणादपराण्यपि ॥ २५६ ॥

**सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च ॥**
**मन्दवातकफान्याहू रक्तपित्तहराणि च ॥ २५७ ॥**

तेषां सामान्यगुणमाह—सृष्टमूत्रेत्यादि ॥ २५७ ॥

**मधुरो रसपाकाभ्यां रक्तपित्तमदापहः ॥**
**तेषां शीततमो रूक्षस्तण्डुलीयो विषापहः ॥ २५८ ॥**
**स्वादुपाकरसा वृष्या वातपित्तमदापहा ॥**
**उपोदका सरा स्निग्धा बल्या श्लेष्मकरी हिमा २५९**
**कटुर्विपाके कृमिहा मेधाग्निबलवर्धनः ॥**
**सक्षारः सर्वदोषघ्नो वास्तूको रोचनः सरः ॥२६०॥**
**चिल्ली वास्तूकवज्ज्ञेया पालङ्क्या तण्डुलीयवत् ॥**
**वातकृद्बद्धविण्मूत्रा रूक्षा पित्तकफे हिता ॥**
**शाकमाश्ववलं रूक्षं बद्धविण्मूत्रमारुतम् ॥ २६१ ॥**

तेषां विशेषगुणमाह—मधुर इत्यादि । मदापह इति मदो विषमद्यशोणितोत्थो विकारः ॥ २५८–२६१ ॥

**मण्डूकपर्णीसप्तलासुनिषण्णकसुवर्चलापिप्पलीगुडूचीगोजिह्वाकाकमाचीप्रपुन्नाडावल्गुजसतीनबृहतीकण्टकारिकाफलपटोलवार्ताककारवेल्लककटुकिकाकेबु(म्बु)कोरुबूकपर्पटककिराततिक्तकर्कोटकारिष्टकोशातकीवेत्रकरीराटरूषकार्कपुष्पीप्रभृतीनि ॥ २६२ ॥**

तिक्तप्रायाण्याह—मण्डूकपर्णीत्यादि । मण्डूकपर्णी ब्राह्मी; सप्तला सेहुण्डः, जेज्झटस्तु सप्तलां यवतिक्ताभेदमाह; सुनिषण्णकः 'सिरिबालिका' इति लोके, श्रीब्रह्मदेवस्तु चतुर्दलमाह, तल्लक्षणं कथ्यते–"चाङ्गेरीसदृशैः पत्रैः सुनिषण्णश्चतुर्दलः। शाको जलान्विते देशे चतुष्पत्रीति कथ्यते"–इति; सुवर्चला सूर्यावर्तः, केचिन्मारिषसदृशदण्डमार्तगलसदृशपत्रं लप्पसमाहुः; पिप्पलीगुडूच्यौ प्रसिद्धे, पूर्वं पिप्पलीफलमुक्तम्, अत्र तु पत्रं; गोजिह्वा दार्विपत्रिका कर्कशा दीर्घपत्रा 'गोजीभी' इति लोके; काकमाचीप्रपुन्नाडौ प्रसिद्धौ; अवल्गुजः 'बाकुची' इति लोके; सतीनो वर्तुलकलायः; बृहतीफलं सामान्याद्बृहतीद्वयस्य फलम्, अन्ये तु कण्टकारिकामपि पठन्ति; पटोलस्य फलं पत्रं च; वार्ताको वृन्ताको वर्तुलफलः 'वंइगण' इति लोके; कारवेल्लकः स्वनामप्रसिद्धः; कटुकिका अरण्यकासमर्दिका, अन्ये तिक्तारिकामाहुः, अपरे तु कटुतिक्तपुष्पामर्कफलाकारफलां प्रसिद्धामाहुः; केबु(म्बु)को ग्राम्यो वन्यश्च स्वनामप्रसिद्धः; उरुबूको रक्तैरण्डः, अन्ये तूरुबूकस्य पत्रमत्र गृह्यते; पर्पटकः प्रसिद्धः; किराततिक्तको भूनिम्बः; कर्कोटकः प्रसिद्धः; अरिष्टो निम्बः; कोशातकी घोषकः 'तोरइ' इति लोके; वेत्रकरीरं वेत्राग्रं; आटरूषको वासकः; अर्कपुष्पी अर्कपत्रसदृशी लता, अन्ये अर्कपर्णमाहुः । प्रभृतिग्रहणादन्यतिक्तशाकानि ज्ञेयानि ॥२६२॥

**रक्तपित्तहराण्याहुर्हृद्यानि सुलघूनि च ॥**
**कुष्ठमेहज्वरश्वासकासारुचिहराणि च ॥ २६३ ॥**

तेषां सामान्यगुणमाह—रक्तपित्तेत्यादि ॥ २६३ ॥

**कषाया तु हिता पित्ते स्वादुपाकरसा हिमा ॥**
**लघ्वी मण्डूकपर्णी तु तद्वद्गोजिह्विका मता ॥ २६४ ॥**
**अविदाही त्रिदोषघ्नः संग्राही सुनिषण्णकः ॥**
**अवल्गुजः कटुः पाके तिक्तः पित्तकफापहः ॥२६५॥**
**ईषत्तिक्तं त्रिदोषघ्नं शाकं कटु सतीनजम् ॥**
**नात्युष्णशीतं कुष्ठघ्नं काकमाच्यास्तु तद्विधम् २६६**
**कण्डूकुष्ठकृमिघ्नानि कफवातहराणि च ॥**
**फलानि बृहतीनां तु कटुतिक्तलघूनि च ॥ २६७ ॥**
**कफपित्तहरं व्रण्यमुष्णं तिक्तमवातलम् ॥**
**पटोलं कटुकं पाके वृष्यं रोचनदीपनम् ॥ २६८ ॥**
**कफवातहरं तिक्तं रोचनं कटुकं लघु ॥**
**वार्ताकं दीपनं प्रोक्तं जीर्णं सक्षारपित्तलम् ॥**
**तद्वत् कर्कोटकं विद्यात् कारवेल्लकमेव च ॥ २६९ ॥**
**आटरूषकवेत्राग्रगुडूचीनिम्बपर्पटाः ॥**
**किराततिक्तसहितास्तिक्ताः पित्तकफापहाः ॥२७०॥**
**कफापहं शाकमुक्तं वरुणप्रपुनाड(ट)योः ॥**
**रूक्षं लघु च शीतं च वातपित्तप्रकोपणम् ॥२७१॥**

विशेषगुणमाह—कषायेत्यादि । तद्विधमिति त्रिदोषघ्नम् । जीर्णं पक्वम् । गुडूचीह कफपित्तहरा, चरके च 'वायुं बलादनी हन्यात्' (च. सू. अ. २७) इति स्निग्धोष्णवीर्यत्वात्, तस्मात्त्रिदोषघ्नी । पूर्ववर्गपठितोऽपि वरुणः प्रपुन्नाडसामान्यगुणत्वादत्र पठितः । शीतं चेति चकाराज्ञात्युष्णशीतं, तेन संयुक्तवातपित्तकर्तृत्वं; यदि वा शीतमपि पित्तकृत् प्रभावात् ॥ २६४–२७१ ॥

**दीपनं कालशाकं तु गरदोषहरं कटु ॥**
**कौसुम्भं मधुरं रूक्षमुष्णं श्लेष्महरं लघु ॥ २७२ ॥**
**वातलं नालिकाशाकं पित्तघ्नं मधुरं च तत् ॥**
**ग्रहण्यर्शोविकारघ्नी साम्ला वातकफे हिता ॥**
**उष्णा कषायमधुरा चाङ्गेरी चाग्निदीपनी ॥ २७३ ॥**

प्रभृतिशब्दगृहीतान्याह—दीपनमित्यादि । कालशाकं कालियाशाकं श्राद्धार्हम् । कौसुम्भं प्रसिद्धम् । नाडिका 'नाली' इति लोके । चाङ्गेरी 'अम्लचाङ्गेरी' इति लोके ॥ २७२ ॥ २७३ ॥

**लोणिकाजातुकत्रिपर्णिकापत्तूरजीवकसुवर्चलाकुडुरककुतुम्बककुठिञ्जरकुन्तलिकाकुरण्टिकाप्रभृतयः ॥ २७४ ॥**

---

१ 'पलांग' इति पा० ।

१ 'लघु' इति पा० । २ 'त्रिपर्णीलोणिकापीलुपर्णीपत्तूरजीवकाः। सुवर्चला संचलककुतुम्बककुठिञ्जराः' इति ताडपत्रपुस्तके पा० ।

लोणिकेत्यादि । लोणिका लोणिया; जातुकं शुक्लशालपर्णी; त्रिपर्णिका दुग्धिका, वनकार्पासीत्यपरे; पत्तूरः शिरवालिकाभेदो महापत्रः; जीवको जीवनामा स्वनामप्रसिद्धः; सुवर्चला सूर्यावर्तभेदः, डुडुरकः स्वनामप्रसिद्धः; कुतुम्बको द्रोणपुष्पः; कुठिञ्जरः कुरहञ्जनकः 'कोल्हसुआ' इति लोके; कुनाडिकेति क्वचित्, तत्र कुनाडिका गोनाडीकः; कुन्तलिका चुञ्चूसदृशा दीर्घपत्रा; कुरुण्टिका अम्लानसदृशपत्रकुसुमा हरितपुष्पा, अन्ये 'कुनालिका-कुरण्टिके उत्तरापथजे' इत्याहुः, केचित्रिपर्ण्यादीनां श्लोकेन निर्देशं कुर्वन्ति ॥ २७४ ॥

**स्वादुपाकरसाः शीताः कफघ्ना नातिपित्तलाः ॥**
**लवणानुरसा रूक्षाः सक्षारा वातलाः सराः ॥२७५॥**

तेषां सामान्यं गुणमाह—स्वादुपाकेत्यादि ॥ २७५ ॥

**स्वादुतिक्ता कुन्तलिका कषाया सकुरण्टिका ॥**

विशेषगुणमाह—स्वाद्वित्यादि ॥—

**संग्राहि शीतलं चापि लघु दोषापहं तथा ॥**
**राजक्षवकशाकं तु शटीशाकं च तद्विधम् ॥ २७६ ॥**

प्रश्नतिग्रहीतमाह—संग्राहीत्यादि 'दोषापहं तथा' इत्यत्र 'दोषविरोधि च' इति केचित् पठन्ति, तन्नेच्छति जेज्झटः । राजक्षवकशाकं कृष्णराजिका, अन्ये तु 'राजक्षवको बृहत्पत्रः क्षवथुकाकर' इत्याहुः । शटी स्वनामप्रसिद्धा । तद्विधमिति राजक्षवकसदृशम् ॥ २७६ ॥

**स्वादुपाकरसं शाकं दुर्जरं हरिमन्थजम् ॥**

स्वाद्वित्यादि । हरिमन्थश्चणकः ॥—

**भेदनं मधुरं रूक्षं कालायमतिवातलम् ॥ २७७ ॥**

भेदनमित्यादि । पूर्वं सतीनो वर्तुलकलायः, इह तु त्रिपुटककलायः ॥ २७७ ॥

**स्रंसनं कटुकं पाके लघु वातकफापहम् ॥**
**शोफघ्नमुष्णवीर्यं च पत्रं पूतिकरञ्जजम् ॥ २७८ ॥**

स्रंसनमित्यादि । पूतिकरञ्जः कण्टकिकरञ्जः, अन्ये तु पूतिकश्चिरविल्वः, करञ्जो नक्तमालः ॥ २७८ ॥

**ताम्बूलपत्रं तीक्ष्णोष्णं कटु पित्तप्रकोपणम् ॥**
**सुगन्धि विशदं तिक्तं स्वर्यं वातकफापहम् ॥ २७९ ॥**
**स्रंसनं कटुकं पाके कषायं वह्निदीपनम् ॥**
**वक्त्रकण्डूमलक्लेददौर्गन्ध्यादिविशोधनम् ॥ २८० ॥**

ताम्बूलेत्यादि । ताम्बूलपत्रं नागवल्लीपत्रं 'पर्णम्' इति लोके । स्रंसनं कटुकं पाके इत्यन्तं पर्णमुक्त्वा कषायमित्यादि पूगफलं, तस्य फलवर्गे एव पठितत्वान्न पठनीयमित्येके, अन्ये फलवर्गे पक्वमित्युक्तं शाकेषु त्वपक्वमार्द्रं चेत्याहुः ॥ २७९ ॥ २८० ॥

१ '°गलक्लेद°' इति पा० ।

अथ पुष्पवर्गः ।

**कोविदारशणशाल्मलीपुष्पाणि मधुराणि मधुरविपाकानि रक्तपित्तहराणि च; वृषागस्त्ययोः पुष्पाणि तिक्तानि कटुविपाकानि क्षयकासापहानि च ॥ २८१ ॥**

अथ पुष्पशाकान्याह—कोविदारेत्यादि । कोविदारः काञ्चनारस्तद्भेदो वा; शणो बन्धनार्हत्वक् प्रसिद्धः । तेषां सामान्यगुणमाह—मधुराणीत्यादि । वृषेत्यादि । वृषो वासकः, अगस्त्यः 'अगथीया' इति लोके ॥ २८१ ॥

**आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते २८२**

तयोरगस्त्यपुष्पस्य गुणविशेषमाह—आगस्त्यमित्यादि २८२

**करीरकुसुमानि कटुविपाकानि वातहराणि स्वष्टमूत्रपुरीषाणि च ॥ २८३ ॥**

करीरेत्यादि । अत्रापि रसवीर्यविपाकप्रभावितं कार्यं योजनीयम् ॥ २८३ ॥

**रक्तवृक्षस्य निम्बस्य मुष्ककार्कासनस्य च ॥**
**कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च ॥ २८४ ॥**

रक्तवृक्षस्येत्यादि । रक्तवृक्षस्य रक्तचन्दनस्य । मुष्ककस्य क्षारवृक्षस्य 'मोखउ' इति लोके, असनो बीजकः । शेषं प्रसिद्धम् ॥ २८४ ॥

**सतिक्तं मधुरं शीतं पद्मं पित्तकफापहम् ॥**
**मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम् ॥**
**तस्मादल्पान्तरगुणे विद्यात् कुवलयोत्पले ॥ २८५ ॥**

सतिक्तमित्यादि । पद्मं पद्मपुष्पं सूर्योदयविकासि । कुमुदं चन्द्रोदयविकासि । कुवलयं कुमुदभेदः, उत्पलं स्वनामप्रसिद्धम् ॥ २८५ ॥

**सिन्धुवारं विजानीयाद्धिमं पित्तविनाशनम् ॥**

सिन्धुवारमित्यादि । सिन्धुवारं निर्गुण्डीपुष्पम् ॥—

**मालतीमल्लिके तिक्ते सौरभ्यात् पित्तनाशने ॥२८६॥**

मालतीत्यादि । मालती जाती; मल्लिका प्रसिद्धा । सौरभ्यात् सौगन्ध्यात् ॥ २८६ ॥

**सुगन्धि विशदं हृद्यं बाकुलं पाटलानि च ॥**
**श्लेष्मपित्तविषघ्नं तु नागं तद्वच्च कुङ्कुमम् ॥ २८७ ॥**

सुगन्धीत्यादि । नागं नागकेशरम् । तद्वन्नागवत् । कुङ्कुमं प्रसिद्धम् ॥ २८७ ॥

**चम्पकं रक्तपित्तघ्नं शीतोष्णं कफनाशनम् ॥**
**किंशुकं कफपित्तघ्नं तद्वदेव कुरण्टकम् ॥ २८८ ॥**

किंशुकं पलाशपुष्पं, कुरण्टकं सहचरपुष्पम् ॥ २८८ ॥

**यथावृक्षं विजानीयात् पुष्पं वृक्षोचितं तथा ॥**

१ 'करीरमधुशिग्रुकुसुमानि' इति पा० । २ 'मधुरं' इति पा० ।

उपसंहारमाह—यथेत्यादि । वृक्षोचितं वृक्षानुसारेणेत्यर्थः ॥—

**मधुशिग्रुकरीराणि कटूनि श्लेष्महराणि च ॥२८९॥**

मध्वित्यादि । मधुशिग्रू रक्तशोभाञ्जनकः, तस्य करीराणि कोमला नालाः; अन्ये तु 'मधुशिग्रूकरीराणि' इत्यत्र 'मधुशिग्रुकरीरयोः पुष्पाणि' इति व्याचक्षते, ते तु 'करीरकुसुमानि' इति पूर्वपाठं न मन्यन्ते ॥ २८९ ॥

**क्षवककुलेवरवंशकरीरप्रभृतीनि कफकराणि सृष्टमूत्रपुरीषाणि च ॥ २९० ॥**

उद्भिदशाकान्याह—क्षवकेत्यादि । क्षवकश्छत्रकः, कुलेवरं खुखुण्डकः[1], वंशकरीरो वंशाङ्कुरः; अन्ये तु क्षवकं द्रोणपुष्पीसदृशं विटपमाहुः; तन्न, तस्यानुद्भिदत्वात् । प्रभृतिग्रहणादन्यान्यप्युद्भिदानि । तेषां सामान्यगुणमाह—कफहराणीत्यादि ॥ २९० ॥

**क्षवकं कृमिलं तेषु स्वादुपाकं सपिच्छलम् ॥**
**विस्यन्दि वातलं नातिपित्तश्लेष्मकरं च तत् ॥ २९१ ॥**
**वेणोः करीराः कफला मधुरा रसपाकतः ॥**
**विदाहिनो वातकरा[2]ः सकषाया विरूक्षणाः ॥२९२॥**

तेषां कस्यचिद्विशेषगुणमाह—क्षवकमित्यादि । विस्यन्दि श्लेष्मस्रावि, एतेन [3]श्लेष्मणो जनकप्रवर्तकत्वमुक्तम् । वेणोः करीरा इति केचिन्मधुररसपाकित्वविदाहित्वयोर्विरोधमाहुः; तन्न, प्रभावात् ॥ २९१ ॥ २९२ ॥

**उद्भिदानि पलालेक्षुकरीषवेणुक्षितिजानि । तत्र पलालजातं मधुरं मधुरविपाकं रूक्षं दोषप्रशमनं[4] च, इक्षुजं मधुरं कषायानुरसं कटुपाकं शीतलं च, तद्वदेवोष्णं कारीषं कषायं वातकोपनं च, (वेणुजातं[5] कषायं वातकोपनं च,) भूमिजं गुरु नातिवातलं भूमितश्चास्यानुरसः ॥ २९३ ॥**

आधारविशेषेणाप्युद्भिदानां गुणविशेषमाह—उद्भिदानीत्यादि । उद्भिदानि छत्रकादीनि । तद्वदिति इक्षुजसदृशम् । भूमितश्चास्यानुरस इति भूमिसदृशगुणमित्यर्थः । यद्यपि वेणुजस्य गुणा नोक्ताः, तथाऽपि तदाधारसदृशगुणमूह्यम् ॥ २९३ ॥

**पिण्याकतिलकल्कस्थूणिकाशुष्कशाकानि सर्वदोषप्रकोपणानि ॥ २९४ ॥**

शुष्कशाकविशेषगुणमाह—पिण्याकेत्यादि । उमासर्षपादीनां यन्त्रादिपीडितानां निःस्नेहकल्कः पिण्याकः । तिलकल्कस्तिलपिण्याकः, सोऽपि यन्त्रादिपीडितः । स्थूणिकाशुष्कशाकानि नानाशाकैः कृता वटकाः; न तु शुष्कशाकमिति भिन्नं, तस्योक्तगुणत्वात्; स्थूणिकारूपाणि शुष्कशाकानीति वाऽर्थः, तत्रापि स्थूणिका वटकाः; अन्ये तु 'पिण्याकीतिलपत्रस्थूणिकाशुष्कशाकानि' इति पठन्ति व्याख्यानयन्ति च—पिण्याकीशाकं कच्छविषये प्रायशः[1], तिलपत्रं तिलविटपशाकं, स्थूणिका अतरुणशुष्कशाकं[2] मूलकशाकं विहायान्यत् सर्वं, तन्नेच्छति गयी ॥ २९४ ॥

**विष्टम्भिनः स्मृताः सर्वे वटका वातकोपनाः ॥**

स्थूणिकाशुष्कशाकानां गुणकर्माह—विष्टम्भिन इत्यादि । वटकाः पिष्टकासमर्दककूष्माण्डकमूलकादिकृता मुद्गादिकृताश्च । सवाततोदशूला मलाप्रवृत्तिर्विष्टम्भः ॥—

**सिण्डाकी वातला साद्रा[3] रुच्या[5]ऽनलदीपनी २९५**

शुष्कशाकप्रकरणाच्छुष्कशाकविशेषस्य गुणमाह—सिण्डाकीत्यादि । मूलकादिशाकमेव किंचित् स्विन्नं क्षुण्णं सुगन्धिकटुद्रव्यान्वितं वटकीकृतं सूदेषु[4] 'सिण्डाकी' इत्युच्यते; सा द्विविधा—आर्द्रा, शुष्का च; शुष्का वटकान्तर्गता, आर्द्रायास्त्वयमेव गुणनिर्देशः ॥ २९५ ॥

**विड्भेदि गुरु रूक्षं च प्रायो विष्टम्भि दुर्जरम् ॥**
**सकषायं च सर्वं हि स्वादु शाकमुदाहृतम् ॥**
**पुष्पं पत्रं फलं नालं कन्दाश्च गुरवः क्रमात् ॥२९६॥**

स्वादुशाकविषयां परिभाषामाह—विड्भेदीत्यादि । स्वादु यच्छाकं तत्सर्वमेवैवंगुणमित्यर्थः । पुष्पमित्यादि क्वचित् पाठः ॥ २९६ ॥

**कर्कशं परिजीर्णं च कृमिजुष्टमदेशजम् ॥**
**वर्जयेत् पत्रशाकं तद्यदकालविरोहि च ॥ २९७ ॥**

वर्जनीयपत्रशाकविषयां परिभाषामाह—कर्कशमित्यादि । कर्कशं खरस्पर्शम् । परिजीर्णं पुरातनम् । कृमिजुष्टं कृमिभक्षितम् । अदेशजमनुचितदेशोत्पन्नम् । अकालविरोहि अकालजम् । इति **शाकवर्गः** ॥ २९७ ॥

### अथ कन्दवर्गः ।

**कन्दानत ऊर्ध्वं वक्ष्यामः—विदारीकन्दशतावरीबिसमृणालशृङ्गाटककशेरुकपिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुकशङ्खालुकरक्तालुकेन्दीवरोत्पलकन्दप्रभृतीनि ॥ २९८ ॥**

केचित् फलवदुपयुज्यमानत्वात् फलवर्गादनन्तरं कन्दान् पठन्ति, शाकविषयत्वादन्ये शाकानन्तरमिति कन्दानाह—कन्दानत इत्यादि । विदारी विदारीकन्दः; शतावरी शतमूली स्वनामप्रसिद्धा; बिसं पद्ममूलम्, अन्ये स्थूलपद्मनालं बिसमाहुः; मृणालं पद्ममूलात् स्थूलप्ररोहः, अन्ये तु सूक्ष्मं नालमाहुः; शृङ्गाटकं जलमध्ये त्रिकण्टकं 'सिंघाडा' इति लोके; कशेरुकपिण्डालु-

१ 'खुखुण्डकः' इति पा० । २ 'नातिबलाः' इति पा० । ३ 'श्लेष्मपित्तात्पजनकत्वं वातवर्धकत्वमुक्तम्' इति पा० । ४ 'दोषकरं च' इति ताडपत्रपुस्तके पा० । ५ अयं पाठो डल्हणासंमतः ।

१ 'प्रसिद्धं' इति पा० । २ 'अरुणशुष्कशाकं' इति पा० । ३ 'सान्द्रा' इति पा० । ४ 'सूदेषु' इति पा० । ५ 'शीतलं' इति पा० ।

प्रसिद्धौ:; मध्वालुकं रोमशं मधुरास्वादमेव; हस्त्यालुकं महत्काष्ठालुकमित्येके; काष्ठालुकशङ्खालुकरक्तालुकोत्पलकन्दाः स्वनामप्रसिद्धाः । प्रभृतिग्रहणात् केलूटमुञ्जातकादयः ॥ २९८ ॥

रक्तपित्तहराण्याहुः शीतानि मधुराणि च ॥
गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च ॥ २९९ ॥

तेषां सामान्यगुणमाह—रक्तपित्तेत्यादि ॥ २९९ ॥

मधुरो बृंहणो वृष्यः शीतः स्वर्योऽतिमूत्रलः ॥
विदारीकन्दो बल्यश्च पित्तवातहरश्च सः ॥ ३०० ॥
वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी ॥
महती चैव हृद्या च मेधाग्निबलवर्धिनी ॥ ३०१ ॥
ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी ।
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ३०२

तेषां विशेषगुणमाह—मधुर इत्यादि । महदल्पभेदेन शतावरी द्विविधा । तस्या एवाङ्कुराः शतावर्यङ्कुरा इत्यर्थः ॥ ३००—३०२ ॥

अविदाहि बिसं प्रोक्तं रक्तपित्तप्रसादनम् ॥
विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् ॥ ३०३ ॥
गुरू विष्टम्भिशीतौ च शृङ्गाटककशेरुकौ ॥
पिण्डालुकं कफकरं गुरु वातप्रकोपणम् ॥ ३०४ ॥
सुरेन्द्रकन्दः श्लेष्मघ्नो विपाके कटु पित्तकृत् ॥

सुरेन्द्रकन्दो वज्रकन्दः ॥ ३०३ ॥ ३०४ ॥—

वेणोः करीरा गुरवः कफमारुतकोपनाः ॥ ३०५ ॥

वेणोरित्यादि । वेणोः करीरा वंशमूलाङ्कुराः ॥ ३०५ ॥

स्थूलसूरणमाणकप्रभृतयः कन्दा ईषत्कषायाः कटुका रूक्षा विष्टम्भिनो गुरवः कफवातलाः पित्तहराश्च ॥ ३०६ ॥

अन्यानपि कन्दानेकगुणान् वर्गीकृत्याह—स्थूलेत्यादि । स्थूलकन्दो ग्राम्यकन्दः; केचित् 'सकलकन्द' इति पठन्ति, तत्रापि स एवार्थः; शूरणः स्वनामप्रसिद्धः; माणकं महापत्रं यथापूर्वमधःपत्रपरित्यागि । प्रभृतिशब्दात् केवदादिकन्दाः । तेषां सामान्यगुणमाह—ईषत्कषाया इत्यादि ॥ ३०६ ॥

मान(ण)कं स्वादु शीतं च गुरु चापि प्रकीर्तितम् ॥
स्थूलकन्दस्तु नात्युष्णः, सूरणो गुदकीलहा ३०७

विशेषगुणमाह—मानकमित्यादि ॥ ३०७ ॥

कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः ॥
कषायाः पित्तशमना विपाके मधुरा हिमाः ॥३०८॥
वराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः ॥
मेहकुष्ठकृमिहरो बल्यो वृष्यो रसायनः ॥ ३०९ ॥

१ 'मधुरं रूक्षं दुर्जरं वातकोपनम्' इति पा० ।

तदन्यकन्दानाह—कुमुदेत्यादि । कुमुदं श्वेतोत्पलम्, उत्पलं नीलोत्पलम् । तेषां सामान्यगुणमाह—मारुतकोपना इत्यादि । वराहकन्द इति वराहकन्दो 'बकालुक' इति प्रसिद्धः, अन्ये तु 'वाराही' इति पठन्ति, वाराही गृष्टिकोच्यते ॥ ३०८ ॥ ॥ ३०९ ॥

तालनारिकेलखर्जूरप्रभृतीनां मस्तकमज्जानः ॥३१०॥

मूलप्रसङ्गेनाग्रगुणमपि केषांचिदाह—तालेत्यादि । तालादयः प्रसिद्धाः । मस्तकमज्जानस्तालादिवृक्षाग्रमज्जानः ॥ ३१० ॥

स्वादुपाकरसानाहू रक्तपित्तहरांस्तथा ॥
शुक्रलाननिलघ्नांश्च कफवृद्धिकरानपि ॥ ३११ ॥

सामान्यगुणमाह—स्वादुपाकेत्यादि ॥ ३११ ॥

बालं ह्यनार्तवं जीर्णं व्याधितं क्रिमिभक्षितम् ॥
कन्दं विवर्जयेत् सर्वं यो वा सम्यङ् न रोहति ॥३१२॥

हेयमाह—बालमित्यादि । इति कन्दवर्गः ॥ ३१२ ॥

अथ लवणवर्गः ।

अथ लवणानि-सैन्धवसामुद्रविडसौवर्चलरोमकौद्भिदप्रभृतीनि यथोत्तरमुष्णानि वातहराणि कफपित्तकराणि कटुपाकीनि यथापूर्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि चेति ॥ ३१३ ॥

अथेत्यादि । सैन्धवं प्रसिद्धं; दक्षिणसमुद्रसमीपभवं सामुद्रं; विडं कृत्रिमं स्वनाम्ना ख्यातं, तच्च प्रसारणीकल्कभक्तलवणसंयोगादग्निदाहेन निर्वृत्तं; सौवर्चलं प्रसिद्धं; तदेव निर्गन्धं काललवणमित्युच्यते; रोमकं शाकम्भरीदेशोत्थं, 'रुमासरःसंभवम्' इत्यन्ये; भूमिमुद्भिद्योत्पन्नस्य क्षारोदकस्य सूर्यरश्मिभिर्वह्निना वा क्वथनाद्यल्लवणमुत्पद्यते तदौद्भिदं; प्रभृतिग्रहणादूषरप्रसवादीनि । तेषां सामान्यगुणमाह—यथोत्तरमित्यादि । जेज्झटश्वरकमतानुसारेण सैन्धवानन्तरं सौवर्चलं पठति; 'तदसम्यक्, सामुद्रात् सौवर्चलस्योष्णत्वात्; उत्तरोत्तरमुष्णानीति वचनात्' इति गयी ॥ ३१३ ॥

चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम् ॥
स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम् ॥ ३१४ ॥
सामुद्रं मधुरं पाके नात्युष्णमविदाहि च ॥
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥ ३१५ ॥
सक्षारं दीपनं सूक्ष्मं शूलहृद्रोगनाशनम् ॥
रोचनं तीक्ष्णमुष्णं च विडं वातानुलोमनम् ॥३१६॥
लघु सौवर्चलं पाके वीर्योष्णं विशदं कटु ॥
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम् ॥ ३१७ ॥
रोमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च ॥
वातघ्नं लघु विस्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ३१८
लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् ॥
सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम् ॥ ३१९ ॥

१ 'रूक्षं' इति पा० । २ 'हृद्रोगकफनाशनम्' इति पा० ।

**कफवातक्रिमिघ्नं च लेखनं पित्तकोपनम् ॥**
**दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥ ३२० ॥**

तेषां विशेषमाह—चक्षुष्यमित्यादि । वृष्यत्वं पुनरस्य जात्युत्कर्षात्, अन्येषामवृष्यत्वमाहुः । सूक्ष्मं सूक्ष्मस्रोतोऽवगाहनशीलम् । वातानुलोमनं मार्गावृतवातस्य स्रोतःशुद्धिकरत्वेन प्रवर्तनं, धातुक्षयकृतस्य तु सूक्ष्मत्वसामान्यान्नातिप्रशमनमित्यर्थः । व्यवायीति अपक्वमेव देहमखिलं व्याप्नोति पश्चाद्देहस्थमेव पाकमुपैति । लघ्वित्यादि । उत्क्लेदि आर्द्रीभावकारि, अन्ये 'प्रकोपयति श्लेष्मपित्तादीन्' इत्याहुः । प्रभृतिशब्दोपगृहीतं केचिद्गुडिकालवणं पठन्ति—दीपनमित्यादि । पाकाभिनिर्वृत्तत्वाद्गुडिकाभूतमेव गुडिकालवणं भवति, तच्च 'वृक्षलवणम्' इति ख्यातम् ॥ ॥ ३१४—३२० ॥

**ऊषसूतं वालुकैलं शैलमूलाकरोद्भवम् ॥**
**लवणं कटुकं छेदि विहितं कटु चोच्यते ॥ ३२१ ॥**

अपरमपि प्रभृतिग्रहणोपगृहीतमाह—ऊषसूतमित्यादि । ऊषसूतमूषरप्रजातम् । वालुकैलमिति वालुकाः सिकताः, ताभिर्युक्ता इला पृथ्वी वालुकैला, तत्र संभवं वालुकैलम् । मूलाकरोद्भवमिति मूलभूत आकरो मूलाकरः, प्रशस्ततरतुरङ्गमोत्पत्तिभूमिः, तत्रोद्भवं मूलाकरोद्भवम् । कटु चोच्यत इति कटुलवणमिति प्रसिद्धमित्यर्थः ॥ ३२१ ॥

**यवक्षारस्वर्जिकाक्षारोषक्षारपाकिमटङ्कणक्षारप्रभृतयः ॥**
**गुल्मार्शोग्रहणीदोषशर्कराश्मरिनाशनाः ॥**
**क्षारास्तु पाचनाः सर्वे रक्तपित्तकराः सराः ३२२**
**ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ॥**
**शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनौ ॥ ३२३ ॥**
**उष्णोऽनिलघ्नः प्रक्लेदी चोषक्षारो बलापहः ॥**
**मेदोघ्नः पाकिमः क्षारस्तेषां बस्तिविशोधनः ॥३२४॥**
**विरूक्षणोऽनिलकरः श्लेष्मघ्नः पित्तदूषणः ॥**
**अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते ॥ ३२५ ॥**

लवणसारूप्यादाह—यवक्षारेत्यादि । यवक्षारो यवशूकोद्भवः 'शीतलिका' 'यवक्षार' इति च लोके; स्वर्जिक्षारः 'साजी' इति लोके; पाकेन निर्वृत्तः पाकिमः क्षारपाकविधानोक्तः प्रतिसारणीयः पानीयश्च, 'पाकिमं तूषरपांशुकाभिनिर्वृत्तम्' इत्यन्ये, अपरे पाकिमाद्भिन्नमूषरक्षारमाहुः; टङ्कणक्षारः सौभाग्यापरपर्यायः 'सुहागा' इति लोके; प्रभृतिग्रहणादेवंजातीयानां क्षाराणामवरोधः । तेषां सामान्यगुणमाह—गुल्मेत्यादि । विशेषगुणमाह—ज्ञेयावित्यादि ॥ ३२२-३२५ ॥

**सुवर्णं स्वादु हृद्यं च बृंहणीयं रसायनम् ॥**
**दोषत्रयापहं शीतं चक्षुष्यं विषसूदनम् ॥ ३२६ ॥**
**रूप्यमम्लं सरं शीतं सस्नेहं पित्तवातनुत् ॥**
**ताम्रं कषायं मधुरं लेखनं शीतलं सरम् ॥ ३२७ ॥**
**सतिक्तं लेखनं कांस्यं चक्षुष्यं कफवातजित् ॥**
**वातकृच्छीतलं लोहं तृष्णापित्तकफापहम् ॥ ३२८ ॥**
**कटु क्रिमिघ्नं लवणं त्रपु सीसं च लेखनम् ॥**
**मुक्ताविद्रुमवज्रेन्द्रवैदूर्यस्फटिकादयः ॥ ३२९ ॥**
**चक्षुष्या मणयः शीता लेखना विषसूदनाः ॥**
**पवित्रा धारणीयाश्च पाप्मालक्ष्मीमलापहाः ॥३३०॥**

**इति लवणादिवर्गः ।**

अत्र केचित् सुवर्णादीनामपि गुणमाहुः—सुवर्णमित्यादि । ॥ ३२६—३३० ॥

**धान्येषु मांसेषु फलेषु चैव**
**शाकेषु चानुक्तमिहाप्रमेयात् ॥**
**आस्वादतो भूतगुणैश्च मत्वा**
**तदादिशेद्द्रव्यमनल्पबुद्धिः ॥ ३३१ ॥**

द्रव्यानन्त्यादनुक्तद्रव्यज्ञानोपायमाह—धान्येष्वित्यादि । चकारात् कन्दलवणद्रवकृतान्नादीनां समुच्चयः । इहेति शास्त्रे । अप्रमेयात् आनन्त्यादित्यर्थः । 'अप्रमोहात्' इति 'अप्रमादात्' इति च क्वचित् पाठः; तत्राप्रमोहो ज्ञानमेव । तेष्वनुक्तद्रव्येषु परमौपयौगिकमुक्तं, न सर्वं विस्तरभयादित्यर्थः; तत्राप्रमादः सावधानत्वमेवास्माकम् । आस्वादतो रसात् । भूतगुणैरिति द्रव्यारम्भकभूतगुणैर्वीर्यपाकादिभिश्च । अन्ये तु पठन्ति (?) तेषां जडत्वेन प्रमादपाठ एवायम् ॥ ३३१ ॥

**षष्टिका यवगोधूमा लोहिता ये च शालयः ॥**
**मुद्गाढकीमसूराश्च धान्येषु प्रवराः स्मृताः ॥ ३३२ ॥**
**लावतित्तिरिसारङ्गकुरङ्गैणकपिञ्जलाः ॥**
**मयूरवर्मिकूर्माश्च श्रेष्ठा मांसगणेष्विह ॥ ३३३ ॥**
**दाडिमामलकं द्राक्षा खर्जूरं सपरूषकम् ॥**
**राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते ॥ ३३४ ॥**
**सतीनो वास्तुकश्चुञ्चूचिल्लीमूलकपोतिकाः ॥**
**मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥ ३३५ ॥**
**गव्यं क्षीरं घृतं श्रेष्ठं, सैन्धवं लवणेषु च ॥**
**धात्रीदाडिममम्लेषु, पिप्पली नागरं कटौ ॥ ३३६ ॥**
**तिक्ते पटोलवार्ताकं, मधुरे घृतमुच्यते ॥**
**क्षौद्रं, पूगफलं श्रेष्ठं कषाये सपरूषकम् ॥ ३३७ ॥**
**शर्करेक्षुविकारेषु, पाने मध्वासवौ तथा ॥**
**परिसंवत्सरं धान्यं. मांसं वयसि मध्यमे ॥ ३३८ ॥**
**अपर्युषितमन्नं तु संस्कृतं मात्रया शुभम् ॥**
**फलं पर्यागतं, शाकमशुष्कं तरुणं नवम् ॥ ३३९ ॥**

---

१ 'मलमूत्राकरोद्भवम्' इति ताडपत्रपुस्तके पाठः । २ 'विहितमुपयुक्तं सत् कटु, एतेन कटुपाकीति निष्कर्षः' इति हाराणचन्द्रः । 'विहिमं कटु चोच्यते' इति पा० । ३ '°प्रतिश्यायविनाशनाः' इति पा० । ४ 'अग्निदीप्तिकरास्तथा' इति ताडपत्रपुस्तके पाठः । ५ 'क्षारो मूत्रबस्तिविशोधनः' इति पा० ।

उक्तेषु प्रधानतममाह—षष्टिका इत्यादि । रक्तशालिषष्टिकौ शूकधान्येषु, यवगोधूमौ कुधान्येषु, मुद्गाढकीमसूराः शमीधान्येषु । लावेत्यादि—लावतित्तिरिकपिञ्जलमयूरा विष्किरेषु पक्षिषु; सारङ्गकुरङ्गैणा जाङ्गलमृगेषु, सारङ्गोऽत्र गौरहरिणः, कुरङ्गश्चतुरङ्गो मेदुलीपतिः, एणः कृष्णहरिणः; वर्मीमत्स्येषु, वर्मी रोहितक इत्येके, "रोहितो मत्स्यानां" ( च. सू. अ. २५ ) इति चरकवचनात्, अन्ये सर्पाकारमत्स्यमाहुः, श्रीब्रह्मदेवस्तु 'वर्मी शहाशकलो रोहितभेदोऽत्र, न पुनः सर्पाकारमत्स्यः' इत्याह; कूर्मः कच्छपः, स च पादिषु । दाडिमेत्यादि दाडिमामलकमातुलुङ्गानि फलेष्वम्लेषु; द्राक्षाखर्जूरराजादनानि मधुरफलेषु, खर्जूरं पिण्डखर्जूरं, राजादनं क्षीरिका; परूषकं कषायेषु, परूषकं 'फालसा' इति लोके, 'परूषकमातुलुङ्गे मधुराम्लेषु' इति केचित् । सतीन इति सतीनादयः शाकवर्गे, सतीनो वर्तुलकः, वास्तुकष्टङ्कवास्तुकः, चूचुः 'चूंच' इति लोके, चिल्ली क्षेत्रवास्तुकः, मूलकपोतिका बालमूलकं, मण्डूकपर्णी ब्राह्मी, जीवन्ती 'डोडी' इति लोके, 'जीवन्ती जीवा, तण्डुलीयकसदृक्षी' इत्यन्ये । 'शाकमांसफलैर्युक्ता' इत्यादौ विशेषानुक्तावप्येषामेव प्राधान्याद्ग्रहणम् । गोरसेषु गव्यं क्षीरघृतं श्रेष्ठं; सैन्धवमिति लवणेषु सैन्धवम् । धात्रीत्यादि 'ईषदम्लैरनम्लैर्वा' इत्यादावम्लीकरणेऽनुक्तयोरपि धात्रीदाडिमयोरेव प्रयोगः, एवं कटुकादिष्वपि ज्ञेयं; धात्रीदाडिमेत्यादिरसद्वारेणेति न पुनरुक्तम् । पिप्पलीत्यादि । घृतं क्षौद्रं च मधुरे, कषाये पूगफलं परूषकं च । शर्करेक्षुविकारेषु अनुक्तविशेषेषु शर्करा । पाने इत्यादि मधुशब्देन माद्वीकम्, आसवशब्देन द्राक्षासवः । परिसंवत्सरमिति परिसंवत्सरोषितं वर्षोषितं धान्यमित्यर्थः । मांसमित्यादि मध्यमे वयस्येणादेर्मांसं प्रधानमित्यर्थः । अपर्युषितमिति अपर्युषितमन्नं तद्दिनसिद्धम् । मात्रयेति मात्रया प्रयुक्तमित्यर्थः । शुभं पथ्यम् । पर्यागतं पक्वमित्यर्थः । शाकमित्यादि अशुष्कमार्द्रं, तरुणं प्रत्यग्रं, नवं तत्कालत्रोटितम् । सलिलदध्यादितैलमाक्षिकमूत्राणां स्ववर्ग एव प्राधान्यमिति न पुनरिह कथनं कृतम् ॥ ३३२—३३९ ॥

अथ कृतान्नवर्गः ।

**अतः परं प्रवक्ष्यामि कृतान्नगुणविस्तरम् ॥**
**लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः ॥३४०॥**
**वातानुलोमनो हृद्यः पिप्पलीनागरायुतः ॥**

संस्कृतानां गुणमाह—अत इत्यादि । कृतान्नं संस्कृतान्नं साधितान्नमित्यर्थः । लाजेत्यादि । केचिदत्र 'अविशुद्धानां' इति ईषदर्थमकारमुत्पाद्य मन्दविरेचनादविशुद्धानामित्यर्थं वदन्ति; चरकाभिप्रायेण तु 'विशुद्धानां' इत्येव पाठः, न तु 'अविशुद्धानां' इति । पथ्यो हित इत्यर्थः । पाचन आमादीनां, दीपनो जठराग्नेः । हृदयाय हितो हृद्यः । आयुत ईषद्युक्तः ॥ ३४० ॥—

**स्वेदाग्निजननी लघ्वी दीपनी बस्तिशोधनी ॥३४१॥**
**क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी ॥**

१ 'मेदलीपतिः' इति पा० । २ 'फणसु' इति पा० । ३ 'चुकु' इति पा० । ४ 'ऊर्ध्वं' इति पा० । ५ 'बस्तिसंशोधनी वृष्या ज्वरातीसारयोर्हिता' इति पा० ।

पेयामाह—स्वेदाग्निजननीत्यादि ।—उष्णत्वात् स्वेदजननी । क्षुत्तृट्श्रमग्लानिहरीत्यत्र 'क्षुधं तृषं द्रवत्वात्, श्रमग्लानी तृप्तिजनकत्वात्, हरति' इत्येके व्याचक्षते; वृद्धवैद्यास्तु 'क्षुत्तृट्श्रमेभ्य उत्पन्नां ग्लानिं हरति' इति व्याख्यानयन्ति । पेया यवागूः; सा विरलद्रवा, तदुपरितनो भागो मण्डः; एतद्द्वयमपि पेयम् ३४१—

**विलेपी तर्पणी हृद्या ग्राहिणी बलवर्धनी ॥ ३४२ ॥**
**पथ्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा ॥**

यवागूगुणकर्माभिधाय विलेपीगुणकर्माह—विलेपीत्यादि । विलेपी घनसिक्था, सा च लेह्या; तत्र मण्डपेयाविलेपीनां तण्डुलजलप्रमाणादिकं सूपकारा एव जानन्ति, विस्तरभयात् परिभाषाया अप्यनवस्थानाच्च न प्रमाणं लिखितम् ॥३४२॥—

**हृद्या संतर्पणी वृष्या बृंहणी बलवर्धनी ॥ ३४३ ॥**
**शाकमांसफलैर्युक्ता विलेप्यम्ला च दुर्जरा ॥**

तस्या एव विलेप्या अन्यसंयोगे गुणकर्माह—हृद्येत्यादि । हृद्या हृदयाय हिता । संतर्पणी तृप्तिजननी । वृष्या शुक्रला । बृंहणी शरीरवृद्धिकरी । अम्ला अम्लादिभिः कृतसंस्कारा । जेज्जटस्तु हृद्या संतर्पणीत्यादिश्लोकार्धं विमुच्य "शाकमांसफलैर्युक्ता यवाग्वोऽम्लाश्च दुर्जराः"-इत्येवं पठति ॥३४३॥—

**सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता ३४४**
**विलेपी बहुसिक्था स्याद्यवागूर्विरलद्रवा ॥**

कः पुनर्मण्डादीनां भेद इत्याह—सिक्थैरित्यादि । पेया सिक्थसमन्वितेति अत्र पेया यवागूरुच्यते, सा च सिक्थसमन्विता भवति । विलेपी बहुसिक्था स्यादिति बहुसिक्था घनसिक्था पृथग्द्रवरहिता, अत एव लेह्या । प्रागुक्ता या पेया यवाग्वपरपर्याया तस्या विलेपीसकाशाद्भेदज्ञापनायाह—यवागूर्विरलद्रवेति । यवागूः पेयेत्यर्थः । एतेनासिक्थो मण्डः, पेया यवाग्वपरपर्याया सिक्थसमन्विता विरलद्रवा, विलेपी घनसिक्था लेह्या पृथग्द्रवरहितेति भेदत्रयं सिक्थैर्विरहित इत्यादिना श्लोकेनोक्तम् । केचित् "अन्नं पञ्चगुणे तोये, यवागूं षड्गुणे पचेत् । चतुर्दशगुणे मण्डं, विलेपीं तु चतुर्गुणे"-इति परिभाषादर्शनात् पेयायवाग्वोर्भेदमाहुः ॥ ३४४ ॥—

**विष्टम्भी पायसो बल्यो मेदःकफकरो गुरुः ॥३४५॥**

विलेपीसाधर्म्यात् पायसस्यापि गुणमाह—विष्टम्भीत्यादि । पायसो दुग्धतण्डुलसिद्धः । विष्टम्भी प्रभावात्, सवाततोदशूला मलाप्रवृत्तिर्विष्टम्भः ॥ ३४५ ॥

**कफपित्तकरी बल्या कृशराऽनिलनाशनी ॥**

कृशरागुणमाह—कफेत्यादि । कृशरा तिलतण्डुलमाषकृता यवागूः ॥—

१ 'यवाग्वोऽम्लाश्च दुर्जराः' इति पा० । २ 'यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा' इति पा० ।

**धौतस्तु विमलः शुद्धो मनोज्ञः सुरभिः समः ॥३४६॥**
**स्विन्नः सुप्रस्रुतस्तूष्णो विशदस्त्वोदनो लघुः ॥**

भक्तगुणमाह—धौतस्त्वित्यादि । शुद्धः स्वयमेव धवलः, विगतमलस्तु कण्डनाद्धौतत्वेन चापगतावशिष्टमलः । मनोज्ञो मनोरमः । सुरभिः सुगन्धिः । समः स्विन्नः सर्वोऽपि स्विन्न इत्यर्थः । सुप्रस्रुतः सुष्ठुगालितः । उष्णः प्रसिद्धः । विशदः सुसिद्धः, स च सक्तत्वादिदोषरहितः । एवम्भूत ओदनो लघुः ॥ ३४६ ॥—

**अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः ३४७**

पूर्वोक्तविपरीतगुणमाह—अधौत इत्यादि । एवम्भूत ओदनो गुरुः ॥ ३४७ ॥

**लघुः सुगन्धिः कफहा विज्ञेयो भृष्टतण्डुलः ॥**

भृष्टतण्डुलौदनगुणमाह—लघ्वित्यादि । भृष्टतण्डुलो भृष्टतण्डुलसाधित ओदन इत्यर्थः ॥—

**स्नेहैर्मांसैः फलैः कन्दैर्विदलाम्लैश्च संयुताः ॥३४८॥**
**गुरवो बृंहणा बल्या ये च क्षीरोपसाधिताः ॥**

ओदनविशेषेण विशिष्टद्रव्यसंयोगानां गुणमाह—स्नेहैरित्यादि । स्नेहैर्घृतादिभिः । मांसफलकन्दाः प्रसिद्धाः । विदलं शमीधान्यावयवः, चकाराच्छाकादीनामप्यवरोधः । क्षीरोपसाधिता उदकादिसंयुक्ताः पायसादन्ये ॥ ३४८ ॥—

**सुस्विन्नो निस्तुषो भृष्ट ईषत् सूपो लघुर्हितः ॥३४९॥**

प्रहितमाह—सुस्विन्न इत्यादि । ईषत् सूप इति ईषद्भृष्ट इति संबन्धः । तत्र, अभर्जितापेक्षया भर्जितमुद्गादिसूपस्य लाघवं; माषसूपस्य तु भर्जितादिना लाघवमित्येके, भर्जितस्यापि न लाघवमित्यन्ये; अन्ये तु 'ईषत्सूप' इति न पठन्ति, किन्तु पाठान्तरं पठन्ति, तच्चादृष्टत्वान्न लिखितम् ॥ ३४९ ॥

**स्विन्नं निष्पीडितं शाकं हितं स्यात् स्नेहसंस्कृतम् ॥**
**अस्विन्नं स्नेहरहितमपीडितमतोऽन्यथा ॥ ३५० ॥**

प्रहितमभिधायापराण्यपि व्यञ्जनान्याह—स्विन्नमित्यादि । अतः पूर्वोक्तात्, अन्यथेति अहितमित्यर्थः ॥ ३५० ॥

**मांसं स्वभावतो वृष्यं स्नेहनं बलवर्धनम् ॥**
**स्नेहगोरसधान्याम्लफलाम्लकटुकैः सह ॥ ३५१ ॥**
**सिद्धं मांसं हितं बल्यं रोचनं बृंहणं गुरु ॥**

मांसस्य व्यञ्जनोत्तमस्य संयोगसंस्कारजं गुणकर्म निर्दिशन्नाह—मांसमित्यादि । स्नेहो घृतादिः, गोरसो दध्यादिः, धान्याम्लं काञ्जिकं, फलाम्लं दाडिमादि, कटुकं मरिचादि, प्रकृत्यनुरूपं संस्कारानुरूपं च बल्यत्वादि ज्ञेयम्, अयं तलितमांसानां गुण उक्तः ॥ ३५१ ॥—

**तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम् ॥ ३५२ ॥**
**विद्यात्पित्तकफोद्रेकी बलमांसाग्निवर्धनम् ॥**

तस्यैव मांसस्य प्रदिग्धत्वेन सिद्धस्य गुणमाह—तदेवेत्यादि । तदेवेति मांसम् । आदानं घनद्रवावापः । सुरभिद्रव्यसंस्कृतं हिङ्गुमरिचाजाजिप्रभृतिसंस्कृतम् । अयं प्रलेहमांसानां गुण उक्तः ॥ ३५२ ॥—

**परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु ॥ ३५३ ॥**
**रोचनं बलमेधाग्निमांसौजःशुक्रवर्धनम् ॥**

मांसस्य परिशुष्कत्वेन सिद्धस्य गुणमाह—परिशुष्कमित्यादि । परिशुष्कप्रदिग्धयोरयं विशेषः—"भृष्टं बहुघृते सिक्तं मुहुरुष्णाम्बुना मृदु । जीरकाद्यैर्धनं मांसं परिशुष्कं तदुच्यते ॥ तदेव गोरसादानं प्रदिग्धमिति विश्रुतम्"—इति । स्थिरं कठिनम् । हर्षणं हर्षोत्पादकम् । बलमुत्साहः, ओजो हृदि स्थितं धातुधाम । अयं शूल्यगुण उक्तः ॥ ३५३ ॥—

**तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति पाचकाः ॥ ३५४ ॥**

परिशुष्कस्य शूल्यस्य प्रसंगेन शूल्यविशेषाणामपि गुणमाह—तदेवेत्यादि । तदेव परिशुष्कमेव; ऊर्ध्वं निरन्तरं छेदनातिशयेनाणुशश्छिन्नत्वात् पिष्टमिवोल्लुप्तपिष्टम्; उल्लुप्तमिति पाचका इति 'वदन्ति' इति शेषः; पाचकाः सूपकाराः ॥३५४॥

**परिशुष्कगुणैर्युक्तं वह्नौ पक्वमतो लघु ॥**

तस्यैवाङ्गारपक्वस्य परिशुष्कस्य गुणमाह—परिशुष्केत्यादि । वह्नाविति अङ्गारतापितत्वात्, अतः पूर्वोक्तपरिशुष्काल्लघु भवति ॥—

**तदेव शूलिकाप्रोतमङ्गारपरिपाचितम् ॥ ३५५ ॥**
**ज्ञेयं गुरुतरं किंचित् प्रदिग्धं गुरुपाकतः ॥**

उल्लुप्तपिष्टप्रदिग्धगुणमाह—तदेवेत्यादि । शूलिकाप्रोतमिति लोहादिशलाकारोपितम् । प्रदिग्धमिति स्नेहधान्याम्लतक्रादिना प्रदिग्धम् । परिशुष्काद्गुरुपाकात् किंचिद्गुरुतरं, स्नेहादिप्रदिग्धत्वादेव ॥ ३५५ ॥—

**उल्लुप्तं भर्जितं पिष्टं प्रतप्तं कन्दुपाचितम् ॥ ३५६ ॥**
**परिशुष्कं प्रदिग्धं च शूल्यं यच्चान्यदीदृशम् ॥**
**मांसं यत्तैलसिद्धं तद्वीर्योष्णं पित्तकृद्गुरु ॥ ३५७ ॥**
**लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम् ॥**
**अनुष्णवीर्यं पित्तघ्नं मनोज्ञं घृतसाधितम् ॥ ३५८ ॥**

उक्तानुक्तशूल्यान्याह—उल्लुप्तमित्यादि । उल्लुप्तं पूर्ववत् । भर्जितादीनि व्याख्यानयन्ति,—"भर्जितं स्याद्घृतादौ तु पिष्ट्वा यत् साधितं पुनः । अपूपादिकृतं पिष्टं दधिदाडिमसौरभैः ॥ सिद्धं साज्यैस्तथाऽजाजीसामुद्रमरिचैरपि । अङ्गारादिषु यत् पक्वं प्रतप्तं तदुदाहृतम् ॥ पिशितं सौरभैर्लिप्तं कन्दुपक्वं मधुप्रभम् । राजिकाकल्कलिप्तं च कन्दुपाचितमुच्यते"—इति । परिशुष्कप्रदिग्धे पूर्ववत् । "हिङ्गूदके परिक्षिप्तं शूले निष्पीडितं ततः ।

१ 'माषसूपः' इति ताडपत्रपुस्तके पाठः । २ 'स्नेहसंस्कारितं हितम्' इति पा० । ३ अयमर्धश्लोकः कस्मिंश्चित्पुस्तके न पठ्यते ।

१ 'सिक्त्वा बहुघृते भृष्टं' इति पा० । २ 'प्रतप्तं कन्दुपाकतः' इति ताडपत्रपत्रपुस्तके पाठः ।

सिक्त्वा सिक्त्वाऽम्बुधाराभिर्विधूमेऽग्नौ प्रतापयेत् ॥ फलाम्लेनापि यत् पक्वं शूल्यं तत् सौरभान्वितम्"—इति । यच्चान्यदीदृशमिति यदेवंविधं मांसं तैलसाधितं भवति तदुष्णादिगुणकं ज्ञेयम् । घृतसाधितमाह—लघ्वित्यादि ॥ ३५६—३५८ ॥

**प्रीणनः प्राणजननः श्वासकासक्षयापहः ॥**
**वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः ॥ ३५९ ॥**
**स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम् ॥**
**भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम् ॥३६०॥**
**आप्यायनः संहननः शुक्रदो बलवर्धनः ॥**

शूल्यं मांसमुक्तं प्रदिग्धपरिशुष्कमेदाभ्यां द्विभेदमेव, तदभिधाय द्रवमभिधातुमाह—प्रीणन इत्यादि । आप्यायन इति स्मृतिस्वरहीनज्वरक्षीणकृशाल्परेतसां स्वास्थ्यकरः, संहनन इति क्षतोरसां तथा भग्नविश्लिष्टसन्धीनां सन्धानकरः, शुक्रद इति अल्परेतसां, बलवर्धन ओजोहीनस्य । एणादिप्रकृत्यनुविधानेन रसस्योत्कर्षापकर्षावूह्यौ, अन्यथा प्रकृतिगुणाभिधानं व्यर्थं स्यात् ॥ ३५९ ॥ ३६० ॥—

**स दाडिमयुतो वृष्यः संस्कृतो दोषनाशनः ॥३६१॥**

तस्यैव रसस्य संयोगजं गुणमाह—स दाडिमेत्यादि । स इति मांसरसः । संस्कृतः कटुकादिना । दोषशमनस्त्रिदोषहरः॥३६१॥

**प्रीणनः सर्वभूतानां विशेषान्मुखशोषिणाम् ॥**
**क्षुत्तृष्णापहरः श्रेष्ठः सौरावः स्वादुशीतलः ॥३६२॥**

सौरावगुणमाह—प्रीणन इत्यादि । सौरावो रसस्योपरितनोऽच्छो भागः । शीतलः सुशीतः ॥ ३६२ ॥

**यन्मांसमुद्धृतरसं न तत् पुष्टिबलावहम् ॥**
**विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् ॥ ३६३ ॥**

मांसरसप्रसङ्गेनोद्धृतरसस्य मांसस्य गुणमाह—यदित्यादि । यतः पिष्टकथितगालितमांसाद्रसो गृहीतः स निःसारत्वादुक्तगुणः ॥ ३६३ ॥

**दीप्ताग्नीनां सदा पथ्यः खानिष्कस्तु परं गुरुः ॥**

केचिदत्र खानिष्कगुणं पठन्ति—दीप्ताग्नीनामित्यादि । तमन्ये परिशुष्कभेदं मन्यन्ते, अन्ये वेसवारभेदं खानिष्कमाहुः ॥—

**मांसं निरस्थि सुस्विन्नं पुनर्दृषदि पेषितम् ॥ ३६४ ॥**
**पिप्पलीशुण्ठिमरिचगुडसर्पिःसमन्वितम् ॥**
**ऐकध्यं पाचयेत् सम्यग्वेसवार इति स्मृतः ॥३६५॥**
**वेसवारो गुरुः स्निग्धो बल्यो वातरुजापहः ॥**

वेसवारगुणमाह—मांसमित्यादि । अत्र गुडं विहाय 'हिङ्गुसर्पिःसमन्वितम्' इति केचित् पठन्ति; तन्न, सर्वैराचार्यैर्निषिद्धत्वात् । वेसवारमप्यन्ये परिशुष्कं मन्यन्ते ॥३६४॥३६५॥—

१ 'रसो मांससमुद्भवः' इति पा० । २ 'सर्वधातूनां' इति पा० । ३ 'सुस्निग्धं' इति पा० ।

**कफघ्नो दीपनो हृद्यः शुद्धानां व्रणिनामपि ॥ ३६६ ॥**
**ज्ञेयः पथ्यतमश्चैव मुद्गयूषः कृताकृतः ॥**

रसस्य प्रसङ्गेन मुद्गयूषस्य गुणमाह—कफघ्न इत्यादि । कृतयूषस्य व्यवहारार्थं स्वयमेव लक्षणं वक्ष्यति, कफघ्नस्थाने केचिद् 'ज्वरघ्न' इति पठन्ति ॥ ३६६ ॥—

**स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः ॥३६७॥**
**रुचिष्यो लघुपाकश्च दोषाणां चाविरोधकृत् ॥**

मुद्गयूषस्य संयोगान्तरेण नामान्तरं दर्शयन्नाह—स त्वित्यादि । स इति मुद्गयूषः । दोषाणां चाविरोधकृदिति वातादीनामीषद्विरोधकृद्वातादीनामीषच्छमन इत्यर्थः ॥ ३६७ ॥—

**मसूरमुद्गगोधूमकुलत्थलवणैः कृतः ॥ ३६८ ॥**
**कफपित्ताविरोधी स्याद्वातव्याधौ च शस्यते ॥**

मसूरादिपञ्चकयूषमाह—मसूरेत्यादि । वातव्याधौ च शस्यत इति कथं मुद्गमसूरयोर्यूषो वाते शस्तः, कथं कुलत्थलवणयोर्योगे पित्ताविरोधीति? उच्यते—मसूरादित्रयाणां शैत्यात् कुलत्थलवणयोरौष्ण्येऽपि पित्ताविरोधित्वं; कुलत्थलवणयोगादेव च वाते शस्तः; संयोगशक्तेर्वाऽचिन्त्यत्वात् ॥ ३६८ ॥—

**मृद्वीकादाडिमैर्युक्तः स चाप्युक्तोऽनिलार्दिते ३६९**
**रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते ॥**

तस्य पञ्चकयूषस्य संयोगान्तरेण गुणान्तरमाह—मृद्वीकेत्यादि । मसूरादियूषो मृद्वीकादाडिमाभ्यां संयुक्तोऽतीव वातहरः ॥ ३६९ ॥—

**पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ॥ ३७० ॥**
**पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ ॥**

अन्ययूषावाह—पटोलेत्यादि । पटोलादिषु च यूषस्य सूपयोनित्वान्मुद्गादिकं त्रिगुणमिच्छन्ति । इमौ द्वावपि यूषौ भिन्नौ ज्ञेयौ, न तु द्वयोरप्येकः ॥ ३७० ॥—

**श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ॥३७१॥**
**हन्ति मूलकयूषस्तु कफमेदोगलग्रहान् ॥**
**कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः ॥ ३७२ ॥**
**तूणीप्रतूणीकासाश्मगुल्ममेदःकफापहः ॥**

कासेत्यादि । मूलकयूषो बालशुष्कमूलकयूषः, जेज्झटस्तु 'यद्यपि बालमूलकं त्रिदोषघ्नं तथाऽपि तस्य न यूषकरणे श्रुतिरस्ति' इत्याह । अयमपि मुद्गादिसहितो ज्ञेयः ॥३७१॥३७२॥—

**दाडिमामलकैर्यूषो हृद्यः संशमनो लघुः ॥ ३७३ ॥**
**प्राणाग्निजननो मूर्च्छामेदोघ्नो वातपित्तजित् ॥**

दाडिमेत्यादि । अयमेक एव समुद्गश्च । न विरेकं करोति नापि वमनं किंतु तत्स्थमेव दोषं शमयतीति संशमनः । प्राणो भारहरणादिशक्तिः ॥ ३७३ ॥—

१ 'शर्कराश्मरिनाशनः' इति ताडपत्रपुस्तके पाठः । २ '°गुल्मोदावर्तनाशनः' इति पा० ।

**मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ॥ ३७४ ॥**

मुद्गेत्यादि । ग्राही अतिसारादीनां संग्राही । अयमप्येकः ॥ ३७४ ॥

**यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥**

यवकोलेत्यादि । अयमप्येकः ॥—

**सर्वधान्यकृतस्तद्वद्बृंहणः प्राणवर्धनः ॥ ३७५ ॥**

सर्वधान्येत्यादि । सर्वधान्यकृत इत्यभिधानेऽपि अयूषयोनित्वाच्छूकधान्यकुधान्ये विहाय मुद्गादिशमीधान्यानामपथ्यवर्ज्यं यूषः । अयं तन्त्रान्तरे नवमुष्टिनाम्नाऽभिहितः ॥ ३७५ ॥

**खडकाम्बलिकौ हृद्यौ तथा वातकफे हितौ ॥**

खडेत्यादि । खडकाम्बलिकौ यूषविशेषौ । तत्र खडो द्विविधः—सतक्रशमीधान्यः, सतक्रशाकश्च । तथाहि—"सतक्राणि शमीधान्यानि स्निग्धानि संग्राहकाणि खडानि" इति, सतक्रशाकस्तु "कपित्थतक्रचाङ्गेरीमरिचाजाजिचित्रकैः । सुपक्वः खडयूषोऽयमथ काम्बलिकोऽपरः[1] ॥ दध्यम्ललवणस्नेहतिलमाषसमन्वितः"-इति । तक्राम्लसिद्धः काम्बलिकः, अम्लानां बहुलात् । जेज्झटमते तु दधिदाडिममाषशाकस्नेहयुक्तं व्यञ्जनं खड इत्युच्यते; नलमते तु "तिलं सुलुञ्चितं कृत्वा पिष्टं क्षीरे त्र्यहोषितम् । पटे पूतं पचेद्धीमानार्द्रकाँवापिते[2] घृते ॥ मरिचाजाजिसामुद्रैर्युक्तस्तिलखडो भवेत्"—इति । काम्बलिकलक्षणं तत्रैवोक्तं—"दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः । पुनः सौवर्चलाजाजीबीजपूरकसौरभैः ॥ संयोज्य मथितः स्वच्छ एष काम्बलिको भवेत्"—इति ॥—

**बल्यः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः[3]३७६**
**दध्यम्लः कफकृद्बल्यः स्निग्धो वातहरो गुरुः ॥**
**तक्राम्लः पित्तकृत् प्रोक्तो विषरक्तप्रदूषणः ॥ ३७७ ॥**

येन येनाम्लेन सिद्धो यूषो यं यं गुणं करोति तं तं गुणं दर्शयन्नाह—बल्य इत्यादि । दाडिमेन क्रियते योऽम्लो यूषः स दाडिमाम्लः । दध्यम्ल इति दध्ना क्रियते योऽम्लो यूषः स दध्यम्लः । तक्राम्लोऽप्येवम् । प्रदूषणः प्रकोपणः । 'दाडिमधान्याम्लदधितक्रैरम्लत्वं काम्बलिकस्यैव' इत्येके ॥ ३७६ ॥ ॥ ३७७ ॥

**खडाः खडयवाग्वश्च षा(खा)डवाः पानकानि च ॥**
**एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः ॥३७८॥**

खडा इत्यादि । खडाः पूर्वोक्ताः । खडयवाग्व इति खडैरुक्तलक्षणैः सिद्धा यवाग्वः खडयवाग्वः । षा( खा )डवलक्षणमुच्यते—"स्पष्टाम्लमधुरोऽस्पष्टकषायलवणोषणः । अतिक्तः खाडवः कोलकपित्थाद्युपबृंहितः"—इति; खाडवा इति बहुवचनं खाडवभूयस्त्वप्राप्तये, तच्च विस्तरभयान्न लिखितम् । पानकानि अम्लिकाद्राक्षादिकृतानि, एवमादिग्रहणात् सट्टकप्रभृतीनि ३७८

**अस्नेहलवणं सर्वमकृतं कटुकैर्विना ॥**
**विज्ञेयं लवणस्नेहकटुकैः संयुतं कृतम् ॥ ३७९ ॥**

व्यवहारार्थं कृताकृतयूषयोः परिभाषां दर्शयन्नाह—अस्नेहलवणमित्यादि । कटुकैः शुण्ठ्यादिभिः ॥ ३७९ ॥

**अथ गोरसधान्याम्लफलाम्लैरन्वितं च यत् ॥**
**यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसम् ॥ ३८० ॥**

तयोर्यूषयोरम्लान्तरसंयोगेन संस्कृतासंस्कृतयोरपि गुरुलाघवं दर्शयन्नाह—अथेत्यादि । नपुंसकनिर्देशाद्रसमिति सामान्येनाभीष्टं, तेन यूषरसयोरुभयोरपि गुरुलाघवमुक्तं भवति; संस्कृतादसंस्कृतं लघ्विति संबध्यते, रसोऽत्र मांसरसः ॥३८०॥

**दधिमस्त्वम्लसिद्धस्तु[1] यूषः काम्बलिकः स्मृतः ॥**

यूषकाम्बलिकयूषलक्षणमुच्यते—दधीत्यादि ॥—

**तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥३८१॥**
**सिण्डाकी[2] च गुरूणि स्युः कफपित्तकराणि च ॥**

शुष्कशाकविशेषाणां कृतान्नानां गुणं निर्दिशन्नाह—तिलेत्यादि । तिलविकृतिर्मोदकादिः, पिण्याकविकृतिः फुट्टडकादिः । तिलपिण्याकस्य शुष्कशाकस्य विरूढकस्य च व्यञ्जनानि देशपुरुषविशेषतो ज्ञेयानि । विरूढमङ्कुरितं विगतरोहं वा, अन्ये शाकमेवात्यन्तरूढं विरूढमाहुः । सिण्डाकी अनासुता[3] शुष्कार्द्रा सुक्तेषु, 'अन्नादिष्वासुतसिण्डाकी शुक्तगुणा नोक्तगुणा' इत्येके, 'अनासुतसिण्डाकी शाकवर्गे उक्तगुणेत्यासुतसिण्डाक्या एवायं गुणः' इत्येके, मूलकादिशाकमेव किंचित् स्विन्नं क्षुण्णं सुगन्धिकटुकद्रव्यान्वितं वटकीकृतं सुक्तेषु 'सिण्डाकी' इत्युच्यते, अन्ये तु 'शाकसिक्थमण्डासुतिः सिण्डाकी' इत्याहुः ॥ ३८१ ॥—

**तद्वच्च वटकान्याहुर्विदाहीनि गुरूणि च ॥ ३८२ ॥**

तद्वदित्यादि । वटकानीति सिण्डाकीवटकानि ॥ ३८२ ॥

**लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः ॥**
**तृष्णामूर्च्छाभ्रमच्छर्दिश्रमघ्ना रागषाडवाः ॥ ३८३ ॥**

रागषाडवगुणमाह—लघव इत्यादि । तत्र रागः—"सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकया कृतः"—इति । षाडवाः पुनर्मधुराम्ललवणसंयोगजा नानाविधाः ॥ ३८३ ॥

**रसाला बृंहणी बल्या स्निग्धा वृष्या च रोचनी ॥**

रसालागुणमाह—रसालेत्यादि । रसाला शिखरिणी ॥—

**स्नेहनं गुडसंयुक्तं हृद्यं दध्यनिलापहम् ॥ ३८४ ॥**

सगुडदधिगुणमाह—स्नेहनमित्यादि ॥ ३८४ ॥

**सक्तवः सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुताः ॥**
**नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते ॥ ३८५ ॥**

---

१ 'षडयूषोऽयमयं' इति पा० । २ 'आर्द्रकोत्थापिते' इति पा० । ३ अस्याग्रे 'धान्याम्लो दीपनो हृद्यः पित्तकृद्वातनाशनः' इत्याधिकः पाठ उपलभ्यते क्वचित्पुस्तके ।

१ 'दधिमस्त्वाम्लसिद्धस्तु' इति पा० । २ 'शिण्डाकी', 'शाण्डाकी', 'सण्डाकी' इति च पा० । ३ 'अनासुतार्द्रा सुक्तेषु' इति पा० ।

**मन्थः सद्योबलकरः पिपासाश्रमनाशनः ॥**
**साम्लस्नेहगुडो मूत्रकृच्छ्रोदावर्तनाशनः ॥ ३८६ ॥**
**शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत् ॥**
**द्राक्षामधूदकयुतः कफरोगनिबर्हणः ॥ ३८७ ॥**
**वर्गत्रयेणोपहितो मलदोषानुलोमनः ॥**

सक्तुमन्थमाह—सक्तव इत्यादि । मन्थः सद्योबलकर इति सद्योबलकरोऽयं नोत्तरकाले( लं ) बलकरो, रूक्षत्वात्; अविशेषोक्तावपि यवादिशक्तवो ग्राह्याः । मन्थस्यैव द्रव्यान्तरसंयुक्तस्य गुणान्तरमाह—साम्लस्नेहेत्यादि । उदावर्तनाशनत्वेनास्य वातहरत्वमुक्तम् ॥ ३८५—३८७ ॥—

**गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम् ॥ ३८८ ॥**
**तदेव खण्डमृद्वीकाशर्करासहितं पुनः ॥**
**साम्लं सतीक्ष्णं सहिमं पानकं स्यान्निरत्ययम् ॥३८९॥**
**मार्द्वीकं तु श्रमहरं मूर्च्छादाहतृषापहम् ॥**
**परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ॥३९०॥**
**द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्रां च सर्वतः ॥**
**पानकानां यथायोगं गुरुलाघवमादिशेत् ॥ ३९१ ॥**

**इति कृतान्नवर्गः ।**

पानकगुणमाह—गौडमित्यादि । गुडशब्दोपलक्षणत्वात् सर्वेक्षुविकारपानकगुण उक्तः । अनम्लम् ईषदम्लम् । पानकस्य नानाद्रव्यपरिभाषामाह—तदेवेत्यादि । तदेव गौडमेव, साम्लं सतिन्तिडीकादिद्रव्यं, सतीक्ष्णमिति मरिचादितीक्ष्णद्रव्यसहितं, सहिमं सकर्पूरं, पानकं स्याद्भवेत्, निरत्ययं श्रेष्ठम्; एवं खण्डमृद्वीकाशर्करापानकेष्वम्लादिद्रव्यसंस्कारो ज्ञेयः; मृद्वीकाग्रहणं पानकयोनिफलोपलक्षणम् । द्राक्षापानकगुणमाह—मार्द्वीकमित्यादि । परूषककोलपानकयोर्गुणमाह—परूषकाणामित्यादि । परूषकं 'फालेसा' इति लोके, कोलं बदरः । अनुक्तपानकगुणमाह—द्रव्येत्यादि । सर्वतः सर्वस्मिन् पानके । उक्तानुक्तपानकगुणोऽयमित्येके । इति कृतान्नवर्गः ॥ ३८८—३९१ ॥

**अथ भक्ष्यवर्गः ।**

**वक्ष्याम्यतः परं भक्ष्यान् रसवीर्यविपाकतः ॥**

भक्ष्यान्निर्देष्टुमाह—वक्ष्यामीत्यादि । भक्ष्या लड्डुकादयः । रसवीर्यविपाकत इति रसादिभिः कृत्वेत्यर्थः ॥—

**भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः ॥**
**अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥**

भक्ष्याणां योनिविशेषेण गुणविशेषं निर्दिशन्नाह—भक्ष्या इत्यादि । गोधूमपिष्टविकृतिं क्षीरेणालोड्य ये क्रियन्ते ते क्षीरकृता भक्ष्याः । बल्या इति उत्साहकराः । अदाहिन इति ईषद्दाहिनः । दीपनाः पुनः स्ववर्गापेक्षया वातोपहताग्नेः, संस्कारप्रभावाद्वा ॥ ३९२ ॥—

**तेषां प्राणकरा हृद्या घृतपूराः कफावहाः ॥ ३९३ ॥**
**वातपित्तहरा वृष्या गुरवो रक्तमांसलाः ॥**

क्षीरभक्ष्यविशेषमाह—तेषामित्यादि । "मर्दिताः समिताः क्षीरनालिकेरसितादिभिः । अवगाह्य घृते पक्वो घृतपूरोऽयमुत्तमः"; 'घेव(उ)र' इति लोके ॥ ३९३ ॥—

**बृंहणा गौडिका भक्ष्या गुरवोऽनिलनाशनाः ॥३९४॥**
**अदाहिनः पित्तहराः शुक्लाः कफवर्धनाः ॥**

गुडकृतान् भक्ष्यानाह—बृंहणा इत्यादि । समितावेष्टिता गुडप्रधानोदरा 'गौडिका' इत्युच्यन्ते ॥ ३९४ ॥—

**मधुशीर्षकसंयावाः पूपा ये ते विशेषतः ॥ ३९५ ॥**
**गुरवो बृंहणाश्चैव मोदकास्तु सुदुर्जराः ॥**

मध्वित्यादि । समितावेष्टिताः पाकघनीभूता मधुरा घृतोदरा मधुमस्तकाः, त एव 'मधुशीर्षका' उच्यन्ते; केचिन्मधुमस्तकशब्देन खजकमाहुः । संयावाः पुनः—"समितां मधु(घृत)दुग्धेन मोदयित्वा सुशोभनाम् । पचेद्घृतोत्तरे खण्डे क्षिपेद्भाण्डे नवे ततः ॥ संयावोऽसौ युतश्चूर्णैः खण्डैलामरिचार्द्रकैः"—इति । पूपाः 'पूआ' इति लोके । मोदका लड्डुकाः ॥ ३९५ ॥—

**रोचनो दीपनः स्वर्यः पित्तघ्नः पवनापहः ॥३९६ ॥**
**गुरुर्मृष्टतरश्चैव सट्टकः प्राणवर्धनः ॥**

सट्टकगुणमाह—दीपन इत्यादि । मृष्टतरःअतिशयेन स्वादुः । सट्टकभेदा बहवः; तत्रैक एव लिख्यते—"लवङ्गयोषखण्डैस्तु दधि निर्मथ्य गालितम् । दाडिमीबीजसंयुक्तं चन्द्रचूर्णावचूर्णितम् ॥ सट्टकं सुप्रमोदाख्यं नलादिभिरुदाहृतम्"—इति । अपरे विस्तरभयान्न लिखिताः ॥ ३९६ ॥—

**हृद्यः सुगन्धिर्मधुरः स्निग्धः कफकरो गुरुः ॥३९७॥**
**वातापहस्तृप्तिकरो बल्यो विष्यन्द उच्यते ॥**

विष्यन्दगुणमाह—हृद्य इत्यादि । "आमगोधूमचूर्णं च सर्पिःक्षीरगुडान्वितम् । नातिसान्द्रो नातिघनो विष्यन्दो नाम नामतः"—इति । अन्ये तु घृतभ्रष्टतण्डुलान् विष्यन्दशब्देनाहुः, तन्नेच्छति गयी ॥ ३९७ ॥—

**बृंहणा वातपित्तघ्ना भक्ष्या बल्यास्तु सामिताः ३९८**
**हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः ॥**

समिताकृतं सामान्यं गुणं केषुचित् किंचिन्निराकुर्वन्नाह—बृंहणा इत्यादि । सामिता इति फेनकादिविशेषणं, समिता गोधूमचूर्णं, तया कृताः सामिताः; अन्ये 'बृंहणा इत्यादयः समिताकृतभक्ष्याणां सामान्यगुणाः, हृद्या इत्यादयस्तु समिताकृतभक्ष्यविशेषफेनकादिगुणाः' इत्याहुः । तत्र फेनकाः "विमर्द्य विमलां शुक्लां

१ 'सद्योबलश्छर्दिपिपासा°' इति ताडपत्रपुस्तके पाठः ।
२ 'परूस' इति पा० ।

१ 'गुरुर्मिष्टतमश्चैव' इति पा० ।

समितां नातिशर्कराम् । संवेष्टनाय गर्भार्थं खरपाकं घृते पचेत् ॥ फेनकं फेनसङ्काशं संपूर्णशशिसन्निभम्''—इति ॥ ३९८ ॥—

**मुद्गादिवेसवाराणां पूर्णा विष्टम्भिनो मताः ॥३९९॥**
**वेसवारैः सपिशितैः संपूर्णा गुरुबृंहणाः ॥**

त एव सामितादयो मुद्गादिन्यस्तगर्भा भवन्ति, तदा तद्गुणं निर्दिशन्नाह—मुद्गादीत्यादि । खिन्नपिष्टमुद्गादिकल्को वेसवारः, पूर्णा भरिताः । पिशितवेशवारभरितगुणमाह—वेसवारैरित्यादि । सपिशितैरिति पिशितवेसवारैरित्यर्थः; अपरे वेसवारं शुण्ठ्यादिकृतमाहुः । संपूर्णा भरिताः । इमेऽपि सामिताः ॥ ३९९ ॥

**पाललाः श्लेष्मजननाः, शष्कुल्यः कफपित्तलाः ४००**

पललं तिलपिष्टं गुडाद्युपेतं, तेन कृताः पाललाः; इमेऽपि सामिताः । शष्कुल्य इति शष्कुल्यः 'शांकुली' इति लोके ॥४००॥

**वीर्योष्णाः पैष्टिका भक्ष्याः कफपित्तप्रकोपणाः ॥**
**विदाहिनो नातिबला गुरवश्च विशेषतः ॥ ४०१ ॥**

सामितान् भक्ष्यानभिधाय पिष्टभक्ष्यान्निर्दिशन्नाह—वीर्योष्णा इत्यादि । पैष्टिकाः तण्डुलपिष्टकृताः ॥ ४०१ ॥

**वैदला लघवो भक्ष्याः कषायाः सृष्टमारुताः ॥**
**विष्टम्भिनः पित्तसमाः श्लेष्मघ्ना भिन्नवर्चसः ४०२**
**बल्या वृष्यास्तु गुरवो विज्ञेया माषसाधिताः ॥**

वैदला इत्यादि । वैदला मुद्गादिकृताः ॥ ४०२ ॥

**कूर्चिकाविकृता भक्ष्या गुरवो नातिपित्तलाः ४०३**

विग्रथितं क्षीरं घनत्वमापन्नं कूर्चिका, तया विविधप्रकाराः कृताः कूर्चिकाविकृताः ॥ ४०३ ॥

**विरूढककृता भक्ष्या गुरवोऽनिलपित्तलाः ॥**
**विदाहोत्क्लेशजननना रूक्षा दृष्टिप्रदूषणाः ॥ ४०४ ॥**

विरूढककृता इत्यादि । विरूढककृता अङ्कुरितमुद्गादिकृताः ॥ ४०४ ॥

**हृद्याः सुगन्धिनो भक्ष्या लघवो घृतपाचिताः ॥**
**वातपित्तहरा बल्या वर्णदृष्टिप्रसादनाः ॥ ४०५ ॥**
**विदाहिनस्तैलकृता गुरवः कटुपाकिनः ॥**
**उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः ४०६**

घृततैलपक्वभक्ष्यस्य गुणविशेषमाह—हृद्या इत्यादि ॥४०५॥ ॥ ४०६ ॥

**फलमांसेक्षुविकृतितिलमाषोपसंस्कृताः ॥**
**भक्ष्या बल्याश्च गुरवो बृंहणा हृदयप्रियाः ॥४०७॥**

योनिविशेषेण भक्ष्याणां गुणागुणविशेषं दर्शयन्नाह—फलेत्यादि । फलानि तालादीनि ॥ ४०७ ॥

**कपालाङ्गारपक्वास्तु लघवो वातकोपनाः ॥**
**सुपक्वास्तनवश्चैव भूयिष्ठं लघवो मताः ॥ ४०८ ॥**

कपालाङ्गारपक्वानां स्नेहसिद्धेभ्यो लघुत्वं दर्शयन्नाह—कपालाङ्गारपक्वा इत्यादि । कपालं कर्परः, तत्र पक्वा मण्डकादयः; अङ्गारपक्वा अङ्गारकर्कटीप्रभृतयः ॥ ४०८ ॥

**सकिलाटादयो भक्ष्या गुरवः कफवर्धनाः ॥**

सकिलाटादय इत्यादि । किलाटः क्षीरकूर्चिकापिण्डः, आदिशब्दात्तक्रपिण्डकादयः ॥—

**कुल्माषा वातला रूक्षा गुरवो भिन्नवर्चसः ॥४०९॥**

कुल्माषा इत्यादि । यवपिष्टमुष्णोदके सिक्तमीषत्खिन्नमृदितं शङ्काटादिप्रकारं कुल्माषमाहुः; 'यवादयः खिन्ना' इत्येके । भिन्नवर्चसो द्रवमलाः ॥ ४०९ ॥

**उदावर्तहरो वाट्यः कासपीनसमेहनुत् ॥**

उदावर्तेत्यादि । वाट्यो यवगोधूमादिभिर्दलितैः कृतः, अन्ये तु भृष्टयवकृतो भक्ष्य इत्याहुः ॥—

**धानोलुम्बास्तु लघवः कफमेदोविशोषणाः ॥४१०॥**

धानेत्यादि । धाना भृष्टयवाः; उलुम्बा होलकाः, अत्र मुद्गकलायादिशिम्बा अग्निपक्वा 'होलका' इत्युच्यन्ते ॥ ४१० ॥

**शक्तवो बृंहणा वृष्यास्तृष्णापित्तकफापहाः ॥**
**पीताः सद्योबलकरा भेदिनः पवनापहाः ॥ ४११ ॥**
**गुर्वी पिण्डी खराऽत्यर्थं लघ्वी सैवं विपर्ययात् ॥**
**शक्तूनामाशु जीर्येत मृदुत्वादवलेहिका ॥ ४१२ ॥**

वाट्यधानाप्रसङ्गेन यवशक्तूनाह—शक्तव इत्यादि । शक्तवो यवशक्तवः । बृंहणा न लेखना मांसकरा इत्यर्थः । 'तृष्णापित्तकफापहाः' इत्यत्र 'तृष्णापित्तमलापहाः' इति क्वचित्, तत्र मलापहत्वमल्पमलकर्तृत्वात् । सद्योबलकरत्वं रौक्ष्यान्नोत्तरकालम् । खरमार्दवभेदेन गुरुलाघवमाह—गुर्वीत्यादि । खरा कठिनेत्यर्थः । विपर्ययादिति मृद्वीत्यर्थः । पिण्डीमभिधायावलेहिकामाह—शक्तूनामित्यादि । शक्तूनामवलेहिकेति संबन्धः ॥४११॥४१२॥

**लाजाश्छर्द्यतिसारघ्ना दीपनाः कफनाशनाः ॥**
**बल्याः कषायमधुरा लघवस्तृण्मलापहाः ॥ ४१३ ॥**

अधुना लाजगुणमाह—लाजा इत्यादि । मलापहत्वमल्पकर्तृत्वात् ॥ ४१३ ॥

**तृट्छर्दिदाहघर्मार्तिनुदस्तत्सक्तवो मताः ॥**
**रक्तपित्तहराश्चैव दाहज्वरविनाशनाः ॥ ४१४ ॥**

लाजशक्तुगुणमाह—तृडित्यादि । तत्सक्तवो लाजशक्तवः ॥ ४१४ ॥

**पृथुका गुरवः स्निग्धा बृंहणाः कफवर्धनाः ॥**
**बल्याः सक्षीरभावात्तु वातघ्ना भिन्नवर्चसः ॥४१५॥**

पृथुकगुणमाह—पृथुका इत्यादि । आर्द्रशालिधान्यं मृदुभृष्टं मुसलाघातचिप्पटीभूतावयवं 'पृथुका' इत्युच्यते ॥ ४१५ ॥

---

१ 'श्लेष्महराः पित्तघ्नाः' इति पा० । २ 'वृष्याः' इति पा० ।

१ 'शक्तवस्तर्पणा हृद्या' इति ताडपत्रपुस्तके पाठः । २ 'पिण्डी' इति पा० ।

**संधानकृत् पिष्टमामं ताण्डुलं कृमिमेहनुत् ॥**

धान्यपिष्टगुणमाह—सन्धानकृदित्यादि । सन्धानं भग्नस्य, आममपक्कमित्यर्थः ॥—

**सुदुर्जरः स्वादुरसो बृंहणस्तण्डुलो नवः ॥ ४१६ ॥**
**सन्धानकृन्मेहहरः[1] पुराणस्तण्डुलः स्मृतः ॥**

[2]नैवानवतण्डुलगुणमाह—सुदुर्जर इत्यादि ॥ ४१६ ॥—

**द्रव्यै[3]संयोगसंस्कारविकारान् समवेक्ष्य च ॥४१७॥**
**यथाकारणमासाद्य भोक्तॄणां छन्दतोऽपि वा ॥**
**अनेकद्रव्ययोनित्वाच्छाखतस्तान् विनिर्दिशेत् ४१८**

**इति भक्ष्यवर्गः ।**

किंबहुना आनन्त्याद्नसंयोगसंस्काराणां न शक्यते सर्वोपसंग्रहः कर्तुं, तस्मादुक्तानुक्तसंग्रहायाह—द्रव्येत्यादि । विकारान् भक्ष्यविशेषान् । कारणमासाद्येति दोषादिप्रकोपं प्राप्येत्यर्थः । भोक्तॄणां छन्दतोऽपि वेति पुरुषाभिलाषत इत्यर्थः । इति भक्ष्यवर्गः ॥ ४१७ ॥ ४१८ ॥

**अतः सर्वानुपानान्युपदेक्ष्यामः ।—**

**अम्लेन केचिद्विहता मनुष्या**
**माधुर्ययोगे प्रणयीभवन्ति ॥**
**तथाऽम्लयोगे मधुरेण तृप्ता-**
**स्तेषां यथेष्टं प्रवदन्ति पथ्यम् ॥ ४१९ ॥**

अनुपानं निर्देष्टुमाह—अनुपानानीत्यादि । अन्नादनु पश्चात् पीयत इत्यनुपानम् । अनुपानं कुत्र हितावहमित्याह—अम्लेनेत्यादि । विहता उद्वेजिताः । माधुर्ययोग इति माधुर्योपयोग इत्यर्थः । प्रणयीभवन्ति सुखीभवन्तीति, तथाऽम्लयोग इत्यत्रापि प्रणयीभवन्तीति संबन्धनीयम् । तेषामुभयेषामपि अम्लतृप्तानां मधुरतृप्तानां चेत्यर्थः । यथेष्टं यथाभिलषितम्; अम्लतृप्तस्य मधुरं पथ्यं, मधुरतृप्तस्य चाम्लमित्यर्थः; तस्माद्रसषट्केऽपि परस्परविरुद्धमनुपानं ज्ञेयं, रसद्वयस्योपलक्षणत्वात्; अथवा शेषरसानां तृप्त्या भोक्तुमशक्यत्वाच्छेषरसानामनुक्तिः ॥४१९॥

१ 'पित्तहरः' इति पा० । २ 'तण्डुलगुणमाह–तण्डुलः कृमिमेहनुत् । नवतण्डुलगुणमाह–सुदुर्जरः स्वादुरसो बृंहणस्तण्डुलो नवः' इति क्वचिद्धस्तलिखितपुस्तके पाठः; तत्र पुराणतण्डुलगुणा न पठ्यन्ते । ३ 'यदा कारणमासाद्य भोक्तॄणां छन्दतोऽपि वा । भक्ष्यादयः प्रकल्प्याः स्युस्तदा सुनिपुणो भिषक् ॥ द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य तु । अनेकद्रव्ययोनित्वाच्छाखतस्तान् विनिर्दिशेत्' इति हाराणचन्द्रसंमतः पाठः । 'द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य तु । भिषग्यथार्हं भक्ष्याणामादिशेद्गुरुलाघवम् ॥ खला खलयवाग्वश्च रागषाडवसट्टकाः । पानकानि च चित्राणि यूषाश्चानेकयोनयः ॥ कट्वम्लस्वादुलवणा लघवो ये फलोद्भवाः । एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः ॥ यदा कारणमासाद्य भोक्तॄणां छन्दतोऽपि वा । अनेकद्रव्ययोनित्वाच्छाखतस्तान् विनिर्दिशेत्' इति ताडपत्रपुस्तके पाठः ।

**शीतोष्णतोयासवमद्ययूष-**
**फलाम्लधान्याम्लपयोरसानाम् ॥**
**यस्यानुपानं तु हितं भवेद्य-**
**त्तस्मै प्रदेयं त्विह मात्रया तत् ॥ ४२० ॥**
**व्याधिं च कालं च विभाव्य धीरै-**
**र्द्रव्याणि भोज्या[1]नि च तानि तानि ॥**
**सर्वानुपानेषु वरं वदन्ति**
**मै[2]ध्यं यदम्भः शुचिभाजनस्थम् ॥ ४२१ ॥**
**लोकस्य जन्मप्रभृति प्रशस्तं**
**तोयात्मकाः सर्व[3]रसाश्च दृष्टाः ॥**
**सङ्क्षेप एषोऽभिहितोऽनुपाने-**

अनुपानद्रव्याणि सङ्कल्प्याह—शीतोष्णेत्यादि । द्रवप्रधान आसवः, द्रवप्रधानं द्रव्यप्रधानं च मद्यमुच्यते, यूषो मुद्गादीनां, फलाम्लानि बीजपूरादीनि, धान्याम्लं काञ्जिकं, पयो दुग्धं, रसो मांसरसः । यस्य पुरुषस्य, व्याधिं व्रणज्वरादिकं, कालमावस्थिकमार्तवं च, विभाव्य विशेषेण ज्ञात्वा, द्रव्याणि तैलादीनि, भोज्यानि रक्तशाल्यादीनि, एतत्सर्वमूहापोहविदा ज्ञात्वा अनुपानं विधेयमिति । ( किंबहुना सर्वानुपानेष्वपि ) मैध्यम् आन्तरिक्षं जलम् ॥ ४२० ॥ ४१ ॥—

**ष्यतः परं विस्तरतोऽभिधास्ये ॥ ४२२ ॥**
**उष्णोदकानुपानं तु स्नेहानामथ शस्यते ॥**
**ऋते भल्लातकस्नेहात् स्नेहात्तौवरकात्तथा ॥ ४२३ ॥**
**अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिकम् ॥**
**शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः ॥४२४॥**
**दधिपायसमद्यार्तिविषजुष्टे तथैव च ॥**
**केचित् पिष्टमयस्याहुरनुपानं सुखोदकम् ॥ ४२५ ॥**
**पयो मांसरसो वाऽपि शालिमुद्गादिभोजिनाम् ॥**
**युद्धाध्वातपसंतापविषमद्यरुजासु च ॥ ४२६ ॥**
**माषादेरनुपानं तु धान्याम्लं दधिमस्तु वा ॥**
**मद्यं मद्योचितानां तु सर्वमांसेषु पूजितम् ॥ ४२७ ॥**
**अमद्यपानामुदकं फलाम्लं वा प्रशस्यते ॥**
**क्षीरं घर्माध्वभाष्यस्त्रीक्लान्तानाममृतोपमम् ॥४२८॥**
**सुरा कृशानां स्थूलानामनुपानं मधूदकम् ॥**
**निरामयानां चित्रं तु भुक्तमध्ये प्रकीर्तितम् ॥४२९॥**
**स्निग्धोष्णं मारुते पथ्यं, कफे रूक्षोष्णमिष्यते ॥**
**अनुपानं हितं चापि पित्ते मधुरशीतलम् ॥ ४३० ॥**
**हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ॥**
**अर्कशेलुशिरीषाणामासवास्तु विषार्तिषु ॥ ४३१ ॥**

संक्षेपमभिधाय विस्तरमाह—अतः परमित्यादि । ऋते विनेत्यर्थः । भल्लातकस्यात्यन्तोष्णत्वाच्छीतजलम् । तौवरकादिति "पत्रैस्तु केशराकारैः कलायसदृशैः फलैः । वृक्षास्तुवरनामानः पश्चिमार्णवतीरजाः" इति, तद्भवस्तौवरकः । स्नेहप्रसङ्गेनैकीय-

१ 'योज्यानि' इति ताडपत्रपुस्तके पाठः । २ 'मेध्यं' इति पा० । ३ अयं पाठो हस्तलिखितपुस्तके न पठ्यते ।

मतं तैलानुपाने निर्दिशन्नाह—अनुपानमित्यादि । उष्णकाले यूषं, शीतकाले काञ्जिकम् । माक्षिकस्येति माक्षिकस्य मधुनः । पिष्टान्नस्य तण्डुलपिष्टस्य । दधि प्रसिद्धं; पायसं क्षीरसिद्धास्तण्डुलाः, पायसस्य गुरुत्वेन विदाहसंभवाच्छीतोदकं पेयं; मद्यार्तिर्मद्यविदाहः; विषजुष्टे विषव्याप्ते । तथैव चेति शीतोदकमेव । केचिदित्यादि । सुखोदकम् ईषदुष्णमुदकम् । पय इत्यादि । युद्धं संग्रामः, आतपो घर्मः, संतापोऽग्न्यादीनां, विषमद्यरुजास्विति विषैरोगेषु मदात्यये चेत्यर्थः । शालिषु पयोऽनुपानं समानमप्यचिन्त्यत्वात् संयोगशक्तीनां; जेज्झटस्तु पयःस्थाने मस्त्विच्छति, 'पयोग्रहणस्य गोरसोपलक्षणत्वात्तदपि लभ्यत एव' इत्यन्ये । माषादेरित्यादि । धान्याम्लं काञ्जिकम् । मद्योचितानां मद्ययोग्यानाम् । पूजितं प्रशस्तम् । अमद्येत्यादि । फलाम्लं दाडिमादि । क्षीरमित्यादि । घैर्मादिक्रान्तानाम् आतपादिपीडितानाम् । कृशानां दुर्बलानां, सुराऽनुशस्तेति संबन्धः । मधूदकं मधुमिश्रं जलम् । निरामयानां स्वस्थानाम् । चित्रं नानाप्रकारम् । स्निग्धोष्णमिति अनुपानमिति संबन्धः । शोणितपित्तिभ्यो रक्तपित्तिभ्य इत्यर्थः । अत्रापि 'अनुपानम्' इत्यनुवर्तते । अर्कशेल्वित्यादि । विषार्तिषु विषपीडासु, अर्कादीनामासवा अनुपानानि । शेलुः श्लेष्मान्तकः ॥ ४२२—४३१ ॥

**अतः परं तु वर्गाणामनुपानं पृथक् पृथक् ॥**
**प्रवक्ष्याम्यनुपूर्वेण सर्वेषामेव मे शृणु ॥ ४३२ ॥**

**तत्र पूर्वशस्यजातानां बदराम्लं, वैदलानां धान्याम्लं, जङ्गालानां धन्वजानां च पिप्पल्यासवः, विष्किराणां कोलबदरासवः, प्रतुदानां क्षीरवृक्षासवः, गुहाशयानां खर्जूरनालिकेरासवः, प्रसहानामश्वगन्धासवः, पर्णमृगाणां कृष्णगन्धासवः, बिलेशयानां फलासवः, एकशफानां त्रिफलासवः, अनेकशफानां खदिरासवः, कूलचराणां शृङ्गाटककशेरुकासवः, कोशवासिनां पादिनां च स एव, प्लवानामिक्षुरसासवः, नादेयानां मत्स्यानां मृणालासवः, सामुद्राणां मातुलुङ्गासवः, अम्लानां फलानां पद्मोत्पलकन्दासवः, कषायाणां दाडिमवेत्रासवः, मधुराणां त्रिकटुकयुक्तः खण्डासवः, तालफलादीनां धान्याम्लं, कटुकानां दूर्वानलवेत्रासवः, पिप्पल्यादीनां श्वदंष्ट्रावसुकासवः, कूष्माण्डादीनां दार्वीकरीरासवः, चुचुप्रभृतीनां लोध्रासवः, जीवन्त्यादीनां त्रिफलासवः, कुसुम्भशाकस्य स एव, मण्डूकपर्ण्यादीनां महापञ्चमूलासवः, तालमस्तकादीनामम्लफलासवः, सैन्धवादीनां सुरासव आरनालं च, तोयं च सर्वत्रेति ॥ ४३३ ॥**

अत इत्यादि । अनुपूर्वेण यथाक्रमेण । सर्वेषामेव शाल्यादिवर्गाणामित्यर्थः । मे मत्सकाशात् । तत्रेत्यादि । पूर्वशस्यजातानां प्रागुक्तान्नसमूहानां, तानि च शूकधान्यकुधान्यशमीधान्यानि । जङ्गालानाम् एणादीनाम् । धन्वजानां वर्तकादीनां पक्षिणाम् । विष्किराणां तेषामेव वर्तकादीनाम्, एतेन विष्किराणां पिप्पलीकोलबदरासवौ द्वावप्यनुपानं, कोलबदरं मध्यमप्रमाणं बदरम् । कृष्णगन्धः शोभाञ्जनकः । एकशफानाम् अश्वादीनाम् । अनेकशफानामिति अनेकशफाश्छागादयः । एवमयं मांसवर्गो जङ्गालादिभेदेनाष्टविधोऽनुपानेनोक्तः । अनूपवर्गस्य पञ्चविधस्यानुपानं निर्दिशन्नाह—कूलचराणामित्यादि । स एवेति शृङ्गाटककशेरुकासवोऽनुपानमित्यर्थः । अनूपवर्गमपि पञ्चविधमभिधाय फलानामनुपानं निर्दिशन्नाह—अम्लानामित्यादि । अम्लफलानां दाडिमादीनाम् । कषायाणां क्षीरवृक्षादिफलानाम् । मधुराणां द्राक्षादीनां, वातामाभिषुकादीनां च । कटुकानां फलानामित्यर्थः । श्वदंष्ट्रा गोक्षुरकः; वसुको बुकः, केदारगिरौ 'बगहुल' इति प्रसिद्धः । शाकानामनुपानं निर्दिशन्नाह—कूष्माण्डादीनामित्यादि । जीवन्ती डोडी । स एव त्रिफलासवः । मण्डूकपर्णी ब्राह्मी । तालमस्तकादीनामनुपानमाह—तालमस्तकादीनामित्यादि । तालमस्तकादीनां तालमस्तकमज्जादीनाम् । सर्वत्र सर्ववर्गेषु ॥ ४३२ ॥ ४३३ ॥

**भवन्ति चात्र—**

**सर्वेषामनुपानानां माहेन्द्रं तोयमुत्तमम् ॥**

सर्वेष्वेवानुपानेषु तोयस्य प्राधान्यं दर्शयन्नाह—सर्वेषामित्यादि । माहेन्द्रतोयम् आन्तरिक्षमुदकम् ॥—

**सात्म्यं वा यस्य यत्तोयं तत्तस्मै हितमुच्यते ॥४३४॥**

शेषमपि भौममुदकं नियमयन्नाह—सात्म्यं वेत्यादि । यत्तोयमिति नदीनदसरस्तडागाद्युदकमित्यर्थः ॥ ४३४ ॥

**उष्णं वाते कफे तोयं पित्ते रक्ते च शीतलम् ॥**

उष्णशीतभेदेनानुपानमाह—उष्णमित्यादि ॥—

**दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा ॥ ४३५ ॥**
**यथोक्तेनानुपानेन सुखमन्नं प्रजीर्यति ॥**
**रोचनं बृंहणं वृष्यं दोषसंघातभेदनम् ॥ ४३६ ॥**
**तर्पणं मार्दवकरं श्रमक्लमहरं सुखम् ॥**
**दीपनं दोषशमनं पिपासाच्छेदनं परम् ॥ ४३७ ॥**
**बल्यं वर्णकरं सम्यगनुपानं सदोच्यते ॥**

सर्वेषामेवानुपानानामुक्तानां गुणं निर्दिशन्नाह—दोषवदित्यादि । दोषवदिति वातादिदोषकरम् । सुखमिति अदोषमित्यर्थः । दोषसंघातभेदनं दोषसमूहपृथक्करणम् । तर्पणं तृप्तिजनकम् । मार्दवकरं शरीरकोमलतोत्पादकम् । सुखं स्वास्थ्योत्पादकम् । दोषशमनं वातादिशमनम् । पिपासाच्छेदनं पिपासाविनाशकम् । परमतिशयेन सदोच्यत इति एवंविधमनुपानं सर्वदा कथ्यते ।

१ 'विषव्यामोहे' इति पा० । २ 'विषमद्यरोगेष्वित्यर्थः' इति पा० । ३ 'भाष्यादिक्रान्तानामध्ययनादिपीडितानाम्' इति पा० । ४ 'फलरसासवः' इति पा० ।

१ 'मम पार्श्वात्' इति पा० ।

अन्ये 'दोषवदित्याद्यनुपानस्य फलं, रोचनमित्यादयस्तु सामान्यानुपानगुणाः' इत्याहुः ॥ ४३५-४३७ ॥—

**तदादौ कर्शयेत्पीतं स्थापयेन्मध्यसेवितम् ॥ ४३८ ॥**
**पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥**

तदनुपानं भोजनादिमध्यान्तविभागेन गुणविशेषं करोतीति दर्शयन्नाह—तदादावित्यादि । तत् अनुपानम् । आदौ भोजनस्य । कर्शयेदतिशयेन शरीरस्य कृशत्वमापादयेत् । स्थापयेत् न कर्शयति नापि स्थूलयत्यपि तु मध्यं करोतीत्यर्थः । पश्चात् पीतं बृंहयति पुष्टिमापादयति । तस्माद्वीक्ष्य प्रयोजयेदिति कार्श्यमिच्छन्नादौ, मध्यवपुरिच्छन् मध्य एव, पुष्टिमिच्छन्नन्त इति । अनुपानमिति अनुशब्दं लक्षणार्थमाहुः, आहारं लक्षीकृत्य पानमिति, आहारमाश्रित्य यत् पीयत इत्यर्थः; तेन मध्याद्ययोरप्यनुपानशब्दः प्रयुक्तो भवति ॥ ४३८ ॥—

**स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम् ॥ ४३९ ॥**
**भवत्याबाधजननमनुपानमतः पिबेत् ॥**

अनुपानव्यतिरेके दोषं दर्शयन्नाह—स्थिरतामित्यादि । स्थिरताम् अचलताम् । अक्लिन्नं शुष्कमित्यर्थः । अद्रवपायिनाम् अनुपानमपिबताम् । आबाधजननं पीडाकरम् ॥ ४३९ ॥

**न पिबेच्छ्वासकासार्तो रोगे चाप्यूर्ध्वजत्रुगे ॥ ४४० ॥**
**क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥**

कस्यचित् पुरुषविशेषस्यानुपाननिषेधमाह—न पिबेदित्यादि । आर्तः पीडितः । ऊर्ध्वजत्रुगे इति जत्रु ग्रीवामूलं, तस्योर्ध्वगे । क्षतोरस्क इति उरःक्षतरोगवानित्यर्थः । प्रसेकी लालास्रावी । उपहत इति वातादिभिरित्यर्थः ॥ ४४० ॥

**पीत्वाऽध्वभाष्याध्ययनगेयस्वप्नान्न शीलयेत् ४४१**
**प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम् ॥**
**स्यन्दाग्निसादच्छर्द्यादीनामयाञ्जनयेद्बहून् ॥ ४४२ ॥**

अनुपाने पीते सति यद्वर्जनीयं तदाह—पीत्वेत्यादि । अध्वा मार्गः, भाष्यं बहुभाषणम्, अध्ययनं पठनं, गेयं गीतम् । न शीलयेदिति न सेवेतेत्यर्थः । कस्मादेतान्न शीलयेदित्याह—प्रदूष्येत्यादि । प्रदूष्य वातादीनां प्रकोपं कृत्वा । तद्धीति तदनुपानं, हि यस्मादर्थे । तस्य पुरुषस्य । स्यन्दं श्लेष्मस्रवणम् ॥ ४४१ ॥ ४४२ ॥

**गुरुलाघवचिन्तेयं स्वभावं नातिवर्तते ॥**
**तथा संस्कारमात्रान्नकालांश्चाप्युत्तरोत्तरम् ॥ ४४३ ॥**

गुरुलाघवस्य द्रव्यरसवीर्यविपाकाश्रयस्य चरशरीरादिभेदेनोक्तस्य यथास्वातिशयेन व्यवस्थां कुर्वन्नाह—गुर्वित्यादि । नातिवर्तते न त्यजति । 'जङ्गला जाङ्गलचारिणः कुतो लघवः ?' इत्युक्तेऽवश्यमेव स्वभावो वाच्यः, एवं शरीरधात्ववयवादिष्वपि वाच्यं; तथा संस्कारं नातिवर्तते, यथा—स्वभावाद्गुरोरपि व्रीहेर्लाजा लघवः, लघोरपि शालेः संस्कारात् पिष्टमेव गुरु; तथा मात्रां नातिवर्तते, यथा—"गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते"–इति; अन्नं च नातिवर्तते, तद्यथा-मण्डपेयाविलेपीभक्तापूपादि यथोत्तरं गुरु, यथापूर्वं लघ्विति; कालं च नातिवर्तते, यथा–"नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम्"–इति । उत्तरोत्तरमिति स्वभावात् संस्कारं, संस्कारान्मात्रां, मात्रातोऽन्नं, अन्नात् कालं, गुरुलाघवचिन्ता नातिवर्तत इत्यर्थः; चकारादिहापि चरादयश्चानुक्ता अपि समुच्चीयन्ते ॥ ४४३ ॥

**मन्दकर्मानलारोग्याः सुकुमाराः सुखोचिताः ॥**
**जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्त्यते ॥ ४४४ ॥**

इयं गुरुलाघवचिन्ता विशिष्टपुरुषाश्रयेति ज्ञापनायाह—मन्दकर्मेत्यादि । मन्दकर्माणः अलसाः, मन्दानला मन्दाग्नयः, मन्दारोग्या रोगिणः । सुकुमारा मृदुदेहाः । सुखोचिताः सुखिनः । जन्तवः प्राणिनः । चिन्तेयमिति गुरुलाघवलक्षणा । परिकीर्त्यते कथ्यत इत्यर्थः ॥ ४४४ ॥

**बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः ॥**
**कर्मनित्याश्च ये तेषां नावश्यं परिकीर्त्यते ॥ ४४५ ॥**

**इत्यनुपानवर्गः ।**

यान् प्रति नेयं चिन्ता तानपि दर्शयन्नाह—बलिन इत्यादि । बलिनः शक्त्युपचययुक्ताः, एतेनैवारोगत्वमुक्तम् । खरभक्ष्या अमृदुभोजनाः । कर्मनित्याः सदा कर्मकारिणः । परिकीर्त्यत इति 'गुरुलाघवचिन्तेयम्' इति शेषः । इत्यनुपानवर्गः ॥ ४४५ ॥

**अथाहारविधिं वत्स ! विस्तरेणाखिलं शृणु ॥**

अथाहारविधिमाह—अथेत्यादि । अखिलं समस्तम् । शृणु आकर्णय ॥

**आप्ताश्रितमसंकीर्णं शुचि कार्यं महानसम् ॥ ४४६ ॥**

पाकस्थानं कीदृक्कार्यमित्याह—आप्तान्वितमित्यादि । आप्ता अव्यभिचारिणः, तैराश्रितमाश्रितम् । असंकीर्णं असंकटम् । महानसमिति पाकस्थानं, 'रसवती' इति लोके ॥ ४४६ ॥

**तत्राप्तैर्गुणसंपन्नं भक्ष्यमन्नं सुसंस्कृतम् ॥**
**शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक् ॥ ४४७ ॥**

सुसंस्कृतस्यान्नस्य स्थापनमाह—तत्रेत्यादि । आप्तैः सुसंस्कृतमिति संबन्धः । गुणसंपन्नमिति इष्टरसगन्धस्पर्शवर्णोपेतम् । भक्ष्यमन्नमभ्यवहरणीयम् । सुसंगुप्तम् । अतिशयेनादृश्यम् समुपस्थापयेत् निवेशयेत् । शुचौ प्रदेश इति संबन्धः । भिषक् वैद्यः ॥ ४४७ ॥

**विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः ॥**
**सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् ॥ ४४८ ॥**

तस्याहारस्यैवंगुणस्य दूषणकरविषनाशनं निर्दिशन्नाह—विषघ्नैरित्यादि । विषघ्नैर्विषहारिभिः, अगदैरौषधैः, स्पृष्टं लुप्तम् । प्रोक्षितं व्यजनोदकैरिति अथर्वमन्त्रैरभिमन्त्रितम्; अन्ये तु

१ 'जाङ्गलाः' इति पा० ।

व्यजनोदकैरित्यगदस्यैव विशेषणं कथयन्ति, तेषां मते अगदोदकक्षालितव्यजनैर्वीजितमविषीभवत्यन्नम् । तन्नमभिधाय मन्त्रमपि निर्दिशन्नाह—सिद्धैरित्यादि । सिद्धैरव्यभिचारिभिः, कुरुकुल्लाफेरण्डप्रभृतिभिर्हतविषमन्नमिति संबन्धः । निवेदयेत् 'नृपतये' इति शेषः ॥ ४४८ ॥

**वक्ष्याम्यतः परं कृत्स्नामाहारस्योपकल्पनाम् ॥**
**घृतं कार्ष्णायसे देयं, पेया देया तु राजते ॥ ४४९ ॥**
**फलानि सर्वभक्ष्यांश्च प्रदद्याद्वै दलेषु तु ॥**
**परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥ ४५० ॥**
**प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ॥**
**कट्वराणि खडांश्चैव सर्वाञ्छैलेषु दापयेत् ॥ ४५१ ॥**
**दद्यात्ताम्रमये पात्रे सुशीतं सुश्रृतं पयः ॥**
**पानीयं, पानकं मद्यं मृन्मयेषु प्रदापयेत् ॥ ४५२ ॥**
**काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ॥**
**दद्याद्वैदूर्यचित्रेषु रागषाडवसट्टकान् ॥ ४५३ ॥**
**पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ॥**
**सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् ॥४५४॥**
**फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च ॥**
**तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥ ४५५ ॥**
**प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ॥**
**खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ४५६**
**सर्वान् गुडविकारांश्च रागषाडवसट्टकान् ॥**
**पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः ४५७**

वक्ष्यामीत्यादि । कृत्स्नां समस्ताम् । उपकल्पनां समीपढौकनाम् । आधारापेक्षणीयमेव प्रथमं कल्पनं निर्दिशन्नाह—घृतमित्यादि । कार्ष्णायसे कृष्णलोहपात्रे, 'कान्तलोहपात्रे' इत्यन्ये । राजते रौप्यमये । भक्ष्या लड्डुकादयः । वैशब्दः पादपूरणे, दलेषु पत्रेषु; अन्ये तु 'वैदलेषु वेत्रवंशादित्वग्ग्रथितेषु पर्णमयेषु' इति मन्यन्ते । परिशुष्केत्यादि । "सिक्त्वा बहुघृते भृष्टं मुहुरुष्णाम्बुना मृदु । जीरकाद्यैर्घनं मांसं परिशुष्कं तदुच्यते ॥ तदेव गोरसादानं प्रदिग्धमिति विश्रुतम्" । प्रद्रवाणि प्रकृष्टद्रवाणि मण्डादीनि, रसो मांसरसः, उपहारयेत् दद्यात् । कट्वरं तक्रम्, अन्ये तु,—"सौवीराम्लमथात्यम्लं काञ्जिकं कट्वरं विदुः । अन्ये तु तदधोभागं तक्रं वाऽत्यम्लतां गतम् ॥ सस्नेहं दधिजं तक्रमाहुरन्ये तु कट्वरम्"-इति । खडो यूषविशेषः; स च सतक्रशमीधान्यः, सतक्रशाकश्च । शैलेषु पाषाणमयेषु । दद्यादित्यादि । पयो जलम् । मृन्मयेषु मृत्तिकामयेषु शरावादिषु । शुभेषु भव्येषु । वैदूर्यं रत्नविशेषः, चित्रेषु विचित्रेषु । तत्र रागः "सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकया कृतः"—इति । षाडवाः पुनर्मधुराम्ललवणसंयोगजा नानाविधाः, विशेषतः सूदेभ्यो ज्ञेयाः । सट्टकस्तु "लवङ्गव्योषखण्डैस्तु दधि निर्मथ्य गालितम् । दाडिमीबीजसंयुक्तं चन्द्रचूर्णावचूर्णितम् ॥ सट्टकं तु प्रमोदाख्यं नलादिभिरुदाहृतम्"—इति । 'दद्याद्वैदूर्यचित्रेषु' इत्यस्य स्थाने 'वज्रवैदूर्यचित्रेषु' इति केचित् पठन्ति; तत्र वज्रं षट्कोटिकं रत्नं हीरक इत्यर्थः । एष्वाधारेषु दीयमानानामेषां हितकारित्वम् । आधारविशेषमभिधाय देशविशेषेणाहारविशेषं दर्शयन्नाह—पुरस्तादित्यादि । पुरस्तादग्रतः, पुरौदनं हि ग्रहणसौकर्यार्थम् । पात्रे स्थाल्यादिके । सुविस्तीर्णे बहुले । मनोरमे रुचिजनके । सूदः सूपकारः । सूपग्रहितमोदनं भक्तम् । प्रदेहान् प्रलेहान् । परिशुष्काणि पूर्ववत् । दक्षिणपार्श्वे दक्षिणभागे, भुञ्जानस्य भोजनं कुर्वतः, उपकल्पयेत् समीपं ढौकयेत् । प्रद्रवाणीति प्रद्रवादयः पूर्ववत् । सव्ये पार्श्वे वामभागे । रागषाडवसट्टकाः पूर्ववत्, पुरस्तादग्रत इत्यर्थः; न केवलं पुरस्तात्, द्वयोरपि च मध्यतः द्वयोः पक्षयोर्मध्ये एकस्मिन् पक्षे दद्यात्; एतेन सर्वत्र दातव्यमित्युक्तं भवति ॥ ४४९—४५७ ॥

**एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ॥**
**भोक्तारं विजने रम्ये निःसंपाते शुभे शुचौ ॥४५८॥**
**सुगन्धपुष्परचिते समे देशे च भोजयेत् ॥**

एवमित्यादि । एवमुक्तप्रकारेण भोजनस्योपकल्पनां विज्ञाय, भोक्तारं च विज्ञायेति संबन्धः । विजने एकान्ते, विजने हि भुञ्जानस्य दुष्टदृष्टिनिपातादिदोषो न भवति । रम्ये मनोहरे । निःसंपाते उल्लोचसहिते, निःसंपाते भुञ्जानस्य पांशुप्रक्षेपादिदोषो न भवति । शुभे वास्तुदोषरहिते । शुचौ पवित्रे, तत्र न भूताद्यावेशः । समे निम्नोन्नतत्वरहिते ॥ ४५८ ॥—

**विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः ॥ ४५९ ॥**
**मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् ॥**

कीदृगशनं हितमित्याह—विशिष्टमित्यादि । विशिष्टं श्रेष्ठं, कैः कृत्वा ? इष्टसंस्कारैः । पथ्यैरिष्टै रसादिभिरिति पथ्यैर्हितैः, इष्टैः प्रियैः, आदिशब्दाद्गन्धवर्णस्पर्शा गृह्यन्ते । प्रत्यग्रम् अभिनवम् । अशनं भोजनम् ॥ ४५९ ॥—

**पूर्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ ॥ ४६० ॥**
**पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत् ॥**
**आदौ फलानि भुञ्जीत दाडिमादीनि बुद्धिमान् ४६१**
**ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम् ॥**
**घनं पूर्वं समश्नीयात्, केचिदाहुर्विपर्ययम् ॥ ४६२ ॥**
**आदावन्ते च मध्ये च भोजनस्य तु शस्यते ॥**
**निरत्ययं दोषहरं फलेष्वामलकं नृणाम् ॥ ४६३ ॥**
**मृणालबिसशालूककन्देक्षुप्रभृतीनि च ॥**
**पूर्वं योज्यानि भिषजा न तु भुक्ते कदाचन ॥ ४६४ ॥**

कालभेदेनाप्याहारविधिं निर्दिशन्नाह—पूर्वमित्यादि । बुभुक्षिते पुरुषे वातपित्तप्रशमनाय प्रथमं मधुरो रसः पक्वाशयगतं

१ 'पयः क्षीरम्' इति पा० ।

१ 'चक्ले' इति 'चक्ले' इति च पा० । २ 'निःसंबाधे' इति पा० । ३ 'भवति' इति पा० ।

वायुं जयति, अम्ललवणौ मध्यभोजनस्थौ पित्ताशयेऽग्निदीप्तिं कुरुतः, अन्ते कफजयाय कट्वादयः । आदौ फलानि भुञ्जीत, वातजयार्थं दाडिमाद्यम्लोपयोगः; 'आदाविति मतान्तरे' इत्यन्ये । ततः पेयान् पातव्यान् दाडिमादिकठिनाहारमृदुकरणार्थं वयःस्थापनार्थं च, ततो भोज्यं रक्तशाल्यादि, चित्रान् नानाप्रकारान् । घनं भोज्यं भक्ष्यादि कठिनम् । विपर्ययमुक्तविपर्ययं, पूर्वं द्रवं पश्चात् कठिनमिति । 'घृतं पूर्वं समश्नीयात्' इति केचित् पठन्ति । अम्लफलस्यादावेव नियतस्य कस्यचिदेव फलस्यादिमध्यान्तेषु प्रयोगं दर्शयन्नाह—आदावित्यादि । निरत्ययम् अबाधम् । मृणालं पद्मनालं, बिसं भिसण्डकं, शालूकं प्रसिद्धम् ॥ ४६०—४६४ ॥

**सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः ॥**
**काले सात्म्यं लघु स्निग्धमुष्णं क्षिप्रं द्रवोत्तरम् ४६५**
**बुभुक्षितोऽन्नमश्नीयान्मात्रावद्विदितागमः ॥**

भुञ्जानः कथं भुञ्जीतेत्याह—सुखमुच्चैरित्यादि । समासीन इति सम्यगासीन उपविष्टः । अन्नतत्पर इति न कामादिव्यग्रमनाः । भुञ्जानः किम्भूतः कदा कीदृशं भुञ्जीतेत्याह—काले सात्म्यमित्यादि । कालो द्विविधो नित्यग आवस्थिकश्च; तत्र नित्यग आर्तवः, स पुनः 'अतीवायतयामा' इत्यादिना नियमितः; आवस्थिकः पुनर्जीर्णलक्षणापेक्षः, आमे त्वन्नेऽकालः । सात्म्यं देशामयादिभेदेनानेकविधम्, असात्म्यं पुनर्दोषकारि । क्षिप्रं नातिद्रुतं नातिविलम्बितम्, अतिद्रुतातिविलम्बितयोर्दोषकारित्वात् । द्रवोत्तरं द्रवप्रधानम् । बुभुक्षितग्रहणमकालबुभुक्षानिषेधाय, वक्ष्यति च,—"भवत्यकालेऽपि तदा बुभुक्षा या मन्दबुद्धिं विषवन्निहन्ति"—इति । मात्रालक्षणमाह—"अपीडनं भवेत् कुक्षेः पार्श्वयोरविपाटनम् । अन्नेन हृदयावा(रो)धो जठरस्य त्वगौरवम् ॥ प्रीणनं चक्षुरादीनां शमनं क्षुत्पिपासयोः । उच्छ्वासश्वासहास्यादिकथासु सुखवर्तनम् ॥ सुखेन परिणामः स्यादन्ने भुक्ते दिवानिशि"—इति । विदितागम इति हेयोपादेयविवेकार्थं विदितं हिताहितं येन स विदितागमः ॥ ४६५ ॥—

**काले प्रीणयते भुक्तं सात्म्यमन्नं न बाधते ॥ ४६६ ॥**
**लघु शीघ्रं व्रजेत् पाकं स्निग्धोष्णं बलवह्निदम् ॥**
**क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम् ॥ ४६७ ॥**
**सुखं जीर्यति मात्रावद्धातुसाम्यं करोति च ॥**

एषां कालादिभोजनानां फलानुशंसां दर्शयन्नाह—काले इत्यादि । प्रीणयते तृप्तिं जनयति । सात्म्यमन्नं भुक्तं न बाधते न पीडां जनयति । लध्वित्यादि लघ्वन्नं भुक्तमिति संबन्धः । स्निग्धोष्णं बलवह्निदमिति स्निग्धं बलप्रदम्, उष्णं वह्निप्रदमित्यर्थः । क्षिप्रमित्यादि । समम् एककालम् । अदोषं द्रवोत्तरमिति द्रवोत्तरमन्नं भुक्तं सददोषं दोषरहितं पाकं याति । सुखमित्यादि मात्रावदन्नं भुक्तं सुखेन पाकं गच्छति धातुसाम्यं च करोति; धातुशब्दोऽयं दोषधातुमलेषु वर्तते ॥ ४६६—४६७ ॥—

**अतीवायतयामास्तु क्षपा येष्वृतुषु स्मृताः ॥४६८॥**
**तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु ॥**
**येषु चापि भवेयुश्च दिवसा भृशमायताः ॥ ४६९ ॥**
**तेषु तत्कालविहितमपराह्णे प्रशस्यते ॥**
**रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ४७०**
**कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् ॥**

आर्तवलक्षणं कालमाह—अतीवायतयामा इत्यादि । अतीवायतयामा अतीव दीर्घप्रहराः । क्षपा रजन्यः । येष्वृतुष्विति हेमन्ते शिशिरे च । तत्प्रत्यनीकाढ्यमिति कालबलप्रवृत्तदोषगुणानां बाधकभूतं विरोधिद्रव्यगुणबहुलमित्यर्थः । प्रातरिति सपादे यामे, येष्वृतुषु ग्रीष्मप्रावृषोः । भृशमायता दीर्घतराः । तत्कालविहितं द्रवस्निग्धमधुरप्रायम् । अपराह्ण इति अर्धतृतीययामोपरि । रजन्य इत्यादि । येष्वृतुषु शरदि वसन्ते च । सममहोरात्रमिति मध्याह्न इत्यर्थः । 'अयमेकाशनस्य पुरुषस्य विधिः; द्विरश्नतः पुनः प्रातर्भोजनमात्रयोरर्धमात्रं[1] त्रिभागं वा लघु मृष्टं च; तत्र प्रातर्भोजनं सपादे प्रहरे, द्वितीयं भोजनं त्वर्धचतुर्थप्रहरोपरि' इति **पञ्जिकाकारः; जेज्झटस्तु** 'सत्रिभागे प्रहरे दिवसस्य रात्रेश्च सत्रिभागप्रहरे भुञ्जानस्य रजनीदिवसयोः समत्वं भवति' इत्याह । अयमार्तवकाल उक्तः । आवस्थिकं पुनः स्वास्थ्यवृत्तिकेऽध्याये दशौषधकालानभिधाय वक्ष्यति ॥ ४६८—४७० ॥—

**नाप्राप्तातीतकालं वा हीनाधिकमथापि वा ॥४७१॥**
**अप्राप्तकालं भुञ्जानः शरीरे ह्यलघौ नरः ॥**
**तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति ॥**
**अतीतकालं भुञ्जानो वायुनोपहतेऽनले ॥**
**कृच्छ्राद्विपच्यते भुक्तं द्वितीयं च न काङ्क्षति ॥४७३॥**
**हीनमात्रमसंतोषं करोति च बलक्षयम् ॥**
**आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ॥ ४७४ ॥**

कालमात्रावतो विपर्ययमकालमात्रावत्त्वं निर्दिशन्नाह—नाप्राप्तेत्यादि । अप्राप्तकालमतीतकालं वा न भुञ्जीतेत्यर्थः । हीनाधिकमिति हीनमात्रमधिकमात्रं वा न भुञ्जीत । तयोरप्राप्तातीतकालयोरधिकन्यूनयोश्च दोषं दर्शयन्नाह—अप्राप्तकालमित्यादि । अप्राप्तकालं भुञ्जानो नरः शरीरेऽलघौ सति तांस्ताञ्छिरोरुजादीन् व्याधीन् नियच्छति प्राप्नोति । असंतोषम् असंतृप्तिम् । आटोप उदरस्याध्मानं, सादोऽङ्गग्लानिः । अधिकमिति अधिकमन्नं भुक्तमित्यर्थः ॥ ४७१—४७४ ॥

**तस्मात् सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्जितम् ॥**
**यथोक्तगुणसंपन्नमुपसेवेत भोजनम् ॥ ४७५ ॥**
**विभज्य दोषकालादीन् कालयोरुभयोरपि ॥**

कीदृक् पुनरन्नं सेवितव्यमित्याह—तस्मादित्यादि । युक्त्या मात्रया । कालयोरुभयोरपि प्रातः सायं च ॥ ४७५ ॥—

1 'भोजनमात्राया अर्धमात्रं' इति पा० ।

**अचोक्षं दुष्टमुत्सृष्टं पाषाणतृणलोष्टवत् ॥ ४७६ ॥**
**द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत् ॥**
**चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः ॥ ४७७ ॥**
**अशान्तमुपदग्धं च तथा स्वादु न लक्ष्यते ॥**

सात्म्याद्युपादेयं प्रदर्श्य हेयं प्रदर्शयन्नाह—अचोक्षमित्यादि । अचोक्षम् अपवित्रं, मलिनमित्यन्ये । दुष्टं विषादिभिः, दोषकरत्वात् । उत्सृष्टं भुक्तोत्सृष्टम् । पाषाणतृणलोष्टवदिति पाषाणादियुक्तमित्यर्थः । द्विष्टं मनःप्रतिघाति । व्युषितं विशेषेणोषितम् । पूति शटितं; पूति चान्नमिति चकारादत्र सत्रशत्रुगणगणिकादीनामप्यन्नं बाह्यदूषणान्वितं वर्जनीयमिति समुच्चीयते । अस्वाद्वन्नं पूर्वं वर्जनीयमुक्तमिति तद्भेदानाह—चिरसिद्धमित्यादि । स्थिरं कठिनम् । अशान्तं किंचिदवशिष्टविस्रावणम् । उपदग्धमिति अतिपाकित्वेन ज्वलितम् । चकारेण दुःसिद्धमपि समुच्चीयते । तथा स्वादु न लक्ष्यत इति यस्यान्नस्य स्वादो न लक्ष्यते तदपि वर्जयेदिति संबन्धः ॥ ४७६ ॥ ४७७ ॥—

**यद्यत् स्वादुतरं तत्तद्विदध्यादुत्तरोत्तरम् ॥ ४७८ ॥**

अन्नेषु स्वादुषु सत्सु विधानं दर्शयन्नाह—यदित्यादि । स्वादुशब्दः संस्कृते रसे वर्तते, न तु मधुर एव । विदध्यात् दद्यात् । कथम्? उत्तरोत्तरमेकस्मिन् स्वादुनि दत्ते सति तस्मादधिकतरस्वादु दद्यात्, तस्मिन्नपि दत्ते तस्मादधिकतरस्वादु दद्यादित्यर्थः ॥ ४७८ ॥

**प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः ॥**
**विशुद्धे रसने तस्य रोचतेऽन्नमपूर्ववत् ॥ ४७९ ॥**
**स्वादुना तस्य रसनं प्रथमेनातितर्पितम् ॥**
**न तथा स्वादयेदन्यत्तस्मात् प्रक्षाल्यमन्तरा ॥४८०॥**

प्रक्षालयेदद्भिरास्यं गण्डूषं कारयेदित्यर्थः । गण्डूषकरणस्य फलमाह—विशुद्धे इत्यादि । स्वादुना मिष्टेन । तस्य भुञ्जानस्य । अन्यदपरमतः स्वादोरस्वादोर्वा ॥ ४७९ ॥ ४८० ॥

**सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम् ॥**
**स्वादु संजनयत्यन्नमस्वादु च विपर्ययम् ॥ ४८१ ॥**

तस्य गुणमाह—सौमनस्यमित्यादि । सौमनस्यं सुमनस्कता । बलं सर्वधातुस्नेहः । पुष्टिः शरीरोपचयः । उत्साहः प्रसिद्धः । हर्षणं तुष्टिः । सुखं नीरोगता । स्वादु संजनयत्यन्नं स्वाद्वन्नं सौमनस्यादीन् सम्यग् जनयतीति संबन्धः । अस्वाद्वित्यादि अस्वाद्वन्नं सौमनस्यादीनां विपर्ययं विपरीततां जनयतीत्यर्थः ॥ ४८१ ॥

**भुक्त्वाऽपि यत् प्रार्थयते भूयस्तत् स्वादु भोजनम् ॥**

स्वादोरेवान्नस्य लक्षणं निर्दिशन्नाह—भुक्त्वेत्यादि । भुक्तवान् हि अवश्यं मृष्टमेव कामयतेऽन्नं, नामृष्टम् । अन्ये तु 'तत् साधु भोजनम्' इति पठन्ति, मात्रावद्भुञ्जीतेति तस्यैव लक्षणमिति च वदन्ति; तन्नेच्छति गयी ॥—

**अशितश्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत् ॥४८२॥**

अशित इत्यादि । अशितः कृतभोजनः, उदकं जलं युक्त्या पिबेदिति संबन्धः । युक्त्या मात्रया; भुञ्जानश्चान्तरा पिबेत् भोजनमध्ये इत्यर्थः ॥ ४८२ ॥

**दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः ॥**
**कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् ॥ ४८३ ॥**

अन्यदपि भुक्ते कार्यान्तरं दर्शयन्नाह—दन्तेत्यादि । शोधनेन तृणादिना ॥ ४८३ ॥

**जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेव तु ॥**
**भुक्तमात्रे कफश्चापि,**

भोजनोत्तरकालक्रियाप्रसङ्गेन जरणजीर्णकालयोरपि दोषप्रकोपं दर्शयन्नाह—जीर्णे इत्यादि । जीर्णे परिणामंगते, विदग्धे किंचित्पक्वे ॥—

**तस्माद्भुक्तेरितं कफम् ॥ ४८४ ॥**
**धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः ॥**
**पूगकङ्कोलकर्पूरलवङ्गसुमनःफलैः ॥ ४८५ ॥**
**फलैः कटुकषायैर्वा मुखवैशद्यकारकैः ॥**
**ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ ४८६ ॥**

भुक्ते सति कुपितश्लेष्मणः प्रतीकारमाह—तस्मादित्यादि । भुक्तेरितं भोजनेन प्रेरितम् । अपोह्य स्फोटयित्वा । कषायकटुतिक्तकैरिति अफलैर्द्रव्यैरिति विज्ञेयं, फलैः कटुकषायैर्वेति वक्ष्यमाणत्वात् । सुमनःफलैः जातीफलैः ॥ ४८४—४८६ ॥

**भुक्त्वा राजवदासीत यावदन्नक्लमो गतः ॥**
**ततः पादशतं गत्वा वामपार्श्वेन संविशेत् ॥४८७॥**

तदनन्तरं किं कुर्यादित्याह—तत इत्यादि । संविशेत् शय्यायां शयीत ॥ ४८७ ॥

**शब्दान्रूपान्रसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ॥**
**भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥ ४८८ ॥**

अन्नस्य संस्थापनहेतून् शब्दादिविषयानाह—शब्देत्यादि । साधु तिष्ठति भव्येन स्थितिं करोति, 'शब्दादीन् विषयांश्च' इत्यन्ये पठन्ति ॥ ४८८ ॥

**शब्दरूपरसा गन्धाः स्पर्शाश्चापि जुगुप्सिताः ॥**
**अशुच्यन्नं तथा भुक्तमतिहास्यं च वामयेत् ॥४८९॥**

कुतः पुनरेते अप्रिया इत्याह—शब्देत्यादि । जुगुप्सिता निन्दिताः । अशुचि अपवित्रम् ॥ ४८९ ॥

---

१-२ 'अशीतं' इति पा० । ३ 'यत् प्रार्थयते तदेवावश्यं स्वादु विज्ञेयम्' इति पा० ।

१ 'भोजनं कृत्वा कुर्वेत्यर्थः' इति पा० । २ 'कटुतिक्तकषायैर्वा' इति पा० । ३ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते ।

**शयनं चासनं वाऽपि नेच्छेद्वाऽपि द्रवोत्तरम् ॥**
**नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥४९०॥**
**न चैकरससेवायां प्रसज्येत कदाचन ॥**
**शाकावरान्नभूयिष्ठमम्लं च न समाचरेत् ॥ ४९१ ॥**

अन्यदपि सर्वं वर्जनीयमाह—शयनमित्यादि । शयनमासनं वा नेच्छेत्, चिरकालमित्यर्थः । द्रवोत्तरं द्रवाढ्यं भोजनम् । नाग्न्यातपावित्यादि । अग्न्यातपादीन्नेच्छेदिति संबन्धः । प्लवनं स्नानं जलप्रतरणं वा । यानं गमनमेव । वाहनं रथाश्वादि । न प्रसज्येत नाभ्यसेत् न पुनः पुनः शीलयेदित्यर्थः । शाकं प्रसिद्धम्, अवरान्नं वैदलान्नम्, एतद्भूयिष्ठं तद्बहुलं; न समाचरेत् न भक्षयेत्, तथाऽम्लं च ॥ ४९० ॥ ४९१ ॥

**एकैकशः समस्तान् वा नाध्यश्नीयाद्रसान् सदा ॥**

रसानामतिमात्राशनदोषं दर्शयन्नाह—एकैकश इत्यादि । एकैकश एकैकं रसं, समस्तान् वा रसान् नाध्यश्नीयात् नाधिकं भक्षयेदित्यर्थः । दोषरोगापेक्षयैकैकरसविधिः, स्वस्थापेक्षया तु समस्तरसविधिः । 'नात्यश्नीयात्' इत्यन्ये, अपरे तु 'एकशोऽथ समस्तान् वा न भुञ्जीत रसान् सदा'–इति पठन्ति, व्याख्यानयन्ति च–एकीकृत्य न सर्वमश्नीयात्; यथाक्रममेव षड्रसं स्वस्थेन भोक्तव्यं, वाशब्दः समुच्चये ॥—

**प्राग्भुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् ॥४९२॥**
**पूर्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ॥**

अग्नौ मन्दे द्विरन्नसमाचारनिषेधं दर्शयन्नाह—प्रागित्यादि । प्राग्भुक्ते प्रातर्भोजने कृते, अविविक्तेऽग्नौ द्विरन्नं न समाचरेदिति द्वितीयं वारं न भुञ्जीतेत्यर्थः । कुत इत्याह—पूर्वभुक्ते इत्यादि । विदग्धे जठरानलेन किंचित्पक्वे किंचिदामे । भुञ्जानो द्विर्भुञ्जान इत्यर्थः । पावकं जठरानलम् ॥ ४९२ ॥—

**मात्रागुरुं परिहरेदाहारं द्रव्यतश्च यः ॥ ४९३ ॥**

मन्दाग्नेरेवाहारविशेषपरिहारं निर्दिशन्नाह—मात्रेत्यादि । मुद्गादीनां लघूनामपि मात्रया गुरुमाहारं परिहरेत्, द्रव्यतो गुरुं माषमहिषवराहपिशितादिकम् ॥ ४९३ ॥

**पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः ॥**
**द्विगुणं च पिबेत्तोयं सुखं सम्यक् प्रजीर्यति ॥**

संस्कारगुरोर्द्रव्यविशेषस्य निषेधं दर्शयन्नाह—पिष्टान्नमित्यादि । अथ कथंचित् पिष्टान्नसेवा तदा क्षुधितस्य मात्रयैव नान्यथेति, तत्र मात्राशब्दोऽल्पतावाचकः, पिष्टान्नभोजने द्विगुणं च पिबेत्तोयम् ॥—

**पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् ॥ ४९४ ॥**

गुरुत्वप्रसङ्गेन चतुर्णां पेयलेह्यादीनां गुरुलाघवं निर्दिशन्नाह—पेयेत्यादि । पेयं पानीयादि, लेह्यं मध्वादि, अद्यं भक्तादि, भक्ष्यं मोदकादि ॥ ४९४ ॥

**गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते ॥**
**द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ॥ ४९५ ॥**

तत्रोक्तानां पेयादीनां लघूनां गुरूणां च का मात्रा यामपेक्ष्य मात्रागुरुरित्युपदिश्यत इत्याह—गुरूणामित्यादि । गुरूणां संस्कारस्वभावकृतानां मोदकमाषादीनां संस्कारस्वभावाभ्यामेव गुरुतराणां पिष्टमयवराहपिशितादीनां त्रिभागसौहित्यमेव, अयं चार्थोऽर्धशब्दादवयववचनाल्लभ्यते । लघूनां तृप्तिरिष्यत इति लघुतराणामेव तृप्तिः, लघूनां पुनरीषत्तृप्तिः । न च द्रवद्रवोत्तरयोः पेयत्वाल्लघुलघुतरयोः कदाचित्किंचिन्मात्रागौरवेण तौ भजेतेत्याह—द्रवोत्तर इत्यादि । द्रवोत्तरस्तक्राद्यधिकः, द्रवः पेयादिः ॥ ४९५ ॥

**द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते ॥**

शुष्कस्यापि स्रोतोऽवरोधकारणस्य संयोगान्तरेणादोषं प्रतिपादयन्नाह—द्रवाढ्यमित्यादि । शुष्कमपि द्रवाढ्यं सम्यगेवोपपद्यते अदोषकरं सम्यग्भवतीत्यर्थः ॥—

**विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥४९६॥**
**पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ॥**

केवलविशुष्कस्य पुनराहरणे दोषं निर्दिशन्नाह—विशुष्कमित्यादि । अभ्यस्तं सेवितम्, साधु भव्येन । कथं तर्हि पाकं गच्छतीत्याह—पिण्डीकृतमित्यादि । असंक्लिन्नम् असम्यगार्द्रीभावमापन्नम् । विदाहमुपगच्छति विदग्धतामुपयाति ॥४९६॥—

**स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति ॥ ४९७ ॥**
**विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते ॥**

शुष्कान्नस्य विप्रकृष्टविदाहप्रसङ्गेन सन्निकृष्टहेतुजमपि विदाहं दर्शयन्नाह—स्रोतसीत्यादि । स्रोतस्यन्नवहे आमाशये । पक्तौ अग्निस्थाने । विदाहि भुक्तमिति अन्नम्, अन्यद्वेति अविदाह्यन्नम् । विदह्यते विदग्धतामुपयाति ॥ ४९७ ॥—

**शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ॥ ४९८ ॥**

शुष्कान्नप्रसङ्गेन शुष्कस्येतरस्य च वह्निमान्द्यकरत्वमाह—शुष्कमित्यादि । शुष्कं पिष्टान्नादि । विरुद्धं क्षीरमत्स्यादिकम् । विष्टम्भि चणकमसूरादि । वह्निव्यापदम् अग्निमान्द्यम् । आवहेत् कुर्यात् ॥ ४९८ ॥

**आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ॥**
**अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ४९९ ॥**

तामेव वह्निव्यापदं विप्रकृष्टकारणोपजनितामभिधाय सन्निकृष्टवातादिकृताजीर्णलक्षणां निर्दिशन्नाह—आममित्यादि । आहारस्यैव पक्वस्योर्वरितो रसो रसशेषः; तस्मादल्पदोषदूषितत्वान्न तस्य दोषव्यपदेशो भवति ॥ ४९९ ॥

**अत्यम्बुपानाद्विषमाशनाद्वा**
**संधारणात् स्वप्नविपर्ययाच्च ॥**

काले ऽपि सात्म्यं लघु चापि भुक्त-
मन्नं न पाकं भजते नरस्य ॥ ५०० ॥
ईर्ष्याभयक्रोधपरिक्षतेन
लुब्धेन शुग्दैन्यनिपीडितेन ॥
प्रद्वेषयुक्तेन च सेव्यमान-
मन्नं न सम्यक् परिणाममेति ॥ ५०१ ॥

कस्मादजीर्णं भवतीत्याह—अत्यम्बुपानादित्यादि । रात्रौ जागरणं दिवसे च स्वप्नः स्वप्नविपर्ययः । कायिककारणमभिधाय मानसरजस्तमोदोषकृतमजीर्णमाह—ईर्ष्येत्यादि । ईर्ष्या परसंपत्त्यसहिष्णुता, भयं परस्मात्त्रासः, क्रोधः पराभिद्रोहलक्षणः, परिक्षतेन ईर्ष्यादिभिः परिभूतेन । लुब्धेन लोभसहितेन । शुग्दैन्यनिपीडितेन शोकदैन्यव्याप्तेन, दैन्यं निर्गतित्वम् । प्रद्वेषो मात्सर्यम् ॥ ५०० ॥ ५०१ ॥

माधुर्यमन्नं गतमामसंज्ञं,
विदग्धसंज्ञं गतमम्लभावम् ॥
किंचिद्विपक्वं, भृशतोदशूलं
विष्टब्धमानद्धविरुद्धवातम् ॥ ५०२ ॥
उद्गारशुद्धावपि भक्तकाङ्क्षा
न जायते हृद्गुरुता च यस्य ॥
रसावशेषेण तु सप्रसेकं
चतुर्थमेतत् प्रवदन्त्यजीर्णम् ॥ ५०३ ॥

तेषामेवाजीर्णानां लक्षणं दर्शयन्नाह—माधुर्यमित्यादि । श्लेष्मदूषणप्रभावोपजनितमाधुर्यं गतमामं, तदेव कफदूषितं वा तत्स्वभावकत्वमापन्नं[1]; कफकार्याणि तु तत्र गौरवक्लेदकण्डूप्रभृतीनि च द्रष्टव्यानि । विदग्धसंज्ञमिति किंचिद्विपक्वमम्लभावं गतमन्नं विदग्धसंज्ञं कथ्यते । तत् कथंभूतं? किंचिद्विपक्वम् । अत्रापि शुक्ततिक्ताम्लोद्गारादीनि पित्तकार्याणि द्रष्टव्यानि । आनद्धविरुद्धवातं विष्टब्धं कथ्यते । तत् कथम्भूतं? भृशतोदशूलम् । आनद्धोऽप्रवृत्तो विरुद्धो विशेषेण रुद्धो वातो यस्मिन् तत्तथा । अत्रापि वातकार्याणि जृम्भाङ्गमर्दशिरोरुजादीनि द्रष्टव्यानि । भृशतोदशूलम् अत्यर्थतोदशूलम् । उद्गारशुद्धावित्यादि । भक्तकाङ्क्षा न जायते नोत्पद्यते । हृद्गुरुता हृदयगौरवं भवति । यस्याजीर्णस्य । रसावशेषेण कृत्वा । सप्रसेकं लालास्रावसहितम् । एतानि सङ्क्षेपेणाजीर्णलक्षणान्युक्तानि ॥ ५०२—५०३ ॥

मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ॥
उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः ॥ ५०४ ॥

अजीर्णदोषलिङ्गं प्रदर्श्य व्याधिसामान्यलक्षणभूतप्रभावोपजनितकार्याणि निर्दिशन्नाह—मूर्च्छेत्यादि । मूर्च्छा चेतनाच्युतिः प्रलापः असंबद्धभाषणम् । वमथुः छर्दिः । सदनम् अङ्गग्लानिः, अन्ये तु 'स्फुटनमिवाङ्गानाम्' इति वदन्ति । भ्रमः चक्रारूढस्येव ॥ ५०४ ॥

तत्रामे लङ्घनं कार्यं, विदग्धे वमनं हितम् ॥
विष्टब्धे स्वेदनं पथ्यं, रसशेषे शयीत च ॥ ५०५ ॥
वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना ॥
कार्यं वाऽनशनं तावद्यावन्न प्रकृतिं भजेत् ॥ ५०६ ॥
लघुकायमतश्चैनं लङ्घनैः समुपाचरेत् ॥
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ ५०७ ॥

अजीर्णानां चिकित्सामाह—तत्रेत्यादि । आमे लङ्घनं कार्यमिति उत्क्लेदे तत्रापि वमनमावश्यिकम् । विदग्धे वमनं हितमिति रसस्याम्लस्य व्यापन्नस्यानुद्धरणे[1] कुष्ठाबाधभयात् । तत्र केचित्, 'आमे तु वमनं कार्यं विदग्धे लङ्घनं हितम्' इति पठन्ति, तन्नेच्छति **गयी** । विष्टब्धे स्वेदनमिति स्वेदनस्यामवातावजयकारिपाचनत्वात् । रसशेषे शयीत चेति चकारेण स्वेदोऽपि रसशेषे, तथा पाचनमपि; तच्च पाचनमन्नकालेऽन्नसहितं देयमिति समुच्चीयते । तत्र विदग्धे वमनं कर्तव्यं तत् केनेत्याह—वामयेदित्यादि । आमे लङ्घनमिति तत् कियन्तं कालमित्यवधिं दर्शयन्नाह—कार्यमित्यादि । वाशब्दः समुच्चये । प्रकृतिरत्राजीर्णनिवृत्तिः । लघ्वित्यादि । अतः पूर्वोक्तविधानादनन्तरम् । एनम् अजीर्णिनम् । प्राणो बलम् ॥ ५०५—५०७ ॥

हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् ॥
बहु स्तोकमकाले वा तज्ज्ञेयं विषमाशनम् ॥ ५०८ ॥
अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ॥
त्रयमेतन्निहन्त्याशु बहून्व्याधीन्करोति वा ॥ ५०९ ॥

तत्राजीर्णप्रसङ्गेन तस्याजीर्णे भुज्यमानस्यान्नस्याध्यशनसंज्ञकस्यानर्थावहत्वात्तत्तुल्यानां समशनादीनामपि लक्षणं दर्शयन्नाह—हिताहितेत्यादि । हिताहितोपसंयुक्तमिति हितमहितं चान्नमैकध्यमुपयुक्तम् । यथा—"धान्यं नवं पुराणं यच्छाकं जीर्णं च कोमलम् । ऐकध्यं तद्विरुद्धं स्याच्छीतोष्णं च स्वजातितः—" इति । अन्ये तु हितमेवाहितं येन संपद्यते तत् हिताहितोपसंयुक्तं; यथा—गोक्षीरं मत्स्येन सहितमहितं संपद्यते । विषमाशनं निर्दिशन्नाह—बह्वित्यादि । बहु प्रचुरं, स्तोकमल्पम्, अकाल इति अकालोऽप्राप्तोऽतीतो वा कालस्तत्र भुक्तम् । अध्यशनं निर्दिशन्नाह—अजीर्णे इत्यादि । त्रयाणामपि समशनादीनां फलमाह—त्रयमित्यादि ॥ ५०८ ॥ ५०९ ॥

अन्नं विदग्धं हि नरस्य शीघ्रं
शीताम्बुना वै परिपाकमेति ॥
तद्ध्यस्य शैत्येन निहन्ति पित्त-
माक्लेदिभावाच्च नयत्यधस्तात् ॥ ५१० ॥

---

१ 'तत्स्वभावकत्वमात्रम्' इति पा० ।

१ 'व्यापन्नत्वात्' इति पा० ।

पुनरपि विदग्धाजीर्णस्य चिकित्सामाह—अन्नमित्यादि । तत् शीताम्बु, हिशब्दो यस्मादर्थे, अस्य नरस्य, आक्लेदिभावात् पित्तं निहन्ति । केचित् 'अन्नं विदग्धं ही' इत्यारभ्य 'या मन्दबुद्धिं विषवन्निहन्ति' इति यावत् सकलमपि पाठमनार्षं वर्णयन्ति; तन्न, **गयदासेना**दृतीकृतत्वात् ॥ ५१० ॥

**विदह्यते यस्य तु भुक्तमात्रे**
**दह्येत हृत्कोष्ठगलं च यस्य ॥**
**द्राक्षाभयां माक्षिकसंप्रयुक्तां**
**लीढ्वाऽभयां वा स सुखं लभेत ॥ ५११ ॥**

आमाशयगतान्नविदाहस्य चिकित्सामाह—विदह्यते इत्यादि । यस्य पुरुषस्य, भुक्तमात्रे सति आमाशयो विदह्यते विशेषेण दाहवान् भवति । हृत् हृदयं कमलमुकुलाकारमधोमुखं, कोष्ठमुदरम् । द्राक्षायुक्तामभयां लीढ्वेति संबन्धः, अयमेको योगः; माक्षिकसंप्रयुक्तां लीढ्वाऽभयां वेति द्वितीयो योगः । अन्ये तु 'भुक्तमात्रं' इति पठन्ति, भुक्तमात्रमेव प्राप्यामाशयो विदह्यत इत्यर्थः ॥ ५११ ॥

**भवेदजीर्णं प्रति यस्य शङ्का**
**स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ॥**
**प्रातः सशुण्ठीमभयामशङ्को**
**भुञ्जीत संप्राश्य हितं हितार्थी ॥ ५१२ ॥**

रसावशेषाजीर्णविषयं संशमनमाह—भवेदित्यादि । प्रातर्यस्याजीर्णशङ्का भवति स पुरुषः शुण्ठीमभयासमेतामन्नकाले संप्राश्य भक्षयित्वा, अशङ्को निःशङ्कः सन्, हितमन्नं भुञ्जीत ॥ ५१२ ॥

**स्वल्पं यदा दोषविबद्धमामं**
**लीनं न तेजःपथमावृणोति ॥**
**भवत्यजीर्णेऽपि तदा बुभुक्षा**
**या मन्दबुद्धिं विषवन्निहन्ति ॥ ५१३ ॥**

अजीर्णेऽपि बुभुक्षां दर्शयन्नाह—स्वल्पमित्यादि । स्वल्पमित्यामविशेषणम्, अन्ये तु स्वल्पमपि तेजःपथमावृणोतीति तेजःपथस्येदं विशेषणमाहुः । लीनं तद्गतेन वायुनैकपार्श्वे लीनमित्यामविशेषणम् । तेजःपथं जठरानलमार्गम् । या बुभुक्षा मन्दबुद्धिं प्राणिनं विषवन्निहन्तीति संबन्धः । अत्र केचित् पठन्ति—"अन्नेन कुक्षेर्द्वावंशौ पानेनैकं च पूरयेत् । आश्रयं पवनादीनां चतुर्थमवशेषयेत्"—इति । सर्वनिबन्धकारैरपठितत्वान्न पठनीयम् ॥ ५१३ ॥

**अत ऊर्ध्वं प्रवक्ष्यामि गुणानां कर्मविस्तरम् ॥**
**कर्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः ॥५१४॥**
**ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित् ॥**
**उष्णस्तद्विपरीतः स्यात्पाचनश्च विशेषतः ॥ ५१५ ॥**
**स्नेहमार्दवकृत् स्निग्धो बलवर्णकरस्तथा ॥**
**रूक्षस्तद्विपरीतः स्याद्विशेषात् स्तम्भनः खरः ५१६**
**पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः ॥**
**विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः ॥ ५१७ ॥**
**दाहपाककरस्तीक्ष्णः स्रावणो, मृदुरन्यथा ॥**
**सादोपलेपबलकृद्गुरुस्तर्पणबृंहणः ॥ ५१८ ॥**
**लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ॥**
**दशाद्याः कर्मतः प्रोक्तास्तेषां कर्मविशेषणैः ॥५१९॥**
**दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान्निबोध मे ॥**
**द्रवः प्रक्लेदनः, सान्द्रः स्थूलः स्याद्बन्धकारकः ५२०**
**श्लक्ष्णः पिच्छिलवज्ज्ञेयः, कर्कशो विशदो यथा ॥**
**सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः ॥५२१॥**
**दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः ॥**
**सरोऽनुलोमनः प्रोक्तो, मन्दो यात्राकरः स्मृतः ५२२**
**व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते ॥**
**विकासी विकसन्नेवं धातुबन्धान् विमोक्षयेत् ५२३**
**आशुकारी तथाऽऽशुत्वाद्धावत्यम्भसि तैलवत् ॥**
**सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः ॥**
**गुणा विंशतिरित्येवं यथावत्परिकीर्तिताः ॥**

पूर्वं हि संपादितं 'तदस्य शैत्येन निहन्ति पित्तं' इति, तत्र न ज्ञायन्ते के पुनस्ते शीतादय इति तान् निर्दिशन् लक्षणमाह—अत इत्यादि । अथ शीतगुणः कथं ज्ञायत इत्याह—ह्लादन इत्यादि । ह्लादनः सुखकारीत्यर्थः; तृट्स्वेदमूर्च्छादाहजिदित्यर्थः । पाचनो व्रणादीनाम् । स्नेहेत्यादि स्निग्धो गुणः स्नेहादिकारण इत्यर्थः । रूक्षो गुणस्तद्विपरीतो रौक्ष्यकाठिन्यकर इत्यर्थः । विशेषात् विशेषतः । स्तम्भनः अतीसारादीनाम् । खरः कर्कशः । पिच्छिलो गुणः । जीवनः प्राणधारणः । सन्धानो भग्नस्य । विशदो गुणः । विपरीतोऽस्मादिति असन्धानोऽजीवनोऽश्लेषी च । क्लेदाचूषण आर्द्रीभावविनाशकर इत्यर्थः । दाहेत्यादि अन्यथेति अदाहपाककरोऽस्रावण इत्यर्थः । सादेत्यादि सादोऽङ्गग्लानिः, उपलेपो मलवृद्धिः, बलं श्लेष्मा । गुरुर्गुणः । तर्पणः तृप्तिजनकः । बृंहणो देहवृद्धिकरः । लघुरित्यादि । लघुस्तद्विपरीत इति असादानुपलेपादिकृत् कफहरश्चेत्यर्थः । लेखनः पत्तलीकरणः । दशाद्या इति दशसंख्योपेता आद्याः शीतादयो गुणाः । कर्मतः प्रोक्ताः कर्मभिः सह प्रोक्ता इत्यर्थः । तेषामिति तेषां मध्ये, कर्मविशेषणैः कृत्वा । द्रवो गुणः । प्रक्लेदन आर्द्रभावकरः । सान्द्रो गुणः । बन्धकारक उपचयकारक इत्यर्थः । 'द्रवः प्रक्लेदनो व्यापी शुष्कः स्याद्बन्धकारकः' इति केचित् पठन्ति । शुष्को गुणः बन्धकारकः शुष्कस्य शोषणत्वेनावयवापृथक्त्वमित्यर्थः । श्लक्ष्ण इत्यादि । श्लक्ष्णो गुणः पिच्छिलवज्ज्ञेयः । जीवनः श्लेष्मसन्धानकृदित्यर्थः । कर्कशो गुणः । विशदो यथेति अजीवनोऽश्लेषी च, तथाऽसन्धानकार्यकृच्च । सुखानुबन्धी सुखोत्पादक इत्यर्थः । सूक्ष्मोऽवगाहकः । सुगन्धो गुणः ।

हृल्लासारुचिकारक इति पुनररुचिग्रहणं द्विविधारुचिप्रापणार्थं, तेनाहारं न काङ्क्षति क्रियमाणाश्च विरसीभवति; हृल्लासः थूत्करणं, छर्दिरित्यन्ये । सरो गुणः । अनुलोमनो वातमलप्रवर्तनः । मन्दो गुणः । यात्राकर इति शरीरस्थायित्वाद्देहस्य यात्रां वर्तनं करोति । व्यवायी गुणः । अखिलमित्यादि अपक्व एवाखिलं देहं व्याप्नोति पश्चान्मद्यविषवत् पाकं याति; अन्ये 'भावाय कल्पते' इति पठन्ति, तत्रापि स्थितये कल्पते नोर्ध्वमधो वा प्रवर्तत इति स एवार्थः; अपरे तु पुनर्भावशब्दमभिप्रायार्थमिच्छन्ति, तत्र नियतद्रव्यप्रभावेणात्मशक्त्यनुरूपं तत्तद्द्रव्यं मद्यविषवद्विविधाभिप्रायाय कल्पत इत्यर्थः । व्यवायिनः सकाशाद्विकासिद्रव्यस्य किंचिद्भेदं दर्शयन्नाह-विकासीत्यादि । विकासी गुणः । विकसन् प्रसर्पन् । एवमिति अपक्व एव सकलं देहं व्याप्य । धातुबन्धान् विमोक्षयेत् धातुशैथिल्यं करोतीत्यर्थः । अन्ये तु 'सरविशेषो व्यवायी, तीक्ष्णविशेषो विकासि' इति ब्रुवते, तन्नेच्छति **गयी** । आशुकारी गुणः, आशुत्वात् । सूक्ष्मो गुणः, अत्र स्थूलगुणमपि केचित् पठन्ति, स च पाठोऽभावान्न लिखितः । गुणा इति नन्वत्र स्थूलगुणेन सह त्रयोविंशतिर्गुणा भवन्ति, कथं विंशतिः कथ्यन्ते? उच्यते, केचिदत्र संख्याभङ्गभयाद्व्यवायिविकास्याशुकारिणामपाठमेव मन्यन्ते; अन्ये पुनराहुः—अधिकायामपि गुणविंशतावुक्तायां गुणा विंशतिरुक्ताः, न चात्र नियमो विंशतिरेवेति; व्यवायिविकास्याशुकारिणां तु स्वतन्त्रे परतन्त्रे च दर्शनात् पाठो न्याय्य एव; अपरे पुनः प्रागेव 'दशैवान्यान्' इत्यस्य स्थाने 'दश चान्यान्' इति चकारं पठन्ति; तेन व्यवायिविकास्याशुकारिणोऽपि समुच्चीयन्ते ॥ ५१४—५२४ ॥—

**संप्रवक्ष्याम्यतश्चोर्ध्वमाहारगतिनिश्चयम् ॥ ५२५ ॥**

संप्रवक्ष्यामीत्यादि । आहारस्य गतिनिश्चयो यद्यदात्मकमन्नमभ्यवहृतं पक्वं यद्द्रव्यगुणं याति गतमपि यद्यत् पुष्णाति तस्य निर्णय इत्यर्थः ॥ ५२५ ॥

**पञ्चभूतात्मके देहे ह्याहारः पाञ्चभौतिकः ॥**
**विपक्वः पञ्चधा सम्यग्गुणान् स्वानभिवर्धयेत् ५२६**

तमेवाहारगुणं निर्दिशन्नाह—पञ्चेत्यादि । पञ्चभूतात्मके इति पृथिव्यादिपञ्चभूतहेतुके । आहारः पाञ्चभौतिक इति आहारोऽपि पञ्चमहाभूतस्वभावः । विपक्वः पञ्चधा सम्यगिति पञ्चभिर्महाभूताग्निभिः । गुणानिति गुणशब्देनात्र गुणिनः पृथिव्यादय उच्यन्ते । तेन पार्थिवाः पार्थिवानभिवर्धयन्ति, एवं शेषेष्वपि । अन्ये तु गुणानिति गन्धादीन्, स्वानिति पञ्च गुणिनो द्रव्याणि पार्थिवादीनि; एतेन गन्धादीनात्मनश्च पार्थिवादीनि द्रव्याण्यभिवर्धयेदित्यर्थः ॥ ५२६ ॥

**अविदग्धः कफं, पित्तं विदग्धः, पवनं पुनः ॥**
**सम्यग्विपक्वो निःसार आहारः परिबृंहयेत् ॥ ५२७ ॥**

दोषाणामाहारावस्थापाकात् प्रकोपवर्धनलक्षणं प्रतिपादयन्नाह—अविदग्ध इत्यादि । अविदग्धो मधुराहारः, कफं परिबृंहयेत् अतिशयेन वर्धयेदित्यर्थः । पित्तं विदग्धोऽम्लीभूत आहारः परिबृंहयेत् । पवनं पुनः सम्यग्विपक्व आहारः, निःसारो निर्गतसारः, रौक्ष्येण परिबृंहयेदित्यर्थः ॥ ५२७ ॥

**विण्मूत्रमाहारमलः सारः प्रागीरितो रसः ॥**

एवं दोषाणामवस्थापाकाद्वर्धनं प्रतिपाद्य पर्यन्तपाकाद्विण्मूत्रयोर्मलयो रसस्य धातुस्वभावस्य चोत्पत्तिं दर्शयन्नाह—विण्मूत्रमित्यादि । प्रागीरितः पूर्वं कथितः शोणितवर्णनीये ॥—

**स तु व्यानेन विक्षिप्तः सर्वान् धातून् प्रतर्पयेत् ५२८**

तस्मादेव रसादन्येषामपि धातूनामुत्पत्तिं दर्शयन्नाह—स त्वित्यादि । स रसः । व्यानेन वातविशेषेण । विक्षिप्तः प्रेरितः । प्रतर्पयेत् अतिशयेन वर्धयेत् । व्यानस्य सर्वाङ्गव्यापित्वेन दोषधातुमलव्यापित्वात्; स च कुल्याकेदारन्यायेन सर्वान् धातून् प्रतर्पयति ॥ ५२८ ॥

**कफः पित्तं मलः खेषु स्वेदः स्यान्नखरोम च ॥**
**नेत्रविट् त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ५२९**

तेषामेव दोषमलानां यतो यतो यस्योत्पत्तिस्तां दर्शयन्नाह—कफ इत्यादि । तत्राहारस्य मलौ विण्मूत्रे प्रागुक्ते । कफो रसस्य मलः । पित्तं रक्तस्य । मलः खेष्विति खेषु कर्णश्रोत्रमुखादिषु स्रोतःसु मांसस्य । स्वेदः प्रस्वेदः, स मेदसो मलः । नखरोम पुनरस्थ्नो मलः । नेत्रविट् त्वक्षु च स्नेह इति नेत्रविट् अक्षिपुरीषं, त्वक्षु च स्नेहस्त्वचां च यः स्नेहः स मज्ज्ञो मलः । धातूनामित्यादि रसादिमज्जान्तानां यथाक्रमं मला इत्यर्थः । शुक्रं पुनरमलं सहस्रधा ध्माताक्षयसुवर्णवदिति; आकृष्टाण्डकोषस्य पुंसः श्मश्रुपातात् श्मश्रु एव शुक्रमल इत्येके, तन्नेच्छति **गयी** ॥ ५२९ ॥

**दिवा विबुद्धे हृदये जाग्रतः पुण्डरीकवत् ॥**
**अन्नमक्लिन्नधातुत्वादजीर्णेऽपि हितं निशि ॥ ५३० ॥**
**हृदि संमीलिते रात्रौ प्रसुप्तस्य विशेषतः ॥**
**क्लिन्नविस्रस्तधातुत्वादजीर्णे न हितं दिवा ॥ ५३१ ॥**

ननु, यदन्नमजीर्णे भुज्यते तदध्यशनमुच्यते, प्रातर्भुक्ते यद्दिनान्ते भुज्यते तत् कथमध्यशनं न भवतीत्याह—दिवे-

---

१ 'ये त्वत्र सान्द्रादनन्तरं श्लक्ष्णकर्कशयोः पाठात्सूक्ष्मान्ता द्रवादयो द्वादशैव भवन्ति न त्वेव दशेत्येवं विप्रतिपद्यन्ते तान् पुनः कटाक्षयन्नाह—श्लक्ष्ण इति । अयमभिसन्धिः—संख्येयं कर्मविशेषमाश्रित्योपदिश्यते, श्लक्ष्णकर्कशौ तु पिच्छिलविशदसाम्यादुक्तगुणौ, नातो द्वादशत्वापत्तिर्गन्धमात्रेणाप्युपलभ्यत इति' इति हाराणचन्द्रः ।

त्यादि । दिवा दिवसे । पुण्डरीकवत् पद्मवत् । विबुद्धे विकसिते हृदये । जाग्रतः पुरुषस्य । अक्लिन्नधातुत्वात् अनार्द्रधातुत्वात् । अजीर्णेऽप्यन्नं हितमिति संबन्धः । यथा—अजाते पयसि अन्यदाहृतं पयः । दिवा विबुद्धे हृदये इत्युक्तेऽपि यज्जाग्रत इति कृतं तदेतदधिकं बोधयति—अजाग्रतोऽपि स्वभावादेव विबुद्धं हृदयं भवति । सायं भुक्तेऽजीर्णे प्रातर्भोजनं न हितमित्यर्थमाह—हृदीत्यादि । रात्रौ हृदि हृदये संमीलिते सङ्कुचिते, प्रसुप्तस्य विशेषतः संमीलित इति संबन्धः । क्लिन्नविस्रस्तधातुत्वात् आर्द्रशिथिलधातुत्वात् । अजीर्णे 'सायं भुक्ते' इति शेषः । न हितं दिवेति दिवा अन्नं हितं न भवतीत्यर्थः ॥ ५३० ॥ ५३१ ॥

**इमं विधिं योऽनुमतं महामुने-**
**र्नृपर्षिमुख्यस्य पठेद्धि यत्नतः ॥**
**स भूमिपालाय विधातुमौषधं**
**महात्मनां चार्हति सूरिसत्तमः ॥ ५३२ ॥**

**इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां सूत्रस्थाने षट्चत्वारिंशत्तमोऽध्यायः ।**

उक्तसूत्रपाठानुशंसां दर्शयन्नाह—इममित्यादि । इमं विधिं सूत्रस्थानोदितमाहारविधिं वा; यः पठेत् प्रयत्नत इति संबन्धः । अनुमतं महामुनेर्धन्वन्तरेः । किम्भूतस्य महामुनेः? नृपर्षिमुख्यस्य राजर्षिप्रधानस्य । स सूरिसत्तमः पण्डितप्रधानः । विधातुं कर्तुम् । महात्मनां राजसदृशानाम् । अर्हति योग्यो भवति ॥ ५३२ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां समस्तनिबन्धार्थज्ञापिकायां सुश्रुतटीकायां षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

**समाप्तं चेदं सूत्रस्थानम् ।**

निबन्धसंग्रहाख्यव्याख्यया न्यायचन्द्रिकाभिधया पञ्जिकया च सहिता

# सुश्रुतसंहिता ।

## अथ निदानस्थानम् ।

### प्रथमोऽध्यायः ।

**अथातो वातव्याधिनिदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**नि० सं०**-हेतुलिङ्गौषधज्ञानबीजभूतेन सूत्रस्थानेन संक्षेपोद्दिष्टस्य हेतुलिङ्गौषधस्य विवरणे सर्वाण्येव स्थानानि प्रस्तुतानि, तेषु च प्रस्तुतेषु स्वाधिकारिणां शल्यतन्त्रव्याधीनां हेतुलक्षणप्रतिपादकतया निदानस्थानस्यारम्भः, तत्रापि दोषाणां वातस्य प्रधानत्वात्तद्व्याधीनां हेतुलक्षणाभ्यां प्राक् प्रतिपादनं युज्यत इत्याह—अथात इत्यादि । वातव्याधेराक्षेपकादेर्निदानं हेतुलक्षणनिर्देशः । अथातो वातव्याधिनिदानमित्यादि यद्यपि प्रथममेव सूत्रमस्ति तथाऽपि 'प्राब्रवीद्भिषजांवरः' इत्यन्तरं द्रष्टव्यम्, अनुपासितप्रार्थितगुरोः शिष्याणां व्याख्यानेऽनधिकारात् ॥ १ ॥ २ ॥

**न्या० च०**-हेतुलिङ्गौषधज्ञानबीजभूतं संक्षिप्तार्थसूत्रणं सूत्रस्थानम् । तेनैव संक्षेपेणोद्दिष्टस्य हेतुलिङ्गौषधज्ञानस्य विवरणे सर्वेष्वेव स्थानेषु पूर्वं निदानमेव प्रस्तूयते; अत्र हि स्वाधिकारिणां शल्यतन्त्रव्याधीनां सामान्यविशेषरूपेण हेतुलक्षणनिर्देश इति। भवति चात्र—"सर्वस्थानप्रपञ्चानां सूत्रमेवार्थसूत्रणम् । सर्वशाखाप्रबन्धानां मूलं स्कन्धस्तरोरिव ॥ स्थितः स्थानेषु शेषेषु स्वस्थानार्थश्च केवलः । प्रसवानामिवैतेषामुपशाखासु शाखिनः" इति । ननु चिकित्साया विधेयत्वेन प्राधान्यात् सूत्रस्थानानन्तरं तन्निर्देशस्थानमेव युज्यते। नैतदस्ति, चिकित्सा कारकज्ञापकहेतुभिः सर्वभावेन ज्ञातस्य व्याधेरुपपन्ना नान्यथेति कारकज्ञापकहेतुनिर्देशार्थं निदानस्थानमेव कृतम् । तत्रापि सर्वशल्यतन्त्रव्याधीनां हेतुलिङ्गनिर्देशे प्रस्तुते प्रथमं वातव्याधिहेतुलिङ्गनिर्देशः, पित्तकफयोस्तद्व्याधीनां च शेषाणां वातस्यैव समीरणत्वेन हेतुभूतत्वात् । सर्वहेतूनां च प्राग्भावाद्वातव्याधिनिदानमेव प्रथमम् । यद्येवं पित्तकफव्याधिनिदानमपि निर्देष्टव्यं; नैतदस्ति, पित्तकफयोर्हि रूपरसगन्धादियोगाद्रसादिदूष्यद्रव्यसंयोगविशेषेण समुदायिभ्योऽन्यः समुदाय इत्यतश्चूर्णहरिद्रासंयोगवदत्यन्तविसदृशा एवाव्यक्तरूपरसगन्धादिसमन्विताः पृथक्[1] सामान्यजा व्रणज्वरादयो जायन्ते; वातस्य पुनर्द्रव्यैर्निरपेक्षा[1] वातरक्ताक्षेपकादयोऽ(नति)भिन्नरूपा नानात्मजाः, वातैककृतत्वात्; य इहैवोपदेक्ष्यन्ते; अन्ये पुनरस्य सामान्यजा व्रणज्वरादयः, सर्वैरेवारब्धत्वादिति । भवति चात्र—"व्यक्तोऽन्योरसरूपादिर्वातव्याधौ न दृश्यते । तेन नानात्मजा एव काश्चिन्मारुतजा रुजः ॥" इति । अथातो वातव्याधिनिदानमिति यद्यपि प्रथममेव सूत्रमस्ति तथाऽपि 'प्राब्रवीद्भिषजांवरः' इत्यनन्तरमेव द्रष्टव्यम्, अनुपासितप्रार्थितगुरोः शिष्याणां व्याख्यानेऽनधिकारात् । वातीति वातः सदागतिः, तस्य व्याधयः विविधं दुःखमादधतीति व्याधयः, ते पुनराक्षेपकादयः, तेषां निदानं हेतुलक्षणनिर्देशः । यदाह "हेतुलक्षणनिर्देशान्निदानानीति षोडश" ( सू. अ. ३ ); कारकज्ञापकनिर्देशादित्यर्थः । तत्र हिन्वन्ति उत्पत्तौ उद्गन्ति गच्छन्तीति हेतवः कारकहेतवः । स्थानसंश्रयाणां हेतवो व्याधिहेतवः । तत्र दोषसंचयस्य ऋतुचर्याभिहितः शीतोष्णवर्षादिभिः कालानुवर्तिभिः सोमसूर्यानिलकृतैरोषधिष्वाहितः स्नेहरूक्षगुणो हेतुः, प्रकोपस्य पुनर्बलवद्विग्रहक्रोधदिवास्वप्नादयः । प्रसरहेतवस्तु भिन्ना न सन्ति, प्रसरस्य प्रकोपविशेषत्वादेव । व्याधिहेतवस्तु विरुद्धाशनं कुष्ठस्य, विषमाशनं यक्ष्मणः, अत्यशनमजीर्णस्य, मृद्भक्षणं पाण्डुरोगस्य । उभयहेतवस्तु 'हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च' इत्यादि, तथाच 'स्नान्यावतरणाच्चैव ज्वरो दोषैः प्रकुप्यति ( उ. तं. अ. ३९ ) इति वचनाद्दोषरोगोभयहेतवः । अन्ये त्वन्यथा द्विविधं हेतुमिच्छन्ति-विप्रकृष्टं, सन्निकृष्टं चेति । तत्र विप्रकृष्टा अनन्तरोक्ता दोषरोगोभयहेतवः; सन्निकृष्टाः पुनः कर्मेन्द्रियार्थकालैर्विषमा वातादयः । कर्मादीनां तु वैषम्यं त्रिविधेन मिथ्याहीनातियोगेन, कर्मादिसम्यग्योगेन पुनरेकेन दोषसाम्यं, तदेकमेव स्वास्थ्यकारणम् । कर्मादिमिथ्यादियोगेऽप्यसति सात्म्यीभावे दोषकोपः । कर्म पुनः कायवाङ्मनोभेदेन त्रिविधम् । रसरूपगन्धस्पर्शशब्दाः पुनरिन्द्रियार्थाः । कालः पुनः षड़ृतुको वर्षसंज्ञः । तस्य शीतोष्णवर्षगुणेन मिथ्यादियोगाः । स एव हेतुः

१ 'पृथङ्नामानः' इति मधुकोषे पाठः ।

१ 'दूष्यनिरपेक्षाः' इति मधुकोषे पाठः ।

पुनः प्रथमाध्याये विहाराहारपार्थिवकालभेदेन चतुष्प्रकारो दर्शितः । तस्यैव पुनर्विहाराहारौ व्रणप्रश्ने दोषप्रकोपगणेषु हि मिश्रीकृत्य विनिर्दिष्टौ । कालस्तु "स शीताभ्रप्रवातेषु" ( सू. अ. २१ ) इत्यादिभिः पृथक्कृतः । गन्धादिविशेष इन्द्रियार्थस्तु पुष्पादिसंभवो दोषाणां व्याधीनां च हेतुत्वेन दोषप्रकोपगणे न पठितः; दोषप्रकोपगणेषु केवलं दोषप्रकोपहेतवः पठ्यन्ते, न पुनरुभयहेतव इति । भवन्ति चात्र—"विषमा विषमैरेव दोषा रोगस्य हेतवः । कर्मेन्द्रियार्थकालैः स्युस्ते स्वास्थ्याय समाः समैः ॥ समयोगात् समाः स्वास्थ्ये, मिथ्याहीनातियोगतः । दोषाः स्युर्विषमा रोगे तत्र साम्यं सुखावहम् ॥ कायवाङ्मनसां भेदाद्विहारस्त्रिविधो मतः । रसादयस्तु पञ्चार्थाः, कालः षडृतुकः स्मृतः ॥ प्रकोपे प्रशमे पूर्वं विहाराहारपार्थिवाः । कालश्चैषु चतुर्थोक्तो हेतुरत्र पुनस्त्रिधा ॥ क्रियाहारश्च वर्गेषु दोषाणां कोपहेतुषु ।"—इति । अन्ये पुनश्चतुर्विधं हेतुमिच्छन्ति; तत्र संनिकृष्टविप्रकृष्टौ द्वौ, अधर्मप्रागुत्पत्ती च द्वे इति । तत्राधर्मस्त्रेतायुगादौ प्रवृत्तः; प्रागुत्पत्तिस्तु दक्षापमानसंभूतरुद्रकोपात् संतापो ( संभवो ) ज्वरादीनामिति । लक्ष्यते अनेनेति लक्षणं ज्ञापकं लिङ्गम् । तदपि द्विविधं—दोषाणां व्याधीनां च । तत्र संचयप्रकोपप्रसराणां लिङ्गं दोषलिङ्गम् । तत्र संचयस्य तावद्दोषाणां लिङ्गं–संचितानां खलु दोषाणां स्तब्धपूर्णकोष्ठतादयो वातादीनां; प्रकुपितानां तु कोष्ठतोदादयः; प्रसृतानां विमार्गगमनादयः । स्थानसंश्रयादिलिङ्गं तु द्विविधं–पूर्वरूपं, रूपं चेति । स्थानसंश्रये संप्राह्याख्ये पूर्वरूपं, व्यक्तया तु रूपं, तद्व्यक्तस्य व्याधेर्लिङ्गम् । तदपि द्विविधं–सामान्यं, विशिष्टं च । तत्र सामान्यं "वायुः प्रवृद्धो वृद्धेन रक्तेनावारितः पथि । क्रुद्धः संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम्" ( च. चि. अ. २९. ) इति । तथा वृणोतीति व्रणः, विकृतसंतापो ज्वरस्य लिङ्गम्, अतिसरणमतिसारस्य । विशिष्टं पुनरेषामेव वातादिभेदेन लक्षणम् । 'त्रिविधं लिङ्गम्' इत्यन्ये । तत्र पूर्वोदितं दोषव्याधिलिङ्गद्वयं, तृतीयं पूर्वरूपमिति । तत् पुनर्दोषव्याधिलिङ्गाभ्यामन्यदेव । तत् संमूर्च्छितदोषदूष्यव्यापारेण व्याधिजननसमर्थस्य कार्यलिङ्गमिति । भवतश्चात्र—"किञ्चिद्दोषचयादीनां लिङ्गं व्याधेस्तथाऽपरम् । तेन लिङ्गं द्विधैवोक्तं दोषरोगसमाश्रयम् । ततस्तृतीयमप्याहुः पूर्वरूपं तदुच्यते । तत्तु ह्येकीभवद्दोषदूष्यरागिकृतं स्मृतम्–" इति । अन्ये पुनरन्यथा द्विविधं लिङ्गमाहुः; तद्यथा—साध्यरोगस्यैकम्, अपरं पुनरसाध्यस्य । तत्रासाध्यरोगलिङ्गमपि त्रिविधम् । तद्यथा—रोगाणां स्थैर्यमहत्वधात्वनुक्रमैरेकम् । तदुक्तं–"स स्थिरत्वान्महत्वाच्च धात्वनुक्रमणेन च । निहन्त्यौषधवीर्याणि मन्त्रान् दुष्टग्रहो यथा–" ( सू. अ. २३ ) इति । तदिहैवोक्तम्–"आजानु स्फुटितं यच्च प्रभिन्नं प्रस्रुतं च यत्"–इत्यादि । तथाऽन्यदवारणीये निर्दिष्टमुपद्रवकृतमेव । तथैवापरमनिमित्तं शरीरमनसोः प्रकृतेर्विकृतिलक्षणमरिष्टाख्यं क्रियापथातिवृत्तदोषाणां कार्यभूतमसाध्यव्याधिलिङ्गम् । भवति चात्र–"असाध्यं द्विविधं याप्यमपि यच्चानुपक्रमम् । तस्यापि त्रिविधं लिङ्गं निदानारिष्टवारणैः" इति । निदानमिति निपूर्वाद्दिशेर्लुडन्तात् पृषोदरादित्वेन सिद्धिः । वातव्याधिनिदानं यस्मिन् यस्य वा विद्यते इति मत्वर्थं समुत्पन्नस्य कस्य 'अध्यायानुवाकयोर्लुक्' ( ५।२।६० ) इति लुक् ॥ १ ॥ २ ॥

**धन्वन्तरिं धर्मभृतां वरिष्ठममृतोद्भवम् ॥**
**चरणावुपसंगृह्य सुश्रुतः परिपृच्छति ॥ ३ ॥**
**वायोः प्रकृतिभूतस्य व्यापन्नस्य च कोपनैः ॥**
**स्थानं कर्म च रोगांश्च वद मे वदतां वर ! ॥ ४ ॥**

**नि० सं०**–कः पुनरेवं प्रतिज्ञातवानिति तमेव प्रकारेण दर्शयन्नाह—धन्वन्तरिमित्यादि । धर्मभृतां धार्मिकाणां, वरिष्ठं श्रेष्ठम् । अमृतेन सह उद्भव उत्पत्तिर्यस्य तम् । चरणावुपसंगृह्येति पादपतनं कृत्वेत्यर्थः । किं परिपृच्छतीत्याह—वायोरित्यादि । प्रकृतिभूतस्य स्वभावावस्थितस्य । व्यापन्नस्य विकृतस्य । कोपनैः द्रव्यगुणकर्मभिर्वायुसमानैः । स्थानं श्रोणिगुदादि, तच्च प्रकृतिभूतस्य वायोः; विकृतस्य तु सर्वशरीरम् । कर्म सामान्यं विशिष्टं च; सामान्यम् 'इन्द्रियार्थोपसंप्राप्तिं' इत्यादि, विशिष्टं 'स प्राणो नाम देहधृक्' इत्यादि । रोगांश्चेति हिक्काश्वासादिकान् । यदाह—"प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान्" इति । चकारान्नाम च । वदतां वर व्याख्यातॄणां मध्ये श्रेष्ठ ! । 'कोपनैः' इत्यत्र 'भूपते' इति केचित् पठन्ति; 'वद मे' इत्यत्र च 'वदस्व' इति पठन्ति; तत्र भूपते इति धन्वन्तरिसंबोधनं; वदस्व वदेति चैक एवार्थः । मे मम । कर्मग्रहणं केचिन्नाधीयते; तन्मते, 'स्थानं रोगविभागं च' इति पाठः ॥ ३ ॥ ४ ॥

**न्या० च०**–कः पुनरेवमुक्तवान् 'वातव्याधिनिदानं व्याख्यास्यामः' इति, तमेव प्रकरणं दर्शयन्नाह—धन्वन्तरिं धर्मभृतामित्यादि । धर्मभृतांवरिष्ठमिति स्थितौ धार्मिकता । अमृतोद्भवमिति उत्पत्तौ विशुद्धता । चरणावुपसंगृह्येति गुरुपूजाप्रतिपादनम् । प्रकृतिभूतस्येति भूतशब्दोऽयमुपमार्थे, 'काष्ठीभूतो मृतोपमः' ( च. सू. अ. २४ ) इति । एतेनाह्निकार्तवदोषावैषम्यसद्भावमपरिहारार्थं दर्शयति । केचित् 'विपन्नस्य च कोपनैः' इति पठन्ति । अन्ये त्वपठित्वा व्यापन्नताया अन्यथाऽनुपपत्त्यैव कोपनैरित्यस्य सामर्थ्यं लम्भयन्ति । स्थानं श्रोणिगुदादि; एतद्धि प्रकृतिभूतस्यैव न पुनर्विकृतस्य, विकृतानां हि दोषाणां सर्वशरीर एव विकृतिकार्यदर्शनात् सर्वशरीरे एवावस्थानमनुमन्तव्यम् । कर्म सामान्यं विशिष्टं च । तत्र सामान्यं 'इन्द्रियार्थोपसंप्राप्तिं' इत्यादि, विशिष्टं 'स प्राणो नाम देहधृक्' इति प्रतिस्थानस्थितमारुतानां क्रिया । रोगांश्चेति

स्थानोदितहिक्काश्वासादिकान् । यदाह–"कुरुते चापि हिक्काश्वासादिकान् गदान्" इति । गदान् विकारान् स्थानाश्रयान् । नाम च वदस्वेति भाषणेऽर्थे आत्मनेपदम् । 'वद मे' इति केचित् पठन्ति । कर्मग्रहणं केचिन्नाधीयते । तन्मते प्रकृतिव्यापत्तेः प्राकृतवैकृतकर्मानुमीयते । तदसूत्रितमपि कर्म प्राकृतं वैकृतं चान्यथानुपपत्त्या लभ्यते । व्यापन्नत्वं तु वायोर्वृद्धिक्षयाभ्यामेव । ननु कथं वायोरसंहतत्वादनवस्थितत्वाच्च चलस्य समासमैर्द्रव्यगुणकर्मभिर्वृद्धिक्षयौ ? नैतदस्ति, न ह्यनिलमौषधद्रव्याणि समेत्य वर्धनानि वर्धयन्ति क्षपणानि क्षपयन्ति; किं तर्हि समीरणसमानि समगुणभूयिष्ठानि वा द्रव्यगुणकर्माणि संयोगमेत्य शरीरस्य शुषिरकराणि सावकाशे च शरीरे वायुरवकाशं लभमानः स्वयमेवाप्यायते; यानि वातगुणविपरीतानि विपरीतगुणभूयिष्ठानि वा तानि शुषिरत्वाकराणि निरन्तरे च शरीरे वायुरवकाशमलभमानः स्वयमेव प्रशान्तिमापद्यते । भवति चात्र–"स्वगुणान् स्वगुणैर्द्रव्यैर्लब्ध्वा रुद्धाश्रयोऽनिलः । स्वयं कोपशमौ देहे यात्यप्राप्तेऽपि भेषजे—" इति ॥ ३ ॥ ४ ॥

**तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजां वरः ॥**
**स्वयंभूरेष भगवान् वायुरित्यभिशब्दितः ॥ ५ ॥**
**स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च ॥**
**सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः ॥ ६ ॥**
**स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् ॥**
**अव्यक्तो व्यक्तकर्मा च रूक्षः शीतो लघुः खरः ॥७॥**
**तिर्यग्गो द्विगुणश्चैव रजोबहुल एव च ॥**
**अचिन्त्यवीर्यो दोषाणां नेता रोगसमूहराट् ॥ ८ ॥**
**आशुकारी मुहुश्चारी पक्वाधानगुदालयः ॥**

**नि० सं०**–तस्येत्यादि । तस्य सुश्रुतस्य । तत् पूर्वोक्तम् । भिषजां वरो धन्वन्तरिः । 'भिषजां गुरुः' इति केचित् पठन्ति । प्राब्रवीत् जगाद । एष वायुरिति संबन्धः। भगवान् समस्तैश्वर्यगुणयुक्तः, अणिमादिगुणयुक्त इत्यर्थः। अभिशब्दितः कीर्तितः। स्वयंभूत्वे हेतुत्रितयमाह—स्वातन्त्र्यादित्यादि। स्वातन्त्र्यादिति स्वकर्मविषये नान्येन प्रेर्यत इत्यर्थः; नित्यभावात् नित्यस्य हि कारणरहितत्वेन स्वतन्त्रत्वं, ततश्च स्वयंभूत्वमित्यर्थः; सर्वगत्वाच्चेति यो हि सर्वगतः स स्वयम्भूः, आकाशवत् । चकारात् सूक्ष्मत्वमपि परमाणोरिव स्वयंभूत्वे हेतुः समुच्चीयते । कथं पुनरस्य सर्वगत्वं यावता पार्थिवद्रव्यमूर्तिषु वायुर्नास्तीत्याह—सर्वेषामित्यादि । सर्वेषां स्थावरजङ्गमानां, सर्वात्मा कारणकार्यात्मकत्वेन सर्वस्वरूपः, 'सर्वप्रयोजनहेतुः' इति केचित् । सर्वलोकनमस्कृत इति कुत इत्याह—स्थित्युत्पत्तिविनाशेष्वित्यादि । स्थितिः जीवनम् । अव्यक्तोऽदृश्यमूर्तिः । व्यक्तकर्मा प्रकटक्रियः । शीत इति असंयुक्तस्य वायोर्गुणोऽयं, संयुक्तस्तूष्णोऽपि । खरः खर-

१ 'जगाद भगवानृषिः' इति ताडपत्रपुस्तके पाठः । २ 'शीतो रूक्षो लघुश्वरः(लः)' इति ताडपत्रपुस्तके पाठः ।



स्पर्शः, कर्कोटकफलवत् । तिर्यग्गः तिर्यग्गामी । द्विगुणः शब्दस्पर्शगुणः । रजोबहुल इति त्रिगुणत्वेऽप्युत्कर्षविशेषाद्रजःप्रबलत्वमस्य । अचिन्त्यवीर्योऽचिन्त्यशक्तिः, सा चास्य शक्तिः शरीरदोषमूत्रपुरीषादिविभागोऽवयवादिसंस्थानका(क)रणं दोषधातुमलसंवहनादिश्च, शरीराद्बहिस्तु संचरतो धरणीधारणादिः । दोषाणां नेता दोषधातुमलानां प्रेरक इत्यर्थः, अन्ये तु वायोरपि वायुरेव नेतेति बहुवचनं समर्थयन्ति । रोगसमूहराडिति रोगसमूहे रोगहेतुवृन्दे पित्तकफरक्तादौ राजते शोभते इति रोगसमूहराट्; न तु राट्शब्दो राजपर्यायः, 'स रोगानीकराट् स्मृत' इत्यनेतनेन सह विरोधापत्तेः । आशुकारी शीघ्रमत्ययकारित्वात् । मुहुर्मुहुः प्रकृतिभूतोऽपि चरतीति मुहुश्चारी । पक्वाधानगुदालय इति पक्वाशयगुदौ स्थानमस्येत्यर्थः ॥ ५—८ ॥—

**न्या० च०**–अत एवायं स्वयंभूः । संपदादित्वाद् भावे क्विप् । स्वयमात्मना, भू सत्तायाम् । सोऽयं वायुरित्यभिशब्दितः कीर्तितः । स एव भगवान् समस्तैश्वर्यगुणयुक्तः । अत एवास्य स्वयमाविर्भावो महत्त्वायोगात्, स्वयमेव तिरोभावोऽणुत्वायोगात् । कुतः पुनरयं लब्धसत्ताक इत्याह—नित्यभावेन स्वातन्त्र्यात्; नित्यस्य हि लक्षणं–'सदकारणवत्त्वं'; सन्नयं वायुः, प्रत्यक्षस्पर्शोपलभ्यत्वात् । व्यक्तः कम्पादिकर्मवत्त्वात् । कारणानुपलब्धेर्नित्यः । नित्यश्च स्वतन्त्रो भवति, कारणानपेक्षत्वात्; यो हि कारणमपेक्षते स सापेक्षत्वादस्वतन्त्रः, नायं तथा, तस्मादयं स्वतन्त्रः । स्वयंभूत्वे तृतीयमपि हेतुं दर्शयन्नाह–सर्वगत्वादिति । यः सर्वगतः स स्वयंभूः, आकाशवत् । चकारात् सूक्ष्मत्वमपि परमाणोरिव स्वयंभूत्वे हेतुः । कथं पुनस्य सर्वगत्वं ? यावता पार्थिवद्रव्यमूर्तिषु वायुर्नास्तीत्याह–सर्वेषामेव सर्वात्मेति । सर्वेषामेवेति स्थावराणां जङ्गमानां वा; अथवा कारणात्मनां वा सर्वरूपाणाम् । यदाह चरकः–"विश्वरूपः" ( च. सू. अ. १२ ) इति । एतेन पार्थिवादीनामात्मवायुरेव स्वभावः । अत एव नाम सर्वं द्रव्यं पाञ्चभौतिकमिति, वायुगुणकर्मणां सर्वत्र विद्यमानत्वात् । यद्येवमेवंभूतस्य वायोः कथं विहाराहारफलादिभिरैश्वर्यहानिः ? नैतदस्ति, वायोरैश्वर्यस्य दैवानुगमेन कालविहाराहारादिभिरुपाधिभिर्निरुपाधेरग्नेरिव ह्रासादयो विशेषाः । तत्राग्नेरुपाधयः "औदर्यो भगवानग्निः" ( सू. अ. ३५ ) इत्यादि । अत्र यथा दैवबलेन निरुपाधेरप्यनलस्य विहाराद्याभिरुपाधिभिर्वैषम्यादयो विशेषाः, तथा वायोरपि निरुपाधेराहारादिभिरुपाधिभिः क्षयादयो विशेषा भवन्ति । भवति चात्र–"स्वतन्त्रस्यापि नित्यस्य सर्वगस्य स्वयंभुवः । दृष्टा दैवानुगाः सर्वविशेषास्तु नभस्वतः–" इति । सर्वभूतैर्नमस्कृत इति प्रत्यक्षफलदेवतारूपत्वात् । कुतो भूतानां नमस्कृत इत्याह–स्थित्युत्पत्तिविनाशेषु भूतानामेव कारणमित्यादि । उत्पत्तौ कारणं रजोबहुलत्वात् ।

१ 'शरीरे रसदोषमूत्र०' इति पा० ।

अत्रार्थे चरकः–"प्रभवश्चाव्ययश्च" (च. सू. अ. १२) इति। अव्यापन्नतया स्वकर्मणि व्याप्रियमाणः स्थितिहेतुः। स्वां क्रियामकुर्वन् व्यापन्नरूपतया विनाशहेतुः। अत्रार्थे चरकः– "भूतानां भावाभावकरः" (च. सू. अ. १२) इति। भूतानां प्राणिनां, महाभूतानां वा चतुर्णाम्। व्यक्तसंयोगक्रियत्वाद् भावकरः, पृथक्क्रियया व्यक्तविभागकारित्वादभावकरः। तदुक्तं—"सर्वा हि चेष्टा वातेन स प्राणः प्राणिनां मतः (च. सू. अ. १७) इति। तथा स्वतन्त्रेऽपि "पञ्चधा चेष्टयत्यपि" इति। ननु च भूतानां भावाभावौ व्यक्तौ, न च तत्र वायुर्व्यक्तं कारणमुलभ्यत इत्याह–अव्यक्त इति, व्यक्तो न भवति। प्रसज्ये नञ्, क्रियया तस्य संबन्धात्, तत्रापि गमकत्वात् समासो भवति, 'असूर्यललाटयोर्दृशितपोः' (पा. अ. ३।२।३६) इत्यत्र यथा। तेन व्यक्तस्यापि पुष्पस्योत्पत्ताविवासत्त्वं पिशाचादीनामिव वा संशयितं सत्त्वं निराकृतम्। व्यक्तकर्मोत्पादनेन हि कालदेशपुरुषेषु त्रिष्वभिव्यक्तिरव्यक्तस्यापि व्यक्तकर्मणः परमाणोरिव भवत्येव। तस्येदानीं चिकित्सोपयोगिनः स्वाभाविकान् गुणान्निर्दिशन्नाह–रूक्षः शीत इत्यादि। शीतत्वमसंयुक्तस्य। तथा हि चरकः–"रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः (च. सू. अ. १)" इति। शास्त्रान्तरेऽस्यानुष्णाशीतस्पर्शत्वमेवोक्तम्। तत्र यद्युष्णशीतयोर्युगपत्संभवोऽनेन वचनेनोच्यते, तदयुक्तं; शीतोष्णयोः सहावस्थानविरोधात्। शीतोष्णवर्जितस्पर्शत्वं विधीयतेति चेत्? तदप्यसत्, तृतीयस्य स्पर्शराशेरसंभवात्। शीतोष्णस्पर्शविरोधेन स्पर्शमात्रनिषेध इति चेत्, तदप्यसंगतं, वायोः स्पर्शगुणस्य प्रत्यक्षत्वात्। तस्मादसंयुक्तः शीत एव; संयुक्तः पुनरनुष्णाशीतः, वायोर्योगवाहित्वात्। यदाह चरकः–"योगवाहः परं वायुः संयोगादुभयार्थकृत्। दाहकृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात्" (च. चि. अ. ३) इति। लघुत्वं चापरिमेयमप्यस्य तिर्यग्गमनादनुमीयते, अन्यथा गुरुत्वादधो गच्छेत। खरः कर्कोटफलवत्। रूक्षत्वं विनाऽपि खरत्वेन भवति, सूक्ष्ममसृणरजसीव। तिर्यग्गत्वेन वायुत्वेन च तन्त्रान्तरोदितं चलत्वमप्युक्तम्। द्विगुण इति शब्दस्पर्शगुणः। रजोबहुल इति सर्वकार्यकारणद्रव्याणां त्रिगुणत्वेऽप्युत्कर्षविशेषाद्रजःप्रबलत्वमस्य। अचिन्त्यवीर्यः चिन्तयितुमशक्यकृत्यः, वीर्यशब्दः शक्तिवाची; सा चास्य शक्तिः अन्तःशरीरे चरतो रसदोषमूत्रपुरीषादिविभागोऽवयवादिसंस्थानकरणं दोषधातुमलसंवहनादि, बहिः शरीरेभ्यस्तु चरतो धरणीधारणादि तथा भावाभावकरणादि। दोषाणां नेतेति कफपित्तयोर्द्वित्वेऽपि बहुवचनं सामर्थ्यादायातं; तेन दोषधातुमलानां नेतेति प्रतिपत्तव्यः। 'वायोरपि वायुरेव नेतेति बहुवचनमुपपन्नम्' इत्यन्ये। तन्न, तस्य स्वयमेव गतिमत्त्वात्; मलादिनेतृत्वस्य च प्रत्यक्षोपलब्धेः। वायोर्गतिमत्त्वाद्बहिरपि तस्य तृणादौ नेतृत्वोपलब्धेः। एतेन रोगिणि रोगारम्भकसर्वकारणानां स्वस्थे च दोषधातुमलानां नेतृत्वमनिलाधीनमित्युक्तम्। रोगसमूहराडिति रोगसमूहे राजतीति, तेन कार्यभूतव्याधिकरत्वं युक्तम्। नायं राट्शब्दो राजपर्यायः; किं तर्हि रोगसमूहे रोगहेतुवृन्दे पित्तकफरक्तादौ शक्तिविशेषयोगाद्दीप्ततामाचष्टे। अन्यथा परेण सह पूर्वस्य विरोधः स्यात्। यदुक्तं 'स रोगानीकराट् स्मृतः' (उ. तं. अ. ३९) इति। किं च रूक्षादिवातविशेषाणां प्रकृतिभूतस्य कथं हेतुत्वमिति चेत्, कुशूलस्य बीजस्याङ्कुरेष्वपि भविष्णुयोग्यतया हेतुव्यपदेशः। कथमनेन दोषधात्वन्तरस्रोतोविचरणाक्षमेण संचरणमित्याह–आशुकारीति। आशुकरणशीलत्वमेव कथमित्याह–मुहुश्चारीति। यस्मादयं मुहुश्चारी तस्मादाशुकारीत्यर्थः। एवंनामायं त्वरितगतिः, यत् सर्वधातुषु मुहुरेव संचरति; अत एवास्य स्वस्थे रोगिणि च समानां प्रकुपितानां च दोषधातुमलानां क्रियाकारित्वमाश्वेव निष्पन्नम्। कः पुनरस्याधारो यत्र मुहुश्चरतीत्याह—पक्वाधानगुदालय इति। पक्वस्याधानमाधारो गुद आलयः स्थानं यस्य। तथा निजमस्य तत् स्थानं, तत्रैव स्थाने दोषादिसंवहनार्थं पुनरन्यत्र मुहुश्चरतीति। एतेन तत्रैवायमवजेतव्यो बस्त्यादिभिर्नान्यत्र; अन्यत्रावजयेऽप्यस्य न मूलोच्छेदः; तेन मूलोच्छेदाच्छाखादीनामिव वातविकाराणां नियतो विनाश इति। भवति चात्र– "स्वे स्वे स्थानेऽनिलादीनां सर्वेषां मूलमिष्यते। जितेऽत्र जायते तेषां कृत्स्ननाशो यथा रुहाम्" ॥ ५–८ ॥—

**देहे विचरतस्तस्य लक्षणानि निबोध मे ॥ ९ ॥**
**दोषधात्वग्निसमतां संप्राप्तिं विषयेषु च ॥**
**क्रियाणामानुलोम्यं च करोत्यकुपितोऽनिलः ॥१०॥**
**(इन्द्रियार्थोपसंप्राप्तिं दोषधात्वग्न्यवैकृतम्।**
**क्रियाणामानुलोम्यं च कुर्याद्वायुरदूषितः ॥ १० ॥)**

**नि० सं०**–निबोध मे इति निबोध जानीहि, मे मत्सकाशात्। धातुशब्दानन्तरमादिशब्दो लुप्तो द्रष्टव्यः, तेन मलोपधातूनामपि ग्रहणम्; अथवा धातुशब्देन मलोपधातव उच्यन्ते, शरीरधारणकारणात्। विषयेषु शब्दस्पर्शरूपरसगन्धेषु। क्रियाणां कायवाङ्मानसीनाम्। आनुलोम्यं प्रवर्तकत्वम्। गयदासाचार्यस्तु इमं श्लोकम् 'इन्द्रियार्थोपसंप्राप्तिं' इत्यादि कृत्वा पठति, स च विस्तरभयान्न लिखितः ॥ ९ ॥ १० ॥

**न्या० च०**–किं पुनरस्य पक्वाधानगुदालयस्याखिलदेहविचरणलक्षणमित्याह—देहे विचरतस्तस्येत्यादि। निबोध मे इति मे शब्दस्याव्ययत्वात् 'मत्तः' इत्यर्थो द्रष्टव्यः। तत्र स्वस्थस्यैव प्रथमं देहविचरणलक्षणं दर्शयन्नाह—इन्द्रियार्थोपसंप्राप्तिमित्यादि। इन्द्रियाणां चक्षुरादीनामर्थानां रूपादीनामुपगमनपूर्विकां प्राप्तिं करोति वायुरदूषितः, सर्वक्रियाणामनिलकृतत्वात्। भूतात्मनां मनःपुरःसरमिन्द्रियेणेन्द्रियार्थानां ग्रहणात्, अपगतमनसां पुनरग्रहणात्। यद्येवं न स्यात् तदा सर्वेन्द्रियाणामेव सकृदर्थग्राहित्वं स्यात्।

१ गयदाससंमतोऽयं पाठः।

तस्मादिन्द्रियाणामर्थग्रहणार्थं मनस उपगमे हेतुता च वातकृता, सर्वक्रियाणामनिलमूलत्वात् । दोषधात्वग्न्यवैकृतं 'कुर्यात्' इति शेषः । अविकृतशब्दो दोषादिभिः प्रत्येकमभिसंबध्यते । विकारो वैकृतं, न वैकृतमवैकृतं, विरुद्धत्वाऽध्यात्; अथवा अल्पार्थे नञ्, 'अनुदरा कन्या' इति यथा । तेनाह्निकतयैवापरिहार्यो नित्यं दोषाणां संचयाद्यनुबन्धोऽनेन सूचितो भवति । धातुशब्दानन्तरमादिशब्दो मध्ये लुप्तनिर्दिष्टो द्रष्टव्यः, तेन मलोपधातूनामपि ग्रहणम् । अथवा दधतीति धातवः; तेन मलोपधातूनामपि ग्रहणं, शरीरधारणकारणत्वात् । क्रियाणां कायवाङ्मानसीनाम्, आनुलोम्यमनुकल्पता; एतेन "समदोषः समाग्निश्च" (सू. अ. १५) इत्यादिश्लोकस्यैवार्थोऽत्रापि प्रक्रमदर्शितः ॥ ९ ॥ १० ॥

**यथाऽग्निः पञ्चधा भिन्नो नामस्थानक्रियामयैः ॥**
**भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः ॥११॥**

**नि० सं०**-तदेवं सर्वानिलस्य सामान्येन स्वास्थ्यहेतुत्वं प्रदर्श्य स्थानोपाधिभेदेन भिन्नस्य नामान्तरविशिष्टस्य प्रतिस्थानं विशिष्टस्वस्वक्रिया रोगांश्च दर्शयन्नाह—यथाऽग्निरित्यादि । यथाऽग्निः पित्ताग्निरेक एव पाचकरञ्जकालोचकभ्राजकसाधकेति नाम्ना, स्थानेनामपक्वाशयादिना, क्रियया अन्नपाचनादिकया, आमयेनाम्लपाकादिना पञ्चविधः; एवमनिलोऽप्येक एव नामादिभिः पञ्चविधः । अन्ये तु पुनरत्र बाह्याग्नेर्गार्हपत्याहवनीयदक्षिणाग्न्यावसथ्यसभ्यलक्षणान् पञ्च भेदानाहुः, तन्नेच्छति **गयदासाचार्यः** ॥ ११ ॥

**न्या० च०**-तदेवं सर्वानिलानामेव सामान्येन स्वास्थ्यहेतुत्वं प्रदर्श्य, स्थानोपाधिभेदेन भिन्नस्य वायोर्नामान्तरविशिष्टस्य प्रतिस्थानं विशिष्टस्वस्वक्रिया रोगांश्च दर्शयन्नाह—यथाऽग्निरित्यादि । यथाऽग्निः पित्तमेकमेव नामादिभिः पञ्चधा भिन्नः, तद्यथा—पाचकरञ्जकालोचकभ्राजकसाधकनाम्ना पञ्चविधः, स्थानेन आमपक्वाशयमध्यादिना, क्रियया अन्नपचनादिकया, आमयेनाम्लपाकादिना; एवमनिलोऽप्येक एव नामादिभिः पञ्चविधः । अन्ये पुनरत्र बाह्यस्याग्नेर्गार्हपत्यादिपञ्चनामभेदेन भिन्नत्वात् तमपि दृष्टान्ते दर्शयन्ति; तत्तु न सम्यक्, तस्याप्रस्तुतत्वात् ॥ ११ ॥

**प्राणोदानौ समानश्च व्यानश्चापान एव च ॥**
**स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥१२॥**

**नि० सं०**-तत्र वायोर्नामान्याह—प्राणोदानावित्यादि । स्थानस्थाः स्थानशब्देनात्र साम्यमुच्यते । यापयन्ति धारयन्ति ॥ १२ ॥

**न्या० च०**-तत्र प्रथमं नाम्नैव भेदं दर्शयन्नाह—प्राणोदानावित्यादि । प्राणोदानावित्यादि निर्देशः ॥ १२ ॥

१ 'पित्तमेकमेव' इति पा० ।

**यो वायुर्वक्त्रसंचारी स प्राणो नाम देहधृक् ॥**
**सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते ॥ १३ ॥**
**प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ॥**

**नि० सं०**-वक्त्रसंचारित्वं चास्योपलक्षणं, तेन मूर्धोरःकण्ठनासिका अपि प्राणस्य स्थानम् । अन्तः अभ्यन्तरमन्नं प्रवेशयति देहधारणाय । प्राणांश्चाप्यवलम्बत इति प्राणानग्न्यादीन्, अवलम्बते स्वक्रियासु योजयति । **गयदासाचार्य**स्त्वेवं मन्यते—प्राणानामग्नीषोमादीनामवलम्बनवचनेनाधारभूतहृदयावलम्बनमेवोच्यते, एतेन प्राणाधारहृदयधारणेन प्राणधारणमेवोक्तम् । अत एव प्राणानामवलम्बनेन मरणमूलत्वमुच्यते । यदुक्तं श्रुतौ,—"यथा हि सैन्धवोऽश्वः शङ्कुमुत्पाट्य धावति, तद्वत् प्राणो रुद्धः सर्वान् वायूनुत्पाट्य प्रयाणकाले धावति"—इति । श्वासादिकानित्यादिशब्दात् प्रतिश्यायस्वरभेदकासादयः ॥ १३ ॥—

**न्या० च०**-प्राणो नामेति नामशब्दः प्रसिद्धौ; प्राण इति प्रसिद्धः । देहधृगिति । देहधारणविशेषणगर्भं हेतुं दर्शयन्नाह—अन्नमित्यादि । अन्नं देहधारणाय प्रवेशयति । अन्तः अभ्यन्तरम् । प्राणान् अग्नीषोमादीन् अनिलवर्जितान् द्वादश; अथवा त्रयोदशैव, वातोऽपि वातान्तरमवलम्बत एव । ननु च तन्त्रान्तरे हि हृदयाश्रयः प्राण उक्तः "हृदि प्राणो गुदेऽपानः समानो नाभिमध्यगः । उदानः कण्ठदेशस्थो व्यानः सर्वाङ्गसन्धिगः ॥" इति; तथा च चरकेऽपि—"स्थानं प्राणस्य कण्ठोरः" (च. चि. अ. २८) इति उरःस्थानमस्योक्तम् । उच्यते—वक्त्रे संचरणमस्योक्तं वक्त्रचरत्वाद्वायोः; प्राणावलम्बनवचनेन तु हृदयावलम्बनमुक्तं, प्राणानां विशेषेण हृदयमर्मस्थितत्वात् । निपुणोऽयमाचार्यः स्थाण्वोः स्थानं भवति, न सदागतेरनिलस्य; तथा चायमाह—'उदानो नाम यस्तूर्ध्वमुपैति' इति; 'आमपक्वाशयचरः समानः' इति; 'पक्वाधानालयोऽपानः' इति, आलीयते आश्लिष्यति अस्मिन्निति आलयः, श्लेषणमात्रं तु चलतोऽपि भवति; तथा 'सर्वदेहचरो व्यानः' इति । अत्रापि च प्रारम्भे यत् पुनरुक्तं 'स्थानं कर्म च रोगांश्च' इति, तच्छिष्यवचनत्वादुपपन्नं, शिष्यस्य हि सर्वविभागाज्ञत्वात् । यत् पुनरेतदुक्तं 'स्थानस्था मारुताः पञ्च' इति, तत्र स्थानं साम्यमुच्यते । तदुक्तं चरके—"क्षयः स्थानं च वृद्धिश्च त्रिविधा गतिरुच्यते । (च. सू. अ. १७) इति, तथाऽत्रापि "स्थानवृद्धिक्षयास्तस्माद्देहिनां द्रव्यहेतुकाः" (सू. अ. ४१) इति । यत् पुनरेतदभिहितं 'पक्वाशयस्थोऽन्त्रकूजं' इति, तदुपमयैव बोद्धव्यम् । एवमनया दिशाऽन्येऽप्येवञ्जातीयका दोषाः प्रतिसंधेया इति । भवति चात्र—"वायोः सदागतित्वेन स्थानं नास्त्येव शाश्वतम् ।

१ 'योऽनिलो वक्त्रसंचारी' इति पा० । २ 'देहधारणात्' इति पा० ।

प्रायः शश्वच्चरत्वेऽपि साधर्म्यात् स्थानमुच्यते" इति। वक्रचारित्वं चास्योपलक्षणं; तेन मूर्धोरःकण्ठनासिका अपि प्राणस्थानं; तदुक्तं चरके—"स्थानं प्राणस्य मूर्धोरःकण्ठजिह्वास्यनासिकाः। ष्ठीवनक्षवथूद्गारश्वासाहारादि कर्म च" (च. चि. अ. २८) इति। तत्र प्राणावलम्बनेनान्तःप्रवेशनकृतेन प्रकृतिकृतमेवास्य निश्वासादिकर्मोक्तम्। प्राणानामग्नीषोमादीनामाधेयानामवलम्बनवचनेन आधारभूतहृदयावलम्बनमेवोच्यते, तत्रैव तेषां समस्तानामवस्थितेः। तदुक्तं चरके—"षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम्। आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि संश्रितम्" (च. सू. अ. ३०) इति। प्राणानामवलम्बनेन तु मरणमूलत्वमुच्यते। तदुक्तं श्रुतौ—"यथा हि सैन्धवोऽश्वः शङ्कुमुत्पाट्य धावति, तद्वत् प्राणोऽनिलो रुद्धः प्राणानुत्पाट्य प्रयाणकाले धावति" इति। श्वासादिकानित्यादिग्रहणात् प्रतिश्यायादयः॥ १३ ॥—

**उदानो नाम यस्तूर्ध्वमुपैति पवनोत्तमः ॥ १४ ॥**
**तेन भाषितगीतादिविशेषोऽभिप्रवर्तते ॥**
**ऊर्ध्वजत्रुगतान् रोगान् करोति च विशेषतः ॥१५॥**

**नि० सं०**–उदानस्य प्रकृतिभूतस्य नामादि व्यापन्नस्य च रोगान्निर्दिशन्नाह—उदान इत्यादि। उपैति गच्छति। स्थानं पुनरनुक्तमप्यस्य नाभ्युरःकण्ठादि[1]। भाषितगीतादिरिति आदिशब्दादुःच्छ्वासादि। 'विशेषोऽभिप्रवर्तते' इत्यत्र केचित् 'विषयोऽभिप्रवर्तते' इति पठन्ति। ऊर्ध्वजत्रुगतानिति नयनवदनघ्राणश्रवणशिरःसंश्रयान्। चकारादन्यानपि कासादीन् करोति ॥ १४ ॥ १५ ॥

**न्या० च०**-उदानस्य प्रकृतिभूतस्य नामादि, व्यापन्नस्य च रोगान्निर्दिशन्नाह—उदानो नामेत्यादि। भाषितगीतादीति आदिशब्दादुच्छ्वासादि; अनेन वाक्चेष्टितमुक्तं; विषयोऽभिप्रवर्तते इत्यनेन मनश्चेष्टितं; मनश्चेष्टापुरःसरमेव विषयप्रवृत्तेः। मनसोऽपि वातप्रयत्नाद्विनाऽभाविनी प्रवृत्तिरिति कण्ठात्त्रोक्ताऽपि सामर्थ्यादाक्षिप्ता। अत एव चरके "वाक्प्रवृत्तिः प्रयत्नोर्जौ बलवर्णादि कर्म च" (च. चि. अ. २८) इति प्रयत्नोऽपि कर्मोक्तं वायोः। तत्र प्रयत्नस्य मनसो द्विधा प्रवृत्तिः; तद्यथा—स्वार्था, बाह्यविषयार्था च। तत्र स्वार्था नामाध्यात्मसुखदुःखचिन्ताध्येयादौ, बाह्या रूपादिग्रहणे पुनर्विषयार्था। तेन विषयप्रवृत्तिग्रहणमुपलक्षितम्। अतो विषयाप्रवृत्तिलक्षणमनसोऽध्यात्मसुखदुःखादौ प्रवृत्तिमुपलक्षयन्ति। अत एव चरके—"वाक्प्रवृत्तिः प्रयत्नोर्जौ" इति प्रयत्नमात्रग्रहणं कृतं, प्रयत्नस्य मनःप्रवृत्तेः; मनःपुरःसराणामिन्द्रियाणां विषयप्रवृत्तौ हेतुत्वात्। अभिप्रवर्तत इति अभिमुखं प्रथमं रूपाद्यर्थग्रहणाय प्रवर्तते, विषयाभिमुखीभावमात्रे हि प्रथमं विशेषाणामग्रहात्। अथवा अभिव्याप्य प्रकर्षेण रूपाद्यर्थविशेषोपलम्भे प्रवर्तते, विशेषेणाभिव्याप्तौ हि विशेषाणामेव ग्रहणात्। तदेवं वातप्रयत्नादात्ममनःपुरस्सराणीन्द्रियाणि अर्थोपादानायाभिप्रवर्तन्ते; वातप्रयत्नविकृत्या तु निर्मनस्कतया न मनसा स्वार्थेन मनःपुरस्सराणामिन्द्रियाणां च रूपादिसामान्यविशेषग्रहणं प्रवर्तत इति। भवति चात्र—"प्रत्येति प्रागनुद्भिन्नोपाधिवस्त्वेव केवलम्। पश्चादभ्येति तद्भेदान् विशेषान्वेषणोत्सुकः" इति। स्थानं पुनरस्यानुक्तमपि नाभ्युरःकण्ठानि, भाषितगीतादीनां नाभ्यादिस्थानत्रय एव संभवात्। तथा हि शाब्दिकाः—"त्रिधा बद्धो वृषभो रोरवीति" (पातञ्जलमहाभाष्य अ. १, प्र. आ.) इति; तथा हि चरकेऽपि—"उदानस्य पुनः स्थानं नाभ्युरःकण्ठ एव च। वाक्प्रवृत्तिः प्रयत्नोर्जौ बलवर्णादि कर्म च" (च. चि. अ. २८)। कुद्धस्तु ऊर्ध्वजत्रुगतान् गदान् करोति। ते पुनः शालाक्यतन्त्रोदिताश्चक्षुरादिविषयगता एव नयनवदनघ्राणश्रवणशिरःसंश्रयाः। अत एव 'विषयोऽभिप्रवर्तते' इत्ययमेव पाठो, न पुनः 'भाषितगीतादिविशेषः' इति, अनन्तरोक्तविषयविषयत्वाद्विशेषेणोदानस्य; अत एवोर्ध्वजत्रुण्येव विशेषेण व्याधिकरणम् ॥ १४ ॥ १५ ॥

**आमपक्वाशयचरः समानो वह्निसङ्गतः[1] ॥**
**सोऽन्नं पचति तज्जांश्च विशेषान्[2] विविनक्ति हि ॥१६॥**
**गुल्माग्निसादातीसारप्रभृतीन्[3] कुरुते गदान् ॥**

**नि० सं०**-पाकः पक्वं, नपुंसके भावे क्तः; आमस्य पक्वमापक्वं, तस्याशयः पच्यमानाहाराशय इत्यर्थः; तत्र चरतीति आमपक्वाशयचरः। 'वह्निसङ्गत' इत्यत्र 'अग्निसहायवान्' इति केचित् पठन्ति, तत्रापि स एवार्थः। सोऽन्नं पचतीति अग्निसन्धुक्षणाद्भक्तकार इव। तज्जान् अन्नपाकजान्। विशेषान् रसदोषमूत्रपुरीषाणि। विविनक्ति पृथक् करोति ॥ १६ ॥—

**न्या० च०**-समानस्य स्थानादि दर्शयन्नाह—आमपक्वाशयचर इत्यादि। अग्निश्चासौ सहायश्चाग्निसहायः; सोऽस्यास्तीति मतुप्। बहुव्रीहिप्राप्तावपि मत्वर्थीयो भवत्येव, ऐकदेशिनेति[4] निर्देशात्। तज्जांश्चेति अन्नपाकजातरसदोषमूत्रपुरीषाणि विभजति ॥ १६ ॥—

**कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः ॥ १७ ॥**
**स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि ॥**
**क्रुद्धश्च कुरुते रोगान् प्रायशः सर्वदेहगान् ॥१८ ॥**

**नि० सं०**-रससंवहनोद्यत इत्यत्रादिशब्दो द्रष्टव्यः, तेन रसादिसंवहनोद्यत इत्यर्थः; संवहनं प्रेरणम्। पञ्चधा चेष्टयत्यपीति प्रसारणाकुञ्चनविनमनोन्नमनतिर्यग्गमनानि पञ्च चेष्टाः;

---

१ 'नाभ्युरःकण्ठानि' इति पा०।

१ 'ऽग्निसहायवान्' इति गयदाससंमतः पाठः। २ 'भावान्' इति पा०। ३ 'गुल्माग्निसंगातीसारप्रभृतीन्' इति पा०। 'गुल्माग्निसादातीसारान् प्रायशश्च करोति हि' इति ताडपत्रपुस्तके पाठः। ४ 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' (पा. अ. २।२।१)।

अन्ये तु 'गतिप्रसारणोत्क्षेपणनिमेषोन्मेषैः पञ्चभिः प्रकारैः पञ्चधा' इति व्याख्यानयन्ति । सर्वदेहगान् ज्वरातीसाररक्तपित्तप्रभृतीन् ॥ १७ ॥ १८ ॥

**न्या० च०**-व्यानस्य नामादि दर्शयन्नाह—कृत्स्नदेहचर इत्यादि । रससंवहनोद्यत इत्यत्र आदिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः; तेन रसादिसंवहनोद्यत इत्यर्थः। पञ्चधा चेष्टयत्यपीति प्रसारणाकुञ्चनविनमनोन्नमनतिर्यग्गमनानीति पञ्च चेष्टाः । क्रुद्धश्च व्यापन्नश्च । सर्वदेहगान् ज्वरातीसाररक्तपित्तयक्ष्मप्रभृतीन् ॥ १७ ॥ १८ ॥

**पक्वाधानालयोऽपानः काले कर्षति चाप्यधः ॥**
**समीरणः शकृन्मूत्रं शुक्रगर्भार्तवानि च ॥ १९ ॥**
**क्रुद्धश्च कुरुते रोगान् घोरान् बस्तिगुदाश्रयान् ॥**

**नि० सं०**-पक्वाधानालयः पक्वाशयस्थान इत्यर्थः । बस्त्याश्रयान् अश्मर्यादीन्, गुदाश्रयान् भगन्दरादीन् ॥ १९ ॥—

**न्या० च०**-अपानस्य नामादि दर्शयन्नाह—पक्वाधानालय इत्यादि । बस्तिगुदाश्रयानिति बस्त्याश्रया अश्मरीप्रमेहमूत्रकृच्छ्रशुक्रदोषादयः, तान्; गुदाश्रयाः अर्शोभगन्दराहिपूतनबद्धगुदगुदभ्रंशादयः, तान् ॥ १९ ॥—

**शुक्रदोषप्रमेहास्तु व्यानापानप्रकोपजाः ॥ २० ॥**

**नि० सं०**-इदानीमुपलक्षणार्थं विकृतवातद्वयादिकर्म दर्शयन्नाह—शुक्रदोषेत्यादि । शुक्रस्य सर्वाङ्गगतत्वात् प्रमेहस्य सर्वदेहगतरसादिदूष्यप्रभवत्वाद्व्यानकृतत्वं, मेढ्रद्वारसंश्रितत्वादपानकृतत्वं च ॥ २० ॥

**न्या० च०**-इदानीमुपलक्षणार्थं विकृतवातद्वयादिकर्म दर्शयन्नाह—शुक्रदोषेत्यादि । शुक्रस्य सर्वाङ्गगत्वात्, प्रमेहस्य सर्वदेहरसादिदूष्यप्रभवत्वाद् व्यानकृतत्वं, मेढ्रद्वारसंश्रितत्वादपानकृतत्वं च ॥ २० ॥

**युगपत् कुपिताश्चापि देहं भिन्द्युरसंशयम् ।**

**नि० सं०**-तेषां पञ्चानां युगपत् प्रकोपे नियमेन देहनाशं दर्शयन्नाह—युगपदित्यादि । युगपत् एककालमित्यर्थः । भिन्द्युरिति भेदोऽत्र देहविनाशोऽभिप्रेतः ॥—

**न्या० च०**-तेषां पञ्चानां युगपत्प्रकोपे नियमेन देहनाशं दर्शयन्नाह—युगपदित्यादि ॥—

**अत ऊर्ध्वं प्रवक्ष्यामि नानास्थानान्तराश्रितः ॥२१॥**
**बहुशः कुपितो वायुर्विकारान् कुरुते हि यान् ॥**
**वायुरामाशये क्रुद्धश्छर्द्यादीन् कुरुते गदान् ॥ २२ ॥**
**मोहं मूर्च्छां पिपासां च हृद्ग्रहं पार्श्ववेदनाम् ॥**
**पक्वाशयस्थोऽन्त्रकूजं शूलं नाभौ करोति च ॥ २३ ॥**
**कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥**
**श्रोत्रादिष्विन्द्रियवधं कुर्यात् क्रुद्धः समीरणः ॥२४॥**

**नि० सं०**-अत इत्यादि । नानास्थानान्तराश्रितः कुपितः सन् वायुर्बहुशो यान् विकारान् कुरुते तान् प्रवक्ष्यामीति संबन्धः । छर्द्यादीनिति आदिशब्दाद्रुजः पार्श्वोदरहृत्स्तम्भतोदादिका ग्राह्याः, अथवा ऊर्ध्वगरक्तपित्तादिकाः । मोहो वैचित्त्यं चित्तनाशः । मूर्च्छा चेतनाच्युतिः । पक्वेत्यादि अन्त्रकूजं अन्त्रेऽव्यक्तशब्दम् । चकाराद्वातविण्मूत्रसङ्गं जङ्घोरुत्रिकपार्श्वपृष्ठादीन् प्रति शूलं च कुरुते । 'शूलं नाभौ' इत्यत्र 'शूलानाहौ' इति केचित् पठन्ति, व्याख्यानयन्ति च—पक्वाशय आनह्यते समन्ताद्विबध्यत इवेति वेदनाप्रकार एक आनाहः, द्वितीयस्तु विसूचिकाप्रतिषेधे प्रोक्तलक्षण एव । श्रोत्रादिषु क्रुद्धः सन् समीरण इन्द्रियवधं कुर्यादिति संबन्धः । श्रोत्रादिषु श्रोत्रघ्राणदर्शनरसनत्वक्षु । इन्द्रियवधमित्यनेनाश्रुत्यघ्राणादर्शनारसनास्पर्शानि वेदितव्यानि २१—२४

**न्या० च०**-इदानीं प्रतिस्थानरोगान्निर्दिश्य प्रसरेण स्थानान्तराश्रितानां तेषामेव स्थानचिकित्सार्थं रोगान्निर्दिशन्नाह—अत ऊर्ध्वं प्रवक्ष्यामीत्यादि । नानास्थानान्तराश्रित इति पृथग्विधदेशावकाशान् गत इत्यर्थः । बहुशब्दाद् वीप्सायां शस्; तत्र विपुलान् विपुलानित्यर्थः; संख्यावाचिनि अनेकान् अनेकानित्यर्थः; निदानस्य वा विशेषणं बहुश इति । छर्द्यादिकानिति आदिशब्दादूर्ध्वगतरक्तपित्ताद्युपग्रहः । मोहं मूर्च्छामिति आमाशयस्थितत्वाच्चेतनाधारस्य तदुपघातान्मोहो मूर्च्छा । पिपासामिति क्लोम्नो ह्यामाशयस्थत्वात् वातकृतक्लोमशोषेण पिपासा । श्रोत्रादिष्विन्द्रियवधमिति श्रोत्रघ्राणदर्शनरसनत्वगिन्द्रियाणां च वातेनाश्रुत्यघ्राणादर्शनारसवेदित्वान्यस्पर्शज्ञता चेति ॥ २१—२४ ॥

**वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमुचुमायनम् ॥**
**त्वक्स्थो निस्तोदनं कुर्यात् त्वग्भेदं परिपोटनम् २५**
**व्रणांश्च रक्तगो, ग्रन्थीन् सशूलान् मांससंश्रितः ॥**
**तथा मेदःश्रितः कुर्याद्ग्रन्थीन्मन्दरुजोऽव्रणान्॥२६॥**
**कुर्यात् सिरागतः शूलं सिराकुञ्चनपूरणम् ॥**
**स्नायुप्राप्तः स्तम्भकम्पौ शूलमाक्षेपणं तथा ॥ २७ ॥**
**हन्ति सन्धिगतः सन्धीन् शूलशोफौ करोति च ॥**
**अस्थिशोषं प्रभेदं च कुर्याच्छूलं च तच्छ्रितः ॥२८॥**
**तथा मज्जगते रुक् च न कदाचित् प्रशाम्यति ॥**
**अप्रवृत्तिः प्रवृत्तिर्वा विकृता शुक्रगेऽनिले ॥ २९ ॥**

**नि० सं०**-त्वक्स्थो रसस्थः समीरणो वैवर्ण्यादि कुर्यादिति संबन्धः । सुप्तिं स्पर्शाज्ञानम् । चुमुचुमायनं सर्षपकल्कावलिप्ता-

१ 'वातमूत्रपुरीषाणि' इति ताडपत्रपुस्तके पाठः । २ 'सर्वान् प्रवक्ष्यामि नानास्थानान्तराश्रितान्' इति पा० । ३ 'शूलाध्मानौ' इति पा० ।

१ 'एव एकः' इति पा० । २ 'सरुजान्' इति पा० । ३ 'स्नायुजालं स्तम्भयत्याक्षिपत्यपि' इति ताडपत्रपुस्तके पाठः । गयदासाचार्यसंमतोऽयं पाठः । ४ 'अप्रवृत्तिं प्रवृत्तिं वा विकृतां शुक्रगोऽनिलः' इति ता. प. पु. पाठः ।

नामिवाङ्गानां वेदनाम् । त्वग्भेदं त्वचो भेदमेव । परिपोटनं सर्वतः पुटनं त्वच एव । व्रणांश्च रक्तगः 'कुर्यात्' इति शेषः । अमुं पाठं केचिन्न पठन्ति; तन्न, **गयदासाचार्यस्य** संमतत्वात् । ग्रन्थीन् सशूलान् मांससमाश्रितः समीरण इति संबन्धः । अव्रणान् व्रणरहितान् । सिराकुञ्चनं 'कुटिला सिरा' इति लोके[1] वदन्ति । स्तम्भो निश्चलीकरणम् । आक्षेपणं चालनम् । हन्तीत्यादि एतेनाकुञ्चनप्रसारणयोरभाव उक्तः । तच्छ्रित इति अस्थ्याश्रित इत्यर्थः । तथा मज्जगते यथा अस्थ्याश्रितोऽस्थिशोषं, तथा मज्जाश्रितो मज्जशोषं कुर्यादित्यर्थः । किंविशिष्टा प्रवृत्तिरित्याह—विकृता; अतिशीघ्रातिमन्दग्रथितविवर्णादियुक्तेत्यर्थः ॥ २५—२९ ॥

**न्या० च०**-त्वक्स्थो रसस्थः समीरणो वैवर्ण्यादि करोति, रसस्य त्वक्स्थानत्वात्; आधेयस्याधारव्यपदेशो लक्षणया, गङ्गायां घोष इतिवत् । सुप्तिः स्पर्शाज्ञानम् । चिमिचिमायनं सर्षपकल्कावलिप्तानामिवाङ्गानां वेदना । त्वक्भेदः त्वचो भेदनमिव । परिपोटनं सर्वत उच्चटनं त्वच एव । एतेन त्वक्स्थस्य वायोर्विकारा उक्ताः । 'व्रणांश्च रक्तगः' इति केचिन्न पठन्ति, पश्चाद्वातरक्तस्य पठितत्वात् । तन्न, पठनीय एवायं ग्रन्थः, येन वातरक्तं वातस्य रक्तस्य च दुष्ट्या जायते; तदुक्तं चरके—"वायुर्विवृद्धो वृद्धेन रक्तेन" (च. चि. अ. २९) इत्यादि; अत्र तु वायुरेव परं दुष्टो रक्तमदुष्टिगमिति । मेदःस्थस्तु ग्रन्थीन् मन्दरुज इति मन्दा रुक् येषां ते तथा । कुर्यात् सिरागतः शूलमिति अप्रस्तुतं, धातुस्थवाताधिकारात् अस्थिगतवाताधिकारात्[2] । नैतदस्ति; व्याख्यातमेवैतद्दोषधातुमलक्षयवृद्धिविज्ञातीये "रसाद्रक्तं तथा स्तन्यमसृजः कण्डराः सिराः । मांसाद्वसा त्वचः षट् च मेदसः स्नायुसंधयः" (सू. अ. १५) इत्यत्र । तत्र स्तन्यार्तवयो रक्ताभिन्नत्वात् त्वचां च रसरक्तमांसैरभिन्नत्वात् तत्रस्थवायोः सैव क्रिया रोगाश्च । अत एव य एव त्वक्स्थस्य वातस्य रोगास्त एव रसस्थस्य वातस्योक्ताः । अतस्तेभ्यः शेषाणां सिरास्नायुसंधीनामाश्रयभूतानामाश्रितवातरोगावसरः । स्नायुकण्डरयोश्चाभेद एव; यदाह—"स्थूला स्नायुश्च कण्डरा" इति । चरकादयस्तु 'स्थूला सिरा कण्डरा' इत्यामनन्ति । स्नायुजालं समूहम् । स्तम्भयति निश्चलीकरोति । आक्षिपति चालयति । संधिगतः संधीन् हन्ति प्रसारणकुञ्चनयोरसामर्थ्यं करोति । प्रवृत्तिं विकृतामतिशीघ्रातिमन्दग्रथितविवर्णादियुक्तामित्यर्थः ॥ २५—२९ ॥

**हस्तपादशिरोधातूंस्तथा संचरति क्रमात् ॥**
**व्याप्नुयाद्वाऽखिलं देहं वायुः सर्वगतो नृणाम् ॥३०॥**

**नि० सं०**-एकाङ्गगत एकधातुगतो वाऽप्युपेक्षितः सर्वाङ्गगतः सर्वधातुगतो वा भवतीति दर्शयन्नाह—हस्तेत्यादि । वायुस्तथा हस्तपादशिरः क्रमात् संचरति यथा उपेक्षितः सन्नखिलं देहं व्याप्नुयात्, तथा धातून् क्रमात् संचरति यथा सर्वगतो वा भवति सर्वधातुगतो वा भवतीत्यर्थः । व्याप्नुयाद्वेति वाशब्दो भिन्नक्रमे, सर्वगतो वेत्यत्र द्रष्टव्यः ॥ ३० ॥

**न्या० च०**-एकाङ्गगत एकधातुगतो वाऽप्युपेक्षितः सर्वाङ्गगतः सर्वधातुगतो वा भवतीति दर्शयन्नाह—हस्तपादेत्यादि । अखिलमपि देहं व्याप्नुयात् सर्वधातुगतो वा भवतीति ॥ ३० ॥

**स्तम्भनाक्षेपणस्वापशोफशूलानि सर्वगः ॥**

**नि० सं०**-तस्येदानीं सर्वाङ्गगतस्य लिङ्गं दर्शयन्नाह—स्तम्भनेत्यादि । सर्वगो वायुः सर्वस्मिन् शरीरे स्तम्भनादिकं करोति ॥—

**न्या० च०**-तस्येदानीं सर्वाङ्गगतस्य लिङ्गं दर्शयन्नाह—स्तम्भनाक्षेपकेत्यादि । सर्वाङ्गगतो वायुः स्तम्भनादीनि सर्वत्र करोति । सर्वशः[1] सर्वस्मिन्नित्यर्थः । ततश्च स्तम्भनादिना वातकार्येण सर्वाङ्गगेन सर्वाङ्गगतो वायुरनुमेयः, हस्तावस्तम्भनादिभिरेकाङ्गगतैरेकाङ्गगत एवानुमेयः ॥—

**स्थानेषूक्तेषु संमिश्रः संमिश्राः कुरुते रुजः ॥ ३१ ॥**

**नि० सं०**-तस्य वायोः प्रसरणे पित्तादिसंयुक्तस्य पित्ताद्यावरणप्रतिपत्तिहेतुं दर्शयन्नाह—स्थानेष्वित्यादि । मिश्रः पित्तादिभिः । पित्तादीनामौष्ण्यादिस्वभावलिङ्गदर्शनाद्दाहादिकार्यलिङ्गदर्शनाच्च पित्ताद्यावरणं ज्ञेयं; केवलस्य वायोः शीतस्वभावत्वाद्दाहः पित्तं विना नोत्पद्यत इति ॥ ३१ ॥

**न्या०च०**-तस्य वायोः प्रसारणविपन्नस्यादिसंयुक्तस्य पित्ताद्यावरणप्रतिपत्तिहेतुं दर्शयन्नाह—स्थानेषूक्तेष्वेत्यादि । संमिश्रः संमिश्राः कुरुते रुजः । पित्तादीनामौष्ण्यादिस्वभावलिङ्गदर्शनात्, दाहादिकार्यलिङ्गदर्शनाच्च पित्ताद्यावरणं ज्ञेयं; केवलस्य वायोः शीतस्वभावात् । दाहः पित्तं विना नोपपद्यत इति सामर्थ्यात् पित्तादिकार्यदर्शनात् पित्ताद्यावरणं ज्ञेयमिति ॥ ३१ ॥

**कुर्यादवयवैप्राप्तो मारुतस्त्वमितान् गदान् ॥**

**नि० सं०**-तस्येदानीमवयवगतस्यानेकरोगकारणत्वं दर्शयन्नाह—कुर्यादित्यादि ॥—

**न्या० च०**-तस्येदानीमवयवगतस्यानेकरोगकारित्वं दर्शयन्नाह—कुर्यादवयवस्थश्च[2] मातरिश्वा बहून् गदानिति । बहून् गदानिति आविष्कृतमान् अशीतिः । अत्र चरकः—"नखभेदश्च, विपादिका च, पादशूलं च" (च. सू. अ. २०) इत्यादयः । 'मातरिश्वा अमितान् गदान्' इत्यन्ये न पठन्ति । तत्रा(था)प्यमिता एव वातविकाराः । तदुक्तं—"वातविकाराणामपरिसंख्येयनामाविष्कृततमा एव व्याख्याताः" (च. सू. अ. २० ) इति ॥—

१ 'लोको वदति' इति पा० । २ 'सिरागतवातानधिकारात्' इति वा पाठः ।

१ 'सर्वशः' इति गयदाससंमतः पाठः । २ 'कुर्यादवयवस्थश्च मातरिश्वा बहून् गदान्' इति गयदाससंमतः पाठः ।

दाहसंतापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥ ३२ ॥
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफावृते ॥
सूचीभिरिव निस्तोदः स्पर्शद्वेषः प्रसुप्तता ॥ ३३ ॥
शेषाः पित्तविकाराः स्युर्मारुते शोणितान्विते ॥
प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ॥ ३४ ॥
दौर्बल्यं सदनं तन्द्रा वैवर्ण्यं च कफावृते ॥
उदाने पित्तसंयुक्ते मूर्च्छादाहभ्रमक्लमाः ॥ ३५ ॥
अस्वेदहर्षौ मन्दोऽग्निः शीतस्तम्भौ कफावृते ॥
समाने पित्तसंयुक्ते स्वेददाहौष्ण्यमूर्च्छनम् ॥ ३६ ॥
कफाधिकं च विण्मूत्रं रोमहर्षः कफावृते ॥
अपाने पित्तसंयुक्ते दाहौष्ण्ये स्यादसृग्दरः ॥ ३७ ॥
अधःकायगुरुत्वं च तस्मिन्नेव कफावृते ॥
व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥ ३८ ॥
गुरूणि सर्वगात्राणि स्तम्भनं चास्थिपर्वणाम् ॥
लिङ्गं कफावृते व्याने चेष्टास्तम्भस्तथैव च ॥ ३९ ॥

**नि० सं०**-इदानीं संमिश्राः कुरुते रुज इति सूत्रितमावरणं विवृण्वन्नाह—दाहेत्यादि । दाहोऽग्निदग्धस्येव, संतापो घर्मादिसंस्थितस्येव । शैत्यशोफेत्यादि । तस्मिन्नेव वायौ । सूचीभिरित्यादि । सदनम् अङ्गग्लानिः । क्लमोऽनायासश्रमः । हर्षो रोमहर्षः । कफाधिकं श्लेष्मबहुलं विष्ठामूत्रम् । असृग्दरः स्त्रीणामेव । अस्थिपर्वणाम् अस्थिसन्धीनाम् । चेष्टा गमनादिकाः ॥ ३२—३९ ॥

**न्या० च०**-तत्र 'संमिश्राः कुरुते रुजः' इति सूत्रितमावरणं विवृण्वन्नाह—प्राणे पित्तावृते दाह इत्यादि । सुबोधम् । केचिदत्र स्थाने प्राणादीनां पित्ताद्यावरणपाठं विहाय पक्षाघातपठनीयं श्लोकं पठन्ति । तद्यथा—'दाहसंतापमूर्च्छाः स्युर्वायौ पित्तसमन्विते' इत्यादि । 'शोणितचतुर्थैः' ( सू. अ. २१ ) इति दर्शनादन्ये रक्तावृतवायुदर्शनपरं श्लोकं पठन्ति—"सूचीभिरिव निस्तोदः स्पर्शद्वेषः प्रसुप्तता । शेषाः पैत्तिकरोगाः स्युर्मारुते शोणितावृते" इति । अशेषवातावृतिशेषश्चायं ग्रन्थः । अनुक्ताशेषावरणं तु चिकित्सितप्रसङ्गेन वक्ष्यति । यथा,—"केवलो दोषयुक्तो वा धातुभिर्वाऽऽवृतोऽनिलः । विज्ञेयो लक्षणोहाभ्यां चिकित्स्यश्चाविरोधतः" ( चि. अ. ४ ) इति । अनेनानुक्तानि सर्वाण्येवावरणान्युक्तानि । कथं? दधतीति धातव इति प्रकृतिस्थाः सर्वे एव शारीरा भावा देहधारणकारणाद्गृहीताः; तेनात्र रसरक्तादिधात्वावरणं, मूत्रादिमलावरणं, मारुतानां पञ्चानां परस्परावरणं चोपगृहीतं; दोषग्रहणं तु विशेषार्थमिति ॥ ३२—३९ ॥

१ 'वैश्र्य' इति ता. प. पु. पा. । २ 'कफेन सङ्गे विण्मूत्रे गात्रहर्षश्च जायते' इति ता. प. पु. पा. । ३ 'रक्तमूत्रता' इति ता. प. पु. पा. । ४ 'शीतता च' इति ता. प. पु. पा. । ५ 'स्तम्भनं दण्डकश्चापि शोथः शूलं कफावृते' इति ता. प. पु. पा. ।

(प्रायशः सुकुमाराणां मिथ्याऽऽहारविहारिणाम् ॥
रोगाध्वप्रमदामद्यव्यायामैश्चातिपीडनात् ॥ ४० ॥
ऋतुसात्म्यविपर्यासात् स्नेहादीनां च विभ्रमात् ॥
अव्यवाये तथा स्थूले वातरक्तं प्रकुप्यति ॥ ४१ ॥)

**नि० सं०**-सूचीभिरिव निस्तोद इत्यादिवाक्येनाप्रकुपितशोणितावृतवातस्य लक्षणमुक्त्वा, इदानीं प्रकुपितशोणितावृतवातजन्यस्य वातरक्तस्य प्रकोपकारणं दर्शयन्नाह—प्रायश इत्यादि । सुकुमाराणां वातरक्तं प्रकुप्यतीति संबन्धः । मिथ्याहारविहारिणामिति मिथ्या अनुचितः, विहारः कायवाङ्मनोव्यापारः । अध्वा मार्गः, व्यायामः शरीरायासजननं कर्म । विभ्रमः अन्यथाकरणम् । अव्यवाये मैथुनवर्जिते । केचित् 'प्रायशः सुकुमाराणां' इत्यादिग्रन्थं 'वातरक्तं प्रकुप्यति' इति यावन्न पठन्ति, चिकित्सिते पठिष्यमाणत्वात् ॥ ४० ॥ ४१ ॥

हस्त्यश्वोष्ट्रैर्गच्छतोऽन्यैश्च वायुः
कोपं यातः कारणैः सेवितैः स्वैः ॥
तीक्ष्णोष्णाम्लक्षारशाकादिभोज्यैः
संतापाद्यैर्भूयसा सेवितैश्च ॥ ४२ ॥

क्षिप्रं रक्तं दुष्टिमायाति तच्च
वायोर्मार्गं संरुणद्ध्याशु यातः ॥
क्रुद्धोऽत्यर्थं मार्गरोधात् स वायु-
रत्युद्रिक्तं दूषयेद्रक्तमाशु ॥ ४३ ॥

तत् संपृक्तं वायुना दूषितेन
तत्प्राबल्यादुच्यते वातरक्तम् ॥
तद्वत् पित्तं दूषितेनासृजाऽऽक्तं
श्लेष्मा दुष्टो दूषितेनासृजाऽऽक्तः ॥ ४४ ॥

**नि० सं०**-तस्य संप्राप्तिं दर्शयन्नाह—हस्तीत्यादि । अन्यैश्चेति अपरैर्भारहरणादिभिः कारणैरित्यर्थः । कोपं यातः कोपं गत इत्यर्थः । कारणैः सेवितैः स्वैर्विदाह्यादिभिः । तच्च रक्तं वायोर्मार्गं संरुणद्धि । कथंभूतस्य वायोरित्याह—आशु यातः, शीघ्रं गच्छत इत्यर्थः । अत्युद्रिक्तम् अतिशयेन वृद्धिङ्गतं रक्तम् । तत् संपृक्तमिति तद्रक्तं, संपृक्तं संसृष्टम् । वायुना दूषितेनेति दूषितेन वायुना सह । तत्प्राबल्यात् वातप्राबल्याच्छोणितस्याप्राबल्यात्, तयोर्वातरक्तयोः प्राबल्यादिति केचित् । तद्वत् पित्तमिति दुष्टं पित्तमित्यर्थः, दूषितेनासृजाऽऽक्तमिति दूषितेन रक्तेन मिश्रम् ॥ ४२—४४ ॥

१ 'शोकाच्च प्रमदा०' इति पा०-। २ गयदाससंमतोऽयं पाठः । ३ 'शीघ्रं रक्तं विदहत्याशु' इति ता. प. पु. पाठः । ४ 'अत्युद्धृतं' इति पा० । ५ 'हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं स विदाहोऽशनस्य । कृत्स्नं रक्तं विदहत्याशु तच्च स्रस्तं दुष्टं पादयोश्चीयते तु' इति गयदाससंमतः पाठः । माधवनिदानेऽप्ययमेव पाठ उद्धृतः ।

न्या० च०-इदानीं कुपितस्य वायोः कुपितशोणितावरण-प्रसङ्गेन 'प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम्' इति पठिष्यमाणत्वात् तस्य संप्राप्तिं दर्शयन्नाह—हस्त्यश्वोष्ट्रैरित्यादि। विदाह्यन्नमश्नतः शोणितं विदग्धं हस्त्यादियानैस्तद्द्रवत्वादधोगतं पादयोश्चीयते। विशेषेण हस्त्यादिगमनं हेतुः, सामान्यतः पुनः पादगमनमपि। निरुक्तिं कुर्वन्नाह—तत्प्राबल्यादुच्यते वातरक्तमिति। वातप्राबल्यादित्यर्थः। यद्यप्यत्र वातस्य शोणितस्य चोभयोरपि दुष्टिरस्ति, तथाऽपि वातस्य प्राबल्याद् दोषत्वेनापि तस्यैव प्राधान्याद् वातव्याधिव्यपदेशः, शोणितस्याप्राबल्याद्दूष्यत्वाच्च न तद्व्यपदेश इति। तदुक्तं चरके—"वायुर्विवृद्धो वृद्धेन रक्तेनावारितः पथि। क्रुद्धः संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम्" (च. चि. अ. २९) इति ॥ ४२—४४ ॥

स्पर्शोद्विग्नौ[1] तोदभेदप्रशोष-
स्वापोपेतौ वातरक्तेन पादौ ॥
पित्तासृग्भ्यामुग्रदाहौ भवेता-
मत्यर्थोष्णौ रक्तशोफौ मृदू च ॥ ४५ ॥
कण्डूमन्तौ श्वेतशीतौ सशोफौ
पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते ॥
सर्वैर्दुष्टे शोणिते चापि दोषाः[2]
स्वं स्वं रूपं पादयोर्दर्शयन्ति ॥ ४६ ॥

नि० सं०-तस्येदानीं वातादिविशेषेण विशिष्टलिङ्गं दर्शयन्नाह—स्पर्शोद्विग्नावित्यादि। स्पर्शोद्विग्नौ स्पर्शासहौ पादाविति संबन्धः। प्रशोषः शुष्कता, स्वापः स्पर्शाज्ञानम्। एतेन वातप्रबलवातरक्तलक्षणमुक्तम्। पित्तासृग्भ्यामिति वातशोणित एव यदा पित्तमसृक् च बलवत्तरं भवति तदेत्यर्थः। रक्तशोफौ रक्तवर्णशोफौ। कण्डूमन्तौ पादाविति संबन्धः। पीनौ स्थूलौ ॥ ४५ ॥ ४६ ॥

न्या० च०-तस्येदानीं सामान्यलिङ्गमभिधाय वातादिदोषविशेषेण विशिष्टं लिङ्गं दर्शयन्नाह—स्पर्शोद्विग्नावित्यादि। उष्णादिस्पर्शनं न सहेते रक्तदुष्ट्या रोगरुजोऽतियोगात्। तोदभेदान्वितप्रकृष्टशोषणं वातप्राबल्यादेव; तोदभेदयोः शोषणस्य च वातकृतत्वात्। स्वापः स्पर्शाज्ञानम्। पित्तासृग्भ्यामिति वातशोणित एव यदा पित्तमसृक् च बलवत्तरं भवति, तदेत्यर्थः। रक्तशोफौ रक्तवर्णशोफौ। एवं श्वेतौ पादौ श्लेष्मदुष्टे तु रक्ते। प्रत्येकं दोषनिर्दिष्टलक्षणस्यातिदेशेन संसर्गसन्निपाते निर्दिशन्नाह—सर्वे दुष्टा इत्यादि ॥४५॥४६॥

प्राग्रूपे शिथिलौ[3] स्विन्नौ शीतलौ सविपर्ययौ ॥
वैवर्ण्यतोदसुप्तत्वगुरुत्वौषसमन्वितौ ॥ ४७ ॥

[1] 'अस्पर्शेच्छा' इति ता. प. पु. पाठः। [2] 'सर्वे दुष्टाः शोणितं चापि' इति गयदाससंमतः पाठः। [3] 'शिथिलस्विन्नशीतलौ' इति पा०।

नि० सं०-तस्य पूर्वरूपमाह—प्राग्रूपे इत्यादि। सविपर्ययाविति कठिनाखिन्नोष्णौ, 'पादौ' इत्यध्याहारः। ओषो दाहः। केचिदत्र पूर्वरूपं न पठन्ति, चिकित्सायां पठिष्यमाणत्वात् ॥४७॥

पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥
आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति ॥ ४८ ॥

नि० सं०-तस्येदानीं पादमात्रेऽभिजातस्य कालेनावयवान्तरानुसरणं निर्दिशन्नाह—पादयोरित्यादि। मूलमास्थाय तलं प्राप्य। आखोरित्यादि उन्दुरस्य विषं मूलमास्थाय पश्चात् कुपितं सद्देहं सकलमेवानुयाति ॥ ४८ ॥

न्या० च०-तस्येदानीं पादमात्रेऽपि जातस्य कालेनावयवान्तरानुसरणं निर्दिशन्नाह—पादयोर्मूलमित्यादि। मूलमास्थाय कन्दं संप्राप्य पश्चाद्देहमनुधावति अनुयातीत्यर्थः। आखोर्विषमिवेत्यादि। आखोरुन्दुरस्येव विषं दंशमूलमास्थाय पश्चात् कुपितं सद्देहं सकलमनुयाति ॥ ४८ ॥

आजानुस्फुटितं यच्च प्रभिन्नं प्रस्रुतं च यत् ॥
उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः ॥ ४९ ॥
शोणितं तदसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ॥

नि० सं०-तस्येदानीमसाध्यादिलक्षणं दर्शयन्नाह—आजानुस्फुटितमित्यादि। आजानुस्फुटितं जानुपर्यन्तमुच्चटितम्। प्रभिन्नं विदीर्णम्। प्रस्रुतं स्रावयुक्तम्। उपद्रवैः प्राणमांसक्षयादिभिरेवारणीयोक्तैः। आदिग्रहणादङ्गुलिवक्रतार्बुदादयोऽपि ग्राह्याः। जुष्टं सहितम्। यज्जानुपर्यन्तं स्फुटितं वातप्राबल्यात्, यच्च जानुपर्यन्तं प्रभिन्नं प्रस्रुतं च पित्तरक्तप्राबल्यात्, तदप्यसाध्यमेव ॥ ४९ ॥—

न्या० च०-तस्येदानीमसाध्यादिलक्षणं निर्दिशन्नाह—आजानुस्फुटितमित्यादि। तत्र यद्वातप्राबल्याज्जानुपर्यन्तं स्फुटितं, यच्च पित्तकफप्राबल्याज्जानुपर्यन्तं प्रस्रुतं भवति, तदप्यसाध्यमेव ॥ ४९ ॥—

यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः ॥५०॥
तदाक्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः ॥
मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः ॥ ५१ ॥

नि० सं०-इदानीं वातरक्तमभिधायाक्षेपकमाह—यदेत्यादि। धमन्यो नाड्यः। अभ्येति व्याप्नोति। आक्षिपति चालयति। मुहुश्चर इति वारंवारं चलनशीलो वायुः, मुहुश्चरत्वेनैव मुहुर्मुहुराक्षेपणं युक्तम्; अन्ये तु 'बहिश्चर' इति पठन्ति, तन्नेच्छति गयदासाचार्यः। तदाक्षेपात् देहाक्षेपात्। इदमाक्षेपकस्य सामान्यलक्षणमुक्तम् ॥ ५० ॥ ५१ ॥

न्या० च०-वातरक्ताख्यरक्तावृतवातव्याधिं दर्शयित्वा रक्तोपधातुधमनीप्राप्तस्याक्षेपकाहेतुकस्य[1] वातस्य व्याधिं दर्शयन्नाह—यदा तु धमनीः सर्वा इत्यादि। सर्वा ऊर्ध्वा-

[1] 'महावातव्याधिचिकित्सितोक्तैः' इति पा०।

धमन्यस्तिर्यग्गाः । मुहुरेव देहमाक्षिपति स आक्षेपणादाक्षेपक इति निरुक्तिः । मुहुश्चर इति मुहुश्चरत्वेनैव मुहुर्मुहुराक्षेपणम् । अन्ये तु 'बहिश्चरः' इति पठन्ति । तन्न, स्थानगाम्भीर्यादाक्षेपकस्यान्तराक्षेपणकर्मारम्भकस्य बहिश्चरत्वं न युज्यते ॥ ५० ॥ ५१ ॥

सोऽपतानकसंज्ञो यः पातयत्यन्तराऽन्तरा ॥
कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति ॥ ५२ ॥
स दण्डवत् स्तम्भयति कृच्छ्रो दण्डापतानकः ॥
हनुग्रहस्तदाऽत्यर्थं सोऽन्नं कृच्छ्रान्निषेवते ॥ ५३ ॥
धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः ॥
अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः ॥ ५४ ॥
स्नायुप्रतानमनिलो यदाऽऽक्षिपति वेगवान् ॥
विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् ॥ ५५ ॥
अभ्यन्तरं धनुरिव यदा नमति मानवः ॥
तदाऽस्याभ्यन्तरायामं कुरुते मारुतो बली ॥ ५६ ॥
बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च ॥
तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम् ॥ ५७ ॥
कफपित्तान्वितो वायुर्वायुरेव च केवलः ॥
कुर्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम् ॥ ५८ ॥

**नि० सं०**-आक्षेपकविशेषानाह—सोऽपतानक इत्यादि । य आक्षेपकोऽन्तराऽन्तरा पातयति सोऽपतानक इत्यर्थः । इदं सामान्यापतानकलक्षणमुक्तं; **गयदासे**नापतानकलक्षणं 'येनापताम्यते' इत्यादिवाक्येनाभिधाय व्याख्यातं, यथा—"येन वायुना कर्तृभूतेन हेतुभूतेन वा पुमानपताम्यते तमो दृश्यते मोह्यते इति यावत् सोऽपतानक इति; सोऽयं हृदिस्थमनोऽधिष्ठानेन सकफेन वायुना जन्यते" इति । स एवापतानकस्त्रिधा—दण्डापतानकः, अन्तरायामः, बहिरायामश्च; तत्र दण्डापतानकलक्षणमाह—कफान्वित इत्यादि । तास्वेव सर्वासु धमनीषु, भृशं तिष्ठतीति संबन्धः । कृच्छ्रः कष्टसाध्यः । हनुग्रहस्तु दण्डापतानकेऽन्यत्रापि वैयौ स्यात् । स दण्डापतानकवान् पुरुषः । धनुःस्तम्भसंज्ञकमन्तरायामं दर्शयन्नाह—धनुस्तुल्यमित्यादि । तस्यैव भाष्यं वक्तुमाह—अङ्गुलीत्यादि । अङ्गुल्योऽत्र पादगताः, गुल्फः पार्ष्णेरुपरि ग्रन्थिः, जठरमुदरं, हृत् हृदयं, वक्षः स्तनयोरन्तरालं, गलः कण्ठः; एतेषु स्थानेषु संश्रित आश्रितो वायुः । स्नायुप्रतानं स्नायुविस्तारम् । बहिरायामं निर्दिशन्नाह—बाह्यस्नायुप्रतानस्थ इत्यादि । बाह्यस्नायुप्रतानस्थो बाह्यस्नायुविस्तारस्थः, बाह्यस्नायवः पादमूलपिण्डिकाकटीपृष्ठग्रीवापश्चिमभागाश्रयाः । वक्षःकट्यूरुभञ्जनमिति वक्षःकट्यूरुभञ्जनत्वे सत्येवासाध्यत्वम्, अभग्नवक्षःकट्यादिकस्तु नव उपक्रम्य एव । तस्याक्षेपकस्येतरदोषसंसर्गेण निदानविशेषाच्च संख्याभेदं दर्शयन्नाह—कफपित्तान्वित इत्यादि । एकः कफान्वितः, द्वितीयः पित्तान्वितः, तृतीयः केवलवातकृतः, चतुर्थोऽभिघातजः । चतुर्थमभिघातजमिति निदानविशेषात् । दण्डापतानकादयस्त्रयश्चतुर्थः पुनरभिघातज इति **श्रीजेज्जटः**; तन्नेच्छति **गयी**, गर्भपातादिनिमित्तभेदेन संख्यातिरेकात् । **श्रीब्रह्मदेव**स्तु "आक्षेपकश्चतुर्धा—अपतानकः, संसृष्टाक्षेपकः, केवलाक्षेपकः, अभिघातजश्च; तत्रापतानकः 'सोऽपतानक' इत्यादिना 'वक्षःकट्यूरुभञ्जनम्' इति पर्यन्तेनोक्तः, 'कफान्वितो वायुः' इति संसृष्टाक्षेपकः, 'वायुरेव च केवलः' इति केवलाक्षेपकः, चतुर्थः पुनरभिघातजः" इत्याह ॥ ५२—५८ ॥

तस्यैवाक्षेपकस्यावस्थाविशेषेण निरुक्त्या नाम्ना च विशेषं दर्शयन्नाह—येनापताम्यत इत्यादि । येन वायुना आवृतेन हेतुभूतेन अपताम्यते तमो दृश्यते मोह्यते इति यावत्, सोऽपतानक इति । सोऽयं हृदिस्थमनोऽधिष्ठानेन सकफेन वायुना जन्यते । अत्र त्रिमर्मीयसिद्धौ दृढबलः—"क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते । पीडयन् हृदयं गत्वा शिरः शङ्खौ च पीडयन् ॥ धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तथा । कृच्छ्रेण चाप्युच्छ्वसिति स्तब्धाक्षोऽप्यनिमीलनः ॥ कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रिकः"—इति (च. सि. अ. ९) । अस्यैव चावस्थायाः स्थितस्य (?) दृष्टिस्तम्भसंज्ञाप्रणाशाभ्यामपतानकत्वं दृढबलोऽपि दर्शयति—"दृष्टिं संस्तभ्य संज्ञां च हृत्वा कण्ठेन कूजति । हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ॥ वायुना दारुणं प्राहुरेके तमपतानकम्" (च. सि. अ. ९) इति । अन्ये तु सौश्रुतमपतानकलक्षणमन्यथा पठन्ति—"यः प्राज्ञान्ये तु संश्रित्य धमनीः प्रतिपद्यते । अपतानकसंज्ञोऽसौ पातयत्यन्तराऽन्तरा"—इति । अपरे तु पठन्ति—"आकृष्यते तु हृत्पूर्वसंज्ञे (?) यः सोऽपतानकः" इति । एतत्पाठद्वयमपि न पठनीयम्, आक्षेपकलक्षणेनाविशेषात् । तत्रान्तरानुग्रहस्त्वे स एवापतानकस्त्रिधा; तद्यथा—दण्डापतानकः, अन्तर्बहिर्वाऽऽयामः । दण्डवत् स्तम्भनाद्दण्डापतानकः, अभ्यन्तरं धनुःकोटिवन्नमनाद् धनुस्तम्भः, स एवान्तरायामाविशिष्टः । अन्ये तु कुब्जखञ्जापतानकाख्यः, चतुर्थः पुनरभिघातजः; तन्न, गर्भपातादिनिमित्तभेदेन संज्ञातिरेकात् । अत्राक्षेपक एवापतानयोगादपतानकः । स तु शुद्धवातकफपित्तावृताभिघातभेदाच्चतुर्विधः । गर्भपातजस्य शोणितातिस्रावजत्वादसाध्यत्वं, मर्माभिघातजस्य रुजाबाहुल्यादसाध्यत्वमिति । दण्डापतानकं दर्शयन्नाह—कफान्वितो भृशमित्यादि । तास्विति सर्वासु धमनीषु । सुश्रुते साधारणादेव वाताद्दण्डापतानकः, चरके तु क्षयनिमित्तवातादसाध्यश्च; तथा हि **चरकः** "पाणिपादं च संशोष्य सिराः स्नायुश्च कण्डराः । पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति मारुतः ॥ दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः" (च. चि. अ. २८) इति ।

१ 'वायोः' इति पा० ।

१ 'स्तब्धाक्षोऽथ निमीलनः' इति चरके पाठः ।

सुश्रुते कफपित्तसंसर्गाद्गर्भपातादिनिमित्तस्यासाध्यवचनान्नोपक्रम्यः। धनुःस्तम्भसंज्ञकमन्तरायामं दर्शयन्नाह-धनुस्तुल्यमित्यादि । तस्यैव भाष्यं दर्शयन्नाह—अङ्गुलीत्यादि । अङ्गुल्योऽत्र पादगताः; गुल्फसाहचर्यात्। पादाङ्गुल्यादिगलपर्यन्तसकलदेहगतस्नायुप्रतानाक्षेपकहेतुधनुःक्रोडवन्नमनादन्तरायामः। स्नायुप्रतानमिति स्नायुसंघातविस्तारमाक्षिपति; तेनात्राप्याक्षेपकलक्षणमेव । बहिरायामं निर्दिशन्नाह—बाह्यस्नायुप्रतानस्य इत्यादि । बाह्याः स्नायवः पादमूलपिण्डिकाकटीपृष्ठग्रीवापश्चिमभागाश्रयाः । वक्षःकण्ठूरुभञ्जनं वक्षःकुब्जीकरणम् । अस्य वक्षोभङ्गेऽसाध्यत्वम्, अभग्नवक्षसो नरस्योपक्रम्यता; जातवेगस्य शरीरपिनाककर्तृत्वमेव चरके; एतेनात्राप्याक्षेपकधर्मानुवृत्तिः, वेगागमेनाक्षेपणात्। तथा च चरकः—“जातवेगो निहन्त्येष वैकल्यं वा नियच्छति” (च. चि. अ. २८); अजातवेगो मानव उपक्रम्यः । तत्र यद्यपि चरके सिरागतो वायुर्बाह्यायामे कथितः—“पृष्ठमन्याश्रिता बाह्याः शोषयित्वा सिरा बली”[1] (च. चि. अ. २८) इति; तथाऽप्यत्र सिराशब्दः सादृश्यात् स्नायुसु वर्तते। यदाह पुनः स एव-“बाह्याभ्यन्तरमायामं खल्लीं कुब्जत्वमेव च। सर्वाङ्गैकाङ्गरोगांश्च कुर्यात् स्नायुगतोऽनिलः” (च. चि. अ. २८) इति। अन्यत्रापि बाह्याभ्यन्तरायामेण द्विविधं कुब्जत्वमभिप्रेतं, “खल्लीं कुब्जत्वमर्दितम्” (च. चि. अ. २८) इति तत्रैव वचनात्। न च कुब्जत्वमन्यत् पृथक् शास्त्रे निर्दिष्टमस्ति । बहिरायामलक्षणं चरके “पृष्ठमन्याश्रितो वायुः[2] शोषयित्वा सिरा बली। ततः कुर्याद्धनुःस्तम्भं बहिरायामसंज्ञकम् ॥ चापवन्नाम्यमानस्य पृष्ठतो ह्रियते शिरः । उर उत्क्षिप्यते मन्या स्तब्धा ग्रीवाऽवमृद्यते ॥ दन्तानां दैशनं[3] जृम्भा लालास्रावः सवाग्ग्रहः । जातवेगो निहन्त्येष वैकल्यं वा नियच्छति” (च. चि. अ. २८) इति। तस्येदानीमितरगौणदोषसंसर्गेण निदानविशेषत्वेन च संज्ञाभेदं दर्शयन्नाह—कफपित्तान्वित इत्यादि ॥ ५२-५८ ॥

**गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः ॥**
**अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥ ५९ ॥**

**नि० सं०**-तस्यैवाक्षेपकस्यापतानकसंज्ञां प्राप्तस्यासाध्यत्वं दर्शयन्नाह—गर्भपातनिमित्तश्चेत्यादि । गर्भपातादिनिमित्तास्त्रयोऽप्यागन्तवोऽसाध्याः; यदि कथंचिद्दैवयोगात् सिध्यन्ति तदा वैकल्यं जनयन्ति ॥ ५९ ॥

**न्या० च०**-निदानविशेषादस्यैवाक्षेपकस्य पतनस्वभावादपतानकसंज्ञां प्राप्तस्यापरमसाध्यत्वं दर्शयन्नाह—गर्भपातनिमित्त इत्यादि । तत्र गर्भपाते गर्भिण्याः पूर्वमेवारुचिच्छर्दिमत्यास्तथा गर्भाधारपोषणेन विभक्तरसत्वेनापि दुर्बलाया गर्भपातेनापि स्रुतातिशोणिताया अन्यहेतुस्रुतशोणिताया वाऽतिधातुक्षयनिमित्तेनापेक्षकस्यासाध्यत्वमिति। गर्भपातादिनिमित्तास्त्रयोऽप्यागन्तवोऽसाध्याः ॥ ५९ ॥

**अधोगमाः सतिर्यग्गा धमनीरूर्ध्वदेहगाः ॥**
**यदा प्रकुपितोऽत्यर्थं मातरिश्वा प्रपद्यते ॥ ६० ॥**
**तदाऽन्यतरपक्षस्य सन्धिबन्धान् विमोक्षयन् ॥**
**हन्ति पक्षं तमाहुर्हि पक्षाघातं भिषग्वराः ॥ ६१ ॥**
**यस्य कृत्स्नं शरीरार्धमकर्मण्यमचेतनम् ॥**
**ततः[1] पतत्यसून् वाऽपि त्यजत्यनिलपीडितः[2] ॥ ६२ ॥**

**नि० सं०**-पक्षाघातमाह—अधोगमा इत्यादि । एकतरशरीरार्धधमनीरूर्ध्वाधस्तिर्यग्गता यदा स मातरिश्वा वायुः, प्रपद्यते आश्रयतीत्यर्थः, तदाऽन्यतरपक्षस्यैकतरशरीरार्धस्य, सन्धिबन्धान् विमोक्षयन् विमोचयन्, पक्षं शरीरार्धं हन्ति । यस्य कृत्स्नमित्यादि । अकर्मण्यम् ईषत्कर्मक्षमम्, अचेतनम् अल्पचेतनम्; यदा अकर्मण्यं भवति तदा पतति; यदा अचेतनं भवति तदा असून् प्राणान् परित्यजति ॥६०—६२॥

**न्या० च०**-दण्डस्तम्भादिसर्वाङ्गवातानुद्दिश्य कृत्स्नदेहवातं दर्शयन्नाह—अधोगमा इत्यादि। एकतरशरीरार्धधमनीरूर्ध्वाधस्तिर्यगा आश्रित्य सन्धिबन्धान् कफसंहिताभिर्धमनीभिः कृतान् मोक्षयन् पक्षाघातं कुर्यात्। तत्र शरीरशब्दः शरीरावयवेऽपि वर्तते। समुदायेषु प्रवृत्ता शब्दा अवयवेष्वपि वर्तन्त इति कृत्स्नग्रहणम् । धमन्योऽत्र स्नायवः सादृश्येनाभिहिताः, स्नायूनामेव संन्धिबन्धनेष्वधिकृतत्वात् । तदुक्तं शारीरे—“एवमेव शरीरेऽस्मिन् यावन्तः संधयः स्मृताः । स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः (शा. अ. ५) इति। अन्ये तु सिरास्नायुगतत्वेन गुरुत्वमस्य प्रतिपादयितुं धमनीति ग्रहणमित्याहुः। उभयाश्रयो हि वायुश्चरके पक्षवधे पठ्यते, तदुक्तं—“हत्वैकं मारुतः पक्षं दक्षिणं वाममेव वा। करोति चेष्टाविरतिं रुजां वाक्संगमेव च ॥ गृहीत्वाऽर्धं शरीरस्य सिराः स्नायूर्विशोष्य च” (च. चि. अ. २८) इति। न चेतनम् अचेततम्। शुद्धवातजं कृच्छ्रं, ततः पतति। यदा पुनश्चेतनं न भवतीति क्रियया संबन्धः। धातुक्षयकृतवातजं तदसाध्यं, तत्रासून् जहाति; अपरदोषसंसृष्टवातं पुनः साध्यम् ॥ ६०—६२ ॥

**शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ॥**
**साध्यमन्येन संसृष्टमसाध्यं क्षयहेतुकम् ॥ ६३ ॥**

**नि० सं०**-पक्षाघातस्य साध्यासाध्यत्वं दर्शयन्नाह—शुद्धवातहतमित्यादि। शुद्धः कफाद्यसंसृष्टः । अन्येन संसृष्टम् इतरदोषसंबद्धम् ॥ ६३ ॥

**न्या० च०**-पक्षाघातस्य साध्यासाध्यत्वं दर्शयन्नाह—

१ ‘पृष्ठमन्याश्रिताः बाह्याः’ इति चरके पाठः । २ ‘वायुः’ इति चरके पाठः । ३ ‘दर्शनं’ इति वा पाठः ।

१ ‘तदा’ इति पा० । २ ‘जहात्यनिलपीडितः’ इति गयदाससंमतः पाठः ।

शुद्धवातहतमित्यादि । शुद्धवातहतं कृच्छ्रसाध्यम्, अन्यदोषसंसृष्टं साध्यं, क्षयहेतुकेवलवातजं पुनरसाध्यं साक्षादेव, शोणितातिस्रुतिकृतधातुक्षयजमेवासाध्यं, बलवद्विग्रहादितो धातुक्षयकरहेतुकृतं तु कृच्छ्रसाध्यमिति भेदाः ॥ ६३ ॥

**वायुरूर्ध्वं व्रजेत् स्थानात् कुपितो हृदयं शिरः ॥**
**शङ्खौ च पीडयत्यङ्गान्याक्षिपेन्नमयेच्च सः ॥ ६४ ॥**
**निमीलिताक्षो निश्चेष्टः स्तब्धाक्षो वाऽपि कूजति ॥**
**निरुच्छ्वासोऽथवा कृच्छ्रादुच्छ्वस्यान्नष्टचेतनः ॥६५॥**
**स्वस्थः स्याद्धृदये मुक्ते ह्यावृते तु प्रमुह्यति ॥**
**कफान्वितेन वातेन ज्ञेय एषोऽपतन्त्रकः ॥ ६६ ॥**

**नि० सं०**-अपतन्त्रकमाह—वायुरूर्ध्वमित्यादि । हृदयं शिरः शङ्खौ च पीडयतीति हृदयं कमलमुकुलाकारमधोमुखं, भ्रुवोरन्तोपरि कर्णललाटयोर्मध्ये शङ्खौ, अङ्गानि हस्तपादादीनि । आक्षिपेत् पातयेत् । कूजति कपोत इव शब्दं करोति; अथवा कृच्छ्रादुच्छ्वस्यादिति कष्टेनोच्छ्वासं कुर्यात् । केचिदपतन्त्रकममुं न पठन्ति, अपतन्त्रकापतानकयोरैक्यात् ॥ ६४—६६ ॥

**न्या० च०**-अपतानकस्थाने केचिदपतन्त्रकमधीयते—वायुरूर्ध्वं व्रजेत् स्थानादित्यादि । अन्ये त्वपतानकलक्षणेनैव तदवरोधादिति नाधीयते । चरके पुनराक्षेपकस्यापतानकत्वं न पठितमित्यपतन्त्रकः पठ्यते ॥ ६४-६६ ॥

**दिवास्वप्नासनस्थानविवृताध्वनिरीक्षणैः ॥**
**मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणाऽऽवृतः ॥६७॥**

**नि० सं०**-मन्यास्तम्भमाह—दिवास्वप्नेत्यादि । आसनम् उपवेशनं, स्थानम् ऊर्ध्वीभवनं । विवृताध्वनिरीक्षणैः वक्रमार्गावलोकनैः । स एव वायुः । मन्यास्तम्भं केचिदपतानकपूर्वरूपं मन्यन्ते ॥ ६७ ॥

**न्या० च०**-मन्यास्तम्भं दर्शयन्नाह—दिवास्वप्नेत्यादि । कैश्चिन्मन्यास्तम्भो न पठ्यते, अन्तरायामबहिरायामलक्षणत्वान्मन्यास्तम्भस्य; तन्न, स्वातन्त्र्येणाप्युपलम्भान्मन्यास्तम्भस्य ॥ ६७ ॥

**(गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये ॥ )**
**उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि वा ॥**
**हसतो जृम्भतो भाराद्विषमाच्छयनादपि ॥ ६८ ॥**
**शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः ॥**
**अर्दयित्वाऽनिलो वक्त्रमर्दितं जनयत्यतः ॥ ६९ ॥**
**वक्रीभवति वक्त्रार्धं ग्रीवा चाप्यपवर्तते ॥**
**शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम् ॥७०॥**
**ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे तु वेदना ॥**

१ 'चालयेत्' इति पा० । २ 'दिवास्वप्नासमस्थानविवृ(क्र)-तोर्ध्वनिरीक्षणैः' इति पा० । ३ अयमर्धश्लोको गयदासेन न पठ्यते । ४ 'जृम्भया' इति गयदाससंमतः पाठः ।

**यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् ॥ ७१ ॥**
**वायुरूर्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ॥**
**तमर्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः ॥७२॥**

**नि० सं०**-अर्दितमाह—गर्भिणीत्यादि । सूतिका प्रसूता स्त्री । व्याहरतः शब्दं कुर्वतः । भाराद्विषमाच्छयनादपीति विषमाद्भारात्, विषमाच्छयनाच्चेत्यर्थः । अन्ये तु 'विषमोच्छ्वसनात्' इति पठन्ति । अर्दयित्वा व्यथयित्वा । अपवर्तते वक्रीभवति । वाक्सङ्गो वाचोऽनिर्गमः । नेत्रादीनामित्यादिशब्दाद् भ्रूगण्डाद्युपसंग्रहः । तस्मिन् पार्श्वे इति यस्मिन् पार्श्वेऽर्दितं भवति तस्मिन् पार्श्वे ग्रीवादयो वक्रीभवन्ति । चिबुकं मुखकुहरस्याधोभागः । तस्य (पूर्व)रूपमाह—यस्येत्यादि । अग्रजः पूर्वभावी । आविलं समलम् । वायुरूर्ध्वं 'प्रसर्पति' इति शेषः । त्वचि स्वापः त्वचः स्पर्शाज्ञानम् ॥ ६८—७२ ॥

**न्या० च०**-अर्दितवातं निर्दिशन्नाह—उच्चैर्व्याहरतोऽत्यर्थमित्यादि । जृम्भया हेतुभूतया । भाराद् विषमात्; शयनाशनाच्च 'विषमात्' इत्यनुवर्तते । वाक्संगो वाचोऽनिर्गमः । नेत्रादीनामित्यादिशब्दाद् भ्रूगण्डाद्युपग्रहः । केचिच्छरीरार्धमपीच्छन्ति; तदुक्तं चरके—"अर्धे तस्मिन्मुखार्धे वा केवले स्यात्तदर्दितम् ( च. चि. अ. २८ ) इति; तत्तु न सम्यक् । उच्चैर्व्याहारादीनां मुखगतवायोरेव कोपकत्वात् ॥६८-७२॥

**क्षीणस्यानिमिषाक्षस्य प्रसक्तं सक्तभाषिणः ॥**
**न सिध्यत्यर्दितं बाढं त्रिवर्षं वेपनस्य च ॥ ७३ ॥**

**नि० सं०**-तस्यासाध्यत्वमाह—क्षीणस्येत्यादि । अनिमिषाक्षस्य स्तब्धाक्षस्य । प्रसक्तं सततं, सक्तभाषिणः पीडिताव्यक्तपदभाषिणः; अन्ये तु 'प्रसक्ताव्यक्तभाषिणः' इति पठन्ति, प्रसक्तं प्रकर्षेण लग्नमिति तत्रार्थः । बाढमतिशयेन न सिध्यतीति संबन्धः । त्रिवर्षमिति संवत्सरत्रयातीतम्; अन्ये तु नासाक्षिमुखस्राविणं त्रिवर्षमाहुः । वेपनस्य कम्पनशीलस्य । "गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये" इत्यमुं पाठं जेज्झटादय आचार्या न पठन्ति । 'उच्चैर्व्याहरतोऽत्यर्थं' इत्यादौ कृत्वा पठन्ति, बहुवैद्यपठितत्वादस्माभिः पठितः ॥ ७३ ॥

**न्या० च०**-तस्येदानीमसाध्यत्वं दर्शयन्नाह—क्षीणस्येत्यादि । प्रसक्तं प्रकर्षेण सक्तं लग्नं कण्ठताल्वादिवर्णोच्चारणस्थानेषु, अव्यक्तमस्फुटं भाषितं यस्य स तथा । तथैव चरकः "ली(दी)ना जिह्वा समुत्क्षिप्ता तथा सजति चास्य वाक्" ( च. चि. अ. २८ ) इति । त्रिवर्षमिति त्रयो वर्षाः

१ "ननु यदा देहार्धव्यापित्वमर्दितस्य तदाऽर्दितेनार्धाङ्गस्य को भेदः? ब्रूमः—अर्दितो वेगितया न सर्वकालं भवति, अर्धाङ्गस्तु व्याप्तं भवति । उक्तं हि 'स्वस्थः स्यादर्दितादीनां मुहुर्वेगागमे गते' इति; किंवा यथोक्तविशिष्टलक्षणोऽर्दितः, अर्धाङ्गे तु नैतानि सर्वाणि भवन्ति" इति चरकव्याख्यायां चक्रपाणिः । २ 'प्रसक्ताव्यक्तभाषिणः' इति गयदाससंमतः पाठः । ३ 'लग्नमप्रवृत्तं' इत्यातङ्कदर्पणकारः ।

संवत्सरा अस्येति अत्यन्तसंयोगे द्वितीया । अन्ये तु नासाक्षिमुखस्राविणं त्रिवर्षमाहुः, वर्षसामान्यात् स्रावस्य ॥७३॥

**पा[1]र्ष्णिप्रत्यङ्गुलीनां तु कण्डरा याऽनिलार्दिता ॥**
**स[2]क्थ्नः क्षेपं निगृह्णीयाद्गृध्रसीति हि सा स्मृता ॥**

**नि० सं०**-गृध्रसीमाह—पार्ष्णीत्यादि । या कण्डरा सक्थ्नः क्षेपं निगृह्णीयात् सा गृध्रसीति स्मृतेति संबन्धः । पार्ष्णिर्गुल्फस्य पाश्चात्याधोभागः, प्रत्यङ्गुल्योऽङ्गुल्य एव; एतेनोपर्यधोभागगतं कण्डराद्वयं गृह्यते । कण्डरा महास्नायुः । गुल्फादिविटपान्तं सक्थि, तस्य क्षेपः प्रसारणं, तं निगृह्णीयादवरुन्ध्यादित्यर्थः । गृध्रसी 'रंधिणी' इति लोके । सा च वाताद् वातकफाच्च । खञ्जनवाते न सातिशया व्यथा यथा गृध्रस्याम् । केचित् 'पार्ष्णि प्रत्यङ्गुलीनाम्' इति द्वितीयान्तं पठन्ति; तत्रापि पार्ष्णि लक्षीकृत्य या कण्डरा, अङ्गुलीनां च या कण्डरेति कण्डराद्वयम् ॥ ७४ ॥

**न्या० च०**-एकसक्थिगतस्नायुगतं दर्शयन्नाह—पार्ष्णिं प्रतीत्यादि । पार्ष्णिः पादग्रन्थिः पादकनिष्ठाङ्गुलेरधःस्नायुदाहं कुरुते (?) । लक्षणे कर्मप्रवचनीयसंज्ञा, तेन पार्ष्णिमति द्वितीया । 'कण्डरे ये' इति द्विवचनं केचित् पठन्ति । क्षेपं प्रसारं, सक्थिक्षेपं निगृह्णीत इति ॥ ७४ ॥

**त[3]लप्रत्यङ्गुलीनां तु कण्डरा बाहुपृष्ठतः ॥**
**बाह्वोः कर्मक्षयकरी विश्वाचीति हि सा स्मृता ७५**

**नि० सं०**-गृध्रसीसदृशीमेकबाहुगतां विश्वाचीमाह—तलेत्यादि । तलशब्दोऽयमुपरि वर्तते, तेन करस्याभ्यन्तरकण्डरा गृहीता, बाहुपृष्ठत इत्यनेन बाह्यकण्डरा गृहीता । बाह्वोरिति द्विवचनं सामान्या[4]पेक्षया, कदाचित् कस्मिंश्चिद्बाहौ भवति । 'अनिलार्दिता' इत्यत्रापि संबध्यते । चकारोऽत्र गृध्रसीविश्वाच्योर्नामान्तरमनुक्तं खल्यभिधानं समुच्चिनोति । अन्ये त्वत्रापि 'तलं प्रत्यङ्गुलीनाम्' इति पूर्ववद्द्वितीयान्तं पठन्ति, तेन तलं लक्षीकृत्य या कण्डरा बाहुपृष्ठतश्च या कण्डरेति कण्डराद्वयं गृह्यते ॥७५॥

**न्या० च०**-सक्थिसामान्यादेकबाहुगतसदृशविकारं दर्शयन्नाह—तलं प्रत्यङ्गुलानामित्यादि । 'अनिलार्दिता' इति पूर्ववाक्यतः शेषः । तलशब्दोऽयमुपरि वर्तते, यथा—भूतलमिति; तेन बाहुपृष्ठत इति संगतार्थः । इयमपि वाताद्वातकफाच्च; गृध्रसीसामान्यात् । विश्वाचीति चकारोऽत्र गृध्रसीविश्वाच्योर्नामान्तरमनुक्तं खल्यभिविधानं समुच्चिनोति । उभे अप्येते शूलावमोटनादिवातरुगर्दिते खल्लीसंज्ञे, "खल्ली तु पादजङ्घोरुकटीशू[5]लावमोटिनी ( च. चि. अ. २८ ) इति चरके समार्थेन गृध्रसीविश्वाचीविषयेयमिति प्रतीयते । हारीते तु गृध्रसीविश्वाच्योः प्रतिपदमेव खल्लीसंज्ञा कृता ॥ ७५ ॥

**वातशोणितजः शोफो जानुमध्ये महारुजः[2] ॥**
**शिरः क्रोष्टुकपूर्वं तु स्थूलः क्रोष्टुकमूर्धवत् ॥ ७६ ॥**

**नि० सं०**-क्रोष्टुकशिर आह—वातेत्यादि । यो जानुमध्ये वातशोणितजो महारुजः क्रोष्टुकमूर्धवत् स्थूलः शोफो भवति स क्रोष्टुकशिर इति ज्ञेयः । वातशोणितज इति वातशोणिताभ्यां जातो वातशोणितजः, न पुनर्वातरक्तेन व्याधिना जनितः; अन्ये तु वातेन शोणितेन च जात इति नेच्छन्ति, किं तर्हि वातरक्तज इति रोगकारणमेव रोगमिच्छन्ति । शिरः क्रोष्टुकपूर्वमिति क्रोष्टुकशब्दपूर्वं शिरः, तस्य रोगस्य 'क्रोष्टुकशिर' इति नामेत्यर्थः । क्रोष्टुकमूर्धवत् शृगालमस्तकवत् ॥ ७६ ॥

**न्या० च०**-पूर्वाभिहितसक्थिदेशाश्रयं विकारं दर्शयन्नाह—वातशोणितज इत्यादि । रोगकारणमेव रोगमिच्छन्ति; तेन वातशोणितरोगहितं च चिकित्सितमिति विशेषः[3] । स तु शृगालशीर्षतुल्यत्वात् क्रोष्टुकशिर इति व्याधिरुच्यते ॥ ७६ ॥

**वायुः क[4]ट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥**
**खञ्जस्तदा भवेज्जन्तुः, पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥७७॥**

**नि० सं०**-खञ्जपङ्गुलवाताबाह—वायुरित्यादि । आक्षिपेदिति ईषत् क्षिपेत्, खञ्जे विकलगतेर्दर्शनात् । सक्थ्नोर्द्वयोर्वधादिति सर्वथा गतिविघातात् पङ्गुरित्यर्थः । द्वयोरिति पुन[5]रुक्तिप्रसङ्गाद्युगपत् सक्थिद्वयवधादित्यर्थः ॥ ७७ ॥

**प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति ॥**
**कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ७८ ॥**

**नि० सं०**-कलायखञ्जमाह—प्रक्रामन्नित्यादि । प्रक्रामन् पादविक्रमं कुर्वन्, गमनारम्भ एव वेपते कलायखञ्ज इत्ययं खञ्जाद्विशेषः । मुक्तसन्धिप्रबन्धनमिति शिथिलसन्धिबन्धनमित्यर्थः ॥ ७८ ॥

**न्या० च०**-सक्थिश्रितमेवापरं विकारं दर्शयन्नाह—वायुः कट्याश्रित इत्यादि । आक्षिपेत् ईषत् क्षिपेत्; आङ् ईषद[6]र्थे, खञ्जे विकलगतेर्दर्शनात् । सक्थ्नोर्द्वयोर्वधात्

१ 'पार्ष्णिं प्रत्यङ्गुलीनां' इति पा० । २ 'सक्थ्नोः' इति पा० । ३ 'तलं प्रत्यङ्गुलीनां' इति पा० । ४ 'कण्डरापेक्षया' इति पा० । ५ 'करमूलावमोटनी' इति चरके पाठः ।

१ "विश्वाची चेति चकारेण गृध्रसीविश्वाच्योः खल्लीसंज्ञां दर्शयति, तयोरपि करमूलावमोटनकारित्वात्; यदुक्तं हारीते—"विश्वाची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विता" इति गयदासः" इति मधुकोशव्याख्यायाम् । २ 'महारुजः शोफो भवति तत् क्रोष्टुकपूर्वं क्रोष्टुकमूर्धवत् स्थूलं शिरो ज्ञेयम्' इति पा० । ३ "चिकित्साभेदार्थं पृथक् पठितः" इति गयदासः ।" इति मधुकोशव्याख्यायाम् । ४ 'कट्याश्रितः' इति गयदाससंमतः पाठः । ५ 'पौनरुक्त्यप्रसङ्गात्' इति पा० । ६ "किञ्चिद्गतिमत्त्वादिति गयदासः" इति मधुकोशव्याख्यायाम् ।

सर्वथा गतिविघाते तु पङ्गुः । खञ्जतः कलायखञ्जे कण्डराद्वयसंधिबन्धमुक्तत्वात् प्रक्रामन् नरो वेपते इति विशेषः, अन्यत् सर्वं तुल्यमेव । यदाह—खञ्जन्निव च गच्छतीति ॥ ७७ ॥ ७८ ॥

**न्यस्ते तु विषमं(मे) पादे रुजः कुर्यात् समीरणः ॥**
**वातकण्टक इत्येष विज्ञेयः खुडु(ल)काश्रितः ॥७९॥**

**नि० सं०**-वातकण्टकमाह—न्यस्त इत्यादि । न्यस्ते तु विषमं पाद इति विषमस्थाने निक्षिप्ते पादे इत्यर्थः । खुडु(ल)काश्रित इति पादजङ्घासन्धिसंश्रय इत्यर्थः, 'पार्ष्ण्याश्रयः' इत्यन्ये ॥ ७९ ॥

**न्या० च०**-अपरं सक्थिरोगं दर्शयन्नाह—न्यस्ते त्वित्यादि । खुडकाश्रयः पादजङ्घासन्धिसंश्रयः; 'पार्ष्ण्याश्रयः' इत्यन्ये ॥ ७९ ॥

**पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ॥**
**विशेषतश्चङ्क्रमणात् पाददाहं तमादिशेत् ॥ ८० ॥**

**नि० सं०**-पाददाहमाह—पादयोरित्यादि । विशेषतश्चङ्क्रमणादिति विशेषेण गच्छतः, तिष्ठतस्तु सामान्येन ॥ ८० ॥

**न्या० च०**-विशेषतश्चङ्क्रमतः विशेषेण गच्छतः; तिष्ठतस्तु सामान्येन ॥ ८० ॥

**हृष्यतश्चरणौ यस्य भवतश्च प्रसुप्तवत्[1] ॥**
**पादहर्षः स विज्ञेयः कफवातप्रकोपजः ॥ ८१ ॥**

**नि० सं०**-पादहर्षमाह—हृष्यत इत्यादि । हृषत इति हर्षो रोमाञ्चप्रायो वेदनाविशेषोऽन्तःशीतकरः । भवतश्च प्रसुप्तवदिति स्पर्शाज्ञानात् सुप्ताविव भवत इत्यर्थः ॥ ८१ ॥

**न्या० च०**-पादहर्षः कफान्वितेन वातेन । हर्षो रोमाञ्चप्रायोऽन्तःशीतकरो वेदनाविशेषः । सुप्तकौ स्पर्शस्यावेदनात् सुप्ताविव । अयं पाददाहविपरीतः पादहर्षो वातकफाभ्यां चिरविषमपादन्यासादिना; परः पाददाहः खलु सिरामुखपीडनावृतेन वायुना, सोऽस्माद् भिन्नः; सिरामुखावृतत्वेन तद्विवृतौ स्वयमेव प्रशमते ॥ ८१ ॥

**अंसदेशस्थितो वायुः शोषयित्वांऽसबन्धनम् ॥**
**सिराश्चाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम् ॥ ८२ ॥**

**नि० सं०**-अंसशोषावबाहुकावाह—अंसदेशेत्यादि । अंससमीपोपलक्षितो देशोंऽसदेशः; अंसो बाहुशिरः । अंसबन्धनं श्लेष्माणमित्यर्थः । अंसबन्धनं शोषयित्वा 'अंसशोषं रोगं करोति' इति वाक्यशेषो ज्ञेयः । तत्रस्थः अंसदेशस्थित इत्यर्थः ॥ ८२ ॥

**न्या० च०**-अंसे पूर्वोक्तविश्वाचीशेषं रोगं दर्शयन्नाह—अंसदेशस्थितो वायुरित्यादि । धातुक्षयकृत एव वायुः, शोषयेदंसबन्धनमिति शोषस्य वातकृतत्वात्; कफावृतस्य शोषासामर्थ्यात् । अंसबन्धनं श्लेष्मा, बध्नातीति बन्धनं; कथं पुनरंसबन्धनं कफादुच्यते ? तस्यैव बन्धनेऽधिकारात्; तदुक्तं—"सन्धयः साधु वर्तन्ते संश्लिष्टाः श्लेष्मणा तथा"; (शा. अ. ४), तथा-"गुणाः कालात् परं श्लेष्मा बन्धनेऽक्ष्णोः सिरायुतः" ( उ. त. अ. १ ) इति । तत्रस्थ एव आकुञ्च्य सिरा अवबाहुकं जनयतीति । चकारो भिन्नक्रमे । अवबाहुकः संधिगतेन कफस्नेहेन वातेन च, संधिगतत्वात्; अंससंधेश्च कफस्थानत्वात् । द्वावेतौ व्याधी । यदाह—"अंसशोषावबाहुकयोरंसमध्यतः" ( शा. अ. ८ ) इति । यथा चैतयोर्वातरोगयोरपि सिराव्यधस्तथा तत्रैव वक्ष्यामः ॥ ८२ ॥

**यदा शब्दवहं स्रोतो वायुरावृत्य तिष्ठति ॥**
**शुद्धः श्लेष्मान्वितो वाऽपि बाधिर्यं तेन जायते ८३**

**नि० सं०**-बाधिर्यमाह—यदेत्यादि । शुद्धः केवलः । अपिशब्दाद्रक्तपित्तावरणयोरुपसंग्रहः । यद्यप्ययं व्याधिः शालाक्येऽपि पठ्यते, तथाऽप्यत्रापि पठनीयः, वृद्धसंमतत्वात् ॥ ८३ ॥

**हनुशङ्खशिरोग्रीवं यस्य भिन्दन्निवानिलः ॥**
**कर्णयोः कुरुते शूलं कर्णशूलं तदुच्यते ॥ ८४ ॥**

**नि० सं०**-कर्णशूलमाह—हनुशङ्खेत्यादि ॥ ८४ ॥

**न्या० च०**-बाधिर्यकर्णशूलौ वातव्याधौ शालाक्येऽपि च पठ्येते, अत्र वातव्याधिचिकित्सार्थत्वात् । रोगेषु यदुक्तं—"बलातैलं सर्वथैवोपयोज्यं वातव्याधावन्यदुक्तं च यत् स्यात्" इति । वातस्य वातेतरदोषावरणादाधिक्यार्थमितरदोषस्य शालाक्ये । तदुक्तं शालाक्ये—"करोति दोषैश्च यथास्वमावृतः" ( उ. त. अ. १८ ) इति । तेनोभयत्र उभयकर्मापेक्षिणी चिकित्सा । बाधिर्यकर्णशूले उभयलक्षणार्थमत्र पठिते; तेन घ्राणनाशादीनामपि वातव्याधावरोधः । शुद्धः श्लेष्मान्वितो वाऽपि बाधिर्यं तेन जायते इति अपिशब्दाद्रक्तपित्तावरणयोरुपग्रहः ॥ ८३ ॥ ८४ ॥

**आवृत्य सकफो वायुर्धमनीः शब्दवाहिनीः ॥**
**नरान् करोत्यक्रियकान्मूकमिन्मिनगद्गदान् ॥ ८५ ॥**

**नि० सं०**-जिह्वागतवातरोगं दर्शयन्नाह—आवृत्येत्यादि । आवृत्य अवरुध्येत्यर्थः । मूको वचनरहितः, मिन्मिणः सानुनासिकवाक्, गद्गदोऽव्यक्तवाक् ॥ ८५ ॥

**न्या० च०**-ऊर्ध्वगतरोगसामान्यादिन्द्रियोपतापसामान्याद्वा जिह्वागतवातरोगं दर्शयन्नाह—आवृत्य वायुः सकफ इत्यादि । अयमेव हि धमनीवातरोगादिचिकित्सिते वातव्याधावुक्तः । अक्रियकानिति अविद्यमानक्रियकान् । मूकोऽवचनः; तदभावे नञ्, अमक्षिकवत्; मिन्मिनगद्गदयोरीषदर्थे, अनुदराकन्यावत् । मिन्मिणः सानुनासिकवाक्, गद्गदो लुप्तपदव्यञ्जनाभिधायी । शब्दवाहिनीरावृत्येति अभिविधावाङ्, संपूर्णार्धैपदार्थेषु मूकमिन्मिणगद्गदेषु ॥८५॥

[1] 'प्रसुप्तकौ' इति गयदाससंमतः पाठः ।

अधो या वेदना याति वर्चोमूत्राशयोत्थिता ॥
भिन्दतीव गुदोपस्थं सा तूनीत्यभिधीयते ॥ ८६ ॥
गुदोपस्थोत्थिता सैव प्रतिलोमविसर्पिणी ॥
वेगैः पक्वाशयं याति प्रतितूनीति सा स्मृता ॥८७॥

नि० सं०-तूनीवातमाह—अधो येत्यादि । भिन्दतीव गुदोपस्थमिति भेदं कुर्वतीव गुदोपस्थस्येत्यर्थः । प्रतिलोमविसर्पिणी अध-उत्थितोर्ध्वगामिनी । वेगैरिति वेदनावेगैर्मुहुर्मुहुः स्वभावोपशमोपलक्षितैः, 'प्रतिलोमं प्रधाविता'[1] इति केचित् ॥ ८६ ॥ ८७ ॥

न्या० च०-अधःस्रोतोऽभिघातव्याधिं निर्दिशन्नाह—अधो या वेदना यातीत्यादि । वेदना शूलम् । वर्चोमूत्राशयोत्थितेति विण्मूत्राधाराभ्यां व्यस्तसमस्ताभ्यामुत्थिता जाता। भिन्दतीव विदारयतीव; स्वव्याप्य यथासंख्यं व्यस्तसमस्तगुदोपस्थं याति । गुदोपस्थमिति प्राण्यङ्गत्वादेकवद्भावः । उपस्थो मूत्रमार्गः । भिन्दतीवेति भेदमिव कुर्वती गुदोपस्थस्य । गुदोपस्थोपस्थिता सैव प्रतिलोमं प्रधावितेति पक्वाशयं वेगैः प्रधाविता 'भिन्दतीव' इति पूर्ववाक्याच्छेपः ॥ ८६ ॥ ८७ ॥

साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् ॥
आध्मानमिति जानीयाद्घोरं वातनिरोधजम् ॥८८॥

नि० सं०-आध्मानमाह—साटोपमित्यादि । आटोपं संचलनं, तेन सह वर्तत इति साटोपम् । उदरमत्र पक्वाशयः । घोरं कष्टकारि ॥ ८८ ॥

विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम् ॥
प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम् ८९.

नि० सं०-प्रत्याध्मानमाह—विमुक्तेत्यादि । तदेव आध्मानमेव । आमाशयोत्थितं नाभिस्तनान्तरोत्थितम् । अत एव हृदयपार्श्वयोरप्यधिष्ठानमस्य प्राप्तं निरसन्नाह—विमुक्तपार्श्वहृदयमिति । व्याकुलित आवृतः ॥ ८९ ॥

न्या० च०-प्रतिशब्दविशेषितमपरमपि रोगं दर्शयन्नाह—साटोपमत्युग्ररुजमित्यादि । आटोपः संचलनं, तेन सह वर्तते । घोरं कृच्छ्रं, कष्टकारित्वात् । उदरमत्र पक्वाशय एव, प्रत्याध्मानस्यामाशयसमुत्थितत्वात् । तदेव आध्मानमेव । साटोपमामाशयसमुत्थितम् । आमाशयस्य नाभिस्तनान्तरावधित्वाद्धृदयपार्श्वयोरप्यधिष्ठानत्वमस्य प्राप्तं निरसन्नाह—विमुक्तपार्श्वेत्यादि । विमुक्तं पार्श्वद्वयं हृदयं मर्म येन तत्तथा ॥ ८८ ॥ ८९ ॥

अष्ठीलावद्घनं ग्रन्थिमूर्ध्वमायतमुन्नतम् ॥
वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम्[2] ॥९०॥
एनामेव रुजायुक्तां वातविण्मूत्ररोधिनीम् ॥
प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम् ॥ ९१ ॥

इति सुश्रुतसंहितायां निदानस्थाने वातव्याधिनिदानं नाम प्रथमोऽध्यायः ॥ १ ॥

नि० सं०-वाताष्ठीलामाह—अष्ठीलावदित्यादि । "अष्ठीला उत्तरापथे दीर्घवर्तुलपाषाणविशेषः" इत्येके, "चर्मकाराणां वर्तुलदीर्घा लौही भाण्डि:" इत्यपरे । घनः संहतावयवः । आयतो दीर्घः । बहिर्मार्गाणि वातविण्मूत्राणि । अन्येऽत्र 'नाभेरधस्तात् संजातं चलं वा यदि वाऽचलम्' इति पठन्ति । प्रत्यष्ठीलामाह—एनामेवेत्यादि । एनामेव अष्ठीलाम् । तिर्यगुत्थितत्वेनाष्ठीलायाः सकाशात् प्रत्यष्ठीलाया भेदः । अस्याग्रे केचिदूरुस्तम्भं पठन्ति, तन्न, चिकित्सायां पठिष्यमाणत्वान्निबन्धकाराणामसंमतत्वाच्च ॥ ९० ॥ ९१ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने प्रथमोऽध्यायः ॥ १ ॥

न्या० च०-प्रतिशब्दविशेषणसामान्यादुदरगतसामान्याच्चापरमपि वातरोगं निर्दिशन्नाह—अष्ठीलावद्घनं ग्रन्थिमित्यादि । 'अष्ठीला उत्तरापथे वर्तुलपाषाणः' इत्येके; 'चर्मकाराणां वर्तनीया लौही भाण्डि:' इत्यपरे । बहिर्मार्गावरोधिनी बहिर्मार्गाणि वातविण्मूत्राणि, तेषां नियमेन रोधिनी या; तामेव तिर्यगुत्थितां वातविण्मूत्ररोधनशीलां प्रत्यष्ठीलां निर्दिशेत् । उभे अप्येते पक्वाशयोत्थिते; अत्रैव वाताद्यवरोधेन क्रियोपलम्भात् । अन्ये त्वत्र 'नाभेरधस्तात् संजातं चलं वा यदि वाऽचलाम्' इति पठन्ति ॥ ९० ॥ ९१ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासाचार्यविरचितायां न्यायचन्द्रिकायां पञ्जिकायां वातव्याधिनिदानं समाप्तम् ।

---

## द्वितीयोऽध्यायः ।

अथातोऽर्शसां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

नि० सं०-अथेत्यादि । निदानं हेतुलक्षणनिर्देशः ॥ १ ॥ २ ॥

न्या० च०-वातव्याधिनिदानानन्तरमर्शोनिदानारम्भः, वातविण्मूत्ररोधिनीमिति पूर्वप्रक्रान्तत्वात्, अर्शसां च वातादिनिरोधित्वेन सामान्यात्, शस्त्रक्षाराग्निकर्मत्रयसाध्यत्वेन शल्यतन्त्रव्याधिप्राधान्याच्च । अर्शसां निदानं हेतुलक्षणनिर्देशः ॥ १ ॥ २ ॥

षडर्शांसि भवन्ति वातपित्तकफशोणितसन्निपातैः सहजानि चेति ॥ ३ ॥

नि० सं०-षडर्शांसीत्यादि । ननु, वातपित्तकफशोणितसन्निपातैः सहजानि चेत्यनेनैव षट्संख्याया लब्धत्वात् कथं

[1] 'प्रधावति' इति पा० ।

[2] 'बहिर्मार्गनिरोधिनीं' इति पा० ।

षडिति संख्यानिर्देशः? उच्यते—द्विदोषजनिताशोंगणनापरिहारार्थम् । यद्यपि शोणिताधिष्ठाना वातादयो रक्तार्शसामारम्भकाः, तथाऽप्युपचारात् 'शोणितजानि' इत्युच्यन्ते; यथा—घृताधिष्ठानेनाग्निना दग्धो 'घृतदग्ध' इत्युच्यते ॥ ३ ॥

**न्या० च०**-षडर्शांसि भवन्तीति प्रथमं संख्याकरणं षट्संख्याया वातादीनां बलवद्विग्रहादिषु हेतुषु, रौक्षादिस्वभावलिङ्गेषु, कर्मादिकार्यलिङ्गेषु, साध्यासाध्यचिकित्सितेषु चाङ्गभूतत्वात् । षडर्शांसि भवन्तीत्यस्य सूत्रस्य भाष्यं—वातपित्तकफशोणितसन्निपातैः सहजानि चेति । ननु च षट्त्वावधारणं विरुध्यते, संसृष्टार्शःपङ्कस्यापि दर्शितत्वात् । तदुक्तं—"अर्शस्सु दृश्यते रूपं यदा वै दोषयोर्द्वयोः । संसर्गं तं विजानीयात् संसर्गः षड्विधः स्मृतः" इति । उच्यते—व्याख्यातोऽयमर्थः—यत्र प्रकृतिसमसमवेतः सन्निपातः संसर्गो वा न तत्र संख्यातिरेकमापादयति, समुदायिभ्योऽनन्यः समुदाय इति कृत्वा; प्रत्येकवातादिदोषधातुलिङ्गस्य संसर्गस्य चिकित्साया एकत्वेन वातादिष्वेवावरुद्धत्वात् । तदुक्तं चरके—"पञ्च गुल्मा इति वातपित्तकफसन्निपातशोणितजाः" (च. सू. अ. १९) इत्यभिधाय पुनराह—"संसृष्टलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम्" (च. चि. अ. ५) इति; यदि च समुदायिभ्योऽनन्यः समुदाय इति प्रत्येकवातादिदोषजेषु संसर्गजावरोधो न भवति तदा 'पञ्च गुल्माः' इति पञ्चसंख्यावधारणं विरुध्यते । अन्ये पुनराहुः—सन्निपातशब्दस्य व्युत्पादितत्वात्······तन्न, चरकादिषु सांसर्गिकाणामर्शसां प्रदर्शितत्वात् ॥ ३ ॥

**तत्रानात्मवतां यथोक्तैः प्रकोपणैर्विरुद्धाध्यशनस्त्रीप्रसङ्गोत्कटुकासनपृष्ठयानवेगविधारणादिभिर्विशेषैः प्रकुपिता दोषा एकशो द्विशः समस्ताः शोणितसहिता वा यथोक्तं प्रसृताः प्रधानधमनीरनुप्रपद्याधो गत्वा गुदमागम्य प्रदूष्य गुदवलीर्मांसप्ररोहाञ्जनयन्ति विशेषतो मन्दाग्नेः, तथा तृणकाष्ठोपललोष्टवस्त्रादिभिः शीतोदकसंस्पर्शनाद्वा कन्दाः परिवृद्धिमासादयन्ति, तान्यर्शांसीत्याचक्षते ॥ ४ ॥**

**नि० सं०**-अर्शसां हेतून् संप्राप्तिं च दर्शयन्नाह—तत्रेत्यादि । प्रकुपिता दोषा मांसप्ररोहाञ्जनयन्तीति संबन्धः । अनात्मवताम् अजितेन्द्रियाणाम् । यथोक्तैः प्रकोपणैर्बलवद्विग्रहादिक्रोधशोकादिदिवास्वप्नादिभिः । विरुद्धं बहुधा हिताहितीयोक्तम् । स्त्रीप्रसङ्ग इत्यत्र प्रशब्देनात्यन्तसक्तिः प्रतिपाद्यते । 'गुदपार्ष्णिसमायोगः प्राहुरुत्कटुकासनम्', 'उकुडु' इति लोके । अश्वादीनां पृष्ठेन गमनं पृष्ठयानम् । वेगविधारणशब्देन वातविण्मूत्रादीनां वेगधारणम् । विरुद्धाशनशब्देन गुरुशीताभिष्यन्दिविदाह्यसात्म्यप्रमिताशनादीनि गृह्यन्ते । विशेषैर्भेदैः । तेषां निदानमभिधाय संप्राप्तिमाह—यथोक्तमित्यादि । प्रसृता इति 'किण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति' (सू. अ. २१) इत्यादिक्रमेण प्रसृताः । प्रधानधमनीः पुरीषवाहिनीः । अनु पश्चात्, प्रपद्य प्राप्य । गुदवलीरिति वलिस्त्वक्संकोचः । मन्दाग्नेर्विशेषतोऽतिशयेन मांसप्ररोहाञ्जनयन्तीति संबन्धः । तथा तृणेत्यादि । परिवृद्धिमासादयन्ति प्राप्नुवन्तीत्यर्थः । आचक्षत इति 'पूर्वाचार्या' इत्यध्याहारः ॥ ४ ॥

अर्शसां हेतूनतीतावेक्षणेन निर्दिशन्नाह—यथोक्तैः प्रकोपणैरित्यादि । प्रकोपयन्तीति प्रकोपणानि वातादिदोषाणां संचयहेतवः प्रकोपहेतवश्च, दोषाणामसंचितानां च प्रकोपाभावात् । यथोक्तैरिति पदार्थानतिवृत्तावव्ययीभावः । "तृतीयासप्तम्योर्बहुलम्" (पा. अ.२।४।८४) इति तृतीया, बहुवचनस्याभावाभावः । यथोक्तप्रकारमनुवृत्तिः । अथवा वाक्यमेवैतत् येन प्रकारेणोक्तैः । तत्र संचयहेतवः ऋतुचर्योदिताः, प्रकोपहेतवो व्रणप्रश्नोदिता बलवद्विग्रहादयः । केचिद्व्याधिहेतूनपि विरुद्धाध्यशनस्त्रीसंगोत्कटकासनादीन् पठन्ति । एकैकश इति वीप्सायां शस्प्रत्ययः । एके 'द्विशः' इति न पठन्ति । शोणितस्य च प्राधान्यार्थं पृथक् शोणितग्रहणं; तदुक्तं व्रणप्रश्नस्य द्वितीये दर्शने—"तदेभिरेव शोणितचतुर्थैः" (सू. अ. २१) इति, यदुक्तं पूर्वं—दोषा अपि स्वस्था धातवो दधतीति कृत्वा; यदाह चरकः—"विकारो धातुवैषम्यम्" (च. सू. अ.) इति, धातुवैषम्यमिति दोषधातुमलवैषम्यमित्यर्थः । वृद्धिक्षयाभ्यामस्वस्था धातवोऽपि दोषाः; यदाह चरकः—"किंचिद्दोषप्रशमनं" (च. सू. अ. १) इति; दुष्टवातादिधातुमलप्रशमनमित्यर्थः । दोषशब्दो दुष्टेषु धातुष्वपि वर्तते, तदयुक्तमेव "अत्रैतावता शोणितस्यैकस्यैव दोषत्वमुच्यते किं तर्हि न रसादीनामपि; व्रणप्रश्ने तु व्रणे शोणितस्य प्राधान्यार्थं हेत्वादिषु पृथग्ग्रहणम्" इति । तथा व्याधिसमुद्देशीये "दोषदूषितेष्वत्यर्थं धातुषु संज्ञा क्रियते रसजोऽयं रक्तजोऽयम्" (सू. अ. २४) इत्यादि । अतोऽत्र शोणितस्य सामान्ये धातुत्वे दोषत्वमपीति विशेषेण शोणितस्य दोषवचनं सहेतुकमेवेति । तेषामिदानीं प्रसरपूर्वकस्थानसंश्रयलक्षणां संप्राप्तिं दर्शयन्नाह—यथोक्तं प्रसृता इत्यादि । यथोक्तमिति उक्तप्रकारानतिक्रमेण प्रसृताः । अधोगमनादधोजातानन्यान् विकारान् कुतो न कुर्वन्तीत्याह—प्रधानधमनीम(र)नुसृत्येति । प्रधानमनीमि(रि)ति "अधोगतास्तु वातमूत्रपुरीषशुक्रार्तवादीन्यधो वहन्ति । तासु पित्ताशयमभिप्रपन्नास्तत्रस्थमन्नपानरसमभिविपक्वमौष्ण्याद्विवेचयन्त्योऽभिवहन्त्यः शरीरं तर्पयन्ति, अर्पयन्ति चोर्ध्वगानां तिर्यगाणां च, रसस्थानं चाभिपूरयन्ति; आमपक्वाशयान्तरं च त्रिधा जायन्ते" (शा. अ. ९) । प्रधानग्रहणमप्रधानां निरस्यति । अधोगत्वेऽपि बस्त्यादिरोगं निरस्यन्नाह—गुदमागम्येति । तत्रापि कुतो न

भगन्दरवद्गुदगुदभ्रंशादीन् कुर्वन्तीत्याह—विशेषतो मन्दाग्नेरिति। मन्दाग्नेर्विशेषादिति समानाधिकरणे पञ्चमी। मन्दाग्नेर्विशेषतोऽर्शांसि जनयन्ति। केचिद्दोषजानामेव तृणादीन् परिवृद्धिहेतूनाहुः। पठन्ति च—'तृणलोष्टोपलवस्त्रादिशीतोदकसंस्पर्शाद्वृद्धिमासादयन्ति, तान्यर्शांसीत्याचक्षते'। इतिशब्देनात्र शैलीपरिभाषितत्वमर्शसां द्योतयति। यदाह चरकः—"केचिद्भूयांसमेव क्षेत्रमुपदिशन्त्यर्शसां; तद्यथा—शिश्नमपत्यपथमित्यादि। अधिमांससंज्ञ एषः। गुदवलिजानां त्वर्शांसीति तन्त्रे संज्ञा" (च. चि. अ. १४) इति। अन्ये तु विशेषतो गुदमेढ्गास्वर्शांस्येव जनयन्ति॥ ४॥

**तत्र स्थूलान्त्रप्रतिबद्धमर्धपञ्चाङ्गुलं गुदमाहुः, तस्मिन् वलयस्तिस्रोऽध्यर्धाङ्गुलान्तरसंभूताः प्रवाहणी विसर्जनी संवरणी चेति चतुरङ्गुलायताः; सर्वास्तिर्यगेकाङ्गुलोच्छ्रिताः॥ ५॥**
**शङ्खावर्तनिभाश्चापि उपर्युपरि संस्थिताः॥**
**गजतालुनिभाश्चापि वर्णतः संप्रकीर्तिताः॥**
**रोमान्तेभ्यो यवाध्यर्धो गुदौष्ठः परिकीर्तितः॥ ६॥**

**नि० सं०**-इदानीं गुदं गुदवलीश्च विवृण्वन्नाह—तत्रेत्यादि। स्थूलान्त्रं कव्यन्त्रं 'गुदान्त्रं' इति प्रसिद्धम्। अर्धपञ्चाङ्गुलमिति अर्धपञ्चममङ्गुलं यस्मिन् तत्तथा, एतेन सार्धचतुरङ्गुलप्रमाणं गुदमित्यर्थः। अध्यर्धाङ्गुलान्तरसंभूता इति सार्धैकाङ्गुलान्तरसंजाताः। तत्रोपरितनं वलिद्वयं शङ्खावर्तनिभं प्रत्येकमन्तरेण सह सार्धैकाङ्गुलं, प्रथमा तु वलिरन्तरेण विनैकाङ्गुलोच्छ्राया, अर्धाङ्गुलस्तु गुदौष्ठ ईदृशं बोद्धव्यम्। अत एव 'प्रथमा तु गुदौष्ठादङ्गुलमात्रे' इत्यग्रे वक्ष्यति। तासां नामान्याह—प्रवाहणीत्यादि। प्रवाहयतीति प्रवाहणी, विसृजतीति विसर्जनी, संवृणोतीति संवरणी। गुदौष्ठप्रमाणमाह-रोमान्तेभ्य इत्यादि। रोमान्तेभ्यो रोमप्रान्तेभ्यः रोममालिकायाः। यवाध्यर्धः सार्धो यवः, अर्धाङ्गुलप्रमाण इत्यर्थः, अङ्गुलस्य त्रियवप्रमाणत्वात्॥ ५॥ ६॥

**प्रथमा तु गुदौष्ठादङ्गुलमात्रे॥ ७॥**

**नि० सं०**-प्रथमा वलिर्गुदौष्ठात् कियद्दूरे भवतीत्याह—प्रथमेत्यादि। प्रथमा 'वलिः' इति शेषः॥ ७॥

**न्या०च०**-तत्रान्त्रगुदाङ्गुलिवलीश्चापि विवृण्वन्नाह—तत्र स्थूलान्त्रप्रतिबद्धमित्यादि। प्रवाहणीति प्रपूर्वात् 'वह' प्रयत्ने, इत्यस्मात् कर्तरि ण्वुट्। विसृजतीति विसर्जनी। संवृणोतीति संवरणी। तासु का किं प्रमाणेति दर्शयन्नाह—तत्र रोमान्तेभ्य इत्यादि। यवाध्यर्धः सार्धयवः। एतेन त्रियवोऽङ्गुलः, सार्धेन यवेनार्धाङ्गुलत्वात्। तत्र भालुकिः—"तस्य वलीरोममालिका, तस्या उपर्यध्यर्धयवमात्रो गुदौष्ठः, तस्मादूर्ध्वमङ्गुलमात्रा प्रथमा, द्वितीयाऽध्यर्धमङ्गुला, तृतीयाऽपि तथैव" इति। भोजेऽपि—"रोमान्तेभ्यो यवाध्यर्धं गुदौष्ठं परिचक्षते। गुदौष्ठादङ्गुलं चैव प्रथमां तु वलिं विदुः"—इति। तत्र गुदौष्ठादर्धाङ्गुलमेव गुदौष्ठेऽर्शसां संभव इति॥ ५-७॥

**तेषां तु भविष्यतां पूर्वरूपाणि-अन्नेऽश्रद्धा कृच्छ्रात् पक्तिरम्लीका परिदाहो विष्टम्भः पिपासा सक्थिसदनमाटोपः कार्श्यमुद्गारबाहुल्यमक्ष्णोः श्वयथुरन्त्रकूजनं गुदपरिकर्तनमाशङ्का पाण्डुरोगग्रहणीदोषशोषाणां कासश्वासौ बलहानिर्भ्रमस्तन्द्रा निद्रेन्द्रियदौर्बल्यं च॥ ८॥**

**नि० सं०**-तेषामित्यादि। भविष्यतां भवितुकामानाम्। अम्लीका अम्लोद्गारः। सक्थिसदनम् ऊरुग्लानिः, स्फुटनमित्येके। आटोप आध्मानम्। पाण्डुरोगादीनामाशङ्का विकल्पः। कासश्वासौ भ्रमस्तन्द्रा निद्रेन्द्रियदौर्बल्यं च 'जायते' इति शेषः॥ ८॥

**न्या० च०**-स्थानसंश्रये संप्राप्तिरूपे पूर्वरूपं दर्शयन्नाह—तेषां तु भविष्यतामित्यादि। इन्द्रियदौर्बल्यमिति चक्षुराद्यधिष्ठितदोषेण तच्छक्तिव्याघातादशक्तिपूर्वकरूपादिग्रहणम्॥ ८॥

**जातेष्वेतान्येव लक्षणानि प्रव्यक्ततराणि भवन्ति॥ ९॥**

**नि० सं०**-तेषां सामान्यरूपमाह—जातेष्वित्यादि। एतानि पूर्वोक्तानि॥ ९॥

**तत्र मारुतात् परिशुष्कारुणविवर्णानि विषममध्यानि कदम्बपुष्पतुण्डिकेरीनाडीमुकुलसूचीमुखाकृतीनि च भवन्ति; तैरुपद्रुतः सशूलं संहतमुपवेश्यते, कटीपृष्ठपार्श्वमेढ्गुदनाभिप्रदेशेषु चास्य वेदना भवन्ति, गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्येव भवन्ति, कृष्णत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति॥ १०॥**

**नि० सं०**-विशिष्टं रूपमाह—तत्रेत्यादि। परिशुष्काणि अनास्रावीणि। अरुणानि ईषद्रक्तानि। विवर्णानि विविधवर्णानि। विषममध्यानि निम्नोन्नतमध्यानि, केचिदत्र 'विषमध्यामानि' इति पठन्ति, व्याख्यानयन्ति च—विषमाणि निम्नोन्नतत्वेन, ध्यामानि दग्धेष्टिकादिवस्तुवर्णानि। तुण्डिकेरी वनकार्पासिका, तत्पुष्पाकृतीनि। अन्ये त्वत्र "तुण्डिकेरीनाडीमुकुलसूचीमुखसदृशानि भवन्ति" इति पठन्ति, व्याख्यानयन्ति च—तुण्डि-

१ 'तदस्त्यधिमांसदेशतया' च इति वर्तमानचरकपुस्तके पाठः। २ 'अत्र चतुरङ्गुलायता इति संकुचितावस्थायामित्येवावधेयं, अन्यथा पुंसां नारीणां च यथाक्रममुपदेक्ष्यमाणं पञ्चषडङ्गुलपरिणाहमर्शोयन्त्रमनुपपन्नं स्यात्, स्रोतःप्रमाणापेक्षया स्थूलतरत्वात्' इति हाराणचन्द्रः। 'चतुरङ्गुलाः, ताः सर्वाः' इति पा०।

१ 'ग्रणीदोषोदराणां' इति पा०। २ 'नाडीमुख०' इति पा०।

केरी बिम्बी, तस्या नाडी नालिका; मुकुलं पुष्पमुकुलं; सूची सीवनद्रव्यम्; एषां मुखसदृशानि भवन्ति । उपद्रुतः अभिभूतः। संहतं घनम् । उपवेश्यते विट्सर्गं कार्यते । गुल्मादीनि चास्य तन्निमित्तानीत्युपद्रवकथनम् ॥ १० ॥

**न्या० च०**–ततो रूपं दर्शयन्नाह—तत्र मारुतादित्यादि । तत्र 'अर्शांसि नाम जायन्ते नासन्निपतितैस्त्रिभिः' इति सर्वेषामेव (सर्वजत्वं) उत्कर्षतस्त्वेकदोषजत्वम्, उक्तमेव तदसकृत् "द्रव्यमेकरसं नास्ति, न रोगोऽप्येकदोषजः । योऽधिकस्तेन निर्देशः क्रियते रसदोषयोः" इति । परिशुष्कारुणवर्णानि परितः शुष्काण्यनास्राविणीत्यर्थः । कफजान्यपि 'न भिद्यन्ते न स्रवन्ति च' इति वचनाच्छेषाणि स्रवन्त्येव । विषममध्यानि विषमो निम्नोन्नतत्वेन मध्यो भागो येषां तानि । विवर्णानि दग्धेष्टकादिवस्तुवर्णानि । कदम्बपुष्पाकृतीनीति कदम्बो वृक्षकदम्बः, तस्य पुष्पं यथा केसरकण्टकेन निरन्तरं परिपुटितमिव तथाऽर्शांस्यपि निरन्तरत्वक्परिपुटनेन विषमविसृतानि । तुण्डिकेरी बिम्बी, तस्या नाडी नालिका, मुकुलं पुष्पमुकुलं, सूची सेवनद्रव्यम्, एषां मुखाकृतिसदृशानीति अनेन प्रतनुमुखानीत्युक्तम् । गुल्मादीनि चास्य तन्निमित्तानीत्युपद्रवकथनम् । कृष्णशब्दस्त्वगादिभिर्वर्णान्तैः सह प्रत्येकमभिसंबध्यते । एवं पित्तजेऽपि पीतशब्दः, एवं श्वेतशब्दः श्लेष्मजेषु ॥ १० ॥

**पित्तान्नीलाग्राणि तनूनि विसर्पीणि पीतावभासानि यकृत्प्रकाशानि शुकजिह्वासंस्थानानि यवमध्यानि जलौकोवक्त्रसदृशानि प्रक्लिन्नानि च भवन्ति; तैरुपद्रुतः सदाहं सरुधिरमतिसार्यते, ज्वरदाहपिपासामूर्च्छाश्चास्योपद्रवा भवन्ति, पीतत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति॥ ११ ॥**

**नि० सं०**–पित्तादित्यादि । विसर्पीणि प्रसरणशीलानि । संस्थानमाकारः । यवमध्यानीति पीनमध्यानि मूलाग्रयोस्तनूनि । प्रक्लिन्नानि क्लेदस्राविणि ॥ ११ ॥

**न्या० च०**–पित्तजानि यवमध्यानीति पीनमध्यानि । शुकजिह्वासंस्थानानि शुकजिह्वाग्रतनूनि । जलौकोवक्त्रसदृशानि भिन्नमुखत्वेन सूक्ष्मरन्ध्रवन्मुखानि । प्रक्लिन्नानि क्लेदस्राविणि ॥ ११ ॥

**श्लेष्मजानि श्वेतानि महामूलानि स्थिराणि वृत्तानि स्निग्धानि पाण्डूनि करीरपनसास्थिगोस्तनाकाराणि, न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि च भवन्ति; तैरुपद्रुतः सश्लेष्माणमनल्पं मांसधावनप्रकाशमतिसार्यते, शोफशीतज्वरारोचकाविपाकशिरोगौरवाणि चास्य तन्निमित्तान्येव भवन्ति, शुक्लत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ १२ ॥**

**नि० सं०**–श्लेष्मजानीत्यादि । स्थिराणि कठिनानि । पाण्डूनि धूसराणि । करीरो मरुदेशातिप्रवृद्धो वृक्षविशेषः; पनसो बहिःकण्टकिफलः 'कटहल' इति लोके, तस्य फलसदृशानि । अनल्पं बहु । शीतज्वरः शीतप्रधानज्वरः ॥ १२ ॥

**न्या० च०**–कफजानि महामूलानि न पित्तजवत्तनुमूलानि । स्थिराणि कठिनानि । न भिद्यन्ते न स्रवन्ति रक्तजवत् । मांसधावनं सान्द्रमांसक्षालनोदकं, तत्प्रकाशं तत्सदृशम् । शीतज्वरः शीतप्रधानो ज्वरः ॥ १२ ॥

**रक्तजानि न्यग्रोधप्ररोहविद्रुमकाकणन्तिकाफल[1]सदृशानि पित्तलक्षणानि च, यदाऽवगाढपुरीषपीडितानि भवन्ति तदाऽत्यर्थं दुष्टमनल्पमसृक् सहसा विसृजन्ति, तस्य चातिप्रवृत्तौ शोणितातियोगोपद्रवा भवन्ति ॥ १३ ॥**

**नि० सं०**–रक्तजानीत्यादि । न्यग्रोधप्ररोहो वटप्ररोहः, विद्रुमः प्रवालः, काकणन्तिका गुञ्जा 'चिरिहिण्टिका' इति लोके, काकादनीत्यपरे । चकारेणानुबन्धभूतवातकफरूपमनुक्तमपि समुच्चीयते । शोणितातियोगोपद्रवा आक्षेपकादयः ॥ १३ ॥

**न्या० च०**–रक्तजानीत्यादि । न्यग्रोधो वटः, तस्य प्ररोहः; एषामन्यतमवर्णसंस्थानानि एकतमवर्णानि, एकतमसंस्थानानि । पित्तलक्षणानि चेति आग्नेयत्वे रक्तपित्तस्य चैकत्वात् । चकारेणानुबन्धभूतवातकफरूपमनुक्तमपि समुच्चीयते । तदुक्तं रक्तार्शःसु चरके—"तत्रानुबन्धो द्विविधः श्लेष्मणो मारुतस्य च । विड् भवेत् कठिनं रूक्षं" (च. चि. अ. १४) इत्यादि । यवरूपमनुक्तनिर्दिष्टं द्रष्टव्यम् । यवमध्यादयो धर्माः सविशेषणाश्चातिसारज्वरादयश्चोपद्रवा अतिदेशेनैव निर्दिष्टा द्रष्टव्याः । अत्यर्थदुष्टमनुबन्धभूतवातादिदोषदूषणकृतकृष्णादिवर्णम् । शोणितातियोगोपद्रवा आक्षेपकादयः ॥ १३ ॥

**सन्निपातजानि सर्वदोषलक्षणयुक्तानि[2] ॥ १४ ॥**

**नि० सं०**–सर्वदोषलक्षणयुक्तानीति "सर्वेषां चार्शसां यानि लक्षणानि" इति **जेज्झटः; गयदासस्तु** 'सन्निपातजानि सर्वलक्षणानि' इति पठति, व्याख्यानयति च–"सर्वेषां वातादीनां लक्षणानि स्वभावकर्मभूतानि येषु तानि तथा" इति ॥ १४ ॥

**न्या० च०**–सन्निपातजानि सर्वलक्षणानीति नात्र सर्वेषां वातादीनां लक्षणानि, एवमसंदेहार्थं 'त्रिदोषलिङ्गानि' इत्येवं ब्रूयात्; किञ्च 'समुदायिभ्योऽनन्यः समुदायः' इत्यनेन न्यायेन संख्याभेदश्च न प्राप्नोति, संख्याभेदहेतोर्वातादेः कारणस्य लक्षणभूतत्वेन धर्माणामप्यभेदात् । भेदो हि भेदवतां कारणभेदाद्विरुद्धधर्माध्यासाच्च । तेन सर्वेषां वातादीनां लक्षणानि स्वभावकर्मभूतानि येषु तानि सह-

१ '°फलान्यतमवर्णसंस्थानानि' इति गयदाससंमतः पाठः ।
२ 'सर्वलक्षणानि युक्तानि' इति गयदाससंमतः पाठः स्यात् ।

जानि । यदाह—तेषां दोषत एव प्रसाधनमिति । युक्तानि समाहितानि, 'युज' समाधौ इत्यस्मात् प्रयोगः । अत्रैव चरकः—"सर्वो हेतुस्त्रिदोषाणां लक्षणं सहजैः समम्"—(च. चि. अ. १४) इति । उपद्रवा अप्येषां सहजानामिव, अत्रापि तेषां सद्भावात्, अन्यथा लक्षणसामान्यं न स्यात् । उपद्रवाणामपि हि परिच्छेदहेतुत्वाल्लक्षणानीव न तु लक्षणान्येव, अत्रापि तेषां सद्भावात्; अत एव 'तैरुपद्रुतः' इति लक्षणेभ्यः पृथगुपादानमुपद्रवाणाम् ॥ १४ ॥

**सहजानि दुष्टशोणितशुक्रनिमित्तानि, तेषां दोषत एव प्रसाधनं कर्तव्यं, विशेषतश्चैतानि दुर्दर्शनानि परुषाणि पांसूनि[1] दारुणान्यन्तर्मुखानि; तैरुपद्रुतः कृशोऽल्पभुक् सिरासन्ततगात्रोऽल्पप्रजः क्षीणरेताः क्षामस्वरः क्रोधनोऽल्पाग्निप्राणः[2] परमलसश्च, तथा घ्राणशिरोऽक्षिनासाश्रवणरोगी, सततमन्त्रकूजाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते ॥ १५ ॥**

**नि० सं०**-शरीरेण सह जातानामर्शसां दोषेभ्यो भिन्नं हेतुं दर्शयन्नाह—सहजानीत्यादि । दुष्टशोणितशुक्रनिमित्तानीति गर्भगुदारम्भकमात्रं बीजं दुष्टं न सर्वं, सर्वदुष्टत्वे हि प्रजोत्पत्तिरेव न स्यात् । 'तेषां दोषत एव प्रसाधनं कर्तव्यमिति येन दोषेण यैस्य[3] शुक्रशोणितं दूषितं भवेत्तस्य दोषस्य लक्षणवर्णवेदनाकृतिभिः प्रसाधनं विज्ञानम्' इत्येके; अन्ये तु 'दोषत इति दोषलिङ्गं समीक्ष्य प्रसाधनं चिकित्सा' इत्याहुः । दुर्दर्शनानि दुःखेन दृश्यन्ते, अन्तर्विद्रधिवदित्यर्थः । पांसूनि धूसराणि । दारुणानि अतिदुःखकराणि ॥ १५ ॥

**न्या० च०**-शरीरेण सहजातानां दोषेभ्यो भिन्नं हेतुं दर्शयन्नाह—सहजानीत्यादि । गुदवल्यारम्भकदुष्टशुक्रशोणितभागबीजानीत्यर्थः । यदाह चरकः—"तत्र बीजे गुदवलिबीजभाग उपतप्तः सहजानामर्शसां हेतुः" (च. चि. अ. १४) इति । अत एव जन्मन्यप्रतिबन्धः, अन्यथा कथमेतच्छुक्रशोणितं सकलावयवदुष्टं गर्भजननायालं स्यात् । अन्ये पुनराहुः—"अविशिष्टदुष्टशोणितवचनेन समुदायदुष्टिरभिप्रेता । विशेषेण तु गुदवलीबीजभागे एव, न च सर्वदुष्टीनां सर्वोपघातशक्तयः । एवं हि सर्वाङ्गगतदोषमधुमेहिशोषप्रभृतीनामपत्यानि न स्युरेव···तत्रैवं "जातः प्रमेही मधुमेहिना वा" (च. चि. अ. ६) इति चरकवचनात् । मधुमेहिनश्च सर्वाङ्गदुष्टिः; यदुक्तं—"कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः । अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः" (नि. अ. ७) इति । न च सर्वाः सर्वाङ्गगतदुष्टयः पुंसामपत्यविघातकाः, वातादिप्रकृतिष्वपि सर्वाङ्गारम्भकस्य बीजस्य वातादिदुष्टावप्यपत्यदर्शनात् । तत्र च सकलमेव दुष्टं शुक्रशोणितं, दुष्टवातादिप्रकृतिकानां स्फुटितकरचरणादेरूक्षाल्पश्मश्रुकेशादेश्च सर्वाङ्गविकारस्योपलम्भात् । सहजार्शःसु न सर्वाङ्गविकारोपलम्भ इति चेत्; न, "कृशः सिरासन्ततगात्रः क्षीणरेता" इति रसादिशुक्रान्तधातुक्षयात्, तथा 'घ्राणास्यशिरोक्षिश्रवणरोगी' तथा 'क्षामस्वर' इत्यादिना सर्वाङ्गविकारोपलम्भात् । तथा चरकेऽपि—"क्षामभिन्नसक्तजर्जरस्वरः" (च. चि. अ. १४) इति । अनेन सकलविकलत्वेनोपलम्भः । चरके 'क्रोधनः' इत्यनेन, स्वतन्त्रे 'प्रध्यानपरः' इत्यनेन च चित्तचेष्टाविकृतिः । 'परमलसश्च' इति कायचेष्टाविकृतिः । तदेवं सकलगात्रावयवगतैव सहजार्शःस्वल्पशुक्रशोणितयोर्दुष्टिरस्त्येव, विशेषेण तु गुदवलिबीजभागे" इति । तेषां लिङ्गं चिकित्सितोपयोगि दर्शयन्नाह—तेषां दोषत एवेत्यादि । येन दोषेण शुक्रशोणितगेन गुदवलिभागो दूषितस्तस्य दोषस्य स्वभावकार्यभूतवर्णनिदानाकृतिभिः प्रसाधनं विज्ञानमित्येके । अन्ये तु "दोषत इति ल्यब्लोपे पञ्चमी, तेन दोषलिङ्गं समीक्ष्य प्रसाधनं चिकित्सा" इत्याहुः, लिङ्गज्ञानस्य चिकित्सार्थत्वादेव । इदानीं विकृतिविषमसमवायेन दोषदूष्यराशेरन्यत्वाद्विशिष्टमप्यत्र लिङ्गं दर्शयन्नाह—विशेषतो दुर्दर्शनानीत्यादि । सामान्यतः सर्वार्शांसि वातादिवर्णवेदनासंस्थानादिसमानानि विशेषात् पुनर्दुर्दर्शनादीनि । सहजत्वेन विद्रधिवन्मांसाद्यन्तरवि(:प्र)शिष्टत्वात् पाय्वन्तर्गतानि दुःखेन दृश्यन्ते । अतः स्पर्शसुखानीति । भेदाश्रावबाधरो येषां (?); भेदस्रावे चात्र कथमिति चेत् वातजेषु 'परिशुष्काणि' इति विशेषणात्, कफजेषु 'नावभिद्यन्ते न स्रवन्ति' इति वचनाच्छेषेष्वार्द्रत्वं भेदस्रावौ चावगन्तव्यौ । तेन सर्वेषामेवापाकित्वं, तदेव कथमिति चेत्? मेदोबाहुल्यात्; यदुक्तं चरके—"तेषां पुनरधिष्ठानं मेदो मांसं त्वक् च" (च. चि. अ. १४) इति । रक्तजानामाग्नेयत्वेन पाक इति चेत्? न, रक्तार्बुदवदत्रापि मेदसोऽतिरेकात् ॥ १५ ॥

**भवति चात्र—**

**बाह्यमध्यवलिस्थानां प्रतिकुर्याद्भिषग्वरः ॥**
**अन्तर्वलिसमुत्थानां प्रत्याख्यायाचरेत् क्रियाम् १६**

**नि० सं०**-स्थानाश्रयं साध्यादित्वं दर्शयन्नाह—भवति चात्रेत्यादि । अन्तर्वलिः अभ्यन्तरवलिः । प्रत्याख्याय असाध्यान्येतान्यर्शांसीति निराकृत्य ॥ १६ ॥

**न्या० च०**-तत्रार्शसां चतुर्विधः साध्ययाप्यत्वाद्युपाधिभेदः—स्थानं, दोषाः, जन्म, कालश्चेति । तत्र स्थानं बाह्यादिवलिः, दोषाः—एकद्वित्रिदोषजादि, जन्म तु सहजादि; कालः पुनः परिसंवत्सरादि । उपद्रवासाध्यताऽवारणीये—"तृष्णारोचकमूर्च्छार्तं" (सू. अ. ३३) इत्यादि । तत्र स्थानाश्रयं साध्यत्वं दर्शयन्नाह—बाह्यमध्यवलिस्थानामित्यादि । तत्र बाह्यमध्यवलिजानां गुदमर्मप्रत्यासन्नत्वात् कृच्छ्र-

---

१ 'पाण्डूनि' इति पा० । २ 'अल्पाग्निः' इति पा० । ३ 'यत्' इति पा० ।

साध्यता द्विदोषजत्वाच्च; अभ्यन्तरवलिजानां त्वसाध्यता गुदमर्मप्रत्यासन्नत्वात् त्रिदोषजत्वाच्चेति चरकाशयः ॥ १६ ॥

**प्रकुपितास्तु दोषा मेढ्रमभिप्रपन्ना मांसशोणिते प्रदूष्य कण्डूं जनयन्ति, ततः कण्डूयनात् क्षतं समुपजायते, तस्मिंश्च क्षते दुष्टमांसजाः प्ररोहाः पिच्छिलरुधिरस्राविणो जायन्ते कूर्चकिनोऽभ्यन्तरमुपरिष्टाद्वा, ते तु शेफो विनाशयन्त्युपघ्नन्ति च पुंस्त्वं; योनिमभिप्रपन्नाः सुकुमारान् दुर्गन्धान् पिच्छिलरुधिरस्राविणश्छत्राकारान् करीराञ्जनयन्ति, ते तु योनिमुपघ्नन्त्यार्तवं च; नाभिमभिप्रपन्नाः सुकुमारान् दुर्गन्धान् पिच्छिलान् गण्डूपदमुखसदृशान् करीराञ्जनयन्ति; त एवोर्ध्वमागताः श्रोत्राक्षिघ्राणवदनेष्वर्शांस्युपनिर्वर्तयन्ति; तत्र कर्णजेषु बाधिर्यं शूलं पूतिकर्णता च, नेत्रजेषु वर्त्मावरोधो वेदना स्रावो दर्शननाशश्च, घ्राणजेषु प्रतिश्यायोऽतिमात्रं क्षवथुः कृच्छ्रोच्छ्वासता पूतिनस्यं सानुनासिकवाक्यत्वं शिरोदुःखं च; वक्त्रजेषु कण्ठौष्ठतालूनामन्यतमस्मिंस्तैर्गद्गदवाक्यता रसाज्ञानं मुखरोगाश्च भवन्ति ॥ १७ ॥**

**नि० सं०**–मेढ्रादिष्वर्शांस्याह—प्रकुपितास्त्वित्यादि । अभिप्रपन्ना आश्रिताः । कूर्चकिनः सूक्ष्मदीर्घाङ्कुरसन्तानिनः । अभ्यन्तरमिति मणौ । उपरिष्टादिति बाह्यचर्मणि । पुंस्त्वं शुक्रं पुंश्चिह्नं च । योनिमभिप्रपन्ना इत्यादि अभिप्रपन्ना दोषा इति संबन्धः । करीरान् अङ्कुरान् । नाभिमभिप्रपन्ना इत्यादि दोषा इत्यत्रापि संबध्यते । त एव दोषा इत्यर्थः । उपनिर्वर्तयन्ति जनयन्तीत्यर्थः । तत्रेत्यादि । वर्त्मावरोध इति वर्त्म अक्षिपुटः । घ्राणजेष्वित्यादि । क्षवथुः छिक्का । वक्त्रजेष्वित्यादि । अन्यतमस्मिन् एकतमस्मिन् स्थाने 'उत्पन्नेष्वर्शःसु' इति शेषः ॥ १७ ॥

**न्या० च०**–स्थानान्तरेष्वप्यन्यैरभ्युपगतमर्शस्त्वमङ्गीकृत्य तत्रार्शांसि निर्दिशन्नाह—प्रकुपितास्त्वित्यादि । अधोगता एव मेढ्रमभिप्रपन्नाः । कूर्चकिनः सूक्ष्मदीर्घाङ्कुरसंतानिनः । अभ्यन्तरमिति मणौ । उपरिष्टादिति बाह्यचर्मणि । उपघ्नन्ति च पुंस्त्वं शुक्रम् । अधोगता एव योनिमभिप्रपन्नाः कन्दाकारान् करीरानुपजनयन्तीति संबन्धः । ऊर्ध्वमागताः 'दोषाः' इति वाक्यशेषः, घ्राणादिष्वर्शांस्युपनयन्ति । चरकेऽप्येतदस्त्यधिष्ठानमर्शसामुक्तं; तथाहि—"केचित्तूर्यांसमेव देशमुपदिशन्त्यर्शसां गलमुखनासाकर्णाक्षिवर्त्मानि त्वक् च" ( च. चि. अ. १४ ) इति ॥ १७ ॥

**व्यानस्तु प्रकुपितः श्लेष्माणं परिगृह्य बहिः स्थिराणि कीलवदर्शांसि निर्वर्तयति, तानि चर्मकीलान्यर्शांसीत्याचक्षते ॥ १८ ॥**

**नि० सं०**–त्वगधिष्ठानमेव चर्मकीलाख्यमर्शो दर्शयन्नाह—व्यानस्त्वित्यादि । बहिः गुदौष्ठाद्बहिः; अन्ये तु 'बहिःशब्देनान्यत्रापि' इति कथयन्ति । कीलवत् शङ्कुतुल्यानीत्यर्थः ॥ १८ ॥

**न्या० च०**–त्वग्गतमेव चर्मकीलाख्यमर्शो दर्शयन्नाह—व्यानस्त्वित्यादि । श्लेष्माणं परिगृह्येति संप्राप्तिः । बहिः त्वचो बहिः, 'बहिर्गुदौष्ठात्' इत्येके । अन्ये तु "व्यानस्य सर्वत्वगधिष्ठानत्वादधोगतदोषकृतार्शस्सु पूर्वमकीर्तनात् पूर्वमधऊर्ध्वगतदोषकृतार्शसां कीर्तितत्वेन तिर्यग्गतदोषारब्धत्वाद् गुदौष्ठाद्बहिरन्यत्रापि" इत्याचक्षते ॥ १८ ॥

**भवन्ति चात्र—**

**तेषु कीलेषु निस्तोदो मारुतेनोपजायते ॥**
**श्लेष्मणा तु सवर्णत्वं ग्रन्थित्वं च विनिर्दिशेत् ॥१९॥**
**पित्तशोणितजं रौक्ष्यं कृष्णत्वं श्लक्ष्णता तथा ॥**
**समुदीर्णखरत्वं च चर्मकीलस्य लक्षणम् ॥ २० ॥**

**नि० सं०**–तेषां चर्मकीलानां दोषलिङ्गमाह—भवन्ति चात्रेत्यादि । सवर्णत्वमिति श्लेष्मणः समानवर्णतेत्यर्थः । ग्रन्थित्वं ग्रन्थिभावः । पित्तेत्यादि । तेषु चर्मकीलेषु । रौक्ष्यमित्यादि पित्तशोणितजं विनिर्दिशेत् । समुदीर्णखरत्वम् अतीव कठिनत्वम् । चर्मकीलस्य लक्षणमिति एतद्वातादिदोषभेदतश्चर्मकीलस्य लक्षणमुक्तम् । केचिच्चर्मकीलानां दोषलिङ्गं न पठन्ति ॥ १९ ॥ २० ॥

**न्या० च०**–तेषां चर्मकीलानां दोषलिङ्गं केचिद्पठीयते—तेषु कीलेषु निस्तोद इत्यादि ॥ १९ ॥ २० ॥

**अर्शसां लक्षणं व्यासादुक्तं सामान्यतस्तु यत् ॥**
**तत्सर्वं प्राग्विनिर्दिष्टात्साधयेद्भिषजां वरः ॥ २१ ॥**

**नि० सं०**–इदानीं सर्वेषामेव मेढ्रादिजानां वातादिलक्षणमतिदेशेन निर्दिशन्नाह—अर्शसामित्यादि । अर्शसां मेढ्रादिजानां वातादिदोषलक्षणं विना यत् संक्षेपतो लक्षणमुक्तं तत् सर्वं साधयेत् जानीयात् चिकित्सेद्वा । कथमित्याह—प्राग्विनिर्दिष्टादिति; "प्राक् पूर्वं व्यासेन प्रत्येकं वातादिजार्शोलक्षणमुक्तं वीक्ष्येत्यर्थः" इति **गयदासाचार्यः**; अन्ये तु "संक्षेपतः षोढा, व्यासतो विस्तरेण, प्राग्विनिर्दिष्टात् पञ्चदशधा प्रसरात् साधयेत्" इति मन्यन्ते ॥ २१ ॥

**न्या० च०**–इदानीं सर्वेषामेव मेढ्रादिजानां चर्मकीलाख्यानां वातादिदोषलक्षणमतिदेशेन निर्दिशन्नाह–दुर्नाम्नामित्यादि । दुर्नाम्नां मेढ्रादिजानामर्शसां संक्षेपतो लक्षणं यदुक्तं वातादिदोषलक्षणं विना सामान्यलक्षणमात्रमभिहितं, तत् साधयेज्जानीयात्, चिकित्सेच्चेति चार्थः । प्राग्विनिर्दिष्टादिति ल्यब्लोपे पञ्चमीति केचित् । प्राग्विनिर्दिष्टादिति सूत्रस्थानोदितं प्रत्येकं वातादिलक्षणं वीक्ष्येत्यर्थः ॥ २१ ॥

---

१ 'इत्युत्तरत्रापि' इति पा० । २ 'स्थानेष्वर्शःसु' इति पा० ।

१ 'कृष्णरक्तत्वं स्निग्धता तथा' इति पा० । २ 'दुर्नाम्नां लक्षणं ह्येतदुक्तं संक्षेपतस्तु' इति गयदाससंमतः पाठः स्यात् ।

**अर्शःसु दृश्यते रूपं यदा [1]दोषद्वयस्य तु ॥**
**संसर्गं तं विजानीयात् संसर्गः स च षड्विधः ॥२२॥**

**नि० सं०**-इदानीं षड्विधेष्वेवार्शःस्वत ऊर्ध्वं संसर्गमौषधकल्पनार्थं दर्शयन्नाह—अर्शःस्वित्यादि । संसर्गः स च षड्विध इति वातपित्ते, वातश्लेष्माणौ, पित्तश्लेष्माणौ, वातशोणिते, पित्तशोणिते श्लेष्मशोणिते, एवं संसर्गः षड्विधः । स च सूत्रस्थानोक्त[2]व्रणवेदनालक्षणादवगन्तव्यः ॥ २२ ॥

**न्या० च०**-इदानीं प्रकृतिसमसमवेतसंयोगेन षड्विधेष्वेवार्शःस्वत ऊर्ध्वं संसर्गमौषधकल्पनार्थं दर्शयन्नाह—अर्शःस्वित्यादि । स चात्रोक्तप्रत्येकवाताद्यर्शसां लिङ्गादवगन्तव्यः ॥ २२ ॥

**त्रिदोषाण्यल्पलिङ्गानि याप्यानि तु विनिर्दिशेत् ॥**
**द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ॥२३॥**
**कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥**
**सन्निपातसमुत्थानि सहजानि तु वर्जयेत् ॥ २४ ॥**

**नि० सं०**-इदानीं याप्यकृच्छ्रसाध्यासाध्यान्यर्शांसि दर्शयन्नाह—त्रिदोषाणीत्यादि । द्वन्द्वजानि द्विदोषोत्थानि, तान्यपि याप्यानीत्यर्थः । परिसंवत्सराणीति परितः संवत्सरमभिव्याप्य स्थितानि कृच्छ्रसाध्यानीत्यर्थः । केचित् 'सन्निपातसमुत्थानि' इत्यादौ कृत्वा पठन्ति; स च पाठः समग्रोऽदर्शनान्न लिखितः ॥ २३ ॥ २४ ॥

**न्या० च०**-इदानीं दोषजन्मकालदेशकृतमसाध्यादिभेदं दर्शयन्नाह—सन्निपातसमुत्थानीत्यादि । जन्मना सह जातानि सहजानि । देशकृतं तु 'द्वितीयायां वलौ यान्याश्रितानि तु । कृच्छ्रसाध्यानि तान्याहुः' इति । परिसंवत्सराणि चेति परितः संवत्सरमभिव्याप्यावस्थितानीति कालकृतं कृच्छ्रत्वम् । त्रिदोषाण्यल्पलिङ्गानि याप्यानीति दोषकृतं याप्यत्वम् ॥ २३ ॥ २४ ॥

**सर्वाः स्युर्वलयो येषां दुर्नामभिरुपद्रुताः ॥**
**तैस्तु प्रतिहतो वायुरपानः सन्निवर्तते ॥ २५ ॥**
**ततो व्यानेन सङ्क्रम्य [3]ज्योतिर्मृद्नाति देहिनाम् ॥२६॥**

**इति सुश्रुतसंहितायां निदानस्थानेऽर्शोनिदानं नाम द्वितीयोऽध्यायः ॥ २ ॥**

**नि सं०**-सर्ववलिव्यापिनामर्शसां पञ्चात्मकस्याप्यग्नेर्महानर्थकरत्वं दर्शयन्नाह—सर्वा इत्यादि । येषां देहिनाम् । दुर्नामभिः अर्शोभिः । तैस्तु अर्शोभिरित्यर्थः । अपानो वायुरिति संबन्धः । सन्निवर्तते स्थितिं बध्नाति न निःसरतीत्यर्थः । सङ्क्रम्य मिलित्वा । ज्योतिः पञ्चात्मकमग्निं, मृद्नाति मन्दीकरोति । अयं चोपद्रवः प्रायेण सहजेष्वर्शःसु ज्ञेयः ॥ २५ ॥ २६ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने द्वितीयोऽध्यायः ॥२॥

**न्या० च०**-इदानीं प्रत्येकं पञ्चात्मकानां वातपित्तकफानां प्रकोपयितृत्वात् पञ्चात्मकस्याग्नेरुपघातकरत्वाच्च महानर्थकरत्वं दर्शयन्नाह—सर्वाः स्युर्वलयो येषामित्यादि । सर्वत्र सर्ववलिव्याप्तिरित्यूर्ध्वमपहतोऽपानः सन्निवर्तते । अत एव पित्तकफाभ्यां पञ्चात्मकाभ्यां सर्वाङ्गगतव्यानेनापि सह संगम्य संगतो भूत्वा ज्योतिः पञ्चात्मकमग्निं मृद्नातीति ॥ २५ ॥ २६ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकायां पञ्जिकायामर्शोनिदानम् ॥ २ ॥

---

## तृतीयोऽध्यायः ।

**अथातोऽश्मरीणां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**नि० सं०**-अथेत्यादि । निदानं हेतुलक्षणनिर्देशः ॥१॥२॥

**न्या० च०**-अथार्शोनिदानानन्तरमश्मरीनिदानारम्भः, वातव्याधावेव 'वातविण्मूत्ररोधिनीम्' ( नि. अ. १ ) इति, अर्शोनिदानेऽर्शसां विड्वातरोधिनामुक्त्या मूत्रनिरोधकमेव व्याधिमवशिष्टत्वादधोगतव्याध्युपक्रमाच्च महाव्याधिसामान्याच्च ॥ १ ॥ २ ॥

**चतस्रोऽश्मर्यो भवन्ति; श्लेष्माधिष्ठानाः; तद्यथा–श्लेष्मणा, वातेन, पित्तेन, शुक्रेण चेति ॥ ३ ॥**

**नि० सं०**-चतस्र इत्यादि । चतस्रोऽश्मर्यो भवन्तीति छेदः । तिस्र एव श्लेष्माधिष्ठानाः, शुक्राश्मरी तु शुक्राधिष्ठाना; अन्ये तु शुक्राश्मर्यपि श्लेष्माधिष्ठानैव, 'शुक्रं तु सौम्यं' ( शा. अ. ३ ) इति वचनात् । श्लेष्माधिष्ठानाः श्लेष्मोपादानकारणाः, श्लेष्माणमुपादाय भवन्तीत्यर्थः । चतस्रोऽश्मर्यो भवन्तीत्यस्य विवरणं कुर्वन्नाह—तद्यथेत्यादि ॥ ३ ॥

**न्या० च०**-चतस्रोऽश्मर्य इति प्रागेव संख्याप्रणयनं संख्याया हेतुलिङ्गचिकित्सोपयोगित्वात् । श्लेष्माधिष्ठानाः श्लेष्मोपादानकारणाः; तदुक्तं—"संहन्त्यापो यथा दिव्या मारुतोऽग्निश्च वैद्युतः । तद्वद्बलासं बस्तिस्थमूष्मा संहन्ति सानिलः ॥" इति; तथा शुक्राश्मर्यां शुक्रमेवोपादानकारणमिति न सर्वाः श्लेष्माधिष्ठानाः; तत्रैके "समुदाये विहितं क्वचिदेकदेशे न वर्तते; यथा "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" (पा० अ० ।६।१।६८) इत्यत्र दीर्घादिति ङ्याप्योरेव विशेषणं न हलः, असंभवात् । तथाऽत्रापि तिसृषु दोषजासु श्लेष्माधिष्ठाना इति विशेषणं

---

१ 'वै दोषयोर्द्वयोः' इति ता. । २ 'सूत्रस्थानोक्तवर्णवेदनालक्षणात्' इति पा० । ३ 'ज्योतिरस्य प्रमर्दति' इति ता. ।

न शुक्राश्मर्याः, असंभवात्'' । अन्ये तु ''साऽपि श्लेष्माधिष्ठानैव, शुक्रं सौम्यं ''( शा. अ. ३ ) इति वचनात्'' । चतस्रोऽश्मर्य इत्यस्य विवरणं कुर्वन्नाह—कफेनेत्यादि । कफस्यात्र प्राधान्यं दर्शयितुं प्रथमं कफेनेति कृतं, कफोपादानकारणत्वात् कफप्राबल्यतैव; अत एवादितस्तिस्रो दोषजाः ॥ ३ ॥

**तत्रासंशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसंपृक्तोऽनुप्रविश्य बस्तिमश्मरीं जनयति ॥ ४ ॥**

**नि० सं०**–तासां संप्राप्तिं दर्शयन्नाह—तत्रेत्यादि । मूत्रसंपृक्तो मूत्रेण सहितः ॥ ४ ॥

**न्या० च०**–तासां स्थानसंश्रयलक्षणां संप्राप्तिं दर्शयन्नाह—तत्रापथ्यकारिणामित्यादि । मूत्रसंपृ(स)क्त इति मूत्रेण सहितः मूत्रेणैव सह प्रवृत्तो न गच्छति ॥ ४ ॥

**तासां पूर्वरूपाणि—ज्वरो बस्तिपीडारोचकौ मूत्रकृच्छ्रं बस्तिशिरोमुष्कशेफसां वेदना कृच्छ्रावसादो बस्तगन्धित्वं मूत्रस्येति ॥ ५ ॥**

**यथास्ववेदनावर्णं दुष्टं सान्द्रमथाविलम् ।**
**पूर्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः ॥ ६ ॥**

**नि० सं०**–तासां पूर्वरूपमाह—तासामित्यादि । बस्तिशिरः मूत्राशयोपरितनो भागः, मुष्कः अण्डं, शेफः पुंश्चिह्नम् । कृच्छ्रावसादो कष्टयुक्ताऽङ्गग्लानिः । बस्तगन्धित्वं बृहत्तमच्छगलगन्धित्वम् । यथास्वं दोषानतिक्रमेण, वेदना वर्णश्च यस्मिन् मूत्रे तत्तथा । दुष्टं वातादिभिः । आविलं कलुषम् । अश्मनः अश्मर्याः ॥ ५ ॥ ६ ॥

**न्या० च०**–स्थानसंश्रयानन्तरं पूर्वरूपं दर्शयन्नाह—तासां पूर्वरूपाणि भविष्यन्तीनामित्यादि । अन्येऽत्र बस्तगन्धित्वं पूर्वरूपे पठन्ति; तत्र बृहत्तमच्छगलस्येव गन्धोऽस्येति उपमानार्थे इन् समासान्तः । अन्ये तु पूर्वरूपेऽमुं श्लोकं पठन्ति—''यथास्ववेदनावर्णं दुष्टं सान्द्रमथाविलम् । पूर्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः'' इति ॥ ५ ॥ ६ ॥

**अथ जातासु नाभिबस्तिसेवनीमेहनेष्वन्यतमस्मिन् मेहतो वेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणं गोमेदकप्रकाशमत्यर्थाविलं ससिकतं**

१ 'तत्रापथ्यसेविनः श्लेष्मा मूत्रेण संसृष्टाऽनुप्रविश्य बस्तिमश्मरीं जनयति' इति ता. । २ 'तत्र ज्वरो बस्तिपीडाऽरोचको मूत्रकृच्छ्रं बस्तिशिरसि वेदना शेफसि मुष्कयोश्च बस्तगन्धि मूत्रं च सामान्यं पूर्वरूपं सर्वासामेव' इति ता. । ३ 'कृच्छ्राज्ज्वरावसादौ' इति हाराणचन्द्रः पठति, 'कृच्छ्रान्मूत्रकृच्छ्राद्धेतोर्बस्तिशिरःप्रभृतीनां वेदनेति संबन्धः' इति च व्याख्यानयति । ४ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते । ५ 'अनाविलं' इति हाराणचन्द्रसंमतः पाठः ।

**विसृजति; धावनलङ्घनप्लवनपृष्ठयानोष्णाध्वगमनैश्चास्य वेदना भवन्ति ॥ ७ ॥**

**नि० सं०**–अथ सर्वासामपि सामान्यं लक्षणमाह—अथेत्यादि । जातास्विति सर्वास्वप्यश्मरीषु । संगो निरोधः । मूत्रविकिरणमिति विकिरणं विक्षेप इतश्चेतश्च गमनम् । गोमेदको मणिः पीतः । ससिकतं वालुकासहितं, विसृजति विमुञ्चति, 'मूत्रं' इति शेषः । लङ्घनं परिखादीनां, प्लवनं प्रतरणम्, उष्णगमनं घर्मगमनम्, अध्वगमनं दीर्घमार्गगमनम् ॥ ७ ॥

**न्या० च०**–अथ जातासु वेदनेति श्लेष्मशोथवातपित्तजनिताः । मूत्रधारासङ्गोऽश्मर्या मूत्रमार्गनिरोधात् । सरुधिरमूत्रताऽश्मर्या मूत्रमार्गस्य क्षतत्वात् । मूत्रविकिरणं तथैव मूत्रमार्गैकदेशनिरोधात् । अश्मनः समानामश्मरीमाहुः । तदुक्तं भोजेन—''कफपित्तानिलाः शुक्रं सिराभिर्बस्तिमागताः । घनतां यान्ति पित्तेन शोष्यमाणाः सवायुना ॥ लिप्यमानाः पुनर्दोषैः संहतानिलदूषिताः । तुल्यतामश्मना यान्ति तस्मात्तामश्मरीं विदुः'' इति ॥ ७ ॥

**तत्र श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपलिप्याधः परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतिघाताद्दाल्यते भिद्यते निस्तुद्यत इव च बस्तिर्गुरुः शीतश्च भवति; अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा वा भवति, तां श्लैष्मिकीमिति विद्यात् ॥ ८ ॥**

**नि० सं०**–इदानीं श्लेष्माद्यश्मरीणां प्रत्येकं विशिष्टलक्षणमाह—तत्रेत्यादि । श्लेष्मलमन्नमभ्यवहरतः पुंसः श्लेष्माश्मरी स्रोतो निरुणद्धीति संबन्धः । उपलिप्य नवघटपङ्कन्यायेन । अधिष्ठाय आश्रित्य । दाल्यते विशीर्यत इव स्फुटतीवेत्यर्थः । भिद्यते विदीर्यत इव । निस्तुद्यते सूचिभिरिव ॥ ८ ॥

**न्या० च०**–अश्मर्याः सामान्यलक्षणमभिधाय दोषेण विशिष्टं दर्शयन्नाह—अत्यर्थश्लेष्मलमित्यादि । अत्यर्थश्लेष्मकारणं समशनाध्यशनादि । उपलिप्य नवघटपङ्कन्यायेन । गुरुत्वादधः परिवृद्धिं प्राप्य कालान्तरेण नवघटपङ्कन्यायेनैव । एवमेव वातपित्ताश्मर्योर्वृद्धिर्यथोक्तशब्देनोक्ता । बस्तिमुखमिति वचनाद्दोषोऽयं गुरुत्वेनाधोगामी बस्तिमुखमधिष्ठाय तिष्ठति । दाल्यते इत्यादाविवशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः ॥ ८ ॥

**पित्तयुतस्तु श्लेष्मा संघातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतीघाताद्दूष्यते चूष्यते दह्यते पच्यत इव बस्तिरुष्णवातश्च भवति; अश्मरी**

१ अयं सामान्यलक्षणपाठस्ताडपत्रपुस्तके न पठ्यते । २ 'तत्रात्यर्थं श्लेष्मलमन्नमभ्यसतः' इति ताडपत्रपुस्तके पाठः ।

**चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति, तां पैत्तिकीमिति विद्यात् ॥ ९ ॥**

**नि० सं०**–पित्तयुतस्त्वित्यादि । पित्तयुतः श्लेष्मा स्रोतो निरुणद्धीति संबन्धः । संघातमुपगम्य काठिन्यं प्राप्येत्यर्थः । तस्य पुरुषस्य । मूत्रप्रतीघातात् मूत्रनिरोधात् । ऊष्यते समीपाग्निनैवोपतप्यते । चूष्यते आकृष्यत इव । दह्यते इव कक्षाग्निनेव । पच्यत इव क्षारेणेव, उत्क्वाथ्यत इवेत्येके । उष्णवात उत्तरतन्त्रे पठितो मूत्ररोगः । सरक्ता ईषद्रक्ता ॥ ९ ॥

**न्या० च०**–पित्ताश्मरीलक्षणे ऊष्यत इति समीपाग्नित इवोपतप्यते । दह्यत इव दह्यते साक्षादग्निनेव । पच्यते क्षारेणेव । उष्णवातश्चास्येति उष्णवातो मूत्राघातपठितः—"व्यायामाध्वातपैः" ( उ. त. अ. ५८ ) इत्यादिना । सरक्ता ईषद्रक्ता, उपसर्जनत्वात् सहार्थस्य, सक्षारमिति यथा ॥ ९ ॥

**वातयुतस्तु श्लेष्मा संघातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतीघातात्तीव्रा वेदना भवति, तदाऽत्यर्थं पीड्यमानो दन्तान् खादति, नाभिं पीडयति, मेढ्रं प्रमृद्नाति, पायुं स्पृशति, विशर्धते, विदहति, वातमूत्रपुरीषाणि कृच्छ्रेण चास्य मेहतो निःसरन्ति; अश्मरी चात्र श्यावा परुषा विषमा खरा कदम्बपुष्पवत्कण्टकाचिता भवति, तां वातिकीमिति विद्यात् ॥ १० ॥**

**नि० सं०**–वातयुतस्त्वित्यादि । अत्रापि पूर्ववत् संबन्धः । दन्तान् खादति परस्परं दन्तपीडनं करोति । विशर्धते गुदेन कुत्सितं शब्दं करोति; केचित् 'विशर्धते' इत्यत्र 'विवर्धते' इति पठन्ति, व्याख्यानयन्ति च—मेढ्रं विमर्दनाद् विवर्धत इत्यर्थः । विदहति विदाहयुक्तं मेढ्रं भवति । मेहतो मुञ्चत इत्यर्थः । खरा कठिना ॥ १० ॥

**न्या० च०**–वातयुक्तस्तु श्लेष्मेत्यादिना वाताश्मरी । विशर्धते गुदेन कुत्सितशब्दं करोति । केचिदिदं न पठन्ति । वातादयश्च प्रमेहतोऽपि कृच्छ्रेण निस्सरन्ति, वातस्यात्यर्थपीडाकारित्वात् ॥ १० ॥

**प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहारप्रियत्वाद्विशेषेण बालानां भवन्ति; तेषामेवाल्पबस्तिकायत्वादनुपचितमांसत्वाच्च बस्तेः सुखग्रहणाहरणा भवन्ति । महतां तु शुक्राश्मरी शुक्रनिमित्ता भवति ॥ ११ ॥**

**नि० सं०**–प्रायेणेत्यादि । प्रायेणैतास्तिस्रोऽश्मर्यो बालानां भवन्तीति संबन्धः । कस्मादित्याह—विशेषेण दिवास्वप्नादिप्रियत्वात्तेषामिति; प्रायोग्रहणाद्यूनामपि बोधयति । तेषामेव बालनाम् । अल्पबस्तिकायत्वादिति अल्पबस्तित्वादल्पकायत्वाच्चेत्यर्थः । अल्पबस्तित्वादिति आयामेनाल्पत्वम्; अनुपचितबस्तिमांसत्वाच्च बस्तेरित्यनेन परिणाहेनाल्पत्वमुक्तम् । सुखग्रहणाहरणा इति सुखेन गृह्यन्ते सुखेनाह्रियन्ते चाश्मर्यः ॥ ११ ॥

**न्या० च०**–तिस्रोऽप्येता बालानामेव, प्रायोग्रहणाद्यूनामपीति बोधयति । तेषामेवाल्पबस्तिकायत्वादिति अल्पबस्तित्वादिति आयामेनाल्पत्वात् । अनुपचितमांसत्वादिति परिणाहेनाल्पत्वात् । सुखग्रहणाहरणाः सुखेन गृह्यन्ते आलभ्यन्ते, सुखेनाह्रियन्ते च । अत्र कर्मणि ल्युट् । महतां तु महाविकारिका यथावदुपचितमांसत्वाद् दुःखग्रहणाहरणाश्च; महतां तु शुक्राश्मरी भवति ॥ ११ ॥

**मैथुनविघातादतिमैथुनाद्वा शुक्रं चलितमनिर्गच्छद्विमार्गगमनादनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति, संहृत्य चोपशोषयति; सा मूत्रमार्गमावृणोति, मूत्रकृच्छ्रं बस्तिवेदनां वृषणयोश्च श्वयथुमापादयति, पीडितमात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते; तां शुक्राश्मरीमिति विद्यात् ॥ १२ ॥**

**नि० सं०**–हेतुसंप्राप्तिलक्षणानि शुक्राश्मर्या दर्शयन्नाह—मैथुनेत्यादि । सा अश्मरी । मैथुनविघातादतिमैथुनाद्वेति हेतुः । शुक्रं चलितमनिर्गच्छदित्यादिसंप्राप्तिः । मूत्रकृच्छ्रं बस्तिवेदनामित्यादि लक्षणम् । मैथुनविघातादिति मैथुनकार्यस्य शुक्रस्य विघातात् । 'अमैथुनात्' इति केचित् पठन्ति; तत्र शुक्रबाहुल्यं शुक्रचलने हेतुः । अनिर्गच्छत् अनिःसरत् । 'अनिर्गच्छन्' इति केचित् पठन्ति; तत्र वायोर्विशेषणम् । विमार्गगमनादनिलोऽभितः संगृह्येति विमार्गगमनात् उन्मार्गगमनात्, अनिलो वायुः, अभित उभयत ऊर्ध्वमधश्चेत्यर्थः, संगृह्य विधार्य, मेढ्रवृषणयोरन्तरे बस्तिद्वारस्याध इत्यर्थः, संहरति वर्तुलीकरोति । वृषणयोश्चेति चकाराद्वङ्क्षणदेशेऽपि, दोषजासु त्वश्मरीषु वृषणशोफो नास्त्येव । प्रविलयमापद्यते अश्मरी निलीयतेऽल्पत्वात्; अन्ये तु पुनः 'अश्मरीकृतो वृषणशोथः प्रविलयमापद्यते' इत्याचक्षते ॥ १२ ॥

**न्या० च०**–मैथुनविघातादिति मैथुनवेगविघातादित्यर्थः । यदुक्तं—"शुक्राश्मरी तस्त्रवणं भवेद्वा ते ते विकारा विहते तु शुक्रे" ( उ. त. ५५ ) इति । 'अमैथुनात्' इति केचित् पठन्ति । तत्र शुक्रबाहुल्यं शुक्रचलनहेतुः । अनिलोऽभिहत उभयत ऊर्ध्वमधश्च संगृह्य विधार्य, विमार्गगमनान्मेढ्रवृषणविहितमार्गागमनात्, अभिहतो मेढ्रवृषणयोश्च, श्वयथुं शुक्रनिरोधेन वृषणयोरापूर्णत्वात्; चकाराद्

१ 'अमांसोपचयाच्च' इति ता. ।

१ 'मैथुनाभिघाताच्छुक्रं' इति ता. । २ 'चलितमनिर्गलत्' इति पा० । ३ 'मूत्रमार्गमावृत्य मूत्रकृच्छ्रं बस्तिशिरसि वेदनां शेफसि मुष्कयोश्च श्वयथुमुत्पादयति' इति ता. ।

वंक्षणदेशेऽपि । दोषजासु पौरुषवृषणयोरुपसर्गेऽश्मर्याः स्थितत्वाद्वृषणशोथो नास्त्येव । पीडितमात्रे च तस्मिन्नवकाशे···। नागार्जुनस्तु पठति—"शर्करा सिकतामेहो भस्माख्योऽश्मरिवैकृतम्"—इति । अश्मरीवैकृतमिति निर्वृत्ताश्मरीविकारा उपद्रवा इत्यर्थः ॥ १२ ॥

भवन्ति चात्र—

**शर्करा सिकता मेहो भस्माख्योऽश्मरिवैकृतम् ॥**

**नि० सं०**-भवन्ति चात्रेत्यादि । भस्माख्य इति मूत्रशुक्रनामा उत्तरतन्त्रे मूत्ररोगः । अश्मरीवैकृतम् अश्मरीविकारा उपद्रवा इत्यर्थः ॥—

**अश्मर्या शर्करा ज्ञेया तुल्यव्यञ्जनवेदना ॥ १३ ॥**
**पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः ॥**
**सा भिन्नमूर्तिर्वातेन शर्करेत्यभिधीयते ॥ १४ ॥**

**नि० सं०**-अश्मर्येत्यादि । अश्मर्या तुल्यव्यञ्जनवेदना शर्करा ज्ञेयेत्यर्थः । पवन इत्यादि । सा अश्मरी यदाऽल्पा स्यात्तदा वातेऽनुगुणे अनुकूले सति निरेति निर्गच्छति ॥ १३ ॥—

**न्या० च०**-अश्मर्या एव प्रकारः शर्करेति दर्शयन्नेके पठन्ति—अश्मर्याः शर्करा ज्ञेयेत्यादि ॥ १३ ॥ १४ ॥

**हृत्पीडा सक्थिसदनं कुक्षिशूलं च वेपथुः ॥**
**तृष्णोर्ध्वगोऽनिलः कार्ष्ण्यं दौर्बल्यं पाण्डुगात्रता १५**
**अरोचकाविपाकौ तु शर्करार्ते भवन्ति च ॥**

**नि० सं०**-शर्करालक्षणमाह—हृत्पीडेत्यादि । सक्थिसदनम् ऊरुग्लानिः ॥ १५ ॥—

**न्या० च०**-केचित्त्वश्मर्या एव शर्करात्वेनावस्थान्तरमापन्नाया लक्षणमभिधीयते—हृत्पीडेत्यादि ॥ १५ ॥

**मूत्रमार्गप्रवृत्ता सा सक्ता कुर्यादुपद्रवान् ॥ १६ ॥**
**दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम् ॥**
**पाण्डुत्वमुष्णवातं च तृष्णां हृत्पीडनं वमिम् ॥१७॥**

**नि० सं०**-अश्मर्या एव मूत्रमार्गगताया लक्षणं निर्दिशन्नाह—मूत्रमार्गेत्यादि । सा अश्मरी । सक्ता अनिर्गता । दौर्बल्यं बलहानिः । सदनम् अङ्गग्लानिः; 'स्फुटनिका' इत्यपरे । कार्श्यं मांसक्षयः ॥ १६ ॥ १७ ॥

**न्या० च०**-अश्मर्या एव मूत्रमार्गमागताया लक्षणं निर्दिशन्नाह—मूत्रमार्गप्रवृत्तेत्यादि ॥ १६ ॥ १७ ॥

**नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम् ॥**
**एकद्वारस्तनुत्वको मध्ये बस्तिरधोमुखः ॥ १८ ॥**
**बस्तिर्बस्तिशिरश्चैव पौरुषं वृषणौ गुदः ॥**
**एकसंबन्धिनो ह्येते गुदास्थिविवराश्रिताः ॥ १९ ॥**
**अलाब्वा इव रूपेण सिरास्नायुपरिग्रहः ॥**
**मूत्राशयो मलाधारः प्राणायतनमुत्तमम् ॥ २० ॥**
**पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः ॥**
**तर्पयन्ति सदा मूत्रं सरितः सागरं यथा ॥ २१ ॥**
**सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः ॥**
**नाडीभिरुपनीतस्य मूत्रस्यामाशयान्तरात् ॥ २२ ॥**
**जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्यते ॥**
**आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्यते नवः ॥२३॥**
**घटो यथा तथा विद्धि बस्तिर्मूत्रेण पूर्यते ॥**

**नि० सं०**-इदानीमश्मर्या एवाधारस्य बस्तेः स्थानसंस्थानद्वाराणि निर्देष्टुमाह—नाभीत्यादि । नाभ्यादीनां मध्ये बस्तिरिति स्थानम् । एकद्वार अधोमुख इत्यनेनोपरि द्वाराभावं सूचयति । तनुत्वक्कः सूक्ष्मत्वक् । तनुत्वक इति वक्ष्यमाणं चालाब्वा इव रूपेणेति संस्थानम् । बस्तिप्रसङ्गाद्बस्तिसन्निहितानां चापरेषां स्थानमाह—बस्तिरित्यादि । पौरुषं मेढ्रम् । पुनर्बस्त्यवयवमाह—अलाब्वा इवेत्यादि । परिग्रह आश्रयः । मूत्राशयपर्यायो मलाधार इति । प्राणानामग्नीषोमादीनाम्, आयतनं स्थानम् । यथा च सर्वदाऽसावक्षीणमूत्रो भवति तथाऽऽह—पक्वाशयगता इत्यादि । ता नाड्यो मूत्रं तर्पयन्ति विवर्धयन्तीत्यर्थः । मूत्रवाहिन्यौ मूलधमन्यौ द्वे, तच्छाखाभूता दशधा शतधा सहस्रधा च विभिद्यन्त इति दर्शयन्नाह—सूक्ष्मत्वादित्यादि । आसां नाडीनाम् । याभिरेवायं सिरास्नायुभिरावृतस्ताभिरेवायं मूत्रेण पूर्यते इति दर्शयन्नाह—नाडीभिरित्यादि । आमाशयान्तरात् आमपक्वाशयान्तरात् । स बस्तिः । निःस्यन्देन उपस्नेहेन, पूर्यते । अधोमुखत्वेन बस्तेरनूर्ध्वमुखस्यापि पूरणमुपमानेनाह—आमुखादित्यादि । न्यस्तो धृतः । विद्धि जानीहि ॥ १८—२३ ॥—

**न्या० च०**-इदानीमश्मर्या एवाधारस्य बस्तेः स्थानसंस्थानद्वाराणि निर्देष्टुमाह—नाभीत्यादि । नाभ्यादीनां मध्ये अधोमुख इति स्थानम् । एकद्वार इति उपरिद्वारासंभवं सूचयति । स्थानप्रतिपादनार्थमेवान्ये पठन्ति—बस्तिर्बस्तिशिरश्चैवेत्यादि । तत्र पौरुषं शुक्रवहनाडी । आकृतिः-अलाब्वाः समसंस्थान इत्यादि । मलाधारो मलिनीकरणान्मला दोषाः । प्राणानामग्नीषोमादीनां चायतनं स्थानम् । याभिरेवायं सिरास्नायुभिरावृतस्ताभिरेवायं मूत्रेण पूर्यते इति दर्शयन्नाह—नाडीभिरुपनीतस्येत्यादि । नाडीभिरिति बहुवचनं प्रधानमूत्रवहनाडीहृदयशाखानामनेकत्वात् । आमाशयान्तरात् आमाशयावकाशात् । मूत्रस्य निःस्यन्देनोपस्नेहेन पूर्यते । आमपक्वाशयस्यापि आमाशयव्यपदेशः, उभयोः स्थानयोर्निःस्यन्दनस्य साम्यात् । केचिदत्र नाडीभिरुपनीतस्यैव भाष्यं पठन्ति—पक्वाशयगतास्तत्रेत्यादि । अधोमुखत्वेन बस्तेरनूर्ध्वमुखस्यापि पूरणमुपमानेनाह—आमुखादित्यादि ॥ १८-२३ ॥

१ 'ज्ञेयेति संबन्धः' इति पा० । २ 'अलाब्वाः समसंस्थानः' इति गयदाससंमतः पाठः ।

१ 'तु ता' इति पा० । २ 'द्वारासंभवं' इति पा० । ३ 'स चाक्षीणमूत्रः' इति पा० ।

**एवमेव प्रवेशेन वातः पित्तं कफोऽपि वा ॥ २४ ॥**
**मूत्रयुक्तमुपस्नेहात् प्रविश्य कुरुतेऽश्मरीम् ॥**

**नि॰ सं॰**–मूत्रप्रवेशतुल्यमेव वातादीनामपि प्रवेशं दर्शयन्नाह—एवमेवेत्यादि । एवमेव प्रवेशेनेति पूर्वोक्तप्रवेशेनेत्यर्थः । उपस्नेहात् समीपक्लेदनात् ॥ २४ ॥—

**अप्सु स्वच्छा(स्था)स्वपि यथा निषिक्तासु नवे घटे ॥**
**कालान्तरेण पङ्कः स्यादश्मरीसंभवस्तथा ॥**
**संहन्त्यापो यथा दिव्या मारुतोऽग्निश्च वैद्युतः ॥२६॥**
**तद्वद्बलासं बस्तिस्थमूष्मा संहन्ति सानिलः ॥**

**नि॰ सं॰**–ननु, द्रवरूपत्वात् सर्वेषां वायोश्चामूर्तत्वात् कथं घनता ? तदाह—अप्स्वित्यादि । निषिक्तासु प्रक्षिप्तासु । पङ्कसमत्वेऽपि कथमश्मना साम्यमित्याह—संहन्तीत्यादि । यथा संहन्ति काठिन्यं करोति वर्षोपलान् करोतीत्यर्थः; कः काठिन्यं करोति ? वायुर्वैद्युतोऽग्निश्च; काः कठिनाः करोति ? आपः जलानि, दिव्या मेघजाः; तथा बलासं श्लेष्माणं बस्तिस्थं संहन्ति कठिनं करोति; कः ? ऊष्मा पित्तमित्यर्थः; कथम्भूतः ? सानिलः सवात इत्यर्थः ॥ २५ ॥ २६ ॥—

**न्या॰ च॰**–मूत्रप्रवेशतुल्यमेव प्रवेशं वातादीनामपि दर्शयन्नाह—एवमेव प्रवेशेनेत्यादि । यथा मूत्रस्य निःस्यन्दरूपेण प्रवेशस्तादृशेनैव प्रवेशेन वातादीनामपि प्रवेशः । मूत्रयुक्तं मूत्रसंपृक्तम् । उपस्नेहात् सूक्ष्मायनैरनुप्रवेशादित्यर्थः । यदुक्तं चरके—"व्यपगतक्षुत्पिपासस्तु गर्भो मातरमाश्रित्य वर्तयत्यात्मानमुपस्नेहोपस्वेदाभ्यां गर्भाशये सदसद्भूताङ्गावयवः" (च. शा. ६) इति । सारभूतेन रसेन सूक्ष्मलोमकूपायनैराप्यायनमुपस्नेहः । उदकादिक्लेदादार्द्रीभावमुपदर्शयति । मूत्रपित्तकफानामनुमार्गप्रवेशादिति स्वस्थत्वे कथमश्मर्या मूर्तिमत्याः संभव इत्याह—अप्सु स्वस्थास्वपि यथेत्यादि । पङ्कसमत्वेऽपि कथमश्मनः साम्यमित्याह—संहन्त्यापो यथेत्यादि । आपो दिव्या मेघजाः । संहन्ति अनिलसहितो वैद्युतोऽग्निश्च करकात्वेन करोति, तथा कफमूष्मा पित्तं सानिलमित्यर्थः; बहिरपि च वाय्वग्न्योरेव शोषणत्वेन दृष्टत्वात् ॥ २४-२६ ॥

**मारुते प्रगुणे बस्तौ मूत्रं सम्यक् प्रवर्तते ॥**
**विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि ॥ २७ ॥**
**मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च ॥**
**मूत्रदोषाश्च ये केचिद्बस्तावेव भवन्ति हि ॥ २८ ॥**

**इति सुश्रुतसंहितायां निदानस्थानेऽश्मरीनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥**

**नि॰ सं॰**–बस्तिगतानामन्येषामपि विकाराणां वायुरेव हेतुरिति दर्शयन्नाह—मारुत इत्यादि । प्रगुणे अनुकूले; 'अनुगुणे' इति केचित् पठन्ति, तत्रापि स एवार्थः । प्रतिलोमे विगुणे । वाते विगुणे सति बस्तौ ये विकारास्तानेवाह—मूत्राघाता इत्यादि ॥ २७ ॥ २८ ॥

इति श्रीडह्लणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने तृतीयोऽध्यायः ॥ ३ ॥

**न्या॰ च॰**–इदानीमलिकृतबस्तिगताश्मरीप्रसंगेन बस्तिगतानामन्येषामपि विकाराणामनिलमेव हेतुं दर्शयन्नाह—मारुतेऽनुगुणे इत्यादि । अनुगुणे अनिले मूत्रानुगुण्यं, विगुणे सर्वेषामेव वातजानां विकाराणां संभवः, तेन वातानुलोम्यं यत्नतः करणीयम् । तानेव बस्तिविकारान् केचिच्छ्लोकेन पठन्ति—मूत्राघाताः प्रमेहाश्चेत्यादि ॥ २७ ॥ २८ ॥

इति सौश्रुते शल्यतन्त्रे निदानस्थाने श्रीगयदासविरचितायां न्यायचन्द्रिकायां पञ्जिकायामश्मरीनिदानम् ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

**अथातो भगन्दराणां निदानं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**नि॰ सं॰**–अथेत्यादि ॥ १ ॥ २ ॥

**न्या॰ च॰**–अश्मर्यनन्तरमर्शोऽश्मरीनिदानयोर्गुदबस्तिकीर्तनाद्भगन्दरस्योभयाधिष्ठानत्वात्; यदाह—"गुदबस्तिप्रदेशदारणात्" इति, अधोगतव्याधिप्रक्रमात्, महाव्याधिप्रक्रमात्, महाव्याधिसामान्याच्च भगन्दरनिदानारम्भः ॥ १ ॥ २ ॥

**वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्तोन्मार्गिणो यथासंख्यं पञ्च भगन्दरा भवन्ति । ते तु भगगुदबस्तिप्रदेशदारणाच्च 'भगन्दरा' इत्युच्यन्ते । अभिन्नाः पिडकाः, भिन्नास्तु भगन्दराः ॥ ३ ॥**

**नि॰ सं॰**–वातपित्तेत्यादि । संख्येयनिर्देशादेव संख्यासिद्धौ पञ्चेतिवचनं शोणितजादिनिषेधार्थम् । भगन्दरनिरुक्तिमाह—ते त्वित्यादि ॥ ३ ॥

**न्या॰ च॰**–संख्येयनिर्देशादेव संख्यासिद्धौ पञ्चेति शोणितजादिनिषेधार्थम् । अभिन्ना पिडिका, भिन्ना भगन्दरः, पिडिकाभेदेनैव भगादिप्रदेशदारणान्निरुक्तिसाधितस्यार्थस्य संभवात् । तामेव निरुक्तिं भगन्दरशब्दस्य दर्शयन्नाह—गुदभगबस्तिप्रदेशदारणादिति ॥ ३ ॥

**तेषां तु पूर्वरूपाणि—कटीकपालवेदना कण्डूर्दाहः शोफश्च गुदस्य भवति ॥ ४ ॥**

---

१ 'कठिनाः' इति पा॰ । २ 'बस्तिगतानामपि' इति पा॰ ।

१-२ 'विकूले' इति पा॰ । ३ 'तेषां पूर्वरूपं गुदकण्डूदाहशोफा गुदायामश्चेति सर्वेषां सामान्यम्' इति गयदाससंमतः पाठः स्यात् ।

नि० सं०–पूर्वरूपमाह—तेषां त्वित्यादि । तेषां तु पूर्वरूपाणि 'भवन्ति' इत्यर्थः । कटीकपालः कटीफलकः ॥ ४ ॥

न्या० च०–भगन्दराणां पूर्वरूपं दर्शयन्नाह—तेषां पूर्वरूपमित्यादि । कटीकपालः कटीफलकः, तस्य वेदनां तत्स्थानाश्रितेन दोषेण । गुदशब्देन सह कण्ड्वादयः शब्दाः प्रत्येकमभिसंबध्यन्ते । पाकारम्भे दोषत्रयसान्निध्यात् कण्ड्वादयः कफादिजाः । गुदायामश्चेति गुदस्यायाम इव वायुना । सर्वेषां पिडिकाशोथारम्भिणाम् । सामान्यमिति अन्यत्रापि पूर्वरूपस्य सामान्यत्वादेवात्र विशेषेण सामान्याभिधानं भगन्दरपिडकानां भगन्दराणां च पूर्वरूपस्य सामान्यत्वबोधनार्थम् । एतेनापूर्वरूपा पिडिका भागन्दरी न भवति, केचित्त्वपूर्वरूपां भागन्दरीमपि पिडिकामधीयते ॥ ४ ॥

तत्रापथ्यसेविनां वायुः प्रकुपितः सन्निवृत्तः स्थिरीभूतो गुदमभितोऽङ्गुले द्व्यङ्गुले वा मांसशोणिते प्रदूष्यारुणवर्णां पिडकां जनयति, साऽस्य तोदादीन् वेदनाविशेषाञ्जनयति, अप्रतिक्रियमाणा च पाकमुपैति, मूत्राशयाभ्यासगतत्वाच्च व्रणः प्रक्लिन्नः शतपोनकवदणुमुखैश्छिद्रैरापूर्यते, तानि च छिद्राण्यजस्रमच्छं फेनानुविद्धमधिकमास्रावं स्रवन्ति, व्रणश्च ताड्यते भिद्यते छिद्यते सूचीभिरिव निस्तुद्यते, गुदं चावदीर्यते, उपेक्षिते च वातमूत्रपुरीषरेतसामप्यागमश्च तैरेव छिद्रैर्भवति; तं भगन्दरं शतपोनकमित्याचक्षते ॥ ५ ॥

नि० सं०–पूर्वरूपानन्तरं पिडिकोत्पत्तिपाकोपद्रवनिरुक्तीर्दर्शयन्नाह—तत्रापथ्येत्यादि । सन्निवृत्तो व्युत्थितः । गुदमभितो गुदस्य सर्वतः; अन्ये 'गुदसन्निधौ' इत्याहुः । अभ्यासः समीपम् । शतपोनकः शूकदोषपरिपठितो व्याधिः; 'चालनिका' इति जेज्झटः; तन्नेच्छति गयी, लोकशास्त्रयोश्चालनिकायां शतपोनकशब्दस्याप्रसिद्धत्वात्; 'अश्वपुच्छवालरचितं शताक्षकं' इत्यन्ये । तुद्यते व्यथ्यते । ताड्यते दण्डेनेवाभिहन्यत इत्यर्थः । भिद्यते त्वग्विदार्यत इव । छिद्यते द्विधा क्रियत इव ॥ ५ ॥

न्या० च०–पूर्वरूपानन्तरं पिडिकोत्पत्त्यादि दर्शयन्नाह—तत्रापथ्यकारिणामित्यादि । गुदमभितो गुदस्य सर्वतः । तोदादीनिति आदिशब्देन भेदादीनामवरोधः । शतपोनकवदणुमुखैरिति शतपोनकश्चालनिकेति जेज्झटः; तन्न, लोकशास्त्रयोश्चालनिकायां शतपोनकशब्दस्याप्रसिद्धेः । तेन शतपोनकः शूकदोषपरिपठितो व्याधिः "छिद्रैरणुमुखैर्लिङ्गं" ( नि. अ. १४ ) इत्यादि ॥ ५ ॥

पित्तं तु प्रकुपितमनिलेनाधः प्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति; साऽस्य चोषादीन् वेदनाविशेषाञ्जनयति; अप्रतिक्रियमाणा च पाकमुपैति; व्रणश्चाग्निक्षाराभ्यामिव दह्यते, दुर्गन्धमुष्णमास्रावं स्रवति, उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते ॥ ६ ॥

नि० सं०–पित्तं त्वित्यादि । पूर्ववदवस्थितमिति गुदमभितोऽङ्गुले द्व्यङ्गुले वेत्यर्थः । विसृजति स्रवति व्रण इति संबन्धः ॥ ६ ॥

न्या० च०–उष्ट्रग्रीवासदृशत्वेन पिडिकाया उष्ट्रग्रीवः, धनुःस्तम्भवत् । ऊषादीनिति आदिशब्दाच्चोषादयः ॥ ६ ॥

श्लेष्मा तु प्रकुपितः समीरणेनाधः प्रेरितः पूर्ववदवस्थितः शुक्लावभासां स्थिरां कण्डूमतीं पिडकां जनयति, साऽस्य कण्ड्वादीन् वेदनाविशेषाञ्जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवति, उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरं परिस्राविणमित्याचक्षते ॥ ७ ॥

नि० सं०–श्लेष्मेत्यादि । संरम्भी शोफवान् । कण्डूप्रायः खर्जूबहुलः । परिस्रावीत्येवंशीलः परिस्रावी ॥ ७ ॥

न्या० च०–श्लैष्मिकपिडिकासु स्थिरा कठिना । कण्ड्वादीनित्यादिशब्दाद्गुरुतोपदेहाल्पवेदनतादयः । व्रणः संरम्भीति शोथवान् ॥ ७ ॥

वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याधो गत्वा पूर्ववदवस्थितः पादाङ्गुष्ठाग्रप्रमाणां सर्वलिङ्गां पिडकां जनयति, साऽस्य तोददाहकण्ड्वादीन् वेदनाविशेषाञ्जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च नानाविधवर्णमास्रावं स्रवति, पूर्णनदीशम्बूकावर्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषाः; तं भगन्दरं शम्बूकावर्तमित्याचक्षते ॥ ८ ॥

नि० सं०–'पूर्णनदीशम्बूकावर्तवच्चैरन्तर्येण वेदना उत्तिष्ठन्ति' इत्येके; अन्ये तु 'तथाविधगत्यारम्भकस्य शोफस्य पूर्णनद्यावर्तशम्बूकावर्ताकारेणैवावगत्वादवगाढवेदना भवन्तीत्यर्थः' । शम्बूकाः शङ्खाः ॥ ८ ॥

न्या० च०–वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणाविति त्रयाणामप्यनुबन्धित्वं दर्शयति; सर्व एव स्वहेतुकुपिताः स्वतन्त्रा व्यक्तलिङ्गा यथोक्तप्रकोपप्रशमनाः । साऽस्य तोददाहकण्ड्वादीञ्जनयतीति प्रत्येकदोषपठितान् तोददाहकण्ड्वादीनित्यर्थः । पूर्णनद्यावर्तशम्बूकावर्तवद्वेदनाविशेषा इति

१ 'गुदमभितो गुदद्वारादङ्गुले द्व्यङ्गुले त्र्यङ्गुले वा मांसशोणितमभिप्रदूष्य' इति ता. । २ 'फेनानुविद्धमास्रावं प्रवहन्ति' इति ता. ।

१ 'उच्छ्रिताग्रां' इति ता. ।

तथाविधगत्यारम्भकस्य शोथस्य पूर्णनद्यावर्तशम्बूकावर्तका- कारेणैवावगाढत्वात् ॥ ८ ॥

**मूढेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदाऽवगाढपुरीषोन्मिश्रमपानेनाधःप्रेरितमसम्यगागतं गुदमपक्षिणोति तदा क्षतनिमित्तः कोथ उपजायते, तस्मिंश्च क्षते पूयरुधिरावकीर्णमांसकोथे भूमाविव जलप्रक्लिन्नायां क्रिमयः संजायन्ते, ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति, तस्य तैर्मार्गैः कृमिकृतैर्वातमूत्रपुरीषरेतांस्यभिनिःसरन्तिः; तं भगन्दरमुन्मार्गिणमित्याचक्षते ॥ ९ ॥**

**नि० सं०**-उन्मार्गिणः संप्राप्तिं दर्शयन्नाह—मूढेनेत्यादि । मूढेन अज्ञातेन । अपक्षिणोति सक्षतं करोति । कोथः पूतिभावः । पार्श्वतो दारयन्ति पक्षतो दारयन्ति । अस्याग्रे अर्शोभगन्दरं केचित् पठन्ति; तन्न, सर्वैर्निबन्धकारैर्निराकृतत्वात् ॥ ९ ॥

**न्या० च०**-उन्मार्गिणः संप्राप्तिं दर्शयन्नाह—मूढेनेत्यादि । मूढेनाज्ञेन मांसलोलुपेन। असम्यगागतम् उन्मार्गमस्यर्थं तीक्ष्णत्वाम्मांसाद्यवदार्यागतम् । केचिदत्रार्शोभगन्दरमप्याचक्षते—कफपित्ते तु पूर्वोत्थिते इत्यादि । तन्न, अपाठेऽपि स्थानैकत्वादुपद्रववत् स्वाधिवेशेनैव सिद्धत्वात् ॥ ९ ॥

**भवन्ति चात्र—**

**उत्पद्यतेऽल्परुक् शोफात् क्षिप्रं चाप्युपशाम्यति ॥**
**पाय्वन्तदेशे पिडका सा ज्ञेयाऽन्या भगन्दरात् १०**
**पायोः स्याद् द्व्यङ्गुले देशे गूढमूला सरुग्ज्वरा ॥**
**भागन्दरीति विज्ञेया पिडकाऽतो विपर्ययात् ॥११॥**

**नि० सं०**-अभागन्दरीं भागन्दरीं च पिडकामाह—भवन्ति चात्रेत्यादि । पाय्वन्तदेशे पिडका शोफादुत्पद्यत इति संबन्धः । अल्परुक् अल्पवेदना, पाय्वन्तदेशे गुदस्यान्ते, अन्या भगन्दरात् अपरा भगन्दरेभ्य इत्यर्थः । एतेनाभागन्दरी पिडकोक्ता, यतोऽस्या भगन्दरो नोत्पद्यते । अतोऽभागन्दर्याः पिडकायाः, विपर्ययात् विपरीतत्वात्, भागन्दरीति भगन्दरकरी भवतीत्यर्थः ॥ १० ॥ ११ ॥

**यानयानान्मलोत्सर्गात् कण्डूरुग्दाहशोफवान् ॥**
**पायुर्भवेद्रुजः कट्यां पूर्वरूपं भगन्दरे ॥ १२ ॥**

**नि० सं०**-यानेत्यादि । यानयानात् रथादिगमनात् । मलोत्सर्गात् पुरीषत्यागात् । कण्डूरुग्दाहशोफवान् पायुर्भवेत्, ततोऽनन्तरं कट्यां कण्डूरुग्दाहशोफादिकं पूर्वरूपं भवेत् । अयं वा पठनीयः पूर्वो वा; पूर्वरूपग्रन्थद्वयं वा पठनीयं, पूर्वश्चाप्रसिद्धः, अयं तु प्रसिद्धः ॥ १२ ॥

१ 'मूढेन तु साक्षिशल्यमभ्यवहृतं' इति ता. । २ 'ऽल्परुक्शोथा' इति पा० ।

**न्या० च०**-केचिदत्रापि भागन्दरीमपि पिडकामभिधीयते—उत्पद्यतेऽल्परुक्शोफेत्यादि ॥ १०-१२ ॥

**घोराः साधयितुं दुःखाः सर्व एव भगन्दराः ॥**
**तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च भगन्दरः ॥ १३ ॥**

**इति सुश्रुतसंहितायां निदानस्थाने भगन्दरनिदानं नाम चतुर्थोऽध्यायः ॥ ४ ॥**

**नि० सं०**-तत्र केषांचिदसाध्यत्वं दर्शयन्नाह—घोरा इत्यादि । घोरा दुःखप्रदाः । साधयितुं दुःखाः कष्टसाध्याः, 'भवन्ति' इत्यध्याहारः ॥ १३ ॥

इति श्रीडह्लणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

**न्या० च०**-तत्र केषांचिदसाध्यत्वं दर्शयन्नाह—घोराः साधयितुमित्यादि ॥ १३ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकायां पञ्जिकायां निदानस्थाने भगन्दराणां निदानम् ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

**अथातः कुष्ठनिदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**नि० सं०**-अथेत्यादि ॥ १ ॥ २ ॥

**न्या० च०**-अथ भगन्दरानन्तरमूर्ध्वाधोधमनीगतरोगाभिधाने तिर्यग्गतधमनीरोगपारिशेष्याद् विरुद्धाशनसंतर्पणैकहेतुजन्मत्वात् संशोधनोपक्रमसाध्यत्वान्महाव्याधिसामान्याच्च कुष्ठनिदानारम्भः ॥ १ ॥ २ ॥

**मिथ्याहाराचारस्य विशेषाद्गुरुविरुद्धासात्म्याजीर्णाहिताशिनः स्नेहपीतस्य वान्तस्य वा व्यायामग्राम्यधर्मसेविनो ग्राम्यानूपौदकमांसानि वा पयसाऽभीक्ष्णमश्नतो यो वा मज्जत्यप्सूष्माभितप्तः सहसा छर्दिं वा प्रतिहन्ति, तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिलः प्रवृद्धस्तिर्यग्गाः सिराः संप्रपद्य समुद्धूय बाह्यं मार्गं प्रति समन्ताद्विक्षिपति, यत्र यत्र च दोषो विक्षिप्तो निश्चरति तत्र तत्र मण्डलानि प्रादुर्भवन्ति, एवं समुत्पन्नस्त्वचि दोषस्तत्र तत्र च परिवृद्धिं प्राप्याप्रतिक्रियमाणोऽभ्यन्तरं प्रतिपद्यते धातूनभिदूषयन् ॥ ३ ॥**

**नि० सं०**-इदानीं हेतुमाह—मिथ्येत्यादि । मिथ्याहाराचारस्य शास्त्रोक्तविधिभ्रष्टाहाराचारस्येत्यर्थः । संप्राप्तिमाह—

१ 'असाध्यस्तु त्रिदोषोत्थः' इति पा० । २ 'मिथ्याहाराचारस्य पित्तश्लेष्माणौ प्रकुपितौ' इति ता. ।

तस्येत्यादि । तस्य मिथ्याहाराचारस्येत्यादिकस्य । समुद्भूय आक्षिप्य, समन्तात् सर्वत्र; एतेन सर्वदेहगतत्वं रोगस्य सूचयति ॥ ३ ॥

**न्या० च०**-तस्य प्राक् स्थानसंश्रयस्वभावान् हेत्वादिपुरस्सरं दर्शयन्नाह—मिथ्याहाराचारस्येत्यादि । मिथ्याशब्द आहाराचाराभ्यां सह प्रत्येकमभिसंबध्यते । तत्र द्वादशाशनप्रविभागोक्तविधिविपरीतविधिर्मिथ्याहारः । आचारः कायवाङ्मनोभेदेन त्रिविधो विहारः, तस्य स्वस्थवृत्तानागताबाधविधानादन्यथाकरणं मिथ्याचारः । ते च प्रकोपहेतवः सर्वेषामेवात्र गृह्यन्ते मिथ्याहाराचारभेदेन द्विविध्यात् । पित्तश्लेष्माणौ प्रकुपितौ प्रकुपितः परिगृह्य अनिल इति त्रिदोषजत्वं संप्राप्तौ सूचितं; कर्मजत्वं पुनर्ब्रह्मस्त्रीसज्जनवधादिभिः परस्वहरणान्तैः सूचयिष्यति । अत एव कुष्ठानां द्विविधं चिकित्सितं युक्तिव्यपाश्रितं दैवव्यपाश्रितं च, दोषकर्मसंभवत्वात् कुष्ठानाम् । केचिदत्र व्याधिहेतूनधीयते–विशेषाद्गुरुविरुद्धासात्म्याजीर्णाहिताशिन इत्यादि । युक्तं चैतत्, दोषरोगोभयभेदेन हेतूनां त्रिविधत्वात्, भोजादिषु पाठाच्च । तथाहि **भोजः**—"सेवते यो विरुद्धान्नमजीर्णे कर्षतस्तथा" इत्यादि । तिर्यग्गाः सिरा इति नाभिप्रभवास्त्रिविधा हि सिराः संभवन्ति ऊर्ध्वगा अधोगास्तिर्यग्गाश्चेति । अन्ये तु सिराशब्देन धमनीरपि सादृश्यादाहुः । उक्तं च "तिर्यग्गाणां चतसृणामेकैका" ( शा. अ. ९ ) इत्यादि । समुद्भूय आक्षिप्य । बाह्यं मार्गं प्रतीति लक्षणे द्वितीया । समन्तादिति सर्वदेहरोगत्वमस्य सूचयति । अत एव यत्र तत्र ग्रहणमनियतदेहसूचनं; तदुक्तं **चरके**—"अतः प्रभवाण्यभिनिर्वर्तमानानि केवलं शरीरमुपतपन्ति" (च. नि. अ. ५) इति; केवलमिति सकलं दोषदूष्यगणम् । तेन रसो रक्तं मांसमम्बु च दुष्टमनुगृह्यते । तदुक्तं **चरके**—"वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च । दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥"; तथा "रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः । विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः" ( च. चि. अ. ७ ) इति । तत्र अम्बु लसीका उदकमेव । यदाह–"यत्तु त्वगन्तरे व्रणगतमुदकं तत्तु लसीकाशब्दं लभते" ( च. शा. अ. ७ ) इति । तत्र विसर्पस्य पित्तप्रबलं सप्तद्रव्यं, कुष्ठस्य पुनर्मन्दपित्तमिति । तथैव द्रव्यं गुरुद्रव्यादि, ब्रह्मस्त्रीसज्जनवधादिकर्मविशेषोऽपि विशेष इति । मण्डलान्युपजनयन्तीति सामान्यं सर्वकुष्ठानां लक्षणम् । तथा **चरकेऽपि**—"विरुद्धान्यन्नपानानि द्रवस्निग्धगुरूणि च" ( च. चि. अ. ७ ) इत्यादि । कुष्ठसंप्राप्तौ **भोजः**—"प्रदुष्टोपचिता दोषा रसासृङ्मांससंसृताः । कुष्ठानि जनयन्त्याशु शरीरेषु शरीरिणाम्" इति ॥ ३ ॥

**तस्य पूर्वरूपाणि—त्वक्पारुष्यमकस्माद्रोमहर्षः कण्डूः स्वेदबाहुल्यमस्वेदनं वाऽङ्गप्रदेशानां स्वापः क्षतविसर्पणमसृजः कृष्णता चेति ॥ ४ ॥**

१ 'स्वपनमङ्गानामसृक्कृष्णत्वं च' इति ता० ।

**नि० सं०**-पूर्वरूपमाह—तस्येत्यादि । अकस्मात् कारणं विना । स्वापः स्पर्शाज्ञानम् ॥ ४ ॥

**न्या० च०**-स्थानसंश्रयलक्षणसंप्राप्तौ पूर्वरूपं—त्वक्पारुष्यमित्यादि । लोमहर्षातिस्वेदास्वेदौ च कुष्ठजनकदोषैस्तिर्यक्स्वेदवाहिषु दुष्टेषु । यदुक्तं तन्त्रान्तरे—"पारुष्यं लोमहर्षणम् । अतिस्वेदनमस्वेदः परिदाहश्च जायते ॥" इति । असृक्कृष्णता दोषैरसृजो दुष्टत्वात् । अत्रैव **भोजः**—"अतिस्वेदो न वा स्वेदः कण्डूनिस्तोदसुप्तताः । त्वचः पारुष्यमत्यर्थं रोमहर्षो विवर्णता ॥ शुक्रुता शोणितं कृष्णं व्रणानामप्ररोहणम् । दाहपाकौ च संप्राप्ते त्वचि सेचनयो हितम् (?) ॥ तस्य कुष्ठानि स्पष्टानि तेषां नामानि मे शृणु ॥" इति ॥४॥

**तत्र सप्त महाकुष्ठानि, एकादश क्षुद्रकुष्ठानि, एवमष्टादश कुष्ठानि भवन्ति । तत्र महाकुष्ठान्यरुणोदुम्बरर्ष्य(र्क्ष)जिह्वकपालकाकणकपुण्डरीकदद्रुकुष्ठानीति । क्षुद्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठं चर्मदलं विसर्पः परिसर्पः सिध्मं विचर्चिका किटिभं (भं) पामा रकसा चेति ॥ ५ ॥**

**नि० सं०**-इदानीं सङ्ख्यामाह—तत्रेत्यादि । महत्त्वमुत्तरोत्तरधात्वनुप्रवेशात् । एकादशकुष्ठानां क्षुद्रत्वमुत्तरोत्तरधात्वननुप्रवेशात् । अष्टादश कुष्ठानि भवन्तीति दिङ्मात्रमिदं दर्शितं, कुष्ठानामनियतसङ्ख्यत्वात्; तथा च **चरकः**—"सप्तविधोऽष्टादशविधोऽसंख्येयविधो वा" ( च. नि. अ. ५ ) इति । महाकुष्ठानि नामतः प्राह—तत्र महाकुष्ठानीत्यादि । क्षुद्रकुष्ठानि नामतः प्राह—क्षुद्रकुष्ठान्यपीत्यादि ॥ ५ ॥

**न्या० च०**-तेषां कुष्ठानां हेतुलिङ्गचिकित्सोपयोगिनीं कुष्ठविशेषाश्रयां संख्यां निर्दिशन्नाह—तत्र सप्त महाकुष्ठानीत्यादि । महत्त्वमेषामुत्तरोत्तरधात्वनुप्रवेशात् । धात्वन्तरप्रवेशोऽप्येषां बहुबहुलदोषारम्भात् । अत एव क्रिया महती महाकुष्ठे, क्षुद्रे पुनरल्पा । यदाह **चरकः**—"प्रच्छन्नमल्पे कुष्ठे, महति च शस्तं सिराव्यधनम्" ( च. चि. अ. ७ ) इति । दोषाणां प्राबल्यं दोषस्वभावकार्यलिङ्गैः कुष्ठेषु ज्ञेयम् । अत्रैवार्थे कुष्ठमधिकृत्य रोगदोषयोः कार्यकारणभूतयोस्तथैव दोषकारणयोरन्योन्यज्ञापकभावे **चरकः**—"कुष्ठविशेषैर्दोषा दोषविशेषः पुनश्च कुष्ठानि । ज्ञायन्ते ते हेतुं हेतुश्च तान् प्रकाशयति" ( च. चि. अ. ७ ) इति । तद्यथा—अरुणकुष्ठं वायोः स्वभावभूतेन रौक्ष्येण तोदस्वापादिना च कार्येण वातं कारणभूतं ज्ञापयति । हेतुश्चेति चकारोऽप्यर्थः । तेन हेतुरपि तान् दोषान् प्रकाशयतीति । हेतोः कार्यस्य प्रकाशेन प्रतिबन्धनियमं सूचयति,॰ कार्यस्य पुनः प्रकाशने नियतः संबन्ध इति ॥ ५ ॥

**सर्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्ति, उत्सन्नतस्तु दोषग्रहणमभिभवात् ॥ ६ ॥**

१-२ नामभिः इति पा० ।

**नि० सं०**-सर्वेष्वेव कुष्ठेषु सर्वेषामेव दोषाणां क्रिमीणां च संभवं दर्शयन्नाह—सर्वाणीत्यादि । सर्वाणि क्षुद्राणि महान्ति च । कथं तर्हि वातेनारुणमित्यादीत्याशङ्क्याह—उत्सन्नतस्तु दोषग्रहणमभिभवादिति; उत्सन्नत औत्कव्यात् दोषग्रहणम्, अभिभवात् 'इतरदोषयोः' इति शेषः ॥ ६ ॥

**न्या० च०**-तत्र सर्वेष्वेव कुष्ठेषु सर्वेषामेव दोषाणां क्रिमीणां च संभवं दर्शयन्नाह—सर्वाणीत्यादि । सर्वाणीति क्षुद्राणि महान्ति च । कथं तर्हि वातेनारुणामित्यादि? उत्सन्नतस्तु दोषग्रहणमिति । उत्सन्नमिति नपुंसके भावे क्तः; तेनोत्सन्नमुत्कर्षः । उत्कर्षदोषेण ग्रहणं वातेनारुणमित्यादि । अभिभवादिति ल्यब्लोपे पञ्चमी; तेन अभिभवमुत्कर्षं वीक्ष्य तेन दोषेण ग्रहणम् । ननु चोत्कर्षो हि अभिभवमेवापेक्ष्य भवतीति अभिभवग्रहणमन्तरेण तदर्थो लभ्यत एवेति अभिभवग्रहणं संसर्गजदोषाभ्यां ग्रहणमित्यभिलम्भयति ॥ ६ ॥

**तत्र वातेनारुणं, पित्तेनोदुम्बरर्ष्य(र्क्ष)जिह्वकपालकाकणकानि, श्लेष्मणा पुण्डरीकं दद्रुकुष्ठं चेति। तेषां महत्त्वं क्रियागुरुत्वमुत्तरोत्तरं धात्वनुप्रवेशादसाध्यत्वं चेति ॥ ७ ॥**

**नि० सं०**-यस्य दोषस्य यस्मिन् कुष्ठे औत्कव्यं तेन तद्दर्शयन्नाह—तत्रेत्यादि । तत्रारुणादीनां सप्तानां महत्त्वादिषु हेतुं दर्शयन्नाह—तेषामित्यादि । अनुशब्देन पश्चादर्थवाचिना महत्त्वेऽसाध्यत्वेऽपि काकणकवर्जं कालान्तरं च सूच्यते; काकणकं पुनरुत्पत्तावेवासाध्यं, व्याधिस्वभावात् । असाध्यत्वं चेति चकारो धात्वनुप्रवेशाच्चेत्यनन्तरं द्रष्टव्यः; तेनानुक्तमारम्भकदोषमहत्त्वं समुच्चिनोति ॥ ७ ॥

**न्या० च०**-तत्रारुणादीनां सप्तानां महत्वे हेतुं दर्शयन्नाह—तेषां तु महत्त्वमित्यादि । असाध्यत्वेऽपि चायमेव हेतुः । अनुशब्देन पश्चादर्थवाचिना असाध्यत्वेऽपि कारणवर्जं कालान्तरं च सूच्यते । यदाह—"साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा । घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम्" (सू. अ. २६) इत्यादि । अरुणं पुनरुत्पत्तावेवासाध्यं, व्याधिस्वभावात् । असाध्यत्वं चेति चकारो भिन्नक्रमे धात्वनुप्रवेशादित्यनन्तरं द्रष्टव्यः । तेनानुक्तमारम्भकदोषत्वे महत्त्वं समुच्चिनोति । भेदो हि भेदवतां कारणभेदाद् विरुद्धधर्माध्यासाद्भवतीति ॥ ७ ॥

**तत्र, वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि । पित्तेन पक्वोदुम्बरफलाकृतिवर्णान्यौदुम्बराणि, ऋष्य(क्ष)जिह्वाप्रकाशानि खराणि ऋष्य(क्ष)जिह्वानि, कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि, काकणन्तिकाफलसदृशान्यतीव रक्तकृष्णानि काकणकानि; तेषां चतुर्णामप्योषचोषपरिदाहधूमायनानि क्षिप्रोत्थानप्रपाकभेदित्वानि क्रिमिजन्म च सामान्यानि लिङ्गानि। श्लेष्मणा पुण्डरीकपत्रप्रकाशानि पौण्डरीकाणि, अतसीपुष्पवर्णानि ताम्राणि वा विसर्पीणि पिडकावन्ति च दद्रुकुष्ठानि; तयोर्द्वयोरप्युत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्वं चेति सामान्यानि रूपाणि ॥ ८ ॥**

**नि० सं०**-तत्र महाकुष्ठानां लक्षणं दर्शयन्नाह—तत्र वातेनेत्यादि । ऋष्यजिह्वाप्रकाशानीति ऋष्यजिह्वाया इव प्रकाशः सादृश्यं येषां तानि खरत्वयुक्तानि, ऋष्यो नीलाण्डः 'रोहे' इति प्रसिद्धः; अन्ये 'ऋक्ष' इति पठन्ति, ऋक्षो 'रीछ' इति लोके । कृष्णकपालिका कृष्णकर्करा । काकणन्तिका गुञ्जा, 'चिरहण्टिका' इति प्रसिद्धा, तत्फलवद्रक्तानि मध्ये कृष्णानि । उदुम्बरादीनां पित्तकृतत्वं दर्शयन्नाह—तेषामित्यादि । उषोऽनलसमीप इवोपतापः, छुष्टस्येव वेदनाविशेष इत्यन्ये; चोष आचूष्यत इव वेदनाविशेषः, पिपासेत्यन्ये; परिदाहः सर्वतो दाहः; धूमायनं धूमोपहतस्येव, 'धूमोद्वमनमिवाङ्गानाम्' इत्येके । पुण्डरीकदद्रुकुष्ठयोर्लक्षणं दर्शयन्नाह—श्लेष्मणेत्यादि । पुण्डरीकं श्वेतपद्मम् । दद्रुकुष्ठं द्विविधं—सितमसितं च; असितस्य महोपक्रमसाध्यत्वादनुबन्धित्वप्रकर्षाच्च महाकुष्ठेषु मध्ये सुश्रुते पाठः, सितदद्रुकुष्ठस्य सुखसाध्यत्वादुत्तरोत्तरधात्वनुप्रवेशाभावात्तथाऽत्यर्थपीडारहितत्वाच्च **चरके** क्षुद्रकुष्ठेषु मध्ये पाठ इत्यदोषः । दद्रुसिध्मयोः सुश्रुतचरकोदितयोरभिधानभेद इति **जेज्झटः** समादधति, तन्नेच्छति **गयी** । तयोः पुण्डरीकदद्रुकुष्ठयोः पित्तकफकृतत्वं दर्शयन्नाह—तयोरित्यादि । परिमण्डलता परिपूर्णमण्डलता ॥८॥

**न्या० च०**-महतां कुष्ठानां लक्षणं दर्शयन्नाह—तत्रारुणानीत्यादि । तनूनि विसर्पीणि विविधसर्पणवन्ति च । तोदादीन्यत्र वातकार्याणि । उदुम्बराणि पक्वोदुम्बरवर्णानि पित्तजत्वाल्लोहितावभासानि । ऋक्षजिह्वासादृश्यादृक्षजिह्वानि; पृषोदरादित्वादाकारनिवृत्तिः । तेन वातेन खराणि श्यावाण्यपि । लोहितत्वं पित्तजत्वादस्य । अत्र **चरकः**—"कर्कशं रक्तपर्यन्तमन्तःश्यावं सवेदनम् । यदृक्षजिह्वासंस्थानमृक्षजिह्वं तदुच्यते"—(च. चि. अ. ७) इति । अत्रैव दोषानुबन्धमाह **चरकः**—"वातपित्ते श्लेष्मपित्ते वातश्लेष्मणि वाऽधिके । ऋक्ष(ष्य)जिह्वं पुण्डरीकं सिध्मकुष्ठं च जायते" (च. चि. अ. ७) इति । कृष्णकपालिका कृष्णशर्करा । अत्र वातानुबन्धोऽप्यस्ति । तदुक्तं **चरके**—"वातेऽधिकतरे कापालं, पित्ते त्वौदुम्बरं, काकणकं तु त्रिदोषजम्" (च.

१ 'पक्वोदुम्बरवर्णानि' इति ता. । २ 'ऋष्यजिह्वाप्रकाशखरत्वानि' इति पा० । 'ऋष्यजिह्वेव खराणि' इति ता. ।

१ अस्याग्रे 'पच्यन्ते' इति ताडपत्रपुस्तकेऽधिकः पाठः । २ 'रोक' इति पा० ।

नि. अ. ५ ) इति । उदुम्बरादीनां पित्तकृतत्वं दर्शयन्नाह—तेषामित्यादि । सन्निपातजमपि कारणं पित्तजे पठन्ति, पित्तोत्कटसन्निपातजत्वात् । ऊषा अनलसमीप इवोपतापः । चोषः चूषणमिव, पिपासेत्यन्ये । परिदाहः सर्वतो दाहः । धूमायनं धूमोद्गमनमिवाङ्गानां, पित्तोपतापेन । पित्तजेषु 'कृमिजन्म च' इति केचित् पठन्ति । पुण्डरीकाणि सितानि कफेन, पित्तानुबन्धेन रक्तानि च, सितारुणं हि पुण्डरीकं; तदुक्तं **चरके**—"सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् । सोत्सेधं च सरागं च पुण्डरीकं प्रचक्षते" ( च. चि. अ. ७ ) इति । दद्रुकुष्ठान्यत्र तन्त्रे महाकुष्ठेषु, भोजेऽपि; तथा हि **भोजः**—"सकण्डूपिडिकात्मानि वृत्तानि बहुलानि च । अतसीपुष्पवर्णानि दद्रूकुष्ठानि निर्दिशेत्"—इति । असितदद्रूणामत्र महाकुष्ठेषु पाठो महोपक्रमसाध्यत्वादेव, सितदद्रूस्तु **चरके**ऽल्पकुष्ठेषु । तथाहि तत्र—"सकण्डूरागपिडिकं दद्रूमण्डलमुद्गतम्" ( च. चि. अ. ७ ) इति । सुश्रुते तु सितदद्रोर्विसर्पकुष्ठेऽवरोधः, 'विसर्पीणि' इति वचनात् । चरके तु महाकुष्ठेषु सितसिध्मस्य पाठे कारणं गवेषणीयम् । असितसिध्मस्य सुश्रुते दद्रुकुष्ठेऽवरोधः । तत्र सिध्ममन्ये तु पठन्ति—"कण्डून्वितं श्वेतमपायि सिध्मं विद्यात्तनुप्रायश ऊर्ध्वकाये" इति । तथा च **भोजः**—"तत्र श्वेतं सपरुषं ध्वंसि कण्डूसमन्वितं सिध्मं, तत् कफसंभूतं त्वग्गतं सुचिकित्सितम्" इति । "तयोः सुश्रुतचरकोदितयोर्दद्रूसिध्मयोरभिधानभेद एव परं, नाभिधेयभेदः" इति **जेज्जडः** । कः पुनरेतयोरुमालामाका(?)कुसुमसमयोरसितसितयोरभेद एवेति जेजडवचनं जडत्वमेव कथयति । न हि सर्वत्र सुश्रुतचरकाचार्ययोर्वस्तुष्वभेदः, पाकादिषु वस्तुभेददर्शनात् ॥ ८ ॥

**क्षुद्रकुष्ठान्यत ऊर्ध्वं वक्ष्यामः—**
**स्थूलानि[1] सन्धिष्वतिदारुणानि**
**स्थूलारुषि[2] स्युः कठिनान्यरूंषि ॥**

**नि॰ सं॰**-क्षुद्रकुष्ठेषु प्राक् स्थूलारुष्कमाह—स्थूलानीत्यादि । स्थूलानि स्थूलमूलानि । दारुणानि कृच्छ्रसाध्यानि । अरूंषि व्रणाः ॥—

**त्वक्कोचभेदस्वपनाङ्गसादाः**
**कुष्ठे महत्पूर्वयुते भवन्ति[3] ॥ ९ ॥**

**नि॰ सं॰**-महाकुष्ठलक्षणमाह—त्वक्कोचेत्यादि । त्वक्शब्दः कोचभेदस्वप्नैः सह प्रत्येकं संबध्यते; तेन त्वक्कोचः त्वक्सङ्कोचः, त्वग्भेदः त्वग्विदारणं, त्वक्स्वपनं त्वचोऽचेतनत्वम्, अङ्गसादोऽङ्गग्लानिः । कुष्ठे महत्पूर्वयुत इति महाकुष्ठ इत्यर्थः ॥ ९ ॥

**कृष्णारुणं येन भवेच्छरीरं**
**तदेककुष्ठं प्रवदन्ति कुष्ठम्[1] ॥**

**नि॰ सं॰**-एककुष्ठमाह—कृष्णारुणमित्यादि ॥—

**स्युर्येन कण्डूव्यथनौषचोषा[2]-**
**स्तलेषु तच्चर्मदलं वदन्ति ॥ १० ॥**

**नि॰ सं॰**-चर्मदलमाह—स्युर्येनेत्यादि । चोष आचूषणमिव । तलेषु हस्तपादतलेषु ॥ १० ॥

**विसर्पवत् सर्पति सर्वतो य-**
**स्त्वग्रक्तमांसान्यभिभूय शीघ्रम् ॥**
**मूर्च्छाविदाहारतितोदपाकान्**
**कृत्वा विसर्पः स भवेद्विकारः ॥ ११ ॥**

**नि॰ सं॰**-विसर्पकुष्ठलक्षणमाह—विसर्पवदित्यादि । अत्रोक्तविसर्पाख्यकुष्ठस्य वक्ष्यमाणविसर्परोगस्य च चिरविसर्पणशीघ्रविसर्पणतो भेदः ॥ ११ ॥

**शनैः शरीरे पिडकाः स्रवन्त्यः[3]**
**सर्पन्ति यास्तं परिसर्पमाहुः ॥**

**नि॰ सं॰**-परिसर्पमाह—शनैरित्यादि ॥—

**कण्डून्वितं श्वेतमपायि सिध्मं[4]**
**विद्यात्तनुं[5] प्रायश ऊर्ध्वकाये ॥ १२ ॥**

**नि॰ सं॰**-सिध्मकुष्ठमाह—कण्डून्वितमित्यादि । अपायि अकष्टकारि[6] । प्रायश ऊर्ध्वकाय इति प्रायःशब्दोपादानादधःकायेऽपि कदाचिद्भवति । सिध्मकुष्ठं द्विविधं—पुष्पिकासिध्मं, सिध्मं च; पुष्पिकासिध्मस्य सुखसाध्यत्वात् सुश्रुते क्षुद्रकुष्ठेषु पाठः, सिध्मस्य दुःखसाध्यत्वाच्चरके महाकुष्ठे पाठ इत्यदोषः ॥ १२ ॥

**राज्योऽतिकण्डूर्तिरुजः सरूक्षा**
**भवन्ति गात्रेषु विचर्चिकायाम् ॥**
**कण्डूमती दाहरुजोपपन्ना**
**विपादिका पादगतेयमेव ॥ १३ ॥**

**नि॰ सं॰**-विचर्चिकामाह—राज्य इत्यादि । राज्यो रेखाः, ताश्च सरूक्षा भवन्ति । कण्डूर्तिः खर्जूपीडा, रुजो वेदनाः, अतिशब्दः कण्डूर्तिरुग्भ्यां संबध्यते । गात्रेषु पाणिपादेषु ।

---

१ 'अरुः कुष्ठं स्थूलमूलान्यरूंसि संजायन्ते संधिषु दारुणानि' इति ता. । २ 'स्थूलारुषि स्थूलारुष्कसंज्ञे कुष्ठे' इति हाराणचन्द्रः । ३ 'महाकुष्ठे सर्वदेहे भवन्ति त्वक्संकोचस्वेदभेदाङ्गदाहाः' इति ता. ।

१ 'कृष्णो देहो यस्य कृष्णारुणो वा तच्चैकाख्यं कुष्ठमाहुः सुकष्टम्' इति ता. । २ 'कण्डू चोषौ तोददाहौ तु यस्य' इति ता. । ३ 'यस्मिन् स्फोटाः स्राववन्तस्तमाहुः पारीसर्पं तच्छनैः सर्पमाणम् । वैसर्पं स्यात् सर्वतः सर्पणात्तु त्वग्रक्तादीन् व्याप्य भावान् सुशीघ्रम्' इति ता. । ४ 'स्वच्छं श्वेतं कण्डुमच्चापि सिध्मं परिध्वंसि प्रायशश्चोर्ध्वकाये' इति ता. । ५ 'तनोः' पा० । ६ 'अपायि शीततां विनाशीत्यर्थः' इति हाराणचन्द्रः । ७ 'महोपक्रमसाध्यत्वात्' इति पा० ।

कण्डूमतीत्यादि । इयमेव विचर्चिका पादगता यदा स्यात्तदा विचर्चिकासंज्ञां विहाय विपादिकासंज्ञां प्राप्नोतीत्यर्थः ॥ १३ ॥

**यत् स्रावि वृत्तं घनमुग्रकण्डु**
**तत् स्निग्धकृष्णं किटिभं(मं) वदन्ति ॥**

**नि० सं०**-किटिभमाह—यदित्यादि । 'रक्तकृष्णं' इति केचित् पठन्ति ॥—

**सास्रावकण्डूपरिदाहकाभिः**
**पामाऽणुकाभिः पिडकाभिरूह्या ॥ १४ ॥**
**स्फोटैः सदाहैरति सैव कच्छूः**
**स्फिक्पाणिपादप्रभवैर्निरूप्या ॥**

**नि० सं०**-अथ पामामाह,—सास्रावेत्यादि । सहास्रावकण्डूपरिदाहकैर्वर्तन्ते याः पिडकास्तास्तथाविधाः, ताभिरूह्या पामेति संबन्धः; ये तु 'सास्रावकण्डूपरिदाहवद्भिः' इति पठन्ति, ते तु व्याख्यानयन्ति—सास्रावौ यौ कण्डूपरिदाहौ तद्युक्तैः पुरुषैः कृत्वा, अणुकाभिः पिडकाभिः कृत्वा, पामा ऊह्या 'वैद्यैः' इति शेषः । सैव कच्छूरिति सैव पाण्योः स्फिजोश्च तीव्रदाहैः स्फोटैरुपगता कच्छूरुच्यते ॥ १४ ॥—

**कण्ड्वन्विता या पिडका शरीरे**
**संस्रावहीना रकसोच्यते सा ॥ १५ ॥**

**नि० सं०**-रकसामाह—कण्ड्वन्वितेत्यादि । शरीरे सकले काये ॥ १५ ॥

**अरुः ससिध्मं रकसा महच्च**
**यच्चैककुष्ठं कफजान्यमूनि ॥**
**वायोः प्रकोपात् परिसर्पमेकं**
**शेषाणि पित्तप्रभवाणि विद्यात् ॥ १६ ॥**

**नि० सं०**-इदानीं कस्मिन् क्षुद्रकुष्ठे कस्याधिक्यमित्याह—अरुरित्यादि । अरुः स्थूलारुष्कम् । शेषाणि विसर्पकिटिभविचर्चिकापामाचर्मदलानि । अरुः ससिध्ममित्यादि **जेज्झटेन** स्वकपोलकल्पितः श्लोक इति **गयदासो** न मन्यते, यस्मादेककुष्ठं महाकुष्ठं च वातादेव भवति न कफात्, परिसर्पं पित्तात्; पाठान्तरं चात्र 'अरुष्कं' इत्यादि पठति, तच्चाभावान्न लिखितम् ॥ १६ ॥

**न्या० च०**-क्षुद्रकुष्ठानि दर्शयन्नाह—स्थूलारुष्कमित्यादि । स्थूलानि अरूंषि व्रणाः । संधिषु पर्वणाम् । स्थूलारुष्कं कफात् । स्थूलारुष्कमित्यस्य सान्वयं नाम । क्षुद्रकुष्ठपठितस्यापि महाकुष्ठमिति सान्वयं नाम, तस्मिन् त्वक्संकोचादीनां सर्वाङ्गगत्वात् । एककुष्ठेऽपि कृष्णारुणैकवर्णत्वेन कृत्स्नशरीरगस्यैककुष्ठमिति सान्वयं नाम । महाकुष्ठमेककुष्ठमपि वातात्, तोदस्वापत्वक्संकोचादीनां महाकुष्ठे वातैककार्यत्वात्; एककुष्ठेऽपि कृष्णारुणयोर्वातकार्यत्वात्; कफादिति जेज्जटः । कण्डूशोषावपि चर्मदलकुष्ठे पित्तात् । त्वग्रक्तादीनित्यादिशब्दान्मांसाम्बुनोरवरोधः । प्रायशश्चोर्ध्वकाये इति प्रायशब्दादधःकायेऽपि कदाचित् । सिध्मं वातानुबन्धकफात् । सोषा कण्डूरिति सह ऊषाकण्डूभ्यां वर्तते या सा तथा । यैव पाण्योर्विचर्ची, सैव पादयोर्विपादिका । अवदारयतीत्यवदार्या "कृत्यल्युटो बहुलम्" (पा. अ. ३।३।११३) इति कर्तरि कृत्यः, पाददारिकेत्यर्थः । अत्रैव भोजः—"दोषाः प्रदूष्य त्वङ्मांसं पाणिपादतलाश्रिताः। पिडका जनयन्त्याशु दाहकण्डूसमन्विताः ॥ दाल्यते त्वक् खरा रूक्षा पाण्योर्ज्ञेया विचर्चिका । पादे विपादिका ज्ञेया स्थानान्यत्वाद्विचर्चिका ॥" इति । विचर्चीविपादिके पित्तकृते, पित्तोद्रेकात्, 'शेषाणि पित्तप्रभवाणि' इति वचनात्; कफवातावप्यत्रास्तः, कण्डूदारणयोर्दर्शनात् । सैव पाण्योः स्फिजोश्च तीव्रदाहैः स्फोटैरुपगता कच्छूरुक्ता । कच्छूः पित्तात्, 'तीव्रदाहैः' इति वचनेन । सकण्डूः स्रावहीना पिडका रकसा, सा कफात् । क्षुद्रकुष्ठेषु प्रधानान् दोषान्निर्दिशन्नाह—तत्रारुष्कमित्यादि । स्थूलारुष्करकसासिध्मेषु कफोऽधिकः, वातोद्रेकादेककुष्ठं, वातपित्तात्तु परीसर्पं, अपराणि च पित्तादेव निर्दिशेत् । अपराणीति विसर्पकिटिभविचर्चीविपादिकापामाः । सकण्डूः सैव तीव्रदाहस्फोटा कच्छूरिति न संख्यातिरेकः । अत्र जेज्जडेन—एककुष्ठे महाकुष्ठेऽपि कफाधिक्यं चेति स्वकल्पितश्लोकः—"अरुः ससिध्मं रकसा महच्च यच्चैककुष्ठं कफजान्यमूनि । वातेन विद्यात् परिसर्पमेकं शेषाणि पित्तप्रभवाणि विद्यात्" इति । तत्र महाकुष्ठे त्वक्संकोचस्वापभेदाङ्गसादा वातकृताः, एककुष्ठेऽपि कृष्णारुणत्वं वातकृतं; किंच कफजत्वे तु कष्टत्वमप्यस्य न स्यात्, कफजस्य कुष्ठस्य सुखसाध्यत्वात्; परिसर्पस्यापि वातकृतत्वे स्रावस्फोटजन्मानुपपत्तिः, वातजस्याविद्यमानस्रावपाकात् । क्षुद्रकुष्ठेषु दोषानुबन्धे **चरकः**—"चर्माख्यमेककुष्ठं च किटिभं च विपादिका । कुष्ठं चालसकं ज्ञेयं प्रायो वातकफान्वितम् ॥ पामा शतारुषी स्फोटा दद्रुश्चर्मदलं तथा । पित्तश्लेष्माधिकाः प्रायः कफप्राया विचर्चिका" इति (च. चि. अ. ७) ॥९-१६॥

**किलासमपि कुष्ठविकल्पं एव; तत्त्रिविधं-वातेन, पित्तेन, श्लेष्मणा चेति । कुष्ठकिलासयोरन्तरं—त्वग्गतमेव किलासमपरिस्रावि च । तद्वातेन मण्डलमरुणं परुषं परिध्वंसि च, पित्तेन पद्मपत्रप्रतीकाशं सपरिदाहं च, श्लेष्मणा श्वेतं स्निग्धं बहलं**

१ 'सूक्ष्मा बहवः पिडकाः स्रावबलः पानेत्युक्ताः कण्डुमत्यः सदाहाः । सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेयाः पाण्योः कच्छुरुग्रा स्फिचोश्च' इति ता. । २ 'अतः' इति पा० । ३ 'पामा' इति क्वचित्पुस्तके न पठ्यते । ४ 'कृत्स्ने देहे पिडकाः कण्डुमत्यः सैवास्रावा रकसेत्युच्यते तु' इति ता. । ५ 'तत्रारुष्कं राकसं यच्च सिध्म कफाधिक्यादेककुष्ठं महच्च ॥ पित्ताधिक्यात् पारिसर्पं तु विद्याद्दुष्टस्त्वेवं कुष्ठवर्गस्त्रिदोषः' इति ता. ।

१ 'कुष्ठविकारः' इति ता. ।

**कण्डूमच्च । तेषु संबद्धमण्डलमन्तेजातं रक्तरोम चासाध्यमग्निदग्धं च ॥ १७ ॥**

**नि० सं०**-किलासं निर्दिशन्नाह—किलासमपीत्यादि । अपिशब्दः संभावनायां, तेन किलासं कुष्ठविकृतिरिति संभाव्यते; अन्ये तु, किमपि किलासं कुष्ठविकल्पो न भवतीत्यपिशब्दादाहुः; किं तत् किलासं कुष्ठविकल्पो न भवति? उच्यते—त्वग्गतमपरिस्रावि चेति; अन्तरं भेदः । त्वग्गतमिति कुष्ठं त्वग्रक्तमांसमधिष्ठाय त्वचि दर्शयत्यात्मानं, किलासं तु त्वचमेव केवलामधितिष्ठतीत्यर्थः । अन्ये तु 'त्वग्गतमेव किलाससंज्ञं, तदेव धात्वनुप्रवेशाच्छ्वित्रसंज्ञम्' इत्याहुः । तथा च **विश्वामित्रः**,-"त्वग्गतं तु यदस्रावि किलासं तत् प्रकीर्तितम् । यदा त्वचमतिक्रम्य तद्धातूनवगाहते ॥ हित्वा किलाससंज्ञां च श्वित्रसंज्ञां लभेत तत्" —इति । वातादिजानां किलासानां लक्षणमाह—तद्वातेनेत्यादि । परिध्वंसीति घृष्टं सद्रजो विमुञ्चतीत्यर्थः । बहलं स्थूलम् । अतः परमसाध्यावधारणं—तेष्वित्यादि । तेषु वातपित्तश्लेष्मजेषु किलासेषु । संबद्धमण्डलमिति परस्परमभिन्नमण्डलमित्यर्थः । अन्ते जातम् ओष्ठपाणिपादगुह्यजम्; अन्ये त्वत्र 'अन्तर्जातरक्तरोम च' इति पठन्ति; अन्तर्मध्ये जातानि रक्तानि लोमानि यत्र तत्तथा; ते चाचार्या 'अग्निदग्धं च' इति चकारेण पाणिपादगुह्यौष्ठजमनुक्तमप्यसाध्यं समुच्चिन्वन्ति ॥ १७ ॥

त्वग्दोषसामान्यात् किलासं निर्दिशन्नाह—किलासमपीत्यादि । अपिशब्दात् कुष्ठविकल्पोऽपि किंचित्किलासं कुष्ठविकल्पो न भवतीत्याह— कुष्ठकिलासयोरन्तरमित्यादि । अन्तरं भेदः । त्वग्गतमेव किलासं, कुष्ठं तथा न भवति; अपरिस्रावि च, 'कुष्ठं तथा न भवति' इति शेषः । यदा तु रक्तादिगतं परिस्रावि तदा न किलाससंज्ञं, किं तर्हि कुष्ठसंज्ञमेव । तस्य कुष्ठाद्धेतुविशेषोऽप्यस्ति दोषकोपनं विरुद्धाध्यशनादि पापकर्मापि तत्रान्तरे । तथाहि **चरकः**—"विप्रान् गुरून् धर्षयतां" इत्यादि कुष्ठहेतूनभिधाय, कुष्ठाध्याये किलासहेतुमपि दोषजननं पापकर्माख्यं चाह—"वचांस्यतथ्यानि" (च. चि. अ. ७) इत्यादि । अत्र पृथक्किलासहेतवो न निर्दिष्टाः, तस्य कुष्ठैकसंभवत्वात् । एतावद् द्वयमेव कुष्ठकिलासयोर्भेदं **विश्वामित्रो**ऽप्याह । तथाहि **विश्वामित्रः**—"त्वग्गतं तु यदस्रावि किलासं तत् प्रकीर्तितम् । यदि त्वचमतिक्रम्य तद्धातूनवगाहते ॥ हित्वा किलाससंज्ञां तु कुष्ठसंज्ञां लभेत्तदा" इति । तदपि द्विविधं व्रणकृतं, दोषजं च; तथा च **भोजः**— "श्वित्रं तु द्विविधं प्रोक्तं दोषजं व्रणजं तथा । तत्र मिथ्योपचाराद्धि व्रणस्य व्रणजं स्मृतम् ॥ दोषजं च द्विधा प्रोक्तमात्मजं परजं तथा । परगात्रासनस्पर्शाद्यत्तत् परजमुच्यते ॥ तदात्मजं विजानीयाद्यद्देहेष्वनिलादिजम् । तेषां लक्षणवैशेष्यमुक्तं शृणु मयाऽनघ ॥ रक्तं भवति पित्तेन कफाच्छ्वेतं सपाण्डुकम् । वातात् कृष्णारुणं ताम्रं रूक्षं तनु च यद्भवेत्" इति । **चरकाचार्याशयो**ऽपि रसगतमेव किलासं, तस्योत्तरोत्तरधातुत्रयाश्रितं तु नामत्रयं "दारुणं वारुणं श्वित्रं किलासं नामभिस्त्रिभिः । दोषे रक्ताश्रिते रक्तं, ताम्रं मांससमाश्रिते ॥ श्वेतं मेदःश्रिते श्वित्रं, गुरु तच्चोत्तरोत्तरम्" (च. चि. अ. ७) इति । अत्रैवार्थे **भालुकिः**—"संस्कारात् सहजात् स्थानदोषाच्छ्वेततयाऽपि तत् । किलासमभिविज्ञेयं संस्पर्शादेव दाहवत् ॥ दारुणं तत्तु विज्ञेयं मांसधातुसमाश्रितम् । मेदःश्रितं भवेच्छ्वेतं तथा श्वित्रं निरुच्यते" इति । चिकित्साभेदोऽपि श्वित्रकिलासयोर्भेदं कथयत्येव; श्वित्रस्य महती, लघ्वी किलासस्य । तस्य साध्यासाध्यावधारणायाह— संबद्धमण्डलमित्यादि । अन्तेजातमिति ओष्ठपाणिपादगुह्यजं, रक्तरोम चासाध्यं किलासम् । तथा किलासस्यासाध्यत्वे **चरकः**—"सरक्तरोम बहुलं यच्च भिन्नं परस्परम् । यच्च वर्षगणोत्पन्नं तच्छ्वित्रं नैव सिध्यति" (च. चि. अ. ७) इति । तथा **भोजे**ऽपि—"पुण्डरीकपलाशाभं रक्तान्तं दीर्घरोम च । असाध्यमन्यथा जातं यच्छ्वित्रमचिरोत्थितम् ॥ छिन्नं तु यद्भवेच्छ्वित्रं तत् साध्यमिति निर्दिशेत्" इति । प्रायेणात्रापि केचित् 'अन्तर्जातरक्तलोम' इति पठन्ति । ते पुनरग्निदग्धं चेति चकारेण पाणिपादगुह्यौष्ठजं समुच्चिन्वन्ति ॥ १७ ॥

**कुष्ठेषु तु त्वक्संकोचस्वापस्वेदशोफभेदकौण्यस्वरोपघाता वातेन, पाकावदरणाङ्गुलिपतनकर्णनासाभङ्गाक्षिरागसत्त्वोत्पत्तयः पित्तेन, कण्डूवर्णभेदशोफास्रावगौरवाणि श्लेष्मणा ॥ १८ ॥**

**नि० सं०**-कुष्ठानां संक्षेपेणोक्तत्वादनुक्तमपि दोषलिङ्गं दर्शयन्नाह—कुष्ठेष्वित्यादि । वातकार्येषु स्वेदश्चिन्त्यः । 'त्वक्संकोचस्वापास्वेदौ' इत्यन्ये पठन्ति, तत्र नञ् स्वेदनिषेधार्थः; 'व्याधिस्वभावात् स्वेदोऽपि स्यात्' इत्यपरे । कौण्यं नष्टकरता । सत्त्वोत्पत्तयः क्रिमीणां जन्मानि ॥ १८ ॥

क्षुद्रकुष्ठानां संक्षेपेणोक्तत्वादनुक्तमपि दोषलिङ्गं निर्दिशन्नाह—तत्र कुष्ठेष्वित्यादि । स्वेदमेके वातकार्येषु पठन्ति; तत्र स्वेदो वातकार्येषु चिन्त्य एव । स्वेदमन्ये मन्यन्ते, कुष्ठपूर्वरूपेष्वपि स्वेदपाठात् । व्याधिप्रभावात् स्वेदोऽपि स्यादित्यपरे । शोषोऽङ्गशोषः । निस्वापः स्पर्शाक्षमत्वम् । कौण्यं नष्टकरता । पित्तजेषु जन्तूत्पत्तिः कृमिजन्म, पाकातिशयात् । कण्डूवर्णभेदादयः कफस्य ॥ १८ ॥

**तत्रादिबलप्रवृत्तं पौण्डरीकं काकणं चासाध्यम् ॥ १९ ॥**

**नि० सं०**-तेषामसाध्यतां दर्शयन्नाह—तत्रेत्यादि । पुण्डरीकमादिबलप्रवृत्तं शुक्रशोणितदोषजमसाध्यम् । ननु चादिबलप्रवृत्तमन्यदपि कुष्ठमसाध्यमेव, यदाह **चरकः**,—"ये चापि

१ 'रागाः शीघ्रोत्पत्तयः' इति ता. । २ 'उत्पत्तयः' इति पा० ।

केचित् कुलजा विकारास्तांश्चाप्यसाध्यान् प्रवदन्ति तज्ज्ञाः" ( च. चि. अ. ६ ) इति; कुलजा इत्यनेन दुष्टशुक्रशोणितजा उच्यन्ते। पुण्डरीकग्रहणं सर्वेषामेव महाकुष्ठानामुपलक्षणं; तेषामेवोत्तरोत्तरधात्वनुक्रमेण शुक्रधातोर्दुष्टिजननसामर्थ्यात्। एतेन क्षुद्रकुष्ठेष्वादिबलप्रवृत्तत्वं नास्ति, उत्तरोत्तरधात्वननुक्रमणाभावेन शुक्रदोषकरणेऽसामर्थ्यात् । काकणकं चासाध्यम्, उत्पत्तावेव त्रिदोषबलप्रवृत्तत्वात्; धात्वनुक्रमणेन हि महाकुष्ठानामस्थिमज्जशुक्रगतानामसाध्यत्वमुपरिष्टादेव वक्ष्यति ॥ १९ ॥

तेषामसाध्यतां निर्दिशन्नाह—तत्रादिबलप्रवृत्तमित्यादि। पुण्डरीकमादिबलप्रवृत्तं शुक्रशोणितदोषजमसाध्यम्। ननु चादिबलप्रवृत्तमन्यदपि कुष्ठमसाध्यमेव; यदाह **चरकः**—"ये चापि केचित् कुलजा विकारास्तांश्चाप्यसाध्यान् प्रवदन्ति तज्ज्ञाः ( च. चि. अ. ७ ) इति; कुलजा इत्यनेन दुष्टशुक्रशोणितजानुपक्षिपति। उच्यते—पुण्डरीकग्रहणं सर्वेषामेव महाकुष्ठानामुपलक्षणं, तेषामेवोत्तरोत्तरधात्वनुक्रमेण शुक्रधातोर्दुष्टिजननसामर्थ्यात्; एतेन क्षुद्रकुष्ठेष्वादिबलप्रवृत्तत्वं नास्ति, उत्तरोत्तरधात्वनुक्रमणाभावेन शुक्रदोषकरणेऽसामर्थ्यात् । काकणकं चासाध्यमुत्पत्तावेव, त्रिदोषप्रबलप्रवृत्तत्वात्। धात्वनुक्रमणेन हि महाकुष्ठानामस्थिमज्जशुक्रगतानामसाध्यतामुपरिष्टादेव वक्षति ॥ १९ ॥

**भवन्ति चात्र—**

**यथा वनस्पतिर्जातः प्राप्य कालप्रकर्षणम्[1] ॥**
**अन्तर्भूमिं विगाहेत मूलैर्वृष्टिविवर्धितैः ॥ २० ॥**
**एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः ॥**
**क्रमेण धातून् व्याप्नोति नरस्याप्रतिकारिणः २१**

**नि० सं०**-इदानीमप्रतिकारिण उत्तरोत्तरधात्वनुक्रमणे दृष्टान्तं दर्शयन्नाह—भवन्ति चात्रेत्यादि। यथा वनस्पतिर्वृक्षः, कालप्रकर्षणं कालाधिक्यं प्राप्य, मूलैः कृत्वा, अन्तर्भूमिं विगाहेतेति संबन्धः। त्वचीति अत्र त्वक्शब्देन रस उक्तः, रसारब्धत्वात्; तेन रसस्थमित्यर्थः ॥ २० ॥ २१ ॥

**न्या० च०**-इदानीमप्रतिकारिणामुत्तरोत्तरधात्वनुक्रमणे दृष्टान्तं दर्शयन्नाह—यथा वनस्पतिर्जात इत्यादि ॥२०॥२१॥

**स्पर्शहानिः स्वेदनत्वमीषत्कण्डूश्च जायते ॥**
**वैवर्ण्यं रूक्षभावश्च कुष्ठे त्वचि समाश्रिते[2] ॥२२॥**
**त्वक्स्वापो रोमहर्षश्च स्वेदस्याभिप्रवर्तनम् ॥**
**कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ॥ २३ ॥**
**बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः ॥**
**तोदः स्फोटः स्थिरत्वं च कुष्ठे मांससमाश्रिते २४**
**दौर्गन्ध्यमुपदेहश्च पूयोऽथ क्रिमयस्तथा ॥**
**गात्राणां भेदनं चापि कुष्ठे मेदःसमाश्रिते ॥ २५ ॥**
**नासाभङ्गोऽक्षिरागश्च क्षते च क्रिमिसंभवः ॥**
**भवेत् स्वरोपघातश्च ह्यस्थिमज्जसमाश्रिते ॥ २६ ॥**
**कौण्यं गतिक्षयोऽङ्गानां संभेदः क्षतसर्पणम् ॥**
**शुक्रस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥ २७ ॥**
**स्त्रीपुंसयोः कुष्ठदोषाद्दुष्टशोणितशुक्रयोः ॥**
**यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥ २८ ॥**

**नि० सं०**-धातुगतकुष्ठानां लक्षणमाह—स्पर्शहानिरित्यादि। "प्रागेव रसधातुं क्रोडीकृत्य दोषाः कुष्ठारम्भकाः, अतो रसधातुलक्षणं नोक्तम्" इत्येके; अपरे त्वक्शब्देन रसमाहुः। जायत इत्यत्रापि संबध्यते। विपूयको दुर्गन्धता। शोणितसंश्रिते इति 'जायते' इत्यत्रापि संबध्यते। बाहुल्यं स्थूलमण्डलता। स्फोटः त्वचः स्फुटनम्। स्थिरत्वं कठिनमण्डलता। केचिदत्रान्यथा पठन्ति, स च पाठोऽभावान्न लिखितः। अत्रापि 'जायते' इत्यध्याहारः। उपदेहो मलवृद्धिः। अत्रापि केचिदन्यथा श्लोकं पठन्ति, सोऽपि पाठोऽभावान्न लिखितः। शुक्रगतस्य कुष्ठस्य लिङ्गं दर्शयन्नाह—कौण्यमित्यादि। तदपीत्यपिशब्दात् पूर्वोक्तान्यपि रसादिमज्जान्तगतानि लिङ्गानि भवन्ति। कुष्ठितं संजातकुष्ठम्; अन्ये तु 'कुष्ठवत्' इति पठन्ति, कुष्ठसहितमित्यर्थः; अन्ये 'कुष्ठिलम्' इति पठन्ति, तत्रापि स एवार्थः। यदा स्त्रीपुंसयोः कुष्ठिनोर्बीजमुपहतं स्यात्तदा तयोः प्रजा नोत्पद्यते; उपतप्तमात्रबीजयोः पुनः प्रजोपतापि[1] उत्पद्यते ॥ २२—२८ ॥

**न्या० च०**-कुष्ठे त्वचीति त्वक्स्थे रसस्थिते इत्यर्थः। पूर्वोक्तानि च लिङ्गानि मांसप्राप्ते इति रसरक्तगतकुष्ठलिङ्गानि। मेदःस्थानगते लिङ्गं पूर्वोक्तानि च रसरक्तमांसमेदोगतलिङ्गानि। शुक्रगतस्य लिङ्गं दर्शयन्नाह—स्त्रीपुंसयोरित्यादि। कौण्यं करभङ्गः। अङ्गानां भेदो भङ्गः। तदपीत्यपिशब्दात् पूर्वोक्तान्यपि रसादिमज्जान्तगतलिङ्गानि। अपत्यकुष्ठजनकशुक्रधातुगतकुष्ठप्रसंगेन आश्रयविशेषात् पूर्वमनुक्तस्यापत्यकुष्ठजनकस्य स्त्रीरक्तधातुगतकुष्ठस्य वचनम्। कुष्ठिकं संजातकुष्ठं; कुष्ठिलमित्यन्ये, तत्र कुष्ठवदित्यर्थः ॥ २२–२८ ॥

**कुष्ठमात्मवतः साध्यं त्वग्रक्तपिशिताश्रितम् ॥**
**मेदोगतं भवेद्याप्यमसाध्यमत उत्तरम् ॥ २९ ॥**

**नि० सं०**-इदानीं धात्वनुक्रमेऽपि साध्यादिभेदं दर्शयन्नाह—कुष्ठमित्यादि। आत्मवतो जितेन्द्रियस्य ॥ २९ ॥

**न्या० च०**-इदानीं धात्वनुक्रमेऽपि साध्यादिभेदं दर्शयन्नाह—कुष्ठमात्मवत इत्यादि ॥ २९ ॥

**ब्रह्मस्त्रीसज्जनवधपरस्वहरणादिभिः ॥**
**कर्मभिः पापरोगस्य प्राहुः कुष्ठस्य संभवम्[2] ॥३०॥**

१ 'कालं क्रमेण तु' इति ता.। २ 'त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यं च जायते' इति ता.।

१ 'प्रजोपतापयुतोत्पद्यते' इति पा०। २ 'देवद्रव्यगुरुद्रव्यपरस्वहरणादिभिः। पाप्मा पापकृतामेतत् कुष्ठमित्यभिशब्दितम्' इति ता.।

नि० सं०-कुष्ठस्य कर्मजत्वं दर्शयन्नाह—ब्रह्मस्त्रीत्यादि । सज्जनः सत्पुरुषः । परस्वं परद्रव्यम् ॥ ३० ॥

न्या० च०-दैवव्यपाश्रयचिकित्सार्थं कर्मजत्वमथास्य दर्शयन्नाह—देवद्रव्येत्यादि । ब्रह्मादिभिः सह वधशब्दः प्रत्येकमभिसंबध्यते । पापरोगस्येति अनेनापि कर्मजत्वमेव प्रकाशितम् ॥ ३० ॥

**म्रियते यदि कुष्ठेन पुनर्जातेऽपि गच्छति ॥**
**नातः कष्टतरो रोगो यथा कुष्ठं प्रकीर्तितम् ॥ ३१ ॥**
**आहाराचारयोः प्रोक्तामास्थाय महतीं क्रियाम् ॥**
**औषधीनां विशिष्टानां तपसश्च निषेवणात् ॥**
**यस्तेन मुच्यते जन्तुः स पुण्यां गतिमाप्नुयात् ॥३२॥**

नि० सं०-कुष्ठं दीर्घरोगाणां प्रधानमिति जन्मान्तरेऽपि तदनुबन्धं दर्शयन्नाह—म्रियत इत्यादि । गच्छति अनुगतं भवतीत्यर्थः, कुष्ठजनकस्य कर्मणोऽक्षीणत्वात् । आस्थाय आश्रित्य । स पुण्यां गतिमाप्नुयात्, क्षीणपापत्वात् ॥३१॥३२॥

न्या० च०-म्रियते यदि कुष्ठेन हेतुभूतेन लक्षणभूतेन वा । पुनर्जातेऽपि गच्छति कुष्ठजनकस्य कर्मणोऽक्षीणत्वात्, संसरतश्च धातोर्दोषदुष्टत्वात् । आहाराचारयोरिति अनेन युक्तिव्यपाश्रयं चिकित्सितमुक्तम् । तपसश्च निषेवणादित्यनेन दैवव्यपाश्रयमुक्तम् । पुण्यां गतिमाप्नुयात् क्षीणपापत्वात् ॥ ३१ ॥ ३२ ॥

**प्रसङ्गाद्गात्रसंस्पर्शान्निश्वासात् सहभोजनात् ॥**
**सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥ ३३ ॥**
**कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ॥**
**औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥ ३४ ॥**

**इति सुश्रुतसंहितायां निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥**

नि० सं०-संसर्गसंभवप्रधानं कुष्ठमाश्रित्य कुष्ठिप्रभृतीनां संसर्गपरिहारं दर्शयन्नाह—प्रसङ्गादित्यादि । प्रसङ्गादिति प्रसङ्गेन अभ्यासेन कृतात्, पुनः पुनः कृतादित्यर्थः । इदं विशेषणं गात्रसंस्पर्शादिभिः सर्वैः सह प्रत्येकं संबध्यते । सहशय्यासनादिति एकशय्यासनस्थितेः । माल्यं पुष्पम् । औपसर्गिकरोगाः शीतलिकादयः । संक्रामन्ति आविशन्ति ॥३३॥३४॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

न्या० च०-प्रधानाश्रयिणो हि विधयो भवन्तीति संसर्गसंभवप्रधानकुष्ठमाश्रित्य कुष्ठिप्रभृतीनां संसर्गस्य परिहारं दर्शयन्नाह—प्रसंगादित्यादि । गात्रसंस्पर्शात् प्रसंगात् प्रसंगेन कृतादत्यन्ताभ्यासेन कृतादित्यर्थः । निश्वासादिषु सर्वेष्वेव प्रसंगादिति विशेषणम् । औपसर्गिका रोगाः सामान्याधर्मप्रवृत्ता मसूर्यादयः । संक्रामन्ति नरान्नरमाविशन्ति । तदेव कथं? पापकृतां प्रसंगेन पापं संक्रमति; तदुक्तं चरके—"नरो नरकपाती स्यात्तस्य संभाषणादपि" (च. सू. अ. १) इति; रोगप्रभावादित्यन्ये ॥ ३३ ॥ ३४ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकायां पञ्जिकायां निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

**अथातः प्रमेहनिदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

नि० सं०-अथात इत्यादि ॥ १ ॥ २ ॥

न्या० च०-अथातः प्रमेहाणां निदानं व्याख्यास्यामः । कुष्ठानन्तरं प्रमेहारम्भः, अपत्यसंक्रम्यत्वेनोभयोरप्यपत्यगत्वात्, त्रिदोषारब्धत्वसामान्यात्, महाव्याधित्वसामान्यात्, कालान्तरेणासाध्यत्वसाधर्म्याच्चिकित्सैकत्वाच्च । अत्राहुरेके-स्त्रीणां प्रमेहा न भवन्तीति; तथा च तन्त्रान्तरे-"रजःप्रसेकान्नारीणां मासि मासि विशुध्यति । सर्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः"-इति; एतत्तु न युक्तं, सर्वतन्त्राप्रसिद्धेः, प्रत्यक्षविरोधाच्च ॥ १ ॥ २ ॥

**दिवास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेद्यद्रवान्नपानसेविनं पुरुषं जानीयात् प्रमेही भविष्यतीति ॥ ३ ॥**

नि० सं०-प्रमेहहेतुमाह—दिवास्वप्नेत्यादि । प्रसक्तं प्रकर्षेण सक्तमतिशयेनानुषङ्गिणम् । मेद्यं मेदुरं मेदोजनकमित्यर्थः । पुरुषं जानीयात् प्रमेही भविष्यति; तत्राहुरेके—"स्त्रीणां प्रमेहा न भवन्ति, तथा च तन्त्रान्तरे—"रजःप्रसेकान्नारीणां मासि मासि विशुध्यति । सर्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः" इति; एतत्तु न युक्तं, सर्वतन्त्राप्रसिद्धेः प्रत्यक्षविरोधाच्च ॥ ३ ॥

न्या० च०-व्याधिहेतुं निर्दिशन्नाह—दिवास्वप्नप्रसक्तमित्यादि । प्रसक्तं प्रकर्षेण सक्तम् । मेद्यं मेदुरम् । निदानपरिवर्जनार्थमेतान्येवात्र परिहरणीयानि ॥ ३ ॥

**तस्य चैवंप्रवृत्तस्यापरिपक्वा एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्वमुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधो गत्वा बस्तेर्मुखमाश्रित्य निर्भिद्यन्ते तदा प्रमेहाञ्जनयन्ति ॥ ४ ॥**

नि० सं०-संप्राप्तिं दर्शयन्नाह—तस्येत्यादि । अपरिपक्वा आमाः । मेदसेति अत्रापिशब्दो लुप्तो द्रष्टव्यः, तेन वसादयो ग्राह्याः; अन्ये तु 'मेदश्चापरिपक्वं' इति पठन्ति, चकारेणानुक्ता-

१ 'चैवंप्रवृत्तस्य यदा वातपित्तश्लेष्माणो मेदश्चापरिपक्वमधो गत्वा' इति पा० ।

नपि वसादीन् समुच्चिन्वन्ति । उपेत्य गत्वा । निर्भिद्यन्ते निःसरन्तीत्यर्थः । अन्ये तु 'विनिर्भिद्यन्ते' इति पठित्वा, 'तत्रैव स्थितिं कुर्वन्ति' इति तु व्याख्यानयन्ति; अपरे 'अतिद्रवत्वं यान्ति' इत्याहुः ॥ ४ ॥

**न्या० च०**-स्थानसंश्रयलक्षणां संप्राप्तिं दर्शयन्नाह—तस्य चैवंप्रवृत्तस्येत्यादि । मेदश्चापरिणतमिति असम्यक्परिणतम्, आमरसवदतिस्निग्धम् । विनिर्भिद्यन्ते प्रतिबध्यन्ते, तत्रैवास्पदं कुर्वन्तीति यावत् । एतेन स्थानसंश्रय उक्तः । तथाहि चरके प्रमेहनिदाने प्रमेहसंप्राप्तौ "त्रयाणामेषां निदानादिविशेषाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते" इत्यारभ्य यावत् "मूत्रवहानां स्रोतसां वंक्षणबस्तिप्रभवाणां मेदःक्लेदोपहितानि गुरूणि मुखान्यासाद्य प्रतिरुध्यन्ते, तदा स्थैर्यमसाध्यतां वा जनयन्ति" (च. नि. अ. ४) इति । स्थानसंप्राह्यनन्तरं व्यक्तिं दर्शयन्नाह—तदा प्रमेहाञ्जनयन्तीति ॥ ४ ॥

**तेषां तु पूर्वरूपाणि—हस्तपादतलदाहः स्निग्धपिच्छिलगुरुता गात्राणां मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धश्च श्वासस्तालुगलजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानाम् ॥ ५ ॥**

**नि० सं०**-पूर्वरूपमाह—तेषामित्यादि । केशानां जटिलीभावोऽन्योन्यमिलनं, स्वेदमलबाहुल्याद्रोगप्रभावाच्च ॥ ५ ॥

**न्या० च०**-स्थानसंश्रये पूर्वरूपं दर्शयन्नाह—तेषां पूर्वरूपाणीत्यादि । हस्ततलादिदाहः प्रभावात् । स्निग्धपिच्छिलगुरुता गात्राणां कफेन । मधुरशुक्लमूत्रता च तेनैव । केचिज्जटिलीभावं केशानां तथा नखादीनामतिवृद्धिं पूर्वरूपे पठन्ति । तत्र जटिलीभावः केशानां कफजे पैच्छिल्येन रोगप्रभावाद्वा; केशप्रभृतिवृद्धिः शरीरस्यातिमलीभावेन, रोगप्रभावादित्यन्ये ॥ ५ ॥

**तत्राविलप्रभूतमूत्रलक्षणाः सर्व एव प्रमेहा भवन्ति ॥ ६ ॥**

**नि० सं०**-प्रमेहाणां सामान्यं लक्षणमाह—तत्रेत्यादि । आविलं समलम् ॥ ६ ॥

**न्या० च०**-सामान्यं रूपं प्रमेहाणां दर्शयन्नाह—तत्राविलेत्यादि । तत्राविलत्वं मूत्रस्य प्रमेहदूष्याणां मेदोरक्तमांसमज्जाशुक्रोदकवसालसीकौजसां कचिदेव प्रमेहे कस्यचिदेव दूष्यस्यावयवमिश्रीभावात् । तेषामेव च दूष्याणां द्रवैरेकीभूतत्वान्मूत्रप्रभूतत्वम् । यद्येवमन्येषां रसादिदूष्याणां कस्मादत्र ग्रहणं न कृतम्? अत्रेके 'मेदश्चापरिपक्वं' इत्यत्र मेदोनन्तरमादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन रसादीनामप्युपग्रहः; अन्ये तु 'मेदश्चापरिपक्वं' इति चकारेण रसादीननुक्तानपि समुच्चिन्वन्ति ॥ ६ ॥

**सर्व एव सर्वदोषसमुत्थाः सह पिडकाभिः ॥ ७ ॥**

**नि० सं०**-तेषां प्रमेहाणां प्रमेहपिडकानां च दोषं निर्दिशन्नाह—सर्व एवेत्यादि । एतेन प्रमेहाणां प्रमेहपिडकानां च कुष्ठवत् सर्वदोषजत्वमुक्तम् ॥ ७ ॥

**न्या० च०**-तेषां प्रमेहाणां प्रमेहपिडिकानां च दोषं निर्दिशन्नाह—सर्व एव सर्वदोषसमुत्था इति । अनेन कुष्ठवत् सर्वेषां सर्वदोषजत्वम् । सह पिडिकाभिः पिडकाश्च सर्वाः सर्वदोषसमुत्थाः; तदुक्तमिहैव-"ये यन्मया स्मृता मेहास्तेषामेतासु तन्मयाः" इति; तेन सर्वमेहानां सर्वदोषजत्वं, तत्पिडकानां च सर्वासां सर्वदोषजत्वमिति । अमुमेवार्थमुपरिष्टाद्वक्ष्यति । तथाहि—"वातपित्तमेदोभिरन्वितः श्लेष्मा प्रमेहाञ्जनयति", तथा "वातपित्तकफशोणितमेदोभिरन्वितं पित्तं स्वमेहाञ्जनयति" तथा "श्लेष्मपित्तवसामज्जमेदोभिरन्वितो वायुः स्वमेहाञ्जनयति", इति सर्वासां सर्वदोषजत्वमपि ॥ ७ ॥

**तत्र, कफादुदकेक्षुवालिकासुरासिकताशनैर्लवणपिष्टसान्द्रशुक्रफेनमेहा दश साध्याः, दोषदूष्याणां समक्रियत्वात्; पित्तान्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षड् याप्याः, दोषदूष्याणां विषमक्रियत्वात्; वातात् सर्पिर्वसाक्षौद्रहस्तिमेहाश्चत्वारोऽसाध्यतमाः, महात्ययिकत्वात् ॥ ८ ॥**

**नि० सं०**-सर्वेषां सर्वदोषजत्वेऽप्युत्कर्षतो दोषग्रहणं दर्शयन्नाह—तत्रेत्यादि । उदकमेहः, इक्षुवालिकामेहः, सुरामेहः, सिकतामेहः, शनैर्मेहः, लवणमेहः, पिष्टमेहः, सान्द्रमेहः, शुक्रमेहः, फेनमेहश्चेति दश प्रमेहाः साध्या यद्यतिशयेन मेदो दूषितं न भवति । दोषदूष्याणां समक्रियत्वादिति अत्र दोषः श्लेष्मा, दूष्याणि रसमांसमेदोमज्जाशुक्रलसीकौजांसि, एषां कटुतिक्तकषायादिभिः समैव क्रिया । पित्तादित्यादि । याप्या इति अत्रापि यद्यतिशयेन मेदो दूषितं न भवति । दोषदूष्याणां विषमक्रियत्वादिति अत्र दोषः पित्तं, दूष्याणि रसमांसादीनि, एतेषां तु विषमा क्रिया पित्तहन्त्री रसमांसाद्युत्पादिकेति । वातादित्यादि । महात्ययिकत्वादिति शीघ्रं विनाशकारित्वात्, महात्ययिकत्वं पुनरेषामुत्तरोत्तरसारतरधातुस्रावकत्वात्; विषमक्रियत्वाचेत्यत्रापि संबध्यते ॥ ८ ॥

**न्या० च०**-उत्कर्षतो दोषग्रहणं निर्दिशन्नाह—तत्र कफादित्यादि । तत्र कफस्यैव यथा नानाविधरूपमेहाभिनिर्वृत्तिस्तथोपरिष्टात् स्वयमेव प्रतिपादयिष्यति । अत्रैके चरकं वीक्ष्य श्वेतशीतमूर्तपिच्छलाच्छस्निग्धगुरुमधुरसान्द्रप्रसादमन्देषु गुणेषु कफजेषूदकमेहादिषु कचित् कञ्चिदेव गुणमुपवर्णयन्ति । तत्र तनुशीताच्छश्वेतैरुदकमेहः, मधुरशीतेनेक्षुवालिकामेहः, अच्छेन पित्तानुरागिणा सुरामेहः,

१ 'कफादुदकेक्षुसुरा०' इति पा० । २ 'इक्षुमेहः' इति पा० ।

मन्दमूत्राभ्यां शनैर्मेहः, कफविदाहव्यक्तेन गुरुणा लवणमेहः, शुक्लेन पिष्टमेहः, सान्द्रपिच्छिलाभ्यां सान्द्रमेहः, श्वेतस्निग्धाभ्यां शुक्रमेहः, गुरुस्निग्धाभ्यां फेनमेहः' । एते साध्याः, समक्रियत्वाद्दोषदूष्याणाम् । पित्तात्तु नीलाद्याः षट्, पित्तगुणैः षड्भिरेव यथासंख्यं नीलपीताम्लक्षारविस्रलोहितैरभिव्यज्यन्ते । पित्तजा याप्याः, विषमक्रियत्वाद्दोषदूष्याणाम् । पित्तदोषहरी शीतमधुरा मेदस्करी, मेदोहरा तु लङ्घनोष्णादिका च पित्तकरीति दोषदूष्ययोर्विषमक्रियत्वम् । वातात्तु सर्पिर्मेहादयः । तत्र सर्पिर्मेहश्चरके मज्जमेहः, क्षौद्रमेहो मधुमेहः, वसया वसामेहः; इत्युभयत्र समानम् । एते असाध्याः, विषमक्रियत्वाद्दोषदूष्याणां, महात्ययत्वाच; महात्ययत्वं च पुनरेषामुत्तरोत्तरसारतरधातुस्रावकत्वात् । एषां तु साध्यासाध्यत्वं व्यभिचारकं 'सपूर्वरूपाः कफपित्तमेहाः' (च. चि. अ. ६) इत्यनेनाभिमतं चिकित्सिते यथावसरं वक्ष्यामः ॥ ८ ॥

तत्र वातपित्तमेदोभिरन्वितः श्लेष्मा श्लेष्मप्रमेहाञ्जनयति, वातकफशोणितमेदोभिरन्वितं पित्तं पित्तप्रमेहान्, कफपित्तवसामज्जमेदोभिरन्वितो वायुर्वातप्रमेहान् ॥ ९ ॥

**नि० सं०**-इदानीं सर्वेषामेव सर्वजत्वं प्रकटयन्नाह—तत्रेत्यादि ॥ ९ ॥

**न्या० च०**-तत्र सर्वेषामेव सर्वजत्वं दर्शयन्नाह—तत्र वातपित्तेत्यादि ॥ ९ ॥

तत्र, श्वेतमवेदनमुदकसदृशमुदकमेही मेहति; इक्षुरसतुल्यमिक्षुवालिकामेही; सुरातुल्यं सुरामेही; सरुजं सिकतानुविद्धं सिकतामेही; शनैः सकफं मृत्स्नं शनैर्मेही; विशदं लवणतुल्यं लवणमेही; हृष्टरोमा पिष्टरसतुल्यं पिष्टमेही; आविलं सान्द्रं सान्द्रमेही; शुक्रतुल्यं शुक्रमेही; स्तोकं स्तोकं सफेनमच्छं फेनमेही मेहति ॥ १० ॥

**नि० सं०**-कफजानामनुक्रमेण लक्षणं दर्शयन्नाह—तत्रेत्यादि । सिकतानुविद्धं वालुकामिश्रम् । मृत्स्नं पिच्छिलम् । लवणतुल्यं लवणाम्बुतुल्यम् । हृष्टरोमा प्राप्तरोमाञ्चः । पिष्टरसतुल्यं पिष्टमिश्रोदकतुल्यम् । आविलमत्यर्थं कलुषं, पुनर्वचनात् । मेहति मूत्रयतीत्यर्थः ॥ १० ॥

**न्या० च०**-तत्र श्वेतमित्यादि । इक्षुवालिका खगलिका । सिकतानुविद्धं वालुकामिश्रम् । लवणतुल्यं लवणाम्बुतुल्यम् । पिष्टरसतुल्यं पिष्टमिश्रोदकतुल्यम् । आविलम् अत्यर्थं कलुषं, पुनर्वचनात् । शुक्रतुल्यं शुक्रसदृशं; चरके तु "शुक्राभं शुक्रविमिश्रं वा मुहुर्मेहति यो नरः । शुक्रमेहिनमाहुस्तं पुरुषं कफकोपतः" (च. चि. अ. ६) इति; अत्रापि शुक्रोन्मिश्रमिति सकलमेव शुक्रसमं शुक्राभं, शुक्रमिश्रं चेति बोद्धव्यं; वास्तवशुक्रजत्वे कफजस्याप्यसाध्यत्वं स्यात् ॥ १० ॥

अत ऊर्ध्वं पित्तनिमित्तान् वक्ष्यामः-सफेनमच्छं नीलं नीलमेही मेहति; सदाहं हरिद्राभं हरिद्रामेही; अम्लरसगन्धमम्लमेही; स्रुतक्षारप्रतिमं क्षारमेही; मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही; शोणितप्रकाशं शोणितमेही मेहति ॥ ११ ॥

**नि० सं०**-अत इत्यादि । स्रुतक्षारप्रतिमं गलितक्षारद्रवतुल्यम् । मञ्जिष्ठोदकप्रकाशं शोणितप्रकाशं च मूत्रं रक्तपित्तेऽपि भवति, तत् कोऽयं प्रमेहविशेषः ? अत्रोच्यते—रक्तपित्ते प्रमेहपूर्वरूपं न भवति, मञ्जिष्ठाशोणितमेहयोस्तु प्रमेहपूर्वरूपसंभव इति विशेषः ॥ ११ ॥

**न्या० च०**-पित्तजेषु नीलं चाषपक्षसदृशवर्णम् । तत्र चाष इन्द्रनीलपक्षः प्रशस्तदर्शनः; क्वचित् 'स्वर्णचूड' इति । अम्लरसगन्धमिति अम्लरसं अम्लसचरितगन्धं च; स च पित्तगन्धेन विस्रेण विदाहसचरत्वेन । पित्तस्य लोहिताद्गुणान्मञ्जिष्ठाशोणितमेहौ ॥ ११ ॥

अत ऊर्ध्वं वातनिमित्तान् वक्ष्यामः—सर्पिःप्रकाशं सर्पिर्मेही मेहति; वसाप्रकाशं वसामेही; क्षौद्ररसवर्णं क्षौद्रमेही; मत्तमातङ्गवदनुप्रबन्धं[1] हस्तिमेही मेहति ॥ १२ ॥

**नि० सं०**-अत इत्यादि । अनुप्रबन्धं सततम् ॥ १२ ॥

**न्या० च०**-वातजे सर्पिर्मेहश्चरके मज्जमेहः, क्षौद्रमेहो मधुमेहः । तस्य तु 'मधुमेह' इति पारिभाषिकमुपद्रवाणामभावेनान्यत्र (?) बोधनार्थमर्थभेदेऽपि शब्दमात्राभिन्नं नाम कृतम् । हस्तिमेहो लसीकामेहः । चरकः पुनरस्य संप्राप्तौ वितरते; तद्यथा—"यदा तु लसीकां मूत्राशयेऽभिवहन्" (च. नि. अ. ४) इत्यादि ॥ १२ ॥

[2]मक्षिकोपसर्पणमालस्यं मांसोपचयः प्रतिश्यायः शैथिल्यारोचकाविपाकाः कफप्रसेकच्छर्दिनिद्राकासश्वासाश्चेति श्लेष्मजानामुपद्रवाः; वृषणयोरवदरणं बस्तिभेदो मेढ्रतोदो हृदि शूलमम्लीकाज्वरातीसारारोचका वमथुः परिधूपनं[3] दाहो मूर्च्छा पिपासा निद्रानाशः पाण्डुरोगः पीतविण्मूत्रनेत्रत्वं चेति पैत्तिकानां; हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं बद्धपुरीषत्वं चेति[4] वातजानाम् । एवमेते विंशति प्रमेहाः सोपद्रवा व्याख्याताः ॥ १३ ॥

१ 'अनुप्रबद्धं' इति पा० । २ अस्याग्रे 'उपद्रवानत ऊर्ध्वं वक्ष्यामः' इति ताडपत्रपुस्तकेऽधिकः पाठः । ३ 'परिधूमायनं' इति पा० । ४ 'शोषः कासः श्वासश्चेति वातजानामुपद्रवा भवन्ति' इति ता. ।

**नि० सं०**-इदानीं प्रतिदोषमुपद्रवान् दर्शयन्नाह—मक्षिकोपसर्पणमित्यादि । अवदरणं विदरणम् । अम्लीका अम्लोद्गारः । वमथुः छर्दिः । परिधूपनं समन्ततस्तापः । दाहोऽभिदग्धस्येव । लौल्यं सर्वरसाभिकाङ्क्षा वातजग्रहणीवत् ॥ १३ ॥

**न्या० च०**-तत्र प्रमेहाणामुपेक्षया प्रमेहातियोगादतिप्रमेहदुष्टमेदसामतिप्रवृद्धधातुक्षयकृतवातयुतपूर्वावस्थितकफपित्ताभ्यां चोपद्रवा जायन्ते, तान् यथादोषं दर्शयन्नाह—मक्षिकोपसरणमित्यादि । मक्षिकोपसरणादयः कासान्ताः कफजानाम् । मक्षिकोपसरणं मधुराहारस्य मूत्रस्वेदश्लेष्मणां मधुरीभावात् । कासः कफजानां वातजानां चोपद्रवेषु पठ्यते; तत्र सामर्थ्यात् कफजकासस्यार्द्रता, वातजस्य तु शुष्कता । वृषणावदरणादयः पाण्डुरोगान्ताः पित्तजानाम् । हृद्रोगादयः श्वासान्ता वातजानाम् । लौल्यं रसेषु गृद्धिः, वातजग्रहणीवद्व्याधिप्रभावात् । तदुक्तं वातग्रहण्यां—“गृद्धिः सर्वरसानां” ( च. चि. अ. १५ ) इति । इदानीं प्राग्रूपं निर्दिष्टमुपसंहरन्नुपद्रवाणां पृथग्व्याधित्वं निरस्यन्नाह—एवमेते इत्यादि । विंशतिप्रमेहाः सोपद्रवाः सह उपद्रवैर्वर्तन्ते, न पृथगेते व्याधय इत्यर्थः ॥ १३ ॥

**तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश[1] पिडका जायन्ते । तद्यथा—शराविका, सर्षपिका, कच्छपिका, जालिनी, विनता, पुत्रिणी, मसूरिका, अलजी, विदारिका, विद्रधिका चेति ॥ १४ ॥**

**नि० सं०**-पिडकानामुपद्रवविशेषाणां संप्राप्तिं दर्शयन्नाह—तत्रेत्यादि । वसा मांसस्नेहः, ‘सकलशरीरस्नेहः’ इत्यन्ये । अभिपन्नशरीरस्य व्याप्तशरीरस्य । अनुगतधातोर्व्याप्तधातोः । पिडकास्तु प्रायेणाधःकाय एव । तासां पिडकानां नामान्याह—तद्यथेत्यादि ॥ १४ ॥

**शरावमात्रा तद्रूपा निम्नमध्या शराविका ॥**
**गौरसर्षपसंस्थाना तत्प्रमाणा च सार्षपी ॥१५॥**
**सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥**
**जालिनी तीव्रदाहा तु मांसजालसमावृता[2] ॥१६॥**
**महती पिडका नीला पिडका विनता स्मृता[3] ॥**
**महत्यल्पाचिता ज्ञेया पिडका सा तु पुत्रिणी १७**
**मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका ॥**
**रक्ता सिता स्फोटवती दारुणा त्वलजी भवेत् १८**
**विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥**
**विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः ॥ १९ ॥**

**नि० सं०**-तासां लक्षणमाह—शरावमात्रेत्यादि । गौरसर्षपसंस्थाना गौरसर्षपाकारा । जालिनीत्यादि । यद्यपि ‘ये यन्मया स्मृता मेहास्तेषामेतास्तु तत्कृताः’—इत्यग्रे वक्ष्यते, तथाऽपि जालिनी पित्तोत्तरा ज्ञेया, तद्वचनस्य बाहुल्येनोक्तत्वात् । महती स्थूला । ‘अल्पाचितेति सूक्ष्मपिडकावेष्टिता ॥ १५—१९ ॥

**न्या० च०**-पश्चाद्भाविनामुपद्रवाणां प्रसङ्गेन पिडकानां पश्चाद्भाविनीनामुपद्रवविशेषाणां संप्राप्तिं दर्शयन्नाह—तत्र वसामेदोभ्यामित्यादि । तत्र वसा मांसस्नेहः; सकलशरीरस्नेह इत्यन्ये, पिडकासंप्राप्तौ चरके ओजोग्रहणात्; ओजश्च सकलशरीरस्नेहशुक्रस्थितः । तदुक्तं चरके—“गुरुस्निग्धाम्ललवणान्यतिमात्रं समश्नताम् । नवमन्नं च पानं च निद्रामास्यासुखानि च ॥ त्यक्तव्यायामचिन्तानां संशोधनमकुर्वताम् । श्लेष्मा पित्तं च मेदश्च मांसं चातिप्रवर्धते ॥ तैरावृतगतिर्वायुरोज आदाय गच्छति । यदा बस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्तते ॥ समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः । दर्शयत्याकृतिं गत्वा क्षयमाप्यायते पुनः ॥ उपेक्षयाऽस्य जायन्ते पिडकाः सप्त दारुणाः । मांसलेष्ववकाशेषु संधिष्वपि च मर्मसु ॥ शराविका कच्छपिका जालिनी सर्षपी तथा । अलजी विनताख्या च विद्रधी चेति सप्तमी” ( च. सू. अ. १७ ) इति; सर्वमेहविषयोऽयम्, उपेक्षामधुमेहे वायोरावरणवचनात् । यथाऽऽह चरकः—“श्लेष्मा पित्तं च मेदश्च मांसं चाति प्रवर्धते । तैरावृतगतिर्वायुरोज आदाय गच्छति ॥ यदा बस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्तते” ( च. सू. अ. १७ ) इति । वातजेषु मुखकषायादि च मनागस्ति । शोणितातियोगादिकृतेषु धातुक्षयजेषु वायोरावरणं नास्ति । किञ्च सर्वमेहोपद्रवेषु “पूतिमांसपिडिकालजीविद्रध्यादयश्च तत्प्रसंगाद्भवन्ति” ( च. नि. अ. ४ ) इति वचनात् तस्य प्रसंगो ह्यनुवर्तते । तथा चरक एव पिडकाहेतुर्मधुमेह एव, “उपेक्षया” ( च. सू. अ. १७ ) इति वचनात् । अनेन हि मेहेष्वतिगुरुस्निग्धाम्ललवणादिभोजनेन सहोपेक्षया श्लेष्मादिभिरतिप्रवृद्धैरावरणं तदैव मधुमेहपिडिकाः सप्त । तस्यैवेदं साधारणं लक्षणं—“समारुतस्य पित्तस्य कफस्य च” ( च. सू. अ. १७ ) इत्यादि । इत्युपेक्षामधुमेहोऽपि चरकेऽस्त्येव । स्वामिदासाचार्यजडनन्द्यादीनां चरकटीकाकाराणां परोक्षत्वात् तद्वर्तनं प्रत्यनुयोगो निखिलः । पिडिकास्तु सप्त चरके, सुश्रुते नव । सुश्रुते ये विनतामधीयते, ‘नीलाऽवगाढरुजा’ इत्यादिना, तत्पाठे तु संख्यातिरेकात् समानतन्त्रेष्वपाठात् सा न पठनीया । तथाहि **भोजः**—“शराविका सर्षपिका कूर्मिका जालिनी तथा । कुलत्थिकाऽलजी पुत्री विदारी विद्रधी तथा । नवैताः पिडिका ज्ञेया मेहिनां लक्षणैः शृणु”—इति । तस्मात्तुल्यतन्त्रसंवादात्तथैव विनता विहताऽस्तीति । मसूरिकैव भोजे कुलत्थिका ॥ १४–१९ ॥

**ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तत्कृताः ॥**

**नि० सं०**-पिडकाजनकान् दोषानाह—ये इत्यादि । ये यन्मया यद्दोषारब्धाः । तेषां प्रमेहाणाम् । एता इति पिडकाः ॥—

१ ‘नव’इति ता० । २ ‘मांसजालसमाश्रिता’ इति पा० ।
३ अयमर्धश्लोकस्ताडपत्रपुस्तके न पठ्यते ।

न्या० च०-ननु जालिनी तीव्रदाहा पित्तकृता, समानतन्त्रेऽपि पित्तकृतत्वमस्याः, तथाहि भोजः—"परस्परं हि संबद्धाः पिडकाश्चैकदेशजाः । पित्तोत्कटा दाहयुता भृशरुग्जालिनी" मता-इति; तत्कथं 'ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः' इति? उच्यते—पूर्वं पिडकानामारम्भकदोषाकथनात् दोषस्वभावकार्याणां च केषांचित्तास्वनुक्तेरनिलादिदोषावधारणार्थमिदमुक्तं—ये यन्मया इत्यादि । तत्र तेन वचनेनानियम एव नियमो, न पुनर्हि नियमोऽपि; किं च लोके बाहुल्येनैतद्वचनं, यथा—छत्रिणो यान्तीति; अछत्रिष्वपि छत्रिबाहुल्यात्तद्व्यपदेशः । तथा शास्त्रेऽपि "आमाशयोत्क्लेशभवो भूयिष्ठं ज्वर उच्यते", श्रमक्लमादिजा ज्वरा अलङ्घनीया इत्युक्तेः; जडेनैवं बहुतरमेव प्रलपितम् । पिडकालक्षणं सुबोधम् । पिडकास्तु प्रायेणाधःकाय एव; यदाह—"कृच्छ्रं शरीरं निष्पीड्य मेदोमज्जवसायुतः । अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः" इति । वातादिदोषैरेवाधोनीतत्वाद्दूष्याणां तथा रसायनीनां च दौर्बल्यान्नोर्ध्वमुत्तिष्ठन्ते दोषाः, अतो मधुमेहिनामधःकाये पिडकाः प्रादुर्भवन्ति ॥—

**गुदे हृदि शिरस्यंसे पृष्ठे मर्मणि चोत्थिताः ॥**
**सोपद्रवा दुर्बलाग्नेः पिडकाः परिवर्जयेत् ॥ २० ॥**

**नि० सं०**-तासामसाध्यतां दर्शयन्नाह—गुदे हृदीत्यादि । अंसो बाहुशिरः । सोपद्रवा इति "तृट्कासमांससंकोथमोहहिक्कामदज्वराः । विसर्पमर्मसंरोधाः पिडकानामुपद्रवाः" (च. सू. अ. १७) । 'सोपद्रवाल्पकायाग्नेः पिडकाः परिवर्जयेत्' इति केचित् पठन्ति । तत्र सोपद्रव इति पुरुषविशेषणम् ॥ २० ॥

**न्या० च०**-तासामसाध्यतां निर्दिशन्नाह—गुदे हृदीत्यादि । केचिदासामसाध्यतां चिकित्सिते पठन्ति—"असाध्या ऊर्ध्वभागोत्था मर्मोत्थाश्च विशेषतः—" इति । सोपद्रवा इति सह उपद्रवैर्वर्तन्त इति सोपद्रवाः । ते चोपद्रवास्तासां चरकादवगन्तव्याः । तथाहि **चरकः**—"तृट्कासमांसकोथश्वासहिक्कामदज्वराः । विसर्पमर्मसंरोधाः पिडकानामुपद्रवाः" (च. सू. अ. १७) इति ॥ २० ॥

**कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः ॥**
**अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः २१**

**नि० सं०**-वातजानामसाध्यत्वे हेतुं दर्शयन्नाह—कृत्स्नं शरीरमित्यादि । कृत्स्नं शरीरं निष्पीड्येति निश्च्योतयित्वा मूत्रमार्गेण समस्तान् धातून् प्रवाहयित्वेत्यर्थः । वसेत्युपलक्षणं, तेन ओजोलसीकयोर्ग्रहणम् । अधः प्रक्रमते अधः स्फीतीभवति प्रबलीभवतीत्यर्थः । **गयदासाचार्यस्तु** आपातनिकापूर्वं प्रमेहपूर्वरूपाणामित्यादिश्लोकत्रयमन्यथा पठति । असाध्यास्त्विति पूर्वहेतुभ्यां चेति तुशब्दार्थः ॥ २१ ॥

**न्या० च०**-वातजानामसाध्यत्वे हेतुं दर्शयन्नाह—कृत्स्नं शरीरं निष्पीड्येत्यादि । कफपित्तमेहेषु न कृत्स्नशरीरपीडनं, तयोर्नियतदेहविषयचरत्वात्; वसेत्युपलक्षणं, तेन ओजोलसीकयोरप्यवरोधः । प्रक्रमते इति वृत्त्यादिष्वर्थेषु क्रमतेरात्मनेपदम् । यस्याः प्रधानभूतधातुक्षयेण शरीरं दुर्बलीभवति, वपुः पुनः स्फीतीभवति, तेनासाध्या वातजाः; पूर्वहेतुभ्यां चेति तुशब्दार्थः ॥ २१ ॥

**प्रमेहपूर्वरूपाणामाकृतिर्यत्र दृश्यते ॥**
**किंचिच्चाप्यधिकं मूत्रं तं प्रमेहिणमादिशेत् ॥ २२ ॥**

**नि० सं०**-इदानीं प्रमेहहेतुयुक्तस्य पुरुषस्य सामान्याकारेण लक्षणमाह—प्रमेहपूर्वरूपाणामित्यादि ॥ २२ ॥

**कृत्स्नान्यर्धानि वा यस्मिन् पूर्वरूपाणि मानवे ॥**
**प्रवृत्तमूत्रमत्यर्थं तं प्रमेहिणमादिशेत् ॥ २३ ॥**

**नि० सं०**-प्रमेहस्य पूर्वोक्तसामान्यलक्षणस्य शेषं लक्षणमाह—कृत्स्नानीत्यादि । **गयदासस्त्वा**पातनिकापूर्वं प्रमेहपूर्वरूपाणीत्यादिश्लोकमन्यथा पठति; यथा—इदानीं प्रमेहपिडकाचिकित्सितनिर्देश्यमर्थं पञ्चगुणाश्रयं पूर्वरूपशोफपिडकावस्थाख्यं प्रतिपादयन्नाह—प्रमेहपूर्वरूपाणामित्यादि । तस्मिन्मेहो भविष्यतीति मेहस्य तत् पूर्वरूपम् । तत्र च पूर्वरूपेऽपतर्पणं वनस्पतिकषायपानादिकं च कर्तव्यम् । प्रवृत्तमूत्रमत्यर्थमिति रूपज्ञानम् । तत्र रूपचिकित्साविशेषः । तदुक्तम्—"एवमकुर्वतस्तस्य हीनप्रथमकर्मगुणस्य मधुराहारस्य मूत्रं स्वेदः श्लेष्मा च मधुरीभवति, प्रमेहश्चाभिव्यक्तो भवति, तत्रोभयतः संशोधनम्; एवमकुर्वतस्तस्य दोषाः प्रवृद्धा मांसशोणिते प्रदूष्य शोथं जनयन्त्युपद्रवांश्च कांश्चित्, तत्रोक्तः प्रतीकारः सिरामोक्षश्च; एतदप्यकुर्वतः पिडकाः, तत्कर्माप्यकुर्वतः पञ्चैलम्" (चि. अ. १२) इति ॥ २३ ॥

**न्या० च०**-इदानीं प्रमेहपिडकाचिकित्सितनिर्देश्यमर्थं पञ्चगुणाश्रयं पूर्वरूपशोफपिडिकावस्थाख्यं प्रतिपादयन्नाह—प्रमेहपूर्वरूपाणामित्यादि । तस्मिन्मेहो भविष्यतीति मेहस्य तत् पूर्वरूपम् । तत्र पूर्वरूपे विदिते "पूर्वरूपेष्वपतर्पणं वनस्पतिकषायपानं" (चि. अ. १३) इत्यादि कर्तव्यम् । कृत्स्नाण्यर्धानि वा यस्मिन् पूर्वरूपाणि मानवे प्रवृत्तमूत्रमत्यर्थमिति रूपज्ञानं; यदुक्तं—"प्रभूताविलमूत्रलक्षणाः सर्व एव प्रमेहाः" इति । अत्र हि पूर्वरूपाणामपि विद्यमानत्वात् किं पूर्वरूपाणां चिकित्सा रूपस्य वेत्याह—तं प्रमेहिणमादिशेदिति । व्याधिप्रभावादेव सकलपूर्वरूपाणामनुवृत्तावपि नारिष्टत्वम् । तत्र रूपे चिकित्साविशेषः । तदुक्तं—"तत्रैवमकुर्वतस्य मधुराहारस्य मूत्रं स्वेदः श्लेष्मा च मधुरीभवति, प्रमेहश्चाभिव्यक्तो भवति । तत्रोभयतः संशोधनम् । एवमकुर्वतस्तस्योक्ता दोषाः प्रवृद्धा मांसशोणितं प्रदूष्य

१ 'दुर्बलस्य' इति पा० ।

१ 'तस्मिन्मेहो भविष्यति' इति पा० । २ 'प्रमेहं तं विनिर्दिशेत्' इति पा० । ३ 'पञ्चमः' इति पा० ।

शोथं जनयन्त्युपद्रवांश्च कांश्चित्, तत्रोक्तः प्रतीकारः सिरामोक्षश्च । एतदप्यकुर्वतः पिडका; तत्कर्माप्यकुर्वतः पञ्चत्वमेव" ( चि. अ. १२ ) इति ॥ २२ ॥ २३ ॥

**पिडकापीडितं गाढमुपसृष्टमुपद्रवैः ॥**
**मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्तितः ॥२४॥**

**नि० सं०**-सर्वप्रमेहाणामवस्थान्तरप्राप्तानां संज्ञान्तरमसाध्यत्वं च दर्शयन्नाह—पिडकापीडितमित्यादि । स चेति चकार उत्पत्तौ वातजानामसाध्यत्वं समुच्चिनोति । उत्पत्तौ च सहजो याप्यत्वादसाध्यः, पित्तजः पुनरसाध्यतरः, वातजः पुनरुत्पत्तिक्रमेणासाध्यतमः ॥ २४ ॥

**न्या० च०**-उपद्रवाणां प्रत्येकदोषनिर्दिष्टानामशेषाणां च संभवं दर्शयन्नाह—पिडकापीडितमित्यादि । गाढमुपसृष्टमुपद्रवैरिति पिडकाशोथविद्राहे एनमुपद्रवाः स्पृशन्ति, पिडकानामुपेक्षया तु गाढमेवोपसृज्यते उपद्रवैः; तथा हि पिडकाचिकित्सित एवोक्तम्—"एवमकुर्वतस्तस्य दोषाः प्रवृद्धा मांसशोणिते प्रदूष्य शोथं जनयन्त्युपद्रवांश्च कांश्चित्" ( चि. अ. १२ ) इति । अर्थात् प्रत्येकवातादिजप्रमेहनिर्दिष्टान् । तत्रोक्तः प्रतीकारः शोथस्य विम्लापनादि, द्विव्रणीये चापतर्पणादि । तत्राप्यसाध्यसकलोपद्रवशोथपिडकः साध्यतां निवर्तते, वाऽसाध्यतरासाध्यतमतामेतीति पिडकाचिकित्सित एव विस्तरेण वक्ष्यामः । स चेति चकारः समुत्पत्तौ वातजानामसाध्यत्वं समुच्चिनोति, कफजः सहजो याप्यत्वादसाध्यः, पित्तजः पुनरसाध्यतरः, वातजः पुनरुत्पत्तिक्रमेणासाध्यतमः; अत एवोपेक्षामधुमेहो यापयितुं शक्यो नायापनाप्रयोग इत्येके । अन्ये पुनरसाध्यानां नियतानां विकल्पो नास्तीति । यत उपेक्षया प्रयोगेणातिदोषकर्तृकेण वा न प्रशाम्यति, न पुनर्नियतासाध्यविकल्प इति । मुनयो हि शब्दान्तरेण प्रस्तुतस्य वस्तुनोऽतिशयं द्योतयन्ति न पुनरुक्तस्यैव वा, तद्यथा—"हन्त्यष्टादश कुष्ठानि तथाऽष्टावुदराणि च" इति । तत्रोदराणां सर्वेषां वा कुष्ठानां शब्दीयासाध्यता नानेनोच्यते, किं तर्हि प्रयोगशक्तिरतिशयवतीति ॥ २४ ॥

**स चापि गमनात् स्थानं स्थानादासनमिच्छति ॥**
**आसनाद्वृणुते शय्यां शयनात् स्वप्नमिच्छति २५**

**नि० सं०**-इदानीं मधुमेहिनो विहाराख्यं पञ्चविधक्रियाश्रयं लिङ्गं दर्शयन्नाह—स चापीत्यादि । स्थानमूर्ध्वभवनमिच्छतीति संबन्धः । वृणुते प्रार्थयते । शयनात् शय्यातः ॥ २५ ॥

**न्या० च०**-तस्येदानीं मधुमेहिनो विहाराख्यं चतुर्विधक्रियाश्रयं लिङ्गं दर्शयन्नाह—स चापि गमनादित्यादि । गमनस्थानासनशयनानि हि सर्वेषामेव विहारः । अत्यान्न तथाऽवलम्बते मधुमेही, किं तर्हि निद्रामेव केवलामवलम्बते । अत्रैव भोजः—"प्रभूतमूत्रः पुरुषः पूर्वरूपैरुपद्रुतः । प्रमीढ इति विज्ञेयो, मधुमेही तु वक्ष्यते ॥ यस्य गात्रे प्रमीढस्य पिडका जायते भृशम् । मधुमेही स विज्ञेयो युक्तश्चोपद्रवैर्भृशम्" इति ॥ २५ ॥

**यथा हि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेण शवलवभ्रुकपिलकपोतमेचकादीनां वर्णानामनेकेषामुत्पत्तिर्भवति, एवमेव दोषधातुमलाहारविशेषेणोत्कर्षापकर्षकृतेन संयोगविशेषेण प्रमेहाणां नानाकरणं भवति ॥ २६ ॥**

**नि० सं०**-इदानीं दोषाणां त्रयाणामपि यथा विंशतिप्रमेहसंभवस्तथोपमानेनाह—यथेत्यादि । पञ्चानां वर्णानां सितहरितकृष्णपीतरक्तानाम् । उत्कर्षापकर्षकृतेन वृद्धिह्रासकृतेन । बभ्रुः कपिलपिङ्गलः, कपोतः कपोताभः, मेचकः श्यामलः । मलग्रहणमुपधातुभूतवसालसीकयोरुदकस्य चोपलक्षणम् ॥ २६ ॥

**न्या० च०**-इदानीं दोषत्रित्वात् त्रिभिरेव मेहैर्भवितव्यं, भेदो हि भेदवतां कारणभेदात् कार्याणां वा स्वधर्मभेदाद्भवतीति कारणानामेव वातादीनां दोषधातुमलाहारविशेषेण कार्याणां प्रमेहाणां भेदं दर्शयन्नाह—यथा हीत्यादि । विशेषयति परस्परतो व्यावर्तयतीति विशेषः, तेन । स च कफादीनां स्वको गुणः, तथा रसरक्तमांसमेदोमज्जशुक्रौजसां च स्वगुणः । मलग्रहणमुपधातुभूतवसालसीकोदकस्योपलक्षणम् । आहारश्चाप्यत्रैव 'मेद्यद्रवान्नपानसेविनं' इत्युक्तः । एवमेव व्याधिसमुद्देशीयेऽप्युक्तं—"दोषधातुमलसंसर्गादायतनविशेषान्निमित्तश्चैषां विकल्पः" ( सू. अ. २४ ) इति । तत्रायतनं परित्यज्याहारेण विहारमुपलक्ष्य सकल एव व्याधिसमुद्देशीयोक्तोऽर्थः प्रतिपादितः ॥ २६ ॥

**भवति चात्र—**
**सर्व एव प्रमेहास्तु कालेनाप्रतिकुर्वतः ॥**
**मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥२७॥**

**इति सुश्रुतसंहितायां निदानस्थाने प्रमेहनिदानं नाम षष्ठोऽध्यायः ॥ ६ ॥**

**नि० सं०**-इदानीं सर्वेष्वेव प्रमेहेषु पूर्वरूपादीनामुपेक्षालक्षणमनर्थं दर्शयन्नाह—भवति चात्रेत्यादि । कालः प्रथमक्रियाकालादिकः । अप्रतिकुर्वतः अप्रतिक्रियमाणस्य ॥ २७ ॥

इति श्रीडल्ह(ल्ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने षष्ठोऽध्यायः ॥ ६ ॥

**न्या० च०**-तत्र सर्वेष्वेव प्रमेहेषु पूर्वरूपादीनामुपेक्षणलक्षणमनर्थं दर्शयन्नाह—सर्व एव प्रमेहास्त्वित्यादि ॥२७॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकायां पञ्जिकायां निदानस्थाने प्रमेहनिदानं नाम षष्ठोऽध्यायः ॥

---

१ 'सुप्तुमिच्छति' इति पा० । २ 'चतुर्विधक्रियाश्रयं' इति पा० ।

१ 'शुक्लादिवर्णानां' इति ता. । २ 'अप्रतिकारिणः' इति पा० ।

## सप्तमोऽध्यायः ।

**अथात उदराणां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**नि॰ सं॰**-अथात इत्यादि ॥ १ ॥ २ ॥

**न्या॰ च॰**-प्रमेहानन्तरमुदरारम्भः, उदकवहस्रोतोदुष्टिसंभवसामान्यात्, त्रिदोषजसाधर्म्यान्महाव्याधित्वसामान्याच्च ॥ १ ॥ २ ॥

**धन्वन्तरिर्धर्मभृतां वरिष्ठो**
**राजर्षिरिन्द्रप्रतिमोऽभवद्यः[1] ॥**
**ब्रह्मर्षिपुत्रं विनयोपपन्नं**
**शिष्यं शुभं सुश्रुतमन्वशात् सः ॥ ३ ॥**

**नि॰ सं॰**-यो धन्वन्तरिरभवत् स सुश्रुतमन्वशादिति संबन्धः, शिक्षितवानित्यर्थः । धर्मभृतां धार्मिकाणां मध्ये । इन्द्रप्रतिमो ज्ञानैश्वर्यादिभिः । ब्रह्मर्षिर्विश्वामित्रः, राजर्षिरपि तपसा ब्रह्मर्षित्वं प्राप्तवान् । विनयोपपन्नं जितेन्द्रियम् । शुभमिति पूर्वोक्तैरन्वयवयःशीलादिगुणैरुपेतम् ॥ ३ ॥

**न्या॰ च॰**-ब्रह्मर्षिपुत्रमिति विश्वामित्रो हि राजर्षिरेव ब्रह्मर्षित्वं तपसा गतः । विनयोपपन्नमित्यनेन विनयान्वितेन गुरवः प्रष्टव्याः, विनीतस्यैवानुशासनं कर्तव्यमिति दर्शयति ॥ ३ ॥

**पृथक् समस्तैरपि चेह दोषैः**
**प्लीहोदरं बद्धगुदं तथैव ॥**
**आगन्तुकं सप्तममष्टमं च**
**दकोदरं चेति वदन्ति तानि ॥ ४ ॥**

**नि॰ सं॰**-उदराणां संख्यामाह—पृथगित्यादि । पृथग्दोषैस्त्रीणि, समस्तैर्दोषैरेकम्; एतेन चत्वारि दोषप्रधानानि । इहेति अस्मिञ्छास्त्रे । तानीति उदराणीत्यर्थः । प्लीहोदरादीनि चत्वारि दूष्यप्रधानानि । अष्टममिति संख्योक्त्या प्लीहोदरयकृद्दाल्युदरयोरैक्यमेव ज्ञातव्यम् ॥ ४ ॥

**न्या॰ च॰**-तत्र दोषैश्चत्वारि पृथगेकशस्त्रीणि, सान्निपातिकं च दूष्योदरमित्यभिहितम् । प्लीहोदरमिति प्लीहोदर एव यकृदुद्भवमप्यवरुध्यते, हेतुलिङ्गचिकित्सितसामान्यात् । तत्र प्लीहोदरे दोषौ कफपित्ते, दूष्यं रक्तम् । बद्धगुदमागन्तुविशेषः, पृथग्लिङ्गचिकित्सितभेदात् । क्षतान्त्रमप्यागन्तुनिमित्तं क्षतजेऽभिहितम् । दकोदरम् उदकोदरम्, उदकनिमित्तं स्रोतोवरोधजातम् ॥ ४ ॥

**सुदुर्बलाग्नेरहिताशनस्य**
**संशुष्कपूत्यन्ननिषेवणाद्वा ॥**
**स्नेहादिमिथ्याचरणाच्च जन्तो-**
**र्वृद्धिं गताः कोष्ठमभिप्रपन्नाः ॥ ५ ॥**
**गुल्माकृतिव्यञ्जितलक्षणानि**
**कुर्वन्ति घोराण्युदराणि दोषाः ॥**

**नि॰ सं॰**-उदराणां हेतुं दर्शयन्नाह—सुदुर्बलाग्नेरित्यादि । दुर्बलाग्नेः अत्यन्तनष्टाग्नेः । अहिताशनस्येति विरुद्धसमशनाध्यशनविषमाशनस्य । स्नेहादीत्यादिशब्दाद्वमनविरेचनास्थापनानुवासनपरिग्रहः । मिथ्याचरणं यथोक्तानुष्ठानपरित्यागः । जन्तोः प्राणिनः । अभिप्रपन्नाः प्राप्ता इत्यर्थः । किंविशिष्टान्युदराणि कुर्वन्ति ? गुल्माकृतिव्यञ्जितलक्षणानि गुल्माकृत्या गुल्मरूपेण व्यञ्जितानि प्रकटितानि लक्षणानि येषां तानि तथा । पुनरपि किंविशिष्टानि ? घोराणि कृच्छ्रतमानि ॥ ५ ॥—

**न्या॰ च॰**-स्थानसंश्रयस्यैव संप्राप्तिं दर्शयन्नाह—सुदुर्बलाग्नेरित्यादि । अहिताशनस्य दुर्बलाग्नेरिति यद्यपि हि वह्नेर्मान्द्यनिमित्तान्यन्यान्यपि सन्ति, तथाऽप्यहिताशनमेवाग्निमान्द्यकारिषु प्रधानम् । कोष्ठं गता इति स्थानसंश्रयः। कोष्ठस्थस्त्वेऽपि नातिशरीरादीनामतिनिवृत्तिः, उदकवहस्रोतोरोधदुष्टिसत्त्वात्, सुदुर्बलाग्नित्वादिदोषवत् (?) । गुल्माकृतिव्यञ्जितलक्षणानि गुल्माकृत्या गुल्मरूपेण वर्धते । तस्य प्रागुत्पत्त्याकृतिरपि गुल्मेन समाना ॥ ५ ॥—

**कोष्ठादुपस्नेहवदन्नसारो**
**निःसृत्य दुष्टोऽनिलवेगनुन्नः ॥ ६ ॥**
**त्वचः समुन्नम्य शनैः समन्ता-**
**द्विवर्धमानो जठरं करोति ॥**

**नि॰ सं॰**-संप्राप्तिं दर्शयन्नाह—कोष्ठादित्यादि । उपस्नेहवदिति नवघटाद्युपस्नेहो[1] यथाऽणुतमस्रोतोभिर्बहिःस्रवेद्[2] दृश्यते तद्वत् कोष्ठादन्नसारोऽन्नरसो निःसृत्य, शनैः क्रमेण, जठरमुदराख्यं रोगं करोतीति संबन्धः । कोष्ठशब्देनात्राहारपाकाधार उच्यते । किंभूतोऽन्नसारः ? दुष्टः । पुनः किंभूतः ? अनिलवेगनुन्नो वातवेगप्रेरितः । किं कृत्वा ? त्वचः समुन्नम्य आनद्धाः कृत्वा । पुनः किंभूतो रसः ? समन्ताद्विवर्धमानः समन्तात् सर्वतो वृद्धिं गच्छन् ॥ ६ ॥—

**न्या॰ च॰**-साधारणां संप्राप्तिं दर्शयन्नाह—कोष्ठादित्यादि । अन्नसारो रसः । कोष्ठान्निःसृत्येति कोष्ठशब्देनाहारपाकाधारो रसदोषमूत्रपुरीषविभागाश्रयो ग्रहण्यभिधान उच्यते, तत्रैव साराद्ब्यरसविभागात् । कथं पुनरेतत् कोष्ठादन्त्राणां रन्ध्राभावादन्नरसस्य निःसरणमित्याह—उपस्नेहवत् । नूतनघटादुपस्नेहो यथाऽणुभिर्बहिःस्रोतोभिर्बहिःस्रवद् दृश्यते तद्वत् । यद्येवं नित्यमेवोदराणां संप्राप्तिः प्राप्नोति, उपस्नेहेन सततमेवान्नरसस्य बहिर्निर्गमनात्; नैतदस्ति, उदरारम्भकदोषदूषितशरीरस्य रसस्वेदाम्बु-

---

१ 'बभूव' इति पा॰ ।

१ 'नवघटाद्युपस्नेहे' इति पा॰ । २ 'बहिःस्रावः' इति पा॰ ।

वहानां स्रोतसां दुष्टेः, दुष्टिश्चैतेषां संवृत्तमुखत्वेन विनिवृत्तमुखत्वेन च; तदुक्तं चरके—"स्वेदवाहिषु दुष्टेषु पारुष्यं लोमहर्षणम्। अतिस्वेदो न वा स्वेदो परिदाहश्च जायते" इति। यद्येवमत एव स्रोतोऽवरोधान्निःसरणमवाप्नोति। यथाऽऽह चरकः—"रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि संचिताः। प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम्" (च. चि. अ. १३) इति। स्वेदाम्बुवाहिस्रोतोऽवरोधे पुनरम्भः। यदाह चरकः—"स्वेदस्तु बाह्येषु स्रोतःसु प्रतिहतगतिस्तिर्यगवतिष्ठमानस्तदेवोदकमाप्याययति" (च. चि. अ. १३) इति। अत एव सर्वाङ्गकार्श्यमुदरिणामुदरस्य पुनः पूर्णतैव। तस्य दूष्यस्य दोषान् विना विकारकारिता नास्तीत्याह—अनिलवेगनुन्नस्त्वचः समुन्नम्येति। वृद्धेरयं हेतुः। स्रवन् समन्तादन्नसारोऽभिवर्धमानो जठरमुदरं करोति। तदुक्तं चरके—"मन्देऽग्नौ मलिनैर्भुक्तैरपाकाद्दोषसंचयः" (च. चि. अ. १३) इत्यादि ॥ ६ ॥—

> तत्पूर्वरूपं बलवर्णकाङ्क्षा-
> वलीविनाशो जठरे हि राज्यः ॥ ७ ॥
> जीर्णापरिज्ञानविदाहवत्यो
> बस्तौ रुजः पादगतश्च शोफः ॥

**नि० सं०**-पूर्वरूपमाह—तदित्यादि। विनाशशब्दो बलादिभिः प्रत्येकं सम्बध्यते। काङ्क्षा अन्नाभिलाषः। वली त्वक्संकोचः। राज्यो रेखाः 'भवन्ति' इति शेषः। जीर्णापरिज्ञानविदाहवत्यो बस्तौ रुज इति जीर्णापरिज्ञानविदाहौ विद्येते यासु बस्तिरुजासु तास्तथा। जीर्णापरिज्ञानमन्नपरिणामानिश्चयः; जीर्णापरिज्ञानं तु यथासंभवत्वात् पुरुषस्यैव ज्ञेयम् ॥ ७ ॥—

> संगृह्य पार्श्वोदरपृष्ठनाभी-
> र्यद्वर्धते कृष्णसिरावनद्धम् ॥ ८ ॥
> सशूलमानाहवदुग्रशब्दं
> सतोदभेदं पवनात्मकं तत् ॥

**नि० सं०**-वातोदरमाह—संगृह्येत्यादि ॥ ८ ॥—

> यच्चोपतृष्णाज्वरदाहयुक्तं
> पीतं सिरा भान्ति च यत्र पीताः ॥ ९ ॥
> पीताक्षिविण्मूत्रनखाननस्य
> पित्तोदरं तत्त्वचिराभिवृद्धि ॥

**नि० सं०**-पित्तोदरमाह—यदित्यादि। अचिराभिवृद्धि शीघ्रवर्धनशीलम् ॥ ९ ॥—

> यच्छीतलं शुक्लसिरावनद्धं
> गुरु स्थिरं शुक्लनखाननस्य ॥ १० ॥
> स्निग्धं महच्छोफयुतं ससादं
> कफोदरं तत्तु चिराभिवृद्धि ॥

**नि० सं०**-श्लेष्मोदरमाह—यच्छीतलमित्यादि। स्थिरं कठिनम्। ससादमङ्गग्लानियुक्तम् ॥ १० ॥—

> स्त्रियोऽन्नपानं नखरोममूत्र-
> विडार्तवैर्युक्तमसाधुवृत्ताः ॥ ११ ॥
> यस्मै प्रयच्छन्त्यरयो गरांश्च
> दुष्टाम्बुदूषीविषसेवनाद्वा ॥
> तेनाशु रक्तं कुपिताश्च दोषाः
> कुर्वन्ति घोरं जठरं त्रिलिङ्गम् ॥ १२ ॥
> तच्छीतवाताभ्रसमुद्भवेषु[१]
> विशेषतः कुप्यति दह्यते च
> स चातुरो मूर्च्छति संप्रसक्तं
> पाण्डुः कृशः शुष्यति तृष्णया च ॥ १३ ॥
> प्रकीर्तितं दूष्युदरं[२] तु घोरं

**नि० सं०**-सन्निपातोदरमाह—स्त्रिय इत्यादि। स्त्रियोऽन्नपानं नखरोममूत्रविडार्तवयुक्तं यस्मै पुरुषाय प्रयच्छन्ति ददति। किंभूताः स्त्रियः? असाधुवृत्ता दुराचाराः। स्त्रीग्रहणमत्रोपलक्षणं, तेनान्येऽपि सन्निहिता अविवेकिनो ग्राह्याः। अरयः शत्रवः। गरान् कृत्रिमविषाणि यस्मै प्रयच्छन्ति। दुष्टाम्बु सविषमत्स्यादिसंबन्धात्। विषमेव दावाग्निवातातपाद्यभिभवेन मन्दतां गतं विषपीतस्य वा विषं दूषीविषं; तेन नखरोमादिना विषकल्पेन गरेण दूषीविषेण वाऽऽशु शीघ्रं रक्तं कुपितमिति बोद्धव्यम्। त्रिलिङ्गं वातपित्तश्लेष्मलिङ्गम्। संप्रसक्तं निरन्तरम्। दूष्युदरमिति यदेव सान्निपातिकोदरं तदेव दूष्युदरम्, एतेन न संख्यातिरेकः। घोरं भयानकं, पुनर्घोरं कष्टकारि ॥ ११—१३ ॥—

**न्या० च०**—दुष्टाम्बुदूषीविषसेवनाद्वेति दूषीविषं विषमेव दावाग्निवातातपाद्यभिभवेन मन्दतां गतम्। तेनाशु रक्तं कुपितं विषस्य रक्तदूषणस्वभावत्वात्, आशुकारित्वाच्च। तत् शीतादिषु विशेषेण कुप्यति, दूषीविषकोपस्य तत्रैव दर्शितत्वात्। मूर्च्छतीति विषस्य मूर्च्छाकरत्वात्, प्रसक्तं निरन्तरं मूर्च्छति। पाण्डुश्च भवति, रक्तदोषात्। दूष्योदरमेतदेव सान्निपातिकोदरं यदेव तदेव दूष्योदरम्। एतेन न संख्यातिरेकः। दूषयन्तीति दूष्याः, "कृत्यल्युटो बहुलम्" (पा. अ. ३।३।११३) इति कप्रत्ययः; तस्योदरं, तेन कृतत्वात्। अत्र भोजः-"नखलोमार्तवैर्युक्तमन्नपानं यदा स्त्रियः। वशीकर्तुं प्रयच्छन्ति तद्विषत्वाय कल्पते ॥ दूषीविषं सेवितं वा तस्य रक्तं प्रकोपयेत्। रक्तं विषेण संदुष्टं त्रीन् दोषान् तत्तु कोपयेत्" इति ॥ ७-१३ ॥—

१ 'तच्छीतवाते भृशदुर्दिने च' इति पा०। 'तच्छीतवातातपदुर्दिनेषु' इति ता.। २ 'दूष्योदरं कीर्तितमेतदेव' इति ता.।

प्लीहोदरं कीर्तयतो निबोध ॥
विदाह्यभिष्यन्दिरतस्य जन्तोः
प्रदुष्टमत्यर्थमसृक् कफश्च ॥ १४ ॥
प्लीहाभिवृद्धिं सततं करोति
प्लीहोदरं तत् प्रवदन्ति तज्ज्ञाः ॥
वामे च पार्श्वे परिवृद्धिमेति
विशेषतः सीदति चातुरोऽत्र ॥ १५ ॥
मन्दज्वराग्निः कफपित्तलिङ्गै-
रुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥

नि० सं०-निबोध जानीहि। अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजनकम्। असृक् कफश्चेति असृग्ग्रहणेन पित्तस्यापि ग्रहणम्। प्लीहा उदरस्य वामपार्श्वस्थितः। एति गच्छति। सीदति अङ्गग्लानियुक्तो भवति। अत्र प्लीहोदरे ॥ १४ ॥ १५ ॥—

न्या० च०-प्लीहोदरे विदाहिरतत्वेन रक्तपित्तं, तस्य पित्तस्य लिङ्गं मन्दो ज्वरः; अभिष्यन्दिरतत्वेन कफः, तल्लिङ्गं मन्दाग्नित्वम् ॥ १४ ॥ १५ ॥—

सव्येतरस्मिन् यकृति प्रदुष्टे
ज्ञेयं यकृद्दाल्युदरं तदेव ॥ १६ ॥

नि० सं०-यकृद्दाल्युदरस्य प्लीहोदरे एवावरोधं दर्शयन्नाह—सव्येतरस्मिन्नित्यादि। सव्येतरस्मिन् दक्षिणपार्श्वे। तदेव प्लीहोदरं यकृद्दाल्युदरं ज्ञेयम्। क ज्ञेयमित्याह—यकृति कालखण्डे; किंभूते? प्रदुष्टे; एतेन न संख्यातिरेकः ॥ १६ ॥

न्या० च०-यकृद्दाल्युदरस्य प्लीहोदर एवावरोधं दर्शयन्नाह—सव्येतरे इत्यादि। सव्येतरे दक्षिणे। तदेव प्लीहोदरमेव ॥ १६ ॥

यस्यान्त्रमन्नैरुपलेपिभिर्वा
बालाश्मभिर्वा सहितैः पृथग्वा ॥
संचीयते तत्र मलः सदोषः
क्रमेण नाड्यामिव संकरो हि ॥ १७ ॥
निरुध्यते चास्य गुदे पुरीषं
निरेति कृच्छ्रादपि चाल्पमल्पम् ॥
हृन्नाभिमध्ये परिवृद्धिमेति
त(य)च्चोदरं विट्समगन्धिकं च ॥ १८ ॥
प्रच्छर्दयन् बद्धगुदी विभाव्यः,

नि० सं०-बद्धगुदं दर्शयन्नाह—यस्येत्यादि। यस्य पुरुषस्य अन्त्रं निरुध्यत इति संबन्धः। कैर्निरुध्यत इत्याह—अन्नैरित्यादि। उपलेपिभिः पिच्छिलादिभिः। वा अत्र समुच्चये। सहितैरिति एकत्र मिलितैः समुदितैरित्यर्थः। पृथग्वेति एकैकैरित्यर्थः। मलः पुरीषम्। सदोषो दोषत्रयसहितः। नाड्यां प्रणालिकायाम्। सङ्करोऽवकरः, प्रचुरतृणादिसमूह इत्यर्थः। निरेति निःसरति। बद्धगुदी विभाव्यः स पुरुषो बद्धगुदी ज्ञेयः ॥ १७ ॥ १८ ॥—

न्या० च०-बद्धगुदं दर्शयन्नाह—यस्यान्त्रमन्नैरित्यादि। उपलेपिभिः पिच्छिलादिभिः। पिहितं यथावत् सकलमित्यर्थः। मलः पुरीषम्। सदोषः सह दोषैर्वातादिर्वर्तत इति। पुरीषमन्त्रे क्रमेण चीयते संकरवत्, दोषैरेव मिश्रीकृतत्वात्। तदुक्तं चरके—"वर्चःपित्तकफान् रुद्ध्वा जनयत्युदरं ततः" (च. चि. अ. १३) इति। अत्र पा(व)कस्थाने अन्नस्य पुरीषायतनस्य रुद्धत्वात् बद्ध(द्ध)गुदसंबन्धमन्त्रं गुदमुच्यते। तदुक्तं चरके—"पक्ष्मबालैः सहान्नेन भुक्तैर्बद्धायने गुदे" इति (च. चि. अ. १३) ॥१७॥१८॥—

ततः परिस्राव्युदरं निबोध ॥
शल्यं यदन्नोपहितं तदन्त्रं
भिनत्ति यस्यागतमन्यथा वा ॥ १९ ॥
तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाशः
स्रावः स्रवेद्वै गुदतस्तु भूयः ॥
नाभेरधश्चोदरमेति वृद्धिं
निस्तुद्यतेऽतीव विदह्यते च ॥ २० ॥
एतत् परिस्राव्युदरं प्रदिष्टं

नि० सं०-परिस्राव्युदरमाह—तत इत्यादि। यच्छल्यमन्नोपहितमन्नसंबद्धं भुक्तं, तदन्त्रं भिनत्ति विदारयति। यस्य पुरुषस्य। शल्यं शर्कराकाष्ठास्थिकण्टकादिकम्। आगतमन्यथा वेति वाशब्दोऽवधारणे, तेनान्यथैव विलोमेन तिर्यगेवागतं, नत्वनुलोमेन। स्रुतो गलितः ॥ १९ ॥ २० ॥—

न्या० च०—क्षतान्त्रं निर्दिशन्नाह—शल्यं यदन्नोपहितमित्यादि। शल्यं शर्करातृणकाष्ठास्थिकण्टकादि। अन्नोपहितं भुक्तं पक्वाशयादन्यथा विलोमेनागतं, तदन्त्रं भिनत्ति विदारयति। अन्त्रात् स्रुतः सलिलप्रकाशः स्रावो भूयो बहुश्च, दोषजेषु पुनरुपस्नेहस्रावेणाल्प एव गुदतश्च स्रवते। अन्त्रस्रावस्य बहिर्गतत्वात् कथं गुदतश्च स्रावः? उच्यते—सलिलबाहुल्येन तेनैव छिद्रेण सलिलस्य प्रत्यागत्वादुपस्नेहाद्गुदस्रावः; तदुक्तं चरके—"पूरयन् गुदमन्त्रं च जनयत्युदरं ततः" (च. चि. अ. १३) इति। ततस्तस्मात् स्रावान्नाभेरधो जठरं वृद्धिमेति, जलस्याधोगामित्वात्। छिद्रोदरजलोदरयोरदूरदोषत्रयव्यपदेशः। तथाऽऽह छिद्रोदरे एव चरकः—"तदधोनाभेः प्रायोऽभिनिर्वर्तमानं जलोदरं स्याद्, यथाबलं च दोषाणां रूपाणि दर्शयति" (च. चि. अ. १३) इति। छिद्रोदरजलोदरयोरदूरदोषत्रययोरपि तोदादिवेदना वायुना मार्गावरणादिकुपितेन ॥ १९ ॥ २० ॥—

दकोदरं कीर्तयतो निबोध ॥
यः स्नेहपीतोऽप्यनुवासितो वा
वान्तो विरिक्तोऽप्यथवा निरूढः ॥ २१ ॥

१ 'पिहितं यथावत्' इति पा०।

पिबेज्जलं शीतलमाशु तस्य
स्रोतांसि दुष्यन्ति हि तद्वहानि ॥
स्नेहोपलिप्तेष्वथवाऽपि तेषु
दकोदरं पूर्ववदभ्युपैति ॥ २२ ॥
स्निग्धं महत् संपरिवृत्तनाभि
भृशोन्नतं पूर्णमिवाम्बुना च ॥
यथा दृतिः क्षुभ्यति कम्पते च
शब्दायते चापि दकोदरं तत् ॥ २३ ॥

**नि० सं०**-उदकोदरमाह—दकोदरमित्यादि । दकोदरम् उदकोदरमित्यर्थः । तद्वहानि तोयवहानि । स्नेहोपलिप्तेष्वथवाऽपि तेष्विति स्नेहादिपानं विनाऽपि तेषु स्रोतःसु स्नेहोपलिप्तेषु यदा शीतलं जलं पिबेत्तदाऽपीत्यर्थः । पूर्ववदिति क्षतान्त्रोदरे यथा सलिलस्याधोगामित्वादधो नाभेरुदरोत्पत्तिर्यथा च गुदादास्रावस्तद्वदिति; **जेज्जटेन** पुनः 'पूर्ववदित्यत्रान्यान्युदराणि यथा भवन्ति तथेदमपि' इति व्याख्यातं, तन्नेच्छति **गयी** । परिवृत्तनाभि उच्छलितनाभि । दृतिः खल्ला । क्षुभ्यति चलति । कम्पते चेति कम्पनमतिशयेन चलनम् ॥ २१—२३ ॥

**न्या० च०**-दकोदरं दर्शयन्नाह—यः स्नेहपीत इत्यादि । यः शीतलमाशु जलं पिबेत् तस्य स्नेहपानानुवासिनोऽन्तः-स्नेहावलिप्तस्रोतसोऽतिशयवती स्रोतोदुष्टिः स्यात्; वान्तविरिक्तनिरूढाणामतिरिक्तभावेन विवृतस्रोतसां पूर्वकर्मप्रधानकर्ममन्दाग्नीनामत्यम्बुसेवया सलिलवहस्रोतसां क्लोममूलानां दुष्टिरभ्युपेयात् । दकोदरे एव संप्राप्तिविकल्पं दर्शयन्नाह—स्नेहोपलिप्तेष्वित्यादि । अथवा विनाऽपि स्नेहादिपानं शीतलसलिलसेवाकृतामुदरस्रोतोदुष्टिः, स्नेहोपलिप्तेष्वथवाऽपि तेषु स्रोतःसु दकोदरमभ्युपैति । पूर्ववदिति पूर्ववत् क्षतान्त्रोदरे यथा सलिलस्याधोगामित्वादधोनाभेरुदराभिनिर्वृत्तिः । तदुक्तं जलोदरे एव चरके—"तस्य रूपाणि-अन्नेऽनाकांक्षा पिपासा गुदस्रावः" इत्यादि । स्रोतसां दुष्टत्वेन बहिरुपस्नेहेन जलनिःसरणं सर्वेष्वेव समम् । पूर्ववच्छब्दस्यान्य एवार्थो न पुनर्व्याख्यातः ॥ २१—२३ ॥

आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता ॥
शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः ॥
दाहस्तृष्णा च सर्वेषु जठरेषु भवन्ति हि ॥२४॥

**नि० सं०**-तेषामष्टानामपि सामान्यं लिङ्गं दर्शयन्नाह—आध्मानमित्यादि । **जेज्जटेन** पुनरेते उपद्रवा व्याख्याताः; तन्नेच्छति **गयी** ॥ २४ ॥

**न्या० च०**-तेषामष्टानामपि सामान्यलिङ्गं दर्शयन्नाह—आध्मानमित्यादि । जडेन ( जेज्जटेन ) उपद्रवा एते व्याख्याताः; तन्न, चरके व्याधीनामपि रोगसंभवानामुपद्रवत्वेन निषिद्धत्वात् ॥ २४ ॥

१ 'चाप्युदकोदरं तत्' इति पा० ।

अन्ते सलिलभावं हि भजन्ते जठराणि तु ॥
सर्वाण्येव परीपाकात्तदा तानि विवर्जयेत् ॥२५॥

इति सुश्रुतसंहितायां निदानस्थाने उदरनिदानं नाम सप्तमोऽध्यायः ॥ ७ ॥

**नि० सं०**-साध्यासाध्यविभागमाह—अन्त इत्यादि । परिपाकात् परिणामेन दकोदरता सर्वेषामेव; अन्यान्युदराणि परिपाकादुदकभावं भजन्ते, दकोदरं प्रागेवेति विशेषः ॥२५॥

इति श्रीडल्ह(ह्र)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने सप्तमोऽध्यायः ॥ ७ ॥

**न्या० च०**-साध्यासाध्यविभागायाह—अन्ते सलिलभावमित्यादि । परिपाकात् परिमाणेन जलोदरता सर्वेषामेव । उपस्नेहेन निःसृताम्र(न्न)रसातिवृद्धेन । सर्वेषामेव उपस्नेहेन निःसृतान्नरसमूलत्वात्तदेव कथमनुदकत्वं ? नैष दोषः, तत्र क्षुपेक्षया नातिमन्दत्वादग्नेः स्वल्पत्वात् प्रागुदरस्यानुदकत्वमित्युच्यते, अल्पत्वेऽतद्व्यपदेशात् । तस्य च लक्षणं **चरकेणोक्तम्**—"अशोथमरुणाभासं सशब्दं नातिभारिकम् । सदा गुडगुडायच्च सिराजालगवाक्षितम् ॥ नाभिं विष्टभ्य पायौ तु वेगं कृत्वा प्रणश्यति । हृद्वंक्षणकटीनाभिगुदप्रत्येकशूलिनः ॥ कर्कशं सृजतो वातं नाति मन्दे च पावके । लोलस्याविरसे चास्ये मूत्रेऽल्पे संहते विषि ॥ अजातोदकमित्येतैर्युक्तं विज्ञाय लक्षणैः । उपाचरेत्"—( च. चि. अ. १३ ) इत्यादि । अतः परमुपस्नेहवन्निःसृतोऽन्नरसो नात्यच्छपिच्छिलाकारेण संभवत्युदरे, सा पुनरवस्था पच्यमानानामुदराणाम् । तदुक्तं **चरके**—"तत्र पिच्छोत्पत्तौ मण्डलमुदरं गुरु स्तिमितं भृशमाततमाकोटितमशब्दं मृदुस्पर्शमपगतराजीकमाक्रान्तं नाभ्यां परिसर्पति" ( च. चि. अ. १३ ) इति । अतः परं जातोदकमुदरं; तस्य लक्षणमुदकोदरनिर्दिष्टं "स्निग्धं महत्संपरिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च" इति । चरकेऽपि—"तस्य रूपाणि कुक्षेरतिमात्रं वृद्धिः सिरान्तर्धानगमनमुदकपूर्णदृतिसमसंक्षोभस्पर्शं च भवति । तथाविधमचिकित्स्यं विद्यात् ( च. चि. अ. १३ ) इति ॥ २५ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां
न्यायचन्द्रिकायां पञ्जिकायां निदानस्थाने
उदराणां निदानम् ॥

---

## अष्टमोऽध्यायः ।

अथातो मूढगर्भनिदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

**नि० सं०**-अथात इत्यादि । मूढो निरुद्धगतिः । तदुक्तं—'सर्वावयवसंपूर्णो मनोबुद्ध्यादिसंयुतः । विगुणापानसंमूढो मूढगर्भोऽभिधीयते'—इति ॥ १ ॥ २ ॥

१ 'विध्येत्त्यजेत वा' इति पा० ।

न्या० च०-अथातो मूढगर्भनिदानं व्याख्यास्यामः । उदरानन्तरं मूढगर्भनिदानारम्भः, उदरस्थाने च्छिद्रे शस्त्रकर्मसाध्यत्वसामान्यात्, महाव्याधित्वसामान्याच्च । मूढश्चासौ गर्भश्चेति मूढगर्भः । मूढो व्यासक्तगतिः । तथा हि चरकः—"मूढवातानुलोमनं" इति, तथाऽत्राप्यनिर्गच्छन्तमनिलसंमोहितमिति ॥ १ ॥ २ ॥

ग्राम्यधर्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीडनधावनाभिघातविषमशयनासनोपवासवेगाभिघातातिरूक्षकटुतिक्तभोजनशोकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः, फलमिव वृन्तबन्धनादभिघातविशेषैः; स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसंक्षोभमापादयति, तस्या जठरसंक्षोभाद्वायुरपानो मूढः पार्श्वबस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानामन्यतममापाद्य गर्भं च्यावयति तरुणं शोणितस्रावेण; तमेव कदाचिद्विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानं विगुणापानसंमोहितं गर्भं मूढगर्भमित्याचक्षते ॥ ३ ॥

नि० सं०-तस्य हेतुं दर्शयन्नाह—ग्राम्यधर्मेत्यादि । ग्राम्यधर्मो मैथुनं, यानं रथादि, वाहनमश्वादि, अध्वगमनं पद्भ्यां मार्गगमनं, प्रस्खलनमाखुडनादि, प्रपतनं प्रासादादेः सकाशादतिशयेन पतनं, प्रपीडनमतिशयेन पीडनं, प्रधावनमतिशयेन धावनम्, अभिघातः शस्त्रलोष्टकशादिभिः प्रहारः, वेगाभिघातो वाताद्यवरोधः, प्रेङ्खोलनं हिन्दोलनं, गर्भशातनं भेषजेन गर्भपातनम् । केचिदेतद्द्वयमन्यथा पठन्ति, तत्त्वभावान्न लिखितम् । बन्धनमत्र गर्भाशयप्रतिबद्धाः सिराः पेश्यश्च । मोचने उपमानमाह—फलमित्यादि । एतेनैतदुक्तं भवति—यथा वृक्षेऽपरिपक्वं फलमभिघातैरकाल एव पतति, तद्वद्यथोक्तपातनहेतुसामर्थ्यादप्रसवकाल एव गर्भः पतति । अतिक्रम्य उल्लङ्घ्य । विवरैः अन्तरालैः । अवस्रंसमानः अधः पतन् । कोष्ठशब्देनामाशयपक्वाशयादिस्थानम् । संक्षोभश्चलनम् । तस्याः स्त्रियाः । मूढो विमार्गगामी । अन्यतमम् एकतमम् । आपाद्य निर्वर्त्य । तरुणं गर्भमपानो मूढः सन् च्यावयतीति संबन्धः । तरुणम् अघनाङ्गमव्यक्तचेतनम् । मूढगर्भस्य निरुक्तिमाह—तमेवेत्यादि । असम्यगागतं विलोमभागेनागतम्, अवाग्गमनात् । अपत्यपथं योनिम् । अनुप्राप्तम् आश्रितम् । अनिरस्यमानम् अनिःसरन्तम् । संमोहितं मूर्च्छितम् ॥ ३ ॥

न्या० च०-तस्य हेतुं दर्शयन्नाह—ग्राम्यधर्मेत्यादि । ग्राम्यधर्मो व्यवायः, यात्यनेनेति यानं रथादि, वाह्यत इति वाहनमश्वादि । प्रस्खलनं समुच्छ्रितादेः । प्रपतनं प्रपातादेः । अत्र ग्राम्यधर्मादयो वेगविघातान्ता विहारविशेषाः, अतिरूक्षादयः पुनरजीर्णान्ता आहारविशेषाः । गर्भशातनं भेषजेन गर्भपातनम् ।......तस्य क्षोभः कोष्ठसंक्षोभः । वायुरपानो मूढः विमार्गवर्ती । तरुणम् अघनाङ्गमव्यक्तचेतनम् ॥ ३ ॥

ततः कीलः प्रतिखुरो बीजकः परिघ इति । तत्र, ऊर्ध्वबाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव स कीलः; निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः; यो निर्गच्छत्येकशिरोभुजः स बीजकः; यस्तु परिघ इव योनिमुखमावृत्य तिष्ठति स परिघः; इति चतुर्विधो भवतीत्येके भाषन्ते । तत्तु न सम्यक्; कस्मात्? स यदा विगुणानिलप्रपीडितोऽपत्यपथमनेकधा प्रपद्यते तदा सङ्ख्या हीयते ॥ ४ ॥

नि० सं०-तस्य चातुर्विध्यमाह—तत इत्यादि । ततः असम्यगागमनात् । तान् प्रकारान् प्रकटयन्नाह—तत्रोर्ध्वबाहुशिर इत्यादि । कायसङ्गी निरुद्धकायः । एकशिरोभुज इति एको भुजः शिरसा सह यस्य निर्गच्छतीत्यर्थः । परिघ इवेति परिघोऽर्गलदण्डः ॥ ४ ॥

न्या० च०—"अधः पार्श्वगतो वाऽपि तथैवाकुञ्चितोऽपि वा । यो निःसृत्य मुखं योनेर्ज्ञेयः प्रतिखुरस्तु सः ॥ योनिद्वारात्तु निर्गच्छेद्यस्यैकांशशिरोभुजम् । तमाहुर्बीजकं नाम मूढगर्भचिकित्सकाः ॥ योनिमाश्रि(वृ)त्य यस्तिष्ठेत् परिघो गोपुरं यथा । तथाऽन्तगर्भमायन्तं विद्यात् परिघसंज्ञकम्" इत्येषां चतुर्णां लक्षणं परिपठ्यते नाग(-र्जुनीयात्) ॥ ४ ॥

तत्र, कश्चिद्द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते; कश्चिदाभुग्नैकसक्थिरेकेन; कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्यगागतः; कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते; अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना; कश्चिदाभुग्नशिरा बाहुद्वयेन; कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः; कश्चिदेकेन सक्थ्ना योनिमुखं प्रतिपद्यतेऽपरेण पायुम्; इत्यष्टविधा मूढगर्भगतिरुद्दिष्टा समासेन ॥ ५ ॥

नि० सं०-तानेवानेकप्रकारान् दर्शयन्नाह—तत्रेत्यादि । आभुग्नं सङ्कुचितम् । एकेन सक्थ्ना 'योनिमुखं प्रतिपद्यते' इति संबन्धनीयम् । आभुग्नं सक्थिशरीरं यस्येत्यर्थः । 'योनिमुखं प्रतिपद्यते' इत्यत्रापि संबन्धनीयम् । पिधाय आच्छाद्य । अन्तःपार्श्वापवृत्तशिराः पार्श्वमध्यनिक्षिप्तशिराः । एकेन बाहुना

१ 'व्यापादयति' इति पा० । २ 'बन्धनान्नाभिनाडीबन्धनात्' इति हाराणचन्द्रः । ३ 'विमार्गवर्ती' इति पा० । ४ 'व्यापादयतीत्यर्थः' इति पा० ।

१ 'संकीलः' इति पा० ।

'योनिमुखं प्रतिपद्यते' इति संबन्धनीयम्। कश्चिदित्यादि अत्रापि 'योनिमुखं प्रतिपद्यते' इति संबन्धनीयम्। कश्चिदाभुग्नमध्य इत्यादि 'योनिमुखं प्रतिपद्यते' इत्यत्रापि संबन्धनीयम्। समासेनाष्टविधा विस्तरेण तु तिर्यग्ग्रीवोरुजङ्घाप्रकारेणानन्ताः ॥५॥

**न्या० च०**-चतुः संख्याप्रकारान् तानेवानेकप्रकारांश्च दर्शयन्नाह—तत्र कश्चिद्द्वाभ्यामित्यादि। समासेनाष्टविधाः, विस्तरेण तिर्यग्ग्रीवोरुजङ्घाप्रकारेणानन्ताः ॥ ५ ॥

**तत्र द्वावन्त्यावसाध्यौ मूढगर्भौ, शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसंवरणमक्कल्लश्वासकासभ्रमनिपीडितान् परिहरेत् ॥ ६ ॥**

**नि० सं०**-तेष्वसाध्यान्निर्दिशन्नाह—तत्रेत्यादि। द्वावन्त्यौ सप्तमाष्टमावसाध्यौ स्वभावेनैव। अन्येष्वप्यवस्थयाऽसाध्यत्वं दर्शयन्नाह—शेषानपीत्यादि। विपरीतेन्द्रियार्थादिभिः पीडिता जननी यैर्मूढगर्भैस्ते तथाविधास्तान्। विपरीतेन्द्रियार्था रूपाद्यर्थग्रहणभ्रान्ताः। योनिभ्रंशो योनिबहिर्गमनम्। योनिसंवरणं योनिसङ्कोचः। प्रसूताया वायुरसृगारोध्य बस्तिशिरःप्रभृतिषु शूलं करोति स मक्कल्लः। भ्रमश्चक्राधिरूढस्येव भ्रमणम् ॥ ६ ॥

**न्या० च०**-तेष्वसाध्यान्निर्दिशन्नाह—तेषु द्वावित्यादि। तत्रैतौ स्वभावेनैवासाध्यौ। अन्येष्वप्यवस्थामात्रासाध्यतां दर्शयन्नाह—शेषानपीत्यादि। विपरीतेन्द्रियार्था रूपाद्यर्थग्रहणभ्रान्ताः। योनिभ्रंशोऽधोनिर्गमः। योनिसंवरणं परासंगः, स च गर्भिणीव्याकरणीये व्याख्यातः। मक्कल्लस्तु प्रसूताया वायुरसृगारोध्य बस्तिशिरःप्रभृतिषु शूलं करोति स मक्कल्लः, तत्संभूतोऽपि विद्रधिर्मक्कल्लः ॥ ६ ॥

**भवन्ति चात्र—**

**कालस्य परिणामेन मुक्तं वृन्ताद्यथा फलम् ॥**
**प्रपद्यते स्वभावेन नान्यथा पतितुं ध्रुवम् ॥ ७ ॥**
**एवं कालप्रकर्षेण मुक्तो नाडीनिबन्धनात् ॥**
**गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते ॥ ८ ॥**

**नि० सं०**-स्वभावप्रजननकाले यथा मूढगर्भो न भवति तथा श्लोकद्वयेन दर्शयन्नाह—कालस्येत्यादि। यथा कालस्य परिणामेन कालकृतपरिपाकेन वृन्तान्मुक्तं फलं स्वभावेन पतितुं प्रपद्यते पतनं प्राप्नोति, अन्यथा कालपरिपाकाभावेन पतितुं न प्रपद्यते पतनं न प्राप्नोति, एवं कालप्रकर्षेण नाडीनिबन्धनान्मुक्तो यो गर्भाशयस्थो गर्भः स जननाय प्रपद्यते जन्म प्राप्नोतीत्यर्थः ॥ ७ ॥ ८ ॥

**कृमिवाताभिघातैस्तु तदेवोपद्रुतं फलम् ॥**
**पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युतिः ॥९॥**

**नि० सं०**-मूढगर्भो यथा भवति तथा दर्शयन्नाह—कृमिवाताभिघातैरित्यादि। गर्भविच्युतिर्द्विविधा—द्रवस्य स्रावरूपेण, घनावयवस्य पातरूपेण। तत्र द्रवस्य स्रवणे मूढगर्भनाम नास्ति, विगुणानिलसंमोहानिर्गमलक्षणस्याभावात् ॥ ९ ॥

**आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविच्युतिः ॥**
**ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ १० ॥**

**नि० सं०**-परतस्त्वस्तीति दर्शयन्नाह—आचतुर्थादित्यादि। गर्भविच्युतिः गर्भविमुक्तिः; प्रस्रवेत् स्रावरूपा भवेत्। एतेन मासचतुष्टयं यावन्मूढगर्भता नास्तीत्युक्तम्। तत इत्यादि। ततश्चतुर्थमासादूर्ध्वं स्थिरशरीरस्य विच्युतिः पातः पातरूपा भवेत्। एतेन विच्युतिरियं न स्रावरूपा; तस्माच्चतुर्थमासानन्तरं घनावयवत्वान्मूढगर्भो भवतीत्युक्तम् ॥ १० ॥

**न्या० च०**-स्वभावप्रजननकाले यथा मूढगर्भो न भवति, अन्यथा तु भवति, तथा दर्शयन्नाह—कालस्य परिणामेनेत्यादि। तस्याकालच्युतिरपि द्विप्रकारा-द्रवस्य स्रावरूपेण, घनावयवस्य पातरूपेण। तत्र द्रवस्य स्रवणे मूढगर्भता नास्ति, विगुणानिलसंमोहनिर्गमलक्षणस्याभावात्। परतस्त्वस्तीति दर्शयन्नाह—आचतुर्थात्ततो मासादित्यादि। प्रस्रवेद् गर्भस्रावकर्मा( रूपा ) विच्युतिः, नातिघनावयवत्वात्। परतस्तु पातव्यपदेशः, किञ्चिद्घनतरावयवत्वात्; न तु स्रावः, स्रावलक्षणाभावात्। पातः पञ्चमषष्ठयोरित्युपलक्षणं, सप्तादिमासमप्युपलक्षयति ।...... चरकादिषु। भोजे तृतीयमास एव चेतनाभिसंबन्धः। तथाहि—भोजः—"आतृतीयात्ततो मासाद्गर्भः स्रवति शोणितम्। ऊर्ध्वं संघातभूतस्तु गर्भो पतति योषिताम्" इति। संयावो नाम नातिमृदुकठिनः समिताशर्कराकृतभक्ष्यविशेषः। तत्र भोजेन चतुर्थे मासि सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति, तेन तत्रापि नातिकाठिन्येन स्रावसाधर्म्यात् स्रवतीत्युक्तम्। काश्यपीयेऽप्युक्तम्—"आचतुर्थात्ततो मासात् प्रस्रुतं शोणितं मतम्। ततः स्थिरशरीरस्तु मूढः पतति कृच्छ्रतः" इति ॥ ७—१० ॥

**प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा ॥**
**नीलोद्धतसिरा हन्ति सा गर्भं स च तां तथा ११**

**नि० सं०**-असाध्यमूढगर्भगर्भिण्योर्लक्षणं दर्शयन्नाह—प्रविध्यतीत्यादि। प्रविध्यति ताडयति, अतिशयेन धुनोतीत्यर्थः। अन्ये 'अपविद्धशिरा' इति पठन्ति; तत्रावनतशीर्षेत्यर्थः। या स्त्री निरपत्रपा लज्जारहिता। नीलोद्धतसिरा कृष्णोद्धतसिरा। सा गर्भं स च तां तथेति सा स्त्री गर्भं हन्ति, स च गर्भवर्ती स्त्रीं हन्तीत्यर्थः। तथा तेन प्रकारेण ॥ ११ ॥

१ '°क्षेपकवातविकारयोनिभ्रंश°' इति पा०। २ 'मक्कल्लः' इति पा०। ३ 'भवन्ति चात्र' इति हस्तलिखितपुस्तके न पठ्यते।

१ 'गर्भविच्युतिरपि द्विप्रकारा' इति पा०। २ 'मूढगर्भता' इति पा०। ३ 'गर्भविद्रवः' इति पा०। ४ 'गर्भविच्युतिः' इति पा०।

न्या० च०—असाध्यमूढगर्भगर्भिण्योर्लक्षणं दर्शयन्नाह—अपविद्धशिरा इत्यादि । अपविद्धशिरा अवनतशीर्षा । नीलोन्नतसिरा कृष्णोन्नतसिरा ॥ ११ ॥

**गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ॥**
**भवत्युच्छ्वासपूतित्वं शूलं चान्तर्मृते शिशौ ॥१२॥**
**मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः ॥**
**गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः १३**

नि० सं०-गर्भिणीरक्षार्थमन्तर्मृतस्य गर्भस्यापकर्षणाय तल्लक्षणं दर्शयन्नाह—गर्भास्पन्दनमित्यादि । आवी प्रसववेदना; अथवा आवीशब्देन योनेर्मूत्रकफप्रसेकादीन्यावीलिङ्गान्युच्यन्ते ॥ १२ ॥ १३ ॥

न्या० च०—मूढगर्भस्य रक्षणार्थं मृतस्य पुनर्गर्भिणीरक्षणार्थं विपाक्याकर्षणाय लक्षणं दर्शयन्नाह—गर्भास्पन्दनमित्यादि । आविः प्रसववेदना, तासामदर्शनम् । शूनताऽन्तर्मृते शिशाविति उत्थानत्वं मृतगर्भस्याध्मानेन । तस्यान्तर्गतस्य मरणहेतुं मानसागन्तुव्याधिभेदेन द्विविधं दर्शयन्नाह—मानसागन्तुभिरित्यादि । अन्ये त्वन्तर्मृतस्य अर्भकस्य लक्षणं निर्दिशन्नाह—स यदवेत्यादि पठन्ति । स न पठनीयः, मृतगर्भस्य गर्भास्पन्दनमित्यादिनैव पठित्वात् ॥ १२ ॥ १३ ॥

**बस्तमारविपन्नायाः कुक्षिः प्रस्पन्दते यदि ॥**
**तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक् १४**

**इति सुश्रुतसंहितायां निदानस्थाने मूढगर्भनिदानं नामाष्टमोऽध्यायः ॥ ८ ॥**

नि० सं०-मातुर्मृताया अपि जीवतो गर्भस्यापकर्षणं दर्शयन्नाह—बस्तमारेत्यादि । बस्तमारश्छगलवन्मरणम्, एतेन ग्रीवामोटनेनाश्रुतममक्लिष्टं मरणमुक्तं; तेन विपन्नाया मृतायाः स्त्रिय इत्यर्थः । अयमभिप्रायः-यथा बस्तं निरुच्छ्वासं कृत्वा याज्ञिका मारयन्ति, एवं या मृता तस्या इत्यर्थः । तत्क्षणात् घटिकाद्वयमध्ये, परतस्तु गर्भोऽपि म्रियत इति भावः । अन्ये 'तत्क्षणात्' इत्यत्र 'मुहूर्तात्' इति पठन्ति, तत्रापि स एवार्थः । जन्मकाले नवममासादिकाल इत्यर्थः । तं गर्भं, पाटयित्वा स्त्रीकुक्षिं विदार्य । अत्र केचित्—"यदा सोऽन्तर्मृतो गर्भः शूनो बस्तिरिवाततः । तेनाव्रताया नार्यास्तु कुक्षिरानह्यते भृशम् ॥ उत्क्षिप्यन्त इवाङ्गानि मूत्रबस्तिश्च भिद्यते । क्लोम प्लीहा यकृच्चैव फुफ्फुसं हृदयं तथा ॥ गर्भेण पीडितं ह्येतदूर्ध्वं प्रकामति स्त्रियाः । सा श्वयते मुह्यति च कृच्छ्रोच्छ्वासा च जायते ॥ पूतिगन्धस्तथा स्वेदो जिह्वा तालु च शुष्यति । वेपते भ्राम्यति तथा जीवितं चोपरुध्यते ॥ एतैर्लिङ्गैर्विजानीयान्मृतं गर्भं चिकित्सकः"—इति पठन्ति; तन्न पठनीयं पुनरुक्तत्वात्, जेज्जटादिभिः परिहृतत्वाच । श्रीब्रह्मदेवेन तु किंचिद्व्याख्यातं, तेन स्वार्षानार्षचिन्ता न कृता ॥ १४ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थानेऽष्टमोऽध्यायः ॥ ८ ॥

न्या० च०-मातुर्मृताया अपि गर्भस्य जीवतोऽपकर्षणं दर्शयन्नाह—बस्तमारविपन्नाया इत्यादि । गर्भः प्रस्पन्दते यदि जीवतो गर्भस्य स्पन्दनं लक्षणम् । बस्तमारः छगलमरणं ग्रीवावमोटनेनाश्रुतममक्लिष्टमरणम् । जन्मकाले इति नवमादिमासकाले इत्यर्थः । मुहूर्तादिति प्रागित्यध्याहार्यं नाडिकाद्वयात् प्राक्, परस्तु गर्भो मृत इति ॥ १४ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकायां पञ्जिकायां निदानस्थाने मूढगर्भनिदानं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

**अथातो विद्रधीनां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

नि० सं०-अथात इत्यादि ॥ १ ॥ २ ॥

न्या० च०- अथातो विद्रधेर्निदानं व्याख्यास्यामः । मूढगर्भानन्तरं शस्त्रकर्मसाध्यत्वसाधर्म्यात्, अन्तर्विद्रधावप्युदरोत्सेधस्य सामान्याद् विद्रधेरारम्भः । निरुपाधिर्विद्रधिसंज्ञेति स्वमतं, "शीघ्रविदाहाद्विद्रधिः' इत्यन्ये; तदुक्तं—"स वै शीघ्रविदाहित्वाद्विद्रधीति निरुच्यते—(च. सू. अ. १७) इति ॥ १ ॥ २ ॥

**सर्वामरगुरुः श्रीमान्निमित्तान्तरभूमिपः ॥**
**शिष्यायोवाच निखिलमिदं विद्रधिलक्षणम् ॥ ३ ॥**

नि० सं०-सर्वामरगुरुरिदं निखिलं विद्रधीलक्षणं शिष्यार्थमुवाचेति संबन्धः । अमृतदानेन सर्वे देवा अमराः कृताः, तेनासौ धन्वन्तरिः सर्वेषां देवानां गुरुरित्यर्थः । श्रीमान् ज्ञानातिशयेनैश्वर्येण च युक्त इत्यर्थः । निमित्तान्तरभूमिप इति निमित्तान्तरेण कारणान्तरेण नरेष्वपि भैषज्यामृतप्रदानलक्षणेन भूपालतां गत इत्यर्थः । अन्ये तु 'अपुत्रस्य काशिराजस्य परमाराधनया निर्वाणे चित्तमभिप्राय पुत्रत्वमापन्न' इति कारणा-

---

१ 'शूनताऽन्तर्मृते' इति पा० । २ वाग्भटे त्वयं श्लोकोऽन्यथा पठ्यते; यथा,—"बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि । जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम्"—इति । "गर्भिण्या मृताया यदि कुक्षिः प्रस्पन्दतेऽत्यन्तं चलति; क्व प्रदेशे ? बस्तिद्वारे; कदा ? जन्मकाले गर्भप्रसवोन्मुखे काले; तदा कुशलो वैद्यः शीघ्रं कुक्षिप्रस्पन्दनादनन्तरं पाटयित्वा शिशुं बालकमुद्धरेत्" इत्यरुणदत्तटीका । हाराणचन्द्रस्तु 'बस्तिद्वारे विपन्नायाः' इति पठित्वा 'जन्मकाले उपस्थिते प्रसवकाले विपन्नाया मृताया यदि कुक्षिः प्रस्पन्दते, तर्हि तत्क्षणात् बस्तिद्वारे बस्तिं द्वारं च पाटयित्वा भिषक् तं गर्भमुद्धरेत्' इति व्याख्यानयति ।

१ 'निर्वाणां तनूमभिप्राय' इति पा० ।

न्तरं व्याख्यानयन्ति । शिष्यायोवाच शिष्यार्थं कथितवानित्यर्थः । निखिलं समस्तम् । इदं वक्ष्यमाणम् । अनेन धन्वन्तरिस्वरूपोपवर्णनेन विद्रधेर्गरीयस्त्वं ख्यापितं भवति ॥ ३ ॥

त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः ॥
दोषाः शोफं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥४॥
महामूलं रुजावन्तं वृत्तं चा(वाऽ)प्यथवाऽऽयतम् ॥
तमाहुर्विद्रधिं धीरा, विज्ञेयः स च षड्विधः ॥ ५ ॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ॥
षण्णामपि हि तेषां तु लक्षणं संप्रवक्ष्यते ॥ ६ ॥

नि० सं०-संप्राप्तिं सामान्यलक्षणं च दर्शयन्नाह—त्वग्रक्तेत्यादि । भृशमित्यतिशयेनोच्छ्रिता इति संबन्धः । धीरा धीमन्तः । एतेन संप्राप्तिरुक्ता । महामूलमित्यादि सामान्यलक्षणमुक्तं, विशिष्टं कृष्णोऽरुण इत्यादि, कारणं तु सामान्यं शोफकारणाभिधानेनैवोक्तम् । संख्यामाह—विज्ञेयः स च षड्विध इति । स विद्रधिः । तदेव षड्विधत्वमाह—पृथगित्यादि । समस्तैश्चेत्येकः, क्षतेनाप्येकः, असृजाऽप्येक इति षट् ॥ ४—६ ॥

न्या० च०-सर्वामरगुरुः श्रीमानिति अमराणां गुरुरिति अमृतोद्धारं स्मारयति; सुरा ह्यमृतेन धन्वन्तरिणोद्धृतेन निर्जरामरणादमरीकृताः; अत एव सर्वामरगुरुः । निमित्तान्तरभूमिप इति नरेष्वपि स्वभैषज्यामृतप्रदानाय भूपालतां गत इति गमयति । यदुक्तं प्राक्—"शल्यं महच्छास्त्रवरं गृहीत्वा" ( सू. अ. १ ) इत्यादि । एतस्यार्थस्य अन्य एवाध्यायेऽपि प्रतिपादितस्य पुनः प्रतिपादनं विद्रधेर्गरीयस्त्वबोधनार्थम्; अत एव महाव्याधीनामनन्तरमेव विद्रधेरभिधानम् । विद्रधिलक्षणमिति लक्ष्यते अनेनेति लक्षणं ज्ञापको हेतुरिति । तच्च लक्षणं द्विविधं—सामान्यं, विशिष्टं च । तत्र सामान्यं 'शोथं घोरं महामूलं' इति; विशिष्टं तु 'कृष्णोऽरुणे वा' इत्यादि । कारकहेतवस्तु सामान्यशोथहेत्वभिधानेनोक्ताः । अन्ये पुनराहुः—विद्रधिषु परुषादीनि वातादीनां स्वाभाविकलिङ्गानि, कृष्णादीनि कार्यभूतानि । स विद्रधिरिति ख्यात इति इतिशब्देन निरुपाधिरेव विद्रधिसंज्ञा संकेतमात्राकृतेति ॥ ३—६ ॥

कृष्णोऽरुणो वा परुषो भृशमत्यर्थवेदनः ॥
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसंभवः ॥ ७ ॥

नि० सं०-वातविद्रधिलक्षणमाह—कृष्ण इत्यादि । चित्रोत्थानप्रपाक इति नानाप्रकारोत्थानो नानाप्रकारपाकश्चेत्यर्थः॥ ७ ॥

न्या० च०-चित्रोत्थानप्रपाक इति चित्रौ उत्थानप्रपाकौ यस्य, वायोर्विषमक्रियत्वात् ॥ ७ ॥

पक्वोदुम्बरसङ्काशः श्यावो वा ज्वरदाहवान् ॥
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसंभवः ॥ ८ ॥

नि० सं०-पित्तविद्रधिमाह—पक्वेत्यादि ॥ ८ ॥

न्या० च०-पैत्तिके ज्वरदाहौ संभवमात्रमेव, पच्यमाने पुनरत्यन्तौ भवतः ॥ ८ ॥

शरावसदृशः पाण्डुः शीतः स्तब्धोऽल्पवेदनः ॥
चिरोत्थानप्रपाकश्च सकण्डुश्च कफोत्थितः ॥ ९ ॥

नि० सं०-कफजमाह—शरावसदृश इत्यादि । शरावसादृश्येन महत्त्वमुक्तम् ॥ ९ ॥

न्या० च०-कफजे सरावसदृशत्वेन महत्त्वसूचनम् ॥९॥

तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः ॥

नि० सं०-तेषां विद्रधीनां यथाक्रममास्रावानाह—तन्वित्यादि । एषां वातपित्तकफोत्थानां विद्रधीनाम् ॥—

न्या० च०-पाकानन्तरसंभवं स्रावं दर्शयन्नाह—तनुपीतसिताश्चैषामित्यादि । एते त्रयाणां वातपित्तकफानां यथासंख्येन ॥—

नानावर्णरुजास्रावो घाटालो विषमो महान् ॥१०॥
विषमं पच्यते चापि विद्रधिः सान्निपातिकः ॥

नि० सं०-सान्निपातिकमाह—नानेत्यादि । नानावर्णाः कृष्णपीतशुक्लाः, नानारुजास्तोददाहकण्ड्वाद्याः, नानास्रावास्तनुपीतशुक्लाः, ते यस्य सन्ति स यथोक्तः । घाटाल इति घाटा ऊर्ध्वभागो महान् यस्यास्तीति स घाटालः । विषमोऽसाध्यत्वात् । विषमं पच्यते चापीति चिराचिरगम्भीरोत्तानानुन्नतोन्नतभेदेन[1] ॥ १० ॥—

न्या० च०-सान्निपातिकं दर्शयन्नाह—नानेत्यादि । नानाविधा वर्णवेदनास्रावा यस्य स तथा । तत्र नानावर्णाः कृष्णपीतशुक्लाः; वेदनास्तोददाहकण्ड्वादिकाः, नानास्रावाः कृष्णपीतसिताः । विषमं पच्यते चिराचिरगभीरोत्तानकृतेन भेदेनासमत्वात् । वातजेऽपि पाकस्राववैषम्यमस्ति, नतु गाम्भीर्यादीनामपि वर्णरुजास्रावाणाम्, अत एव वातजस्य साध्यत्वमुक्तम् । घाटाल इति "प्राणिस्थादातो लजन्यतरस्याम्" ( पा. अ. ५।२।९६ ) इति लच् । अत्युत्थानादुरुत्वेन घाटा इव । तथा च भोजः—"बहुदोषो रसान् सर्वान् रसते यो यदा नरः । तस्य देहे त्वगादीनि दोषाः संदूष्य देहिनः ॥ कुर्वन्ति सर्वरूपोत्थं शोथं सर्वरुजान्वितम् । विषमं पाकि (?) विषमं घाटालं चिरपाकिनम् ॥ व्यामिश्रवर्णस्रुतिकं भिषक्तं परिवर्जयेत्" इति ॥ १० ॥—

तैस्तैर्भावैरभिहते क्षते वाऽपथ्यसेविनः ॥ ११ ॥
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः ॥ १२ ॥
एष विद्रधिरागन्तुः पित्तविद्रधिलक्षणः ॥

१ 'नानाप्रकोपपाकश्चेत्यर्थः' इति पा० ।

१ '°नानतोन्नतभेदेन' इति पा० ।

नि० सं०-आगन्तोः संप्राप्तिं दर्शयन्नाह—तैस्तैरित्यादि। तैस्तैरिति अश्वपतनगू(मू)द्गप्रहारादिभिरित्यर्थः; तेनास्रुतशोणितपिच्चितादीनां ग्रहणम्। क्षते वेत्यत्र तैस्तैर्भावैरिति तीक्ष्णप्रहारादिभिरित्यर्थः; अनेन च स्रुतशोणितानां छिन्नादीनां ग्रहणम्। क्षतोष्मा वायुविसृतो वातेन विस्तारितः। पित्तविद्रधिलक्षणो 'भवति' इत्यध्याहारः॥ ११॥ १२॥—

न्या० च०-अभिघातजस्यागन्तोः संप्राप्तिं दर्शयन्नाह—तैस्तैर्भावैरित्यादि। प्रपतनप्रहारादिभिर्हेतेऽत्यन्तदुष्टशोणितानाम्। हते इति मथितादीनामप्युपलक्षणम्। क्षते इति तैस्तैर्भावैरित्यादिभिः। क्षत इति स्रुतशोणितानां छिन्नादीनामुपलक्षणम्। तत्रैकत्र मथितपिच्चितयोः सिरामार्गावरणेन वातकोपः, अन्यत्र छिन्नादौ धातुक्षयेणातिरक्तास्रावनिमित्तेन। तत्राभिघातजस्योपचारार्थं दोषलिङ्गं दर्शयन्नाह—पित्तविद्रधिलक्षण इति। रक्तं च रक्तजे एव स्रवतीति पित्तविद्रधिलिङ्गातिदेशः कृतः; पीतत्वस्यावयवविकृतत्वात्॥ ११॥ १२॥—

**कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरैः॥ १३॥**
**पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते॥**

नि० सं०-रक्तविद्रधिलक्षणमाह—कृष्णस्फोटावृत इत्यादि॥ १३॥—

न्या० च०-रक्तजे दाहपाकादीनां तीव्रत्वमधिकम्। रक्तस्य दूष्यत्वाद्दोषलिङ्गमतिदेशेन निर्दिशन्नाह—पित्तस्य विद्रधेर्लिङ्गैरित्यादि। भोजप्रभृतयस्तु रक्तविद्रधिं नाधीयते। अन्ये त्विह रक्तजेऽधिकविधानार्थं रक्तजं पठन्त्येव॥१३॥—

**उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्वजः॥ १४॥**

नि० सं०-बाह्येष्वसाध्यमाह—उक्ता इत्यादि। सर्वजः सान्निपातिकः॥ १४॥

न्या० च०-बाह्येष्वसाध्यं निर्दिशन्नाह—उक्ता विद्रधय इत्यादि। तेष्वसाध्यत्वेन त्रिदोषजः पृथक् क्रियते॥ १४॥

**आभ्यन्तरानतस्तूर्ध्वं विद्रधीन् परिचक्षते॥**
**गुर्वसात्म्यविरुद्धान्नशुष्कसंसृष्टभोजनात्॥ १५॥**
**अतिव्यवायव्यायामवेगाघातविदाहिभिः॥**
**पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम्॥१६॥**
**वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम्॥**
**गुदे बस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा॥ १७॥**
**वृक्कयोर्यकृति प्लीह्नि हृदये क्लोम्नि वा तथा॥**
**तेषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः॥ १८॥**
**आमपक्वैषणीयाच्च पक्वापक्वं विनिर्दिशेत्॥**

१ 'स्रुतशोणितपिशितादीनां' इति पा०। २ 'तीव्रदाहरुजाकरः' इति पा०। ३ 'संक्लिष्टभोजनात्' इति, 'संक्लिन्नभोजनात्' इति च पा०। ४ 'आमपक्वैषणीयेन' इति पा०।

नि० सं०-अन्तर्विद्रधेर्हेतुसंप्राप्तिलक्षणान्याह—आभ्यन्तरानित्यादि। संसृष्टभोजनात् कदशनभोजनात्। संभूय मिलित्वा। गुल्मरूपिणं वल्मीकवत्समुन्नद्धं विद्रधिं कुर्वन्तीति संबन्धः; गुल्मरूपिणं काठिन्येन, वल्मीकवत्समुन्नद्धं सर्वत उन्नतम्। गुर्वसात्म्येत्यादि विदाहिभिरिति यावद्धेतुः, पृथक् संभूय वेति संप्राप्तिः, गुल्मरूपिणं वल्मीकवत्समुन्नद्धमिति च सामान्यलक्षणम्। तत्रापि वल्मीकवत्समुन्नद्धत्वं पच्यमानावस्थायाम्। तेषां वातादिभेदभिन्नानां विशेषवर्णलिङ्गसंख्यादिकं बाह्यविद्रधिवज्ज्ञेयम्। जेज्जटस्तु आभ्यन्तरस्यागन्तोरभावमेव मन्यते। तेषां बाह्यानामाभ्यन्तराणां च स्थानमाह—गुदे इत्यादि। गुदादिषु स्थानेषु दोषा विद्रधिं कुर्वन्तीति संबन्धः। बस्तिमुखे न तु बस्तौ, तत्र मांसमेदसोरभावात्। वङ्क्षण ऊरुमूलाश्रयः 'गंडक' इति लोके। वृक्कौ मांसपिण्डद्वयम् (एको वामपार्श्वस्थितः, द्वितीयो दक्षिणपार्श्वस्थितः)। यकृत् कालखण्डं दक्षिणपार्श्वस्थम्। प्लीहा उदरवामपार्श्वे स्थितः। हृदयं कमलमुकुलाकारमधोमुखम्। क्लोम कालखण्डादधस्तात् स्थितं दक्षिणपार्श्वस्थं तिलकं प्रसिद्धम्। तेषामाभ्यन्तराणामित्यर्थः॥ १५—१८॥—

न्या० च०-अधिष्ठानविशेषेण विशेषलिङ्गज्ञानार्थं साध्यासाध्यविनिश्चयार्थं चाभ्यन्तरान् विद्रधीन् दर्शयन्नाह—आभ्यन्तरानित्यादि। अभ्यन्तरभवान्। पृथक् संभूय वेति संप्राप्तिः। आगन्तोराभ्यन्तरस्य बाह्यागन्तुविद्रधिसंप्राप्त्यभिधानेनैव संप्राप्तिरुक्ता। गुल्मरूपिणमिति प्रथमं सामान्यलक्षणं गुल्मरूपमेवाभ्यन्तरविद्रधीनाम्। वल्मीकवत्समुन्नद्धत्वं सर्वेषामेव समानम्। शेषं वर्णरुजास्रावादि बाह्यविद्रधिलक्षणेनैवावगन्तव्यम्। अत एवोक्तं "सर्वशोथविकारेषु व्रणवल्लक्षयेत् भिषक्" (सू. अ. २२) इति। तेषां साध्यासाध्यत्वविभागार्थं लक्षणविशेषज्ञानार्थं चाधिष्ठानं निर्दिशन्नाह—गुदे बस्तिमुखे इत्यादि। आमपक्वैषणीयाच्चेति चकारो भिन्नक्रमे, आमं पक्वं च विभावयेदिति। आमपक्वैषणीयादिति ल्यब्लोपे पञ्चमी; तेनामपक्वैषिणीयमवेक्ष्येत्यर्थः॥ १५-१८॥—

**अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः॥ १९॥**
**गुदे वातनिरोधस्तु बस्तौ कृच्छ्राल्पमूत्रता॥**
**नाभ्यां हिक्का तथाऽऽटोपः कुक्षौ मारुतकोपनम् २०**
**कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ॥**
**वृक्कयोः पार्श्वसङ्कोचः प्लीह्युच्छ्वासावरोधनम् २१**
**सर्वाङ्गप्रग्रहस्तीव्रो हृदि शूलश्च दारुणः॥**
**श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका २२**

नि० सं०-बाह्यानामाभ्यन्तराणां चाधिष्ठानविशेषेण लक्षणं दर्शयन्नाह—अधिष्ठानेत्यादि। आटोपः संक्षोभः। पार्श्वसंकोचः

१ 'संक्लिष्टभोजनाद्दुष्टदेशे भोजनात्' इति पा०। २ अयं पाठः क्वचित्पुस्तके नोपलभ्यते।

पार्श्वोत्पाटनमिव । हृदीति हृदयोत्थे विद्रधौ, सर्वाङ्गप्रग्रहादय उपद्रवा भवन्तीत्यर्थः । 'क्लोम्नि पिपासा' इत्यादि पाठान्तरं केचित् पठन्ति, तच्चाभावान्न लिखितम् ॥ १९—२२ ॥

न्या० च०-अधिष्ठानविशेषेण लिङ्गं दर्शयन्नाह—गुदे वातनिरोध इत्यादि । तथा आटोपः संक्षोभः । क्लोम्नि पिपासा मुखस्य शोषः; 'पेपीयते पयः' इत्यन्ये पठन्ति, तत्रात्यर्थं पीयते पय इत्यर्थः । कुक्षौ मारुतकोपनं विद्रधिकृतमार्गनिरोधात् । सर्वाङ्गप्रग्रहः सर्वेषामङ्गानां प्रकर्षेण ग्रहणमिव । तीव्रो दुस्सहः, ऊर्ध्वाधस्तिर्यक्सिराधिष्ठानत्वाद्धृदयस्य ॥ १९-२२ ॥

आमो वा यदि वा पक्वो महान् वा यदि वेतरः ॥
सर्वो मर्मोत्थितश्चापि विद्रधिः कष्ट उच्यते ॥२३॥

नि० सं०-तत्र मर्मोत्थितानां सर्वावस्थासु कष्टत्वं दर्शयन्नाह—आम इत्यादि । यदि वेतर इति इतरोऽल्पः ॥ २३ ॥

न्या० च०-मर्मोत्थितानां सर्वास्ववस्थासु कष्टत्वं दर्शयन्नाह—आमो वा यदि वा पक्व इत्यादि ॥ २३ ॥

नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः ॥
जीवत्यधो निःस्रुतेषु स्रुतेषूर्ध्वं न जीवति ॥ २४ ॥
हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः ॥
जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन ॥ २५ ॥

नि० सं०-अवस्थाविशेषादसाध्यत्वमाह—नाभेरित्यादि । नाभेरुपरिजाः प्लीहयकृत्क्लोमकुक्षिहृदयजाः, पक्वा ऊर्ध्वं यान्ति स्रवन्ति । इतरे गुदवस्तिवृक्कवङ्क्षणजा अधो यान्ति । एषु चाधोनिःस्रुतेषु जीवति, नोर्ध्वनिःस्रुतेषु । हृन्नाभिबस्तिजान् वर्जयित्वा येऽन्ये गुदकुक्षिवङ्क्षणवृक्कप्लीहयकृत्क्लोमजास्तेष्वन्तर्विद्रधिषु बाह्यतो भिन्नेषु कदाचिद्दैववशाज्जीवेत्, न पुनरितरेष्वभ्यन्तरतो भिन्नेष्वित्यर्थः । हृन्नाभिबस्तिजानां चासाध्यत्वमग्रे वाच्यम् ॥ २४ ॥ २५ ॥

न्या० च०-इदानीं विशिष्टावयवविभागेन साध्यासाध्यत्वज्ञापनार्थमस्य स्रावनिर्गममार्गमविशेषं दर्शयन्नाह—नाभेरुपरिजाः पक्वा इत्यादि ॥ २४ ॥ २५ ॥

स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः ॥
दाहज्वरकरो घोरो जायते रक्तविद्रधिः ॥ २६ ॥

नि० सं०-आभ्यन्तरं रक्तजं नारीणामेव दर्शयन्नाह—स्त्रीणामित्यादि । स्त्रीणां रक्तविद्रधिर्जायत इति संबन्धः । किंभूतानां स्त्रीणाम्? अपप्रजातानां, पतितगर्भाणां; पुनरपि किंभूतानां? प्रजातानां सम्यक्कालप्रसूतानाम् । अहितैः शीतरूक्षाहारविहारैः ॥ २६ ॥

अपि सम्यक्प्रजातानामसृक् कायादनिःसृतम् ॥
रक्तजं विद्रधिं कुर्यात् कुक्षौ मक्कल्लसंज्ञितम् ॥ २७ ॥
सप्ताहान्नोपशान्तश्चेत्ततोऽसौ संप्रपच्यते ॥

नि० सं०-तस्यैव रक्तविद्रधेर्विशेषमाह—अपि सम्यगित्यादि । मक्कल्लसंज्ञितं मक्कल्लजनितं, कारणे कार्योपचारात्; घृतमायुरिति यथा । सप्तरात्रमप्रशान्तः पित्तोष्मणाऽन्तः पच्यते, पक्वश्चासाध्यः ॥ २७ ॥—

न्या० च०—आभ्यन्तरं रक्तजं विद्रधिं नारीणामेव दर्शयन्नाह—स्त्रीणामित्यादि । अधःप्रजातानाम् अकालप्रजातानाम्; 'अपप्रजातानां' इत्यन्ये; तत्र पतितगर्भाणामित्यर्थः । प्रजातानां सम्यक्काले प्रजातानामित्यर्थः । तत्रापि रक्तनिरोधे हेतुमाह—अहितैरिति; शीतरूक्षाहारविहारैः । मक्कल्लसंज्ञितं मक्कल्लजनितं, कारणे कार्योपचारात्; घृतमायुरिति यथा । तत्र सप्तरात्रादनुपक्रान्तः पित्तोष्मणा पच्यते । अत्रैवार्थे भोजः—"प्रजातानां तु नारीणां मक्कल्लप्रतिमः स्थिरः । सप्तरात्रात् परं कुक्षौ जायते रक्तविद्रधिः ॥ न चेत् प्रशान्तः सप्ताहादहिताशनतः क्वचित् । पच्यते पित्तसंसर्गात्तदा वर्ज्यो विजानता" इति । केचिदत्रापि "अथ मज्जपरीपाकः" इत्यादिकं ग्रन्थमधीयते । प्रायेण हि मेदोस्थिसमाश्रय एव विद्रधिः सर्वः । यदाह—"त्वग्रक्तमांसमेदोस्थि प्रदूष्यास्थिसमाश्रिताः" इति । भोजेनाप्युक्तं "स्थित्वाऽस्थ्नि वा समुद्धतस्तुरत्यात् (?) । यस्यावपाककर्मणा(?)ऽस्थि विनिर्भिद्य चिराद्वा प्रस्रवेद्यदि । विदग्धो दर्शयेद्रूपं वातादीनां मुहुर्मुहुः" इति । सर्वविद्रधिशेषं मज्जपाकमिच्छन्ति ॥ २६ ॥ २७ ॥—

विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः ॥ २८ ॥
गुल्मदोषसमुत्थानाद्विद्रधेर्गुल्मकस्य च ॥
कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च ॥२९॥
न निबन्धोऽस्ति गुल्मानां विद्रधिः सनिबन्धनः ।
गुल्माकाराः स्वयं दोषा विद्रधिर्मांसशोणिते ॥३०॥
विवरानुचरो ग्रन्थिरप्सु बुद्बुदको यथा ॥
एवंप्रकारो गुल्मस्तु तस्मात् पाकं न गच्छति ३१
मांसशोणितबाहुल्यात् पाकं गच्छति विद्रधिः ॥
मांसशोणितहीनत्वाद्गुल्मः पाकं न गच्छति ॥ ३२ ॥
गुल्मस्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते ॥
विद्रधिः पच्यते तस्माद्गुल्मश्चापि न पच्यते ॥ ३३ ॥

नि० सं०-पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणमित्यत्रैकरूपत्वादन्तर्विद्रधिगुल्मयोः कुतो गुल्मादस्य विद्रधेः पाककृतो विशेष इत्याह-विशेषमित्यादि । विशेषं भेदम् । समुत्थानं कारणं, दोषा एव समुत्थानं, तच्च द्वयोस्तुल्यम् । सिद्धान्तमाह—न निबन्धोऽस्तीति; निश्चित्य बध्नातीति निबन्धो मूलं; तद्गुल्मानां मूलं नास्तीति, रसरक्तादिदूष्याणामभावत्वात् । कुतः पुनरेषां शोफरूपाणामपि मूलं नास्तीत्याह—गुल्माकारा गुल्मरूपाः, स्वयमात्मनैव, दोषा वातादयः, न पुनर्दूष्यसंश्रयाः । विद्रधेर्मूलसंभवे हेतुमाह—विद्रधिर्मांसशोणिते इति; 'भवति' इति शेषः । तत्र कथं पित्ते कफे वा द्रवे वातजनितस्य गुल्मस्य

१ 'मर्मोत्थितत्वाच्च' इति पा० ।

स्थितिरित्याह—विवरानुचर इत्यादि । यथाऽप्सु बुद्बुदकः, एवंप्रकारो विवरानुचरः स्रोतोऽनुसा(चा)री वातग्रन्थिरूपो गुल्मः, 'कफपित्तयोः' इति शेषः; तस्मात् पूर्वोक्ताद्धेतोः पाकं न याति । अमुमेवार्थं नियमयन्नाह—मांसशोणितबाहुल्यादित्यादि । विद्रधिगुल्मयोर्मूलसंभवासंभवाभ्यां पाकापाकौ प्रतिपाद्य स्थानविशेषादपि हेतोः पाकापाकौ प्रतिपादयन्नाह—गुल्मस्तिष्ठतीत्यादि । गुल्मश्चापि न पच्यत इति अपिशब्देन पच्यते गुल्म इति कायचिकित्सायामुक्तं गुल्मपाकित्वं समुच्चीयते ॥ २८—३३ ॥

न्या० च०-यत् प्रागुक्तं "पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम्" इत्यत्रैकरूपत्वादन्तर्विद्रधिगुल्मयोः कुतो गुल्मादस्य विद्रधेः पाककृतो विशेष इत्याह—विशेषमथ वक्ष्यामीत्यादि । समुत्थानं कारणं द्वयोर्विद्रधिगुल्मयोः समानं, तत् किं गुल्मो न पच्यत इति संशयमुत्पाद्य स्वयमेव शिष्याणां हिततया सिद्धान्तमात्रसूत्रणमाचार्येण कृतम् । एवं मन्यते—भेदो हि भेदवतां कारणभेदाद्विरुद्धधर्माध्यासाद्वा, तत्र कारणमभिन्नमिति सर्वथैवाभेदेन भवितव्यमित्याशङ्कोपादानकारणभेदेनानयोर्भेदमेव सिद्धान्तं दर्शयन्नाह—न निबन्धोऽस्तीत्यादि । निश्रित्य बध्नातीति निबन्धो मूलं रसरक्तादि; दूष्याणामभावाद्गुल्मानां मूलं नास्तीति । कुतः पुनरेषां महत्तरशोथरूपाणां मूलं नास्तीत्याह—गुल्माकाराः स्वयं दोषा इति ।—गुल्माकारा गुल्मरूपा आत्मनैव, दोषा वातादयः; न पुनर्दूष्यसंश्रयाः । विद्रधेस्तु मूलं सहेतुमाह—विद्रधिर्मांसशोणिते; 'भवति' इति शेषः । मांसशोणिते एव पाकहेतुः; तेन चात्रोपगीते । तत्र कथं पित्ते कफे वा द्रवे वातजनितस्य गुल्मस्य स्थितिरित्याह—विवरानुचरो गुल्मो ह्यप्सु बुद्बुदको यथा । मांसशोणितबाहुल्यादित्यादि । किंनिविष्टो गुल्मो भवतीत्याह—गुल्मस्तिष्ठति स्वे दोष इति; दोषे एव वातपित्तकफस्थानरूपे । दोषमात्राश्रित्वं पुनरप्सु बुद्बुदको यथेत्येन प्रतिपादितम् । गुल्मश्चापि न पच्यत इत्यपिशब्देन पच्यतेऽपि गुल्म इति कायचिकित्सासिद्धं गुल्मपाकित्वमुक्तं समुच्चीयते । तदुक्तं चरके—"रक्तपित्तातिबाहुल्यात् क्रियामनुपलभ्य वा । गुल्मो यत्र विदह्येत शस्त्रं तत्र भिषग्जितम्" ( च. चि. अ. ५ ) इति । दैववशाद्गुल्मोऽपि कृतपरिग्रहः पच्यते; स खलु समूलत्वाद्विद्रधिरेवेति धान्वन्तरीयाणां मतमिति ॥ २८—३३ ॥

**हृन्नाभिबस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः ॥**

नि० सं०-हृदित्यादि । एतेन सान्निपातिकः पक्वो यत्र कुत्रचित् स्थितो विद्रधिर्विवर्जनीयः । केचिद्गुल्मविद्रध्योर्मानकथनाय श्लोकं पठन्ति—"मुष्टिप्रमाणो गुल्मस्तु विद्रधिश्च ततः परम्"—इति; ततः परमिति मुष्टेरधिक इत्यर्थः ॥—



**अथ मज्जपरीपाको घोरः समुपजायते ॥ ३४ ॥**
**सोऽस्थिमांसनिरोधेन द्वारं न लभते यदा ॥**
**ततः स व्याधिना तेन ज्वलनेनेव दह्यते ॥ ३५ ॥**
**अस्थि(थ) मज्जोष्मणा तेन शीर्यते दह्यमानवत् ॥**
**विकारः शल्यभूतोऽयं क्लेशयेदातुरं चिरम् ॥ ३६ ॥**
**अथास्य कर्मणा व्याधिर्द्वारं तु लभते यदा ॥**
**ततो मेदःप्रभं स्निग्धं शुक्लं शीतमथो गुरु ॥ ३७ ॥**
**भिन्नेऽस्थ्नि निःस्रवेत्[1] पूयमेतदस्थिगतं विदुः ॥**
**विद्रधिं शास्त्रकुशलाः सर्वदोषरुजावहम् ॥ ३८ ॥**

**इति सुश्रुतसंहितायां निदानस्थाने विद्रधिनिदानं नाम नवमोऽध्यायः ॥ ९ ॥**

नि० सं०-प्राक्तनकर्मवशादुपेक्षणाद्वा यो विद्रधिष्वस्थ्यन्तर्गतः पाको भवति तस्य लक्षणमाह—अथेत्यादि । सर्वविद्रधयो वातादिना यदाऽस्थ्याश्रित्य जायन्ते, उपेक्षणादनन्तरं तद्गतमज्जा च परिपच्यते तदेतद्रूपमुक्तम् । सोऽस्थिमांसनिरोधेनेति स मज्जपरिपाकः । ततः स व्याधिना तेनेति तदा स पुरुषः, तेन व्याधिना मज्जपरिपाकेन । अस्थि(थ) मज्जोष्मणा तेन शीर्यते दह्यमानवदिति तेन मज्जोष्मणा, अथ उपेक्षणादनन्तरं, शीर्यते विनश्यति, किंवत्? दह्यमानवत् । अथास्य कर्मणेति कर्मणा शस्त्रकर्मणा । व्याधिः पूयम् ॥ ३४—३८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने नवमोऽध्यायः ॥ ९ ॥

न्या० च०-हृन्नाभिबस्तिजो वर्ज्यः एतेन सान्निपातिकस्तु पुनः पक्वो यत्र कुत्रचित् स्थितो वर्जनीयः । यदुक्तं भोजेन "सान्निपातिको य एव विद्रधिस्तं व्यामिश्रवस्तुं पक्वमेव विवर्जयेत्" इति । "मुष्टिप्रमाणो गुल्मस्तु" इत्यादि केचित् पठन्ति; पूर्वैरपि सुरनन्दिवराहादिभिर्ग्रन्थो व्याख्यातार्थ एवायम् ॥ ३४—२८ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकायां पञ्जिकायां निदानस्थाने विद्रधीनां निदानम् ।

---

## दशमोऽध्यायः ।

**अथातो विसर्पनाडीस्तनरोगनिदानं व्याख्यास्यामः॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

नि० सं०-अथात इत्यादि ॥ १.॥ २ ॥

न्या० च०-अथातो विसर्पाणां निदानं व्याख्यास्यामः । विद्रधेरनन्तरं विसर्पादीनामारम्भः । गम्भीरस्य विद्रधेः शोथविशेषस्य प्रतिपादितत्वेनोत्तानस्य विसर्पशोथस्यावशिष्ट-

[1] 'प्रस्रवेत्' इति पा० ।

त्वाद्, वल्मीकवदुन्नतस्य विद्रधेरुक्तत्वादनुन्नतस्य विसर्पशोथस्यावशिष्टत्वाद्, विस्रावणस्य साधर्म्याच्च ॥ १ ॥ २ ॥

**त्वङ्मांसशोणितगताः कुपितास्तु दोषाः**
**सर्वाङ्गसारिणमिहास्थितमात्मलिङ्गम् ॥**
**कुर्वन्ति विस्तृतमनुन्नतमाशु शोफं**
**तं सर्वतो विसरणाच्च विसर्पमाहुः ॥ ३ ॥**

**नि० सं०**-इदानीं संप्राप्तिहेतुस्वरूपनिरुक्तीराह—त्वङ्मांसेत्यादि । त्वङ्मांसशोणितगताः कुपिता दोषाः शोफं कुर्वन्तीति संबन्धः । किंभूतं शोफं? सर्वाङ्गसारिणम् । इह अस्मिन् शास्त्रे, तं विसर्पमाहुरिति संबन्धः । पुनरपि किंभूतम्? अस्थितम् अनवस्थितं, देशाद्देशान्तरगमनात्; अन्ये तु आस्थितं प्राप्तं; किं तत्? आत्मलिङ्गम्; एतेन वातादिशोथलिङ्गं प्राप्तमित्यर्थः; अन्ये तु इहास्थितं क्वचिदेवावयवे स्थितमिति व्याख्यानयन्ति । विस्तृतं विस्तीर्णम् । अनुन्नतं तनुत्वाच्छोफस्य । विसरणाच्चेति चकारात् नानाप्रकारं विसर्पतीति समुच्चीयते । त्वङ्मांसशोणितगता इति संप्राप्तिः । कुपिता दोषा इति हेतुः । सर्वाङ्गसारिणमित्यादि स्वरूपम् । सर्वतो विसरणाच्चेति निरुक्तिः ॥ ३ ॥

**न्या० च०**-तेषां विसर्पाणां स्थानसंश्रयस्वभावसंप्राप्तीः प्रतिपादयन् पूर्वं सामान्यलक्षणं दर्शयन्नाह—त्वग्मांसशोणितगता इत्यादि । सर्वाङ्गसारिणं सर्वाङ्गानुसरणशीलम् । अस्थितम् अनवस्थितं, देशान्तरगमनात्; "आत्मनो लिङ्गमास्थितं संप्राप्तम्" इत्यन्ये; तेन वातादिशोथलिङ्गं प्राप्तमित्यर्थः, अनवस्थितत्वं पुनः सर्वाङ्गानुसारित्वेनैवोक्तम् । विस्तृतं विस्तीर्णम् । अनुन्नतं तनुत्वाच्छोफस्य । विसर्प इत्यर्थस्य व्याहत्यर्थेन सर्वतोपरिशब्दार्थेन विशब्देन विशेषितव्योऽयं प्राय इति दर्शयन्नाह—तं सर्वतो विसरणाच्चेत्यादि । विसरणाच्चेति चकारो निरुक्तौ विशब्दस्य विविधार्थस्य वाचित्वमपि समुच्चिनोति । तथाहि विसर्पनिरुक्तौ चरकः—"विविधं विसर्पति यतो विसर्पस्तेन संज्ञितः । परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात् (च. सू. अ. १७) इति ॥ ३ ॥

**वातात्मकोऽसितमृदुः परुषोऽङ्गमर्द-**
**संभेदतोदपवनज्वरलिङ्गयुक्तः ॥**
**गण्डैर्यदा तु विषमैरतिदूषितत्वा-**
**द्युक्तः स एव कथितः खलु वर्जनीयः ॥ ४ ॥**

**नि० सं०**-तेषां दोषभेदेन विशिष्टं लक्षणं दर्शयन्नाह—वातात्मक इत्यादि । असितः कृष्णः । अङ्गमर्दो वेदनाविशेषः । इदं शुद्धवातविसर्पलक्षणमुक्तम् । गण्डैरित्यादि । गण्डैरग्निदग्धसदृशैः स्फोटैर्युक्त इति संबन्धः । अतिदूषितत्वात् काभ्यां? वातपित्ताभ्याम् । इदं पित्तानुगतवातविसर्पलक्षणमुक्तम् । अपरे तु सकलेनापि श्लोकेन शुद्धवातविसर्पलक्षणमाहुः, तन्मतेऽतिदूषितत्वाद् वातेनैवेति बोद्धव्यम् ॥ ४ ॥

**न्या० च०**-तेषां दोषभेदेन विशिष्टं लक्षणं निर्दिशन्नाह—वातात्मक इत्यादि । वात आत्मा हेतुर्यस्य स तथा । केचिद्वातात्मक एव 'गण्डैः' इत्यादि ग्रन्थमधीयते । अयं पित्तानुगतेन । तन्त्रान्तरे पुनर्यमग्निविसर्प इत्युच्यते । गण्डैरिति स्फोटैरग्निदग्धनिभैश्चोपचीयते । अत एवायमसाध्यो द्वन्द्वजत्वात् ॥ ४ ॥

**पित्तात्मको द्रुतगतिर्ज्वरदाहपाक-**
**स्फोटप्रभेदबहुलः क्षतजप्रकाशः ॥**
**दोषप्रवृद्धिहतमांससिरो यदा स्यात्**
**स्रोतोजकर्दमनिभो न तदा स सिध्येत् ॥ ५ ॥**

**नि० सं०**-पित्तात्मक इत्यादि । ज्वरादिभिः प्रभेदान्तैर्बहुलशब्दः प्रत्येकं संबध्यते । क्षतजप्रकाश इति रक्तमिव यः प्रकाशत इत्यर्थः । पूर्वार्धेन केवलपित्तारब्धो विसर्प उक्तः । दोषप्रवृद्धीत्यादि दोषप्रवृद्ध्या पित्तकफवृद्ध्या हतं मांसं सिराश्च यस्मिन् स तथा । स्रोतोजकर्दमनिभ इति अञ्जनसदृशकर्दमद्रव्यतुल्यः । अनेनोत्तरार्धेन कफपैत्तिको विसर्प उक्तः ॥ ५ ॥

**न्या० च०**-पित्तात्मको द्रुतगतिः द्रुतविसरणशीलः । पित्तजे ज्वरादिभिः प्रभेदान्तैः सह बहुलशब्दः प्रत्येकमभिसंबध्यते । क्षतजप्रकाशः क्षतजवद्रक्तवत् प्रकाशते । तस्येदानीं दोषसंसर्गेणावस्थायामसाध्यत्वं दर्शयन्नाह—दोषप्रवृत्तिहतमांससिर इत्यादि । दोषोऽत्र कफपित्ते । स्रोतोजकर्दमनिभः अञ्जनसदृशकर्दमद्रव्यतुल्यसंभवप्रदेशः । अस्यैव विसर्पस्य कफपित्तजस्य चरके कर्दमसंज्ञा, असाध्यताऽपि च पठिता ॥ ५ ॥

**श्लेष्मात्मकः सरति मन्दमशीघ्रपाकः**
**स्निग्धः सितश्वयथुरल्परुगुग्रकण्डुः ॥**

**नि० सं०**-श्लेष्मात्मक इत्यादि । सरति विसर्पति । कफवाताभ्यां ग्रन्थिविसर्पः, सः असाध्य एव । स पुरस्तादेव ग्रन्थिनिर्देश (?) इति नात्र निर्दिष्टः; अत्रैव 'वातकफविसर्पलिङ्गेन निर्दिष्टेनावरुध्यते' इत्यन्ये ॥—

**न्या० च०**-कफवाताभ्यां ग्रन्थिविसर्पः ॥—

**सर्वात्मकस्त्रिविधवर्णरुजोऽवगाढः**
**पक्वो न सिध्यति च मांससिराप्रशातात् ॥ ६ ॥**

**नि० सं०**-सान्निपातिकं दर्शयन्नाह—सर्वात्मक इत्यादि । त्रिविधवर्णरुज इति प्रत्येकं वातादिदोषनिर्दिष्टकृष्णपीतसितादिवर्णः, वातादिदोषजनितविसर्पनिर्दिष्टतोददाहकण्ड्वादिवेदनश्च ।

१ 'विस्तृतमुन्नतमाशु' इति हाराणचन्द्रः पठति, 'विस्तृतं विस्तीर्णं, उन्नतं महान्तम्' इति च व्याख्यानयति । २ 'वातादिदोषलिङ्गं' इति पा० । ३ 'तनुत्वं' इति पा० । ४ 'सर्पतीति' इति पा० ।

१ 'मांससिराप्रणाशात्' इति पा० ।

अवगाढोऽभ्यन्तरमूलः । प्रैशातः शटनं; मांससिराप्रशातात् परतो न सिध्यति, मांससिराप्रशातात् पूर्वं कृच्छ्रतः सिध्यति ॥ ६ ॥

न्या० च०-सान्निपातिकं दर्शयन्नाह—सर्वात्मक इत्यादि । त्रिविधवर्णरुजोऽवगाढः प्रत्येकं वातादिदोषनिर्दिष्टकृष्णपीतसितादिवर्णः, वातादिदोषजनितविसर्पनिर्दिष्टतोददाहकण्ड्वादिवेदनश्च । अवगाढ इत्यभ्यन्तरमूलः । अस्य चरके अन्तर्ज इति संज्ञा । तदुक्तं चरके—"बहिःश्रितः श्रितश्चान्तस्तथा चोभयसंश्रितः । विसर्पो बलमेषां तु ज्ञेयं गुरु यथोत्तरम् ॥ बहिर्मार्गाश्रितं साध्यमसाध्यमुभयाश्रितम् । अन्तःप्रकुपिता दोषा विसर्पत्यन्तराश्रयम् ॥ बहिर्बहिःप्रकुपिताः सर्वत्रोभयसंस्थिताः । मर्मोपघातात् संमोहादयनानां विघट्टनात् । तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात् ॥ विद्यात् विसर्पमन्तर्जमाशु चाग्निबलक्षयात् । अतो विपर्ययाद्बाह्यमन्यैर्विद्यात् स्वलक्षणैः" (च. चि. अ. २१) इति । पक्को न सिध्यतीत्याद्यमसाध्यविद्रधिलक्षणम् । मांससिराप्रणाशात् परतो न सिध्यति, मांससिराप्रणाशात् पूर्वं कृच्छ्रतः सिध्यति ॥ ६ ॥

**सद्यःक्षतव्रणमुपेत्य नरस्य पित्तं**
**रक्तं च दोषबहुलस्य करोति शोफम् ॥**
**श्यावं सलोहितमतिज्वरदाहपाकं**
**स्फोटैः कुलत्थसदृशैरसितैश्च कीर्णम् ॥ ७ ॥**

नि० सं०-सद्य इत्यादि । दोषबहुलस्य पित्तं रक्तं च शोफं करोतीति संबन्धः । किं कृत्वा ? सद्यःक्षतव्रणमुपेत्य प्राप्य । किंभूतं शोफं? श्यावमित्यादिविशेषणविशिष्टम् । दोषबहुलस्येति कुष्ठवातरक्तादिपूर्वरूपादिदोषदूषितधातोः, तदुक्तं तयोः पूर्वरूपे 'क्षतविसर्पणम्' (नि. अ. ५) इति; अन्ये तु त्रिदोषबहुलस्येत्यर्थमाहुः । कीर्णं व्याप्तम् ॥ ७ ॥

न्या० च०-सद्यःक्षतमित्यादिना क्षतविसर्पः । दोषबहुलस्येति दोषो बहुलो यस्य स तथा; कुष्ठवातरक्तादिपूर्वरूपादिदोषदूषितधातोः । तदुक्तं तयोः पूर्वरूपे-क्षतविसर्पणमिति । तथैव भोजः "शस्त्रप्रहारैस्तैस्तैस्तु व्यालदन्तनखैरपि । क्षते वाऽप्यथवा भग्ने बहुदोषस्य देहिनः ॥ रक्तं पित्तं च कुपितं व्रणमाशु प्रपद्यते । कुरुतस्ते समेते तु व्रणशोथं सुदारुणम् ॥ आततं तु तनुस्फोटैः कृष्णैः पीतकसन्निभैः । पित्तवीसर्पवच्छेषं तस्य लिङ्गं विनिर्दिशेत्" इति ॥ ७ ॥

**सिध्यन्ति वातकफपित्तकृता विसर्पाः**
**सर्वात्मकः क्षतकृतश्च न सिद्धिमेति ॥**
**पैत्तानिलावपि च दर्शितपूर्वलिङ्गौ**
**सर्वे च मर्मसु भवन्ति हि कृच्छ्रसाध्याः ॥ ८ ॥**

नि० सं०-तेषां साध्यासाध्यत्वमाह—सिध्यन्तीत्यादि । न सिद्धिमेति न साध्यतां याति । दर्शितपूर्वलिङ्गा इति गण्डयुक्तो वातविसर्पः, स्रोतोजकर्दमनिभः पित्तविसर्प इति । अन्ये तु 'पित्तात्मकोऽञ्जनवपुश्च तथा न सिध्येत्' इति पठन्ति, चकारेण गण्डैर्यदाऽतिविषमैरित्येवंविशिष्टो वातिकोऽप्यसाध्य इति समुच्चीयत इति व्याख्यानयन्ति । गण्डैर्यदा तु विषमैरित्यादिना वातजस्य, स्रोतोजकर्दमनिभैरित्यादिना पित्तजस्यासाध्यत्वमुक्तं यत् पुनरुच्यते तत् क्षतजस्यासाध्यताप्रसङ्गेन, प्रसङ्गोक्तं च न पौनरुक्त्यमर्हति ॥ ८ ॥

न्या० च०-तेषां साध्यासाध्यतां निर्दिशन्नाह—सिध्यन्तीत्यादि । पित्तात्मकोऽञ्जनवपुश्चेति चकारेण गण्डैर्यदा तु विषमैरित्येवंविशिष्टो वातिकोऽप्यसाध्य इति समुच्चीयते । अन्ये पुनरवस्थान्तरे वातकफजस्यासाध्यत्वं दर्शयितुमन्यथा पठन्ति—"पैत्तानिलावपि च दर्शितपूर्वलिङ्गौ, कृच्छ्राश्च मर्मसु भवन्ति हि सर्व एव" इति । ननु प्रागेव गण्डैर्यदा तु विषमैरित्यादिना वातजस्यासाध्यत्वमुक्तमेव, तथा 'स्रोतोजकर्दमवपुः' 'इत्यादिना पित्तजस्य, तत् किं 'पैत्तानिलावपि च' इत्यादिना पुनरसाध्यवचनमुक्तम्? उच्यते—क्षतजस्यासाध्यताप्रक्रमेण पैत्तानिलयोरपि पुनरसाध्यतावचनमपूर्ववचनं; अत एवोक्तं—"प्रक्रमादुत्थितो वादो न याति पुनरुक्तताम् । दूषणं दातुमधिकं चोक्तेऽपि पुनरुच्यते" इति ॥ ८ ॥

**शोफं न पक्वमिति पक्वमुपेक्षते यो**
**यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ॥**
**अभ्यन्तरं प्रविशति प्रविदार्य तस्य**
**स्थानानि पूर्वविहितानि ततः स पूयः ॥ ९ ॥**
**तस्यातिमात्रगमनाद्गतिरित्यतश्च**
**नाडीव यद्वहति तेन मता तु नाडी ॥**

नि० सं०-नाडीं निर्दिशन्नाह—शोफमित्यादि । व्रणमित्यत्रोपेक्षत इति संबन्धः । असाधुवृत्तः अहिताहाराचारः । स्थानानि त्वगादीनि व्रणवास्तुशब्दाभिहितानि । तस्य पूयस्य । अतश्चेति चकारो नाडीनिरुक्तिपक्षान्तरसमुच्चये । तामेव नाडीनिरुक्तिमाह—नाडीव यद्वहति तेन मता तु नाडी; येन हेतुना नाडीवत् प्रणालीवद्वहति याति तेन हेतुना नाडी मतेत्यर्थः । शोफं न पक्वमित्यादि हेतुः, अभ्यन्तरमित्यादि संप्राप्तिः, नाडीवेत्यादि निरुक्तिः ॥ ९ ॥—

न्या० च०-इदानीं विसर्पसंख्यापरिमितसामान्यात्, शोथप्रबद्धत्वाच्च नाडीर्निर्दिशन्नाह—शोथं न पक्वमित्यादि । पक्वमेव शोथमपक्वमिति य उपेक्षते, अत एवासाधुवृत्तः, व्रणेऽप्यहिताहारविहारयोरतिवृत्तत्वात् । स्थानानि पूर्वगदितानीति त्वगादीनि व्रणवस्तुशब्दाभिहितानि ।

१ 'प्रणाशः' इति पा० ।

१ 'शोफो न पक्व इति' इति पा० । २ 'पूर्वगदितानि' इति ग. ।

तानि स्थानानि यदाऽभ्यन्तरं प्रकर्षेण विशति पूयः, अतस्त्वगाद्यन्तर्निवेशात् तस्य पूयस्य यदतिमात्रं गमनं ततो गतिरिति गतेश्चोत्तरत्र गतिरित्युच्यते । इत्यतश्चेति चकारो नाडीगतिनिरुक्तिपक्षान्तरं समुच्चिनोति । येन हेतुना नाडीव प्रणालीवजलं याति, तेनापि हेतुना नाडी मतेत्यर्थः । रोगादेव रोगहेतुरोगस्य नाडीसंज्ञकस्य संज्ञाह्यभिधानं तद्दोषात् ॥ ९ ॥—

**दोषैस्त्रिभिर्भवति सा पृथगेकशश्च**
**संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ १० ॥**

**नि० सं०**-सङ्ख्यां नियमयन्नाह—दोषैरित्यादि । दोषैः पृथगिति तिस्रः, एकशश्च सन्निपतितैरन्या, अपराश्च तिस्रः । संमूर्च्छितैरपि च द्विदोषसंयोगोत्थाः; अन्यथा अपिचकारौ निरर्थकौ स्याताम् । संमूर्च्छितैर्मिश्रीभूतैरित्यर्थः । शल्यनिमित्ततोऽन्या अभिघातजाऽपरेत्यर्थः । **गयी** तु त्रिभिर्दोषैः पृथक् तिस्रः, एकशश्च संमूर्च्छितैरन्या साम्निपातिकी, शल्यनिमित्ता च पञ्चमीति पञ्चैव नाड्य इति व्याख्यानयति ॥ १० ॥

**न्या० च०**-तत्रापि कालान्तरेण दोषानुबन्धे भेदसंख्यानियमनं निदर्शयन्नाह—दोषैस्त्रिभिरित्यादि । संमूर्च्छितैर्मिश्रीभूतैः, तैरेव सन्निपतितैरित्यर्थः । शल्यनिमित्तोऽन्या अभिघातजा अपरा ॥ १० ॥

**तत्रानिलात् परुषसूक्ष्ममुखी सशूला**
**फेनानुविद्धमधिकं स्रवति क्षपायाम् ॥**

**नि० सं०**-तेषां वातादीनां प्रत्येकं विशिष्टं लक्षणमाह—तत्रानिलादित्यादि । फेनानुविद्धं फेनमिश्रम् ॥—

**तृट्तापतोदसदनज्वरभेददेहेतुः**
**पीतं स्रवत्यधिकमुष्णमहःसु पित्तात् ॥ ११ ॥**

**नि० सं०**-तृट्तापेत्यादि । तृट्तापादीनां हेतुः तृषादीन् करोतीत्यर्थः ॥ ११ ॥

**ज्ञेया कफाद्बहुघनार्जुनपिच्छिलास्रा**
**रात्रिस्रुतिः स्तिमितरुक्कठिना सकण्डूः ॥**

**नि० सं०**-ज्ञेया कफादित्यादि । बहुघनार्जुनपिच्छिलास्रेति विपुलसान्द्रधवलपिच्छिलस्रावेत्यर्थः । अत्रास्रशब्दः स्राववाची चिन्त्य एव । अन्ये तु 'कफाद्बहुघनार्जुनपिच्छिलस्रुत्' इति पठन्ति, तत्र स्रुत् स्राव इत्यर्थः । स्तिमितरुगिति मन्दवेदनेत्यर्थः ॥—

**दोषद्वयाभिहितलक्षणदर्शनेन**
**तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥ १२ ॥**

**नि० सं०**-द्वन्द्वजा आह—दोषद्वयाभिहितेत्यादि । व्यतिकरप्रभवा द्वन्द्वजाः; वातपित्तजा, पित्तकफजा, वातकफजा चेति तिस्रः । **गयी** तु दोषद्वयाभिहितेत्यादि द्वन्द्वजानां लक्षणं न पठति ॥ १२ ॥

**दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा**
**यस्यां भवन्त्यभिहितानि च लक्षणानि ॥**
**तामादिशेत् पवनपित्तकफप्रकोपा-**
**द्घोरामसुक्षयकरीमिव कालरात्रिम् ॥ १३ ॥**

**नि० सं०**-साम्निपातिकीमाह—दाहज्वरेत्यादि । असुक्षयकरीं प्राणापहारिणीं; कामिव ? कालरात्रिमिव यमभगिनीमिव ॥ १३ ॥

**नष्टं कथंचिदनुमार्गमुदीरितेषु**[1]
**स्थानेषु शल्यमचिरेण गतिं करोति ॥**
**सा फेनिलं मथितमच्छमसृग्विमिश्र-**
**मुष्णं स्रवेत सहसा सरुजा च नित्यम् ॥ १४ ॥**

**नि० सं०**-शल्यनिमित्तां दर्शयन्नाह—नष्टमित्यादि । उदीरितेषु स्थानेषु त्वगादिषु । मथितमुन्मथितमिव । उष्णमुष्णस्पर्शं; 'स्रावं' इत्यध्याहारः ॥ १४ ॥

**न्या० च०**-तत्रानिलात् फेनानुबद्धं फेनमिश्रं क्षपायामधिकं स्रवति, शैत्येन तत्र वातकोपात् । पित्तदुष्टा अहःस्वधिकं स्रवति, दिवोष्णेन पित्तकोपात् । कफाद्बहुघनार्जुनपिच्छिलास्रा विपुलसान्द्रधवलचिक्कणस्रावेत्यर्थः । तत्र अस्रशब्दः स्राववाची चिन्त्य एव । अन्ये 'बहुघनार्जुनपिच्छिलस्रुत्' इति पठन्ति । तत्र स्रवतेः संपदादित्वाद्भावे क्विप् । स्रुत् स्राव एव । त्रिदोषजायामसुक्षयकरीमिव कालरात्रिं यमभगिनीमिव । शल्यनिमित्तां दर्शयन्नाह—नष्टं कथञ्चिदित्यादि । केनाऽपि प्रकारेण नष्टम् । अनुमार्गं मार्गं लक्षीकृत्य; 'अणुमार्गं' इत्यन्ये पठन्ति; तत्राणुमार्गत्वेनैव शल्यसादृश्यात् कथञ्चिदिति निरर्थकं स्यात् । उदीरितेषु स्थानेषु त्वगादिषु । सफेनिलमिति फेनवन्तं; मत्वर्थे । मथितम् उन्मथितमिव । उष्णम् उष्णस्पर्शम् । एते धर्मास्तु प्रसरणादौ चलता शल्येन मांसादिक्षोभेन भवन्ति । क्षतजान्वितत्वमपि स्रावस्य चलता शल्येनाधिष्ठाननाशकृतत्वादिति ॥ ११—१४ ॥

इति सौश्रुते शल्यतन्त्रे विसर्पनाडीव्रणनिदानं संपूर्णम् ।

**यावत्यो गतयो यैश्च कारणैः संभवन्ति हि ॥**
**तावन्तः स्तनरोगाः स्युः स्त्रीणां तैरेव हेतुभिः ॥ १५ ॥**

**नि० सं०**-इदानीं स्तनरोगाणां संख्यां हेतुं च दर्शयन्नाह—यावत्य इत्यादि । यावत्यो यावत्प्रमाणा गतयः, यैश्च कारणैर्वातपित्तकफसन्निपाताभिघातैः, तावन्तः तावत्प्रमाणाः ॥ १५ ॥

**न्या० च०**-अथातः स्तनरोगनिदानं व्याख्यास्यामः । नाडीनामनन्तरं परिभाषिकत्वेन स्तनरोगारम्भः । स्तनरोग-

१ 'अणुमात्रमुदीरितेषु' इति पा० ।

हेतुसंख्ये अतिदेशेन दर्शयन्नाह—यावन्त्यो गतय इत्यादि । यैर्हेतुभिर्वातपित्तकफसन्निपाताभिघातैर्यावत्प्रमाणा गतयस्तै रेव कारणैस्तावत्प्रमाणाः स्तनरोगाः ॥ १५ ॥

**धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः ॥**
**दोषाविसरणात्तासां न भवन्ति स्तनामयाः ॥ १६ ॥**

**नि० सं०**-इदानीं समानायामपि जातावसंभूतगर्भाणां ते रोगा न भवन्तीति दर्शयन्नाह—धमन्य इत्यादि । कन्यानाम् असंभूतगर्भाणां स्त्रीणामित्यर्थः । अविसरणम् अप्रसरणम् ॥१६॥

**न्या० च०**-इदानीं समानायामपि जातावसंभूतगर्भाणां ते रोगा न भवन्तीति दर्शयन्नाह—धमन्य इत्यादि ॥ १६ ॥

**तासामेव प्रजातानां गर्भिणीनां च ताः पुनः ॥**
**स्वभावादेव विवृता जायन्ते संभवन्त्यतः ॥ १७ ॥**

**नि० सं०**-तासामेव सगर्भाणां प्रजातानां च ता एव धमन्यो विवृतद्वारा भवन्तीति दर्शयन्नाह—तासामेवेत्यादि । प्रजातानां प्रसूतानाम् । ता इति धमन्यः । विवृताः प्रसृतद्वाराः, जायन्ते भवन्तीत्यर्थः । संभवन्तीति 'स्तनरोगा' इति शेषः ॥ १७ ॥

**न्या० च०**-तासामेव सगर्भाणां प्रजातानां च ता एव धमन्यो विवृतद्वारा भवन्तीति दर्शयन्नाह—तासामेवेत्यादि । तत्र हेत्वन्तरमपश्यन्नाह—स्वभावादेवेति । संभवन्त्यतो हेतोः 'स्तनरोगाः' इति शेषः ॥ १७ ॥

**रसप्रसादो मधुरः पक्काहारनिमित्तजः ॥**
**कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ॥ १८ ॥**

**नि० सं०**-'सक्षीरौ वाऽप्यदुग्धौ वा प्राप्य दोषा' इति स्त्रीक्षीरस्य स्तनरोगाणां हेतुत्वेनोक्तत्वात् स्त्रीक्षीरस्यैव संभवमाह—रसप्रसाद इत्यादि ।-रसप्रसादः रसस्य प्रसादो धाम सारस्तेज इत्यर्थः । पक्काहारनिमित्तज इति प्राधान्यात् पक्काहारनिमित्तशब्देन रसः कथ्यते, तेन रसज इत्यर्थः । स्तन्यनिरुक्तिमाह—कृत्स्नदेहादित्यादि । रसधातोर्व्यानविक्षिप्तस्य सर्वदेहगतत्वात् ॥ १८ ॥

**न्या० च०**-इदानीं 'सक्षीरौ वाऽप्यदुग्धौ वा' इति स्त्रीक्षीरस्य स्तनरोगाणां हेतुत्वेनोक्तत्वात् स्त्रीक्षीरस्यैव प्रभवं, तस्य स्तन्यस्य प्रकृतिभूतस्य विकृतस्य च प्रसङ्गेन लक्षणं च दर्शयन्नाह—रसप्रसाद इत्यादि । रसस्य प्रसादो रसप्रसादः, धाम सारः, तेन मधुरता शुक्लता च । वातादिदोषदुष्टस्य पुनः कषायत्वमम्लत्वमतिमाधुर्यं वा । पक्कश्चासावाहारः, स एव निमित्तं यस्य स तथा, स तु 'रस' उच्यते, प्राधान्यात्; न पुनर्मलभूतं विद् पक्कम्, अप्राधान्यादेव; ततो जातं, तदुक्तं चरके—"रसात् स्तन्यं तथा रक्तमसृजः कण्डराः सिराः" (च. चि. अ. १५) इति । तथा भोजेऽपि—"सिरास्नायुरजःस्तन्यत्वचो गतिविवर्जिताः । धातुभ्यश्चोपजायन्ते तस्मात्त उपधातवः" इति । तस्येदानीं 'स्तनभवं स्तन्यं' इत्यस्यार्थस्य योगं दर्शयन्नाह—कृत्स्नदेहादित्यादि । रसधातोर्व्यानविक्षिप्तस्य सर्वदेहगत्वात् ॥ १८ ॥

**विशस्तेष्वपि गात्रेषु यथा शुक्रं न दृश्यते ॥**
**सर्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥ १९ ॥**
**तदेव चेष्टयुवतेर्दर्शनात् स्मरणादपि ॥**
**शब्दसंश्रवणात् स्पर्शात् संहर्षाच्च प्रवर्तते ॥ २० ॥**
**सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ॥**
**आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥ २१ ॥**
**तदेवापत्यसंस्पर्शाद्दर्शनात् स्मरणादपि ॥**
**ग्रहणाच्च शरीरस्य शुक्रवत् संप्रवर्तते ॥ २२ ॥**
**स्नेहो निरन्तरस्तत्र प्रस्रवे हेतुरुच्यते ॥**

**नि० सं०**-तस्य शरीराभ्यन्तरस्थस्यादृश्यस्यापि प्रसिद्धोपमानेन प्रवर्तने हेतुं दर्शयन्नाह—विशस्तेष्वपीत्यादि । शुक्रलक्षणं 'स्तन्यमुच्यते' इति शेषः । कुत इत्याह—यथा शुक्रं विशस्तेषु छिन्नेष्वपि गात्रेषु न दृश्यते, तस्माद्द्वितीयं हेतुमाह—सर्वदेहाश्रितत्वादिति, शुक्रवत् समस्तशरीराश्रितत्वात् । शुक्रदृष्टान्तेन स्तन्यस्याभ्यन्तरदर्शनं प्रतिपाद्य तेनैव दृष्टान्तेन सामग्रीतस्तस्य प्रवर्तनाद्बहिः प्रत्यक्षतां प्रतिपादयन्नाह—तदेवेत्यादि । तदेव शुक्रं प्रवर्तते बहिर्निःसरति । संहर्षाद् विशिष्टस्पर्शसंकल्पलक्षणात् । विशिष्टस्पर्शसंकल्पे हेतुचतुष्टयं दर्शयन्नाह—इष्टयुवतेरित्यादि । इष्टयुवतिदर्शनादिहेतुचतुष्टयेन यः संहर्षः स सुप्रसन्न एव मनसि भवतीति मनसोऽपि सुप्रसन्नस्य कारणत्वं दर्शयन्नाह—सुप्रसन्नमित्यादि । सुप्रसन्नमीर्ष्याद्यनभिभूतम् । एवं स्तन्यमपि स्त्रियाः प्रवर्तते, शुक्रमाहाररसयोनित्वात् प्रवर्तते स्तन्यमपि तथा, तस्मात् प्रवर्तते । ननु शुक्रमाहारयोन्यपि संहर्षात् कारणात् प्रवर्तते, अत्र च किं कारणमित्याह—तदेवेत्यादि । तदेव स्तन्यं शुक्रवत् संप्रवर्तते । अपत्यसंस्पर्शादिकारणचतुष्टयेऽपि स्नेहो मूलकारणमिति तदेव दर्शयन्नाह—स्नेह इत्यादि । प्रस्रवे स्तन्यस्रवणे । अत्रापि चत्वारो हेतवः, परमिष्टयुवतिस्थानेऽत्रापत्यग्रहणं, मूलहेतुहर्षस्थाने स्नेहः ॥ १९—२२ ॥—

**न्या० च०**-तस्य पुनः शरीराभ्यन्तरस्थस्य प्रमाणैरनुपलभ्यस्यापि प्रसिद्धोपमानेन प्रवर्तने हेत्वन्तरं दर्शयन्नाह—विशस्तेष्वपीत्यादि । विशस्तेषु विकृतेषु । यत् पुनरन्तः प्रत्यक्षं न भवति बहिरपि तत् प्रत्यक्षं न भवतीत्याशंक्य सामग्रीतस्तस्य बहिराविर्भावेन प्रत्यक्षतां दर्शयन्नाह—

१ 'दोषावितरणात्' इति हाराणचन्द्रः पठति, दोषावितरणात् संवृतद्वारतया स्तनामयारम्भकाणां दोषाणामविसर्जनात्' इति च व्याख्यानयति ।

१ 'सर्वदेहाश्रितत्वेऽपि स्तन्यं लक्षणतस्तथा' इति हाराणचन्द्रसंमतः पाठः । २ 'आहाररसवीर्यत्वात्' इति ता. ।

तदेव चेष्टयुवतेरित्यादि । संहर्षात् इष्टयुवतेर्विशिष्टस्पर्शसंकल्पलक्षणात् । दर्शनादिष्वपि चतुर्ष्वन्वयव्यतिरेकाभ्यां शुक्रभावाभावात् समौलं कारणं हर्षस्यापि दर्शयन्नाह—सुप्रसन्नमित्यादि । सुप्रसन्नम् ईर्ष्यादिभिरनभिभूतम् । शुक्रेण सह प्रस्तुतस्य स्तन्यस्य साधर्म्याद्धेतुं दर्शयन्नाह—सर्वदेहाश्रितत्वाच्चेति । उभयोरपि सर्वदेहाश्रयत्वादित्यर्थः । अत्रापि चत्वार एव हेतवः । परिमिष्टयुवतिस्थाने अत्रापत्यग्रहणं, मौलहेतुहर्षस्थाने तु स्नेहः, सुप्रसन्नस्थाने निरन्तरः; निरन्तरो निरतिशय इत्यर्थः ॥ १९-२२ ॥—

तत् कषायं भवेद्वातात् क्षिप्तं च प्लवतेऽम्भसि ॥२३॥
पित्तादम्लं सकटुकं राज्योऽम्भसि च पीतिकाः ॥
कफाद्घनं पिच्छिलं च जले चाप्यवसीदति ॥
सर्वैर्दुष्टैः सर्वलिङ्गमभिघाताच्च दुष्यति ॥ २४ ॥

**नि० सं०**—स्तन्यस्य प्रभवं प्रवर्तनं चाभिधाय प्रकृतिमभिधातुकामः परित्याज्यतया प्रथमं विकृतिं दर्शयन्नाह—तदित्यादि । क्षिप्तं चेति चकारेणानुक्तमपि तनुत्वादिकं समुच्चीयते । सकटुकम् ईषत्तिक्तं, तिक्तेऽपि कटुशब्दस्य प्रवृत्तेः । अम्भसि चेति चकारान्नीललोहिताश्च राज्यो द्रष्टव्याः । पिच्छिलं चेति चकारेण दोषसंप्लवः सूच्यते । अवसीदति बुडति । अभिघातात् पतनपीडनादिकात् ॥ २३ ॥ २४ ॥

यत् क्षीरमुदके क्षिप्तमेकीभवति पाण्डुरम् ॥
मधुरं चाविवर्णं च प्रसन्नं तद्विनिर्दिशेत् ॥ २५ ॥

**नि० सं०**—निर्दोषस्य स्तन्यस्य लक्षणमाह—यदित्यादि । एकीभवति[1-2] एकत्वं याति मिलतीत्यर्थः । अविवर्णम् ईषत्पीतादिवर्णम् । प्रसन्नं प्रकृतिस्थम् ॥ २५ ॥

**न्या० च०**—स्तन्यस्य प्रकृतिमभिधाय विकृतिं निदर्शयन्नाह—तदित्यादि । क्षिप्तं च प्लवते लघुत्वात् । क्षिप्तं चेति चकारेण तनुत्वादीन्यनुक्तान्यपि समुच्चीयन्ते । सकटुकम् ईषत्तिक्तमित्यर्थः; तिक्तेऽपि कटुकशब्दप्रवृत्तेः । राज्योऽम्भसि च पीतिका इति चकारो भिन्नक्रमे, तेन पीतिकाश्चेति द्रष्टव्यं, तेन पित्तदुष्टस्य नीललोहिताश्च राज्यो द्रष्टव्याः । तोये चाप्यवसीदति गुरुत्वात् मज्जनाप्लवनाभ्यां प्रदेशे एकीभावोपलम्भात् । पिच्छिलं चेति चकारेणातिमाधुर्याद्यपि बोद्धव्यम् । प्रसन्नं तु साधारणं पाण्डुरं मधुरं च । चकारेण कफवर्धकत्वेऽप्यनयोः स्तन्यप्रकृतित्वमित्यभिनिर्दिश्यते । अतिपाण्डुत्वमतिमाधुर्यं च कफवृद्धिलक्षणम् । वातकफदोषेणातिविष्यन्दि । अविवर्णम् ईषत्पीतादिप्रकृतिवर्णम् । प्रसन्नं प्रकृतिस्थम् ॥ २३—२५ ॥

सक्षीरौ वाऽप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः ॥
रक्तं मांसं च सन्दूष्य स्तनरोगाय कल्पते ॥ २६ ॥

१-२ 'एकत्वं याति' इति पा० ।

**नि० सं०**—स्तनरोगहेतुं स्तन्यं प्रकृतिविकृतिभिरभिनिर्दिश्य स्तनरोगसंप्राप्तिं दर्शयन्नाह—सक्षीरावित्यादि । सक्षीरौ गर्भिण्याः, तस्या दोहस्यासंभवात् । अदुग्धौ प्रसूतायाः, तस्या दोहस्य संभवात् । तत्र यदा दोह्यावदुग्धौ भवतः, तदा क्षीरभरपीडिता दोषाः कुपिताः स्तनरोगाय जायन्ते । स्तनरोगाय कल्पते स्तनरोगार्थे समर्थो भवति ॥ २६ ॥

पञ्चानामपि तेषां तु हित्वा शोणितविद्रधिम् ॥
लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ २७ ॥

इति सुश्रुतसंहितायां निदानस्थाने विसर्पनाडीस्तनरोगनिदानं नाम दशमोऽध्यायः ॥ १० ॥

**नि० सं०**—तेषामपि संक्षेपार्थं लक्षणमतिदेशेन निर्दिशन्नाह—पञ्चानामपीत्यादि । तेषां स्तनरोगाणाम् । समानानि तुल्यानि, 'भवन्ति' इत्यध्याहारः ॥ २७ ॥

इति श्रीडल्ह(ड)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने दशमोऽध्यायः ॥ १० ॥

**न्या० च०**—तत्र स्तनरोगहेतुं स्तन्यं प्रभवप्रकृतिविकृतिभिरभिनिर्दिश्य स्तनरोगसंप्राप्तिं प्रतिपादयन्नाह—सक्षीरावित्यादि ॥ २६ ॥ २७ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकायां पञ्जिकायां निदानस्थाने दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

अथातो ग्रन्थ्यपच्यर्बुदगलगण्डानां निदानं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

**नि० सं०**—अथात इत्यादि ॥ १ ॥ २ ॥

वातादयो मांसमसृक् च दुष्टाः
संदूष्य मेदश्च कफानुविद्धम् ॥
वृत्तोन्नतं विग्रथितं तु शोफं
कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ ३ ॥

**नि० सं०**—तेषां हेतुसंप्राप्तिलक्षणनिरुक्तीराह—वातादय इत्यादि । वातादयो दोषा दुष्टा मांसमसृक् च संदूष्य शोफं कुर्वन्तीति संबन्धः । एतेन त्रयो ग्रन्थय उक्ताः । मेदश्च कफानुविद्धं कफसंसृष्टं वायुदूषितत्वाच्छोफं करोतीति संबन्धः । भोजेऽपि वातकर्तृत्वं मेदोग्रन्थावभिहितम् । तथा च,—"वायुर्मेदो यदा मांसे संक्षिपेदथवा त्वचि । तत्र मेदोभवो ग्रन्थिः श्यावो भवति कण्डुलः—" इत्यादि । अयं चतुर्थो ग्रन्थिः । चकारात्[1] सिराजो ग्रन्थिः पञ्चमो ग्राह्यः । दुष्टा वृद्धिं गता

१ 'तथा सिराश्च' इति वा. ।

इत्यर्थः । वृत्तो वर्तुलः, उन्नत उच्छ्रितः । विग्रथितोऽत्यर्थं कठिनः । वातादयो दुष्टा इत्यनेन हेतूपदेशः, मांसमसृक् च संदूष्येति संप्राप्तिः, वृत्तोन्नतं विग्रथितं तु शोफमिति लक्षणोपदेशः, अतो ग्रन्थिरिति प्रदिष्ट इति निरुक्तिः ॥ ३ ॥

न्या० च०-मेदोग्रन्थिः पृथगेव संप्राप्त्याऽन्वितः; यदुक्तं भोजे—"वायुर्मेदो यदा मांसे विक्षिपेदथवा त्वचि । तत्र मेदोभवो ग्रन्थिः श्यावो भवति कण्डुरः ॥ कृशः कृशे महान् स्थूले ग्रन्थिर्भिन्नश्च पीडितः । तिलकल्कनिभः स्रावो घृतवच्चास्य जायते" इति । सिराग्रन्थेस्तु पृथगेव संप्राप्तिः ॥ १—३ ॥

आयम्यते व्यथ्यत एति तोदं
प्रत्यस्यते कृत्यत एति भेदम् ॥
कृष्णोऽमृदुर्बस्तिरिवाततश्च
भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ ४ ॥

नि० सं०-तेषां वातादिजानां प्रत्येकं विशिष्टं लक्षणमाह—आयम्यत इत्यादि । आयम्यते वायोराकर्षणेन दीर्घ इव क्रियते, 'ग्रन्थिः' इति शेषः । व्यथ्यते विधूयते । एति गच्छति । तोदं व्यथाम् । प्रत्यस्यते क्षिप्यते । कृत्यते छिद्यते । एति भेदमिति भेदं च गच्छति । अमृदुः कर्कशः । बस्तिरिवाततश्चेति मूत्राशयवद्दीर्घः । अस्रं रुधिरम् ॥ ४ ॥

न्या० च०-आयम्यत इति वायोराकर्षणेन दीर्घ इव क्रियते । 'व्यथ्यते' इत्यत्र 'व्यथ्यति' इत्येके पठन्ति ॥ ४ ॥

दन्दह्यते धूप्यति चूष्यते च
पापच्यते प्रज्वलतीव चापि ॥
रक्तः सपीतोऽप्यथवाऽपि पित्ता-
द्भिन्नः स्रवेदुष्णमतीव चास्रम् ॥ ५ ॥

नि० सं०-दन्दह्यते भृशं दह्यत इव । धूप्यति चातिमात्रम् अतिशयेन संतापं करोति । पापच्यते भृशं पच्यत इव । प्रज्वलतीव भस्मीभवतीव ॥ ५ ॥

न्या० च०-पित्तग्रन्थौ दन्दह्यते भृशं दह्यत इव । पापच्यते भृशं पच्यते इव । प्रज्वलतीव प्रकर्षेण ज्वलतीव ॥ ५ ॥

शीतोऽविवर्णोऽल्परुजोऽतिकण्डूः
पाषाणवत् संहननोपपन्नः ॥
चिराभिवृद्धिश्च कफप्रकोपा-
द्भिन्नः स्रवेच्छुक्लघनं च पूयम् ॥ ६ ॥

नि० सं०-अविवर्ण ईषद्विवर्णः । पाषाणवत् पाषाण इव 'कठिन' इत्यध्याहारः । संहननोपपन्नः सङ्घातान्वितो महानित्यर्थः ॥ ६ ॥

१ अस्माग्रे किञ्चिद्ग्रन्थः खण्डितः । २ 'पाण्डुरः' इति मधुकोशे पाठः । ३ 'व्यथ्यति तुद्यते च' इति ता. । ४ 'मथ्यति भिद्यते च' इति ता. । ५ 'चातिमात्रं' इति पा० ।

न्या० च०-कफग्रन्थौ शीतोऽविवर्ण इति ईषद्विवर्णः । पाषाणवत् कठिनः । संहननोपपन्नः संहतान्वितो महानित्यर्थः ॥ ६ ॥

शरीरवृद्धिक्षयवृद्धिहानिः
स्निग्धो महानल्परुजोऽतिकण्डूः ॥
मेदःकृतो गच्छति चात्र भिन्ने
पिण्याकसर्पिःप्रतिमं तु मेदः ॥ ७ ॥

नि० सं०-शरीरवृद्धिक्षयवृद्धिहानिरिति देहाप्यायनह्रासाभ्यामाप्यायनह्रासौ यस्य स तथा । गच्छति स्रवति मेद इति संबन्धः । अत्र मेदोग्रन्थौ भिन्ने सति, पिण्याकसर्पिःप्रतिमं तिलकल्कस्त्यानघृतसदृशम् ॥ ७ ॥

न्या० च०-शरीरवृद्धिक्षयवृद्धिहानिरिति देहाप्यायनह्रासाभ्यामाप्यायनह्रासौ यस्य स तथा । गच्छति चात्र भिन्ने पिण्याकसर्पिःप्रतिमं तु मेदः भिन्ने सति तिलकल्कस्त्यानघृतसदृशं मेदो गच्छति स्रवतीत्यर्थः ॥ ७ ॥

व्यायामजातैरबलस्य तैस्तै-
राक्षिप्य वायुर्हि सिराप्रतानम् ॥
संपीड्य सङ्कोच्य विशोष्य चापि
ग्रन्थिं करोत्युन्नतमाशु वृत्तम् ॥ ८ ॥
ग्रन्थिः सिराजः स तु कृच्छ्रसाध्यो
भवेद्यदि स्यात् सरुजश्चलश्च ॥
अरुक् स एवाप्यचलो महांश्च
मर्मोत्थितश्चापि विवर्जनीयः ॥ ९ ॥

नि० सं०-सिराजस्य ग्रन्थेः संप्राप्तिं दर्शयन्नाह—व्यायामजातैरित्यादि । व्यायामजातैः व्यायामसमूहैः । अबलस्य पुरुषस्य । सिराप्रतानं सिराविस्तारम् । सिराजस्य कृच्छ्रसाध्यत्वमाह—स तु कृच्छ्रसाध्य इत्यादि । तस्यासाध्यत्वमाह—अरुगित्यादि । महांश्चेति चकारेण वातादिजा अप्येवंरूपा वर्जनीयाः । मर्मोत्थितश्चेति चकारेण अरुजोऽपि विवर्जनीयः । अन्ये पुनरत्र "मांसास्रजं चार्बुदलक्षणेन तुल्यं हि दृष्टं त्वथ लक्षणज्ञैः"—इति षष्ठं ग्रन्थिं पठन्ति । तच्च, जेज्जटादिभिः परिहृतत्वात् ॥ ८ ॥ ९ ॥

न्या० च०-सिराजस्य ग्रन्थेः संप्राप्तिं दर्शयन्नाह—व्यायामजातैरित्यादि । अयं रुजायुक्तः कृच्छ्रसाध्यः । स चारुजश्चाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः । तदुक्तमन्यत्र—"सिराजश्चिरसाध्यस्तु सर्वेभ्यो दुरुपक्रमः" इति । स चेति चकारेण वातादिजोऽप्येतादृशलक्षणोऽसाध्य एव । तथा च भोजः—"दुर्बलस्य सिरा वायुर्मैथुनादिप्रजागरैः । ग्रन्थिं करोति प्रथितमाक्षिपन् परिशोषयन् ॥ सिराजालावृतं कृत्स्नं पीडयन् सरुजं चलम् । पञ्चैवानरुजान् ग्रन्थीन्मर्मजानचलांस्त्यजेत् ॥ कपोलगलमन्यासु दुश्चिकि-

१ 'स एवाविचलः' इति पा० ।

स्थाश्च संधिषु । असाध्यान् वर्जयन् साध्यान् कृच्छ्रसाध्यांश्च साधयेत्'' इति । अन्ये पुनरत्र मांसासृग्जं षष्ठं ग्रन्थिं पठन्ति–मांसास्रजं चार्बुदलक्षणेन तुल्यं हि षष्ठं (दृष्टं) त्वथ लक्षणज्ञैः'' इति । अयमेवार्थः समानतन्त्रेष्वपि पारम्पर्यात् स्मर्यते इति च वदन्ति ॥ ८ ॥ ९ ॥

इति ग्रन्थीनां निदानं समाप्तम् ।

**हन्वस्थिकक्षाक्षकबाहुसन्धि-**
**मन्यागलेषूपचितं तु मेदः ॥**
**ग्रन्थिं स्थिरं वृत्तमथायतं वा**
**स्निग्धं कफश्चाल्परुजं करोति ॥ १० ॥**
**तं ग्रन्थिभिस्त्वामलकास्थिमात्रै-**
**र्मत्स्याण्डजालप्रतिमैस्तथाऽन्यैः ॥**
**अनन्यवर्णैरुपचीयमानं**
**चयप्रकर्षादपचीं वदन्ति ॥ ११ ॥**
**कण्डूयुतास्तेऽल्परुजः प्रभिन्नाः**
**स्रवन्ति नश्यन्ति भवन्ति चान्ये ॥**
**मेदःकफाभ्यां खलु रोग एष**
**सुदुस्तरो वर्षगणानुबन्धी ॥ १२ ॥**

**नि० सं०**–इदानीमपच्याः संप्राप्त्यादीनाह—हन्वस्थीत्यादि । हन्वोरस्थि हन्वस्थि; सन्धिशब्दो हन्वस्थ्यादिभिर्बाहुन्तैः प्रत्येकं संबध्यते; बाहुसन्धिशब्देन कूर्परसन्धिरुच्यते; अक्षकं कोष्ठकं तस्य सन्धिः, एतेन ग्रीवाग्रकसन्धिरुच्यते; मन्या ग्रीवापश्चिमभागस्था धमनी । हन्वस्थीत्यादिसंप्राप्तिः, ग्रन्थिं स्थिरं वृत्तमित्यादिलक्षणम् । तं ग्रन्थिभिरित्यादि तं पूर्वोक्तं ग्रन्थिम् । अनन्यवर्णैः समानवर्णैः । उपचीयमानं वर्धमानम् । चयप्रकर्षादिति उपचयातिशयादित्यर्थः । चयप्रकर्षादपचीमिति निरुक्तिः । खलुशब्दोऽप्यर्थः । तेन मेदःकफौ वातादिदोषान्तरानुविद्धौ ज्ञेयौ । तथाहि **भोजः**,—''वातपित्तकफा वृद्धा मेदश्चापि समान्वितम् । जङ्घयोः कण्डराः प्राप्य मत्स्याण्डसदृशान् बहून् ॥ कुर्वन्ति ग्रथितांस्तेभ्यः पुनः प्रकुपितोऽनिलः । तान् दोषानूर्ध्वगो वक्षःकक्षामन्यागलाश्रितः ॥ नानाप्रकारान् कुरुते ग्रन्थीन् सा त्वपची स्मृता । व्यामिश्रदोषजाता सा कृच्छ्रसाध्या प्रकीर्तिता ॥ तासां वातोत्तरा रूक्षा वातवेदनयाऽन्विता । क्षिप्रपाकसमुत्थाना दाहयुक्ता तु पैत्तिकी ॥ गूढा वाऽपाककठिना कफात् स्निग्धाऽल्परुकरा । मेदोऽधिका श्लैष्मिकी च विशेषादतिमार्दवा ॥ अपची कण्ठमन्यासु कक्षावंक्षणसंधिषु । तां तु मालाकृतिं विद्यात् कण्ठहृद्धनुसन्धिषु ॥ गण्डमालां विजानीयादपचीतुल्यलक्षणाम्''—इति । **चरके** गण्डमाला गण्डे एव पठिता ''मेदःकफाच्छोणितसंचयोत्थो गण्डस्य पार्श्वे गलगण्ड एकः । स्याद्गण्डमाला बहुभिस्तु गण्डैर्दीप्तानले यूनि बलान्विते च ॥ साध्या स्मृता पीनसपार्श्वशूलकासज्वरच्छर्दियुता त्वसाध्या'' (च. चि. अ. १२)—इति । अन्ये तु 'मेदःकफाभ्यां पुनरेष रोगः' इति पठन्ति; पुनःशब्दादधिकार्थाद्दोषान्तरसंबन्धः स्थापितो भवतीति च वदन्ति । तत्रापि स एवार्थः । वर्षगणानुबन्धी वर्षसमूहसंबन्धीत्यर्थः । एतेन दीर्घरोगित्वं सूचितम् । मेदःकफाभ्यामिति हेतूद्देशः ॥ १०–१२ ॥

**न्या० च०**–ग्रन्थेरनन्तरमपच्यारम्भः, ग्रन्थिविशेषादपच्याः, मेदःसमुच्छ्रयग्रन्थिप्रत्यासन्नत्वञ्च । तस्याः संप्राप्तिं दर्शयन्नाह—हन्वस्थिकक्षाक्षकेत्यादि । हन्वोरस्थि हन्वस्थि । संधिशब्दो हन्वस्थ्यादिभिर्बाहन्तैः सह प्रत्येकमभिसंबध्यते । बाहुसंधिशब्देन कूर्परसंधिरुच्यते । बाहुमूलसन्धेः कक्षाशब्देनैवोपपन्नत्वात् । अक्षसन्धिः ग्रीवाधःसन्धिः । एषु संधिप्रदेशेषूपचितं दूष्यं मेदः, कफश्च दोषो ग्रन्थिं करोति । तमुपचीयमानं खलु अन्यैर्ग्रन्थिभिरामलकास्थिप्रमाणैर्मीनाण्डाकारैः । चयप्रकर्षादपचीति निरुक्तिः । 'चयापकर्षात्' इति केचित् पठन्ति । सा पुनरुपचयापचयाभ्यामपचीयते । उपचयापचयौ दर्शयन्नाह—नश्यन्ति भवन्ति चान्ये इति । मेदःकफाभ्यामिति पूर्वोक्तदोषदूष्ययोरेव नियमनम् । खलुशब्दोऽप्यर्थः, निपातानामनेकार्थत्वात् । तेन मेदःकफयोरेव वातादिदोषान्तरसंसर्गं सूचयति । तथाहि **भोजः**—''वातपित्तकफा वृद्धा मेदश्चापि समान्वितम् । जङ्घयोः कण्डराः प्राप्य मत्स्याण्डसदृशान् बहून् ॥ कुर्वन्ति ग्रथितांस्तेभ्यः पुनः प्रकुपितोऽनिलः । तान् दोषानूर्ध्वगो वक्षःकक्षामन्यागलाश्रितः ॥ नानाप्रकाराद् कुरुते ग्रन्थीन् सा त्वपची स्मृता । व्यामिश्रदोषजाता सा कृच्छ्रसाध्या प्रकीर्तिता ॥ तासां वातोत्तरा रूक्षा वातवेदनयाऽन्विता । क्षिप्रपाकसमुत्थाना दाहयुक्ता तु पैत्तिकी ॥ गूढपाका च कठिना कफात् स्निग्धाऽल्परुक् स्थिरा । मेदोधिका श्लैष्मिकी च विशेषादतिमार्दवा ॥ अपची कण्ठमन्यासु कक्षावंक्षणसन्धिषु । तां तु मालाकृतिसमां कण्ठहृद्धनुसन्धिषु ॥ गण्डमालां विजानीयातदपचीतुल्यलक्षणाम्'' इति । स्थानकृत एव मेदोऽपचीगण्डमालयोः, ग्रहण्यतिसारयोरिव । गले एव मालास्थाना गण्डमाला **चरकेण** पठिता—''मेदःकफाच्छोणितसंचयोत्थः । गलस्य मध्ये गलगण्ड एकः स्याद्गण्डमाला बहुभिस्तु गण्डैः ॥ साध्याः स्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वसाध्याः'' इति । (च. चि. अ.) इत्यपचीनां निदानं संपूर्णम् ॥ १०–१२ ॥

**गात्रप्रदेशे क्वचिदेव दोषाः**
**संमूर्च्छिता मांसमभिप्रदूष्य ॥**
**वृत्तं स्थिरं मन्दरुजं महान्त-**
**मनल्पमूलं चिरवृद्ध्यपाकम् ॥ १३ ॥**
**कुर्वन्ति मांसोपचयं तु शोफं**
**तमर्बुदं शास्त्रविदो वदन्ति ॥**

१ 'जाले जालाकारे आधारे मत्स्याण्डं मत्स्याण्डजालं, राजदन्तादिषु द्रष्टव्यं; तत्सदृशैर्मत्स्याण्डजालप्रतिमैः' इति हाराणचन्द्रः । २ 'ग्रीवाधःसन्धिः' इति पा० । ३ 'त्रिदोषान्' इति पा० ।

**नि० सं०**-इदानीमर्बुदादीनां संप्राप्त्यादीनाह—गात्रप्रदेशे इत्यादि । क्वचिदेव गात्रप्रदेशे दोषाः शोफं कुर्वन्तीति संबन्धः । संमूर्च्छिता वृद्धिं गताः । क्वचिदेवानियतप्रदेशे, न पुनरपचीवद्धन्वस्थ्यादिसंधिष्वेव । अपाकम् अविद्यमानपाकम् । मांसोपचयं मांससंघातम् । गात्रप्रदेशे क्वचिदेवेति संप्राप्तिः । संमूर्च्छिता दोषा इति हेतुः । वृत्तं स्थिरमित्यादि स्वलक्षणम् । **गयी** तु 'कुर्वन्ति मांसोच्छ्रयमल्पगाधम्' इति पठति ॥१३॥—

**न्या० च०**-अपच्यनन्तरमर्बुदारम्भः, मेदःकफाधिकजन्मसामान्यात् । तस्य संप्राप्तिमाह—गात्रप्रदेश इत्यादि । क्वचिदेवानियतप्रदेशे न पुनरपचीवद्धन्वस्थ्यादिष्वेव । संमूर्च्छिता वृद्धाः । अपाकमिति अविद्यमानपाकम् । मांसोच्छ्रयं मांससंघातम् । अल्पगाधमांसं तन्मूलत्वात्; तस्मादेव हेतोरर्बुदमपाकम्; अगाधमांसोच्छ्रयमर्बुदं जायते, वस्तुस्वभावादिति ॥ १३ ॥—

वातेन पित्तेन कफेन चापि
रक्तेन मांसेन च मेदसा च ॥ १४ ॥
तज्जायते तस्य च लक्षणानि
ग्रन्थेः समानानि सदा भवन्ति ॥

**नि० सं०**-तज्जायते तदर्बुदं भवतीत्यर्थः । तस्य च लक्षणानि तस्य वातपित्तकफमेदोजस्य ॥ १४ ॥—

**न्या० च०**-तेषां वातपित्तकफमेदोजानां वातादिग्रन्थिलक्षणैर्लक्षणानि समानानि ॥ १४ ॥—

दोषः प्रदुष्टो रुधिरं सिरास्तु
संपीड्य सङ्कोच्य गतस्त्वपाकम् ॥ १५ ॥
सास्रावमुन्नह्यति मांसपिण्डं
मांसाङ्कुरैराचितमाशुवृद्धिम् ॥
स्रवत्यजस्रं रुधिरं प्रदुष्ट-
मसाध्यमेतद्रुधिरात्मकं स्यात् ॥ १६ ॥
रक्तक्षयोपद्रवपीडितत्वात्
पाण्डुर्भवेत् सोऽर्बुदपीडितस्तु ॥

**नि० सं०**-रक्तजस्यार्बुदस्य लक्षणमाह—दोषः प्रदुष्ट इत्यादि । प्रदुष्टो दोषः सिरासु गतो रुधिरं संपीड्य संकोच्य मांसपिण्डमुन्नह्यतीति संबन्धः । उन्नह्यति उद्धमातीव; अन्ये तु 'प्रदुष्टो दोष उन्नह्यति उच्छ्रितो भवति, मांसपिण्डमाशुवृद्धिं शीघ्रवर्धनशीलं करोति' इति व्याख्यानयन्ति । अपाकम् ईषत्पाकम् ॥ १५ ॥ १६ ॥—

**न्या० च०**-शोणितजस्य लक्षणं दर्शयन्नाह—दोषः प्रदुष्ट इत्यादि । अपाकमीषत्पाकम्, ईषदर्थे नञ्; अलोमिका पिपिलिकेति यथा । दोष उन्नह्यति उच्छ्रितो भवति । न केवलमुन्नह्यति आशुवृद्धिं शीघ्रवृद्धिं मांसपिण्डं च करोति । स्रवेदजस्रम् अधिष्ठानभूतसिरारुधिरं; नतु पाककृतम्, ईषदेव क्लेदमात्रलक्षणस्यास्रावस्योक्तत्वात् ॥ १५ ॥ १६ ॥—

मुष्टिप्रहारादिभिरर्दितेऽङ्गे
मांसं प्रदुष्टं प्रकरोति शोफम् ॥ १७ ॥
अवेदनं स्निग्धमनन्यवर्ण-
मपाकमश्मोपममप्रचाल्यम् ॥
प्रदुष्टमांसस्य नरस्य बाढ-
मेतद्भवेन्मांसपरायणस्य ॥ १८ ॥
मांसार्बुदं त्वेतदसाध्यमुक्तं

**नि० सं०**-मांसजस्य संप्राप्तिं दर्शयन्नाह—मुष्टिप्रहारादिभिरित्यादि । समुपैति सम्यग्गच्छति । बाढम् अतिशयेन । मांसपरायणस्य मांसभक्षणशीलस्य । 'मुष्टिप्रहारादिभिः' इत्यत्र केचित् 'काष्ठप्रहारादिभिः' इति पठन्ति ॥ १७ ॥ १८ ॥—

साध्येष्वपीमानि विवर्जयेत्तु ॥
संप्रस्रुतं मर्मणि यच्च जातं
स्रोतःसु वा यच्च भवेदचाल्यम् ॥ १९ ॥
यज्जायतेऽन्यत् खलु पूर्वजाते
ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ॥
यद्द्वन्द्वजातं युगपत् क्रमाद्वा
द्विरर्बुदं तच्च भवेदसाध्यम् ॥ २० ॥

**नि० सं०**-साध्येष्वपीत्यादि । साध्येष्वपीमानि विवर्जयेदिति साध्येषु मध्ये इमानि वक्ष्यमाणानि विवर्जयेदित्यर्थः । अध्यर्बुदमपि द्विरर्बुदमेव, अन्ये 'अल्पार्बुदं' इति पठन्ति । यद्द्वन्द्वजातमित्यादि द्वन्द्वेन युग्मेन जातं द्वन्द्वजातं; न केवलमध्यर्बुदं द्विरर्बुदं, यद्द्वन्द्वजातं तदपि द्विरर्बुदमित्यर्थः । भेदश्च तयोरुपरिजातत्वेन पार्श्वजातत्वेन च । एतेन द्विरर्बुदद्वितयमप्यसाध्यमुक्तम् ॥ १९ ॥ २० ॥

**न्या० च०**-मांसजस्य संप्राप्तिं दर्शयन्नाह—काष्ठप्रहारादिभिरित्यादि । मांसपरायणस्येति मांसैकपरस्यातिमांसवृद्धेर्मांसजं, तदसाध्यं; तथैव संप्रस्रुतादीन्यप्यसाध्यानि । अध्यर्बुदम् अधिकमर्बुदम्; अध्यर्बुदं यत्तदपि द्विरर्बुदं, यद् द्वन्द्वेन युगपदेव जातं क्रमाद्वा तदध्यर्बुदं द्विरर्बुदमपि; द्वयमेतदसाध्यम् । तथा च **भोजः**—"अर्बुदे त्वर्बुदं जातं द्वन्द्वजं वाऽनुजं च यत् । द्विरर्बुदमिति ज्ञेयं तदसाध्यं विनिर्दिशेत्" इति ॥ १७–२० ॥

न पाकमायान्ति कफाधिकत्वा-
न्मेदोबहुत्वाच्च विशेषतस्तु ॥
दोषस्थिरत्वाद्ग्रथनाच्च तेषां
सर्वार्बुदान्येव निसर्गतस्तु ॥ २१ ॥

**नि० सं०**-तेषां पाकाभावे हेतुं दर्शयन्नाह—न पाकमित्यादि । ग्रन्थ्यादिष्वपि कफादयश्चत्वारो हेतवः सन्ति, परमर्बुदेषु विशेषतः कफस्य मेदसश्चाधिक्यं तस्मात्, तथा विशेषतो

१ 'संजायते यत्' इति पा० ।

दोषस्थिरत्वाद् दोषकार्यस्य मांसोच्छ्रयस्य तेनैव स्वरूपेण चिरकालावस्थितिशीलत्वात्, तथा ग्रथनाद् ग्रन्थिरूपत्वात्तेषां मेदःप्रभृतीनां; निसर्गतस्त्विति तुशब्दोऽप्यर्थः, तेन स्वभावादप्यर्बुदानि पाकं न गच्छतीत्यर्थः ॥ २१ ॥

न्या० च०-तेषां पाकाभावे हेतुं दर्शयन्नाह—न पाकमायान्तीत्यादि । ग्रन्थ्यादिष्वपि कफादयश्चत्वारो हेतवः, अर्बुदेषु पुनः कफमेदसोराधिक्यमिति विशेषः, ततो न पाकमायान्ति। सर्वाण्येवार्बुदानि पित्तरक्तकृतान्यपि न पाकमागच्छन्ति, कुतः ? कफाधिकत्वादित्यादि । विशेषत इति विशेषादत्र कफमेदसोराधिक्यात् । तत्रैवासिद्धतासाधनदोषं निरस्यन्नाह—विशेषतो दोषस्थिरत्वात्; कफकार्यस्थिरत्वात्, तथा मेदःकार्यके दोषकार्यग्रथनरूपात्; विशेषेणैवात्र कफमेदसोः कार्यसामर्थ्येनेत्यर्थः । निसर्गतस्तु अत्र तु शब्दोऽप्यर्थः, स्वभावादपीत्यर्थः । भोजेऽप्युक्तं—"न पच्यते स्थिरत्वाच्च ग्रथितत्वात् स्वभावतः" इति । रक्तजमांसजयोरपि दोषा एवारम्भकाः सन्ति, तथाऽपि तैलदग्धवत् रक्तजादिव्यपदेश इति ॥ २१ ॥

वातः कफश्चैव गले प्रवृद्धौ
मन्ये तु संसृत्य तथैव मेदः ॥
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः
समन्वितं तं गलगण्डमाहुः ॥ २२ ॥

नि० सं०-इदानीं गलगण्डसंप्राप्तिं दर्शयन्नाह—वात इत्यादि । वातादयो गण्डं क्रमशः कुर्वन्तीति संबन्धः । किंविशिष्टं गण्डं ? स्वलिङ्गैः समन्वितम् । वातेन कफेन च गलगण्डो भवति, न पित्तेन; स्वभावेन पित्तजस्य गलगण्डस्याभावात् ॥ २२ ॥

न्या० च०-मेदःकफवातारम्भसमानार्बुदानन्तरं गलगण्डारम्भः । तेषां संप्राप्तिं निर्दिशन्नाह—वातः कफश्चेत्यादि । वातेन कफेन च गलगण्डो भवति न पित्तेन, स्वभावेन पित्तजस्य गलगण्डस्याभावात्, पित्तजचातुर्थकवत् । तदुक्तं चरके—"चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः । जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसंभवः" (च. चि. अ. ३) इति । अत्र च गण्डशब्दस्य सामान्यशोफरूपकार्थव्युदासार्थं स्वलिङ्गैरित्युक्तं; तानि तु गलगण्डस्य सामान्यलिङ्गानि "निबद्धः श्वयथुः" इत्यादीनि वक्ष्यमाणानि ॥ २२ ॥

तोदान्वितः कृष्णसिरावनद्धः
कृष्णोऽरुणो वा पवनात्मकस्तु ॥
मेदोन्वितश्चोपचितश्च काला-
द्भवेदतिस्निग्धतरोऽरुजश्च ॥ २३ ॥

१ 'मृशं' इति पा० । २ 'भवेत् प्रतिस्तब्धगलोऽरुजश्च' इति, 'भवेत् प्रदिग्धे च गलेऽरुजश्च' इति च पा० ।

पारुष्ययुक्तश्चिरवृद्ध्यपाको
यदृच्छया पाकमियात् कदाचित् ।
वैरस्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रशोषः ॥ २४ ॥
स्थिरः सवर्णोऽल्परुगुग्रकण्डूः
शीतो महांश्चापि कफात्मकस्तु ॥
चिराभिवृद्धिं कुरुते चिराच्च
प्रपच्यते मन्दरुजः कदाचित् ॥ २५ ॥
माधुर्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रलेपः ॥
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो
मेदःकृतो नीरुगथातिकण्डूः ॥ २६ ॥
प्रलम्बतेऽलाबुवदल्पमूलो
देहानुरूपक्षयवृद्धियुक्तः ॥
स्निग्धास्यता तस्य भवेच्च जन्तो-
र्गलेऽनुशब्दं कुरुते च नित्यम् ॥ २७ ॥

नि० सं०-तस्यैव वातादिविशेषलिङ्गानि निर्दिशन्नाह—तोदान्वित इत्यादि । अरुज इति सोऽपि वातगलगण्डो यदा कालात् कालेन कृत्वा मेदोऽन्वितो भवति, तदा अरुजो भवतीत्यर्थः । यदृच्छया अज्ञातहेतुनियमेन, पाकमियात् गच्छेत् । कदाचित् न सर्वकालम् । वातजं कफजं चोक्त्वा मेदोजमाह—स्निग्ध इत्यादि । गलेऽनुशब्दमनुनादं प्रतिशब्दमित्यर्थः ॥ २३—२७ ॥

न्या० च०-तस्यैव वातादिविशेषलिङ्गानि निर्दिशन्नाह—तोदान्वित इत्यादि । श्यावारुण्यं दोषदूष्यराशेः, न पुनरवर्णस्य वायोरेव । कदाचिदिति न सर्वकालम् । यदृच्छया अज्ञातहेतुनियमेन । कफजः सवर्णः प्रकृतिसमानवर्णः । तालुगलप्रलेपः प्रलिप्तत्वम् । विवर्धते हीयति चात्र देहः देहवृद्धिहानिभ्यां लक्षणाभ्यां विवर्धते हीयति च । हीयतीति दिवादेराकृतिगणत्वात् हिधातुं परस्मैपदेषु पठन्ति; तेन हीयतीति रूपम् । अन्ये तु "वृद्धिक्षयावृच्छति चात्र देहः" इति पठन्ति । गलेन शब्दमनुनादम् ॥ २३—२७ ॥

कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं
संवत्सरातीतमरोचकार्तम् ॥
क्षीणं च वैद्यो गलगण्डिनं तु
भिन्नस्वरं चैव विवर्जयेत्तु ॥ २८ ॥

नि० सं०-इदानीं गलगण्डस्यासाध्यतामाह—कृच्छ्रादित्यादि ॥ २८ ॥

१ 'गुरुरुग्रकण्डूः' इति ता. । २ 'मेदःश्रितः' इति पा० । ३ 'विवर्धते हीयति चात्र देहः' इति ता. । गयदाससंमतोऽयं पाठः । ४ 'गलेन' इति पा० ।

न्या० च०-इदानीं गलगण्डस्यासाध्यतां दर्शयन्नाह—कृच्छ्राच्छ्वसन्तमित्यादि ॥ २८ ॥

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ॥
महान् वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥२९॥

इति सुश्रुतसंहितायां निदानस्थाने गलगण्डगण्डमालापच्यर्बुदनिदानं नामैकादशोऽध्यायः ॥ ११ ॥

नि० सं०-न सर्व एव गलाश्रयो गण्डो गलगण्डः, किं तर्हि कश्चिदेव वक्ष्यमाणस्वरूप इति दर्शयन्नाह—निबद्ध इत्यादि। नियमेन बद्धो निबद्धः। मुष्कवत् अण्डवत् ॥ २९ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने एकादशोऽध्यायः ॥ ११ ॥

न्या० च०-न गलाश्रयो गलगण्डः, किं तर्हि कश्चिदेव पारिभाषिक इति दर्शयन्नाह—निबद्ध इत्यादि। नियमेन बद्धो निबद्धः। मुष्कवदण्डवत्। भोजेऽप्युक्तं—"महान्तं शोथमल्पं वा हनुमन्यागलाश्रयम्। लम्बन्तं मुष्कवद्बुद्ध्वा गलगण्डं विनिर्दिशेत्" इति ॥ २९ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकाख्यायां पञ्जिकायां निदानस्थाने एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः।

अथातो वृद्ध्युपदंशश्लीपदानां निदानं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

नि० सं०-अथात इत्यादि ॥ १ ॥ २ ॥

न्या० च०-मुष्कप्रलम्बनस्य पूर्वं प्रक्रान्तत्वात्, शोथसामान्याच्च गलगण्डानन्तरं वृद्धिनिदानारम्भः ॥ १ ॥ २ ॥

वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ताः सप्त वृद्धयो भवन्ति। तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे, केवलमुत्पत्तिहेतुरन्यतमः ॥ ३ ॥

नि० सं०-वृद्धीनां संख्यामाह—वातेत्यादि। संख्येयनिर्देशादेव सप्तसंख्यासिद्धौ सप्तग्रहणं द्वन्द्वजादिवृद्धिनिषेधार्थं; तासां पुनरसंभवो व्याधिस्वभावात्। धातुमलकृतायामपि वृद्धौ दोषस्यैव चिकित्सार्थं संभवं दर्शयन्नाह—तासामित्यादि। वातसमुत्थे वातात् सम्यगुत्तिष्ठते वृद्धिं गच्छत इत्यर्थः। जननहेतुः पुनरन्यतम इति तं प्रतिपादयन्नाह—केवलमुत्पत्तिहेतुरन्यतम इति। केवलं परम्, उत्पत्तेरुत्पादकस्य हेतुः कारणमन्यत् मूत्रमन्त्रं वा। अन्ये तु अनयोर्वृद्ध्योर्य उत्पत्तेर्हेतुर्वायुः सोऽन्यतमो भिन्नो ज्ञेयः; एतेन मूत्रसंधारणकुपितो वायुर्मूत्रवृद्धेः कारणं, भारहरणादिभिः कुपितस्त्वन्त्रवृद्धेरित्यर्थः ॥ ३ ॥

न्या० च०-वृद्धिस्तु वातादिभेदेन सप्तविधः; संख्येयनिर्देशादेव सप्तसंख्यासिद्धौ सप्तग्रहणं द्वन्द्वजादिवृद्धिनिषेधार्थं; तेषां पुनरसंभवोऽपि व्याधेः स्वभावात्। धातुमलकृतेऽपि दोषस्यैव चिकित्सार्थं संभवं दर्शयन्नाह—तेषां मूत्रान्त्रनिमित्ते वातसमुत्थे इति; वातात् सम्यगुत्तिष्ठते, परमुत्पत्तेरुत्पादकस्य कारणमन्यत् मूत्रमन्त्रं वा। अत एवाह—"वायुरप्रतिकारिणः कालान्तरेण मुष्कौ समुपैति" इति। शोणितजे पित्तदोषः, मेदोजे कफः ॥ ३ ॥

अधः प्रकुपितोऽन्यतमो हि दोषः फलकोशवाहिनीरभिप्रपद्य धमनीः फलकोषयोर्वृद्धिं जनयति, तां वृद्धिमित्याचक्षते ॥ ४ ॥

नि० सं०-तासां संप्राप्तिमाह—अधः प्रकुपित इत्यादि। फलकोशयोरित्यनेन द्विवचनेन मुष्कद्वय एव वृद्धिरिति न ज्ञेयं, किं तर्हि एकस्मिन्नपि पक्षे वृद्धिरिति ज्ञातव्यम् ॥ ४ ॥

न्या० च०-तेषां संप्राप्तिं निर्दिशन्नाह-अधः प्रकुपित इत्यादि। फलं च कोषश्च तयोर्वाहिनीः धमनीः; फलकोषयोरिति द्विवचनमतन्त्रं, तेनैकस्य च फलकोषस्य वृद्धिर्भवति। तं वृद्धिमाचक्षेत इति केचिद्वृद्धिपदं पठन्ति। तत्र च "क्तिच्क्तौ च संज्ञायाम्" (पा. अ. ३।३।१७४) इत्यनेन सिद्धो वृद्धिशब्दः, स च पुंल्लिङ्गः ॥ ४ ॥

तासां भविष्यतीनां पूर्वरूपाणि-बस्तिकटीमुष्कमेढ्रेषु वेदना मारुतनिग्रहः फलकोशशोफश्चेति॥५॥

नि० सं०-तासां पूर्वरूपाण्याह—तासामित्यादि ॥ ५ ॥

न्या० च०-केचिद्वृद्धीनां पूर्वरूपाणि पठन्ति—तेषां भविष्यतां पूर्वरूपाणीत्यादि ॥ ५ ॥

तत्रानिलपरिपूर्णां बस्तिमिवाततां परुषामनिमित्तानिलरुजां वातवृद्धिमाचक्षते; पक्वोदुम्बरसङ्काशां ज्वरदाहोष्मवतीं चाशुसमुत्थानपाकां पित्तवृद्धिं; कठिनामल्पवेदनां शीतां कण्डूमतीं श्लेष्मवृद्धिं; कृष्णस्फोटावृतां पित्तवृद्धिलिङ्गां रक्तवृद्धिं, मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफलप्रकाशां मेदोवृद्धिं; मूत्रसंधारणशीलस्य मूत्रवृद्धिर्भवति, सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रवेदनां वृषणयोः श्वयथुं कोशयोश्चापादयति, तां मूत्रवृद्धिं विद्यात्; भारहरणबलवद्विग्रहवृक्षप्रपत-

---

१ 'तं गण्डमिति निर्दिशेत्' इति पा०। २ 'तेषां' इत्यादि ताडपत्रपुस्तके तथा गयदासेन च वृद्धिशब्दः सर्वत्र पुंल्लिङ्ग एव पठ्यते।

१ 'कठिनं स्निग्धमल्पवेदनं श्लेष्मवृद्धिं' इति ता.।

नादिभिरायासविशेषैर्वायुरभिप्रवृद्धः प्रकुपितश्च स्थूलान्त्रस्येतरस्य चैकदेशं विगुणमादायाधो गत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोशं प्रविश्य मुष्कशोफमापादयति, आध्मातो बस्तिरिवाततः प्रदीर्घः स शोफो भवति, सशब्दमवपीडितश्चोर्ध्वमुपैति, विमुक्तश्च पुनराध्मायते, तामन्त्रवृद्धिमसाध्यामित्याचक्षते ॥ ६ ॥

नि० सं०–तासां वातादिजानां लक्षणमाह—तत्रानिलेत्यादि । आतताम् आध्माताम् । मेदोवृद्धिमिति कफेन सह । मूत्रेत्यादि शीलं स्वभावः । क्षुभ्यति संचलति । आध्मातो बस्तिरिव परिपूर्णो मूत्राशय इव । आततो विस्तीर्णः । उपैति उद्गच्छति, विमुक्तश्च सशब्दमेवाध्मायते ॥ ६ ॥

न्या० च०–मूत्रसंधारणशीलस्य मूत्रवृद्धिर्भवति, पश्चाद्वेगविघातेन च मूत्रप्रवृत्तेन वायुना आप्यायते । अधःप्रदेशे द्विगुणमिति आधाराधेयकृतमिति केचिद्व्याचक्षते । अन्ये विगुणं दुष्टमादायेति पठन्ति । वंक्षणसन्धिमागम्य उन्नतत्वाद् ग्रन्थ्याकारेण च स्थानं कृत्वा, उपेक्षितो मुष्ककोशमुपैति दीर्घः, अवपीडितश्च सशब्दमूर्ध्वमुत्तिष्ठते, मुक्तश्च सशब्दमेव आध्मायते । अत्रैव भोजः—अतिव्यवायव्यायामभारप्लवनलङ्घनैः । वायुः प्रवृद्धः पतनाद्युद्धश्चङ्क्रमणेन च ॥ अन्त्रं द्विगुणमादाय जन्तोर्नयति वंक्षणम् । वंक्षणात्तु रुजायुक्तं फलकोषं प्रपद्यते ॥ तत्र स्थित्वा चिराद्वृद्धिं करोति न च शाम्यति । स दीर्घकालसंवृद्धो दीर्घो बस्तिरिवाततः ॥ चिरावनद्धो भवति पीडितश्च विलीयते । मुक्तश्चाध्मायते भूयो चर्यां तामन्त्रजां विदुः" । इति वृद्धिनिदानं समाप्तम् ॥ ६ ॥

तत्रातिमैथुनादतिब्रह्मचर्याद्वा तथाऽतिब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढरोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्षसलिलप्रक्षालितयोनिमप्रक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषशूकनिपातनाद्बन्धनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्षसलिलप्रक्षालनादवपीडनाच्छुक्रवेगविधारणान्मैथुनान्ते वाऽप्रक्षालनादिभिर्मेढ्रमागम्य प्रकुपिता दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति, तमुपदंशमित्याचक्षते ॥ ७ ॥

नि० सं०–वृद्धेरन्तरमुपदंशानां हेत्वाद्यभिधानमाह—तत्रातिमैथुनेत्यादि । अतिब्रह्मचारिण्या मैथुनातिनिवृत्त्या सङ्कुचितकर्कशयोनिमुखत्वात् । चिरोत्सृष्टां प्रभूतकालत्यक्तां, अत्रापि स एव हेतुः । ब्रह्मचारिण्या जन्मनः प्रभृत्येव मैथुनाभावः, चिरोत्सृष्टायास्तु कदाचिदेवेत्यनयोर्भेदः । रजस्वलाया दुष्टार्तवप्रसङ्गात् । दीर्घकर्कशादिरोमाभिगमने पीडनाभिघातप्रसङ्गात् । संकीर्णरोमा घनरोमा । निगूढरोमा अभ्यन्तररोमा । अल्पद्वारायामपि स एव हेतुः । महाद्वारायां शोफहेतुश्चिन्त्य एव, तस्मात् केचिन्न पठन्ति । अप्रियायां लिङ्गानुत्थानेनेतश्चेताभिघातप्रसङ्गात् । अकामायाः सक्थिसङ्कोचेन द्वाराल्पत्वात् । अचोक्षसलिलप्रक्षालितयोनेः सलिलदोषात्, अचोक्षमपवित्रम् । अप्रक्षालितयोनेः स्वेदमलदोषात् । योनिरोगोपसृष्टाया रोगदोषानुसारेण दोषोदयात् । स्वभावतो वा दुष्टयोनेर्वातादय एव कारणम् । वियोनिं हस्तजङ्घान्तरं, तस्य कर्कशत्वात् । करजा नखाः, दशना दन्ताः, शूकैस्य सविषजलजकीटस्य, निपातनाल्लिङ्गादिशरीरे पातनादथवा तेषां मर्दनात् पीडनात् । चतुष्पद्योऽजादयो रासभ्यादयो वा, तासामप्यल्पारम्ययोनित्वात् । अचोक्षसलिलप्रक्षालनादिभिरिति अचोक्षसलिलप्रक्षालनमत्र लिङ्गस्य न तु योनेः ॥ ७ ॥

न्या० च०–अथात उपदंशनिदानं व्याख्यास्यामः । वृद्धेरनन्तरमुपदंशारम्भः, स्थानप्रत्यासन्नत्वात् । तत्रातिमैथुनादतिब्रह्मचर्याद्वा तथा ब्रह्मचारिणीमित्यादिहेतुविशेषा यथायोगं व्याख्येयाः । तत्र ब्रह्मचारिण्यां मैथुननिवृत्त्या संकुचितकर्कशयोनिमुखत्वात् । दीर्घकर्कशरोमयोन्यामपि दीर्घकर्कशरोमभिरेव सुकुमारस्य निष्पीडनाभिघातैः शोथः । योनिरोगोपसृष्टायां यथारोगदोषमेव दोषोदयात् । अल्पद्वारायामपि निष्पीडनाभिघातात् । महाद्वारायामपि व्रणैर्निष्पीडनाभिघातादिति केचित् पठन्ति । शोथहेतूनामपि वैमित्यैव (?) । अप्रियायां लिङ्गानुत्थानेनैतश्चेतश्चाभिघातेन शोथः । अकामायां सक्थिसंकोचेन द्वाराल्पत्वात् । अचोक्षसलिलप्रक्षालितयोनेः मलदोषात् । अप्रक्षालनेन वा स्वेदमलादिदोषात् । रुजादिभिरभिघाततः । चतुष्पदीनां योनेरल्पामनोज्ञत्वात् । तं श्वयथुमुपदंशमित्याचक्षते इत्यनेन शिश्नगतशोफः दंशनोपाधिमन्तरेणापि संकेतमात्रेणैव 'उपदंश' इत्युच्यते ॥ ७ ॥

१ 'वायुः प्रकुपितोऽन्त्रस्य स्थूलस्येतरस्य वा' इति ता. । २ 'क्षुद्रान्त्रस्यैकदेशं' इति पा० । ३ विगुणं संकुचितं; 'द्विगुणं' इति पाठान्तरम्, तत्र संकोचेन द्विगुणीकृतमित्यर्थः । ४ 'पुनराधमति' इति, 'पुनराध्माति' इति च पा० । ५ 'तत्र ब्रह्मचारिणीं दीर्घकर्कशरोमां योनिरोगोपसृष्टामल्पद्वारामप्रियामकामामचौक्षसलिलप्रक्षालितयोनिं वा नारीं योऽभिगच्छेत् तथा करजदशनविषशूकनिपातनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्षसलिलप्रक्षालनाद्वा प्रकुपिताः' इति ताडपत्रपुस्तके पाठः । गयदासेनाप्ययमेव व्याख्यातः ।

१ 'अप्रक्षालनादेवंविधाद्वाऽन्यस्मात्' इति पा० । २ 'सविषशूकेति शूकः सजन्तुर्जलमलः, लिङ्गवृद्धिकरयोगो वा' इति पा० ।

**स पञ्चविधस्त्रिभिर्दोषैः पृथक् समस्तैरसृजा चेति ॥ ८ ॥**

**नि० सं०**–तेषां संख्यामाह—स पञ्चविध इत्यादि । त्रिभिर्दोषैः पृथगिति त्रयः, समस्तैरेकः, असृजा चैकः, एवं पञ्च ॥ ८ ॥

**न्या० च०**–दोषदूष्याश्रयसंख्यया पञ्चविधः ॥ ८ ॥

**तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता विविधाश्च वातवेदनाः; पैत्तिके ज्वरः श्वयथुः पक्वोडुम्बरसङ्काशस्तीव्रदाहः क्षिप्रपाकः पित्तवेदनाश्च; श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्मवेदनाश्च; रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमसृक्प्रवृत्तिः पित्तलिङ्गान्यत्यर्थं ज्वरदाहौ शोषश्च, याप्यश्चैव कदाचित्; सर्वजे सर्वलिङ्गदर्शनमवदरणं च शेफसः कृमिप्रादुर्भावो मरणं चेति ॥ ९ ॥**

**नि० सं०**–तेषां वातादिजानां प्रत्येकं लक्षणमाह—तत्र वातिके इत्यादि । "मेढ्रसन्धौ व्रणाः केचित् केचित् सर्वाश्रयाः स्मृताः । कुलत्थाकृतयः केचित् केचिन्मुद्गदलोपमाः ॥ रुजादाहपरीताश्च तृष्णामोहसमन्विताः । शीघ्रं केचिद्विसर्पन्ति शनैः केचित्तथाऽपरे ॥ स्त्रीणां पुंसां च जायन्ते उपदंशाः सुदारुणाः"–इति तन्त्रान्तरे ॥ ९ ॥

**न्या० च०**–तत्र वार्तिके विविधाश्च वातवेदना इति नानाविधतोदादिवेदनाः । रक्तजे पित्तलिङ्गानि ज्वरदाहचोषादीनि । सर्वजे अवदरणं कृमिप्रादुर्भावो मरणं चेति । रक्तजेऽपि कट्वम्लादिहेतुभी रक्तकफकोपात् कर्णिका जायते । तथा च भोजः—"कट्वम्ललवणात्यन्तोः पित्तलस्यातिसेविनः । रक्तं प्रदूषयत्यम्लं तद्दुष्टमनिलेरितम् ॥ करोति मेहनं प्राप्य श्वयथुं······। कथंचिदप्युपेक्षातस्ततो रक्तकफात्मिका । कर्णिका जायते तत्र सकण्डूका सवेदना" इति । केचित् सुश्रुताध्यायिनः पठन्ति 'मेढ्रसंधौ व्रणाः केचित्' इत्यादिकं; तमनार्षमाचक्षते, स्त्रीणां चोपदंशा भवन्तीति सर्वतन्त्रेष्वप्रसिद्धेः । इत्युपदंशनिदानं समाप्तम् ॥ ९ ॥

**कुपितास्तु दोषा वातपित्तश्लेष्माणोऽधःप्रपन्ना वङ्क्षणोरुजानुजङ्घास्ववतिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शोफं जनयन्ति, तं श्लीपदमित्याचक्षते । तत्त्रिविधं–वातपित्तकफनिमित्तमिति ॥ १० ॥**

**न्या० च०**–अतः परं श्लीपदारम्भः, उपदंशस्थानेऽपि श्लीपदसंभवात्; 'शिश्नौष्ठनासास्वपि च केचिदिच्छन्ति तद्विदः' इति वचनात् । तेषां संप्राप्तिं निर्दिशन्नाह—प्रकुपितास्त्वित्यादि । प्रकुपिता इत्यनेन सामर्थ्यादेव हेतवो निर्दिष्टाः, अहतोर्दोषस्यादुष्टत्वात् । स्थानसंश्रयलक्षणा संप्राप्तिरपि लक्षणमेव । तत्र पूर्वो लक्षणोदयो दोषदूष्यराशेरेव; दूष्यान् दूषयन्तो दोषाः शोफं जनयन्ति । तं श्लीपदमित्याचक्षते इति पारिभाषिकी निरुपाधिरेव श्लीपदसंज्ञेतीतिशब्देन प्रकाशयति ॥ १० ॥

**तत्र, वातजं खरं कृष्णं परुषमनिमित्तानिलरुजं परिस्फुटति च बहुशः; पित्तजं तु पीतावभासमीषन्मृदु ज्वरदाहप्रायं च; श्लेष्मजं तु श्वेतं स्निग्धावभासं मन्दवेदनं भारिकं महाग्रन्थिकं कण्टकैरुपचितं च ॥ ११ ॥**

**न्या० च०**–कफजे भारिकं गुर्वित्यर्थः ॥ ११ ॥

**तत्र संवत्सरातीतमतिमहद्वल्मीकजातं प्रस्रुतमिति वर्जनीयानि ॥ १२ ॥**

**नि० सं०**–वल्मीकजातं वल्मीकवज्जातम्, अतिबहुतरशिखरैर्ग्रन्थिभिरुपचितत्वात्; परपदार्थेषु हि प्रवृत्ता शब्दा वतिमन्तरेणापि वत्यर्थं जनयन्ति ॥ १०–१२ ॥

**न्या० च०**–तस्यासाध्यावस्थां निर्दिशन्नाह–संवत्सरातीतमित्यादि । वल्मीकजातं वल्मीकवज्जातम्, अतिबहुतरशिखरैर्ग्रन्थिभिरुपचितत्वात्; परपदार्थेषु हि प्रवृत्ता शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति ॥ १२ ॥

**भवन्ति चात्र—**

**त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात् ॥**
**गुरुत्वं च महत्त्वं च यस्मान्नास्ति विना कफात् ॥१३॥**

**नि० सं०**–वातपित्तश्लीपदान्यपि कफाधिकान्येवेति दर्शयन्नाह—त्रीणीत्यादि ॥ १३ ॥

**न्या० च०**–वातपित्तश्लीपदान्यपि कफाधिकान्येवेति दर्शयन्नाह—त्रीण्यप्येतानीत्यादि ॥ १३ ॥

**पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः ॥**
**ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ १४ ॥**

**नि० सं०**–देशविशेष एवास्योत्पत्तिं दर्शयन्नाह—पुराणोदकभूयिष्ठा इत्यादि । अनूपदेशस्य पुराणोदकभूयिष्ठता । जाङ्गलस्योन्नतसमभूतलत्वात् सलिलं पतितं न तिष्ठति, स्थितमपि रूक्षोष्णशुष्कत्वाद्देशस्य शोषमुपैति; तेन जाङ्गलदेशस्य शीतेऽप्यशीतता ॥ १४ ॥

**न्या० च०**—देशविशेष एवास्योत्पत्तिं दर्शयन्नाह—पुराणोदकभूयिष्ठा इत्यादि । अनूपदेशस्य पुराणोदकभूयिष्ठता; जाङ्गलस्य तून्नतसमभूतलत्वात् सलिलं पतितं न तिष्ठति, स्थितमपि रूक्षोष्णशुष्कत्वाद्देशस्य शोषमुपैतीति जाङ्गलदेशस्य शीतेऽप्यशीतता; तदुक्तं–"समाः साधारणे" (सू. अ. ३५) इत्यादि; लक्षणद्वन्द्वमेतत् पञ्चविधस्यानूपस्यावरोधकम् (?) अत्रैव हि देशविशेषेण श्लीपदानामुत्पत्तिरिति ॥१४॥

---

१ 'चैकः' इति पा० । २ 'विविधवेदनाप्रादुर्भावश्च' इति ता. ।

पादवद्धस्तयोश्चापि श्लीपदं जायते नृणाम् ॥
कर्णाक्षिनासिकौष्ठेषु केचिदिच्छन्ति तद्विदः ॥ १५॥

इति सुश्रुतसंहितायां निदानस्थाने वृद्ध्युपदंशश्लीपदनिदानं नाम द्वादशोऽध्यायः ॥ १२ ॥

**नि० सं०**–श्लीपदस्य पादाभ्यामन्यस्मिन्नप्यङ्गे उत्पत्तिं दर्शयन्नाह—पादवद्धस्तयोश्चापीत्यादि ॥ १५ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने द्वादशोऽध्यायः ॥ १२ ॥

**न्या० च०**–श्लीपदस्य पादाभ्यामन्यस्मिन्नप्यङ्गे उत्पत्तिं दर्शयन्नाह–पादवद्धस्तयोश्चापीत्यादि । इति श्लीपदनिदानं समाप्तम् ॥ १५ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकाख्यायां पञ्जिकायां निदानस्थाने द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

**नि० सं०**–अथात इत्यादि । यद्यपि क्षुद्ररोगेषु रोहिणीवल्मीकादयो महाव्याधयः सन्ति, तथाऽपि क्षुद्ररोगाणां बहुलत्वात्तैरेव व्यपदेशः; यथा बहुषु छत्रिषु गच्छत्सु अच्छत्रिष्वपि केषुचिच् छत्रिणो यान्तीति व्यपदेशः, तथाऽत्रापीति न दोषः। अन्ये तु क्षुद्रा लघवस्तिलकाद्यपेक्षया, अग्निरोहिणीवल्मीकाद्यपेक्षया क्षुद्रास्तीक्ष्णाः; अथवा पूर्वाचार्यप्रसिद्धा निर्हेतुकेयं संज्ञा ॥ १ ॥ २ ॥

**न्या० च०**–वृद्ध्यादिनिदानानन्तरं क्षुद्ररोगाणामारम्भः । निदानस्य हेतुलक्षणनिर्देशस्यारम्भः, व्याधिवर्गनिर्देशस्यारम्भः, साधर्म्यात् क्षुद्ररोगपारिशेष्यात् । प्रथमं ह्यधिकानां महाव्याधीनां निर्देशः कृतः, तदनु मध्यानां महाव्याधीनां विद्रधीनाम्, अनन्तरं स्वल्पानां क्षुद्राणां निदानमवतिष्ठति, तन्निर्दिशन्नाह–अथात इत्यादि । क्षुद्रत्वं पुनरेषां हेतुलक्षणचिकित्साल्पत्वेन; यद्येवं रोहिणीवल्मीकादीनां त्रिदोषजत्वेन हेतुबाहुल्याद् रोहिण्यास्तावदिहासाध्यत्वात्, तथैव वल्मीकस्य च कृच्छ्रत्वादसाध्यत्वाद्वा महाव्याधित्वप्रसङ्गः। नैतदस्ति, बाहुल्येनोक्तत्वात्; तद्यथा–छत्रिबाहुल्येन छत्रिणो यान्तीति व्यपदेशः । अद्वितीयत्वेन वा क्षुद्राः, तथा हि–नहि क्षुद्ररोगनिर्दिष्टेषु रोगेष्वजगल्लिकागुदभ्रंशादिषु दोषधातुमलसंसर्गाद् व्यभिचरति संख्या, अल्पत्वेनापि क्षुद्रत्वं, जेज्जटेनेति पुनरिह बहुतरमसंबद्धं प्रलपितं, तद्विस्तरभयादस्माभिर्दूषयितुमपि नानुगदितम् ॥ १ ॥ २ ॥

समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति । तद्यथा,—अजगल्लिका[1], यवप्रख्या[2], अन्धालजी[3], विवृता[4], कच्छपिका[5], वल्मीकं[6], इन्द्रवृद्धा[7], पनसिका[8], पाषाणगर्दभः[9], जालगर्दभः[10], कक्षा[11], विस्फोटकः[12], अग्निरोहिणी[13], चिप्पं[14], कुनखः[15], अनुशयी[16], विदारिका[17] शर्करार्बुदं[18], पामा[19], विचर्चिका[20], रकसा[21], पाददारिका[22], कदरं[23], अलसेन्द्रलुप्तौ[24][25], दारुणकः[26], अरुंषिका[27], पलितं[28], मसूरिका[29], यौवनपिडका[30], पद्मिनीकण्टकः[31], जतुमणिः[32], मशकः[33], चर्मकीलः[34], तिलकालकः[35], न्यच्छं[36], व्यङ्गः[37], परिवर्तिका[38], अवपाटिका[39], निरुद्धप्रकशः[40] संनिरुद्धगुदः[41], अहिपूतनं[42], वृषणकच्छूः[43], गुदभ्रंशश्चेति[44] ॥ ३ ॥

**नि० सं०**–संख्यामाह—समासेनेत्यादि । समासेन संक्षेपेण, विस्तरेण प्रमाणं तु नास्त्येव । **श्रीब्रह्मदेवस्तु** गर्दभिकेरिवेल्लिकागन्धपिडिकानीलिकानां संग्रहणेनाष्टचत्वारिंशदिति पठति । **श्रीजेज्झटेन** तु गर्दभिकादयश्चत्वारो न पठिताः । पूर्वव्याख्यातारोऽपि **सुवीरनन्दिवाराह्लादयः** समानतन्त्रापाठात् गर्दभिकादीनां चतुर्णां पाठं गर्हितं मन्यन्ते । **गयदासाचार्यस्तु** समानतन्त्रादर्शनेऽपि सर्वेष्वेव पाठेषु पाताद् गर्दभिकादीन् पठति, पामादींश्च क्षुद्रत्वेऽपि चतुरः कुष्ठ एव पठति ॥३॥

**न्या० च०**–प्रथमं संख्यामेव निर्दिशन्नाह—समासेन चतुश्चत्वारिंशत् क्षुद्ररोगाः । समासेन संक्षेपेण, दोषविकाराणामानन्त्यात्; यदुक्तं–"अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्" ( सू. अ. ३५ ) इत्यादि ॥ ३ ॥

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा ॥
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ ४ ॥

**नि० सं०**–तेषां प्रत्येकं लक्षणमाह—स्निग्धेत्यादि । "प्रायोग्रहणमत्र लुप्तनिर्दिष्टं द्रष्टव्यं, तेन क्वचिद्बालेष्वपि" इत्येके मन्यन्ते ॥ ४ ॥

**न्या० च०**–अजगल्लिका बालानामेव "यदा कुर्वन्ति सं कालः" ( सू. अ. ४१ ) इति बाल्ये एव तद्रोगधारणसामर्थ्यं, न पुनस्तारुण्यादिषु वातपिडिकावत् । प्रायोग्रहणमत्र लुप्तनिर्दिष्टं द्रष्टव्यं; तेन क्वचिद्बालेष्वपीत्येके मन्यन्ते । अत्र भोजः—"मारुतः कफमादाय पिडिकां माषमुद्गयोः । तुल्यां सवर्णां स्वक्षांसे कुरुते साऽजगल्लिका" इति ॥ ४ ॥

यवाकारा सुकठिना ग्रथिता मांससंश्रिता ॥
पिडका श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥ ५ ॥

---

१ 'सूक्ष्माः' इति पा० ।

१ 'सप्तचत्वारिंशत्' इति ता. । २ 'इन्द्रविद्धा, गर्दभिका' इति ता. । ३ 'कक्षा, इरिवेल्लिका, गन्धनामा' इति ता. । ४ 'अलसः, रुज्या' इति पा० । ५ ताडपत्रपुस्तके चर्मकीलस्थाने नीलिका पठ्यते । ६ 'ग्रन्थिसन्निभा' इति पा० ।

नि० सं०-यवेत्यादि । यवाकारा [1]स्थूलमध्यनिम्नान्तत्वेन ॥ ५ ॥

न्या० च०-यवप्रख्याः स्थूलमध्यत्वेन यवाकाराः ॥ ५ ॥

घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम् ॥
अन्धालजीमल्पपूयां तां विद्यात् कफवातजाम् ॥६॥

नि० सं०-घनामित्यादि । अवक्त्रामिति अल्पमुखीम् । परिमण्डलां वर्तुलमित्यर्थः । अन्धालजीं स्नायुप्रसृतान्तर्मुखीम् ॥ ६ ॥

न्या० च०-अन्धालजी स्नायुश्रिताऽन्तर्मुखी । तथा च भोजः—"श्लेष्मानिलौ श्रितौ स्नायुं पिडिकां परिमण्डलाम् । दुष्टौ जनयतोऽवक्त्रामल्पपूयामकण्डुराम् ॥ आमोदुम्बरसंकाशां विद्यादन्धालजीं तु ताम्" इति । एतासु दोषाः स्वयमाचार्येण निर्दिष्टा एव; यत्र पुनराचार्येण दोषाः स्वयं न निर्दिष्टास्तत्र दोषाः परतन्त्रप्रत्ययेन लिङ्गेनैव निर्दिश्यन्ते ॥ ६ ॥

विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम् ॥
विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम् ७

नि० सं०-विवृतास्यामित्यादि । विवृतास्यामिति व्यात्तमुखीम् ॥ ७ ॥

न्या० च०-पित्ताधिकत्वेनाधिकपाकाद्विवृतास्यत्वेन विवृता ॥ ७ ॥

ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः ॥
कफानिलाभ्यां पिडका ज्ञेया कच्छपिका बुधैः ॥८॥

नि० सं०-दारुणाः कठिनाः ॥ ८ ॥

न्या० च०-मध्योन्नतत्वेन पर्यन्तेष्वनतत्वेन काठिन्येन च कच्छपिका । सा कफवातोत्था ॥ ८ ॥

पाणिपादतले सन्धौ ग्रीवायामूर्ध्वजत्रुणि ॥
ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते ॥ ९ ॥
तोदक्लेदपरीदाहकण्डूमद्भिर्मुखैर्वृतः ॥
व्याधिर्वल्मीक इत्येष [2]कफपित्तानिलोद्भवः ॥ १० ॥

नि० सं०-ग्रन्थय इत्यादि ॥ ९ ॥ १० ॥

न्या० च०-वल्मीकवदिति बहुतरशिखरत्वेनोच्छ्रायेण च, तथा दूरावगाढदोषदूषितदूष्यतयाऽन्तर्मूलत्वेनापि वल्मीकसमता; अत एव चिकित्सिते अवगाढमूलशोधनार्थमग्निक्षाराभ्यां प्रसाधनमुक्तम् । तं च केचित् कफपैत्तिकमिच्छन्ति; तन्न, तोदस्य क्लेददाहयोः कण्ड्वादीनां च वातादिलिङ्गानां दर्शनात् सान्निपातिक एवायं; तथा हि भोजः—"सन्निपातेन पिडिका मुखैर्बहुभिरावृता । पाणिपादतले सन्धौ ग्रीवायामूर्ध्वजत्रुषु ॥ जायते हि विशेषेण व्याधिं वल्मीकमादिशेत्" इति । तथाऽन्यत्राप्युक्तं—'ग्रीवांसकक्षे करपाददेशे संधौ गले वा त्रिभिरेव दोषैः । ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमेणैव गतः प्रवृद्धिम् ॥ मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत् सर्पति चोन्नताग्रैः । वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात्" इति ॥ ९ ॥ १० ॥

[1]पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम् ॥
इन्द्रवृद्धां तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥११॥
मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकाचितम् ।
रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥

नि० सं०-पद्मेत्यादि । पद्मपुष्करं पद्मकर्णिका । गयी त्वत्र गर्दभिकां पठति; यथा—"मण्डलां वृत्तमुत्सन्नां सरक्तां पिडकाचिताम् । रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम्" ॥ ११—१८ ॥

न्या० च०-महापुष्करवन्मध्ये इति पुष्करं वराटकम् । इन्द्रविद्धा वातपित्तजा, गर्दभिकाऽपि; सा पठ्यते, सर्वेषु समानतन्त्रेषु दृश्यते इति ॥ ११ ॥

[3]कर्णौ परि समन्ताद्वा पृष्ठे वा पिडकोग्ररुक् ॥
शालूकवत्पनसिकां तां विद्याच्छ्लेष्मवातजाम् ॥१२॥

न्या० च०-कर्णस्याभ्यन्तरे देशे जाता वातकफात्मिका । समन्तत इति वचनात् कर्णाद्बहिरपीति व्याचक्षते, तन्न, सर्वेषु पादेषु बहिरिति अप्राप्तेः । न च समानतन्त्रेषु बहिरिति लभ्यते । तथाहि भोजः—"कफवातौ प्रकुपितौ मांसमाश्रित्य कर्णयोः । समन्ततः परिस्तब्धां कुरुतः पिडकां स्थिराम् ॥ विषमां दाहसंयुक्तां विद्यात् पनसिकां तु ताम्" इति । भोजेऽस्यां वातकफजायां दाहः पठितः, स हि विकृतिविषमसमवायारम्भादधिष्ठानप्रभावाद्वाऽवगन्तव्यः ॥ १२ ॥

हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम् ॥
[4]पाषाणगर्दभं विद्याद्बलासपवनात्मकम् ॥ १३ ॥

न्या० च०-हनुसंधिसमुद्भूतमित्यादिना पाषाणगर्दभः । स्थिरकठिनपाषाणवत् काठिन्येन पाषाणगर्दभः ॥ १३ ॥

विसर्पवत् सर्पति [5]यो दाहज्वरकरस्तनुः ॥
अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्दभः ॥१४॥

न्या० च०-विसर्पवत् सर्पति य इत्यादिना जालगर्दभः । अपाकवान् ईषत्पाकवान्, ईषदर्थे नञ्; पित्तकृतत्वेनात्यर्थं पाकाभावस्यायुक्तत्वादल्पपाक इत्यङ्गीक्रियते । प्रतनुस्तोकपाकपिडिकाजालाभत्वाज् जालगर्दभः । पित्तादिस्युद्भूत-

१ 'अन्तर्निम्नमध्योन्नतत्वेन' इति पा० । २ 'विज्ञेयः कफपैत्तिकः' इति ता. ।

१ 'पद्मकर्णिवन्मध्ये' इति पा० । २ 'विपुलोत्सन्नां' इति पा० । ३ 'कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनाम् । स्थिरां पनसिकां तां तु विद्याद्वातकफोत्थिताम्' इति ता. । ४ 'पाषाणगर्दभमिति ब्रूयात्तत् कफपित्ततः' इति ता. । ५ 'यः शोफस्तनुरपाकवान् । दाहज्वरकरः पित्ताद्' इति ता. ।

पित्तात्, पित्तोत्कटैस्त्रिभिरेव दोषैरन्यत्र पठ्यते । तथाहि भोजः—"पित्तोत्कटास्त्रयो दोषा जनयन्ति त्वगाश्रिताः । श्यावरक्ततनुशोथप्रपाकं बहुवेदनम् ॥ विसर्पिणं सदाहं च तृष्णाज्वरसमन्वितम् । विसर्पमाहुस्तं व्याधिमपरे जालगर्दभम्" इति ॥ १४ ॥

**पिडिकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् ॥**
**सर्वात्मकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम् ॥१५॥**

न्या० च०–पिडकामुत्तमाङ्गस्थामित्यादिना इरिवेल्लिका । सा च सर्वजा सर्वदोषारब्धेत्यर्थः । सर्वेषां वातादिदोषाणां स्वभावकार्याणां लिङ्गदर्शनं सन्निपातेन प्रकृतिसमवायारब्धत्वान्मन्यन्ते । इयं सर्वेष्वेव पाठेषु पठ्यते, न तु समानतन्त्रेष्विति पूर्वव्याख्यातारो मन्यन्ते ॥ १५ ॥

**बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम् ॥**
**पित्तप्रकोपसंभूतां कक्षामिति विनिर्दिशेत् ॥ १६ ॥**

न्या० च०–बाहुपार्श्वांसकक्षेत्यादिना कक्षा ॥ १६ ॥

**एकामेवंविधां दृष्ट्वा पिटिकां स्फोटसन्निभाम् ॥**
**त्वग्गतां पित्तकोपेन गन्धनामां प्रचक्षते ॥ १७ ॥**

न्या० च०–एकामेतादृशीं कक्षानिर्दिष्टस्फोटसदृशीं गन्धनामां वदन्ति ॥ १७ ॥

**अग्निदग्धनिभाः स्फोटाः सज्वराः पित्तरक्ततः ॥**
**क्वचित् सर्वत्र वा देहे स्मृता विस्फोटका इति ॥१८॥**

न्या० च०–अग्निदग्धनिभाः स्फोटा इत्यादिना विस्फोटकाः । अन्यैः पुनरमी विसर्पभेदत्वादेषां न पठ्यन्ते । अत एवान्यतन्त्रीयैर्विसर्पभेदत्वादेषां दोषभेदेन लक्षणं पठ्यते । क्षुद्ररोगपाठे तु दोषभेदोऽत्र न युज्यते । अत्रार्थे भोजः "पित्तं रक्तं च कुपितं वातेनानुगतं त्वचि । अग्निदग्धनिभान् स्फोटान् कुरुते सर्वदेहगान् ॥ सज्वरान् सपरीदाहान् विद्याद्विस्फोटकांस्तु तान्" इति ॥ १८ ॥

**कक्षाभागेषु ये स्फोटा जायन्ते मांसदारु( र )णाः ॥**
**अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ १९ ॥**
**सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ॥**
**तामग्निरोहिणीं विद्यादसाध्यां सन्निपाततः ॥ २० ॥**

नि० सं०–कक्षाभागेष्वित्यादि । असाध्यामिति अत एवास्याश्चिकित्सितेषु न चिकित्साभिधानम् । 'मांसदारणा' इत्यपि पाठः । तथाहि तन्त्रान्तरम्,—"पित्तोत्कटा नृणां दोषाः प्रदीप्ताङ्गारसन्निभान् । कक्षाभागेषु कुर्वन्ति तीव्रदाहरुजाज्वरान् ॥ मांसावदारणान् स्फोटान् ये हन्युरनुपक्रमात् । पक्षाद्दशाहादर्वाग्वा सा ज्ञेया वह्निरोहिणी—" इति । तत्र वाताधिकैः सप्ताहात्, पित्ताधिकैर्दशाहात्, कफाधिकैः पक्षात् ॥१९॥२०॥

न्या० च०–कक्षाभागेषु ये स्फोटा इत्यादिना अग्निरोहणी । असाध्यामिति अत एवास्याश्चिकित्सितेषु न चिकित्साभिधानम् ॥ १९ ॥ २० ॥

**नखमांसमधिष्ठाय पित्तं वातश्च वेदनाम् ॥**
**करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ॥२१॥**
**तदेवाक्षतरोगाख्यं तथोपनखमित्यपि ॥**
**अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसितः खरः २२**
**भवेत्तं कुनखं विद्यात् कुलीनमिति संज्ञितम् ॥**

नि० सं०–नखेत्यादि । चिप्पमिति तन्त्रान्तरेऽङ्गुलीवेष्टकमिति प्रसिद्धम् ॥ २० ॥ २२ ॥—

न्या० च०–नखमांसमधिष्ठायेत्यादिना चिप्पं; चरके तु अक्षतनाम्नाऽयं विकारः । तथाहि चरकः—"रोगोऽक्षतश्चर्मनखान्तरे स्यान्मांसास्रदूषी भृशदाहपाकः" ( च. चि. अ. १२ ) इति । अन्ये तु "तदेवाक्षतरोगाख्यं तथोपनखमित्यपि" इति ग्रन्थमधीयते ॥ २१ ॥ २२ ॥—

**गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ॥ २३ ॥**
**कफादन्तःप्रपाकां तां विद्यादनुशयीं भिषक् ॥**

नि० सं०–गम्भीरामित्यादि । अन्तःपाकेन गम्भीराम् । अल्पसंरम्भाम् अल्पशोथाम् । उपरिस्थितां मस्तके स्थिताम् ॥ २३ ॥—

न्या० च०–गम्भीरामल्पसंरम्भामित्यादिना अनुशयी । उपरि मूर्धनि । संरम्भः शोथः । अन्तःपाकेन गम्भीरा ॥ २३ ॥—

**विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु ॥ २४ ॥**
**रक्तां विदारिकां विद्यात् सर्वजां सर्वलक्षणाम् ॥**

नि० सं०–विदारीकन्दवदित्यादि । वङ्क्षणसन्धिः गण्डकः । रक्तां लोहिताम् । सर्वजां सन्निपातजां; परं तथाऽपि साध्या, न हि सर्वे एव सन्निपातजा व्याधयोऽसाध्याः । सर्वलक्षणां दोषसमुदायलक्षणां, न तु प्रत्येकदोषलक्षणां, दोषेभ्यो दोषसमुदायस्यान्यत्वात्, चूर्णहरिद्रासंयोगस्येव । अन्ये तु "सर्वेभ्यो वातपित्तकफेभ्यः पृथक् द्विशस्त्रिशो वा जायत इति सर्वजा इत्यस्याः साप्तविध्यं दोषलिङ्गैः सूक्ष्ममतिनाऽनुक्तमप्यूह्यम्" इत्याचक्षते; तन्नेच्छति गयी "येन क्षुद्ररोगसामान्यन्यायेनास्याः साप्तविध्यं न प्रपद्यते, न हि क्षुद्ररोगेषु कोऽपि व्याधिः पठितो यः प्रत्येकादिदोषजः, अपि च यद्याचार्यस्य साप्तविध्यमभिप्रेतं स्यात्तदा 'दोषैः सप्तविधा तु सा' इति पाठं कुर्यात्; तन्त्रान्तरे चेयं वातकफान्विता पठिता, तस्माद्वातकफाधिक्येन हीनपित्ततया अस्या उत्पत्तिर्ज्ञेया" इति ॥२४॥—

न्या० च०–विदारीकन्दवद्वृत्तामित्यादिना विदारी । सर्वजा सर्वलक्षणेति अत्र वाक्यार्थे पूर्वव्याख्यातारो विव-

१ 'देहिनाम्' इति ता. । २ 'तदेवाल्पतरैर्दोषैः कुनखं परुषं खरम्' इति ता. । ३ 'पादस्यानुशयीं तां तु विद्यादन्तःप्रपाकिनीम्' इति ता. । ४ 'विदारिकामिति वदेत् सरुजां सर्वलक्षणाम्' इति ता. । 'विदारीकन्दवद्वृत्ता कक्षावंक्षणसंधिषु । रक्ता विदारिका ज्ञेया सर्वजा सर्वलक्षणा' इति गयदाससंमतः पाठः ।

दन्ते । तत्राहुरेके—असर्वजा असर्वलक्षणेत्युभयत्रापि नञः प्रश्लेषः; अन्ये तु पुनः असर्वजा सर्वलक्षणेति पूर्वपदे नञमिच्छन्ति प्रश्लिष्टं न पुनरुत्तरपदे; तथोत्तरपदे एवापरे नञः प्रश्लेषं प्रजानन्ते न पूर्वपदे इति; अत्राप्यपक्षपातिनो हि नोऽयं वाक्यार्थः—सर्वजेति सर्वैः सन्निपतितैर्भवति; असर्वलक्षणेत्यत्रापि सन्निपातलक्षणरहितेत्यर्थः । तेन प्रत्येकदोषद्वन्द्वजत्वेन षड्विधा, सान्निपातिकी न भवतीति समुदायार्थः । अत्र पक्षेऽसंदेहार्थमाचार्येण 'षड्विधा त्र्येकदोषजा' इति पठितं स्यात् । असर्वजा सर्वलक्षणेत्यत्रापि पक्षे सर्वैर्दोषैर्न जायते अथ सर्वदोषलिङ्गान्वितेति वदतां लिङ्गिनमन्तरेणापि लिङ्गसद्भावमङ्गीकुर्वतां लिङ्गमनिश्चायकं स्यात् । तत्र स्वदोषाद्यपेक्षिणी चिकित्सैव न स्यात्, दोषलिङ्गस्यैव·········। अथ सर्वाणि च तानि लक्षणानि तान्यविद्यमानानि यस्यामिति सन्निपातजाऽप्यसंपूर्णलक्षणेत्यर्थः, तदा सर्वत्रास्य न्यायस्य सामान्यात् असर्वलक्षणेति न च वक्तव्यं भवेत्, तदुक्तं "दोषे विवृद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः" ( च. चि. अ. ३ ) इति । हेत्वनुरूपकोपबलेन हि सर्वत्र सर्वार्धाल्पसर्वलक्षणोदय इति विशेषणमनर्थकं स्यात् । तदेवं सर्वजा सर्वलक्षणा इति उभयत्राप्यनञेव पक्षः । अत्रापि त्रिदोषजत्वेनासाध्यत्वेन विदार्याः क्षुद्ररोगचिकित्साप्रणयनमनर्थकं स्यात् । न सन्निपातमात्रजा किं तर्हि व्यस्तसमस्तद्वन्द्वजत्वेन सप्तविधा सर्वलक्षणेत्यत्रापीयमेव व्याख्यानपक्षः । स चार्थः क्षुद्ररोगस्य सामान्यन्यायेन नोपपद्यते । न हि क्षुद्ररोगेषु कोऽपि व्याधिः पठितः प्रत्येकादिदोषजः । अपि च यद्ययमभिप्राय आचार्यस्य स्यात् तदाऽसंदेहार्थं 'दोषैः सप्तविधा तु सा' इति पठितं स्यात् । तस्मात् सान्निपातजैवेयं, न चासाध्या; न हि सर्व एव सन्निपातजो व्याधिरसाध्यः, यतो न सर्वेषामेव दोषाणां तुल्यं बलं, यथाहेतुबलमेव हि दोषबलाबलं; यदुक्तं—"हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः" ( च. चि. अ. ३ ) इति, तथा "संततज्वर एवान्यः स्वल्पदुर्बलकारणः" ( च. चि. अ. ३ ) इति । सन्निपातजा सर्वलक्षणोपेतेत्यपि विशेषणमर्थवत्; येन न सर्वत्र सर्वजे विकृतिविषमसमवायारब्धं प्रत्येकदोषजेष्वपठितमेव लिङ्गं भवति, किं तर्हि समुदायिभ्योऽन्यत्वात् समुदायस्य चूर्णहरिद्रासंयोग इवान्यान्यपि, अत एव विकृतिविषमसमवायारब्धस्य सन्निपातस्यावश्यमेव लक्षणानि पठ्यन्ते, प्रत्येकदोषलिङ्गेभ्योऽन्यत्वादेव तेषां सन्निपातलिङ्गानाम्; एवं चिकित्साऽपि पृथगेव पठ्यते, तत एव हेतोरन्यत्वाद्दोषदूष्यस्वभावस्य व्याधेः । चरके तु कफवातजैव विदारी पठिता; तदुक्तं—"ज्वरान्विता वङ्क्षणकक्षजा या वर्तिर्निरर्तिः कठिनायता च । विदारिका स्यात् कफमारुताभ्याम्" ( च. चि. अ. १२ ) इति । तत्रापि ज्वरान्वितेति वचनेन पित्तमप्यनुमीयते । यदुक्तं—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना" ( वा. चि. अ. १ ) इति । चरकेऽपि पित्तवचनाद्विदारिका स्वल्पपित्तादेव, स्वतन्त्रे परतन्त्रेऽपि सर्वजैवावगम्यते, विदारीचिकित्सिते च पित्तकफहरविम्लापनाद्युक्तेः । 'विदारीमिति तां विद्यात् सर्वजां सर्वलक्षणाम्' इति पाठान्तरे नास्ति कोऽपि विवादः ॥ २४ ॥—

प्राप्य मांससिरास्नायु श्लेष्मा मेदस्तथाऽनिलः ॥२५॥
ग्रन्थिं कुर्वन्ति[1] भिन्नोऽसौ मधुसर्पिर्वसानिभम् ॥
स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः[2] ॥ २६ ॥
मांसं विशोष्य ग्रथितां शर्करां जनयेत् पुनः[3] ॥
दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः सिराः ॥ २७ ॥
स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्बुदम् ॥

**नि० सं०**–प्राप्येत्यादि । इयं शर्करासंप्राप्तिरुक्ता, सा च शर्करा हेतुः शर्करार्बुदस्य । काठिन्यादेव शर्करासादृश्येन शर्करा । अल्पगाधोच्छ्रायाभ्यामर्बुदम् । नानावर्णं मधुघृतवसासन्निभम् । तत इत्यादि ततः शर्करायाः सिरा रक्तं स्रवन्तीत्यर्थः । केचित् शर्करा शर्करार्बुदं चेति व्याधिद्वयं वदन्ति; तन्नेच्छति **गयी**, संख्यातिरेकाच्छर्करायाः पृथक्त्वेनोक्तेरदर्शनाच्च ॥ २५—२७ ॥—

**न्या० च०**–प्राप्य मांसेत्यादिना शर्करार्बुदम् । तत्र शर्करायां कफानिलौ दोषौ, मांससिरास्नायुमेदांसि तु दूष्याणि, मधुघृतवसासदृशः स्रावः । धातुक्षयेण वृद्धिंगतोऽनिलो मांसं विशोष्य ग्रथितां कठिनां शर्करां करोति; काठिन्यादेव शर्करासादृश्येन शर्करा, अवगाढोच्छ्रायाभ्यामर्बुदम् । तत इति शर्करायाः सिरा रक्तं स्रवन्ति । नानावर्णं मधुघृतवसासन्निभमेव, प्रक्रान्तत्वात्; तन्त्रान्तरेऽप्येवमेवोक्तत्वात् । तथाहि भोजः—"वायुः श्लेष्माणमादाय मेदःस्नायुसिरागतः । करोति विषमं ग्रन्थिं ज्वरदाहसमन्वितम् ॥ अवगाढं सुकठिनमर्बुदं तं विदुर्बुधाः । तदेव भिन्नं दुर्गन्धं घृतमेदोपमं सिराः ॥ स्रवन्ति स्रावमनिशं तदा तं शर्करार्बुदम्" इति । केचित् शर्करा अर्बुदं चेति व्याधिद्वयमाचक्षते । तन्न, संख्यातिरेकात्, शर्करायाः पृथक्त्वेनानुक्तेः, अदर्शनाच्च ॥ २५—२७ ॥—

पामाविचर्च्यौ कुष्ठेषु रकसा च प्रकीर्तिता ॥ २८ ॥

**नि० सं०**–पामेत्यादि । कुष्ठेष्विति कुष्ठनिदाने इत्यर्थः ॥२८॥

परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ॥
पादयोः कुरुते दारीं सरुजां तलसंश्रितः ॥ २९ ॥

**नि० सं०**–परीत्यादि । परिक्रमणशीलस्य सर्वतो भ्रमणस्वभावस्य । दारीमिति विपादिकां; 'बिंआवाकु' इति लोके ॥९॥

**न्या० च०**–परिभ्रमणशीलस्येत्यादिना पाददारी । परिभ्रमणशीलस्य सर्वतो भ्रमणशीलस्य । अन्ये तु विचर्चिकैव

१ 'करोति' ता. । २ 'गतः पुनः' इति ता. । ३ 'जनयत्यतः' इति ता. ।

स्थानभेदेन पाददारीत्युच्यते विपादिकेति च । तस्याः कुष्ठत्वेन सर्वदोषजत्वं सक्रिमित्वं चेति । पामारकसे तु कुष्ठनिर्दिष्टे क्षुद्ररोगेऽपीति वाक्यशेषः; तेन पुनर्नोच्यते, पुनरुक्तिभयादेव ॥ २९ ॥

**शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ॥**
**मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम् ॥ ३० ॥**
**सकीलकठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा ॥**
**कोलमात्रः सरुक् स्रावी जायते कदरस्तु सः ॥३१॥**

**नि० सं०**–शर्करेत्यादि । शर्करा घटकर्परखण्डादयः, ताभिरुन्मथिते पीडिते । कीलेन सदृशं सकीलमित्यव्ययीभावः, सकीलं चासौ कठिनश्च सकीलकठिनः । 'हस्तयोरपि' इति भोजः ॥ ३० ॥ ३१ ॥

**न्या० च०**–शर्कराबदरस्तु शर्करोन्मथिते पादे इत्यादिना । कोलवदिति बदरवत् । भोजाभिप्रायेण हस्तयोरपीच्छन्ति । तथाहि भोजः—"हस्तयोः पादयोश्चापि गम्भीरानुगतं खरम् । मांसकीलं जनयतः कुपितौ कफमारुतौ ॥ सशल्यमपि तं देशं मन्यते तेन पीडितः । शर्कराबदरं केचिन्मन्यन्तेऽन्ये च कण्टकम्" इति ॥ ३० ॥ ३१ ॥

**क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ ॥**
**दुष्टकर्दमसंस्पर्शादलसं तं विनिर्दिशेत् ॥ ३२ ॥**

**नि० सं०**–क्लिन्नेत्यादि । अयं कफेन सशोणितेन ॥ ३२ ॥

**न्या० च०**–क्लिन्नाङ्गुल्यन्तरौ पादावित्यादिना अलसकः । अयं कफेन सशोणितेन; तत्र कण्डूः कफस्य, शोणितस्य दाहरुजे ॥ ३२ ॥

**रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥**
**प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥३३॥**
**रुणद्धि रोमकूपांस्तु ततोऽन्येषामसंभवः ॥**
**तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते ॥ ३४ ॥**

**नि० सं०**–रोमकूपानुगमित्यादि । खालित्यं पुंसामेव न तु योषिताम् । तथाच विदेहः—"अत्यन्तसुकुमाराङ्ग्यो रजो दुष्टं स्रवन्ति च । अव्यायामरता यस्मात्तस्मान्न खलितिः स्त्रियाः" इति ॥ ३३ ॥ ३४ ॥

**न्या० च०**–रोमकूपानुगं पित्तमित्यादिना इन्द्रलुप्तं; खालित्यं रुज्येति च तस्यैव संज्ञान्तरम् । तत्र खालित्यं पुंसामेव, न तु योषितां; तथाहि विदेहः—"अत्यन्तसुकुमाराङ्ग्यो रजो दुष्टं स्रवन्ति च । अव्यापाररता यस्मात्तस्मान्न खलितिः स्त्रियाः" इति । अस्यायमभिप्रायः—अव्यापारेण वातपित्ते न प्रकुप्येते, ततो न लोमप्रच्यवः; रजो विमुक्त्या च स्रोतोवरोधाभावाच्च्युतानामपि पुनर्विरोह इति । इन्द्रलुप्ते भोजः—"पित्तं सिरसि संदुष्टं लोमकूपानुगं यदा । तदा रोमाणि शीर्यन्ते तत्र श्लेष्मानिलौ श्रितौ ॥ ···तदिन्द्रलुप्तमित्याहुः खल्तीं रुह्यां च केचन" इति ॥ ३३ ॥ ३४ ॥

**दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते ॥**
**कफवातप्रकोपेण विद्याद्दारुणकं तु तम् ॥ ३५ ॥**

**नि० सं०**–दारुणेत्यादि । दारुणा कठिना । कण्डुरा कण्डूयुक्ता । प्रपाट्यते प्रकर्षेण पाट्यते । पित्तरुधिरयोरप्यनुबन्धो ज्ञेयः, विदेहवचनात् । दारुणकं 'पही' इति लोके ॥ ३५ ॥

**न्या० च०**–दारुणा कण्डुरेत्यादिना दारुणकम् । तस्य कफवातजस्यापि रक्तपित्ताभ्यामनुबन्धो विदेहवचनादेव ज्ञेयः । तथाहि विदेहः—"यदभ्रपटलाभासमरजस्कं शिरस्त्वचि । पारुष्यं जायते जन्तोस्तस्य रूपं विशेषतः ॥ तोदैः समन्वितं वातात्, सकण्डूगौरवं कफात् । सपिपासं सदाहार्तिरागं पित्तात्तथाऽसृजः" इति । तत्रापि सदाहं पित्तात्, सार्तिरागं रक्तात्, आर्तिर्हि शोणिताद् भवति । तदुक्तं चरके—"रक्तं हि व्यम्लतां याति तच्च नास्ति न चास्ति रुक्" ( च. चि. अ. ५ ) इति । अत्र तु रक्तस्य पित्तस्य लिङ्गमनिर्दिष्टमवस्थायां द्रष्टव्यम् ॥ ३५ ॥

**अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्धनि ॥**
**कफासृक्कृमिकोपेन नृणां विद्यादरुंषिकाम् ॥ ३६ ॥**

**नि० सं०**–अरूंषीत्यादि । अरूंषि व्रणान् ॥ ३६ ॥

**न्या० च०**–अरूंषि बहुवक्त्राणीत्यादिना अरुंषिका ॥ ३६ ॥

**क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ॥**
**पित्तं च केशान् पचति पलितं तेन जायते ॥ ३७ ॥**

**नि० सं०**–क्रोधेत्यादि । क्रोधादिकृतेन शरीरोष्मणा शिरोगतेन वैकृतं, पित्तेन पुनः प्राकृतं पलितम्; अन्यथा पित्तोष्मणोरभेदात् पुनरुक्तिदोषः स्यात्; पञ्जिकाकारस्तु "शरीरोष्मा पावकः, पित्तं तदाश्रयः, एतौ पित्तपावकावेकीभूय केशान् पचतः; एतेन केवलोष्मकृतस्य वैकृतस्यादोषजप्रसङ्गो निराकृतः" इति मन्यते ॥ ३७ ॥

**न्या० च०**–क्रोधायासेत्यादिना पलितम् । अत्र शरीरोष्मा पित्तं चेति द्विकर्तृसमुच्चय इति केचित्; तदसम्यक्, भेदो हि–वैकृतस्य पलितस्य पाचकपित्तोष्मकृतत्वात्, स्वाभाविकस्य प्राकृतपित्तकृतत्वात्; ननु तथा सति पलितस्यादोषजप्रसंगः? न, ऊष्मणः पित्तधर्मत्वात्······तद्यथा–वैकृतः पित्तकृतः, समदोषप्रकृतिषु स्वाभाविकः; तस्मात् समुच्चितद्विकर्तृकत्वं नानेनोच्यते । पित्तप्रकृतिजं स्वाभाविकमेव, प्रकृतेरल्पदोषत्वेनाविकारित्वादित्यनेकशो व्याख्यातमेव ॥ ३७ ॥

**दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः ॥**
**गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः ॥ ३८ ॥**

---

१ 'ग्रन्थिः की(को)लवदुत्सन्नो जायते कदरं ततः' इति ता. ।

१ 'प्रपुट्यते पुटपुटायते' इति पा० । २ 'ओपद्दा' इति पा० । ३ 'कफासृक्पित्तकोपेन' इति ता. । ४ 'सवेदनाः' इति ता. ।

निo संo–दाहेत्यादि । ताम्रत्वेन शोणितानुबन्धोऽप्येषां; तथाहि तन्त्रान्तरं–"पित्तं शोणितसंसृष्टं यदा दूषयति त्वचम् । तदा करोति पिडकाः सर्वगात्रेषु देहिनः ॥ मसूरमुद्गमाषाणां तुल्याः कोलोपमा अपि । मसूरिकास्तु विज्ञेयाः पिडका रक्तपित्तजाः"–इति । एतासां 'शीतलिका' इति लोकाश्रया संज्ञा ॥ ३८ ॥

न्याo चo–दाहज्वररुजावन्त इत्यादिना मसूरिकाः । ताम्रत्वसरुजत्वेन शोणितानुबन्धोऽप्येषाम् ॥ तथाहि तन्त्रान्तरे–"पित्तं शोणितसंसृष्टं यदा दूषयति त्वचम् । तदा करोति पिडिकां सर्वगात्रेषु देहिनाम् ॥ मसूरमुद्गमाषाणां तुल्याः कोलोपमा अपि । मसूरिकास्तु विज्ञेयाः पिडिकाः पित्तरक्तजाः" इति ॥ ३८ ॥

**शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः ॥**
**जायन्ते पिडका यूनां वक्त्रे या[1] मुखदूषिकाः ॥ ३९ ॥**

निo संo–शाल्मलीत्यादि । शाल्मलीकण्टकप्रख्याः शाल्मलीकण्टकसदृशाः । यूनां तरुणानाम् ॥ ३९ ॥

न्याo चo–शाल्मलीकण्टकाकारा इत्यादिना युवानपिडिकाः । यूनामाननं यूवाननं, तस्य पिडिका युवानपिडिकाः । पृषोदरादेराकृतिगणत्वादेकस्य नकारस्य लोपः । मुखे पचन्ते अत एव मुखदूषिका इति ॥ ३९ ॥

**कण्टकैराचितं वृत्तं[2] कण्डूमत् पाण्डुमण्डलम् ॥**
**पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥ ४० ॥**

निo संo–कण्टकैरित्यादि । पद्मिनीकण्टकप्रख्यैः पद्मिनीकण्टकसदृशैः । आचितं व्याप्तम् । तदाख्यं पद्मिनीकण्टकाख्यम् ॥ ४० ॥

न्याo चo–कण्टकैराचितमित्यादिना पद्मिनीकण्टकम् । पद्मिनीकण्टकवदाख्या यस्य तत् पद्मिनीकण्टकाख्यम् ॥ ४० ॥

**नीरुजं सममुत्सन्नं मण्डलं कफरक्तजम् ॥**
**सहजं रक्तमीषच्च[3] श्लक्ष्णं जतुमणिं विदुः ॥ ४१ ॥**

निo संo–नीरुजमित्यादि । समं सूक्ष्मम् । उत्सन्नमुन्नतम् । सहजं जन्मबलप्रवृत्तम् । श्लक्ष्णमकर्कशम् । जतुमणिः 'जडुल' इति लोकाश्रया तत्संज्ञा ॥ ४१ ॥

न्याo चo–सममुत्सन्नमरुजमित्यादिना जतुमणिः । तस्य जडुल इति लोकाश्रया संज्ञा । एकेषामाचार्याणां मतेन तु लक्षणं स्त्रीपुरुषयोरङ्गभेदेन सुफलप्रदम् । सहजं जन्मबलप्रवृत्तमित्यर्थः । सममुत्सन्नमपि श्लक्ष्णं यतोऽवैषम्यकर्कशमित्यर्थः । तथा हि भोजः—"जडुलं सहजं रक्तं श्लेष्मशोणितसंभवम् । श्लक्ष्णं च समुदीर्णं च विद्याज्जतुमणिं भिषक्" इति । तथा वैतरणेऽपि "कृष्णः शुक्लो जतुमणिर्ज्ञेयो वातोत्तरैस्त्रिभिः । अरुजं स्वपरं रक्तं लक्ष्मेत्याहुर्भिषग्वराः" इति ॥ ४१ ॥

**अवेदनं स्थिरं चैव यस्य गात्रेषु दृश्यते ॥**
**माषवत्कृष्णमुत्सन्नमनिलान्मषकं वदेत् ॥ ४२ ॥**

निo संo–अवेदनमित्यादि । स्थिरं कठिनम् ॥ ४२ ॥

न्याo चo–माषशब्दात् "इवे प्रतिकृतौ" (पा. अ. ५।३।९६) इति कन्प्रत्ययः । पृषोदरादित्वान्माषशब्दाकारस्य ह्रस्वत्वम् । स्थिरं कठिनम् । अत्रापि कफवातमेदोभिरेव मषकमारभ्यते । तदुक्तं भोजे—"वातेरिते त्वचि यदा प्रवृद्धे कफमेदसी । श्लक्ष्णं मृदु सवर्णं च कुरुतो मषकं वदेत्" इति । अत्रापि श्लक्ष्णता वायोर्लभ्यत एव ॥ ४२ ॥

**कृष्णानि तिलमात्राणि नीरुजानि समानि च ॥**
**वातपित्तकफोच्छोषात्तान्[1] विद्यात्तिलकालकान् ४३**

निo संo–कृष्णानीत्यादि । वातपित्तकफोच्छोषादिति वातपित्ताभ्यां कफस्य शोषादित्यर्थः । अन्ये तु "वातपित्तासृगुच्छोषात्" इति पठन्ति, व्याख्यानयन्ति च–वातपित्ताभ्यां रक्तस्य शोषादित्यर्थः; अत एव तिलकालके कार्ष्ण्यम् । 'वातपित्तकफोद्रेकात्' इति क्वचित् पाठः, तस्मिन् पाठे कफोद्रेकलक्षणं तिलकालके नास्ति ॥ ४३ ॥

न्याo चo–कृष्णानि तिलमात्राणीत्यादिना तिलकालकः । 'वातपित्तकफोच्छोषात्' इति केचित् पठन्ति; अन्ये तु 'वातपित्तासृगुच्छोषात्' इति पठन्ति । अत्र वातपित्ताभ्यां रक्तशोषः; तथाहि चरकः—"यस्य पित्तं प्रकुपितं शोणितं प्राप्य शुष्यति । तिलकाः पिप्लवो व्यङ्गा नीलिका चास्य जायते" (च. सू. अ. १८) इति । अन्ये तु 'वातपित्तकफोद्रेकात्' इति पठन्ति । तथा हि तन्त्रान्तरं—"मारुतः पित्तमादाय कफरक्तसमाश्रितः । करोति तिलमात्राणि त्वचि ते तिलकालकाः" इति । अनेनापि तन्त्रान्तरार्थेनायमेव पाठः । वातपित्तकफोच्छोषादिति वातपित्ताश्रितयोः कफपित्तयोरुच्छोष एव यतो भवति; अत एव तिलकालके पित्तोत्पत्तेः (?) तथाहि कफोद्रेकस्य लक्षणं किमत्र भविष्यति ॥ ४३ ॥

**मण्डलं महदल्पं वा श्यामं वा यदि वा सितम् ॥**
**सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥ ४४ ॥**

निo संo–मण्डलमित्यादि । सहजं जन्मबलप्रवृत्तम् । न्यच्छं लोका लाञ्छनमिति वदन्ति; पित्तरक्तान्वितो वायुरस्य कारणम् ॥ ४४ ॥

न्याo चo–महद्वा यदि वा स्वल्पमित्यादिना न्यच्छः । 'सहजं मण्डलं' इति केचिद्पठीयते । तेषां मते जन्मबलप्रवृत्तं न्यच्छम्, अत एव न्यच्छस्य पर्याये तैरुक्तं–

१ 'युवानपिडका यूनां विज्ञेया' इति ता. । २ 'विद्यान्मण्डलं पाण्डु कण्डुरम्' इति ता. । ३ 'लक्ष्म चैकेषां लक्ष्यो जतुमणीति सः' इति ता. ।

१ 'वातपित्तकफोद्रेकात्' इति पाo ।

लाञ्छनमिति। पित्तरक्तान्वितो वायुरस्य कारणं, श्यावान्वितत्वाच्चव्यच्छस्येति ॥ ४४ ॥

**समुत्थाननिदानाभ्यां चर्मकीलं प्रकीर्तितम् ॥**

**नि० सं०**–समुत्थानेत्यादि। समुत्थानं संप्राप्तिः, निदानं हेतुलक्षणनिर्देशः। **गयी** तु समुत्थाननिदानाभ्यामित्यादि चर्मकीलप्रतिपादकं वाक्यमेव न पठति ॥—

**क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ॥ ४५ ॥**
**सहसा मुखमागत्य मण्डलं विसृजत्यतः ॥**
**नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥ ४६ ॥**
**कृष्णमेवंगुणं गात्रे मुखे वा नीलिकां विदुः।**

**नि० सं०**–क्रोधेत्यादि। "व्यङ्गमेव स्थानान्तरेण वर्णान्तरेण च नीलिका" इत्यन्ये ॥ ४५ ॥ ४६ ॥—

**न्या० च०**–क्रोधायासप्रकुपितो वायुरित्यादिना व्यङ्गः। अस्यैव नीलिकेति लोके ख्यातिः। तत्र तन्त्रान्तरे "मारुतः क्रोधहर्षाभ्यामूर्ध्वगो मुखमाश्रितः। पित्तेन सह संयुक्तः करोति वदने त्वचि ॥ नीरुजं तनुकं श्यावं तं व्यङ्गमिति निर्दिशेत्। कृष्णामेवंगुणं गात्रे नीलिकां तां विनिर्दिशेत्" इति ॥ ४५ ॥ ४६ ॥—

**मर्दनात् पीडनाच्चाति तथैवाप्यभिघाततः ॥**
**मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरः ॥ ४७ ॥**
**तदा वातोपसृष्टं तु चर्म प्रतिनिवर्तते ॥**
**मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ॥ ४८ ॥**
**सवेदनः सदाहश्च पाकं च व्रजति क्वचित् ॥**
**मारुतागन्तुसंभूतां विद्यात्तां परिवर्तिकाम् ॥ ४९ ॥**[1]
**सकण्डूः कठिना चापि सैव श्लेष्मसमुत्थिता ॥**

**नि० सं०**–मर्दनादित्यादि। अतीति मर्दनपीडनाभ्यां प्रत्येकं संबध्यते; सम्यक्कृतौ हि मर्दनपीडनौ वायुप्रशान्तिकरावेव भवतः। भजते आश्रयति। सर्वतश्चरो वायुर्व्यानः। चर्म प्रतिनिवर्तत इति मणिं विहाय सर्वतो व्यावुटतीत्यर्थः। कोशः चर्मकोशः। सैव परिवर्तिकेत्यर्थः ॥ ४७—४९ ॥—

**न्या० च०**–मर्दनादित्यादि। अत्यर्थमर्दनात् पीडनाद्वा तथाऽभिघाताद्वा सर्वतश्चरो वायुर्व्यानो मेढ्रचर्म भजते; अतीति पीडनमर्दनयोर्विशेषणं, तयोर्हि सम्यक्कृतयोर्वायोरेव प्रशमनत्वात्; अत्यर्थकरणात्तयोरभिघातात् कलायाश्चर्मणो दूषकत्वात्। चर्मवातोपसृष्टत्वात् परिवर्तते। चर्म कोषचर्म। परिवर्तिकेति परिपूर्वाद्वृतेः ण्वुल्। सकण्डूः कठिना चैव सैव श्लेष्मानुबन्धतः। तथाहि भोजे–"मणेरधो मेढ्रचर्म व्यानस्तु परिवर्तयेत्। सशूलतोददाहाद्यैर्विज्ञेया परिवर्तिका ॥ श्लैष्मिकी कठिना स्तब्धा कण्डूमत्यल्पवेदना" इति ॥ ४७–४९ ॥—

**अल्पीयःखां यदा हर्षाद्बालां गच्छेत् स्त्रियं नरः ॥ ५० ॥**[1]
**हस्ताभिघातादथवा चर्मण्युद्वर्तिते बलात् ॥**
**मर्दनात्पीडनाद्वाऽपि शुक्रवेगविघाततः ॥ ५१ ॥**
**यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥**

**नि० सं०**–अल्पीयःखामित्यादि। अल्पीयःखाम् अल्पतरयोनिद्वाराम्। चर्मण्युद्वर्तिते उत्तानीभूय व्यावुटिते। यस्य चर्म मर्दनादिभिरवपाट्यते विदीर्यते तस्य तामवपाटिकां विद्यादित्यर्थः। चर्म कर्तृ। उद्वर्तते निश्चितमूर्ध्वं प्रवर्तेत इत्यन्ये ॥ ५० ॥ ५१ ॥—

**न्या० च०**–कन्या पुनरनार्तवाऽल्पतरयोनिद्वारत्वादेवाल्पीयःखेत्युच्यते। तत्र पक्षान्तरं हस्ताभिघातादथवा चर्मण्युद्वर्तिते; उद्वर्तिते ऊर्ध्वं प्रवर्तिते। यस्यावपाट्यते 'स्वयं' इति शेषः; तेनावदीर्यते। इयं दोषैस्त्रिभिरप्यनुवर्तते। तथा हि भोजः–"मर्दनादभिघाताद्वा कन्यायोनिप्रपीडनात्। लक्ष्यते यदि मेढ्रस्य चर्म दर्भैरिव क्षतम् ॥ अवपाटिकेति तां विद्यात् पृथग्दोषैः समन्विताम्। वातात् सपरुषा रूक्षा तथा निस्तोदकारिका ॥ पित्तात् सपीता रक्ताद्वा दाहतृष्णासमन्विता। श्लैष्मिकी कठिना स्निग्धा कण्डूमत्यल्पवेदना" इति ॥ ५० ॥ ५१ ॥—

**वातोपसृष्टमेवं तु चर्म संश्रयते मणिम् ॥ ५२ ॥**
**मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥**[2]
**निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् ॥ ५३ ॥**[3]
**मूत्रं प्रवर्तते जन्तोर्मणिर्न च विदीर्यते ॥**[4]
**निरुद्धप्रकशं विद्यादुरूढां चावपाटिकाम् ॥ ५४ ॥**

**नि० सं०**–वातोपसृष्टमित्यादि। एवमिति मर्दनपीडनाभिघातादिनेत्यर्थः। संश्रयते समग्रं श्रयते। दुरूढां चावपाटिकामिति अवपाटिकाऽपि दुरूढा निरुद्धप्रकाशाख्यां लभते ॥ ५२—५४ ॥

**न्या० च०**–वातोपसृष्टे मेढ्रे इत्यादिना निरुद्धप्रकशः। एवमित्यतिपीडनाभिघातादिना पूर्ववत्। संश्रयते समग्रं श्रयते। अवपाटिकैव च दुरूढा संकुचितत्वाच्चर्मणो निरुद्धप्रकाशो भवति। मन्दधारमवेदनमन्तर्दोषाबाधात् तस्मिन् मन्दधारा प्रवर्तते, मणिश्च नातिविवृतो भवेत्। अत्रैव भोजः—"मेढ्रान्ते चर्मणि यदा मारुतः कुपितो भृशम्। द्वारं रुणद्धि च शनैः प्रकाशस्तु मुहुर्भवेत् ॥ मूत्रं मूत्रयते कृच्छ्रात् प्रकाशस्तु यदा भवेत्। वातोपसृष्टमेढ्रस्तु मणिर्न च विदीर्यते ॥ निरुणद्धि प्रकाशं तं विद्याद्व्याधिं सुदारुणम्" इति ॥ ५२–५४ ॥

**वेगसंधारणाद्वायुर्विहतो गुदमाश्रितः ॥**
**निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च ॥ ५५ ॥**[5]

१ 'परिवर्तिकेति तां विद्यात् सरुजां वातसंभवाम्' इति ता.।

१ 'अल्पीयसीं यदा हर्षाद्बलाद्गच्छेत्' इति पा०। २ 'चर्मोपरुद्धस्तु' इति ता.। ३ 'सवेदनम्' इति ता.। ४ 'मणिर्विम्रियते न च' इति पा०। ५ 'सरुजं वातसंभवम्' इति पा०।

मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति ॥
सन्निरुद्धगुदं व्याधिमेनं विद्यात् सुदुस्तरम् ॥ ५६ ॥

नि० सं०–वेगसन्धारणादित्यादि । विहतो निरुद्धगतिः । महत्स्रोतो गुदम् ॥ ५५ ॥ ५६ ॥

न्या० च०–गुदं मेढ्रानन्तरं निर्दिशन्नाह—वेगसंधारणादित्यादि । महत्स्रोतः गुदम् । निरुद्धप्रकाशवदत्रापि गुदचर्मसंकोचात् सन्निरुद्धगुदत्वम् ॥ ५५ ॥ ५६ ॥

शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ॥
स्विन्नस्यास्नाप्यमानस्य कण्डू रक्तकफोद्भवा ॥ ५७ ॥
कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते ॥
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ५८ ॥

नि० सं०–शकृदित्यादि । शकृन्मूत्रसमायुक्तेऽपाने गुदे, अधौते अक्रियमाणशौचे, शिशो रक्तकफोद्भवा कण्डूर्भवेदिति संबन्धः । कथंभूतस्य ? स्विन्नस्य अस्नाप्यमानस्य च । एकीभूतमपानं व्रणैः 'सह' इत्यध्याहार्यम् । अहिपूतनं कफरक्तजं ज्ञेयम् ॥ ५७ ॥ ५८ ॥

न्या० च०–सकृन्मूत्रेत्यादिनाऽहिपूतना । अपाने गुदे स्विन्ने शिशोरस्नाप्यमाने अक्रियमाणे शौचे स्वेदमलोत्क्लेदेन कण्डूयनं कफरक्तदोषेण स्फोटाश्च जायन्ते । जायन्ते इति वक्ष्यमाणवचनविपरिणामात् । एकीभूतं व्रणैः 'सह' इत्याध्याहार्यम् । सन्निरुद्धगुदविपरीतोऽयं, व्रणैः सहैकीभावेन गुदस्यातिविवृतत्वात् । अत्र भोजः–"दुष्टस्तन्यस्य पानेन मलस्याधावनेन च । कण्डूदाहरुजावद्भिः पिडकाभिः समाचितः ॥ अहिपूतनको नाम यथादोषं सुदारुणः" इति ॥ ५७ ॥ ५८ ॥

स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः ॥
यदा प्रक्लिद्यते स्वेदात् कण्डूं संजनयेत्तदा ॥ ५९ ॥
तत्र कण्डूयनात् क्षिप्रं स्फोटाः स्रावश्च जायते ॥
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥ ६० ॥

नि० सं०–स्नानोत्सादनेत्यादि । उत्सादनम् उद्वर्तनम् ॥ ५९ ॥ ६० ॥

न्या० च०–स्नानोत्सादनेत्यादिना वृषणकच्छूः । अहिपूतनवद्वृषणकच्छुरपि कफरक्तोद्भवा ॥ ५९ ॥ ६० ॥

प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः ॥
रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत्[1] ॥ ६१ ॥

नि० सं०–प्रवाहणेत्यादि । प्रवाहणं प्रकर्षेण निर्वाहणम् । अयं वातकोपजः ॥ ६१ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने त्रयोदशोऽध्यायः ॥ १३ ॥

न्या० च०–प्रवाहणातिसराभ्यामित्यादिना गुदभ्रंशः । प्रवाहणं प्रकर्षेण निर्वाहणं; 'वाह' प्रयत्ने, इत्यस्मात् प्रवाहणमिति रूपम् । अतिवेगोदीरणेन वातकोपः पुनरतिसरणेन धातुक्षयात् । रूक्षदुर्बलदेहस्येति उभयत्र योजनीयम् । चरके भोजादिषु पुनरतीसारे एव गुदभ्रंशः पठितः ॥ ६१ ॥

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां न्यायचन्द्रिकाख्यायां पञ्जिकायां निदानस्थाने क्षुद्ररोगाणां निदानम् ॥ १३ ॥

इति सुश्रुतसंहितायां निदानस्थाने क्षुद्ररोगनिदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

अथातः शूकदोषनिदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

नि० सं०–अथात इत्यादि । शूकदोषनिदानमिति अत्रादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन शूकादिदोषनिदानमित्यर्थः; आदिशब्दाच्च दुष्टयोनिगूढान्तर्लोमयोनिदुर्भगागमनमभिघातश्चाभिप्रेतः । तन्नेच्छति गयी, दुष्टयोन्यादीनामुपदंशहेतुत्वात् । शूकः सजन्तुजलमलः, लिङ्गवृद्धिकरो योगो वा; दोषोऽत्र दुष्टिः, असम्यक्करणाद्वैकृतम्; अथवा दोषो वातादिः, वातादिकृतो वा विकारः; तेषां लक्षणस्यैव निर्देशान्निदानं, न तु हेतोः; हेतुः पुनरत्र शूक एव, स च प्रतिज्ञासूत्रेणैवाभिहितः ॥ १ ॥ २ ॥

न्या० च०–क्षुद्ररोगानन्तरं क्षुद्रत्वसामान्यात् परिवर्तिकादिमेढ्ररोगप्रत्यासन्नत्वेन च शूकदोषनिदानारम्भः । शूको जलशूकः, आदिपदलोपात् । स तु सजन्तुजलमलः; लिङ्गवृद्धिकरयोगो वा, शूकप्रधानत्वात् । शूकवल्लिङ्गवृद्धिकरत्वादन्योऽपि शूकसमः शूकः, तेन वा तस्य वा दोषोऽत्र दुष्टिरसम्यक्करणाद्वैकृतम्; अथवा दोषो वातादिः वातादिकृतविकारो वा; दोषशब्दो हि वातादिषु तत्कृतव्याधिष्वपि वर्तते, "दोषा अपि व्याधिशब्दं लभन्ते" इति वचनात् । तेषां लक्षणस्यैव निर्देशान्निदानं, न तु हेतोः; हेतुः पुनरत्र शूकदोष एव, तस्यापि च प्रतिपादनमात्रनिर्देशान्निदानम् ॥ १ ॥ २ ॥

लिङ्गवृद्धिमिच्छतामक्रमप्रवृत्तानां शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते । तद्यथा—सर्षपिका[1], अष्ठीलिका[2], ग्रथितं[3], कुम्भीका[4], अलजी[5], मृदितं[6], संमूढपिडका[7], अवमन्थः[8], पुष्करिका[9], स्पर्शहानिः[10], उत्तमा[11], शतपोनकः[12], त्वक्पाकः[13], शोणितार्बुदं[14], मांसार्बुदं[15], मांसपाकः[16], विद्रधिः[17], तिलकालकश्चेति[18] ॥ ३ ॥

---

१ अस्याग्रे ताडपत्रपुस्तके 'इत्येवं क्षुद्ररोगाणां स्थानं संपरिकीर्तितम् । तदवेक्ष्य भिषक् प्राज्ञो यथादोषमुपाचरेत्' इत्यधिकः श्लोक उपलभ्यते ।

नि० सं०-तेषां शूकदोषजानां व्याधीनां सामान्यां संप्राप्तिमाह—लिङ्गेत्यादि । लिङ्गवृद्धिः स्थूलीकरणम्; आयामपरिणाहाभ्यामित्यन्ये । वात्स्यायनाद्युक्तलिङ्गवृद्धिकरयोगस्य अक्रमोऽनाचारः; 'उत्तरवस्तिकर्मणोऽनाचार' इत्यन्ये, तन्नेच्छति गयी। संख्येयनिर्देशादेव संख्यायां लब्धायामष्टादशवचनं संख्येयनिर्देशभ्रान्तिनिरासार्थम् ॥ ३ ॥

न्या० च०-तेषां शूकदोषजानां सामान्यां संप्राप्तिं दर्शयन्नाह—लिङ्गवृद्धिमिच्छतामित्यादिना । वृद्धिः स्थूलीकरणम्; आयामपरिणाहवृद्धिरित्यन्ये । क्रमविरोधो अक्रमः, नञत्र विरोधार्थः । शूकदोषनिमित्ताः शूकदोषा एव निमित्तं कारणं येषां ते तथोक्ताः। शूकदोष एव निमित्तमत्रोच्यते, न तु योनिदोषादय उपदंशहेतव इति । तेन आदिपदलोपस्य प्रयोजनमेव नास्ति। तेषां लिङ्गवृद्धिविधीनां वात्स्यायनादौ विस्तर औपनिषदिके द्रष्टव्यः । तथाहि—"भल्लातकास्थिजलशूकमथाब्जपत्रमन्तर्विदह्य मतिमान् सह सैन्धवेन। एतद्विरूढबृहतीफलतोयपिष्टमालेपनं महिषविड्विमलीकृतेऽङ्गे । स्थूलं बृहद्वरतुरङ्गमतुल्यमाशु शेफः करोत्यभिमतं नहि संशयोऽस्ति" । एवमादीनां दुरवचारणं शूकदोषजानां निदानम् । अन्ये तु मन्यन्तेऽत्रापचारस्त्रिविधः—प्रणिधानाश्रयः, परिकर्माश्रयः, पुरुषाश्रयश्च; तथा हि भालुकिः—"एकोनविंशतिः शूकदोषाः—प्रणिधानदोषात्, परिकर्मदोषात्, पुरुषदोषाच्च"। तन्न, तन्त्रेषु सर्वेष्वदर्शनात् । संख्येयनिर्देशादेव संख्यायां लब्धायामष्टादशवचनं संमूढपिडकादीनां समासनिर्देशभ्रान्तिनिरासार्थम् ॥ ३ ॥

**गौरसर्षपतुल्या तु शूकदुर्भग्नहेतुका ॥**
**पिडका कफरक्ताभ्यां ज्ञेया सर्षपिका बुधैः ॥ ४ ॥**

नि०सं०-शूकदुर्भग्नहेतुकेति दुरवचारितशूकहेतुकेत्यर्थः । अन्ये 'शूकदुर्भगहेतुका' इति पठन्ति, व्याख्यानयन्ति च—शूको दुष्टभगश्च हेतुर्यस्याः सा तथा । तन्नेच्छति गयी ॥४॥

न्या० च०—शूकदुर्भगहेतुकेति केचित् पठन्ति । तन्न, तेषामनुपदंशत्वात् ॥ ४ ॥

**कठिना विषमैरन्तैर्मारुतस्य प्रकोपतः ॥**
**शूकैस्तु विषसंभुग्नैः पिडकाऽष्ठीलिका भवेत् ॥ ५ ॥**

नि० सं०-कठिनेत्यादि । शूकैरष्ठीलिका भवेदिति संबन्धः । विषमैः अप्रशस्तैः । अन्तैरिति कोऽर्थः; पतितैः । अन्ये तु "विषमैरन्तैरुपलक्षिता" इति व्याचक्षते; एतेन विषमान्तसहितेत्युक्तम् । विषसंभुग्नैः विषेण कृत्वा वक्रैरित्यर्थः ॥५॥

न्या० च०-कठिनेत्यादिना अष्ठीलिका । कठिना विषमैर्भुग्नैरिति परस्परासक्तैः; अन्ये पुनरत्रैव विषमैर्लक्ष्यमाणैरित्याचक्षते । दुःखचारितशूकदोषहेतुः पुनरत्र सर्वत्रैवोत्सर्गन्यायेनास्ति । अष्ठीलिका अष्ठीला नाम लोहकाराणां लौही दीर्घवर्तुला भाण्डिः ॥ ५ ॥

**शूकैर्यत् पूरितं शश्वद्ग्रथितं तत् कफोत्थितम् ॥**

नि० सं०-शूकैरित्यादि । शश्वत् प्रतिदिनम्, एतेनैकदिनान्तरपूरणं प्रशस्तमिच्छन्ति कामतन्त्राचार्याः; नित्यपूरणाद्ग्रथितनाम्नो रोगस्योत्पत्तिः ॥—

न्या० च०-शूकैर्यत् पूरितमित्यादिना ग्रथितम् ॥—

**कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा ६**

नि० सं०-कुम्भीकेत्यादि । कुम्भीका कुम्भीफलमिव । अशुभेति शुभा शुक्रा, तद्विरोधेनाशुभा कृष्णेत्यर्थः । इयमपि दुरवचारितशूकजा । 'आशुजा' इति केचित् पठन्ति; तत्र शूकपातानन्तरं शीघ्रं जायत इत्यर्थः ॥ ६ ॥

न्या० च०-कुम्भीकाः कुम्भ्याः फलं कुम्भी, फले लुक् (पा. अ. ४।२।१६३) इति तद्धितस्य लुक्, 'इवे प्रकृतौ' (पा. अ. ५।३।९६) इति कन् । अशुभेति शुभं शुक्लं, तद्विरोधे नञ्, तेन कृष्णेत्यर्थः ॥ ६ ॥

**अलजीलक्षणैर्युक्तामलजीं च वितर्कयेत् ॥**
**मृदितं पीडितं यत्तु संरब्धं वायुकोपतः ॥ ७ ॥**

अलजीलक्षणैः प्रमेहपिडकालजीलक्षणैरित्यर्थः । इयमपि दुष्टशूकावचारणाज्ज्ञेया। यत् पुनर्लिङ्गं पातितशूकं सत् हस्ताभ्यां भृशपीडितम्, अत एव वातकोपतः संरब्धं सशोफं, तन्मृदिताख्यरोगाक्रान्तं ज्ञेयम् ॥ ७ ॥

न्या० च०-अलजीलक्षणैरित्यादिना अलजी । अलजीलक्षणैरिति प्रमेहपिडिकालक्षणैरिति शेषः। सा च रक्ताऽसिता स्फोटावृतेत्यादिना तुल्यलक्षणा। तत्र प्रमेहे जायमाना प्रमेहदोषादधःकाये एव विशेषेण, शूकदोषजा तु रक्तपित्तदोषजा लिङ्गेनैव । पातितशूकं लिङ्गं पाणिभ्यां भृशं पीडितं मृदितं; व्याधिनामेदम् ॥ ७ ॥

**पाणिभ्यां भृशसंमूढे संमूढपिडका भवेत् ॥**

नि० सं०-भृशसंमूढे अत्यर्थपिच्चितावनते, 'पातितशूके लिङ्गे' इत्यध्याहार्यम् । संमूढपिडका मृदितं च वातरक्तात् ॥—

न्या० च०-पातितशूके लिङ्गे पाणिभ्यां भृशसंमूढे पिच्चितावनते; संमूढपिडका मृदितं च वातरक्ताभ्याम् ॥—

**दीर्घा बह्व्यश्च पिडका दीर्यन्ते मध्यतस्तु याः॥८॥**
**सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत् ॥**

सं० नि०-बह्व्यः प्रभूताः । अवमन्थोऽपि स्थूलीकरणशूककर्मापचारेण ज्ञेयः ॥ ८ ॥—

१ 'आयामपरिणाहवृद्धिरित्यन्ये' इति पा० । २ '°लिङ्गवृद्धिव्यतिरिक्तो' इति पा० । ३ 'विषसंयुक्तैः' इति पा० । ४ 'कठिना विषमा भ(भु)ग्नैर्वायुनाऽष्ठीलिका भवेत्' इति ता. ।

१ 'नाम तत् कफात्' इति ता. । २ 'तुल्यजां त्वलजीं विद्यात् यथाप्रोक्तां विचक्षणः' इति ता. ।

न्या० च०–दीर्घा बह्वय इत्यादिनाऽवमन्थः । अत्र भालुकिः–"अवमन्थकग्रस्तो यो मध्ये दीर्घविदारितः । पिडकाभिर्भवेद् व्याप्तः शूककर्मापचारतः" इति । स्थूलीकरणशूककर्मापचारज इत्यर्थः ॥ ८ ॥—

**पित्तशोणितसंभूता पिडका पिडकाचिता ॥ ९ ॥**
**पद्मपुष्करसंस्थाना ज्ञेया पुष्करिकेति सा ॥**

**नि० सं०**–पद्मपुष्करं पद्मकर्णिका । एषाऽपि शूककर्मापचारजा ज्ञेया ॥ ९ ॥—

**न्या० च०**–पिडकेत्यादिना पुष्करिका । पद्मपुष्करवत् पुष्करिका ॥ ९ ॥—

**जनयेत् स्पर्शहानिं तु शोणितं शूकदूषितम् ॥ १० ॥**

**नि० सं०**–जनयेदित्यादि । स्पर्शहानिं स्पर्शहानिनामानं व्याधिविशेषम् । शूकदूषितं शूकेन दुष्टिं नीतम् ॥ १० ॥

**न्या च०**–शूकदोषादित्युत्सर्गन्यायेन, स्पर्शहानिः ॥ १० ॥

**मुद्गमाषोपमा रक्ता पिडका रक्तपित्तजा ॥**
**उत्तमैषा तु विज्ञेया शूकाजीर्णनिमित्तजा ॥ ११ ॥**

**नि० सं०**–मुद्गेत्यादि । उत्तमा व्याधिविशेषः । शूकाजीर्णनिमित्तजेति शूकाजीर्णं पुनः पुनर्दुरवचारितशूकविकृतिलक्षण एव परिणामः, तदेव निमित्तं, ततो जातेति; अन्ये तु "शूकाजीर्णं शूकेनाजीर्णं प्रतिक्षणपातितशूकनिमित्ताभ्यां रक्तपिताभ्यां जायते" इत्याहुः ॥ ११ ॥

**न्या० च०**–मुद्गमाषोपमेत्यादिनोत्तमा । शूकाजीर्णं दुरवचारितशूकसलक्षण एव परिणामः, तदेव निमित्तं, ततो जाता ॥ ११ ॥

**छिद्रैरणुमुखैर्यस्तु चितं यस्य समन्ततः ॥**
**वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः ॥ १२ ॥**

**नि० सं०**–छिद्रैरित्यादि । छिद्रैः दुरवचारितशूकनिमित्तवातशोणितजैः । वस्तु अधिष्ठानमित्यर्थः ॥ १२ ॥

**न्या० च०**–छिद्रैरणुमुखैरित्यादिना शतपोनकः । छिद्रैः दुरवचारितशूकनिमित्तवातशोणितजैः । चितमुपचितं, चिकित्सिते लेखनोपदेशात् ॥ १२ ॥

**पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान् ॥**

**नि० सं०**–पित्तरक्तेत्यादि । पित्तरक्तकृत इति दुरवचारितशूकजनितपित्तशोणितज इत्यर्थः । **गयी** तु दुरवचारितशूकदूषितवातपित्तज इत्याहुः ॥—

**न्या० च०**–वातपित्तज इत्यादिना त्वक्पाकः । दुरवचारितशूकदूषितवातपित्तजः ॥—

१ 'पद्मकर्णिकसंस्थाना' इति ता. । २ 'व्याधिरेषोत्तमो नाम शूकाजीर्णनिमित्तजः' इति ता. । ३ 'छिद्रैरणुमुखैर्लिङ्गं' इति, 'छिद्रैरणुमुखैर्यस्तु चितं मेढ्रं' इति च पा० । ४ 'वातपित्तकृतः' इति पा० ।

**कृष्णैः स्फोटैः सरक्तैश्च पिडकाभिश्च पीडितम् ॥**
**यस्य वस्तु रुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् ॥ १३ ॥**

**नि० सं०**–कृष्णैरित्यादि । यस्य वस्तु अधिष्ठानं स्फोटैः पिडकाभिश्च पीडितं भवति तच्छोणितार्बुदं ज्ञेयमिति संबन्धः । अयमपि दुरवचारितशूकेभ्यः ॥ १३ ॥

**मांसदोषेण जानीयादर्बुदं मांससंभवम् ॥**

**नि० सं०**–मांसेत्यादि । मांसदोषेण मांसवृद्ध्या । इदमपि दुरवचारितशूके लिङ्गे प्रहारादिभिर्जायते ॥—

**न्या० च०**–स्फोटैरित्यादिना शोणितार्बुदम् । य वस्तु व्रणवस्तु तदवगाधोच्छ्रितमांसशोथत्वादर्बुदम् । दुरवचारितशूके लिङ्गे प्रहारादिभिर्मांसदोषेणेत्यर्थः ॥ १३ ॥—

**शीर्यन्ते यस्य मांसानि यत्र सर्वाश्च वेदनाः ॥ १४ ॥**
**विद्यात्तं मांसपाकं तु सर्वदोषकृतं भिषक् ॥**

**नि० सं०**–शीर्यन्ते गलन्ति । एषोऽपि दुरवचारितशूकदूषितदोषजः ॥ १४ ॥—

**न्या० च०**–शीर्यन्ते यस्येत्यादिना मांसपाकः । दुरवचारितशूकदूषितदोषत्रयकृतस्य मांसपाकस्य शीर्यन्ते मांसानि गलन्ति । सर्वा वेदना तोददाहकण्ड्वादिकाः । दुरवचारितशूकदूषितदोषत्रयजः ॥ १४ ॥

**विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत् ॥ १५ ॥**

**नि० सं०**–विद्रधिमित्यादि । अयमपि दुरवचारितशूकदूषितदोषत्रयजः ॥ १५ ॥

**न्या० च०**–विद्रधिः सान्निपातिकविद्रधिलक्षणान्येवात्र जानीयात् । स तु 'नानावर्णरुजास्राव' (नि. अ. ९) इत्यादिलक्षणेन विद्रधिना विज्ञेयः ॥ १५ ॥

**कृष्णानि चित्राण्यथवा शूकानि सविषाणि च ॥**
**पातितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥ १६ ॥**
**कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः ॥**
**सन्निपातसमुत्थानं तं विद्यात्तिलकालकम् ॥ १७ ॥**

**नि० सं०**–कृष्णानीत्यादि । कृष्णानि कृष्णवर्णानि । चित्राणि शुक्लपीतनीलादिवर्णानीत्यर्थः । कालानि परिणततिलफलवर्णानि । शीर्यन्ते गलन्ति ॥ १६ ॥ १७ ॥

**न्या० च०**–कृष्णानीत्यादिना तिलकालकः । कृष्णानि कृष्णवर्णानि । चित्राण्यथवेति शुक्लपीतनीलादिवर्णानीत्यर्थः । कृष्णानि परिणततिलफलवर्णानि । विशीर्यन्ते गलन्ति ॥ १६ ॥ १७ ॥

**तत्र मांसार्बुदं यच्च मांसपाकश्च यः स्मृतः ॥**
**विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः ॥ १८ ॥**

**इति सुश्रुतसंहितायां निदानस्थाने शूकदोषनिदानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥**

१ 'दूषितम्' इति पा० ।

नि० सं०-शूकदोषजानामसाध्यान्निर्दिशन्नाह—तत्रेत्यादि। ये चेति चकारात् कदाचित् सिध्यन्तीत्युक्तम् ॥ १८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने चतुर्दशोऽध्यायः ॥ १४ ॥

न्या० च०-शूकदोषजानामसाध्यान्निर्दिशन्नाह—तत्र मांसार्बुदं यचेत्यादि। यचेति चकारो भिन्नक्रमे न सिध्यन्ति चेत्यत्र द्रष्टव्यः, तेन चिकित्सिते तु प्रत्याख्यायोपचरणम् ॥ १८ ॥

इति सौश्रुते शल्यतन्त्रे निदानस्थाने श्रीगयदासविरचितायां न्यायचन्द्रिकाख्यायां पञ्जिकायां शूकदोषाणां निदानम्।

## पञ्चदशोऽध्यायः।

**अथातो भग्नानां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

नि० सं०-अथात इत्यादि ॥ १ ॥ २ ॥

न्या० च०-अथ शूकदोषानन्तरं भग्ननिदानं हेतुलक्षणनिर्देशः, आगन्तुसाधर्म्यादुभयोः ॥ १ ॥ २ ॥

**पतनपीडनप्रहाराक्षेपणव्यालमृगदशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थ्नां भङ्गमुपदिशन्ति[1] ॥ ३ ॥**

नि० सं०-भग्नानां हेतुं निर्दिशन्नाह—पतनपीडनेत्यादि। प्रहारो मुष्टिलगुडकृपाणबाणादीनाम्, आक्षेपणमतिशयेन चालनं, व्यालमृगदशनं व्याघ्रादिभक्षणं, प्रभृतिग्रहणाद्बलवद्भिग्रहादीनामवरोधः। अनेकविधं बहुप्रकारम् ॥ ३ ॥

न्या० च०-तत्र प्रथमं भग्नानां हेतुमेव दर्शयन्नाह—प्रपतनपीडनेत्यादि। प्रहरणं प्रहारः मुष्टिलगुडकृपाणबाणादीनां; प्रभृतिग्रहणात् बलवद्भिग्रहादीनामवरोधः ॥ ३ ॥

**तत्र[2] भङ्ग(ग्न)जातमनेकविधमनुसार्यमाणं द्विविधमेवोपपद्यते सन्धिमुक्तं, काण्डभग्नं च। तत्र षड्विधं सन्धिमुक्तं, द्वादशविधं काण्डभग्नं भवति ॥ ४ ॥**

नि० सं०-तेषां द्वैविध्यमाह—तत्रेत्यादि। भग्नजातमिति जातं समूहः। अनुसार्यमाणम् अनुसर्तुं प्रेर्यमाणम्। 'अनुश्रियमाणं' इत्येके पठन्ति। सन्धिमुक्तकाण्डभग्नयोर्लक्षणमाह—तत्र पर्वणीत्यादि; अयं पाठोऽभावान्न लिखितो न च व्याख्यातः ॥ ४ ॥

न्या० च०-तेषां भग्नानां संक्षेपेण लक्षणचिकित्सार्थं विशिष्टव्याधिद्वयेन द्वैविध्यमेव दर्शयन्नाह—तत्तु भग्नजातमित्यादि। अनेकविधं बहुप्रकारं भग्नानां जातं, पतनादिहेतूनामेव नानाविधत्वेन तज्जनितोत्पिष्टादीनामपि प्रत्येकमेव बहुप्रकारत्वात्। 'अनुश्रियमाणं' इत्येके पठन्ति, 'अनुसार्यमाणं' इत्यन्ये। पूर्वपक्षत्वादिना प्रयोजकेन तु सर्वत्र युज्यमानमिति (?)। तदेव द्वैविध्यं दर्शयन्नाह—सन्धिमुक्तमित्यादि। तयोरेव लक्षणमाविष्कुर्वन्नाह—तत्र पर्वणीत्यादि। पूर्वापरसंच्छिन्नोऽस्थ्यवयवः काण्डः, तयोरेवास्थिकाण्डयोर्मध्यसंधानं संधिः, तयोर्द्वयोरपि लक्षणचिकित्सार्थमाकृतिविशेषभेदान्तरं दर्शयन्नाह—तत्र षड्विधमित्यादि ॥ ४ ॥

**तत्र सन्धिमुक्तम्—उत्पिष्टं, विश्लिष्टं, विवर्तितम्, अवक्षिप्तम्, अतिक्षिप्तं, तिर्यक्क्षिप्तमिति षड्विधम् ॥ ५ ॥**

नि० सं०-सन्धिमुक्तस्य षाड्विध्यमाह—तत्रेत्यादि। सन्धिमुक्तं षड्विधमिति संबन्धः ॥ ५ ॥

न्या० च०-अथ के संधिमुक्तस्य षड्भेदा इत्युक्तास्तान् दर्शयन्नाह—तत्र संधिमुक्तमित्यादि ॥ ५ ॥

**तत्र प्रसारणाकुञ्चनविवर्तनाक्षेपणाशक्तिरुग्रुजत्वं स्पर्शासहत्वं चेति सामान्यं सन्धिमुक्तलक्षणमुक्तम् ॥ ६ ॥**

नि० सं०-तत्र सन्धिमुक्तस्य सामान्यलक्षणमाह—तत्र प्रसारणेत्यादि। विवर्तनं विपरीतवर्तनम्, आक्षेपणमतिशयेन चालनम् ॥ ६ ॥

न्या० च०-ननु चास्थ्नां भङ्गो भग्नमित्युक्तं, तत् कथमस्थ्नां संधिमुक्ते भग्नत्वमिति? उच्यते-संधानं हि द्वयोरस्थ्नोरेकीभावः; ताभ्यां मुक्ताभ्यां पुनरपि द्वैधीभाव इति संधिमुक्तेऽप्यस्थ्नामेव भग्नत्वम्। तस्य लक्षणं द्विविधं—सामान्यं विशिष्टं च; तत्र सामान्यमेव लक्षणं प्रथमं निर्दिशन्नाह-प्रसारणाकुञ्चनेत्यादि। सामान्यमिति भिन्नाश्रयेष्वभिन्नाकारबुद्धिविधानतः ॥ ६ ॥

**वैशेषिकं तूत्पिष्टे सन्धावुभयतः शोफो वेदनाप्रादुर्भावो विशेषतश्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति; विश्लिष्टेऽल्पः शोफो वेदनासातत्यं सन्धिविक्रिया च; विवर्तिते तु सन्धिपार्श्वापगमनाद्विषमाङ्गता वेदना च; अवक्षिप्ते सन्धिविश्लेषस्तीव्ररुजत्वं च; अतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च; तिर्यक्क्षिप्ते त्वेकास्थिपार्श्वापगमनमत्यर्थं वेदना चेति ॥ ७ ॥**

नि० सं०-उत्पिष्टादिलक्षणमाह—वैशेषिकं तूत्पिष्टे इत्यादि। उत्पिष्टे चूर्णिते। विश्लिष्टे घट्टिते, 'सन्धौ' इति शेषः। विवर्तिते विपरीतं वर्तिते, 'सन्धौ' इति शेषः। सन्धिविक्रिया मध्यनिम्नत्वम्। सन्धिसंश्रययोरस्थ्नोर्व्यावर्तनेन पार्श्वागमनाद्विषमाङ्गता। वेदना चेति चकाराद्वेदनाऽपि विषमेत्यर्थः। अवक्षिप्ते सन्धावधोगते। अतिक्षिप्ते दूरं गते सन्धौ। अतिक्रान्तता दूरगमनम्।

१ 'भग्नमुपदिशन्ति' इति पा०। २ 'तत्तु' इति पा०।

अतिवेदना चेति चकारार्थः । तिर्यक्क्षिप्ते 'सन्धौ' इति शेषः । अत्रैकस्यैवास्थ्नः पार्श्वगमनं, विवर्तिते द्वयोरपीति विशेषः ॥ ७ ॥

न्या० च०-विशेषयति परस्परतो व्यावर्तयति बुद्धिविधानमिति विशेषः, तेन निर्वृत्तं वैशेषिकम् । तदिदं लक्षणद्वयम् । संधावुभयत इति द्वयोरपि अस्थ्यन्तयोश्चूर्णितत्वात् । विशेषतो रात्राविति उत्पिष्टे हि चूर्णितत्वेनातिशयमार्गावरणकुपितस्य वायोर्निशायामेव विशेषेण कोपात् । तदुक्तं वातनाडीलक्षणेषु-"फेनानुविद्धमधिकं स्रवति क्षपायाम्" ( नि. अ. १ ) इति । विश्लिष्टे 'संधौ' इति शेषः । अल्पशोफतां संधेरनभिघातात् । वेदनासातत्यमुत्पिष्टादहोरात्रिषु, विश्लिष्टे विशेषोऽयम् । संधिविक्रिया संध्यस्थ्नोर्द्वयोरपि विश्लिष्टत्वान्मध्यनिम्नत्वम् । विवर्तिते 'संधौ' इति शेषः । विवर्तिते विपरीतं वर्तिते प्रत्यावृत्ते इति यावत् । द्वयोरप्यस्थ्नोः संधिसंश्रयोः सहैव विवृतिं गतत्वाद् विषमाङ्गता विषमवेदना चेति । अवक्षिप्ते संधावधोगते । संधिविश्लेष इति विश्लेषं विना संधेरधोगमनाभावात् । अतिक्षिप्ते 'संधौ' इति शेषः । द्वयोरपि संध्यस्थ्नोरतिक्षेपेणैवातिक्रान्तता । अतिवेदना चेति वेदनाऽप्यतीति चकारार्थः, उत्पिष्टादिवेदनाभ्योऽतिवेदनेति विशेषः । तिर्यक्क्षते 'संधौ' इत्यत्रापि शेषः । एकस्यैवास्थ्नः पार्श्वगमनं, विवर्तिते तु द्वयोरपीति विशेषः ॥ ७ ॥

**काण्डभग्नमत ऊर्ध्वं वक्ष्यामः-कर्कटकम्, अश्वकर्णं, चूर्णितं, पिच्चितम्, अस्थिच्छल्लितं, काण्डभग्नं, मज्जानुगतम्, अतिपातितं, वक्रं, छिन्नं, पाटितं, स्फुटितमिति द्वादशविधम् ॥ ८ ॥**

नि० सं०-काण्डभग्नमित्यादि ॥ ८ ॥

**श्वयथुबाहुल्यं[1] स्पन्दनविवर्तनस्पर्शासहिष्णुत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविधवेदनाप्रादुर्भावः सर्वास्ववस्थासु न शर्मलाभ इति समासेन काण्डभग्नलक्षणमुक्तम् ॥ ९ ॥**

नि० सं०-तेषां सामान्यलक्षणमाह—श्वयथुबाहुल्यमित्यादि । शर्म सुखम् ॥ ९ ॥

**विशेषस्तु संमूढमुभयतोऽस्थि मध्ये भ(ल)ग्नं ग्रन्थिरिवोन्नतं कर्कटकम्, अश्वकर्णवदुद्गतमश्वकर्णकं, स्पृश्यमानं[2] शब्दवच्चूर्णितमवगच्छेत्, पिच्चितं पृथुतां गतमनल्पशोफं[3], पार्श्वयोरस्थि हीनोद्गतमस्थिच्छल्लितं, वेल्लते प्रकम्पमानं काण्डभग्नम्, अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानमुन्नह्यतीति मज्जानुगतम्, अस्थि निःशेषतश्छिन्नमतिपातितम्, आभुग्नमविमुक्तास्थि वक्रम्, अन्यतरपार्श्वावशिष्टं छिन्नं, पाटितमणुबहुविदारितं वेदनावच्च, शूकपूर्णमिवाध्मातं विपुलं विस्फुटितं स्फुटितमिति ॥ १० ॥**

नि० सं०-तेषां प्रत्येकं विशिष्टलक्षणमाह—विशेषतस्त्वित्यादि । विशेषतः संमूढमिति अतिशयेन स्पर्शं जानातीत्यर्थः । गयदासाचार्यस्तु उभयतः संमूढमिति उभयोः पार्श्वयोर्निपीडनेनाततावनतं मध्ये ग्रन्थिरिवोन्न(द्ग)तमिति व्याख्यानयति । कर्कटकं कर्कटसदृशम् । अश्वकर्णमश्वकर्णसदृशमित्यर्थः । चूर्णितं चूर्णीकृतम् । अवगच्छेत् जानीयात् । पिच्चितमित्यादि पिच्चितं पीडितसदृशं, पृथुतां गतं विस्तीर्णतां गतम् । अस्थि छल्लमिव विद्यते यस्मिन् तदस्थिच्छल्लितम् । अस्थिच्छल्लिकमित्यन्ये । वेल्लते[1] चलति । यद्यपि काण्डभग्नव्यपदेशो द्वादशानामपि, तथाऽपि विशेषतः कस्यचिद्व्यपदेशः[2]; यथा सर्वेषामेव मृगपक्षिणां विद्यमानजङ्घत्वेऽपि विशिष्टजङ्घायोगेन एणादीनामेव जङ्घालत्वम् । आभुग्नमीषज्जिह्मम् । अन्यतरपार्श्वेण एकपार्श्वेणेत्यर्थः । अणूनि बहूनि विदारितानि यस्य तत्तथा । गयी तु स्फुटितलक्षणमेतत् पठति, अग्रेतनं पाटितलक्षणमिति । शूकपूर्णमिति शूको यवादीनामग्रभागः, तत्पूर्णमिव वेदनाविशेषः । आध्मातं शूनम् । विस्फुटितं विपुलस्फुटितं, गयी तु 'विपुलैकदारि' इति पठति ॥ १० ॥

न्या० च०-अतः परं काण्डभग्नं दर्शयन्नाह—काण्डभग्नमित्यादि । कर्कटादिषु प्रायेण नामभिरेवाकृतयो व्याख्यातास्तथाऽपि विस्पष्टार्थं लक्षणमुपदेक्ष्यति । श्वयथ्वादि सामान्यतः । विशेषतस्तु संमूढमुभयत इति उभयोः पार्श्वयोर्निष्पीडनेनाततावनतं मध्ये ग्रन्थिरिवोन्नतम् । पार्श्वादयस्तु अवयवविशेषा इति । अस्थिच्छल्लितम् अस्थि च्छल्लमिव; छल्लं वल्कलं, तत् संजातं यस्य; 'अस्थिच्छल्लिकं' इत्यन्ये; तत्र मत्वर्थीयष्ठिकन् । वेल्लिते[3] प्रकम्पमानं काण्डभग्नम् । द्वादशानामपि काण्डभग्नत्वं; काण्डेन भग्नेन काण्डभग्नत्वं जङ्घालवत्; सर्वेषामेव हि मृगपक्षिणां विद्यमानजङ्घत्वाद् विशिष्टजङ्घाया योगेन एणादीनामेव जङ्घालत्वम् । अस्थि निःशेषतश्छिन्नमतिपातितं, तत् सुबोधम् । अस्थ्यवयवोऽस्थिमध्यं प्रविश्य मज्जानमनुगच्छतीति मज्जानुगतम् । आभुग्नमीषज्जिह्मम् । अविमुक्तास्थि अविश्लिष्टास्थि वक्रम् । अन्यतरपार्श्वे अवशिष्टं छिन्नैकपार्श्वमित्यर्थः । स्फुटितं भिन्नं, तस्य लक्षणम्—अणुबहुविदारितम्; अणूनि बहूनि विदरणानि यस्य; बहुव्रीहिप्राप्तावपि मत्वर्थीयो भवति । एकदेशेनेति पाणिनीये (?) । एवं स्फुटितस्यैव लक्षणम् । शूकपूर्णमिव वेदनावत् । आध्मातं शूनम् । विपुलैकदारीति स्फुटितलक्षणाम्; काण्डबहुविदारिणो विपरीतम् ॥ ८—१० ॥

१ 'श्वयथुबाहुल्यमवपीड्यमाने विविधवेदनाप्रवृत्तिरिति सामान्यतः' इति ता. । २ 'शब्दस्पर्शाभ्यां चूर्णितमवगच्छेत्' इति ता. । ३ 'अल्पशोथं' इति ता. ।

१ 'खलते' इति पा० । २ 'तथाऽपि कस्यचित्काण्डभग्नस्य विशेषकाण्डभग्नत्वं' इति पा० । ३ "प्रसारणे कम्पमानं काण्डभग्नम्" इति व्याख्यामधुकोषे श्रीकण्ठदत्तः ।

तेषु चूर्णितच्छिन्नातिपातितमज्जानुगतानि कृच्छ्रसाध्यानि, कृ[1]शवृद्धबालानां क्षतक्षीणकुष्ठिश्वासिनां स[2]न्ध्युपगतं चेति ॥ ११ ॥

**नि० सं०**–कृच्छ्रसाध्यान्निर्दिशन्नाह—तेष्वित्यादि । चकारात् काण्डोपगतमिति ॥ ११ ॥

**न्या० च०**–तेषु चूर्णितादीनि कृच्छ्रसाध्यानि, अन्यान्यपि कृशादीनाम् । संध्युपगतानि चेति चकारेण काण्डोपगतान्यपि ॥ ११ ॥

भवन्ति चात्र—

भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम् ॥
जघनं प्रति पिष्टं च वर्जयेत्तच्चिकित्सकः ॥ १२ ॥
असंश्लिष्टं कपालं तु ललाटे चूर्णितं च यत् ॥
भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्ध्नि च वर्जयेत् ॥ १३ ॥
आदितो यच्च दुर्जातमस्थि सन्धिरथापि वा ॥
[3]सम्यग्यसितमप्यस्थि [4]दुर्न्यासाद्दुर्निबन्धनात् ॥ १४ ॥
सङ्क्षोभाद्वाऽपि यद्गच्छेद्विक्रियां तच्च वर्जयेत् ॥

**नि० सं०**–असाध्यान्निर्दिशन्नाह—भिन्नमित्यादि । भिन्नं कपालं काण्डभग्नं, सन्धिमुक्तमसाध्यं षड्विधमपि, तथा च्युतं विश्लिष्टं लम्बितमसाध्यं; सन्धिमुक्तशब्देन च्युतस्यापि सन्धिमुक्तभेदस्यासाध्यत्वे लब्धे तदुपादानं विशेषार्थम् । जघनं प्रतीति जघनस्थाने पिष्टं, सन्धिमुक्तभेदोऽयम् । असंश्लिष्टं विघट्टितसन्धि । ललाटे चूर्णितं च यदिति चूर्णितं काण्डभग्नमेतत् । भग्नं सन्धिमुक्तं काण्डभग्नं द्वयमपि बोद्धव्यम् । इदानीं द्विविधस्यापि सर्वस्थानगतस्यावस्थायामसाध्यत्वं दर्शयन्नाह—आदित इत्यादि । आदितो यच्च दुर्जातमिति आदित उत्पत्तावेव दुःसन्धानोपपादितं यत् 'अस्थिभग्नम्' इति शेषः, तदसाध्यम् । अस्थिसन्धिरथापि वेति सन्धिरस्थ्नोरन्तरालं, सोऽपि दुर्जातोऽसाध्यः । सम्यग्यमितमप्यस्थि सम्यक् संहितमप्यस्थि, दुर्न्यासात् दुःस्थापनात्, दुर्निबन्धनात् दुर्बन्धात्, संक्षोभात् व्यवायादिना चलनात्; विक्रियां विकृतिम् ॥ १२—१४ ॥—

**न्या० च०**–असाध्यान्निर्दिशन्नाह—भिन्नं कपालं कट्यामित्यादि । भिन्नं कपालं कट्यां भग्नं संधिमुक्तं नानाविधं, तथा च्युतं सन्धिमुक्तशब्देन च्युतस्याप्यसाध्यत्वे लब्धे तद्ग्रहणं विशेषार्थम् । जघनस्थानलक्षणेन पिष्टमप्यसाध्यं; पिष्टमुत्पिष्टं संधिमुक्तं, नेतरत् । ललाटे चूर्णितं तदप्यसाध्यं, काण्डभग्नमेतत् । अविद्यमानकपालसंश्लेषं विघटितसंधि विचूर्णितमित्यर्थः । स्तनान्तरे इत्युरसि, पृष्ठे शङ्खे मूर्ध्नि च भग्नमित्यविशेषेणोपदानाद् द्विविधमपि । इदानीं द्विविधस्यापि सर्वस्थानगतस्यावस्थायामसाध्यतां दर्शयन्नाह—सम्यक्संहितमित्यादि । यथावद्यमितमपि दुर्न्यासात्, तथा सम्यङ्न्यस्तमपि दुर्बन्धनात्, तथा सम्यग्यमितन्यस्तबद्धमप्यभिघातेन व्यवायादिना चलनात्, विक्रियां विकृतिं गच्छेत्तदप्यसाध्यम् ॥ १२—१४ ॥—

मध्यस्य वयसोऽवस्थास्तिस्रो याः परिकीर्तिताः[1] १५
तत्र स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता ॥

**नि० सं०**–मध्यस्येत्यादि । तिस्रोऽवस्था इति षोडशवर्षादूर्ध्वं चत्वारिंशद्यावत् पूर्यते ॥ १५ ॥—

तरुणास्थीनि नम्यन्ते भज्यन्ते नलकानि तु ॥ १६ ॥
कपालानि विभि[2]द्यन्ते स्फुटन्ति रुचकानि च ॥

इति सुश्रुतसंहितायां निदानस्थाने भग्ननिदानं
नाम पञ्चदशोऽध्यायः ॥ १५ ॥

**नि० सं०**–अस्थिविशेषेणापि भग्नविशेषं दर्शयन्नाह—तरुणास्थीनीत्यादि । घ्राणकर्णकण्ठाक्षिकूटेषु तरुणास्थीनि । नम्यन्ते वक्रीभवन्ति, एतेन वक्रलक्षणं भग्नमुक्तम् । नलकानि शाखास्थीनि; भज्यन्ते त्रुटन्ति । कपालानि मस्तकादिकर्पराणि; विभिद्यन्ते इत्यनेन कपालेषु विदरणलक्षणो भङ्ग उक्तः स्फुटितपाटितादिः । रुचकानीति रुचका दन्ताः, तेषु स्फुटितं भग्नमुक्तम् । चकारेण वलयेष्वपि स्फुटितं समुच्चीयते । एतेन पञ्चविधान्यस्थीनि तरुणनलककपालवलयरुचकान्युक्तानि ॥ १६ ॥—

इति श्रीडल्हद(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने पञ्चदशोऽध्यायः ॥ १५ ॥

**न्या० च०**–अस्थिविशेषेणापि भग्नविशेषं दर्शयन्नाह—तरुणास्थीनीत्यादि । तरुणास्थीनि नम्यन्ति वक्रीभवन्ति; तरुणास्थिषु वक्रलक्षणं भग्नं; घ्राणकर्णकण्ठाक्षिकूटेषु तरुणान्यस्थीनि । नलकेषु पुनर्द्वादशविधमपि भग्नम् । कपालानि विभिद्यत इति कपालेषु विदरणलक्षणो भङ्गः; तच्च स्फुटितपाटितादि । रुचकास्थीनि पुनर्दशनाः; तेषु स्फुटितलक्षणः । रुचकानि चेति चकारेण वलयादिष्वपि स्फुटितमपि समुच्चीयते । अस्थीनि पञ्चविधानि–तरुण-नलक-कपाल-वलय-रुचकानीति ॥ १६ ॥—

इति सौश्रुते शल्यतन्त्रे श्रीगयदासविरचितायां
न्यायचन्द्रिकायां पञ्जिकायां निदानस्थाने
भग्नानां निदानम् ।

## षोडशोऽध्यायः ।

अथातो मुखरोगाणां निदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

**नि० सं०**–अथात इत्यादि ॥ १ ॥ २ ॥

१ 'कृशातिवृद्धबालासहानां' इति पा० । २ 'सव्रणानि सन्ध्युपगतानि च' इति ता. । ३ 'सम्यक्संहितमप्यस्थि' इति पा० । ४ 'दुर्निक्षेपनिबन्धनात्' इति पा० ।

१ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते; गयदासेनाव्याख्यातश्च । २ 'विभज्यन्ते' इति पा० ।

न्या० च०-अथातो मुखरोगाणां निदानं व्याख्यास्यामः। भग्नानन्तरं वदनरोगाणां हेतुलक्षणनिर्देशारम्भः, 'स्फुटन्ति रुचकानि च' (नि. अ. १५) इत्यत्र मुखगतदशननिर्देशात् ॥ १ ॥ २ ॥

मुखरोगाः पञ्चषष्टिर्भवन्ति सप्तस्वायतनेषु । तत्रायतनानि-ओष्ठौ, दन्तमूलानि, दन्ताः, जिह्वा, तालु, कण्ठः, सर्वाणि चेति । तत्राष्टावोष्ठयोः, पञ्चदश दन्तमूलेषु, अष्टौ दन्तेषु, पञ्च जिह्वायां, नव तालुनि, सप्तदश कण्ठे, त्रयः सर्वेष्वायतनेषु ॥ ३ ॥

नि० सं०-तेषां संख्यामाह—मुखरोगा इत्यादि । अन्ये सप्तषष्टिरित्याहुः, तन्नेच्छन्ति निबन्धकाराः । अथ ते कियत्सु स्थानेषूत्पद्यन्त इत्याह—सप्तस्वायतनेष्विति । आयतनेषु स्थानेषु । तान्येव स्थानान्याह—तत्रायतनानीत्यादि ॥ ३ ॥

न्या० च०-अपरैः सप्तषष्टिमुखरोगाः प्रोच्यन्ते । तद्-सम्यक्, यतः समानतन्त्रेषु भोजादिषु पञ्चषष्टिरेव पठ्यन्ते । तथा हि भोजः—"दन्तेष्वष्टावोष्ठयोश्च मूलेषु दश पञ्च च। नव तालुनि जिह्वायां पञ्च सप्तदशामयाः ॥ कण्ठे त्रयः सर्वसरा एकषष्टिश्चतुःपरा" इति ॥ ३ ॥

तत्रौष्ठप्रकोपा वातपित्तश्लेष्मसन्निपातरक्तमांसमेदोभिघातनिमित्ताः ॥ ४ ॥

नि० सं०-ओष्ठप्रकोपा ओष्ठरोगाः ॥ ४ ॥

कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ[1] ॥
दाल्येते परिपाट्येते ह्योष्ठौ मारुतकोपतः ॥ ५ ॥
[2]आचितौ पिडकाभिस्तु सर्षपाकृतिभिर्भृशम् ॥
सदाहपाक[3]संस्रावौ नीलौ पीतौ च पित्ततः ॥ ६ ॥
सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ ॥
[4]कण्डूमन्तौ कफाच्छूनौ पिच्छिलौ शीतलौ गुरू ॥७॥
सकृत् कृष्णौ सकृत् पीतौ सकृच्छ्वेतौ तथैव च ॥
सन्निपातेन विज्ञेयावनेकपिडिकाचितौ ॥ ८ ॥
खर्जूरफलवर्णाभिः पिडि[5]काभिः समाचितौ ॥
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ९ ॥
मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुद्गतौ ॥
जन्तवश्चात्र मूर्च्छन्ति [6]सृक्कस्योभयतो मुखात् ॥१०॥
मे[7]दसा घृतमण्डाभौ कण्डूमन्तौ स्थिरौ मृदू ॥
अच्छं स्फटिकसङ्काशमास्रावं स्रवतो गुरू[8] ॥ ११ ॥
[9]क्षतजाभौ विदीर्येते पाट्येते चाभिघाततः ॥
[10]ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥१२॥

नि० सं०-तेषामोष्ठरोगाणां प्रत्येकं विशिष्टं लक्षणमाह—कर्कशावित्यादि । कर्कशौ शाकपत्रसदृशौ । परुषौ रूक्षौ । स्तब्धौ निश्चलौ । दाल्येते द्विविधा भवत इव । परिपाट्येते पुटपुटायेते । आचितौ व्याप्तौ । चीयेते व्याप्येते । शूनौ शोफयुक्तौ । सकृत् किंचिदित्यर्थः । अनेकपिडकाचितौ अनेकवर्णपिडकाव्याप्तावित्यर्थः । अयमसाध्यो ज्ञेयः । रक्तोपसृष्टौ रक्तजव्याधियुक्तौ । शोणितप्रभौ रक्तच्छायौ । जन्तवः क्रिमयः । अत्र अस्मिन् । मूर्च्छन्ति भवन्ति । उभयतः सृक्कभागयोरित्यर्थः, सृक्क ओष्ठप्रान्तः । मेदसा 'दूषितौ' इति शेषः । घृतमण्डो घृतस्योपर्यच्छो भागः । स्थिरावचलौ । क्षतजाभौ रक्तच्छायौ । विदीर्येते विदारणयुक्तौ भवतः । पाट्येते द्विधा भवत इव । ग्रथितौ ग्रन्थियुक्तौ । ओष्ठप्रकोपे वातजे शुद्धो वातः कारणम्, अभिघातजे तु कफरक्तसहित इति परस्परं भेदः ॥ ५—१२ ॥

तत्रौष्ठजेषु कर्कशावित्यादिना वातजः, चीयेते इत्यादिना पित्तजः, सवर्णाभिरित्यादिना कफजः, सकृत्कृष्णावित्यादिना त्रिदोषजः, खर्जूरफलवर्णाभिरित्यादिना रक्तजः, गुरू स्थूलौ मांसदुष्टावित्यादिना मांसजः । अत्र मुखे जन्तवो मूर्च्छिता भवन्ति, उभयतः सृक्कणीभागयोरित्यर्थः । सर्पिर्मण्डेत्यादिना मेदोजः । क्षतजाभौ विदीर्येते इत्यादिनाऽभिघातजः । अत्र कफरक्तयोरप्यनुबन्धः स्थानप्रभावादित्यन्ये, नतु वायोरेव । तथा हि भोजः—"क्षतावभिहतौ वाऽपि रक्तावोष्ठौ सवेदनौ । भवतः सपरिस्रावौ कफरक्तप्रदूषितौ"—इति । वायुः पुनरत्र समानाभिघातन्यायेनैवास्ति । अभिघातजत्वेऽप्ययमभिघातजशोथाद्भिन्न एव, तेन शल्यतन्त्रे एवास्य निर्देशः कृत इति ॥ ५-१२ ॥

दन्तमूलगतास्तु—शीतादो, दन्तपुप्पुटको, दन्तवेष्टकः, शौषिरो, महाशौषिरः, परिदर, उपकुशो, दन्तवैदर्भो, वर्धनः, अधिमांसो, नाड्यः पञ्चेति ॥ १३ ॥

नि० सं०-दन्तमूलगतास्त्वित्यादि ॥ १३ ॥

न्या० च०-दन्तमूलगतास्तु शीतादप्रभृतयः पञ्चदश ॥ १३ ॥

शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्तते ॥
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ १४ ॥
दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम् ॥
शीतादो नाम स व्याधिः कफशोणितसंभवः ॥१५॥
दन्तयोस्त्रिषु वा यस्य श्वयथुः स[1]रुजो महान् ॥
दन्तपुप्पुटको ज्ञेयः कफरक्तनिमित्तजः ॥ १६ ॥
स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ॥
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसंभवः ॥ १७ ॥

---

१ 'समांसानिलवेदनौ' इति ता. । २ 'चीयेते पीडकाभिश्च सरुजाभिः समन्ततः' इति ता. । ३ '°पाकपीडकौ पीताभासौ च' इति ता. । ४ 'भवतस्तु कफादोष्ठौ' इति ता. । ५ 'पिडकाभिर्निपीडितौ' इति ता. । ६ 'नरस्योभयतः' इति ता. । ७ 'सर्पिर्मण्डप्रतीकाशौ मेदसा कण्डुरौ गुरू' इति ता. । ८ 'भृशम्' इति ता. । ९ 'ओष्ठौ पर्यवदीर्येते' इति ता. । १० 'ततो व्रणः सुसंरूढो मृदुत्वमुपगच्छति' इति पा० ।

१ 'श्वयथुः स्पर्शनासहः' इति ता. ।

श्वयथुर्दन्तमूलेषु रुजावान् कफरक्त[1]जः ॥
लालास्रावी स विज्ञेयः कण्डूमां[2]श्च् शौषिरो गदः १८
दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते ॥
दन्तमांसानि पच्यन्ते मुखं च परिपीड्यते ॥ १९ ॥
यस्मिन् स सर्वजो व्याधिर्महाशौषिरसंज्ञकः ॥
दन्तमांसानि शीर्यन्ते यस्मिन् ष्ठीवति चाप्यसृ[3]क् २०
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥
वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च[4] ॥ २१ ॥
आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ॥
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ॥ २२ ॥
यस्मिन्नुपकुशः स स्यात्[5] पित्तरक्तकृतो गदः ॥
घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ॥ २३ ॥
भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः ॥
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ॥ २४ ॥
वर्धनः स मतो व्याधि[6]र्जाते रुक् च प्रशाम्यति ॥
हानव्ये पश्चिमे दन्ते महाञ्छोथो महारुजः ॥ २५ ॥
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥
दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ २६ ॥

**नि० सं०**–तेषां प्रत्येकं लक्षणमाह—शोणितमित्यादि । दन्तवेष्टेभ्यो दन्तमांसेभ्यः । शीर्यन्ते गलन्ति । दन्तयोरित्यादि । दन्तयोरिति द्विवचनाद् द्वयोः । तालु चाप्यवदीर्यत इति चकारेण दन्ताश्चावदीर्यन्ते, ओष्ठावपि च । सर्वजः सर्वदोषेभ्यो जातः । अयं सप्तरात्रान्मारयति । ष्ठीवति चाप्यसृगिति रोगी लोहितं थूत्करोतीत्यर्थः । वेष्टेषु दन्तवेष्टनमांसेषु । तेभ्यो दन्तवेष्टेभ्यः । आघट्टिता आचालिताः । घृष्टेष्वित्यादि । संरम्भोऽत्र श्वयथुः । मारुतेनेत्यादि । जाते रुक् च प्रशाम्यतीति व्याधिप्रभावात् । हानव्य इत्यादि । हानव्ये हनुसंभवे । दन्तमूलगता इत्यादि । यथेरिता इति यथाकथिता निदाने । तेषां मध्ये त्रिलिङ्गा नाडी असाध्या ॥ १४—२६ ॥

**न्या० च०**–शोणितं दन्तवेष्टेभ्य इत्यादिना शीतादः । दन्तवेष्टा दन्तवेष्टनमांसानि । पच्यन्ते 'स्वयं' इति शेषः । परस्परमन्योऽन्यं पचन्ति, पाचकोष्मदूषितरक्तसंचरणेनान्योऽन्यं पाकः । दन्तयोरित्यादिना दन्तपुप्पुटकः । दन्तयोरिति द्विवचनाद् द्वयोः । स्रवन्ति पूयरुधिरमित्यादिना दन्तवेष्टः । श्वयथुर्दन्तवेष्टेष्वित्यादिना शौषिरकः । दन्ताश्चलन्तीत्यादिना महासौषिरः । तालु चाप्यवदीर्यते इति चकारेण दन्ताश्चाप्यवदीर्यन्ते ओष्ठावपि च । अयं सप्तरात्रान्मारयति । तथा हि भोजः—"सदाहो दन्तमूलेषु श्वयथुर्जायते महान् । जातः कफं क्षपयति क्षीणे तस्मिंस्तु शोणितम् ॥ विघृद्धमनिशं दन्तान् ताल्वोष्ठमपि दारयेत् । महाशौषिर इत्येषः सप्तरात्रान्निहन्त्यसून्" इति । दन्तमांसमित्यादिना परिदरः । दन्तमांसपरिदारणात् परिदरः । वेष्टेषु दाहः पाकश्चेत्यादिना उपकुशः । घृष्टेष्वित्यादिना वैदर्भः । संरम्भोऽत्र श्वयथुः । मारुतेनाधिको दन्त इत्यादिना वर्धनकः । जाते रुक् च प्रशाम्यतीति व्याधिप्रभावात् । हानव्ये इत्यादिनाऽधिमांसकः; संज्ञायां कन् । हानव्यः इति "शरीरावयवाद्यत्" ( पा. अ. ५।१।६ ) । पञ्चापि नाड्यो वातादिनाडिलक्षणेन यथोदितेन ज्ञेयाः ॥ १४–२६ ॥

दन्तगतास्तु–दालनः, क्रिमिदन्तको, दन्तहर्षो, भञ्जनकः, दन्तशर्करा, कपालिका, श्यावदन्तको, हनुमोक्षश्चेति ॥ २७ ॥
दा[1]ल्यन्ते बहुधा दन्ता यस्मिंस्तीव्ररुगन्विताः ॥
दालनः स इति ज्ञेयः सदागतिनिमित्तजः ॥ २८ ॥
कृष्णश्छिद्री चलः स्रावी ससंरम्भो महारुजः ॥
अनिमित्तरुजो वाताद्विज्ञेयः कृमिदन्तकः ॥ २९ ॥
शीतमुष्णं च द[2]शनाः सहन्ते स्पर्शनं न च ॥
यस्य तं दन्तहर्षं तु व्याधिं विद्यात् समीरणात् ३०
वक्रं वक्रं भ[3]वेद्यस्मिन् दन्तभङ्गश्च तीव्ररुक् ॥
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः ॥ ३१ ॥
श[4]र्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै ॥
सा दन्तानां गुणहरी विज्ञेया दन्तशर्करा ॥ ३२ ॥
दलन्ति दन्तवल्कानि यदा शर्करया सह ॥
ज्ञेया कपालिका सैव दशनानां वि[5]नाशिनी ॥ ३३ ॥
योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः ॥
श्यावतां नीलतां वाऽपि गतः स श्यावदन्तकः ३४
वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः[6] ॥
हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः ॥ ३५ ॥

**नि० सं०**–तेषां प्रत्येकं लक्षणमाह—दाल्यन्त इत्यादि । दाल्यन्ते विदार्यन्ते । सदागतिनिमित्तजः सदागतिर्वातः, तन्निमित्तजः । असाध्योऽयं व्याधिः । कृष्ण इत्यादि । कृष्णः कृष्णदन्तकः । छिद्री सच्छिद्रदन्तकः, क्रिमिकृतच्छिद्रत्वात् । चलः चलदन्तः । संरम्भः श्वयथुः । वक्रमित्यादि । असाध्योऽयं

१ 'कफसंभवः' इति ता. । २ 'शौषिरो नाम नामतः' इति ता. । ३ 'चासकृत्' इति ता. । ४ अस्याग्रे ताडपत्रपुस्तके 'दाहेन वेष्टास्तत्राश्च शुष्यन्ते चाग्निना यथा' इत्यधिकः पाठ उपलभ्यते । ५ 'यस्मिन् सोपकुशो नाम' इति पा० । ६ 'खलिवर्धनसंज्ञोऽसौ' इति माधवनिदाने पा० ।

१ 'दीर्यमाणेष्विव रुजा यस्य दन्तेषु जायते । दालनो नाम स व्याधिः' इति ता. । २ 'शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । पित्तमारुतकोपेन दन्तहर्षः स नामतः' इति माधवनिदाने पाठः । ३ 'भवेद्यस्य दन्तभङ्गश्च जायते' इति ता. । ४ 'मलो दन्तगतो यस्तु पित्तमारुतशोषितः । शर्करेव खरस्पर्शो सा ज्ञेया दन्तशर्करा' इति माधवनिदाने । ५ 'कपालेष्विव दीर्यत्सु दन्तानां सैव शर्करा । कपालिकेति विज्ञेया सदा दन्तविनाशिनी' इति ता. । ६ 'विसङ्गतः' इति ता. ।

व्याधिः । शर्करेत्यादि । शर्करा कर्परस्य सूक्ष्मखण्डः । गुणहरी शुक्लादिगुणहरणशीला । दलन्तीत्यादि । दलन्ति स्फुटन्ति । दन्तवल्कानि दन्तत्वचः । य इत्यादि । असाध्योऽयं व्याधिः । तैस्तैरुच्चैर्व्याहरणकठिनभक्षणजृम्भणादिभिः । विसंहतो विघट्टितः । हनुमोक्षव्याधिरपि दन्तस्थानसामीप्याद्दन्तपीडाकरत्वाच्च दन्तरोग इति व्यपदिश्यते ॥ २७-३५ ॥

**न्या० च०**-दन्तगतास्तु दालनादयोऽष्टौ । दीर्यमाणेष्विवेत्यादिना दालनः । सदागतिर्वातः, स निमित्तं यस्य स तथा । कृष्णश्छिद्रीत्यादिना कृमिदन्तकः । छिद्री कृमिकृतच्छिद्रः । संरम्भः श्वयथुः । स्पर्शं तु शीतमुष्णं चेत्यादिना दन्तहर्षः । वक्त्रं वक्रमित्यादिना भञ्जनकः । शर्करेत्यादिना दन्तशर्करा; सा दन्तानां गुणहरी शुक्लादिगुणहरणशीला । कपाले दीर्यमाणे इत्यादिना कपालिका । दन्तानां कपाले दीर्यमाणे कपालिका । दन्तविनाशनी सदेति बाल्यादेव सर्वदा दन्तविनाशनी उत्पन्ना बाल्ये एव दन्तविनाशशीलेत्यर्थः । 'दलन्ति दन्तवल्कानि यदा शर्करया सह' इति केचित् पठन्ति, तत्रापि स एवार्थः । असृङ्मिश्रेणेत्यादिना श्यावदन्तकः । श्यावदन्तक इति संज्ञायां कन् । वातेन तैस्तैरित्यादिना हनुमोक्षः । दन्तदोषाणां सामीप्याद्दन्तरोग इत्येके; अन्ये तु दन्तरोगहेतुत्वाद्दन्तरोगत्वमस्य । अर्दितलक्षणोऽयं हनुमोक्षोऽर्दिते एव पठितः 'ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे तु वेदना । तमर्दितमिति प्राहुः' ( नि. अ. १ ) इत्यादिना । तथा हि भोजेऽपि-"भाराभिघाताज्जन्तोर्हि हनुसन्धिर्वियुज्यते । निरस्तजिह्वः कृच्छ्रेण भाषितुं तत्र गच्छति ॥ संसक्तमनिलव्याधिं हनुमोक्षं विनिर्दिशेत्" इति ॥ २७-३५ ॥

जिह्वागतास्तु—कण्टकास्त्रिविधास्त्रिभिर्दोषैः, अलास, उपजिह्विका चेति ॥ ३६ ॥

जिह्वाऽनिलेन स्फुटिता प्रसुप्ता
भवेच्च शाकच्छदनप्रकाशा ॥
पित्तेन[1] पीता परिदह्यते च
चिता सरक्तैरपि कण्टकैश्च ॥
कफेन गुर्वी बहला चिता च
मांसोद्गमैः शाल्मलिकण्टकाभैः ॥ ३७ ॥
जिह्वातले[2] यः श्वयथुः प्रगाढः
सोऽलाससंज्ञः कफरक्तमूर्तिः ॥
जिह्वां स तु स्तम्भयति प्रवृद्धो
मूले तु जिह्वा भृशमेति पाकम् ॥ ३८ ॥
जिह्वाग्ररूपः श्वयथुर्हि जिह्वा-
मुन्नम्य जातः कफरक्त[3]योनिः ॥
प्रसेककण्डूपरिदाहयुक्ता
प्रकथ्यतेऽसावुपजिह्विकेति ॥ ३९ ॥

**नि० सं०**-जिह्वागतास्त्वित्यादि । तेषां प्रत्येकं लक्षणमाह—जिह्वेत्यादि । शाको वृक्षविशेषो महाखरपत्रलक्षणः । छदनं पत्रम् । चिता व्याप्ता । बहला स्थूला । मांसोद्गमैः मांसाङ्कुरैः; चिता व्याप्ता भवतीति संबन्धः । जिह्वातल इत्यादि । प्रगाढः प्रकर्षेण दारुणः । कफरक्तमूर्तित्वेन कफरक्तयोः प्राधान्यं, जिह्वास्तम्भेन तु वायुरप्यस्ति, भृशं पाकेन तु पित्तमप्यस्ति; अत एव त्रिदोषजत्वेनासाध्यत्वमपि, दुरुपक्रमत्वात् । जिह्वाग्ररूप इत्यादि । जिह्वामुन्नम्य ऊर्ध्वीकृत्य, जात उत्पन्नः; एतेन जिह्वाया अधो भवतीत्युक्तम् । कफरक्तयोनिः श्लेष्मरक्तकारणः ॥ ३६-३९ ॥

**न्या० च०**-जिह्वागतास्तु कण्टकास्त्रयः, अलासः, उपजिह्विका चेति । तत्र जिह्वाऽनिलेनेत्यादिना वातकण्टकाः, पित्तात्सदाहैरित्यादिना पित्तकण्टकाः, कफेन गुर्वीत्यादिना कफकण्टकाः, जिह्वातले यः श्वयथुरित्यादिना अलासः । प्रशब्दोऽत्र प्रकर्षद्योती, तेन प्रकर्षेण गाढो दारुणः; "जिह्वातलेष्वलासस्तु" ( चि. अ. २२ ) इति वचनेनासाध्यत्वात्; कफरक्तमूलत्वेन कफरक्तयोः प्राधान्यं, जिह्वास्तम्भेन वायुरप्यस्ति, भृशं पाकेन पित्तमप्यस्ति, अत एव त्रिदोषजत्वेनासाध्यत्वमपि दुरुपक्रमत्वात् । जिह्वाग्ररूपः श्वयथुरित्यादिना उपजिह्विका । चोपश्चात्र रक्तयोनिना पित्तेन ॥ ३६-३९ ॥

तालुगतास्तु—गलशुण्डिका, तुण्डिकेरी, अध्रुषः, कच्छपः, अर्बुदं, मांससङ्घातः, तालुपुप्पुटः, तालुशोषः, तालुपाक इति ॥ ४० ॥

श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो
दीर्घः शोफो ध्मातबस्तिप्रकाशः ॥
तृष्णाकासश्वासकृत् संप्रदिष्टो
व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना ॥ ४१ ॥
शोफः स्थूलस्तोददाहप्रपाकी
प्रागुक्ताभ्यां तुण्डिकेरी मता तु ॥
शोफः[1] स्तब्धो लोहितस्तालुदेशे
रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः ॥ ४२ ॥
कूर्मोत्सन्नो[2]ऽवेदनोऽशीघ्रजन्मा-
ऽरक्तो ज्ञेयः कच्छपः श्लेष्मणा स्यात् ॥
पद्माकारं तालुमध्ये तु शोफं
विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम् ॥ ४३ ॥
दुष्टं मांसं श्लेष्मणा नीरुजं च
ताल्वन्तःस्थं मांससङ्घातमाहुः ॥
नीरुक्[3] स्थायी कोलमात्रः कफात् स्या-

१ 'पित्तात् सदाहैरनुचीयते च दीर्घैः' इति ता. । २ 'अधोगतो यः' इति ता. । ३ 'कफरक्तमूलः । लालाकरः कण्डुयुतः सचोषः स तूपजिह्वा कथिता भिषग्भिः' इति पा० ।

१ 'मृदुः शोथो लोहितस्तालुदेशे ज्ञेयोऽध्रुषः सज्वरस्तीव्ररुक् च' इति ता. । २ 'कूर्मोन्नतः' इति ता. । ३ 'अरुक् स्थिरः कोलमात्रः कफेन समेदसा' इति ता. ।

[1]मेदोयुक्तात् पुप्पुटस्तालुदेशे ॥ ४४ ॥
शोषो[2]ऽत्यर्थं दीर्यते चापि तालुः
[3]श्वासो वातात्तालुशोषः सपित्तात् ॥
पित्तं कुर्यात् पाकमत्यर्थघोरं
तालुन्येनं तालुपाकं वदन्ति ॥ ४५ ॥

**नि० सं०**-तेषां प्रत्येकं लक्षणमाह—श्लेष्मासृग्भ्यामित्यादि । कण्ठशुण्डी गलशुण्डीत्यर्थः । शोफ इत्यादि । तोददाहप्रपाकीति तोददाहप्रपाकयुक्तः । प्रागुक्ताभ्यां श्लेष्मासृग्भ्याम् । तुण्डिकेरी वनकार्पासिका, तत्फलानुकारी व्याधिरयम् । कूर्मेत्यादि । कूर्मोत्सन्नः कूर्मवदुन्नतः । अरक्तः पाण्डुरः । अशीघ्रजन्मा मन्दानुसारी । पद्माकारं पद्मकर्णिकाकारम् । प्रोक्तलिङ्गं यथो[4]क्तरक्तार्बुदलिङ्गम् । असाध्योऽयं व्याधिः । दुष्टमित्यादि । स्थायी स्थिरः । पुप्पुट इत्यत्र तालुशब्दो लुप्तो द्रष्टव्यः, तेन तालुपुप्पुट इत्यर्थः । शोष इत्यादि । एनमिति एनं पाकम् ॥ ४०–४५ ॥

**न्या० च०**-तालुगतास्तु गलशुण्डिकादयः । श्लेष्मासृग्भ्यां तालुमूलात्प्रवृद्ध इत्यादिना गलशुण्डिका । शोथः स्थूलस्तोददाहप्रपाकीत्यादिना तुण्डिकेरी । सा तु प्रागुक्ताभ्यां श्लेष्मासृग्भ्यामित्यर्थः । तुण्डिकेरी वनकार्पासी, तत्फलानुकारी शोथोऽयम् । मृदुः शोथ इत्यादिना अध्रुषः । कूर्मोत्सन्न इत्यादिना कच्छपः । अशीघ्रजन्मा चिरजः । पद्माकारमित्यादिनाऽर्बुदम् । प्रोक्तलिङ्गमिति यथोदितरक्तार्बुदलिङ्गम् । पद्माकारं पद्मकर्णिकाकारलोहितवर्णं, रक्तजत्वात् । तथा हि **भोजः**—"उपर्येव भवेन्नद्धो यथा पद्मस्य कर्णिका । पार्श्वतश्चाङ्कुरैर्दीर्घैर्नाशा चाप्यवसीदति ॥ श्लेष्मरक्तसमुत्थानं तत्ताल्वर्बुदसंज्ञितम्" इति । दुष्टं मांसमित्यादिना मांससंघातः । अरुक् स्थिर इत्यादिना तालुपुप्पुटः । तालुशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः । शुष्यत्यत्यर्थमित्यादिना तालुशोषः । 'अनिलात्तु' इत्यत्र 'सपित्तात्' इति केचित् पठन्ति । अत्र **भोजः**—"तालुशोषो भवेद्वातात्" इत्यादि । पित्तं कुर्यात् पाकमित्यादिना तालुपाकः ॥ ४०–४५ ॥

**कण्ठगतास्तु—रोहिण्यः पञ्च, कण्ठशालूकम्, अधिजिह्वो, वलयो, बलासं[5], एकवृन्दो, वृन्दः, शतघ्नी, गिलायुः, गलविद्रधिः, गलौघः, स्वरघ्नो, मांसतानो, विदारी चेति ॥ ४६ ॥**

**नि० सं०**-कण्ठगतास्त्वित्यादि । एकवृन्दो वृन्द इति एकवृन्द एव दोषविशेषानुगमेनावस्थान्तरं प्राप्तो वृन्दत्वं प्रतिपद्यते, अतो मूलोक्ता सप्तदशसंख्या न विरुध्यत इति **जेज्जटः**; गयी तु 'वृन्द' इति पाठं कल्पितमेव मन्यते; अन्ये तु 'वृन्दमुदाहरन्ति' इत्यत्र छन्दोनुरोधादेकवृन्द एव वृन्दशब्देनोक्त इत्याहुः ॥ ४६ ॥

**न्या० च०**-कण्ठगतासु रोहिण्यादयः सप्तदश । अत्र सप्तदश सूत्रिता अष्टादश निर्दिष्टा इत्यत्र पूर्वव्याख्यातारः एकवृन्दस्तुल्याकृतिस्थानत्वेन वृन्दतोऽभिन्न इत्यविरोधः; तथा हि **भोजः**—"श्लेष्मरक्तसमुत्थानमेकवृन्दं विभावयेत् । तुल्यस्थानाकृतिर्वृन्दो वृन्दजो रक्तपित्तजः" इति, तस्मान्न संख्यातिरेक इत्याहुः । तन्न, भेदो हि भेदवतां कारणभेदात्, तथा स्वधर्मभेदाच्च; तथा हि—ईषत्कण्डूपाककाठिन्यगौरवाणि कफरक्तजस्य, पित्तरक्तजस्य पुनर्दाहो ज्वरश्च; तस्मादुत्पन्नत्वेन कारणकार्ययोरभेदः; स्यादेवं हि रसादिधातूनामन्योन्यमभेदस्ततस्तत उत्पन्नत्वात्तस्य तस्य रक्तादेर्धातोः, तस्माद्वृन्दस्य सूत्रे कल्पित एव पाठः । अन्ये पुनरेकवृन्दस्यैव छन्दोनुरोधादादिपदलोपेन निर्दिष्टस्य कफस्य पित्तस्य वायोरपि शोणितानुबन्धे कृते ज्वरापादकत्वमप्यस्ति, तस्मात् सूत्रे एव कल्पितवृन्दशब्दानुप्रवेशेन दुरुक्तिवृद्धि(?)-रिति ॥ ४६ ॥

गलेऽनिलः पित्तकफौ च मूर्च्छितौ
पृथक् समस्ताश्च तथैव शोणितम् ॥
[1]प्रदूष्य मांसं गलरोधिनोऽङ्कुरान्
सृजन्ति यान् साऽसुहरा हि रोहिणी ॥४७॥
जिह्वां समन्तादृशवेदना ये
मांसाङ्कुराः कण्ठनिरोधिनः स्युः ॥
तां रोहिणीं वातकृतां वदन्ति
वातात्मकोपद्रवगाढयुक्ताम् ॥ ४८ ॥
क्षिप्रोद्गमा क्षिप्रविदाहपाका
तीव्रज्वरा पित्तनिमित्तजा स्यात् ॥
[3]स्रोतोनिरोधिन्यपि मन्दपाका
गुर्वी स्थिरा सा कफसंभवा वै ॥ ४९ ॥
गम्भीरपाकाऽप्रतिवारवीर्या
त्रिदोषलिङ्गा त्रयसंभवा स्यात् ॥
स्फोटाचिता पित्तसमानलिङ्गा-
ऽसाध्या प्रदिष्टा रुधिरात्मिकेयम् ॥ ५० ॥

**नि० सं०**-तेषां प्रत्येकं लक्षणमाह—गल इत्यादि । पृथगिति तिस्रः, समस्ता इति एका, शोणितमित्येका, एवं पञ्च । मूर्च्छितौ वृद्धौ । असुहरा प्राणहरा । 'गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदूष्य मांसं च तथैव शोणितम् । गलोपसंरोधकरै-

१ 'मेदोयुक्तः' इति पा० । २ 'शुष्यत्यत्यर्थं' इति ता. । ३ 'श्वासश्चैवोग्रस्तालुशोषोऽनिलात्तु' इति ता. । ४ 'यथोदित°' इति पा० ॥ ५ 'बलासः' इति ता. ।

१ 'प्रदूष्य मांसं च तथैव शोणितम् । गलोपसंरोधकरैस्तथाऽङ्कुरैर्हिनस्त्यसून् व्याधिरयं हि रोहिणी' इति ता. । २ 'तिस्रश्च तास्त्वादित एव कृच्छ्राः' इति ता. । ३ 'स्रोतोनिरोधिन्यचलोन्नता च स्थिराङ्कुरा या कफसंभवा सा' इति ता. ।

स्तथाऽङ्कुरैर्निहन्त्यसून् व्याधिरयं तु रोहिणी' इत्यपि पाठान्तरमिच्छन्ति निबन्धकाराः । त्रिदोषजा रक्तजा चासाध्या । उक्तं च,—"वातात् पित्तात् कफात्त्रिभ्यो रक्ताद्रोहिण्य ईरिताः । अन्त्ये सद्यो मारयत आद्यास्तिस्रः क्रियां विना—" इति । जिह्वामित्यादि । जिह्वां समन्तादिति जिह्वां व्याप्य संभवतीत्यर्थः । अप्रतिवारवीर्या दुर्निवारशक्तिरित्यर्थः ॥ ४७—५० ॥

न्या० च०-तत्र पञ्चानां रोहिणीनां सामान्यसंप्राप्तिं निर्दिशन्नाह—गलेऽनिलः पित्तकफौ च मूर्च्छिताविल्यादि । अत्र सामान्येन सर्वासामेवासाध्यत्वमुक्तं; तत्र वातादिदोषजाया अनुपक्रमेणासाध्यत्वम्, एवं शोणितजाया अपि, सन्निपातजायाः पुनरुत्पत्तावेवासाध्यत्वं, पित्तरक्तजन्ययोः पुनरुपक्रमसामान्यत्वं; तथा हि भोजः—"वातपित्तकफा रक्तमेकशः सर्वशोऽपि वा । निविशन्ति यदा कण्ठे प्रदुष्टा मूर्धनि गताः ॥ अङ्कुराञ्जनयन्त्याशु जिह्वामूले समन्ततः । रोहिणीं तां विजानीयादाहुः पञ्चविधां तु ताम् ॥ तालुः शुष्यति कण्ठश्च वातेनायम्यते यदा । कण्ठेऽस्यान्नं प्रसज्येत सस्ताहाच्च जहात्यसून् ॥ तप्यते चूष्यते पित्ताद्धूम्यते परिदह्यते । अङ्गारैरिव सा जह्यात् प्राणानाशु चतुर्दिनात् ॥ कफादन्तर्बहिः शोथः श्वासः कण्ठश्च बाध्यते । यस्य सोऽसून् त्यजेद्रोगी त्र्यहाद्रोहिणिपीडितः । लक्षणं पित्तरोहिण्यास्तुल्यं शोणितजन्मनः । रोहिणी कृष्णरक्ताभैर्युक्ता स्फोटैर्विशेषतः ॥ सर्वदोषकृता या तु सर्वलिङ्गसमन्विता । असाध्यां तां विजानीयाद्रोहिणीं सन्निपाततः ॥ एषा सद्यो मारयति तिस्र आद्याः क्रियां विना" इति ॥ ४७-५० ॥

कोलास्थिमात्रः कफसंभवो यो
　ग्रन्थिर्गले कण्टकशूकभूतः ॥
खरः स्थिरः शस्त्रनिपातसाध्य-
　स्तं कण्ठशालूकमिति ब्रुवन्ति ॥ ५१ ॥

नि० सं०-कोलेत्यादि । कण्टकशूकभूतः कण्टक इव शूकः कण्टकशूकः, तद्वत्त्वं भूतः प्राप्तः । अत एव पिशिताङ्कुराचितत्वाच्छालूकाकारत्वमस्य ॥ ५१ ॥

न्या० च०-कोलास्थिमात्र इत्यादिना कण्ठशालूकः । कण्टक इव शूकः कण्टकशूकः । भूतः प्राप्तः । भू आत्मनेपदी इत्यस्मादयं प्रयोगः । अत एव पिशिताङ्कुराचितत्वाच्छालूकसादृश्याच्छालूकम् । शालूकमुत्पलकन्दः ॥ ५१ ॥

जिह्वाग्ररूपः श्वयथुः कफात्तु
　जिह्वाप्रबन्धोपरि रक्तमिश्रात् ॥
ज्ञेयोऽधिजिह्वः खलु रोग एष
　विवर्जयेदागतपाकमेनम् ॥ ५२ ॥

नि० सं०-जिह्वेत्यादि । जिह्वाप्रबन्धस्योपरि जिह्वामूलस्योपरिष्टादित्यर्थः । आगतपाकत्वेन पित्तमप्यत्रास्ति ॥ ५२ ॥

१ 'जिह्वोपरिष्टादपि' इति ता. ।

न्या० च०-जिह्वाग्ररूप इत्यादिना अधिजिह्वा । इयं जिह्वामूलस्योपरिष्टात्, उपजिह्वा तु अधस्ताज्जिह्वायाः, जिह्वामुन्नम्य जात इति वचनात् । आगतपाकित्वेन पित्तमप्यत्रास्ति ॥ ५२ ॥

बलास एवायतमुन्नतं च
　शोफं करोत्यन्नगतिं निवार्य ।
तं सर्वथैवाप्रतिवारवीर्यं
　विवर्जनीयं वलयं वदन्ति ॥ ५३ ॥

नि० सं०-बलास इत्यादि । बलासः श्लेष्मा ॥ ५३ ॥

न्या० च०-बलास एवेत्यादिना वलयः । अन्नगतिं निवार्येति अन्नस्य गतिर्येन स्रोतसा सोऽन्नगतिः अन्नवहस्रोतः । अयं तु स्थानप्रभावादात्मप्रभावाद्वाऽसाध्यः ॥ ५३ ॥

गले तु शोफं कुरुतः प्रवृद्धौ
　श्लेष्मानिलौ श्वासरुजोपपन्नम् ॥
मर्मच्छिदं दुस्तरमेतदाहु-
　र्बलाससंज्ञं निपुणा विकारम् ॥ ५४ ॥

नि० सं०-गल इत्यादि । उपपन्नं सहितम् । निपुणा धीमन्तः ॥ ५४ ॥

न्या० च०-गले तु शोफ इत्यादिना बलासः ॥ ५४ ॥

वृत्तोन्नतो यः श्वयथुः सदाहः
　कण्ड्वन्वितोऽपाक्यमृदुर्गुरुश्च ॥
नाम्नैकवृन्दः परिकीर्तितोऽसौ
　व्याधिर्बलासक्षतजप्रसूतः ॥ ५५ ॥
समुन्नतं वृत्तममन्ददाहं
　तीव्रज्वरं वृन्दमुदाहरन्ति ॥
तं चापि पित्तक्षतजप्रकोपा-
　द्विद्यात् सतोदं पवनास्रजं तु ॥ ५६ ॥

नि० सं०-वृत्तोन्नत इत्यादि । सदाहो मन्ददाहः । अपाकी ईषत्पाकी । बलासक्षतजप्रसूतः श्लेष्मरक्तजातः । भेदेन वृन्दत्वं प्रतिपाद्यते । एतेन एकवृन्दो वृन्दश्च द्वावप्येकात्मकौ मतौ । एवं चैते कण्ठरोगाः सप्तदशेति । पञ्जिकायां पुनरादावेव 'एकवृन्द' इति पाठः ॥ ५५ ५६ ॥

न्या० च०-वृत्तोन्नत इत्यादिना एकवृन्दः । सदाह इति सशब्दस्योपसर्जनात्वर्थेन मन्ददाहः । अपाकीति इषत्पाकी । समुन्नतमित्यादिनाऽप्येकवृन्द एव रक्तपित्ततः । समुन्नतः सम्यगुन्नतो ज्ञेयः । सतोदमित्यादिना एकवृन्दं सवातशोणितजं; पवनास्रजमिति वातजशोणितजम् ॥ ५५॥५६ ॥

वर्तिर्घना कण्ठनिरोधिनी या
　चिताऽतिमात्रं पिशितप्ररोहैः ॥

१ '०र्बलाससंज्ञं' इति ता. । २ 'पवनात्मकं' इति पा० ।

नानारुजोच्छ्रायकरी त्रिदोषा-
ज्ज्ञेया शतघ्नीव शतघ्न्यसाध्या ॥ ५७ ॥

निo संo-वर्तिरित्यादि । "अयःकण्टकसंच्छन्ना शतघ्नी महती शिला" ॥ ५७ ॥

न्याo चo-वर्तिर्घनेत्यादिना शतघ्नी । अनेकरुगिति वातादिकृततोददाहकण्ड्वादिवेदना । शतघ्नीव शतघ्नीरूपा । "अयः कण्टकसंछन्ना शतघ्नी महती शिला" इति । अत्र भोजः—"वातपित्तकफा दुष्टा कुर्युर्मांसाङ्कुराचिताम् । मध्येकण्ठमथो वर्तिं जनयन्ति ह्युपेक्षिताः ॥ शङ्कुनेव गले नद्धा शतघ्न्येषा न सिध्यति" इति ॥ ५७ ॥

ग्रन्थिर्गले त्वामलकास्थिमात्रः
स्थिरोऽल्परुक् स्यात् कफरक्तमूर्तिः ॥
संलक्ष्यते सक्तमिवाशनं च
स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥ ५८ ॥

निo संo-ग्रन्थिरित्यादि । कफरक्तमूर्तिः कफरक्तकारणः । सक्तमिव लग्नमिव । अशनं भोजनम् ॥ ५८ ॥

न्याo च-ग्रन्थिर्गल इत्यादिना गिलायुः ॥ ५८ ॥

सर्वं गलं व्याप्य समुत्थितो यः
शोफो रुजो यत्र च सन्ति सर्वाः ॥
स सर्वदोषो गलविद्रधिस्तु
तस्यैव तुल्यः खलु सर्वजस्य ॥ ५९ ॥

निo संo-सर्वमित्यादि । तस्यैव तुल्यः खलु सर्वजस्येति तस्यैव साम्निपातिकविद्रधेः सदृश इत्यर्थः ॥ ५९ ॥

न्याo चo-सर्वं गलं व्याप्येत्यादिना गलविद्रधिः । स्थानप्रभावेण सान्निपातिक एव । तस्यैव सान्निपातिक-विद्रधेरयं सदृशः ॥ ५९ ॥

शोफो महानन्नजलावरोधी
तीव्रज्वरो वातगतेर्निहन्ता ॥
कफेन जातो रुधिरान्वितेन
गले गलौघः परिकीर्त्यतेऽसौ ॥ ६० ॥
योऽतिप्रताम्यन् श्वसिति प्रसक्तं
भिन्नस्वरः शुष्कविमुक्तकण्ठः ॥
कफोपदिग्धेष्वनिलायनेषु
ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥ ६१ ॥

निo संo-शोफ इत्यादि । अतिप्रताम्यन् अत्यर्थं प्रकर्षेण ताम्यन् तमः प्रपश्यन् । श्वसिति निःश्वसितीत्यर्थः । प्रसक्तं निरन्तरम् । कफोपदिग्धेषु श्लेष्मरुद्धेषु । अनिलायनेषु वायुमार्गेषु । श्वसनात् वातात् ॥ ६० ॥ ६१ ॥

न्याo चo-शोथो महानित्यादिना गलौघः। योऽतिप्रताम्यन्नित्यादिना स्वरघ्नः । अतिप्रताम्यन्निति अत्यर्थं प्रकर्षेण ताम्यन् तमः प्रविशन् । श्वसिति निःश्वसिति । कफेन तु वायुमार्गेषु रुद्धेषु सत्सु प्रसक्तं निरन्तरं श्वसनं वातात् ॥ ६० ॥ ६१ ॥

प्रतानवान् यः श्वयथुः सुकष्टो
गलोपरोधं कुरुते क्रमेण ॥
स मांसतानः कथितोऽवलम्बी
प्राणप्रणुत् सर्वकृतो विकारः ॥ ६२ ॥

निo संo-प्रतानवानित्यादि । प्रतानवान् विस्तारवान् । अवलम्बी लम्बनशीलः । प्राणनुत् प्राणप्रेरकः ॥ ६२ ॥

न्याo चo-प्रतानवानित्यादिना मांसतानः ॥ ६२ ॥

सदाहतोदं श्वयथुं सरक्त-
मन्तर्गले पूतिविशीर्णमांसम् ॥
पित्तेन विद्याद्वदने विदारीं
पार्श्वे विशेषात् स तु येन शेते ॥ ६३ ॥

निo संo-सदाहेत्यादि । पूतिविशीर्णमांसं दुर्गन्धिशटित-मांसम् । पार्श्वे विशेषात् स तु येन शेते इति येनैव पार्श्वेन विशेषाच्छेते तेनैव पार्श्वेन विदारी विशेषेण भवति । अन्यत्रा-प्यस्याः संभवना सामान्यतो न निवार्यते ॥ ६३ ॥

न्याo चo-सदाहतोद इत्यादिना विदारी । येनैव पार्श्वेन विशेषाच्छेते तेनैव पार्श्वेन विदारी विशेषेण भवति । अन्यत्राप्यस्याः संभवः सामान्यतो न निवार्यते। तोद-दाहप्रपाकप्रचुरो विदारीदाहः; प्रपाकत्वेन गलविदारणा-द्विदारी ॥ ६३ ॥

सर्वसरास्तु वातपित्तकफशोणितनिमित्ताः ॥ ६४ ॥

निo संo-सर्वसरास्त्वित्यादि । पित्तनिमित्तो रक्तनिमि-त्तश्चैक एवेति वातादिनिमित्तास्त्रय एव सर्वसराः । सर्वस्मिन् मुखे ये भवन्ति ते सर्वसराः ॥ ६४ ॥

स्फोटैः सतोदैर्वदनं समन्ता-
द्यस्याचितं सर्वसरः स वातात् ॥
रक्तैः सदाहैस्तनुभिः सपीतै-
र्यस्याचितं चापि स पित्तकोपात् ॥ ६५ ॥
कण्डूयुतैरल्परुजैः सवर्णै-
र्यस्याचितं चापि स वै कफेन ॥
रक्तेन पित्तोदित एक एव
कैश्चित् प्रदिष्टो मुखपाकसंज्ञः ॥ ६६ ॥

इति सुश्रुतसंहितायां निदानस्थाने मुखरोग-
निदानं नाम षोडशोऽध्यायः ॥ १६ ॥

१ 'अनेकरुक् प्राणहरी त्रिरात्राज्ज्ञेया शतघ्नी तु शतघ्निरूपा' इति ता.। २ 'कफपित्तमूर्तिः। यो लक्ष्यते रक्तमिवास्यवक्त्रं' इति ता.।

१ 'अवेदनैः कण्डुयुतैः सदाहैः' इति ता. । २ अस्याग्रे ताडपत्रपुस्तके 'सूत्रे प्रदिष्टं दश षट् च पूर्वं स्थानं निदानं भवतीति यच्च । सविस्तरं तत्कथितं मयेह स्वयंभुना यत् कथितं हिताय' इत्यधिकः श्लोक उपलभ्यते ।

**नि० सं०**-स्फोटैरित्यादि । रक्तैः 'स्फोटैः' इति शेषः । कण्डूयुतैरित्यादि 'स्फोटैः' इति शेषः । रक्तेनेत्यादि रक्तेन कृत्वा योऽसौ सर्वसरः कैश्चिदाचार्यैः मुखपाकसंज्ञः प्रदिष्टः कथितः, स च पित्तोदित एक एव; न चत्वारः सर्वसराः, किन्तु त्रय एव । एवमेते पञ्चषष्टिर्मुखरोगाः सप्तस्वायतनेष्विति ॥ ६५ ॥ ६६ ॥

निबन्धान् बहुशो वीक्ष्य वैद्येशभरतात्मजः ।
निदानस्थानमकरोत् सुस्पष्टं डल्ह(ह्ल)णो भिषक् ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां समस्तनिबन्धार्थज्ञापिकायां सुश्रुतटीकायां निदानस्थाने षोडशोऽध्यायः ॥ १६ ॥

**न्या० च०**-सर्वसरास्त्रयस्त्रिभिर्वातादिभिः । स्फोटैः सतोदैरित्यादिना वातसर्वसरः । रक्तैः सदाहैरित्यादिना पित्तसर्वसरः । अवेदनैरित्यादिना कफसर्वसरः । शेषाणां तु रोगाणां नयनघ्राणकर्णशिरोगतानां कुमारजानां च तथा ज्वरातिसारशोफादीनामपि शालाक्यादितन्त्रेषु यथा यथा हेतुनिर्देशः करणीय इति । भवति चात्र—दोषे व्यापि(धौ) क्वचिदपि गते तद्विपक्षाऽपि किंचिद्यत्र प्राकर्म (?) विहितं कारकं ज्ञापकं च । कार्ये मेये द्वितयमिदनुव्यासनिर्दिष्टमेवं स्थानान्यन्यान्यपि विवृतयः सूत्रितस्यैव सूत्रे" ॥

इति श्रीसौश्रुते शल्यतन्त्रे श्रीगयदासकृतायां न्यायचन्द्रिकायां पञ्जिकायां मुखरोगनिदानम् ॥

**इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां द्वितीयं निदानस्थानम् ॥२॥**

१ 'एतेन पञ्चषष्टिर्मुखरोगा न सप्तषष्टिरिति' इति पा० ।



निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता ।

## अथ शारीरस्थानम् ।

### प्रथमोऽध्यायः ।

**अथातः सर्वभूतचिन्ताशारीरं व्याख्यास्यामः ॥ १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

हेतुलक्षणप्रतिपादकान्निदानस्थानादधिगतव्याधिहेतुलक्षणस्य वैद्यस्य चिकित्साया अवसरः, चिकित्सा चाधिष्ठानविशेषज्ञानमन्तरेण न संभवतीत्यधिष्ठानज्ञापनाय[1] शारीरस्थानमारभ्यते । शारीरस्थानेऽपि प्रतिपाद्ये आदौ सर्वशरीरकारणानां भूतानामेव चिन्ता कर्तुं युज्यत इत्याह—अथात इत्यादि । सर्वाणि भूतानि स्थावरजङ्गमानि, महाभूतानि पृथिव्यादीनि वा; तेषां चिन्ता हेतुस्वलक्षणकार्यैश्चिन्तनं; कुत उत्पन्नानि ? कानि चैषां स्वलक्षणानि ? कानि कार्याणीति चिन्तनं; सैव यस्मिन्नध्यायेऽस्तीति मत्वर्थे पूर्ववच्छप्रत्ययमुत्पाद्य तल्लोपे प्रकृतिभावं च प्रतिपाद्य सर्वभूतचिन्तेति निष्पाद्यते, सर्वभूतचिन्ता च तच्छारीरं चेति पश्चात् कर्मधारयः । **गयी** तु 'सर्वभूतचिन्तानाम शारीरं' इति पठति ॥ १ ॥ २ ॥

**सर्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य[2] जगतः संभवहेतुरव्यक्तं नाम । तदेकं बहूनां[3] क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम् ॥ ३ ॥**

तत्रादौ हेतुचिन्तामाह—सर्वभूतानामित्यादि । एवंभूतमव्यक्तं मूलप्रकृत्यपरपर्यायं सर्वभूतानां कारणमिति पिण्डार्थः । किंविशिष्टम् ? अकारणं; न विद्यते कारणं यस्य तदकारणम्, अविकृतिरूपं न कस्यचित् कार्यमित्यर्थः । स्वरूपविशेषणमाह—सत्त्वरजस्तमोलक्षणं; सत्त्वरजस्तमःस्वरूपम् । पुनरपि किंभूतमित्याह—अष्टरूपमिति । प्रकृतिभावेनैवाव्यक्तं महानहङ्कारः पञ्चतन्मात्राणीत्यष्टौ रूपाणि यस्य तत्तथा; प्रकृतित्वं चाष्टानामव्यक्तादीनां सांख्येऽपि प्रतिपादितमस्ति । शिलापुत्रकन्यायेन रूपत्वं रूपित्वं चाव्यक्तस्य । अव्यक्तं महानहङ्कारः पञ्चभूतानीत्यष्टौ रूपाणीत्येके; अन्ये तु धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याण्यष्टौ रूपाण्याहुः; अपरे तु मनोबुद्ध्यहङ्कारमहाभूतान्याहुः । पुनरपि किंभूतम् ? अखिलस्य जगतः संभवहेतुः अभिव्यक्तिकारणम् । तत्र सर्वभूतानां कारणमित्यनेन कार्यकारणयोस्तादात्म्यं दर्शितम्, अखिलस्य जगतः संभवहेतुरित्यनेन चाभिव्यक्तिहेतुत्वमिति न पौनरुक्त्यम् । **गयी** त्वन्यथा व्याख्याति, यथा-सर्वभूतानां कारणमित्यस्यैव भाष्यं निर्दिशन्नाह—अखिलस्य जगतः संभवहेतुरिति; अनेनोपादानकारणत्वमव्यक्तस्य जगदुत्पत्तौ प्रतिपादितम् । न व्यज्यते इत्यव्यक्तं; प्रकृतिः प्रधानं मूलप्रकृतिरिति यावदव्यक्तपर्यायाः । तत् अव्यक्तम्; एकं शिलापट्टवदविवेच्यावयवं, न पुनस्त्रिदण्डवद्विवेच्यावयवम् । क्षेत्रज्ञानां कर्मपुरुषाणाम् । अधिष्ठानं शरीरभावाय विषयः । अत्रोपमानमाह—समुद्र इवेत्यादि । उदकभवा औदका नदीनदसरस्तडागादयः; अन्ये त्वौदका भावाश्चराचरा मत्स्यपद्मादय इत्याहुः ॥ ३ ॥

**तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव । तल्लिङ्गाच्च महतस्तल्लक्षण एवाहङ्कार उत्पद्यते; स[1] त्रिविधो वैकारिकस्तैजसो भूतादिरिति । तत्र वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते, तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति; तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि, इतराणि पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः; भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते—शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति; तेषां विशेषाः-शब्दस्पर्शरूपरसगन्धाः; तेभ्यो भूतानि-व्योमानिलानलजलोर्व्यः; एवमेषा तत्त्वचतुर्विंशतिर्व्याख्याता ॥ ४ ॥**

ननु कथमेकमव्यक्तमनेकधर्मिणां[2] सर्वभूतानां कारणमित्याशङ्क्याव्यक्तात् सर्वभूतानामुत्पत्तिक्रममाह—तस्मादित्यादि । तस्मादिति क्षेत्रज्ञाधिष्ठितादव्यक्तात् । महानिति बुद्धितत्त्वं, तत्तु सत्त्वसमुद्रेकान्निर्मलस्फटिकोपलप्रख्यं चिच्छायासंक्रान्तिप्राप्तचैतन्यं[3] पुरुषवज्ज्ञानात्मकमध्यवसेयविषयं निश्चितार्थकारणमित्यर्थः । उत्पद्यते व्यक्तीभवति । तल्लिङ्ग एवेति सत्त्वरजस्तमःस्वभाव एव । तल्लिङ्गात् सत्त्वरजस्तमःस्वभावात् । महत इति बुद्धितत्त्वात् । तल्लक्षण एवेति सत्त्वरजस्तमःस्वभाव एवेत्यर्थः ।

---

१ '°धिष्ठानज्ञानाय शारीरस्थानं प्रतिपाद्यते' इति पा० । २ 'अखिलस्यास्य' इति ता. । ३ 'अनेकेषां' इति पा० ।

१ 'स तु' इति पा० । २ 'कथमेकमेवानेकधर्मिणां' इति पा० । ३ 'आत्मच्छायासंक्रान्तिप्राप्तचैतन्यं' इति पा० ।

अहङ्कारोऽभिमानव्यापारलक्षणः । तल्लिङ्गादिति विशेषणेन शुद्धसत्त्वस्वरूपान्महत्तत्त्वान्नाहङ्कारस्योत्पत्तिरिति सूच्यते । तथा च **चरके**ऽप्यभिहितं—"शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्तते । यया भिनत्त्यतिबलं महामोहमयं तमः ॥ सर्वभावस्वभावज्ञो यया भवति निस्पृहः । यया नोपैत्यहङ्कारं नोपास्ते कारणं यया—" ( च. शा. अ. १ ) इत्यादि । वैकारिकादिसंज्ञास्तु पूर्वाचार्यैः संव्यवहाराय कृताः । तत्र वैकारिकः सात्त्विकः, तैजसो राजसः, भूतादिस्तामसः । तस्य त्रिविधस्यापि कार्यमाह—तत्रेत्यादि । तत्र सात्त्विकादहङ्काराद्राजससहायात्तमोमात्रयाऽनुविद्धादेकादशेन्द्रियाणि; तल्लक्षणानि प्रकाशलक्षणानि, सत्त्वस्य प्रकाशकत्वात् । तान्यहङ्कारादुत्पन्नान्याहङ्कारकारिकाणीति सांख्ये, वैद्यके तु भौतिकानि । पूर्वाणि पञ्च श्रोत्रादीनि बुद्धीन्द्रियाणि, बुद्धेराश्रयत्वात्; इतराणि वाक्प्रभृतीनि कर्मेन्द्रियाणि, कर्मण आश्रयत्वात्तेषाम्; उभयात्मकं बुद्ध्यात्मकं कर्मात्मकं च मनः, बुद्धीन्द्रियाणां कर्मेन्द्रियाणां च मनोऽधिष्ठितानामेव प्रवृत्तेः । भूतादेरिति तामसादहङ्काराद्राजससहायात् सत्त्वमात्रयाऽनुविद्धात् । तल्लक्षणान्येव मोहादिलक्षणान्येव । तत्रानुद्भूतस्वभावानि बाह्येन्द्रियाग्राह्याणि शब्दादीन्येव तन्मात्राणि, तानि च योगिभिरेव ग्राह्याणि । सा मात्रा यस्मिन् तत्तन्मात्रम् । तेषामित्यादि तेषां तन्मात्राणाम् । विशेषा इति अनुभवयोग्यैः सुखदुःखमोहरूपैर्धर्मैर्विशिष्यन्त इति विशेषाः शब्दादयः; तन्मात्राणि त्वविशेषाणि, यतस्तान्यनुभवयोग्यैः सुखदुःखादिभिर्विशेष्टुं न शक्यन्ते, सूक्ष्मत्वात् । तेभ्यः पञ्चभ्यः शब्दतन्मात्रादिभ्य एकोत्तरपरिवृद्ध्या व्योमादय उत्पद्यन्ते । तद्यथा—शब्दतन्मात्राच्छब्दगुणं व्योम, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राच्छब्दस्पर्शगुणो वायुः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्राच्छब्दस्पर्शरूपगुणं तेजः, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्राच्छब्दस्पर्शरूपरसगुणा आपः, शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी । पतञ्जलिमतानुसारिणश्च शब्दादिभ्य एव व्योमादीनामुत्पत्तिमिच्छन्ति । शब्दादीनां व्योमादिमहाभूतगुणानां धर्मिणोऽभिन्नत्वेन पृथक्त्वं निरस्यन्नुक्तस्योपसंहारमाह—एवमित्यादि ॥ ४ ॥

**तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः; कर्मेन्द्रियाणां यथासङ्ख्यं वचनादानानन्दविसर्गविहरणानि ॥ ५ ॥**

तत्रेत्यादि । विषया ग्राह्याः । वचनादानानन्दविसर्गविहरणानीत्यत्र विषया इति संबध्यते; तेनोच्यते यत्तद्वचनं वक्तव्यमुच्यते, एवं कर्मप्रत्ययान्तत्वादादानमादातव्यम्, आनन्द आनन्दनीयं, विसर्गो विसर्जितव्यं, विहरणं विहर्तव्यं स्थानम् ॥५॥

**अव्यक्तं महानहङ्कारः पञ्चतन्मात्राणि चेत्यष्टौ प्रकृतयः; शेषाः षोडश विकाराः ॥ ६ ॥**

उक्तायास्तत्त्वचतुर्विंशतेरुक्तमेव धर्मान्तरं क्वचित् किंचिन्निदर्शयन्नाह—अव्यक्तमित्यादि । प्रकृतय इति अपरेषां कारणभूताः; अव्यक्तमिति विच्छिद्य पाठः केवलहेतुभावेनाव्यक्तं प्रकृतिरेवेति बोधनार्थम् । तन्मात्राणि चेति चकारः प्रकृतयश्चेत्यत्र संबन्धनीयः । तेन महदादयः सप्त कार्यत्वेन विकृतयोऽपि । शेषा इति एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोडश विकाराः कार्याणीत्यर्थः ॥ ६ ॥

**स्वः स्वश्चैषां विषयोऽधिभूतं; स्वयमध्यात्मम्; अधिदैवतम्—अथ बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः, मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्यश्चक्षुषः, रसनस्यापः, पृथिवी घ्राणस्य, वाचोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रः, प्रजापतिरुपस्थस्येति ॥ ७ ॥**

अस्मिंश्चतुर्विंशतिके तत्त्वराशौ प्रकाशकत्वेन बुद्ध्यादयः प्रधानभूताः, अतस्ते यत्रस्थं प्रकाश्यं यत्र स्थिता यदनुग्रहेण च प्रकाशयन्ति, तत्प्रकारत्रयमधिभूतादिभेदेनाह—स्वः स्व इत्यादि । एषां बुद्ध्यहङ्कारश्रोत्रादिबुद्धीन्द्रियाणां वागादिकर्मेन्द्रियाणां मनसश्च स्वः स्व आत्मीय आत्मीयो विषयोऽध्यवसेयोऽभिमन्तव्यः स्वकल्पनीयादिलक्षणोऽधिभूतम्; अधिभूतं भूतेष्वधि; भूतानि महाभूतानि प्राणिनो वा । एतेन बुद्ध्यादेरध्यवसायादिव्यापारसाध्योऽध्यवसेयादिविषयो भूतेष्विति प्रतिपादितम् । केचित् 'स्वः स्व एषां विषयोऽधिभूतसंज्ञ' इति व्याख्यानयन्ति । स्वयमित्यादि एतानि बुद्ध्यादीनि त्रयोदश स्वयमध्यात्मम् । आत्मन्यधि अध्यात्मम्; आत्मशब्दोऽत्र स्वशरीरवचनः, तेन स्वशरीरे बुद्ध्यादिकमात्मनः परमात्मपर्यायस्य वा योग्यो विषयोऽध्यात्मम् । अन्ये तु बुद्ध्यादिकं स्वयमध्यात्मसंज्ञमिति व्याख्यानयन्ति । अधिदैवतमिति देवतानामधिकृतत्वमधिदैवतम् । तदेव बुद्ध्यादिषु प्रकटीकरोति—अथ बुद्धेर्ब्रह्मेत्यादि । या या देवता विश्वरूपस्य विष्णोरवयवादुत्पन्ना सा सा तस्यावयवस्याधिदैवत्वमापन्ना बोद्धव्या । अयं चाधिभूतादिभावो वेदान्तेऽपि वर्णितः । यथा—बुद्धिरध्यात्मं, बोद्धव्यमधिभूतं, ब्रह्माऽधिदैवतम्; अहङ्कारोऽध्यात्मम्, अहङ्कर्तव्यमधिभूतं, रुद्रोऽधिदैवतं; मनोऽध्यात्मं, मन्तव्यमधिभूतं, चन्द्रोऽधिदैवतं; श्रोत्रमध्यात्मं, श्रोतव्यमधिभूतं, दिशोऽधिदैवतं; त्वगध्यात्मं, स्पर्शनीयमधिभूतं, वायुरधिदैवतं; चक्षुरध्यात्मं, दृश्यमधिभूतं, सूर्योऽधिदैवतं; रसनाऽध्यात्मं, रसनीयमधिभूतं, वरुणोऽधिदैवतं; घ्राणमध्यात्मं, घ्रातव्यमधिभूतं, भूमिरधिदैवतं; वागध्यात्मं, वक्तव्यमधिभूतम्, अग्निरधिदैवतं; हस्तावध्यात्मम्, आदातव्यमधिभूतम्, इन्द्रोऽधिदैवतं; पादावध्यात्मं, गन्तव्यमधिभूतं, विष्णुरधिदैवतं; पायुरध्यात्मं, विसर्जनीयमधिभूतं, मित्रोऽधिदैवतं; उपस्थोऽध्यात्मम्, आनन्दनीयमधिभूतं, प्रजापतिरधिदैवतमित्यादि ॥ ७ ॥

---

१ 'पाठात्' इति पा० । २ 'कार्यमित्यर्थः' इति पा० । ३ 'वचसोऽग्निः' इति पा० । ४ '°व्यापारस्याध्यवसेयादिविषयः' इति पा० ।

**तत्र सर्व एवाचेतन एष वर्गः, पुरुषः पञ्चविंशतितमः कार्यकारणसंयुक्तश्चेतयिता भवति। सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ति, क्षीरादींश्चात्र हेतूनुदाहरन्ति ॥ ८ ॥**

तत्र सर्व एवेत्यादि । सर्व एवैष वर्गोऽव्यक्तादिकोऽचेतनः, कारणस्याव्यक्तस्याचेतनत्वेन तत्कार्यस्य महदादेरप्यचेतनत्वात् । पुरुषः पञ्चविंशतितमः कार्यकारणसंयुक्त इति कार्येण महदादिविकारगणेन, कारणेन मूलप्रकृत्या, संयुक्तः संयोगी । तस्य कैवल्यार्थं( र्थां ) मोक्षार्थं( र्थां ), प्रधानस्य मूलप्रकृतेः, प्रवृत्तिमुपदिशन्त्याचार्याः । कथमचेतनः प्रवर्तत इत्याह—क्षीरादीनित्यादि । यथा क्षीरमज्ञं वत्सविवृद्ध्यर्थं प्रवर्तते । आदिशब्दाच्च यथैकान्ते कमनीयकामिनीसुरतमहोत्सवे तत्सुखातिशयोत्पादनार्थमज्ञं रेतः प्रवर्तते, तद्वदित्यर्थः ॥ ८ ॥

**अत ऊर्ध्वं प्रकृतिपुरुषयोः साधर्म्यवैधर्म्ये व्याख्यास्यामः । तद्यथा—उभावप्यनादी, उभावप्यनन्तौ, उभावप्यलिङ्गौ, उभावपि नित्यौ, उभावप्यनपरौ, उभौ च सर्वगताविति; एका तु प्रकृतिरचेतना त्रिगुणा बीजधर्मिणी प्रसवधर्मिण्यमध्यस्थधर्मिणी चेति, बहवस्तु पुरुषाश्चेतनावन्तोऽगुणा अबीजधर्माणोऽप्रसवधर्माणो मध्यस्थधर्माणश्चेति ॥ ९ ॥**

अत इत्यादि । प्रकृतिरव्यक्तं, पुरुष आत्मा । साधर्म्यं समानो धर्मः, वैधर्म्यं विसदृशो धर्मः, ते व्याख्यास्यामः कथयिष्यामः । उभावप्यलिङ्गाविति न विद्यते लिङ्गं ययोस्तावलिङ्गौ । नित्याविति उभावपि लयं क्वचिदपि न गच्छत इत्यर्थः । न विद्यतेऽपरो याभ्यां तावनपरौ, यतस्तावेव प्रकृतिपुरुषौ महदादिभ्यः परौ । सर्वगतौ सर्वं व्याप्य स्थितौ । साधर्म्यमुक्त्वा वैधर्म्यमाह—एकेत्यादि । तयोर्मध्ये एका प्रकृतिरव्यक्तापरपर्याया । सा च त्रिगुणा सत्त्वरजस्तमोगुणा । सत्त्वरजस्तमसां गुणानां साम्यावस्थायां स्थिता सर्वेषां महदादिविकाराणां बीजभावेनावस्थिता बीजधर्मिणीत्युच्यते; **गयी** तु संहारे भूतेन्द्रियतन्मात्राहङ्कारमहदादीनामाधारभूतेति बीजधर्मिणी । सैव सिसृक्षुणा विभुना पुरुषेण सार्धं क्षोभमागम्य साम्यावस्थातः प्रच्युता महदहङ्कारादिक्रमेण चराचरस्य जगतः प्रसवित्रीति प्रसवधर्मिणीत्युच्यते । अमध्यस्थधर्मिणीति सत्त्वादिगुणराशितया सुखादिरूपत्वात्, सुखी हि सुखमभिलिप्सन् दुःखी दुःखं विद्विषन् अमध्यस्थो भवति; प्रकृतिश्च सत्त्वादिरूपा, ततोऽमध्यस्था । बहव इति युगपन्मरणासंभवादनेके पुरुषाः, 'पुर्'शब्देन महदादिकृतं सूक्ष्मं लिङ्गशरीरमुच्यते, तच्च योगिनामेव दृश्यं, तत्र पुरि शेते इति पुरुषः । अगुणा इति अविद्यमानसत्त्वादिगुणाः । अबीजधर्माण इति महदादीनां महाप्रलये प्रकृताविव तेष्वनवस्थानात् । मध्यस्थधर्माण इति प्रीत्यप्रीतिविषादायोगेनेच्छाद्वेषशून्यत्वात् । तदुक्तं साङ्ख्ये—"तस्मात्तु विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य । कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च"–( सां. का. ९ ) इति ॥९॥—

**तत्र कारणानुरूपं कार्यमिति कृत्वा सर्व एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ति; तदञ्जनत्वात्तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्तीत्येके भाषन्ते ॥ १० ॥**

इदानीमुक्तमेव तदुपसंहरन्नाह—तत्रेत्यादि । कारणस्य प्रकृतेरनुरूपं सदृशं कार्यं महदादिकम् । विशेषाः प्रकारा महदादिकाः । संयुक्तस्य पञ्चविंशतितमस्य पुरुषस्यापि सत्त्वादिगुणत्वं दर्शयन्नाह—तदञ्जनत्वादित्यादि । तेषां सत्त्वरजस्तमसामञ्जनं लक्षणं व्यक्तिर्वा येषु ते तदञ्जनाः पुरुषाः; सत्त्वादिलक्षणा इत्यर्थः, तेषां भावस्तत्त्वं, तस्मात् । तदेव कुत इत्याह—तन्मयत्वादिति ।—सत्त्वादिमयत्वात् । सत्त्वादिमयत्वं पुनः पुरुषाणां सत्त्वादिरूपे महदादौ प्रतिबिम्बनात्; यथा—तडागोदके प्रतिबिम्बितो विधुस्तडागोदकप्रकम्पनेन प्रकम्पात्मकः कथ्यते, एवं सत्त्वादिरूपे महदादौ प्रतिबिम्बिताः पुरुषाः सत्त्वादिमया इव भवन्ति, न तु वास्तवं सत्त्वादिमयत्वं; तादृशाच्च तन्मयत्वात्तल्लक्षणत्वेन तद्गुणाः सुखिनो दुःखिनो मूढाश्च पुरुषा भवन्ति । **गयी** तु तैः सत्त्वादिभिरञ्जनं व्यक्तिर्यस्य महदादेस्तत्तदञ्जनं, तदस्यास्तीति मत्वर्थीयोऽकारप्रत्यय इति; तत्संबन्धात् पुरुषस्य सत्त्वादिभिरेवाञ्जनं महदादीनां; कुत इत्याह—तन्मयत्वात्; सत्त्वादिप्रकृतिकारणत्वात् । तेषां तदञ्जनत्वं च निर्विकारस्यापि विकारिवस्तुसंयोगात्; यथा सन्ध्यारागिरविकरनिकरसंयोगादरुणगगनतलोपलम्भ इति । पूर्वोक्तस्य सर्वस्याप्येकीयमतत्वं दर्शयन्नाह—इत्येके इत्यादि ॥ १० ॥

**वैद्यके तु—**

**स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा ॥**
**परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः ॥ ११ ॥**

स्वमतं दर्शयन्नाह—वैद्यके त्वित्यादि । अत्रैके स्वभाववादिनः स्वभावं सर्वस्य प्रकृतिं कारणमूचुः; तथाहि—"कः कण्टकानां प्रकरोति तैक्ष्ण्यं, चित्रं विचित्रं मृगपक्षिणां च । माधुर्यमिक्षौ, कटुतां मरीचे, स्वभावतः सर्वमिदं प्रवृत्तम्—" इति । ईश्वर एवोर्वीपर्वततर्वादेर्जन्तूनां स्वर्गनरकादेश्च कारणमित्यन्ये । उक्तं च—"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव वा" इति । काल एव जगतः सृष्टिस्थितिप्रलयनिमित्तमिति कालकारणिकाः; उक्तं च ज्योतिःशास्त्रविदा **श्रीपतिना**–"प्रभवविरतिमध्यज्ञानवन्ध्या नितान्तं विदितपरमतत्त्वा यत्र ते योगिनोऽपि ।

१ 'तत्र' इति कचित्पुस्तके न पठ्यते । २ 'पुरुषकैवल्यार्थां' इति पा० । ३ 'क्षीरमचेतनं' इति पा० । ४ 'उभावप्यपरौ' इति पा० । ५ 'तावपरौ' इति पा० ।

१ 'विकारिवस्तुसंयोगात्' इति पा० ।

तमहमिह निमित्तं विश्वजन्माख्ययानामनुमितमभिवन्दे भग्रहैः कालमीशम्—" इति । यो यतो भवति तत्तन्निमित्तमिति याद्दच्छिकाः; यथा—तृणारणिनिमित्तो वह्निरिति । पूर्वजन्मार्जितौ धर्माधर्मौ नियतिः, सैव सर्वस्य कारणमिति नियतिवादिनः । प्रधानमेव महदहङ्कारादिरूपतया परिणतं सर्वस्य निमित्तमिति परिणामवादिनः । एतत् सर्वमत्रानुमतं, सर्ववेदपारिषदत्वादायुर्वेदस्य । सुश्रुताचार्येणापि स्वभावादिभेदभिन्नायाः षड्विधाया अपि प्रकृतेरुदाहरणान्यभिहितानि । तत्र स्वभावस्य तावत् कारणत्वमाह—"अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते" ( शा. अ. ३ ); पुनश्च "सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ । तलेष्वसंभवो यश्च रोम्णामेतत् स्वभावतः—" ( शा. अ. २ ) इति; पुनश्चोक्तं—"धातुषु क्षीयमाणेषु वर्धेते द्वाविमौ सदा । स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः" ( शा. अ. ४ ) इति; पुनरप्याह—"निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते । स्वभाव एव वा हेतुर्गरीयानपि कीर्त्यते—" ( शा. अ. ४ ) इति; अन्यत्राप्युक्तं—"स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः । स्वभावाद्गुरवो माषा वराहमहिषादयः"—( च. सू. अ. २७ ) इति । ईश्वरोऽपि वह्निरूपो जीवितादेः कारणत्वेनोदाहृतः; तथाहि—"जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ॥" ( सू. अ. ३५ ); "अग्निमूलं बलं पुंसां बलमूलं हि जीवितम्"—इति । कालस्तु शीतोष्णलक्षणः; उक्तं च—"महाभूतविशेषांस्तु शीतोष्णद्वयभेदतः । काल इत्यध्यवस्यन्ति न्यायमार्गानुसारिणः—" इति; अयं च ऋतुचर्याध्याये दोषाणां संचयप्रकोपोपशमद्वारेण हेतुरुक्तः । यदृच्छा पुनरलक्षित आकस्मिकपदार्थाविर्भावः, उक्तं च "यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्विधिज्ञः"—( चि. अ. १८ ) इत्यादि । नियतिरत्रापि धर्माधर्मौ, तद्धेतुत्वमाह—"ब्रह्मस्त्रीसज्जनवधपरस्वहरणादिभिः । कर्मभिः पापरोगस्य प्राहुः कुष्ठस्य संभवम् ॥" ( नि. अ. ५ ); "कर्मजा व्याधयः केचित्"—( उ. तं. अ. ४० ) इति चोक्तम् । परिणामस्य हेतुत्वमाह—"जाठराग्नेस्तु संयोगाद्यदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः ॥" ( वा. सू. अ. ९ ) इति; "ता एवौषध्यः कालपरिणामात् परिणतवीर्या बलवत्यो हेमन्ते भवन्त्यापश्च" ( सू. अ. ६ ); "सम्यक् परिणतस्याहारस्य सारो रसः" ( सू. अ. १४ ); "एवं बालानामपि वयःपरिणामाच्छुक्रप्रादुर्भावो भवति"—( सू. अ. १४ ) इति । इत्थमेताः षट्प्रकृतयो वैद्यकानुगता दर्शिताः । ननु, स्वभावादयः षट् पदार्थाः प्रकृतेरष्टरूपायाः पर्यायाः स्युरथवाऽन्यार्थाभिधायित्वेन भिन्नार्थाः ? तत्र भिन्नार्थत्वेऽपि विकल्पद्वयं; किमेतैः स्वभावादिभिर्भिन्नार्थैः किंचित् स्वभावेन किंचिदीश्वरेणेत्येवंप्रकारेण मिलित्वा जगदारभ्यते ? उतैते स्वभावादयः पृथक् पृथगेव विश्वजननसमर्थाः ? इत्यनेकधा विकल्पमुत्पाद्य **जेज्झटाचार्येणे**श्वरं विहाय स्वभावादयः प्रकृतेरष्टरूपायाः पर्यायत्वेनाभिहिताः । यत्तु वैद्यके "स्वभावमीश्वरं कालम्"—इत्यादिवाक्येन विपुलदर्शिभिः स्वभावादीनां भिन्नमेव प्रकृतित्वं प्रतिपादितं, तत्तथास्वरूपेण तेषामवभासनात् । परमार्थतस्तु गुणत्रयात्मिका प्रकृतिरेव कारणम् । यतः स्वभावादयश्चत्वारः प्रकृतिपरिणामस्य धर्मविशेषतया प्रकृतावेवान्तर्भवन्ति । तथाहि—स्वभावस्तावत् सत्त्वरजस्तमसां तद्विकाराणां पृथिव्यादिमहाभूतानां च परिणामस्य तादृशो विशेष इति प्रकृतिपरिणामादन्यो न भवति; नियतेरपि पूर्वकृतसदसत्कर्मरूपाया रजोगुणपरिणामलक्षणत्वेन न प्रकृतेरन्यत्वं; कालोऽपि चन्द्रार्कादिगतिक्रियात्मलक्षणः, तत्र च महाभूतानां परिणामविशेषाच्छीतोष्णादयो भवन्ति, तदुक्तं—"महाभूतविशेषांस्तु शीतोष्णद्वयभेदतः । काल इत्यध्यवस्यन्ति न्यायमार्गानुसारिणः"–इति, क्रियात्वेन रजोगुणपरिणामत्वान्महाभूतपरिणामविशेषत्वाच्च न कालस्य प्रकृतेरन्यत्वम्; ईश्वरश्च पञ्चविंशतितमः पुरुषः प्रकृतेः क्षोभकतया कारणत्वेनोदाहृत एव; यदृच्छा च कादाचित्कत्वाद्भूतपरिणामविशेषान्नान्या । किंचास्मिन् शास्त्रे प्रकृतिपरिणामात्मकं विश्वं पठ्यते । तथाहि—"सात्त्विकं कायलक्षणं, राजसं कायलक्षणं" ( शा. अ. ४ ) तथा 'सत्त्वबहुलमाकाशं' इत्यादि । **गयी** त्वन्यथा व्याख्याति; यथा–वैद्यके तु विपुलदर्शिनः स्वभावादीनां षण्णां प्रकृतित्वं प्रतिपादयन्ति, ते च स्वभावादयः समुच्चयेन जगदुत्पत्तौ कारणभूताः; तत्रापि प्रकृतिपरिणामस्योपादानकारणत्वं, स्वभावादीनां च पञ्चानां निमित्तकारणत्वमिति ॥ ११ ॥

**तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् ॥**
**तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत ॥ १२ ॥**
**तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्वदा ॥**
**भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते १३**

**यतोऽभिहितं—"तत्संभवद्रव्यसमूहो भूतादिरुक्तः" ( सू० अ० १ ); भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते, तथेन्द्रियार्थाः ॥ १४ ॥**

एकीयमतेन कारणानुरूपं कार्यमित्यादिवाक्यात् कारणमयत्वं कार्यस्य प्रतिपाद्य स्वमतेऽपि कारणमयत्वं प्रतिपादयन्नाह—तन्मयानीत्यादि । तन्मयानीति अवकाशचलोष्णद्रवखरस्वभावादिधर्मविशेषाक्रान्तप्रकृतिपरिणाममयानि; भूतान्याकाशादीनि; तद्गुणान्येवेति सत्त्वरजस्तमोगुणान्येवेत्यर्थः, सत्त्वबहुलमाकाशमित्याद्युक्तत्वात् । **गयी** तु 'ततो जातानि भूतानि' इति पठित्वा व्याख्याति—ततः स्वभावादेः, निमित्तकारणत्वात् प्रकृतिपरिणामाच्चोपादानकारणानि भूतान्याकाशादीनि तद्गुणानि कारणगुणानि । तैश्चेत्यादि । तैराकाशादिभिर्भूतैः, तल्लक्षणो भूतलक्षणः, कृत्स्नः समस्तः, भूतग्रामः स्थावरजङ्गमात्मकः, व्यजन्यत विविधो जनितः । भूतानां पृथिव्यादीनां पुनर्लक्षणं स्थिरगुरुकठिनत्वमित्यादि, तल्लक्षणश्च स्थावरजङ्गमात्मको भूतग्रामः । तस्य पञ्चमहाभूतारब्धस्य भूतग्रामस्य परस्परोपकार्यो-

१ 'ततो जातानि' इति ता० ।

पकारकत्वेन व्यवस्थितस्य, उपयोगः प्रयोजनम्, अभिहितः कथितः, चिकित्सां प्रति रोगापनयनं लक्षीकृत्य, सर्वदा नित्यगे आवस्थिके च काले। कुतः? यस्मात्तेभ्यः पञ्चमहाभूतारब्धभूतग्राम्येभ्यः परं चिकित्सिते चिन्ता नास्ति । तदुक्तमाद्येऽध्याये, "तत्रास्मिन् पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते; तस्मिन् क्रिया, सोऽधिष्ठानं, कस्मात्? लोकद्वैविध्यात्, लोको हि द्विविधः—स्थावरो जङ्गमश्च, तस्मिन् पुरुषः प्रधानं, तस्योपकरणमन्यत्"—( सू. अ. १ ) इति। तेन पञ्चमहाभूतारब्धस्यैव भूतग्रामस्य चिकित्सोपकरणत्वम्। अतो भूतेभ्यः परं यदव्यक्तादि तत्र चिन्ताऽपि नास्ति। अयमेवार्थोऽन्यत्रापि निर्दिष्ट इति दर्शयन्नाह—यत इत्यादि। एतत्सूत्रं बीजाध्याये व्याख्यातम्, अत्रापि किंचिच्छिष्यबोधार्थं व्याख्यायते—यतस्तस्य पुरुषस्य संभवद्रव्याणि शुक्रशोणितादीनि तेषां समूहः संयोगविशेषः, कथंभूतः? भूतादिः भूतं पृथिव्यादिकमादिर्मूलकारणं यस्य स तथा। न परं पुरुषसंभवद्रव्यस्य भूतादित्वाभिधानाद्भूतेभ्यः परं चिन्ता नास्ति, किंत्वेतस्मादपीत्याशङ्क्याह—भौतिकानि चेत्यादि । इन्द्रियाणि श्रवणस्पर्शनरसनघ्राणानि भौतिकानि । तथा चोक्तं पञ्चभूतात्मकत्वेऽपि—"खं श्रोत्रे स्पर्शने वायुर्दर्शने तेज उत्कटम् । सलिलं रसने भूमिर्घ्राणे तज्ज्ञैर्निरूपितम्"—इति। इन्द्रियाणामर्थाः शब्दस्पर्शरूपरसगन्धाः, ते चायुर्वेदशास्त्रे तथा भौतिका इत्यर्थः। उक्तं च—"शब्दो वैहायसः, स्पर्शो वायवीयः प्रकीर्तितः । रूपमाग्नेयमाप्योऽत्र रसो, गन्धस्तु पार्थिवः" इति ॥ १२—१४ ॥

**भवति चात्र—**

**इन्द्रियेणेन्द्रियार्थं तु स्वं स्वं गृह्णाति मानवः ॥**
**नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥१५॥**

इन्द्रियाणामिन्द्रियार्थानां च पाञ्चभौतिकत्वेऽपि यस्य भूतस्य यत्र यत्रेन्द्रिये आधिक्यं तेन तेनेन्द्रियेण तस्य तस्यैव गुणाः शब्दादयो गृह्यन्त इति दर्शयितुमाह—इन्द्रियेणेत्यादि। इन्द्रियेण चक्षुरादिना रूपादिकमात्मीयमात्मीयं मानव उपादत्ते; तद्यथा—तैजसं चक्षुस्तैजसमेव रूपमादत्ते, पार्थिवं घ्राणेन्द्रियं पार्थिवमेव गन्धमादत्ते, एवं शेषेष्वपि बोद्धव्यम् । नियतमात्मीयमेव कुत इत्याह—तुल्ययोनित्वादिति; एकभूतहेतुत्वात्, भूतं हि स्वयोनिमेवाभिधावति जलमिव जलम्। तमेव स्पष्टीकुर्वन्नाह—नान्येनान्यमिति ॥ १५ ॥

**न चायुर्वेदशास्त्रेषूपदिश्यन्ते सर्वगताः क्षेत्रज्ञा नित्याश्च; असर्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषख्यापकान् हेतूनुदाहरन्ति; [1]आयुर्वेदशास्त्रेष्वसर्वगताः क्षेत्रज्ञा नित्याश्च, तिर्यग्योनिमानुषदेवेषु संचरन्ति धर्माधर्मनिमित्तं; त एतेऽनुमानग्राह्याः परमसूक्ष्माश्चेतनावन्तः शाश्वता लोहितरे[2]तसोः सन्निपातेष्वभिव्यज्यन्ते, यतोऽभिहितं—'पञ्चमहाभूतशरीरिसमवायः पुरुषः' ( सू० अ० १ ) इति; स एष कर्मपुरुषश्चिकित्साधिकृतः ॥ १६ ॥**

अपरमपि साङ्ख्यादिभ्यो भेदमायुर्वेदस्यात्मनि दर्शयन्नाह—न चेत्यादि। किं तर्ह्यायुर्वेदशास्त्रेष्वसर्वगताः पुरुषा उपदिश्यन्ते सत्त्वोपाधिवशात्; सांख्यादिषु पुनः सर्वगता एव क्षेत्रज्ञा उपदिश्यन्ते । एवमायुर्वेदपुरुषस्य प्रदेशवर्तिनोऽपि नित्यत्वं स्यादित्याह—नित्याश्च; 'उपदिश्यन्ते' इति शेषः। नित्यत्वं च कथमित्याह—असर्वगतेष्वित्यादि । हेतूनिति सदकारणवन्नित्यमित्यादीन्। तथाहि–सन्नात्मा, सुखादिलिङ्गोपलम्भात्; अविषयोऽकारणश्च, अतो नित्यः। तथाहि **भोजः**—"शुभाशुभाभ्यां कर्मभ्यां प्रेरणान्मनसो गतेः। देहाद्देहान्तरं याति किमिवच्छाश्वतोऽव्ययः॥ नित्य इत्युच्यते सद्भिः सत्त्वकारणवान् यतः"—इति। तदेवोपसंहरन्नाह—आयुर्वेदेत्यादि । असर्वगतत्वेऽपि सर्वयोनिगमनं निर्दिशन्नाह—तिर्यगित्यादि। तत्र बहुशः संसरणे तिर्यग्योनीनां प्रकृष्टत्वम्, अतस्तेषां प्रागुपादानं; ततो मनुष्यनिर्देशः; देवास्तु कदाचित् क्वचित् संभवन्तीति पश्चान्निर्दिष्टाः । तत्र प्रायेणाधर्मनिमित्तं तिर्यग्योनयः, धर्माधर्मनिमित्तं मनुष्याः, धर्मनिमित्तं देवाः । ननु, कथमप्रत्यक्षा अप्यात्मानोऽभ्युपगम्यन्त इत्याह—त एतेऽनुमानग्राह्या इति। सुखदुःखाद्युपलब्धिरूपेण लिङ्गेनाव्यभिचारिणैते आत्मान उपलब्धारोऽनुमातव्याः[1] । प्रत्यक्षप्रमाणेनापि क्षेत्रज्ञाः कथं न गृह्यन्ते? इत्याह—परमसूक्ष्मा इति।–परमसूक्ष्मा हि परमाणव इव सन्तोऽपि ते प्रत्यक्षेण नैवोपलभ्यन्ते। चेतनावन्त इति नित्यं चेतनायुक्ताः। शाश्वता इति नित्याः। कथं तर्हि जायन्त इत्युच्यत इत्याह—लोहितरेतसोरित्यादि । आत्मानः परमसूक्ष्माः पञ्चभूतात्मकयोः शुक्रशोणितयोः सन्निपातेषु संयोगेष्वभिव्यज्यन्ते । एष एव च सूक्ष्मपुरुषाणां पञ्चमहाभूतानां च संयोगो वैद्यके षड्धातुकः पुरुषः परिभाषितः। कुतः परिभाषित इत्याशङ्क्याद्याध्यायोक्तं वाक्यं दर्शयति—यत इत्यादि। तस्य चिकित्सोपयोगितां निदर्शयन्नाह—स इत्यादि। कर्मपुरुष इति कर्मफलभागित्य[2]र्थः। तेन चिकित्सितकर्मफलमप्यवाप्नोतीत्युक्तं भवति ॥ १६ ॥

**तस्य सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनः सङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः ॥ १७ ॥**

इदानीं तस्यैव कर्मपुरुषस्य शरीरात्मनोः संयोगकारकेण मनसा संयोगे ये गुणा उत्पद्यन्ते तानाह—तस्येत्यादि । तत्र सुखं स्वभावतोऽनुकूलवेदनीयं; दुःखं स्वभावतः प्रतिकूलवेदनीयम्; इच्छा अभिलाषः; द्वेषोऽप्रीतिलक्षणः; प्रयत्नः कार्यारम्भे उत्साहः; प्राणो वायुर्वक्त्रसंचारी, अपानः पक्वाशयस्थितिरधो-

१ 'आयुर्वेदशास्त्रसिद्धान्तेष्वसर्वगताः' इति पा० । २ 'शुक्रार्तवयोः' इति ता. ।

१ 'अनुमन्तव्याः' इति पा० । २ 'कर्मफलभोगीत्यर्थः' इति पा० ।

गमनशीलः; उन्मेषनिमेषौ चक्षुषोरुन्मीलननिमीलने; बुद्धिर्निश्चयात्मिका; मनः संशयात्मकं, तस्य सङ्कल्पो मनसः कर्म; विचारणा पुनरूहापोहाभ्यां वस्तुविमर्शः; स्मृतिः पूर्वानुभूतस्यार्थस्य स्मरणं; विज्ञानं शिल्पशास्त्रादिबोधः; अध्यवसायो बुद्धेर्व्यापारः; विषयाणां शब्दादीनामुपलब्धिरवगतिर्विषयोपलब्धिः । **गयी** तु सुखं प्रीतिः, दुःखमप्रीतिः, इच्छा सुखहेतुरभिलाषः, द्वेषो दुःखहेतुर्मनःप्रतीघातः, प्रयत्नो मनःप्रवृत्तिकर उत्साहः, मनः सङ्कल्पात्मकलक्षणं, तस्य संकल्पो विषयेषु दोषगुणकल्पनं; शेषं समम् । एते कर्मपुरुषस्य षोडश गुणाः । अत एव 'कला' इत्युच्यन्ते ॥ १७ ॥

**सात्त्विकास्तु-आनृशंस्यं संविभागरुचिता तितिक्षा सत्यं धर्म आस्तिक्यं ज्ञानं बुद्धिर्मेधा स्मृतिर्धृतिरनभिषङ्गश्च; राजसास्तु-दुःखबहुलताऽटनशीलताऽधृतिरहङ्कार आनृतिकत्वमकारुण्यं दम्भो मानो हर्षः कामः क्रोधश्च; तामसास्तु-विषादित्वं नास्तिक्यमधर्मशीलता बुद्धेर्निरोधोऽज्ञानं दुर्मेधस्त्वमकर्मशीलता निद्रालुत्वं चेति ॥ १८ ॥**

पुरुषगुणानभिधाय शेषान् सत्त्वादियुक्तस्य मनसो गुणान्निर्दिशन्नाह—सात्त्विका इत्यादि । आनृशंस्यम् अक्रूरकर्मकारित्वम् । संविभागरुचिता संविभज्य भोक्तुमभिलाषुकता । तितिक्षा क्षमा । सत्यं भूतहितं तथ्यं वचो वा । धर्मः कायवाङ्मनोभिः सुचरितम् । अस्ति धर्ममोक्षपरलोकादिकमिति बुद्ध्या चरतीत्यास्तिकः, तद्भाव आस्तिक्यम् । ज्ञानम् आत्मज्ञानम् । बुद्धिः तत्कालविषया । मेधा ग्रन्थावधारणशक्तिः । धृतिर्मनसो नियमात्मिका बुद्धिः । पूर्वानुभूतस्यार्थस्य स्मरणं स्मृतिः । फलनिरपेक्षया बुद्ध्या श्रेयःकर्मकरणमनभिषङ्गः । राजसास्त्वित्यादि । अधृतिर्मनसोऽधीरता । आनृतिकत्वं मिथ्यावचनशीलता; **गयी** तु 'आवृत्तिकत्वं' इति पठित्वा मनसः शीलैतेत्याह । अकारुण्यं निर्दयत्वम् । दम्भः कुहकवृत्तिता । मान आत्मन्युत्कर्षबुद्धिः । अहङ्कारादयः पूर्वं व्याख्याताः । **गयी** तु 'अटनशीलता' इत्यत्र 'ताडनशीलता' इति पठति, 'मान' इत्यत्र 'मद' इति पठति । तामसास्त्वित्यादि । विषादोऽस्यास्तीति विषादी, तद्भावो विषादित्वं मूढता । अधर्मे शीलं स्वभावो यस्य तद्भावोऽधर्मशीलत्वम् । दुर्मेधस्त्वं दुष्टबुद्धित्वम् । अकर्मशीलता कर्मण्यनुत्साहः ॥ १८ ॥

**आन्तरिक्षाः-शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता च; वायव्यास्तु-स्पर्शः स्पर्शेन्द्रियं सर्वचेष्टासमूहः सर्वशरीरस्पन्दनं लघुता च; तैजसास्तु-रूपं रूपेन्द्रियं वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यं शौर्यं च; आप्यास्तु-रसो रसनेन्द्रियं सर्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्च; पार्थिवास्तु-गन्धो गन्धेन्द्रियं सर्वमूर्तसमूहो गुरुता चेति ॥ १९ ॥**

महाभूतगुणान्निर्दिशन्नाह—आन्तरिक्षा इत्यादि । आन्तरिक्षा आकाशभूतगुणाः । शब्देन्द्रियं श्रवणेन्द्रियम् । विविक्तता शारीराणां भावानां सिरास्नाय्वस्थिपेशीप्रभृतीनां जातिव्यक्तिभ्यां मिथः पृथक्त्वं; **गयी** तु 'विविक्तता' इत्यस्य स्थाने 'विरिक्तता' इति पठति व्याख्यानयति च—विरिक्तता शारीराणां भावानां रिक्तता । वायव्या इत्यादि । स्पर्शेन्द्रियं त्वक् । सर्वचेष्टासमूहो नमनोन्नमनादिसर्वक्रियासमूहः, कायवाङ्मनःक्रियासमूह इत्यन्ये । स्पन्दनं चलनम् । तैजसास्त्वित्यादि । रूपं लावण्यम् । रूपेन्द्रियं चक्षुः । वर्णो गौरादिः । सन्ताप औष्ण्यम् । भ्राजिष्णुता दीप्तता । पक्तिः अग्निकृताऽऽहारपरिणतिः । अमर्षः क्रोधः । तैक्ष्ण्यम् आशुक्रिया । शौर्यं विक्रान्तता । आप्यास्त्वित्यादि । सर्वद्रवसमूहः दोषधातुमलेषु द्रुतिमद्द्रव्यनिवहः । पार्थिवास्त्वित्यादि । सर्वमूर्तसमूह दोषधातुमलेषु यः कश्चित् काठिन्यनिवहः ॥ १९ ॥

**तत्र सत्त्वबहुलमाकाशं, रजोबहुलो वायुः, सत्त्वरजोबहुलोऽग्निः, सत्त्वतमोबहुला आपः, तमोबहुला पृथिवीति ॥ २० ॥**

अथाकाशादिभूतानां सत्त्वादिगुणमयत्वं दर्शयन्नाह—तत्रेत्यादि । सत्त्वबहुलमाकाशं प्रकाशकत्वात्, रजोबहुलो वायुश्चलत्वात्, सत्त्वरजोबहुलोऽग्निः प्रकाशकत्वाच्चलत्वाच्च, सत्त्वतमोबहुला आपः स्वच्छत्वात् प्रकाशकत्वाद्गुरुत्वादावरणत्वाच्च, तमोबहुला पृथिवी अत्यन्तावरकत्वात् ॥ २० ॥

**श्लोकौ चात्र भवतः—**

**अन्योऽन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत् ॥**
**स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तं लक्षणमिष्यते ॥ २१ ॥**

अन्योऽन्येत्यादि । तत्र शब्दगुणमाकाशं मारुते प्रविष्टं शब्दस्पर्शगुणत्वान्मारुतस्य; आकाशमारुतौ तेजसि प्रविष्टौ, शब्दस्पर्शरूपगुणत्वात्तेजसः; आकाशमरुत्तेजांसि तोयद्रव्ये प्रविष्टानि, शब्दस्पर्शरूपरसगुणत्वात्तोयस्य; आकाशमरुत्तेजस्तोयानि पृथिव्यामनुप्रविष्टानि, शब्दस्पर्शरूपरसगन्धगुणत्वात् पृथिव्याः । एवं व्योमानिलानलजलोर्वीणां परस्परमनुप्रवेशकानुप्रवेश्यत्वेनावस्थितानामन्योन्यानुप्रविष्टत्वमुक्तम् । अन्ये पुनरन्योऽन्यानुप्रविष्टत्वमन्यथा व्याचक्षते—तत्राकाशेऽपि भूमिरणुरूपेणावस्थिता, सूक्ष्मरूपतोयतेजोऽनुगतमारुतस्य संचरणादाकाशे पवनदहनतोयान्यपि बोद्धव्यानि । तथा वायावप्याकाशं व्यवस्थितं व्यापकत्वात्, "अनुष्णशीतस्पर्शोऽयं द्रव्यशैर्वायुरिष्यते । दाहकृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात्"—इत्युक्तत्वाद्वायौ तेजोऽम्बुनी अपि तिष्ठतः, भूरप्यणुना विशेषेण मारुते तिष्ठति । तथा तेजो-

१ 'दुःखहेतोर्मनःप्रत्यानयनम्' इति पा० । २ 'एते' इति पा० । ३ 'शीतलता' 'खलता' इति च पा० । ४ 'अधर्मः' इति पा० ।

१ 'शारीराणां भावानां' इति हस्तलिखितपुस्तके न पठ्यते । २ '°द्रव्यसमूहः' इति पा० ।

द्रव्येऽप्याकाशं व्यवस्थितं व्यापकत्वात्, पवनोऽपि प्रेरणात्मकत्वात्; तेजोद्रव्ये पानीयमप्यनुमीयते कार्यकारणयोरैक्यात्, कारणं तोयं कार्यं च तेजः, अद्भ्योऽग्निरित्युक्तत्वात्; भूमिरपि धूमादिरूपेण तेजसि व्यवस्थिता । अथ तोयद्रव्येऽप्याकाशं व्यवस्थितं, व्यापकत्वात्; वायुरपि तोये व्यवस्थितः, तरङ्गबुद्बुदादिकारणत्वात्; वह्निरपि तोये व्यवस्थितः, तत एवोत्पन्नत्वात्, उक्तं च—"अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् । एषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति" इति; भूमिरपि तोयेऽणुरूपेणावस्थिता । तथा पृथिव्यामप्याकाशपवनदहनतोयानि स्थितान्येव, भूमिप्रविभागीये पञ्चविधाया भूमेः प्रोक्तत्वात् । इत्थमाकाशादिभूतानामन्योन्यानुप्रविष्टत्वमाहुः । व्यक्तेन तु लक्षणेन पार्थिवादिव्यपदेशं दर्शयन्नाह—खे खे इत्यादि । खे खे स्वकीये स्वकीये द्रव्ये, सर्वेषामाकाशादीनां, व्यक्तं लक्षणमिति आकाशद्रव्ये तल्लक्षणं व्यक्तमित्यादि बोद्धव्यम् ॥ २१ ॥

**अष्टौ प्रकृतयः प्रोक्ता विकाराः षोडशैव तु ॥**
**क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयोः[1] ॥ २२ ॥**

**इति सुश्रुतसंहितायां शारीरस्थाने सर्वभूतचिन्ताशारीरं नाम प्रथमोऽध्यायः ॥ १ ॥**

अष्टावित्यादि । अष्टौ प्रकृतयः—अव्यक्तं महानहङ्कारः पञ्च तन्मात्राणीत्यष्टौ । विकाराः षोडशैवेति श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीत्येवमेकादशेन्द्रियाणि, आकाशपवनदहनतोयभूमय इति पञ्चभूतानीत्येवं षोडश विकाराः । क्षेत्रं स्थूलसूक्ष्मदेहं जानातीति क्षेत्रज्ञः पुरुषः । समासेन संक्षेपेण । एवं पञ्चविंशतितत्त्वान्युक्तानि । स्वतन्त्रे शल्यतन्त्रे, परतन्त्रे शालाक्यतन्त्रे साङ्ख्ये च ॥ २२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

**अथातः शुक्रशोणितशुद्धिशारीरं[2] व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

सर्वभूतचिन्ताशारीरे 'शुक्रशोणितयोः सन्निपातेष्वभिव्यज्यन्ते' ( शा. अ. १ ) इति यदुक्तं तत्र शुक्रशोणितयोः शुद्धयोरेव सन्निपातेषु क्षेत्रज्ञा अभिव्यज्यन्तेऽतस्तयोः शुद्धिं प्रतिपादयितुकामः प्राह—अथात इत्यादि । शोणितशब्दोऽत्रार्तवशोणिते वर्तते, शुद्धिर्दुष्टदोषासंपर्कता ॥ १ ॥ २ ॥

**वात-पित्त-श्लेष्म-कुणप[3]-ग्रन्थि-पूतिपूय-क्षीण-मूत्रपुरीषरेतसः प्रजोत्पादने न समर्था भवन्ति ॥३॥**

सा च शुद्धिर्वातादिदुष्टशुक्रस्येति वातादिभिः पृथक्समुदितैर्दुष्टशुक्रतामाह—वातेत्यादि । एवंभूतरेतसः पुरुषा गर्भोत्पत्तौ न क्षमा भवन्तीति पिण्डार्थः ॥ ३ ॥

**तेषु वातवर्णवेदनं वातेन, पित्तवर्णवेदनं पित्तेन, श्लेष्मवर्णवेदनं श्लेष्मणा, कुणपगन्ध्यनल्पं च रक्तेन, ग्रन्थिभूतं श्लेष्मवाताभ्यां, पूतिपूयनिभं पित्तश्लेष्मभ्यां, क्षीणं प्रागुक्तं पित्तमारुताभ्यां, मूत्रपुरीषगन्धि सन्निपातेनेति । तेषु कुणपग्रन्थिपूतिपूयक्षीणरेतसः कृच्छ्रसाध्याः, मूत्रपुरीषरेतसस्त्वसाध्या इति ॥ ४ ॥**

तेष्वित्यादि । तेषु वातादिषु दुष्टेषु मध्ये वातेन यच्छुक्रं दूषितं तद्वातवर्णवेदनं भवति । तत्र वातवर्णा अरुणकृष्णादयः; यद्यप्यव्यक्तस्य वायोर्वर्णासंभवः, तथाऽपि वातदुष्टे दूष्येऽरुणकृष्णौ वातेन वर्णौ भवत इत्यदोषः । वातवेदनास्तोदभेदादयः[1]; ननु, कथमेकस्माद्वायोरनेकवेदनाविशेषास्तोदादयः ? सत्यं, बहुकारणप्रकोपात्तस्येति । गन्धस्तु वायोर्नास्त्येव । पित्तेन यच्छुक्रं दूषितं तत् पित्तवर्णवेदनं भवति; पित्तवर्णाः पीतनीलादयः, पित्तवेदना ओषचोषादयः; पित्तदुष्टे शुक्रेऽनुक्तोऽपि गन्धः कुणपे पूतिपूयाभे च वक्ष्यमाणो द्रष्टव्यः । श्लेष्मणा यच्छुक्रं दूषितं तत् श्लेष्मवर्णवेदनं भवति; श्लेष्मवर्णः शुक्लः[2], श्लेष्मवेदनाः कण्ड्वादयः, गन्धस्त्वनुक्तोऽपि विस्रो द्रष्टव्यः । रक्तेन यच्छुक्रं दूषितं तत् कुणपगन्ध्यनल्पं च भवति, चकाराच्छोणितवर्णं पित्तवेदनं च; कुणपं शवस्तस्येव गन्धोऽस्येति कुणपगन्धि; अनल्पं बहुलम्; अत्र रक्तेनेति व्यपदेशो घृततैलदग्धवत्, ( अग्निदग्धघृततैलाभ्यां दग्धं द्रव्यं घृततैलदग्धमित्युच्यते न त्वग्निना दग्धमिति, तथाऽत्रापि वातादिदूषितरक्तेन दुष्टं रक्तदूषितमिति व्यपदेशः[3], ) यतो रक्तस्यापि दोषा एव दूषयितारः । श्लेष्मवाताभ्यां यच्छुक्रं दूषितं तद्ग्रन्थिभूतं ग्रन्थिसदृशं ग्रन्थिलं भवतीत्यर्थः । पित्तश्लेष्मभ्यां यद्दूषितं तत् शटितपूयसदृशं भवति । क्षीणं पित्तमारुताभ्यां भवति, तस्य लक्षणं प्राग्दोषधातुमलक्षयवृद्धिविज्ञानीये ( सू. अ. १५ ) उक्तम् । ग्रन्थ्यादयस्तु ये द्विदोषजास्ते द्विदोषवर्णवेदना बोद्धव्याः । सन्निपातेन यच्छुक्रं दूषितं तन्मूत्रपुरीषगन्धि भवति । तेषां कृच्छ्रसाध्यासाध्यभेदं दर्शयन्नाह—तेष्वित्यादि । तेषु मध्ये कुणपादयश्चत्वारः कृच्छ्रसाध्याः, मूत्रपुरीषगन्धिरन्तिमोऽसाध्यः, शेषा अर्थत एव साध्याः ॥ ४ ॥

**आर्तवमपि त्रिभिर्दोषैः शोणितचतुर्थैः पृथग्द्वन्द्वैः समस्तैश्चोपसृष्टमबीजं भवति; तदपि दोषवर्णवेदनादिभिर्विज्ञेयम् । तेषु कुणपग्रन्थिपूतिपूय[4]क्षीणमूत्रपुरीषप्रकाशमसाध्यं, साध्यमन्यच्चेति ॥५॥**

---

१ 'स्वतन्त्रपरतन्त्रतः' इति पा० । २ 'शुक्रशोणितशुद्धिं नाम शारीरं' इति पा० । ३ 'कुणपगन्धि' इति पा० ।

१ 'तोदनभेदनादयः' इति पा० । २ 'श्वेतः' इति पा० । ३ अयं पाठो हस्तलिखितपुस्तकेषु नोपलभ्यते । ४ '°ग्रन्थिपूय°' इति पा० ।

इदानीं शुक्रविषयं प्रतिपाद्य, आर्तवशोणितविषयमपि प्रतिपादयितुमाह—आर्तवमित्यादि । आर्तवमपि यदा पृथग्दोषैः शोणितचतुर्थैर्द्वन्द्वैः समस्तैश्चोपसंसृष्टं तदाऽबीजं भवतीत्यर्थपिण्डः । तस्य विज्ञानोपायं दर्शयन्नाह—तदपीत्यादि । तदपीति आर्तवमपि । दोषवर्णवेदनाभिः शुक्रदोषे व्याख्याताभिः । तेषां साध्यासाध्यभेदं दर्शयन्नाह—तेष्वित्यादि । मूत्रपुरीषप्रकाशमिति गन्धवर्णादिभिर्मूत्रपुरीषतुल्यम् । साध्यमन्यच्चेति एकैकदोषजनितत्रयम् । शुक्रार्तवदोषा याप्या न भवन्ति, व्याधिस्वभावात् ॥ ५ ॥

भवन्ति चात्र—

**तेष्वाद्यान् शुक्रदोषांस्त्रीन् स्नेहस्वेदादिभिर्जयेत् ॥**
**क्रियाविशेषैर्मतिमांस्तथा चोत्तरबस्तिभिः ॥ ६ ॥**
**पाययेत नरं सर्पिर्भिषक् कुणपरेतसि ॥**
**धातकीपुष्पखदिरदाडिमार्जुनसाधितम् ॥ ७ ॥**
**पाययेदथवा सर्पिः शालसारादिसाधितम् ॥**
**ग्रन्थिभूते शटीसिद्धं पालाशे वाऽपि भस्मनि ॥ ८ ॥**
**परूषकवटादिभ्यां पूयप्रख्ये च साधितम् ॥**
**प्रागुक्तं वक्ष्यते यच्च तत् कार्यं क्षीणरेतसि ॥ ९ ॥**
**विट्प्रभे पाययेत् सिद्धं चित्रकोशीरहिङ्गुभिः ॥**
**स्निग्धं वान्तं विरिक्तं च निरूढमनुवासितम् ॥ १० ॥**
**योजयेच्छुक्रदोषार्तं सम्यगुत्तरबस्तिना ॥**

इदानीं शुक्रदोषाणां चिकित्सामाह—भवन्तीत्यादि । तेषु शुक्रदोषेषु मध्ये, आद्यांस्त्रीन् शुक्रदोषान् स्नेहस्वेदादिभिः क्रियाविशेषैर्जयेदिति संबन्धः । आदिग्रहणाद्वमनविरेचननिरूहानुवासनोत्तरबस्तयो यथादोषं शमनानि चावगन्तव्यानि । पुनरुत्तरबस्तिकथनं क्रियासु प्राधान्यसूचनार्थम् । पाययेतेत्यादि । धातक्यादेः कल्ककषायाभ्यां साधितम् । सालसारादिसाधितमित्यत्रापि कल्ककषायाभ्यामेव । ग्रन्थीत्यादि । शटीसिद्धमिति शट्याः कल्ककषायाभ्यां सिद्धम् । पालाशे वेत्यादि पलाशभस्माढकं षड्भिः सलिलाढकैः क्वथितं पादशेषं सप्तकृत्वः परिस्रुतमाढकशेषं प्रस्थघृतपाकाय प्रयोज्यम् । परूषकवटादिभ्यामित्यादि । परूषकवटादिभ्यामिति परूषकादिन्यग्रोधादिगणाभ्यामित्यर्थः । प्रागुक्तमित्यादि ।—प्रागुक्तं स्वयोनिवर्धनं द्रव्यम् । वक्ष्यते यच्चेति यच्च क्षीणबलीयेऽध्याये वाजीकरणे ( चि. अ. २६ ) वक्ष्यते । विडित्यादि । विट्प्रभे मूत्रपुरीषप्रकाशे रेतसि । विड्ग्रहणेनात्र पुरीषं मूत्रं च गृह्यते, मलमूत्रमात्रवाचकत्वाद्विट्शब्दस्य । सर्पिरित्यत्राप्यनुवर्तनीयम् । विण्मूत्राभेऽसाध्येऽपि दुःखकारिविट्गन्धापनयनार्थं चित्रकादिभिः कल्कीकृतैर्घृतं पेयं न तु सर्वथा सिद्ध्यर्थं, "असाध्यो नैति साध्यत्वं" इति वचनात् । सर्वेषां कुणपादीनां सामान्यं चिकित्सितमाह—स्निग्धमित्यादि ॥ ६—१० ॥—

**स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च ॥ ११ ॥**
**शुक्रमिच्छन्ति, केचित्तु तैलक्षौद्रनिभं तथा ॥**

इदानीमदुष्टशुक्रस्य लक्षणमाह—स्फटिकेत्यादि । इदानीमेकीयमतमाह—केचिदित्यादि ॥ ११ ॥—

**विधिमुत्तरबस्त्यन्तं कुर्यादार्तवशुद्धये ॥ १२ ॥**
**स्त्रीणां स्नेहादियुक्तानां चतसृष्वार्तवार्तिषु ॥**
**कुर्यात्कल्कान् पिचूंश्चापि पथ्यान्याचमनानि च १३**
**ग्रन्थिभूते पिबेत् पाठां त्र्यूषणं वृक्षकाणि च ॥**
**दुर्गन्धिपूयसङ्काशे मज्जतुल्ये तथाऽऽर्तवे ॥ १४ ॥**
**पिबेद्भद्रश्रियः क्वाथं चन्दनक्वाथमेव च ॥**
**शुक्रदोषहराणां च यथास्वमवचारणम् ॥ १५ ॥**
**योगानां शुद्धिकरणं शेषास्वप्यार्तवार्तिषु ॥**
**अन्नं शालियवं मद्यं हितं मांसं च पित्तलम् ॥ १६ ॥**

उत्तरबस्त्यन्तम् उत्तरबस्त्यवसानं; तत्र यथादोषं वमनादि, उत्तरबस्तिः पुनः सर्वेष्वेव, वातादिहरक्वाथस्नेहाभ्यां नैरूहिकः स्नैहिकश्च । आर्तवग्रहणादेव स्त्रीग्रहणे लब्धे पुनः स्त्रीग्रहणं समत्वागतयौवनप्रापणार्थम् । चतसृष्विति वातपित्तश्लेष्मशोणितकृतासु । **गयी** तु, चतसृष्वित्यत्र चतुर्थीं शोणितप्रकृतिभूतविस्रगन्धिशोणितार्तवार्तिं मन्यते, तस्या एव साध्यत्वात्; न तु कुणपगन्ध्यार्तवार्तिं, तस्यासाध्यत्वात् । कल्कादयस्तु योनिव्यापत्सु कथिता वातादिदोषहरद्रव्यकृताः । आचमनं योनिप्रक्षालनोदकं, तदपि वातादिदोषहरद्रव्यकृतम् । ग्रन्थीत्यादि । दुर्गन्धिपूयसङ्काशे पूतिगन्धिपूयोपमे कफपित्तदुष्टे इत्यर्थः । मज्जतुल्ये त्रिदोषमलिने । तथाशब्दाद्दुर्गन्धे इत्यत्रापि योजनीयं, तेन मूत्रपुरीषगन्धिनीति गम्यते । **गयी** त्वत्र "दुर्गन्धे कुणपगन्धिनि, पूयसङ्काशे पूतिपूयोपमे, मज्जतुल्ये त्रिदोषमलिने" इति व्याख्याति । क्षीणं च प्रागुक्तमित्यग्रे सूचयिष्यति । अत्र कुणपादीनां पञ्चानामसाध्यानामपि दुर्गन्धापनयनार्थं चिकित्सितप्रतिपादनं न तु सर्वथा सिद्ध्यर्थं, तेषामसाध्यत्वात् । भद्रश्रियं श्रीचन्दनं, चन्दनं रक्तचन्दनं; **गयी** तु भद्रश्रियं श्वेतचन्दनं, चन्दनं गोशीर्षाख्यं चन्दनवरं नतु रक्तचन्दनं, तस्य हि गन्धापहरणशक्तेरभावात् । वातादिदुष्टार्तवार्तिष्वन्यामपि चिकित्सामतिदेशेन निर्दिशन्नाह—शुक्रदोषहराणामित्यादि । शुक्रदोषहराणां स्नेहस्वेदादिपूर्वाणां, यथास्वं यथादोषम् । योगानां रसायनवाजीकरणमूत्रदोषप्रतिषेधोक्तानाम् । शेषासु वाताद्यैकैकदोषजनितास्वार्तवार्तिषु । शुद्धिकरणमवचारणं कार्यमिति संबन्धः । अशेषार्तवदुष्टीनां पथ्यमाह—अन्नमित्यादि । अन्नं भोजनार्थम् ॥ १२—१६ ॥

१ 'ऽश्ममिस्सिद्धं' इति पा० । २ 'तु पिबेत्' इति पा० । ३ अस्याग्रे 'स्नेहादिश्च क्रमः कार्यः षट्स्वेतासु विजानता' इत्यधिकः पाठः क्वचिदुपलभ्यते ।

१ 'दुर्गन्धे पूयसङ्काशे' इति पा० । २ 'भद्रश्रियं' इति पा० । ३ 'दोषाणां' इति पा० । ४ 'योनिप्रक्षालनं' इति पा० । ५ 'पूयोपमे' इति पा० ।

**शशासृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमम् ॥**
**तदार्तवं प्रशंसन्ति यद्वा[1]सो न विरञ्जयेत् ॥ १७ ॥**

अदुष्टार्तवस्य लक्षणमाह—शशासृगित्यादि । यदार्तवं वासःस्थितं शुष्कमुदकप्रक्षालितं वासो न विरञ्जयेत् रागोपेतं वस्त्रं न कुर्यात् तत् प्रशंसन्ति, 'गर्भजननाय' इति शेषः ॥ १७ ॥—

**तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि ॥**
**असृग्दरं विजा[2]नीयादतोऽन्यद्रक्तलक्षणात् ॥ १८ ॥**
**असृग्दरो भवेत् सर्वः साङ्गमर्दः सवेदनः ॥**
**त[3]स्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा तम[4]स्तृषा ॥१९॥**
**दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ॥**
**तरुण्या हितसेविन्यास्तमल्पोपद्रवं भिषक् ॥ २० ॥**
**रक्तपित्तविधानेन यथावत् समुपाचरेत् ॥**

तस्यैवातिप्रवृत्तस्यासृग्दरत्वं, तत्र च दोषदुष्टिलक्षणमाह—तदेवातिप्रसङ्गेनेत्यादि । तदेव आर्तवमेव, न तु रक्तपित्तम् । ऋतावतिप्रसङ्गेनेति अतिप्राचुर्येण दीर्घकालानुबन्धेन वा (च), प्रवृत्तं स्रुतम् । न परमृतावेवेत्याह—अनृतावपीति ।—अनृतावल्पमप्यदीर्घकालमपि प्रवृत्तमसृग्दरं विजानीयात् । किंस्वरूपं तदित्याह—अत इत्यादि । अत एतस्मात् शशासृक्प्रतिममित्यादिवाक्यप्रतिपादितादृक्तलक्षणात्, अन्यत् अन्यादृक्लक्षणं 'फेनिलं शीघ्रमच्छम्' ( सू. अ. १४ ) इत्यादिवाक्येन शोणितवर्णनीये यादृशमभिहितं तादृशमित्यर्थः । दोषानुबन्धकृतं लक्षणमतिदेशेन निर्दिश्य व्याधिस्वभावकृतं सामान्यं लक्षणमाह—असृगित्यादि । अङ्गमर्दो वेदनाविशेषः । सवेदनः सशूलः । तस्यातिस्रुतस्य लक्षणमाह—तस्येत्यादि । अतिवृत्तौ अतिप्रवृत्तावित्यर्थः । तमोऽन्धकारदर्शनं, श्वासो वा । प्रलापोऽसंबद्धभाषणम् । तन्द्रा निद्राभेदः । वातजा रोगा आक्षेपकादयः । यस्या यद्रूपं यादृशेन प्रकारेणोपचरणीयं तदाह—तरुण्या इत्यादि । तरुण्याः षोडशवर्षप्राप्तायाः, हितसेविन्याः पथ्याशिन्याः ॥ १८—२० ॥—

**दोषैरावृतमार्गत्वादार्तवं नश्यति स्त्रियाः ॥ २१ ॥**
**तत्र म[5]त्स्यकुलत्थाम्लतिलमाषसुरा हिताः ॥**
**पाने मूत्रमुदश्विच्च दधि शुक्तं च भोजने ॥ २२ ॥**
**क्षीणं प्रागीरितं रक्तं सलक्षणचिकित्सितम् ॥**
**त[6]थाऽप्यत्र विधातव्यं विधानं नष्टरक्तवत् ॥ २३ ॥**

अतिप्रवृत्तिलक्षणामार्तवस्य विकृतिं निर्दिश्याप्रवृत्तिलक्षणां सचिकित्सितां निर्दिशन्नाह—दोषैरित्यादि । अत्र दोषाः कफो वायुर्वातकफौ च; न तु पित्तं, पित्तवृद्धौ तस्यातिप्रवृत्तिदृष्ट्योरुक्तत्वात्, कुलत्थादिवातकफहरद्रव्यावचारणाच्च । नश्यतीति प्रवर्तमानं न दृश्यते, न तु सर्वथा क्षयं याति । अम्लं काञ्जिकं, मूत्रं गोमूत्रम् । उदश्वित् अर्धोदकं तक्रम् । शुक्तं चुक्रम् । पुनरुक्तिशङ्कां निरस्यन्नाह—क्षीणमित्यादि । यद्यपि प्राग्दोषधातुमलक्षयवृद्धिविज्ञानीये क्षीणलक्षणं सचिकित्सितमभिहितं, तथाऽप्यत्रोपादानान्नष्टरक्तवन्नष्टार्तवविधानं कर्तव्यम् । रक्तमार्तवरक्तम् ॥ २१—२३ ॥

**एवमदुष्टशुक्रः शुद्धार्तवा च ॥ २४ ॥**

प्रकरणप्रयोजनमुपसंहरन्नाह—एवमित्यादि । एवं पूर्वोक्तेन प्रकारेण, अदुष्टशुक्रः पुरुषः, शुद्धार्तवा च स्त्री, 'भवति' इत्यत्राध्याहारः ॥ २४ ॥

**ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत् । किं कारणं? दिवा स्वपन्त्याः स्वापशीलः, अञ्जनादन्धः, रोदनाद्विकृतदृष्टिः, स्नानानुलेपनादुःखशी[1]लः, तैलाभ्यङ्गात् कुष्ठी, नखापकर्तनात् कुनखी, प्रधावनाच्चञ्चलः, हसनाच्छ्यावदन्तौष्ठतालुजिह्वः, प्रलापी चातिकथनात्[2], अतिशब्दश्रवणाद्बधिरः, अवलेखनात् खलतिः, मारुतायाससेवनादुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत् । दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्यं, त्र्यहं च भर्तुः संरक्षेत् । ततः शुद्धस्नातां चतुर्थेऽहन्यहतवा[3]सःसमलङ्कृतां कृतमङ्गलस्वस्तिवाचनां भर्तारं दर्शयेत् । तत् कस्य हेतोः? ॥२५॥**

**पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ॥**
**तादृशं जनयेत् पुत्रं भर्तारं दर्शयेदतः ॥ २६ ॥**
**ततो विधानं पुत्रीयमुपाध्यायः समाचरेत् ॥**
**कर्मान्ते च क्रमं ह्येतमारभेत विचक्षणः ॥ २७ ॥**

**ततोऽपराह्णे पुमान् मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिःक्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयाद्रात्रौ सामभिर[4]भिविश्वास्य[5]; विकल्प्यैवं चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां द्वादश्यां चोपेया[6]दिति पुत्रकामः ॥ २८ ॥**

**एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च ॥**
**प्रजासौभाग्यमैश्वर्यं बलं च दिवसेषु वै ॥ २९ ॥**

**अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्यां च स्त्रीकामः; त्रयोदशीप्रभृतयो निन्द्याः ॥ ३० ॥**

---

१ 'यद्वाऽप्सु न विरज्यते' इति ता. । २ 'विजानीयादुक्तलक्षणलक्षितम्' इति पा० । 'विजानीयाद्रक्तलक्षणलक्षितम्' इति ता. । ३ 'अतिप्रवृत्तौ' इति ता. । ४ 'मदस्तृषा' इति ता. । ५ 'मांस°' इति ता. । ६ 'अथाप्यत्र' इति पा० ।

१ '°दुःशीलः' इति ता. । २ 'प्रलेपनात्' इति पा० । ३ 'अनाहतवस्त्रवासिनीं' इति ता. । ४ 'अभिप्राय' इति ता. । ५ 'आश्वास्य' इति पा० । ६ '°दतः परं मासादुपेयात्, लब्धगर्भा नैव च' इति ता. ।

ऋतौ पुत्रीयमाचारं निर्दिशन्नाह—ऋताविल्यादि । ऋतुकाले प्रथमदिवसं मर्यादीकृत्य नारी ब्रह्मचारिणी स्यात् । ऋतुदर्शनात् पूर्वं मासं ब्रह्मचर्यस्य वक्ष्यमाणस्य विशिष्टप्रजोत्पादनं प्रयोजनम् । अस्मिंश्च ऋतुदर्शने दिनत्रयं ब्रह्मचर्यस्य स्वयमेवाचार्योऽग्रे प्रयोजनं कथयिष्यति । दिवास्वप्नादींश्च परिहरेत् । अतिकथनं बहुभाषणम् । अवलेखनं कङ्कतिकादिना केशसंमार्जनम् । आयासः कष्टम् । किं कारणमिल्यादि । उन्मत्तो वातलः । परिहार्यमुक्त्वा भर्तारं प्रति नार्याः करणीयं निर्दिशन्नाह—दर्भेल्यादि । हविष्यं सघृतशाल्योदनादि क्षीरसंस्कृतं, यवान्नमित्येके । भर्तुः संरक्षेत् 'वैद्य' इति शेषः, तस्मै दर्शनमपि न दापयेदित्यर्थः । तत इत्यादि । शुद्धा जीर्णशोणितापगमेन, अनन्तरं स्नाता; तदुक्तं—"नवे ऋतौ च संजाते विगते जीर्णशोणिते । नारी भवति संशुद्धा पुंसा संसृज्यते तदा"—इति । दर्शयेदित्यत्र 'वैद्य' इति शेषः । तत् कस्य हेतोरित्यत्र तच्छब्दः संबोधने, तेनाहो कस्य हेतोः । अन्ये तु 'अत्रापि' इति प्रश्नार्थं पठन्ति । तत्रापि प्रश्ने । पूर्वमिल्यादि । पुत्रेभ्यो हितं पुत्रीयमिति । **गयी** तु "तत्राचार्यो ब्राह्मणप्रयुक्तोऽनुपहतश्वेतवस्त्रेण संवीतश्चार्षभे चर्मण्युपविष्टो, राजन्यप्रयुक्तो वैयाघ्रे आनडुहे वा, वैश्यप्रयुक्तो रौरवे, शूद्रप्रयुक्तो वास्ते वा, चतुर्हस्तं स्थण्डिलमुपलिप्योल्लिख्य दर्भैरास्तीर्य वेणुयूपं दक्षिणेन ब्राह्मणं व्यवस्थाप्य शुक्लकुसुमगन्धबलिभिरभ्यर्च्याग्निं प्रणीय संस्कृत्य पालाशीभिः समिद्भिरग्निमुपसमाधाय मन्त्रोदकपूर्णपात्रमग्नेरग्रे स्थापयित्वा पुत्रजन्माशास्याज्यं जुहुयान्महाव्याहृतिभिः, योषिच्च पुत्रार्थिनी सह भर्त्रा पश्चिमतोऽग्नेः ऋत्विजो दक्षिणतः समुपविशेत्, ततोऽस्या ब्राह्मणः प्रजापतिमुद्दिश्य यथाभिलषितसंपादनाय मनसा योनौ काम्यामिष्टिं निर्वपेत्, अनयोर्विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि निविशत्विति; ततः स्थालीपाकमभिघार्य त्रिर्जुहुयात्, यथाम्नायं चोपमन्त्रितमुदपात्रमस्मै दद्यात्, सर्वानुदकार्थान् कुरुष्वेति; ततः समाप्ते कर्मणि पूर्वं दक्षिणं पादमभिहनन्ती प्रदक्षिणमग्निमुपक्रमेत्, ततः परिक्रम्य ब्राह्मणान् स्वस्ति वाचयित्वा सह भर्त्रा आज्यशेषं प्राश्नीयात्, पूर्वं पुमान्, जघन्यं स्त्री, न चोच्छिष्टमवशेषयेदिति पुत्रीयविधानम्"—इति । कर्मान्ते पुत्रीयविधानान्ते, एतं क्रमं वक्ष्यमाणम् । तमेव क्रमं वक्तुमाह—ततोऽपराह्ने इल्यादि । पुंसो मासब्रह्मचारित्वेन स्त्रिया अपि ब्रह्मचारित्वे लब्धे मासं ब्रह्मचारिणीमिति यदुक्तं तन्मनःसङ्कल्पमात्रस्यापि निरासार्थम् । तैलमाषोत्तराहारां तैलमाषप्रधानाहाराम् । उपेयात् गच्छेत् । सामान्यापत्यजननकालमृतुसंज्ञं निर्दिश्यापत्यविशेषजननसमर्थकालमुद्दिशन्नाह—विकल्प्यैवमिल्यादि । एषु दिवसेषूत्तरोत्तरमायुरित्यादिकं विद्यादित्येवं विकल्प्य विचार्य चतुर्थ्यादिषु रात्रिषु नारीमुपेयात् । अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्यां च स्त्रीकामः, उपेयादित्यत्रापि संबध्यते ॥ २५—३० ॥

**तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति, यश्च तत्राधीयते गर्भः स प्रसवमानो विमुच्यते; द्वितीयेऽप्येवं सूतिकागृहे वा; तृतीयेऽप्येवमसंपूर्णाङ्गोऽल्पायुर्वा भवति; चतुर्थे तु संपूर्णाङ्गो दीर्घायुश्च भवति । न च प्रवर्तमाने रक्ते बीजं प्रविष्टं गुणकरं भवति, यथा नद्यां प्रतिस्रोतः प्लाविद्रव्यं प्रक्षिप्तं प्रतिनिवर्तते नोर्ध्वं गच्छति तद्वदेतद्द्रष्टव्यम् । तस्मान्नियमवतीं त्रिरात्रं परिहरेत् । अतः परं मासादुपेयात् ॥ ३१ ॥**

तत्रेत्यादि । तत्रेति प्रथमदिवसे । विमुच्यते 'प्राणैः' इति शेषः । द्वितीये इत्यादि । एवमिति पूर्वोक्तं भवतीत्यर्थः । सूतिकागृहे वा दशदिवसाभ्यन्तरं वा गर्भः प्राणैर्विमुच्यत इत्यर्थः । न च प्रवर्तमाने इत्यादि । प्रतिस्रोतः धारासंमुखमित्यर्थः । प्लाविद्रव्यं प्रतरणशीलं वस्तु । प्रतिनिवर्तते व्याघुटति । **गयी** तु 'तत्र प्रथमदिवसे' इत्यादि 'तस्मान्नियमवतीं त्रिरात्रं परिहरेत्' इति यावद्ग्रन्थमग्रेतनेऽध्याये 'ऋतुस्तु द्वादशरात्रं भवति दृष्टार्तवः' इत्यस्याग्रे पठति । अतः परमित्यादि । मासादिति 'ऊर्ध्वम्' इति शेषः । अर्वाग्गमनं तु गर्भद्वारविघट्टनेन स्थितमपि गर्भं च्यावयति । केचित्तु 'अतः परं मासादुपेयात्' इत्यत्र 'परतस्तु पुष्पदर्शनेनागर्भलाभनिश्चय एव, लब्धगर्भां तु नैव' इति पठन्ति, 'उपेयात्' इत्यध्याहृत्य च व्याख्यानयन्ति ॥ ३१ ॥

**लब्धगर्भायाश्चैतेष्वहःसु लक्ष्मणावटशुङ्गसहदेवाविश्वदेवानामन्यतमां क्षीरेणाभिषुत्य त्रींश्चतुरो वा बिन्दून् दद्याद्दक्षिणे नासापुटे पुत्रकामायै[2], न च तान्निष्ठीवेत् ॥ ३२ ॥**

लब्धगर्भाया इत्यादि । लक्ष्मणालक्षणं तु—"पुत्रकाकाररक्ताल्पबिन्दुभिर्लाञ्छितच्छदा । लक्ष्मणा पुत्रजननी बस्तगन्धाकृतिर्भवेत्—"इति । तां च शरत्काले पुष्पफलोपेतां दृष्ट्वा शनिदिने सन्ध्यायां तस्याश्चतुर्भागेषु खदिरकीलकान्निखायापरेद्युर्हस्तमूलपुष्यैर्योगं गते दिवाकरे मन्त्रवद्गृहीत्वा समानवर्णवत्साया गोः क्षीरेण यथाविधि नस्यं दद्यात् । वटशुङ्गो वटप्ररोहः । सहदेवा बलाभेदः पीतपुष्पा 'काङ्कही' इति लोके । विश्वदेवा गाङ्गेरुकी 'गुडशर्करा' इति लोके, अन्ये सितकुसुमां बलामाहुः । अभिषुत्य पेषयित्वा । न च तान् निष्ठीवेत् न थुत्कुर्यात् । चकारादलब्धगर्भायाः पूर्वमेव लक्ष्मणादीनां नस्यदानं सहस्राभिहुतं गर्भग्रहणाय पश्चाद्ग्राम्यधर्मसेवनमिति । तदुक्तं तन्त्रान्तरे—"पूर्वमौषधं सहस्राभिहुतं कृत्वा मङ्गल्यदेशे गोः क्षीरेण पेषयित्वा तस्मात् त्रीन् बिन्दून् दक्षिणे नासापुटे दद्यात्, न निष्ठीवेत्तान् कण्ठप्राप्तान्, सा पञ्चदिनानि पयसोदनमश्नीयात्, तदूर्ध्वं ग्राम्यधर्मसेवनम्"—इति । लब्धगर्भायाश्च

१ 'दर्शयन्नाह' इति पा० । २ 'तनौ' इति पा० । ३ 'वास्ते' इति पा० । ४ 'ततश्चाज्येन' इति पा० ।

१ 'विपद्यते' इति ता. । २ अस्याग्रे 'वामे दुहितृकामायै' इत्यधिकं पठ्यते कचित्पुस्तके । ३ 'सर्वमेव' इति पा० ।

लक्ष्मणादिनस्यदानं गर्भस्थापनार्थं, स्थितगर्भायाश्च मासत्रयाल्पान्तरे पुत्रापत्यजननार्थं नस्यदानमिति ॥ ३२ ॥

**ध्रुवं चतुर्णां सान्निध्याद्गर्भः स्याद्विधिपूर्वकम् ॥**
**ऋतुक्षेत्राम्बुबीजानां सामग्र्यादङ्कुरो यथा ॥ ३३ ॥**

नात्रैकमेव शुक्रशोणितं गर्भजननं किं तर्हि सामग्र्येवेति दर्शयन्नाह—ध्रुवमित्यादि । यथा—ऋतुक्षेत्राम्बुबीजानां सामग्र्यादनुपघातादङ्कुरो जायते, एवं ध्रुवं निश्चितं चतुर्णामृत्वादीनां नैकद्वित्रिसंख्यानां विधिपूर्वकं सान्निध्याद्यथोक्तसंयोगाद्गर्भो जायते । ऋतुरङ्गनाया रजःसमयः, क्षेत्रं गर्भाशयः, अम्बु पुनराहारपाकजो व्यापी रसधातुः, बीजं स्त्रीपुंसयोरार्तवशुक्रे ॥ ३३ ॥

**एवं जाता रूपवन्तः [1]सत्त्ववन्तश्चिरायुषः ॥**
**भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणे हिताः ॥३४॥**

विधिपूर्वकस्य गर्भस्य फलं दर्शयन्नाह—एवमित्यादि । रूपमत्रावयवसन्निवेशो लोचनसुखप्रदः । सत्त्ववन्तो रजस्तमोभ्यामनभिभूताः । ऋणस्य मोक्तार इति पितॄणामृणत्रयमोक्षणशीलाः । सत्पुत्रा इति साधवः पुत्राः ॥ ३४ ॥

**तत्र तेजोधातुर्वर्णानां[2] प्रभवः, स यदा गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं करोति, पृथिवीधातुप्रायः कृष्णं, पृथिव्याकाशधातुप्रायः कृष्णश्यामं, तोयाकाशधातुप्रायो गौरश्यामम् । 'यादृग्वर्णमाहारमुपसेवते गर्भिणी तादृग्वर्णप्रसवा भवति' इत्येके भाषन्ते । तत्र दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति, तदेव रक्तानुगतं रक्ताक्षं, पित्तानुगतं पिङ्गाक्षं, श्लेष्मानुगतं शुक्लाक्षं, वातानुगतं विकृताक्षमिति[3] ॥ ३५ ॥**

एवंविधपूर्वजन्मानां रूपवत्त्वमुक्त्वा, रूपं च तैजसवर्णादिप्रभास्वरत्वमतो वर्णसंभवहेतुं दर्शयन्नाह—तत्रेत्यादि । तेजोधातुः तेजोभूतम् । वर्णानां प्रभवः कारणम् । स तेजोधातुः । गर्भोत्पत्तौ गर्भाधानकाले, यदा अब्धातुप्रायो भवति आप्यधातुबहुलो भवतीत्यर्थः । एकीयमतमाह—यादृगित्यादि । तेजोधातुरूपवर्णप्रसङ्गेनैतन्मयाद्यधिष्ठानविकृत्या जात्यन्धरक्तपिङ्गशुक्लविकृताक्षाणां संभवं दर्शयन्नाह—तत्र दृष्टीत्यादि । चतुर्थे मासि कस्यचित् पूर्वकर्मवशाद्दृष्टिभागं चक्षुरिन्द्रियाधिष्ठानम्, अप्रतिपन्नमप्राप्तं तेजो, जात्यन्धं जन्मान्धं करोति ॥३५॥

भवन्ति चात्र—

**घृतपिण्डो यथैवाग्निमाश्रितः प्रविलीयते ॥**
**विसर्पत्यार्तवं नार्यास्तथा[1] पुंसां समागमे ॥ ३६ ॥**

ननु, पुराणमार्तवमुपचयाद्दिनत्रयं स्रुत्वा स्वयमेव विनिवृत्तं, नूतनं त्वल्पं स्त्यानीभूतमिव प्रवर्तितुमक्षमं, तत् कथमार्तवसंचारो येन तत्संसृष्टं शुक्रं गर्भजननसमर्थं भवतीत्याशङ्क्याह—घृतेत्यादि । पुंसां समागमे इन्द्रियद्वयसंघर्षजेनोष्मणा विलीनमार्तवं विसर्पति । तच्च विसर्पितं शुक्रोपगतं गर्भाशयमनुप्राप्तं जीवोपगतं गर्भसंभवहेतुर्भवति । आर्तवमृतुकालजं शोणितं, शुक्रमप्यासां पुंसां समागमे क्षरति, न तु तद्गर्भोपयोगीति तत्क्षरणप्रतिपादनं न युक्तम् । तथाच **वृद्धवाग्भटः**—"योषितोऽपि स्रवन्त्येव शुक्रं पुंसां समागमे । तन्न गर्भस्य किंचित्तु करोतीति न चिन्त्यते"—( अ. सं. शा. अ. १ )। इति ॥ ३६ ॥

**बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ ॥**
**यमावित्यभिधीयेते धर्मेतरपुरःसरौ[3] ॥ ३७ ॥**

गर्भद्वयोत्पत्तिहेतुमाह—बीजे इत्यादि । धर्मेतरपुरःसरौ धर्माधर्मपुरोगामिनौ । **गयी** तु, धर्मेतरोऽधर्मः, तत्पुरःसरौ अधर्मपुरोगामिनौ; न तु धर्माधर्मपुरःसरौ; यतः श्रुतिस्मृतिष्वधर्मादेव यमोत्पत्तिरिष्टा; अत एव तदुत्पत्तौ प्रायश्चित्तमप्युपदिष्टमिति व्याख्याति ॥ ३७ ॥

**पित्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत् ॥**
**स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् ॥ ३८॥**

पित्रोरित्यादि । पित्रोः पितृमात्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत् आसेक्यो नाम पुरुषो जायते । स शुक्रं प्राश्येति स पुरुषोऽन्यपुरुषान्निजमुखेन व्यवायं कारयित्वा [4]ततः सिक्तं शुक्रं प्राश्य आस्वाद्य ध्वजोच्छ्रायं लिङ्गोत्थानं लभते; आसेक्यनामाऽयं षण्ढो मुखयोन्यपरपर्यायः ॥ ३८ ॥

**यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः ॥**
**स योनिशेफसोर्गन्धमाघ्राय लभते बलम् ॥ ३९ ॥**

यः पूतियोनावित्यादि । योनिशेफसोर्गन्धमाघ्राय सिद्धित्वा; अयं सौगन्धिकनामा षण्ढो नासायोन्यपरपर्यायः ॥ ३९ ॥

**स्वे गुदेऽब्रह्मचर्याद्यः स्त्रीषु पुंवत् प्रवर्तते ॥**
**कुम्भीकः स तु विज्ञेयः**

स्वे गुदे इत्यादि । यः पुरुषः स्वे गुदे स्वकीयपायौ, अब्रह्मचर्यात् अन्यपुरुषपार्श्वाद्व्यवायं कारयित्वा पश्चात् स्त्रीषु विषये

---

१ 'महासत्त्वा°' इति पा० । २ 'सर्ववर्णानां' इति पा० । ३ अस्याग्रे ता. पुस्तके "भवन्ति चात्र श्लोकाः-विशुद्धः पवनो यस्य नयने प्रतिपद्यते । जायेते नयने तस्य निम्ने कृष्णे सिते तथा ॥ पित्तं कफयुतं यस्य निर्मलं याति लोचने । हरिपिङ्गलसंज्ञे वै जायेते तस्य लोचने ॥ विनिर्धूतमलः श्लेष्मा यदा व्रजति लोचने । तस्य नेत्रे प्रकाशेते शुक्लमण्डलमण्डले ॥ रक्तं कफयुतं यस्य यदा व्रजति लोचने । कपोतनीले नयने रक्ते वा जायते नृणाम्" इत्यधिकः पाठ उपलभ्यते ।

१ 'पुरुषस्य समागमात्' इति ता. । २ 'गर्भाशयमनुप्रतिपद्यत इत्यग्रे वक्ष्यमाणमुपपत्स्यत इत्याशंक्याह' इति पा० । ३ अस्याग्रे ता. पुस्तके 'मिश्रीभावे यदा पुंसां रेतस्तु बहु निर्मलम् । तदा प्रसूयते नारी गर्भिणी दारकद्वयम् ॥ मिश्रीभावे स्त्रियाश्चैव बहु शुक्रं यदा भवेत् । कन्याद्वयं तदा नारी सूयते नात्र संशयः' इत्यधिकः पाठ उपलभ्यते । ४ 'तत्र' इति पा० ।

पुमानिव प्रवर्तते पुरुषवद्व्यवायं करोति स कुम्भीकनामा षण्डो ज्ञेयः । अन्ये तु "प्रथमं स्त्रीषु विषये तासामेव स्वकीयगुदविवरे पशुवत् पृष्ठभागे शिथिलेनैव मेहनेन प्रवर्तते । किंनिमित्तमेतदित्याह—ब्रह्मचर्यात् क्लैब्यवशसंजाताप्रवृत्तित्वात् । ततश्चानया विप्रकृत्या ध्वजोच्छ्राये संजाते स एव स्त्रीषु पुरुषवत् प्रवर्तते स कुम्भीकनामा नपुंसकभेदः" । गुदयोनिरयम् । अस्योत्पत्तिहेतुस्तन्त्रान्तरे वर्णितो यथा—"मातुर्व्यवायप्रतिघेन वक्री स्याद्बीजदौर्बल्यतया पितुश्च" (च. शा. अ. २) इति । गयी तु कुम्भीकोत्पत्तिहेतौ काश्यपोक्तं श्लोकमाह । यथा—"अरजस्कां यदा नारीं श्लेष्मरेता व्रजेदृतौ । अन्यैसक्ता भवेत् प्रीतिर्जायते कुम्भिलस्तदा" इति ॥—

**ईर्ष्यकं शृणु चापरम् ॥ ४० ॥**
**दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्तते ॥**
**ईर्ष्यकः स तु विज्ञेयः,**

ईर्ष्यकमित्यादि । दृग्योनिरयमीर्ष्यकापरपर्यायः । अत्रापि तन्त्रान्तरपठितो हेतुर्यथा—"ईर्ष्याभिभूतावपि मन्दहर्षावीर्ष्यार्हयस्यापि वदन्ति हेतुम्—" (च. शा. अ. २) इति ॥ ४० ॥—

**षण्ढकं शृणु पञ्चमम् ॥ ४१ ॥**
**यो भार्यायामृतौ मोहादङ्गनेव प्रवर्तते ॥**
**ततः स्त्रीचेष्टिताकारो जायते षण्ढसंज्ञितः ॥ ४२ ॥**

षण्ढकमित्यादि । यः पुमान् मोहवशादृतौ भार्याविषयेऽङ्गनावदुत्तानो भूत्वा व्याप्रियते । ततः स्त्रीचेष्टिताकारः षण्ढो जायते । स पुमान् स्त्र्याकृतिः स्त्रीचेष्टितश्च स्त्रीवदधोभूतः स्वमेढ्रस्योर्ध्वप्रदेशेऽपरपुरुषाद् वीर्यच्युतिं कारयति ॥४१॥४२॥

**ऋतौ पुरुषवद्वाऽपि प्रवर्तेताङ्गना यदि ॥**
**तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता ॥ ४३ ॥**

नरषण्डं प्रदिश्य नारीषण्डं निर्दिशन्नाह—ऋतावित्यादि । यत्र पुनरबला ऋतौ पुरुषमधः कृत्वा व्यापारं कुरुते यदि तत्र कन्या भवति, सा नरचेष्टिता स्त्रीरूपाऽपि पुंवत् स्त्रियमारुह्य तद्योनौ स्वयोनिघर्षणं करोति ॥ ४३ ॥

**आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा ॥**
**सरेतसस्त्वमी ज्ञेया अशुक्रः षण्ढसंज्ञितः ॥ ४४ ॥**

उक्तमेव सुखस्मरणाय संग्रहश्लोकेनाह—आसेक्य इत्यादि ॥ ४४ ॥

**अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः ॥**
**हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत् ४५**

यदि तेषां शुक्रमस्ति तत् किं षण्डत्वमुच्यते ? इत्याशङ्क्याह—अनयेत्यादि । विप्रकृत्येति विरुद्धया विशिष्टया वा प्रकृत्या । एते पुरुषदोषाः, योषितामप्येत एव द्रष्टव्याः, चरकेण "नरनारीषण्ढौ" (च. शा. अ. २) इत्युक्तेः ॥ ४५ ॥

**आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ ॥**
**स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥४६॥**

अनुक्तं कायवाङ्मनसां भेदस्य हेतुं दर्शयन्नाह—आहारेत्यादि । समुपेयातां संयोगं गच्छेताम् ॥ ४६ ॥

**यदा नार्यावुपेयातां वृषस्यन्त्यौ कथंचन ॥**
**मुञ्चतः शुक्रमन्योन्यमनस्थिस्तत्र जायते ॥ ४७ ॥**

अतिशयेनैव पापेन षण्ढादपि निकृष्टानां विकृतापत्यानामुत्पत्तिहेतुं निर्दिशन्नाह—यदेत्यादि । उपेयातां संयोगं कुर्याताम् । वृषस्यन्त्यौ रतार्थिन्यौ । अनस्थिरिति ईषदर्थे नञ्, तेनाल्पकोमलास्थिः ॥ ४७ ॥

**ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् ॥**
**आर्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥ ४८ ॥**
**मासि मासि विवर्धेत गर्भिण्या गर्भलक्षणम् ॥**
**कललं जायते तस्या वर्जितं पैतृकैर्गुणैः ॥ ४९ ॥**

ऋतुस्नातेत्यादि । आर्तवमृतुकालजं शुद्धशोणितम् । कललं सिङ्घाणप्रख्यम् । पैतृकैर्गुणैरिति केशश्मश्रुलोमनखदन्तसिरास्नायुधमनीरेतःप्रभृतिभिः । इमौ द्वावपि श्लोकौ जेज्झटाचार्येण न पठितौ ॥ ४८ ॥ ४९ ॥

**सर्पवृश्चिककूष्माण्डविकृताकृतयश्च ये ॥**
**गर्भास्त्वेते स्त्रियाश्चैवं ज्ञेयाः पापकृतो भृशम् ॥ ५० ॥**

सर्पेत्यादि । सर्पादिरूपा ये गर्भास्तत्प्रसविन्याः स्त्रियाः पापकृतः पापोत्पादिता ज्ञेयाः । ननु, मानुषशरीरात् कथं सर्पादीनामुत्पत्तिरित्याह—पापकृतो भृशमिति; कर्मजमेवैतद्वैचित्र्यमित्यर्थः ॥ ५० ॥

**गर्भो वातप्रकोपेण दौर्हृदे वाऽवमानिते ॥**
**भवेत् कुब्जः कुणिः पङ्गुर्मूको मिन्मिण एव वा ॥५१॥**

इदानीं गर्भस्थकुब्जादीनां दृष्टामेव वातादिदोषदुष्टिं हेतुं च निर्दिशन्नाह—गर्भ इत्यादि । दौहृदे वाऽवमानित इति गर्भिण्याः श्रद्धायां खण्डितायाम् । कुणिः विकलपाणिः ॥ ५१ ॥

**मातापित्रोस्तु नास्तिक्यादशुभैश्च पुराकृतैः ॥**
**वातादीनां प्रकोपेण गर्भो वैकृतमाप्नुयात् ॥ ५२ ॥**

किमात्मीयेनैवाशुभेन कर्मणा गर्भ एवंविधो भवति, उतान्यापराधादपीत्याशङ्क्याह—मातापित्रोरित्यादि । नास्तिक्यादिति नास्ति परलोको नास्ति दत्तमित्यादि मतिर्येषां ते नास्तिकाः, तेषां भावो नास्तिक्यं, तस्मात् ॥ ५२ ॥

---

१ 'अब्रह्मचर्याद् क्लैब्याद् संजातशुक्रस्याप्रवृत्तित्वाद्' इति पा० । २ 'अन्यासक्ता' इति पा० । ३ 'व्यवायं' इति पा० ।

१ 'गर्भोऽपि' इति ता. । २ 'मुञ्चन्त्यौ' इति पा० । ३ 'गर्भा एवंविधाश्चान्ये' इति ता. । ४ 'दौर्हृदेन विमानितः' इति ता. । ५ 'विकृतपाणिः' इति पा० ।

**मलाल्पत्वादयोगाच्च वायोः पक्काशयस्य च ॥**
**वातमूत्रपुरीषाणि न गर्भस्थः करोति हि ॥ ५३ ॥**

अथ कस्माद्गर्भाशयस्थो वातादिकं न करोतीत्याह—मलाल्पत्वादित्यादि । वायोरयोगादिति नञयमिषदर्थे, तेनेषद्योगात् ॥५३॥

**जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते ॥**
**वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति ॥ ५४ ॥**

जरायुणेत्यादि । वायोर्मार्गनिरोधादिति घोषजनकस्य वायोर्मार्गनिरोधादित्यर्थः । निश्वासादिरूपस्य तु वायोर्निःसरणमग्रे वक्ष्यति, यतस्तदभावे जीविताभाव एव भवति गर्भस्य ॥५४॥

**निःश्वासोच्छ्वाससङ्क्षोभस्वप्नान् गर्भोऽधिगच्छति ॥**
**मातुर्निश्वसितोच्छ्वाससङ्क्षोभस्वप्नसंभवान् ॥ ५५ ॥**

निःश्वासेत्यादि । संक्षोभः संचलनम् । माता याश्चेष्टा निःश्वासादिकाः कुरुते ता गर्भोऽपि करोतीत्यर्थः ॥ ५५ ॥

**सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ ॥**
**तलेष्वसंभवो यश्च रोम्णामेतत् स्वभावतः ॥ ५६ ॥**

शरीरावयवानां चरणादीनां संनिवेशादौ हेतुं निर्दिशन्नाह—सन्निवेश इत्यादि । सन्निवेशो रचनाविशेषः । शरीराणां शरीरावयवानां चरणादीनाम् । तलेष्विति हस्तपादतलेषु ॥ ५६ ॥

**भाविताः पूर्वदेहेषु सततं शास्त्रबुद्धयः ॥**
**भवन्ति सत्त्वभूयिष्ठाः पूर्वजातिस्मरा नराः ॥५७॥**

इत्थं काये विशेषं निर्दिश्यात्मनो गुणभूताया बुद्धेरपि भावनाबलविशेषेण विशेषं निर्दिशन्नाह—भाविता इत्यादि । पूर्वदेहेष्वतिक्रान्तशरीरेषु, सततमनवरतं, ये भाविताः शास्त्रभावनया भावितान्तःकरणाः, ते शास्त्रबुद्धयो भवन्ति । तथाभाविता एव ये सत्त्वबहुलास्ते रजस्तमसोरावरकयोरभावात् पूर्वामतिक्रान्तामपि जातिं स्मरन्ति ॥ ५७ ॥

**कर्मणा चोदितो येन तदाप्नोति पुनर्भवे ॥**
**अभ्यस्ताः पूर्वदेहे ये तानेव भजते गुणान् ॥ ५८ ॥**

**इति सुश्रुतसंहितायां शारीरस्थाने शुक्रशोणितशुद्धिशारीरं नाम द्वितीयोऽध्यायः ॥ २ ॥**

काये योऽसौ शरीरसन्निवेशादिस्तथा दोषकोपेन कुब्जखञ्जादि, तथा वाचि मूकमिन्मिणत्वादि, मनसि च शास्त्रज्ञानपूर्वजातिस्मरणं, सर्वमेव स्वभावादिसिद्धमपि कर्मणैवेत्याह—कर्मणेत्यादि । कुतस्तदाप्नोतीत्याह—अभ्यस्ता इत्यादि ॥ ५८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

**अथातो गर्भावक्रान्तिं शारीरं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

शुद्धशुक्रार्तवसंभवत्वाद्गर्भस्य शुक्रशोणितशुद्ध्यनन्तरं गर्भावक्रमणं युज्यत इत्याह—अथेत्यादि । अत्र हि शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं गर्भ इत्युच्यते, तस्यावक्रान्तिरुपगमनमवतरणमिति यावद् गर्भावक्रान्तिः, साऽस्मिन्नस्तीति पूर्ववच्छप्रत्ययलुकौ ॥ १ ॥ २ ॥

**सौम्यं शुक्रमार्तवमाग्नेयमितरेषामप्यत्र भूतानां साान्निध्यमस्त्यणुना विशेषेण, परस्परोपकारात् (परस्परानुग्रहात्,)परस्परानुप्रवेशाच्च ॥ ३ ॥**

गर्भस्य शुक्रार्तवमूलत्वाच्छुक्रार्तवयोः स्वरूपमाह—सौम्यमित्यादि । सौम्यं सोमगुणभूयिष्ठम् । आग्नेयमग्निगुणभूयिष्ठम् । ननु, सर्वं पाञ्चभौतिकं तत् कथं भूतद्वयेनारम्भ इत्याह—इतरेषामित्यादि । इतरेषां पृथिवीवाय्वाकाशानाम्, अणुना विशेषेण सूक्ष्मप्रकारेण, सान्निध्यमाश्रितत्वमस्ति । कुत इत्याह—परस्परोपकारादित्यादि । भूजलानलानिलाकाशानां धारणसंहननपरिणामव्यूहावकाशदानैः परस्परमुपकारस्तस्मात्; यथा-पार्थिवद्रव्ये पृथिव्याख्यं भूतं बलवदेकं शेषाणि सलिलादीनि चत्वारि दुर्बलान्याश्रयदानेनानुगृह्णाति, द्रव्यान्तरे तु सलिलादिभिरपि चतुर्भिर्बलवद्भिर्दुर्बलं पृथिवीभूतमनुगृह्यते, एवंविधात् परस्परानुग्रहाच्च । परस्परानुप्रवेशश्च 'अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत्' (शा. अ. १) इत्यनेन प्रागेव प्रतिपादितस्तस्मात् ॥ ३ ॥

**तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति, ततस्तेजोनिलसन्निपाताच्छुक्रं च्युतं योनिमभिप्रतिपद्यते संसृज्यते चार्तवेन, ततोऽग्नीषोमसंयोगात् संसृज्यमानो गर्भाशयमनुप्रतिपद्यते क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता यः कोऽसावित्येवमादिभिः पर्यायवाचकैर्नामभिरभिधीयते दैवसंयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्त्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाऽभिप्रेर्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते ॥ ४ ॥**

इदानीं शुक्रार्तवयोः स्वरूपमभिधाय गर्भावतरणक्रियामाह—तत्रेत्यादि । तत्रेति वाक्योपक्रमे । संयोगे विशिष्टस्पर्शोच्छ्वासमारब्धप्रयोगे । तेजः स्त्रीपुरुषेन्द्रियद्वयसंघर्षज ऊष्मा; तं वायुरुदीरयति उत्कटं करोति । ततस्तदनन्तरं तेजोऽनिलसन्निपाताच्छुक्रं च्युतमिति सुरतलक्षणव्यायामजोष्मविद्रुतमनिलाच्च्युतमित्यर्थः । योनिमभिप्रतिपद्यत इति योनिमभितः सर्वतः प्रतिपद्यते, तेन योनेस्तृतीयावर्तावस्थितगर्भशय्यां प्रतिपद्यत इत्यर्थः । तत्र प्रागुक्तप्रकारविसर्पितेनार्तवेन च संसृज्यते । तस्य शुक्रार्तवस्य पञ्चात्मकस्य षष्ठचेतनाधातुसंयोगेनैव गर्भत्वमिति तत्संयोगं दर्शयन्नाह—तत इत्यादि ।

---

१ 'वायोर्गतिनिरोधाच्च' इति ता. ।

१ 'अपि' इति पा० ।

ततस्तस्मादग्नीषोमसंयोगात् । अन्वक्षं तत्क्षणमेव न क्षणान्तरे । क्षेत्रज्ञः पञ्चमहाभूतशरीरक्षेत्रवित् कर्मपुरुषः, गर्भाशयं गर्भशय्याम्, अनुप्रतिपद्यते प्राप्नोति । केन सह? भूतात्मना भौतिकशरीरेण सूक्ष्मेण लिङ्गशरीरेणेत्यर्थः । कीदृशः? संसृज्यमानः । कैः? सत्त्वरजस्तमोभिः प्राकृतैर्गुणैः । पुनः किंविशिष्टः? देवासुरैरपरैश्च भावैर्वायुनाऽभिप्रेर्यमाणः, भावः सत्त्वं मन इत्यर्थः; तेन देवादीनां सप्तानां सप्तभिः सात्त्विकैर्भावैः, असुरादीनां षण्णां षड्भी राजसैर्भावैः, अपरैश्च पश्वादिजैस्त्रिभिस्तामसैर्भावैः । सत्त्वस्य च मनःपर्यायस्य प्रेरकत्वं तन्त्रान्तरे प्रतिपादितम् । तदुक्तं **चरके**—"अस्ति खलु सत्त्वमौपपादुकं यज्जीवस्पृक् शरीरेणाभिसंबध्नाति" ( च. शा. अ. ३ ) इति । ननु, कः क्षेत्रज्ञो य एवंविधः सन् गर्भाशयमनुप्रतिपद्यत इत्याह—यः कोऽसावित्येवमादिभिः पर्यायवाचकैर्नामभिरभिधीयते 'महर्षिभिः' इति शेषः । 'यः कः' इति सर्वनामपदद्वयं तस्य दुर्बोधत्वज्ञापनार्थम् । असाविति सर्वनामपदं तस्य सर्वगतत्वं सद्गुरूपदिष्टत्वं च ज्ञापयति । इत्येवमादिभिः कैर्नामभिरित्याह—वेदयितेत्यादि । वेदयिता मनसो ज्ञापयिता । इन्द्रियाणां च पञ्चानामयमेव ज्ञापक इति दर्शयन्नाह—स्प्रष्टेत्यादि । स्प्रष्टा स्पर्शनेन्द्रियस्य स्पर्शबोधहेतुत्वात् । एवं घ्रातेत्यादिष्वपि योज्यम् । अस्य कर्मपुरुषस्यानाधारां स्थितिं निराकुर्वन्नाह—पुरुष इति; पुरि भौतिके शरीरे वसतीति पुरुषः । तस्य सुकृतिफलभोक्तृत्वं दर्शयन्नाह—स्रष्टेत्यादि; स्रष्टा चेतनायोगेन, तस्यैव कर्तृत्वात् । तदुक्तं **चरके**,—"चेतनावान् यतश्चात्मा ततः कर्ता निरुच्यते" ( च. शा. अ. १ )—इति । गन्ता संसरणशीलः । तथा साक्षी ज्ञत्वात् । धाता शरीरादिसंयोगधारणहेतुत्वात् । वक्ता वदत्ययमेव, एतेन कर्मेन्द्रियाणामपि वचनादानविहरणोत्सर्गानन्देष्वप्ययमेव हेतुः । यदि वेदयितेत्यादि स्वरूपोपेतः परमर्षिभिरभिधीयते तत् कथं क्लेशकारिणि गर्भाशये तिष्ठतीत्याशङ्क्याह—दैवसंयोगादिति; दैवस्य प्राक्तनजन्मकर्मणो धर्माधर्माभिधानस्य संबन्धात् । अक्षयोऽव्ययोऽचिन्त्योऽपि गर्भाशयमनुप्रविश्यावतिष्ठते गर्भाशये कर्मवशाद्गर्भभावेनावस्थितिं करोति ॥ ४ ॥

**तत्र शुक्रबाहुल्यात् पुमान्, आर्तवबाहुल्यात् स्त्री, साम्यादुभयोर्नपुंसकमिति ॥ ५ ॥**

कथमविशिष्टकारणाद्विशिष्टकार्योत्पाद इत्याह—तत्रेत्यादि । ननु, 'शुक्रबाहुल्यात् पुमान्' इति कस्मादुक्तं? यत आर्तवस्यैव बाहुल्यम्; उक्तं हि—'आर्तवं हि चतुरञ्जलिप्रमाणं, शुक्रं तु प्रसृतिमात्रम्'—इति, नैवं, यावन्मात्रमार्तवं गर्भाशयावस्थितं मलरहितं गर्भजननं तावदेव ग्राह्यम्; अथवा स्वप्रमाणापेक्षया शुक्रशोणितयोर्बाहुल्यमल्पत्वं चाभिप्रेतम् । शुक्रं तु कदाचिदत्यन्तहर्षवशाद्बहु स्रवति कदाचिद्विमनस्त्वादल्पमिति । अन्ये त्वाचार्या एवं ब्रुवन्ति—शुक्रार्तवयोर्न्यूनाधिकसमत्वं वीर्येण भवति । यद्येवं तर्हि प्रागुक्तं पुत्रीयकरणं निरर्थकं? नैतदस्ति, किन्तु श्रेयसा कर्मणा विना नैव रूपादिसङ्गमिनो भवन्ति पुत्राः; उक्तं हि,—"एवं जाता रूपवन्तः सत्त्ववन्तश्चिरायुषः । भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणे हिताः" ( शा. अ. २ ) इति; तस्मात् पुत्रीयकरणं सार्थकमेव ॥ ५ ॥

**ऋतुस्तु द्वादशरात्रं भवति दृष्टार्तवः; अदृष्टार्तवाऽप्यस्तीत्येके भाषन्ते ॥ ६ ॥**

स्त्रीपुंसयोः संयोगो यस्मिन् कालेऽपत्यफलप्रदो भवति तं कालविशेषमाह—ऋतुरित्यादि । दृष्टमार्तवं यस्मिन् काले स दृष्टार्तवः कालः ऋतुः, स च द्वादशरात्रं भवति । द्वादशरात्रमिति षोडशदिनेषु मध्ये आद्यं दिनत्रयमन्तिमं च षोडशं योनिसङ्कोचदिनं न गणनीयम् । एकीयमतमाह—अदृष्टेत्यादि ॥ ६ ॥

This is the reason for differing from the defin[ition] given in the Samhita.

**भवन्ति चात्र—**

**पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम् ॥**
**नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्धजाम् ॥ ७ ॥**
**स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचाम् ॥**
**हर्षौत्सुक्यपरां चापि विद्यादृतुमतीमिति ॥ ८ ॥**

अदृष्टार्तवाया ऋतुमत्या लक्षणमाह—पीनेत्यादि । प्रक्लिन्ना प्रकर्षेण आर्द्रतामापन्ना आत्मादयो यस्याः; आत्मा देहः; देहत्वेऽप्यत्यन्तक्लेदज्ञापनाय मुखस्य पुनरुक्तिः; द्विजशब्देन द्विजसमीपवर्तिनो दन्तवेष्टका अभिप्रेताः, द्विजानां प्रक्लेदासंभवात् । हर्षौत्सुक्यं रतौ सातिशयोऽभिलाषः ॥ ७ ॥ ८ ॥

**नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा ॥**
**ऋतौ व्यतीते नार्यास्तु योनिः संव्रियते तथा ॥ ९ ॥**

योनिसङ्कोचेन बीजस्य गर्भाशयाप्राप्तिं दर्शयन्नाह—नियतमित्यादि । योनिर्गर्भाशयः, संव्रियते सङ्कोचं याति । अत एव बीजं न प्रतीच्छति ॥ ९ ॥

**मासेनोपचितं काले धमनीभ्यां तदार्तवम् ॥**
**ईषत्कृष्णं विवर्णं च वायुर्योनिमुखं नयेत् ॥ १० ॥**

मासेनेत्यादि । काले द्वादशवर्षादौ षष्टेश्चार्वाक्, अन्ये पञ्चाशद्वर्षाणि यावत् ॥ १० ॥

**तद्वर्षाद्द्वादशात् काले वर्तमानमसृक् पुनः ॥**
**जरापक्वशरीराणां याति पञ्चाशतः क्षयम् ॥ ११ ॥**

तमेव कालं निर्दिशन्नाह—तदित्यादि । तदार्तवं द्वादशवर्षादूर्ध्वं वर्धमानशरीरधातूनां योषितां काले मासि मासि

१ 'गर्भाकाशं' इति पा० । २ 'औपपादिकं' इति पा० । ३ 'पुरे' इति पा० । ४ 'स्रष्टा चेतनायाः; तस्या एवाकरत्वात्' इति पा० ।

१ 'किंच' इति पा० । २ '°ऋतुमतीं स्त्रियम्' इति ता. । ३ 'क्लेदमापन्ना' इति पा० । ४ 'प्रविशति' इति पा० । ५ 'द्वादशवर्षादूर्ध्वं' इति पा० । ६ 'वर्तमानमुपचीयमानशरीरधातूनां' इति पा० ।

प्रवर्तमानं, तासामेव पञ्चाशत ऊर्ध्वं जरापचीयमानशरीरधातूनां क्षयं याति, 'शनैः' इति शेषः ॥ ११ ॥

**युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला ॥**
**पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत् ॥१२॥**

तस्मिन्नृतुकालेऽपि समविषमदिवसयोः पुंस्त्रियोर्जन्म दर्शयन्नाह—युग्मेष्वित्यादि । युग्मेष्विति समेषु दिवसेषु । अन्यथेति विषमेषु दिवसेषु । शुचिः कायशुचिः । ननु, प्रागुक्तं शुक्रबाहुल्यात् पुमानार्तवबाहुल्यात् स्त्रीति किमयं विकल्प उत समुच्चय इति ? समुच्चयोऽयं, तदुक्तं विदेहे—"युग्मेषु तु दिनेष्वासां भवत्यल्पतरं रजः । संयोगं तत्र या गच्छेत् सा पुमांसं प्रसूयते ॥ अयुग्मेषु दिनेष्वासां भवेद्बहुतरं रजः । संयोगं तत्र या गच्छेत् सा तु कन्यां प्रसूयते"—इति । तथा भोजेऽपि—"अयुग्मे स्त्री पुमान् युग्मे संध्ययोस्तु नपुंसकम् । शुक्राधिकत्वात् पुरुषः प्रमदा रजसोऽधिकात् ॥ शुक्रशोणितयोः साम्यात्तृतीया प्रकृतिर्भवेत्"—इति ॥ १२ ॥

**तत्र सद्योगृहीतगर्भाया लिङ्गानि—श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणं च योनेः ॥ १३ ॥**

परिहार्यपरिहारार्थं सद्योगृहीतगर्भलक्षणं निर्दिशन्नाह—तत्र सद्योगृहीतेत्यादि । श्रमः खेदः । ग्लानिः क्लमः । सक्थिसदनमूरुग्लानिः । अवबन्धोऽप्रवृत्तिः । स्फुरणं कम्पनम् ॥ १३ ॥

**स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा ॥**
**अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः ॥१४**
**अकामतश्छर्दयति गन्धादुद्विजते शुभात् ॥**
**प्रसेकः सदनं चापि गर्भिण्या लिङ्गमुच्यते ॥ १५ ॥**

उत्तरकालीनं गृहीतगर्भाया लक्षणमाह—स्तनयोरित्यादि । प्रसेकः थूत्करणम् ॥ १४ ॥ १५ ॥

**तदा प्रभृति व्यवायं व्यायाममतितर्पणमतिकर्शनं दिवास्वप्नं रात्रिजागरणं शोकं यानारोहणं भयमुत्कुटुकासनं चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणं चाकाले वेगविधारणं च न सेवेत ॥ १६ ॥**
**दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते ॥**
**स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ॥ १७॥**

तदेत्यादि । अकालशब्द एतज्ज्ञापयति—कालेऽष्टमे मासि गर्भिण्या अपि स्नेहादिक्रियान्तर्गते आस्थापनानुवासने देये ॥ १६ ॥ १७ ॥

**तत्र प्रथमे मासि कललं जायते; द्वितीये शीतोष्मानिलैरभिप्रपच्यमानानां महाभूतानां संघातो घनः संजायते, यदि पिण्डः पुमान्, स्त्री चेत् पेशी, नपुंसकं चेदर्बुदमिति; तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्तन्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति; चतुर्थे सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्तो भवति, गर्भहृदयप्रव्यक्तिभावाच्चेतनाधातुरभिव्यक्तो भवति, कस्मात् ? तत्स्थानत्वात् । तस्माद्गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति, द्विहृदयां च नारीं दौहृदिनीमाचक्षते । दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति, तस्मात् सा यद्यदिच्छेत्तत्तस्यै दापयेत्, लब्धदौहृदा हि वीर्यवन्तं चिरायुषं च पुत्रं जनयति ॥ १८ ॥**

तत्रेत्यादि । कललं सिङ्घाणप्रख्यम् । द्वितीय इत्यादि । शीतः श्लेष्मा, उष्मा पित्तं, कफानिलयोरप्युष्मसंभवात् परिणामहेतुत्वम् । तदुक्तं चरके,—"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः" ( च. चि. अ. १५ )—इति । घनः कठिनः । यदीत्यादि । पिण्डो वर्तुलाकृतिः, पेशी दीर्घाकृतिः, अर्बुदं वर्तुलफलार्धमिति । गयी तु भोजदर्शनात् पिण्डादीनामन्यथाऽऽकारं पठति । यथा—"चतुरस्रा भवेत् पेशी, वृत्तः पिण्डो घनः स्मृतः । शाल्मलीमुकुलाकारमर्बुदं परिचक्षते"—इति । तृतीये इत्यादि । शाखाश्चतस्रो मूर्धोरःपृष्ठोदराण्यङ्गानि चिबुकनासौष्ठश्रवणाङ्गुलिपार्ष्णिप्रभृतीनि प्रत्यङ्गानि । चतुर्थे इत्यादि । तत्स्थानत्वात् हृदयस्थानत्वात् । इन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः । द्विहृदयामिति द्वितीयं हृदयं यस्याः सा द्विहृदया, ताम् । दौहृदेत्यादि । कुणिं विकृतहस्तम् । तत्र कुब्जादिष्ववयवसमुदायेन्द्रियाधिष्ठानजो दोषो दौहृदविमाननजनितो यथाशास्त्रमूह्यः ॥ १८ ॥

**भवन्ति चात्र—**

**इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी**
**गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत् ॥ १९ ॥**
**सा प्राप्तदौहृदा पुत्रं जनयेत गुणान्वितम् ॥**
**अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम् ॥ २० ॥**
**येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना ॥**
**प्रजायेत सुतस्यार्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये ॥ २१ ॥**

गद्योक्तमेवार्थं पद्यैराह—भवन्तीत्यादि । भोक्तुमित्यस्योपलक्षणत्वाद्द्रष्टुं श्रोतुमित्यादिकमपि बोद्धव्यम् । सा प्राप्तेत्यादि । अलब्धदौहृदा अप्राप्ताभिलषितपदार्थां, गर्भे गर्भविषये, भयं लभेत; आत्मनि वा आत्मविषये वा भयं लभेत प्राप्नुयात् । येष्वित्यादि येषु येष्विन्द्रियार्थेषु शब्दादिषु, दौहृदे श्रद्धायां, विमानना खण्डितत्वं, तस्मिंस्तस्मिंस्तदिन्द्रिये तस्य तस्येन्द्रियार्थस्य ग्राहके इन्द्रिये, सुतस्यार्तिः पीडा प्रजायते ॥ १९—२१ ॥

**राजसंदर्शने यस्या दौहृदं जायते स्त्रियाः ॥**
**अर्थवन्तं महाभागं कुमारं सा प्रसूयते ॥ २२ ॥**

१ 'प्रभृत्येव' इति पा० । २ 'यानावरोहणं' इति पा० । ३ 'स्नेहादिक्रमान्तर्गते' इति पा० ।

दुकूलपट्टकौशेयभूषणादिषु दौहृदात् ॥
अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते ॥ २३ ॥
आश्रमे संयतात्मानं धर्मशीलं प्रसूयते ॥
देवताप्रतिमायां तु प्रसूते पार्षदोपमम् ॥
दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते ॥ २४ ॥
गोधामांसाशने पुत्रं सुषुप्सुं धारणात्मकम् ॥
गवां मांसे तु बलिनं सर्वक्लेशसहं तथा ॥ २५ ॥
माहिषे दौर्हृदाच्छूरं रक्ताक्षं लोमसंयुतम् ॥
वराहमांसात् स्वप्नालुं शूरं संजनयेत् सुतम् ॥ २६ ॥
मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम् ॥
सृमराद्विग्नमनसं नित्यभीतं च तैत्तिरात् ॥ २७ ॥
अतोऽनुक्तेषु या नारी समभिध्याति दौर्हृदम् ॥
शरीराचारशीलैः सा समानं जनयिष्यति ॥ २८ ॥

इदानीं दौर्हृदविशेषैर्गुणविशेषाक्रान्तानामपत्यानामुत्पत्तिं सूचयन्नाह—राजसंदर्शने इत्यादि । महाभागं महापुण्यवन्तम् । दुकूलेत्यादि । दुकूलपट्टः पट्टवस्त्रं, कौशेयं त्रैसरतन्तुजातम् । भूषणानि मुक्ताहारप्रभृतीनि । ललितं शृङ्गारचेष्टायुक्तम् । 'दुकूले पट्टकौशेये भूषणादिषु' इति केचित् पठन्ति; तत्र दुकूलं सूक्ष्मं वस्त्रं, पट्टं पट्टवस्त्रम् । आश्रमे इत्यादि । यस्या आश्रमे तपस्विनामधिष्ठाने श्रद्धा भवेत् सा एवंभूतं जनयेदिति पिण्डार्थः । संयतात्मानं संयतेन्द्रियम् । देवताप्रतिमायामित्यादि । पार्षदोपममिति पार्षदेषु सभापुरुषेषूपमा यस्य स तथा तम् । दर्शने इत्यादि । व्याला व्याघ्रादयो हिंस्राः पशवः । गोधेत्यादि । सुषुप्सुं स्वप्तुमिच्छुम् । धारणात्मकं हृदयगृहीतवस्तूनाममोचकम् । वराहमांसादिति 'अभिलषितात्' इति शेषः । मार्गादित्यादि मार्गात् मृगमांसात् । विक्रान्तमुद्योगिनं, जङ्घालं वेगवन्तम् । सृमरादित्यादि सृमरो महाशूकरः, अन्ये महाश्वाकारश्चमरानूकः । 'नित्यभीतं च तैत्तिरात्' इत्यत्र 'नित्यं शीलं च तैत्तिरात्' इत्यपरे, शीलं शीलवन्तम् । अनुक्तदौर्हृदसंग्रहार्थं श्लोकमाह—अतोऽनुक्तेष्वित्यादि । यादृशेषु दौर्हृदं श्रद्धां समभिध्याति चेतसि करोति, तेन समानमित्यर्थः ॥ २२—२८ ॥

कर्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत् ॥
यथा तथा दैवयोगाद्दौर्हृदं जनयेद्धृदि ॥ २९ ॥

कर्मणेत्यादि । दैवयोगाद्दौर्हृदं हृदि तथा जनयेत्, यथा पुनर्जन्तोः कर्मणा चोदितं प्रेरितं भवितव्यं भवेत् ॥ २९ ॥

पञ्चमे मनः प्रतिबुद्धतरं भवति, षष्ठे बुद्धिः, सप्तमे सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरः; अष्टमेऽस्थिरीभवत्योजः, तत्र जातश्चेन्न जीवेन्निरोजस्त्वान्नैर्ऋतभागत्वाच्च, ततो बलिं मांसौदनमस्मै दापयेत्; नवमदशमैकादशद्वादशानामन्यतमस्मिञ्जायते, अतोऽन्यथा विकारी भवति ॥ ३० ॥

पञ्चमे इत्यादि । प्रतिबुद्धतरं जागर्तीत्यर्थः । अष्टमे इत्यादि । ओजोऽशेषधातुधाम हृदि स्थितम् । नैर्ऋतभागत्वात् रक्षसामंशत्वात्, "नैर्ऋताय भागश्च बालेषु रुद्रेण दत्त" इति कुमारतन्त्रे प्रतिपादितम् । ततस्तस्मात् कारणादष्टमे मास्यस्मै नैर्ऋताय बलिं दापयेत् ॥ ३० ॥

मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाडी प्रतिबद्धा, साऽस्य मातुराहाररसवीर्यमभिवहति । तेनोपस्नेहेनास्याभिवृद्धिर्भवति । असंजाताङ्गप्रत्यङ्गप्रविभागमानिषेकात् प्रभृति सर्वशरीरावयवानुसारिणीनां रसवहानां तिर्यग्गतानां धमनीनामुपस्नेहो जीवयति ॥ ३१ ॥

गर्भस्य खलु संभवतः पूर्वं शिरः संभवतीत्याह शौनकः, शिरोमूलत्वात् प्रधानेन्द्रियाणां; हृदयमिति कृतवीर्यो, बुद्धेर्मनसश्च स्थानत्वात्; नाभिरिति पाराशर्यः, ततो हि वर्धते देहो देहिनः; पाणिपादमिति मार्कण्डेयः, तन्मूलत्वाच्चेष्टाया गर्भस्य; मध्यशरीरमिति सुभूतिर्गौतमः, तन्निबद्धत्वात् सर्वगात्रसंभवस्य । तत्तु न सम्यक्, सर्वाण्यङ्गप्रत्यङ्गानि युगपत् संभवन्तीत्याह धन्वन्तरिः, गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च; तद्यथा—चूतफले परिपक्के केशरमांसास्थिमज्जानः पृथक् पृथग्दृश्यन्ते कालप्रकर्षात्, तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्; तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति; एतेनैव वंशाङ्कुरोऽपि व्याख्यातः । एवं गर्भस्य तारुण्ये सर्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः, तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति ॥ ३२ ॥

निराहारस्यापि गर्भस्य वर्तने हेतुं निर्दिशन्नाह—मातुरित्यादि । मातुर्गर्भिण्या रसवहायां नाड्यां गर्भनाभिनाडी या प्रतिबद्धा साऽस्य गर्भस्य मातृभुक्तमाहाररसवीर्यमभिवहति प्रापयतीत्यर्थः । नन्वङ्गप्रत्यङ्गप्रव्यक्तीभावे गर्भनाभिनाडी मातुराहाररसवीर्यमभिवहति, अङ्गप्रत्यङ्गप्रव्यक्तीभावात्तु पूर्वं कथं गर्भपुष्टिः स्यादित्याह—असंजाताङ्गप्रत्यङ्गविभागमित्यादि । आनिषेकात् प्रभृतीति आ समन्ततो भावेन निषेचनमानिषेको योनौ शुक्रस्य निषेचनं, तत्प्रभृति गर्भाधानं मर्यादीकृत्येत्यर्थः; धमनीनामुपस्नेहो जीवयति; यथा—पूर्णसरःसलिलोपस्नेहस्तीरजाततरुकदम्बकं जीवयति तद्वत् प्राणधारणं करोति ।

१ 'धावनात्मकम्' इति पा० । २ 'लोमशं सुतम्' इति पा० । ३ 'क्रिमिकोशोत्थं' इति पा० । ४ 'अस्थिरं भवति' इति पा० । ५ 'नैर्ऋतभागधेयत्वात्' इति पा० ।

१ 'असञ्जाताङ्गप्रत्यङ्गविभागं तु गर्भं निषेकात् प्रभृति' इति पा० । २ 'तन्मूलत्वात्' इति ता. । ३ 'देहेन्द्रियाणाम्' इति पा० । ४ 'वर्धने' इति पा० । ५ 'मातुराहाररसवीर्यं' इति पा० ।

तथाच भोजः—"गर्भो रुणद्धि स्रोतांसि रसरक्तवहानि वै । रक्ताज्जरायुर्भवति नाडी चैव रसात्मिका ॥ सा नाडी गर्भमाप्नोति तया गर्भस्य वर्तनम् । यद्यदश्नाति माताऽस्य भोजनं हि चतुर्विधम् ॥ तस्मादन्नाद्रसीभूतं वीर्यं त्रेधा प्रवर्तते । भागः शरीरं पुष्णाति स्तन्यं भागेन वर्धते ॥ गर्भः पुष्यति भागेन वर्धते च यथाक्रमम् । गर्भं कुल्येव केदारं नाडी प्रीणाति तर्पिता—" इति ॥ ३१ ॥ ३२ ॥

**तत्र गर्भस्य पितृजमातृजरसजात्मजसत्त्वजसात्म्यजानि शरीरलक्षणानि व्याख्यास्यामः । गर्भस्य केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि, मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि, शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि, इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकं चात्मजानि, सत्त्वजान्युत्तरत्र वक्ष्यामः, वीर्यमारोग्यं बलवर्णौ मेधा च सात्म्यजानि ॥ ३३ ॥**

तत्रेत्यादि । लक्ष्यन्ते इति लक्षणानि, कर्मणि ल्युट्प्रत्ययः, तेन लक्षणीयानि ज्ञातव्यानीत्यर्थः । तान्येव ज्ञातव्यानि पितृप्रभृतिभ्यः कारणेभ्यः प्रत्येकं निर्दिशन्नाह—गर्भस्येत्यादि । आत्मजानीति आत्मसन्निधानजातानि[1], न त्वात्मनो जातानि, आत्मनो निर्विकारस्य विकारजनकत्वाभावात् प्रकृतिभावानुपपत्तेः[2]; स्वाभाविकप्रकृतिभावे च मोक्षानुपपत्तिः, तस्य हि तत्स्वभावत्वे भावस्यापरित्याज्यत्वादिति । आदिशब्दात्स्थानायोनिजन्मादिकं च । सत्त्वेत्यादि । उत्तरत्र गर्भव्याकरणे ॥ ३३ ॥

**तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शनं भवति दक्षिणकुक्षिमहत्त्वं[3] च पूर्वं च दक्षिणं सक्थ्युत्कर्षति बाहुल्याच्च पुन्नामधेयेषु द्रव्येषु दौर्हृदमभिध्यायति स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुन्नामान्येव प्रसन्नमुखवर्णा च भवति तां ब्रूयात् पुत्रमियं जनयिष्यतीति, तद्विपर्यये कन्यां, यस्याः पार्श्वद्वयमवनतं पुरस्तान्निर्गतमुदरं प्रागभिहितं च लक्षणं च तस्या नपुंसकमिति विद्यात्[4], यस्या मध्ये निम्नं द्रोणीभूतमुदरं सा युग्मं प्रसूयत इति ॥ ३४ ॥**

गर्भस्याप्रत्यक्षस्यापि स्तन्यदर्शनादिलक्षणेन स्त्रीपुंनपुंसकलक्षणानि निर्दिशन्नाह—तत्रेत्यादि । प्रसन्नमुखवर्णा चेत्यत्र चकारादूर्ध्वरोमराजित्वादीनि ग्राह्याणि । प्रागभिहितं च लक्षणमिति स्त्रीलक्षणं पुरुषलक्षणं च प्रतिपादितं तद्द्वयमपि च भवति । यस्या इत्यादि । द्रोणीभूतं द्रोणीसदृशं, द्रोणी जलक्षेपणी । अन्यत्राप्युक्तं—"रोमराजी भवेन्निम्ना यस्याः सा सूयते यमौ"—इति ॥ ३४ ॥

**भवन्ति चात्र—**

**देवताब्राह्मणपराः शौचाचारहिते रताः ॥**
**महागुणान् प्रसूयन्ते विपरीतास्तु निर्गुणान् ॥३५॥**

कायवाक्चित्तगुणवद्गर्भप्रसवज्ञानं दर्शयन्नाह—देवतेत्यादि ॥ ३५ ॥

**अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते ॥**
**अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्ति गुणागुणाः ॥**
**ते ते गर्भस्य विज्ञेया धर्माधर्मनिमित्तजाः ॥ ३६ ॥**

**इति सुश्रुतसंहितायां शारीरस्थाने गर्भावक्रान्तिशारीरं नाम तृतीयोऽध्यायः ॥ ३ ॥**

'स्वभावमीश्वरं' ( शा. अ. १ ) इत्यादिश्लोकेन या स्वभावादङ्गप्रत्यङ्गनिर्वृत्तिः सूचिता तां प्रतिपाद्य तन्निर्वृत्तौ प्राक्तनश्लोकाभिहितगुणागुणोपपत्तिं धर्माधर्महेतुतया निर्दिशन्नाह—अङ्गप्रत्यङ्गेत्यादि ॥ ३६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

**अथातो गर्भव्याकरणं शारीरं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

गर्भावक्रान्तिशारीरानन्तरमवक्रान्तस्य गर्भस्य व्याकरणार्हत्वाद्गर्भव्याकरणं वक्तुं युज्यत इत्याह—अथेत्यादि । गर्भव्याकरणं गर्भविवरणमित्यर्थः ॥ १ ॥ २ ॥

**अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः ॥ ३ ॥**

तत्र प्राणास्त्वक्कलादयश्च विवरणीयाः; तेषु प्राणानामतीव देहस्थितिहेतुत्वात् प्रागुपादानमाह—अग्निरित्यादि । अग्निरत्र पाचकभ्राजकालोचकरञ्जकसाधकानां पाञ्चभौतिकानां सर्वधात्वनुगानां चोष्मणां शक्तिरूपतयाऽवस्थितो वाचोऽधिदैवत्वमापन्नो बोद्धव्यः । श्लेष्मरसशुक्रादीनां तोयात्मकानां भावानां रसनेन्द्रियस्य च शक्तिरूपतयाऽवस्थितो मनसोऽधिदैवत्वमापन्नः सोम इति । वायुः पञ्चात्मकः प्राणादिभेदेन । सत्त्वरजस्तमांसि तु प्रकृतेरष्टरूपाया गुणाः । इन्द्रियाणि श्रवणदर्शनस्पर्शनरसनघ्राणानीति पञ्च । भूतात्मा[1] शुभाशुभकर्मभिः परिगृहीतः कर्मपुरुषः । एते चाग्नीषोमादयः प्राणयन्ति जीवयन्तीति प्राणाः । तत्राग्निस्तावदाहारपाकादिकर्मणा प्राणयति, सोमश्च सौम्यधातोरोजःप्रभृतेः पोषणेन, वायुश्च दोषधातुमलादीनां संचारणेनोच्छ्वासनिःश्वासाभ्यां च, सत्त्वं रजस्तमश्च मनोरूपतया परिणतं भूता-

---

१ 'आत्मसन्निकर्षजानि' इति पा० । २ 'निर्विकारत्वात् प्रकृतिभावानुपपत्तेः' इति पा० । ३ 'दक्षिणाक्षिमहत्त्वं' इति पा० । ४ 'विद्यात्' इति पा० ।

१ 'भूतात्मा मनश्च' इति ता. ।

त्मनः शरीरान्तरग्रहणमोक्षणे हेतुरिति तदपि प्राणयति, पञ्चेन्द्रियाणि चक्षुरादीनि रूपादिग्रहणकर्मणा प्राणयन्ति, एवं भूतात्मा कर्मपुरुषोऽप्यशेषस्यैव कर्म[1]राशेश्चेतनाहेतुरिति प्राणयति ॥ ३ ॥

**तस्य खल्वेवंप्रवृत्तस्य शुक्रशोणितस्या[2]भिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्त त्व[3]चो भवन्ति । तासां प्रथमाऽवभासिनी नाम, या सर्वान् वर्णानवभासयति पञ्चविधां च छायां प्रकाशयति, सा व्रीहेरष्टादशभागप्रमाणा, सिध्मपद्मकण्टकाधिष्ठाना; द्वि[4]तीया लोहिता नाम, षोडशभागप्रमाणा, तिलकालकन्यच्छव्यङ्गाधिष्ठाना; तृतीया श्वेता नाम, द्वादशभागप्रमाणा, चर्मदलाजगल्लीमषकाधिष्ठाना; चतुर्थी ताम्रा नामाष्टभागप्रमाणा, विविधकिलासकुष्ठाधिष्ठाना; पञ्चमी वेदिनी नाम पञ्चभागप्रमाणा, कुष्ठविसर्पाधिष्ठाना; षष्ठी रोहिणी नाम व्रीहिप्रमाणा, ग्रन्थ्यपच्यर्बुदश्लीपदगलगण्डाधिष्ठाना; सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा, भगन्दरविद्रध्यर्शोऽधिष्ठाना । यदेतत् प्रमाणं निर्दिष्टं तन्मांसलेष्ववकाशेषु, न ललाटे सूक्ष्माङ्गुल्यादिषु च; यतो वक्ष्यत्युदरेषु—'व्रीहिमु[5]खेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येत्' ( चि. अ. १४ ) इति ॥ ४ ॥**

प्राणसद्भाव एव शुक्रशोणितस्य परिणामेन त्वगादिसंभव इत्यनन्तरं त्वगादिव्याकरणं कुर्वन्नाह—तस्येत्यादि । तस्य शुक्रशोणितस्य । एवंप्रवृत्तस्य भूतात्माधिष्ठितस्य । तासामित्यादि । सर्ववर्णान् गौरादिकान् । अवभासयतीति 'भ्राजकेनाग्निना' इति शेषः । पञ्चविधां पञ्चात्मिकां, पञ्चमहाभूतकृतत्वात् । चशब्दात् प्रभाऽपि ग्राह्या । "आसन्ना लक्ष्यते च्छाया प्रभा दूरात् प्रकाशते" ( च. इं. अ. ७ ) इति तयोर्भेदः । तस्यास्त्वचः प्रमाणं निर्दिशन्नाह—सेत्यादि । व्रीहिरत्र यवः, प्रत्येकं व्रीहिविस्तारस्य विंशतिर्भागाः परिकल्पनीयाः, ते चाष्टादश भागा अवभासिन्याः प्रमाणम्, एवं वक्ष्यमाणेष्वपि विंशतिभागेषु षोडशप्रभृतयो भागा बोद्धव्याः । अङ्गुष्ठोदरप्रमाणमिति एतेनैतदुक्तं भवति—सप्तानां त्वचां समुदायेनाङ्गुष्ठोदरप्रमाणमस्ति; अङ्गुष्ठोदरं तु विंशतितमभागोनषड्यवप्रमाणम् ॥ ४ ॥

**कलाः खल्वपि सप्त भवन्ति धात्वाशयान्तर[1]मर्यादाः[2] ॥ ५ ॥**

कला इत्यादि । दधतीति धातवो रसरक्तमांसादयः, कफपित्तपुरीषाण्यपि प्राकृतानि स्वकर्मणा दधतीति धातवः, तेषामाशया अवस्थानप्रदेशा धात्वाशयाः, तेषामन्तरेषु मर्यादाः सीमाभूता इत्यर्थः ॥ ५ ॥

**भवतश्चात्र—**

**यथा हि सारः काष्ठेषु छिद्यमानेषु दृश्यते ॥**
**तथाहि धातुर्मांसेषु छिद्यमानेषु दृश्यते ॥ ६ ॥**
**स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा ॥**
**श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् वि[3]दुः ॥७**

तासामन्तःस्थितत्वेनाप्रत्यक्षाणामस्तित्वं प्रत्युपमानं प्रमाणं निर्दिशन्नाह—भवत इत्यादि । एतेन [3]कलासाधिष्ठानपृथग्धातूपलम्भकार्येणाव्यक्तमेव कलानामस्तित्वं साधितं भवेत् । तासामुपष्टम्भकं निर्दिशन्नाह—स्नायुभिरित्यादि । कलाभागान् कलाविभागविशेषान् । सन्ततान् सम्यक्प्रकारेण व्याप्तान् । जरायुरुल्वाकारो येन वेष्टिताः प्राणिनो जायन्ते; कलावेष्टकोऽपि तद्वदेव । **वृद्धवाग्भटेन** कलास्वरूपमभिहितम् । यथा—"यस्तु धात्वाशयान्तरेषु क्लेदोऽवतिष्ठते स यथास्वमूष्मभिर्विपक्वः स्नायुश्लेष्मजरायुच्छन्नः काष्ठ इव सारो धातु[4]रसशेषोऽल्पत्वात् कलासंज्ञः" ( अ. सं. शा. अ. ५ ) इति ॥ ६ ॥ ७ ॥

**तासां प्रथमा मांसधरा, यस्यां मांसे[5] सिरास्नायुधमनीस्रोतसां प्र[6]ताना भवन्ति ॥ ८ ॥**

---

१ 'शेषराशेः' इति पा० । २ 'शुक्रशोणितस्य' इति केषुचिद्धस्तलिखितपुस्तकेषु नोपलभ्यते । ३ 'शरीरे षट् त्वचः; तद्यथा—उदकधरा त्वग्बाह्या, द्वितीया त्वगसृग्धरा, तृतीया सिध्मकिलाससंभवाधिष्ठाना, चतुर्थी दद्रुकुष्ठसंभवाधिष्ठाना, पञ्चम्यलजीविद्रधिसंभवाधिष्ठाना, षष्ठी तु यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति यां चाप्यधिष्ठायारूंषि जायन्ते पर्वसु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानि चेति षट् त्वचः; एताः षडङ्गं शरीरमवतत्य तिष्ठन्ति ।' ( च. शा. अ. ७ सू. ५ ) । 'षष्ठी तु प्राणधरा' इत्यष्टाङ्गसंग्रहे पाठः । "त्वचो नाम-सर्वदेहावरणरूपा भूमिः स्पर्शनेन्द्रियस्य स्रोतसां च स्वेदवहानां, रोम्णामपि सरोमकूपानाम् । ताः स्थूलदृष्ट्या स्तरद्वयविभक्ताः—बहिस्त्वग्भागोऽन्तस्त्वग्भागश्चेति । तत्र बहिस्त्वङ्नामातीव तन्वी कृष्णगौरादिवर्णाधारा बहिस्पर्शेन स्फोटपिडकाव्यञ्जना च । अन्तस्त्वङ्नाम स्थूला शरीराभिरक्षणी स्नेहादिकर्षणी च । सैव प्रधानायतनं स्पर्शभूमेः स्वेदस्रुतां च मार्गाणाम्" ( प्रत्यक्षशारीर प्र. भा. पृ. ५–६ ) । ४ 'द्वितीया लोहिता नाम षोडशभागप्रमाणा, तृतीया श्वेता नाम द्वादशभागप्रमाणा, चतुर्थी ताम्रा नामाष्टभागप्रमाणा, पञ्चमी वेदिनी नाम पञ्चभागप्रमाणा, षष्ठी रोहिणी नाम व्रीहिप्रमाणा, सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा' इत्यष्टाङ्गसंग्रहे पाठः; ता. पुस्तकेऽप्येवमेव पठ्यते । ५ 'व्रीहिमुखमङ्गुलमङ्गुष्ठोदरमात्रं वाऽवगाह्य' इति ता. ।

१ 'धात्वन्तराशयमर्यादाः' इति ता. । २ अस्याग्रे 'धात्वाशयान्तरेऽन्नस्य यः क्लेदस्त्वधितिष्ठति । देहोष्मणा विपक्वस्तु सा कलेत्यभिधीयते' इत्यधिकं पठ्यते क्वचित्पुस्तके । ३ 'कलासाधिष्ठानपृथग्धातूपलम्भकार्येण' इति, 'कलानामधिष्ठानपृथग्धातुपलम्भकार्येण' इति च पाठान्तरद्वयमत्रोपलभ्यते । ४ 'धातुरसविशेषः' इति पा० । 'धातुसारशेषः' इति वृद्धवाग्भटस्य मुद्रितपुस्तके पा० । ५ 'मांसगतानां' इति हाराणचन्द्रसंमतः पाठः । 'मांससिरास्नायुधमनीस्रोतसां' इति वै. पं. हरिप्रपन्नसंमतः पाठः । विशेषविवरणं तु रसयोगसागरस्योपोद्घाते १६४–१६५ पृष्ठयोर्द्रष्टव्यम् । 'तस्यां मांससिरा°' इति ता० । ६ 'नवनवप्रताना' इति ता. ।

तासामित्यादि । यस्यां कलायामधिष्ठिते मांसे सिरादीनां प्रताना विस्तारा भवन्ति ॥ ८ ॥

**यथा बिसमृणालानि विवर्धन्ते समन्ततः ॥**
**भूमौ पङ्कोदकस्थानि तथा मांसे सिरादयः ॥ ९ ॥**

अमुमेवार्थं दृष्टान्तेन द्रढयन्नाह—यथा बिसमृणालानीत्यादि । तथा मांसे इत्यादि । तथा प्रथमकलायां मांसस्थाः सिरादयो भवन्ति । ननु, रसानन्तरं रक्तं, ततो मांसं, तत् कथं प्रागेव मांसधरा पठिता, ततो रक्तधरेति ? उच्यते, पोषणे क्रमोऽयं नतु धारणे; अत एव यस्यामित्याधारत्वेन कला निर्दिष्टा ॥ ९ ॥

**द्वितीया रक्तधरा मांसस्याभ्यन्तरतः, तस्यां शोणितं विशेषतश्च सिरासु यकृत्प्लीह्नोश्च भवति[1] १०**

द्वितीयेत्यादि ॥ १० ॥

**वृक्षाद्यथाभिप्रहतात् क्षीरिणः क्षीरिमावहेत्[2] ॥**
**मांसादेवं क्षतात् क्षिप्रं शोणितं संप्रसिच्यते[3] ॥११॥**

अत्र दृष्टान्तेन दार्ष्टान्तिकं द्रढयन्नाह—वृक्षादित्यादि । संप्रसिच्यते प्रस्रवतीत्यर्थः ॥ ११ ॥

**तृतीया मेदोधरा; मेदो हि सर्वभूतानामुदरस्थमण्वस्थिषु च, महत्सु च मज्जा भवति[4] ॥ १२ ॥**

तृतीयेत्यादि । अण्वस्थिषु अल्पास्थिषु । ननु, मज्जा अस्थ्नामन्तर्भवति कथं मेदस्तदन्तरित्याह—महत्स्वित्यादि । अण्वस्थिषु मेदः, महत्सु मज्जेति ॥ १२ ॥

**स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः ॥**
**अथेतरेषु[5] सर्वेषु सरक्तं मेद उच्यते ॥**
**शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता ॥१३॥**

गद्योक्तमर्थं श्लोकेन स्पष्टीकुर्वन्नाह—स्थूलेत्यादि । इतरेष्वल्पास्थिषु सर्वेषु । ननु, मेदोमज्जानुकारी उपधातुर्वसाख्यः क इत्याह—शुद्धेत्यादि ॥ १३ ॥

**चतुर्थी श्लेष्मधरा सर्वसन्धिषु प्राणभृतां भवति ॥ १४ ॥**

**स्नेहाभ्यक्ते यथा ह्यक्षे चक्रं साधु प्रवर्तते ॥**
**सन्धयः साधु वर्तन्ते संश्लिष्टाः श्लेष्मणा तथा १५**

तया धृतस्य श्लेष्मणो गुणकर्माणि दर्शयन्नाह—स्नेहेत्यादि । अक्ष इति चक्रच्छिद्रान्तर्गतकाष्ठमित्यर्थः ॥ १४ ॥ १५ ॥

**पञ्चमी पुरीषधरा नाम; याऽन्तःकोष्ठे मलमभिविभजते पक्वाशयस्था ॥ १६ ॥**

**यकृत्समन्तात् कोष्ठं च तथाऽन्त्राणि समाश्रिता ॥**
**उण्डु(न्दु)कस्थं[2] विभजते मलं मलधरा कला ॥१७॥**

पञ्चमीत्यादि । अन्तःकोष्ठ इति कोष्ठस्यान्तर्मध्यमन्तःकोष्ठं, पुनस्तस्मिन्मलं मूत्रपुरीषरूपतया विभजति । **गयी** तु 'अन्तःकोष्ठे कोष्ठमध्ये, तत्रापि रसविभागे किट्टस्य पुरीषत्वात् तत् पुरीषं कोष्ठे विभजति कोष्ठात् पृथक्करोति; स चात्र पुरीषविभागोऽग्निमारुतकृतोऽपि; तत्राग्निकृतो यथा—'विवेचयति च रसमूत्रपुरीषाणि' ( सू. अ. २१ ), मारुतकृतो यथा—'सोऽन्नं पचति तज्जांश्च विशेषान्विविनक्ति हि' ( नि. अ. १ ) इति व्याख्याति । पक्वाशयस्थेति पुरीषस्य पक्वाशयस्थितत्वात् । कोष्ठः पुनरामपक्वाशयाश्रयः; तथा च कोष्ठलक्षणं—"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकं(कः) फुप्फुसश्च कोष्ठ इत्यभिधीयते" ( चि. अ. २ ) इति । तेन कोष्ठस्थिताऽपि पुरीषस्य पक्वाशयस्थितत्वाद्बाहुल्येन पक्वाशयस्था कथ्यन्ते । एतदेव समस्तकोष्ठस्थितत्वं श्लोकेन स्पष्टीकुर्वन्नाह—यकृदित्यादि । समन्तात् सर्वतो यकृतादिकं समाश्रिता, उण्डु(न्दु)कस्थं मलं विभजते । तत्र यकृद्ग्रहणं रक्ताधारसाम्येन प्लीह्न उपलक्षणं यकृत्समीपानां हृदयादीनां च, उण्डुकग्रहणेन सान्निध्याद्गुदो गृह्यते, तेनोर्ध्वं यकृदादि व्यवस्थितं, अधस्ताद्गुदपर्यन्तं कोष्ठं समन्तात् समाश्रिता । **वृद्धवाग्भटेनाप्युक्तं**—"पञ्चमी पुरीषधरा, सा ह्यन्त्रामपक्वाशयाश्रया, तत्रोण्डुकस्थं मलं विभजति" ( अ. सं. शा. अ. ५ ) इति । उण्डुकः 'पोट्टलक' इति लोके । **चरके** च पुरीषाधारशब्देनोण्डुकः[3] प्रतिपादितः, अत एव पुरीषधरेति नामास्याः । मलं विभजते मूत्रपुरीषरूपतया विभागं करोति । **गयी** तु, विभजते तस्मात् कोष्ठात् पृथक्करोतीति व्याख्याति ॥ १६ ॥ १७ ॥

**षष्ठी पित्तधरा[4]; या चतुर्विधमन्नपानमामाशयात्[5] प्रच्युतं पक्वाशयोपस्थितं धारयति ॥ १८ ॥**

---

१ 'स्रवति' इति पा० । २ 'क्षीरमास्रवेत्' इति पा० । ३ 'प्रतिरिच्यते' इति पा० । ४ 'तदेव च शिरसि कपालप्रतिच्छन्नं मस्तिष्काख्यं मस्तुलुङ्गाख्यं च' इत्यष्टाङ्गसंग्रहे( शा. अ. ५ )ऽधिकः पाठः । "मेदो नाम—सान्द्रसर्पिस्तुल्यः स्नेहधातुः शरीरस्य । तस्य स्थानमुदरान्तः, त्वचामधश्च । वसा तु मांसान्तरानुप्रविष्टः स्नेहस्तस्या मेदस्यनुप्रवेशस्तुल्योपादानत्वात् । मज्जा नाम अस्थिमध्यगतः स्नेहः । स द्विविधो पीतो रक्तश्च । तत्र पीतो नलकास्थ्नामन्तः, रक्तस्त्वितरास्थिषु, प्रान्तभागेषु च नलकास्थ्नाम् । सोऽयं स्थूलस्वरूपेण मेदसोऽभिन्नोऽपि कर्मवैशेष्यात् पृथगेव धातुः" ( प्रत्यक्षशारीर प्र. भा. पृ. १० ) । ५ 'तथेतरेषु' इति ता. ।

१ 'व्यवच्छिन्नं' इति पा० । २ 'कोष्ठान्तरुण्डुकस्थं' इति पा० । ३ 'पुरीषान्त्रशब्देन' इति पा० । ४ "षष्ठी पित्तधरा नाम पक्वामाशयमध्यस्था । सा ह्यन्तरग्नेरधिष्ठानतयाऽऽमाशयात् पक्वाशयोन्मुखमन्नं बलेन विधार्य पित्ततेजसा शोषयति पचति पक्वं च विमुञ्चति । दोषाधिष्ठिता तु दौर्बल्यादाममेव । ततोऽसावन्नस्य ग्रहणात् पुनर्ग्रहणीसंज्ञा । बलं च तस्याः पित्तमेवाग्न्यभिधानमतः साऽग्निनोपस्तम्भोपबृंहितैकयोगक्षेमा शरीरं वर्तयति ।" ( अष्टाङ्गसंग्रह शा. स्था. अ. ५ ) । ५ '°मुपयुक्तमामाशयात्' इति पा० ।

षष्ठीत्यादि । पित्तमत्रान्तरग्निसंज्ञकम् । आमाशयात् प्रच्युतं कफाशयाद्भ्रष्टं, पक्वाशयोपस्थितं पक्वाशयगमनायोपस्थितं पित्तस्थानं संप्राप्तं, धारयति 'पाकार्थं' इति शेषः । तथा च **संग्रहः**—"षष्ठी पित्तधरा नाम पक्वामाशयमध्यस्था, सा ह्यन्तरग्न्यधिष्ठानतयाऽऽमपक्वाशययोर्मध्ये चतुर्विधमन्नं बलेन विधार्य पित्ततेजसा शोषयन्ती पचति" ( अ. सं. शा. अ. ५ ) इति ॥ १८ ॥

**अशितं खादितं पीतं लीढं कोष्ठगतं नृणाम् ॥**
**तज्जीर्यति यथाकालं शोषितं पित्ततेजसा ॥ १९ ॥**

एतमेवार्थं श्लोकेन दर्शयन्नाह—अशितमित्यादि । अश भोजने, खाद भक्षणे, धेट् पा पाने, लिह आस्वादने । तदन्नमशितादिविशेषणाक्रान्तमन्नं जीर्यति । यथाकालं कालानतिक्रमेण तीक्ष्णमध्यमन्दाग्निषु मात्राद्रव्यगुरुलघूचितकालानतिक्रमेण ॥ १९ ॥

**सप्तमी शुक्रधरा, या सर्वप्राणिनां सर्वशरीरव्यापिनी ॥ २० ॥**

**यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा ॥**
**शरीरेषु तथा शुक्रं नृणां विद्याद्भिषग्वरः ॥ २१ ॥**

शुक्रस्य सर्वाङ्गव्याप्तित्वे उपमानं प्रमाणं दर्शयन्नाह—यथेत्यादि । पयोदृष्टान्तोऽल्पमैथुनत्वाद्बहुशुक्रे, इक्षुदृष्टान्तस्त्वतिपीडनशुक्रक्षरणत्वान्मन्दशुक्रे पुंसि ॥ २० ॥ २१ ॥

**द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यधः ॥**
**मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्तते ॥ २२ ॥**

तस्यैवेदानीं सर्वाङ्गव्यापिनोऽपि क्षरणमार्गमाह—द्व्यङ्गुले इत्यादि । **वृद्धवाग्भटेनोक्तम्**—"सप्तमी शुक्रधरा द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाधो मूत्रमार्गमाश्रिता सकलशरीरव्यापिनी शुक्रं प्रवर्तयति" ( अ. सं. शा. अ. ५ ) इति २२

**कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा ॥**
**स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् संप्रवर्तते ॥ २३ ॥**

ननु, यथा पयसि संलीनं सर्पिरेवं शरीरसंलीनं शुक्रं कथं पृथग्भूय मूत्रमार्गेण क्षरतीत्याह—कृत्स्नेत्यादि । प्रसन्नमनसः क्रोधादिरहितचित्तस्य, तथा स्त्रीषु व्यायच्छतो व्यायामं कुर्वतो रतं कुर्वत इत्यर्थः ॥ २३ ॥

**गृहीतगर्भाणामार्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण, तस्माद्गृहीतगर्भाणामार्तवं न दृश्यते; ततस्तदधः प्रतिहतमूर्ध्वमागतमपरं चोपचीयमानमपरेत्यभिधीयते; शेषं चोर्ध्वतरमागतं पयोधरावभिप्रतिपद्यते, तस्माद्गर्भिण्यः पीनोन्नतपयोधरा भवन्ति ॥ २४ ॥**

कस्माद्गृहीतगर्भाणां गर्भग्रहणकालादूर्ध्वमाप्रजननादार्तवं न दृश्यते? इत्याह—गृहीतेत्यादि । वर्त्मान्यवरुध्यन्ते मुखान्यवरुध्यन्ते । अपराममलमित्याहुः स्त्रियः ॥ २४ ॥

**गर्भस्य यकृत्प्लीहानौ शोणितजौ, शोणितफेनप्रभवः फुप्फुसः, शोणितकिट्टप्रभव उण्डुकः ॥ २५ ॥**

गर्भस्येत्यादि । यकृत् कालखण्डं दक्षिणपार्श्वस्थं, प्लीहा अनेनैव नाम्ना प्रसिद्धो वामपार्श्वस्थितः, यकृत्प्लीहानावित्युपलक्षणं, तेन क्लोमापि शोणितजम्, तथा च **वृद्धवाग्भटः**—"रक्तादनिलयुक्तात् कालीयकम्" ( अ. सं. शा. अ. ५ ) इति । शोणितेत्यादि । फुप्फुसो हृदयनाडिकालग्नः स्वनामख्यातः । शोणितकिट्टेत्यादि । उण्डुकः पोट्टलकः ॥ २५ ॥

**असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः ॥**
**तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति ॥ २६ ॥**
**ततोऽस्यान्त्राणि जायन्ते गुदं बस्तिश्च देहिनः ॥**
**उदरे पच्यमानानामाध्मानाद्रुक्मसारवत् ॥ २७ ॥**
**कफशोणितमांसानां साराज्जिह्वा प्रजायते ॥**
**यथार्थमूष्मणा युक्तो वायुः स्रोतांसि दारयेत् ॥ २८ ॥**
**अनुप्रविश्य पिशितं पेशीर्विभजते तथा ॥**
**मेदसः स्नेहमादाय सिरास्नायुत्वमाप्नुयात् ॥ २९ ॥**
**सिराणां तु मृदुः पाकः स्नायूनां च ततः खरः ॥**
**आशय्याभ्यासयोगेन करोत्याशयसंभवम् ॥ ३० ॥**

---

१ 'अशिताद्विविशेषाक्रान्तं' इति, 'अशितादिविशेषेणाक्रान्तं' इति च पाठान्तरम् । २ "द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यधः । मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्तते" इत्यत्र 'द्व्यङ्गुले दक्षिणे वामे' इत्येव साधीयान् पाठः, अन्यथा प्रत्यक्षविरोधः स्वोक्तिविरोधश्च, श्रूयते हि 'शुक्रवहे द्वे शुक्रप्रादुर्भावाय द्वे शुक्रविसर्गाय च' इति सुश्रुते एव" ( प्रत्यक्षशारीर, उपोद्घात, पृष्ठ ७२ )। ३ 'अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते । ४ 'व्यवायं' इति पा० ।

१ 'अमरां' इति पा० । २ 'उदानवायोराधारः फुप्फुसः प्रोच्यते बुधैः' इति शार्ङ्गधरः । ३ 'तत्रास्य मथ्यमानस्य ध्मायमानस्य रुक्मवत् । जिह्वा संजायते सौमी यया वेदयते रसान्' इति पा० । ४ वै० पं० हरिप्रपन्नशर्मणा तु अयं पाठोऽन्यथा पठितो व्याख्यातश्च, 'मेदः स स्नेहमादाय सिरास्नायुत्वमप्यथ । सिराणां तु मृदुः पाकः स्नायूनां च ततः खरः ॥ आशय्याभ्यासयोगेन करोत्याशयसंभवम् । स वायुः कर्ता, अन्नरसात् स्नेहमादाय मेदो विभजते अर्थादुदरे मेदश्चिनोति; अथ एवं सिरास्नायुत्वं विभजते अर्थात् सिरात्वं सिरास्वरूपं, स्नायुत्वं स्नायुस्वरूपं च विभजते । ननु समवायिकारणस्यैकत्वेऽपि कथमेतद्वैचित्र्यं संजायत इत्याह-सिराणां तु मृदुः पाक इत्यादि ।—सिराणामशुद्धरक्तवाहिनीनां, धमनीरसायनीनामप्युपलक्षणमेतत्; अत्र मृदुः पाको भवति निरन्तररससंभृतत्वात्; स्नायूनां च पेशीप्रान्तानां खरः पाको भवति अल्परसगमनात् ।......स वायुः मांसपेशीषु आशय्य आसमन्तात् निवासं कृत्वा हृदयाद्याशयानां संभवमुत्पत्तिं करोति' ( रसयोगसागर उपोद्घात, पृ० ११३–११४ )।

अन्त्रादिकोत्पत्तिं दर्शयन्नाह—असृज इत्यादि । आध्मानात् पच्यमानानां वायुनाऽग्नेः समिन्धनात् पच्यमानानामित्यर्थः । **गयी** तु, 'हृदये पच्यमानानाम्' इति पाठं पठति । यथार्थमित्यादि । ऊष्मणा पित्तेन सह युक्तो वायुः नवैव स्रोतांसि दारयेत् कुर्यात् । कथं ? यथार्थं; यथाप्रयोजनमित्यर्थः । अनुप्रविश्येत्यादि । वायुः पिशितं मांसमनुप्रविश्य पेशीर्विभजते, पेशी मांसखण्डः[1] । मेदस इत्यादि । सिरास्नायुत्वमाप्नुयादिति सिराः स्नायूंश्च वायुः कुर्यादित्यर्थः । आशय्येत्यादि । आशय्य अभ्यासयोगेन वायुः स्थितिं कृत्वेत्यर्थः ॥ २६—३० ॥

**रक्तमेदःप्रसादाद्वृक्कौ; मांसासृक्कफमेदःप्रसादाद्वृषणौ; शोणितकफप्रसादजं हृदयं, यदाश्रया हि धमन्यः प्राणवहाः; तस्याधो[2] वामतः प्लीहा फुप्फुसश्च, दक्षिणतो यकृत् क्लोम[3] च; तद्विशेषेण चेतनास्थानम्[4], अतस्तस्मिंस्तमसाऽऽवृते सर्वप्राणिनः स्वपन्ति ॥ ३१ ॥**

**भवति चात्र—**

**पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् ॥**
**जाग्रतस्तद्विकसति स्वपतश्च निमीलति ॥ ३२ ॥**

रक्तेत्यादि । प्रसादः सारः । वृक्कौ कुक्षिगोलकौ । मांसेत्यादि । वृषणावण्डौ । शोणितेत्यादि । तस्य हृदयस्य अधो वामतः प्लीहा फुप्फुसश्च; दक्षिणतो यकृत् क्लोम चेति क्लोम तिलकम् । तद् हृदयं विशेषेण चेतनास्थानं चैतन्यास्पदं, सामान्येन तु सकलशरीरमेव चेतनास्थानम् । तदुक्तं **चरके**—"वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः । केशलोमनखाग्रान्नमलद्रवगुणैर्विना" ( च. शा. अ. १ ) इति । चेतनासहचरितं मनोऽपि विशेषेण हृदयाधिष्ठानं मतम्[5] । अतस्तस्मिन् हृदये तमसा तमोगुणेनोच्छ्रितेन आवृते निरुद्धे सति, सर्वप्राणिनः स्वपन्ति । तस्याकारं दर्शयन्नाह—पुण्डरीकेणेत्यादि । हृदयं कमलमुकुलाकारमधोमुखम् ॥ ३१ ॥ ३२ ॥

**निद्रां तु वैष्णवीं पाप्मानमुपदिशन्ति, सा स्वभावत एव सर्वप्राणिनोऽभिस्पृशति । तत्र[1] यदा संज्ञावहानि स्रोतांसि तमोभूयिष्ठः श्लेष्मा प्रतिपद्यते तदा तामसी नाम[2] निद्रा संभवत्यनवबोधिनी, सा प्रलयकाले; तमोभूयिष्ठानामहःसु निशासु च भवति, रजोभूयिष्ठानामनिमित्तं, सत्त्वभूयिष्ठानामर्धरात्रे; क्षीणश्लेष्मणामनिलबहुलानां मनःशरीराभितापवतां च नैव, सा वैकारिकी भवति ॥ ३३ ॥**

अथ केयं निद्रा ? तामाह—निद्रामित्यादि । विष्णोरियं वैष्णवी मायैव । पाप्मानं कस्मादामनन्ति ? कृत्स्नशुभव्यापारनिरोधात् । यद्यपि तन्त्रान्तरीयैः सप्तविधा निद्रा पठिता तथाऽपि त्रिविधैव—तामसी, स्वाभाविकी, वैकारिकी चेति भेदेन; ताः क्रमेण दर्शयन्नाह—तत्र यदेत्यादि । यद्यपि सर्वासामपि निद्राणां तमो हेतुस्तथाऽपि प्रकृष्टतमस्त्वात् तामसीयं निद्रा कथ्यते । स्वाभाविकीमाह—तम इत्यादि । अनिमित्तमनियतकालं, चलत्वाद्रजसः कदाचिद्दिवा कदाचिद्रात्रावित्यर्थः । सत्त्वभूयिष्ठानामर्धरात्र इति तस्मिन् काले किञ्चिदल्पीभूतं सत्त्वमुत्कटं च तमो भवति, तस्मादर्धरात्रे सात्त्विकाः स्वपन्ति । वैकारिकीमाह—क्षीणेत्यादि । एवंभूतानां पुरुषाणां निद्रा नैव भवति, यदि च भवति तदा वैकारिकी नाम निद्रा भवति । ननु, यदा लङ्घनश्रमादिभिर्वायुर्वर्धते श्लेष्मा च क्षीयते तदा कथं निद्रोदेति ? उच्यते—मनसः क्लान्तत्वाद्भूतात्मनो विषयनिवृत्तौ प्राणिनः स्वपन्ति । तदुक्तं **चरके**—"यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः । विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः" ( च. सू. अ. २१ ) इति ॥ ३३ ॥

**भवतश्चात्र—**

**हृदयं चेतनास्थानमुक्तं सुश्रुत ! देहिनाम् ॥**
**तमोभिभूते तस्मिंस्तु निद्रा विशति देहिनम् ॥३४॥**
**निद्राहेतुस्तमः, सत्त्वं बोधने हेतुरुच्यते ॥**
**स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्यते ॥ ३५ ॥**

इदानीं गद्योक्तस्यार्थस्य सुखबोधनार्थं श्लोकावाह—भवतश्चात्रेत्यादि । सत्त्वादीनां सदा सान्निध्यात्[3] परस्परविरोधिनोः स्वापबोधयोरनुपपत्तिं मन्यमान आह—स्वभाव एवेत्यादि ॥ ३४ ॥ ३५ ॥

**पूर्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः ॥**
**रजोयुक्तेन मनसा गृह्णात्यर्थाञ् शुभाशुभान् ॥३६॥**

ननु, बोधाभावः स्वापः, स्वापाभावो बोधः, तत् कथं स्वपतः स्वप्नदर्शनं भवतीत्याह—पूर्वेत्यादि । ननु च, यः कश्चिदर्थावबोधः स सर्वोऽपि बाह्यार्थावलम्बनो दृष्टः, न च स्वप्ने बाह्यार्थस्य सत्त्वं विद्यते, तत् कथं तत्रार्थावबोध इति ? उच्यते—स्मृतिरेवेयं पूर्वानुभूतेऽर्थे, न चाननुभूतविषया परिस्फुरति ।

१ 'मांसखण्डम्' इति पा० । २ 'तस्य वामतः' इति पा० । ३ यत्तु "हृदयस्याधो वामतः प्लीहा फुस्फुसश्च, दक्षिणतो यकृत् क्लोम च' इति सौश्रुतः पाठः, तत्र प्रमाद एव दरीदृश्यते, 'हृदयस्याधो वामतः प्लीहा, दक्षिणतो यकृत्, उभयतः क्लोम फुस्फुसौ च' इति तु साधीयान् पाठः, अन्यथा न केनापि कथमपि शक्यं समाधातुम्" ( प्रत्यक्षशारीर, उपोद्घात, पृ० ६८ ) । ३ क्लोम श्वासनलिका–ट्रेकिया 'Trachea' इति गणनाथसेनः ( प्रत्यक्षशारीर, द्वितीयभाग, पृ० १७८ ); 'गॉल ब्लॅडर Gall-Bladder' इति रसयोगसागरस्योपोद्घाते ( पृ० ९६–१०२ ) वै० पं० हरिप्रपन्नशर्मा । विस्तरस्तु तत्रैव द्रष्टव्यः । ४ 'चेतनासमधिष्ठानं' इति पा० । ५ 'हृदयं मतं' इति 'हृदयं गतं' इति च पा० ।

१ 'तत्रापि' इति पा० । २ 'तामसी नाम' इति पा० । ३ 'सह सान्निध्यात्' इति, 'सहासान्निध्यात्' इति च पा० ।

ननु, तादृग्विधस्यार्थस्यादृष्टाश्रुताननुभूतत्वात् कथं स्मृतित्वमित्याह—पूर्वदेहानुभूतांस्त्वित्यादि । एतच्चोपलक्षणम्, अतोऽनेनापि देहेनानुभूतान् । भूतात्मेति किंभूतैर्घटित आत्मा शरीरलक्षणः? उत भूतैरुपलक्षित आत्मा भूतात्मा क्षेत्रज्ञः? इत्याह—स्वपतः प्रभुरिति ।—स्वपतः स्वापयुक्तस्य शरीरस्य प्रभुः स्वामी क्षेत्रज्ञ इत्यर्थः, तद्वशेन सर्वक्रियाप्रवृत्तेः । कथं पुनरर्थानिन्द्रियग्राह्यान् निद्राणेष्विन्द्रियेषु गृह्णातीत्याह—मनसेति । मनसः सर्वदैव संभवात् सदा स्वप्नदर्शनप्रसङ्ग इत्याह—रजोयुक्तेनेति; रजःप्रेरितेनेत्यर्थः, रजसः प्रवर्तकत्वात्; तमोयुक्तेन च मनसा न किमपि सुप्तः पश्यति, तमस आवरणात्मकत्वात् ॥ ३६ ॥

करणानां तु वैकल्ये तमसाऽभिप्रवर्धिते ॥
अस्वपन्नपि भूतात्मा प्रसुप्त इव चोच्यते ॥ ३७ ॥

इन्द्रियग्रामस्य तमसा वैकल्ये आपादिते आत्मा निर्विकारोऽपि सुप्त इव भवतीति प्रतिपादयन्नाह—करणानामित्यादि । अभिप्रवर्धित इति अभि सर्वतो बहिरन्तश्च प्रवर्धिते । तत्र बहिरिन्द्रियाणां विषयभूतेऽर्थे, अन्तर्मनोर्थेऽपि सुखदुःखादौ ॥ ३७ ॥

सर्वर्तुषु दिवास्वापः प्रतिषिद्धोऽन्यत्र ग्रीष्मात्, प्रतिषिद्धेष्वपि तु बालवृद्धस्त्रीकर्शितक्षतक्षीणमद्यनित्ययानवाहनाध्वकर्मपरिश्रान्तानामभुक्तवतां मेदःस्वेदकफरसरक्तक्षीणानामजीर्णिनां च मुहूर्तं दिवास्वपनमप्रतिषिद्धम् । रात्रावपि जागरितवतां जागरितकालादर्धमिष्यते दिवास्वपनम् । विकृतिर्हि दिवास्वप्नो नाम; तत्र स्वपतामधर्मः सर्वदोषप्रकोपश्च, तत्प्रकोपाच्च कासश्वासप्रतिश्यायशिरोगौरवाङ्गमर्दारोचकज्वराग्निदौर्बल्यानि भवन्ति; रात्रावपि जागरितवतां वातपित्तनिमित्तास्त एवोपद्रवा भवन्ति ॥ ३८ ॥

दिवास्वप्नस्य प्रवृत्तिनिवृत्ती आह—सर्वेत्यादि । अन्यत्र ग्रीष्मादिति ग्रीष्मं वर्जयित्वा । प्रतिषिद्धेष्वपीत्यादि प्रतिषिद्धेष्वपि ऋतुषु । मुहूर्तं घटिकाद्वयम् । रात्राविल्यादि । कस्मादर्धमेव स्वप्यान्नाधिकमिति दर्शयन्नाह—विकृतिरित्यादि । सर्वशब्देन रक्तमपि गृह्यते । यद्यपि दिवास्वप्नेऽधर्मस्तथाऽपि शरीररक्षार्थं ग्रीष्मे दिवास्वप्न उक्तः । रात्राविल्यादि । त एव कासश्वासादय एव ॥ ३८ ॥

भवन्ति चात्र—
तस्मान्न जागृयाद्रात्रौ दिवास्वप्नं च वर्जयेत् ॥
ज्ञात्वा दोषकरावेतौ बुधः स्वप्नं मितं चरेत् ॥ ३९ ॥

अरोगः सुमना ह्येवं बलवर्णान्वितो वृषः ॥
नातिस्थूलकृशः श्रीमान् नरो जीवेत् समाः शतम् ॥

भवन्तीत्यादि । एवमुक्तेन प्रकारेण वर्तमानः । वृषः स्त्रीरमणशक्तियुक्तः । श्रीमान् शरीरशोभायुक्तः ॥ ३९ ॥ ४० ॥

(निद्रा सात्म्यीकृता यैस्तु रात्रौ च यदि वा दिवा ॥)
दिवारात्रौ च ये नित्यं स्वप्नजागरणोचिताः ।
न तेषां स्वपतां दोषो जाग्रतां वाऽपि जायते ॥४१॥

ये पुनर्निद्रासात्म्यास्तेषामदोष एव दिवास्वाप इत्यत आह—दिवेत्यादि ॥ ४१ ॥

निद्रानाशोऽनिलात् पित्तान्मनस्तापात् क्षयादपि ॥
संभवत्यभिघाताच्च प्रत्यनीकैः प्रशाम्यति ॥ ४२ ॥
निद्रानाशेऽभ्यङ्गयोगो मूर्ध्नि तैलनिषेवणम् ॥
गात्रस्योद्वर्तनं चैव हितं संवाहनानि च ॥ ४३ ॥
शालिगोधूमपिष्टान्नभक्ष्यैरैक्षवसंस्कृतैः ॥
भोजनं मधुरं स्निग्धं क्षीरमांसरसादिभिः ॥ ४४ ॥
रसैर्बिलेशयानां च विष्किराणां तथैव च ॥
द्राक्षासितेक्षुद्रव्याणामुपयोगो भवेन्निशि ॥ ४५ ॥
शयनासनयानानि मनोज्ञानि मृदूनि च ॥
निद्रानाशे तु कुर्वीत तथाऽन्यान्यपि बुद्धिमान् ४६

के पुनर्निद्रानाशहेतवस्तानाह—निद्रानाश इत्यादि । अनिलादिभ्यो निद्रानाशः संभवतीति संबन्धः; स निद्रानाशः प्रत्यनीकैरभ्यङ्गादिभिः प्रशाम्यत्युपशमं याति । कानि पुनः प्रत्यनीकानि? तान्याह—निद्रानाशेऽभ्यङ्गेत्यादि । निद्रानाशेऽभ्यङ्गयोगादिर्हितो भवेत् । संवाहनं मृदुमर्दनम् । ऐक्षवसंस्कृतैरिति खण्डादिसंस्कृतैः । शयनादीनि च मनोज्ञानि निद्रानाशे कुर्वीत । तथाऽन्यान्यपीति प्रावरणादीनि ॥ ४२—४६ ॥

निद्रातियोगे वमनं हितं संशोधनानि च ॥
लङ्घनं रक्तमोक्षश्च मनोव्याकुलनानि च ॥ ४७ ॥

निद्रातियोगे प्रतीकारमाह—निद्रातियोगे इत्यादि । संशोधनादेव वमने लब्धे यद्वमनस्य पृथगुपादानं तद्विशेषेण निद्रानाशहेत्वर्थम् ॥ ४७ ॥

कफमेदोविषार्तानां रात्रौ जागरणं हितम् ॥

रात्रौ विहितः स्वप्नः केषांचिन्निषिध्यत इत्याह—कफेत्यादि ॥—

दिवास्वप्नश्च तृट्शूलहिक्काजीर्णातिसारिणाम् ॥४८॥

निषिद्धोऽपि दिवास्वप्नः केषांचित् प्रशस्यत इत्याह—दिवेत्यादि । हित इत्यत्रापि संबन्धनीयम् ॥ ४८ ॥

इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृम्भणं क्लमः ॥
निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥ ४९ ॥

१ 'युक्तः' इति पा० । २ 'वैगुण्ये' इति पा० । ३ 'स्वपनमप्रतिषिद्धं' इति पा० । ४ '°गौरवज्वराग्निदौर्बल्यानि' इति पा० । ५ 'तन्निमित्ताः' इति ता. ।

१ अयमर्धश्लोकः केषुचित्पुस्तकेषु नोपलभ्यते । २ 'वमेन्निद्रातियोगे तु कुर्यात्' इति पा० । ३ '°संविित्ति°' इति ता. । ४ 'यस्यैते' इति पा० ।

निद्रायास्तमोभवाया मोहरूपाया अनुषङ्गात्तत्सदृशीं तन्द्रामप्याह—इन्द्रियेत्यादि । इन्द्रियार्थाः शब्दादयः, तेषामसंप्राप्तिरग्रहणम् । निद्रार्तस्येव निद्रायुक्तस्येव । परं निद्रायां प्रबोधितस्य क्रमाभावः, तन्द्रायां तु प्रबोधितोऽपि क्राम्यति, अत एवात्र क्रमग्रहणम् ॥ ४९ ॥

**पीत्वैकमनिलोच्छ्रासमुद्वेष्टन् विवृताननः ॥**
**यं मुञ्चति सनेत्रास्रं स जृम्भ इति संज्ञितः ॥ ५० ॥**

इदानीं तन्द्रालक्षणे प्रतिपादितानां जृम्भणादीनां लक्षणमाह—पीत्वेत्यादि । अत्र जृम्भाप्रसङ्गेन केचिच्छिक्कालक्षणं पठन्ति । यथा—"प्राणोदानौ समौ स्यातां मूर्ध्नि स्रोतःपथि स्थितौ । नस्तः प्रवर्तते शब्दः क्षवथुं तं विनिर्दिशेत्"—इति । तच्च टीकाकारैरपठितत्वान्न पठनीयम् ॥ ५० ॥

**योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ॥**
**क्रमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ ५१ ॥**

क्रममाह—य इत्यादि ॥ ५१ ॥

**सुखस्पर्शप्रसक्तित्वं दुःखद्वेषणलोलता ॥**
**शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते ॥ ५२ ॥**

क्रमानन्तरं कर्माप्रवृत्तिसाम्यादसूत्रितमप्यालस्यमाह—सुखेत्यादि ॥ ५२ ॥

**उत्क्लिश्यान्नं न निर्गच्छेत् प्रसेकष्ठीवनेरितम्[1] ॥**
**हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् ॥ ५३ ॥**
**वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः ॥**
**न चान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्दिशेत् ॥ ५४ ॥**

केचिदत्रोत्क्लेशग्लान्योर्लक्षणमाहुः—उत्क्लिश्येत्यादि । एतदपि टीकाकारैरपठितत्वान्न पठनीयम् ॥ ५३ ॥ ५४ ॥

**आर्द्रचर्मावनद्धं वा यो गात्रं मन्यते नरः ॥**
**तथा गुरु शिरोऽत्यर्थं गौरवं तद्विनिर्दिशेत् ॥ ५५ ॥**

आर्द्रेत्यादि । आर्द्रचर्मावनद्धं वेत्यत्र वाशब्द इवार्थे, तेनार्द्रचर्मावनद्धमिवेत्यर्थः । तद्विनिर्दिशेदिति 'तस्य' इति शेषः ॥ ५५ ॥

**मूर्च्छा पित्ततमःप्राया, रजःपित्तानिलाद्भ्रमः ॥**
**तमोवातकफात्तन्द्रा, निद्रा श्लेष्मतमोभवा ॥ ५६ ॥**

मोहरूपाया निद्रायाः प्रसङ्गेन तन्द्रादिकं मोहरूपं निर्दिश्य मूर्च्छादिकमपि दर्शयन्नाह—मूर्च्छेत्यादि । भ्रमश्चक्रारूढस्येव भ्रमणम् । लक्षणत उक्तायास्तन्द्राया हेतुतोऽपि निर्देशं कुर्वन्नाह—तम इत्यादि । उक्ताऽपि निद्रा तमसा मनोदोषेण मूर्च्छादिप्रसङ्गेन शरीरदोषेणापि पुनरभिहिता । **गयी तु** क्रमालस्यादीनां लक्षणं न पठति, असूत्रितत्वेन हेतुना ॥ ५६ ॥

**गर्भस्य खलु रसनिमित्ता मारुताध्माननिमित्ता च परिवृद्धिर्भवति ॥ ५७ ॥**

गर्भस्य वृद्धौ पूर्वोक्तं हेतुमनूद्य द्वितीयमपि हेतुं दर्शयन्नाह—गर्भस्येत्यादि । रसनिमित्तेति मातुरिति शेषः । तदुक्तं प्राक्—"मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाडी प्रतिबद्धा"—इत्यादिना । मारुताध्माननिमित्ता चेति मारुतेन आध्मानं स्रोतसां पूरणं मारुताध्मानं, तदेव निमित्तं यस्यां सा मारुताध्माननिमित्ता; वक्ष्यमाणेनानलानिलकृतेन गर्भस्रोतसामाध्मानेनाभितो विशालभूतत्वाद्गर्भपरिवृद्धिः ॥ ५७ ॥

**भवन्ति चात्र—**
**तस्यान्तरेण नाभेस्तु ज्योतिःस्थानं ध्रुवं स्मृतम् ॥**
**तदाधमति वातस्तु देहस्तेनास्य वर्धते ॥ ५८ ॥**
**ऊष्मणा सहितश्चापि दारयत्यस्य मारुतः ॥**
**ऊर्ध्वं तिर्यगधस्ताच्च स्रोतांस्यपि यथा तथा ॥ ५९ ॥**

तत्र स्रोतसामेवाध्मानसंप्राप्तिं दर्शयन्नाह—भवन्तीत्यादि । तस्य गर्भस्य, नाभेरन्तरेण मध्ये, ज्योतिःस्थानमग्निस्थानं, ध्रुवं निश्चितं स्मृतम् । तच्च वायुराधमति । तेन चाध्मातेन वह्निना समारुतेन स्रोतसामाध्मापनेऽस्य गर्भस्य देहो वर्धते । ज्योतिःस्थानाध्मानेन मध्यस्रोतोवृद्धौ कथं सर्वतो वृद्धिरित्याह—ऊष्मणेत्यादि । यथातथाशब्दावत्रान्तर्भूतवीप्सार्थौ ज्ञातव्यौ, तेनोष्मणा सहितोऽनिलो यथा यथोर्ध्वं तिर्यगधस्ताच्च स्रोतांसि दारयति विवृतानि करोति तथा तथा देहो वर्धत इति पूर्ववाक्यात् संबन्धनीयम् ॥ ५८ ॥ ५९ ॥

**दृष्टिश्च रोमकूपाश्च न वर्धन्ते कदाचन[1] ॥**
**ध्रुवाण्येतानि मर्त्यानामिति धन्वन्तरेर्मतम् ॥ ६० ॥**

यथा शरीरं वर्धते तथा दृष्ट्यादयोऽपि कथं न वर्धन्ते ? इत्याह—दृष्टिरित्यादि । यस्मादेतानि दृष्टिरोमकूपानि ध्रुवाणि निश्चलानि[2] । मर्त्यानां पुरुषाणाम् ॥ ६० ॥

**शरीरे क्षीयमाणेऽपि वर्धेते द्वाविमौ सदा ॥**
**स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः ॥ ६१ ॥**

शरीरवृद्धावपि कस्यचिदवयवस्यावृद्धिं प्रतिपाद्य शरीरक्षयेऽपि कस्यचिदभिवृद्धिं दर्शयन्नाह—शरीरे इत्यादि । स्वभावं प्रकृतिं कृत्वा स्वभावं कारणं कृत्वेत्यर्थः ॥ ६१ ॥

**सप्त प्रकृतयो भवन्ति—दोषैः पृथक्, द्विशः, समस्तैश्च ॥ ६२ ॥**

प्रकृतिकृतप्रसङ्गेनान्यदपि प्राकृतं रूपं प्रतिपादयितुकामो यादृग्विधा प्रकृतिर्यद्धेतुकी यच्चास्याः स्वलक्षणं तत् क्रमेणाह—सप्तेत्यादि । पृथक् तिस्रः, द्विशस्तिस्रः, समस्तैश्चैका, इत्येवं सप्त ॥ ६२ ॥

**शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः ॥**
**प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु ॥ ६३ ॥**

सप्तविधत्वं प्रतिपाद्य तस्या उत्पत्तौ हेतुमाह—शुक्रेत्यादि । यो भवेद्दोष उत्कट इति स्वभावस्थितो न प्रकुपितः । द्विविधा

१ 'प्राणकोष्ठानिलेरितम्' इति पा० ।

१ 'कथंचन' इति पा० । २ 'निश्चितानि' इति पा० ।

त्कटा वातादयः प्राकृता वैकृताश्च; तत्र प्राकृताः सप्तविधायाः प्रकृतेर्हेतुभूताः शरीरैकजन्मानः, वैकृताश्च गर्भव्याघातकाः । गयी त्वन्यथैवाशङ्क्य समादधाति; यथा—"ननु, स्वभावतः शुद्धं बीजं कर्मणा वा समधातुं गर्भं निष्पादयति, अनिलादिदोषदुष्टं तु गर्भजननाय न समर्थमिति शुक्रशोणितशुद्धावुक्तं, तत् कथमुत्कटेन दोषेण प्रकृतिरिति ? उच्यते—न हि सर्वमेव बीजं दूषितं किं तर्हि बीजावयवो दूषितः, न चावयवगतदोषेण गर्भप्रतिबन्धो जात्यन्धमूकादेर्गर्भस्य दर्शनात्, तस्माद्य एवांशो बीजस्य दुष्टो भवति तत्कार्यस्यैव गर्भावयवस्य विकृतिरभावो वा भवति; यथा—दृष्ट्यारम्भके बीजभागे दुष्टे जात्यन्धो गर्भो भवति न तु गर्भ एव न भवति, तथा दोषाख्ये बीजभागे दुष्टे तत्कार्यस्यैव गर्भशरीरभावस्य[1] समधातोरपेक्षया विकृतिः स्फुटितकरचरणादिलक्षणा भवति न तु गर्भव्याघातः । तदुक्तं—"शुद्धं स्वभावकर्मभ्यां वाताद्यैर्दुष्टमंशतः । दुष्टं बीजार्थकृद् बीजं तत्र प्रकृतिरुत्तरम्"—इति ॥ ६३ ॥

तत्र वातप्रकृतिः प्रजागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्यनार्यो गन्धर्वचित्तः स्फुटितकरचरणोऽल्परूक्षश्मश्रुनखकेशः[2] क्राथी[3] दन्तखादी च भवति ॥ ६४ ॥

अधृतिरदृढसौहृदः कृतघ्नः
कृशपरुषो धमनीततः प्रलापी ॥
द्रुतगतिरटनोऽनवस्थितात्मा
वियति[4] च गच्छति संभ्रमेण सुप्तः ॥ ६५ ॥
अव्यवस्थितमतिश्चलदृष्टि-
र्मन्दरत्न[5]धनसंचयमित्रः ॥
किंचिदेव विलपत्यनिबद्धं
मारुतप्रकृतिरेष[6] मनुष्यः ॥ ६६ ॥
(वातिकाश्चाजगोमायुशशाखूष्ट्रशुनां तथा ॥
गृध्रकाकखरादीनामनूकैः कीर्तिता नराः ॥ ६७ ॥)[7]

दोषाणां हि वातस्य प्राधान्यमतस्तत्प्रकृतिलक्षणमाह—तत्रेत्यादि । प्रजागरूकः अतिशयेन जागरणशीलः । दुर्भगः अमनोरमाकारः । स्तेनः चौरः । मत्सरी परगुणासहनशीलः । अनार्यः असत्पुरुषः । गन्धर्वचित्तः गीतादिनिरतः । क्राथी हिंसाशीलः । दन्तखादी सुप्तः सन् दन्तान् किटिकिटायते । अधृतिः अधैर्ययुक्तः । द्रुतगतिरटनः शीघ्रगामी शीघ्रभाषी च भवतीत्यर्थः । अनवस्थितात्मा चञ्चलचित्तः । अव्यवस्थितमतिरनवस्थितबुद्धिनिश्चयः । ( अनूकैः शीलैः ) ॥ ६४—६७ ॥

पित्तप्रकृतिस्तु स्वेदनो दुर्गन्धः[1] पीतशिथिलाङ्गस्ताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलो दुर्भगो वलीपलितखालित्यजुष्टो बहुभुगुष्णद्वेषी क्षिप्रकोपप्रसादो मध्यबलो मध्यायुश्च भवति ॥ ६८ ॥

मेधावी निपुणमतिर्विगृह्य वक्ता
तेजस्वी समितिषु दुर्निवारवीर्यः ॥
सुप्तः सन् कनकपलाशकर्णिकारान्
संपश्येदपि च हुताशविद्युदुल्काः ॥ ६९ ॥
न भयात् प्रणमेदनतेष्वमृदुः
प्रणतेष्वपि सान्त्वनदानरुचिः ॥
भवतीह सदा व्यथितास्यगतिः
स भवेदिह पित्तकृतप्रकृतिः ॥ ७० ॥
(भुजङ्गोलूकगन्धर्वयक्षमार्जारवानरैः ॥
व्याघ्रर्क्षनकुलानूकैः पैत्तिकास्तु नराः स्मृताः ७१ )[2]

मेधावीत्यादि । विगृह्य वक्तेति परवाक्यमुच्छिद्य वदितुं शीलः । समितिषु संग्रामेषु । पलाशः किंशुकः । सान्त्वनम् उपशमः । व्यथितास्यगतिः व्यथितमुखः, मुखपाकत्वात्; धावनक्लेशासहत्वात् पीडावहगमनः ॥ ६८—७१ ॥

श्लेष्मप्रकृतिस्तु दूर्वेन्दीवरनिस्त्रिंशार्द्रारिष्टकशरकाण्डानामन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बलवांश्चिरग्राही दृढवैरश्च भवति ॥ ७२ ॥

शुक्लाक्षः स्थिरकुटिलालिनीलकेशो
लक्ष्मीवान् जलदमृदङ्गसिंहघोषः ॥
सुप्तः सन् सकमलहंसचक्रवाकान्
संपश्येदपि च जलाशयान् मनोज्ञान् ७३
रक्तान्तनेत्रः सुविभक्तगात्रः
स्निग्धच्छविः सत्त्वगुणोपपन्नः ॥
क्लेशक्षमो मानयिता गुरूणां
ज्ञेयो बलासप्रकृतिर्मनुष्यः ॥ ७४ ॥
(दृढशास्त्रमतिः स्थिरमित्रधनः
परिगण्य चिरात् प्रददाति बहु ॥
परिनिश्चितवाक्यपदः सततं
गुरुमानकरश्च भवेत् स सदा ॥ ७५ ॥
ब्रह्मरुद्रेन्द्रवरुणैः सिंहाश्वगजगोवृषैः ॥
तार्क्ष्यहंससमानूकाः श्लेष्मप्रकृतयो नराः ॥ ७६ ॥)[4]

दूर्वेत्यादि । इन्दीवरं नीलोत्पलम् । निस्त्रिंशः खड्गः । अरिष्टः कृष्णवर्तुलफलो 'अरीठा' इति लोके प्रसिद्धः, स चार्द्रः । धृतिमान् धैर्ययुक्तः । सुविभक्तगात्रः सुष्ठु पृथग्भूतसकलावयवः ।

१ 'गर्भशरीरभागस्य' इति पा० । २ 'अतिरूक्षश्मश्रुनखकेशः' इति पा० । ३ 'क्रोधी' इति पा० । ४ 'वियदपि' इति पा० । ५ 'मन्ददन्त°' इति ता० । ६ 'मारुतप्रकृतिरस्थिरसत्त्वः' इति पा० । ७ अयं श्लोको हस्तलिखितपुस्तके न पठ्यते ।

१ 'दुर्गन्धः शीतसहः' इति ता. । २ अयं श्लोको हस्तलिखितपुस्तके न पठ्यते । ३ 'वक्तुं' इति पा० । ४ इमौ श्लोकौ हस्तलिखितपुस्तके न पठ्येते ।

केचिद्वातादिप्रकृतिषु—"वातिकाश्वाजगोमायुशशाखूष्ट्रशुनां तथा । गृध्रकाकखरादीनामनूकैः कीर्तिता नराः"—इति, तथा—"भुजगोलूकगन्धर्वयक्षमार्जारवानरैः । व्याघ्रर्क्षनकुलानूकाः पैत्तिकास्तु नराः स्मृताः"—इति, तथा—"दृढशास्त्रमतिः स्थिरमित्रधनः परिगण्य चिरात् प्रददाति बहु । परिनिश्चितवाक्यवदः सततं गुरुमानकरश्च भवेत् स सदा—" इति, तथा—"ब्रह्मेन्द्ररुद्रवरुणैः सिंहाश्वगजगोवृषैः । तार्क्ष्यहंससमानूकाः श्लेष्मप्रकृतयो नराः"—इत्येतान् चतुःसंख्याकान् श्लोकान् पठन्ति । ते तु श्लोका निबन्धकारैरपठितत्वान्न पठनीयाः ॥ ७२—७६ ॥

**द्वयोर्वा तिसृणां वाऽपि प्रकृतीनां तु लक्षणैः ॥**
**ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिनिर्दिशेत्[1] ॥ ७७ ॥**

संसर्गजाः प्रकृतीराह—द्वयोरित्यादि ॥ ७७ ॥

**प्रकोपो वाऽन्यथाभावो क्षयो वा नोपजायते ॥**
**प्रकृतीनां स्वभावेन जायते तु गतायुषः ॥ ७८ ॥**

ते च प्राकृता भावा अन्यथा[2] न भवन्तीति दर्शयन्नाह—प्रकोप इत्यादि ॥ ७८ ॥

**विषजातो यथा कीटो न विषेण विपद्यते ॥**
**तद्वत्प्रकृतयो[3] मर्त्यं शक्नुवन्ति न बाधितुम् ॥ ७९ ॥**

वातादिप्रकृतीनां ये दोषास्ते कस्मान्न रुजन्तीत्याह—विषेत्यादि । एतदारम्भकदोषमधिकृत्योक्तं, तस्य[4] च बाधकत्वं प्रागेव व्याख्यातम् । शक्नुवन्ति न बाधितुमिति नञयमीषदर्थे, तेन किंचिद्बाधितुं शक्नुवन्ति नतु भृशम् । यथा हि विषकीटो विषस्वभावजनितदाहादिना किंचिदेव बाध्यते न तु भृशम्, एवं वातादिहेतुजः प्राणिकायो वातादिजेन स्फुटितकरचरणादिकेन दोषेण तथा स्वेददौर्गन्ध्यादिना च किंचिदेव बाध्यते । अत एव—"वातलाद्याः सदाऽऽतुराः" ( च. सू. अ. ७ ) इति वातादिप्रकृतिषु नित्यातुरत्वमभिहितम् ॥ ७९ ॥

**प्रकृतिमिह नराणां भौतिकीं केचिदाहुः**
**पवनदहनतोयैः कीर्तितास्तास्तु तिस्रः ॥**
**स्थिरविपुलशरीरः पार्थिवश्च क्षमावान्**
**शुचिरथ चिरजीवी नाभसः खैर्महद्भिः ॥८०॥**

एकीयमतमाह—प्रकृतिमित्यादि । पवनदहनतोयैः कीर्तिता इति वातपित्तश्लेष्मलक्षणैः कथिता इत्यर्थः । शेषे द्वे प्रकृती आह—स्थिरेत्यादि । खैर्महद्भिरिति नासाकर्णादिच्छिद्रैर्विपुलैरित्यर्थः । अनेन श्लोकेन पृथिव्यप्तेजोवाय्वाकाशीयामपि प्रकृतिमाहुः । अन्ये तु सा चैकशो द्विशस्त्रिशश्चतुर्भिर्वा भूतैः प्रस्तार्यमाणा बहुधा संजायते इति वदन्ति । उक्तं च—"एकैकेन वदन्ति पञ्च दश तु द्वाभ्यां त्रिभिस्तावतीर्भूतैः पञ्च चतुर्भिरेव भिषजस्त्वेकां समस्तैरपि । एकत्रिंशतमत्र भूमिसलिलस्वाहाप्रियस्पर्शनाकाशैश्च प्रकृतीर्गुणैरपि पुनः प्राहुः स्म सप्ताऽपरा–" इति । गुणैः सत्त्वरजस्तमोभिरेकशो द्विशः समस्तैश्च सप्त महाप्रकृतयो भवन्ति, "सप्त दोषतः, सप्त गुणतः" ( रसवैशेषिकसूत्र अ. १ सू. ३१ ) इति **नागार्जुनाचार्यो**क्तत्वात् ॥ ८० ॥

**शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम् ।**
**प्रियातिथित्वमिज्या च ब्रह्मकायस्य लक्षणम् ॥८१॥**
**माहात्म्यं शौर्यमाज्ञा च सततं शास्त्रबुद्धिता ॥**
**भृत्यानां भरणं चापि माहेन्द्रं कायलक्षणम् ॥ ८२ ॥**
**शीतसेवा सहिष्णुत्वं पैङ्गल्यं हरिकेशता ॥**
**प्रियवादित्वमित्येतद्वारुणं[1] कायलक्षणम् ॥ ८३ ॥**
**मध्यस्थता सहिष्णुत्वमर्थस्यागमसंचयौ ॥**
**महाप्रसवशक्तित्वं कौबेरं कायलक्षणम् ॥ ८४ ॥**
**गन्धमाल्यप्रियत्वं च नृत्यवादित्रकामिता ॥**
**विहारशीलता चैव गान्धर्वं कायलक्षणम् ॥ ८५ ॥**
**प्राप्तकारी दृढोत्थानो निर्भयः स्मृतिमाञ्छुचिः[2] ॥**
**रागमोहमदद्वेषैर्वर्जितो याम्यसत्त्ववान्[3] ॥ ८६ ॥**
**जपव्रतब्रह्मचर्यहोमाध्ययनसेविनम् ॥**
**ज्ञानविज्ञानसंपन्नमृषिसत्त्वं नरं विदुः ॥ ८७ ॥**
**सप्तैते सात्त्विकाः काया**

सत्त्वादिगुणभेदेन चित्तप्रकृतीर्निर्दिशन्नाह—शौचमित्यादि । इज्या यागः । माहात्म्यमित्यादि । माहात्म्यं महाशयत्वम् । शीतेत्यादि । पैङ्गल्यं पिङ्गाक्षता । हरिकेशता कपिलकेशता । मध्यस्थतेत्यादि । महाप्रसवशक्तित्वं प्रजोत्पादनसामर्थ्यम् । गन्धेत्यादि । विहारशीलता भ्रमणशीलता । प्राप्तेत्यादि ।—प्राप्तकारी युक्तकारी । दृढोत्थानो दृढारम्भः ॥ ८१—८७ ॥—

**राजसांस्तु निबोध मे ॥**
**ऐश्वर्यवन्तं रौद्रं च शूरं चण्डमसूयकम् ॥ ८८ ॥**
**एकाशिनं चौदरिकमासुरं सत्त्वमीदृशम् ॥**
**तीक्ष्णमायासिनं भीरुं चण्डं मायान्वितं तथा[4] ॥८९॥**
**विहाराचारचपलं सर्पसत्त्वं विदुर्नरम् ॥**
**प्रवृद्धकामसेवी[5] चाप्यजस्राहार एव च ॥ ९० ॥**
**अमर्षणोऽनवस्थायी शाकुनं कायलक्षणम् ॥**
**एकान्तग्राहिता रौद्रमसूया[6] धर्मबाह्यता ॥ ९१ ॥**
**भृशमात्रं तमश्चापि[7] राक्षसं कायलक्षणम् ॥**

---

१ 'दृश्यते प्रकृतौ रूपं यदा दोषद्वयस्य तु । संसर्गं तं विजानीयात् संसर्गस्त्रिविधश्च सः' इति ता. । २ 'अव्यावर्तिन इति' इति पा० । ३ 'प्रकृभिर्देहस्वजातत्वान्न बाध्यते' इति ता. । ४ 'तस्याबाधकत्वं' इति पा० ।

१ 'प्रियोदकत्वं च तथा' इति ता. । २ 'धृतिमान्' इति ता. । ३ 'रागमोहभयद्वेषैर्वर्जितो यमसत्त्ववान्' पा० । ४ 'तीक्ष्णमायासबहुलं क्रोधनं सत्त्वभीरुकम्' इति ता. । ५ 'अवद्धकामसेवी' इति पा० । ६ 'रौक्ष्यमसूया' इति पा० । ७ 'भृशमात्मस्तवश्चापि' इति पा० ।

**उच्छिष्टाहारता तैक्ष्ण्यं साहसप्रियता तथा ॥९२॥**
**स्त्रीलोलुपत्वं नैर्लज्यं पैशाचं कायलक्षणम् ॥**
**असंविभागमलसं दुःखशीलमसूयकम् ॥ ९३ ॥**
**लोलुपं चाप्यदातारं प्रेतसत्त्वं विदुर्नरम् ॥**
**षडेते राजसाः कायाः,**

रौद्रं भयानकम् । चण्डं तीव्रकोपम् । असूयकं परगुणेषु मत्सरिणम् । एकाशिनमेकाक्येव चाश्नातीत्यर्थः । औदरिकं घस्मरं; गयदासस्तु 'औदरिकं' इत्यत्र 'औपधिकं' इति पठित्वा, औपधिकं छद्मपरमिति व्याख्याति । तीक्ष्णमित्यादि । भीरुं 'अक्रोधे सति' इत्यध्याहारः । तदुक्तं चरके—"क्रुद्धं शूरमक्रुद्धं भीरुम्" (च. शा. अ. ४) इति । चण्डं कोपनम् । प्रवृद्धेत्यादि । अजस्राहारः अनवरताहारशीलः । एकान्तेत्यादि । एकान्तग्राहिता एकान्तग्रहणशीलता । असूया गुणेषु दोषारोपणम् । भृशमात्रं तम इत्यर्थः । उच्छिष्टेत्यादि । तैक्ष्ण्यं कोपनत्वम् ॥ ८८—९३ ॥—

**तामसांस्तु निबोध मे ॥ ९४ ॥**
**दुर्मेधस्त्वं मन्दता च स्वप्ने मैथुननित्यता ॥**
**निराकरिष्णुता चैव विज्ञेयाः पाशवा गुणाः ॥ ९५ ॥**
**अनवस्थितता मौर्ख्यं भीरुत्वं सलिलार्थिता ॥**
**परस्पराभिमर्दश्च मत्स्यसत्त्वस्य लक्षणम् ॥ ९६ ॥**
**एकस्थानरतिर्नित्यमाहारे केवले रतः ॥**
**वानस्पत्यो नरः सत्त्वधर्मकामार्थवर्जितः ॥ ९७ ॥**
**इत्येते त्रिविधाः कायाः प्रोक्ता वै तामसास्तथा ॥**

मन्दता जिह्मता ॥ ९४—९७ ॥—

**कायानां प्रकृतीर्ज्ञात्वा त्वनुरूपां क्रियां चरेत् ॥९८**
**महाप्रकृतयस्त्वेता रजःसत्त्वतमःकृताः ॥**
**प्रोक्ता लक्षणतः सम्यग्भिषक् ताश्च विभावयेत् ९९**

**इति सुश्रुतसंहितायां शारीरस्थाने गर्भव्याकरणं शारीरं नाम चतुर्थोऽध्यायः ॥ ४ ॥**

प्रकृतिज्ञाने प्रयोजनमाह—कायानामित्यादि ॥ ९८ ॥ ९९ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

**अथातः शरीरसंख्याव्याकरणं शारीरं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

गर्भव्याकरणानन्तरमुत्पन्नस्य गर्भस्य संजाताङ्गप्रत्यङ्गतया लब्धशरीरसंज्ञस्य शरीरावयवानां संख्या कर्तुं युज्यत इत्याह—अथात इत्यादि । पञ्चमहाभूतशरीरिसमवायः शरीरमुक्तं, तस्यावयवशः संख्या, तस्या व्याकरणं विवरणं यत्र शारीरे तद्व्याख्यास्यामः; अथवा शरीरशब्दोऽयं समुदायवृत्तिरवयवेष्वपि वर्तते, तेषां संख्या; शेषं पूर्ववत् ॥ १ ॥ २ ॥

**शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं 'गर्भ' इत्युच्यते । तं चेतनावस्थितं वायुर्विभजति, तेज एनं पचति, आपः क्लेदयन्ति, पृथिवी संहन्ति, आकाशं विवर्धयति; एवं विवर्धितः स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा 'शरीरं' इति संज्ञां लभते । तच्च षडङ्गं—शाखाश्चतस्रो, मध्यं पञ्चमं, षष्ठं शिर इति ॥ ३ ॥**

तत्र शरीरावयवसंख्याविवरणं प्रतिपादयितुकामः शरीरशब्दव्यपदेश्यमेव तावत् क्रमेणाह—शुक्रशोणितमित्यादि । आत्मप्रकृतिविकारसंमूर्च्छितमिति आत्मा क्षेत्रज्ञः, प्रकृतयः प्रधानादयोऽष्टौ, विकाराः पञ्चभूतान्येकादशेन्द्रियाणि चेति षोडश, तैः संमूर्च्छितं मिश्रीभूतं 'गर्भ' इति संज्ञां लभते; एतेन योगिनामुपयोगी पञ्चविंशतिको राशिरुक्तः । तमिदानीं भिषजामुपयोगिनं षड्धातुकं कृत्वा निर्दिशन्नाह—तमित्यादि । चेतनया हेतुभूतया यावद्गर्भप्रसवकालमवस्थितं चेतनावस्थितम्, अन्यथा कुथितविशीर्णं स्यात् । तं वायुर्विभजति दोषधातुमलाङ्गप्रत्यङ्गविभागेन; तेज एनं पचति रूपाद्रूपान्तरेणावस्थानं प्रापयति; आपः क्लेदयन्ति विभागपरिणामकारिणोरनिलानलयोः शोषणेऽप्यार्द्रतां जनयन्ति; पृथिवी संहन्ति अद्भिः क्लिन्नमपि कठिनं मूर्तिमत् करोति; 'संहरति' इत्यन्ये पठन्ति; तन्न, संपूर्वस्य हृञो विनाशार्थत्वात्; आकाशं विवर्धयति अनिलानलविदारितस्रोतसामाध्मापनेनोर्ध्वमधस्तिर्यग्विवर्धितमवकाशदानेन विवर्धयति । मध्यमिदं कण्ठादिगुदपर्यन्तम् ॥ ३ ॥

**अतः परं प्रत्यङ्गानि वक्ष्यन्ते—मस्तकोदरपृष्ठनाभिललाटनासाचिबुकबस्तिग्रीवा इत्येता एकैकाः, कर्णनेत्रभ्रूशङ्खांसगण्डकक्षस्तनवङ्क्षणवृषणपार्श्वस्फिग्जानुकूर्परबाहूरुप्रभृतयो द्वे द्वे, विंशतिरङ्गुलयः, स्रोतांसि वक्ष्यमाणानि, एष प्रत्यङ्गविभाग उक्तः ॥ ४ ॥**

अपरमप्यवयवविभागं संख्याश्रयं शरीरे निर्दिशन्नाह—अतः परमित्यादि । अंसो बाहुशिरः, गण्डो गल्लः, स्फिक् पादः, ऊरु 'जाङ्घ' इति लोके । बाहूरुप्रभृतयो द्वे द्वे इत्यत्र प्रभृतिग्रहणाच्चौष्ठसृक्कणीकुकुन्दराणामवरोधः । ननु स्रोतांसि

१ 'उत्सृष्टाचारता रौक्ष्यं' इति ता. । २ 'भृशमात्मस्तवः अतिशयेनात्मस्तुतिः' इति पा० । ३ 'विज्ञाय कायप्रकृतीरनुरूपां' इति पा० ।

१ 'हस्तपादजिह्वाघ्राणकर्णादिभिः' इति पा० । '°घ्राणवदनकर्णादिभिरुपेतः' इति ता. । २ 'वक्ष्यन्ते' इति पा० । ३ '°कुकुन्दरादीनामवरोधः' इति पा० ।

प्रत्यङ्गेषु किमिति न निर्दिष्टानीत्याह—स्रोतांसीत्यादि । वक्ष्यमाणानीति आश्रितेषु त्वगाद्यवयवेष्वित्यर्थः ॥ ४ ॥

**तस्य पुनः संख्यानं—त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि कण्डरा जालानि कूर्चा रज्जवः सेवन्यः सङ्घाताः सीमन्ता अस्थीनि सन्धयः स्नायवः पेश्यो मर्माणि सिरा धमन्यो योगवहानि स्रोतांसि च ॥ ५ ॥**

एतान्यङ्गप्रत्यङ्गान्याश्रयभूतानि प्रतिपाद्यैतेष्ववयवेषु ये समाश्रितास्त्वगाद्यवयवास्तेषां व्याकरणमाह—तस्य पुनरित्यादि । तस्येति अङ्गप्रत्यङ्गात्मकस्य शरीरस्य । संख्यानमिति संख्यायते येन शरीरं तत् संख्यानम् । किं तदित्याह—त्वचः कला इत्यादि । त्वगादिकं योगवहस्रोतोऽन्तमेकोनत्रिंशत् । योगवहानीति धमन्या सह योगं वहन्ति यानि स्रोतांसि तानि योगवहानि धमनीव्याकरणोदितानि प्राणोदकान्नादिवाहीनीत्यर्थः ॥ ५ ॥

**त्वचः सप्त, कलाः सप्त, आशयाः सप्त, धातवः सप्त, सप्त सिराशतानि, पञ्च पेशीशतानि, नव स्नायुशतानि, त्रीण्यस्थिशतानि, द्वे दशोत्तरे संधिशते, सप्तोत्तरं मर्मशतं, चतुर्विंशतिर्धमन्यः, त्रयो दोषाः, त्रयो मलाः, नव स्रोतांसि, (षोडश कण्डराः, षोडश जालानि, षट् कूर्चाः, चतस्रो रज्जवः, सप्त सेवन्यः, चतुर्दश सङ्घाताः, चतुर्दश सीमन्ताः, द्वाविंशतिर्योगवहानि स्रोतांसि, द्विकान्यन्त्राणि) चेति समासः ॥ ६ ॥**

केचित् सुश्रुताध्यायिनः संक्षेपेण त्वगादीन् कतिचित्संख्ययोपेतान् पठन्ति । तन्मतमाह—त्वचः सप्तेत्यादि । समासः संक्षेपः ॥ ६ ॥

**विस्तारोऽत ऊर्ध्वं—त्वचोऽभिहिताः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयं वृक्कौ च ॥ ७ ॥**

संक्षेपेणाभिहितानां त्वगादीनां विस्तारमाह—विस्तारोऽत इत्यादि । त्वचोऽभिहिता इति संख्यया नामभिश्च गर्भव्याकरणे, कलादयश्चाभिहिताः ॥ ७ ॥

**आशयास्तु-वाताशयः, पित्ताशयः, श्लेष्माशयो, रक्ताशय, आमाशयः, पक्वाशयो, मूत्राशयः, स्त्रीणां गर्भाशयोऽष्टम इति ॥ ८ ॥**

आशयानाह—आशयास्त्वित्यादि । आशयोऽधिष्ठानम् । पित्ताशयादधः पक्वाशयः, तस्यैकदेशे च विभक्तमलाधार उण्डु(न्दु)को विद्यते, अत उण्डु(न्दु)कात् पक्वाशयो भिन्न इत्यर्थः । आशयक्रमस्तु **वाग्भटेनोक्तो** यथा—"रक्तस्याद्यः क्रमात् परे । कफामपित्तपक्वानां वायोर्मूत्रस्य च क्रमात् । गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरा—" (वा. शा. अ. ३) इति ॥ ८ ॥

**सार्धत्रिव्यामान्यन्त्राणि पुंसां, स्त्रीणामर्धव्यामहीनानि ॥ ९ ॥**

अन्त्राण्याह—सार्धेत्यादि । व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ॥ ९ ॥

**श्रवणनयनवदनघ्राणगुदमेढ्राणि नव स्रोतांसि नराणां बहिर्मुखानि, एतान्येव स्त्रीणामपराणि च त्रीणि द्वे स्तनयोरधस्ताद्रक्तवहं च ॥ १० ॥**

श्रवणेत्यादि । नन्वन्यान्यपि धमनीव्याकरणोदितानि स्रोतांसि वक्तव्यानीत्याह—बहिर्मुखानीति । धमनीव्याकरणोदितानि त्वन्तर्मुखानि । अधस्ताद्रक्तवहं स्मरातपत्रस्याध आर्तववहं, स्मरातपत्रं भगस्योपरितने भागे । उक्तं च—"विपुलपिप्पलपत्रसमाकृतेरवयवस्य शिरस्तलमाश्रितम् । सकलकामसिरामुखचुम्बितं निगदितं मदनातपवारणम्—" इति ॥ १० ॥

**षोडश कण्डराः—तासां चतस्रः पादयोः, तावत्यो हस्तग्रीवापृष्ठेषु; तत्र हस्तपादगतानां कण्डराणां नखा अग्रप्ररोहाः, ग्रीवाहृदयनिबन्धिनीनामधोभागगतानां मेढ्रं, श्रोणिपृष्ठनिबन्धिनीनामधोभागगतानां बिम्बं, मूर्धोरुवक्षोंऽसपिण्डादीनां च ॥ ११ ॥**

षोडशेत्यादि । कण्डरा महास्नायुः । तावत्यो हस्तग्रीवापृष्ठेष्विति हस्तयोश्चतस्रः, ग्रीवायां चतस्रः, पृष्ठे चतस्रः । हस्तादिगतानां कण्डराणामग्रिमभागमाह—तत्रेत्यादि । **जेज्झटस्तु** "हस्तपादगतानां कण्डराणामस्थ्नां च नखा अग्रप्ररोहा" इति पठति । ग्रीवया सह हृदयनिबन्धिनीनां चतसृणां मेढ्रं 'अग्रप्ररोह' इति शेषः । श्रोण्या सह पृष्ठनिबन्धिनीनां पृष्ठनिश्चलबन्धं कुर्वतीनां पृष्ठजानां चतसृणामधोभागगतानां बिम्बं मण्डलमर्थाश्रितम्बस्य । मूर्धोरुवक्षोंऽसपिण्डादीनां चेति पूर्ववाक्यात्

१ 'संख्येयानि' इति पा० । २ 'उन्दुकः' इति पा० । ३ 'योगवाहीनि' इति पा० । ४ 'प्राणोदकान्नवाहीनि' इति पा० । ५ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । हाराणचन्द्रपठितत्वादस्माभिः पठितः । ६ द्विकान्यन्त्राणीति सूक्ष्मस्थूलभेदेन । ७ 'उन्दुकः' इति पा० । ८ 'आशयास्तु वातपित्तश्लेष्मामपक्वाग्निमूत्राणां सप्त' इति ता. ।

१ 'रक्तस्याद्यः' इति पा० । २ '°रपरमधस्ताद्रक्तवाहि' इति पा० । ३ '°संबन्धनीना°' इति पा० । ४ 'अधोमुखानां मेढ्रं' इति ता. । ५ 'नितम्बः' इति पा० । हाराणचन्द्रस्तु 'बिम्बः' इति पठित्वा 'बिम्बः सच्छिद्रं त्रिकास्थि उच्यते' इति व्याख्यानयति । ६ 'अक्षपिण्डादीनां' इति पा० । ७ 'ऊरुवक्षोऽक्षपिण्डादिगतानां च मूर्धा' इति हाराणचन्द्रः पठति । 'मूर्धोरुवक्षोऽक्षपिण्डादीनां च' इति पा० । ८ 'अक्षपिण्डादीनां' इति पा० ।

विम्वमनुवर्तते, तेन मस्तकस्य यद् बिम्बं मण्डलं तद्ग्रीवाश्रितानां प्रागुक्तानामेव चतसृणामुपरिगतानां कण्डराणामग्रप्ररोहः, तथा पादगतानां चतसृणामुपरिगतानामूरुमण्डलमग्रप्ररोहः, तथा पृष्ठगतानां चतसृणां कण्डराणामुपरिगतानां वक्षोमण्डलम्, आदिशब्दगृहीतस्य स्तनस्य च मण्डलमग्रप्ररोहः । हस्तगतानां चतसृणामुपरिगतानामंसैपिण्डो बाहुशिरोऽग्रप्ररोह इति । मस्तकस्य तथैवोर्वोस्तथा वक्षसस्तथांऽसपिण्डैयोश्च यद्बिम्बं मण्डलम्, आदिशब्दात् स्तनपिण्डयोरपि मण्डलं, तासां षोडशानां यथासमीपं प्ररोहः ॥ ११ ॥

**मांससिरास्नाय्वस्थिजालानि प्रत्येकं चत्वारि; तानि मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि परस्परगवाक्षितानि चेति, यैर्गवाक्षितमिदं शरीरम् ॥ १२ ॥**

जालान्याह—मांसेत्यादि । मांसादीनां चतुर्णां प्रत्येकं चत्वारि जालानि । तेषां मांसादिजालानां चत्वार्येकैकस्मिन् मणिबन्धे गुल्फे च । तद्यथा—मांसस्यैकमेकस्मिन् मणिबन्धे गुल्फे च, एवं सिराणां स्नायूनामस्थ्नां चैकैकं जालकमिति चत्वारि जालकानि । परस्परगवाक्षितानि संजातपरस्परच्छिद्राणीत्यर्थः । यैर्गवाक्षितमिति विरचितनिरन्तरजालकाकाररन्ध्रनिकरपरिकलितमित्यर्थः ॥ १२ ॥

**षट् कूर्चाः, ते हस्तपादग्रीवामेढ्रेषु; हस्तयोर्द्वौ, पादयोर्द्वौ, ग्रीवामेढ्रयोरेकैकः ॥ १३ ॥**

षट् कूर्चा इत्यादि । कूर्चा इव कूर्चाः, नाम्नैवाकृतिरुन्नेया; ते पुनर्मांसास्थिसिरास्नायूनां जालकप्रभवाणां सन्ततिर्विरचिताः ॥ १३ ॥

**महत्यो मांसरज्जवश्चतस्रः—पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये, आभ्यन्तरे च द्वे ॥ १४ ॥**

**सप्त सेवन्यः; सिरसि विभक्ताः पञ्च, जिह्वाशेफसोरेकैका; ताः परिहर्तव्याः शस्त्रेण ॥ १५ ॥**

महत्य इत्यादि । पेशीनिबन्धनार्थमिति प्रयोजनकथनम् । गयी तु, महत्यो मांसरज्जवश्चतस्रः चतस्रः पृष्ठवंशमुभयत इत्यर्थौ प्रतिपादयति ॥ १४ ॥ १५ ॥

**चतुर्दशास्थ्नां संघाताः; तेषां त्रयो गुल्फजानुवङ्क्षणेषु, एतेनेतरसक्थि बाहू च व्याख्यातौ, त्रिकशिरसोरेकैकः ॥ १६ ॥**

संघातानाह—चतुर्दशास्थ्नामित्यादि । त्रयो गुल्फजानुवङ्क्षणेषु, तावन्तोऽन्यस्मिन् सक्थ्नि, बाह्वोरेवमेव, एवं चतुर्भिस्त्रिकैर्द्वादश; त्रिकशिरसोरेकैकः—त्रिके एकः, एकः शिरसीत्येवं चतुर्दश । यद्यपि श्रोणिकाण्डभागे त्रिकं प्रसिद्धं, तथाऽप्यत्र बाहुग्रीवास्थित्रयसंघातस्त्रिक उच्यते ॥ १६ ॥

**चतुर्दशैव सीमन्ताः; ते चास्थिसङ्घातवद्गणनीयाः, यतस्तैर्युक्ता अस्थिसंघाताः; ये ह्युक्ताः संघातास्ते खल्वष्टादशैकेषाम् ॥ १७ ॥**

सीमन्तानाह—चतुर्दशैवेत्यादि । तैर्युक्ता अस्थिसङ्घाता इति । तथाच भोजः—"संघाताः सीविता यैस्तु सीमन्तांस्तान् प्रचक्ष्महे"—इति । परमतमाह—ये ह्युक्ता इत्यादि । एकेषामाचार्याणां मते संघाता अष्टादश; तद्यथा—पूर्वोक्ताश्चतुर्दश, श्रोणिकाण्डमुपर्येकः, वक्षउपर्येकः, उदरोरःसन्धाने एकः, अंसकूटमुपर्येकः, एवमष्टादश ॥ १७ ॥

**त्रीणि सषष्टान्यस्थिशतानि वेदवादिनो भाषन्ते; शल्यतन्त्रेषु तु त्रीण्येव शतानि । तेषां सविंशमस्थिशतं शाखासु, सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोरःसु, ग्रीवां प्रत्यूर्ध्वं त्रिषष्टिः, एवमस्थ्नां त्रीणि शतानि पूर्यन्ते ॥ १८ ॥**

अस्थिसंख्यां कुर्वन्नाह—त्रीणीत्यादि । वेदवादिनो भाषन्त इत्यत्रायुर्वेदवादिन इति द्रष्टव्यं, न पुनर्वेद एव; तदा तु त्रीण्येवास्थिशतानीत्यत्रत्यं वचो वेदविरुद्धत्वादप्रमाणं स्यात् । स्वमतमाह—शल्यतन्त्रेष्वित्यादि ॥ १८ ॥

**एकैकस्यां तु पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश, तलकूर्चगुल्फसंश्रितानि दश, पार्ष्ण्यामेकं, जङ्घायां द्वे, जानुन्येकम्, एकमूराविति, त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति, एतेनेतरसक्थि बाहू च व्याख्यातौ; श्रोण्यां पञ्च, तेषां गुदभगनितम्बेषु चत्वारि, त्रिकसंश्रितमेकं, पार्श्वे षट्त्रिंशदेकस्मिन्, द्वितीयेऽप्येवं, पृष्ठे त्रिंशत्, अष्टावुरसि, द्वे अंसफलके; ग्रीवायां नव, कण्ठनाड्यां चत्वारि, द्वे हन्वोः,**

१ 'तेन मस्तकस्य, तथैवोर्वोः, तथा वक्षसः, तथाऽक्षपिण्डयोश्च यद्बिम्बं मण्डलं, आदिशब्दात् स्तनपिण्डयोरपि मण्डलं, तासां षोडशानां यथासमीपं प्ररोहः' इति पा० । २ 'अक्षपिण्डः' इति पा० । ३ 'अक्षपिण्डयोश्च' इति पा० । ४ 'जालकप्रभवसन्ततिविरचिताः' इति पा० । ५ 'सीवन्यः' इति पा० । ६ 'चतस्रः पृष्ठवंशमुभयत इति प्रतिपादयति' इति पा० ।

१ वृद्धवाग्भटस्तु "गुल्फजानुवङ्क्षणमणिबन्धकूर्परकक्षासु एकैकः, त्रिके एकः, पञ्च शिरसि" इत्यष्टादश सीमन्तानाह; संघातांस्तु चतुर्दशैव । २ 'सीमन्तास्तु खल्वष्टादशैकेषाम्' इति पा० । ३ 'संचिताः' इति पा० । ४ 'षष्ट्यधिकानि' इति पा० । 'सषष्टीनि शतान्यस्थ्नामिति' इति ता. । ५ 'भगगुदनितम्बेषु' इति पा० । ६ प्रतिपार्श्वं द्वादश पर्शुकाः, द्वादश स्थालकानि, द्वादश स्थालकार्बुदानीति मिलित्वा षट्त्रिंशदस्थीनि ज्ञेयानि । ७ अष्टावुरसीति उरःफलके षट्, अक्षकसंज्ञे द्वे; इति मिलित्वाऽष्टावुरस्यस्थीनि ज्ञेयानि । ८ 'द्वे अक्षकसंज्ञे' इति पा० । ९ अत्र 'कण्ठनाड्यां त्रीणि, एकं हनौ, दन्ता द्वात्रिंशत्, नासायां नव, तालुनि द्वे, गण्डयोर्द्वे, शङ्खयोर्द्वे, कर्णयोः षट्, षट् शिरसि' इति पाठो रसयोगसागरस्योपोद्घाते वै. पं. हरिप्रपन्नशर्मणा संशोधितः । १० 'हनुसंज्ञे' इति ता. ।

**दन्ता द्वात्रिंशत्, नासायां त्रीणि, एकं तालुनि, गण्डकर्णशङ्खेष्वेकैकं, षट् शिरसीति ॥ १९ ॥**

कथं शाखासु विंशत्यधिकं शतं पूर्यते तदाह—एकैकस्यां त्वित्यादि । तलकूर्चगुल्फेत्यादि तत्र पादतले पञ्च शलाकाः, तत्[1]प्रबन्धनमेकमस्थि, द्वे द्वे कूर्चगुल्फयोरिति दश । विंशचतुष्केण सविंशमेकशतम् । यथा श्रोणिपार्श्वपृष्ठोरःसु सप्तदशोत्तरं शतं पूर्यते तथाऽऽह—श्रोण्यां पञ्चेत्यादि । श्रोण्यां पञ्चेति यदुक्तं तस्यैव विवरणमाह—तेषामित्यादि । गुदभगनितम्बद्वये चत्वारि, एवं श्रोणिगतपञ्चकमारभ्य अक्षकाश्रितां द्वयं यावत् सर्वैक्ये सप्तदशोत्तरं शतं पूर्यते । ग्रीवां प्रत्यूर्ध्वं यथा त्रिषष्टिस्तथाऽऽह—ग्रीवायामित्यादि । गण्डकर्णशङ्खेष्वित्यत्र गण्डौ च कर्णौ च शङ्खौ चेति विग्रहे षडस्थीनि भवन्ति ॥१९॥

**एतानि पञ्चविधानि भवन्ति; तद्यथा—कपालरुचकतरुणवलयनलकसंज्ञानि । तेषां जानुनितम्बांसगण्डतालुशङ्खशिरःसु कपालानि, दशनास्तु रु[2]चकानि, घ्राणकर्णग्रीवाक्षिकोषे[3]षु तरुणानि, पार्श्वपृष्ठोरःसु वल[4]यानि, शेषाणि नलकसंज्ञानि ॥ २० ॥**

एतानीत्यादि । कपालानि कर्परसंज्ञानि । दशना दन्ता इत्यर्थः । तरुणानि तरुणसंज्ञानि । वलयानि वलयसंज्ञानि । अस्थ्नां स्थानविशेषेण धर्मविशेषान्नामविशेषः पञ्चविधः । शेषाणि नलकसंज्ञानीति हस्तपादाङ्गुलितलकूर्[5]चनलकादिषु । तदुक्तं **भोजे**—"हस्तपादाङ्गुलितले कूर्चेषु मणिबन्धयोः । बाहुजङ्घाद्वये चापि जानीयान्नलकानि तु—" इति । नामविशेषकथनं रचनाविशेषज्ञापनार्[6]थम् ॥ २० ॥

**भवन्ति चात्र—**

**[7]अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः ॥**
**अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम् ॥२१॥**
**तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् ॥**
**अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम् ॥**
**मांसान्यत्र निबद्धानि सिराभिः स्नायुभिस्तथा ॥**
**अस्थीन्यालम्बनं कृत्वा न शीर्यन्ते पतन्ति वा ॥२३॥**

शरीरधारणविषयेऽस्थ्नां प्राधान्यं दर्शयन्नाह—भवन्ति चात्रेत्यादि । अत्रास्थि ॥ २१—२३ ॥

**सन्धयस्तु द्विविधाश्चे[1]ष्टावन्तः, स्थिराश्च ॥ २४ ॥**
**शाखासु हन्वोः कट्यां च चेष्टावन्तस्तु सन्धयः ॥**
**शेषास्तु सन्धयः सर्वे विज्ञेया हि स्थिरा बुधैः ॥२५॥**

अस्थ्याश्रितान् सन्धीनाह—सन्धयस्त्वित्यादि । चेष्टावन्तश्चलाः, स्थिरा अचलाः । कट्यां चेति चकाराद्ग्रीवायामपि चलाः ॥ २४ ॥ २५ ॥

**सङ्ख्यातस्तु दशोत्तरे द्वे शते । तेषां शाखास्वष्टषष्टिः, एकोनषष्टिः कोष्ठे, ग्रीवां प्रत्यूर्ध्वं त्र्यशीतिः । एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयः, द्वावङ्गुष्ठे, ते चतुर्दश; जानुगुल्फवङ्क्षणेष्वेकैकः, एवं सप्तदशैकस्मिन् सक्थ्नि भवन्ति; एतेनेतरसक्थि बाहू च व्याख्यातौ; त्रयः कटीकपालेषु, चतुर्विंशतिः पृष्ठवंशे, तावन्त एव पार्श्वयोः, उरस्यष्टौ; तावन्त एव ग्रीवायां, त्रयः कण्ठे, नाडी[2]षु हृदयक्लोमनिबद्धास्वष्टादश, दन्तपरिमाणा दन्तमूलेषु, एकः काकलके नासायां[3] च, द्वौ वर्त्ममण्डलयोर्नेत्राश्रयौ, गण्डकर्णशङ्खेष्वेकैकः, द्वौ हनुसन्धी, द्वावुपरिष्टाद्भ्रुवोः शङ्खयोश्च, पञ्च शिरःकपालेषु, एको मूर्ध्नि ॥ २६ ॥**

शाखास्वष्टषष्टेर्विवरणमाह—एकैकस्यामित्यादि । पादाङ्गुष्ठेऽस्थित्रितयान्वितेऽपि सन्धिद्वयमेव स्यात् । हस्ताङ्गुष्ठेऽस्थित्रितयसंयुक्तेऽपि सन्धिद्वयमेव गणनीयं, तृतीयस्य हस्ताङ्गुष्ठसन्धेर्मणिबन्धसन्धावेवान्तर्भावात् । इदानीं शाखासन्धीनभिधाय कोष्ठसन्धीनूर्ध्वभागसन्धींश्च दर्शयन्नाह—त्रय इत्यादि । तावन्त एव ग्रीवायामष्टावित्यर्थः । त्रयः कण्ठे गलनलकास्थनि । नाडीषु कण्ठपार्श्वनाडीषु, हृदयक्लोमनिबद्धासु अन्नपानवहासु मण्ड[4]लास्थिसंज्ञास्वष्टादश । काकलकं गलमणिः, घण्टिकेति लोके, तत्रैकः; नासायां चैकः । द्वौ वर्त्ममण्डलयोस्तरुणास्थिसन्धी । गण्डौ च कर्णौ च शङ्खौ चेति विग्रहे षट् सन्धयः ।

---

१ 'प्रतिबन्धनं' इति पा० । २ 'रुचकाः' इति पा० । ३ 'घ्राणकण्ठकर्णाक्षिकूटेषु' इति ता. । ४ 'पाणिपादपार्श्वपृष्ठोदरोरःसु वलयानि' इति पाठस्तु न समीचीनः, टीकायामुक्तेन भोजवचनेन सह विरोधात् प्रत्यक्षविरोधाच्च । 'पादहस्तग्रीवापृष्ठेषु' वलयानि इति ता. । ५ '°कूर्चगलकादिषु' इति पा० । ६ 'भङ्गविशेषज्ञापनार्थम्' इति पा० । ७ 'यथा हि सारो वृक्षस्य तिष्ठत्यभ्यन्तराश्रितः । एवमस्थीनि जन्तूनां, शरीरं ध्रियते तु तैः' इति ता. ।

१ 'चेष्टावन्तः सन्धयो द्विविधाः—बहुचेष्टा अल्पचेष्टाश्चेति कृत्वा । तत्र शाखासु अधोहनुकोट्योश्च बहुचेष्टाः, पृष्ठवंशादिष्वल्पचेष्टाः, अन्यत्र पुनरचेष्टाः । अथात्र चेष्टावत्सु सन्धिष्वस्थिद्वयमस्थित्रयं वा सम्बध्यते सान्द्रमसृणशणगुच्छसमाकाराभिः प्रतानवतीभिः स्नायुरज्जुभिः स्नायुकोषैश्च । सन्धेयभागाश्च तत्रास्थ्नां तरुणास्थिसमावृताः सुसंश्लिष्टाश्च श्लेष्मधरकलापुटव्यवधानेन सम्यग्वर्तनाय । अचेष्टाः पुनः सन्धयः प्रतनुस्नायुजालसंहता दन्तुरधारादिभिर्निरन्तरसंश्लिष्टाश्च, तेषु हि प्रयोजनाभावात् श्लेष्मधरकलाया अभावः ।' प्रत्यक्षशारीर, भा. प्र. पृ. ११५–११६. २ केचित्त्वत्र 'नाडीषु फुप्फुसक्लोमनिबद्धासु' इति पठन्ति । 'त्रयः कण्ठे, त्रयः कण्ठनाड्यां, हृदयक्लोमनिबद्धासु नाडीष्वष्टादश' इति पा० । 'त्रयः कण्ठनाड्यां, हृदयक्लोमफुप्फुसनाडीष्वष्टादश' इति ता. । ३ 'नासायां पञ्च, द्वौ द्वावेव द्वयोर्नेत्रयोर्भवतः, द्वौ वर्त्ममण्डलजौ नेत्राश्रयौ' इति पा० । ४ 'नलकास्थिसंज्ञासु' इति पा० ।

शङ्खयोश्चेत्यत्राप्युपरिष्टाद् द्वाविति संबन्धनीयम् । तदुक्तं— "ग्रीवाखष्टौ त्रयः कण्ठे कण्ठनाड्यां नवद्वयम् । वर्त्ममण्डलगण्डाङ्ककर्णशङ्खहनुद्वये ॥ भ्रूशङ्खद्वितयस्योर्ध्वं सप्तस्खेषु द्वयं द्वयम् । कपाले पञ्च मूर्ध्न्येको नासाकाकलयोर्द्वयम् ॥ द्वात्रिंशता त्र्यशीतिः स्यादेवं दन्ताश्रितैः सह"—इति ॥ २६ ॥

**त एते सन्धयोऽष्टविधाः—कोरोलूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डलशङ्खावर्ताः । तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः, कक्षावङ्क्षणदशनेषूलूखलाः, अंसपीठगुदभगनितम्बेषु सामुद्गाः, ग्रीवापृष्ठवंशयोः प्रतराः, शिरःकटीकपालेषु तुन्नसेवन्यः, हन्वोरुभयतस्तु वायसतुण्डाः, कण्ठहृदयनेत्रक्लोमनाडीषु मण्डलाः, श्रोत्रशृङ्गाटकेषु शङ्खावर्ताः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ २७ ॥**

त एते सन्धय इत्यादि । यद्यप्येषां नामभिरेवाकृतयो व्याख्यातास्तथाऽपि केषांचित् सन्धीनां सुखावबोधनार्थमाकृतिर्लिख्यते । कोरो नाम गर्तस्तदाकृतयः कोराः, कोरः कलिका तदाकृतय इत्यन्ये । उलूखलस्तण्डुलकण्डनोपयोगी, तदाकृतयः सन्धयोऽप्युलूखलाः । समुद्गः संपुटः, तदाकृतौ भवाः सामुद्गाः । प्रतरत्यनेनेति प्रतरो भेलकः, तदाकृतयः प्रतराः । मण्डलो मण्डलाकृतिः । शेषाणां च नामभिरेवाकृतयो ज्ञेयाः ॥ २७ ॥

**अस्थ्नां तु सन्धयो ह्येते केवलाः परिकीर्तिताः ॥**
**पेशीस्नायुसिराणां तु सन्धिसङ्ख्या न विद्यते ॥ २८ ॥**

अस्थिमात्राश्रिताः सन्धयोऽभिहिताः, नान्याश्रिताः सन्धय इति दर्शयन्नाह—अस्थ्नां त्वित्यादि ॥ २८ ॥

१ 'सप्तस्वत्र' इति, 'सन्धिसप्तद्वयं तथा' इति च पा० । २ 'तत्र कोरा नाम सन्धयो बहुचेष्टाः, उत्तानकोरगर्भेष्वस्थिप्रान्तेषु उत्सेधवतामस्थिभागानां सन्धानरूपाः । उदूखला नाम सन्धयोऽपि बहुचेष्टाः, उदूखलवद्गम्भीरप्रायेष्वस्थिभागेषु इतरास्थिमुण्डसन्धानरूपाः । तेषु हि स्वोदूखलानाश्रित्य अभितो विवर्तन्ते तानि तान्यस्थीनि, यथा–कक्षावङ्क्षणसन्धिषु । दशनोदूखलास्तु स्थिराः सन्धयः पृथगेव मन्तव्याः । सामुद्गा नाम समुद्गनिर्मापका इव सन्धयोऽल्पचेष्टाः । ते च श्रोणिचक्रांसचक्रादिषु दृश्याः । प्रतरा नाम प्रतरणशीलैरिव ईषच्चलैः समतलांशाभ्यां परस्परसंहितैरस्थिखण्डैर्निर्मिताः सन्धयः । तुन्नसेवन्यो नाम–परस्परापीडनैर्दन्तुरधारादिभिर्निर्मिताः कपालान्तरालाः सन्धयः । ते शिरःकपालेषु दृश्याः, कटिकपालेषु च प्राग्यौवनात् । वायसतुण्डाख्यस्तु सन्धिः अधोहनुमुण्डयोः शङ्खास्थिगताभ्यां हनुसन्धिस्थालकाभ्यां सन्धानान्मुखव्यादानादिसम्पादकः, स तु कोरसन्धेरेव खल्वकोराख्यो भेदो युग्मरूपः, तस्य कोरग्रहणेनैव ग्रहणमिति सूक्ष्मदृशः । मण्डलशङ्खावर्ताः पुनः क्रमात् श्वासपथकर्णशष्कुलीगतास्तरुणास्थिसन्धयः' (प्रत्यक्षशारीर प्र. भा. पृ. ११४–११७.) । ३ 'अंसपीठगुदपादनितम्बेषु' इति पा० । ४ 'हनोः' इति पा० ।

**नव स्नायुशतानि । तासां शाखासु षट्शतानि, द्वे शते त्रिंशच्च कोष्ठे, ग्रीवां प्रत्यूर्ध्वं सप्ततिः । एकैकस्यां तु पादाङ्गुल्यां षण्णिचितास्ताास्त्रिंशत्, तावत्य एव तलकूर्चगुल्फेषु, तावत्य एव जङ्घायां, दश जानुनि, चत्वारिंशदूरौ, दश वङ्क्षणे, शतमध्यर्धमेवमेकस्मिन् सक्थ्नि भवन्ति; एतेनेतरसक्थि बाहू च व्याख्यातौ; षष्टिः कट्यां, पृष्ठेऽशीतिः, पार्श्वयोः षष्टिः, उरसि त्रिंशत्; षट्त्रिंशद्ग्रीवायां, मूर्ध्नि चतुस्त्रिंशत्; एवं नव स्नायुशतानि व्याख्यातानि भवन्ति ॥ २९ ॥**

यथा शाखासु स्नायूनां षट्शतानि पूर्यन्ते तथाऽऽह—एकैकस्यां त्वित्यादि । षण्णिचिता इति षट्स्नायवो निबद्धा इत्यर्थः । कोष्ठस्थाः कथ्यन्ते—षष्टिः कट्यामित्यादि । ग्रीवां प्रत्यूर्ध्वस्थाः कथ्यन्ते—षट्त्रिंशदित्यादि । महास्नायोस्तु 'कण्डरा' इति संज्ञा ॥ २९ ॥

भवन्ति चात्र—

**स्नायूश्चतुर्विधा विद्यात्तास्तु सर्वा निबोध मे ॥**
**प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा ॥ ३० ॥**
**प्रतानवत्यः शाखासु सर्वसन्धिषु चाप्यथ ॥**
**वृत्तास्तु कण्डराः सर्वा विज्ञेयाः कुशलैरिह ॥ ३१ ॥**
**आमपक्वाशयान्तेषु बस्तौ च शुषिराः खलु ॥**
**पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ ॥ ३२ ॥**
**नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता ॥**
**भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता ॥ ३३ ॥**
**एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः ॥**
**स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः ॥ ३४ ॥**
**न ह्यस्थीनि न वा पेश्यो न सिरा न च सन्धयः ॥**
**व्यापादितास्तथा हन्युर्यथा स्नायुः शरीरिणम् ॥ ३५ ॥**
**यः स्नायूः प्रविजानाति बाह्याश्चाभ्यन्तरास्तथा ॥**
**स गूढं शल्यमाहर्तुं देहाच्छक्नोति देहिनाम् ॥ ३६ ॥**

भवन्ति चात्रेत्यादि । वृत्ता वर्तुलाः । तासां च सर्वशरीरावयवनिबन्धनं दर्शयन्नाह—नौरित्यादि । नृयुक्ता प्राणिसहिता, सुसमाहिता सुघटिता । यथा स्नायुर्व्यापादिता सती शरीरिणं पुरुषं हन्ति न तथाऽस्थ्यादीनि हन्युः ॥ ३०—३६ ॥

**पञ्च पेशीशतानि भवन्ति । तासां चत्वारि शतानि शाखासु, कोष्ठे षट्षष्टिः, ग्रीवां प्रत्यूर्ध्वं चतुस्त्रिंशत् । एकैकस्यां तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः**

१ ताडपत्रपुस्तके स्नायुशब्दो नपुंसकलिङ्गः पठितः, तदनुसारेण च सर्वोऽपि पाठः । २ 'षट् षट्' इति पा० । ३ अस्याग्रे 'महास्नायुषु कण्डरेति संज्ञा' इत्यधिकं पठ्यते ता-पुस्तके । ४ 'भवेद्भारक्षमा ह्यप्सु दृढसन्धिसमाश्रिता' इति ता. । ५ चत्वारिंशद्' इति ता. ।

पञ्चदश, दश प्रपदे, पादोपरि कूर्चसन्निविष्टास्तावत्य एव, दश गुल्फतलयोः, गुल्फजान्वन्तरे विंशतिः, पञ्च जानुनि, विंशतिरूरौ, दश वङ्क्षणे, शतमेवमेकस्मिन् सक्थ्नि भवति; एतेनेतरसक्थि बाहू च व्याख्यातौ; तिस्रः पायौ, एका मेढ्रे, सेवन्यां चापरा, द्वे वृषणयोः, स्फिचोः पञ्च पञ्च, द्वे बस्तिशिरसि, पञ्चोदरे, नाभ्यामेका, पृष्ठोर्ध्वसन्निविष्टाः पञ्च पञ्च दीर्घाः, षट् पार्श्वयोः, दश वक्षसि, अक्षकांसौ प्रति समन्तात् सप्त, द्वे हृदयामाशययोः, षट् यकृत्प्लीहोण्डु(न्दु)केषु; ग्रीवायां चतस्रः, अष्टौ हन्वोः, एकैका काकलकगलयोः, द्वे तालुनि, एका जिह्वायां, द्वे ओष्ठयोः, द्वे नासायां, द्वे नेत्रयोः, गण्डयोश्चतस्रः, कर्णयोर्द्वे, चतस्रो ललाटे, एका शिरसीति; एवमेतानि पञ्च पेशीशतानि ॥ ३७ ॥

भवति चात्र—

सिरास्नाय्वस्थिपर्वाणि सन्धयश्च शरीरिणाम् ॥
पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥ ३८ ॥

पञ्च पेशीशतानीत्यादि । मांसावयवसङ्घातः परस्परं विभक्तः 'पेशी' इत्युच्यते । **गयी** तु "कोष्ठे षष्टिः, ग्रीवां प्रत्यूर्ध्वं चत्वारिंशत्" इति पठति । एकैकस्यां त्वित्यादि । प्रपदं पादाग्रम् । कोष्ठगता आह—तिस्रः पायावित्यादि । **गयी** तु "एका मेढ्रे सेवन्यां च, द्वे अपरे वृषणयोः, स्फिचोर्द्वयोर्दश, तिस्रो वलिसंज्ञका गुदे, द्वे बस्तिशिरसि, सप्तोदरफलके यकृदादिभिः सह, नाभ्यामेका, पृष्ठसन्धिनिविष्टाः पञ्च, पार्श्वयोः पञ्च दीर्घाः, दश वक्षसि, अक्षकांशौ प्रति सर्वतः सप्त, द्वे हृदि, एका आमाशये, द्वे अभ्यन्तरतः कोष्ठे" इति कोष्ठे षष्टिं पठति । **वृद्धवाग्भटो**ऽपि कोष्ठे षष्टिमेवाह । ग्रीवां प्रत्यूर्ध्वगा आह—ग्रीवायामित्यादि । **गयी** तु "ग्रीवायां चतस्रः, एका कण्ठे, तथा काकलकेऽप्येका, तालुनि द्वे, रसनायां षट्, अधरयोर्द्वे, घोणायां च द्वे, द्वे कर्णयोः, प्रत्येकं हन्वोश्चतस्रः, अक्ष्णोर्द्वे, अलिके चतस्रः, मूर्धनि षट्—" इत्यूर्ध्वकाये चत्वारिंशत् पठति ॥ ३७ ॥ ३८ ॥

स्त्रीणां तु विंशतिरधिका । दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्चेति, यौवने तासां परिवृद्धिः; अपत्यपथे चतस्रः—तासां प्रसृते अभ्यन्तरतो द्वे, मुखाश्रिते बाह्ये च वृत्ते द्वे, गर्भच्छिद्रसंश्रितास्तिस्रः, शुक्रार्तवप्रवेशिन्यस्तिस्र एव । पित्तपक्वाशयोर्मध्ये गर्भशय्या, यत्र गर्भस्तिष्ठति ॥ ३९ ॥

स्त्रीणामित्यादि । अधिकाया विंशतेर्विवरणमाह—दश तासामित्यादि । अपत्यपथे योनौ चतस्रः । चतसृणामेव विवरणमाह—तासामित्यादि । मुखाश्रिते योनिमुखाश्रिते । अभ्यन्तरतः प्रसृते इति योनेरभ्यन्तरतः प्रसारं प्राप्ते मूत्रस्रोतःस्वरूपे इत्यर्थः । बाह्ये निर्गते, वृत्ते वर्तुले, योनिकर्णिकास्रोतःपार्श्वद्वयगतत्वेन द्वे मांसपेश्यौ । गर्भच्छिद्रसंश्रिता इति गर्भमार्गमाश्रितास्तिस्र आवर्तत्रयरूपेण, तृतीये चावर्ते मत्स्यमुखाकारा गर्भशय्या ( यत्र गर्भस्तिष्ठति ), तासां शुक्रार्तवप्रवेशिन्यश्च तिस्रः पेश्यः । का गर्भशय्येत्याह—पित्तपक्वाशययोरित्यादि ॥ ३९ ॥

तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिसिरास्नायुप्रच्छादका यथाप्रदेशं स्वभावत एव भवन्ति ॥ ४० ॥

इदानीं तासां पेशीनां स्थानवशान्नानास्वरूपत्वमाह—तासामित्यादि । तासां पेशीनाम् । बहला बहुतराः, पेलवा अल्पाः, अणवः सूक्ष्माः, तद्विपरीताः स्थूलाः, पृथवो विस्तीर्णाः, वृत्ता वर्तुलाः, ह्रस्वा अदीर्घाः, दीर्घा आयताः, स्थिराः कठिनाः, मृदवः कोमलाः, श्लक्ष्णाः स्पर्शसुखाः, तद्विपरीताः कर्कशाः ॥ ४० ॥

भवति चात्र—

पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षणमुष्कजाः ॥
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥४१॥

केचित्तन्त्रकाराः स्त्रीणां मेढ्रमुष्काभावात्तदाश्रितानां पेशीनामन्यत्रावस्थानं पठन्ति; तन्मतमाह—भवति चात्रेत्यादि । लक्षणमुष्कजा इति लक्ष्यते ज्ञायते पुमाननेनेति लक्षणं लिङ्गं शिश्नमिति यावत् । फलं गर्भाशयः । ता इति पेश्यः । **गयी** तु, अमुं तन्त्रान्तरीयश्लोकं न पठति; किन्तु 'एवमेतानि पञ्च पेशीशतानि' इत्यत्र पुंसामिति पदं पठित्वा पुंसामेव पञ्चपेशीशतानि, स्त्रीणां तु तिसृभिरूनानि पञ्चशतानीति व्याख्याति । अत्रार्थे च भोजवाक्यं दृष्टान्तीकरोति । तथाच **भोजवाक्यं**—"पञ्चपेशीशतान्येव स्त्रीवर्जं विद्धि भूमिप । अतश्च तिस्रो हीयन्ते स्त्रीणां शेफसि मुष्कयोः"—इति ॥ ४१ ॥

मर्मसिराधमनीस्रोतसामन्यत्र प्रविभागः ॥४२॥

परिशिष्टमर्मसिरादिव्याकरणं चास्तीति मन्यमान आह—मर्मेत्यादि । अन्यत्रेति प्रत्येकमर्मनिर्देशे सिरावर्णविभक्तौ धमनीव्याकरणे च ॥ ४२ ॥

---

१ 'पञ्चदश' इति ता. । २ 'ऊर्वोर्दश' इति ता. । ३ अस्याग्रे 'गुदे तिस्रः' इत्यधिकं ता॰ पुस्तके । ४ 'सप्तोदरे' इति ता. । ५ 'पार्श्वयोर्दश, द्वे वक्षसि' इति ता. । ६ 'हनुसमाख्ये' इति ह्राराणचन्द्रसंमतः पाठः । ७ 'जिह्वायां द्वे' इति पा॰ । 'जिह्वायां षट्' इति ता. । ८ 'चतस्रो नेत्रयोः' इति ता. । ९ 'षट् शिरसि' इति ता. । १० 'एकाऽभ्यन्तरतः कोष्ठे' इति ता. । ११ 'भगापत्यपथे' इति पा॰ ।

१ 'शुक्रार्तवप्रवेशिन्यो गर्भाशये तिस्र एव' इति पा॰ । २ 'अत्र 'बस्तिपक्वाशयमध्ये गर्भाशयः' इति पाठो भवितुमर्हति, शरीरे तथैव दर्शनादन्यथा प्रत्यक्षविरोधाच' इति प्रत्यक्षशारीरोपोद्घाते (पृ. ७२) गणनाथसेनः । ३ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । ४ 'लक्षणमुष्कयोः । स्त्रीणामाश्रित्य' इति पा॰ । ५ 'मन्यमानमाह' इति पा॰ ।

शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता सा प्रकीर्तिता ॥
तस्यास्तृतीये त्वावर्ते गर्भशय्या प्रतिष्ठिता ॥ ४३ ॥
यथा रोहितमत्स्यस्य मुखं भवति रूपतः ॥
तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः ॥ ४४ ॥

गर्भशय्यामनन्तरमावर्तं प्रतिपादयितुमाह—शङ्खनाभ्याकृतिरित्यादि । तत्संस्थानामिति अल्पमुखामन्तर्महासुषिरामित्यर्थः ॥ ४३ ॥ ४४ ॥

आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः ॥
स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥४५॥

मूढगर्भोद्धरणार्थं तत्र गर्भस्थितिस्वरूपमाह—आभुग्न इत्यादि । आभुग्नः सङ्कुचिताङ्गः । स्वभावात् पूर्वकर्मापेक्षात् ॥४५॥

त्वक्पर्यन्तस्य देहस्य योऽयमङ्गविनिश्चयः ॥
शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित् ॥ ४६ ॥

इदानीं शल्यतन्त्रस्योत्कर्षं दर्शयन्नाह—त्वक्पर्यन्तस्येत्यादि ॥ ४६ ॥

तस्मान्निःसंशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता ॥
शोधयित्वा मृतं सम्यग्द्रष्टव्योऽङ्गविनिश्चयः ॥४७॥
प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टं च यद्भवेत् ॥
समासतस्तदुभयं भूयो ज्ञानविवर्धनम् ॥ ४८ ॥

सर्वावयवपरिमाणं प्रत्यक्षलक्ष्यं संशयच्छेदनाय भवति, तस्मात्तदुपायं दर्शयन्नाह—तस्मान्निःसंशयमित्यादि ॥ ४७ ॥ ४८ ॥

तस्मात् समस्तगात्रमविषोपहतमदीर्घव्याधिपीडितमवर्षशतिकं निःसृष्टान्त्रपुरीषं पुरुषमावहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गमप्रकाशे देशे कोथयेत्, सम्यक्प्रकुथितं चोद्धृत्य, ततो देहं सप्तरात्रादुशीरवालवेणुवल्वजकूर्चानामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्वानेव बाह्याभ्यन्तरानङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा ॥ ४९ ॥

कथं पुनः शास्त्रदृष्टं प्रत्यक्षतो दृश्यते ? इत्याह—तस्मादित्यादि । समस्तगात्रमिति अङ्गहीने आगमोक्तावयवसंख्याद्यप्रत्ययात् । विषोपहते विषज्वालाविशीर्णत्वगादिः स्यात् । दीर्घव्याधिपीडिते हि त्वगादिमानासंभवः । मुञ्जाद्यवेष्टने मत्स्यादिभक्षितत्वादसंपूर्णावयवता । अपञ्जरस्थे जलरयेण भ्रश्यति । प्रकाशे गृध्रादिभक्षणभयम् ॥ ४९ ॥

न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः ॥
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥ ५० ॥

त्वक्पर्यन्तो देहश्चक्षुरिन्द्रियग्राह्यो न क्षेत्रज्ञ इत्याह—न शक्य इत्यादि । विभुरात्मा, स चक्षुषा द्रष्टुं न शक्यः, यतः सूक्ष्मतमः । दृश्यते ज्ञानचक्षुर्भिरिति सद्गुरूपदेशजज्ञानान्येव चक्षूंषि तैर्दृश्यते; तपांसि चान्द्रायणादीनि तानि चक्षूंषि दृष्टयस्तैरपि च ॥ ५० ॥

शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः ॥
दृष्टश्रुताभ्यां संदेहमवापोह्याचरेत् क्रियाः ॥ ५१ ॥

इति सुश्रुतसंहितायां शारीरस्थाने शरीरसंख्याव्याकरणशारीरं नाम पञ्चमोऽध्यायः ॥ ५ ॥

शास्त्रतः प्रत्यक्षतश्च दर्शनं सन्देहापोहकारणं, तदाह—शरीरे चैवेत्यादि । अवापोह्य निराकृत्येत्यर्थः ॥ ५१ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातः प्रत्येकमर्मनिर्देशं शारीरं व्याख्यास्यामः ॥१॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

शरीरसंख्याव्याकरणे हि मांससिरादिव्याकरणमभिहितं, मर्माणि च मांससिरादिसंश्रितानि, अतस्तदनन्तरं मर्मणां निर्देशो युज्यत इत्याह—अथात इत्यादि । प्रत्येकशब्दादग्रे मांसादिशब्दो लुप्तो द्रष्टव्यः, तेन प्रत्येकं मांसादिमर्मणां निर्देशो विवरणं यस्मिन् तं तथा ॥ १ ॥ २ ॥

सप्तोत्तरं मर्मशतम् । तानि मर्माणि पञ्चात्मकानि भवन्ति; तद्यथा—मांसमर्माणि, सिरामर्माणि, स्नायुमर्माणि, अस्थिमर्माणि, सन्धिमर्माणि चेति । न खलु मांससिरास्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्माणि भवन्ति, यस्मान्नोपलभ्यन्ते ॥ ३ ॥

तेषां संख्यामाह—सप्तोत्तरमित्यादि । पञ्चात्मकानि पञ्चप्रकाराणि । तान्येव पञ्चप्रकाराण्याह—तद्यथेत्यादि । ननु, कथं मांसादीनि पञ्चैव मर्माणि नाधिकानीति दर्शयन्नाह—न खल्वित्यादि । ननु, स्रोतःप्रभृतीनामपि मारणात्मकत्वान्मर्मत्वमस्त्येव, तत् कथं मांसादिव्यतिरेकेणान्यानि मर्माणि नोपलभ्यन्त इत्युक्तम् ? उच्यते—मारयन्तीति मर्माण्युच्यन्ते, स्रोतसि च क्षतेऽपि नावश्यतया मरणं; यतो वक्ष्यति—"स्रोतोविद्धं तु प्रत्याख्यायोपचरेत्" ( शा. अ. ९ ) इति । यद्येवं तर्हि रुक्करवैकल्यकरणाममारणात्मकत्वान्मर्मत्वं न स्यादिति चेत् ? तन्न, रुक्करवैकल्यकरेष्वप्यग्नीषोमादिप्राणानां मध्ये कस्यचित् प्राणस्य हानेः; अथवा स्रोतःप्रभृतीनि मांसादीन्यव्यतिरिच्य वर्तन्ते, यतो मांसादिष्वेव स्रोतःप्रभृतीनि सन्ति, तस्मान्मांसादीनि पञ्चैव मर्माणीति ॥ ३ ॥

तत्रैकादश मांसमर्माणि, एकचत्वारिंशत् सिरामर्माणि, सप्तविंशतिः स्नायुमर्माणि, अष्टावस्थिम-

१ 'गर्भशय्यानन्तरमकीर्तिता' इति पा० । २ 'पूर्वकर्माक्षेपाद्' इति पा० । ३ 'नैव' इति पा० । ४ 'ज्ञानमिच्छता शल्यजीविना' इति पा० । ५ 'तावत्' इति पा० । ६ 'समागतं द्वयं तत्तु' इति पा० ।

**र्माणि, विंशतिः सन्धिमर्माणि चेति । तदेतत् सप्तोत्तरं मर्मशतम् ॥ ४ ॥**

इदानीं मांसादिभेदेन मर्मसंख्यां निर्दिशन्नाह—तत्रेत्यादि । एकादशेति चत्वारि तलहृदयानि, तावन्त्येवेन्द्रबस्तीनि, गुदमेकं, द्वे स्तनरोहिते, एवमेकादश मांसमर्माणि । एकचत्वारिंशदिति चतस्रो धमन्यः, अष्टौ मातृकाः, चत्वारि शृङ्गाटकानि, द्वे अपाङ्गे, एका स्थपनी, द्वे फणे, द्वे स्तनमूले, द्वावपस्तम्भौ, द्वावपलापौ, एकं हृदयं, एका नाभिः, द्वौ पार्श्वसन्धी, द्वे बृहत्यौ, चत्वारि लोहिताक्षाणि, चतस्र उर्व्यः, एवमेकचत्वारिंशत् सिरामर्माणि । सप्तविंशतिरिति चतस्र आण्यः, द्वौ विटपौ, द्वौ कक्षधरौ, चत्वारः कूर्चाः, चत्वारि कूर्चशिरांसि, एको बस्तिः, चत्वारि क्षिप्राणि, द्वावंसौ, द्वे विधुरे, द्वावुत्क्षेपौ, एवं सप्तविंशतिः स्नायुमर्माणि । अष्टाविति द्वे कटीकतरुणे, द्वौ नितम्बौ, द्वे अंसफलके, द्वौ शङ्खौ, एवमष्टावस्थिमर्माणि । विंशतिरिति द्वे जानुनी, द्वौ कूर्परौ, पञ्च सीमन्ताः, एकोऽधिपतिः, द्वौ गुल्फौ, द्वौ मणिबन्धौ, द्वे कुकुन्दरे, द्वावावर्तौ, द्वे कृकाटिके, एवं विंशतिः सन्धिमर्माणि । पुनः सप्तोत्तरं मर्मशतमिति वचनमुपसंहारे प्रयुक्तमतो न पौनरुक्त्यम् ॥ ४ ॥

**तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति, एतेनेतरसक्थि बाहू च व्याख्यातौ, उदरोरसोर्द्वादश, चतुर्दश पृष्ठे, ग्रीवां प्रत्यूर्ध्वं सप्तत्रिंशत् ॥ ५ ॥**

मांसादिमर्मणां सप्तोत्तरशतसंख्याकानां प्रदेशविशेषज्ञापनार्थं संख्यया विभज्य शाखाद्याश्रयं निर्दिशन्नाह—तेषामित्यादि ॥५॥

**तत्र सक्थिमर्माणि क्षिप्रतलहृदयकूर्चकूर्चशिरोगुल्फेन्द्रबस्तिजान्वाण्युर्वीलोहिताक्षाणि विटपं चेति, एतेनेतरत्सक्थि व्याख्यातम् । उदरोरसोस्तु गुदबस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौ चेति । पृष्ठमर्माणि तु कटीकतरुणकुकुन्दरनितम्बपार्श्वसन्धिबृहत्यंसफलकान्यंसौ चेति । बाहुमर्माणि तु क्षिप्रतलहृदयकूर्चकूर्चशिरोमणिबन्धेन्द्रबस्तिकूर्पराण्युर्वीलोहिताक्षाणि कक्षधरं चेति; एतेनेतरो बाहुर्व्याख्यातः । जत्रुण ऊर्ध्वं चतस्रो धमन्योऽष्टौ मातृका द्वे कृकाटिके द्वे विधुरे द्वे फणे द्वावपाङ्गौ द्वावावर्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति ॥ ६ ॥**

शाखादिषु संख्यया विभक्तानां मर्मणां नामान्याह—तत्रेत्यादि । अत्र क्षिप्राद्येकैकं गणयितव्यम्, एवमेकादश । क्षिप्रादीनां लक्षणमाचार्यः स्वयमेवाग्रे करिष्यति, अतोऽत्रेमानि न व्याख्यातानि । उदरेत्यादि गुदादिहृदयान्तमेकैकं गणयितव्यं, स्तनमूलादीनि द्वे द्वे, एवं द्वादश । पृष्ठेत्यादि कटीकतरुणादीनि द्वे द्वे, एवं चतुर्दश । बाह्वित्यादि अत्रापि क्षिप्रादिकमेकैकं गणयितव्यम् ॥ ६ ॥

**तत्र तलहृदयेन्द्रबस्तिगुदस्तनरोहितानि मांसमर्माणि, नीलधमनीमातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धिबृहतीलोहिताक्षोर्व्यः सिरामर्माणि, आणी(णि)विटपकक्षधरकूर्चकूर्चशिरोबस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्माणि, कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्माणि, जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्तकृकाटिकाश्चेति सन्धिमर्माणि ॥ ७ ॥**

तत्रैकादश मांसमर्माणीत्यादिवाक्यैः प्रागुद्दिष्टानां मांसादिमर्मणां नामान्याह—तत्रेत्यादि । एतेषां मांसादिमर्मणां संख्या प्रागत्रैवाध्याये व्याख्याता, तेनात्र न व्याख्यायते ॥ ७ ॥

**तान्येतानि पञ्चविकल्पानि भवन्ति; तद्यथा—सद्यःप्राणहराणि, कालान्तरप्राणहराणि, विशल्यघ्नानि, वैकल्यकराणि, रुजाकराणि चेति । तत्र सद्यःप्राणहराण्येकोनविंशतिः, कालान्तरप्राणहराणि त्रयस्त्रिंशत्, त्रीणि विशल्यघ्नानि, चतुश्चत्वारिंशद्वैकल्यकराणि, अष्टौ रुजाकराणीति ॥ ८ ॥**

**भवन्ति चात्र—**

**शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठसिरा गुदम् ॥**
**हृदयं बस्तिनाभ्यौ(भी) च घ्नन्ति सद्यो हतानि तु ९**
**वक्षोमर्माणि सीमन्ततलक्षिप्रेन्द्रबस्तयः ॥**
**कटीकतरुणे सन्धी पार्श्वजौ बृहती च या ॥ १० ॥**
**नितम्बाविति चैतानि कालान्तरहराणि तु ॥**
**उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्दिशेत् ॥ ११ ॥**
**लोहिताक्षाणि जानूर्वीकूर्चविटपकूर्पराः ॥**
**कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥ १२ ॥**
**अंसांसफलकापाङ्गा नीले मन्ये फणौ तथा ॥**
**वैकल्यकरणान्याहुरावर्तौ द्वौ तथैव च ॥ १३ ॥**
**गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्चशिरांसि च ॥**
**रुजाकराणि जानीयादष्टावेतानि बुद्धिमान् ॥**
**क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च ॥१४॥**

१ 'द्वौ फणौ' इति पा० । २ 'द्वावपस्तम्बौ' इति पा० । ३ 'आणयः' इति पा० । ४ °'स्तनरोहितापस्तम्भावपलापौ चेति' इति पा० । ५ '°न्यपस्तम्बौ' इति पा० । ६ 'द्वौ फणौ' इति पा० ।

१ 'इमे सिरामर्मणी, 'ग्रीवायां षोडशाम्यध्याः' इत्यत्र डल्हणेनैव विधुरयोः षोडशसंख्यायामेव परिगणनं कृतं, स्नायुमर्मसु गणनं तु प्रतिसंस्कर्तृदोषदूषितं प्रतिभाति' ( रसयोगसागर, उपोद्घात, पृ० १५६ ) । २ 'पञ्चविधानि' इति ता. । ३ 'सद्योहराणि' इति पा० । ४ 'पार्श्वगौ' इति, 'पार्श्वयोः' इति च पा० ।

तान्येव सुखपाठार्थं श्लोकैर्दर्शयन्नाह,—भवन्तीत्यादि । चत्वारि शृङ्गाटकानि, एकोऽधिपतिः; शङ्खौ द्वौ, कण्ठसिरा अष्टौ मातृकाः, गुदं हृदयं बस्तिर्नाभी चेत्येकैकम्, एवमेकोनविंशतिः सद्योघ्नानि । वक्षोमर्माणीति स्तनमूले द्वे, स्तनरोहिते द्वे, अपलापौ द्वौ, अपस्तम्भौ द्वौ, एवमष्टौ वक्षोमर्माणि; सीमन्ताः पञ्च, तलानि चत्वारि, क्षिप्राणि चत्वारि, इन्द्रबस्तयश्चत्वारः, द्वे कटीकतरुणे, द्वौ पार्श्वसन्धी, द्वे बृहत्यौ, द्वौ नितम्बौ, एवं त्रयस्त्रिंशत् कालान्तरप्राणहराणि । उत्क्षेपाविति उत्क्षेपौ द्वौ, एका स्थपनी, एवं त्रीणि विशल्यघ्नानि । लोहितेत्यादि चत्वारि लोहिताक्षनामधेयानि, आणयश्चतस्रः, जानुनी द्वे, चतस्र उर्व्यः, चत्वारः कूर्चाः, विटपादीनामावर्तान्तानां त्रयोदशानां प्रत्येकं द्वौ द्वौ, इति चतुश्चत्वारिंशद्वैकल्यकराणि । गुल्फावित्यादि द्वौ गुल्फौ, द्वौ मणिबन्धौ; द्वे द्वे कूर्चशिरांसि चेति द्वे कूर्चशिरसी हस्तयोः, द्वे कूर्चशिरसी पादयोः, एवं चत्वारि कूर्चशिरांसि, इत्यष्टौ रुजाकराणि । भेदेन यत् पञ्चप्रकारत्वमुक्तं तद्यपि वक्ष्यमाणेन 'मर्माणि शल्यविषयार्धमुदाहरन्ति' इत्यादिश्लोकप्रतिपादितेन प्राणहरवैकल्यकरेति द्वित्वेन बाध्यते , तथाऽपि न दोषो भिषजामादरख्यापनार्थत्वाद्भिन्नत्वस्येति ॥ ८—१४ ॥

**मर्माणि मांससिरास्नाय्वस्थिसन्धिसन्निपाताः; तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति; तस्मान्मर्मस्वभिहतास्तांस्तान् भावानापद्यन्ते ॥ १५ ॥**

इदानीं प्राणहरादिकं कर्म मर्मणां सयुक्तिकं दर्शयन्नाह—मर्माणीत्यादि । सन्निपातः संश्लेषोऽत्यन्तमिश्रीभाव इति यावत् । सर्वेषां सर्वत्र मर्मणि संश्लेषेऽपि मांसमर्म-सिरामर्मादिव्यवहार आधिक्यमाश्रित्य, पार्थिवादिव्यवहारवत् । स्वभावत इति हेत्वन्तरनिरपेक्षतया । प्राणा अग्न्यादयः । तांस्तानिति 'इन्द्रियार्थेष्वसंप्राप्तिर्मनोबुद्धिविपर्यय' इत्यादिकानत्रैवोक्तान् । अन्ये तु "भ्रमः प्रलपः पतनं प्रमोह" ( सू. अ. २५ ) इत्यादिकान् सूत्रस्थानोक्तानाहुः ॥ १५ ॥

**तत्र सद्यःप्राणहराण्याग्नेयानि, अग्निगुणेष्वाशु क्षीणेषु क्षपयन्ति; कालान्तरप्राणहराणि सौम्याग्नेयानि, अग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति; विशल्यप्राणहराणि वायव्यानि, शल्यमुखावरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवति, उद्धृतमात्रे तु शल्ये मर्मस्थानाश्रितो वायुर्निष्क्रामति, तस्मात् सशल्यो जीवत्युद्धृतशल्यो म्रियते ( पाकात्पतितशल्यो वा जीवति ); वैकल्यकराणि सौम्यानि, सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति; रुजाकराण्यग्निवायुगुणभूयिष्ठानि, विशेषतश्च तौ रुजाकरौ; पाञ्चभौतिकीं च रुजामाहुरेके ॥ १६ ॥**

कस्मात् पुनरत्र समानेऽपि प्राणोपघाते सद्यःप्राणहरकालान्तरप्राणहरादिविशेष इत्याह—तत्रेत्यादि । आग्नेयानीति यद्यपि "सोममारुततेजांसि रजःसत्त्वतमांसि च । मर्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते" इत्युक्तं, तथाऽप्याग्नेयेषु मर्मस्वधिकं तेजः, सौम्येषु सोम इत्यादि ज्ञेयम् । अग्निगुणेष्वाशुक्षीणेष्विति अग्नेराशुकारित्वादित्यर्थः । ताविति अग्निवायू विशेषेण रुजाकरौ; सामान्येन पुनः सोमोऽपि, कफव्रणे वेदनासंभवात् । रुजायामेव द्वितीयमेकीयमतं दर्शयन्नाह—पाञ्चभौतिकीमित्यादि ॥ १६ ॥

**केचिदाहुर्मांसादीनां पञ्चानामपि समस्तानां विवृद्धानां समवायात् सद्यःप्राणहराणि, एकहीनानामल्पानां वा कालान्तरप्राणहराणि, द्विहीनानां विशल्यप्राणहराणि, त्रिहीनानां वैकल्यकराणि, एकस्मिन्नेव रुजाकराणीति । नैवं, यतोऽस्थिमर्मस्वप्यभिहतेषु शोणितागमनं भवति ॥ १७ ॥**

सद्यःप्राणहरादिविशेषस्य द्वितीयदर्शने व्यवस्थां दर्शयन्नाह—केचिदित्यादि । यद्यपि गुदबस्तिनाभिहृदयेषु सद्यःप्राणहरमर्मस्थीनि न व्यक्तानि तथाऽप्यव्यक्तानामस्थ्नां शक्तिरूपेणावस्थानात् पञ्चानां समवाय उत्पद्यत एव । एकहीनानामित्यत्र हीनशब्दोऽत्यन्ताभावे वर्तते, न तु न्यूनत्वे । एकहीनानि पुनः स्तनमूलापलापापस्तम्भसीमन्तकटीकतरुणपार्श्वसन्धिबृहतीनितम्बानि मांसहीनानि, स्तनरोहिततलहृदयक्षिप्रेन्द्रबस्तयोऽस्थिहीनाः; द्विहीनानि पुनरुत्क्षेपौ मांससन्धिहीनौ; त्रिहीनानि पुनर्लोहिताक्षाणि स्नायुसन्ध्यस्थिहीनानि, स्थपनी मांससिरास्नायुहीना, जानुनी मांससिरास्नायुहीने, उर्व्योऽस्थिमांसस्नायुहीनाः, विटपे मांससिरास्थिहीने, कूर्परौ मांससिरास्नायुहीनौ, कुकुन्दरे मांसस्नायुसिराहीने, कक्षधरे सिरास्थिसन्धिहीने, विधुरे मांससिरासन्धिहीने, कृकाटिके मांससिरास्नायुहीने, अंसौ मांससिरासन्धिहीनौ, अंसफलके मांसस्नायुसन्धिहीने, नीले मन्ये फणे च मांससन्ध्यस्थिहीने, आवर्तौ मांससिरास्नायुहीनौ, अपाङ्गौ मांसस्नायुसन्धिहीनौ । एकस्मिन्निति मांसादिसंध्यन्तादेकस्मिन्नवशिष्टे रुजाकराणि भवन्ति, गुल्फमणिबन्धास्तथा कूर्चशिरांसि मांससिरास्नाय्वस्थिहीनानि । नैवमिति स्वदर्शने सर्वमर्मणां मांससिरास्नाय्वस्थिसन्धिसन्निपातत्वादेव द्वित्र्यादिहीनमसम्यगित्यर्थः । कुतः स्वदर्शने सर्वाणि सर्वत्र सन्तीत्याह—यत इत्यादि । यतश्चास्थिविद्धेष्वपि शोणितदर्शनं

१ 'अपस्तम्भौ' इति पा० । २ अयं पाठो हस्तलिखितपुस्तकेषु नोपलभ्यते ।

१ 'विशेषेण' इति पा० । २ 'समवृद्धानां' इति पा० । ३ 'च' इति पा० । ४ 'विशल्यघ्नानि' इति पा० । ५ 'यतश्चैवमतो' इति पा० । ६ 'उत्पद्यत एवं स्थापना' इति पा० । ७ 'मांससन्धिसिराहीने' इति पा० । ८ 'मांसादिसंघातात्' इति पा० । ९ 'यतश्चैव०' इति पा० ।

भवत्यतः प्रत्यक्षात् प्रमाणात् सर्वाणि मांसादीनि सर्वत्र मर्मणि भवन्तीति ज्ञातव्यम् ॥ १७ ॥

**चतुर्विधा यास्तु सिराः शरीरे**
**प्रायेण ता मर्मसु सन्निविष्टाः ॥**
**स्नाय्वस्थिमांसानि तथैव सन्धीन्**
**सन्तर्प्य देहं प्रतियापयन्ति ॥ १८ ॥**

एतदेव दर्शयन्नाह—चतुरित्यादि । चतुर्विधा इति वातपित्तश्लेष्मरक्तवहाः । मर्मस्वित्यादि । एतेन सिराणां स्नाय्वस्थिमांससन्धिगतत्वं बोधितम्, अत एवास्थिविद्धेऽपि शोणितागमनमित्यर्थः ॥ १८ ॥

**ततः क्षते मर्मणि ताः प्रवृद्धः**
**समन्ततो वायुरभिस्तृणोति ॥**
**विवर्धमानस्तु स मातरिश्वा**
**रुजः सुतीव्राः प्रतनोति काये ॥ १९ ॥**
**रुजाभिभूतं तु ततः शरीरं**
**प्रलीयते नश्यति चास्य संज्ञा ॥**
**अतो हि शल्यं विनिहर्तुमिच्छ-**
**न्मर्माणि यत्नेन परीक्ष्य कर्षेत् ॥ २० ॥**

इदानीं यथैकदेशजेऽपि प्रहारे मर्मविद्धस्य क्रमेण सकलशरीरे वातादिदोषव्याप्त्या रुजावेगेन चेतनाधातोर्वियोगस्तथा दर्शयन्नाह—तत इत्यादि । ताः सिराः, प्रवृद्धो वायुः, समन्ततः सर्वतः, अभिस्तृणोति सञ्छादयति । शरीरं प्रलीयते प्रलयं गच्छति शरीरयन्त्रं विघट्टयतीत्यर्थः । तस्मिन् पाञ्चभौतिके शरीरे प्रलीने संज्ञाषष्ठश्चेतनाधातुरपि नश्यति । 'ताः प्रवृद्ध' इत्यत्र 'तासु वृद्ध' इति केचित् पठन्ति व्याख्यानयन्ति च—तासु सिरासु वृद्धो वायुः समन्ततः सकलं शरीरमभिस्तृणोति संछादयतीत्यर्थः ॥ १९ ॥ २० ॥

**एतेन शेषं व्याख्यातम् ॥ २१ ॥**

एतेनेति रुगादिरूपेण वायोर्लक्षणेन, शेषमिति दाहादि स्रोतोनिरोधादि च पित्तश्लेष्मणोर्लक्षणं व्याख्यातमेवेत्यर्थः ॥ २१ ॥

**तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति, कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति, विशल्यघ्नं वैकल्यकरं च भवति, वैकल्यकरं कालान्तरेण क्लेशयति रुजां च करोति, रुजाकरमतीव्रवेदनं भवति ॥ २२ ॥**

तेषां सद्यःप्राणहरादीनां स्वकर्म यन्नियतं तत्कारणविकल्पाद् व्यभिचारयन्नाह—तत्रेत्यादि । अन्ते विद्धं समीपे विद्धं, मध्ये विद्धं तु सद्य एवेत्यर्थः; एतेन पूर्वं पूर्वं मर्म कारणवैकल्यात् परस्य परस्य कार्यं करोति, एवं परं परमपि मर्मातिविद्धादिकारणवशात् पूर्वस्य पूर्वस्य कर्म करोति । अत एव तेष्वित्यादिना क्षिप्राणि कदाचिदाशु मारयन्तीत्यग्रे वक्ष्यति ॥ २२ ॥

**तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरान्मारयन्ति, कालान्तरप्राणहराणि पक्षान्मासाद्वा, तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति, विशल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि मारयन्ति ॥ २३ ॥**

इदानीं सद्यःप्राणहरादिमर्मणां मारणे कालावधिं दर्शयन्नाह—तत्र सद्य इत्यादि । यद्यपि सद्यःशब्दस्तत्क्षणवाची तथाऽपि सद्यःप्राणहराणीत्यत्र सद्यःशब्दः सप्ताहाभ्यन्तरपरो ज्ञातव्यः, सप्तरात्रान्मारयन्तीत्युक्तत्वात् । तेष्वपीति कालान्तरप्राणहरेष्वपीत्यर्थः । कदाचिदाशु मारयन्ति 'अतिहतानि' इति शेषः, अनतिहतानि तु कालान्तरेणैव मारयन्ति; एतच्चोपलक्षणं, तेन रुजाकराण्येवं वैकल्यं जनयन्ति; एवं वैकल्यादिष्वपि स्वनियतकर्मव्यभिचारः ॥ २३ ॥

**अत ऊर्ध्वं सक्थिमर्माणि व्याख्यास्यामः—तत्र पादस्याङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म, तत्र विद्धस्याक्षेपकेण मरणं; मध्यमाङ्गुलीमनुपूर्वेण मध्ये पादतलस्य तलहृदयं नाम, तत्र रुजाभिर्मरणं; क्षिप्रस्योपरिष्टादुभयतः कूर्चो नाम, तत्र पादस्य भ्रमणवेपने भवतः; गुल्फसन्धेरध उभयतः कूर्चशिरः, तत्र रुजाशोफौ; पादजङ्घयोः सन्धाने गुल्फः, तत्र रुजः स्तब्धपादता खञ्जता वा; पार्ष्णिं प्रति जङ्घामध्ये इन्द्रबस्तिः, तत्र शोणितक्षयेण मरणं; जङ्घोर्वोः सन्धाने जानु, तत्र खञ्जता; जानुन ऊर्ध्वमुभयतस्त्र्यङ्गुलमाणी, तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च; ऊरुमध्ये उर्वी, तत्र शोणितक्षयात् सक्थिशोषः; उर्व्या ऊर्ध्वमधो वङ्क्षणसंधेरूरुमूले लोहिताक्षं, तत्र लोहितक्षयेण मरणं पक्षाघातो वा; वङ्क्षणवृषणयोरन्तरे विटपं, तत्र षाण्ड्यमल्पशुक्रता वा भवति; एवमेतान्येकादश सक्थिमर्माणि व्याख्यातानि । एतेनेतरसक्थि बाहू च व्याख्यातौ । विशेषतस्तु यानि सक्थ्नि गुल्फजानुविटपानि, तानि बाह्वौ मणिबन्धकूर्परकक्षधराणि; यथा वङ्क्षणवृषणयोरन्तरे विटपमेवं**

१ 'प्रतिपालयन्ति' इति पा० । २ 'पुनः' इति पा० । ३ 'विशल्यप्राणहरमन्ते विद्धं क्लेशयति कालान्तरेण च रुजां करोति' इति पा० । ४ 'कारणवैकल्यात्' इति पा० ।

१ 'प्रत्येकशो मर्मस्थानानि' इति पा० । २ 'क्षिप्रमिति मर्म' इति पा० । ३ अत्र 'नाम' इति हस्तलिखितपुस्तके नोपलभ्यते, एवमग्रेऽपि । ४ 'जङ्घापादयोः' इति पा० । ५ 'जानुसन्धेरुभयतस्त्र्यङ्गुले' इति पा० । ६ 'आणिः' इति पा० । ७ 'ऊरुमध्ये लोहिताख्यं' इति पा० । ८ अस्याग्रे 'यथा पादजङ्घयोर्मध्ये गुल्फो नाम मर्म, एवं हस्ततलप्रकोष्ठयोः सन्धौ मणिबन्धो नाम मर्म; यथा जङ्घोर्वोः सन्धाने जानुर्नाम मर्म, एवं हस्तबाह्वोः सन्धाने कूर्परो नाम' इत्यधिकः पाठ उपलभ्यते ता. पुस्तके । ९ 'विटप एवं' इति पा० ।

वक्षःकक्षयोर्मध्ये कक्षधरं, तस्मिन् विद्धे त एवोपद्रवाः; विशेषतस्तु मणिबन्धे कुण्ठता, कूर्पराख्ये कुणिः, कक्षधरे पक्षाघातः। एवमेतानि चतुश्चत्वारिंशच्छाखासु मर्माणि व्याख्यातानि ॥ २४ ॥

अत ऊर्ध्वमित्यादि । तत्र पादाङ्गुष्ठेत्यादि स्नायुमर्मेदमर्धाङ्गुलं कालान्तरप्राणहरं च । मध्यमाङ्गुलीमित्यादि मध्यमाङ्गुलिमनुलक्षीकृत्य क्रमेण पादतलस्य मध्ये तलहृदयं, मांसमर्मेदमर्धाङ्गुलं कालान्तरप्राणहरं च । उपरिष्टादित्यत्र 'द्व्यङ्गुले' इति शेषः, उभयत इति ऊर्ध्वमधश्च, तत्र कूर्चे, 'विद्धे' इति शेषः; स्नायुमर्मेदं चतुरङ्गुलं वैकल्यकरं च । गुल्फेत्यादि इदमपि स्नायुमर्म एकाङ्गुलं वैकल्यकरं च । पादेत्यादि । सन्धिमर्मेदं द्व्यङ्गुलप्रमाणं वैकल्यकरं च । पार्ष्णिमित्यादि । मांसमर्मेदमर्धाङ्गुलं पार्ष्णि प्रति त्रयोदशाङ्गुले स्थितं कालान्तरप्राणहरं च; **भोजस्तु** द्व्यङ्गुलप्रमाणमाह, भोजदर्शनाद्**रयदासो**ऽपि मर्ममानसूत्रे "द्व्यङ्गुलमिन्द्रबस्तिमर्म" इति पठित्वा व्याख्यायति । जङ्घेत्यादि सन्धिमर्मेदं त्र्यङ्गुलप्रमाणं वैकल्यकरं च । जानुन इत्यादि जानुन ऊर्ध्वं त्र्यङ्गुले उभयत ऊर्ध्वमधश्च, स्नायुमर्मेदमर्धाङ्गुलं वैकल्यकरं च, **गयी** तु त्र्यङ्गुलमानमेतदाह—ऊरुमध्ये इत्यादि । सिरामर्मेदमेकाङ्गुलं वैकल्यकरं च । वङ्क्षणेत्यादि स्नायुमर्मेदमेकाङ्गुलं वैकल्यकरं च । एवमित्यादि । एतेनैकादशमर्मनिर्देशेन । विशेषत इत्यादि । मणिबन्धः पाणिमूलं, कर्पूरः कफोणिः 'कुहुणी' इति लोके । तस्मिन्नित्यादि । तस्मिन्निति मणिबन्धादौ । त एवेति गुल्फादिवधजाताः । विशेषतस्त्वित्यादि । कुण्ठता करस्याकर्मण्यत्वम् । कुणिः सङ्कुचितबाहुमध्यः। एतेनेतरो बाहुर्व्याख्यातः। उपसंहारमाह—एवमित्यादि ॥ २४ ॥

अत ऊर्ध्वमुदरोरसोर्मर्माण्यनुव्याख्यास्यामः[1]—तत्र वातवर्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म, तत्र सद्योमरणं; अल्पमांसशोणितोऽभ्यन्तरतः कट्यां मूत्राशयो बस्तिः, तत्रापि सद्योमरणमश्मरीव्रणादृते, तत्राप्युभयतो भिन्ने न जीवति, एकतो भिन्ने मूत्रस्रावी व्रणो भवति, स तु यत्नेनोपक्रान्तो रोहति; पक्वामाशययोर्मध्ये सिराप्रभवा नाभिः, तत्रापि सद्यो मरणं; स्तनयोर्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठानं हृदयं, तत्रापि सद्य एव मरणं; स्तनयोरधस्ताद्[2] द्व्यङ्गुलमुभयतः स्तनमूले, तत्र कफपूर्णकोष्ठतया (कासश्वासाभ्यां[3]) म्रियते; स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलमुभयतः[4] स्तनरोहितौ[5], तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्यां च म्रियते; अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम, तत्र रक्तेन पूयभावं गतेन मरणं; उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम, तत्र वातपूर्णकोष्ठतया कासश्वासाभ्यां च मरणम्; एवमेतान्युदरोरसोर्द्वादश मर्माणि व्याख्यातानि ॥ २५ ॥

अत इत्यादि । निरसनं प्रेरकं, मांसमर्मेदं चतुरङ्गुलं सद्योघाति च । अल्पेत्यादि कट्यामित्युपलक्षणं, तेन नाभिपृष्ठमुष्कगुदवङ्क्षणशेफांसि गृह्यन्ते; तदुक्तं—"नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम् । एकद्वारस्तनुत्वको मध्ये बस्तिरधोमुखः" ( नि. अ. ३ ) इति । सद्योमरणमश्मरीव्रणादृते भवतीति संबन्धः । तत्रापीति अश्मरीनिमित्ते इत्यर्थः । उभयतो भिन्ने 'बस्तौ' इति शेषः । स्नायुमर्मेदं चतुरङ्गुलं सद्योघाति च । पक्वेत्यादि सिरामर्मेदं चतुरङ्गुलं च । स्तनयोरित्यादि सिरामर्मेदं कमलमुकुलाकारमधोमुखं चतुरङ्गुलं च । स्तनयोरधस्तादित्यादि उभयतः स्तनयोरधस्ताद् द्व्यङ्गुलप्रदेशे स्तनमूले मर्मणी, उभयतोग्रहणात् पृथक् पृथक् स्तनस्याधः स्तनमूलं मर्मेति गम्यते, अन्यथा स्तनयोरधस्तादित्युक्ते मिलितयोरेव स्तनयोरधस्तादितीदृशेऽर्थे स्तनयुगमध्यस्याधस्तात् स्तनमूलाख्यं मर्मद्वयमित्यनिष्टं स्यात्, इमे सिरामर्मणी द्व्यङ्गुले कालान्तरप्राणहरे च । स्तनचूचुकयोरित्यादि स्तनयोश्चूचुके स्तनचूचुके; पूर्ववाक्यात् 'द्व्यङ्गुले' इत्यनुवर्तते, तेन स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुले स्तनरोहिते द्वे मर्मणी; तदुक्तं—"स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलेत् स्तनरोहिते । अर्धाङ्गुलमिते मांसमर्मणी परिकीर्तिते ॥ रक्तपूरितकोष्ठस्य कालान्मरणकारिणी" इति; **वृद्धवाग्भटेन** "स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहिते" (अ. सं. शा. अ. ७) इत्युक्तं; मांसमर्मणी सद्योघातिनी। अंसेत्यादि सिरामर्मणी अर्धाङ्गुले कालान्तरप्राणहरे च । उभयत्रोरस इति उरसो द्वयोः पार्श्वयोरित्यर्थः, सिरामर्मणी अर्धाङ्गुलप्रमाणे कालान्तरप्राणहरे च ॥ २५ ॥

अत ऊर्ध्वं पृष्ठमर्माणि व्याख्यास्यामः[3]—तत्र पृष्ठवंशमुभयतः प्रतिश्रोणिकाण्डमस्थिनी कटीकतरुणे, तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च[4] म्रियते; पार्श्वयोर्जघनबहिर्भागे पृष्ठवंशमुभयतो कुकुन्दरे, तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च; श्रोणीकाण्डयोरुपर्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ, तत्राधःकायशोषो दौर्बल्याच्च मरणं; अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्यगूर्ध्वं च जघनात् पार्श्वसन्धी, तत्र लोहितपूर्णकोष्ठतया म्रियते; स्तनमूलादृजूभयतः पृष्ठवंशस्य

१ 'मर्मस्थानान्यनुव्याख्यास्यामः' इति पा० । २ स्तनमूललक्षणे 'स्तनयोरूर्ध्वं' इति, स्तनरोहितलक्षणे च 'स्तनचूचुकयोरधस्तात्' इति च रसयोगसागरस्योपोद्घाते (पृ. १५८) संशोधितः पाठः । विशेषविवरणं तु तत्रैव द्रष्टव्यम् । ३ 'कासश्वासाभ्यां' इति हस्तलिखितपुस्तके न पठ्यते । ४ 'द्व्यङ्गुलमुभयतः' इति हस्तलिखितपुस्तके न पठ्यते । ५ 'स्तनचूचुकयोर्मध्ये स्तनरोहितौ' इति पा० ।

१ 'त्र्यङ्गुले' इति पा० । २ 'त्र्यङ्गुले उभयतः' इति पा० । ३ 'अनुव्याख्यास्यामः' इति पा० । ४ 'हीनदेहश्च' इति पा० ।

**बृहती, तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते; पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसंबद्धे अंसफलके, तत्र बाह्वोः स्वापशोषौ[1]; बाहुमूर्धग्रीवामध्येंऽसपीठस्कन्धबन्धनावंसौ, तत्र स्तब्धबाहुता; एवमेतानि चतुर्दश पृष्ठमर्माणि व्याख्यातानि ॥ २६ ॥**

अत ऊर्ध्वमित्यादि। तत्र पृष्ठेत्यादि। प्रतिश्रोणिकाण्डमित्यत्र 'प्रतिश्रोणिकर्णौ' इति केचित् पठन्ति, तत्र श्रोणिकर्णौ लक्षीकृत्य त्रिकसन्निधाने श्रोण्यामुपरि; अस्थिमर्मणी अर्धाङ्गुले कालान्तरप्राणहरे च। पार्श्वेत्यादि। पार्श्वयोर्वामदक्षिणसंज्ञकयोः, जघनबहिर्भाग इति कट्याः पश्चाद्भागे, गयी तु 'पार्श्वजघनभागे' इति पठित्वा पार्श्वयोर्जघनभागेऽधोभागे नितम्बे '[2]निम्ने कुकुन्दरे इति व्याख्याति, सन्धिमर्मणी अर्धाङ्गुले ईषच्छिन्नाकारे वैकल्यकरे च। श्रोणीत्यादि। पूर्वोक्तयोः श्रोणिकाण्डयोरुपरि, आशयाच्छादनौ आमाशयपिधायकौ[3], पार्श्वान्तरप्रतिबद्धौ पार्श्वमध्ये प्रतिबद्धौ नितम्बौ; अस्थिमर्मणी अर्धाङ्गुले कालान्तरप्राणहरे च। अध इत्यादि अधःपार्श्वान्तरप्रतिबद्धाविति अधोभागे यत् पार्श्वयोरन्तरं मध्यं तत्र प्रतिबद्धौ, जघनपार्श्वमध्ययोरिति पश्चाद्भागपार्श्वभागयोर्यौ मध्यौ वामदक्षिणौ तयोः; कथं स्थिताविल्याह—तिर्यगूर्ध्वं चेति, उपर्युपरि पर्शुकानां[4] क्रमवृद्धेः[5] सन्धेरपि तिर्यगूर्ध्वत्वं; जघनादिति ल्यपि लुप्ते पञ्चमीयं, तेन जघनपश्चाद्भागमाश्रित्य स्थितौ पार्श्वसन्धी, सिरामर्मणि अर्धाङ्गुले कालान्तरमृत्युप्रदे च। स्तनमूलादित्यादि सिरामर्मणी अर्धाङ्गुले कालान्तरप्राणहरे च। पृष्ठोपरीत्यादि पृष्ठवंशस्यायतत्वात् प्रदेशनियमार्थं पृष्ठोपरीत्युक्तं, त्रिकसंबद्धे इति ग्रीवाया अंसद्वयस्य च यः संयोगः स त्रिकः, तत्र संबद्धे अंसफलके; अस्थिमर्मणी अर्धाङ्गुले वैकल्यकारिणी च। बाह्वित्यादि। बाहुमूर्धा बाहुशिरः, ग्रीवा तु कन्धरा, तयोर्मध्ये अंसफलकभुजशिखरयोर्बन्धनौ अंसौ, स्नायुमर्मणी अर्धाङ्गुले वैकल्यकारिणी च ॥ २६ ॥

**अत ऊर्ध्वमूर्ध्वजत्रुगतानि व्याख्यास्यामः—तत्र कण्ठनाडीमुभयतश्चतस्रो धमन्यो द्वे नीले द्वे च मन्ये व्यत्यासेन[6], तत्र मूकता स्वरवैकृतमरसग्राहिता च; ग्रीवायामुभयतश्चतस्रः[7] सिरा मातृकाः, तत्र सद्योमरणं; शिरोग्रीवयोः सन्धाने कृकाटिके, तत्र चलमूर्धता; कर्णपृष्ठतोऽधःसंश्रिते विधुरे, तत्र बाधिर्यं; घ्राणमार्गमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरतः फणे, तत्र गन्धाज्ञानं; भ्रूपुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ, तत्रान्ध्यं दृष्ट्युपघातो वा; भ्रुवोरुपरि निम्नयोरावर्तौ नाम, तत्राप्यान्ध्यं दृष्ट्युपघातो वा; भ्रुवोरन्तयो[1]रुपरि कर्णललाटयोर्मध्ये शङ्खौ, तत्र सद्योमरणं; शङ्खयोरुपरि केशान्त उत्क्षेपौ, तत्र सशल्यो जीवेत् पाकात् पतितशल्यो वा नोद्धृतशल्यः; भ्रुवोर्मध्ये स्थपनी, तत्रोत्क्षेपवत्; पञ्च सन्धयः शिरसि विभक्ताः सीमन्ता नाम, तत्रोन्मादभयचित्तनाशैर्मरणं; घ्राणश्रोत्राक्षिजिह्वासंतर्पणीनां सिराणां मध्ये सिरासन्निपातः शृङ्गाटकानि[2], तानि चत्वारि मर्माणि, तत्रापि सद्यो[4]मरणं; मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो रोमावर्तोऽधिपतिः, तत्रापि सद्य एव[3]। एवमेतानि सप्तत्रिंशदूर्ध्वजत्रुगतानि मर्माणि व्याख्यातानि ॥ २७ ॥**

अत ऊर्ध्वमित्यादि। व्यत्यासेन वैपरीत्येन, एका नीला एका मन्या चैकस्मिन् पार्श्वे, अन्या नीला अन्या मन्या चापरस्मिन् पार्श्वे; सिरामर्मणी चतुरङ्गुले वैकल्यकारिणी च। ग्रीवायामित्यादि उभयतश्चतस्र इति एकस्मिन् एकस्मिन् पार्श्वे चतस्रश्चतस्र इत्यर्थः; सिरामर्माणि चतुरङ्गुलप्रमाणानि मातृकाः। शिर इत्यादि सन्धिमर्मणी अर्धाङ्गुले वैकल्यकारिणी च। कर्णेत्यादि स्नायुमर्मणी किंचिच्छिन्नाकारे वैकल्यकारिणी च। घ्राणेत्यादि घ्राणमार्गस्य द्वयोः पार्श्वयोरभ्यन्तरविवर[5]संबद्धे फणे, सिरामर्मणी अर्धाङ्गुले वैकल्यकारिणी च। भ्रूपुच्छेत्यादि सिरामर्मणी अर्धाङ्गुले वैकल्यकारिणी च। भ्रुवोरुपरीत्यादि भ्रुवोरुपरि निम्नयोरिति प्रदेशकथनं, सन्धिमर्मणी अर्धाङ्गुले वैकल्यकारिणी च। भ्रुवोरित्यादि अस्थिमर्मणी अर्धाङ्गुले। शङ्खयोरित्यादि केशान्ते केशपर्यन्ते, स्नायुमर्मणी अर्धाङ्गुले विशल्यप्राणहरे च। भ्रुवोर्मध्ये इत्यादि तत्रोत्क्षेपवदिति सशल्यः स्वयं पतितशल्यो वा जीवत्युद्धृतशल्यो म्रियत इत्यर्थः, सिरामर्म अर्धाङ्गुलं विशल्यघ्नं च। पञ्चेत्यादि पञ्च सन्धयो ये शिरसि विभक्ताः शरीरसंख्याव्याकरणे ते सीमन्ता इत्यर्थः, इमानि सन्धिमर्माणि चतुरङ्गुलप्रमाणानि कालान्तरप्राणहराणि च। घ्राणश्रोत्रेत्यादि घ्राणादीन्द्रियचतुष्कतर्पणीनां सिराणां सिरामुखानां सन्निपातः संयोगस्थानं शृङ्गाटकानि, तानि चत्वारि घ्राणादितर्पणसिराणां चतुर्भेदात्; इमानि सिरामर्माणि चतुरङ्गुलप्रमाणानि। मस्तकेत्यादि मस्तकाभ्यन्तरोपरिष्टादिति मस्तकस्याभ्यन्तरोर्ध्वमित्यर्थः, सिरासन्ध्योः सन्निपातो रोमावर्तः, बहिरस्य लक्षणमुपरिष्टाद्रोमावर्तः; एतत् सन्धिमर्म अर्धाङ्गुलप्रमाणं च ॥ २७ ॥

**भवन्ति चात्र श्लोकाः—**

**उर्व्यः शिरांसि विटपे च सकक्षपार्श्वे**
**एकैकमङ्गुलमितं स्तनपूर्वमूलम् ॥**

---

१ 'स्वापः शोषो वा' इति पा०। २ 'निम्नौ कुकुन्दरौ' इति पा०। ३ 'पक्वाशयपिधायकौ' इति पाठश्चेत् साधु। ४ 'पार्श्वकानां' इति पा०। ५ 'क्रमवृद्धत्वं' इति पा०। ६ 'नाम व्यत्ययेन' इति पा०। ७ 'चतस्रश्चतस्रः' इति पा०।

१ 'भ्रुवोरन्तोपरि' इति पा०। २ 'शृङ्गाटकसंज्ञश्चतुर्धा, तत्रापि' इति पा०। ३ 'सद्य एव' इति पा०। ४ 'सद्यो मरणं' इति पा०। ५ '°विवरद्वारसंबद्धे' इति पा०।

विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं
त्रीण्येव जानु सपरं सह कूर्पराभ्याम् ॥२८॥
हृद्बस्तिकूर्चगुदनाभि वदन्ति मूर्ध्नि
चत्वारि पञ्च च गले दश यानि च द्वे ॥
तानि स्वपाणितलकुञ्चितसंमितानि
शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्धम् ॥२९॥

इदानीं सर्वेषामेव मर्मणां सूत्रेण मानमाह—भवन्ति चात्रेत्यादिना । शिरांसि कूर्चशिरांसि । कक्षपार्श्वे कक्षधरे इत्यर्थः । एकैकमङ्गुलमितमिति एकैकं यथा भवति तथोर्व्यादयो मर्मविशेषा अङ्गुलमिता ज्ञेयाः । स्तनपूर्वमूलमित्यादि मणिबन्धगुल्फं स्तनमूलं चाङ्गुलद्वयमितं विद्धि जानीहीति संबन्धः । त्रीण्येव जानु सपरमिति सपरं द्वितीयजानुसहितं जानु त्रीणि त्र्यङ्गुलानि विद्धीत्यर्थः । मूर्ध्नि चत्वारि पञ्च चेति यानि मूर्ध्नि चत्वारि मर्माणि शृङ्गाटकसंज्ञकानि, तथा तत्रैव पञ्च सीमन्तसंज्ञकानि, गले दश यानि च द्वे इति गले कण्ठे यानि दश द्वे च कथितानि तत्राष्टौ मातृकाः द्वे नीले द्वे च मन्ये, एतानि मर्माणि स्वपाणितलकुञ्चितसंमितानि चतुरङ्गुलप्रमाणानीत्यर्थः । शेषाणि षट्पञ्चाशन्मर्माणि । अवेहि जानीहि । अन्ये तु, इमानि षट्पञ्चाशन्मर्माणि तलप्रमाणान्याहुः । **गयी** तु, अन्यादृशं सूत्रं पठित्वा स्तनमूले द्वे गुल्फे च, इन्द्रबस्तयश्चत्वारो, द्वौ मणिबन्धाविति दश मर्माणि द्व्यङ्गुलानि **भोज**दर्शनाद्व्याख्याति, तथा जानु सपरमित्यत्र सह परेण परप्रदेशावस्थितेनाणिमर्मणा वर्तते यत् तत् सपरं; तेन जानुनि द्वे, आणयश्चतस्रः, कूर्परे द्वे, इत्यष्टौ त्र्यङ्गुलानि व्याख्याति । शेषं समम् ॥ २८ ॥ २९ ॥

एतत्प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः
शस्त्रेण कर्मकरणं परिहृत्य कार्यम् ॥
पार्श्वाभिघातितमपीह निहन्ति मर्म
तस्माद्धि मर्मसदनं परिवर्जनीयम् ॥ ३० ॥

मानकथनप्रयोजनमाह—एतदित्यादिना । मर्मसदनमिति मर्मस्थानम् ॥ ३० ॥

छिन्नेषु पाणिचरणेषु सिरा नराणां
सङ्कोचमीयुरसृगल्पमतो निरेति ॥
प्राप्यासितव्यसनमुग्रमतो मनुष्याः
संछिन्नशाखतरुवन्निधनं न यान्ति ॥३१॥
क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं
गच्छत्यतीव पवनश्च रुजं करोति ॥
एवं विनाशमुपयान्ति हि तत्र विद्धा
वृक्षा इवायुधनिपातनिकृत्तमूलाः ॥ ३२ ॥
तस्मात्तयोरभिहतस्य तु पाणिपादं
छेत्तव्यमाशु मणिबन्धनगुल्फदेशे ॥

करचरणच्छेदे जीवन्ति तदवयवभूतमर्मच्छेदे तु न जीवन्तीति विशेषं दर्शयन्नाह—छिन्नेष्वित्यादि । सङ्कोचमीयुः सङ्कोचं जग्मुरतोऽल्पं रुधिरं प्रवर्तते । क्षिप्रेष्वित्यादि तत्र पाण्योश्चरणयोर्वा । **गयी** तु, वृक्षा इवायुधनिपातेत्यादिस्थाने 'किञ्जल्कपत्रमथनादिव पङ्कजानि' इति पठति ॥ ३१ ॥ ३२ ॥—

मर्माणि शल्यविषयार्धमुदाहरन्ति
यस्माच्च मर्मसु हता न भवन्ति सद्यः ॥३३॥
जीवन्ति तत्र यदि वैद्यगुणेन केचि-
त्ते प्राप्नुवन्ति विकलत्वमसंशयं हि ॥

मर्ममानकथनप्रयोजनं पूर्वतरवाक्ये प्रतिपाद्य मर्मस्थानविषयं निर्दिशन्नाह—मर्माणीत्यादि । शल्यस्य मनःशरीराबाधकरस्य विषयः शल्यविषयः; स च शस्त्रादिप्रणिधानान्मरणामरणकारकत्वेन द्विविधः; तत्र मरणकारकः शल्यविषयो मर्माख्यः शरीरदेशः, यस्मात्तत्र हताः सद्य एव न भवन्ति सप्ताहाभ्यन्तर एव म्रियन्त इत्यर्थः, तस्मान्मरणकारकत्वेन मर्माणि शल्यविषयार्धमुदाहरन्ति, 'पूर्वाचार्याः' इति शेषः । ननु, केचिन्मर्महता अपि जीवन्तो दृश्यन्ते तत् कथं मरणकारकत्वेन मर्माणि शल्यविषयार्धमित्याशङ्क्याह—जीवन्तीत्यादि ॥ ३३ ॥—

संभिन्नजर्जरितकोष्ठशिरःकपाला
जीवन्ति शस्त्रनिहतैश्च शरीरदेशैः ॥ ३४ ॥
छिन्नैश्च सक्थिभुजपादकरैरशेषै-
र्येषां न मर्मसु कृता विविधाः प्रहाराः ॥

प्रसङ्गतोऽपरं शल्यविषयार्धं प्रतिपादयितुकामोऽमर्महतास्तु विविधैरपि छेदभेदादिभिर्न म्रियन्त इति दर्शयन्नाह—संभिन्नेत्यादि ॥ ३४ ॥—

सोममारुततेजांसि रजःसत्त्वतमांसि च ॥
मर्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते ॥ ३५ ॥
मर्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः ॥

इदानीं मर्मणां शरीरमनोदोषनिवासभूतानां शरीरमनोदोषैरेव मर्मविद्धकुपितैर्मनः शरीरं च नश्यति, तयोराधारभूतयोर्नाशादाधेयभूतो भूतात्माऽपि नश्यतीति दर्शयितुमाह—सोमेत्यादि ॥ ३५ ॥—

इन्द्रियार्थेष्वसंप्राप्तिर्मनोबुद्धिविपर्ययः ॥ ३६ ॥
रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते ॥
हते कालान्तरघ्ने तु ध्रुवं धातुक्षयो नृणाम् ॥ ३७ ॥
ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति ॥
हते वैकल्यजनने केवलं वैद्यनैपुणात् ॥ ३८ ॥
शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात् ॥
विशल्यघ्ने तु विज्ञेयं पूर्वोक्तं यच्च कारणम् ॥ ३९ ॥

१ 'सिरामुखानामाकुञ्चनात् खलु नृणामसृगल्पमेति । छिन्नेषु पाणिचरणेषु भवन्त्यतस्तु नालेषु वृत्तमथितेषु यथोत्पलेषु' इति ता. ।

१ '°रशेषं' इति पा० । २ 'मर्मपतिता' इति पा० ।
३ 'असंवित्तिः' इति ता. ।

**रुजाकराणि मर्माणि क्षतानि विविधा रुजः ॥**
**कुर्वन्त्यन्ते च वैकल्यं कुवैद्यवशगो यदि ॥ ४० ॥**

सद्यःप्राणहरादिमर्मपञ्चकस्य लक्षणं निर्दिशन्नाह—इन्द्रियार्थेष्वित्यादि । आशुहरे सद्यःप्राणहरे । पूर्वोक्तमिति 'शल्यमुखावरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवति' इत्याद्युक्तमेव कारणं ज्ञेयं लक्षणत्वेनेत्यर्थः ॥ ३६—४० ॥

**छेदभेदाभिघातेभ्यो दहनाद्दारणादपि ॥**
**उपघातं विजानीयान्मर्मणां तुल्यलक्षणम् ॥ ४१ ॥**

इदानीं मर्मघाततुल्यं मर्मसमीपस्यापि देशस्य घातं महानर्थकरं दर्शयन्नाह—छेदेत्यादि । उपघातं समीपघातम् ॥४१॥

**मर्माभिघातस्तु न कश्चिदस्ति**
**योऽल्पात्ययो वाऽपि निरत्ययो वा ॥**
**प्रायेण मर्मस्वभिताडितास्तु**
**वैकल्यमृच्छन्त्यथवा म्रियन्ते ॥ ४२ ॥**

मर्माभिघाते वैद्यस्य यत्नपरतां दर्शयन्नाह—मर्माभिघात इत्यादि । अल्पात्यय इति अल्पव्यापत् । निरत्यय इति निर्गतव्यापत् । गयी त्वेतद्वाक्यं न पठति ॥ ४२ ॥

**मर्माण्यधिष्ठाय हि ये विकारा**
**मूर्च्छन्ति काये विविधा नराणाम् ॥**
**प्रायेण ते कृच्छ्रतमा भवन्ति**
**नरस्य यत्नैरपि साध्यमानाः ॥ ४३ ॥**

**इति सुश्रुतसंहितायां शारीरस्थाने प्रत्येकमर्मनिर्देशशारीरं नाम षष्ठोऽध्यायः ॥ ६ ॥**

शरीरदोषेणापि मर्मणां मर्मसमीपदेशस्यापि नियतं महानर्थं दर्शयन्नाह—मर्माण्यधिष्ठायेत्यादि । मूर्च्छन्ति समुच्छ्रायं गच्छन्ति । यस्मादेवंविधो मर्माभिघातस्तस्माद्वैद्येन यत्नः कार्य इति सूचितम् ॥ ४३ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

**अथातः सिरावर्णविभक्तिशारीरं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

"मर्मसिरास्नायुसन्ध्यस्थिधमनीः परिहरन्" ( सू. अ. ५ ) इत्यादौ मर्मानन्तरं सिराणां निर्देशात् प्रत्येकमर्मनिर्देशशारीरानन्तरं सिरावर्णविभागशारीरारम्भो युज्यत इत्याह—अथेत्यादि । विभक्तिर्विभागः समुदायात् पृथक्करणमित्यर्थः । सिराणां वातादिवहानां तद्वर्णानां चारुणनीलशुक्ललोहितानां विभक्तिर्यस्मिन् शारीरे तत्तथाविधम् ॥ १ ॥ २ ॥

**सप्त सिराशतानि भवन्ति; याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः; द्रुमपत्रसेवनीनामिव तासां प्रतानाः; तासां नाभिर्मूलं, ततश्च प्रसरन्त्यूर्ध्वमधस्तिर्यक् च ॥ ३ ॥**

तासामणुशोऽपरिसंख्यातानामपि भूयस्त्वाश्रयां समुदायसंख्यां निर्दिशन्नाह—सप्तेत्यादि । तासां सर्वासामपि सामान्यं कर्म निर्दिशन्नाह—याभिरित्यादि । याभिः सिराभिः । आरामो नानावृक्षसमुदायविशेषः । जलहारिणीभिः प्रणालीभिः, कुल्याभिः कृत्रिमाल्पसरिद्भिः; एतदृष्टान्तद्वयं स्थूलसूक्ष्मसिराप्रपणार्थम् । उपस्निह्यते पुष्टिं नीयते तरुणानां शरीरं, वृद्धानां शरीरपरिणामात्तेनोपस्नेहेन शरीरं याप्यते; उक्तं च—"स एवान्नरसो वृद्धानां जरापरिपक्वशरीरत्वादप्रीणनो भवति" ( सू. अ. १४ ) इति । अनुगृह्यते परिपाल्यते । आकुञ्चनादिभिरित्यत्रादिशब्दाद्घ्राणश्रवणबोधादयो गृह्यन्ते । सिराणां सूक्ष्मविशेषप्रदर्शनाय दृष्टान्तमाह—द्रुमेत्यादि । प्रताना विस्ताराः । तत इति नाभित इत्यर्थः ॥ ३ ॥

**भवतश्चात्र श्लोकौ—**
**यावत्यस्तु सिराः काये संभवन्ति शरीरिणाम् ॥**
**नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः ॥४॥**

प्रतन्वन्ति ऊर्ध्वमधस्तिर्यक् च काये इति संबध्यते ॥ ४ ॥

**नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता ॥**
**सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥ ५ ॥**

इदानीं सिराणां प्राणानां चाधाराधेयत्वं प्रतिपादयन्नाह—नाभिस्था इत्यादि । नाभिस्था इत्यनेन नाभ्याधारकास्तु सिरास्ववस्थिताः । प्राणा इति सिराणां प्राणाधारत्वं प्रतिपादितम् ॥ ५ ॥

**तासां मूलसिराश्चत्वारिंशत्; तासां वातवाहिन्यो दश, पित्तवाहिन्यो दश, कफवाहिन्यो दश, दश रक्तवाहिन्यः । तासां तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति, तावत्य एव पित्तवाहिन्यः पित्तस्थाने, कफवाहिन्यश्च कफस्थाने, रक्तवाहिन्यश्च यकृत्प्लीह्नोः; एवमेतानि सप्त सिराशतानि ॥ ६ ॥**

इदानीं सिरापिण्डमभिधाय विभजन्नाह—तासामित्यादि॥६॥

**तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः; एतेनेतरसक्थि बाहू च व्याख्यातौ । विशेषतस्तु कोष्ठे चतुस्त्रिंशत्; तासां गुदमेढ्राश्रिताः श्रोण्यामष्टौ, द्वे द्वे पार्श्वयोः, षट् पृष्ठे,**

---

१ 'सिरावर्णविभक्ति नाम शारीरं' इति पा० ।

१ 'प्रवर्तन्ते' इति पा० । २ 'नाभ्याधारकास्तु' इति पा० ।

तावत्य एवोदरे, दश वक्षसि । एकचत्वारिंशज्जत्रुण ऊर्ध्वं[1]; तासां चतुर्दश ग्रीवायां, कर्णयोश्चतस्रः, नव जिह्वायां, षण् नासिकायां, अष्टौ नेत्रयोः, एवमेतत् पञ्चसप्ततिशतं वातवाहिनीनां[2] सिराणां व्याख्यातं भवति । एष एव विभागः शेषाणामपि । विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश, कर्णयोर्द्वे; एवं रक्तवहाः कफवहाश्च । एवमेतानि सप्त सिराशतानि सविभागानि व्याख्यातानि ॥ ७ ॥

वातादिवहाः सिराः सामान्यतः संख्ययाऽभिधाय प्रत्यङ्गविभागेन ता एव प्रतिपादयितुमाह—तत्र वातवाहिन्य इत्यादि । कोष्ठे चतुस्त्रिंशदिति याः प्रतिपादितास्तासां विवरणमाह—तासामित्यादि । एकचत्वारिंशज्जत्रुण ऊर्ध्वमित्युद्दिष्टानां विवरणमाह—तासां चतुर्दशेत्यादि । पञ्चसप्ततिशतमिति पञ्चसप्तत्यधिकं शतमित्यर्थः । एष इत्यादि । एष एव विभागः पूर्वोक्तो वातवाहिसिराविभाग इत्यर्थः । शेषाणामिति पित्तश्लेष्मरक्तवहानामित्यर्थः । एतेन पित्तादिवाहिनीनामपि सिराणां प्रत्येकं पञ्चसप्तत्यधिकं शतं भवतीत्युक्तम् । उपसंहारमाह—एवमित्यादि ॥ ७ ॥

भवन्ति चात्र—

क्रियाणामप्रतीघातममोहं बुद्धिकर्मणाम् ॥
करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवनश्चरन् ॥८॥
[3]यदा तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते ॥
तदाऽस्य विविधा रोगा जायन्ते वातसंभवाः ॥९॥
भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम् ॥
संसर्पत् स्वाः सिराः पित्तं कुर्याच्चान्यान् गुणानपि ॥
[4]यदा प्रकुपितं पित्तं सेवते स्ववहाः सिराः ।
तदाऽस्य विविधा रोगा जायन्ते पित्तसंभवाः ॥११॥
स्नेहमङ्गेषु सन्धीनां स्थैर्यं बलमुदीर्णताम् ॥
करोत्यन्यान् गुणांश्चापि बलासः स्वाः सिराश्चरन् १२
[5]यदा तु कुपितः श्लेष्मा स्वाः सिराः प्रतिपद्यते ॥
तदाऽस्य विविधा रोगा जायन्ते श्लेष्मसंभवाः ॥१३॥
[6]धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम् ॥
स्वाः सिराः संचरद्रक्तं कुर्याच्चान्यान् गुणानपि १४
यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः ॥
तदाऽस्य विविधा रोगा जायन्ते रक्तसंभवाः ॥१५॥

इदानीं वातादिवहसिरासु वातादीनां प्रकृतिभूतानां प्राकृतं कर्म विकृतिभूतानां वैकृतं च कर्म निर्दिशन्नाह—क्रियाणामित्यादि । क्रियाणां कायक्रियाणां प्रसारणाकुञ्चनादीनां, वाक्क्रियाणां भाषितादीनाम् । अप्रतीघातम् अप्रतिहननम् । बुद्धिकर्मणामिति पञ्चानां बुद्धीन्द्रियाणां, मनसो बुद्धेश्च स्वे स्वे विषये प्राकृतायां प्रवृत्तौ मोहस्याभावं करोति । अन्यान् गुणान् "तत्र प्रस्पन्दनोद्वहनपूरण" ( सू. अ. १५ ) इत्यादिकान् । भ्राजिष्णुतां दीप्तिमत्त्वम् । संसर्पत् गच्छत् । अन्यान् गुणान् "रागपक्त्योज" ( सू. अ. १५ ) इत्यादिकान् । यदेत्यादि । अन्यान् गुणान् सन्धिश्लेषणादिकान् । यदा त्वित्यादि । अन्यान् गुणान् "रक्तं वर्णप्रसादं" ( सू. अ. १५ ) इत्याद्युक्तान् ॥ ८—१५ ॥

न हि वातं सिराः काश्चिन्न पित्तं केवलं तथा ॥
श्लेष्माणं वा वहन्त्येता अतः सर्ववहाः स्मृताः ॥१६॥

प्राकृतवातादिवहानामपि सिराणां सर्वत्र सर्वकार्योपलम्भात् सर्ववहत्वं दर्शयन्नाह—न हि वातमित्यादि ॥ १६ ॥

प्रदुष्टानां हि दोषाणां[1] मूर्च्छितानां प्रधावताम् ॥
ध्रुवमुन्मार्गगमनमतः सर्ववहाः स्मृताः ॥ १७ ॥

इदानीं प्रकुपितवातादिवहानामपि सिराणां सर्ववहत्वं दर्शयन्नाह—प्रदुष्टानामित्यादि । मूर्च्छितानामिति परस्परं मिश्रितानामित्यर्थः ॥ १७ ॥

[2]तत्रारुणा वातवहाः पूर्यन्ते वायुना सिराः ॥
पित्तादुष्णाश्च नीलाश्च, शीता गौर्यः स्थिराः कफात्
असृग्वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः ॥१८॥

सिराविभक्तिं प्रतिपाद्य तद्वर्णविभक्तिं प्रतिपादयन्नाह—तत्रेत्यादि ॥ १८ ॥

अत ऊर्ध्वं प्रवक्ष्यामि न विध्येद्याः[3] सिरा भिषक् ॥
वैकल्यं मरणं चापि[4] व्यधात्तासां ध्रुवं भवेत् ॥ १९ ॥
सिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान् ॥
षट्त्रिंशच्च शतं कोष्ठे चतुःषष्टिं च मूर्धनि ॥ २० ॥
शाखासु षोडश सिराः कोष्ठे द्वात्रिंशदेव तु ॥
[5]पञ्चाशज्जत्रुणश्चोर्ध्वमव्यध्याः परिकीर्तिताः ॥ २१ ॥

तत्र व्यध्याव्यध्यविभागज्ञानाय पूर्वोक्तानि सप्तसिराशतानि षड्भेष्वनूद्य प्रतिशता अव्यध्याः सिराः प्राह—सिराशता-

---

१ 'तासामष्टौ जिह्वायां, नव नासायां, द्वे ग्रीवायां, हन्वोश्चतस्रः, नेत्रयोः षट्, ललाटे तिस्रः, कर्णयोश्चतस्रः, द्वे शङ्खयोः, तिस्रः शिरसि' इति ता. । २ 'वातवहानां' इति पा० । ३ 'यदा वायुरदुष्टस्तु सेवते स्ववहाः सिराः । तदा तु बलवर्णौजः प्रसीदेच्च मनस्तथा' इति ता. । ४ 'यदा त्वकुपितं पित्तं सेवते स्ववहाः सिराः । अन्यापन्नस्तदाऽग्निस्तु सम्यक् पचति भोजनम् । करोत्यन्यान् गुणांश्चापि पित्तमात्मसिराश्चरन्' इति ता. । ५ 'यदा त्वकुपितः श्लेष्मा स्वाः सिराः संप्रपद्यते । आशयाः सन्धयश्चैव वर्तन्तेऽस्य निरामयाः ॥' इति ता. । ६ 'यदा त्वकुपितं रक्तं सेवते स्ववहाः सिराः । तदा सम्यक् प्रजानाति स्पर्शनानां शुभाशुभम् । वर्णप्रसादनं स्थैर्यं धातूनां पुष्टिमेव च । करोत्यन्यान् गुणांश्चापि रक्तमात्मसिराश्चरन्' इति ता. ।

१ 'दोषाणामुच्छ्रितानां' इति पा० । २ 'तत्रारुणा वातवहा नीलाः पित्तवहाः सिराः । असृग्वहास्तु रोहिण्यो गौर्यः श्लेष्मवहाः सिराः' इति ता. । ३ 'व्यधेद्याः' इति पा० । ४ 'चाशु' इति पा० । ५ 'जत्रोरूर्ध्वं तु पञ्चाशदव्यध्याः परिकीर्तिताः । वैकल्यं मरणं वाऽऽशु व्यधात्तासां ध्रुवं भवेत्' इति ता. ।

नीत्यादि । सिराशतानि चत्वारीति एकैकशाखागतवातादिवहानां सिराणां पञ्चविंशत्या चत्वारि शतानि भवन्ति । चतुःषष्टं चेति शतमित्यत्रापि योजनीयं, तेन चतुःषष्ट्यधिकं शतं मूर्धनि ज्ञातव्यम् ॥ १९—२१ ॥

**तत्र सिराशतमेकस्मिन् सक्थ्नि भवति; तासां जालधरा त्वेका, तिस्रश्चाभ्यन्तराः—तत्रोर्वीसंज्ञे द्वे, लोहिताक्षसंज्ञा चैका, तास्त्वव्यध्याः; एतेनेतरसक्थि बाहू च व्याख्यातौ; एवमशस्त्रकृत्याः षोडश शाखासु । द्वात्रिंशच्छ्रोण्यां, तासामष्टावशस्त्रकृत्याः—द्वे द्वे विटपयोः, कटीकतरुणयोश्च; अष्टावष्टावेकैकस्मिन् पार्श्वे, तासामेकैकामूर्ध्वगां परिहरेत्, पार्श्वसन्धिगते च द्वे; चतस्रो विंशतिश्च पृष्ठे पृष्ठवंशमुभयतः, तासामूर्ध्वगामिन्यौ द्वे द्वे परिहरेद्बृहतीसिरे; तावत्य एवोदरे, तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत्; चत्वारिंशद्वक्षसि, तासां चतुर्दशाशस्त्रकृत्याः—हृदये द्वे, द्वे द्वे स्तनमूले, स्तनरोहितापलापस्तम्भेषूभयतोऽष्टौ; एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति । चतुःषष्टं सिराशतं जत्रुण ऊर्ध्वं भवति; तत्र षट्पञ्चाशच्छिरोधरायां, तासामष्टौ चतस्रश्च मर्मसंज्ञाः परिहरेत्, द्वे कृकाटिकयोः, द्वे विधुरयोः, एवं ग्रीवायां षोडशाव्यध्याः; हन्वोरुभयतोऽष्टावष्टौ, तासां तु सन्धिधमन्यौ द्वे द्वे परिहरेत्; षट्त्रिंशज्जिह्वायां, तासामधः षोडशाशस्त्रकृत्याः, रसवहे द्वे, वाग्वहे च द्वे; द्विर्द्वादश नासायां, तासामौपनासिक्यश्चतस्रः परिहरेत्, तासामेव च तालुन्येकां मृदावुद्देशे; अष्टत्रिंशदुभयोर्नेत्रयोः, तासामेकैकामपाङ्गयोः परिहरेत्; कर्णयोर्दश, तासां शब्दवाहिनीमेकैकां परिहरेत्; नासानेत्रगतास्तु ललाटे षष्टिः, तासां केशान्तानुगताश्चतस्र, आवर्तयोरेकैका, स्थपन्यां चैका परिहर्तव्या; शङ्खयोर्दश, तासां शङ्खसन्धिगतामेकैकां परिहरेत्; द्वादश मूर्ध्नि, तासामुत्क्षेपयोर्द्वे परिहरेत्, सीमन्तेष्वेकैकाम्, एकामधिपताविति; एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्ध्वमिति ॥ २२ ॥**

कास्ता अव्यध्याः? इत्याह—तत्र सिराशतमित्यादि । जालधरा इति जालानीव जालानि मांससिरास्नाय्वस्थिसन्धिजानि कूर्चशिरोव्यापीनि तानि धारयन्ति यास्ता जालधरा इत्यर्थः । कास्तास्तिस्रोऽभ्यन्तरा इत्याह—तत्रोर्वीसंज्ञे द्वे इत्यादि । द्वे अपि ते उर्वीसंज्ञे अतिसान्निध्यात् प्राच्यमर्मविभागीये शारीरे उर्वीसंज्ञैकमर्मतया निर्दिष्टे । कटीकतरुणयोश्चेति अत्रापि द्वे द्वे इति संबन्धः । पार्श्वसन्धिगते द्वे इति जघनपार्श्वमध्ययोर्ये पार्श्वसन्धिसंज्ञके मर्मणी तत्संज्ञां प्राप्ते द्वे । चतस्र इत्यादि । पृष्ठगतचतुर्विंशतिसिरासु मध्ये द्वे द्वे बृहतीसिरे परिहरेदित्यर्थः । तावत्य इति चतुर्विंशतिरित्यर्थः । चत्वारिंशदित्यादि । उभयतोऽष्टाविति उभयत्रेत्यर्थे उभयत इति स्तनमूलादिषु योजनीयं, तेनोभयत्र स्तनमूले वामदक्षिणाश्रिते द्वे द्वे इति चतस्रः । तथोभयत्र स्तनरोहितापलापस्तम्भेष्वष्टौ; तत्र स्तनरोहितयोर्द्वे द्वे, अपलापयोरेकैका, अपस्तम्भयोरप्येकैका, एवमष्टावित्यर्थः । उपसंहारमाह—एवमित्यादि । पृष्ठोदरोरःस्वित्यत्र पृष्ठशब्देन श्रोणिपार्श्वानामपि ग्रहणं; तेन श्रोणिगता अष्टौ, पार्श्वगता एकैका, चतस्रः पृष्ठे, चतस्र उदरे, चतुर्दश वक्षसि, एवं द्वात्रिंशदव्यध्याः । चतुःषष्टमित्यादि । चतुःषष्टं सिराशतमिति चतुःषष्ट्यधिकं सिराशतमित्यर्थः । तत्रेति चतुःषष्ट्यधिकसिराशतमध्ये । अष्टौ चतस्रश्च मर्मसंज्ञा इति तत्राष्टौ मातृकाः, द्वे नीले, द्वे च मन्ये, एता द्वादश मर्मसंज्ञा इत्यर्थः; तथा द्वे कृकाटिकयोः, द्वे विधुरयोः, एवं ग्रीवायां षोडशाव्यध्याः । **गयी** तु वातादिवहानां चतुर्भिरष्टकैर्द्वात्रिंशद्ग्रीवायां, तत्र षोडशाव्यध्या इति प्रतिपादयति । सन्धिधमन्याविति हनुसन्धिधमन्यावित्यर्थः । हन्वोः षोडश सिरा ग्रीवासिरास्वेवान्तर्भवन्तीत्यतो न पृथग्गणनीयाः । **गयी** तु "हनुगताः पृथगेव षोडश, तत्र द्वे सन्धिबन्धनकर्मणी परिहरेत्" इत्याह । षट्त्रिंशदित्यादि । तासामधः षोडशेति तासां जिह्वागतषट्त्रिंशत्सिराणां मध्येऽधोजिह्वायाः षोडशसिरा भवन्ति, शेषा विंशतिश्च जिह्वाया ऊर्ध्वं भवन्ति । अशस्त्रकृत्या रसवहे वाग्वहे चेति रसवहे द्वे, वाग्वहे च द्वे । **गयी** तु "अष्टाविंशतिर्जिह्वायां, तासु रसवाहिन्यः षडशस्त्रकृत्याः" इति ब्रूते । द्विर्द्वादशेति चतुर्विंशतिरित्यर्थः । औपनासिक्यः नासासमीपवर्तिन्यः । मृदावुद्देशे इति घण्टासमीपे इत्यर्थः । **गयी** तु "षोडश नासायां, तासु पञ्चाव्यध्या" इत्याह । अष्टत्रिंशदिति **गयी** तु "चतुर्विंशतिरुभयोर्नेत्रयोः; तासामेकैकामपाङ्गयोः परिहरेत्" इत्याचष्टे । कर्णयोरित्यादि **गयी** तु "कर्णयोः षोडश, तासामेकैकां शब्दवहां परिहरेत्" इति ब्रूते । नासानेत्रेत्यादि याश्चतुर्विंशतिर्नासागता याश्च षट्त्रिंशन्नेत्रगतास्ता एव षष्टिर्ललाटे ज्ञातव्याः, अतो न पृथग्गणनीयाः । केशान्तानुगता इति आवर्तमर्मसमीपकेशान्तानुगता इत्यर्थः । **गयी** तु "ललाटस्थिताभिः सिराभिः सह नासानेत्रगताः सिरा ललाटे षष्टिः, तासु सप्ताव्यध्याः" इति ब्रूते । शङ्ख-

१ 'लोहिताक्षसंज्ञैका' इति पा० । २ 'वङ्क्षणविटपयोः' इति ता० । ३ 'पृष्ठे' इति न पठ्यते केषुचित्पुस्तकेषु । ४ 'तत्राष्टपञ्चाशत्' इति पा० । ५ 'षट्त्रिंशदुभयोर्नेत्रयोः' इति पा० । ६ 'कास्ताः षोडशाव्यध्याः' इति पा० । ७ 'कूर्चकूर्चशिरोव्यापीनि' इति पा० । ८ 'धारयन्तीत्यर्थः' इति पा० ।

१ 'घोणासमीपे' इति पा० । २ 'ननु नेत्रगता अष्टत्रिंशत्, तत्कथं त्रिंशन्नेत्रगता इति व्याख्याय षष्टिं पूरयति? सत्यं, यद्यप्यष्टत्रिंशन्नेत्रयोः सिरा उक्तास्तथाऽपि तन्मध्ये द्वयोरपाङ्गाश्रितत्वात्तत्राभावः, अतो नेत्रगता अष्टत्रिंशदपि ललाटे पुनः षट्त्रिंशदेवेति' इति पा० ।

योरित्यादि । शङ्खयोर्दशेति एता अपि नासानेत्रगता बोद्धव्याः, अतो न पृथग्गणनीयाः । **गयी** तु शङ्खयोरष्टौ पृथगेव पठति; तासु द्वे शङ्खसन्धिगते अव्यध्ये, इति प्रतिपादयति । द्वादश मूर्ध्नीत्यादि। सीमन्तेषु पञ्चस्वेकैकां परिहरेत्, तथाऽधिपतावेकां परिहरेत्, एतासामपि नासानेत्रगतत्वात् पृथग्गणना न कर्तव्या । **गयी** तु मूर्ध्नि पृथगेव द्वादश पठित्वा तास्वष्टावव्यध्या इत्याह ॥ २२ ॥

**भवति चात्र—**

**व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः ॥**
**प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम्[1] ॥२३**

**इति सुश्रुतसंहितायां शारीरस्थाने सिरा-वर्णविभक्तिशारीरं नाम सप्तमोऽध्यायः ॥ ७ ॥**

इदानीं सर्वत्र सिरासंभवत्वेन व्याख्यातसङ्ख्याव्यभिचा[2]रोऽस्तीति दर्शयन्नाह—व्याप्नुवन्तीत्यादि । यथा बिसादीनां प्रताना विस्तारा पद्मिनीकन्दात् प्रसृता जलं व्याप्नुवन्ति, तथा नाभितः प्रसृताः सिराः सर्वतः शरीरं व्याप्नुवन्ति ॥ २३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

**अथातः सिराव्यधविधिं शारीरं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

सिरावर्णविभक्त्यनन्तरं ज्ञातव्यध्याव्यध्यसिरस्य सिराव्यधविधिर्युज्यत इत्याह—अथात इत्यादि ॥ १ ॥ २ ॥

**बालस्थविररूक्षक्षतक्षीणभीरुपरिश्रान्तमद्यपाध्वस्त्रीकर्शितवमितविरिक्तास्थापितानुवासितजागरितक्लीबकृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छाप्रपीडितानां च सिरां न विध्येत्[3], याश्चाव्यध्याः, व्यध्याश्चादृष्टाः, दृष्टाश्चायन्त्रिताः, यन्त्रिताश्चानुत्थिता इति ॥ ३ ॥**

बालेत्यादि ।—बालस्थविरयोरसंपूर्णक्षीणधातुत्वात् सिरां न विध्येत् । रूक्षक्षतक्षीणानां वातप्रकोपभयात् सिरां न विध्येत्; क्षत इति उरःक्षतयुक्तः खड्गाद्यभिहतो वा, क्षीणः क्षीणधातुः; **गयी** तु "क्षतेन क्षीणः क्षतक्षीणस्तस्यानिलव्याधिभयान्न विध्येत्" इति व्याख्याति । भीरोश्च तमोबहुलत्वाल्लोहितदर्शनेन मूर्च्छाभयान्न विध्येत् । परिश्रान्तस्य श्रमकुपितो वातः शोणितावसेचनेनातिप्राबल्यं प्राप्य शरीरव्यापादकः स्यात् । मद्यपस्य मदविक्षिप्तचित्तस्यातिमूर्च्छाकरत्वात् । अध्वस्त्रीकर्शितस्य वातप्रकोपभयान्न विध्येत् । वान्तविरिक्तयोरकृतसंसर्जनयोरपीतस्नेहयोर्वमनविरेकानन्तरमेव वातप्रकोपभयात् सिरां न विध्येत् । आस्थापितजागरितयोर्मरुत्प्रकोपभयान्न विध्येत्, अनुवासितस्य मन्देऽग्नौ भूयोऽग्निमान्द्यभयात्, क्लीबस्य प्रधानधातुक्षयेणाल्पसत्त्वत्वेन च निश्चितविनाशात्, कृशस्य गर्भिणीनां चोपक्षीणधातुत्वाद्देहसंदेहभयात्, कासश्वासशोषिणामप्यपचीयमानधातुत्वेन देहसन्देहभयान्न विध्येत् । प्रवृद्धज्वरस्यासृक्स्रावेण प्रलापादिभयात् सिरां न विध्येत् । याश्चाव्यध्या इति अशेषाव्यध्यप्रसङ्गेनोक्तमिति न पुनरुक्तम् ॥ ३ ॥

**शोणितावसेकसाध्याश्च ये विकाराः प्रागभिहितास्तेषु चापक्वेष्वन्येषु चानुक्तेषु यथाभ्यासं[1] यथान्यायं च सिरां विध्येत् ॥ ४ ॥**

शोणितावसेकसाध्या इति "त्वग्दोषा ग्रन्थयः शोफा" (सू. अ. १४) इत्यादिना शोणितवर्णनीये उक्ताः । तेषु चापक्वेष्विति यद्यपि रक्ताभावात् पक्वानां रक्तस्रुतिर्न क्रियत इत्यर्थादेवापक्वग्रहणं लभ्यते, तथाऽपि बाह्योपक्रमेषु मध्ये शोणितावसेकस्य प्राधान्यख्यापनायापक्वग्रहणं कृतम् । अन्येषु चानुक्तेष्विति ये विपाकाभिमुखाः शोणितावसेकसाध्येष्वनभिहितास्तेष्वित्यर्थः । यथाभ्यासमिति यथासमीपमित्यर्थः । यथान्यायमिति न्यायस्य स्नेहस्वेदादिकस्यानतिक्रमेणेति यथान्यायम् ॥ ४ ॥

**प्रतिषिद्धानामपि च विषोपसर्गे आत्ययिके च सिराव्यधनमप्रतिषिद्धम् ॥ ५ ॥**

इदानीं कारणवशान्निषिद्धानामपि शोणितावसेकं दर्शयन्नाह—प्रतिषिद्धानामित्यादि । प्रतिषिद्धानामपीति बालस्थविरादीनाम् । आत्ययिके इति अत्ययो विनाशो भवत्यस्मादित्यात्ययिको विद्रध्यादिरनन्यसाध्यः ॥ ५ ॥

**तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकं द्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं[2] वा यथाकालमुपस्थाप्यासीनं स्थितं वा प्राणानबाधमानो वस्त्रपट्टचर्मान्तर्वल्कललतानामन्यतमेन यन्त्रयित्वा नातिगाढं नातिशिथिलं शरीरप्रदेशमासाद्य प्राप्तं शस्त्रम्[3]आदाय सिरां विध्येत् ॥ ६ ॥**

---

१ अस्याग्रे ताडपत्रपुस्तके 'सिराशतानां सप्तानां शरीरेषु शरीरिणाम् । अशस्त्रकृत्या नवतिस्तथाऽष्टौ च विनिर्दिशेत् ॥ स्पन्दिन्यो जलधारिण्यो याश्च मर्मसमाश्रिताः । अव्यध्यास्ता विजानीयात् स्नायुसन्धिगताश्च याः ॥ वैकल्यं मरणं चापि व्यधादासां ध्रुवं भवेत्' इत्यधिकः पाठ उपलभ्यते । २ 'नियतव्याख्यातसंख्याव्यभिचारोऽस्तीति' इति पा० । ३ अस्याग्रे ता. पुस्तके 'किं कारणं? एषां तु खलु वेधादिन्द्रियसंमोहः शोषो वा भवति, रक्तपित्तिनो रक्तक्षयाद्वातप्रकोपो मृत्युर्वा सिरावेधेन संभवेत्' इत्यधिकः पाठ उपलभ्यते ।

१ 'यथाभ्यासमनलयं च' इति ता. । २ 'प्रतिपीतं' इति पा० । ३ 'यथोक्तं शस्त्रं गृहीत्वा' इति पा० । 'विधिवच्छस्त्रमादाय यथोक्तां सिरां' इति ता. ।

तत्र सिराव्यधस्य पूर्वकर्मविधिं प्रदर्श्य प्रधानकर्मविधिं दर्शयन्नाह—तत्रेत्यादि । तत्रेति वाक्योपक्रमे । आतुरमिति अत्रातुरग्रहणं स्वस्थस्य रक्तं न स्रावयेदिति बोधनार्थम् । द्रवप्रायमिति रक्तोत्क्लेशनार्थं द्रवाधिकमन्नं भुक्तवन्तम् । यवागूं पीतवन्तं वेति सात्म्यापेक्षया । यथाकालमिति वर्षादिषु व्यभ्रादिकालानतिक्रमेण । उपस्थाप्य सन्निधाने स्थापयित्वा । आसीनम् उपविष्टं, स्थितम् ऊर्ध्वीभूतम् । नातिगाढं नातिशिथिलमिति नातिगाढमुत्तमाङ्गे, नातिशिथिलं शाखासु । शरीरप्रदेशमासाद्येति मर्मरहितं शरीरप्रदेशं गृहीत्वेत्यर्थः । प्राप्तं शस्त्रमिति उपयुक्तं शस्त्रमित्यर्थः ॥ ६ ॥

**नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते ॥**
**सिराणां व्यधनं कार्यमरोगे वा कदाचन ॥ ७ ॥**

नैवेत्यादि । अभ्रित इति अभ्राणि संजातानि यत्र दिने तदभ्रितं दिनं, तस्मिन्नित्यर्थः ॥ ७ ॥

**तत्र व्यध्यसिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोर्निवेश्य[1] कूर्परे सन्धिद्वयस्योपरि हस्तावन्तर्गूढाङ्गुष्ठकृतमुष्टी मन्ययोः स्थापयित्वा यन्त्रणशाटकं ग्रीवामुष्ट्योरुपरि परिक्षिप्यान्येन पुरुषेण पश्चात्स्थितेन वामहस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो ब्रूयात्—दक्षिणहस्तेन सिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावेष्टयेति, असृक्स्रावणार्थं च यन्त्रं[2] पृष्ठमध्ये पीडयेति, कर्मपुरुषं च वायुपूर्णमुखं स्थापयेत्[3]; एष उत्तमाङ्गगतानामन्तर्मुखवर्जानां सिराणां व्यधने यन्त्रणविधिः । पादव्यध्यसिरस्य पादं समे स्थाने सुस्थितं स्थापयित्वाऽन्यं पादमीषत्संकुचितमुच्चैः कृत्वा व्यध्यसिरं पादं जानुसन्धेरधः शाटकेनावेष्ट्य हस्ताभ्यां[4] प्रपीड्य गुल्फं व्यध्यप्रदेशस्योपरि चतुरङ्गुले प्लोतादीनामन्यतमेन बद्ध्वा वा पादसिरां विध्येत् । अथोपरिष्टाद्धस्तौ गूढाङ्गुष्ठकृतमुष्टी सम्यगासने स्थापयित्वा सुखोपविष्टस्य पूर्ववद्यन्त्रं बद्ध्वा हस्तसिरां विध्येत् । गृध्रसीविश्वाच्योः सङ्कुचितजानुकूर्परस्य । श्रोणीपृष्ठस्कन्धेषून्नामितपृष्ठस्यावाक्शिरस्कस्योपविष्टस्य विस्फूर्जितपृष्ठस्य विध्येत् । उदरोरसोः प्रसारितोरस्कस्योन्नामितशिरस्कस्य विस्फूर्जितदेहस्य । बाहुभ्यामवलम्बमानदेहस्य पार्श्वयोः । अनामितमेढ्रस्य मेढ्रे । उन्नमितविदष्टजिह्वाग्रस्याधोजिह्वायाम्[5] । अतिव्यात्ताननस्य**

१ 'सक्थ्नोराकुञ्चितयोरुपरि कूर्परसन्धिद्वयं निवेश्य' इति पा० । २ 'यन्त्रं पीडयेति' इति, 'पृष्ठमध्ये च पीडयेत्' इति च पा० । ३ 'कर्मपुरुषस्य मुखं वायुना पूरयेत्' इति पा० । ४ 'हस्ताभ्यां वा प्रपीड्य गुल्फं' इति पा० । ५ 'अधोजिह्वायाः' इति पा० ।

**तालुनि दन्तमूलेषु च । एवं यन्त्रोपायानन्यांश्च[1] सिरोत्थापनहेतून् बुद्ध्याऽवेक्ष्य शरीरवशेन व्याधिवशेन च विदध्यात् ॥ ८ ॥**

इदानीमुत्तमाङ्गसक्थिपाणिद्वयपृष्ठोदरवक्षोमेढ्रजिह्वादिषु सिराणां येन प्रकारेणोत्थापनं तं दर्शयन्नाह—तत्रेत्यादि । अरत्निमात्रोच्छ्रिते इति कनिष्ठाङ्गुलिप्रमितहस्तमात्रोच्छ्रिते इत्यर्थः । सन्धिद्वयस्योपरीति जानुसन्धिद्वयस्योपरि कूर्परे निवेश्येत्यर्थः । कर्मपुरुषमिति यस्य सिराव्यधनं कर्म क्रियते स कर्मपुरुषः । अन्तर्मुखवर्जानामिति मुखान्तर्गतवर्जितानामित्यर्थः । तत्र पादव्यध्येत्यादि । प्लोतादीनामिति प्लोतं वस्त्रम्, आदिशब्दाद्वल्कलादीनां ग्रहणम् । अथोपरिष्टादित्यादि । पूर्ववदिति व्यध्यप्रदेशस्योपरि चतुरङ्गुल इत्यर्थः । गृध्रसीत्यादि गृध्रस्यां संकुचितजानोः, विश्वाच्यां संकुचितकूर्परस्य, सिरां विध्येदिति पूर्ववाक्यात् संबध्यते । श्रोणीपृष्ठस्कन्धेष्विति सिरामिति पूर्वतरवाक्यात् संबध्यते । कीदृशस्य पुरुषस्येत्याशङ्क्य विशेषणत्रयमाह[2]—उन्नामितपृष्ठस्येत्यादि । विस्फूर्जितमायामितं पृष्ठं येन सः, तथा । उदरोरसोः प्रसारितोरस्कस्योन्नमितशिरस्कस्य विस्फूर्जितदेहस्य 'सिरां विध्येत्' इति शेषः । विस्फूर्जितदेहस्येति आयामितमध्यशरीरस्येत्यर्थः । अवनामितमेढ्रस्येति स्तब्धमेवावनामितं मेढ्रं यस्य स तथा, तस्य मेढ्रे 'सिरां विध्येत्' इति शेषः । अनुक्तानामपि यन्त्रणप्रकाराणां बुद्ध्या वीक्षणेन करणीयतां दर्शयन्नाह—एवमित्यादि ॥ ८ ॥

**मांसलेष्ववकाशेषु यवमात्रं शस्त्रं निदध्यात्, अतोऽन्यथाऽर्धयवमात्रं व्रीहिमात्रं वा व्रीहिमुखेन, अस्थ्नामुपरि कुठारिकया विध्येदर्धयवमात्रम् ॥ ९ ॥**

इदानीं प्रदेशविशेषेण शस्त्रप्रणिधानप्रमाणं शस्त्रविशेषं च दर्शयन्नाह—मांसलेष्वित्यादि । मांसलेषु जठरस्फिगादिषु, यवमात्रं यवप्रमाणम् । व्रीहिरत्र प्रधानकल्पनया शूकधान्यं, तत्रापि रक्तशालिरेव ॥ ९ ॥

**व्यभ्रे वर्षासु विध्येत्तु ग्रीष्मकाले तु शीतले ॥**
**हेमन्तकाले मध्याह्ने शस्त्रकालास्त्रयः स्मृताः ॥१०॥**

नित्यगस्य कालस्य शीतोष्णवर्षाभेदेन त्रिविधत्वात्त्रिष्वपि कालेषु विशेषमाह—व्यभ्र इत्यादि । विगतानि अभ्राणि यस्मिन् दिने तद् व्यभ्रं दिनं तस्मिन् व्यभ्रे दिने, वर्षासु वर्षाकाले, सिरां विध्येदित्यर्थः । ग्रीष्मकाले तु शीतले इति तृतीयप्रहरानन्तरमित्यर्थः । हेमन्तकाल इति हेमन्तग्रहणं शीतकालोपलक्षणम् । एतच्चात्यन्तिकव्याधिवशेन, न पुनः स्वस्थस्य; तस्य हि शरदादिसाधारण एवैकः काल इति ॥ १० ॥

**सम्यक्शस्त्रनिपातेन धारया या स्रवेदसृक् ॥**
**मुहूर्तं रुद्ध्वा तिष्ठेच्च सुविद्धां तां विनिर्दिशेत् ॥ ११ ॥**

१ 'यन्त्रोपायान्' इति पा० । २ 'विशेषणत्रयमाह' इति पा० ।

सुविद्धसिरालक्षणमाह—सम्यगित्यादि । मुहूर्तमिति मुहूर्तशब्दः स्रवेदसृगित्यत्र च संबध्यते ॥ ११ ॥

यथा कुसुम्भपुष्पेभ्यः पूर्वं स्रवति पीतिका ॥
तथा सिरासु विद्धासु दुष्टमग्रे प्रवर्तते ॥ १२ ॥

इदानीं सिरायां विद्धायां सत्यां पूर्वं दुष्टमेव रक्तं प्रवर्तत इति दर्शयन्नाह—यथेत्यादि ॥ १२ ॥

मूर्च्छितस्यातिभीतस्य श्रान्तस्य तृषितस्य च ॥
न वहन्ति सिरा विद्धास्तथाऽनुत्थितयन्त्रिताः ॥१३॥

सिराणां सम्यग्विद्धानामप्यस्रवणे कारणं दर्शयन्नाह—मूर्च्छितस्येत्यादि । अतिभीतादिष्वतिभयादिजनितवातेन सिरामुखनिरोधात्, अनुत्थितयन्त्रितानां शोणितस्य प्रवृत्तावभिमुखीभावाभावाच्च वहन्तीति । यद्यपि "मदमूर्च्छाश्रमार्तानां" ( सू. अ. १४ ) इत्यादिना सूत्रस्थानोदितेनायमर्थ उक्तस्तथाऽपि प्रकरणान्तरत्वान्न पौनरुक्त्यम् ॥ १३ ॥

क्षीणस्य बहुदोषस्य मूर्च्छयाऽभिहतस्य[1] च ॥
भूयोऽपराह्णे विस्राव्या सोऽपरेद्युः[2] त्र्यहेऽपि वा ॥१४॥

क्षीणस्यावश्यस्रावणीये शोणिते क्रमस्रावणं दर्शयन्नाह—क्षीणस्येत्यादि । मूर्च्छयाऽभिहितस्येति अक्षीणस्यापीत्यर्थः ॥१४॥

रक्तं सशेषदोषं तु कुर्यादपि विचक्षणः ॥
न चातिनिःस्रुतं कुर्याच्छेषं संशमनैर्जयेत् ॥ १५ ॥

क्षीणेऽतिस्रावणस्य बहुदोषकरत्वान्निषेधं कुर्वन्नाह—रक्तमित्यादि ॥ १५ ॥

बलिनो बहुदोषस्य वयःस्थस्य शरीरिणः ॥
परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे ॥ १६ ॥

प्रस्थं सार्धत्रयोदशपलानि । तथा चोक्तं—"वमने च विरेके च तथा शोणितमोक्षणे । सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः"—इति ॥ १६ ॥

तत्र पाददाहपादहर्षचिप्पविसर्प[3]वातशोणितवातकण्टकविचर्चिकापाददारीप्रभृतिषु क्षिप्रमर्मण उपरिष्टाद् द्व्यङ्गुले व्रीहिमुखेन सिरां विध्येत्, श्लीपदे तच्चिकित्सिते यथा वक्ष्यते, क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु जङ्घायां गुल्फस्योपरि चतुरङ्गुले, अपच्यामिन्द्रबस्तेरधस्ताद् द्व्यङ्गुले, जानुसन्धेरुपर्यधो वा चतुरङ्गुले गृध्रस्यां, ऊरुमूलसंश्रितां गलगण्डे, एतेनेतरसक्थि बाहू च व्याख्यातौ; विशेषतस्तु वामबाहौ कूर्परसन्धेरभ्यन्तरतो बाहुमध्ये प्लीह्नि कनिष्ठिकानामिकयोर्मध्ये वा, एवं दक्षिणबाहौ यकृद्दाल्ये (कफोदरे च,)[1] एतामेव च कासश्वासयोरप्यादिशन्ति, गृध्रस्यामिव विश्वाच्यां, श्रोणिं प्रति समन्ताद् द्व्यङ्गुले प्रवाहिकायां शूलिन्यां, परिवर्तिकोपदंशशूकदोषशुक्रव्यापत्सु मेढ्रमध्ये, ( वृषणयोः पार्श्वे मूत्रवृद्ध्यां, नाभेरधश्चतुरङ्गुले सेवन्या वामपार्श्वे दकोदरे, )[2] वामपार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च, बाहुशोषावबाहुकयोरप्येके वदन्त्यंसयोरन्तरे, त्रिकसन्धिमध्यगतां तृतीयके, अधःस्कन्धसन्धिगतामन्यतरपार्श्वसंस्थितां[3] चतुर्थके, हनुसन्धिमध्यगतामपस्मारे, शङ्खकेशान्तसन्धिगतामुरोऽपाङ्गललाटेषु चोन्मादे, जिह्वारोगेष्वधोजिह्वायां दन्तव्याधिषु च, तालुनि तालव्येषु, कर्णयोरुपरि समन्तात् कर्णशूले तद्रोगेषु च, गन्धाग्रहणे नासारोगेषु च नासाग्रे, तिमिराक्षिपाकप्रभृतिष्वक्ष्यामयेषूपनासिके ललाट्यामपाङ्ग्यां वा, एता एव शिरोरोगाधिमन्थप्रभृतिषु रोगेष्विति ॥ १७ ॥

इदानीं नियतदेहदेशगतरोगविशेषेण व्यध्यानां सिराणां देहदेशविशेषं नियमयन्नाह—तत्रेत्यादि । प्रभृतिग्रहणादन्येऽपि पादरोगा रक्तानुबन्धिदोषजाता गृह्यन्ते । तच्चिकित्सिते यथा वक्ष्यत इति श्लीपदचिकित्सिते येन प्रकारेण वक्ष्यते, तथा श्लीपदे सिरां विध्येदित्यर्थः । क्रोष्टुकशिर इत्यादि । क्रोष्टुकशीर्षादिषु वातवेदनासु जङ्घायां सिरां विध्येत् । तत्रापि प्रदेशविशेषज्ञानायाह—गुल्फस्योपरीत्यादि । अपच्यामिति उत्पन्नमात्रायामित्यर्थः, न तु रूढायां, तस्यां "पार्ष्णिं प्रति द्वे दश चाङ्गुलानि" ( चि. अ. १८ ) इत्यादिना चिकित्सितस्योक्तत्वात् । एतेनेत्यादि । यस्माद्धस्तयोरपि दाहादयो रोगा भवन्त्यतो बाहुग्रहणं कृतम् । किं सर्वत्रैव सक्थिबाह्वोः समानः सिराव्यध आहोस्वित् कुत्रचिद्भिन्न इति दर्शयन्नाह—विशेषत इत्यादि । कूर्परसन्धेरित्यत्र सन्धिशब्देन सन्धिसमीप उच्यते, सन्धौ शस्त्रप्रणिधानस्य निषिद्धत्वात् । यकृद्दाल्ये इति यकृद्दाल्युदरस्य सर्वावस्थायामित्यर्थः । एतामेव दक्षिणबाहुमध्याश्रितामित्यर्थः । कासश्वासयोरिति कफोत्थयोः कफावृतमारुतजन्ययोर्वा । गयी तु "कासश्वासयोरल्पयोर्मार्गविशुद्ध्यर्थं, नतूद्रिक्तयोः, तत्र सिराव्यधप्रतिषेधस्य प्रागेव प्रतिपादितत्वात्" इति व्याख्याति । गृध्रस्यामिव विश्वाच्यां यथा

१ 'विहतस्य' इति पा० । २ 'ऽपरेद्युः' इति पा० । ३ अत्र 'विसर्प'शब्दो हस्तलिखितपुस्तकेषु न पठ्यते ।

१ 'अत्र 'यकृद्दाल्ये कफोदरे च' इत्यनाकर. पाठः, कफोदरे सिराव्यधस्यानुपयोगात्' इति हाराणचन्द्रः । २ 'अहो गुरोरद्भुतसुश्रुतः कश्चिन्मूत्रवृद्ध्यां दकोदरे च दोषोदकावसेचनार्थं विधित्सिते व्यधन एव सिराव्यधं मन्यमानोऽत्र 'वृषणयोः पार्श्वे मूत्रवृद्ध्यां' तथा 'नाभेश्चतुरङ्गुले सेवन्या वामपार्श्वे दकोदरे' इत्यद्भुतपूर्वमसमञ्जसमाचक्षाणः स्वस्यैवाद्भुतत्वमदृष्टकर्मत्वमस्थानवादित्वेन पुनर्व्यध्यसिरत्वं चाख्यापयतीति' इति हाराणचन्द्रः । ३ '°संसृतां' इति, '°संश्रितां' इति च पा० ।

गृध्रस्यां जानुसन्धेरुपर्यधो वा चतुरङ्गुले, एवं विश्वाच्यां कूर्परसन्धेरुपर्यधो वा चतुरङ्गुल इत्यर्थः । श्रोणिमित्यादि । शूलिन्यामिति कालेनानुबन्धभूतरक्तावृतवातकृतशूलयुक्तायामित्यर्थः । परिवर्तिका "मर्दनात् पीडनाद्वायुः" ( नि. अ. १३ ) इत्यादिप्रोक्तलिङ्गा । वृषणयोरित्यादि । मूत्रवृद्ध्यामिति परिपक्वायामित्यर्थः । सेवन्या वामपार्श्व इति सेवनीप्रदेशाद्वामपार्श्वे इत्यर्थः । वामपार्श्वे इत्यादि । **वृद्धवाग्भटे** तु "विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनान्तरस्थां" (अ. सं. सू. अ. ३६) इति सामान्येनैव पार्श्वशब्दोपादानं कृतं, तस्मादत्रापि वामपार्श्वग्रहणं दक्षिणपार्श्वोपलक्षणं, तेन दक्षिणपार्श्वे यदा शूलविद्रधी भवतस्तदा दक्षिणपार्श्वे कक्षास्तनान्तरस्थां सिरां विध्येदित्यर्थः । अस्याग्रे 'एतामेव कफोदरे' इति केचित् पठन्ति, स पाठो न संगच्छते, यतो 'दक्षिणबाहौ यकृद्दाल्ये कफोदरे च' इति प्रागेव कफोदरे सिराव्यधस्य प्रतिपादितत्वात् । बाहुशोषेत्यादि । शोणितावृतवातजनितयोर्बाहुशोषावबाहुकयोरप्यंसयोः सिराव्यधः, नतु केवलवातकृतयोरित्येके वदन्ति, परमतं चाप्रतिषिद्धमनुमतमेवेति **जेज्जटाचार्यः** । **गयी** तु "बाहुमध्ये बाहुशोषावबाहुकयोरप्येके वदन्त्यंसयोरन्तरे" इति पठित्वा व्याख्याति—बाहुशोषाऽवबाहुकयोर्बाहुमध्ये कूर्परांसयोर्मध्ये इत्यर्थः; मतान्तरमाह—एके वदन्त्यंसयोरन्तर इति । ननु चान्यत्रावबाहुकादिति सिराव्यधप्रतिषेधात् कथमत्र सिराव्यधो विहितः ? नैवम्, अन्यत्रावबाहुकादित्यनेन वातव्याधिचिकित्सितावेक्षणस्य प्रतिषेधो, न तु सिराव्यधस्येति तत्रैव वातव्याधिचिकित्सिते वर्णयिष्यामः । बाहुशोषे च केवलानिलजेऽप्यवस्थावशात् सिराव्यधः; तथा ह्युष्णाम्बुलवणादेर्वातहरस्योपयोगात् कुपितेन शोणितेनावृतो वातो यदा वेदनाकारी तदा सिराव्यध इति । त्रिकेत्यादि । अंसयोरन्तर इत्यत्रापि संबध्यते । तेनांसयोरन्तरे यस्त्रिकसन्धिस्तत्समीपगतां, न पुनस्त्रिकसन्धिमध्यगतां, त्रिकसन्धेर्मर्मत्वात् । अध इत्यादि । स्कन्धसन्धेरधोगतां वामदक्षिणपार्श्वयोरेकतरपार्श्वसंश्रितां सिरां विध्येदिति समुदायार्थः । हन्वित्यादि । हनुसन्धिमध्यगतां हनुसमीपसन्धिमध्यगतामित्यर्थः । शङ्खेत्यादि । केचिदत्र 'उन्मादेऽपस्मारे च' इति पठन्ति, तत्रापस्मारस्य पाठो न संगच्छते, तथाच **वाग्भटः**—"उरोऽपाङ्गललाटस्थामुन्मादेऽपस्मृतौ पुनः । हनुसन्धौ समुद्भूतां सिरां भ्रूमध्यगामिनीम्"—(वा. सू. अ. २७) इति । जिह्वेत्यादि । जिह्वारोगेषु कण्टकादिषु, दन्तव्याधिषु कृमिदन्तादिषु । तालु-नीत्यादि । तालव्येष्विति तालुभवेषु विकारेषु । कर्णयोरित्यादि अत्रोपरिग्रहणमधोनिवृत्त्यर्थं, विधुरमर्माश्रितत्वादधोभागस्य । कर्णशूल इति रक्तावृतानिलजे इत्यर्थः । कर्णरोगद्वारेणैव कर्णशूले प्राप्ते तदुपादानं विशेषार्थम् । तद्रोगेषु कर्णरोगेषु । गन्धेत्यादि । नासारोगद्वारेणैव गन्धाग्रहणे प्राप्ते विशेषार्थमुपादानम् । तिमिरेत्यादि । पाकोऽक्षिपाकः । उपनासिके नासासमीपस्थे सिरे । अपाङ्ग्या भ्रूपुच्छान्तस्था । शिरोरोगाधिमन्थप्रभृतिषु रोगेष्विति प्रभृतिग्रहणात् क्षुद्ररोगे पठितारुंषिकादेरपि ग्रहणम् । सर्वेषु पूर्वोक्तेषु रक्तानुबन्धजेषु रक्तजेषु वा सिराव्यधो नान्यादृशेषु ॥ १७ ॥

**दुष्टव्यधा विंशतिः—दुर्विद्धाऽतिविद्धा कुञ्चिता पिच्चिता कुट्टिताऽप्रस्रुताऽत्युदीर्णाऽन्ते विद्धा परिशुष्का कूणिता वेपिताऽनुत्थितविद्धा शस्त्रहता तिर्यग्विद्धाविद्धाऽव्यध्या विद्रुता धेनुका पुनः पुनर्विद्धा सिरास्नाय्वस्थिसन्धिमर्मसु चेति ॥ १८ ॥**

दुष्टो व्यधो यासां ता दुष्टव्यधाः । कतिसंख्या इत्याह—विंशतिः । कथं विंशतिरित्याह—दुर्विद्धेत्यादि ॥ १८ ॥

**तत्र या सूक्ष्मशस्त्रविद्धाऽव्यक्तमसृक् स्रवति रुजाशोफवती च सा दुर्विद्धा, प्रमाणातिरिक्तविद्धायामन्तः प्रविशति शोणितं शोणितातिप्रवृत्तिर्वा साऽतिविद्धा, कुञ्चितायामप्येवं, कुण्ठशस्त्रप्रमथिता पृथुलीभावमापन्ना पिच्चिता, अनासादिता पुनः पुनरन्तयोश्च बहुशः शस्त्राभिहता कुट्टिता, शीतभयमूर्च्छाभिरप्रवृत्तशोणिता अप्रस्रुता, तीक्ष्णमहामुखशस्त्रविद्धाऽत्युदीर्णा, अल्परक्तस्राविण्यन्तेविद्धा, क्षीणशोणितस्यानिलपूर्णा परिशुष्का, चतुर्भागासादिता किंचित्प्रवृत्तशोणिता कूणिता, दुःस्थानबन्धनाद्वेपमानायाः शोणितसंमोहो भवति सा वेपिता, अनुत्थितविद्धायामप्येवं, छिन्नाऽतिप्रवृत्तशोणिता क्रियासङ्गकरी शस्त्रहता, तिर्यक्प्रणिहितशस्त्रा किंचिच्छेषा तिर्यग्विद्धा, बहुशः क्षता हीनशस्त्रप्रणिधानेनाविद्धा, अशस्त्रकृत्या अव्यध्या, अनवस्थितविद्धा विद्रुता, प्रदेशस्य बहुशोऽवघट्टनादारोहद्व्यधा मुहुर्मुहुः शोणितस्रावा धेनुका, सूक्ष्मशस्त्रव्यधनाद्बहुशो भिन्ना पुनः पुनर्विद्धा, स्नाय्वस्थिसिरासन्धिमर्मसु विद्धा रुजां शोफं वैकल्यं मरणं चापादयति ॥ १९ ॥**

इदानीं दुष्टव्यधानां विवरणमाह—तत्रेत्यादि । अव्यक्तमिति अल्पतया अस्पष्टम् । अन्तः प्रविशतीति शरीराभ्यन्तरं प्रविशतीत्यर्थः । कुञ्चितायामिति कुटिलीभूतायामित्यर्थः । पृथुलीभावमापन्नेति कुण्ठशस्त्राभिपातेन चिप्पटतया प्रसरं प्राप्ता । अनासादिता अप्राप्ता । चतुर्भागासादितेति चतुर्भागेन प्राप्ता । वेपमानाया इति कम्पमानायाः । शोणितसंमोहः शोणिताप्रवृत्तिः । छिन्नेति द्विधाभूता । क्रियासङ्गकरीति गमनादिक्रियाविनाशकरी । प्रदेशस्येति सिराव्यधनप्रदेशस्य, बहुशो घट्टनादिति बहून् वारान् ताडनात् । आरोहद्व्यधा उपर्युपर्यारोपितशस्त्रपदा, अत एव तैः शस्त्रपदैर्धेनुस्तनैरिव स्रवणाद् धेनुका । बहुशो

१ '°ऽपविद्धा' इति पा० । २ 'न व्यक्तमसृक्' इति पा० । ३ 'अतिप्रवृत्तशोणिता' इति पा० । ४ 'विच्छिन्ना' इति पा० ।

भिन्नेति 'एकस्थाने एव' इति शेषः । आसु व्यापत्सु प्रागेव व्यापत्कारणप्रतिषेधः, जातासु तत्कारणविपरीतगुणाचरणं, तत्कारणजेषु विकारेषु यथास्वं शमनेन प्रशमनमिति ॥ १९ ॥

भवन्ति चात्र—

**सिरासु शिक्षितो नास्ति चला ह्येताः स्वभावतः ॥**
**मत्स्यवत् परिवर्तन्ते तस्माद्यत्नेन ताडयेत् ॥ २० ॥**

इदानीं सिराव्यधने यत्नं दर्शयन्नाह—सिरास्वित्यादि । शिक्षितोऽभ्यासेन निपुणः सिरासु नास्ति, मत्स्यवच्चलनात्; तस्मात्तद्व्यधे यत्नो विधेय इत्यर्थः ॥ २० ॥

**अज्ञानता गृहीते तु शस्त्रे कायनिपातिते ॥**
**भवन्ति व्यापदश्चैता बहवश्चाप्युपद्रवाः ॥ २१ ॥**

इदानीं शस्त्रकर्मानिपुणवैद्यात्व्यापत्संभवं दर्शयन्नाह—अज्ञानता इत्यादि ॥ २१ ॥

**स्नेहादिभिः क्रियायोगैर्न तथा लेपनैरपि ॥**
**यान्त्याशु व्याधयः शान्तिं यथा सम्यक् सिराव्यधात् ॥ २२ ॥**

इदानीं स्नेहादिकर्मणः सिराव्यधस्य गुणोत्कर्षं प्रतिपादयन्नाह—स्नेहादिभिरित्यादि ॥ २२ ॥

**सिराव्यधश्चिकित्सार्धं शल्यतन्त्रे प्रकीर्तितः ॥**
**यथा प्रणिहितः सम्यग्बस्तिः कायचिकित्सिते ॥२३॥**

अधुना सिराव्यधस्य चिकित्सार्धत्वं दर्शयन्नाह—सिरेत्यादि । चिकित्सार्धमिति चिकित्सामध्ये प्रधानमित्यर्थः; अपरेऽर्धशब्दं संख्यावाचकमाहुः । ("मांसमेदोऽस्थिमज्जानः शोणितस्रावसेचनात् । धमन्यश्च विशुध्यन्ति दुष्टरक्तास्त्वचश्च याः ॥ रसस्वेदादिनिष्यन्दाद्विशुध्यन्ति न पुष्कलम्"—इति ) ॥ २३ ॥

**तत्र स्निग्धस्विन्नवान्तविरिक्तास्थापितानुवासितसिराविद्धैः परिहर्तव्यानि—क्रोधायासमैथुनदिवास्वप्नवाग्व्यायामयानाध्ययनस्थानासनचङ्क्रमणशीतवातातपविरुद्धासात्म्याजीर्णान्याबललाभात्, मासमेके मन्यन्ते । एतेषां विस्तरमुपरिष्टाद्वक्ष्यामः ॥ २४ ॥**

इदानीं स्निग्धादिभिः पुरुषैः क्रोधादीनि सामान्येन परिहर्तव्यानीति दर्शयन्नाह—तत्रेत्यादि । स्थानम् ऊर्ध्वीभवनम्, आसनम् उपवेशनम् । एतेषां क्रोधायासादीनां पञ्चदशानाम् । उपरिष्टात् आतुरोपद्रवचिकित्सिते ॥ २४ ॥

**सिराविषाणतुम्बैस्तु जलौकाभिः पदैस्तथा ॥**
**अवगाढं यथापूर्वं निर्हरेद्दुष्टशोणितम् ॥ २५ ॥**

इदानीं सिराविषाणादीनां रक्तावसेचनोपायानां यथापूर्वं गुरुतां दर्शयन्नाह—सिराविषाणेत्यादि । पदैः प्रच्छनैः । अवगाढम् अभ्यन्तराश्रयम् । यथापूर्वं पूर्वानतिक्रमेण; एतेनोत्तानं पदैः, अवगाढं जलौकोभिः, अवगाढतरं तुम्बैः, अवगाढतमं विषाणेन; सार्वाङ्गिकमवगाढतमं च सिराभिरिति ॥ २५ ॥

**अवगाढे जलौका स्यात् प्रच्छनं पिण्डिते हितम् ॥**
**सिराऽङ्गव्यापके रक्ते शृङ्गालाबू त्वचि स्थिते ॥२६॥**

**इति सुश्रुतसंहितायां शारीरस्थाने सिराव्यधविधिशारीरं नामाष्टमोऽध्यायः ॥ ८ ॥**

तत्र सिराविषाणतुम्बजलौकःप्रच्छनानां विषयं कश्चिदाह—अवगाढे इत्यादि ॥ २६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थानेऽष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

**अथातो धमनीव्याकरणं शारीरं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

सिराव्यधविधिशारीरानन्तरं सिराधमनीस्रोतसां सदृशत्वाद्धमनीव्याकरणारम्भो युज्यत इत्याह—अथेत्यादि । ध्मानादनिलपूरणाद्धमन्यः, तासां व्याकरणं विवरणं यस्मिन् शारीर इति विग्रहः ॥ १ ॥ २ ॥

**चतुर्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः । तत्र केचिदाहुः—सिराधमनीस्रोतसामविभागः, सिराविकारा एव हि धमन्यः स्रोतांसि चेति । तत्तु न सम्यक्, अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः; कस्मात्? व्यञ्जनान्यत्वात्, मूलसन्नियमात्, कर्मवैशेष्यात्, आगमाच्च; केवलं तु परस्परसन्निकर्षात् सदृशागमकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग इव कर्मसु भवति ॥ ३ ॥**

तास्वतीतावेक्षणं निर्दिशन्नाह—चतुर्विंशतिरित्यादि । अभिहिता उक्ताः, 'शोणितवर्णनीये' (सू. अ. १४) इति शेषः तत्र धमनीसिरास्रोतःस्वेकीयमतं स्वमतेन हेतुमता निराकर्तुमाह—तत्रेत्यादि । अविभागोऽपृथक्त्वं, सरणात् सिराः, ता एव ध्मानाद्धमन्यः, स्रवणात् स्रोतांसीति । अपृथक्त्वे स्वयमेव हेतुमाह—सिराविकारा इत्यादि । सिराविकारा इति सिराणामेवाकारान्तरेण परिणामाः, पिष्टविकारक्षीरविकारवत् । पुनरपि तैरुक्तं—"आकाशीयावकाशानां देहे नामानि देहिनाम् । सिराः स्रोतांसि मार्गाः खं धमन्यो नाड्य आशयाः"—

---

१ अयं पाठः क्वचित्पुस्तके नोपलभ्यते । २ "°दिवास्वप्नव्यायाम°" इति पा० ।

१ 'प्रच्छानैरिति उपरिष्टाद्बद्ध्वा अधस्तादूर्ध्वप्रसृतेन बहुशोऽव्यचारितेन शस्त्रेण त्वचि कृतैः सरलविरलैश्छेदैरिति यावत्' इति हाराणचन्द्रः । २ 'ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात् सिराः' (च. सू. अ. ३० ) ।

इत्यादि। परमतोच्छेदमाह—तत्तु न सम्यगित्यादि। व्यञ्जनान्यत्वात् लक्षणान्यत्वात्; तत्र सिराणां वातादिवहानामरुणनीलशुक्ललोहितवर्णत्वं लक्षणं, शब्दादिवहधमनीनां तु वर्णानुक्तेः स्वधातुसमवर्णत्वम्, एवं स्रोतसामपि। तदुक्तं **चरके**—"स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च। स्रोतांसि दीर्घाण्याकृत्या" (च. वि. अ. ५) इत्यादिकम्। मूलसन्नियमो द्वितीयो भेदो यथा—"तासां मूलसिराश्चत्वारिंशत्" इत्यारभ्य यावत् "एवमेतानि सप्तसिराशतानि" (शा. अ. ७); धमनीनां तु "चतुर्विंशतिर्धमन्यः"; स्रोतसां पुनर्द्वाविंशतिः स्रोतांसि। कर्मवैशेष्यं विशिष्टकर्मकरत्वं, तच्च तृतीयभेदकारणं; तद्यथा—"कर्मणामप्रतीघातं" (शा. अ. ७) इत्यादिनोक्तं सिराणां कर्मवैशेष्यं, शब्दरूपरसगन्धवहत्वादिकं धमनीनां, प्राणान्नवारिरसशोणितमांसमेदोवाहित्वं स्रोतसाम्। आगमोऽत्रायुर्वेदः, स चतुर्थो भेदहेतुः; तद्यथा—"सिरा धमन्यो योगवहानि स्रोतांसि" (शा. अ. ५) इति, तथा "मर्मसिरास्नायुधमनीः परिहरन्" (सू. अ. ५) इत्यादिषु सिरादीनां यदि विभक्तत्वं नाभविष्यत्[1]तदा पृथग्विवरणं नाकरिष्यदिति। इदानीमेतेषां सिराधमनीस्रोतसां परस्परभिन्नानामपि कर्मस्वविभाग इव भवतीति दर्शयन्नाह—केवलमित्यादि। सन्निकर्षो नैकट्यम्। अतिसन्निकर्षादिहेतुचतुष्टयेन कर्मस्वपृथक्त्वमिव भवति। कथं? यथाऽतिसन्निकर्षयुक्तीकृतानां तृणानां प्रत्येकं भिन्नज्वलनक्रियाणामभिन्नमिव ज्वलनं प्रतीयते। सदृशागमत्वादिति आप्तानां वचनमागमः, तस्य सदृशत्वात्। तथा हि—"आकाशीयावकाशानां देहे नामानि देहिनाम्। सिराः स्रोतांसि मार्गाः खं धमन्य" इत्याप्तोपदिष्टेन सिरादिसादृश्येन न निर्धार्य ज्ञायते सिरादिषु कस्येदं तोयादिवहनं कर्म। सदृशकर्मत्वाच्च यथा—सह गायतां गायकानां भिन्नगीतक्रियाणामप्यभिन्नगीतक्रिया[2]त्वप्रतीतिः। सौक्ष्म्याद्यथा—घटस्थितमृत्परमाणूनां प्रत्येकमुदकाहरणं कुर्वतामेकक्रियाकारित्वप्रतीतिः॥ ३॥

**तासां तु खलु नाभिप्रभवाणां धमनीनामूर्ध्वगा दश, दश चाधोगामिन्यः, चतस्रस्तिर्यग्गाः॥ ४॥**

तासामित्यादि॥ ४॥

**ऊर्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते, तास्त्रिंशत्। तासां तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, शब्दरूपरसगन्धानष्टाभिर्गृह्णीते, द्वाभ्यां भाषते, द्वाभ्यां घोषं करोति, द्वाभ्यां स्वपिति, द्वाभ्यां प्रतिबुध्यते, द्वे चाश्रुवाहिन्यौ, द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते, ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः, तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः। एताभिरूर्ध्वं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवाबाहवो धार्यन्ते याप्यन्ते च॥ ५॥**

**भवति चात्र—**

**ऊर्ध्वगमास्तु कुर्वन्ति कर्माण्येतानि सर्वशः॥**

प्रश्वासोऽन्तःप्रविशद्वायुः, उच्छ्वास ऊर्ध्वमुत्तिष्ठद्वायुः, जृम्भितक्षुद्धसितकथितानि घोषभाषयोर्विशेषाः, रुदितमश्रुवाहिन्योः कर्म, आदिशब्दाद्रूपादिवाहिनीसंबन्धिनां प्रेक्षितादिकर्मविशेषाणामवरोधः। तास्त्वित्यादि। शब्दादींश्चतुरः प्रत्येकं द्वाभ्यां द्वाभ्यामित्यष्टाभी रजःप्रवर्तितात्मप्रयत्नप्रबोधमनोऽनुगताभिर्धमनीभिर्गृह्णीते[1]। मनसश्चाणुत्वादेकत्वाच्च तासां युगपत्प्रवृत्तिर्नास्तीति तासां या धमनी मनसाऽनुयुज्यते तयैव रूपादिष्वन्यतममात्मा गृह्णीते, न पुनर्युगपदेव रूपादिकं सर्वं सैर्वाभिरिति। स्पर्शग्रहणं पुनरत्रैवाध्याये तिर्यग्गाणां कर्म वक्ष्यति। भाषत इति ताल्वादिस्थानव्यापारनिष्पादिताकारादिवर्णव्यक्तियुक्तं शब्दं करोति, घोषश्च तद्विपरीतोऽव्यक्तः शब्दः। द्वाभ्यां स्वपिति तमोविषयाभ्यां, सत्त्वविषयाभ्यां तु बुध्यते। एताभिरूर्ध्वं नाभेरुदरादयो धार्यन्ते, अन्नादिभिः सहैताभिरुदरादीनां बन्धनेन दृढीकृतत्वात्; वातादिवहनेन चैताभिरेव याप्यन्ते॥ ५॥—

**अधोगमास्तु वक्ष्यामि कर्म चासां यथायथम्[2]॥६॥**

**अधोगमास्तु वातमूत्रपुरीषशुक्रार्तवादीन्यधो वहन्ति। तास्तु पित्ताशयमभिप्रपन्नास्तत्रस्थमेवान्नपानरसं विपक्वमौष्ण्याद्विवेचयन्त्योऽभिवहन्त्यः शरीरं तर्पयन्ति, अर्पयन्ति चोर्ध्वगानां[3] तिर्यग्गाणां च, रसस्थानं चाभिपूरयन्ति, मूत्रपुरीषस्वेदांश्च विवेचयन्ति; आमपक्वाशयान्तरे च त्रिधा[4] जायन्ते, तास्त्रिंशत्; तासां तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, द्वे अन्नवाहिन्यावन्त्राश्रिते, तोयवहे द्वे, मूत्रबस्तिमभिप्रपन्ने मूत्रवहे द्वे, शुक्रवहे द्वे शुक्रप्रादुर्भावाय, द्वे विसर्गाय, ते एव रक्त[5]मभिवहतो विसृजतश्च नारीणामार्तवसंज्ञं, द्वे वर्चोनिरसन्यौ स्थूलान्त्रप्रतिबद्धे, अष्टावन्यास्तिर्यग्गामिनीनां धमनीनां स्वेदमर्पयन्ति; तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः। एताभिरधोनाभेः पक्वाशयकटीमूत्रपुरीषगुदबस्तिमेढ्रसक्थीनि धार्यन्ते याप्यन्ते च॥ ७॥**

**भवति चात्र—**

**अधोगमास्तु कुर्वन्ति कर्माण्येतानि सर्वशः॥**

---

१ 'नाभविष्यत्' इति पा०। २ 'अभिन्नगीततया प्रतीतिः' इति पा०।

१ 'सर्वाभिर्धमनीभिर्गृह्णीते' इति पा०। २ 'यथातथम्' इति पा०। ३ 'चोर्ध्वगतानां तिर्यग्गतानां' इति पा०। ४ 'त्रिविधा' इति पा०। ५ 'ता एव रक्तमभिवहन्ति' इति पा०।

वाताद्यभिवहनमासां सामान्यं कर्म । आर्तवादीनीत्यादिशब्दादन्नतोयादीनां स्वीकारः । स्थानान्तरगतानां तासामेव कर्माह—तास्वित्यादि । अभिप्रपन्ना अभिमुखं प्राप्ताः । विपक्कमौष्ण्यादिति 'अग्नेः' इति शेषः । विवेचयन्त्य इति यथा यथा विपक्कमशनरसं तथा तथा पृथक् कुर्वन्त्य इत्यर्थः । अभिवहन्त्य इति अभितः सर्वतो वहन्त्यः । तर्पयन्ति प्रीणयन्ति । कथं पुनः सकलमेव शरीरं तास्तर्पयन्तीत्याशङ्क्याह—अर्पयन्तीत्यादि । कथमर्पयन्तीत्यत्र युक्तिमाह—रसस्थानं चाभिपूरयन्तीति । अयमभिप्रायः—आमपक्काशये अधोनाभिरेवैवमन्नरसो वर्तुलीकृतो यथा रसस्थानस्य पूरणं ततश्चोर्ध्वगाभिस्तिर्यग्गाभिश्च तत्र तत्रोपनीयत इति सकलशरीरतर्पणमधोगतानामेव कर्म; रसस्थानं च हृदयं, तत्पूरणं च तन्निष्पादितरसपरम्परया न पुनः साक्षादेव, अधोगमत्वेनासामूर्ध्वगमनाभावाद्धृदयगमनमेव नास्तीति । तत्र मूत्रपुरीषस्वेदांश्च विवेचयन्ति पृथक् कुर्वन्ति, पक्कान्नरसादिति संबन्धः । पित्ताशये कर्म तासां निर्दिश्यामपक्काशयान्तरे निर्दिशन्नाह—आमपक्काशयान्तर इत्यादि । पचनं पक्कं भावे क्तः, तस्याशयः पक्काशयः, एतेनामस्य पच्यमानस्य यदन्तरं तत्रेत्यर्थः । द्वे अन्नवाहिन्यावन्त्राश्रिते नहि पित्ताशये रसमूत्रपुरीषभावेन विविच्यमानस्याहारस्यान्नभावोऽस्ति[1], नापि तोयस्य तोयभावना; तेन तोयमत्र भविष्यतो मूत्रस्य कारणभूतं पक्काहारविवेकजं द्रवैमयमुदकमिवोदकं[2], तदपि द्वे एव वहतः; तदेवोदकं बस्तिविवरप्राप्तं मूत्रमित्युच्यते, तद्वहे द्वे मूत्रबस्तिसंबद्धे । एवमन्नमत्र भविष्यतः किट्टस्य कारणभूतं पक्काहारविवेकजं घनमन्नमिवान्नं, तदपि द्वे एव वहतः; तदेवोण्डु(न्दु)कप्राप्तं पुरीषमित्युच्यते ॥ ६ ॥ ७ ॥—

**तिर्यग्गाः संप्रवक्ष्यामि कर्म चासां यथायथम् ॥८॥**

**तिर्यग्गाणां तु चतसृणां धमनीनामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते, तास्त्वसङ्ख्येयाः, ताभिरिदं शरीरं गवाक्षितं विबद्धमाततं च, तासां मुखानि रोमकूपप्रतिबद्धानि, यैः स्वेदमभिवहन्ति रसं चाभितर्पयन्त्यन्तर्बहिश्च[3], तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्याण्यन्तःशरीरमभिप्रतिपद्यन्ते त्वचि विपक्कानि, तैरेव च स्पर्शं सुखमसुखं वा गृह्णीते, तास्त्वेताश्चतस्रो धमन्यः सर्वाङ्गगताः सविभागा व्याख्याताः ॥ ८ ॥ ९ ॥**

विभज्यन्ते स्वयमेव विभक्ता भवन्ति । गवाक्षितं जालकैरिव व्याप्तम् । रसं चेत्यादि । रसं रसधातुम् । अन्तः अभ्यन्तरे । यैर्मुखैः सम्यक्परिणताहाररसवाहिभिः[4] । संतर्पयन्ति सर्वतस्तर्पयन्ति । बहिश्च संतर्पयन्ति 'त्वचम्' इति शेषः । तैरेव चाभ्यङ्गादीनां वीर्याणि त्वचि भ्राजकेनाग्निना विपक्कानि शरीरान्तः प्रविशन्ति । तैरेव मनोनुगतैः सुखासुखरूपं स्पर्शं कर्मात्मा गृह्णीते । ताः सर्वाङ्गगताः स्पर्शग्रहणायाधिकृतत्वात्, तद्गतं मनोऽपि सर्वाङ्गस्रोतोगतमेव । तेनोर्ध्वगानां चानियत[5] एव देशो भवति ॥ ९ ॥

**यथा स्वभावतः खानि मृणालेषु विसेषु च ॥**
**धमनीनां तथा खानि रसो यैरुपचीयते ॥ १० ॥**

यथेत्यादि । खानि स्रोतांसि । रसो यैरुपचीयत इति रसः प्रधानभूतः, तेनान्यदभ्यङ्गपरिषेकादिवीर्यम् ॥ १० ॥

**पञ्चाभिभूतास्त्वथ पञ्चकृत्वः**
**पञ्चेन्द्रियं पञ्चसु भावयन्ति ॥**
**पञ्चेन्द्रियं पञ्चसु भावयित्वा**
**पञ्चत्वमायान्ति विनाशकाले ॥ ११ ॥**

इदानीं शब्दादिग्राहिणीनां सर्गस्थितिप्रलयेषु प्रकृतिभूतानामप्रकृतिभूतानां च क्रियोपदेशमाह—पञ्चाभिभूता इत्यादि । अस्यार्थः—भावयन्ति योजयन्ति, काः ? पञ्चाभिभूताः पञ्चभ्यो भूतेभ्योऽभि समन्ताद्भूताः, शब्दस्पर्शरूपरसगन्धैर्वा पञ्चभिरभिभूता व्याप्ताः, आकाशपवनदहनतोयभूमिभिर्वा पञ्चभिरभिभूता व्याप्ता धमन्यः; कं ? पञ्चेन्द्रियं कर्मपुरुषं; केषु ? पञ्चसु श्रोत्रादिष्विन्द्रियाधिष्ठानेषु; कथं ? पञ्चकृत्वः पञ्चवारान्, भावयन्ति योजयन्ति; अथ आयान्ति आगच्छन्ति; काः ? धमन्यः; किं पञ्चत्वं; किं कृत्वा ? भावयित्वा संयोज्य; किं तत् ? पञ्चेन्द्रियम् इन्द्रियपञ्चकं सूक्ष्मरूपं; केषु ? पञ्चस्वाकाशादिषु महाभूतेषु; एतेनैतदुक्तं भवति—आकाशादिपञ्चभूतसमुत्पन्ना धमन्यः कर्मपुरुषमिन्द्रियाधिष्ठानेषु पञ्चवारान् भावयन्ति, ततश्चेन्द्रियपञ्चकमाकाशादिषु भूतेषु संयोज्य विनाशकाले धमन्यो विनाशं यान्ति । अन्ये तु 'पञ्चादिभूतान्यथ पञ्चकृत्वा' इति पठन्ति, व्याख्यानयन्ति च—आदिभूतान्याकाशादीनि पञ्चमहाभूतानि, पञ्चेन्द्रियं कर्मपुरुषं, पञ्चसु चक्षुरादिष्विन्द्रियाधिष्ठानेषु योजयन्ति; ततश्च पञ्चेन्द्रियं कर्मपुरुषं पञ्चसु चक्षुरादिष्विन्द्रियाधिष्ठानेषु, भावयित्वा संयोज्य, तानि पञ्च आदिभूतानि, विनाशकाले पञ्चत्वमायान्ति । अपरे तु 'पञ्चाभिभूतास्त्वथ पञ्चधा वा' इति पठन्ति, व्याख्यानयन्ति च—भावयन्ति योजयन्ति, काः ? पञ्चाभिभूता धमन्यः; आयान्ति किं ? पञ्चत्वं विनाशं; क ? विनाशकाले; किं कृत्वा ? भावयित्वा संयोज्य; किं तत् ? पञ्चेन्द्रियं बुद्धीन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं च; केषु ? पञ्चसु शब्दादिषु वचनादिषु चात्मीयेष्वर्थेषु[6]; कथं ? पञ्चधा पञ्चभिः प्रकारैः, तदनन्ता एव धमन्यः; किं ? पञ्चत्वं विनाशं; क ? विनाशकाले; किं कृत्वा ? भावयित्वा संयोज्य; कं पञ्चेन्द्रियं बुद्धीन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं च; क ?

---

१ 'रसभावोऽस्ति' इति पा० । २ 'द्रवमच्छमुदकमिवोदकं' इति पा० । ३ 'चापि संतर्पयन्ति' इति पा० । ४ 'सम्यक्परिणताहाररसवाहिभिस्त्रिभिः' इति पा० ।

१ 'च नियतः' इति पा० । २ 'स्वकीयेष्वर्थेषु' इति पा० ।

शब्दादिषु स्वकीयेष्वर्थेषु । अथवा पञ्चानामाकाशपवनदहनतोयभूमीनां पृथगाभिमुख्येन भूताः सत्तारूपेण व्यवस्थिता धमन्यः, पञ्चेन्द्रियं कर्मपुरुषं, यथास्वं पञ्चसु चक्षुरादिष्विन्द्रियाधिष्ठानेषु, भावयन्ति योजयन्ति । गयी त्वन्यथाऽऽपातनिकां विधाय व्याख्याति; यथा—अत्र रूपादिग्राहिणीनां धमनीनां पञ्चत्वात् पञ्चभिर्धमनीभिः पञ्चानामपि रूपादीनां युगपद्ग्रहणेन भवितव्यमित्याशङ्क्याह—पञ्चाभिभूता इत्यादि । अस्यायमर्थः—पञ्चसु रूपादिषु, पञ्चेन्द्रियं चक्षुरादिकं, पञ्च धमन्यो भावयन्ति वेदयन्ति; स्वयं तावत् पञ्चेन्द्रियाणि रूपादिकं विदन्ति, तानि च पञ्च धमन्यस्तेषु वेदयन्ति । कथं? पञ्चकृत्वः पञ्चवारान् । न चैकवारमेव पञ्चापि धमन्यः पञ्चापीन्द्रियाणि पञ्चस्वपि रूपादिषु वेदयन्ति, तत् कुतः पुनरिति हेतुगर्भं विशेषणमाह—अभिभूता अभिमुखं प्राप्ताः । केन? 'मनसा' इति शेषः । कस्मात्? कर्तृमनःपुरःसरेन्द्रियार्थग्रहणात्; मन्ता हि शरीरे एक एव, मनोऽप्येकमेव, तेन मनसा यैव शब्दादिवहासु धमनीष्वभिप्रपन्ना सैव स्वधर्मं ग्राहयति मन्तारं नान्येति; यतो मनःपुरःसरैवेन्द्रियप्रवृत्तिः । इदानीं स्वस्थस्यैव रूपादिग्राहिणीत्वमासां न पुनरतिदोषाभिपन्नस्य मरणेऽपीत्याह—पञ्चत्वमित्यादि । विशिष्टनाशकाले पञ्चत्वं यान्ति; धमन्यः पाञ्चभौतिका विनाशकाले पृथक्पृथग्भूतभावेनावस्थानात् पञ्चतां गता उच्यन्ते । पञ्चेन्द्रियं पञ्चसु भावयित्वेति पुनरप्यनुवादस्तेषां नियतस्वविषयग्राहित्वदर्शनार्थः । ग्रन्थान्तरे "रसवहनं[1] कुर्वन्ति धमन्यः सततं तथा । शब्दादिग्रहणोच्छ्वासनिःश्वासवचनानि च ॥ भावयन्ति पृथक् पश्चात् प्रत्ययाः खलु पञ्चसु । तत्संख्याकरणं यान्ति नाशकाले तु पञ्चताम् ॥ शरीरं हि गते तस्मिन् शून्यागारमचेतनम् । पञ्चतत्त्वावशेषत्वात् पञ्चतां गतमुच्यते"—इति ॥ ११ ॥

अत ऊर्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः । तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्तववहानि, येष्वधिकारः; एकेषां बहूनि; एतेषां विशेषा बहवः । तत्र प्राणवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्य[2]श्च धमन्यः, तत्र विद्धस्याक्रोशनविनमनमोहनभ्रमणवेपनानि मरणं वा भवति; अन्नवहे द्वे, तयोर्मूलमामाशयोऽन्नवाहिन्यश्च धमन्यः, तत्र विद्धस्याध्मानं शूलोऽन्नद्वेषश्छर्दिः पिपासाऽऽ[3]न्ध्यं मरणं च; उदकवहे द्वे, तयोर्मूलं तालु क्लोम च, तत्र विद्धस्य पिपासा[4] सद्योमरणं च; रसवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः, तत्र विद्धस्य शोषः प्राणवहविद्धवच्च मरणं तल्लिङ्गानि च; रक्तवहे द्वे, तयोर्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यः[1], तत्र विद्धस्य श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणि[2]तागमनं रक्तनेत्रता च; मांसवहे द्वे, तयोर्मूलं स्नायुस्त्वचं र[3]क्तवहाश्च धमन्यः, तत्र विद्धस्य श्वयथुर्मांसशोषः सिराग्रन्थयो मरणं च; मेदोवहे द्वे, तयोर्मूलं कटी वृक्कौ च, तत्र विद्धस्य स्वेदागमनं स्निग्धाङ्गता तालुशोषः स्थूलशोफता पिपासा च; मूत्रवहे द्वे, तयोर्मूलं बस्तिर्मेढ्रं च, तत्र विद्धस्यानद्धबस्तिता मूत्रनिरोधः स्तब्धमेढ्रता च; पुरीषवहे द्वे, तयोर्मूलं पक्वाशयो गुदं च, तत्र विद्धस्यानाहो दुर्गन्धता ग्रथितान्त्रता च; शुक्रवहे द्वे, तयोर्मूलं स्तनौ वृषणौ च, तत्र विद्धस्य क्लीबता चिरात् प्रसेको[4] रक्तशुक्रता च[5]; आर्तववहे द्वे, तयोर्मूलं गर्भाशय आर्तववाहिन्यश्च धमन्यः, तत्र विद्धाया वन्ध्यात्वं मैथुनासहिष्णुत्वमार्तवनाशश्च; सेवनीच्छेदाद्रुजाप्रादुर्भावः; बस्तिगुदविद्धलक्षणं प्रागुक्तमिति । स्रोतोविद्धं तु प्रत्याख्यायोपचरेत्, उद्धृतशल्यं तु क्षतविधानेनोपचरेत् ॥ १२ ॥

अत ऊर्ध्वमित्यादि । मूलस्य स्थूलत्वेन तद्विद्धलक्षणस्यैव साध्यासाध्यपरिच्छेदकत्वात्तद्विद्धलक्षणव्याख्यानमेव प्रतिज्ञातम् । स्वरूपं तु "स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च । स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च" ( च. वि. अ. ५ ) इति तन्त्रान्तराज्ज्ञेयम् । तान्येव विवृण्वन्नाह—तानि त्वित्यादि । प्राणादीनामार्तवान्तानामेकादशानां प्रत्येकं वहने द्वे द्वे स्रोतसी । अस्थिमज्जस्वेदवाहिषु स्रोतःसु सत्स्वप्यनधिकारः; कथं? तत्रास्थिवहानां सकलानामेव मेदो मूलं, मज्जवहानां च तेषां सकलान्येवास्थीनि सकलशरीरगतानि, न च सकलशरीरगतविद्धलक्षणं साध्यादिज्ञाननिश्चायकम्, एवं स्वेदवहानामपि केवलं मेदो [6]मूलमिति पूर्वेणैव समानम्, अतः शल्यतन्त्रे तेषां[7] मूलविद्धलक्षणानधिकारः । अमुमेवार्थं चेतसि कृत्वाऽऽह—येष्वधिकार इति । 'शल्यतन्त्रे' इति शेषः, कायचिकित्सायां तु स्रोतोदुष्टिलक्षणं वाच्यं, तेन सकलाङ्गगतानामपि स्रोतसां कायचिकित्सायामधिकारः । शल्यतन्त्राधिकारिषु नियतदेशस्थितेषु विद्धेषु वेदनाविशेषस्य साध्यादिज्ञाननिश्चायकत्वमिति कायचिकित्साधिकारिणां स्रोतसां कृत्स्नशरीरगतत्वेन सूक्ष्माणामाश्रितस्य वेदनाविशेषस्यातिसूक्ष्मत्वान्न साध्यादिज्ञाननिश्चायकत्वमिति तेषामनधिकारः । परमतमाह—एकेषां बहूनीति ।—एकेषामाचार्याणां मते बहूनि स्रोतांसि, 'तान्यत्रानधिकृतानि' इति शेषः । एतेषां विशेषा बहव इति एतेषां पूर्वोक्तानां प्राणादि-

१ 'रसवहं न' इति पा० । २ 'प्राणवाहिन्यश्च' इति पा० । ३ 'मूर्छा' इति ता. । ४ 'पिपासाऽसाध्या श्यावाङ्गता' इति पा० ।

१ 'रक्तवाहिन्यश्च धमन्यः' इति ता. पुस्तके न पठ्यते । २ 'शोणितातिगमनं' इति पा० । ३ 'रक्तवाहिन्यश्च' इति पा० । ४ 'वाऽप्रसेकश्च' इति पा० । ५ 'प्रलेकवच(ह)ने' इति पा० । ६ 'स्वेदो मूलमिति' इति पा० । ७ 'नैषां मूलविद्धलक्षणाधिकारः' इति पा० ।

वहानां स्वतन्त्रे द्वाविंशतिसंख्योपेतानां स्रोतसां, विशेषा भेदाः । तत्र प्राणवहे इत्यादि । आक्रोशनमार्तस्वरं रोदनं, विनमनं विशेषेण नमनम् । लवणशब्देन रसोऽत्र, तात्स्थ्यात् । शुक्रवहस्रोतःसन्निहितसेवनीच्छेदनलक्षणमश्मरीचिकित्सिते बस्तिप्रसङ्गेनोक्तमत्रासूत्रितमपि । मूत्रपुरीषस्रोतोमूलबस्तिगुदविद्धलक्षणमतिदेशेन सुखप्रतिपत्तये निर्दिशन्नाह—बस्तीत्यादि । बस्तिविद्धलक्षणं 'तत्र विद्धस्थानद्धबस्तिता' इत्यादि; गुदविद्धलक्षणं च 'तत्र विद्धस्थानाह' इत्यादि । इदानीं चिकित्सासूत्रं निर्दिशन्नाह—स्रोतोविद्धमित्यादि । उपचरेदिति 'शल्योद्धरणप्रकारेण' इति शेषः । उद्धृतशल्यमिति अत्रापि प्रत्याख्यायेति योजनीयम् ॥ १२ ॥

भवति चात्र—

मूलात् खादन्तरं देहे प्रसृतं त्वभिवाहि यत् ॥
स्रोतस्तदिति विज्ञेयं सिराधमनिवर्जितम् ॥ १३ ॥

इति सुश्रुतसंहितायां शारीरस्थाने धमनीव्याकरणशारीरं नाम नवमोऽध्यायः ॥ ९ ॥

मूलादित्यादि ।—मूलात् खादिति हृदयादिच्छिद्रात्, प्रसृतम्[1] अभिवहनशीलं, यदन्तरम् अवकाशः, तत् स्रोतो विज्ञेयम् ॥ १३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः।

अथातो गर्भिणीव्याकरणं शारीरं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

धमनीव्याकरणे शुक्रार्तवस्रोतःसंकीर्तनाच्छुक्रार्तवमूलस्य गर्भस्य व्यक्तस्याश्रयभूता[2] गार्भिणी व्याकर्तुं युज्यत इत्याह—अथात इत्यादि ॥ १ ॥ २ ॥

गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेत्, मलिनविकृतहीनगात्राणि न स्पृशेत्, दुर्गन्धदुर्दर्शनानि परिहरेत्, उद्वेजनीयाश्च कथाः, शुष्कं पर्युषितं कुथितं क्लिन्नं चान्नं नोपभुञ्जीत, बहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोधभयशस्करांश्च[3] भावानुच्चैर्भाष्यादिकं च परिहरेद्यानि च गर्भं व्यापादयन्ति, न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि सेवेत, न चायासयेच्छरीरं, पूर्वोक्तानि च परिहरेत्, शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसंबाधं च विदध्यात्, हृद्यं द्रवमधुरप्रायं स्निग्धं दीपनीयसंस्कृतं च भोजनं भोजयेत्, सामान्यमेतदाप्रसवात् ॥ ३ ॥

चैत्यं देवताधिष्ठितो वृक्षः, अन्ये बौद्धालयमाहुः । श्मशानं मृतमर्त्यदाहस्थानम् । पूर्वोक्तानि ऋतुमत्यां निषिद्धानि दिवास्वप्नादीनि । अपाश्रयोपेतं प्रतिवाहकसहितम्, असंबाधमसङ्कटं, विदध्यात् कुर्यात् । हृष्टादिस्वरूपा नित्यं भवेत् । मलिनादि न स्पृशेदिति निषिद्धस्पर्शवर्जनं, दुर्गन्धदुर्दर्शनादिपरिहारेण निषिद्धगन्धरूपवर्जनम्, उद्वेजनीयाश्च कथा इत्यनेन निषिद्धश्रुतिवर्जनं, शुष्कपर्युषितेत्यादिना निषिद्धरसवर्जनं, बहिर्निष्क्रमणादिपरिहारेण कायक्रियानियमः, क्रोधादिपरिहारेण मनःक्रियानियमः, उच्चैर्भाष्यादिपरिहारेण वाग्विषयनियमः । यानि च गर्भं व्यापादयन्तीति गर्भावक्रान्तावुक्तानि ग्राम्यधर्मयानवाहनादीनि । विहारं नियम्याहारं नियमयन्नाह—हृद्यं द्रवमित्यादि । हृद्यमोजस्यत्वात्, द्रवं जीवनीयत्वात्, मधुरं सकलशरीरधातूनां सात्म्यत्वात्, उपयोजनीयम् । द्रवादीनामग्निमान्द्यहेतुत्वात्तत्प्रतीकारायाह—दीपनीयसंस्कृतमिति ॥ ३ ॥

विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत; विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेत्, चतुर्थे दध्ना, पञ्चमे पयसा, षष्ठे सर्पिषेत्येके; चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितं हृद्यमन्नं च भोजयेत्, पञ्चमे क्षीरसर्पिःसंसृष्टं[1], षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेद् यवागूं वा, सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धम्, एवमाप्यायते गर्भः; अष्टमे बदरोदकेन बलातिबलाशतपुष्पापललपयोदधिमस्तुतैललवणमदनफलमधुघृतमिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थं च वायोः, ततः पयोमधुरकषायसिद्धेन[2] तैलेनानुवासयेत्, अनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति, अत ऊर्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेदाप्रसवकालात्; एवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते ॥ ४ ॥

विशेषत इति अतिशयेनेत्यर्थः । परमतमाह—विशेषत इत्यादि । स्वमतमाह—चतुर्थे इत्यादि । पृथक्पर्ण्यादिः विदारिगन्धादिः ॥ ४ ॥

नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ते तिथ्यादौ । तत्रारिष्टं[3] ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु बिल्वन्यग्रोधतिन्दुकभल्लातकनिर्मितसर्वागारं[4] यथासङ्ख्यं तन्मय-

१ 'यत् अन्तरं छिद्रं, प्रसृतमभिवहनशीलं, तत्' इति पा० । २ 'प्राप्ताकृतेराश्रयभूता' इति पा० । ३ 'क्रोधभयसङ्करांश्च भावान्' इति पा० ।

१ 'क्षीरं सर्पिःसंसृष्टं' इति पा० । २ 'पयोमधुकककषायसिद्धेन' इति पा० । ३ 'तत्रारिष्टमगारं' इति पा० । ४ '–निर्मितसर्वाङ्गारं' इति पा० ।

**पर्यङ्कं समुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाऽष्टहस्तायतं चतुर्हस्तविस्तृतं रक्षामङ्गलसंपन्नं विधेयम् ॥ ५ ॥**

तत्र तस्मिन् प्रसवावसरे । अरिष्टं सूतिकागृहम्, एवंभूतं विधेयमिति संबन्धः ॥ ५ ॥

**जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने ॥**
**सशूले जघने नारी ज्ञेया सा तु प्रजायिनी ॥ ६ ॥**

**तत्रोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखाच्छ्लेष्मा च ॥ ७ ॥**

जात इत्यादि । सशूले जघने सशूलायां कट्याम् । प्रजायिनी प्रसवमाना । तत्रोपस्थितेत्यादि ॥ ६ ॥ ७ ॥

**प्रजनयिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां संभृतां यवागूमाकण्ठात् पाययेत्, ततः कृतोपधाने मृदुनि विस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्तितनखाः परिचरेयुरिति ॥ ८ ॥**

अशङ्कनीया यासां लज्जाभयादिकं न करोति गर्भिणी ॥ ८ ॥

**अथास्या विशिखान्तरमनुलोममनुसुखमभ्यज्यानुब्रूयाच्चैतामेका—सुभगे प्रवाहस्वेति, नचाप्राप्तावी प्रवाहस्व, ततो विमुक्ते गर्भनाडीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणबस्तिशिरःसु च प्रवाहेथाः शनैः शनैः, ततो गर्भनिर्गमे प्रगाढं, ततो गर्भे योनिमुखं प्रपन्ने गाढतरमाविशल्यभावात्; अकालप्रवाहणाद्बधिरं मूकं कुब्जं व्यस्तहनुमूर्ध्वाभिघातिनं कासश्वासशोषोपद्रुतं विकटं वा जनयति ॥ ९ ॥**

अथास्या इत्यादि । विशिखान्तरम् अपत्यमार्गम् । अनुलोमं लोमानुकूलम् । अनुसुखं यथासुखम् । एतां गर्भिणीम् । एका उत्कृष्टा, अन्ये 'त्वेका चतसृणां स्त्रीणां मध्ये' इति व्याख्यानयन्ति । प्रवाहस्वेति निर्कुन्थनं कुरुः, 'वाह' प्रयत्ने, इत्यस्य धातोरात्मनेपदिनः प्रयोगः । आवी प्रसववेदना । ततो विमुक्ते गर्भनाडीप्रबन्ध इति गर्भनाडीनां प्रकृष्टो बन्धस्तस्मिन् । स्वस्थानाद्गर्भस्य निःसरणाय गमनं गर्भनिर्गमस्तस्मिन् गर्भनिर्गमे । प्रगाढमित्यत्र प्रवाहेथा इति संबध्यते । आविशल्यभावादिति शल्यग्रहणमपरासहितगर्भप्राप्त्यर्थम् । अकालेत्यादि । व्यस्तहनुं विघटितमुखसन्धिम् । ऊर्ध्वाभिघातिनम् ऊर्ध्वजत्रुगतरोगिणम् । उपद्रुतम् उपद्रवैर्व्याप्तम् । विकटम् अयथास्थाननिवेशितावयवम् ॥ ९ ॥

**तत्र प्रतिलोममनुलोमयेत्, प्राञ्जलमाकर्षेत् ॥ १० ॥**

तत्रेत्यादि । प्रतिलोमता चानेकप्रकारा मूढगर्भनिदानोक्तया दिशा ज्ञातव्या । अनुलोमयेदिति मूढगर्भचिकित्सितोक्तप्रकारेणेत्यर्थः । अप्रतिलोमं तु प्राञ्जलमाकर्षेत् ॥ १० ॥

**गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्मोकेण पिण्डीतकेन वा, बध्नीयाद्धिरण्यपुष्पीमूलं हस्तपादयोः, धारयेत् सुवर्चलां विशल्यां वा ॥ ११ ॥**

गर्भसङ्ग इत्यादि । हिरण्यपुष्पी कलिकारिका, सुवर्चला सूर्यभक्ता, विशल्या पाटला ॥ ११ ॥

**अथ जातस्योल्बं मुखं च सैन्धवसर्पिषा विशोध्य, घृताक्तं मूर्ध्नि पिचुं दद्यात्; ततो नाभिनाडीमष्टाङ्गुलमायम्य सूत्रेण बद्ध्वा छेदयेत्, तत्सूत्रैकदेशं च कुमारस्य ग्रीवायां सम्यग् बध्नीयात् ॥ १२ ॥**

अथेत्यादि । उल्बं जरायुं, विशोध्य अपनीय; मुखं च विशोध्य निर्मलीकृत्य, तदपि मुखकण्ठगतजरायुकफापनयनेन । तदुक्तं—"जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते" ( शा. अ. २ ) इति । ब्रह्मदेवस्तु घृताक्तमिति पदं परित्यज्य पिचुं दद्यादित्यत्र 'बलातैलाक्तमिति शेषः' इति व्याख्याति । ततो नाभिनाडीमिति आयम्य आकृष्य, ग्रीवायां सम्यग्बध्नीयात् स्रावपरिहारार्थं; गयी तु 'गर्भनाडीमष्टाङ्गुलमायम्य नातिगाढं नातिशिथिलमग्रे सूत्रेणाबध्य वर्धयित्वा कुष्ठतैलेन सिक्त्वाऽपल्लमाश्वास्य मधुसर्पिर्मिश्रमङ्गुल्याऽनामिकया कनकचूर्णं लेहयेत्'—इति पठति ॥ १२ ॥

**अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्मणि कृते मधुसर्पिरनन्तचूर्णमङ्गुल्याऽनामिकया लेहयेत्; ततो बलातैलेनाभ्यज्य, क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादोषं यथाविभवं च ॥ १३ ॥**

अथ कुमारमित्यादि । आश्वास्य योनियन्त्रपीडनमूर्च्छितम् । अनन्तचूर्णं सुवर्णचूर्णं, तेन मिश्रं मध्वादि लेहयेत् । चूर्णप्रमाणं तु जातमात्रस्य गुञ्जामात्रम् । सर्वगन्धा एलादिकाः । यथाकालं कालानतिक्रमेण । कोष्णेन ईषदुष्णेन । यथादोषं दोषानतिक्रमेण । क्षीरिवृक्षकषायेण पित्तघ्नेन, सर्वगन्धोदकेन वा वातघ्नेन,

१ 'भवति, मूत्रमभीक्ष्णं प्रसिच्यते' इति पा० । २ 'सघृतां' इति पा० । ३ 'मृदुविस्तीर्णे' इति पा० । ४ 'कल्पितनखाः' इति पा० । ५ 'अनुमुखं' इति पा० । ६ 'व्यस्तहनुं मूर्धाभिघातिनं' इति पा० । ७ 'अनुमुखं यथामुखम्' इति पा० । ८ 'निकूहनं' इति पा० ।

१ 'जातस्योल्बमपनीय मुखं च' इति पा० । २ 'कुमारस्य' इति हस्तलिखितपुस्तके न पठ्यते । ३ 'अङ्गुल्याऽनामिकया' इति हस्तलिखितपुस्तके न पठ्यते ।

विभवानतिक्रमेण रूप्यहेमतप्तेन वारिणा, कपित्थपत्रकषायेण वा स्नापयेत् । अत्र केषुचित् पुस्तकेषु तु "मधुसर्पिरनन्ताब्राह्मीरसेन सुवर्णचूर्णमङ्गुल्याऽनामिकया लेहयेत्"–इत्ययं पाठो दृश्यते, परमसौ टीकाकारैर्न व्याख्यातः । **वृद्धवाग्भटेन** त्वन्यथा प्राशनमभिहितं; यथा–"ऐन्द्रीब्राह्मीशङ्खपुष्पीवचाकल्कं मधुघृतोपेतं हरेणुमात्रं कुशाभिमन्त्रितं सौवर्णेनाश्वत्थपत्रेण वा मेधायुर्बलजननं प्राशयेद् ब्राह्मीवचानन्ताशतावर्यन्यतमचूर्णं वा" ( अ. सं. उ. अ. १ )—इति ॥ १३ ॥

**धमनीनां हृदिस्थानां विवृतत्वादनन्तरम् ॥**
**चतूरात्रात्त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्तते ॥ १४ ॥**

**तस्मात् प्रथमेऽह्नि मधुसर्पिरनन्तमिश्रं मन्त्रपूतं त्रिकालं पाययेत्, द्वितीये लक्ष्मणासिद्धं सर्पिः, तृतीये च; ततः प्राङ्निवारितस्तन्यं मधुसर्पिः स्वपाणितलसंमितं द्विकालं पाययेत् ॥ १५ ॥**

मधुसर्पिर्मिश्रं सुवर्णचूर्णं कुतो लेहयितव्यमित्याह—धमनीनामित्यादि । अनन्तमिश्रम् अनन्तस्य सुवर्णस्य गुञ्जाप्रमाणेन मिश्रितम् । मधुसर्पिषश्च मानं वक्ष्यमाणं स्वपाणितलसंमितं बोद्धव्यम् । तत इत्यादि । ततश्चतुर्थे दिवसे प्रातर्मध्याह्नादिलक्षणे मधुसर्पिः प्राशयेत्, तदनन्तरं चतुर्थदिवसस्य तृतीयकालमारभ्य पञ्चमादिदिवसेषु यथेष्टं स्तन्यपानं कारयेत् । कं? बालं; किंविशिष्टं? प्राङ्निवारितस्तन्यं; प्राक् पूर्वं निवारितं स्तन्यं यस्य तं; **वृद्धवाग्भटे** च "अनन्तामिश्रे मधुसर्पिषी" (अ. सं. उ. अ. १) इति पाठः, तत्र चानन्ता दूर्वा व्याख्याता ॥१४॥१५॥

**अथ सूतिकां बलातैलाभ्यक्तां वातहरौषधनिष्क्वाथेनोपचरेत् । सशेषदोषां तु तदहः पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरचूर्णं गुडोदकेनोष्णेन पाययेत्, एवं द्विरात्रं त्रिरात्रं वा कुर्यादादुष्टशोणितात् । विशुद्धे ततो विदारिगन्धादिसिद्धां स्नेहयवागूं क्षीरयवागूं वा पाययेत्त्रिरात्रम् । ततो यवकोलकुलत्थसिद्धेन जाङ्गलरसेन शाल्योदनं भोजयेद्बलमग्निबलं चावेक्ष्य । अनेन विधिनाऽध्यर्धमासमुपसंस्कृता विमुक्ताहाराचारा विगतसूतिकाभिधाना स्यात्, पुनरार्तवदर्शनादित्येके ॥ १६ ॥**

अथ सूतिकामित्यादि । वातहरौषधानि भद्रदार्वादीनि । उपचरेत् 'पानपरिषेकादिभिः' इति शेषः । सशेषदोषामित्यत्र दोषशब्दो रक्तवचनः । ततस्तृतीये चतुर्थे वा दिने विशुद्धे शोणिते विदारीगन्धादिक्वाथेन सिद्धां स्नेहबहुलां यवागूमग्निबलमवेक्ष्य क्षीरयवागूं वा पाययेत् । अध्यर्धमासं त्रीणि पक्षाणि ॥ १६ ॥

१ 'अनन्तामिश्रं' इति पा० । २ हाराणचन्द्रस्तु 'अनन्ता सारिवा' इति व्याख्यानयति । ३ 'स्नेहविमिश्रं गुडोदकेनोष्णेन' इति, तथा 'गुडोदकेनोष्णोदकेन वा' इति च पा० ।

**धन्वभूमिजातां तु सूतिकां घृततैलयोरन्यतरस्य मात्रां पाययेत् पिप्पल्यादिकषायानुपानां, स्नेहनित्या च स्यात्त्रिरात्रं पञ्चरात्रं वा बलवती; अबलां यवागूं पाययेत्त्रिरात्रं पञ्चरात्रं वा । अत ऊर्ध्वं स्निग्धेनान्नसंसर्गेणोपचरेत् ॥ १७ ॥**

धन्वेत्यादि । जाङ्गलदेशजातां तु सूतिकां बुभुक्षायुतां सात्म्यानुरोधेन घृतस्य तैलस्य वा मात्रामहःपरिणामिनीं पाययेत् । जीर्णे तु स्नेहे पूर्वोक्तौषधसाधितां मात्रया पेयां वा पाययेत् । स्नेहनित्या च स्यादभ्यङ्गादिषु । कियन्ति दिनानि घृततैलयोरन्यतरमात्रां पाययेदित्याशङ्क्याह—त्रिरात्रमित्यादि । बलवती बलयुक्ता सूतिका । बलहीनायाश्च किं कर्तव्यमित्याशङ्क्याह—अबलामित्यादि । यवागूमिति 'पूर्वोक्तौषधसाधितां स्नेहयुक्ताम्' इति शेषः । अत ऊर्ध्वमित्यादि । स्नेहपानयवागूपानाभ्यां प्रेरितत्रिरात्रपञ्चरात्रादूर्ध्वं स्निग्धेन पेयादिक्रमेण वह्नेर्बलस्य च बृंहणार्थं वातजयार्थं चोपचरेत् । अत्रार्थे **वृद्धवाग्भटः**—"अथ सूतिकां बलातैलेनाभ्यज्यात्, बुभुक्षितां च पञ्चकोलचूर्णेन यवान्युपकुञ्चिकाचव्यचित्रकव्योषसैन्धवचूर्णेन वा युक्तामहःपरिणामिनीं यथासात्म्यं स्नेहमात्रां पाययेत्, स्नेहायोग्यां वातहरौषधक्वाथं ह्रस्वपञ्चमूलीक्वाथं वा; पीतवत्याश्च यमकेनाभ्यज्य वेष्टयेदुदरं वस्त्रेण, तथा न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात्, जीर्णे तु स्नेहे पूर्वौषधैरेव सिद्धां विदार्यादिगणक्वाथेन वा क्षीरेण यवागूं सुस्निग्धां द्रवां मात्रया पाययेत्" ( अ. सं. शा. अ. ३ )–इति ॥ १७ ॥

**प्रायशश्चैनां प्रभूतेनोष्णोदकेन परिषिञ्चेत्, क्रोधायासमैथुनादींश्च परिहरेत् ॥ १८ ॥**

अपरमपि प्रसूतामधिकृत्य सामान्येन क्रियाविशेषमाह—प्रायशश्चेत्यादि । एनां स्त्रियं; परिषिञ्चेद् धारया, गर्भक्षोभकृतरक्तस्रावणार्थं वातजयार्थं च । आयासो व्यायामः, मैथुनं पुरुषसेवा, क्रोधादयः पञ्चदश आतुरोपद्रवचिकित्सितोक्ताः ॥ १८ ॥

**मिथ्याचारात् सूतिकाया यो व्याधिरुपजायते ॥**
**स कृच्छ्रसाध्योऽसाध्यो वा भवेदत्यपतर्पणात् १९**
**तस्मात्तां देशकालौ च व्याधिसात्म्येन कर्मणा ॥**
**परीक्ष्योपचरेन्नित्यमेवं नात्ययमाप्नुयात् ॥ २० ॥**

उक्ताहाराचारव्यतिक्रमेण किं भवतीत्याह—मिथ्याचारादित्यादि । अत्यपतर्पणादिति असाध्यभवने हेतुः । तां प्रसूतां, देशकालौ परीक्ष्य व्याधिसात्म्येन कर्मणा नित्यमुपचरेदिति संबन्धः । अत्ययो विनाशः । **गयी** तु 'देशकालैकव्याधिसात्म्येन कर्मणा' इति पठित्वा देशादिभिः सह पृथक् सात्म्यशब्दं संबध्नाति; ओकसात्म्यमभ्याससात्म्यं, ओकशब्दोऽयम्

१ 'बलवतीं' इति पा० । २ 'बलवतीमबलां' इति । ३ 'बलवतीं बलयुक्तां सूतिकाम्' इति पा० । ४ 'परीक्ष्योपचरेदेवं नेयमत्ययमाप्नुयात्' इति पा० ।

'उच' समवाय इत्यनेन धातुना व्युत्पादित इति व्याख्याति ॥ १९ ॥ २० ॥

**अथापराऽपतन्त्यानाहाध्मानौ कुरुते, तस्मात् कण्ठमस्याः केशवेष्टितयाऽङ्गुल्या प्रमृजेत्, कटुकालाबुकृतवेधनसर्षपसर्पनिर्मोकैर्वा कटुतैलविमिश्रैर्योनिमुखं धूपयेत्, लाङ्गलीमूलकल्केन वाऽस्याः पाणिपादतलमालिम्पेत्, मूर्ध्नि वाऽस्या महावृक्षक्षीरमनुसेचयेत्, कुष्ठलाङ्गलीमूलकल्कं वा मद्यमूत्रयोरन्यतरेण पाययेत्, शालमूलकल्कं वा पिप्पल्यादिं वा मद्येन, सिद्धार्थककुष्ठलाङ्गलीमहावृक्षक्षीरमिश्रेण सुरामण्डेन वाऽऽस्थापयेत्, एतैरेव सिद्धेन सिद्धार्थकतैलेनोत्तरबस्तिं दद्यात्, स्निग्धेन वा कृत्तनखेन हस्तेनापहरेत् ॥ २१ ॥**

अथापरेत्यादि। कृतवेधनः कोशातकः । 'शालमूलकल्कं' इत्यत्र 'शालिमूलकल्कं' इति केचित् ॥ २१ ॥

**प्रजातायाश्च नार्या रूक्षशरीरायास्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगतेनातिसंरुद्धं नाभेरधः पार्श्वयोर्बस्तौ बस्तिशिरसि वा ग्रन्थिं करोति; ततश्च नाभिबस्त्युदरशूलानि भवन्ति, सूचीभिरिव निस्तुद्यते भिद्यते दीर्यत इव च पक्वाशयः, समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्ललक्षणम्। तत्र वीरतर्वादिसिद्धं जलमूषकादिप्रतीवापं पाययेत्, यवक्षारचूर्णं वा सुखोदकेन पिप्पल्यादिक्वाथेन वा, पिप्पल्यादिचूर्णं वा सुरामण्डेन, वरुणादिक्वाथं वा पञ्चकोलैलाप्रतीवापं, पृथक्पर्ण्यादिक्वाथं वा भद्रदारुमरिचसंसृष्टं, पुराणगुडं वा त्रिकटुकचतुर्जातककुस्तुम्बुरुमिश्रं खादेत्, अच्छं वा पिबेदरिष्टमिति ॥ २२ ॥**

प्रजाताया इत्यादि । प्रजातायाः प्रजननशोणितसंजनितशूलो मक्कल्लः; अवरुद्धरक्तपाकजनितो विद्रधिरपि मक्कल्लः, कार्ये कारणोपचारात् । मक्कल्लचिकित्सामाह—तत्रेत्यादि । जलं क्वाथम् । यवक्षारचूर्णं सुखोदकेन मन्दाग्नौ, कफप्रकृतीनां पिप्पल्यादिक्वाथेन, एवमन्येऽपि योगा दोषादीनवेक्ष्य योजनीयाः । अच्छं केवलम् । अरिष्टम् अभयारिष्टादिकम् ॥ २२ ॥

**अथ बालं क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शय्यायां शाययेत्, पीलुबदरीनिम्बपरूषकशाखाभिश्चैनं परिवीजयेत्, मूर्ध्नि चास्याहरहस्तैलपिचुमवचारयेत्, धूपयेच्चैनं रक्षोघ्नैर्धूपैः, रक्षोघ्नानि चास्य पाणिपादशिरोग्रीवास्ववसृजेत्, तिलातसीसर्षपकणांश्चात्र प्रकिरेत्, अधिष्ठाने चाग्निं प्रज्वालयेत्, व्रणितोपासनीयं चावेक्षेत ॥ २३ ॥**

अथ बालमित्यादि । क्षौमं दुकूलम् । रक्षोघ्नैर्धूपैर्वचादिभिः । अधिष्ठाने सूतिकागारे । व्रणितोपासनीयं चावेक्षेतेति तेन प्राक्शीर्षशयनमजस्रदीपस्रग्दामादि सर्वमत्रापि तत्रोक्तं वेदितव्यम् ॥ २३ ॥

**ततो दशमेऽहनि मातापितरौ कृतमङ्गलकौतुकौ स्वस्तिवाचनं कृत्वा नाम कुर्यातां यदभिप्रेतं नक्षत्रनाम वा ॥ २४ ॥**

तत इत्यादि। नक्षत्रनामेति नक्षत्रदेवताकृतं नामेत्यर्थः ॥२४॥

**ततो यथावर्णं धात्रीमुपेयान्मध्यमप्रमाणां मध्यमवयस्का(स्का)मरोगां शीलवतीमचपलामलोलुपामकृशामस्थूलां प्रसन्नक्षीरामलम्बौष्ठीमलम्बोर्ध्वस्तनीमव्यङ्गामव्यसनिनीं जीवद्वत्सां दोग्ध्रीं वत्सलामक्षुद्रकर्मिणीं कुले जातामतो भूयिष्ठैश्च गुणैरन्वितां श्यामामारोग्यबलवृद्धये बालस्य। तत्रोर्ध्वस्तनी करालं कुर्यात्, लम्बस्तनी नासिकामुखं छादयित्वा मरणमापादयेत्। ततः प्रशस्तायां तिथौ शिरःस्नातमहतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं प्राङ्मुखीं चोपवेश्य दक्षिणं स्तनं धौतमीषत्परिस्रुतमभिमन्त्र्य मन्त्रेणानेन पाययेत् ॥ २५ ॥**

**'चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिनः ।**<br>
**भवन्तु सुभगे नित्यं बालस्य बलवृद्धये ॥ २६ ॥**<br>
**पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने ।**<br>
**दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा ॥ २७ ॥'**

तत इत्यादि । यथावर्णमिति ब्राह्मणस्य ब्राह्मणीं, क्षत्रियस्य क्षत्रियामित्यादि । धात्रीमुपेयात् स्तनदायिनीं समीपं गच्छेत्, 'भिषक् बालग्राहको वा' इति शेषः । श्यामा हि प्रायशः प्रचुरक्षीरा भवति । उक्तविपर्यासेन दोषस्य दिङ्मात्रं दर्शयन्नाह—तत्रेत्यादि। इतिशब्दोऽयमेवंप्रकारे, तेनान्येऽपि दोषा एवंप्रकाराः स्वयमप्यूह्य ज्ञातव्याः । अभिमन्त्रणमाह—चत्वार इत्यादि ॥ २५—२७ ॥

**अतोऽन्यथा नानास्तन्योपयोगस्यासात्म्याद्व्याधिजन्म भवति ॥ २८ ॥**

नियतधात्र्या अभावे दोषं दर्शयन्नाह–अतोऽन्यथेत्यादि २८

**अपरिस्रुतेऽप्यतिस्तब्धस्तन्यपूर्णस्तनपानाद्दुत्सुहितस्रोतसः शिशोः कासश्वासवमीप्रादुर्भावः । तस्मादेवंविधानां स्तन्यं न पाययेत् ॥ २९ ॥**

---

१ 'चास्याः' इति पा० । २ 'चास्याः' इति पा० । ३ 'शालिमूलकल्कं' इति पा० । ४ 'अवशोषितं' इति पा० । ५ 'दाल्यते' इति पा० । ६ 'क्षौमकार्पासास्तृतायां' इति ता. ।

१ 'तस्मादेवंविधं' इति पा० ।

कुत ईषत्परिस्नुतं स्तन्यं पाययेदित्याशङ्क्य तद्विपर्यये दोषं वक्तुमाह—अपरिस्नुत इत्यादि। उत्स्नुहितस्रोतस इति ऊर्ध्वपूरितस्रोतस इत्यर्थः। 'उत्स्नुहितस्रोतस' इति पाठे तु ऊर्ध्वं स्नुहितमुद्गीर्णं स्रोतो यस्येति समासः ॥ २९ ॥

**क्रोधशोकावात्सल्यादिभिश्च स्त्रियाः स्तन्यनाशो भवति। अथास्याः क्षीरजननार्थं सौमनस्यमुत्पाद्य यवगोधूमशालिषष्टिकमांसरससुरासौवीरकपिण्याकलशुनमत्स्यकशेरुकशृङ्गाटकबिसविदारिकन्दमधुकशतावरीनालिकालाबूकालशाकप्रभृतीनि विदध्यात् ॥ ३० ॥**

क्रोधशोकेत्यादि। अवात्सल्यम् अममत्वम्। आदिशब्दाल्लङ्घनव्यायामादयः। अथास्या इत्यादि। नालिका शाकविशेषः, 'नालिकेर' इति क्वचित् पाठः ॥ ३० ॥

**अथास्याः स्तन्यमप्सु परीक्षेत; तच्चेच्छीतलममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं गच्छत्यफेनिलमतन्तुमन्नोत्प्लवतेऽवसीदति[1] वा तच्छुद्धमिति विद्यात्, तेन कुमारस्यारोग्यं शरीरोपचयो बलवृद्धिश्च भवति। न च क्षुधितशोकार्तश्रान्तप्रदुष्टधातुगर्भिणीज्वरितातिक्षीणातिस्थूलविदग्धभक्त[2]विरुद्धाहारतर्पितायाः स्तन्यं पाययेत्; नाजीर्णौषधं च बालं, दोषौषधमलानां[3] तीव्रवेगोत्पत्तिभयात् ॥ ३१ ॥**

**भवन्ति चात्र—**

**धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा ॥**
**दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ॥ ३२ ॥**
**मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः ॥**
**दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः ॥**
**भवन्ति कुशलस्तांश्च भिषक् सम्यग्विभावयेत् ३३**

अथास्याः स्तन्यमित्यादि। अवसीदति वेत्यत्रापि निषेधः संबन्धनीयः ॥ ३१-३३ ॥

**अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते ॥**
**मुहुर्मुहुः स्पृशति तं स्पृश्यमाने च रोदिति ॥ ३४ ॥**
**निमीलिताक्षो मूर्धस्थे शिरो रोगे न धारयेत् ॥**
**बस्तिस्थे मूत्रसङ्गार्तो रुजा तृष्यति मूर्च्छति ॥३५॥**
**विण्मूत्रसङ्गवैवर्ण्यच्छर्द्याध्मानान्त्रकूजनैः ॥**
**कोष्ठे दोषान् विजानीयात् सर्वत्रस्थांश्च रोदनैः ॥३६॥**

व्याधिस्वरूपं प्रतिपादयितुमशानां बालानां रोगज्ञानोपायमाह—अङ्गप्रत्यङ्गेत्यादि ॥ ३४-३६ ॥

**तेषु यथाभिहितं मृद्वच्छेदनीयमौषधं मात्रया क्षीरपस्य क्षीरसर्पिषा संयुक्तं विदध्यात्, धात्र्याश्च केवलं, क्षीरान्नादस्यात्मनि[1] धात्र्याश्च पूर्ववत्, अन्नादस्य कषायादीनात्मन्येव न धात्र्याः ॥ ३७ ॥**

तेषु च रोगेषु यथाविहितं यद्यदौषधं यत्र यत्र रोगे विहितं तत्तत्र कुर्यात्। तदपि मृदु अतीक्ष्णम्, अच्छेदनीयं कफमेदसोरच्छेदकारि। मात्रया वक्ष्यमाणया। क्षीरसर्पिषा सह बालस्य क्षीरसर्पिःसात्म्यत्वात्; धात्र्याश्च केवलमेव न क्षीरयुक्तं नापि सर्पिर्युक्तमित्यर्थः। क्षीरान्नादस्य पूर्ववत् क्षीरसर्पिषा युक्तं, धात्र्यास्तु केवलमेव ॥ ३७ ॥

**तत्र मासादूर्ध्वं क्षीरपायाङ्गुलिपर्वद्वयग्रहणसंमितामौषधमात्रां विदध्यात्, कोलास्थिसंमितां कल्कमात्रां क्षीरान्नादाय, कोलसंमितामन्नादायेति ॥ ३८ ॥**

तामेव मात्रां निर्दिशन्नाह—तत्र मासादूर्ध्वमित्यादि। अङ्गुलिपर्वद्वयग्रहणसंमितामिति 'क्षीराज्यालोडितौषधस्य' इति शेषः। तन्त्रान्तरे चान्यथाऽभिहितं; यथा—"प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका। अवलेह्या तु कर्तव्या मधुक्षीरसिताघृतैः ॥ एकैकां वर्धयेत्तावद्यावत् संवत्सरो भवेत्। तदूर्ध्वं माषवृद्धिः स्याद्यावत् षोडशकाब्दिकः"—इति ॥ ३८ ॥

**येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः ॥**
**तेषु तत्कल्कसंलिप्तौ पाययेत शिशुं स्तनौ ॥ ३९ ॥**

प्रकारान्तरेणौषधोपयोगमाह—येषां गदानामित्यादि ॥३९॥

**एकं द्वे त्रीणि चाहानि वातपित्तकफज्वरे ॥**
**स्तन्यपायाहितं सर्पिरितराभ्यां यथार्थतः ॥ ४० ॥**
**न च तृष्णाभयादत्र पाययेत शिशुं स्तनौ ॥**
**विरेकबस्तिवमनान्यृते कुर्याच्च नात्ययात् ॥ ४१ ॥**

ज्वरे विशेषमाह—एकमित्यादि। स्तन्यपायाहितं सर्पिः, 'सात्म्याद्दत्तं' इति वाक्यशेषः। इतराभ्यां क्षीरान्नादान्नादाभ्यां, यथार्थतो यथाप्रयोजनतः, हितं सर्पिरित्यर्थः। न चेत्यादि। अत्रेति ज्वरे। अत्ययादिति विनाशकारकाद्विकाराद्विनेत्यर्थः ॥ ४० ॥ ४१ ॥

**मस्तुलुङ्गक्षयाद्यस्य वायुस्तालवस्थि नामयेत् ॥**
**तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम् ॥ ४२ ॥**
**पानाभ्यञ्जनयोर्योज्यं शीताम्बूद्वेजनं तथा ॥**

तालुनि पतिते चिकित्सामाह—मस्तुलुङ्गक्षयादित्यादि। मस्तुलुङ्गोऽविलीनघृताकारा मस्तकमज्जा। मधुरकैः शृतमिति काकोल्यादिभिः पक्वम्। शीताम्बूद्वेजनमिति शीताम्बुचुलुकैरासेचनात्रासनम् ॥ ४२ ॥

**वातेनाध्मापितां नाभिं सरुजां तुण्डिसंज्ञिताम् ४३**
**मारुतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः ॥**

१ 'न सीदति' इति पा०। २ '°विदग्धभक्ष्य°' इति पा०। ३ 'दोषौषधाशनानां' इति पा०।

१ 'क्षीरान्नादस्य कल्कीकृतम्' इति ता.।

**गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ॥
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ४४ ॥**

वातेनाध्मापितामित्यादि पानालेपनयोर्हितमित्यन्तं श्लोकद्वयं निबन्धकारैर्न पठितम् ॥ ४३ ॥ ४४ ॥

**क्षीराहाराय सर्पिः पाययेत् सिद्धार्थकवचामांसीपयस्यापामार्गशतावरीसारिवाब्राह्मीपिप्पलीहरिद्राकुष्ठसैन्धवसिद्धं, क्षीरान्नादाय मधुकवचापिप्पलीचित्रकत्रिफलासिद्धम्, अन्नादाय द्विपञ्चमूलीक्षीरतगरभद्रदारुमरिचमधुकविडङ्गद्राक्षे¹र्द्विब्राह्मीसिद्धं; तेनारोग्यबलमेधायूंषि शिशोर्भवन्ति ४५**

सर्पिःसात्म्यत्वाद्बालस्य स्वस्थेऽपि सर्पिरेव भेषजसिद्धं दर्शयन्नाह—क्षीरेत्यादि । पयस्या अर्कपुष्पी ॥ ४५ ॥

**बालं पुनर्गात्रसुखं गृह्णीयात्, न चैनं तर्जयेत्, सहसा न प्रतिबोधयेद्वित्रासभयात्, सहसा नापहरेदुत्क्षिपेद्वा वातादिविघातभयात्, नोपवेशयेत् कौब्ज्यभयात्, नित्यं चैनमनुवर्तेत प्रियशतैरजिघांसुः; एवमविहतमना ह्यभिवर्धते नित्यमुदग्रसत्त्वसंपन्नो नीरोगः सुप्रसन्नमनाश्च भवति । वातातपविद्युत्प्रभापादपलताशून्यागारनिम्नस्थानग्रहच्छायादिभ्यो²दुर्ग्रहोपसर्गतश्च बालं रक्षेत् ॥ ४६ ॥
नाशुचौ विसृजेद्बालं नाकाशे विषमे न च ॥
नोष्ममारुतवर्षेषु रजोधूमोदकेषु च ॥ ४७ ॥**

इदानीं बाले परिजनस्य करणीयं निर्दिशन्नाह—बालमित्यादि । अनुवर्तेत अनुकूलयेत् । प्रियशतैर्बालक्रीडनकदानादिभिरित्यर्थः । अजिघांसुरिति अहन्तुमिच्छुः सन्, 'बालग्राहक' इति शेषः । उक्तप्रकारानुकूलने फलमाह—एवमित्यादि । 'पादपलताशून्यागार' इत्यत्र केचित् 'पादपलतानानागारनिम्नस्थानगृहच्छाया' इति पठन्ति । नाशुचावित्यादि । विषमे निम्नोन्नतप्रदेशे ॥ ४६ ॥ ४७ ॥

**क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा ॥
³दद्यादास्तन्यपर्याप्तेर्बालानां वीक्ष्य मात्रया ॥ ४८ ॥**

क्षीरस्तन्याभावे च क्षीरान्तरं निर्दिशन्नाह—क्षीरसात्म्यतयेत्यादि । आस्तन्यपर्याप्तेरिति यावत् स्तन्यस्य पुनः पर्याप्तिः परि समन्ततो भावेन प्राप्तिर्भवति, अथवा यावत् स्तन्यपानस्य योग्यता तावदित्यर्थः ॥ ४८ ॥

**⁴षण्मासं चैनमन्नं प्राशयेल्लघु हितं च ॥ ४९ ॥**

अन्नदानकालमाह—षण्मासमित्यादि । गयी तु 'षण्मासात्' इति पठित्वा षण्मासादूर्ध्वमिति व्याख्याति ॥ ४९ ॥

**नित्यमवरोधरतश्च स्यात् कृतरक्ष उपसर्गभयात्; प्रयत्नतश्च ग्रहोपसर्गेभ्यो रक्ष्या बाला भवन्ति ५०**

नित्यमवरोधरत इति सततं परिजनावृतोऽन्तःपुरस्थो वा, कृतरक्षाक्रियो भवेत् । कुतः कारणादित्याह—उपसर्गभयात् । अस्यैवार्थस्य प्रयत्नकरणीयतां दर्शयन्नाह—प्रयत्नतश्चेत्यादि । रक्ष्या इति रक्षणीया इत्यर्थः ॥ ५० ॥

**अथ कुमार उद्विजते त्रस्यति रोदिति नष्टसंज्ञो भवति नखदशनैर्धात्रीमात्मानं च परिणुदति दन्तान् खादति कूजति जृम्भते भ्रुवौ विक्षिपत्यूर्ध्वं निरीक्षते फेनमुद्वमति सन्दष्टौष्ठः क्रूरो भिन्नामवर्चा दीनार्तस्वरो निशि जागर्ति दुर्बलो म्लानाङ्गो मत्स्यच्छुच्छुन्दरिमत्कुणगन्धो यथा पुरा धात्र्याः स्तन्यमभिलषति तथा नाभिलषतीति सामान्येन ग्रहोपसृष्टलक्षणमुक्तं, विस्तरेणोत्तरे वक्ष्यामः ॥५१॥**

किं पुनर्ग्रहोपसर्गलक्षणं तदाह–अथ कुमार इत्यादि ॥ ५१ ॥

**शक्तिमन्तं चैनं ज्ञात्वा यथावर्णं विद्यां ग्राहयेत् ॥ ५२ ॥**

तस्य कुमारस्य पुरुषार्थसाधनहेतुभूतां क्रियां निर्दिशन्नाह—शक्तिमन्तं चेत्यादि । शक्तिमन्तं विद्यार्जनक्लेशक्षमम् । यथावर्णमिति ब्राह्मणस्त्रयीं, राजन्यो दण्डनीतिं, वैश्यो वार्तामिति ॥ ५२ ॥

**अथास्मै पञ्चविंशतिवर्षाय षोडशद्वादशवर्षां¹ पत्नीमावहेत्² पित्र्यधर्मार्थकामप्रजाः प्राप्स्यतीति ॥५३॥**

विद्याग्रहणवद् परमपि कुमारस्य दृष्टादृष्टकारणसाधनभूतं निर्दिशन्नाह—अथास्मै इत्यादि । आवहेत् विदध्यात् । किमर्थमित्याह—पित्र्येत्यादि । पितुर्हितं कर्म पित्र्यं श्राद्धदानादि, धर्मः श्रुतिस्मृतिविहितं यज्ञाद्यनुष्ठानम्, अर्थः सुवर्णादिः, कामः स्वेषु विषयेष्विन्द्रियाणामानुकूल्यतः प्रवृत्तिः, प्रजाः पुत्रपौत्रादयः ॥ ५३ ॥

**³ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ॥
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥ ५४ ॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः ॥
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्⁵ ॥ ५५ ॥**

अप्राप्तपञ्चविंशतेरूनषोडशवर्षया⁴ सह संयोगे दोषं दर्शयन्नाह—ऊनषोडशवर्षायामित्यादि ॥ ५४ ॥ ५५ ॥

---

१ 'द्राक्षाद्विब्राह्मीसिद्धं' इति पा० । २ 'पादपदर्शनाङ्गारनिम्नस्थानगृहच्छायेति' इति पा० । ३ 'दद्यात् स्तन्यस्य चाप्राप्तौ बालेभ्यो' इति ता. । ४ 'षण्मासात्' इति पा० ।

१ 'षोडशवर्षां' इति ता. पुस्तके पठ्यते; 'द्वादशवर्षां' इतीतरेषु हस्तलिखितपुस्तकेषु । २ 'पत्नीमाहरेत्' इति पा० । वाग्भटे तु 'पूर्णषोडशवर्षा स्त्री पूर्णविंशेन संगता' इति पठ्यते । वृद्धवाग्भटे तु 'पुमानेकविंशतिवर्षः कन्यां द्वादशवर्षदेशीयां··· उद्वहेत्; तस्यां षोडशवर्षायां पञ्चविंशतिवर्षः पुरुषः पुत्रार्थं यतेत, तदा हि तौ प्राप्तवीर्यौ वीर्यान्वितमपत्यं जनयतः' इति पठ्यते । ३ 'ऊनद्वादशवर्षायां' इति हस्तलिखितपुस्तकेषु पाठ उपलभ्यते । ४ 'ऊनद्वादशवर्षया' इति पा० । ५ अयमर्धश्लोकस्ताडपत्रपुस्तके न पठ्यते ।

अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्वीत । पुरुषस्याप्येवंविधस्य त एव दोषाः संभवन्ति ॥ ५६ ॥

अतिवृद्धादिष्वपि गर्भाधाननिषेधमाह—अतिवृद्धायामित्यादि । पुरुषस्याप्येवंविधस्य गर्भाधानेऽनधिकार इति शेषः । कुतो गर्भाधाननिषेध इत्याह—त एवेत्यादि । एतेन कुक्षिस्थः स विपद्यत इत्यादिवाक्योक्ताः ॥ ५६ ॥

तत्र पूर्वोक्तैः कारणैः पतिष्यति गर्भे गर्भाशयकटीवङ्क्षणवस्तिशूलानि रक्तदर्शनं च । तत्र शीतैः परिषेकावगाहप्रदेहादिभिरुपचरेज्जीवनीयशृतक्षीरपानैश्च । गर्भस्फुरणे मुहुर्मुहुस्तत्सन्धारणार्थं क्षीरमुत्पलादिसिद्धं पाययेत् । प्रस्रंसमाने सदाहपार्श्वपृष्ठशूलासृग्दरानाहमूत्रसङ्गाः, स्थानात् स्थानं च प्रक्रामति[1] गर्भे कोष्ठे संरम्भः, तत्र स्निग्धशीताः क्रियाः । वेदनायां महासहाक्षुद्रसहामधुकश्वदंष्ट्राकण्टकारिकासिद्धं पयः शर्कराक्षौद्रमिश्रं पाययेत्; मूत्रसङ्गे दर्भादिसिद्धम्; आनाहे हिङ्गुसौवर्चललशुनवचासिद्धम् । अत्यर्थं स्रवति रक्ते कोष्ठागारिकागारमृत्पिण्डसमङ्गाधातकीकुसुमनवमालिकागैरिकसर्जरसरसाञ्जनचूर्णं मधुनाऽवलिह्यात्, यथालाभं न्यग्रोधादित्वक्प्रवालकल्कं वा पयसा पाययेत्, उत्पलादिकल्कं वा कशेरुशृङ्गाटकशालूककल्कं वा शृतेन पयसा, उदुम्बरफलौदककन्दक्वाथेन वा शर्करामधुमधुरेण शालिपिष्टं; न्यग्रोधादिस्वरसपरिपीतं वा वस्त्रावयवं योन्यां धारयेत् । अथादृष्टशोणितवेदनायां मधुकदेवदारुमञ्जिष्ठापयस्यासिद्धं पयः पाययेत्, तदेवाश्मन्तकशतावरीपयस्यासिद्धं विदारिगन्धादिसिद्धं वा, बृहतीद्वयोत्पलशतावरीसारिवापयस्यामधुकसिद्धं वा; एवमुपक्रान्ताया उपावर्तन्ते रुजो गर्भश्चाप्यायते । व्यवस्थिते च गर्भे गव्येनोदुम्बरशलाटुसिद्धेन पयसा भोजयेत् । अतीते लवणस्नेहवर्ज्याभिर्यवागूभिरुद्दालकादीनां पाचनीयोपसंस्कृताभिरुपक्रमेत यावन्तो मासा गर्भस्य तावन्त्यहानि । वस्त्युदरशूलेषु पुराणगुडं दीपनीयसंयुक्तं पाययेदरिष्टं वा । वातोपद्रवगृहीतत्वात् स्रोतसां लीयते गर्भः, सोऽतिकालमवतिष्ठमानो व्यापद्यते, तां मृदुना स्नेहादिक्रमेणोपचरेत्, उत्क्रोशरससंसिद्धामनल्पस्नेहां यवागूं पाययेत्, माषतिलबिल्वशलाटुसिद्धान् वा कुल्माषान् भक्षयेन्मधुमाध्वीकं चानुपिबेत् सप्तरात्रम् । कालातीतस्थायिनि गर्भे विशेषतः सधान्यमुदूखलं मुसलेनाभिहन्याद्विषमे वा यानासने सेवेत । वाताभिपन्न एव शुष्यति गर्भः, स मातुः कुक्षिं न पूरयति मन्दं स्पन्दते च, तं बृंहणीयैः पयोभिर्मांसरसैश्चोपचरेत् । शुक्रशोणितं वायुनाऽभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरं, तं कदाचिद्यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते, तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुः; तत्रापि लीनवत् प्रतीकारः ॥ ५७ ॥

इदानीं गर्भस्रावलक्षणानि सहेतुकानि सप्रतिकाराण्याह—तत्रेत्यादि । पूर्वोक्तैरिति मूढगर्भनिदानोक्तैर्ग्राम्यधर्मयानवाहनादिभिः । गर्भाशयादिशूलानि गर्भपातनिमित्तानिलजनितानि; रक्तदर्शनं चामगर्भान्वयं कृच्छ्रसाध्यम् । **गयी** तु गर्भस्रंसनेनार्तवबहस्रोतोमुखविवृतेरार्तवक्षरणाद्रक्तदर्शनमित्याह । चिकित्सामाह—तत्रेत्यादि । जीवनीयानि काकोल्यादीनि । पृथक् पृथगवस्थाश्रितं चिकित्सितमाह—गर्भेत्यादि । उत्पलरक्तोत्पलेत्यादिरुत्पलादिः । प्रस्रंसमाने पतनाय किंचिच्चलति सदाहपार्श्वशूलादयो मूत्रसङ्गान्ता भवन्ति । कोष्ठे संरम्भ आमपच्यमानपक्वाशयादौ क्षोभः । स्थानं चेति चकारेण पूर्वोक्ताः शूलादयोऽपि । तेषु चिकित्सामाह—तत्रेत्यादि । स्निग्धशीताः सात्म्यतो न सर्वेषु । पार्श्वशूलादिषु चतुर्षु क्रियाविशेषं निर्दिशन्नाह—वेदनायामित्यादि । दर्भादिभिः सिद्धं तृणपञ्चमूलसिद्धम् । आनाहे लशुनसिद्धं पयो हिङ्गुसौवर्चलप्रक्षेपम् । अत्यर्थं स्रवति रक्ते असृग्दर इत्यर्थः । कोष्ठवदागारं कोष्ठागारं, तेन चरतीति कोष्ठागारिका गृहकारिका कीटविशेषः, तद्गृहमृत्तिका । औदकाः कन्दाः कसेरुशालुकनलीमाषकादयः । दृष्टशोणितायां रुजि चिकित्सां निर्दिश्यादृष्टशोणितायां चिकित्सां निर्दिशन्नाह—अथादृष्टशोणितेत्यादि । पयस्या अर्कपुष्पी । सिद्धं पयः 'पाययेत्' इति संबन्धः । अश्मन्तकः[1] कर्बुदाराकारः । उपावर्तन्ते उपशमं यान्ति । गर्भश्चाप्यायते रक्तस्रुतिकर्शितः । 'एवं क्षिप्रमुपक्रान्ते नीरुजाया उपावर्तते(न्ते) गर्भ आप्यायते च' इति क्वचित् पाठः । तन्त्रान्तरे चोपविष्टकाख्योऽयं गर्भः कथितः । तथा च **चरके**—"यस्याः पुनरुष्णतीक्ष्णोपयोगाद्गर्भिण्या महति जातसारे गर्भे पुष्पदर्शनमन्यो वा योनिस्रावः, तस्या गर्भो वृद्धिं न प्राप्नोति निःस्रुतत्वात्, स कालान्तरमवतिष्ठते सस्पन्दश्च भवति, तमुपविष्टकमित्याचक्षते"—( च. शा. अ. ८ ) इति । व्यवस्थिते चेत्यादि । उदुम्बरशलाटुसिद्धेनेति उदुम्बरस्य कोमलैः फलैः पक्वेन क्षीरेण । क्षीरपाकस्तु तन्त्रान्तराभिहितो यथा—"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः"—इति । अतीते इत्यादि । अतीते पतित इत्यर्थः । उद्दालक आरण्यकोद्रवः, एतच्च यवागूदानं लङ्घनपूर्वम् । तथाच **वाग्भटः**—"आमान्वये च तत्रेष्टं शीतं रूक्षोपसंहितम् । उपवासो घनोशीरगुडूच्यरलुधान्यकाः ॥ कथिताः सलिले पानं तृणधान्यादिभोजनम्" ( वा. शा.

१ 'चोपक्रामति' इति पा० ।

१ 'अश्मन्तकः कोमलपत्रो मधुरफलः' इति पा० ।

अ. २ )—इति । बस्त्युदरशूलेष्वित्यादि । दीपनीयसंयुक्तं पञ्चकोलचूर्णसंयुक्तम् । अरिष्टम् अभयारिष्टादिकम् । उत्करत्कपरिस्रुतिनिमित्तोपविष्टकप्रसङ्गेनापरां चिरकालस्थायिनीं गर्भविकृतिं दर्शयन्नाह—वातेत्यादि । लीयते श्लिष्यति; कुत इत्याह—स्रोतसां गर्भनिर्गममार्गाणां वातोपद्रवेण संकोचादिना गृहीतत्वात् । व्यापद्यते विनश्यतीत्यर्थः । मृदुना अतीक्ष्णेन, तीक्ष्णस्य गर्भोपघातकत्वात् । स्नेहादिनेत्यत्रादिशब्दो न व्यवस्थावाची, तीक्ष्णस्वेदस्य वमनविरेचनयोश्च गर्भोपघातकत्वात्; अत आदिशब्दः प्रधानवाची, तेन स्नेहप्रधानानुक्रमेणेत्यर्थः । अन्ये पुनर्मृदुनेति अच्छपानवर्जितावचारणास्नेहेनेति मन्यन्ते । तामेवावचारणां निर्दिशन्नाह—उत्क्रोशरससंसिद्धामित्यादि । उत्क्रोशः कुररभेदः, अनल्पस्नेहां प्रभूतस्नेहाम्; अन्ये पुनरल्पस्नेहामिति पठन्ति तदसम्यक्, यवागवाः पवनावजयार्थमुपयुज्यमानत्वात् परतन्त्रदर्शनाच्च । तदुक्तं **चरके**—"यस्याः पुनर्गर्भः प्रसुप्तो[1] न स्पन्दते तां श्येनमत्स्यगवयशिखिताम्रचूडतित्तिरीणामन्यतमस्य सर्पिष्मता रसेन माषयूषेण वाप्र भूतसर्पिषा भोजयेत्" ( च. शा. अ. ८ ) इति । बिल्वशलाटुसिद्धानिति बिल्वस्य कोमलफलैः सिद्धान् । एवं स्रोतसामवरोधहेतोर्वातस्योपशमविधिमुक्त्वा वातोपशममृदुभूतानां स्रोतसां विकासार्थं विधिं दर्शयन्नाह—कालातीत इत्यादि । लीन एवायं विधिः । वाताभिपन्न इत्यादि । वाताभिपन्नो गर्भः शुष्यति, नतु पुनर्लीनवन्मार्गावरोधात्तिष्ठति[2] । गर्भशोषलक्षणं पुनः कुक्षेरपूरणं, वातशोषणेनैव विहतौजस्त्वाद्गर्भो मन्दमेव चलति । बृंहणीयैः पयोभिरिति बृंहणीयसंस्कृतैः क्षीरैरित्यर्थः । मांसरसैश्चेति चकाराल्लीनप्रतिकारसमुच्चयः । **वृद्धकाश्यपेन** शुष्कलक्षणमभिहितं यथा—"गर्भनाड्यास्त्ववहनादल्पत्वाद्वा रसस्य च । चिरेणाप्यायते गर्भस्तथैवाकालभोजनात् ॥ अकुक्षिपूरणं[3] गर्भस्पन्दनं मन्दमेव च"—इति । अपरमपि वाताभिपन्नं गर्भं दर्शयन्नाह—शुक्रेत्यादि । शुक्रशोणितमिति वचनादसंजाताङ्गप्रत्यङ्गमेव, वायुनाऽभिप्रपन्नं वायुनोपरुद्धम्, अवक्रान्तजीवं जीवोपगतम्, अत एवाकुथितमवतिष्ठते । शुक्रार्तवावरोधको वायुरेवोदरमाध्मापयति; तदाध्मानं कदाचिद्यदृच्छया अनियतहेतुना, उपशान्तं लीनीभूतं[4] दृष्ट्वा नैगमेषेण बालग्रहेणापहृतमिति वदन्ति । वाताभिपन्नमेव गर्भावस्थाविशेषं दर्शयन्नाह—तमेवेत्यादि । तमेव वाताभिपन्नमेव, पुनः पुनरनया वृत्त्या प्रविलीयमानमल्पीभवन्तं नागोदरमिति ब्रुवते । तत्रेति नागोदरे । अपिशब्दान्नैगमेषापहृतेऽपि लीनोक्तः प्रतीकारः ॥ ५७ ॥

**अत ऊर्ध्वं मासानुमासिकं वक्ष्यामः—॥ ५८ ॥**
**मधुकं शाकबीजं च पयस्या सुरदारु च ॥**
**अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी ॥५९॥**
**वृक्षादनी पयस्या च लता सोत्पलसारिवा ॥**
**अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥ ६० ॥**
**बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम् ॥**
**पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ६१ ॥**
**शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता ॥**
**वत्स्यैते सप्त योगाः स्युरर्धश्लोकसमापनाः ॥**
**यथासंख्यं प्रयोक्तव्या गर्भस्रावे पयोयुताः ॥ ६२ ॥**

शाको महावृक्षः कर्कशपत्रः, तस्य बीजम् । पयस्या अर्कपुष्पी, **गयी** तु पयस्यां क्षीरविदारीं क्षीरकाकोलीं वा ब्रूते । अश्मन्तकः कोविदारसदृशोऽम्लपत्रः 'अम्ललोटक' इति लोके । ताम्रवल्ली रामतरुणी, मञ्जिष्ठामपरे । लता प्रियङ्गुः । अनन्ता उत्पलसारिवा । पद्मा पद्मचारिणी, भार्गीमपरे । बृहत्यौ स्थूलफला चणकबृहती च । क्षीरिशुङ्गाः क्षीरिवृक्षाणां वटादीनामविकसिताः प्रवालाः । मधुपर्णी मधुयष्टिका । यथासंख्यमिति प्रथममासमारभ्य सप्तममासान् यावदनुक्रमेणेत्यर्थः । पयोयुता इति चूर्णादिप्रयोगे एते योगाः पयसा युताः प्रयोज्या इत्यर्थः ॥ ५८–६२ ॥

**कपित्थबृहतीबिल्वपटोलेक्षुनिदिग्धिका– ॥**
**मूलानि क्षीरसिद्धानि पाययेद्भिषगष्टमे ॥ ६३ ॥**
**नवमे मधुकानन्तापयस्यासारिवाः पिबेत् ॥**
**क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम् ॥६४॥**
**सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च ॥**
**एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति ॥६५॥**

कपित्थेत्यादि । कपित्थादीनां मूलानि क्षीरसिद्धान्यष्टमे मासि, नवमे मधुकादयः सारिवान्ताः क्षीरसिद्धाः पिबेत् । पयस्या क्षीरविदारी । दशमे मासि शुण्ठीपयस्याभ्यां क्षीरपाककल्पनया सिद्धं क्षीरं हितं भवेत्, अथवा सक्षीराः शुण्ठ्यादयः प्रशस्यन्ते[1]; **वाग्भटे**ऽप्येतैः सिद्धं क्षीरं प्रतिपादितं; तथाच—"कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिका– । मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाऽष्टमे ॥ नवमे सारिवानन्तापयस्यामधुयष्टिभिः । योजयेद्दशमे मासि क्षीरं सिद्धं पयस्यया ॥ अथवा यष्टिमधुकनागरामरदारुभिः"—( वा. शा. अ. २ ) इति । **गयदासेन** चैते गर्भस्रावचिकित्सितयोगाः प्रागेव गर्भश्चाप्यायत इत्यनन्तरं पठिताः ॥ ६३–६५ ॥

**निवृत्तप्रसवायास्तु पुनः षड्भ्यो वर्षेभ्य ऊर्ध्वं प्रसवमानाया नार्याः कुमारोऽल्पायुर्भवति ॥ ६६ ॥**

इदानीं पूर्वगर्भजन्मनो या उत्तरगर्भजननावधिस्तामतिक्रम्य गर्भग्राहिण्या दोषं दर्शयन्नाह—निवृत्तेत्यादि । एतेन षड्भ्यो वर्षेभ्य ऊर्ध्वं 'निवृत्तप्रसवा' इत्युच्यते । षट्सु षडवयवेषु पञ्चचतुस्त्रिद्विवर्षेषु गर्भानुजननस्य जन्मकाल इति; कुतः पुनरस्याः कुमारोऽल्पायुर्भवति ? उच्यते—गर्भाशययोन्यादिदोषेण हि निवर्तते प्रसवः; तत्र तच्छोधनक्रियामन्तरेणाहारविहारादिगुण-

१ 'प्रसुप्तत्वात्' इति पा० । २ 'न पुष्टो लीनवत्' इति पा० । ३ 'अकुक्षिपूरणं गर्भो मन्दस्पन्दन एव च' इति पा० । ४ 'अल्पीभूतं' इति पा० ।

१ 'पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते' इति ता. ।

मात्रेण यदृच्छयोपगृहीतगर्भाया योनिगर्भाशयादिष्वनिःस्फोटितदोषेषु जातोऽल्पायुरेवेति ॥ ६६ ॥

**अथ गर्भिणीं व्याध्युत्पत्तावत्यये छर्दयेन्मधुराम्लेनान्नोपहितेनानुलोमयेच्च, संशमनीयं च मृदु विदध्यादन्नपानयोः, अश्नीयाच्च मृदुवीर्यं मधुरप्रायं गर्भाविरुद्धं च, गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः ॥ ६७ ॥**

गर्भव्याघातकत्वेन निषिद्धाया वमनादिक्रियायाः क्वचिदत्ययकारिणि व्याधौ मृदुना द्रव्येण प्रतिप्रसवं निर्दिशन्नाह—अथ गर्भिणीमित्यादि । अत्यये विनाशहेतौ । अनुलोमयेच्चेति मधुराम्लेनान्नोपहितेनेति संबन्धः । आहारं नियमयन्नाह—अश्नीयाच्चेत्यादि । विहारमप्यस्य नियमयन्नाह—गर्भाविरुद्धा इत्यादि । यथायोगम् अहीनातिमिथ्यायोगेनेत्यर्थः ॥ ६७ ॥

**सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा ॥**
**मत्स्याक्षकः शङ्खपुष्पी मधु सर्पिः सकाञ्चनम् ॥६८॥**
**अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा ॥**
**हेमचूर्णानि कैडर्यः श्वेता दूर्वा घृतं मधु ॥ ६९ ॥**
**चत्वारोऽभिहिताः प्राशाः श्लोकार्धेषु चतुर्ष्वपि ॥**
**कुमाराणां वपुर्मेधाबलबुद्धिविवर्धनाः ॥ ७० ॥**

**इति सुश्रुतसंहितायां शारीरस्थाने गर्भिणीव्याकरणं शारीरं नाम दशमोऽध्यायः ॥ १० ॥**

इदानीं योगान्तरैः सह कुमारस्य सुवर्णचूर्णं निर्दिशन्नाह—सौवर्णमित्यादि । मत्स्याक्षको ब्राह्मी 'पत्तूर' इत्येके, अन्ये रक्तपुष्पमानूपं 'मत्स्याक' इति लोके प्रसिद्धमाहुः । अर्कपुष्पी पयस्या अर्कसदृशपयःपुष्पा लतैव, श्वेतदूर्वाविशेषां केचिदाहुः, वृक्षजातिमन्ये । कैडर्यः पर्वतनिम्बः । संवत्सरं यावदेते योगाः प्रयोज्याः; अन्ये द्वादशवर्षाण्याहुः । मात्रा उक्तैव । **गयी** तु प्राक्तनमात्राप्रतिपादकं वाक्यमपठित्वा मात्राज्ञानार्थं **विश्वामित्रोक्तं** वाक्यमभिदधति; यथा—"विडङ्गफलमात्रं तु जातमात्रस्य भेषजम् । एतेनैव प्रमाणेन मासि मासि प्रवर्धितम् ॥ कोलास्थिमात्रं क्षीरादे दद्याद्भैषज्यकोविदः । क्षीरान्नादे कोलमात्रमन्नादे डुम्बरोपमम्—" इति ॥ ६८–७० ॥

इति भिषग्वरश्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने दशमोऽध्यायः समाप्तः ॥ १० ॥

**इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां तृतीयं शारीरस्थानं समाप्तम् ॥ ३ ॥**

१ 'करणीयतां' इति पा० । २ 'सुवर्णचूर्णं वैडूर्यं' इति ता. । ३ 'अर्धश्लोकसमापनाः' इति ता. ।

१ '°बलारोग्यकराः शुभाः' इति ता. ।



निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता ।

## अथ चिकित्सास्थानम् ।

### प्रथमोऽध्यायः ।

**अथातो द्विव्रणीयं चिकित्सितं व्याख्यास्यामः १ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

शारीरानन्तरं चिकित्सास्थानमारभ्यते । द्वौ व्रणावधिकृत्य कृतं द्विव्रणीयम् । चिकित्सितं विकारप्रतीकारः ॥ १ ॥ २ ॥

**द्वौ व्रणौ भवतः—शारीर, आगन्तुश्च । तयोः शारीरः पवनपित्तकफशोणितसन्निपातनिमित्तः; आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृपप्रपतनपीडनप्रहाराग्निक्षारविषतीक्ष्णौषधशकलकपालशृङ्गचक्रेषुपरशुशक्तिकुन्ताद्यायुधाभिघातनिमित्तः । तत्र तुल्ये व्रणसामान्ये द्विकारणोत्थानप्रयोजनसामर्थ्याद् 'द्विव्रणीय' इत्युच्यते ॥ ३ ॥**

कथं द्वौ व्रणौ भवत इत्याह—शारीर आगन्तुश्च; अत्र केचित् 'शरीरसमुत्थश्च, आगन्तुश्च' इति पठन्ति, व्याख्यानयन्ति च—उभयत्र चकारकरणमुभयोश्च व्याकरणमुभयोः परस्परानुबन्धसूचनार्थम् । अभिघातशब्दः पुरुषादिभिः प्रत्येकं संबन्धनीयः । पशवो गोमहिषादयः, मृगा एणादयः, पक्षिणः काककङ्कगृध्रादयः, व्याला व्याघ्रादयो दुष्टजीवाः, सरीसृपाः कृष्णसर्पादयो मीनमकरौ च, प्रपतनं प्रकर्षेण पतनं, प्रहारो लगुडादिकुट्टनं, तीक्ष्णौषधानि चिरबिल्वचित्रकादीनि, शकलं काष्ठादीनां खण्डं, कपालं घटादीनां कर्परं, चक्रमायुधविशेषः खनामख्यातः, इषुर्बाणः, परशुरायुधविशेषः कुठाराकारः, शक्तिरायुधविशेषस्त्रिमुखी, कुन्तः प्रसिद्धः; आदिशब्दात् खड्गादयः । व्रणसामान्यं व्रणजातिर्व्रणत्वमित्यर्थः; तस्मिंस्तुल्ये सत्यपि द्विकारणोत्थानप्रयोजनसामर्थ्याद् 'द्विव्रणीय' इत्युच्यते; द्विकारणं द्विहेतुकं यदुत्थानमुत्पत्तिः, तस्य प्रयोजनं शीतक्रियादि, तस्य सामर्थ्यं शक्तिः, तस्माद् 'द्विव्रणीय' इत्युच्यते ॥ ३ ॥

**सर्वस्मिन्नेवागन्तुव्रणे तत्कालमेव क्षतोष्मणः प्रसृतस्योपशमार्थं पित्तवच्छीतक्रियावचारणविधिविशेषः[1] सन्धानार्थं च मधुघृतप्रयोग इत्येतद्द्विकारणोत्थानप्रयोजनम्, उत्तरकालं तु दोषोपप्लवविशेषाच्छारीरवत् प्रतीकारः ॥ ४ ॥**

अथागन्तुव्रणस्य कर्मविशेषयोजनं दर्शयन्नाह—सर्वस्मिन्नित्यादि । तत्कालमेवेति यत्कालमेवाभिघातात् क्षतमुत्पद्यते तस्मिन्नेव काले । क्षतोष्मण इति ऊष्मा प्रहारसंघट्टजनितं तेजः । प्रसृतस्य विस्तृतस्य । विधिविशेषो विधानभेदः । हेतुप्रत्यनीकं कर्माभिधाय व्याधिप्रत्यनीकं दर्शयन्नाह—सन्धानार्थं चेत्यादि । चकारः क्षतोष्मणो निर्वापणार्थं तथा मार्गावरोधक्रुद्धवातरक्तशमनार्थं च । वक्ष्यमाणशारीरव्रणोत्थानप्रयोजनं मनसि संप्रधार्याह—एतद्विकारणोत्थानप्रयोजनमिति । उत्तरकालमिति सप्ताहादूर्ध्वमित्यर्थः; यतः सद्योव्रणत्वं सप्ताहमेव । दोषोपप्लवविशेषादिति दोषैरनिलादिभिरुपप्लवो दूषणं तद्भेदात् ॥ ४ ॥

**दोषोपप्लवविशेषः पुनः समासतः पञ्चदशप्रकारः, प्रसरणसामर्थ्यात्, यथोक्तो व्रणप्रश्नाधिकारे; शुद्धत्वात् षोडशप्रकार इत्येके ॥ ५ ॥**

दोषोपप्लवविशेषं दर्शयन्नाह—दोषेत्यादि । समासतः संक्षेपतः; वातादीनां शोणितचतुर्थानां पृथगन्योन्यसंसर्गेण पञ्चदशभेदाः; विस्तरः पुनरेषां धातुमलसंसर्गजोऽपरिसंख्येयः । शुद्धत्वादिति पञ्चदशप्रकारदोषोपप्लवयुक्तत्वात् पञ्चदशप्रकारो व्रणः, षोडशश्च शुद्धः सकलदोषोपप्लवरहितो व्रण इत्यर्थः ॥५॥

**तस्य लक्षणं द्विविधं—सामान्यं, वैशेषिकं च । तत्र सामान्यं रुक् । 'व्रण' गात्रविचूर्णने, व्रणयतीति व्रणः । विशेषलक्षणं पुनर्वातादिलिङ्गविशेषः ॥ ६ ॥**

इदानीं व्रणस्य शुद्धाशुद्धभेदेन लक्षणद्वैविध्यमाह—तस्य लक्षणमित्यादि । तस्य व्रणस्येत्यर्थः । सामान्यलक्षणं व्रणस्य किमित्याह—तत्र सामान्यं रुगिति; रुक् पीडामात्रमित्यर्थः । व्रणस्य व्युत्पत्तिमाह—'व्रण' गात्रविचूर्णने इत्येवं धातुः, गात्रविवर्णनमित्यस्यार्थः । व्रणयतीति गात्रवैवर्ण्यं करोतीत्यर्थः । एतेनादोषलिङ्गाधिष्ठितो रोपणचिकित्साविषयः शुद्ध एव व्रण उक्तः । विशेषलक्षणमाह—विशेषलक्षणमित्यादि । अयमशुद्धो व्रण उक्तः ॥ ६ ॥

**तत्र श्यावारुणाभस्तनुः शीतः पिच्छिलोऽल्पस्रावी[1] रूक्षश्चटचटायनशीलः स्फुरणायामतोदभेदवेदनाबहुलो निर्मांसश्चेति वातात्, क्षिप्रजः पीत-**

१ 'शीतक्रियावधारणविधिविशेषः' इति पा० ।

१ 'शीतपिच्छिलाल्पस्रावी' इति पा० ।

नीलाभः किंशुकोदकाभोष्णस्रावी दाहपाकरागविकारकारी पीतपिडकाजुष्टश्चेति पित्तात्, प्रततचण्डकण्डूबहुलः स्थूलौष्ठः स्तब्धसिरास्नायुजालावततः कठिनः पाण्डवभासो मन्दवेदनः शुक्लशीतसान्द्रपिच्छिलास्रावी गुरुश्चेति कफात्, प्रवालदलनिचयप्रकाशः कृष्णस्फोटपिडकाजालोपचितस्तुरङ्गस्थानगन्धिः सवेदनो धूमायनशीलो रक्तस्रावी पित्तलिङ्गश्चेति रक्तात्, तोददाहधूमायनप्रायः पीतारुणाभस्तद्वर्णस्रावी चेति वातपित्ताभ्यां, कण्डूयनशीलः सनिस्तोदो रूक्षो गुरुर्दारुणो मुहुर्मुहुः शीतपिच्छिलाल्पस्रावी चेति वातश्लेष्मभ्यां, गुरुः सदाह उष्णः पीतपाण्डुस्रावी चेति पित्तश्लेष्मभ्यां, रूक्षस्तनुस्तोदबहुलः सुप्त इव च रक्तारुणाभस्तद्वर्णास्रावी चेति वातशोणिताभ्यां, घृतमण्डाभो मीनधावनतोयगन्धिर्मृदुर्विसर्प्युष्णकृष्णस्रावी चेति पित्तशोणिताभ्यां, रक्तो गुरुः स्निग्धः पिच्छिलः कण्डूप्रायः स्थिरो सरक्तपाण्डुस्रावी चेति श्लेष्मशोणिताभ्यां, स्फुरणतोददाहधूमायनप्रायः पीततनुरक्तस्रावी चेति वातपित्तशोणितेभ्यः, कण्डूस्फुरणचुमचुमायमानप्रायः पाण्डुघनरक्तास्रावी चेति वातश्लेष्मशोणितेभ्यः, दाहपाकरागकण्डूप्रायः पाण्डुघनरक्तास्रावी चेति पित्तश्लेष्मशोणितेभ्यः, त्रिविधवर्णवेदनास्रावविशेषोपेतः पवनपित्तकफेभ्यः, निर्दहननिर्मथनस्फुरणतोददाहपाकरागकण्डूस्वापबहुलो नानावर्णवेदनास्रावविशेषोपेतः पवनपित्तकफशोणितेभ्यः, जिह्वातलाभो मृदुः स्निग्धः श्लक्ष्णो विगतवेदनः सुव्यवस्थितो निरास्रावश्चेति शुद्धो व्रण इति ॥७॥

इदानीं वातादिव्रणलक्षणमाह—तत्रेत्यादि । चटचटायनशीलः चटचटायनस्वभावः । चटचटायनादयो वेदनाविशेषाः । स्फुरणं पुनः पुनश्चलनम्, आयामः सङ्कुचिताङ्गदेशस्य दीर्घीकरणमिव, तोदः सूचीभिरिव, भेदनं त्वग्विदारणमिव । क्षिप्रजः शीघ्रजन्मा । किंशुकोदकाभोष्णस्रावी किंशुककुसुमनःप्रक्षालनसलिलसदृशोष्णस्रवणशील इत्यर्थः । प्रततचण्डकण्डूबहुलः विशालकण्डूयनप्रायः । स्थूलौष्ठः विशालोन्नतव्रणवर्त्मेत्यर्थः । स्तब्धसिरास्नायुजालावततः अमृदुसिरास्नायुसमूहेन बद्ध इत्यर्थः । प्रवालदलनिचयप्रकाशः प्रवालखण्डसमूहसदृशः; प्रवालो विद्रुमः, स च समुद्रजातोऽत्यन्तरक्तो वल्लीविशेषः । कृष्णस्फोटपिडिकाजालोपचित इति कृष्णस्फोटपिडकासमूहव्याप्तः । तुरङ्गस्थानगन्धिः तीक्ष्णक्षारगन्धिः । धूमायनशीलः प्रकर्षेण धूमोद्गमनमिव कर्तुं शीलः । तोदेत्यादि । तद्वर्णस्रावी अत्रानुक्तपरिशिष्टेन वातपित्तयोर्वर्णेन स्रावेण च युक्त इत्यर्थः । कण्डूयनेत्यादि । सनिस्तोदो व्यथायुक्तः । दारुणः कठिनः । रूक्षेत्यादि । सुप्त इवेति अज्ञायमानस्पर्श इव । तद्वर्णास्रावीति अत्रानुक्तपरिशिष्टेन तयोर्वातशोणितयोर्वर्णेन स्रावेण च युक्त इत्यर्थः । घृतमण्डो घृतस्योपरिस्थोऽच्छो भागो मण्डः । मीनधावनतोयगन्धिः मत्स्यप्रक्षालनोदकगन्धिः, विस्रगन्धिरित्यर्थः । कण्ड्वित्यादि । चुमचुमायमानं राजिकासर्षपलिप्त इव वेदना । निर्दहनेत्यादि ।—निर्दहनं भस्मसात्करणमिव, निर्मथनं मन्थानविलोडनमिव । इदानीं शुद्धव्रणमाह—जिह्वेत्यादि । अत्र जिह्वातलाभशब्दो मृदुस्निग्धश्लक्ष्णशब्दैः प्रत्येकं संबध्यते; अत्राभाशब्देन वर्णः कथ्यते । मृदुः कोमलः । श्लक्ष्णो मसृणः । सुव्यवस्थितः शोभनाकृतिः; एतेन नात्युन्नतो नातिनीचः किन्तु सम इति बोधयति । इतिशब्दः सूत्रनिर्दिष्टसमाप्तौ ॥ ७ ॥

तस्य व्रणस्य षष्टिरुपक्रमा भवन्ति । तद्यथा—अपतर्पणमालेपः परिषेकोऽभ्यङ्गः स्वेदो विम्लापनमुपनाहः पाचनं विस्रावणं स्नेहो वमनं विरेचनं छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं विस्रावणं सीवनं सन्धानं पीडनं शोणितास्थापनं निर्वापणमुत्कारिका कषायो वर्तिः कल्कः सर्पिस्तैलं रसक्रियाऽवचूर्णनं व्रणधूपनमुत्सादनमवसादनं मृदुकर्म दारुणकर्म क्षारकर्माग्निकर्म कृष्णकर्म पाण्डुकर्म प्रतिसारणं रोमसंजननं लोमापहरणं वस्तिकर्मोत्तरवस्तिकर्म बन्धः पत्रदानं कृमिघ्नं बृंहणं विषघ्नं शिरोविरेचनं नस्यं कवलधारणं धूमो मधु सर्पिर्यन्त्रमाहारो रक्षाविधानमिति ॥ ८ ॥

तस्येत्यादि । एषां मध्ये प्रतिसारणं न गणनीयं, शुक्लकृष्णकर्मगौरवैशेषत्वात्; अतो न संख्यातिरेकः । केचिदत्र रोमसञ्जननलोमापहरणादीन् सप्तोपक्रमान् विहाय कषायादीन् सप्त शोधनरूपान् सप्त रोपणरूपानिति द्विरूपान् गणयित्वा षष्टिमुपक्रमान् पूरयन्ति । तन्न, कषायादयोऽवान्तरभेदविवक्षया चतुर्दशापि सामान्याकारेण सप्तैव, अतः सप्तैव गणनीयाः, रोमसंजननादयश्चावश्यं पठनीयाः । अपरं च **गयदासः** पाचनं न पठति, **जेज्जटस्तु** लोमापहरणं न पठति अपि च, ताभ्यां परमत्वन्तं विवादः कृतः, स च विस्तरभयान्न लिखितः; तौ च यया युक्त्या षष्टिं पूरयतः साऽपि विस्तरभयान्न लिखिता ॥ ८ ॥

तेषु कषायो वर्तिः कल्कः सर्पिस्तैलं रसक्रियाऽवचूर्णनमिति शोधनरोपणानि, तेष्वष्टौ शस्त्रकृत्याः, शोणितास्थापनं क्षारोऽग्निर्यन्त्रमाहारो रक्षाविधानं बन्धविधानं चोक्तानि, स्नेहस्वेदन-

१ 'स्थूलो घनः स्तब्धः सिरास्नायुजालावततः' इति पा० । २ 'पीतारुणाभासः' इति पा० । ३ 'पीतः पाण्डुस्रावी' इति पा० । ४ 'पाण्डुपीतरक्तास्रावी' इति ता. ।

१ 'लोमापनयनं' इति 'लोमशातनं' इति च पा० । २ 'अविशेषत्वात्' इति पा० । ३ '°लोमापनयनादीन्' इति पा० ।

**वमनविरेचनवस्त्युत्तरवस्तिशिरोविरेचननस्यधूमकवलधारणान्यन्यत्र वक्ष्यामः, यदन्यदवशिष्टमुपक्रमजातं तदिह वक्ष्यते ॥ ९ ॥**

इदानीमुपक्रमेषु मध्ये कषायादीनामुभयार्थकारित्वमाह—तेष्वित्यादि । तेषु अपतर्पणादिषु मध्ये, कषायादयः सप्त । अष्टौ छेदनादयो दारणवर्ज्याः सीवनान्ताः, शस्त्रकृत्याः शस्त्रेण कर्तुं शक्या उपक्रमा अष्टविधशस्त्रकर्मीये ( सू. अ. २५ ) उक्ताः । शोणितेत्यादि । शोणितास्थापनं चतुर्विधं कषायशीतक्रियापचनदहनभेदेन, तदुक्तं शोणितवर्णनीये ( सू. अ. १४ ) । क्षारः पानीयप्रतिसारणीयभेदेन द्विविधोऽप्युक्तः । "जीर्णशाल्योदनं" ( सू. अ. १९ ) इत्यादिना व्रणितोपासनीयोक्तैराहारोऽप्युक्तः । रक्षाविधानं द्विविधं तन्त्रेण रक्षोघ्नगुग्गुल्वादिना धूपनेन लक्ष्मीगुहाद्योषधिधारणेन चेत्येतदुक्तमग्रोपहरणीये व्रणितोपासनीये ( सू. अ. १९ ) च; मन्त्रेण च "कृत्यानां प्रतिषेधार्थं" ( सू. अ. ५ ) इत्यादिनाऽग्रोपहरणीये । बन्धविधानं व्रणालेपनाध्याये ( सू. अ. १८ ) । शोणितास्थापनादयः सप्त । स्नेहेत्यादि अन्यत्रेति पञ्चकर्मनिर्देशे इत्यर्थः । स्नेहादयो दश । यदित्यादि अवशिष्टमुपक्रमजातमुर्वरित उपक्रमसमूहोऽष्टाविंशतिसंख्यः, एवं सर्वमीलने षष्टिरुपक्रमा भवन्ति ॥ ९ ॥

**षड्विधः प्रागुपदिष्टः शोफः, तस्यैकादशोपक्रमा भवन्त्यपतर्पणादयो विरेचनान्ताः; ते च विशेषेण शोथप्रतीकारे वर्तन्ते, व्रणभावमापन्नस्य च न विरुध्यन्ते; शेषास्तु प्रायेण व्रणप्रतीकारहेतव एव ॥ १० ॥**

इदानीमपतर्पणादीन्येकादश व्रणकारणशोफविषयत्वेन विषयभेदेनापि निर्दिशन्नाह—षड्विध इत्यादि । अपतर्पणादय इत्यत्र बहुव्रीहेरतद्गुणसंविज्ञानत्वाच्छेषा एकादश ग्राह्याः । अपतर्पणमुपक्रममध्ये प्राधान्याद्गृह्यते । ननु, अपतर्पणादीनां शोफविषयत्वाच्छोफस्य च व्रणाद्भिन्नत्वेन कथं षष्टिरुपक्रमा भवन्तीत्याह—व्रणभावमित्यादि । आपन्नस्य प्राप्तस्य, 'शोफस्य' इति शेषः । शेषा इत्यादि एकादशभ्य उपक्रमेभ्योऽन्ये शेषाः, ते व्रणप्रतीकारभूता एव ॥ १० ॥

**अपतर्पणमाद्य उपक्रमः; एष सर्वशोफानां सामान्यः प्रधानतमश्च ॥ ११ ॥**

प्रथममपतर्पणं निर्दिशन्नाह—अपतर्पणमित्यादि । अपतर्पणम् अभोजनं; ननु यत्किंचिदेवापतर्पणं वमनादि, वमनादीनां पृथगेवोपादानात् । सर्वशोफानामिति पञ्चदशानां, नागन्तोः; दोषोच्छ्रायोपशान्त्यर्थमिति वचनात् । अत्र वातजेऽपि शोफेऽपतर्पणं विकारप्रत्यनीकत्वात्, अथवा वातेऽपि प्रागामताभावात् । तदुक्तं—"वाते सामेऽपि लङ्घनम्"–इति । सामान्यः सर्वशोफहितः । प्रधानतम आशुरोगहरत्वात् ॥ ११ ॥

१ '°कवलविधानान्यन्यत्र' इति पा० । २ 'शोथप्रतीकाराः' इति पा० ।

भवन्ति चात्र—

**दोषोच्छ्रायोपशान्त्यर्थं दोषानद्धस्य देहिनः ॥**
**अवेक्ष्य दोषं प्राणं च कार्यं स्यादपतर्पणम् ॥ १२ ॥**

अपतर्पणस्यैव फलं विषयं कालावधिं च दर्शयन्नाह—दोषेत्यादि । दोषोच्छ्रायोपशान्तिः फलं, दोषानद्धत्वं विषयः, अवेक्ष्य दोषं प्राणं चेति कालावधिः । दोषोच्छ्रायो दोषोत्कटत्वम् । दोषानद्धस्य दोषैरामैरानद्धाशेषस्रोतसः । दोषाः कफादयः, तद्दुष्टा धातवो मलाश्च । देहिन उपचितशरीरस्येत्यर्थः । दोषं प्राणं चेति युगपदेव लङ्घनावधिः; प्राणं चेत्यत्र चकाराद्वयःप्रकृत्यादीनि चाष्टौ, अवेक्ष्य विविच्य ॥ १२ ॥

**ऊर्ध्वमारुततृष्णाक्षुन्मुखशोषश्रमान्वितैः ॥**
**न कार्यं गर्भिणीवृद्धबालदुर्बलभीरुभिः ॥ १३ ॥**

अपतर्पणस्य निषेधविषयं निर्दिशन्नाह—ऊर्ध्वमारुतेत्यादि । ऊर्ध्वमारुताः श्वासकासादिरोगिणः, अन्ये तूर्ध्वमारुतं रोगान्तरमाहुः । तद्यथा—"भुक्तेऽभुक्ते तथा सुप्ते यस्योद्गारो भृशं भवेत् । ऊर्ध्ववातं तु तं विद्यादुदानव्यानसंभवम्"–इति । अपरे तु 'तद्धि मारुत' इत्यादि पठन्ति । मारुतोऽत्र मारुतकृताक्षेपकादिरामयः । क्षुद् बुभुक्षा । मुखशोषो निरामवातपित्तकृतः । 'श्रमान्वितैः' इत्यत्र केचित् 'भ्रमान्वितैः' इति पठन्ति; भ्रमो निरामवातपित्तकृतः; सामवातपित्तकृतमार्गावरणजौ तु तावपि लङ्घ्यावेव । गर्भिण्यादिष्वनात्ययिके व्याधौ लङ्घनप्रतिषेधः ॥ १३ ॥

**शोफेषूत्थितमात्रेषु व्रणेषूग्ररुजेषु च ॥**
**यथास्वैरौषधैर्लेपं प्रत्येकश्येन कारयेत् ॥ १४ ॥**

आलेपनविषयं दर्शयन्नाह—शोफेष्वित्यादि । उत्थितमात्रेषु जातमात्रेषु । यथास्वैरिति वातादिशोफे मातुलुङ्गादिदूर्वाद्यजगन्धादिभिरात्मीयैरित्यर्थः । यथोक्तैरिति केचित् पठन्ति; तत्रापि स एवार्थः । प्रत्येकश्येन एकैकेन ॥ १४ ॥

**यथा प्रवज्वलिते वेश्मन्यम्भसा परिषेचनम् ॥**
**क्षिप्रं प्रशमयत्यग्निमेवमालेपनं रुजः ॥ १५ ॥**
**प्रह्लादने शोधने च शोफस्य हरणे तथा ॥**
**उत्सादने रोपणे च लेपः स्यात्तु तदर्थकृत् ॥ १६ ॥**

दृष्टान्तदर्शनेनालेपस्य फलमाह—यथेत्यादि । एवमालेपनं रुज इति आलेपनं शोफस्य रुजो वेदनाः शमयतीत्यर्थः । न केवलमालेपः शोफस्य रुजापहः; किंतु प्रह्लादनादीन्यपि करोतीत्याह—प्रह्लादन इत्यादि । प्रह्लादने सुखकरणे, रुजापनयनात् । शोधने व्रणस्य दोषप्रकोपस्फोटनाय । उत्सादने निम्नव्रणस्योन्नतिकरणे । रोपणे चेति चकारादवसादनसवर्णकरणा-

१ 'भवन्ति चात्र' इति पाठः क्वचित्पुस्तके नोपलभ्यते । २ अस्याग्रे 'अन्नामता च' इत्यधिकं पठ्यते हस्तलिखितपुस्तके । ३ 'तद्धि मारुतक्षुत्तृष्णामुखशोषभ्रमान्वितैः । कार्यं न बाले वृद्धे वा न गुर्विण्यां न दुर्बले' इति ता. । ४ 'प्रत्येकं चैव' इति पा० ।

दीनि समुच्चीयन्ते । तदर्थंकृत् प्रह्लादनादिप्रयोजनकारी । अस्य प्रयोगः पुनरालेपाध्याये ( सू. अ. १८ ); द्रव्याणि तु मिश्रकादिषु ॥ १५ ॥ १६ ॥

**वातशोफे तु वेदनोपशमार्थं सर्पिस्तैलधान्याम्लमांसरसवातहरौषधनिष्काथैरशीतैः परिषेकान् कुर्वीत, पित्तरक्ताभिघातविषनिमित्तेषु क्षीरघृतमधुशर्करोदकेक्षुरसमधुरौषधक्षीरवृक्षनिष्काथैरनुष्णैः परिषेकान् कुर्वीत, श्लेष्मशोफे तु तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिष्काथैरशीतैः परिषेकान् कुर्वीत ॥ १७ ॥**

**यथाऽम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति ॥**
**दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥ १८ ॥**

परिषेकस्य फलं प्रयोगं च दर्शयन्नाह—वातेत्यादि । वातशोफादिर्विषयः, वेदनोपशमः फलं, सर्पिरित्यादिः प्रयोगः । धान्याम्लं काञ्जिकम् । वातहरौषधानि भद्रदार्वादीनि । शर्करामिश्रमुदकं शर्करोदकम् । मधुरौषधानि काकोल्यादीनि । क्षीरवृक्षा वटादयः । क्षारोदकमिति क्षारं गालयित्वा यदुदकं गृह्यते तत् क्षारोदकम् । कफघ्नानि कालेयकागुरुप्रभृतीनि ॥ १७ ॥ १८ ॥

**अभ्यङ्गस्तु दोषमालोक्योपयुक्तो दोषोपशमं मृदुतां च करोति ॥ १९ ॥**

**स्वेदविम्लापनादीनां क्रियाणां प्राक् स उच्यते ॥**
**पश्चात् कर्मसु चादिष्टः स च विस्रावणादिषु ॥२०॥**

अभ्यङ्गस्य फलं प्रयोगं च दर्शयन्नाह—अभ्यङ्ग इत्यादि । वाते कफे च तैलेन, पित्ते रक्ते विषादिषु च शतधौतादिघृतेन । तस्य कालावधारणं निर्दिशन्नाह—स्वेदेत्यादि । स्वेदविम्लापनादीनां विरेचनान्तानां स्नेहवर्जितानां सप्तानामुपक्रमाणां प्राग्भवति; विस्रावणादिषु सेचनान्तेषु स्नेहवमनविरेचनव्यतिरिक्तेषु कर्मसु सोऽभ्यङ्गः पश्चादादिष्टः ॥ १९ ॥ २० ॥

**रुजावतां दारुणानां कठिनानां तथैव च ॥**
**शोफानां स्वेदनं कार्यं ये चाप्येवंविधा व्रणाः ॥२१॥**

स्वेदविषयं दर्शयन्नाह—रुजावतामित्यादि । रुजावतां वातकफवेदनायुक्तानां, दारुणादिविशेषणस्य तद्विषयत्वात् । दारुणानामिति दारुणत्वं वायुना रूक्षजरठीभावः, अचैलत्वमित्यपरे । प्रयोगः पञ्चकर्मनिर्देशे वक्ष्यमाणः ॥ २१ ॥

**स्थिराणां रुजतां मन्दं कार्यं विम्लापनं भवेत् ॥**
**अभ्यज्य स्वेदयित्वा तु वेणुनाड्या ततः शनैः ॥२२॥**
**विमर्दयेद्भिषक् प्राज्ञस्तलेनाङ्गुष्ठकेन वा ॥**

विम्लापनविषयं प्रयोगं च दर्शयन्नाह—स्थिराणामित्यादि । स्थिराणां कठिनानाम् । मन्दं रुजतां कफाधिकानामित्यर्थः; वातकफाधिकानामित्यन्ये । तलेन पाणिपादतलेन । विम्लापनम् अङ्गुल्यादिमर्दनेन शोफविलयनम् ॥ २२ ॥—

**शोफयोरुपनाहं तु कुर्यादामविदग्धयोः ॥ २३ ॥**
**अविदग्धः शमं याति विदग्धः पाकमेति च ॥**

उपनाहमाह—शोफयोरित्यादि । उपनाहो वातकफशोफविषय एव । अविदग्ध आमः । विदग्धः किञ्चित्पक्वः ॥२३॥—

**निवर्तते न यः शोफो विरेकान्तैरुपक्रमैः ॥ २४ ॥**
**तस्य संपाचनं कुर्यात् समाहृत्यौषधानि तु ॥**
**दधितक्रसुराशुक्तधान्याम्लैर्योजितानि तु ॥ २५ ॥**
**स्निग्धानि लवणीकृत्य पचेदुत्कारिकां शुभाम् ॥**
**सैरण्डपत्रया शोफं नाहयेदुष्णया तया ॥ २६ ॥**
**हितं सम्भोजनं चापि पाकायाभिमुखो यदि ॥**

पाचनविषयमाह—निवर्तत इत्यादि । विरेकान्तैरिति अपतर्पणाद्यैर्विरेकान्तैरित्यर्थः । समाहृत्यौषधानीति औषधानि मिश्रकोक्तानि शणमूलकबीजादीनि समभागप्रमाणानि, तथा चतुर्गुणदध्यादिद्रवाणि च समाहृत्य एकीकृत्य, लवणीकृत्य स्पष्टलवणीकृत्य, नातिद्रवां नातिशुष्कामुपनाहयोग्यामुत्कारिकां पाचयेत्; उत्कारिका लप्सिकाकृतिः, अन्ये पूपलिकाकृतिमाहुः । नाहयेद् बध्नीयात् । तया उत्कारिकया । हितं संभोजनमिति संभोजनं यथेष्टभोजनम् । तच्च कीदृशं? हितं हितकारि; कोऽर्थः? नात्यर्थंकफकारि न चोपद्रवकारीत्यर्थः । एतेनाहारविधानोक्तैरुष्णस्निग्धादिभिरेव संभोजनं कार्यमित्युक्तम् । **सुधीरस्तु** 'पथ्यापथ्यमिहैकत्र भुक्तं संभोजनं मतम्'—इत्याह; तच्च **श्रीजेज्जटगयदासौ** नेच्छतः । उपनाहनिष्पाद्यं कर्म पाचनमिति मत्वा पाचनं पृथगुपक्रमं **गयदासो** न पठति ॥ २४—२६ ॥—

**वेदनोपशमार्थाय तथा पाकशमाय च ॥ २७ ॥**
**अचिरोत्पतिते शोफे कुर्याच्छोणितमोक्षणम् ॥**
**सशोफे कठिने ध्यामे सरक्ते वेदनावति ॥ २८ ॥**
**संरब्धे विषमे चापि व्रणे विस्रावणं हितम् ॥**
**सविषे च विशेषेण जलौकोभिः पदैस्तथा ॥ २९ ॥**
**वेदनायाः प्रशान्त्यर्थं पाकस्याप्राप्तये तथा ॥**

विस्रावणविषयमाह—वेदनेत्यादि । अचिरोत्पतिते तत्कालोत्पन्ने । जलौकोभिः प्रच्छानैर्वा शोणितमोक्षणं कुर्यात् । व्रणेऽपि यादृशे शोणितं स्रावणीयं तादृशमाह—सशोफ इत्यादि । ध्यामे कृष्णारुणे । सरक्ते रक्तवर्णे । वेदनावति वेदनायुक्ते । संरब्धे विशालमूले । विषमे निम्नोन्नते । विशेषेण अतिशयेन, सविषे च विशेषेण रक्तमोक्षणम् ॥ २७–२९ ॥—

**सोपद्रवाणां रूक्षाणां कृशानां व्रणशोषिणाम् ॥३०॥**
**यथास्वमौषधैः सिद्धं स्नेहपानं विधीयते ॥**

---

१ 'अष्टानां' इति पा० । २ 'प्रबलत्वमित्यन्ये' इति पा० । ३ 'वेणुना वा शनैः शनैः' इति पा० ।

१–२ 'श्यामे' इति पा० ।

स्नेहपानविषयं दर्शयन्नाह—सोपद्रवाणामित्यादि । सोपद्रवाणामिति नात्र व्रणोपद्रवा गन्धवर्णस्राववेदनाकृतयः पञ्च; किं तर्हि व्रणितस्योपद्रवा वेपथुपक्षवधादयः । व्रणशोषिणां व्रणनिमित्तक्षयिणाम् । यथास्वमौषधैरिति यस्य यदात्मीयमौषधं वातादेस्तेन सिद्धस्य स्नेहस्य पानं; विचारणाभिन्नाच्छपानमित्याचार्याः ॥ ३० ॥

**उत्सन्नमांसशोफे तु कफजुष्टे विशेषतः ॥ ३१ ॥**
**संक्लिष्टश्या(ध्या)मरुधिरे व्रणे प्रच्छर्दनं हितम् ॥**

वमनविषयं दर्शयन्नाह—उत्सन्नेत्यादि । उत्सन्नमांसशोफे इति उच्छ्रितमांसशोफे । कफजुष्टे कफाक्रान्ते । संक्लिष्टं दुष्टं, श्या( ध्या )ममीषत्कृष्णं, रुधिरं यस्मिन्नेवंभूते व्रणे प्रच्छर्दनं वमनं हितम् ॥ ३१ ॥—

**वातपित्तप्रदुष्टेषु दीर्घकालानुबन्धिषु ॥ ३२ ॥**
**विरेचनं प्रशंसन्ति व्रणेषु व्रणकोविदाः ॥**

विरेचनविषयमाह—वातेत्यादि । वातेन सहितं पित्तं वातपित्तं पित्तप्रधानसंसर्गः; न तु वातश्च पित्तं चेति, केवलवातजे बस्तिविधानात् । अनेनैव न्यायेन वातोपसर्जने कफसंसर्गे वमनमूह्यम् । एषु स्नेहादिषु त्रिषु शोफस्यानुक्तावपि शोफाधिकारत्वादेव स्नेहादयस्त्रयो विशिष्टावस्थायां शोफस्याप्युपक्रमा बोद्धव्याः । व्रणकोविदा व्रणपण्डिताः ॥ ३२ ॥—

**अपाकेषु तु रोगेषु[1] कठिनेषु स्थिरेषु च ॥ ३३ ॥**
**स्नायुकोथादिषु तथा च्छेदनं प्राप्तमुच्यते[2] ॥**

छेदनमाह—अपाकेष्वित्यादि । अपाकेषु अविद्यमानपाकेषु मेदःकफग्रन्थिमांसकन्यादिषु; अथवा अपाकेषु ईषत्पाकेषु वल्मीकादिष्वित्यर्थः; नञ्शब्दस्योभयार्थत्वात् । **गयी** तु 'अपाकवत्सु' इति पठति, तत्रापि स एवार्थः; परं तं पाठं न साधुं मन्यते **जेज्जटः** । कठिनेषु दृढेषु । स्थिरेषु अचलेषु । स्नायुकोथादिष्वित्यत्रादिशब्दात् सिराधमन्यादिपरिग्रहः । प्राप्तं युक्तमित्यर्थः ॥ ३३ ॥—

**अन्तःपूयेष्ववक्त्रेषु तथैवोत्सङ्गवत्स्वपि ॥ ३४ ॥**
**गतिमत्सु च रोगेषु भेदनं प्राप्तमुच्यते ॥**

भेदनमाह—अन्तःपूयेष्वित्यादि । अवक्त्रेषु अविद्यमानमुखेषु । उत्सङ्गवत्सु चिरस्थितपूयावदारणगम्भीरशुषिरव्रणवस्तुप्रदेश उत्सङ्गतुल्यत्वादुत्सङ्ग इत्युच्यते, तद्वत्सु । रोगेषु व्रणेषु । गतिमत्सु गतियुक्तेषु । प्राप्तं युक्तम् ॥ ३४ ॥—

**बालवृद्धासहक्षीणभीरूणां[3] योषितामपि ॥ ३५ ॥**
**मर्मोपरि च जातेषु रोगेषूक्तेषु[4] दारणम् ॥**
**सुपक्वे पिण्डिते[5] शोफे पीडनैरुपपीडिते[6] ॥ ३६ ॥**
**पाकोद्वृत्तेषु दोषेषु तत्तु कार्यं विजानता ॥**
**सुपिष्टैर्दारणद्रव्यैर्युक्तैः क्षारेण[1] वा पुनः ॥ ३७ ॥**

दारणमाह—बालेत्यादि । पीडनैरिति[2] पीडनद्रव्यैरित्यर्थः । पाकोद्वृत्तेषु उत्तानेषु त्वग्गतेष्वित्यर्थः । दारणद्रव्यैर्मिश्रकोक्तैश्चिरबिल्वादिभिः । क्षारेण प्रतिसारणीयेन, यवक्षारेणेत्यन्ये ॥ ३५—३७ ॥

**कठिनान्[3] स्थूलवृत्तौष्ठान् दीर्यमाणान् पुनः पुनः ॥**
**कठिनोत्सन्नमांसांश्च लेखनेनाचरेद्भिषक् ॥ ३८ ॥**
**समं लिखेत् सुलिखितं लिखेन्निरवशेषतः ॥**
**वर्त्मनां[4] तु प्रमाणेन समं शस्त्रेण निर्लिखेत् ॥ ३९ ॥**

लेखनमाह—कठिनानित्यादि । कठिनान् मांसहीनान्, समम् अहीनाधिकं लिखेत्; स्थूलवृत्तौष्ठान् सुलिखितम् अतिशयलिखितं लिखेत्; पुनः पुनर्दीर्यमाणान् निरवशेषतो लिखेत्; कठिनोत्सन्नमांसान् वर्त्मनां प्रमाणेन समं लिखेत् । अन्येऽत्र पुनरन्यथा व्याख्यानयन्ति–समलेखनम् अवगाढलेखनं, सुलेखनं मृदुलेखनं, निरवशेषलेखनं निर्लेखनं निश्शेषलेखनमिति । **श्रीसुवीरजेज्जटब्रह्मदेवा**श्चतुरो विषयानाहुः, तथाहि—कठिनानित्येको विषयः, स्थूलवृत्तौष्ठानिति द्वितीयः, दीर्यमाणान् पुनः पुनरिति तृतीयः, कठिनोत्सन्नमांसांश्चेति चतुर्थः । अपरे तु समं लिखेदित्याद्यन्यथा व्याख्यानयन्ति—कठिनान् स्थूलवृत्तौष्ठान् यथा सुलिखितं भवत्येवं लिखेदिति संबन्धः, कथं सुलिखितं भवतीत्याह—समं लिखेत्, निरवशेषं लिखेत्, वर्त्मनां तु प्रमाणेन समं निर्लिखेदिति । समं सुलिखितलक्षणम् । निर्लिखेत् पुनः पुनर्लिखेदिति भणनं बहुशो लेखने शस्त्रावचारणं सूचयति । अत्र व्रणवर्त्मशब्देन व्रणगताश्चत्वारः पार्श्वा वाच्याः । शस्त्रेण निर्लिखेत्, न तु गोजीशेफालिकादिपत्रेण ॥ ३८ ॥ ३९ ॥

**क्षौमं प्लोतं पिचुं फेनं यावशूकं ससैन्धवम् ॥**
**कर्कशानि च पत्राणि लेखनार्थं प्रदापयेत् ॥ ४० ॥**

शस्त्राभावे तु क्षौमादिभिर्लिखेदित्याह—क्षौममित्यादि । क्षौमम् अतसीवस्त्रम् । प्लोतं कर्पटम् । पिचुं कार्पासतूलाम्[5] । फेनं समुद्रफेनम् । यावशूको यवक्षारः ॥ ४० ॥

**नाडीव्रणान् शल्यगर्भानुन्मार्ग्युत्सङ्गिनः शनैः ॥**
**करीरबालाङ्गुलिभिरेषण्या चैषयेद्भिषक् ॥ ४१ ॥**
**नेत्रवर्त्मगुदाभ्यासनाड्योऽवक्त्राः सशोणिताः ॥**
**चुच्चूपोदकजैः श्लक्ष्णैः करीरैरेषयेत्तु ताः ॥ ४२ ॥**

१ 'शोफेषु' इति पा० । २ 'प्राप्तमिष्यते' इति पा० । ३ 'बालवृद्धक्षतक्षीण°' इति ता. । ४ 'रोगेपूक्तं च' इति पा० । ५ 'पिशिते' इति पा० । ६ 'पीडनैरवपीडिते' इति पा० ।

१ 'स्रुतक्षारेण' इति ता. । २ 'पीडनैरित्यादि सुगमम्, लेखनमाह' इति पा० । ३ 'कठिनस्थूलवृत्तौष्ठान्' इति पा० । ४ 'वर्त्मनाऽनुप्रमाणेन' इति पा० । 'अनुप्रमाणेन विदीर्णभागप्रमाणयोग्येन, वर्त्मना शस्त्रपदेन, निरवशेषतो मनागप्यपरिहार्यं, सुलिखितं विरलत्वादिदोषरहितं, लिखेत् 'पुनः पुनर्दीर्यमाणान्' इति शेषः' इति हाराणचन्द्रः । ५ 'तूलम्' इति पा० ।

एषणमाह—नाडीत्यादि । नाड्यश्च व्रणाश्चेति नाडीव्रणास्तान् । शल्यगर्भान् अभ्यन्तरशल्यानित्यर्थः । उन्मार्गी भगन्दरः, उत्सङ्गी शम्बूकावर्ताभिध इत्येके; तन्न, तयोरसाध्यत्वेनैषणानर्हत्वात् । तत्र, उत्सृष्टो मार्गो विद्यते येषां ते उन्मार्गिणो व्रणाः ऋजुं मार्गं परित्यज्य कुटिलया गत्या ये यान्तीत्यर्थः; उत्सङ्गिन ऊर्ध्वसङ्गिनः । करीराः चुचूपोदकादीनां कोमला नालाः । बालाः करिशूकरादीनाम् । विवृतास्यान् कोष्ठाश्रितानङ्गुल्या वा एषयेदित्यर्थः । एषणी शलाकाशस्त्र(यन्त्र)म् । एषयेत् करीरादिनिक्षेपणेन व्रणमार्गनिश्चयं कुर्यादित्यर्थः । करीराणां विषयं निर्दिशन्नाह—नेत्रवर्त्मेत्यादि । गुदाभ्यासो गुदसमीपम् । अवक्रा अल्पवक्राः । चुचूः चीचुरिति लोके । उपोदकः 'पोइ' इति लोके ॥ ४१ ॥ ४२ ॥

**संवृतासंवृतास्येषु व्रणेषु मतिमान् भिषक् ॥**
**यथोक्तमाहरेच्छल्यं प्राप्तोद्धरणलक्षणम् ॥ ४३ ॥**

आहरणविषयमाह—संवृतेत्यादि । प्राप्तोद्धरणलक्षणमिति सद्यःप्राणहरविशल्यघ्नादिरहितमन्यदित्यर्थः ॥ ४३ ॥

**रोगे व्यधनसाध्ये तु यथोद्देशं प्रमाणतः ॥**
**शस्त्रं निदध्याद्दोषं च स्रावयेत् कीर्तितं यथा ॥४४॥**

व्यधनविस्रावणविषयमाह—रोग इत्यादि । व्यधनसाध्यो रोगो दकोदरमूत्रवृद्ध्यादिः । यथोद्देशं प्रमाणत इति उद्देशानतिक्रान्तप्रमाणमित्यर्थः । तत्र दकोदरोद्दिष्टं प्रमाणमङ्गुष्ठोदरप्रमाणमवगाढमिति ज्ञेयं; विद्रध्यादिषु पुनः "महत्स्वपि च पाकेषु द्व्यङ्गुलान्तरं त्र्यङ्गुलान्तरं वा शस्त्रनिपातनम्" ( सू. अ. ५ ) इति । शस्त्रं निदध्यादित्यन्तेन व्यधनमुक्तं, दोषं च स्रावयेत् कीर्तितं यथेति स्रावणमुक्तम्, एवमनेन श्लोकेनोपक्रमद्वयमुक्तम् ॥ ४४ ॥

**अपाकोपद्रुता ये च मांसस्था विवृताश्च ये ॥**
**यथोक्तं सीवनं तेषु कार्यं सन्धानमेव च ॥ ४५ ॥**

सीवनसन्धानविषयमाह—अपाकेत्यादि । अपाकोपद्रुताः पाकोपद्रवरहिताः । विवृता व्यात्तमुखाः । यथोक्तमष्टविधशस्त्रकर्मीये ( सू. अ. २५ ) । सन्धानमेव चेति न केवलं सीवनं सन्धानमपि; सन्धानं व्रणौष्ठादिसंयोजनम् । अनेन श्लोकेनोपक्रमद्वयमुक्तम् ॥ ४५ ॥

**पूयगर्भानणुद्वारान् व्रणान्मर्मगतानपि ॥**
**यथोक्तैः पीडनद्रव्यैः समन्तात् परिपीडयेत् ॥४६॥**
**शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति ॥**
**न चाभिमुखमालिम्पेत्तथा दोषः प्रसिच्यते ॥ ४७ ॥**

पीडनमाह—पूयेत्यादि । यथोक्तैर्मिश्रकपरिपठितैः पिच्छिलद्रव्यलङ्मूलादिभिः । समन्तात् सर्वतः । प्रदेहं प्रलेपनमित्यर्थः । दोषः पूयः । प्रसिच्यते स्वयं प्रक्षरति । पीडनम् औषधैश्चम्पनम् ॥ ४६ ॥ ४७ ॥

**तैस्तैर्निमित्तैर्बहुधा शोणिते प्रस्रुते भृशम् ॥**
**कार्यं यथोक्तं वैद्येन शोणितास्थापनं भवेत् ॥ ४८ ॥**

शोणितास्थापनमाह—तैस्तैरित्यादि । तैस्तैः सिराव्यधादिभिः । यथोक्तं शोणितास्थापनं शोणितातिप्रवृत्तिस्तम्भनम् । तच्चतुर्विधम्—"सन्धानं स्कन्दनं चैव पाचनं दहनं तथा" ( सू. अ. १४ ) इति ॥ ४८ ॥

**दाहपाकज्वरवतां व्रणानां पित्तकोपतः ॥**
**रक्तेन चाभिभूतानां कार्यं निर्वापणं भवेत् ॥ ४९ ॥**
**यथोक्तैः शीतलद्रव्यैः क्षीरपिष्टैर्घृताप्लुतैः ॥**
**दिह्यादबहलान् सेकान् सुशीतांश्चावचारयेत् ॥५०॥**

निर्वापणमाह—दाहेत्यादि । निर्वापणं नाम पित्तरक्तव्रणस्य पच्यमानस्य ज्वलत इव औषधादिभिर्वेदनोपशमः । यथोक्तैर्मिश्रकोक्तैर्दूर्वादिभिः । क्षीरपिष्टैरिति क्षीरेण आपिष्टैः, श्लक्ष्णस्य दाहपाककारित्वात् । दिह्यात् लिम्पेत् । अबहलान् यतः श्लक्ष्णघनो लेपश्चन्दनस्यापि दाहकृद्भवति । सेकान् परिषेकान् । अनेन श्लोकेन सेकलेपौ द्वौ निर्वापणावुक्तौ ॥ ४९ ॥ ५० ॥

**व्रणेषु क्षीणमांसेषु तनुस्राविष्वपाकिषु ॥**
**तोदकाठिन्यपारुष्यशूलवेपथुमत्सु च ॥ ५१ ॥**
**वातघ्नवर्गेऽम्लगणे काकोल्यादिगणे तथा ॥**
**स्नैहिकेषु च बीजेषु पचेदुत्कारिकां शुभाम् ॥ ५२ ॥**
**तेषां च स्वेदनं कार्यं स्थिराणां वेदनावताम् ॥**

उत्कारिकाविषयमाह—व्रणेष्वित्यादि । क्षीणमांसत्वादिकं वातकार्यम् । वातघ्नवर्गे भद्रदार्वादौ, अम्लगणे सौवीरकतुषोदकादौ, स्नैहिकेषु च बीजेषु तिलातसीसर्षपैरण्डादिबीजेषु । वातघ्नवर्गकाकोल्यादिगणस्नैहिकबीजानि समभागानि तच्चतुर्गुणमम्लानां गृहीत्वा नातिघनां नातिसान्द्रां पेयानुकारिणीमुत्कारिकां पचेत् ॥ ५१ ॥ ५२ ॥

**दुर्गन्धानां क्लेदवतां पिच्छिलानां विशेषतः ॥ ५३ ॥**
**कषायैः शोधनं कार्यं शोधनैः प्रागुदीरितैः ॥**

इदानीं कषायादींश्चूर्णान्तान् सप्त शोधनरोपणान् विषयभेदेन दर्शयन्नाह—दुर्गन्धानामित्यादि । शोधनैः कषायैः प्रागुदीरितैर्मिश्रकोक्तैः शङ्खिन्यङ्कोटसुमनादिभिः कृतैः क्वाथैः शोधनं कार्यम् ॥ ५३ ॥—

**अन्तःशल्यानणुमुखान् गम्भीरान् मांससंश्रितान् ॥**
**शोधनद्रव्ययुक्ताभिर्वर्तिभिस्तान् यथाक्रमम् ॥**
**पूतिमांसप्रतिच्छन्नान् महादोषांश्च शोधयेत् ॥५५॥**
**कल्कीकृतैर्यथालाभं वर्तिद्रव्यैः पुरोदितैः ॥**

१ 'व्रणमध्यस्थनिश्चयं' पा० । २ 'संवृतापावृतास्येषु' इति पा० । ३ '°दरमात्रमव°' इति पा० । ४ अस्याग्रे 'कषायमध्वादिभिः' इत्यधिकं पठ्यते क्वचित् ।

१ 'लेपान्' इति पा० । २ 'स्वेदनेषु च बीजेषु कुर्यादुत्कारिकां' इति पा० । ३ 'अन्तःपूयान्' इति ता. ।

शोधनद्रव्ययुक्ताभिरिति शोधनद्रव्याणि अजगन्धाजशृङ्ग्यादीनि मिश्रकोक्तानि। तान् व्रणान्; 'शोधयेत्' इति शेषः। यथाक्रममिति प्रथमं सूक्ष्माभिस्ततः स्थूलस्थूलतराभिरित्यर्थः। पूतिमांसप्रतिच्छन्नानिति अवगाढान्, न पुनरभ्यन्तरान्। महादोषांश्चेति अतिदुष्टानित्यर्थः। दोषौ चात्र वातकफौ गृह्येते न पुनः पित्तं, पित्तदुष्टस्तु सर्पिर्विषयः॥ ५४॥ ५५॥—

**पित्तप्रदुष्टान् गम्भीरान् दाहपाकप्रपीडितान्॥५६॥**
**कार्पासीफलमिश्रेण जयेच्छोधनसर्पिषा॥**

शोधनद्रव्याणि कासीसाजगन्धादीनि, तैः सिद्धेन सर्पिषा घृतेन। कल्पना चेयं—यावन्ति कासीसाजगन्धादीनि शोधनद्रव्याणि तावन्मात्रं कार्पासफलम्, एतान्येकीकृत्य कल्कचतुर्गुणं घृतं, घृतचतुर्गुणं जलं च गृहीत्वा घृतं साधनीयम्॥ ५६॥–

**उत्सन्नमांसानस्निग्धानल्पस्रावान् व्रणांस्तथा ५७**
**सर्षपस्नेहयुक्तेन धीमांस्तैलेन शोधयेत्॥**

व्रणानिति कफवाताधिकानित्यर्थः, उत्सेधस्य कफकृतत्वात्, अस्नेहाल्पस्रावयोर्वातकृतत्वाच्च। सर्षपस्नेहयुक्तेनेति सर्षपस्नेहाधिकेन तिलतैलेन; 'मिश्रकोक्तेन मयूरादिशोधनद्रव्यसिद्धेन' इति शेषः॥ ५७॥—

**तैलेनाशुध्यमानानां शोधनीयां रसक्रियाम्॥ ५८॥**
**व्रणानां स्थिरमांसानां कुर्याद्द्रव्यैरुदीरितैः॥**
**कषाये विधिवत्तेषां कृते चाधिश्रयेत् पुनः॥ ५९॥**
**सुराष्ट्रजां सकासीसां दद्याच्चापि मनःशिलाम्॥**
**हरितालं च मतिमांस्ततस्तामवचारयेत्॥ ६०॥**
**मातुलुङ्गरसोपेतां सक्षौद्रामतिमर्दिताम्॥**
**व्रणेषु दत्त्वा तां तिष्ठेत्त्रींस्त्रींश्च दिवसान् परम्॥६१॥**

द्रव्यैरुदीरितैरिति मिश्रकोक्तैः शालसारादिभिर्द्रव्यैः। कल्पनामाह—कषाये विधिवत्तेषामिति।—तेषां शालसारादीनां विधिवत्कृते कषाये द्रव्यापेक्षया षोडशगुणोदकेऽष्टभागावशिष्टे, अष्टगुणोदके चतुर्भागावशिष्टे वा। अधिश्रयेत् पुनरिति पूतं कषायं पुनरधिश्रयेत् पचेदित्यर्थः। सुराष्ट्रजादीनि चूर्णितानि मात्रया शेषकषायपादे कषायस्य पुनःपाकात् फाणितीभावे सत्यावपेत्। सुराष्ट्रजां तुवरमृत्तिकाम्। ततस्तामवचारयेदिति ततोऽनन्तरं रसक्रियां समवचारयेत् प्रयोजयेत्। अतिमर्दितामौषधानामेकीभावार्थम्। मातुलुङ्गमधुमात्रा तु संस्कारमात्रैव। त्रींस्त्रींश्च दिवसान् परमिति परमित्यवधारणे, त्रींस्त्रीनेव दिवसान् तिष्ठेन्नाधिकं, व्रणवर्त्मावदारणभयात्॥ ५८–६१॥

**मेदोजुष्टानगम्भीरान् दुर्गन्धांश्चूर्णशोधनैः॥**
**उपाचरेत् भिषक् प्राज्ञः श्लक्ष्णैः शोधनवर्तिजैः ६२**

अगम्भीरान् उत्तानान्; 'गम्भीरान् मेदसा जुष्टान्' इत्येके पठन्ति, तन्नेच्छति गयी। चूर्णशोधनैः कासीसादिभिः। शोधनवर्तिजैः अजगन्धादिभिः॥ ६२॥

**शुद्धलक्षणयुक्तानां कषायं रोपणं हितम्॥**
**तत्र कार्यं यथोद्दिष्टैर्द्रव्यैर्वैद्येन जानता॥ ६३॥**

अशुद्धव्रणस्य शोधनानि सप्तकषायादीनि सविषयप्रयोगाणि निर्दिश्य शुद्धस्य तान्येव रोपणानि निर्दिशन्नाह—शुद्धलक्षणयुक्तानामित्यादि। शुद्धव्रणलक्षणानि "त्रिभिर्दोषैरनाक्रान्त" (सू. अ. २३) इत्यादीनि, "जिह्वातलाभ" इत्यादीनि वा चोक्तानि। यथोद्दिष्टैर्वटादिभिः॥ ६३॥

**अवेदनानां शुद्धानां गम्भीराणां तथैव च॥**
**हिता रोपणवर्त्यङ्गकृता रोपणवर्तयः॥ ६४॥**

अवेदनानां सर्वथा वेदनाहीनानामित्यर्थः; अन्ये अवेदनानामल्पवेदनानामित्याहुः। रोपणवर्त्यङ्गकृता इति रोपणवर्त्यङ्गानि सोमामृताश्वगन्धाकाकोल्यादीनि; तैः कृता रोपणवर्तयो हिताः॥ ६४॥

**अपेतपूतिमांसानां मांसस्थानामरोहताम्॥**
**कल्कः संरोहणः कार्यस्तिलजो मधुसंयुतः॥ ६५॥**
**स माधुर्यात्तथौष्ण्याच्च स्नेहाच्चानिलनाशनः॥**
**कषायभावान्माधुर्यात्तिक्तत्वाच्चापि पित्तहृत्॥६६॥**
**औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः॥**
**शोधयेद्रोपयेच्चापि युक्तः शोधनरोपणैः॥ ६७॥**
**निम्बपत्रमधुभ्यां तु युक्तः संशोधनः स्मृतः॥**
**पूर्वाभ्यां सर्पिषा चापि युक्तश्चाप्युपरोपणः॥ ६८॥**
**तिलवद्यवकल्कं तु केचिदाहुर्मनीषिणः॥**
**शमयेदविदग्धं च विदग्धमपि पाचयेत्॥ ६९॥**
**पक्वं भिनत्ति भिन्नं च शोधयेद्रोपयेत्तथा॥**

अपेतपूतिमांसानामिति निर्गतशटितमांसानाम्। मांसस्थानां मांसमात्रस्थितानामित्यर्थः। कल्को मिश्रकाध्याये कथितः, स तु "समङ्गा सोमसरला" (सू. अ. ३७) इत्यादिः। विशेषार्थमत्रापि कल्कं निर्दिशन्नाह—तिलजो मधुसंयुत इति। तिलकल्कस्य त्रिदोषहरत्वमाह—स इत्यादि।—स इति तिलकल्कः। तिलकल्कस्य तिक्तकषायत्वे उष्णत्वे स्निग्धत्वे मधुरत्वे च सत्यपि कथं न वातादिप्रकोपकत्वम्? उच्यते—स्व(प्र)भावादामलकवत्। अस्यैव तिलकल्कस्य योगवाहित्वं सविशेषं दर्शयन्नाह—शोधयेदित्यादि। अशुद्धान् शोधयेत्, रोपयेच्चेत्ययमर्थश्चकारेण ज्ञेयः। केन शोधनेन युक्तः शोधयेदित्याह—निम्बपत्रमधुभ्यामित्यादि। मधुसंयुत इत्यनेनैव लब्धे पुनरिह

१ 'नृणां व्रणान्' इति ता.। २ 'दुःशोध्यानां तथैव च। रसक्रियां शोधनीयां कुर्याद्द्रव्यैरुदीरितैः' इति ता.। ३ 'व्यामिश्रयेत्' इति पा०। ४ 'सूक्ष्मैः' इति ता.।

१ 'तच्च' इति पा०। २ 'संरोपणः' इति पा०। 'कल्कस्तु रोपणः स्मृतः' ता.। ३ 'मधुकान्वितः' इति पा०। ४ 'युक्तः संपरोपणः' इति पा०। ५ 'अतिदग्धं प्रशमयेद्विदग्धं चापि' इति ता.। ६ 'रोपयेच्च तम्' इति पा०।

मधुग्रहणं केवलस्यैव तिलकल्कस्य प्रागुक्ता माधुर्यादयोऽवगन्तव्याः, न मधुयुक्तस्येति ज्ञापयति । केन रोपणेन शोधनेन युक्तो व्रणान् शोधयेद्रोपयेचेत्याह—पूर्वाभ्यामित्यादि ।—पूर्वाभ्यां निम्बपत्रमधुभ्यामित्यर्थः । युक्तश्चाप्युपरोपण इत्यपिशब्दो भिन्नक्रमे; तेन निम्बपत्रमधुघृतयुक्तः शुध्यतो व्रणस्य शोधनो रोपणोऽपि, तिलकल्कस्य योगवाहित्वादित्यर्थः । अन्ये तु 'युक्तः संरोपणो भवेत्' इति पठन्ति; ते तु पूर्वोक्तं चकारार्थं न मन्यन्ते, किंच निम्बपत्रमधुघृतयुक्तस्य तिलकल्कस्य रोपणत्वमेवाङ्गीकुर्वन्ति न शोधनत्वम् । इदानीमन्यमपि कल्कं सर्वावस्थासु सर्वव्रणयोगित्वेन सविशेषमेकीयमतेन निर्दिशन्नाह—तिलवदित्यादि ।—तिलवत्तिलसदृशो यवकल्कोऽपि त्रिदोषघ्न इत्यनेन प्रकारेण केचिदेकीयवचनं व्याख्यानयन्ति; जेज्जटगयदासौ त्वन्यथा, यथा—तिला विद्यन्तेऽस्मिन्निति तिलवान्, तिलवांश्चासौ यवकल्कश्च तिलवद्यवकल्कः, तं तिलवद्यवकल्कं केचिदाहुरिति । सर्वावस्थासु सर्वशारीरव्रणयोग्यत्वमाह—शमयेदविदग्धं चेत्यादि । एतेन तिलयुक्तः कल्कः पञ्चानामुपक्रमाणां विम्लापनपाचनपाटनशोधनरोपणानामर्थं करोतीत्युक्तं; तिलकल्कस्तु रोपणशोधनकरणेनोपक्रमद्वयार्थकरः, तदुभयकरणेनोपक्रमत्रयार्थकरो वा, अत एवानयोः कल्कयोर्भेदः । रोपयेच्चेति चकारेण तिलकल्कतिलवद्यवकल्कयोरपि व्रणवैकृत्यापहत्वं भवतीति समुच्चीयते ॥ ६५-६९ ॥—

**पित्तरक्तविषागन्तून् गम्भीरानपि च व्रणान् ॥७०॥**
**रोपयेद्रोपणीयेन क्षीरसिद्धेन सर्पिषा ॥**

शस्त्राद्यभिघातनिमित्ता व्रणाः सप्ताहादर्वागेव अदोषोपप्लुता आगन्तवः । रोपणीयेनेति मिश्रकोदितेन "पृथक्पर्ण्यात्मगुप्ता च" ( सू. अ. ३७ ) इत्यादिना ॥ ७० ॥—

**कफवाताभिभूतानां व्रणानां मतिमान् भिषक् ॥७१॥**
**कारयेद्रोपणं तैलं भेषजैस्तैर्यथोदितैः ॥**

यथोदितैरिति मिश्रकोक्तैः कालानुसार्यागुरुप्रभृतिभिः ॥७१॥

**अबन्ध्यानां चलस्थानां शुद्धानां चँ प्रदुष्यताम् ७२**
**द्विहरिद्रायुतां कुर्याद्रोपणार्थां रसक्रियाम् ॥**

अबन्ध्याः पित्तरक्तविषाभिघातजादयः । चलस्थानामिति चलाश्चेष्टावन्तः सन्धयः, तत्रस्थाश्चलस्थाः, शुद्धानां च प्रदुष्यतां पुनरित्यर्थः । 'शुद्धानां चाऽप्ररोहताम्' इति सुधीराभिप्रायेण केचित् पठन्ति । तत्र चलस्थानत्वादिना हेतुनाऽप्ररोहतामिति द्रष्टव्यम् । अस्याः कल्पना—न्यग्रोधादिवर्गस्य त्रिफलायाश्च द्रव्यापेक्षयाऽष्टगुणे चतुर्गुणे वाऽम्भस्यष्टभागावशिष्टे चतुर्भागावशिष्टे वा कषायं पुनरधिश्रित्य फाणितीभावेऽवशिष्टकषायपादमात्रया हरिद्राद्वयचूर्णं प्रक्षिप्य सुमर्दितां मधुयुतां रसक्रियामवचारयेत् । अत्र शोधनरसक्रियावत् कालावधिर्नास्त्येव, यावद्व्रणरोपणमेव कार्येति ॥ ७२ ॥—

**समानां स्थिरमांसानां त्वक्स्थानां रोपणं भिषक् ७३**
**चूर्णं विदध्यान्मतिमान् प्राक्स्थानोक्तो विधिर्यथा ॥**

समानामित्यादि । स्थिरमांसानाम् अमृदुमांसानाम् । प्राक्स्थानोक्तो विधिर्यथेति प्राक्स्थाने सूत्रस्थाने उक्तो विधिर्येन प्रकारेण, स च प्रकारः "किंशुकत्रिफला रोध्रं" ( सू. अ. ३७ ) इत्यादिना निर्दिष्ट इत्यर्थः ॥ ७३ ॥

**शोधनो रोपणश्चैव विधिर्योऽयं प्रकीर्तितः ॥ ७४ ॥**
**सर्वव्रणानां सामान्येनोक्तो दोषाविशेषतः ॥**

इदानीं कषायादिभेदेन प्रत्येकं सप्तविधस्य शोधनस्य रोपणस्य च सर्वव्रणविषयत्वं दर्शयन्नाह—शोधन इत्यादि । अत्र सुधीरः—एष सर्वव्रणानां शारीरागन्तूनां सामान्येनोक्तो विधिः । कस्मात्? दोषाविशेषतः; अविशिष्टा हि वातपित्तश्लेष्माणो दूषकाः शारीराणामागन्तूनां च व्रणानाम्; उक्तं च—"कालान्तरेण दोषोपप्लवविशेषाच्छारीरवत् प्रतिकार" इति; 'दोषविशेषत' इति पाठे दोषविशेषतो दोषभेदात्; शेषं समम् । केचित्तु—सामान्येनोक्तो विधिस्तिलनिम्बकल्कादिः, तथा दोषविशेषतश्चोक्त आद्ये द्वे पञ्चमूल्यावित्यादि, इति लुप्तनिर्दिष्टं चकारं वर्णयन्ति । गयी तु—सर्वव्रणानां विद्रध्याद्यशेषव्रणानामयमेव विधिरुक्तः; कुतः? यतो व्रणसामान्योक्तः, स च विधिर्दोषविशेषत इति दोषविशेषमपेक्ष्य कार्य इति व्याख्यानयति ॥ ७४ ॥

**एष आगमसिद्धत्वात्तथैव फलदर्शनात् ॥ ७५ ॥**
**मन्त्रवत् संप्रयोक्तव्यो न मीमांस्यः कथञ्चन ॥**

एषः शोधनरोपणविधिः । आगमसिद्धत्वादिति आगमः शास्त्रं, तेन सिद्धत्वात् प्रसिद्धत्वादित्यर्थः । फलदर्शनात् आरोग्यदर्शनात् । न मीमांस्यो न विचार्य इत्यर्थः ॥ ७५ ॥—

**स्वबुद्ध्या चाँपि विभजेत् कषायादिषु सप्तसु ॥७६॥**
**भेषजानि यथाँयोगं यान्युक्तानि पुरा मया ॥**

आगमोक्तयोगविषयिणीममीमांसां निर्दिश्य, अनिर्दिष्टयोगविषयिणीं मीमांसामेव कथयन्नाह—स्वबुद्ध्येत्यादि । कषायादिषु सप्तसु कषायवर्तिकल्कसर्पिस्तैलरसक्रियाचूर्णेषु ॥ ७६ ॥—

**आद्ये द्वे पञ्चमूल्यौ तु गणो यश्चानिलापहः ॥ ७७ ॥**
**स वातदुष्टे दातव्यः कषायादिषु सप्तसु ॥**
**न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यः स्मृतः ७८**
**तौ पित्तदुष्टे दातव्यौ कषायादिषु सप्तसु ॥**
**आरग्वधादिस्तु गणो यश्चोष्णः परिकीर्तितः ॥७९॥**
**तौ देयौ कफदुष्टे तु, संसृष्टे संयुता गणाः ॥**

---

१ 'प्रकारेणैकीयमतं' इति पा० । २ 'तैर्यथोदितैः' इति पा० । ३ 'चाप्ररोहताम्' इति पा० । ४ 'कुर्याद्रोपणार्थं' इति पा० ।

१ 'दोषविशेषतः' इति पा० । २ 'कषायादिभिः प्रत्येकं सप्तभिः' इति पा० । ३ 'विभजेद्युक्त्या' इति ता. । ४ 'योगवित्' इति ता. । ५ 'दोषोच्छ्रायेणौषधानि' इति ता. ।

उष्ण उष्णवीर्यो मुष्ककादिः सुरसादिर्वा श्लेष्मघ्नः । संसृष्टे संयुता गणाः । अयं ग्रन्थः सर्वोऽपि शोधनरोपणविषयः ॥ ७७—७९ ॥—

**वातात्मकानुग्ररुजान् सास्रावानपि च व्रणान्॥८०॥**
**सक्षौमयवसर्पिर्भिर्धूपनाङ्गैश्च धूपयेत् ॥**

धूपनविषयमाह—वातात्मकानित्यादि । उग्ररुजान् सास्रावानिति पदद्वयेन वातकफात्मकत्वमुक्तम् । सक्षौमेत्यादि क्षौममतसीवस्त्रम् । धूपनाङ्गानि "श्रीवेष्टके सर्जरसे" ( सू. अ. ३७ ) इत्यादीनि ॥ ८० ॥—

**परिशुष्काल्पमांसानां गम्भीराणां तथैव च ॥ ८१ ॥**
**कुर्यादुत्सादनीयानि सर्पींष्यालेपनानि च ॥**
**मांसाशिनां च मांसानि भक्षयेद्विधिवन्नरः ॥ ८२ ॥**
**विशुद्धमनसस्तस्य मांसं मांसेन वर्धते ॥**

उत्सादनविषयमाह—परिशुष्केत्यादि । परिशुष्काल्पमांसानां वातात्मकानाम् । गम्भीराणां रक्तपित्तात्मकानाम् । प्रयोगे उत्सादनीयानीति अपामार्गाश्वगन्धादीनि उत्सादनद्रव्याणीत्यर्थः । एतैः सर्पिःसंस्कार आलेपनं च कर्तव्यम् । उत्सादनं निम्नव्रणस्योन्नतिकरणम् । आभ्यन्तरमुत्सादनमाह—मांसाशिनामित्यादि ।—व्याघ्रादीनामित्यर्थः । विशुद्धमनसः शोकक्रोधाद्यनभिभूतमनस इत्यर्थः; जेज्जटस्तु व्याघ्रादीनां मांसानि छद्मोपेहितानि, एवं विशुद्धमनस इति व्याख्यानयति ॥ ८१–८२ ॥–

**उत्सन्नमृदुमांसानां व्रणानामवसादनम् ॥ ८३ ॥**
**कुर्याद्द्रव्यैर्यथोद्दिष्टैश्चूर्णितैर्मधुना सह ॥**

अवसादनविषयमाह—उत्सन्नेत्यादि । उत्सन्नमृदुमांसानामिति उत्सन्नमुद्धृतं मृदु मांसं येषां ते तथा । अवसादनम् उन्नतव्रणस्य निम्नत्वकरणम् । यथोद्दिष्टैर्द्रव्यैः कासीसादिभिः ॥ ८३ ॥—

**कठिनानाममांसानां दुष्टानां मातरिश्वना ॥ ८४ ॥**
**मृद्वी क्रिया विधातव्या शोणितं चापि मोक्षयेत् ॥**
**वातघ्नौषधसंयुक्तान् स्नेहान् सेकांश्च कारयेत् ॥८५॥**
**मृदुत्वमाशुरोहं च गाढो बन्धः करोति हि ॥**

मृदुकर्मविषयमाह—कठिनानामित्यादि । अमांसानाम् अल्पमांसानाम् । मातरिश्वना वायुना । मृद्वी क्रिया मधुरस्निग्धकोष्णलवणैरन्तर्बहिश्च क्रियमाणैर्लेपादिभिः । शोणितमित्यादि तत्र रक्तानुगते मातरिश्वनि रक्तमोक्षणं, कफानुगते स्नेहान् सेकांश्चेति । मृदुत्वमित्यादि । गाढो बन्धः किं करोतीत्याह—मृदुत्वमाशुरोहं च ॥ ८४ ॥ ८५ ॥

**व्रणेषु मृदुमांसेषु दारुणीकरणं हितम् ॥**
**धवप्रियङ्ग्वशोकानां रोहिण्याश्च त्वचस्तथा ॥८६॥**
**त्रिफलाधातकीपुष्परोध्रसर्जरसान् समान् ॥**
**कृत्वा सूक्ष्माणि चूर्णानि व्रणं तैरवचूर्णयेत् ॥८७॥**

दारुणकर्मविषयमाह—व्रणेष्वित्यादि । दारुणीकरणं कठिनीकरणम् । रोहिण्याः कट्फलस्य ॥ ८६ ॥ ८७ ॥

**उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान् ॥**
**तथैव खलु दुःशोध्यान् शोधयेत् क्षारकर्मणा ॥८८॥**

क्षारविषयमाह—उत्सन्नमांसानित्यादि ॥ ८८ ॥

**स्रवतोऽश्मभवान्मूत्रं ये चान्ये रक्तवाहिनः ॥**
**निःशेषच्छिन्नसन्धींश्च साधयेदग्निकर्मणा ॥ ८९ ॥**

अग्निकर्मविषयमाह—स्रवत इत्यादि । अश्मभवान् अश्मरीनिर्हरणच्छेदसंभवान् व्रणानग्निकर्मणा साधयेदिति संबन्धः । किंविशिष्टान् व्रणान्? मूत्रं स्रवतः; यद्यपि ते व्रणा मूत्रस्राविणस्तथाऽपि सद्योव्रणे मूत्रं यावत्तावत्तेऽदहनीयाः, सप्ताहादूर्ध्वं पुनर्यदा व्रणानामसन्धानेन मूत्रं स्वमार्गं न प्रतिपद्यते तदैवाग्निना दहेत् ॥ ८९ ॥

**दुरूढत्वात्तु शुक्लानां कृष्णकर्म हितं भवेत् ॥**
**भल्लातकान् वासयेत्तु क्षीरे प्राङ्मूत्रभावितान् ॥**
**ततो द्विधा च्छेदयित्वा लौहे कुम्भे निधापयेत् ॥९०**
**कुम्भेऽन्यस्मिन् निखाते तु तं कुम्भमथ योजयेत् ॥**
**मुखं मुखेन सन्धाय गोमयैर्दाहयेत्ततः ॥ ९१ ॥**
**यः स्नेहश्च्यवते तस्माद्ग्राहयेत्तं शनैर्भिषक् ॥**
**ग्राम्यानूपशफान् दग्ध्वा सूक्ष्मचूर्णानि कारयेत् ९२**
**तैलेनानेन संसृष्टं शुक्लमालेपयेद्व्रणम् ॥**
**भल्लातकविधानेन सारस्नेहांस्तु कारयेत् ॥ ९३ ॥**
**ये च केचित् फलस्नेहा विधानं तेषु पूर्ववत् ॥**

इदानीं रूढस्यैव व्रणस्य विकृतस्य प्रकृतिभावार्थं पैश्चात्कर्मारम्भः, तत्र पूर्वं शुक्लस्यैव कृष्णीकरणमाह—दुरूढत्वादित्यादि । प्राक् पूर्वं सप्ताहं गव्यमूत्रभावितान् भल्लातकान् गव्यक्षीरे वासयेत् स्थापयेत्, अत्र कालस्यानुक्तत्वाद्वक्ष्यमाणरोहिणीफलक्षीरवासनवत् सप्तरात्रमेव वासनं कार्यम् । कुम्भेऽन्यस्मिन्नित्यादि । अन्यस्मिन् कुम्भे निखाते तं कुम्भं योजयेद् यत्र कुम्भे भल्लातकानि निक्षिप्यन्ते; कथं योजयेदित्याह—मुखं मुखेनेत्यादि । तमपि कुम्भं निरन्तरच्छिद्रितापिधानं कृत्वा योजयेत्; अन्यथाऽनावृतमुखादुपरिगतकुम्भाद्भल्लातकानि भ्रश्यन्ते । ग्राम्यानूपशफानिति ग्राम्या अश्वादयः, आनूपा महिषादयः, शफान् खुरान् । कृष्णीकरणे स्नेहानपरानपि निर्दिशन्नाह—भल्लातकेत्यादि । ये च केचित् पिण्डितकबिभीतकादिस्नेहास्तेषामप्येतदेव भल्लातकस्नेहनिष्पादनवद्विधानं,

१ 'छद्मोपसिद्धानि' इति पा० । २ 'स्वेदांश्च' इति पा० । ३ 'पुनः पुनः सिच्यमानैर्लेपादिः' इति पा० । ४ 'स्वेदांश्च' इति।

१ 'कटुतुम्ब्या वल्कलस्य' इति पा० । २ 'साधयेत् । तथाऽपि सद्यो व्रणकालं यावन्न दहनीयाः' इति पा० । ३ 'कर्तितम्' इति पा० । ४ 'पश्चात्कर्मारम्भं' इति पा० ।

तेषु मध्ये ये कृष्णीकरणार्थास्तेषां ग्राम्यादिशफदाहभस्मचूर्णमिश्राणामवचारणमिति भावः ॥ ८९—९३ ॥

दुरूढत्वात्तु कृष्णानां पाण्डुकर्म हितं भवेत् ॥ ९४ ॥
सप्तरात्रं स्थितं क्षीरे छागले रोहिणीफलम् ॥
तेनैव पिष्टं सुश्लक्ष्णं सवर्णकरणं हितम् ॥ ९५ ॥
नवं कपालिकाचूर्णं वैदुलं सर्जनाम च ॥
कासीसं मधुकं चैव क्षौद्रयुक्तं प्रलेपयेत् ॥ ९६ ॥
कपित्थमुद्धृते मांसे मूत्रेणाजेन पूरयेत् ॥
कासीसं रोचनां तुत्थं हरितालं मनःशिलाम् ॥९७॥
वेणुनिर्लेखनं चापि प्रपुन्नाडरसाञ्जनम् ॥
अधस्तादर्जुनस्यैतन्मासं भूमौ निधापयेत् ॥ ९८ ॥
मासादूर्ध्वं ततस्तेन कृष्णमालेपयेद्व्रणम् ॥

इदानीं कृष्णानां पाण्डुकर्मणा सवर्णीकरणमाह—दुरूढत्वादित्यादि । **गयी** तु 'छागले' इत्यत्र 'बार्करे' इति पठति, तत्र बर्करी तरुणच्छागी, तस्या इदं बार्करम्; अन्ये तु वृद्धवत्सायाः क्षीरं बष्कयणीक्षीरं वा बार्करमाहुः; तत्र न शास्त्रलोकप्रसिद्धिरिति **गयी** । रोहिणीफलमिति रोहिणी हरीतकीभेदस्तत्फलम्; अन्ये तु कटुतुम्बीफलमाहुः; कटुकाफलमिति पाठान्तरम् । तेनैव क्षीरेणेत्यर्थः । योगान्तरमाह—नवमित्यादि । कपालिका शरावकर्परिका तच्चूर्णं नवं, सा पुनरापाकोद्धृतैव नवा कपालिका भवति; अन्ये तु नवं प्रलेपनमाहुः, तत्र नवमपर्युषितमित्यर्थः । विदुलो वेतसस्तद्भवं वैदुलं, 'मूलं' इति शेषः । सर्जनाम च सर्जवृक्षमूलम् । योगान्तरमाह—कपित्थमुद्धृते मांस इत्यादि । मांसमत्र आभ्यन्तरो गिरः, तमुद्धृत्य आजमूत्रेण कासीसादिभिश्च कपित्थं पूरयेत् । वेणुनिर्लेखनं वंशतक्षणं वंशत्वगित्यर्थः । अर्जुनः ककुभः, तस्याधस्तले निधापयेत् स्थापयेत् ॥ ९४—९८ ॥—

कुक्कुटाण्डकपालानि कतकं मधुकं समम् ॥ ९९ ॥
तथा समुद्रमण्डूकी मणिचूर्णं च दापयेत् ॥
गुटिका मूत्रपिष्टास्ता व्रणानां प्रतिसारणम् ॥१००॥

तयोरेव शुक्लकृष्णव्रणयोः स्वप्रयोगैरवशिष्टशुक्लत्वकार्ष्ण्ययोः सवर्णकरणं निर्दिशन्नाह—कुक्कुटाण्डेत्यादि । समुद्रमण्डूकी जलशुक्तिः, मणिचूर्णानि स्फटिकादिचूर्णानि; **श्रीब्रह्मदेवस्तु** समुद्रमण्डूकीं मुक्ताशुक्तिमाह, **जेज्जटाचार्येण** छेद्यरोगप्रतिषेधे व्याख्यातत्वान्मणिचूर्णं मौक्तिकचूर्णमिति । प्रतिसारणं घर्षणम् । अस्य तु सावर्ण्यमेव कर्मेति कृष्णपाण्डुकर्मभ्यामस्य भेदः; नेदमुपक्रमान्तरं, शुक्लकृष्णकर्मणोरेव शेषत्वात्, अतो न संख्यातिरेकः ॥ ९९ ॥ १०० ॥

हस्तिदन्तमसीं कृत्वा मुख्यं चैव रसाञ्जनम् ॥
रोमाण्येतेन जायन्ते लेपात्पाणितलेष्वपि ॥ १०१ ॥
चतुष्पदानां त्वग्रोमखुरशृङ्गास्थिभस्मना ॥
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः ॥ १०२ ॥
कासीसं नक्तमालस्य पल्लवांश्चैव संहरेत् ॥
कपित्थरसपिष्टानि रोमसञ्जननं परम् ॥ १०३ ॥

रोमसञ्जननमाह—हस्तिदन्तेत्यादि । मुख्यं श्रेष्ठमित्यर्थः । एतेन हस्तिदन्तमसीरसाञ्जनेन, 'अजाक्षीरसहितेन' इति वाक्यशेषः । पाणितलं हस्ततलम् । अयं योगः केशशाते सति बहुशो दृष्टप्रत्ययः । चतुष्पदानामित्यादि चतुष्पदा अश्वगोमहिषादयः । तैलाक्ता चूर्णिता पूर्वं तैलाभ्यक्ता पश्चाच्चूर्णिता त्वग्रोमादिभस्मचूर्णसंयुक्ता रोमवती भवेदित्यर्थः । कासीसमित्यादि । नक्तमालस्य पल्लवाः करञ्जस्य कोमलपत्राणीत्यर्थः ॥ १०१—१०३ ॥

रोमाकीर्णो व्रणो यस्तु न सम्यगुपरोहति ॥
क्षुरकर्तरिसन्दंशैस्तस्य रोमाणि निर्हरेत् ॥ १०४ ॥
(शङ्खचूर्णस्य भागौ द्वौ हरितालं च भागिकम् ॥
शुक्तेन सह पिष्टानि लोमशातनमुत्तमम् ॥१०५॥ )
तैलं भल्लातकस्याथ स्नुहीक्षीरं तथैव च ॥
प्रगृह्यैकत्र मतिमान् रोमशातनमुत्तमम् ॥ १०६ ॥
कदलीदीर्घवृन्ताभ्यां भस्मालं लवणं शमी-
बीजं शीतोदपिष्टं वा रोमशातनमाचरेत् ॥ १०७ ॥
आगारगोधिकापुच्छं रम्भाऽऽलं बीजमैङ्गुदम् ॥
दग्ध्वा तद्भस्मतैलाम्बु सूर्यपक्वं कचान्तकृत् ॥१०८॥

रोमशातनमाह—रोमाकीर्ण इत्यादि । कर्तरी श्मश्रुकर्तनाद्युपयुक्तं शस्त्रम् । सन्दंशो नासालोमापहो यन्त्रभेदः, नासावो-(छो)टिकेति लोके । औषधकृतं लोमशातनमाह—तैलमित्यादि । दीर्घवृन्तः श्योनाकः । आलं हरितालम् । श्लोकार्धगतमपि शमीबीजमिति समस्तपदम् । तत्र रक्तफला शमी प्रलेपे भक्षणे च केशघ्नीति वृद्धवैद्या वदन्ति । शीतोदपिष्टमिति एतत् सर्वं शीतजलपिष्टमित्यर्थः । आगारगोधिका गृहगोधिका 'ब्राह्मणी' इति लोके । रम्भा कदली । आलं हरितालम् । बीजमैङ्गुदं इङ्गुदीवृक्षबीजम् । कचान्तकृत् केशविनाशकारीत्यर्थः । अत्र **गयी** तु 'तैलं भल्लातकस्य' इत्यादि सर्वं पाठान्तरं कृत्वा 'कोशातकीभिः' इत्यादि पठति; तच्चाभावान्न लिखितम् ॥ १०४—१०८ ॥

वातदुष्टो व्रणो यस्तु रूक्षश्चात्यर्थवेदनः ॥
अधःकाये विशेषेण तत्र बस्तिर्विधीयते ॥ १०९ ॥

---

१ 'मूत्रस्याजस्य' इति पा० । २ 'बष्कयणीक्षीरं वा' इति हस्तलिखितपुस्तके न पठ्यते । ३ अन्ये तु 'कट्फलवृक्षफलमाहुः' इति पा० । ४ आपाकः कुम्भकारस्य मृत्पात्रपाकस्थानम् । ५ 'निखनेत्' इति पा० । ६ 'व्याख्यातस्य मणेश्चूर्णं' इति पा० ।

१ 'कोमलपल्लवानीत्यर्थः' इति पा० । २ 'अयं श्लोको' हस्तलिखितपुस्तके न पठ्यते । ३ 'रम्भाली' इति पा० । ४ 'आलिः आदारी' इति पा० ।

बस्तिविषयमाह—वातदुष्टेत्यादि । बस्तिरत्र निरूहः स्नैहिकश्च ॥ १०९ ॥

**मूत्राघाते मूत्रदोषे शुक्रदोषेऽश्मरीव्रणे ॥**
**तथैवार्तवदोषे च बस्तिरप्युत्तरो हितः ॥ ११० ॥**

उत्तरबस्तिविषयमाह—मूत्राघाते इत्यादि । मूत्राघातादयो यदा व्रणनिमित्ता भवन्ति तदोत्तरबस्तिविधानम् ॥ ११० ॥

**यस्माच्छुध्यति बन्धेन व्रणो याति च मार्दवम् ॥**
**रोहत्यपि च निःशङ्कस्तस्माद्बन्धो विधीयते ॥१११॥**

व्रणस्य बन्धकरणे हेतुमाह—यस्मादित्यादि । निःशङ्कः निर्गता शङ्का निर्घातमक्षिकादिपतनानां यत्र सः; 'निःसङ्गः' इति केचित् पठन्ति, तत्र निर्गतोऽभिघातहेतोः सङ्गः संबन्धो यस्येत्यर्थः । आलेपविधौ बन्ध्याबन्ध्ययोरुक्तत्वाद्विषयोऽस्य प्रयोगश्चोक्तः । अत्र केचिद् यस्माच्छुध्यतीत्यतः प्राक् "अदुष्टिः समवत्मैलं वेदनोपशमः सुखम् । आलेपनाद्यैः शोफस्य साधुबन्धाद्विधीयते"—इति पठन्ति; स तु पाठो निबन्धकारैर्न धृतः, इत्यस्माभिर्न लिखितो न व्याख्यातश्च ॥ १११ ॥

**स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ॥**
**पत्रदानं भवेत् कार्यं यथादोषं यथर्तु च ॥ ११२ ॥**
**एरण्डभूर्जपूतीकहरिद्राणां तु वातजे ॥**
**पत्रमाश्वबलं यच्च काश्मरीपत्रमेव च ॥ ११३ ॥**
**पत्राणि क्षीरवृक्षाणामौदकानि तथैव च ॥**
**दूषिते रक्तपित्ताभ्यां व्रणे दद्याद्विचक्षणः ॥ ११४ ॥**
**पाठामूर्वागुडूचीनां काकमाचीहरिद्रयोः ॥**
**पत्रं च शुकनासाया योजयेत् कफजे व्रणे ॥ ११५ ॥**
**अकर्कशमविच्छिन्नमजीर्णं सुकुमारकम् ॥**
**अजन्तुजग्धं मृदु च पत्रं गुणवदुच्यते ॥ ११६ ॥**
**स्नेहमौषधसारं च पट्टः पत्रान्तरीकृतः ॥**
**नादत्ते यत्ततः पत्रं लेपस्योपरि दापयेत् ॥ ११७ ॥**
**शैत्यौष्ण्यजननार्थाय स्नेहसंग्रहणाय च ॥**
**दत्तौषधेषु दातव्यं पत्रं वैद्येन जानता ॥ ११८ ॥**

पत्रदानविषयमाह—स्थिराणामित्यादि । दोषविशेषेण पत्रविशेषमाह—एरण्डेत्यादि । सुगमम् । पत्रमाश्वबलमिति अश्वबला उपोदकी तस्या इदमाश्वबलं, ब्रह्मदेवस्तु अश्वबला यवनभूमौ मेथिकाकारबीजा भवतीत्याह । क्षीरवृक्षा वटादयः । औदकानि पद्मकुमुदादीनि । कफजे पत्रदानमाह—पाठा मूर्वेत्यादि । मूर्वा धनुर्गुणोपयुक्तो लताभेदः । शुकनासा चर्मकारवटः 'कुप्यक' इति कान्यकुब्जे, 'चर्मकारजम्बूपलासिका' इति मालवीया वदन्ति । अजीर्णं नवम् । सुकुमारकं तनु । अजन्तुजग्धं न कृमिभक्षितम् । मृदु कोमलम् । पत्रदानस्य प्रयोजनमाह—स्नेहमित्यादि । ततस्तस्माल्लेपस्योपरि पत्रं दापयेदिति संबन्धः । यत् यस्मात् कारणात् पट्टो व्रणबन्धनद्रव्यं; नादत्ते नैव गृह्णाति; किंविशिष्टः पट्टः ? पत्रान्तरीकृतः पत्रेणान्तरीकृतो व्यवधापितः । किं नादत्ते ? स्नेहं शतधौतघृतादिकम् । न केवलं स्नेहम्, औषधसारं च; औषधस्य सारं वीर्यम् । अन्ये तु "स्नेहमौषधसारं च पट्टवस्त्रान्तरीकृतम् । न दूषयति यत् पत्रं तल्लेपोपरि दापयेत्"—इति पठन्ति । अपरमपि पत्रदानप्रयोजनमाह—शैत्यौष्ण्येत्यादि । पित्तरक्तव्रणे शैत्यं करणीयं, वातकफव्रणे औष्ण्यं, तदर्थं पत्रम् । दत्तौषधेषु 'व्रणेषु' इति शेषः ॥ ११२—११८ ॥

**मक्षिका व्रणमागत्य निःक्षिपन्ति यदा कृमीन् ॥**
**श्वयथुर्भक्षिते तैस्तु जायते भृशदारुणः ॥ ११९ ॥**
**तीव्रा रुजो विचित्राश्च रक्तास्रावश्च जायते ॥**
**सुरसादिर्हितस्तत्र धावने पूरणे तथा ॥ १२० ॥**
**सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ॥**
**हिता गोमूत्रपिष्टाश्च सेकः क्षारोदकेन वा ॥ १२१ ॥**
**प्रच्छाद्य मांसपेश्या वा कृमीनपहरेद्व्रणात् ॥**
**विंशतिं कृमिजातीस्तु वक्ष्याम्युपरि भागशः १२२**

कृमिघ्नविषयमाह—मक्षिकेत्यादि । भक्षिते 'व्रणे' इति शेषः । तैः कृमिभिः । भृशदारुणः अत्यर्थं कष्टकारी । विचित्राः तोददाहकण्ड्वादिनानारूपा रुज इत्यर्थः । धावने प्रक्षालने । सप्तपर्णकरञ्जेत्यादयो 'हिता' इति शेषः । सेकः परिषेकः । प्रच्छाद्य 'व्रणम्' इति शेषः । मांसपेश्या मांसखण्डेन । वक्ष्याम्युपरीति उपर्युत्तरतन्त्रे कृमिप्रतिषेधीये ( उ. तं. अ. ५४ ) इत्यर्थः ॥ ११९—१२२ ॥

**दीर्घकालातुराणां तु कृशानां व्रणशोषिणाम् ॥**
**बृंहणीयो विधिः सर्वैः कार्योऽग्निं परिरक्षता ॥ १२३ ॥**

बृंहणविषयमाह—दीर्घेत्यादि । बृंहणीयो देहोपचयकरो विधिः कार्यः । 'कार्योऽग्निं परिरक्षता' इति कर्तव्ये यत् कायग्रहणं तद्देहगतकार्श्यदोषसात्म्याद्यनुक्तग्रहणार्थम् । 'कार्योऽग्निं परिरक्षता' इति केचित् पठन्ति ॥ १२३ ॥

**विषजुष्टस्य विज्ञानं विषनिश्चयमेव च ॥**
**चिकित्सितं च वक्ष्यामि कल्पेषु प्रतिभागशः ॥ १२४**

विषघ्नं निर्दिशन्नाह—विषजुष्टस्येत्यादि । विषजुष्टस्य 'अन्नपानादेः' इति शेषः । विज्ञानं लक्षणमित्यर्थः । विषनिश्चयं स्थावरजङ्गमादिविषस्य सम्यग्ज्ञानम् । प्रतिभागशः प्रत्येकमित्यर्थः ॥ १२४ ॥

---

१ 'शुक्रदोषे तथाऽनिले' इति पा० । २ 'पट्टवस्त्रान्तराकृतम् । न दूषयति यत् पत्रं' इति पा० । ३ 'नैवादत्ते च यस्मात्तल्लेपस्योपरि' इति पा० । ४ 'चोरस्नायुः' इति पा० । ५ 'कप्युक' इति कान्यकुब्जे, 'चर्मकारजम्बूप्रभासिका' इति मालवीया वदन्ति' इति पा० ।

१ 'किंविशिष्टः ? पट्टवस्त्रान्तरीकृतः पट्टवस्त्रेण अन्तरीकृतो व्यवधापितः' इति पा० । २ 'व्रणजातस्य' इति पा० । ३ 'कार्योऽग्नि' इति पा० । ४ 'कार्यः कायाग्नि' इति पा० ।

**कण्डूमन्तः सशोफाश्च ये च जत्रूपरि व्रणाः ॥**
**शिरोविरेचनं तेषु विदध्यात्कुशलो भिषक् ॥१२५॥**

शिरोविरेचनविषयमाह—कण्डूमन्त इत्यादि ।—जत्रु वक्षोंऽसयोः सन्धिः । शिरोविरेचनं नस्यभेदः ॥ १२५ ॥

**रुजावन्तोऽनिलाविष्टा रूक्षा ये चोर्ध्वजत्रुजाः ॥**
**व्रणेषु तेषु कर्तव्यं नस्यं वैद्येन जानता ॥ १२६ ॥**

नस्यविषयमाह—रुजावन्त इत्यादि । नस्यं स्नैहिकमेव ॥१२६

**दोषप्रच्यावनार्थाय रुजादाहक्षयाय च ॥**
**जिह्वादन्तसमुत्थस्य हरणार्थं मलस्य च ॥ १२७ ॥**
**शोधनो रोपणश्चैव व्रणस्य मुखजस्य वै ॥**
**उष्णो वा यदि वा शीतः कवलग्रह इष्यते ॥१२८॥**

कवलग्रहविषयमाह—दोषेत्यादि । दोषप्रच्यावनार्थायेति दोषप्रच्यावनं त्रिफलाद्राक्षादिकषायादिभिः । शोधनः शोधनद्रव्यकृतः । रोपणो रोपणद्रव्यकृतः । उष्णो वातकफजे व्रणे, रक्तपित्तजे शीतः ॥ १२७ ॥ १२८ ॥

**ऊर्ध्वजत्रुगतान् रोगान् व्रणांश्च कफवातजान् ॥**
**शोफस्रावरुजायुक्तान् धूमपानैरुपाचरेत् ॥ १२९ ॥**

धूमविषयमाह-ऊर्ध्वेत्यादि । धूमपानैरिति शोफस्रावरुजापहद्रव्याणामित्यर्थः ॥ १२९ ॥

**क्षतोष्मणो निग्रहार्थं सन्धानार्थं तथैव च ॥**
**सद्योव्रणेष्वायतेषु क्षौद्रसर्पिर्विधीयते ॥ १३० ॥**

मधुसर्पिर्विषयमाह—क्षतोष्मण इत्यादि । सन्धानं घातविशेषाद्द्विधाभूतस्यावयवस्यैकभावः ॥ १३० ॥

**अवगाढास्त्वणुमुखा ये व्रणाः शल्यपीडिताः ॥**
**निवृत्तहस्तोद्धरणा यन्त्रं तेषु विधीयते ॥ १३१ ॥**

यन्त्रविषयमाह—अवगाढा इत्यादि । अवगाढा गम्भीराः । निवृत्तहस्तोद्धरणा हस्तेनाक्रष्टुमशक्याः ॥ १३१ ॥

**लघुमात्रो लघुश्चैव स्निग्ध उष्णोऽग्निदीपनः ॥**
**सर्वव्रणिभ्यो देयस्तु सदाऽऽहारो विजानता॥१३२**

आहारविषयमाह—लघुमात्र इत्यादि । लघुमात्रो मात्रया लघुरित्यर्थः । लघुरिति रक्तशालिजाङ्गलमांसादिर्द्रव्यलघुः, अग्निदीपन इति यावद् देयः । गव्यघृतादिरयमाहारो व्रणितोपासनीयोक्तोऽपि पुनरुपक्रमप्रसङ्गेनेहोक्त इति न पौनरुक्त्यम् १३२

**निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः ॥**
**रक्षाविधानैरुद्दिष्टैर्यमैः सनियमैस्तथा ॥ १३३ ॥**

रक्षाविधानमाह—निशाचरेभ्य इत्यादि । नित्यमेवेति दिवारात्रमपीत्यर्थः । रक्षाविधानैरुद्दिष्टैरिति गुग्गुल्वादिधूपादिभिः, मन्त्रैश्चायुर्वेदविहितैः । यमैः सनियमैरिति पञ्च यमा नियमाश्च पञ्च । उक्तं च—"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं तथैव च । व्यवहारनिवृत्तिश्च यमाः पञ्च प्रकीर्तिताः ॥ अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् । अप्रमादश्च पञ्चैते नियमाः परिकीर्तिताः"-इति । एवं यथाविषयं यथाक्रमं षष्टिरुपक्रमा उक्ताः ॥ १३३ ॥

**षण्मूलोऽष्टपरिग्राही पञ्चलक्षणलक्षितः ॥**
**षष्ट्या विधानैर्निर्दिष्टैश्चतुर्भिः साध्यते व्रणः ॥१३४॥**

अथ व्रणः कतिमूलः, कत्यधिष्ठानः, कतिलक्षणलक्षितः, कतिभिरौषधैः, कियद्भिश्च पदार्थैः साध्यत इत्याह—षण्मूल इत्यादि । षण्मूल इति वातपित्तकफशोणितसन्निपातागन्तवः षडेव मूलं कारणानि यस्य स षण्मूलः; संसर्गः पृथगर्थवशादत्र सन्निपातेनावरुद्धः, यस्मात् समेत्य संभूय द्वयोर्बहूनां वा निपातः सन्निपातः; संघातः, संयोगः, संहितीभावः, संश्लेषः, समवायः, सम्बन्धः, सन्निपात इत्यनर्थान्तरम् । त्वङ्मांससिरास्नायुसन्ध्यस्थिकोष्ठमर्माणीत्यष्टौ व्रणवस्तूनि परिगृह्णातीत्यष्टपरिग्राही; परिग्रहोऽधिष्ठानम्, आश्रय इत्यर्थः । पञ्चलक्षणलक्षित इति पञ्चानां वातपित्तकफसन्निपातागन्तूनां लक्षणानि तैर्लक्षितः; रक्तजस्य न पृथग्लक्षणमस्ति 'पित्तवद्रक्तजः' ( इति वचनात् ); एवं तथाऽऽगन्तोरपि पृथग्लक्षणं नास्ति, यदाह—'पित्तरक्तलक्षण आगन्तुः' इति; तथाऽन्यथैव पञ्चलक्षणलक्षितत्वं व्याख्यायते—गन्धवर्णस्राववेदनाकृतिभिर्लक्षणैर्लक्षित इति । षष्ट्या विधानैर्निर्दिष्टैरिति षष्टिसंख्यैर्विधानैः पूर्वमुद्दिष्टैः कृत्वा । चतुर्भिः साध्यते चतुर्भिर्वैद्यातुरपरिचारकौषधैरित्यर्थः । ब्रह्मदेवस्तु 'षष्ट्युपक्रमनिर्दिष्ट' इति पठति; षष्टिरुपक्रमा निर्दिष्टा यस्येति च व्याख्यानयति ॥ १३४ ॥

**योऽल्पौषधकृतो योगो बहुग्रन्थभयान्मया ॥**
**द्रव्याणां तत्समानानां तत्रावापो न दुष्यति ॥१३५॥**

इदानीमल्पौषधेषु शोधनरोपणादियोगेष्वावापविषयमूहबीजं निर्दिशन्नाह—य इत्यादि । तत्समानानामिति तेषां शोधनरोपणद्रव्याणां रसगुणवीर्यविपाकैः समानानि तुल्यानि द्रव्याणि तत्समानानि, तेषामावापो निक्षेपः । तत्र तस्मिन्नल्पौषधे योगे न दुष्यति । 'अल्पग्रन्थं मृगयता योगो योऽल्पौषधैः कृत' इति केचित् पठन्ति; तत्र मृगयता अन्वेषयता ग्रन्थकारेणेत्यर्थः ॥ १३५ ॥

**प्रसङ्गाभिहितो यो वा बहुदुर्लभभेषजः ॥**
**यथोपपत्ति तत्रापि कार्यमेव चिकित्सितम् ॥१३६॥**

इदानीं यथालाभमौषधप्रयोगमाह—प्रसङ्गेत्यादि । प्रसङ्गाभिहितो यो बहुभेषजो दुर्लभभेषजो वा, तत्र यथोपपत्ति यथालाभं चिकित्सितं भेषजं कार्यम् । प्रसङ्गाभिहितो यथा—"पिण्डीतकत्रयं रोध्रं पूर्वं ये च प्रकीर्तिताः । वर्गास्त्रयः प्रलेपे ते शोफे सर्वकृते हिताः"—इति; अत्र हि वातपित्तकफशो-

१ एतत्पूर्वं 'व्रण्यो द्रव्यप्रभावेन' इत्यधिकः पाठ उपलभ्यते क्वचिद्धस्तलिखितपुस्तके ।

शोकौषधगणत्रयं प्रकरणसमानत्वात् सन्निपातोक्तमौषधं प्रसङ्गाभिहितं; तत्र यथालाभं भेषजानां चिकित्सितं कार्यम् । बहुभेषजो यथा—"आद्ये द्वे पञ्चमूल्यौ तु गणो यश्चानिलापहः—" इति; अत्र भद्रदार्वादिगणस्य बहुभेषजत्वाद्यथालाभमेव चिकित्सितं कार्यम् । दुर्लभभेषजो यथा–किञ्चिदेव भेषजं क्वचिद्देशकालादौ दुर्लभं; तत्र यथालाभं चिकित्सितं कार्यमिति ॥१३६॥

**गणोक्तमपि यद्द्रव्यं भवेद्व्याधावयौगिकम् ॥**
**तदुद्धरेद्यौगिकं तु प्रक्षिपेदप्यकीर्तितम् ॥ १३७ ॥**

एकत्रैव व्याधौ यौगिकस्यानुक्तस्यापि ग्रहणमयौगिकस्य परित्यागं चोपदर्शयन्नाह—गणोक्तमित्यादि ॥ १३७ ॥

**उपद्रवास्तु विविधा व्रणस्य व्रणितस्य च ॥**
**तत्र गन्धादयः पञ्च व्रणस्योपद्रवाः स्मृताः ॥१३८॥**
**ज्वरातिसारौ मूर्च्छा च हिक्का च्छर्दिररोचकः ॥**
**श्वासकासाविपाकाश्च तृष्णा च व्रणितस्य तु १३९**

इदानीमुपद्रवानाह—उपद्रवा इत्यादि । मूर्च्छा चेति चकारेणानुक्तानामपि विसर्पादीनां समुच्चयः ॥ १३८ ॥ १३९ ॥

**व्रणक्रियास्वेवमासु व्यासेनोक्तास्वपि क्रियाम् ॥**
**भूयोऽप्युपरि वक्ष्यामि सद्योव्रणचिकित्सिते १४०**

**इति सुश्रुतसंहितायां चिकित्सास्थाने द्विव्रणीयचिकित्सितं नाम प्रथमोऽध्यायः ॥ १ ॥**

इदानीमनागतावेक्षणं निर्दिशन्नाह—व्रणेत्यादि । एवमनेन प्रकारेण पूर्वोक्तेन, आसु इमासु व्रणक्रियासु, व्यासेन विस्तरेणोक्तास्वपि, भूयोऽपि पुनरपि, उपरि सद्योव्रणचिकित्सिते, क्रियां वक्ष्यामि । गयी तु "व्रणक्रियास्विमास्वेव संक्षेपोक्तास्विह क्रियाम्"—इति पठति; तत्र व्रणक्रियास्विमासु इह संक्षेपेणोक्तासु, उपरि विस्तरतः क्रियां वक्ष्यामीत्यर्थः ॥१४०॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

**अथातः सद्योव्रणचिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**धन्वन्तरिर्धर्मभृतां वरिष्ठो वाग्विशारदः ॥**
**विश्वामित्रसुतं शिष्यमृषिं सुश्रुतमन्वशात् ॥ ३ ॥**

गुरुपूर्वक्रमं निर्दिशन्नाह—धन्वन्तरिरित्यादि । धर्मभृतामन्येषामपि राजर्षीणां मध्ये वरिष्ठः प्रधानतमः । वाग्विशारद इति अर्थवतीं सलक्षणां हृदयग्राहिणीमपुनरुक्तां वाचं वदतीति वाग्विशारदः । अन्वशात् शिक्षितवान् ॥ ३ ॥

**नानाधारामुखैः शस्त्रैर्नानास्थाननिपातितैः ॥**
**नानारूपा व्रणा ये स्युस्तेषां वक्ष्यामि लक्षणम् ॥४॥**

व्रणाकृतिमात्रे विशेषहेतुं निर्दिशन्नाह—नानाधारामुखैरित्यादि । नानास्थानानि देहस्थानानि, तेषु निपातितैर्निक्षिप्तैरित्यर्थः । अनेन श्लोकेन नानाप्रकारशस्त्रधारा, नानाप्रकारशस्त्रमुखानि, नानाप्रकारदेहस्थानानि चेति त्रीणि व्रणाकृतिकारणान्युक्तानि ॥ ४ ॥

**आयताश्चतुरस्राश्च त्र्यस्रा मण्डलिनस्तथा ॥**
**अर्धचन्द्रप्रतीकाशा विशालाः कुटिलास्तथा ॥ ५ ॥**
**शरावनिम्नमध्याश्च यवमध्यास्तथाऽपरे ॥**
**एवंप्रकाराकृतयो भवन्त्यागन्तवो व्रणाः ॥ ६ ॥**
**दोषजा वा स्वयं भिन्ना, न तु वैद्यनिमित्तजाः ॥**

इदानीं व्रणाकृतिमाह—आयता इत्यादि । चतुरस्राश्चतुष्कोणाः । त्र्यस्रास्त्रिकोणाः । मण्डलिनो वर्तुलाः । विशाला विस्तीर्णाः । कुटिला वक्राः । स्वयं भिन्नाः स्वयं पक्वभिन्ना इत्यर्थः । न तु वैद्यनिमित्तजाः तेषामायतविशालसमप्रविभक्तलक्षणा आकृतयो व्रणगुणत्वेनैवोक्ताः, यतस्ता आकृतीर्भिषजः प्रदेशविशेष एव कुर्वन्ति ॥ ५ ॥ ६ ॥—

**भिषग्व्रणाकृतिज्ञो हि न मोहमधिगच्छति ॥ ७ ॥**
**भृशं दुर्दर्शरूपेषु व्रणेषु विकृतेष्वपि ॥**

व्रणाकृतिज्ञानफलमाह—भिषग्व्रणाकृतिज्ञ इत्यादि । दुर्दर्शरूपेषु गोशृङ्गवदुद्गतमांसप्ररोहादिषु ॥ ७ ॥—

**अनन्ताकृतिरागन्तुः स भिषग्भिः पुरातनैः ॥ ८ ॥**
**समासतो लक्षणतः षड्विधः परिकीर्तितः ॥**

आगन्तुव्रणाकृतिमाह—अनेकाकृतिरित्यादि ॥ ८ ॥—

**छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ॥ ९ ॥**
**घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥**

तदेव षड्विधत्वमाह—छिन्नमित्यादि । छिन्नं भिन्नं च सधारेण शस्त्रेण, विद्धं पुनरणुमुखेन शस्त्रेण, क्षतादीनि तु पाषाणलगुडादिभिरपि स्युः ॥ ९ ॥—

**तिरश्चीन ऋजुर्वाऽपि यो व्रणश्चायतो भवेत् ॥ १० ॥**
**गात्रस्य पातनं चापि छिन्नमित्युपदिश्यते ॥**

तेषां प्रत्येकं लक्षणमाह—तिरश्चीन इत्यादि । तिरश्चीनः तिर्यग्व्यवस्थित इत्यर्थः; ऋजुरवक्रः; अनयोर्द्वयोरपि आयत इति विशेषणम् । गात्रपातनं शस्त्रादिप्रहारेण हस्तादिपातनं, चकारादपातनं च किञ्चिच्छिन्नमात्रम् ॥ १० ॥—

१ 'प्रकरणान्तरेण समानत्वात्' इति पा० । २ 'शोषादीनां' इति पा० । ३ 'विश्वामित्रात्मजमृषिं शिष्यं' इति पा० ।

१ 'शरावन्निम्नमध्याः' इति पा० । २ 'आगन्तुव्रणाकृतिज्ञानफलमाह' इति पा० । ३ 'अनेकाकृतिः' इति पा० ।

**कुन्तशक्त्यृष्टिखड्गाग्रविषाणादिभिराशयः ॥ ११ ॥**
**हतः किञ्चित् स्रवेत्तद्धि भिन्नलक्षणमुच्यते ॥**

भिन्नमाह—कुन्तेत्यादि । शक्तिस्त्रिमुखी, ऋष्टिः शर्बला, विषाणं शृङ्गम्; अग्रशब्दः कुन्तादिभिः प्रत्येकं संबध्यते । आशय आमादिस्थानम् । किञ्चित् स्रवेदिति किमप्यनिर्दिष्टमित्यर्थः । तत्रोदरं यकृत् प्लीहा च रक्तं, बस्तिर्मूत्रं, पुरीषाशयः पुरीषमिति ॥ ११ ॥—

**स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च ॥ १२ ॥**
**हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥**

के पुनराशया इत्याह—स्थानान्यामाग्निपक्वानामित्यादि । स्थानशब्द आमादिभिः प्रत्येकमभिसंबध्यते ॥ १२ ॥—

**तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते ॥ १३ ॥**
**मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति ॥**
**मूर्च्छाश्वासतृडाध्मानमभक्तच्छन्द एव च ॥ १४ ॥**
**विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽक्षिरक्तता ॥**
**लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च ॥ १५ ॥**
**हृच्छूलं पार्श्वयोश्चापि**

तस्मिन्नित्यादि । तस्मिन् कोष्ठे इत्यर्थः । रक्तपूर्णे इति सर्वत्रैव रक्तस्य विद्यमानत्वात् । अत्राधो नाभे रक्तं गुदमूत्रमार्गाभ्यां प्रवर्तते, नाभेरूर्ध्वं मुखघ्राणाभ्यामिति । अभक्तच्छन्दो भोजनानभिलाषः । विडादिसङ्गः पुरीषादिनिरोधः । स्वेदास्रावः स्वेदस्रुतिः । लोहगन्धित्वं लोहगन्धिभावो मुखस्य ॥ १३–१५ ॥

**विशेषं चात्र मे शृणु ॥**
**आमाशयस्थे रुधिरे रुधिरं छर्दयेत् पुनः ॥ १६ ॥**
**आध्मानमतिमात्रं च शूलं च भृशदारुणम् ॥**
**पक्वाशयगते चापि रुजो गौरवमेव च ॥ १७ ॥**
**शीतता चाप्यधो नाभेः खेभ्यो रक्तस्य चागमः ॥**

विशेषमित्यादि । पक्वाशयगते पक्वाशयस्थे, 'रुधिरे' इति शेषः । खेभ्यः स्रोतोभ्यः ॥ १६ ॥ १७ ॥—

**अभिन्नेऽप्याशयेऽन्त्राणां खैः सूक्ष्मैरन्त्रपूरणम् ॥ १८ ॥**
**पिहितास्ये घटे यद्वल्लक्ष्यते तस्य गौरवम् ॥**

अभिन्ने इत्यादि । कथमभिन्नेऽप्यन्त्राशये रक्तेनान्त्रपूरणं युज्यत इत्याह—पिहितास्य इत्यादि । यथा पिहितास्ये आच्छादितमुखे घटे सूक्ष्मैः खै रन्ध्रैरुदकपूरणं लक्ष्यत इत्यर्थः । तस्य चान्त्राशयस्य, गौरवं 'भवति' इति शेषः ॥ १८ ॥—

**सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयाद्विना ॥ १९ ॥**
**उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥**

विद्धलक्षणमाह—सूक्ष्मास्येत्यादि । आशयाद्विनेति आशयम् आमादिस्थानम् । उत्तुण्डितम् उन्नमितमुखं, निर्गतं निर्गतशल्यम् ॥ १९ ॥—

**नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम् ॥ २० ॥**
**विषमं व्रणमङ्गे यत्तत् क्षतं त्वभिनिर्दिशेत् ॥**

क्षतलक्षणमाह—नातिच्छिन्नमित्यादि । नातिच्छिन्नं नात्यर्थद्विधाभूतम् । नातिभिन्नं नात्यर्थविदीर्णम् । उभयोरिति च्छिन्नभिन्नयोरित्यर्थः । विषमं व्रणमिति व्रणस्य वैषम्यं निम्नोन्नततलं, न तु कृच्छ्रसाध्यत्वम् ॥ २० ॥—

**प्रहारपीडनाभ्यां तु यदङ्गं पृथुतां गतम् ॥ २१ ॥**
**सास्थि तत् पिच्चितं विद्यान्मज्जरक्तपरिप्लुतम् ॥**

पिच्चितलक्षणमाह—प्रहारेत्यादि । प्रहारो मुद्गराद्यभिघातः, पीडनं कपाटादियन्त्रेण । पृथुतां विस्तीर्णतां गतमिति । सास्थि अस्थियुक्तम् । मज्जरक्तपरिप्लुतमिति मज्जरक्ताभिव्याप्तमित्यर्थः ॥ २१ ॥—

**विगतत्वग्यदङ्गं हि संघर्षादन्यथाऽपि वा ॥ २२ ॥**
**उषास्रावान्वितं तत्तु घृष्टमित्युपदिश्यते ॥**

घृष्टलक्षणमाह—विगतत्वगित्यादि । विगतत्वक् त्वग्रहितम् । संघर्षाद् द्रव्यान्तरेण संघर्षणात् । अन्यथा अन्येन प्रकारेणेत्यर्थः । 'अन्यथाऽपि वा' इत्यस्य स्थाने केचित् 'अन्यजादपि' इति पठन्ति, तत्रान्यजात् संघर्षात् द्रव्यान्तरजात् संघर्षणादित्यर्थः । उषा दाहविशेषः ॥ २२ ॥—

**छिन्ने भिन्ने तथा विद्धे क्षते वाऽसृगतिस्रवेत् ॥ २३ ॥**
**रक्तक्षयाद्रुजस्तत्र करोति पवनो भृशम् ॥**
**स्नेहपानं हितं तत्र तत्सेको विहितस्तथा ॥ २४ ॥**
**वेशवारैः सकृशरैः सुस्निग्धैश्चोपनाहनम् ॥**
**धान्यस्वेदांश्च कुर्वीत स्निग्धान्यालेपनानि च ॥ २५ ॥**
**वातघ्नौषधसिद्धैश्च स्नेहैर्बस्तिर्विधीयते ॥**

लक्षणैः षड्विधं सद्योव्रणं निर्दिश्येदानीं चतुर्षु छिन्नादिषु चिकित्सामाह—छिन्ने इत्यादि । तत्सेको विहित इति कोष्णस्नेहसेक इत्यर्थः । वेशवारैर्निरस्थिखिन्नस्निग्धपिष्टमांसैः । कृशरा तिलतण्डुमाषकृता यवागूः । उपनाहनं बन्धनम् । धान्यस्वेदानित्यादि धान्यस्वेदो माषादिकोष्णधान्यस्वेद इत्येके; अन्ये तु धान्यं धान्याम्लम्, अम्लशब्दोत्तरपदलोपेन । आलेपनशब्दो लेपने । स्नेहपानमूर्ध्वनाभिजेषु व्रणेषु, नाभेरधोगतेषु बस्तिरिति ॥ २३—२५ ॥—

**पिच्चिते च विघृष्टे च नातिस्रवति शोणितम् ॥ २६ ॥**
**अगच्छति भृशं तस्मिन् दाहः पाकश्च जायते ॥**
**तत्रोष्मणो निग्रहार्थं तथा दाहप्रपाकयोः ॥ २७ ॥**
**शीतमालेपनं कार्यं परिषेकश्च शीतलः ॥**

इदानीं पिच्चितघृष्टयोरस्रुतशोणितत्वेन समानधर्मणोरेकमेव चिकित्सितमाह—पिच्चित इत्यादि । अगच्छति अस्रवति सति । तस्मिन् रुधिरे । भृशम् अत्यर्थम् । अन्ये तु 'शीतमालेपनं कार्यं परिषेकश्च शीतलः'—इत्यस्य स्थाने 'शीतमालेपनं सेकः

१ 'हतो यः स्रवते तद्धि' इति पा० । २ 'छर्दयत्यपि' इति पा० ।
३ 'उत्तुण्डितम् उत्तानितत्वङ्मांसमीषद्दष्टमुखं वा' इति पा० ।

शुद्धी रक्तविमोक्षणम्' इति पठन्ति । शुद्धिर्वमनादिः; तत्रोर्ध्वनाभिजेषु वमनं, दाहोत्तरे मध्यकायजे रेचनम्, अधोनाभिजेषु पुनरास्थापनं, स्त्यानरक्तेषु रक्तमोक्षणम् ॥ २६ ॥ २७ ॥—

**षट्स्वेतेषु यथोक्तेषु छिन्नादिषु समासतः ॥ २८ ॥**
**ज्ञेयं समर्पितं सर्वं सद्योव्रणचिकित्सितम् ॥**

उक्तमेवोपसंहरन्नाह—षट्स्वेतेष्वित्यादि । समर्पितं सम्यगर्पितम् । ज्ञेयं ज्ञातव्यम् ॥ २८ ॥—

**अत ऊर्ध्वं प्रवक्ष्यामि छिन्नानां तु चिकित्सितम् २९**
**ये व्रणा विवृताः केचिच्छिरःपार्श्वावलम्बिनः ॥**
**तान् सीव्येद्विधिनोक्तेन बध्नीयाद्गाढमेव च ॥ ३० ॥**

अथ मूर्धावयवयवाश्रयं चिकित्साविशेषमाह—अत ऊर्ध्वमित्यादि । विवृता व्यात्तमुखाः । शिरःपार्श्वावलम्बिनो मस्तकपार्श्वावलम्बनशीलाः, अन्ये तु शिरोऽवलम्बिनस्तथा पार्श्वावलम्बिनश्चेत्येवं व्याख्यानयन्ति । विधिनोक्तेन ऋजुग्रन्थिसेवनादिना सीव्येदित्यर्थः ॥ २९ ॥ ३० ॥

**कर्णं स्थानादपहृतं स्थापयित्वा यथास्थितम् ॥**
**सीव्येद्यथोक्तं तैलेन स्रोतश्चाभिप्रतर्पयेत् ॥ ३१ ॥**
**कृकाटिकान्ते छिन्ने तु गच्छत्यपि समीरणे ॥**
**सम्यङ्निवेश्य बध्नीयात् सीव्येच्चापि निरन्तरम् ३२**
**आजेन सर्पिषा चैवं परिषेकं तु कारयेत् ॥**
**उत्तानोऽन्नं समश्नीयाच्छयीत च सुयन्त्रितः ॥३३॥**

कर्णमित्यादि । स्थानादपहृतं निःशेषतश्छिन्नम् । तैलेन वातघ्नौषधसिद्धेन । कृकाटिकान्ते ग्रीवायाः पश्चात् कृकाटिकापर्यन्ते । गच्छत्यपि समीरणे इति वाते निर्वहत्यपि सीव्येदित्यर्थः, 'असाध्या वायुनिर्वाहिण' ( सू. अ. २३ ) इत्यस्यायमपवादः । सम्यङ्निवेश्य यथास्थानं स्थापयित्वा । उत्तानोऽन्नं समश्नीयादिति तथैव कृकाटिकायाः सुस्थितत्वात्; अन्नमित्युपलक्षणं, तेन शयनमूत्रपुरीषोत्सर्गादि चोत्तानस्यैवेति । शयीत च सुयन्त्रित इति यथा कृकाटिका स्थिरा भवति ॥ ३१—३३ ॥

**शाखासु पतितांस्तिर्यक् प्रहारान् विवृतान् भृशम् ॥**
**सीव्येत् सम्यङ्निवेश्याशु सन्ध्यस्थीन्यनुपूर्वशः ३४**
**बद्ध्वा वेल्लितकेनाशु ततस्तैलेन सेचयेत् ॥**
**चर्मणा गोफणाबन्धः कार्यो यो वा हितो भवेत् ३५**

शाखासु पतितानित्यादि । शाखासु चतसृषु । सम्यङ्निवेश्येत्यादि आशु सन्ध्यस्थीनि सम्यङ्निवेश्य यथास्थानं स्थापयित्वा सीव्येत् । अनुपूर्वश इति अनुशब्दः सदृशार्थः; तेन पूर्वसदृशेन । वेल्लितकेनेति 'बन्धेन' इति शेषः ॥ ३४ ॥ ३५ ॥

**पृष्ठे व्रणो यस्य भवेदुत्तानं शाययेत्तु तम् ॥**
**अतोऽन्यथा चोरसिजे शाययेत् पुरुषं व्रणे ॥ ३६ ॥**

पृष्ठ इत्यादि । उत्तानं शाययेदिति दोषस्रुत्यर्थम्, अन्यथाऽनिर्गच्छन् अन्तरवस्थितो दोष उत्सङ्गं कृत्वा विकरोति; अन्यथेति अधोमुखमित्यर्थः । उक्तं च—"उरोव्रणी उत्तानशय्यां परिहरेत्, पृष्ठव्रणी तु स्तनोरोऽवष्टभ्य, दोषस्त्वन्यथा न प्रसिच्यते, अनिर्गच्छन् विकारानुत्पादयति"—इति **जेज्जटः । गयी** तु "पृष्ठे व्रणो यस्य भवेदनुत्तानः शयीत सः । अतोऽन्यथा चोरसिजे शयीत पुरुषो व्रणे"—इति पठति, व्याख्यानयति च—अनुत्तानोऽवाङ्मुखोऽधोमुखः शयीत, उरसिजेषु व्रणेष्वन्यथा उत्तान एव शयीतेति ॥ ३६ ॥

**छिन्नां निःशेषतः शाखां दग्ध्वा तैलेन बुद्धिमान् ॥**
**बध्नीयात् कोशबन्धेन प्राप्तं कार्यं च रोपणम् ॥३७॥**

शाखानां निःशेषच्छेदे विधानान्तरमाह—छिन्नामित्यादि । कोशबन्धेन स्थगिकाबन्धेन । प्राप्तं युक्तम् । रोपणमिति शोधनस्याग्निनैव कृतत्वात् ॥ ३७ ॥

**चन्दनं पद्मकं रोध्रमुत्पलानि प्रियङ्गवः ॥**
**हरिद्रा मधुकं चैव पयः स्यादत्र चाष्टमम् ॥ ३८ ॥**
**तैलमेभिर्विपक्वं तु प्रधानं व्रणरोपणम् ॥**

अस्य रोपणार्थं तैलमाह—चन्दनमित्यादि । पयो दुग्धं, स्यात् भवेत्, तच्चतुर्गुणमानम् । ननु संख्येयनिर्देशादेव संख्यासिद्धावष्टमग्रहणं किमर्थम्? उच्यते—नात्र पाको जलेनेष्यते, पयसैव पाकं मन्यते; अन्ये त्वष्टमग्रहणेनाष्टाङ्गसंज्ञकमिदं तैलमिति कथयन्ति ॥ ३८ ॥—

**चन्दनं कर्कटाख्या च सहे मांस्याह्वयाऽमृता ॥३९॥**
**हरेणवो मृणालं च त्रिफला पद्मकोत्पले ॥**
**त्रयोदशाङ्गं त्रिवृतमेतद्वा पयसाऽन्वितम् ॥ ४० ॥**
**तैलं विपक्वं सेकार्थे हितं तु व्रणरोपणे ॥**

अस्य रोपणार्थं द्वितीयं चन्दनादितैलमाह—चन्दनमित्यादि । कर्कटाख्या कर्कटशृङ्गी । सहे माषपर्णी मुद्गपर्णी च । अमृता गुडूची । हरेणवः कलायाः । मृणालम् उशीरम् । उत्पलं नीलोत्पलम् । त्रिवृतमिति त्रिभिर्घृतवसामज्जभिर्वृतं तैलं त्रिवृतम् । एतत् त्रयोदशाङ्गं तैलम् । पयसा क्षीरेण चतुर्गुणेन पक्वम् । वाशब्दः पूर्वोक्ततैलापेक्षया । 'मांस्याह्वया' इत्यस्य स्थाने 'सोमाह्वया' इति केचित् पठन्ति; सोमाह्वया त्रिसन्धिका, 'सोमलता' इत्यपरे । **गयी** तु मज्जवर्जं त्रयः स्नेहास्त्रिवृतमित्याह, तन्मते त्रिवृतं पयसा विपक्वं व्रणरोपणमिति व्याख्यानम् ॥३९॥४०॥—

**अत ऊर्ध्वं प्रवक्ष्यामि भिन्नानां तु चिकित्सितम् ४१**
**भिन्नं नेत्रमकर्मण्यमभिन्नं लम्बते तु यत् ॥**
**तन्निवेश्य यथास्थानमव्याविद्धसिरं शनैः ॥ ४२ ॥**
**पीडयेत् पाणिना सम्यक् पद्मपत्रान्तरेण तु ॥**
**ततोऽस्य तर्पणं कार्यं नस्यं चानेन सर्पिषा ॥ ४३ ॥**

अत ऊर्ध्वमित्यादि । यद्यपि आशयविषये भिन्नलक्षणं प्रागुक्तं, तथाऽपि नेत्रमप्याशय एव व्यवहर्तव्यमत आह—भिन्नं नेत्रमित्यादि । अकर्मण्यम् अवलोकनादिस्वकर्मणोऽसंपादकम्; अन्ये तु, अकर्मण्यमसाध्यमाहुः । तच्चाभिन्नं कर्मण्यं च

१ 'शोधयति' इति पा० ।

साध्यं चिकित्सितव्यम् । निवेश्य स्थापयित्वा । अव्याविद्धसिरम् अनाकुलितसिरम्; अन्ये तु 'अव्याविद्धशिरं' इति पठित्वा अकुटिलमस्तकमिति व्याख्यानयन्ति । पाणिना हस्तेन । पद्मपत्राणामन्तरत्वमूष्मत्वव्युदासार्थं मार्दवार्थं च । ततो मधुसर्पिर्दानानन्तरं तर्पणं पूरणं कार्यम् । अनेन वक्ष्यमाणेनेत्यर्थः । अन्ये तु 'अनेन' इत्यस्य स्थाने 'आजेन' इति पठन्ति ॥४१—४३॥

**आजं घृतं क्षीरपात्रं मधुकं चोत्पलानि च ॥**
**जीवकर्षभकौ चैव पिष्ट्वा सर्पिर्विपाचयेत् ॥ ४४ ॥**
**सर्वनेत्राभिघाते तु सर्पिरेतत् प्रशस्यते ॥**

तदेवाजं घृतमुत्पादयन्नाह—आजं घृतमित्यादि । अजाघृतं मधुकादिभिः समांशं पिष्ट्वा सर्पिर्गव्यं क्षीरपात्रं क्षीराढकं दत्त्वा विपाचयेत् । ननु चाजघृतस्य किं पेषणेन? उच्यते—यथासम्भवं पेषणं कार्यम् । द्रव्यसमत्वमत्राभिधीयते यथाऽन्येषु योगेष्वर्कक्षीरादीनां; ततश्च पञ्चद्रव्याणि यथा मात्रयाऽष्टौ पलानि भवन्ति तथा मात्रां परिकल्प्य घृतस्य प्रस्थं क्षीराढकमावाप्य विपचेदित्येष शास्त्रवृद्धव्यवहारः । अन्ये तु आजं घृतं गव्यं च तुल्यं कृत्वा मधुकादिकल्केन पचेत्, शेषं पूर्ववत्; नैवम्, वृद्धा आढकशब्देन द्रवद्रव्यस्य द्विगुणतया परिभाषितत्वादष्टाविंशत्यधिकपलशतं गृह्णन्ति । पिष्ट्वा सर्पिर्विपाचयेदिति सर्पिरिति च सर्पिषो द्विरुच्चारणं नियमार्थं; तेन, अनेनैव घृतेन तर्पणं नस्यं च प्रशस्तं न त्वन्येनेति । **गयी** तु, "अजाघृतस्य प्रस्थं, क्षीरस्य पुनराढकं, मधुकादीनि चत्वारि द्विपलिकान्यष्टपलत्वेन घृतस्य पादिकानि" इत्याह ॥ ४४ ॥—

**उदरान्मेदसो वर्तिर्निर्गता यस्य देहिनः ॥ ४५ ॥**
**कषायभस्ममृत्कीर्णां बद्ध्वा सूत्रेण सूत्रवित् ॥**
**अग्नितप्तेन शस्त्रेण छिन्द्यान्मधुसमायुतम् ॥ ४६ ॥**
**बद्ध्वा व्रणं सुजीर्णेऽन्ने सर्पिषः पानमिष्यते ॥**
**स्नेहपानादृते चापि पयःपानं विधीयते ॥ ४७ ॥**
**शर्करामधुयष्टिभ्यां लाक्षया वा श्वदंष्ट्रया ॥**
**चित्रासमन्वितं चैव रुजादाहविनाशनम् ॥ ४८ ॥**
**आटोपो मरणं वा स्याच्छूलो वाऽच्छिद्यमानया ॥**
**मेदोग्रन्थौ तु यत्तैलं वक्ष्यते तच्च योजयेत् ॥ ४९ ॥**

उदरमेदश्चिकित्सितमाह—उदरादित्यादि । कषायभस्ममृत्कीर्णां 'तां वर्तिम्' इति शेषः; कषायाः सर्जकार्जुनादयः, तेषां भस्म क्षारः, मृत् कृष्णमृत्, कीर्णां गुण्डिताम्; अन्ये तु 'कषायचूर्णमृत्कीर्णाम्' इति पठन्ति । बद्ध्वेति मूलमिति शेषः । सूत्रवित् शास्त्रवित् । अग्नितप्तेन शस्त्रेण छिन्द्यात्, अन्यथा अतप्तशस्त्रच्छेदने पाकभयं स्यात् । सा पुनः क्षतं यदा प्रवेश्यमाना न प्रविशति प्रविष्टा वा नावतिष्ठते तदा तस्याश्छेदः । चित्रा एरण्डः, दन्तीत्यन्ये । कल्पना चेयं—क्षीरस्य यष्टिमधुकथितस्य सशर्करैरण्डतैलप्रक्षेपस्य पानमित्येको योगः, श्वदंष्ट्राकथितं क्षीरं सलाक्षाचित्रातिलतैलप्रक्षेपं पीयत इति द्वितीयो योगः । वाशब्दात् केचिदेकमेव योगमामनन्ति, तथा च **वृद्धवाग्भटः**—"सक्षौद्रे च व्रणे बद्धे सुजीर्णेऽन्ने घृतं पिबेत् । क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः शृतम् ॥ रुग्दाहजित् सयष्ट्याह्वैः परं पूर्वोदितो विधिः" ( अ. सं. उ. तं. ३१ ) इति । क्षीरपाकविधिरयं—"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः"—इति । प्रतिदिनं क्षीरचतुष्पलं पेयं, शर्करैरण्डतैलं तु प्रत्येकं कार्षिकम्; एवं द्वितीययोगेऽपि । रुजादाहविनाशनमिति पयःपानमिति संबन्धः । मेदोवर्तेरच्छेदे फलमाह—आटोप इत्यादि । अच्छिद्यमानया अकृत्तमानया । मेदोग्रन्थौ तु यत्तैलमिति "द्विकरञ्ज" (चि. अ. १८) इत्यादिकम् ॥४५—४९॥

**त्वचोऽतीत्य सिरादीनि भित्त्वा वा परिहृत्य वा ॥**
**कोष्ठे प्रतिष्ठितं शल्यं कुर्यादुक्तानुपद्रवान् ॥ ५० ॥**

मेदोवर्तिप्रत्यासत्त्या जठरगतशल्यलक्षणमाह—त्वचोऽतीत्येत्यादि । त्वचोऽतीत्य त्वचोऽतिक्रम्य, त्वचः सप्त; सिरादीनि सिरामांसस्नायुसन्ध्यस्थीनि । सिराच्छेदलिङ्गं तु "सुरेन्द्रगोपप्रतिमं" ( सू. अ. २५ ) इत्यादि पूर्वमुक्तम् । प्रतिष्ठितम् अवस्थितम् । उक्तानुपद्रवानिति प्रणष्टशल्यविज्ञानीये "कोष्ठगते त्वाटोपानाहविद्रध्यादीन्" ( सू. अ. २६ ) इति ॥ ५० ॥

**तत्रान्तर्लोहितं पाण्डुं शीतपादकराननम् ॥**
**शीतोच्छ्वासं रक्तनेत्रमानद्धं च विवर्जयेत् ॥ ५१ ॥**

कोष्ठगतशल्यस्यासाध्यस्य लक्षणमाह—तत्रान्तर्लोहितमित्यादि । अन्तर्लोहितं कोष्ठमध्यपतितरुधिरमित्यर्थः । पाण्डुं श्वेतम् । शीतपादकराननं शीतचरणहस्तमुखम् । आनद्धं स्वमार्गादप्रवर्तमानदोषमलम् । एवंविधं शल्यवन्तं पुमांसं विवर्जयेत् परिहरेदित्यर्थः ॥ ५१ ॥

**आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ॥**
**पक्वाशयस्थे देयं च विरेचनमसंशयम् ॥ ५२ ॥**
**आस्थापनं च निःस्नेहं कार्यमुष्णैर्विशोधनैः ॥**
**यवकोलकुलत्थानां निःस्नेहेन रसेन च ॥ ५३ ॥**
**भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम् ॥**
**अतिनिःस्रुतरक्तो वा भिन्नकोष्ठः पिबेदसृक् ॥५४॥**

साध्यस्य चिकित्सितमाह—आमाशयस्थे इत्यादि । पक्वाशयस्थे पित्ताशयस्थे इत्यर्थः । वाताशयस्थे पुनरास्थापनमेव; आस्थापनं निरूहः । उष्णैर्विशोधनैर्गोमूत्रादिभिरास्थापनं कार्यमिति संबन्धः । विशुद्धस्य रक्तानुलोमनमन्नमाह—यवकोलेत्यादि । अनिःस्रुतरक्तस्य चिकित्सामभिधायातिनिःस्रुतरक्तस्य

१ 'रक्षा' इति पा० । २ अस्याग्रे क्वचित्पुस्तके 'खरण्टिकामित्यर्थः' इत्यधिकः पाठ उपलभ्यते । ३ 'मूले समं' इति वाक्यशेषः' इति पा० ।

१ 'अतिसंचितरक्तस्य' इति पा० ।

चिकित्सां निर्दिशन्नाह—अतिनिःसृतेत्यादि । पिबेदसृगिति जीवितानुबन्धनार्थम् ॥ ५२—५४ ॥

**स्वमार्गप्रतिपन्नास्तु यस्य विण्मूत्रमारुताः ॥
व्युपद्रवः स भिन्नेऽपि कोष्ठे जीवति मानवः ॥५५॥**

भिन्नकोष्ठस्य साध्यस्य लक्षणमाह—स्वमार्गेत्यादि । व्युपद्रवः विगता उपद्रवा यस्य सः, उपद्रवा ज्वराध्मानादयः ॥५५॥

**अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं नान्यथा भवेत् ॥
पिपीलिकाशिरोग्रस्तं तदप्येके वदन्ति तु ॥ ५६ ॥
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः ॥
प्रवेशयेत् कृत्तनखो घृतेनाक्तं शनैः शनैः ॥ ५७ ॥
प्रवेशयेत् क्षीरसिक्तं शुष्कमन्त्रं घृताप्लुतम् ॥
अङ्गुल्याऽभिमृशेत् कण्ठं जलेनोद्वेजयेदपि ॥ ५८ ॥
हस्तपादेषु[1] संगृह्य समुत्थाप्य[2] महाबलाः ॥
भवत्यन्तःप्रवेशस्तु यथा निर्धुनुयुस्तथा ॥ ५९ ॥
तथाऽन्त्राणि विशन्त्यन्तः स्वां कलां पीडयन्ति च ॥
व्रणाल्पत्वाद्बहुत्वाद्वा दुष्प्रवेशं भवेत्तु यत् ॥ ६० ॥
तदापाट्य प्रमाणेन भिषगन्त्रं प्रवेशयेत् ॥
यथास्थानं निविष्टे च व्रणं सीव्येदतन्द्रितः ॥ ६१ ॥
स्थानादपेतमादत्ते प्राणान् गुपितमेव वा ॥
वेष्टयित्वा तु पट्टेन घृतसेकं प्रदापयेत् ॥ ६२ ॥
घृतं पिबेत् सुखोष्णं च चित्रातैलसमन्वितम् ॥
मृदुक्रियार्थं शकृतो वायोश्चाधःप्रवृत्तये ॥ ६३ ॥
ततस्तैलमिदं कुर्याद्रोपणार्थं चिकित्सकः ॥
त्वचोऽश्वकर्णधवयोर्मोचकीमेषशृङ्गयोः ॥ ६४ ॥
शल्लकयर्जुनयोश्चापि विदार्याः क्षीरिणां तथा ॥
बलामूलानि चाहृत्य तैलमेतैर्विपाचयेत् ॥ ६५ ॥
व्रणं संरोपयेत्तेन वर्षमात्रं यतेत च ॥**

इदानीं कोष्ठगतान्त्रभेदमाह—अभिन्नेत्यादि । नान्यथेति यथैव स्थितानि तथैव प्रवेश्यानि तेनैव प्रकारेणेत्यर्थः । अपरे त्वन्यथा व्याख्यानयन्ति, यथा—अभिन्नादन्यथा अपरप्रकारं भिन्नमन्त्रं प्रवेश्यं न भवेत्; तथाच **वृद्धवाग्भटः**—"अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं नह्यतोऽन्यथा" (अ.सं. उ. अ. ३२)—इति । भिन्नमपि मतान्तरेण प्रवेश्यमिति निर्दिशन्नाह—पिपीलिकाशिरोग्रस्तमित्यादि । तदपि भिन्नमपि, अन्त्रं प्रवेश्यमिति संबन्धः । पिपीलिकाशिरोग्रस्तमित्यनेन पिपीलिकावदनसन्दंशसंहिते अन्त्रे तासां कबन्धच्छेदः कार्य इति व्याख्यानयन्ति । **गयी** तु 'अलाङ्गुलशिरोग्रस्तम्' इति पठति; तत्र अलाङ्गुलः स्थूलपिपीलिकः । प्रक्षाल्येत्यादि । पयसा क्षीरेण, दिग्धं गुण्डितं, आवृतमित्यर्थः । पांशुः धूलिः । कृत्तनखः छिन्ननखः । प्रविष्टेऽन्त्रे स्वस्थाननयनार्थमन्त्रस्योपायत्रयमाह—अङ्गुल्येत्यादि । अभिमृशेत् स्पृशेत् । उद्वेजयेत् त्रासयेत्[3] । समुत्थाप्य ऊर्ध्वं नीत्वा अन्त्रभेदवन्तं पुरुषं महाबलाः पुरुषास्तथा निर्धुनुयुर्यथाऽन्त्रस्यान्तःप्रवेशो भवतीति संबन्धः; निर्धुनुयुः आलोडयेयुरित्यर्थः । एभिः प्रयोगैः किं भवतीत्याह—तथाऽन्त्राणीत्यादि । ( अन्त्राणि यथाऽन्तः विशन्ति तथा ) स्वां कलां पीडयन्ति स्वकीया कला पञ्चमी मलधरा तां पीडयन्ति स्वस्थानं निर्विशन्तीत्यर्थः । दुःप्रवेशस्य चिकित्सामाह—व्रणाल्पत्वादित्यादि । व्रणाल्पत्वात् व्रणसूक्ष्मत्वात्, बहुत्वाद् व्रणस्य बहुत्वात्, तत्र विपुलत्वे सति स व्रणः सीव्यः । केचिद्बहुत्वादित्यन्त्रविशेषणमङ्गीकृत्य व्रणसूक्ष्मत्वे अन्त्रबहुत्वे चोभयत्रापि पाटनपूर्वं प्रवेशं मन्यन्ते; तच्च पाटनं यावताऽन्त्रं प्रविशति तावत् कार्यम् । अतन्द्रितः अनलसः । स्वस्थानेऽनिविष्टं व्याकुलितं चान्त्रं किं करोतीत्याह—स्थानादपेतमित्यादि । अपेतम् अपगतम् । प्राणानादत्ते गृह्णाति मारयतीत्यर्थः । गुपितं व्याकुलितं परस्परमतिक्रान्तमित्यर्थः[4] । अतः परं क्रियाविधिः—वेष्टयित्वेत्यादि । मधुघृताभ्यक्तं पट्टवेष्टितं घृतेन कोष्णेन सिञ्चेत् । चित्रातैलसमन्वितमिति चित्रातैलम् एरण्डतैलं, तत्फलं पुरीषमार्दवं वातानुलोमनं च । इदं वक्ष्यमाणम् । त्वचोऽश्वकर्णेत्यादि । अश्वकर्णः पूर्वदेशप्रसिद्धोऽश्वत्थसदृशः; मोचकी शाल्मली, मेषशृङ्गं कर्कटशृङ्गं, पुत्रजीवकमेद इत्यन्ये, क्षीरिण्यो न्यग्रोधोदुम्बराश्वत्थप्लक्षगर्दभाण्डाः, एषां त्वग्भिर्बलामूलैश्च तैलपादेन कल्कीकृतैर्जलं दत्त्वा चतुर्गुणं तैलप्रस्थं पाचयेदिति **जेज्जटः**; **गयी** तु "एषां द्रव्याणामाढकं सलिलाढकैश्चतुर्भिः क्वथितमाढकशेषं, तेन कषायेणाश्वकर्णादित्वक्पादकल्कं तैलप्रस्थं पाचयेत्" इत्याह । वर्षमात्रं यतेतेति मैथुनव्यायामादि परिहरन् यत्नं कुर्वीतेत्यर्थः ॥ ५६—६५ ॥

**पादौ निरस्तमुष्कस्य जलेन प्रोक्ष्य चाक्षिणी ॥६६॥
प्रवेश्य तुन्नसेवन्या मुष्कौ सीव्येत्ततः परम् ॥
कार्यो गोफणिकाबन्धः कट्यामावेश्य[3] यन्त्रकम् ६७
न कुर्यात् स्नेहसेकं च तेन क्लिद्यति हि व्रणः ॥
कालानुसार्यागुर्वेलाजातीचन्दनपद्मकैः ॥ ६८ ॥
शिलादार्व्यमृतातुत्थैस्तैलं कुर्वीत रोपणम् ॥**

मुष्कभेदचिकित्सितमाह—पादौ निरस्तमुष्कस्येत्यादि । पादावक्षिणी च जलेन प्रोक्ष्य सिक्त्वेत्यर्थः; 'मुष्कफले' इत्यध्याहारः । मुष्कौ अण्डकोषौ, तुन्नसेवन्या सेवनीविशेषेण, सीव्येत् । गोफणिका कौपीनं कच्छोटक इत्यर्थः । कट्यामावेश्य यन्त्रकमित्यादि । पट्टयन्त्रमावेश्य, चलनभयादित्यर्थः । कालानुसार्येत्यादि । कालानुसार्या तगरं, शिला मनःशिला ॥६६—६८॥—

**शिरसोऽपहृते शल्ये बालवर्तिं निवेशयेत् ॥ ६९ ॥
बालवर्त्यामदत्तायां मस्तुलुङ्गं व्रणात् स्रवेत् ॥
हन्यादेनं ततो वायुस्तस्मादेवमुपाचरेत् ॥ ७० ॥**

१ 'हस्तपादे तु' इति पा० । २ 'समुत्क्षिप्य' इति पा० । ३ 'बोधयति' इति पा० । ४ 'स्वरण्टितमित्यर्थः' इति पा० ।

१ 'समुत्क्षिप्य' इति पा० । २ 'आन्दोलयेयुः' इति पा० । ३ 'कट्यामानेह्य' इति पा० ।

**व्रणे रोहति चैकैकं शनैर्बालमपक्षिपेत् ॥**

अतः परं विद्धचिकित्सारम्भः, तत्र प्रागेवोत्तमाङ्गे विद्धचिकित्सितमाह—शिरस इत्यादि । अपहृते कर्षिते । बालवर्तिमिति केशरचितवर्तिं व्रणमुखपिधानार्थं निवेशयेत् निरवशेषेण प्रवेशयेत् । बालवर्त्यदाने दोषमाह—बालवर्त्यामित्यादि । मस्तुलुङ्गमिति शिरसो बलाधानं स्त्यानघृताकारं मस्तुलुङ्गमुच्यते । एनम् आतुरम् । ततो मस्तुलुङ्गस्रवणात् । एवमिति पूर्वोक्तप्रकारेण । उपाचरेत् चिकित्सां कुर्यात् । अपक्षिपेत् कर्षेत् ॥ ६९ ॥ ७० ॥

**गात्रादपहृतेऽन्यस्मात् स्नेहवर्तिं प्रवेशयेत् ॥ ७१ ॥**
**कृते निःशोणिते चापि विधिः सद्यःक्षते हितः ॥**

सामान्यशरीरावयवस्य चिकित्सामाह—गात्रादपहृते इत्यादि । गात्रादिति स्फुटम् । अन्यस्माद् गात्रादवयवात्, अपहृते 'शल्ये' इति शेषः । स्नेहाक्ता पट्टवर्तिः स्नेहवर्तिः; स्नेहोऽत्र तैलम्, उपरिष्टाच्चक्रतैलोपदेशात् । प्रवेशयेदिति अपहृतशल्ये गात्र इति विभक्तिविपरिणामेन संबन्धः । तस्मिन्नपि गात्रे पाकभयान्निःशोणिते कृते, विधिः सद्यःक्षते हित इति सद्यःक्षतविषये यो विधिः सोऽत्रापि हितो मधुघृतादिः सन्धानार्थम् ॥ ७१ ॥—

**दूरावगाढाः सूक्ष्माः स्युर्ये व्रणास्तान् विशोणितान्॥**
**कृत्वा सूक्ष्मेण नेत्रेण चक्रतैलेन तर्पयेत् ॥**

विषयविशेषेण विद्धचिकित्सितमाह—दूरावगाढा इत्यादि । दूरावगाढा दूरानुप्रविष्टा इत्यर्थः । सूक्ष्मेण नेत्रेणेति । नेत्रेण व्रणप्रक्षालनयन्त्रेण, तच्चाष्टाङ्गुलं मुद्गतुल्यस्रोतः । चक्रतैलेनेति तिलतैलपीडनोपकरणकाष्ठेभ्योऽणुतैलन्यायेन गृहीतं तैलं चक्रतैलं, सद्यःपीडनोद्धृतमात्रं वा । तर्पयेत् पूरयेत् ॥ ७२ ॥—

**समङ्गां रजनीं पद्मां त्रिवर्गं तुत्थमेव च ॥ ७३ ॥**
**विडङ्गं कटुकां पथ्यां गुडूचीं सकरञ्जिकाम् ॥**
**संहृत्य विपचेत् काले तैलं रोपणमुत्तमम् ॥ ७४ ॥**

समङ्गामित्यादि । समङ्गा मञ्जिष्ठा, रजनी हरिद्रा, पद्मा भार्गी, त्रिवर्गः त्रिफला, पथ्या हरीतकी, त्रिवर्गग्रहणेनैव पथ्यायां लब्धायां पुनः पथ्याग्रहणं भागद्वयप्रक्षेपार्थं; ( यथा पुष्यानुगे मधुकस्य द्विः पाठः ) यदुक्तं—"घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते । तज्ज्ञातव्यमिहाचार्यैर्भागतो द्विगुणं भवेत्—" इति । करञ्जिका नक्तमालफलमित्यर्थः । काले इति अदोषोपप्लवकाले व्रणसंरोहणकाले इत्यर्थः ॥ ७३ ॥ ७४ ॥

**तालीशं पद्मकं मांसी हरेण्वगुरुचन्दनम् ॥**
**हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः ॥ ७५ ॥**
**पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम् ॥**

अपरमपि रोपणतैलमाह—तालीशमित्यादि । हरेणु रेणुकानाम गन्धद्रव्यम् ॥ ७५ ॥—

**क्षते क्षतविधिः कार्यः पिच्चिते भग्नवद्विधिः॥ ७६ ॥**

क्षतपिच्चितयोश्चिकित्सितमाह—क्षते क्षतविधिरित्यादि । क्षते इति "नातिच्छिन्नं नातिभिन्नं" इत्यादिना परिभाषिते, क्षतविधिः सामान्यक्षतविधिः क्षौद्रघृततैलाभ्यङ्गादिरित्यर्थः । पिच्चिते भग्नवद्विधिः भग्नाभिहितो बन्धसेकरूक्षभोजनादिः ( अत्र पाठात्तु बन्धादिचिकित्सितसमावेशः ) ॥ ७६ ॥

**घृष्टे रुजो निगृह्याशु चूर्णैरुपचरेद्व्रणम् ॥**

घृष्टचिकित्सितमाह—घृष्टे इत्यादि । रुजो निगृह्य मधुकशीतादिभिर्निगृह्य निर्वाप्य, गयी तु मधुघृतसेकादिना निर्वाप्येति व्याख्याति । चूर्णैः शालसर्जार्जुनादीनाम् ॥—

**विश्लिष्टदेहं पतितं मथितं हतमेव च ॥ ७७ ॥**
**वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशनम् ॥**
**अयमेव विधिः कार्यः क्षीणे मर्महते तथा ॥ ७८ ॥**

इदानीं सद्योव्रणप्रसङ्गेन विश्लिष्टादिदेहस्य सद्यःक्षतव्रणसामान्येन चिकित्सां निर्दिशन्नाह—विश्लिष्टदेहमित्यादि । विश्लिष्टदेहमिति नमनाकर्षणारोहणपतनवधसाहसादिभिः स्वस्थानच्युतावयवदेहं, पतितं वृक्षादिभ्यः, मथितं बलीयसा विलोडितं, हतं वेगवता द्रव्येण दण्डमुष्ट्यादिभिर्वा । वासयेत् स्थापयेत् । द्रोणी दारुरचिता नौसदृशी । अयमेवेत्यादि । क्षीणे अध्वादिक्षीणे । मर्महत इति । मर्माणि हृदयादीनि ॥ ७७ ॥ ७८ ॥

**रोपणे सपरीषेके पाने च व्रणिनां सदा ॥**
**तैलं घृतं वा संयोज्यं शरीरर्तूनवेक्ष्य हि ॥ ७९ ॥**

इदानीं विषयविशेषोक्तस्यापि तैलस्य सद्योव्रणेषु निषेधमनुक्तस्यापि घृतस्य विधिं दर्शयन्नाह—रोपणे इत्यादि । वातकफप्रकृतिकं शरीरं कालं शिशिरादिकमपेक्ष्य तैलं प्रयोज्यं, रक्तपित्तप्रकृतिकं शरीरं कालं शरदादिकं पुनरवेक्ष्य घृतं प्रयोज्यमिति ॥ ७९ ॥

**घृतानि यानि वक्ष्यामि यत्नतः पित्तविद्रधौ ॥**
**सद्योव्रणेषु देयानि तानि वैद्येन जानता ॥ ८० ॥**

अथ संक्षेपार्थं घृतान्यन्यातिदेशेन निर्दिशन्नाह—घृतानीत्यादि । तानीति "प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैः" ( चि. अ. १६ ) इत्यादीनि ॥ ८० ॥

**सद्यःक्षतव्रणं वैद्यः सशूलं परिषेचयेत् ॥**
**सर्पिषा नातिशीतेन बलातैलेन वा पुनः ॥ ८१ ॥**

१ 'स्पर्शरोदनिका लज्जाउली' इति लोके, 'वराहक्रान्तेत्यपरे' इति पा० । २ अयं पाठो मुद्रितपुस्तके नोपलभ्यते ।

१ अयं पाठो मुद्रितपुस्तके नोपलभ्यते । २ 'मधुमधुरशीतादिभिः' इति पा० । ३ 'विहितघृतसेकादिना' इति पा० । ४ 'तुलाभ्रमणाकर्षणभारोद्वहनयानपतनवधसाहसादिभिः' इति पा० । ५ 'इदानीमुक्तस्यापि' इति पा० ।

अथ यस्यामवस्थायां घृततैलपरिषेकाः कार्यास्तां निर्दिशन्नाह—सद्य इत्यादि । सर्पिषा नातिशीतेनेति पित्तरक्तप्रकृतिके शरीरे काले च शरदादिके परिषेकः; बलातैलेन वातकफप्रकृतौ देहे काले च शीते इति ॥ ८१ ॥

**समङ्गां रजनीं पद्मां पथ्यां तुत्थं सुवर्चलाम् ॥**
**पद्मकं रोध्रमधुकं विडङ्गानि हरेणुकाम् ॥ ८२ ॥**
**तालीशपत्रं नलदं चन्दनं पद्मकेशरम् ॥**
**मञ्जिष्ठोशीरलाक्षाश्च क्षीरिणां चापि पल्लवान् ॥८३॥**
**प्रियालबीजं तिन्दुक्यास्तरुणानि फलानि च ॥**
**यथालाभं समाहृत्य तैलमेभिर्विपाचयेत् ॥ ८४ ॥**
**सद्योव्रणानां सर्वेषामदुष्टानां तु रोपणम् ॥**

सामान्येन सर्वव्रणानामदुष्टानां रोपणार्थं तैलमाह—समङ्गामित्यादि । समङ्गा मञ्जिष्ठा । पद्मा भार्गी । सुवर्चला सूर्यभक्ता । हरेणुका रेणुका । तरुणानि आमानि ॥ ८२—८४ ॥

**कषायमधुराः शीताः क्रियाः स्निग्धाश्च योजयेत् ८५**
**सद्योव्रणानां सप्ताहं पश्चात् पूर्वोक्तमाचरेत् ॥**

अथ कियन्तं कालं सद्योव्रणक्रियेत्याह—कषायेत्यादि । पूर्वोक्तं द्विव्रणीयोक्तम् । अमुं श्लोकं **जेज्जटाचार्यो**ऽनार्षमाह; **गयी** त्वार्षम्, इत्यस्माभिरप्यङ्गीकृतः ॥ ८५ ॥—

**दुष्टव्रणेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ॥ ८६ ॥**
**विशोषणं तथाऽऽहारः शोणितस्य च मोक्षणम् ॥**
**कषायं राजवृक्षादौ सुरसादौ च धावनम् ॥ ८७ ॥**
**तयोरेव कषायेण तैलं शोधनमिष्यते ॥**
**क्षारकल्पेन वा तैलं क्षारद्रव्येषु साधितम् ॥ ८८ ॥**

सर्वेषामदुष्टानां रोपणमुक्तं, दुष्टानां किं विधानमिति तदाह—दुष्टव्रणेष्वित्यादि । ऊर्ध्वं शोधनं वमनशिरोविरेचने, अधःशोधनं विरेचनास्थापनं, विशोषणं लङ्घनम् । आहारोऽपि विशोषण एव तिक्तकटुकषायादिः । तत्रोर्ध्वनाभिजेषु कफजेषु वमनं, पित्तजेषु पित्ताशयजेषु च विरेचनं, वाताशयाधःकायजेषु मलेन मार्गावरणदुष्टसमीरणदूषितेषु पुनरास्थापनं, शिरसिजेषु तु कफजेषु शिरोविरेचनम् । राजवृक्षादाविति आरग्वधादावित्यर्थः । तयोरेव गणयोः कषायेण पादकल्कं तैलं शोधनं साध्यते । क्षारकल्पेन वेति क्षारप्रस्थमुदकप्रस्थैः षड्भिरेकविंशतिवारान् स्रावितं तस्मिंस्तैलप्रस्थाच्चतुर्गुणे क्षारोदके तैलं पाचयेत्; अत्र तु 'क्षारद्रव्याण्येव कल्कानि' इत्येके, 'अकल्कमेवैतत्तैलम्' इत्यन्ये । क्षारद्रव्येषु मुष्ककपलाशादिषु ॥ ८६—८८ ॥

**द्रवन्ती चिरबिल्वश्च दन्ती चित्रकमेव च ॥**
**पृथ्वीका निम्बपत्राणि कासीसं तुत्थमेव च ॥८९॥**
**त्रिवृत्तेजोवती नीली हरिद्रे सैन्धवं तिलाः ॥**
**भूमिकदम्बः सुवहा शुकाख्या लाङ्गलाह्वया ॥९०॥**
**नैपाली जालिनी चैव मदयन्ती मृगादनी ॥**
**सुधामूर्वार्ककीटारिहरितालकरञ्जिकाः ॥ ९१ ॥**
**यथोपपत्ति कर्तव्यं तैलमेतैस्तु शोधनम् ॥**
**घृतं वा यदि वा प्राप्तं कल्काः संशोधनास्तथा ९२**

इदानीं सर्वदुष्टव्रणानां तैलघृतयोगितया व्रणकल्कद्रव्ययोगिद्रव्यं निर्दिशन्नाह—द्रवन्तीत्यादि । द्रवन्ती चीरितपत्रा । दन्ती चिरबिल्वो वृक्षकरञ्जकः । दन्ती उदुम्बरपर्णी । पृथ्वीका स्थूलजीरकः, एलेत्यन्ये, हिङ्गुपत्रिकेत्यपरे । तेजोवती काकमर्दनिका, नीलि निलाञ्जनिका शारदा । भूमिकदम्बो मुण्डितिका । सुवहा गोधापदी । शुकाख्या चर्मकारवटः । लाङ्गलाह्वया कलिहारिका । नैपाली मनःशिला । जालिनी कोशातकी । मदयन्ती मेन्दिका नखरञ्जनी । मृगादनी इन्द्रवारुणी । सुधा सेहुण्डः । मूर्वा चोरस्नायुः । कीटारिः विडङ्गः, कीटमारिणीत्यन्ये; करञ्जिका नक्तमालफलम् । यथोपपत्ति यथालाभम् । प्राप्तमिति युक्तं पूर्वोक्तशरीरकालाद्यपेक्षया । कल्का इति 'प्राप्ता' इति शेषः । तैलं प्राप्तमेषु "उत्सन्नमांसानस्निग्धानल्पस्रावान् व्रणांस्तथा" ( चि. अ. १ ) इत्यादिषु, घृतं पुनरेषु प्राप्तं "पित्तप्रदुष्टान् गम्भीरान् दाहपाकप्रपीडितान्" ( चि. अ. १ ) इत्यादिषु, कल्काः पुनरेषु युक्ताः "पूतिमांसप्रतिच्छन्नान् महादोषांश्च" ( चि. अ. १ ) इत्यादिषु ॥ ८९—९२ ॥

**सैन्धवत्रिवृदेरण्डपत्रकल्कस्तु वातिके ॥**
**त्रिवृद्धरिद्रामधुककल्कः पैत्ते तिलैर्युतः ॥ ९३ ॥**
**कफजे तिलतेजोह्वादन्तीस्वर्जिकचित्रकाः ॥**
**दुष्टव्रणविधिः कार्यो मेहकुष्ठव्रणेष्वपि ॥ ९४ ॥**

अथ वातादिभेदेन कल्कानाह—सैन्धवमित्यादि ॥९३॥९४॥

**षड्विधः प्राक् प्रदिष्टो यः सद्योव्रणविनिश्चयः ॥**
**नातः शक्यं परं वक्तुमपि निश्चितवादिभिः ॥ ९५ ॥**

इदानीं छिन्नादिषट्के कस्यचिद्विप्रतिपत्तिं निराकुर्वन्नाह—षड्विध इत्यादि । अतः षड्विधत्वात् परं सप्तविधत्वादि; नियमेन वक्तुं शीलैरपि वक्तुं न शक्यमित्यर्थः ॥ ९५ ॥

**उपसर्गैर्निपातैश्च तत्तु पण्डितमानिनः ॥**
**केचित् संयोज्य भाषन्ते बहुधा मानगर्विताः ॥९६॥**
**बहु तद्भाषितं तेषां षट्स्वेष्वेवावतिष्ठते ॥**
**विशेषा इव सामान्ये षट्त्वं तु परमं मतम् ॥ ९७ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने सद्योव्रणचिकित्सितं नाम द्वितीयोऽध्यायः ॥ २ ॥**

उपसर्गैरित्यादि—उपसर्गाः प्रपरादयः, निपाताश्चादयः, तैः संयोज्य भाषन्ते; यथा—सम्यक् छिन्नं संछिन्नं, परितः छिन्नं परिच्छिन्नम्, अल्पं हि छिन्नमाच्छिन्नमिति; निपातैर्यथा—अतिक्रम्य च्छिन्नमतिच्छिन्नं, पूजितं छिन्नं सुच्छिन्नम्, अल्पं

१ 'स्पर्शरोदनिका' इति पा० । २ 'क्षारकल्केन' इति पा० ।

१ 'मेहकुष्ठव्रणेषु' इति पा० ।

छिन्नमीषच्छिन्नमिति । तदिति छिन्नादिषट्कम् । तथाऽपि षट्कमेवेति दृष्टान्तेन दर्शयन्नाह—बहु तद्भाषितमित्यादि । तेषां वादिनाम् । तत् पूर्वोक्तं बहुभाषितम्, एषु षट्सु छिन्नादिषु, अवतिष्ठते अन्तर्भवतीत्यर्थः । विशेषा इव सामान्ये इति यथैव हि कर्मसामान्ये नमनोन्नमनप्रसारणाकुञ्चनादीनां कर्मविशेषाणामवरोधः, तथा छेदसामान्ये सर्वेषामेव संच्छिन्नपरिच्छिन्नातिच्छिन्नादीनां छेदविशेषाणामवरोधः, एवं शेषेष्वपि पञ्चसु । षट्कं तु इति तुशब्दोऽवधारणे, तेन षट्कमेवेत्यर्थः ॥ १६ ॥ १७ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

**अथातो भग्नानां चिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च ॥**
**उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥ ३ ॥**

तत्र प्रथमं भग्नस्य कृच्छ्रसाध्यत्वमाह—अल्पाशिन इत्यादि । अनात्मवतः अजितेन्द्रियस्य अपथ्यरतस्येत्यर्थः । वातात्मकस्य वातप्रकृतेः । उपद्रवैरिति उपद्रवा ज्वराध्मानमूत्रपुरीषसङ्गादयः । अमुं पाठं जेज्जटो न मन्यते; गयी तु मन्यत इत्यस्माभिरङ्गीकृतः ॥ ३ ॥

**लवणं कटुकं क्षारमम्लं मैथुनमातपम् ॥**
**व्यायामं च न सेवेत भग्नो रूक्षान्नमेव च ॥ ४ ॥**

इदानीमसेव्यानाह—लवणमित्यादि ॥ ४ ॥

**शालिर्मांसरसः क्षीरं सर्पिर्यूषः सतीनजः ॥**
**बृंहणं चान्नपानं स्याद्देयं भग्नाय जानता ॥ ५ ॥**

इदानीं सेव्यानाह—शालिरित्यादि । क्षीरं व्रणे सामान्योक्त्या निषिद्धमपि भग्नेऽपवादत्वात् प्रयुज्यते; अन्ये पुनरव्रणे एव भग्ने क्षीरं दातव्यमित्याहुः; केचित्तु भग्ने क्षीरदानं विरुद्धं, नवधान्यादिवर्गपठितत्वेन पाकपूयजनकत्वादित्याहुः; केचित् क्षीरसर्पिरिति च समस्तमेकपदं पठन्ति, व्याख्यानयन्ति च—क्षीरादुत्थितं सर्पिः क्षीरसर्पिरिति । सतीनो वर्तुलकलायः, सतीनानां वातकराणामपि सर्पिरादिसंस्कृतत्वाद्यूषो भग्ने युज्यत एव । बृंहणं देहवृद्धिकरम् ॥ ५ ॥

**मधूकोदुम्बराश्वत्थपलाशककुभत्वचः ॥**
**वंशसर्जवटानां च कुशार्थमुपसंहरेत् ॥ ६ ॥**

भग्नव्रणबन्धनद्रव्यं कुशा, तदर्थं द्रव्यं निर्दिशन्नाह—मधूकोदुम्बराश्वत्थेत्यादि । उपसंहरेत् एकत्र कुर्यात् । वंशसर्जवटानां चेति 'त्वच' इति शेषः । कुशाशब्देन भग्नबन्धनार्थं वंशवेत्रादिकं प्रोच्यते; अन्ये कुड्यमिति पठन्ति, तत्रापि स एवार्थः ॥ ६ ॥

**आलेपनार्थं मञ्जिष्ठां मधुकं रक्तचन्दनम् ॥**
**शतधौतघृतोन्मिश्रं शालिपिष्टं च संहरेत् ॥ ७ ॥**

भग्ने लेपनद्रव्याणि निर्दिशन्नाह—आलेपनार्थमित्यादि । संहरेत् एकत्र कुर्यात् । शालिपिष्टमित्यस्य स्थाने 'अम्लपेषितमाहरेत्' इति केचित् पठन्ति, अम्लपेषितं काञ्जिकपिष्टम् ॥ ७ ॥

**सप्ताहादथ सप्ताहात् सौम्येष्वृतुषु बन्धनम् ॥**
**साधारणेषु कर्तव्यं पञ्चमे पञ्चमेऽहनि ॥ ८ ॥**
**आग्नेयेषु त्र्यहात् कुर्याद्भग्नदोषवशेन वा ॥**

भग्नव्रणविशेषे बन्धनकालावधिं निर्दिशन्नाह—सप्ताहादित्यादि ॥ ८ ॥—

**तत्रातिशिथिले बद्धे सन्धिस्थैर्यं न जायते ॥ ९ ॥**
**गाढेनापि त्वगादीनां शोफो रुक् पाक एव च ॥**
**तस्मात् साधारणं बन्धं भग्ने शंसन्ति तद्विदः ॥ १० ॥**

इदानीं त्रिविधो बन्धो व्रणे निर्दिष्टो गाढः, समः, शिथिल इति; तत्र भग्नेषु गाढशिथिलयोर्बन्धयोर्दोषावहत्वात् सममेव बन्धं निर्दिशन्नाह—तत्रातिशिथिलमित्यादि । सन्धिस्थैर्यं[1] सन्धीनां दृढता ॥ ९ ॥ १० ॥

**न्यग्रोधादिकषायं तु सुशीतं परिषेचने ॥**
**पञ्चमूलीविपक्वं तु क्षीरं कुर्यात् सवेदने ॥ ११ ॥**

तस्य पित्तप्रकृतौ काले चोष्णे परिषेकं निर्दिशन्नाह—न्यग्रोधेत्यादि । संधानार्थं पाकादिपरिहारार्थं च । वातोत्तरे सपित्ते सशूले च परिषेकान्तरमाह—पञ्चमूलीत्यादि । पञ्चमूली स्वल्पा, तस्याः शीतवीर्यत्वात् ॥ ११ ॥

**सुखोष्णमवचार्यं वा चक्रतैलं विजानता ॥**

वातकफप्रकृतौ सशूले सशीते च काले चक्रतैलमाह—सुखोष्णमित्यादि । अवचार्य 'परिषेके' इति शेषः । चक्रतैलं सद्यःपीडितोद्धृतमेके वदन्ति, अन्ये पुनरणुतैलकल्पेन गृहीतमपक्वं तैलं चक्रतैलमाहुः ॥—

**विभज्य कालं दोषं च दोषघ्नौषधसंयुतम् ॥ १२ ॥**
**परिषेकं प्रदेहं च विदध्याच्छीतमेव च ॥**

विभज्य कालमित्यादि । शीतमेव चेति चकाराद्दोषाद्यपेक्षयोष्णमपि ॥ १२ ॥—

**गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ॥ १३ ॥**
**शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥**

भग्ने आभ्यन्तरमौषधं निर्दिशन्नाह—गृष्टिक्षीरमित्यादि । गृष्टिः प्रथमप्रसूता गौः । मधुरौषधानि काकोल्यादीनि । प्रातः पिबेन्न तु भुक्ते । कल्पना चेयं—काकोल्यादीनां मधुराणां

[1] 'स्थिरता' इति पा० ।

कर्षमात्रं द्रव्यमष्टगुणं क्षीरं चतुर्गुणोदकसिद्धं क्षीरशेषं सर्पिर्लाक्षाकर्षमात्रप्रक्षेपान्वितं; तच्च लघौ कोष्ठे देयम्, इयं च दिनं प्रति मात्रा ॥ १३ ॥—

**सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ॥ १४ ॥**
**प्रतिसार्य कषायैस्तु शेषं भग्नवदाचरेत् ॥**

इदानीं सव्रणस्य भग्नस्य चिकित्सितमाह—सव्रणस्येत्यादि । व्रणं प्रतिसार्य लेपयित्वेत्यर्थः । कैः प्रतिसार्य ? कषायैः; किंविशिष्टैः ? सर्पिर्मधूत्तरैः घृतमधुप्रधानैः; कषायोऽत्र न्यग्रोधादिकल्कः । शेषम् आहारविहारादिकमित्यर्थः ॥ १४ ॥—

**प्रथमे वयसि त्वेवं भग्नं सुकरमादिशेत् ॥ १५ ॥**
**अल्पदोषस्य जन्तोस्तु काले च शिशिरात्मके ॥**

इदानीं कालदोषाश्रयं साध्यत्वं भग्ने निर्दिशन्नाह—प्रथमे इत्यादि । एवमिति उक्ताहाराचारेणेत्यर्थः । सुकरं सुखसाध्यम् ॥ १५ ॥—

**प्रथमे वयसि त्वेवं मासात् सन्धिः स्थिरो भवेत् १६**
**मध्यमे द्विगुणात् कालादुत्तरे त्रिगुणात् स्मृतः ॥**

तस्यैव सुकरत्वे कालावधिं[1] दर्शयन्नाह—प्रथमे इत्यादि । स्थिरो दृढ इत्यर्थः । द्विगुणात् कालाद् द्वाभ्यां मासाभ्यामित्यर्थः । त्रिगुणादिति त्रिभिर्मासैरित्यर्थः ॥ १६ ॥—

**अवनामितमुन्नह्येदुन्नतं चावपीडयेत् ॥ १७ ॥**
**आञ्छेदतिक्षिप्तमधो गतं चोपरि वर्तयेत् ॥**

इदानीं द्विविधानामपि सन्धिमुक्तकाण्डभग्नानां प्रतीकारोपायानाह—अवनामितमित्यादि । अवनामितम् अधोगतम् । उन्नह्येत् ऊर्ध्वं कुर्यादित्यर्थः । अतिक्षिप्तम् अतिप्रेरितम्, उपरि वर्तयेदुपरि नयेदित्यर्थः । **गयी** तु अवनामितमित्यादि पठित्वा पञ्च स्थापनोपायानाह, स च पाठोऽभावान्न लिखितः ॥१७॥—

**आञ्छनैः पीडनैश्चैव सङ्क्षेपैर्बन्धनैस्तथा ॥ १८ ॥**
**सन्धीञ्छरीरे सर्वांस्तु चलानप्यचलानपि ॥**
**एतैस्तु स्थापनोपायैः स्थापयेन्मतिमान् भिषक् १९**

इदानीं संक्षेपतः स्थापनोपायानाह—आञ्छनैरित्यादि । पीडनग्रहणेन नमनोन्नमनपरिवर्तनानि गृह्यन्ते । संक्षेपः सम्यक् क्षेपः प्रेरणमित्यर्थः, तस्य च पिच्चितं विषयः; एतेन, आञ्छनादिभिरुपायैः प्राक् सन्धाय बन्धनैरुपाचरेदित्यर्थः । सन्धीनिति बाहुल्येन निर्देशः, तेन काण्डभग्नान्यप्येतैरुपायैः स्थापयेत् । चलानप्यचलानपीति हस्तपादकटीहनुगताः सन्धयश्चलाः, तद्विपरीता अचलाः । **गयी** तु संक्षेपशब्देन आकुञ्चनमाह, पीडनग्रहणेन च नमनोन्नमनाकुञ्चनानि गृह्यन्ते इति संक्षेपग्रहणमनर्थकमिति कृत्वा **जेज्जटस्य** पाठं दूषयित्वाऽऽपातनिकापूर्वकं पाठान्तरं पठति । तथाहि—"तत्र स्थापनमुक्तमेवोपसंहरन्ननुक्तं च सन्धिस्थानेषु निर्दिशन्नाह—आञ्छनोत्पीडनोन्नामसंक्षोभैर्बन्धनैस्तथा" इत्यादि; शेषं पूर्ववत् ॥१८॥१९॥

**उत्पिष्टमथ विश्लिष्टं सन्धिं वैद्यो न घट्टयेत् ॥**
**तस्य शीतान् परीषेकान् प्रदेहांश्चावचारयेत् ॥२०॥**
**अभिघाते हृते सन्धिः स्वां याति प्रकृतिं पुनः ॥**
**घृतदिग्धेन पट्टेन वेष्टयित्वा यथाविधि ॥ २१ ॥**
**पट्टोपरि कुशान् दत्त्वा यथावद्बन्धमाचरेत् ॥**

इदानीमुत्पिष्टविश्लिष्टयोश्चिकित्सितमाह—उत्पिष्टमित्यादि । उत्पिष्टं विश्लिष्टं च सन्धिं न घट्टयेन्न चालयेत्; उत्पिष्टः चूर्णितः, विश्लिष्टः विघटितः स्वस्थानाच्युत इत्यर्थः । प्रदेहो लेपः ॥ २० ॥ २१ ॥—

**प्रत्यङ्गभग्नस्य विधिरत ऊर्ध्वं प्रवक्ष्यते ॥ २२ ॥**

प्रत्यङ्गभग्नचिकित्सितमाह—प्रत्यङ्गभग्नस्येत्यादि । अङ्गमङ्गं प्रति प्रत्यङ्गं, नखादारभ्य यावच्छिर इति ॥ २२ ॥

**नखसन्धिं समुत्पिष्टं रक्तानुगतमारया ॥**
**अवमथ्य स्नुते रक्ते शालिपिष्टेन लेपयेत् ॥ २३ ॥**

नखसन्धिमित्यादि । समुत्पिष्टं चूर्णितम् । रक्तानुगतं दुष्टरक्तसंबद्धम् । आरया चर्मकारास्त्रेणावमथ्य रक्तं स्रावयेदित्यर्थः ॥ २३ ॥

**भग्नां वा सन्धिमुक्तां वा स्थापयित्वाऽङ्गुलीं समाम्॥**
**अणुनाऽऽवेष्ट्य पट्टेन घृतसेकं प्रदापयेत् ॥ २४ ॥**

अङ्गुलिभग्नचिकित्सितमाह—भग्नामित्यादि । स्थापयित्वा संस्थापनैर्नमनोन्नमनादिभिः । अणुना सूक्ष्मेणेत्यर्थः, स्थूलपट्टेन त्वाबाधा स्यात् ॥ २४ ॥

**अभ्यज्य सर्पिषा पादं तलभग्नं कुशोत्तरम् ॥**
**वस्त्रपट्टेन बध्नीयान्न च व्यायाममाचरेत् ॥ २५ ॥**

तलभग्नचिकित्सितमाह—अभ्यज्येत्यादि ॥ २५ ॥

**अभ्यज्यायामयेज्जङ्घामूरुं च सुसमाहितः ॥**
**दत्त्वा वृक्षत्वचः शीता वस्त्रपट्टेन वेष्टयेत् ॥ २६ ॥**

जङ्घाभग्नोरुभग्नयोश्चिकित्सामाह—अभ्यज्येत्यादि । जङ्घा पादस्योपरि नलकाश्रया । ( आयामयेत् बध्नीयात् । )[1] सुसमाहितः सावधानः । दत्त्वा वृक्षत्वचः शीता इति न्यग्रोधादिशीतवृक्षाणां कुशां दत्त्वेत्यर्थः ॥ २६ ॥

**मतिमांश्चक्रयोगेन ह्याञ्छेदूर्वस्थि निर्गतम् ॥**
**स्फुटितं पिच्चितं चापि बध्नीयात् पूर्ववद्भिषक्॥२७॥**

चक्रयोगेनाञ्छेदिति वर्तुलां कुशां दत्त्वा नामयित्वा चक्रवदाञ्छेद्बध्नीयादित्यर्थः । **गयी** तु संभ्रमभ्रमद्बलवत्तरपुरुषो हस्तद्वयोपरि गृहीतपार्ष्णिपादद्वयत्वात् तद्भ्रमणजवेन निरन्तरभ्रान्तस्य भग्नवतः पुरुषकायस्य चक्राकारोपलम्भाद्युक्तश्चक्रयोग[2] इत्याह । स्फुटितं पिच्चितं चापीति ऊर्वस्थीति संबन्धनीयम् ।

१ 'कालस्य सुकरत्वेऽवधिं' इति पा० ।

१ अयं पाठः क्वचित्पुस्तके नोपलभ्यते । २ 'चक्राकारोपलम्भयुक्तेश्चक्रयोगः' इति पा० ।

अपिशब्दात् स्फुटितपिच्चितसदृशेष्वन्येषु भग्नेषु यदस्थिनिर्मुक्तं त्वगादिभिरसंश्लिष्टं तदपनीय बध्नीयादित्यर्थः । पूर्ववत् सममित्यर्थः ॥ २७ ॥

**आञ्छेदूर्ध्वमधो वाऽपि कटिभग्नं तु मानवम् ॥**
**ततः स्थानस्थिते संधौ बस्तिभिः समुपाचरेत् २८**

कटिभग्नचिकित्सामाह—आञ्छेदूर्ध्वमित्यादि । आञ्छेदूर्ध्वमधो वाऽपीति ऊर्ध्वगतमस्थि अधः कृत्वा बध्नीयात्, अधोगतं तूर्ध्वं कृत्वा बध्नीयादित्यर्थः । बस्तिभिः स्नेहबस्तिभिः । ननु कटिभग्नमसाध्यमुक्तं; तद्यथा—"भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम् । जघनं प्रति पिष्टं च वर्जयेत्तु विचक्षणः" (नि. अ. १५) इति व्यर्थमेव चिकित्सितं? नैवं, प्रति पिष्टं चेति चकारो वर्जयेदित्यत्र द्रष्टव्यः, तेनानेन याप्यत्वं समुच्चीयते; एतदुक्तं भवति—कपालभेदो वर्ज्यः, सन्धिमुक्तसन्धिच्युते तु याप्ये, तेन तद्विषयचिकित्सितमिदं सार्थकमिति **गयी; जेज्जट**स्तु वर्जयेदित्यत्र वर्जनशब्दः कृच्छ्रसाध्यत्वप्रतिपादनार्थो न तु निषेधार्थ इत्याह ॥ २८ ॥

**पर्शुकास्वथ भग्नासु घृताभ्यक्तस्य तिष्ठतः ॥**
**दक्षिणास्वथवा वामास्वनुमृज्य निबन्धनीः ॥ २९ ॥**
**ततः कवलिकां दत्त्वा वेष्टयेत् सुसमाहितः ॥**
**तैलपूर्णे कटाहे वा द्रोण्यां वा शाययेन्नरम् ॥३०॥**

पर्शुकाभग्नचिकित्सितमाह—पर्शुकास्वथेत्यादि । पर्शुकाः पृष्ठभागनिबन्धनान्यस्थीनि, तेषां नमनमेव भग्नत्वम् । तिष्ठत इति ऊर्ध्वस्थितशरीरस्य, नोपविष्टस्येत्यर्थः । दक्षिणास्वथवा वामासु पर्शुकास्विति संबन्धः । अनुमृज्य घृताक्तहस्तेन समीकरणार्थमवमृज्य । निबन्धनीः मांसरज्जव इत्यर्थः । कवलिका वंशादिविदलशकला, वस्त्रमयीत्यन्ये । वेष्टयेदिति 'वेल्लितकबन्धेन' इति शेषः । सुसमाहितः सावधानो वैद्यः । द्रोणी काष्ठविरचिता नौरिव ॥ २९ ॥ ३० ॥

**मुसलेनोत्क्षिपेत् कक्षामंससन्धौ विसंहते ॥**
**स्थानस्थितं च बध्नीयात् स्वस्तिकेन विचक्षणः ॥३१॥**

स्कन्धभग्नचिकित्सितमाह—मुसलेनेत्यादि । उत्क्षिपेत् ऊर्ध्वं नयेत् । अंससन्धौ बाहुशिरःसन्धौ । विसंहते विश्लिष्टे । स्वस्तिकेन बन्धविशेषेणेत्यर्थः ॥ ३१ ॥

**कौर्परं तु तथा सन्धिमङ्गुष्ठेनानुमार्जयेत् ॥**
**अनुमृज्य ततः सन्धिं पीडयेत् कूर्पराच्युतम् ॥३२॥**
**प्रसार्याकुञ्चयेच्चैनं स्नेहसेकं च दापयेत् ॥**

कूर्परसन्धिभग्नचिकित्सितमाह—कौर्परमित्यादि । बाहुमध्ये कूर्परसन्धिः । अनुमार्जयेत् अनुमर्दयेत्; प्रच्युतस्य सन्ध्यस्थ्नो मार्गोपलम्भार्थं मार्जनं विधेयम् ॥ ३२ ॥—

१ अस्याग्रे 'सचर' इति वधका वदन्ति' इत्यधिकं पठ्यते हस्तलिखितपुस्तके ।



**एवं जानुनि गुल्फे च मणिबन्धे च कारयेत् ॥३३॥**

कूर्परसन्धिचिकित्सितं संक्षेपार्थमन्यत्रातिदिशन्नाह—एवमित्यादि । एवं कूर्परसन्धिचिकित्सितप्रकारेणेत्यर्थः । गुल्फः पार्ष्ण्युपरिग्रन्थिः । मणिबन्धो हस्ततलस्योपरितनः सन्धिः॥३३॥

**उभे तले समे कृत्वा तलभग्नस्य देहिनः ॥**
**बध्नीयादामतैलेन परिषेकं च कारयेत् ॥ ३४ ॥**
**मृत्पिण्डं धारयेत् पूर्वं लवणं च ततः परम् ॥**
**हस्ते जातबले चापि कुर्यात् पाषाणधारणम् ॥३५॥**

प्राक् पादतलचिकित्सितमुक्तम्, अथ हस्ततलचिकित्सितमाह—उभे तले इत्यादि । उभे तले इति एकं पाणितलं, द्वितीयं पादतलम्, इत्युभे तले इति **जेज्जटः; गयी** तु उभे अपि हस्ततले; तत्रैकस्य भग्ने वामं दक्षिणेन, दक्षिणं वामेन, उभयोस्तु भग्ने तत्समेन काष्ठमयेन उभे अपि बध्नीयादित्याह । अन्ये तु व्याख्यानयन्ति—हस्ततलं पादतलं वा तत्समेन काष्ठमयेन मिला द्वे अपि सह बध्नीयादेवं दार्ढ्यं भवतीति । मृत्पिण्डादिधारणमात्मकर्मप्राप्त्यर्थम् । **जेज्जट**स्तु 'मृत्पिण्डं धारयेत् पूर्वं' इत्यादि पाठं न मन्यते, किन्तु 'प्राग्गोमयमयं पिण्डं धारयेन्मृन्मयं ततः । हस्ते जातबले पश्चात् कुर्यात् पाषाणधारणम्' इति पठति ॥ ३४ ॥ ३५ ॥

**सन्नमुन्नमयेत् खिन्नमक्षकं मुसलेन तु ॥**
**तथोन्नतं पीडयेच्च बध्नीयाद्गाढमेव च ॥ ३६ ॥**

नतोन्नतयोरक्षकयोश्चिकित्सितमाह—सन्नमित्यादि । सन्नम् अधःप्रविष्टम्, उन्नमयेत् मुसलेनेति संबन्धः; खिन्नमुन्नतं मुसलेनाधः पीडयेत् । अक्षकोंऽससन्धेरुपरिष्टाद्भवति ॥ ३६ ॥

**ऊरुवच्चापि कर्तव्यं बाहुभग्नचिकित्सितम् ॥**

बाहुभग्नचिकित्सितमूरुभग्नचिकित्सितेनातिदिशन्नाह—ऊरुवदित्यादि । कूर्परांशयोर्मध्ये बाहुः ॥—

**ग्रीवायां तु विवृत्तायां प्रविष्टायामधोऽपि वा ॥३७॥**
**अवटावथ हन्वोश्च प्रगृह्योन्नमयेन्नरम् ॥**
**ततः कुशां समं दत्त्वा वस्त्रपट्टेन वेष्टयेत् ॥ ३८ ॥**
**उत्तानं शाययेच्चैनं सप्तरात्रमतन्द्रितः ॥**

ग्रीवायामित्यादि । विवृत्तायां वक्रायाम् । कृकाटिकाभागसन्धौ गर्तोऽवटुः, हनू मुखसन्धी, अवटौ हन्वोश्च गृहीत्वा उन्नमयेदिति **जेज्जटः; गयी** तु, अधः प्रविष्टायामवटौ गृहीत्वा, विवृत्तायां हन्वोरिति क्रममाह । कुशां समं दत्त्वेति सममिति दत्त्वेत्यस्य विशेषणं, वेष्टयेदित्यस्य विशेषणमिदमित्यन्ये; एतेन नातिगाढं नातिशिथिलमित्यर्थः । अतन्द्रितोऽनलसः, 'वैद्य' इति शेषः ॥ ३७ ॥ ३८ ॥—

१ 'प्राग्गोमयमयं पिण्डं धारयेन्मृन्मयं 'ततः ।' इति पा० ।

हन्वस्थिनी समानीय हनुसन्धौ विसंहते ॥ ३९ ॥
स्वेदयित्वा स्थिते सम्यक् पञ्चाङ्गीं वितरेद्भिषक् ॥
वातघ्नमधुरैः सर्पिः सिद्धं नस्ये च पूजितम् ॥ ४० ॥

हनुभग्नचिकित्सितमाह—हन्वस्थिनीत्यादि । समानीयेति दक्षिणं वामेन, वामं दक्षिणेन सममानीयेत्यर्थः । विसंहते विश्लिष्टे स्वस्थानाच्च्युते इत्यर्थः । पञ्चाङ्गी बन्धविशेषः पञ्चपदचीराङ्गी । वातघ्नमधुरैरिति वातघ्नानि भद्रदार्वादीनि, विदारीगन्धादीनीत्यन्ये, मधुराणि काकोल्यादीनि, तैः सिद्धं सर्पिर्घृतं, कल्ककषायाभ्यामित्यर्थः ॥ ३९ ॥ ४० ॥

अभग्नांश्चलितान् दन्तान् सरक्तानवपीडयेत् ॥
तरुणस्य मनुष्यस्य शीतैरालेपयेद्बहिः ॥ ४१ ॥
सिक्त्वाऽम्बुभिस्ततः शीतैः सन्धानीयैरुपाचरेत् ॥
उत्पलस्य च नालेन क्षीरपानं विधीयते ॥ ४२ ॥
जीर्णस्य तु मनुष्यस्य वर्जयेच्चलितान् द्विजान् ॥

दन्तभग्नचिकित्सितमाह—अभग्नानित्यादि । सन्धानीयैरिति मधुघृतादिभिः, न्यग्रोधादीनां कषायाणां कल्कैश्चेत्यर्थः ॥ ४१ ॥ ४२ ॥—

नासां सन्नां विवृत्तां वा ऋज्वीं कृत्वा शलाकया॥४३॥
पृथङ्नासिकयोर्नाड्यौ द्विमुख्यौ संप्रवेशयेत् ॥
ततः पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत् ॥ ४४ ॥

नासाभग्नचिकित्सितमाह—नासामित्यादि । सन्नाम् अभिघातेनान्तःप्रविष्टाम् । विवृत्तां वक्राम् । तत्र सन्नां शलाकयोन्नम्य, वक्रां पुनः ऋजूकृत्वेत्यर्थः । द्विमुख्यौ नाड्यौ अन्तर्बहिर्मुख्यौ, निःश्वासोच्छ्वाससिंहाणकादिनिर्गमार्थम् । घृतसेकं घृतपरिषेकम् ॥ ४३ ॥ ४४ ॥

भग्नं कर्णं तु बध्नीयात् समं कृत्वा घृतप्लुतम् ॥
सद्यःक्षतविधानं च ततः पश्चात् समाचरेत् ॥४५॥

कर्णभग्नचिकित्सितमाह—भग्नमित्यादि । भग्नं कुटिलम्, अन्तःप्रविष्टं वा । सद्यःक्षतविधानमिति मधुघृताभ्यङ्गशीतपरिषेकादि । अत्र 'सद्यःक्षतविधिश्चापि नयने निर्गते बहिः'—इति केचित् पठन्ति । तन्न पठनीयं, भिन्नं नेत्रमकर्मण्यमित्यादिनैव सिद्धत्वात्; अन्ये तु चक्षुर्भग्नद्वयप्रतिपादनार्थं पठनीयमिति मन्यन्ते ॥ ४५ ॥

मस्तुलुङ्गादृते[1] भिन्ने कपाले मधुसर्पिषी ॥
दत्त्वा ततो निबध्नीयात् सप्ताहं च पिबेद्घृतम् ॥४६॥

कपालभग्नचिकित्सितमाह—मस्तुलुङ्गादृतेत्यादि । मस्तुलुङ्गस्रावे तु प्रागभिहितैव बालवर्तिरित्यभिप्रायः ॥ ४६ ॥

पतनादभिघाताद्वा शूनमङ्गं यदक्षतम् ॥
शीतान् प्रदेहान् सेकांश्च भिषक् तस्यावचारयेत्४७

१ 'मस्तुलुङ्गं विना' इति पा० ।

शीतान् प्रदेहान् सेकांश्च शीतान्; नोष्णान् कथमपि, अतिस्रुतरक्तत्वेन पाकभयात् ॥ ४७ ॥

अथ जङ्घोरुभग्नानां कपाटशयनं हितम् ॥
कीलका बन्धनार्थं च पञ्च कार्या विजानता ॥४८॥
यथा न चलनं तस्य भग्नस्य क्रियते तथा ॥
सन्धेरुभयतो द्वौ द्वौ तले चैकश्च कीलकः ॥ ४९ ॥

जङ्घोरुभग्नेषु पश्चात्कर्मविशेषं निर्दिशन्नाह—अथ जङ्घेत्यादि । भग्नानां काण्डभग्नानां, द्विविधानामपीत्यपरे । कपाटशयनमवश्यं कार्यम् । कपाटशयनेनैव सह देशाद्देशान्तरनयनार्थम्, आधारभूतशयनचालनार्थमित्यन्ये । आधेयभूतशरीरावयवचलनपरिहारार्थं कीलाः । कीलानां पञ्चसंख्यात्वं जङ्घोर्वोर्द्वयोरेकतरस्य भग्नमपेक्ष्य; तत्र जङ्घाभग्ने तु गुल्फसन्धेरुभयतो द्वौ, जानुसंधेरप्युभयतो द्वौ, एकश्च तले, एवं पञ्च; ऊरुभग्ने जानुसन्धेरुभयतो द्वौ, द्वौ वंक्षणसन्धेरुभयतः, तले चैक इत्यत्रापि पञ्च; उभयभङ्गापेक्षया तु सप्तभिरेव कीलैर्यन्त्रणम् । तथाहि—उभयतो बहिर्द्वौ गुल्फयोः, द्वौ च जानुनोः, द्वौ च वंक्षणयोः, तले चैक एवं सप्त । अत्र "जङ्घोर्वोः पार्श्वयोर्द्वौ द्वौ तले चैकश्च कीलक" इति केचित् पठन्ति; तच्च निबन्धकारैर्न पठितं, तस्मान्न पठनीयम् । **गयदासश्चात्र** पाठान्तरं किमपि पठति; तच्चाभावान्न लिखितम् ॥४८॥४९॥

श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ॥
भग्नसन्धिविमोक्षेषु विधिमेनं समाचरेत् ॥ ५० ॥

अमुमेव जङ्घोरुभग्नकपाटशयनादिविधिमन्यत्रापि दर्शयन्नाह—श्रोण्यामित्यादि । श्रोणिः कटिः । वक्ष उरः । अक्षकौ अंससन्धेरुपरि । भग्नसन्धिविमोक्षेष्विति काण्डभग्नेषु तथा सन्धिविमोक्षेष्वपि द्विविधेषु भग्नेषु समाचरेदित्यर्थः । विधिमेनमिति कपाटशयनकीलकनियमनादिकम् ॥ ५० ॥

सन्धींश्चिरविमुक्तांस्तु स्निग्धान् स्विन्नान् मृदूकृतान्
उक्तैर्विधानैर्बुद्ध्या च सम्यक् प्रकृतिमानयेत् ॥५१॥

सद्योभग्नविधानं निर्दिश्य चिरभग्नविधानमाह—सन्धीनित्यादि । बुद्ध्या चेति 'स्वयमप्यूह्य' इति शेषः ॥ ५१ ॥

काण्डभग्ने प्ररूढे तु विषमोल्बणसंहिते ॥
आपोथ्य समयेद्भग्नं ततो भग्नवदाचरेत् ॥ ५२ ॥

चिरविमुक्तसन्धिमभिधाय चिरकाण्डभग्नविधिमाह—काण्डभग्न इत्यादि । आपोथ्य विश्लेष्य । समयेत् समं कुर्यादित्यर्थः ॥ ५२ ॥

कल्पयेन्निर्गतं शुष्कं व्रणान्तेऽस्थि समाहितः ॥
सन्ध्यन्ते वा क्रियां कुर्यात् सव्रणे व्रणभग्नवत् ५३

कल्पयेत् छिन्द्यात् । व्रणान्ते व्रणैकदेशे । समाहितः सावधानः; यथाऽन्यत्र व्रणो न भवति तथा छिन्द्यादित्यर्थः । सन्ध्यन्ते सन्धिसमीप इत्यर्थः । किंविशिष्टे सन्ध्यन्ते? सव्रणे व्रणयुक्त इत्यर्थः ॥ ५३ ॥

ऊर्ध्वकाये तु भग्नानां मस्तिष्क्यं कर्णपूरणम् ॥
घृतपानं हितं नस्यं प्रशाखास्वनुवासनम् ॥ ५४ ॥

इदानीमूर्ध्वाधःकायविशेषेण भग्नक्रियाविशेषं निर्दिशन्नाह—ऊर्ध्वकाय इत्यादि । मस्तिष्क्यं शिरोबस्तिप्रकारः, स च स्नेहाक्तपिचुप्लोतादिभिः । नस्यं प्रशाखास्विति प्रकृष्टाः शाखाः प्रशाखास्तासु; जानुजङ्घाबाहुद्वयगते भग्ने नस्यं, घृतपानं बस्तिश्च सर्वत्रैवेति जेज्जटः; गयी तु मस्तिष्क्यादिकं नस्यान्तं सर्वमूर्ध्वकायगतभग्न एव, प्रशाखासु बस्तिरिति व्याख्यानयति ॥ ५४ ॥

अत ऊर्ध्वं प्रवक्ष्यामि तैलं भग्नप्रसाधकम् ॥
रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले ५५
दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत् ॥
तृतीयं सप्तरात्रं तु भावयेन्मधुकाम्बुना ॥ ५६ ॥
ततः क्षीरं पुनः पीतान् सुशुष्कांश्चूर्णयेद्भिषक् ॥
काकोल्यादिं सयष्ट्याह्वं मञ्जिष्ठां सारिवां तथा ॥५७॥
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥
शतपुष्पां च संचूर्ण्य तिलचूर्णेन योजयेत् ॥ ५८ ॥
पीडनार्थं च कर्तव्यं सर्वगन्धशृतं पयः ॥
चतुर्गुणेन पयसा तत्तैलं विपचेद्भिषक् ॥ ५९ ॥
एलामंशुमतीं पत्रं जीवकं तगरं तथा ॥
रोध्रं प्रपौण्डरीकं च तथा कालानुसारि(वा)णम् ६०
सैरेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥
पिष्ट्वा शृङ्गाटकं चैव पूर्वोक्तान्यौषधानि च ॥ ६१ ॥
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाऽग्निना ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ॥ ६२ ॥
आक्षेपके पक्षघाते तालुशोषे तथाऽर्दिते ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ॥ ६३ ॥
बाधिर्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥
पथ्यं पाने तथाऽभ्यङ्गे नस्ये बस्तिषु भोजने ॥ ६४ ॥
ग्रीवास्कन्धोरसां वृद्धिरमुनैवोपजायते ॥
मुखं च पद्मप्रतिमं ससुगन्धिसमीरणम् ॥ ६५ ॥
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ॥
राजार्हमेतत् कर्तव्यं राज्ञामेव विचक्षणैः ॥ ६६ ॥

तदेव बस्तिकर्णपूरणपाननस्यानुवासनसाधनतैलं निर्दिशन्नाह—अत इत्यादि । वासयेदिति प्रथमं सप्तरात्रं यावत् । अस्थिरे जले वहति पानीये । गवां क्षीरेणेति 'भाव्यद्रव्यसमेन' इति शेषः । भावयेद् द्वितीयं सप्तरात्रम् । मधुकाम्बुनेति 'भाव्यद्रव्यसमेन' इति शेषः । ततः क्षीरं पुनः पीतानिति क्षीरेण भाव्यद्रव्यसमेन पुनर्भावितान्, चतुर्थसप्तरात्रमिति तात्पर्यार्थः । काकोल्यादिं सयष्ट्याह्वमिति यष्टिमधुनि काकोल्यादावुक्तेऽपि पुनर्यष्टीपाठो द्विभागार्थं, यथालाभपरिभाषापरिहारेणावश्यं प्रक्षेपार्थं वा । काकोल्यादिशतपुष्पान्तानां चूर्णपादं तिलचूर्णपादैस्त्रिभिर्योजयन्ति तन्त्रान्तरदर्शिनो वृद्धवैद्या इति जेज्जटः । गयी तु "तिलचूर्णस्य चत्वारो भागाः, भागश्चैकः प्रकीर्तितानां (काकोल्यादीनां), तथा यष्ट्याह्वादीनां शतपुष्पान्तानां द्वितीयो भाग इति षड्भागाः" इति व्याख्यानयति । चक्रदत्तस्तु तिलचूर्णसमं तत्र मिलितं चूर्णमिष्यत इत्याह । सर्वगन्धशृतं पय इत्यत्र सर्वगन्धा एलादयः, अन्ये च कटुकफलादयः, तैः शृतं क्वथितं, पयः क्षीरम् । अत्र च क्षीरपाके इयं परिभाषा स्मरणीया—"क्वाथ्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषं कर्तव्यं क्षीरपाके त्वयं विधिः" इति । यावता च क्षीरेण तिलचूर्णमुत्सादनीयं भवति तावन्मात्रं शृतं करणीयम् । ततः शृतेन क्षीरेणोष्णेनैव काकोल्यादिचूर्णसहितं तत्तिलचूर्णमार्द्रीकृत्य चक्रेण पीडयेत् । पीडनादुत्पन्नं तैलं यथा संस्कार्यं तं प्रकारमाह—चतुर्गुणेनेत्यादि । अंशुमती शालपर्णी । कालानुसारिवा तगरं; तगरस्य द्विरुच्चारणं भागद्वयप्रतिपादनार्थम् । सैरेयकं कण्टशेलुकः । क्षीरशुक्ला क्षीरविदारी । अनन्ता उत्पलसारिवा । मधूलिका मर्कटतृणविशेषः । शृङ्गाटकं त्रिकण्टकं जलजं फलम् । पूर्वोक्तान्यौषधानि काकोल्यादीनि शतपुष्पान्तानि, तानि सर्वाणि च तावता भागेन समेन कल्पयितव्यानि, यावता तैलपादिकानि भवन्ति । मृदुनाऽग्निनेति मृद्वग्नेर्मानमुच्यते—"पद्मविस्तरयुक्तेन मृदुना वह्निना शनैः । पचेत् स्नेहमधश्चोर्ध्वं चालयित्वा निरन्तरम् ॥ सम्यक्पाको भवत्येवमन्यथा दग्धतां व्रजेत्"—इति । सर्वकर्मसु पानाभ्यञ्जनादिषु । गन्धतैलमिदं नाम्नेति अस्य तैलस्य गन्धतैलमिति संज्ञा; वैतरणे पुनरस्याशुतैलसंज्ञा । राज्ञामेवेति राज्ञामेवेदं तैलं पण्डितैर्विधातव्यं, महासम्भारसाध्यत्वात्; न पुनरन्येषां निषिद्धम् ॥ ५५–६६ ॥

त्रपुसाक्षप्रियालानां तैलानि मधुरैः सह ॥
वसां दत्त्वा यथालाभं क्षीरे दशगुणे पचेत् ॥ ६७ ॥
स्नेहोत्तममिदं चाशु कुर्याद्भग्नप्रसाधनम् ॥
पानाभ्यञ्जननस्येषु बस्तिकर्मणि सेचने ॥ ६८ ॥

त्रपुसं कर्कटीभेदः, अक्षो बिभीतकः, प्रियालश्चारः । मधुरैः काकोल्यादिभिः । तानि च स्नेहपादिकानि । वसां दत्त्वा यथालाभमिति यदि लभ्यते तदा निक्षिपेदित्यर्थः । सेचने परिषेके । अमुं पाठं केचिदनार्षं मन्यन्ते ॥ ६७ ॥ ६८ ॥

भग्नं नैति यथापाकं प्रयतेत तथा भिषक् ॥
पक्वमांससिरास्नायु तद्धि कृच्छ्रेण सिध्यति ॥ ६९ ॥

इदानीं भग्ने बाह्यानामाभ्यन्तराणां च पाककारिणां परिहाराय पाकप्रशमकारिणां च सेवनायाह—भग्नं नैतीत्यादि । नैति न गच्छतीत्यर्थः । प्रयतेत प्रयत्नं कुर्वीतेत्यर्थः ॥ ६९ ॥

भग्नं सन्धिमनाविद्धमहीनाङ्गमनुल्बणम् ॥
सुखचेष्टाप्रचारं च संहितं सम्यगादिशेत् ॥ ७० ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने भग्नचिकित्सितं नाम तृतीयोऽध्यायः ॥ ३ ॥

१ 'शोभने' इति पाठान्तरम् ।

सम्यग्मूढलक्षणमाह—भग्नमित्यादि । अनाविद्धम् अनाकुलम् । अनुल्बणम् अनुन्नतम् । सुखचेष्टाप्रचारमिति चेष्टाप्रचार आकुञ्चनप्रसारणादिकः ॥ ७० ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

**अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**आमाशयगते वाते च्छर्दयित्वा यथाक्रमम् ॥**
**देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥ ३ ॥**
**चित्रकेन्द्रयवे पाठा कटुकाऽतिविषाऽभया ॥**
**वातव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥ ४ ॥**

प्रथममामाशयगतवायोश्चिकित्सितमाह—आमाशयेत्यादि । छर्दयित्वा वमनं कारयित्वा । वमनं च सोत्क्लेशे पुरुषे बहुदोषे बलवति ज्ञेयम् । आमाशयगते छर्दनं कफस्थानत्वात् । यथाक्रममिति अत्र यथाक्रमशब्देन पूर्वकालापरकालकर्तव्यताः सर्वैवाक्षिप्ताः स्नेहस्वेदनपानलैङ्गिकवैगिकमानिककायशुद्धिसंसर्जनभोजनादयः । देय इति दातुमर्हः । षड्धरण इति षण्णां चित्रकादीनां धरणा मानविशेषा यत्र योगे स षड्धरणो योगः । तत्र धरणप्रमाणं मध्यमैरेकविंशतिभिर्निष्पावैर्भवति । सुखाम्बुना ईषदुष्णाम्बुनेत्यर्थः । षड्धरणानि कथं सप्तदिनान्युपयुज्यन्ते? उच्यते—एकस्मिन् दिने कर्षयोगः, स चाष्टादशनिष्पावैर्भवति, तत्र षड्धरणेभ्यः प्रतिदिनं त्रयस्त्रयो निष्पावा उच्छ्रिता भवन्ति, ततः षड्भिस्त्रिकैरष्टादशनिष्पावाः, तैरष्टादशभिः सप्तमं दिनं पूर्यते; अथवा संज्ञैषा षड्धरण इति । इदानीं षड्धरणयोगमाह—चित्रकेत्यादि । 'कटुकाऽतिविषा क्षपा' इति केचित् पठन्ति । वातव्याधिप्रशमन इति आमाशयगत एव वातव्याधिर्गृहीतव्यो न पुनराक्षेपकादयः, रूक्षविषयत्वेन वातकारित्वादस्य । अन्ये तु 'महाव्याधिप्रशमन' इति पठन्ति; महाव्याधिरिह मेदोयुतोऽनिलो नान्यः ॥ १–४ ॥

**पक्वाशयगते चापि देयं स्नेहविरेचनम् ॥**
**बस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥ ५ ॥**

पक्वाशयगतवायोश्चिकित्सामाह—पक्वाशयेत्यादि । स्नेहविरेचनं तिल्वकसर्पिरादिविरेचनम् । बस्तयः शोधनीयाश्चेति "शोधनद्रव्यनिष्क्वाथास्तत्कल्कस्नेहसंयुताः" (चि. अ. ३८) इत्याद्याः । प्राशाश्च लवणोत्तरा इति स्नेहलवणकल्याणकलवणादयः; अन्ये तु प्राश्यन्त इति प्राशा आहाराः, न तु लेहाः; लवणोत्तरा लवणप्रधानाः । गयी त्वत्राह—पक्वाशयः पुनरिह द्विविधः—पित्तवाताशयभेदेन; तयोर्मध्ये पित्ताशयगते वायौ स्नेहविरेचनं तिल्वकसिद्धमेरण्डतैलादिभिर्वा, वाताशयगतस्य तु वायोर्मलकफपित्तैरावृतस्य यथादोषं कषायकल्कस्नेहबस्तयः; तत्र मलावृतवायौ विदारीकल्कसिद्धः स्नेहयुक्तो व्यक्तोष्णक्षारश्च बस्तिः, श्लेष्मावृतवायौ व्यक्तक्षारोष्णो बस्तिः; (त्रिवृदादिद्रव्यैर्मूत्रविदारीकल्कसिद्धः) पित्तावृते पुनरक्षारबस्तिः शीतः; शेषं समम् ॥ ५ ॥

**कार्यो बस्तिगते चापि विधिर्बस्तिविशोधनः ॥**

बस्तिगतस्य वायोश्चिकित्सितमाह—कार्य इत्यादि । बस्तिविशोधनो विधिरिति अश्मरीचिकित्सितोक्तो मूत्राघाताद्युक्तश्च ॥–

**श्रोत्रादिषु प्रकुपिते कार्यश्चानिलहा क्रमः ॥ ६ ॥**

श्रोत्रादिषु प्रकुपितवायोश्चिकित्सितमाह—श्रोत्रेत्यादि । आदिशब्दात्त्वग्घ्राणजिह्वानेत्राणीन्द्रियाणि गृह्यन्ते । अत्र क्रमः "स्नेहः स्वेदस्तथाऽभ्यङ्ग" इत्यादिको दोषदूष्यप्रत्यनीको यथायथं कार्यः, स चेन्द्रियसात्म्यमपेक्ष्य कर्तव्यः; तेन स्नेहशब्दसामान्येऽपि नेत्रयोः क्षीरसर्पिस्तर्पणं, तैलतर्पणं पुनः कर्णादिष्विति ॥ ६ ॥

**स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि च ॥**
**त्वङ्मांसासृक्सिराप्राप्ते कुर्यात् चासृग्विमोक्षणम् ७**

धातूपधातुगस्य वायोश्चिकित्सितमाह—स्नेहेत्यादि । स्नेहाभ्यङ्गोपनाहांश्चेत्यत्र चकारेण त्वग्गतवायौ हृद्यमप्यन्नपानमनुक्तं समुच्चीयते । त्वगत्र रसः, सिराः पुनरसृज उपधातुः, प्राप्ते गते इत्यर्थः । रक्तगते वायौ रक्तस्रावो रक्ताधिष्ठानवातनिवृत्त्यर्थः । यदा द्रव्यप्रभावविशेषेण खर्जूरमातुलुङ्गसौवर्चलादिस्नेहाभ्यङ्गादिभिर्न प्रशममेति तदा नियमेन रक्तावरणं परिज्ञाय रक्तमोक्षणं कर्तव्यं, न पुनरन्यथा । मेदोगते पुनरिहानिले चिकित्सा नोपदिष्टा, तस्य स्नेहाविषयत्वेन वातव्याधिकर्मणामविषयत्वात्; महावातव्याधौ पुनरावरणप्रसङ्गेन मेदोगतमनिलं वक्ष्यति ॥ ७ ॥

**स्नेहोपनाहाग्निकर्मबन्धनोन्मर्दनानि च ॥**
**स्नायुसन्ध्यस्थिसंप्राप्ते कुर्याद्वायावतन्द्रितः ॥ ८ ॥**

स्नायुगतस्य सन्ध्यस्थिगतस्य च वायोश्चिकित्सामाह—स्नेहेत्यादि । स्नेहोऽत्र बाह्य आभ्यन्तरश्च । अतन्द्रितः अनलसः; एतेन चिरकालं निरन्तरं क्रियेति दर्शयति ॥ ८ ॥

**निरुद्धेऽस्थनि वा वायौ पाणिमन्थेन दारिते ॥**
**नाडीं दत्त्वाऽस्थनि भिषक् चूषयेत्पवनं बली ॥ ९ ॥**

अस्थनि गते मज्जस्थे च कर्म निर्दिशन्नाह–निरुद्धे इत्यादि । त्वङ्मांसं शस्त्रेण विपाट्य, अस्थि पाणिमन्थेन आराशस्त्रेण विद्ध्वा, तत्र रन्ध्रे द्विमुखीं नाडीं प्रणिधाय, मुखमारुता चूषणेन पवनापकर्षणं करणीयमिति । बली बलयुक्तः । 'बाह्याभ्यन्तरस्नेहैश्च' इत्यादि केचित् पठन्ति । तत्र बाह्यस्नेहः परिषेकावगाहाभ्यङ्गमस्तिष्क्यशिरोबस्त्यादिः, आभ्यन्तरस्तु पानबस्त्यादिः; अस्य पाठस्याभावान्निर्णयो न कृतः ॥ ९ ॥

---

१ अयं पाठो हस्तलिखितपुस्तके न पठ्यते । २ 'दारयेत्' इति पा० ।

**शुक्रप्राप्तेऽनिले कार्यं शुक्रदोषचिकित्सितम् ॥**

शुक्रगतस्य वायोश्चिकित्सामाह—शुक्रेत्यादि । शुक्रदोषचिकित्सितमिति शुक्रशोणितशुद्ध्युक्तं चिकित्सितं वाजीकरणोक्तं मूत्रदोषचिकित्सितोक्तं च कार्यं; "तेष्वाद्यान् शुक्रदोषांस्त्रीन्" (शा. अ. २) इत्यादिकम् ॥—

**अवगाहकुटीकर्षूप्रस्तराभ्यङ्गवस्तिभिः ॥ १० ॥**
**जयेत् सर्वाङ्गजं वातं सिरामोक्षैश्च बुद्धिमान् ॥**
**एकाङ्गगं च मतिमाञ्छृङ्गैश्चावस्थितं जयेत् ॥ ११ ॥**

धातूपधातुगतमभिधाय सर्वाङ्गगतस्य वायोश्चिकित्सामाह—अवगाहेत्यादि । तत्र वातहरक्काथपूर्णद्रोण्यादिष्ववगाहो द्रवस्वेदः । कुटी चतुर्द्वारा भूमावारोपिताऽपनीतविधूमाङ्गारवातहरद्रवसिक्ता, सा चोष्मस्वेदः । कर्षूः पुरुषायाममात्रनिखातदग्धावनिप्रदेशे वातहरद्रवसिक्ते शयनं, स चोष्मस्वेदविशेषः । स्विन्नतुषधान्यादिभिरास्तृतायां[1] भूमौ परिशयनं प्रस्तरः, सोऽपि चोष्मस्वेदविशेष एव । स्नेहपूर्वा अवगाहादयः[2] । एते च सर्वाङ्गगते वाते सर्वाङ्गयोगिनः, उपनाहस्वेदस्त्ववयवगेऽपि वाते[3]; तापस्वेदस्त्वत्र रूक्षत्वादयुक्त एव । यद्यपि सर्वाङ्गगो वातप्रकोपः प्रायो धातुक्षयनिमित्तः, तथाऽपि शोणिताधिष्ठानत्वाद्रक्तमोक्षोऽपि[4] युक्तः । सिरामोक्षैरिति बहुवचनात् पञ्चानां सिराणां मोक्षणं स्नेहादिभिरप्रशाम्यति वाते । एकाङ्गगतस्य वायोश्चिकित्सितमाह—एकाङ्गगमित्यादि । शृङ्गैश्चेति बहुवचनमसकृत्प्रयोगज्ञापनाय । चकारेण सर्वाङ्गवातोक्तावगाहादयोऽप्यनुकृष्यन्ते । तैश्चावगाहादिभिरेकाङ्गगतमनवस्थितमेव वातं जयेत्, अवस्थितं शृङ्गैरेव ॥ १० ॥ ११ ॥

**बलासपित्तरक्तैस्तु संसृष्टमविरोधिभिः ॥**

संसर्गस्य चिकित्सामाह—बलासपित्तेत्यादि । सुगमम् ॥—

**सुप्तिवाते त्वसृङ्मोक्षं कुर्याच्च बहुशो भिषक् ॥१२॥**
**दिह्याच्च लवणागारधूमैस्तैलसमन्वितैः ॥**

रक्तावृतस्य वायोश्चिकित्सामाह—सुप्तीत्यादि । रक्तावरणकृतया सुप्त्या लक्षितो वातः सुप्तिवातः । सुप्तिः स्पर्शाज्ञानम् । न पुना रसावरणकृतया सुप्ततया लक्षितो वातः, तस्य स्नेहोपनाहादिविषयत्वात्; अन्यधातुगते वायौ रक्तापकर्षणस्यायुक्तत्वात् । बहुशो बहून् वारान्, अल्पाल्पस्रावणात्; अन्यथा वातकोपः स्यात् । दिह्यात् लेपयेत् । अन्ये तु सुप्तवातस्त्वग्गतवातः, "वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमचुमायनम्" (नि. अ. १) इत्युक्तत्वात् । तेषां मते त्वङ्मांसेत्यादिना प्रागुक्तमपि शोणितमोक्षणमिह पुनरुक्तं; लवणागारधूमैरित्यादिप्रदेहोऽधिक उक्तः ॥ १२ ॥–

**पञ्चमूलीशृतं क्षीरं फलाम्लो रस एव च ॥ १३ ॥**
**सुस्निग्धो धान्ययूषो वा हितो वातविकारिणाम् ॥**

सर्ववातविकारिणां भोजनान्याह—पञ्चमूलीत्यादि । पञ्चमूली आद्या द्वितीया वा । फलैर्दाडिमादिभिरम्लः । रसो मांसरसः । धान्ययूषः कुलत्थादिवातहरधान्ययूषः । सुस्निग्धशब्दो यूषरसाभ्यां सह संबध्यते । दोषप्रकृतिसात्म्यापेक्षया क्षीरादि प्रयोज्यम् । 'वातिभ्यो भोजनं हितम्' इति केचित् पठन्ति ॥१३॥—

**काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः ॥ १४॥**
**सानूपौदकमांसस्तु सर्वस्नेहसमन्वितः ॥**
**सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तितः ॥१५॥**
**तेनोपनाहं कुर्वीत सर्वदा वातरोगिणाम् ॥**

उपनाहस्वेदमाह—काकोल्यादिरित्यादि । काकोल्यादिः प्रसिद्धः । सवातघ्न इति सह वातघ्नैर्भद्रदार्वादिभिर्विदारिगन्धादिभिर्वर्तेत इति सवातघ्नः । सर्वाम्लद्रव्यसंयुत इति अम्लद्रव्याणि शुक्तकाञ्जिकसुरासौवीरकदधिमस्त्वादीनि; केचिदाचार्या एवं वदन्ति—अम्लद्रव्याणि दाडिमादीनि । आनूपौदकमांसेन सह वर्तेत इति सानूपौदकमांसः; अत्रानूपशब्दोऽयं कूलचरेष्वेव वर्तते, औदकशब्देन तु कोशस्थाः पादिनो मत्स्याश्च गृह्यन्ते; ये पुनरौदकग्रहणं न पठन्ति ते तु पञ्चस्वपि वर्तयन्ति । सर्वस्नेहा घृततैलवसामज्जानस्तैः समन्वितः । सुखोष्ण ईषदुष्णः । स्पष्टलवण इति स्पष्टानि व्यक्तानि सैन्धवादीनि लवणानि यत्र सः स्पष्टलवणः । सह आसमन्ताल्लवणेन वर्तेत इति साल्वणः । उपनाहो बन्धनम् । एषां च भागमानमाह—"मांसेनात्रौषधं तुल्यं यावताऽम्लेन चाम्लता । तावन्तश्च चतुःस्नेहाः स्निग्धत्वं च यथा भवेत्"—इति । द्रव्यस्वभावं स्वेद्यदेशमप्यवेक्ष्य कल्पनीय इत्येके वदन्ति ॥ १४ ॥ १५ ॥—

**कुञ्च्यमानं रुजार्तं वा गात्रं स्तब्धमथापि वा ॥ १६॥**
**गाढं पट्टैर्निबध्नीयात् क्षौमकार्पासिकौर्णिकैः ॥**
**बिडालनकुलोन्द्राणां चर्मगोण्यां मृगस्य वा ॥ १७॥**
**प्रवेशयेद्वा स्वभ्यक्तं साल्वणेनोपनाहितम् ॥**

अनग्निमेव स्वेदं दर्शयन्नाह—कुञ्च्यमानमित्यादि । कुञ्च्यमानं संकोच्यमानं, तच्च सिरागतेन वायुना; यदाह—"कुर्यात् सिरागतः शूलं सिराकुञ्चनपूरणम्" (नि.अ.१) इति । रुजार्तं वेदनार्तम्, अत्र प्रधानेन वायुना; एतेन पित्तरक्तावृते वाते बन्धनविधिर्निषिद्धः । अन्ये तु 'वाल्ककार्पासिकौर्णिकैः' इति पठन्ति; तत्र वाल्कं वल्कलमयम् । उन्द्रः पानीयबिडालः । चर्मगोणी चर्मप्रसेवकः[1], छगलादिगल इत्यर्थः ॥१६॥१७॥—

**स्कन्धवक्षस्त्रिकप्राप्तं वायुं मन्यागतं तथा ॥ १८ ॥**
**वमनं हन्ति नस्यं च कुशलेन प्रयोजितम् ॥**

१ 'आस्तृतस्योपरि शयनं' इति पा० । २ अस्याग्रे 'इति पश्चात्कार्याः' इत्यधिकं पठ्यते क्वचित्पुस्तके । ३ 'विद्धे' इति पा० । ४ 'सिरामोक्षोऽपि' इति पा० ।

१ 'चर्मप्रवेशकः' इति पा० ।

अवयवविशेषगते वायौ क्रियाविशेषमाह—स्कन्धेत्यादि। वक्षः स्तनान्तरालम्। त्रिकम् ऊर्ध्वत्रिकम्। नस्यमत्र शिरोविरेचनम्। कुशलेन क्रियाविदा अवस्थाविदा भिषजेत्यर्थः॥१८॥—

**शिरोगतं शिरोबस्तिर्हन्ति वाऽसृग्विमोक्षणम् १९**
**स्नेहं मात्रासहस्रं तु धारयेत्तत्र योगतः॥**

शिरोगतेऽपि विशेषमाह—शिर इत्यादि। चकारोऽत्र वमनं शिरोविरेचनं चानुक्तमपि समुच्चिनोति। रक्तमोक्षणं पुनरत्र क्रियान्तरेणाप्रशाम्यति वाते कर्तव्यम्। शिरोबस्तिधारणे कालावधारणं निर्दिशन्नाह—स्नेहमित्यादि। मात्रा कालविशेषः। तथाहि—"निमिषोन्मेषणे पुंसां स्फोटनं वा तथाऽङ्गुलेः। अक्षरस्य लघोर्वाऽपि मात्रा तूच्चारणं भवेत्"—इति। योगतो युक्तितः। युक्तिं चोत्तरतन्त्रे क्रियाकल्पे व्याख्यास्यामः। ननु वाते दशसहस्राण्युक्तानि, अत्र तु सहस्रमात्राधारणमुक्तमिति विरोधः? सत्यम्, अत्राक्षिणि स्थितानां सिराणामत्यन्तसूक्ष्मत्वात्तावतैव कालेन गुणो भवतीति **जेज्जटः**; **गयी** तु योगत इति योगे स्वस्थवृत्ते मात्रासहस्रधारणोपदेशं मन्यते। तत्र हि शालाक्यक्रियाकल्पोक्ते शिरोबस्तौ यथादोषं षडष्टदशसहस्राणि धारणमात्रोक्ता, न स्वस्थस्य शिरोबस्तिधारणमात्रा तत्रोक्ता, अत इह स्वस्थस्य मात्रासहस्रधारणोपदेशः कृत इति॥१९॥—

**सर्वाङ्गगतमेकाङ्गस्थितं वाऽपि समीरणम्॥२०॥**
**रुणद्धि केवलो बस्तिर्वायुवेगमिवाचलः॥**

तत्र स्नेहबस्तिमेव वातव्याधौ दर्शयन्नाह—सर्वाङ्गेत्यादि॥२०॥—

**स्नेहस्वेदस्तथाऽभ्यङ्गो बस्तिः स्नेहविरेचनम्॥२१॥**
**शिरोबस्तिः शिरःस्नेहो धूमः स्नैहिक एव च॥**
**सुखोष्णः स्नेहगण्डूषो नस्यं स्नैहिकमेव च॥२२॥**
**रसाः क्षीराणि मांसानि स्नेहाः स्नेहान्वितं च यत्॥**
**भोजनानि फलाम्लानि स्निग्धानि लवणानि च २३**
**सुखोष्णाश्च परीषेकास्तथा संवाहनानि च॥**
**कुङ्कुमागुरुपत्राणि कुष्ठैलातगराणि च॥२४॥**
**कौशेयौर्णिकरौमाणि कार्पासानि गुरूणि च॥**
**निवातातपयुक्तानि तथा गर्भगृहाणि च॥२५॥**
**मृद्वी शय्याऽग्निसंतापो ब्रह्मचर्यं तथैव च॥**
**समासेनैवमादीनि योज्यान्यनिलरोगिषु॥२६॥**

इदानीं सर्ववातव्याधीनामुक्तानामनुक्तानां च सामान्येन सकलं प्रत्यनीकं दर्शयन्नाह—स्नेहस्वेद इत्यादि। स्नेहस्वेद इति स्नेहस्वेदो न रूक्षस्वेदः, तस्य वातकारित्वात्; अन्ये तु स्नेहः स्वेद इति विच्छिद्य पठन्ति, तन्मते स्नेहान्वितं च यदिति स्नेहग्रहणं पुनरुक्तम्। रसा मांसरसाः। स्नेहा घृतादयः। स्नेहान्वितं च यदिति यत् किंचिद्वस्तु घृतादियुक्तमित्यर्थः, अथवा स्नेहगुणयुक्तं यत् किंचिद्वस्तु। फलाम्लानि दाडिमाद्यम्लीकृतानि। संवाहनं सुखकरस्पर्शः। कौशेयेत्यादि 'आवरणानि' इति शेषः। कौशेयं कोशकारकृमिलालोद्भवं 'तसर' इति लोके, रौमाणि मूषकादिरोमजातानि रौमाणीत्यर्थः। गर्भगृहाणि अपवरकादीनीत्यर्थः। एतानि च यथावस्थं यथाव्याधि च प्रयोज्यानि॥२१-२६॥—

**त्रिवृद्दन्तीसुवर्णक्षीरीसप्तलाशङ्खिनीत्रिफलाविडङ्गानामक्षसमाः भागाः, बिल्वमात्रः कल्कस्तिल्वकमूलकम्पिल्लकयोः, त्रिफलारसदधिपात्रे द्वे द्वे, घृतपात्रमेकं, तदैकध्यं संसृज्य विपचेत्; तिल्वकसर्पिरेतत् स्नेहविरेचनमुपदिशन्ति वातरोगिषु। तिल्वकविधिरेवाशोकरम्यकयोर्द्रष्टव्यः॥२७॥**

तिल्वकसर्पिरुत्पादयति—त्रिवृदित्यादि। त्रिवृदादयो विडङ्गान्ता अक्षसमाः कर्षप्रमाणा इत्यर्थः। सुवर्णक्षीरी कङ्कुष्ठम्। सप्तला यवतिक्ताभेदः, शङ्खिन्यपि तद्भेदः। बिल्वमात्र इत्यादि। तिल्वकः पट्टिकारोध्रः। कम्पिल्लको रोचनिकावृक्षः फलारुणरेणुः। एतयोः प्रत्येकं कल्को बिल्वमात्रो बिल्वप्रमाण इत्यर्थः। त्रिफलेत्यादि। त्रिफलाक्वाथपात्रे द्वे, दधिपात्रे अपि द्वे; पात्रमाढकश्चतुःषष्टिपलानि, स च द्रवत्वाद् द्विगुणो ज्ञेयः; घृतपात्रमप्येवम्। तिल्वकविधिमतिदिशन्नाह—तिल्वकेत्यादि। कल्पना चेयं—तिल्वकस्थानेऽशोकः, अन्यत्र रम्यकः; शेषं पुनः कम्पिल्लकत्रिवृद्दन्त्यादि त्रिफलारसादि समानं पूर्वेण। रम्यको द्रेका पर्वतनिम्बः 'राजनिम्ब' इति लोके॥२७॥

**तिलपरिपीडनोपकरणकाष्ठान्याहृत्यानल्पकालं तैलपरिपीतान्यणूनि खण्डशः कल्पयित्वाऽवक्षुद्य महति कटाहे पानीयेनाभिप्लाव्य क्वाथयेत्, ततः स्नेहमम्बुपृष्ठाद्यदुदेति तत् सरकपाण्योरन्यतरेणादाय वातघ्नौषधप्रतीवापं स्नेहपाककल्पेन विपचेत्, एतदणुतैलमुपदिशन्ति वातरोगिषु; अणुभ्यस्तैलद्रव्येभ्यो निष्पाद्यत इत्यणुतैलम्॥२८॥**

अणुतैलमुत्पादयन्नाह—तिलेत्यादि। तिलपरिपीडनोपकरणकाष्ठानि चक्रयष्टिमर्कटिकाप्रभृतीनि। अनल्पकालं तैलपरिपीतानि चिरकालं तैलभावितानीत्यर्थः। अणूनि सूक्ष्माणि। खण्डशः कल्पयित्वा कृत्वेत्यर्थः। अवक्षुद्य सुष्ठु पिष्ट्वा चूर्णयित्वा च। अभिप्लाव्य प्रक्षिप्य। अम्बुपृष्ठात् पानीयोपरि, यदुदेति यदुत्पद्यते, तत् सरकपाण्योरन्यतरेणैकेन, आदाय गृहीत्वा; सरकं मृन्मयं पात्रं 'शराव' इति लोके, **गयी** तु सरकं कांस्यताम्रादिभाजनं; पाणिर्हस्तः। वातघ्नौषधानि भद्रदार्वादीनि। प्रतिवापः कल्कः। स्नेहपाककल्पेन विपचेदिति स्नेहचतुर्थांशो भेषजकल्कः, स्नेहाच्चतुर्गुणो द्रव इत्यर्थः। द्रवाः पुनरत्र वक्ष्यमाणतैलोदिताः क्वाथमांसरसक्षीराम्लानि चत्वारि समभागानि; द्रवानुक्तेश्चतुर्गुणमेवात्र जलमित्यन्ये। अणुभ्य इत्यादि कारणाणुत्वेन कार्येष्वणुत्वव्यपदेश इत्यर्थः॥२८॥

१ 'कल्कः' इति पा०। २ 'सुपेषं' इति पा०।

अथ महापञ्चमूलकाष्ठैर्बहुभिरवदह्यावनिप्रदेशमसितमुषितमेकरात्रमुपशान्तेऽग्नावपोह्य भस्म निवृत्तां भूमिं विदारिगन्धादिसिद्धेन तैलघटशतेन तुल्यपयसाऽभिषिच्यैकरात्रमवस्थाप्य ततो यावती मृत्तिका स्निग्धा स्यात्तामादायोष्णोदकेन महति कटाहेऽभ्यासिञ्चेत्, तत्र यत्तैलमुत्तिष्ठेत्तत् पाणिभ्यां पर्यादाय स्वनुगुप्तं निदध्यात्; ततस्तैलं वातहरौषधक्वाथमांसरसक्षीराम्लभागसहस्रेण सहस्रपाकं विपचेद्यावता कालेन शक्नुयात् पक्तुं, प्रतिवापश्चात्र हैमवता दक्षिणापथगाश्च गन्धा वातघ्नानि च, तस्मिन् सिध्यति शङ्खानाध्मापयेद्दुन्दुभीनाघातयेच्छत्रं धारयेद्वालव्यजनैश्च वीजयेद्ब्राह्मणसहस्रं भोजयेत्, तत् साधु सिद्धमवतार्य सौवर्णे राजते मृन्मये वा पात्रे स्वनुगुप्तं निदध्यात्, तदेतत् सहस्रपाकमप्रतिवारवीर्यं राजार्हं तैलम्; एवं भागशतविपक्वं शतपाकम् ॥ २९ ॥

सहस्रपाकं व्युत्पादयन्नाह—अथेत्यादि । पञ्चमूलप्रमाणं तैलं परिस्राव्य भूमिभागप्रमाणेन । असितं कृष्णभूमिप्रदेशमित्यर्थः । उषितं स्थितम् । अपोह्य स्फोटयित्वा । निवृत्तां भूमिम् उपशान्ततापामित्यर्थः। विदारिगन्धादीत्यादि। कल्ककषायकल्पेन विदारिगन्धादिपक्वेन तैलघटशतेन तुल्यपयसा भूमिमभिषिञ्चेत् । तैलमत्र तिलतैलम् । स्निग्धेति तैलक्षीराभ्यामार्द्रीकृतेत्यर्थः । महति कटाहे अत्रैकवचनं जात्यपेक्षया । तेनैकस्मिन् द्वयोस्त्रिषु वा । अभ्याषिञ्चेत् प्लावयेत् । वातहरौषधानि भद्रदार्वादीनि, तेषां क्वाथः क्वाथकल्पेन सिद्धः, मांसरसः जाङ्गलमांसरसकल्पेन सिद्धः, क्षीरं गोक्षीरम्, अम्लं काञ्जिकम् । भागसहस्रेणेति अत्र भागश्चतुर्थांशः; तेन वातहरक्वाथमांसरसक्षीराम्लानां प्रत्येकं भागसहस्रं; तेनैतदुक्तं भवति—प्रतिपाकं क्वाथादिभिस्तैलापेक्षया प्रत्येकं पादिकैः समुदायतस्तैलसमैः सहस्रपाकं यथा भवत्येवं वारसहस्रं पचेदिति **गयी**। **जेज्जटस्तु** क्वाथादीनां समुदायतस्तैलापेक्षया चतुर्थांशानां सहस्रमप्येकवारमेव निक्षिप्य विपचेदिति मन्यते, सहस्रपाकमिति तु संज्ञा, प्रत्येकं सहस्रवारान् पाके सति तैलोपक्षयः स्यात् । एतच्च **गयदासेन** दूषितं; तद्यथा—नहि सर्वतैलोपक्षयो भवति, किन्तु किञ्चिदेव, प्रतिपाकं क्षीरस्य पादिकस्य प्रवेशात्, अल्पः पुनरुपक्षयो राज्ञां महाधनानां यत्किञ्चिदेवेति । तस्मात् महाचार्याभ्यां व्याख्यातत्वात् पाकप्रकारद्वयमपि प्रमाणम् । यद्यपि द्रवसहस्रभागेन शतं वारान् विपचेदिति केनचिदुक्तं, तथाऽपीदृशं न बोद्धव्यं, प्रमादव्याख्यानत्वात् । प्रतिवापश्चात्र गन्धकल्कस्यावाप इत्यर्थः । हैमवता इति हैमवता उत्तरापथसंभूताः, ते पुनः कस्तूरीशटीकुष्ठमांसीसरलसुरदारुमुरादयः। दक्षिणपथगाः चन्दनजातीफलकक्कोललवङ्गादयः । तैः कल्कीकृतैस्तैलपादिकैः। वातघ्नानि चेति वातघ्नैरपि शतपुष्पामिशिप्रभृतिभिर्वातहरगणपरिपठितैः । तत्र शङ्खाध्मापनाद्यचिन्त्यशक्तित्वादतिशयव्युत्पादनार्थम् । अन्ये तु "तैलघटशतेन दुग्धवसाभ्यामभ्याषिञ्चेत्' इति पठन्ति; तन्न पठितव्यं, विवेककर्तृभिरुपाध्यायैरव्याख्यातत्वात् । शतपाकमुत्पादयन्नाह—एवं भागशतेत्यादि । एतत् सुबोधम् ॥ २९ ॥

गन्धर्वहस्तमुष्ककनक्तमालाटरूषकपूतीकारग्वधचित्रकादीनां पत्राण्यार्द्राणि लवणेन सहोदूखलेऽवक्षुद्य स्नेहघटे प्रक्षिप्यावलिप्य गोशकृद्भिर्दाहयेत्; एतत्पत्रलवणमुपदिशन्ति वातरोगेषु ॥३०॥

वातप्रधानेषु कफप्रधानेषु वा तथा स्तब्धसङ्कुचिताध्मातादिषु भोजनोपयोगीनि लवणान्युत्पादयन्नाह—गन्धर्वेत्यादि । गन्धर्वहस्त एरण्डः, मुष्ककः कृष्णपुष्पमुष्ककः, नक्तमालः करञ्जः, पूतीकश्चिरबिल्वः, सर्वपत्रसमं लवणं सैन्धवं देयमिति वृद्धवैद्याः । एतद्वातरोगेषु कफप्रायेषु ॥ ३० ॥

एवं स्नुहीकाण्डवार्ताकुशिग्रुलवणानि संक्षुद्य घटं पूरयित्वा सर्पिस्तैलवसामज्जभिः प्रक्षिप्यावलिप्य गोशकृद्भिर्दाहयेत्; एतत् स्नेहलवणमुपदिशन्ति वातरोगेषु । (इति काण्डलवणम्) ॥ ३१ ॥

एवमित्यादि । स्नुहीकाण्डः सेहुण्डयष्टिः । चतुःस्नेहस्य लवणस्य सैन्धवस्य च सर्वद्रव्येण समत्वं बोद्धव्यम् । वातरोगेषु वातप्रायेषु ॥ ३१ ॥

गण्डीरपलाशकुटजबिल्वार्कस्नुह्यपामार्गपाटलापारिभद्रकनादेयीकृष्णगन्धानीपनिम्बनिर्दहन्यटरूषकनक्तमालकपूतिकबृहतीकण्टकारिकाभल्लातकेङ्गुदीवैजयन्तीकदलीबाष्पद्वयेक्षुरकेन्द्रवारुणीश्वेतमोक्षकाशोका इत्येवं वर्गं समूलपत्रशाखमार्द्रमाहृत्य लवणेन सह संसृज्य पूर्ववद्दग्ध्वा क्षारकल्पेन परिस्राव्य विपचेत्, प्रतिवापश्चात्र हिङ्ग्वादिभिः पिप्पल्यादिभिर्वा । इत्येतत् कल्याणकलवणं वातरोगगुल्मप्लीहाग्निसङ्गाजीर्णार्शोऽरोचकार्तानां कासादिभिः कृमिभिरुपद्रुतानां चोपदिशन्ति पानभोजनेष्वपीति ॥ ३२ ॥

गण्डीरेत्यादि । गण्डीरो द्विविधः स्थलजो जलजश्च; तत्र स्थलजो हरितशाकपठितः, जलजो जलपिप्पलीगण्डीरः; पलाशः शटी; नादेयी जलजम्बूः; कृष्णगन्धा शोभाञ्जनकः; नीपो महाकदम्बः; निर्दहनी मोरटः, अग्निमन्थ इत्येके, अपरे चित्रकमाहुः; वैजयन्ती अरणिका; बाष्पद्वयं बाष्पिकाद्वयं तच्च लोहितं कृष्णं च सिन्धुविषये, केचिद्वर्षाभूद्वयमिति पठन्ति; इक्षुरकस्तालमखाना; सर्वद्रव्यसमं सैन्धवलवणम्; एतत् सर्व-

१ "वर्षाभूह्रीबेरेक्षुरकेन्द्रवारुणी" इति पा०। २ 'मल्लारकः' इति पा०।

मुदूखले संक्षुद्य दहेत् । तद्भस्म पृथक् कृत्वा लवणात्, क्षारकल्पेन परिस्राव्य, तत्र लवणं प्रक्षिप्य, क्षारघन्मृद्वग्निना पचेत् । प्रतिवापश्चात्र लवणपादः पिप्पल्यादेर्हिङ्ग्वादेर्वा । अग्निसङ्गोऽग्निमान्द्यम् । अजीर्णम् अलसकविसूचिकादि । कासादिभिरित्यादिशब्दाच्छ्वासहिक्कादयः कफवातजाः । केचित् प्रतिवापं पिप्पल्यादिं मन्यन्ते, हिङ्ग्वादिमपरे, हिङ्ग्वादिं पिप्पल्यादिं चान्ये, एतत्रयमपि प्रमाणं, पूर्वेषामाचार्याणां संमतत्वात् ॥ ३२ ॥

**भवति चात्र—**

**विष्यन्दनादुष्णभावाद्दोषाणां च विपाचनात् ॥**
**संस्कारपाचनाच्चेदं वातरोगेषु शस्यते ॥ ३३ ॥**

**इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने वातव्याधिचिकित्सितं नाम चतुर्थोऽध्यायः ॥४॥**

लवणफलानुशंसामाह—विष्यन्दनादित्यादि । विष्यन्दनात् स्रवणात् । लवणफलानुशंसां केचिदभिदधति, अन्येऽनार्षमाहुरिमं पाठम् ॥ ३३ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

**अथातो महावातव्याधिचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**द्विविधं वातशोणितमुत्तानमवगाढं चेत्येके भाषन्ते; तत्तु न सम्यक्, तद्धि कुष्ठवदुत्तानं भूत्वा कालान्तरेणावगाढीभवति, तस्मान्न द्विविधम् ॥३॥**

प्रतिज्ञाऽनन्तरं तन्त्रान्तरोक्तद्वैविध्यनिराकरणमाह—द्विविधमित्यादि । उत्तानं त्वङ्मांसाश्रयम्, अवगाढमन्तराश्रयम् ॥ १–३ ॥

**तत्र बलवद्विग्रहादिभिः प्रकुपितस्य वायोर्गुरूष्णाध्यशनशीलस्य प्रदुष्टं शोणितं मार्गमावृत्य वातेन सहैकीभूतं युगपद्वातरक्तनिमित्तां वेदनां जनयतीति वातरक्तम् । तत्तु पूर्वं हस्तपादयोरवस्थानं कृत्वा पश्चाद्देहं व्याप्नोति । तस्य पूर्वरूपाणि—तोददाहकण्डूशोफस्तम्भत्वक्पारुष्यसिरास्नायुधमनीस्पन्दनसक्थिदौर्बल्यानि श्यावारुणमण्डलोत्पत्तिश्चाकस्मात् पाणिपादतलाङ्गुलिगुल्फमणिबन्धप्रभृतिषु, तत्राप्रतिकारिणोऽपचारिणश्च रोगो व्यक्ततरः, तस्य लक्षणमुक्तं; तत्राप्रतिकारिणो वैकल्यं भवति ॥ ४ ॥**

तस्येदानीं संप्राप्तिपूर्विकां निरुक्तिं निर्दिशन्नाह—तत्रेत्यादि । बलवद्विग्रहादयो व्रणप्रश्नोक्ताः, गुरूष्णाध्यशनादयश्च तत्रैवोक्ताः । युगपत् एककालम् । तस्येत्यादि । मणिबन्धः पाणिमूलम् । तत्र बलवद्विग्रहादिभिरित्यारभ्य यावदपचारिणश्चेत्यत्र ग्रन्थस्यार्थो निदानपरिपठितोऽपि वातरक्तस्य दुःसाध्यत्वज्ञापनायात्रापि पठनीयः । तत्रेत्यादि । तत्रेति पूर्वरूपे । अपचारिणः अयथार्थकारिणः । रोगो व्यक्ततरः विकारः प्रकटो भवतीत्यर्थः । तत्रेति रोगव्यक्तौ । वैकल्यं विकलता । एतेनासाध्यत्वमुक्तम् ॥ ४ ॥

**भवति चात्र—**

**प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ॥**
**स्थूलानां सुखिनां चापि वातरक्तं प्रकुप्यति ॥ ५ ॥**

इदानीं विशेषेण वातशोणिताश्रयं निर्दिशन्नाह—प्रायश इत्यादि । असुकुमाराणामस्थूलानां दुःखितानां च प्रायेण व्यायामाश्रयत्वात्, व्यायामेन मिथ्याहारविहारयोरप्यदोषत्वादल्पदोषत्वाद्वा विकारासंभवः ॥ ५ ॥

**तत्र प्राणमांसक्षयपिपासाज्वरमूर्च्छाश्वासकासस्तम्भारोचकाविपाकविसरणसंकोचनैरनुपद्रुतं बलवन्तमात्मवन्तमुपकरणवन्तं चोपक्रमेत् ॥ ६ ॥**

कीदृश उपक्रम्यस्तदाह—तत्रेत्यादि । बलवन्तमिति उपचयशक्तिलक्षणोभयबलयुक्तं; प्राणमांसक्षयशब्देनोभयलक्षणस्य निवृत्तिविषयत्वादेव प्रवृत्तिविषयमप्युभयलक्षणमेव बलम् ॥६॥

**तत्र, आदावेव बहुवातरूक्षम्लानाङ्गादृते मार्गावरणाद्दुष्टशोणितमसकृदल्पाल्पमवसिञ्चेद्वातकोपभयात् । ततो वमनादिभिरुपक्रमैरुपपाद्य प्रतिसंसृष्टभक्तं वातप्रबले पुराणघृतं पाययेत् । अजाक्षीरं वाऽर्धतैलं मधुकाक्षययुक्तं, शृगालविन्नासिद्धं वा शर्करामधुमधुरं, शुण्ठीशृङ्गाटककशेरुकसिद्धं वा, श्यामारास्नासुषवीशृगालविन्नापीलुशतावरीश्वदंष्ट्राद्विपञ्चमूलीसिद्धं वा । द्विपञ्चमूलीक्वाथाष्टगुणसिद्धेन पयसा मधुकमेषशृङ्गीश्वदंष्ट्रासरलभद्रदारुवचासुरभिकल्कप्रतीवापं तैलं पाचयित्वा पानादिषूपयुञ्जीत, शतावरीमयूरककिणिह्यजमोदामधुकक्षीरविदारीबलातिबलातृणपञ्चमूलीक्वाथसिद्धं वा काकोल्यादिप्रतिवापं, बलातैलं शतपाकं वेति । वातहरमूलसिद्धेन च पयसा परिषेचनमम्लैर्वा कुर्वीत । यवमधुकैरण्डतिलवर्षाभूभिर्वा प्रदेहः कार्यः । तत्र चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु प्रत्येकशः काकोलीक्षीरकाकोलीजीवकर्षभकबलातिबलाविसमृणालशृगालविन्नामेषशृङ्गीप्रियालशर्कराकशेरुकसुरभिवचाकल्कमिश्रेषूपनाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धाः पञ्च पायसा व्याख्याताः, स्नैहिकफलसारोत्कारिका वा, चूर्णितेषु यवगोधूमतिलमुद्ग-**

**माषेषु मत्स्यपिशितवेशवारो वा, बिल्वपेशिकातगरदेवदारुसरलारास्नाहरेणुकुष्ठशतपुष्पैलासुरादधिमस्तुयुक्त उपनाहः, मातुलुङ्गाम्लसैन्धवघृतमिश्रं मधुशिग्रुमूलमालेपस्तिलकल्को वेति वातप्रबले॥७॥**

तत्र दोषदूष्ययोः पूर्वं दूष्यचिकित्सितमेव निर्दिशन्नाह–तत्रेत्यादि। बहुवातत्वेन हेतुना रूक्षमस्निग्धं, म्लानं शुष्यदङ्गं, यस्य देहिनस्तस्मादृते इत्यर्थः। मार्गावरणं मार्गावरोधनं, तस्माद्दुष्टशोणितं प्रकुपितरुधिरम्। असकृत् अनेकवारान्। अवसिञ्चेत् स्रावयेदित्यर्थः। दोषचिकित्सितमाह—ततो वमनादिभिरित्यादि। आदिशब्दाद्विरेचनास्थापनानुवासनादिभिरुपक्रमैश्चिकित्साधिकारोक्तैः। उपपाद्य योजयित्वा। प्रतिसंसृष्टभक्तमिति प्रतिसंसृष्टं पेयादिक्रमेण ल(यु)क्तं भक्तं यस्य पुरुषस्येत्यर्थः। वातप्रबले वातरक्ते। पुराणघृतं कालेनैव पक्वम्। तत्र पाणिगतं वातरक्तमूर्ध्वगतदोषेण, पादगतं वातरक्तमधोगतेन दोषेण भवति; तत्र पाणिगते कफपित्तानुबन्धे वमनविरेचने, तत्रैव जीर्णघृतपानं; पादगते वातानुबन्धे आस्थापनपूर्वकमनुवासनम्। तत्रैकं शुद्धिदिनम्, अन्नसंसर्जनदिनानि षट्, अष्टमे स्नेहान्नभोजनं, नवमे पुराणघृतपानमिति। अजाक्षीरमर्धतैलं यष्टिमधुकर्षयुक्तं; तदेव पृश्निपर्ण्यादिसिद्धं, शुण्ठ्यादिसिद्धं, श्यामादिसिद्धं वा, इत्येवं चतुर्षु योगेष्वजाक्षीरमर्धतैलमभिसंबध्यते; तत्रार्धतैलमिति अजाक्षीरस्य भागद्वयं तैलस्यैक इत्यर्थः। शृगालविन्ना पृश्निपर्णी, तया सिद्धं क्षीरपाककल्पनया। श्यामा त्रिवृद्विशेषः, 'वृद्धदारुक' इत्यन्ये। रास्ना सुरसा। सुषवी पानीयवल्ली। पुराणघृततैलं निर्दिश्य पक्वतैलं निर्दिशन्नाह—द्विपञ्चमूलीत्यादि। द्विपञ्चमूलीं कषायकल्पेन विपाच्य पादशेषेण तेनाष्टगुणेन क्षीरं साधयेत्, क्षीरशेषमवतार्य तेन मधुकादिकल्कयुक्तं तैलं साधयेदिति। सुरभिः[1] रास्ना। प्रतिवापः प्रक्षेपः। पानादिष्वित्यादिशब्दादभ्यङ्गपरिषेकादयः। शतावरीत्यादि 'सिद्धं तैलम्' इति शेषः। मयूरकोऽपामार्गः। क्षीरविदारी दीर्घकन्दा भृशं मधुरा। तृणपञ्चमूली "कुशकाशनलदर्भकाण्डेक्षुका" (सू. अ. ३८) इति तृणसंज्ञा। शतपाकमिति बलाक्काथकल्काभ्यां शतशः कृत्वा विपाच्य प्रयोज्यं; **श्रीजेज्जटस्तु** बलातैलं मूढगर्भौषधमाह, शतपाकं तु सहस्रपाकतुल्यमेवाह। एते च योगा दोषादीनवेक्ष्य यथावस्थं योज्याः। अन्तःपरिमार्जनमभिधाय बहिःपरिमार्जनं निर्दिशन्नाह—वातहरेत्यादि। वातहरं दशमूलम्। अम्लैरिति सुरासौवीरकतुषोदकादिभिः। प्रदेहः प्रलेपः। तत्रेत्यादि तत्र चूर्णितेषु यवादिषु पञ्चसु प्रत्येकं काकोल्यादिवचान्तकल्कमिश्रेषूपनाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धाः पञ्च पायसा व्याख्याताः। ते तु नातिद्रवा नातिसान्द्राः प्रदेहयोग्या योज्याः। पयसा संस्कृताः पायसाः। यद्यपि सर्पिरादीनि संस्कारकत्वेनोपन्यस्तानि तथाऽपि पय एव प्रधानमिति तद्व्यपदेशः। स्नैहिकफलानि तिलैरण्डातसीबिभीतकादीनि, तेषां यथासंभवं सारो मज्जा। अत्रानुक्तमपि क्षीरं स्नेहफलकल्कपाकनिष्पत्तये कल्पनीयम्। उत्कारिका लप्सिका। चूर्णितेष्वित्यादि। पिशितवेशवारः मांसमयो वेशवारः खानिष्कापरपर्यायः। अन्ये तु 'नलमीनमत्स्यामिषवेशवारो वा' इति पठन्ति, व्याख्यानयन्ति च—नलमीनो रोहितभेदः, पामरेषु 'मिडक' इति प्रसिद्धः, तीरभुक्तौ तु जनास्तं तिलैपित्तमाहुः; तद्ग्रहणं विशेषार्थं, मत्स्यशब्देन तु सर्वे एव गृह्यन्ते। अन्ये तु 'आनूपमत्स्यामिषवेशवारैः' इति पठन्ति, आमिषशब्देनानूपमांसमाहुः। तथा च वातरक्ते **चरकः**—"औदकप्रसहानूपवेशवाराः सुसंस्कृताः। जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहने" (च. चि. अ. २९)—इति। 'विचित्रमत्स्यपिशितवेशवारो वा' इति केचित्[1]। बिल्वेत्यादि बिल्वपेशिकादि पेष्यं, सुरादि तस्य पेषणाय द्रवद्रव्यं; बिल्वपेशिका बालबिल्वगिरः, सरला त्रिवृत्। मातुलुङ्गेत्यादि। मातुलुङ्गादिभिः सह शोभाञ्जनकमूलं ससैन्धवमालेपः। तिलकल्को वेति तिलानां मातुलुङ्गादिरसपिष्टानां पूर्ववदेवालेप इत्येके, केवल एव तिलकल्क इत्यन्ये ॥ ७ ॥

**पित्तप्रबले द्राक्षारेवतकट्फलपयस्यामधुकचन्दनकाश्मर्यकषायं शर्करामधुमधुरं पाययेत्, शतावरीमधुकपटोलत्रिफलाकटुरोहिणीकषायं[2], गुडूचीकषायं वा, पित्तज्वरहरं वा चन्दनादिकषायं शर्करामधुमधुरं, मधुरतिक्तकषायसिद्धं वा सर्पिः; बिसमृणालभद्रश्रियपद्मककषायेणार्धक्षीरेण परिषेकः, क्षीरेक्षुरसैर्मधुकशर्करातण्डुलोदकैर्वा द्राक्षेक्षुकषायमिश्रैर्वा मस्तुमद्यधान्याम्लैः; जीवनीयसिद्धेन वा सर्पिषाऽभ्यङ्गः, शतधौतघृतेन वा, काकोल्यादिकल्ककषायविपक्वेन वा सर्पिषा; शालिषष्टिकनलवञ्जुलतालीसशृङ्गाटकगलोड्यगौरीगैरिकशैवलपद्मकपद्मपत्रप्रभृतिभिर्धान्याम्लपिष्टैः प्रदेहो घृतमिश्रः, वातप्रबलेऽप्येष सुखोष्णः प्रदेहः कार्यः॥८॥**

पित्तानुबन्धस्य चिकित्सां निर्दिशन्नाह—पित्तेत्यादि। आरेवतकः किरमालकः। पयसा अर्कपुष्पी, क्षीरविदारिकेत्यन्ये। शतावरीत्यादि। मधुराणि काकोल्यादीनि, तिक्तानि पटोलादीनि, कषायाणि त्रिफलादीनि, तेषां कषायकल्काभ्यां सिद्धं घृतं पाययेदित्यर्थः। बिसेत्यादि। बिसं भिषण्टकमिति[3] लोके, मृणालं पद्मनालं, भद्रश्रियं शुक्लचन्दनम्। परिषेकः सर्वतो धारासेचनम्। क्षीरेत्यादि। क्षीरेक्षुरसाभ्यामेको योगः, मधुकादिभिर्द्वितीयो योगः, द्राक्षादिकषायमिश्रैर्मस्त्वादिभिस्तृतीयः। जीवनीयेत्यादि। काकोल्यादिकषायकल्कविपक्वेन सर्पिषाऽभ्यङ्गः, शतधौतघृतेन वाऽभ्यङ्ग इत्यर्थः। शालीत्यादि। वञ्जुलो वेतसः, गलोड्यं पद्मबीजं, गौरी हरिद्रा, शैवलं शैवालम्। धान्याम्लं

१ 'सुरभी' इति पा०।

१ 'केचित्' इति पा०। २ "कटुरोहिणीकल्कं" इति पा०। ३ 'बिशण्डकमिति' इति पा०।

काञ्जिकम् । अयं च प्रदेहः शीतोऽबहुलश्च कर्तव्यः (वातप्रबलेऽप्येष प्रदेहः सुखोष्णः कार्यः) ॥ ८ ॥

**रक्तप्रवलेऽप्येवं, बहुशश्च शोणितमवसेचयेत्, शीततमाश्च प्रदेहाः कार्या इति ॥ ९ ॥**

पित्तप्रबलचिकित्सितमुक्तमन्यत्राप्यतिदिशन्नाह—रक्तेत्यादि ॥ ९ ॥

**श्लेष्मप्रबले त्वामलकहरिद्राकषायं मधुमधुरं पाययेत्, त्रिफलाकषायं वा; मधुकशृङ्गवेरहरीतकीतिक्तरोहिणीकल्कं वा सक्षौद्रं, मूत्रतोययोरन्यतरेण गुडहरीतकीं वा भक्षयेत्; तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिःक्वाथैश्च परिषेकः, आरग्वधादिकषायैर्वोष्णैः; मस्तुमूत्रसुराशुक्तमधुकसारिवापद्मकसिद्धं वा घृतमभ्यङ्गः; तिलसर्षपातसीयवचूर्णानि श्लेष्मातककपित्थमधुशिग्रुमिश्राणि क्षारमूत्रपिष्टानि प्रदेहः; श्वेतसर्षपकल्कः, तिलाश्वगन्धाकल्कः, प्रियालसेलुकपित्थकल्कः, मधुशिग्रुपुनर्नवाकल्कः, व्योषतिक्तापृथक्पर्णीबृहतीकल्क इत्येतेषां पञ्च प्रदेहाः सुखोष्णाः क्षारोदकपिष्टाः, शालिपर्णी पृश्निपर्णी बृहत्यौ वा क्षीरपिष्टास्तर्पणमिश्राः ॥ १० ॥**

रोहिणीकल्कमित्यत्रापि चूर्णमित्येके, तत् सक्षौद्रम् । मूत्रतोययोरन्यतरेण गुडहरीतकीं वा भक्षयेत् । तैलेत्यादि तैलादिभिः कोष्णैः परिषेकः । आरग्वधादीत्यादि 'परिषेक' इति शेषः । मस्त्वित्यादि । प्रत्येकं मस्त्वादिभिश्चतुर्भिर्घृतसमैर्मधुकादिभिस्त्रिभिः पादकल्कैः पक्वेन सर्पिषाऽभ्यङ्गः । तिलेत्यादि । श्लेष्मातकः शेलुः 'लिसोडा' इति लोके । अपरान् पञ्च प्रदेहानाह—श्वेतेत्यादि । प्रथम एकाङ्गः, द्वितीयो द्व्यङ्गः, तृतीयस्त्र्यङ्गः, चतुर्थो द्व्यङ्गः, पञ्चमः षडङ्ग इति । अपरमेकं प्रदेहमाह—शालिपर्णीत्यादि । तर्पणमिश्रा यवशक्तुयुताः ॥ १० ॥

**संसर्गे सन्निपाते च क्रियापथमुक्तं मिश्रं कुर्यात् ॥**

अनुबन्धभूतदोषद्वयत्रयजन्मनो वातशोणितस्य चिकित्सितं दर्शयन्नाह—संसर्ग इत्यादि । तत्र संसर्गे द्वयोर्द्वयोर्दोषयोर्मिश्रीकृत्य, सन्निपाते तु त्रयाणामप्येते चोपक्रमाः ॥ ११ ॥

**सर्वेषु च गुडहरीतकीमासेवेत; पिप्पलीर्वा क्षीरपिष्टा वारिपिष्टा वा पञ्चाभिवृद्ध्या दशाभिवृद्ध्या वा पिबेत् क्षीरौदनाहारो दशरात्रं, भूयश्चापकर्षयेत्, एवं यावत् पञ्च दश वेति; तदेतत् पिप्पलीवर्धमानकं वातशोणितविषमज्वरारोचकपाण्डुरोगप्लीहोदरार्शःकासश्वासशोफशोषाग्निसादहृद्रोगोदराण्यपहन्ति; जीवनीयप्रतीवापं सर्पिः पयसा पाचयित्वाऽभ्यज्यात्; सहासहदेवाचन्दनमूर्वामुस्ताप्रियालशतावरीकशेरुपद्मकमधुकशतपुष्पाविदारीकुष्ठानि क्षीरपिष्टः प्रदेहो घृतमण्डयुक्तः, सैरेयकाटरूषकबलातिबलाजीवन्तीसुषवीकल्को वा च्छागक्षीरपिष्टः, गोक्षीरपिष्टः काश्मर्यमधुकतर्पणकल्को वा; मधूच्छिष्टमञ्जिष्ठासर्जरससारिवाक्षीरसिद्धं पिण्डतैलमभ्यङ्गः; सर्वेषु च पुराणघृतमामलकरसविपक्वं वा पानार्थं; जीवनीयसिद्धं परिषेकार्थं, काकोल्यादिकाथकल्कसिद्धं वा; सुषवीकाथकल्कसिद्धं वा, कारवेल्लककाथमात्रसिद्धं वा; बलातैलं वा परिषेकावगाहबस्तिभोजनेषु; शालिषष्टिकयवगोधूमान्नमनवं भुञ्जीत पयसा जाङ्गलरसेन वा मुद्गयूषेण वाऽनम्लेन; शोणितमोक्षं चाभीक्ष्णं कुर्वीत; उच्छ्रितदोषे च वमनविरेचनास्थापनानुवासनकर्म कर्तव्यम् ॥ १२ ॥**

**(पटोलत्रिफलाभीरुगुडूचीकटुकाकृतम् ॥**
**क्वाथं पीत्वा जयत्याशु वातशोणितजां रुजम् ॥ १३ )**

शुद्धदेहस्य सामान्यं चिकित्सितं रोगमात्रप्रत्यनीकं निर्दिशन्नाह—सर्वेष्वित्यादि । पिप्पलीवर्धमानके 'त्र्यभिवृद्ध्या, सप्ताभिवृद्ध्या वा' इति क्वचित्पाठः, स तु नातिप्रसिद्धः । सहेत्यादि । सहा माषपर्णी, सहदेवा गाङ्गेरुकीति प्रसिद्धा, मूर्वा चोरस्नायुः, प्रियालश्चारः, घृतमण्डो घृतस्योपरियंच्छो भागः । सैरेयकेत्यादि सैरेयः कण्टशेलुवाकः, सुषवी पानीयवल्ली । मधूच्छिष्टेत्यादि । क्षीरमत्र चतुर्गुणम् । पिण्डतैलमिति अपरिस्रुतं किट्टयुक्तं; केचित् पिण्डतैले शतावरीत्यधीयते । सर्वेष्वित्यादि सर्वेषु पञ्चस्वपि वातरक्तेषु एक-त्रिदोषजेषु, प्रयोगप्रभावोऽयम् । काकोल्यादिकाथकल्कमात्रसिद्धं 'घृतम्' इति शेषः । कारवेल्लककाथमात्रसिद्धं वा 'घृतम्' इति शेषः । बलेत्यादि बलातैलं मूढगर्भोक्तम् । शालीत्यादि । पयसा पित्तोत्तरे, जाङ्गलरसेन वातोत्तरे, मुद्गरसेन कफोत्तरे; सात्म्यापेक्षया वा । शोणितेत्यादि । अभीक्ष्णम् अनवरतम् । स्निग्धादिभिर्निर्जिते वाते निश्चिते तु शोणितावरणे पुरुषव्याधिबलकालमवलोक्य कुर्वीत । वमनेत्यादि वमनादिकं यद्यपि सामान्येनोक्तं, तथाऽपि कफोत्कटे वमनं, विरेचनं पित्तरक्तोत्कटे, अनुवासनास्थापनकर्मणी वातोत्कटे च कर्तव्ये ॥ १२ ॥ १३ ॥

**भवन्ति चात्र—**

**एवमाद्यैः क्रियायोगैरचिरोत्पतितं सुखम् ॥**
**वातासृक् साध्यते वैद्यैर्याप्यते तु चिरोत्थितम् ॥ १४**

एवमाद्यैः एवंप्रकारैः । क्रियायोगैः उपायैः । अचिरोत्पतितम् अल्पकालोत्पन्नम् ॥ १४ ॥

**उपनाहपरीषेकप्रदेहाभ्यञ्जनानि च ॥**
**शरणान्यप्रवातानि मनोज्ञानि महान्ति च ॥ १५ ॥**

१ अयं पाठः क्वचित्पुस्तके न पठ्यते । २ 'वा सक्षौद्रमूत्रं तोयेन गुडहरीतकीं वा' इति हाराणचन्द्रः पठति । ३ 'लसाटक' इति पा० ।

१ अयं पाठो हस्तलिखितपुस्तके न पठ्यते ।

**मृदुगण्डोपधानानि शयनानि सुखानि च ॥**
**वातरक्ते प्रशस्यन्ते मृदुसंवाहनानि च ॥ १६ ॥**

क्रियायोगानुक्ताननुक्तांश्च संग्रहार्थं निर्दिशन्नाह—उपनाहेत्यादि । शरणानि गृहाणि । अप्रवातानि निवातानि । मनोज्ञानि हर्षदानि । महान्ति विशालानि । गण्डोपधानानि गल्लमसू(सु)रिकादीनि; गण्डपदेन मस्तकादीनामप्युपधानानि बोध्यानि । सुखानि चेति चकारान्मृदूनि च । संवाहनानि करमर्दनानि ॥ १५ ॥ १६ ॥

**व्यायामं मैथुनं कोपमुष्णाम्ललवणाशनम् ॥**
**दिवास्वप्नमभिष्यन्दि गुरु चान्नं विवर्जयेत् ॥ १७ ॥**

आहाराचारं निषिद्धं दर्शयन्नाह—व्यायाममित्यादि । व्यायाममैथुने कायकर्मणी, कोपो मानसं कर्म । उष्णम् उष्णवीर्यं; तेनानूपमांसं मधुरतिक्तं काकमाच्यादि कटु च यत्किञ्चिदुष्णवीर्यं तद्गृह्यते । अम्ललवणे तु विशेषार्थं पृथगेव पठिते । अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजननम् ॥ १७ ॥

**अपतानकिनमस्रस्ताक्षमवक्रभ्रुवमस्तब्धमेढ्रमस्वेदनमवेपनमप्रलापिनमखट्वापातिनमबहिरायामिनं चोपक्रमेत् । तत्र प्रागेव स्नेहाभ्यक्तं स्विन्नशरीरमवपीडनेन तीक्ष्णेनोपक्रमेत शिरःशुद्ध्यर्थं; अनन्तरं विदारिगन्धादिक्वाथमांसरसक्षीरदधिपक्वं सर्पिरच्छं पाययेत्, तथा हि नातिमात्रं वायुः प्रसरति; ततो भद्रदार्वादिवातघ्नगणमाहृत्य सयवकोलकुलत्थं सानूपौदकमांसं पञ्चवर्गमेकतः प्रक्वाथ्य तमादाय कषायमम्लक्षीरैः सहोन्मिश्र्य सर्पिस्तैलवसामज्जभिः सह विपचेन्मधुरकप्रतीवापं, तदेतत्त्रैवृतमपतानकिनां परिषेकावगाहाभ्यङ्गपानभोजनानुवासननस्येषु विदध्यात्; यथोक्तैश्च स्वेदविधानैः स्वेदयेत्, बलीयसि वाते सुखोष्णतुषबुसकरीषपूर्णे कूपे निदध्यादामुखात्, तप्तायां वा रथकारचुल्ह्यां[1] तप्तायां वा शिलायां सुरापरिषिक्तायां पलाशदलच्छन्नायां शाययेत्, कृशरावेशवारपायसैर्वा स्वेदयेत् । मूलकोरुबूकस्फूर्जार्जकार्कसप्तलाशङ्खिनीस्वरससिद्धं तैलमपतानकिनां परिषेकादिषूपयोज्यम् । अभुक्तवता पीतमम्लं दधि मरिचवचायुक्तमपतानकं हन्ति; तैलसर्पिर्वसाक्षौद्राणि वा । एतच्छुद्धवातापतानकविधानमुक्तं, संसृष्टे संसृष्टं कर्तव्यम् । वेगान्तरेषु चावपीडं दद्यात्; ताम्रचूडकर्कटकृष्णमत्स्यशिशुमारवराहवसाश्चासेवेत, क्षीराणि वा वातहरसिद्धानि, यवकोलकुलत्थमूलकदधिघृततैलसिद्धा वा यवागूः; स्नेहविरेचनास्थापनानुवासनैश्चैनं दशरात्राद्धृत[2]वेगमुपक्रमेत; वातव्याधिचिकित्सितं चावेक्षेत; रक्षाकर्म च कुर्यादिति ॥ १८ ॥**

अपतानकचिकित्सामाह—अपतानकिनमित्यादि । अस्रस्ताक्षम् अनतिपतितनयनम्[1] । अप्रलापिनं नासंबद्धभाषिणम् । अखट्वापातिनं खट्वाया न पततीति अखट्वापातिनम्; अयमर्थः—अपतानकवेगेन पतन्नेव पाणिभ्यां भूतलमवलम्बते, हस्तपादद्वयेन खट्वापादकल्पेन पतनशीलः खट्वापाती, नैतादृग्विध इत्यर्थः । अबहिरायामिनम् अपश्चान्मुखगामिनम् । शिरोविरेचनद्रव्याणि पिष्ट्वा अवपीड्य दीयत इत्यवपीडः । शुद्धवातापतानकेऽप्यत्र शिरोविरेचनं वायोः कफस्थानगतत्वेन सद्यः संज्ञाप्रबोधार्थम् । अनन्तरमिति शिरोविरेचनस्योर्ध्वमित्यर्थः । घृतं च विदारिगन्धादिक्वाथादिभिश्चतुर्भिर्द्रवैर्विदारिगन्धादिकल्कपादिकं साधनीयमिति । पानार्हं घृतमुक्त्वा सर्वकार्योपयोगिनं महास्नेहमाह—भद्रेत्यादि । भद्रदार्वादिः भद्रदारुकुष्ठहरिद्रावरुणेत्यादिः । भद्रदार्वादियवकोलाद्यानूपौदकपञ्चवर्गक्वाथस्य काञ्जिकक्षीरयोश्च प्रत्येकं चत्वारो भागा इत्येके; **गयदास**स्त्वत्र क्षीरं स्नेहसमं मन्यते । आनूपौदकमांसं पञ्चवर्गमिति कूलचराः, प्लवाः, कोशस्थाः, पादिनो, मत्स्याश्चेति **जेज्जटः**; **गयदास**स्तु 'सानूपौदकमांसवर्गम्' इत्येवं पाठं मन्यते; सानूपौदकमित्यनेन परेषां पञ्चानामपि वर्गाणां ग्रहणात् । अम्लानि सुरासौवीरकधान्याम्लादीनि । सर्पिर्विपचेत् तैलवसामज्जभिः सह, तैलादि प्रत्येकं घृततुल्यं दत्त्वा । मधुरकप्रतिवापं काकोल्यादिकल्कप्रक्षेपम् । त्रैवृतमिति सर्पिषोऽत्र त्रिभिर्वृतत्वात् त्रैवृतम् । स्वेदविधानैरिति स्वेदावचारणीयाभिहितैः । निदध्यात् स्थापयेत्; ऊष्मस्वेदोऽयम् । रथकारो लोहकारः । कृशरेत्यादि अयमुपनाहस्वेदः । उरुबूकः शुक्लैरण्डः, स्फूर्जकः फणिज्झकाकारः प्रायशः पारियात्रे भवति, अर्जकः कुठेरकः, शङ्खिनी यवतिक्ताभेदः; मूलकादीनां स्नेहचतुर्गुणेन रसेन सिद्धं; मूलकादिपादकल्कमकल्कं वा पक्त्वा सुखोष्णं परिषेके द्रवस्वेदे इत्यर्थः; आदिशब्दादभ्यङ्गादिषु । मरिचवचायुक्तमिति अल्पवचामरिचम् । संसृष्टे संसृष्टं कर्तव्यमिति अनुबन्धभूतयोः पित्तकफयोः संसर्गमुपलभ्य पित्तकफहरं संसृष्टं तदेव कर्तव्यं; **जेज्जट**स्तु संसृष्टे वातरक्तवच्चिकित्सा कर्तव्येत्याह । वेगान्तरेषु वेगोपरमेषु । ताम्रचूडः कुक्कुटः, कृष्णमत्स्यः कुलीरमत्स्याकारोऽशल्कः । ताम्रचूडादिवसा पाने; तदुक्तं **वृद्धवाग्भटे**—"कुक्कुटकुलीरशिशुमारवराहवसाः पाययेत्"—( अ. सं. चि. अ. २३ ) इति ॥ १८ ॥

**पक्षाघातोपद्रुतमम्लानगात्रं सरुजमात्मवन्तमुपकरणवन्तं चोपक्रमेत् । तत्र प्रागेव स्नेहस्वेदोपपन्नं मृदुना शोधनेन संशोध्यानुवास्यास्थाप्य च यथाकालमाक्षेपकविधानेनोपचरेत्; वैशेषिकश्चात्र मैस्तिष्क्यः[2] शिरोबस्तिः, अणुतैलमभ्यङ्गार्थे, साल्व-**

१ 'अङ्गारचुल्ह्यां' इति पा० । २ 'दशरात्राद्धतवेगं' इति पा० ।

१ 'अनधिपतितशस्यम्' इति पा० । २ 'मास्तिष्कं शिरोबस्तिश्च शिरःशुद्ध्यर्थं' इति पा० । 'मस्तिष्कहितत्वान्मास्तिष्कं स्नेहपिचुधारणम्' इति हाराणचन्द्रः ।

**णमुपनाहार्थं, बलातैलमनुवासनार्थं; एवमतन्द्रितस्त्रींश्चतुरो वा मासान् क्रियापथमुपसेवेत ॥ १९ ॥**

पक्षाघातचिकित्सितमाह—पक्षाघातेत्यादि । अम्लानगात्रम् अहीनगात्रम् । सरुजमिति सह रुजया वर्तते यः सः तम् । यस्य तु पक्षार्धमचेतनमवेदनं च सोऽसाध्यः, यदा तु पुनरीषत्कर्मण्यमीषच्चेतनं च तदा कृच्छ्रसाध्यः । यथाकालं कालस्यानतिक्रमेण; तद्यथा—वान्तस्य पक्षाद्विरेचनं, विरिक्तस्य सप्तरात्रादनुवासनम्, अनुवासितस्य स्नेहलक्षणे सत्यास्थापनम्, आस्थापितस्य सद्यः पुनरनुवासनमिति । आक्षेपकविधानेन अपतानकविधानेनेत्यर्थः, आक्षेपकापतानकयोरेकविषयत्वात् । वैशेषिकमित्यादि । मस्तिष्क्यः शिरोबस्तिविशेषः, स च स्नेहाक्तपिचुप्लोतादिधारणेन योजनीयः । एवमित्यादि । अतन्द्रितः अनलसः ॥ १९ ॥

**मन्यास्तम्भेऽप्येतदेव विधानं, विशेषतो वातश्लेष्महरैर्नस्यै रूक्षस्वेदैश्चोपचरेत् ॥ २० ॥**

अत्र मन्यास्तम्भचिकित्सितं कैश्चिदधीयते—मन्यास्तम्भे इत्यादि ॥ २० ॥

**अपतन्त्रकातुरं नापतर्पयेत्, वमनानुवासनास्थापनानि न निषेवेत, वातश्लेष्मोपरुद्धोच्छ्वासं तीक्ष्णैः प्रध्मापनैर्मोक्षयेत्, तुम्बुरुपुष्कराह्वहिङ्ग्वम्लवेतसपथ्यालवणत्रयं यवक्वाथेन पातुं प्रयच्छेत्, पथ्याशतार्धे सौवर्चलद्विपले चतुर्गुणे पयसि सर्पिःप्रस्थं सिद्धं; वातश्लेष्मापनुच्च कर्म कुर्यात् ॥ २१ ॥**

अपतन्त्रचिकित्सितमपि कैश्चिदभिधीयते—अपतन्त्रकातुरमित्यादि । तुम्बुर्वादिचूर्णाक्षं यवक्वाथपलद्वयेन प्रयच्छेत् । पथ्याशतार्धे इति पथ्याफलानां शतार्धे सर्पिःप्रस्थं सिद्धं पातुं प्रयच्छेदिति संबन्धः । न केवलमेतद्घृतमेव पातुं प्रयच्छेदित्याह—वातश्लेष्मेत्यादि ।—वातं श्लेष्माणं च यत् कर्म नुदति हन्ति तच्च कुर्यात् ॥ २१ ॥

**अर्दितातुरं बलवन्तमात्मवन्तमुपकरणवन्तं च वातव्याधिविधानेनोपचरेत्, वैशेषिकैश्च मस्तिष्क्यशिरोबस्तिनस्यधूमोपनाहस्नेहनाडीस्वेदादिभिः; ततः सतृणं महापञ्चमूलं काकोल्यादिं विदारिगन्धादिमौदकानूपमांसं तथैवौदककन्दांश्चाहृत्य द्विगुणोदके क्षीरद्रोणे निःक्वाथ्य क्षीरावशिष्टमवतार्य परिस्राव्य तैलप्रस्थेनोन्मिश्र्य पुनरग्नावधिश्रयेत्, ततस्तैलं क्षीरानुगतमवतार्य शीतीभूतमभिमथ्नीयात्, तत्र यः स्नेह उत्तिष्ठेत्तमादाय मधुरौषधसहाक्षीरयुक्तं विपचेत्, एतत् क्षीरतैलमर्दितातुराणां पानाभ्यङ्गादिषूपयोज्यं; तैलहीनं वा क्षीरसर्पिरक्षितर्पणमिति ॥ २२ ॥**

१ 'पादावशिष्टं' इति पा० ।

अर्दितचिकित्सामाह—अर्दितातुरमित्यादि । नस्यधूमावत्र स्नेहनौ । तत इत्यादि । "कुशकाशनलदर्भकाण्डेक्षुका" ( सू. अ. ३८ ) । इति तृणसंज्ञम् । महापञ्चमूलं बिल्वादि । औदकमांसं मत्स्यकर्कटकशिशुमारप्रभृतीनाम्; आनूपं मांसं प्रधानकल्पनया वराहादीनाम् । औदकाः कन्दाः कशेरुशृङ्गाटकशालूकादयः । अन्ये—"आनूपमांसान्यौदकान् कन्दांश्च संहृत्य"—इति पठन्ति । सर्वद्रव्याणां समभागानामाढकं क्षीरद्रोणेन जलद्विद्रोणसहितेन विपचेत् । तैलप्रस्थेनेति तैलप्रस्थेन द्वात्रिंशत्पलात्मकेन । क्षीरानुगतं क्षीरेण सहैकावयवीभूतम् । मधुरौषधानि काकोल्यादीनि, सहा माषपर्णी, क्षीरं चतुर्गुणम् । केचिन्मधुरौषधसहास्थाने पूर्वोक्तक्वाथ्यद्रव्याणामेव पादिकं कल्कं प्रक्षिपन्ति, न तु मधुरकादीनि ॥ २२ ॥

**गृध्रसीविश्वाचीक्रोष्टुकशिरःखञ्जपङ्गुलवातकण्टकपाददाहपादहर्षावबाहुकबाधिर्यधमनीगतवातरोगेषु यथोक्तं यथोद्देशं च सिराव्यधं कुर्यात्, अन्यत्रावबाहुकात्; वातव्याधिचिकित्सितं चावेक्षेत ॥ २३ ॥**

गृध्रस्यादीनां चिकित्साविधानमाह—गृध्रसीत्यादि । वातव्याधिचिकित्सितं चेति चकारेण क्रोष्टुकशीर्षकवातशोणितचिकित्सावेक्षणं च । धातुक्षयनिमित्तवातकोपजनितोऽवबाहुकः, अतोऽन्यत्रावबाहुकादिति वाक्येन सिराव्यधो निषिध्यते । गयी तु, अन्यत्रावबाहुकाद् वातव्याधिचिकित्सितमवेक्षेतेति संबध्नाति; तथाहि वातव्याधिचिकित्सिते यत् स्नेहस्वेदादिकं तदवबाहुके कफस्थानसंभवत्वेन कफावृतवातजे विरुद्धं, तत्र हि स्वेदनस्यादिकं विधेयं रूक्षमेव; न तु 'सिराव्यधं कुर्यादन्यत्रावबाहुकात्' इति संबन्धः, यतोंऽसशोषेऽवबाहुके च सिरामोक्षस्य सिराव्यधविधाने चोक्तत्वात् । गृध्रस्यादिषु वातव्याधिचिकित्सिते कृते पश्चाच्छोणितावरणं निश्चित्य सिराव्यधो विधेय इति ॥ २३ ॥

**कर्णशूले तु शृङ्गवेररसं तैलमधुसंसृष्टं सैन्धवोपहितं सुखोष्णं कर्णे दद्यात्, अजामूत्रमधुतैलानि वा, मातुलुङ्गदाडिमतिन्तिडीकस्वरसमूत्रसिद्धं तैलं, शुक्तसुरातक्रमूत्रलवणसिद्धं वा; नाडीस्वेदैश्च स्वेदयेत्, वातव्याधिचिकित्सां चावेक्षेत; भूयश्चोत्तरे वक्ष्यामः ॥ २४ ॥**

कर्णशूलचिकित्सामाह—कर्णशूल इत्यादि । शृङ्गवेररसम् आर्द्रकरसम् । शुक्तं चुक्रम् । नाडीत्यादि नलादिशुषिरनाडीस्वेदः । वातव्याधिचिकित्सां चेति चकारेण पित्तरक्तावरणे तु वातरक्तचिकित्सितमनुक्तं समुच्चिनोति । भूयश्चेत्यादि । कर्णरोगे- उत्तरतन्त्रे पुनरपि वदिष्यामः ॥ २४ ॥

**तूनीप्रतून्योः स्नेहलवणमुष्णोदकेन पाययेत्, पिप्पल्यादिचूर्णं वा, हिङ्गुयवक्षारप्रगाढं वा सर्पिः, बस्तिभिश्चैनमुपक्रमेत् ॥ २५ ॥**

१ 'जिह्वागतवातरोगेषु' इति पा० ।

तूनीप्रतूनीचिकित्सामाह—तूनीत्यादि । सामान्यबस्तिग्रहणात्रिविधबस्त्यवबोधः ॥ २५ ॥

**आध्माने त्वपतर्पणपाणितापफलवर्तिक्रियापाचनीयदीपनीयबस्तिभिरुपाचरेत्; लङ्घनानन्तरं चान्नकाले धान्यकजीरकादिदीपनसिद्धान्यन्नानि । प्रत्याध्माने छर्दनापतर्पणदीपनानि कुर्यात् ॥ २६ ॥**

आध्मानचिकित्सामाह—आध्मान इत्यादि । पाचनीयानि पञ्चकोलादीनि । प्रत्याध्मानचिकित्सामाह—प्रत्याध्मान इत्यादि ॥ २६ ॥

**अष्ठीलाप्रत्यष्ठीलयोर्गुल्माभ्यन्तरविद्रधिवत् क्रियाविभाग इति ॥ २७ ॥**

अष्ठीलाचिकित्सामाह—अष्ठीलेत्यादि ॥ २७ ॥

**हिङ्गुत्रिकटुवचाजमोदाधान्याजगन्धादाडिमतिन्तिडीकपाठाचित्रकयवक्षारसैन्धवविडसौवर्चलस्वर्जिकापिप्पलीमूलाम्लवेतसशटीपुष्करमूलहपुषाचव्याजाजीपथ्याश्चूर्णयित्वा मातुलुङ्गाम्लेन बहुशः परिभाव्याक्षमात्रा गुटिकाः कारयेत्, ततः प्रातरेकैकां वातविकारी भक्षयेत्, एष योगः कासश्वासगुल्मोदरारोचकहृद्रोगाध्मानपार्श्वोदरबस्तिशूलानाहमूत्रकृच्छ्रप्लीहार्शस्तूनीप्रतूनीरपहन्ति २८**

हिङ्ग्वादिमुत्पादयति—हिङ्ग्वित्यादिना । अजगन्धा 'बोबयिका' इति; **गयी** तु 'अजगन्धा क्षेत्रयवानी' इत्याह । मातुलुङ्गाम्लः बीजपूररसः । एतच्चूर्णं गुटिका च, परतन्त्रप्रत्ययात्; हिङ्ग्वादिगुटिका वातगुल्मिनां कृते द्विगुणक्षारहिङ्ग्वम्लवेतसाः कार्याः, उक्तं च—"यच्चूर्णं गुटिका याश्च कर्तव्या वातगुल्मिनाम् । द्विगुणक्षारहिङ्ग्वम्लवेतसास्ता हिता" इति ॥२८॥

**भवन्ति चात्र—**

**केवलो दोषयुक्तो वा धातुभिर्वाऽऽवृतोऽनिलः ॥**
**विज्ञेयो लक्षणोहाभ्यां चिकित्स्यश्चाविरोधतः २९**

शुद्धवातचिकित्सामभिधाय संसृष्टावृतस्य चिकित्सामाह—भवन्तीत्यादि । केवलो दोषाद्यसंसृष्टः । अत्र हि संयुक्तस्यैव चिकित्साविधिरुच्यते न तु केवलस्य, उक्तत्वात् 'अविरोधतः' इति वचनाच्च; न हि केवलस्य वायोश्चिकित्सायां विरोधोऽस्ति, एकमुख्यत्वात् । दोषैर्वातपित्तकफैर्युक्तो दोषयुक्तः; अनेन संयोगमात्रमभिहितं, नावरकत्वम् । धातवो रसरक्तमांसमेदोमज्जशुक्राणि स्वेदविण्मूत्राणि वातपित्तकफाश्चोच्यन्ते, तेषामपि शरीरधारकत्वात्; तैरावृतः । तस्य द्विविधस्यापि विज्ञानोपायं दर्शयन्नाह—लक्षणोहाभ्यामिति ।—वातस्य लक्षणं तोदादिकं कृष्णारुणत्वं कम्पादिकं च; पित्तस्य चोषादिपीतादिदाहादिकं; कफस्य कण्ड्वादिशुक्लादिप्रसेकादिकम् । ऊहः पुनरश्रुतस्य परिकल्पना । ननु, पित्तकफाभ्यां धातुभिश्चामूत्रैरावरणं युज्यते, कथं वातेनेत्याह—प्राणादीनां पञ्चानां वायूनां परस्परमावार्यावरकभेदेन विंशतिरावरणानि **चरकाचार्येणो**क्तानि । तथा च—"मारुतानां तु पञ्चानामन्योन्यावरणं शृणु । लिङ्गं व्याससमासाभ्यामुच्यमानं मयाऽनघ ॥ प्राणो वृणोत्युदानाद्यान् प्राणं वृण्वन्ति तेऽपि च । उदानाद्यास्तथाऽन्योन्यं सर्वे एव यथाक्रमम् ॥ विंशत्यावरणान्येतान्युल्बणानां परस्परम् । मारुतानां तु पञ्चानां तानि सम्यक् प्रतर्कयेत्" ( च. चि. अ. २८ ) इति; **गयदासे**नाप्युक्तं—"अष्टावाद्ये द्वितीये षट् तृतीये च चतुष्टयम् । द्वे चतुर्थेऽनिलेऽप्येवं पञ्चधाऽऽवृतिविंशतिः"—इति । आवरणेषु वातानां प्राणोदानयोरेव गुरुतरमावरणं द्रष्टव्यं, धात्वावरणेषु मेदोवृतवातस्य । तत्रोर्ध्वं गच्छन्नुदानः प्राणो वाऽपानस्याधोगामिनो गतिनिरोधं कुर्वन्नावरक इत्युच्यते; अथवा द्वयोर्मारुतयोरभिमुखमभिसर्पतोर्बलवता दुर्बलोऽभिभूतः प्रत्यावृत्तः सन् 'आवृतः' इत्युच्यते ॥ २९ ॥

**रुजावन्तं घनं शीतं शोफं मेदोयुतोऽनिलः ॥**
**करोति यस्य तं वैद्यः शोथवत् समुपाचरेत् ॥ ३० ॥**

मेदोवृतवातस्य लक्षणं चिकित्सितं च निर्दिशन्नाह—रुजावन्तमित्यादि । शोफमिति अपक्वशोफम् ॥ ३० ॥

**कफमेदोवृतो वायुर्यदोरू प्रतिपद्यते ॥**
**तदाऽङ्गमर्दस्तैमित्यरोमहर्षरुजाज्वरैः ॥ ३१ ॥**
**निद्रया चार्दितौ स्तब्धौ शीतलावप्रचेतनौ ॥**
**गुरुकावस्थिरावूरू न स्वाविव च मन्यते ॥ ३२ ॥**
**तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥**

मेदोवृतवातप्रसङ्गेन स्थानविशेषाश्रयं कफमेदोवृतं वातं निर्दिशन्नाह—कफेत्यादि । अस्थिरौ अकठिनौ । न स्वाविव च मन्यते अन्यस्येव मन्यते, स्पर्शाज्ञानात् परकीयाविव ॥ ३१—३२ ॥—

**स्नेहवर्जं पिबेत्तत्र चूर्णं षड्धरणं नरः ॥ ३३ ॥**
**हितमुष्णाम्बुना तद्वत् पिप्पल्यादिगणैः कृतम् ॥**
**लिह्याद्वा त्रैफलं चूर्णं क्षौद्रेण कटुकान्वितम् ॥३४॥**
**मूत्रैर्वा गुग्गुलं श्रेष्ठं पिबेद्वाऽपि शिलाजतु ॥**
**ततो हन्ति कफाक्रान्तं समेदस्कं प्रभञ्जनम् ॥ ३५ ॥**
**हृद्रोगमरुचिं गुल्मं तथाऽभ्यन्तरविद्रधिम् ॥**

तस्य चिकित्सामाह—स्नेहेत्यादि । स्नेहवर्जं चतुःस्नेहरहितं, कफमेदसोरतिरूक्षणीयत्वात्; अन्यदपि क्षीरमांसवर्जं स्निग्धं वर्जनीयमेव । पिप्पल्यादिगणैः कृतं 'चूर्णम्' इति शेषः । प्रभञ्जनं वातमित्यर्थः ॥ ३३—३५ ॥—

**सक्षारमूत्रस्वेदांश्च रूक्षाण्युत्सादनानि च ॥ ३६ ॥**
**कुर्याद्दिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः ॥**

१ 'दीपनचूर्ण' इति हस्तलिखितपुस्तके न पठ्यते ।

१ '°शैथिल्य°' इति पा० । २ 'स्निग्धौ' इति पा० ।

अभ्यन्तरचिकित्सामुपदिश्य बहिराश्रयामुपदिशति—सक्षारेत्यादि । उत्सादनानि उद्वर्तनानि सयवक्षारगोमूत्राणि । दिह्यात् लेपयेत्, करञ्जफलश्वेतसर्षपैर्गोमूत्रपिष्टैरुष्णैः ॥ ३६ ॥—

**भोज्याः पुराणश्यामाककोद्रवोद्दालशालयः ॥ ३७ ॥**
**शुष्कमूलकयूषेण पटोलस्य रसेन वा ॥**
**जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितैः ॥ ३८ ॥**

उद्दाल आरण्यकोद्रवः । अघृतैर्घृतरहितैः । सर्षपतैलं पुनरुष्णत्वात् कफमेदोहरत्वाच्च देयमपीति न प्रतिषिद्धं न विहितं च । अलवणैर्लवणरहितैः शाकैः; तदर्थं तु यवक्षारादिक्षाराणां रौक्ष्येण कफमेदोहरत्वादवचारणम् ॥ ३७ ॥ ३८ ॥

**यदा स्यातां परिक्षीणे भूयिष्ठे कफमेदसी ॥**
**तदा स्नेहादिकं कर्म पुनरत्रावचारयेत् ॥ ३९ ॥**

अवस्थायां स्नेहावचारणस्य प्रतिप्रसवं निर्दिशन्नाह—यदेत्यादि । परिक्षीणे सर्वतः क्षीणे ॥ ३९ ॥

**सुगन्धिः सुलघुः सूक्ष्मस्तीक्ष्णोष्णः कटुको रसे ॥**
**कटुपाकः सरो हृद्यो गुग्गुलुः स्निग्धपिच्छिलः ४०**
**स नवो बृंहणो वृष्यः पुराणस्त्वपकर्षणः ॥**
**तैक्ष्ण्यौष्ण्यात्कफवातघ्नः सरत्वान्मलपित्तनुत् ४१**
**सौगन्ध्यात् पूतिकोष्ठघ्नः सौक्ष्म्याच्चानलदीपनः ॥**
**तं प्रातस्त्रिफलादार्वीपटोलकुशवारिभिः ॥ ४२ ॥**
**पिबेदावाप्य वा मूत्रैः क्षारैरुष्णोदकेन वा ॥**
**जीर्णे यूषरसैः क्षीरैर्भुञ्जानो हन्ति मासतः ॥ ४३ ॥**
**गुल्मं मेहमुदावर्तमुदरं सभगन्दरम् ॥**
**क्रिमिकण्डूरुचिश्वित्राण्यर्बुदं ग्रन्थिमेव च ॥ ४४ ॥**
**नाड्याढ्यवातश्वयथून् कुष्ठदुष्टव्रणांश्च सः ॥**
**कोष्ठसन्ध्यस्थिगं वायुं वृक्षमिन्द्राशनिर्यथा ॥ ४५ ॥**

इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने
महावातव्याधिचिकित्सितं नाम
पञ्चमोऽध्यायः ॥ ५ ॥

अस्मादनन्तरमूरुस्तम्भस्योपयोगार्हत्वाद्गुग्गुलुकल्पमाह—सुगन्धिरित्यादि । सूक्ष्ममार्गावगाहित्वात् सूक्ष्मः । अत्र त्रिफलादार्वीपटोलैः त्रिभिर्द्रव्यैरेको योगः, कुशेनेति द्वितीयः । वारिशब्दोऽत्र क्वाथे वर्तते, तर्हि द्विवचनमेव कथं न दत्तं? सत्यं, बहुवचनाच्चतुर्भिरपि द्रव्यैरन्यो योगो मन्तव्य इति । क्षारैरिति क्षारोदकैः; 'क्षीरैः' इत्यन्ये पठन्ति । पानं भोजनं च वातपित्तकफरोगापेक्षया प्रकृत्यपेक्षया सात्म्यापेक्षया वा । सुगन्धिरित्यादि पाठं **जेज्जटाचार्यो**ऽनार्षं वर्णयति, **गयदासेन** व्याख्यातत्वान्मयाऽपि व्याख्यातः ॥ ४०—४५ ॥

इति श्रीडल्हण(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने पञ्चमोऽध्यायः ॥ ५ ॥

१ 'मारुतम्' इति पा० ।

## षष्ठोऽध्यायः ।

**अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**चतुर्विधोऽर्शसां साधनोपायः । तद्यथा—भेषजं क्षारोऽग्निः शस्त्रमिति । तत्र, अचिरकालजातान्यल्पदोषलिङ्गोपद्रवाणि भेषजसाध्यानि, मृदुप्रसृतावगाढान्युच्छ्रितानि क्षारेण, कर्कशस्थिरपृथुकठिनान्यग्निना, तनुमूलान्युच्छ्रितानि क्लेदवन्ति च शस्त्रेण । तत्र भेषजसाध्यानामर्शसामदृश्यानां च भेषजं भवति, क्षाराग्निशस्त्रसाध्यानां तु विधानमुच्यमानमुपधारय ॥ ३ ॥**

तत्रेत्यादि । अचिरकालजानि अवत्सराणि । स्थिराणि अविसर्पीणि । पृथूनि विशालानि । कठिनानि अकोमलानि ॥ १—३ ॥

**तत्र बलवन्तमातुरमर्शोभिरुपद्रुतमुपस्निग्धं परिस्विन्नमनिलवेदनाभिवृद्धिप्रशमार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तमुपवेश्य संवृ(भृ)ते शुचौ देशे साधारणे व्यभ्रे काले समे फलके शय्यायां वा प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्वकायमुत्तानं किञ्चिदुन्नतकटिकं वस्त्रकम्बलकोपविष्टं[1] यन्त्रणशाटकेन परिक्षिप्तग्रीवासक्थि परिकर्मिभिः सुपरिगृहीतमस्पन्दनशरीरं कृत्वा ततोऽस्मै घृताभ्यक्तगुदाय घृताभ्यक्तं यन्त्रमृज्वनुमुखं पायौ शनैः शनैः प्रवाहमाणस्य प्रणिधाय, प्रविष्टे चार्शो वीक्ष्य, शलाकयोत्पीड्य, पिचुवस्त्रयोरन्यतरेण प्रमृज्य, क्षारं पातयेत्; पातयित्वा च पाणिना यन्त्रद्वारं पिधाय वाक्शतमात्रमुपेक्षेत, ततः प्रमृज्य क्षारबलं व्याधिबलं चावेक्ष्य पुनरालेपयेत्, अथार्शः पक्वजाम्बवप्रतीकाशमवसन्नमीषन्नतमभिसमीक्ष्योपावर्तयेत्, क्षारं प्रक्षालयेद्धान्याम्लेन दधिमस्तुशुक्तफलाम्लैर्वा, ततो यष्टीमधुकमिश्रेण सर्पिषा निर्वाप्य यन्त्रमपनीयोत्थाप्यातुरमुष्णोदकोपविष्टं शीताभिरद्भिः परिषिञ्चेत्, अशीताभिरित्येके, ततो निर्वातमागारं प्रवेश्याचारिकमादिशेत्; सावशेषं पुनर्दहेत्; एवं सप्तरात्रात् सप्तरात्रादेकैकमुपक्रमेत; तत्र बहुषु पूर्वं दक्षिणं साधयेत्, दक्षिणाद्वामं, वामात् पृष्ठजं, ततोऽग्रजमिति ॥ ४ ॥**

तत्रेत्यादि । बलवन्तमिति आतुरोपक्रमे कृतमपि बलग्रहणं पुनरिह कृतम्; अन्वर्थत्वे ह्यनर्थनिवृत्त्यर्थमुक्तमप्युच्यते, यथैव हि व्यसनसङ्कटे पथि शनैः शनैरहिरहिरिति; मनोबलस्य सत्त्वस्य प्राप्त्यर्थमित्यन्ये, उपचयलक्षणस्य बलस्य प्राप्त्यर्थमित्यपरे; अपरे त्वेवं वदन्ति—ननु, अर्शोव्याध्युपद्रुतस्य कथं

१ 'वस्त्रचुम्भलकोपविष्टं' इति पा० ।

बलवत्त्वं स्यात्? अत्रोच्यते, बलवानत्र वृद्धत्वरहितो नात्यन्तहीनप्राणः सत्त्वभूयिष्ठो वा । अर्शोव्याधौ "अभुक्तवतः कर्म कुर्वीत" ( सू. अ. ५ ) इति सूत्रस्थाने प्रोक्तं, तदत्र कथं स्निग्धं द्रवप्रायमन्नं भुक्तवन्तमित्याद्युक्तं? भुक्तवतो हि कर्मणि क्रियमाणे हिक्काश्वासादय उत्पद्येरन्निति वृद्धवैद्याः; तत्रैके द्वित्रिचतुःपञ्चदिनानि पूर्वाणि स्निग्धादिभोजनं न तु तदहरित्याहुः; अन्ये तु तदहरेव स्निग्धाल्पभोजनानन्तरमर्शःकर्मेत्याहुः, "प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदातुरं भिषक्" ( सू. अ. १७ ) इति प्रागेवोक्तत्वात्; यत् पुनः "अभुक्तवतः कर्म" इत्युक्तं सूत्रस्थाने, तन्मुखाश्रितानामर्शसां कर्मणि भोजनप्रतिषेधार्थमिति । साधारणे काले नातिशीतोष्णे । फलके काष्ठफलके । वस्त्रकम्बलकोपविष्टमिति[1] वसनोन्दुकनिविष्टम् । परिकर्मिणः सर्वकर्मणां कर्तारः परिचारकाः । क्षारं पातयेदत्र तन्त्रान्तरदृष्ट्या त्रिविधामपि क्षारमात्रामाह—"क्षारमात्रा नखोत्सेधप्रमाणाऽऽद्या प्रकीर्तिता । द्विगुणा मध्यमा मात्रा त्रिगुणा महती मता ॥ पित्ते श्लेष्मणि वाते च यथासंख्यं प्रयोजयेत्"—इति । यन्त्रमुखपिधानं दाहशक्त्युत्कर्षार्थम् । तीक्ष्णौषधशक्तिकृतं क्षारबलं, व्याधिबलमवगाढोत्तानादिभेदेन । अत्र सर्वमप्यर्शः क्षारेण सम्यग्दग्धं पक्वजाम्बवप्रतीकाशमिति सामान्यलक्षणमुक्तं; तन्त्रान्तरीयास्तु पृथक्; तथाहि—"पक्वजाम्बवकाश्मर्यवर्णं दग्धेऽनिलार्शसि । पित्तजे भृङ्गमायूरकण्ठवर्णं विनिर्दिशेत् ॥ बृहतीपुष्पवर्णत्वं सम्यग्दग्धे कफार्शसि"—इति । धान्याम्लं काञ्जिकं, शुक्तं चुक्रं, फलाम्लो बीजपूररसः । तत इत्यादि । उष्णोदकोपविष्टमिति कफवातानुबन्धे उष्णोदकावगाहः, केवलयोस्तु रक्तपित्तयोः शीतोदकावगाहः ॥ ४ ॥

**तत्र वातश्लेष्मनिमित्तान्यग्निक्षाराभ्यां साधयेत्, क्षारेणैव मृदुना पित्तरक्तनिमित्तानि ॥ ५ ॥**

**तत्र वातानुलोम्यमन्नरुचिरग्निदीप्तिर्लाघवं बलवर्णोत्पत्तिर्मनस्तुष्टिरिति सम्यग्दग्धलिङ्गानि, अतिदग्धे तु गुदावदरणं दाहो मूर्च्छा ज्वरः पिपासा शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवा भवन्ति, ध्यामाल्पव्रणता कण्डूरनिलवैगुण्यमिन्द्रियाणामप्रसादो विकारस्य चाशान्तिर्हीनदग्धे ॥ ६ ॥**

तन्निमित्ताः शोणितस्रावनिमित्ताः । ध्यामः कृष्णश्यामः ॥ ५ ॥ ६ ॥

**महान्ति च प्राणवतश्छित्त्वा दहेत्, निर्गतानि चात्यर्थं दोषपूर्णानि यन्त्राद्विना स्वेदाभ्यङ्गस्नेहावगाहोपनाहविस्रावणालेपक्षाराग्निशस्त्रैरुपाचरेत्; प्रवृत्तरक्तानि च रक्तपित्तविधानेन, भिन्नपुरीषाणि चातीसारविधानेन, बद्धवर्चांसि स्नेहपानविधानेनोदावर्तविधानेन वा; एष सर्वस्थानगतानामर्शसां दहनकल्पः ॥ ७ ॥**

1 'वस्त्रचुम्भलकोपविष्टमिति' इति पा० ।

महान्तीत्यादि । दाहः पुनरग्निकृतः, क्षारदाहस्योक्तत्वात् । दोषपूर्णानीति दोषैर्वातपित्तकफरक्तैः पूरितानि । एष इत्यादि । अत्र सर्वशब्देन मेढ्रादिस्थानगतानामर्शसामवरोधः । दहनग्रहणमत्रोपलक्षणं, तेन स्नेहादि शस्त्रं चानुक्तमुपलक्षयेत् ॥ ७ ॥

**आसाद्य च दर्वीकूर्चकशलाकानामन्यतमेन क्षारं पातयेत् । भ्रष्टगुदस्य तु विना यन्त्रेण क्षारादिकर्म प्रयुञ्जीत । सर्वेषु च शालिषष्टिकयवगोधूमान्नं सर्पिःस्निग्धमुपसेवेत पयसा निम्बयूषेण पटोलयूषेण वा, यथादोषं शाकैर्वास्तूकतण्डुलीयकजीवन्त्युपोदिकाश्वबलाबालमूलकपालङ्क्यसनचिल्लीचुच्चूकलायवल्लीभिरन्यैर्वा । यच्चान्यदपि स्निग्धमग्निदीपनमर्शोघ्नं सृष्टमूत्रपुरीषं च तदुपसेवेत ॥ ८ ॥**

आसाद्येत्यादि । गोधूमस्य गुरुत्वेऽपि पूयवृद्ध्यर्थं क्षारव्रणक्लेदनार्थं चोपयोगः; तत उक्तं—"गोधूमान्नं सर्पिःस्निग्धमुपसेवेत" इति । वास्तुकः टङ्कवास्तुकः, जीवन्ती डोडिका, अश्वबला हिस्फीरथो मेथिकाभेदः, चिल्ली क्षेत्रवास्तुकः, चुचुः 'चुचु'रिति लोके । अनुक्तमप्यन्नपानौषधद्रव्यं निर्दिशन्नाह—यदित्यादि । सृष्टमूत्रपुरीषं चेति सृष्टं विण्मूत्रं येनेति, अर्शःकृतमार्गावरोधकुपितवातविबद्धस्य मूत्रस्य पुरीषस्य च विसर्गकरम् । चेति चकारेण तन्त्रोदितमन्यदपि पलाण्ड्वादि समुच्चीयते[1] ॥ ८ ॥

**दग्धेषु चार्शःस्वभ्यक्तोऽनलसन्धुक्षणार्थमनिलप्रकोपसंरक्षणार्थं च स्नेहादीनां सामान्यतः क्रियापथमुपसेवेत । विशेषतस्तु वातार्शःसु सर्पींषि च वातहरदीपनीयसिद्धानि हिङ्ग्वादिभिश्चूर्णैः प्रतिसंसृज्य पिबेत्, पित्तार्शःसु पृथक्पर्ण्यादीनां कषायेण दीपनीयप्रतीवापं सर्पिः, शोणितार्शःसु मञ्जिष्ठामुरुङ्ग्यादीनां कषाये पाचयेत्, श्लेष्मार्शःसु सुरसादीनां कषाये । उपद्रवांश्च यथास्वमुपाचरेत् ॥ ९ ॥**

दग्धेष्वित्यादि । चेति चकारेणादग्धेष्वपि विधिरयम् । सामान्यतः सामान्येन सर्वार्शोघ्नविधिना, विशेषतस्तु वाताद्यर्शसां दहनविधिना दग्धेषु विधिः; तमेव विशेषं निर्दिशन्नाह—सर्पींषीत्यादि । सर्पींषि च वातहरदीपनीयसिद्धानीत्यत्र वातहराणि भद्रदार्वादीनि, दीपनीयानि पिप्पल्यादीनि[2] । अत्र च क्वाथकल्कविधिः सामान्यकषायकल्कविधिना । तत्र सिद्धे घृते वातव्याधिपठितं हिङ्ग्वादिचूर्णमावाप्य योज्यम्, उत्तरेषु त्रिष्वपि पिप्पल्यादिकल्कमामनन्ति वृद्धाः । पित्तेत्यादि । पृथक्पर्ण्यादयो रोपणघृतसाधनमिश्रकोक्ताः । मुरुङ्गी मधुशिग्रुः, तदादिर्मुरङ्ग्यादिः; मुरुङ्ग्यादिर्वरुणाद्यन्तर्गणः "मधुशिग्रुस्तर्कारी

1 'चकारेण रक्तजेष्वन्येषु' इति पा० । 2 'भद्रदार्वादिपिप्पल्यादिसर्पिश्च' इति पा० ।

मेषशृङ्गी" ( सू. अ. ३८ ) इत्यादिकः । कषाय इति सिद्धं सर्पिरित्यत्रापि संबध्यते । श्लेष्मार्शःस्वित्यादि । श्लेष्मार्शःसु सुरसादीनां कषाये सिद्धं सर्पिरित्यत्रापि संबध्यते । सुरसादिः "सुरसा श्वेतसुरसा" ( सू. अ. ३८ ) इत्यादिः । उपद्रवचिकित्सासूत्रमुपदर्शयन्नाह—उपद्रवानित्यादि । ये चोपद्रवा गुल्मादयो ज्वरादयश्च तानात्मीयेनौषधेन प्रतिकुर्यात् ॥ ९ ॥

**परं च यत्नमास्थाय गुदे क्षाराग्निशस्त्राण्यवचारयेत्, तद्विभ्रमाद्धि षाण्ढ्यशोफदाहमदमूर्च्छाटोपानाहातीसारप्रवाहणानि भवन्ति मरणं वा ॥ १० ॥**

इदानीं क्षारादीनामतितीक्ष्णत्वादियोगात्तेषां दुर्योगे बहुतरानर्थकरत्वात् सुयोगैकहेतुं निर्दिशन्नाह—परं चेत्यादि । परम् उत्तमम् ॥ १० ॥

**अत ऊर्ध्वं यन्त्रप्रमाणमुपदेक्ष्यामः—तत्र यन्त्रं लौहं दान्तं शार्ङ्गं वार्क्षं वा गोस्तनाकारं चतुरङ्गुलायतं पञ्चाङ्गुलपरिणाहं पुंसां, षडङ्गुलपरिणाहं नारीणां तलायतं; तद् द्विच्छिद्रं दर्शनार्थम्, एकच्छिद्रं तु कर्मणि; एकद्वारे हि शस्त्रक्षाराग्नीनामतिक्रमो न भवति; छिद्रप्रमाणं तु त्र्यङ्गुलायतमङ्गुष्ठोदरपरिणाहं, यदङ्गुलमवशिष्टं तस्यार्धाङ्गुलादधस्तादर्धाङ्गुलोच्छ्रितोपरिवृत्तकर्णिकम्; एष यन्त्राकृतिसमासः ॥ ११ ॥**

अत इत्यादि । लौहं सुवर्णरूप्यादिलोहमयम् । दान्तं हस्त्यादिदन्तमयम् । शार्ङ्गं महिषादिशृङ्गमयम् । वार्क्षं वृक्षमयं; वृक्षाः सारवृक्षाः शिंशपादयः । आयतं दीर्घम् । परिणाहो वर्तुलता । तलायतमिति तलं स्वहस्ततलम् । केचिदत्र स्त्रियाः पृथग्यन्त्राभिधानग्रन्थमपठित्वा स्त्रीपुंसयोस्तुल्यमेव यन्त्रमित्याहुः । अन्ये 'तलायतं' इत्यत्र 'तदायतं' इति पठित्वा व्याख्यानयन्ति—स्त्रीपुंसयोर्यन्त्रवर्तुलत्वे भेदः, दैर्घ्ये तु तदायतं पुरुषयन्त्रायतमित्यर्थः । अर्धाङ्गुलोच्छ्रितोपरिवृत्तकर्णिकमिति अर्धाङ्गुलोच्छ्राये उपरि वृत्ता कर्णिका यस्येत्यर्थः । 'अपवृत्तकर्णिकं' इति केचित् पठन्ति, अपकृष्टा वृत्तकर्णिका यस्येति; तत्राप्युत्तरपदलोपेन समासः, अर्थोऽपि स एव । यन्त्राकृतिसमास इति यन्त्राकारसंक्षेप इत्यर्थः; विस्तरस्तु नानास्थानस्थितार्शःस्रोतःप्रमाणाकाराभ्यां द्रव्याकारप्रमाणच्छिद्रैरेवेति ॥ ११ ॥

१ 'स्वयौगिकहेतुं' इति पा० । २ सुश्रुतोक्तस्यार्शोयन्त्रस्य संप्रति पाश्चात्त्यैर्व्यवह्रियमाणेन 'रेक्टल् स्पेक्युलम् ( Rectal Speculum )' इत्याख्येन यन्त्रेण सह सादृश्यमुपलभ्यते । तस्येयं प्रतिकृतिः—

अर्शोयन्त्रम् ।



**अत ऊर्ध्वमर्शसामालेपान् वक्ष्यामः—स्नुहीक्षीरयुक्तं हरिद्राचूर्णमालेपः प्रथमः, कुक्कुटपुरीषगुञ्जाहरिद्रापिप्पलीचूर्णमिति गोमूत्रपित्तपिष्टो द्वितीयः, दन्तीचित्रकसुवर्चिकालाङ्गलीकल्को वा गोपित्तपिष्टस्तृतीयः, पिप्पलीसैन्धवकुष्ठशिरीषफलकल्कः स्नुहीक्षीरपिष्टोऽर्कक्षीरपिष्टो वा चतुर्थः, कासीसहरितालसैन्धवाश्वमारकविडङ्गपूतीककृतवेधनजम्ब्वर्कोत्तमारणीदन्तीचित्रकालर्कस्नुहीपयःसु तैलं विपक्वमभ्यञ्जनेनार्शः शातयति ॥ १२ ॥**

आलेपयोगेषु प्रथमादिवचनं प्रत्येकमेव योगानां महाबलत्वसूचनार्थम्, उत्तरोत्तरबलीयस्त्वेन प्रयोगकालावधारणार्थमित्यन्ये । गोमूत्रपित्तपिष्टो गोमूत्रगोपित्ताभ्यां पिष्टः । कृतवेधनः कोशातकी । जम्बूः भूमिजम्बूः । उत्तमारणी योधामल्ली । अर्कोऽर्कक्षीरम् । अलर्कः मन्दारः ॥ १२ ॥

**अत ऊर्ध्वं भेषजसाध्येष्वदृश्येष्वर्शःसु योगान् यापनार्थं वक्ष्यामः—प्रातः प्रातर्गुडहरीतकीमासेवेत, ब्रह्मचारी गोमूत्रद्रोणसिद्धं वा हरीतकीशतं प्रातः प्रातर्यथाबलं क्षौद्रेण, अपामार्गमूलं वा तण्डुलोदकेन सक्षौद्रमहरहः, शतावरीमूलकल्कं वा क्षीरेण, चित्रकचूर्णयुक्तं वा सीधुं पराध्यं, भल्लातचूर्णयुक्तं वा सक्तुमन्थमलवणं तक्रेण, कलशे वाऽन्तश्चित्रकमूलकल्कावलिप्ते निषिक्तं तक्रमम्लमनम्लं वा पानभोजनेषूपयुञ्जीत, एष एव भार्ग्यास्फोतायवान्यामलकगुडूचीषु तक्रकल्पः, पिप्पलीपिप्पलीमूलचव्यचित्रकविडङ्गशुण्ठीहरीतकीषु च पूर्ववदेव, निरन्नो वा तक्रमहरहर्मासमुपसेवेत, शृङ्गवेरपुनर्नवाचित्रककषायसिद्धं वा पयः, कुटजमूलत्वक्फाणितं वा पिप्पल्यादिप्रतीवापं क्षौद्रेण, महावातव्याध्युक्तं हिङ्ग्वादिचूर्णमुपसेवेत तक्राहारः क्षीराहारो वा, क्षारलवणांश्चित्रकमूलक्षारोदकसिद्धान् वा कुल्माषान् भक्षयेत्, चित्रकमूलक्षारोदकसिद्धं वा पयः पलाशतरुक्षारसिद्धं वा, पलाशतरुक्षारसिद्धान् वा कुल्माषान्, पाटलापामार्गबृहतीपलाशक्षारं वा परिस्रुतमहरहर्घृतसंसृष्टं, कुटजवन्दाकमूलकल्कं वा तक्रेण, चित्रकपूतीकनागरकल्कं वा पूतीकक्षारेण, क्षारोदकसिद्धं वा सर्पिः पिप्पल्यादिप्रतीवापं, कृष्णतिलप्रसृतं प्रकुञ्चं वा प्रातः प्रातरुपसेवेत शीतोदकानुपानम्; एभिरभिवर्धतेऽग्निरर्शांसि चोपशाम्यन्ति ॥ १३ ॥**

१ 'गोधामली' इति पा० । २ 'ऊर्ध्वमदृश्येष्वर्शःसु' इति पा० ।

अत इत्यादि । हरीतक्यादियुतो गुडोऽप्यग्निदीपनः, संयोगशक्तित्वात् । उक्तं च—"गुडः कर्ताऽग्निसादस्य, सह न त्वभयादिभिः[1] । कुष्ठं तत्कार्यपि तिलो हन्ति भल्लातकैः सह" इति । भल्लातकचूर्णयुक्तं चेत्यादियोगं यावदासेवेतेति क्रियाऽपि संबध्यते । ब्रह्मचारीत्यादि । गोमूत्रहरीतकी गाढविट्कस्य मन्दाग्नेः । ब्रह्मचर्यं योगस्य रौक्ष्यात् । अपामार्गमूलयोगः पित्तरक्तार्शसि, **गयदासस्तु** कफानुबद्धरक्तजेषु । शतावरीमूलकल्कं वातपित्तानुबद्धरक्तजेषु । चित्रकेत्यादि । सीधुं शस्यकं, परार्ध्यं श्रेष्ठम् । चूर्णं कर्षप्रमाणम् । एतच्च कफमन्दाग्नौ बद्धपुरीषे वा । भल्लातकेत्यादि । भल्लातकचूर्णं षडङ्गादिवदाहरत्वेन कर्षमात्रं, भल्लातकचूर्णाद्यवसक्तवस्तु षोडशगुणा एव, तक्रप्रमाणं पुनरत्र यावता नात्यच्छं नातिसान्द्रं चेति । **जेज्जटाचार्यः** पुनरत्र चतुर्थांशं भल्लातकचूर्णमिच्छति; तन्नेच्छति **गयी** । तक्रप्रसङ्गेनापरार्शोहरतक्रप्रयोगं निर्दिशन्नाह—कलशे इत्यादि । आस्फोता सारिवा । पिप्पलीत्यादि । निरन्नः अन्नवर्जम् । एते च तक्रप्रयोगाः कफवातजेषु शुष्कार्शःसु । शुष्कार्शसां वातकफजानामन्नपाने तक्रं निर्दिश्य, आर्द्राणां रक्तपित्तजानामन्नपाने गोरसमेव निर्दिशन्नाह—शृङ्गवेरेत्यादि । औषधशृतक्षीरपानपक्षे "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः(षं) कर्तव्यः क्षीरपाके त्वयं विधिः"—इति न्यायेन, तृष्णापनयनपानपक्षे तु षडङ्गकल्पनया कर्षमात्रेणैव । 'शृङ्गवेरादिसिद्धं पयः' इत्यन्ये पठन्ति; तत्र पिप्पल्याद्यन्तर्गतः शृङ्गवेरादिः; अथवा प्रकारवाच्यत्रादिशब्दः । अयं योगः कफवातानुबन्धरक्तजेषु । कुटजेत्यादि । कुटजत्वचां शतपलफाणिते पिप्पल्यादिचूर्णं षट्पलं, क्षौद्रप्रमाणं तु प्रयोगकाले यावताऽवलेहः स्यात् । कुटजफाणितं तु कफपित्तानुबद्धरक्तजेषु । हिङ्ग्वित्यादि । हिङ्ग्वादिकं वातकफजेषु, तक्राहारो वातकफानुबद्धरक्तजेषु, वातपित्तानुबन्धजेषु क्षीराहारः । क्षारेत्यादि । कुल्माषा यवौदनः । चित्रकमूलस्यापि षडङ्गोदककल्पेन कषायः । तानेव यवक्षारेण लवणान् लवणीकृतान् । चित्रकेत्यादि । अत्रापि पलाशक्षारप्रमाणस्य तदुदकप्रमाणस्य च षडङ्गोद्देशतः सिद्धिः । पाटलेत्यादि । पाटलादिक्षारपलं त्रिकर्षमर्धपलं वा क्वाथकल्पेन क्वथितमर्धावशेषितं सुपरिस्रुतं सघृतकर्षं पेयं; जीर्णे च तस्मिन् समघृतक्षीरं मधुररसमेवान्नं भोज्यम्, ओजोभ्रंशभयात् । कुटजेत्यादि । कुटजमूलबन्दाकयोः पलं त्रिकर्षमर्धपलं वा तक्रपलद्वयेन । घृतक्षीरमधुररसभोजनश्चित्रकादिकल्कं पूतीकक्षारोदकेन पिबेत् । क्षारोदकसिद्धमिति पूतीकक्षारोदकाढकसिद्धं पाटलाक्षारोदकाढकसिद्धं वा सर्पिः पलप्रमाणं पानकाले पिप्पल्यादिचूर्णपादप्रक्षेपं पेयम् । भोजनमत्रापि सघृतक्षीरमधुररसं, क्षारस्य खरतीक्ष्णत्वात् । एतच्च वातजेषु रूक्षकोष्ठेषु चावसन्नानलेषु ॥ १३ ॥

**द्विपञ्चमूलीदन्तीचित्रकपथ्यानां तुलामाहृत्य जलचतुर्द्रोणे विपाचयेत्, ततः पादावशिष्टं कषायमादाय सुशीतं गुडतुलया सहोन्मिश्र्य घृतभाजने निःक्षिप्य मासमुपेक्षेत यवपल्ले, ततः प्रातः प्रातर्मात्रां पाययेत, तेनार्शोग्रहणीदोषपाण्डुरोगोदावर्तारोचका न भवन्ति दीप्तश्चाग्निर्भवति ॥ १४ ॥**

द्विपञ्चमूलीत्यादि । एषां समभागानां तुलां पलशतम् । अस्मिन्नरिष्टे धातकीपुष्पाणि पलद्वयं त्रयं वाऽनुक्तान्यप्यधिवासनार्थं वृद्धा आमनन्ति । तुलां तुलामित्यन्ये पठन्ति, व्याख्यानयन्ति च—द्विपञ्चमूल्यादीनां च प्रत्येकं तुलां पलशतं; तन्नेच्छति **गयी** । यवपल्ले यवराशावित्यर्थः । तन्त्रान्तरे चास्य 'दन्त्यरिष्ट' इति संज्ञा ॥ १४ ॥

**पिप्पलीमरिचविडङ्गैलवालुकलोध्राणां द्वे द्वे पले, इन्द्रवारुण्याः पञ्च पलानि, कपित्थमध्यस्य दश, पथ्याफलानामर्धप्रस्थः, प्रस्थो धात्रीफलानां, एतदैकध्यं जलचतुर्द्रोणे विपाच्य, पादावशेषं परिस्राव्य, सुशीतं गुडतुलाद्वयेनोन्मिश्र्य, घृतभाजने निःक्षिप्य, पक्षमुपेक्षेत यवपल्ले; ततः प्रातः प्रातर्यथाबलमुपयुञ्जीत । एष खल्वरिष्टः प्लीहाग्निसङ्गार्शोग्रहणीहृत्पाण्डुरोगशोफकुष्ठगुल्मोदरकृमिहरो बलवर्णकरश्चेति ॥ १५ ॥**

पिप्पलीत्यादि । इन्द्रवारुण्याः प्रोक्तेऽपि पलपञ्चके कटुकत्वपरिहारायार्धं क्षिपन्ति वृद्धवैद्याः । **चरके**ऽप्ययं पठ्यतेऽभयारिष्टः ॥ १५ ॥

**तत्र, वातप्रायेषु स्नेहस्वेदवमनविरेचनास्थापनानुवासनमप्रतिषिद्धं, पित्तजेषु विरेचनम्, एवं रक्तजेषु संशमनं, कफजेषु शृङ्गवेरकुलत्थोपयोगः, सर्वदोषहरं यथोक्तं सर्वजेषु, यथास्वौषधिसिद्धं च पयः सर्वेष्विति ॥ १६ ॥**

अचिरोत्पन्नानामल्पदोषलिङ्गानां साधनार्थमदृश्यानां याप्यानां यापनार्थं च स्नेहादिकर्माणि निर्दिशन्नाह—तत्रेत्यादि । तत्रार्शःसु वमनस्य निषिद्धस्यापि कफप्रसेकादिष्ववस्थासु कर्तव्यताप्रसङ्गः । केचिद्वातप्रायेष्वित्यादिकं ग्रन्थमनार्षमित्याचक्षते, **गयदास**व्याख्यातत्वान्मयाऽपि व्याख्यातः । पित्तजेष्वित्यादि । एवमिति विरेचनम् । न वामयति नापि विरेचयति व्याधिना सहैकीभूय तत्स्थमेव व्याधिं शमयेत्तत् संशमनम् ॥ १६ ॥

**अत ऊर्ध्वं भल्लातकविधानमुपदेक्ष्यामः—भल्लातकानि परिपक्कान्यनुपहतान्याहृत्य तत एकमादाय द्विधा त्रिधा चतुर्धा वा छेदयित्वा कषायकल्पेन विपाच्य तस्य कषायस्य शुक्तिमनुष्णां घृताभ्यक्ततालुजिह्वौष्ठः प्रातः प्रातरुपसेवेत, ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहारः; एवमेकैकं वर्धयेद्यावत्**

१ अभयादिभिः सह तु नाग्निसादकारीति सम्बन्धः ।

**पञ्चेति, ततः पञ्च पञ्चाभिवर्धयेद्यावत् सप्ततिरिति, प्राप्य च सप्ततिमपकर्षयेद्भूयः पञ्च पञ्च यावत् पञ्चेति, पञ्चभ्यस्त्वेकैकं यावदेकमिति। एवं भल्लातकसहस्रमुपयुज्य सर्वकुष्ठार्शोभिर्विमुक्तो बलवानरोगः शतायुर्भवति ॥ १७ ॥**

अचिरोत्पन्नानामल्पदोषलिङ्गानां च साधनार्थं चिरजातानामर्शसां यापनार्थं विशिष्टप्रयोगं निर्दिशन्नाह—अत इत्यादि। फलं पर्यागतमिति पूर्वोक्तत्वात् परिपक्वान्येव लब्धानि, भूमिविभागोक्तौषधदोषपरिहारेणानुपहतान्यपि लब्धानि, पुनस्तद्वचनं प्रयोगस्य महाफलत्वेन गौरवोत्पादनार्थम्। कषायस्य शुक्तिमिति अत्रैकापेक्षया शुक्तिमानं, यथा चात्र भल्लातकानां क्वाथ्यानां परिवृद्धिस्तथा क्वाथोदकस्यापि बुद्ध्या वृद्धिः परिकल्पनीया। भल्लातकानि तदस्थीनि पक्वानि तन्त्रान्तरदर्शनाच्छुचौ शुक्रे वा मासि गृहीत्वा यवपल्ले माषपल्ले वा निधाय, मार्गशीर्षे पौषे वा प्रयुञ्जीत। एवमुक्तप्रकारेण सप्ततिं यावदुत्कर्षेण भल्लातकसहस्रं पञ्चत्रिंशता दिवसैः पूर्यते, शतं यावदुत्कर्षेण सहस्रद्वयविधानं स्यात्; तत्राद्यं दिनचतुष्टयं संस्कारमात्रजनकत्वादन्त्यं च भल्लातकसंस्कारापकर्षणत्वान्न वृद्धा भिषजो गणयन्ति, ततः सहस्रद्वयं पूर्यत एव। एवं भल्लातकप्रयोगश्च त्रिविधः। तत्र शतान्तः शरीरबलदोषापेक्षया प्रवरः, सप्तत्यन्तो मध्यमः, त्रिंशदन्तः पुनरधमः प्रयोगः, एवं तन्त्रान्तराद् व्याख्यायते। ग्रीष्मकाले गृहीतान्यापूर्णरसान्यनामयानि भल्लातकास्थीनि यवपल्ले माषपल्ले वा चतुर्मासावस्थितानि हेमन्ते प्रयोक्तुमारभेत; मधुरस्निग्धशीतोपसंसृष्टशरीरः प्रथमं दश भल्लातकानि संक्षुद्याष्टगुणेन सलिलेन क्वाथं कृत्वाऽष्टभागावशेषं सदुग्धं घृतेनान्तर्मुखमभ्यज्य पिबेत्, तान्येकैकशो भल्लातकोत्कर्षेण त्रिंशत्कृत्वा पुनरेकैकमपकर्षयेद्यावद्दशभल्लातकप्रयोगः; नातः परमुत्कर्षः कर्तव्यः। अनेन क्रमेण सहस्रभल्लातकप्रयोगः परं न घटते, यथाऽत्र घटते तथाविधः पारम्पर्योपदेशो व्याख्यायते—त्रिंशद्रात्रौ सप्तरात्रं त्रिंशत्प्रयोगः कर्तव्यः, तत एकैकमपकर्षयेद्यावद्दश, पुनरन्यस्मिन्नपि दिने दशेति, एवं भल्लातकसहस्रमुपयुज्यत इति घटते। सर्वकुष्ठार्शोभिर्विमुक्त इति वचनं न यथार्थवचनं, काकणकस्य कुष्ठस्यादिबलप्रवृत्तानां च कुष्ठानां तथा त्रिदोषजानां चार्शसां सहजानां चासाध्यत्वात्, रक्तपित्तजानामप्यर्शसां भल्लातकाविषयत्वात्। तुवरकभल्लातकयोर्वार्युष्णं निषिद्धं, ततोऽल्पशृतशीतजलं पेयम् ॥ १७ ॥

**द्विव्रणीयोक्तेन विधानेन भल्लातकनिश्च्युतितं स्नेहमादाय प्रातः प्रातः शुक्तिमात्रमुपयुञ्जीत, जीर्णे पूर्ववदाहारः फलप्रकर्षश्च। भल्लातकमज्जभ्यो वा स्नेहमादायापकृष्टदोषः प्रतिसंसृष्टभक्तो निवातमागारं प्रविश्य यथाबलं प्रसृतिं प्रकुञ्चं वोपयुञ्जीत, तस्मिञ्जीर्णे क्षीरं सर्पिरोदन इत्याहारः, एवं मासमुपयुज्य मासत्रयमादिष्टाहारो रक्षेदात्मानं; ततः सर्वोपतापानपहृत्य वर्णवान् बलवाञ् श्रवणग्रहणधारणशक्तिसंपन्नो वर्षशतायुर्भवति, मासे मासे च प्रयोगे वर्षशतं वर्षशतमायुषोऽभिवृद्धिर्भवति, एवं दशमासानुपयुज्य वर्षसहस्रायुर्भवति ॥ १८ ॥**

भल्लातकप्रयोगान्तरं दर्शयति—द्विव्रणीयेत्यादि। प्रतिसंसृष्टभक्त इति यवाग्वादिक्रमभुक्त इत्यर्थः। द्वादशभिरन्नकालैः षड् दिनानि, विरेचनदिवसेन सह सप्त दिनानि च, तदुत्तरं भोजनमष्टमे; तस्यापोहे सप्त, तदा सप्तमे वाऽहनि भोजनं; नवमे पुनरहनि भल्लातकमज्जस्नेहं पिबेत्। यथाबलमिति पुरुषरोगबलानतिक्रमेण प्रसृतिं प्रकुञ्चं वाऽष्टभागमधुयुक्तं द्विगुणघृतं पूर्ववद्घृताभ्यक्तताल्वोष्ठः शीतं पिबेत्; शीतोदकाद्युपचारश्च। प्रसृतिः पलद्वयं, प्रकुञ्चः पलम्। रक्षेदात्मानं 'क्रोधादिभ्य' इति शेषः १८

**भवन्ति चात्र—**

**यथा सर्वाणि कुष्ठानि हतः खदिरबीजकौ ॥**
**तथैवार्शांसि सर्वाणि वृक्षकारुष्करौ हतः ॥ १९ ॥**
**हरिद्रायाः प्रयोगेण प्रमेहा इव षोडश ॥**
**क्षाराग्नी नातिवर्तन्ते तथा ह्यश्या गुदोद्भवाः ॥ २० ॥**

प्रभावविभावितं खदिरादीनां कुष्ठादिहरत्वं पुरातनागमनिर्दिष्टैः श्लोकैराह—भवन्ति चात्रेत्यादि। द्वाभ्यां कुटजभल्लातकाभ्यां यथास्वं विषयमुपयुज्यमानाभ्यां प्रत्येकशो वातादिदोषत्रयजनितान्यर्शांसि निवर्तन्ते। तद्यथा—वातकफजानि भल्लातकेन, रक्तपित्तजानि कुटजेन। एवमेवाभिप्रेत्य सर्वाणि, न पुनः सान्निपातिकसर्वदोषजापेक्षया सर्वाणीति। एवं कुष्ठेष्वपि साध्यत्वेन दार्ष्टान्तिकं द्रष्टव्यम्। षोडश प्रमेहा वातजप्रमेहचतुष्टयं विहाय ॥ १९ ॥ २० ॥

**घृतानि दीपनीयानि लेहायस्कृतयः सुराः ॥**
**आसवाश्च प्रयोक्तव्या वीक्ष्य दोषसमुच्छ्रितिम् २१**

अन्यदपि चिकित्सितं दोषोच्छ्रायापेक्षयाह—घृतानीत्यादि। लेहाः कुटजावलेहादयः, नवायसादयोऽयस्कृतयो महाकुष्ठमधुमेहादिचिकित्सितनिर्दिष्टाः। सुरा नानाविधाः पैष्टिकादिभेदेन विरेचनाध्यायविधिविधेयाः। आसवाश्च नानाविधौषधक्वाथगुडादिकृता धातक्यादिचूर्णाधिवासिताः। 'वीक्ष्य दोषं यथाफलम्' इत्यन्ये पठन्ति, तत्र फलमुक्तमनतिक्रम्येत्यर्थः ॥ २१ ॥

**वेगावरोधस्त्रीपृष्ठयानान्युत्कुटुकासनम् ॥**
**यथास्वं दोषलं चान्नमर्शःसु परिवर्जयेत् ॥ २२ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थानेऽर्शश्चिकित्सितं नाम षष्ठोऽध्यायः ॥ ६ ॥**

---

१ 'तथाऽविच्छिन्नः' इति पा०।

१ 'दृष्टान्तिकं' इति पा०। २ 'पुराः' इति पाठान्तरम्। तत्र गुग्गुलुयोगा इत्यर्थः। ३ 'फलश्रुत्यनतिक्रमेणेत्यर्थः' इति पा०।

वर्ज्यान् निर्दिशन्नाह—वेगावरोधेत्यादि । वातमूत्रपुरीषादीनां स्वमार्गेण स्वभावतः प्रवृत्त्यभिमुखीभावो वेगः । उत्कुटुकासनमुत्कटिकस्य चिरासनस्थितिः ॥ २२ ॥

इति श्रीडल्ह(ड्ड)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

अथातोऽश्मरीचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः ॥
औषधैस्तरुणः साध्यः प्रवृद्धश्छेदमर्हति ॥ ३ ॥
तस्य पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ॥
तेनास्यापचयं यान्ति व्याधेर्मूलान्यशेषतः ॥ ४ ॥

अश्मरीत्यादि । तरुणः तत्कालोत्पन्नः ॥ १—४ ॥

पाषाणभेदो वसुको वशिराश्मन्तकौ तथा ॥
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका ॥ ५ ॥
कपोतवङ्काऽऽर्तगलः कच्चकोशीरकुब्जकाः[1] ॥
वृक्षादनी भल्लुकश्च वरुणः शाकजं फलम् ॥ ६ ॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च ॥
ऊषकादिप्रतीवापमेषां क्वाथैर्घृतं कृतम् ॥ ७ ॥
भिनत्ति वातसंभूतामश्मरीं क्षिप्रमेव तु ॥

येन स्नेहादिक्रमेण व्याधिमूलानि दोषदूष्यरूपाण्यशेषतः प्रशमं यान्ति तं निर्दिशन्नाह—पाषाणेत्यादि। वसुको बकपुष्पम्। वशिरो मर्कटसंज्ञस्तृणजातिविशेषः, सूर्यावर्तभेद इत्यन्ये । अश्मन्तकोऽम्ललोटः कोविदारसदृशपत्रकः । कपोतवङ्का कटभीसदृशपत्रो विटपी मध्यदेशे प्रसिद्धः । आर्तगलः ककुभकः सुगन्धिमूलः 'कौहीं' इति नाम्ना पूर्वदेशे प्रसिद्धः, अन्ये तु आर्तगलः 'कुखक' इत्याहुः, बहिःकेशरः कण्टकितफलो विटप इत्यन्ये । कच्चको मध्यलेखानिचितः ऋजुकपत्र ईषद्रक्तमूलः 'कवहक'[2] इति मालवके प्रसिद्धः, अन्ये तु कच्चकस्थाने 'ककुभ' इति पठन्ति, स च प्रसिद्धः । कुब्जः गुञ्जा । वृक्षादनी बन्दाकः । भल्लुकः श्योनाकः । शाकः कर्कशमसृणपृष्ठोदरपत्रो वृक्षस्तस्य फलम् । कतकफलमम्बुप्रसादनं शशकशुष्कपुरीषप्रतिमम् । एषां सामान्यस्नेहकषायपरिभाषया कषायः; ऊषकादीनां स्नेहपादेन कल्कः ॥ ५–७ ॥—

क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ॥ ८ ॥
भोजनानि च कुर्वीत वर्गेऽस्मिन् वातनाशने ॥

घृतौषधवर्गं संक्षेपार्थमन्यत्राप्यतिदिशन्नाह—क्षारानित्यादि। क्षाराश्चात्र पातव्याः, ते च चूर्णत्वात् कर्षमात्रया सलिलेन मस्त्वादिबस्तिशोधनद्रव्येण वा पलद्वयचतुष्टयप्रमाणेन; क्षारोदकपक्षे तु कर्षद्वयं त्रयं वा षड्गुणेनाष्टगुणेन वा जलेन बहुशः परिस्राव्य पूतं पेयम् । यवाग्वादयश्चात्र पलद्रव्यक्काथेन कर्तव्याः । भोजनानि भक्तादयः । चकाराच्चूर्णानामपि समुच्चयः कर्तव्यः । एवं पित्तकफहरद्रव्यवर्गेऽप्यूह्यम् । क्षारादीनां कल्पना परिभाषाबलात्; स्वयमप्यूहः कर्तव्यः ॥ ८ ॥—

कुशः काशः सरो गुन्द्रा इत्कटो मोरटोऽश्मभित् ९
वरी विदारी वाराही शालिमूलत्रिकण्टकम् ॥
भल्लूकः पाटला पाठा पत्तूरोऽथ कुरुण्टिका ॥ १० ॥
पुनर्नवा शिरीषश्च कथितास्तेषु साधितम् ॥
घृतं शिलाजमधुकबीजैरिन्दीवरस्य च ॥ ११ ॥
त्रपुसैर्वारुकादीनां बीजैश्चावापितं शुभम् ॥
भिनत्ति पित्तसंभूतामश्मरीं क्षिप्रमेव तु ॥ १२ ॥
क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ॥
भोजनानि च कुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥ १३ ॥

पित्ताश्मरीचिकित्सामाह—कुश इत्यादि । इत्कटः महती खगाली । मोरट इक्षुमूलम् । पत्तूरः शरबालिका । कुरण्टिका शरबालिकाभेदो लोहितपुष्पः । शिलाजं शिलाजतु । इन्दीवरं शरबालिकाभेदो दीर्घपत्रो बहुलपुष्पः; **जेज्जटस्तु** इन्दीवरं नीलोत्पलं, तन्नेच्छति **गयी** ॥ ९–१३ ॥

गणो वरुणकादिस्तु गुग्गुल्वेलाहरेणवः ॥
कुष्ठभद्रादिमरिचचित्रकैः ससुराह्वयैः ॥ १४ ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च ॥
भिनत्ति कफसंभूतामश्मरीं क्षिप्रमेव तु ॥ १५ ॥
क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ॥
भोजनानि च कुर्वीत वर्गेऽस्मिन् कफनाशने ॥ १६ ॥

कफाश्मरीचिकित्सामाह—गण इत्यादि । भद्रादिर्भद्रदारुकुष्ठहरिद्रेत्यादिः । अजासर्पिः केचिन्न पठन्ति, ते प्रकरणात् पूर्वोदितात् सामान्येन गव्यमेव घृतं ददति । कफाश्मरीचिकित्सितेनैव शुक्राश्मरीचिकित्सितमुक्तं मन्तव्यं, तुल्यगुणत्वात् कफशुक्रयोरिति ॥ १४–१६ ॥

पिचुकाङ्कोलकतकशाकेन्दीवरजैः फलैः ॥
चूर्णितैः सगुडं तोयं शर्कराशमनं पिबेत् ॥ १७ ॥

इदानीं शर्करापतनाय शमनाय वा योगोपदेशः । पिचुकः करीरः, तस्य फलं; 'कार्पासफलं' इत्येके । इन्दीवरं कर्णपूराख्यो महापुष्पः शरबालिकाभेदः; अन्ये नीलोत्पलमाहुः, तन्नेच्छति **गयी** । अङ्कोलोऽक्षोटः, कतकः प्रागुक्तः शाकोऽपि । गुडोऽत्र चूर्णसमो ज्ञेयः, "चूर्णे चूर्णसमो देयो मोदके द्विगुणो गुडः"—इत्युक्तत्वात् । उष्णोदकेन सह पातव्यम् ॥ १७ ॥

क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालमूलिका[1] ॥

---

१ 'ककुभोशीरकुब्जकाः' इति पा० । २ 'कवहा' इति पा० ।

१ 'ताडपादिका' इति पा० ।

**अजमोदा कदम्बस्य मूलं नागरमेव च ॥ १८ ॥**
**पीतानि शर्करां भिन्द्युः सुरयोष्णोदकेन वा ॥**

क्रौञ्चेत्यादि । क्रौञ्चः क्रौञ्चपक्षी । तालमूलिका मुषली मूषकपुच्छाकारशिफा ॥ १८ ॥—

**त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम् ॥ १९ ॥**
**अविक्षीरेण सप्ताहमश्मरीभेदनं पिबेत् ॥**

त्रिकण्टकस्येत्यादि ।—त्रिकण्टको गोक्षुरकः । अन्ये तु 'मर्कटकस्य बीजानां' इति पठन्ति, तत्रापि स एवार्थः । अनेन योगेन भिद्यते अश्मरी, शर्करा तु शान्तिमुपैति ॥ १९ ॥—

**द्रव्याणां तु घृतोक्तानां क्षारोऽविमूत्रगालितः ॥ २० ॥**
**ग्राम्यसत्त्वशकृत्क्षारैः संयुक्तः साधितः शनैः ॥**
**तत्रोषकादिरावापः कार्यस्त्रिकटुकान्वितः ॥ २१ ॥**
**एष क्षारोऽश्मरीं गुल्मं शर्करां च भिनत्त्यपि ॥**

द्रव्याणामित्यादि । अविशेषोक्तेर्वातादीनां त्रयाणां दोषाणामपि गणानां, वर्गत्रयाद्यथालाभेन; तिलनालादिदीपनेन क्षारीकृतानां भागः । ग्राम्या ग्रामभवा अश्वादयः, तेषां समभागपुरीषक्षारसंयुक्तः षड्गुणाविमूत्रगालितः । ततस्तस्य क्षारोदकस्य पाकसिद्धिसमये चतुर्थांशेनोषकादित्रिकटुकयोः समभागेन मिश्रितयोः प्रक्षेपः ॥ २० ॥ २१ ॥—

**तिलापामार्गकदलीपलाशयवकल्कजः ॥ २२ ॥**
**क्षारः पेयोऽविमूत्रेण शर्करानाशनः परः ॥**

तिलेत्यादि ।—तिलादेर्कल्कजातस्य प्रत्येकं क्षारः समोऽविमूत्रपलद्वयेन पेयः, तिलादेः क्षारस्य कर्षद्वयं त्र्यं वाऽविमूत्रेण षड्गुणेन बहुशः स्रावितं पूतं वा पेयम् ॥ २२ ॥—

**पाटलाकरवीराणां क्षारमेवं समाचरेत् ॥ २३ ॥**

पाटलेत्यादि । एते च वातकफसंभूतायामश्मर्यां मधुरक्षीरघृताशिनः क्षारयोगा योज्याः ॥ २३ ॥

**श्वदंष्ट्रायष्टिकाब्राह्मीकल्कं वाऽक्षसमं पिबेत् ॥**

श्वदंष्ट्रेत्यादि । यष्टिका यष्टिमधु । ब्राह्मी लवणिका । पानमत्र अविमूत्रेणैव ॥—

**सहैडकाख्यौ पेयौ वा शोभाञ्जनकमार्कवौ ॥ २४ ॥**

सहैडकाख्यावित्यादि । एडाख्यया सह शोभाञ्जनमार्कवौ पातव्याववविमूत्रेणैव । मार्कवो भृङ्गराजः ॥ २४ ॥

**कपोतवङ्कामूलं वा पिबेदम्लैः सुरादिभिः ॥**
**तत्सिद्धं वा पिबेत् क्षीरं वेदनाभिरुपद्रुतः ॥ २५ ॥**

कपोतेत्यादि । कपोतवङ्का प्रसिद्धैव । अम्लैः काञ्जिकादिभिः । सुरादिभिः सुरासौवीरकमैरेयकमेदकैः । तदित्यादि । तत्सिद्धं कपोतवङ्कासिद्धं, 'द्रव्यादष्टगुणं क्षीरं' इत्यादिन्यायेन २५

१ 'तालपादिका' इति पा० । २ 'गवादयः' इति पा० ।

**हरीतक्यादिसिद्धं वा वर्षाभूसिद्धमेव वा ॥**

हरीतकीत्यादि । हरीतक्यादिः त्रिफला, तत्सिद्धं क्षीरं पित्तजाश्मरीवेदनाभिरुपद्रुतः, वातकफजाश्मरीवेदनाभिद्रुतस्तु पुनर्नवामूलसिद्धं पयः पिबेत् ॥—

**सर्वथैवोपयोज्यः स्याद्गणो वीरतरादिकः ॥ २६ ॥**

अनुक्तमपि घृतादि विशिष्टद्रव्यगणैर्निर्दिशन्नाह—सर्वथेत्यादि । सर्वथा सर्वैः प्रकारैः घृतक्षीरकषाययवागूभोजनसाधनभेदेन तथाऽवगाहस्वेदादिभिः ॥ २६ ॥

**घृतैः क्षारैः कषायैश्च क्षीरैः सोत्तरबस्तिभिः ॥**
**यदि नोपशमं गच्छेच्छेदस्तत्रोत्तरो विधिः ॥ २७ ॥**

उपक्रमासिद्धौ च्छेदविधिमाह—घृतैरित्यादि । उत्तरबस्तिरत्र अश्मरीहरद्रव्यसिद्धो नैरूहिकः स्नैहिकश्च । उत्तरो विधिश्छेदः ॥ २७ ॥

**कुशलस्यापि वैद्यस्य यतः सिद्धिरिहाध्रुवा ॥**
**उपक्रमो जघन्योऽयमतः संपरिकीर्तितः ॥ २८ ॥**

अध्रुवा अनिश्चिता । अन्ये तु निश्चितस्यापि वैद्यस्येति पठन्ति, निश्चितं शास्त्रनिश्चितं कर्म करोतीति निश्चितो निश्चितकर्मकृत् ॥ २८ ॥

**अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥**
**तस्मादापृच्छ्य कर्तव्यमीश्वरं साधुकारिणा ॥ २९ ॥**

ननु मर्मोपघातेनातिदुःखकारणं मरणं वा, तत् किमर्थं क्रियत इत्याह—अक्रियायामित्यादि । अन्यथा तस्मिन्नदृष्टे कर्मण्यातुरस्य मृत्यौ दण्डं कुर्यात् ॥ २९ ॥

**अथ रोगान्वितमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्तस्विन्नशरीरं भुक्तवन्तं कृतबलिमङ्गलस्वस्तिवाचनमग्रोपहरणीयोक्तेन विधानेनोपकल्पितसम्भारमाश्वास्य, ततो बलवन्तमविक्लवमाजानुसमे फलके प्रागुपविष्टान्यपुरुषस्योत्सङ्गे निषण्णपूर्वकायमुत्तानमुन्नतकटीकं वस्त्राधारकोपविष्टं सङ्कुचितजानुकूर्परमितरेण सहावबद्धं सूत्रेण शाटकैर्वा, ततः स्वभ्यक्तनाभिप्रदेशस्य वामपार्श्वं विमृद्य मुष्टिनाऽवपीडयेदधोनाभेर्यावदश्मर्यधः प्रपन्नेति, ततः स्नेहाभ्यक्ते कृत्तनखे वामहस्तप्रदेशिनीमध्यमे अङ्गुल्यौ पायौ प्रणिधायानुसेवनीमासाद्य प्रयत्नबलाभ्यां पायुमेढ्रान्तरमानीय, निर्व्यलीकमनायतमविषमं च बस्तिं सन्निवेश्य, भृशमुत्पीडयेदङ्गुलिभ्यां यथा ग्रन्थिरिवोन्नतं शल्यं भवति ॥ ३० ॥**
**स चेद्गृहीतशल्ये तु विवृताक्षो विचेतनः ॥**
**हतवद्लम्बशीर्षश्च निर्विकारो मृतोपमः ॥ ३१ ॥**

१ 'गच्छेद्दतस्तत्रोत्तरो विधिः' इति पा० । २ 'आतुरं' इति पा० ।

न तस्य निर्हरेच्छल्यं निर्हरेत्तु म्रियेत सः ॥
विना त्वेतेषु रूपेषु निर्हर्तुं प्रयतेत वै ॥ ३२ ॥

ततः सव्ये पार्श्वे सेवनीं यवमात्रेण मुक्त्वाऽवचारयेच्छस्त्रमश्मरीप्रमाणं, दक्षिणतो वा क्रियासौकर्यहेतोरित्येके, यथा सा न भिद्यते चूर्ण्यते वा तथा प्रयतेत, चूर्णमल्पमप्यवस्थितं हि पुनः परिवृद्धिमेति, तस्मात् समस्तामग्रवक्रेणाददीत; स्त्रीणां तु बस्तिपार्श्वगतो गर्भाशयः सन्निकृष्टः, तस्मात्तासामुत्सङ्गवच्छस्त्रं पातयेत्, अतोऽन्यथा खल्वासां मूत्रस्रावी व्रणो भवेत्, पुरुषस्य वा मूत्रप्रसेकक्षणनान्मूत्रक्षरणम्; अश्मरीव्रणादृते भिन्नबस्तिरेकधाऽपि न भवति, द्विधा भिन्नबस्तिराश्मरिको न सिध्यति, अश्मरीव्रणनिमित्तमेकधाभिन्न-

१ 'समुपाचरेत्' इति पा० । २ 'तस्मात्तासामुत्सङ्गवच्छस्त्रं' इति हाराणचन्द्रसंमतः पाठः । 'उत्सङ्गः क्रोडो गर्भाशयसंसङ्गार्द्धो भाग इति यावत्, तमर्हतीत्युत्सङ्गवत् । तादृशं शस्त्रं न पातयेत्, गर्भाशयस्य तद्द्वारस्य च च्छेदभयादित्याकूतम् । एतदेव भङ्गीविशेषेणावगमयति—अत इत्यादिना । यस्मादत उत्सङ्गवच्छस्त्रपातनान्मूत्रस्रावी व्रणोऽन्यथाप्रकारो भवेत् योनिव्रणोभयमुखप्रस्राविस्वादिति हृदयम् । एतावता बस्तेर्दक्षिणे पार्श्वे तिर्यक्छेदस्य नितरामाल्ययिकत्वात् प्रागुक्तमेक इत्यस्यास्वारसिकं समन्वितं भवति ।' इति हाराणचन्द्रः । वाग्भटस्तु स्त्रीणामुत्सङ्गवच्छस्त्रं पातयेदित्याह; तथा हि "स्त्रीणां बस्तिस्तु पार्श्वगः । गर्भाशयाश्रयस्तासां शस्त्रमुत्सङ्गवत्ततः । न्यसेदतोऽन्यथा ह्यासां मूत्रस्रावी व्रणो भवेत्" इति । ३ "उक्तमर्थं पुनः स्मारयन्नाह—अश्मरीति । अश्मर्यै व्रणो यत्रेत्यश्मरीव्रणो बस्तेर्निरावरणप्रदेशस्तस्मादश्मरीव्रणादृते सावरणप्रदेश इति यावत् । एकधा न भवत्येकीभावं न गच्छति न संरोहतीति निष्कर्षः । एतेनार्थाक्षिप्तं भवति न जीवतीति, सावरणे हि बस्तिभागे व्रणितस्य मरणमसंशयं भवत्यन्तर्मूत्रविषानुप्रवेशात्" इति हाराणचन्द्रः । ४ "अश्मरीत्यादि—अश्मर्यर्थो व्रणोऽश्मरीव्रणः । क्रियाभ्यासात् क्रियायाः पौनःपुन्येनोपयोगात् । नन्विदमामनन्ति "हृदयं बस्तिनाभी च घ्नन्ति सद्यो हतानि तु" इति, तत् किमिदमुच्यते जीवति क्रियाभ्यासादित्याह—शास्त्रेत्यादि । शास्त्रे हि 'सव्ये पार्श्वे' इत्यादिना बस्तेर्निरावरणेऽनात्ययिके देशे छेदो विहितस्तस्माज्जीवतीत्याशयः । एतावता बस्तेः सावरणदेश एव विशेषेण मर्मेत्यायातम् । भगवन्नात्रापि ममास्मिन्नर्थे सम्यक् प्रत्ययो जायते कथं न खलु "प्रवृद्धच्छेदमर्हति" इति स्मरणान्निर्हर्तव्येन प्रवृद्धेनाश्मरीसमाख्येन शल्येनाल्पमांसशोणितत्वेनोपदिष्टतया हीनबलत्वोपलब्धस्य बस्तेरतितरां दूषणसंभावनामननुसन्धाय 'जीवति क्रियाभ्यासात्' इत्युपदिश्यत इत्येवं शङ्कमानस्यातिक्रान्तोदन्तसमाक्रान्तभ्रान्तिकलङ्कं संकेतयन्निव प्राक् प्रक्रान्तमेवाह—निःस्यन्देति । निःस्यन्दनं निःस्यन्दोऽत्र मूत्रसंपृक्तो मल एव, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति हि न्यायः । तथा च शल्यस्याश्मर्या बस्तेरुपादानभूतं मांसशोणितमन-

बस्तिर्जीवति, क्रियाभ्यासाच्छास्त्रविहितच्छेदान्निःस्यन्दपरिवृद्धत्वाच्च शल्यस्येति । उद्धृतशल्यं तूष्णोदकद्रोण्यामवगाह्य स्वेदयेत्, तथा हि बस्तिरसृजा न पूर्यते; पूर्णे वा क्षीरवृक्षकषायं पुष्पनेत्रेण विदध्यात् ॥ ३३ ॥

भवति चात्र—
क्षीरवृक्षकषायस्तु पुष्पनेत्रेण योजितः ।
निर्हरेदश्मरीं तूर्णं रक्तं बस्तिगतं च यत् ॥ ३४ ॥

मूत्रमार्गविशोधनार्थं चास्मै गुडसौहित्यं वितरेत्; उद्धृत्य चैनं मधुघृताभ्यक्तव्रणं मूत्रविशोधनद्रव्यसिद्धामुष्णां सघृतां यवागूं पाययेतोभयकालं त्रिरात्रं; त्रिरात्रादूर्ध्वं गुडप्रगाढेन पयसा मृद्वोदनमल्पं भोजयेद्दशरात्रं (मूत्रासृग्विशुद्ध्यर्थं व्रणक्लेदनार्थं च), दशरात्रादूर्ध्वं फलाम्लैर्जाङ्गलरसैरुपाचरेत्; ततो दशरात्रं चैनमप्रमत्तः स्वेदयेत् स्नेहेन द्रवस्वेदेन वा; क्षीरवृक्षकषायेण चास्य व्रणं प्रक्षालयेत्; रोध्रमधुकमञ्जिष्ठाप्रपौण्डरीककल्कैर्व्रणं प्रतिग्राहयेत्; एतेष्वेव हरिद्रायुतेषु तैलं घृतं वा विपक्वं व्रणाभ्यञ्जनमिति; स्त्यानशोणितं चोत्तरबस्तिभिरुपाचरेत्; सप्तरात्राच्च स्वमार्गमप्रतिपद्यमाने मूत्रे व्रणं यथोक्तेन विधिना दहेदग्निना, स्वमार्गप्रतिपन्ने चोत्तरबस्त्यास्थापनानुवासनैरुपाचरेन्मधुरकषायैरिति; यदृच्छया वा मूत्रमार्गप्रतिपन्नामन्तरासक्तां शुक्राश्मरीं शर्करां वा स्रोतसाऽपहरेत्, एवं चाशक्ये विदार्य नाडीं शस्त्रेण बडिशेनोद्धरेत् । रूढव्रणश्चाङ्गनाश्वनगनागरथद्रुमान् नारोहेत वर्षं, नाप्सु प्लवेत, भुञ्जीत वा गुरु ॥ ३५ ॥

मूत्रवहशुक्रवहमुष्कस्रोतोमूत्रप्रसेकसेवनीयोनिगुदबस्तीनष्टौ परिहरेत् । तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णबस्तेः, शुक्रवहच्छेदान्मरणं क्लैब्यं वा, मुष्कस्रोतउपघाताद् ध्वजभङ्गः, मूत्रप्रसेकक्षणनान्मूत्रप्रक्षरणं, सेवनीयोनिच्छेदाद्रुजः प्रादुर्भावः, बस्तिगुदविद्धलक्षणं प्रागुक्तमिति ॥ ३६ ॥

तमेवोत्तरं छेदं पूर्वकर्मोत्तरकर्मभ्यां निर्दिशन्नाह—अथेत्यादि । अथशब्दोऽयं मङ्गलार्थे छेदक्रियायाम् । अपकृष्टदोषम् ऊर्ध्वाधोदोषनिर्हरणेन । ईषत्कर्शितमिति अतिकर्शनेन कर्माक्षमता, अकर्शनेनोपचितानल्पबस्तिकायत्वादश्मर्या अप्राप्तिरिति । अग्रोपहरणीयोक्तेनेत्यादि यन्त्रशस्त्रक्षारशलाकादिविधिना ।

भिद्याय मूत्रमलमात्रेण परिवृद्धत्वान्नास्त्यत्र बस्तेः शल्याभिनिर्वृत्तः स्वरूपतो दोषलेशोऽपि, तस्मान्निरङ्कुशमिदमुपदिश्यते—जीवति क्रियाभ्यासादित्ययमभिसन्धिः ।" इति हाराणचन्द्रः ।

१ अयं कश्चिद्धस्तलिखितपुस्तके न पठ्यते ।

'अथारोग्यार्थिनं' इत्यन्ये पठन्ति । तत इत्यादि । बलवन्तमिति[1] अपकृष्टदोषं विशुद्धमन्नसंसर्जनेन सञ्जनितबलम् । इतरेण पुरुषेण सह । तत इत्यादि । अधःप्रपन्ना अधोगता । पायौ गुदे । प्रणिधाय प्रक्षिप्य । निर्व्यलीकं त्वक्सङ्कोचरहितम् । अविषमं निम्नोन्नतत्वरहितम् । अनायतम् अदीर्घम् । सन्निवेश्य संस्थाप्य । गृहीतेऽश्मरीशल्ये यादृशस्य मरणभयान्नाहरणीयं तादृशं दर्शयन्नाह—स चेदित्यादि । विवृत्ताक्षः स्तब्धाक्षः । निर्विकारो निर्व्यापारः । क इव ? मृत इवेत्यर्थः; अन्ये 'निर्व्यापार' इति पठन्ति; निर्व्यापारो निरीहः; 'निर्विहार' इत्यन्ये पठन्ति; तत्रापि स एवार्थः । विनेत्यादि । प्रयतेत प्रयत्नं कुर्वीत । अग्रवक्त्रेण[2] आहरणयन्त्रेणातीक्ष्णमुखेन । स्त्रीणां पुनर्बस्तिप्रत्यासन्नमधिकमाशयान्तरमस्ति, अतः सामान्यहरणे दोषमभिवीक्ष्य छेदविशेषं निर्दिशन्नाह—स्त्रीणामित्यादि । उत्सङ्गवदिति ऊर्ध्वं सङ्गः स यस्यास्तीति तदुत्सङ्गवत् उत्तानमित्यर्थः । अन्यथेति यदाऽवगाढः शस्त्रपातः स्यात्तदा बहिर्गतं त्वङ्मांसं भित्त्वा बस्तित्वचा सह भगवस्तु[3]बस्तिपार्श्वाश्रयस्य गर्भाशयस्यापि त्वचो भेदः स्यात्; ततस्तासां भगान्तर्गतो मूत्रस्रावी व्रणः स्यादित्यर्थः । तथाच **वैतरणः**—"भगस्याधः स्त्रिया बस्तिरूर्ध्वं गर्भाशयः स्थितः । गर्भाशयश्च बस्तिश्च महास्रोतःसमाश्रितौ ॥ बस्तिभागं समुन्नम्य अवनम्याश्मरीं बुधः । स्फिगग्रे भेदनं तासां हितमन्यत्र दोषकृत्"—इति । इदानीमुभयोरपि स्त्रीपुंसयोरपरप्रकारेण सामान्यं मूत्रस्राविणं व्रणं निर्दिशन्नाह—पुरुषस्येत्यादि । पुरुषस्य वेति वाशब्दश्चार्थे, तेन स्त्रियाः पुरुषस्य चेत्यर्थः । मूत्रप्रसेकस्रोतसी स्त्रीपुंसयोः, अभेदेनोक्तत्वात् । मूत्रप्रसेको नाम मूत्रं येन बस्तिमुखाश्रयेण स्रोतसा क्षरति, तस्य छेदनादित्यर्थः । इदानीमश्मरीनिमित्तमेवैकधा भिन्नबस्तिर्जीवति न पुनरन्योऽपि भिन्नबस्तिरिति दर्शयन्नाह—अश्मरीत्यादि । द्विधाभिन्नबस्तिराश्मरीको न सिध्यति; अश्मरीव्रणं विना एकधाऽपि भिन्नबस्तिर्न भवति न जीवतीत्यर्थः, अशास्त्रविहितच्छेदनत्वेन निःसृतनिःशेषमूत्रत्वात् । अश्मरीनिमित्ताघातेन पुनरेकधा भिन्नबस्तेर्जीविते हेतुं निर्दिशन्नाह—अश्मरीव्रणेत्यादि । क्रियाणामुष्णोदकस्वेदक्षीरवृक्षकषाययोजनादीनामभ्यसनं क्रियाभ्यासस्तस्मात् । अश्मरीप्रमाणमुखमात्रः सेवनीसव्यपार्श्वगः शास्त्रविहित[4]च्छेदस्तस्मात् । निःस्यन्दो मूत्रं तेन परिवृद्धं शल्यं तस्मादित्यर्थः । एतदुक्तं भवति—येन निःस्यन्देन मूत्रेण वृद्धेन सता शल्यं परिवृद्धं तस्य शल्यापहरणेऽपि निःशेषापरिस्रुतत्वाद्द्विन्नबस्तिर्जीवति । **गयी** तु 'शल्यस्य' इति पदं परित्यज्य 'निःस्यन्दपरिवृद्धत्वात्' इत्येवं पठति व्याख्यानयति च—निःस्यन्दस्य मूत्रस्य परिवृद्धत्वेन, अत एव मूत्रवृद्धिकरयवागूगुडक्षीरादिसौहित्यविधानं; शास्त्रविहितातिक्रमच्छेदे तु मूत्रनिःशेषक्षरणान्मरणमिति । उद्धृतेत्यादि । पुष्पनेत्रेण उत्तरबस्तिना । भवतीत्यादि । गुडसौहित्यं गुडवासितं भक्तं दद्यादित्यर्थः । उद्धृत्येत्यादि । उद्धृत्य चैनमिति 'उष्णोदकद्रोण्या' इति शेषः । मधुघृताभ्यङ्गो व्रणस्य रोपणार्थम् । मूत्रविशोधनद्रव्याणि तृणपञ्चमूलीगोक्षुरककूष्माण्डकपाषाणभेदप्रभृतीनि । उभयकालं सायं प्रातरित्यर्थः । अप्रमत्तः सावधानः । क्षीरवृक्षा वटोदुम्बराश्वत्थप्लक्षगर्दभाण्डाः । रोध्रेत्यादि । प्रतिग्राहयेत् लेपयेदित्यर्थः । एतेष्वेव अनन्तरोद्दिष्टेषु रोध्रादिषु हरिद्रायुतेषु । स्त्यानेत्यादि ।—संहतशोणिते तु प्रागुक्तद्रव्यकषायविधानेनोत्तरबस्तिरिति रक्तविलयनेनापकर्षणादित्यर्थः । सप्तरात्रादित्यादि । स्वमार्गमप्रतिपन्ने मूत्रे इत्यर्थः । मधुराणि काकोल्यादीनि, कषायाणि क्षीरवृक्षादीनि, तैः; अन्ये मधुराणां कषायैरित्याहुः, अनुबन्धपरिहारार्थं वायोरनुलोमनाय चेति । कथमपि मूत्रपथागताश्मरीनिर्हरणं निर्दिशन्नाह—यदृच्छयेत्यादि । स्रोतसा मूत्रपथेन । तथाऽप्याहर्तुमशक्यत्वे मेढ्रमपि विदार्यापकर्षयेत् । रूढेत्यादि । अल्पक्षणनात् क्लैब्यम् ( सर्वदा लिङ्गपातेनावस्थानम् ) । क्षणनात् छेदनात् । मूत्रक्षरणं मूत्रस्रवणम् । प्रागुक्तमिति प्रत्येकममीनिर्देशे ॥३०–३६॥

भवति चात्र—

**मर्माण्यष्टावसंबुध्य स्रोतोजानि शरीरिणाम् ॥**
**व्यापादयेद्बहून्मर्त्यान् शस्त्रकर्मापटुर्भिषक् ॥ ३७ ॥**

अतः परं संग्रहश्लोकमाह—भवत इत्यादि ॥ ३७ ॥

**सेवनी शुक्रहरणी स्रोतसी फलयोर्गुदम् ॥**
**मूत्रसेकं मूत्रवहं योनिर्बस्तिस्तथाऽष्टमः ॥ ३८ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थानेऽश्मरीचिकित्सितं नाम सप्तमोऽध्यायः ॥ ७ ॥**

तान्येव मर्माणि सुखावबोधार्थं श्लोकेन निर्दिशन्नाह—सेवनीत्यादि । तस्मात् परिहृत्यैतानि दृष्टकर्मा कृतयोग्यो भिषक् कर्म कुर्यात्, एवं साधु भवति ॥ ३८ ॥

इति श्रीडल्ह(ल्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

**अथातो भगन्दराणां चिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**पञ्च भगन्दरा व्याख्याताः[3], तेष्वसाध्यः शम्बूकावर्तः शल्यनिमित्तश्च; शेषाः कृच्छ्रसाध्याः ॥३॥**

१ 'तत आतुराद्बलवन्तं बलीयांसमित्यर्थः' इति हाराणचन्द्रः । २ सर्पफणामुखेन शलाकायन्त्रेणेत्यर्थः । ३ 'भगवस्तु' इत्यत्र 'भगस्यस्य' इति पाठान्तरम् । ४ 'शास्त्रविच्छेद' इति पा० ।

१ अयं पाठो हस्तलिखितपुस्तके न पठ्यते । २ 'मूत्रस्रावी व्रणः' इति पा० । ३ 'ख्याताः' इति पा० ।

निदानेऽपि भगन्दराणां साध्यासाध्यविभागे पूर्वोक्ते पुनरिह चिकित्सितविधानायानुकथनं प्रकरणान्तरत्वादिति न पौनरुक्त्यम् ॥ १-३ ॥

**तत्र भगन्दरपिडकोपद्रुतमातुरमपतर्पणादिविरेचनान्तेनैकादशविधेनोपक्रमेणोपक्रमेतापक्वपिडकं, पक्वेषु चोपस्निग्धमवगाहस्विन्नं शय्यायां सन्निवेश्यार्शसमिव यन्त्रयित्वा, भगन्दरं समीक्ष्य पराचीनमवाचीनं वा, ततः प्रणिधायैषणीमुन्नम्य साशयमुद्धरेच्छस्त्रेण; अन्तर्मुखे चैवं सम्यग्यन्त्रं प्रणिधाय प्रवाहमाणस्य भगन्दरमुखमासाद्यैषणीं दत्त्वा शस्त्रं पातयेत्; आसाद्य वाऽग्निं क्षारं चेति; एतत् सामान्यं सर्वेषु ॥ ४ ॥**

तत्रेत्यादि । अपतर्पणादिविरेचनान्त उपक्रमो द्विव्रणीयचिकित्सितोक्तः । पक्वेषु चेति चकारेण भिन्नेषु चेति द्रष्टव्यम् । तत्र बहिर्मुखं पराचीनम्, अन्तर्मुखमवाचीनम् । एषणी लोहादिशलाका । तत्रान्तर्मुखमवाचीनमित्युक्तं, तत्र विशेषं निर्दिशन्नाह—अन्तर्मुखे इत्यादि । सर्वेष्वग्निक्षारावासाद्यैव ॥ ४ ॥

**विशेषतस्तु—**
**नाड्यन्तरे व्रणान् कुर्याद्भिषक् तु शतपोनके ॥**
**ततस्तेषूपरूढेषु शेषा नाडीरुपाचरेत् ॥ ५ ॥**

नाड्यन्तरे इत्यादि । नाडीनां पूर्यमाणानां निकटस्थानां त्रिचतुराणामन्तरं मध्यं नाड्यन्तरं, तस्मिन् व्रणान् कुर्यात् । भिषक् सुशिक्षितो वैद्यः ॥ ५ ॥

**गतयोऽन्योन्यसंबद्धा बाह्याश्छेद्यास्त्वनेकधा ॥**
**नाडीरनभिसंबद्धा यश्छिनत्त्येकधा भिषक् ॥ ६ ॥**
**स कुर्याद्विवृतं जन्तोर्व्रणं गुदविदारणम् ॥**
**तस्य तद्विवृतं मार्गं विण्मूत्रमनुगच्छति ॥ ७ ॥**
**आटोपं गुदशूलं च करोति पवनो भृशम् ॥**
**तत्राधिगततन्त्रोऽपि भिषङ्मुह्येदसंशयम् ॥ ८ ॥**
**तस्मान्न विवृतः कार्यो व्रणस्तु शतपोनके ॥**

यदि नाडीष्वनिश्चितनिकटासु छेदः क्रियते तदा को दोषः स्यादित्याह—गतय इत्यादि । अनेकधा अनेकप्रकारा इत्यर्थः । आटोपम् आध्मानम् । विवृतो व्यात्तमुखः ॥ ६-८ ॥—

**व्याधौ तत्र बहुच्छिद्रे भिषजा वै विजानता ॥ ९ ॥**
**अर्धलाङ्गलकश्छेदः कार्यो लाङ्गलकोऽपि वा ॥**
**सर्वतोभद्रको वाऽपि कार्यो गोतीर्थकोऽपि वा ॥ १० ॥**
**सर्वतः स्रावमार्गांस्तु दहेद्वैद्यस्तथाऽग्निना ॥**
**सुकुमारस्य भीरोर्हि दुष्करः शतपोनकः ॥ ११ ॥**

व्याधावित्यादि । लाङ्गलं हलमुच्यते, अर्धलाङ्गल इव अर्धलाङ्गलकः । सर्वतोभद्रस्त्वासनविशेषः पर्यङ्किकाकारो मण्डलाकृशसदृशो वा । गोतीर्थको गच्छतो गोमूत्रगतिसदृशः; अथवा गोतीर्थं गोयोनिरुच्यते, तदाकारो गोतीर्थकः; अथवा गोतीर्थं निपानं येन गावः पिबन्ति, तत्तुल्गाङ्कितवच्छेदविशेषः कर्तव्यः; तथाच तन्त्रान्तरम्—"द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलको मतः । ह्रस्वमेकतरं यत्र सोऽर्धलाङ्गलकः स्मृतः ॥ सेवनीं वर्जयित्वा तु चतुर्धा दारिते गुदे । सर्वतोभद्रकं छेदमाहुश्छेदविदो जनाः ॥ पार्श्वागतेन शस्त्रेण छेदो गोतीर्थको भवेत्"—इति । छिन्ने पश्चात्कर्म निर्दिशन्नाह—सर्वत इत्यादि । अग्निनेति नात्रावधारणं, तेन क्षारेणापि । दुष्कर इति नाडीनामनेकत्वात् ॥ ९-११ ॥

**रुजास्रावापहं तत्र स्वेदमाशु प्रयोजयेत् ॥**
**स्वेदद्रव्यैर्यथोद्दिष्टैः कृशरापायसादिभिः ॥ १२ ॥**
**ग्राम्यानूपौदकैर्मांसैर्लावाद्यैर्वाऽपि विष्किरैः ॥**
**वृक्षादनीमथैरण्डं बिल्वादिं च गणं तथा ॥ १३ ॥**
**कषायं सुकृतं कृत्वा स्नेहकुम्भे निषेचयेत् ॥**
**नाडीस्वेदेन तेनास्य तं व्रणं स्वेदयेद्भिषक् ॥ १४ ॥**
**तिलैरण्डातसीमाषयवगोधूमसर्षपान् ॥**
**लवणान्यम्लवर्गं च स्थाल्यामेवोपसाधयेत् ॥ १५ ॥**
**आतुरं स्वेदयेत्तेन तथा सिध्यति कुर्वतः ॥**
**स्विन्नं च पाययेदेनं कुष्ठं च लवणानि च ॥ १६ ॥**
**वचाहिङ्ग्वजमोदं च समभागानि सर्पिषा ॥**
**माद्वीकेनाथवाऽम्लेन सुरासौवीरकेण वा ॥ १७ ॥**
**ततो मधुकतैलेन तस्य सिञ्चेद्भिषग्व्रणम् ॥**
**परिषिञ्चेद्गुदं चास्य तैलैर्वातरुजापहैः ॥ १८ ॥**
**विधिनाऽनेन विण्मूत्रं स्वमार्गमधिगच्छति ॥**
**अन्ये चोपद्रवास्तीव्राः सिध्यन्त्यत्र न संशयः ॥ १९ ॥**
**शतपोनक आख्यात**

तत्र कृतकर्मणि रुजोपशमार्थं पश्चात्कर्म निर्दिशन्नाह—रुजास्रावेत्यादि । तिलतण्डुलमाषैर्यवागूः कृता कृशरा, क्षीरसिद्धास्तण्डुलाः पायसः । गयी तु 'रुजास्रावापहं तत्र' इत्यत्र "तत्र धीरो विधानज्ञ" इति पठति । वृक्षादनी बन्दाकः, वृक्षकलम्बिकामपरे । बिल्वादिश्च गणो बृहत्पञ्चमूलम् । अम्लवर्गो रसविज्ञानीयोक्तः । स्विन्नस्यानन्तरं पानं निर्दिशन्नाह—स्विन्नमित्यादि । माद्वीकेन द्राक्षामद्येन । अम्लेन काञ्जिकेन । सौवीरकेण काञ्जिकभेदेन । अनेन पानेन विण्मूत्राणि स्वमार्गमनुप्रपद्यन्ते अग्निश्च दीप्तो भवति । ततो मन्दे पित्ते रक्ते वाते च प्रबले स्नेहपरिषेकं निर्दिशन्नाह—तत इत्यादि । सामान्यक्वाथकल्कविधिना मधुकतैलं साध्यम् ।[1] वातरुजापहैर्वातव्याधिनिर्दिष्टैः । अन्ये चोपद्रवा आध्मानगुदभ्रंशादयः ॥ १२-१९ ॥—

**उष्ट्रग्रीवे क्रियां शृणु ॥**
**अथोष्ट्रग्रीवमेषित्वा छित्त्वा क्षारं निपातयेत् ॥ २० ॥**

१ 'मण्डलाकारसदृशो वा' इति पा० ।

१ 'छिद्रेण' इति पा० ।

**पूतिमांसव्यपोहार्थमग्निरत्र न पूजितः ॥**
**अथैनं घृतसंसृष्टैस्तिलैः पिष्टैः प्रलेपयेत् ॥ २१ ॥**
**बन्धं ततोऽनुकुर्वीत परिषेकं तु सर्पिषा ॥**
**तृतीये दिवसे मुक्त्वा यथास्वं शोधयेद्भिषक्[1] ॥२२॥**
**ततः शुद्धं[2] विदित्वा च रोपयेत्तु यथाक्रमम् ॥**

उष्ट्रग्रीवे पित्तभगन्दरे क्रियां निर्दिशन्नाह—अथेत्यादि । उष्ट्रग्रीवे पूतिमांसापकर्षणाय क्षारकर्म । **गयी** तु 'एष्योष्ट्रग्रीवमात्रत्वे छित्त्वा क्षारं निपातयेत्' इति पठति । बन्धोऽत्र चर्मणाऽन्तश्छिद्रेण गोफणकः । सर्पिषा घृतेन परिषेकः । यथास्वं शोधनं पित्तापहरद्रव्यकृतम् । यथाक्रमं क्रमानतिक्रमेण रोपणावस्थायामित्यर्थः । रोपयेत् पित्तव्रणरोपणैरेव । अस्य चैकनाडीत्वाच्छेदविशेषानभिधानम् ॥ २०-२२ ॥—

**उत्कृत्यास्रावमार्गांस्तु परिस्राविणि बुद्धिमान् ॥२३॥**
**क्षारेण वा स्रावगतिं दहेद्धुतवहेन वा ॥**
**सुखोष्णेनाणुतैलेन सेचयेद्गुदमण्डलम् ॥ २४ ॥**
**उपनाहाः प्रदेहाश्च मूत्रक्षारसमन्विताः ॥**
**वामनीयौषधैः कार्याः परिषेकाश्च मात्रया ॥ २५ ॥**
**मृदुभूतं विदित्वैनमल्पस्रावरुगन्वितम् ॥**
**गतिमन्विष्य शस्त्रेण छिन्द्यात् खर्जूरपत्रकम्[3] ॥२६॥**
**चन्द्रार्धं चन्द्रचक्रं च सूचीमुखमवाङ्मुखम् ॥**
**छित्त्वाऽग्निना दहेत् सम्यगेवं क्षारेण वा पुनः ॥२७॥**
**ततः संशोधनैरेव मृदुपूर्वैर्विशोधयेत् ॥**

कफजस्य परिस्राविणश्चिकित्सां निर्दिशन्नाह—उत्कृत्येत्यादि । परितः सर्वतः स्रोतुं शीलं यस्य स परिस्रावी सर्वतः स्रावमुखः । अत एव 'स्रावमार्गान्' इति बहुवचनम् । एतेन मध्यस्थनाड्याः परितः स्थितान्यास्रावमुखानि शस्त्रेणोत्कृत्य क्षारेणाग्निना वा दहेत्, नतु मध्यस्थनाडीं प्रागेवोत्कृत्य क्षारेणाग्निना वा दहेत्, तथा चास्रावमुखानां तथैवावस्थानात्; मुखेषु पुनः प्रथमं दग्धेषु स्रावे च बलीयसि मन्दतामापन्ने नाडीं पुनर्मध्यमामन्विष्य छिन्द्यादित्येतदर्थमेवाग्रे छेदं वक्ष्यति । अणुतैलेन सेचनं शस्त्ररुजाशान्त्यर्थम्, अणुतैलं वातव्याध्युत्पादितम् । उपनाहो बन्धनम् । प्रदेहाः प्रलेपाः । मूत्रं गोमूत्रम् । वामनीयं मदनफलादि । मात्रया अल्पश इत्यर्थः, गतिमिति मध्यस्थां प्रधानामास्रावगतिं छिन्द्यात् । प्रागुत्कृत्येत्यनेनैव छेदनमभिहितं, तस्य बह्वास्रावे मुख्यविषयत्वाद्विशेषमाह—खर्जूरपत्रकमित्यादि । खर्जूरपत्रमिव खर्जूरपत्रकं, तत्रं मध्यनाडीच्छेदस्य पार्श्वद्वयस्थानां मुखानां तिर्यक्छेदेन पङ्क्तिद्वयेन भवति । मध्यवक्रनाड्यनुलोमच्छेदस्यार्धचन्द्रतुल्यत्वादर्धचन्द्रः । मध्यरूढव्रणपदस्यैकमूलपार्श्वद्वयगतनाडीद्वयेनैकमुखेन बहिर्मुखेन चन्द्रमण्डलतुल्यत्वाच्छेदस्य चन्द्रमध्यतनीयस्याभग्नकूल्योर्विशालायां वा नाड्यनुरोधिमध्यैकच्छेदेन मूलाग्रयोस्त्रिशिष्येऽवच्छेदेन चक्राकारसादृश्याच्चन्द्रचक्रम् । अन्तर्मूले स्थूलं मुखेऽणु तेन सूचीमुखं, तदेव अवाङ्मुखमधोमुखम् । ततः संशोधनैरित्यादि ।—ततः पूर्वं मृदु शोधयित्वा विज्ञातकोष्ठस्य तीक्ष्णं शोधनम् ॥ २३—२७ ॥—

**बहिरन्तर्मुखश्चापि शिशोर्यस्य भगन्दरः ॥ २८ ॥**
**तस्याहितं विरेकाग्निशस्त्रक्षारावचारणम् ॥**
**यद्यन्मृदु च तीक्ष्णं च तत्तत्तस्यावचारयेत् ॥ २९ ॥**

शिशोः क्रियाविशेषोपदेशात् क्रियान्तरनिषेधं दर्शयन्नाह—बहिरित्यादि । तस्यैव कर्तव्यविशेषमुद्दिशन्नाह—यद्यदित्यादि । शस्त्रकर्मणि तु त्वक्सारादिचतुर्वर्गः, विरेके पुनश्चतुरङ्गुलादि । मृदु च तीक्ष्णं चेति परस्परविरोधवचनेन नातितीक्ष्णं नातिमृदु चावचारणीयं; नात्युष्णशीता काकमाची यथा ॥ २८ ॥ २९ ॥

**आरग्वधनिशाकालाचूर्णं मधुघृताप्लुतम् ॥**
**अग्रवर्तिप्रणिहितं व्रणानां शोधनं हितम् ॥ ३० ॥**
**योगोऽयं नाशयत्याशु गतिं मेघमिवानिलः ॥**

आरग्वधः कृतमालकः, निशा हरिद्रा, काला अहिंस्रा । सूत्रमयी घनवर्तिता वर्तिरग्रवर्तिः ॥ ३० ॥—

**आगन्तुजे भिषङ्नाडीं शस्त्रेणोत्कृत्य यत्नतः ॥ ३१ ॥**
**जम्ब्वोष्ठेनाग्निवर्णेन तप्तया वा शलाकया ॥**
**दहेद्यथोक्तं मतिमांस्तं[1] व्रणं सुसमाहितः ॥ ३२ ॥**
**कृमिघ्नं च विधिं कुर्याच्छल्यानयनमेव च ॥**

शल्यनिमित्तस्य भगन्दरस्य चिकित्सामुद्दिशन्नाह—आगन्तुज इत्यादि । जम्ब्वोष्ठं जम्बूफलसदृशमुखाग्रा कृष्णपाषाणरचिता वर्तिः । शल्यानयनमिति शल्ये सति ॥३१॥३२॥—

**प्रत्याख्यायैष चारभ्यो वर्ज्यश्चापि त्रिदोषजः ॥३३॥**

शेषयोर्द्वयोरसाध्यत्वे एकस्य पाक्षिकीं सिद्धिमुपदिशन्नाह—प्रत्याख्यायेत्यादि ॥ ३३ ॥

**एतत् कर्म समाख्यातं सर्वेषामनुपूर्वशः ॥**
**एषां तु शस्त्रपतनाद्वेदना यत्र[2] जायते ॥ ३४ ॥**
**तत्राणुतैलेनोष्णेन परिषेकः प्रशस्यते ॥**
**वातघ्नौषधसंपूर्णां स्थालीं छिद्रशराविकाम् ॥ ३५ ॥**
**स्नेहाभ्यक्तगुदस्तत्रामध्यासीत सबाष्पिकाम् ॥**
**नाड्या वाऽस्याहरेत् स्वेदं शयानस्य रुजापहम् ॥**
**उष्णोदकेऽवगाह्यो वा तथा शाम्यति वेदना ॥ ३६ ॥**

---

१ 'शुद्धैः' इति पा० । २ 'शोधयेद्बुधः' इति पा० ।
३ 'खर्जूरपत्रकादीनि तु संस्थानविशेषभिन्नानां भगन्दराणां नामानि । अत्र खर्जूरपत्रकमिति संज्ञायां कः, सा च काकपक्षकादिवत् सादृश्यमूला । तथा च खर्जूरपत्राणि यथा नालस्योभयपार्श्वतः प्रसरन्ति तथैव प्रसृताभिर्नाडीभिरुपनिबद्धा प्रधाननाडी यत्राविर्भवति स खर्जूरपत्रको नाम भगन्दरः, चन्द्रस्यार्धमिवेति चन्द्रार्धं, चन्द्रचक्रं चन्द्रमण्डलाकारं, सूचीमुखं सूक्ष्मवक्त्रं, अवाङ्मुखमधोमुखम्' इति हाराणचन्द्रः ।

१ 'स च' इति पा० । २ 'शस्त्रपातेन वेदना यदि' इति पा० ।

इदानीं सर्वभगन्दराणामेव शस्त्रपातनवेदनासु तच्छमनाय स्नेहपरिषेकादीनि निर्दिशन्नाह—एतत्कर्मेत्यादि । तत्राणुतैलं केवलं वातवेदनाविषयम् । वातघ्नौषधानि भद्रदार्वादीन्येरण्डादीनि च । बाष्पस्वेदस्तु कर्तव्यो वायौ रक्तपित्तसमन्विते ॥ ३४-३६ ॥—

कदलीमृगलोपाकप्रियकाजिनसंभृतान् ॥
कारयेदुपनाहांश्च साल्वणादीन् विचक्षणः ॥ ३७ ॥

वातकफजे वेदनायामुपनाहस्वेदमुद्दिशन्नाह—कदलीत्यादि । कदलीमृगः पूर्वदेशे प्रायशः शबलो दृष्टः, स तु बृहत्तमबिडालसमो व्याघ्राकारो बिलेशयः; लोपाको लाङ्गलकः शृगालभेदः; प्रियकः ललितकोऽजगरप्रायः श्लक्ष्णो दीर्घः; अजिनं चर्म ॥ ३७ ॥

कटुत्रिकं वचाहिङ्गुलवणान्यथ दीप्यकम् ॥
पाययेच्चाम्लकौलत्थसुरासौवीरकादिभिः ॥ ३८ ॥

कटुत्रिकमित्यादि । दीप्यकमजमोदा । अम्लं काञ्जिकम्, सुरा मद्यभेदः, सौवीरकं काञ्जिकभेदः । एतदपि गुदकोष्ठगतवेदनोपशमार्थम् ॥ ३८ ॥

ज्योतिष्मतीलाङ्गलकीश्यामादन्तीत्रिवृत्तिलाः ॥
कुष्ठं शताह्वा गोलोमी तिल्वको गिरिकर्णिका ॥ ३९ ॥
कासीसं काञ्चनक्षीर्यौ वर्गः शोधन इष्यते ॥

अतः परं भगन्दरक्षतानां शोधनीयोत्सादनीयरोपणीयान् वैशेषिकान्निर्दिशन्नाह—ज्योतिष्मतीत्यादि । ज्योतिष्मती कुङ्कुमर्दनिका, लाङ्गली कलिहारिका, श्यामा त्रिवृद्विशेषः । गोलोमी दूर्वा । तिल्वकः पट्टिकारोध्रः । गिरिकर्णिका श्वेतस्यन्दा । काञ्चनक्षीर्यौ द्वे एकं कङ्कुष्ठम्, अन्या पीतदुग्धा बृहत्पत्री यवतिक्ता । वर्गस्य यथालाभेन प्रयोगः । एष वर्गो भगन्दरशोधनः कषायादिषु ॥ ३९ ॥—

त्रिवृत्तिला नागदन्ती मञ्जिष्ठा पयसा सह ॥ ४० ॥
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम् ॥

त्रिवृदित्यादि । नागदन्ती दन्तिनी । उत्सादनं निम्नव्रणवर्त्मनः पूरणं लेपनयोगेन । 'पयसा सह' इत्यत्र 'सर्पिषा सह' इति केचित् पठन्ति ॥ ४० ॥—

रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः ॥ ४१ ॥
त्रिवृत्तेजोवतीदन्तीकल्को नाडीव्रणापहः ॥
कुष्ठं त्रिवृत्तिला दन्ती मागध्यः सैन्धवं मधु ॥ ४२ ॥
रजनी त्रिफला तुत्थं हितं स्याद्व्रणशोधनम् ॥

रसाञ्जनादिकुष्ठादियोगौ रोपणशोधनौ ॥ ४१ ॥ ४२ ॥—

मागध्यो मधुकं रोध्रं कुष्ठमेला हरेणवः ॥ ४३ ॥
समङ्गा धातकी चैव सारिवा रजनीद्वयम् ॥
प्रियङ्गवः सर्जरसः पद्मकं पद्मकेसरम् ॥ ४४ ॥
सुधा वचा लाङ्गलकी मधूच्छिष्टंससैन्धवम् ॥
एतत् संभृत्य संभारं तैलं धीरो विपाचयेत् ॥ ४५ ॥
एतद्धि गण्डमालासु मण्डलेष्वथ मेहिषु ॥
रोपणार्थं हितं तैलं भगन्दरविनाशनम् ॥ ४६ ॥

मागधी पिप्पली । समङ्गा अञ्जलिकारिका; वराहक्रान्तेत्यपरे । कल्पनामाह—स्नेहचतुर्थांशो भेषजकल्कः, स्नेहाच्चतुर्गुणो द्रवः, द्रवोऽत्र पानीयम् "अनुक्ते द्रवकार्ये तु सर्वत्र सलिलं स्मृतम्" ( च. क. अ. १२ ) इत्युक्तत्वात् ॥ ४३-४६ ॥

न्यग्रोधादिगणश्चैव हितः शोधनरोपणे ॥
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम् ॥ ४७ ॥

शोधनरोपणे 'कषायादिभिः' इति शेषः ॥ ४७ ॥

त्रिवृद्दन्तीहरिद्रार्कमूलं लोहाश्वमारकौ ॥
विडङ्गसारं त्रिफला स्नुह्यर्कपयसी मधु ॥ ४८ ॥
मधूच्छिष्टसमायुक्तैस्तैलमेतैर्विपाचयेत् ॥
भगन्दरविनाशार्थमेतद्योज्यं विशेषतः ॥ ४९ ॥

त्रिवृदित्यादि । लोहमगुरु । अश्वमारकः करवीरः । स्नुही सेहुण्डः । इदमपि तैलं सामान्यकल्कपरिभाषया कर्तव्यम् ॥ ४८ ॥ ४९ ॥

चित्रकार्कौ त्रिवृत्पाठे मलपूं हयमारकम् ॥
सुधां वचां लाङ्गलकीं सप्तपर्णं सुवर्चिकाम् ॥ ५० ॥
ज्योतिष्मतीं च सम्भृत्य तैलं धीरो विपाचयेत् ॥
एतद्धि स्यन्दनं तैलं भृशं दद्याद्भगन्दरे ॥ ५१ ॥
शोधनं रोपणं चैव सवर्णकरणं तथा ॥
द्विव्रणीयमवेक्षेत व्रणावस्थासु बुद्धिमान् ॥ ५२ ॥

चित्रकेत्यादि । मलपूः काकोदुम्बरिका । हयमारकः करवीरः । सुधा स्नुही । सुवर्चिका स्वर्जिक्षारः । 'एतद्धि स्यन्दनम्' इत्यत्र 'एतद्विस्यन्दनं' इति पाठे विशेषेण स्यन्दयति दोषांश्च्यावयतीति यथार्थं नाम विस्यन्दनम् ॥ ५०-५२ ॥

छिद्रादूर्ध्वं हरेदोष्ठमर्शोयन्त्रस्य यन्त्रवित् ॥
ततो भगन्दरे दद्यादेतदर्धेन्दुसन्निभम् ॥ ५३ ॥

भगन्दरयन्त्रमर्शोयन्त्रादवयवविशेषापनयने विशिष्टं निर्दिशन्नाह—छिद्रादूर्ध्वमित्यादि ॥ ५३ ॥

व्यायामं मैथुनं कोपं पृष्ठयानं गुरूणि च ॥
संवत्सरं परिहरेदुपरूढव्रणो नरः ॥ ५४ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने भगन्दरचिकित्सितं नामाष्टमोऽध्यायः ॥ ८ ॥

रूढभगन्दरस्यापि पुनरनुबन्धभयात् परिहार्यमुद्दिशन्नाह—व्यायाममित्यादि ॥ ५४ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थानेऽष्टमोऽध्यायः ॥ ८ ॥

---

१ '°लेपो' इति पा० । २ 'मातुलुङ्गस्य पत्राणि' इति पा० ।

१-२ 'शोधनरोपणः' इति पा० । ३ '°कल्पपरिभाषया' इति पा० । ४ 'पक्तव्यम्' इति पा० ।

## नवमोऽध्यायः ।

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

विरुद्धाध्यशनासात्म्यवेगविघातैः स्नेहादीनां चायथारम्भैः पापक्रियया पुराकृतकर्मयोगाच्च त्वग्दोषा भवन्ति ॥ ३ ॥

विरुद्धाध्यशनादीनि कुष्ठकराणि विशेषेण कुष्ठस्य जनकानीति प्रागुक्तान्यपि पुनरुक्तानि ॥ १-३ ॥

तत्र त्वग्दोषी मांसवसादुग्धदधितैलकुलत्थमाषनिष्पावेक्षुपिष्टविकाराम्लविरुद्धाध्यशनाजीर्णविदाह्यभिष्यन्दीनि दिवास्वप्नं व्यवायं च परिहरेत् ॥४॥

निष्पावो राजशिम्बी । दोषधातुमलस्रोतसां क्लेदजननमभिष्यन्दि ॥ ४ ॥

ततः शालिषष्टिकयवगोधूमकोरदूषश्यामाकोद्दालकादीननवान् भुञ्जीत मुद्गाढक्योरन्यतरस्य यूषेण सूपेन वा निम्बपत्रारुष्करव्यामिश्रेण, मण्डूकपर्ण्यवल्गुजाटरूषकरूपिकापुष्पैः सर्पिःसिद्धैः सर्षपतैलसिद्धैर्वा, तिक्तवर्गेण वाऽभिहितेन; मांससात्म्याय वा जाङ्गलमांसममेदस्कं वितरेत्; तैलं वज्रकमभ्यङ्गार्थे; आरग्वधादिकषायमुत्सादनार्थे; पानपरिषेकावगाहादिषु च खदिरकषायम्; इत्येष आहाराचारविभागः ॥ ५ ॥

तत्रेत्यादि । उद्दालकः अरण्यकोद्रवः । उपकरणभूतं सूप्यद्रव्यद्वयं मुद्गाढकीलक्षणमभिधायापरमप्युपकरणभूतं शाकद्रव्यमाह—निम्बपत्रेत्यादि । शाकरूपाभ्यां निम्बपत्रारुष्कराभ्यां व्यामिश्रेण सूपेन सह शाल्यादिकमन्नं भुञ्जीत, तथा मण्डूकपर्ण्यादिभिरपि शाकैः । मण्डूकपर्णी ब्राह्मीभेदः । रूपिकापुष्पैः अर्कपुष्पैः । सार्षपतैलं केचिन्नेच्छन्ति, रक्तपित्तप्रदूषणत्वात्, वातकफकुष्ठेषु वदन्त्यन्ये । तिक्तवर्गेण प्रपुन्नाडावल्गुजपटोलवार्ताकादिना । यद्यपि "योषिन्मांससुरावर्जी" इत्यत्र मांसप्रतिषेधः, तथाऽपि मांससात्म्याय जाङ्गलमांसममेदस्कं मेदोरहितं स्वभावतो वितरेद्दद्यात् । तत्र वज्रकं सप्तपर्णकरञ्जेत्यादिकं वक्ष्यते । आरग्वधादिकषायमुत्सादनार्थे इति कषायोऽत्र कल्कश्चूर्णं वा योग्यतया; कषायशब्दो हि चरके स्वरसादिषु पञ्चसु परिभाषितः; उत्सादनार्थे उद्घर्षणार्थे, अथवा उद्वर्तनार्थे; अन्ये तु निम्नव्रणस्य उन्नतिकरणार्थे । इत्येष आहाराचारविभाग इति आहारस्य क्रियमाणस्य द्रव्यरसविभाजनम् । तत्र, वज्रतैलस्य पानीयत्वाद्, आरग्वधादेरप्यत्र संस्कारादौ प्रायोगिकत्वात्, आहारवर्गस्यैवोपदेशः ॥ ५ ॥

तत्र पूर्वरूपेषूभयतः संशोधनमासेवेत । तत्र त्वक्संप्राप्ते शोधनालेपनानि, शोणितप्राप्ते संशोधनालेपनकषायपानशोणितावसेचनानि, मांसप्राप्ते शोधनालेपनकषायपानशोणितावसेचनारिष्टमन्थप्राशाः, चतुर्थकर्मगुणप्राप्तं याप्यमात्मवतः संविधानवतश्च, तत्र संशोधनाच्छोणितावसेचनाच्चोर्ध्वं भल्लातशिलाजतुधातुमाक्षीकगुग्गुल्वगुरुतुवरकखदिरासनायस्कृतिविधानमासेवेत; पञ्चमं नैवोपक्रमेत् ॥ ६ ॥

तत्रेत्यादि । उभयतः संशोधनं वमनं विरेचनं च । त्वक्संप्राप्ते रसप्राप्ते, रसस्य तत्स्थानत्वात् । अत्रारिष्टग्रहणमुपलक्षणं, तेनासवसुरयोरप्यवरोधः । मेदःप्राप्ते चिकित्सितमुपदिशन्नाह—चतुर्थकर्मेत्यादि । चतुर्थकर्मगुणप्राप्तं याप्यमिति त्वग्धातोश्चतुर्थं मेदः, तस्य कर्माणि शोधनादीनि, तेषां तु गुणाः फलम्; एतेनैतदुक्तं—मेदोगतं कुष्ठं संशोधनादिगुणविशिष्टं याप्यं भवतीति । कथम्भूतस्य पुरुषस्य? आत्मवतः आत्मगुणोपपन्नस्य; आत्मगुणाश्च सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलकार्याण्यस्पृहा चेति; अथवा आत्मवतोऽपथ्यपरिहारपरायणस्य सम्यगाहाराचारस्येत्यर्थः । संविधानवतः परिच्छदवतः कर्मानुष्ठानपरस्य याप्यं नान्यथा । 'सम्यग्विधानवत' इति केचित् पठन्ति, प्रभूतोपकरणयुक्तस्येत्यर्थः । अथवा चतुर्थे मेदसि स्थितं कुष्ठं चतुर्थं, तस्य कुष्ठस्य कर्माणि गुणाश्च दौर्गन्ध्योपदेहपूयादयस्तैः प्राप्तं युक्तं याप्यम् । अन्ये तु 'चतुर्थाख्यप्राप्तं' इति पठन्ति, तत्रापि स एवार्थः । अत्र यापने संशोधनाच्छोणितावसेकाच्चोर्ध्वं भल्लातकादिविधानम् । तत्र भल्लातकविधानमर्शोनिर्दिष्टं, शिलाजतुमाक्षिकधातुतुवरकविधानं प्रमेहपिडकाचिकित्सितनिर्दिष्टं, खदिरासनायस्कृतिविधानं महाकुष्ठविधावुद्दिष्टम् । पञ्चमं नैवेति असाध्यत्वादस्थ्यादिगतकुष्ठानाम् ॥ ६ ॥

तत्र प्रथममेव कुष्ठिनं स्नेहपानविधानेनोपपादयेत् । मेषशृङ्गीश्वदंष्ट्राशार्ङ्गेष्टागुडूचीद्विपञ्चमूलीसिद्धं तैलं घृतं वा वातकुष्ठिनां पानाभ्यङ्गयोर्विदध्यात्, धवाश्वकर्णककुभपलाशपिचुमर्दपर्पटकमधुकरोध्रसमङ्गासिद्धं सर्पिः पित्तकुष्ठिनां, प्रियालशालारग्वधनिम्बसप्तपर्णचित्रकमरिचवचाकुष्ठसिद्धं श्लेष्मकुष्ठिनां भल्लातकाभयाविडङ्गसिद्धं वा, सर्वेषां तुवरकतैलं भल्लातकतैलं वेति ॥ ७ ॥

तत्रेत्यादि । स्नेहपानविधानेनेति वमनादिशोधनाङ्गस्यैव स्नेहस्य पानविधानेन; न पुनः स्वतन्त्रस्य, कुष्ठानां रूक्षणीयत्वात् । स्निग्धस्य पुनः क्रमादनुक्तान्यपि वमनविरेचनशोणितमोक्षणानि क्रमेणैव पूर्वरूपादौ, अनेनैव क्रमेण कर्मणः सर्वत्रोक्तत्वात् । उपपादयेत् उपक्रमेतेत्यर्थः । तानेव शोधनाङ्गस्नेहानुत्पादयन्ना-

१ 'व्यायामं' इति पा० । २ 'लावादिसंबन्धि' इति पा० । ३ 'द्रव्यराशेर्विभाजने' इति पा० ।

१ 'तात्स्थ्याद्' इति पा० । २ 'क्रमानुक्तावपि' इति पा० ।

ह—मेषशृङ्गीत्यादि । मेषशृङ्गी कर्कटशृङ्गी; गवी तु पुत्रञ्जीवकभेदमाह । श्वदंष्ट्रा गोक्षुरकः । शार्ङ्गेष्टा काकतिक्ता, 'भुंभुंरटा' इति लोके; 'गूथकरञ्ज' इत्यपरे । शेषं प्रसिद्धम् । एतैः कषायकल्करूपैः सिद्धं सामान्यपरिभाषया तैलं घृतं वा वातकुष्ठे एव, कफानुबन्धे तैलं, पित्तानुबन्धे घृतम्; अन्ये तु पानाय घृतं, अभ्यङ्गाय तैलमिति । अश्वकर्णेत्यादि अश्वकर्णः पूर्वदेशे गन्धमुण्डोऽश्वत्थसदृशः । ककुभः सुगन्धिमूलो विटपः । पलाशः किंशुकः । पिचुमर्दो निम्बः । समङ्गा स्पर्शरोदनिका, लज्जालुरिति लोके । प्रियालेत्यादि । प्रियालश्चारः । सर्पिरिति पूर्वयोगादनुवर्तते, एवमग्रेऽपि । भल्लातकेत्यादि । तुवरकः पश्चिमसमुद्रभूमिषु प्रसिद्ध एव ॥ ७ ॥

सप्तपर्णारग्वधातिविषेक्षुरपाठाकटुरोहिण्यमृतात्रिफलापटोलपिचुमर्दपर्पटकदुरालभात्रायमाणामुस्ताचन्दनपद्मकहरिद्रोपकुल्याविशालामूर्वाशतावरीसारिवेन्द्रयवाटरूषकषड्ग्रन्थामधुकभूनिम्बगृष्टिका इति समभागाः कल्कः स्यात्, कल्काच्चतुर्गुणं सर्पिः प्रक्षिप्य तद्विगुणो धात्रीफलरसस्तच्चतुर्गुणा आपस्तदैकध्यं समालोड्य विपचेत्, एतन्महातिक्तकं नाम सर्पिः कुष्ठविषमज्वररक्तपित्तहृद्रोगोन्मादापस्मारगुल्मपिडकासृग्दरगलगण्डगण्डमालाश्लीपदपाण्डुरोगविसर्पार्शःषाण्ढ्यकण्डूपामादीञ्छमयेदिति ॥ ८ ॥

त्रिफलापटोलपिचुमन्दाटरूषककटुरोहिणीदुरालभात्रायमाणाः पर्पटकश्चैतेषां द्विपलिकान् भागाञ्जलद्रोणे प्रक्षिप्य पादावशेषं कषायमादाय कल्कपेष्याणीमानि भेषजान्यर्धपलिकानि त्रायमाणामुस्तेन्द्रयवचन्दनकिराततिक्तानि पिप्पल्यश्चैतानि घृतप्रस्थे समावाप्य विपचेत्, एतत्तिक्तकं नाम सर्पिः कुष्ठविषमज्वरगुल्मार्शोग्रहणीदोषशोफपाण्डुरोगविसर्पषाण्ढ्यशमनमूर्ध्वजत्रुगतरोगघ्नं चेति ॥ ९ ॥

हरिद्रोपकुल्याविशालेत्यत्र तन्त्रान्तरदर्शनाद्धरिद्राद्वयं, पिप्पली गजपिप्पली चेत्युपकुल्याद्वयं च बोद्धव्यं, विशाला इन्द्रवारुणी, मूर्वा चोरस्नायुः, षड्ग्रन्था वचा । परिभाषाव्यापारो नास्त्येवात्र महातिक्तके, सामान्यकल्ककषायपरिमाणद्रव्यपरिमाणयोश्चोक्तत्वात् । षाण्ढ्यं षण्ढभावः ॥ ८ ॥ ९ ॥

अतोऽन्यतमेन घृतेन स्निग्धस्विन्नस्यैकां द्वे तिस्रश्चतस्रः पञ्च वा सिरा विध्येत्; मण्डलानि चोत्सन्नान्यवलिखेदभीक्ष्णं, प्रच्छयेद्वा, समुद्रफेनशाकगोजीकाकोदुम्बरिकापत्रैर्वाऽवघृष्यालेपयेल्लाक्षासर्जरसरसाञ्जनप्रपुन्नाडावल्गुजतेजोवत्यश्वमारकार्ककुटजारेवतमूलकल्कैर्मूत्रपिष्टैः पित्तपिष्टैर्वा, स्वर्जिकातुत्थकासीसविडङ्गागारधूमचित्रककटुकसुधाहरिद्रासैन्धवकल्कैर्वा, एतान्येवावाप्य क्षारकल्पेन निःस्रुते पालाशे क्षारे ततो विपाच्य फाणीतमिव संजातमवतार्य लेपयेत्, ज्योतिष्कफललाक्षामरिचपिप्पलीसुमनःपत्रैर्वा, हरितालमनःशिलार्कक्षीरतिलशिग्रुमरिचकल्कैर्वा, स्वर्जिकाकुष्ठतुत्थकुटजचित्रकविडङ्गमरिचरोध्रमनःशिलाकल्कैर्वा, हरीतकीकरञ्जिकाविडङ्गसिद्धार्थकलवणरोचनावल्गुजहरिद्राकल्कैर्वा ॥ १० ॥

सर्वे कुष्ठापहाः सिद्धा लेपाः सप्त प्रकीर्तिताः ॥

शाको महाखरपत्रः, 'शाखोट' इत्यन्ये; गोजी गोजिह्वा; काकोदुम्बरिका काष्ठोदुम्बरिका । तमेव प्रलेपं निर्दिशन्नाह—लाक्षासर्जरसेत्यादि । आरेवतः किरमालकः । पित्तपिष्टैरिति गोपित्तपिष्टैः । एतान्येवेत्यादि । निःस्रुते गालिते । क्षारकल्पातिदेशेन तिलनालादिभिरादीपनं षड्गुणोदकस्रावणं च । सुवर्चिकातुत्थकासीसादिचूर्णं परिवाप्य क्षाराद् द्वात्रिंशत्तमभागप्रमाणम् । स्वर्जिकेत्यादि । ज्योतिष्कः काकमर्दनिका, तस्याः फलम् । सुमना जाती । हरितालेत्यादि । शिग्रुर्विटपशाकः, शोभाञ्जनमन्ये । हरीतकीत्यादि । करञ्जिका वृक्षकरञ्जः । सर्वेत्यादि । सिद्धा इति विशेषणं निश्चितफलसिद्धिबोधनार्थम् ॥ १० ॥—

वैशेषिकानतस्तूर्ध्वं दद्रूश्वित्रेषु मे शृणु ॥ ११ ॥

लाक्षा कुष्ठं सर्षपाः श्रीनिकेतं
　　रात्रिर्व्योषं चक्रमर्दस्य बीजम् ॥
कृत्वैकस्थं तक्रपिष्टः प्रलेपो
　　दद्रूघ्नोक्तो मूलकाद्बीजयुक्तः ॥ १२ ॥

वैशेषिकानित्यादि । श्रीनिकेतं नवनीतधूपः सरलनिर्यास इति । रात्रिर्हरिद्रा ॥ ११ ॥ १२ ॥

सिन्धूद्भूतं चक्रमर्दस्य बीज-
　　मिक्षूद्भूतं केशरं तार्क्ष्यशैलम् ॥
पिष्टो लेपोऽयं कपित्थाद्रसेन
　　दद्रूस्तूर्णं नाशयत्येष योगः ॥ १३ ॥

सिन्धूद्भूतमित्यादि । सिन्धूद्भूतं सैन्धवम् । इक्षूद्भूतो गुडः । केशरं बकुलम् । तार्क्ष्यशैलं रसाञ्जनम् ॥ १३ ॥

हेमक्षीरी व्याधिघातः शिरीषो
　　निम्बः सर्जो वत्सकः साजकर्णः ॥
शीघ्रं तीव्रा नाशयन्तीह दद्रूः
　　स्नानालेपोद्धर्षणेषूपयुक्ताः ॥ १४ ॥

हेमक्षीरी कङ्कुष्ठम् । व्याधिघातः किरमालकः । सर्जो लघुसर्जः । अजकर्णो महासर्जः, 'गन्धमुण्ड' इत्येके । स्नानेत्यादि ।

---

१ 'आगुधूप' इति पा० । २ '°तिविषोशीर°' इति पा० । ३ 'द्रव्याण्यर्धपलिकानि' इति पा० ।

१ 'घोराः' इति पा० ।

'पानालेपोद्धर्षणेषु' इत्यन्ये पठन्ति । लेपनोद्धर्षणयोः पेषणे तक्रमम्लं, कपित्थरसमन्येऽनुवर्तयन्ति ॥ १४ ॥

**भद्रासंज्ञोदुम्बरीमूलतुल्यं**
**दत्त्वा मूलं क्षोदयित्वा मलप्वाः ।**
**सिद्धं तोयं पीतमुष्णे सुखोष्णं**
**स्फोटाञ्छ्वित्रे पुण्डरीके च कुर्यात् ॥ १५ ॥**

दद्रुषु योगत्रयमभिधाय श्वित्रे विनिर्दिशन्नाह—भद्रेत्यादि । उदुम्बरी भद्रनामा काष्ठोदुम्बरिका महती, मलपूः सैबाल्पविटपा, तयोर्मूलं पलं षोडशभिः सलिलपलैः पक्वं चतुर्भागावशिष्टमुष्णकाले कोष्णं पीतमातपसंस्थस्य कटुतैलाभ्यक्तस्य च श्वित्रे स्फोटजननम् । जीर्णे गव्यमथितेन दाडिमयूषेण वा भोक्तव्यम् ॥ १५ ॥

**द्वैपं दग्धं चर्म मातङ्गजं वा**
**भिन्ने स्फोटे तैलयुक्तं प्रलेपः ॥**

संजातभिन्नस्फोटस्य श्वित्रिण उत्तरकर्म निर्दिशन्नाह—द्वैपमित्यादि । द्वीपी चित्रकायो व्याघ्रः, तस्येदं चर्म द्वैपम् । मातङ्गो हस्ती, तस्माज्जातं मातङ्गजं चर्म । तैलमत्र विषाणिकादिदम् । तदुक्तम्—"आवर्तकीमूलसिद्धेन तैलेनाभ्यज्यावचूर्णयेद् गजद्वीपिचर्ममसीचूर्णेन, त्रिफलालोहचूर्णेन वा" इति ॥—

**पूतिः कीटो राजवृक्षोद्भवेन**
**क्षारेणाक्तः श्वित्रमेको निहन्ति ॥ १६ ॥**

पूतिः कीटः शस्यादौ वर्षाकाले कर्बुरकः 'तेलिनी' इति प्रसिद्धः, पूर्वदेशे 'पुण्डालिका' इति । स चारग्वधक्षारेण सहाक्तो मिश्रितः । राजवृक्ष आरग्वधः । एकः श्रेष्ठः । उद्दालनत्वात् क्षारोदकेनात्र द्रवकार्यम् । 'उक्तः' इत्यन्ये वदन्ति ॥ १६ ॥

**कृष्णस्य सर्पस्य मसी सुदग्धा**
**बैभीतकं तैलमथ द्वितीयम् ॥**
**एतत् समस्तं मृदितं प्रलेपा-**
**च्छ्वित्राणि सर्वाण्यपहन्ति शीघ्रम् ॥ १७ ॥**

कृष्णस्येत्यादि । कृष्णसर्पो यदा दह्यमानोऽतिकृष्णत्वं गच्छति तदा तच्चूर्णं मसीत्युच्यते, स एवाग्निदह्यमानो यदा शुक्लत्वं याति तदा क्षार इत्युच्यते ॥ १७ ॥

**अध्यर्धतोये क्षुमितिस्रुतस्य**
**क्षारस्य कल्पेन तु सप्तकृत्वः ॥**
**तैलं शृतं तेन चतुर्गुणेन**
**श्वित्रापहं म्रक्षणमेतदग्र्यम् ॥ १८ ॥**

अध्यर्धेत्यादि । कृष्णस्य सर्पस्येत्यनुवर्तमानात्तस्य क्षारादध्यर्धं तोयमधिकार्धमित्यर्थः । क्षारस्य कल्पेन क्षारपाकविधिना । सप्तकृत्वः सप्तवारान् । म्रक्षणम् आलेपनम् । अग्र्यं प्रधानमित्यर्थः ॥ १८ ॥

१ 'संजातस्रुतस्फोटस्य' इति पा० । २ 'पेदुलिकेति' इति पा० । ३ 'क्षुमितस्रुतस्य' इति पा० ।

**घृतेन युक्तं प्रपुनाडबीजं**
**कुष्ठं च यष्टीमधुकं च पिष्ट्वा ॥**
**श्वेताय दद्याद्गृहकुक्कुटाय**
**चतुर्थभक्ताय बुभुक्षिताय ॥ १९ ॥**
**तस्योपसंगृह्य च तत् पुरीष-**
**मुत्पाचितं सर्वत एव लिम्पेत् ॥**
**अभ्यन्तरं मासमिमं प्रयोगं**
**प्रयोजयेच्छ्वित्रमथो निहन्ति ॥ २० ॥**

घृतेनेत्यादि । चतुर्थभक्तायेति एकाहमुपोषिताय द्वितीयेऽहनि सायं धवलाय ग्राम्यकुक्कुटायात्यन्तबुभुक्षिताय प्रपुन्नाडबीजादिकं घृतयुक्तं भक्षयितुं दद्यात् । तस्य पुरीषमुपसंगृह्य गृहीत्वा तेन पुरीषेण मासमेकं श्वित्रमभ्यन्तरं धात्वन्तर्गतं मलप्वादिभिः प्रयोगैः स्फोटकादिभिरुत्पाचितं पाकं नीतं लिम्पेत्; स लेपस्तच्छ्वित्रं निहन्तीत्यर्थः ॥ १९ ॥ २० ॥

**क्षारे सुदग्धे जलगण्डजे तु**
**गजस्य मूत्रेण बहुस्रुते च ॥**
**द्रोणप्रमाणे दशभागयुक्तं**
**दत्त्वा पचेद्बीजमवल्गुजस्य ॥ २१ ॥**
**एतद्यदा चिक्कणतामुपैति**
**तदा समस्तं गुटिका विदध्यात् ॥**
**श्वित्रं प्रलिम्पेदथ संप्रघृष्यं**
**तया व्रजेदाशु सवर्णभावम् ॥ २२ ॥**

क्षार इत्यादि । जलगण्डो जलगण्डीरकः, नदीपिप्पलिकेत्यन्ये । 'गजलेण्डजे क्षारे' इत्यन्ये पठन्ति; तच्च न पठनीयं तन्त्रान्तरविरोधात् । दशभागयुक्तं दशभागयोजितमवल्गुजचूर्णं प्रक्षिपेदिति ॥ २१ ॥ २२ ॥

**कषायकल्पेन सुभावितां तु**
**जलं त्वचा चूतहरीतकीनाम् ॥**
**तां ताम्रदीपे प्रणिधाय धीमान्**
**वर्तिं वटक्षीरसुभावितां तु ॥ २३ ॥**
**आदीप्य तज्जातमसीं गृहीत्वा**
**तां चापि पथ्याम्भसि भावयित्वा ॥**
**संप्रच्छितं तद्बहुशः किलासं**
**तैलेन सिक्तं कटुना प्रयाति ॥ २४ ॥**

कषायेत्यादि । चूतहरीतकीनां त्वचा कृत्वा कषायकल्पेन क्वाथकल्पनया यज्जलं क्वाथः, तेन सुभावितां पिचुवर्तिं कटु-

१-२ 'उत्पाटितं' इति पा० । ३ 'गजलेण्डजे' इति पा० । तत्र गजपुरीषजे इत्यर्थः । ४ 'समांशां' इति पा० । ५ 'संप्रघृष्टं' इति पा० । ६ हाराणचन्द्रस्तु 'दलत्वचं' इति पठति, 'दलमुसेन्धखण्डयोः' इति कोषान्तरस्मरणात् दलत्वचमुरसन्नां त्वचमित्यर्थः, तथा च चूतहरीतकीनां घनां त्वचं, कषायकल्पेन 'भाव्यद्रव्यसमं क्वाथ्यं' इत्याद्युक्तेन विधिना, प्रकृतत्वात्तासामेव कषायेण, सुभावितां सप्तकृत्वो भावितां, कृत्वेति शेषः" इति व्याख्यानयति । ७ 'संप्रक्षितं' इति पा० ।

तैलेन सिक्त्वा, तां ताम्रदीपे प्रणिधाय स्थापयित्वा, आदीप्य प्रज्वाल्य, तज्जातमसीं गृहीत्वा, ततो वटक्षीरसुभावितां कृत्वा, ततस्तामेव पथ्याक्काथेन भावयित्वा, कटुना तैलेन सिक्तं किलासं बहुशः संप्रच्छितं तया लेपितमपयाति । "भाव्य-द्रव्यसमं काथ्यं काथश्चाष्टांशशेषितः" इति । अयं योगोऽन्यत्रा-प्युक्तः—"पथ्याम्लकषायेण पिचुवर्तिः सुभाविता । कटुतैल-युते ताम्रपात्रे प्रज्वाल्येत्ततः ॥ मसीं तज्जां वटक्षीरपथ्याक्काथेन भावयेत् । म्रक्षितं कटुतैलाक्तं तेन श्वित्रं प्रणश्यति"—इति । गयदासस्तु–'वर्तिं पटवर्तिं पूर्वं वटक्षीरेण भावयेत्ततः कटुतै-लेन' इति व्याख्यानयति । "तैलेन सिक्तं कटुना समस्तमालेपये-देवमुपैति शान्तिम्"—इति केचित् पठन्ति ॥ २३ ॥ २४ ॥

आवल्गुजं बीजमग्र्यं नदीजं
　काकाह्वानोदुम्बरी या च लाक्षा ॥
लौहं चूर्णं मागधी तार्क्ष्यशैलं
　तुल्याः कार्याः कृष्णवर्णास्तिलाश्च ॥ २५ ॥
वर्तिं कृत्वा तां गवां पित्तपिष्टां
　लेपः कार्यः श्वित्रिणां श्वित्रहारी ॥
लेपात् पित्तं शैखिनं श्वित्रहारि
　ह्रीबेरं वा दग्धमेतेन युक्तम् ॥ २६ ॥

आवल्गुजमित्यादि । अग्र्यं श्रेष्ठं, नदीजं तापीनदीसमुत्थो माक्षिकधातुः, काकाह्वानोदुम्बरी काकसंज्ञोदुम्बरिका, या च लाक्षा साऽपि तज्जा साक्षिध्यात्, तार्क्ष्यशैलं रसाञ्जनं, तैस्तुल्याः कृष्णवर्णास्तिलाः कार्याः, तैर्वर्तिं कृत्वा तया लेपः कार्यः । अन्ये 'ताप्युद्भूतोऽवल्गुजं बीजमग्र्यं' इति पठन्ति; तत्रापि ताप्युद्भूतो माक्षिकधातुः । शिखिन इदं शैखिनं पित्तं मयूरपित्तमित्यर्थः ॥ २५ ॥ २६ ॥

तुत्थालकटुकाव्योषसिंहार्कद्वयमारकाः ॥
कुष्ठावल्गुजभल्लातक्षीरिणीसर्षपाः स्नुही ॥ २७ ॥
तिल्वकारिष्टपीलूनां पत्राण्यारग्वधस्य च ॥
बीजं विडङ्गाश्वहन्त्रोर्हरिद्रे बृहतीद्वयम् ॥ २८ ॥
आभ्यां श्वित्राणि योगाभ्यां लेपान्नश्यन्त्यशेषतः ॥

तुत्थेत्यादि । आलं हरितालम् । सिंहो रक्तशोभाञ्जनः । क्षीरिणी अर्कपुष्पी । तुत्थालकटुकेत्यादिश्लोकद्वयेन योगद्वयं बोद्धव्यम् ॥ २७ ॥ २८ ॥—

वायसीफल्गुतिक्तानां शतं दत्त्वा पृथक् पृथक् ॥२९॥
द्वे लोहरजसः प्रस्थे त्रिफलाव्याढकं तथा ॥
त्रिद्रोणेऽपां पचेद्यावद्भागौ द्वावसनादपि ॥ ३० ॥
शिष्टौ च विपचेद्भूय एतैः श्लक्ष्णप्रपेषितैः ॥
कल्कैरिन्द्रयवव्योषत्वग्दारुचतुरङ्गुलैः ॥ ३१ ॥
पारावतपदीदन्तीबाकुचीकेशराह्वयैः ॥
कण्टकार्या च तत्पक्वं घृतं कुष्ठिषु योजयेत् ॥ ३२ ॥

१ "°सिंहार्क°" इति पा० । २ 'सिंही बासा इति पा० ।

दोषधात्वाश्रितं पानादभ्यङ्गात्त्वग्गतं तथा ॥
अप्यसाध्यं नृणां कुष्ठं नाम्ना नीलं नियच्छति ॥३३॥

वायसी काकतिक्ता 'चिरपोटिका' इति लोके, 'काकमाची' इत्यन्ये; फल्गुः काकोदुम्बरिका, 'अवल्गुः' इत्यपरे पठन्ति; अवल्गुः बाकुची; तिक्ता कटुका । पारावतपदी ईषल्लोहितो हंस-पदीभेदः । केशराह्वयो बकुलः । त्रिद्रोणेऽपामित्यत्र अपां द्विगुण-मात्रा, द्रवत्वात्; तेन जलषड्द्रोणाः प्रक्षिप्यन्ते । असनात् बीजे-कसाराद् द्वौ प्रस्थौ । शिष्टौ उर्वरितौ द्वौ, चतुर्थभागं सर्पिः, सर्पि-षश्चतुर्थांशमिन्द्रयवादिकल्कं प्रक्षिप्य विपचेदिति ॥ २९–३३ ॥

त्रिफलात्वक् त्रिकटुकं सुरसा मदयन्तिका ॥
वायस्यारग्वधश्चैषां तुलां कुर्यात् पृथक् पृथक् ॥३४॥
काकमाच्यर्कवरुणदन्तीकुटजचित्रकात् ॥
दार्वीनिदिग्धिकाभ्यां तु पृथग्दशपलं तथा ॥ ३५ ॥
त्रिद्रोणेऽपां पचेद्यावत् षट्प्रस्थं परिशेषितम् ॥
शकृद्रसदधिक्षीरमूत्राणां पृथगाढकम् ॥ ३६ ॥
तद्वद्धृतस्य तत्साध्यं भूनिम्बव्योषचित्रकैः ॥
करञ्जफलनीलिकाश्यामावल्गुजपीलुभिः ॥ ३७ ॥
नीलिनीनिम्बकुसुमैः सिद्धं कुष्ठापहं घृतम् ॥
म्रक्षणादङ्गसावर्ण्यं श्वित्रिणां जनयेन्नृणाम् ॥
भगन्दरं कृमीनर्शो महानीलं नियच्छति ॥ ३८ ॥

त्रिफलेत्यादि । मदयन्तिका नखादिरागजननी 'मेंहदी' इति प्रसिद्धा । वायसी काकमाची । शकृदादीनि गवां ग्राह्याणि । नीलिका नीलाञ्जनिका शारदफला । नीलिनी नीलिका । म्रक्षणादभ्यङ्गात् । अनार्षे नीलमहानीलघृते, एते चेदृशे जेज्जटगयदासाभ्यां व्याख्याते, अतस्तन्मतानुसारिणा मयाऽपि पठिते व्याख्याते च । जलपेक्षया काथ्यद्रव्यस्याति-बाहुल्यमत्र योगे, तस्माद्वृद्धवाग्भटीयं महानीलघृतं लिख्यते; यथा—"मदयन्त्याः सवायस्याः सुरभ्याः प्रग्रहस्य च । शतं पलानां प्रत्येकं वरायास्त्वाढकत्रयम् ॥ व्याघ्रीवह्निकपोतावरक्ष-कखदिरार्कमूलदन्त्येन्द्रयः । सनिशाद्वया दशपलाः काथेऽमीषां क्षिपेत् पिष्ट्वा ॥ बीजं करञ्जेङ्गुदशिग्रुनिम्बान्नीलीं सनीलोत्पलच-न्द्ररेखाम् । श्यामां किरातं कटुकत्रयं च पञ्चाढकं तत्र च पञ्च-गव्यात् ॥ शमयत्यचिरेण घृतं मृदुहुतवहसाधितं महानीलम् । न किलासमेव केवलमपि च व्रणगुह्यरोगवल्मीकान्" (अ. सं. चि. २२) इत्यादि ॥ ३४–३८ ॥

मूत्रं गव्यं चित्रकव्योषयुक्तं
　सर्पिःकुम्भे क्षौद्रयुक्तं स्थितं हि ॥
पक्षादूर्ध्वं श्वित्रिभिः पेयमेतत् ।
　कुर्याच्चास्मिन् कुष्ठदिष्टं विधानम् ॥ ३९ ॥

१ 'केशराद्वयं बालकम्' इति पा० । २ 'विजयसारात्' इति पा० । ३ 'महीन्द्री' इति पा० । ४ 'सुरस्याश्च बीजकप्रग्रहस्य' इति पा० । ५ 'अपचीकृमिकुष्ठकासमभ्यस्तम्' इति पा० ।

मूत्रमित्यादि । मूत्रमधुनी तुल्ये । चित्रकस्य व्योषस्य च तावती मात्रा यावत्या किञ्चित् कटुकत्वमरिष्टस्य, कुम्भलेपार्थमेव तदित्यन्ये । किलासे कुष्ठचिकित्सितमेव संक्षेपार्थमतिदेशेन निर्दिशन्नाह—कुर्याच्चास्मिन्नित्यादि ॥ ३९ ॥

पूतीकार्कस्नुङ्नरेन्द्रद्रुमाणां
मूत्रैः पिष्टाः पल्लवाः सौमनाश्च ॥
लेपः श्वित्रं हन्ति दद्रूर्व्रणांश्च
दुष्टान्यर्शांस्येष नाडीव्रणांश्च ॥ ४० ॥

पूतीकः चिरविल्वः । नरेन्द्रद्रुम आरग्वधः । सुमना जाती ॥ ४० ॥

अस्मादूर्ध्वं निःस्रुते दुष्टरक्ते
जातप्राणं सर्पिषा स्नेहयित्वा ॥
तीक्ष्णैर्योगैश्छर्दयित्वा प्रगाढं
पश्चाद्दोषं निर्हरेच्चाप्रमत्तः ॥ ४१ ॥

इदानीमादावपि कृतवमनस्य कृतविरेचनस्यापि कुष्ठिनः पुनः पुनरेव शोधनशोणितावसेकयोः कर्तव्यतामुपदिशन्नाह—अस्मादूर्ध्वमित्यादि ॥ ४१ ॥

दुर्वान्तो वा दुर्विरिक्तोऽपि वा स्यात्
कुष्ठी दोषैरुद्धतैर्व्याप्तदेहः ॥
निःसन्दिग्धं यात्यसाध्यत्वमाशु
तस्मात् कृत्स्नान्निर्हरेत्तस्य दोषान् ॥ ४२ ॥

कुतः पुनरशेषेण शोणितं दोषाश्च हरणीया इत्याह—दुर्वान्त इत्यादि । अपिशब्दाद्दुष्टशोणितमनिर्ह्रियमाणमपि ॥ ४२ ॥

पक्षात् पक्षाच्छर्दनान्यभ्युपेया-
न्मासान्मासात् स्रंसनं चापि देयम् ॥
स्राव्यं रक्तं वत्सरे हि द्विरल्पं
नस्यं दद्याच्च त्रिरात्रात्त्रिरात्रात् ॥ ४३ ॥

केन क्रमेण शोधनं शोणितावसेचनं च कर्तव्यमित्याह—पक्षादित्यादि । वत्सरे हि द्विरल्पमिति वर्षे द्वौ वारौ षड्भिः षड्भिर्मासैरित्यर्थः ॥ ४३ ॥

पथ्या व्योषं सेक्षुजातं सतैलं
लीढ्वा शीघ्रं मुच्यते कुष्ठरोगात् ॥
धात्रीपथ्याक्षोपकुल्याविडङ्गान्
क्षौद्राज्याभ्यामेकतो वाऽवलिह्यात् ॥४४॥
पीत्वा मासं वा पलांशां हरिद्रां
मूत्रेणान्तं पापरोगस्य गच्छेत् ॥
एवं पेयश्चित्रकः श्लक्ष्णपिष्टः
पिप्पल्यो वा पूर्ववन्मूत्रयुक्ताः ॥ ४५ ॥
तद्वत्ताक्ष्र्यं मासमात्रं च पेयं,
तेनाजस्रं देहमालेपयेच्च ॥
आरिष्टीत्वक् सप्तपर्णी च तुल्या
लाक्षा मुस्तं पञ्चमूल्यौ हरिद्रे ॥ ४६ ॥

१ 'दुष्टव्रणांश्च' इति पा० । २ 'क्षिप्रं जन्तुं' इति पा० ।

मञ्जिष्ठाक्षौ वासको देवदारु
पथ्यावह्नी व्योषधात्रीविडङ्गाः ॥
सामान्यांशं योजयित्वा विडङ्ग-
श्चूर्णं कृत्वा तत्पलोन्मानमश्नन् ॥ ४७ ॥
कुष्ठाज्जन्तुर्मुच्यते त्रैफलं वा
सर्पिर्द्रोणं व्योषयुक्तं च युञ्जन् ॥
गोमूत्राम्बुद्रोणसिद्धेऽक्षपीडे
सिद्धं सर्पिर्नाशयेच्चापि कुष्ठम् ॥ ४८ ॥
आरग्वधे सप्तपर्णे पटोले
सवृक्षके नक्तमाले सनिम्बे
जीर्णे पक्वं तद्धरिद्राद्वयेन
हन्यात् कुष्ठं मुष्कके चापि सर्पिः ॥ ४९ ॥

प्रायोगिकानेव योगान्निर्दिशन्नाह—पथ्येत्यादि । सेक्षुजातं सगुडम् । तैलगुडयोः कुष्ठकारित्वेऽपि हरीतकीत्रिकटुसंयुक्तयोः कुष्ठहारित्वं, संयोगशक्तेरचिन्त्यत्वात् । अन्ये त्वेवं पठन्ति—"पथ्याव्योषं तैलयुक्तं गुडं च नित्यं खादन्मुच्यते कुष्ठरोगात्"—इति । धात्रीत्यादि । अक्षो बिभीतकः । पीत्वेत्यादि । पलांशां पलमेव अंशो यस्याः सा तथा तां पलपरिमाणामित्यर्थः । एवमित्यादि एवं पूर्वोक्तप्रकारेण । पिप्पल्य इत्यादि । पूर्ववत् हरिद्रावत् क्रमेण पलमात्रां मासमेव । तद्वदित्यादि ।—तद्वत् ताक्ष्र्यं तथा रसाञ्जनमप्यभ्यासेन पलमात्रं मासं पेयम् । त्रीण्यप्येतानि कुष्ठहराणि रसायनान्यपि । तेनाजस्रमित्यादि । तेन अनन्तरोक्तेन रसाञ्जनेन । आरिष्टीत्वगित्यादि । अत्रापि क्रमाभ्यासेन पलं पलं मासमेव । त्रैफलं वेत्यादि । 'कुष्ठाज्जन्तुर्मुच्यते' इत्यध्याहारः । अन्ये त्वन्यथा पठन्ति व्याख्यानयन्ति च, स च विस्तरभयान्न लिखितः । गोमूत्रेत्यादि । गोमूत्रमेवाम्बु गोमूत्राम्बु, गोमूत्रेणैव क्वाथो निर्वर्त्य इत्यर्थः; गोमूत्राम्बुनोस्तुल्ययोर्द्रोण इत्येके । अक्षपीडो यवतिक्ता । सामान्यपरिभाषाकल्पेन सर्पिः साधनीयम् । आरग्वधे इत्यादि । व्याधिघातादिभिर्मुष्ककान्तैः सामान्यपरिभाषाकल्पनया । व्याधिघाताद्यं घृतं दह्यमानस्य पित्तकुष्ठिनः । "वासादार्वीतिक्तवल्लीकरञ्जव्याधिघ्नाभिक्षारवृक्षादिभिश्च । वत्साख्यानारिष्टसप्तच्छदैश्च सिद्धं सर्पिः सर्वकुष्ठं निहन्ति"—इति तन्त्रान्तरपठितो योगो न सौश्रुतः, जेज्जटाचार्येणानुक्तत्वान्न पठनीयः ॥ ४४–४९ ॥

रोध्रारिष्टं पद्मकं रक्तसारः
सप्ताह्वाक्षौ वृक्षको बीजकश्च ॥
योज्याः स्नाने दह्यमानस्य जन्तोः
पेया वा स्यात् क्षौद्रयुक्ता त्रिभण्डी ॥५०॥

तस्यैव बहुपित्तस्याबलवतो दाहप्रशमनहेतुं निर्दिशन्नाह—रोध्रेत्यादि । सप्ताह्वः सप्तपर्णः । रोध्रादिभिः षडङ्गोदककल्पनया न तु कषायकल्पनया, नापि कषायेण स्नानम् । तस्यैव बहुपि-

तस्य बलवतो दाहप्रशमनहेतुं निर्दिशन्नाह—पेया वेत्यादि । त्रिभण्डी त्रिवृत्; कोष्ठबलापेक्षया त्रिवृतो मात्रा ॥ ५० ॥

खादेत् कुष्ठी मांसशा(पा)ते पुराणान्
मुद्गान् सिद्धान्निम्बतोये सतैलान् ॥

पित्तकुष्ठिनां मांसक्षरणे[1] कृमिसंभवेऽपि पानं निर्दिशन्नाह—खादेदित्यादि । षडङ्गकल्पेन निम्बतोयं परिकल्प्य मुद्गानां साधनम् ॥—

निम्बक्वाथं जातसत्त्वः पिबेद्वा
क्वाथं वाऽर्कालर्कसप्तच्छदानाम् ॥ ५१ ॥
जग्धेष्वङ्गेष्वश्वमारस्य मूलं
लेपो युक्तः स्याद्विडङ्गैः समूत्रैः ॥
मूत्रैश्चैनं सेचयेद्भोजयेच्च
सर्वाहारान् संप्रयुक्तान् विडङ्गैः ॥ ५२ ॥
कारञ्जं वा सार्षपं वा क्षतेषु
क्षेप्यं तैलं शिग्रुकोशाम्रयोर्वा ॥
पक्वं सर्वैर्वा कटूष्णैः सतिक्तैः
शेषं च स्याद्दुष्टवत् संविधानम् ॥ ५३ ॥

निम्बेत्यादि । जातसत्त्वो जातकृमिः । क्वाथं वेत्यादि । जातकृमिरेव पिबेत् । जग्धेष्वित्यादि । कृमिजग्धेष्वङ्गेषु हयमारस्य मूलं सकृमिहरं गोमूत्रेण पिष्ट्वा लेपयेत् । मूत्रैरित्यादि । तत्रैव गोमूत्रपरिषेचनम् । भोजयेदित्यादि । करञ्जसर्षपशोभाञ्जनकोशाम्रबीजतैलानि स्वभावतो दुष्टव्रणयोगीनि, तानि चापक्वान्येव[2] । पक्वमित्यादि ।—तान्येव सर्वैः कटुकैर्मरिचादिभिः, तिक्तैस्तु निम्बादिभिः, सामान्यकषायपरिभाषया कषायीकृतैः पक्वानीति । अत्र पाठान्तरमप्यस्ति, तद्विस्तरभैयान्न[3] लिखितम् । शेषमित्यादि । दुष्टवद् दुष्टव्रणवत्, तुल्यचिकित्सितत्वात् । अन्ये त्वत्र "शेषं च स्यात् पूर्ववत् संविधानम्" इति पठन्ति । तत्रापि पूर्वशब्देन दुष्टव्रणविधिरुच्यते । अन्ये तु पठन्ति 'कुष्ठवत् संविधानम्' इति, तन्नेच्छति **गयी** ॥ ५१-५३ ॥

सप्तपर्णकरञ्जार्कमालतीकरवीरजम् ॥
स्नुहीशिरीषयोर्मूलं चित्रकास्फोतयोरपि ॥ ५४ ॥
विषलाङ्गलवज्राख्यकासीसालमनःशिलाः ॥
करञ्जबीजं त्रिकटु त्रिफलां रजनीद्वयम् ॥ ५५ ॥
सिद्धार्थकान् विडङ्गानि प्रपुन्नाडं च संहरेत् ॥
मूत्रपिष्टैः पचेदेतैस्तैलं कुष्ठविनाशनम् ॥ ५६ ॥
एतद्वज्रकमभ्यङ्गान्नाडीदुष्टव्रणापहम् ॥
सिद्धार्थकः करञ्जौ द्वौ द्वे हरिद्रे रसाञ्जनम् ॥ ५७ ॥
कुटजश्च प्रपुन्नाडसप्तपर्णौ मृगादनी ॥
लाक्षा सर्जरसोऽर्कश्च सास्फोतारग्वधौ स्नुही ॥ ५८ ॥
शिरीषस्तुवराख्यस्तु कुटजारुष्करौ वचा ॥
कुष्ठं कृमिघ्नं मञ्जिष्ठा लाङ्गली चित्रकं तथा ॥ ५९ ॥
मालती कटुतुम्बी च गन्धाह्वा मूलकं तथा ॥
सैन्धवं करवीरश्च गृहधूमं विषं तथा ॥ ६० ॥
कम्पिल्लकं ससिन्दूरं तेजोह्वातुत्थकाह्वये ॥
समभागानि सर्वाणि कल्कपेष्याणि कारयेत् ॥ ६१ ॥
गोमूत्रं द्विगुणं दद्यात्तिलतैलाच्चतुर्गुणम् ॥
कारञ्जं या महावीर्यं सार्षपं वा महागुणम् ॥ ६२ ॥
अभ्यङ्गात् सर्वकुष्ठानि गण्डमालाभगन्दरान् ॥
नाडीदुष्टव्रणान् घोरान् नाशयेन्नात्र संशयः ॥ ६३ ॥
महावज्रकमित्येतन्नाम्ना तैलं महागुणम् ॥

सप्तपर्णेत्यादि । मालती जाती । स्नुही सेहुण्डः । आस्फोता सारिवा । विषं प्रसिद्धम् । लाङ्गलशब्देन कलिहारिकोच्यते । वज्राख्यः द्वितीयसेहुण्डः । आलं हरितालम् । शेषं प्रसिद्धम् । स्नेहचतुर्थांशो भेषजकल्कः, स्नेहाच्चतुर्गुणो द्रवः, इति न्यायेन पक्तव्यम् । वज्रतैले गोमूत्रेणैव द्रवकार्यम् । तैलं तिलतैलम् । **गयी** तु वज्रकतैले दुष्टव्रणाधिकारात् प्रागपि सर्षपतैलस्य विधानात् सर्षपतैलं विपाच्यमाह । अस्याग्रे केचिन्महावज्रकं पठन्ति, तच्च निबन्धकारैर्न पठितम् ॥ ५४-६३ ॥—

पित्तावापैर्मूत्रपिष्टैस्तैलं लाक्षादिकैः कृतम् ॥ ६४ ॥
सप्ताहं कटुकालाब्वां निदधीत चिकित्सकः ।
पीतवन्तं ततो मात्रां तेनाभ्यक्तं च मानवम् ॥ ६५ ॥
शाययेदातपे तस्य दोषा गच्छन्ति सर्वशः ॥

कुष्ठदुष्टव्रणे बहिःशोधनं तैलं निर्दिश्यान्तःशोधनार्थं तैलमुद्दिशन्नाह—पित्तेत्यादि । पित्तावापैः गोपित्तावापैः । मूत्रं गोमूत्रं, तच्च तैलाच्चतुर्गुणम् । तैलं तिलतैलम् । लाक्षादिको 'लाक्षारेवतकुटजाश्वमारकट्फल' ( सू. अ. ३८ ) इत्यादिको द्रव्यसंग्रहणीयोक्तः; अथवाऽत्रैव पठितो लाक्षासर्जरसरसाञ्जनप्रपुन्नाडधान्याश्वमारकार्ककुटजारेवतादिकः, द्वयोरप्यल्पान्तरत्वात् । कृतं संस्कृतमित्यर्थः । दोषा गच्छन्ति सर्वशः ऊर्ध्वमधस्तिर्यगित्यर्थः; **गयी** तु सर्वश इति बह्वर्थे शस्, वैफल्यगमनापेक्षया कृत्स्नश इत्यर्थः ॥ ६४ ॥ ६५ ॥—

स्नुतदोषं समुत्थाप्य स्नातं खदिरवारिणा ॥ ६६ ॥
यवागूं पाययेदेनं साधितां खदिराम्बुना ॥

स्नुतदोषमित्यादि । खदिरवारिणा खदिरोदकेन षडङ्गोदककल्पनया कल्पितेन । उष्णाभितप्तस्य शीतखदिराम्बुना स्नानं कथं क्रियते ? आतपसन्तप्तस्य शीतोदकस्नानं कुष्ठाक्षिरोगकृदिति चेत्; तन्न, तत्र तोयावगाहो निषिद्धः, न पुनस्तोयपरिषेकः । "स्नुतदोषं ततः स्नातं शीतेन खदिराम्बुना" इति क्वचित् पाठः ॥ ६६ ॥

एवं संशोधने वर्गे कुष्ठघ्नेष्वौषधेषु च ॥ ६७ ॥
कुर्यात्तैलानि सर्पींषि प्रदेहोद्धर्षणानि च ॥

१ 'मांसावरणेन' इति पा० । २ 'क्वाथ्यानीति' इति पा० ।
३ 'अभावान्न' इति पा० ।

१ 'प्रायेण' इति पा० ।

एवमित्यादि । संशोधने वर्गे इति संशोधनसंशमनीयाध्यायोक्तानि त्रिवृदादीनि । कुष्ठघ्नेष्वौषधेषु चेति खदिरादिष्वपि ॥ ६७ ॥—

**प्रातः प्रातश्च सेवेत योगान् वैरेचनाञ् शुभान् ॥**
**पञ्च षट् सप्त चाष्टौ वा यैरुत्थानं न गच्छति ॥६८॥**

इदानीं बहुदोषाणामाभ्यासिकमनुलोमनमाह—प्रातरित्यादि ॥ ६८ ॥

**कारभं वा पिबेन्मूत्रं जीर्णे तत्क्षीरभोजनम् ॥**
**जातसत्त्वानि कुष्ठानि मासैः षड्भिरपोहति ॥ ६९ ॥**

कारभमित्यादि । करभा उष्ट्री । अयं प्रयोगो न सौश्रुत इति **जेज्जटः, गयदासेन** व्याख्यातत्वान्मयाऽपि व्याख्यातः ॥ ६९ ॥

**दिदृक्षुरन्तं कुष्ठस्य खदिरं कुष्ठपीडितः ॥**
**सर्वथैव प्रयुञ्जीत स्नानपानाशनादिषु ॥ ७० ॥**
**यथा हन्ति प्रवृद्धत्वात् कुष्ठमातुरमोजसा ॥**
**तथा हन्त्युपयुक्तस्तु खदिरः कुष्ठमोजसा ॥ ७१ ॥**

कुष्ठेषु खदिरस्य सर्वथोपयोगित्वं दर्शयन्नाह—दिदृक्षुरित्यादि । दिदृक्षुर्द्रष्टुमिच्छुः । अन्तं विनाशम् । खदिरः कुष्ठमोजसा इत्यत्र ओजःशब्देन प्रभावो वीर्यं शक्तिरुच्यते ॥ ७० ॥ ७१ ॥

**नीचरोमनखः श्रान्तो हिताद्यौषधतत्परः ॥**
**योषिन्मांससुरावर्जी कुष्ठी कुष्ठमपोहति ॥ ७२ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने कुष्ठचिकित्सितं नाम नवमोऽध्यायः ॥ ९ ॥**

इदानीं प्रतिषेधविधिमाह—नीचरोमेत्यादि ॥ ७२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ।

**अथातो महाकुष्ठचिकित्सितं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । अस्मिन्नध्याये महतां क्षुद्राणां च कुष्ठानां चिकित्सितस्य प्रोक्तत्वान्महच्च तत् कुष्ठचिकित्सितं चेत्येके व्याचक्षते; तन्न, "कुष्ठानां महतां चापि" (सू. अ. ३) इत्यादिकेनाध्यापनसंप्रदानीयोक्तेन विरोधात्; तस्माद्धात्वनुप्रविष्टानि सप्त कुष्ठानि महान्तीत्यतो महतां धात्वनुप्रविष्टानां कुष्ठानां चिकित्सितमिति व्याख्या ज्यायसीति; **गयी** तु महतां सप्तानां काकणकवर्जितानामित्याह ॥ १ ॥ २ ॥

**कुष्ठेषु मेहेषु कफामयेषु**
**सर्वाङ्गशोफेषु च दारुणेषु ।**
**कृशत्वमिच्छत्सु च मेदुरेषु**
**योगानिमानग्र्यमतिर्विदध्यात् ॥ ३ ॥**

१ 'नीचरोमनखोऽश्रान्तः' इति पा० ।

कुष्ठेष्वित्यादि । कुष्ठादीनां चतुर्णामपि दारुणेष्विति विशेषणम् । कफामया अग्निसादकफप्रसेकादयः । मेदुरा मेदस्विनः । अग्र्यमतिरिति वैद्यस्य विशेषणं विहितम्, अग्र्यमतिः कुशाग्रीयमतिः; प्रकृतिवयोबलशरीरादीनामवस्थान्तराणि यो जानातीत्यर्थः ॥३॥

**क्षुण्णान् यवान्निष्पूतान् रात्रौ गोमूत्रपर्युषितान् महति किलिञ्जे शोषयेत्, एवं सप्तरात्रं भावयेच्छोषयेच्च, ततस्तान् कपालभृष्टान् शक्तून् कारयित्वा, प्रातः प्रातरेव कुष्ठिनं प्रमेहिणं वा सालसारादिकषायेण कण्टकिवृक्षकषायेण वा पाययेद्भल्लातकप्रपुन्नाडावल्गुजार्कचित्रकविडङ्गमुस्तचूर्णचतुर्भागयुक्तान्; एवमेव सालसारादिकषायपरिपीतानामारग्वधादिकषायपरिपीतानां वा गवाश्वाशकृद्भूतानां वा यवानां शक्तून् कारयित्वा भल्लातकादीनां चूर्णान्यावाप्य खदिराशननिम्बराजवृक्षरोहीतकगुडूचीनामन्यतमस्य कषायेण शर्करामधुमधुरेण द्राक्षायुक्तेन दाडिमामलकवेतसाम्लेन सैन्धवलवणान्वितेन पाययेत्; एष सर्वमन्थकल्पः ॥ ४ ॥**

**यावकांश्च भक्ष्यान् धानोलुम्बककुल्माषापूपपूर्णकोशोत्कारिकाशष्कुलिकाकुणावीप्रभृतीन् सेवेत; यवविधानेन गोधूमवेणुयवानुपयुञ्जीत ॥ ५ ॥**

क्षुण्णानित्यादि । किलिञ्जो वंशादिलग्रथितः पेटिकाकारः । कपालो घटादिकर्परः । कण्टकिवृक्षाः खदिरबदरारिमेदस्रुग्दारुप्रभृतयः । भल्लातकादिचूर्णचतुर्भागानिति सर्वशक्तुप्रयोगेषु चूर्णप्रक्षेपमात्रापरिभाषेयम् । एवमित्यादि । परिपीतानां भावितानाम् । दाडिमाम्लवेतससैन्धवादीनामत्र यावताऽम्ललवणता तावती प्रक्षेपपरिमाणमात्रा । यावकानित्यादि । धानाः शुष्कभृष्टयवाः, उलुम्बकाः सरसा भृष्टयवाः, कुल्माषा यवपिष्टमया अम्लरसस्विन्नाः शृङ्गाटादयः, अपूपाः स्थूलपूपाः, पूर्णकोशाः यवपिष्टमया एव कुष्ठहितशमीधान्यस्विन्नविदलादिपूर्णकोष्ठाः, उत्कारिका संयावप्रकारा, शष्कुल्यो यवप्रकारेण संस्कृतैस्तिलैर्यवपिष्टेन शष्कुलीकल्पेन विधेयाः, कुणावी यवपर्पटी, प्रभृतिग्रहणादन्तर्गतगुडादयः । कुणावीत्यत्र अन्ये तु कोनाडि(लि)केति पठन्ति; तत्रापि स एवार्थः । **गयी** तु उत्कारिकाग्रे चित्रेति पठति, चित्रा अपूपविशेषः । वेणुयवा वंशफलानि ॥ ४ ॥ ५ ॥

**अरिष्टानतो वक्ष्यामः—पूतीकचव्यचित्रकसुरदारुसारिवादन्तीत्रिवृत्त्रिकटुकानां प्रत्येकं षट्पलिका भागा बदरकुडवस्त्रिफलाकुडव इत्येतेषां चूर्णानि, ततः पिप्पलीमधुघृतैरन्तःप्रलिप्ते घृतभाजने प्राकृतसंस्कारे सप्तोदककुडवानयोरजोऽर्धकुडवमर्धतुलां च गुडस्याभिहितानि चूर्णान्यावाप्य स्वनुगुप्तं**

१ 'आरत्वारस्विन्नाः' इति पा० । २ 'प्रभृतिग्रहणाद् गृञ्जादयः' इति पा० ।

कृत्वा यवपल्ले सप्तरात्रं वासयेत्, ततो यथाबलमुपयुञ्जीत, एषोऽरिष्टः कुष्ठमेहमेदःपाण्डुरोगश्वयथूनपहन्ति । एवं शालसारादौ न्यग्रोधादावारग्वधादौ चारिष्टान् कुर्वीत ॥ ६ ॥

इदानीं मद्यसात्म्यानां वातकफकुष्ठिनामरिष्टांस्तत आसवसुरे च निर्दिशन्नाह—अरिष्टानित्यादि । त्रिफलायाः समुदितायाः कुडव इति केचित्, अन्ये तु संज्ञायाः संज्ञिन एव प्रधानत्वमिति प्रत्येकमेव कुडवं मन्यन्ते । जलस्य सप्त कुडवा अष्टाविंशतिपलानीति **जेज्जटः**; तन्नेच्छति **गयी**, सर्वेष्वेव तन्त्रेष्वष्टपलद्रवस्य कुडवत्वात् । एष पिण्डारिष्टसंज्ञकः कुष्ठहरखदिरादिकषायेणालोड्य पातव्यः । पिण्डासवस्य पलद्वयं पलं वा, कुष्ठहरस्य खदिरक्वाथस्याञ्जलिमात्रा; यथानलमुपयुञ्जीतेत्येके । अत्र चूर्णानामतिबाहुल्यात् पूत एवारिष्टः पेय इत्येके, पिण्डासववदपूत एव पेय इत्यन्ये । अस्मिन् योगे पाठान्तरं व्याख्यानान्तरमप्यस्ति, तच्च विस्तरभयान्न लिखितम् ॥ ६ ॥

आसवानतो वक्ष्यामः—पलाशभस्मपरिस्रुतस्योष्णोदकस्य शीतीभूतस्य त्रयो भागा द्वौ फाणितस्यैकध्यमरिष्टकल्पेन विदध्यात्, एवं तिलादीनां क्षारेषु; शालसारादौ न्यग्रोधादावारग्वधादौ मूत्रेषु चासवान् विदध्यात् ॥ ७ ॥

पलाशेत्यादि । त्रयो भागा आढकत्रयम् । द्वौ भागौ फाणितस्य आढकद्वयम् । अरिष्टकल्पेनेति पूतीकादिवत् । अत्र त्रिफलायाश्चूर्णादि सर्वं पूर्वोक्तमुन्नेयम् । विदध्यात् कुर्यादित्यर्थः । तिलादीनामित्यादि तिलादिरश्मरीपठितः 'तिलपामार्गकदलीपलाल' ( चि. अ. ७ ) इत्यादिकः ॥ ७ ॥

अथ सुरा वक्ष्यामः—शिंशपाखदिरयोः सारमादायोत्पाट्य चोत्तमारणीब्राह्मीकोशवतीस्तत्सर्वमेकतः कषायकल्पेन विपाच्योदकमाददीत मण्डोदकार्थं, किण्वपिष्टमभिषुणुयाच्च यथोक्तम् । एवं सुराः शालसारादौ न्यग्रोधादावारग्वधादौ च विदध्यात् ॥ ८ ॥

सुराविधानमाह—अथेत्यादि । उत्तमारणी उत्तमकरणी, कोशवती देवदाली । उदकशब्दोऽत्र क्वाथे वर्तते । किण्वपिष्टमभिषुणुयात् सन्दध्यात्, यथोक्तं सूत्रस्थाने विरेचनाधिकारे । कषायकल्पेन विपाच्येति शिंशपाखदिरयोः सारभागद्वयमादाय, एकं च भागमुत्तमारण्यादीनां; कुत एतदिति ? साराणां कुष्ठहरत्वात्; तुलामेकां चतुर्भिरुदकद्रोणैरुत्क्वाथ्य द्रोणावशिष्टमवतार्य, किण्वपिष्टयोरासुतीबलवचनेन प्रमाणादिकल्पनम् । विदध्यात् सुरां कुर्यादित्यर्थः ॥ ८ ॥

अतोऽवलेहान्[1] वक्ष्यामः—खदिरासननिम्बराजवृक्षशालसारक्वाथे तत्सारपिण्डाञ्छ्लक्ष्णपिष्टान् प्रक्षिप्य विपचेत्, ततो नातिद्रवं नातिसान्द्रमवतार्य तस्य पाणितलं पूर्णमप्रातराशो मधुमिश्रं लिह्यात्; एवं शालसारादौ न्यग्रोधादावारग्वधादौ च लेहान् कारयेत् ॥ ९ ॥

अतोऽवलेहानित्यादि । खदिरादीनां द्रोणमेकं पानीयस्य द्रोणचतुष्टयम्, एतद्द्रोणशेषं ग्राह्यं, पुनः पाकाद्धनीभवत्यस्मिन् चरककुटजावलेहचूर्णप्रक्षेपणप्रमाणोहबीजेन प्रत्येकं सार्धपलानां पञ्चानामेव श्लक्ष्णपिष्टानां पिण्डान् प्रक्षिप्य फाणितीभूतमवतारयेत्; यद्यपि पाणितलं कर्षमित्युक्तं, तथाऽपि पूर्णशब्दात् पाणितलं हस्ततलमङ्गुलिरहितं व्याख्यातम् । अप्रातराशः सायमेव भुञ्जानः । **गयी** तु शालसारं न पठति, खदिरादीनि चत्वार्येव पठति ॥ ९ ॥

अतश्चूर्णक्रियां वक्ष्यामः—शालसारादीनां सारचूर्णप्रस्थमाहृत्यारग्वधादिकषायपरिपीतमनेकशः शालसारादिकषायेणैव पाययेत्; एवं न्यग्रोधादीनां फलेषु, पुष्पेष्वारग्वधादीनां चूर्णक्रियां कारयेत् ॥ १० ॥

अत इत्यादि । परिपीतं भावितम् । शालसारादिचूर्णप्रस्थे भाव्ये आरग्वधादिक्वथनीयद्रव्यस्यापि प्रस्थमेवं[1], चतुर्भिरुदकप्रस्थैरुत्क्वाथ्याष्टभागावशिष्टमवतार्य प्रागुक्तं चूर्णमार्द्रीकृत्य शोषयेत्; एवं सप्ताहं भावयित्वा ततश्चूर्णकर्षं, शालसारादिद्रव्यपलं, षोडशभिरुदकपलैर्निःक्वाथ्य पादावशिष्टेन तेन क्वाथेन षोडशगुणेन पिबेत्, कुष्ठानामुत्तममात्रार्हत्वात् ॥ १० ॥

अत ऊर्ध्वमयस्कृतीर्वक्ष्यामः—तीक्ष्णलोहपत्राणि तनूनि लवणवर्गप्रदिग्धानि गोमयाग्निप्रतप्तानि त्रिफलाशालसारादिकषायेण निर्वापयेत् षोडशवारान्, ततः खदिराङ्गारतप्तान्युपशान्ततापानि सूक्ष्मचूर्णानि कारयेद्[2]घनतान्तवपरिस्रावितानि, ततो यथाबलं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत, जीर्णे यथाव्याध्यनम्लमलवणमाहारं कुर्वीत, एवं तुलामुपयुज्य कुष्ठमेहमेदःश्वयथुपाण्डुरोगोन्मादापस्मारानपहत्य वर्षशतं जीवति, तुलायां तुलायां वर्षशतमुत्कर्षः, एतेन सर्वलौहेष्वयस्कृतयो व्याख्याताः ॥ ११ ॥

अत इत्यादि । तनूनि अघनानि तिलोत्सेधमात्राणि । लवणवर्गप्रदिग्धानि सैन्धवसौवर्चलौद्भिदविडसामुद्रलवणादिकल्केन लिप्तानि । खदिराङ्गारतापनमपि षोडशवारान् । घनतान्तवं[3] निबिडवस्त्रम् । मात्रामिति अल्पमित्यर्थः, पञ्चगुञ्जादिक्रमवृद्ध्या लौहमाषचतुष्टयम् । संसृज्य सम्यक् सृष्ट्वा, सम्यक्सृष्टिस्तु लौहमयपात्रे लौहदण्डमर्दनैर्[4] मधुघृतलौहैः सम्यगेकीभावः ।

१ 'लेहानतो वक्ष्यामः' इति पा० ।

१ 'प्रस्थमेयं' इति पा० । २ 'कारयेद्गाढतान्तवपरिस्रावितानि' इति पा० । ३ 'घनानि' इति पा० । ४ 'लौहदण्डमथनेन' इति पा० ।

उपयुक्ते पुनरस्मिन् षडङ्गकल्पेन कुष्ठहरखदिरादिक्वथितजलं षष्टिगुणमनुपानं, पारम्पर्योपदेशात्[1] । एवं प्रमेहादौ प्रमेहादिहरक्वथितमेव जलमनुपानम् । एवमाहारोऽपि यथाव्याधि यथारोगमेव कुष्ठे कुष्ठहरः, मेहे मेहहर इति; अनम्ललवणस्तु सर्वथा व्याधिहरः । एतेनेत्यादि एतेन कथितलौहरसायनक्रमेण, सर्वलौहेषु त्रपुसीसताम्ररजतसुवर्णेषु, अयस्कृतयो विशेषेण[2] व्याख्याताः प्रकर्षेण कथिताः ॥ ११ ॥

**त्रिवृच्छ्यामाग्निमन्थसप्तलाकेबुकशङ्खिनीतिल्वकत्रिफलापलाशशिंशपानां स्वरसमादाय पालाश्यां द्रोण्यामभ्यासिच्य खदिराङ्गारतप्तमयःपिण्डं त्रिसप्तकृत्वो निर्वाप्य तमादाय पुनरासिच्य स्थाल्यां गोमयाग्निना विपचेत्, ततश्चतुर्थभागावशिष्टमवतार्य परिस्राव्य भूयोऽग्नितप्तान्ययःपत्राणि प्रक्षिपेत्, सिध्यति चास्मिन् पिप्पल्यादिचूर्णभागं द्वौ मधुनस्तावद्घृतस्येति दद्यात्, ततः प्रशान्तमायसे पात्रे स्वनुगुप्तं निदध्यात्, ततो यथायोगं शुक्तिं प्रकुञ्चं वोपयुञ्जीत, जीर्णे यथाव्याध्याहारमुपसेवेत । एषौषधायस्कृतिरसाध्यं कुष्ठं प्रमेहं वा साधयति, स्थूलमपकर्षति, शोफमुपहन्ति, सन्नमग्निमुद्धरति, विशेषेण चोपदिश्यते राजयक्ष्मिणां, वर्षशतायुश्चानया पुरुषो भवति । शालसारादिक्वाथमासिच्य पालाश्यां द्रोण्यामयोघनांस्तप्तान्निर्वाप्य कृतसंस्कारे कलशेऽभ्यासिच्य पिप्पल्यादिचूर्णभागं क्षौद्रं गुडमिति च दत्त्वा स्वनुगुप्तं निदध्यात्, एतां महौषधायस्कृतिं मासमर्धमासं वा स्थितां यथाबलमुपयुञ्जीत । एवं न्यग्रोधादावारेवतादिषु च विदध्यात् ॥ १२ ॥**

औषधायस्कृतिमुपदिशन्नाह—त्रिवृदित्यादि । श्यामा वृद्धदारकः, सप्तला यवतिक्ता, शङ्खिनी तद्भेदः, तिल्वकः पट्टिकारोध्रः । स्वरसमादायेति पञ्चशतपलानि; एषां स्वरसालाभे प्रतिनिधिः—तत्र चूर्णानामाढकमुदकद्रोणे रात्रिपर्युषितं स्वरसवद्ग्राह्यं; वृद्धवैद्यास्तु क्वाथेऽपि स्वरसशब्दं मन्यन्ते; तत्र त्रिवृदादिक्वाथस्य पञ्चशतपलानि । गयी तु त्रिवृदादीनां शिंशपान्तानां द्वादशानां द्रोणमपां चतुर्भिर्द्रोणैरुत्क्वाथ्य द्रोणावशिष्टं कषायं ग्राह्यमिति मन्यते । पालाश्यां द्रोण्यामभ्यासिच्येति द्रोणी जलप्रक्षेपणी, अभ्यासिच्य प्रक्षिप्य, सा चार्द्रपलाशमयी कर्तव्या । खदिराङ्गारेत्यादि । लौहपिण्डं पञ्चाशत्पलप्रमाणम् । त्रिसप्तकृत्व इति एकविंशतिवारान् । तमादायेति द्रवं पुनरासिच्य स्थाल्यां गोमयाग्निना विपचेदिति अयःस्थाल्यां प्रक्षिप्य गोमयाग्निना विपचेत् । ततश्चतुर्भागावशिष्टमवतार्य परिस्राव्य भूयोऽग्नितप्तान्ययःपत्राणि प्रक्षिपेदिति । तत्र कषाये पूर्वलोहपत्राणि खदिराङ्गारतप्तानि पुनरपि निर्वाप्य, एतानि च लोहपत्राणि तेनैव कषायेण श्लक्ष्णपिष्टानि, तस्मिन्नेव कषाये पुनरापचेत्, सिध्यति चास्मिन् पिप्पल्यादिचूर्णभागं दद्याल्लोहपिण्डसममेव, सिद्धशीते द्वौ मधुनः द्वौ गुडस्येति पलशतमित्यर्थः । घृतस्यापि तावत् पलशतं दद्यात् । **गयी** तु पिप्पल्यादिमधुसर्पिषामन्यथा भागकल्पनं कृतवान्, तच्च विस्तरभयान्न लिखितम् । ततः प्रशान्तमित्यादि प्रशान्तं सिद्धमुच्यते । शुक्तिः अर्धपलम् । प्रकुञ्चः पलम् । सन्नमग्निमुद्धरति उत्कर्षयति । अत औषधायस्कृत्यरिष्टमाह—शालेत्यादि ।—शालसारादिक्वाथद्रोणं पलाशद्रोण्यामभ्यासिच्य, अपरे पञ्चशतपलानि मन्यन्ते । अयोघनं[1] कर्मकारभाण्डिभिस्तप्तायस्ताडनाभिः पूर्ववदेकविंशतिवारानभिसंयोज्य शीतीकृत्य, तानि च निर्वापणसाधितलोहपत्राणि तेनैव कषायेण श्लक्ष्णपिष्टानि अरिष्टसंस्कारविधिना विहितसंस्कारे कलशे यावता च मन्दकटुकमरिष्टं स्यात्तावच्चूर्णांशं दत्त्वा, मासं शीतेऽर्धमासमुष्णे च स्थापयेत् । अत्र मधु पुराणमवगन्तव्यं, तच्च कषायचतुर्थांशेन, तत्सम एव जीर्णगुडः । 'अयोघनांस्तप्तान्' इत्यत्र घनशब्देनैव लोहपिण्डे प्राप्ते अयःशब्दस्तीक्ष्णलौहप्रापणाय सीसकादिपरिहाराय च । अन्ये तु, अत्र पिप्पल्यादि लौहसमं तद्द्विगुणं क्षौद्रं गुडं च दद्यात्, लौहप्रमाणं तु पूर्वयोगे व्याख्यातम् । एवमित्यादि आरेवतादिषु आरग्वधादिषु । विदध्यात् अयस्कृतिं कुर्यात् ॥ १२ ॥

**अतः खदिरविधानमुपदेक्ष्यामः—प्रशस्तदेशजातमनुपहतं मध्यमवयसं[2] खदिरं परितः खानयित्वा तस्य मध्यमं मूलं छित्त्वाऽयोमयं कुम्भं तस्मिन्नन्तरे निदध्याद्यथा रसग्रहणसमर्थो भवति, ततस्तं गोमयमृदाऽवलिप्तमवकीर्येन्धनैर्गोमयमिश्रैरादीपयेद्यथाऽस्य दह्यमानस्य रसः स्रवत्यधस्तात्, तद्यदा जानीयात् पूर्णं भाजनमिति, अथैनमुद्धृत्य परिस्राव्य रसमन्यस्मिन् पात्रे निधायानुगुप्तं निदध्यात्, ततो यथायोगं मात्रामामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत, जीर्णे भल्लातकविधानवदाहारः परिहारश्च, प्रस्थे चोपयुक्ते शतं वर्षाणामायुषोऽभिवृद्धिर्भवति । खदिरसारतुलामुदकद्रोणे विपाच्य षोडशांशावशिष्टमवतार्यानुगुप्तं निदध्यात्, तमामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत । एष एव सर्ववृक्षसारेषु कल्पः । खदिरसारचूर्णतुलां खदिरसारक्वाथमात्रां वा प्रातः प्रातरुपसेवेत, खदिरसारक्वाथसिद्धमाविकं वा सर्पिः ॥ १३ ॥**

१ 'पारम्पर्याविच्छेदात्' इति पा० । २ 'विशेषाभिव्याहृत्या प्रकर्षेण' इति पा० ।

१ 'अयोघनैः' इति पा० । २ 'मध्यमवयस्कं' इति पा० ।

अत इत्यादि । खदिररसेन तुल्य आमलकरसः । मधुघृते तु समस्ते तावती द्रव्यपादिके । भल्लातकविधानवदत्राहारे क्षीरं कुष्ठकरमपि न विरुद्धं, रसायनशक्तेरचिन्त्यत्वात्; शेषं सुबोधम् । खदिरसारस्यार्द्रस्य स्वरसालाभेऽनुकल्पिकं स्वरसमुद्दिशन्नाह—खदिरसारेत्यादि । स्नेहकषायपरिभाषाकल्पनया कषायं कृत्वा तस्य पादिकं सर्पिः; अपथ्यमप्याविकं सर्पिः पथ्यत्वेनात्राभिहितं, द्रव्यसंयोगशक्तेरचिन्त्यत्वात्; अन्ये तु सर्पिरेव पठन्ति न पुनराविकम् ॥ १३ ॥

**अमृतवल्लीस्वरसं क्वाथं वा प्रातः प्रातरुपसेवेत, तत्सिद्धं वा सर्पिः, अपराह्णे ससर्पिष्कमोदनमामलकयूषेण भुञ्जीत; एवं मासमुपयुज्य सर्वकुष्ठैर्विमुच्यत इति ॥ १४ ॥**

अमृतेत्यादि । अमृतवल्ली गुडूची ॥ १४ ॥

**कृष्णतिलभल्लातकतैलामलकरससर्पिषां द्रोणं शालसारादिकषायस्य च, त्रिफलात्रिकटुकपरूषफलमज्जविडङ्गफलसारचित्रार्कावल्गुजहरिद्राद्वयत्रिवृद्दन्तीद्रवन्तीन्द्रयवयष्टीमधुकातिविषारसाञ्जनप्रियङ्गूणां पालिका भागास्तानैकध्यं स्नेहपाकविधानेन पचेत्, तत् साधुसिद्धमवतार्य परिस्राव्यानुगुप्तं निदध्यात्, तत उपसंस्कृतशरीरः प्रातः प्रातरुत्थाय पाणिशुक्तिमात्रं क्षौद्रेण प्रतिसंसृज्योपयुञ्जीत, जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मन्तं खदिरोदकसिद्धं मृद्वोदनमश्नीयात् खदिरोदकसेवी, इत्येवं द्रोणमुपयुज्य सर्वकुष्ठैर्विमुक्तः शुद्धतनुः स्मृतिमान् वर्षशतायुररोगो भवति ॥ १५ ॥**

**भवति चात्र—**

**सुरामन्थासवारिष्टांल्लेहांश्चूर्णान्ययस्कृतीः ॥**
**सहस्रशोऽपि कुर्वीत बीजेनानेन बुद्धिमान् ॥ १६ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने महाकुष्ठचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥**

स्नेहसामान्यान्मिश्रकं स्नेहविशेषं निर्दिशन्नाह—कृष्णतिलेत्यादि । कृष्णतिलानां भल्लातकानां च तैलम् । तदेतत् सर्पिषा सह स्नेहद्रोणत्रयमामलकरसशालसारादिकषायद्रोणाभ्यां त्रिफलादिभिः कल्कीकृतैर्विपचेत् । उपसंस्कृतशरीरो वमनादिभिरित्यर्थः । पाणिशुक्तिः पलमित्यर्थः । सहस्रशोऽपीत्यपिशब्दात् खदिरसारप्रयोगेण सारस्नेहयोरनुक्तयोरुक्तेन कल्पेन कल्पनमिति समुच्चिनोति ॥ १५ ॥ १६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने दशमोऽध्यायः ॥ १० ॥

---

१ 'कल्पमुपदिशन्नाह' इति पा० । २ 'अग्निसंयोगसंस्कारशक्तेः' इति पा० ।

## एकादशोऽध्यायः ।

**अथातः प्रमेहचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**द्वौ प्रमेहौ भवतः—सहजोऽपथ्यनिमित्तश्च । तत्र सहजो मातृपितृबीजदोषकृतः, अहिताहारजोऽपथ्यनिमित्तः । तयोः पूर्वेणोपद्रुतः कृशो रूक्षोऽल्पाशी पिपासुर्भृशं परिसरणशीलश्च भवति; उत्तरेण स्थूलो बह्वाशी स्निग्धः शय्यासनस्वप्नशीलः प्रायेणेति ॥ ३ ॥**

द्वावित्यादि । अत्र केचिदाहुः स्त्रीणां प्रमेहा न भवन्तीति, तथा हि तन्त्रान्तरे—"रजःप्रसेकान्नारीणां मासि मासि विशुध्यति । सर्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः"—इति; एतत्तु न युक्तं, सर्वतन्त्राप्रसिद्धेः, प्रत्यक्षविरोधाच्च ॥ १–३ ॥

**तत्र कृशमन्नपानप्रतिसंस्कृताभिः क्रियाभिश्चिकित्सेत, स्थूलमपतर्पणयुक्ताभिः ॥ ४ ॥**

तत्र कृशमित्यादि । कृशं कार्श्यादिलक्षणयुक्तं सहजमित्यर्थः । स्थूलं स्थौल्यादिधर्मयुक्तमहिताहारविहारजमित्यर्थः । अत्र, अपतर्पयतीति अपतर्पणं लङ्घनं, अपतर्पणानि व्यायामशोधनानि तिक्तकटुकादिकानि च ॥ ४ ॥

**सर्व एव च परिहरेयुः सौवीरकतुषोदकशुक्तमैरेयसुरासवतोयपयस्तैलघृतेक्षुविकारदधिपिष्टान्नाम्लयवागूपानकानि ग्राम्यानूपौदकमांसानि चेति ॥ ५ ॥**

सौवीरकं विरेचनाध्यायोक्तं, तुषोदकं तत्रोक्तमेव काञ्जिकं, शुक्तं चुक्रं, सुरासवयोः प्रसेकनिष्पादितयोरेकीकृत्य पुनः सन्धानंमैरेयं, सुरा पिष्टमयी, द्रवप्रधान आसवः । आनूपा महिषादयः, औदका मत्स्यादयः ॥ ५ ॥

**ततः शालिषष्टिकयवगोधूमकोद्रवोद्दालकाननवान् भुञ्जीत चणकाढकीकुलत्थमुद्गविकल्पेन, तिक्तकषायाभ्यां च शाकगणाभ्यां निकुम्भेङ्गुदीसर्षपातसीतैलसिद्धाभ्यां, बद्धमूत्रैर्वा जाङ्गलैर्मांसैरपहृतमेदोभिरनम्लैरघृतैश्चेति ॥ ६ ॥**

उद्दालका अरण्यकोद्रवाः । अनवाः पुराणाः । तिक्तगणः प्रपुन्नाटपटोलादिकः, कषायगणो वटशुङ्गादिकः । तेषां शाकानां साधनाङ्गानि निकुम्भादितैलानि । निकुम्भा दन्ती । बद्धमूत्रैरेणादिभिः । अपहृतमेदोभिरिति अविद्यमानमेदोभिः ॥ ६ ॥

**तत्रादित एव प्रमेहिणं स्निग्धमन्यतमेन तैलेन प्रियङ्ग्वादिसिद्धेन वा घृतेन वामयेत् प्रगाढं विरेचयेच्च, विरेचनादनन्तरं सुरसादिकषायेणास्थापयेन्महौषधभद्रदारुमुस्तावापेन मधुसैन्धवयुक्तेन, दह्यमानं च न्यग्रोधादिकषायेण निस्तैलेन ॥ ७ ॥**

रूक्षस्य मेहिनो वमननिषेधात्तदितरस्य मेहिनो बलवतश्च वमनमुपदिशन्नाह—तत्रेत्यादि । तैलेनान्यतमेनेति निकुम्भादितैलानामनन्तरनिर्दिष्टानामेकतमेन; अथवा स्नेहोपयोगिकोक्तमेहहरनिकुम्भसर्षपातसीपिचुमर्दातिमुक्तकस्नेहानामन्यतमेन स्निग्धम् । पैत्तिकेषु तु मेहेषु सामान्यस्नेहपाकपरिभाषार्थकल्पनया प्रियङ्ग्वादिसिद्धेन घृतेनोपस्निग्धं वामयेत्, प्रगाढं विरेचयेच्च; कफमेहे वामयेत्, पित्तमेहे विरेचयेत्; आमाशयस्थे कफपित्ते वामयेत्, पक्वाशयस्थे पित्ते विरेचयेत् । विरेचनानन्तरं सप्तरात्रात् परतो वातविद्रध्यादावुक्तेन सुरसादिकषायेण महौषधादिकल्कयुक्तेन मधुप्रायेण; मधुसैन्धवादीनां सामान्यपरिभाषार्थकल्पेनैव सिद्धे पुनर्वचनं स्नेहनिषेधार्थमित्येके । दह्यमानं[1] च न्यग्रोधादिकषायेणास्थापयेत् । निस्तैलेनेति वचनादल्पघृताभ्यनुज्ञानम्, अल्पस्नेहार्थमित्यन्ये ॥ ७ ॥

**ततः शुद्धदेहमामलकरसेन हरिद्रां मधुसंयुक्तां पाययेत्, त्रिफलाविशालादेवदारुमुस्तकषायं वा, शालकम्पिल्लकमुष्ककककल्कमक्षमात्रं वा मधुमधुरमामलकरसेन हरिद्रायुतं, कुटजकपित्थरोहीतकविभीतकसप्तपर्णपुष्पकल्कं वा निम्बारग्वधसप्तपर्णमूर्वाकुटजसोमवृक्षपलाशानां वा त्वक्पत्रमूलफलपुष्पकषायाणि, एते पञ्च योगाः सर्वमेहानामपहन्तारो व्याख्याताः ॥ ८ ॥**

ततः शुद्धदेहमित्यादि । कल्पनामाह—आमलकरसस्य चत्वारि पलानि, हरिद्रा कर्षप्रमाणा, तथा मधु च कर्षप्रमाणमेव, एवं विभज्य[2] पिबेत् । त्रिफलेत्यादि । त्रिफलादीनां मुस्तान्तानां पले षोडशगुणं जलं दत्त्वा चतुर्भागावशिष्टं ग्राह्यम् । तथा चोक्तं—"द्रव्यमापोत्थितं क्वाथ्यं दत्त्वा षोडशिकं जलम् । पादशेषं च कर्तव्यमेष क्वाथविधिः स्मृतः"—इति । कुटजकपित्थेत्यादि कुटजादिभिः पुष्पशब्दः प्रत्येकं सम्बध्यते, अस्मिन् योगेऽपि मधु आमलकरसश्चानुवर्तते । निम्बेत्यादि निम्बादीनां यानि त्वक्पत्रमूलफलपुष्पाणि तैः कृतानि कषायाणि । एष पञ्चमो योगः । एते पञ्चापि सर्वमेहेषु साध्येष्वसाध्येष्वपीत्येके, यापनार्थमित्यपरे ॥ ८ ॥

**विशेषैश्चात[3] ऊर्ध्वं—तत्रोदकमेहिनं पारिजातकषायं पाययेत्, इक्षुमेहिनं वैजयन्तीकषायं, सुरामेहिनं निम्बकषायं, सिकतामेहिनं चित्रककषायं, शनैर्मेहिनं खदिरकषायं, लवणमेहिनं पाठाऽगुरु[4]हरिद्राकषायं, पिष्टमेहिनं हरिद्रादारुहरिद्राकषायं,**

१ 'दह्यमानमित्यादि दह्यमानं वा न्यग्रोधादिकषायेण निःस्नेहेन 'आस्थापयेत्' इति शेषः । निःस्नेहेनेति अल्पघृतेन, निःस्नेहेनेत्यत्र 'निस्तैलेन' इति केचित् पठन्ति ।' इति पा० । २ 'विमथ्य' इति पा० । ३ 'विशेषतश्चात ऊर्ध्वं' इति पा० । ४ 'पाठागुरुकषायं' इति पा० ।

**सान्द्रमेहिनं सप्तपर्णकषायं, शुक्रमेहिनं दूर्वाशैवलप्लवहठकरञ्जकसेरुककषायं ककुभचन्दनकषायं वा, फेनमेहिनं त्रिफलारग्वधमृद्वीकाकषायं, मधुमधुरमिति; पैत्तिकेषु नीलमेहिनं शालसारादिकषायमश्वत्थकषायं वा पाययेत्, हरिद्रामेहिनं राजवृक्षकषायं, अम्लमेहिनं न्यग्रोधादिकषायं, क्षारमेहिनं त्रिफलाकषायं, मञ्जिष्ठामेहिनं मञ्जिष्ठाचन्दनकषायं, शोणितमेहिनं गुडूचीतिन्दुकास्थिकाश्मर्यखर्जूरकषायं मधुमिश्रं[2]; अत ऊर्ध्वमसाध्येष्वपि योगान् यापनार्थं वक्ष्यामः, तद्यथा—सर्पिर्मेहिनं कुष्ठकुटजपाठाहिङ्गुकटुरोहिणीकल्कं गुडूचीचित्रककषायेण पाययेत्, वसामेहिनमग्निमन्थकषायं शिंशपाकषायं वा, क्षौद्रमेहिनं कदरक्रमुककषायं[1], हस्तिमेहिनं तिन्दुककपित्थशिरीषपलाशपाठामूर्वादुःस्पर्शाकषायं मधुमधुरं हस्त्यश्वशूकरखरोष्ट्रास्थिक्षारं चेति; दह्यमानमौदककन्दकाथसिद्धां यवागूं क्षीरेक्षुरसमधुरां पाययेत् ॥ ९ ॥**

विशेष इत्यादि । अत ऊर्ध्वं 'वक्ष्यते' इति वाक्यशेषः । तत्रेत्यादि । पारिजातः पारिभद्रकः । इक्ष्वित्यादि । वैजयन्ती अरणिका । दूर्वेत्यादि शैवलं शेवालं, प्लवो गोपालदमनकः, हठो जलकुम्भिका । ककुभः सुगन्धिमूलो विटपी । कफजेषु मधुमधुरमिति अन्ते स्थितं दशस्वपि संबध्नन्ति, एवं पैत्तिकेष्वपि; मधुनो योगवाहित्वान्मेहहरत्वाच्च । पैत्तिकेत्यादि । राजवृक्षः किरमालकः । अत इत्यादि । कदर आपीतसारः खदिराकारः, क्रमुकः पूगफलम् । मूर्वा चौरस्नायुः; दुःस्पर्शा दुरालभा । मधुमधुरमिति वचनं सर्पिर्मेहादिकषायेष्वपि द्रष्टव्यम् । हस्त्यश्वादिक्षारोदकस्य शीतस्य पानं खरतीक्ष्णत्वात् । प्रमेहिणोऽब्धातौ क्षीणे तद्विरोधिनि पित्ते विवृद्धे दाहो भवतीति तच्चिकित्सितमुपदिशन्नाह—दह्यमानमित्यादि । औदककन्दकाथेत्यादि षडङ्गकल्पक्वथितेन[3] शालूकादिक्वाथेन सह क्षीरेक्षुरससिद्धां शीतां मधुमधुरां यवागूं पाययेत् । तथा चोक्तम्—"यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते । कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ॥ अर्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ—" इति । पूर्वनिषिद्धस्य यवागूपानस्यापवादः । क्षीरेक्षुरसमधुमधुराया यवाग्वाः पानं पित्तमेहे[4] एव, वातश्लेष्ममेहेषु पुनर्यवागूपानस्य प्रतिषेध एव ॥ ९ ॥

**ततः प्रियङ्ग्वनन्तायूथिकापद्मात्रायन्तिकालोहितिकाम्बष्ठादाडिमत्वक्शालपर्णीपद्मतुङ्गकेशरधातकीवकुलशाल्मलीश्रीवेष्टकमोचरसेष्वरिष्टान-**

१ 'खदिरक्रमुककषायम्' इति पा० । २ 'मधुमिश्रं' इति पा० । ३ 'षडङ्गकल्पक्वथितेन' इति पा० । ४ 'पित्तमेहिन एव' इति पा० ।

**यस्कृतीर्लेहानासवांश्च कुर्वीत; शृङ्गाटकगिलोड्यविसमृणालकाशकसेरुकमधुकाम्रजम्ब्वसनतिनिशककुभकट्वङ्गरोध्रभल्लातकपलाशचर्मवृक्षगिरिकर्णिकाशीतशिवनिचुलदाडिमाजकर्णहरिवृक्षराजादनगोपघोण्टाविकङ्कतेषु वा; यवान्नविकारांश्च सेवेत; यथोक्तकषायसिद्धां यवागूं चास्मै प्रयच्छेत्, कषायाणि वा पातुम् ॥ १० ॥**

तत्र सर्वेषां मेहानां प्रथमं सामान्यान् ततो वैशेषिकांश्च योगानभिधाय पुनरप्यरिष्टादीन् सामान्येनैव निर्दिशन्नाह—तत इत्यादि । अनन्ता उत्पलसारिवा, पथ्या भार्गी, त्रायन्तिका मदयन्तिका; लोहितिका मञ्जिष्ठा, रामतरुणीत्यन्ये; अम्बष्ठा माचिका, 'सांकुरड' इति लोके; शालपर्णीत्यत्र केचित् तालपर्णीति पठन्ति, तालपर्णी मुषली; तुङ्गः पुन्नागः, केशरं नागकेशरं, श्रीवेष्टको नवनीतधूपः सरलनिर्यासः, मोचरसः शाल्मलीनिर्यासः । तत्रारिष्टादयः पूर्वेणैव विधानेन विधेयाः । शृङ्गाटकेत्यादि शृङ्गाटकं जलमध्ये त्रिकण्टकं, गिलोड्यः कन्दः प्रावृड्जातः शणपत्राकारो वल्लीयुक्तश्चर्मण्वतीनदीभव(वः)श्वेतवर्तुलपाषाणसदृशः 'गुगिलोटे' इति लोके, बिसं पद्ममूलं, तस्य स्थूलप्ररोहो मृणालं, असनो बीजकः, तिनिशः स्यन्दनः, कट्वङ्गोऽरलुकः, चर्मवृक्षः 'चर्मलोह' इति प्रसिद्धो लकुचद्रुमाकारो महावृक्षः, गिरिकर्णिका श्वेतस्यन्दः, शीतशिवः शतपुष्पाभेदः, निचुलो जलवेतसः, अजकर्णः सर्जः पूर्वदेशे प्रसिद्ध एव, हरिवृक्ष इन्द्रवृक्षः, धवाकार इत्येके, 'कुटज' इत्यन्ये पठन्ति, 'हरिद्रावृक्ष' इत्यपरे पठन्ति, तत्र हरिद्रा प्रसिद्धा, वृक्षः कुटजः; राजादनः क्षीरिका, गोपघोण्टा घोटावदरी, विकङ्कतः कण्टकिका । एतेषु वा पूर्वकल्पेनारिष्टादयः कर्तव्याः । यवेत्यादि गृञ्जयवौदनधानादयः । यथोक्तेत्यादि । अनन्तरोक्तप्रियङ्ग्वादिशृङ्गाटकादिवर्गैः कृतामिति ॥ १० ॥

**महाधनमहिताहारमौषधद्वेषिणमीश्वरं वा पाठाभयाचित्रकप्रगाढमनल्पमाक्षिकमन्यतममासवं पाययेत्, अङ्गारशूल्योपदंशं वा माध्वीकमभीक्ष्णं, क्षौद्रकपित्थमरिचानुविद्धानि चास्मै पानभोजनान्युपहरेत्, उष्ट्राश्वतरखरपुरीषचूर्णानि चास्मै दद्यादशनेषु; हिङ्गुसैन्धवयुक्तैर्यूषैः सार्षपैश्च रागैर्भोजयेत्; अविरुद्धानि चास्मै पानभोजनान्युपहरेद्रसगन्धवन्ति च; प्रवृद्धमेहास्तु व्यायामनियुद्धक्रीडागजतुरगरथपदातिचर्यापरिक्रमणान्यस्त्रोपास्त्रे वा सेवेरन् ॥ ११ ॥**

महाधनो लेलातृक्वणिक्प्रभृतिकाः, ईष्ट इत्येवंशील ईश्वर ईशिता राजा । अत्र गुडस्थाने माक्षिकम् । अनल्पं प्रभूतं, तत्तु कषायसमं; पाठाभयाचित्रकाणामुक्तानां कषायं कर्षत्रयं देयमिति प्रगाढार्थः; अन्ये तु, अन्यतममासवं पूर्वोक्तं प्रियङ्ग्वाद्यासवम् । अङ्गारशूल्योपदंशमिति भटित्रोपदंशं; माध्वीकं मधुयोनिमद्यं चिरसंस्थितं च; अभीक्ष्णमत्यर्थम् । जेज्जटाचार्यस्तु द्राक्षासवमाह, तन्नेच्छति गयी । क्षौद्रेत्यादि । उष्ट्रादिपुरीषचूर्णावचारितानि चान्नानि दद्यात् । सर्षपकल्करञ्जिता लेहाः, राजिकास्थाने रागेषु सर्षपाः; अन्ये तु पठन्ति— 'सार्षपैस्तु शाकैर्भोजयेत्' इति । अन्यानि पानभोजनान्यविरुद्धानि प्रमेहिणस्तानि रसवन्ति गन्धवन्ति च प्रदद्यात् । निर्दिष्टः कृशस्य प्रायशो विधिरन्नपानप्रतिसंस्कृतः, अतः परं स्थूलस्यापकर्षणविधानमाह—प्रवृद्धमेहा इत्यादि । व्यायामोऽङ्गानां विविधप्रकार आयामः, तथा चोक्तम्,—"तुलाभ्रमगुणाकर्षधनुराकर्षणादिभिः । आयामो विविधोऽङ्गानां व्यायाम इति कीर्तितः"—इति; नियुद्धं बाहुयुद्धं, धनुर्वेदेऽन्यथा नियुद्धं व्याख्यातं, तच्च विस्तरभयान्न लिखितं; क्रीडा लोकप्रसिद्धैर्हस्तपादप्रक्षेपैर्नर्मपूर्वकं क्रीडनं; गजानामारोहणं हस्तिशिक्षायामतिविस्तृतं सांग्रामिकमाभ्यासिकं च गजचर्या; तत्र तुरगचर्या विक्रमवाञ्छितोपशल्यसंहितासु हयारोहणं; रथचर्या पदातिचर्या च जमदग्निराह; "सर्वदिग्भागभागेषु हस्त्यश्वरथपत्तिषु । शस्त्रास्त्रैर्यस्तु संयोगः सा चर्येति प्रकीर्त्यते" इति; परिक्रमणं चङ्क्रमणं गतागतमित्यर्थः, सर्वतो भ्रमणमित्यन्ये; अस्त्रं शाङ्गितं धनुः; उपास्त्रं शास्त्रनियमवर्जितं धनुरेव ॥ ११ ॥

**अधनस्त्वबान्धवो वा पादत्राणातपत्रविरहितो भैक्ष्याशी ग्रामैकरात्रवासी मुनिरिव संयतात्मा योजनशतमधिकं वा गच्छेत्, महाधनो वा श्यामाकनीवारवृत्तिरामलककपित्थतिन्दुकाश्मन्तकफलाहारो मृगैः सह वसेत्, तन्मूत्रशकृद्भक्षः सततमनुव्रजेद्गाः, ब्राह्मणो वा शिलोञ्छवृत्तिर्भूत्वा ब्रह्मरथमुद्धरेत्, कृषेत् सततमितरः खनेद्वा कूपं, कृशं तु सततं रक्षेत् ॥ १२ ॥**

**भवति चात्र—**

**अधनो वैद्यसन्देशादेवं कुर्वन्नतन्द्रितः ॥**
**संवत्सरादन्तराद्वा प्रमेहात् प्रतिमुच्यते ॥ १३ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने प्रमेहचिकित्सितं नामैकादशोऽध्यायः ॥ ११ ॥**

अधिकमिति शतद्वयं त्रयं वा । नीवार उलिकाधान्यं, तद्विविधम्—एकं धान्यैसदृशविटपं धान्यक्षेत्रजं, द्वितीयं महादलकाण्डं तत्तु सलिलजं; तत्र सलिलजं सलिलवृद्धिमात्रस्तम्बप्ररोहं रक्तशूकं, तदेव प्रसाधि(रि)केति तन्त्रान्तरे पठ्यते । तन्मूत्रशकृद्भक्ष इत्यत्र तासां गवामेव मूत्रशकृती ग्राह्ये । भूमिपतितस्योत्सृष्टस्य कणशः शस्यग्रहणं शिलः, कणशो धान्य-

१ 'गुलाहउक' इति पा० । २ '°न्यस्त्रापास्त्रे' इति पा० ।

१ 'चिरसंस्थितं' इति पा० । २ 'अपास्त्रं' इति पा० । ३ 'धान्यसदृशविटपधान्यं क्षेत्रजं' इति पा० । ४ 'उत्सृष्टस्य कणिशस्य ग्रहणं' इति पा० ।

ग्रहणमित्यर्थः; भूमिष्ठमात्रस्य शस्यस्य ग्रहणमुञ्छः । ब्रह्मरथं धर्मपत्न्या सह ब्राह्मणाधिष्ठितं शकटमुद्धरेत्, अथवा ब्रह्म एव रथो ब्रह्मरथस्तमुद्धरेत्, धारयेद्वेदमित्यर्थः; पापरोगप्रायः प्रमेहो वेदाध्ययनान्नाशमुपैति । इतरः शूद्रः । अधन इत्यादि यावन्मृगैः सह संवसेदित्ययं विधिः क्षत्रियस्य; तन्मूत्रशकृद्भक्षः सततमनुव्रजेद्वा इति वैश्यस्यायं विधिः ॥ १२ ॥ १३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

**अथातः प्रमेहपिडकाचिकित्सितं व्याख्यास्यामः १ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**शराविकाद्या नव पिडकाः प्रागुक्ताः; ताः प्राणवतोऽल्पास्त्वङ्मांसप्राप्ता मृद्व्योऽल्परुजः क्षिप्रपाकभेदिन्यश्च साध्याः ॥ ३ ॥**

एताः शराविकाद्याः प्रमेहपिडकाः प्रमेहं विनाऽपि भवन्ति; उक्तं च—"विना प्रमेहमप्येता जायन्ते दुष्टमेदसः" ( च. सू. अ. १७ ) इति, यद्यप्येवं तथाऽपि प्रमेहानन्तरकालजातानां प्रमेहं विनाऽपि जातानां चैकमिह चिकित्सितमासां, तुल्यदोषदूष्यत्वात् ॥ १—३ ॥

**ताभिरुपद्रुतं प्रमेहिणमुपचरेत् । तत्र पूर्वरूपेष्वपतर्पणं वनस्पतिकषायं बस्तमूत्रं चोपदिशेत्; एवमकुर्वतस्तस्य मधुराहारस्य मूत्रं स्वेदः श्लेष्मा च मधुरीभवति प्रमेहश्चाभिव्यक्तो भवति, तत्रोभयतः संशोधनमासेवेत; एवमकुर्वतस्तस्य दोषाः प्रवृद्धा मांसशोणिते प्रदूष्य शोफं जनयन्त्युपद्रवान् वा कांश्चित्, तत्रोक्तः प्रतीकारः सिरामोक्षश्च; एवमकुर्वतस्तस्य शोफो वृद्धोऽतिमात्रं रुजो विदाहमापद्यते, तत्र शस्त्रप्रणिधानमुक्तं व्रणक्रियोपसेवा च; एवमकुर्वतस्तस्य पूयोऽभ्यन्तरमवदायोत्सङ्गं महान्तमवकाशं कृत्वा प्रवृद्धो भवत्यसाध्यः; तस्मादादित एव प्रमेहिणमुपक्रमेत् ॥ ४ ॥**

ताभिरित्यादि । "पिडकानां पूर्वरूपं प्रमेहा" इति तन्त्रान्तरोक्तत्वात् पिडकाचिकित्सितेऽपि प्रमेहचिकित्सितमुक्तम्, अथवा प्रमेहचिकित्सितेनैव पिडकोपशमो भवतीति । तत्रेत्यादि । अपतर्पणमुपवासादि । वनस्पतयो वटादयः, बस्तश्छागः । एवमित्यादि एवमकुर्वतस्तस्य हीनप्रथमकर्मगुणस्य मधुराहारस्य मूत्रादयो मधुरीभवन्ति । उभयतः संशोधनमिति वमनं विरेचनं च । एवमित्यादि एवमकुर्वतस्तस्य हीनद्वितीयकर्मगुणस्य, तत्रोक्तः प्रतीकारः तत्र शोफे उक्तः, प्रतीकारः सूत्रस्थाने द्विव्रणीये च, स पुनरपतर्पणादिरेकादशविधो विरेकान्तः । सिरामोक्षश्चेति न जलौकापातनमधःकायस्य पिडकाधिष्ठानस्यातिविपुलत्वात् । अत्र शोफप्रतिपादनेन तदनन्तरभाविनी प्रमेहपिडकाऽपि प्रतिपादिता । एवमित्यादि ।—एवमकुर्वतस्तस्य हीनतृतीयकर्मगुणस्य शस्त्रप्रणिधानं छेद्यभेद्यादिना, व्रणक्रियोपसेवा चेति षष्टिव्रणोपक्रमाणां च यथास्वमुपसेवनमित्यतीतावेक्षणम् । अत्र शोफस्य विदग्धस्य याप्यत्वेनासाध्यत्वम् । एवमित्यादि ।—एवमकुर्वतस्तस्य हीनचतुर्थकर्मगुणस्य नातिसकलोपद्रवस्यानतिमहाशयोत्सङ्गादौ व्रणस्य शिलाजत्वाद्यनभ्यासे तु प्रयत्नाद्यतिशयाद्याप्यत्वेनासाध्यवत्त्वम् । शिलाजत्वाद्यभ्यासे तु हीनपञ्चकर्मगुणस्य अनुपक्रम्यत्वादसाध्यतमत्वम् । उत्सङ्ग इव उत्सङ्गः, व्रणाशये हि चिरकालपूयावस्थानेनावदारितमन्तःप्रदेशान्तरं निम्नमुत्सङ्गतुल्यत्वात् 'उत्सङ्ग' इत्युच्यते, उत् ऊर्ध्वं पूयस्य सङ्ग उत्सङ्ग, इत्यन्ये । तस्मादित्यादि आदित इति ल्यब्लोपे पञ्चमी; तस्मादाद्यं पूर्वरूपमेव वीक्ष्य प्रमेहिणमुपक्रमेतेत्यर्थः ॥ ४ ॥

**भल्लातकविल्वाम्बुपिप्पलीमूलोदकीर्यावर्षाभूपुनर्नवाचित्रकशटीस्नुहीवरुणकपुष्करदन्तीपथ्या दशपलोन्मिता यवकोलकुलत्थांश्च प्रास्थिकान् सलिलद्रोणे निष्काथ्य चतुर्भागावशिष्टेऽवतार्य वचात्रिवृत्कम्पिल्लकभार्गीनिचुलशुण्ठीगजपिप्पलीविडङ्गरोध्रशिरीषाणां भागैरर्धपलिकैर्घृतप्रस्थं विपाचयेन्मेहश्वयथुकुष्ठगुल्मोदरार्शःप्लीहविद्रधिपिडकानां नाशनं नाम्ना धान्वन्तरम् ॥ ५ ॥**

भल्लातकेत्यादि । अनार्षोऽयं योगः, जेज्जटाचार्येण नोक्तत्वात्; तस्मान्न पठनीयः ॥ ५ ॥

**दुर्विरेच्या हि मधुमेहिनो भवन्ति मेदोऽभिव्याप्तशरीरत्वात्, तस्मात्तीक्ष्णमेतेषां शोधनं कुर्वीत । पिडकापीडिताः सोपद्रवाः सर्वे एव प्रमेहा मूत्रादिमाधुर्यं मधुगन्धसामान्यात् पारिभाषिकीं मधुमेहाख्यां लभन्ते ॥ ६ ॥**

दुर्विरेच्या इत्यादि ॥ ६ ॥

**न चैतान् कथंचिदपि स्वेदयेत्, मेदोबहुत्वादेतेषां विशीर्यते देहः स्वेदेन ॥ ७ ॥**

न चेत्यादि । स्वेदनं स्वेदावचारणीये प्रमेहिणां निषिद्धमपि महादोषत्वप्रतिपादनाय पुनरपि निषिद्धम् ॥ ७ ॥

**रसायनीनां च दौर्बल्यान्नोर्ध्वमुत्तिष्ठन्ति प्रमेहिणां दोषाः, ततो मधुमेहिनामधःकाये पिडकाः प्रादुर्भवन्ति ॥ ८ ॥**

कुतः पुनरधोदेहे एव पिडकासम्भव इत्याह—रसायनीनां च दौर्बल्यादित्यादि । रसायनीनामित्यत्रादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन रसपित्तकफशोणितवहानां धमनीनामित्यर्थः ।

---

१ 'विरुद्धस्य' इति पा० ।

दौर्बल्यादिति सर्वशरीरगतस्य सर्वद्रवधातोरपानव्यानाभ्याम-धोऽनुलोम्यमानत्वाद्रसादिवहानामपि धमनीनामध एव बलवत्त्वं नतूर्ध्वमित्यर्थः; 'रसहारिणीनां' इति केचित् पठन्ति ॥ ८ ॥

**अपक्वानां तु पिडकानां शोफवत् प्रतीकारः, पक्वानां व्रणवदिति; तैलं तु व्रणरोपणमेवादौ कुर्वीत, आरग्वधादिकषायमुत्सादनार्थे, शालसारादिकषायं परिषेचने, पिप्पल्यादिकषायं पानभोजनेषु, पाठाचित्रकशार्ङ्गेष्टाक्षुद्राबृहतीसारिवासोमवल्कसप्तपर्णारग्वधकुटजमूलचूर्णानि मधुमिश्राणि प्राश्नीयात् ॥ ९ ॥**

अपक्वानामित्यादि । व्रणरोपणमिति रोपणद्रव्यसिद्धं मिश्रकाद्युक्तं, रोपणावस्थायां रोपणे कर्तव्ये आदौ तैलमेव, नान्यत् कषायादिकं; सर्वेष्वेव मेहेष्वतिप्रवृत्त्या वातवृद्धेः, तैलस्य वातदोषप्रत्यनीकत्वात्, तथा बद्धमूत्रत्वेन प्रमेहव्याधिप्रत्यनीकत्वाच्च । अन्ये तु 'एलादौ कुर्वीत' इति पठन्ति, "एलातगरकुष्ठ" ( सू. अ. ३८ ) इत्यादिरेलादिः । उत्सादनं निम्नव्रणस्योन्नतिकरणम् । उत्सादनोपक्रमावस्थायामारग्वधादिनैवोत्सादनम् । एवं वक्ष्यमाणेषु परिषेचनादिष्वत्रोक्तवर्गेणैव नियमः । पाठाचित्रकेत्यादि । शार्ङ्गेष्टा काकतिक्ता 'घुम्घुरुडक' इति लोके । क्षुद्रा लघुकण्टकारिका । सोमवल्कः कट्फलः । अयं योगः सामान्यचूर्णयोजनपरिभाषया योज्यः । तथाहि— "कर्षश्चूर्णस्य कल्कस्य गुटिकानां च सर्वशः । द्रवशुक्त्याऽवलेह्यः पातव्यश्च चतुर्द्रवः"—इति ॥ ९ ॥

**शालसारादिवर्गकषायं चतुर्भागावशिष्टमवतार्य परिस्राव्य पुनरुपनीय साधयेत्, सिध्यति चामलकरोध्रप्रियङ्गुदन्तीकृष्णायस्ताम्रचूर्णान्यावपेत्, एतदनुपदग्धं लेहीभूतमवतार्यानुगुप्तं निदध्यात्, ततो यथायोगमुपयुञ्जीत, एष लेहः सर्वमेहानां हन्ता ॥ १० ॥**

शालसारेत्यादि । शालसारादिवर्गपलशतं षोडशगुणे जले क्वथितं पादावशेषं, तस्मिन् सिध्यत्यामलकादिचूर्णं पादिकमित्येके; अपरे च कुटजावलेहावापप्रमाणोहेनामलकादीनां षण्णां प्रत्येकं पलमावापः ॥ १० ॥

**त्रिफलाचित्रकत्रिकटुकविडङ्गमुस्तानां नव भागास्तावन्त एव कृष्णायश्चूर्णस्य, तत्सर्वमैकध्यं कृत्वा यथायोगं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत, एतन्नवायसम्; एतेन जाठर्यं न भवति, सम्यगोऽग्निराप्यायते, दुर्नामशोफपाण्डुकुष्ठरोगाविपाककासश्वासप्रमेहाश्च न भवन्ति ॥ ११ ॥**

नवायसमाह—त्रिफलेत्यादि । कृष्णायश्चूर्णस्य कृष्णलोहचूर्णस्य । जाठर्यं स्थौल्यम् ॥ ११ ॥

**शालसारादिनिर्यूहे चतुर्थांशावशेषिते ॥**
**परिस्रुते ततः शीते मधु माक्षिकमावपेत् ॥ १२ ॥**
**फाणितीभावमापन्नं गुडं शोधितमेव च ॥**
**श्लक्ष्णपिष्टानि चूर्णानि पिप्पल्यादिगणस्य च ॥१३॥**
**ऐकध्यमावपेत् कुम्भे संस्कृते घृतभाविते ॥**
**पिप्पलीचूर्णमधुभिः प्रलिप्तेऽन्तःशुचौ दृढे ॥ १४ ॥**
**श्लक्ष्णानि तीक्ष्णलोहस्य तत्र पत्राणि बुद्धिमान् ॥**
**खदिराङ्गारतप्तानि बहुशः सन्निपातयेत् ॥ १५ ॥**
**सुपिधानं तु तं कृत्वा यवपल्ले निधापयेत् ॥**
**मासांस्त्रींश्चतुरो वाऽपि यावदालोहसंक्षयात् ॥१६॥**
**ततो जातरसं तं तु प्रातः प्रातर्यथाबलम् ॥**
**निषेवेत यथायोगमाहारं चास्य कल्पयेत् ॥ १७ ॥**
**कार्श्यकृद्बलिनामेष सन्नस्याग्नेः प्रसाधकः ॥**
**शोफनुद्गुल्महृत् कुष्ठमेहपाण्ड्वामयापहः ॥ १८ ॥**
**प्लीहोदरहरः शीघ्रं विषमज्वरनाशनः ॥**
**अभिष्यन्दापहरणो लोहारिष्टो महागुणः ॥ १९ ॥**

शालसारादीत्यादि । शालसारादिद्रव्यपलशतस्य जलचतुर्द्रोणे पक्वस्य चतुर्थांशावशेषितो निर्यूहः क्वाथः । तस्मिन् पूते शीते पञ्चशतपलप्रमाणं मधु मद्यं, माक्षिकस्येदं माक्षिकं, मध्वासवं प्रक्षिपेत्; गयी तु मध्वेव मन्यते । फाणितीभावमापन्नमिति क्रियाविशेषणम् । गुडं शोधितमेव चेति गुडस्तस्मिन्नेव कषाये विलायितः पूतः शोधित उच्यते, तादृशस्य गुडस्यापि पञ्चाशत्पलानि । पिप्पल्यादिचूर्णस्य पञ्चविंशतिपलानि, तावन्त्येव लोहपत्राणाम् । गयी तु तत्र पुराणस्य मधुनः कषायमधुरीभावमात्रं प्रमाणं, मधुमान एव जीर्णगुडः, पिप्पल्यादिचूर्णमानं तु यावता नातिव्यक्तं कटुत्वं भवति । मधुप्रमाणपादिकं पिप्पल्यादिचूर्णस्य मानं, लौहपत्रप्रमाणमपि तावदेवेत्यन्ये । आहारं चास्य कल्पयेद्विशिष्टदोषारब्धरोगजातिप्रत्यनीकम् । अत्राभिष्यन्दशब्देन मूत्रनिःस्यन्दोऽभिधीयते ॥ १२—१९ ॥

**प्रमेहिणो यदा मूत्रमपिच्छिलमनाविलम् ॥**
**विशदं तिक्तकटुकं तदाऽऽरोग्यं प्रचक्षते ॥ २० ॥**

**इति श्रीसुश्रुतसंहितायां चिकित्सास्थाने प्रमेहपिडकाचिकित्सितं नाम द्वादशोऽध्यायः ॥ १२ ॥**

प्रमेहिण इत्यादि । अनाविलं प्रसन्नम् । विशदं रूक्षम् । मूत्रस्य कटुतिक्तत्वं पिपीलिकामक्षिकादीनामपसर्पणेन ज्ञातव्यम् । अन्ये त्वेवं पठन्ति,—"प्रमेहिणो यदा मूत्रमनाविद्धमपिच्छिलम्"—इति; तत्रापि अनाविद्धं प्रसन्नम् ॥ २० ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ।

**अथातो मधुमेहचिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**
**मधुमेहित्वमापन्नं भिषग्भिः परिवर्जितम् ॥**
**योगेनानेन मतिमान् प्रमेहिणमुपाचरेत् ॥ ३ ॥**
**मासे शुक्रे शुचौ चैव शैलाः सूर्यांशुतापिताः ॥**
**जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ॥ ४ ॥**
**शिलाजत्विति विख्यातं सर्वव्याधिविनाशनम् ॥**

मधुमेहित्वमित्यादि । शुक्रो मासो ज्येष्ठः । शुचिराषाढः । यद्यप्यन्यस्मिन् काले शिलाजतुप्रस्रवणं दृश्यते, तथाऽपि शुचिशुक्रमासपरिगृहीतं खरतरतरणिकिरणतापिताभ्यः शिलाभ्यो गुणवत्तरं भवति । जतुप्रकाशं लाक्षाप्रकाशम् । सर्वव्याधिः मधुमेहादिः ॥ १-४ ॥—

**त्रप्वादीनां तु लोहानां षण्णामन्यतमान्वयम् ॥ ५ ॥**
**ज्ञेयं स्वगन्धतश्चापि षड्योनि प्रथितं क्षितौ ॥**

ननु शिलानां रूक्षकठिनानां कथं स्निग्धद्रवः स्वरसः संभवतीत्याह—त्रप्वादीनामित्यादि । त्रप्वादीनि त्रपुसीसताम्ररूप्यसुवर्णकृष्णलोहानि षट्, तेषामन्यतमान्वयमेकतमान्वयम् । षड्योनि षट्कारणकम् । यत्तु शिलाजतुचतुष्टयं तन्त्रान्तरे प्रोक्तं, तत्तेषां चतुर्णामपि मुख्यानां गुणख्यापनाय, नान्ययोनिशिलाजतुनिवारणाय ॥ ५ ॥—

**लोहाद्भवति तद्यस्माच्छिलाजतु जतुप्रभम् ॥ ६ ॥**
**तस्य लोहस्य तद्वीर्यं रसं चापि बिभर्ति तत् ॥**

लोहादित्यादि । रसं चापीति चकारेण वर्णप्रभावं च बिभर्तीत्यनुक्तं समुच्चीयते । तत्र यल्लौहजातं स्यात्, तल्लौहस्यैव वीर्यरसौ बिभर्ति । तानि च लौहानि सुवर्णादीनि, तद्गुणाश्च सुश्रुताध्यायिनोऽन्नपानविध्यध्यायान्ते पठन्ति । यद्यपि जतुप्रकाशो लाक्षासदृशः शिलास्रावः शिलाजतुशब्देनोक्तः, तथाऽपि सुवर्णादिनिर्यासेऽपि शिलाजत्विति प्रयोगः सर्षपादितैलवदौपचारिको द्रष्टव्यः ॥ ६ ॥—

**त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् ॥ ७ ॥**
**यथा तथा प्रयोगेऽपि श्रेष्ठे श्रेष्ठगुणाः स्मृताः ॥**

तेषां परस्परापेक्षं प्राधान्यं निर्दिशन्नाह—त्रप्वित्यादि । त्रपुसीसयोर्लोहत्वस्य नातिप्रसिद्धत्वादय इति विशेषणम् । त्रपुसीसायःसमुद्भवं शिलाजतु त्रपुसीसायसं, तदादिभूतं येषां तानि त्रपुसीसायसादीनि त्रपुसीसताम्ररूप्यसुवर्णकृष्णलोहजानि । प्राधान्यं तेषां कुत इत्याह—श्रेष्ठे श्रेष्ठगुणा इति ।—श्रेष्ठे श्रेष्ठद्रव्ये ॥ ७ ॥—

**तत्सर्वं तिक्तकटुकं कषायानुरसं सरम् ॥ ८ ॥**
**कटुपाक्युष्णवीर्यं च शोषणं छेदनं तथा ॥**

इदानीं सामान्यलक्षणाभिधानमाह—तत्सर्वमित्यादि शोषणं दुष्टरक्तादेः । छेदनं कफग्रन्थ्यादिच्छेदकृत् ॥ ८ ॥—

**तेषु यत् कृष्णमलघु स्निग्धं निःशर्करं च यत् ॥९॥**
**गोमूत्रगन्धि यच्चापि तत् प्रधानं प्रचक्षते ॥**

तेषां प्रधानलक्षणमुपादानार्थमुपदिशन्नाह–तेष्वित्यादि ॥९॥

**तद्भावितं सारगणैर्हृतदोषो दिनोदये ॥ १० ॥**
**पिबेत् सारोदकेनैव श्लक्ष्णपिष्टं यथाबलम् ॥**
**जाङ्गलेन रसेनान्नं तस्मिञ्जीर्णे तु भोजयेत् ॥ ११ ॥**
**उपयुज्य तुलामेवं गिरिजादमृतोपमात् ॥**
**वपुर्वर्णबलोपेतो मधुमेहविवर्जितः ॥ १२ ॥**
**जीवेद्वर्षशतं पूर्णमजरोऽमरसन्निभः ॥**
**शतं शतं तुलायां तु सहस्रं दशतौलिके ॥ १३ ॥**
**भल्लातकविधानेन परिहारविधिः स्मृतः ॥**
**मेहं कुष्ठमपस्मारमुन्मादं श्लीपदं गरम् ॥ १४ ॥**
**शोषं शोफार्शांसी गुल्मं पाण्डुतां विषमज्वरम् ॥**
**अपोहत्यचिरात्कालाच्छिलाजतु निषेवितम् ॥ १५ ॥**
**न सोऽस्ति रोगो यं चापि निहन्यान्न शिलाजतु ॥**
**शर्करां चिरसंभूतां भिनत्ति च तथाऽश्मरीम् ॥१६॥**
**भावनालोडने चास्य कर्तव्ये भेषजैर्हितैः ॥**

इदानीमस्योपयोगविधिं निर्दिशन्नाह—तद्भावितमित्यादि । सारगणैः शालसारादिभिः । तत्र भाव्यद्रव्यसमं क्वथनीयमष्टगुणे जले निष्क्वाथ्याष्टभागावशिष्टेन कषायमानम् । दशाहं विंशतिदिनानि त्रिंशद्दिनानि वा भावयेत् । हृतदोषः संशुद्धदेहः । दिनोदये प्रभाते एव, सारोदकेनैव पिबेत् । जाङ्गलेन रसेन भोजयेत्, अन्यथा शोषणच्छेदनत्वाद्वातकोपः स्यात् । तुला पलशतम् । गिरिजाच्छिलाजतुनः । न सोऽस्ति रोग इत्यत्र रोगशब्दो दोषेषु वर्तते, अथवा शस्त्रसाध्येष्वश्मर्यादिषु । नानाविधस्वास्थ्यकरद्रव्यभावनां चोपदिशन्नाह—भावनालोडने इत्यादि ॥ १०-१६ ॥—

**एवं च माक्षिकं धातुं तापीजममृतोपमम् ॥ १७ ॥**
**मधुरं काञ्चनाभासमम्लं वा रजतप्रभम् ॥**
**पिबन् हन्ति जराकुष्ठमेहपाण्ड्वामयक्षयान् ॥ १८ ॥**
**तद्भावितः कपोतांश्च कुलत्थांश्च विवर्जयेत् ॥**

शिलाजतुप्रयोगेणैव माक्षिकधातुप्रयोगमतिदिशन्नाह—एवं च माक्षिकमित्यादि । तापीजं तापीनदीजं सुवर्णमाक्षिकं रजतमाक्षिकं च । तद्भावित इत्यादि ताभ्यां शिलाजतुमाक्षिकधातुभ्यां भावितो व्याप्तदेहः । कुलत्थकपोतौ यावज्जीवं विवर्जयेत् ॥ १७-१८ ॥—

**पञ्चकर्मगुणातीतं श्रद्धावन्तं जिजीविषुम् ॥ १९ ॥**
**योगेनानेन मतिमान् साधयेदपि कुष्ठिनम् ॥**

---

१ 'तत् जतुप्रभं शिलाजतु यस्माल्लोहाद् भवत्युत्पद्यते तस्य लोहस्य तदन्नपानाध्यायोपदिष्टं वीर्यं रसञ्च तत्तस्मात् तत्तल्लोहसंभूतत्वादिति यावत्; बिभर्ति कारणानुरूपं कार्यमिति कृत्वेत्याकूतम्' इति डाराणचन्द्रः । 'तत्' इत्यत्र 'हि' इति पा० ।

इदानीं मधुमेहहरमपि योगमुद्दिशन्नाह—पञ्चेत्यादि । पञ्चकर्मगुणातीतमित्यत्र वमनादीनां पञ्चकर्मगुणानामप्राप्तफलमित्येके; तत्तु न सम्यक्, यतः पञ्चशब्देन पञ्चमधात्वस्थिस्थितं कुष्ठमुक्तं, तत्र कर्माणि संशोधनसंशमनाभ्यङ्गगुग्गुलुशिलाजतुप्रभृतीनि, तेषां गुणाः फलानि, तान्यतीतम्; एतदुक्तं भवति—अस्थिगतं कुष्ठं संशोधनादिभिरप्यप्राप्तविशेषं साधयेदिति; अन्ये तु, पूर्वरूपक्रियया सह रसादिधातूनां चतुर्णां क्रियासमूहः पञ्चकर्माणीति मन्यन्ते; प्रमेहस्य तु पञ्च गुणाः पश्चिमाध्याये कथिताः । जिजीविषुः जीवितुमिच्छुः । प्रमेहिणं तावत्साधयेदेव कुष्ठिनमपीत्यपिशब्दार्थः ॥ १९ ॥—

वृक्षास्तुवरका ये स्युः पश्चिमार्णवभूमिषु ॥ २० ॥
वीचीतरङ्गविक्षेपमारुतोद्धूतपल्लवाः ॥
तेषां फलानि गृह्णीयात् सुपक्वान्यम्बुदागमे ॥ २१ ॥
मज्जां तेभ्योऽपि संहृत्य शोषयित्वा विचूर्ण्य च ॥
तिलवत् पीडयेद्द्रोण्यां स्रावयेद्वा कुसुम्भवत् ॥२२॥
तत्तैलं संहृतं भूयः पचेदातोयसंक्षयात् ॥
अवतार्य करीषे च पक्षमात्रं निधापयेत् ॥ २३ ॥
स्निग्धः स्विन्नो हृतमलः पक्षादूर्ध्वं प्रयत्नवान् ॥
चतुर्थभक्तान्तरितः शुक्लादौ दिवसे शुभे ॥ २४ ॥
मन्त्रपूतस्य तैलस्य पिबेन्मात्रां यथाबलम् ॥
तत्र मन्त्रं प्रवक्ष्यामि येनेदमभिमन्त्र्यते ॥ २५ ॥
'मज्जसार महावीर्य सर्वान् धातून् विशोधय ॥
शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः ॥ २६ ॥'
तेनास्योर्ध्वमधश्चापि दोषा यान्त्यसकृत्ततः ॥
अस्नेहलवणां सायं यवागूं शीतलां पिबेत् ॥ २७ ॥
पञ्चाहं प्रपिबेत्तैलमनेन विधिना नरः ॥
पक्षं परिहरेच्चापि मुद्गयूषौदनाशनः ॥ २८ ॥
पञ्चभिर्दिवसैरेवं सर्वकुष्ठैर्विमुच्यते ॥
तदेव खदिरक्वाथे त्रिगुणे साधु साधितम् ॥ २९ ॥
निहितं पूर्ववत् पक्षात् पिबेन्मासमतन्द्रितः ॥
तेनाभ्यक्तशरीरश्च कुर्वीताहारमीरितम् ॥ ३० ॥
भिन्नस्वरं रक्तनेत्रं विशीर्णं कृमिभक्षितम् ॥
अनेनाशु प्रयोगेण साधयेत् कुष्ठिनं नरम् ॥ ३१ ॥
सर्पिर्मधुयुतं पीतं तदेव खदिराम्बुना ॥
पक्षिमांसरसाहारं करोति द्विशतायुषम् ॥ ३२ ॥
तदेव नस्ये पञ्चाशद्दिवसानुपयोजितम् ॥
वपुष्मन्तं श्रुतिधरं करोति त्रिशतायुषम् ॥ ३३ ॥
शोधयन्ति नरं पीता मज्जानस्तस्य मात्रया ॥
महावीर्यस्तुवरकः कुष्ठमेहापहः परः ॥ ३४ ॥

इदानीं जन्मभूमिमारभ्य तुवरकरसायनकल्पं प्रस्तौति—वृक्षा इत्यादि । पश्चिमार्णवभूमिषु पश्चिमसमुद्रभूमिषु । वीचीतरङ्गेत्यादि । ऊर्मिपरम्पराविक्षेपपवनोत्कम्पितपल्लवाः समुद्रोदकस्यात्यासन्ना इत्यर्थः । तेषां फलेभ्यो मज्जानमादाय; कुसुम्भवत् कुसुम्भकुसुमवत्तैलं वा गालयेत्, तत्तैलगालनं सलिलापचयं यावत् । तत्तु करीषराशौ पक्षं निधातुं प्रयोजयेत्, विशिष्टतमशक्त्युत्पादनार्थम् । हृतं मलं पुरीषं कफादयोऽपि यस्य स तथा; तत्र कफे वमनमेव, वमनात् पक्षादेव विरेचनं; यदाहुः—"पक्षाद्विरेको वान्तस्य" (चि. अ. ३६) इति; विरेचनादपि पक्षादेव तौवरकं तैलं, तस्यापि शोधनत्वात्; एतेन पेयादिसंसर्जनक्रमेण सञ्जातबलस्तुवरकस्नेहं पिबेदित्यर्थः । चतुर्थभक्तान्तरित इति पक्षादूर्ध्वं प्रथमेऽह्नि सायंप्रातः प्रकृतिभोजनद्वयं, द्वितीयेऽह्नि प्रातर्भुक्त्वा सायं भोजनं न कार्यं, फलाम्लमुष्णोदकं वा पाययेत् सायं भोजनस्थाने, ततस्तृतीयेऽहनि लघुकोष्ठाय प्रातः स्नेहं दद्यात्, एवं चतुर्थभक्तमन्तरितं भवतीत्यर्थः । तैलस्यापि पिबेन्मात्रां पाणितलप्रमाणां, कर्षप्रमाणामित्यर्थः । अस्नेहलवणाम् अल्पस्नेहलवणां, यतो नञ् ईषदर्थे । पक्षं परिहरेत्, 'क्रोधादीन्' इति शेषः । महावीर्यो महाप्रभावः । पर उत्कृष्टतमः ॥ २०–३४ ॥

सान्तर्धूमस्तस्य मज्जा तु दग्धः
क्षिप्तस्तैले सैन्धवं चाञ्जनं च ॥
पैल्यं हन्यादर्मनक्तान्ध्यकाचान्
नीलीरोगं तैमिरं चाञ्जनेन ॥ ३५ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने
मधुमेहचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

सान्तर्धूम इत्यादि । तैले तुवरकोत्थे । सैन्धवं लवणम् । अञ्जनं स्रोतोञ्जनं, तस्योत्पत्तिस्थानं वर्णसा सिन्धुश्च महानदः; अथवा वर्णसोद्भवाञ्जनपरिहाराय सैन्धवमुक्तं, तेन सिन्धुमहानदोद्भवमेवाञ्जनं ग्राह्यम् । मज्जादिकं त्रितयमन्तर्धूमेन दग्धम् । एतेन तुवरकस्य षड्विधः प्रयोग उक्तः; तद्यथा—तैलं पञ्चाहिकप्रयोगेण कुष्ठहर एकः, तथा तदेव खदिराम्बुसिद्धं विशिष्टावस्थकुष्ठे द्वितीयः, तथा तदेव सर्पिर्मधुखदिरकषायविधिना तृतीयः, तथा परोऽपि पञ्चाशदाह्निको नस्यप्रयोगो रासायनिकश्चतुर्थः, मज्जप्रयोगः पञ्चमः, तथाहि 'शोधयन्ति नरं पीताः' इत्यादि, अञ्जनप्रयोगः षष्ठः 'सान्तर्धूम' इत्यादि ॥ ३५ ॥

इति श्रीडल्ह(ड्ड)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ।

अथात उदराणां चिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
अष्टावुदराणि पूर्वमुद्दिष्टानि । तेष्वसाध्यं बद्धगुदं परिस्रावि च; अवशिष्टानि कृच्छ्रसाध्यानि;

१ 'तेभ्यो मज्जानमादाय' इति पा० । २ 'निहन्ति पूर्ववत् पक्षं' इति पा० ।

**सर्वाण्येव प्रत्याख्यायोपक्रमेत । तेष्वाद्यश्चतुर्वर्गो भेषजसाध्यः, उत्तरः शस्त्रसाध्यः, कालप्रकर्षात् सर्वाण्येव शस्त्रसाध्यानि वर्जयितव्यानि वा ॥ ३ ॥**

निदानस्थाने कथितेऽप्यष्टत्वेऽत्र पुनरष्टसंख्याख्यापनं प्लीहोदरयकृद्दाल्युदरयोश्चिकित्सितैकत्व[1]प्रख्यापनाय । अवशिष्टानि कृच्छ्रसाध्यानीति तेष्वपि यथोत्तरं कृच्छ्रतरत्वं ज्ञेयम् । तथाच— "वातात् पित्तात् कफात् प्लीह्नः सन्निपातात्तथोदकात् । परं परं कृच्छ्रतरमुदरं भिषगादिशेत्" ( च. चि. अ. १३ ) इति । सर्वाण्येवेति षडिति केचित्, षट्स्वेव कृच्छ्रत्वप्रतिपादनात्; बद्धगुदपरिस्राविभ्यां सहाष्टावपीत्यन्ये, तयोरपि चिकित्सितोक्तेः, सर्वग्रहणाच्च । तेष्वित्यादि । आद्यश्चतुर्वर्गः वातपित्तकफदूषीविषनिमित्तानि चत्वार्युदराणि; उत्तरस्तु प्लीहोदरबद्धगुदच्छिद्रोदकोदराणि । कालप्रकर्षादिति भेषजसाध्यकालातिक्रमात् शस्त्रसाध्यकालातिक्रमाच्च सर्वाण्येवौषधसाध्यान्यपि शस्त्रसाध्यानि स्युः, शस्त्रसाध्यानि वर्जयितव्यानीति वर्जनार्हाणि वेत्यर्थः ॥ १–३ ॥

**उदरी तु गुर्वभिष्यन्दिरूक्षविदाहिस्निग्धपिशितपरिषेकावगाहान् परिहरेत्; शालिषष्टिकयवगोधूमनीवारान् नित्यमश्नीयात् ॥ ४ ॥**

उदरीत्यादि । दोषधातुमलस्रोतसां क्लेदप्राप्तिजननमभिष्यन्दि । विदाहि काञ्जिकादि । स्निग्धं पिशितं मेदुरमांसम् । नीवार उलिकाधान्यम् ॥ ४ ॥

**तत्र वातोदरिणं विदारिगन्धादिसिद्धेन सर्पिषा स्नेहयित्वा, तिल्वकविपक्वेनानुलोम्य, चित्राफलतैलप्रगाढेन विदारिगन्धादिकषायेणास्थापयेदनुवासयेच्च, साल्वणेन चोपनाहयेदुदरं, भोजयेच्चैनं विदारिगन्धादिसिद्धेन क्षीरेण जाङ्गलरसेन च, स्वेदयेच्चाभीक्ष्णम् ॥ ५ ॥**

तत्रेत्यादि । तिल्वकः पट्टिकारोध्रः । अनुलोम्य विरेच्य । चित्राफलतैलं दन्तीफलतैलम् । आस्थापयेत् निरूहयेत्, अनुवासयेच्च चित्राफलतैलेनैव । साल्वणेनोपनाहयेत् बध्नीयात् । स्वेदयेच्चाभीक्ष्णमिति एवमग्रेतने कफारब्धेऽपि स्वेदो विधेयः, नतु पित्तारब्धे; स च स्वेद आजलप्राप्तेः[2], अत ऊर्ध्वं सर्वेषामस्वेद्यत्वम् । कथमत्रोदरिणः स्नेहस्वेदास्थापनानुवासनानि सुश्रुताचार्यः प्राह ? अग्रे 'अस्नेह्या अस्वेद्या नानुवास्या नास्थाप्या' इति पठितत्वात्; एतन्न, यतश्छिद्रोदकोदरिणोरेव तत्र निषेधः, अन्येषु यथावस्थं स्नेहादयः प्रयोज्या इति ॥ ५ ॥

**पित्तोदरिणं तु मधुरगणविपक्वेन सर्पिषा स्नेहयित्वा, श्यामात्रिफलात्रिवृद्विपक्वेनानुलोम्य, शर्करामधुघृतप्रगाढेन न्यग्रोधादिकषायेणास्थापयेदनुवासयेच्च, पायसेनोपनाहयेदुदरं, भोजयेच्चैनं विदारिगन्धादिसिद्धेन पयसा ॥ ६ ॥**

पित्तोदरिणमित्यादि । मधुरगणः काकोल्यादीनि । श्यामा वृद्धदारकः । क्षीरसिद्धास्तण्डुलाः पायसः ॥ ६ ॥

**श्लेष्मोदरिणं तु पिप्पल्यादिकषायसिद्धेन सर्पिषोपस्नेह्य, स्नुहीक्षीरविपक्वेनानुलोम्य, त्रिकटुकमूत्रक्षारतैलप्रगाढेन मुष्ककादिकषायेणास्थापयेदनुवासयेच्च, शणातसीधातकीकिण्वसर्षपमूलकबीजकल्कैश्चोपनाहयेदुदरं, भोजयेच्चैनं त्रिकटुकप्रगाढेन कुलत्थयूषेण पायसेन वा, स्वेदयेच्चाभीक्ष्णम् ॥ ७ ॥**

श्लेष्मोदरिणमित्यादि । मुष्ककपलाशधावन्यादिर्मुष्ककादिः । आस्थापनवर्गसिद्धेन तैलेनानुवासनम् । किण्वं सुराबीजम् ॥ ७ ॥

**दूष्योदरिणं तु प्रत्याख्याय सप्तलाशङ्खिनीस्वरससिद्धेन सर्पिषा विरेचयेन्मासमर्धमासं वा, महावृक्षक्षीरसुरागोमूत्रसिद्धेन वा; शुद्धकोष्ठं तु मद्येनाश्वमारकगुञ्जाकाकादनीमूलकल्कं पाययेत्; इक्षुकाण्डानि वा कृष्णसर्पेण दंशयित्वा भक्षयेद्वल्लीफलानि वा, मूलजं कन्दजं वा विषमासेवयेत्, तेनागदो भवत्यन्यं वा भावमापद्यते ॥ ८ ॥**

सान्निपातिकचिकित्सितमुपदिशन्नाह—दूष्योदरिणमित्यादि । शङ्खिनी यवतिक्ताभेदः । सान्निपातिकोदरे स्नेहादि यदुक्तं तद्वाताद्युदरोदितभेषजगणैः सर्वं साधनीयम् । यदाह **चरकः**— "सन्निपातोदरे सर्वा यथोक्ताः कारयेत् क्रियाः" ( च. चि. अ. १३ ) इति । **लघुवाग्भटे**ऽपि "सन्निपातोदरे कुर्यान्नातिक्षीणबलानले । दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमाम्" ( वा. चि. अ. १५ ) इति । शङ्खिनी यवतिक्ताभेदः । महावृक्षेत्यादि । विरेचयेदिति शेषः । महावृक्षः सेहुण्डः । महावृक्षक्षीरमात्रा कल्कप्रमाणा । शुद्धेत्यादि । गुञ्जा चिरिहिण्टिका । काकादनी वायसतिन्दुका । इक्षुकाण्डानीत्यादि । यथा मदात्यये मद्यपानम्, अग्निदग्धेऽग्निस्वेदः, अतीसारे स्विन्नपथ्ययो[1] विट्प्रवर्तनं, छर्द्यां वमनं, सर्पविषे विषभक्षणं, तद्वद्विषाद्युत्पन्नोदरेऽपि कृष्णसर्पदष्टेक्षुकाण्डभक्षणं विषभक्षणं वा । वल्लीफलानि कर्कटीप्रभृतीनि । अन्यं वा भावमापद्यते मरणं प्राप्नोति । कर्मेदं दारुणम्, अक्रियायां ध्रुवं मरणं, क्रियायां संशये सत्येवं कुर्यात्, तत्रापीश्वरानुज्ञातेनैव कार्यम् ॥ ८ ॥

**भवति चात्र—**

**कुपितानिलमूलत्वात् संचितत्वा[2]न्मलस्य च ॥**
**सर्वोदरेषु शंसन्ति बहुशस्त्वनुलोमनम् ॥ ९ ॥**

---

१ 'चिकित्सितैकत्वप्रत्याख्यापनाय' इति पा० । २ 'आजलप्राप्तिसर्वरूपावस्थाप्राप्तेः' इति पा० ।

१ 'स्विन्नपथ्यादि' इति पा० । २ 'संचयित्वात्' इति पा० ।

कुपितेत्यादि । सर्वोदराण्येव मलवृद्ध्या वर्तन्ते, तस्मात् संशोधनं शस्तं; तच्च बहुशोऽनल्पशः ॥ ९ ॥

**अत ऊर्ध्वं सामान्ययोगान् वक्ष्यामः । तद्यथा— एरण्डतैलमहरहर्मासं द्वौ वा केवलं मूत्रयुक्तं क्षीरयुक्तं वा सेवेतोदकवर्जी, माहिषं वा मूत्रं क्षीरेण निराहारः सप्तरात्रम्, उष्ट्रीक्षीराहारो वाऽन्नवारिवर्जी पक्षं, पिप्पलीं वा मासं पूर्वोक्तेन विधानेनासेवेत, सैन्धवाजमोदायुक्तं वा निकुम्भतैलम्, आर्द्रशृङ्गवेररसपात्रशतसिद्धं वा वातशूलेऽवचार्यं, शृङ्गवेररसविपक्वं क्षीरमासेवेत, चव्यशृङ्गवेरकल्कं वा पयसा सरलदेवदारुचित्रकमेव वा, मुरङ्गीशालपर्णीश्यामापुनर्नवाकल्कं वा, ज्योतिष्कफलतैलं वा क्षीरेण स्वर्जिकाहिङ्गुमिश्रं पिबेत्, गुडद्वितीयां वा हरीतकीं भक्षयेत्, स्नुहीक्षीरभावितानां वा पिप्पलीनां सहस्रं कालेन, पथ्याकृष्णाचूर्णं वा स्नुहीक्षीरभावितमुत्कारिकां पक्वां दापयेत्; हरीतकीचूर्णं प्रस्थमाढके घृतस्यावाप्याङ्गारेष्वभिविलाप्य खजेनाभिमथ्यानुगुप्तं कृत्वाऽर्धमासं यवपल्ले वासयेत्, ततश्चोद्धृत्य परिस्राव्य हरीतकीकाथाम्लदधीन्यावाप्य विपचेत्, तद्यथायोगं मासमर्धमासं वा पाययेत्; गव्ये पयसि महावृक्षक्षीरमावाप्य विपचेत्, विपक्वं चावतार्य शीतीभूतं मन्थानेनाभिमथ्य नवनीतमादाय भूयो महावृक्षक्षीरेणैव विपचेत्, तद्यथायोगं मासं मासार्धं वा पाययेत्; चव्यचित्रकदन्त्यतिविषाकुष्ठसारिवात्रिफलाजमोदहरिद्राशङ्खिनीत्रिवृत्त्रिकटुकानामर्धकार्षिका भागा, राजवृक्षफलमज्ज्ञामष्टौ कर्षाः, महावृक्षक्षीरपले द्वे, गवां क्षीरमूत्रयोरष्टावष्टौ पलानि, एतत् सर्वं घृतप्रस्थे समावाप्य विपचेत्, तद्यथायोगं मासमर्धमासं वा पाययेत्; एतानि तिल्वकघृतचतुर्थानि सर्पींष्युदरगुल्मविद्रध्यष्ठीलानाहकुष्ठोन्मादापस्मारेषूपयोज्यानि विरेचनार्थं; मूत्रासवारिष्टसुराश्चाभीक्ष्णं महावृक्षक्षीरसंभृताः सेवेत; विरेचनद्रव्यकषायं वा शृङ्गवेरदेवदारुप्रगाढम् ॥ १० ॥**

अत इत्यादि । सप्ताहं माहिषं मूत्रं क्षीरेण कृतोदकान्नकार्यः, केचिदत्र माहिषमेव क्षीरमाहुः, अपरे पुनर्माहिषस्याग्निमान्द्यादिकरणाद्गव्यमेवाहुः । **गूढपदभङ्गटिप्पणे** ईदृशं व्याख्यातं— माहिषं मूत्रं क्षीरेण गव्येन पिबेत्; प्रमादव्याख्यानमिदं, यस्माज्जेज्जटाचार्यादीनामनुमतं न भवति । उष्ट्रीत्यादि । केचिदत्र क्षीरं त्रिकटुकसंयुक्तमाहुः, तन्त्रान्तरप्रामाण्यात् । पिप्पलीमित्यादि । पूर्वोक्तेन वातशोणितोक्तेन । सैन्धवाजमोदाप्रक्षेपयुक्तं वा दन्तीतैलं; तदेव तैलमार्द्रशृङ्गवेररसाढकशतपक्वं वातशूले वातरुज्यवचार्यम्; अन्ये तु तिलतैलमेव साधयन्ति, तन्त्रान्तरप्रामाण्यात्; आर्द्रशृङ्गवेरमार्द्रकं, तद्रसं चतुर्गुणम् । विपक्वं क्षीरावशिष्टं पक्वम् । चव्येत्यादि । पयसा चतुर्गुणेनैव । सरलदेवदारुचित्रकमेव पयसेत्यर्थः; सरला त्रिवृत् । मुरङ्ग्यादयो वा तथैव च; मुरङ्गी शोभाञ्जनकः । श्यामा वृद्धदारुकः । ज्योतिष्कः काकमर्दनिका । हिङ्गुमाषकस्वर्जिकाक्षारमाषकचतुष्टयसंयुक्तं 'मासमर्धमासं वा' इति शेषः । स्नुहीत्यादि । अत्र त्रिःसप्तकृत्वो भावना । स्नुही सेहुण्डः, स च बहुकण्टकः श्रेष्ठः । कालेनेति यावता कालेन शक्नुयाद्भक्षयितुं, पिप्पलीसहस्रमेकद्वित्रिचतुष्टयत्वेन विरेकार्थम् । पथ्येत्यादि । उत्कारिकां लप्सिकाम् । हरीतकीत्यादि । खजः मन्थानम् । हरीतकीक्वाथकाञ्जिकदधीनि प्रत्येकं घृतचतुर्गुणानि । गव्य इत्यादि ।—गव्ये पयसीति आढकप्रमाणे, महावृक्षक्षीरं प्रस्थं, महावृक्षः सेहुण्डः, तज्जं च नवनीतं महावृक्षक्षीरपादं, द्रवानुक्तौ जलमत्र चतुर्गुणम् । चव्येत्यादि । त्रिफलात्रिकटुकद्रव्याणां प्रत्येकमर्धकार्षिका भागाः, न हि त्रिफला त्रिकटुकं वा द्रव्यमेकमिति । केचिद्द्रवस्याल्पत्वाज्जलमपि चतुर्गुणमित्याहुः । एषां विषयमाह—एतानीत्यादि । तिल्वकघृतं वातव्याध्युक्तं चतुर्थं येषां तानि तिल्वकघृतचतुर्थानि । मूत्रेत्यादि ।—मूत्रद्रवेणासवादयोऽनुकल्पेन महावृक्षक्षीरप्रस्थप्रक्षेपेण सम्यक्कृताः । विरेचनद्रव्यकषायमित्यादि ।—त्रिवृदादिकषायं वा शुण्ठीदेवदारुचूर्णकर्षप्रक्षेपाढ्यम् ॥ १० ॥

**वमनविरेचनशिरोविरेचनद्रव्याणां पालिका भागाः पिप्पल्यादिवचादिहरिद्रादिपरिपठितानां च द्रव्याणां श्लक्ष्णपिष्टानां यथोक्तानां च लवणानां तत्सर्वं मूत्रगणे प्रक्षिप्य महावृक्षक्षीरप्रस्थं च मृद्वग्निनाऽवघट्टयन् विपचेदप्रदग्धकल्कं, तत्साधुसिद्धमवतार्य शीतीभूतमक्षमात्रा गुटिका वर्तयेत्, तासामेकां द्वे तिस्रो वा गुटिका बलापेक्षया मासांस्त्रींश्चतुरो वा सेवेत, एषाऽऽनाहवर्तिक्रिया विशेषेण महाव्याधिषूपयुज्यते ( विशेषेण ) कोष्ठजांश्च कृमीनपहन्ति कासश्वासकृमिकुष्ठप्रतिश्यायारोचकाविपाकोदावर्तांश्च नाशयति ॥ ११ ॥**

इदानीमनलदीपनीं गुपितानिलसंवलितमलानुलोमनीमाभ्यन्तरीं मूत्रवर्तिं निर्दिशन्नाह—वमनेत्यादि । संशोधनसंशमनीयाध्यायोदितानि वमनविरेचनशिरोविरेचनद्रव्याणि मदनफलादित्रिवृदादिविडङ्गादीनि, द्रव्यसंग्रहणीयाध्याये पिप्पल्यादिवचादिहरिद्रादयो निर्दिष्टाः, लवणान्यन्नपानाध्याये परिपठितानि सैन्धवादीनि, मूत्रगणो गोमूत्रादिर्द्रवद्रव्यपठितः; तेषां यथालाभं पालिका भागाः । यथालाभमेव गवादीनां मूत्रेण

१ 'अल्पशः' इति पा० । २ 'गुडप्रगाढां' इति पा० ।

१ 'सुरङ्गी' इति पा० । २ 'एषा खल्वानाहमूत्रवर्तिक्रिया विशेषेण' इति पा० । ३ 'कुपितानिलसेवितमलानुलोमनीं' इति पा० ।

व्यस्तसमस्तेन पिष्ट्वा चतुर्गुणैरष्टगुणैर्वा विपाच्यम् । अङ्गुष्ठप्रमाणा वर्तयः कर्तव्याः । ताः पुनरधममध्यमोत्तमपुरुषादिबलापेक्षया एकद्वित्रिसंख्योपलक्षिता भक्षयितव्याः । तत्र च गवादिमूत्रमेवानुपानम् । तासामभ्यासे कालावधिर्मासास्त्रयश्चत्वारो वा; फलं तु मेहादिमहाव्याधिहरणं कोष्ठकृमिहरणं च ॥ ११ ॥

**मदनफलमज्जकुटजजीमूतकेक्ष्वाकुधामार्गवत्रिवृत्त्रिकटुकसर्षपलवणानि महावृक्षक्षीरमूत्रयोरन्यतरेण पिष्ट्वाऽङ्गुष्ठमात्रां वर्तिं कृत्वोदरिण आनाहे तैललवणाभ्यक्तगुदस्यैकां द्वे तिस्रो वा पायौ निदध्यात्, एषाऽऽनाहवर्तिक्रिया वातमूत्रपुरीषोदावर्ताध्मानानाहेषु विधेया ॥ १२ ॥**

अभ्यन्तरवर्तिप्रसङ्गेन फलवर्तिं निर्दिशन्नाह—मदनफलेत्यादि । जीमूतको देवदाली, इक्ष्वाकुः कटुतुम्बी, धामार्गवो महाकोशातकी । 'विपाच्य' इत्यनुवर्तनीयम् । पाके तु मूत्रमेवानुवर्तनीयम् । पायौ गुदे । न केवलं उदरानाहे वातमूत्रपुरीषोदावर्ताध्मानानाहेषु विधेयेति । 'क्षारमूत्रयोरन्यतरेण' इत्यन्ये पठन्ति; तत्र क्षारः क्षारोदकं पेषणवचनात्[1] ॥ १२ ॥

**प्लीहोदरिणः स्निग्धस्विन्नस्य दध्ना भुक्तवतो वामबाहौ कूर्पराभ्यन्तरतः सिरां विध्येत्, विमर्दयेच्च पाणिना प्लीहानं रुधिरस्यन्दनार्थं; ततः संशुद्धदेहं समुद्रशुक्तिकाक्षारं पयसा पाययेत, हिङ्गुसौवर्चिके वा क्षीरेण, स्रुतेन पलाशक्षारेण वा यवक्षारं, किंशुकक्षारोदकेन वा बहुशः स्रुतेन यवक्षारं, पारिजातकेक्षुरकापामार्गक्षारं वा, तैलसंसृष्टं शोभाञ्जनकयूषं पिप्पलीसैन्धवचित्रकयुक्तं, पूतिकरञ्जक्षारं वाऽम्लस्रुतं विड्लवणपिप्पलीप्रगाढम्॥१३॥**

प्लीहेत्यादि । दधिभोजनं रक्तोत्क्लेशाय तदहरेव, कफव्याधौ वमने कर्तव्ये प्राक् कफोत्क्लेशकरद्रव्योपयोगवत् । कूर्परं भुजमध्यम् । रुधिरस्यन्दनार्थं रक्तस्रावणार्थं; सिराव्यधविध्युक्तोऽपि सिराव्यधः पुनरिहोक्तः, प्रकरणवशात्; अतो न पुनरुक्तदोषमावहति । तत इत्यादि । संशुद्धदेहं वमनविरेचनाभ्याम् । पारिजातः प्रसिद्धः । इक्षुरकः कोकिलाक्षकः । पारिभद्रकेक्षुरकेति केचित् पठन्ति । शोभाञ्जनेत्यादि । अम्लं काञ्जिकम् । पूतिकरञ्जश्चिरबिल्वः, कण्टकीकरञ्ज इत्यन्ये । कल्पनामाह—कण्टकीकरञ्जक्षारमर्धपलमात्रं षड्गुणाम्लकाञ्जिकेन बहुशः परिस्रुतं पिप्पलीविड्लवणचूर्णाक्षप्रक्षेपम् । विडस्थाने सैन्धवमिति केचित् पठन्ति ॥ १३ ॥

**पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरयवक्षारसैन्धवानां पालिका भागाः,घृतप्रस्थं तत्तुल्यं च क्षीरं तदैकध्यं विपाचयेत्, एतत् षट्पलकं नाम सर्पिः प्लीहाग्निसङ्गगुल्मोदरोदावर्तश्वयथुपाण्डुरोगकासश्वासप्रतिश्यायोर्ध्ववातविषमज्वरानपहन्ति । मन्दाग्निर्वा हिङ्ग्वादिकं चूर्णमुपयुञ्जीत ॥ १४ ॥**

पिप्पलीत्यादि । केचिदत्र भिषजश्चतुर्गुणं पानीयमाददते; तन्न, जेज्झटेन निषिद्धत्वात् । अस्मिन् योगे 'कोलकुलत्थपूतीकरोहीतकक्वाथं द्विगुणमावाप्य' इति केचित् पठन्ति; तन्न, सोऽपि जेज्झटेन निषिद्धत्वात् ॥ १४ ॥

**यकृद्दाल्येऽप्येष एव क्रियाविभागः । विशेषतस्तु दक्षिणबाहौ सिराव्यधः ॥ १५ ॥**

**मणिबन्धं सकृन्नाम्य वामाङ्गुष्ठसमीरिताम् ॥**
**दहेत् सिरां शरेणाशु प्लीह्नो वैद्यः प्रशान्तये ॥ १६ ॥**

यकृद्दाल्य इत्यादि । मणिबन्धः पाणिमूलं, सकृत् किञ्चिन्नामयित्वा वामाङ्गुष्ठं प्रति सम्यगीरितां गतां सिरां, शरः प्रसिद्धः, तमग्निवर्णं कृत्वा दहेत् ॥ १५ ॥ १६ ॥

**बद्धगुदे परिस्राविणि च स्निग्धस्विन्नस्याभ्यक्तस्याधो नाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या उदरं पाटयित्वा चतुरङ्गुलप्रमाणमन्त्राणि निष्कृष्य निरीक्ष्य बद्धगुदस्यान्त्रप्रतिरोधकरमश्मानं बालं वाऽपोह्य मलजातं वा ततो मधुसर्पिर्भ्यामभ्यज्यान्त्राणि यथास्थानं स्थापयित्वा बाह्यं[1] व्रणमुदरस्य सीव्येत् । परिस्राविण्यप्येवमेव शल्यमुद्धृत्यान्त्रस्रावान् संशोध्य[2], तच्छिद्रमान्त्रं समाधाय कालपिपीलिकाभिर्दंशयेत्, दष्टे च तासां कायानपहरेन्न शिरांसि, ततः पूर्ववत् सीव्येत्, संधानं च यथोक्तं कारयेत्, यष्टीमधुकमिश्रया च कृष्णमृदाऽवलिप्य बन्धेनोपचरेत्, ततो निवातमागारं प्रवेश्याचारिकमुपदिशेत्, वासयेच्चैनं तैलद्रोण्यां सर्पिर्द्रोण्यां वा पयोवृत्तिमिति ॥ १७ ॥**

ततो बद्धगुदपरिस्राविणोरुपक्रमप्राप्तां चिकित्सामुपदिशन्नाह—बद्धगुद इत्यादि । स्विन्नस्येति द्रवस्वेदेन । नाभेर्वामत इत्यादि ।—वामभागे नाभेरधस्ताच्चतुरङ्गुलमपहाय रोमराज्याश्चतुरङ्गुलप्रमाणस्तिर्यगेव छेदः; तत्र लोम्नि तिर्यगवस्थितेऽनुलोमगं च शस्त्रपातनमुक्तम् । अन्त्रप्रतिरोधकरमश्मानं बालं वाऽपोह्य मलजातं वेति तत्र मलरोधकारणमाभ्यन्तरमश्मकेशतृणादि, बाह्यं तु विषमविहाराभिघातेनान्त्रावयवानां परस्परसंमूर्च्छनं, न तत्रान्त्रच्छेदनमिति परिस्राव्युदराद्विशेषः । अत एव परिस्राविण्येव पृथगन्त्रसन्धानं विशेषेण वक्ष्यति । तत्राभ्यन्तरेऽश्मादावत्यन्ताबाधकरे शल्यनिमित्तमेवान्त्रच्छेदं कृत्वाऽश्मादिशल्यमपहरेत् । अन्त्रच्छिद्रं तु वक्ष्यमाणन्यायेनानु-

1 'पेषणे वर्तनात्' इति पा० ।

1 'बद्धं' इति पा० । 2 'अनुस्राव्य' इति पा० ।

सन्धाय सर्पिर्मध्वक्तं निष्कृष्टमन्त्रमङ्गुष्ठाङ्गुलिशलेकादिभिर्यथास्थानं स्थापयेत् । मूर्च्छितमन्त्रं तु वीक्ष्य पाणिना बन्धावमोक्षेणानुलोमयेत् । बाह्यव्रणं रक्तासेचनादिविधिमपेक्ष्य सम्यक् सीव्येत् । तैलसर्पिर्द्रोणीवासनमुदरस्य व्रणित्वेनाध्मानक्लेशनिवृत्यर्थम् । पयसा केवलेन वृत्तिरिति यावत् । गुदपिच्छास्रनिवृत्त्या सम्यगन्त्रस्य सन्धानदृढीभावनिश्चयः, अन्यथा खल्वाहारेण तत्किट्टेन वा पिपीलिकामुखदंशसन्धानं मृदु विघटेत सम्यक् सन्धावपि, तस्मादनुक्रमेणैव पयोजाङ्गलमांसरसभोजनेन त्रिभागार्धभागवारिणा च प्राकृतभोजनप्राप्तिः । सांशयिकं चैतत् कर्म, तस्मादापृच्छ्येश्वरं प्रत्याख्यायाचरेत् ॥ १७ ॥

दकोदरिणस्तु वातहरतैलाभ्यक्तस्योष्णोदकस्विन्नस्य स्थितस्याप्तैः सुपरिगृहीतस्याकक्षात् परिवेष्टितस्याधोनाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येत्, तत्र त्रप्वादीनामन्यतमस्य नाडीं द्विद्वारां पक्षनाडीं वा संयोज्य दोषोदकमवसिञ्चेत्, ततो नाडीमपहृत्य तैललवणेनाभ्यज्य व्रणं बन्धेनोपचरेत्, न चैकस्मिन्नेव दिवसे सर्वं दोषोदकमपहरेत्, सहसा ह्यपहृते तृष्णाज्वराङ्गमर्दातीसारश्वासकासपाददाहा उत्पद्येरन्नापूर्यते वा भूशतरमुदरमसञ्जातप्राणस्य, तस्मात्तृतीयचतुर्थपञ्चमषष्ठाष्टमदशमद्वादशषोडशरात्राणामन्यतममन्तरीकृत्य दोषोदकमल्पाल्पमवसिञ्चेत्; निःसृते च दोषे गाढतरमाविककौशेयचर्मणामन्यतमेन परिवेष्टयेदुदरं, तथा नाध्मापयति वायुः; षण्मासांश्च पयसा भोजयेज्जाङ्गलरसेन वा, ततस्त्रीन्मासानर्धोदकेन पयसा फलाम्लेन जाङ्गलरसेन वा, अवशिष्टं मासत्रयमन्नं लघु हितं वा सेवेत, एवं संवत्सरेणागदो भवति ॥ १८ ॥

षण्मासानित्यादि । मासान् षष्यावल्लघु हितमन्नं पयसा क्षीरेण भोजयेत् । क्षीरेणैवोदककार्यं कारयेत्, कफवाताधिकत्वं च वीक्ष्य जाङ्गलरसेन भोजयेत्, रसेनैवोदककार्यं, तत ऊर्ध्वं त्रीन्मासान् अर्धोदकेन पयसा दोषापेक्षया जाङ्गलरसेन वा लघु हितमन्नं भोजयेत्, ताभ्यामेवोदककार्यं कारयेत् । अवशिष्टं च मासत्रयं लघु हितमन्नं भोजयेत् । उदकेनैवोदककार्यम् । चरकमतानुसारिणा **वाग्भटेन** क्षीरेणैव षण्मासान् वृत्तिरभिहिता, नान्नपानीयाभ्यां; तथा च—'स्यात् क्षीरवृत्तिः षण्मासांस्त्रीन् पेयां पयसा पिबेत् । त्रींश्चान्यान् पयसैवाद्यात् फलाम्लेन रसेन वा ॥ अल्पशः स्नेहलवणं जीर्णश्यामाककोद्रवम्" ( वा. चि. अ. १५ ) इति ॥ १८ ॥

१ 'अङ्गुष्ठाङ्गुलिस्पर्शनादिभिः' इति पा० । २ 'प्रभूतभोजनप्राप्तिः' इति पा० । ३ 'उदकोदरिणः' इति पा० ।

भवति चात्र—

आस्थापने चैव विरेचने च
पाने तथाऽऽहारविधिक्रियासु ॥
सर्वोदरिभ्यः कुशलैः प्रयोज्यं
क्षीरं शृतं जाङ्गलजो रसो वा ॥ १९ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने उदरचिकित्सितं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

कृतकर्मणो जलनिषेधं तदभावे चोक्तं द्रवं निर्दिशन्नाह—भवतीत्यादि । चकारद्वयकरणेनोदरपाटनादावनुक्तेऽपीति समुच्चीयते ॥ १९ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ।

अथातो मूढगर्भचिकित्सितं व्याख्यास्यामः ॥१॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

नातोऽन्यत् कष्टतममस्ति यथा मूढगर्भशल्योद्धरणम्; अत्र हि योनियकृत्प्लीहान्त्रविवरगर्भाशयानां मध्ये कर्म कर्तव्यं स्पर्शेन, उत्कर्षणापकर्षणस्थानापवर्तनोत्कर्तनभेदनच्छेदनपीडनर्जूकरणदारणानि चैकहस्तेन गर्भं गर्भिणीं चाहिंसता, तस्मादधिपतिमापृच्छ्य परं च यत्नमास्थायोपक्रमेत ॥ ३ ॥

उत्कर्षणम् अधोगतस्योर्ध्वीकरणम्, अपकर्षणम् ऊर्ध्वगतस्याधः कर्षणं, स्थानापवर्तनं स्थानेषु सक्तस्य गर्भशय्यात उत्तानस्यावाङ्मुखीकरणम्, उद्वर्तनम् अवाङ्मुखस्योत्तानीकरणम्; अत्र केचित् 'स्थानव्यावर्तनं' इति पठन्ति; तत्र स्थानं स्थितिः; स्थाने गर्भशय्यायां तिर्यगादिस्थितस्योत्तानस्याधोव्यावृत्त्या स्थापनम्; ऊर्ध्वस्य कस्यचिदङ्गस्य छेदनमुत्कर्तनं, छेदनमिति मृतस्य तु तेषु तेषु स्थानेषु सक्तस्य तस्य तस्याङ्गस्य छेदनं द्वैधीकरणं, गर्भकुक्ष्यादेराध्मातस्य विदारणं भेदनं, पीडनं चम्पनं ( वलनम् ), ऋजूकरणं वक्रस्य प्राञ्जलीकरणं, दारणं विदारणम् ॥ १-३ ॥

तत्र समासेनाष्टविधा मूढगर्भगतिरुद्दिष्टा; स्वभावगता अपि त्रयः सङ्गा भवन्ति-शिरसो वैगुण्यादंसयोर्जघनस्य वा ॥ ४ ॥

तत्रेत्यादि । शिरसो वैगुण्यात् वक्रत्वात्, अंसयोर्जघनस्य च वैगुण्यादित्यनुवर्तते; वैगुण्यं वक्रता । अंसो बाहुशिरः, जघनं कटेरग्रभागः ॥ ४ ॥

जीवति तु गर्भे सूतिकागर्भनिर्हरणे प्रयतेत । निर्हर्तुमशक्ये च्यावनान् मन्त्रानुपश्शृणुयात्; तान् वक्ष्यामः ॥ ५ ॥

१ 'जलनिषेधार्थं चोक्तौ द्वावेतौ निर्दिशन्नाह' इति पा० ।

'इहामृतं च सोमश्च चित्रभानुश्च भामिनि ॥
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥ ६ ॥
इदममृतमपां समुद्धृतं वै
तव लघु गर्भमिमं प्रमुञ्चतु स्त्रि ॥
तदनलपवनार्कवासवास्ते
सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥ ७ ॥
मुक्ताः [1]पशोर्विपाशाश्च मुक्ताः सूर्येण रश्मयः ॥
मुक्तः सर्वभयाद्गर्भ एह्येहि विरमावितः ॥ ८ ॥

जीवतीत्यादि । प्रयतेत यत्नं कुर्वीत । केचिदाचार्या मन्त्रव्याख्यानं न कुर्वन्ति, केचित् कुर्वन्ति तदाह—इहेत्यादि । अमृतं समुद्रमन्थनोद्भूतं, चित्रभानुरादित्यः, भामिनि हे वरस्त्रि, उच्चैःश्रवा अमृतमन्थनोत्पन्नस्तुरगः शक्रवाहनः, लघु शीघ्रं, दिशन्तु प्रयच्छन्तु ॥ ५-८ ॥

औषधानि च विदध्याद्यथोक्तानि । मृते चोत्तानाया आभुग्नसक्थ्या वस्त्राधारकोन्नमितकट्या [2]धन्वननगवृत्तिकाशाल्मलीमृत्स्नघृताभ्यां म्रक्षयित्वा हस्तं योनौ प्रवेश्य गर्भमुपहरेत् । तत्र सक्थिभ्यामागतमनुलोममेवाञ्छेत्, एकसक्थ्ना प्रतिपन्नस्येतरसक्थि प्रसार्यापहरेत्, स्फिग्देशेनागतस्य स्फिग्देशं प्रपीड्योर्ध्वमुत्क्षिप्य सक्थिनी प्रसार्यापहरेत्, तिर्यगागतस्य परिघस्येव तिरश्चीनस्य पश्चादर्धमूर्ध्वमुत्क्षिप्य पूर्वार्धमपत्यपथं प्रत्यार्जवमानीयापहरेत्, पार्श्वापवृत्तशिरसमंसं प्रपीड्योर्ध्वमुत्क्षिप्य शिरोऽपत्यपथमानीयापहरेत्, बाहुद्वयप्रतिपन्नस्योर्ध्वमुत्पीड्यांसौ शिरोऽनुलोममानीयापहरेत्, द्वावन्त्यावसाध्यौ मूढगर्भौ, एवमशक्ये शस्त्रमवचारयेत् ॥ ९ ॥
सचेतनं च शस्त्रेण न कथञ्चन दारयेत् ॥
दार्यमाणो हि जननीमात्मानं चैव घातयेत् ॥ १० ॥
अविषह्ये विकारे तु श्रेयो गर्भस्य पातनम् ॥
न गर्भिण्या विपर्यासस्तस्मात्प्राप्तं न हापयेत् ॥ ११ ॥

मन्त्रान्निर्दिश्यौषधानि निर्दिशन्नाह—औषधानीत्यादि । तानि पुनः शारीरे अपरापातनोदितानि पाणिपादलेपा योनिधूपनमातुरपानादिकं च । निष्फले मन्त्रे [3]तन्त्रे च वृथाभूतेषु सूतीजनव्यापारेषु भिषजां शल्याहरणोपायं निर्दिशन्नाह—मृते चेति । चकारादफलीभूतेषु मन्त्रतन्त्रप्रसूतीजननव्यापारेषु जीवत्यपीत्यनुक्तं समुच्चिनोति । आभुग्नसक्थ्या इति सङ्कुचितसक्थ्याः । धन्वनो धनुर्वृक्षो बदरीसदृशपत्रः, नगवृत्तिका शल्लकी, यद्यपि मृत्स्नशब्दःप्रशस्तायां मृदि वर्तते तथाऽप्यत्र धनुर्वृक्षशल्लकीशाल्मलीनां पिच्छिले चुम्पे मृत्स्नशब्दो बोद्धव्यः । घृतं गव्यं घृतं, ताभ्यां पाणिं म्रक्षयित्वा विलिप्य, मूढगर्भमपहरेदिति सामान्यो विधिः । मृतं चेति चकारादपहरणे विशेषेण विधिमाह—तत्रेत्यादि । आञ्छेत् आकर्षेत् । एकसक्थ्नेति प्रथममेकसक्थिप्रतिपन्नं, द्वितीयसक्थि पुनराभुग्नं स्थित्वाऽऽगतमित्यर्थः, तदपि प्रसार्य प्रगुणीभूतसक्थिद्वयमपहरणार्थमाञ्छेदिति पूर्वस्माद्विशेषः; सक्थि जङ्घोच्यते, अयं द्वितीयः । स्फिगित्यादि । अयं तृतीयः । तिर्यगित्यादि । परिघोऽर्गलादण्डः । आर्जवमानीय ऋजुभावमानीयापहरेदिति, अयं चतुर्थः । पार्श्वेत्यादि । पार्श्वापवृत्तं पार्श्ववलितं शिरो यस्य, अपत्यपथो योनिः; अयं पञ्चमः । बाहुद्वयेत्यादि । अयं षष्ठः । तत्र आद्यं मूढगर्भत्रितयं पादाभ्यामाहरणीयं, तदितरत्तु त्रितयं शिरसा, द्वाविति शेषं तु मूढगर्भद्वयमसाध्यम्, एवमष्टौ मूढगर्भाः । दार्यमाणः छिद्यमानो गर्भो मातरमात्मानं च व्यापादयेत् । घातयेदिति सर्वथैवाशक्यहस्ताकर्षे द्वयोरपि गर्भगर्भिण्योर्विपत्तिसिद्धेः । शस्त्रमन्त्रादिनोपायेनासिद्धौ गर्भच्यावनं गर्भिणीरक्षार्थं कार्यमित्याह—अविषह्य इति । सोढुमशक्ये विकारे व्याधौ सति किं कर्तव्यमित्याह—श्रेयो गर्भस्येति; श्रेयो भवतीत्यर्थः । गर्भपातनफलमाह—न गर्भिण्या विपर्यास इति; विपर्यासो मृत्युरित्यर्थः । तस्मात् प्राप्तकालं न हापयेत् नोल्लङ्घयेदित्यर्थः ॥ ९-११ ॥

ततः स्त्रियमाश्वास्य मण्डलाग्रेणाङ्गुलीशस्त्रेण वा शिरो विदार्य, शिरःकपालान्याहृत्य, शङ्कुना गृहीत्वोरसि कक्षायां वाऽपहरेत्; अभिन्नशिरसमक्षिकूटे गण्डे वा, अंससंसक्तस्यांसदेशे बाहू छित्त्वा, दृतिमिवाततं वातपूर्णोदरं वा विदार्य निरस्यान्त्राणि शिथिलीभूतमाहरेत्, जघनसक्तस्य वा जघनकपालानीति ॥ १२ ॥ किंबहुना—
यद्यदङ्गं हि गर्भस्य तस्य सज्जति तद्भिषक् ॥
सम्यग्विनिर्हरेच्छित्त्वा रक्षेन्नारीं च यत्नतः ॥ १३ ॥
गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः ॥
तत्रानल्पमतिर्वैद्यो वर्तेत विधिपूर्वकम् ॥ १४ ॥
नोपेक्षेत मृतं गर्भं मुहूर्तमपि पण्डितः ॥
स ह्याशु जननीं हन्ति निरुच्छ्वासं पशुं यथा ॥ १५ ॥
मण्डलाग्रेण कर्तव्यं छेद्यमन्तर्विजानता ॥
वृद्धिपत्रं हि तीक्ष्णाग्रं नारीं हिंस्यात् कदाचन ॥१६॥
अथापतन्तीमपरां पातयेत् पूर्ववद्भिषक् ॥
हस्तेनापहरेद्वाऽपि पार्श्वाभ्यां परिपीड्य वा ॥ १७ ॥

१ 'मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्येन्दुरश्मयः । मुक्तः सर्वभयाद्गर्भ एह्येहि माचिरं स्वाहा' इति पा० । २ 'शाल्मलीषु मध्ये मरुदेशीयपर्वतस्था हि नितरां पिच्छिलनिर्यासा भवन्ति, तदिदमुच्यते—धन्वेति; धन्वा मरुदेशः, मृत्स्नमत्र पिच्छिलो भागः; 'विविक्तं मृत्स्नं च' इत्योजोलक्षणं च; तन्त्रान्तरेऽप्युक्तं—'हस्तमभ्यज्य योनिं च साज्यशाल्मलिपिच्छया' इति हाराणचन्द्रः । 'धन्वनगवृत्तिकशाल्मलीमृत्स्नघृताभ्यां' इति हाराणचन्द्रसंमतः पाठः । ३ 'जलव्यापारे' इति पा० ।

धुनुयाच्च मुहुर्नारीं पीडयेद्वांऽसपिण्डिकाम् ॥
तैलाक्तयोनेरेवं तां पातयेन्मतिमान् भिषक् ॥ १८ ॥
एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ॥
ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत् ॥१९॥
एवं मृद्वी भवेद्योनिस्तच्छूलं चोपशाम्यति ॥

मृते तु गर्भे शस्त्रावचरणं निर्दिशन्नाह—तत इति । मण्डलाग्रेणाङ्गुलीशस्त्रेणेति अन्तर्मुखसंज्ञितेन कृशतरशशधरकानुकारिणाऽर्धद्वयसंहितमध्यकीलितेन मध्यमाङ्गुल्यङ्गुष्ठप्रविष्टलोहकटकनियमितेन, अन्ये पुनरेकावयवेन मध्यमाङ्गुलीप्रविष्टलोहकण्टकेनेत्याहुः । तद्धि शस्त्रमन्तर्द्वारं हस्तान्तर्गतं योनौ सुप्रदेशप्रवेशितमपि सुखच्छेदकरं गर्भिणीं न हिनस्ति । शङ्कुना आकुञ्चिताकारेण बडिशविशेषेण सम्यग्गृहीतं हृदये कक्षे वाऽपहरेत् । शिरसः पुनर्वैगुण्येन निर्गतशिरसो विपुलांसदेशसक्तस्य विधिमुपदिशन्नाह—अभिन्नशिरसमिति; कूटे गण्डे वा सङ्गृह्य शङ्कुनाऽपहरणम् । मृतस्याध्मातोदरस्य क्रमागतमुदरसङ्गं निर्दिशन्नाह—दृतिमिवेत्यादि ।—दृतिः पानीयपूर्णखल्ली । जघनसक्तस्येत्यादि ।—जघनसक्तं जघनकपालानि विदार्य, अपहृत्यापहरेत् । एवमुद्दिष्टानामाहरणोपायं निर्दिश्यानुक्तानामपि नानाप्रकाराणां निर्दिशति—गर्भस्येत्यादि । मृते तु दोषं निर्दिशन्नाह—नोपेक्षेतेत्यादि । सः गर्भः, हि यस्मादर्थे । मण्डलाग्रेणेति मण्डलाग्रावचारणमुक्तमपि वृद्धिपत्रनिषेधोपदेशार्थं पुनरुच्यते । अथापतन्तीमित्यादि । अपरां गर्भावरणं जरायुसंज्ञं यं लोका आवलमित्याचक्षते । पूर्ववत् शारीरोक्तविधिना ॥ १२-१९ ॥—

कृष्णातन्मूलशुण्ठ्येलाहिङ्गुभार्गीः सदीप्यकाः॥२०॥
वचामतिविषां रास्नां चव्यं संचूर्ण्य पाययेत् ॥
स्नेहेन दोषस्यन्दार्थं वेदनोपशमाय च ॥ २१ ॥
काथं चैषां तथा कल्कं चूर्णं वा स्नेहवर्जितम् ॥
शाकत्वग्घिङ्ग्वतिविषापाठाकटुकरोहिणीः ॥२२॥
तथा तेजोवतीं चापि पाययेत् पूर्ववद्भिषक् ॥
त्रिरात्रं पञ्चसप्ताहं ततः स्नेहं पुनः पिबेत् ॥ २३ ॥
पाययेतासवं नक्तमरिष्टं वा सुसंस्कृतम् ॥
शिरीषककुभाभ्यां च तोयमाचमने हितम् ॥ २४ ॥
उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥
सर्वतः परिशुद्धा च स्निग्धपथ्याल्पभोजना ॥ २५ ॥
स्वेदाभ्यङ्गपरा नित्यं भवेत् क्रोधविवर्जिता ॥
पयो वातहरैः सिद्धं दशाहं भोजने हितम् ॥ २६ ॥
रसं दशाहं शेषे तु यथायोगमुपाचरेत् ॥
व्युपद्रवां विशुद्धां च ज्ञात्वा च वरवर्णिनीम् ॥२७॥
ऊर्ध्वं चतुर्भ्यो मासेभ्यो विसृजेत् परिहारतः ॥

व्यवस्थितविकल्पा ह्येते देशप्रकृतिसात्म्यापेक्षया । कृष्णा पिप्पली, तन्मूलं पिप्पलीमूलं, दीप्यकः अजमोदा । प्रसवकाल एव जातमूढगर्भायाः कृतकर्मणाऽपहृतापरायाः पार्श्वयोनिशूलकाठिन्यशान्त्यर्थं रक्तक्लेदादिदोषप्रसेकार्थं च तैलाक्तयोनेस्तैलेन कृष्णादिपानम्; अकालमूढगर्भायास्तु लङ्घितायाः पुनरन्नकाले उद्दालकादीनामन्नानामस्नेहलवणाभिर्यवागूभिरुपचारो यावन्तो मासा गर्भस्य तावन्त्येवाहानि; अनन्तरमासे तु स्नेहादिविधानमकालमूढगर्भाया अपि पूर्ववत् । शाकः कर्कशपत्रवृक्षः, 'सागवन' इति लोके । त्रिरात्रमित्यादि ।—एवं त्रिरात्रं कृष्णादिचूर्णपानेन शाकत्वगादिचूर्णपानेन वाऽऽहृतकोष्ठरक्तक्लेदादिदोषायाः सप्ताहं ह्रस्वमात्रया स्नेहपानम् । तेन विशुद्धवाताशयाया दशाहादूर्ध्वं स्निग्धपथ्याल्पभोजनम् । तत्र नित्यं बाह्यावपि स्वेदाभ्यङ्गाववश्यं कार्यौ, तत्र द्वितीयदशाहे वातहरसिद्धं पयो वक्ष्यमाणं, तृतीये मांसरसः । ककुभः सुगन्धिमूलो विटपः । आचमनस्नानादौ षडङ्गकल्पनाकल्पितशिरीषककुभसलिलम् । उपद्रवा इति उपद्रवा वातरोगज्वराद्याः । वातहरैः शतपुष्पादिभिः । यथायोगमिति सात्म्याद्यपेक्षयेति भावः ॥ २०-२७ ॥—

योनिसन्तर्पणेऽभ्यङ्गे पाने बस्तिषु भोजने ॥ २८ ॥
बलातैलमिदं चास्यै दद्यादनिलवारणम् ॥
बलामूलकषायस्य दशमूलीशृतस्य च ॥ २९ ॥
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः ॥ ३० ॥
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥
तथाऽगुरुं सर्जरसं सरलं देवदारु च ॥ ३१ ॥
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम् ॥
मांसीं शैलेयकं पत्रं तगरं सारिवां वचाम् ॥ ३२ ॥
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥
तत् साधुसिद्धं सौवर्णे राजते मृन्मयेऽपि वा ॥३३॥
प्रक्षिप्य कलशे सम्यक् स्वनुगुप्तं निधापयेत् ॥
बलातैलमिदं ख्यातं सर्ववातविकारनुत् ॥ ३४ ॥
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥३५॥
वातक्षीणे मर्महते मथितेऽभिहते तथा ॥
भग्ने श्रमाभिपन्ने च सर्वथैवोपयुज्यते ॥ ३६ ॥
एतदाक्षेपकादीन् वै वातव्याधीनपोहति ॥
हिक्कां कासमधीमन्थं गुल्मं श्वासं च दुस्तरम् ॥३७॥
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति ॥
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥ ३८ ॥
राज्ञामेतद्धि कर्तव्यं राजमात्राश्च ये नराः ॥
सुखिनः सुकुमाराश्च धनिनश्चापि ये नराः ॥ ३९ ॥

बलामूलक्काथस्य तथा दशमूलक्काथस्य यवकोलकुलत्थानां क्वाथस्य पयसश्च प्रत्येकमष्टावष्टौ भागाः, एकः स्नेहात्; एवं स्नेहाद्द्वात्रिंशद्गुणो द्रवः, स्नेहचतुर्थांशो भेषजकल्कः । मधुरः काकोल्यादिगणः । कालानुसारिवा कृष्णसारिवा, 'कालानुसारि-

१ हाराणचन्द्रस्तु 'स्वेदयेद्वा सपिण्डिकां' इति पठति, 'सपिण्डिकामपरासन्निहितमांसपिण्डिकासहितामपरामित्यर्थः' इति च व्याख्याति । २ 'त्रिरात्रमेवं सप्ताहं' इति पा० ।

वा' इत्यत्र केचिदाचार्या अस्मिन् तैले क्षीरशुक्लकं पठन्ति, क्षीरशुक्लकं क्षीरविदारी । स्वनुगुप्ते निरुपद्रवस्थाने । अधीमन्थः अक्षिरोगोऽभिष्यन्दपूर्वकः । षण्मासोपयोगात् कोशमप्राप्तामन्त्रवृद्धिं हन्ति, कोशप्राप्तां पुनरन्त्रवृद्धिमसाध्यामाहुः ॥ २८-३९ ॥—

बलाकषायपीतेभ्यस्तिलेभ्यो वाऽप्यनेकशः ॥
तैलमुत्पाद्य तत्क्वाथशतपाकं कृतं शुभम् ॥ ४० ॥
निवाते निभृतागारे प्रयुञ्जीत यथाबलम् ॥
जीर्णेऽस्मिन् पयसा स्निग्धमश्नीयात् षष्टिकौदनम् ४१
अनेन विधिना द्रोणमुपयुञ्ज्याद्यमीरितम् ॥
भुञ्जीत द्विगुणं कालं बलवर्णान्वितस्ततः ॥ ४२ ॥
सर्वपापैर्विनिर्मुक्तः शतायुः पुरुषो भवेत् ॥
शतं शतं तथोत्कर्षो द्रोणे द्रोणे प्रकीर्तितः ॥ ४३ ॥

बलातैलानन्तरं बलासंस्कारेण शतपाकविधानमाह—बलेत्यादि । पीतेभ्यो भावितेभ्यः सप्तकृत्वः । तिलतुल्यबलामूलाष्टगुणसलिलाष्टांशशेषितकषायभावितानां तिलानां तैलमादाय तत्क्वाथं बलाक्वाथं सामान्यक्वाथपरिभाषार्थकृतक्वाथेन चतुर्गुणेन शतशः पचेत्; तैत् क्वाथं तत्कल्कमेव वेत्येके; पूर्वबलातैलसमुद्दिष्टैर्मधुरादिकल्कैरेवेत्यन्ये ॥ ४०-४३ ॥

बलाकल्पेनातिबलागुडूच्यादित्यपर्णिषु ॥
सैरेयके वीरतरौ शतावर्यां त्रिकण्टके ॥ ४४ ॥
तैलानि मधुके कुर्यात् प्रसारिण्यां च बुद्धिमान् ॥

उक्तबलातैलद्वयकल्पेन संक्षेपार्थं द्रव्यान्तरेष्वतिदेशमुद्दिशन्नाह—बलेत्यादि । आदित्यपर्णी सूर्यावर्तः । वीरतरुः स्वनामप्रसिद्धः, अर्जुन इत्येके, कोकिलाक्ष इत्यपरे । अतिबलादितैलेषु च बलातैलोक्तकल्कप्रक्षेपः; अथवाऽतिबलादीनामेव क्वाथकल्काभ्यां तैलानि पक्तव्यानीति ॥ ४४ ॥—

नीलोत्पलं वरीमूलं गव्ये क्षीरे विपाचयेत् ॥ ४५ ॥
शतपाकं ततस्तेन तिलतैलं पचेद्भिषक् ॥
बलातैलस्य कल्कांस्तु सुपिष्टांस्तत्र दापयेत् ॥ ४६ ॥
सर्वेषामेव जानीयादुपयोगं चिकित्सकः ॥
बलातैलवदेतेषां गुणांश्चैव विशेषतः ॥ ४७ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने मूढगर्भचिकित्सितं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

नीलोत्पलमित्यादि । वरी शतावरी ॥ ४५-४७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

अथातो विद्रधीनां चिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

उक्ता विद्रधयः षडये तेष्वसाध्यस्तु सर्वजः ॥
शेषेष्वामेषु कर्तव्या त्वरितं शोफवत् क्रिया ॥ ३ ॥

षड्ग्रहणं द्वन्द्वजविद्रधिनिषेधार्थम् । पुनरसाध्यकीर्तनं चिकित्साप्रक्रमत्वात्तदुपक्रमनिषेधार्थम् । शेषेषु पञ्चसु शोफवत् क्रियेति सा पुनरपतर्पणाद्या विरेचनान्तैकादशविधा ॥ १-३ ॥

वातघ्नमूलकल्कैस्तु घृततैलवसायुतैः ॥
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ ॥ ४ ॥
सानूपौदकमांसस्तु काकोल्यादिः सतर्पणः ॥
स्नेहाम्लसिद्धो लवणः प्रयोज्यश्चोपनाहने ॥ ५ ॥
वेशवारैः सकृशरैः पयोभिः पायसैस्तथा ॥
स्वेदयेत् सततं चापि निर्हरेच्चापि शोणितम् ॥ ६ ॥
स चेदेवमुपक्रान्तः पाकायाभिमुखो यदि ॥
तं पाचयित्वा शस्त्रेण भिन्द्याद्भिन्नं च शोधयेत् ॥७॥
पञ्चमूलकषायेण प्रक्षाल्य लवणोत्तरैः ॥
तैलैर्भद्रादिमधुकसंयुक्तैः प्रतिपूरयेत् ॥ ८ ॥
वैरेचनिकयुक्तेन त्रैवृतेन विशोध्य च ॥
पृथक्पर्ण्यादिसिद्धेन त्रैवृतेन च रोपयेत् ॥ ९ ॥

वातघ्नेत्यादि । वातघ्नानि भद्रदार्वादीनि, अन्ये तु वातघ्नः शोभाञ्जनकः । 'मुरङ्गीमूलकल्कैः' इत्यन्ये पठन्ति; मुरङ्गी शोभाञ्जनकः । सानूपेत्यादि अयं साल्वणप्रकारः । आनूपा महिषादयः, औदकाः कोशस्थादयः, तर्पयतीति तर्पणं, वातपित्तहरा विदारिगन्धादयः, स्नेहाः सर्व एव, अम्लानि च । लवणैः संस्कृतो लवणः । वेशवारैरित्यादि । वेशवारः संस्कृतमांसविशेषः । कृशरा तिलतण्डुलमाषकृता यवागूः । क्षीरसिद्धास्तण्डुलाः पायसः । लवणोत्तरैरिति लवणप्रमुखैस्तैलैरित्यर्थः । भद्रादि भद्रदार्वादि । वैरेचनिकेत्यादि । वैरेचनिकयुक्तेनेति चूर्णीकृतत्रिवृदादिमिश्रेण; गयी तु वैरेचनिकयुक्तेन सिद्धेनेति व्याख्यानयति । त्रैवृतेन स्नेहेन । तैलघृतस्नेहानि पृथक्पर्ण्यादीनि रोपणघृतसाधने मिश्रकोक्तानि ॥ ४-९ ॥

पैत्तिकं शर्करालाजामधुकैः सारिवायुतैः ॥
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥ १० ॥
पाक्यैः शीतकषायैर्वा क्षीरैरिक्षुरसैस्तथा ॥
जीवनीयघृतैर्वाऽपि सेचयेच्छर्करायुतैः ॥ ११ ॥
त्रिवृद्धरीतकीनां च चूर्णं लिह्यान्मधुद्रवम् ॥
जलौकोभिर्हरेच्चासृक् पक्वं चापाट्य बुद्धिमान् ॥१२॥
क्षीरवृक्षकषायेण प्रक्षाल्यौदकजेन वा ॥
तिलैः सयष्टीमधुकैः सक्षौद्रैः सर्पिषा युतैः ॥ १३ ॥
उपदिह्य प्रतनुना वाससा वेष्टयेद्व्रणम् ॥
प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैः ॥ १४ ॥
सहरिद्रैः कृतं सर्पिः सक्षीरं व्रणरोपणम् ॥
क्षीरशुक्लापृथक्पर्णीसमङ्गारोध्रचन्दनैः ॥ १५ ॥
न्यग्रोधादिप्रवालेषु तेषां त्वक्ष्वथवा कृतम् ॥

१ 'तत्क्वाथशतपाकं कृतं' इति पा० ।

१ 'बुद्धिमान्' इति पा० ।

पैत्तिकमित्यादि । प्रदिह्यात् लिम्पेत् । पयस्या क्षीरकाकोली, जेज्जटाचार्यस्त्वर्कपुष्पीमाह । पाक्यैः क्वथितकषायैः । शीतकषायलक्षणमाह "द्रव्यमापोथितं सम्यगत्युष्णोदकसंस्थितम् । रात्रिपर्युषितं शीतकषायं फाणितं (?) विदुः" इति । जीवनीयैः काकोल्यादिभिः सिद्धानि जीवनीयघृतानि । सेचयेत् परिषेचयेत् । दाहवेदनोपशमार्थं विरेचनमाह—त्रिवृदित्यादि । क्षीरवृक्षेत्यादि क्षीरवृक्षा न्यग्रोधोदुम्बराश्वत्थप्लक्षगर्दभाण्डाः । औदकानि कमलकुमुदकल्हारप्रभृतीनि । कृतं सर्पिः संस्कृतं सर्पिः । क्षीरेत्यादि क्षीरशुक्ला क्षीरविदारी । समङ्गा मञ्जिष्ठा, वराहक्रान्तेत्यपरे । न्यग्रोधादिर्द्रव्यसंग्रहणीये पठितः; प्रवालाः पल्लवाः ॥ १०–१५ ॥—

नक्तमालस्य पत्राणि तरुणानि फलानि च ॥ १६ ॥
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी ॥ १७ ॥
प्रियङ्गुः कुशमूलं च निचुलस्य त्वगेव च ॥
मञ्जिष्ठाचन्दनोशीरमुत्पलं सारिवे त्रिवृत् ॥ १८ ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
दुष्टव्रणप्रशमनं नाडीव्रणविशोधनम् ॥ १९ ॥
सद्यश्छिन्नव्रणानां च करञ्जाद्यमिदं शुभम् ॥
दुष्टव्रणाश्च ये केचिद्ये चोत्सृष्टक्रिया व्रणाः ॥ २० ॥
नाड्यो गम्भीरिका याश्च सद्यश्छिन्नास्तथैव च ॥
अग्निक्षारकृताश्चैव ये व्रणा दारुणा अपि ॥ २१ ॥
करञ्जाद्येन हविषा प्रशाम्यन्ति न संशयः ॥

नक्तमालस्येत्यादि । तरुणानि तत्कालोत्पन्नानि, आमानीत्यर्थः । सुमना जाती । निचुलो वेतसः । केचिदेनमनार्षं वदन्ति, तन्नेच्छति गयी, तस्मान्मयाऽप्यङ्गीकृतः ॥ १६–२१ ॥—

इष्टकासिकतालोष्टगोशकृत्तुषपांशुभिः ॥ २२ ॥
मूत्रैरुष्णैश्च सततं स्वेदयेच्छ्लेष्मविद्रधिम् ॥
कषायपानैर्वमनैरालेपैरुपनाहनैः ॥ २३ ॥
हरेद्दोषानभीक्ष्णं चाप्यलाब्वाऽसृक् तथैव च ॥
आरग्वधकषायेण पक्वं चापाट्य धावयेत् ॥ २४ ॥
हरिद्रात्रिवृताशक्तुतिलैर्मधुसमायुतैः ॥
पूरयित्वा व्रणं सम्यग्बध्नीयात् कीर्तितं यथा ॥२५॥
ततः कुलत्थिकादन्तीत्रिवृच्छ्यामार्कतिल्वकैः ॥
कुर्यात्तैलं सगोमूत्रं हितं तत्र ससैन्धवम् ॥ २६ ॥
पित्तविद्रधिवत् सर्वाः क्रिया निरवशेषतः ॥
विद्रध्योः कुशलः कुर्याद्रक्तागन्तुनिमित्तयोः ॥२७॥
वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ॥
ऊषकादिप्रतीवापं पिबेत् सुखकरं नरः ॥ २८ ॥
अनयोर्वर्गयोः सिद्धं सर्पिर्वैरेचनेन च ॥
अचिराद्विद्रधिं हन्ति प्रातः प्रातर्निषेवितम् ॥२९॥
एभिरेव गणैश्चापि संसिद्धं स्नेहसंयुतम् ॥
कार्यमास्थापनं क्षिप्रं तथैवाप्यनुवासनम् ॥ ३० ॥
पानालेपनभोज्येषु मधुशिग्रुद्रुमोऽपि वा ॥
दत्तावापो यथादोषमपक्वं हन्ति विद्रधिम् ॥ ३१ ॥
तोयधान्याम्लमूत्रैस्तु पेयो वाऽपि सुरादिभिः ॥
यथादोषगणक्वाथैः पिबेद्वाऽपि शिलाजतु ॥ ३२ ॥
प्रधानं गुग्गुलं चापि शुण्ठीं च सुरदारु च ॥
स्नेहोपनाहौ कुर्याच्च सदा चाप्यनुलोमनम् ॥ ३३ ॥

इष्टकेत्यादि । पांशुर्धूलिः । गोमूत्रेण द्रवस्वेदः । कषायेत्यादि । बध्नीयात् कीर्तितं यथेति "घनेन वाससा श्लैष्मिकं गाढस्थाने गाढतरम्" ( सू. अ. १८ ) इति । कुलत्थिका चक्षुष्या । इदानीं रक्तागन्तुनिमित्तयोरवसरः; अनयोरुत्तरयोर्वरुणादेरूषकादेश्च (?); तत्र वरुणादेः कषायः, ऊषकादेः कल्कः, तेषां लवणत्वेन कषायकल्पनाया दुःशकत्वात् । त्रिवृदादीनामपि कृतेन कषायेण तदेव सर्पिरिति चकारात् । प्रातः प्रातरिति वीप्सयेदं ज्ञापयति—अभ्यासेन निषेवितं सर्पिर्विद्रधिं हन्तीति । वरुणादिगणक्वाथमित्याद्युपचारोऽभ्यन्तरे, बाह्ये तु विद्रधावमर्मजाते पाचनपाटनशोधनाद्युपचारः करणीय इति । एभिरित्यादि ।—एभिरेव गणैर्वरुणादिवैरेचनिकैः; अत्रापि वरुणादिवैरेचनिकौ कषायतया प्रयोज्यौ, ऊषकादिश्च कल्कतया । पानेत्यादि । स्वभावत एवामविद्रधिप्रत्यनीको मधुशिग्रुः, कषायपानादिषु तस्य तु दोषस्य प्रत्यनीकत्वार्थं दोषानतिक्रमेण व्रणहितवातपित्तकफहरद्रव्यप्रक्षेपः । तोयेत्यादि ।—तोयादिभिः सुरान्तैर्यथादोषं स एव मधुशिग्रुरिति; तत्र तोयेन पित्तविद्रधौ, धान्याम्लेन वातविद्रधौ, मूत्रेण कफविद्रधौ, अविदग्धे पुना रक्ते सुरादिभिर्नान्यत्र । यथेत्यादि ।—यथादोषगणक्वाथैरिति वातादिप्रत्यनीकैरित्यर्थः । प्रधानं गुग्गुलं महिषाख्यमित्यर्थः, प्रधानं मेदोहरत्वाद्विद्रधौ श्रेष्ठमित्यन्ये । तत्र गुग्गुलुकल्पेन वातिके देवदारु, श्लैष्मिके शुण्ठीति । स्नेहोपनाहानुलोमनादीनि बाह्यवातपित्तकफविद्रधिविषयाणि प्रागुक्तान्यभ्यन्तरेऽपि विद्रधौ यथादोषं विभज्य योज्यानि ॥ २२–३३ ॥

यथोद्दिष्टां सिरां विध्येत् कफजे विद्रधौ भिषक् ॥
रक्तपित्तानिलोत्थेषु केचिद्बाहौ वदन्ति तु ॥ ३४ ॥

अन्तर्विद्रधौ दूष्यशोणितस्य गम्भीरानुगतत्वात्तत्र सिराव्यधमुद्दिशन्नाह—यथेत्यादि ।—यथोद्दिष्टामिति "वामपार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च' ( शा. अ. ८ ) इति । तेन कक्षान्तराश्रयदेशस्याधः स्तनयोरुपरिष्टात् पार्श्वविशेषे कफविद्रधौ । रक्तपित्तानिलोत्थेषु बाहौ केचिदाहुः; बाहौ बाहुमध्ये कूर्परे, तेन स्थानान्तराश्रयमेकीयमतम् ॥ ३४ ॥

पक्वं वा बहिरुन्नद्धं भित्त्वा व्रणवदाचरेत् ॥
स्रुतेपूर्ध्वमधो वाऽपि मैरेयाम्लसुरासवैः ॥ ३५ ॥
पेयो वरुणकादिस्तु मधुशिग्रुद्रुमोऽपि वा ॥
शिग्रुमूलजले सिद्धं ससिद्धार्थकमोदनम् ॥ ३६ ॥

१ 'अञ्जलिकारिका' इति पा० । २ 'प्रणश्यन्ति' इति पा० ।

यवकोलकुलत्थानां यूषैर्भुञ्जीत मानवः ॥
प्रातः प्रातश्च सेवेत मात्रया तैल्वकं घृतम् ॥ ३७ ॥
त्रिवृतादिगणक्वाथसिद्धं वाऽप्युपशान्तये ॥

पक्वमित्यादि । सुरासवयोः प्रत्येकं निष्पादितयोरेकीकृत्य पुनः सन्धानं मैरेयः, अम्लं काञ्जिकं, सुरा पिष्टमयी, द्रवप्रधान आसवः । शिग्र्वित्यादि । अत्र संस्कार्य एव सिद्धार्थप्रक्षेपः । मात्रया अल्पश इत्यर्थः । तैल्वकं घृतं वातव्याधौ पठितम् । त्रिवृतेत्यादि सिद्धं सर्पिरित्यनुवर्तते ॥ ३५-३७ ॥—

नोपगच्छेद्यथापाकं प्रयतेत तथा भिषक् ॥ ३८ ॥
पर्यागते विद्रधौ तु सिद्धिर्नैकान्तिकी स्मृता ॥

प्रयतेत प्रयत्नं कुर्वीत । पर्यागते परिपाकमागते न सिद्धिः ॥ ३८ ॥—

प्रत्याख्याय तु कुर्वीत मज्जजाते तु विद्रधौ ॥ ३९ ॥
स्नेहस्वेदोपपन्नानां कुर्याद्रक्तावसेचनम् ॥
विद्रध्युक्तां क्रियां कुर्यात् पक्वे वाऽस्थि तु भेदयेत् ४०
निःशल्यमथ विज्ञाय कर्तव्यं व्रणशोधनम् ॥
धावेत्तिक्तकषायेण तिक्तं सर्पिस्तथा हितम् ॥ ४१ ॥
यदि मज्जपरिस्रावो न निवर्तेत देहिनः ॥
कुर्यात् संशोधनीयानि कषायादीनि बुद्धिमान् ४२
प्रियङ्गुधातकीरोध्रकट्फलं तिनिसैन्धवम् ॥
एतैस्तैलं विपक्तव्यं विद्रधिव्रणरोपणम् ॥ ४३ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने विद्रधिचिकित्सितं नाम षोडशोऽध्यायः ॥ १६ ॥

परं मज्जविद्रधौ प्रत्याख्याय तु कुर्वीतेति 'चिकित्साम्' इत्यध्याहारः । कां चिकित्सां कुर्वीतेत्याशङ्क्याह—स्नेहस्वेदोपपन्नानामित्यादि । तिनिः तिनिसः, एकदेशेनापि समुदायो बुध्यते; यथा—सत्या सत्यभामा, भीमो भीमसेन इति ॥३९-४३॥—

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ।

अथातो विसर्पनाडीस्तनरोगचिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

साध्या विसर्पास्त्रय आदितो ये
न सन्निपातक्षतजौ हि साध्यौ ॥

साध्या इत्यादि । साध्यासाध्यविभागकरणं पुनश्चिकित्सितप्रक्रमात् ॥ १ ॥ २ ॥—

साध्येषु तत्पथ्यगणैर्विदध्या-
द्घृतानि सेकांश्च तथोपदेहान् ॥ ३ ॥

तेषां सर्वेषामेव सामान्यचिकित्सितसूत्रं निर्दिशन्नाह—साध्येष्वित्यादि । तत्पथ्यगणैर्यथाक्रमं वातपित्तकफजेषु वातादिदोषहरगणैः ॥ ३ ॥

मुस्ताशताह्वासुरदारुकुष्ठ-
वाराहिकुस्तुम्बुरुकृष्णगन्धाः ॥
वातात्मके चोष्णगणाः प्रयोज्याः
सेकेषु लेपेषु तथा घृतेषु[1] ॥ ४ ॥
यत् पञ्चमूलं खलु कण्टकाख्य-
मल्पं महच्चाप्यथ वल्लिजं च ॥
तच्चोपयोज्यं भिषजा प्रदेहे
सेके घृते चापि तथैव तैले ॥ ५ ॥

मुस्तेत्यादि । कृष्णगन्धा शोभाञ्जनकः, शमीत्यपरे । उष्णगणा भद्रदार्वादयः पिप्पल्यादयश्च । यदित्यादि तृणाख्यं पञ्चमूलमपहाय शेषाणि चत्वारि पञ्चमूलानि ग्राह्याणि ॥ ४ ॥ ५ ॥

कसेरुशृङ्गाटकपद्मगुन्द्राः
सशैवलाः सोत्पलकर्दमाश्च ॥
वस्त्रान्तराः पित्तकृते विसर्पे
लेपा विधेयाः सघृताः सुशीताः ॥ ६ ॥
ह्रीवेरलामज्जकचन्दनानि[2]
स्रोतोजमुक्तामणिगैरिकाश्च ॥
क्षीरेण पिष्टाः सघृताः सुशीता
लेपाः प्रयोज्यास्तनवः सुखाय ॥ ७ ॥
प्रपौण्डरीकं मधुकं पयस्या
मञ्जिष्ठिका पद्मकचन्दने च ॥
सुगन्धिका चेति सुखाय लेपः
पैत्ते विसर्पे भिषजा प्रयोज्यः ॥ ८ ॥
न्यग्रोधवर्गैः परिषेचनं च
घृतं च कुर्यात् स्वरसेन तस्य ॥
शीतैः पयोभिश्च मधूदकैश्च
सशर्करैरिक्षुरसैश्च सेकान् ॥ ९ ॥

पित्तविसर्पचिकित्सितमाह—कसेर्वित्यादि । शृङ्गाटकं जलमध्ये त्रिकण्टकम् । गुन्द्रा पट्टरकभेदः । सशैवलाः शैवालयुक्ता इत्यर्थः । कर्दमः पङ्क इत्यर्थः । वस्त्रान्तरा वस्त्रेणान्तरीकृताः, ते हि सुखेनापनेतुं शक्यन्ते । ह्रीवेरेत्यादि ह्रीवेरः वालकम् । लामज्जक उशीरमूलम् । स्रोतोजं सौवीराञ्जनम् । तनवः अच्छाः । सुखायेति तनुत्वाच्चोष्माणमन्तः प्रवेशयतीत्यर्थः । **श्रीवाग्भट** आह—"श्लक्ष्णशुष्कघनो[3] लेपश्चन्दनस्यापि दाहकृत् । लग्नतत्सोष्मणो रोधाच्छीतकृच्चान्यथाऽगुरोः"—इति । प्रपौण्डरीकमित्यादि पयस्या क्षीरविदारी; **जेज्जटाचार्य**स्तु अर्कपुष्पीमाह[4] । सुगन्धिका उत्पलसारिवा । न्यग्रोधेत्यादि । मधूदकं मधुमिश्रमुदकम् ॥ ६-९ ॥

१ 'घृतेषु' इति पा० । २ 'उशीरभेदः' इति पा० । ३ 'श्लक्ष्णपिष्टो घनो' इति पा० । ४ 'क्षीर काकोली' इति पा०

घृतस्य गौरीमधुकारविन्द-
रोध्राम्बुराजादनगैरिकेषु ॥
तदर्षभे पद्मकसारिवासु
काकोलिमेदाकुमुदोत्पलेषु ॥ १० ॥
सचन्दनायां मधुशर्करायां
द्राक्षास्थिरापृश्निशताह्वयासु ॥
कल्कीकृतासूदकमत्र दत्त्वा
न्यग्रोधवर्गस्य तथा स्थिरादेः ॥ ११ ॥
गणस्य बिल्वादिकपञ्चमूल्या-
श्चतुर्गुणं क्षीरमथापि तद्वत् ॥
प्रस्थं विपक्वं परिषेचनेन
पैत्तीर्निहन्याच्च विसर्पनाडीः ॥ १२ ॥
विस्फोटदुष्टव्रणशीर्षरोगान्
पाकं तथाऽऽस्यस्य निहन्ति पानात् ॥
ग्रहार्दिते शोषिणि चापि बाले
घृतं हि गौर्यादिकमेतदिष्टम् ॥ १३ ॥

गौर्यादिघृतमाह—घृतस्येत्यादि । गौरी हरिद्रा, गोरोचनेत्यन्ये । अरविन्दं पद्मम् । अम्बु वालकम् । राजादनं क्षीरिका । ऋषभः कूर्चशीर्षकः स्वनामप्रसिद्धः । मधुनः शर्करा मधुशर्करा । स्थिरा शालपर्णी । गौर्यादिशताह्वान्तानां कल्कीकृतानां चत्वारि पलानि, न्यग्रोधादेर्विदारिगन्धादेर्महतोऽपि पञ्चमूलस्य त्रयाणामुदकं क्वाथं चतुर्गुणं घृतस्य, क्षीरमपि गव्यं चतुर्गुणमिति; प्रस्थं घृतस्येति द्वात्रिंशत्पलानि द्रवद्रव्यत्वात्; अन्ये पुनः कल्कमानमष्टपलमाहुः ॥ १०–१३ ॥

अजाऽश्वगन्धा सरला सकाला
सैकैषिका चाप्यथवाऽजशृङ्गी ॥
गोमूत्रपिष्टो विहितः प्रदेहो
हन्याद्विसर्पं कफजं स शीघ्रम् ॥ १४ ॥
कालानुसार्यागुरुचोचगुञ्जा-
रास्नावचाशीतशिवेन्द्रपर्ण्यः ॥
पालिन्दिमुञ्जातमहीकदम्बा
हिता विसर्पेषु कफात्मकेषु ॥ १५ ॥

कफविसर्पचिकित्सामाह—अजेत्यादि । अजा अजगन्धा 'बोबई' इति लोके । सरला त्रिवृत् । काला कासमर्दः । एकैषिका शतावरी, अन्ये त्रिवृद्भेदमाहुः । अजशृङ्गी छागलविषाणिका, 'उत्तमारणी' इति लोके; **गयदासाचार्येण** कर्कटशृङ्गी व्याख्याता । कालानुसार्येत्यादि—कालानुसार्या तगरं, चोचः त्वक्, गुञ्जा चिरहिण्टिका, शीतशिवं शतपुष्पाभेदः, इन्द्रपर्णी इन्द्रवारुणी, अत्र **गयदासाचार्येण** इन्द्रपुष्पी पठिता व्याख्याता च; इन्द्रपुष्पी लाङ्गलकी । पालिन्दिः कालवल्ली, मुञ्जात उत्तरापथजः स्वल्पकन्दः, महीकदम्बोऽलम्बुषा मुण्डितिकेति लोके, **जेज्जटाचार्यो** भूकदम्बमाह ॥ १४ ॥ १५ ॥

गणस्तु योज्यो वरुणप्रवृत्तः
क्रियासु सर्वासु विचक्षणेन ॥
संशोधनं शोणितमोक्षणं च
श्रेष्ठं विसर्पेषु चिकित्सितं हि ॥ १६ ॥
सर्वांश्च पक्वान् परिशोध्य धीमान्
व्रणक्रमेणोपचरेद्यथोक्तम् ॥

गण इत्यादि । वरुणप्रवृत्तो गणो वरुणादिः । क्रियासु सर्वासु पानादिकासु । आरम्भे सर्वेषां सामान्यचिकित्सिते संशमनमभिधाय संप्राप्तौ संशोधनमुद्दिशन्नाह—संशोधनमित्यादि । रक्तावसेचनं जलौकाभिः, सर्वेषामेव रक्तपित्तप्रधानत्वादलाबुशृङ्गयोस्तत्र दुरवचारत्वात् ॥ १६ ॥—

नाडी त्रिदोषप्रभवा न सिध्ये-
च्छेषाश्चतस्रः खलु यत्नसाध्याः ॥ १७ ॥
तत्रानिलोत्थामुपनाह्य पूर्व-
मशेषतः पूयगतिं विदार्य ॥
तिलैरपामार्गफलैश्च पिष्ट्वा
ससैन्धवैर्बन्धनमत्र कुर्यात् ॥ १८ ॥
प्रक्षालने चापि सदा व्रणस्य
योज्यं महद्यत् खलु पञ्चमूलम् ॥
हिंस्रां हरिद्रां कटुकां बलां च
गोजिह्विकां चापि सबिल्वमूलाम् ॥ १९ ॥
संहृत्य तैलं विपचेद्व्रणस्य
संशोधनं पूरणरोपणं च ॥

नाडीनामवसरः—नाडीत्यादि । तत्रेत्यादि । उपनाह्य पाचनद्रव्यैरवबद्ध्वा; तन्नेच्छति **गयी**, कस्मात्? नाडीवचनात्, नह्यपक्वे व्रणे नाडीति; तस्माद्वातहरद्रव्यैरेवोपनाहः । प्रक्षालन इत्यादि । संहृत्य एकीकृत्य । स्नेहचतुर्थांशो भेषजकल्कः, स्नेहाच्चतुर्गुणो द्रवः, अनेन न्यायेन पक्तव्यम् । द्रवोऽत्र जलम्, "अनुक्ते द्रवकार्ये तु सर्वत्र सलिलं स्मृतम्" (चि. अ. ३१) इति वचनात् ॥ १७–१९ ॥—

पित्तात्मिकां प्रागुपनाह्य धीमा-
नुत्कारिकाभिः सपयोघृताभिः ॥ २० ॥
निपात्य शस्त्रं तिलनागदन्ती-
यष्ट्याह्वकल्कैः परिपूरयेत्ताम् ॥
प्रक्षालने चापि ससोमनिम्बा
निशा प्रयोज्या कुशलेन नित्यम् ॥ २१ ॥

पित्तेत्यादि । उत्कारिकाभिः लप्सिकाभिः । नागदन्ती दन्ती । सोमः सोमसंज्ञः, सोमलतेत्यन्ये; कट्फल इति **जेज्जटाचार्यः**; तन्नेच्छति **गयी**, तस्य तीक्ष्णोष्णत्वात् ॥ २० ॥ २१ ॥

१ 'काकोलिमेदामधुकोत्पलेषु' इति पा० । २ 'कटुहिंस्रा' इति पा० । ३ 'अम्बुपर्णी 'साकुरुण्ड' इति लोके' इति पा० ।

१ 'प्रतियत्नसाध्याः' इति पा० । २ 'त्रिसंज्ञका' इति पा० ।

श्यामात्रिभण्डीत्रिफलासु सिद्धं
हरिद्रयो रोध्रकवृक्षयोश्च ॥
घृतं सदुग्धं व्रणतर्पणेन
हन्याद्गतिं कोष्ठगताऽपि या स्यात् ॥ २२ ॥

श्यामेत्यादि ।—श्यामा वृद्धदारुकः । त्रिभण्डी त्रिवृत् । वृक्षकः कुटजः ॥ २२ ॥

नाडीं कफोत्थामुपनाह्य सम्यक्
कुलत्थसिद्धार्थकशक्तुकिण्वैः ॥
मृदूकृतामेष्य गतिं विदित्वा
निपातयेच्छस्त्रमशेषकारी ॥ २३ ॥
दद्याद्व्रणे निम्बतिलान् सदन्तीन्
सुराष्ट्रजासैन्धवसंप्रयुक्तान् ॥
प्रक्षालने चापि करञ्जनिम्ब-
जात्यक्षपीलुस्वरसाः प्रयोज्याः ॥ २४ ॥
सुवर्चिकासैन्धवचित्रकेषु
निकुम्भतालीतलरूपिकासु ॥
फलेष्वपामार्गभवेषु चैव
कुर्यात् समूत्रेषु हिताय तैलम् ॥ २५ ॥

नाडीमित्यादि । किण्वः सुराबीजम् । अशेषकारी वैद्यः । दद्यादित्यादि । सुराष्ट्रजा तुवरमृत्तिका । प्रक्षालने इत्यादि । निकुम्भो दन्ती । तालीतलं मुशलीमूलं; नलमित्यन्ये पठन्ति, तत्र नलः शुषिरपर्वा स्वनामप्रसिद्धः । रूपिका श्वेतार्कः । 'नीलीफलरूपिकाभिः' इति केचित् पठन्ति; नीलीफलं शारदं फलं, श्रीफलिकेति लोके ॥ २३–२५ ॥

नाडीं तु शल्यप्रभवां विदार्य
निर्हृत्य शल्यं प्रविशोध्य मार्गम् ॥
संशोधयेत् क्षौद्रघृतप्रगाढै-
स्तिलैस्ततो रोपणमाशु कुर्यात् ॥ २६ ॥
कुम्भीकखर्जूरकपित्थबिल्व-
वनस्पतीनां च शलाटुवर्गैः ॥
कृत्वा कषायं विपचेत्तु तैल-
मावाप्य मुस्तासरलाप्रियङ्गूः ॥ २७ ॥
सुगन्धिकामोचरसाहिपुष्पं
रोध्रं विदध्यादपि धातकीं च ॥
एतेन शल्यप्रभवा तु नाडी
रोहेद्व्रणो वा सुखमाशु चैव ॥ २८ ॥

नाडीमित्यादि । कुम्भीकः स्थलकुम्भिका, वनस्पतयो वटाद्याः, कुम्भिकादीनां शलाटूनि कोमलफलानि ग्राह्याणि । सरला त्रिवृत् । सुगन्धिका उत्पलसारिवा । मोचरसः शाल्मली-चुम्पः । अहिपुष्पं नागकेशरम् ॥ २६–२८ ॥

१ 'शुषिरान्' इति पा० । २ 'भूम्यामलकमूलं' इति पा० ।

कृशदुर्बलभीरूणां नाडी मर्माश्रिता च या ॥
क्षारसूत्रेण तां छिन्द्यान्न तु शस्त्रेण बुद्धिमान् २९
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम् ॥
सूचीं निदध्याद्गत्यन्ते तथोन्नम्याशु निर्हरेत् ॥ ३० ॥
सूत्रस्यान्तं समानीय गाढं बन्धं समाचरेत् ॥
ततः क्षारबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत् ॥ ३१ ॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गतिः ॥
भगन्दरेऽप्येष विधिः कार्यो वैद्येन जानता ॥ ३२ ॥
अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत् ॥
सूचीभिर्यववक्राभिराचितान् वा समन्ततः ॥
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद्व्रणम् ॥ ३३ ॥

कृशेत्यादि । क्षारसूत्रेण क्षाराक्तसूत्रेण । तत्र क्षारसूत्राव-चारणाप्रकारं निर्दिशन्नाह—एषण्येत्यादि । अर्बुदादिष्विति आदिशब्दाद्ग्रन्थ्यादीनां ग्रहणम् । तनुमूलेषु अर्बुदादिषु, उत्क्षिप्य मूले क्षारसूत्रं निधापयेत्; विशालमूलांश्चार्बुदादीन् क्षारसूत्रप्र-तिष्ठापनार्थं सर्वतः सूचीभिराविध्य, मूले क्षारसूत्रेण बध्नीयात् ॥ २९–३३ ॥

या द्विव्रणीयेऽभिहितास्तु वर्त्य-
स्ताः सर्वनाडीषु भिषग्विदध्यात् ॥
घोण्टाफलत्वग्लवणानि लाक्षा-
पूगीफलं चालवणं च पत्रम् ॥ ३४ ॥
स्नुह्यर्कदुग्धेन तु कल्क एष
वर्तीकृतो हन्त्यचिरेण नाडीः ॥
विभीतकाम्रास्थिवटप्रवाला
हरेणुकाशङ्खिनिबीजमस्थ्यः ॥ ३५ ॥
वाराहिकन्दश्च तथा प्रदेयो
नाडीषु तैलेन च मिश्रयित्वा ॥ ३६ ॥
धत्तूरजं मदनकोद्रवजं च बीजं
कोशातकी शुकनसा मृगभोजिनी च ॥
अङ्कोटबीजकुसुमं गतिषु प्रयोज्यं
लाक्षोदकाहतमलासु विकल्प्य चूर्णम् ॥३७॥
तथा च गोमांसमसीं हिताय
कोष्ठाश्रितस्यादरतो दिशन्ति ॥
वर्तीकृतं माक्षिकसंप्रयुक्तं
नाडीघ्नमुक्तं लवणोत्तमं वा ॥ ३८ ॥
दुष्टव्रणे यद्विहितं च तैलं
तत् सर्वनाडीषु भिषग्विदध्यात् ॥
चूर्णीकृतैरथ विमिश्रितमेभिरेव
तैलं प्रयुक्तमचिरेण गतिं निहन्ति ॥ ३९ ॥

१ 'छिद्यते' इति पा० । २ 'सूचीभिराचितान्' इति पा० ।
३ 'चूर्णमिति क्रियाविशेषणात् चूर्णं विकल्प्य चूर्णीकृत्वेत्यर्थः' इति हाराणचन्द्रः ।

एष्वेव मूत्रसहितेषु विधाय तैलं
तत् साधितं गतिमपोहति सप्तरात्रात् ॥
पिण्डीतकस्य तु वराहविभावितस्य
मूलेषु कन्दशकलेषु च सौवहेषु ॥ ४० ॥
तैलं कृतं गतिमपोहति शीघ्रमेतत्
कन्देषु चामरवरायुधसाह्वयेषु ॥
भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ॥ ४१ ॥
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाडीं कफानिलकृतामपचीं व्रणांश्च ॥

ततः परं सर्वनाडीनां सामान्यविधिमाह—या इत्यादि । मिश्रकोक्तातीतावेक्षणेन द्विव्रणीयेऽभिहिता 'अन्तःशल्यानणुमुखान्' ( चि. अ. १ ) इत्यादिवाक्ये वर्त्यः शोधनाः प्रयोज्याः । इहापि वर्तिं निर्दिशन्नाह—घोण्टेत्यादि । घोण्टाफलं बदरीफलं, तस्य त्वक् वल्कलम् । लवणानि सैन्धवादीनि । अलवणा काक-मर्दनिका, तस्या इदं पत्रमालवणम् । बिभीतकेत्यादि शङ्खिनी यवतिक्ता । बिभीतकाम्रास्थ्यादीनां दाहेन मस्यः क्षारा इत्यर्थः । वाराहिकन्दो गृष्टिकाकन्दः । तथेत्यादि तेनैव प्रकारेण गोमांसस्यापि मसीं कोष्ठाश्रितासु नाडीषु हिताय आदरेण प्रतिपादयन्ति । वर्तीकृतमित्यादि पक्वमधुसैन्धववर्तिरपि नाडीहरा । दुष्टेत्यादि ।—दुष्टव्रणे यद्विहितं च तैलमिति सर्वव्रणे "द्रवन्ती चिरबिल्वं" इत्यादिना वर्गेण "यथोपपत्ति कर्तव्यं तैलमेतेषु शोधनम्" ( चि. अ. २ ) इत्यभिहितम् । धत्तूरजमित्यादि धत्तूरजं बीजम् । मदोत्पादकाः कोद्रवा मदनकोद्रवाः; अन्ये तु व्याख्यानयन्ति—मदनं कोद्रवजं बीजं चेति । कोशातकी देवदाली । शुकनसा चर्मकारवटः । मृगभोजिनी इन्द्रवारुणी । अङ्कोटबीजपुष्पयुक्तैः कृतं चूर्णं गतिषु देयम् । लाक्षोदकाहृतमलासु लाक्षादिगणक्काथप्रक्षालनेन आसमन्तात् हृतमलासु, दोषापनयनाच्छुद्धास्वित्यर्थः; अन्ये तु लाक्षोदकप्रक्षालनेन भेदनपीडनाभ्यां च हृतमलासु गतिषु, धत्तूरमदनकोद्रवादिचूर्णं विकल्प्यालोड्य लाक्षोदकेनैव प्रयोज्यमिति संबन्धं कथयन्ति । चूर्णीकृतैरित्यादि । एभिरेव धत्तूरकादिभिश्चूर्णीकृतैर्मिश्रीकृत्य तैलं प्रयुक्तमचिरेण गतिं निहन्तीति **जेज्जटः; गयी** तु, 'तैलं कृतं गतिमपोहति शीघ्रमेव' इति पठित्वा कृतग्रहणात्तैलं सामान्यपाकपरिभाषया कृतं साधितं गतिमपोहतीति व्याख्याति । एष्वित्यादि ।—एष्वेव धत्तूरकादिबीजादिष्वित्यर्थः । पिण्डीतकस्येत्यादि । वराहपिण्डीतकमूलसुवहकादिशकलेषु वज्रकन्देषु च स्नेहपाकसामान्यपरिभाषया सिद्धं तैलं नाडीहरम् । विस्तरमाह—पिण्डीतकस्त्रिविधः कृष्णपुष्पः, श्वेतपुष्पः, पीतपुष्पश्च; तेष्वत्र वराहवर्णपुष्पैर्विभाव्यत इति वराहविभावितः कृष्णपुष्पो ग्राह्यः; सुवहा गन्धनाकुली नापिणीति लोके, गोधापदीत्यपरे, कन्दालीत्यन्ये, तस्याः कन्दशकलेषु कन्दखण्डेषु; कृतं संस्कृतम् । 'कन्देषु चामरवरायुधसाह्वयेषु' इत्यत्र अमरवर इन्द्रस्तस्यायुधं वज्रं तेन समान आह्वयः संज्ञा येषां ते अमरवरायुधसाह्वया वज्रकन्दास्तेषु । चकारात् 'तैलं कृतम्' इत्यनुवर्तते । भल्लातकेत्यादि मार्कवरसेन भृङ्गराजरसेन ॥ ३४–४१ ॥—

स्तन्ये गते विकृतिमाशु भिषक् तु धात्रीं
पीतां घृतं परिणतेऽहनि वामयेत्तु ॥ ४२ ॥
निम्बोदकेन मधुमागधिकायुतेन
वान्तागतेऽहनि च मुद्गरसाशना स्यात् ॥
एवं त्र्यहं चतुरहं षडहं वमेद्वा
सर्पिः पिबेत्त्रिफलया सह संयुतं वा ॥ ४३ ॥
भार्गीं वचामतिविषां सुरदारु पाठां
मुस्तादिकं मधुरसां कटुरोहिणीं च ॥
धात्री पिबेत्तु पयसः परिशोधनार्थमारग्वधादिषु वरं मधुना कषायम् ॥ ४४ ॥
सामान्यमेतदुपदिष्टमतो विशेषा-
द्दोषान् पयोनिपतितान् शमयेद्यथास्वम् ॥

स्तन्य इत्यादि । स्तन्ये दोषैर्विकृतिं गते परिगते । परिणतेऽहनि सायंकाले, पीतां घृतं संशमनमेव घृतं पीतवतीं, एतच्च प्रतप्तकनकनिकरपीतलोहिते सवितरि स्नेहपानकल्पस्यापवादः । सामान्योक्तमपि कफघ्नद्रव्यसंस्कृतं घृतम् । **जेज्जटाद**यस्तु परिणते निष्पन्ने स्नेहफले सति स्निग्धामित्यर्थः, अहनि तस्मिन्नेव दिवसे । तन्नेच्छति **गयी**, सामान्यवाक्येनैव स्निग्धाय वमनस्य विहितत्वात् । स्वेदस्य पूर्वकर्मत्वात् स्विन्नां, निम्बोदकेन निम्बक्काथेन वामयेत् । वान्तागतेऽहनि च मुद्गरसाशना स्यात् नतु वमनदिवसे भोजयेदित्यर्थः । तत्र प्रथमवमनेन कफस्य निःशेषमनपहृतत्वादशुद्धदेहां स्नेहस्वेदावन्तराऽन्तरा सेवयित्वा षडहं वा चतुरहं त्र्यहं वा यावद्विशुद्धिरिति, शुद्धदेहायास्तु पुनर्वमनं त्याज्यम्, अन्यथा ग्लानिः स्तन्यक्षयश्च । तस्माच्छुद्धदेहा वातपित्तानुबन्धे स्नेहपाकपरिभाषया त्रिफलासिद्धं सर्पिः पिबेदेवेति वाशब्दाद्व्यवस्थितार्थाल्लभ्यते । संशोधनमभिधाय संशमनमाह—भार्गीमित्यादि । मुस्तादिकं द्रव्यसंग्रहणीयोक्तम् । मधुरसा मूर्वा 'चोरस्नायुः' इति लोके । भार्ग्यादिभिः सह मुस्तादेर्गणस्य कषायपानं वरं श्रेष्ठम् । पयोनिपतितान् स्तन्यनिपतितान् । शमयेद्यथास्वमिति यस्य यदात्मकं प्रत्यनीकं तेन शमयेदिति ॥ ४२–४४ ॥—

रोगं स्तनोत्थितमवेक्ष्य भिषग्विदध्या-
द्यद्विद्रधावभिहितं बहुशो विधानम् ॥४५॥
संपच्यमानमपि तं तु विनोपनाहैः
संभोजनेन खलु पाचयितुं यतेत ॥
शीघ्रं स्तनो हि मृदुमांसतयोपनद्धः
सर्वं प्रकोथमुपयात्यवदीर्यते च ॥ ४६ ॥

१ 'कङ्कुमर्दनिका' इति पा० । २ 'क्षारं' इति पा० ।

१ 'निशायां' इति पा० ।

पक्के तु दुग्धहरिणीः परिहृत्य नाडीः
कृष्णं च चूचुकयुगं विदधीत शस्त्रम् ॥
आमे विदाहिनि तथैव गते च पाकं
धात्र्याः स्तनौ सततमेव च निर्दुहीत ॥४७॥

**इति सुश्रुतसंहितायां चिकित्सास्थाने विसर्पनाडीस्तनरोगचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥**

संभोजनेनेति यथेष्टभोजनेनेत्यर्थः । उपनाहो ह्यत्यर्थं पाककारि, तस्मादुपनाहनिषेधमाह—क्षीप्रमित्यादि । हि स्फुटं, प्रकोथं पूतिमांसताम् । आमेत्यादि आमे विदग्धतापरिहाराय, विदाहिनि विपाकपरिहाराय, पक्के नाडीव्रणपरिहाराय, स्तनौ निर्दुहीत ॥ ४५-४७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ।

**अथातो ग्रन्थ्यपच्यर्बुदगलगण्डचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**ग्रन्थिष्वथामेषु भिषग्विदध्या-**
**च्छोफक्रियां विस्तरशो विधिज्ञः ॥**
**रक्षेद्बलं चापि नरस्य नित्यं**
**तद्रक्षितं व्याधिबलं निहन्ति ॥ ३ ॥**

ग्रन्थिष्वित्यादि । शोफक्रियामपतर्पणादिकां विरेचनान्ताम्[1]। विस्तरशो भूयिष्ठम् ॥ १-३ ॥

**तैलं पिबेत् सर्पिरथो द्वयं वा**
**दत्त्वा वसां वा त्रिवृतं विदध्यात् ॥**
**अपेहिवातादशमूलसिद्धं**
**वैद्यश्चतुःस्नेहमथो द्वयं वा ॥ ४ ॥**

इदानीमामे ग्रन्थौ विस्रावणशोधनयोः स्नेहनाङ्गस्नेहं निर्दिशन्नाह—तैलमित्यादि। तैलं पिबेत्, सर्पिर्वा पिबेत्, अथवा द्वयं तैलसर्पिषी पिबेत् । वसातैलसर्पिषा च साध्यत्वात् त्रिवृतं विदध्यात्; त्रिभिस्तैलसर्पिर्वसाभिर्वृतो व्याप्तः स्नेहसंयोगस्त्रिवृतसंज्ञः स्यात्, तं विदध्यात् कुर्यात्; 'वैद्यो ग्रन्थिरोगिणः पानाय' इति शेषः; अथवा चतुःस्नेहं घृततैलवसामज्जासंयोगजं; द्वयं वा पिबेत्, द्वयमिति तैलसर्पिषी, तैलवसे, तैलमज्जानौ, घृतवसे, घृतमज्जानौ, वसामज्जानौ चेति एवंप्रकारं द्वयं, चतुःस्नेहं वा एकीभूतं पिबेत् । किंभूतं पिबेत्? अपेहिवातादशमूलसिद्धमिति अपेहिवाता प्रसारिणी । तत्रायं तैलं सर्पिर्द्वयं वा यत् प्रोक्तं तदसंस्कृतमेव, उत्तरार्धोक्तं च चतुःस्नेहं द्वयं वा प्रसारिणीदशमूलकल्कक्वाथसंस्कृतम्, अन्यथा वाशब्देन[1] पुनरुक्तिदोषः स्यात् । यद्यपि पृथङ्निर्दिष्टरसवीर्यविपाकप्रभावाणां तैलसर्पिर्वसामज्ज्ञानां संस्कृतानां ग्रन्थिरोगिणः सामान्येनात्र प्रयोगोऽभिहितः, तथाऽपि वातपित्तश्लेष्मसंसृष्टसन्निपातारब्धग्रन्थिषु हेतुप्रकृतिदेशकालसात्म्यानुबन्धानवेक्ष्य यथावच्च पानार्थमुपयोज्या इति ज्ञेयम् । गयी तु 'अपेहिवाता—'त्यत्र 'आमे विदध्याद्दशमूलसिद्धं' इति पठति व्याख्यानयति च—तैलं पिबेदित्यादि; तत्र ग्रन्थौ वातभवे आमे तैलं वातहरक्काथकल्कसिद्धं, पित्तभवे घृतं पित्तहरक्काथकल्कसिद्धं, तैलमेव कफहरक्काथसिद्धं कफजे, संसर्गसन्निपाते च द्वित्रिचतुःस्नेहादिसिद्धं विकल्प्यं; तदेव वातहरं निर्दिशन्नाह—आमे विदध्याद्दशमूलसिद्धमित्यादि ॥ ४ ॥

**हिंस्राऽथ रोहिण्यमृताऽथ भार्गी**
**श्योनाकबिल्वागुरुकृष्णगन्धाः ॥**
**गोजी च पिष्टा सह तालपत्र्या**
**ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥ ५ ॥**
**स्वेदोपनाहान् विविधांश्च कुर्या-**
**त्तथा प्रसिद्धानपरांश्च लेपान् ॥**
**विदार्य वा पक्वमपोह्य पूयं**
**प्रक्षाल्य बिल्वार्कनरेन्द्रतोयैः ॥ ६ ॥**
**तिलैः सपञ्चाङ्गुलपत्रमिश्रैः**
**संशोधयेत् सैन्धवसंप्रयुक्तैः ॥**
**शुद्धं व्रणं वाऽप्युपरोपयेत्तु**
**तैलेन रास्नासरलान्वितेन ॥ ७ ॥**
**विडङ्गयष्टीमधुकामृताभिः**
**सिद्धेन वा क्षीरसमन्वितेन ॥**

इदानीं वातादिजनितग्रन्थिविशेषेण प्रलेपादीनाह—हिंस्रेत्यादि । रोहिणी कटुका । अमृता गुडूची । कृष्णगन्धा शोभाञ्जनकः, शमीत्यपरे । गोजी गोजिह्विका, शाखोटक इत्यन्ये । तालपत्री मुसली । स्वेदेत्यादि । प्रसिद्धा लेपा मिश्रकोक्ता मातुलुङ्गयादयः । विदार्येत्यादि । नरेन्द्रः किरमालकः । तोयशब्दोऽत्र क्काथे वर्तते । पञ्चाङ्गुल एरण्डः । अन्ये 'बिल्वार्कगणादितोयैः' इति पठन्ति; तत्र बिल्वादिगणः, अर्कादिगणश्च, तयोः क्काथैरित्यर्थः । शुद्धमित्यादि । सरला त्रिवृत्, केचित् सरलं शालतरुमाहुः, तयोश्चूर्णान्वितेन तैलेन रोपयेत्, तथा चतुर्गुणगोक्षीरसमन्वितेन तैलेन विडङ्गादिभिः कल्कीकृतैः सिद्धेन वा रोपयेत् ॥ ५-७ ॥

**जलौकसः पित्तकृते हितास्तु**
**क्षीरोदकाभ्यां परिषेचनं च ॥ ८ ॥**
**काकोलिवर्गस्य च शीतलानि**
**पिबेत् कषायाणि सशर्कराणि ॥**

१ 'शोफक्रियायां विहितं' इति पा० ।

१ "द्वयशब्देन" इति पा० ।

द्राक्षारसेनेक्षुरसेन वाऽपि
चूर्णं पिबेच्चापि हरीतकीनाम् ॥ ९ ॥
मधूकजम्ब्वर्जुनवेतसानां
त्वग्भिः प्रदेहानवचारयेत ॥
सशर्करैर्वा तृणशून्यकन्दै-
र्दिह्यादभीक्ष्णं मुचुलुन्दजैर्वा ॥ १० ॥
विदार्य वा पक्वमपोह्य पूयं
धावेत् कषायेण वनस्पतीनाम् ॥
तिलैः सयष्टीमधुकैर्विशोध्य
सर्पिः प्रयोज्यं मधुरैर्विपक्वम् ॥ ११ ॥

जलौकस इत्यादि । तृणशून्यकन्दैः केतकीमूलैः । दिह्यात् लिम्पेत् । अभीक्ष्णं सततम् । मुचुलुन्दः कण्टकीमदनः, अन्ये मुचुकुन्दमाहुः । विदार्येत्यादि । वनस्पतीनां वटप्लक्षपिप्पलोदुम्बराणाम् । तिलैरित्यादि । मधुरैः काकोल्यादिभिर्द्रव्यैः ॥८–११॥

हृतेषु दोषेषु यथानुपूर्व्या
ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु ॥
स्विन्नस्य विम्लापनमेव कुर्या-
दङ्गुष्ठलोहोपलवेणुदण्डैः ॥ १२ ॥
विकङ्कतारग्वधकाकणन्ती-
काकादनीतापसवृक्षमूलैः ॥
आलेपयेत् पिण्डफलार्कभार्गी-
करञ्जकालामदनैश्च विद्वान् ॥ १३ ॥

हृतेष्वित्यादि । यथानुपूर्व्या स्नेहस्वेदादिक्रमेण । वमनविरेचनास्थापनशिरोविरेचनशोणितस्रावणैर्दोषेषु कफपित्तवातेषु हृतेषु तथा शोणिते च हृते स्विन्नस्य विम्लापनं कार्यमित्याह—अङ्गुष्ठलोहोपलवेणुदण्डैः; विम्लापनमङ्गुष्ठादिभिर्मर्दनेन श्वयथुविम्लापनं कुर्यात् । विकङ्कतेत्यादि । विकङ्कतवृक्षः कटायिका । आरग्वधः किरमालकः । काकणन्ती गुञ्जा । काकादनी वायसतिन्दुका, अहिंस्रेत्यन्ये । तापसवृक्ष इङ्गुदः । पिण्डफला तिक्तालाबुः । काला कटुहिंस्रा ॥ १२ ॥ १३ ॥

अमर्मजातं शममप्रयान्त-
मपक्वमेवापहरेद्विदार्य ॥
दहेत् स्थिते चासृजि सिद्धकर्मा
सद्यःक्षतोक्तं च विधिं विदध्यात् ॥ १४ ॥

अमर्मेत्यादि । श्लेष्मसमुत्थमेव ग्रन्थिममर्मण्युत्पन्नं शममप्रयान्तं पूर्वोक्तक्रमैः शान्तिमगच्छन्तमपक्वमेव विदार्य अपहरेत् । सद्यःक्षतोक्तविधिर्मधुघृतादिप्रयोगः । केचित् 'अमर्मजं नैवमपच्यमानं' इति पठन्ति ॥ १४ ॥

या मांसकन्द्यः कठिना वृहत्य-
स्तास्वेव योज्यश्च विधिर्विधिज्ञैः ॥
शस्त्रेण वाऽऽपाट्य सुपक्वमाशु
प्रक्षालयेत् पथ्यतमैः कषायैः ॥ १५ ॥
संशोधनैस्तं च विशोधयेत्तु
क्षारोत्तरैः क्षौद्रगुडप्रगाढैः ॥
शुद्धे च तैलं त्ववचारणीयं
विडङ्गपाठारजनीविपक्वम् ॥ १६ ॥

या इत्यादि । याश्च महत्यो मांसकन्द्यो मांसप्ररोहाः, तास्वियमेव क्रिया । शस्त्रेणेत्यादि शस्त्रेण पाटनं अमर्मजे, मर्मजे तु भेषजैः । पथ्यतमैरिति कफोत्थव्रणहरैः । संशोधनैरित्यादि । क्षारोत्तरैर्यवक्षारप्रधानैः । 'क्षौद्रघृतप्रगाढैः' इति पाठान्तरम् ॥ १५ ॥ १६ ॥

मेदःसमुत्थे तिलकल्कदिग्धं
दत्त्वोपरिष्टाद्द्विगुणं पटान्तम् ॥
हुताशतप्तेन मुहुः प्रमृज्या-
ल्लोहेन धीमानदहन् हिताय ॥ १७ ॥
प्रलिप्य दार्वीमथ लाक्षया वा
प्रतप्तया स्वेदनमस्य कार्यम् ॥
निपात्य वा शस्त्रमपोह्य मेदो
दहेत् सुपक्वं त्वथवा विदार्य ॥ १८ ॥
प्रक्षाल्य मूत्रेण तिलैः सुपिष्टैः
सुवर्चिकाद्यैर्हरितालमिश्रैः ॥
ससैन्धवैः क्षौद्रघृतप्रगाढैः
क्षारोत्तरैरेनमभिप्रशोध्य ॥ १९ ॥
तैलं विदध्याद्धिकरञ्जगुञ्जा-
वंशावलेखेङ्गुदमूत्रसिद्धम् ॥

अतो मेदोग्रन्थिचिकित्सितमाह—मेद इत्यादि । दार्वी दारुहस्तकः । अपक्वमेदोजे शस्त्रं निपात्य मेदोऽपकृष्य दहेत्, पक्वं वा मेदोग्रन्थिं विदार्य गवादिमूत्रैः प्रक्षाल्य तिलैः सुवर्चिकायवक्षारसैन्धवहरितालक्षौद्रघृतप्रधानैरभिप्रशोध्य वक्ष्यमाणतैलावचारणम् । तैलमित्यादि द्विकरञ्जादिकल्कसिद्धेन चतुर्गुणगोमूत्रद्रवेण तैलेन रोपयेत् । वंशावलेखो वंशलक् ॥ १७–१९ ॥—

जीमूतकैः कोशवतीफलैश्च
दन्तीद्रवन्तीत्रिवृतासु चैव ॥ २० ॥
सर्पिः कृतं हन्त्यपचीं प्रवृद्धां
द्विधा प्रवृत्तं तदुदारवीर्यम् ॥
निर्गुण्डिजातीबरिहिष्ठयुक्तं
जीमूतकं माक्षिकसैन्धवाढ्यम् ॥ २१ ॥
अभिप्रतप्तं वमनं प्रगाढं
दुष्टापचीपूत्तममादिशन्ति ॥
कैडर्यबिम्बीकरवीरसिद्धं
तैलं हितं मूर्धविरेचनं च ॥ २२ ॥
शाखोटकस्य स्वरसेन सिद्धं
तैलं हितं नस्यविरेचनेषु ॥
मधूकसारश्च हितोऽवपीडे
फलानि शिग्रोः खरमञ्जरेर्वा ॥ २३ ॥

इदानीमपचीचिकित्सामाह—जीमूतकैरित्यादि । जीमूतको देवदाली । कोशवती कटुकोशातकी । द्विधाप्रवृत्तम् उभयतोभागदोषहरम् । उदारवीर्यम् उत्कटवीर्यम् । जीमूतककोशवत्योः फलकल्कं दन्त्यादीनां तिसृणां मूलस्य च स्नेहचतुर्थांशेन कृत्वा, जलं चतुर्गुणं दत्त्वा, विपचेत्; कल्कक्काथाभ्यामित्यपरे । निर्गुण्डीत्यादि । बरिहिष्ठं वालकम् । जीमूतको देवदाली । निर्गुण्डीजातीबरिहिष्ठानामञ्जलिं सलिलाढकेन निःक्काथ्य पादशेषं विधाय ततः पुरुषापेक्षया जलमुष्णमादाय, तच्च जीमूतकफलकल्पेन प्रत्येकं माक्षिकसैन्धवाढ्यं कृत्वा, युक्तं वमनविधिना, दुष्टास्वपचीषूत्तममादिशन्ति वमनद्रव्यमुत्तममादिशन्ति । कैडर्येत्यादि कैडर्यः पर्वतनिम्बः । कैडर्यादिकल्कचतुर्थांशं जलचतुर्गुणं तैलं साध्यम् । अन्ये तु कैडर्येत्यत्र निर्गुण्डीति पठन्ति । निर्गुण्डीस्वरसे चतुर्गुणे बिम्बीकरवीरकल्कं तैलं साध्यम् । शाखोटकस्येत्यादि । शाखोटकवल्कलस्वरसे चतुर्गुणे स्वरसे तैलं सिद्धं; नस्ये तु अकल्कमित्येके, तत्कल्ककषायमेवेत्यन्ये । मधूकेत्यादि । अवपीड्य दीयते इत्यवपीडः, नस्यभेद इत्यर्थः । खरमञ्जरिः अपामार्गः । मधूकसारशिग्रुफलापामार्गतण्डुला उष्णोदकेन पिष्ट्वा अवपीडोऽरूक्ष[1]लक्षण एव ॥ २०–२३ ॥

**ग्रन्थीनमर्मप्रभवानपक्का-**
**नुद्धृत्य चाग्निं विदधीत पश्चात् ॥**
**क्षारेण वाऽपि प्रतिसारयेत्तु**
**संलिख्य शस्त्रेण यथोपदेशम् ॥ २४ ॥**

ग्रन्थीनित्यादि । उद्धृत्य च शस्त्रेण परं यदा औषधेनासाध्यलम् ॥ २४ ॥

**पार्ष्णिं प्रति द्वे दश चाङ्गुलानि**
**मित्वेन्द्रबस्तिं परिवर्ज्य धीमान् ॥**
**विदार्य मत्स्याण्डनिभानि वैद्यो**
**निष्कृष्य जालान्यनलं विदध्यात् ॥ २५ ॥**
**आ गुल्फकर्णात् सुमितस्य जन्तो-**
**स्तस्याष्टभागं खुडकाद्विभज्य ॥**
**घोणर्जुवेधः सुरराजबस्ते-**
**र्हित्वाऽक्षिमात्रं त्वपरे वदन्ति ॥ २६ ॥**

स्थानकर्माभिधाय स्थानान्तरकर्माणि निर्दिशन्नाह—पार्ष्णिमित्यादि । पार्ष्णिः गुल्फस्य पश्चाद्भागः । द्वादशाङ्गुलानि मित्वोर्ध्वमिन्द्रबस्तिं परित्यज्य, छित्त्वा, मेदोजालानि मत्स्याण्डेन निभानि आकृष्य अग्निमवचारयेत् । जङ्घामध्ये ध्यङ्गुलमिन्द्रबस्तिः, **जेज्जटाचार्य**स्तु अर्धाङ्गुलमाह । अन्ये तु पार्ष्णिं प्रतीत्यत्र प्रतिशब्दं विपरीतार्थकमाहुः, तेन विपरीतायां पार्ष्ण्यामित्यर्थः; तेन दक्षिणभागगतायामपच्यां वामजङ्घायां, वामभागगतायामपच्यां दक्षिणजङ्घायाम्, उभयतोभागगतायामुभयतः कर्म कर्तव्यमिति ज्ञेयम् । 'भागे च परिप्रती' इत्युक्तत्वाद्भागार्थोऽपि प्रतिशब्दो व्याख्यातव्यः; तेन पार्ष्णिभागे जङ्घायाः पाश्चात्यभागे व्यधः कार्यः । द्वे दश चाङ्गुलानीति मित्वेत्यत्र पृथग्विभक्तिनिर्देशात् पार्ष्णितो दशाङ्गुलानि विहायाङ्गुलद्वयमात्रो व्यधः कार्य इति ज्ञेयम् । इन्द्रबस्तिं त्रयोदशेऽङ्गुले स्थितमर्धाङ्गुलप्रमाणं परित्यज्य हित्वा, धीमान् बुद्धिमान् ऊहापोहयोग्यो दृष्टकर्मेत्यर्थः, वैद्यः यः सम्यगायुर्वेदविद्यां वेत्ति, जालानि मेदोजालानि, अनलं विदध्यात् अपुनर्भवायाग्नितप्तया शलाकया दहेदित्यर्थः; एवं हि मूलोच्छेदादपच्युपशम इति वदन्ति । अमुमेवार्थं केचिदन्येन पाठेन पठन्ति—आ गुल्फेत्यादि । आ खुले(ड)कात् गुल्फकर्णात् गुल्फौ कर्णाविव यस्य स तथा; खुलको जङ्घापादयोः सन्धिः । सुरराजबस्तेरिन्द्रबस्तेरष्टभागं जङ्घायाश्चरणहीनाया विंशत्यङ्गुलाया अष्टमो भागः सार्धमङ्गुलद्वयं हित्वा, यद्यपि ध्यङ्गुल इन्द्रबस्तिस्तथाऽपि तदुपघातपरिहारार्थं सार्धमेवाङ्गुलद्वयं ज्ञे(हे)यम् । अन्ये तु अक्षिमात्रमेव ध्यङ्गुलं नेत्रप्रमाणं हित्वेति वदन्ति । घोणर्जुवेध इति गुल्फकर्णस्य, खुलकस्य, घोणा नासा इव घोणा, यथोत्तरीयकण्डरा तस्याः ऋजुरवक्रो वेधो व्यधः, 'कुर्यात्' इत्यत्रापि पाठे स एवार्थः । अपच्यास्तु जङ्घाकण्डरागतमेदोमूलतायां **भोज**वचनं—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम् । जङ्घयोः कण्डरां प्राप्य मत्स्याण्डसदृशान् बहून्"—इत्यादीति **गयी; जेज्जट**स्याप्ययमभिप्रायः । **गूढपदभङ्गटिप्पने**ऽन्यथा व्याख्यातम्—आ गुल्फकर्णादिति गुल्फकर्णावभिव्याप्य, आङत्राभिविधौ न मर्यादायां, सुमितस्य सुनिश्चितं मितस्य तस्य प्रमाणस्य षट्सप्तत्यङ्गुलमितस्याष्टमभागः सार्धनवाङ्गुलमात्रं, खुलकात्[1] पार्ष्णिभागाद् ध्यङ्गुल[4]प्रमाणात्, विभज्य पृथक्कृत्य, घोणा नासा तस्या ऋजु यथा भवति तथाऽवक्रो वेधः कर्तव्यः । तत्र विध विधाने इति धातो रूपम्, तथाऽपि वेधशब्दोऽत्र व्यधने वर्तते, धातूनामनेकार्थत्वात् । स च खुलकस्याङ्गुलत्रितयमष्टमभागस्य च सार्धनवाङ्गुलकमेवं सार्धद्वादशाङ्गुलपरिमाणेनेन्द्रबस्तिर्मर्मापि परिहृतं भवत्येवमुक्तमिन्द्रबस्तिं हित्वेति । तथा चोक्तं—"त्रयोदशाङ्गुले पार्ष्णिं प्रति कालान्तरासुहृत् । इन्द्रबस्तिरसृक्स्रावी मांसगोऽर्धाङ्गुलो भवेत्"—इति । अक्षिमात्रमङ्गुलद्वयप्रमाणमपरे भिषज इति वदन्ति । एवं प्रथमश्लोकेनाधस्ताद्द्वितीयश्लोकेनेन्द्रबस्तेरुपरिष्टाज्जङ्घायाः पाश्चात्यभागगतकण्डराया ध्यङ्गुलमात्रो व्यधः कार्य इति स्थितम्; एवमनुपशमे वामपार्श्वजायां दक्षिणजङ्घापृष्ठमध्यादिन्द्रबस्तेरधस्तादूर्ध्वं वा शस्त्रेणाक्षिमात्रं व्रणं कृत्वा, मत्स्याण्डजालनिभं मेदोऽपनीयाग्निना दहेत्, अनेनेतरपार्श्वजा व्याख्याता, एवमुभयपार्श्वजातायामुभयत इति । **भोजो**ऽत्राह—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम् ।

१ 'रूक्ष एव' इति पा० ।

१ 'खुलुकात्' इति पा० । २ 'खुलुकः' इति पा० । ३ 'खुलुकस्य' इति पा० । ४ 'त्र्यङ्गुलप्रमाणात्' इति पा० ।

जङ्घयोः कण्डरां प्राप्य मत्स्याण्डसदृशान् बहून् ॥ कुर्वन्ति ग्रन्थीन् यस्तेभ्यः पुनः प्रकुपितोऽनिलः । दोषस्तैरूर्ध्वगो वक्षःकक्षामन्यागलाश्रितः ॥ नानाप्रकारान् कुरुते ग्रन्थीन् सा त्वपची मता । व्यामिश्रदोषोत्पन्नां तु कृच्छ्रसाध्यां विनिर्दिशेत् ॥ तासां वातोत्तरा कृष्णा वातिकीवेदनायुता ॥ क्षिप्रपाकसमुत्थाना दाहयुक्ता च पैत्तिकी ॥ गूढाऽविपाका कठिना कफात् स्निग्धा रुजाकरी ॥ मेदोधिका श्लैष्मिकी च विशेषात् सा समार्दवा ॥ तां तु मालाकृतिं मन्याकण्ठहृद्वनुसन्धिषु ॥ गलमालां विजानीयादपचीतुल्यलक्षणाम्''—इति । ''तस्माज्जङ्घायामेव कर्मणा मूलोच्छेदः कार्यः'' इति **गूढपदभङ्गात्**। **वाग्भटेन** चोभयत्रापि व्यधो दर्शितः । यथा—''इत्यशान्तौ गदस्यान्यपार्श्वजङ्घासमाश्रितम् । बस्तेरूर्ध्वमधस्ताद्वा मेदो हृत्वाऽग्निना दहेत्''—( वा. उ. अ. ३० ) इति ॥ २५ ॥ २६ ॥

**मणिबन्धोपरिष्टाद्वा कुर्याद्रेखात्रयं भिषक् ॥**
**अङ्गुल्यन्तरितं सम्यगपचीनां निवृत्तये ॥ २७ ॥**

हन्वस्थिसंधिमन्यागलस्थितापच्यां जङ्घागतं कर्माभिधाय कक्षाकूर्परसन्धिगतास्वपचीषु बाहुगतमेव कर्म विनिर्दिशन्नाह—मणिबन्धेत्यादि । अत्रापि पूर्ववत्, ''एतेनेतरसक्थि बाहू च व्याख्यातौ'' ( शा. अ. ८ ) इति वचनादिन्द्रबस्तेरष्टभागमक्षिमात्रं वा विहायाग्रे रेखात्रयं कुर्यात् । तत्रापि विंशत्यङ्गुलजङ्घाया द्वादशाङ्गुलानि किंचिदधिको भागेन, एवं षोडशाङ्गुलकूर्परमणिबन्धमध्ये किंचिदधिकानि नवाङ्गुलानि मित्वा रेखात्रयमङ्गुलान्तरमिति ॥ २७ ॥

**चूर्णस्य काले प्रचलाककाक-**
**गोधाहिकूर्मप्रभवां मषीं तु ॥**
**दद्याच्च तैलेन सहेङ्गुदीनां**
**यद्वक्ष्यते श्लीपदिनां च तैलम् ॥ २८ ॥**
**विरेचनं धूममुपाददीत**
**भवेच्च नित्यं यवमुद्गभोजी ॥**

वमनविरेचनशिरोविरेचनैस्तथा स्थानान्तरगतशस्त्रक्षारानलैरन्तर्बहिःप्रमार्जनाभ्यामन्तर्बहिःशुद्धीर्निर्दिश्य संशमनं निर्दिशन्नाह—चूर्णस्येत्यादि ।—चूर्णस्य काले रोपणकाले, प्रचलाकादीनां मषीर्दद्यात् क्षारमित्यर्थः । प्रचलाको मयूरः, कृकलासमन्ये प्राहुः । इङ्गुदीनां तैलेन क्षारमेवं दद्यात् । यानि च तैलानि श्लीपदे तानि च दद्यात् ॥ २८ ॥—

**कर्कारुकैर्वारुकनारिकेल-**
**प्रियालपञ्चाङ्गुलबीजचूर्णैः ॥ २९ ॥**
**वातार्बुदं क्षीरघृताम्बुसिद्धै-**
**रुष्णैः सतैलैरुपनाहयेत्तु ॥**
**कुर्याच्च मुख्यान्युपनाहनानि**
**सिद्धैश्च मांसैरथ वेसवारैः ॥ ३० ॥**

१ 'हित्वा' इति पा० । २ 'मसीमेव' इति पा० ।



**स्वेदं विदध्यात् कुशलस्तु नाड्या**
**शृङ्गेण रक्तं बहुशो हरेच्च ॥**
**वातघ्ननिर्यूहपयोम्लभागैः**
**सिद्धं शताख्यं त्रिवृतं पिबेद्वा ॥ ३१ ॥**

कर्कारुकैरित्यादि । कर्कारुकं कूष्माण्डं, एर्वारुः ग्रीष्मकर्कटी, प्रियालश्चारः, पञ्चाङ्गुल एरण्डः । क्षीरघृतसिद्धे रक्तपित्तानुबन्धे । उपनाहयेत् बध्नीयात् । वातघ्नेत्यादि । वातघ्ना देवदार्वादयः । तत्क्वाथक्षीरसौवीरभागैस्त्रिभिः स्नेहचतुर्गुणैरकल्कैस्तैलपाकः, एवमेव शतधा पक्वं शतपाकम्, एवं त्रिवृतं वा मज्जवर्जं घृततैलवसाभिर्वृतं पूर्वकल्कवातहरक्वाथपयोम्लैः सिद्धम्; एवमेव शतधाऽपतानकविधानेन वा सिद्धं त्रिवृतं, तत्राप्ययमेव साधनविधिः ॥ २९–३१ ॥

**स्वेदोपनाहा मृदवस्तु कार्याः**
**पित्तार्बुदे कायविरेचनं च ॥**
**विघृष्य चोदुम्बरशाकगोजी-**
**पत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ॥ ३२ ॥**
**श्लक्ष्णीकृतैः सर्जरसप्रियङ्गु-**
**पत्तङ्गरोध्राञ्जनयष्टिकाह्वैः ॥**
**विस्राव्य चारग्वधगोजिसोमाः**
**श्यामा च योज्या कुशलेन लेपे ॥ ३३ ॥**
**श्यामागिरिह्वाञ्जनकीरसेषु**
**द्राक्षारसे सप्तलिकारसे च ॥**
**घृतं पिबेत् क्लीतकसंप्रसिद्धं**
**पित्तार्बुदी तज्जठरी च जन्तुः ॥ ३४ ॥**

स्वेदोपनाहा इत्यादि । मृदुः स्वेदो द्रवस्वेदः, उपनाहो बन्धः काकोल्यादिमृदुद्रव्यकृतः क्षीराम्लपिष्टश्च नात्युष्णः । मृदुकायविरेचनं न शिरोविरेचनमिति व्यवच्छेदविषयः । भृशं विघृष्य उदुम्बरादिपत्रैः । तत्र शाकः खरमसृणपत्री महातरुः; गोजी दार्वीपत्रिका, शाखोटक इत्यन्ये । विस्राव्येत्यादि । सोमः सोमलता, कट्फलमित्यपरे । श्यामेत्यादि । श्यामा त्रिवृत्, गिरिह्वा श्वेतस्यन्दः, अञ्जनकी नीलाञ्जनिका शारदं फलं, श्रीफलिकेति लोके । सप्तलिका यवतिक्ता । क्लीतकेत्यादि । यष्टीमधुकल्केन सामान्यस्नेहपरिभाषया सिद्धं घृतं शोधनं पित्तार्बुदी पित्तोदरी च पिबेत् ॥ ३२–३४ ॥

**शुद्धस्य जन्तोः कफजेऽर्बुदे तु**
**रक्तेऽवसिक्ते तु ततोऽर्बुदं तत् ॥**
**द्रव्याणि यान्यूर्ध्वमधश्च दोषान्**
**हरन्ति तैः कल्ककृतैः प्रदिह्यात् ॥ ३५ ॥**
**कपोतपारावतविड्विमिश्रैः**
**सकांस्यनीलैः शुकलाङ्गलाख्यैः ॥**
**मूत्रैस्तु काकादनिमूलमिश्रैः**
**क्षारप्रदिग्धैरथवा प्रदिह्यात् ॥ ३६ ॥**

१ 'पथ्याः' इति पा० ।

शुद्धस्येति वमनेन । अलाब्वा रक्तेऽवसिक्तेऽपच्या दोषानूर्ध्वमधश्च यानि द्रव्याणि जीमूतकीघोषवतीफलदन्तीद्रवन्तीत्रिवृदादीनि हरन्ति तेषां कल्कैर्लिम्पेत् । कांस्यनीलः कांस्यमसी । शुकः ग्रन्थिपर्णः, लाङ्गलाख्या कलिकारिका । काकादनी वायसतिन्दुका । कपोतादिविड्भिमिश्रैः कांस्यनीलादिसहितैर्वायसतिन्दुकाया मूलयुक्तैर्मूत्रैर्विलिम्पेत्; अथवा क्षारप्रदिग्धैः क्षारसंयुक्तैर्मूत्रैः प्रलिम्पेत्; 'क्षारप्रघृष्टैरथवा' इत्यन्ये; तत्र क्षारोदकेन प्रघृष्टैर्वा कपोतविडादिभिः प्रदिह्यादित्यर्थः ॥ ३५ ॥ ३६ ॥

निष्पावपिण्याककुलत्थकल्कै-
मांसप्रगाढैर्दधिमस्तुयुक्तैः ॥
लेपं विदध्यात् कृमयो यथाऽत्र
मूर्च्छन्ति मुञ्चन्त्यथ मक्षिकाश्च ॥ ३७ ॥
अल्पावशिष्टे कृमिभिर्भक्षिते च
लिखेत्ततोऽग्निं विदधीत पश्चात् ॥
यदल्पमूलं त्रपुताम्रसीस-
पट्टैः समावेष्ट्य तदायसैर्वा ॥ ३८ ॥
क्षाराग्निशस्त्राण्यसकृद्विदध्यात्
प्राणानहिंसन् भिषगप्रमत्तः ॥
आस्फोतजातीकरवीरपत्रैः
कषायमिष्टं व्रणशोधनार्थम् ॥ ३९ ॥
शुद्धे च तैलं विदधीत भार्ङ्गी-
विडङ्गपाठात्रिफलाविपक्कम् ॥
यदृच्छया चोपगतानि पाकं
पाकक्रमेणोपचरेद्विधिज्ञः ॥ ४० ॥

निष्पावेत्यादि ।—निष्पावः शिम्बः । विदध्यात् कुर्यात् । मूर्च्छन्ति पतन्ति । मुञ्चन्त्यथ मक्षिकाश्चेति 'कृमीन्' इति शेषः । शिखराणां च कृमिभिर्भक्षितत्वादल्पावशिष्टत्वम् । असकृत् अनेकवारम् । अप्रमत्तः सावधानः । आस्फोता सारिवा । शुद्ध इत्यादि । शुद्धे च रोपणार्थं भार्ग्यादितैलं तैलपाककल्पेन । यदृच्छयेत्यादि । यदृच्छया पुनराकस्मिकोत्पादे अभिघातादिनिमित्तेऽबुद्धिपूर्वके वा ॥ ३७–४० ॥

मेदोर्बुदं स्विन्नमथो विदार्य
विशोध्य सीव्येद्गतरक्तमाशु ॥
ततो हरिद्रागृहधूमरोध्र-
पतङ्गचूर्णैः समनःशिलालैः ॥ ४१ ॥
व्रणं प्रतिग्राह्य मधुप्रगाढैः
करञ्जतैलं विदधीत शुद्धे ॥
सशेषदोषाणि हि योऽर्बुदानि
करोति तस्याशु पुनर्भवन्ति ॥ ४२ ॥
तस्मादशेषाणि समुद्धरेत्तु
हन्युः सशेषाणि यथा हि वह्निः ॥

मेद इत्यादि । पतङ्गो रक्तकाष्ठम् । आलं हरितालम् । करञ्जतैलं विद्रध्युक्तं, तत्फलतैलमेवेत्यन्ये ॥ ४१–४२ ॥—

संस्वेद्य गण्डं पवनोत्थमादौ
नाड्याऽनिलघ्नौषधपत्रभङ्गैः ॥ ४३ ॥
अम्लैः समूत्रैर्विविधैः पयोभि-
रुष्णैः सतैलैः पिशितैश्च विद्वान् ॥
विस्रावयेत् स्विन्नमतन्द्रितश्च
शुद्धं व्रणं चाप्युपनाहयेत्तु ॥ ४४ ॥
शणातसीमूलकशिग्रुकिण्व-
प्रियालमज्जानुयुतैस्तिलैस्तु ॥
कालामृताशिग्रुपुनर्नवार्क-
गजादिनामाकरहाटकुष्ठैः ॥ ४५ ॥
एकैषिकावृक्षकतिल्वकैश्च
सुराम्लपिष्टैरसकृत् प्रदिह्यात् ॥ ४६ ॥
तैलं पिबेच्चामृतवल्लिनिम्ब-
हंसाह्वयावृक्षकपिप्पलीभिः ॥
सिद्धं बलाभ्यां च सदेवदारु
हिताय नित्यं गलगण्डरोगे ॥ ४७ ॥

संस्वेद्येत्यादि । पत्रभङ्गैः पल्लवैः । अनिलघ्नं वातहरम् । एरण्डादिपल्लवयुतं तु शुद्धवाते, अम्लैः काञ्जिकादिभिः पित्तावृते वायौ, कफावृते मूत्रक्वथितैः; रक्तावृते पयोभिः क्षीरैः, पिशितैश्चेति पिशितरसैः क्वथितैः, अथवा पिशितैर्मांसैः पल्लवैः सह क्वथितैर्धातुक्षयजे वायौ । विस्रावयेत् जलौकादिभिः, ऊरुमूलसंश्रितसिराव्यधेन वा । रक्तादिहरणशुद्धं गलगण्डं निरन्तरं शणादिबीजैरुपनाहयेत् । शुद्धमिति वचनात् सौश्रुतेऽपि रक्ताहरणस्य शुद्धिसंज्ञा; तेन "चतुष्प्रकारा संशुद्धिः" ( च. सू. अ. २२ ) इति **चरक**वचनं तु प्रायिकं स्मृतम् । किण्वं सुराबीजम् । कालेत्यादि । काला हिंस्रा, गजादिनामा हस्तिपिप्पली, करहाटं मदनफलम् । एकैषिका अम्बष्ठा, त्रिवृदित्येके; वृक्षकः कुटजः । असकृत् अनेकवारम् । प्रदिह्यात् लिम्पेत् । तैलमित्यादि । हंसाह्वया हंसपदी । तैलं पिबेत् सिद्धमिति संबन्धः ॥ ४३–४७ ॥

स्वेदोपनाहैः कफसंभवं तु
संस्वेद्य विस्रावणमेव कुर्यात् ॥
ततोऽजगन्धातिविषाविशल्या-
विषाणिकाकुष्ठशुकाह्वयाभिः ॥ ४८ ॥
पलाशभस्मोदकपेषिताभि-
र्दिह्यात् सुगुञ्जाभिरशीतलाभिः ॥
दशार्धसङ्ख्यैर्लवणैश्च युक्तं
तैलं पिबेन्मागधिकादिसिद्धम् ॥ ४९ ॥

१ 'चर्मकारवदः' इति पा० । २ 'कृमिभिः कृते च' इति पा० ।

१ 'रक्तचन्दनम्' इति पा० । २ 'रक्ताहरणशुद्ध्या शुद्धं' इति पा० । ३ 'अनुलोमितम्' इति पा० ।

प्रच्छर्दनं मूर्धविरेचनं च
धूमश्च वैरेचनिको हितस्तु ॥
पाकक्रमो वाऽपि सदा विधेयो
वैद्येन पाकङ्गतयोः कथञ्चित् ॥ ५० ॥

पित्तगलगण्डाभावादनन्तरं कफजस्य चिकित्सितं दर्शयन्नाह—स्वेदेत्यादि । स्वेदोऽत्र रूक्षः, उपनाहश्च सक्षारमूत्रः । अजगन्धा बोवयिका, विशल्या अग्निशिखवृक्षः, विषाणिका आवर्तनिका, शुकाह्वयः चर्मकारवटः । दशेत्यादि दशार्धसंख्यैर्लवणैरिति पञ्चलवणैः । मागधिकादिसिद्धं पिप्पल्यादिकाथकल्काभ्यां सिद्धम् । पाकङ्गतयोः पाकं प्राप्तयोर्वातकफजयोः ॥ ४८–५० ॥

कटुत्रिकक्षौद्रयुताः समूत्रा
भक्ष्या यवान्नानि रसाश्च मौद्गाः ॥
सशृङ्गवेराः सपटोलनिम्बा
हिताय देया गलगण्डरोगे ॥ ५१ ॥

सर्वगलगण्डविषये योगं निर्दिशन्नाह—कटुत्रिकेत्यादि । भक्ष्या धानोलुम्बादयः । यवान्नानि गृञ्जनादीनि । समूत्रा इति मूत्रखिन्नशुष्काणां भक्ष्ययवाणामिति बोद्धव्यम् । कटुत्रिकमधुभ्यां योजना । रसाश्च मौद्गा मुद्गयूषाः । सशृङ्गवेराः सार्द्रका देयाः ॥ ५१ ॥

मेदःसमुत्थे तु यथोपदिष्टां
विध्येत् सिरां स्निग्धतनोर्नरस्य ॥
श्यामासुधालोहपुरीषदन्ती-
रसाञ्जनैश्चापि हितः प्रदेहः ॥ ५२ ॥
मूत्रेण वाऽऽलोड्य हिताय सारं
प्रातः पिबेत् सालमहीरुहाणाम् ॥
शस्त्रेण वाऽऽपाट्य विदार्य चैनं
मेदः समुद्धृत्य हिताय सीव्येत् ॥ ५३ ॥
मज्जाज्यमेदोमधुभिर्दहेद्वा
दग्धे च सर्पिर्मधु चावचार्यम् ॥
कासीसतुत्थे च ततोऽत्र देये
चूर्णीकृते रोचनया समेते ॥ ५४ ॥
तैलेन चाभ्यज्य हिताय दद्यात्
सारोद्भवं गोमयजं च भस्म ॥
हितश्च नित्यं त्रिफलाकषायो
गाढश्च बन्धो यवभोजनं च ॥ ५५ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने ग्रन्थ्यपच्यर्बुदगलगण्डचिकित्सितं नामाष्टादशोऽध्यायः ॥ १८ ॥

मेदःसमुत्थ इत्यादि । यथोपदिष्टामिति ऊरुसन्धिनिर्दिष्टाम् । श्यामेत्यादि ।—श्यामा त्रिवृत्, सुधा सेहुण्डः, लोहपुरीषं लोहमलम्; अन्ये तु लोहमगरुं वदन्ति, तथा पुरीषं कपोतपारावतविट् । मूत्रेणेत्यादि । सालसारादितरूणां सारकल्कं कर्षमात्रं गोमूत्रेण पिबेत् । जेज्जटस्तु सारोद्भवं भस्म मूत्रेणालोड्य पिबेदिति वदति । शस्त्रेणेत्यादि । दाहे च मधुघृतावचारणं पश्चात्कर्म । कासीसेत्यादि । ततोऽनन्तरं कासीसतुत्थगोरोचनाचूर्णावचारणं व्रणे । सारोद्भवं सालसारादिसारोद्भवम् । प्रक्षालने त्रिफलाकषायश्च ॥ ५२–५५ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतटीकायां चिकित्सास्थानेऽष्टादशोऽध्यायः ।

---

## एकोनविंशोऽध्यायः ।

अथातो वृद्ध्युपदंशश्लीपदचिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अन्त्रवृद्ध्या विना षड्या वृद्धयस्तासु वर्जयेत् ॥
अश्वादियानं व्यायामं मैथुनं वेगनिग्रहम् ॥ ३ ॥
अत्यासनं चङ्क्रमणमुपवासं गुरूणि च ॥

अन्त्रवृद्ध्येत्यादि । चङ्क्रमणं भ्रमणम् ॥ १–३ ॥—

तत्रादितो वातवृद्धौ त्रैवृतस्निग्धमातुरम् ॥ ४ ॥
स्विन्नं चैनं यथान्यायं पाययेत विरेचनम् ॥
कोशाम्रतिल्वकैरण्डफलतैलानि वा नरम् ॥ ५ ॥
सक्षीरं वा पिबेन्मासं तैलमेरण्डसंभवम् ॥
ततः कालेऽनिलघ्नानां काथैः कल्कैश्च बुद्धिमान् ॥६॥
निरूहयेन्निरूढं च भुक्तवन्तं रसौदनम् ॥
यष्टीमधुकसिद्धेन ततस्तैलेन योजयेत् ॥ ७ ॥
स्नेहोपनाहौ कुर्याच्च प्रदेहांश्चानिलापहान् ॥
विदग्धां पाचयित्वा वा सेवनीं परिवर्जयेत् ॥ ८ ॥
भिन्द्यात्ततः प्रभिन्नायां यथोक्तं क्रममाचरेत् ॥

तत्रेत्यादि । त्रैवृतमपतानकहरं वातव्याध्युक्तं, नरं पाययेतेति संबन्धः । काले आवस्थिके । निरूढं च यष्टीमधुकसिद्धतैलेन योजयेदनुवासनकल्पविधिना । यथोक्तमित्यादि । यथा येन प्रकारेणोक्तो द्विव्रणीयक्रमस्तमाचरेत् ॥ ४–८ ॥—

पित्तजायामपक्वायां पित्तग्रन्थिक्रमो हितः ॥ ९ ॥
पक्वां वा भेदयेद्भिन्नां शोधयेत् क्षौद्रसर्पिषा ॥
शुद्धायां च भिषग्दद्यात्तैलं कल्कं च रोपणम् ॥१०॥
रक्तजायां जलौकोभिः शोणितं निर्हरेद्भिषक्[1] ॥
पिबेद्विरेचनं वाऽपि शर्कराक्षौद्रसंयुतम् ॥ ११ ॥
पित्तग्रन्थिक्रमं कुर्यादामे पक्वे च सर्वदा ॥

पित्तजायामित्यादि । कल्कं च रोपणं द्विव्रणीयोक्तकल्कं; गयी तु मिश्रकाध्यायोक्तमिति कथयति ॥ ९–११ ॥—

१ 'काष्ठपाटला' इति पा० ।

१ 'अभीक्ष्णं निर्हरेदसृक्' इति पा० ।

**वृद्धिं कफात्मिकामुष्णैर्मूत्रपिष्टैः प्रलेपयेत् ॥ १२ ॥**
**पीतदारुकषायं च पिबेन्मूत्रेण संयुतम् ।**
**विम्लापनादृते वाऽपि श्लेष्मग्रन्थिक्रमो हितः ॥१३॥**
**पक्वायां च विभिन्नायां तैलं शोधनमिष्यते ॥**
**सुमनारुष्कराङ्कोठसप्तपर्णेषु साधितम् ॥ १४ ॥**

वृद्धिमित्यादि । उष्णैरुष्णवीर्यैर्वचादिपिप्पल्यादिमुष्ककादिगणैः; अन्ये तु, उष्णवीर्यैरजगन्धादिभिर्मिश्रकोक्तैः । पीतेत्यादि । गोमूत्रक्वथितस्यैव दारुहरिद्राकषायस्य वा पानं, पीतदारुस्थाने केचिद्देवदारुं पठन्ति । विम्लापनादित्यादि । सुमनारुष्करादिकल्ककषायसिद्धं तैलम् ॥ १२–१४ ॥

**मेदःसमुत्थां संस्वेद्य लेपयेत् सुरसादिना ॥**
**शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ॥ १५ ॥**
**स्विन्नां चावेष्ट्य पट्टेन समाश्वास्य तु मानवम् ॥**
**रक्षन् फले सेवनीं च वृद्धिपत्रेण दारयेत् ॥ १६ ॥**
**मेदस्ततः समुद्धृत्य दद्यात् कासीससैन्धवे ॥**
**बध्नीयाच्च यथोद्दिष्टं शुद्धे तैलं च दापयेत् ॥ १७ ॥**
**मनःशिलालवणैः सिद्धमारुष्करेषु च ॥**

मेद इत्यादि। सुरसादिना मूत्रपिष्टेन लेपः । शिरोविरेचनद्रव्याणि पिप्पलीविडङ्गापामार्गशिग्रुशिरीषसिद्धार्थकादीनि संशोधनसंशमनीयोक्तानि । तैरपि गोमूत्रपिष्टैः सुखोष्णैर्लेपः । स्विन्नामित्यादि। यथोद्दिष्टं च बध्नीयात् गोफणया स्थगिकाबन्धेन वा ॥ १५–१७ ॥—

**मूत्रजां स्वेदयित्वा तु वस्त्रपट्टेन वेष्टयेत् ॥ १८ ॥**
**सेवन्याः पार्श्वतोऽधस्ताद्विध्येद् व्रीहिमुखेन तु ॥**
**अथात्र द्विमुखां नाडीं दत्त्वा विस्त्रावयेद्भिषक् ॥१९॥**
**मूत्रं, नाडीमथोद्धृत्य स्थगिकाबन्धमाचरेत् ॥**
**शुद्धायां रोपणं दद्याद्वर्जयेदन्त्रहैतुकीम् ॥ २० ॥**
**अप्राप्तफलकोषायां वातवृद्धिक्रमो हितः ॥**
**तत्र या वङ्क्षणस्था तां दहेदर्धेन्दुवक्रया ॥ २१ ॥**
**सम्यङ्मार्गावरोधार्थं कोशप्राप्तां तु वर्जयेत् ॥**
**त्वचं भित्त्वाऽङ्गुष्ठमध्ये दहेच्चाङ्गविपर्ययात् ॥ २२ ॥**
**अनेनैव विधानेन वृद्धी वातकफात्मिके ॥**
**प्रदहेत् प्रयतः किंतु स्नायुच्छेदोऽधिकस्तयोः ॥२३॥**
**शङ्खोपरि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीम् ॥**
**व्यत्यासाद्वा सिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ २४ ॥**

मूत्रजामित्यादि । वर्जयेदन्त्रहैतुकीं 'कोशप्राप्ताम्' इति वाक्यशेषः । वातवृद्धिक्रमो हित इति स्नेहपानादिरनुवासनान्तः । तत्रेत्यादि । अर्धेन्दुवक्रया शलाकया । त्वच भित्त्वेति त्वङ्मात्रं छित्त्वा । अङ्गविपर्ययादिति वामान्त्रवृद्धौ दक्षिणाङ्गुष्ठमध्ये, दक्षिणान्त्रवृद्धौ वामाङ्गुष्ठमध्ये । शङ्खभ्रुवोरन्तोपरि कर्णललाटयोर्मध्ये अन्त्रवृद्धेर्निवृत्तये 'वङ्क्षणस्थायां' इति वाक्यशेषः, सिरां विध्येत् ॥ १८–२४ ॥

**उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः ॥**
**सिरां विध्येन्मेढ्रमध्ये पातयेद्वा जलौकसः ॥ २५ ॥**
**हरेदुभयतश्चापि दोषानत्यर्थमुच्छ्रितान् ॥**
**सद्योऽपहृतदोषस्य रुक्शोफावुपशाम्यतः ॥ २६ ॥**
**यदि वा दुर्बलो जन्तुर्न वा प्राप्तं विरेचनम् ॥**
**निरूहेण हरेत्तस्य दोषानत्यर्थमुच्छ्रितान् ॥ २७ ॥**

उपदंशेष्वित्यादि । तत्र सिरां विध्येद्बहुदोषे, अल्पदोषे तु जलौकापातः; पित्तरक्तजयोर्मृदुत्वाज्जलौकसेत्यन्ये; जेज्जटस्तु अनवगाढे जलौकसा, अवगाढे सिराव्यध इति । हरेदित्यादि । बलवतो विरेच्यस्य वमनविरेचनाभ्यां दोषहरणम् । यदि वेत्यादि । दुर्बलाविरेच्ययोः पुनरत्यर्थोच्छ्रितदोषयोर्दोषहरणानुकूल्येन निरूहेण हरणम् । न वा प्राप्तं न युक्तमित्यर्थः ॥ २५–२७ ॥

**प्रपौण्डरीकयष्ट्याह्ववर्षाभूकुष्ठदारुभिः ॥**
**सरलागुरुरास्नाभिर्वातजं संप्रलेपयेत् ॥ २८ ॥**
**निचुलैरण्डबीजानि यवगोधूमसक्तवः ॥**
**एतैश्च वातजं स्निग्धैः सुखोष्णैः संप्रलेपयेत् ॥२९॥**
**प्रपौण्डरीकपूर्वैश्च द्रव्यैः सेकः प्रशस्यते ॥**

प्रपौण्डरीकेत्यादि । सरला त्रिवृत् । निचुलेत्यादि । निचुलो वेतसः । प्रपौण्डरीकपूर्वैः प्रपौण्डरीकादिभिः, पूर्वोक्तैर्वातोपदंशोक्तैः । सेकः परिषेकः ॥ २८ ॥ २९ ॥—

**गैरिकाञ्जनयष्ट्याह्वसारिवोशीरपद्मकैः ॥ ३० ॥**
**सचन्दनोत्पलैः स्निग्धैः पैत्तिकं संप्रलेपयेत् ॥**
**पद्मोत्पलमृणालैश्च ससर्जार्जुनवेतसैः ॥ ३१ ॥**
**सर्पिःस्निग्धैः समधुकैः पैत्तिकं संप्रलेपयेत् ॥**
**सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः ॥ ३२ ॥**
**अथवाऽपि सुशीतेन कषायेण वटादिना ॥**

गैरिकेत्यादि । अञ्जनं रसाञ्जनम् । मृणालं पद्मनालम् । सेचयेत् परिषेचयेदित्यर्थः ॥ ३०–३२ ॥—

**सालाश्वकर्णाजकर्णधवत्वग्भिः कफोत्थितम् ॥३३॥**
**सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत् ॥**
**रजन्यतिविषामुस्तासुरसासुरदारुभिः ॥ ३४ ॥**
**सपत्रपाठापत्तूरैरथवा संप्रलेपयेत् ॥**
**सुरसारग्वधाद्योश्च क्वाथाभ्यां परिषेचयेत् ॥ ३५ ॥**

शालः शङ्कुः, अश्वकर्णः पूर्वदेशप्रसिद्धोऽश्वत्थसदृशः, अजकर्णः 'पियासाल्' इति लोके । पत्तूरः सिरिवालिका ॥ ३३–३५ ॥

१ 'तत्रया वङ्क्षणस्थानं' इति पा० । २ 'वामाण्डप्रवृद्धौ' इति पा० ।

१ 'दक्षिणाण्डप्रवृद्धौ' इति पा० । २ "सरला" इति पा० ।

एवं संशोधनालेपसेकशोणितमोक्षणैः ॥
प्रतिकुर्यात् क्रियायोगैः प्राक्स्थानोक्तैर्हितैरपि ॥३६॥
न याति च यथा पाकं प्रयतेत तथा भिषक् ॥
विदग्धैस्तु सिरास्नायुत्वङ्मांसैः क्षीयते ध्वजः ॥३७॥
शस्त्रेणोपचरेच्चापि पाकमागतमाशु वै ॥
तदाऽपोह्य तिलैः सर्पिःक्षौद्रयुक्तैः प्रलेपयेत् ॥ ३८ ॥
करवीरस्य पत्राणि जात्यारग्वधयोस्तथा ॥
प्रक्षालने प्रयोज्यानि वैजयन्त्यर्कयोरपि ॥ ३९ ॥

एवं पूर्वोक्तप्रकारेण प्रतिकुर्यात्, 'आमोपदंशम्' इति शेषः । प्राक्स्थानं सूत्रस्थानं, तत्र मिश्रकोक्तैः; अपिशब्दाद् द्विव्रणीयोक्तैः । 'तस्मात् संशोधनालेपसेकशोणितमोक्षणैः । प्रतिकुर्यात् क्रियायोगैः प्राक्स्थानोक्तैर्हितैरपि' इति केचित् पठन्ति । तदाऽपोह्य पूयमुपहृत्य । प्रक्षालने व्रणस्य करवीरपत्राणि, तेषां कषाय इत्यर्थः; तथैवापरयोर्वैजयन्त्यर्कयोः पत्राणां कषायः; वैजयन्ती अग्निमन्थवृक्षः ॥ ३६-३९ ॥

सौराष्ट्रीं गैरिकं तुत्थं पुष्पकासीससैन्धवम् ॥
रोध्रं रसाञ्जनं दार्वीं हरितालं मनःशिलाम् ॥ ४० ॥
हरेणुकैले च तथा सूक्ष्मचूर्णानि कारयेत् ॥
तच्चूर्णं क्षौद्रसंयुक्तमुपदंशेषु पूजितम् ॥ ४१ ॥

सौराष्ट्री तुवरमृत्तिका । पुष्पं पुष्पाञ्जनम् ॥ ४० ॥ ४१ ॥

जम्ब्वाम्रसुमनानिम्बश्वेतकाम्बोजिपल्लवाः ॥
शल्लकीबदरीबिल्वपलाशतिनिशत्वचः ॥ ४२ ॥
क्षीरिणां च त्वचो योज्याः क्वाथे त्रिफलया सह ॥
तेन क्वाथेन नियतं व्रणं प्रक्षालयेद्भिषक् ॥ ४३ ॥
अस्मिन्नेव कषाये तु तैलं धीरो विपाचयेत् ॥
गोजीविडङ्गयष्टीभिः सर्वगन्धैश्च संयुतम् ॥ ४४ ॥
एतत् सर्वोपदंशेषु श्रेष्ठं रोपणमिष्यते ॥

जम्ब्वाम्रेत्यादि । श्वेतः श्वेतस्यन्दः; काम्बोजिका कूविका, **गयी** तु माषपर्णीमाह । तिनिशः स्यन्दनः । क्षीरिणो वटादयः । अस्मिन्नित्यादि । गोजी गोजिह्वा । सर्वगन्धैरेलादिपरिपठितैः । सामान्यकषायपाककल्पितेन चतुर्गुणेन कषायेण सिद्धं तिलतैलमकल्कमेव, कषायोपादानात्, कल्कमप्यनन्तरोक्तौषधगणात् कर्तव्यमित्यन्ये, कषायशब्दस्य कल्केऽपि वृत्तेः ॥४२-४४॥—

स्वर्जिकातुत्थकासीसं शैलेयं च रसाञ्जनम् ॥ ४५ ॥
मनःशिलासमैश्चूर्णं व्रणवीसर्पनाशनम् ॥
शुम्भ्रां दग्ध्वा कृतं भस्म हरितालं मनःशिला ॥ ४६ ॥
उपदंशविसर्पाणामेतच्छान्तिकरं परम् ॥
मार्कवस्त्रिफला दन्ती ताम्रचूर्णमयोरजः ॥ ४७ ॥
उपदंशं निहन्त्येष वृक्षमिन्द्राशनिर्यथा ॥

मार्कवो भृङ्गराजः ॥ ४५-४७ ॥—

१ 'वातोपदंशं' इति पा० । २ 'अरणिका' इति पा० ।

उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत् क्रियाम् ॥४८॥
तयोरेव च या योग्या वीक्ष्य दोषबलाबलम् ॥

उपदंशयोर्द्वयोरपि रक्तसंनिपातजयोस्तुल्यकारणत्वात्तुल्यैव चिकित्सा । सन्निपातप्रभवे तु वातादिचिकित्सितमेकीकृत्य दद्यात् ॥ ४८ ॥—

उपदंशे विशेषेण शृणु भूयस्त्रिदोषजे ॥ ४९ ॥
दुष्टव्रणविधिं कुर्यात् कुथितं मेहनं त्यजेत् ॥
जम्ब्वोष्ठेनाग्निवर्णेन पश्चाच्छेषं दहेद्भिषक् ॥ ५० ॥
सम्यग्दग्धं च विज्ञाय मधुसर्पिः प्रयोजयेत् ॥
शुद्धे च रोपणं दद्यात् कल्कं तैलं हितं च यत् ५१

उपदंशे इत्यादि । कुथितं मेहनं त्यजेदिति यावन्मात्रं मेहनं कुथितं भवेत्तावन्मात्रं छिन्द्यादित्यर्थः । जम्ब्वौष्ठः जम्बूफलसदृशमुखाग्रा कृष्णपाषाणरचिता वर्तिः ॥ ४९-५१ ॥

स्नेहस्वेदोपपन्ने तु श्लीपदेऽनिलजे भिषक् ॥
कृत्वा गुल्फोपरि सिरां विध्येत्तु चतुरङ्गुले ॥ ५२ ॥
समाप्यायितदेहं च बस्तिभिः समुपाचरेत् ॥
मासमेरण्डजं तैलं पिबेन्मूत्रेण संयुतम् ॥ ५३ ॥
पयसौदनमश्नीयान्नागरक्वथितेन च ॥
त्रैवृतं चोपयुञ्जीत शस्तो दाहस्तथाऽग्निना ॥ ५४ ॥

स्नेहेत्यादि । स्नेहोऽत्र शोधनार्थ एव, श्लीपदानां रूक्षणीयत्वात्, **गयी** तु स्नेहस्वेदोपनाहांश्चेति पठति । समाप्यायितदेहमिति रक्तापकर्षेण स्थापनाद्देहस्यानुक्रमादाप्यायितस्य । बस्तिरत्र निरूहोऽभिप्रेतः । मासमित्यादि शुण्ठीकर्षपक्वेनाष्टगुणितेन तच्चतुर्गुणावशिष्टेन पयसा भोजनं कुर्यात् । त्रैवृतमित्यादि त्रैवृतमुत्पादितं वातव्याधौ, तच्चोपयुञ्जीत स्नेहप्रयोगकाले ॥५२-५४॥

गुल्फस्याधः सिरां विध्येच्छ्लीपदे पित्तसंभवे ॥
पित्तघ्नीं च क्रियां कुर्यात् पित्तार्बुदविसर्पवत् ॥५५॥

गुल्फस्येत्यादि । पित्तजे श्लीपदे सिरां विध्येत्, गुल्फस्योपरि चतुरङ्गुलम्; अन्ये तु गुल्फस्याध इति सिराव्यध एव संबध्नन्ति ॥ ५५ ॥

सिरां सुविदितां विध्येदङ्गुष्ठे श्लैष्मिके भिषक् ॥
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबेन्नरः ॥ ५६ ॥
पिबेद्वाऽप्यभयाकल्कं मूत्रेणान्यतमेन च ॥
कटुकाममृतां शुण्ठीं विडङ्गं दारु चित्रकम् ॥ ५७ ॥
हितं वा लेपने नित्यं भद्रदारु सचित्रकम् ॥
विडङ्गमरिचार्केषु नागरे चित्रकेऽथवा ॥ ५८ ॥
भद्रदार्वेलुकाख्ये च सर्वेषु लवणेषु च ॥
तैलं पक्वं पिबेद्वाऽपि यवान्नं च हितं सदा ॥ ५९ ॥
पिबेत् सर्षपतैलं वा श्लीपदानां निवृत्तये ॥
पूतीकरञ्जपत्राणां रसं वाऽपि यथाबलम् ॥ ६० ॥
अनेनैव विधानेन पुत्रञ्जीवकजं रसम् ॥
प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागवित् ६१

**केबुकाकन्दनिर्यासं लवणं त्वथ पाकिमम् ॥**
**रसं दत्त्वाऽथ पूर्वोक्तं पेयमेतद्भिषग्जितम् ॥ ६२ ॥**

सिरामित्यादि । सिरां सुविदितामिति क्षिप्रमर्मण उपरि चतुरङ्गुले । मध्वित्यादि । अभीक्ष्णं पुनः पुनरित्यर्थः । पिबेदित्यादि । अत्र मूत्रेणान्यतमेन चेति अष्टमूत्रेष्वेकेनापि हरीतकीं सेवेत । कटुकामित्यादि । अन्यतमेन मूत्रेण पिबेदित्यत्रापि संबध्यते । हितमित्यादि । एलुकाख्यम् एलवालुकम् । पिबेदित्यादि । कण्टकिकरञ्जपत्रस्वरसं यथाबलं अनलपुरुषादिबलानतिक्रमेण पलमर्धपलं पलद्वयं वा कटुतैलाक्षप्रक्षेपं पिबेत्; कण्टकिकरञ्जः पूतीकरञ्जः, चिरबिल्व इत्यन्ये । अनेनैवेत्यादि । पुत्रञ्जीवकोऽनेनैव नाम्ना प्रसिद्धः । केबुकेत्यादि । पाकिमं लवणं विडलवणम् । भिषग्जितम् औषधम् ॥ ५६–६२ ॥

**काकादनीं काकजङ्घां बृहतीं कण्टकारिकाम् ॥**
**कदम्बपुष्पीं मन्दारीं लम्बां शुकनसां तथा ॥ ६३ ॥**
**दग्ध्वा मूत्रेण तद्भस्म स्रावयेत् क्षारकल्पवत् ॥**
**तत्र दद्यात् प्रतीवापं काकोदुम्बरिकारसम्[1] ॥ ६४ ॥**
**मदनाच्च फलात् क्वाथं शुकाख्यस्वरसं तथा ॥**
**एष क्षारस्तु पानीयः श्लीपदं हन्ति सेवितः ॥ ६५ ॥**
**अपचीं गलगण्डं च ग्रहणीदोषमेव च ॥**
**भक्तस्यानशनं चैव हन्यात् सर्वविषाणि च ॥ ६६ ॥**

काकादनीमित्यादि । काकादनी कालाहिंसेत्यर्थः । काकजङ्घा एतन्नाम्ना प्रसिद्धैव । कदम्बपुष्पी अलम्बुषा मुण्डतिकेति लोके प्रसिद्धा । मन्दारी आली, लम्बा कटुकालाबुः । शुकनसा चर्मकारवटः । दग्ध्वा क्षारं षड्गुणेन मूत्रेणैकविंशतिवारान् स्रावयेत्, काकोदुम्बरिकारसं मदनफलक्वाथं शुकनसास्वरसं च प्रत्येकं गोमूत्रेण समं, पादिकमपरेषां मतेन प्रक्षिप्य, क्षारपाककल्पक्रमेण विपक्वः सिद्धः, श्लीपदहरद्रवेण शाणादिमात्रया पानार्हः ॥ ६३–६६ ॥

**एष्वेव तैलं संसिद्धं नस्याभ्यङ्गेषु पूजितम् ॥**
**एतानेवामयान् हन्ति ये च दुष्टव्रणा नृणाम् ॥ ६७ ॥**

काकादन्यादीनां क्वाथेन तथा काकोदुम्बरिकारसमदनफलक्वाथशुकनासास्वरसेषु प्रत्येकं समेषु तैलं साध्यम् ॥ ६७ ॥

**द्रवन्तीं त्रिवृतां दन्तीं नीलीं श्यामां तथैव च ॥**
**सप्तलां शङ्खिनीं चैव दग्ध्वा मूत्रेण गालयेत् ॥ ६८ ॥**
**दद्याच्च त्रिफलाक्वाथमेष क्षारस्तु साधितः ।**
**अधो गच्छति पीतस्तु पूर्वैश्चाप्याशिषः समाः ॥ ६९ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने वृद्ध्युपदंशश्लीपदचिकित्सितं नामैकोनविंशोऽध्यायः ॥ १९ ॥**

[1] 'गोष्ठोदुम्बरिकारसं' इति पा० ।

द्रवन्तीमित्यादि । द्रवन्ती शम्बरी । त्रिवृता त्रिवृत् । दन्ती दन्तिनी । नीली शारदं फलं, श्रीफलिकेति लोके । श्यामा वृद्धदारुकः । शङ्खिनी यवतिक्ताभेदः । पूर्वैश्चाप्याशिषः समा इति पूर्वैः पूर्वक्षारयोगैः सह समास्तुल्या भवन्ति, आशिष आशंसनानि अर्थवादाः । इदमुक्तं भवति—ये केचिद्गुणाः पूर्वक्षारेष्वभिहितास्तेऽत्रापि तुल्या ज्ञेया इत्यर्थः ॥ ६८ ॥ ६९ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने एकोनविंशोऽध्यायः ॥

## विंशतितमोऽध्यायः ।

**अथातः क्षुद्ररोगचिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**
**तत्राजगल्लिकामामां जलौकोभिरुपाचरेत् ॥**
**शुक्तिशृङ्गीयवक्षारकल्कैश्चालेपयेद्भिषक् ॥ ३ ॥**
**श्यामालाङ्गलकिपाठाकल्कैर्वाऽपि विचक्षणः ॥**
**पक्वां[1] व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥ ४ ॥**

तत्रेत्यादि । शुक्तिः जलशुक्तिः । शृङ्गी खर्जिका । यवः प्रसिद्धः । क्षारशब्दः प्रत्येकं संबध्यते । गयी तु अजगल्लिकामपक्वां यवक्षारशुक्तिसौराष्ट्रीकल्केनालेपयेत्, ततो जलौकोभिः स्रावयेत्, आलेपश्चाद्य उपक्रमः सर्वशोफानामित्युक्तेः ॥ १–४ ॥

**अन्धालजीं यवप्रख्यां पनसीं कच्छपीं तथा ॥**
**पाषाणगर्दभं चैव पूर्वं स्वेदेन योजयेत् ॥ ५ ॥**
**मनःशिलातालकुष्ठदारुकल्कैः प्रलेपयेत् ॥**
**परिपाकगतान् भित्त्वा व्रणवत् समुपाचरेत् ॥ ६ ॥**

अन्धेत्यादि ॥ ५ ॥ ६ ॥

**विवृतामिन्द्रवृद्धां च गर्दभीं जालगर्दभम् ॥**
**इरिवेल्लीं गन्धनाम्नीं कक्षां विस्फोटकांस्तथा ॥ ७ ॥**
**पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक् ॥**
**रोपयेत् सर्पिषा पक्वान् सिद्धेन मधुरौषधैः ॥ ८ ॥**

मधुरौषधानि काकोल्यादीनि ॥ ७ ॥ ८ ॥

**चिप्य(प्प)मुष्णाम्बुना सिक्तमुत्कृत्य स्रावयेद्भिषक् ॥**
**चक्रतैलेन चाभ्यज्य सर्जचूर्णेन चूर्णयेत् ॥ ९ ॥**
**बन्धेनोपचरेच्चैनमशक्यं चाग्निना दहेत् ॥**
**मधुरौषधसिद्धेन ततस्तैलेन रोपयेत् ॥ १० ॥**
**कुनखे विधिरप्येष कार्यो हि भिषजा भवेत् ॥**
**उपाचरेदनुशयीं श्लेष्मविद्रधिवद्भिषक् ॥ ११ ॥**

चिप्पमित्यादि । उत्कृत्य दुष्टमांसं पक्वम् । चक्रतैलं चक्रपीडितं, इत्यादिपीडितव्युदासार्थं चक्रग्रहणम् । "चिप्पं शोणितसेकेन शोधनैश्चाप्युपाचरेत् । गतोष्माणं तथा चैनमुष्णाम्बु-

[1] 'अपक्वां स्रावयेत्' इति पा० ।

परिषेचितम् ॥ शस्त्रेण तु यथायोगमुत्कृत्य स्रावयेद्व्रणम् । शिला तेजोवती चैव रोचना च रसाञ्जनम् ॥ कल्कैरेतैश्च संपिष्टैः शोधयित्वा व्रणं ततः । हरिद्रागुरुकालीयकल्कैश्च सरसाञ्जनैः ॥ सिद्धेन तिलतैलेन तत्र कुर्वीत रोपणम्"—इति क्वचित् पाठः। एष विधिः चिप्पक्रमः ॥ ९—११ ॥

**विदारिकां समभ्यज्य स्विन्नां विम्लाप्य लेपयेत् ॥**
**नगवृत्तिकवर्षाभूबिल्वमूलैः सुपेषितैः ॥ १२ ॥**
**व्रणभावगतायां वा कृत्वा संशोधनक्रियाम् ॥**
**रोपणार्थं हितं तैलं कषायमधुरैः शृतम् ॥ १३ ॥**
**प्रच्छानैर्वा जलौकोभिः स्राव्याऽपक्वा विदारिका ॥**
**अजकर्णैः सपालाशमूलकल्कैः प्रलेपयेत् ॥ १४ ॥**
**पक्वां विदार्य शस्त्रेण पटोलपिचुमर्दयोः ॥**
**कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत् ॥ १५ ॥**
**बद्ध्वा च क्षीरवृक्षस्य कषायैः खदिरस्य च ॥**
**व्रणं प्रक्षालयेच्छुद्धं ततस्तं रोपयेत् पुनः ॥ १६ ॥**

विदारिकामित्यादि । विम्लाप्येति अङ्गुष्ठादिभिः । नगवृत्तिकः जिङ्गिनी गुडमजनिकेति लोके, वृश्चिकालीत्यन्ये । व्रणभावेत्यादि । कषायैः न्यग्रोधादिपठितैः, मधुरैः काकोल्यादिभिः । अजकर्णः सर्जः । पालाशः शटी । पक्वामित्यादि । पिचुमर्दो निम्बः । क्षीरवृक्षा वटोदुम्बरप्लक्षपिप्पलगर्दभाण्डाः ॥ १२-१६ ॥

**मेदोऽर्बुदविधानेन साधयेच्छर्करार्बुदम् ॥**
**कच्छूं विचर्चिकां पामां कुष्ठवत् समुपाचरेत् ॥१७॥**
**लेपश्च शस्यते सिक्थशताह्वागौरसर्षपैः ॥**
**वचादार्वीसर्षपैर्वा तैलं वा नक्तमालजम् ॥ १८ ॥**
**सारतैलमथाभ्यङ्गे कुर्वीत कटुकैः शृतम् ॥**

मेदोऽर्बुदेत्यादि । नक्तमालजतैलेनापक्वेनैव, 'कटुकौषधसिद्धेन' इत्यन्ये । सारतैलेन शिंशपागुरुसरलदेवदार्वादितैलेन । कटुकौषधानि पिप्पल्यादीनि । 'सारतैलमथाभ्यङ्गे' इत्यत्र 'सारलं तैलमभ्यङ्गे' इति केचित् पठन्ति; तत्र सरलसारस्नेहः सामान्यस्नेहपरिभाषया पक्तव्यः ॥ १७ ॥ १८ ॥—

**पाददार्यां सिरां विद्ध्वा स्वेदाभ्यङ्गौ प्रयोजयेत् ॥१९॥**
**मधूच्छिष्टवसामज्जसर्जचूर्णघृतैः कृतः ॥**
**यवाह्वगैरिकोन्मिश्रैः पादलेपः प्रशस्यते ॥ २० ॥**

पादेत्यादि । पूर्वमादौ स्नेहस्वेदौ कृत्वा पश्चात् सिरां विध्येत् । यवाह्वो यवक्षारः ॥ १९ ॥ २० ॥

**पादौ सिक्त्वाऽऽरनालेन लेपनं ह्यलसे हितम् ॥**
**कल्कीकृतैर्निम्बतिलकासीसालैः ससैन्धवैः ॥ २१ ॥**
**लाक्षारसोऽभया वाऽपि कार्यं स्याद्रक्तमोक्षणम् ॥**
**सिद्धं रसे कण्टकार्यास्तैलं वा सार्षपं हितम् ॥ २२ ॥**
**कासीसरोचनशिलाचूर्णैर्वा प्रतिसारणम् ॥**

पादावित्यादि । शिला मनःशिला । प्रतिसारणं घर्षणम् ॥ २१-२२ ॥—

**उत्कृत्य दग्ध्वा स्नेहेन जयेत् कदरसंज्ञकम् ॥ २३ ॥**

उत्कृत्येत्यादि । कदरं तु शस्त्रेणोत्कृत्य अग्नितप्तेन तैलेनैव दहेत्, सूक्ष्ममार्गानुसारित्वात्तैलस्य; अन्ये तु वह्निसंतप्ताः सर्वेऽपि स्नेहाः सूक्ष्ममार्गानुसारिणो भवन्ति, अतः सर्वेऽपि स्नेहा ग्राह्याः ॥ २३ ॥

**इन्द्रलुप्ते सिरां मूर्ध्नि स्निग्धस्विन्नस्य मोक्षयेत् ॥**
**कल्कैः समरिचैर्दिह्याच्छिलाकासीसतुत्थकैः ॥ २४ ॥**
**कुटन्नटदारुकल्कैर्लेपनं वा प्रशस्यते ॥**
**प्रच्छयित्वाऽवगाढं वा गुञ्जाकल्कैर्मुहुर्मुहुः ॥ २५ ॥**
**लेपयेदुपशान्त्यर्थं कुर्याद्वाऽपि रसायनम् ॥**
**मालतीकरवीराग्निनक्तमालविपाचितम् ॥ २६ ॥**
**तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ।**

इन्द्रलुप्त इत्यादि । कुटन्नटेत्यादि कुटन्नटः तगरः । रसायनविधानोपदेशं कुर्वन्नेतज्ज्ञापयति—दुःसाध्योऽयं व्याधिर्न शक्यते रसायनमन्तरेणापनेतुं; रसायनमष्टादश दिव्यौषधयः सोमश्चौषधराजा । मालतीत्यादि स्नेहपाककल्पपरिभाषया जात्यादिकल्कसिद्धेन कटुतैलेन गोमूत्रचतुर्गुणेन शिरोऽभ्यञ्ज्यात् ॥ २४-२६ ॥—

**अरूंषिकां हृते रक्ते सेचयेन्निम्बवारिणा ॥ २७ ॥**
**दिह्यात् सैन्धवयुक्तेन वाजिविष्ठारसेन तु ॥**
**हरितालनिशानिम्बकल्कैर्वा सपटोलजैः ॥ २८ ॥**
**यष्टीनीलोत्पलैरण्डमार्कवैर्वा प्रलेपयेत् ॥**
**इन्द्रलुप्तापहं तैलमभ्यङ्गे च प्रशस्यते ॥**

अरूंषिकामित्यादि । अरूंषिकां तु पुनर्जलौकोभिः रक्तमवसिच्य निम्बक्वाथेन परितः सिक्त्वा, अश्वपुरीषरसेन बहुसैन्धवचूर्णेन लेपयेत् । मार्कवो भृङ्गराजः । हरितालादिभिर्वा मधुकादिभिर्वा लेपयेत् । इन्द्रलुप्तोक्तस्य जात्यादितैलस्याभ्यञ्जकरणमरूंषिकायाः शोधनरोपणम् ॥ २७ ॥ २८ ॥—

**सिरां दारुणके विद्ध्वा स्निग्धस्विन्नस्य मूर्धनि ॥ २९ ॥**
**अवपीडं शिरोबस्तिमभ्यङ्गं च प्रयोजयेत् ॥**
**क्षालने कोद्रवतृणक्षारतोयं प्रशस्यते ॥ ३० ॥**

सिरामित्यादि । अवपीड्य नस्ये दीयत इत्यवपीडः ॥ २९ ॥ ३० ॥

**उपरिष्टात् प्रवक्ष्यामि विधिं पलितनाशनम् ॥**

पलितचिकित्सितमाह—उपरिष्टादित्यादि । उपरिष्टान्मिश्रकोक्ते चिकित्सिते ॥—

**मसूरिकायां कुष्ठघ्नलेपनादिक्रिया हिता ॥ ३१ ॥**
**पित्तश्लेष्मविसर्पोक्ता क्रिया वा संप्रशस्यते ॥**

---

१ 'कल्कैरेतैरम्लपिष्टैः' इति पा० । २ 'संशोधनीं क्रियाम्' इति पा० ।

१ 'उद्धृत्य' इति पा० ।

मसूरिकायामित्यादि । आदिशब्देनोद्वर्तनघृतादि ॥ ३१ ॥—

**जतुमणिं समुत्कृत्य मषकं तिलकालकम् ॥ ३२ ॥**
**क्षारेण प्रदहेद्युक्त्या वह्निना वा शनैः शनैः ॥**

जतुमणिमित्यादि । क्षारेण क्षारविषयेषु, अग्निना अक्षारकृत्येषु ॥ ३२ ॥—

**न्यच्छे व्यङ्गे सिरामोक्षो नीलिकायां च शस्यते ॥३३॥**
**यथान्यायं यथाभ्यासं ललाटाद्यादिसिराव्यधः ॥**
**घृष्ट्वा दिह्यात्त्वचं पिष्ट्वा क्षीरिणां क्षीरसंयुताम् ॥३४॥**
**बलातिबलयष्ट्याह्वरजनीर्वा प्रलेपनम् ॥**
**पयस्यागुरुकालीयलेपनं वा सगैरिकम् ॥ ३५ ॥**
**क्षौद्राज्ययुक्तया लिम्पेद्दंष्ट्रया शूकरस्य च ॥**
**कपित्थराजादनयोः कल्कं वा हितमुच्यते ॥ ३६ ॥**

न्यच्छे इत्यादि । घृष्ट्वा समुद्रफेनादिना । क्षीरिणो वटादयो वृक्षाः पञ्च, तेषां त्वचं पिष्ट्वा । पयस्या अर्कपुष्पी । कालीयं कृष्णचन्दनम् ॥ ३३–३६ ॥

**यौवने पिडकास्वेष विशेषाच्छर्दनं हितम् ॥**
**लेपनं च वचारोध्रसैन्धवैः सर्षपान्वितैः ॥ ३७ ॥**
**कुस्तुम्बुरुवचालोध्रकुष्ठैर्वा लेपनं हितम् ॥**

यौवने इत्यादि । एष अनन्तरोक्तः ॥ ३७ ॥—

**पद्मिनीकण्टके रोगे छर्दयेन्निम्बवारिणा ॥ ३८ ॥**
**तेनैव सिद्धं सक्षौद्रं सर्पिःपानं प्रदापयेत् ॥**
**निम्बारग्वधयोः कल्को हित उत्सादने भवेत् ॥ ३९ ॥**

पद्मिनीत्यादि । निम्बारग्वधयोः कल्कः कषाय उत्सादने उद्वर्तने हितो भवेदित्यर्थः । कल्के कषायशब्दो वर्तते, "पञ्चविधं कषायकल्पनम्" (च. सू. अ. ४) इति वचनात् ॥३८॥३९॥

**परिवृत्तिं घृताभ्यक्तां सुस्विन्नामुपनाहयेत् ॥**
**ततोऽभ्यज्य शनैश्चर्म चानयेत् पीडयेन्मणिम् ॥४०॥**
**प्रविष्टे च मणौ चर्म स्वेदयेदुपनाहनैः ।**
**त्रिरात्रं पञ्चरात्रं वा वातघ्नैः साल्वणादिभिः ॥ ४१ ॥**
**दद्याद्वातहरान् वस्तीन् स्निग्धान्यन्नानि भोजयेत् ॥**
**अपाटिकां जयेदेवं यथादोषं चिकित्सकः ॥ ४२ ॥**

परिवृत्तिमित्यादि । उपनाहयेत् बध्नीयात् । अभ्यज्य सर्पिषा । हीनमध्यमोत्तमदोषबलापेक्षया एकरात्रत्रिपञ्चरात्रविकल्पः ॥ ४०–४२ ॥

**निरुद्धप्रकशे नाडीं लौहीमुभयतोमुखीम् ॥**
**दार्वीं वा जतुकृतां घृताभ्यक्तां प्रवेशयेत् ॥ ४३ ॥**
**परिषेके वसामज्जशिशुमारवराहयोः ॥**
**चक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम् ॥ ४४ ॥**
**त्र्यहात्त्र्यहात् स्थूलतरां सम्यङ्नाडीं प्रवेशयेत् ॥**
**स्रोतो विवर्धयेदेवं स्निग्धमन्नं च भोजयेत् ॥ ४५ ॥**

**भित्त्वा वा सेवनीं मुक्त्वा सद्यःक्षतवदाचरेत् ॥**
**सन्निरुद्धगुदं रोगं वल्मीकं वह्निरोहिणीम् ॥ ४६ ॥**
**प्रत्याख्याय यथायोगं चिकित्सितमथाचरेत् ॥**
**विसर्पोक्तेन विधिना साधयेदग्निरोहिणीम् ॥ ४७ ॥**
**सन्निरुद्धगुदे योज्या निरुद्धप्रकशक्रिया ॥**

निरुद्धेत्यादि । दार्वीं काष्ठमयीम् । जतुकृतां लाक्षामयीम् । शिशुमारः पादी जलचरः स्वनामख्यातः । चक्रतैलं यन्त्रपीडितं तैलं; सेवनीं भित्त्वा मुक्त्वा वा शस्त्रेण मूत्रस्रोतःसङ्कोचकारणं चर्मावदारयेत्; तस्यापि द्वारस्याविपाके मणिद्वारमथैवं दारयेत् ॥ ४३–४७ ॥—

**शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत् ॥४८॥**
**विधानेनार्बुदोक्तेन शोधयित्वा च रोपयेत् ॥**
**वल्मीकं तु भवेद्यस्य नातिवृद्धममर्मजम् ॥ ४९ ॥**
**तत्र संशोधनं कृत्वा शोणितं मोक्षयेद्भिषक् ॥**
**कुलत्थिकाया मूलैश्च गुडूच्या लवणेन च ॥ ५० ॥**
**आरेवतस्य मूलैश्च दन्तीमूलैस्तथैव च ॥**
**श्यामामूलैः सपललैः शक्तुमिश्रैः प्रलेपयेत् ॥ ५१ ॥**
**सुस्निग्धैश्च सुखोष्णैश्च भिषक् तमुपनाहयेत् ॥**
**पक्वं वा तद्विजानीयाद्गतीः सर्वा यथाक्रमम् ॥ ५२ ॥**
**अभिज्ञाय ततश्छित्त्वा प्रदहेन्मतिमान् भिषक् ॥**
**संशोध्य दुष्टमांसानि क्षारेण प्रतिसारयेत् ॥ ५३ ॥**
**व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान् भिषक् ॥**
**सुमना ग्रन्थयश्चैव भल्लातकमनःशिले ॥ ५४ ॥**
**कालानुसारी सूक्ष्मैला चन्दनागुरुणी तथा ॥**
**एतैः सिद्धं निम्बतैलं वल्मीके रोपणं हितम् ॥ ५५ ॥**
**पाणिपादोपरिष्टात्तु छिद्रैर्बहुभिरावृतम् ॥**
**वल्मीकं यत् सशोफं स्याद्वर्ज्यं तत्तु विजानता ॥५६॥**

असाध्येष्वपि वल्मीकाग्निरोहिणीप्रभृतिषु चिकित्सितं कार्यं, "यावदुच्छ्वसिति प्राणी तावत् कार्या प्रतिक्रिया । कदाऽपि दैवयोगेन दृष्टारिष्टोऽपि जीवति" इत्युक्तत्वात् । वल्मीकमित्यादि । तत्र संशोधनं कृत्वा 'औषधेन' इति शेषः । आरेवतः किरमालकः । श्यामा त्रिवृद्विशेषः । पललं तिलपिष्टिः । उपनाहः पाचनम् । कालानुसारी कृष्णसारिवा ॥ ४८–५६ ॥

**धात्र्याः स्तन्यं शोधयित्वा बाले साध्याऽहिपूतना ॥**
**पटोलपत्रत्रिफलारसाञ्जनविपाचितम् ॥ ५७ ॥**
**पीतं घृतं नाशयति कृच्छ्रामप्यहिपूतनाम् ॥**
**त्रिफलाकोलखदिरकषायं व्रणरोपणम् ॥ ५८ ॥**
**कासीसरोचनातुत्थहरितालरसाञ्जनैः ॥**
**लेपोऽम्लपिष्टो बदरीत्वग्वा सैन्धवसंयुता ॥ ५९ ॥**
**कपालतुत्थजं चूर्णं चूर्णकाले प्रयोजयेत् ॥**
**चिकित्सेन्मुष्ककच्छूं चाप्यहिपूतनपामवत् ॥ ६० ॥**

१ 'चर्मकीलं जतुमणिं मशकं तिलकालकम् । उद्धृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥' इति पा० ।

१ 'यदा विजानीयात्' इति पा० ।

धात्र्या इत्यादि । कासीसादिभिरम्लकाञ्जिकादिपिष्टैः प्रलेपनं, बदरीत्वक्सैन्धवैर्वा प्रलेपनम् । कपालं पक्वमृद्भाण्डखण्डः । अहिपूतनोक्तश्च धात्रीशोधनवर्जं घृतपानादिः ॥ ५७-६० ॥

गुदभ्रंशे गुदं स्विन्नं स्नेहाभ्यक्तं प्रवेशयेत् ॥
कारयेद्गोफणाबन्धं मध्यच्छिद्रेण चर्मणा ॥ ६१ ॥
विनिर्गमार्थं वायोश्च स्वेदयेच्च मुहुर्मुहुः ॥
क्षीरे महत्पञ्चमूलं मूषिकां चान्त्रवर्जिताम् ॥ ६२ ॥
पक्त्वा तस्मिन् पचेत्तैलं वातघ्नौषधसंयुतम् ।
गुदभ्रंशमिदं कृच्छ्रं पानाभ्यङ्गात् प्रसाधयेत् ॥ ६३ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने क्षुद्ररोगचिकित्सितं नाम विंशोऽध्यायः ॥ २० ॥

गुदेत्यादि । मूषिकां निर्गतान्त्रां कृत्वा महत्पञ्चमूलस्य प्रस्थं क्षीरप्रस्थे त्रिगुणितजले विपचेत्, क्षीरप्रस्थेऽवशिष्टे तैलकुडवं दत्त्वा, भद्रदार्वादिकल्कपादं कृत्वा, पचेत्; तद्यथाबलं पानाभ्यङ्गाभ्यां गुदभ्रंशं साधयेत् ॥ ६१-६३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने विंशतितमोऽध्यायः ॥ २० ॥

---

## एकविंशतितमोऽध्यायः ।

अथातः शूकदोषचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

शूकादिदोषचिकित्सितमिति ज्ञेयम्, आदिशब्दस्य लुप्तत्वात्; तत्रादिशब्देन निदानोक्ता अभिघातनिमित्ता दुर्भगनिमित्ताश्चात्र ज्ञातव्याः ॥ १ ॥ २ ॥

संलिख्य सर्षपीं सम्यक् कषायैरवचूर्णयेत् ॥
कषायेष्वेव तैलं च कुर्वीत व्रणरोपणम् ॥ ३ ॥

संलिख्येत्यादि । कषायैरिति कषायवृक्षचूर्णैरवचूर्णयेत्, कषायवृक्षैर्मिश्रकोक्तशोधनकषायसाधनद्रव्यैश्चूर्णीकृतैरवचूर्णयेदित्यर्थः । तेषु रोपणकषायसाधनद्रव्येषु पादिकेषु जलं चतुर्गुणं दत्त्वा रोपणं तैलं कुर्यात् ॥ ३ ॥

अष्ठीलिकां जलौकोभिर्ग्राहयेच्च पुनः पुनः ॥
तथा चानुपशाम्यन्तीं कफग्रन्थिवदुद्धरेत् ॥ ४ ॥

अष्ठीलिकामित्यादि । कफग्रन्थेरिव शस्त्रेणोद्धरणम् ॥ ४ ॥

स्वेदयेद्ग्रथितं शश्वन्नाडीस्वेदेन बुद्धिमान् ॥
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥ ५ ॥
कुम्भीकां पाकमापन्नां भिन्द्याच्छुद्धां तु रोपयेत् ॥
तैलेन त्रिफलालोध्रतिन्दुकाम्रातकेन तु ॥ ६ ॥

स्वेदयेदित्यादि । शश्वत् प्रतिदिनम् । सुस्निग्धैरित्युपनाहविशेषणम् । तैलेन त्रिफलादिकल्कपादेन जलचतुर्गुणसिद्धेन रोपयेत् ॥ ५ ॥ ६ ॥

ग्राहयित्वा जलौकोभिरलर्जीं सेचयेत्ततः ॥
कषायैस्तेषु सिद्धं च तैलं रोपणमिष्यते ॥ ७ ॥

ग्राहयित्वेत्यादि । कषायैः कषायवृक्षकषायैः, कषायवृक्षाः प्लक्षादयः ॥ ७ ॥

बलातैलेन कोष्णेन मृदितं परिषेचयेत् ॥
मधुरैः सर्पिषा स्निग्धैः सुखोष्णैरुपनाहयेत् ॥ ८ ॥

बलेत्यादि । मधुराणि काकोल्यादीनि ॥ ८ ॥

संमूढपिडकां क्षिप्रं जलौकोभिरुपाचरेत् ॥
भित्त्वा पर्यागतां चापि लेपयेत् क्षौद्रसर्पिषा ॥ ९ ॥

संमूढेत्यादि । पर्यागता पक्वा ॥ ९ ॥

अवमन्थे गते पाकं भिन्ने तैलं विधीयते ॥
धवाश्वकर्णपत्तङ्गसल्लकीतिन्दुकीकृतम् ॥ १० ॥
क्रियां पुष्करिकायां तु शीतां सर्वां प्रयोजयेत् ॥
जलौकोभिर्हरेच्चासृक् सर्पिषा चावसेचयेत् ॥ ११ ॥
स्पर्शहान्यां हरेद्रक्तं प्रदिह्यान्मधुरैरपि ॥
क्षीरेक्षुरससर्पिर्भिः सेचयेच्च सुशीतलैः ॥ १२ ॥

अवमन्थेत्यादि । अश्वकर्णः पूर्वदेशे 'गन्धमुण्ड' इति ख्यातोऽश्वत्थसदृशः । पत्तङ्गं रक्तचन्दनम् ॥ १०-१२ ॥

पिडकामुत्तमाख्यां च बडिशेनोद्धरेद्भिषक् ॥
उद्धृत्य मधुसंयुक्तैः कषायैरवचूर्णयेत् ॥ १३ ॥

पिडकामित्यादि । कषायैः चूर्णैरित्यर्थः । शोधनकाले तु शोधनद्रव्यैश्चूर्णीकृतैरवचूर्णयेत्, रोपणकाले तु रोपणैरेव ॥ १३ ॥

रसक्रिया विधातव्या लिखिते शतपोनके ॥
पृथक्पर्ण्यादिसिद्धं च देयं तैलमनन्तरम् ॥ १४ ॥
क्रियां कुर्याद्भिषक् प्राज्ञस्त्वक्पाकस्य विसर्पवत् ॥

रसक्रियेत्यादि । रसक्रिया फाणिताकृतिः, शोधनकाले शोधनद्रव्यकषायकृता, रोपणकाले रोपणद्रव्यकषायकृता । पृथक्पर्ण्यादिसिद्धं तैलं सामान्यस्नेहपरिभाषाकल्पेन; पृथक्पर्ण्यादीनि मिश्रके रोपणघृतपठितानि काकोल्यादिवर्जितानि । विसर्पवत् पित्तविसर्पवदित्यर्थः ॥ १४ ॥—

रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे ॥ १५ ॥
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रियाम् ॥
शोधनं रोपणं चैव वीक्ष्य वीक्ष्यावचारयेत् ॥ १६ ॥
हितं च सर्पिषः पानं पथ्यं चापि विरेचनम् ॥
हितः शोणितमोक्षश्च यच्चापि लघु भोजनम् ॥ १७ ॥
अर्बुदं मांसपाकं च विद्रधिं तिलकालकम् ॥
प्रत्याख्याय प्रकुर्वीत भिषक् सम्यक् प्रतिक्रियाम् १८

इति सुश्रुतसंहितायां चिकित्सास्थाने शूकरोगचिकित्सितं नामैकविंशोऽध्यायः ॥ २१ ॥

१ 'ग्राहयेत् कुशलो भिषक्' इति पा० ।

रक्तेत्यादि । शोणितजे अर्बुदे लिङ्गजे रक्तार्बुदे । वीक्ष्य वीक्ष्येति द्विव्रणीयोक्तामवस्थां सम्यक् निरूप्येत्यर्थः । अवचारयेत् कषायादीनीत्यर्थः ॥ १५–१८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने एकविंशतितमोऽध्यायः ॥ २१ ॥

## द्वाविंशतितमोऽध्यायः ।

अथातो मुखरोगचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
चतुर्विधेन स्नेहेन मधूच्छिष्टयुतेन च ॥
वातजेऽभ्यञ्जनं कुर्यान्नाडीस्वेदं च बुद्धिमान् ॥ ३ ॥
विदध्यादोष्ठकोपे तु साल्वणं चोपनाहने ॥
मस्तिष्के चैव नस्ये च तैलं वातहरं हितम् ॥ ४ ॥
श्रीवेष्टकं सर्जरसं सुरदारु सगुग्गुलु ॥
यष्टीमधुकचूर्णं तु विदध्यात् प्रतिसारणम् ॥ ५ ॥
पित्तरक्ताभिघातोत्थं जलौकोभिरुपाचरेत् ॥
पित्तविद्रधिवच्चापि क्रियां कुर्यादशेषतः ॥ ६ ॥
शिरोविरेचनं धूमः स्वेदः कवल एव च ॥
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥ ७ ॥
त्र्यूषणं स्वर्जिकाक्षारो यवक्षारो विडं तथा ॥
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥ ८ ॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ॥
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ॥ ९ ॥
एतदोष्ठप्रकोपानां साध्यानां कर्म कीर्तितम् ॥

चतुर्विधेन चतुष्प्रकारेण । स्नेहेन दोषाद्यपेक्षया समस्तव्यस्तेन स्नेहपाकपरिभाषया वातहरकषायमधूच्छिष्टकल्कयुतेनाभ्यङ्गः । ततः स्निग्धं नाडीस्वेदेन यथोक्तेन स्वेदयेत् । मस्तिष्कः शिरोबस्तिप्रकारः; बध्यत ऊर्ध्वं शिरोबस्तिः, अनवबद्धो मस्तिष्क इति । अन्ये तु पठन्ति 'मस्तिष्क्ये चैव नस्ये च' इत्यादि; अत्र मस्तिष्क्यं मस्तिष्के हितमभ्यङ्गतैलपिचुधारणशिरोबस्त्यादि । श्रीवेष्टकः सरलनिर्यासः । प्रतिसारणं घर्षणम् । क्रियां कुर्यादशेषत इति संशोधनसंशमनरूपां बाह्यामाभ्यन्तरीं च । मेदोजे पुनरस्नेहपूर्वं स्वेदिते भित्त्वा मेदसोऽपकर्षणं, शोधिते चाग्नेरवचारणं पथ्यम् ॥ १–९ ॥—

दन्तमूलगतानां तु रोगाणां कर्म वक्ष्यते ॥ १० ॥
शीतादे हृतरक्ते तु तोये नागरसर्षपान् ॥
निष्क्वाथ्य त्रिफलां मुस्तं गण्डूषः सरसाञ्जनः ॥११॥
प्रियङ्गवश्च मुस्तं च त्रिफला च प्रलेपनम् ॥
नस्यं च त्रिफलासिद्धं मधुकोत्पलपद्मकैः ॥ १२ ॥
दन्तपुप्पुटके कार्यं तरुणे रक्तमोक्षणम् ॥
सपञ्चलवणः क्षारः सक्षौद्रः प्रतिसारणम् ॥ १३ ॥
हितः शिरोविरेकश्च नस्यं स्निग्धं च भोजनम् ॥

दन्तेत्यादि । नस्यमित्यादि । शोणितावसेकशोधनगण्डूषकुपितवातानुबन्धे स्नेहनं नस्यम् । तत्र कफानुगते मधुकादिभिः सह त्रिफलासिद्धं तैलं नस्ये प्रयोज्यं, शोणितानुगमे च त्रिफलादिसंसिद्धं घृतमिति । तरुणे तत्कालोत्पन्ने । नस्यमिति 'शीतादोक्तस्नेहेन' इति शेषः, दोषदूष्यस्थानानामैक्यात् ॥ १०–१३ ॥—

विस्राविते दन्तवेष्टे व्रणांस्तु प्रतिसारयेत् ॥ १४ ॥
रोध्रपत्तङ्गयष्ट्याह्वलाक्षाचूर्णैर्मधूत्तरैः ।
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥ १५ ॥
काकोल्यादौ दशक्षीरसिद्धं सर्पिश्च नस्यतः ॥
शौषिरे हृतरक्ते तु रोध्रमुस्तरसाञ्जनैः ॥ १६ ॥
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ॥
सारिवोत्पलयष्ट्याह्वसावरागुरुचन्दनैः ॥ १७ ॥
क्षीरे दशगुणे सिद्धं सर्पिर्नस्ये च पूजितम् ॥
क्रियां परिदरे कुर्याच्छीतादोक्तां विचक्षणः ॥ १८ ॥

विस्राविते इत्यादि । पत्तङ्गं रक्तचन्दनं, मधूत्तरैः मधुप्रधानैः । क्षीरिणो वटादयः । दशक्षीरसिद्धं दशगुणेन गव्यक्षीरेण घृतं साधनीयम् ॥ १४–१८ ॥

संशोध्योभयतः कायं शिरश्चोपकुशे तथा ॥
काकोदुम्बरिकागोजीपत्रैर्विस्रावयेदसृक् ॥ १९ ॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत् ॥
पिप्पलीः सर्षपाञ् श्वेतान्नागरं नैचुलं फलम् ॥२०॥
सुखोदकेन संसृज्य कवलं चापि धारयेत् ॥
घृतं मधुरकैः सिद्धं हितं कवलनस्ययोः ॥ २१ ॥
शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत् ॥
ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ॥२२॥
उद्धृत्याधिकदन्तं तु ततोऽग्निमवचारयेत् ॥
कृमिदन्तकवच्चापि विधिः कार्यो विजानता ॥ २३ ॥

संशोध्योभयत इति वमनविरेचनाभ्यामूर्ध्वमधश्च कायं शोधयित्वा, शिरोविरेचनेन शिरश्च संशोधयेदित्यर्थः । रक्तपित्तोत्थितेऽप्युपकुशे स्थानिनः कफस्य प्रतीकारार्थं वमनं युक्तम् । काकोदुम्बरिका काष्ठोदुम्बरिका, गोजी गोजिह्वा । निचुलो वेतसः । मधुरकैः काकोल्यादिभिः ॥ १९–२३ ॥

छित्त्वाऽधिमांसं सक्षौद्रैरेभिश्चूर्णैरुपाचरेत् ॥
वचातेजोवतीपाठास्वर्जिकायावशूकजैः ॥ २४ ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्तितः ॥

१ 'कृत्वा नाडीस्वेदं' इति पा० । २ 'मस्तक्ये' इति पा० । ३ 'मस्तक्यं' इति पा० । ४ 'मस्तके' इति पा० । ५ 'साध्यानां' इति पा० ।

१ 'गैरिकोत्पलयष्ट्याह्वसारिवागुरुचन्दनैः' इति पा० । २ 'वस्त्रेण' इति पा० ।

पटोलत्रिफलानिम्बकषायश्चात्र धावने ॥
हितः शिरोविरेकश्च धूमो वैरेचनश्च यः ॥ २५ ॥

छित्त्वेत्यादि । तेजोवती काकमर्दनिका । सक्षौद्रश्च सपिप्पलीकः सुखोदके कवलः ॥ २४ ॥ २५ ॥

सामान्यं कर्म नाडीनां विशेषं चात्र मे शृणु ॥
नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत् ॥ २६ ॥
यं दन्तमभिजायेत नाडी तं दन्तमुद्धरेत् ।
छित्त्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत् ॥२७॥
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥
भिनत्त्युपेक्षिते दन्ते हनुकास्थि गतिर्ध्रुवम् ॥ २८ ॥
समूलं दशनं तस्मादुद्धरेद्भग्नमस्थिरम् ॥
उद्धृते तूत्तरे दन्ते समूले स्थिरबन्धने ॥ २९ ॥
रक्तातियोगात् पूर्वोक्ता रोगा घोरा भवन्ति हि ॥
काणः संजायते जन्तुरर्दितं चास्य जायते ॥ ३० ॥
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ॥
धावने जातिमदनस्वादुकण्टकखादिरम् ॥ ३१ ॥
कषायं जातिमदनकटुकस्वादुकण्टकैः ॥
यष्ट्याह्वरोध्रमञ्जिष्ठाखदिरैश्चापि यत् कृतम् ॥ ३२ ॥
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥
कीर्तिता दन्तमूले तु क्रिया दन्तेषु वक्ष्यते ॥ ३३ ॥

सामान्यमित्यादि । सामान्यं तुल्यम् । यदेव वातादिनाडीनां कर्मोक्तं तदेव दन्तनाडीनां सामान्यमेकमित्यर्थः । यं दन्तमभिजायेतेत्यादि यं दन्तमभि समीपे नाडी स्यात्तं दन्तमुद्धरेत् । यदि नोपरिजो भवेदिति ऊर्ध्वगतदन्तपङ्क्तिगतश्चेन्न भवति । स्थिरबन्धने दृढतरदन्तवेष्टने । 'समूले स्थिरबन्धने' इत्यत्र 'शोणितं संप्रसिच्यते' इति पठन्ति । धावने प्रक्षालने, जातिमदनकटुकस्वादुकण्टकखादिरं कषायमिति; अन्ये तु कषायमामपूगफलमिति मन्यन्ते । स्वादुकण्टको गोक्षुरः, कण्टकारिवृक्षमन्ये ॥ २६–३३ ॥

स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य वा ॥
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥ ३४ ॥
स्नैहिकश्च हितो धूमो नस्यं स्निग्धं च भोजनम् ॥
रसो रसयवाग्वश्च क्षीरं सन्तानिका घृतम् ॥ ३५ ॥
शिरोबस्तिर्हितश्चापि क्रमो यश्चानिलापहः ॥
अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक् ॥ ३६ ॥
लाक्षाचूर्णैर्मधुयुतैस्ततस्ताः प्रतिसारयेत् ॥
दन्तहर्षक्रियां चापि कुर्यान्निरवशेषतः ॥ ३७ ॥
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता ॥
जयेद्विस्रावणैः स्विन्नमचलं कृमिदन्तकम् ॥ ३८
तथाऽवपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ॥ ३९ ॥

चलमुद्धृत्य च स्थानं विदहेत् सुषिरस्य च ॥
ततो विदारीयष्ट्याह्वशृङ्गाटककसेरुकैः ॥ ४० ॥
तैलं दशगुणे क्षीरे सिद्धं नस्ये हितं भवेत् ॥

सर्पिषस्त्रैवृतस्य वेति वातव्याधिपठितस्य । निर्यूहाः क्वाथाः । रसो मांसरसः । रसयवाग्वो मांसरसयवाग्वः । क्षीरं दुग्धम् । सन्तानिका 'सर' इति भाषा, क्षीरसांनिध्यात् सन्तानिकाघृते क्षीरोत्थे एव । प्रतिसारयेत् घर्षयेदित्यर्थः । उद्धृतदशनस्य स्थानं दहेच्छुद्ध्यर्थं शोणितस्रावनिषेधार्थं च; सुषिरस्य च पूयकृतच्छिद्रस्य 'स्थानं दहेत्' इति शेषः ॥ ३४–४० ॥—

हनुमोक्षे समुद्दिष्टां कुर्याच्चार्दितवत् क्रियाम् ॥४१॥
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ॥
तथाऽतिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ४२
साध्यानां दन्तरोगाणां चिकित्सितमुदीरितम् ॥

अर्दितवत्समुद्दिष्टामिति अर्दित इव समुद्दिष्टां क्रियां कुर्यात् । समुद्दिष्टग्रहणेनैतज्ज्ञापयति—अर्दितोक्तामातिदेशिकीं "वातव्याधिविधिनोपचरेत्" ( चि. अ. ५ ) इत्येवंरूपां वैशेषिकीं वातार्दितोक्तां मस्तिष्कशिरोबस्तिनस्यधूमोपनाहादिकां द्विविधामपि क्रियां कुर्यादिति । साध्यानां दन्तरोगाणां चिकित्सितमुक्तं, श्यावदन्तदालनभञ्जनानामसाध्यत्वान्नोदाहृतम् ॥४१॥४२॥—

जिह्वागतानां साध्यानां कर्म वक्ष्यामि सिद्धये ४३
ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम् ॥
कण्टकेष्वनिलोत्थेषु तत् कार्यं भिषजा भवेत् ४४
पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते ॥
प्रतिसारणगण्डूषं नस्यं च मधुरं हितम् ॥ ४५ ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये ॥
पिप्पल्यादिर्मधुयुतः कार्यस्तु प्रतिसारणे ॥ ४६ ॥
गृह्णीयात् कवलांश्चापि गौरसर्षपसैन्धवैः ॥
पटोलनिम्बवार्ताकुक्षारयूषैश्च भोजयेत् ॥ ४७ ॥
उपजिह्वां तु संलिख्य क्षारेण प्रतिसारयेत् ॥
शिरोविरेकगण्डूषधूमैश्चैनमुपाचरेत् ॥ ४८ ॥
जिह्वागतानां कर्मोक्तं

जिह्वेत्यादि । विघृष्टेषु गोजीशेफालिकादिपत्रघृष्टेषु, प्रतिसारणं मधुरैरेव काकोल्यादिभिः; गण्डूषोऽपि तैरेव क्वथितैः; नस्यमपि दशगुणक्षीरं तत्कल्कसाधितं हितम् । लिखितेषु मण्डलाग्रादिना । असृजः क्षये असृजोऽवसाने, विरामे इत्यर्थः । क्षारो यवक्षारः, तत्प्रधानैः यूषैः क्षारयूषैः । उपजिह्वामित्यादि । गण्डूषः कफव्रणहरद्रव्येण कफकण्टकहरद्रव्येण वा । धूमैश्च वैरेचनिकधूमैः । अलसः पुनरत्र कफरक्तकृत आशुकारित्वात् प्रत्याख्यायैव विरेचनशोणितमोक्षणकवलशिरोविरेचनधूमवमनादिभिरुपचर्यः ॥ ४३–४८ ॥—

१ 'दन्तमभिजायेत' इति पा० । २ 'सद्मूले' इति पा० ।

१ 'कृमिदन्तकमित्युत्रेयम्' इति हाराणचन्द्रः । २ 'वातव्याधिप्रतिपादितस्य' इति पा० ।

तालव्यानां प्रवक्ष्यते ॥
अङ्गुष्ठाङ्गुलिसंदंशेनाकृष्य गलशुण्डिकाम् ॥ ४९ ॥
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥
नोत्कृष्टं चैव हीनं च त्रिभागं छेदयेद्भिषक् ॥ ५० ॥
अत्यादानात् स्रवेद्रक्तं तन्निमित्तं म्रियेत च ॥
हीनच्छेदाद्भवेच्छोफो लाला निद्रा भ्रमस्तमः ॥५१॥
तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः ॥
गलशुण्डीं तु सञ्छिद्य कुर्यात् प्राप्तमिमं क्रमम् ५२
मरिचातिविषापाठावचाकुष्ठकुटन्नटैः ॥
क्षौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् ॥ ५३ ॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम् ॥
निष्क्वाथ्य पिचुमन्दं च कवलं तत्र योजयेत् ॥५४॥
इङ्गुदीकिणिहीदन्तीसरलासुरदारुभिः ॥
पञ्चाङ्गीं कारयेत् पिष्टैर्वर्तिं गन्धोत्तरां शुभाम् ॥५५॥
ततो धूमं पिबेज्जन्तुर्द्विरह्नः कफनाशनम् ॥
क्षारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः ॥ ५६ ॥
तुण्डिकेर्यध्रुषे कूर्मे सङ्घाते तालुपुप्पुटे ॥
एष एव विधिः कार्यो विशेषः शस्त्रकर्मणि ॥५७॥
तालुपाके तु कर्तव्यं विधानं पित्तनाशनम् ॥
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ ५८ ॥
कीर्तितं तालुजानां तु

अङ्गुष्ठेत्यादि । छेदयेन्मण्डलाग्रेणेति भागद्वयमर्धं[1] वा परित्यज्य भागेनैकेनार्धेन वा छेदयेत् । भ्रमश्चक्रारूढस्येव भ्रमणम् । तमः अन्धकारदर्शनम् । प्राप्तं युक्तम् । कुटन्नटः श्योनाकः । किणिही कटभी, सरला त्रिवृत् । पञ्चाङ्गीमिति पञ्चभिरङ्गभूतैर्द्रव्यैः कृता पञ्चाङ्गी, ताम् । गन्धोत्तरां गन्धप्रधानाम् । द्विरह्नः अह्नि वारद्वयमिति । क्षारसिद्धेषु मुद्गेष्विति कृतो यूषो यवक्षारेण लवणीकृतो भोजने हितः पथ्यः । तुण्डिकेरीत्यादि । विशेषः शस्त्रकर्मणीति शस्त्रकर्मणि विशेषो भेदः । तत्र तुण्डिकेरी भेद्या तालुपुप्पुटकोऽपि, अध्रुषमांससङ्घातौ छेद्यौ,[2] मांसोच्छ्रायत्वाल्लेख्यः कूर्मस्ततोऽनुरूपायामवस्थायां छेद्योऽपि । तालिवत्यादि । चकारेणात्र तालुशोषे पित्तहरो विधिः समुच्चीयते, पित्तेनापि तालुशोषजननात् । कीर्तितं तालुजानामिति अत्र रक्तार्बुदस्यासाध्यत्वात् कर्म नोदाहृतम् ॥ ४९–५८ ॥—

कण्ठ्यानां कर्म वक्ष्यते ॥
साध्यानां रोहिणीनां तु हितं शोणितमोक्षणम् ५९
छर्दनं धूमपानं च गण्डूषो नस्यकर्म च ॥
वातिकीं तु हृते रक्ते लवणैः प्रतिसारयेत् ॥ ६० ॥
सुखोष्णान् स्नेहगण्डूषान् धारयेच्चाप्यभीक्ष्णशः ॥
पतङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत् ॥ ६१ ॥
द्राक्षापरूषकक्काथो हितश्च कवलग्रहे ॥
अगारधूमकटुकैः श्लैष्मिकीं प्रतिसारयेत् ॥ ६२ ॥
श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ॥
नस्यकर्मणि योक्तव्यं तथा कवलधारणे ॥ ६३ ॥
पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसंभवाम् ॥
विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत् ॥ ६४॥
एककालं यवान्नं च भुञ्जीत स्निग्धमल्पशः ॥
उपजिह्विकवच्चापि साधयेदधिजिह्विकाम् ॥ ६५ ॥
एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत् ॥
गिलायुश्चापि यो व्याधिस्तं च शस्त्रेण साधयेत् ६६
अमर्मस्थं सुपक्वं च भेदयेद्गलविद्रधिम् ॥

शोणितमोक्षणादिकर्मपञ्चकं सामान्यं साध्यानाम् । अभीक्ष्णशः वारंवारम् । पतङ्गं रक्तचन्दनम् । श्वेता श्वेतस्यन्दा । विस्राव्येत्यादि । साधयेत्तुण्डिकेरिवदिति तुण्डिकेर्यामपि गलशुण्डीविध्यतिदेशात् साधयेद्गलशुण्डीवदिति वाच्ये तुण्डिकेरीविध्यतिदेशो निःशेषच्छेदनार्थः, गलशुण्डीवदत्र त्रिभागच्छेदो न कार्य इति बोधयति, अशेषच्छेदो न पुनस्त्रिभागादिभिरिति । विस्राव्य जलौकाभिः । शिरोविरेचनधूमलेपनक्षारादिभिः शोधनम् ॥ ५९–६६ ॥—

वातात् सर्वसरं चूर्णैर्लवणैः प्रतिसारयेत् ॥ ६७ ॥
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥
ततोऽस्मै स्नैहिकं धूममिमं दद्याद्विचक्षणः ॥ ६८ ॥
शालराजादनैरण्डसारेङ्गुदमधूकजाः ॥
मज्जानो गुग्गुलुध्याममांसीकालानुसारिवाः ॥
श्रीसर्जरसशैलेयमधूच्छिष्टानि चाहरेत् ॥ ६९ ॥
तत्सर्वं सुकृतं चूर्णं स्नेहेनालोड्य युक्तितः ॥
टिण्टूकवृन्तं सक्षौद्रं मतिमांस्तेन लेपयेत् ॥ ७० ॥
एष सर्वसरे धूमः प्रशस्तः स्नैहिको मतः ॥
कफघ्नो मारुतघ्नश्च मुखरोगविनाशनः ॥ ७१ ॥
पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः ॥
सर्वः पित्तहरः कार्यो विधिर्मधुरशीतलः ॥ ७२ ॥
प्रतिसारणगण्डूषौ धूमः संशोधनानि च ॥
कफात्मके सर्वसरे विधिं कुर्यात् कफापहम् ॥७३॥
पिबेदतिविषां पाठां मुस्तं च सुरदारु च ॥
रोहिणीं कटुकाख्यां च कुटजस्य फलानि च ॥ ७४॥
गवां मूत्रेण मनुजो भागैर्धरणसंमितैः ॥
एष सर्वान् कफकृतान् रोगान् योगोऽपकर्षति ७५

मुखावयवगतान्निर्दिश्य सकलवदनगतान्निर्दिशन्नाह—वातादित्यादि । लवणैश्चूर्णैः पञ्चलवणकृतैः । तैलं वातहरैः सिद्धं हितं कवलनस्ययोः वातहरभद्रदार्वादिकल्ककषायसिद्धं तैलं कवले नस्ये च हितमित्यर्थः । शालराजादनेत्यादि शालफलादिमज्जानः; शालः शङ्कुः, राजादनः क्षीरिका, सारः सारवृक्षः खदिरादिः ।

1 'भागद्वयं सार्धं वा' इति पा० । 2 'निःशेषच्छेदेऽपि' इति पा० ।

ध्यामं गन्धतृणं, कालानुसारिवा कालवल्ली । श्रीः नवनीतखोटिः सरलनिर्यासः, सर्जरसः राला । स्नेहेनालोड्य युक्ति इति यावता स्नेहेन नातिघनत्वं नातितनुत्वं लेपयोग्यता च भवति तावती स्नेहमात्रेत्यर्थः । टिण्टुकः श्योनाकः । शुद्धकायस्य वमनादिभिः । अतिविषादिचूर्णधरणभागं प्रतिदिवसं षाण्मासिकं गोमूत्रेण पेयम् । धरणमानमपि केचित् सौश्रुतीयाः पठन्ति; "मध्यमा एकोनविंशतिर्निष्पावा धरणं तान्यर्धतृतीयानि कर्षः" ( चि. अ. ३१ ) इति ॥ ६७–७५ ॥

**क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः ॥**
**विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि ॥ ७६ ॥**

सर्वेष्वेव मुखरोगेष्वत्र दोषादिविभागेन कवलान्निर्दिशन्नाह—क्षीरेक्षुरसेत्यादि । वीक्ष्य दोषं दोषैकार्यमपि रोगमित्यर्थः ॥ ७६ ॥

**रोगाणां मुखजातानां साध्यानां कर्म कीर्तितम् ॥**
**असाध्या अपि वक्ष्यन्ते रोगा ये तत्र कीर्तिताः ७७**
**ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः ॥**
**दन्तमूलेषु वर्ज्यौ तु त्रिलिङ्गगतिसौषिरौ ॥ ७८ ॥**
**दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः ॥**
**जिह्वागतेष्वलासस्तु ताल्व्येष्वर्बुदं तथा ॥ ७९ ॥**
**स्वरघ्नो वलयो वृन्दो विदार्यलस एव च ॥**
**गलौघो मांसतानश्च शतघ्नी रोहिणी च या ॥ ८० ॥**
**असाध्याः कीर्तिता ह्येते रोगा नव दशैव च ॥**
**तेषां चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥८१॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने मुखरोगचिकित्सितं नाम द्वाविंशोऽध्यायः ॥ २२ ॥**

ओष्ठजास्त्रयः, दन्तमूलेषु द्वौ, दन्तभवेषु त्रयः, त्रिलिङ्गगतिः त्रिदोषलिङ्गाकृतिर्नाडी, जिह्वागतेष्वेकः, तालुन्यप्येक एव, स्वरघ्नादयो नव गले, समुदायसंख्या नव दशैवेति ॥ ७७–८१ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने द्वाविंशतितमोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशतितमोऽध्यायः ।

**अथातः शोफानां चिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**षड्विधोऽवयवसमुत्थः शोफोऽभिहितो लक्षणतः प्रतीकारतश्च; सर्वसरस्तु पञ्चविधः, तद्यथा—वातपित्तश्लेष्मसन्निपातविषनिमित्तः ॥ ३ ॥**

अवयवे समुत्तिष्ठतीति अवयवसमुत्थः, स्था गतिनिवृत्तौ, स्थैर्यत्वादित्यर्थः । अभिहित उक्तः । केन ? अतीतेन शास्त्रेण । चकारोऽनुक्तहेत्वादिसमुच्चयार्थः, अन्ये तु लक्षणशब्देनैव हेत्वादिं निर्दिशन्ति, अपरे तु असाध्यानामप्रतीकारसमुच्चयार्थं वर्णयन्ति । सर्वं सरतीति सर्वसरः; गतिमत्त्वात् सर्वसरणयोग्यः ॥ १–३ ॥

**तत्रापतर्पितस्याध्वगमनादतिमात्रमभ्यवहरतो वा पिष्टान्नहरितकशाकलवणानि क्षीणस्य वाऽतिमात्रमम्लमुपसेवमानस्य मृत्पक्वलोष्टकटशर्करानूपौदकमांससेवनादजीर्णिनो वा ग्राम्यधर्मसेवनाद्विरुद्धाहारसेवनात् वा हस्त्यश्वोष्ट्ररथपदातिसङ्क्षोभणादयो सितस्य दोषा धातून् प्रदूष्य श्वयथुमापादयन्त्यखिले शरीरे ॥ ४ ॥**

पञ्चविधस्यैव सर्वसरस्याहारविहाराभ्यां सर्वाङ्गगतदोषकोपहेतुं निर्दिशन्नाह—तत्रेत्यादि । अपतर्पितः लङ्घनव्यायामवमनादिरूक्षादिभिराहारविहारैः कर्शितः, तस्यात्यर्थमध्वगमनलक्षणाद्विहारात् । पिष्टान्नादिमतिमात्रमभ्यवहरतः इत्येवंविधादाहारात् । हरितकः कुठेरशिग्रुसुरसासुमुखासुरिभूतृणादिः । पिष्टान्नग्रहणेन सर्वविधगुर्वाहारावरोधः । क्षीणस्य वेति स्वयमेव कृशस्यात्यर्थमम्लमुपसेवमानस्य । मृदाद्याहाररतस्य; मृत् मृत्तिका, पक्वलोष्टः अग्निपक्वलोष्टः, कटशर्करा अग्निदग्धशर्करा, आनूपा महिषादयः, औदका मत्स्यादयः । अजीर्णिनो वेत्यादि । ग्राम्यधर्मो मैथुनं, साजीर्णस्य मैथुनसेवनात् । विरुद्धं हिताहितीयाध्याये प्रोक्तम् । संक्षोभणात् चलनादित्यर्थः । अखिले शरीरे सकले काये ॥ ४ ॥

**तत्र वातश्वयथुररुणः कृष्णो वा मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषाः; पित्तश्वयथुः पीतः सरक्तो वा मृदुः शीघ्रानुसार्यूषादयश्चात्र वेदनाविशेषाः; श्लेष्मश्वयथुः पाण्डुः शुक्लो वा स्निग्धः कठिनः शीतो मन्दानुसारी, कण्ड्वादयश्चात्र वेदनाविशेषाः; सन्निपातश्वयथुः सर्ववर्णवेदनः; विषनिमित्तस्तु गरोपयोगाद्दुष्टतोयसेवनात् प्रकुथितोदकावगाहनात् सविषसत्त्वदिग्धचूर्णेनावचूर्णनाद्वा सविषमूत्रपुरीषशुक्रस्पृष्टानां वा तृणकाष्ठादीनां संस्पर्शनात्, स तु मृदुः क्षिप्रोत्थानोऽवलम्बी चलोऽचलो वा दाहपाकरागप्रायश्च भवति ॥ ५ ॥**

**भवन्ति चात्र—**

**दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशयस्थिताः ॥**
**पक्वाशयस्था मध्ये च वर्चःस्थानगतास्त्वधः ॥ ६ ॥**
**कृत्स्नं देहमनुप्राप्ताः कुर्युः सर्वसरं तथा ॥**

तत्रेत्यादि । अरुण ईषद्रक्तः । ऊषादयः ऊषचोषपरितापादयः । कण्ड्वादयः कण्डूर्गुरुत्वमित्यादयः । गरोपयोगो वहि-

१ 'कत्तृणं' इति पा० । २ 'रोगकारणं' इति पा० । ३ 'स्थिर इत्यर्थाद्' इति पा० ।

१ 'चकारोऽनुक्तसमुच्चयार्थः, तेन कारकहेतोरपीति बोध्यम्' इति पा० । २ 'कारकहेतुरप्यवरुद्ध इत्याहुः' इति पा० । ३ 'यानजन्यादित्यर्थः' इति पा० ।

रन्तश्च । प्रकोथः पूतिभावः, सविषकीटादिकोथप्रकुथितोदकावगाहनात्, अयं पुनर्बहिरेव । सविषसत्त्वलालास्पर्शादिविषात् तद्दिग्धचूर्णेनावचूर्णनाद्वेति सविषसत्त्वादिमिश्रचूर्णैरवधूलनात्; सविषसत्त्वचूर्णं वृश्चिकालीनामकं क्षुपभेदं केचित् कथयन्ति ॥ ५ ॥ ६ ॥—

**श्वयथुर्मध्यदेशे यः स कष्टः सर्वगश्च यः ॥ ७ ॥**
**अर्धाङ्गेऽरिष्टभूतश्च यश्चोर्ध्वं परिसर्पति ॥**
**श्वासः पिपासा दौर्बल्यं ज्वरश्छर्दिररोचकः ॥ ८ ॥**
**हिक्कातीसारकासाश्च शूनं सङ्क्षपयन्ति हि ॥**
**सामान्यतो विशेषाच्च तेषां वक्ष्यामि भेषजम् ॥ ९ ॥**

तस्य देहदेशजन्मस्वभावेन कृच्छ्रत्वादि निर्दिशन्नाह—श्वयथुरित्यादि । मध्यदेशे यः श्वयथुः स सन्निपातज्वरवद्विरुद्धोपक्रमत्वात् कष्टः । अर्धाङ्ग इति अर्धनासार्धहृदयार्धनाभिः शोफावच्छिन्नैकपक्षः अर्धाङ्गः, तिर्यग्वा नाभ्यवच्छिन्नपूर्वार्धेऽपरार्धे वा । अरिष्टभूतः अरिष्टवत्, भूतशब्दोऽत्र उपमानार्थः, रिष्टाभास इत्यर्थः । यश्चोर्ध्वं परिसर्पतीति यः शोफः पादाभिनिर्वृत्त ऊर्ध्वमुपरितनकाये परिसर्पति स पुरुषविषयेऽरिष्टभूतः; चकारो भिन्नक्रमे, तेन यश्चाधः परिसर्पति उत्तमाङ्गात् स स्त्रीविषयेऽरिष्टभूतः । उक्तं च—"ऊर्ध्वगामी नरं पद्भ्यामधोगामी मुखात् स्त्रियम्"—इति । ऊर्ध्वमध्याधःस्थितशोफेऽपि सर्वसराभिधानमेकदेशेऽपि दग्धे पटो दग्ध इतिवत् । उपद्रवेणासाध्यत्वं निर्दिशन्नाह—श्वास इत्यादि । सामान्यत इत्यादि सामान्यं विशेषं च ॥ ७–९ ॥

**शोफिनः सर्व एव परिहरेयुरम्ललवणदधिगुडवसापयस्तैलघृतपिष्टमयगुरूणि ॥ १० ॥**

**तत्र वातश्वयथौ त्रैवृतमेरण्डतैलं वा मासमर्धमासं वा पाययेत्, न्यग्रोधादिककषायसिद्धं सर्पिः पित्तश्वयथौ, आरग्वधादिसिद्धं सर्पिः श्लेष्मश्वयथौ, सन्निपातश्वयथौ स्नुहीक्षीरपात्रं द्वादशभिरम्लपात्रैः प्रतिसंसृज्य दन्तीद्रवन्तीप्रतीवापं सर्पिः पाचयित्वा पाययेत्, विषनिमित्तेषु कल्पेषु प्रतीकारः ॥ ११ ॥**

प्रथमं विशेषचिकित्सामाह—तत्रेत्यादि । त्रैवृतमिति मज्जवर्जं घृतादिभिस्त्रिभिर्वृतं त्रिवृतं, त्रिवृतमेव त्रैवृतं, स्वार्थिकोऽण् । जेज्जटाचार्यस्तु चतुःस्नेहमाह । मासमर्धमासं वा पुरुषबलापेक्षया दोषबलापेक्षया वा विकल्पः । पात्रम् आढकम् । अम्लं काञ्जिकम् । दन्तीद्रवन्तीप्रतीवापमिति द्रवन्ती चीरितपत्रा दन्तीभेदः; दन्तीद्रवन्तीकल्कः, स च स्नेहचतुर्थांशेन । सर्पिः आढकप्रमाणम् ॥ १० ॥ ११ ॥

**अत ऊर्ध्वं सामान्यचिकित्सितमुपदेक्ष्यामः—तिल्वकघृतचतुर्थानि यान्युक्तान्युदरेषु ततोऽन्यतममुपयुज्यमानं श्वयथुमपहन्ति, मूत्रवर्तिक्रियां वा सेवेत, नवायसं वाऽहरहर्मधुना, विडङ्गातिविषाकुटजफलभद्रदारुनागरमरिचचूर्णं वा धरणमुष्णाम्बुना, त्रिकटुक्षारायश्चूर्णानि वा त्रिफलाकषायेण, मूत्रं वा तुल्यक्षीरं, हरीतकीं वा तुल्यगुडामुपयुञ्जीत, देवदारुशुण्ठीं वा, गुग्गुलुं वा मूत्रेण वर्षाभूकषायानुपानं वा, तुल्यगुडं शृङ्गवेरं वा, वर्षाभूकषायं मूलककल्कं वा सशृङ्गवेरं पयोऽनुपानमहरहर्मासं, व्योषवर्षाभूकषायसिद्धेन वा सर्पिषा मुद्गोलुम्बान् भक्षयेत्, पिप्पलीपिप्पलीमूलचव्यचित्रकमयूरकवर्षाभूसिद्धं वा क्षीरं पिबेत्, सहौषधमुरङ्गीमूलसिद्धं वा, त्रिकटुकैरण्डश्यामामूलसिद्धं वा, वर्षाभूशृङ्गवेरसहादेवदारुसिद्धं वा, तथाऽलाबूबिभीतकफलकल्कं वा तण्डुलाम्बुना; क्षारपिप्पलीमरिचशृङ्गवेरानुसिद्धेन च मुद्गयूषेणालवणेनाल्पस्नेहेन भोजयेद्यवान्नं गोधूमान्नं वा; वृक्षकार्कनक्तमालनिम्बवर्षाभूक्वाथैश्च परिषेकः; सर्षपसुवर्चलासैन्धवशार्ङ्गेष्टाभिश्च प्रदेहः कार्यः; यथादोषं च वमनविरेचनास्थापनानि तीक्ष्णान्यजस्रमुपसेवेत, स्नेहस्वेदोपनाहांश्च; सिराभिश्चाभीक्ष्णं शोणितमवसेचयेदन्यत्रोपद्रवशोफादिति ॥ १२ ॥**

हरीतकीचूर्णप्रस्थादीनि त्रीणि घृतानि तिल्वकघृतं चतुर्णां पूरणं येषां तानि तिल्वकचतुर्थानि; हरीतकीचूर्णप्रस्थेत्यादिना एकं, गव्ये पयसि महावृक्षक्षीरेत्यादि द्वितीयं, चव्यचित्रकेत्यादि तृतीयं, तिल्वकं वातव्याध्युक्तं चतुर्थम् । वमनविरेचनेत्यादिना उदरोक्ता एव मूत्रवर्तिक्रिया । नवायसं प्रमेहपिडकाचिकित्सिते पठितम् । धरणं कर्षम् । क्षारो यवक्षारः । अयो लोहम् । तुल्यक्षीरमिति गोमूत्रं पलद्वयं, गोक्षीरमपि द्विपलम् । तुल्यगुडामिति शोफहरद्रवानुपानाम् । देवदारुशुण्ठीकल्कं कृत्वा सुखाम्बुना, सामान्यशोफहरद्रवेण सुखोष्णेन वा । सगुडमार्द्रकं वा कर्षमानम् । वर्षाभूकषायः पलद्वयमनुपानं; वर्षाभूः रक्तपुनर्नवा । व्योषादिकल्कसिद्धेन जलचतुर्गुणेन सर्पिषा मुद्गोलुम्बान्, स्विन्नाः किञ्चिद्भृष्टा मुद्गा मुद्गोलुम्बाः । मयूरकः अपामार्गः । सहा माषपर्णी, मुरङ्गी शोभाञ्जनकः । क्षारो यवक्षारः । अनुविद्धेन अनुगतेन, 'अनुसिद्धेन' इति क्वचित् पाठः । यवान्नं गोधूमान्नं वेति सात्म्यापेक्षो विकल्पः । वृक्षकः कुटजः, नक्तमालः महाकरञ्जः । सुवर्चला सूर्यावर्तः । शार्ङ्गेष्टा काकजङ्घा । प्रदेहः प्रलेपः । अजस्रं पुनः पुनः, उपसेवेत 'बलवान्' इति वाक्यशेषः । उपद्रवशोफादित्यत्र सर्वाङ्गशोफादिति केचित् । शीतोष्णस्निग्धरूक्षाद्यैरप्रशाम्यति शोफे सिराभिरभीक्ष्णं शोणितमवसेचयेदित्यर्थः । अविस्राव्यश्च सर्वाङ्गशोफीति केचिदसुं

१ 'वृश्चिकालीनामकक्षुपभेदचूर्णमिति हिमवत्पल्यर्थं लोका वदन्ति' इति पा० ।

पाठमनार्षमाचक्षते; अन्येऽव्ययवगतं सर्वसरं शीतोष्णस्निग्धरूक्षादिभिरप्रशाम्यन्तं शोणितावसेचनेन साधयेदिति विषयभेदेन विधिनिषेधौ चरितार्थौ कुर्वन्ति ॥ १२ ॥

भवति चात्र—

पिष्टान्नमम्लं लवणानि मद्यं
मृदं दिवास्वप्नमजाङ्गलं च ॥
स्त्रियो घृतं तैलपयोगुरूणि
शोफं जिघांसुः परिवर्जयेत्तु ॥ १३ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने शोथचिकित्सितं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

पिष्टान्नमित्यादि । 'स्त्रियो गुडं' इति क्वचित् पाठः ॥ १३ ॥

इति श्रीडल्हृ(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने त्रयोविंशतितमोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशतितमोऽध्यायः ।

अथातोऽनागताबाधाप्रतिषेधं व्याख्यास्यामः १
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अनागत ईषदागतः, नञ् अत्र ईषदर्थे; आबाधा दुःखं व्याधिरित्यर्थः; तस्य प्रतिषेधश्चिकित्सितम् । तच्चिकित्सितं स्वस्थवृत्तमहोरात्रिकाचारक्रम इत्यर्थः, यतोऽहोरात्रेऽपि षण्णामृतूनामन्तर्भावः ॥ १ ॥ २ ॥

उत्थायोत्थाय सततं स्वस्थेनारोग्यमिच्छता ॥
धीमता यदनुष्ठेयं तत् सर्वं संप्रवक्ष्यते ॥ ३ ॥

उत्थायोत्थायेति वीप्सायां, प्रत्यहमितिकर्तव्यताख्यापनायेत्येके; अन्ये तु उत्थायेति अभियोज्येत्यर्थः, अभितो योगमभिसंयोगं कृत्वा; अभियोग उद्यमः, उत्पूर्वस्य स्थाधातोरभियोगार्थत्वात् । सततम् अहरहरित्यर्थः; यदा तु उत्थायोत्थायेत्यस्याहरह इति व्याख्यानं तदा सततमिति व्यर्थं स्यात् । 'यदनुष्ठेयमस्कन्नं' इति केचित् पठन्ति, अस्कन्नम् अवश्यमित्यर्थः ॥ ३ ॥

तत्रादौ दन्तपवनं[1] द्वादशाङ्गुलमायतम् ॥
कनिष्ठिकापरीणाहमृज्वग्रन्थितमव्रणम्[2] ॥ ४ ॥
अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम् ॥
अवेक्ष्यर्तुं च दोषं च रसं वीर्यं च योजयेत् ॥ ५ ॥
कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः ॥
निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥ ६ ॥
मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा ॥
क्षौद्रव्योषत्रिवर्गाक्तं सतैलं सैन्धवेन च ॥ ७ ॥
चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् ॥
एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन च ॥ ८ ॥
दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् ॥
तद्दौर्गन्ध्योपदेहौ तु श्लेष्माणं चापकर्षति ॥ ९ ॥
वैशद्यमन्नाभिरुचिं सौमनस्यं करोति च[1] ॥
न खादेद्गलताल्वोष्ठजिह्वारोगसमुद्भवे ॥ १० ॥
अथास्यपाके श्वासे च कासहिक्कावमीषु च[2] ॥
दुर्बलोऽजीर्णभक्तश्च मूर्च्छार्तो मदपीडितः ॥ ११ ॥
शिरोरुजार्तस्तृषितः श्रान्तः पानक्लमान्वितः ॥
अर्दिती कर्णशूली च दन्तरोगी च मानवः ॥ १२ ॥

शिरस उत्तमाङ्गत्वात्तत्पूर्वमेव विवृण्वन्नाह—तत्रेत्यादि । अव्रणं कोटरादिरहितम् । प्रत्यग्रं नवम् । त्रिवर्गाक्तं त्रिसुगन्धिनाऽऽक्तं लिप्तं दन्तकाष्ठं कृत्वा, तेनेत्यध्याहारः । दौर्गन्ध्याद्यपकर्षणं तत्फलम्; उपदेहः उपलेपः । वैशद्यं निर्मलता । मदः पूगफलेनेव ॥ ४–१२ ॥

जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च ॥
तन्मलापहरं शस्तं मृदु श्लक्ष्णं दशाङ्गुलम् ॥ १३ ॥
मुखवैरस्यदौर्गन्ध्यशोफजाड्यहरं सुखम् ॥
दन्तदार्ढ्यकरं रुच्यं स्नेहगण्डूषधारणम् ॥ १४ ॥

जिह्वेत्यादि । मृदु कोमलम् । श्लक्ष्णं मसृणम् । जाड्यं जडता स्तब्धतेत्यर्थः ॥ १३ ॥ १४ ॥

क्षीरवृक्षकषायैर्वा क्षीरेण च विमिश्रितैः ॥
भिल्लोटक[3]कषायेण तथैवामलकस्य वा ॥ १५ ॥
प्रक्षालयेन्मुखं नेत्रे स्वस्थः शीतोदकेन वा ॥
नीलिकां मुखशोषं च पिडकां व्यङ्गमेव च ॥ १६ ॥
रक्तपित्तकृतान् रोगान् सद्य एव विनाशयेत् ॥

क्षीरवृक्षा न्यग्रोधादयः । क्षीरवृक्षकषायगण्डूषेण रक्तदुष्टिरपि निवर्तते । बहिर्मुखप्रक्षालनमाह—भिल्लेत्यादि । भिल्लोटको हि पर्वते केदारभूमौ प्रसिद्धः । गयी तु भिल्लोटककषायमन्तर्मुखप्रक्षालनमाह । आमलकस्य कषायेण नेत्रे प्रक्षालयेत्, उभयं शीतोदकेन वा ॥ १५ ॥ १६ ॥—

सुखं लघु निरीक्षेत दृढं पश्यति चक्षुषा ॥ १७ ॥
मतं स्रोतोञ्जनं श्रेष्ठं विशुद्धं सिन्धुसंभवम् ॥
दाहकण्डूमलघ्नं च दृष्टिक्लेदरुजापहम् ॥ १८ ॥
तेजोरूपावहं चैव सहते मारुतातपौ ॥
न नेत्ररोगा जायन्ते तस्मादञ्जनमाचरेत् ॥ १९ ॥

---

१ 'तत्रादितो दन्तकाष्ठं' इति पा० । २ '°ग्रन्थिमथाव्रणम्' इति पा० ।

१ 'रुचिमन्नेषु वैशद्यं दन्तजिह्वौष्ठतालुषु ॥ पाटवं सौमनस्यं च लाघवं चोपपादयेत् ॥ न च स्याद्गलताल्वोष्ठजिह्वारोगसमुद्भवः । सुगन्धि वदनं च स्याद्धालास्तम्भनमेव च । मुखप्रसेकशमनं धर्मपुष्टिकरं नृणाम् । लाघवं चेन्द्रियाणां स्यान्नित्यं खादेत्ततो नरः । पाटवं 'वक्त्रस्य' इत्यध्याहारः । प्रसेकः थूत्करणम्' । इति पा० । २ 'मुखपाकश्वासकासशोषहिक्कावमीषु च' इति पा० । ३ भिल्लो रोध्रः ।

भुक्तवाञ्छिरसा स्नातः श्रान्तश्छर्दनवाहनैः ॥
रात्रौ जागरितश्चापि नाञ्ज्याज्ज्वरित एव च ॥ २० ॥

ततोऽञ्जनावसरः । सिन्धुरत्र नदोऽभिप्रेतः, तत्संभवं स्रोतोञ्जनम् । विशुद्धं मलरहितं श्रेष्ठं मतं; कुतः? यस्माद्दृष्टे-र्दाहादिहरं क्लेदायपहरं तथा तेजोरूपकरं; तस्मादञ्जनेन दृढं चक्षुषा पश्यति, मारुतातपौ सहते, नेत्ररोगाश्च न जायन्त इति योगतन्त्रयुक्त्या योजनीयम् । छर्दनवाहनैरिति बहुवचनेन परिश्रान्तिहेतवो गृह्यन्ते ॥ १७–२० ॥

कर्पूरजातीककोललवङ्गकटुकाह्वयैः ॥
सचूर्णपूगैः सहितं पत्रं ताम्बूलजं शुभम् ॥ २१ ॥
मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् ॥
हनुदन्तस्वरमलजिह्वेन्द्रियविशोधनम् ॥ २२ ॥
प्रसेकशमनं हृद्यं गलामयविनाशनम् ॥
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे ॥ २३ ॥
रक्तपित्तक्षतक्षीणतृष्णामूर्च्छापरीतिनाम् ॥
रूक्षदुर्बलमर्त्यानां न हितं चास्यशोषिणाम् ॥ २४ ॥

कर्पूरेत्यादि । जातीशब्देन जातीफलं कथ्यते ॥ २१–२४ ॥

शिरोगतांस्तथा रोगाञ्छिरोभ्यङ्गोऽपकर्षति ॥
केशानां मार्दवं दैर्घ्यं बहुत्वं स्निग्धकृष्णताम् ॥ २५ ॥
करोति शिरसस्तृप्तिं सुत्वक्कमपि चाननम् ॥
सन्तर्पणं चेन्द्रियाणां शिरसः प्रतिपूरणम् ॥ २६ ॥

शिरसः प्रतिपूरणमिति शून्यभूतस्य शिरसः पुनः पूरणमि-त्यर्थः । 'शिरोगतांस्तथा रोगान्' इत्यत्र 'केशभूमिगतान् रोगान्' इत्येके पठन्ति; 'शिरसः प्रतिपूरणं' इत्यत्र 'दत्तं मस्त-कतैलकम्' इत्यपरे पठन्ति ॥ २५ ॥ २६ ॥

मधुकं क्षीरशुक्ला च सरलं देवदारु च ॥
क्षुद्रकं पञ्चनामानं समभागानि संहरेत् ॥ २७ ॥
तेषां कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ॥
सदैव शीतलं जन्तोर्मूर्ध्नि तैलं प्रदापयेत् ॥ २८ ॥

शिरोभ्यङ्गार्थं तैलमाह—मधुकमित्यादि । क्षीरशुक्ला क्षीर-विदारिका । क्षुद्रकं पञ्चनामानमिति अल्पा पञ्चमूली । चक्रतैलं यन्त्रपीडिततैलम् । मधुकादिद्रव्याणां क्वाथार्थं पलशतम्, उद-कस्य द्वादशाधिकपञ्चशतपलानि, तावत् विपचेद्यावद्विंशत्यधिकं शतं भवति, ततो वस्त्रपूतं ग्राह्यं, तेन क्वाथेन तथा तद्द्रव्याणामेव कल्कैरष्टभिः पलैश्चक्रतैलस्य द्वात्रिंशत्पलानि विपचेत्, यावत्तै-लपाकलक्षणानि भवन्ति, एवमानुमानिकं कल्पनीयम् ॥ २७ ॥ २८ ॥

केशप्रसाधनी केश्या रजोजन्तुमलापहा ॥

केशप्रसाधनी कङ्कतिका 'काकुंइ' इति लोके । रजो धूलिः । जन्तुः यूका ॥—

हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम् ॥ २९ ॥

हन्वित्यादि । कर्णपूरणकालस्य संख्यां श्रीवाग्भटः प्राह—"धारयेत् पूरणं कर्णे कर्णमूलं विमर्दयन् । रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने" (वा. सू. अ. २२)—इति ॥ २९ ॥

अभ्यङ्गो मार्दवकरः कफवातनिरोधनः ॥
धातूनां पुष्टिजननो मृजावर्णबलप्रदः ॥ ३० ॥

अभ्यङ्ग इत्यादि । अभ्यङ्गोऽत्र सकलदेहस्य स्नेहाभ्यङ्गः । मृजा शुद्धप्रभा, वर्णो गौरादिः । स्नेहस्य सिरामुखादिभिः शरी-रसन्तर्पणकालं केचिदत्र पठन्ति—"रोमान्तेष्वनु देहस्य स्थित्वा मात्राशतत्रयम् । ततः प्रविशति स्नेहश्चतुर्भिर्गच्छति त्वचम् ॥ रक्तं गच्छति मात्राणां शतैः पञ्चभिरेव तु । षड्भि-र्मांसं प्रपद्येत मेदः सप्तभिरेव च ॥ शतैरष्टाभिरस्थीनि मज्जानं नवभिर्व्रजेत् । तत्रस्थाञ्छमयेद्रोगान् वातपित्तकफात्मकान्" इति ॥ ३० ॥

सेकः श्रमघ्नोऽनिलहृद्भग्नसन्धिप्रसाधकः ॥
क्षताग्निदग्धाभिहतविघृष्टानां रुजापहः ॥ ३१ ॥
जलसिक्तस्य वर्धन्ते यथा मूलेऽङ्कुरास्तरोः ॥
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते ॥ ३२ ॥

सेकः सर्वाङ्गपरिषेकः ॥ ३१ ॥ ३२ ॥

सिरामुखै रोमकूपैर्धमनीभिश्च तर्पयन् ॥
शरीरबलमाधत्ते युक्तः स्नेहोऽवगाहने ॥ ३३ ॥

युक्तः प्रयुक्तः । अवगाहनं मज्जनम् ॥ ३३ ॥

तत्र प्रकृतिसात्म्यर्तुदेशदोषविकारवित् ॥
तैलं घृतं वा मतिमान् युञ्ज्यादभ्यङ्गसेकयोः ॥ ३४ ॥

तेषां योग्यतामाह—तत्रेत्यादि ॥ ३४ ॥

केवलं सामदोषेषु न कथञ्चन योजयेत् ॥
तरुणज्वर्यजीर्णी च नाभ्यक्तव्यौ कथञ्चन ॥ ३५ ॥
तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः ॥
पूर्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा ॥ ३६ ॥
शेषाणां तदहः प्रोक्ता अग्निमान्द्यादयो गदाः ॥
सन्तर्पणसमुत्थानां रोगाणां नैव कारयेत् ॥ ३७ ॥

अभ्यङ्गस्य निषेधमाह—केवलमित्यादि । आमज्वरे तत्कृ-तकम्पादीनामपि संभव इत्यर्थः । पूर्वयोस्तरुणज्वर्यजीर्णिनोः; शेषाणां विरिक्तानां तदहःक्रियमाणेऽभ्यङ्गेऽग्निमान्द्यादयो भवन्ति ॥ ३५–३७ ॥

शरीरायासजननं कर्म व्यायामसंज्ञितम् ॥
तत् कृत्वा तु सुखं देहं विमृद्नीयात् समन्ततः ३८
शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता ॥
दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा ॥ ३९ ॥

१ 'हितम्' इति पा० । २ 'पचनीयम्' इति पा० ।

१ 'सकलशरीरकर्णादिगतः' इति पा० । २ 'कृत्वाऽनु' इति पा० ।

श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता ॥
आरोग्यं चापि परमं व्यायामादुपजायते ॥ ४० ॥
न चास्ति सदृशं तेन किञ्चित् स्थौल्यापकर्षणम् ॥
न च व्यायामिनं मर्त्यमर्दयन्त्यरयो बलात् ॥ ४१ ॥
न चैनं सहसाऽऽक्रम्य जरा समधिरोहति ॥
स्थिरीभवति मांसं च व्यायामाभिरतस्य च ॥ ४२ ॥
व्यायामखिन्नगात्रस्य[2] पद्भ्यामुद्वर्तितस्य[3] च ॥
व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव ॥ ४३ ॥
वयोरूपगुणैर्हीनमपि कुर्यात् सुदर्शनम् ॥
व्यायामं कुर्वतो नित्यं विरुद्धमपि भोजनम् ॥ ४४ ॥
विदग्धमविदग्धं वा निर्दोषं परिपच्यते ॥
व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनाम् ॥
स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः ॥
सर्वेष्वृतुष्वहरहः पुम्भिरात्महितैषिभिः ॥ ४६ ॥
बलस्यार्धेन कर्तव्यो व्यायामो हन्त्यतोऽन्यथा ॥
हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते ॥ ४७ ॥
व्यायामं कुर्वतो जन्तोस्तद्बलार्धस्य लक्षणम् ॥
वयोबलशरीराणि देशकालाशनानि च ॥ ४८ ॥
समीक्ष्य कुर्याद्व्यायाममन्यथा रोगमाप्नुयात् ॥
क्षयतृष्णारुचिच्छर्दिरक्तपित्तभ्रमक्लमाः ॥ ४९ ॥
कासशोषज्वरश्वासा अतिव्यायामसंभवाः ॥
रक्तपित्ती कृशः शोषी श्वासकासक्षतातुरः ॥ ५० ॥
भुक्तवान् स्त्रीषु च क्षीणस्तृड्भ्रमार्तश्च वर्जयेत् ॥

शरीरेत्यादि । शरीरस्योपचयः सम्यक्पुष्टिः । गात्राणां सुविभक्तता गात्राणामिति सर्वेषामङ्गानां, सुविभक्तता सुसन्निविष्टता सुघटितशरीरतेत्यर्थः । मृजा शुद्धिः । शत्रवो यथा च व्यायामिनं बलाद्धेतोर्न मर्दयन्ति उद्वर्तनकारिणं जनं तथा व्याधयो नोपसर्पन्ति नाभिभवन्तीत्यर्थः । स्थिरीभवति मांसं चेति उपचयलक्षणस्यापि बलस्य हेतुरित्यर्थः । व्यायामखिन्नगात्रस्येति गात्रे खेदागमे सति व्यायामादुपरमः कार्य इत्यर्थः, अन्ये तु 'व्यायामखिन्नगात्रस्य' इत्यत्र 'व्यायामक्षुण्णगात्रस्य' इति पठन्ति । पद्भ्यामुद्वर्तितस्य पादाभ्यां बहुकृतमर्दनस्येत्यर्थः । विरुद्धं हिताहितीयाध्यायोक्तम् । विदग्धम् अम्लपाकम्, अविदग्धं विदग्धादन्यत्, तेनामं विदग्धं च गृह्यते । परिः सर्वतोऽर्थे । वसन्ते चेति चकारः पथ्यतमत्वे हेमन्ताद्वसन्तस्यापकर्षं सूचयति । बलार्धलक्षणं केचिदन्यथा पठन्ति,—"कक्षाललाटनासासु हस्तपादादिसन्धिषु । प्रस्वेदान्मुखशोषाच्च बलार्धं तद्धि निर्दिशेत्"—इति । वयोबलेत्यादि वयो यौवनं, बलं शक्त्युपचयलक्षणं, शरीरं मध्यं स्थूलं च, देशमानूपं साधारणं च; कालं नित्यगमावस्थिकं च द्विविधमपि, तत्र नित्यगे शीते वसन्ते च, आवस्थिके यौवने बले सति; अशनानि स्निग्धभोजनानि; समीक्ष्य दृष्ट्वा उपचयप्रभृतौ व्यायामं कुर्यात् । व्यायामादग्निप्रदीप्तौ सत्यां सर्वरोगोपशम इति ॥ ३८-५० ॥—

उद्वर्तनं वातहरं कफमेदोविलापनम् ॥ ५१ ॥
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥

व्यायामे पद्भ्यामुद्वर्तितस्येत्युक्तस्योद्वर्तनस्य गुणं निर्दिशन्नाह—उद्वर्तनमित्यादि । उद्वर्तनं गात्रमर्दनम् । विलापनं द्रवीकरणम् ॥ ५१ ॥

सिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनम् ॥ ५२ ॥
उद्धर्षणोत्सादनाभ्यां जायेयातामसंशयम् ॥
उत्सादनाद्भवेत् स्त्रीणां विशेषात् कान्तिमद्वपुः ५३
प्रहर्षसौभाग्यमृजालाघवादिगुणान्वितम् ॥
उद्धर्षणं तु विज्ञेयं कण्डूकोठानिलापहम् ॥ ५४ ॥
ऊर्वोः संजनयत्याशु फेनकः स्थैर्यलाघवे ॥
कण्डूकोठानिलस्तम्भमलरोगापहश्च सः ॥ ५५ ॥
तेजनं त्वग्गतस्याग्नेः सिरामुखविवेचनम् ॥
उद्धर्षणं त्विष्टिकया कण्डूकोठविनाशनम् ॥ ५६ ॥

सिरेत्यादि । तेजनं त्वग्गतस्याग्नेः, सिरामुखविवर्धनम् । उद्धर्षणम् अस्नेहौषधचूर्णादिभिर्घर्षणम्, अन्ये तु फेनकेष्टकादिघर्षणम् । उद्धर्षणोत्सादनाभ्यां जायेयातामिति सिरामुखविविक्तत्वाग्निदीपने उद्धर्षणोत्सादनाभ्यामुत्पद्येयातां; । केचिदत्र यथासङ्ख्यमाहुः—सिरामुखविविक्तत्वमुद्धर्षणेन, त्वक्स्थस्याग्नेस्तेजनमुत्सादनेन; सस्नेहकल्केनोद्धर्षणमुत्सादनम् । मृजा शुद्धप्रभा[4] । ऊर्वोरूर्ध्वमधश्चे फेनकः, ऊरुः 'जाङ्घ' इति लोके । कण्डूकोठविनाशनमिति इयमिष्टिकोद्धर्षणगुणोक्तिः ॥ ५२-५६ ॥

निद्राद्राहश्रमहरं स्वेदकण्डूतृषापहम् ॥
हृद्यं मलहरं श्रेष्ठं सर्वेन्द्रियविबोधनम् ॥ ५७ ॥
तन्द्रापाप्मोपशमनं तुष्टिदं पुंस्त्ववर्धनम् ॥
रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनम् ॥ ५८ ॥
उष्णेन शिरसः स्नानमहितं चक्षुषः सदा ॥
शीतेन शिरसः स्नानं चक्षुष्यमिति निर्दिशेत् ॥५९॥
श्लेष्ममारुतकोपे तु ज्ञात्वा व्याधिबलाबलम् ॥
काममुष्णं शिरःस्नानं भैषज्यार्थं समाचरेत् ॥ ६० ॥
अतिशीताम्बु शीते च श्लेष्ममारुतकोपनम् ॥
अत्युष्णमुष्णकाले च पित्तशोणितकोपनम् ॥ ६१ ॥
तच्चातिसारज्वरितकर्णशूलानिलार्तिषु ॥
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम् ॥ ६२ ॥
सौभाग्यदं वर्णकरं प्रीत्योजोबलवर्धनम् ॥
स्वेददौर्गन्ध्यवैवर्ण्यश्रमघ्नमनुलेपनम् ॥ ६३ ॥
स्नानं येषां निषिद्धं तु तेषामप्यनुलेपनम् ॥

१ 'भयात्' इति पा० । २ 'व्यायामक्षुण्णगात्रस्य' इति पा० । ३ 'पद्भ्यामुद्वर्तितस्य पादावमर्दितस्य' इति हाराणचन्द्रः । ४ 'शुद्धप्रभा' इति पा० ।

१ 'ऊरुद्वयस्याधः' इति पा० । २ 'सर्वेन्द्रियविशोधनम्' इति पा० । ३ 'भैषज्यमिति निर्दिशेत्' इति पा० ।

निद्रेत्यादि । कामं यथेष्टम् । स्नानस्य निषेधमाह—तदित्यादि । येषां स्नानं नेष्यते तेषामनुलेपनमपि निषिध्यते ॥ ५७–६३ ॥—

**रक्षोघ्नमथ चौजस्यं सौभाग्यकरमुत्तमम् ॥ ६४ ॥**
**सुमनोम्बररत्नानां धारणं प्रीतिवर्धनम् ॥**

रक्षोघ्नमित्यादि । रत्नानि माणिक्यमरकतादीनि । अस्याग्रे आदर्शगुणं गोरोचनाधारणगुणं च केचिदधीयते; स चाभावान्न लिखितः ॥ ६४ ॥—

**मुखालेपाद्दृढं चक्षुः पीनगण्डं तथाऽऽननम् ॥ ६५ ॥**
**अव्यङ्गपिडकं कान्तं भवत्यम्बुजसन्निभम् ॥**

मुखेत्यादि । कान्तं कमनीयं मनोहरमित्यर्थः ॥ ६५ ॥—

**पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलम् ॥ ६६ ॥**
**नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम् ॥**
**यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्धनम् ॥ ६७ ॥**
**देवतातिथिविप्राणां पूजनं गोत्रवर्धनम् ॥**

सामान्यमञ्जनगुणमाह—पक्ष्मलमित्यादि । पक्ष्मलं घनरोमान्वितम् विशदं चिप्पडरहितम् । अमलोज्ज्वलमण्डलमिति निर्मलोज्ज्वलचक्षुर्बहिर्भागम्[1] ॥ ६६–६७ ॥—

**आहारः प्रीणनः सद्यो बलकृद्देहधारकः ॥ ६८ ॥**
**आयुस्तेजःसमुत्साहस्मृत्योजोऽग्निविवर्धनः ॥**

आहार इत्यादि । तेजो भ्राजिष्णुता, समुत्साहः सम्यक्चित्तव्यवसायः, ओजो हृदिस्थं प्राणायतनम् ॥ ६८ ॥—

**पादप्रक्षालनं पादमलरोगश्रमापहम् ॥ ६९ ॥**
**चक्षुःप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्धनम् ॥**

चक्षुःप्रसादनं दृष्टिप्रसादनं, दृष्टिसंयुक्त[2]पादनिबन्धननाडीप्रसादनत्वात्; प्रभावादित्यपरे । वृष्यं शुक्रवृद्धिकरं, प्रभावात् ॥ ६९ ॥—

**निद्राकरो देहसुखश्चक्षुष्यः श्रमसुप्तिनुत् ॥ ७० ॥**
**पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदा हितः ॥**

निद्रेत्यादि । पादाभ्यङ्गोऽत्रापि दृष्टिप्रदः पूर्ववत् ॥ ७० ॥—

**पादरोगहरं वृष्यं[3] रक्षोघ्नं प्रीतिवर्धनम् ॥ ७१ ॥**
**सुखप्रचारमोजस्यं सदा पादत्रधारणम् ॥**
**अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत् ॥ ७२ ॥**
**पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणाम् ॥**
**पाप्मोपशमनं केशनखरोमापमार्जनम् ॥ ७३ ॥**
**हर्षलाघवसौभाग्यकरमुत्साहवर्धनम् ॥**
**[4]बाणवारं मृजावर्णतेजोबलविवर्धनम् ॥ ७४ ॥**

पादेत्यादि । पादत्रं पादहितं पादुकादि । अनुपानद्भ्यां पादत्राणरहिताभ्याम् । बाणवारं वर्म ॥ ७१–७४ ॥

**पवित्रं केश्यमुष्णीषं वातातपरजोपहम् ॥**

पवित्रमित्यादि । उष्णीषं शिरोवेष्टनम् ॥—

**वर्षानिलरजोघर्महिमादीनां निवारणम् ॥ ७५ ॥**
**वर्ण्यं चक्षुष्यमौजस्यं शङ्करं छत्रधारणम् ॥**

वर्षेत्यादि । शङ्करं सुखकरम् ॥ ७५ ॥—

**शुनः सरीसृपव्यालविषाणिभ्यो भयापहम् ॥ ७६ ॥**
**श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते ॥**
**सत्त्वोत्साहबलस्थैर्यधैर्यवीर्यविवर्धनम् ॥ ७७ ॥**
**अवष्टम्भकरं चापि भयघ्नं दण्डधारणम् ॥**

शुन इत्यादि । सरीसृपाः कृष्णसर्पादयः । व्याला व्याघ्रादयः । विषाणिभ्यः शृङ्गिभ्यः । सत्त्वं सत्त्वगुणः, उत्साहो बलं, बलम् ओजः, स्थैर्यं अचलत्वं, धैर्यं धीरत्वं, वीर्यं शक्तिः । अवष्टम्भः अवलम्बनम् । भयघ्नं भयनाशकम् ॥ ७६ ॥ ७७ ॥—

**आस्या वर्णकफस्थौल्यसौकुमार्यकरी सुखा ॥ ७८ ॥**

आस्येत्यादि । आस्या स्थितिः ॥ ७८ ॥

**अध्वा वर्णकफस्थौल्यसौकुमार्यविनाशनः ॥**
**अत्यध्वा विपरीतोऽस्माज्जरादौर्बल्यकृच्च सः ॥ ७९ ॥**
**यत्तु चङ्क्रमणं नातिदेहपीडाकरं भवेत् ।**
**तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम् ॥ ८० ॥**

अध्वेत्यादि । अत्यध्वा अतिशयेन मार्गगमनम् । चङ्क्रमणं कुटिलगत्या परिभ्रमणम् ॥ ७९ ॥ ८० ॥

**श्रमानिलहरं वृष्यं पुष्टिनिद्राधृतिप्रदम् ॥**
**सुखं शय्यासनं, दुःखं[4] विपरीतगुणं मतम् ॥ ८१ ॥**
**बालव्यजनमौजस्यं मक्षिकादीनपोहति ॥**
**शोषदाहश्रमस्वेदमूर्च्छाघ्नो व्यजनानिलः ॥ ८२ ॥**

श्रमेत्यादि । सुखं शय्यासनं विस्तृतमास्तीर्णं मृदुगण्डोपधानादियुक्तम् । दुःखं सैङ्कोच्यासनं, दुःखं विपरीतगुणम् । बालव्यजनं चामराख्यव्यजनम् । व्यजनानिलः तालवृन्तवायुः ॥ ८१ ॥ ८२ ॥

**प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम् ॥**
**संवाहनं मांसरक्तत्वक्प्रसादकरं सुखम् ॥ ८३ ॥**

प्रीतीत्यादि । संवाहनं सुखकरस्पर्शः, मर्दनं तु गाढं पादाभ्यामारभ्य कटिपर्यन्तं, अमितप्रभटीकाकारस्तु हस्ताभ्यां शनैः शनैराहननमिति वदति ॥ ८३ ॥

**प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपक्तिनुत् ॥**
**स्वेदमूर्च्छापिपासाघ्नमप्रवातमतोऽन्यथा ॥ ८४ ॥**

---

१ 'निर्मलमपाङ्गं च स्वावहिर्भागम्' इति पा० । २ 'दृष्टिगत°' इति पा० । ३ 'वृष्यमायुष्यं चक्षुषे हितम्' इति पा० । ४ 'वारबाणं' इति पा० ।

१ 'वारबाणं कञ्चुकं 'ढंतिपिताङ्ग' इति लोके' इति पा० । २ 'रक्षोघ्नं' इति पा० । ३ 'रक्षोघ्नं राक्षसघ्नम्' इति पा० । ४ 'दुःखशय्यासनं' इति पा० । ५ 'पादाभ्यां च' इति पा० ।

**सुखं वातं प्रसेवेत ग्रीष्मे शरदि मानवः ॥**
**निवातं ह्यायुषे सेव्यमारोग्याय च सर्वदा ॥ ८५ ॥**
**आतपः पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत् ॥**
**दाहवैवर्ण्यकारी च छाया चैतानपोहति ॥ ८६ ॥**
**अग्निर्वातकफस्तम्भशीतवेपथुनाशनः ॥**
**आमाभिष्यन्दजरणो रक्तपित्तप्रदूषणः ॥ ८७ ॥**
**पुष्टिवर्णबलोत्साहमग्निदीप्तिमतन्द्रिताम् ॥**
**करोति धातुसाम्यं च निद्रा काले निषेविता ॥८८॥**

सुखमित्यादि । "सुखं प्रवातं सेवेत ग्रीष्मे शरदि वाऽन्तरा" इत्यन्ये पठन्ति, व्याख्यानयन्ति च—ग्रीष्मशरदौ प्रवातसेवनकालः, परं तयोरपि प्रवातसेवनं सान्तरम् । ज्योत्स्नातमसोर्गुणाः पुनश्छायानिवातगुणैः सदृशा ज्ञेया इतीह नोक्ताः । अद्रव्यत्वेऽपि आतपादीनां प्रभावजं कर्म; अन्ये पुनरातपं तेजःपरमाणुपुञ्जं, छायामपि तमःपरमाणुजामाहुः ॥ ८४–८८ ॥

**तत्रादित एव नीचनखरोम्णा शुचिना शुक्लवाससा लघूष्णीषच्छत्रोपानत्केन दण्डपाणिना काले हितमितमधुरपूर्वाभिभाषिणा बन्धुभूतेन भूतानां गुरुवृद्धानुमतेन सुसहायेनानन्यमनसा खल्पुपचरितव्यं, तदपि न रात्रौ, न केशास्थिकण्टकाश्मतुषभस्मोत्करकपालाङ्गारामेध्यस्नानबलिभूमिषु, न विषमेन्द्रकीलचतुष्पथश्वभ्राणामुपरिष्टात् ॥ ८९ ॥**

प्रातरुत्थितस्य दन्तकाष्ठखादनादीन्द्रियशरीरमनसामुपकारकमन्तरङ्गमभिधाय बहिरङ्गोपचरणे सद्वृत्तमुद्दिशन्नाह—तत्रेत्यादि । लघूष्णीषम् अल्पतनुकृतं शिरोवेष्टनं; केचिल्लघुपदं छत्रेणोपानदाऽपि संबन्धयन्ति । उपचरितव्यम् उपगमनं कर्तव्यम् । उत्करः तृणादिसमूहः; आच्छादितखनितमृत्तिकादिरित्यपरे । यागार्थं निखातो यूपोपलक्षितः प्रदेश इन्द्रकीलः, इन्द्रार्थं कीला न्यस्यन्ते यस्मिन् देशे स प्रदेश इन्द्रकीलः । चतुष्पथो मार्गचतुष्टयसंगमः । श्वभ्रं गर्तः ॥ ८९ ॥

**न राजद्विष्टपरुषपैशुन्यानृतानि वदेत्, न देवब्राह्मणपितृपरिवादांश्च; न नरेन्द्रद्विष्टोन्मत्तपतितक्षुद्रनीचानुपासीत ॥ ९० ॥**

पैशुन्यं सूचकता, दौर्जन्यमिति यावत् । परिवादो दोषकथनम् । उन्मत्तो वातूलः, पतितः स्वकीयधर्माद्भ्रष्टः[1], क्षुद्रो लघुः, नीचा म्लेच्छादयः । नोपासीत नोपसेवेत ॥ ९० ॥

**वृक्षपर्वतप्रपातविषमवल्मीकदुष्टवाजिकुञ्जराद्यधिरोहणानि परिहरेत्, पूर्णनदीसमुद्राविदितपल्वलश्वभ्रकूपावतरणानि, भिन्नशून्यागारश्मशानविजनारण्यवासाग्निसंभ्रमव्यालभुजङ्गकीटसेवाश्च, ग्रामाघातकलहशस्त्रसन्निपातव्यालसरीसृपशृङ्गिसन्निकर्षांश्च ॥ ९१ ॥**

प्रपातो[1] निर्झरपतनम् । कूपान्तावतरणानि परिहरेदिति संबन्धः; अविदितोऽज्ञातस्वरूपः; पल्वलं खातगर्तः, अवतरणं प्रवेशः; अत्रापि परिहरेदिति संबन्धः । भिन्नशून्यागारं पतितगृहं जनरहितगृहं[2] च, विजनं निर्जनम्, अरण्यं अटवी, अग्निसंभ्रमं[3] उत्पातप्रदीप्तिः, व्याला व्याघ्रादयः, कीटा वृश्चिकादयः, ग्रामाघातो मारीभयजन्यग्रामहननं, सरीसृपः कृष्णसर्पः, सन्निकर्षं नैकट्यं परिहरेदिति संबन्धः । पूर्वमग्नेर्हेमन्तादावतिशैत्यादभिप्रेतस्यापि सेवा अत्यन्तोपासनं निषिद्धम्, अत्र तु ग्रीष्मादौ तस्य सान्निध्यमपि निषिद्धमिति बुध्यते । तथा पूर्वं व्यालभुजङ्गयोरपि सेवा पुनः पुनर्निकटोपासनं निषिद्धम्, अत्र तु विश्वस्तयोः सान्निध्यमपि निषिध्यत इति न पौनरुक्त्यम् ॥ ९१ ॥

**नाग्निगोगुरुब्राह्मणप्रेङ्खादम्पत्यन्तरेण यायात् । न शवमनुयायात् । देवगोब्राह्मणचैत्यध्वजरोगिपतितपापकारिणां च छायां नाक्रमेत । नास्तं गच्छन्तमुद्यन्तं वाऽऽदित्यं वीक्षेत । गां धापयन्तीं धयन्तीं परशस्यं[4] वा चरन्तीं न कस्मैचिदाचक्षीत, न चोल्कापातोत्पातेन्द्रधनूंषि । नाग्निं मुखेनोपधमेत् । नापो भूमिं वा पाणिपादेनाभिहन्यात् ॥ ९२ ॥**

अग्न्योर्गुर्वोर्ब्राह्मणयोः प्रेङ्खयोर्दम्पत्योश्चान्तरेण न गच्छेत्; प्रेङ्खा दोला, दम्पती जायापती । शवं मृतप्राणिशरीरम् । अनुगमनं पश्चाद्गमनम्; स्कन्धदानाद्यधिकारं विनेति शेषः । चैत्यः श्मशानवृक्षः । नाक्रमेत न लङ्घयेत् । गां सुरभीम् । धापयन्तीं पाययन्तीं, वत्समिति गम्यते, धेट् पाने । धयन्तीं स्वयं पिबन्तीं कुण्डादिनिक्षिप्तपानीयप्रभृतीनीति गम्यते । परशस्यं परक्षेत्रम् । नाचक्षीत न कथयेत् । उल्कापात आकाशाज्ज्वलदग्निपातः; उत्पाता दिव्यभौमान्तरिक्षाश्रयः; तत्र दिव्याः प्रतिमारोदनगन्धर्वनगरदर्शनादिकाः, भौमा भूकम्पप्रभृतयः, आन्तरिक्षास्तारापतनरविपरिवेषादयः; एतानि कस्मैचिन्नाचक्षीतेत्यर्थः । उपधमेत् नाग्निं मुखेन ज्वालयेदित्यर्थः । अभिहन्यादिति कारणं विनेति शेषः ॥ ९२ ॥

**न वेगान् धारयेद् वातमूत्रपुरीषादीनाम् । न बहिर्वेगान् ग्रामनगरदेवतायतनश्मशानचतुष्पथसलिलाशयपथिसन्निकृष्टानुत्सृजेन्न प्रकाशं न वाय्वग्निसलिलसोमार्कगोगुरुप्रतिमुखम् ॥ ९३ ॥**

बहिर्वेगा वातमूत्रपुरीषादीनाम् । न प्रकाशमिति प्रकाशो यथा भवत्येवं नोत्सृजेत् ॥ ९३ ॥

**न भूमिं विलिखेत्, नासंवृतमुखः सदसि जृम्भोद्गारकासश्वासक्षवथूनुत्सृजेत्, न पर्यङ्किकावष्टम्भपादप्रसारणानि गुरुसन्निधौ कुर्यात् ॥ ९४ ॥**

---

१ 'स्वकीयाचारभ्रष्टः' इति पा० ।

१ 'प्रपातः पतनस्थानं' इति पा० । २ 'पतितविजनगृहं' इति पा० । ३ 'अग्निसंभ्रमोऽत्यन्तप्रदीप्तत्वम्' इति पा० । ४ 'परशस्यं पराज्ञं वा चरन्तीम्' इति पा० ।

विलिखेत् नखादिभिः । न सभायामसंवृतमुखो जृम्भादीन् विसृजेत् । क्षवथुः छिक्का । पर्यङ्किका पर्यस्तिका । अवष्टम्भोऽप्रपृष्ठपार्श्वस्थितस्तम्भादिष्ववलम्बनं; परमार्थतस्तु अवष्टम्भोऽवलम्बो न पर्यायशब्दः ॥ ९४ ॥

**न बालकर्णनासास्रोतोदशनाक्षिविवराण्यभिकुष्णीयात्, न वीजयेत् केशमुखनखवस्त्रगात्राणि, न गात्रनखवक्त्रवादित्रं कुर्यात्, न काष्ठलोष्टतृणादीनभिहन्याच्छिन्द्याद्भिन्द्याद्वा ॥ ९५ ॥**

स्रोतांसि पायूपस्थादीनि, एतेषां विवराणि छिद्राणि; नाभिकुष्णीयात् नाभिकर्षेत्, न मलं स्पृशेदित्यर्थः । न वीजयेत् न कम्पयेत् । न गात्रवादित्रं न गात्रं वाद्यभाण्डं कुर्यात् ॥ ९५ ॥

**न प्रतिवातातपं सेवेत, न भुक्तमात्रोऽग्निमुपासीत, नोत्कटकाल्पकाष्ठासनमध्यासीत, न ग्रीवां विषमं धारयेत्, न विषमकायः क्रियां भजेत भुञ्जीत वा, न प्रततमीक्षेत विशेषाज्ज्योतिर्भास्करसूक्ष्मचलभ्रान्तानि, न भारं शिरसा वहेत्, न स्वप्नजागरणशयनासनस्थानचङ्क्रमणयानवाहनप्रधावनलङ्घनप्लवनप्रतरणहास्यभाष्यव्यवायव्यायामादीनुचितानप्यतिसेवेत ॥ ९६ ॥**

न प्रतिवातातपमिति अभिमुखं वातमातपं वा न सेवेत । नाध्यासीत नोपविशेदित्यर्थः । आसनशब्द उत्कटकादिभिस्त्रिभिः सह प्रत्येकमभिसंबध्यते । प्रततं विस्फारिताक्षं नेक्षेत; ज्योतिरग्निशिखा, तारकेत्यन्ये । दिवा स्वप्नजागरणादीनि स्वभ्यस्तान्यप्येतानि हिताहितानि नातिक्रान्तप्रमाणं भजेत् । स्थानम् ऊर्ध्वस्थितिं, चङ्क्रमणं गतागतं, यानं रथादि, वाहनं हस्त्यश्वादि, लङ्घनं खेयगर्ताद्युत्क्रमणं, प्लवनम् उत्प्लुत्योत्प्लुत्य गमनं, प्रतरणं नद्यादीनां बाहुभ्यां तरणम् ॥ ९६ ॥

**उचितादप्यहितात् क्रमशो विरमेत्, हितमनुचितमप्यासेवेत क्रमशः, न चैकान्ततः पादहीनात् ॥ ९७ ॥**

स्वभ्यस्तादपि यवकादेः क्रमेणैव निवर्तयेदित्यर्थः; सहसा परिवर्तने रोगो मरणं वा । क्रमशो हितं रक्तशाल्यादि । अनुचितम् अनभ्यस्तं, क्रमश इति तत्राभ्यस्तादहिताद्विरामे यथाक्रमं पादस्यापचयः, तथा तस्याभ्यसनीयस्य यथाक्रममभ्यासे पादस्यैव प्रक्षेपः; एवं हिताहितयोश्चतुर्थांशस्य षोडशांशस्य वाऽऽवापोद्धाराभ्यां षोडशाहोभिरहितस्य सर्वस्य त्यागो हितस्य सर्वस्य प्राप्तिरिति ॥ ९७ ॥

**नावाक्शिराः शयीत, न भिन्नपात्रे भुञ्जीत, न विना पात्रेण, नाञ्जलिपुटेनापः पिबेत्, काले हितमितस्निग्धमधुरप्रायमाहारं वैद्यप्रत्यवेक्षितमश्नीयात्, ग्रामगणगणिकापणिकशत्रुसत्रशठपतितभोजनानि परिहरेत्, शेषाण्यपि चानिष्टरूपरसगन्धस्पर्शशब्दमानसानि, अन्यान्येवंगुणान्यपि संभ्रमदत्तानि, ( तान्यपि ) मक्षिकाबालोपहतानि, नाप्रक्षालितपादो भुञ्जीत न मूत्रोच्चारपीडितो न सन्ध्ययोर्नानुपाश्रितो नातीतकालं हीनमतिमात्रं ( नोद्धृतस्नेहं ) चेति ॥ ९८ ॥**

अवाक्शिरा अधःशिरा इत्यर्थः । भिन्नपात्रे विदीर्णपात्रे । प्रत्यवेक्षितं विलोकितम् । ग्रामस्थाः सर्वे मिलित्वा क्वचित् किञ्चिद् यद्भोजनं संपादयन्ति तद्ग्रामभोजनम् । गणा कथकचारणादयः, गणिका वेश्या, पणिक इतरवणिक्, शत्रुः विपक्षः, सत्रं यज्ञः, पतितः स्वकीयाचारभ्रष्टः । अनिष्टशब्दो रूपादिभिः सह प्रत्येकं संबध्यते । अनिष्टशब्दः कुत्सितध्वनिः; अनिष्टमानसं चित्तानभिप्रेतम् । अन्यानीति अनिष्टरूपादिभ्योऽन्यानि इष्टरूपरसादीनि वा, एवंगुणान्यपीति ग्रामादिभ्यः शेषाण्यपीत्यर्थः । संभ्रमदत्तानीति मिलित्वा दत्तानि, भोजनानि परिहरेदिति शेषः । ( सर्वाण्येव किं त्वरया दत्तानि परिहरेदित्याह—तान्यपीत्यादि । ) उच्चारो विष्ठा । नानुपाश्रित आश्रितान्वितो न भुञ्जीत । नातीतकालं नातिक्रान्तकालमित्यर्थः, ( सस्नेहवस्तुनि पीडनेन स्नेहाद्भिन्नं यत्तदुद्धृतस्नेहम् । ) ॥ ९८ ॥

**न भुञ्जीतोद्धृतस्नेहं नष्टं पर्युषितं पयः ॥**
**न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ॥ ९९ ॥**
**नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना ॥**
**अन्यथा जनयेत् कुष्ठविसर्पादीन् गदान् बहून् ॥**
**नात्मानमुदके पश्येन्न नग्नः प्रविशेज्जलम् ॥ १०० ॥**

उद्धृतस्नेहं च सुमन्थनेनैव स्नेहाद्भिन्नम्, अत्र स्नेहो घृतम् । न नक्तं दधीत्यादि । न चाप्यलवणं न वाऽप्युदकवर्जितं दधि भुञ्जीत ॥ ९९ ॥ १०० ॥

**द्यूतमद्यातिसेवाप्रतिभूत्वसाक्षित्वसमाह्वानगोष्ठीवादित्राणि न सेवेत, स्रजं छत्रोपानहौ कनकमतीतवासांसि न चान्यैर्धृतानि धारयेत्, ब्राह्मणमग्निं गां च नोच्छिष्टः स्पृशेत् ॥ १०१ ॥**

प्रतिभूः लग्नकः, निष्कारणमाहूय स्वेच्छालापकथनं समाह्वानम् । वादित्राणि मृदङ्गादीनि । अतीतवासांसि जीर्णवस्त्राणि, अन्यैर्विधृतानि न प्रक्षाल्य धारयेत् ॥ १०१ ॥

१ '°ण्यभिनिकुष्णीयात्' इति पा० । २ 'नाभिनिकुष्णीयात् न निष्कर्षेत्' इति पा० ।

१ 'मक्षिकाव्यालोपहतानि' इति पा० । २ "किञ्चिदुःखं समाहृत्य यद्भोजनं' इति पा० । ३ 'त्वरया' इति पा० । ४ अयं पाठः कचित्पुस्तके नोपलभ्यते । ५ अयं पाठः क्वचित्पुस्तके नोपलभ्यते । ६ 'नूतनानि पुनः प्रक्षाल्य धारयेत्' इति पा० ।

भवन्ति चात्र—
यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम् ।
तेषु तेषु प्रदातव्या रसास्ते ते विजानता ॥ १०२ ॥
वर्षासु न पिबेत्तोयं पिबेच्छरदि मात्रया ॥
वर्षासु चतुरो मासान् मात्रावदुदकं पिबेत् ॥१०३॥
उष्णं हैमे वसन्ते च कामं ग्रीष्मे तु शीतलम् ॥
हेमन्ते च वसन्ते च सीध्वरिष्टौ पिबेन्नरः ॥ १०४ ॥
शृतशीतं पयो ग्रीष्मे प्रावृट्काले रसं पिबेत् ॥
यूषं वर्षति, तस्यान्ते प्रपिबेच्छीतलं जलम् ॥१०५॥
स्वस्थ एवमतोऽन्यस्तु दोषाहारगतानुगः ॥
स्नेहं सैन्धवचूर्णेन पिप्पलीभिश्च संयुतम् ॥ १०६ ॥
पिबेदग्निविवृद्ध्यर्थं न च वेगान् विधारयेत् ॥

अन्नं नियम्य कालेन वर्षादिऋतुलक्षणेनापि पानं नियमयन्नाह—वर्षास्वित्यादि । न पिबेत् ईषत् पिबेदित्यर्थः । पिबेच्छरदि मात्रयेति मात्राशब्दोऽल्पवचनः । एतेनैतदुक्तं भवति—काममभिलाषपूर्णं, न त्वतिशयेन । सीध्वरिष्टौ मद्यारिष्टयोरुदकं पिबेदित्यर्थः । सीधुः सस्नकः, अरिष्टः अभयारिष्टादिकः, पयोऽत्र क्षीरम् । तस्यान्ते वर्षान्ते । अतोऽन्य इति अस्वस्थः । दोषाहारगतानुगो भवेत् दोषा वातादयः; तत्र वाते स्निग्धमुष्णं, पित्ते शीतं, कफे रूक्षोष्णम्; आहारगतानुग इति 'उष्णोदकानुपानं तु स्नेहानामथ शस्यते' इत्यादि । वेगविधारणं हि अग्निनाशनम् ॥ १०२–१०६ ॥—

अग्निदीप्तिकरं नृणां रोगाणां शमनं प्रति ॥ १०७ ॥
प्रावृट्शरद्वसन्तेषु सम्यक् स्नेहादिमाचरेत् ॥
कफे प्रच्छर्दनं पित्ते विरेको बस्तिरीरणे ॥ १०८ ॥
शस्यते त्रिष्वपि सदा व्यायामो दोषनाशनः ॥
भुक्तं विरुद्धमप्यन्नं व्यायामान्न प्रदुष्यति ॥ १०९ ॥

स्वस्थातुरयोरुभयोरपि वक्ष्यमाणं शोधनं निर्दिशन्नाह[1]—कफ इत्यादि । ईरणे वाते । अपिशब्दो व्यायामक्रियाफलानां प्रागुक्तानामपीहानुवर्तनं समुच्चिनोति । न प्रदुष्यति न दोषकरं भवति ॥ १०७–१०९ ॥

उत्सर्गमैथुनाहारशोधने स्यात्तु तन्मनाः ॥
नेच्छेद्दोषचयात्[2] प्राज्ञः पीडां वा कायमानसीम् ११०
अतिस्त्रीसंप्रयोगाच्च रक्षेदात्मानमात्मवान् ॥
शूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयाः[3] ॥ १११ ॥
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः ॥
आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः ॥ ११२ ॥
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ॥
त्रिभिस्त्रिभिरहोभिर्वा समीयात् प्रमदां नरः ॥११३॥
सर्वेष्वृतुषु, घर्मेषु पक्षात् पक्षाज्जेद्बुधः ॥
रजस्वलामकामां च मलिनामप्रियां तथा ॥ ११४ ॥
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीडिताम् ॥
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिदोषसमन्विताम् ११५
सगोत्रां गुरुपत्नीं च तथा प्रव्रजितामपि ॥
सन्ध्यापर्वस्वगम्यां च नोपेयात् प्रमदां नरः ॥११६॥
गोसर्गे चार्धरात्रे च तथा मध्यन्दिनेषु च ॥
लज्जासमावहे देशे विवृतेऽशुद्ध एव च ॥ ११७ ॥
क्षुधितो व्याधितश्चैव क्षुब्धचित्तश्च मानवः ॥
वातविण्मूत्रवेगी च पिपासुरतिदुर्बलः ॥ ११८ ॥
तिर्यग्योनावयोनौ च प्राप्तशुक्रविधारणम् ॥
दुष्टयोनौ विसर्गं तु बलवानपि वर्जयेत् ॥ ११९ ॥
रेतसश्चातिमात्रं तु मूर्धावरणमेव च ॥
स्थितावुत्तानशयने विशेषेणैव गर्हितम् ॥ १२० ॥
क्रीडायामपि मेधावी हितार्थी परिवर्जयेत् ॥
रजस्वलां प्राप्तवतो नरस्यानियतात्मनः ॥ १२१ ॥
दृष्ट्यायुस्तेजसां हानिरधर्मश्च ततो भवेत् ॥
लिङ्गिनीं गुरुपत्नीं च सगोत्रामथ पर्वसु ॥ १२२ ॥
वृद्धां च सन्ध्ययोश्चापि गच्छतो जीवितक्षयः ॥
गर्भिण्या गर्भपीडा स्याद् व्याधितायां बलक्षयः १२३
हीनाङ्गीं मलिनां द्वेष्यां कामं वन्ध्यामसंवृते ॥
देशेऽशुद्धे च शुक्रस्य मनसश्च क्षयो भवेत् ॥१२४॥
क्षुधितः क्षुब्धचित्तश्च मध्याह्ने तृषितोऽबलः ॥
स्थितश्च हानिं शुक्रस्य वायोः कोपं च विन्दति १२५
अतिप्रसङ्गाद्भवति शोषः शुक्रक्षयावहः ॥
व्याधितस्य रुजा क्लीबे मृत्युर्मूर्च्छा च जायते १२६
प्रत्यूषस्यर्धरात्रे च वातपित्ते प्रकुप्यतः ॥
तिर्यग्योनावयोनौ च दुष्टयोनौ तथैव च ॥ १२७ ॥
उपदंशस्तथा वायोः कोपः शुक्रस्य च क्षयः ॥
उच्चारिते मूत्रिते च रेतसश्च[1] विधारणे ॥ १२८ ॥
उत्ताने च भवेच्छीघ्रं शुक्राश्मर्यास्तु संभवः ॥
सर्वं परिहरेत्तस्मादेतल्लोकद्वयेऽहितम् ॥ १२९ ॥
शुक्रं चोपस्थितं मोहान्न सन्धार्यं कथंचन ॥

शोधने वमनविरेचने । तन्मना उत्सर्गादिमना नान्यचित्त इत्यर्थः । दोषचयादिशङ्कामप्राप्तः प्राज्ञः शोधनादिना कायमानसीं पीडां नेच्छेदित्यर्थः । अत्र आत्मा शरीरम् । आत्मवान् बुद्धिवान् । स्थिरोपचितमांसा इति कठिनस्थिरमांसा इत्यर्थः । समीयात् गच्छेत् । अकामां मैथुनानभिलाषिणीम् । वर्णवृद्धां वर्णश्रेष्ठामित्यर्थः, यथा शूद्रो न वैश्यां, वैश्यो न क्षत्रियां, क्षत्रियो न ब्राह्मणीमिति । द्वेष्यां शत्रुभूताम् । प्रव्रजितां गृहीतव्रताम् । सन्ध्यापर्वसु पक्षान्तरे नान्वष्टकादिषु । अगम्या स्वसृदुहितृप्रभृतयः । नोपेयात् न गच्छेत् । गोसर्गे प्रभाते ।

१ 'वक्ष्यमाणकरणीयशोधनफलं निर्दिशन्नाह' इति पा० । २ 'नेच्छेद्रोगभयात्' इति पा० । ३ '°कार्श्यार्शःपाण्डुताक्षयाः' इति पा० ।

१ 'रेतसपि विधारिते' इति पा० ।

विवृते अनाच्छादिते देशे इत्यर्थः । अशुद्धे मनसोऽप्रिये कलुषितदेशे इत्यर्थः । क्षुब्धचित्तः भीतचित्तः[1] । तिर्यग्योनिः अजादिः । अयोनि मुखादिमैथुनं, यथा दाक्षिणात्याः स्त्रियो मुखे मैथुनं कारयन्ति । प्राप्तशुक्रविधारणमिति एषु शुक्रपातो न कार्य इत्यर्थः, चलितशुक्रविधारणं न कार्यमिति वाऽर्थः । दुष्टयोनौ स्वभावदुष्टयोनौ । रेतसश्चातिमात्रं तु विसर्गं विवर्जयेदिति संबन्धः । मूर्धावरणं लिङ्गमणेरावरणं, यथा दाक्षिणात्याः कृत्रिममणिं कारयन्तीति जेज्जटः; क्वचित् पुस्तके 'मूर्धाहननमेव च' इति पाठः, तत्र रहसि हर्षेण शिरस्ताडनं परित्यजेत् । यथाऽऽह **वृद्धवाग्भटः** "मूर्धाभिघातं परिहरेत्", (अ. सं. सू. अ. ९) **लघुवाग्भटोऽपि**,–"पर्वाण्यनङ्गं दिवसं शिरोहृदयताडनम्" ( वा. सू. अ. ७ ) इति[2] । स्थिताविति स्थानं स्थितिरूर्ध्वीभावः, तत्र रेतसो विसर्गं वर्जयेत् । उत्तानशयनेऽपि रेतसो विसर्गं परिवर्जयेत् । एतयोः क्रीडायामपि रेतोविसर्गं परिवर्जयेत् । अनियतात्मनः अजितेन्द्रियस्य । वृद्धां वर्णवयोभ्यां वृद्धाम् । असंवृते देशे अनाच्छादितदेशे इत्यर्थः[3] । अशुद्धे कलुषे इत्यर्थः । मनसः क्षयोऽप्रकर्षता, वन्ध्यामिति यद्यपि उद्देशशास्त्रे वन्ध्यापदं नास्ति तथाऽपि योनिदोषसमन्वितामित्यनेन पदेनोपगृहीतेम्[4] । उच्चारिते पुरीषवेगवति । मूत्रिते मूत्रवेगयुक्ते । अधःस्थितः पुमानुत्तानः, तदुपरिस्था नारी, यद्यपि अप्रियाऽगम्यामूर्धाभिघातानां सेवने दूषणं नाभिहितं, तथाऽप्यप्रियायां द्वेष्यामिव शुक्रस्य मनसश्च क्षयो भवति, अगम्यासु च वर्णवृद्धायामिव जीवितक्षयः, मूर्धाभिघाते च तन्त्रान्तराद्दूषणं ज्ञेयं, तथा च **वृद्धवाग्भटः**,—"तिमिरादिगदोत्पत्तिर्मूर्धाभिहननाद् ध्रुवम्" (अ. सं. सू. अ. ९ )-इति ॥ ११०–१२९ ॥—

**वयोरूपगुणोपेतां तुल्यशीलां कुलान्वितां[5] ॥१३०॥**
**अभिकामोऽभिकामां तु हृष्टो हृष्टामलङ्कृताम् ॥**
**सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः ॥ १३१ ॥**
**भक्ष्याः सशर्कराः क्षीरं ससितं रस एव च ॥**
**स्नानं सव्यजनं स्वप्नो व्यवायान्ते हितानि तु[6] ॥१३२॥**

गुणो दाक्षिण्यादिः । तुल्यशीलां समानस्वभावाम् । अभिकामः साभिलाषः । अभिकामां वृषस्यन्तीं सकामामित्यर्थः । रसो मांसरसः । व्यजनं व्यजनानिलः । ननु चास्य विधेरसंभव एव, तथाहि—रात्रावेवाभिगमनमुक्तं, रात्रौ च स्नानभोजनादिभिरजीर्णादिदोषः स्यात्, तत् कथं मैथुनान्ते स्नानादिविधिः? सत्यम्, अधिकशुक्राणां नराणां दिवा मैथुनगामिनामयं स्नानविधिर्व्यवस्थापित इति भावः; अथवा ग्रीष्मे सायं स्नानं भोजनं च संभाव्यते एवेति न दोषः ॥ १३०–१३२ ॥

**मुखमात्रं समासेन सद्वृत्तस्यैतदीरितम् ॥**
**आरोग्यमायुरर्थो वा नासद्भिः प्राप्यते नृभिः १३३**

**इति सुश्रुतसंहितायां चिकित्सास्थानेऽनागताबाधचिकित्सितं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥**

इदानीमतिविस्तृतत्वात् प्रधानमात्रमेवैतदीरितं न पुनरत्राप्रधानमपीत्याह—मुखमात्रमित्यादि । मुखमात्रं प्रधानमात्रं, समासेन संक्षेपेण । नासद्भिः अनाचारैः । नृभिः पुरुषैः । ( केचिदस्मिन्नध्याये 'यस्मिन् यस्मिन्नृतौ' इत्यादिकं तथा स्त्रीप्रयोगक्रमं[2] चाधीयन्ते; तदसम्यक्, पञ्जिकायां दूषितत्वात् ) ॥ १३३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने चतुर्विंशतितमोऽध्यायः ।

---

## पञ्चविंशतितमोऽध्यायः ।

**अथातो मिश्रकचिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**
**पाल्यामयास्तु विज्ञाव्या इत्युक्तं प्राङ्निबोध तान् ॥**
**परिपोटस्तथोत्पात उन्मन्थो दुःखवर्धनः ॥ ३ ॥**
**पञ्चमः परिलेही च कर्णपाल्यां गदाः स्मृताः ॥**
**सौकुमार्याच्चिरोत्सृष्टे सहसाऽभिप्रवर्धिते ॥ ४ ॥**
**कर्णशोफो भवेत् पाल्यां सरुजः परिपोटवान् ॥**
**कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः ॥५॥**
**गुर्वाभरणसंयोगात्ताडनाद्घर्षणादपि ॥**
**शोफः पाल्यां भवेच्छ्यावो दाहपाकरुगन्वितः ॥६॥**
**रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः ॥**
**बलाद्वर्धयतः कर्णं पाल्यां वायुः प्रकुप्यति ॥ ७ ॥**
**गृहीत्वा सकफं कुर्याच्छोफं तद्वर्णवेदनम्[3] ॥**
**उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ ८ ॥**
**वर्धमाने यदा कर्णे कण्डूदाहरुगन्वितः ॥**
**शोफो भवति पाकश्च त्वक्स्थोऽसौ दुःखवर्धनः ॥९**
**कफासृक्कृमयः कुर्युः सर्षपाभा विकारिणीः ॥**
**स्राविणीः पिडकाः पाल्यां कण्डूदाहरुगन्विताः १०**
**कफासृक्कृमिसंभूतः स विसर्पन्नितस्ततः ॥**
**लिह्यात् सशष्कुलीं पालीं परिलेहीति स स्मृतः ११**
**पाल्यामया ह्यमी घोरा नरस्याप्रतिकारिणः ॥**

१ 'चलितचित्तः' इति पा० । २ 'अस्याग्रे 'शेषां मूर्च्छां मरणमेव च' इति पाठः, ते तु रेतसोऽतिविसर्गस्य दूषणं वर्जनप्रकार एव मूर्च्छेत्यादिना पठन्ति । स चाप्राकरणिकत्वादसंगत इति पूर्व एव पाठो न्याय्यः । अत्रैवावर्जने दोषमाह–मूर्च्छेत्यादि । अन्यदपि दोषकथनप्रस्तावनायामग्रे कथयिष्यति' इत्यधिकः पाठ उपलभ्यते । ३ 'विवृते देशे' इति पा० । ४ हाराणचन्द्रस्तु 'कामवन्ध्यां' इति पठित्वा 'अकामां' इति व्याख्यानयति । ५ 'गुणान्वितान्' इति पा० । ६ 'स्नानं सशर्करं क्षीरं रसो भक्ष्याश्च गौडिकाः । व्यजनं स्वप्नसेवा च व्यवायान्ते हितानि तु' इति पा० ।

१ 'हाराणचन्द्रेण स्वयं श्लोको १०१ अङ्कस्यानन्तरं पठितः । २ अयं पाठः क्वचित्पुस्तके नोपलभ्यते । ३ 'स्तब्धमवेदनम्' इति पा० ।

मिथ्याहारविहारस्य पालिं हिंस्युरुपेक्षिताः ॥ १२ ॥

चिरोत्सृष्टो बहुकालं यावत् परित्यक्तः, सौकुमार्यहेतुत्वात् । शष्कुली बाह्यपाल्यधिष्ठानं ॥ १-१२ ॥

तस्मादाशु भिषक् तेषु स्नेहादिक्रममाचरेत् ॥
तथाऽभ्यङ्गपरीषेकप्रदेहासृग्विमोक्षणम् ॥ १३ ॥
सामान्यतो विशेषाच्च वक्ष्याम्यभ्यञ्जनं प्रति ॥
खरमञ्जरियष्ट्याह्वसैन्धवामरदारुभिः ॥ १४ ॥
सुपिष्टैः साश्वगन्धैश्च मूलकावल्गुजैः फलैः ॥
सर्पिस्तैलवसामज्जमधूच्छिष्टानि पाचयेत् ॥ १५ ॥
सक्षीराण्यथ तैः पालिं प्रदिह्यात् परिपोटके ॥
मञ्जिष्ठातिलयष्ट्याह्वसारिवोत्पलपद्मकैः ॥ १६ ॥
सरोध्रैः सकदम्बैश्च बलाजम्ब्वाम्रपल्लवैः ॥
सिद्धं धान्याम्लसंयुक्तं तैलमुत्पातनाशनम् ॥ १७ ॥
तालपत्र्यश्वगन्धार्कवाकुचीफलसैन्धवैः ॥
तैलं कुलीरगोधाभ्यां वसया सह पाचितम् ॥ १८ ॥
सरलालाङ्गलीभ्यां च हितमुन्मन्थनाशनम् ॥
तथाऽश्मन्तकजम्ब्वाम्रपत्रक्वाथेन सेचनम् ॥ १९ ॥
प्रपौण्डरीकमधुकमञ्जिष्ठारजनीद्वयैः ॥
चूर्णैरुद्वर्तनैः पालीं तैलाक्तामवचूर्णयेत् ॥ २० ॥
लाक्षाविडङ्गकल्केन तैलं पक्त्वाऽवचारयेत् ॥
स्विन्नां गोमयपिण्डेन प्रदिह्यात् परिलेहिके ॥ २१ ॥
पिष्टैर्विडङ्गैरथवा त्रिवृच्छ्यामार्कसंयुतैः ॥
करञ्जेङ्गुदिबीजैर्वा कुटजारग्वधायुतैः ॥ २२ ॥
सर्वैर्वा सार्षपं तैलं सिद्धं मरिचसंयुतम् ॥
सनिम्बपत्रैरभ्यङ्गे मधूच्छिष्टान्वितं हितम् ॥ २३ ॥
पालीषु व्याधियुक्तासु तन्वीषु कठिनासु च ॥
पुष्ट्यर्थं मार्दवार्थं च कुर्यादभ्यञ्जनं त्विदम् ॥ २४ ॥
लोपाकानूपमज्जानं वसां तैलं नवं घृतम् ॥
पचेद्दशगुणं क्षीरमावाप्य मधुरं गणम् ॥ २५ ॥
अपामार्गाश्वगन्धे च तथा लाक्षारसं शुभम् ॥
तत्सिद्धं परिपूतं च स्वनुगुप्तं निधापयेत् ॥ २६ ॥
तेनाभ्यङ्ग्यात् सदा पालीं सुस्विन्नामतिमर्दिताम् ॥
एतेन पाल्यो वर्धन्ते निरुजो निरुपद्रवाः ॥ २७ ॥
मृद्व्यः पुष्टाः समाः स्निग्धा जायन्ते भूषणक्षमाः ॥

तस्मादित्यादि । स्नेह आदिर्यस्य वमनादेः स तथा । तत्र वातिकेऽभ्यङ्गानुवासनप्रदेहादि, पैत्तिके विरेचनं, श्लैष्मिके वमनं, रक्तपैत्तिके रक्तापकर्षणविरेकपरिषेकादिका क्रिया, कृमिजे कृमिघ्नश्च विधिरिति । खरमञ्जरिः अपामार्गः । अवल्गुजा बाकुचिका । परिपोटके पालिं चतुःस्नेहेन सकिट्टेनैव प्रदिह्यात् । तालपत्री मुशली । कुलीरगोधाभ्यामिति कुलीरः कर्कटः, गोधा 'गोसाप्' इति भाषा । सरला धूपकाष्ठः । अश्मन्तकादिपत्रक्वाथपरिषिक्तां लाक्षाविडङ्गकल्कसिद्धेन तैलेनाभ्यक्तां प्रपौण्डरीकादिचूर्णैरवचूर्णयेत् । त्रिवृदादिसंयुतैर्विडङ्गैर्गोमूत्रपिष्टैः प्रदिह्यात् । गयी तु परिलेहिके पिप्पलीकृमिघ्नवचाकल्केन गोमूत्रपिष्टेन च प्रदिह्यादिति व्याख्यानयति; तदनुगतश्च पाठो न लभ्यते । सर्वैरनन्तरोक्तैः; गोमूत्रपिष्टैरेव करञ्जादिभिश्चतुर्भिः । अत्रापि गोमूत्रं चतुर्गुणम् । अन्ये त्वेवं पठन्ति—"निम्बपत्रैर्मूत्रसिक्ते घृष्टे चाभ्यञ्जनं हितम्" इति । लोपाकः लांगटकः । आनूपा महिषादयः । वसा पुनस्तेषामेव । मधुरगणः काकोल्यादिः ॥ १३-२७ ॥

नीलीदलं भृङ्गरजोऽर्जुनत्वक्
पिण्डीतकं कृष्णमयोरजश्च ॥
बीजोद्भवं साहचरं च पुष्पं
पथ्याक्षधात्रीसहितं विचूर्ण्य ॥ २८ ॥
एकीकृतं सर्वमिदं प्रमाय
पङ्केन तुल्यं नलिनीभवेन ॥
संयोज्य पक्षं कलशे निधाय
लौहे घटे सद्मनि सापिधाने ॥ २९ ॥
अनेन तैलं विपचेद्विमिश्रं
रसेन भृङ्गत्रिफलाभवेन ॥
आसन्नपाके च परीक्षणार्थं
पत्रं बलाकाभवमाक्षिपेच्च ॥ ३० ॥
भवेद्यदा तद्भ्रमराङ्गनीलं
तदा विपक्वं विनिधाय पात्रे ॥
कृष्णायसे मासमवस्थितं त-
दभ्यङ्गयोगात् पलितानि हन्यात् ॥ ३१ ॥

पलिते नीलीतैलमाह—नीलीदलमित्यादि । नीली नीलाञ्जनिका शारदफला, 'श्रीफली' इति लोके । भृङ्गराजो मार्कवः । पिण्डीतकं कृष्णं, कृष्णपुष्पो मदनः । बीजोद्भवं साहचरं च पुष्पं बीजकसहचरयोः पुष्पम्; अन्ये तु बीजोद्भवमित्याहुः, अस्मिन् योगे केचित् साहचरं श्यामापुष्पं इति वदन्ति । एकीकृतं सर्वमिदं प्रमायेति अदः एतत्, प्रमाय तोलयित्वा, नलिनीभवेन पङ्केन तुल्यं पद्मतलकर्दमेन सहेत्यर्थः । संयोज्य मेलयित्वा । सद्मनि गृहे । सापिधाने सुष्ठु आवृते सञ्झम्पने कलशे इति ज्ञेयम् । अनेनेत्यादि । पक्षादुद्धृत्यानेन तैलं विपचेत् । स्नेहचतुर्थांशो भेषजकल्कः, स्नेहाच्चतुर्गुणो द्रव इति न्यायः स्वयमेवोह्यः । आसन्नपाके चेत्यादि । तावत् कालं पाचयेद् यावदेव बलाकापक्षं नीलं भवतीति; एतेन पुनः पुनर्द्रवं निक्षिप्य पचेदित्युक्तं भवति ॥ २८-३१ ॥

सैरीयजम्ब्वर्जुनकाश्मरीजं
पुष्पं तिलान्मार्कवचूतबीजे ॥
पुनर्नवे कर्दमकण्टकार्यौ
कासीसपिण्डीतकबीजसारम् ॥ ३२ ॥

१ 'घृष्टे' इति पा० । २ 'विपचेद्विधिज्ञः' इति पा० ।
३ 'शरद्वला' इति पा० । ४ 'न गालयेत्' इति पा० ।

फलत्रयं लोहरजोऽञ्जनं च
यष्ट्याह्वयं नीरजसारिवे च ॥
पिष्ट्वाऽथ सर्वं सह मोदयन्त्या
साराम्भसा बीजकसंभवेन ॥ ३३ ॥
साराम्भसः सप्तभिरेव पश्चात्
प्रस्थैः समालोड्य दशाहगुप्तम् ॥
लौहे सुपात्रे विनिधाय तैल-
मक्षोद्भवं तच्च पचेत् प्रयत्नात् ॥ ३४ ॥
पक्वं च लौहेऽभिनवे निधाय
नस्यं विदध्यात् परिशुद्धकायः ॥
अभ्यङ्गयोगैश्च नियुज्यमानं
भुञ्जीत माषान् कृशरामथो वा ॥ ३५ ॥
मासोपरिष्टाद्घनकुञ्चिताग्राः
केशा भवन्ति भ्रमराञ्जनाभाः ॥
केशास्तथाऽन्ये खलतौ भवेयु-
र्जरा न चैनं सहसाऽभ्युपैति ॥ ३६ ॥
बलं परं संभवतीन्द्रियाणां
भवेच्च वक्त्रं वलिभिर्विमुक्तम् ॥
नाकामिनेऽनार्थिनि नाकृताय
नैवारये तैलमिदं प्रदेयम् ॥ ३७ ॥

सैरीयकादीनां पुष्पाणि । सैरीयकः कण्टसेलीयाकः, मार्कवचूतयोर्बीजे, मार्कवो भृङ्गराजः । चूत आम्रः । पुनर्नवे द्वे शुक्ललोहिते । कर्दमः पद्मिनीमूलपङ्कः । पिण्डीतको मदनकः, तस्य यत्फलं पाण्डुरवर्णं भवति तदिह ग्राह्यम् । बीजसारं असनसारम् । अञ्जनं नीलवर्णं रसाञ्जनं, अन्ये स्रोतोऽञ्जनमाहुः । नीरजं नीलोत्पलम् । पिष्ट्वा सर्वं कर्षप्रमाणमित्यर्थः । मोदयन्ती मल्लिकेति लोके ख्याता । साराम्भसा बीजकसंभवेन बीजकसारोदकेन । तैलमक्षोद्भवं बिभीतकतैलं, तदाढकप्रमाणं पचेदिति । लौहपात्रे निधाय स्थापयेत्, 'मासमात्रम्' इति शेषः । एष पलिते खलतौ च योगः; वलिः त्वक्सङ्कोचः, अनर्थिनि अतात्पर्यार्थपरे, अकृताय कृतघ्नाय ॥ ३२–३७ ॥

लाक्षा रोध्रं द्वे हरिद्रे शिलाले
कुष्ठं नागं गैरिका वर्णकाश्च ॥
मञ्जिष्ठोग्रा स्यात् सुराष्ट्रोद्भवा च
पत्तङ्गं वै रोचना चाञ्जनं च ॥ ३८ ॥
हेमाङ्गत्वक् पाण्डुपत्रं वटस्य
कालीयं स्यात् पद्मकं पद्ममध्यम् ॥
रक्तं श्वेतं चन्दनं पारदं च
काकोल्यादिः क्षीरपिष्टश्च वर्गः ॥ ३९ ॥
मेदो मज्जा सिक्थकं गोघृतं च
दुग्धं क्वाथः क्षीरिणां च द्रुमाणाम् ॥
एतत् सर्वं पक्वमेकध्यतस्तु
वक्त्राभ्यङ्गे सर्पिरुक्तं प्रधानम् ॥ ४० ॥
हन्याद् व्यङ्गं नीलिकां चातिवृद्धां
वक्त्रे जाताः स्फोटिकाश्चापि काश्चित् ॥
पद्माकारं निर्वलीकं च वक्त्रं
कुर्यादेतत् पीनगण्डं मनोज्ञम् ॥ ४१ ॥
राज्ञामेतद्योषितां चापि नित्यं
कुर्याद्वैद्यस्तत्समानां नृणां च ॥
कुष्ठघ्नं वै सर्पिरेतत् प्रधानं
येषां पादे सन्ति वैपादिकाश्च ॥ ४२ ॥

लाक्षामित्यादि । वलिः त्वक्संकोचः ॥ ३८–४२ ॥

हरीतकीचूर्णमरिष्टपत्रं
चूतत्वचं दाडिमपुष्पवृन्तम् ॥
पत्रं च दद्यान्मदयन्तिकाया
लेपोऽङ्गरागो नरदेवयोग्यः ॥ ४३ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने
मिश्रकचिकित्सितं नाम पञ्चविं-
शोऽध्यायः ॥ २५ ॥

हरीतकीत्यादि । अरिष्टपत्रं निम्बपत्रं, फेनिलवृक्षपत्रं वा । चूतत्वक् आम्रत्वक् । मदयन्तिका 'मेंदी'इति लोके, यस्याः पिष्टैः पत्रैर्नखानां रागं स्त्रिय उत्पादयन्ति ॥ ४३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने पञ्चविंशतितमोऽध्यायः ।

---

## षड्विंशतितमोऽध्यायः ।

अथातः क्षीणबलीयं वाजीकरणचिकित्सितं व्याख्यास्यामः ॥ १ ॥

---

१ ( लाक्षामनोह्वगजरोध्रतालं पत्तङ्गरक्ताकनकाभिधानाः ।
सौराष्ट्रिका पाण्डु वटस्य पत्रं कालीयकं पद्मकपद्ममध्यम् ३८
गोरोचनाकुङ्कुमगैरिकानि निशाद्वयं पारदचन्दने च ।
क्षौद्रोत्थमज्जाज्यवसापयांसि सस्वादुवर्गामयवर्णकानि ॥३९॥
क्षीरद्रुमाणां क्वथनेन पिष्ट्वा संपाचितं ताम्रमये कटाहे ।
अभ्यङ्गयोगेन निषेव्यमाणं व्यङ्गं समस्तान् पिडकांश्च सर्पिः ।
वक्त्रे प्रवृद्धामति नीलिकां च तूर्णं निहन्यात्तिलकालकांश्च ।
वलीविमुक्तं दृढपीनगण्डं कुर्याच्च वक्त्रं कमलानुकारि ॥ ४१ ॥

टी. मनोह्वा मनःशिला, गजं नागकेसरं, तालं हरितालं पत्तङ्गं रक्तचन्दनभेदः, रक्ता मञ्जिष्ठा, कनकाभिधाना सुवर्णक्षीरिकेति प्रसिद्धा, सौराष्ट्रिका तुवरमृत्तिका, कालीयकं पीतचन्दनं, पद्मकं पद्मकाष्ठं, पद्ममध्यं पद्मवराटकं, पारदः शम्भुरेतः, चन्दने च एकं सितमपरं रक्तं, क्षौद्रोत्थं मधूच्छिष्टं, वसामज्जासर्पिष्कानि कल्कभागेनैव, पयो दुग्धं तच्च घृतसमं देयं, स्वादुवर्गः काकोल्यादिः, आमयः कुष्ठं; वर्णकः कम्पिल्लकः, कङ्कुष्ठकमपरे, अन्ये सुवर्णमाहुः, आरग्वधकल्कमपरे; क्षीरद्रुमाणां क्वथनेनेति वटादीनां त्रिगुणेन क्वाथेन अथवा चतुर्गुणेनेत्यर्थः; अयं पाठोऽसौश्रुतोऽपि जेज्जटेनोक्तत्वादसद्वैद्यैः पठितत्वान्मयाऽपि पठितः' इति पा० ।

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

क्षीणता हीनशक्तित्वम् ॥ १ ॥ २ ॥

कल्यस्योदग्रवयसो वाजीकरणसेविनः ॥
सर्वेष्वृतुष्वहरहर्व्यवायो न निवारितः ॥ ३ ॥
स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम् ॥
योषित्प्रसङ्गात् क्षीणानां क्लीबानामल्परेतसाम् ॥४॥
विलासिनामर्थवतां रूपयौवनशालिनाम् ॥
नृणां च बहुभार्याणां योगा वाजीकरा हिताः ॥ ५ ॥

कल्यस्य रोगरहितस्य । उदग्रवयसः तरुणस्य ॥ ३–५ ॥

सेवमानो यदौचित्याद्वाजीवात्यर्थवेगवान् ॥
नारीस्तर्पयते तेन वाजीकरणमुच्यते ॥ ६ ॥
भोजनानि विचित्राणि पानानि विविधानि च ॥
वाचः श्रोत्रानुगामिन्यस्त्वचः स्पर्शसुखास्तथा ॥७॥
यामिनी सेन्दुतिलका कामिनी नवयौवना ॥
गीतं श्रोत्रमनोहारि ताम्बूलं मदिराः स्रजः ॥ ८ ॥
गन्धा मनोज्ञा रूपाणि चित्राण्युपवनानि च ॥
मनसश्चाप्रतीघातो वाजीकुर्वन्ति मानवम् ॥

अथ किं तद्वाजीकरणमित्युच्यत इत्याह—सेवमान इत्यादि । तथाऽन्यत्रापि "वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः" इत्यादिलक्षणं वाजीकरणम् । तत् त्रिविधम्—जनकं, प्रवर्तकं, जनकप्रवर्तकं चेति । तत्र जनकं मांसघृतादिकं, यतस्तद्रसादिधातुक्रमेण परिणतं सत् प्रधानधातुपुष्टिं करोति; प्रवर्तकमुचटाचूर्णादिकं शुक्रवैरेचनिकं, न च तस्य वैरेचनिकोक्त्या शुक्रक्षयकारित्वं स्यात्, अतो विरेचनं शुक्रस्य पतनायाभिमुखीभावमात्रकरणं; जनकप्रवर्तकं तु गव्यघृतगोधूममाषकाकाण्डफलादिकम् । केवलं देहबलकरं जनकं गोधूमादिकं, केवलमनोबलकरं सङ्कल्पादि तु प्रवर्तकं, घृतक्षीरादि देहमनोबलकरं सदुभयकरमिति । वृष्यादिद्रव्याणां सद्यः शुक्रादिकरणे प्रभावोऽयम् । तथा च **श्रीवाग्भटः**,—"केचिदाहुरहोरात्रात् षडहादपरे, परे । मासात् प्रयाति शुक्रत्वमन्नं पाकक्रमादिति ॥ वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्वते ॥ प्रायः करोत्यहोरात्रात् कर्मान्यदपि भेषजम्" ( वा. शा. अ. ३ )—इति । रिरंसुः रन्तुमिच्छुः । प्रवर्तनादिकारणान्युद्दिशन्नाह—भोजनानीत्यादि ॥ ६–८ ॥

तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते ॥ ९ ॥
द्वेष्यस्त्रीसंप्रयोगाच्च क्लैब्यं तन्मानसं स्मृतम् ॥
कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः ॥ १० ॥
सौम्यधातुक्षयो दृष्टः क्लैब्यं तदपरं स्मृतम् ॥
अतिव्यवायशीलो यो न च वाजीक्रियारतः ॥११॥
ध्वजभङ्गमवाप्नोति तच्छुक्रक्षयहेतुकम् ॥
महता मेढ्ररोगेण मर्मच्छेदेन वा पुनः ॥ १२ ॥
क्लैब्यमेतच्चतुर्थं स्यान्नृणां पुंस्त्वोपघातजम् ॥
जन्मप्रभृति यः क्लीबः क्लैब्यं तत् सहजं स्मृतम् १३
बलिनः क्षुब्धमनसो निरोधाद् ब्रह्मचर्यतः ॥
षष्ठं क्लैब्यं मतं तत्तु खरशुक्रनिमित्तजम् ॥ १४ ॥
असाध्यं सहजं क्लैब्यं मर्मच्छेदाच्च यद्भवेत् ॥
साध्यानामितरेषां तु कार्यो हेतुविपर्ययः ॥ १५ ॥

प्रवर्तनाकारणान्युद्दिशन्नाह—तैस्तैरित्यादि । तैस्तैर्भावैरिति भयाविश्रम्भस्त्रीदोषदर्शनादिभिः । आहारजं क्लैब्यमाह—कटु-केत्यादि । रिरंसुः रन्तुमिच्छुः । धातुक्षयजन्यं क्लैब्यमाह—अतिव्यवायेत्यादि । ध्वजो मेहनम् । मर्मच्छेदेनेति शुक्रवहनाडीनां छेदनात् । बलिनः अतिस्थूलस्य । क्षुब्धमनसः चलचित्तस्य । निरोधात् वातमूत्रादीनाम् । खरं कठिनम्, अन्ये परुषमाहुः ॥ ९–१५ ॥

विधिर्वाजीकरो यस्तु तं प्रवक्ष्याम्यतः परम् ॥
तिलमाषविदारीणां शालीनां चूर्णमेव वा ॥ १६ ॥
पौण्ड्रकेक्षुरसैरार्द्रं मर्दितं सैन्धवान्वितम् ॥
वराहमेदसा युक्तां घृतेनोत्कारिकां पचेत् ॥ १७ ॥
तां भक्षयित्वा पुरुषो गच्छेत्तु प्रमदाशतम् ॥

रसैः मांसरसैरिक्षुरसैश्च । उत्कारिकां लप्सिकाम् ॥ १६ ॥ १७ ॥—

बस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ॥ १८ ॥
शिशुमारवसापक्वाः शष्कुल्यस्तिस्तैलैः कृताः ॥
यः खादेत् स पुमान् गच्छेत् स्त्रीणां शतमपूर्ववत् १९

सामान्यपरिभाषाकल्पेन सिद्धे पयसि सप्ताहं भावितान् तिलान् खादेत्, तत्रानुपानं क्षीरमेवेत्येको योगः । परिभाषामाह—"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशिष्टं कर्तव्यं क्षीरपाके त्वयं विधिः"–इति । बस्ताण्डसिद्धपयोभाविततिलैः कृताः शष्कुल्यः शिशुमारवसया भृष्टा भक्षिता यथोक्तफलदाः, तत्राप्यनुपाने क्षीरमिति द्वितीयो योगः, एतेन योगद्वयमुक्तम् । अपूर्ववत् प्रथमसुरतवत् ॥ १८ ॥ १९ ॥

पिप्पलीलवणोपेते बस्ताण्डे क्षीरसर्पिषि ॥
साधिते भक्षयेद्यस्तु स गच्छेत् प्रमदाशतम् ॥२०॥

पिप्पलीत्यादि । बस्ताण्डे क्षीरसर्पिषा क्षीरोत्थितनवनीतसर्पिषा पक्वे पिप्पल्या किञ्चित्कटुके सैन्धवेन किञ्चिल्लवणे भक्षिते यथोक्तफलदे, अनुपानं शीतलजलम् ॥ २० ॥

पिप्पलीमाषशालीनां यवगोधूमयोस्तथा ॥
चूर्णभागैः समैस्तैस्तु घृते पूपलिकां पचेत् ॥ २१ ॥
तां भक्षयित्वा पीत्वा तु शर्करामधुरं पयः ॥
नरश्चटकवद्गच्छेद्दशवारान्निरन्तरम् ॥ २२ ॥

पिप्पलीत्यादि। शृतं शर्करामधुरं क्षीरमनुपानम् ॥२१॥२२॥

---

१ 'स्थिरशुक्रनिमित्तजम्' इति पा० । २ 'विशिष्टविहारजं' इति पा० । ३ 'स्थिरं' इति पा० । ४ 'गच्छेत्तु पुरुषः षष्टिमङ्गनाः' इति पा० ।

विदार्याः सुकृतं चूर्णं स्वरसेनैव भावितम् ॥
सर्पिर्मधुयुतं लीढ्वा दश स्त्रीरधिगच्छेति ॥ २३ ॥
एवमामलकं चूर्णं स्वरसेनैव भावितम् ॥
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत् ॥ २४ ॥
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति ॥

स्वरसेनैव विदार्या एव, शर्करासर्पिःक्षौद्रयुतं लीढ्वाऽनन्तरमनुपानं पयः पिबेत् ॥ २३ ॥ २४ ॥—

पिप्पलीलवणोपेते बस्ताण्डे घृतसाधिते ॥ २५ ॥
शिशुमारस्य वा खादेत्ते तु वाजीकरे भृशम् ॥
कुलीरकूर्मनक्राणामण्डान्येवं तु भक्षयेत् ॥ २६ ॥
महिषर्षभबस्तानां पिबेच्छुक्राणि वा नरः ॥

पिप्पलीत्यादि । बस्ताण्डे अजमुष्कौ । शिशुमारस्य 'अण्डे' इति शेषः । कुलीरः कर्कटकः, 'गृहचैटक' इत्यन्ये, 'कुलीरो मत्स्यविशेष' इत्यपरे । कूर्मः कच्छपः । नक्रो मत्स्यभेदः, 'घडियाल' इति लोके । अण्डमत्र प्राणाधारो वर्तुलः, नतु मुष्कः । ऋषभो वृषभः । बस्तः छागः । तेषां शुक्राणि गुरूपदेशात् तदाधारभूतान्येवाण्डानि ॥ २५ ॥ २६ ॥—

अश्वत्थफलमूलत्वक्शुङ्गासिद्धं पयो नरः ॥ २७ ॥
पीत्वा सशर्कराक्षौद्रं कुलिङ्ग इव हृष्यति ॥
विदारिमूलकल्कं तु शृतेन पयसा नरः ॥ २८ ॥
उदुम्बरसमं पीत्वा वृद्धोऽपि तरुणायते ॥
माषाणां पलमेकं तु संयुक्तं क्षौद्रसर्पिषा ॥ २९ ॥
अवलिह्य पयः पीत्वा तेन वाजी भवेन्नरः ॥
क्षीरपक्कांस्तु गोधूमानात्मगुप्ताफलैः सह ॥ ३० ॥
शीतान् घृतयुतान् खादेत्ततः पश्चात् पयः पिबेत् ॥
नक्रमूषिकमण्डूकचटकाण्डकृतं घृतम् ॥ ३१ ॥
पादाभ्यङ्गेन कुरुते बलं भूमिं तु न स्पृशेत् ॥
यावत् स्पृशति नो भूमिं तावद्गच्छेन्निरन्तरम् ॥३२॥
स्वयंगुप्तेक्षुरकयोः फलचूर्णं सशर्करम् ॥
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत् ॥३३॥
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममिष्यते ॥
शतावर्युच्चटाचूर्णं पेयमेवं बलार्थिना ॥
स्वयंगुप्ताफलैर्युक्तं माषसूपं पिबेन्नरः ॥ ३४ ॥

गुप्ताफलं गोक्षुरकाच्च बीजं
तथोच्चटां गोपयसा विपाच्य ॥
खजाहतं शर्करया च युक्तं
पीत्वा नरो हृष्यति सर्वरात्रम् ॥ ३५ ॥
माषान् विदारीमपि सोच्चटां च
क्षीरे गवां क्षौद्रघृतोपपन्नाम् ॥

१ 'स्त्रीरधिरोहति' इति पा० । २ 'ग्रामचटकः' इति पा० । ३ 'शुक्राणां दुरुपादेयत्वात्तदाधारभूतान्यण्डानि ग्राह्याणि' इति पा० । ४ 'घृतेन' इति पा० । ५ 'माषयूषं इति पा० ।

पीत्वा नरः शर्करया सुयुक्तां
कुलिङ्गवद्धृष्यति सर्वरात्रम् ॥ ३६ ॥

अश्वत्थेत्यादि । शुङ्गा अग्रपल्लवाः । हृष्यति सकामो भवति । उदुम्बरसमम् उदुम्बरफलप्रमाणम् । स्वयंगुप्ता कपिकच्छूः । इक्षुरकः कोकिलाक्षः 'तालमखाना' इति लोके । उच्चटा शणघण्टाकारः स्वल्पविटपः प्रायशो हिमवति सरयूनदीतीरे दृश्यते । एवमिति सशर्करधारोष्णक्षीरेण; खजाहतं मन्थानहतम् ॥ २७–३६ ॥

गृष्टीनां वृद्धवत्सानां माषपर्णभृतां गवाम् ॥
यत् क्षीरं तत् प्रशंसन्ति बलकामेषु जन्तुषु ॥ ३७ ॥
क्षीरमांसगणाः सर्वे काकोल्यादिश्च पूजितः ॥
वाजीकरणहेतोर्हि तस्मात्तत्तु प्रयोजयेत् ॥ ३८ ॥

गृष्टीनां प्रथमप्रसूतानां, वृद्धवत्सानामेकवर्षवत्सानामित्यर्थः । माषपर्णभृतां माषपर्णेन पोषितानां, माषपर्णग्रहणं फलव्युदासार्थं, ते च माषपर्णा हरिता अभिप्रेता न शुष्काः ॥३७॥३८॥

एते वाजीकरा योगाः प्रीत्यपत्यबलप्रदाः ॥
सेव्या विशुद्धोपचितदेहैः कालाद्यपेक्षया ॥ ३९ ॥

इति सुश्रुतसंहितायां क्षीणबलीयवाजीकरणचिकित्सितं नाम षड्विंशोऽध्यायः ॥ २६ ॥

प्रीतिः मनःसुखम्, अपत्यं सन्ततिः, बलं देहस्योपचयलक्षणं शक्तिलक्षणं वा । विशिष्टशोधनविशुद्धशरीराणां कृतसंसर्जनानामेव यथोक्तं फलं भवति नान्यथेति दर्शयन्नाह—सेव्या विशुद्धोपचितदेहैरिति; पूर्वं विशुद्धाः कृतसंसर्जनत्वात् पश्चादुपचिताः ॥ ३९ ॥

इति श्रीडल्हृ(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने षड्विंशतितमोऽध्यायः ॥ २६ ॥

## सप्तविंशतितमोऽध्यायः ।

अथातः सर्वोपघातशमनीयं रसायनं व्याख्यास्यामः
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

रसादिधातूनामयनमाप्यायनम्, अथवा भेषजाश्रितानां रसवीर्यविपाकप्रभावाणामायुर्बलवीर्यदार्ढ्यानां वयःस्थैर्यकराणामयनं लाभोपायो रसायनम्; वर्धकं स्थापकमप्राप्तप्रापकं वेत्यर्थः । द्विविधं रसायनं—कुटीप्रावेशिकं, वातातपिकं च; पुनश्च त्रिविधं—काम्यं, नैमित्तिकम्, आजस्रिकं च; 'प्राणमेधाकामः श्रीकाम' इत्यादिकं काम्यं, नैमित्तिकं व्याधिनिमित्तं शिलाजतुभल्लातकतुवरकाद्यम्, आजस्रिकं क्षीरघृताभ्यासादिकम्; पुनश्च द्विविधं—संशोधनसंशमनभेदेन; दोषस्य

१ 'माषाः पर्णवन्तः' इति पा० । २ 'सर्वबाधाशमनीयं' इति पा० । ३ '॰प्रभावपरमायुर्बलवीर्याणां' इति पा० । ४ 'दोषस्य पापस्य च' इति पा० ।

संशोधनात् संशोधनं सस्यादिरसायनं (?), संशमनं नागबला-प्रयोगादिकमिति ॥ १ ॥ २ ॥

पूर्वे वयसि मध्ये वा मनुष्यस्य रसायनम् ॥
प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा ॥ ३ ॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः ॥
न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः ॥ ४ ॥
शरीरस्योपघाता ये दोषजा मानसास्तथा ॥
उपदिष्टाः प्रदेशेषु तेषां वक्ष्यामि वारणम् ॥ ५ ॥

न भाति न दीप्यते । आहितः प्रयुक्तः । शरीरदोषा वातादयः; मानसौ तु रजस्तमसी ॥ ३–५ ॥

शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः ॥
त्रिशः समस्तमथवा प्राक् पीतं स्थापयेद्वयः ॥ ६ ॥

शरीरस्य प्रकृतिभेदेन चतुर्विधं वयःस्थापनमुपदिशन्नाह—शीतोदकमित्यादि । शीतोदकपयःक्षौद्रसर्पिषामेकशश्चत्वारः प्रयोगाः, द्विशः षट्, त्रिशश्चत्वारः, चतुर्भिरेकः, एवं पञ्चदश प्रयोगाः । उदकं पयः क्षौद्रं सर्पिरित्येकशश्चत्वारः; उदकपयसी, उदकक्षौद्रे, उदकसर्पिषी, पयःक्षौद्रे, पयःसर्पिषी, क्षौद्रसर्पिषीत्येवं द्विशः षट्; उदकपयःसर्पींषि, उदकक्षौद्रसर्पींषि, पयःक्षौद्रसर्पींषि, उदकपयःक्षौद्राणीत्येवं चत्वारः; उदकपयःक्षौद्रसर्पिर्भिरेक एव च प्रयोगः । मानाविरुद्धानामेषां विषमाणामुपयोगः कार्य इति ज्ञेयम् । शीतोदकं समपित्तवातकफप्रकृतौ, पयः पुनरधिकपित्तप्रकृतावेव, क्षौद्रं कफप्रकृतौ, सर्पिः पुनरधिकवातप्रकृतौ; अत्रैवैकद्वित्रिचतुर्द्रव्यसंयोगो हिताहितवातादिदोषभेदप्रकृतिषु स्वबुद्ध्या विभजनीयः ॥ ३–६ ॥

तत्र विडङ्गतण्डुलचूर्णमाहृत्य यष्टीमधुकमधुयुक्तं यथाबलं शीततोयेनोपयुञ्जीत शीततोयं चानुपिबेदेवमहरहर्मासं, तदेव मधुयुक्तं भल्लातककाथेन वा, मधुद्राक्षाकाथयुक्तं वा, मध्वामलकरसाभ्यां वा, गुडूचीकाथेन वा, एवमेते पञ्च प्रयोगा भवन्ति; जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात्; एते खल्वर्शांसि क्षपयन्ति, कृमीनुपघ्नन्ति, ग्रहणधारणशक्तिं जनयन्ति, मासे मासे च प्रयोगे वर्षशतं वर्षशतमायुषोऽभिवृद्धिर्भवति ॥ ७ ॥

अतश्चोर्ध्वमायुर्वर्धनमुपदिशन्नाह—तत्रेत्यादि । यष्टीमधु मधु च विडङ्गतण्डुलमानेन ग्राह्यम्; एतत् पित्तरक्तार्शस्सु तत्प्रकृतौ वा । तदेव विडङ्गतण्डुलचूर्णं मधुप्रक्षेपं भल्लातककाथेन पेयं, यथाबलमत्रापि संबध्यते; एतद्वातजेषु शुष्कार्शःसु तत्प्रकृतावपि । मधुद्राक्षाकाथयुक्तं वा 'विडङ्गतण्डुलचूर्णम्' इति शेषः । मध्वित्यादि अत्रापि विडङ्गतण्डुलचूर्णम् । गुडूचीत्यादि अत्रापि विडङ्गतण्डुलचूर्णम् । घृतवन्तं बहुघृतमित्यर्थः । तेषां फलमाह—एते इत्यादि । तस्य भल्लातकविधानवदाहारः परिहारश्च ॥ ७ ॥

विडङ्गतण्डुलानां द्रोणं पिष्टपचने पिष्टवदुपस्वेद्य[1] विगतकषायं खिन्नमवतार्य दृषदि पिष्टमायसे दृढे कुम्भे मधूदकोत्तरं प्रावृषि भस्मराशावन्तर्गृहे चतुरो मासान्निदध्यात्, वर्षाविगमे चोद्धृत्योपसंस्कृतशरीरः सहस्रसंपाताभिहुतं कृत्वा प्रातःप्रातर्यथाबलमुपयुञ्जीत, जीर्णे मुद्गामलकयूषेणालवणेन[2] घृतवन्तमोदनमश्नीयात्, पांशुशय्यायां शयीत, तस्य मासादूर्ध्वं सर्वाङ्गेभ्यः कृमयो निष्क्रामन्ति, तानणुतैलेनाभ्यक्तस्य वंशविदलेनापहरेत्, द्वितीये पिपीलिकास्तृतीये यूकास्तथैवापहरेत्, चतुर्थे दन्तनखरोमाण्यवशीर्यन्ते; पञ्चमे प्रशस्तगुणलक्षणानि जायन्ते, अमानुषं चादित्यप्रकाशं वपुरधिगच्छति, दूराच्छ्रवणानि दर्शना निचास्य भवन्ति, रजस्तमसी चापोह्य सत्त्वमधितिष्ठति, श्रुतनिगाद्यपूर्वोत्पादी गजबलोऽश्वजवः पुनर्युवाऽष्टौ वर्षशतान्यायुरवाप्नोति; तस्याणुतैलमभ्यङ्गार्थे, अजकर्णकषायमुत्सादनार्थे, सोशीरं कूपोदकं स्नानार्थे, चन्दनमुपलेपनार्थे, भल्लातकविधानवदाहारः परिहारश्च ॥ ८ ॥

काश्मर्याणां निष्कुलीकृतानामेष एव कल्पः पांशुशय्याभोजनवर्जं; अत्र हि पयसा शृतेन भोक्तव्यं, समानमन्यत् पूर्वेणाशिषश्च । शोणितपित्तनिमित्तेषु विकारेष्वेतेषामुपयोगः ॥ ९ ॥

यथोक्तमागारं प्रविश्य बलामूलार्धपलं पलं वा पयसाऽऽलोड्य पिबेत्, जीर्णे पयः सर्पिरोदन इत्याहारः, एवं द्वादशरात्रमुपयुज्य द्वादश वर्षाणि वयस्तिष्ठति; एवं दिवसशतमुपयुज्य वर्षशतं वयस्तिष्ठति । एवमेवातिबलानागबलाविदारीशतावरीणामुपयोगः । विशेषतस्त्वतिबलामुदकेन, नागबलाचूर्णं मधुना, विदारीचूर्णं क्षीरेण, शतावरीमप्येवं, पूर्वेणान्यत् समानमाशिषश्च समाः । एतास्त्वौषधयो बलकामानां शोषिणां रक्तपित्तोपसृष्टानां शोणितं छर्दयतां विरिच्यमानानां चोपदिश्यन्ते ॥१०॥

पिष्टपचने तृणादिकृतास्तारे कटाहे । दृषदि शिलायाम् । मधूदकोत्तरं मधूदकप्रधानम्; उदकमत्र विडङ्गकषाय एव, शीतोदकमित्यन्ये । निदध्यात् स्थापयेत् । उपसंस्कृतशरीरो विशुद्धदेहः । सहस्रसंपाताभिहुतं कृत्वा सहस्रसंपाताध्यायो ऋग्वेदे पठ्यते, तैर्मन्त्रैः सहस्रं हुत्वोपयुञ्जीतेत्यर्थः । जेज्जटस्तु संपातशब्देन याज्ञिकानां स्रवणं, तथा ह्याहार्यं संस्कृत्य द्रव्याणि हूयन्ते, हुत्वा हुत्वा च पानीयादिपूर्णपात्रे संस्राव्यन्ते । एतदुक्तं

१ 'पिष्टवदुत्स्वेद्य' इति पा० । २ 'अलवणेनाल्पस्नेहेन' इति पा० ।

भवति—सहस्रसंपतनं यस्मिन्नभिहुते तत्तथा; तत् कृत्वोपयुञ्जीतेत्यर्थः । **गयी** तु अथर्ववेद्भिः संपातक्रमेणौषधाधिकारिणा मन्त्रेण त्रिपदा गायत्र्या वा प्राक्तनकर्मक्षयार्थं विघ्नशान्त्यर्थमभिमताशीःप्राप्त्यर्थं वा सहस्राभिहुतं कृत्वा प्रयुज्यन्ते । पांशुः धूलिः । वंशविदलेन वंशकम्बिकया । द्वितीये इति मासे । अवशीर्यन्ते पतन्तीत्यर्थः । चतुर्थेऽतीते इत्यर्थः । अपूर्वोत्पादीति अपूर्वश्लोकादिकं करोतीत्यर्थः । अजकर्णो महासर्जः, 'गन्धमुण्ड' इति लोके । कषायोऽत्र कल्कः । सस्नेहकल्केनोद्वर्षणमुत्सादनम् । चन्दनं रक्तचन्दनं, सितचन्दनमित्यपरे । भल्लातकविधानवदिति विवृतागारप्रवेशादिभिरित्यर्थः; समानमन्यत् । आशिष इति गुणा इत्यर्थः ॥ ८–१० ॥

**वाराहीमूलतुलाचूर्णं कृत्वा ततो मात्रां मधुयुक्तां पयसाऽऽलोड्य पिबेत्, जीर्णे पयः सर्पिरोदन इत्याहारः, प्रतिषेधोऽत्र पूर्ववत्; प्रयोगमिममुपसेवमानो वर्षशतमायुरवाप्नोति स्त्रीषु चाक्षयताम्, एतेनैव चूर्णेन पयोऽवचूर्ण्य शृतशीतमभिमथ्याज्यमुत्पाद्य मधुयुतमुपयुञ्जीत सायंप्रातरेककालं वा, जीर्णे पयः सर्पिरोदन इत्याहारः, एवं मासमुपयुज्य वर्षशतायुर्भवति ॥ ११ ॥**

वाराहीत्यादि । प्रतिषेधो निवृत्तिः । एतेनैव चूर्णेन वाराहीचूर्णेन क्षीरपाकविधिना शृतं क्षीरमवचूर्ण्य, तच्च शीतमभिमथ्य, आज्यमुत्पादयेत्, वाराहीशतपाकं वा सर्पिर्द्रोणमुपयुज्य वर्षशतायुर्भवति । जीर्णे पयः सर्पिरोदन इत्याहारः । कल्पनामाह—वाराहीकन्दकल्कं क्षीरचतुर्गुणं घृतद्रोणं पचेत्; अनेन क्रमेण शतपाकं घृतं द्रोणमुपयुज्य वर्षशतायुर्भवति । अन्ये पुनरनुक्तं जलमेव चतुर्गुणमाहुः । यद्यपि स्नेहपानानन्तरं स्नेहभोजनं निषिद्धं, तथाऽप्यत्र वाराह्या शतपाकसंस्कृतस्य स्वभावशमनीयरूपस्य सर्पिषः पानानन्तरं रसायनविधिना सर्पिषा भोजनं युज्यते इति न दोषः ॥ ११ ॥

**चक्षुःकामः प्राणकामो वा बीजकसाराग्निमन्थमूलं निष्काथ्य माषप्रस्थं साधयेत्, तस्मिन् सिध्यति चित्रकमूलानामक्षमात्रं कल्कं दद्यादामलकरसचतुर्थभागं, ततः स्विन्नमवतार्य सहस्रसंपाताभिहुतं कृत्वा शीतीभूतं मधुसर्पिर्भ्यां संसृज्योपयुञ्जीत यथाबलं, यथासात्म्यं च लवणं परिहरन् भक्षयेत् । जीर्णे मुद्गामलकयूषेणालवणेन घृतवन्तमोदनमश्नीयात् पयसा वा मासत्रयम्; एवमाभ्यां प्रयोगाभ्यां चक्षुः सौपर्णं भवत्यनल्पबलः स्त्रीषु चाक्षयो वर्षशतायुर्भवतीति ॥ १२ ॥**

१ 'चूर्णक्षयात्' इति पा० । २ 'त्रिणि वर्षशतान्यरोगो जीवति इति पा० । ३ सौपर्णवत्' इति पा० ।

**भवति चात्र—**

**पयसा सह सिद्धानि नरः शणफलानि यः ॥**
**भक्षयेत् पयसा सार्धं वयस्तस्य न शीर्यते ॥ १३ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने सर्वोपघातशमनीयं रसायनचिकित्सितं नाम सप्तविंशोऽध्यायः ॥ २७ ॥**

बीजकसाराग्निमन्थमूलं पलं सलिलाढके निष्काथ्य, अर्धावशिष्टे तत्र पूते षोडशपलानि माषाणि साध्यानि, तस्मिंश्च सिध्यति चित्रमूलकल्काक्षं प्रक्षिपेत्, आमलकरसस्य माषप्रस्थापेक्षया चतुर्थभागं कुडवमष्टौ पलानि । पयसा वेति योगद्वयमेतत्, योजनाविशेषत्वात् । सौपर्णं गरुडचक्षुषा तुल्यं चक्षुर्भवति । **गयी** तु 'सहस्रसंपाताभिहुतं कृत्वा' इति न पठति । अन्ये तु सुश्रुताध्यायिनोऽत्र वक्ष्यमाणं योगं पठन्ति; यथा—पयसा सह सिद्धानीत्यादि । अयं योगोऽनार्षः, जेज्जटेनाप्यनुक्तत्वात्; तस्मान्न पठनीयः ॥ १२–१३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने सप्तविंशतितमोऽध्यायः ।

## अष्टाविंशतितमोऽध्यायः ।

**अथातो मेधायुष्कामीयं रसायनचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

मेधा सर्वतोऽव्याहता सूक्ष्मतमा प्रगाढा बुद्धिः श्रुतधारिणी ॥ १ ॥ २ ॥

**मेधायुःकामः श्वेतावल्गुजफलान्यातपपरिशुष्काण्यादाय सूक्ष्मचूर्णानि कृत्वा गुडेन सहालोड्य स्नेहकुम्भे सप्तरात्रं धान्यराशौ निदध्यात्, सप्तरात्रादुद्धृत्य हृतदोषस्य यथाबलं पिण्डं प्रयच्छेदनुदिते सूर्ये, उष्णोदकं चानुपिबेत्; भल्लातकविधानवच्चागारप्रवेशः, जीर्णौषधश्चापराह्ने हिमाभिरद्भिः परिषिक्तगात्रः शालीनां षष्टिकानां च पयसा शर्करामधुरेणौदनमश्नीयात्; एवं षण्मासानुपयुज्य विगतपाप्मा बलवर्णोपेतः श्रुतनिगादी स्मृतिमानरोगो वर्षशतायुर्भवति । कुष्ठिनं पाण्डुरोगिणमुदरिणं वा कृष्णाया गोर्मूत्रेणालोड्यार्धपलिकं पिण्डं विगतलौहित्ये सवितरि पाययेत्, पराह्णे चालवणेनामलकयूषेण सर्पिष्मन्तमोदनमश्नीयात्, एवं मासमुपयुज्य स्मृतिमानरोगो वर्षशतायुर्भवति । एष एवोपयोगश्चित्रकमूलानां रजन्याश्च; चित्रकमूले विशेषो द्विपलिकं पिण्डं परं प्रमाणं, शेषं पूर्ववत् ॥ ३ ॥**

१ 'मेधायुष्कामीयमध्यायं' इति पा० । २ 'रसायनं' इति पा० ।

हृतदोष एव प्रतिसंसृष्टभक्तो यथाक्रममागारं प्रविश्य मण्डूकपर्णीस्वरसमादाय सहस्रसंपाताभिहुतं कृत्वा यथाबलं पयसाऽऽलोड्य पिबेत् पयोऽनुपानं वा, तस्यां जीर्णायां यवान्नं पयसोपयुञ्जीत; तिलैर्वा सह भक्षयेत्त्रीन् मासान् पयोऽनुपानं, जीर्णे पयः सर्पिरोदन इत्याहारः; एवमुपयुञ्जानो ब्रह्मवर्चसी श्रुतनिगादी भवति वर्षशतमायुरवाप्नोति । त्रिरात्रोपोषितश्च त्रिरात्रमेनां भक्षयेत्, त्रिरात्रादूर्ध्वं पयः सर्पिरिति चोपयुञ्जीत । बिल्वमात्रं पिण्डं वा पयसाऽऽलोड्य पिबेत्, एवं द्वादशरात्रमुपयुज्य मेधावी वर्षशतायुर्भवति ॥ ४ ॥

अवल्गुजा बाकुची, साऽपि श्वेता गृह्यते । कृष्णाया बाकुच्याः, तेन कृष्णावल्गुजफलानां पिण्डं गोमूत्रेण पाययेत् । 'कृष्णायाः पिप्पल्या' इति जेज्जटः, तन्नेच्छति गयी । चित्रकस्य द्विपलप्रयोगः परं प्रमाणं, चित्रकस्य द्विपलप्रयोग इति एतेन रजन्या मानस्यानुक्तत्वात् पूर्ववत् पलिकं पिण्डं पाययेदिति गम्यते । चित्रकोऽत्र कृष्णपुष्पो ग्राह्यः । मण्डूकपर्ण्याः समूलपुष्पायास्तिलैः सह भक्षणं, भक्षणकाल एव पयोऽनुपानमुपयुञ्जीतेति संबन्धः । ब्रह्मवर्चसी तेजस्वीत्यर्थः । एनां ब्राह्मीं, बिल्वमात्रं पिण्डमिति तत्कल्कपिण्डो वा पयसा पेयः ॥ ३ ॥ ४ ॥

हृतदोष एवागारं प्रविश्य प्रतिसंसृष्टभक्तो ब्राह्मीस्वरसमादाय सहस्रसंपाताभिहुतं कृत्वा यथाबलमुपयुञ्जीत, जीर्णौषधश्चापराह्णे यवागूमलवणां पिबेत्, क्षीरसात्म्यो वा पयसा भुञ्जीत, एवं सप्तरात्रमुपयुज्य ब्रह्मवर्चसी मेधावी भवति, द्वितीयं सप्तरात्रमुपयुज्य ग्रन्थमीप्सितमुत्पादयति नष्टं चास्य प्रादुर्भवति, तृतीयं सप्तरात्रमुपयुज्य द्विरुच्चारितं शतमप्यवधारयति, एवमेकविंशतिरात्रमुपयुज्यालक्ष्मीरपक्रामति; मूर्तिमती चैनं वाग्देव्यनुप्रविशति, सर्वाश्चैनं श्रुतय उपतिष्ठन्ति, श्रुतधरः पञ्चवर्षशतायुर्भवति ॥ ५ ॥

ब्राह्मीस्वरसप्रस्थद्वये घृतप्रस्थं विडङ्गतण्डुलानां कुडवं द्वे द्वे पले वचामृतयोर्द्वादश हरीतक्यामलकविभीतकानि श्लक्ष्णपिष्टान्यावाप्यैकध्यं साधयित्वा स्वनुगुप्तं निदध्यात्, ततः पूर्वविधानेन मात्रां यथाबलमुपयुञ्जीत, जीर्णे पयः सर्पिरोदन इत्याहारः, पूर्ववच्चात्र परीहारः, एतेनोर्ध्वमधस्तिर्यक् क्रमयो निष्क्रामन्ति, अलक्ष्मीरपक्रामति, पुष्करवर्णः स्थिरवयाः श्रुतनिगादी त्रिवर्षशतायुर्भवति; एतदेव कुष्ठविषमज्वरापस्मारोन्मादविषभूतग्रहेष्वन्येषु च महाव्याधिषु संशोधनमादिशन्ति ॥ ६ ॥

पूर्वविधानेनेति तेन हृतदोषादिः सर्वरसायनाङ्गो विधिरतिदिष्टः । पूर्ववच्चात्र परीहार इति सामान्यरसायनोक्तोऽपि, ब्राह्मीरसायने वर्ज्यस्यानुक्तत्वात् । पुष्करवर्ण इति पुष्करं पद्मवराटकम् । श्रुतनिगादी श्रुतग्रहणशक्तिमान् भवतीत्यर्थः ॥ ५ ॥ ६ ॥

हृतदोष एवागारं प्रविश्य हैमवत्या वचायाः पिण्डमामलकमात्रमभिहुतं पयसाऽऽलोड्य पिबेत्, जीर्णे पयः सर्पिरोदन इत्याहारः, एवं द्वादशरात्रमुपयुञ्जीत, ततोऽस्य श्रोत्रं विव्रियते, द्विरभ्यासात् स्मृतिमान् भवति, त्रिरभ्यासाच्छ्रुतमादत्ते, चतुर्द्वादशरात्रमुपयुज्य सर्वं तरति किल्बिषं, तार्क्ष्यदर्शनमुत्पद्यते, शतायुश्च भवति । द्वे द्वे पले इतरस्या वचाया निष्क्वाथ्य पिबेत् पयसा, समानं भोजनं, समाः पूर्वेणाशिषश्च ॥ ७ ॥

वचाशतपाकं वा सर्पिर्द्रोणमुपयुज्य पञ्चवर्षशतायुर्भवति, गलगण्डापचीश्लीपदस्वरभेदांश्चापहन्तीति ॥ ८ ॥

हैमवत्या वचायाः श्वेतवचाया इत्यर्थः । अभिहुतमित्यत्र कृत्वेत्यध्याहारात् होमं कृत्वेत्यर्थः । गयी तु 'पयसाऽऽलोड्य पिबेत्' इत्यत्र 'सर्पिषाऽऽलोड्य पिबेत्' इति पठति । तच्च सर्पिर्ब्राह्मीस्वरससाधितं पूर्वोक्तमेवेति व्याख्याति । इतरस्या वचाया इति अरुणाया इत्यर्थः । पयसा निष्क्वाथ्येति क्षीरपाकविधिना ॥ ७ ॥ ८ ॥

अत ऊर्ध्वं प्रवक्ष्यामि आयुष्कामरसायनम् ॥
मन्त्रौषधसमायुक्तं संवत्सरफलप्रदम् ॥ ९ ॥
बिल्वस्य चूर्णं पुष्ये तु हुतं वारान् सहस्रशः ॥
श्रीसूक्तेन नरः कल्ये ससुवर्णं दिने दिने ॥ १० ॥
सर्पिर्मधुयुतं लिह्यादलक्ष्मीनाशनं परम् ॥
त्वचं विहाय बिल्वस्य मूलक्वाथं दिने दिने ॥ ११ ॥
प्राश्नीयात् पयसा सार्धं स्नात्वा हुत्वा समाहितः ॥
दशसाहस्रमायुष्यं स्मृतं युक्तरथं भवेत् ॥ १२ ॥
हुत्वा बिसानां क्वाथं तु मधुलाजैश्च संयुतम् ॥
अमोघं शतसाहस्रं युक्तं युक्तरथं स्मृतम् ॥ १३ ॥

श्रीसूक्तमथर्ववेदोक्तं "हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजां" इत्यादिकम् । कल्ये प्रभाते । दशसहस्राणि हूयन्ते यत्र तद्दशसाहस्रम् । आयुष्यम् आयुर्वृद्धिकरम् । युक्तरथं नाम रसायनं स्मृतं भवेत् । बिसक्वाथं तु मध्वादिद्वितीयं युक्तरथं रसायनं स्मृतम् ॥ ९-१३ ॥

---

१ 'श्वेतफला' इति पा० ।

१ 'मण्डूकब्राह्मीप्रयोगानभिधाय लवणब्राह्मीप्रयोगानाह— हृतेत्यादि' इति पा० । २ 'खेदस्वेदादिः' इति पा० ।

सुवर्णं पद्मबीजानि मधु लाजाः प्रियङ्गवः ॥
गव्येन पयसा पीतमलक्ष्मीं प्रतिषेधयेत् ॥ १४ ॥
नीलोत्पलदलक्काथो गव्येन पयसा शृतः ॥
ससुवर्णस्तिलैः सार्धमलक्ष्मीनाशनः स्मृतः ॥ १५ ॥
गव्यं पयः सुवर्णं च मधूच्छिष्टं च माक्षिकम् ॥
पीतं शतसहस्राभिहुतं युक्तरथं स्मृतम् ॥ १६ ॥

मधूच्छिष्टं च माक्षिकमिति माक्षिकं मधु भ्रामरम् । वचादित्रयचूर्णं घृतेन सहावलिह्यात् ॥ १४-१६ ॥

वचाघृतसुवर्णं च बिल्वचूर्णमिति त्रयम् ॥
मेध्यमायुष्यमारोग्यपुष्टिसौभाग्यवर्धनम् ॥ १७ ॥
वासामूलतुलाक्काथे तैलमावाप्य साधितम् ॥
हुत्वा सहस्रमश्नीयान्मेध्यमायुष्यमुच्यते ॥ १८ ॥
यावकांस्तावकान् खादेदभिभूय यवांस्तथा ॥
पिप्पलीमधुसंयुक्तान् शिक्षा चरणवद्भवेत् ॥ १९ ॥

तुला पलशतम् । यवानामेते यावकाः यवान् तावकान् तवकभवान् अभिभूय कुट्टयित्वा तत्कृतान् यावकान् भक्ष्यान् मधुपिप्पलीसंयुक्तान् खादेत् । शिक्षा चरणवद्भवेदिति 'अभ्रवभ्र-' इति गणपाठाचरधातुर्गत्यर्थः । ततश्चरणवत् शिक्षा परोपदेशापेक्षा शास्त्राभ्यासः सुखेनैव भवति; यथा किल बाल्यानन्तरं पादगमनं शिक्षां विनैव भवति, तथैवैतेन योगेनाभ्यवहृतेन मेधावृद्धेः शास्त्राभ्यासः सुखेनैव भवतीति तात्पर्यार्थः ॥ १७-१९ ॥

मध्वामलकचूर्णानि सुवर्णमिति च त्रयम् ॥
प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राणसंशयात् ॥ २० ॥
शतावरीघृतं सम्यगुपयुक्तं दिने दिने ॥
सक्षौद्रं ससुवर्णं च नरेन्द्रं स्थापयेद्वशे ॥ २१ ॥
गोचन्दना मोहनिका मधुकं माक्षिकं मधु ॥
सुवर्णमिति संयोगः पेयः सौभाग्यमिच्छता ॥ २२ ॥
पद्मिनीलोत्पलक्काथे यष्टीमधुकसंयुते ॥
सर्पिरासादितं गव्यं ससुवर्णं सदा पिबेत् ॥ २३ ॥
पयश्चानुपिबेत् सिद्धं तेषामेव समुद्भवे ॥
अलक्ष्मीघ्नं सदाऽऽयुष्यं राज्याय सुभगाय च ॥ २४ ॥
यत्र नोदीरितो मन्त्रो योगेष्वेतेषु साधने ॥
शब्दिता तत्र सर्वत्र गायत्री त्रिपदा भवेत् ॥ २५ ॥
पाप्मानं नाशयन्त्येता दद्युश्चौषधयः श्रियम् ॥
कुर्युर्नागबलं चापि मनुष्यममरोपमम् ॥ २६ ॥

अरिष्टं मरणलक्षणम् । नरेन्द्रं स्थापयेद्वशे इति यो हि इदं घृतं सेवेत तस्य वशगो भवेन्नरेन्द्रः । गोचन्दना प्रियङ्गुः । मोहनिका पुत्रञ्जीवी, 'अवाक्पुष्पी' इति अपरे । आसादितं साधितम् । तेषामेव पद्मिनीलोत्पलानामेव समुद्भवे क्वाथे । सर्वेषामिदानीं फलश्रुतिमाह—पाप्मानमित्यादि ॥ २०-२६ ॥

१ 'पद्मिनीफलिनिःक्काथे' इति पा० । २ 'पद्मिनीफलानामेव' इति पा० ।

सतताध्ययनं वादः परतन्त्रावलोकनम् ॥
तद्विद्याचार्यसेवा च बुद्धिमेधाकरो गु(ग)णः ॥ २७ ॥
आयुष्यं भोजनं जीर्णे वेगानां चाविधारणम् ॥
ब्रह्मचर्यमहिंसा च साहसानां च वर्जनम् ॥ २८ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने मेधायुष्कामीयं रसायनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

न केवलं रसायनयोगादेव मेधायुषी भवतः, किं तर्हि सतताध्ययनादपि बुद्धिमेधाकरो गु(ग)णो भवति । स्वपक्षसाधनं परपक्षबाधनं वादः । परतन्त्राणि न्यायवैशेषिकहस्तिशिक्षाव्याकरणादीनि, तथैवेतराण्यायुष्याणि । ब्रह्मचर्यम् इन्द्रियसंयमो वेदाध्ययनं वा । साहसम् अयथाबलमारम्भः ॥ २७॥२८॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थानेऽष्टाविंशतितमोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशत्तमोऽध्यायः ।

अथातः स्वभावव्याधिप्रतिषेधनीयं रसायनं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

स्वभावप्रवृत्तानां क्षुत्पिपासाजरामृत्युनिद्राप्रभृतीनां व्याधीनां प्रतिषेधनं स्वभावव्याधिप्रतिषेधनं, तदधिकृत्य कृतं रसायनं स्वभावव्याधिप्रतिषेधनीयम् । यद्यपि स्वभावो निष्प्रतिषेधनीयस्तथाऽपि रसायनप्रभावात्तपोज्ञानादियुक्तैर्महर्षिभिरनियतायुषां स्वभावव्याध्यादिः प्रतिषिध्यते; नियतायुषाः पुनः कलिकलुषैरक्षीणा रसायनायोग्या एव ॥ १ ॥ २ ॥

ब्रह्मादयोऽसृजन् पूर्वममृतं सोमसंज्ञितम् ॥
जरामृत्युविनाशाय विधानं तस्य वक्ष्यते ॥ ३ ॥
एक एव खलु भगवान् सोमः स्थाननामाकृतिवीर्यविशेषैश्चतुर्विंशतिधा भिद्यते ॥ ४ ॥

तद्यथा—
अंशुमान् मुञ्जवांश्चैव चन्द्रमा रजतप्रभः ॥
दूर्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः ॥ ५ ॥
प्रतानवांस्तालवृन्तः करवीरोंऽशवानपि ॥
स्वयंप्रभो महासोमो यश्चापि गरुडाहृतः ॥ ६ ॥
गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाकरस्तथा ॥
अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः ॥ ७ ॥
गायत्र्या त्रिपदा युक्तो यश्चोडुपतिरुच्यते ॥
एते सोमाः समाख्याता वेदोक्तैर्नामभिः शुभैः ॥ ८ ॥

१ 'न कलिकलितायुषां कलिकलुषितचेतसां, लोलुपानां तेषां रसायनायोग्यत्वात्' इति पा० ।

सर्वेषामेव चैतेषामेको विधिरुपासने ॥
सर्वे तुल्यगुणाश्चैव विधानं तेषु वक्ष्यते ॥ ९ ॥

गायत्र्या त्रिपदा युक्त इति सर्वेषामेव सोमानां विशेषणम् । तत्र गायत्र्या वर्णस्वरात्मिकायाः सोमस्य साक्षाद्योगो नास्तीति गायत्रीप्रतिपादितलोकवेदत्रययुक्त इत्यर्थः; तेन पीतसोमप्रभावेण लोकवेदत्रयमस्य वशीभवति । एतानि च नामानि सामान्यलोकाप्रसिद्धान्यपि प्रमाणानीति दर्शयन्नाह—एते सोमा इत्यादि । तुल्यगुणाः तुल्यफला इत्यर्थः ॥ ३–९ ॥

अतोऽन्यतमं सोममुपयुयुक्षुः सर्वोपकरणपरिचारकोपेतः प्रशस्ते देशे त्रिवृतमागारं कारयित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु अंशुमन्तमादायाध्वरकल्पेनाहृतमभिषुतमभिहुतं चान्तरागारे कृतमङ्गलस्वस्तिवाचनः सोमकन्दं सुवर्णसूच्या विदार्य पयो गृह्णीयात् सौवर्णे (राजते वा) पात्रेऽञ्जलिमात्रं, ततः सकृदेवोपयुञ्जीत नास्वादयन्, तत उपस्पृश्य शेषमप्स्ववसाद्य यमनियमाभ्यामात्मानं संयोज्य वाग्यतोऽभ्यन्तरतः सुहृद्भिरुपास्यमानो विहरेत् ॥ १० ॥

रसायनं पीतवांस्तु निवाते तन्मनाः शुचिः ॥
आसीत तिष्ठेत् क्रामेच्च न कथंचन संविशेत् ॥ ११ ॥

सायं वा भुक्तवानुपश्रुतशान्तिः कुशशय्यायां कृष्णाजिनोत्तरायां सुहृद्भिरुपास्यमानः शयीत, तृषितो वा शीतोदकमात्रां पिबेत् (अशनायितो वा क्षीरं); ततः प्रातरुत्थायोपश्रुतशान्तिः कृतमङ्गलो गां स्पृष्ट्वा तथैवासीत, तस्य जीर्णे सोमे छर्दिरुत्पद्यते, ततः शोणिताक्तं कृमिव्यामिश्रं छर्दितवते सायं शृतशीतं क्षीरं वितरेत्; ततस्तृतीयेऽहनि कृमिव्यामिश्रमतिसार्यते, स तेनानिष्टप्रतिग्रहभुक्तप्रभृतिभिर्विशेषैर्विनिर्मुक्तः शुद्धतनुर्भवति, ततः सायं स्नाताय पूर्ववदेव क्षीरं वितरेत्, क्षौमवस्त्रास्तृतायां चैनं शय्यायां शाययेत्; ततश्चतुर्थेऽहनि तस्य श्वयथुरुत्पद्यते, ततः सर्वाङ्गेभ्यः कृमयो निष्क्रामन्ति, तदहश्च शय्यायां पांशुभिरवकीर्यमाणः शयीत, ततः सायं पूर्ववदेव क्षीरं वितरेत्; एवं पञ्चमषष्ठयोर्दिवसयोर्वर्तेत, केवलमुभयकालमस्मै क्षीरं वितरेत्; ततः सप्तमेऽहनि निर्मांसस्त्वगस्थिभूतः केवलं सोमपरिग्रहादेवोच्छ्वसिति, तदहश्च क्षीरेण सुखोष्णेन परिषिच्य तिलमधुकचन्दनानुलिप्तदेहं पयः पाययेत्; ततोऽष्टमेऽहनि प्रातरेव क्षीरपरिषिक्तं चन्दनप्रदिग्धगात्रं पयः पाययित्वा पांशुशय्यां समुत्सृज्य क्षौमवस्त्रास्तृतायां शय्यायां शाययेत्, ततोऽस्य मांसमाप्याय्यते, त्वक् चावदलति, दन्तनखरोमाणि चास्य पतन्ति; तस्य नवमदिवसात् प्रभृत्यणुतैलाभ्यङ्गः सोमवल्ककषायपरिषेकः; ततो दशमेऽहन्येतदेव वितरेत्, ततोऽस्य त्वक् स्थिरतामुपैति; एवमेकादशद्वादशयोर्वर्तेत; ततस्त्रयोदशात् प्रभृति सोमवल्ककषायपरिषेकः, एवमाषोडशाद्वर्तेत; ततः सप्तदशाष्टादशयोर्दिवसयोर्दशना जायन्ते शिखरिणः स्निग्धवज्रवैडूर्यस्फटिकप्रकाशाः समाः स्थिराः सहिष्णवः, तदा प्रभृति चानवैः शालितण्डुलैः क्षीरयवागूमुपसेवेत यावत् पञ्चविंशतिरिति; ततोऽस्मै दद्याच्छाल्योदनं मृदूभयकालं पयसा, ततोऽस्य नखा जायन्ते विद्रुमेन्द्रगोपकतरुणादित्यप्रकाशाः, स्थिराः स्निग्धा लक्षणसंपन्नाः केशाश्च सूक्ष्मा जायन्ते, त्वक् च नीलोत्पलातसीपुष्पवैडूर्यप्रकाशा; ऊर्ध्वं च मासात् केशान् वापयेत्, वापयित्वा चोशीरचन्दनकृष्णतिलकल्कैः शिरः प्रदिह्यात् पयसा वा स्नापयेत्; ततोऽस्यानन्तरं सप्तरात्रात् केशा जायन्ते भ्रमराञ्जननिभाः कुञ्चिताः स्थिराः स्निग्धाः; ततस्त्रिरात्रात् प्रथमावसथपरिसरान्निष्क्रम्य मुहूर्तं स्थित्वा पुनरेवान्तः प्रविशेत्, ततोऽस्य बलातैलमभ्यङ्गार्थेऽवचार्य, यवपिष्टमुद्वर्तनार्थं, सुखोष्णं च पयः परिषेकार्थं, अजकर्णकषायमुत्सादनार्थं, सोशीरं कूपोदकं स्नानार्थं, चन्दनमनुलेपार्थं, आमलकरसविमिश्राश्चास्य यूषसूपविकल्पाः, क्षीरमधुकसिद्धं च कृष्णतिलमवचारणार्थं, एवं दशरात्रं; ततोऽन्यद्दशरात्रं द्वितीये परिसरे वर्तेत; ततस्तृतीये परिसरे स्थिरीकुर्वन्नात्मानमन्यद्दशरात्रमासीत, किञ्चिदातपपवनान् वा सेवेत, पुनश्चान्तः प्रविशेत्, न चात्मानमादर्शेऽप्सु वा निरीक्षेत रूपशालित्वात्; ततोऽन्यद्दशरात्रं क्रोधादीन् परिहरेत्, एवं सर्वेषामुपयोगविकल्पः । विशेषतस्तु वल्लीप्रतानक्षुपकादयः सोमा ब्राह्मणक्षत्रियवैश्यैर्भक्षयितव्याः । तेषां तु प्रमाणमर्धचतुष्कमुष्टयः ॥१२॥

अत इत्यादि । अन्यतमम् एकतमम् । उपयुयुक्षुः उपयोगं कर्तुमिच्छुः । उपकरणानि द्वैतादीनि । परिचारकाः सर्वकर्मणां कर्तारः । प्रशस्तदेशे वास्तुशास्त्रविद्भिः परीक्षिते प्रागुदक्प्रवणे, त्रिवृतमागारं त्रिःपरिवृतां गर्भकुटीं कारयित्वा । हृतदोषः हृतः

१ 'राजते वा' इति केषुचित्पुस्तकेषु नोपलभ्यते । २ 'अशनायितो वा क्षीरं' इति केषुचित्पुस्तकेषु नोपलभ्यते । ३ 'पांशुशय्यायां' इति पा० ।

१ 'ततो गते मासे सपञ्चरात्रे' इति पा० । २ 'परिहरेत्; अन्यदेकविंशतिरात्रप्रयोगविकल्पः; एवं सर्वेषामुपयोगः' इति पा० । ३ 'घटपिठरादीनि' इति पा० ।

स्नेहस्वेदपूर्वकैर्वमनादिभिर्दोषो येन सः । प्रतिसंसृष्टं पेयादिसंसर्जनक्रमेण भक्तं पथ्यं येन सः । प्रशस्तास्तिथयो नन्दादयो रिक्तावर्ज्याः, करणानि ववादीनि विष्टिवर्ज्यानि, मुहूर्ताः शिवादयः प्रशस्ताः; नक्षत्राणि पुष्यहस्ताश्विनीश्रवणानि । अध्वरकल्पस्य विधानेनाहृतमग्निष्टोमविधानेनानीतम् । अभिषुतम् ऋत्विग्भिः स्रापितम् । अभिहुतं वह्नौ प्रक्षिप्तम्, 'ऋत्विग्भिः एव' इति शेषः । अन्तरागारे अन्तर्गृहे । अञ्जलिमात्रं कुडवप्रमाणम् । नास्वादयन् सोमरसमनुत्स्वादयन् । उपस्पृश्य आचमनं कृत्वेत्यर्थः । शेषं गृहीतक्षीरमंशुमतः कन्दं पानीये नद्यादिगते निक्षिप्येत्यर्थः । मनःसङ्कल्पादिनिरोधो नियमः, पुनरिन्द्रियदेहयोर्निरोधो यमः । आत्मानं चेतः । वाचः पुनः संयमनमाह—वाग्यतः; मौनं कृत्वेत्यर्थः । विहरेदिति विहारं कुर्यादित्यर्थः । तत्र कायविहारश्चतुर्विधो गमनचङ्क्रमणस्थानासनभेदेन । न कथंचन संविशेत् न स्वप्यात् । तन्मना इति तत्रैव सोमे मनो यस्य स तथा । उपश्रुतशान्तिः आकर्णितमङ्गलपाठः । सायं शयीतेति तेन दिवा[1] स्वापनिषेधः । अभोजनं पुनरत्र प्रथम एव दिने यत्र सोमपानम् । शीतोदकमात्रामिति मात्राशब्दोऽयमल्पार्थः, शीतमल्पमुदकं जलं पिबेत् । गां स्पृष्ट्वेति धातूनामनेकार्थत्वाद्गां दत्त्वेति जेज्जटः । अनिष्टभोजनं श्राद्धादिभोजनं, प्रग्रहभोजनं बलादनिच्छं संकीर्णाचारैर्भोज्यते । प्रभृतिग्रहणादन्येऽपि अनिष्टप्रतिग्रहादयोऽभिप्रेताः । वितरेत् दद्यादित्यर्थः । पांशुः धूलिः । परिषेकः स्नानम् । अजकर्णकषायमिति कल्कमित्यर्थः; कल्केऽपि कषायशब्दो वर्तते, "पञ्चविधं कषायकल्पनम्" ( च. सू. अ. ४ ) इति वचनात् । सस्नेहकल्केन घर्षणमुत्सादनम् । क्षीरमधुकसिद्धं चेत्यादि गव्यक्षीरचतुर्गुणं मधुककल्कसिद्धं कृष्णतिलानां तैलं व्यञ्जनादिष्ववचार्यम् । उपयोगविकल्प इति उपयुज्यते इत्युपयोगो गव्यक्षीरादिराहारो विहारश्च, उपयोगविकल्प उपयोगभेदः कर्तव्य इत्यर्थः । तत्रैव क्वचिद्वर्णभेदेन भेदं दर्शयन्नाह—विशेषतस्तु वल्लीत्यादि । वल्ली लता, प्रतानं[2] दूर्वाशैवलकमूलानामिव विस्तारः, क्षुपको विटपः, आदिग्रहणात् कन्दादीनामपि ग्रहणम् । अर्धं चतुष्कं येषां ते तथा; मुष्टिः पलम् ॥ १०–१२ ॥

**अंशुमन्तं सौवर्णे पात्रेऽभिषुणुयात्, चन्द्रमसं राजते; तावुपयुज्याष्टगुणमैश्वर्यमवाप्येशानं देवमनुप्रविशति, शेषांस्तु ताम्रमये मृन्मये वा रोहिते वा चर्मणि वितते; शूद्रवर्जं त्रिभिर्वर्णैः सोमा उपयोक्तव्याः । ततश्चतुर्थे मासे पौर्णमास्यां शुचौ देशे ब्राह्मणानर्चयित्वा कृतमङ्गलो निष्क्रम्य यथोक्तं व्रजेदिति ॥ १३ ॥**

तेषां तु पात्रेष्वपि भेदं दर्शयन्नाह—अंशुमन्तमित्यादि । अभिषुणुयात् पीडयेत् । तावुपयुज्येति एतयोरुपयोगं कृत्वेत्यर्थः । अष्टविधैश्वर्यं यथा—"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वं च तथा कामावसायिता"–इति; एतदष्टगुणमैश्वर्यं योगलभ्यमपि सोमरसायनाल्लभ्यते । चरके पुनरन्यथोक्तम्—"आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया । दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥ इत्यष्टगुणमाख्यातं योगिनां बलमैश्वरम् । शुद्धसत्त्वसमाधानात्तत्सर्वमुपवर्तते" ( च. शा. अ. १ )–इति । ईशानं महेश्वरम् । रोहितः लोहितवर्णो मृगविशेषः । वितते विस्तृते ॥ १३ ॥

**ओषधीनां पतिं सोममुपयुज्य विचक्षणः ॥**
**दशवर्षसहस्राणि नवां धारयते तनुम् ॥ १४ ॥**
**नाग्निर्न तोयं न विषं न शस्त्रं नास्त्रमेव च ॥**
**तस्यालमायुःक्षपणे समर्थानि भवन्ति हि ॥ १५ ॥**
**भद्राणां षष्टिवर्षाणां प्रस्रुतानामनेकधा ॥**
**कुञ्जराणां सहस्रस्य बलं समधिगच्छति ॥ १६ ॥**
**क्षीरोदं शक्रसदनमुत्तरांश्च कुरूनपि ॥**
**यत्रेच्छति स गन्तुं वा तत्राप्रतिहता गतिः ॥ १७ ॥**
**कन्दर्प इव रूपेण कान्त्या चन्द्र इवापरः ॥**
**प्रह्लादयति भूतानां मनांसि स महाद्युतिः ॥ १८ ॥**
**साङ्गोपाङ्गांश्च निखिलान् वेदान् विन्दति तत्त्वतः ॥**
**चरत्यमोघसङ्कल्पो देववच्चाखिलं जगत् ॥ १९ ॥**

'नवां' इत्यत्र 'अक्षतं' इति पाठान्तरं, अक्षतं यथा भवति तथा तनुं शरीरं धारयते; अक्षतमिति पाठात्तु व्याधेर्निषेधः । अस्त्रं मन्त्रवच्छस्त्रम् । तस्यालमित्यादि । अलम् अत्राजस्रम्, अलम् अत्यर्थमायुःक्षपणे न समर्था भवन्तीत्यर्थः । भद्राणां भद्रजातीयानां, षष्टिवर्षाणां षष्टिवर्षप्रमाणानां, प्रस्रुतानां गलितमदानाम्, अनेकधा बहून् वारान्, द्विपानां बलमित्युक्त्या अनिवार्यमित्यर्थः । कन्दर्पः कामदेवः । क्षीरोदः क्षीरसमुद्रः, शक्रसदनम् इन्द्रगृहम्, उत्तरकुरवो देशविशेषाः । अप्रतिहता अनिवार्या । कान्त्येति कान्त्या कृत्वैवं ज्ञायतेऽपरोऽयं चन्द्रः । अमोघसङ्कल्पः अनिवार्यसङ्कल्पः ॥ १४–१९ ॥

**सर्वेषामेव सोमानां पत्राणि दश पञ्च च ॥**
**तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च ॥ २० ॥**
**एकैकं जायते पत्रं सोमस्याहरहस्तदा ॥**
**शुक्लस्य पौर्णमास्यां तु भवेत् पञ्चदशच्छदः ॥ २१ ॥**
**शीर्यते पत्रमेकैकं दिवसे दिवसे पुनः ॥**
**कृष्णपक्षक्षये चापि लता भवति केवला ॥ २२ ॥**
**अंशुमानाज्यगन्धस्तु कन्दवान् रजतप्रभः ॥**
**कदल्याकारकन्दस्तु मुञ्जवांल्लशुनच्छदः ॥ २३ ॥**
**चन्द्रमाः कनकाभासो जले चरति सर्वदा ॥**
**गरुडाहृतनामा च श्वेताक्षश्चापि पाण्डुरौ ॥ २४ ॥**
**सर्पनिर्मोकसदृशौ तौ वृक्षाग्रावलम्बिनौ ॥**
**तथाऽन्ये[1] मण्डलैश्चित्रैश्चित्रिता इव भान्ति ते ॥ २५ ॥**

१ 'दिवैव' इति पा० । २ 'वल्लीनां लतानां प्रतानमतिविस्तारः' इति पा० ।

१ 'तथाऽन्ते' इति पा० ।

सर्वे एव तु विज्ञेयाः सोमाः पञ्चदशच्छदाः ॥
क्षीरकन्दलतावन्तः पत्रैर्नानाविधैः स्मृताः ॥ २६ ॥

अपरमपि ग्रहणाय लक्षणं दर्शयन्नाह—सर्वेषामित्यादि ॥ २०–२६ ॥

हिमवत्यर्बुदे सह्ये महेन्द्रे मलये तथा ॥
श्रीपर्वते देवगिरौ गिरौ देवसहे तथा ॥ २७ ॥
पारियात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा ॥
उत्तरेण वितस्तायाः प्रवृद्धा ये महीधराः ॥ २८ ॥
पञ्च तेषामधो मध्ये सिन्धुनामा महानदः ॥
हठवत् प्लवते तत्र चन्द्रमाः सोमसत्तमः ॥ २९ ॥
तस्योद्देशेषु चाप्यस्ति मुञ्जवानंशुमानपि ॥
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् ॥३०॥
गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शांकरस्तथा ॥
अत्र सन्त्यपरे चापि सोमाः सोमसमप्रभाः ॥ ३१ ॥

एतेषामन्वेषणस्थानमाह—हिमवतीत्यादि । स्थानेषु क्रियापदस्याविद्यमानत्वात् सन्तीत्येवं सामान्यक्रियां वितरेत् । चन्द्रमसः सोमस्य स्थानविशेषमुद्दिशन्नाह—उत्तरेणेत्यादि । वितस्तायाः नदीविशेषायाः, सिन्धुर्नाम महानदः । हठः जलकुम्भिका । प्लवते तरति । चन्द्रमाः सोमविशेषः ॥ २७–३१ ॥

यैश्चात्र मन्दभाग्यैस्ते भिषजश्चापमानिताः ॥
न तान् पश्यन्त्यधर्मिष्ठाः कृतघ्नाश्चापि मानवाः ॥
भेषजद्वेषिणश्चापि ब्राह्मणद्वेषिणस्तथा ॥ ३२ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने स्वभावव्याधिप्रतिषेधनीयं रसायनचिकित्सितं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

यैश्चेत्यादि । 'भेषजद्वेषिण' इत्यत्र 'भिषजद्वेषिण' इति पाठान्तरं; यैर्मन्दभाग्यैर्भिषजो वैद्या अपमानितास्ते पुरुषास्तान् सोमान्न पश्यन्ति ॥ ३२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने एकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

---

## त्रिंशत्तमोऽध्यायः ।

अथातो निवृत्तसन्तापीयं रसायनं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

निवृत्तसन्तापशब्दमधिकृत्य कृतं रसायनं निवृत्तसन्तापीयम् । तदधिकृत्य कृतो ग्रन्थ इतीयप्रत्ययः ॥ १ २ ॥

यथा निवृत्तसन्तापा मोदन्ते दिवि देवताः ॥
तथौषधीरिमाः प्राप्य मोदन्ते भुवि मानवाः ॥ ३ ॥

१ 'शाङ्करस्तथा' इति पा० । २ 'रसायनचिकित्सितं' इति पा० ।



महौषधिरसायनस्योपादेयत्वार्थं सामान्यफलैरौषधिप्रशंसामुद्दिशन्नाह—यथेत्यादि । निवृत्तव्याधित्वेन शारीरमानसिकदुःखरहिताः, मोदन्ते हृष्यन्ति; एतेन मनःसुखं दर्शयति । दिवि स्वर्गे ॥ ३ ॥

अथ खलु सप्त पुरुषा रसायनं नोपयुञ्जीरन्; तद्यथा—अनात्मवानलसो दरिद्रः प्रमादी व्यसनी पापकृद् भेषजापमानी चेति । सप्तभिरेव कारणैर्न संपद्यते; तद्यथा—अज्ञानादनारम्भादस्थिरचित्तत्वाद्दारिद्र्यादनायत्तत्वादधर्मादौषधालाभाच्चेति ॥ ४ ॥

अनात्मवान् अप्रशस्तात्मा मिथ्याचारप्रवृत्तो मूढबुद्धिः । प्रमादी प्रमादशीलोऽनवहितचित्त इत्यर्थः । व्यसनानि द्यूतमद्यवेश्यादीनि सन्त्यस्यासौ व्यसनी । सप्त कारणानि च सन्ति अनात्मवदादीनां सप्तानां पुंसामज्ञानादिकारणैः सप्तभिरेव यथायथं रसायनं न प्रयुञ्ज्यात् । तत्रानात्मनोऽज्ञानात्, दरिद्रस्यालसस्यानारम्भानवस्थितचित्तत्वाच्च प्रवृत्तिः, एवं प्रमादिव्यसनिपापकृदादीनामप्यप्रवृत्तिरनुमेयेति ॥ ४ ॥

अथौषधीर्व्याख्यास्यामः—तत्राजगरी, श्वेतकापोती, कृष्णकापोती, गोनसी, वाराही, कन्या, छत्रा, अतिच्छत्रा, करेणुः, अजा, चक्रका, आदित्यपर्णी, ब्रह्मसुवर्चला, श्रावणी, महाश्रावणी, गोलोमी, अजलोमी, महावेगवती, चेत्यष्टादश सोमसमवीर्या महौषधयो व्याख्याताः । तासां सोमवत् क्रियाशीःस्तुतयः शास्त्रेऽभिहिताः । तासामागारेऽभिहुतानां याः क्षीरवत्यस्तासां क्षीरकुडवं सकृदेवोपयुञ्जीत, यास्त्वक्षीरा मूलवत्यस्तासां प्रदेशिनीप्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे, श्वेतकापोती समूलपत्रा भक्षयितव्या, गोनस्यजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्राव्याभिघारितमभिहुतं च सकृदेवोपयुञ्जीत, चक्रकायाः पयः सकृदेव, ब्रह्मसुवर्चला सप्तरात्रमुपयोक्तव्या भक्ष्यकल्पेन, शेषाणां पञ्च पञ्च पलानि क्षीराढककथितानि प्रस्थेऽवशिष्टेऽवतार्य परिस्राव्य सकृदेवोपयुञ्जीत । सोमवदाहारविहारौ व्याख्यातौ, केवलं नवनीतमभ्यञ्जनार्थं, शेषं सोमवदानिर्गमादिति ॥ ५ ॥

सोमवदिति अध्वरविधिवर्जमन्यत्सर्वं सोमवत् क्रियाविधानम् । आशीर्मङ्गलपाठादिः, स्तुतिः फलवादः; **गयी** तु क्रिया करणं विधानं, आशीः फलं, तस्य स्तुतयः सोमस्यैव; शास्त्रे आगमे अभिहिताः । एतेन तन्मते सोमस्यैवाध्वरविधि-

१ '°दनायतनादनायासादौ°' इति पा० । २ 'तासामभिहुतानां याः क्षीरवत्यस्तासां क्षीरकुडवमागारे सकृदेवोपयुञ्जीत' इति पा० । ३ 'समूलफलवृन्ता' इति पा० ।

रपि प्राप्यते । अभिहुतानां कृतहोमानाम् । क्षीरकुडवमष्टौ पलानि, महती मात्रा । प्रदेशिनीप्रमाणानि आयामविस्ताराभ्याम् । क्षीरेण विपाच्येति "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः" अनेन विधिना । अभिघारितमभिहुतमिति पूर्वमभिघारितं पश्चादभिहुतं; अभिघारितम् ईषद्घृताक्तम् । तत्र चक्रकायाः पयः सकृदेव । गयी तु 'तत्र चक्रकायाः पायसम्' इति पठति, व्याख्यानयति च—तत्र चक्रकायाः पलकल्कं द्विगुणिततण्डुलं क्षीरेण साध्यं, सकृदेवोपयुञ्जीत । भक्ष्यकल्पेनेति अपूपादिविधानेन । आनिर्गमादिति गूढागारं कृत्वा तत्रावासपर्यन्तमित्यर्थः ॥ ५ ॥

भवन्ति चात्र—

युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनम् ॥
कुर्युरेताः क्रमेणैव द्विसहस्रायुषं नरम् ॥ ६ ॥
अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बरः ॥
चरत्यमोघसङ्कल्पो नभस्यम्बुददुर्गमे ॥ ७ ॥
व्रजन्ति पक्षिणो येन जललम्बाश्च तोयदाः ॥
गतिः सौषधिसिद्धस्य सोमसिद्धे गतिः परा ॥ ८ ॥

अतः परं फलश्रुतिमाह—युवानमित्यादि । विक्रान्तं विक्रमयुक्तम् । कान्तं मनोज्ञम् । क्रमेणैवेति शास्त्रविहितसकलक्रमेण । अङ्गदी केयूरयुक्तः, कुण्डली कुण्डलयुक्तः, मौली मुकुटधारी, स्रक् माला, अम्बरं वस्त्रम्, अमोघसङ्कल्पः सफलकामितः । नभसि आकाशे । अम्बुददुर्गमे मेघैर्दुःखसञ्चारे । सोमसिद्धे गतिः परेति सोमसिद्धे पुरुषे पुनरेवमुत्कृष्टं गमनं भवतीत्यर्थः ॥ ६–८ ॥

अथ वक्ष्यामि विज्ञानमौषधीनां पृथक् पृथक् ॥
मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी ॥ ९ ॥
पञ्चारत्निप्रमाणा च विज्ञेयाऽजगरी बुधैः ॥
निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसंमिता ॥ १० ॥
सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते ॥
द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलाम् ॥ ११ ॥
द्व्यरत्निमात्रां जानीयाद्गोनसीं गोनसाकृतिम् ॥
सक्षीरां रोमशां मृद्वीं रसेनेक्षुरसोपमाम् ॥ १२ ॥
एवंरूपरसां चापि कृष्णकापोतिमादिशेत् ॥
कृष्णसर्पस्वरूपेण वाराही कन्दसंभवा ॥ १३ ॥
एकपत्रा महावीर्या भिन्नाञ्जनसमप्रभा ॥
छत्रातिच्छत्रके विद्याद्रक्षोघ्ने कन्दसंभवे ॥ १४ ॥
जरामृत्युनिवारिण्यौ श्वेतकापोतिसंस्थिते ॥
कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः ॥ १५ ॥
कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी ॥
करेणुः सुबहुक्षीरा कन्देन गजरूपिणी ॥ १६ ॥
हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ॥
अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी ॥ १७ ॥
अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा ॥
श्वेतां विचित्रकुसुमां काकादन्या समां क्षुपाम् ॥ १८ ॥
चक्रकामोषधीं विद्याज्जरामृत्युनिवारिणीम् ॥
मूलिनी पञ्चभिः पत्रैः सुरक्तांशुककोमलैः ॥ १९ ॥
आदित्यपर्णिनी ज्ञेया सदाऽऽदित्यानुवर्तिनी ॥
कनकाभा जलान्तेषु सर्वतः परिसर्पति ॥ २० ॥
सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला ॥
अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसंमितैः ॥ २१ ॥
पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः ॥
श्रावणी महती ज्ञेया कनकाभा पयस्विनी ॥ २२ ॥
श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा ॥
गोलोमी चाजलोमी च रोमशे कन्दसंभवे ॥ २३ ॥
हंसपादीव विच्छिन्नैः पत्रैर्मूलसमुद्भवैः ॥
अथवा शङ्खपुष्प्या च समाना सर्वरूपतः ॥ २४ ॥
वेगेन महताऽऽविष्टा सर्पनिर्मोकसन्निभा ॥
एषा वेगवती नाम जायते ह्यम्बुदक्षये ॥ २५ ॥

विस्तृतकनिष्ठाङ्गुलिमुष्टिकहस्तः अरत्निः । श्वेतकापोतिसंस्थिते इति श्वेतकापोतिकाकृतीत्यर्थः । रक्षोघ्ने इति स्वभावेन रक्षसां प्रध्वंसकरे । काञ्चनवर्णं क्षीरं यस्याः सा काञ्चनक्षीरी । क्षुपरूपिणी विटपरूपिणी, बद्धमुष्टिकरः अरत्निः । निवातेऽपि स्वभाववेगेनाविष्टा । अम्बुदक्षये शरदि ॥ ९–२५ ॥

सप्तादौ सर्परूपिण्यो ह्यौषध्यो याः प्रकीर्तिताः ॥
तासामुद्धरणं कार्यं मन्त्रेणानेन सर्वदा ॥ २६ ॥
महेन्द्ररामकृष्णानां ब्राह्मणानां गवामपि ॥
तपसा तेजसा वाऽपि प्रशाम्यध्वं शिवाय वै ॥ २७ ॥
मन्त्रेणानेन मतिमान् सर्वा एवाभिमन्त्रयेत् ॥
अश्रद्दधानैरलसैः कृतघ्नैः पापकर्मभिः ॥ २८ ॥
नैवासादयितुं शक्याः सोमाः सोमसमास्तथा ॥

अनेन मन्त्रेणोद्धरणमुत्पाटनमौषधपरिरक्षार्थमभिमतफलप्राप्त्यर्थं च । मन्त्रमाह—महेन्द्रेत्यादि । प्रशाम्यध्वम् उपशमं कुरुत; किमर्थं? शिवाय कल्याणाय । वै निश्चितम् । नैवासादयितुं नैव प्राप्तुम् ॥ २६–२८ ॥—

पीतावशेषममृतं देवैर्ब्रह्मपुरोगमैः ॥ २९ ॥
निहितं सोमवीर्यासु सोमे चाप्योषधीपतौ ॥

पौराणिकीं श्रुतिं दर्शयन्नाह—पीतेत्यादि । निहितं धृतम् । सोमवीर्यासु औषधिषु । सोमे चन्द्रमसि ॥ २९ ॥—

देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे ॥ ३० ॥
दृश्यते च जलान्तेषु मेध्या ब्रह्मसुवर्चला ॥

१ 'कन्यकायाः' इति पा० । २ 'कन्यकायाः' इति पा० । ३ 'सोमसिद्धगतिः' इति पा० । ४ 'सोमसिद्धस्य' इति पा० ।

१ 'तक्रकां' इति 'नक्रकां' इति च पा० । २ 'भिषगातुरपरिरक्षार्थं' इति पा० ।

आदित्यपर्णिनी ज्ञेया तथैव हिमसंक्षये ॥ ३१ ॥
दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे ॥
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् ॥३२॥
करेणुस्तत्र कन्या च छत्रातिच्छत्रके तथा ॥
गोलोमी चाजलोमी च महती श्रावणी तथा ॥३३॥
वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते ॥
कौशिकीं सरितं तीर्त्वा सञ्जयन्त्यास्तु पूर्वतः ॥३४॥
क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयम् ॥
विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्धसु ॥ ३५ ॥
मलये नलसेतौ च वेगवत्यौषधी ध्रुवा ॥
कार्तिक्यां पौर्णमास्यां च भक्षयेत्तामुपोषितः ॥३६॥
सोमवच्चात्र वर्तेत फलं तावच्च कीर्तितम् ॥
सर्वा विचेयास्त्वोषध्यः सोमाश्चाप्यर्बुदे गिरौ ॥३७॥
स शृङ्गैर्देवचरितैरम्बुदानीकभेदिभिः ॥
व्याप्तस्तीर्थैश्च विख्यातैः सिद्धर्षिसुरसेवितैः ॥ ३८ ॥
गुहाभिर्भीमरूपाभिः सिंहोन्नादितकुक्षिभिः ॥
गजालोडिततोयाभिरापगाभिः समन्ततः ॥
विविधैर्धातुभिश्चित्रैः सर्वत्रैवोपशोभितः ॥ ३९ ॥

नदीषु शैलेषु सरःसु चापि
पुण्येष्वरण्येषु तथाऽऽश्रमेषु ॥
सर्वत्र सर्वाः परिमार्गितव्याः
सर्वत्र भूमिर्हि वसूनि धत्ते ॥ ४० ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने निवृत्तसंतापीयं रसायनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

देशमाह—देवसुन्दे इत्यादि। ह्रदे जलाशयविशेषे। महानद इति लोके प्रसिद्धः। हिमसंक्षये वसन्ते। अम्बुदागमे वर्षासु। कृष्णसर्पाख्या वाराही। विज्ञेया अनुसरणीयाः। कुतः पुनरत्र गिरौ सर्वा एवानुसरणीया इत्याह—स इत्यादि। यतो गिरिरुक्तविशेषणः। अम्बुदानीकं मेघघटा। धातुभिः गैरिकादिभिः। पुनः किंविशिष्टो गिरिः? गुहाभिरुक्तविशेषणाभिर्व्याप्तः, सिंहोन्नादितकुक्षिभिः सिंहैरुन्नादिताः कुक्षयो यासां ताभिः, पुनरापगाभिर्नदीभिरुक्तविशेषणाभिरुपलक्षितः। हि यस्मादर्थे। यस्मात् कारणात् सर्वत्र सर्वदेशेषु, भूमिरियं रत्नानि धारयतीत्यर्थः ॥ ३०—४० ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने त्रिंशत्तमोऽध्यायः ॥ ३० ॥

## एकत्रिंशत्तमोऽध्यायः ।

अथातः स्नेहोपयौगिकचिकित्सितं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

सर्वोपघातशमनीये रसायने 'नाविशुद्धशरीरस्य युक्तो रासायनो विधिः' इत्युक्तत्वाच्छोधनं प्रतिपादयितुकामः तत्प्राक्कर्मणी स्नेहस्वेदौ निर्दिशति; तत्रापि स्नेहपूर्वकत्वात् स्वेदस्य प्रथमं स्नेहोपयौगिकं चिकित्सितमाह—अथात इत्यादि। स्नेहस्य उपयोगो यस्मिन् कर्मणि तत्स्नेहोपयौगिकं तदेव चिकित्सितम्। उपयोजनम् उपयोगो बाह्य आभ्यन्तरश्च; तत्र बाह्योऽभ्यङ्गादिः, आभ्यन्तरः पानादिः ॥ १ ॥ २ ॥

स्नेहसारोऽयं पुरुषः, प्राणाश्च स्नेहभूयिष्ठाः स्नेहसाध्याश्च भवन्ति। स्नेहो हि पानानुवासनमस्तिष्कशिरोबस्त्युत्तरबस्तिनस्यकर्णपूरणगात्राभ्यङ्गभोजनेषूपयोज्यः ॥ ३ ॥

तत्र पानादि प्रधानमिह वक्तव्यम्, अप्रधानं पुनरनागताबाधे इन्द्रियानुपालनप्रसङ्गेनोक्तम् ॥ ३ ॥

तत्र द्वियोनिश्चतुर्विकल्पोऽभिहितः स्नेहः स्नेहगुणाश्च। तत्र जङ्गमेभ्यो गव्यं घृतं प्रधानं, स्थावरेभ्यस्तिलतैलं प्रधानमिति ॥ ४ ॥

द्वियोनिः द्विकारणिकः स्थावरो जङ्गमश्च। तत्र तैलं स्थावरयोनि, घृतवसामज्जानस्तु जङ्गमयोनयः। तत्र तैलं तिलादिफलोद्भवत्वात् फलस्थं, देवदारुशिंशपागुर्वादिसारोत्थं च; घृतमपि द्विविधं क्षीरोत्थं, दध्युत्थं च; शुद्धमांसस्नेहो वसा, अस्थ्याश्रया मज्जा। चत्वारो विकल्पाः सर्पिस्तैलवसामज्जानो यस्य स्नेहस्येति चतुर्विकल्पः; स्वाभाविकगुणेनाप्यत्र पानविधावुक्तः। तत्र जङ्गमेभ्यो गव्यं घृतं प्रधानं, स्थावरेभ्यस्तिलतैलमिति ॥ ४ ॥

अत ऊर्ध्वं यथाप्रयोजनं यथाप्रधानं च स्थावरस्नेहाननुपदेक्ष्यामः—तत्र तिल्वकैरण्डकोशाम्रदन्तीद्रवन्तीसप्तलाशङ्खिनीपलाशविषाणिकागवाक्षीकम्पिल्लकशम्पाकनीलिनीस्नेहा विरेचयन्ति, जीमूतककुटजकृतवेधनेक्ष्वाकुधामार्गवमदनस्नेहा वामयन्ति, विडङ्गखरमञ्जरीमधुशिग्रुसूर्यवल्लीपीलुसिद्धार्थकज्योतिष्मतीस्नेहाः शिरो विरेचयन्ति, करञ्जपूतीककृतमालमातुलुङ्गेङ्गुदीकिराततिक्तकस्नेहा दुष्टव्रणेषूपयुज्यन्ते, तुवरककपित्थकम्पिल्लकभल्लातकपटोलस्नेहा महाव्याधिषु, त्रपुसैर्वारुककर्कारुकतुम्बीकूष्माण्डस्नेहा मूत्रसङ्गेषु, कपोतवङ्कावल्गुजहरीतकीस्नेहाः शर्कराश्मरीषु, कुसुम्भसर्षपातसीपिचुमर्दातिमुक्तकभाण्डीकटुतुम्बीकटभीस्नेहाः प्रमेहेषु, तालनारिकेलपनसमोचप्रियालबिल्वमधूकश्लेष्मातकाम्रातकफलस्नेहाः पित्त-

१ 'दृश्यते नात्र संशयः' इति पा०। २ 'गिरिरुक्तप्रकारैः शृङ्गैरुपशोभितः' इति पा०।

१ 'विज्ञातरसायनविधानोऽपि अनवधारिते तत्प्राक्कर्मणि शोधने खलु यतो मुह्यति, अतः शोधनं प्रतिपादयितुकामः प्रथमं शोधनस्यैव प्राक्कर्म स्नेहमाह' इति पा०। २ 'शुद्धमांसजा' इति पा०। ३ 'यथाविधानं' इति पा०।

**संसृष्टे वायौ, विभीतकभल्लातकपिण्डीतकस्नेहाः कृष्णीकरणे, श्रवणकङ्गुकटुण्टुकस्नेहाः पाण्डूकरणे, सरलपीतदारुशिंशपागुरुसारस्नेहा दद्रुकुष्ठकिटिभेषु, सर्वे एव स्नेहा वातमुपघ्नन्ति, तैलगुणाश्च समासेन व्याख्याताः ॥ ५ ॥**

प्रयोजनस्थानतिक्रमेणेति यथाप्रयोजनं, प्रयोजनं प्रयोजनं वीक्ष्येति वा । प्रधानं प्रधानं वीक्ष्य यथाप्रधानम् । तत्र स्थावरस्य प्रायेण पार्थिवद्रव्यारब्धत्वात्तस्य च स्वभावेनाधोगामित्वाद्विरेचनस्नेहानेव प्रथममाह—तत्रेत्यादि । तिल्वको रोध्राकारो बृहत्पत्रो रक्तत्वग्वैरेचनिकः, सप्तला यवतिक्ताभेदः, शङ्खिन्यपि तद्भेदः, विषाणिका मेषशृङ्गी, गवाक्षी इन्द्रवारुणी, कम्पिल्लको रेचनिका स्वनामख्यातः, शम्पाकः किरमालकः, नीलिनी नीलाञ्जनिका शारदं फलम् । जीमूतो देवदाली, कृतवेधनः कोशातकी, इक्ष्वाकुः कटुतुम्बी, धामार्गवो महाकोशातकी । तत्र तिल्वकादिस्नेहा विरेचयन्ति, जीमूतकादिस्नेहा वामयन्ति । पित्तकफहरं कर्मद्वयं प्रतिपाद्य स्थानाश्रयं कफस्यैव कर्म दर्शयन्नाह—विडङ्गेत्यादि । खरमञ्जरी अपामार्गः, मधुशिग्रुः शोभाञ्जनकः, सूर्यवल्ली पटोलसदृशा वल्ली, ज्योतिष्मती काकमर्दनिका, शिरो विरेचयन्ति नस्यप्रयोगेण शिरःस्थं श्लेष्माणं विरेचयन्ति स्रावयन्तीत्यर्थः । इदानीं शल्यतन्त्रत्वाद्व्रणयोगिनः स्नेहान्निर्दिशन्नाह—करञ्जेत्यादि । पूतीकः चिरबिल्वः, कृतमालः किरमालः । तुवरकः पश्चिमसमुद्रभूमिषु पलाशानुकारी वृक्षः । महाव्याधिषु महाकुष्ठमेहादिष्वष्टासु, वातामयादिष्वित्यन्ये; उपयुज्यन्त इति पूर्वश्लोकात् संबन्धनीयम्; एवमुत्तरत्र । त्रपुसः सुधावासः, त्रपुसीति लोके, एर्वारुर्लोमशा कर्कटी, कर्कारुः वाडवं त्रपुसं 'खेरसा' इति लोके । मूत्रसङ्गेषु मूत्रकृच्छ्राध्मानाश्मरीष्वित्यर्थः । कपोतवङ्का ब्रह्मसुवर्चला, अवल्गुजो बाकुची; **गयदासस्तु** 'कपोतवङ्काहरीतकीस्नेहौ शर्कराश्मरीषु' इति पठित्वा व्याख्यानयति—कपोतवङ्कादिस्नेहौ वातभिन्नमूर्तिष्वश्मरीष्विति । पिचुमर्दो निम्बः, अतिमुक्तकः अवन्तकः, भाण्डी 'भाण्डनी' इति लोके प्रसिद्धो विटपो भाण्डधावनार्थमासुतीवलाः समाहरन्ति । प्रियालः चारः । पिण्डीतको मदनः । श्रवणः तापसवृक्षः 'इङ्गुदी' इति लोके, कङ्गुकं प्रियङ्गुः, टुण्टुकः स्योनाकः । पीतदारु देवदारु । विशेषेण दद्रूकिटिभौ घ्नन्तीति नियमार्थं पुनः कुष्ठत्वाविशेषेऽपि तयोर्ग्रहणम् । सर्वस्नेहसामान्यकर्म निर्दिशन्नाह—सर्वे एवेत्यादि । स्थावरतैलप्राधान्येन तिलतैलगुणा द्रवद्रव्यविधावुक्ताः । समासेनेति वर्गेणैव गुणोपदेशात् संक्षेपेणेत्यर्थः ॥ ५ ॥

**अत ऊर्ध्वं कषायस्नेहपाकक्रममुपदेक्ष्यामः । तत्र केचिदाहुः-त्वक्पत्रफलमूलादीनां भागस्तच्चतुर्गुणं जलं चतुर्भागावशेषं निष्क्वाथ्यापहरेदित्येष कषायपाककल्पः; स्नेहप्रसृतेषु षट्सु चतुर्गुणं द्रवमावाप्य चतुरश्चाक्षसमान् भेषजपिण्डानित्येष स्नेहपाककल्पः । एतत्तु न सम्यक्; कस्मात्? आगमासिद्धत्वात् ॥ ६ ॥**

स च स्नेहः प्रायशः संस्कृत उपयुज्यते, अतस्तत्संस्कारार्थमाह—अत ऊर्ध्वमित्यादि । आदिशब्दात् कन्दादयो गृह्यन्ते । भाग इति एकवचनान्तत्वादेक एवाकृतपलादिमानविशेषस्तुलाधारणमात्रेणावधारितः । तस्मात्त्वगादिभागाच्चतुर्गुणमुदकम् । तदुक्तम्—चतुर्भागावशेषं क्वाथमुपहरेदिति । कषायस्नेहकल्कमानं दर्शयन्नाह—स्नेहप्रसृतेष्वित्यादि । प्रसृतोऽत्र संयुक्तपञ्चाङ्गुलिरीषद्विस्तृतपाणिरेकः, न पुनः पलद्वयम् । चतुरश्चाक्षसमान् भेषजकल्कपिण्डान् बिभीतकफलमानान् पिष्टभेषजकल्कान्; इत्येष स्नेहपाककल्प इति केचिदाहुः ॥ ६ ॥

**पलकुडवादीनामतो मानं तु व्याख्यास्यामः—तत्र द्वादश धान्यमाषा मध्यमाः सुवर्णमाषकः, ते षोडश सुवर्णम्; अथवा मध्यमनिष्पावा एकोनविंशतिर्धरणं, तान्यर्धतृतीयानि कर्षः; ततश्चोर्ध्वं चतुर्गुणमभिवर्धयन्तः पलकुडवप्रस्थाढकद्रोणा इत्यभिनिष्पद्यन्ते, तुला पुनः पलशतं, ताः पुनर्विंशतिर्भारः; शुष्काणामिदं मानम्, आर्द्रद्रवाणां च द्विगुणमिति ॥ ७ ॥**

स्नेहपाककल्पमुपदिदिक्षुः पूर्वं पलादिपरिमाणमेवाह—पलेत्यादि । कुतः? तत्पूर्वकत्वात् तत्परिमेयार्थप्रविभागसिद्धेः, परिमाणसिद्धौ परिमेयकषायस्नेहपाकादिसंभारद्रव्यप्रविभागप्रसिद्धिः; अतस्तदुपयोगि मानमभिधीयते । पलादीनां पङ्क्तौ पृथक् कुडवग्रहणात् पलकुडवयोरद्वैगुण्यं प्रतिपादयति । तदाह—तत्र कुडवादौ द्रवस्यार्द्रस्य च द्वैगुण्यमेव, पलमानेषु तु पुनरद्वैगुण्यमेव । मध्यमा मध्यमप्रमाणाः, तेन नातिस्थूला नातितनवश्च ग्राह्याः । तैर्द्वादशभिरेकः सुवर्णमाषकः । ते षोडश सुवर्णमाषकाः सुवर्णकर्ष इत्यर्थः । अन्ये पुनरन्यथा मानसूत्रं पठन्ति; तद्यथा—अथवा मध्यमनिष्पावा इत्यादि । अर्धं तृतीयं येषां तान्यर्धतृतीयानि सार्धद्वयमित्यर्थः । उभयं चैतत् प्रसिद्धम् । ततश्चेत्यादि । अयमर्थः—ततः कर्षाच्चतुर्गुणवर्धमानात् पलम्, एवं पलात् चतुर्गुणवर्धमानात् कुडवः, कुडवात् प्रस्थः, प्रस्थादाढकम्, आढकाद् द्रोणः; तुला पुनः पलशतमेव । ताः पुनरिति तुला इत्यर्थः । प्रसङ्गेन भारोऽप्यभिहितो न पुनरत्रानेन व्यवहारो दृश्यते । शुष्काणामिदं प्रमाणं, साद्रोणां सरसानां द्रवाणां सलिलक्षीरादीनां कुडवादौ द्वैगुण्यं; तेन शुष्काणां चतुर्भिः पलैः कुडवः, आर्द्राणां द्रवाणां चाष्टभिरिति; **जेज्जटस्त्वार्द्राणां** द्रवाणां च चतुःपलं कुडवमाह । वृद्धवैद्यव्यवहारात् कानिचिद्द्रव्याण्यार्द्राण्यपि न द्विगुणानि ग्राह्याणि । तान्येवाह—"वासाकुटजकूष्माण्डशतमूलीसहामृताः । प्रसारण्यश्वगन्धा च शतपुष्पा

१ 'पिष्टभेषजपिण्डान्' इति पा० । २ 'आर्द्राणां' इति पा० । ३ '°शतपत्री°' इति पा० ।

सहाचराः ॥ निर्लेमार्द्राः प्रयोक्तव्या न तासां द्विगुणं भवेत्" —इति । केचित् प्रस्थविषये एवं प्रवदन्ति—"द्वात्रिंशताऽत्र विंशत्या पलैः षोडशभिः क्रमात् । तोयस्नेहविशुष्काणां द्रव्याणां प्रस्थमादिशेत्"—इति । तत्र द्वादश धान्यमाषा मध्यमाः सुवर्णमाषक इति मागधानुमतं सुश्रुताचार्यसंमतं मानम् । उक्तं च—"मानं तु द्विविधं प्राहुः कालिङ्गं मागधं तथा । कालिङ्गान्मागधं श्रेष्ठमिति मानविदो विदुः ॥ कालिङ्गमपि मानं च चरकाचार्यसंमतम्"—इति । **सुश्रुताचार्यः** प्राह—अथवा मध्यमनिष्पावा एकोनविंशतिरित्यादिकम् ॥ ७ ॥

**तत्रान्यतमपरिमाणसंमितानां यथायोगं त्वक्पत्रफलमूलादीनामातपपरिशोषितानां छेद्यानि खण्डशश्छेदयित्वा भेद्यान्यणुशो भेदयित्वाऽचतुष्ट्याष्टगुणेन षोडशगुणेन वाऽम्भसाऽभिषिच्य स्थाल्यां चतुर्भागावशिष्टं क्वाथयित्वाऽपहरेदित्येष कषायपाककल्पः । स्नेहाच्चतुर्गुणो द्रवः, स्नेहचतुर्थांशो भेषजकल्कः, तदैकध्यं संसृज्य विपचेदित्येष स्नेहपाककल्पः । अथवा तत्रोदकद्रोणे त्वक्पत्रफलमूलादीनां तुलामावाप्य चतुर्भागावशिष्टं निष्क्वाथ्यापहरेदित्येष कषायपाककल्पः; स्नेहकुडवे भेषजपलं पिष्टं कल्कं चतुर्गुणं द्रवमावाप्य विपचेदित्येष स्नेहपाककल्पः ॥ ८ ॥**

पलादिमानमभिधाय क्वाथपाकपरिभाषामाह—तत्रेत्यादि । तत्रेति तयोर्मध्ये । अन्यतमेन एकतमेन, परिमीयतेऽनेनेति परिमाणं पलादिकं, तेन सम्यङ्मितानां त्वक्पत्रादीनाम् । षोडशगुणेनाष्टगुणेन वेति वाशब्दः समुच्चये चतुर्गुणेनेत्यस्य । उदकद्रोणविषये तुलाद्रव्यस्यावापेनैतज्ज्ञापयति—निष्क्वाथ्यं द्रव्यं जले पञ्चगुणे निष्क्वाथयेत् । स्नेहपाकपरिभाषामाह—स्नेहादित्यादि । स्नेहकुडवे प्रस्थं द्रवं भेषजपलं च दत्त्वा पक्तव्यमित्यर्थः । अन्ये सुश्रुताध्यायिनः क्वाथस्नेहपाककल्पनमन्यथा पठन्ति । त्रयाणामपि कषायपाकविषयमाह—"कर्षादौ तु पलं यावद्दद्यात् षोडशिकं जलम् । ततस्तु कुडवं यावत्तोयमष्टगुणं भवेत् ॥ चतुर्गुणमतश्चोर्ध्वं यावत् प्रस्थादिकं भवेत्"—इति । प्रकारान्तरेण विषयमाह—"मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं जलम् । कठिनात् कठिने देयं जलं षोडशिकं मतम्"—इति । बाहुल्येन षोडशगुणेन जलेन क्वाथकल्पना पानविषये, स्नेहपाके तु पूर्ववं । **वृद्धसुश्रुता**ध्यायिमते स्नेहपाककल्पनं—स्नेहाच्चतुर्गुणो द्रवः, स्नेहचतुर्थांशो भेषजकल्कः, तदैकध्यं संसृज्य विपचेदित्येष स्नेहपाककल्पः । स्नेहाच्चतुर्गुणो द्रव इति वचनात् सर्वेऽप्युदकक्षीरादयो गृह्यन्ते । केचिदेवं पठन्ति–"यत्रैकद्वित्रिचतुराणि द्रवद्रव्याणि तत्र सर्वाण्येव स्नेहाच्चतुर्गुणानि, पञ्चप्रभृतीनि स्नेहसमानानि"–इति । तथा चोक्तम्,—"पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम्"—इति ॥ ८ ॥

१ 'निम्बश्चार्द्राः' इति पा० । २ 'तत्रैकोनविंशतिर्निष्पावा धरणमित्यादि' इति पा० ।

**भवतश्चात्र—**

**स्नेहभेषजतोयानां प्रमाणं यत्र नेरितम् ।**
**तत्रायं विधिरास्थेयो निर्दिष्टे तद्वदेव तु ॥ ९ ॥**
**अनुक्ते द्रवकार्ये तु सर्वत्र सलिलं मतम् ॥**
**कल्कक्वाथावनिर्देशे गणात्तस्मात् प्रयोजयेत् ॥ १० ॥**

कषायस्नेहपाकपरिभाषेयं, परिभाषा चानियमे नियमकारिणीति, तदेव दर्शयन्नाह—स्नेहभेषजतोयानामित्यादि । अनुक्ते द्रवादौ पुनः का परिभाषेत्याह—अनुक्ते इत्यादि । यस्मादेव गणात् स्नेहपाकोऽभिप्रेतस्तस्मादेव गणात् क्वाथकल्कप्रकाराभ्यां समाचरणीयः ॥ ९ ॥ १० ॥

**अत ऊर्ध्वं स्नेहपाकक्रममुपदेक्ष्यामः । स तु त्रिविधः; तद्यथा—मृदुः, मध्यमः, खर इति । तत्र स्नेहौषधिविवेकमात्रं यत्र भेषजं स मृदुरिति, मधूच्छिष्टमिव विशदमविलेपि यत्र भेषजं स मध्यमः, कृष्णमवसन्नमीषद्विशदं चिक्कणं च यत्र भेषजं स खर इति; अत ऊर्ध्वं दग्धस्नेहो भवति, तं पुनः साधु साधयेत् । तत्र पानाभ्यवहारयोर्मृदुः, नस्याभ्यङ्गयोर्मध्यमः, बस्तिकर्णपूरणयोस्तु खर इति ॥ ११ ॥**

स्नेहौषधयोर्विवेकमात्रं पृथग्भावमात्रं यस्मिन् भेषजे तत् तादृशं भेषजं यत्र स्नेहपाके स मृदुः । पृथक्त्वमुभयगतमपि भेषजेऽभिहितं, भेषजस्याग्रेऽपि लक्षणत्वेन निर्देशात् । मधूच्छिष्टमिव विशदमपिच्छिलमेव । अत एव अविलेपि अङ्गुल्यादेः । एवंविधं भेषजं कल्करूपं यत्र स मध्यमः । अवसन्नमीषदिति भर्जनात् किञ्चिद्भ्रष्टप्रायम् । अत ऊर्ध्वमतिकृष्णमत्यवसन्नमतिविशदं च यत्र भेषजं स दग्धः । तस्य साधनोपदेशादौषधगुणा एव नष्टा न स्नेहगुणा इति गम्यते । **चरके** पुनरन्यथोक्तं,—"खरोऽभ्यङ्गे मृदुर्नस्ये पाने बस्तौ च मध्यमः" (च. क. अ. १२) इति; तदत्र द्वयमपि प्रमाणं; "श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ" (मनु० २-१४)-इति । अन्यत्रापि—"उदितानुदिते चापि समयाध्युषिते तथा । सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः" (मनु. स्मृ. अ. २-१५) इति ॥ ११ ॥

**भवतश्चात्र—**

**शब्दस्योपरमे प्राप्ते फेनस्योपशमे तथा ॥**
**गन्धवर्णरसादीनां संपत्तौ सिद्धिमादिशेत् ॥ १२ ॥**
**घृतस्यैवं विपक्वस्य जानीयात् कुशलो भिषक् ॥**
**फेनोऽतिमात्रं तैलस्य शेषं घृतवदादिशेत् ॥ १३ ॥**

तत्र भेषजस्पर्शेन मृदुविशदादिना प्राधान्येन पाकलक्षणं निखिलं शेषेन्द्रियार्थैरुपदिशन्नाह—भवतश्चात्रेत्यादि । द्विविधः पच्यमानस्नेहस्य शब्दो द्रवानुगतः, अद्रवानुगतश्च । तत्र शब्द-

१ 'स एव गणः' इति पा० ।

स्योपरमे प्राप्ते इत्यत्र प्राप्तशब्देन युक्तार्थवाचिना द्रवानुगतशब्दस्योपरमो न कृत्स्नशब्दव्युपरम इति ज्ञेयम् । संपत्तौ समृद्धौ ॥ १२ ॥ १३ ॥

**अत ऊर्ध्वं स्नेहपानक्रममुपदेक्ष्यामः—अथ खलु लघुकोष्ठायातुराय कृतमङ्गलस्वस्तिवाचनायोदयगिरिशिखरसंस्थिते प्रतप्तकनकनिकरपीतलोहिते सवितरि यथाबलं तैलस्य घृतस्य वा मात्रां पातुं प्रयच्छेत् । पीतमात्रे चोष्णोदकेनोपस्पृश्य सोपानत्को यथासुखं विहरेत् ॥ १४ ॥**

अत ऊर्ध्वं स्नेहपानक्रममिति स्नेहपानपरिपाटीमित्यर्थः । अथशब्दोऽयं पञ्चकर्मादौ मङ्गलार्थः । खलुशब्दो वाक्यशोभार्थः । लघुकोष्ठवचनं जीर्णाहारप्रदर्शनार्थं; **गयी** तु लघुकोष्ठाय यथाक्रममामाशयपक्काशयहृदयेषु पक्तापगतान्नमलरसामतागौरवायेति व्याख्यानयति । कृतं मङ्गलं पूर्णोदककुम्भादि सर्वलोकप्रसिद्धं स्वस्तिवाचनं च यस्य स तथा, तस्मै । अत्रोदयगिरिसंस्थितसवितुर्ग्रहणं प्रातःकालज्ञापनाय । प्रातर्हि संशोधनार्थं स्नेहपानं तन्त्रान्तरेऽप्युक्तं—"शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः । पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः" ( च. सू. अ. १३ ) इति । यथाबलमिति दोषपुरुषामयानां हीनमध्योत्तमबलमाश्रित्य यामद्वयचतुर्यामसकलाहःपरिणामसापेक्षिणीं मात्राम् । सर्वस्नेहनेषु[2] प्रधानतया घृततैले प्राह—घृतस्य तैलस्य वेति । उपस्पृश्य आचमनं कृत्वेत्यर्थः ॥ १४ ॥

**रूक्षक्षतविषार्तानां वातपित्तविकारिणाम् ॥**
**हीनमेधास्मृतीनां च सर्पिःपानं प्रशस्यते ॥ १५ ॥**
**कृमिकोष्ठानिलाविष्टाः प्रवृद्धकफमेदसः ॥**
**पिबेयुस्तैलसात्म्याश्च तैलं दार्ढ्यार्थिनश्च ये ॥ १६ ॥**
**व्यायामकर्शिताः शुष्करेतोरक्ता महारुजः ॥**
**महाग्निमारुतप्राणा वसायोग्या नराः स्मृताः ॥१७॥**
**क्रूराशयाः क्लेशसहा वातार्ता दीप्तवह्नयः ॥**
**मज्जानमाप्नुयुः सर्वे सर्पिर्वा स्वौषधान्वितम् ॥ १८ ॥**

सर्वे रूक्षक्षतविषार्तादयः । स्वौषधान्वितमिति यस्य यत् स्वमात्मीयमौषधं तेन युक्तम् ॥ १५–१८ ॥

**केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् ॥**
**देयं बहुकफे चापि व्योषक्षारसमायुतम् ॥ १९ ॥**

इदानीं तस्यैव घृतस्य प्रतिदोषं केवलस्य संयुक्तस्य च प्रयोगमाह—केवलमित्यादि । केवलम् असहायम्, अन्यद्रव्यैरसंयुक्तमित्यर्थः, तच्च संस्कृतमसंस्कृतं वा; सत्यप्यन्यद्रव्यसंयोगे संस्कृतत्वं लभ्यत एव, संयोगसंस्कारयोर्गुणयोर्भिन्नत्वात् । एतेन संस्कृतमसंस्कृतं वा केवलं क्वाथचूर्णादिप्रक्षेपरहितं सर्पिः पातव्यमिति ज्ञेयम् । **गयी** तु—पित्तहरद्रव्यसाधितमेव केवलमित्याह ॥ १९ ॥

**दोषाणामल्पभूयस्त्वं संसर्गं समवेक्ष्य च ॥**
**युञ्ज्यात्त्रिषष्टिधाभिन्नैः समासव्यासतो रसैः ॥ २० ॥**

न केवलमुक्तैर्लवणादिभिरेव संयुक्तं सर्पिर्योज्यं, किं तर्हि त्रिषष्टिभेदभिन्नै रसैरपीत्याह—दोषाणामित्यादि ॥ २० ॥

**स्नेहसात्म्यः क्लेशसहः काले नात्युष्णशीतले ॥**
**अच्छमेव पिबेत् स्नेहमच्छपानं हि पूजितम् ॥ २१ ॥**

अच्छपानविषयमुद्दिशन्नाह—स्नेहसात्म्य इत्यादि । क्लेशसहः शक्तिलक्षणबलयुक्तः, अतो विपरीतं भक्तेन सह पाययेत् । अच्छः केवलस्नेहः । केचित् 'काले नात्युष्णशीतले' इत्यस्य स्थाने 'दृढं काले च शीतले' इति पठन्ति, व्याख्यानयन्ति च-दृढमित्युपचयलक्षणबलयुक्तं, काले च शीतल इति चकारो वातकफयोः शैत्याद्दोषे च शीतल इति गमयति ॥ २१ ॥

**शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि ॥**
**वातपित्ताधिको रात्रौ वातश्लेष्माधिको दिवा ॥२२॥**

उक्तमेवाच्छपानं दोषकालभेदेन विवृण्वन्नाह—शीतकाल इत्यादि । निशीति संशमनमेव, 'उष्णकाले च सह भक्तेन पाययेत्' इति वचनात् । वातपित्ताधिक इति वातपित्ते अधिके यस्य सः वातपित्ताधिकः । वातपित्तयोर्व्यस्तसमस्तयोर्ग्रहणाद्वाताधिकः पित्ताधिको वातपित्ताधिकश्च रात्रौ संशमनं स्नेहं पिबेत् । तत्रापि वातपित्ताख्यसंसर्गस्यापरसंसर्गोपलक्षणत्वात् पित्तश्लेष्माधिकोऽपि रात्रौ पिबेदिति गम्यते । वातश्लेष्माधिक इति वातश्लेष्मा च श्लेष्मा च वातश्लेष्माणौ, समासेऽन्तःपदलोपः, तावधिकौ यस्य स वातश्लेष्माधिकः । एतेन वातकफाधिकः कफाधिकश्च दिवा स्नेहं पिबेदिति गम्यते । अत्रार्थे च **वृद्धवाग्भटः**—"सर्वं सर्वस्य च स्नेहं युञ्ज्याद्भास्वति निर्मले । ऋतौ साधारणे दोषसाम्येऽनिलकफे कफे ॥ दिवा निश्यनिले पित्ते संसर्गे पित्तवत्यति" ( अ. सं. सू. अ. २५ ) इति । यदा च ग्रीष्मे वातकफोत्थो रोगः स्नेहसाध्यस्तदा कालमाश्रित्य तदनुविहितः स्नेहो निशि प्रयोज्यो दोषादीन् वीक्ष्य च, तथा च **वृद्धवाग्भटः**—"त्वरमाणे तु शीतेऽपि दिवा तैलं प्रयोजयेत् । उष्णेऽपि रात्रौ सर्पिस्तु दोषादीन् वीक्ष्य चान्यथा" ( अ. सं. सू. अ. २५ ) इति ॥ २२ ॥

**वातपित्ताधिकस्योष्णे तृण्मूर्च्छोन्मादकारकः ॥**
**शीते वातकफार्तस्य गौरवारुचिशूलकृत् ॥ २३ ॥**

उक्तादन्यथाकरणे उभयत्रापि दोषं दर्शयन्नाह—वातपित्ताधिकस्येत्यादि ॥ २३ ॥

**स्नेहपीतस्य चेत्तृष्णा पिबेदुष्णोदकं नरः ॥**
**एवं चानुपशाम्यन्त्यां स्नेहमुष्णाम्बुना वमेत् ॥२४॥**
**दिह्याच्छीतैः शिरः शीतं तोयं चाप्यवगाहयेत् ॥**

---

१ अस्याग्रे 'अतोऽग्रे च प्राक्पाचितं दोषायेति पठित्वा पूर्वपाचितगौरवागंतामदोषायेति व्याख्यानयति' । इत्यधिकः पाठ उपलभ्यते ह. पुस्तके. २ 'सर्वःस्नेहनेषु' इति पा० ।

तत्र तृष्णाप्रतीकारमुद्दिशन्नाह—स्नेहपीतस्येत्यादि । दिह्यात् लिम्पेत् ॥ २४ ॥

या मात्रा परिजीर्येत चतुर्भागगतेऽहनि ॥ २५ ॥
सा मात्रा दीपयत्यग्निमल्पदोषे च पूजिता ॥
या मात्रा परिजीर्येत तथाऽर्धदिवसे गते ॥ २६ ॥
सा वृष्या बृंहणी या च मध्यदोषे च पूजिता ॥
या मात्रा परिजीर्येत चतुर्भागावशेषिते ॥ २७ ॥
स्नेहनीया च सा मात्रा बहुदोषे च पूजिता ॥
या मात्रा परिजीर्येत्तु तथा परिणतेऽहनि ॥ २८ ॥
ग्लानिमूर्च्छामदान् हित्वा सा मात्रा पूजिता भवेत्
अहोरात्रादसंदुष्टा या मात्रा परिजीर्यति ॥ २९ ॥
सा तु कुष्ठविषोन्मादग्रहापस्मारनाशिनी ॥

ग्लान्यादिकं हित्वा या परिजीर्येदिति वचनात् स्नेहबाहुल्येन परिपाककाले ग्लान्यादयो भवन्तीत्यवगम्यते । पूजिता भवेदिति वचनात् 'स्नेहने' इत्याहरणीयम् ॥ २५-२९ ॥—

यथाग्नि प्रथमां मात्रां पाययेत विचक्षणः ॥ ३० ॥
पीतो ह्यतिबहुः स्नेहो जनयेत् प्राणसंशयम् ॥
मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्यति ॥ ३१ ॥
विष्टभ्य चापि जीर्येत्तं वारिणोष्णेन वामयेत् ॥
ततः स्नेहं पुनर्दद्याल्लघुकोष्ठाय देहिने ॥
जीर्णाजीर्णविशङ्कायां स्नेहस्योष्णोदकं पिबेत् ॥ ३२ ॥
तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा ॥
स्युः पच्यमाने तृड्दाहभ्रमसादारतिक्लमाः ॥ ३३ ॥

तास्तावामेव मात्रामदोषत्वेन निर्दिशति—यथाग्नीत्यादि । अह्न्यनतिक्रमेण एकयामपरिणामां मात्रां पातुं प्रयोजयेत्, पलमित्यर्थः । कुतः पुनर्नेतरा इत्याह—पीतो ह्यतिबहुरित्यादि । मिथ्याचारात् शीतसेवादिलक्षणात् । मिथ्याचारादिजस्य स्नेहाजीर्णस्य प्रतीकार उक्तः । स्नेहसाध्ये व्याधौ पुनरप्यस्य स्नेहो देय इत्याह—ततः स्नेहमिति । जीर्णाजीर्णविशङ्कायां परिणतापरिणतशङ्कायाम् । अस्याग्रे पच्यमानलक्षणं केचित्पठन्ति—स्युरित्यादि । स्युः भवेयुः । एतच्चानार्षश्लोकार्धमिति जेज्जटाचार्योक्तत्वान्न पठनीयम् ॥ ३०-३३ ॥

परिषिच्याद्भिरुष्णाभिर्जीर्णस्नेहं ततो नरम् ॥
यवागूं पाययेच्चोष्णां कामं क्लिन्नाल्पतण्डुलाम् ॥३४॥
देयौ यूषरसौ वाऽपि सुगन्धी स्नेहवर्जितौ ॥
कृतौ वाऽप्यल्पसर्पिष्कौ विलेपी वा¹ विधीयते ॥३५॥

स्नेहवर्जितावित्यनेनाकृताविति गम्यते । कृतौ स्नेहादिसंस्कृतौ । यूषरसाविति अत्र यूषः कफे तैलपाने च देयः, रसो वाते घृतपाने च, विलेपी च पुनर्विलेपीसात्म्याय मध्यमाग्नये देया ॥ ३४ ॥ ३५ ॥

१ 'यवाग्वौ' इति पा० ।

पिबेत्त्र्यहं चतुरहं पञ्चाहं षडहं तथा ॥
सप्तरात्रात् परं स्नेहः सात्म्यीभवति सेवितः ॥३६॥

तस्य स्नेहपानस्य कोष्ठापेक्षया कालनियमं दर्शयन्नाह—पिबेदित्यादि । तत्र त्र्यहं मृदुकोष्ठापेक्षया, मध्यमकोष्ठापेक्षया तु चतुःपञ्चषडहानि, क्रूरकोष्ठापेक्षया तु सप्तरात्रम् । अन्ये तु मृदुतममृदुतरमृदुकोष्ठापेक्षया एकद्वित्र्यहम्, एवं मध्यमकोष्ठतरतममध्यात् चतुःपञ्चषडहानि, क्रूरक्रूरतरक्रूरतमकोष्ठापेक्षया सप्ताष्टनवापि दिवसानीति । सात्म्यीभवतीति आत्मना सह वर्तत इति सात्म्यम्, असात्म्यं यत्र सात्म्यं भवति सात्म्यीभवति; आत्मशब्दोऽत्र देहपर्यायः, अयमर्थः—आत्मनि काये यद्वर्तते, यदुपशेते, न विकाराय भवति, सुखं च करोतीत्यर्थः, तत् सात्म्यीभवतीत्युच्यते; एतेन स्नेहकार्यमुत्क्लेशनादिकं न करोति आहारवच्च सात्म्यीभवति, अत एव सेवित इत्युक्तं; विषमपि स्वल्पं प्रतिदिनमुपयुज्यमानं न मारणात्मकं भवति । तच्च सात्म्यीभवनं वातप्रकृतावूर्ध्वाङ्गमारुते बोद्धव्यं, वातकफप्रकृतौ पुनरनुत्क्लेश एव ॥ ३६ ॥

सुकुमारं कृशं वृद्धं शिशुं स्नेहद्विषं तथा ॥
तृष्णार्तमुष्णकाले च सह भक्तेन पाययेत् ॥ ३७ ॥

इदानीमवचारणामावस्थिके नित्यगे च काले निर्दिशन्नाह—सुकुमारमित्यादि । भक्तशब्देन सर्वे विलेप्यादयोऽभिप्रेताः । तच्च पानं द्विविधम्—अशनात् पृथक्, अशनव्यामिश्रं वा; तत्र यत् पृथक् तदच्छपानमेव ॥ ३७ ॥

पिप्पल्यो लवणं स्नेहाश्चत्वारो दधिमस्तुकः ॥
पीतमैकध्यमेतद्धि सद्यःस्नेहनमुच्यते ॥ ३८ ॥
भृष्टा मांसरसे स्निग्धा यवागूः सूपकल्पिता ॥
प्रक्षुद्रा¹ पीयमाना तु सद्यःस्नेहनमुच्यते ॥ ३९ ॥
सर्पिष्मती पयःसिद्धा यवागूः स्वल्पतण्डुला ॥
सुखोष्णा सेव्यमाना तु सद्यःस्नेहनमुच्यते ॥ ४० ॥
पिप्पल्यो लवणं सर्पिस्तिलपिष्टं वराहजा ॥
वसा च पीतमैकध्यं सद्यःस्नेहनमुच्यते ॥ ४१ ॥
शर्कराचूर्णसंसृष्टे दोहनस्थे घृते तु गाम् ॥
दुग्ध्वा क्षीरं पिबेद्रूक्षः सद्यःस्नेहनमुच्यते ॥ ४२ ॥
यवकोलकुलत्थानां क्वाथो मागधिकान्वितः ॥
पयो दधि सुरा चेति घृतमप्यष्टमं भवेत्² ॥ ४३ ॥
सिद्धमेतैर्घृतं पीतं सद्यःस्नेहनमुत्तमम् ॥
राज्ञे राजसमेभ्यो वा देयमेतद्घृतोत्तमम् ॥ ४४ ॥

तत्रावचारणां प्रयोगेण दर्शयन्नाह—पिप्पल्य इत्यादि । लवणमत्र प्रधानकल्पनया सैन्धवम् । स्नेहाश्चत्वारः सर्पिस्तैलवसामज्जानः । दधिमस्तुको दधिसरः । पिप्पलीलवणयोर्यावत्या मात्रया नातिकटुत्वं नातिलवणत्वं च तावती मात्रा । प्रक्षुद्रा क्षुद्रावगाढा; क्षुद्रं फाणितं 'काकवी' इति लोके । घृते स्थिति

१ 'सक्षुद्रा' इति पा० । २ 'यवकोलकुलत्थानां क्वाथो भागत्रयान्वितः । पयोदधिसुराक्षीरघृतभागैः समन्वितः' इति पा० ।

तुशब्दः पुनरर्थे । मागधिकाया अयं मागधिकोऽत्र कल्कः, द्रवाः षट्, स्नेहसमा पिप्पली सप्तमी, घृतमष्टमम् । एतत्सिद्धं नृपादिभिः सुखोचितैरन्नात् प्राङ्मध्येऽन्ते वा पेयम् । सद्यःस्नेहनमिति तदहरेव ॥ ३८-४४ ॥

**बलहीनेषु वृद्धेषु मृद्वग्निस्त्रीहतात्मसु ॥**
**अल्पदोषेषु योज्याः स्युर्ये योगाः सम्यगीरिताः ४५**

एषां योगानां विषयं दर्शयन्नाह-बलहीनेष्वित्यादि । ये योगाः पूर्वं कथिताः ॥ ४५ ॥

**विवर्जयेत् स्नेहपानमजीर्णी तरुणज्वरी ॥**
**दुर्बलोऽरोचकी स्थूलो मूर्च्छार्तो मदपीडितः ॥४६॥**
**छर्द्यर्दितः पिपासार्तः श्रान्तः पानक्लमान्वितः ॥**
**दत्तबस्तिर्विरिक्तश्च वान्तो यश्चापि मानवः ॥ ४७ ॥**
**अकाले दुर्दिने चैव न च स्नेहं पिबेन्नरः ॥**
**अकाले च प्रसूता स्त्री स्नेहपानं विवर्जयेत् ॥ ४८ ॥**
**स्नेहपानाद्भवन्त्येषां नृणां नानाविधा गदाः ॥**
**गदा वा कृच्छ्रतां यान्ति न सिध्यन्त्यथवा पुनः ४९**
**गर्भाशयेऽवशेषाः स्यू रक्तक्लेदमलास्ततः ॥**
**स्नेहं जह्यान्निषेवेत पाचनं रूक्षमेव च ॥ ५० ॥**
**दशरात्रात्ततः स्नेहं यथावदवचारयेत् ॥**

विवर्जयेदित्यादि । अजीर्णेऽजीर्णमेव च पचन्नग्निः स्तोकं स्नेहं पक्ष्यति, तरुणज्वरेऽप्येवं स्रोतोरोधश्च, दुर्बले अङ्गग्लान्यादयः, अरोचकेऽरोचकाभिवृद्धिः, स्थूलस्यातिस्थौल्यं स्रोतोरोधश्च, मूर्च्छार्तानां मूर्च्छाभिवृद्धिः, दत्तबस्तिविरिक्तवान्तानां सद्यःशुद्धत्वेनाग्निमान्द्यतृष्णाक्लमायतियोगाश्च, अकाले प्रसूताया गर्भाशयेऽवशेषा रक्तक्लेदमलाः स्नेहकोपिता असाध्यं रोगं कुर्युः । अन्ये 'तरुणज्वरी' इत्यत्र 'चोदरी ज्वरी' इति पठित्वा व्याख्यानयन्ति—उदरिणां स्नेहपानं प्रागवस्थायामुदरचिकित्सिते प्रोक्तं, छिद्रोदकोदरिणः पुनरत्र निषेधः । ज्वरिणस्तरुणावस्थायां प्रतिषेधः । अमुमेव निषेधं दर्शयन्नाह—स्नेहपानादित्यादि ॥ ४६-५० ॥—

**पुरीषं ग्रथितं रूक्षं कृच्छ्रादन्नं विपच्यते ॥ ५१ ॥**
**उरो विदहते वायुः कोष्ठादुपरि धावति ॥**
**दुर्वर्णो दुर्बलश्चैव रूक्षो भवति मानवः ॥ ५२ ॥**

स्नेहस्य विहितस्य दानाय रूक्षलक्षणमाह—पुरीषमित्यादि । उपरि धावति ऊर्ध्वं गच्छतीत्यर्थः । इदं कृतपाचनस्य रूक्षस्य लक्षणमुक्तमिति वृद्धवैद्याः ॥ ५१ ॥ ५२ ॥

**सुस्निग्धा त्वग्विट्शैथिल्यं दीप्तोऽग्निर्मृदुगात्रता ॥**
**ग्लानिर्लाघवमङ्गानामधस्तात् स्नेहदर्शनम् ॥**
**सम्यक्स्निग्धस्य लिङ्गानि स्नेहोद्वेगस्तथैव च ५३**

सुस्निग्धस्य लक्षणमाह—सुस्निग्धेत्यादि । स्नेहोद्वेग इति स्नेहारुचिः उदकादितृप्तस्येवोदकाद्यरुचिः । अन्ये तु 'ग्लानिः सदनमङ्गानामधस्तात् स्नेहदर्शनम् । सम्यक्स्निग्धस्य लिङ्गानि स्नेहोद्वेगस्तथैव वा ॥' इति पठन्ति ॥ ५३ ॥

**भक्तद्वेषो मुखस्रावो गुददाहः प्रवाहिका ॥**
**पुरीषातिप्रवृत्तिश्च भृशस्निग्धस्य लक्षणम् ॥ ५४ ॥**

प्रवाहिका अतिसारभेदः । केचित् अस्निग्धातिस्निग्धलक्षणयोर्मध्ये जीर्णाजीर्णस्नेहलक्षणमधीयते—"ग्लानिः सदनमङ्गानामधस्तात् स्नेहदर्शनम् । स्नेहे जीर्यति लिङ्गानि जीर्णस्तैः शान्तिमागतैः" इति । तैर्ग्लान्यादिभिः शान्तिमागतैः उपशमं गतैः स्नेहो जीर्ण इति ज्ञायते इति ॥ ५४ ॥

**रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम् ॥**
**श्यामाककोरदूषान्नतक्रपिण्याकशक्तुभिः ॥ ५५ ॥**

तत्रास्निग्धातिस्निग्धयोः प्रतीकारं दर्शयन्नाह—रूक्षस्येत्यादि ॥ ५५ ॥

**दीप्तान्तरग्निः परिशुद्धकोष्ठः**
**प्रत्यग्रधातुर्बलवर्णयुक्तः ॥**
**दृढेन्द्रियो मन्दजरः शतायुः**
**स्नेहोपसेवी पुरुषो भवेत्तु ॥ ५६ ॥**

इदानीं स्वस्थविषये स्नेहकर्मफलं दर्शयन्नाह—दीप्तेत्यादि । अन्तरग्निः जठराग्निः । परिशुद्धकोष्ठः निर्दोषोदरः । प्रत्यग्रा नवाः । दृढानि स्वकार्यकरणक्षमानीन्द्रियाणि यस्य सः । स्नेहोपसेवी यो नर आभीक्ष्ण्येन स्नेहं सेवते सः । अन्ये तु अनेन श्लोकेन संशमनीयप्राग्भक्तसेवितस्नेहगुणानाहुः ॥ ५६ ॥

**स्नेहो हितो दुर्बलवह्निदेह-**
**सन्धुक्षणे व्याधिनिपीडितस्य ॥**
**बलान्वितौ भोजनदोषजातैः**
**प्रमर्दितुं तौ सहसा न साध्यौ ॥ ५७ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने स्नेहोपयौगिकचिकित्सितं[1] नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥**

व्याधिपरिमोक्षणमपि स्नेहफलं दर्शयन्नाह—स्नेह इत्यादि । स्नेहो हितो भवति; कस्य ? व्याधिनिपीडितस्य पुरुषस्य, कस्मिन् विषये ? दुर्बलदेहवह्निसंधुक्षणे । स्नेहकृतयोस्तयोर्वह्निदेहबलयोः फलं दर्शयन्नाह—बलान्विताविल्यादि । तौ वह्निदेहौ । किंविशिष्टौ ? स्नेहपानबलान्वितौ । न साध्यौ न शक्यौ । किं कर्तुं ? प्रमर्दयितुम् । कैः स्फोटयितुं न शक्याविल्याह—भोजनदोषजातैः, दुर्भक्तस्वभावगुणभूतदोषसमूहैरित्यर्थः । दुर्बलस्य देहसंधुक्षणे वह्निसंधुक्षणे च; देहसन्धुक्षणं शक्त्युपचयलक्षणबलसंदीपनं पुष्ट्यावहमित्यर्थः, अग्निपक्षे सन्धुक्षणं सुबोधम् ॥ ५७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

---

१ 'चोदरी ज्वरी' इति पा० ।

१ 'स्नेहोपयोगी' इति पा० ।

## द्वात्रिंशत्तमोऽध्यायः ।

**अथातः स्वेदावचारणीयं चिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

स्वेदावचारणं स्वेदयोजनं, तदधिकृत्य कृतमिति पूर्ववत् ॥ १ ॥ २ ॥

**चतुर्विधः स्वेदः; तद्यथा-तापस्वेद, ऊष्मस्वेद, उपनाहस्वेदो, द्रवस्वेद इति; अत्र सर्वस्वेदविकल्पावरोधः ॥ ३ ॥**

तपनं तापः, ऊष्मा बाष्पः, उपनह्यते इत्युपनाहो बन्धनमित्यर्थः, द्रवतीति द्रवः कषायक्षीरादिः । अत्र एषु चतुर्षु सर्वेषां त्रयोदशानामपि चरकोक्तानां संकरप्रभृतीनामवरोधः । तत्र तापस्वेदे कन्दुग्रहणादेव जेन्ताककर्षूकुटीकूपहोलकस्वेदाः पञ्चैवान्तर्भवन्ति, ऊष्मस्वेदे संकरप्रस्तराश्मघननाडीकुम्भीभूस्वेदाः षडप्यन्तर्भवन्ति, द्रवस्वेदे परिषेकावगाहावन्तर्भवतः ॥ ३ ॥

**तत्र तापस्वेदः पाणिकांस्यकन्दुककपालवालुकावस्त्रैः प्रयुज्यते, शयानस्य चाङ्गतापो बहुशः खादिराङ्गारैरिति ॥ ४ ॥**

तेषां प्रयोगे द्रव्याण्युपदिशन्नाह-तत्रेत्यादि । कन्दुकम् अपूपपचनभाण्डम् । कपालं ज्वालातप्तकर्परम् ॥ ४ ॥

**ऊष्मस्वेदस्तु कपालपाषाणेष्टकालोहपिण्डानग्निवर्णानद्भिरासिञ्चेदम्लद्रव्यैर्वा, तैरार्द्रालक्तकपरिवेष्टितैरङ्गप्रदेशं स्वेदयेत् । मांसरसपयोदधिस्नेहधान्याम्लवातहरपत्रभङ्गक्काथपूर्णां वा कुम्भीमनुतप्तां प्रावृत्योष्माणं गृह्णीयात् । पार्श्वच्छिद्रेण वा कुम्भेनाधोमुखेन तस्या मुखमभिसन्धाय तस्मिञ्छिद्रे हस्तिशुण्डाकारां नाडीं प्रणिधाय तं स्वेदयेत् ॥ ५ ॥**

**सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम् ॥**
**हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् ॥**
**सुखा सर्वाङ्गगा ह्येषा न च क्लिश्नाति मानवम् ॥ ६ ॥**
**व्यामार्धमात्रा त्रिवङ्का हस्तिहस्तसमाकृतिः ॥**
**स्वेदनार्थे हिता नाडी कैलिञ्जी हस्तिशुण्डिका ॥ ७ ॥**

द्वितीये ऊष्मस्वेदप्रयोगे द्रव्यमुपदिशन्नाह-ऊष्मेत्यादि । तैः कपालादिभिरग्निवर्णैर्जलाद्यवसिक्तैरार्द्रवस्त्रच्छन्नैः स्वेदयेदङ्गप्रदेशं; जेज्जटाचार्यस्तु 'आर्द्रालक्तकपरिवेष्टितम्' इति पठित्वाऽङ्गप्रदेशविशेषणं व्याख्यानयति । मांसरसादिपूर्णां स्थालीं चोष्मणो मन्दीकरणार्थं कम्बलादिना प्रावृत्य पिधाय, ऊष्माणं गृह्णीयात् । वातहराणां एरण्डादीनां, पत्रभङ्गाः पल्लवाः । तथैव कुम्भ्यां बाष्पमनुद्गमयन्त्यां स्वेदान्तरमुत्पादयन्नाह—पार्श्वेत्यादि । तस्याः कुम्भ्याः । तस्मिञ्छिद्रे इति उपरिस्थितकुम्भस्य पार्श्वच्छिद्रे । किलिञ्जसाधनतृणकाशादिद्रव्यविरचितामन्तःसुषिरत्वेन नाडीमिव नाडीं गोपुच्छाकृतित्वेन दैर्घ्येण च हस्तिहस्तसमाकारां छिद्रेण निर्गच्छतो बाष्पवेगस्य वेगविघातार्थं त्रिषु स्थानेषु वक्रामुपनिधापयेत् । स्वभ्यक्तमिति सुष्ठु अभ्यक्तम् । गुरुप्रावरणावृतमिति गुरुप्रावरणेन कम्बलादिनोष्मणोऽतितापनिषेधायावृतं पिहितम् । एतदेव सुखपाठार्थं श्लोकेन दर्शयन्नाह—हस्तिशुण्डिकयेत्यादि । व्यामार्धमात्रेत्यत्र व्याममात्रा व्यामार्धमात्रा चेति व्याख्यातव्यम् । व्यामः बाह्वोः सकरयोः संप्रसारितयोरन्तरालम् । किलिञ्जसाधनानां कुशकाशादिद्रव्याणामियं कैलिञ्जी ॥ ५-७ ॥

**पुरुषायाममात्रां च भूमिमुत्कीर्य खादिरैः ॥**
**काष्ठैर्दग्ध्वा तथाऽभ्युक्ष्य क्षीरधान्याम्लवारिभिः ८**
**पत्रभङ्गैरवच्छाद्य शयानं स्वेदयेत्ततः ॥**

नाडीस्वेदं बाष्पस्वेदे एवाभिधाय भूस्वेदमपि बाष्पस्वेदे एव दर्शयन्नाह—पुरुषेत्यादि । आयामो दैर्घ्यम् । उत्कीर्य खनित्वा । अभ्युक्ष्य सिक्त्वा । पत्रभङ्गैरिति वातघ्नैरेण्डादिपल्लवैः ॥ ८ ॥—

**पूर्ववत् स्वेदयेद्दग्ध्वा भस्मापोह्यापि वा शिलाम् ॥ ९ ॥**

बाष्पस्वेदे एवाश्मस्वेदं दर्शयन्नाह—पूर्ववदित्यादि । शिलातलं वा दग्ध्वा, भस्मापोह्य स्फोटयित्वा ॥ ९ ॥

**पूर्ववत् कुटीं वा चतुर्द्वारां कृत्वा तस्यामुपविष्टस्यान्तश्चतुर्द्वारेऽङ्गारानुपसन्धाय तं स्वेदयेत् ॥ १० ॥**

बाष्पस्वेदे एव कुटीस्वेदं दर्शयन्नाह—पूर्ववदित्यादि । शिलातलबाष्पस्वेदो कुटीस्वेदेऽपि संबध्यते । अङ्गारानुपसन्धाय अङ्गारानारोप्य । पूर्ववदित्यनेन दग्ध्वा, भस्मापोह्य अभ्युक्ष्य च, द्वारमुखैर्बाष्पमुद्गमन्त्यां तस्यामन्तर्मध्ये स्थितं स्वेदयेत् ॥ १० ॥

**कोशधान्यानि वा सम्यगुपस्वेद्यास्तीर्य किलिञ्जेऽन्यस्मिन् वा तत्प्रतिरूपके शयानं प्रावृत्य स्वेदयेत्; एवं पांशुगोशकृत्तुषबुसपलालोष्मभिः स्वेदयेत् ॥ ११ ॥**

प्रस्तरस्वेदमपि बाष्पस्वेदे एव दर्शयन्नाह—कोशधान्यानीत्यादि । कोशधान्यानि शमीधान्यानि माषादीनि ॥ ११ ॥

**उपनाहस्वेदस्तु वातहरमूलकल्कैरम्लपिष्टैर्लवणप्रगाढैः सुस्निग्धैः सुखोष्णैः प्रदिह्य स्वेदयेत् । एवं काकोल्यादिभिरेलादिभिः सुरसादिभिस्तिलातसीसर्षपकल्कैः कृशरापायसोत्कारिकाभिर्वेशवारैः साल्वणैर्वा तनुवस्त्रावनद्धैः स्वेदयेत् ॥ १२ ॥**

तृतीयमुपनाहस्वेदं दर्शयन्नाह—उपनाहेत्यादि । अम्लं काञ्जिकम् । सङ्करस्वेदमप्युपनाहस्वेद एव दर्शयन्नाह—एवमित्यादि । एभिरेव पोटलिकां बद्ध्वा स्वेदयेत् । काकोल्यादिः

१ 'खादिराङ्गारतप्तैः' इति पा० । २ 'आर्द्रालक्तकपरिवेष्टितमङ्गप्रदेशं' इति पा० ।

१ 'धान्यानि' इति पा० ।

"काकोलीक्षीरकाकोली" ( सू. अ. ३८ ) इत्यादिकः । एलादिः "एलातगरमांसी" ( सू. अ. ३८ ) इत्यादिः । सुरादिः "सुरसाश्वेतसुरसा" ( सू. अ. ३८ ) इत्यादिः । कृशरा तिलतण्डुलमाषैः कृता यवागूः, क्षीरसिद्धास्तण्डुलाः पायसः, उत्कारिका लप्सिका, वेशवारः 'चटनी' इति भाषा । साल्वणो वातव्याध्युक्तः । तनुवस्त्रावनद्धैः सूक्ष्मवस्त्रानुबद्धैः । अत्र काकोल्यादिभिः पित्तानुगते वाते एलादिभिः सुरसादिभिश्च, कफानुगते वाते तिलातसीप्रभृतिभिः, कृशरादिभिः वेशवारैः साल्वणैश्च केवले वाते । उपनाहशब्दस्त्विह 'णह बन्धने' इत्यस्येति उपनाहो बन्धनम् ॥ १२ ॥

**द्रवस्वेदस्तु वातहरद्रव्यक्वाथपूर्णे कोष्णकटाहे द्रोण्यां वाऽवगाह्य स्वेदयेत्, एवं पयोमांसरसयूषतैलधान्याम्लघृतवसामूत्रेष्ववगाहेत; एतैरेव सुखोष्णैः कषायैश्च परिषिञ्चेदिति ॥ १३ ॥**

चतुर्थं द्रवस्वेदं दर्शयन्नाह—द्रवस्वेद इत्यादि । परिषिञ्चेत् परिषेकं कुर्यादित्यर्थः । कषायैश्चेति चकारात् पूर्वोक्तैः पयोमांसरसादिभिश्च ॥ १३ ॥

**तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ, उपनाहस्वेदो वातघ्नः, अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेद इति ॥ १४ ॥**

अन्यतरस्मिन् श्लेष्मणि वाते वा पित्तसंसृष्टे द्रवस्वेद इति ॥ १४ ॥

**कफमेदोन्विते वायौ निवातातपगुरुप्रावरणनियुद्धाध्वव्यायामभारहरणामर्षैः स्वेदमुत्पादयेदिति ॥ १५ ॥**

अथ निरग्निकं स्वेदमाह—कफेत्यादि ॥ १५ ॥

**भवन्ति चात्र—**

**चतुर्विधो योऽभिहितो द्विधा स्वेदः प्रयुज्यते ॥**
**सर्वस्मिन्नेव देहे तु देहस्यावयवे तथा ॥ १६ ॥**

अत्र सर्वाङ्गस्वेदे प्रोक्ते तन्त्रान्तरविरोधः स्यात्; तथा च—"वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु नैव वा" ( च. सू. अ. १४ ) इत्युक्तत्वात्; तस्मात् सर्वशब्दोऽत्र सङ्कुचितवृत्त्या तत्परिहारेण व्याख्यातव्यः ॥ १६ ॥

**येषां नस्यं विधातव्यं बस्तिश्चैव हि देहिनाम् ॥**
**शोधनीयाश्च ये केचित् पूर्वं स्वेद्यास्तु ते मताः॥१७॥**
**पश्चात् स्वेद्या हृते शल्ये मूढगर्भाऽनुपद्रवा ॥**
**सम्यक् प्रजाता काले या पश्चात् स्वेद्या विजानता १८**
**स्वेद्यः पूर्वं च पश्चाच्च भगन्दर्यर्शसस्तथा ॥**
**अश्मर्या चातुरो जन्तुः शेषाञ्छास्त्रे प्रचक्ष्महे ॥१९॥**

१ 'कोष्ठे कटाहे' इति पा० । २ 'एतैरेव सुखोष्णैर्वा परिषिञ्चेत्' इति पा० ।

तत्र स्वेदस्य रोगविशेषात्तत्र यत्रावचारणं तद्विविधं दर्शयन्नाह—येषामित्यादि । अनार्षग्रन्थ इति केचिदाचार्या न पठन्ति, परं गयदासस्य संमतत्वान्ममापि संमतः ॥ १७–१९ ॥

**नानभ्यक्ते नापि चास्निग्धदेहे**
**स्वेदो योज्यः स्वेदविद्भिः कथञ्चित् ॥**
**दृष्टं लोके काष्ठमस्निग्धमाशु**
**गच्छेद्भङ्गं स्वेदयोगैर्गृहीतम् ॥ २० ॥**

इदानीं स्वेदस्य पूर्वकर्म नियमयन्नाह—नेत्यादि । अभ्यङ्गेन बाह्यस्नेहक्रियापूर्वकत्वं, नापि चास्निग्धदेह इत्यन्तःस्नेहपूर्वकत्वं स्वेदस्य । अस्निग्धे स्वेददोषमुपमानेन दर्शयितुमाह—दृष्टमित्यादि । यथा हि काष्ठमस्निग्धं स्विद्यमानं विशीर्यते, एवं शरीरमस्निग्धं स्विद्यमानं विनश्यति ॥ २० ॥

**स्नेहक्लिन्ना धातुसंस्थाश्च दोषाः**
**स्वस्थानस्था ये च मार्गेषु लीनाः ॥**
**सम्यक् स्वेदैर्योजितैस्ते द्रवत्वं**
**प्राप्ताः कोष्ठं शोधनैर्यान्त्यशेषम् ॥ २१ ॥**

स्नेहपूर्वकमेव दोषाणां कोष्ठशाखाश्रयाणां शोधनं न पुनरन्यथेत्याह—स्नेहक्लिन्ना इत्यादि । स्वेदैर्द्रवत्वं प्राप्य द्रवत्वात् कोष्ठं प्राप्ताः शोधनैर्निःशेषं यान्ति बहिर्निःसरन्तीत्यर्थः ॥ २१ ॥

**अग्नेर्दीप्तिं मार्दवं त्वक्प्रसादं**
**भक्तश्रद्धां स्रोतसां निर्मलत्वम् ॥**
**कुर्यात् स्वेदो हन्ति निद्रां सतन्द्रां**
**सन्धीन् स्तब्धांश्चेष्टयेदाशु युक्तः ॥ २२ ॥**

इदानीं स्वेदगुणानाह—अग्नेर्दीप्तिमित्यादि । केचिदाचार्या एवं वदन्ति-द्विविधः स्वेदः-संशमनीयः, संशोधनाङ्गभूतश्च । तत्र संशमनीयः सामेषु व्याधिषु रूक्ष एव योज्यः, तद्गुणाः पुनः 'अग्नेर्दीप्तिं' इत्यादिश्लोकोक्ता ज्ञातव्याः; संशोधनाङ्गभूतस्तु स्नेहपूर्वो योज्यः, तस्य गुणस्तु 'स्नेहक्लिन्ना' इत्यादिश्लोकेन प्रोक्ता इति ज्ञेयम् ॥ २२ ॥

**स्वेदास्रावो व्याधिहानिर्लघुत्वं**
**शीतार्थित्वं मार्दवं चातुरस्य ॥**
**सम्यक्स्विन्ने लक्षणं प्राहुरेत-**
**न्मिथ्यास्विन्ने व्यत्ययेनैतदेव ॥ २३ ॥**
**स्विन्नेऽत्यर्थं सन्धिपीडा विदाहः**
**स्फोटोत्पत्तिः पित्तरक्तप्रकोपः ॥**
**मूर्च्छा भ्रान्तिर्दाहतृष्णे क्लमश्च**
**कुर्यात्तूर्णं तत्र शीतं विधानम् ॥ २४ ॥**

तस्य सम्यग्युक्तस्यायोगयुक्तस्यातियोगयुक्तस्य च लक्षणं सचिकित्सितं दर्शयन्नाह—स्वेदेत्यादि । मिथ्यास्विन्ने अयोगस्विन्ने; मिथ्यास्विन्ने व्याधिवृद्धिः, देहस्य गुरुत्वम्, उष्णाभिलाषः, देहस्य काठिन्यं च ॥ २३ ॥ २४ ॥

१ 'तत्र विषयं' इति पा० । २ 'यान्ति देहादशेषात्' इति पा० ।

पाण्डुर्मेही पित्तरक्ती क्षयार्तः
क्षामोऽजीर्णी चोदरार्तो विषार्तः ॥
तृट्छर्द्यार्तो गर्भिणी पीतमद्यो
नैते स्वेद्या यश्च मर्त्योऽतिसारी ॥
स्वेदादेषां यान्ति देहा विनाशं
नोऽसाध्यत्वं यान्ति चैषां विकाराः ॥ २५ ॥
स्वेदैः साध्यो दुर्बलोऽजीर्णभक्तः
स्यातां चेद्वौ स्वेदनीयौ ततस्तौ ॥

तत्र मेहिनः प्रागेव स्वेदे निषिद्धे पुनरत्र निषेधो नियमार्थः[3] । स्वेदसाध्ये व्याधौ दुर्बलेऽजीर्णभक्ते च प्रतिप्रसवमाह—स्वेदैरित्यादि । स्यातां भवेताम् ॥ २५ ॥—

एतेषां स्वेदसाध्या ये व्याधयस्तेषु बुद्धिमान् ॥
मृदून् स्वेदान् प्रयुञ्जीत तथा हृन्मुष्कदृष्टिषु ॥ २६ ॥
सर्वान् स्वेदान्निवाते च जीर्णान्नस्यावचारयेत् ॥
स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी ॥ २७ ॥
स्विद्यमानस्य च मुहुर्हृदयं शीतलैः स्पृशेत् ॥
सम्यक्स्विन्नं विमृदितं स्नातमुष्णाम्बुभिः शनैः २८
स्वभ्यक्तं प्रावृताङ्गं च निवातशरणस्थितम् ॥
भोजयेदनभिष्यन्दि सर्वं चाचारमादिशेत् ॥ २९ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने स्वेदावचारणीयं चिकित्सितं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

एषां स्वेदसाध्येषु विकारेष्वाल्यिके व्याधौ प्रतिप्रसवमाह—एतेषामित्यादि । न भुक्तमात्रोऽग्निमुपासीतेत्यनेनैव जीर्णान्नस्य स्वेदो लब्धः, किमर्थं पुनरुच्यते ? उच्यते—स हि स्वस्थविषयोऽयमातुरविषय इति न दोषः । सम्यक्स्विन्नमित्यादि । सद्यो व्याधिकरणीयामवस्थां स्यन्दयत्यापादयति यद्द्रव्यं तदभिष्यन्दि, स्रोतसामुपलेपकारि वा, तद्विपरीतमनभिष्यन्दि ॥ २६–२९ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशत्तमोऽध्यायः ।

अथातो वमनविरेचनसाध्योपद्रवचिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

उपद्रवो रोगः । चिकित्सितं चात्र वमनविरेचनरूपमेव, वमनविरेचनसाध्यत्वादुपद्रवाणाम् ॥ १ ॥ २ ॥

दोषाः क्षीणा बृंहयितव्याः, कुपिताः प्रशमयितव्याः, वृद्धा निर्हर्तव्याः, समाः परिपाल्या इति सिद्धान्तः ॥ ३ ॥

न खलु दोषाणां सर्वावस्थासु वमनविरेचने, किं तर्हि कस्यांश्चिदेवेति प्रतिपादयन्नाह—दोषा इत्यादि । क्षीणाः क्षयलक्षणैर्ज्ञाताः । कुपिता अल्पतया कोपमापन्नाः संशमनविधानेनैव प्रशमयितव्याः, प्रकर्षेण वृद्धाः स्वस्थानाबलिताः संशोधनविधिना निर्हर्तव्याः । जेज्जटाचार्यस्तु 'प्रवृद्धाः' इति पठति, वृद्धिर्हि द्विविधा—चयलक्षणा प्रकोपलक्षणा च; तत्र संहतिरूपा वृद्धिः चयः, विलयनरूपा वृद्धिः प्रकोपः; तयोर्विलयनरूपवृद्ध्या वृद्धा दोषाः संशोधनेन निर्हर्तव्याः । कुपिता इति कोपोऽत्र द्विविधः—चयपूर्वकोऽचयपूर्वकश्च; तत्र चयपूर्वकं कोपमागताः संशोधनविधानेनैव शमयितव्याः । स्वस्थानस्थाः रक्ष्या इति सिद्धान्तः । समाः स्वास्थ्यकराः स्वस्थवृत्तिविधानेनैव परिपाल्या इति । क्षीणवृद्धकुपितसंशमनं समपरिपालनं च प्रसङ्गतन्त्रयुक्तिवशादत्रोक्तम् ॥ ३ ॥

प्राधान्येन वमनविरेचने वर्तेते निर्हरणे दोषाणाम् । तस्मात्तयोर्विधानमुच्यमानमुपधारय ॥ ४ ॥

अथातुरं स्निग्धं स्विन्नमभिष्यन्दिभिराहारैरनवबद्धदोषमवलोक्य श्वो वमनं पाययिताऽस्मीति संभोजयेत्तीक्ष्णाग्निं बलवन्तं बहुदोषं महाव्याधिपरीतं वमनसात्म्यं च ॥ ५ ॥

पक्वाशयगतानेव वातपित्तकफानेकद्वित्रिर्दत्तो बस्तिरपकर्षति, धूमनस्यकवलग्रहादयः पुनरल्पाल्पतया, न तु वमनविरेचनवत् सकृन्नापि बाहुल्येन, तस्मादुक्तं—प्राधान्येन वमनविरेचने इति । ननु, वमनविरेचने कफपित्तयोर्दोषयोर्निर्हरणे वर्तेते, तत्कथं दोषाणामिति ? उच्यते—वायोरपि स्वाशयक्षोभलक्षणतया विलीनस्य विमार्गनिर्हरणमूर्ध्वाधोमार्गेणानुलोमनं वमनविरेचने कुर्वाते, तस्माद्दोषाणामत्र बाहुल्यमुपपन्नम्; अन्ये तु न्यायभीरुतया दोषयोरिति पठन्ति । शिष्यबहुत्वेऽपि सुश्रुतस्यैव प्रश्नेऽधिकृतत्वादुपधारयेत्येकवचननिर्देशः ॥ ४ ॥ ५ ॥

भवति चात्र—
पेशलैर्विविधैरन्नैर्दोषानुत्क्लेश्य देहिनः ॥
स्निग्धस्विन्नाय वमनं दत्तं सम्यक् प्रवर्तते ॥ ६ ॥

अथापरेद्युः पूर्वाह्णे साधारणे काले वमनद्रव्यकषायकल्कचूर्णस्नेहानामन्यतमस्य मात्रां पाययित्वा वामयेद्यथायोगं कोष्ठविशेषमवेक्ष्य; असात्म्यबीभत्सदुर्गन्धदुर्दर्शनानि च वमनानि विदध्यात्, अतो विपरीतानि विरेचनानि; तत्र सुकु-

१ 'कोदरार्तो' इति पा० । २ 'स्वेदासाध्यो दुर्बलो भीरुरेव' इति पा० । ३ अस्याग्रे 'कोदरी जलोदरी' इत्यधिकः पाठः कस्मिंश्चित्पुस्तके उपलभ्यते ।

१ 'सकृद्दानेनापि' इति पा० । २ 'विमार्गगमननिर्हरणं' इति पा० ।

**मारं कृशं बालं वृद्धं भीरुं वा वमनसाध्येषु विकारेषु क्षीरदधितक्रयवागूनामन्यतममाकण्ठं पाययेत्, पीतौषधं च पाणिभिरग्नितप्तैः प्रताप्यमानं मुहूर्तमुपेक्षेत; तस्य च स्वेदप्रादुर्भावेण शिथिलतामापन्नं स्वेभ्यः स्थानेभ्यः प्रचलितं कुक्षिमनुसृतं जानीयात्, ततः प्रवृत्तहृल्लासं ज्ञात्वा जानुमात्रासनोपविष्टमाप्तैर्ललाटे पृष्ठे पार्श्वयोः कण्ठे च पाणिभिः सुपरिगृहीतमङ्गुलीगन्धर्वहस्तोत्पलनालानामन्यतमेन कण्ठमभिस्पृशन्तं वामयेत्तावद्यावत् सम्यग्वान्तलिङ्गानीति ॥ ७ ॥**

तत्र वमनस्य करणमाह—अथेत्यादि । संभोजयेत् सम्यक् भोजनं कारयेद् वैद्यः । कम्? आतुरं । किं कृत्वा? आलोक्य दृष्ट्वा । किंविशिष्टं? स्निग्धं स्विन्नं च । पुनः किंविशिष्टम्? अनवबद्धदोषम् । कैः संभोजयेत्? आहारैः । किंविशिष्टैः? अभिष्यन्दिभिः । कुतः कारणादित्याह—श्वो वमनं पाययिताऽस्मीति, इति हेतोः; यत आगामिनि अहनि अस्मि अहं पाययिता पाययिष्यामि । किं तत्? वमनम् । क्व? श्वः अपरेद्युः; अन्यस्मिन्नहनीति संबन्धः । आतुरं रोगिणम् । अभिष्यन्दिभिराहारैः ग्राम्यानूपौदकमांसपयोमाषादिभिः । अनवबद्धदोषं मुक्तस्रोतोबन्धनत्वात् प्रचलितदोषम् । भोजनविधिः कफोत्क्लेशनार्थः; संभोजयेत् समशनं कारयेत्, "पथ्यापथ्यमिहैकत्र भुक्तं समशनं स्मृतम्" ( च. चि. अ. १५ ) इत्युक्तत्वात् । किंविशिष्टमातुरं संभोजयेदित्याह—तीक्ष्णाग्निं दीप्ताग्निम् । बलवन्तमिति प्रशस्तबलयुक्तोऽपि संभोजनार्हः; यतः—"जग्धाः षडधिगच्छन्ति बलिनो वशतां रसाः" ( सू. अ. ४२ ) इति वचनात् । बहुदोषः संभोजनार्ह इति बहुदोषे भोजनोत्क्लिष्टो दोषः सम्यग्योगेन प्रवर्तते; अन्यथा पुनरयोगेनैव, एवं दोषकार्यं महाव्याधिपरिगृहीतेऽपि वाच्यम् । वमनसात्म्यस्य तु अभिष्यन्दिभिराहारैर्दोषोत्क्लेशनम् । तमेवार्थं सुखपाठार्थं श्लोकेनापि दर्शयन्नाह—पेशलैरित्यादि । पेशलैः कोमलैरकठिनैः; अभिष्यन्दिभिरिति यावत् । अथेति मङ्गलार्थे । अपरेद्युरिति अन्यस्मिन्नहनि; ततश्चायं वाक्यार्थः—पूर्वेद्युः संभोजितमपरेद्युः अन्यस्मिन्नहनि वामयेत्, तच्च वमनमेकमहो विश्राम्य । स्नेहात् स्निग्धो ग्राम्यौदकमांसरसौदनेन भुक्तोऽपरस्मिन् प्रभाते वमनं कुर्यात् । तथा च **भोजः**—"एकाहोपरतः स्नेहात् स्विन्नः प्रच्छर्दनं पिबेत् । भुक्त्वा ग्राम्यौदकैर्मांसैरानूपैश्च सुसंस्कृतैः"—इति । पूर्वाह्णे अह्नः पूर्वभागे । साधारणे काले नातिवर्षशीतोष्णयुक्ते, अन्ये तु प्रावृट्शरद्वसन्ताख्य इति विभज्य व्याख्यानयन्ति । स्नेहोऽत्र वमनद्रव्यपक्वः स्नेहः । वमनद्रव्यकषायमात्राः प्रधान-

१ 'अवमनसात्म्यस्य तु अभिष्यन्दिभिराहारैर्दोष उत्क्लेशितो दुर्वमत्वेन न प्रवर्तते, ततो व्याधिपरिवृद्धिरसाध्यता वा' इति पा० ।
२ 'एकाहं परतः' इति पा० ।

मध्यमाधमभेदात्तत्रान्तरोक्ताः कथ्यन्ते । यदाह चक्षुष्यः[1]—"क्वाथपाने नव प्रस्था ज्येष्ठा मात्रा प्रकीर्तिता । मध्यमा षण्मिता प्रोक्ता त्रिप्रस्था च कनीयसी"—इति । वमनविषये च सार्धत्रयोदशपलप्रमाणं प्रस्थमामनन्ति वृद्धाः । कल्कादिमानं तु—"कल्कमोदकचूर्णानां कर्षमद्यात्र लेहतः । कर्षद्वयं पलं वाऽपि वयोरोगाद्यपेक्षया"—इति । बीभत्सो विकृताकृतिः; अतो विपरीतानि विरेचनानि सात्म्याबीभत्सादुर्दर्शनसुगन्धीनीति गम्यते । कृशसुकुमारवृद्धबालभीरवो वमनसाध्याः कथं वामयितव्याः? इत्याह—तत्र सुकुमारमित्यादि । क्षीरादयो वमनद्रव्यसंस्कृता ज्ञेयाः; अथवा क्षीरादीन् पूर्वं पाययेत्, अनन्तरं मात्रया वमनद्रव्यमिति । तथा च **वाग्भटः**—"वृद्धबालाबलक्लीबभीरून् रोगानुरोधतः । आकण्ठं पाययेन्मद्यं क्षीरमिक्षुरसं रसम् ॥ यथाविकारविहितां मधुसैन्धवसंयुताम् । कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥ प्राङ्मुखं पाययेत्" ( वा. सू. अ. १८ ) इति । पीतौषधस्य सम्यग्योगहेतुं विधानमुपदिशन्नाह—पीतेत्यादि । मुहूर्तं घटिकाद्वयम् । प्रचलितं 'दोषं' इति शेषः । लोमहर्षेण तु स्वस्थानाद्दोषप्रच्यवनमिति निश्चयः । कुक्षौ समाध्मापनात् कुक्षिदेशानुगतं विद्यात् । हृल्लासः थूत्करणं, छर्दिरित्यपरे ॥ ६ ॥ ७ ॥

**भवतश्चात्र—**

**कफप्रसेकं हृदयाविशुद्धिं**
**कण्डूं च दुश्छर्दितलिङ्गमाहुः ॥**
**पित्तातियोगं च विसंज्ञतां च**
**हृत्कण्ठपीडामपि चातिवान्ते ॥ ८ ॥**

तत्र, अयोगातियोगयोरेव व्यापत्संभावनायां प्राग्लिङ्गं दर्शयन्नाह—कफप्रसेकमित्यादि । पित्तातियोगं पित्तातिप्रवृत्तिम् ॥ ८ ॥

**पित्ते कफस्यानु सुखं प्रवृत्ते**
**शुद्धेषु हृत्कण्ठशिरःसु चापि ॥**
**लघौ च देहे कफसंस्रवे च**
**स्थिते सुवान्तं पुरुषं व्यवस्येत् ॥ ९ ॥**

सुवान्तलक्षणमाह—पित्ते कफस्येत्यादि । अनुशब्दः पश्चादर्थः । शुद्धेषु अगौरवादिलक्षणयुक्तेषु । व्यवस्येत् जानीयात् । सम्यग्वान्तलक्षणं कार्यत्वेन, दुर्वान्तातिवान्तलक्षणं परिहार्यत्वेन व्यापत्प्रतीकारार्थमुक्तम् । तत्र कैश्चित्त्रिधा शुद्धिरभिहिता; यथा—लैङ्गिकी, वैगिकी, मानिकी चेति । तत्र लिङ्गैर्वान्तविरिक्तसम्यक्चिह्नैर्ज्ञायत इति लैङ्गिकी, हीनमध्योत्तमैर्वमनवेगैश्चतुःषडष्टभिर्दशविंशतित्रिंशद्भिर्विरेचनवेगैश्च ज्ञायत इति वैगिकी, मानेन श्लेष्मपित्तयोः प्रस्थार्धाढकाढकमानेन हीनमध्यमोत्तमेन ज्ञायत इति मानिकी । तत्र न

१ 'चक्षुष्येणः—"नवप्रस्थास्तु ज्येष्ठा स्यान्मध्यमाः षट् प्रकीर्तिताः । निःक्वाथस्य त्रयः प्रस्था मागधास्तु कनीयसी" इति पा० ।

तावन्मानिकी शुद्धिः, दीर्घह्रस्वस्थूलकृशदेहसंहतिप्रकृतिसारादिभिर्विविधलक्षणशरीराणां प्राणिनां दोषधातुमलानां परिमाणाभावात्; नापि वैगिकी, यतो बहुभिर्वेगैः कदाचित् कस्यचिन्न शुद्धिः, प्रकृतिवयोबलशरीरदोषव्यपेक्षया कस्यचित् कतिपयैरपि वेगैः शुद्धिरिति; अतस्तृतीयां पित्ते कफस्येत्यादिभिर्लिङ्गैर्लैङ्गिकीं शुद्धिमत्रोक्तवान् सुश्रुताचार्यः ॥ ९ ॥

**सम्यग्वान्तं चैनमभिसमीक्ष्य स्नेहनविरेचनशमनानां धूमानामन्यतमं सामर्थ्यतः पाययित्वाऽऽचारिकमादिशेत् ॥ १० ॥**

सम्यग्वान्तस्य पश्चात्कर्म निर्दिशन्नाह—सम्यग्वान्तमित्यादि। वमनानन्तरं स्रोतोविलग्नकफहरणार्थं धूमपानमत्रोक्तम्। वातप्रकृतौ स्नैहिकं, कफपित्तप्रकृतावुत्क्लिष्टदोषे च वैरेचनिकं, समदोषप्रकृतावुपशमनीयं प्रायोगिकं स्वस्थवृत्तिकमित्यर्थः[1] । आचारिकमादिशेदिति चरतेर्गतिभक्षणार्थत्वादाहारो विहारश्चाचारः। तत्र विहारो बहुविधोऽपि त्रिविध एव, कायवाङ्मनोभेदात्; स त्रिविधोऽप्ययुक्तोऽपवर्ज्यश्चातुरोपद्रवीये वक्ष्यते ॥ १० ॥

**भवन्ति चात्र—**

**ततोऽपराह्णे शुचिशुद्धदेह-**
**मुष्णाभिरद्भिः परिषिक्तगात्रम् ॥**
**कुलत्थमुद्गाढकिजाङ्गलानां**
**यूषै रसैर्वाऽप्युपभोजयेत्तु ॥ ११ ॥**

आहारं सर्वमभिहितं दर्शयन्नाह—तत इत्यादि। वान्तस्य हि मन्दाग्नेः पेयादिक्रमयोग्यस्य कथं यूषमांसरसोपदेशः? अत्रोच्यते—अपिशब्दात् पेयादिक्रमोऽत्राप्युक्त एव। तत्राल्पान्तक्षीणकफानां पेयादिः; तेषामपि वातभूयिष्ठानां दीप्ताग्नीनां सात्म्यापेक्षया मांसरसोपयोगः; दोषर्तुप्रकृत्यपेक्षया किञ्चित्कफयुक्तानां यूषोपदेशः[2], न तु विलेपीयवागूनाम्; उक्तं च,—“पांशुधाने यथा वृष्टिः क्लेदयत्यति कर्दमम् । तथा श्लेष्मणि संदुष्टे यवागूः श्लेष्मवर्धिनी”—इति ॥ ११ ॥

**कासोपलेपस्वरभेदनिद्रा-**
**तन्द्रास्यदौर्गन्ध्यविषोपसर्गाः ॥**
**कफप्रसेकग्रहणीप्रदोषा**
**न सन्ति जन्तोर्वमतः कदाचित् ॥ १२ ॥**

अतःपरं वमनफलाभिधानं—कासेत्यादि। उपलेपः स्रोतःसु मलवृद्धिः। उपसर्गाः शीतलिकादयः। केचित् “कफप्रसेकस्वरभेदतन्द्रानिद्रास्यदौर्गन्ध्यकफोपसर्गाः । गुरुत्वकण्डूग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः[3] कदाचित्” इति पठन्ति ॥ १२ ॥

**छिन्ने तरौ पुष्पफलप्ररोहा**
**यथा विनाशं सहसा व्रजन्ति ॥**
**तथा हृते श्लेष्मणि शोधनेन**
**तज्जा विकाराः प्रशमं प्रयान्ति ॥ १३ ॥**

अस्यैवार्थस्य दार्ढ्यार्थं दृष्टान्तमाह—छिन्ने इत्यादि ॥ १३ ॥

**न वामयेत्तैमिरिकोर्ध्ववात-**
**गुल्मोदरप्लीहकृमिश्रमार्तान्[2] ॥**
**स्थूलक्षतक्षीणकृशातिवृद्ध-**
**मूत्रातुरान् केवलवातरोगान् ॥ १४ ॥**
**स्वरोपघाताध्ययनप्रसक्त-**
**दुश्छर्दिदुःकोष्ठतृडार्तबालान् ॥**
**ऊर्ध्वास्रपित्तिक्षुधितातिरूक्ष-**
**गर्भिण्युदावर्तिनिरूहितांश्च ॥ १५ ॥**

अतः परमवम्यानाह—नेत्यादि। तैमिरिकं तिमिररोगार्तम्। अत्र केचित्, “न वामयेत्तैमिरिकं च गुल्मिनं न चापि पाण्डूदररोगपीडितम् । स्थूलक्षतक्षीणकृशातिवृद्धानर्शोऽर्दिताक्षेपकपीडितांश्च”—इति पठन्ति । ऊर्ध्ववातं केचिच्छ्वासं मन्यन्ते; तन्न, श्वासिनो वमनार्हत्वात्; ऊर्ध्ववातस्तन्त्रान्तरे प्रोक्त एव—“अधःप्रतिहतो वायुः श्लेष्मणा कुपितेन च । करोत्यनिशमुद्गारमूर्ध्ववातः स उच्यते”—इति ॥ १४ ॥ १५ ॥

**अवम्यवमनाद्रोगाः कृच्छ्रतां यान्ति देहिनाम् ॥**
**असाध्यतां वा गच्छन्ति नैते वाम्यास्ततः स्मृताः १६**

अवमनार्हस्य वमने व्याधेः परिवृद्धिमसाध्यतां च दर्शयन्नाह—अवम्येत्यादि ॥ १६ ॥

**एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ॥**
**अतीव चोल्बणकफास्ते च स्युर्मधुकाम्बुना ॥ १७॥**

एतेऽप्यजीर्णव्यथिता इत्यादि। एषामजीर्णपीडायां स्थावरजङ्गमकृत्रिमविषबाधायां चात्यर्थोच्छ्रितकफाश्चैते वाम्या वमनार्हाः। तत्रैषामवमने चिराद्बाधाऽजीर्णे, विषैश्च सद्य एव, उल्बणकफानां च गलामयादिषु सद्य एव विनाशः। केचित् ‘एतेऽप्यजीर्ण°’ इत्यादि पाठं त्यक्त्वा ‘सर्वेऽप्येते विरुद्धान्नविषमार्तगरातुराः। कफप्रवृद्धे जीर्णे च वामयेत्’ इति पठन्ति। अत्रापि द्रव्यविशेषमुपदिशन्नाह—मधुकाम्बुनेति।—यष्टीमधुकषायेण वमनाङ्गप्रधानेन वामयेत्। जेज्झटः पुनराह—मधु एव मधुकं, स्वार्थे कः, तेन मधुकाम्बुना। एतेन प्रतिप्रसवो ह्यवाम्यानामप्युक्तः। “न वामनीयस्तिमिरी दकोदरी न गुल्मवान् पाण्डुगदेन पीडितः। स्थूलक्षतक्षीणकृशातिवृद्धा नाशोऽर्दिताक्षेपकपीडितश्च ॥ रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्ध्वं रुधिरे च तीव्रे। दुष्टे च कोष्ठे कृमिभिर्मनुष्यं न वामयेद्वर्चसि संप्रवृद्धे”-इति केचित् पठन्ति। शेषं सुगमम् ॥ १७ ॥

**वाम्यास्तु—विषशोषस्तन्यदोषमन्दाग्न्युन्मादापस्मारश्लीपदार्बुदविदारिकामेदोमेहगरज्वरारुच्यपच्यामातीसारहृद्रोगचित्तविभ्रमविसर्पविद्रध्यजी-**

---

१ ‘स्वास्थ्यवृत्तिकं’ इति पा० । २ ‘यूषोपयोगः’ इति पा० ।
३ ‘वमतस्तथाऽन्ये’ इति पा० ।

२ ‘°वमिश्रमार्तान्’ इति पा० ।

**र्णमुखप्रसेकहृल्लासश्वासकासपीनसपूतीनासकण्ठौष्ठ-वक्त्र-पाककर्णस्रावाधिजिह्वोपजिह्विकागलशुण्डिकाधःशोणितपित्तिनः कफस्थानजेषु विकारेष्वन्ये च कफव्याधिपरीता इति ॥ १८ ॥**

वाम्या इत्यादि । ज्वरोऽत्र नवज्वरो विषमज्वरश्च, क्वचित् पूतीनासाग्रे कुष्ठगलगण्डप्रमेहशोफाः पठिताः । केचित् सुश्रुताध्यायिनो न पठन्त्यमुं पाठं, तेषामयमभिप्रायः—यथास्वं तत्प्रत्यनीकव्याधिषु वमननिर्देशान्नार्थोऽनेनेति ॥ १८ ॥

**विरेचनमपि स्निग्धस्विन्नाय वान्ताय च देयम्; अवान्तस्य हि सम्यग्विरिक्तस्यापि सतोऽधः स्रस्तः श्लेष्मा ग्रहणीं छादयति, गौरवमापादयति, प्रवाहिकां वा जनयति ॥ १९ ॥**

विरेचनविधानमाह—विरेचनमपीत्यादि । वान्तायापि पुनः स्निग्धस्विन्नाय देयं; तच्च पक्षादूर्ध्वं, "पक्षाद्विरेको वान्तस्य" (चि. अ. ३६) इत्युक्तत्वात् । तत्रान्नसंसर्गेण दिनानि षट्, स्नेहेनापि, ततः स्विन्नं त्र्यहमेव लघूष्णभोजिनं रेचयेत् । "वान्तं षडहसंसृष्टं पुनः संस्नेहितं क्रमात् । उष्णं लघु त्र्यहं भुक्तं षोडशेऽह्नि विरेचयेत्"—इति । तत्र वमने स्नेहादेकाहमेवोपरमो, विरेके त्र्यहम् । तथा हि **चरकः**—"एकाहोपरतः स्नेहाद् भुक्त्वा प्रच्छर्दनं पिबेत् । त्रिरात्रोपरतस्तद्वत् स्नेहात् प्रस्कन्दनं पिबेत्" (च. सू. अ. १३) इति । अवान्तस्य हि विरेकदाने को दोष इत्याह—अवान्तस्येत्यादि । तस्मात् स्निग्धस्विन्नाय वान्ताय देयमिति ॥ १९ ॥

**अथातुरं श्वो विरेचनं पाययिताऽस्मीति पूर्वाह्णे लघु भोजयेत्, फलाम्लमुष्णोदकं चैनमनुपाययेत् । अथापरेऽहनि विगतश्लेष्मधातुमातुरोपक्रमणीयादवेक्ष्यातुरमथास्मै औषधमात्रां पातुं प्रयच्छेत् ॥२०॥**

विरेचनस्य प्राक्कर्म निर्दिशन्नाह—अथेत्यादि । पूर्वाह्णग्रहणं सायम्भोजननिषेधार्थम् । फलाम्लं बीजपूरादि । फलाम्लोष्णोदकानुपानं पित्तवर्धनार्थम्, अन्ये तु कफावजयार्थमाहुः । विगतश्लेष्मधातुमिति विगतश्लेष्माणमिति कर्तव्ये धातुग्रहणं श्लेष्मसहचरितरसधातूपलक्षणं, रसावशेषेऽपि सप्रसेकत्वात् पुरुषस्य विरेचनं न देयमिति । मात्रा पुरुषस्य बलापेक्षया प्रधानमध्यादिभेदेन तन्त्रान्तरोक्ता कथ्यते—"द्वे पले ज्येष्ठमाख्यातं मध्यमं तु पलं भवेत् । पलार्धमुपयुञ्जीत कनीयस्तु विरेचनम्"—इति ॥ २० ॥

**तत्र मृदुः, क्रूरो, मध्यम इति त्रिविधः कोष्ठो भवति । तत्र बहुपित्तो मृदुः, स दुग्धेनापि विरिच्यते; बहुवातश्लेष्मा क्रूरः, स दुर्विरेच्यः; समदोषो मध्यमः, स साधारण इति । तत्र मृदौ मात्रा मृद्वी, तीक्ष्णा क्रूरे, मध्ये मध्या कर्तव्येति । पीतौषधश्च तन्मनाः शय्याभ्याशे विरेच्यते ॥ २१ ॥**

**विरेचनं पीतवांस्तु न वेगान् धारयेद्बुधः ॥**
**निवातशायी शीताम्बु न स्पृशेन्न प्रवाहयेत् ॥२२॥**

दुग्धं चात्रोपलक्षणमात्रं, तेनेक्षुरसाम्लतक्रमस्तुगुडकृशरासर्पिर्नवमद्योष्णोदकपीलुद्राक्षारसादिभिरपि विरिच्यते, दुर्विरेच्यस्त्रिवृत्त्रिफलातिल्वकनीलिनीफलादिभिरपि दुःखेन विरिच्यते । मृद्वी मृदुगुणोपेता, वैरेचनिकद्रव्यगुणानां तीक्ष्णत्वादीनामपकर्षेण; तीक्ष्णा तीक्ष्णगुणोपेता, वैरेचनिकद्रव्यगुणानां तीक्ष्णत्वादीनां प्रकर्षेण । तन्मना विरेकमनाः । अभ्याशे समीपे ॥ २१ ॥ २२ ॥

**यथा च वमने प्रसेकौषधकफपित्तानिलाः क्रमेण गच्छन्ति, एवं विरेचने मूत्रपुरीषपित्तौषधकफा इति ॥ २३ ॥**

प्रसेकः आस्ये लालास्रवणम् । औषधं पीतं, कफः पुनरामाशयस्थः, तस्मिन् वमनेन हृते तत्रैव पित्तं वमनावधिसूचकं निस्सरति, वातेन उद्गाररूपेणानिलसंशुद्धिः । विरेचने मूत्रपुरीषपित्तौषधकफा इति, वातगमनं पुनः 'गतेऽनिले चाप्यनुलोमभावं' इत्यनेन वक्ष्यति । कफोऽत्र पक्वाशये विरेकावधिसूचकः स्फटिकसमद्युतिः ॥ २३ ॥

**भवन्ति चात्र—**

**हृत्कुक्ष्यशुद्धिः परिदाहकण्डू-**
**विण्मूत्रसङ्गाश्च न सद्विरिक्ते ॥**
**मूर्च्छागुदभ्रंशकफातियोगाः**
**शूलोद्गमश्चातिविरिक्तलिङ्गम् ॥ २४ ॥**

पित्तान्तकं सम्यग्वमनज्ञानं कफान्तं च सम्यग्विरेचनज्ञानमुद्दिश्य विरेकस्यैव लिङ्गज्ञानेनायोगातियोगौ निर्दिशन्नाह—भवन्ति चात्रेत्यादि । हृत्कुक्ष्यशुद्धिरिति अत्र "स्याद्दुर्विरिक्ते कफपित्तकोपो दाहोऽरुचिर्गौरवमग्निसादः" इति केचित्पठन्ति ॥ २४ ॥

**गतेषु दोषेषु कफान्वितेषु**
**नाभ्यां लघुत्वे मनसश्च तुष्टौ ॥**
**गतेऽनिले चाप्यनुलोमभावं**
**सम्यग्विरिक्तं मनुजं व्यवस्येत् ॥ २५ ॥**

गतेष्वित्यादि । दोषोऽत्र पित्तस्थानगतं दोषोपलक्षितं पुरीषं कफपित्तं च ॥ २५ ॥

**मन्दाग्निमक्षीणमसद्विरिक्तं**
**न पाययेताहनि तत्र पेयाम् ॥**
**क्षीणं तृषार्तं सुविरेचितं च**
**तन्वीं सुखोष्णां लघु पाययेच्च ॥ २६ ॥**

अत्रैव पश्चात्कर्मण्यवस्थाविशेषेण विशेषमुद्दिशन्नाह—मन्दाग्निमक्षीणमित्यादि । लघ्विति मात्रालघु ॥ २६ ॥

१ 'ग्लान्या' इति पा० ।

बुद्धेः प्रसादं बलमिन्द्रियाणां
धातुस्थिरत्वं बलमग्निदीप्तिम् ॥
चिराच्च पाकं वयसः करोति
विरेचनं सम्यगुपास्यमानम् ॥ २७ ॥

इदानीं विरेकस्य गुणमाह—बुद्धेरित्यादि । कायमनसोरन्योन्यानुविधानात् कायमपि मनोऽनुविधत्ते मनश्च काय इति । शरीरशुद्धिकारणं हि विरेचनं, तच्छुद्धौ मनसो विशुद्धिः, मनःशुद्धौ बुद्धिप्रसाद उपपन्न एवेत्यतो बुद्धिप्रसादं करोतीत्युक्तम् । धातुस्थिरत्वमुपचयलक्षणबलेन । अत्र बलशब्देनोत्साहलक्षणबलम् । केचित् 'विरेचनं सम्यगुपास्यमेव' इति पठन्ति । केचिद्बुद्धिप्रसादादयस्तात्कालिका विरेचनस्य गुणाः, अग्निदीप्तिप्रभृतयस्तु केचित्संसर्जनक्रमानन्तरभाविन इति कथयन्ति । उपस्तम्भादिकारिणो मलस्य क्षयकार्यपि विरेकः स्रोतःशुद्ध्या बलमादधाति तक्रपानवत् । उक्तं च—"स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः । तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते" ( च. चि. अ. १४ ) इति ॥ २७ ॥

यथौदकानामुदकेऽपनीते
चरस्थिराणां भवति प्रणाशः ॥
पित्ते हृते त्वेवमुपद्रवाणां
पित्तात्मकानां भवति प्रणाशः ॥ २८ ॥

दृष्टान्तमाह—यथेत्यादि । औदकानां चरस्थिराणां स्थावरजङ्गमानां पद्मादीनां मत्स्यादीनां च । उपद्रवाणां व्याधीनाम् । पित्तात्मकानां पित्तकारणानाम् ॥ २८ ॥

मन्दाग्न्यतिस्निग्धहितबालवृद्ध-
स्थूलाः क्षतक्षीणभयोपतप्ताः ॥
श्रान्तस्तृषार्तोऽपरिजीर्णभक्तो
गर्भिण्यधो गच्छति यस्य चासृक् ॥ २९ ॥
नवप्रविश्यायमदात्ययी च
नवज्वरी या च नवप्रसूता ॥
शल्यार्दिताश्चाप्यविरेचनीयाः
स्नेहादिभिर्ये त्वनुपस्कृताश्च ॥ ३० ॥
अत्यर्थपित्ताभिपरीतदेहान्
विरेचयेत्तानपि मन्दमन्दम् ॥

विरेचनस्याप्रवृत्तिविषयमुद्दिशन्नाह—मन्देत्यादि । 'मन्दमन्दम्' इत्यत्र केचित् 'मन्दवीर्यैः' इत्येवं पठन्ति, तत्र 'द्रव्यैः' इति शेषः ॥ २९ ॥ ३० ॥—

विरेचनैर्यान्ति नरा विनाश-
मज्ञप्रयुक्तैरविरेचनीयाः ॥ ३१ ॥

अविरेच्यानामविरेकशैः कृतं दोषं दर्शयन्नाह—विरेचनैरित्यादि ॥ ३१ ॥

विरेच्यास्तु—ज्वरगरारुच्यर्शोऽर्बुदोदरग्रन्थिविद्रधिपाण्डुरोगापस्मारहृद्रोगवातरक्तभगन्दरच्छर्दियोनिरोगविसर्पगुल्मपक्वाशयरुग्विबन्धविसूचिकालसकमूत्राघातकुष्ठविस्फोटकप्रमेहानाहप्लीहशोफवृद्धिशस्त्रक्षतक्षाराग्निदग्धदुष्टव्रणाक्षिपाककाचतिमिराभिष्यन्दशिरःकर्णाक्षिनासास्यगुदमेढ्रदाहोर्ध्वरक्तपित्तकृमिकोष्ठिनः पित्तस्थानजेष्वन्येषु च विकारेष्वन्ये च पैत्तिकव्याधिपरीता इति ॥३२॥

विरेच्यानाह—विरेच्यास्त्वित्यादि ॥ ३२ ॥

सरत्वसौक्ष्म्यतैक्ष्ण्यौष्ण्यविकाशित्वैर्विरेचनम् ॥
वमनं तु हरेद्दोषं प्रकृत्या गतमन्यथा ॥ ३३ ॥

विरेचनद्रव्येण सह गुणसाम्ये सति कथं वमनद्रव्यस्योर्ध्वभागगामित्वमित्याह—सरत्वेत्यादि । सरस्य भावः सरत्वमानुलोम्यं, **गयी** तु विसरणस्वभावत्वं सरत्वमाह; सूक्ष्मस्य भावः सौक्ष्म्यं सूक्ष्मस्रोतोऽनुसारित्वं; तीक्ष्णस्य भावस्तैक्ष्ण्यं शीघ्रतरदोषस्रावणकरत्वम्; उष्णस्य भाव औष्ण्यं, सौम्यद्रव्योपमर्दनकरणसामर्थ्यं; विकाशिनो भावः विकाशित्वं, विकाशिभावेन धातोः शैथिल्यकरणसामर्थ्यम् । अत्र प्रकृतिः, स्वभावः, शक्तिविशेषः, प्रभावो, वीर्यमित्यनर्थान्तरम् । तेन प्रकृत्या वीर्येणान्यथागतमूर्ध्वगतं, सत्यपि सरत्वादिविरेचनगुणसाम्ये वमनस्योर्ध्वगामित्वं प्रभावविभावितं, कुतः? यत उच्यते—"कटुकः कटुकः पाके चित्रको वह्निदीपनः । तद्वद्दन्ती प्रभावात्तु विरेचयति सा नरम्"; तथाच—"विषं विषघ्नमुद्दिष्टं प्रभावस्तत्र कारणम्"—इति; तथा—"ऊर्ध्वानुलोमिकं यच्च तत्प्रभावप्रभावितम्" ( च. सू. अ. २६ ) इति । एतेनैतदुक्तं भवति—सरत्वादिभिर्गुणैर्विरेचनमधो दोषानपहरेत्; वमनस्य तुल्यगुणत्वेऽपि वीर्येणोर्ध्वगामित्वम् । **पञ्जिकाकारेण** 'प्रकृत्या गतमन्यथा' इत्यत्र 'सम्यग्युक्त्याऽतथाऽन्यथा' इति पठित्वैवं व्याख्यातं—सम्यग्युक्त्या सरत्वादिगुणैर्विरेचनमधोभागेन, वमनमूर्ध्वभागेन दोषानपहरेत्; अतथाऽन्यथेति नञत्र वैपरीत्ये; अतथा असम्यग्युक्त्या विरेचनं च वमनं चान्यथा दोषविपरीतान् गुणान् हरेदिति । केचित्तु 'सम्यग्युक्तं वृथाऽन्यथा' इति पठन्ति । अयमर्थो युक्तः किल; सरत्वादयो गुणाः सुयुक्ता आशुतरदोषहराः, तथैव चान्यथोपयुक्ता एव जीवशोणितधातुरसेन्द्रियमनओजःप्रभृतीनाकृष्य मारयन्तीति ॥ ३३ ॥

यात्यधो दोषमादाय पच्यमानं विरेचनम् ॥
गुणोत्कर्षाद्व्रजत्यूर्ध्वमपक्वं वमनं पुनः ॥ ३४ ॥

कीदृशं सत् पुनर्विरेचनं वमनद्रव्यं च दोषानादाय अध ऊर्ध्वं च यातीत्याह—यात्यधो दोषमित्यादि । विरेचनद्रव्याणि स्थिरगुर्व्योः पृथिव्यम्भसोर्गुणभूयिष्ठानि, अत एव स्थिरत्वात् पच्यमानानि गुरुत्वादधो यान्ति; वमनद्रव्याणि तु वाय्वग्न्योः शीघ्रगलघुगुणयोर्गुणभूयिष्ठानि, अतः शीघ्रगत्वादपक्वान्येव लघुत्वादूर्ध्वमुत्तिष्ठन्ति । द्रव्याणि हि द्रव्यप्रभावात् गुणप्रभावाच्च कार्मुकाणि भवन्ति ॥ ३४ ॥

---

१ 'अज्ञप्रयुक्ता' इति पा० ।

**मृदुकोष्ठस्य दीप्ताग्नेरतितीक्ष्णं विरेचनम् ॥**
**न सम्यङ्निर्हरेद्दोषानतिवेगप्रधावितम् ॥ ३५ ॥**

कथं पुनरस्यासम्यक्प्रवृत्तिः? अत्रोच्यते—मृदुकोष्ठस्येत्यादि। अतिवेगप्रधावितम् अतिवेगप्रवर्तितम्। न सम्यङ्निर्हरेद्दोषानिति कुतः? कोष्ठमार्दवादग्निदीप्तेरतितैक्ष्ण्याच्च। अयमभिप्रायः—मृदुकोष्ठस्य कोष्ठमार्दवेन शीघ्रप्रवृत्तिः, दीप्ताग्नेश्चाग्निदीप्त्या आशुपाकित्वादचिरस्थायिनी पच्यमानावस्था, अतस्तद्धेतुकाऽतिप्रवृत्तिरपि तथाभूतैव; तथा विरेचनस्य तीक्ष्णतयाऽपि शीघ्रप्रवृत्तिरिति हेतुत्रयेण शीघ्रं प्रवर्तनाद्दोषाणां न निःशेषेण दोषनिर्हरणम्। तस्मान्मृद्वेव विरेचनं स्वल्पमात्रं देयमिति ॥३५॥

**पीतं यदौषधं प्रातर्भुक्तपाकसमे क्षणे ॥**
**पक्तिं गच्छति दोषांश्च निर्हरेत्तत् प्रशस्यते ॥ ३६ ॥**

इदानीं सम्यग्युक्तिमाह—पीतमित्यादि। भुक्तपाकसमे क्षणे इति त्रिभिर्यामैर्मध्यमाग्नेर्भोज्यभैषज्ययोः पाकः। अन्ये त्वेवं पठन्ति—"यावता जीर्यते भक्तं जैरां यद्याति तावता। सुखेन दोषान्निर्हृत्य भेषजं तत् प्रशस्यते"—इति ॥ ३६ ॥

**दुर्बलस्य चलान् दोषानल्पानल्पान् पुनः पुनः ॥**
**हरेत् प्रभूतानल्पांस्तु शमयेत् प्रच्युतानपि ॥३७॥**

कुपिताः शमयितव्या इत्यस्यापवादमाह—दुर्बलस्येत्यादि। दुर्बलस्य पुरुषस्य प्रभूतान् चलान् कुपितान् दोषान् शनैः शनैरल्पानल्पान् हरेत्, अतीक्ष्णैः संशोधनीयैरित्यर्थः। सरैर्भोज्यैर्न तीक्ष्णैः संशोधनैरित्यध्याहार्यम्। तच्च दोषहरणं दोषाणां पक्वानामेव। अल्पांस्तर्हि किं कुर्यादित्याह—अल्पांस्तु शमयेत्। प्रच्युतानपि चलितानपीत्यर्थः। भोजेनाप्युक्तम्—"दोषमल्पं च शमयेच्चलितं चापि दुर्बले। बहुदोषं तु चलितं सरैर्भोज्यैः प्रवाहयेत्"—इति ॥ ३७ ॥

**हरेद्दोषांश्चलान् पक्वान् बलिनो दुर्बलस्य वा ॥**
**चला ह्युपेक्षिता दोषाः क्लेशयेयुश्चिरं नरम् ॥ ३८ ॥**

ते दोषा बलिनो दुर्बलस्यापि पाकप्रवणा विपुला निर्हर्तव्या एवेत्याह—हरेदित्यादि ॥ ३८ ॥

**मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः ॥**
**सन्धुक्षिताग्निं स्निग्धं च स्विन्नं चैव विरेचयेत् ॥३९॥**

मन्दाग्नेः क्रूरकोष्ठस्य संशोधनविधिमाह—मन्दाग्निमित्यादि ॥ ३९ ॥

**स्निग्धस्विन्नस्य भैषज्यैर्दोषस्तूत्क्लेशितो बलात् ॥**
**निलीयते न मार्गेषु स्निग्धे भाण्ड इवोदकम् ॥ ४० ॥**

कुतः पुनः स्नेहस्वेदपूर्वकमेव शोधनमित्याह—स्निग्धेत्यादि। स्निग्धस्विन्नस्य पुरुषस्य भैषज्यैर्भोजनौषधरूपैः, यतो भैषज्यग्रहणेन भोजनमपि गृह्यते। बलात् पुरुषबलादिकमभिसमीक्ष्य दोष उत्क्लेशितः। न मार्गेषु निलीयते न श्लिष्यति, न संयुज्यते न लग्नो भवतीत्यर्थः ॥ ४० ॥

**न चातिस्नेहपीतस्तु पिबेत् स्नेहविरेचनम् ॥**
**दोषाः प्रचलिताः स्थानाद्भूयः श्लिष्यन्ति वर्त्मसु ४१**

विरेचनस्य स्निग्धरूक्षपुरुषविशेषावचारणमुद्दिशन्नाह—न चातिस्नेहेत्यादि। भूय इत्यादि पुनर्निलीयन्ते मार्गेष्वित्यर्थः। "न चातिस्निग्धकायस्तु" इति केचित् पठन्ति ॥ ४१ ॥

**विषाभिघातपिडकाशोफपाण्डुविसर्पिणः ॥**
**नातिस्निग्धा विशोध्याः स्युस्तथा कुष्ठिप्रमेहिणः ४२**

केषाञ्चिदतिस्निग्धानां विशोधनप्रतिषेधमाह—विषाभिघातेत्यादि। नातिस्निग्धा इति ईषत्स्निग्धा विशोध्या इत्यर्थः ॥४२॥

**विरूक्ष्य स्नेहसात्म्यं तु भूयः संस्नेह्य शोधयेत् ॥**
**तेन दोषा हृतास्तस्य भवन्ति बलवर्धनाः ॥ ४३ ॥**

स्वभावतः स्निग्धता न शोधनहेतुरित्याह—विरूक्ष्येत्यादि। 'बलवर्धना' इत्यत्र 'स्नेहबन्धना' इति पठन्ति, स्नेहबन्धनाः स्नेहोपलिप्तस्रोतोबन्धना इत्यर्थः ॥ ४३ ॥

**प्रागपीतं नरं शोध्यं पाययेतौषधं मृदु ॥**
**ततो विज्ञातकोष्ठस्य कार्यं संशोधनं पुनः ॥ ४४ ॥**

अविज्ञातकोष्ठस्य मृदु विरेचनं देयमित्याह—प्रागित्यादि। प्राक् पूर्वं न पीतं विरेचनं येन सः तम् ॥ ४४ ॥

**सुखं दृष्टफलं हृद्यमल्पमात्रं महागुणम् ॥**
**व्यापत्स्वल्पात्ययं चापि पिबेन्नृपतिरौषधम् ॥ ४५ ॥**

सुकुमारतरपुरुषविशेषेण विरेचनविशेषमाह—सुखमित्यादि। व्यापत्स्वल्पात्ययमिति व्यापदां स्वल्पानामप्यत्ययो विनाशो यस्मिन्नौषधे तत्तथा ॥ ४५ ॥

**स्नेहस्वेदावनभ्यस्य यस्तु संशोधनं पिबेत् ॥**
**दारु शुष्कमिवानामे देहस्तस्य विशीर्यते ॥ ४६ ॥**

रूक्षस्याकृतस्नेहस्वेदस्य शोधने दोषं दर्शयन्नाह—स्नेहस्वेदावित्यादि ॥ ४६ ॥

**स्नेहस्वेदप्रचलिता रसैः स्निग्धैरुदीरिताः ॥**
**दोषाः कोष्ठगता जन्तोः सुखा हर्तुं विशोधनैः ॥४७॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने वमनविरेचनसाध्योपद्रवचिकित्सितं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥**

शाखागतस्यापि दोषस्य कोष्ठानयनहेतुः स्नेहः, स्वेदः कोष्ठमागतस्य सुखेन प्रवृत्तिकरश्चेति दर्शयन्नाह—स्नेहस्वेदप्रचलिता इत्यादि। विशोधनैरिति 'शक्यन्ते' इत्यध्याहारः ॥४७॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥

---

१ 'अतिवेगप्रधावितान्' इति पा०। २ 'आशुभाविनि' इति पा०। ३ 'बहुमात्रं' इति पा०। ४ 'भुक्तं सयाति पक्वताम्' इति पा०। ५ 'शनैरल्पं' इति पा०।

१ 'प्रच्याविताः' इति पा०।

## चतुस्त्रिंशत्तमोऽध्यायः।

अथातो वमनविरेचनव्यापच्चिकित्सितं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

वैद्यातुरनिमित्तं वमनं विरेचनं च पञ्चदशधा व्यापद्यते। तत्र वमनस्याधो गतिरूर्ध्वं विरेचनस्येति पृथक्; सामान्यमुभयोः—सावशेषौषधत्वं, जीर्णौषधत्वं, हीनदोषापहृतत्वं, वातशूलम्, अयोगो, अतियोगो, जीवादानम्, आध्मानं, परिकर्तिका, परिस्रावः, प्रवाहिका, हृदयोपसरणं, विबन्ध, अङ्गप्रग्रह इति ॥ ३ ॥

वैद्यातुरग्रहणेनैव भेषजपरिचारकयोर्ग्रहणम्, अतस्तयोरपि व्यापन्निमित्तता स्यात्। तत्रेत्यादि। तत्र वमनस्याधोगतिः 'व्यापत्' इति शेषः। ऊर्ध्वगतिर्विरेचनस्येत्यत्रापि 'व्यापत्' इति शेषः। उभयोस्तु वमनविरेचनयोः सावशेषौषधादिकं त्रयोदशसंख्योपेतं व्यापत्त्वेन सामान्यं तुल्यम्। संख्येयनिर्देशेऽपि पञ्चदशधेति संख्याकरणं तन्त्रान्तरोक्तसंख्यानिषेधार्थम् ॥ १-३ ॥

तत्र बुभुक्षापीडितस्यातितीक्ष्णाग्नेर्मृदुकोष्ठस्य चावतिष्ठमानं दुर्वमस्य वा गुणसामान्यभावाद्वमनमधो गच्छति, तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च; तमाशु स्नेहयित्वा भूयस्तीक्ष्णतरैर्वामयेत् ॥ ४ ॥

वमनस्याधोगमनाख्यां व्यापदं दर्शयन्नाह—तत्रेत्यादि। प्रथमं क्षुत्पीडितस्य पीतमात्रमेवाधो याति, तीक्ष्णाग्नेरग्निबलात् पाकं याति, मृदुकोष्ठस्यापि कोष्ठमार्दवादधो याति, दुर्वमस्य चावतिष्ठमानं पाकं गच्छत् सरत्वादिगुणसाम्यादधो याति। दोषोत्क्लेशश्चेति दोषस्य सामान्यवाचित्वेऽपि कफो गृह्यते, तस्य वमनार्हत्वात्। स्नेहयित्वेत्यत्र स्नेहेनैव स्वेद आक्षिप्तो बोद्धव्यः ॥ ४ ॥

अपरिशुद्धामाशयस्योत्क्लिष्टश्लेष्मणः सशेषान्नस्य वाऽहृद्यमतिप्रभूतं वा विरेचनं पीतमूर्ध्वं गच्छति, तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च; तत्राशुद्धामाशयमुल्बणश्लेष्माणमाशु वामयित्वा भूयस्तीक्ष्णतरैर्विरेचयेत्, आमान्वये त्वामवत् संविधानम्, अहृद्येऽतिप्रभूते च हृद्यं प्रमाणयुक्तं च; अत ऊर्ध्वमुत्तिष्ठत्यौषधे न तृतीयं पाययेत्, ततस्त्वेनं मधुघृतफाणितयुक्तैर्लेहैर्विरेचयेत् ॥ ५ ॥

विरेचनस्योर्ध्वगतिव्यापदं दर्शयन्नाह—अपरिशुद्धेत्यादि। दोषोऽत्र पित्तम्। आमवत् संविधानं लङ्घनपाचनादि। न तृतीयं पाययेत् 'विरेचनमौषधम्' इति शेषः। अथ केन विरेचयेत्? तदाह—ततस्त्वेनमित्यादि ॥ ५ ॥

दोषविग्रथितमल्पमौषधमवस्थितमूर्ध्वभागिकमधोभागिकं वा न स्रंसयति दोषान्, तत्र तृष्णा पार्श्वशूलं छर्दिर्मूर्च्छा पर्वभेदो हृल्लासोऽरतिरुद्गाराविशुद्धिश्च भवति; तमुष्णाभिरद्भिराशु वामयेदूर्ध्वभागिके, अधोभागिकेऽपि च सावशेषौषधमतिप्रधावितदोषमतिबलमसम्यग्विरिक्तलक्षणमप्येवं वामयेत् ॥ ६ ॥

सावशेषौषधव्यापदं सामान्येनोभयोर्दर्शयन्नाह—दोषेत्यादि। दोषविग्रथितं दोषमिश्रितम्। न स्रंसयति न च्यावयति। पर्वभेदः ग्रन्थिस्फुटनम्। हृल्लासः थूत्करणं, 'थुकथुकी' इति लोके। अरतिर्न कुत्रचिदवस्थितिश्चित्तस्य। तमवस्थितात्यौषधं तृष्णाद्यन्वितमूर्ध्वभागिके वमनद्रव्यविषये वामयेत्। अधोभागिकेऽप्यवस्थाविशेषे वमनमुद्दिशन्नाह—अधोभागिकेऽपि चेत्यादि। अधोभागिके विरेचनद्रव्यविषये यः सावशेषौषधोऽतिप्रधावितदोषस्तमसम्यग्विरिक्तमप्यतिप्रधावितदोषलहेतुना वामयेत् परमतिबलं पुरुषम् ॥ ६ ॥

क्रूरकोष्ठस्याततितीक्ष्णाग्नेरल्पमौषधमल्पगुणं वा भक्तवत् पाकमुपैति, तत्र समुदीर्णा दोषा यथाकालमनिर्ह्रियमाणा व्याधिविभ्रमं बलविभ्रंशं चापादयन्ति, तमनल्पममन्दमौषधं च पाययेत् ॥ ७ ॥

जीर्णौषधव्यापदं दर्शयन्नाह—क्रूरेत्यादि। समुदीर्णाः प्रकुपिताः, व्याधिविभ्रमं कोष्ठादिक्षोभलक्षणम्। बलविभ्रंशं सन्धिविश्लेषादिलक्षणं दोषादिविज्ञानीयोक्तम्। तमनल्पमित्यादि प्रभूतं तीक्ष्णं च पातुं प्रयच्छेत् ॥ ७ ॥

अस्निग्धस्विन्नेनाल्पगुणं वा भेषजमुपयुक्तमल्पान् दोषान् हन्ति; तत्र वमने दोषशेषो गौरवमुत्क्लेशं हृदयाविशुद्धिं व्याधिवृद्धिं च करोति, तत्र तं यथायोगं पाययित्वा वामयेद्दृढतरं; विरेचने तु गुदपरिकर्तनमाध्मानं शिरोगौरवमनिःसरणं वा वायोर्व्याधिवृद्धिं च करोति; तमुपपाद्य भूयः स्नेहस्वेदाभ्यां विरेचयेद्दृढतरं, दृढं बहुप्रचलितदोषं वा तृतीये दिवसेऽल्पगुणं चेति ॥ ८ ॥

अल्पदोषहृतिव्यापदं दर्शयन्नाह—अस्निग्धस्विन्नेनेत्यादि। अल्पोऽतिसूक्ष्मो गुणो यस्य तत्तथा तम्। तं दोषशेषम्। यथायोगं योगानतिक्रमेण स्नेहादिपूर्वमित्यर्थः। पाययित्वा 'आतुरं वमनद्रव्यम्' इति शेषः। दृढतरमिति दृढतरं यथा भवति तथा। विरेचने त्विति अत्रापि दोषशेष इति संबध्यते। गुदपरिकर्तनं गुदस्य सर्वतः कर्तनमिव वेदनाविशेषः। दृढदेहं बहुदोषं प्रचलितदोषं च पूर्वं स्निग्धस्विन्नं तृतीयेऽह्नि; अन्ये तु वमनदिवसाद्विरेचनदिवसाद्वा तृतीयदिवसे वामयेद्विरेचयेद्वेति ॥ ८ ॥

अस्निग्धस्विन्नेन रूक्षौषधमुपयुक्तमब्रह्मचारिणा वा वायुं कोपयति, तत्र वायुः प्रकुपितः पार्श्वपृष्ठ-

१-२-३ 'दोषोत्कर्षश्च' इति पा०।

**श्रोणिमन्याममर्मशूलं मूर्च्छां भ्रमं मदं संज्ञानाशं च करोति, तं वातशूलमित्याचक्षते; तमभ्यज्य धान्यस्वेदेन स्वेदयित्वा यष्टीमधुकविपक्केन तैलेनानुवासयेत् ॥ ९ ॥**

वातशूलव्यापदं दर्शयन्नाह—अस्निग्धेत्यादि । श्रोणिः कटिः, मर्मात्र हृदयम् । भ्रमः चक्रारूढस्येव भ्रमणम् । मदः पूगफलादनेनेव मत्तता । धान्यस्वेदेन माषादिशमीधान्यस्वेदेन । मूर्च्छाभ्रमयोरनुवासनप्रतिषेधव्यवस्थापेक्षया शीतलेन यष्टीमधुकतैलेनानुवासनं वेदितव्यमिति ॥ ९ ॥

**स्नेहस्वेदाभ्यामविभावितशरीरेणाल्पमौषधमल्पगुणं वा पीतमूर्ध्वमधो वा नाभ्येति दोषांश्चोत्क्लेश्य तैः सह बलक्षयमापादयति, तत्राध्मानं हृदयग्रहस्तृष्णा मूर्च्छा दाहश्च भवति, तमयोगमित्याचक्षते; तमाशु वामयेन्मदनफललवणाम्बुभिर्विरेचयेत्तीक्ष्णतरैः कषायैश्च । दुर्वान्तस्य तु समुत्क्लिष्टा दोषा व्याप्य शरीरं कण्डूश्वयथुकुष्ठपिडकाज्वराङ्गमर्दनिस्तोदनानि कुर्वन्ति, ततस्तानशेषान्महौषधेनापहरेत् । अस्निग्धस्विन्नस्य दुर्विरिक्तस्याधोनाभेः स्तब्धपूर्णोदरता शूलं वातपुरीषसङ्गः कण्डूमण्डलप्रादुर्भावो वा भवति, तमास्थाप्य पुनः संस्नेह्य विरेचयेत्तीक्ष्णेन । नातिप्रवर्तमाने तिष्ठति वा दुष्टसंशोधने तत्सन्तेजनार्थमुष्णोदकं पाययेत्, पाणितापैश्च पार्श्वोदरमुपस्वेदयेत्, ततः प्रवर्तन्ते दोषाः । अनुप्रवृत्ते चाल्पदोषे जीर्णौषधं बहुदोषमहःशेषं बलं चावेक्ष्य भूयो मात्रां विदध्यात् । अप्रवृत्तदोषं दशरात्रादूर्ध्वमुपसंस्कृतदेहं स्नेहस्वेदाभ्यां भूयः शोधयेत् । दुर्विरेच्यमास्थाप्य पुनः संस्नेह्य विरेचयेत् । ह्रीभयलोभैर्वेगाघातशीलाः प्रायशः स्त्रियो राजसमीपस्था वणिजः श्रोत्रियाश्च भवन्ति, तस्मादेते दुर्विरेच्याः, बहुवातत्वात्; अत एव तानतिस्निग्धान् स्वेदोपपन्नाञ् शोधयेत् ॥ १० ॥**

अयोगव्यापदं दर्शयन्नाह—स्नेहेत्यादि । बहुव्यापत्त्वादेतान् सुस्निग्धस्विन्नान् स्वैरं रेचयेत् । स्नेहस्वेदाभ्यामविभावितशरीरेण सर्वथैवास्निग्धस्विन्नेनेत्यर्थः । नाभ्येति न गच्छति । दोषांश्चोत्क्लिश्य तैर्दोषैः सह बलक्षयमापादयति, तथाऽऽध्मानादिकं करोति । तमयोगमित्याचक्षते इति अनेन पारिभाषिकत्वमयोगस्य दर्शयति । इति हेतोरल्पदोषहृतत्वमयोगो न भवति । मदनादिभिर्वामयेद्वमनायोगे; तीक्ष्णतरकषायैर्विरेचयेद्विरेचनायोगे । तत्र बलक्षयाध्मानादिकं सर्वथाऽप्रवृत्तयोर्वमनविरेचनयोः सामान्यकार्यलिङ्गम् । पृथक् चिकित्सितमभिधाय तेन चिकित्सितेनोत्पन्नैर्हृल्लासप्रसेकाल्पविट्प्रवृत्तिनाभ्यधोगौरवादिभिरनुमितयोर्वमनविरेचनायोगयोः पृथक् लिङ्गं चिकित्सितं चाह—दुर्वान्तस्येत्यादि । कण्ड्वादिदुर्वान्तलिङ्गिनं वातपूर्णोदरादिदुर्विरिक्तलिङ्गिनं चास्थाप्य निरूह्य, संस्नेह्य स्नेहबस्तिना, ततस्तीक्ष्णेन निरूहणेन विरेचनेन च विरेचयेत् । अत्रायोगप्रसङ्गेनाल्पदोषहृतत्वेन च प्रवर्तनोपायं दर्शयन्नाह—नेत्यादि । तथाऽल्पप्रवृत्तौ द्वितीयं करणीयं दर्शयन्नाह—अनुप्रवृत्तेत्यादि । जीर्णौषधं प्रभूतदोषं पुरुषं वीक्ष्य तथा देहस्य बलं च द्वितीयौषधं विदध्यात् । अल्पदोषप्रवृत्तौ तदहरेव भेषजमभिधाय सर्वथा दोषाप्रवृत्तौ विधिमाह—अप्रवृत्तदोषमित्यादि । पथ्याहारस्नेहादिनोपस्कारेण दशरात्रमतिवाह्य तत ऊर्ध्वं वमनविरेचनाभ्यां शोधयेत् । सुखविरेच्यस्य क्रियामभिधाय दुर्विरेच्यस्याह—दुर्विरेच्यमित्यादि । स्वभावाद्दुर्विरेच्यान्निर्दिश्य हेतुविशेषं दुर्विरेचने निर्दिशन्नाह—ह्रीभयेत्यादि । तत्र ह्रिया लज्जया वेगाघातशीलाः स्त्रियो, भयेन राजसमीपस्था, लोभेन वणिजः श्रोत्रियाश्च, तस्मात्ताननतिस्निग्धाञ्छोधयेत् ॥ १० ॥

**स्निग्धस्विन्नस्यातिमात्रमतिमृदुकोष्ठस्य वाऽतितीक्ष्णमधिकं वा दत्तमौषधमतियोगं कुर्यात् । तत्र वमनातियोगे पित्तातिप्रवृत्तिर्बलविस्रंसो वातकोपश्च बलवान् भवति, तं घृतेनाभ्यज्यावगाह्य शीतास्वप्सु शर्करामधुमिश्रैर्लेहैरुपचरेद्यथास्वं; विरेचनातियोगे कफस्यातिप्रवृत्तिरुत्तरकालं च सरक्तस्य, तत्रापि बलविस्रंसो वातकोपश्च बलवान् भवति, तमतिशीताम्बुभिः परिषिच्यावगाह्य वा शीतैस्तण्डुलाम्बुभिर्मधुमिश्रैश्छर्दयेत्, पिच्छाबस्तिं चास्मै दद्यात्, क्षीरसर्पिषा चैनमनुवासयेत्, प्रियङ्ग्वादिं चास्मै तण्डुलाम्बुना पातुं प्रयच्छेत्, क्षीररसयोश्चान्यतरेण भोजयेत् ॥ ११ ॥**

इदानीमतियोगव्यापदं दर्शयन्नाह—स्निग्धेत्यादि । बलविस्रंसः शक्तिविस्रंसः । यथास्वमिति यस्य यदात्मीयं तद्यथास्वं; तेन लाजशक्तूपकल्पितैः क्वचिच्छर्करामिश्रैः क्वचिन्मधुमिश्रैरित्यर्थः । पिच्छाबस्तिर्वक्ष्यमाणः । क्षीरसर्पिषा क्षीरोत्थेन घृतेन । तण्डुलाम्बुमधुच्छर्दनमधःप्रवृत्तस्य श्लेष्मणः प्रतिबन्धार्थं, पिच्छाबस्तिप्रयोगो रक्तपित्तातिप्रवृत्तिपरिहाराय, क्षीरसर्पिषाऽनुवासनं वातप्रतिबन्धाय, तण्डुलाम्बुना सह प्रियङ्ग्वादिप्रयोगः कर्षप्रमाणः संग्रहणाय, क्षीररसैश्च भोजनं बलप्रतिलम्भाय । गयी तु पिच्छाबस्तिं चास्मै दद्यादित्यनन्तरं पिच्छाबस्त्यङ्गत्वेन क्षीररसाभ्यां चैनमिति पाठं पठति ॥ ११ ॥

---

१ 'विहितमिति' इति पा० ।

१ 'कण्ड्वादिकं दुर्वान्तलिङ्गं नाभ्यधः, तथा पूर्णोदरत्वादिकं दुर्विरिक्तलिङ्गं, तमास्थाप्येति तं दुर्विरिक्तं' इति पा० । २ 'तथा द्वितीयौषधस्य पच्यमानावस्थायां अहःशेषं नात्युष्णशीतं वीक्ष्य तथा बलं शक्तिलक्षणं द्वितीयौषधपाकपरिवर्तनक्षमं वीक्ष्य भेषजमात्रां दानाय' इति पा० । ३ 'तमभ्यज्यातिशीताम्बुभिः' इति पा० । ४ 'ओजोविस्रंसः' इति पा० ।

तस्मिन्नेव वमनातियोगे प्रवृद्धे शोणितं ष्ठीवति छर्दयति वा, तत्र जिह्वानिःसरणमपसरणमक्ष्णोर्व्यावृत्तिर्हनुसंहननं तृष्णा हिक्का ज्वरो वैसंज्ञ्यमित्युपद्रवा भवन्ति; तमजासृक्चन्दनोशीराञ्जनलाजचूर्णैः सशर्करोदकैर्मन्थं पाययेत्, फलरसैर्वा सघृतक्षौद्रशर्करैः शुङ्गाभिर्वा वटादीनां पेयां सिद्धां सक्षौद्रां वर्चोग्राहिभिर्वा, पयसा जाङ्गलरसेन वा भोजयेत्, अतिस्रुतशोणितविधानेनोपचरेत्; जिह्वामतिसर्पितां कटुकलवणचूर्णप्रघृष्टां तिलद्राक्षाप्रलिप्तां वाऽन्तः पीडयेत्, अन्तः प्रविष्टायामम्लमन्ये तस्य पुरस्तात् खादयेयुः; व्यावृत्ते चाक्षिणी घृताभ्यक्ते पीडयेत्, हनुसंहनने वातश्लेष्महरं नस्यं स्वेदांश्च विदध्यात्, तृष्णादिषु च यथास्वं प्रतिकुर्वीत, विसंज्ञे वेणुवीणागीतस्वनं श्रावयेत् ॥१२॥

विरेचनातियोगे च सचन्द्रकं सलिलमधः स्रवति ततो मांसधावनप्रकाशमुत्तरकालं जीवशोणितं च, ततो गुदनिःसरणं वेपथुर्वमनातियोगोपद्रवाश्चास्य भवन्ति; तमपि निःस्रुतशोणितविधानेनोपचरेत्, निःसर्पितगुदस्य गुदमभ्यज्य परिस्वेद्यान्तः पीडयेत् क्षुद्ररोगचिकित्सितं वा वीक्षेत, वेपथौ वातव्याधिविधानं कुर्वीत, जिह्वानिःसरणादिषूक्तः प्रतीकारः, अतिप्रवृत्ते वा जीवशोणिते काश्मरीफलबदरीदूर्वोशीरैः शृतेन पयसा घृतमण्डाञ्जनयुक्तेन सुशीतेनास्थापयेत्, न्यग्रोधादिकषायेक्षुरसघृतशोणितसंसृष्टैश्चैनं वस्तिभिरुपाचरेत्, शोणितष्ठीवने रक्तपित्तरक्तातीसारक्रियाश्चास्य विदध्यात्, न्यग्रोधादिं चास्य विदध्यात् पानभोजनेषु ॥ १३ ॥

जीवशोणितरक्तपित्तयोश्च जिज्ञासार्थं तस्मिन् पिचुं प्लोतं वा क्षिपेत्, यद्युष्णोदकप्रक्षालितमपि वस्त्रं रञ्जयति तज्जीवशोणितमवगन्तव्यं; सभक्तं च शुने दद्याच्छक्तुसंमिश्रं वा, स यद्युपभुञ्जीत तज्जीवशोणितमवगन्तव्यम्; अन्यथा रक्तपित्तमिति १४

इदानीं तयोर्वमनविरेकातियोगयोरुत्तमावस्थाजीवादानव्यापदं कष्टचिकित्सितार्थमाह—तस्मिन्नेवेत्यादि । जिह्वाया निःसरणमपसर्पणं जिह्वानिःसर्पणम्, अथवा जिह्वाया बहिर्निर्गमनं बहिर्गतिरन्तरप्रवेश इत्यर्थः । अक्ष्णोर्व्यावृत्तिः चक्षुषोरुद्वृत्तिः । हनुसंहननं हनुसंहतिः सरणाभाव इत्यर्थः । तमित्यादि तं वमनातियोगप्रवृत्तशोणितं छागरुधिरादिभिः स्रुतं मन्थं पाययेत् । फलरसैर्वेति दाडिमीफलरसैः । जाङ्गलरसेनेति 'वातप्रकृतिम्' इति शेषः । अन्तःप्रविष्टायां जिह्वायामम्लफलमन्ये तस्य पुरस्तात् खादयेयुरिति एतद्दर्शनात् मुखप्रसेकेन मृदुभूता जिह्वा यथास्थानमागच्छति । विरेचनातियोगे चेत्यादि । सचन्द्रकं मयूरपिच्छचन्द्रकाकारम् । जीवशोणितं शरीरेन्द्रियसत्त्वात्मसंयोगाश्रयं विशुद्धं शोणितमित्यर्थः । वमनातिप्रवृत्तौ तावच्छोणितनिष्ठीवनप्रच्छर्दने उक्ते, अत्र तु मांसप्रक्षालनोदकजीवशोणितनिर्गमाभ्यां प्रवृत्तिरुक्तेति शोणितप्रवृत्तिर्वमनविरेचनातियोगे सामान्यं; भेदस्तु जिह्वानिस्सरणस्थानेऽत्र गुदनिस्सरणं, तथाऽक्ष्णोर्व्यावृत्तिर्मनागपि नास्ति किन्त्वन्तःप्रवेश एव भवति, नास्ति चाप्रत्यासत्त्या हनुसंहननं हिक्कोद्गारौ चेति गयदासाचार्यः; जेज्जटाचार्यस्तु जिह्वानिःसर्पणं परित्यज्य अन्ये प्रवृद्धवमनातियोगोक्ता उपद्रवा भवन्तीति व्याख्याति । वेपथुः कम्पः । वमनातियोगोपद्रवा इत्यादि । सर्वाङ्गप्रवृत्तरसधातुक्षयेण वातकृता वमनातियोगोपद्रवा पित्तातिप्रवृत्तिबलविभ्रंशवातकोपतृष्णामोहादयः । जिह्वापसरणादिष्विति जिह्वापसर्पणमत्रोपलक्षणं, तेन जिह्वापसर्पणादिविरेचनातियोगोत्पन्नेषु वमनातियोगोक्तः प्रतीकार इति जेज्जटः । गयी तु जिह्वानिस्सर्पणादयो वमनातियोगे एव भवन्तीति प्रतिपादयितुकामस्तेषु चिकित्सितमभिहितमेवेति प्रतिपादयति—जिह्वानिस्सर्पणादिष्वित्यादिना । उक्तः प्रतीकार इति वमनातियोगे इत्यर्थः । फलं मदनफलं, घृतमण्डः घृतस्य स्त्यानस्योपर्यच्छो भागः । अञ्जनं स्रोतोऽञ्जनम् । वस्तिकल्पना चात्र सामान्यनिरूहकल्पेन । विरेचनातियोगे जीवशोणितातिप्रवृत्तौ चिकित्सितमुपदिश्य वमनातियोगेऽपि शोणितनिष्ठीवनादौ रक्तातिसाररक्तपित्तक्रियामाह—शोणितेत्यादि । पानभोजनसंस्कारे चास्य न्यग्रोधादिं षडङ्गोदककल्पेन । तस्मिन्निति वान्तेऽधःप्रवृत्ते धातुद्रवे, पिचुं कर्पासतूलकं[1], प्लोतं वस्त्रं शुक्लं क्षिपेत्, तद्यदि शुक्लमुष्णोदकप्रक्षालितं रागरहितं भवेत्तदा जीवशोणितं, विवर्णे च रक्तपित्तमिति । वमनविरेचनजीवादानयोः पुनः क्रियां निर्दिशन्नाह—तयोश्च पित्तक्रियां कुर्वीतेत्यादि । वमनजीवादाने तु अतिस्रुतशोणितविधानातिदेशेन एणादिशोणितपानमुपदिष्टं तथेदानीं रक्तातिसारक्रियाविधानं चेति । अयं पाठोऽभावान्न लिखितः ॥ १२–१४ ॥

सशेषान्नेन बहुदोषेण रूक्षेणानिलप्रायकोष्ठेनानुष्णमस्निग्धं वा पीतमौषधमाध्मापयति, तत्रानिलमूत्रपुरीषसङ्गः समुन्नद्धोदरता पार्श्वभङ्गो गुदबस्तिनिस्तोदनं भक्तारुचिश्च भवति, तं चाध्मानमित्याचक्षते; तमुपस्वेद्यानाहवर्तिदीपनबस्तिक्रियाभिरुपचरेत् ॥ १५ ॥

जीवादानव्यापदमभिधाय द्वयोरपि शुद्ध्योराध्मानाख्यां व्यापदमुपदिशन्नाह—सशेषान्नेनेत्यादि । समुन्नद्धोदरतेति वमनकृतं समुन्नद्धोदरत्वमामाशये, विरेचनकृतं पक्वाशये । तत्र स्वेदनमूत्राद्यनुलोमनलङ्घनदीपनक्रियाश्चेति चिकित्सितम् ॥ १५ ॥

क्षामेणातिमृदुकोष्ठेन मन्दाग्निना रूक्षेण वाऽतितीक्ष्णोष्णातिलवणमतिरूक्षं वा पीतमौषधं पित्तानिलौ प्रदूष्य परिकर्तिकामापादयति, तत्र गुदनाभिमेढ्रबस्तिशिरःसु सदाहं परिकर्तनमनिलसङ्गो

1 'पिचुमर्कतूलकं' इति पा० ।

वायुविष्टम्भो भक्तारुचिश्च भवति; तत्र पिच्छावस्तिर्यष्टीमधुककृष्णतिलकल्कमधुघृतयुक्तः, शीताम्बुपरिषिक्तं चैनं पयसा भुक्तवन्तं घृतमण्डेन यष्टीमधुकसिद्धेन तैलेन वाऽनुवासयेत् ॥ १६ ॥

परिकर्तिकाव्यापदं दर्शयन्नाह—क्षामेणेत्यादि । क्षामः क्षीणबलकायः । परि सर्वतो भावेन कृन्ततीव छिनत्तीव बस्त्यादीनीति परिकर्तिका । तत्र पित्तोल्बणपरिकर्तिकायां घृतमण्डेनानुवासनं, वातोल्बणायां तु तैलेनेति । वमने पुनः कण्ठोरसि सदाहपरिकर्तनं; तत्र घृतमधुमधुरैः सशीतैर्लेपैरुपचारः पयःसिताभोजनं च ॥ १६ ॥

क्रूरकोष्ठस्यातिप्रभूतदोषस्य मृद्वौषधमवचारितं समुत्क्लिश्य दोषान्न निःशेषानपहरति, ततस्ते दोषाः परिस्रावमापादयन्ति, तत्र दौर्बल्योदरविष्टम्भारुचिगात्रसदनानि भवन्ति, सवेदनौ चास्य पित्तश्लेष्माणौ परिस्रवतः, तं परिस्रावमित्याचक्षते; तमजकर्णधवतिनिशपलाशबलाकषायैर्मधुसंयुक्तैरास्थापयेत्, उपशान्तदोषं स्निग्धं च भूयः संशोधयेत् ॥ १७ ॥

परिस्रावाख्यां व्यापदं दर्शयन्नाह—क्रूरेत्यादि । अजकर्णोऽश्वकर्णः प्रसिद्ध एव पूर्वदेशे, धव इन्द्रवृक्षः, तिनिशः स्यन्दनः । उपशान्तदोषमिति उपशान्तपरिस्रावम् । भूयः पुनरपि स्निग्धं तीक्ष्णैः संशोधनैः संशोधयेत् । वमने पुनरूर्ध्वं कफप्रसेकः; तत्राध्याहारेणोपशान्तदोषं सुस्निग्धस्विन्नं मृदुनाऽल्पेन वमनेन यथायोगं वामयेत् । **गयी** तु उपशान्तदोषमिति रूक्षस्निग्धकोष्ठं संशमनपाचनाभ्यां शमितोत्क्लिष्टदोषमास्थापयेच्छोधयेद्वेति व्याख्याति ॥ १७ ॥

अतिरूक्षेऽतिस्निग्धे वा भेषजमवचारितमप्राप्तं[1] वातवर्च उदीरयति वेगाघातेन वा, तदा प्रवाहिका भवति; तत्र सवातं सदाहं सशूलं गुरु पिच्छिलं श्वेतं कृष्णं सरक्तं वा भृशं प्रवाहमाणः कफमुपविशति; तां परिस्रावविधानेनोपचरेत् ॥ १८ ॥

प्रवाहिकाख्यां त्रयोदशीं व्यापदं दर्शयन्नाह—अतिरूक्ष इत्यादि । अतिरूक्षे पुरुषे भेषजमवचारितमप्राप्तवेगमेव वातवर्च उदीरयति प्रवर्तयति यदा तदा प्रवाहिका; अतिस्निग्धे पुरुषे भेषजमवचारितं यदा तदा वेगाघातेन प्रवाहिका भवतीत्यर्थः । उपविशति अतिसारयति । तां परिस्रावविधानेनेत्यादि । तत्रातिरूक्षजां क्रूरकोष्ठविधानेन, अतिस्निग्धजां मृदुकोष्ठप्रचुरदोषपरिस्रावोक्तपाचनादिविधानेन ॥ १८ ॥

यस्तूर्ध्वमधो वा भेषजवेगं प्रवृत्तमज्ञत्वाद्विनिहन्ति तस्योपसरणं हृदि कुर्वन्ति दोषाः, तत्र प्रधानमर्मसन्तापाद्वेदनाभिरत्यर्थं पीड्यमानो दन्तान् किटकिटायते उद्वताक्षो[1] जिह्वां खादति प्रताम्यत्यचेताश्च भवति, तं परिवर्जयन्ति मूर्खाः; तमभ्यज्य धान्यस्वेदेन स्वेदयेत्, यष्टिमधुकसिद्धेन च तैलेनानुवासयेत्, शिरोविरेचनं चास्मै तीक्ष्णं विदध्यात्, ततो यष्टिमधुकमिश्रेण तण्डुलाम्बुना छर्दयेत्, यथादोषोच्छ्रायेण चैनं बस्तिभिरुपाचरेत् ॥ १९ ॥

हृदयोपसरणाख्यां चतुर्दशीं व्यापदं दर्शयन्नाह—य इत्यादि । प्रधानमर्मसन्तापात् हृदयसन्तापात् । प्रताम्यति मुह्यति । अचेता नष्टसंज्ञः । तं परिवर्जयन्ति मूर्खाः कुवैद्याः मुमूर्षतीति हेतोः । यष्टिमधुकमिश्रेण तण्डुलाम्बुना पित्तमूर्च्छार्तं छर्दयेत्; कफमूर्च्छायां तु कटुकद्रव्याणां क्वाथेन वामयेत् । बस्तिभिरिति नैरूहिकैः स्नैहिकैश्च ॥ १९ ॥

यस्तूर्ध्वमधो वा प्रवृत्तदोषः शीतागारमुदकमनिलमन्यद्वा सेवेत, तस्य दोषाः स्रोतःस्ववलीयमाना घनीभावमापन्ना[2] वातमूत्रशकृद्ग्रहमापाद्य विबध्यन्ते[3], तस्याटोपो दाहो ज्वरो वेदनाश्च तीव्रा भवन्ति; तमाशु वामयित्वा प्राप्तकालां क्रियां कुर्वीत; अधोभागे त्वधोभागदोषहरद्रव्यं सैन्धवाम्लमूत्रसंसृष्टं विरेचनाय पाययेत्, आस्थापनमनुवासनं च यथादोषं विदध्यात्, यथादोषमाहारक्रमं च; उभयतोभागे तूपद्रवविशेषान् यथास्वं प्रतिकुर्वीत ॥ २० ॥

विबन्धाख्यां पञ्चदशीं व्यापदं दर्शयन्नाह—य इत्यादि । विबध्यन्ते वमनविरेचनयोः प्रवृत्तिं निवारयन्तीत्यर्थः । प्राप्तकालां प्राप्तावस्थां क्रियां कुर्वीत । अधोभागे इत्यादि । विरेचने तु विबन्धे अधोभागहरद्रव्यं त्रिवृदादि सैन्धवादिसंसृष्टं विरेकार्थं पाययेत् । यथादोषमेव यूषक्षीररसाद्याहारक्रमश्च । किं बहुना उभयतोभागे तु उपद्रवविशेषान् यथास्वं प्रतिकुर्वीत । **गयी** तु अप्रवृत्तदोषोऽप्रच्युतदोष इति कृत्वा व्याख्याति ॥ २० ॥

या तु विरेचने गुदपरिकर्तिका तद्वमने कण्ठक्षणनं, यदधः परिस्रवणं स ऊर्ध्वभागे श्लेष्मप्रसेकः, या त्वधः प्रवाहिका सा तूर्ध्वं शुष्कोद्गारा इति ॥ २१ ॥

तास्वपि कासुचिदेवान्तरमिति तदुपदर्शयन्नाह—या त्वित्यादि ॥ २१ ॥

भवति चात्र—

यास्त्वेता व्यापदः प्रोक्ता दश पञ्च च तत्त्वतः ॥
एता विरेकातियोगदुर्योगायोगजाः स्मृताः ॥ २२ ॥

इति सुश्रुतसंहितायां चिकित्सास्थाने वमनविरेचनव्यापच्चिकित्सितं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

१ 'भेषजेनावचारितेनाप्राप्तयोर्वा वातवर्चसोरुदीरणेन वेगाघातेन वा प्रवाहिका भवति' इति पा० ।

१ 'उद्वृत्ताक्षः' इति पा० । २ 'घनतामापन्ना' इति पा० । ३ 'विबध्नन्ति' इति पा० । ४ 'विबध्नन्ति विबन्धं कुर्वन्ति' इति पा० ।

इदानीं श्लोकसंग्रहमाह—भवति चात्रेत्यादि । तत्त्वतः परमार्थतः । विरेकोऽत्र दोषमलरेचनाद्विरेचनं वमनं च । **जेज्जटाचार्यस्तु** विपाकातियोगेत्यादि पठित्वा व्याख्यानयति—विषमः पाकोऽनिष्टं फलं येषां ते विपाकाः, विपाकाश्च तेऽतियोगदुर्योगायोगाश्च तेभ्यो जायन्ते ते तथा । तत्रातियोजनमतियोग अतिप्रयोग इति यावत्; तज्जाते द्वे व्यापदौ—जीवादानमतियोगश्चेति । दुर्योजनं दुर्योगः दुष्प्रयोगो मिथ्याप्रयोग इति यावत्; तत्र वैद्यदुर्योगनिमित्ताश्चतस्रः—वमनमिथ्याप्रयोगो, विरेचनमिथ्याप्रयोग, आध्मानं, परिकर्तिका चेति; आतुरदुर्योगनिमित्ते द्वे-हृदयोपसरणविबन्धाविति; उभयदुर्योगजे अपि द्वे-प्रवाहिका, वातशूलं चेति । अयोजनम् अयोगः हीनप्रयोगैः, नञ ईषदर्थत्वात् । तत्रायोगजाः पञ्च-सावशेषौषधत्वं, जीर्णौषधता, हीनदोषहृतत्वम् अयोगः, परिस्रावश्चेति । ता एता वैद्यातुरनिमित्ता, आतुरनिमित्ता, वैद्यनिमित्ताश्चेति त्रिविधाः । अन्ये तु तन्त्रान्तरदर्शनादयोगातियोगजाः सर्वा अपि व्यापदो यथासंख्यं मन्यन्ते; तत्रायोगजा दश, तद्यथा—सावशेषौषधत्वं, जीर्णौषधत्वम्, अल्पदोषहृतत्वं, विबन्धो, वातशूलम्, आध्मानं, परिस्रावः, प्रवाहिका, हृदयोपसरणम्, अयोगश्चेति; अतियोगजाश्च तिस्रः-जीवादानं, परिकर्तिका, अतियोगश्चेति; अयोगातियोगौ च हेतुत्वेनोक्तावित्येवं पञ्चदश ॥ २२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशत्तमोऽध्यायः ।

**अथातो नेत्रबस्तिप्रमाणप्रविभागचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

नेत्रं यन्त्रं; बस्तिरेणादीनां मूत्राधारः, तदाधेयं द्रव्यमपि; तयोः प्रमाणं प्रविभागश्च, स एव चिकित्सितं व्याधेः प्रतीकारो यस्मिंस्तत् ॥ १ ॥ २ ॥

**तत्र स्नेहादीनां कर्मणां बस्तिकर्म प्रधानतममाहुराचार्याः । कस्मात्? अनेककर्मकरत्वाद्बस्तेः; इह खलु बस्तिर्नानाविधद्रव्यसंयोगाद्दोषाणां संशोधनसंशमनसंग्रहणानि करोति, क्षीणशुक्रं वाजीकरोति, कृशं बृंहयति, स्थूलं कर्शयति, चक्षुः प्रीणयति, वलीपलितमपहन्ति, वयः स्थापयति ॥ ३ ॥**

**शरीरोपचयं वर्णं बलमारोग्यमायुषः ।**
**कुरुते परिवृद्धिं च बस्तिः सम्यगुपासितः ॥ ४ ॥**

बस्तिकर्म तु मूत्राधारपुटकेन साध्यं कर्म; बस्तिशब्दो हि सामान्यो निरूहे स्नेहबस्तौ च । वमनविरेचने तु प्रधानतरे, बस्तिकर्म तु प्रधानतमम् । संग्रहणानीति दोषाणामेवातिप्रवर्तमानानामित्यर्थः । क्षीणशुक्रं वाजीकरोति अनेनाश्व इव बलकारिणी हर्षजा शक्तिरुक्ता । कृशं बृंहयतीत्युपचयलक्षणा शक्तिरुक्ता । वयः स्थापयतीत्यनेन आयुर्वृद्धिकरत्वं सूचयति । एतदेव प्रधानतमत्वसाधनं श्लोकेनापि दर्शयन्नाह—शरीरोपचयमित्यादि ॥ ३ ॥ ४ ॥

**तथा ज्वरातीसारतिमिरप्रतिश्यायशिरोरोगाधिमन्थार्दिताक्षेपकपक्षाघातैकाङ्गसर्वाङ्गरोगाध्मानोदरयोनिशूलशर्कराशूलवृद्ध्युपदंशानाहमूत्रकृच्छ्रगुल्मवातशोणितवातमूत्रपुरीषोदावर्तशुक्रार्तवस्तन्यनाशहृद्धनुमन्याग्रहशर्कराश्मरीमूढगर्भप्रभृतिषु चात्यर्थमुपयुज्यते ॥ ५ ॥**

अनेकव्याधिनिर्घातकत्वं दर्शयन्नाह—तथा ज्वरातीसारेत्यादि । ज्वरादिषु चावस्थाविशेषो बस्तेर्विषयः, स च शास्त्रादेव ज्ञेयः ॥ ५ ॥

**भवति चात्र—**

**बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ॥**
**संसर्गे सन्निपाते च बस्तिरेव हितः सदा ॥ ६ ॥**

दोषकार्ये ज्वरादौ बस्तिप्रयोगमभिधाय ज्वरादिकारणे दोषेऽपि बस्तेर्हितत्वं दर्शयन्नाह—भवति चात्रेत्यादि । संसर्गो दोषद्वयप्रकोपः, प्रकृतिसमसमवेतज्वराद्यारम्भकदोषत्रयप्रकोपः सन्निपातोऽत्राभिप्रेतः ॥ ६ ॥

**तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षडष्टदशाङ्गुलप्रमाणानि कनिष्ठिकानामिकामध्यमाङ्गुलिपरिणाहान्यग्रेऽध्यर्धाङ्गुलद्व्यङ्गुलार्धतृतीयाङ्गुलसन्निविष्टकर्णिकानि कङ्कश्येनबर्हिणपक्षनाडीतुल्यप्रवेशानि मुद्गमाषकलायमात्रस्रोतांसि विदध्यान्नेत्राणि । तेषु चास्थापनद्रव्यप्रमाणमातुरहस्तसंमितेन प्रसृतेन संमितौ प्रसृतौ द्वौ चत्वारोऽष्टौ च विधेयाः ॥ ७ ॥**

**वर्षान्तरेषु नेत्राणां बस्तिमानस्य चैव हि ॥**
**वयोबलशरीराणि समीक्ष्योत्कर्षयेद्विधिम् ॥ ८ ॥**

**पञ्चविंशतेरूर्ध्वं द्वादशाङ्गुलं, मूलेऽङ्गुष्ठोदरपरीणाहम्, अग्रे कनिष्ठिकोदरपरीणाहम्, अग्रे त्र्यङ्गुलसन्निविष्टकर्णिकं, गृध्रपक्षनाडीतुल्यप्रवेशं, कोलास्थिमात्रछिद्रं, क्लिन्नकलायमात्रछिद्रमित्येके; सर्वाणि मूले बस्तिनिबन्धनार्थं द्विकर्णिकानि । आस्थापनद्रव्यप्रमाणं तु विहितं द्वादशप्रसृताः ।**

---

१ 'हीनयोजनं' इति पा० । २ 'हेतू कथितौ' इति पा० । ३ 'प्रमाणविभागः' इति पा० ।

१ '०मन्याग्रहार्शोऽश्मरी०' इति पा० । २ 'वर्षान्तरेषु' इति पा० । ३ 'समीक्ष्य वर्धयेद्विधिम्' इति पा० ।

**सप्ततेस्तूर्ध्वं नेत्रप्रमाणमेतदेव, द्रव्यप्रमाणं तु द्विरष्टवर्षवत् ॥ ९ ॥**

नेत्रप्रमाणमास्थापनद्रव्यप्रमाणं च वयोभेदेन प्रदर्शयितुमाह—तत्र सांवत्सरिकेत्यादि । तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणामित्यत्र यथासंख्यव्याख्यानेन सांवत्सरिकबालस्य निरूहयन्त्रं षडङ्गुलप्रमाणं, तत्कनिष्ठिकापरिणाहम्, अग्रेऽध्यर्धाङ्गुलसन्निविष्टकर्णिकं, कङ्कपक्षनाडीतुल्यप्रवेशं मूले, मुद्गवाहिस्रोतश्चाग्रे विदध्यात् । छत्राकारा गुदेऽधिकान्तःप्रवेशरोधिनी कर्णिका कथ्यते । कङ्कः वकचञ्चुः कृष्णवर्णः प्रसिद्ध एव । अष्टवर्षस्य पुनरष्टाङ्गुलप्रमाणं, तदनामिकापरिणाहम्, अग्रे द्व्यङ्गुलसन्निविष्टकर्णिकं, श्येनपक्षनाडीतुल्यप्रवेशं मूले, माषवाहिस्रोतश्चाग्रे विदध्यात् । द्विरष्टवर्षस्य षोडशवर्षस्येत्यर्थः । किम्भूतं यन्त्रं ? दशाङ्गुलप्रमाणं, तन्मध्याङ्गुलिपरिणाहम्, अर्धतृतीयाङ्गुलसन्निविष्टकर्णिकं, बर्हीं मयूरस्तत्पक्षनाडीतुल्यप्रवेशं मूले, कलायवाहिस्रोतश्चाग्रे विदध्यात् । तेष्विति सांवत्सरिकाष्टद्विरष्टवर्षेषु बालेषु यथासंख्यमातुरहस्तेन द्वौ चत्वारोऽष्टौ च प्रसृता विधेयाः । प्रसृतोऽत्र कुञ्चिताङ्गुलिः पाणिः, न तु पलद्वयमिति **गयदासाचार्यः । जेज्जटाचार्यस्तु** आतुरहस्तग्रहणं मध्यमपुरुषहस्तोपलक्षणं, तेन तत्प्रसृतेन पलद्वयप्रमितेनेति व्याख्यानयति । अत्र मध्यवर्तिवर्षाणां नेत्रद्रव्यमानं निर्दिशन्नाह—वर्षान्तरेष्वित्यादि । पञ्चविंशतिं यावत् समीक्ष्य यथायथमभ्यूह्य नेत्रप्रमाणं बस्तिद्रव्यप्रमाणं चोत्कर्षयेत् । पञ्चविंशतेरित्यादि । गृध्रपक्षनाडीतुल्यप्रवेशं मूले । क्लिन्नकलायमात्रच्छिद्रमग्रे । सर्वाणि तु मूले बस्तिनिबन्धनार्थं द्विकर्णिकानि द्व्यङ्गुलान्तराणि कुर्यात् द्व्यङ्गुलमध्यानीत्यर्थः ॥ ७-९ ॥

**मृदुर्बस्तिः प्रयोक्तव्यो विशेषाद्बालवृद्धयोः ॥**
**तयोस्तीक्ष्णः प्रयुक्तस्तु बस्तिर्हिंस्याद् बलायुषी १०**

बालवृद्धयोर्हीनोपचयशक्तिलक्षणबलत्वेनास्थापनस्य मात्राकृतं हीनत्वं प्रदर्श्य तीक्ष्णादिगुणहीनत्वं दर्शयन्नाह—मृदुर्बस्तिः प्रयोक्तव्य इत्यादि । तत्र मृदुद्रव्यकृतो बस्तिर्मृदुः, तीक्ष्णश्च तद्विपर्ययः ॥ १० ॥

**( व्रणनेत्रमष्टाङ्गुलं मुद्गवाहिस्रोतः; व्रणमवेक्ष्य यथास्वं स्नेहकषाये विदधीत ॥ ११ ॥ )**

शल्यतन्त्रत्वादस्य शास्त्रस्य व्रणनेत्रप्रमाणमाह—व्रणनेत्रमष्टाङ्गुलमित्यादि ॥ ११ ॥

**तत्र नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयानि श्लक्ष्णानि दृढानि गोपुच्छाकृतीन्यृजूनि गुटिकामुखानि च ॥ १२ ॥**

तानि च नेत्राणि किंमयानि किमाकृतीनि वा तदाह—तत्र नेत्राणीत्यादि । रीतिः पित्तलं, मणिः स्फटिकादिः । श्लक्ष्णानि अकर्कशानि । दृढानि अजर्जराणि । गुटिकामुखानि अतीक्ष्णाग्राणि ॥ १२ ॥

**बस्तयश्च बन्ध्या मृदवो नातिबहला दृढाः प्रमाणवन्तो गोमहिषवराहाजोरभ्राणाम् ॥ १३ ॥**
**नेत्रालाभे हिता नाडी नलवंशास्थिसंभवा ॥**
**बस्त्यलाभे हितं चर्म सूक्ष्मं वा तान्तवं घनम् १४**

कीदृशा बस्तयो बन्ध्या इत्याह—बस्तयश्च बन्ध्या इत्यादि । नातिबहला नात्युपचिताः, नातिदीर्घा इत्यन्ये । तान्तवं वस्त्रम् । ॥ १३ ॥ १४ ॥

**बस्तिं निरुपदिग्धं तु शुद्धं सुपरिमार्जितम् ॥**
**मृद्वनुद्धतहीनं च मुहुः स्नेहविमर्दितम् ॥ १५ ॥**
**नेत्रमूले प्रतिष्ठाप्य न्युब्जं तु विवृताननम् ॥**
**बद्ध्वा लोहेन तप्तेन चर्मस्रोतसि निर्दहेत् ॥ १६ ॥**
**परिवर्त्य ततो बस्तिं बद्ध्वा गुप्तं निधापयेत् ॥**
**आस्थापनं च तैलं च यथावत्तेन दापयेत् ॥ १७ ॥**

ग्रहणयोग्यबस्तेः परिकर्म बन्धविधिं च दर्शयन्नाह—बस्तिं निरुपदिग्धमित्यादि । निरुपदिग्धं मांसाद्युपलेपवर्जितम् । शुद्धं कषायरञ्जितम् । सुपरिमार्जितं सुष्ठुनिर्मार्जितम् । अनुद्धतहीनं नाधिकं न हीनम्; एतेनाधेयद्रव्यमानं समीक्ष्याधारभूतस्य बस्तेः प्रमाणं विधेयमित्यर्थः । प्रतिष्ठाप्य संयोज्य । न्युब्जम् अधोमुखम् । गोमहिषादिबस्तयो निरूहयन्त्रे यथालाभं संयोज्याः; उत्तरबस्तियन्त्रे पुनरजोरभ्रबस्ती एव योजनीयाविति ॥ १५-१७ ॥

**तत्र द्विविधो बस्तिः—नैरूहिकः, स्नैहिकश्च । आस्थापनं, निरूह इत्यनर्थान्तरं; तस्य विकल्पो माधुतैलिकः; तस्य पर्यायशब्दो यापनो, युक्तरथः, सिद्धबस्तिरिति । स दोषनिर्हरणाच्छरीरनीरोहणाद्वा निरूहः, वयःस्थापनादायुःस्थापनाद्वा आस्थापनम् । माधुतैलिकविधानं च निरूहोपक्रमचिकित्सिते वक्ष्यामः । यथाप्रमाणगुणविहितैः स्नेहबस्तिविकल्पोऽनुवासनः पादाव(प)कृष्टः । अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयत इत्यनुवासनः । तस्यापि विकल्पोऽर्धार्धमात्रावकृष्टोऽपरिहार्यो मात्राबस्तिरिति ॥ १८ ॥**

अनर्थान्तरमिति एकार्थमित्यर्थः । बस्तेर्नैरूहिकस्नैहिकभेदाभ्यां यौ द्वौ विकल्पौ तौ निरूहस्नेहबस्त्याख्यौ, तयोर्नैरूहिकमभिधाय स्नैहिकं बस्तिविकल्पमभिधत्ते—यथेत्यादि । यस्य

१ 'सार्धाङ्गुलसन्निविष्टकर्णिकं' इति । २ 'सार्धद्व्यङ्गुलसन्निविष्टकर्णिकं' इति पा० । ३ 'बर्हिणो मयूराः' इति पा० । ४ 'तन्मध्यवर्तिवर्षाणां' इति पा० । ५ 'हाराणचन्द्रस्तु अमुं पाठं न पठति ।

१ 'बस्तयश्चावृद्धानां' इति पा० । २ 'ग्रहणयोग्यं स्वभावमुद्दिश्य बस्तेः' इति पा० । ३ 'यथाप्रमाणविहितः' इति, 'यथाप्रमाणगणविहित' इति च पा० । ४ 'अर्धार्धमात्रावशिष्टः' इति पा० ।

यत् प्रमाणं यो यो गुणस्ताभ्यां विहितः स्नेहवस्त्याख्योऽनुवासनसंज्ञ इत्यर्थः । यथावयोनिरूहाणामित्यादिना विधास्यमानोऽपि स्नेहबस्तिविकल्पोऽनागतावेक्षणतन्त्रयुक्त्या विहित इति प्रदिष्टः । यथाप्रमाणमित्यनेन सूचितं प्रमाणं प्रकटयन्नाह—पादाव(प)कृष्ट इति ।—यथावय इत्यादिवक्ष्यमाणवाक्यदर्शनादास्थापनस्य पादैस्त्रिभिरपकृष्टो हीनः पादाव(प)कृष्टः । अयमर्थः—सांवत्सरिकादिकालाद्यपेक्षं यत् प्रकुञ्चादि चतुर्विंशतिपलावसानं निरूहप्रमाणं तच्चतुर्थांशेन कर्षमारभ्य षट्पलानि यावदनुवासनस्य प्रमाणमिति । तन्त्रान्तरे च मध्यवयस्कमाश्रित्यानुवासनस्योत्तमादिमात्राभेदेन त्रैविध्यमुक्तं, यथा—"षट्पली तु भवेच्छ्रेष्ठा मध्यमा त्रिपली भवेत् । कनीयस्यर्धपला त्रिधा मात्राऽनुवासने—" इति । तस्यापि विकल्प इत्यादि तस्याप्यनुवासनस्य, षट्पलप्रमाणस्यार्धार्धमात्रावशिष्टः पादावशिष्टोऽध्यर्धपलमात्र इत्यर्थः । अपरिहार्यः अविद्यमानपरिहरणार्हः । **गयी** तु यथाप्रमाणविहितास्य बस्तेः पादांशः स्नेहबस्तिः, स्नेहविकल्पोऽर्धमात्रापकृष्टोऽनुवासनं, तस्यापि विकल्पोऽर्धमात्रापकृष्टोऽपरिहार्यो मात्राबस्तिरिति । एतेन तन्मते षट्पलप्रमाणः स्नेहबस्तिः, तदर्धेन पलत्रयप्रमाणमनुवासनं, तस्यार्धेन सार्धपलप्रमाणो मात्राबस्तिरिति ॥ १८ ॥

**निरूहः शोधनो लेखी स्नैहिको बृंहणो मतः ॥**

फलेनापि तयोर्भेदं दर्शयन्नाह—निरूह इत्यादि । शोधनद्रव्यसंयुक्तः शोधनो निरूहः । सर्वनिरूहानुवासनधर्मोऽयं, द्रव्यविशेषसंयोगात्तु क्वचिच्छोधनादीनामुत्कर्षापकर्षौ । **जेज्जटाचार्य**स्तु 'स्नेहनो बृंहणो मत' इति पठित्वा शोधनादिचतुष्कं निरूहस्य कर्मेति वर्णयति ॥—

**निरूहशोधितान्मार्गान् सम्यक् स्नेहोऽनुगच्छति ॥**
**अपेतसर्वदोषासु नाडीष्विव वहज्जलम् ॥**
**सर्वदोषहरश्चासौ शरीरस्य च जीवनः ॥**
**तस्माद्विशुद्धदेहस्य स्नेहबस्तिर्विधीयते ॥ २० ॥**

निरूहशोधितमार्गेषु सम्यक् स्नेहवीर्यानुसरणं दर्शयन्नाह—निरूहेत्यादि ॥ १९-२० ॥

**तत्रोन्मादभयशोकपिपासारोचकाजीर्णार्शःपाण्डुरोगभ्रममदमूर्च्छाच्छर्दिकुष्ठमेहोदरस्थौल्यश्वासकासकण्ठशोषशोफोपसृष्टक्षतक्षीणचतुस्त्रिमासगर्भिणीदुर्बलाग्न्यसहा बालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्याः ॥ २१ ॥**

तत्रेत्यादि । भ्रमः चक्रारूढस्येव भ्रमणम् । मदः पूगफलेनेव मत्तता । मूर्च्छा चेतनाच्युतिः । उपसृष्टशब्द उन्मादादिभिः शोफान्तैः सह संबन्धनीयः । क्षतः क्षतोरस्कः, क्षीणः कृशः । चतुस्त्रिमासगर्भिणीति सप्तमासान् यावद्गर्भिणी; तथाच **वाग्भटः**—"मासान् सप्त च गर्भिणी" (वा. सू. अ. १९ ) । वातरोगादृते क्षीणा इति क्षीणशब्दस्य पुनरुपादानादतिकृशा वातरोगं विना क्षीणा नानुवास्या इति । उन्मादादिषु सामान्येन बस्तिनिषेधोऽत्राभिहितः; केचित्तु केषांचित्प्रतिप्रसवमपवादरूपेणाहुः । तत्रोन्मादापस्मारभ्रममदमूर्च्छासु संज्ञानाशापगमे शुद्धस्यातुरस्य अनुबन्धोपचरणाय बस्तिर्देयः, कुष्ठिनामर्शसां च मूढवातानां प्रयोज्यः, वाताद्युदरेषु त्रिषु निषिद्धोऽपि शेषेषु पञ्चसु बस्तिः प्रयोक्तव्यः, शोथक्षतोरस्कयोरनुवासननिषेधो न निरूहस्य; वर्षादर्वाग् बालस्य, नवत्यूर्ध्वं वृद्धस्य मृदुरपि बस्तिर्निषिद्धः, अतोऽन्यथा तीक्ष्ण एव; एतेनावस्थावशान्निषिद्धमपि कार्यं स्यात् "उत्पद्यते हि साऽवस्था देशकालबलं प्रति । यस्यां कार्यमकार्यं स्यात् कर्म कार्यं च गर्हितम्"—इति ॥ २१ ॥

**उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः ॥**
**अवश्यं स्थापनीयास्ते नानुवास्याः कथञ्चन ॥ २२ ॥**

क्वचिदेवास्थापनस्यावस्थायां प्रतिप्रसवमुद्दिशन्नाह—उदरी चेत्यादि । सा चावस्था तन्त्रान्तरादनुसर्तव्या । तत्रोदरे **वाग्भटः**—"सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम् । सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत्—" ( वा. चि. अ. १५ ) इति; एवं प्रमेहादिषु चिकित्सितमालोक्यास्थापनावस्था ज्ञातव्या ॥ २२ ॥

**असाध्यता विकाराणां स्यादेषामनुवासनात् ॥**
**असाध्यत्वेऽपि भूयिष्ठं गात्राणां सदनं भवेत् २३**

निषिद्धाचरणदोषमुद्दिशन्नाह—असाध्यतेत्यादि । एषां विकाराणाम् उदरादीनाम् । गात्रसदनम् अङ्गग्लानिः ॥ २३ ॥

**पक्वाशये तथा श्रोण्यां नाभ्यधस्ताच्च सर्वतः ॥**
**सम्यक्प्रणिहितो बस्तिः स्थानेष्वेतेषु तिष्ठति २४**
**पक्वाशयाद्बस्तिवीर्यं खैर्देहमनुसर्पति ॥**
**वृक्षमूले निषिक्तानामपां वीर्यमिव द्रुमम् ॥ २५ ॥**

सम्यक् प्रदत्तो बस्तिर्येषु स्थानेष्ववतिष्ठते तान्याह—पक्वाशये इत्यादि । कथं तर्हि पक्वाशयादिमात्रगतो बस्तिः क्वचित् सर्वेषामवयवानामवसादं, क्वचित् सर्वाङ्गगतानां दोषाणां हरणं शमनं च जनयतीत्याह—पक्वाशय इत्यादि । पक्वाशयाद्बस्तिवीर्यं खैः स्रोतोभिरनुसर्पति कृत्स्नदेहे; वीर्यं, शक्तिः, प्रभाव इत्यनर्थान्तरम् ॥ २४ ॥ २५ ॥

**स चापि सहसा बस्तिः केवलः समलोऽपि वा ।**
**प्रत्येति वीर्यं त्वनिलैरपानाद्यैर्विनीयते ॥ २६ ॥**

तिष्ठंस्तावद्बस्तिर्गुणकारी भवतु, कथं निर्गतोऽपि तादृशः स्यादित्याह—स चापीत्यादि । प्रत्येति "प्रत्यागच्छति । वीर्यं स्नेहादिगुणः । अपानाद्यैरिति आद्यपदेनोदानादयो बोद्धव्याः । अपानेनाधः, उदानेनोर्ध्वं, व्यानेन सर्वत्र, विनीयते विशेषेण सर्वशरीरावयवेषु नीयते ॥ २६ ॥

**वीर्येण बस्तिरादत्ते दोषानापादमस्तकात् ( न् ) ॥**
**पक्वाशयस्थोऽम्बरगो भूमेरर्को रसानिव ॥ २७ ॥**

**स कटीपृष्ठकोष्ठस्थान् वीर्येणालोड्य संचयान् ॥**
**उत्खातमूलान् हरति दोषाणां साधुयोजितः ॥२८॥**

सकलावयवगतदोषहरणं बस्तेरेकस्थानस्थितस्योपमानेन दर्शयन्नाह—वीर्येणेत्यादि । अन्ये त्वत्रामुं श्लोकं न पठन्ति ॥ २७ ॥ २८ ॥

**दोषत्रयस्य यस्माच्च प्रकोपे वायुरीश्वरः ॥**
**तस्मात्तस्यातिवृद्धस्य शरीरमभिनिघ्नतः ॥ २९ ॥**
**वायोर्विघहते वेगं नान्या बस्तेर्ऋते क्रिया ॥**
**पवनाविद्धतोयस्य वेला वेगमिवोदधेः ॥ ३० ॥**
**शरीरोपचयं वर्णं बलमारोग्यमायुषः ॥**
**कुरुते परिवृद्धिं च बस्तिः सम्यगुपासितः ॥ ३१ ॥**

दोषत्रयस्येत्यादि । यथा उदधेः समुद्रस्य, पवनाविद्धतोयस्य अनिलेनाभुग्नसलिलस्य, वेला कूलमर्यादा, वेगं विषहते विशेषेण सहते ॥ २९—३१ ॥

**अत ऊर्ध्वं व्यापदो वक्ष्यामः। तत्र नेत्रं विचलितं, विवर्तितं, पार्श्वावपीडितम्, अत्युत्क्षिप्तम्, अवसन्नं, तिर्यक्प्रक्षिप्तमिति षट् प्रणिधानदोषाः; अतिस्थूलं, कर्कशम्, अवनतं, अणुभिन्नं, सन्निकृष्टविप्रकृष्टकर्णिकं, सूक्ष्मातिच्छिद्रम्, अतिदीर्घम्, अतिह्रस्वम्, अश्रिमदित्येकादश नेत्रदोषाः; बहलता, अल्पता, संच्छिद्रता, प्रस्तीर्णता, दुर्बद्धतेति पञ्च बस्तिदोषाः; अतिपीडितता, शिथिलपीडितता, भूयो भूयोऽवपीडनं, कालातिक्रम इति चत्वारः पीडनदोषाः; आमता, हीनता, अतिमात्रता, अतिशीतता, अत्युष्णता, अतितीक्ष्णता, अतिमृदुता, अतिस्निग्धता, अतिरूक्षता, अतिसान्द्रता, अतिद्रवता, इत्येकादश द्रव्यदोषाः; अवाक्शीर्षोच्छीर्षन्युब्जोत्तानसङ्कुचितदेहस्थितदक्षिणपार्श्वशायिनः प्रदानमिति सप्त शय्यादोषाः; एवमेताश्चतुश्चत्वारिंशद्व्यापदो वैद्यनिमित्ताः । आतुरनिमित्ताः पञ्चदश आतुरोपद्रवचिकित्सिते वक्ष्यन्ते । स्नेहस्त्वष्टभिः कारणैः प्रतिहतो न प्रत्यागच्छति त्रिभिर्दोषैः, अशनाभिभूतो, मलव्यामिश्रो, दूरानुप्रविष्टो, अस्विन्नस्य, अनुष्णो, अल्पम्भुक्तवतो, अल्पश्चेति वैद्यातुरनिमित्ता भवन्ति । अयोगस्तूभयोः, आध्मानं, परिकर्तिका, परिस्रावः, प्रवाहिका, हृदयोपसरणम्, अङ्गप्रग्रहो, अतियोगो, जीवादानमिति नव व्यापदो वैद्यनिमित्ता भवन्ति ॥ ३२ ॥**

१ 'अनिलेनात्युग्रसलिलस्य' इति पा० । २ 'अणु, भिन्नं', इति पा० । ३ 'अतिह्रस्वमित्येकादश' इति पा० । ४ 'भिन्नता' इति पा० ।

विचलितं विशेषेण कम्पितम् । विवर्तितं प्रविष्टमेव मोटितम् । पार्श्वावपीडितं पार्श्वयोर्वामदक्षिणयोरवपीडनम् । अत्युत्क्षिप्तम् अतिशयेनोर्ध्वप्रेरितम् । अवसन्नम् अधोभागगतिकम् । प्रणिधानदोषा दानदोषाः । सूक्ष्मातिच्छिद्रं सूक्ष्ममुखं, बृहन्मुखमित्यर्थः । अश्रिमदिति अश्रिः कोटिः पालिरित्यर्थः, धारायुक्तमित्यन्ये । नेत्रदोषा निरूहयन्त्रदोषाः । बहलता मांसोपचितत्वम्, अन्ये विपुलतामाहुः । प्रस्तीर्णता स्नायुजालवत्त्वम् । कालातिक्रम इति कालस्यातिद्रुतविलम्बितस्यातिक्रमो विलम्बितदानेनोल्लङ्घनम् । तत्रातिशिथिलपीडने सम्यक्पीडनकालस्येषदतिक्रमः, कालातिक्रमे च सम्यक्पीडनकालस्य महानतिक्रम इति भेदः । आमतेत्यादि । आमः अपक्वस्नेहः । एकादश द्रव्यदोषा यथासंभवं स्नेहबस्तिनिरूहोभयाश्रिता ज्ञातव्याः । अवाक्शीर्षेत्यादि । अवाक्शीर्ष अधोमस्तकः, उच्छीर्षक ऊर्ध्वमस्तकः, न्युब्जः अधोमुखः, स्थित उपविष्टः । अवाक्शीर्षादयः सप्त शय्यास्थितपुरुषस्य दोषाः, उपचारेण शय्यायाः प्रतिपाद्यन्ते । स्नेह इत्यादि । उभयोरिति निरूहानुवासनयोः । एतदुक्तं भवति—अयोगादिव्यापत्सु काश्चिद्व्यापन्निरूहाश्रिताः, काश्चिदनुवासनाश्रिताः, काश्चिदुभयाश्रिता इति ॥ ३२ ॥

**भवति चात्र—**

**षट्सप्ततिः समासेन व्यापदः परिकीर्तिताः ॥**
**तासां वक्ष्यामि विज्ञानं सिद्धिं च तदनन्तरम् ॥३३॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने नेत्रबस्तिप्रमाणप्रविभागचिकित्सितं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥**

विज्ञानं लक्षणम् । सिद्धिं चिकित्सितम् ॥ ३३ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशत्तमोऽध्यायः ।

**अथातो नेत्रबस्तिव्यापच्चिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

नेत्रानन्तरमादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः; तेन प्रणिधानद्रव्यशय्याव्यापदोऽपि गृह्यन्ते ॥ १ ॥ २ ॥

**अथ नेत्रे विचलिते तथा चैव विवर्तिते ॥**
**गुदे क्षतं रुजा वा स्यात्तत्र सद्यःक्षतक्रियाः ॥ ३ ॥**
**अत्युत्क्षिप्तेऽवसन्ने च नेत्रे पायौ भवेद्रुजा ॥**
**विधिरत्रापि पित्तघ्नः कार्यः स्नेहैश्च सेचनम् ॥ ४ ॥**

१ 'विलम्बितदानेनातिवाहनम्' इति पा० ।

तिर्यक्प्रणिहिते नेत्रे तथा पार्श्वावपीडिते ॥
मुखस्यावरणाद्बस्तिर्न सम्यक् प्रतिपद्यते ॥
ऋजु नेत्रं विधेयं स्यात्तत्र सम्यग्विजानता ॥ ५ ॥

तत्र सद्यः क्षतक्रिया मधुघृताभ्यञ्जनाद्याः । अत्युत्क्षिप्त इत्यादि । अत्र अत्युत्क्षिप्तेऽवसन्ने च नेत्रेऽभिघातेन वातपैत्तिकपायुवेदनायाम् । पित्तघ्न इति मधुरशीतादिः । स्नेहैश्च सेचनमिति घृतादिस्नेहसेचनं, तच्चानिलापहम् ॥ ३–५ ॥

अतिस्थूले कर्कशे च नेत्रेऽभ्रिमति घर्षणात् ॥
गुदे भवेत् क्षतं रुक् च साधनं तस्य पूर्ववत् ॥ ६ ॥
आसन्नकर्णिके नेत्रे भिन्नेऽणौ वाऽप्यपार्थकः ॥
अवसेको भवेद्बस्तेस्तस्माद्दोषान् विवर्जयेत् ॥ ७ ॥
प्रकृष्टकर्णिके रक्तं गुदमर्मप्रपीडनात् ॥
क्षरत्यत्रापि पित्तघ्नो विधिर्बस्तिश्च पिच्छिलः ॥ ८ ॥
ह्रस्वे त्वणुस्रोतसि च क्लेशो बस्तिश्च पूर्ववत् ॥
प्रत्यागच्छंस्ततः कुर्याद्रोगान् बस्तिविघातजान् ॥ ९
दीर्घे महास्रोतसि च ज्ञेयमत्यवपीडवत् ॥

प्रणिधानदोषानभिधाय नेत्रदोषाभिधानमाह—अतिस्थूल इत्यादि । पूर्ववच्छब्देन सद्यःक्षतवत्क्रियेत्यर्थः । आसन्नकर्णिके बस्तिरपार्थको व्यर्थः । भिन्नेऽणौ अणुभिन्ने नेत्रे । अवसेकः क्षरणम् । प्रकृष्टकर्णिकं त्र्यङ्गुलादूर्ध्वं चतुरङ्गुले सन्निविष्टकर्णिकम् । तत्रार्शोयन्त्रेण पञ्चाङ्गुलेनान्तःप्रविष्टेन स्थूलाग्रत्वाद्गुदक्षणनं न स्यात्, बस्तियन्त्रेण पुनस्तीक्ष्णाग्रेण चतुरङ्गुलेन सद्यःप्राणहरगुदमर्म संपीड्यते, अतस्तच्चिकित्सितं युक्तम् । ह्रस्वे यथोचितप्रमाणहीने । अणुस्रोतसि सूक्ष्मच्छिद्रे । क्लेश इति अणुस्रोतःप्रवाहणोत्पन्नकालातिक्रमेण । बस्तिश्च पूर्ववदिति संनिकृष्टकर्णिके यथा अपार्थको बस्तिस्तद्वदिति । ह्रस्वत्वाद्धेतोरत्रापि तथा; अत एव हेतोः प्रत्यागच्छन् व्यावृत्तन् बस्तिविघातजान् रोगान् मूत्राघातमूत्रकृच्छ्रादीन् कुर्यात् । चिकित्सितं चानुक्तमपि रोगापेक्षया मूत्राघातादिचिकित्सितम् । **जेज्जटाचार्यस्तु** ईदृशं व्याख्यानयति—पूर्ववद्बस्तिः पिच्छाबस्तिरित्यर्थः । दीर्घे महास्रोतसि च यन्त्रेऽत्यवपीडवन्नासामुखान्निर्गमनं, गलपीडादिचिकित्सितं च ज्ञेयम् ॥ ६–९ ॥—

प्रस्तीर्णे बहले चापि बस्तौ दुर्बद्धदोषवत् ॥ १० ॥
बस्तावल्पेऽल्पता वाऽपि द्रव्यस्याल्पा गुणा मताः ॥
दुर्बद्धे चाणुभिन्ने च विज्ञेयं भिन्ननेत्रवत् ॥ ११ ॥

नेत्रदोषं तत्साधनं चाभिधाय बस्तिदोषं तच्चिकित्सितं चाभिधातुमाह—प्रस्तीर्णे इत्यादि । अल्पे यथोचितप्रमाणहीने । बस्तेरल्पतया च द्रव्यस्याप्यल्पता, अत एव अल्पा गुणाः । भिन्ननेत्रवदिति भिन्ननेत्रेण तुल्यं, यथा भिन्ने नेत्रे बस्तेरवसेकः, तद्वद्दुर्बद्धे भिन्ने च बस्तावित्यर्थः ॥ १० ॥ ११ ॥

अतिप्रपीडितो बस्तिः प्रयात्यामाशयं ततः ॥
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते ॥ १२ ॥
तत्र तूर्णं गलापीडं कुर्याच्चाप्यवधूननम् ॥
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् १३
शनैः प्रपीडितो बस्तिः पक्वाधानं न गच्छति ॥
न च संपादयत्यर्थं तस्माद्युक्तं प्रपीडयेत् ॥ १४ ॥
भूयो भूयोऽवपीडेन वायुरन्तः प्रपीड्यते ॥
तेनाध्मानं रुजश्चोग्रा यथास्वं तत्र बस्तयः ॥ १५ ॥
कालातिक्रमणात् क्लेशो व्याधिश्चाभिप्रवर्धते ॥
तत्र व्याधिबलघ्नं तु भूयो बस्तिं निधापयेत् ॥ १६ ॥

बस्तिदोषानभिधाय पीडनदोषानभिधातुमाह—अतिप्रपीडित इत्यादि । प्रपद्यते निर्गच्छतीत्यर्थः । अवधूननं केशादिषूत्क्षिप्य चालनम् । सेकांश्च शीतलान् क्षीरेक्षुरसयष्टिमधुककषायधान्याम्लचुक्रादिशीतद्रव्यपरिषेकान् । शनैः प्रपीडितो मन्दपीडितः । अर्थं न संपादयति कार्यं न करोति । अन्तः 'उदरस्य' इति शेषः । तेनेति उदरान्तर्गतेन वायुना । तत्राध्मानं रुजश्च । यथास्वं बस्तय इति ये यस्यात्मीया बस्तयः प्रतीकारहेतुत्वेन । कालातिक्रमणादित्यादि । व्याधिश्चाभिप्रवर्धते इति चिरकालनेत्रावस्थानहेतुकगुदमार्गावरोधत्वेन प्रवृत्त्यभिमुखीभूतवातविघातेनानुलोमसाध्यो व्याधिः प्रवर्धत इत्यर्थः ॥ १२—१६ ॥

गुदोपदेहशोफौ तु स्नेहोऽपक्वः करोति हि ॥
तत्र संशोधनो बस्तिर्हितं चापि विरेचनम् ॥ १७ ॥
हीनमात्रावुभौ बस्ती नातिकार्यकरौ मतौ ॥
अतिमात्रौ तथाऽऽनाहक्लमातीसारकारकौ ॥ १८ ॥
मूर्च्छां दाहमतीसारं पित्तं चात्युष्णतीक्ष्णकौ ॥
मृदुशीतावुभौ वातविबन्धाध्मानकारकौ ॥ १९ ॥
तत्र हीनादिषु हितः प्रत्यनीकः क्रियाविधिः ॥
गुदबस्त्युपदेहं तु कुर्यात् सान्द्रो निरूहणः ॥ २० ॥
प्रवाहिकां वा जनयेत्तनुरल्पगुणावहः ।
तत्र सान्द्रे तनुं बस्तिं तनौ सान्द्रं च दापयेत् ॥ २१ ॥
स्निग्धोऽतिजाड्यकृद्रूक्षः स्तम्भाध्मानकृदुच्यते ॥
बस्तिं रूक्षमतिस्निग्धे स्निग्धं रूक्षे च दापयेत् ॥ २२ ॥

पीडनदोषानभिधाय द्रव्यदोषान्निर्दिशन्नाह—गुदोपदेह इत्यादि । उपदेह उपलेपः । 'हितं चापि विरेचनम्' इत्यत्र 'रूक्षं चापि विरेचनम्' इति **गयदासः** । हीनमात्रावित्यादि । उभौ बस्ती स्नेहबस्तिनिरूहबस्ती । प्रत्यनीक इति हीनमात्रेऽधिकमात्रोऽतिमात्रे हीनमात्रः, तीक्ष्णे मृदुः, मृदौ तीक्ष्णः,

१ 'चावनते तथा' इति पा० । २ 'निकृष्टकर्णिके' इति पा० । ३ 'निकृष्टकर्णिकेऽत्यासन्नकर्णिके' इति पा० । ४ 'चतुरङ्गुलेन' इति पा० । ५ 'अत्यल्पाग्रच्छिद्रे' इति पा० । ६ 'चैव भिन्ने' इति पा० ।

१ 'क्रामत्यामाशय इति पा० । २ 'छर्दिमतीसारं' इति पा० ।

उष्णे शीतः, शीते पुनरुष्णः । अतिजाड्यकृत् अतिशयेन क्लेदकारी ॥ १७—२२ ॥

अतिपीडितवद्दोषान् विद्धि चाप्यवशीर्षके ॥
उच्छीर्षके समुन्नाहं बस्तिः कुर्याच्च मेहनम् ॥२३॥
तत्रोत्तरो हितो बस्तिः सुस्निग्धस्य सुखावहः ॥
न्युब्जस्य बस्तिर्नाप्नोति पक्वाधानं विमार्गगः ॥ २४ ॥
हृद्गुदं बाधते चात्र वायुः कोष्ठमथापि च ॥
उत्तानस्यावृते मार्गे बस्तिर्नान्तः प्रपद्यते ॥ २५ ॥
नेत्रसंवेजनभ्रान्तो वायुश्चान्तः प्रकुप्यति ॥
देहे सङ्कुचिते दत्तः सक्थ्नोरप्युभयोस्तथा ॥ २६ ॥
न सम्यगनिलाविष्टो बस्तिः प्रत्येति देहिनः ॥
स्थितस्य बस्तिर्दत्तस्तु क्षिप्रमायात्यवाङ्मुखः ॥ २७ ॥
न चाशयं तर्पयति तस्मान्नार्थकरो हि सः ॥
नाप्नोति बस्तिर्दत्तस्तु कृत्स्नं पक्वाशयं पुनः ॥ २८ ॥
दक्षिणाश्रितपार्श्वस्य वामपार्श्वानुगो यतः ॥
न्युब्जादीनां प्रदानं च बस्तेर्नैव प्रशस्यते ॥ २९ ॥
पश्चादनिलकोपोऽत्र यथास्वं तत्र कारयेत् ॥

द्रव्यदोषानभिधाय शय्यादिदोषानभिधातुमाह—अतिपीडितवदित्यादि । विद्धि जानीहि । अतिप्रपीडितो बस्तिः प्रयात्यामार्शयमित्यादिवदित्यर्थः । उच्छीर्षके उच्छ्रितशिरस्के पुरुषे बस्तिर्दत्तः मेहनं मेढ्रं समुन्नाहं सम्यगुन्नाहो यत्र तत्तादृशमाध्मातं कुर्यादित्यर्थः । तस्यामापदि सुस्निग्धस्य पुरुषस्योत्तरो बस्तिः हितः सुखावह इति **गयी** । **जेज्जटाचार्य**स्तु "उच्छीर्षके समुन्नाहं कुर्यात् सस्नेहमेहनम् । तत्रोत्तरो हितो बस्तिः सुस्निग्धश्च सुखावहः"—इति पठित्वा व्याख्यानयति—सस्नेहमेहनं स्नेहसंसृष्टमूत्रप्रवर्तनं; तत्र प्रतीकार उत्तरो बस्तिरिति सुस्निग्धस्य शोधनो निरूह इति, न पुनरुत्तरबस्तिरिति । **वृद्धसुश्रुते** चायं पाठोऽन्यथा; तथा च—"उच्छीर्षके समुन्नाहो बस्तेः कृच्छ्राच्च मेहनम्"—इति । न्युब्जस्य पुरुषस्य विमार्गगो बस्तिः पक्वाधानं पक्वाशयं नाप्नोति । हृद्गुदं बाधते वायुः कोष्ठं च बाधते इत्यर्थः । उत्तानस्येत्यादि । नेत्रसंवेजनं नेत्रकम्पनं, तेन भ्रान्तो वायुरित्यर्थः । सक्थ्नोरूर्वोर्न प्रत्येति न प्रत्यागच्छति न निष्कासयतीत्यर्थः । अवाङ्मुखः अधोमुखः । दक्षिणाश्रितपार्श्वस्य पुरुषस्य बस्तिर्दत्तः सन् कृत्स्नं पक्वाशयं न प्राप्नोति । कुत इत्याह—यतः पक्वाशयो वामपार्श्वानुगो वामपार्श्वमनुगच्छति । उपसंहारव्याजेन निदानवर्जनं चिकित्सितमाह—न्युब्जादीनामित्यादि । अत्रैव दोषसाधनं निर्दिशन्नाह—पश्चादनिलकोप इत्यादि । हृदयपृष्ठगुदादिबाधासु तत्तद्व्याध्युपक्रमेण भेषजेनैव साधितेन बस्तिना साध्य इत्यर्थः ॥ २३—२९ ॥—

१ 'निःस्यन्दकारी' इति पा० । २ 'विधिं' इति पा० । ३ 'सुस्निग्धस्य' इति पा० । ४ 'हि सः' इति पा० । ५ 'यस्याप्यनिलकोपोऽत्र' इति पा० । ६ 'क्रामत्यामाशयं' इति पा० ।

व्यापदः स्नेहबस्तेस्तु वक्ष्यन्ते तच्चिकित्सिते ॥३०॥

एवं प्रणिधाननेत्रद्रव्यपीडनशय्यादोषजा वैद्यनिमित्ता एव व्यापदश्चतुश्चत्वारिंशतमभिधाय वैद्यातुरनिमित्ताः स्नेहबस्तिभवा वक्तुकामः प्राह—व्यापदः स्नेहबस्तेरित्यादि ॥ ३० ॥

अयोगाद्यास्तु वक्ष्यामि व्यापदः सचिकित्सिताः ॥
अनुष्णोऽल्पौषधो हीनो बस्तिर्नैति प्रयोजितः ॥३१॥
विष्टम्भाध्मानशूलैश्च तमयोगं प्रचक्षते ॥
तत्र तीक्ष्णो हितो बस्तिस्तीक्ष्णं चापि विरेचनम् ३२
सशेषान्नेऽथवा भुक्ते बहुदोषे च योजितः ॥
अत्याशितस्यातिबहुर्बस्तिर्मन्दोष्ण एव च ॥ ३३ ॥
अनुष्णलवणस्नेहो ह्यतिमात्रोऽथवा पुनः ॥
तथा बहुपुरीषं च क्षिप्रमाध्मापयेन्नरम् ॥ ३४ ॥
हृत्कटीपार्श्वपृष्ठेषु शूलं तत्रातिदारुणम् ॥
तत्र तीक्ष्णतरो बस्तिर्हितं चाप्यनुवासनम् ॥ ३५ ॥
अतितीक्ष्णोतिलवणो रूक्षो बस्तिः प्रयोजितः ॥
सपित्तं कोपयेद्वायुं कुर्याच्च परिकर्तिकाम् ॥ ३६ ॥
नाभिबस्तिगुदं तत्र छिनत्तीवातिदेहिनः ॥
पिच्छाबस्तिर्हितस्तस्य स्नेहश्च मधुरैः शृतः ॥ ३७ ॥
अत्यम्ललवणस्तीक्ष्णः परिस्रावाय कल्पते ॥
दौर्बल्यमङ्गसादश्च जायते तत्र देहिनः ॥ ३८ ॥
परिस्रवेत्ततः पित्तं दाहं सञ्जनयेद्गुदे ॥
पिच्छाबस्तिर्हितस्तत्र बस्तिः क्षीरघृतेन च ॥ ३९ ॥
प्रवाहिका भवेत्तीक्ष्णान्निरूहात् सानुवासनात् ॥
सदाहशूलं कृच्छ्रेण कफासृगुपवेश्यते ॥ ४० ॥
पिच्छाबस्तिर्हितस्तत्र पयसा चैव भोजनम् ॥
सर्पिर्मधुरकैः सिद्धं तैलं चाप्यनुवासनम् ॥ ४१ ॥
अतितीक्ष्णो निरूहो वा सवाते चानुवासनः ॥
हृदयस्योपसरणं कुरुते चाङ्गपीडनम् ॥ ४२ ॥
दोषैस्तत्र रुजस्तास्ता मदो मूर्च्छाऽङ्गगौरवम् ॥
सर्वदोषहरं बस्तिं शोधनं तत्र दापयेत् ॥ ४३ ॥
रूक्षस्य बहुवातस्य तथा दुःशायितस्य च ॥
बस्तिरङ्गग्रहं कुर्याद्रूक्षो मृद्वल्पभेषजः ॥ ४४ ॥
तत्राङ्गसादः प्रस्तम्भो जृम्भोद्वेष्टनवेपकाः ॥
पर्वभेदश्च तत्रेष्टाः स्वेदाभ्यञ्जनबस्तयः ॥ ४५ ॥
अत्युष्णतीक्ष्णोऽतिबहुर्दत्तोऽतिस्वेदितस्य च ॥
अल्पदोषस्य वा बस्तिरतियोगाय कल्पते ॥ ४६ ॥
विरेचनातियोगेन समानं तस्य लक्षणम् ॥
पिच्छाबस्तिप्रयोगश्च तत्र शीतः सुखावहः ॥ ४७ ॥
अतियोगात् परं यत्र जीवादानं विरिक्तवत् ॥
देयस्तत्र हितश्चाप्सु पिच्छाबस्तिः सशोणितः ४८
नवैता व्यापदो यास्तु निरूहं प्रत्युदाहृताः ॥
स्नेहबस्तिष्वपि हि ता विज्ञेयाः कुशलैरिह ॥ ४९ ॥

१ 'तच्चिकित्सितम्' इति पा० ।

**इत्युक्ता व्यापदः सर्वाः सलक्षणचिकित्सिताः ॥**
**भिषजा च तथा कार्यं यथैता न भवन्ति हि ॥५०॥**

अयोगादिव्यापदः सचिकित्सिता आह—अयोगेत्यादि । अल्पौषध इति अल्पानि औषधानि यत्र, एतेनाल्पौषधत्वाद्तैक्ष्ण्येन हीनवीर्यत्वमुक्तं, हीन इति समुदायस्याल्पमात्रत्वेन । नैति नागच्छति, बस्तिः विष्टम्भादिभिरुपलक्षितः । तीक्ष्णो हितो बस्तिरित्युपलक्षणं, तेन पूर्वोक्तगुणत्रयविपरीत उष्णो बहुलभेषजो यथोचितप्रमाणो हितः पूजित इत्यर्थः । सशेषान्ने इत्यादि । सशेषान्ने अन्नाजीर्णशेषे, भुक्ते च निरूहबस्तिः, तथा बहुदोषेऽनुष्णलवणस्नेहो निरूहबस्तिर्योजितो नरमाध्मापयेत्; नत्वनुवासनः, तस्य सान्न एव हितत्वात् । अत्यशितस्य स्नेहबस्तिस्तथा मात्राशितस्यातिबहुर्मन्दोष्णतायुक्तः स्नेहबस्तिराध्मानं जनयेत् । परिस्रावाय कल्पते इति परिस्रावोऽयं केवलपित्तजो न तु वमनविरेचनपरिस्राववत् कफपित्तसंभवः । तत्र पित्तरक्तभूयिष्ठायां सर्पिषा, वातरक्तभूयिष्ठायां तैलेनानुवासनम् । क्षीरेण भोजनं वातपित्तकफप्रत्यनीकं; कफसंसर्गे तु कफहरद्रव्यसंस्कृतक्षीरभोजनमिति ज्ञेयं, तन्त्रान्तरदर्शनात् । रुजस्तास्ताः तोदादयः, ओषचोषादयः, कण्ड्वादयश्च । सर्वदोषहरमिति सर्वदोषहरद्रव्यक्वाथं, गोमूत्रत्रिवृदादिकल्कं शोधनं बस्तिं; शोधनत्वेनोर्ध्वगतदोषमधो नयति, सर्वदोषहरत्वेन सर्वानेव दोषान् दुष्टाञ्छमयति । रूक्षोऽत्र वातप्रकृतिः । शीतः शीतोपचारश्च सुखावह इत्यर्थः । विरिक्तशब्देनात्र विरेकातियोगोत्पन्नं जीवादानम्; अतो विरेकातियोगोत्पन्नजीवादानवल्लिङ्गचिकित्सिताभ्यामेतद्बस्त्यतियोगोत्पन्नं जीवादानं ज्ञेयम् । तत्र विशेषचिकित्सितमाह—देय इत्यादि । सशोणित इति हेतुगर्भं विशेषणं, यतः पिच्छाबस्तिः सशोणितोऽतः शोणितापगमरूपजीवादाने देय इत्यर्थः ॥ ३१–५० ॥

**पक्षाद्विरेको वान्तस्य ततश्चापि निरूहणम् ॥**
**सद्यो निरूढोऽनुवास्यः सप्तरात्राद्विरेचितः ॥५१॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने**
**नेत्रबस्तिव्यापच्चिकित्सितं नाम**
**षट्त्रिंशोऽध्यायः ॥ ३६ ॥**

इदानीं पञ्चानां कर्मणां क्रमेण क्रियमाणानां यतो यतो यद्यावता कालेन करणीयं तत्तदुपदिशन्नाह—पक्षादित्यादि । सम्यग्योगेन वान्तस्य पुरुषस्य विरेचनं पक्षान्नार्वाङ्नापि परतः; तत्रार्वाक् क्रियमाणं पुरुषानलबलयोरबलत्वाद् व्यापदमावहति, अतिपरतः पुनः स्नेहस्वेदादिगुणोऽन्तरितः स्यात्; तस्मात् पक्षादेव वान्तो विरेचनीयः । तत्र प्रधानशुद्धिमपेक्ष्यान्नसंसर्गेण दिनानि षडतिक्रम्य मधुरादिरससंसर्गमाचरेत् । स्नेहपानेनापि दिनानि षडतिक्रमेत् । ततः स्वेदं समाचरन् लघूष्णं भुञ्जमानस्त्र्यहं स्थितश्चतुर्थेऽहनि विरेकं कुर्यात् । ततस्तस्माद्विरेकादन्नसंसर्गेण दिनानि षडतिक्रम्यानन्तरं मधुरादिरससंसर्गं समाचरन् सप्तरात्राद्विरेचित इति वाक्यादष्टमादिदिवसेष्वनुवासनानि यथादोषं विदध्यात् । ततः षोडशेऽह्नि स्नेहाभ्यक्तः स्वेदितश्चास्थापनं सेवेत । **गयदास**स्तु चरकाचार्याभिप्रायेण विरेचनादूर्ध्वं षडहं कृतान्नसंसर्गस्यावस्थाविशेषेण स्नेहपानमनुवासनं च द्वयमपि मन्यते । तथा च **चरकाचार्य**वचनम्—"संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेताप्यनुवासयेद्वा"—( च. सि. अ. १ ) इति । तत्र विरेचनादूर्ध्वमन्नसंसर्गेण दिनानि षट्, ततो मधुरादिरससंसर्गमाचरेत्, स्नेहपानेनापि दिनानि षडतिक्रामेत्, ततो दिनत्रयं लघूष्णं भुञ्जानश्चतुर्थेऽहनि स्नेहाभ्यक्तः स्वेदितश्चास्थापनं सेवेत । स्नेहपानपूर्वकस्यानुवासनपूर्वकस्य चास्थापनस्यावस्था **गयदासेन** दर्शिता; यथा—हीनविरिक्तस्यावशिष्टपरिपक्वामसंचयावृते वायौ स्नेहपानपूर्वकमास्थापनं कश्चिद्व्याध्यवस्थावशात् प्राक् स्नेहनविरेचितस्यास्थापनमिति । निरूढः पुरुषः सद्य एव तद्दिवसे एवानुवास्यः । एतेन दत्तनिरूहो यथोक्तं भोजयित्वाऽऽर्द्रपाणिरेवानुवास्यः । विरेचितस्तु सप्तरात्रात् परतोऽनुवास्यो नार्वाक् । उक्तं हि—"विरेचनात् सप्तरात्रे गते जातबलाय वै । कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः" ( चि. अ. ३७ ) इति । केचिदन्यादृशं व्याख्यानं कुर्वन्ति; तच्च **गयदासाचार्येण** बहुधा दूषितत्वादस्माभिरप्युपेक्षितम् ॥ ५१ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां
सुश्रुतव्याख्यायां चिकित्सास्थाने षट्-
त्रिंशत्तमोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशत्तमोऽध्यायः ।

**अथातोऽनुवासनोत्तरबस्तिचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

**विरेचनात् सप्तरात्रे गते जातबलाय वै ॥**
**कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः ॥ ३ ॥**

अनुवास्यः सप्तरात्राद्विरेचित इति यदुक्तं तद्बललाभे एव नान्यथेति दर्शयन्नाह—विरेचनादित्यादि । जातबलायेति जातबलस्यैवानुवासनं देयं, यत उत्पन्नबलस्यैवाग्निर्बलवाननुवासनहेतुः । तथा चोक्तं—"पश्चादग्निबलं ज्ञात्वा सम्यग्देयोऽनुवासनः" । 'कृताहाराय सायाह्ने' इति केचित् पठन्ति, 'कृताहाराय सततम्' इत्यन्ये । तत्र न कदाचिदप्यकृताहारायेति सततग्रहणार्थः ॥ १–३ ॥

**यथावयो निरूहाणां या मात्राः परिकीर्तिताः ॥**
**पादावकृष्टास्ताः कार्याः स्नेहबस्तिषु देहिनाम् ॥४॥**

१ अस्याग्रे 'अतिमात्रो वाऽनुष्णादिगुणयुक्तो निरूहबस्तिर्नरमाध्मापयेत् । बहुपुरीषस्य च द्विविधो बस्तिराध्मापयेत् ।' इत्यधिकं पठ्यते हस्तलिखितपुस्तके । २ 'ततः पक्षान्निरूहणम्' इति पा० ।

वैयोविशेषानुरूपमात्रामुपदिशन्नाह—यथावयो निरूहाणामित्यादि। वय इह सांवत्सरिकादीनां शरीरावस्थाविशेषः। पादापकृष्टाः चतुर्भागावशिष्टाः। चरकेऽप्युक्तं—"निरूहपादांशसमेन तैलेनाम्लानिलघ्नौषधसाधितेन" (च. सि. अ. ३) इति। तन्त्रान्तरेऽपि—"षट्पली तु भवेच्छ्रेष्ठा त्रिपली मध्यमा भवेत्। कनीयस्यर्धपलिका त्रिधा मात्राऽनुवासने"—इति। 'अर्धार्धकृष्टास्ताः कार्या' इति अन्ये पठन्ति, तत्रापि अर्धस्यार्धश्चतुर्थो भाग एवेति स एवार्थः ॥ ४ ॥

उत्सृष्टानिलविण्मूत्रे नरे बस्तिं विधापयेत् ॥
एतैर्हि विहतः स्नेहो नैवान्तः प्रतिपद्यते ॥ ५ ॥
स्नेहबस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ॥
स्नेहवीर्यं तथा दत्ते देहं चानुविसर्पति ॥ ६ ॥

बस्तेः पूर्वकर्म निर्दिशन्नाह—उत्सृष्टेत्यादि। यस्मादेतैः कारणैरनुत्सृष्टैरनिलविण्मूत्रैर्नेत्रद्वारावरकैरन्तर्विहतः अवरुद्धो दत्तः स्नेहो नैवान्तः प्रतिपद्यते नैवान्तः प्रविशतीत्यर्थः। 'एतैर्हि विहत' इत्यत्र 'अन्यथा विहत' इति केचित् पठन्ति, तत्रान्यथा अन्येन प्रकारेण, अनुत्सृष्टानिलविण्मूत्रत्वेनाविशुद्धस्य देहिन इत्यर्थः। अतो विण्मूत्रनिर्हरणे कृते स्नेहबस्तिर्विधीयते इति दर्शयन्नाह—स्नेहेत्यादि। तथा तेन प्रकारेण शुद्धे शरीरे स्नेहबस्तिः स्नेहवीर्यं दत्ते ददातीत्यर्थः। "स्नेहो दोषैरपिहितः स्रोतःसु न विसर्पति"—इति केचिदर्धं पठन्ति। अपिहित आच्छादित इत्यर्थः ॥ ५ ॥ ६ ॥

अत ऊर्ध्वं प्रवक्ष्यामि तैलानीह यथाक्रमम् ॥
पानान्वासननस्येषु यानि हन्युर्गदान् बहून् ॥ ७ ॥
शटीपुष्करकृष्णाह्वामदनामरदारुभिः ॥
शताह्वाकुष्ठयष्ट्याह्ववचाबिल्वहुताशनैः ॥ ८ ॥
सुपिष्टैर्द्विगुणक्षीरं तैलं तोयचतुर्गुणम् ॥
पक्त्वा बस्तौ विधातव्यं मूढवातानुलोमनम् ॥ ९ ॥
अर्शांसि ग्रहणीदोषमानाहं विषमज्वरम् ॥
कट्यूरुपृष्ठकोष्ठस्थान् वातरोगांश्च नाशयेत् ॥ १० ॥
वचापुष्करकुष्ठैलामदनामरसिन्धुजैः ॥
काकोलीद्वययष्ट्याह्वमेदायुग्मनराधिपैः ॥ ११ ॥
पाठाजीवकजीवन्तीभार्गीचन्दनकट्फलैः ॥
सरलागुरुबिल्वाम्बुवाजिगन्धाग्निवृद्धिभिः ॥ १२ ॥
विडङ्गारग्वधश्यामात्रिवृन्मागधिकर्धिभिः ॥
पिष्टैस्तैलं पचेत् क्षीरपञ्चमूलरसान्वितम् ॥ १३ ॥
गुल्मानाहाग्निषङ्गार्शोग्रहणीमूत्रसङ्गिनाम् ॥
अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिणाम् ॥ १४ ॥

केचिदत्र वृद्धसुश्रुताध्यायिन आमस्नेहस्य गुदोपदेहेनापि व्यापत्करत्वमालोक्य पक्वतैलानि प्रतिपादयितुकामाः प्रतिज्ञां कुर्वन्ति—अत ऊर्ध्वमित्यादि। यथाक्रममिति वातादिदोषक्रमेणेत्यर्थः। यत्र शट्यादौ पौष्करं कुष्ठं च यत्पठ्यते तत्र पौष्करं मूलं, तद्विटपशाखाश्च कुष्ठमिति ज्ञेयम्। अमरदारुः देवदारुः। सिन्धुजं सैन्धवम्। नराधिपः कृतमालकः। सरतीति सरला त्रिवृत्, विरेचनीयत्वात्। श्यामा वृद्धदारुकः। पञ्चमूलं बिल्वादिपञ्चमूलं, तस्य रसः क्वाथः। अत्र तैले नराधिपारग्वधपाठात् सरलात्रिवृत्पाठाच्च एतयोर्द्विगुणा मात्रा देया। उक्तं च—"घृते तैले च योगे च यद् द्रव्यं पुनरुच्यते। तद्दातव्यमिहाचार्यैर्भागतो द्विगुणं मतम्"—इति ॥ ७–१४ ॥

चित्रकातिविषापाठादन्तीबिल्ववचामिषैः ॥
सरलांशुमतीरास्नानीलिनीचतुरङ्गुलैः ॥ १५ ॥
चव्याजमोदकाकोलीमेदायुग्मसुरद्रुमैः ॥
जीवकर्षभवर्षाभूवस्तगन्धाशताह्वयैः ॥ १६ ॥
रेण्वश्वगन्धामञ्जिष्ठाशटीपुष्करतस्करैः ॥
सक्षीरं विपचेत्तैलं मारुतामयनाशनम् ॥ १७ ॥
गृध्रसीखञ्जकुब्जाढ्यमूत्रोदावर्तरोगिणाम् ॥
शस्यतेऽल्पबलाग्नीनां बस्तावाशु नियोजितम् ॥ १८ ॥

आमिषं गुग्गुलुः। सुरद्रुमो देवदारुः। तस्करः चोरकः ॥ १५—१८ ॥

भूतिकैरण्डवर्षाभूरास्नावृषकरोहिषैः ॥
दशमूलसहाभार्गीषड्ग्रन्थामरदारुभिः ॥ १९ ॥
बलानागबलामूर्वावाजिगन्धामृताह्वयैः ॥
सहाचरवरीविश्वाकाकनासाविदारिभिः ॥ २० ॥
यवमाषातसीकोलकुलत्थैः कथितैः शृतम् ॥
जीवनीयप्रतीवापं तैलं क्षीरचतुर्गुणम् ॥ २१ ॥
जङ्घोरुत्रिकपार्श्वांसबाहुमन्याशिरःस्थितान् ॥
हन्याद्वातविकारांस्तु बस्तियोगैर्निषेवितम् ॥ २२ ॥
जीवन्त्यतिबलामेदाकाकोलीद्वयजीवकैः ॥
ऋषभातिविषाकृष्णाकाकनासावचामरैः ॥ २३ ॥
रास्नामदनयष्ट्याह्वसरलाभीरुचन्दनैः ॥
स्वयङ्गुप्ताशटीशृङ्गीकलसीसारिवाह्वयैः ॥ २४ ॥
पिष्टैस्तैलघृतं पक्वं क्षीरेणाष्टगुणेन तु ॥
तच्चानुवासने देयं शुक्राग्निबलवर्धनम् ॥ २५ ॥
बृंहणं वातपित्तघ्नं गुल्मानाहहरं परम् ॥
नस्ये पाने च संयुक्तमूर्ध्वजत्रुगदापहम् ॥ २६ ॥

भूतिकं कत्तृणं गन्धतृणापरपर्यायम्। गुडूची हरीतकी चेति अमृताह्वयम्। सहाचरः सैरीयकः, वरी शतावरी, विश्वा शुण्ठी, काकनासा वायसफला ॥ १९–२६ ॥

मधुकोशीरकाश्मर्यकटुकोत्पलचन्दनैः ॥
श्यामापद्मकजीमूतशक्राह्वातिविषाम्बुभिः ॥ २७ ॥
तैलपादं पचेत् सर्पिः पयसाऽष्टगुणेन च ॥
न्यग्रोधादिगणक्वाथयुक्तं बस्तिषु योजितम् ॥ २८ ॥

१ 'तस्यानुवासनस्य सर्ववयोविशेषानुग्राहिणीं मात्रामुपदिशन्नाह'—इति पा०। २ 'विण्मूत्रनिर्हरणसाद्गुण्येन कृतशुद्धेरेव' इति पा०। ३ 'स्रोतःस्वन्तर्न सर्पति' इति पा०।

१ 'कण्टसेलुयाकः' इति पा०।

दाहासृग्दरवीसर्पवातशोणितविद्रधीन् ॥
पित्तरक्तज्वराद्यांश्च हन्यात् पित्तकृतान् गदान् २९

श्यामा प्रियङ्गुः । जीमूतो मुस्तकः । तैलस्य पादश्चतुर्थांशो यस्मिन् सर्पिषि तत् तैलपादम् ॥ २७—२९ ॥

मृणालोत्पलशालूकसारिवाद्वयकेशरैः ॥
चन्दनद्वयभूनिम्बपद्मबीजकसेरुकैः ॥ ३० ॥
पटोलकटुकारक्तागुन्द्रापर्पटवासकैः ॥
पिष्टैस्तैलघृतं[1] पक्वं तृणमूलरसेन च ॥ ३१ ॥
क्षीरद्विगुणसंयुक्तं वस्तिकर्मणि योजितम् ॥
नस्येऽभ्यञ्जनपाने वा हन्यात् पित्तगदान् बहून् ३२

रक्ता मञ्जिष्ठा, गुन्द्रा पटेरकभेदः । तृणमूलं कुशकाशादि-तृणपञ्चमूलम् ॥ ३०—३२ ॥

त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः ॥
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥ ३३ ॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः ॥
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम् ॥ ३४ ॥
पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम् ॥
स्थूलतालस्यकण्ड्वादीन् जयेत्कफकृतान् गदान् ३५
पाठाजमोदाशार्ङ्गेष्टापिप्पलीद्वयनागरैः ॥
सरलागुरुकालीयभार्गीचव्यामरद्रुमैः ॥ ३६ ॥
मरिचैलाभयाकट्वीशटीग्रन्थिककट्फलैः ॥
तैलमेरण्डतैलं वा पक्वमेभिः समायुतम्[2] ॥ ३७ ॥
वल्लीकण्टकमूलाभ्यां क्वाथेन द्विगुणेन च ॥
हन्यादन्वासनैर्दत्तं सर्वान् कफकृतान् गदान् ॥३८॥
विडङ्गोदीच्यसिन्धूत्थशटीपुष्करचित्रकैः ॥
कट्फलातिविषाभार्गीवचाकुष्ठसुराह्वयैः ॥ ३९ ॥
मेदामदनयष्ट्याह्वश्यामानिचुलनागरैः ॥
शताह्वानीलिनीरास्नाकलसीवृषरेणुभिः ॥ ४० ॥
विल्वाजमोदकृष्णाह्वादन्तीचव्यनराधिपैः ॥
तैलमेरण्डतैलं वा मुष्ककादिरसाप्लुतम् ॥ ४१ ॥
प्लीहोदावर्तवातासृग्गुल्मानाहकफामयान् ॥
प्रमेहशर्करार्शांसि हन्यादाश्वनुवासनैः ॥ ४२ ॥

इन्द्रसुरा इन्द्रवारुणी । शार्ङ्गेष्टा भुंभुरुह्वाको वेष्टितफलः काकमाच्यनुकारः । कट्वी कटुका । विदार्यादिकं पञ्चमूलं वल्लीसंज्ञकम् । करमर्दादिकं तु कण्टकसंज्ञं पञ्चमूलम् । श्यामा वृद्धदारुकः । निचुलो जलवेतसः । रेणुः पर्पटकः । मुष्कका-दिरसेन "मुष्ककपलाशधव-" ( सू. अ. ३८ ) इत्यादिगणस्य रसेन क्वाथेन चतुर्गुणेन, प्लुतं मिश्रितं तिलतैलमेरण्डतैलं वेति तैलद्वयं कल्प्यते । तत्र शट्यादिवचादिचित्रकादिभूतीकादि-तैलानि प्रायशो वातरोगेषु, जीवन्त्यादिमधुकादिमृणालादि-तैलानि पित्तरक्तरोगार्दितेषु, त्रिफलादिपाठादितैलद्वयं कफ-प्लुतेषु, विडङ्गादितैलं वाते कफभूयिष्ठे, संसर्गसंनिपातेषु पुनरे-तान्येव यथायथमभ्यूह्य योज्यानीति ज्ञेयम् । एतानि शट्यादि-तैलानि सामान्यस्नेहपाकपरिभाषया साधनीयानि ॥ ३३–४२ ॥

अशुद्धमपि वातेन केवलेनातिपीडितम् ॥
अहोरात्रस्य कालेषु सर्वेष्वेवानुवासयेत् ॥ ४३ ॥

पूर्वं विशुद्धदेहस्य स्नेहवस्तिं प्रदर्श्य क्वचिदशुद्धस्यापि दर्शयन्नाह—अशुद्धमित्यादि । केवलेन धातुक्षयहेतुना । रिक्ते हि शरीरे प्रायेण विवृतस्रोतोमुखमेव शरीरं, तत्र शुद्ध्या पुनरतिधातुक्षयेणातितरामेव वातरोगः स्यात्, तेनाशुद्धेऽपि तत्र स्नेहवस्तिरिति । अहोरात्रस्य कालेषु पूर्वाह्णादिषु, 'जीर्णान्नं भोजयित्वाऽनुवासयेत्' इति वक्ष्यमाणेन पूरणीयम् ॥ ४३ ॥

रूक्षस्य बहुवातस्य द्वौ त्रीनप्यनुवासनान् ॥
दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ॥४४॥

रूक्षस्य वाताधिकस्य वातवेगविधारणाय प्रागेव स्नेहवस्तिं दत्त्वा पश्चाच्छोधनो वस्तिर्देय इति दर्शयन्नाह—रूक्षस्येत्यादि ॥ ४४ ॥

अस्निग्धमपि वातेन केवलेनातिपीडितम् ॥
स्नेहप्रगाढैर्मतिमान्निरूहैः समुपाचरेत् ॥ ४५ ॥

किञ्चिदस्निग्धोऽपि यथाऽऽस्थापनविशेषेणास्थापनीयस्तथा दर्शयन्नाह—अस्निग्धमपीत्यादि ।—अस्निग्धं ईषत्स्निग्धं, नञ् ईषदर्थे, अनुदरा कन्येति यथा । स्नेहप्रगाढैः स्नेहबहुलैः । एतेन प्राक् स्नेहविधिविरहिते स्निग्धमास्थापनं विगम्यते ॥४५॥

अथ सम्यङ्निरूढं तु वातादिष्वनुवासयेत् ॥
विल्वयष्ट्याह्वमदनफलतैलैर्यथाक्रमम् ॥ ४६ ॥

निरूढस्य पश्चात्कर्म निर्दिशन्नाह—अथेत्यादि । विल्वमूल-मधुयष्टीमदनफलक्वाथसिद्धैस्तैलैः; केचित्तु विल्वमूलादीनां कल्कैरिति वदन्ति; अन्ये तु विल्वतैलं—"शताह्वाफलविल्वा-ख्यैस्तैलं सिद्धं समीरणे"—इति तन्त्रान्तरोक्तं विल्वादिपञ्च-मूलेन वा सिद्धं तैलं विल्वतैलम् । यष्ट्याह्वतैलं जीवनीयं, तच्च तन्त्रान्तरे 'दशमूलीबलारास्ना-' इत्यादिपाठेनोक्तम्; अत्रापि तदेव भूतीकादिद्रव्यजीवनीययुक्तमभिहितं; फलविल्वतिवृ-त्कृष्णारास्नाभूनिम्बदारुभिः सिद्धं तैलं फलतैलं, केचित्तु मदन-फलैरण्डतैलं फलतैलमित्याहुः ॥ ४६ ॥

रात्रौ वस्तिं न दद्यात्तु दोषोत्क्लेशो हि रात्रिजः ॥
स्नेहवीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरम् ॥ ४७ ॥

रात्रौ वस्तिदाननिषेधमाह—रात्रावित्यादि । दोषोत्क्लेश इति यस्माद्रात्रावाहारविदाहेन कालशैत्यात् स्रोतोमुखसंवृतत्वेन च दोषधातुमलेषु विक्लेदनलक्षण उत्क्लेशो भवति । अन्यत्राप्यु-क्तम्—"अविशुद्धे तु हृदये निशि क्लिन्नेषु धातुषु । विदग्धेऽन्नरसे स्रोतःसूपलिप्तेषु देहिनाम् ॥ व्यापारेभ्यो निवृत्तानां दोषोत्क्लेशो भवेदिति" ॥ ४७ ॥

[1] 'तैलमिदं' इति पा० । [2] 'समैर्युतम्' इति पा० ।

**अह्नि स्थानस्थिते दोषे वह्नौ चान्नरसान्विते ॥**
**स्फुटस्रोतोमुखे देहे स्नेहौजः परिसर्पति ॥ ४८ ॥**

दिवा बस्तिप्रदानगुणं सकारणं निर्दिशन्नाह—अह्नीत्यादि । अह्नि दिवा । विवृतस्रोतोमुखे शरीरे, तथा स्थानस्थितेषु दोषेषु, तथा निःशेषपरिपक्वस्यान्नस्य रसेन वीर्येणाभिसंवर्धितेनोपचिते पक्तुं समर्थे च वह्नौ, स्नेहौजः स्नेहवीर्यं, शरीरं परिसर्पति अनुक्रामति ॥ ४८ ॥

**पित्तेऽधिके कफे क्षीणे रूक्षे वातरुगर्दिते ॥**
**नरे रात्रौ तु दातव्यं काले चोष्णेऽनुवासनम् ॥४९॥**
**उष्णे पित्ताधिके वाऽपि दिवा दाहादयो गदाः ॥**
**संभवन्ति यतस्तस्मात् प्रदोषे योजयेद्भिषक् ॥ ५० ॥**

रात्रावपि प्रतिप्रसवमुद्दिशन्नाह—पित्ते इत्यादि । रात्रिशब्दोऽत्र प्रथमप्रहरवाचकः, प्रदोषे योजयेद्भिषगिति वक्ष्यमाणवचनात् । कुतः पुनरुष्णकाले पित्तेऽधिके वा दिवा न देयमित्याह—उष्ण इत्यादि । प्रदोषशब्दात् सन्ध्यापरनिशानिवृत्तिः ॥ ४९ ॥ ५० ॥

**शीते वसन्ते च दिवा ग्रीष्मप्रावृड्घनात्यये ।**
**स्नेहो दिनान्ते पानोक्तान् दोषान् परिजिहीर्षता ५१**

इदानीमह्नि स्थानस्थिते दोष इत्यादिवाक्यैर्युक्तिप्राप्तं कालनियमं प्रकटयन्नाह—शीत इत्यादि । परिजिहीर्षता परिहर्तुमिच्छता ॥ ५१ ॥

**अहोरात्रस्य कालेषु सर्वेष्वेवानिलाधिकम् ॥**
**तीव्रायां रुजि जीर्णान्नं भोजयित्वाऽनुवासयेत्॥५२॥**

विशिष्टावस्थायामस्यापवादमाह—अहोरात्रस्येत्यादि । कालेषु सर्वेष्विति 'तत्तत्कालविरुद्धकृत्रिमगुणोपधानं कृत्वैव' इति शेषः । प्रागशुद्धस्य केवलवातपीडितस्य सर्वेष्वप्यहोरात्रावयवेष्वनुवासनमभिहितम्, इह तु शुद्धस्येति न पौनरुक्त्यम् ॥५२॥

**न चाभुक्तवतः स्नेहः प्रणिधेयः कथञ्चन ॥**
**शुद्धत्वाच्छून्यकोष्ठस्य स्नेह ऊर्ध्वं समुत्पतेत् ॥ ५३ ॥**

अभुक्तवतः प्रतिषेधमाह—न चेत्यादि । स्नेह ऊर्ध्वं समुत्पतेत् सम्यगूर्ध्वं गच्छेत् । ततश्चातिपीडितवद् व्यापत् स्यात् । शुद्धत्वादित्यत्र सूक्ष्मत्वादिति पठित्वा **गयदासः** सूक्ष्ममार्गानुसरणशीलत्वात्तस्येति व्याख्यानयति ॥ ५३ ॥

**सदाऽनुवासयेच्चापि भोजयित्वाऽऽर्द्रपाणिनम् ॥**
**ज्वरं विदग्धभुक्तस्य कुर्यात् स्नेहः प्रयोजितः ॥ ५४ ॥**
**न चातिस्निग्धमशनं भोजयित्वाऽनुवासयेत् ॥**
**मदं मूर्च्छां च जनयेद् द्विधा स्नेहः प्रयोजितः ॥५५॥**
**रूक्षं भुक्तवतो ह्यन्नं बलं वर्णं च हापयेत् ॥**
**युक्तस्नेहमतो जन्तुं भोजयित्वाऽनुवासयेत् ॥ ५६ ॥**

१ '°नान्विते' इति पा० । २ 'ततस्त्वेनं' इति पा० । ३ 'अनुवासयेदिति 'कृत्रिमगुणोपपानं कृत्वा' इति वाक्यशेषः इति पा० ।

**यूषक्षीररसैस्तस्माद्यथाव्याधि समीक्ष्य वा ॥**
**यथोचितात् पादहीनं भोजयित्वाऽनुवासयेत्॥५७॥**

भोजनोत्तरकालमेवानुवासनमविलम्बितमाह—सदेत्यादि । भोजनाद्विलम्बितदाने दोषं दर्शयन्नाह—ज्वरमित्यादि । कीदृशमन्नं भुक्तवन्तमनुवासयेत्तदाह—न चेत्यादि । हापयेदित्यत्र स्नेहः प्रयोजित इति संबध्यते । युक्तस्नेहम् अल्पस्नेहम् । यथाव्याधीति रोगानतिक्रमेण, रोगानुरूपमिति यावत् । अत्रैवानुक्तमप्यवेक्षमाण आह—समीक्ष्य वेति ।—सम्यगीक्षित्वा 'सात्म्यं दोषं च' इति शेषः । अत्र यूषो मुद्गयूषः, स च कृतो ग्राह्यः; क्षीरं गव्यं, रसो मांसरसः, तैर्यथासंख्यं कफपित्तवातप्रत्यनीकैर्भोजयित्वा, यथोचितात् पादहीनमिति प्राक्संशुद्धस्य कृतसंसर्जनस्य उचिताद्भक्तात् पादहीनमुत्तममध्यममन्दाग्निविशेषेण पादेन पादाभ्यां पादैर्वा हीनमिति ज्ञेयं, "अर्धहीनं त्रिभागं वा भोजयित्वाऽनुवासयेत्" इति मुनिना प्रोक्तत्वात् ॥ ५४–५७ ॥

**अथानुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः ॥**
**भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः ॥ ५८ ॥**
**विसृज्य च शकृन्मूत्रं योजयेत् स्नेहबस्तिना ॥**
**प्रणिधानविधानं तु निरूहे संप्रवक्ष्यते ॥ ५९ ॥**

अनुवासनविधिं दर्शयन्नाह—अथानुवास्यमित्यादि ॥ ५८ ॥ ॥ ५९ ॥

**ततः प्रणिहितस्नेह उत्तानो वाक्शतं भवेत् ॥**
**प्रसारितैः सर्वगात्रैस्तथा वीर्यं विसर्पति ॥ ६० ॥**
**ताडयेत्तलयोरेनं त्रींस्त्रीन् वाराञ्छनैः शनैः ॥**
**स्फिचोश्चैनं ततः शय्यां त्रीन् वारानुत्क्षिपेत्ततः ॥**
**एवं प्रणिहिते बस्तौ मन्दायासोऽथ मन्दवाक् ॥**
**स्वास्तीर्णे शयने काममासीताचारिके रतः ॥ ६२ ॥**

प्रणिहितस्नेहस्य पश्चात्कर्म निर्दिशन्नाह—तत इत्यादि । आतुरस्य करणीयमभिधाय वैद्यस्य करणीयं निर्दिशन्नाह—ताडयेदित्यादि । तलयोः हस्तपादतलयोः, शनैः शनैस्त्रीन् त्रीन् वारान् हन्यात् स्नेहशीघ्रागमननिषेधार्थं स्फिचोश्चैनमिति ताडयेदिति संबन्धः । स्फिचोश्चेति चकारो भिन्नक्रमे, तेन ताडयेदित्यत्र द्रष्टव्यः । अतस्तलयोर्गृहीतत्वात् कूर्परे जानुनी चोत्क्षिपेदित्यनुक्तो वृद्धवैद्यव्यवहारः शुद्धो भवति । शय्यामुत्क्षिपेदिति काष्ठफलकादिकृतां सहातुरेणोर्ध्वं नयेदित्यर्थः, 'शय्यास्थमातुरं स्फिग्देशे' इत्यन्ये । आसीताचारिके रत इति क्रोधादीन् वर्जयेदित्यर्थः ॥ ६०–६२ ॥

**स तु सैन्धवचूर्णेन शताह्वेन च योजितः ॥**
**देयः सुखोष्णश्च तथा निरेति सहसा सुखम् ॥६३॥**
**यस्यानुवासनो दत्तः सकृदन्वक्षमाव्रजेत् ॥**
**अत्यौष्ण्याद‌तितैक्ष्ण्याद्वा वायुना वा प्रपीडितः ६४**

१ 'सिद्धो भवति इति पा० । २ 'शतपुष्पासमन्वितः' इति पा० ।

**सवातोऽधिकमात्रो वा गुरुत्वाद्वा सभेषजः ॥**
**तस्यान्योऽल्पतरो देयो न हि स्निह्यत्यतिष्ठति ॥ ६५ ॥**
**विष्टब्धानिलविण्मूत्रः स्नेहहीनेऽनुवास॑ने ॥**
**दाहक्लमप्रवाहार्तिकरश्चात्यनुवासनः ॥ ६६ ॥**

सर्वस्नेहवस्तिद्रव्यपूर्वकर्म निर्दिशन्नाह—स इत्यादि । स स्नेहः, तु पुनः, पक्वोऽपि सैन्धवशतपुष्पासमन्वितो देयः । मध्यमवयस्कमाश्रित्य चूर्णस्य मात्रामाह—"चूर्णमाषः पले स्नेहे सिन्धुजन्म शताह्वयोः"—इति । तस्यानुवासनस्नेहस्य प्रणिधानमात्रप्रत्यागत्याऽस्य निदानपरिहारार्थं हेतुं पुनः करणीयं च दर्शयन्नाह—यस्येत्यादि । सकृत् एकवारम् । अक्षस्य यन्त्रस्यानुपश्चादन्वक्षम् । आव्रजेत् आगच्छेत् । कुतः ? अत्यौष्ण्यात् उष्णगुणातिरेकात् । अतितैक्ष्ण्यात् अतितीक्ष्णैः संस्कारकद्रव्यैराहितात् । अनुच्छ्वासस्य बन्धनात् वायुना प्रपीडितः सवातो बस्तिः स्यात्; अतिमात्रोऽतिभेषजश्च गुरुत्वात् । तस्यान्योऽल्पतर इति अन्योऽत्यौष्ण्यादिगुणविपरीतः, अल्पतरः प्राचीनमात्रातः, प्रथमस्नेहेनैव किंचित्स्निग्धत्वात् । कुतः पुनरपि देय इत्याह—न हि स्निह्यत्यतिष्ठतीति; हि यतोऽतिष्ठति स्नेहे न स्निह्यति नरः । स्नेहहीनेऽनुवासने विष्टब्धानिलविण्मूत्रो 'भवति' इति शेषः । हीन इति हीनगुणमाने इत्यर्थः । दाहक्लमप्रवाहार्तिकरश्चेति चकाराद्दीनानुवासितविष्टब्धानिलविण्मूत्रलिङ्गविपरीतातिसृष्टानिलविण्मूत्रार्तिकरश्चेति समुच्चिनोति । प्रवाहस्थाने पिपासेति केचित् पठन्ति ॥ ६३—६६ ॥

**सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु ॥**
**ओषचोषौ विना शीघ्रं स सम्यगनुवासितः ॥ ६७ ॥**
**जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः ॥**
**लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि ॥ ६८ ॥**
**प्रातरुष्णोदकं दे॑यं धान्यनागरसाधितम् ॥**
**तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते ॥ ६९ ॥**

यादृशः स्नेहः सम्यगनुवासितस्तमाह—सानिल इत्यादि । सपुरीषश्चेति चकारेण समूत्रश्चेत्यनुक्तं समुच्चीयते । प्रत्येति प्रत्यागच्छति । ओष ईषद्दाहः । चोष आकृष्यमाणस्येव दाहप्रकारः । **गयी** तु—ओषचोषौ विनेति दाहपिपासे विनेत्यर्थं इत्याह । शीघ्रमिति त्रिचतुरादियामात् । अपरेद्युराहारं नियमयन्नाह—जीर्णान्नमित्यादि । जीर्णान्नं परिणताहारं, सायाह्नग्रहणं पूर्वाह्णभोजननिषेधार्थम् । लघ्वन्नमिति मात्रालघुं द्रव्यलघुं च; कामं दीप्ताग्निस्त्विति दीप्ताग्निश्चेन्नरो भवति तदा कामं यथेष्टं लघ्वेव भोजयेत् ॥ ६७—६९ ॥

**स्नेहवस्तिक्रमेष्वेवं विधिमाहुर्मनीषिणः ॥**

इदानीं शल्यतन्त्रस्य कर्ता सुश्रुताचार्यः कायचिकित्साप्रधानस्य बस्तेरुक्तविधौ कायचिकित्सितमनुमतमिति दर्शयन्नाह—स्नेहेत्यादि । मनीषिणः स्नेहवस्तिक्रमविदः कायचिकित्सका इत्यर्थः ॥—

**अनेन विधिना षड् वा सप्त वाऽष्टौ नवैव वा ॥ ७० ॥**
**विधेया बस्तयस्तेषामन्तरा तु निरूहणम् ॥**

तमेव क्रमं दीयमानाशेषवस्तिषूपदिशन्नाह—अनेनेत्यादि । षडित्यादिसंख्याविकल्पा वक्ष्यमाणस्नेहादिधात्वन्तरगतदोषापेक्षया । तत्र दीयमानेषु स्नेहवस्तिषु तृतीये चतुर्थे पञ्चमे वा स्नेहेऽभ्यायपेक्षया स्नेहस्योपरतिं कृत्वा ( स्नेहखेदावधिकृत्य ) संसर्जनविधानेनोपबृंहितबलाय अन्तरा निरूहणं दद्यात् दोषसञ्चयसंशोधनाय । तथा च **चरकः**—"त्रीन् पञ्च वारांश्चतुरोऽथ षड्वा वाताधिकानामनुवासनीयान् । स्नेहान् प्रदत्त्वाऽऽशु भिषग् विदध्यात् स्रोतोविशुद्ध्यर्थमतो निरूहान्" ( च. सि. अ. १ ) इति ॥ ७० ॥—

**दत्तस्तु प्रथमो बस्तिः स्नेहयेद्वस्तिवङ्क्षणौ ॥ ७१ ॥**
**सम्यग्दत्तो द्वितीयस्तु मूर्धस्थमनिलं जयेत् ॥**
**जनयेद्बलवर्णौ च तृतीयस्तु प्रयोजितः ॥ ७२ ॥**
**रसं चतुर्थो रक्तं तु पञ्चमः स्नेहयेत्तथा ॥**
**षष्ठस्तु स्नेहयेन्मांसं मेदः सप्तम एव च ॥ ७३ ॥**
**अष्टमो नवमश्चास्थि मज्जानं च यथाक्रमम् ॥**
**एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत् ७४**

इदानीं स्नेहबस्तेः प्रथमादिदानेन कार्यं निर्दिशन्नाह—दत्त इत्यादि । बस्तिवङ्क्षणावित्युपलक्षणमधःकायस्य । मूर्धस्थमनिलं जयेदिति मूर्धस्थमूर्ध्वकायस्थं, **जैज्जटाचार्यस्तु** आदिपदलोपाद् बस्तिमूर्धस्थमनिलं जयेदिति व्याख्यानयति । एवमनेन क्रमेण । शुक्रगतान् दोषान् व्याधिसमुद्देशीयोक्तान् क्लैब्याप्रहर्षजनकान् । द्विगुणः स्नेहबस्तिरष्टादशसंख्यः । साधु सम्यग्दत्तः साधयेदिति । बस्त्यादिदेशरसादिधातुस्नेहनमाश्रित्य दत्तस्नेहबस्तेः प्रथमादिदानमभिहितम् । दोषसमाश्रितस्नेहदानं तन्त्रान्तराज्ज्ञेयम् । यथा—"एकं त्रीन् वा बलासे तु स्नेहबस्तीन् प्रकल्पयेत् । पञ्च वा सप्त वा पित्ते नवैकादश वाऽनिले" ( वा. सू. अ. १९ ) इति ॥ ७१—७४ ॥

**अष्टादशाष्टादशकान् बस्तीनां यो निषेवते ॥**
**यथोक्तेन विधानेन परिहारक्रमेण च ॥ ७५ ॥**
**स कुञ्जरबलोऽश्वस्य जवैस्तुल्योऽमरप्रभः ॥**
**वीतपाप्मा श्रुतधरः सहस्रायुर्नरो भवेत् ॥ ७६ ॥**

एवमेतैरष्टादशभिः स्नेहबस्तिभिर्धातुगतदोषहरणमभिधाय पुनः पुनरभ्यस्तैरेतैरेव विशिष्टं रसायनफलं दर्शयन्नाह—अष्टादशेत्यादि । यथोक्तेनेति इह चानन्तरातिक्रान्तेन । परिहारक्रमेणेति आतुरोपद्रवीये वक्ष्यमाणेन । कुञ्जरबल इति उपचयशक्तिलक्षणबलयुक्तः । अश्वस्य जवैस्तुल्य इति गज इवोपचितधातुरपि क्रियाविशेषप्रभावात्तुरङ्गवत्तरस्वी । अमरवत् प्रकर्षेण भातीति अमरप्रभः अत्यद्भुतवर्णाद्युपेत इत्यर्थः । वीतपाप्मा

१ 'स्नेहहीनोऽनुवासनः' इति पा० । २ 'प्रतिकरणीयं' इति पा० । ३ 'पेयं' इति पा० ।

१ 'स्नेहखेदावधिकृत्य' इति न पठ्यते क्वचित्पुस्तके ।

क्रियाविशेषप्रभावादेव गतप्राक्तनजन्मकृतसकलकल्मषः । श्रुतधर इति चित्तस्य शक्त्युत्कर्षयुक्तः । सहस्रायुरिति शरीरेन्द्रियसत्त्वात्मसंयोगोत्कर्षः । यद्यप्यत्र स्नेहबस्तीनामष्टादशकम्, अन्तरा तु निरूहणमिति पूर्ववाक्यादनियतनिरूहान्वितोऽभिहितस्तथाऽपि तन्त्रान्तरदर्शनान्नियतद्वादशयापनाख्यनिरूहोपेतो ज्ञेयः, तादृशस्य च तन्त्रान्तरे कर्म इति संज्ञा । तथाहि—"त्रिंशन्मताः कर्मसु बस्तयो हि कालस्ततोऽर्धेन ततश्च योगः । सान्वासना द्वादश वै निरूहाः प्राक् स्नेह एकः परतस्तु पञ्च" ( च. सि. अ. १ ) इति; ततश्च "अष्टादशाष्टादशकान् बस्तीनां यो निषेवते"—इत्यनेन कर्मबस्तीनष्टादशवारान् यो निषेवते इत्यर्थो गम्यते । तथा **श्रीवाग्भटेनापि** कर्मकालयोगबस्तयोऽभिहिताः । तथा च—"प्राक् स्नेह एकः पञ्चान्ते द्वादशास्थापनानि च । सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ कालः पञ्चदशैकोऽत्र प्राक्स्नेहोऽन्ते त्रयस्तथा । षट् पञ्चबस्त्यन्तरिताः, योगोऽष्टौ बस्तयोऽत्र तु ॥ त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ" ( वा. सू. अ. १९ ) इति । यापनबस्तिविषयोऽयं ग्रन्थः, निरूहा एव यापनबस्तयः; अत एवैकान्तरिताः स्नेहाः, यापनबस्तयो हि नातिस्निग्धरूक्षा 'नपुंसकबस्तयः' इत्युच्यन्ते । कर्मकालयोगसंज्ञया यथासंख्यं वातपित्तकफहरो बस्तिप्रयोगो ज्ञेयः । **गयदासस्तु** बलवद्ग्रिमहादिजनितोपचयपूर्वकवातादिदोषप्रकोपे बलीयसि त्रिंशद्बस्तयः, स्वस्थे पुनः कालैकप्रभावजनितवातादिप्रकोपे मध्यबले पञ्चदश, कालेनाप्यकृतदोषकोपस्य स्वस्थस्यापूर्ववृष्यत्वादिलाभार्थमष्टौ ॥७५॥७६॥

**स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत् ॥**
**स्नेहादग्निवधोत्क्लेशौ निरूहात् पवनाद्भयम् ॥ ७७ ॥**
**तस्मान्निरूढोऽनुवास्यो निरूह्यश्चानुवासितः ॥**
**नैवं पित्तकफोत्क्लेशौ स्यातां न पवनाद्भयम् ॥ ७८ ॥**

द्वयोरेकस्यातिशीलननिषेधाय दोषं दर्शयन्नाह—स्नेहबस्तिमित्यादि । अन्ये त्वेवं पठन्ति—"स्यातामग्निवधोत्क्लेशावत्यभ्यस्तेऽनुवासने । निरूहसेवनाच्चापि भवेयुर्वातजा गदाः"—इति ॥ ७७ ॥ ७८ ॥

**रूक्षाय बहुवाताय स्नेहबस्तिं दिने दिने ॥**
**दद्याद्वैद्यस्ततोऽन्येषामग्न्याबाधभयाड्यहात् ॥ ७९ ॥**

स्नेहबस्तेरवस्थाविशेषेण प्रतिदिनं विधानमुद्दिशन्नाह—रूक्षायेत्यादि ॥ ७९ ॥

**स्नेहोऽल्पमात्रो रूक्षाणां दीर्घकालमनत्ययः ॥**
**तथा निरूहः स्निग्धानामल्पमात्रः प्रशस्यते ॥ ८० ॥**

अभ्यासेऽपि स्नेहबस्तिर्यथा निरापदस्तथोपदिशन्नाह—स्नेहोऽल्पमात्र इत्यादि । अर्धहीनता चतुर्भागावशिष्टता वाऽल्पशब्दार्थः, तेन षट्पल[1]प्रमाणस्त्रिपलप्रमाणो वा स्नेहबस्तिर्दीर्घकालमभ्यस्तो रूक्षाणां निरत्ययः निर्गतव्यापत् । तथा निरूहोऽपि दीर्घकालं स्निग्धानामल्पमात्र एव [1]पादहीनोऽर्धभागहीनो वा शस्यते, अनत्ययत्वादित्यर्थः ॥ ८० ॥

**अत ऊर्ध्वं प्रवक्ष्यामि व्यापदः स्नेहबस्तिजाः ॥**
**बलवन्तो यदा दोषाः कोष्ठे स्युरनिलादयः ॥ ८१ ॥**
**अल्पवीर्यं तदा स्नेहमभिभूय पृथग्विधान् ॥**
**कुर्वन्त्युपद्रवान् स्नेहः, स चापि न निवर्तते ॥ ८२ ॥**
**तत्र वाताभिभूते तु स्नेहे मुखकषायता ॥**
**जृम्भा वातरुजस्तास्ता वेपथुर्विषमज्वरः ॥ ८३ ॥**
**पित्ताभिभूते स्नेहे तु मुखस्य कटुता भवेत् ॥**
**[2]दाहस्तृष्णा ज्वरः स्वेदो नेत्रमूत्राङ्गपीतता ॥ ८४ ॥**
**श्लेष्माभिभूते स्नेहे तु प्रसेको मधुरास्यता ॥**
**गौरवं छर्दिरुच्छ्वासः कृच्छ्राच्छीतज्वरोऽरुचिः ८५**

स्नेहबस्तिव्यापल्लक्षणं सचिकित्सितं प्रतिपादयितुकामः स्नेहबस्तिव्यापद्व्याख्यानप्रतिज्ञामाह—अत ऊर्ध्वमित्यादि । दोषाभिभूतस्नेहव्यापदां सामान्यां संप्राप्तिमुद्दिशन्नाह—बलवन्त इत्यादि । स स्नेहः । न निवर्तते न निर्गच्छतीत्यर्थः ॥ ८१–८५ ॥

**तत्र दोषाभिभूते तु स्नेहे बस्तिं निधापयेत् ॥**
**यथास्वं दोषशमनान्युपयोज्यानि यानि च ॥ ८६ ॥**

तत्र प्रतीकारमाह—तत्र दोषाभिभूते इत्यादि । बस्तिमिति [3]मारुतादिहरकषायं संशोधनद्रव्यावापं च निरूहं स्नेहस्यापकर्षणं दद्यात् । यानि च दोषशमनानि तानि च यथास्वमुपयोज्यानि । एतद्यथास्वं बस्तिदानमजीर्णज्वरादिकामामाशयस्थदोषजां व्यापदं परित्यज्य ज्ञेयम् । तत्रामान्वये लङ्घनादिकमेव ॥ ८६ ॥

**अत्याशितेऽन्नाभिभवात् स्नेहो नैति यदा तदा ॥**
**गुरुरामाशयः शूलं वायोश्चाप्रतिसंचरः ॥ ८७ ॥**
**हृत्पीडा मुखवैरस्यं श्वासो मूर्च्छा भ्रमोऽरुचिः ॥**
**तत्रापतर्पणस्यान्ते दीपनो विधिरिष्यते ॥ ८८ ॥**
**अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ॥**
**तदाऽङ्गसदनाध्माने श्वासः शूलं च जायते ॥ ८९ ॥**
**पक्वाशयगुरुत्वं च तत्र दद्यान्निरूहणम् ॥**
**तीक्ष्णं तीक्ष्णौषधैरेव सिद्धं चाप्यनुवासनम् ॥ ९० ॥**
**शुद्धस्य दूरानुसृते स्नेहे स्नेहस्य दर्शनम् ॥**
**गात्रेषु सर्वेन्द्रियाणामुपलेपोऽवसादनम् ॥ ९१ ॥**
**स्नेहगन्धि मुखं चापि कासश्वासावरोचकः ॥**
**अतिपीडितवत्तत्र सिद्धिरास्थापनं तथा ॥ ९२ ॥**

अशुद्धस्य अकृतविरेचननिरूहस्य । शुद्धस्य दूरानुसृते उदरानुसृते । उपलेपो मलवृद्धिः । अवसादनं ग्लानिः । अति-

---

१ 'त्रिपलप्रमाणः सार्धपलप्रमाणो वा' इति पा० ।

१ 'पादहीनोऽर्धभागहीनो वा' इति पा० । २ 'दाहः शोफो ज्वरः' इति पा० । ३ 'मारुतादिहरकषायैस्तथा संशोधनद्रव्यैश्च कृतं निरूहं' इति पा० ।

पीडितवत्तत्र सिद्धिः साधनं चिकित्सितमित्यर्थः । तत् पुनर्गलावपीडादिशीतसेकान्तं, तथाऽऽस्थापनमवस्थायां स्नेहापकर्षकशोधनद्रव्यकषायगोमूत्रावापम् ॥ ८७-९२ ॥

**अस्विन्नस्याविशुद्धस्य स्नेहोऽल्पः संप्रयोजितः ॥**
**शीतो मृदुश्च नाभ्येति ततो मन्दं प्रवाहते ॥ ९३ ॥**
**विबन्धगौरवाध्मानशूलाः पक्वाशयं प्रति ॥**
**तत्रास्थापनमेवाशु प्रयोज्यं सानुवासनम् ॥ ९४ ॥**

अस्विन्नस्येत्यादि । मन्दं प्रवाहते मन्दवेगं प्रवर्तते[1]; तत्र यथादोषप्रत्यनीकमास्थापनमनुवासनं च तीक्ष्णं शीघ्रं प्रयोक्तव्यम् ॥ ९३ ॥ ९४ ॥

**अल्पं भुक्तवतोऽल्पो हि स्नेहो मन्दगुणस्तथा ॥**
**दत्तो नैति क्रमोत्क्लेशौ भृशं चारतिमावहेत् ॥ ९५ ॥**
**तत्राप्यास्थापनं कार्यं शोधनीयेन बस्तिना ॥**
**(अन्वासनं च स्नेहेन शोधनीयेन शस्यते) ॥ ९६ ॥**[2]

अल्पमित्यादि । नैति न प्रत्यागच्छति ॥ ९५ ॥ ९६ ॥

**अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति ॥**
**कुर्याद्बस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥ ९७ ॥**

स्नेहस्तु अष्टभिः कारणैर्न निवर्तत इति अनिवृत्तिर्व्यापदुक्ता, तत् कियतः कालादित्याह—अहोरात्रादित्यादि । अपिशब्दात्त्रिचतुरादियामनिवृत्तिस्तावन्न दुष्यत्येवाहोरात्रादपीत्यपिशब्दार्थः । न दुष्यति न दोषं करोति, न व्यापद्यत इत्यर्थः ॥ ९७ ॥

**यस्य नोपद्रवं कुर्यात् स्नेहबस्तिरनिःसृतः ॥**
**सर्वोऽल्पो वाऽऽवृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥**

सर्वथाऽनिवृत्तोऽप्यवयवेन वा निरुपद्रवो न व्यापद्यत इति बोधयन्नाह—यस्येत्यादि । आवृतो रौक्ष्यादिति आभ्यां वाशब्दः प्रत्येकं संबन्धनीयः; तेनावृतो वा रौक्ष्याद्वा स्नेहबस्तिरनिःसृत इति संबन्धनीयम् । तत्रावृतो दोषत्रयेण, अत्यशनेन, मलसंचयेन वेत्यर्थः; रौक्ष्यादित्यनेन दूरानुसृतो अस्विन्नस्याल्पं भुक्तवतोऽल्पश्चेति त्रितयमपि गृहीतम् , एषु त्रिष्वप्यतिरौक्ष्येण वायुरेव विधारयतीति; एवमष्टौ व्यापदो गृहीताः । उपेक्ष्यः उपेक्षणीयः, तदाऽऽकृष्यां यत्नं न कुर्यादित्यर्थः ॥ ९८ ॥

**अनायान्तं त्वहोरात्रात् स्नेहं संशोधनैर्हरेत् ।**

अनायान्तमित्यादि । सोपद्रवं तु स्नेहमहोरात्रादनागच्छन्तं हरेत् निर्हरेच्छोधनैरेव बस्तिभिः ॥—

**स्नेहबस्तावनायाते नान्यः स्नेहो विधीयते ॥ ९९ ॥**

स्नेहबस्तावनायाते इत्यादि । अनायाते सोपद्रवस्नेहे निरूहबस्तिरेव शोधनार्थं दीयते, नेतर इत्यर्थः ॥ ९९ ॥

**इत्युक्ता व्यापदः सर्वा सलक्षणचिकित्सिताः ॥**

उक्तं हि नियमयन्नाह—इत्युक्ता व्यापद इत्यादि । सर्वा इति व्यापदः सलक्षणचिकित्सिता 'स्नेहबस्तेश्च वक्ष्यन्ते तच्चिकित्सिते' इत्यनेन याः प्रागुद्दिष्टास्ता अशेषा इत्यर्थः ॥—

**बस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतः परम् ॥ १०० ॥**
**चतुर्दशाङ्गुलं नेत्रमातुराङ्गुलसंमितम् ॥**
**मालतीपुष्पवृन्ताग्रं छिद्रं सर्षपनिर्गमम् ॥ १०१ ॥**[1]

उत्तरबस्तेरिदानीमवसरः—बस्तेरुत्तरसंज्ञस्येत्यादि । तत्र नेत्रस्य प्राक् प्रमाणमाह—चतुर्दशेत्यादि । तत्र नेत्रं पुंसां चतुर्दशाङ्गुलं जातीपुष्पवृन्तसदृशाग्रं[2] सर्षपच्छिद्रं मध्यसन्निविष्टकर्णिकं सुवर्णादिमयं मूले द्विकर्णिकं च । उक्तं च तन्त्रान्तरे—"तत् सौवर्णं राजतं वा श्लक्ष्णं गोपुच्छवत् समम् । अश्मघ्नकुन्दसुमनःपुष्पवृन्ताग्रमण्डलम् ॥ सिद्धार्थकप्रवेशाग्रं मूले मध्ये सकर्णिकम् । चतुर्दशाङ्गुलं नेत्रं तत्र कार्यं विजानता"—इति । सप्ताङ्गुलं च परमं प्रणिधानं; तथा च **क्षारपाणिः**,—"अङ्गुलान्यथ चत्वारि पञ्च षट् सप्त वा तथा । सप्ताङ्गुलं परं नेत्रं प्रणिधेयं भिषग्विदा ॥ हिंस्याद्धिनरं चेह प्रमाणादधिकं ततः"—इति ॥ १०० ॥ १०१ ॥

**स्नेहप्रमाणं परमं प्रकुञ्चश्चात्र कीर्तितः ॥**
**पञ्चविंशादधो मात्रां विदध्याद्बुद्धिकल्पिताम् १०२**

नेत्रमानमभिधाय स्नेहिकनैरूहिकभेदाभ्यां द्विविधे उत्तरबस्तौ वक्तव्ये स्नेहिकस्य प्राक् प्रयोज्यत्वात् स्नेहमानमाह—स्नेहप्रमाणमित्यादि । अत्रेति सुश्रुतमते । प्रकुञ्चः पलं, पञ्चविंशादध इत्यादि वक्ष्यमाणवाक्यात् पञ्चविंशद्वर्षमारभ्य स्नेहप्रमाणं परमं प्रकीर्तितम् । **चरकाचार्यः** पुनरर्धपलम् । पञ्चविंशादित्यादि । अधः अर्वाक् । मात्रां बुद्धिकल्पितामिति । अयमर्थः—सांवत्सरिकबालके स्नेहपलस्य पञ्चविंशतितममंशमारभ्य द्विसांवत्सरिकादौ प्रतिवत्सरं पञ्चविंशतितमस्यांशस्य वृद्धिं विदध्याद् यावत् पञ्चविंशतिवार्षिकस्य पलमिति ॥ १०२ ॥

**निविष्टकर्णिकं मध्ये, नारीणां चतुरङ्गुले ॥**
**मूत्रस्रोतःपरीणाहं मुद्गवाहि दशाङ्गुलम् ॥ १०३ ॥**
**मेढ्रायामसमं केचिदिच्छन्ति खलु तद्विदः ॥**

पुरुषाणां नेत्रादिमानमुक्त्वा, इदानीं पुरुषनेत्रेऽनुक्तं कर्णिकानिवेशस्थानं, तथा स्त्रीणां नेत्रकर्णिकास्थानं परिणाहायामौ दर्शयन्नाह—निविष्टकर्णिकं मध्ये इति; पुरुषस्य 'नेत्रम्' इति वाक्यशेषः । नारीणां चतुरङ्गुले इति निविष्टकर्णिकमित्यत्रापि संबन्धनीयम् । स्थौल्यमाह—मूत्रस्रोतःपरीणाहं मूत्रस्रोतःस्थौल्यम् । मुद्गवाहीति अन्तश्छिद्रमानम्[3] । दशाङ्गुलमिति दैर्घ्येण । मेढ्रायामसममिति अपत्यमार्गे पुरुषेन्द्रियस्थूलं नेत्रं किंचिदधिकच्छिद्रं च ॥ १०३ ॥—

---

१ 'प्रवर्तते' इति पा० । २ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते ।

१ 'मालतीपुष्पवृन्ताभं तच्छिद्रच्छिद्रमेव च' इति पा० ।
२ 'जातीपुष्पवृन्तसदृशं जातीपुष्पसदृशच्छिद्रं' इति पा० ।
३ 'अग्रच्छिद्रमानम्' इति पा० ।

तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् ॥ १०४ ॥
द्व्यङ्गुलं मूत्रमार्गे तु कन्यानां त्वेकमङ्गुलम् ॥
विधेयं चाङ्गुलं तासां विधिवद्वक्ष्यते यथा ॥ १०५ ॥

नेत्रमानमभिधाय मार्गभेदेन प्रणिधानविधानमाह—तासामित्यादि । तासां प्रसूतानामप्रसूतानां च प्राप्तगर्भग्रहणकालानां गर्भाशयशोधनार्थमपत्यमार्गे चतुरङ्गुलं निदध्यात्; मूत्रकृच्छ्रादिविकारेषु तासामुभयरूपाणामपि मूत्रवर्त्मनि द्व्यङ्गुलं निदध्यात् । कन्यानामप्राप्तद्वादशवर्षाणां मूत्रकृच्छ्रादौ मूत्रवर्त्मनि एकमङ्गुलं निदध्यात् ॥ १०४ ॥ १०५ ॥

स्नेहस्य प्रसृतं चात्र स्वाङ्गुलीमूलसंमितम् ॥
देयं प्रमाणं परममर्वाग् बुद्धिविकल्पितम् ॥ १०६ ॥

स्त्रीणामुत्तरबस्तौ स्नेहमानमाह—स्नेहस्येत्यादि । अत्र स्त्रीविषये । स्वाङ्गुलीमूलसंमितः प्रसृतो देयः; तच्च परममुत्तमं प्रमाणं सर्ववयोऽवस्थासु बलीयसि रोगे; मध्यहीनबलरोगे तु सर्वास्वपि वयोऽवस्थासूत्तमप्रमाणादर्वाङ्मध्यं हीनं च बुद्ध्या विकल्पितं मानं ज्ञेयम् । गर्भाशयशोधनार्थं च स्नेहमात्राद्वैगुण्यमग्रे वक्ष्यति ॥ १०६ ॥

औरभ्रः शौकरो वाऽपि बस्तिराजश्च पूजितः ॥
तदलाभे प्रयुञ्जीत गलचर्म तु पक्षिणाम् ॥ १०७ ॥
( तस्यालाभे दृतेः पादो मृदुचर्म ततोऽपि वा ) ॥[1]

औरभ्रो मेषस्य, शौकरो वन्यशूकरस्य, आजः छागस्य, बस्तिः पूजितः ॥ १०७ ॥—

अथातुरमुपस्निग्धं स्विन्नं प्रशिथिलाशयम् ॥ १०८ ॥
यवागूं सघृतक्षीरां पीतवन्तं यथाबलम् ॥
निषण्णमाजानुसमे पीठे सोपाश्रये समम् ॥ १०९ ॥
स्वभ्यक्तबस्तिमूर्धानं तैलेनोष्णेन मानवम् ॥
ततः समं स्थापयित्वा नालमस्य प्रहर्षितम् ॥ ११० ॥
पूर्वं शलाकयाऽन्विष्य ततो नेत्रमनन्तरम् ॥
शनैः शनैर्घृताभ्यक्तं विदध्यादङ्गुलानि षट् ॥ १११ ॥
मेढ्रयामसमं केचिदिच्छन्ति प्रणिधानकम् ॥
ततोऽवपीडयेद्बस्तिं शनैर्नेत्रं च निर्हरेत् ॥ ११२ ॥
ततः प्रत्यागतस्नेहमपराह्णे विचक्षणः ॥
भोजयेत् पयसा मात्रां यूषेणाथ रसेन वा ॥ ११३ ॥
अनेन विधिना दद्याद्बस्तींस्त्रींश्चतुरोऽपि वा ॥

परं प्रणिधानमाह—अथातुरमित्यादि । स्नैहिकस्योत्तरबस्तेः सघृतक्षीरयवागूभोजनं पूर्वकर्म, पयोयूषरसैरपराह्णे भोजनं पश्चात्कर्म; तेन पूर्वाह्णे चोत्तरबस्तिप्रणिधानम् । प्रशिथिलाशयमिति वातमूत्रपुरीषनिर्गमेन । सोपाश्रये सावष्टम्भके, समं यथा स्यादेवं निषण्णम् । स्वभ्यक्तेत्यादि स्वभ्यक्तो बस्तेर्मूत्राधारस्य मूर्धा उपरितनभागो यस्य तं तथा, समम् ऋजुम् । नालं मेहनम् । प्रहर्षितं स्तब्धम् । अङ्गुलानि षडिति मध्यमप्रमाणमेढ्रस्य मध्यमं प्रणिधानमानमवेक्ष्य । निविष्टकर्णिकं मध्य इति सूत्रमुत्तमं प्रणिधानमवेक्ष्य । तथा च प्रागुक्तं—सप्ताङ्गुलं परं नेत्रमित्यादि । एकीयमतेन प्रणिधानमाह—मेढ्रायामसममित्यादि । पयोयूषरसैर्भोजनं कफपित्तवातापेक्षया । अनेन विधिनेति अनन्तरोक्तेन । बस्तींस्त्रींश्चतुरोऽपि वेति । अयमर्थः—प्राग्दत्तस्नेहप्रत्यागमने कालान्तरितस्तदहरेव त्रिश्चतुर्वा मात्रां वर्धयित्वा स्नेहो देयः, एवं त्रीणि दिनानि स्नैहिकमुत्तरबस्तिं दत्त्वा त्र्यहमेव विश्रम्य पुनस्त्र्यहं दद्यादाव्याधिनिवृत्तेः । तथाच **वाग्भटः**—"बस्तींस्त्रिरात्रमेवं च स्नेहमात्रां विवर्धयेत् । त्र्यहमेव च विश्रम्य प्रणिदध्यात् पुनस्त्र्यहम्" ( वा. सू. अ. १९ ) इति ॥ १०८—११३ ॥

ऊर्ध्वजान्वै स्त्रियै दद्यादुत्तानायै विचक्षणः ॥ ११४ ॥
सम्यक् प्रपीडयेद्योनिं दद्यात् सुमृदुपीडितम् ॥
त्रिकर्णिकेन नेत्रेण दद्याद्योनिमुखं प्रति ॥ ११५ ॥

स्त्रीणामुत्तरबस्तिप्रणिधाने विशेषमाह—ऊर्ध्वेत्यादि । 'विचक्षणः' इत्यत्र केचित् 'समाहित' इति पठन्ति; कामसङ्कल्परहितत्वेनाऽचलितचित्तप्रकृतिरित्यर्थः, 'बस्तिं दद्यात्' इति शेषः । त्रिकर्णिकेन नेत्रेणेत्यनेनात्रापि बस्तिनिबन्धनं कर्णिकाद्वयमिति सूचयति ॥ ११४ ॥ ११५ ॥

गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु ॥

कार्यविशेषे द्विगुणस्नेहेन स्नेहप्रकारमाह[2]—गर्भाशयेत्यादि । स्नेहेन द्विगुणेन तु पूर्वोक्तवदत्राङ्गुलीमूलसंमितप्रसृत्यपेक्षया द्विगुणेनेति ज्ञेयम् ॥—

क्वाथप्रमाणं प्रसृतं, स्त्रिया द्विप्रसृतं भवेत् ॥ ११६ ॥
कन्येतरस्याः, कन्यायास्तद्वद्बस्तिप्रमाणकम् ॥[1]

स्नैहिकोत्तरबस्तेः प्रमाणं निर्दिश्यावसरप्राप्तं निरूहोत्तरबस्तिप्रमाणमाह—क्वाथप्रमाणमित्यादि । क्वाथप्रमाणं प्रसृतमिति 'पुरुषस्य' इति शेषः, तेनातुरपुरुषस्य यथावयः स्वहस्तसंमितं प्रसृतं[4] मात्राप्रमाणम् । स्त्रिया इत्यादि प्रसूतायाः प्रसूतिरहितायां वा गर्भग्रहणयोग्याया गर्भाशयशोधनार्थम् । प्रसूतानामप्रसूतानां च बस्तिशोधनार्थमाह—कन्येतरस्या इत्यादि । कन्येतरस्या अप्रसूतायाः प्रसूताया वा गर्भग्रहणायोग्यायाः । कन्याया अप्राप्तद्वादशवर्षायाः । तद्वदिति पुरुषवद् यथावयः स्वहस्तसंमितं प्रसृतं प्रमाणं बस्तिशोधनार्थं, नतु द्विप्रसृतं तस्य गर्भाशयशोधनार्थं विहितत्वादिति ॥ ११६ ॥—

अप्रत्यागच्छति भिषग् बस्तावुत्तरसंज्ञिते ॥ ११७ ॥
भूयो बस्तिं निदध्यात्तु संयुक्तं शोधनैर्गणैः ॥[3]
गुदे वर्तिं निदध्याद्वा शोधनद्रव्यसंभृताम् ॥ ११८ ॥

---

१ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते ।

१ 'कन्येतरस्यै कन्यायै' इति पा० । २ 'बस्तेर्दानप्रकारमाह' इति पा० ३ अयं श्लोको हाराणचन्द्रेण न पठितः । ४ 'प्रसृतमत्र प्रमाणम्' इति पा० ।

**प्रवेशयेद्वा मतिमान् बस्तिद्वारमथैषणीम् ॥**
**पीडयेद्वाऽप्यधो नाभेर्बलेनोत्तरमुष्टिना ॥ ११९ ॥**
**आरग्वधस्य पत्रैस्तु निर्गुण्ड्याः स्वरसेन च ॥**
**कुर्याद्वोमूत्रपिष्टेषु वर्तीर्वाऽपि ससैन्धवाः ॥ १२० ॥**
**मुद्गैलासर्षपसमाः प्रविभज्य वयांसि तु ॥**
**बस्तेरागमनार्थाय ता निदध्याच्छलाकया ॥ १२१ ॥**
**आगारधूमबृहतीपिप्पलीफलसैन्धवैः ॥**
**कृता वा शुक्तगोमूत्रसुरापिष्टैः सनागरैः ॥ १२२ ॥**
**अनुवासनसिद्धिं च वीक्ष्य कर्म प्रयोजयेत् ॥**

अनागच्छति स्नेहे प्रत्यागमनोपायमाह—अप्रत्यागच्छतीत्यादि । अत्र **गयदासः** स्नैहिकस्योत्तरबस्तेर्भालुकिदर्शनान्मात्राशतादूर्ध्वं प्रत्यागमनकालं वर्णयति । तथाहि **भालुकिः**,—"बस्तिर्मात्राशतादूर्ध्वं प्रत्यागच्छति, अनागच्छति वर्तिं पायौ नाले प्रदापयेत्—" इति । **दृढबलस्तु** प्रत्यागमनकालमनुवासनोत्तरबस्तेरिति मन्यते । तथा च तद्वाक्यम्—"प्रत्यागते द्वितीयं च तृतीयं चैव दापयेत् । अनागच्छन्नुपेक्ष्यस्तु रजनीम्—" इत्यादि । 'तत्रोपद्रवकारी मात्राशतादूर्ध्वं स्नेहो यत्नेनानयितव्यः, नत्वनुवासनवत्क्रियामात्परत इति, अनागच्छन्निरुपद्रवश्चाहोरात्रमुपेक्षणीय इति मतद्वयमप्यवस्थावशेन प्रमाणयितव्यम् । एवंविधे च प्रत्यागमनकाले अनागच्छति स्नैहिके निरूहोत्तरबस्तिः संशोधनैस्त्रिवृदादिभिर्बस्तिशोधनैश्च तृणपञ्चमूलादिगणद्रव्यैः क्वाथरूपैर्युक्तं बस्तिं प्रसृतिमात्रं मूत्रमार्गेण, स्त्रिया द्विप्रसृतिमात्रमपत्यमार्गेण स्नेहापकर्षणं दद्यात् । गुद इत्यादि शोधनद्रव्यसंभृतामिति विरेचनद्रव्यनिर्मिताम् । एषणीं शलाकाम् । यथावशेषं तद्बलेन सामर्थ्येन, उत्तरमुष्टिना मुष्टेरग्रभागेन । गुदवर्तिमभिधाय मूत्रमार्गे वयोभेदेन दर्शयन्नाह—आरग्वधेत्यादि । ता वर्तीः तन्त्रान्तरदर्शनाच्छायाशुष्का घृताक्ताः स्रोतसि मूत्रमार्गे शलाकया निदध्यात् प्रवेशयेत् स्नेहापकर्षणार्थं, अपत्यमार्गे स्थूला वर्तिश्चतुरङ्गुला प्रणिधेया । प्रकारान्तरेण वर्तिमाह—आगारेत्यादि । फलं मदनफलम् । कृता वर्तीः मुद्गादिप्रमाणाः । शुक्तं चुक्रम् । अनुवासनचिकित्सावेक्षणमाह—अनुवासनसिद्धिमित्यादि । स्नैहिकोत्तरबस्तिदानानन्तरं यदनुक्तं स्फिक्कृताडनादिकं कर्म तदनुवासनचिकित्सितं वीक्ष्य प्रयोजयेत्; तथा च **वाग्भटः**,—"पीडितेऽन्तर्गते स्नेहे स्नेहबस्तिक्रमो हितः" ( वा. सू. अ. १९ ) इति ॥ ११७—१२२ ॥

**शर्करामधुमिश्रेण शीतेन मधुकाम्बुना ॥ १२३ ॥**
**दह्यमाने तदा बस्तौ दद्याद्बस्तिं विचक्षणः ॥**
**क्षीरवृक्षकषायेण पयसा शीतलेन च ॥ १२४ ॥**

तत्र स्नेहप्रदानकुपितपित्तेनानिर्गच्छतः स्नेहस्य निर्गमनार्थं दत्ततीक्ष्णोष्णनिरूहकुपितपित्तेन वा दह्यमाने बस्तौ बस्तिविशेषमुपदिशन्नाह—शर्करेत्यादि । शर्करामधुमिश्रेणेति त्रिष्वपि योगेषु योजनीयमिति ॥ १२३–१२४ ॥

१ 'कल्कक्काथरूपैः' इति पा० ।

**शुक्रं दुष्टं शोणितं चाङ्गनानां**
**पुष्पोद्रेकं तस्य नाशं च कष्टम् ॥**
**मूत्राघातान्मूत्रदोषान् प्रवृद्धान्**
**योनिव्याधिं संस्थितिं चापरायाः ॥ १२५ ॥**
**शुक्रोत्सेकं शर्करामश्मरीं च**
**शूलं बस्तौ वङ्क्षणे मेहने च ॥**
**घोरानन्यान् बस्तिजांश्चापि रोगान्**
**हित्वा मेहानुत्तरो हन्ति बस्तिः ॥ १२६ ॥**

इदानीमुत्तरबस्तेर्विषयं दर्शयन्नाह—शुक्रमित्यादि । पुष्पं ऋतुस्तस्योद्रेकोऽकालप्रवृत्तिः, कष्टं कष्टसाध्यम् । मूत्राघातान् मूत्रावरोधान् । मूत्रदोषान् मूत्रकृच्छ्रान् । संस्थितिं निर्गमरोधमित्यर्थः । अपरा गर्भावरणविशेषः, यस्या 'उल्ब' इति लोके प्रसिद्धिः । अशेषबस्तिरोगपरिहारार्थमाह—बस्तिजांश्चापि रोगानिति ॥ १२५ ॥ १२६ ॥

**सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च ॥**
**बस्तेरुत्तरसंज्ञस्य समानं स्नेहबस्तिना ॥ १२७ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थानेऽनुवासनोत्तरबस्तिचिकित्सितं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥**

क्रमः चिकित्सितमित्यर्थः ॥ १२७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थाने सप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशत्तमोऽध्यायः ।

**अथातो निरूहक्रमचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

निरूहस्य क्रमो निरूहक्रमः अनुक्रमविधानं, स एव चिकित्सितं व्याधिप्रतीकारः । निरूहोपक्रमचिकित्सितमिति केचित् पठन्ति, तन्मतेऽपि निरूहोपक्रमो निरूहारम्भः, स एव चिकित्सितमिति व्याख्यानम् ॥ १ ॥ २ ॥

**अथानुवासितमास्थापयेत्; स्वभ्यक्तस्विन्नशरीरमुत्सृष्टवहिर्वेगमवाते शुचौ वेश्मनि मध्याह्ने प्रतप्तायां शय्यायामधःसुपरिग्रहायां श्रोणिप्रदेशप्रतिव्यूढायामनुपधानायां वामपार्श्वशायिनमाकुञ्चितदक्षिणसक्थिमितरप्रसारितसक्थिं सुमनसं जीर्णान्नं वाग्यतं सुनिषण्णदेहं विदित्वा, ततो वामपादस्योपरि नेत्रं कृत्वेतरपादाङ्गुष्ठाङ्गुलिभ्यां कर्णिका-**

१ 'अनुक्तं विधानं' इति पा० ।

**मुपरि निष्पीड्य, सव्यपाणिकनिष्ठिकानामिकाभ्यां बस्तेर्मुखार्धं सङ्कोच्य, मध्यमाप्रदेशिन्यङ्गुष्ठैरर्धं तु विवृतास्यं कृत्वा, बस्तावौषधं प्रक्षिप्य, दक्षिणहस्ताङ्गुष्ठेन प्रदेशिनीमध्यमाभ्यां चानुसिक्तमनायतमबुद्बुदमसङ्कुचितमवातमौषधासन्नमुपसंगृह्य, पुनरुपरि तदितरेण गृहीत्वा दक्षिणेनावसिञ्चेत्, ततः सूत्रेणैवौषधान्ते द्विस्त्रिर्वाऽऽवेष्ट्य बध्नीयात्, अथ दक्षिणेनोत्तानेन पाणिना बस्तिं गृहीत्वा वामहस्तमध्यमाङ्गुलिप्रदेशिनीभ्यां नेत्रमुपसंगृह्याङ्गुष्ठेन नेत्रद्वारं पिधाय, घृताभ्यक्ताग्रनेत्रं घृताक्तमुपादाय प्रयच्छेदनुपृष्ठवंशं सममुन्मुखमाकर्णिकं नेत्रं प्रणिधत्स्वेति ब्रूयात् ॥ ३ ॥**

**बस्तिं सव्ये करे कृत्वा दक्षिणेनावपीडयेत् ॥**
**एकेनैवावपीडेन न द्रुतं न विलम्बितम् ॥ ४ ॥**

**ततो नेत्रमपनीय त्रिंशन्मात्राः पीडनकालादुपेक्ष्योत्तिष्ठेत्यातुरं ब्रूयात् । अथातुरमुपवेशयेदुत्कुटुकं बस्त्यागमनार्थम् । निरूहप्रत्यागमनकालस्तु मुहूर्तो भवति ॥ ५ ॥**

**अनेन विधिना बस्तिं दद्याद्बस्तिविशारदः ॥**
**द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः ॥ ६ ॥**

अनुक्रमप्रणयनसंबन्धं दर्शयन्नाह—अथानुवासितमित्यादि । अनुवासितं दत्तानुवासनं स्निग्धस्रोतोमार्गतया सुखमेव दोषनिर्हरणार्थमास्थापयेत् । निरूहस्य प्रणिधानविधानमाह—स्वभ्यक्तमित्यादि । उत्सृष्टबहिर्वेगं त्यक्तविण्मूत्रादिकम् । प्रततायां शय्यायां स्वब्धायां, विस्तीर्णायामिति केचित् । अधःसुपरिगृहीतायां पादतलयोः शोभनप्रतिबाहकायाम् । श्रोणिप्रदेशव्यूढायां कटिप्रदेशविशालायां, व्यूढायां शोभनोन्नतायामिति केचिद् व्याख्यानयन्ति । अनुपधानायाम् अनुपशीर्षकायाम् । सुनिषण्णदेहं शोभनं विश्रान्तशरीरम् । सव्यपाणिः वामकरः । औषधं प्रक्षिप्य उपसंग्रहणेन क्रियाविशेषेण । अनुत्सिक्तमूर्ध्वक्षरणरहितं यथा भवति तथा सिक्तम् । अनायतम् अनतिदीर्घं ( अचिरात् प्रवृत्तम् ) । अबुद्बुदं बुद्बुदरहितम् । असङ्कुचितं वस्तुसञ्चरणक्षमम् । अवातम् औषधदानेन निस्सारितवातम् । एवं दक्षिणहस्ताङ्गुष्ठेन प्रदेशिनीमध्यमाभ्यां चौषधान्तमुपसंगृह्य पुनर्दक्षिणहस्तोपगृहीतोपरि तदितरेण वामकरेण गृहीत्वा, दक्षिणकरेणैवौषधान्ते सूत्रेण द्विस्त्रिर्वाऽऽवेष्ट्य बध्नीयात् । आकर्णिकं कर्णिकां मर्यादीकृत्य । नेत्रं प्रणिधत्स्व प्रवेशयेति आतुरं प्रति भिषग् ब्रूयादिति संबन्धः । नेत्रप्रणिधानमभिधाय बस्तिपीडनविधिमाह—बस्तिमित्यादि । त्रिंशन्मात्रा इति मात्रामानं हि **अग्निवेशेन** व्याख्यातम्–"यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् । निमेषोन्मेषकालो वा सा मात्रा परिकीर्तिता"—इति । **पराशरस्तु** बस्तिकर्मणि मात्रासंख्यामाह—"जानुमण्डलमावेष्ट्य दत्ते दक्षिणपाणिना । कृष्टनेत्रस्छटाशब्दशतं तिष्ठेदवेगवान्"—इति । तत्र पराशरेण क्रूरकोष्ठपुरुषमङ्गीकृत्य मात्राशतमभिहितं, शेषयोर्मध्यमृदुकोष्ठयोः सप्ततिस्त्रिंशदित्यनुक्तमप्यूहनीयं स्यादित्येके मन्यन्ते; यतः **सुश्रुताचार्येणापि** मृदुकोष्ठपुरुषापेक्षया प्रोक्तस्त्रिंशन्मात्रापीडनकालः; अथवा त्रिंशन्मात्रानन्तरं वैद्येनोत्तिष्ठेत्युक्ते सति आतुरस्योत्थानोपवेशनोत्कुटुकभवनादिकालविलम्बेनैव मात्राशतं पूर्णं स्यादिति शास्त्रयोरविरोधः । मुहूर्तः घटिकाद्वयम् । मुहूर्तादप्रवर्तमानं शोधननिरूहैरेव व्यक्तक्षाराम्ललवणैर्हरेत् । एकत्र विहितं प्रणिधानं संक्षेपार्थमन्यत्रापि निर्दिशन्नाह—अनेनेवेत्यादि । चतुर्थं वा यथार्थत इति अर्थस्य प्रयोजनस्यानतिक्रमतो यथार्थतः । एतदुक्तं भवति—यदा सुनिरूढलिङ्गप्राप्तो भवति तदा तत्र निर्हरणीयाभावान्निरूहणमप्रयोजनमिति न देयम्, असम्यग्दानेन क्रूरकोष्ठतया प्रभूतदेयत्वेन वा सुनिरूढमप्राप्तस्य निर्हरणीयो दोषोऽस्तीति प्रयोजनमपेक्ष्य चतुर्थमपि निरूहं सुनिरूढलिङ्गार्थं प्रयोजयेत् । 'चतुर्थं वा यथार्हतः' इति पाठे निरूहसाध्यप्रयोजनानुरोधाच्चतुर्थमपि पुटकं प्रयोजयेदित्यर्थः ॥ ३—६ ॥

**सम्यङ्निरूढलिङ्गे तु प्राप्ते बस्तिं निवारयेत् ॥**

अमुमेवार्थं प्रकटयन्नाह—सम्यगित्यादि । केचिद्रक्तमप्यत्र चतुर्थं शमनीयमस्तीति चतुर्थं बस्तिदानमाहुः; अपरे तु पश्चाद्दाहनिर्वापणार्थं मधुरशीतैश्चतुर्थोऽपि बस्तिर्देय इति वदन्ति ।

**विशेषात् सुकुमाराणां हीन एव क्रमो हितः ॥ ७ ॥**
**अपि हीनक्रमं कुर्यान्न तु कुर्यादतिक्रमम् ॥**

हीनयोगजातियोगजयोर्व्यापदोर्मध्ये अतियोगजा व्यापन्महात्ययं करोतीति ततो बिभ्यदाह—अपि हीनेत्यादि ॥ ७ ॥—

**यस्य स्याद्बस्तिरल्पोऽल्पवेगो हीनमलानिलः ॥ ८ ॥**
**दुर्निरूढः स विज्ञेयो मूत्रार्त्यरुचिजाड्यवान् ॥**

हीननिरूढलक्षणमाह—यस्येत्यादि । अल्पः अल्पगुणमात्रः । अल्पवेगः स्तोकवेगः । मूत्रार्तिः मूत्रपीडा । अल्पगुणमात्रबस्त्युपयोगोत्क्लेशितमलावरोधेन जाड्यमपटुता ॥ ८ ॥—

**यान्येव प्राङ्मयोक्तानि लिङ्गान्यतिविरेचिते ॥ ९ ॥**
**तान्येवातिनिरूढेऽपि विज्ञेयानि विपश्चिता ॥**

अतिनिरूढलिङ्गमाह—यानीत्यादि । यान्येव प्रागुक्तानि शूलगुदभ्रंशकफातियोगादीनि ॥ ९ ॥—

**यस्य क्रमेण गच्छन्ति विट्पित्तकफवायवः ॥ १० ॥**
**लाघवं चोपजायेत सुनिरूढं तमादिशेत् ॥**

सम्यङ्निरूढलिङ्गमाह—यस्येत्यादि । विट् मलः ॥१०॥—

**सुनिरूढं ततो जन्तुं स्नातवन्तं तु भोजयेत् ॥ ११ ॥**

१ 'अर्धास्यं विवृतं कृत्वा' इति पा० । २ 'औषधान्तमुपसंगृह्य' इति पा० । ३ 'पीडनकालादुपेक्ष्यातुरमुपवेशयेत्' इति पा० । ४ 'उत्कटकं' इति 'उत्कटिकं' इति च पा० । ५ 'अनुच्छीर्षकायां' इति पा० ।

१ 'व्यक्तक्षाराम्लोष्णलवणैः' इति पा० । २ '०रत्यल्पवेगो' इति पा० । ३ 'मूर्च्छागुदभ्रंशकफातियोगादीनि' इति पा० । ४ 'सुनिरूढं ततः स्नातं यथास्वं प्रतिभोजयेत्' इति पा० ।

**पित्तश्लेष्मानिलाविष्टं क्षीरयूषरसैः क्रमात् ॥**
**सर्वं वा जाङ्गलरसैर्भोजयेदविकारिभिः ॥ १२ ॥**
**त्रिभागहीनमर्धं वा हीनमात्रमथापि वा ॥**
**यथाग्निदोषं मात्रेयं भोजनस्य विधीयते ॥ १३ ॥**
**अनन्तरं ततो युञ्ज्याद्यथास्वं स्नेहवस्तिना ॥**

सुनिरूढस्य पश्चात्कर्म निर्दिशन्नाह—सुनिरूढमित्यादि । केचिदत्र निरूढलिङ्गोत्पादपुटप्रत्यागमानन्तरं पीतनागरकर्षतोयस्योद्वर्तनस्नानादिकं मन्यन्ते । तदुक्तं—"ततः प्रत्यागते बस्तौ वार्युष्णं नागरैः शृतम् । पाययेत् कृतशौचं च स्नापयेदुष्णवारिणा—"इति । कियद्भोजनं तदाह—त्रिभागेत्यादि । हीनमात्रमथापि वेत्यत्र मात्रशब्दोऽल्पार्थः; तेन हीनमात्रमल्पहीनम् । ततः मात्रावद्भोजनानन्तरम् । यथास्वं यो य आत्मीयदोषापेक्षया स्नेहवस्तिस्तेन स्नेहबस्तिना युञ्ज्यात् परं सुनिरूढमेव पुरुषं नतु दुर्निरूढं, तत्र सदोषतया यथादोषं निरूहणमेव कार्यम् । न चातिरूढं, तत्रातिविरिक्तवद्भेषजं शीतपरिषेकपिच्छाबस्त्यादिकं नतु स्नेहबस्तिः; तथा च **विदेहः**—"अतितीक्ष्णैर्निरूढस्य हृतदोषस्य सर्वतः । कश्चिदेवानभिप्रेतं मार्गं स्नेहोऽनुगच्छति"—इति । **गयदासस्तु** परिभाषितं षट्पलप्रमाणं स्नेहबस्तिमत्र देयं न मन्यते, किन्त्वनुवासनाख्यं पलत्रयप्रमाणं स्नेहबस्तिं देयं मन्यते । यत्र तु स्नेहबस्तिः स्वतन्त्रः, तत्रैव षट्पलप्रमाणः ॥ ११–१३ ॥—

**विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः ॥१४॥**
**आस्थापनस्नेहवस्त्योः सम्यग्दाने तु लक्षणम् ॥**

इदानीं सान्वासनास्थापनस्य सम्यग्दत्तस्य लक्षणमाह—विविक्ततेत्यादि । विविक्तता सम्यक्पृथगवधारणं, मनस एवेन्द्रियार्थेषु सम्यगवधारणसामर्थ्यं, रसादिधातुवहस्रोतसामनावृतत्वं वा विविक्तता ॥ १४ ॥—

**तदहस्तस्य पवनाद्भयं बलवदिष्यते ॥ १५ ॥**
**रसौदनस्तेन शस्तस्तदहश्चानुवासनम् ॥**

कुतः पुनर्निरूहशुद्धस्य मन्दाग्नेस्तदहरेव मांसरसभोजनमनुवासनयोजनं चेत्याह—तदहरित्यादि । निरूहणाद्विड्वातादिप्रवृत्तिलक्षणेन धातुक्षयेण कुपितानिलस्य बलवदेव भयमतस्तदहरेव रसौदनभोजनं, तच्च निरूहणमन्दीकृतानलवधभयान्मात्रावत्; तथा पवनभयात्तदहरेव द्वादशप्रसृतनिरूहचतुर्थांशेन स्नेहेनानुवासनम् । **गयदासस्तु** सुनिरूढस्य तदहः पलत्रयमेवानुवासनं; तथा तदहश्चेति चकारो भिन्नक्रमे, तेनानुवासनं चेत्यत्र संबन्धादनुक्तोऽपि मात्राबस्तिश्चात्र समुच्चीयत इति मन्यते; न षट्पलप्रमाणं स्नेहबस्तिं, भोजदर्शनादिति ॥ १५ ॥—

**पश्चादग्निबलं मत्वा पवनस्य च चेष्टितम् ॥ १६ ॥**
**अन्नोपस्तम्भिते कोष्ठे स्नेहवस्तिर्विधीयते ॥**

निरूहणादनन्तरं तृतीयचतुर्थादावपि दिने बस्तिदानमाह—पश्चादित्यादि । पश्चात् सान्वासनान्निरूहणात् । अग्निबलं दीप्तं बलं वयःशक्त्यनुरूपमुपलभ्य, पवनस्य च चेष्टितं मत्वेति सञ्चलनशब्दकरस्फुरणादिकमवधार्य, अन्नपानेनावष्टब्धे कोष्ठे स्नेहबस्तिरुत्तममात्रारूपः षट्पलः क्रियते । तथाच तन्त्रान्तरं—'त्र्यहात्त्र्यहाच्चतुर्थे पञ्चमे वा दद्यान्निरूहादनुवासनम्' इति ॥ १६ ॥—

**अनायान्तं मुहूर्तात्तु निरूहं शोधनैर्हरेत् ॥ १७ ॥**
**तीक्ष्णैर्निरूहैर्मतिमान् क्षारमूत्राम्लसंयुतैः ॥**

ततः परं घटिकाद्वयादनागच्छतो निरूहस्य निर्हरणोपायं दर्शयति—अनायान्तमित्यादि । निरूहैर्मतिमान् हरेदिति संबन्धः । कथंभूतैर्निरूहैरित्याह—शोधनैः तीक्ष्णैः । क्षारमूत्राम्लसंयुतैः क्षारो यवक्षारः, मूत्रं गोमूत्रम्, अम्लं काञ्जिकम् ॥ १७ ॥—

**विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम् ॥ १८ ॥**
**शूलारतिज्वरानाहान्मरणं वा प्रवर्तयेत् ॥**

विगुणो विपरीतः । अरतिर्न कुत्रचिदवस्थितिश्चेतसः ॥१८॥—

**न तु भुक्तवतो देयमास्थापनमिति स्थितिः ॥ १९ ॥**
**विसूचिकां वा जनयेच्छर्दिं वाऽपि सुदारुणाम् ॥**
**कोपयेत् सर्वदोषान् वा तस्माद्दद्यादभोजिने ॥ २० ॥**

भुक्तवतः कस्मादास्थापनं निषिध्यते तदाह—न त्वित्यादि । न तु भुक्तवत इत्यादिना य आस्थापननिषेधोऽभिहितस्तस्य दृढीकरणार्थं भुक्तवतो विसूचिकादिदोषोद्भावनयाऽभोजिने दानमाह—विसूचिकां वेत्यादि ॥ १९ ॥ २० ॥

**जीर्णान्नस्याशये दोषाः पुंसः प्रव्यक्तिमागताः ॥**
**निःशेषाः सुखमायान्ति भोजनेनाप्रपीडिताः ॥ २१ ॥**
**नवाऽऽस्थापनविक्षिप्तमन्नमग्निः प्रधावति ॥**
**तस्मादास्थापनं देयं निराहाराय जानता ॥ २२ ॥**

विसूचिकेत्यादिदूषणोद्भावनद्वारेणाभोजिने दानमभिधाय जीर्णान्नस्येत्याद्युक्तगुणद्वारेणाप्यभोजिन एव दानमाह—जीर्णान्नस्येत्यादि । प्रव्यक्तिं स्पष्टतां निरावरणतामित्यर्थः ॥ २१ ॥२२॥

**आवस्थिकं क्रमं चापि बुद्ध्वा कार्यं निरूहणम् ॥**
**मलेऽपकृष्टे दोषाणां बलवत्त्वं न विद्यते ॥ २३ ॥**

तीव्रशूलाध्मानादिरोगावस्थस्योपक्रमेणापि[1] नोर्ध्वं शुध्यतः फलवर्त्यादिप्रणिधानपूर्वकं भुक्तवतोऽपि निरूहदानं कर्तव्यं स्यादत आह—आवस्थिकमित्यादि ॥ २३ ॥

**क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा ॥**
**लवणानि फलं क्षौद्रं शताह्वा सर्षपं वचा ॥ २४ ॥**
**एला त्रिकटुकं रास्ना सरलो देवदारु च ॥**
**रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च ॥ २५ ॥**
**कटुका शर्करा मुस्तमुशीरं चन्दनं शटी ॥**
**मञ्जिष्ठा मदनं चण्डा त्रायमाणा रसाञ्जनम् ॥ २६ ॥**
**बिल्वमध्यं यवानी च फलिनी शक्रजा यवाः ॥**
**काकोली क्षीरकाकोली जीवकर्षभकावुभौ ॥ २७ ॥**
**तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका ॥**
**निरूहेषु यथालाभमेष वर्गो विधीयते ॥ २८ ॥**

१ '°रोगावस्थस्याक्रमेणापि' इति पा० ।

इदानीं बस्तियौगिकानि द्रव्याण्युपदिशन्नाह—क्षीराणीत्यादि । फलं त्रिफला । सरलो वृक्षविशेषः । संशोधनानि त्रिवृदादीनि । मदनं मदनफलम् । शक्रजा यवा इन्द्रयवाः । मधूलिका तृणविशेषः 'मर्कटिका' इति लोके ॥ २४—२८ ॥

**स्वस्थे क्वाथस्य चत्वारो भागाः स्नेहस्य पञ्चमः ॥**
**क्रुद्धेऽनिले चतुर्थस्तु षष्ठः पित्ते कफेऽष्टमः ॥ २९ ॥**
**सर्वेषु चाष्टमो भागः कल्कानां लवणं पुनः ॥**
**क्षौद्रं मूत्रं फलं क्षीरमम्लं मांसरसं तथा ॥ ३० ॥**
**युक्त्या प्रकल्पयेद्धीमान् निरूहे—**

संप्रति निरूहणेषु क्वाथादिषु प्रतिदोषं कियती कस्य मात्रेत्याह—स्वस्थ इत्यादि । स्वस्थे समवातपित्तकफे पुरुषे । द्वादशप्रसृतस्य निरूहस्य क्वाथस्य चत्वारो भागाश्चत्वारः प्रसृताः अष्टौ पलानि । स्नेहस्य पञ्चम इति चतुर्विंशतिपलनिरूहापेक्षया पादोनपञ्चपलानि । क्रुद्धेऽनिले चतुर्थ इति चतुर्थो भागः षट्पलानीत्यर्थः । षष्ठः पित्ते इति क्रुद्धे पित्ते स्नेहस्य षष्ठो भागश्चत्वारि पलानीत्यर्थः । कफेऽष्टम इति क्रुद्धे कफे स्नेहस्याष्टमो भागस्त्रीणि पलानीत्यर्थः । कषायस्नेहौ विभज्य कल्कभागं दर्शयन्नाह—सर्वेष्विति । सर्वेषु वातपित्तश्लेष्मसु कल्कस्याष्टमो भागस्त्रीणि पलानीत्यर्थः । 'सर्वेषु स्वस्थास्वस्थेषु' इति गयी । लवणं पुनरित्यादि लवणादीनि विशेषप्रमाणेनानुक्तान्यपि युक्त्या दापयेत्, युक्त्या योगेनेत्यर्थः । यथा योगातियोगौ न भवतः । ननु कषायादिवल्लवणादिषु कुतो मात्रा नोक्ता ? सत्यं, लवणादीनां दोषभेषजयोः सामान्यविशेषेण गुणमवलोक्य सम्यग्योगसाधनमेव मानम् । तद्यथा—वाते क्षौद्रं मितं, पित्ते नातिबहु, बहु पुनः कफे इति । एवमन्येष्वपि द्रव्येषु ज्ञेयम् । नियते पुनर्माने क्वचिद्योगः क्वचिदयोग इति स्यात् । एतदुक्तं भवति—कषायादिना नियतमानेन सहानियतमानैर्लवणादिभिर्युक्त्या द्वादश प्रसृताः पूरणीया इति । ततो लवणादीनां मात्रां दोषभेषजयोः सामान्यविशेषन्यायेन गुणमवलोक्य सम्यक् प्रकल्पयेत् । क्वचिद्वातादिविषयसात्म्यमन्यथा पठ्यते । तथाहि—"मधुस्नेहनकल्काख्यकषायावापतः क्रमात् । त्रीणि षड् द्वादश त्रीणि पलान्यनिलरोगिणाम् । पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम् । षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम्"—इति पूर्वाचार्यभणितत्वाद्द्वयमपि मतं प्रमाणम् ॥ २९ ॥

**कल्पना त्वियम् ॥ ३१ ॥**
**कल्कस्नेहकषायाणामविवेकाद्भिषग्वरैः ॥**
**बस्तेः सुकल्पना प्रोक्ता तस्य दानं यथार्थकृत् ॥ ३२ ॥**

निरूहावयवयोगिषु सम्यग्योगहेतुकमात्रां नियम्य समुदायकल्पनामुद्दिशन्नाह—कल्पना त्वियमिति । का पुनरियमित्याह—कल्कस्नेहकषायाणामित्यादि । अविवेकादिति ल्यब्लोपे पञ्चमी; तेन कल्कादीनां विवेकाभावमपृथग्भावं वीक्ष्य सुकल्पना भिषग्वरैः प्रोक्ता । एतेन हस्तप्रधावनसीमन्तादिकृन्मिथ्यायुक्तः । तथा चोक्तं—"न धावत्यौषधं पाणिं न तिष्ठत्यवलिप्य च । न करोति च सीमन्तं स निरूहः सुयोजितः"—इति । तस्य दानं यथार्थकृदिति वातपित्तकफशोणितहरणशोधनसंग्रहणलेखनबृंहणवाजीकरणरसायनादियोगकृत् ॥ ३० ॥ ३१ ॥

**दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम् ।**
**पात्रे तलेन मथ्नीयात्तद्वत् स्नेहं शनैः शनैः ॥ ३३ ॥**
**सम्यक् सुमथिते दद्यात् फलकल्कमतः परम् ॥**
**ततो यथोचितान् कल्कान् भागैः स्वैः श्लक्ष्णपेषितान्**
**गम्भीरे भाजनेऽन्यस्मिन्मथ्नीयात्तं खजेन च ॥**
**यथा वा साधु मन्येत न सान्द्रो न तनुः समः ॥ ३५ ॥**
**रसक्षीराम्लमूत्राणां दोषावस्थामवेक्ष्य तु ॥**
**कषायप्रसृतान् पञ्च सुपूतांस्तत्र दापयेत् ॥ ३६ ॥**

बस्तिद्रव्याणि येन क्रमेण योज्यन्ते तमाह—दत्त्वेत्यादि । अक्षः कर्षमित्यर्थः । मधुनः प्रसृतद्वयं चत्वारि पलानि । तलेन हस्ततलेन । तद्वत् स्नेहं मधुप्रमाणम् । शनैः शनैरल्पमल्पं स्नेहं दत्त्वेत्यर्थः । शनैः शनैरित्युत्तरत्रापि संबध्यते । फलकल्कमतः परं अतः परमस्मिन् सुमथिते फलकल्कं मदनफलकल्कम् । तत इत्यादि ततः फलकल्कादिदानोत्तरम् । कल्कादीन् यथोचितान् वातादिषूचितानतिक्रमेण । भागैः स्वैरिति अंशैरात्मीयैः, यथा मदनफलेन सह सर्वकल्कद्रव्याणां पलत्रयं भवत्येवं कल्पितः । श्लक्ष्णपेषितान् सूक्ष्मपेषितान् सूक्ष्मपेषितान् कल्कान् दद्यादिति संबन्धः । गम्भीरे इत्यादि पूर्वपात्रादन्यस्मिन् गम्भीरभाजने खजेन मथ्नीयात् । खजोऽत्र पञ्चाङ्गुलो हस्तो मन्थानश्च । यथेत्यादि मथ्नीयादित्यत्रापि संबन्धनीयम् । एतेन करेणापि मथ्नीयादित्यर्थः । रसेत्यादि रसादीनां दोषावस्थामपेक्ष्य 'मात्रामर्पयेत्' इति शेषः । तन्त्रान्तरे निरूहयोजना प्रोक्ता—"माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् । आवाप्यावाप्य पात्रे तन्मथ्नीयादन्तराऽन्तरा ॥ सम्यक् पाणितलेनैव निरूहे योजनाविधिः"—इति ॥ ३३–३६ ॥

**अत ऊर्ध्वं द्वादशप्रसृतान् वक्ष्यामः ॥–**
**दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम् ॥**
**विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतित्रयम् ॥ ३७ ॥**
**एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत् ॥**
**संमूर्च्छिते कषायं तु चतुःप्रसृतिसंमितम् ॥ ३८ ॥**
**वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम् ॥**
**एवं प्रकल्पितो बस्तिर्द्वादशप्रसृतो भवेत् ॥ ३९ ॥**

१ 'चत्वारः स्नेहभागस्तु पञ्चमः' इति पा० । २ अस्याग्रे 'क्वाथोऽष्टादशपलानि, एवं पित्तकफयोरपि' इत्यधिकं पठ्यते क्वचित्पुस्तके । ३ 'बस्तिस्तु कल्पितः सम्यक् तस्यादानं यथार्थकृत्' इति पा०; 'आदानम् उपयोगः', इति हाराणचन्द्रः ।

१ 'मथ्नीयादनुस्नेहं' इति पा० । २ 'द्वादशप्रसृतिबस्तिं' इति पा० ।

ज्येष्ठायाः खलु मात्रायाः प्रमाणमिदमीरितम् ॥
अपह्रासे भिषक्कुर्यात्तद्वत् प्रसृतिहापनम् ॥ ४० ॥
यथावयो निरूहाणां कल्पनेयमुदाहृता ॥
सैन्धवादिद्रवान्तानां सिद्धिकामैर्भिषग्वरैः ॥ ४१ ॥

द्वादशप्रसृतिप्रमाणसाधनं निर्दिशन्नाह—अत इत्यादि । संमूर्च्छिते संमिलिते । वितरेत् दद्यात् । आवापः पश्चान्निक्षेप्यं क्षीरकाञ्जिकादि द्रव्यम् । द्विप्रसृतोन्मितं चतुःपलप्रमाणम् । सैन्धवकर्षस्तु स्तोकत्वाच्चतुर्विंशतिपलेष्वेवान्तर्भवतीत्यतिरिक्तदोषो न वाच्यः । अपह्रासे अपह्रासविषये स्तोककरणाभिलाषे प्रसृतहापनं पलद्वयादित्यागं[1] भिषक् कुर्यात् ॥ ३७–४१ ॥

अत ऊर्ध्वं प्रवक्ष्यन्ते वस्तयोऽत्र विभागशः ॥
यथादोषं प्रयुक्ता ये हन्युर्नानाविधान् गदान् ॥४२॥

विभागशः विभागेनेत्यर्थः । यथादोषप्रयुक्ता इत्यत्र दोषशब्दो वातादिषु व्याधिषु च प्रवर्तते ॥ ४२ ॥

शम्पाकोरुबुवर्षाभूवाजिगन्धानिशाच्छदैः ॥
पञ्चमूलीबलारास्नागुडूचीसुरदारुभिः ॥ ४३ ॥
क्वथितैः पालिकैरेभिर्मदनाष्टकसंयुतैः ॥
कल्कैर्मागधिकाम्भोदहपुषामिसिसैन्धवैः ॥ ४४ ॥
वत्साह्वयप्रियङ्ग्वग्रायष्ट्याह्वयरसाञ्जनैः ॥
दद्यादास्थापनं कोष्णं क्षौद्राद्यैरभिसंस्कृतम् ॥ ४५॥
पृष्ठोरुत्रिकशूलाश्मविण्मूत्रानिलसङ्गिनाम् ॥
ग्रहणीमारुतार्शोघ्नं रक्तमांसबलप्रदम् ॥ ४६ ॥

इदानीं कुपितानिलमधिकृत्य बस्तिदानमाह, तथा सर्वबस्तिद्रव्यनिक्षेपक्रमं च । शम्पाकः किरमालकः । निशाच्छदः शटी । पञ्चमूली अत्र ह्रस्वा । अम्भोदः मुस्ता । तत्र शम्पाकादीनि सुरदारुपर्यन्तानि चतुर्दशपलप्रमितानि, मदनाष्टकसंयुतानि चतुर्भिर्मदनफलैः पलं भवति, एवं षोडशपलानि द्रव्याणि जर्जरीकृत्याष्टगुणमष्टाविंशत्यधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेद् यावद्द्वात्रिंशत् पलानि भवन्ति, ततो वस्त्रपूतं कृत्वाऽष्टपलं[2] क्वाथं गृह्णीयात्; चतुर्वारप्रयोजनो[3]ऽयं क्वाथः, द्वितीयं वा तृतीयं वेत्यादिनोक्तत्वात् । ततश्च गम्भीरं ताम्रभाजनमानीय, टङ्कत्रयपरिमितं सैन्धवं निक्षिप्य[4], क्षौद्रमित्युक्तत्वात् पलत्रयपरिमितं मधु च करतलेन मथ्नीयात्, ततः सैन्धवमधुनी एकीकृत्य, क्षौद्राद्यैरभिसंस्कृतमित्यत्राद्यशब्देन स्नेहक्षीरकाञ्जिकमूत्रमांसरसादीनां संगृहीतत्वात् षट्पलप्रमाणं पक्वं तैलं प्रक्षिप्य मथ्नीयात्; तदनु चैकीभूते स्नेहे मागधिकादिरसाञ्जनपर्यन्तनवद्रव्यचूर्णं सैन्धवटङ्कत्रयेण पलत्रयप्रमितं निक्षिप्य मथ्नीयात्; सैन्धवटङ्कत्रयप्रमाणस्यादावेव च निक्षिप्तत्वात् कल्कः पलत्रयपरिमितो निक्षिप्तो भवति; ततश्च द्वात्रिंशत्पलपरिमितक्वाथमध्यादष्टौ पलान्युद्धृत्य तत्र निक्षिपेत्; तदनु च मांसरसस्य सार्धपलं, क्षीरस्यापि सार्धं पलं, काञ्जिकस्यार्धं पलं, तथा गोमूत्रस्यापि तत्र निक्षिप्यते । एवं चतुर्विंशतिपलानि भवन्ति । एवं द्वितीयं तृतीयं चतुर्थं वा पुटकं दद्यात् । अयं बस्तिर्वातरोगे च प्रयोज्यः ॥ ४३–४६ ॥

गुडूचीत्रिफलारास्नादशमूलबलापलैः ॥
क्वथितैः श्लक्ष्णपिष्टैस्तु प्रियङ्गुघनसैन्धवैः[1] ॥ ४७ ॥
शतपुष्पावचाकृष्णायवानीकुष्ठबिल्वजैः ॥
सगुडैरक्षमात्रैस्तु मदनार्धपलान्वितैः ॥ ४८ ॥
क्षौद्रतैलघृतक्षीरशुक्तकाञ्जिकमस्तुभिः ॥
समालोड्य च मूत्रेण दद्यादास्थापनं परम् ॥ ४९ ॥
तेजोवर्णबलोत्साहवीर्याग्निप्राणवर्धनम् ॥
सर्वमारुतरोगघ्नं वयःस्थापनमुत्तमम् ॥ ५० ॥

गुडूचीत्यादि । पलं मांसम् । शेषं प्रसिद्धम् । गुडूच्यादीनि बलान्तानि षोडशद्रव्याणि प्रत्येकं पलमितानि, तथा मांसस्यापि षोडशपलानि, एवं सप्तदशद्रव्याणि द्वात्रिंशत्पलपरिमितानि, मांसस्य[2] बहुलत्वाच्चतुर्गुणं षट्त्रिंशदधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत्, ततश्चतुर्थांशावशिष्टानि द्वात्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे पलाष्टकं ग्राह्यम् । प्रियङ्ग्वादिद्रव्यकल्को यथोक्तप्रमाणेन । बिल्वजं बिल्वफलम् । मधु पूर्ववत्, तैलघृते च पूर्ववत्, क्षीरस्य द्विपलं; शुक्तकाञ्जिकमस्तुगोमूत्राणां प्रत्येकमर्धपलमित्येवं चतुर्विंशतिपलानि भवन्ति । द्रव्यनिक्षेपक्रमः पूर्ववत् । तेजोवर्णेत्यादि तेजै[3]स्त्वग्गतं भ्राजकाग्निसंज्ञं पित्तम् । वर्णो गौरादिः । बलं मांसोपचयः । उत्साहः चैतसिको धर्मः । वीर्यं शक्तिः । प्राणा अग्नीषोमादयः । अयमपि वाते वातरोगे च योज्यः ॥ ४७–५० ॥

कुशादिपञ्चमूलाब्दत्रिफलोत्पलवासकैः ॥
सारिवोशीरमञ्जिष्ठारास्नारेणुपरूषकैः ॥ ५१ ॥
पालिकैः क्वथितैः सम्यग् द्रव्यैरेभिश्च पेषितैः ॥
शृङ्गाटकात्मगुप्तेभकेसरागुरुचन्दनैः ॥ ५२ ॥
विदारीमिसिमञ्जिष्ठाश्यामेन्द्रयवसिन्धुजैः ॥
फलपञ्चकयष्ट्याह्वैः क्षौद्रक्षीरघृताप्लुतैः ॥ ५३ ॥
दत्तमास्थापनं शीतमम्लहीनैस्तथा द्रवैः ॥
दाहासृग्दरपित्तासृक्पित्तगुल्मज्वराञ्जयेत् ॥ ५४ ॥

इदानीं कुपितपित्तमधिकृत्य बस्तिदानमाह—कुशादीत्यादि । कुशकाशनलदर्भकाण्डेक्षव इति कुशादिपञ्चमूलम् । अब्दो मुस्ता, उत्पलं नीलोत्पलम्, रेणुः पर्पटकः । आत्मगुप्ता कपिकच्छूकः श्यामा प्रियङ्गुः । फलं मदनफलम् । पेषितैः पिष्टैः । कुशादिसप्तदशद्रव्याणि पलप्रमितानि, अष्टगुणं षट्त्रिंशदधिकपलशतप्रमाणं जलं दत्त्वा क्वाथयेत्, ततश्चतुर्थांशावशिष्टानि चतुस्त्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे क्वाथपलाष्टकं

१ 'पलद्वयत्यागं' इति पा० । २ 'कृत्वा क्वाथं गृह्णीयात्' इति पा० । ३ 'चतुष्पलप्रयोजनपरोऽयं' इति पा० । ४ 'निक्षिप्यमाणेऽल्पं क्षौद्रमित्युक्तत्वात्' इति पा० ।

१ 'प्रियङ्ग्वञ्जनसैन्धवैः' इति पा० । २ 'मृदोर्मांसस्य' इति पा० । ३ 'तेजः त्वक्स्था दीप्तिः' इति पा० ।

ग्राह्यं, शृङ्गाटकादियष्टीमधुकान्तानां पञ्चदशद्रव्याणां कल्कं पलत्रयप्रमाणं, 'पित्ते नातिबहु क्षौद्रं' इत्युक्तत्वान्मधुनश्चत्वारि पलानि, क्रुद्धे पित्तेऽष्टमो भागः स्नेहस्य' इत्युक्तत्वाद् घृतस्य चत्वारि पलानि, क्षीरस्य पलद्वयं, 'अम्लहीनैस्तथा द्रवैः' इत्युक्तत्वान्मांसरसस्यैकं पलं, इक्षुरसस्य पलद्वयं, एवं चतुर्विंशतिपलानि भवन्ति। द्रव्याणां निक्षेपक्रमः पूर्ववत्। अयं बस्तिः पित्ते पित्तरोगे च प्रयोज्यः। 'विदारीमिसिमञ्जिष्ठा' इत्यत्र मिसिस्थाने विषेति केचित् पठन्ति, तत्र विषम् अतिविषा; विषं वा वालकं, तोयनामत्वात् ॥ ५१–५४ ॥

रोध्रचन्दनमञ्जिष्ठारास्नानन्तावलर्धिभिः ॥
सारिवावृषकाश्मर्यमेदामधुकपद्मकैः ॥ ५५ ॥
स्थिरादितृणमूलैश्च क्वाथः कर्षत्रयोन्मितैः ॥
पिष्टैर्जीवककाकोलीयुगर्धिमधुकोत्पलैः ॥ ५६ ॥
प्रपौण्डरीकजीवन्तीमेदारेणुपरूषकैः ॥
अभीरुमिसिसिन्धूत्थवत्सकोशीरपद्मकैः ॥ ५७ ॥
कसेरुशर्करायुक्तैः सर्पिर्मधुपयःप्लुतैः ॥
द्रवैस्तीक्ष्णाम्लवर्ज्यैश्च दत्तो बस्तिः सुशीतलः ५८
गुल्मासृग्दरहृत्पाण्डुरोगान् सविषमज्वरान् ॥
असृक्पित्तातिसारौ च हन्यात्पित्तकृतान् गदान्५९

रोध्रेत्यादि। अनन्ता उत्पलसारिवा। स्थिरादि लघुपञ्चमूली, तृणमूलं कुशादिपञ्चमूलं, अभीरुः शतावरी। रोध्रादितृणमूल्यन्तानां त्रयोविंशतिद्रव्याणां कर्षत्रयप्रमितत्वेन सप्तदशपलानि कर्षाधिकानि, अष्टगुणमष्टात्रिंशदधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत्, अतः सार्धचतुस्त्रिंशत्पलानि ग्राह्याणि, अत एकपुटकार्थे क्वाथपलाष्टकं ग्राह्यं, जीवकादिशर्करान्तैकोनविंशतिद्रव्याणां कल्कः पलत्रयप्रमाणः, मधुघृते पूर्ववत्, 'द्रवैस्तीक्ष्णाम्लवर्ज्यैः' इत्युक्तत्वात् क्षीरमांसरसेक्षुरसाः पूर्ववत्, इत्येवं चतुर्विंशतिपलानि भवन्ति। द्रव्यनिःक्षेपक्रमः पूर्ववत्। अयमपि बस्तिः पित्ते पित्तरोगे च प्रयोज्यः ॥ ५५–५९ ॥

भद्रानिम्बकुलत्थार्ककोशातक्यमृतामरैः ॥
सारिवाबृहतीपाठामूर्वारग्वधवत्सकैः ॥ ६० ॥
क्वाथः, कल्कस्तु कर्तव्यो वचामदनसर्षपैः[1] ॥
सैन्धवामरकुष्ठैलापिप्पलीबिल्वनागरैः ॥ ६१ ॥
कटुतैलमधुक्षारमूत्रतैलाम्लसंयुतैः ॥
कार्यमास्थापनं तूर्णं कामलापाण्डुमेहिनाम् ॥ ६२ ॥
मेदस्विनामनग्नीनां कफरोगारुचिद्विषाम् ॥
गलगण्डगरग्लानिश्लीपदोदररोगिणाम् ॥ ६३ ॥

इदानीं कुपितकफमधिकृत्य बस्तिदानमाह—भद्रेत्यादि। भद्रा कट्फलं, भद्रादिवत्सकान्तानां त्रयोदशद्रव्याणां षोडशपलानि अष्टगुणमष्टाविंशत्यधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत्, अतो द्वात्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे क्वाथपलाष्टकं, वचादिनागरान्तानां दशद्रव्याणां कल्कस्य पलत्रयं, कटुतैलतिलतैलयोस्त्रीणि पलानि कफेऽष्टम इत्युक्तत्वात्, मधुनः पुनः षट्पलानि, यवक्षारस्यैकपलं, मूत्रस्य सार्धपलं तथा काञ्जिकस्य, एवं चतुर्विंशतिपलानि। द्रव्यनिक्षेपक्रमः पूर्ववत्। अयं बस्तिः कफे कफरोगे च योज्यः ॥ ६०–६३ ॥

दशमूलीनिशाबिल्वपटोलत्रिफलामरैः ॥
क्वथितैः कल्कपिष्टैस्तु मुस्तसैन्धवदारुभिः ॥ ६४ ॥
पाठामागधिकेन्द्राह्वैस्तैलक्षारमधुप्लुतैः ॥
कुर्यादास्थापनं सम्यङ्मूत्राम्लफलयोजितैः ॥ ६५ ॥
कफपाण्डुगदालस्यमूत्रमारुतसंगिनाम् ॥
आमाटोपापचीश्लेष्मगुल्मक्रिमिविकारिणाम् ॥६६॥

दशमूलीत्यादि। इन्द्राह्वः कुटजः। दशमूल्याद्यमरान्तसप्तदशद्रव्याणि अष्टगुणं षट्त्रिंशदधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत्, अतश्चतुस्त्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे क्वाथपलाष्टकं ग्राह्यं, मुस्तादीन्द्राह्वान्तषड्द्रव्याणां कल्कं पूर्ववत्, तथा तैलमधुनोः प्रत्येकं चत्वारि पलानि, क्षारस्यार्धपलं, मूत्रस्य सार्धपलं, तथा काञ्जिकस्य सार्धपलं, मदनफलस्य सार्धपलमित्येवं चतुर्विंशतिपलानि भवन्ति। द्रव्यनिःक्षेपक्रमः पूर्ववत्। अयमपि बस्तिः कफे कफरोगे च प्रयोज्यः ॥ ६४–६६ ॥

वृषाश्मभेदवर्षाभूधान्यगन्धर्वहस्तकैः ॥
दशमूलबलामूर्वायवकोलनिशाच्छदैः ॥ ६७ ॥
कुलत्थबिल्वभूनिम्बैः क्वथितैः पलसंमितैः ॥
कल्कैर्मदनयष्ट्याह्वषड्ग्रन्थामरसर्षपैः ॥ ६८ ॥
पिप्पलीमूलसिन्धूत्थयवानीमिसिवत्सकैः ॥
क्षौद्रेक्षुक्षीरगोमूत्रसर्पिस्तैलरसाप्लुतैः ॥ ६९ ॥
तूर्णमास्थापनं कार्यं संसृष्टबहुरोगिणाम् ॥
गृध्रसीशर्कराष्ठीलातूनीगुल्मगदापहम् ॥ ७० ॥

वृषाश्मभेदेत्यादि। निशाच्छदः शटी षड्ग्रन्था वचा। वृषादिभूनिम्बान्तानि त्रयोविंशतिद्रव्याणि षोडशपलप्रमितानि अष्टाविंशत्यधिकशतपलमितं जलं दत्त्वा क्वाथयेत्, अतो द्वात्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे क्वाथस्याष्टौ पलानि, मदनादिवत्सकान्तदशद्रव्याणां कल्कस्य त्रीणि पलानि, क्षौद्रस्य त्रीणि पलानि, इक्षुक्षीरगोमूत्राणां प्रत्येकं सार्धपलं घृतस्य द्वे पले, तैलस्य द्वे, मांसस्यार्धपलम्। संसृष्टबहुरोगिणामित्यनेन संसर्गसन्निपातरोगप्रशमनत्वमुक्तं स्यात्। तत्र संसर्गो दोषद्वयसमुदायः, सन्निपातस्तु दोषत्रयसमुदायः। तत्र संसर्गे द्वयोरेकस्य प्रकर्षं प्रकल्प्य तदपेक्षया क्षौद्रस्नेहाद्यावापद्रव्याणि पूर्वोक्तन्यायेन स्वबुद्ध्या परिकल्प्य प्रयोज्यानि। यदा तु संसर्गस्तुल्यप्रकर्षो भवति तदा क्षौद्रादीनां गुणदोषान्निपुणबुद्ध्या[2] विचार्योत्कर्षापकर्षतया मिश्रमानेन निक्षिप्य चतुर्विंशतिपलानि

१ 'बलामदनसर्षपैः' इति पा०।

१ 'तथा तैलमधुनी' इति पा०। २ 'क्षौद्रादीनि गुणदोषतया निपुणबुद्ध्या' इति पा०।

पूरणीयानि । एवं दोषत्रयसंयोगेऽपि क्षौद्रादिद्रव्याणामुत्कर्षापकर्षः परिकल्पनीयः ॥ ६७–७० ॥

**रास्नारग्वधवर्षाभूकटुकोशीरवारिदैः ॥**
**त्रायमाणामृतारक्तापञ्चमूलीविभीतकैः ॥ ७१ ॥**
**सबलैः पालिकैः क्वाथः कल्कस्तु मदनान्वितैः ॥**
**यष्ट्याह्वमिसिसिन्धूत्थफलिनीन्द्रयवाह्वयैः ॥ ७२ ॥**
**रसाञ्जनरसक्षौद्रद्राक्षासौवीरसंयुतैः ॥**
**युक्तो बस्तिः सुखोष्णोऽयं मांसशुक्रबलौजसाम् ७३**
**आयुषोऽग्नेश्च संस्कर्ता हन्ति चाशु गदानिमान् ॥**
**गुल्मासृग्दरवीसर्पमूत्रकृच्छ्रक्षतक्षयान् ॥ ७४ ॥**
**विषमज्वरमर्शांसि ग्रहणीं वातकुण्डलीम् ॥**
**जानुजङ्घाशिरोबस्तिग्रहोदावर्तमारुतान् ॥ ७५ ॥**
**वातासृक्शर्कराष्ठीलाकुक्षिशूलोदरारुचीः ॥**
**रक्तपित्तकफोन्मादप्रमेहाध्मानहृद्ग्रहान् ॥ ७६ ॥**

रास्नारग्वधेत्यादि । सबलैः बलासहितैः । रसो मांसरसः । रास्नादिबलान्तषोडशद्रव्याणि पलप्रमितानि अष्टगुणं जलं दत्त्वा क्वाथयेत्, ततो द्वात्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे क्वाथस्य पलाष्टकं, मदनादीन्द्रयवान्तानां षण्णां द्रव्याणां कल्कस्य त्रीणि पलानि, स्नेहस्य निरूहणाङ्गत्वादनुक्तोऽप्यत्र षट्पलप्रमाणो निक्षेपणीयः । तथाच हारीतः—"स्नेहो गुडो मांसरसः पयांसि साम्लानि मूत्रं मधु सैन्धवं च । एते निरूहे विदुषा प्रयोज्याः क्वाथश्च कल्को मदनात् फलं च"—इति । मधुनस्त्रीणि पलानि, रसाञ्जनमांसरसक्षीरसौवीराणां प्रत्येकमेकपलमित्येवं चतुर्विंशतिपलानि भवन्ति । एष बस्तिः स्वस्थातुरविषयः सर्वरोगहरश्च ॥ ७१–७६ ॥

**वातघ्नौषधनिष्क्वाथाः सैन्धवत्रिवृतायुताः ॥**
**साम्लाः सुखोष्णा योज्याः स्युर्बस्तयः कुपितेऽनिले**

तत्र बस्तिदानमातुरविषयमाश्रित्य कथितमेव स्वस्थं प्रति पुनः संक्षेपतो वातादिविषयान् बस्तीन्निर्दिशन्नाह—वातघ्नौषधनिष्क्वाथा इत्यादि । एतच्च बस्तय इत्यस्य विशेषणमत एव बहुवचनम् । तत्र वातघ्नौषधानां भद्रदार्वादीनां षोडशपलप्रमितानामष्टगुणजले क्वथितानां चतुर्भागावशेषेण क्वाथस्य द्वात्रिंशत्पलानि, अत एकपुटकस्यार्थे क्वाथपलाष्टकं, सैन्धवस्य टङ्कत्रयं, वातव्याधावुक्तस्य त्रैवृतस्य स्नेहस्य षट्पलानि, क्षीराण्यम्लानि मूत्राणीत्यादिवर्गमध्ये यानि वातहरद्रव्याणि तेषां गुडसहितस्य कल्कस्य पलत्रयं, निरूहाङ्गत्वान्मधुनः पलत्रयम्, अनुक्तान्यप्यावापद्रव्याणि वातहराणि प्रयोज्यान्यतो मांसरसस्यैकं पलं, तथा क्षीरस्य काञ्जिकस्य सटङ्काधिकं पलमेवं चतुर्विंशतिपलानि भवन्ति । बस्तय इति त्रिपुटचतुःपुटापेक्षं बहुवचनम् । एवं वक्ष्यमाणयोगेष्वपि वाच्यम् ॥ ७७ ॥

१ 'विषमज्वरशूलार्शोग्रहणीवातकुण्डलान्' इति पा० । २ 'एतान्यनुक्तान्यपि दापयेत युक्त्या निरूहे मदनात्फलं च' इति पा० ।



**न्यग्रोधादिगणक्वाथाः काकोल्यादिसमायुताः ॥**
**विधेया बस्तयः पित्ते ससर्पिष्काः सशर्कराः ॥७८॥**

न्यग्रोधादिगणक्वाथा इत्यादि । न्यग्रोधादीनां षोडशपलप्रमितानां क्वाथः पूर्ववत्, अत एकपुटकस्यार्थे क्वाथपलाष्टकं, काकोल्यादेः कल्कीकृतस्य पलद्वयं, घृतस्य चत्वारि पलानि, शर्करायाः पलम्, एतेन काकोल्यादिपलद्वयेन शर्करायाः पलसहितेन कल्कपलत्रयं, निरूहाङ्गत्वादनुक्तस्यापि सैन्धवस्याक्षं, तथा मधुनोऽपि चत्वारि पलानि, 'क्षीराण्यम्लानि मूत्राणि' इत्यादिवर्गमध्ये यानि पित्तहरद्रव्याणि तान्यपि प्रक्षेपणीयानि, तेनेक्षुरसस्य पलं, क्षीरस्य पादोनं पलचतुष्टयमित्येवं चतुर्विंशतिपलानि भवन्ति ॥ ७८ ॥

**आरग्वधादिनिष्क्वाथाः पिप्पल्यादिसमायुताः ॥**
**सक्षौद्रमूत्रा देयाः स्युर्बस्तयः कुपिते कफे ॥ ७९ ॥**

आरग्वधेत्यादि । आरग्वधादीनां षोडशपलप्रमितानां क्वाथः पूर्ववत्, अत एकपुटकस्यार्थे क्वाथपलाष्टकं, पिप्पल्यादिकल्कस्य पलत्रयं, मधुनः षट्पलानि, अनुक्तस्यापि सैन्धवस्य टङ्कत्रयं, तथा कटुतैलस्य त्रीणि पलानि, मूत्रस्य सप्तटङ्काधिकानि त्रीणि पलानि, इत्येवं चतुर्विंशतिपलानि भवन्ति ॥ ७९ ॥

**शर्करेक्षुरसक्षीरघृतयुक्ताः सुशीतलाः ॥**
**क्षीरवृक्षकषायाढ्या बस्तयः शोणिते हिताः ॥८०॥**

शर्करेक्षुरसक्षीरेत्यादि । क्षीरवृक्षकषायेणाढ्याः स्फीताः प्रधाना इत्यर्थः । क्षीरवृक्षाणां न्यग्रोधादीनां षोडशपलप्रमितानां क्वाथः पूर्ववत्, अनुक्तमपि सैन्धवं पूर्ववत्, क्षीरादिवर्गमध्ये कथितशोणितहरद्रव्याणां कल्कस्य पलद्वयम्, अनुक्तस्यापि मधुनश्चत्वारि पलानि तथा च घृतस्य, शर्करायाः पलं तथेक्षुरसस्य, क्षीरस्य टङ्कसप्ताधिकं पलत्रितयमानमित्येवं चतुर्विंशतिपलानि भवन्ति । तदेव पित्तं तदेव रक्तमिति मनसि पर्यालोच्य पित्तमानेनायमपि बस्तिः कल्पितः ॥ ८० ॥

**शोधनद्रव्यनिष्क्वाथास्तत्कल्कस्नेहसैन्धवैः ॥**
**युक्ताः खजेन मथितबस्तयः शोधनाः स्मृताः ८१**

शोधनद्रव्येत्यादि । शोधनद्रव्याणां वमनविरेचनपठितानां क्वाथः पूर्ववत्, सैन्धवं च, तेषामेव शोधनद्रव्याणां कल्कस्य पलद्वयं, स्नेहस्य षट्पलानि, अनुक्तस्यापि मधुनश्चत्वारि पलानि, क्षीरस्यैकं पलं, मूत्रस्य सार्धपलं, तथा काञ्जिकस्यापि, इत्येवं चतुर्विंशतिपलानि भवन्ति । 'बस्तयः शोधनाः स्मृता' इति सामान्यवाक्यत्वात् सामान्यबस्तिपरिभाषामानेनायं बस्तिः परिकल्पितः, तथा वक्ष्यमाणा अपि कल्पनीयाः, वातादिविशेषं च वीक्ष्य विशेषमानेन च प्रयोज्याः ॥ ८१ ॥

**त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुताः ॥**
**ऊषकादिप्रतीवापा बस्तयो लेखनाः स्मृताः ॥८२॥**

त्रिफलाक्वाथेत्यादि । त्रिफलाक्वाथः पूर्ववत्, गोमूत्रस्य च पलत्रयं, निरूहणाङ्गत्वादनुक्तस्यापि सैन्धवस्याक्षं, क्षौद्रस्य चत्वारि

पलानि, यवक्षारस्य कर्षत्रयं, तथा निरूहणाङ्गत्वात् स्नेहः प्राप्तस्ततो लेखनीयस्य कटुतैलस्य षट्पलानि, ऊषकादिद्रव्याणां पलद्वयमित्येवं चतुर्विंशतिः ॥ ८२ ॥

**बृंहणद्रव्यनिष्काथाः कल्कैर्मधुरकैर्युताः ॥**
**सर्पिर्मांसरसोपेता बस्तयो बृंहणाः स्मृताः ॥ ८३ ॥**

बृंहणेत्यादि । बृंहणद्रव्याणां विदारीगन्धादीनां क्वाथः पूर्ववत्, कल्कैरित्यादिना काकोल्यादीनां कल्कपलद्वयं, मधुनः पूर्ववत्, घृतस्य षट्पलानि, सैन्धवं पूर्ववत्, मांसरसस्य सप्तटङ्काधिकं पलत्रयमित्येवं चतुर्विंशतिपलानि ॥ ८३ ॥

**चटकाण्डोच्चटाक्काथाः सक्षीरघृतशर्कराः ॥**
**आत्मगुप्ताफलावापाः स्मृता वाजीकरा नृणाम् ८४**

चटकेत्यादि । चटका ग्रामचटकाः तेषामण्डानि, उच्चटा घुर्घुराख्यः शणघण्टकारफलोऽल्पो विटपः सरयूपकण्ठे हिमवति वारेन्द्र्यां च प्रायश उपलभ्यते, चटकाण्डोच्चटानां षोडशपलप्रमितानां क्वाथः पूर्ववत्, अत एकपुटकस्यार्थे पलाष्टकं, क्षीरस्य पलचतुष्टयं, मधुघृते पूर्ववत्, शर्कराया एकं पलं तथा कपिकच्छूफलानां, मध्ये सैन्धवं चाल्पतरं प्रयोज्यं नैव वा 'शुक्रार्थेषु न तैलगुडसैन्धवम्' इति वचनात्; इत्येवं चतुर्विंशतिः । **गयी** तु चटकाण्डद्रवोच्चटाक्काथौ येषु इति व्याख्याति । तेन उच्चटाया एव क्काथं मन्यते । चटकाण्डद्रवं तु स्वरूपेणैव गृह्णाति ॥ ८४ ॥

**बदर्यैरावतीशेलुशाल्मलीधन्वनाङ्कुराः ॥**
**क्षीरसिद्धाः क्षौद्रयुताः सास्राः पिच्छिलसंज्ञिताः ॥**
**वाराहमाहिषौरभ्रवैडालैणेयकौक्कुटम् ॥**
**सद्यस्कमसृगाजं वा देयं पिच्छिलबस्तिषु ॥ ८६ ॥**

बदर्यैरावतीत्यादि । ऐरावती नागबला, शेलुः श्लेष्मातकः, धन्वनो धनुर्वृक्षः यस्य 'धामन' इति लोके प्रसिद्धिः, अङ्कुरा अग्रपल्लवाः । सास्राः सरुधिराः । बदर्याद्यङ्कुरान् समुदायेन पलत्रयप्रमितान् चतुर्विंशतिपलप्रमितं दुग्धं दत्त्वा, चतुर्गुणं जलं निक्षिप्य क्वाथयेत्, ततः क्षीरशेषं चतुर्विंशतिपलानि ग्राह्याणि; तत्र सामान्यपरिभाषोक्तत्वान्मधुनश्चत्वारि पलान्यावाप्य, द्रवत्वाद्रुधिरस्य चत्वारि पलानीति; एवं पिच्छाबस्तेर्द्वात्रिंशत्पलानि भवन्ति । तथा चोक्तम्—"पिच्छाबस्तेर्भवेत् प्रस्थः पादोनः कीर्तितोऽपरः । चतुर्विंशतिमुष्टिश्च निरूहः समुदाहृतः"—इति । एवमपरेष्वपि पुटकेषु पिच्छाबस्तिमानं कल्पनीयम् । सास्रा इति यदुक्तं तत् कस्यास्रमित्याह—वाराहेत्यादि । उरभ्रो मेषः, एणस्येदम् ऐणेयम्, एणः कृष्णसार इति **जेज्झटाचार्यः**, **ब्रह्मदेवस्तु** एण्या इदमैणेयं, न पुनरेणस्येदं ऐणम् । सद्योजातं सद्यस्कं तत्कालीनं जीववतामेव ग्राह्यं, जीवानुसन्धानार्थम् ॥ ८५ ॥ ८६ ॥

**प्रियङ्ग्वादिगणक्काथा अम्बष्ठाद्येन संयुताः ॥**
**सक्षौद्राः सघृताश्चैव ग्राहिणो बस्तयः स्मृताः ॥८७॥**

प्रियङ्ग्वादिगणक्काथा इत्यादि । प्रियङ्ग्वादिगणस्य षोडशपलप्रमितानि द्रव्याणि अष्टगुणं जलं दत्त्वा क्वाथयेत्, अतो द्वात्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे क्वाथस्याष्टौ पलानि, अम्बष्ठाद्येनेति अम्बष्ठाद्योऽत्र कल्करूपः प्रयोज्यः, तथा च **वृद्धवाग्भटः**,—"ग्राही प्रियङ्ग्वम्बष्ठादिक्काथकल्कैः क्रमेण"—इति । अतोऽम्बष्ठादिसंग्राहकद्रव्याणां कल्कस्य त्रीणि पलानि, मधुनश्चत्वारि, संग्राहकद्रव्यसिद्धघृतस्य षट्पलानि, अनुक्तो यद्यपीहावापस्तथाऽपि संग्राहकत्वात्तक्रस्य त्रीणि पलान्येवं चतुर्विंशतिः ॥ ८७ ॥

**एतेष्वेव च योगेषु स्नेहाः सिद्धाः पृथक् पृथक् ॥**
**समस्तेष्वथवा सम्यग्विधेयाः स्नेहबस्तयः ॥ ८८ ॥**

ननु य एते निरूहयोगास्तेषु स्नेहाः केनौषधेन सिद्धा विधेया इत्याह—एतेष्वेव योगेष्वित्यादि । एतेषु पूर्वोक्तेषु गणेषु । स्नेहाः सर्पिरादयः, अथवा रोगापेक्षया ॥ ८८ ॥

**वन्ध्यानां शतपाकेन शोधितानां यथाक्रमम् ॥**
**बलातैलेन देयाः स्युर्बस्तयस्त्रैवृतेन च ॥ ८९ ॥**

यथाक्रमशोधितानां यैः स्नेहैः स्नेहबस्तयो देयास्तानाह—वन्ध्यानां शतपाकेनेत्यादि । यथाक्रमं स्नेहस्वेदवमनविरेचनास्थापनशिरोविरेचनैः शोधितानां वन्ध्यानां नारीणां बलातैलेन शतपाकेन त्रैवृतेन वा बस्तयो देयाः स्युः भवेयुः । तदेषु शतपाकमुत्पादितं वातव्याधौ, बलातैलं मूढगर्भचिकित्सिते, त्रैवृतं महावातव्याधौ । तत्र त्रिभिः स्नेहैर्घृततैलवसाख्यैः वृतं निर्मितं त्रिवृतं, त्रिवृतमेव त्रैवृतं, स्वार्थिकोऽण् । तच्च वरणं घृतादीनामन्योन्यस्येत्यर्थाद्गम्यते । **जेज्झटादयस्तु** त्रिभिस्तैलवसामज्जभिर्वृतं त्रिवृतं महास्नेहाख्यमिति प्रतिपादयन्ति ॥ ८९ ॥

**नरस्योत्तमसत्त्वस्य तीक्ष्णं बस्तिं निधापयेत् ॥**
**मध्यमं मध्यसत्त्वस्य विपरीतस्य वै मृदुम् ॥ ९० ॥**

सत्त्वभेदेन बस्तेस्त्रैविध्यं प्रतिपादयन्नाह—नरस्येत्यादि । विपरीतस्य हीनसत्त्वस्येत्यर्थः ॥ ९० ॥

**एवं कालं बलं दोषं विकारं च विकारवित् ॥**
**बस्तिद्रव्यबलं चैव वीक्ष्य बस्तीन् प्रयोजयेत् ॥९१॥**

एवं कालमित्यादि । काले शीतेषु तीक्ष्णः, उष्णेषु मृदुः, वसन्तशरदोः साधारणः, शीतोष्णयोर्मध्यः; एवं बले शक्त्युपचयलक्षणे श्रेष्ठे तीक्ष्णः, मध्ये मध्यः, कनिष्ठे मृदुः; कफवाते दोषे तीक्ष्णः, पित्तरक्ते मृदुः, कफपित्ते मध्यः; एवं विकारेऽपि; चकारस्यानुक्तसमुच्चयार्थत्वात् क्रूरमध्यमृदुकोष्ठेष्वपि बोद्धव्यम् ॥ ९१ ॥

**दद्यादुत्क्लेशनं पूर्वं मध्ये दोषहरं पुनः ॥**
**पश्चात् संशमनीयं च दद्याद्बस्तिं विचक्षणः ॥ ९२ ॥**

इदानीमुत्क्लेशनादिना बस्तिं त्रिधा भिन्दन् तेषां भेदानां कालविशेषे प्रदानमाह—दद्यादित्यादि । तत्रानुत्क्लिष्टदोषस्य

१ 'सद्यस्कमसृगण्डं वा' इति पा० ।

१ 'जेज्झटरूपायतौ' इति पा० ।

आदावुत्क्लेशनं, मध्ये दोषहरं, ततः पश्चाद्दोषशेषस्य संशमनाय संशमनमिति । उत्क्लिष्टदोषस्य दोषहरणसंशमने एव कर्तव्ये । दोषहरस्य बस्तेः प्रथमपुटकदानेन सम्यग्दोषानिर्हरणे द्वितीयं तृतीयं वा पुटकं दद्यात्, एवमुत्क्लेशनसंशमनयोरपि वेद्यम् । उत्क्लिष्टादिज्ञानं तु दोषाणां प्रकोपादिलक्षणेन[1] ॥ ९२ ॥

**एरण्डबीजं मधुकं पिप्पली सैन्धवं वचा ॥**
**हपुषाफलकल्कश्च बस्तिरुत्क्लेशनः स्मृतः ॥ ९३ ॥**
**शताह्वा मधुकं बीजं कौटजं फलमेव च ॥**
**सकाञ्जिकः सगोमूत्रो बस्तिर्दोषहरः स्मृतः ॥ ९४ ॥**
**प्रियङ्गुर्मधुकं मुस्ता तथैव च रसाञ्जनम् ॥**
**सक्षीरः शस्यते बस्तिर्दोषाणां शमनः परः ॥ ९५ ॥**

अन्ये तु **वृद्धसुश्रुता**ध्यायिन उत्क्लेशनाद्यर्थमौषधान्यत्र पठन्ति—एरण्डबीजमित्यादि । एतानि एरण्डबीजेत्यादिश्लोकत्रयेण पठितान्यौषधानि उत्क्लेशनाद्यर्थं कल्कावापरूपतया, वातादिवस्त्युक्तकल्कावापेषु कुशाग्रबुद्धिना दोषं मानं च विमृश्य अनुचितपरित्यागोचितस्वीकारेण समवेतानि कार्याणि यथा मात्राधिको मिथ्यामात्रायुक्तश्च बस्तिर्न भवतीति **जेज्जटाचार्यः** । **गयी** तु दद्यादित्यादिकं यापनबस्तिविषयं मन्यते । तेषां तु द्विविधं प्रयोजनं—स्वस्थस्य वाजीकरत्वं रसायनहेतुत्वं चेत्येकम्, अपरं च धातुगतदोषहरणं; तत्र धातुगतदोषाणामुत्क्लेशनाभावात् तदुत्क्लेशनाद्यर्थमिदमुक्तमित्यर्थः । एते चोत्क्लेशनाद्यर्थमेरण्डबीजेत्यादिश्लोकत्रयेण कल्कावापा यथाक्रममुक्ताः । अन्ये तु हीनसत्त्वबलकालद्रव्यविकारेषु कोष्ठविशेषे च मृदवो बस्तयो देयाः, तैश्चाप्युत्क्लेशने दोषाणां हरणं, शेषस्य तु दोषस्य संशमनमित्याहुः ॥ ९३–९५ ॥

**नृपाणां तत्समानानां तथा सुमहतामपि ॥**
**नारीणां सुकुमाराणां शिशुस्थविरयोरपि ॥ ९६ ॥**
**दोषनिर्हरणार्थाय बलवर्णोदयाय च ॥**
**समासेनोपदेक्ष्यामि विधानं माधुतैलिकम् ॥ ९७ ॥**
**यानस्त्रीभोज्यपानेषु नियमश्चात्र नोच्यते ॥**
**फलं च विपुलं दृष्टं व्यापदां चाप्यसंभवः ॥ ९८ ॥**
**योज्यस्त्वतः सुखेनैव निरूहक्रममिच्छता ॥**
**यदेच्छति तदैवैष प्रयोक्तव्यो विपश्चिता ॥ ९९ ॥**

अथ के ते मृदवो बस्तय इति पृष्टो विषयनिर्देशपूर्वं तानेव निर्दिशन्नाह[2]—नृपाणामित्यादि । तत्समानां राजतुल्यपुरुषाणां वाणिज्यव्यवहारिणां वार्धुषिकाणाम् । शिशुस्थविरयोः बालवृद्धयोः । दोषनिर्हरणार्थाय स्वस्थेऽपि कालैककृतदोषनिर्हरणार्थाय, बलवर्णोदयाय च अपेतसकलदोषस्येत्यर्थः । नियमो निषेधः । अत्र माधुतैलिकविधाने । यदेच्छतीति यदा यस्मिन् काले आतुर इच्छति तदा तस्मिन् काले विपश्चिता वैद्येन एष बस्तिः प्रयोक्तव्यः, एतेन सार्वकालिकत्वमुक्तं भवति ॥ ९६–९९ ॥

**मधुतैले समे स्यातां क्वाथश्चैरण्डमूलजः ॥**
**पलार्धं शतपुष्पायास्ततोऽर्धं सैन्धवस्य च ॥ १०० ॥**
**फलेनैकेन संयुक्तः खजेन च विलोडितः ॥**
**देयः सुखोष्णो भिषजा माधुतैलिकसंज्ञितः ॥ १०१ ॥**

मधुतैले समे स्यातामित्यादि । पादहीनाः सर्वे एव माधुतैलिकाः, ततश्च तथा कल्पनीया यथा नव प्रसृता भवन्ति; मधुतैलयोः प्रसृताश्चत्वारो द्विकर्षाधिकाः, एरण्डमूलकषायस्य तावन्त एव, शतपुष्पाऽर्धपलं, सैन्धवस्य कर्षं, मदनफलं चैकमित्येवं नवप्रसृता भवन्ति । अनया कल्पनया सर्वे एव माधुतैलिकाः कल्पनीया इति **जेज्जटाचार्यः** । **गयी** तु 'पलेनैकेन संयुक्तः' इति पठित्वा मृदुनाऽनुक्तेन मांसरसकाञ्जिकादिना पूरणं करोति । एवमपरेषु चतुर्षु नव प्रसृताः पूरणीया इत्याह ॥ १००॥१०१ ॥

**वचामधुकतैलं च क्वाथः सरससैन्धवः ॥**
**पिप्पलीफलसंयुक्तो बस्तिर्युक्तरथः स्मृतः ॥ १०२ ॥**

वचामधुकेत्यादि । वचासैन्धवपिप्पलीमदनफलानां प्रत्येकं कार्षिका भागाः, मधुतैलयोश्चत्वारः प्रसृताः कर्षद्वयाधिकाः, एरण्डमूलक्वाथस्तावन्मात्र एव; इति युक्तरथाभिधानो माधुतैलिकः ॥ १०२ ॥

**सुरदारु वरा रास्ना शतपुष्पा वचा मधु ॥**
**हिङ्गुसैन्धवसंयुक्तो बस्तिर्दोषहरः स्मृतः ॥ १०३ ॥**

सुरदार्वित्यादि । सुरदारुवराराम्नाशतपुष्पावचाहिङ्गुसैन्धवानां तुल्यमानेनैकं पलं, मधुतैलयोः कर्षद्वयाधिकान्यष्टौ पलानि, एरण्डमूलक्वाथस्तावन्मात्र एव । एवं दोषहराभिधानो माधुतैलिकः; केचिदत्र हिङ्गुस्थाने बिडं पठन्ति ॥ १०३ ॥

**पञ्चमूलीकषायं च तैलं मागधिका मधु ॥**
**बस्तिरेष विधातव्यः सशताह्वः ससैन्धवः ॥ १०४ ॥**

पञ्चमूलीकषायमित्यादि । पञ्चमूलीकषायस्य कर्षद्वयाधिकानि अष्टौ पलानि, मधुतैले अपि तावन्मात्रे एव, मागधिकाशताह्वासैन्धवानामेकं पलम् । अयं च पाञ्चमूलिको माधुतैलिकः ॥ १०४ ॥

**यवकोलकुलत्थानां क्वाथो मागधिका मधु ॥**
**ससैन्धवः सयष्ट्याह्वः सिद्धबस्तिरिति स्मृतः १०५**

यवकोलकुलत्थानां पूर्ववत् क्वाथः, मधुतैलेऽपि पूर्ववत्, मागधिकासैन्धवयष्ट्याह्वानामेकं पलम् । सिद्धबस्त्यभिधानोऽयं माधुतैलिकः । पञ्चाप्येते माधुतैलिका उक्ताः ॥ १०५ ॥

**मुस्तापाठामृतातिक्ताबलारास्नापुनर्नवाः ॥**
**मञ्जिष्ठारग्वधोशीरत्रायमाणाख्यगोक्षुरान् ॥ १०६ ॥**
**पालिकान् पञ्चमूलाल्पसहितान्मदनाष्टकम् ॥**
**जलाढके पचेत् क्वाथं पादशेषं पुनः पचेत् ॥ १०७ ॥**
**क्षीरार्धाढकसंयुक्तमाक्षीरात् सुपरिस्रुतम्[1] ॥**
**पादेन जाङ्गलरसस्तथा मधुघृतं समम् ॥ १०८ ॥**

१ 'प्रवृत्युन्मुखत्वादिलक्षणेन' इति पा० । २ 'आतुरविषयान्निर्दिश्य स्वस्थविषयं निर्दिशन्नाह' इति पा० ।

१ 'क्षीरप्रस्थेन संयुक्तं क्षीरशेषं परिस्रुतम्' इति पा० ।

**शताह्वाफलिनीयष्टीवत्सकैः सरसाञ्जनैः ॥**
**कार्षिकैः सैन्धवोन्मिश्रैः कल्कैर्वस्तिः प्रयोजितः॥१०९॥**
**वातासृङ्मेहशोफार्शोगुल्ममूत्रविबन्धनुत् ॥**
**विसर्पज्वरविड्भङ्गरक्तपित्तविनाशनः ॥ ११० ॥**
**बल्यः संजीवनो वृष्यश्चक्षुष्यः शूलनाशनः ॥**
**यापनानामयं राजा वस्तिर्मुस्तादिको मतः ॥ १११ ॥**

माधुतैलिकस्याग्रतो **गयदासाचार्य**मते मुस्तादिस्थापनवस्तिर्नास्ति, **जेज्जटाचार्य**स्तु मुस्तादिस्थापनवस्तिं पठति व्याख्यानयति च, तद्व्याख्यानाभिप्रायेण मयाऽप्यसौ व्याख्यायते—मुस्तापाठेत्यादि। मुस्तादीनि पञ्चमूलाल्पसहितान्यष्टादशपलानि, ततो मदनस्याष्टाभिः फलैर्द्विपलमित्येवं विंशतिपलप्रमितानि जलाढकेऽष्टाविंशत्यधिकशतपलप्रमिते पचेत्, ततो द्वात्रिंशत्पलप्रमितः क्वाथोऽवशिष्टो भवति, ततस्तं क्वाथं पादशेषं क्षीरार्धाढकसंयुक्तं दुग्धस्य चतुःषष्टिपलोपेतं पुनः पचेत्तावद्यावत् क्षीरावशेषं प्रस्थद्वयं चतुःषष्टिपलानि भवति, पादेन प्रस्थस्याष्टौ पलानि मांसरसस्य, एवं द्वासप्ततिपलानि भवन्ति। अतो मध्यादेकस्य पुटस्यार्थे चतुर्विंशतिपलानि ग्राह्याणि; तत्र मधुनः प्रसृतः सार्धः, घृतस्य तावदित्येवं षट्पलानि क्षिप्यन्ते, शताह्वादीनां षड्द्रव्याणां कर्षप्रमितानां कल्कस्य सार्धं पलं, निरूहाङ्गत्वान्मदनफलस्यार्धपलमेवं कल्कस्य प्रसृतो भवतीत्येकस्मिन् पुटके द्वात्रिंशत्पलप्रमितप्रस्थो भवति; एवमपरमपि पुटकद्वयं करणीयं, एवं पुटकत्रयस्यार्थे षण्णवतिपलानि भवन्ति। इदं मुस्तादियापनवस्तिमानं **जेज्जटाचार्येण** तन्त्रान्तरोक्तमध्यमानेन कल्पितं। तथा च **पराशरः**,—"निरूहस्य प्रमाणं तु प्रस्थं पादोत्तरं स्मृतम्। मध्यमं प्रस्थमुद्दिष्टं हीनं च कुडवास्त्रयः"—इति। गूढपदभङ्गटिप्पणकारेण पुनरन्यथा व्याख्यातम्। तथाहि—"मुस्तादिद्रव्याणां पालिकान् भागान् द्रवत्वाद्द्विगुणया कल्पनया जलस्याढके अष्टाविंशत्यधिके पलशते पक्त्वा पादशेषं द्वात्रिंशत्पलप्रमाणं क्षीरार्धाढकसंयुक्तं पुनः पचेद्यावत्क्षीरशेषं चतुःषष्टिपलानि भवन्ति। ततश्च सपादप्रस्थे जाङ्गलरसस्य पञ्च पलानि, मधुघृतं पृथक् सार्धद्विपलसंमितं, शताह्वादिककल्कस्य मदनफलाष्टकेन युक्तं पलद्वयं प्रक्षिप्यैकध्यं षट्सप्तत्या पलैः पुटकत्रयं देयम् ॥ १०६-१११ ॥

**अवेक्ष्य भेषजं बुद्ध्या विकारं च विकारवित् ॥**
**बीजेनानेन शास्त्रज्ञः कुर्याद्वस्तिशतान्यपि ॥ ११२ ॥**

अवेक्ष्य भेषजमित्यादि। तत्र भेषजं व्रणज्वरादिहरं, विकारं च व्रणज्वरादिकं वातपित्तकफसंसर्गसन्निपातजं शोणितजं च। चकारेणानुक्तं कालबलादि समुच्चीयते। 'वातघ्नौषधनिष्क्वाथा' इत्यादिषु वस्तिपूक्तेन बीजेनेत्यर्थः ॥ ११२ ॥

**अजीर्णे न प्रयुञ्जीत दिवास्वप्नं च वर्जयेत् ॥**
**आहाराचारिकं शेषमन्यत्[1] कामं समाचरेत् ॥११३॥**

अजीर्णे नेत्यादि। अन्यच्छेषमाहाराचाराश्रितं कर्म कामं यथेष्टं समाचरेत् ॥ ११३ ॥

**यस्मान्मधु च तैलं च प्राधान्येन[1] प्रदीयते ॥**
**माधुतैलिक इत्येवं भिषग्भिर्वस्तिरुच्यते ॥ ११४ ॥**
**रथेष्वपि च युक्तेषु हस्त्यश्वे चापि कल्पिते ॥**
**यस्मान्न प्रतिषिद्धोऽयमतो युक्तरथः स्मृतः ॥११५॥**
**बलोपचयवर्णानां यस्माद् व्याधिशतस्य च ॥**
**भवत्येतेन सिद्धिस्तु सिद्धवस्तिरतो मतः ॥ ११६ ॥**
**सुखिनामल्पदोषाणां नित्यं स्निग्धाश्च ये नराः ॥**
**मृदुकोष्ठाश्च ये तेषां विधेया माधुतैलिकाः ॥११७॥**

विशेषसंज्ञया माधुतैलिकानाह—यस्मान्मधु च तैलमित्यादि ॥ ११४-११७ ॥

**मृदुत्वात् पादहीनत्वादकृत्स्नविधिसेवनात् ॥**
**एकवस्तिप्रदानाच्च सिद्धवस्तिष्वयन्त्रणा ॥ ११८ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने निरूहक्रमचिकित्सितं नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥**

कस्मादेते नियन्त्रणास्तदाह—मृदुत्वादित्यादि। मृदुवीर्यैरौषधैः कल्पितो मृदुः। पादहीनत्वादिति पादेन हीनः पादाभ्यां वा हीनः, ततश्च पादहीना नव प्रसृता भवन्ति, पादाभ्यां हीनाः षट्प्रसृता भवन्ति। अकृत्स्नविधिसेवनादिति वमनादिसंस्कारवर्जनात्। एकवस्तिप्रदानाच्चेति एकपुटकप्रदानात्; 'एकाहं प्रणिधानाच्च' इति केचित् पठन्ति, एकाहमेव प्रणिधानं वस्तिदानमित्यर्थः। परं कालैककृते दोषकोपे कदाचित् सम्यङ्निरूढलक्षणमवेक्ष्य द्वित्र्यादिवस्तिदानमपीति पाठविशेषाद्विशिष्टोऽर्थः; अतो 'नैकाहप्रणिधानात्' इत्यपरे पठन्ति; तत्र शोधननिरूहवदेकाहमेव प्रणिधानं नास्त्येव; किं तर्हि साधारणत्वात् समधातुषु वाजीकरणादावसकृद्दानमपीति ॥ ११८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सास्थानेऽष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशत्तमोऽध्यायः ।

**अथात आतुरोपद्रवचिकित्सितं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि। उपद्रवन्तीत्युपद्रवा रोगाः, आतुरस्योपद्रवा आतुरोपद्रवाः; ते चात्र प्रायेण पञ्चकर्मनिमित्ता व्यापदः, तेषां चिकित्सितं कारणगुणप्रत्यनीकं विधानम्। 'आतुरोपक्रमचिकित्सितम्' इति केचित् पठन्ति। स्नेहादीनां निरूहान्तानामुपक्रमाणामन्तेऽग्निमान्द्यमेवावश्यम्भावि, तत्सन्धुक्षणार्थं पेयादिसंसर्जनोपदेशाय वर्ज्यानां च क्रोधादीनां प्रज्ञापराधात्

[1] 'शेषमन्ययुक्तं' इति पा०।

[1] 'प्राधान्येनात्र वर्तते' इति पा०।

करणे तन्नव्याधिप्रशमनाय चातुरोपद्रवचिकित्सिताभिधानम् ॥ १ ॥ २ ॥

**स्नेहपीतस्य वान्तस्य विरिक्तस्य स्रुतासृजः ॥**
**निरूढस्य च कायाग्निर्मन्दो भवति देहिनः ॥ ३ ॥**
**सोऽन्नैरत्यर्थगुरुभिरुपयुक्तैः प्रशाम्यति ॥**
**अल्पो महद्भिर्बहुभिश्छादितोऽग्निरिवेन्धनैः ॥ ४ ॥**
**स चाल्पैर्लघुभिश्चान्नैरुपयुक्तैर्विवर्धते ॥**
**काष्ठैरणुभिरल्पैश्च सन्धुक्षित इवानलः ॥ ५ ॥**

इदानीं स्नेहपानपूर्वकपञ्चकर्मणां सोपपत्तिककर्मकरणाद् व्यापदां निवारणमुपदिशन्नाह—स्नेहपीतस्येत्यादि । निरूढस्य चेति चकारेणानुवासितमनुक्तं समुच्चिनोति । ननु स्नेहपानादयोऽनलप्रबोधोदय हेतव इत्युक्तत्वात् कथं तैर्मन्दोऽग्निर्भवति देहिनः ? उच्यते, तत्काल एव मन्दः, क्रमेण तु तेन दीप्तो भवतीति न दोषप्रसङ्गः । तस्य क्रमेण यथा प्राकृतावस्थापन्नत्वं भवति तथा निर्दिशन्नाह—सोऽन्नैरित्यादि ॥ ३–५ ॥

**हृतदोषप्रमाणेन सदाऽऽहारविधिः स्मृतः ॥**

तैत्रोक्तप्रमाणकारणमुद्दिशन्नाह—हृतदोषेत्यादि ॥—[2]

**त्रीणि चात्र प्रमाणानि प्रस्थोऽर्धाढकमाढकम् ॥ ६ ॥**
**तत्रावरं प्रस्थमात्रं द्वे शेषे मध्यमोत्तमे ॥**

तदेव कतिविधं कियत्प्रमाणमित्याह—त्रीणि चात्रेत्यादि ॥ ६ ॥—

**प्रस्थे परिस्रुते देया यवागूः स्वल्पतण्डुला ॥ ७ ॥**
**द्वे चैवार्धाढके देये तिस्रश्चाप्याढके गते ॥**
**विलेपीमुचिताद्भक्ताच्चतुर्थांशकृतां ततः ॥ ८ ॥**
**दद्यादुक्तेन विधिना क्लिन्नसिक्थामपिच्छिलाम् ॥**
**अस्निग्धलवणं[3] स्वच्छमुद्गयूषयुतं ततः ॥ ९ ॥**
**अंशद्वयप्रमाणेन दद्यात् सुस्विन्नमोदनम् ॥**
**ततस्तु कृतसंज्ञेन हृद्येनेन्द्रियबोधिना ॥ १० ॥**
**त्रीनंशान् वितरेद्भोक्तुमातुरायौदनं मृदु ॥**
**ततो यथोचितं भक्तं भोक्तुमस्मै विचक्षणः ॥ ११ ॥**
**लावैणहरिणादीनां रसैर्दद्यात् सुसंस्कृतैः ॥**

तेषु च त्रिषु दोषनिर्हरणप्रमाणेषु[1] त्रीनेवानुक्रमान् क्रमेणाह—प्रस्थे परिस्रुते इत्यादि । प्रस्थश्चात्र सार्धत्रयोदशपलः । यवागूशब्देन पेया विवक्षिता, स्वल्पतण्डुला अष्टांशतण्डुलकृता; तदुक्तं—"पेयां पिबेदुचितभक्तकृताष्टभागां त्रिर्द्विः सकृत्प्रवरमध्यजघन्यशुद्धः"—इति । यवागूरित्यत्रैकवचननिर्देशादेकवारमिति बोद्धव्यम् । द्वे चैवार्धाढके इत्यत्र द्वे पेये द्वौ वाराविति बोद्धव्यम् । तिस्रश्चाप्याढके गते इत्यत्र तिस्रः पेया इति बोद्धव्यम् । विलेपीत्यादि । उचितादभ्यस्तात्तण्डुलाच्चतुर्थभागेन कृताम् । उक्तेन विधिनेति एकद्वित्रिक्रमेण । क्लिन्नसिक्थाम् अतिपक्वतण्डुलाम् । अपिच्छिलां मण्डरहितां[1], यवागूं दद्यात् 'भिषक्' इत्यध्याहारः । अंशद्वयप्रमाणेनेत्यादि । उचितादर्धभागतण्डुलात् कृतं भक्तमित्यर्थः । त्रीनंशानिति त्रिभागकल्पितं सम्यक्पक्वं घृतमण्डेन[2] समन्वितम् । तत इत्यादि ।—ततोऽनन्तरं कृतसंज्ञेन यूषेण सह आतुराय रोगिणे ओदनं भक्तमुचितं तण्डुलांशत्रयकृतं भोक्तुं वितरेद् दद्यादिति संबन्धः । अस्य श्लोकस्यादौ "त्रिभागकलितं सम्यगकृतेनाथ संमितम्" इति प्रतिपुस्तकेषु पाठो दृश्यते स च न पठनीयः, **जेज्जटादि**निबन्धकारैः सर्वैरपि परिहृतत्वात् । ततो यथोचितमित्यादि ।—यथोचितमिति अंशचतुष्टयप्रमाणं परिपूर्णमित्यर्थः । हृतदोषप्रमाणेनेत्यादि दद्यात् सुसंस्कृतैरित्यन्तग्रन्थेनैतदुक्तं भवति—हीनशुद्धिशुद्धस्य पुरुषस्य तावत् प्रथमेऽन्नकाले उचितभक्तकृताष्टभागां पेयां दद्यात्, तस्मिन्नेव दिने द्वितीयेऽन्नकाले प्रकृतिस्थात् जरणकालोचिताद्भक्तात् चतुर्थांशेन कृतामतिपक्वतण्डुलावयवां मण्डरहितां विलेपीं दद्यात्; द्वितीयेऽह्नि तृतीयेऽन्नकालेऽस्निग्धालवणस्वच्छेनाकृतमुद्गयूषेणोचितादर्धभागतण्डुलकृतं सुस्विन्नमोदनं दद्यात्, तस्मिन्नेव दिने चतुर्थेऽन्नकाले हृद्येनेन्द्रियबोधिना कृतसंज्ञेन यूषेणोचिततण्डुलांशत्रयकृतमोदनं भोक्तुं दद्यात्; ततस्तृतीयेऽह्नि पञ्चमेऽन्नकाले लावैणहरिणादीनां सुसंस्कृतरसैरंशचतुष्टयप्रमाणं भक्तं भोक्तुं दद्यात्, तृतीयेऽह्नि षष्ठेऽन्नकाले प्रकृतिभोजनमागच्छेत् । मध्यशुद्धिशुद्धस्य च तावदादौ द्वयोरन्नकालयोः पेयां दद्यात्, द्वितीयेऽह्नि द्वयोरप्यन्नकालयोर्विलेपिकां, तृतीयेऽह्नि कालद्वयेऽप्यकृतयूषं, चतुर्थेऽह्नि कालद्वयेऽपि कृतयूषं, पञ्चमेऽह्नि कालद्वयेऽपि मांसरसमित्यतः षष्ठेऽह्नि प्रकृतिभोजनमागच्छेत् । उत्तमशुद्धिशुद्धस्य च तावत् प्रथमेऽह्नि द्वयोरप्यन्नकालयोः पेयां दद्यात्, द्वितीयेऽह्नि प्रथमेऽन्नकाले पेयां, द्वितीये विलेपिकां; तृतीयेऽह्नि द्वयोरप्यन्नकालयोर्विलेपिकां; चतुर्थेऽह्नि द्वयोरप्यन्नकालयोरकृतयूषं; पञ्चमेऽह्नि प्रथमेऽन्नकालेऽकृतयूषं, द्वितीयेऽन्नकाले कृतयूषं; षष्ठेऽह्नि द्वयोरप्यन्नकालयोः कृतयूषं; सप्तमेऽह्नि द्वयोरप्यन्नकालयोर्मांसरसं; अष्टमेऽह्नि प्रथमेऽन्नकाले मांसरसम्, अतोऽष्टमदिवसस्य द्वितीयेऽन्नकाले प्रकृतिभोजनमाहरेत् । **गयी** तु हीनशुद्धौ प्रथमेऽन्नकाले उचिततण्डुलाष्टभागकृता पेया, द्वितीयेऽन्नकाले तूचिततण्डुलचतुर्थभागकृता विलेपी, तृतीयेऽन्नकाले तूचिततण्डुलार्धभागकृतेन भक्तेन सह दकलावणिको यूषो रसो वा यथादोषं, चतुर्थेऽन्नकाले तूचिततण्डुलभागत्रयकृतेन भक्तेन सह कृतसंज्ञो यूषः पिप्पलीश्रृङ्गवेरसिद्धः कृतो रसो वा यथादोषं, ततो यथोचितं परिपूर्णभक्तं सुसंस्कृतेन रसेन यूषेण वा देयमिति तृतीये दिने प्रकृतिभोजनम् । एवं मध्यमोत्तमशुद्धौ पेयादीनां द्वित्रिकालदानेन यथाक्रमं पञ्चमे सप्तमे च दिने प्रकृतिभोजनम् । उक्तं च, तन्त्रान्तरे—"पेयां विलेपीमकृतं कृतं च यूषं रसं

१ 'अत्रैवानुक्रमव्यतिरेके दोषमन्वये च गुणं निर्दिशन्नाह' इति पा० । २ 'तत्रानुक्रमप्रमाणकारणमुद्दिशन्नाह—' इति पा० । ३ 'अस्निग्धलवणां स्वच्छमुद्गयूषयुतां' इति पा० ।

१ 'तण्डुलरहितां' इति पा० । २ 'सघृतमण्डेन' इति पा० ।

त्रींस्त्रीनुभयं तथैकम् । क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः" ( वा. सू. अ. १८ )—इति ॥ ७-११ ॥—

**हीनमध्योत्तमेष्वेषु विरेकेषु प्रकीर्तितः ॥ १२ ॥**
**एकद्वित्रिगुणः सम्यगाहारस्य क्रमस्त्वयम् ॥**

उक्तमेवानुक्रमं नियमयन्नाह—हीनेत्यादि । प्रस्थे परिस्रुते हीनो विरेकः, तस्मिन् पेयादिक्रम एकैकमन्नकालं देयः; अर्धाढके परिस्रुते मध्यो विरेकः, तस्मिन् पेयादिः प्रत्येकं द्वौ द्वावन्नकालौ देयः; आढके परिस्रुते उत्तमो विरेकः, तस्मिन् पेयादिः प्रत्येकं त्रींस्त्रीनन्नकालान् देयः । एषु पूर्वोक्तेषु हीनादिविरेकेषु हृतदोषमानापेक्षया एकद्वित्रिगुणोऽयमाहारक्रमः सम्यक् प्रकीर्तितः; ततो मिथ्याहीनातियोगेनासम्यगित्यर्थः । एतदुक्तं भवति—हीने विरेके चतुर्भिरन्नकालैः सायंप्रातिकभोजनाभ्यां द्व्यहं, मध्ये तद्विगुणेन चतुरहं, उत्तमे तत्रिगुणेन षडहमिति ॥ १२ ॥—

**कफपित्ताधिकान्मद्यनित्यान् हीनविशोधितान् ॥ १३ ॥**
**पेयाऽभिष्यन्दयेत्तेषां तर्पणादिक्रमो हितः ॥**

इदानीं क्वचिद्विषये पेयादिक्रमनिषेधमाह—कफेत्यादि । ये कफपित्ताधिकास्तथा मद्यनित्यास्तान् हीनविशोधितान् पेयाऽभिष्यन्दयेत् अभिष्यण्णस्रोतस्कान् कुर्यात्, अतस्तेषां हीनशोधितानां तर्पणादिक्रमो हितः । तत्र प्रथमेऽन्नकाले तर्पणं लाजसक्तुभिः कार्यं ततो यूषभक्तादिकमिति । तन्त्रान्तरे चोक्तं—"स्रुताल्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकम् । पेयां न पाययेत्" ( वा. सू. अ. १८ )—इत्यादि । ननु तर्पणादिक्रमस्वीकारे हीनविरेके प्राक्प्रतिपादितस्य पेयादिक्रमस्य नैरर्थक्यम् ? उच्यते—कफपित्ताधिकमद्यनित्यौ परित्यज्यान्यत्र हीनविरेके पेयादिक्रम इति ॥ १३ ॥—

**वेदनालाभनियमशोकवैचित्त्यहेतुभिः ॥ १४ ॥**
**नरानुपोषितांश्चापि विरिक्तवदुपाचरेत् ॥**

इदानीमशुद्धेऽपि क्वचिदग्निमान्द्यहेतौ संक्षेपार्थं संशोधनोक्तसंसर्जनानुक्रममतिदेशेन निर्दिशन्नाह—वेदनालाभनियमेत्यादि । वेदनाया लाभो वेदनालाभः, अलाभ इष्टस्येति केचिदाचक्षते, लाभोऽनिष्टस्येत्यन्ये, नियम उपवासादिः, वैचित्त्यम् उन्मादादि; एतैर्हेतुभिरुपोषितान्नरान् विरिक्तवदुपाचरेत् । तत्रापि लङ्घनमानेन हीनमध्योत्तमाभिहितेन द्व्यहं चतुरहं षडहमेवान्नसंसर्जनम् ॥ १४ ॥—

**आढकार्धाढकप्रस्थसंख्या ह्येषा विरेचने ॥ १५ ॥**
**श्लेष्मान्तत्वाद्विरेकस्य न तामिच्छन्ति तद्विदः ॥**
**एको विरेकः श्लेष्मान्तो न द्वितीयोऽस्ति कश्चन ॥ १६ ॥**

प्राक्प्रतिपादितप्रस्थार्धाढकादिसंख्याया विरेकैकविषयत्वं प्रतिपाद्य कारणमुखेन निराकुर्वन्नाह—आढकार्धाढकेत्यादि । अग्न्यधिष्ठानसंत्वादत्यर्थमग्निमान्द्यहेतौ विरेचन एवाढकादिसंख्या, वमनास्थापनयोस्त्वग्न्यधिष्ठानानभिभवेन तादृशाग्निमान्द्याभावान्माननियमो नास्ति; अत एव तदहरेव वमने कुलत्थमुद्गयूषभोजनं, आस्थापने मांसरसभोजनमनुवासनं च । एतन्मतं निरस्यन्नाह—श्लेष्मान्तत्वादित्यादि । अयमभिप्रायः—विरेचनं निःशेषपित्तनिर्हरणाय प्रयुज्यते, निःशेषपित्तनिर्हरणं च तदैवानुमीयते यदा पित्तप्रवर्तनानन्तरं तत् परदेशस्थ आमरूपः कफः प्रवर्तते; तस्मात् कफान्तिकत्वाद्विरेकस्य तां प्रस्थादिकां संख्यां विरेचनविदो नेच्छन्ति । एतेन वैगिकोऽपि निराकृतः, लैङ्गिकः पुनरैकान्तेन विशुद्ध एव । यतो लैङ्गिकेऽपि कफान्तिकत्वमस्ति । तथाच—'वमने प्रसेकौषधकफपित्तानिलाः क्रमेण गच्छति, एवमेव विरेचने पुरीषपित्तौषधकफा' इति । अतो वैगिकमानिकौ विरेकौ गौणतया प्रतिपादितौ क्वचिद्बालवृद्धाद्यवस्थावशात् प्रयुक्तौ कर्तव्यौ । मुख्यः पुनरेकः कफान्तिक एवेत्याह—एको विरेक इत्यादि । न द्वितीयोऽस्तीति तृतीयस्य पुनः का कथा, एवं वमनमप्येकमेव । तथाच भोजः,—"तस्मान्मतिमता नित्यमात्मानं परिरक्षता । पित्तान्तं वमनं स्थाप्यं कफान्तं च विरेचनम्"—इति ॥ १५ ॥ १६ ॥

**बलं यत्त्रिविधं प्रोक्तमतस्तत्र क्रमस्त्रिधा ॥**
**तत्रानुक्रममेकं तु बलस्थः सकृदाचरेत् ॥ १७ ॥**
**द्विराचरेन्मध्यबलस्त्रीन् वारान् दुर्बलस्तथा ॥**
**केचिदेवं क्रमं प्राहुर्मन्दमध्योत्तमाग्निषु ॥ १८ ॥**

एवं तर्हि तदाश्रयान्नसंसर्जनत्रित्वमपि नास्तीति प्रकारान्तरेणैवान्नसंसर्जनत्रित्वं तदाश्रयं दर्शयन्नाह—बलं यत्त्रिविधमित्यादि । बलमत्रोपचयलक्षणमेव । यस्मात् प्रागेक एव विरेक उपवर्णितः, अतस्त्रिविध आहारक्रमो बलं यत्त्रिविधं प्रोक्तं तत्र ज्ञेयः । तत्र त्रिविधेऽपि बले सर्वत्र त्रिविधमप्यन्नसंसर्जनं प्राप्नोति; क्वचित् कंचिन्निर्दिशन्नाह—तत्रानुक्रममित्यादि । तत्रैव मतान्तरं दर्शयन्नाह—केचिदेवमित्यादि ॥ १७ ॥ १८ ॥

**संसर्गेण विवृद्धेऽग्नौ दोषकोपभयाद्भजेत् ॥**
**प्राक् स्वादुतिक्तौ स्निग्धाम्ललवणान् कटुकं ततः ॥ १९ ॥**
**स्वाद्वम्ललवणान् भूयः स्वादुतिक्तावतः परम् ॥**
**स्निग्धरूक्षान् रसांश्चैव व्यत्यासात् स्वस्थवत्ततः ॥ २० ॥**

अतः परं क्रमेणैव कृतसंसर्गस्य रसावचारणक्रममाह—संसर्गेणेत्यादि । अन्नसंसर्जनक्रमविवृद्धेऽग्नौ दोषकोपभयात् स्निग्धान् मधुराम्ललवणान्, रूक्षान् कटुतिक्तकषायान् रसान्, व्यत्यासात् विपर्ययात्, एवमत्रोक्तपरिपाट्या भजेत् । तत्र प्रवृद्धाग्निहेतुवातपित्तस्यावजयार्थमग्नेः समीकरणार्थं च पूर्वं स्वादुतिक्तकौ, ततो वातकफावजयार्थमग्नेः सन्धुक्षणार्थं च व्यत्यासादिति प्रागुक्तरसप्रत्यनीकान् स्निग्धाम्ललवणकटुकान् । ततश्चाम्ललवणकटुकजनितपित्तवातावजयार्थं स्वादुतिक्तौ, ततो भूयः कषायकटुकौ, ततोऽन्योन्यप्रत्यनीकरसानां स्निग्धरूक्षयोर्व्यत्यासादुपयोगेन प्रकृतिगो भवेत् । **वृद्धवाग्भटस्त्वाह**—"दद्यान्मधुरमद्यानि ततोऽम्ललवणौ रसौ । स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥ अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः । व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत्" ॥ १९ ॥ २० ॥

१ 'त्रिर्द्विरथैकश्च' इति पा० । २ 'विशुद्धकायः' इति पा० ।

केवलं स्नेहपीतो वा वान्तो यश्चापि केवलम् ॥
स सप्तरात्रं मनुजो भुञ्जीत लघु भोजनम् ॥ २१ ॥

पञ्चकर्माङ्गयोरेव स्नेहवमनयोर्यथोक्तान्नसंसर्जननियमो नान्यत्रेति दर्शयन्नाह—केवलमित्यादि । दोषरोगसंशमननिमित्तं पीतस्नेहः केवलं स्नेहपीतः, तथा वान्तश्च अजीर्णभुक्तादिनिमित्तं कृतवमनः । लघुभोजनं मात्राद्रव्याभ्याम् । ततोऽन्तरोक्तेनैव विधानेन स्वाद्वादीनश्नीयात् ॥ २१ ॥

कृतः सिराव्यधो यस्य कृतं यस्य च शोधनम् ॥
स ना परिहरेन्मासं यावद्वा बलवान् भवेत् ॥२२॥

स्नेहपीतस्येत्याद्येकवाक्योक्तानां पञ्चानां स्नेहपीतादीनां मध्ये द्वयोः कृतसिराव्यधविरिक्तयोः परिहारकालं गौरवान्निर्दिशन्नाह—कृतः सिराव्यधो यस्येत्यादि । यस्य सिराव्यधः कृतः, यस्य च शोधनं विरेचनाख्यं कृतं, तस्योभयस्यापि शोधनानन्तरं सप्तरात्रं कृतसंसर्गस्य सप्ताहादूर्ध्वं परिपूर्णाहारत्वेन स्वाद्वादिरसानां क्रमविपर्ययाभ्यासुपसेवया रसस्य शनैः शनैर्धात्वन्तरानुक्रमतो मासेन शुक्रत्वाच्छनैर्बलावाप्तिरुत्पद्यते; अत उक्तं—स ना परिहरेन्मासमिति । ना पुरुषो वक्ष्यमाणं क्रोधादिकं परिहरेत् । तत्र कस्यचिदत्यन्तक्षीणाग्नेर्जलसन्तानवद्रसप्रसरणेन मासानन्तरमपि बललाभः, कस्यचिद्दीप्ताग्नेः शब्दसन्तानवद्रसप्रसरणेन मासादर्वागपि बललाभः स्यादत उक्तं—यावद्वा बलवान् भवेदिति २२

त्र्यहं त्र्यहं परिहरेदेकैकं बस्तिमातुरः[1] ॥
तृतीये तु परीहारे यथायोगं समाचरेत् ॥ २३ ॥

चतुर्षु स्नेहपीतादिषु पूर्वोक्तोऽन्नसंसर्गकालनियमः, बस्तौ तु तादृशो नियमो नास्ति, कथं ? दोषव्याधिबलापेक्षया बस्तेः पुनः पुनः शीलनात्; तदुक्तं—अष्टादशाष्टदशकानित्यादि; अत एकैकं बस्तिमुद्दिश्य विशिष्टं नियमं दर्शयन्नाह—त्र्यहं त्र्यहमित्यादि । एकैकं बस्तिं सेवित्वा त्र्यहं त्र्यहं वक्ष्यमाणं परिहार्यं परिहरेत् । तृतीये तु परीहार इत्यादि । विशेषेण परीहारे कृते सत्यनन्तरं चतुर्थपञ्चमदिवसादौ, यथायोगं योगानतिक्रमेण सम्यङ्निरूहानुवासितयोगलक्षणानतिक्रमेण, समाचरेद्यथासात्म्यमुपसेवेतेत्यर्थः । अन्ये तु व्याख्यानयन्ति—एकैकं बस्तिमनुवासनं दत्त्वा त्रीणि त्रीण्यहानि परिहरेत्, तृतीये तु बस्तौ गते तृतीयादनुवासनादूर्ध्वं, यथायोगं यथावस्थमभ्यादीनवेक्ष्य, चतुःपञ्चदिवसानन्तरीकृत्य, अनुवासनं योजनीयम् ॥ २३ ॥

तैलपूर्णममृद्भाण्डसधर्माणो व्रणातुराः ॥
स्निग्धशुद्धाक्षिरोगार्ता ज्वरातीसारिणश्च ये ॥२४॥

शुद्धसमानधर्मिणोऽन्यानपि दृष्टान्तेनाह—तैलपूर्णमित्यादि । यथा तैलपूर्णमपक्वमृद्भाजनमयत्नेन चाल्यमानं विशीर्यते, तद्वदयत्नेनोपचर्यमाणा व्रणातुरादयोऽवस्थान्तरं प्राप्यन्ते; तस्मादेतेऽपि संशुद्धवदुपक्रम्या इति तात्पर्यार्थः ॥ २४ ॥

क्रुध्यतः कुपितं पित्तं कुर्यात्तांस्तानुपद्रवान् ॥
आयास्यतः शोचतो वा चित्तं विभ्रममृच्छति ॥२५॥
मैथुनोपगमाद्घोरान् व्याधीनाप्नोति दुर्मतिः ॥
आक्षेपकं पक्षघातमङ्गप्रग्रहमेव च ॥ २६ ॥
गुह्यप्रदेशे श्वयथुं कासश्वासौ च दारुणौ ॥
रुधिरं शुक्रवच्चापि सरजस्कं प्रवर्तते ॥ २७ ॥
लभते च दिवास्वप्नात्तांस्तान् व्याधीन् कफात्मकान्
प्लीहोदरं प्रतिश्यायं पाण्डुतां श्वयथुं ज्वरम् ॥ २८ ॥
मोहं सदनमङ्गानामविपाकं तथाऽरुचिम् ॥
तमसा चाभिभूतस्तु स्वप्नमेवाभिनन्दति ॥ २९ ॥
उच्चैः संभाषणाद्वायुः शिरस्यापादयेद्रुजम् ॥
आन्ध्यं जाड्यमजिघ्रत्वं बाधिर्यं मूकतां तथा[1] ॥३०॥
हनुमोक्षमधीमन्थमर्दितं च सुदारुणम् ॥
नेत्रस्तम्भं निमेषं वा तृष्णां कासं प्रजागरम् ॥३१॥
लभते दन्तचालं च तांस्तांश्चान्यानुपद्रवान् ॥
यानयानेन लभते छर्दिमूर्च्छाभ्रमक्लमान् ॥ ३२ ॥
तथैवाङ्गग्रहं घोरमिन्द्रियाणां च विभ्रमम् ॥
चिरासनात्तथा स्थानाच्छ्रोण्यां भवति वेदना ॥३३॥
अतिचङ्क्रमणाद्वायुर्जङ्घयोः कुरुते रुजः ॥
सक्थिप्रशोषं शोफं वा पादहर्षमथापि वा ॥ ३४ ॥
शीतसंभोगतोयानां सेवा मारुतवृद्धये ॥
ततोऽङ्गमर्दविष्टम्भशूलाध्मानप्रवेपकाः ॥ ३५ ॥
वातातपाभ्यां वैवर्ण्यं ज्वरं चापि समाप्नुयात् ॥
विरुद्धाध्यशनान्मृत्युं व्याधिं वा घोरमृच्छति ३६
असात्म्यभोजनं हन्याद्बलवर्णमसंशयम् ॥
अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणतः ॥
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि ॥ ३७ ॥

पूर्वोक्तेषु स्नेहपीतादिषु पञ्चसु परिहार्याणामपरिहारेण किं भवतीत्याह—क्रुध्यतः कुपितमित्यादि । तांस्तानुपद्रवान् दाहपिपासाप्रभृतीन् । आयास्यत इत्यादि । विभ्रमं विविधं भ्रमं संमोहमदापस्मारोन्मादादिकं मानसं विकारम् । मैथुनोपगमादित्यादि । तानेव घोरान् व्याधीन् विवृण्वन्नाह—आक्षेपकमित्यादि । लभते च दिवास्वप्नात्तानित्यादि । अजिघ्रत्वं गन्धाज्ञता । मूकताम् अवाक्त्वम् । अधिमन्थो दृष्टिरोगः । यानयानेन लभते इत्यादि । यानयानेनाश्वादिगमनेन रथाद्य । चिरासनादित्यादि । असनं स्थितिभवनम् । स्थानम् ऊर्ध्वीभवनम् । अतिचङ्क्रमणादित्यादि चङ्क्रमणं परिभ्रमणम् । 'शोफं वा' इत्यत्र 'स्वापं वा' इति पाठान्तरम् । शीतसंभोगतोयानामित्यादि । संभोगः स्रक्चन्दनादीनामुपभोगः । **गयी** तु 'शीतसंभोगतोयानां' इत्यत्र 'शीतभोजनतोयानां इति पठति । वातातपाभ्यामित्यादि । यथाक्रमं वाताद् वैवर्ण्यं, आतपप्रकुपितात् पित्ताज्ज्वरः । विरुद्धाध्यशनान्मृत्युमित्यादि । पयोमत्स्यादिभोजनं विरुद्धाशनम्,

---

1 'एकैकस्मिन् परिहरेद्बस्तौ बस्तौ त्र्यहं त्र्यहम्' इति पा० ।

1 'आन्ध्यं बाधिर्यमघ्रत्वं जडतां मूकतां तथा' इति पा० ।

अध्यशनमजीर्णे भोजनं, ताभ्यां मरणं भयावहो रोगो वा। असात्म्यभोजनमित्यादि । ये अनात्मवन्तः पुरुषा अप्रमाणतः पशुवद्भुञ्जते ते अजीर्णं प्राप्नुवन्ति; अजीर्णं त्रिविधम् आमविदग्धविष्टब्धभेदेन वातादिभिः, चतुर्थं रसाजीर्णं परिगृह्यते । किंविशिष्टं ? रोगानीकस्य रोगसमूहस्य मूलम् । क्रोधादिषु व्यापत्सु आयासशोकाभ्यामेकैका, चिरासनस्थानाभ्यामप्यन्ये, शीतसम्भोगतोयानां सेवया पुनरेकैका, वातातपाभ्यां द्वे, तथा विरुद्धाध्यशनाभ्यां द्वे, अन्याः सुबोधाः, इत्येवं पञ्चदश ॥२५-३७॥

**व्यापदां कारणं वीक्ष्य व्यापत्स्वेतासु बुद्धिमान् ॥**
**प्रयतेतातुरारोग्ये प्रत्यनीकेन हेतुना ॥ ३८ ॥**

तासु सर्वासु संक्षेपेण चिकित्सितं निर्दिशन्नाह—व्यापदामित्यादि । व्यापदाम् उपद्रवाणां, कारणं विप्रकृष्टं क्रोधादिकं, सन्निकृष्टं पित्तादिकं, वीक्ष्य उपलभ्य, प्रत्यनीकेन हेतुना विप्रकृष्टकारणप्रत्यनीकेन उपद्रवप्रत्यनीकेन वातादिप्रत्यनीकेन वा । अत एव बुद्धिमद्ग्रहणं, बुद्धिमान् भिषगातुरारोग्यविषये प्रयत्नं कुर्वीत ॥ ३८ ॥

**विरिक्तवान्तैर्हरिणैणलावकाः**
**शशश्च सेव्यः समयूरतित्तिरिः ॥**
**सषष्टिकाश्चैव पुराणशालय-**
**स्तथैव मुद्गा लघु यच्च कीर्तितम् ॥ ३९ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने आतुरोपद्रवचिकित्सितं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥**

असात्म्यभोजनं बलवर्णहरं प्रतिपादितं, तत् किमत्र सात्म्यं यदपेक्षयाऽन्यदसात्म्यमिति सात्म्यमेवाह—विरिक्तवान्तैरित्यादि । इह निर्दिष्टादन्यदनुपदिष्टमाह—लघु यच्च कीर्तितमिति । विष्किरजाङ्गलेषु शालिषष्टिकेषु मुद्गादिषु चोक्तादन्यदपि यच्च लघु प्रोक्तं तच्च सेव्यमित्यर्थः । **जेज्जटाचार्यस्त्वन्यथा** व्याख्यानयति, यथा—विरिक्तवान्तैरित्याद्यारम्भप्रयोजनं विरिक्तकथितविधिनियमार्थं वमनानुक्तविधिप्रापणार्थं च; यतो विरिक्तस्य प्रमाणापेक्षया यवाग्वादिक्रम एकशो द्विशस्त्रिशश्च विहितो न वान्तस्य ॥ ३९ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां
सुश्रुतव्याख्यायां चिकित्सास्थाने एकोन-
चत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशत्तमोऽध्यायः ।

**अथातो धूमनस्यकवलग्रहचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथेत्यादि । कवलशब्देनात्र चिकित्सितसादृश्याद्गण्डूषप्रतिसारणे उपलक्ष्येते ॥ १ ॥ २ ॥

**धूमः पञ्चविधो भवति; तद्यथा—प्रायोगिकः, स्नैहिको, वैरेचनिकः, कासघ्नो, वामनीयश्चेति ॥३॥**

तेष्वाद्यस्य धूमस्य विषयभेदप्रतिपादनाय पाञ्चविध्यमाह—धूम इत्यादि । कासघ्नवामनीययोरत्रैवान्तर्भावात्त्रिविध इत्यन्ये । तत्र प्रयोगः[1] स्वस्थस्य सततोपयोगस्तत्र साधुः प्रायोगिकः; स च श्लेष्माणमुत्क्लेशयति, उत्क्लिष्टं चापकर्षति, शमयति वातं, स्नेहनविरेचनाभ्यां तुल्यत्वात् । कासहरत्वात् कासघ्नः; स पुनरुरःकण्ठरोगहरोऽप्यावस्थिक एव । अभिष्यण्णशिरसि शिरो विरेचयतीति विरेचनः, विरेचन एव वैरेचनः; वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षयति, रौक्ष्यात्तैक्ष्ण्यादौष्ण्याद्वैशद्याच्च । रूक्षस्य स्नेहाय प्रभवतीति स्नैहिकः; स च वातं शमयति, स्नेहनादुपलेपनाच्च । वामयतीति वामनीयः, स पुनरुत्क्लिष्टकफाभिपन्नकण्ठोरसः ॥ ३ ॥

**तत्रैलादिना कुष्ठतगरवर्ज्येन श्लक्ष्णपिष्टेन द्वादशाङ्गुलं शरकाण्डमङ्गुलिपरिणाहं क्षौमेणाष्टाङ्गुलं वेष्टयित्वा लेपयेदेषा वर्तिः प्रायोगिके[2], स्नेहफलसारमधूच्छिष्टसर्जरसगुग्गुलुप्रभृतिभिः स्नेहमिश्रैः स्नैहिके, शिरोविरेचनद्रव्यैर्वैरेचने, बृहतीकण्टकारिकात्रिकटुकासमर्दहिङ्गिङ्गुदीत्वङ्मनःशिलाच्छिन्नरुहाकर्कटशृङ्गीप्रभृतिभिः कासहरैश्च कासघ्ने, स्नायुचर्मखुरशृङ्गकर्कटकास्थिशुष्कमत्स्यवल्लूरकृमिप्रभृतिभिर्वामनीयैश्च वामनीये ॥ ४ ॥**

तस्य पञ्चविधस्यापि दहनबाह्याश्रयधूमवर्तिसाधनद्रव्याणि निर्दिशन्नाह—तत्रैलादिनेत्यादि । एलादिवर्गे कुष्ठतगरौ वर्ज्यौ । तथा च **निमिः**,—“धूमो हि वक्रकुष्ठाभ्यां विलालयति शक्तितः । मस्तिष्कं तद्धि विष्यण्णं नाशाय प्रतिपद्यते”—इति । तस्मात् कुष्ठतगरवर्जितेनैलादिना लेपयेत् । शरकाण्डः शरेषिका । अङ्गुलिपरिणाहं कनिष्ठिकाङ्गुलिसमस्थौल्यं; अन्तयोर्द्व्यङ्गुलं विहाय वर्तिः । शरकाण्डस्य सुखापकर्षणार्थं क्षौमेणाष्टाङ्गुलवेष्टनम् । यदेतदष्टाङ्गुलं वर्तिप्रमाणमुक्तं प्रायोगिके तदष्टचत्वारिंशदङ्गुले नेत्रे ज्ञातव्यं, सर्वधूमनेत्रेभ्यः षड्भागप्रमाणा वर्तिः कार्येति तन्त्रान्तरप्रतिपादनात् । तथा च **विदेहः**,—“अङ्गुष्ठपरिणाहेन मध्ये स्थूलाऽन्तयोस्तनुः । धूमनेत्रस्य षड्भागं वर्तिमानं प्रचक्षते—” इति ( शरकाण्डस्य मानं बोध्यम् ) । स्नेहफलसारमधूच्छिष्टेत्यादि । स्नेहफलानां तिलादिशिग्रुबिभीतकादिफलानां, सारः तदन्तर्गतो मज्जा । तथा नेत्रचतुर्भागेन शरेषिका ग्राह्या, एवं स्नैहिकादिषु चतुर्ष्वपि धूमेषु यथास्वं नेत्रमानात् षष्ठभागेन वर्तिप्रमाणमुक्तं भवति । प्रभृतिग्रहणेन द्राक्षासल्लकीखपुरादिकम् । शिरोविरेचनद्रव्याणि विडङ्गखरमञ्जरीमधुशिग्रुसूर्यवल्लीपीलुपिप्पलीसिद्धार्थकसुरसार्जकप्रभृतीनि । कासहरैश्चेति कासहराणि गुणोपवर्णने शास्त्रे तत्प्रतिषेधे च प्रोक्तानि ।

---

१ ‘तत्र नित्यप्रयोगे साधुः प्रायोगिकः’ इति पा० । २ ‘प्रायोगिकी’ इति पा० ।

स्नायुचर्मेत्यादि । वामनीयद्रव्याणि मदनफलादीनि संशोधनसंशमनीयोक्तानि ॥ ४ ॥

**तत्र वस्तिनेत्रद्रव्यैर्धूमनेत्रद्रव्याणि व्याख्यातानि भवन्ति । धूमनेत्रं तु कनिष्ठिकापरिणाहमग्रे कलायमात्रस्रोतो मूलेऽङ्गुष्ठपरिणाहं धूमवर्तिप्रवेशस्रोतोऽङ्गुलान्यष्टचत्वारिंशत् प्रायोगिके, द्वात्रिंशत् स्नैहने, चतुर्विंशतिर्वैरेचने, षोडशाङ्गुलं कासघ्ने वामनीये च । एतेऽपि कोलास्थिमात्रच्छिद्रे भवतः । व्रणनेत्रमष्टाङ्गुलं व्रणधूपनार्थं कलायपरिमण्डलं कुलत्थवाहिस्रोत इति ॥ ५ ॥**

अत्रैव धूमनेत्रद्रव्याणि संक्षेपार्थमतिदेशेनातिदिशन्नाह—तत्र वस्तिनेत्रद्रव्यैरित्यादि । वस्तिनेत्रद्रव्यैः सुवर्णरूप्यत्रपुसीसताम्रकांस्यादिभिः । अत ऊर्ध्वं नेत्रस्य दीर्घत्वच्छिद्राणां प्रमाणमाह—धूमनेत्रमित्यादि । कनिष्ठिकापरिणाहमिति कनिष्ठिकासमस्थूलम् । अग्रे मुखनासिकाप्रणयनस्थाने, मूले वर्तिसंवरणस्थाने, अङ्गुष्ठपरिणाहम् अङ्गुष्ठसमस्थूलम् । धूमवर्तिप्रवेशस्रोत इति यावता स्रोतसा धूमवर्तिप्रवेशो भवति तावन्मात्रस्रोतस्कम् । मूलच्छिद्रमानं चतुर्ष्वपि प्रतिपाद्य पृथग्दैर्घ्यमानमाह—अङ्गुलान्यष्टचत्वारिंशदित्यादि । दशाङ्गुलं वा वामनीयमिति केचित् पठन्ति, तच्च **गयदासेन विदेहमतानुसारिणाऽसम्यगिति** प्रतिपादितम् । ऋजुत्रिकोषाफलितपर्वत्रयविरचितत्वं नेत्रस्य तन्त्रान्तरादवगन्तव्यम् । व्रणनेत्रमष्टाङ्गुलमित्यादि । कलायपरिमण्डलं गुटिकामुखम् ॥ ५ ॥

**अथ सुखोपविष्टः सुमना ऋज्वधोदृष्टिरतन्द्रितः स्नेहाक्तदीप्ताग्रां[1] वर्तिं नेत्रस्रोतसि प्रणिधाय धूमं पिबेत् ॥ ६ ॥**

**मुखेन तं पिबेत् पूर्वं नासिकाभ्यां ततः पिबेत् ॥**
**मुखपीतं मुखेनैव वमेत् पीतं च नासया ॥ ७ ॥**
**मुखेन धूममादाय नासिकाभ्यां न निर्हरेत् ॥**
**तेन हि प्रतिलोमेन दृष्टिस्तत्र निहन्यते ॥ ८ ॥**

**विशेषतस्तु प्रायोगिकं घ्राणेनाददीत, स्नैहिकं मुखनासाभ्यां, नासिकया वैरेचनिकं, मुखेनैवेतरौ ९**

अथानन्तरं धूमपानविधानमाह—अथ सुखोपविष्ट इत्यादि । सुखोपविष्ट ऋज्वधोदृष्टिरिति कायनियमः । सुमना इति क्रोधाद्यपगमान्मनोनियमः । अतन्द्रितः अनलसः । स्नेहाक्तदीप्ताग्रामिति पूर्वं स्नेहाक्तां पश्चाद्दीप्ताग्राम् । मुखेनेत्यादि उभयमार्गपानार्हो मुखेन पूर्वं पिबेत् पश्चान्नासिकयेति । तदुभयपीतं पञ्चप्रकारमप्युरःप्राप्तं मुखेन वमनीयं न कथमपि नासिकयेति दर्शयन्नाह—मुखपीतमित्यादि । मुखेन पीतं मुखेनैव वमेत्, नासिकयाऽपि पीतं मुखेनैव वमेत् । प्रतिलोमेन व्यापदमाह—प्रतिलोमेनेत्यादि । तथा च **चक्षुष्येणः**,—"निर्वमेत्तु मुखेनैव नासया न कथञ्चन । विलोमतो गतो[1] धूमः कुर्याद्दर्शनविभ्रमम्"—इति । विशेषतस्तु प्रायोगिकमित्यादि । शिरोगतधर्मिनीनां लक्षणविशेषमाश्रित्य प्रायोगिकं घ्राणेनाददीत, सामान्यतः पुनरुरःशिरोरोगसंभवानामुभयमार्गेणापि,[2] तन्त्रान्तरदर्शनात्; तथाच **विदेहः**,—"प्रयोगपाने पूर्वं वा नासया धूममाचरेत्"—इति । पूर्वं वा नासया धूममाचरेदित्यनेन कश्चिन्मुखेनापि प्राक् पेय इत्यवगम्यते । उभयमार्गपानहेतुश्चक्षुष्येणदर्शितो यथा—"उरःकण्ठादिरोगेषु मुखेनैव पिबेन्नरः । शिरःकर्णाक्षिनासास्थे नासातो धूममाचरेत्"—इति । स्नैहिकं मुखनासाभ्यामिति कण्ठोरःसमाश्रिते वाते मुखेन, शिरःसमाश्रिते वाते नासया, उभयमार्गेण पानार्हो मुखेन पूर्वं पिबेत्पश्चान्नासिकयेति । वैरेचनिकमिति उत्क्लिष्टकफाभिव्याप्तकण्ठोरसो नासया, अनुत्क्लिष्टकफः पुनर्वैरेचनिकमपि प्राग्वक्रेण; तथा च **वाग्भटः**,—"प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते । उत्क्लेशनार्थं वक्रेण विपरीतं तु कण्ठगे—" । मुखेनैवेति इतरौ कासघ्नवामनीयौ मुखेनैव पेयौ, कासस्य वामनीयस्य च रोगस्योरःकण्ठगत्वात् ॥ ६—९ ॥

**तत्र प्रायोगिके वर्तिं व्यपगतशरकाण्डां निवातातपशुष्कामङ्गारेष्ववदीप्य नेत्रमूलस्रोतसि प्रयुज्य धूममाहरेति ब्रूयात्; एवं स्नैहनं वैरेचनिकं च कुर्यादिति । इतरयोर्व्यपेतधूमाङ्गारे[3] स्थिरे समाहिते शरावे प्रक्षिप्य वर्तिं मूलच्छिद्रेणान्येन शरावेण पिधाय तस्मिन् छिद्रे नेत्रमूलं संयोज्य धूममासेवेत, प्रशान्ते धूमे वर्तिमवशिष्टां प्रक्षिप्य पुनरपि धूमं पाययेदादोषविशुद्धेः; एष धूमपानोपायविधिः ॥ १० ॥**

तत्र प्रायोगिके वर्तिमित्यादि । स्थिरे अचले । समाहिते शोभनकारितया स्थापिते । मूलच्छिद्रेणेति मूले छिद्रं यस्य तेन मूलच्छिद्रेणान्येन शरावेण । वर्तिं धूमवर्तिं चूर्णं वा ॥ १० ॥

**तत्र शोकश्रमभयामर्षौष्ण्यविषरक्तपित्तमदमूर्च्छादाहपिपासापाण्डुरोगतालुशोषच्छर्दिशिरोऽभिघातोद्गारापतर्पिततिमिरप्रमेहोदराध्मानोर्ध्ववातार्ता बालवृद्धदुर्बलविरिक्तास्थापितजागरितगर्भिणीरूक्षक्षीणक्षतोरस्कमधुघृतदधिदुग्धमत्स्यमद्ययवागूपीताल्पकफाश्च न धूममासेवेरन् ॥ ११ ॥**

इदानीं धूमानर्होपदेशः—तत्र शोकश्रमभयेत्यादि । तत्र शोकादिभिरूर्ध्ववातान्तैः सहार्तशब्दः प्रत्येकमभिसंबध्यते ११

**अकालपीतः कुरुते भ्रमं मूर्च्छां शिरोरुजम् ॥**
**घ्राणश्रोत्राक्षिजिह्वानामुपघातं च दारुणम् ॥ १२ ॥**

अकालपीतस्य व्यापदुद्भवं दर्शयन्नाह—अकालपीत इत्यादि ॥ १२ ॥

---

१ 'स्नेहाक्तां प्रदीप्ताग्रां' इति पा० ।

१ 'विलोमगो ह्याशु' इति पा० । २ 'शिरोरोगसंभवानां' इति पा० । ३ '०व्यपेतधूमोङ्गारे' इति पा० ।

**आद्यास्तु त्रयो धूमा द्वादशसु कालेषूपादेयाः । तद्यथा—क्षुतदन्तप्रक्षालननस्यस्नानभोजनदिवास्वप्नमैथुनच्छर्दिमूत्रोच्चारहसितरुषितशस्त्रकर्मान्तेष्विति । तत्र विभागो-मूत्रोच्चारक्षवथुहसितरुषितमैथुनान्तेषु स्नैहिकः, स्नानच्छर्दनदिवास्वप्नान्तेषु वैरेचनिकः, दन्तप्रक्षालनस्य स्नानभोजनशस्त्रकर्मान्तेषु प्रायोगिक इति ॥ १३ ॥**

कः पुनर्धूमस्य पानकाल इत्याह—आद्यस्तु त्रयो धूमा इत्यादि । रुषितं क्रोधः ॥ १३ ॥

**तत्र स्नैहिको वातं शमयति, स्नेहादुपलेपाच्च; वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षति, रौक्ष्यात्तैक्ष्ण्यादौष्ण्याद्वैशद्याच्च; प्रायोगिकः श्लेष्माणमुत्क्लेशयत्युत्क्लिष्टं चापकर्षति शमयति वातं साधारणत्वात् पूर्वाभ्यामिति ॥ १४ ॥**

तेषां प्रत्येकं कार्यमाह—तत्र स्नैहिको वातमित्यादि । कुतः पुनरयं कफोत्क्लेशापकर्षणवातशमनानि करोतीत्याह–साधारणत्वादिति; साधारणत्वात् पूर्वाभ्यां स्नेहनविरेचनाभ्यां तुल्यत्वादित्यर्थः ॥ १४ ॥

**भवति चात्र—**

**नरो धूमोपयोगाच्च प्रसन्नेन्द्रियवाङ्मनाः ॥**
**दृढकेशद्विजश्मश्रुः सुगन्धिविशदाननः ॥ १५ ॥**

**तथा कासश्वासारोचकास्योपलेपस्वरभेदमुखास्रावक्षवथुवमथुक्रथतन्द्रानिद्राहनुमन्यास्तम्भाः पीनसशिरोरोगकर्णाक्षिशूला वातकफनिमित्ताश्चास्य मुखरोगा न भवन्ति ॥ १६ ॥**

धूमोपयोगफलमाह—भवति चात्रेत्यादि । क्रथः अकस्मादुच्छ्वासावरोधः ॥ १५ ॥ १६ ॥

**तस्य योगायोगातियोगा विज्ञातव्याः । तत्र योगो रोगप्रशमनः, अयोगो रोगाप्रशमनः, तालुगलशोषपरिदाहपिपासामूर्च्छाभ्रममदकर्णक्ष्वेडदृष्टिनासारोगदौर्बल्यान्यतियोगो जनयति ॥ १७ ॥**

तत्रेत्यादि । दृष्टिनासयो रोगदौर्बल्याभ्यां संबन्धः । अतियोगो जनयतीत्यस्याग्रे 'तत्र सर्पिःपाननावनाञ्जनतर्पणानि विदध्यात्' इति केचित् पठन्ति ॥ १७ ॥

**प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत मुखनासिकाभ्यां च पर्यायांस्त्रींश्चतुरो वेति, स्नैहिकं यावदश्रुप्रवृत्तिः, वैरेचनिकमादोषदर्शनात्, तिलतण्डुलयवागूपीतेन पातव्यो वामनीयः, ग्रासान्तरेषु कासघ्न इति ॥ १८ ॥**

प्रायोगिकादीनां पानमर्यादामाह—प्रायोगिकमित्यादि । मुखनासिकाभ्यामिति दोषस्थानमवेक्ष्योचितमार्गेणाददीत । त्रींस्त्रीनुच्छ्वासान् कतिसंख्याकानाददीतेत्याह—पर्यायांस्त्रींश्चतुरो वेति ।—पर्यायः परिपाटी, उच्छ्वासत्रयेणैकः पर्यायः, तान् पर्यायान् त्रींश्चतुरो वा दोषपुरुषबलमवेक्ष्य; एतदुक्तं भवति—त्रिभिः आदानविसर्गैस्त्रीन् वारांश्चतुरो वा धूमः पातव्यः । वाशब्दोऽत्र व्यवस्थायाम् । तेन तन्त्रान्तरव्यवस्थितोऽर्थोऽत्र ज्ञातव्यः । तथाच धूमपानमात्राविधाने **निमिः**—"धूमपाने तु विज्ञेय उच्छ्वासस्त्रिगुणः कलः । तिस्रः कलाश्चात्र मात्रा प्रमाणं स्यात्त्रिमात्रिकम् ॥ पिबेत् स्वस्थविधौ मात्रां दुर्बलस्तु कलां पिबेत् । अभिष्यण्णे प्रमाणं स्यात् प्रमाणं च पिबेद्रुजि—" इति । स्नैहिकमित्यादि । यावदश्रुप्रवृत्तिरिति बलवति पुरुषे, दुर्बले च प्रायोगिकवत् । तथाच **भोजः**,—"प्रमाणं स्नैहिके धूमे कृशो मात्रां पिबेन्नरः । बलवांस्तु पिबेत्तावद्यावदश्रुर्न गच्छति"—इति । वैरेचनिकमादोषदर्शनादिति दोषस्य कफाख्यस्य विकृतस्य दर्शनं यावत् । अत एव तन्त्रान्तरे शोधनस्यैकस्मिन् दिने त्रिश्चतुर्वा पानं प्रतिपादितम् । तथा च तन्त्रान्तरं—"सकृत् पिबेत् स्नेहनीयं प्रयोगे सकृदेव च । द्विर्वा विरेचनीयं तु त्रिश्चतुर्वा पिबेन्नरः"—इति । विशिष्टधूमपाने पूर्वं करणीयमाह—तिलतण्डुलेत्यादि । वमनकाल एवाकण्ठं तिलादियवागूपीतेन वामनीयो धूमः पातव्यो यावत् 'पित्ते कफस्यानु सुखं प्रवृत्ते' इत्यादिवाक्योक्तं सम्यग्वान्तलक्षणमिति । ग्रासान्तरेष्विति कवलयोः कवलानां वाऽन्तरे, अन्तरं मध्यमित्यर्थः । 'ग्रासान्ते' इत्यन्ये पठन्ति, तथा 'भोजनस्योत्तरे' इत्यपरे पठन्ति । कासघ्नश्च वैरेचनिकवत् त्रिश्चतुर्वा यावद्विकृतकफहरणम् । तथा च **चरकः**,—"मुखेन वैरेचनवत् कासवान् धूममापिबेत्" ॥ १८ ॥

**व्रणधूमं शरावसंपुटोपनीतेन नेत्रेण व्रणमानयेत्, धूमपानाद्वेदनोपशमो व्रणवैशद्यमास्रावोपशमश्च भवति ॥ १९ ॥**

**विधिरेष समासेन धूमस्याभिहितो मया ॥**
**नस्यस्यातः प्रवक्ष्यामि विधिं निरवशेषतः ॥ २० ॥**

अतो व्रणधूपनविधानं—व्रणधूममित्यादि । समासेन संक्षेपेणेत्यर्थः ॥ १९ ॥ २० ॥

**औषधमौषधसिद्धो वा स्नेहो नासिकाभ्यां दीयत इति नस्यम् । तद्द्विविधं शिरोविरेचनं, स्नेहनं च । तद्द्विविधमपि पञ्चधा । तद्यथा—नस्यं, शिरोविरेचनं, प्रतिमर्शो, अवपीडः, प्रधमनं च । तेषु नस्यं प्रधानं शिरोविरेचनं च; नस्यविकल्पः प्रतिमर्शः, शिरोविरेचनविकल्पोऽवपीडः प्रधमनं च; ततो नस्यशब्दः पञ्चधा नियमितः ॥ २१ ॥**

नासिकाभ्यामिति द्विवचनं पुटयुग्मापेक्षया । तद्द्विविधमित्यादि । नस्यमत्र 'तत्र यः स्नेहनार्थं शून्यशिरसां' इत्यादि-

१ 'दृष्टिरागदौर्बल्यानि' इति पा० ।

वक्ष्यमाणवाक्यप्रतिपादितं ज्ञेयम् । शिरोविरेचनद्रव्यैर्यो दीयते स शिरोविरेचनः । प्रतिमर्शस्त्विहैवाग्रे वक्ष्यते । श्रुतशीतस्वरसादीनां पिचुनाऽवपीडनात् अवपीडः । चूर्णस्य मुखेन नाड्या वा प्रध्मापनात् प्रधमनम् । चकारः पुनरत्र शिरोविरेचनस्यापि विकल्पः प्रतिमर्श इत्यनुक्तं समुच्चिनोति; तथा च **दृढबलः**—"प्रतिमर्शो भवेत् स्नेहो निर्दोष उभयार्थकृत्"—इति । ततो नस्येत्यादि । ततस्तेभ्यो विरेचनभेदेभ्यः, नस्यशब्दः नस्यमित्यभिधानं, पञ्चधा पञ्चप्रकारं, नियमितो नियमेन प्रतिपादितः प्राप्त इत्यर्थः ॥ २१ ॥

**तत्र यः स्नेहनार्थं शून्यशिरसां ग्रीवास्कन्धोरसां च बलजननार्थं दृष्टिप्रसादजननार्थं वा स्नेहो विधीयते तस्मिन् वैशेषिको नस्यशब्दः । तत्तु देयं वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुणकर्णशूलकर्णक्ष्वेडतिमिरस्वरोपघातनासारोगास्यशोषावबाहुकाकालजवलीपलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु मुखरोगेष्वन्येषु च वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति ॥ २२ ॥**

तत्र नस्यविधौ । स्नेहः सर्पिस्तैलवसामज्जाख्यः, स च यथास्वगुणैर्वातपित्तकफहरद्रव्यैः सिद्धः; तत्र तैलं नस्ये वातकफहरं, पित्तरक्तहरं तु क्षीरसर्पिरिति ज्ञेयम् । तत्तु देयमित्यादि । तत् स्नैहिकं नस्यं वातपित्तहरैर्द्रव्यैः सिद्धेन स्नेहेन देयम् । तस्य कालावधिस्तन्त्रान्तराज्ज्ञेयः । तथाच **भोजः**,—"एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः । सप्ताहं तु परं देयं विश्रान्तस्य पुनः पुनः ॥ पक्षं विंशतिरात्रं वा यावद्वा साधु मन्यते"—इति । अपरस्त्वाह—"त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितः । परं नवाहमूर्ध्वं तु नवाहात् सात्म्यतां व्रजेत् ॥ न तत्रास्यगुणं कुर्यात् सात्म्यत्वाद्दोषकृन्न च । तस्मान्नस्यप्रयोगस्तु स्नैहिको न हितः सदा"—इति ॥ २२ ॥

**शिरोविरेचनं श्लेष्मणाऽभिव्याप्ततालुकण्ठशिरसामरोचकशिरोगौरवशूलपीनसार्धावभेदककृमिप्रतिश्यायापस्मारगन्धाज्ञानेष्वन्येषु चोर्ध्वजत्रुगतेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यैस्तत्सिद्धेन वा स्नेहेनेति ॥ २३ ॥**

अथ शिरोविरेचनविषयावसरः—शिरोविरेचनमित्यादि । शिरोविरेचनानि पिप्पलीविडङ्गशिग्रुसिद्धार्थकापामार्गक्षवकफणिज्जकप्रभृतीनि । तत्र शिरोविरेचनद्रव्यैः कृतं च नस्यमवपीडाभिधानं, तत्सिद्धस्नेहेन कृतं शिरोविरेकं; **गयी** तु शिरोविरेचनद्रव्यसिद्धेन स्नेहेनैव पठति ॥ २३ ॥

**तत्रैतद्द्विविधमप्यभुक्तवतोऽन्नकाले पूर्वाह्णे श्लेष्मरोगिणां, मध्याह्ने पित्तरोगिणां, अपराह्णे वातरोगिणाम् ॥ २४ ॥**

तयोर्द्वयोः स्नैहिकवैरेचनिकयोः कालावधारणमुद्दिशन्नाह—तत्रैतद्द्विविधमित्यादि । तद्द्विविधमपि नस्यं पूर्वाह्णमध्याह्नापराह्णेषु कफपित्तवातरोगिणां देयमिति । स्वास्थ्यवृत्तिकनस्यकालावधारणं तन्त्रान्तराज्ज्ञेयम् । तथा च **वृद्धवाग्भटः**,—"स्वस्थवृत्ते तु शीते मध्याह्ने, शरद्वसन्तयोः पूर्वाह्णे, ग्रीष्मेऽपराह्णे, वर्षास्वादित्यदर्शने, पञ्चकर्माण्याचरतो बस्तिकर्मोत्तरकालमेव"—इति ॥ २४ ॥

**अथ पुरुषाय शिरोविरेचनीयाय त्यक्तमूत्रपुरीषाय भुक्तवते व्यभ्रे काले दन्तकाष्ठधूमपानाभ्यां विशुद्धवक्त्रस्रोतसे पाणितापपरिस्विन्नमृदितगलकपोलललाटप्रदेशाय वातातपरजोहीने वेश्मन्युत्तानशायिने प्रसारितकरचरणाय किञ्चित् प्रविलम्बितशिरसे वस्त्राच्छादितनेत्राय वामहस्तप्रदेशिन्यग्रोन्नामितनासाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णाम्बुना प्रतप्तं रजतसुवर्णताम्रमणिमृत्पात्रशुक्तीनामन्यतमस्थं शुक्त्या पिचुना वा सुखोष्णं स्नेहमद्रुतमासिञ्चेदव्यवच्छिन्नधारं यथा नेत्रे न प्राप्नोति ॥ २५ ॥**

**स्नेहेऽवसिच्यमाने तु शिरो नैव प्रकम्पयेत् ॥**
**न कुप्येन्न प्रभाषेच्च न क्षुयान्न हसेत्तथा ॥ २६ ॥**
**एतैर्हि विहतः स्नेहो न सम्यक् प्रतिपद्यते ॥**
**ततः कासप्रतिश्यायशिरोऽक्षिगदसंभवः ॥ २७ ॥**

अथानन्तरं तद्दानविधानं—अथ पुरुषायेत्यादि । स्नेहमिति स्नेहस्योपलक्षणत्वात् कल्कक्वाथादिकमप्यनेनैव प्रकारेण देयम् । दत्तमात्रे च यत् कर्तव्यं तत्तन्त्रान्तराज्ज्ञेयं; तथा च **वृद्धवाग्भटः**,—"दत्तमात्रे नस्ये कर्णललाटकेशभूमिगण्डमन्यास्कन्धपाणिपादतलान्यनुसुखं मर्दयेत्, शनैः शनैश्चोच्छिङ्घ्यात्"—इति ॥ २५—२७ ॥

**तस्य प्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्वद्वयनिःसृताः प्रथमा मात्रा, द्वितीया शुक्तिः, तृतीया पाणिशुक्तिः, इत्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः ॥ २८ ॥**

स्नेहस्य चाल्पमध्यमोत्तमप्रमाणान्याह—तस्येत्यादि । तस्येति स्नेहस्य । अष्टाविति प्रत्येकं नासापुटयोः, एवं षोडश बिन्दवः । अङ्गुष्ठसमीपवर्तिन्यङ्गुलिः प्रदेशिनी, तत्पर्वद्वयच्युता बिन्दवः । प्रथमा मात्रा हीनेत्यर्थः । मध्यमा मात्रा शुक्तिर्द्वात्रिंशद्बिन्दवः । उत्तमा पाणिशुक्तिश्चतुःषष्टिबिन्दवः । **गयी** तु भोजदर्शनात् स्वस्थस्यैव प्रायोगिके नस्ये प्रत्येकं नासापुटयोरष्टौ बिन्दवः, स्नेहनार्थे तद्द्विगुणाः शुक्तिप्रमाणा इति प्रतिपादयति । तथा च **भोजः**—"प्रायोगिकं स्नैहिकं च द्विविधं नस्य-

---

१ '°प्रतिपादितलक्षणम्' इति पा० ।

१ 'प्रनाड्या' इति पा० । २ 'प्रदेशिनीपर्वद्वयनिःसृता' इति पा० ।

मुच्यते । प्रायोगिके बिन्दवोऽष्टौ स्नैहिके शुक्तिरिष्यते ॥ दोषोच्छ्रायं समासाद्य दद्याद्द्वित्रिचतुर्गुणम्"—इति ॥ २८ ॥

**स्नेहनस्यं नोपगिलेत्कथंचिदपि बुद्धिमान् ॥ २९ ॥**
**शृङ्गाटकमभिप्लाव्य निरेति वदनाद्यथा ॥**
**कफोत्क्लेशभयाच्चैनं निष्ठीवेदविधारयन् ॥ ३० ॥**

नोपगिलेन्न पिबेत् । तथा हि विदेहः,—निष्ठीवेन्न पिबेन्नस्यं व्यापदः पिबतस्त्विमाः । भवन्ति कासश्छर्दिश्च कुरसाऽन्ने वमथुस्तथा—" इति । क्वचिन्नस्यपानमप्युक्तं विदेहेनैव,—"क्षीणं मांसं बलं यस्य वातार्तिश्चोर्ध्वजत्रुजा । सुदीप्ताग्निः स्नेहसात्म्यः स नस्यं नासया पिबेत् ॥ धातूंश्च तर्पयेद्देहे पीतं नस्यं तु नस्ततः"—इति । शृङ्गाटकमित्यादि ।—नासाकर्णस्रोतोक्षिजिह्वातर्पणीनां सिराणां संनिपातः शृङ्गाटकः । निष्ठीवेदिति वदनप्राप्तं मुञ्चेत्, वामदक्षिणयोरिति वाक्यशेषः । तथाच वृद्धवाग्भटः,—"अनभ्यवहरंश्च वामदक्षिणपार्श्वयोर्निष्ठीवेत्, एकपार्श्वष्ठीवने न सर्वाः सिरा भेषजेन सम्यग्व्याप्यन्ते"—इति ॥ २९ ॥ ३० ॥

**दत्ते च पुनरपि संस्वेद्य गलकपोलादीन् धूममासेवेत, भोजयेच्चैनमभिष्यन्दि, ततोऽस्याचारिकमादिशेत्; रजोधूमस्नेहातपमद्यद्रवपानशिरःस्नानातियानक्रोधादीनि च परिहरेत् ॥ ३१ ॥**

पश्चात्कर्माह—दत्ते च पुनरपि संस्वेद्येत्यादि । धूममासेवेतेति वाक्शतानन्तरं; तथाच भोजः,—"वाक्शतादूर्ध्वमुत्थाय धूमं प्रायोगिकं पिबेत्"—इति । अभिष्यन्दि उपलेपकारि । आचारिकमिति आचारप्राप्तं युक्तमित्यर्थः । दिवास्वप्नादिकमयुक्तांश्च रजोधूमादीन् परिहरेत् ॥ ३१ ॥

**तस्य योगातियोगायोगानामिदं विज्ञानं भवति३२—**
**लाघवं शिरसो योगे सुखस्वप्नप्रबोधनम् ॥**
**विकारोपशमः शुद्धिरिन्द्रियाणां मनःसुखम् ॥३३॥**
**कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः ॥**
**लक्षणं मूर्ध्न्यतिस्निग्धे रूक्षं तत्रावचारयेत् ॥ ३४ ॥**
**अयोगे वातवैगुण्यमिन्द्रियाणां च रूक्षता ॥**
**रोगाशान्तिश्च तत्रेष्टं भूयो नस्यं प्रयोजयेत् ॥ ३५ ॥**

**गयी** त्वयोगलक्षणं न पठति, प्रतिपादितस्य प्रायोगिकनस्यस्य स्वस्थविषयस्यायोगे वातवैगुण्यं न संभवति; यच्चायोगे वातवैगुण्यं तदवस्थाविषये ॥ ३२—३५ ॥

**चत्वारो बिन्दवः षड् वा तथाऽष्टौ वा यथाबलम् ॥**
**शिरोविरेकस्नेहस्य प्रमाणमभिनिर्दिशेत् ॥ ३६ ॥**

स्नेहननस्यविशेषमुद्दिश्यच्छिरोविरेचननस्यस्य मात्रामुपदिशन्नाह—चत्वारो बिन्दव इत्यादि । प्रत्येकमेव नासापुटयोर्हीनमध्योत्तमेष्वेषु दोषपुरुषबलेषु चतुःषडष्टबिन्दवः स्नैहिकस्य शिरोविरेचनस्य । तथा च विदेहः, "चतुरश्चतुरो बिन्दूनेकैकस्मिन् समाचरेत् । एषा लघ्वी मता मात्रा तथा शीर्षं[1] विरेचयेत् ॥ अध्यर्धां द्विगुणां वाऽपि त्रिगुणां वा चतुर्गुणाम् । यथाव्याधि विदित्वा तु मात्रां समवचारयेत्"—इति ॥ ३६ ॥

**नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः ॥**
**शुद्ध(द्धि)हीनातिसंज्ञानि विशेषाच्छास्त्रचिन्तकैः३७**
**लाघवं शिरसः शुद्धिः स्रोतसां व्याधिनिर्जयः ॥**
**चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् ॥ ३८ ॥**
**कण्डूपदेहौ गुरुता स्रोतसां कफसंस्रवः ॥**
**मूर्ध्नि हीनविशुद्धे तु लक्षणं परिकीर्तितम् ॥ ३९ ॥**
**मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः ॥**
**शून्यता शिरसश्चापि मूर्ध्नि गाढविरेचिते ॥ ४० ॥**
**हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत् ॥**
**सम्यग्विशुद्धे शिरसि सर्पिर्नस्यं निषेचयेत् ॥ ४१ ॥**
**(एकान्तरं द्व्यन्तरं वा सप्ताहं वा पुनः पुनः ॥**
**एकविंशतिरात्रं वा यावद्वा साधु मन्यते ॥ ४२ ॥**
**मारुतेनाभिभूतस्य वाऽत्यन्तं यस्य देहिनः ॥**
**द्विकालं चापि दातव्यं नस्यं तस्य विजानता) ॥४३॥**[1]

नस्ये इत्यादि । शास्त्रचिन्तकैः विदेहादिभिः । मस्तुलुङ्गः शिरोऽन्तर्घृताकारः । सर्पिर्नस्यं निषेचयेदिति पित्तप्रकृतौ, वातप्रकृतौ तु पक्वतैलमेव ॥ ३७—४३ ॥

**अवपीडस्तु शिरोविरेचनवदभिष्यण्णसर्पदष्टविसंज्ञेभ्यो दद्याच्छिरोविरेचनद्रव्याणामन्यतमम[2]वपिष्यावपीड्य च, शर्करेक्षुरसक्षीरघृतमांसरसानामन्यतमं क्षीणानां शोणितपित्ते च विदध्यात् ॥४४॥**
**कृशदुर्बलभीरूणां सुकुमारस्य योषिताम् ॥**
**शृताः स्नेहाः शिरःशुद्ध्यै कल्कस्[3]तेभ्यो यथा हितः ४५**

यद्यप्यवपीडादौ प्रतिमर्शः पूर्वमुद्देशसूत्रे प्रतिपादितः, तथाऽपि सर्वदोषोपयोज्यतया परिहाररहितत्वेन पश्चान्निर्देशं करिष्यतीति असर्वदोषोपयोज्यं सपरिहारं चावपीडमाह—अवपीड इत्यादि । अभिष्यण्णो मेदःकफाभिव्याप्तशिराः । पिप्पलीविडङ्गादिशिरोविरेचनद्रव्याणामेकतमं प्राप्य, पिष्ट्वा कल्कं, चकारादेतेषां क्वाथेनाक्तं पिचुनक्तकमवपीड्य शिरोविरेचनवद्यथाक्रमं चतुःषडष्टबिन्दुप्रमाणं हीनादिमात्रास्ववपीडं दद्यात् । तस्य च तन्त्रान्तरे विषार्तादीनां संज्ञाप्रबोधनत्वेन रक्तपित्तादीनां स्तम्भनत्वेन द्वैविध्यम् । तथा च विदेहः,—"विषाभिघातसंन्यासमूर्च्छामोहापतन्त्रके । मदापस्मारकामार्तिचिन्ताक्रोधभयादिषु । मानसेषु च रोगेषु मूढव्याकुलचेतसाम् । संज्ञाप्रबोधहेत्वर्थमवपीडं प्रयोजयेत् ॥ शिरोविरेचनस्नेहमुष्काख्यं(?) तद्विरेचनम् । क्षौद्रादिकल्कपिष्टं च स्तम्भनं त्ववपीडनम्"—इति ॥ ४४ ॥ ४५ ॥

**चेतोविकारकृमिविषाभिपन्नानां चूर्णं प्रधमेत् ॥४६॥**

१ 'शीर्षं' इति पा० ।

१ श्लोकद्वयं हस्तलिखितपुस्तके न पठ्यते । २ 'अन्यतममासाद्य' इति पा० । ३ 'कल्कोऽन्येभ्यस्तथा हितः' इति पा० ।

प्रधमनप्रयोगविषयावधारणं— चेतोविकारकृमिविषाभिपन्नानामित्यादि । अत्राह विदेहः,—"नाडी षडङ्गुलायामा द्विमुखी च तया धमेत् । त्रिश्चूर्णं मुचुटीमात्रमेष प्रधमने विधिः ॥ शुक्तिप्रमाणं जिघ्रेद्वा बद्धं सूक्ष्मेण वाससा"—इति । तर्जन्यङ्गुष्ठाग्रमात्रग्राह्यं चूर्णं मुचुटीमात्रम् । गयी तु प्रतिमर्शानन्तरमवपीडप्रधमने प्राह ॥ ४६ ॥

नस्येन परिहर्तव्यो भुक्तवानपतर्पितोऽत्यर्थतरुणप्रतिश्यायी गर्भिणी पीतस्नेहोदकमद्यद्रवोऽजीर्णी दत्तवस्तिः क्रुद्धो गरार्तस्तृषितः शोकाभिभूतः श्रान्तो बालो वृद्धो वेगावरोधितः[1] शिरःस्नातुकामश्चेति; अनार्तवे चाभ्रे नस्यधूमौ परिहरेत् ॥ ४७ ॥

अतः परं नस्यानर्होपदेशः—नस्येनेत्यादि । अनार्तवे चेत्यादि चकारादार्तवेऽप्यभ्रे ॥ ४७ ॥

तत्र हीनातिमात्रातिशीतोष्णसहसाप्रदानादतिप्रविलम्बितशिरस उच्छिङ्घतो विचलतोऽभ्यवहरतो वा प्रतिषिद्धप्रदानाच्च व्यापदो भवन्ति तृष्णोद्गारादयो दोषनिमित्ताः क्षयजाश्च ॥ ४८ ॥

इदानीं नस्यव्यापदः कारणसहिताः प्रतिपादयति—तत्र हीनातिमात्रातिशीतोष्णेत्यादि । दोषनिमित्ता इति दोषोत्क्लेशनिमित्ताः, क्षयजाश्चेति दोषक्षयजाः ॥ ४८ ॥

भवतश्चात्र—

नस्ये शिरोविरेके च व्यापदो द्विविधाः स्मृताः ॥
दोषोत्क्लेशात् क्षयाच्चैव विज्ञेयास्ता यथाक्रमम् ॥ ४९ ॥

उक्तमेवार्थं पद्येन स्पष्टीकुर्वन्नाह—भवतश्चात्रेत्यादि । यथाक्रममिति स्नैहिकनस्ये दोषोत्क्लेशजाः, शिरोविरेचने क्षयजा व्यापदो भवन्तीति ॥ ४९ ॥

दोषोत्क्लेशनिमित्तास्तु जयेच्छमनशोधनैः ॥
अथ क्षयनिमित्तासु यथास्वं बृंहणं हितम् ॥ ५० ॥

दोषोत्क्लेशनिमित्ता इत्यादि । शमनशोधनैरिति तत्राल्पे शमनं, प्रभूते शोधनम् ॥ ५० ॥

प्रतिमर्शश्चतुर्दशसु कालेषूपादेयः; तद्यथा—तल्पोत्थितेन, प्रक्षालितदन्तेन, गृहान्निर्गच्छता, व्यायामव्यवायाध्वपरिश्रान्तेन, मूत्रोच्चारकवलाञ्जनान्ते, भुक्तवता, छर्दितवता, दिवास्वप्नोत्थितेन, सायं चेति ॥ ५१ ॥

तत्र तल्पोत्थितेनासेवितः प्रतिमर्शो रात्रावुपचितं नासास्रोतोगतं मलमुपहन्ति मनःप्रसादं च करोति, प्रक्षालितदन्तेनासेवितो दन्तानां दृढतां वदनसौगन्ध्यं चापादयति, गृहान्निर्गच्छता सेवितो नासास्रोतसः क्लिन्नतया रजोधूमो वा न बाधते, व्यायाममैथुनाध्वपरिश्रान्तेनासेवितः श्रममुपहन्ति, मूत्रोच्चारान्ते सेवितो दृष्टेर्गुरुत्वमपनयति, कवलाञ्जनान्ते सेवितो दृष्टिं प्रसादयति, भुक्तवता सेवितः स्रोतसां विशुद्धिं लघुतां चापादयति, वान्तेनासेवितः स्रोतोविलग्नं श्लेष्माणमपोह्य भक्ताकाङ्क्षामापादयति, दिवास्वप्नोत्थितेनासेवितो निद्राशेषं गुरुत्वं मलं चापोह्य चित्तैकाग्र्यं जनयति, सायं चासेवितः सुखनिद्राप्रबोधं चेति ॥ ५२ ॥

ईषदुच्छिङ्घतः स्नेहो यावद्वक्त्रं प्रपद्यते ॥
नस्ये निषिक्तं तं विद्यात् प्रतिमर्शं प्रमाणतः ॥ ५३ ॥

प्रतिमर्शप्रमाणमाह—ईषदित्यादि । वृद्धवाग्भटे चान्यथा प्रतिमर्शप्रमाणम् । तथा च—"प्रमाणं प्रतिमर्शस्य बिन्दुद्वितयमिष्यते । बिन्दुर्वा येन चोत्क्लेशो नात्युक्लिष्टस्य जायते ॥ निहितो यत्र वा स्नेहो न साक्षादुपलभ्यते"—इति । शिरोविरेचनस्नेहवत् प्रतिमर्शस्नेहोऽपि नाभ्यवहरणीयः । तथाहि विदेहः—"उच्छिङ्घेन्न पिबेत् स्नेहं निष्ठीवेन्मुखमागतम्"—इति । नस्यादिषु नरावस्थिककालस्तन्त्रान्तरादनुसर्तव्यः; तथा च कृष्णात्रेयः—"सप्तवर्षमुपादाय नस्यकर्म चतुर्विधम् । प्रतिमर्शोऽथ वमनं जन्मप्रभृति शस्यते । धूमोऽथ द्वादशे वर्षे कवलः पञ्चमे मतः । दोषव्याधिबलावस्थां वीक्ष्य चैतान् प्रयोजयेत्"—इति ॥ ५१—५३ ॥

नस्येन रोगाः शाम्यन्ति नराणामूर्ध्वजत्रुजाः ॥
इन्द्रियाणां च वैमल्यं कुर्यादास्यं सुगन्धि च ॥ ५४ ॥
हनुदन्तशिरोग्रीवात्रिकबाहूरसां बलम् ॥
वलीपलितखालित्यव्यङ्गानां चाप्यसंभवम् ॥ ५५ ॥

इदानीं सामान्येन नस्यफलमाह—नस्येन रोगा इत्यादि ॥ ५४ ॥ ५५ ॥

तैलं कफे सवाते स्यात् केवले पवने वसाम् ॥
दद्यात्सर्पिः सदा पित्ते मज्जानं च समारुते ॥ ५६ ॥
चतुर्विधस्य स्नेहस्य विधिरेवं प्रकीर्तितः ॥
श्लेष्मस्थानाविरोधित्वात्तेषु तैलं विधीयते ॥ ५७ ॥

अतः स्नेहान् दोषप्रत्यनीकत्वेन विभजति—तैलमित्यादि ॥ ५६ ॥ ५७ ॥

अतः परं प्रवक्ष्यामि कवलग्रहणे विधिम् ॥
चतुर्धा कवलः स्नेही प्रसादी शोधिरोपणौ ॥ ५८ ॥
स्निग्धोष्णैः स्नैहिको वाते, स्वादुशीतैः प्रसादनः ॥
पित्ते, कट्वम्ललवणै रूक्षोष्णैः शोधनः कफे ॥ ५९ ॥
कषायतिक्तमधुरैः कटूष्णै रोपणो व्रणे ॥
चतुर्विधस्य चैवास्य विशेषोऽयं प्रकीर्तितः ॥ ६० ॥

ततो नस्यमभिधाय शिरोरोगमुखरोगावजयकारणं कवलग्रहमुद्दिशन्नाह—अत ऊर्ध्वमित्यादि । दोषभेदेन त्रिषु[1] स्नैहिका-

[1] 'वेगावरोधनः' इति पा० ।

[1] 'त्रिस्थूणदर्शनमभिधाय' इति पा० ।

दीनभिधाय रोपणो व्रण इत्यनेन शोणितं चतुर्थमभिहितम् ॥ ५८ ॥ ६० ॥

**तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैलशुक्तसुरामूत्रक्षारमधूनामन्यतमेन सलवणमभिप्रतप्तमुपस्विन्नमृदितगलकपोलललाटप्रदेशो धारयेत् ॥ ६१ ॥**

मुखस्यात्र कफस्थानत्वात् कफहरं संशोधनमेव कवलं त्रिकटुकादिद्रव्यैर्दर्शयन्नाह—तत्रेत्यादि ॥ ६१ ॥

**सुखं संचार्यते या तु मात्रा स (सा) कवलः स्मृतः ॥**
**असंचार्या तु या मात्रा गण्डूषः स प्रकीर्तितः ॥ ६२ ॥**

अथ कवलगण्डूषयोः प्रतिस्वं भेदमाह—सुखमित्यादि ॥ ६२ ॥

**तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन यावद्दोषपरिपूर्णकपोलत्वं नासास्रोतोनयनपरिस्रावश्च भवति तदा विमोक्तव्यः, पुनश्चान्यो ग्रहीतव्य इति ॥ ६३ ॥**

कियन्तं कालं व्याप्य धारणीयस्तदाह—तावच्च धारयितव्य इत्यादि । दोषोऽत्र कफः । नासास्रोतः नासारन्ध्रम् ॥ ६३ ॥

**एवं स्नेहपयःक्षौद्ररसमूत्राम्लसंभृताः ॥**
**कषायोष्णोदकाभ्यां च कवला दोषतो हिताः ॥६४॥**

शोधनकवलस्य विधानं स्नेहादिष्वपि निर्दिशन्नाह—एवमित्यादि । संभृताः सम्यकृताः । दोषत इति दोषव्याधिप्रत्यनीकभावेन । दोषग्रहणेन व्याधिः परिगृह्यते, कार्ये कारणोपचारात् ॥ ६४ ॥

**व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ॥**
**इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम् ॥ ६५ ॥**
**हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च ॥**
**अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः ॥६६॥**
**शोधनीये विशेषेण भवन्त्येव न संशयः ॥**

इदानीं योगादिलक्षणमुद्दिशन्नाह—व्याधेरित्यादि । अत्र स्थानित्वेन शोधनीय एव प्रधानः, तेन व्याधेरपचय इत्यादिकं शुद्धिलक्षणं विशेषेण शोधनीयस्य, सामान्येन पुनः स्नैहिकादीनामपि; मुखपाकादि तु शोधनीयस्यैव, शेषाणां तु द्रव्यगुणादूह्यम् ॥ ६५ ॥ ६६ ॥—

**तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ॥ ६७ ॥**
**सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः ॥**
**कवलस्य विधिर्ह्येष समासेन प्रकीर्तितः ॥ ६८ ॥**

आगन्तुकस्य क्षारादिदाहस्य कवलमुद्दिशन्नाह—तिला नीलोत्पलमित्यादि । एतैर्व्यस्तैः समस्तैश्च क्षारादिदाहे कवलः ॥ ६७ ॥ ६८ ॥

**विभज्य भेषजं बुद्ध्या कुर्वीत प्रतिसारणम् ॥**
**कल्को रसक्रिया क्षौद्रं चूर्णं चेति चतुर्विधम् ॥६९॥**
**अङ्गुल्यग्रप्रणीतं तु यथास्वं मुखरोगिणाम् ॥**

छुप्तादिग्रहणगृहीतस्य प्रतिसारणस्य समासेन विधानमुद्दिशन्नाह—विभज्येत्यादि । रसक्रिया फाणिताकृतिः । भेषजं रसवीर्यगुणविपाकैर्वातादिदोषान् तदारब्धरोगांश्च प्रविभज्य, यथास्वं यद्यत्र प्रतिसारणं हितं तत्तस्यैव मुखरोगिणां कुर्वीत कल्कादिभेदेन चतुर्विधं प्रतिसारणम् । अङ्गुल्यग्रप्रणीतत्वेन कोलास्थिमात्रत्वं प्रतिसारणस्य सूचयति । तथा च **शालाक्ये**—"कोलास्थिमात्रेण पिण्डेन यथादोषं यथाव्याधि पञ्च सप्त वा वारान् हीनमध्यमोत्तमेषु व्याधिषु च प्रतिसारणं कुर्वीत । न चैनमतिघर्षयेत् । अतिघर्षणादोषचोषदाहक्लेदश्वयथुतृष्णाभक्तच्छन्दवाक्सङ्गा भवन्ति, असम्यक्प्रतिसारणात् पैच्छिल्यगुरुत्वानन्नाभिलाषप्रमोहविकारानुपशयाः, सम्यक्प्रतिसारणाद्वैशद्यं लाघवं क्षवथुरप्रसेकोऽन्नाभिलाषश्च"–इति ॥ ६९ ॥—

**तस्मिन् योगमयोगं च कवलोक्तं विभावयेत् ॥ ७० ॥**
**तानेव शमयेद् व्याधीन् कवलो यानपोहति ॥**
**दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम् ॥ ७१ ॥**

**इति सुश्रुतसंहितायां चिकित्सास्थाने धूमनस्यकवलग्रहचिकित्सितं नाम**
**चत्वारिंशोऽध्यायः ।**

तस्मिन् योगमित्यादि । योगादन्यः अयोगः, स पुनरिह हीनयोगोऽतियोगश्च । अयोगं चेति चकारेण योगायोगातियोगचिकित्सितं समुच्चीयते । दोषघ्नमिति येन दोषेण वातादिना मुखरोग आरब्धः । ( अत्र च **कृष्णात्रेयः**,—"सप्तवर्षमुपादाय नस्यकर्म चतुर्विधम् । प्रतिमर्शोऽथ वमनं जन्मप्रभृति शस्यते । धूमो द्वादशवर्षस्य कवलः पञ्चमे ततः । दोषव्याधिबलावस्थां वीक्ष्य चैतान् प्रयोजयेत्"–इति ) ॥ ७० ॥ ७१ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां
समस्तनिबन्धार्थज्ञापिकायां सुश्रुतटीकायां
चत्वारिंशोऽध्यायः ॥ ४० ॥

**इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां चिकित्सास्थानं समाप्तम् ।**

निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता।

## अथ कल्पस्थानम्।

### प्रथमोऽध्यायः।

**अथातोऽन्नपानरक्षाकल्पं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

चिकित्सास्थानानन्तरं कल्पस्थानमारभ्यते; यतश्चिकित्सास्थानादिभूते द्विव्रणीयाध्याये 'विषजुष्टस्य विज्ञानं विषनिश्चयमेव च। चिकित्सितं च वक्ष्यामि कल्पे तु प्रविभागशः' इत्यनेन श्लोकेन विषजुष्टव्रणस्य कल्पस्थाने प्रतिपादनं सूचितं तस्मात्, तत्रापि स्वस्थस्य व्याधिक्षीणस्य चान्नैरेव प्राणानां धारणं क्रियतेऽतः प्रागन्नपानरक्षाकल्पं व्याख्यातुकामः प्राह–अथात इत्यादि। अन्ने भक्ष्यमवरुद्धं घनसाधर्म्यात्; पाने लेह्यमवरुद्धं द्रवसाधर्म्यात्; एवं चतुर्विधस्यापि रक्षाकल्पः। रक्षणं रक्षा, सा पुनरदुष्टस्य; दुष्टस्य पुनर्विषभेषजकल्पनात् कल्पः; रक्षया सहितः कल्पो रक्षाकल्पः। आदिशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः, तेन दन्तकाष्ठादीनामपि लक्षणचिकित्सितकल्पनम् ॥ १ ॥ २ ॥

**धन्वन्तरिः काशिपतिस्तपोधर्मभृतां वरः ॥**
**सुश्रुतप्रभृतीञ्छिष्याञ्छशासाहतशासनः ॥ ३ ॥**

अथ प्रथममन्नादीनां रक्षामेव निर्दिदिक्षुराह–धन्वन्तरिरित्यादि। धन्वन्तरिः सुश्रुतप्रभृतीन् शिष्यान् शशास शिक्षितवान्। तपोधर्मभृतां वर इति तपस्विनां धार्मिकाणां च मध्ये श्रेष्ठः। अहतशासनः अनभिभूताज्ञ इत्यर्थः। अन्ये त्वेवं पठन्ति— 'दिवोदासः क्षितिपतिस्तपोधर्मश्रुताकरः। सुश्रुतप्रमुखाञ्छिष्याञ्छशासाहतशासनः' इति। आकरः खनिः ॥ ३ ॥

**रिपवो विक्रमाक्रान्ता ये च स्वे कृत्यतां गताः ॥**
**सिसृक्षवः क्रोधविषं विवरं प्राप्य तादृशम् ॥ ४ ॥**
**विषैर्निहन्युर्निपुणं नृपतिं दुष्टचेतसः ॥**
**स्त्रियो वा विविधान् योगान् कदाचित्सुभगेच्छया ५**
**विषकन्योपयोगाद्वा क्षणाज्जह्यादसूनरः ॥**
**तस्माद्वैद्येन सततं विषाद्रक्ष्यो नराधिपः ॥ ६ ॥**

नृपतिः कुतो रक्षणीय इत्याह—रिपव इत्यादि। सिसृक्षवः स्रष्टुमिच्छवः। क्रोधेन विषं क्रोधविषम्। न केवलं रिपवः स्वे चात्मीया भृत्याः, कृत्यतां गताः विद्वेषं गताः। तथा च कृत्यशब्दार्थोऽमरकोषे,—"कृत्यं क्रियादेवतयोस्त्रिषु विद्विष्टकार्ययोः"—इति। विवरं छिद्रं प्राप्य, तादृशं नृपतिं वधक्षमं, स्त्रियो दुष्टचित्ता विविधान् योगान् संयोगविषाणि प्राप्य, कदाचिदज्ञानात् सुभगेच्छया वा विविधान् योगान् सिसृक्षवो दातुमिच्छन्त्यो राजानं निहन्युः। विषकन्योपयोगाद्वा क्षणाज्जह्यादसूनरः। उक्तं च—"हन्ति स्पृशन्ती स्वेदेन गम्यमाना च मैथुने। पक्वं वृन्तादिव फलं प्रशातयति मेहनम्"—इति। 'कृत्यतां' गता इत्यत्र 'विकृतिं गताः' इत्यन्ये पठन्ति ॥४–६॥

**यस्माच्च चेतोऽनित्यत्वमश्ववत् प्रथितं नृणाम् ॥**
**न विश्वस्यात्ततो राजा कदाचिदपि कस्यचित् ॥७॥**

न परं पूर्वोक्तेभ्यो रिपुप्रभृतिभ्यो राजा रक्षणीयोऽपि तु राज्ञा कस्यापि विश्वासो न विधेयः, कुत इत्याह—यस्माच्चेत्यादि। अश्ववदिति आशुतमगत्वा अश्वा उच्यन्ते, एतेन शीघ्रसंचारित्वोपलक्षणार्थं चेतोऽनित्यत्वमुक्तं, यस्मादश्वस्येव शीघ्रसंचारित्वं नानाभावेन चेतसः, तस्मात् कदाचिदपि कस्यापि विश्वासं न विदध्यान्महीपतिः। वैद्यविषये च विश्वासहेतुः सूत्रस्थाने 'विसृजत्यात्मनाऽऽत्मानं'—इत्यादिश्लोकेनाभिहितः ॥७॥

**कुलीनं धार्मिकं स्निग्धं सुभृतं संततोत्थितम् ॥**
**अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम् ॥ ८ ॥**
**क्रोधपारुष्यमात्सर्यमायालस्यविवर्जितम् ॥**
**जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम् ॥ ९ ॥**
**मेधाविनम[1]संभ्रान्तमनुरक्तं हितैषिणम् ॥**
**पटुं प्रगल्भं निपुणं [2]दक्षमालस्यवर्जितम् ॥ १० ॥**
**पूर्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहितागदम् ॥**
**महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम् ॥ ११ ॥**

स च वैद्यो गुणवानेव विश्वासभाजनमिति वैद्यस्य गुणान् निर्दिशन्नाह—कुलीनमित्यादि। कुलीनो ह्यदुष्टबीजक्षेत्रतया नाकार्येषु प्रवर्तते, कुलमत्रायुर्वेदाध्यायिकुलं ब्राह्मणक्षत्रियवैश्यभेदेन त्रिविधं, कुलगुणसंपन्नशूद्रेण सह चतुर्विधमित्यन्ये; 'तद्भवं' इति गयी। स्निग्धः स्नेहेन मित्रभावेन राज्ञा सह व्यवस्थितः, एतेन मित्रमिव सर्वथा रक्षति। सुभृतं सम्यग्भृतं यथा च शरीरयात्रा भवति। तथा चोक्तं,—"सूपौदनं घृतमलं व्यञ्जनं दृढममलिनं च वासः"—इति। सततोत्थितः अहोरात्रमध्ययनाध्यापनतदर्थचिन्तानृपशरीररक्षास्थ्यापादानेषु तत्परो

---

१ 'असंभ्रान्तं' इति पा०। २ 'दक्षं व्यसनवर्जितम्' इति पा०।

नित्याभियुक्त इति। परगुणविध्वंसो मात्सर्यम्। माया परवन्धनबुद्धिः। अनुरक्तं सदाऽऽतुरलग्नं रागयुक्तम्। पटुं वक्तारं, प्रगल्भं धृष्टं, दक्षं चतुरं, आलस्यवर्जनं द्विरुक्तमत्यन्तनिषेधार्थम्। पूर्वोक्तैर्गुणैः 'तत्त्वाधिगतशास्त्रार्थः' इत्यादिकैः। महानसे रसवत्याम्। तद्विद्यपूजितमिति तद्विद्यैः पाकनिष्ठिततत्त्वज्ञानैः[1] भिषग्भिः पूजितम्। गयी तु 'अलुब्धमशठं भक्तं' इत्यादिकं 'नित्यं सन्निहितागदम्' इत्यन्तं न पठति, पुनरुक्तदोषत्वात्॥ ८–११॥

**प्रशस्तदिग्देशकृतं शुचिभाण्डं महच्छुचि॥**
**सजालकं गवाक्षाढ्यमाप्तवर्गनिषेवितम्॥ १२॥**
**विकक्षसृष्टसंसृष्टं सवितानं कृतार्चनम्॥**
**परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम्॥ १३॥**

तदेव महानसं कीदृशं कार्यमित्याह—प्रशस्तेत्यादि। प्रशस्ता दिक् अत्राग्नेयी, देशस्तु प्रशस्तगुणसंपदा युक्तः, महत् विस्तीर्णं, शुचि अनुपहतं, सजालकं जालकसंहितं, गवाक्षाढ्यं वातायनसमृद्धं, विकक्षसृष्टसंसृष्टं विगततृणस्थानसंपर्कं, एतेन रसवतीसमीपे तृणसंचयो न करणीय इत्युक्तं भवति, सवितानं वितानकसहितं, कृतार्चनं कृताग्निपूजनम्॥ १२॥ १३॥

**तत्राध्यक्षं नियुञ्जीत प्रायो वैद्यगुणान्वितम्॥**

महानसव्यापारिणमाह—तत्राध्यक्षमित्यादि। अध्यक्षम् अधिपतिम्। वैद्यगुणान्वितं वैद्यगुणैः कुलीनधार्मिकत्वादिभिर्युक्तमित्यर्थः॥—

**शुचयो दक्षिणा दक्षा विनीताः प्रियदर्शनाः॥ १४॥**
**संविभक्ताः सुमनसो नीचकेशनखाः स्थिराः॥**
**स्नाता दृढं संयमिनः कृतोष्णीषाः सुसंयताः॥ १५॥**
**तस्य चाज्ञाविधेयाः स्युर्विविधाः परिकर्मिणः॥**

शुचय इत्यादि। दक्षिणा अभिजाताः, कुलीना इति यावत्। दक्षाः चतुराः। विनीता विनययुक्ताः, शक्तिवन्त इत्यर्थः। संविभक्ताः विभज्य कर्मणि नियोजिताः। स्थिरा अचपलाः। दृढं संयमिनः सोपशमा इत्यर्थः। सुसंयताः सुष्ठु लौल्यादिदोषरहिताः, आयत्तपरिधानादिका वा इत्यर्थः। आज्ञाविधेया आदेशकारिणः। परिकर्मिणः सूपकारादयः॥ १४॥ १५॥–

**आहारस्थितयश्चापि भवन्ति प्राणिनो यतः॥ १६॥**
**तस्मान्महानसे वैद्यः प्रमादरहितो भवेत्॥**

महानसे वैद्यस्य सावधानत्वं सहेतुकमाह—आहारस्थितय इत्यादि॥ १६॥

**माहानसिकवोढारः सौपौदनिकपौपिकाः॥ १७॥**
**भवेयुर्वैद्यवशगा ये चाप्यन्येऽत्र केचन॥**

तेषां परिकर्मिणां वैद्याधीनत्वमाह—माहानसिकवोढार इत्यादि। महानसे नियुक्ता माहानसिका रसवतीपतय इत्यर्थः; वोढारो वोढ्रादयो वेष्टिकर्मकराः काहारादयो वा। सौपा उपकरणभूतद्रव्यसाधकाः सूपव्यञ्जनादिकारकाः, औदनिका उपकार्यभूतभक्तस्य साधकाः, पौपिकाः पूपादिभक्ष्याणां साधकाः कन्दूका इत्यर्थः। अन्येऽत्र केचनेति वेसवारकारकादयः १७—

**इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः॥ १८॥**
**विद्याद्विषस्य दातारमेभिर्लिङ्गैश्च बुद्धिमान्॥**
**न ददात्युत्तरं पृष्टो विवक्षन् मोहमेति च॥ १९॥**
**अपार्थं बहु सङ्कीर्णं भाषते चापि मूढवत्॥**
**स्फोटयत्यङ्गुलीर्भूमिमकस्माद्विलिखेद्धसेत्॥ २०॥**
**वेपथुर्जायते तस्य त्रस्तश्चान्योऽन्यमीक्षते॥**
**क्षामो[1] विवर्णवक्त्रश्च[2] नखैः किञ्चिच्छिनत्त्यपि॥ २१॥**
**आलभेतासकृद्दीनः करेण च शिरोरुहान्॥**
**निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः॥ २२॥**
**वर्तते विपरीतं तु विषदाता विचेतनः॥**

तदधिकृतस्यैव विषदातृज्ञानमुद्दिशन्नाह—इङ्गितज्ञ इत्यादि। इङ्गितज्ञो वैद्यः। एभिर्लिङ्गैः वक्ष्यमाणैः। विवक्षन् वक्तुमिच्छन्। अपार्थं निरर्थकम्। त्रस्तश्चान्योन्यमीक्षत इति स्वपापकर्मोपलम्भभयेन अन्यमन्यमीक्षत इति। क्षामः क्षीणः। विवर्णो मलिनवर्णः। हस्तेन केशान् आलभेत स्पृशेत्। असकृत् अनेकवारम्। दीनो विलक्षः। निर्यियासुः निर्यातुमिच्छुः। अपद्वारैः अमार्गैः॥ १८–२२॥—

**केचिद्भयात् पार्थिवस्य त्वरिता वा तदाज्ञया॥ २३॥**
**असतामपि सन्तोऽपि चेष्टां कुर्वन्ति मानवाः॥**
**तस्मात् परीक्षणं कार्यं भृत्यानामादृतैर्नृपैः॥ २४॥**

विषदपरीक्षणे च राज्ञा आदरपरेण भवितव्यमितीममर्थं सहेतुकं प्रतिपादयन्नाह—केचिदित्यादि। असतामपि असाधूनामपि। आदृतैः सादरैरित्यर्थः॥ २३॥ २४॥

**अन्ने पाने दन्तकाष्ठे तथाऽभ्यङ्गेऽवलेखने॥**
**उत्सादने कषाये च परिषेकेऽनुलेपने॥ २५॥**
**स्रक्षु वस्त्रेषु शय्यासु कवचाभरणेषु च॥**
**पादुकापादपीठेषु पृष्ठेषु गजवाजिनाम्॥ २६॥**
**विषजुष्टेषु चान्येषु नस्यधूमाञ्जनादिषु॥**
**लक्षणानि प्रवक्ष्यामि चिकित्सामप्यनन्तरम्॥ २७॥**

येष्वधिष्ठानेषु गरविषं प्रयच्छन्ति तान्यदूषितानि रक्षितुं, दूषितेषु चिकित्सार्थं च लक्षणानि निर्देष्टुकामः प्राह—अन्न इत्यादि। दन्तकाष्ठसहचरितं जिह्वानिर्लेखनं मुखशोधनकषायश्च दन्तकाष्ठग्रहणेन गृह्यते। अवलेखने कङ्कतिकादौ केशप्रसाधने। उत्सादने उद्वर्तने। परिषेके स्नाने। कषायोऽत्र रोध्रादिकस्नैलापनयनाय। स्रक्षु पुष्पमालासु। कवचं सन्नाहम्। पादपीठेषु पादाधारेषु। विषजुष्टेषु चान्येष्वित्यनेन शिरोभ्यङ्गशिरस्त्राणादयो गृह्यन्ते॥ २५–२७॥

**नृपभक्ताद्बलिं न्यस्तं सविषं भक्षयन्ति ये॥**
**तत्रैव ते विनश्यन्ति मक्षिकावायसादयः॥ २८॥**

1 'पाकपरिनिष्ठिततत्त्वज्ञैः' इति पा०।

1 'ध्यामः' इति पा०। 2 'ध्यामो मलिनवस्त्रवर्णः' इति पा०।

हुतभुक् तेन चान्नेन भृशं चटचटायते ॥
मयूरकण्ठप्रतिमो जायते चापि दुःसहः ॥ २९ ॥
भिन्नार्चिस्तीक्ष्णधूमश्च नचिराच्चोपशाम्यति ॥
चकोरस्याक्षिवैराग्यं जायते क्षिप्रमेव तु ॥ ३० ॥
दृष्ट्वाऽन्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः ॥
कोकिलः स्वरवैकृत्यं क्रौञ्चस्तु मदमृच्छति ॥ ३१ ॥
हृष्येन्मयूर उद्विग्नः क्रोशतः शुकसारिके ॥
हंसः क्ष्वेडति चात्यर्थं भृङ्गराजस्तु कूजति ॥ ३२ ॥
पृषतो विसृजत्यश्रुं विष्ठां मुञ्चति मर्कटः ॥
सन्निकृष्टांस्ततः कुर्याद्राज्ञस्तान् मृगपक्षिणः ॥ ३३ ॥
वेश्मनोऽथ विभूषार्थं रक्षार्थं चात्मनः सदा ॥

रसरूपादिभिस्तल्लिङ्गमुद्दिशन्नाह—नृपभक्तादित्यादि । नृपभक्तात् राजभोजनात् । हुतभुगित्यादि । हुतभुक् वह्निः । तेन सविषेणान्नेन चटचटायत इति शब्देन विषज्ञानं; मयूरकण्ठप्रतिम इति रूपेण विषज्ञानं; तीक्ष्णधूमश्चेति गन्धेन विषज्ञानं; रसेन विषज्ञानं विनश्यन्ति मक्षिकावायसादय इत्यनेनाभिहितम् । एवं शब्दादिभिः पञ्चभि(चतुर्भि)र्विषज्ञानं प्रतिपाद्यापरेणापि प्रकारेण चकोरादिपक्षिमृगचक्षुरादिविकारेण विषज्ञानमुद्दिशति—चकोरस्येत्यादि । अक्षिवैराग्यं रूपग्रहणेऽलसत्वमिति गयी, विगतरागे अक्षिणी भवत इति **संग्रहारुणौ** । जीवजीवकः पक्षिविशेषः, 'कुरिच' इति लोके । मदमृच्छति हर्षं यातीत्यर्थः । हृष्येन्मयूर उद्विग्न इति उद्विग्नः चलितः सन् मयूरो हृष्येत् तुष्येदित्यर्थः; विजिरिह चलनार्थो न भयार्थः; परस्परविरोधात् । क्रोशतः शुकसारिके इति भयाद्रोदनशब्दं कुरुत इत्यर्थः । हंसः क्ष्वेडति चात्यर्थमिति अतिशयेन शब्दायत इत्यर्थः । भृङ्गराजस्तु कूजतीति भृङ्गराजो भ्रमरको धूम्याटसदृशः पक्षिराज इति लोके, कूजति अव्यक्तं शब्दायते । पृषतः चित्रबिन्दुः, 'चित्तल' इति लोके ॥ २८–३३ ॥—

उपक्षिप्तस्य चान्नस्य बाष्पेणोर्ध्वं प्रसर्पता ॥ ३४ ॥
हृत्पीडा भ्रान्तनेत्रत्वं शिरोदुःखं च जायते ॥
तत्र नस्याञ्जने कुष्ठं लामज्जं नलदं मधु ॥ ३५ ॥
कुर्याच्छिरीषरजनीचन्दनैश्च प्रलेपनम् ।
हृदि चन्दनलेपस्तु तथा सुखमवाप्नुयात् ॥ ३६ ॥

विषदूषितस्यान्नस्य भोक्तुं दत्तस्य बाष्पोष्मणाऽन्तर्गतेन बाह्येन च किं स्यात्तदाह—उपक्षिप्तस्येत्यादि । उपक्षिप्तस्य भोक्तुं दत्तस्यान्नस्य बाष्पेणोर्ध्वं प्रसर्पता गच्छता हृत्पीडादिकं जायते । नलदं मांसी, लामज्जम् उशीरभेदः । अन्तःप्रविष्टे बाष्पे नस्याञ्जनयोर्विषयः । कुर्यादित्यादि । चन्दनं रक्तं शुक्लं वा । एतौ लेपौ बाह्येन बाष्पस्पर्शेन जाते हृत्पीडादौ ज्ञेयौ । उपक्षिप्तस्येत्यत्र 'उखाक्षिप्तस्य' इति केचित् पठन्ति; उखा स्थाली ॥ ३४–३६ ॥

पाणिप्राप्तं पाणिदाहं नखशातं करोति च ॥
अत्र प्रलेपः श्यामेन्द्रगोपासोमोत्पलानि च ॥ ३७ ॥



पाणिप्राप्तमित्यादि—नखशातं नखपातनम् । श्यामा श्यामालता, प्रियङ्गुरित्यपरे; इन्द्रा इन्द्रवारुणी; गोपा सुगन्धमूला सारिवा; 'इन्द्रगोप' इत्यन्ये पठन्ति, तत्रेन्द्रगोपः कीटविशेषः; सोमा गुडूची, सोमलतेत्यन्ये; उत्पलं नीलोत्पलम् ॥ ३७ ॥

स चेत् प्रमादान्मोहाद्वा तदन्नमुपसेवते ॥
अष्ठीलावत्ततो जिह्वा भवत्यरसवेदिनी ॥ ३८ ॥
तुद्यते दह्यते चापि श्लेष्मा चास्यात् प्रसिच्यते ॥
तत्र बाष्पेरितं कर्म यच्च स्याद्दान्तकाष्ठिकम् ॥ ३९ ॥

स चेदित्यादि । अष्ठीला दीर्घवर्तुलपाषाणविशेषः, अन्ये पुनः अष्ठीलवदिति पठन्ति, अष्ठीलशब्दोऽकारान्तोऽप्यस्तीति मन्तव्यम् । बाष्पेरितं कर्मेति यत् सविषबाष्पसंपर्के 'कुर्याच्छिरीषरजनी' इत्यादिभिः प्रोक्तं कर्म; दान्तकाष्ठिकमिति धातकीपुष्पादिभिः प्रतिसारणं[1]; तच्च प्रतिसारणमप्रच्छिते शोफे विधेयम् ॥ ३८ ॥ ३९ ॥

मूर्च्छां छर्दिमतीसारमाध्मानं दाहवेपथू ॥
इन्द्रियाणां च वैकृत्यं कुर्यादामाशयं गतम् ॥ ४० ॥
तत्राशु मदनालाबुबिम्बीकोशातकीफलैः ॥
छर्दनं दध्युदश्विद्भ्यामथवा तण्डुलाम्बुना ॥ ४१ ॥

मूर्च्छामित्यादि । अलाबुः तिक्तालाबुः; कोशातकी घोषकः, घुसेण्डिकेति लोके । उदश्वित् तक्रम् ॥ ४० ॥ ४१ ॥

दाहं मूर्च्छामतीसारं तृष्णामिन्द्रियवैकृतम् ॥
आटोपं पाण्डुतां कार्श्यं कुर्यात् पक्वाशयं गतम् ॥ ४२ ॥
विरेचनं ससर्पिष्कं तत्रोक्तं नीलिनीफलम् ॥
दध्ना दूषीविषारिश्च पेयो वा मधुसंयुतः ॥ ४३ ॥

दाहमित्यादि । आटोपं वातादीनामप्रवृत्तिम् । तत्रोक्तमिति तत्र विषभेषजकल्पे । नीलिनीफलं नीलाञ्जनिकाफलं, यस्य श्रीफलेति लोके प्रसिद्धिः । पिप्पल्यो ध्यामकमित्यादिर्दूषीविषारिर्वक्ष्यमाणः; दूषीविषारिश्चाक्षप्रमाणः, दधि पानयोग्यप्रमाणं ज्ञेयं, मधु अष्टमाषकप्रमितं प्रक्षिप्य दध्ना दूषीविषारिः पातव्यः । वाशब्दश्च प्रथमोक्तविरेचनयोगापेक्षया समुच्चये ॥ ४२ ॥ ४३ ॥

द्रवद्रव्येषु सर्वेषु क्षीरमद्योदकादिषु ॥
भवन्ति विविधा राज्यः फेनबुद्बुदजन्म च ॥ ४४ ॥
छायाश्चात्र न दृश्यन्ते दृश्यन्ते यदि वा पुनः ॥
भवन्ति यमलाश्छिद्रास्तन्व्यो वा विकृतास्तथा ४५

द्रवद्रव्येषु क्षीरादिषु यत् स्थूलं लक्षणं तदाह—द्रवद्रव्येष्वित्यादि । विविधा राज्यो नानाप्रकारा लेखाः । विविधा राज्यः **श्रीवाग्भटेन** व्याख्याताः,तथा च,—"नीला राजी रसे ताम्रा क्षीरे दधनि दृश्यते । श्यावा पीताऽसिता तक्रे घृते पानीयसन्निभा ॥ काली मद्याम्भसोः क्षौद्रे हरितैलेऽरुणोपमा" इति । फेनेत्यादि फेनस्य बुद्बुदस्य चोत्पत्तिरित्यर्थः । यमला युग्माः ।

[1] अस्याग्रे 'दन्तकाष्ठकर्मणः साहचर्यात् प्रतिसारणं कवलगण्डूषौ च' इत्यधिकं पठ्यते क्वचित्पुस्तके ।

छिद्राः ससुषिराः । तन्व्यः सूक्ष्माः । **गयी** तु तन्व्य इत्यत्र 'अन्या' इति पठित्वा व्याख्याति—अन्यतरेषां पशूनामिव छायाः । विकृताः सौम्यस्यापि रौद्राः, रौद्रस्यापि सौम्याः ॥ ४४ ॥ ४५ ॥

**शाकसूपान्नमांसानि क्लिन्नानि विरसानि च ॥**<br>
**सद्यः पर्युषितानीव विगन्धानि भवन्ति च ॥ ४६ ॥**<br>
**गन्धवर्णरसैर्हीनाः सर्वे भक्ष्याः फलानि च ॥**<br>
**पक्कान्याशु विशीर्यन्ते पाकमामानि यान्ति च ॥ ४७ ॥**

शाकेत्यादि । चकारोऽनुक्तसमुच्चयार्थः; तेन तिक्तानि च भवन्तीत्यर्थः । गन्धवर्णरसैरित्यादि । गन्धवर्णरसैरित्यत्र स्पर्शग्रहणं लुप्तनिर्दिष्टं द्रष्टव्यं, तेन स्पर्शेनापि हीना भवन्तीत्यर्थः । पक्कान्याशु विशीर्यन्त इति पक्कानि फलान्याशु शीघ्रं विशीर्यन्ते पूतिभावं गच्छन्ति ॥ ४६ ॥ ४७ ॥

**विशीर्यते कूर्चकस्तु दन्तकाष्ठगते विषे ॥**<br>
**जिह्वादन्तौष्ठमांसानां श्वयथुश्चोपजायते ॥ ४८ ॥**<br>
**अथास्य धातकीपुष्पपथ्याजम्बूफलास्थिभिः ॥**<br>
**सक्षौद्रैः प्रच्छिते शोफे कर्तव्यं प्रतिसारणम् ॥ ४९ ॥**<br>
**अथवाऽङ्कोठमूलानि त्वचः सप्तच्छदस्य वा ॥**<br>
**शिरीषमाषका वाऽपि सक्षौद्राः प्रतिसारणम् ॥ ५० ॥**

विशीर्यत इत्यादि । कूर्चको दन्तकाष्ठस्याग्रिमो भागः । विशीर्यते त्रुट्यति । अथास्य धातकीत्याद्येको योगः, प्रतिसारणं घर्षणं; अथवाऽङ्कोठेत्यादिर्द्वितीयो योगः; शिरीषमाषका वाऽपीत्यादिस्तृतीयो योगः; सप्तच्छदत्वचः पृथग्योग इति **गयी**, तदा चत्वारो योगाः । शिरीषमाषकाः शिरीषबीजानि ॥ ४८–५० ॥

**जिह्वानिर्लेखकवलौ दन्तकाष्ठवदादिशेत् ॥**

जिह्वेत्यादि । जिह्वानिर्लेखनस्य कवलस्य च विषदूषितस्य लिङ्गानि चिकित्सितं च दन्तकाष्ठस्येव ब्रूयात् ॥—

**पिच्छिलो बहुलोऽभ्यङ्गो विवर्णो वा विषान्वितः ५१**<br>
**स्फोटजन्मरुजास्रावत्वक्पाकः स्वेदनं ज्वरः ॥**<br>
**दरणं चापि मांसानामभ्यङ्गे विषसंयुते ॥ ५२ ॥**<br>
**तत्र शीताम्बुसिक्तस्य कर्तव्यमनुलेपनम् ॥**<br>
**चन्दनं तगरं कुष्ठमुशीरं वेणुपत्रिका ॥ ५३ ॥**<br>
**सोमवल्ल्यमृता श्वेता पद्मं कालीयकं त्वचम् ॥**<br>
**कपित्थरसमूत्राभ्यां पानमेतच्च युज्यते ॥ ५४ ॥**

पिच्छिल इत्यादि । अभ्यङ्गः अभ्यत्राभ्यञ्जनद्रव्यं तैलादि । बहलो घनः । वेणुपत्रिका वंशपत्राणि; अन्ये वेणुपत्रिकां वंशसदृशपत्रिकां द्रव्यान्तरमाहुः । सोमवल्ली गुडूची । अमृता अमृतासङ्गः खर्परिकातुत्थकं, उत्तरपदलोपात् । श्वेता श्वेतस्यन्दः । कालीयकं दारुहरिद्रा । त्वचं वराङ्गम् । इदमनुलेपनं शीततोयेन । मूत्रं गोमूत्रम् । एतच्चेति चन्दनादिकम् ॥ ५१–५४ ॥

**उत्सादने परीषेके कषाये चानुलेपने ॥**<br>
**शय्यावस्त्रतनुत्रेषु ज्ञेयमभ्यङ्गलक्षणैः ॥ ५५ ॥**

उत्सादन इत्यादि । तनुत्रे सन्नाहे । उत्सादनादिषु सप्तसु अभ्यङ्गलक्षणानुवादेन लिङ्गं तथा चिकित्सितमपि तत्रोक्तमेव वेदितव्यम् ॥ ५५ ॥

**केशशातः शिरोदुःखं खेभ्यश्च रुधिरागमः ॥**<br>
**ग्रन्थिजन्मोत्तमाङ्गेषु विषजुष्टेऽवलेखने ॥ ५६ ॥**<br>
**प्रलेपो बहुशस्तत्र भाविताः कृष्णमृत्तिकाः ॥**<br>
**ऋष्यपित्तघृतश्यामापालिन्दीतण्डुलीयकैः ॥ ५७ ॥**<br>
**गोमयस्वरसो वाऽपि हितो वा मालतीरसः ॥**<br>
**रसो मूषिकपर्ण्या वा धूमो वाऽगारसंभवः ॥ ५८ ॥**

केशशात इत्यादि । ऋष्यपित्तघृतश्यामादिस्वरसैः सप्ताहं भावितया कृष्णमृदा बहुशः प्रलेपो हित इत्यर्थः । ऋष्यो नीलाण्डः 'रोरु' इति प्रसिद्धः । [1]कालखण्डलग्ननलिकामध्यगतजलं पित्तम् । श्यामा प्रियङ्गुः, पालिन्दी त्रिवृत्, मूषिकपर्णी द्रवन्ती, द्रव्यान्तरमित्यन्ये । प्रलेपशब्दो गोमयस्य रसो वेत्यत्र हितशब्देन सह संबन्धनीयः; तेन गोमयरसादिप्रलेपो वा हितो भवतीति संबन्धः स्यात् ॥ ५६–५८ ॥

**शिरोऽभ्यङ्गः शिरस्त्राणं स्नानमुष्णीषमेव च ॥**<br>
**स्रजश्च विषसंसृष्टाः साधयेदवलेखनात् ॥ ५९ ॥**

इदानीं शिरोगतावलेखनप्रसङ्गेन शिरोगतानामन्येषामपि लिङ्गं चिकित्सितं च दर्शयन्नाह—शिरोऽभ्यङ्ग इत्यादि । अवलेखनादिति अवलेखनोक्तलिङ्गचिकित्सितात् ॥ ५९ ॥

**मुखालेपे मुखं श्यावं युक्तमभ्यङ्गलक्षणैः ॥**<br>
**पद्मिनीकण्टकप्रख्यैः कण्टकैश्चोपचीयते ॥ ६० ॥**<br>
**तत्र क्षौद्रघृतं पानं प्रलेपश्चन्दनं घृतम् ॥**<br>
**पयस्या मधुकं फञ्जी बन्धुजीवः पुनर्नवा ॥ ६१ ॥**

मुखालेप इत्यादि । पयस्या अर्कपुष्पी । फञ्जी भार्गी । बन्धुजीवो मध्याह्नपुष्पकः । तत्र मुखालेपे अतुल्ययोर्मधुघृतयोः पानं, श्वेतचन्दनघृतादिभिः पुनर्नवान्तैर्लेपः ॥ ६० ॥ ६१ ॥

**अस्वास्थ्यं कुञ्जरादीनां लालास्रावोऽक्षिरक्तता ॥**<br>
**स्फिक्पायुमेढ्रमुष्केषु यातुश्च स्फोटसंभवः ॥ ६२ ॥**<br>
**तत्राभ्यङ्गवदेवेष्टा यातृवाहनयोः क्रिया ॥**

इदानीं कुञ्जरादीनां विषजुष्टानां लक्षणं चिकित्सितं चोद्दिशन्नाह—अस्वास्थ्यमित्यादि । यातुः आरोहकस्य । यातृवाहनयोः क्रियेति अत्र यातृशब्द आरोहकपर्यायः ॥ ६२ ॥—

**शोणितागमनं खेभ्यः शिरोरुक्कफसंस्रवः ॥ ६३ ॥**<br>
**नस्यधूमगते लिङ्गमिन्द्रियाणां च वैकृतम् ॥**<br>
**तत्र दुग्धैर्गवादीनां सर्पिः सातिविषैः शृतम् ॥ ६४ ॥**<br>
**पाने नस्ये च सश्वेतं हितं समदयन्तिकम् ॥**

शोणितागमनमित्यादि । सश्वेतं वचासहितं; **गयी** तु श्वेतां कटभीमाह । समदयन्तिकं मल्लिकासहितम् । गवादीनां

१ 'कालखण्डलग्नस्रगिकामध्यगतना(नी)लजलं' इति पा० ।

क्षीरैरतिविषाकल्कसिद्धं घृतं पाने हितं नस्ये च। मदयन्तिकावचाकल्केन सिद्धं हितमित्यर्थः ॥ ६३ ॥ ६४ ॥—

**गन्धहानिर्विवर्णत्वं पुष्पाणां म्लानता भवेत् ॥ ६५ ॥**
**जिघ्रतश्च शिरोदुःखं वारिपूर्णे च लोचने ॥**
**तत्र बाष्पेरितं कर्म मुखालेपे च यत् स्मृतम् ॥ ६६ ॥**

गन्धहानिरित्यादि ॥ ६५ ॥ ६६ ॥

**कर्णतैलगते श्रोत्रवैगुण्यं शोफवेदने ॥**
**कर्णस्रावश्च तत्राशु कर्तव्यं प्रतिपूरणम् ॥ ६७ ॥**
**स्वरसो बहुपुत्रायाः सघृतः क्षौद्रसंयुतः ॥**
**सोमवल्करसश्चापि सुशीतो हित इष्यते ॥ ६८ ॥**

कर्णेत्यादि। बहुपुत्रा शतावरी; बहुपत्राया इति केचित् पठन्ति, ते च व्याख्यानयन्ति—बहुपत्रा मयूरशिखा। सोमवल्कः कट्फलः, तद्रसः कर्णपूरणे ॥ ६७ ॥ ६८ ॥

**अश्रूपदेहो दाहश्च वेदना दृष्टिविभ्रमः ॥**
**अञ्जने विषसंसृष्टे भवेदान्ध्यमथापि च ॥ ६९ ॥**
**तत्र सद्यो घृतं पेयं तर्पणं च समागधम् ॥**
**अञ्जनं मेषशृङ्गस्य निर्यासो वरुणस्य च ॥ ७० ॥**
**मुष्ककस्याजकर्णस्य फेनो गोपित्तसंयुतः ॥**
**कपित्थमेषशृङ्ग्योश्च पुष्पं भल्लातकस्य वा ॥ ७१ ॥**
**एकैकं कारयेत् पुष्पं बन्धूकाङ्कोटयोरपि ॥**

अश्रूपदेह इत्यादि। उपदेहो मलवृद्धिः। सद्यो घृतमित्यत्र **जेज्जटस्तु** सद्य एव घृतं पेयमिति व्याख्यानयति। समागधमिति आवर्तितक्षीरसाधितपिप्पलीकल्कसिद्धं घृतं तर्पणमिति **वृद्धवाग्भटः**। तर्पणम् अक्षितर्पणं, तदेव सपिप्पलीकं पेयं पानार्हम्। तथैव मेषशृङ्गीरसेनाञ्जनम्। एवं वरुणादीनां रसेन पृथक् पृथगञ्जनम्। मुष्ककः कालमुष्ककः। अजकर्णः सर्जः पूर्वदेशे प्रसिद्धः। फेनः समुद्रफेनः। गोपित्तं गोरोचना। कपित्थादीनां प्रत्येकं पुष्पमञ्जनं, न समुदितानाम् ॥ ६९–७१ ॥—

**शोफः स्रावस्तथा स्वापः पादयोः स्फोटजन्म च ७२**
**भवन्ति विषजुष्टाभ्यां पादुकाभ्यामसंशयम् ॥**
**उपानत्पादपीठानि पादुकावत् प्रसाधयेत् ॥ ७३ ॥**

शोफ इत्यादि। स्वापः स्पर्शाज्ञानम्। उपानदित्यादि। पादुकावत् प्रसाधयेत् लक्षणतः प्रतीकारतश्च ॥ ७२ ॥ ७३ ॥

**भूषणानि हतार्चींषि न विभान्ति यथा पुरा ॥**
**स्वानि स्थानानि हन्युश्च दाहपाकावदारणैः ॥ ७४ ॥**
**पादुकाभूषणेषूक्तमभ्यङ्गविधिमाचरेत् ॥**

भूषणानीत्यादि। हतार्चींषि तेजोरहितानि ॥ ७४ ॥—

**विषोपसर्गो बाष्पादिर्भूषणान्तो य ईरितः ॥ ७५ ॥**
**समीक्ष्योपद्रवांस्तस्य विदधीत चिकित्सितम् ॥**
**महासुगन्धिमगदं यं प्रवक्ष्यामि तं भिषक् ॥ ७६ ॥**
**पानालेपननस्येषु विदधीताञ्जनेषु च ॥**
**विरेचनानि तीक्ष्णानि कुर्यात् प्रच्छर्दनानि च ॥ ७७ ॥**
**सिराश्च व्यधयेत् क्षिप्रं प्राप्तं विस्रावणं यदि ॥**
**मूषिकाऽजरुहा वाऽपि हस्ते बद्धा तु भूपतेः ॥ ७८ ॥**
**करोति निर्विषं सर्वमन्नं विषसमायुतम् ॥**

आवस्थिकीं क्रियां निर्दिशन्नाह—विषोपसर्ग इत्यादि। उपद्रवान् वीक्ष्य चिकित्सितं विदधीतेत्याह—महासुगन्धिमित्यादि। महासुगन्धिस्तु 'चन्दनागरुणी कुष्ठं' इत्यादि यावत् 'महासुगन्धिनामैष पञ्चाशीत्यङ्गसंभवः' इति। विदधीताञ्जनेषु चेति बहुवचनाद्गुडिकाचूर्णरसक्रियारूपेषु; चकारेण परिषेककवलादिष्वपि। आशयानुरोधेन चिकित्सां निर्दिशन्नाह—विरेचनानीत्यादि। प्राप्तं युक्तम्। इदानीं प्रभावकृतं चिकित्सितं निर्दिशन्नाह—मूषिकेत्यादि। अजरुहालक्षण**मुशनसा** प्रोक्तम्,—"कन्दः श्वेतः सपिण्डको भेदे चाञ्जनसन्निभः। गन्धलेपनपानैस्तु विषं जरयते नृणाम् ॥ दष्टानां विषपीतानां ये चान्ये विषमोहिताः। विषं जरयते तेषां तस्मादजरुहा स्मृता ॥ मूषिका लोमशा कृष्णा भवेत् साऽपि च तद्गुणा"—इति ॥ ७५–७८ ॥—

**हृदयावरणं नित्यं कुर्याच्च मित्रमध्यगः ॥ ७९ ॥**
**पिबेद्घृतमजेयाख्यममृताख्यं च बुद्धिमान् ॥**
**सर्पिर्दधि पयः क्षौद्रं पिबेद्वा शीतलं जलम् ॥ ८० ॥**
**मयूरान्नकुलान् गोधाः पृषतान् हरिणानपि ॥**
**सततं भक्षयेच्चापि रसांस्तेषां पिबेदपि ॥ ८१ ॥**

शरीरे विषव्याप्तिप्रतिषेधमभिधायेदानीं चित्ते विषव्याप्तिप्रतिषेधमाह—हृदयावरणमित्यादि। हृदयावरणं हृदयप्रच्छादनं हृदयरक्षाकारिभिर्मूषिकाजरुहामृताजेयपुराणघृतदूषीविषारिमहासुगन्धिशिम्बीयूषतीक्ष्णविषघ्नधारणादिभिः। मधुकं कुष्ठमित्यादिकमजेयाख्यं, अपामार्गस्य बीजानि पिप्पलीरित्याद्यमृतं घृतं, सर्पिरादीनि प्रत्येकं चत्वारि पञ्च वा हृदयावरणानि पिबेदिति ॥ ७९–८१ ॥

**गोधानकुलमांसेषु हरिणस्य च बुद्धिमान् ॥**
**दद्यात् सुपिष्टां पालिन्दीं मधुकं शर्करां तथा ॥ ८२ ॥**
**शर्करातिविषे देये मायूरे समहौषधे ॥**
**पार्षते चापि देयाः स्युः पिप्पल्यः समहौषधाः ॥ ८३ ॥**
**सक्षौद्रः सघृतश्चैव शिम्बीयूषो हितः सदा ॥**
**विषघ्नानि च सेवेत भक्ष्यभोज्यानि बुद्धिमान् ॥ ८४ ॥**

गोधादिमांसानां संस्कारयौगिकं विशेषं निर्दिशन्नाह—गोधेत्यादि। मधुकमक्षमात्रं दद्यात्। पालिन्दी त्रिवृत्। शर्करेत्यादि। मयूरस्य मांसे तस्य रसे च सुपिष्टे शर्करातिविषे सशुण्ठ्यौ देये। पार्षत इत्यादि। पृषतस्य मांसे रसे च पिप्पल्यः सनागराः सुपिष्टा देयाः। सक्षौद्र इत्यादि। अनुक्तानि चोद्दिशन्नाह—विषघ्नानीत्यादि। विषघ्नानि विषघ्नैर्द्रव्यैः सह सिद्धानि ॥ ८२–८४ ॥

**पिप्पलीमधुकक्षौद्रशर्करेक्षुरसाम्बुभिः ॥**
**छर्दयेद्रुतहृदयो भक्षितं यदि वै विषम् ॥ ८५ ॥**

**इति सुश्रुतसंहितायां कल्पस्थानेऽन्नपानरक्षाकल्पो नाम प्रथमोऽध्यायः ॥ १ ॥**

आवृतगुप्तहृदयस्य पीतविषस्य शेषं निर्दिशन्नाह—पिप्पलीत्यादि। शर्करेक्षुरसाम्बूनि त्रीणि द्रवाणि, पिप्पलीमधुकं कल्कं, क्षौद्रमिति प्रक्षेपः। गुप्तहृदयो विषघ्नैः प्रच्छादितहृदयः ॥८५॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतटीकायां कल्पस्थाने प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः।

**अथातः स्थावरविषविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अन्ने पाने च प्रायेण स्थावरविषावचारणात्तद्विज्ञानीयारम्भो युज्यत इत्याह—अथात इत्यादि ॥ १ ॥ २ ॥

**स्थावरं जङ्गमं चैव द्विविधं विषमुच्यते ॥**
**दशाधिष्ठानमाद्यं तु द्वितीयं षोडशाश्रयम् ॥ ३ ॥**

तत्र विषस्य चिकित्साविशेषार्थं स्वरूपभेदेनाश्रयभेदेन च द्वैविध्यं प्रतिपादयति—स्थावरमित्यादि। आद्यं प्रथमम्; 'अदनीयम् आद्यं' इत्यन्ये, तन्नेच्छति **गयी** ॥ ३ ॥

**मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च ॥**
**निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः ॥ ४ ॥**

तान्येव स्थावरस्य दशाधिष्ठानानि निर्दिशन्नाह—मूलमित्यादि ॥ ४ ॥

**तत्र, क्लीतकाश्वमारगुञ्जासुगन्धगर्गरककरघाटविद्युच्छिखाविजयानीत्यष्टौ मूलविषाणि; विषपत्रिकालम्बावरदारुकरम्भमहाकरम्भाणि पञ्च पत्रविषाणि; कुमुद्वतीवेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिनन्दनसारपाकानीति द्वादश फलविषाणि; वेत्रकादम्बवल्लीजकरम्भमहाकरम्भाणि पञ्च पुष्पविषाणि; अन्त्रपाचककर्तरीयसौरीयककरघाटकरम्भनन्दननाराचकानि सप्त त्वक्सारनिर्यासविषाणि; कुमुदघ्नीस्नुहीजालक्षीरीणि त्रीणि क्षीरविषाणि; फेनाश्म(भस्म) हरितालं च द्वे धातुविषे; कालकूटवत्सनाभसर्षपपालककर्दमकवैराटकमुस्तकशृङ्गीविषप्रपुण्डरीकमूलकहालाहलमहाविषकर्कटकानीति त्रयोदश कन्दविषाणि; इत्येवं पञ्चपञ्चाशत् स्थावरविषाणि भवन्ति ॥ ५ ॥**

**गयी** तु गर्गरकस्थाने 'अनन्ता' इति पठति। विषपत्रिकेत्यादि। **गयी** तु नाराचस्थाने वल्लीजं पठति। कुमुद्वतीत्यादि। गयी तु पालकस्थाने बलाहमिति पठति। मूलादिविषाणां यत्नपरैरपि ज्ञातुमशक्यत्वात्तानि हिमवत्प्रदेशे किरातशबरादिभ्यो ज्ञेयानि ॥ ५ ॥

**चत्वारि वत्सनाभानि मुस्तके द्वे प्रकीर्तिते ॥**
**षट् चैव सर्षपाण्याहुः शेषाण्येकैकमेव तु ॥ ६ ॥**

तेषां कन्दविषाणामवान्तरभेदान् दर्शयन्नाह—चत्वारीत्यादि ॥ ६ ॥

**उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ॥**
**जृम्भाङ्गोद्वेष्टनश्वासा ज्ञेयाः पत्रविषेण तु ॥ ७ ॥**
**मुष्कशोफः फलविषैर्दाहोऽन्नद्वेष एव च ॥**
**भवेत् पुष्पविषैश्छर्दिराध्मानं मोह एव च ॥ ८ ॥**
**त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि ॥**
**आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ॥ ९ ॥**
**फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता ॥**
**हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि ॥ १० ॥**
**प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् ॥**

तत्र नवानां मूलाद्यधिष्ठानानां समासेन चिकित्सार्थं सामान्यं लक्षणं निर्दिशन्नाह—उद्वेष्टनमित्यादि। उद्वेष्टनम् अङ्गमोटनम्। जृम्भाङ्गोद्वेष्टनेत्यादि। उद्वेष्टनं पूर्वं व्याख्यातम्। मुष्कशोफ इत्यादि। एषां नवानां सामान्यं धर्ममुद्दिशन्नाह—प्रायेणेत्यादि। उपयोगदिवसादन्यो दिवसपक्षमासादिः कालः, तेषु घ्नन्तीत्येवंशीलानि कालघातीनि ॥ ७–१० ॥—

**कन्दजानि तु तीक्ष्णानि तेषां वक्ष्यामि विस्तरम् ११**
**स्पर्शाज्ञानं कालकूटे वेपथुः स्तम्भ एव च ॥**
**ग्रीवास्तम्भो वत्सनाभे पीतविण्मूत्रनेत्रता ॥ १२ ॥**
**सर्षपे वातवैगुण्यमानाहो ग्रन्थिजन्म च ॥**
**ग्रीवादौर्बल्यवाक्सङ्गौ पालकेऽनुमताविह ॥ १३ ॥**
**प्रसेकः कर्दमाख्येन विड्भेदो नेत्रपीतता ॥**
**वैराटकेनाङ्गदुःखं शिरोरोगश्च जायते ॥ १४ ॥**
**गात्रस्तम्भो वेपथुश्च जायते मुस्तकेन तु ॥**
**शृङ्गीविषेणाङ्गसाददाहोदरविवृद्धयः ॥ १५ ॥**
**पुण्डरीकेण रक्तत्वमक्ष्णोर्वृद्धिस्तथोदरे ॥**
**वैवर्ण्यं मूलकैश्छर्दिर्हिक्काशोफप्रमूढताः ॥ १६ ॥**
**चिरेणोच्छ्वसिति श्यावो नरो हालाहलेन वै ॥**
**महाविषेण हृदये ग्रन्थिशूलोद्गमौ भृशम् ॥ १७ ॥**
**कर्कटेनोत्पतत्यूर्ध्वं हसन् दन्तान् दशत्यपि ॥**

कन्दजानीत्यादि। तीक्ष्णानि तीक्ष्णविषाणि, अतः सद्यःप्राणहराणि। विस्तरमिति प्रत्येकं लक्षणं कथयामीति तात्पर्यार्थः। स्पर्शाज्ञानमित्यादि। अङ्गसादः अङ्गग्लानिः। पुण्डरीकेणेत्यादि। प्रमूढता प्रकर्षेणाचैतन्यम्। चिरेणोच्छ्वसितीत्यादि। हासं कुर्वन् पुरुषो दन्तान् खादति ॥ ११–१७ ॥—

**कन्दजान्युग्रवीर्याणि प्रत्युक्तानि त्रयोदश ॥ १८ ॥**
**सर्वाणि कुशलैर्ज्ञेयान्येतानि दशभिर्गुणैः ॥**

मूलादिविषेभ्यः कन्दजानां धर्मान्तरेण विशेषं निर्दिशन्नाह—कन्दजानीत्यादि । उग्रवीर्याणि उत्कटशक्तीनि; गयी तु अग्रवीर्याणीति पठति, व्याख्यानयति च—अग्राणि उरूणि वीर्याणि गुणविशेषा येषां तानि तथाविधानि । प्रत्युक्तानि प्रत्येकमुक्तानि ॥ १८ ॥—

**रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशुव्यवायि च ॥१९॥**
**विकाशि विशदं चैव लघ्वपाकि च तत् स्मृतम् ॥**
**तद्रौक्ष्यात् कोपयेद्वायुमौष्ण्यात् पित्तं सशोणितम् ॥**
**मतिं च मोहयेत्तैक्ष्ण्यान्मर्मबन्धान् छिनत्ति च ॥**
**शरीरावयवान् सौक्ष्म्यात् प्रविशेद्विकरोति च ॥२१॥**
**आशुत्वादाशु तद्धन्ति व्यवायात् प्रकृतिं भजेत् ॥**
**क्षपयेच्च विकाशित्वाद्दोषान्धातून्मलानपि ॥ २२ ॥**
**वैशद्यादतिरिच्येत दुश्चिकित्स्यं च लाघवात् ॥**
**दुर्हरं चाविपाकित्वात्तस्मात् क्लेशयते चिरम् ॥२३॥**

तान्येव दशगुणानि निर्दिशन्नाह—रूक्षमित्यादि । तीक्ष्णं राजिकामरिचादिवत् । सूक्ष्मं सूक्ष्ममार्गानुप्रवेशि । आशु शीघ्रं ग्रहणकारि । व्यवायि सकलं देहं व्याप्य पश्चात् पाकयायि । विकाशि प्रसर्पदपसर्पद्धातुबन्धशैथिल्यकारि । विशदम् अपिच्छिलम् । लघु लघुगुणयुक्तम् । अपाकीति आहारवदुदरानलेन पक्तुमशक्यम् । तेष्वपि दशसु गुणेषु मध्ये कुतो गुणात् किं करोतीत्याह—तद्रौक्ष्यादित्यादि । विकरोति शरीरावयवान् विकाराकारं नयतीत्यर्थः । व्यवायात् प्रकृतिं भजेदिति व्यवायात् अखिलदेहव्याप्तिलक्षणात्, प्रकृतिं स्वभावम् अखिलदेहव्याप्तिरूपं भजेत् । विकाशित्वादिति हिंसनशीलत्वात्; क्षपयेद् विनाशयेत् । कसधातुर्गत्यर्थोऽपि विपूर्वो हिंसार्थः । वैशद्यादतिरिच्येत न सज्जेत क्वचिदपि सक्तं न भवेदित्यर्थः । 'असक्तगति वैशद्यात्' इति केचित् पठन्ति, तत्रापि स एवार्थः । दुश्चिकित्स्यं च लाघवादिति इदं हि लघुत्वादुत्प्लुत्य मनो धावति अस्थिरं च भवति, तस्मात् संशमनभेषजाप्राप्त्या दुश्चिकित्स्यं भवति । संशमनेनासाध्यतां विषस्य निर्दिश्य संशोधनेनाप्याह—दुर्हरं चेति ।—चकारो भिन्नक्रमे, न परं लाघवात् दुर्हरमपाकित्वाच्च; तस्मादेवापाकित्वाच्चिरं क्लेशयति परं यद्विषं द्वित्रिगुणमदशगुणं वा; पूर्वदशगुणं सद्यो व्यापादकमेव ॥ १९-२३ ॥

**स्थावरं जङ्गमं यच्च कृत्रिमं चापि यद्विषम् ॥**
**सद्यो व्यापादयेत्तत्तु ज्ञेयं दशगुणान्वितम् ॥ २४ ॥**

**यत् स्थावरं जङ्गमकृत्रिमं वा**
**देहादशेषं यदनिर्गतं तत् ॥**

कन्दजमेव दशगुणान्वितं न भवति किन्त्वन्यदपीति दर्शयन्नाह—स्थावरमित्यादि । स्थावरं जङ्गमं कृत्रिमं वा देहादशेषं यदनिर्हृतं सद्यो व्यापादयेत् तद्दशगुणान्वितं ज्ञेयम् । यद्यपि कन्दजानि परित्यज्यान्येषां गुणसामस्त्याभावेन कालघातित्वमुक्तं, तथाऽप्यमीषां मध्ये येषां दशगुणत्वं तान्याशुघातीनि भवन्ति ॥ २४ ॥—

**जीर्णं विषघ्नौषधिभिर्हतं वा**
**दावाग्निवातातपशोषितं वा ॥ २५ ॥**
**स्वभावतो वा गुणविप्रहीनं**
**विषं हि दूषीविषतामुपैति ॥**
**वीर्याल्पभावान्न निपातयेत्तत्**
**कफावृतं वर्षगणानुबन्धि ॥ २६ ॥**

स्थावरमपि दशगुणमेतैः कारणैर्हतवीर्यं सत् संज्ञान्तरं लभते इत्याह—जीर्णमित्यादि । जीर्णादिभिर्हेतुभिर्गुणविप्रहीनं गुणैर्द्वित्र्यादिभिर्हीनं दशगुणमेवं वा मन्दशक्तिकं दूषीविषतां प्राप्नोति । तामेव गुणहीनतां कार्येण दर्शयन्नाह—वीर्याल्पेत्यादि । न निपातयेत् न मारयेत् सद्यश्चिरेण वा; मन्दीभूतोष्णादिगुणविशेषेण विलीनश्लेष्मणाऽऽवृतत्वाच्च मारयेदित्यर्थः । वर्षगणानुबन्धि चिरकालानुबन्धीत्यर्थः ॥ २५ ॥ २६ ॥

**तेनार्दितो भिन्नपुरीषवर्णो**
**विगन्धवैरस्यमुखः पिपासी ॥**
**मूर्च्छन् वमन् गद्गदवाग्विषण्णो**
**भवेच्च दुष्योदरलिङ्गजुष्टः ॥ २७ ॥**
**आमाशयस्थे कफवातरोगी**
**पक्वाशयस्थेऽनिलपित्तरोगी ॥**
**भवेन्नरो ध्वस्तशिरोरुहाङ्गो**
**विलूनपक्षस्तु यथा विहङ्गः ॥ २८ ॥**
**स्थितं रसादिष्वथवा यथोक्तान्**
**करोति धातुप्रभवान् विकारान् ॥**
**कोपं च शीतानिलदुर्दिनेषु**
**यात्याशु,**

तेन गरेण ये दोषा भवन्ति तान् दर्शयन्नाह—तेनार्दित इत्यादि । केचित् 'वमन्' इत्यत्र 'भ्रमन्' इति पठन्ति । गद्गदवाक्यः अस्पष्टवचनः । एतत् सर्वस्थानगतस्य सामान्यं लक्षणम् । स्थानविशेषेण विशिष्टं निर्दिशन्नाह—आमाशयस्थ इत्यादि । ध्वस्तशिरोरुहाङ्गो ध्वस्तकेशशरीरः । 'भवेत् समुत्क्लुस्तशिरोरुहाङ्ग' इति केचित्; तत्र सम्यक् उत्क्लुस्तशिरोरुहाण्यङ्गानि यस्य स तथा । यथोक्तान् व्याधिसमुद्देशीयोक्तान् । धातुप्रभवान् विकारान् अन्नाश्रद्धारोचकादीन् करोति ॥ २७ ॥ २८ ॥—

**पूर्वं शृणु तत्र रूपम् ॥ २९ ॥**
**निद्रा गुरुत्वं च विजृम्भणं च**
**विश्लेषहर्षावथवाऽङ्गमर्दः ॥**

निद्रेत्यादि । विश्लेषः सन्धीनां प्रसारणादावप्रवृत्तिः । हर्षो रोमहर्षः । अङ्गमर्दो वेदनाविशेषः ॥ २९ ॥—

**ततः करोत्यन्नमदाविपाका-**
**वरोचकं मण्डलकोठमोहान् ॥ ३० ॥**
**धातुक्षयं पादकरास्यशोफं**
**दकोदरं छर्दिमथातिसारम् ॥**

१ 'भूरीणि' इति पा० ।

वैवर्ण्यमूर्च्छाविषमज्वरान् वा
कुर्यात् प्रवृद्धां प्रबलां तृषां वा ॥ ३१ ॥
उन्मादमन्यज्जनयेत्तथाऽन्य-
दानाहमन्यत् क्षपयेच्च शुक्रम् ॥
गाद्गद्यमन्यज्जनयेच्च कुष्ठं
तांस्तान् विकारांश्च बहुप्रकारान् ॥ ३२ ॥

तत इत्यादि । ततः पूर्वरूपात् परतः । अन्नमदाविपाकाविति अन्नेन भुक्तेन मदो हर्षक्षयोऽन्नमदः, अविपाकः पाकाभावः । तांस्तान् विकारान् पूर्वोक्तान् आमाशये कफवातजान्, पक्वाशये पित्तानिलजान्, रसादिधातुगतांश्च विकारान् जनयेत् ॥ ३०-३२ ॥

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः ॥
यस्माद्दूषयते धातून् तस्माद्दूषीविषं स्मृतम् ॥ ३३ ॥

दूषीविषनिरुक्तिमुद्दिशन्नाह—दूषितमित्यादि । देश आनूपः प्रभूतानिलशीतवर्षः, कालः शीतानिलदुर्दिनादिः, अन्नं सुरातिलकुलत्थादि, अन्नस्योपलक्षणत्वाद् व्यवायव्यायामक्रोधादिभिरपीत्यर्थः । अभीक्ष्णशः पुनः पुनः ॥ ३३ ॥

स्थावरस्योपयुक्तस्य वेगे तु प्रथमे नृणाम् ॥
श्यावा जिह्वा भवेत्स्तब्धा मूर्च्छा श्वासश्च जायते ३४
द्वितीये वेपथुः सादो दाहः कण्ठरुजस्तथा ॥
विषमामाशयप्राप्तं कुरुते हृदि वेदनाम् ॥ ३५ ॥
तालुशोषं तृतीये तु शूलं चामाशये भृशम् ॥
दुर्वर्णे हरिते शूने जायेते चास्य लोचने ॥ ३६ ॥
पक्वामाशययोस्तोदो हिक्का कासोऽन्त्रकूजनम् ॥
चतुर्थे जायते वेगे शिरसश्चातिगौरवम् ॥ ३७ ॥
कफप्रसेको वैवर्ण्यं पर्वभेदश्च पञ्चमे ॥
सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥ ३८ ॥
षष्ठे प्रज्ञाप्रणाशश्च भृशं चाप्यतिसार्यते ॥
स्कन्धपृष्ठकटीभङ्गः सन्निरोधश्च सप्तमे ॥ ३९ ॥

स्थावरस्य प्रथमादिवेगलक्षणं दर्शयन्नाह—स्थावरस्योपयुक्तस्येत्यादि । सन्निरोधः सम्यङ्निरोधः, 'उच्छ्वासस्य' इति शेषः ॥ ३४-३९ ॥

प्रथमे विषवेगे तु वान्तं शीताम्बुसेचितम् ॥
अगदं मधुसर्पिर्भ्यां पाययेत समायुतम् ॥ ४० ॥
द्वितीये पूर्ववद्वान्तं पाययेत्तु विरेचनम् ॥
तृतीयेऽगदपानं तु हितं नस्यं तथाऽञ्जनम् ॥ ४१ ॥
चतुर्थे स्नेहसंमिश्रं पाययेतागदं भिषक् ॥
पञ्चमे क्षौद्रमधुककाथयुक्तं प्रदापयेत् ॥ ४२ ॥
षष्ठेऽतीसारवत् सिद्धिरवपीडश्च सप्तमे ॥
मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशितं क्षिपेत् ४३

तेषामेव यथाक्रमं चिकित्सितमुद्दिशन्नाह—प्रथम इत्यादि । अगदं मधुसर्पिर्भ्यामित्यत्रान्यत्र चाविशेषेणागदश्रुत्या दूषीविषारिरेव प्रयोक्तव्यः । द्वितीय इत्यादि । तत्र विरेचनं घृतमधुशीतविषघ्नौषधिसंपृक्तं; गयी तु वान्तं नरं विरेचनं पाययेत् पूर्ववत्, तेन मधुयुक्तमेवेति व्याख्यानयति । तृतीय इत्यादि । अगदोऽत्र दूषीविषारिर्मधुसर्पिर्युक्तो दातव्यः । नस्यं विषघ्नं संज्ञाप्रबोधनं च । अञ्जनमपि विषघ्नं चक्षुष्यं संज्ञाप्रबोधनं तथा अतीक्ष्णं च । चतुर्थ इत्यादि । अगदोऽत्रापि दूषीविषारिः । स्नेहोऽत्र गव्यं घृतं, विषघ्नत्वात्तस्य; स्नेहग्रहणेन पूर्वप्रस्तुतं मधु निवर्तते । पञ्चम इत्यादि । अगदमिह दूषीविषारिनामाध्याहरणीयम् । षष्ठ इत्यादि । सप्तमे वेगेऽसाध्यरूपेऽपि प्रत्याख्याय प्रतिक्रियां कुर्यात् । चकारोऽयं भिन्नक्रमे, तेन सप्तमे चेति योजनात् षष्ठेऽप्यवपीडः । वाशब्दश्चानुक्तसमुच्चये, तेनानुक्तं सशोणितचर्मदानं शाखाललाटसिराताडनादिजङ्गमविषोक्तं च समुच्चीयते ॥ ४०-४३ ॥

वेगान्तरे त्वन्यतमे कृते कर्मणि शीतलाम् ॥
यवागूं सघृतक्षौद्रामिमां दद्याद्विषापहाम् ॥ ४४ ॥
कोषातक्योऽग्निकः पाठासूर्यवल्ल्यमृताभयाः ॥
शिरीषः किणिही शेलुर्गिर्याह्वा रजनीद्वयम् ॥ ४५ ॥
पुनर्नवे हरेणुश्च त्रिकटुः सारिवे बला ॥
एषां यवागूर्निष्काथे कृता हन्ति विषद्वयम् ॥ ४६ ॥

इदानीं वेगान्तरेषु कालघातिनः प्रतीकारविधिमाह—वेगान्तर इत्यादि । प्रकृताद्वेगादन्यो वेगो वेगान्तरम् । अन्यतमे एकतमे । कृते कर्मणि प्रथमादिवेगेषूक्ते इत्यर्थः । कोशातक्य इत्यादि । कोशातकी घोषकः; अग्निकः अजमोदः, 'मोरट' इत्यन्ये; सूर्यवल्ली पटोलसदृशपत्रा, यस्याः पत्ररसेनाक्तं मांसं छिन्नमिव भवति, अन्ये सूर्यावर्तमाहुः; किणिही कटभी, शेलुः श्लेष्मातकः, गिर्याह्वा श्वेतस्यन्दः, पुनर्नवे सितपीतपुष्पे, कोशातक्यादीनां क्वाथेन षडङ्गकल्पनाकल्पितेन यवागूः कल्पनीया । 'सारिवे बला' इत्यत्र 'सारिवोत्पले' इत्यन्ये पठन्ति ॥ ४४-४६ ॥

मधुकं तगरं कुष्ठं भद्रदारु हरेणवः ॥
पुन्नागैलैलवालूनि नागपुष्पोत्पलं सिता ॥ ४७ ॥
विडङ्गं चन्दनं पत्रं प्रियङ्गुर्ध्यामकं तथा ॥
हरिद्रे द्वे बृहत्यौ च सारिवे च स्थिरा सहा ॥ ४८ ॥
कल्कैरेषां घृतं सिद्धमजेयमिति विश्रुतम् ॥
विषाणि हन्ति सर्वाणि शीघ्रमेवाजितं क्वचित् ॥४९॥

मधुकमित्यादि । पुन्नागः तुङ्गः पूर्वदेशे प्रसिद्धः; एलवालुकं स्वनामप्रसिद्धं; नागपुष्पं नागकेशरं; ध्यामकं कत्तृणं; स्थिरा शालपर्णी । मधुकादीनां कल्कं पादिकं, चतुर्गुणं जलं दत्त्वा घृतं साधयेत्, तस्याजेयमिति संज्ञा । सर्वाणि स्थावरजङ्गमकृत्रिमाणि । अजितं क्वचिन्न जितमजितं; क्वचित् कस्मिन्नपि स्थावरादावित्यर्थः ॥ ४७-४९ ॥

दूषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितम् ॥
पाययेतागदं नित्यमिमं दूषीविषापहम् ॥ ५० ॥

१ 'अभीक्ष्णं' इति पा० ।

पिप्पल्यो ध्यामकं मांसी शावरः परिपेलवम् ॥
सुवर्चिका ससूक्ष्मैला तोयं कनकगैरिकम् ॥ ५१ ॥
क्षौद्रयुक्तोऽगदो ह्येष दूषीविषमपोहति ॥
नाम्ना दूषीविषारिस्तु न चान्यत्रापि वार्यते ॥ ५२ ॥

धातुदूषकस्य दूषीविषस्य चिकित्सां वक्तुमाह—दूषीविषार्तमित्यादि । दूषीविषस्य विषत्वेऽपि स्वेदो न निषिध्यते; येन मन्दवीर्यतया कफावरणाद्विषवेगेनानुबन्धित्वमस्य, अतः स्वेदेन कफस्यावरकस्योपशान्तावपहार्यं विषं कोष्ठगतं शोधनेन सकलमेव ह्रियते । अन्ये 'दूषीविषार्तं सुस्निग्धं' इति पठन्ति; तेषामपि स्निग्धशुद्धा स्वेदोऽप्याक्षिप्तः । कथंचिदेवानिर्हृतस्य विषावशेषस्य संशमनार्थमन्यत्रापि स्थावरजङ्गमविषदूषितधातूनां वा प्रसादनार्थं संशमनमुद्दिशन्नाह—पाययेतेत्यादि । ध्यामकं कत्तृणं; शावरो रोध्रः; परिपेलवं वन्यकः, कैवर्तमुस्तकमन्ये; तोयं बालकं; सुवर्णगैरिकं दक्षिणापथे प्रसिद्धम् । अन्यत्रापि स्थावरजङ्गमयोस्तीक्ष्णयोरपीत्यर्थः; अन्येषु वक्ष्यमाणेषु ज्वरादिष्वपीत्यन्ये ॥ ५०—५२ ॥

ज्वरे दाहे च हिक्कायामानाहे शुक्रसंक्षये ॥
शोफेऽतिसारे मूर्च्छायां हृद्रोगे जठरेऽपि च ॥ ५३ ॥
उन्मादे वेपथौ चैव ये चान्ये स्युरुपद्रवाः ॥
यथास्वं तेषु कुर्वीत विषघ्नैरौषधैः क्रियाम् ॥ ५४ ॥

दूषीविषेण ये उपद्रवाः स्युस्तच्चिकित्सितमाह—ज्वर इत्यादि । ये चान्ये उपद्रवास्तज्जाः । यथास्वं यद्यस्य विहितं तदित्यर्थः । तच्च विषघ्नैरोषधैर्युक्तं कर्तव्यम् ॥ ५३ ॥ ५४ ॥

साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम् ॥
दूषीविषमसाध्यं तु क्षीणस्याहितसेविनः ॥ ५५ ॥

इति सुश्रुतसंहितायां कल्पस्थाने स्थावरविषविज्ञानीयो नाम द्वितीयोऽध्यायः ॥ २ ॥

इदानीं साध्ययाप्यप्रत्याख्येयत्वं दर्शयन्नाह—साध्यमित्यादि ॥ ५५ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां कल्पस्थाने द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

अथातो जङ्गमविषविज्ञानीयं कल्पं व्याख्यास्यामः ।
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि ॥ १ ॥ २ ॥

जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोडश ॥
समासेन मया यानि विस्तरस्तेषु वक्ष्यते ॥ ३ ॥
तत्र, दृष्टिनिःश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्तवमुखसन्दंशविशर्धिततुण्डास्थिपित्तशूकशवानीति ॥ ४ ॥

तान्येवाधिष्ठानानि निर्दिशन्नाह—तत्र दृष्टिनिःश्वासेत्यादि । निःश्वासः फूत्कारः, विशर्धितं पायुकृतः कुत्सितशब्दः, शूकं कीटलोम, कीटानां सर्पाणां च विगतप्राणानां देहः शवः । वृद्धवाग्भटस्तु तुण्डविशर्धितस्थाने अल(आर)शोणिते पठति ॥ ३ ॥ ४ ॥

तत्र, दृष्टिनिःश्वासविषा दिव्याः सर्पाः, भौमास्तु दंष्ट्राविषाः, मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाकगृहगोधिकाचतुष्पादकीटास्तथाऽन्ये दंष्ट्रानखविषाः, चिपिटपिचिटककषायवासिकसर्षपकतोटकवर्चःकीटकौण्डिन्यकाः शकृन्मूत्रविषाः, मूषिकाः शुक्रविषाः, लूता लालामूत्रपुरीषमुखसन्दंशनखशुक्रार्तवविषाः, वृश्चिकविश्वम्भरवरटीराजीवमत्स्योच्चिटिङ्गाः समुद्रवृश्चिकाश्चाल(र)विषाः, चित्रशिरःसरावकुर्दिशतदारुकारिमेदकसारिकामुखा मुखसन्दंशविशर्धितमूत्रपुरीषविषाः, मक्षिकाकणभजलायुका मुखसन्दंशविषाः, विषहतास्थि सर्पकण्टकवरटीमत्स्यास्थि चेत्यस्थिविषाणि, शकुलीमत्स्यरक्तराजिवरकी(टी)मत्स्याश्च पित्तविषाः, सूक्ष्मतुण्डोच्चिटिङ्गवरटीशतपदीशूकवलभिकाशृङ्गिभ्रमराः शूकतुण्डविषाः, कीटसर्पदेहा गतासवः शवविषाः; शेषास्त्वनुक्ता मुखसन्दंशविषेष्वेव गणयितव्याः ॥ ५ ॥

तत्रेत्यादि । दिवि भवा दिव्याः, भूमौ भवा भौमाः; एतच्च प्रायिकं, सर्वेऽपि सर्पा दंशायतनविषाः; तथा हि सावित्रे,—"सर्व एव सर्पा दंशविषा भवन्ति, मैलदशनदंष्ट्राचक्षुर्लालानिःश्वासेन्द्रियमूत्रपुरीषपुच्छैः"(?) इति । मार्जारेत्यादि । अत्र मार्जारोक्त्यैव व्याला व्याघ्रादयोऽभिप्रेताः । मकरो जलजन्तुरित्येके, अन्ये आग्नेयकीटपठितं मकराकारत्वेन मकरं, कर्कटवृश्चिकं मकरमन्ये । पाकमत्स्योऽपि आग्नेयेष्वेव पठितः कीटविशेषः । गोधा पञ्चनखी पवित्रा सौम्यकीटपठिता; कृष्णशब्दस्य लोपात् कृष्णगोधां विदुरन्ये । प्रचलाकं सौम्यकीटपठितं कीटविशेषमाहुः । गृहगोधिका कोष्ठागारी कोष्ठगृहकारिका । चतुष्पदकीटाः प्रतिसूर्यकादयः । तथाऽन्ये मशकमक्षिकादयश्च कीटाः । चिपिटपिचिटकेत्यादि एते कीटविशेषा देशान्तरे लोकतो ज्ञेयाः । वृश्चिकेत्यादि । आरशब्देनात्र वृश्चिकलाङ्गूलादिस्थितः कण्टको भण्यते, तस्य च स्थूलशूकरूपत्वाच्छूकग्रहणेनैव ग्रहणं, अत एव दृष्टिनिःश्वासेत्यादिसूत्रे पृथङ्नोदाहृतमार-

१ 'कफावरणाद्धर्षगणानुबन्धित्वमस्य' इति पा० । २ 'पित्तदूषितधातूनां वा प्रसादनार्थं' इति पा० । ३ 'जङ्गमविषविज्ञानीयमध्यायं' इति पा० ।

१ '°गुदास्थि°' इति पा० । २ 'जङ्गमस्य त्वाश्रयाः षोडश—दृष्टिनिःश्वासस्पर्शदंष्ट्रामुखनखास्थिमूत्रपुरीषशुक्रार्तवलालाशूकपित्तशोणितशवानि' इति । ( वृ. वा. उ. स्था. अ. ४० ) ३ 'लालानखशुक्रमूत्रपुरीषार्तवमुखसंदंशविषाः' इति पा० । ४ 'मनोदशन°' इति 'मलो दशन°' इति च पा० । ५ 'अलशब्देनात्र' इति पा०

ग्रहणम् । गयदासश्चात्र 'आलालविषा' इति पठति, व्याख्यानयति च–आलालं लाला । चित्रशिर इत्यादि । वरकीमत्स्ययोः स्थाने केचिदेकमेव वरटी(की)मत्स्यं पठन्ति । गतासवो गतप्राणाः ॥ ५ ॥

भवन्ति चात्र—

राज्ञोऽरिदेशे रिपवस्तृणाम्बु-
मार्गान्नधूमश्वसनान् विषेण ॥
संदूषयन्त्येभिरतिप्रदुष्टान्
विज्ञाय लिङ्गैरभिशोधयेत्तान् ॥ ६ ॥

राज्ञ इत्यादि । अरिदेशे प्रविष्टस्य राज्ञोऽपि रिपवः शत्रवः तृणादीन् सन्दूषयन्ति । अन्नम् अन्नरक्षायामुक्तमपि देशादिप्रसंगेणात्र पुनरुक्तम् । श्वसनो वायुः । एभिर्लिङ्गैः वक्ष्यमाणैरित्यर्थः ॥ ६ ॥

दुष्टं जलं पिच्छिलमुग्रगन्धि
फेनान्वितं राजिभिरावृतं च ॥
मण्डूकमत्स्यं म्रियते विहङ्गा
मत्ताश्च सानूपचरा भ्रमन्ति ॥ ७ ॥
मज्जन्ति ये चात्र नराश्वनागा-
स्ते छर्दिमोहज्वरदाहशोफान् ॥
ऋ(ग)च्छन्ति तेषामपहृत्य दोषान्
दुष्टं जलं शोधयितुं यतेत ॥ ८ ॥

दुष्टमित्यादि । राजिभिः कृष्णाभिः । विहङ्गा इत्यादि सानूपचरा अनूपचरसहिता विहङ्गाः पक्षिणो विषवेगेन मत्ताः सन्तो भ्रमन्ति । ऋच्छन्ति प्राप्नुवन्ति । यतेत यत्नं कुर्वीत ॥ ७ ॥ ८ ॥

धवाश्वकर्णासनपारिभद्रान्
सपाटलान् सिद्धकमोक्षकौ च ॥
दग्ध्वा सराजद्रुमसोमवल्कां-
स्तद्भस्म शीतं वितरेत् सरःसु ॥ ९ ॥
भस्माञ्जलिं चापि घटे निधाय
विशोधयेदीप्सितमेवमम्भः ॥

तदेव दुष्टवारिप्रशोधनौषधं दर्शयन्नाह—धवाश्वेत्यादि । अश्वकर्णः पूर्वदेशे प्रसिद्धो गन्धमुण्डः अश्वत्थसदृशः, असनो बीजकः, पारिभद्रः फलभद्रो रक्तकुसुमः कण्टकी रोहिणीसदृशपत्रः पूर्वदेशे प्रसिद्धः, राजद्रुमः किरमालकः, सोमवल्कः कट्फलः । वितरेत् निःक्षिपेत् । सरःस्विति बहुवचनमवहज्जलोपलक्षणं; वहज्जलानां दूषणमेव दुष्करणम् । सामान्यजनार्थं सरसां संशोधनमभिधायं विशिष्टजनार्थमुद्धृतजलस्य शोधनं दर्शयन्नाह—भस्माञ्जलिमित्यादि । अञ्जलिं चतुःपलं, तं च घटे द्रोणप्रमिते जले, निधाय निःक्षिप्य, ईप्सितं वाञ्छितं शोधयेत् । जेज्जटाचार्यस्तु घटं गर्गरीमाह ॥ ९ ॥—

क्षितिप्रदेशं विषदूषितं तु
शिलातलं तीर्थमथेरिणं वा ॥ १० ॥
स्पृशन्ति गात्रेण तु येन येन
गोवाजिनागोष्ट्रखरा नरा वा ॥
तच्छूनतां यात्यथ दह्यते च
विशीर्यते रोमनखं तथैव ॥ ११ ॥
तत्राप्यनन्तां सह सर्वगन्धैः
पिष्ट्वा सुराभिर्विनियोज्य मार्गम् ॥
सिञ्चेत् पयोभिः सुमृदन्वितैस्तं
विडङ्गपाठाकटभीजलैर्वा ॥ १२ ॥

क्षितिप्रदेशमित्यादि । तीर्थं नद्यादिघट्टम् । ईरिणम् ऊषरम् । अनन्तां सर्वगन्धैः सह संयोज्य सुराभिः पिष्ट्वा मार्गं सिञ्चेदिति संबन्धः । सुराभिरिति बहुवचनान्मधुगुडपिष्टकृताभिः । अनन्ता उत्पलसारिवा । सर्वगन्धैः एलादिपरिपठितैः । पयोभिः क्षीरैः । मृदन्वितैस्तं मार्गं सिञ्चेत्, विडङ्गादिजलैर्वा मार्गं सिञ्चेत् । मृदिह कृष्णा प्राधान्यकल्पनया । अन्ये त्वेवं पठन्ति—"तत्राप्यनन्तां सह सर्वगन्धैर्वचां तु पिष्ट्वा सुरयाऽनुमार्गम् । सिञ्चेत्तथा मृत्सहिताभिरद्भिर्मार्गोऽस्ति नान्यो यदि तेन गच्छेत्" इति । 'पयोभिस्तु मृदन्वितैः' इत्यत्र 'वल्मीकमृदन्विताभिः' इति केचित् पठन्ति, विषघ्नत्वाद्वल्मीकस्य ॥ १०–१२ ॥

तृणेषु भक्तेषु च दूषितेषु
सीदन्ति मूर्च्छन्ति वमन्ति चान्ये ॥
विड्भेदमृच्छन्त्यथवा म्रियन्ते
तेषां चिकित्सां प्रणयेद्यथोक्ताम् ॥ १३ ॥
विषापहैर्वाऽप्यगदैर्विलिप्य
वाद्यानि चित्राण्यपि वादयेत ॥
तारः सुतारः ससुरेन्द्रगोपः
सर्वैश्च तुल्यः कुरुविन्दभागः ॥ १४ ॥
पित्तेन युक्तः कपिलान्वयेन
वाद्यप्रलेपो विहितः प्रशस्तः ॥
वाद्यस्य शब्देन हि यान्ति नाशं
विषाणि घोराण्यपि यानि सन्ति ॥ १५ ॥

तृणेष्वित्यादि । सीदन्ति अङ्गग्लानियुक्ता भवन्ति । प्रणयेदित्यादि । अङ्गसादादिषु यथोक्तां चिकित्सां विषापहैर्द्रव्यैर्युक्तां वितरेत् । अगदैर्वा दुन्दुभिस्वनीयोक्तैः, वाद्यानि भेरीपटहादीनि विलिप्य वादयेत् । अपरमपि वाद्यलेपमाह—तार इत्यादि । तारो रूप्यं, सुतारः पारदः; सुरेन्द्रं सुवर्णं, कुटजमन्ये; गोपा सारिवा; कुरुविन्दो मुस्ता, निशानपाषाण इत्यन्ये, उत्तमलोहितरत्नं कुरुविन्द इत्येके ॥ १३–१५ ॥

धूमेऽनिले वा विषसंप्रयुक्ते
खगाः श्रमार्ताः प्रपतन्ति भूमौ ॥
कासप्रतिश्यायशिरोरुजश्च
भवन्ति तीव्रा नयनामयाश्च ॥ १६ ॥

१ '°मालग्रहणम्' इति पा० । २ 'रोगान्' इति पा० ।

१ 'शिलास्थली' इति पा० । २ 'तत्र' इति पा० ।

लाक्षाहरिद्रातिविषाभयाब्द-
हरेणुकैलादलवक्रकुष्ठम् ॥
प्रियङ्गुकां चाप्यनले निधाय
धूमानिलौ चापि विशोधयेत ॥ १७ ॥

लाक्षेत्यादि । लाक्षादिद्रव्यं वह्नौ निधाय धूमं विशोधयेत, चूर्णमनिले विकीर्य पुनरनिलमिति । प्रियङ्गुकामित्यत्र 'मधूलिकां' केचित् पठन्ति, गुडूचिकामिति च विवृण्वन्ति ॥ १६ ॥ १७ ॥

प्रजामिमामात्मयोनेर्ब्रह्मणः सृजतः किल ॥
अकरोदसुरो विघ्नं कैटभो नाम दर्पितः ॥ १८ ॥
तस्य क्रुद्धस्य वै वक्त्राद्ब्रह्मणस्तेजसो निधेः ॥
क्रोधो विग्रहवान् भूत्वा निपपातातिदारुणः ॥१९॥
स तं ददाह गर्जन्तमन्तकाभं महाबलम् ॥
ततोऽसुरं घातयित्वा तत्तेजोऽवर्धताद्भुतम् ॥२०॥
ततो विषादो देवानामभवत्तं निरीक्ष्य वै ॥
विषादजननत्वाच्च विषमित्यभिधीयते ॥ २१ ॥
ततः सृष्ट्वा प्रजाः शेषं तदा तं क्रोधमीश्वरः ॥
विन्यस्तवान् स भूतेषु स्थावरेषु चरेषु च ॥ २२ ॥

[1]चिकित्सोपयोगि विषस्य मूर्तिस्वरूपमाह—प्रजामित्यादि । आत्मयोनेः आत्मा परमपुरुषो योनिः कारणं यस्य स तथा तस्य; एतेनेश्वरादिकारणं निरस्य स्वयंभूत्वमुक्तम् । किलेत्यागमसंवादे । तत इत्यादि । विग्रहवान् शरीरवान् । निःपपात निःसृतः । स तमित्यादि ।—स क्रोधः पुरुषरूपः, तं कैटभं, ददाह भस्मीकृतवान् । किंविशिष्टं कैटभं ? गर्जन्तमित्यादिविशेषणयुक्तम् । तत्तेजः तस्य मूर्तिमतः क्रोधस्य तेज इत्यर्थः । तत इत्यादि । वाक्कायचित्तावसादो विषादः । तत इत्यादि । विन्यस्तवान् विनिःक्षिप्तवान् ॥ १८–२२ ॥

यथाऽव्यक्तरसं तोयमन्तरीक्षान्महीगतम् ॥
तेषु तेषु प्रदेशेषु रसं तं तं नियच्छति ॥ २३ ॥
एवमेव विषं यद्यद्द्रव्यं व्याप्यावतिष्ठते ॥
स्वभावादेव तं तस्य रसं समनुवर्तते ॥ २४ ॥

विषस्य नानावीर्यहेतुभूतमुद्दिशन्नाह—यथाऽव्यक्तरसमित्यादि । यथा जलमेकरसमप्यन्तरीक्षात् पतितं भूमिगतं तेषु तेषु प्रदेशेष्वाकाशगुणभूयिष्ठादिषु रसं तं तं नियच्छति निश्चयेन ददाति, एवमेव विषं यद्यद्द्रव्यं व्याप्यावतिष्ठते स्वभावादेव तस्य तस्य रसं समनुवर्तते ॥ २३ ॥ २४ ॥

विषे यस्माद्गुणाः सर्वे तीक्ष्णाः प्रायेण सन्ति हि ॥
विषं सर्वमतो ज्ञेयं सर्वदोषप्रकोपणम् ॥ २५ ॥
ते तु वृत्तिं प्रकुपिता जहति स्वां विषार्दिताः ॥
नोपयाति विषं पाकमतः प्राणान् रुणद्धि च ॥२६॥
श्लेष्मणाऽऽवृतमार्गत्वादुच्छ्वासोऽस्य निरुध्यते ॥
विसंज्ञः सति जीवेऽपि तस्मात्तिष्ठति मानवः ॥२७॥

१ एतत्पूर्वं 'समाधिमन्त्रभेदेन' इत्यधिकं पठ्यते हस्तलिखितपुस्तके ।

विषे यस्मादित्यादि । यस्माद्विषे ये गुणाः सन्ति ते सर्वे स्वभावतः सर्वदेहधातुविरोधेन तीक्ष्णा आशुकारिणः, प्रायेण तेजोरूपक्रोधात्मकत्वाद्विषस्य; अतः सर्वमेव विषं सर्वदोषप्रकोपणम् । ते तु वृत्तिमित्यादि । ते प्रकुपिता वातादयो विषार्दिता विषपीडिताः सन्तः, स्वां वृत्तिं वातः प्रस्पन्दनादिकां, रागपक्त्यादिकां पित्तं, सन्धिसंश्लेषादिकां कफः, त्यजन्ति; तेन च पित्तस्य पक्त्यभावाद्विषं पाकं न याति, अतोऽपक्वं विषं प्राणान् रुणद्धि, विषविलीनेन श्लेष्मणा निरुद्धोच्छ्वासत्वाजीवेऽपि प्राणेऽपि सति विसंज्ञो विगतसम्यग्ज्ञानो मानवस्तिष्ठति ॥ २५–२७ ॥

शुक्रवत् सर्वसर्पाणां विषं सर्वशरीरगम् ॥
क्रुद्धानामेति चाङ्गेभ्यः शुक्रं निर्मन्थनादिव ॥ २८ ॥
तेषां बडिशवद्दंष्ट्रास्तासु सज्जति चागतम् ॥
अनुद्वृत्ता विषं तस्मान्न मुञ्चन्ति च भोगिनः ॥२९॥

शुक्रवदित्यादि । सर्वसर्पाणां विषं सर्वशरीरगम् । क्रुद्धानामित्यादि क्रुद्धानां सर्पाणामङ्गेभ्योऽवयवेभ्यो विषमागच्छति; किमिव ? शुक्रं निर्मन्थनादिव, निर्मन्थनं विशिष्टस्त्रीवराङ्गविलोडनहेतुरेव हर्ष उच्यते । तेषामित्यादि । बडिशं मत्स्यबन्धनयन्त्रम् । सज्जति सङ्गं याति, संबद्धं भवतीत्यर्थः । अनुद्वृत्ता अननुयोजिता, अनुच्छलिता[1] इति यावत्; कर्षणकृतपरावृत्त्या हि दंष्ट्राणामधोमुखत्वेति । भोगिनः सर्पाः ॥ २८ ॥ २९ ॥

यस्मादत्यर्थमुष्णं च तीक्ष्णं च पठितं विषम् ।
अतः सर्वविषेषूक्तः परिषेकस्तु शीतलः ॥ ३० ॥
मन्दं कीटेषु नात्युष्णं बहुवातकफं विषम् ॥
अतः कीटविषे चापि स्वेदो न प्रतिषिध्यते ॥ ३१ ॥
कीटैर्दष्टानुग्रविषैः सर्पवत् समुपाचरेत् ॥

यस्मादित्यादि । कीटेषु विषं मन्दं नात्युष्णं बहुवातकफं भवति; अपिशब्दात् कीटेष्वपि केषुचिदुग्रविषेषु न स्वेदः, अपि तु शीतलमेव चिकित्सितम् । तथा च वक्ष्यति,—'कीटैर्दष्टानुग्रविषैः सर्पवत्समुपाचरेत्'—इति ॥ ३० ॥ ३१ ॥—

स्वभावादेव तिष्ठेत्तु प्रहारादंशयोर्विषम् ॥ ३२ ॥
व्याप्य सावयवं देहं दिग्धविद्धाहिदष्टयोः ॥
लौल्याद्विषान्वितं मांसं यः खादेन्मृतमात्रयोः॥३३॥
यथाविषं स रोगेण क्लिश्यते म्रियतेऽपि वा ॥
अतश्चाप्यनयोर्मांसमभक्ष्यं मृतमात्रयोः ॥ ३४ ॥
मुहूर्तात्तदुपादेयं प्रहारादंशवर्जितम् ॥

इदानीं दिग्धविद्धाहिदष्टयोः प्रहारदंशदेशमांसमभक्ष्यं मुहूर्ताच्च तदुपादेयमुद्दिशन्नाह—स्वभावादित्यादि । दिग्धविद्धाहिदष्टयोः 'प्राणिनोः' इति शेषः । अत्र दिग्धविद्धो विषलिप्तकाण्डादिहतः, अहिदष्टः सर्पदष्टः । यथाविषं विषानुसारेणेत्यर्थः ॥ ३२–३४ ॥—

१ 'अननुमोदिता' इति पा० ।

सवातं गृद्धधूमाभं पुरीषं योऽतिसार्यते ॥ ३५ ॥
आध्मातोऽत्यर्थमुष्णास्रो विवर्णः सादपीडितः ।
उद्वमत्यथ फेनं च विषपीतं तमादिशेत् ॥ ३६ ॥
न चास्य हृदयं वह्निर्विषजुष्टं दहत्यपि ॥
तद्धि स्थानं चेतनायाः स्वभावाद्व्याप्य तिष्ठति ॥३७॥

इदानीं विषपीतस्य प्राणैः परित्यज्यमानस्य मृतस्य च लक्षणमाह—सवातमित्यादि । अस्रं नयनजलम् । विवर्णः अत्यर्थं कृष्णश्यामपीतवर्णः । सादः अङ्गग्लानिः । विवर्ण इति मृतस्य लक्षणं, शेषं सर्वं म्रियमाणस्य लक्षणम् । अस्य विषपानमृतस्य विषजुष्टं हृदयं वह्निरपि न दहति; कुतो हृदयमेव विषजुष्टं? हि यस्मात्तद्विषं चेतनास्थानं हृदयं स्वभावाद्व्याप्य तिष्ठति; अत एव च विषपानमृतस्य हृदयमदाह्यं विषव्याप्तत्वात् ॥ ३५-३७ ॥

अश्वत्थदेवायतनश्मशान-
वल्मीकसन्ध्यासु चतुष्पथेषु ॥
याम्ये सपित्र्ये परिवर्जनीया
ऋक्षे नरा मर्मसु ये च दष्टाः ॥ ३८ ॥

इदानीं वर्ज्यप्रहारादंशहृदयप्रसङ्गेन विशिष्टदेशादिद्वारेण वर्जनीयान् दष्टानाह—अश्वत्थेत्यादि । याम्ये भरण्यां, पित्र्ये मघायां, ऋक्षे नक्षत्रे ॥ ३८ ॥

दर्वीकराणां विषमाशुघाति
सर्वाणि चोष्णे द्विगुणीभवन्ति ॥
अजीर्णपित्तातपपीडितेषु
बालप्रमेहिष्वथ गर्भिणीषु ॥ ३९ ॥
वृद्धातुरक्षीणबुभुक्षितेषु
रूक्षेषु भीरुष्वथ दुर्दिनेषु ॥

दर्वीकराणामित्यादि । दर्वीकराणां फणिनां, सर्वाणि अशेषविषाणि, उष्णे उष्णकाले, द्विगुणीभवन्ति द्विगुणशक्तीनि भवन्ति; 'सर्वाणि चोर्ध्वं द्विगुणीभवन्ति' इति केचित् पठन्ति, ऊर्ध्वम् ऊर्ध्वदेशे इत्यर्थः । अजीर्णपित्तादिष्वपि द्विगुणत्वमाह—अजीर्णेत्यादि ॥ ३९ ॥—

शस्त्रक्षते यस्य न रक्तमेति
राज्यो लताभिश्च न संभवन्ति ॥ ४० ॥
शीताभिरद्भिश्च न रोमहर्षो
विषाभिभूतं परिवर्जयेत्तम् ॥
जिह्वा सिता यस्य च केशशातो
नासावभङ्गश्च सकण्ठभङ्गः ॥ ४१ ॥
कृष्णः सरक्तः श्वयथुश्च दंशे
हन्वोः स्थिरत्वं च स वर्जनीयः ॥
वर्तिर्घना यस्य निरेति वक्त्रा-
द्रक्तं स्रवेदूर्ध्वमधश्च यस्य ॥ ४२ ॥
दंष्ट्रानिपाताः सकलाश्च यस्य
तं चापि वैद्यः परिवर्जयेत्तु ॥
उन्मत्तमत्यर्थमुपद्रुतं वा
हीनस्वरं वाऽप्यथवा विवर्णम् ॥ ४३ ॥
सारिष्टमत्यर्थमवेगिनं च
जह्यान्नरं तत्र न कर्म कुर्यात् ॥ ४४ ॥

इति सुश्रुतसंहितायां कल्पस्थाने जङ्गमविषविज्ञानीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

शस्त्रेत्यादि । लताभिरभिहतेऽङ्गे राज्यो रेखा नोच्छलन्ति । जिह्वेत्यादि । सिता श्वेता, असिता कृष्णा वा भवतीत्यर्थः । केशशातः केशच्यवनम् । नासावभङ्गो नासास्रोतोवैगुण्यं, तच्चानुनासिकवाक्यत्वेन ज्ञेयम् । कण्ठभङ्गः स्वरसादः । दंशो भक्षितस्थानम् । हन्वोः मुखसन्ध्योः । स्थिरत्वम् अचलनम् । वर्तिरित्यादि वर्तिः कफवर्तिः । उन्मत्तेत्यादि । उन्मत्तं वातुलम् । अत्यर्थमुपद्रुतम् उपद्रवबहुलम् । सारिष्टं मरणलक्षणसहितम् । अवेगिनं लहरीवर्जितम् । जह्यात् त्यजेत् ॥ ४०—४४ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां कल्पस्थाने तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

अथातः सर्पदष्टविषविज्ञानीयं कल्पं व्याख्यास्यामः ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

जङ्गमविषाश्रयेषु महाविषत्वेन सर्पस्यैवात्र प्राधान्यात्तद्दष्टविज्ञानं प्रतिपादयितुकामः प्राह—अथात इत्यादि ॥ १ ॥ २ ॥

धन्वन्तरिं महाप्राज्ञं सर्वशास्त्रविशारदम् ॥
पादयोरुपसंगृह्य सुश्रुतः परिपृच्छति ॥ ३ ॥

पादयोरुपसंगृह्य पादपतनं कृत्वेत्यर्थः ॥ ३ ॥

सर्पसंख्यां विभागं च दष्टलक्षणमेव च ॥
ज्ञानं च विषवेगानां भगवन्! वक्तुमर्हसि ॥ ४ ॥

किं परिपृच्छतीत्याह—सर्पसंख्यामित्यादि । संख्या गणना, विभागो विशेषभागः पृथक्करणम् । अर्हसि योग्यो भवसि ॥ ४ ॥

तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजां वरः ॥
असंख्या वासुकिश्रेष्ठा विख्यातास्तक्षकादयः ॥ ५ ॥
महीधराश्च नागेन्द्रा हुताग्निसमतेजसः ॥
ये चाप्यजस्रं गर्जन्ति वर्षन्ति च तपन्ति च ॥ ६ ॥
ससागरगिरिद्वीपा यैरियं धार्यते मही ॥
क्रुद्धा निःश्वासदृष्टिभ्यां ये हन्युरखिलं जगत् ॥७॥
नमस्तेभ्योऽस्ति नो तेषां कार्यं किञ्चिच्चिकित्सया ॥
ये तु दंष्ट्राविषा भौमा ये दशन्ति च मानुषान् ॥ ८ ॥
तेषां सङ्ख्यां प्रवक्ष्यामि यथावदनुपूर्वशः ॥

तस्य तद्वचनमित्यादि । वासुकिश्रेष्ठा वासुकिः श्रेष्ठो येषां ते तथा । अस्ति नो तेषां कार्यं किञ्चिच्चिकित्सयेति तेषां

---

१ 'अध्यायं' इति पा० । २ 'वासुकिमुखा' इति पा० ।

तक्षकादीनां चिकित्सया किंचित् कार्यं नास्ति । ये तु दंष्ट्रि- त्यादि । अनुपूर्वशः अनुक्रमेण ॥ ५-८ ॥—

**अशीतिस्त्वेव सर्पाणां भिद्यते पञ्चधा तु सा ॥ ९ ॥**
**दर्वीकरा मण्डलिनो राजिमन्तस्तथैव च ॥**
**निर्विषा वैकरञ्जाश्च त्रिविधास्ते पुनः स्मृताः ॥१०॥**
**दर्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः ॥**
**तेषु दर्वीकरा ज्ञेया विंशतिः षट् च पन्नगाः ॥ ११ ॥**
**द्वाविंशतिर्मण्डलिनो राजिमन्तस्तथा दश ॥**
**निर्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा ॥ १२ ॥**
**वैकरञ्जोद्भवाः सप्त चित्रा मण्डलिराजिलाः ॥**

अशीतिरित्यादि । सा अशीतिः । दर्वीकराः फणावन्तः, मण्डलिनः फणावर्जिता विविधमण्डलैश्चित्रिताः, राजिमन्तो रेखायुक्ताः फणावर्जिता ईषद्विषा गमालादयः, निर्विषा विषरहिताः डुन्दुभिगौराहिकादयः; केचित् 'निर्' शब्दमीषदर्थे व्याख्यानयन्ति, तेन निर्विषा ईषद्विषाः; यथा—अनुदरा कन्येति । वैकरञ्जाः सङ्कीर्णजाताः, पृथग्जातीयसर्पिणीपृथग्जातीयसर्पाभ्यां जाता वैकरञ्जाः । एष्वेव निर्विषवैकरञ्जयोरन्तर्भावात् कथमशीतिः पूर्यत इत्याह—तेष्वित्यादि । चित्रा मण्डलिराजिला वैकरञ्जोद्भवाः सप्त भवन्ति; तत्र मण्डलिनश्चत्वारः, राजिलास्त्रयः । अत्रायमेव पाठो न्याय्यः, **जेज्जटगयदास**प्रभृतिभिरङ्गीकृतत्वात् ॥ ९-१२ ॥—

**पादाभिमृष्टा दुष्टा वा क्रुद्धा ग्रासार्थिनोऽपि वा १३**
**ते दशन्ति महाक्रोधास्त्रिविधं भीमदर्शनाः ॥**

संक्षेपेण विभागं प्रतिपाद्य दष्टस्य दंशनपूर्वकत्वाद्दंशनलक्षणं प्रतिपादयितुकामो दंशस्य कारणानि निर्दिशन्नाह—पादाभिमृष्टा इत्यादि । अभिमृष्टा मर्दिताः, दुष्टाः स्वभावदुष्टाः, क्रुद्धाः कुपिताः, अपिशब्दोऽत्रानुक्तसमुच्चये, तेनात्यासन्नभीतशङ्कितक्रान्तादयो ग्राह्याः । ते दशन्ति महाक्रोधास्त्रिविधं भीमदर्शना इति सर्पा महाक्रोधाः प्रचण्डकोपाः, अत एव भीमदर्शनाः; त्रिविधं यथा भवत्येवं दशन्ति भक्षयन्ति ॥१३॥—

**सर्पितं रदितं चापि तृतीयमथ निर्विषम् ॥**
**सर्पाङ्गाभिहतं केचिदिच्छन्ति खलु तद्विदः ॥ १४ ॥**
**पदानि यत्र दन्तानामेकं द्वे वा बहूनि वा ॥**
**निमग्नान्यल्परक्तानि यान्युद्धृत्य करोति हि ॥ १५ ॥**
**चञ्चुमालकयुक्तानि वैकृत्यकरणानि च ॥**
**संक्षिप्तानि सशोफानि विद्यात्तत् सर्पितं भिषक् १६**
**राज्यः सलोहिता यत्र नीलाः पीताः सितास्तथा ॥**
**विज्ञेयं रदितं तत्तु ज्ञेयमल्पविषं च तत् ॥ १७ ॥**
**अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिनः ॥**
**पदं पदानि वा विद्यादविषं तच्चिकित्सकः ॥ १८ ॥**

१ 'राजिमन्तस्तथैव च' इति पा० । २ 'चित्रमण्डलिराजिलाः' इति पा० । ३ 'व्यतिकरजाः' इति पा० । ४ 'तद्धि त्रिविधमुच्यते' इति पा० । ५ 'खलु' इति पा० ।

**सर्पस्पृष्टस्य भीरोर्हि भयेन कुपितोऽनिलः ॥**
**कस्यचित् कुरुते शोफं सर्पाङ्गाभिहतं तु तत् ॥१९॥**

एतदेव दंशत्रैविध्यमुद्दिष्टं निर्दिशन्नाह—सर्पितमित्यादि । तेषां लक्षणमाह—पदानीत्यादि । पदानि क्षतानि । एकमित्यादि । पदेषु यथोत्तरं विषबाहुल्यम् । निमग्नानि अनुद्गतानि । यान्युद्धृत्य करोति हि यानि पदान्युद्धृत्य उन्मोच्य सर्पः करोति । चञ्चुमालकयुक्तानीति उपरि पिडकासदृशैराचितानीत्यर्थः; **गयी** तु चञ्चुमालिकाः सर्पदष्टस्थानस्य पार्श्वे वटप्ररोहाग्रतुल्या विषोत्पन्ना अङ्कुरा भवन्तीति व्याख्यानयति । वैकृत्यकरणानि विकारभावविधायकानि । संक्षिप्तानीत्यादि । संक्षिप्तानि सूक्ष्माणि । सर्पितम् अल्पवगाढम् । राज्य इत्यादि । राज्यो रेखाः, रदितं विलिखितमनवगाढम्, अत एवाल्पविषम् । अशोफमित्यादि । प्रकृतिस्थस्येति कायवाक्चित्तेषु स्वेन भावेनावस्थितस्य । पदं पदानि वेति एकं पदं बहूनि वा पदानीत्यर्थः । सर्पस्पृष्टस्येत्यादि । तुशब्दश्चार्थे, तेन कण्टकादिविद्धेऽपि शङ्काविषं भवति ॥ १४-१९ ॥

**व्याधितोद्विग्नदष्टानि ज्ञेयान्यल्पविषाणि तु ॥**
**तथाऽतिवृद्धबालाभिदष्टमल्पविषं स्मृतम् ॥ २० ॥**
**सुपर्णदेवब्रह्मर्षियक्षसिद्धनिषेविते ॥**
**विषघ्नौषधियुक्ते च देशे न क्रमते विषम् ॥ २१ ॥**

सर्पावस्थाविशेषतोऽल्पविषत्वमुद्दिशन्नाह—व्याधितेत्यादि । दष्टानि भक्ष्यस्थानानि । विशिष्टदेवसेविते विशिष्टौषधिसेविते च देशेऽविषत्वमुद्दिशन्नाह—सुपर्णेत्यादि । सुपर्णो गरुडः । भूताः स्वनामप्रसिद्धाः ॥ २० ॥ २१ ॥

**रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ॥**
**ज्ञेया दर्वीकराः सर्पाः फणिनः शीघ्रगामिनः ॥ २२ ॥**
**मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः ॥**
**ज्ञेया मण्डलिनः सर्पा ज्वलनार्कसमप्रभाः ॥ २३ ॥**
**स्निग्धा विविधवर्णाभिस्तिर्यगूर्ध्वं च राजिभिः ॥**
**चित्रिता इव ये भान्ति राजिमन्तस्तु ते स्मृताः २४**

इदानीं चिकित्सोपयोगिदर्वीकरादिलिङ्गमुद्दिशन्नाह—रथाङ्गेत्यादि । रथाङ्गं चक्रं, लाङ्गलं हलं, धारिण इति यतो रथाङ्गादीनामाकृतिं धारयन्ति । मण्डलैरित्यादि । पृथवो विस्तीर्णाः ॥ २२-२४ ॥

**मुक्तारूप्यप्रभा ये च कपिला ये च पन्नगाः ॥**
**सुगन्धयः सुवर्णाभास्ते जात्या ब्राह्मणाः स्मृताः २५**
**क्षत्रियाः स्निग्धवर्णास्तु पन्नगा भृशकोपनाः ॥**
**सूर्यचन्द्राकृतिच्छत्रलक्ष्म तेषां तथाऽम्बुजम् ॥२६॥**
**कृष्णा वज्रनिभा ये च लोहिता वर्णतस्तथा ॥**
**धूम्राः पारावताभाश्च वैश्यास्ते पन्नगाः स्मृताः २७**
**महिषद्वीपिवर्णाभास्तथैव परुषत्वचः ॥**
**भिन्नवर्णाश्च ये केचिच्छूद्रास्ते परिकीर्तिताः ॥ २८ ॥**

१ 'तथाऽतिवृद्धातिबालदष्टं' इति पा० । २ 'ज्वलनार्कसमाविषे' इति पा० । ३ 'वज्रप्रभा' इति पा० ।

इदानीं ब्राह्मणादिजातिपरिज्ञानायाह—मुक्तारूप्येत्यादि । सूर्यादिवत्तेषां लक्ष्म चिह्नं, तथा अम्बुजः शङ्खः । तथा च वृद्धवाग्भटः,–"भोगेऽर्धचन्द्रश्रीवत्सशङ्खचक्रहलाङ्किताः–" इति । द्वीपी चित्रकः ॥ २५–२८ ॥

**कोपयन्त्यनिलं जन्तोः फणिनः सर्वे एव तु ॥**
**पित्तं मण्डलिनश्चापि कफं चानेकराजयः ॥ २९ ॥**
**अपत्यमसवर्णाभ्यां द्विदोषकरलक्षणम् ॥**
**ज्ञेयौ दोषैश्च दम्पत्यो–**

अपत्यमित्यादि । असमानवर्णाभ्यां सर्पसर्पिणीभ्यां यत् अपत्यं वैकरञ्जाख्यं, तद्द्विदोषकरलक्षणं ज्ञेयं; द्विदोषकराणि लक्षणानि यत्र तद्द्विदोषकरलक्षणं; एतेन वैकरञ्जस्य द्विदोषकर्तृत्वमुक्तम् । अपत्ये यौ द्विदोषौ तौ कयोरित्याह—ज्ञेयाविति ।—ज्ञेयौ ज्ञातव्यौ । दम्पत्योः पितृमात्रोरित्यर्थः ॥ २९ ॥—

**र्विशेषश्चात्र वक्ष्यते ॥ ३० ॥**
**रजन्याः पश्चिमे यामे सर्पाश्चित्राश्चरन्ति हि ॥**
**शेषेषूक्ता मण्डलिनो दिवा दर्वीकराः स्मृताः ॥३१॥**

एषां मध्ये के कस्मिन् काले विचरन्तीत्याह—विशेष इत्यादि । पश्चिमे यामे चतुर्थे प्रहर इत्यर्थः । चित्रा अत्र राजिमन्तः । शेषेषु प्रहरेषु 'रजन्या एव' इति शेषः ॥३०॥३१॥

**दर्वीकरास्तु तरुणा वृद्धा मण्डलिनस्तथा ॥**
**राजिमन्तो वयोमध्या जायन्ते मृत्युहेतवः ॥ ३२ ॥**

तेषां दर्वीकरादीनामुग्रविषत्वे वयोऽवस्थामुद्दिशन्नाह—दर्वीकरा इत्यादि । दर्वीकरादयो मृत्युहेतवो जायन्ते भवन्तीत्यर्थः ॥ ३२ ॥

**नकुलाकुलिता बाला वारिविप्रहताः कृशाः ॥**
**वृद्धा मुक्तत्वचो भीताः सर्पास्त्वल्पविषाः स्मृताः ३३**

तेषामेवाल्पविषत्वे हेतुमाह—नकुलाकुलिता इत्यादि । नकुलेन आकुलिताः कदर्थिताः; वारिविप्रहता वारिणा जलेन विशेषेण प्रहता अभिभूताः; मुक्तत्वचो मुक्तकञ्चुकाः, तथा भीताः सर्पा अल्पविषा भवन्ति ॥ ३३ ॥

**तत्र, दर्वीकराः—कृष्णसर्पो, महाकृष्णः, कृष्णोदरः श्वेतकपोतो, महाकपोतो, बलाहको, महासर्पः, शङ्खकपालो[1], लोहिताक्षो, गवेधुकः, परिसर्पः, खण्डफणः, ककुदः, पद्मो, महापद्मो, दर्भपुष्पो, दधिमुखः, पुण्डरीको, भ्रूकुटीमुखो, विष्किरः, पुष्पाभिकीर्णो, गिरिसर्पः, ऋजुसर्पः, श्वेतोदरो, महाशिरा, अलगर्द, आशीविष इति (१);**

**मण्डलिनस्तु–आदर्शमण्डलः, श्वेतमण्डलो, रक्तमण्डलः, चित्रमण्डलः, पृषतो, रोध्रपुष्पो, मिलिन्दको, गोनसो, वृद्धगोनसः, पनसो, महापनसो, वेणुपत्रकः, शिशुको मदनः, पालिन्दिरः, पिङ्गलः, तन्तुकः[1] पुष्पपाण्डुः, षडङ्गो, अग्निको बभ्रुः, कषायः, कलुषः पारावतो, हस्ताभरणः, चित्रकः, एणीपद इति (२);**

**राजिमन्तस्तु—पुण्डरीको राजिचित्रो, अङ्गुलराजिः, बिन्दुराजिः, कर्दमकः, तृणशोषकः, सर्षपकः श्वेतहनुः, दर्भपुष्पश्चक्रको, गोधूमकः, किक्किसाद इति (३);**

**निर्विषास्तु—गलगोली, शूकपत्रो, अजगरो, दिव्यको, वर्षाहिकः, पुष्पशकली, ज्योतीरथः, क्षीरिकापुष्पको, अहिपताको, अन्धाहिको, गौराहिको, वृक्षेशय इति (४);**

**वैकरञ्जास्तु त्रयाणां दर्वीकरादीनां व्यतिकराज्जाताः, तद्यथा—माकुलिः, पोटगलः, स्निग्धराजिरिति । तत्र, कृष्णसर्पेण गोनस्यां वैपरीत्येन वा जातो माकुलिः; राजिलेन गोनस्यां वैपरीत्येन वा जातः पोटगलः; कृष्णसर्पेण राजिमत्यां वैपरीत्येन वा जातः स्निग्धराजिरिति । तेषामाद्यस्य पितृवद्विषोत्कर्षो[2], द्वयोर्मातृवदित्येके (५);**

तज्जातमेव व्यतिकरं विवृण्वन्नाह—तत्र कृष्णसर्पेणेत्यादि । वैपरीत्येन वेति गोनसेन पुंसा कृष्णसर्पिण्यां स्त्रियामित्यर्थः । राजिलेनेत्यादि । वैपरीत्यं पूर्वव्याख्यावज्ज्ञेयम् । कृष्णसर्पेणेत्यादि । एषां मध्ये येऽप्रसिद्धाः सर्पभेदास्ते सर्वे नानादेशवासिभ्यः सर्पहेलिकादिभ्यो ज्ञेयाः । तेषां व्यतिकरजानां समतया द्विविधत्वे प्राप्ते दम्पत्योरेकस्य विषमुत्कर्षं भवतीति दर्शयन्नाह—तेषामित्यादि । आद्यस्य माकुलेः, पितृवत् कृष्णसर्पवत् । द्वयोः पोटगलस्निग्धराजिकयोः; तत्र पोटगलस्य माता गोनसी, स्निग्धराजिकस्य माता राजिमती ॥ (१–५) ॥

**त्रयाणां वैकरञ्जानां पुनर्दिव्येलकरोध्रपुष्पकराजिचित्रकपोटगलपुष्पाभिकीर्णदर्भपुष्पवेल्लितकाः सप्त; तेषामाद्यास्त्रयो राजिलवत्, शेषा मण्डलिवत्, एवमेतेषां सर्पाणामशीतिर्व्याख्याता ॥३४॥**

वैकरञ्जेभ्यस्त्रिभ्यो जातानां दिव्येलकप्रभृतीनां विषं केषामनुयायि भवतीति दर्शयन्नाह—त्रयाणामित्यादि ॥ ३४ ॥

**तत्र महानेत्रजिह्वास्यशिरसः पुमांसः, सूक्ष्मनेत्रजिह्वास्यशिरसः स्त्रियः, उभयलक्षणा मन्दविषा अक्रोधा नपुंसका इति ॥ ३५ ॥**

सर्पाणां पुरुषादिलक्षणमुद्दिशन्नाह—तत्रेत्यादि ॥ ३५ ॥

**तत्र सर्वेषां सर्पाणां सामान्यत एव दष्टलक्षणं वक्ष्यामः । किं कारणं? विषं हि निशितनिस्त्रिंशाशनिहुतवहदेश्यमाशुकारि मुहूर्तमप्युपेक्षितमातुरमतिपातयति, न चावकाशोऽस्ति वाक्समूह-**

१ 'शङ्खकामलो' इति पा० ।

१ 'पिङ्गलतन्तुकः' इति पा० । २ 'विषमुत्कर्षाद्भवति' इति पा० ।

मुपसर्तुं प्रत्येकमपि दष्टलक्षणेऽभिहिते सर्वत्र त्रैविध्यं भवति, तस्मात् त्रैविध्यमेव वक्ष्यामः; एतच्चातुरहितमसंमोहकरं च, अपि चात्रैव सर्वसर्पव्यञ्जनावरोधः ॥ ३६ ॥

निशितनिस्त्रिंशः तीक्ष्णः खड्गः, अशनिः वज्रं, हुतवहो वह्निः, देश्यं तुल्यं; आशुकारि शीघ्रव्यापकम् । अतिपातयति शीघ्रं मारयतीत्यर्थः । न चावकाश इत्यादि अवकाशः कालविलम्बः । उपसर्तुम् अनुसर्तुम् । प्रत्येकमपीत्यादि । तस्मात् प्रतिसर्पदष्टलक्षणं न कृतमिति भावः । एतत्त्रैविध्यमसंमोहकरं चेति अभ्रान्तिजनकं, 'वैद्यस्य' इति शेषः; । तदुक्तं,—"मुह्यन्ति विस्तरे मन्दाः" इति ॥ ३६ ॥

तत्र, दर्वीकरविषेण त्वङ्नयननखदशनवदनमूत्रपुरीषदंशकृष्णत्वं रौक्ष्यं शिरसो गौरवं सन्धिवेदना कटीपृष्ठग्रीवादौर्बल्यं जृम्भणं वेपथुः स्वरावसादो घुर्घुरको जडता शुष्कोद्गारः कासश्वासौ हिक्का वायोरूर्ध्वगमनं शूलोद्वेष्टनं तृष्णा लालास्रावः फेनागमनं स्रोतोऽवरोधस्तास्ताश्च वातवेदना भवन्ति; मण्डलिविषेण त्वगादीनां पीतत्वं शीताभिलाषः परिधूपनं दाहस्तृष्णा मदो मूर्च्छा ज्वरः शोणितागमनमूर्ध्वमधश्च मांसानामवशातनं श्वयथुर्दंशकोथः पीतरूपदर्शनमाशुकोपस्तास्ताश्च पित्तवेदना भवन्ति; राजिमद्विषेण शुक्लत्वं त्वगादीनां शीतज्वरो रोमहर्षः स्तब्धत्वं गात्राणामादंशशोफः सान्द्रकफप्रसेकश्छर्दिरभीक्ष्णमक्ष्णोः कण्डूः कण्ठे श्वयथुर्घुर्घुरक उच्छ्वासनिरोधस्तमःप्रवेशस्तास्ताश्च कफवेदना भवन्ति ॥ ३७ ॥

दर्वीकरादिसर्पगणभेदानां सामान्यलक्षणोपदेशेन विशिष्टलक्षणमवबुध्यते, तत्सामान्यं त्रिविधलक्षणमुद्दिशन्नाह—तत्र दर्वीकरेत्यादि । दर्वीकरविषेण त्वङ्नखादिकृष्णत्वादिलक्षणानि भवन्तीति संबन्धः । स्वरावसादः स्वरभङ्गः, घुर्घुरको मार्जारशब्दानुकारी अव्यक्तो ध्वनिविशेषः, जडता निःस्पन्दता, शूलोद्वेष्टनं शूलेन कुब्जाऽङ्गमोटनं तास्ता वातवेदनाः तोदनभेदनादिकाः । मण्डलीत्यादि । परिधूपनं सर्वाङ्गसन्तापः, मदः पूगफलखादनेनेव मत्तत्वं, मांसानामवशातनं शटितत्वाद्गलनं, दंशकोथः दंशस्य पूतिभावः, पीतरूपदर्शनं सर्वं वस्तु पीताभं पश्यति, तास्ताश्च पित्तवेदना ऊषचोषादिकाः । राजिमद्विषेणेत्यादि । आदंशशोफ आसमन्ततो दंशस्य शोफ इत्यर्थः, प्रसेकः क्षरणं, घुर्घुरकः अव्यक्तः शब्दविशेषः, तम अन्धकारः; तास्ताः कण्ड्वाद्याः ॥ ३७ ॥

पुरुषाभिदष्ट ऊर्ध्वं प्रेक्षते, अधस्तात् स्त्रिया सिराश्चोत्तिष्ठन्ति ललाटे, नपुंसकाभिदष्टस्तिर्यक्प्रेक्षी भवति, गर्भिण्या पाण्डुमुखो ध्मातश्च, सूतिकया कुक्षिशूलार्तः सरुधिरं मेहत्युपजिह्विका चास्य भवति, ग्रासार्थिनाऽन्नं काङ्क्षति, वृद्धेन चिरान्मन्दाश्च वेगाः, बालेनाशु मृदवश्च, निर्विषेणाविषलिङ्गं, अन्धाहिकेनान्धत्वमित्येके, ग्रसनात् अजगरः शरीरप्राणहरो न विषात् । तत्र सद्यःप्राणहराहिदष्टः पतति शस्त्राशनिहत इव भूमौ, स्रस्ताङ्गः स्वपिति ॥ ३८ ॥

अधुना पुरुषाद्यभिदष्टलक्षणमाह—पुरुषाभिदष्ट इत्यादि । प्रेक्षते इति पूर्वस्मादधस्तादित्यनेन च संबन्धनीयम् । नपुंसकाभिदष्ट इत्यादि । सूतिका प्रसूता । मेहति मूत्रयति । वृद्धेन दष्टस्य चिरकालेन वेगास्ते च मन्दा भवन्ति । बालेनेत्यादि । अन्धेन अहिना दष्टस्यान्धत्वं च दृश्यते इत्येके, अन्ये पुनरविषप्रकरणादविष एवायमित्याहुः । अन्धाहिः जलबिलशायीति प्रसिद्धः, अपरे पुनरपरमेवान्धाहिमाहुः । ग्रसनादित्यादि । ग्रसनात् गिलनात्; शरीरप्राणहरः शरीरहरः प्राणहरश्च भवति, न विषात् ॥ ३८ ॥

तत्र सर्वेषां सर्पाणां विषस्य सप्त वेगा भवन्ति । तत्र, दर्वीकराणां प्रथमे वेगे विषं शोणितं दूषयति, तत् प्रदुष्टं कृष्णतामुपैति, तेन कार्ष्ण्यं पिपीलिकापरिसर्पणमिव चाङ्गे भवति; द्वितीये मांसं दूषयति, तेनात्यर्थं कृष्णता शोफो ग्रन्थयश्चाङ्गे भवन्ति; तृतीये मेदो दूषयति, तेन दंशक्लेदः शिरोगौरवं स्वेदश्चक्षुर्ग्रहणं च; चतुर्थे कोष्ठमनुप्रविश्य कफप्रधानान् दोषान् दूषयति, तेन तन्द्राप्रसेकसन्धिविश्लेषा भवन्ति; पञ्चमेऽस्थीन्यनुप्रविशति प्राणमग्निं च दूषयति, तेन पर्वभेदो हिक्का दाहश्च भवति; षष्ठे मज्जानमनुप्रविशति ग्रहणीं चात्यर्थं दूषयति, तेन गात्राणां गौरवमतीसारो हृत्पीडा मूर्च्छा च भवति; सप्तमे शुक्रमनुप्रविशति व्यानं चात्यर्थं कोपयति कफं च सूक्ष्मस्रोतोभ्यः प्रच्यावयति, तेन श्लेष्मवर्तिप्रादुर्भावः कटीपृष्ठभङ्गः सर्वचेष्टाविघातो लालास्वेदयोरतिप्रवृत्तिरुच्छ्वासनिरोधश्च भवति । मण्डलिनां प्रथमे वेगे विषं शोणितं दूषयति, तत् प्रदुष्टं पीततामुपैति, तत्र परिदाहः पीतावभासता चाङ्गानां भवति; द्वितीये मांसं दूषयति, तेनात्यर्थं पीतता परिदाहो दंशे श्वयथुश्च भवति; तृतीये मेदो दूषयति, तेन पूर्ववच्चक्षुर्ग्रहणं तृष्णा दंशक्लेदः स्वेदश्च; चतुर्थे कोष्ठमनुप्रविश्य ज्वरमापादयति; पञ्चमे परिदाहं सर्वगात्रेषु करोति, षष्ठसप्तमयोः पूर्ववत् । राजिमतां प्रथमे वेगे विषं शोणितं दूषयति तत् प्रदुष्टं पाण्डुतामुपैति, तेन रोमहर्षः शुक्लावभासश्च पुरुषो

१ 'सर्वत्रैविध्यं' इति पा० ।

१ 'जलबिशायि' इति पा० । २ 'शिरोग्रहणं' इति पा० ।

भवति; द्वितीये मांसं दूषयति, तेन पाण्डुताऽत्यर्थं जाड्यं शिरःशोफश्च भवति; तृतीये मेदो दूषयति, तेन चक्षुर्ग्रहणं दंशक्लेदः स्वेदो घ्राणाक्षिस्रावश्च भवति; चतुर्थे कोष्ठमनुप्रविश्य मन्यास्तम्भं शिरोगौरवं चापादयति; पञ्चमे वाक्सङ्गं शीतज्वरं च करोति; षष्ठसप्तमयोः पूर्ववदिति ॥ ३९ ॥

वेगो विषवेगो विषगतिः । तत्र दर्वीकराणामित्यादि । चक्षुर्ग्रहणं दृष्ट्यवरोधः । पञ्चमे इत्यादि । ग्रहणी पित्तधरा कला । पूर्ववदिति दर्वीकरविषस्य षष्ठसप्तमयोर्वेगयोर्यानि लक्षणानि तानि भवन्तीत्यर्थः । एवं राजिमतामपि षष्ठसप्तमवेगयोरतिदेशार्थो बोद्धव्यः ॥ ३९ ॥

भवन्ति चात्र—

धात्वन्तरेषु याः सप्त कलाः संपरिकीर्तिताः ।
तास्वेकैकामतिक्रम्य वेगं प्रकुरुते विषम् ॥ ४० ॥

कुतः पुनः सप्तैव वेगा इत्याह—भवन्तीत्यादि । धात्वन्तरेषु धातुमध्येषु, धातुग्रहणमाशयोपलक्षणं; तेनायमर्थः—धात्वाशयान्तरमर्यादा याः कलाः सप्त प्रागुक्ता गर्भव्याकरणे तास्वेकैकामतिक्रम्य सप्तसु धातुषु सप्त वेगा भवन्ति । तद्यथा—रसरक्तयोरन्तरस्थां कलामतिक्रम्य रक्ते प्रथमवेगः, रक्तमांसयोरन्तरस्थां कलामतिक्रम्य द्वितीयः, मांसमेदसोरन्तरस्थां कलामतिक्रम्य तृतीयः, मेदःकफयोरन्तरस्थां कलामतिक्रम्य चतुर्थः, कफपुरीषयोरन्तरस्थां कलामतिक्रम्य पञ्चमः, पुरीषपित्तयोरन्तरस्थां कलामतिक्रम्य षष्ठः, पित्तशुक्रयोरन्तरस्थां कलामतिक्रम्य सप्तम इति । यैव कला पुरीषधरा सैवास्थिधरेति पञ्चमे अस्थ्यन्यनुप्रविशतीत्यविरुद्धं; एवं यैव पित्तधरा सैव मज्जधरेति षष्ठे मज्जानमनुप्रविशतीत्यविरुद्धम् ॥ ४० ॥

येनान्तरेण तु कलां कालकल्पं भिनत्ति हि ॥
समीरणेनोह्यमानं तत्तु वेगान्तरं स्मृतम् ॥ ४१ ॥

वेगमभिधाय वेगान्तरमाह—येनान्तरेणेत्यादि । येनान्तरेण येन कालेन, कलाम् उक्तलक्षणां, कालकल्पं मृत्युसदृशं विषं, भिनत्ति विदारयति, समीरणेनोह्यमानं वायुना प्रेर्यमाणं तत्तु वेगान्तरं भूतस्य भविष्यतश्च वेगस्य मध्यभूतः कालस्तावत्प्रमाण इत्यर्थः ॥ ४१ ॥

शूनाङ्गः प्रथमे वेगे पशुर्ध्यायति दुःखितः ॥
लालास्रावो द्वितीये तु कृष्णाङ्गः पीड्यते हृदि ४२
तृतीये च शिरोदुःखं कण्ठग्रीवं च भज्यते ॥
चतुर्थे वेपते मूढः खादन् दन्तान् जहात्यसून् ॥४३॥
केचिद्वेगत्रयं प्राहुरन्तं चैतेषु तद्विदः ॥
ध्यायति प्रथमे वेगे पक्षी मुह्यत्यतः परम् ॥ ॥४४॥
द्वितीये विह्वलः प्रोक्तस्तृतीये मृत्युमृच्छति ॥
केचिदेकं विहङ्गेषु विषवेगमुशन्ति हि ॥
मार्जारनकुलादीनां विषं नातिप्रवर्तते ॥ ४५ ॥

इति सुश्रुतसंहितायां कल्पस्थाने सर्पदष्टविषविज्ञानीयं नाम चतुर्थोऽध्यायः ॥ ४ ॥

मनुष्यस्य सप्तविषवेगप्रसङ्गेन पशुपक्षिष्वपि वेगप्रसंख्यामुद्दिशन्नाह—शूनाङ्ग इत्यादि । शूनाङ्ग उद्धर्षितशरीरः, केचिद्वेगत्रयमित्याहुः । केचिदाचार्या 'ध्यायति प्रथमे' इत्यादिपाठं न पठन्ति ॥ ४२–४५ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां कल्पस्थाने चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

अथातः सर्पदष्टविषचिकित्सितं कल्पं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि ॥ १ ॥ २ ॥

सर्वैरेवादितः सर्पैः शाखादष्टस्य देहिनः ॥
दंशस्योपरि बध्नीयादरिष्टाश्चतुरङ्गुले ॥ ३ ॥
प्लोतचर्मान्तवल्कानां मृदुनाऽन्यतमेन वै ॥
न गच्छति विषं देहमरिष्टाभिर्निवारितम् ॥ ४ ॥

सर्पदष्टचिकित्सितं द्विविधं सामान्यं विशिष्टं च; तत्र सामान्यमेव प्रथमं निर्दिशन्नाह—सर्वैरित्यादि । शाखा हस्तपादकम् । अरिष्टा वस्त्रादिभिर्मन्त्रपुरस्कृतैर्बन्धः । प्लोतेत्यादि । प्लोतं वस्त्रं, चर्मान्तं चर्मैकदेशः, वल्कं वृक्षादित्वक्, मृदुना कोमलेन, अन्यतमेन एकतमेन, प्लोतेन चर्मान्तेन वल्कलेन वेत्यर्थः ॥ ३ ॥ ४ ॥

दहेद्दंशमथोत्कृत्य यत्र बन्धो न जायते ॥
आचूषणच्छेददाहाः सर्वत्रैव तु पूजिताः ॥ ५ ॥

अरिष्टामभिधाय दाहमुद्दिशन्नाह—दहेदित्यादि । उत्कृत्य छित्त्वा । दहेदिति अत्र 'मण्डलिदंशं वर्जयित्वा' इति शेषः । न जायते न संभवति । सर्वत्रैव सर्वस्मिन् देहे । पूजिताः श्लाघिताः । दाहस्य पुनरुपादानमुत्कर्तनमन्तरेणापि दाहविधानार्थम् ॥ ५ ॥

प्रतिपूर्य मुखं वस्त्रैर्हितमाचूषणं भवेत् ॥
स दंष्टव्योऽथवा सर्पो लोष्टो वाऽपि हि तत्क्षणम् ६

प्रतिपूर्येत्यादि । वस्त्रैरित्युपलक्षणं, तेन कृष्णवल्मीकमृत्पांशुनाऽपि प्रतिपूर्याचूषणं हितं, विषहरत्वाद्वल्मीकस्य । स दष्टव्य इत्यादि । दष्टेन पुरुषेण हस्ताभ्यामुपसंगृह्य पुच्छे वक्त्रे च सर्पः सम्यग् दष्टव्यः, तदभावे लोष्टो वा दष्टव्यः । तद्भक्षणं तु तत्रैव संक्रमणहेतुरित्यर्थः ॥ ६ ॥

---

१ अस्याग्रे 'फणिमण्डलीविषज्ञानं च पृथगुक्तं त्वगादिकृष्णत्वपीतत्वादिसामान्यलक्षणद्वारेण' इत्यधिकं पठ्यते हस्तलिखितपुस्तके । २ 'हृष्टाङ्गः' इति पा० । ३ 'पक्षी कूजन् मरणमृच्छति' इति पा० ।

१ 'नातिप्रसर्पति' इति पा० । २ 'संदष्टव्य' इति पा० ।

अथ मण्डलिना दष्टं न कथंचन दाहयेत् ॥
स पित्तबाहुल्यविषाद्दंशो दाहाद्विसर्पते ॥ ७ ॥

केनचिद्दष्टे दाहनिषेधमाह—अथ मण्डलिना दष्टमित्यादि ॥७॥

अरिष्टामपि मन्त्रैश्च बध्नीयान्मन्त्रकोविदः ॥
सा तु रज्ज्वादिभिर्बद्धा विषप्रतिकरी मता ॥ ८ ॥

न केवलं श्लोतादिभिः परमरिष्टेत्याह—अरिष्टामित्यादि । मन्त्रकोविदो मन्त्रज्ञः पुरुषः । केवलैरपि मन्त्रैररिष्टां बध्नीयात् । न परं मन्त्रैरेवारिष्टेत्याह—सा त्वित्यादि । सा पुनररिष्टा मन्त्ररहितैरपि रज्ज्वादिभिर्बद्धा विषप्रतिकरी विषप्रतीकारहेतुः[1] । एतेन मन्त्रतन्त्राभ्यां तु विषप्रतीकारः ॥ ८ ॥

देवब्रह्मर्षिभिः प्रोक्ता मन्त्राः सत्यतपोमयाः ॥
भवन्ति नान्यथा क्षिप्रं विषं हन्युः सुदुस्तरम् ॥ ९ ॥
विषं तेजोमयैर्मन्त्रैः सत्यब्रह्मतपोमयैः ॥
यथा निवार्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः ॥ १० ॥

मन्त्रस्य शक्तिं दर्शयन्नाह—देवब्रह्मर्षिभिरित्यादि । देवर्षिविहितत्वेन सत्यमयाः, ब्रह्मर्षिविहितत्वेन तपोमयाः । प्रोक्ताः कथिता न तु कृताः, मन्त्राणां नित्यत्वात् । अन्ये तु 'सत्यब्रह्मतपोमया' इति पठित्वा व्याख्यानयन्ति—देवा इन्द्रादयः, ब्रह्मा स्वनामप्रसिद्धः, ऋषयः देवर्षि-ब्रह्मर्षि-राजर्षयः । तत्र देवकृतत्वेन सत्यप्रत्ययाः, ब्रह्मकृतत्वेन ब्रह्ममयाः, त्रिविधर्षिकृतत्वेन तपोमयाः; मन्त्राः कुरुकुल्लाभेरुण्डादयः परतन्त्राभिहिता इह नोपदिष्टाः ॥ ९ ॥ १० ॥

मन्त्राणां ग्रहणं कार्यं स्त्रीमांसमधुवर्जिना ॥
मिताहारेण[2] शुचिना कुशास्तरणशायिना ॥ ११ ॥
गन्धमाल्योपहारैश्च बलिभिश्चापि देवताः ॥
पूजयेन्मन्त्रसिद्ध्यर्थं जपहोमैश्च यत्नतः ॥ १२ ॥

मन्त्रग्रहणविधानमाह—मन्त्राणामित्यादि । अत्र मधु मद्यं क्षौद्रं चोभयमपि वर्जनीयम् । यताहारेण संयताहारेण हविष्यैकाहारेणेत्यर्थः । शुचिना बाह्याभ्यन्तरपवित्रेण । माल्यं माला, उपहारो धूपदीपादिकं पूजोपकरणं, बलिः सपशुनैवेद्यम् । होमैश्चेति चकारेण ध्यानेनापीत्यनुक्तं समुच्चीयते ॥११॥१२॥

मन्त्रास्त्वविधिना प्रोक्ता हीना वा स्वरवर्णतः ॥
यस्मान्न सिद्धिमायान्ति तस्माद्योज्योऽगदक्रमः ॥१३

विधिहीनगृहीतस्य हीनस्वरादेर्वा मन्त्रस्यासिद्धावगदक्रमो योज्य इत्याह—मन्त्रास्त्वित्यादि । अविधिना स्त्रीमांसमधुवर्जनादिविधिं विना; प्रोक्ता 'गुरुणा' इति शेषः ॥ १३ ॥

समन्ततः सिरा दंशाद्विध्येत्तु कुशलो भिषक् ॥
शाखाग्रे वा ललाटे वा व्यध्यास्ता विसृते विषे ॥१४॥
रक्ते निर्ह्रियमाणे तु कृत्स्नं निर्ह्रियते विषम् ॥
तस्माद्विस्रावयेद्रक्तं सा ह्यस्य परमा क्रिया ॥ १५ ॥
समन्तादगदैर्दंशं प्रच्छयित्वा प्रलेपयेत् ॥
चन्दनोशीरयुक्तेन वारिणा परिषेचयेत् ॥ १६ ॥

यतो रक्तमेव प्राप्य विषं विकारकार्यतस्तदपकर्षणायाह—समन्तत इत्यादि । समन्ततः सर्वत्र । वाशब्दोऽत्र समुच्चयार्थे । विसृते प्रसृते । प्रलेपयेद् रक्तसेचनावशिष्टविप्रशमाय महागदादिभिः । चन्दनेत्यादि । चन्दनोशीरक्वाथेनेत्यर्थः, अन्ये तु चन्दनोशीरकल्कमिश्रितजलेनेत्याहुः ॥ १४—१६ ॥

पाययेतागदांस्तांस्तान् क्षीरक्षौद्रघृतादिभिः ॥
तदलाभे हिता वा स्यात् कृष्णा वल्मीकमृत्तिका १७
कोविदारशिरीषार्ककटभीर्वाऽपि भक्षयेत् ॥

पाययेतेत्यादि । रक्तावसेचनपूर्वं हृदयावरणार्थं तांस्तान् महागदादीनक्षमात्रापरिमितान् क्षीरादिभिर्यथादोषं पातुं प्रयोजयेत् । आदिशब्दाद्दधितक्रयोर्ग्रहणम् । कोविदारः काञ्चनारः । कटभी श्वेतस्यन्दः ॥ १७ ॥—

न पिबेत्तैलकौलत्थमद्यसौवीरकाणि च ॥ १८ ॥
द्रवमन्यत्तु यत्किञ्चित् पीत्वा पीत्वा तदुद्वमेत् ।
प्रायो हि वमनेनैव सुखं निर्ह्रियते विषम् ॥ १९ ॥

विषे कानपि द्रवान् निरस्यन्नाह—न पिबेत्तैलकौलत्थेत्यादि । कुलत्थानामयं कौलत्थो यूषः, सौवीरकं काञ्जिकम् ॥ १८ ॥ १९ ॥

फणिनां विषवेगे तु प्रथमे शोणितं हरेत् ॥
द्वितीये मधुसर्पिर्भ्यां पाययेतागदं भिषक् ॥ २० ॥
नस्यकर्माञ्जने युञ्ज्यात्तृतीये विषनाशने ॥
वान्तं चतुर्थे पूर्वोक्तां यवागूमथ दापयेत्[1] ॥ २१ ॥
शीतोपचारं कृत्वाऽऽदौ भिषक् पञ्चमषष्ठयोः ॥
पाययेच्छोधनं तीक्ष्णं यवागूं चापि कीर्तिताम् ॥२२॥
सप्तमे त्ववपीडेन शिरस्तीक्ष्णेन शोधयेत् ॥
तीक्ष्णमेवाञ्जनं दद्यात्, तीक्ष्णशस्त्रेण मूर्ध्नि च ॥२३॥
कृत्वा काकपदं चर्म सासृग्वा पिशितं[2] क्षिपेत् ॥

अत ऊर्ध्वं दर्वीकरादिवेगविशेषेण वैशेषिकं चिकित्सितमाह—फणिनामित्यादि । शोणितं हरेदिति सिरया प्रच्छनेन शृङ्गेण वा । अगदं दर्वीकरविषोदितम् । वान्तं चतुर्थ इत्यादि । वमनमिह सार्वकार्मिकादिभिरगदैः । पूर्वोक्तां यवागूमिति स्थावरविषविषये कृतवमनादिकर्मणां कोशातक्यादिद्रव्यैः कृतामन्नसंसर्जनार्थम् । एवं पञ्चमषष्ठयोः शोधने कृतेऽन्नसंसर्जनार्थं कीर्तितां यवागूम् । सप्तमे तु प्रत्याख्यायावपीडनादिकम् ॥२०-२३॥—

पूर्वे मण्डलिनां वेगे दर्वीकरवदाचरेत् ॥ २४ ॥
अगदं मधुसर्पिर्भ्यां द्वितीये पाययेत च ॥
वामयित्वा यवागूं च पूर्वोक्तामथ दापयेत् ॥ २५ ॥
तृतीये शोधितं तीक्ष्णैर्यवागूं पाययेद्धिताम् ॥
चतुर्थे पञ्चमे चापि दर्वीकरवदाचरेत् ॥ २६ ॥
काकोल्यादिर्हितः षष्ठे पेयश्च मधुरोऽगदः[3] ॥
हितोऽवपीडे त्वगदः सप्तमे विषनाशनः ॥ २७ ॥

१ 'विषप्रतिबन्धहेतुः' इति पा० । २ 'जिताहारेण' इति पा० ।

१ 'दापयेत्' इति पा० २ 'मांसकं' इति पा० । ३ 'मधुरो गणः' इति पा० ।

पूर्वे मण्डलिनामित्यादि । पूर्वे मण्डलिनां वेगे दर्वीकरवदित्यनेनातिदिष्टं शोणितमोक्षणं जलौकाभिः । अगदं मण्डलिविषोदितमेव । द्वितीये वामयित्वेति वमनद्रव्यक्वाथेन । शोधितं विरिक्तं, तीक्ष्णैः विरेचनद्रव्यैः । पेयश्चेत्यत्र चकारेण शोधनं तीक्ष्णमपि समुच्चीयते । मधुरोऽगद इति महागदादिषु योऽतीक्ष्णः स पेयः । सप्तमे वेगे प्रत्याख्याय विषप्रत्यनीकागदावपीडेनोपचरेत् ॥ २४-२७ ॥

**पूर्वे राजिमतां वेगेऽलाबुभिः शोणितं हरेत्॥**
**अगदं मधुसर्पिर्भ्यां संयुक्तं पाययेत च ॥ २८ ॥**
**वान्तं द्वितीये त्वगदं पाययेद्विषनाशनम् ॥**
**तृतीयादिषु त्रिष्वेवं विधिर्दार्वीकरो हितः ॥ २९ ॥**
**षष्ठेऽञ्जनं तीक्ष्णतममवपीडश्च सप्तमे ॥**

पूर्वे राजिमतामित्यादि । अवपीडोऽत्र सार्वकार्मिकागदेन । अवपीडश्चेति चकारेण नष्टसंज्ञविधानं वक्ष्यमाणं सूच्यते । ॥ २८ ॥ २९ ॥—

**गर्भिणीबालवृद्धानां सिराव्यधनवर्जितम् ॥ ३० ॥**
**विषार्तानां यथोद्दिष्टं विधानं शस्यते मृदु ॥**

चिकित्सितस्य क्वचिदेव कंचिद्विशेषमुद्दिशन्नाह—गर्भिणीत्यादि ॥ ३० ॥—

**रक्तावसेकाञ्जनानि नरतुल्यान्यजाविके ॥ ३१ ॥**
**त्रिगुणं महिषे सोष्ट्रे गवाश्वे द्विगुणं तु तत्॥**
**चतुर्गुणं तु नागानां,**

सप्तवेगप्रसङ्गेन पशुवेगविशेषस्योक्तत्वाचिकित्सिते मात्रायां विशेषमुद्दिशन्नाह—रक्तेत्यादि । रक्तावसेकस्य महती मात्रा प्रस्थप्रमाणा; प्रस्थश्चात्र सार्धत्रयोदशपलप्रमाणः ॥ ३१ ॥—

**केवलं सर्वपक्षिणाम् ॥ ३२ ॥**
**परिषेकान् प्रदेहांश्च सुशीतानवचारयेत् ॥**
**माषकं त्वञ्जनस्येष्टं द्विगुणं नस्यतो हितम् ॥**
**पाने चतुर्गुणं पथ्यं वमनेऽष्टगुणं पुनः ॥ ३३ ॥**

पक्षिणां चिकित्सितमुद्दिशन्नाह—केवलमित्यादि । परिषेकप्रदेहौ केवलं नरविषहरद्रव्येण कार्यौ, ननु रक्तावसेकाञ्जनानीत्यर्थः । अञ्जनादीनां प्रमाणमाह—माषकमित्यादि । इदमञ्जनादिप्रमाणं **गयदासजेज्जटा**भ्यामङ्गीकृतम् । वयं तु वृद्धवाग्भटोक्तसुश्रुतोक्तवाक्यदर्शनादञ्जनादिषु विषविषये महतीं मात्रां मन्यामहे । तथा च तयोर्वाक्यम् ,—"गुल्मोदावर्तवीसर्पसर्पदंशाभिपीडितैः । उन्मत्तैः कृच्छ्रमूत्रैश्च महती शीघ्रमेव सा"—इति; **सुश्रुते** च,—"अहोरात्रादसंदुष्टा या मात्रा परिजीर्यति । सा च कुष्ठविषोन्मादग्रहापस्मारनाशिनी"—इति; तन्त्रान्तरेऽपि—"विषजुष्टहता ये च कासश्वासहताश्च ये । तरुणा बलवन्तश्च वामयेदुत्तमेन तान्"—इति । एतदुद्देशेन कल्कादीनां महत्या मात्रयाऽत्र युक्तिरवसीयते । महत्या मात्रया च कल्कमोदकचूर्णानां पलं मात्राप्रमाणम् । तथा च,—कल्कमोदकचूर्णानां कर्ष(पल)मयाश्च लेहतः । कर्षद्वयं पलं वाऽपि वयोरोगाद्यपेक्षया"-इति । क्वाथस्य पलचतुष्टयं प्रमाणं; तथा च—"क्वाथद्रव्यपले वारि द्विरष्टगुणमिष्यते । चतुर्भागावशेषं तु पेयं पलचतुष्टयम्"—इति । वमनविषये क्वाथस्य नव प्रस्थाः प्रमाणं; तथा च, "नव प्रस्था तु ज्येष्ठा स्यान्मध्यमा षट् प्रकीर्तिता । निष्क्वाथस्य त्रयः प्रस्था मागधास्तु कनीयसी"—इति । वमनविषये कल्कस्य पलत्रयं प्रमाणम् । तथा च,—"त्रिपलं ज्येष्ठमाख्यातं कनीयस्तु पलं भवेत् । मध्यमं द्वे पले विद्यादिति मे निश्चिता मतिः"—इति । नस्याञ्जनयोश्च मात्रा नस्याञ्जनविधावेव या महती प्रतिपादितेति ॥ ३२ ॥ ३३ ॥

**देशप्रकृतिसात्म्यर्तुविषवेगबलाबलम् ॥**
**प्रधार्य निपुणं बुद्ध्या ततः कर्म समाचरेत् ॥ ३४ ॥**

देशेत्यादि । देशो भूमिः आतुरश्च; तत्र भूदेशः अश्वत्थदेवतायतनश्मशानादिकः, आतुरशरीरे च मर्मदेशः; प्रकृतिः कायिकी मानसी च; तत्र कायिकी वातादिकृता, मानसी च सत्त्वादिजा । प्रधार्य आलोच्य, बुद्ध्या निपुणं यथा भवत्येवं कर्म समाचरेत् ॥ ३४ ॥

**वेगानुपूर्व्या कर्मोक्तमिदं विषविनाशनम् ॥**
**कर्मावस्थाविशेषेण विषयोरुभयोः शृणु ॥ ३५ ॥**

वेगानुपूर्व्येत्यादि । वेगानुपूर्व्या वेगानामनुक्रमेणेत्यर्थः । उभयोः स्थावरजङ्गमयोः ॥ ३५ ॥

**विवर्णे कठिने शूने सरुजेऽङ्गे विषान्विते ॥**
**तूर्णं विस्रवणं कार्यमुक्तेन विधिना ततः ॥ ३६ ॥**

विवर्णे इत्यादि । तूर्णं त्वरितम् । विस्रावणं रक्तमोक्षणम् ३६

**क्षुधार्तमनिलप्रायं तद्विषार्तं समाहितः ॥**
**पाययेत रसं सर्पिः शुक्तं क्षौद्रं तथा दधि ॥ ३७ ॥**

क्षुधार्तमित्यादि । तद्विषार्तमिति वाताधिकविषवेदनार्तम् । अत्र मांसरसादिपानं विषवेगप्राप्तौ सत्यां सुखेन वमनार्थम् ॥ ३७॥

**तृड्दाहघर्मसंमोहे पैत्तं पैत्तविषातुरम् ॥**
**शीतैः संवाहनस्नानप्रदेहैः समुपाचरेत् ॥ ३८ ॥**

तृड्दाहेत्यादि । घर्मे इत्युष्णकाले, संमोहे मूर्च्छायाम् । पैत्तं पित्तप्रकृतिम् । पैत्तं पित्तजनकं विषम् । संवाहनं सुखकरः स्पर्शः । प्रदेहः प्रलेपः ॥ ३८ ॥

**शीते शीतप्रसेकार्तं श्लैष्मिकं कफकृद्विषम् ॥**
**वामयेद्वमनैस्तीक्ष्णैस्तथा मूर्च्छामदान्वितम् ॥ ३९ ॥**

१ 'अथ राजिमतां वेगे प्रथमे शोणितं हरेत्' इति पा० । २ 'गवाश्वयोश्च द्विगुणं त्रिगुणं महिषोष्ट्रयोः' इति पा० ।

१ 'वेगानुपूर्वमित्येतद् कर्मोक्तं विषनाशनम्' इति पा० । २ 'विषादिते' इति पा० । ३ 'तद्विषार्तिसमन्वितम्' इति पा० । ४ 'तक्रं' इति पा० । 'पाययेद्दधि तक्रं वा सर्पिः क्षौद्रं तथा रसम्' इति पा० । ५ 'तद्विषार्तिरिति वाताधिकविषवेदना' इति पा० । ६ 'पैत्ते विषातुरम्' इति पा० ।

कफविषातुरस्य चिकित्सामाह—शीते इत्यादि । शीते शीतकाले । श्लैष्मिकं पुरुषम् ॥ ३९ ॥

**कोष्ठदाहरुजाध्मानमूत्रसङ्गरुगन्वितम् ॥**
**विरेचयेच्छकृद्वायुसङ्गपित्तातुरं नरम् ॥ ४० ॥**

आमाशयगतस्य कफस्य वमनमुद्दिश्य पच्यमानपक्वाशयगतयोः पित्तवातयोर्विरेचनशब्देन विरेकबस्ती निर्दिशन्नाह—कोष्ठेत्यादि । कोष्ठदाहादौ तु विरेचनशब्दो विरेचन एव वर्तते ॥ ४० ॥

**शूनाक्षिकूटं निद्रार्तं विवर्णाविललोचनम् ॥**
**विवर्णं चापि पश्यन्तमञ्जनैः समुपाचरेत् ॥ ४१ ॥**

शूनाक्षिकूटमित्यादि । अक्षिकूटो भ्रुवोरधोभागः । आविलं दूषिकास्राभ्यां मलिनं, विवर्णं विविधवर्णम् ॥ ४१ ॥

**शिरोरुग्गौरवालस्यहनुस्तम्भगलग्रहे ॥**
**शिरो विरेचयेत् क्षिप्रं मन्यास्तम्भे च दारुणे ॥४२॥**
**नष्टसंज्ञं विवृत्ताक्षं भग्नग्रीवं विरेचनैः ॥**
**चूर्णैः[1] प्रधमनैस्तीक्ष्णैर्विषार्तं समुपाचरेत् ॥ ४३ ॥**
**ताडयेच्च सिराः क्षिप्रं तस्य शाखाललाटजाः ॥**
**तास्वप्रसिच्यमानासु मूर्ध्नि शस्त्रेण शस्त्रवित् ॥४४॥**
**कुर्यात् काकपदाकारं व्रणमेवं स्रवन्ति ताः ॥**
**सरक्तं चर्म मांसं वा निक्षिपेच्चास्य मूर्धनि ॥ ४५ ॥**
**चर्मवृक्षकषायं वा कल्कं वा कुशलो भिषक् ॥**
**वादयेच्चागदैर्लिप्त्वा दुन्दुभींस्तस्य पार्श्वयोः ॥ ४६ ॥**
**लब्धसंज्ञं पुनश्चैनमूर्ध्वं चाधश्च शोधयेत् ॥**
**निःशेषं निर्हरेच्चैवं विषं परमदुर्जयम् ॥ ४७ ॥**
**अल्पमप्यवशिष्टं हि भूयो वेगाय कल्पते ॥**
**कुर्याद्वा सादवैवर्ण्यज्वरकासशिरोरुजः ॥ ४८ ॥**
**शोफशोषप्रतिश्यायतिमिरारुचिपीनसान् ॥**
**तेषु चापि यथादोषं प्रतिकर्म प्रयोजयेत् ॥ ४९ ॥**
**विषार्तोपद्रवांश्चापि यथास्वं समुपाचरेत् ॥**

नष्टसंज्ञमित्यादि । विवृताक्षं व्यावर्तितनेत्रम् । सरक्तमिति । सरक्तं हि मांसादिकं शिरसि निक्षिप्तं विषसंक्रामणं भवति । चर्मवृक्षः पूर्वदेशे नौवृक्षः । कषायोऽत्र निर्यासः । असावपि प्रयोगो विषसंक्रमणहेतुः । दुन्दुभीन् निःस्वानान् । एवं च परमदुर्जयं विषं निर्हरेत्; कुत इत्याह—अल्पमित्यादि । भूयः पुनरपि वेगाय कल्पते वेगार्थं भवति । सादः अङ्गग्लानिः । प्रतिश्यायस्थाने जेज्जटाचार्यः स्तैमित्यं पठति, अत्र स्तैमित्यं निश्चलता ॥ ४२–४९ ॥—

**अथारिष्टां विमुच्याशु[2] प्रच्छयित्वाऽङ्कितं तया[3] ॥५०॥**
**दद्यात्तत्र विषं स्कन्नं भूयो वेगाय कल्पते ॥**

अरिष्टास्थापनबन्धनविषदूषितशोणितस्य चिकित्सां दूष्यविषप्रत्यनीकामुद्दिशन्नाह—अथारिष्टामित्यादि । अथ अनन्तरम् । तया अङ्कितं देशं प्रच्छयित्वा दद्यात् 'अगदैः' इति शेषः; अन्यथा तत्र विषं स्कन्नं स्त्यानीभूतं भूयो वेगाय कल्पते पुनर्वेगार्थं प्रादुर्भवतीत्यर्थः ॥ ५० ॥—

**एवमौषधिभिर्मन्त्रैः क्रियायोगैश्च यत्नतः ॥ ५१ ॥**
**विषे हृतगुणे देहाद्यदा दोषः प्रकुप्यति ॥**
**तदा पवनमुद्वृत्तं स्नेहाद्यैः समुपाचरेत् ॥ ५२ ॥**
**तैलमत्स्यकुलत्थाम्लवर्ज्यैर्विषहरायुतैः[1] ॥**
**पित्तज्वरहरैः पित्तं कषायस्नेहबस्तिभिः ॥ ५३ ॥**
**कफमारग्वधाद्येन सक्षौद्रेण गणेन तु ॥**
**श्लेष्मघ्नैरगदैश्चैव तिक्तै रूक्षैश्च भोजनैः ॥ ५४ ॥**

एवमित्यादि । औषधिभिः महागदादिनिर्दिष्टाभिः, मन्त्रैः कुरुकुल्लादिनिर्दिष्टैः, क्रियायोगैः दूष्यभूतशोणितहरबहिःपरिमार्जनसेचनालेपनादिभिः; तथैवान्तःपरिमार्जनैर्वमनविरेचनास्थापनशिरोविरेचनाख्यैः । विषे हृतगुणे अपहृतविषादजननतीक्ष्णादिगुणे । दोषः अनिलादिः । उद्वृत्तम् उच्चलितं परस्थानमिति यावत् । स्नेहाद्यैरिति आद्यशब्दान्मृदुसंशोधनस्वादुभोजनाङ्गविमर्दनादिभिः । पित्तज्वरहरैरित्यादि समुपाचरेदित्यनुवर्तते । कफमारग्वधाद्येनेत्यादि ॥ ५१–५४ ॥

**वृक्षप्रपातविषमपतितं मृतमम्भसि ॥**
**उद्बद्धं च मृतं सद्यश्चिकित्सेन्नष्टसंज्ञवत् ॥ ५५ ॥**

वृक्षेत्यादि । प्रपातो नदीतटादिः, विषमो निम्नोन्नतप्रदेशः, वृक्षादिपतितं प्राणिनं; मृतमम्भसि अम्भसि मृतं, उद्बद्धमुल्लम्बितं च मृतं, सद्यो झटिति, नष्टसंज्ञवच्चिकित्सेत् । तत्र मृतशब्दो मृत्युसमीपे वर्तमानो गृह्यते; न पुनर्मृत एव, तस्य निष्फलचिकित्सितत्वात् । केचिदाचार्या अमुं पाठं न मन्यन्ते, ये तु मन्यन्ते तन्मतानुसारेण लिखितोऽयमित्यदोषः ॥ ५५ ॥

**गाढं बद्धेऽरिष्टया प्रच्छिते वा**
**तीक्ष्णैर्लेपैस्तद्विधैर्वाऽवशिष्टैः[2] ॥**
**शूने गात्रे क्लिन्नमत्यर्थपूति**
**ज्ञेयं मांसं तद्विषात् पूति कष्टम्[3] ॥ ५६ ॥**

गाढमित्यादि । गाढमरिष्टया बद्धे, अथवा प्रच्छिते, तीक्ष्णैर्लेपैस्तद्विधैः शरीरवर्तिभिः, अवशिष्टैः अनुद्धृतैः, ज्ञेयं ज्ञातव्यं, तैन्मांसं, विषात् पूति पूतिसंज्ञकं, कष्टं कृच्छ्रसाध्यम् ॥ ५६ ॥

**सद्यो विद्धं निस्रवेत् कृष्णरक्तं**
**पाकं यायाद्दह्यते चाप्यभीक्ष्णम् ॥**
**कृष्णीभूतं क्लिन्नमत्यर्थपूति**
**शीर्णं मांसं यात्यजस्रं क्षताच्च ॥ ५७ ॥**
**तृष्णा मूर्च्छा भ्रान्तिदाहौ ज्वरश्च**
**यस्य स्युस्तं दिग्धविद्धं व्यवस्येत् ॥**

१ 'चूर्णं' इति पा० । २ 'विमुच्याप्सु' इति पा० । ३ 'तथा' इति पा० ।

१ 'मारुतनाशनैः' इति पा० । २ 'विशेषैः' इति पा० । ३ 'तन्मांसं विषपूतिसंज्ञकं' इति पा० ।

सद्यो विद्धमित्यादि । अभीक्ष्णं पुनःपुनः, क्लिन्नम् आर्द्रीभूतं, अत्यर्थं पूति अतिशयेन दुर्गन्धं, शीर्णं शटितम्, अजस्रम् अनवरतं, भ्रान्तिः वस्तूनामन्यथा प्रतीतिः, स्युः भवेयुः, दिग्धविद्धं विषलिप्तबाणताडितं, व्यवस्येत् जानीयात् ॥५७॥—

पूर्वोद्दिष्टं लक्षणं सर्वमेत-
ज्जुष्टं यस्यालं विषेण व्रणाः स्युः ॥ ५८ ॥
लूतादष्टा दिग्धविद्धा विषैर्वा
जुष्टा प्रायस्ते व्रणाः पूतिमांसाः[1] ॥

पूर्वोद्दिष्टमित्यादि । यस्य प्राणिनोऽलमत्यर्थं शत्रूणामवचारितेन विषेण जुष्टा व्रणाः स्युर्भवेयुः, तस्य एतत् सर्वं पूर्वोद्दिष्टं लक्षणं भवति; कुत इत्याह—लूतादष्टा इत्यादि । ये व्रणा लूतादष्टदिग्धविद्धादयस्ते प्रायः पूतिमांसा भवन्तीत्यर्थः ॥५८॥—

तेषां युक्त्या पूतिमांसान्यपोह्य
वार्यौकोभिः शोणितं चापहृत्य ॥ ५९ ॥
हृत्वा दोषान् क्षिप्रमूर्ध्वं त्वधश्च
सम्यक् सिञ्चेत् क्षीरिणां त्वक्कषायैः ॥
अन्तर्वस्त्रं दापयेच्च प्रदेहान्
शीतैर्द्रव्यैराज्ययुक्तैर्विषघ्नैः ॥ ६० ॥

एषां पूर्वोक्तानां चिकित्सामाह—तेषामित्यादि । वार्यौकोभिः जलौकोभिरित्यर्थः । क्षीरिणां न्यग्रोधोदुम्बराश्वत्थप्लक्षगर्दभाण्डानाम् । शीतैरित्यादि । शीतवीर्यस्पर्शैर्विषघ्नैः पित्तविसर्पोक्तैरित्यर्थः । आज्यमिश्रैः शतधौतघृतयुक्तैः ॥ ५९ ॥ ६० ॥

भिन्ने त्वस्थ्ना दुष्टजातेन कार्यः
पूर्वो मार्गः पैत्तिके यो विषे च ॥

भिन्ने इत्यादि । दुष्टजातेन दुष्टजीवसंभूतेन अस्थिविषाणामस्थ्नेत्यर्थः । अस्थ्ना दुष्टजातेनेत्युपलक्षणं, तेन तत्सदृशशकृन्मूत्रशुकस्पर्शपर्दनगुदास्थिशूकशवैः सविषकण्टकैर्वृश्चिककण्टकैश्च कृते व्रणे । पूर्वो मार्गः अनन्तरोक्तः 'तेषां युक्त्या पूतिमांसान्यपोह्य' इत्यादिकः; न परं दुष्टास्थ्यादिभिर्भिन्ने व्रणे पूर्वो मार्गः अनन्तरोक्तोऽपि यो व्रणस्तस्मिन्नपि पूर्वो मार्गः कार्यः ॥—

त्रिवृद्विशल्ये मधुकं हरिद्रे
रक्ता नरेन्द्रो लवणश्च वर्गः ॥ ६१ ॥
कटुत्रिकं चैव सुचूर्णितानि
शृङ्गे निदध्यान्मधुसंयुतानि ॥
एषोऽगदो हन्ति विषं प्रयुक्तः
पानाञ्जनाभ्यञ्जननस्ययोगैः ॥ ६२ ॥
अवार्यवीर्यो विषवेगहन्ता[2]
महागदो नाम महाप्रभावः ॥

इदानीमगदकोशमाह—त्रिवृद्विशल्येत्यादि । विशल्या काष्ठपाटला, रक्ता मञ्जिष्ठा, नरेन्द्रः किरमालकः । अवार्यवीर्यः अप्रतिहतवीर्यः ॥ ६१ ॥ ६२ ॥—

विडङ्गपाठात्रिफलाजमोदा-
हिङ्गूनि वक्रं त्रिकटूनि चैव ॥ ६३ ॥
सर्वश्च वर्गो लवणः सुसूक्ष्मः
सचित्रकः क्षौद्रयुतो निधेयः ॥
शृङ्गे गवां शृङ्गमयेन चैव
प्रच्छादितः पक्षमुपेक्षितश्च ॥ ६४ ॥
एषोऽगदः स्थावरजङ्गमानां
जेता विषाणामजितो हि नाम्ना ॥

विडङ्गपाठेत्यादि । वक्रं तगरम् ॥ ६३ ॥ ६४ ॥—

प्रपौण्डरीकं सुरदारु मुस्ता
कालानुसार्या कटुरोहिणी च ॥ ६५ ॥
स्थौणेयकध्यामकगुग्गुलूनि
पुन्नागतालीशसुवर्चिकाश्च[1] ॥
कुटन्नटैलासितसिन्धुवाराः
शैलेयकुष्ठे तगरं प्रियङ्गुः ॥ ६६ ॥
रोध्रं जलं काञ्चनगैरिकं च
समागधं चन्दनसैन्धवं च ॥
सूक्ष्माणि चूर्णानि समानि कृत्वा
शृङ्गे निदध्यान्मधुसंयुतानि ॥ ६७ ॥
एषोऽगदस्तार्क्ष्य इति प्रदिष्टो
विषं निहन्यादपि तक्षकस्य ॥

प्रपौण्डरीकमित्यादि । कालानुसार्या कालानुसारिवा । ध्यामकं कत्तृणं, कुटन्नटः श्योनाकः, सितसिन्धुवारः श्वेतनिर्गुण्डी ॥ ६५–६७ ॥—

मांसीहरेणुत्रिफलामुरङ्गी-
रक्तालतायष्टिकपद्मकानि ॥ ६८ ॥
विडङ्गतालीशसुगन्धिकैला-
त्वक्कुष्ठपत्राणि सचन्दनानि ॥
भार्गी पटोलं किणिही सपाठा
मृगादनी कर्कटिका पुरश्च ॥ ६९ ॥
पालिन्द्यशोकौ क्रमुकं सुरस्याः
प्रसूनमारुष्करजं च पुष्पम् ॥
सूक्ष्माणि चूर्णानि समानि शृङ्गे
न्यसेत् सपित्तानि समाक्षिकाणि[3] ॥ ७० ॥
वराहगोधाशिखिशल्लकीनां[4]
मार्जारजं पार्षतनाकुले च ॥
यस्यागदोऽयं सुकृतो गृहे स्या-
न्नाम्नर्षभो नाम नरर्षभस्य ॥ ७१ ॥

१ 'जुष्टा ये स्युर्वै व्रणाः पूतिमांसाः' इति पा० । २ 'विषवेगहारी' इति पा० ।

१ 'हन्ता' इति पा० । २ 'स्थौणेयकध्यामकपद्मकानि' इति पा० । ३ 'चूर्णान्यथैषां निहितानि शृङ्गे न्यसेच्च पित्तानि समाक्षिकाणि' इति पा० । ४ 'वराहगोधाशिखिशल्यकानां' इति पा० ।

न तत्र सर्पाः कुत एव कीटा-
स्त्यजन्ति वीर्याणि विषाणि चैव ॥
एतेन भेर्यः पटहाश्च दिग्धा
नानद्यमाना विषमाशु हन्युः ॥ ७२ ॥
दिग्धाः पताकाश्च निरीक्ष्य सद्यो
विषाभिभूता ह्यविषा भवन्ति ॥

मांसीत्यादि। सुरङ्गी शोभाञ्जनकः, रक्ता लता मञ्जिष्ठा, सुगन्धिका सर्पगन्धिका, किणिही कटभी, मृगादनी कर्कटिका, इन्द्रवारुणीफलमित्यन्ये, पुरः गुग्गुलुः, पालिन्दी त्रिवृत्, कालवल्लीत्यपरे, क्रमुकं पूगफलं, स्तुकमित्यन्ये पठन्ति स चैरण्डः, सुरसाः प्रसूनं तुलसीपुष्पं, शिखी मयूरः, कुक्कुट इत्यन्ये, पृषतानामिदं पार्षतं, पृषतः चित्तलः। यस्य नरर्षभस्य नराधिपस्य, गृहेऽयमगदो नाम्ना संज्ञया, ऋषभो नाम ऋषभ इति प्रसिद्धः, सुकृतः स्यात् शोभनो निष्पादितो भवेत् ॥ ६८-७२ ॥—

लाक्षा हरेणुर्नलदं प्रियङ्गुः
शिग्रुद्वयं यष्टिकपृथ्विकाश्च ॥ ७३ ॥
चूर्णीकृतोऽयं रजनीविमिश्रो
सर्पिर्मधुभ्यां सहितो निधेयः।
शृङ्गे गवां पूर्ववदापिधान-
स्ततः प्रयोज्योऽञ्जननस्यपानैः ॥ ७४ ॥
संजीवनो नाम गतासुकल्पा-
नेषोऽगदो जीवयतीह मर्त्यान् ॥

लाक्षेत्यादि। पृथ्विका एला, हिङ्गुपत्रिकेत्यन्ये। पूर्ववदापिधानः गोशृङ्गिकापिधानः ॥ ७३ ॥ ७४ ॥—

श्लेष्मातकीकट्फलमातुलुङ्ग्यः
श्वेता गिरिह्वा किणिही सिता च ॥ ७५ ॥
सतण्डुलीयोऽगद एष मुख्यो
विषेषु दर्वीकरराजिलानाम् ॥

श्लेष्मातकीत्यादि। श्लेष्मातकी 'बहुवारः' इति लोके, कट्फलं काश्मरी, मातुलुङ्गो बीजपूरकः, श्वेता गिरिह्वा श्वेतस्यन्दा, किणिही नीलस्यन्दा, सिता शर्करा। अयं दर्वीकरराजिलविषदष्टागदः ॥ ७५ ॥—

द्राक्षा सुगन्धा नगवृत्तिका च
श्वेता समङ्गा समभागयुक्ता ॥ ७६ ॥
देयो द्विभागः सुरसाच्छदस्य
कपित्थबिल्वादपि दाडिमाच्च ॥
तथाऽर्धभागः सितसिन्धुवारा-
दङ्कोठमूलादपि गैरिकाच्च ॥ ७७ ॥
एषोऽगदः क्षौद्रयुतो निहन्ति
विशेषतो मण्डलिनां विषाणि ॥

द्राक्षेत्यादि। सुगन्धा सर्पसुगन्धा नाकुलीति यावत्, नगवृत्तिका शल्लकी, श्वेता श्वेतस्यन्दः। देयो द्विभाग इत्यादि। अर्धभागः अर्धपलं सिन्धुवारादिभ्यः। केचित्तु सुगन्धा नगमृत्तिकेति पठन्ति, तत्रायमर्थः—शोभनगन्धवती पर्वतस्य मृत्तिका, पर्वतमृत्तिकायाः सामान्यतो विषहरत्वात्। सामान्येन सर्वत्र विषहरोऽयमगदः, विशेषतो मण्डलिविषहरो भवति। अयं तु मण्डलिविषहरो नामागदः ॥ ७६ ॥ ७७ ॥—

वंशत्वगार्द्राऽऽमलकं कपित्थं
कटुत्रिकं हैमवती सकुष्ठा ॥ ७८ ॥
करञ्जबीजं तगरं शिरीष-
पुष्पं च गोपित्तयुतं निहन्ति ॥
विषाणि लूतोन्दुरपन्नगानां
कैटं च लेपाञ्जननस्यपानैः ॥ ७९ ॥
पुरीषमूत्रानिलगर्भसङ्गा-
न्निहन्ति वर्त्यञ्जननाभिलेपैः ॥
काचार्मकोथान् पटलांश्च घोरान्
पुष्पं च हन्त्यञ्जननस्ययोगैः ॥ ८० ॥

वंशत्वगार्द्रेत्यादि। वंशत्वगार्द्रा आर्द्रवंशस्य त्वक्, हैमवती वचा। कोथः पूतिभावः क्लिन्नवर्त्मादिषु। अयं तु सार्वकार्मिकोऽगदः ॥ ७८-८० ॥

समूलपुष्पाङ्कुरवल्कबीजात्
क्वाथः शिरीषात् त्रिकटुप्रगाढः ॥
सलावणः क्षौद्रयुतोऽथ पीतो
विशेषतः कीटविषं निहन्ति ॥ ८१ ॥

समूलपुष्पाङ्कुरेत्यादि। अङ्कुरो नवपत्राङ्कुरः, प्रवाल इत्यर्थः। सह लावणेन लवणसमूहेन वर्तते इति सलावणः। केचिदीदृशं पठन्ति—'त्वक्पत्रपुष्पाणि फलं समूलं पिष्ट्वा शिरीषस्य कटुत्रिकं च। सलावणं क्षौद्रयुतं विलीढं विशेषतः कीटविषं निहन्ति'। अयमगदः पञ्चशिरीषनामा ॥ ८१ ॥

कुष्ठं त्रिकटुकं दार्वी मधुकं लवणद्वयम्।
मालती नागपुष्पं च सर्वाणि मधुराणि च ॥ ८२ ॥
कपित्थरसपिष्टोऽयं शर्कराक्षौद्रसंयुतः ॥
विषं हन्त्यगदः सर्वं मूषिकाणां विशेषतः ॥ ८३ ॥

कुष्ठं त्रिकटुकमित्यादि। लवणद्वयं सैन्धवं सौवर्चलं च। मालती जाती, नागपुष्पं नागकेशरं, सर्वाणि मधुराणि काकोल्यादीनि। अयमपि सार्वकार्मिकनामाऽगदः ॥ ८२ ॥ ८३ ॥

सोमराजीफलं पुष्पं कटभी सिन्धुवारकः ॥
चोरको वरुणः कुष्ठं सर्पगन्धा ससप्तला ॥ ८४ ॥
पुनर्नवा शिरीषस्य पुष्पमारग्वधार्कजम् ॥
श्यामाऽम्बष्ठा विडङ्गानि तथाऽम्राश्मन्तकानि च८५

१ 'वर्गो विधेयो मधुसर्पिषाऽऽक्तः' इति पा०। २ 'श्वेता च पिष्टा पलिकैश्च भागैः' इति पा०। ३ 'तथाऽर्धभागोऽसितसिन्धुवाराद्' इति पा०।

१ 'सोमराजीफलं मुख्यं कदली सिन्धुवारकः' इति पा०।

भूमी कुरवकश्चैव गण एकसरः स्मृतः ॥
एकशो द्विस्त्रिशो वाऽपि प्रयोक्तव्यो विषापहः॥८६॥

इति सुश्रुतसंहितायां कल्पस्थाने सर्पदष्टविषचिकित्सितं नाम पञ्चमोऽध्यायः ॥ ५ ॥

सोमराजीफलमित्यादि । सोमराजी बाकुची, सिन्धुवारः श्वेतपुष्पा निर्गुण्डी, चोरको ग्रन्थिपर्णानुकारी, सर्पगन्धा नाकुली, सप्तला यवतिक्ताभेदः, श्यामा श्यामलता, प्रियङ्गुरित्यन्ये, अम्बष्ठा पाठा, अश्मन्तको वृक्षोऽम्लोटकानुसारी, भूमिः कृष्णमृत्तिका, कुरबकः स्निग्धपत्रः सितकुसुमः स्वनामप्रसिद्धः । गण एकसरः स्मृत इति अयमौषधगण एकसरः एकसरसंज्ञकः स्मृतः । एकशो द्विस्त्रिशो वाऽपि प्रयोक्तव्यो विषापह इति स चौषधगण एकैकशः एकमेकं द्वौ द्वौ त्रीन् त्रीन् वा प्रयोक्तव्यः, प्रयुक्तश्च विषापहो भवति ॥ ८४–८६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां कल्पस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातो दुन्दुभिस्वनीयं कल्पं व्याख्यास्यामः ॥१॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि । दुन्दुभिस्वनोऽस्मिन्नध्यायेऽस्तीति दुन्दुभिस्वनीयस्तं; दुन्दुभिरत्र निस्वानः ॥ १ ॥ २ ॥

धवाश्वकर्णशिरीषतिनिशपलाशपिचुमर्दपाटलिपारिभद्रकाम्रोदुम्बरकरहाटकार्जुनककुभसर्जकपीतनश्लेष्मातकाङ्कोठामलकप्रग्रहकुटजशमीकपित्थाश्मन्तकार्कचिरविल्वमहावृक्षारुष्करारलुमधुकमधुशिग्रुशाकगोजीमूर्वाभूर्जतिल्वकेक्षुरकगोपघोण्टारिमेदानां भस्मान्याहृत्य गवां मूत्रेण क्षारकल्पेन परिस्राव्य विपचेत्, दद्याच्चात्र पिप्पलीमूलतण्डुलीयकवराङ्गचोचमञ्जिष्ठाकरञ्जिकाहस्तिपिप्पलीमरिचविडङ्गगृहधूमानन्तासोमसरलाबाह्लीकगुहाकोशाम्रश्वेतसर्षपवरुणलवणप्लक्षनिचुलकवञ्जुलवक्रालवर्धमानपुत्रश्रेणीसप्तपर्णटुण्टुकैलवालुकनागदन्त्यतिविषाभयाभद्रदारुकुष्ठहरिद्रावचाचूर्णानि लोहानां च समभागानि, ततः क्षारवदागतपाकमवतार्य लोहकुम्भे निदध्यात् ॥ ३ ॥

अनेन दुन्दुभिं लिम्पेत् पताकां तोरणानि च ॥
श्रवणाद्दर्शनात् स्पर्शात् विषात् संप्रतिमुच्यते ॥४॥
एष क्षारागदो नाम शर्कराश्वश्मरीषु च ॥
अर्शःसु वातगुल्मेषु कासशूलोदरेषु च ॥ ५ ॥

१ 'अध्यायं' इति पा० । २ 'विषं तेषां प्रशाम्यति' इति पा० । ३ 'अर्शःसु वातशूले च शूलगुल्मोदरेषु च' इति पा० ।

अजीर्णे ग्रहणीदोषे भक्तद्वेषे च दारुणे ॥
शोफे सर्वसरे चापि देयः श्वासे च दारुणे ॥ ६ ॥
सदा सर्वविषार्तानां सर्वथैवोपयुज्यते ॥
एष तक्षकमुख्यानामपि दर्पाङ्कुशोऽगदः ॥ ७ ॥

धवाश्वकर्णतिनिशेत्यादि । अश्वकर्णः पूर्वदेशे प्रसिद्धः, तिनिशः स्यन्दनः, पलाशः किंशुकः, पिचुमर्दो निम्बः, पारिभद्रको रक्तकुसुमः कण्टकी फलभद्राख्यः, अर्जुनः स्वनामप्रसिद्धो वृक्षविशेषः, ककुभः सुगन्धमूलो विटपविशेषः, सर्जकः स्वनामप्रसिद्धो वृक्षविशेषः, कपीतनो गर्दभाण्डः, श्लेष्मातको बहुवारः, प्रग्रहः किरमालकः, महावृक्षः सेहुण्डः, अरुष्करो भल्लातकः, मधुकं यष्टीमधु, मधुशिग्रुः शाकविटपः, रक्तशोभाञ्जनक इत्यपरे, शाको महापत्रः 'श्रीपर्ण' इति लोके, गोजी गोजिह्वा, इक्षुरकः कोकिलाक्षकः, गोपघोण्टा कर्कोटी, अरिमेदो रामकः; एषां धवादीनामरिमेदान्तानां समूलदलकाण्डशाखानां समेन भागेन गृहीतानां भस्मान्याहृत्य गवां मूत्रेण क्षारषड्गुणेन क्षारकल्पेन परिस्राव्य एकविंशतिवारान् गालयित्वेत्यर्थः, विपचेत् साधयेत्, तावद्यावदच्छो रक्तः पिच्छिलश्च भवति । दद्याच्चात्रेत्यादि । मूलं पिप्पलीमूलं, वराङ्गं वनवासिकात्वक्, चोचं द्वितीया स्थूला त्वक् यां शाल्मलकमित्याचक्षते, करञ्जिका नक्तमालः, अनन्ता उत्पलसारिवा, सोमः सोमवल्कः कट्फलाख्यः, बाह्लीकं कुङ्कुमं, गुहा शालपर्णी, प्लक्षः पर्कटी, निचुलको जलवेतसः, वक्रं तगरं, आलं हरितालं, वर्धमान एरण्डः, पुत्रश्रेणी द्रवन्ती, टुण्टुकः श्योनाकः, एलवालुकः स्वनामप्रसिद्धः, नागदन्ती इन्द्रवारुणीभेदः, जेज्झटाचार्यमते तु दन्ती; एषां पिप्पल्यादीनां चूर्णानि लोहानां च सर्वेषां यथालाभं क्षारोदकात् त्रिंशत्तमभागेन, अत्र अस्मिन् क्षारोदके, दद्यात् निक्षिपेदित्यर्थः । तदनु पुनर्विपचेद् यावन्नातिद्रवं नातिसान्द्रं च भवति । गयदासस्तु शिरीषपिचुमर्दककुभारुष्करमधुकेक्षुरकान् परित्यज्य त्रिंशदेव पठति; पिप्पल्यादिष्वावापेषु च मरिचसोमगुहालवणवक्रालान् परित्यज्य त्रिंशद्द्रव्याणि पठति ॥ ३–७ ॥

विडङ्गत्रिफलादन्तीभद्रदारुहरेणवः ।
तालीशपत्रमञ्जिष्ठाकेशरोत्पलपद्मकम् ॥ ८ ॥
दाडिमं मालतीपुष्पं रजन्यौ सारिवे स्थिरे ॥
प्रियङ्गुस्तगरं कुष्ठं बृहत्यौ चैलवालुकम् ॥
सचन्दनगवाक्षीभिरेतैः सिद्धं विषापहम् ॥
सर्पिः कल्याणकं ह्येतद्ग्रहापस्मारनाशनम् ॥ १० ॥
पाण्ड्वामयगरश्वासमन्दाग्निज्वरकासनुत् ॥
शोषिणामल्पशुक्राणां वन्ध्यानां च प्रशस्यते ॥ ११ ॥

विडङ्गत्रिफलेत्यादि । इदं कल्याणकं घृतं भूतविद्यायां पठितत्वात् केचिन्न पठन्ति ॥ ८–११ ॥

अपामार्गस्य बीजानि शिरीषस्य च माषकान् ॥
श्वेते द्वे काकमाच्यौ च गवां मूत्रेण पेषयेत् ॥ १२ ॥

१ 'शोफे सर्वसरे तथा' इति पा० । २ 'अरुचिश्वासकासेषु हिक्कापाण्डुगदेषु च' इति पा० ।

**सर्पिरेतैस्तु संसिद्धं विषसंशमनं परम् ॥**
**अमृतं नाम विख्यातमपि संजीवयेन्मृतम् ॥ १३ ॥**

अपामार्गेत्यादि । शिरीषस्य च माषकानिति माषका इव माषकाः तान्, बीजानीत्यर्थः । श्वेते द्वे इति श्वेता महाश्वेता च कटभीद्वयमित्यर्थः; अन्ये तु श्वेते द्वे श्वेतस्यन्दः श्वेतवचेति भाषन्ते । अत्र श्रुतत्वाद् घृताद् गोमूत्रं चतुर्गुणं देयम् ॥ १२ ॥ १३ ॥

**चन्दनागुरुणी कुष्ठं तगरं तिलपर्णिकम् ॥**
**प्रपौण्डरीकं नलदं सरलं देवदारु च ॥ १४ ॥**
**भद्रश्रियं यवफलां भार्गीं नीलीं सुगन्धिकाम् ॥**
**कालेयकं पद्मकं च मधुकं नागरं जटाम् ॥ १५ ॥**
**पुन्नागैलैलवालूनि गैरिकं ध्यामकं बलाम् ॥**
**तोयं सर्जरसं मांसीं शतपुष्पां हरेणुकाम् ॥ १६ ॥**
**तालीशपत्रं क्षुद्रैलां प्रियङ्गुं सकुटन्नटम् ॥**
**शिलापुष्पं सशैलेयं पत्रं कालानुसारिवाम् ॥ १७ ॥**
**कैडर्यं त्रिकं शीतशिवं काश्मर्यं कटुरोहिणीम् ॥**
**सोमराजीमतिविषां पृथ्विकामिन्द्रवारुणीम् ॥१८॥**
**उशीरं वरुणं मुस्तं कुस्तुम्बुरु नखं तथा ॥**
**श्वेते हरिद्रे स्थौणेयं लाक्षां च लवणानि च ॥ १९ ॥**
**कुमुदोत्पलपद्मानि पुष्पं चापि तथाऽर्कजम् ॥**
**चम्पकाशोकसुमनस्तिल्वकप्रसवानि च ॥ २० ॥**
**पाटलीशाल्मलीशैलुशिरीषाणां तथैव च ॥**
**कुसुमं तृणमूल्याश्च सुरभीसिन्धुवारजम् ॥ २१ ॥**
**धवाश्वकर्णपार्थानां पुष्पाणि तिनिशस्य च ॥**
**गुग्गुलुं कुङ्कुमं बिम्बीं सर्पाक्षीं गन्धनाकुलीम् ॥२२॥**
**एतत् संभृत्य संभारं सूक्ष्मचूर्णानि कारयेत् ॥**
**गोपित्तमधुसर्पिर्भिर्युक्तं शृङ्गे निधापयेत् ॥ २३ ॥**
**भग्नस्कन्धं विवृताक्षं मृत्योर्दंष्ट्रान्तरं गतम् ॥**
**अनेनागदमुख्येन मनुष्यं पुनराहरेत् ॥ २४ ॥**
**एषोऽग्निकल्पं दुर्वारं क्रुद्धस्यामिततेजसः ॥**
**विषं नागपतेर्हन्यात् प्रसभं वासुकेरपि ॥ २५ ॥**
**महासुगन्धिनामाऽयं पञ्चाशीत्यङ्गसंयुतः ॥**
**राजाऽगदानां सर्वेषां राज्ञो हस्ते भवेत् सदा ॥२६॥**
**स्नातानुलिप्तस्तु नृपो भवेत् सर्वजनप्रियः ॥**
**भ्राजिष्णुतां च लभते शत्रुमध्यगतोऽपि सन् ॥२७॥**

चन्दनागुरुणीत्यादि । तिलपर्णिकं 'हुलहुल' इति लोके, **गयी** तु तैलपर्णिकः सरलरसः नवनीतखोटिरिति प्रसिद्धः, नलदम् उशीरभेदः लामज्जकं, भद्रश्रियं श्वेतचन्दनं, यवफला दुग्धिका, नीली नीलाञ्जनिका शारदं फलं, सुगन्धिका सर्पसुगन्धा, कालेयकं पीतचन्दनं, जटा द्वितीया मांसी, पुन्नागः स्वनामप्रसिद्धः, एला स्थूलैला, एलवालुकं स्वनामप्रसिद्धं, ध्यामकं कत्तृणं, तोयं वालकं, हरेणुः रेणुका, क्षुद्रैला सूक्ष्मैला, कुटन्नटः वन्यकः, 'फलीमदनक' इति लोके, शिलापुष्पं शिला मनःशिला, पुष्पं पुष्पकासीसं, कालानुसारिवा तगरभेदः, काश्मरी श्रीपर्णी, शीतशिवं कर्पूरं, शमीत्यपरे, सोमराजी बाकुची, पृथ्विका श्यामवर्णः स्थूलजीरकः, हिङ्गुपत्रिकेत्यपरे, श्वेते इति कटभीद्वयं, श्वेतामिति केचित् पठन्ति तत्र श्वेता वचा, स्थौणेयं ग्रन्थिपर्णकं, लवणानि पञ्चैव, प्रसवशब्देनात्र कुसुमानि फलानि च ग्राह्याणि प्रसवस्योभयवाचित्वात्, तृणशून्याः केतक्याः, मल्लिकाया इत्यपरे, सुरसीसिन्धुवाराभ्यां जातं कुसुममित्यर्थः, सिन्धुवारो निर्गुण्डीभेदः, अश्वकर्णः सर्जभेदः, तिनिशः स्यन्दनः, बिम्बी कुन्दुरिका, सर्पाक्षी रक्तपुष्पा पूर्वदेशे प्रसिद्धा, गन्धनाकुली सुगन्धमूला रास्ना, शिलापुष्पमित्यत्र तिलपुष्पमिति केचित् पठन्ति तच्च प्रसिद्धं, तन्मते शृङ्गेणाधारेण पञ्चाशीतिः पूर्यते । अष्टौ लवणानीति **जेज्जटाचार्यः**, तन्नेच्छति **गयी**, यतः पञ्चाशीतेरङ्गानामाधिक्यं स्यात् । 'कुमुदोत्पलपद्मानि पुष्पं वाऽपि तथाऽर्कजं' इत्यत्र स्थाने 'पाटलाकाश्मरीशेलुशिरीषप्रसवानि च' इति **गयदासाचार्यः** पठति । एषोऽग्निकल्पमित्यादि । एषः अगदः, अग्निकल्पं दुर्वारं विषं वासुकेरपि क्रुद्धस्य अमिततेजसो नागपतेः प्रसभं हठेन हन्यादिति संबन्धः । राजाऽगदानां सर्वेषां राज्ञो हस्ते भवेत् सदेति यतोऽयं सर्वागदानां राजा अत एव राज्ञो हस्ते सदा नित्यं भवितुमर्हति; तेन हस्तस्थितागदेन पाणिना स्पृष्टमन्नपानं निर्विषं भवति; हस्तस्थापनप्रयोजनमिदम् । स्नातानुलिप्त इत्यादि । स्नानानुलेपनाभ्यां वशीकरणम् ॥ १४–२७ ॥

**उष्णवर्ज्यो विधिः कार्यो विषार्तानां विजानता ॥**
**मुक्त्वा कीटविषं तद्धि शीतेनाभिप्रवर्धते ॥ २८ ॥**

विषार्तानां शोधनाङ्गत्वेनापि स्वेदो न क्रियत इत्यर्थमाह—उष्णवर्ज्य इत्यादि ॥ २८ ॥

**अन्नपानविधावुक्तमुपधार्य शुभाशुभम् ॥**
**शुभं देयं विषार्तेभ्यो विरुद्धेभ्यश्च वारयेत् ॥ २९ ॥**
**फाणितं शिग्रुसौवीरमजीर्णाध्यशनं तथा ॥**
**वर्जयेच्च समासेन नवधान्यादिकं गणम् ॥ ३० ॥**
**दिवास्वप्नं व्यवायं च व्यायामं क्रोधमातपम् ॥**
**सुरातिलकुलत्थांश्च वर्जयेद्धि विषातुरः ॥ ३१ ॥**

उपधार्य ज्ञात्वेत्यर्थः, शुभाशुभं हिताहितं, वारयेद्विषार्तानेव । फाणितमित्यादि । कुलत्थांश्चेत्यत्र चकारेण पिण्याकमूलकलशुनकलायकुसुम्भातसीशिशुमारकूर्मनिष्पावजम्ब्वाम्रातकचूतादिकानि च वर्जयेत् ॥ २९–३१ ॥

१ 'प्रपौण्डरीकं यष्ट्याह्वं नलदं देवदारु च' इति पा० । २ 'सरलं' इति पा० । ३ 'श्रीपर्णिकां शीतशिवं त्रिकटुं कटुरोहिणीम्' इति पा० । ४ 'इन्द्रजान् यवान्' इति पा० । ५ 'सुरसायास्तृणशून्याश्च सिन्धुवारस्य यानि च' इति पा० । ६ 'विधिवत्सूक्ष्मचूर्णितम्' इति पा० । ७ 'चिकित्सेद्धि विषातुरम्' इति पा० । ८ 'तेनानुलिप्तस्तु' इति पा० । ९ 'तेजस्वितां समाप्नोति' इति पा० ।

प्रसन्नदोषं प्रकृतिस्थधातु-
मन्नाभिकाङ्क्षं समसूत्रजिह्मम् ॥
प्रसन्नवर्णेन्द्रियचित्तचेष्टं
वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ३२ ॥

इति सुश्रुतसंहितायां कल्पस्थाने दुन्दुभिस्वनीयकल्पो नाम षष्ठोऽध्यायः ॥ ६ ॥

अविषश्च कीदृश इत्याह—प्रसन्नदोषमित्यादि । प्रसन्नदोषं स्वभावावस्थितवातादिकं, प्रकृतिस्थधातुं दधतीति धातवो रसादयो मलाश्च । अन्नाभिकाङ्क्षं भोजनाभिलाषिणं, एतेन समाग्निलमुक्तम् । समसूत्रजिह्ममिति समसूत्रा जिह्वा यस्य स तथा तम् । एतदुक्तं भवति—निर्विषस्य हि पुरुषस्य चित्तेन सह समैसूत्रतया जिह्वा रसवेदिनी भवति, सविषस्य विषप्रभावेण दूषितचित्तत्वाज्जिह्वा रसवेदिनी न भवतीत्यर्थः । अनेन श्लोकेन 'समदोषः समाग्निश्च' इत्यादिश्लोकस्य सर्वे एवार्थो निबद्धः । वैद्योऽवगच्छेदविषं मनुष्यमिति उक्तलक्षणः पुरुषोऽविषो भवति, विपरीतलक्षणस्तु विषातुरः । तथा हि,—"प्रवृद्धदोषं विकृतिस्थधातुमनन्नकाङ्क्षं क्षतसूत्रजिह्मम् । विरुद्धवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेत् सविषं मनुष्यम्"—इति । 'सममूत्रविट्कं' इति केचित् पठन्ति, तच्च सुबोधम् । इदं सविषाविषलक्षणं तीक्ष्णतमे स्थावरविषे सर्पदष्टे च द्रष्टव्यं, नतु मन्दविषे चिरेण धातुदूषणकरे मूषिकविषे कीटविषेषु च; अत एवोत्तरत्र मूषिककीटविकल्पाविति । जेज्जटस्तु मूषिककल्पानन्तरं दुन्दुभिस्वनीयं कल्पं पठति ॥ ३२ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां कल्पस्थाने षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

अथातो मूषिककल्पं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि ॥ १ ॥ २ ॥

पूर्वं शुक्रविषा उक्ता मूषिका ये समासतः ॥
नामलक्षणभैषज्यैरष्टादश निबोध मे ॥ ३ ॥
लालनः पुत्रकः कृष्णो हंसिरश्चिकि (क्कि) रस्तथा ॥
छुच्छुन्दरोऽलसश्चैव कषायदशनोऽपि च ॥ ४ ॥
कुलिङ्गश्चाजितश्चैव चपलः कपिलस्तथा ॥
कोकिलोऽरुणसंज्ञश्च महाकृष्णस्तथोन्दुरः ॥ ५ ॥
श्वेतेन महता सार्धं कपिलेनाखुना तथा ॥
मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः ॥ ६ ॥

तानेवाष्टादशभेदान् निर्दिशन्नाह—लालन इत्यादि ॥३–६॥

शुक्रं पतति यत्रैषां शुक्रसंसृष्टैः स्पृशन्ति वा ॥
नखदन्तादिभिस्तस्मिन् गात्रे रक्तं प्रदुष्यति ॥ ७ ॥

ननु 'दष्टरूपं समासोक्तं' इति वक्ष्यति तत्कथं शुक्रविषत्वमेवेत्याह—शुक्रमित्यादि । नखदन्तादिभिरित्यादिशब्दात् पुरीषमूत्राभ्यां च; तथा चालम्बायने,—"शुक्रेणाथ पुरीषेण मूत्रेणापि नखैस्तथा । दंष्ट्राभिर्वा क्षिपन्तीह मूषिकाः पञ्चधा विषम्"—इति । कस्मिंश्चित्तन्त्रान्तरे विशेषोऽस्ति, तथा च,—"गर्भिण्या मूषिकया दष्टे अम्लादिदोहदः, ऋतुमत्या दष्टे रक्तमेहनमाध्मानं रतिशीलता च–" इत्यादि ॥ ७ ॥

जायन्ते ग्रन्थयः शोफाः कर्णिका मण्डलानि च ॥
पीडकोपचयश्चोग्रो विसर्पाः किटिभानि च ॥ ८ ॥
पर्वभेदो रुजस्तीव्रा मूर्च्छाऽङ्गसदनं ज्वरः ॥
दौर्बल्यमरुचिः श्वासो वमथुर्लोमहर्षणम् ॥ ९ ॥
दष्टरूपं समासोक्तमेतद्व्यासमतः शृणु ॥

सामान्यं मूषिकदष्टलक्षणमभिधातुमाह—जायन्ते ग्रन्थय इत्यादि । कर्णिका कमलमध्यबीजकोशाकृतिः । पर्वभेदः सन्धेः स्फोटः । अङ्गसदनम् अङ्गग्लानिः ॥ ८ ॥ ९ ॥—

लालास्रावो लालनेन हिक्का छर्दिश्च जायते ॥ १० ॥
तण्डुलीयककल्कं तु लिह्यात्तत्र समाक्षिकम् ॥

तेषां विशिष्टं लक्षणं चिकित्सितं च निर्दिशन्नाह—लालास्राव इत्यादि । लालास्रावच्छर्दिहिक्का वातकोपजा भवन्ति । तण्डुलीयककल्कादिकं व्याधिप्रत्यनीकं चिकित्सितं, दोषप्रत्यनीकं तु सामान्यचिकित्सितोक्तं 'तप्तघृतेन दग्ध्वा विस्रावयेद्दंशं' इत्यादिकम्; एवमन्यत्रापि व्याधिदोषप्रत्यनीकं चिकित्सितं स्वयमूहनीयं; प्रतिमूषिकोक्तं तु चिकित्सितं प्रायो व्याधिप्रत्यनीकमेव ॥ १० ॥—

पुत्रकेणाङ्गसादश्च पाण्डुवर्णश्च जायते ॥ ११ ॥
चीयते ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभैः ॥
शिरीषेङ्गुदकल्कं तु लिह्यात्तत्र समाक्षिकम् ॥ १२॥

पुत्रकेणेत्यादि । आखुशावकसन्निभैर्मूषिकपुत्रकतुल्यैर्ग्रन्थिभिरङ्गं चीयते व्याप्यत इत्यर्थः । आखुशावकनिभा ग्रन्थयः सर्वमूषिकदंशेषु जायन्ते विशेषेण पुत्रकदष्टे । नागार्जुनोऽत्राह,—"तेन दर्शयते दष्टो व्यक्तं मूषिकपुत्रकान् । एतत् पुत्रकदष्टस्य व्यक्तं भवति लक्षणम्"—इति । 'शिरीषेङ्गुदचूर्णं तु' इति पठित्वा गयदासः अनयोः पत्रचूर्णमिति व्याख्यानयति; जेज्जटाचार्यस्तु 'शिरीषफलकल्कं तु' इति पठति ॥११॥१२॥

कृष्णेन दंशे शोफोऽसृक्छर्दिः प्रायश्च दुर्दिने ॥
शिरीषफलकुष्ठं तु पिबेत् किंशुकभस्मना ॥ १३ ॥

---

१ 'अन्नाभिकामं' इति पा० । २ 'प्रसन्नकायेन्द्रियवर्णचेष्टं वैद्यस्तु विद्यादविषं मनुष्यम्' इति पा० । ३ 'समस्तचेष्टायां' इति पा० । ४ 'तान्' इति पा० ।

१ 'शुक्रदुष्टैः' इति पा० । २ 'वमन्तीह' इति पा० । ३ 'ज्वरो मूर्च्छा च दारुणा' इति पा० । ४ '°मेतच्च व्यासतः शृणु' इति पा० । ५ 'छर्दयते' इति पा० । ६ 'कृष्णेनासृक् छर्दयति दुर्दिनेषु विशेषतः' इति पा० ।

कृष्णेनेत्यादि । ग्रन्थ्यादीन्यत्रापि सामान्यमूषिकलक्षणानि विज्ञेयानि; एवं सर्वत्रोन्नेयम् । प्रायश्चेति वचनादन्यत्राप्यसृक्च्छर्दिः । किंशुकभस्मना किंशुककुसुमभस्मोदकेनेत्यर्थः ॥ १३ ॥

हंसिरेणान्नविद्वेषो जृम्भा रोम्णां च हर्षणम् ॥
पिबेदारग्वधादिं तु सुवान्तस्तत्र मानवः ॥ १४ ॥

हंसिरेणेत्यादि । सुवान्तः सुष्ठु वान्तः ॥ १४ ॥

चिकि(क्कि)रेण शिरोदुःखं शोफो हिक्का वमिस्तथा ॥
जालिनीमदनाङ्कोठकषायैर्वामयेत्तु तम् ॥ १५ ॥
यवनालर्षभीक्षारं बृहत्योश्चात्र दापयेत् ॥

चिक्किरेणेत्यादि । जालिनी कोशातकी, ऋषभी कपिकच्छुः, बृहत्योश्चेति चकारेण क्षारमित्यत्रापि संबन्धनीयम् । क्षारश्चात्र क्षारोदकम् । गयदासस्तु 'जालिनीमदनाङ्कोठ' इत्यादिस्थाने 'सुवान्तो जालिनीक्वाथैः सारमङ्कोठजं पिबेत्' इति पठति न यवनालादि ॥ १५ ॥—

छुच्छुन्दरेण तृट् छर्दिर्ज्वरो दौर्बल्यमेव च ॥ १६ ॥
ग्रीवास्तम्भः पृष्ठशोफो गन्धाघ्रानं विसूचिका ॥
चव्यं हरीतकी शुण्ठी विडङ्गं पिप्पली मधु ॥ १७ ॥
अङ्कोठबीजं च तथा पिबेदत्र विषापहम् ॥

छुच्छुन्दरेणेत्यादि । छुच्छुन्दरदष्टलक्षणं तच्चिकित्सितं च गयदासोऽन्यथा पठति; यथा—"भ्रमश्छुच्छुन्दरेणोग्रो ग्रीवास्तम्भो विसूचिका । यवनालर्षभीक्षारं बृहत्योश्चात्र दापयेत्" इति ॥ १६ ॥ १७ ॥—

ग्रीवास्तम्भोऽलसेनोर्ध्ववायुर्दंशे रुजा ज्वरः ॥ १८ ॥
महागदंससर्पिष्कं लिह्यात्तत्र समाक्षिकम् ॥
निद्रा कषायदन्तेन हृच्छोषः कार्श्यमेव च ॥ १९ ॥
क्षौद्रोपेताः शिरीषस्य लिह्यात् सारफलत्वचः ॥
कुलिङ्गेन रुजः शोफो राज्यश्च दंशमण्डले ॥ २० ॥
सहे ससिन्धुवारे च लिह्यात्तत्र समाक्षिके ॥

ग्रीवास्तम्भ इत्यादि । सहे मुद्गपर्णीमाषपर्ण्यौ ॥ १८–२० ॥–

अजितेनाङ्गकृष्णत्वं छर्दिर्मूर्च्छा च हृद्ग्रहः ॥ २१ ॥
स्नुक्क्षीरपिष्टां पालिन्दीं मञ्जिष्ठां मधुना लिहेत् ॥

अजितेनेत्यादि । पालिन्दी त्रिवृत् ॥ २१ ॥—

चपलेन भवेच्छर्दिर्मूर्च्छा च सह तृष्णया ॥ २२ ॥
क्षौद्रेण त्रिफलां लिह्याद्भद्रकाष्ठजटान्विताम् ॥

चपलेनेत्यादि । भद्रकाष्ठं देवदारु, जटा जटामांसी । 'जटान्वितां' इत्यत्र 'घनान्विताम्' इति केचित् ॥ २२ ॥—

कपिलेन व्रणे कोथो ज्वरो ग्रन्थ्युद्गमः सतृट् ॥२३॥
लिह्यान्मधुयुतां श्वेतां श्वेतां चापि पुनर्नवाम् ॥

१ 'छुच्छुन्दरेण विड्भङ्गो ग्रीवास्तम्भो विजृम्भणम् । यवनालर्षभक्षारं बृहत्योश्चात्र दापयेत्' इति पा० । २ 'रुजा स्रावो' इति पा० । ३ 'अजितेन वमिर्मूर्च्छा हृद्ग्रहः कृष्णनेत्रता' इति पा० । ४ 'क्षौद्रेण लिह्यात्त्रिफलां' इति पा० । ५ 'क्षौद्रेण लिह्यात्त्रिफलां' इति पा० ।

ग्रन्थयः कोकिलेनोग्रा ज्वरो दाहश्च दारुणः ॥२४॥
वर्षाभूनीलिनीक्वाथकल्कसिद्धं घृतं पिबेत् ॥

कपिलेनेत्यादि । कोथः पूतिप्रादुर्भावः । श्वेतां श्वेतस्यन्दां, 'श्वेतां' इत्यत्र गयदासः 'श्रेष्ठां' इति पठति ॥ २३ ॥ २४ ॥

अरुणेनानिलः क्रुद्धो वातजान् कुरुते गदान् ॥२५॥
महाकृष्णेन पित्तं च श्वेतेन कफ एव च ॥
महता कपिलेनासृक् कपोतेन चतुष्टयम् ॥ २६ ॥
भवन्ति चैषां दंशेषु ग्रन्थिमण्डलकर्णिकाः ॥
पिडकोपचयश्चोग्रः शोफश्च भृशदारुणः ॥ २७ ॥
दधिक्षीरघृतप्रस्थास्त्रयः प्रत्येकशो मताः ॥
करञ्जारग्वधव्योषबृहत्यंशुमतीस्थिराः ॥ २८ ॥
निष्क्वाथ्य चैषां क्वाथस्य चतुर्थोऽशः पुनर्भवेत् ॥
त्रिवृद्गोज्यमृतावक्रसर्पगन्धाः समृत्तिकाः ॥ २९ ॥
कपित्थदाडिमत्वक् च श्लक्ष्णपिष्टाः प्रदापयेत् ॥
तत् सर्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत् ॥ ३० ॥
पञ्चानामरुणादीनां विषमेतद्व्यपोहति ॥
काकादनीकाकमाच्योः स्वरसेष्वथवा कृतम् ॥३१॥
सिराश्च स्रावयेत् प्राप्ताः कुर्यात् संशोधनानि च ॥

दध्यादीनि प्रस्थमात्राणि, करञ्जादिद्रव्याणां द्विपलिकं भागं, सलिलाढकेन निष्क्वाथ्य, क्वथितं प्रस्थशेषं, तैस्त्रिभिः प्रस्थैः सह संयोज्य, त्रिवृन्मूलादिकल्कपादं च विपचेत्; पक्वं च घृतं विरेचनं भवति । अंशुमती शालपर्णी, गोजी गोजिह्वा, अमृता गुडूची, वक्रं तगरं, सर्पगन्धा सर्पच्छत्रिका । समृत्तिकाः सकृष्णमृत्तिकाः, 'अहिमृत्तिका' इति केचित् पठन्ति, अत्राहिमृत्तिका वल्मीकमृत्तिका; 'अगवृत्तिका' इति जेज्झटाचार्यः पठति, तत्रागवृत्तिका शल्लकी । द्वितीयं घृतमाह—काकादनीत्यादि । काकादनी कृष्णश्रीफलिका, कृतं संस्कृतं, घृतमिति शेषः । सिरा इत्यादि । प्राप्ता युक्ता मर्मानाश्रिताः । संशोधनानि वमनादीनि नस्यपर्यन्तानि, तान्यपि प्राप्तानि; तेनावम्याविरेच्ययोरवरोधः । अन्ये तु विषातुरा अवम्या अपि वम्या एव, 'एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुरा' इति ॥ २५–३१ ॥—

सर्वेषां च विधिः कार्यो मूषिकाणां विषेष्वयम् ॥३२॥

अरुणाद्याश्रितं सिराव्यधादिकं सामान्यतः सर्वत्रातिदिशन्नाह—सर्वेषामित्यादि । अयं विधिः सिराव्यधादिकः कर्तव्य इत्यर्थः ॥ ३२ ॥

दग्ध्वा विस्रावयेद्दंशं प्रच्छितं च प्रलेपयेत् ॥
शिरीषरजनीकुष्ठकुङ्कुमैरमृतायुतैः ॥ ३३ ॥

दग्ध्वेत्यादि । दग्ध्वा 'घृतेनाभितप्तेन' इति शेषः । विस्रावयेत् प्रच्छनेन प्रच्छितं दंशम् । शिरीषादिभिः कल्कैरालेपयेत् ।

१ 'जायते' इति पा० । २ 'कपोतेनैव तु त्रयम्' इति पा० । ३ 'त्रिवृच्चित्रकाऽमृता' इति पा० । ४ 'सुपिष्टानि प्रयोजयेत्' इति पा० । ५ 'मोक्षयेत्' इति पा० ।

तथैव केचित् प्रच्छितं दंशं विस्रावयेच्छोणितं शिरीषादिकल्कैरालेपयेचेत्याहुः ॥ ३३ ॥

**छर्दनं जालिनीक्वाथैः शुकाख्याङ्कोठयोरपि ॥**

शोधनं सूत्रितं द्रव्यैर्विवृण्वन्नाह—छर्दनमित्यादि । शुकाख्यः चर्मकारवटः ॥—

**शुकाख्याकोषवत्योश्च मूलं मदन एव च ॥ ३४ ॥**
**देवदालीफलं चैव दध्ना पीत्वा विषं वमेत् ॥**
**सर्वमूषिकदष्टानामेष योगः सुखावहः ॥ ३५ ॥**
**फलं वचा देवदाली कुष्ठं गोमूत्रपेषितम् ॥**
**पूर्वकल्पेन योज्याः स्युः सर्वोन्दुरुविषच्छिदः ॥३६॥**

अपरावपि वमनयोगावाह—शुकाख्येत्यादि । कोषवती घोषकः । मूलमित्यत्र फलमित्यन्ये । फलमित्यादि । पूर्वकल्पेन दध्ना लेहमित्यर्थः ॥ ३४-३६ ॥

**विरेचने त्रिवृद्दन्तीत्रिफलाकल्क इष्यते ॥**

विरेचनमाह—विरेचने इत्यादि । दन्तीस्थाने केचिन्नीलीं पठन्ति ।

**शिरोविरेचने सारः शिरीषस्य फलानि च ॥ ३७ ॥**
**हितस्त्रिकटुकाढ्यश्च गोमयस्वरसोऽञ्जने ॥**

शिरोविरेचने इत्यादि । सारः शिरीषस्य, गयदासस्तु शालतमालमधूकानामाह । फलानि चेति शिरीषस्येति संबन्धः । त्रिकटुकाढ्यः त्रिकटुकोत्कट इत्यर्थः । एतच्च योगान्तरम् ३७–

**कपित्थगोमयरसौ लिह्यान्माक्षिकसंयुतौ ॥ ३८ ॥**
**रसाञ्जनहरिद्रेन्द्रयवकट्वीषु वा कृतम् ॥**
**प्रातः स्नातिविषं कल्कं लिह्यान्माक्षिकसंयुतम् ॥३९॥**
**तण्डुलीयकमूलेषु सर्पिः सिद्धं पिबेन्नरः ॥**
**आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा ॥ ४० ॥**

संशमनयोगानाह—कपित्थेत्यादि । प्रत्येकं कपित्थरसो गोमयरसश्च समधुर्लेहः । रसाञ्जनेत्यादि । कट्वी कटुरोहिणी । तण्डुलीयकेत्यादि । कपित्थफलमूलपुष्पत्वक्पत्रकल्ककषायसिद्धं पञ्चकापित्थं घृतं सर्वमूषिकविषहरम् ॥ ३८-४० ॥

**मूषिकाणां विषं प्रायः कुप्यत्यभ्रेष्वनिर्हृतम् ॥**
**तत्राप्येष विधिः कार्यो यश्च दूषीविषापहः ॥ ४१ ॥**

प्रशान्तकोपस्याप्यवश्यं वमनादिशोधनं करणीयमिति दर्शयन्नाह—मूषिकाणामित्यादि । एष विधिः वमनविरेचनशिरोविरेचननयनाञ्जनादिः । यश्च दूषीविषापहो विधिः सोऽप्यत्र कार्यः; एतेन दूषीविषतुल्यता मूषिकविषस्योक्ता ॥ ४१ ॥

**स्थिराणां रुजतां वाऽपि व्रणानां कर्णिकां भिषक् ॥**
**पाटयित्वा यथादोषं व्रणवच्चापि शोधयेत् ॥ ४२ ॥**

इदानीमाखुविषव्रणे कर्णिका भवन्ति तथाऽन्यविषदुष्टव्रणेऽपि, तच्चिकित्सामुद्दिशन्नाह—स्थिराणामित्यादि । स्थैर्येण कफात्मकता, रुजतामित्यनेन वातात्मकता व्रणानामुक्ता । कर्णिकां मांसकर्णीकम् । पाटयित्वा विदार्य, पाटयित्वेत्यत्र पाचयित्वेति केचित्, पातयित्वेत्यपरे । लालनपुत्रकादिमूषिकजातिविशेषज्ञानं नानादेशीयलोकेभ्योऽवगन्तव्यम् ॥ ४२ ॥

**श्वशृगालतरक्ष्वृक्षव्याघ्रादीनां यदाऽनिलः ॥**
**श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः ॥ ४३ ॥**
**तदा प्रस्रस्तलाङ्गूलहनुस्कन्धोऽतिलालवान् ॥**
**अत्यर्थबधिरोऽन्धश्च सोऽन्योन्यमभिधावति ॥४४॥**
**तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु ॥**
**सुप्तता जायते दंशे कृष्णं चातिस्रवत्यसृक् ॥ ४५ ॥**
**दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षितः ॥**

इदानीं मूषकस्य चतुष्पदजरायुजहिंस्रत्वसामान्याच्छ्वादीनां विषं लक्षणचिकित्सितैरुद्दिशन्नाह—श्वशृगालतरक्ष्वृक्षेत्यादि । श्वा कुकुरः, शृगालः प्रसिद्धः, तरक्षुः मृगशत्रुर्व्याघ्रविशेषः 'जरख' इति लोके, ऋक्षो भल्लूकोऽतिलोमशः 'रीच्छ' इति प्रसिद्धः; आदिशब्दाद्वृकचित्रकादयो हिंस्राः पशवो ग्राह्याः । श्वादीनां यदाऽनिलो वायुः श्लेष्मप्रदुष्टः सन्, संज्ञावहाश्रितो संज्ञावहस्रोतोगतः, संज्ञां सम्यग्ज्ञानं, मुष्णाति हरति । सम्यग्ज्ञानहरणाच्च कीदृशो भवतीत्याह—तदेत्यादि । प्रस्रस्तं स्थानच्युतं लाङ्गूलं बालधिर्मेहनं वा हनुः स्कन्धश्च यस्य सः; प्रस्रस्तशब्दो लाङ्गूलादिभिः प्रत्येकं संबन्धनीयः । अतिलालवान् अतिशयेन लालास्रावयुक्तः । अत्यर्थबधिरोऽन्धश्च अतिशयेन बधिरोऽन्धो वेत्यर्थः । अन्योन्यमभिधावति परस्परं दष्टुमभिधावति । हनुस्कन्धस्थाने 'गलस्कन्ध' इति केचित् पठन्ति । 'प्रमूढोऽन्यतमस्तेषां खादन् विपरिधावति' इति अत्र उत्तरार्धं केचित् पठन्ति । एषां मध्येऽन्यतम एकतमः प्रमूढः सन् खादन् विशेषेण परिधावति । तेनोन्मत्तेन दष्टस्येत्यादि । तेन दंष्ट्रिणा सविषेणोन्मत्तेन दष्टस्य पुरुषस्य दंशे सुप्तता बाधिर्यं जायते । उपलक्षितो युक्त इत्यर्थः ॥ ४३-४५ ॥—

**येन चापि भवेद्दष्टस्तस्य चेष्टां रुतं नरः ॥ ४६ ॥**
**बहुशः प्रतिकुर्वाणः क्रियाहीनो विनश्यति ॥**

अत्रैवारिष्टमुद्दिशन्नाह—येन चापि भवेदित्यादि । चेष्टा क्रिया, रुतं शब्दः, बहुशः अनेकवारं, प्रतिकुर्वाणः अनुकुर्वन्, क्रियाहीनः स्वकीयकायादिव्यापाररहितः ॥ ४६ ॥—

**दंष्ट्रिणा येन दष्टश्च तद्रूपं यस्तु पश्यति ॥ ४७ ॥**
**अप्सु वा यदि वाऽऽदर्शेऽरिष्टं तस्य विनिर्दिशेत् ॥**

इदानीमपरमप्यरिष्टं निर्दिशन्नाह—दंष्ट्रिणा येनेत्यादि । तद्दंष्ट्रिरूपदर्शनमरिष्टं मरणलक्षणम् ॥ ४७ ॥—

---

१ 'योज्यं स्यात्सर्वोन्दुरविषच्छिदि' इति पा० । २ 'कपित्थगोमयरसः सक्षौद्रो लेह इष्यते' इति पा० । ३ 'अभ्रेषु निर्हृतं' इति पा० ।

१ 'अव्यक्तबधिरान्धश्च' इति पा० । २ 'मूषकस्य°' इति पा० । ३ 'अव्यक्तबधिरान्धश्च न व्यक्तो बधिरोऽन्धो वेत्यर्थः' इति पा० । ४ 'स्तनस्कन्ध' इति पा० । ५ 'अप्सु वाऽऽदर्शबिम्बे वा तस्य तद्दिष्टमादिशेत्' इति पा० ।

त्रस्यत्यकस्माद्योऽभीक्ष्णं दृष्ट्वा स्पृष्ट्वाऽपि वा जलम् ॥
जलत्रासं तु विद्यात्तं रिष्टं तदपि कीर्तितम् ॥

पुनरपरमप्यरिष्टं निर्दिशन्नाह—त्रस्यतीत्यादि । अकस्मात् जलत्रासहेतुं विना । अपिशब्दाच्छ्रुत्वाऽपि । जलत्रासं जलत्रासरोगं जानीयात्तस्येति संबन्धः । रिष्टमित्यादि । तदपि जलत्रसनमरिष्टं मरणलक्षणं कीर्तितं; एतच्चारिष्टं दष्टस्य, अदष्टे जलत्रसनारिष्टस्य वक्ष्यमाणत्वात् । अत्रार्थे तन्त्रान्तरम्,—"व्याधितेन श्वादिना दष्टस्य श्लेष्मा प्रकुपितश्चेतोवाहिनीर्धमनीरनुप्रविश्य संज्ञानाशमापादयति सद्यः कालान्तराद्वा"; अयमुते विशेषतः—"ततो नरः स्पृष्ट्वा दृष्ट्वा श्रुत्वा वा जलं त्रस्यति, तस्यापि तदरिष्टं जानीयात्" इति । गयदासस्तु 'यदि त्रस्यत्यदष्टोऽपि' इत्यादि पठति ॥ ४८ ॥—

अदष्टो वा जलत्रासी न कथञ्चन सिध्यति ॥ ४९ ॥
प्रसुप्तोऽथोत्थितो वाऽपि स्वस्थस्त्रस्तो न सिध्यति ॥

एवमदष्टस्यापि जलत्रासोऽरिष्टमेवेति दर्शयन्नाह—अदष्ट इत्यादि । अस्मिन्नर्थे तन्त्रान्तरम्,-"अदष्टस्यापि जन्तोर्हि जलत्रासो भवेद्यदि । तस्य रिष्टं हि भिषजो ब्रुवते विषचिन्तकाः" इति । जलं विनाऽपि जलत्रासो जायते श्लेष्मसंचयात् । तथा चोक्तं,-"बुद्धिस्थानं यदा श्लेष्मा केवलं प्रतिपद्यते । तदा बुद्धौ निरुद्धायां श्लेष्मणाऽधिष्ठितो नरः ॥ जाग्रत् सुप्तोऽथवाऽऽत्मानं मज्जन्तमिव मन्यते । सलिले त्रस्यति तदा जलत्रासं तु तं विदुः ॥ श्लेष्मघ्नं तत्र कर्तव्यं शोधनं शमनानि च । आहारस्य विधानेन यावत् स प्रकृतिं व्रजेत्"—इति । अयं जलत्रासः कुपितकफस्य भवतीति रिष्टं न भवति, अत एवात्र चिकित्सोपदेशः, दष्टस्य तु रिष्टमेव । तथा स्वस्थस्य सुप्तस्य जाग्रतो वा जलमन्तरेण त्रासोऽरिष्टमेवेति दर्शयन्नाह—प्रसुप्तोऽथोत्थितो वाऽपीत्यादि ॥ ४९ ॥—

दंशं विस्राव्य तैर्दष्टे सर्पिषा परिदाहितम् ॥ ५० ॥
प्रदिह्यादगदैः, सर्पिः पुराणं पाययेत च ॥
अर्कक्षीरयुतं ह्यस्य दद्याच्चापि विशोधनम् ॥ ५१ ॥
श्वेतां पुनर्नवां चास्य दद्याद्धत्तूरकायुताम् ॥
पललं तिलतैलं च रूपिकायाः पयो गुडः ॥ ५२ ॥
निहन्ति विषमालर्कं मेघवृन्दमिवानिलः ॥

इदानीं चिकित्सावसरः—दंशं विस्राव्येत्यादि । विस्राव्य निष्पीडनेन स्रावयित्वा बीजभूतस्य विषस्य नाशनार्थं, सर्पिषा दाहस्तु तच्छेषनाशनार्थम् । अगदैः महागदादिभिः, प्रदिह्यात् लिम्पेत् । विस्रावितशोणितस्य वातशमनार्थं बाह्यमौषधमुद्दिश्याभ्यन्तरमुद्दिशन्नाह—सर्पिरित्यादि । विशोधनं विशोधनद्रव्यं, तत्र कफाधिक्ये वमनद्रव्ययुतं पित्ताधिक्ये विरेचनद्रव्ययुतमर्कक्षीरं दद्यात् । जेज्जटस्तु 'अर्कक्षीरं घृतं वाऽस्य' इति पठति । अन्ये 'दद्याच्छीर्षविरेचनं' इति पठन्ति । श्वेतामित्यादि ।—श्वेतामिति पुनर्नवाविशेषणम्; अन्ये श्वेतां कटभीमाहुः । धत्तूरकायुतां धत्तूरमूलान्विताम् । गयी तु 'धत्तूरार्धसमायुताम्' इति पठित्वा, धत्तूरमूलस्यार्धेन युतामिति व्याख्यानयति । अन्ये तु धत्तूरफलसंयुतामित्याहुः ॥ ५०–५२ ॥—

मूलस्य शरपुङ्खायाः कर्षं धत्तूरकार्धिकम् ॥ ५३ ॥
तण्डुलोदकमादाय पेषयेत्तण्डुलैः सह ॥
उन्मत्तकस्य पत्रैस्तु संवेष्ट्यापूपकं पचेत् ॥ ५४ ॥
खादेदौषधकाले तमलर्कविषदूषितः ॥
करोति श्वविकारांस्तु तस्मिञ्जीर्यति चौषधे ॥ ५५ ॥
विकाराः शिशिरे याप्या गृहे वारिविवर्जिते ॥
ततः शान्तविकारस्तु स्नात्वा चैवापरेऽहनि ॥ ५६ ॥
शालिषष्टिकयोर्भक्तं क्षीरेणोष्णेन भोजयेत् ॥
दिनत्रये पञ्चमे वा विधिरेषोऽर्धमात्रया ॥ ५७ ॥
कर्तव्यो भिषजाऽवश्यमलर्कविषनाशनः ॥
कुप्येत् स्वयं विषं यस्य न स जीवति मानवः ॥ ५८ ॥
तस्मात् प्रकोपयेदाशु स्वयं यावत् प्रकुप्यति ॥

मूलमित्यादि । धत्तूरकार्धिकमिति धत्तूरकजटायाः कर्षार्धं देयम् । उन्मत्तकस्य पत्रैस्त्वित्यादि । धत्तूरकस्य सप्त पर्णानि ग्राह्याणि, तन्त्रान्तरदर्शनात् । तस्य भक्षितस्य जरणकाले योगप्रभवादातुरः कुकुरचेष्टा एव करोति । औषधपरिणतिकाले यांश्च विकारानातुरः करोति तेषु प्रतीकारमाह—विकारा इत्यादि । विकारा उन्मत्तश्वादिदष्टोत्पन्नाः । शिशिरे शीतले वारिविवर्जिते गृहे याप्याः शमनीयाः । तत इत्यादि । क्षीरेणोष्णेन भोजयेदिति अन्नं गव्येनाज्ये(जे)न वा भोजयेदिति गयदासाचार्यः । एष विधिः श्वेतां पुनर्नवामित्यादिकः । अर्धमात्रया प्रागुक्तमात्रातः । कस्मादेष विधिः कार्यो दिनत्रये पञ्चमे वेत्याह—कुप्येदित्यादि ॥ ५३–५८ ॥—

बीजैरन्नौषधीगर्भैः कुम्भैः शीताम्बुपूरितैः ॥ ५९ ॥
स्नापयेत्तं नदीतीरे समन्त्रैर्वा चतुष्पथे ॥
बलिं निवेद्य तत्रापि पिण्याकं पललं दधि ॥ ६० ॥
माल्यानि च विचित्राणि मांसं पक्वामकं तथा ॥
अलकाधिपते यक्ष सारमेयगणाधिप ! ॥ ६१ ॥
अलर्कजुष्टमेतन्मे निर्विषं कुरु माचिरात् ॥

इदानीमलर्कविषे भूतानुबन्धो भवतीति तच्चिकित्सार्थं सविधिवैदिकं मन्त्रमुद्दिशन्नाह—बीजैरन्नौषधीत्यादि । तमलर्कजुष्टम् अलर्कविषजुष्टम् । पिण्याकः तिलखली, पललः सस्नेहस्तिलकल्कः । अलकाया नगर्या अधिपतिः धनदः, यक्षो देवयोनिः, सारमेयगणाधिपः कुकुरसमूहपतिः, तस्य संबोधने । अलकाधिपतिर्यक्ष एव सारमेयगणाधिपतिः । अलर्कं उन्मत्तकुकुरः ॥ ५९–६१ ॥—

१ 'श्रुत्वा दृष्ट्वाऽपि' इति पा० । २ 'तमपि कीर्तयेत्' इति पा० । ३ 'केवलः' इति पा० । ४ 'वाऽपि दद्यादाशु' इति पा० ।

१ 'करोत्यन्यान् विकारांस्तु' इति पा० । २ 'यावन्न कुप्यति' इति पा० । ३ 'गमनीयाः' इति पा० । ४ 'क्षिप्तरत्नौषधिबीजैः' इति पा० ।

दद्यात् संशोधनं तीक्ष्णमेवं स्नातस्य देहिनः ॥ ६२ ॥
अशुद्धस्य सुरूढेऽपि व्रणे कुप्यति तद्विषम् ॥

दद्यादित्यादि ॥ ६२ ॥—

श्वादयोऽभिहिता व्याला येऽत्रै दंष्ट्राविषा मया ६३
अतः करोति दष्टस्तु तेषां चेष्टां रुतं नरः ॥
बहुशः प्रतिकुर्वाणो न चिरान्म्रियते च सः ॥६४॥

इदानीमुन्मत्तश्वादिविषं प्रतिपादयितुमुन्मत्तव्यालानामुन्मत्ततासूचकश्वप्रकारेणाभिहितत्वमाह—श्वादयोऽभिहिता व्याला इत्यादि । येऽत्र दंष्ट्राविषा व्यालाः ते श्वादयः श्वप्रकारा उन्मत्तश्वसदृशा मया प्रतिपादिताः, ते तु वातपित्तप्रकोपणदंशैरसृक्ष्णत्वेन पुराणसर्पिःपानेन चानुमिताः ॥ ६३ ॥ ६४ ॥

नखदन्तक्षतं व्यालैर्यत्कृतं तद्विमर्दयेत् ॥
सिञ्चेत्तैलेन कोष्णेन ते हि वातप्रकोपकाः ॥ ६५ ॥

इति सुश्रुतसंहितायां कल्पस्थाने मूषिककल्पो नाम सप्तमोऽध्यायः ॥ ७ ॥

उन्मत्तश्वादिचिकित्सितं सहेतुकं दर्शयन्नाह—नखदन्तक्षतमित्यादि ॥ ६५ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतटीकायां कल्पस्थाने सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

अथातः कीटकल्पं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसंभवाः ॥
वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः ॥३॥
सर्वदोषप्रकृतिभिर्युक्तास्ते परिणामतः ॥
कीटत्वेऽपि सुघोराः स्युः, सर्वे एव चतुर्विधाः ॥४॥

तत्र कीटान् हेतुलक्षणसंख्याकर्मचिकित्सितैर्निर्दिशन्नाह—सर्पाणामित्यादि । सर्पाणां दर्वीकरमण्डलिराजिमतां शुक्रादिप्रसंभवा यथासंख्यं वाय्वग्न्यम्बुप्रकृतयः कीटाः । शवो मृतसर्पशरीरं, तस्य पूतिः शटनम् । त्रीन् कीटान् दर्वीकरमण्डलिराजिलसंबन्धेन वाय्वादिप्रकृतिक्रमान्निर्दिश्य चतुर्थं स्वभावेन कर्मणा च निर्दिशन्नाह—सर्वदोषेत्यादि । सर्वदोषस्वभावैर्युक्ताः; परिणामतः परिणामो नाम भिन्नजातीयैरनेकैरेकीभावेन कार्यस्यारम्भः, स चात्र दर्वीकरादिभिन्नजातीयैर्वैकरञ्जाख्यापत्योत्पादनलक्षणः, तस्मात् । सुघोराः त्रिदोषकोपनाः, वैकरञ्जसर्पजातिशुक्रादिसंभवत्वेन । एकीकृत्य संख्यामाह—सर्वे एवेत्यादि ॥ १-४ ॥

कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः ॥
उच्चिटिङ्गोऽग्निनामा च चिच्चिटिङ्गो मयूरिका ॥ ५ ॥
आवर्तकस्तथोरभ्रः सारिकामुखवैदलौ ॥
शरावकुर्दोऽभीराजिः परुषश्चित्रशीर्षकः ॥ ६ ॥
शतबाहुश्च यश्चापि रक्तराजिश्च कीर्तितः ॥
अष्टादशेति वायव्याः कीटाः पवनकोपनाः ॥ ७ ॥
तैर्भवन्तीह दष्टानां रोगा वातनिमित्तजाः ॥

तानेव चतुःप्रकारान् वातादिस्वभावैर्निर्दिशन्नाह—कुम्भीनस इत्यादि । एते कीटकभेदा नानादेशीयलोकादवगन्तव्याः, यतः सुवीरनन्दिवराहजेज्जटगयदासादिभिः टीकाकारैर्न व्याख्याताः । वातनिमित्तजा रोगास्तोदादयो ज्वरादयश्च । वातप्रकोपणानां कुम्भीनसादीनां मध्ये शृङ्गघुच्चिटिङ्गशरावकुर्दचित्रशीर्षकान् वर्जयित्वा शेषाश्चतुर्दश मुखसन्दंशविषाः ॥ ५-७ ॥—

कौण्डिन्यकः कणभको वरटी पत्रवृश्चिकः ॥ ८ ॥
विनासिका ब्राह्मणिका बिन्दुलो भ्रमरस्तथा ॥
बाह्यकी पिच्चिटः कुम्भी वर्चःकीटोऽरिमेदकः ॥९॥
पद्मकीटो दुन्दुभिको मकरः शतपादकः ॥
पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्दभी ॥१०॥
क्लीतः कृमिसरारी च यश्चाप्युत्क्लेशकस्तथा ॥
एते ह्यग्निप्रकृतयश्चतुर्विंशतिरेव च ॥ ११ ॥
तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः ॥

कौण्डिन्यक इत्यादि । बिन्दुलस्थाने 'विलुट' इति केचित् । पित्तनिमित्तजा दाहादयो ज्वरादयश्च । पित्तप्रकोपणानां मध्ये कौण्डिन्यकवरटीभ्रमरपिच्चिटवर्चःकीटमकरशतपदपञ्चालकपाकमत्स्यकृष्णतुण्डान् विहाय शेषाश्चतुर्दश मुखसन्दंशविषाः ॥ ८-११ ॥—

विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोऽथ कोकिलः ॥१२॥
सैरेयकः प्रचलको वलभः किटिभस्तथा ॥
सूचीमुखः कृष्णगोधा यश्च काषायवासिकः ॥ १३ ॥
कीटो गर्दभकश्चैव तथा त्रोटक एव च ॥
त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः १४
तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः ॥

विश्वम्भर इत्यादि । श्लेष्मनिमित्तजा रोगाः कण्ड्वादयो ज्वरादयश्च । श्लेष्मप्रकोपिणां मध्ये विश्वम्भरप्रचलककृष्णगोधाकाषायवासिकांश्चतुरो वर्जयित्वा नवान्ये मुखसन्दंशविषाः ॥ १२-१४ ॥—

तुङ्गीनासो विचिलकस्तालको वाहकस्तथा ॥ १५ ॥

१ 'तीक्ष्णमजस्रं तस्य' इति पा० । २ 'वातपित्तप्रकोपणाः' इति पा० । ३ 'दंशदेशकृष्णत्वेन' इति पा० । ४ 'त्रिविधाः' इति पा० । ५ 'सुघोरास्ते' इति पा० । ६ 'विण्मूत्रादिक्रमान्निर्दिशन्नाह' इति पा० । ७ 'भिन्नजातैः' इति पा० ।

१ 'चित्रमूर्धकः' इति पा० । २ 'अष्टादशैव ज्ञातव्याः' इति पा० । ३ 'वातादिस्वभावान्' इति पा० । ४ 'सूक्ष्मतुण्डोऽथ' इति पा० । ५ 'सूक्ष्मतुण्डान्' इति पा० । ६ 'वलभी कपिलस्तथा । सैरीयकः पद्मकृष्णः प्रचलाकोऽथ कोटिकः' इति पा० । ७ 'कोटीगर्दभकश्चैव' इति पा० ।

कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः ॥
तुण्ड(ङ्ग)नाभः सर्षपिको वल्गुलिः शम्बुकस्तथा १६
अग्निकीटश्च विज्ञेया द्वादश प्राणनाशनाः ॥
तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् ॥ १७ ॥
तास्ताश्च वेदनास्तीव्रा रोगा वै सान्निपातिकाः ॥
क्षाराग्निदग्धवद्दंशो रक्तपीतसितारुणः ॥ १८ ॥

सर्वदोषप्रकृतिकानाह—तुङ्गीनास इत्यादि । तैः सर्वदोषप्रकृतिकैः प्राणनाशनैः कीटैः । तास्ताः तोददाहकण्ड्वादिका वेदनाः, रोगा ज्वरादयः । दंश इत्यादि । रक्तपीतः पित्तेन, सितः कफेन, अरुणो वातेन । सर्वदोषप्रकृतिकानां मध्ये वाहकसर्षपशम्बूकान् वर्जयित्वा नव मुखसन्दंशविषाः ॥ १५–१८ ॥

ज्वराङ्गमर्दरोमाञ्चवेदनाभिः समन्वितः ॥
छर्द्यतीसारतृष्णाश्च दाहो मूर्च्छा विजृम्भिका ॥१९॥
वेपथुश्वासहिक्काश्च दाहः शीतं च दारुणम् ॥
पिडकोपचयः शोफो ग्रन्थयो मण्डलानि च ॥२०॥
दद्रवः कर्णिकाश्चैव विसर्पाः किटिभानि च ॥
तैर्भवन्तीह दष्टानां यथास्वं चाप्युपद्रवाः ॥ २१ ॥
येऽन्ये तेषां विशेषास्तु तूर्णं तेषां समादिशेत् ॥
दूषीविषप्रकोपाच्च तथैव विषलेपनात् ॥ २२ ॥
लिङ्गं तीक्ष्णविषेष्वेत-

इदानीं चतुर्विधानपि तांस्तीक्ष्णमन्दविषभेदेन निर्दिशन्नाह—ज्वराङ्गेत्यादि । शीतं च दारुणमित्यत्र चकाराद्दाहोऽपि दारुण एव । यथास्वं यथाकीटदोषमित्यर्थः । येऽन्ये इत्यादि । तेषां तीक्ष्णविषाणां कीटानामत्रोक्तेभ्यो येऽन्ये विशेषा उपद्रवास्तेषां भेदांस्तूर्णं समादिशेदिति । तेषामिति कर्मणि षष्ठी, तेन तान् क्षिप्रं कथयेत्, कथं ? दूषीविषप्रकोपात् दूषीविषप्रकोपं वीक्ष्य । यपि लुप्ते पञ्चमीयम् । तथैव विषलेपनादिति लेपनमत्राहारस्तेन विषालेपनं विषाहारं वीक्ष्येत्यर्थः ॥१९–२२॥

च्छृणु मन्दविषेष्वतः ॥
प्रसेकारोचकच्छर्दिशिरोगौरवशीतकाः ॥ २३ ॥
पिडकाकोठकण्डूनां जन्म दोषविभागतः ॥

शृणु मन्दविषेष्वित्यादि । शीतको अल्पं शीतं, कोठादीनां जन्म यथा कीटदोषविभागेन ॥ २३ ॥—

योगैर्नानाविधैरेषां चूर्णानि गरमादिशेत् ॥ २४ ॥
दूषीविषप्रकाराणां तथा चाप्यनुलेपनात् ॥

इदानीं कीटदेहचूर्णानां नानौषधयोगात्तथाऽनुलेपनतोऽपि गरत्वमाह—योगैरित्यादि । अथालम्बायनोक्तः कीटानां सामान्यज्ञानोपायो लिख्यते,—"कृष्णाभिर्बिन्दुलेखाभिः पक्षैः पादैर्मुखैर्नखैः । शूकैः कण्टकलाङ्गूलैः संश्लिष्टैः पक्षरोमभिः । स्वनैः प्रमाणैः संस्थानैर्लिङ्गैश्चापि शरीरगैः । विषवीर्यैश्च कीटानां रूपज्ञानं विभाव्यते"—इति । तथा कतिचित् कीटा विशिष्टाकृतिवर्णादिभिस्तदुक्ता एव लिख्यन्ते,—"अजाप्रतिमरूपो यः शूकहीनस्त्वरोमशः । सितः शरकुलीरस्तु क्ष्वेडचूर्णविषः स्मृतः ॥ गैरिकाभो महाकीटः सपक्षो मार्जितोदरः । खेचरो गुदशूकश्च कौण्डिन्य इति स स्मृतः ॥ कुरण्टपुष्पवर्णाभः सपक्षो मार्जितोदरः । तुण्डशूकविषः कीटः कोष्ठागारीति संज्ञितः ॥ लाक्षारुधिरवर्णाभः श्वेतबिन्दुविचित्रितः । क्षुद्रको ह्यग्निसंकाशो भ्राजते निशि चाग्निवत् ॥ कीटः खद्योत इत्युक्तो दष्टस्तेनापि दह्यते । दंष्ट्राविषः श्वेतबिन्दुः सपक्षः षट्पदः खगः ॥ स तु वै शम्बूको नाम कालकः सप्तमण्डलः । चतुष्पादो दीर्घपत्र उल्लाटो बहुप्रजः ॥ वृक्षालयो दन्तविषः कृकलास इति स्मृतः । चन्द्राभः कृकलासोऽन्यस्तद्भेदस्तु त्रिकण्टकः"—इति । तेषां न केवलं नियमेन शूकादिदंशेन विषप्रादुर्भावः, किं तर्हि अभ्यवहारचूर्णानुलेपनैश्च दूषीविषलिङ्गप्रादुर्भाव इत्याह—"यश्चैतानत्ति चूर्णैर्वा चूर्ण्यते लिप्यतेऽथवा । मूत्रादिभिस्तस्य दूषीविषलिङ्गं समादिशेत्"—इति । जेज्जटगयदासावत्र आपातनिकापूर्वकं पाठं पठतः, स च वर्तमानपुस्तकेषु न दृश्यते ॥ २४ ॥—

एकजातीनतस्तूर्ध्वं कीटान् वक्ष्यामि भेदतः ॥२५॥
सामान्यतो दष्टलिङ्गैः साध्यासाध्यक्रमेण च ॥
त्रिकण्टः करिणी चापि हस्तिकक्षोऽपराजितः ॥
चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः ॥ २६ ॥
तैर्दष्टस्य श्वयथुरङ्गमर्दो गुरुता गात्राणां दंशः कृष्णश्च भवति ॥ २७ ॥

इदानीं वातपित्तकफसन्निपातप्रकृतीन् कीटान् निर्दिश्य, एकजातीयानप्येकलक्षणचिकित्सार्थं निर्दिशन्नाह—एकजातीनतस्तूर्ध्वमित्यादि । भेदत इति भेदं वीक्ष्य । त्रिकण्टकादयश्चत्वारः कणभाः; कणभत्वमेकजातित्वं, त्रिकण्टकादिषु भेदः, 'कृकण्टक' इति केचित् । सर्वे एव कणभाश्चतुष्पदाः कीटाः साध्याश्च ॥ २५–२७ ॥

प्रतिसूर्यकः, पिङ्गाभासो, बहुवर्णो, निरूपमो गोधेरक इति पञ्च गोधेरकाः; तैर्दष्टस्य शोफो दाहरुजौ च भवतः, गोधेरकेणैतदेव ग्रन्थिप्रादुर्भावो ज्वरश्च ॥ २८ ॥

प्रतिसूर्यक इत्यादि । केचित्तु प्रतिसूर्यक इत्यादिस्थाने एवं पठन्ति,—"प्रतिसूर्यः पिङ्गनासो बहुलोमा महाशिराः । तथा निरूपमश्चेति पञ्च गोधेरकाः स्मृताः ॥ तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् । रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणाः" इति । गोधेरकलक्षणं तन्त्रान्तरे,—"कृष्णसर्पेण

१ 'कोठारुपिडकाकण्डूजन्म' इति पा० । २ 'दूषीविषप्रकोपाच्च' इति, 'दूषीविषप्रकाराणां तथैवाप्यनुलेपनात्' इति च पा० । अस्याग्रे हाराणचन्द्रस्तु 'तेन पाण्डुः कृशोऽल्पाग्निः कासश्वासज्वरार्दितः । जठरग्रहणीरोगयक्ष्मगुल्मक्षयैश्च सः । निपीडितो मर्मसु च शूनपादकरोऽलसः । स्वप्ने मार्जारगोमायुव्यालान् स नकुलान् कपीन् ॥ प्रायः पश्यति नद्यादीन् शुष्कांश्च स वनस्पतीन् ।' इत्यधिकं पाठं पठति ।

१ 'संनिभैः' इति पा० । २ 'त्रिकण्टकः कुणी चापि' इति पा० । ३ 'चतुष्पदाः कीटाः प्रतिसूर्यकः' इति पा० । ४ 'विरूपकः' इति पा० । ५ 'इति पञ्च' इति पा० । ६ 'चतुष्पदाः' इति पा० ।

गोधायां भवेद्यस्तु चतुष्पदः । सर्पो गौधेरको नाम तेन दष्टो न जीवति"—इति ॥ २८ ॥

गलगोलिका-श्वेता, कृष्णा, रक्तराजी, रक्तमण्डला, सर्वश्वेता, सर्षपिकेत्येवं षट्; ताभिर्दष्टे सर्षपिकावर्जं दाहशोफक्लेदा भवन्ति, सर्षपिकया हृदयपिडाऽतिसारश्च, तासु मध्ये सर्षपिका प्राणहरी ॥ २९ ॥

शतपद्यस्तु-परुषा, कृष्णा, चित्रा, कपिला, पीतिका, रक्ता, श्वेता, अग्निप्रभा, इत्यष्टौ; ताभिर्दष्टे शोफो वेदना दाहश्च हृदये, श्वेताग्निप्रभाभ्यामेतदेव दाहो मूर्च्छा चातिमात्रं श्वेतपिडकोत्पत्तिश्च ॥ ३० ॥

मण्डूकाः—कृष्णः, सारः, कुहको, हरितो, रक्तो, यववर्णाभो, भृकुटी, कोटिकश्चेत्यष्टौ; तैर्दष्टस्य दंशे कण्डूर्भवति पीतफेनागमश्च वक्रात्, भृकुटीकोटिकाभ्यामेतदेव दाहश्छर्दिर्मूर्च्छा चातिमात्रम् ॥३१॥

मण्डूका इत्यादि । अत्र भृकुटीकोटिकावसाध्यौ । अथ मण्डूकोत्पत्तिः भृकुटीलक्षणं च तन्त्रान्तरोक्तं पठ्यते,—"वर्षमाणे सृजेच्छुक्रं प्रावृट्काले महोरगः । ततः शरत्प्रतप्तायां भूमौ मण्डो जलस्य हि । तस्मिन् मण्डोदके जाता मण्डूकास्तेन संज्ञिताः ॥ मण्डूको गोगतिस्तज्ज्ञैः कोटिकः परिकीर्तितः । तेन दष्टस्य मरणं, नास्ति तस्य प्रतिक्रिया"—इति ॥ २९ ॥ ३१ ॥

विश्वम्भराभिर्दष्टे दंशः सर्षपाकाराभिः पिडकाभिः सरुजाभिश्चीयते, शीतज्वरार्तश्च पुरुषो भवति ॥ ३२ ॥

विश्वम्भराभिर्दष्ट इत्यादि । विश्वम्भराश्च त्रयः ॥ ३२ ॥

अहिण्डुकाभिर्दष्टे तोददाहकण्डुश्वयथवो भवन्ति मोहश्च; कण्डूमकाभिर्दष्टे पीताङ्गश्छर्द्यतीसारज्वरादिभिरभिहन्यते; शूकवृन्ताभिर्दष्टे कण्डूकोठाः प्रवर्धन्ते शूकं चात्र लक्ष्यते ॥ ३३ ॥

अहिण्डुकाभिर्दष्ट इत्यादि । अहिण्डुकाकण्डूमकशूकवृन्तानां दष्टलक्षणं केचिन्न पठन्ति, विश्वम्भराभेदत्वेन विश्वम्भराग्रहेण ग्रहणात्; अन्ये तु अहिण्डुकादीनां पृथग्दष्टलक्षणं पठन्ति, पृथक्चिकित्सितोपादानात् ॥ ३३ ॥

पिपीलिकाः—स्थूलशीर्षा, संवाहिका, ब्राह्मणिका, अङ्गुलिका, कपिलिका, चित्रवर्णेति षट्; ताभिर्दष्टे दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः ॥३४॥

मक्षिकाः—कान्तारिका, कृष्णा, पिङ्गला, मधूलिका, काषायी, स्थालिकेत्येवं षट्; ताभिर्दष्टस्य कण्डुशोफदाहरुजो भवन्ति, स्थालिकाकाषायीभ्यामेतदेव श्यावपिडकोत्पत्तिरुपद्रवाश्च ज्वरादयो भवन्ति, काषायी स्थालिका च प्राणहरे ॥ ३५ ॥

मशकाः—सामुद्रः, परिमण्डलो, हस्तिमशकः, कृष्णः, पार्वतीय इति पञ्च; तैर्दष्टस्य तीव्रा कण्डूर्दंशशोफश्च, पार्वतीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः ॥ ३६ ॥

नखावकृष्टेऽत्यर्थं पिडकादाहपाका भवन्ति ॥
जलौकसां दष्टलक्षणमुक्तं चिकित्सितं च ॥ ३७ ॥

भवन्ति चात्र—

गोधेरकः स्थालिका च ये च श्वेताग्निसप्रभे ॥
भृकुटी कोटिकश्चैव न सिध्यन्त्येकजातिषु ॥ ३८ ॥

इदानीमिहैकजातिषु पञ्चस्वसाध्यान् निर्दिशन्नाह—गोधेरक इत्यादि । स्थालिका चेति चकारेण काषायी समुच्चीयते । ये चेति चकारेण गलगोलिकेषु सर्षपिकाऽप्यनुक्ता समुच्चीयते । भृकुटी कोटिकश्चैवेति चकारेणानुक्ता जलौकःखिन्द्रायुधा समुच्चीयते ॥ ३४–३८ ॥

शवमूत्रपुरीषैस्तु सविषैरवमर्शनात् ॥
स्युः कण्डूदाहकोठारुःपिडकातोदवेदनाः ॥ ३९ ॥
प्रक्लेदवांस्तथा स्रावो भृशं संपाचयेत्त्वचम् ॥
दिग्धविद्धक्रियास्तत्र यथावदवचारयेत् ॥ ४० ॥

एषां बहिश्चूर्णावचूर्णनादौ लिङ्गमुद्दिश्य चिकित्सामुद्दिशन्नाह—शवमूत्रपुरीषैरित्यादि । प्रक्लेदवानिति सविषचूर्णावमृष्टप्रदेशे इत्यर्थः ॥ ३९ ॥ ४० ॥

नावसन्नं न चोत्सन्नमतिसंरम्भवेदनम् ॥
दंशादौ विपरीतार्ति कीटदष्टं सुबाधकम् ॥ ४१ ॥

इदानीं कीटदष्टस्य दंशलक्षणेन कृच्छ्रतामुद्दिशन्नाह—नावसन्नमित्यादि । नावसन्नं नातिभिन्नं, न चोत्सन्नं नात्युन्नतम्, इत्थंभूतमपि यदतिसंरम्भवेदनम् अतिशयव्यथं, दंशादौ विपरीतार्ति अनुग्रविषदष्टे तीव्रार्तिर्भवति, उग्रविषदष्टे तु मन्दार्तिरिति विपरीतार्तिः । सुबाधकं कृच्छ्रसाध्यम् ॥ ४१ ॥

दष्टानुग्रविषैः कीटैः सर्पवत् समुपाचरेत् ॥
त्रिविधानां तु पूर्वेषां त्रैविध्येन क्रिया हिताः ॥ ४२ ॥

इदानीमुग्रविषकीटानां चिकित्सामुद्दिशन्नाह—कीटैर्दष्टानुग्रेत्यादि । उग्रविषैः प्राणहरैस्त्रिदोषप्रकृतिभिः । सर्पवत् सर्पदष्टानिव, सर्पदष्टस्य सर्पवेगोक्ताभिः क्रियाभिरित्यर्थः । त्रिविधानामिति दर्वीकरमण्डलिराजिलशुकादियोनिभेदात्त्रिप्रकाराणाम् । पूर्वेषाम् आद्युक्तानाम् । त्रैविध्येनेति वातादिभेदेनेत्यर्थः ॥४२॥

स्वेदमालेपनं सेकं चोष्णमत्रावचारयेत् ॥

१ 'गोगतिः' इति, गलगोली, श्वेतकृष्णा इति च पा० । २ 'दष्टस्य कोठः स्पर्शोऽग्निदग्धवच्च; सर्वा एव साध्याः' इति पा० ।

१ 'ताभिर्दष्टस्य दाहशोफौ भवतः, स्थालिकाकाषायीभ्यामेतदेव पिडकाश्च सोपद्रवा भवन्ति' इति हाराणचन्द्रसंमतः पाठः । २ 'सर्पाणां' इति पा० ।

**अन्यत्र मूर्च्छितादंशात् पाककोथप्रपीडितात् ॥४३॥**
**विषघ्नं च विधिं सर्वं बहुशः शोधनानि च ॥**

इदानीं सामान्यं चिकित्सितमाह—स्वेदमालेपनमित्यादि । अन्यत्र मूर्च्छितादिति मूर्च्छितं वर्जयित्वा, मूर्च्छिते न कुर्यादित्यर्थः । विषघ्नं च विधिं सर्वमित्यादि । संशमनविधिं पाननस्याभ्यङ्गालेपनपरिषेकाञ्जनादिकं वातादिविषहरद्रव्यकल्पितम् । संशोधनानि चेति वमनविरेकास्थापनानि, 'यथादोषम्' इत्यध्याहारः ॥ ४३ ॥—

**शिरीषकटुकाकुष्ठवचारजनिसैन्धवैः ॥ ४४ ॥**
**क्षीरमज्जवसासर्पिःशुण्ठीपिप्पलिदारुषु ॥**
**उत्कारिका स्थिरादौ वा सुकृता स्वेदने हिता ॥४५॥**

इदानीं वातादिदोषविषहरस्वेदद्रव्यसूत्रमुद्दिशन्नाह—शिरीषेत्यादि । उत्कारिका लप्सिका । स्थिरादौ शालपर्ण्यादौ । सुकृता शोभना कृता । एतेन क्षीरादिद्रवैः शिरीषादिद्रव्याणां श्लक्ष्णपेषितानां मात्राक्रमेण नातिद्रवो नाल्पद्रवः पाक इति सर्वं बोध्यते ॥ ४४ ॥ ४५ ॥

**न स्वेदयेत चादंशं धूमं वक्ष्यामि वृश्चिके ॥**

मुक्त्वा कीटविषमित्यनेन हेतुना सर्वेष्वेव कीटेषु स्वेदं प्रसक्तं क्वचिन्निरस्यन्नाह—न स्वेदयेतेत्यादि । वृश्चिकविषे दंशं न स्वेदयेत, आद्यो व्यवहितस्यापि क्रियापदेन संबन्धात् । तत्रापि किंचिदूष्मस्वेदमाह—धूममित्यादि । धूमश्च 'शिखिकुक्कुटबर्हाणि' इत्यादिनाऽग्रे वक्तव्यः । न स्वेदयेत चादंशमित्यत्र चकारो भिन्नक्रमे धूमं चेत्यत्र द्रष्टव्यः; तेन मन्दविषवृश्चिकदष्टस्योत्कारिकास्वेद उक्तो न विरुध्यते ॥—

**अगदानेकजातीषु प्रवक्ष्यामि पृथक् पृथक् ॥ ४६ ॥**
**कुष्ठं वक्रं वचा पाठा बिल्वमूलं सुवर्चिका ॥**
**गृहधूमं हरिद्रे द्वे त्रिकण्टकविषे हिताः ॥ ४७ ॥**

इदानीं वातादिभेदेन चतुर्विधप्रकृतीनां सप्तषष्टिसंख्योपेतानां चिकित्सितमभिधाय वृश्चिकलूतावर्जं चतुःपञ्चाशतामेकजातीनां चिकित्सितं निर्दिशन्नाह—अगदानेकजातीष्वित्यादि । वक्रं तगरं, सुवर्चिका स्वर्जिकाक्षारः । त्रिकण्टकग्रहणमपरसजातीयानां कणभप्रभृतीनां प्राधान्यादुपलक्षणम् । हित इति अगद इति शेषः ॥ ४६ ॥ ४७ ॥

**रजन्यागारधूमश्च वक्रं कुष्ठं पलाशजम् ॥**
**गलगोलिकदष्टानामगदो विषनाशनः ॥ ४८ ॥**

प्रतिसूर्यकादिचिकित्साया वक्ष्यमाणत्वाद्गलगोलिकोपक्रममाह—रजनीत्यादि । पलाशजं 'बीजम्' इत्यध्याहार्यम् ॥४८॥

**कुङ्कुमं तगरं शिग्रु पद्मकं रजनीद्वयम् ॥**
**अगदो जलपिष्टोऽयं शतपद्विषनाशनः ॥ ४९ ॥**
**मेषशृङ्गी वचा पाठा निचुलो रोहिणी जलम् ॥**
**सर्वमण्डूकदष्टानामगदोऽयं विषापहः ॥ ५० ॥**

निचुलो वेतसः, जलं वालकम् ॥ ४९ ॥ ५० ॥

**धवाश्वगन्धातिबलाबलासातिगुहागुहाः ॥**
**विश्वम्भराभिदष्टानामगदोऽयं विषापहः ॥ ५१ ॥**

धवाश्वेत्यादि । विश्वम्भराभिः तिलुभिः । अतिबला कङ्कतिका, अतिगुहा शालिपर्णी, गुहा पृश्निपर्णी ॥ ५१ ॥

**शिरीषं तगरं कुष्ठं शालिपर्णी सहा निशे ॥**
**अहिण्डुकाभिदष्टानामगदो विषनाशनः ॥ ५२ ॥**

शिरीषमित्यादि । सहा मुद्गपर्णी । निशे पिण्डहरिद्रादारुहरिद्रे ॥ ५२ ॥

**कण्डूमकाभिर्दष्टानां रात्रौ शीताः क्रिया हिताः ॥**
**दिवा ते नैव सिध्यन्ति सूर्यरश्मिबलार्दिताः ॥५३॥**
**वक्रं कुष्ठमपामार्गः शूकवृन्तविषेऽगदः ॥**
**भृङ्गस्वरसपिष्टा वा कृष्णवल्मीकमृत्तिका ॥ ५४ ॥**
**पिपीलिकाभिर्दष्टानां मक्षिकामशकैस्तथा ॥**
**गोमूत्रेण युतो लेपः कृष्णवल्मीकमृत्तिका ॥ ५५ ॥**
**नखावघृष्टसंजाते शोफे भृङ्गरसो हितः ॥**

कण्डूमकाभिरित्यादि । कण्डूमकाभिर्दष्टाः पुरुषाः । सूर्यरश्मिभिर्बलं येषां ते सूर्यरश्मिबलाः कण्डूमकाः, तैरर्दिताः पीडिताः । पिपीलिकादिभिस्त्रिभिर्दष्टे गोमूत्रयुक्ता कृष्णवल्मीकमृत्तिका । नखेत्यादि नखावकृष्टे नखोद्धृष्टे सति संजातशोफे मार्कवस्य भृङ्गराजस्य रसो लेपे हितः स्यात् । गयदासस्तु भृङ्गस्वरसपिष्टा स्यादित्यादि पठित्वा पिपीलिकादित्रये दष्टे भृङ्गराजपिष्टकृष्णवल्मीकमृत्तिकालेपं प्रतिपादयति; गोमूत्रयुतकृष्णवल्मीकमृत्तिकालेपनं तु नखावकृष्टे तथा मार्कवस्वरसालेपनं च ॥५३-५५॥—

**प्रतिसूर्यकदष्टानां सर्पदष्टवदाचरेत् ॥**

प्रतिसूर्यकेत्यादि । आचरेत् 'चिकित्सितं' इत्यध्याहारः ॥—

**त्रिविधा वृश्चिकाः प्रोक्ता मन्दमध्यमहाविषाः ॥५६॥**

एवमेकजातीयान् कीटानभिधाय वृश्चिकान्निर्देष्टुमाह—त्रिविधा वृश्चिका इत्यादि । नन्वेकजातिभ्यः पृथग्भूता वृश्चिका लूताश्च कस्मान्निर्दिश्यन्ते इति ? उच्यते—विषचिकित्सितविशेषापेक्षः पृथगारम्भः ॥ ५६ ॥

**गोशकृत्कोथजा मन्दा मध्याः काष्ठेष्टिकोद्भवाः ॥**
**सर्पकोथोद्भवास्तीक्ष्णा ये चान्ये विषसंभवाः ॥५७॥**

तानेव त्रीनपि कारणधर्मचिकित्सितमेदैर्भिन्नान् प्रथमं कारणादेवाह—गोशकृदित्यादि । गोशकृदित्यत्र गोशब्दस्यापरपशूपलक्षणत्वाच्छकृच्छब्दस्यापरमलोपलक्षणत्वाद्गोमहिष्यादिशकृन्मूत्रकोथजा मन्दाः । ये चान्ये इत्यादि । अन्येऽपि ये विषसंभवास्तेऽपि तीव्राः । अन्ये त्वेवं पठन्ति,—"सर्पकोथोद्भवास्तीव्रा दिग्धविद्धविषैर्हते । कोथे मध्या गवादीनां शकृत्कोथेऽवराः स्मृताः"—इति ॥ ५७ ॥

१ 'कुर्यात् संशोधनानि च' इति पा० । २ '°निशोग्रासिन्धुसंभवैः' इति पा० ।

१ 'वचाश्वगन्धा' इति पा० । २ 'नखावकृष्टे स्याल्लेपे मार्कवस्वरसो हितः' इति पा० ।

मन्दा द्वादश मध्यास्तु त्रयः पञ्चदशोत्तमाः ॥
दश विंशतिरित्येते संख्यया परिकीर्तिताः ॥ ५८ ॥

इदानीं तेषां पृथक् संख्यामाह—मन्दा द्वादशेत्यादि । गयदासस्तु—"त्रयोदश प्राणहरास्त्रयो मध्यास्तथाऽपरे । मन्दवीर्या दशैकश्च वृश्चिका विषवेदिभिः ॥ सप्तविंशतिरित्येते संख्यया परिकीर्तिताः"—इति पठति ॥ ५८ ॥

कृष्णः श्यावः कर्बुरः पाण्डुवर्णो[1]
गोमूत्राभः कर्कशो मेचकश्च[2] ।
पीतो[3] धूम्रो रोमशः शाङ्खलाभो
रक्तः श्वेतेनोदरेणेति मन्दाः[4] ॥ ५९ ॥
युक्ताश्चैते वृश्चिकाः पुच्छदेशे
स्युर्भूयोभिः पर्वभिश्चेतरेभ्यः ॥
एभिर्दष्टे वेदना वेपथुश्च
गात्रस्तम्भः कृष्णरक्तागमश्च ॥ ६० ॥
शाखादष्टे वेदना चोर्ध्वमेति
दाहस्वेदौ दंशशोफो ज्वरश्च ॥

इदानीं मन्दविषाणां लक्षणकर्माण्याह—कृष्ण इत्यादि । कृष्णादयो द्वादशापि श्वेतेनोदरेणोपलक्षिताः । वेदना चोर्ध्वमेतीति त्रिविधानामपि वृश्चिकानां सामान्यलक्षणमत्र प्रायोवृत्त्याऽभिहितम् । स्युर्भूयोभिः पर्वभिश्चेतरेभ्य इति इतरेभ्यो वृश्चिकेभ्यो मन्दविषा वृश्चिका भूयोभिर्बहुतरैः पर्वभिरुपलक्षिता भवेयुः ॥ ५९ ॥ ६० ॥—

रक्तः पीतः कापिलेनोदरेण
सर्वे धूम्राः पर्वभिश्च त्रिभिः स्युः ॥ ६१ ॥
एते मूत्रोच्चारपूत्यण्डजाता
मध्या ज्ञेयास्त्रिप्रकारोरगाणाम् ॥
यस्यैतेषामन्वयाद्यः प्रसूतो
दोषोत्पत्तिं तत्स्वरूपां स कुर्यात् ॥ ६२ ॥
जिह्वाशोफो भोजनस्यावरोधो[5]
मूर्च्छा चोग्रा मध्यवीर्याभिर्दष्टे[6] ॥

मध्यविषाणां लक्षणकर्माण्याह—रक्त इत्यादि । कपिलेन सह रक्तः पीतश्चेति त्रयः । एते च त्रयोऽप्युदरेण धूम्राः । पूर्वत्र काष्ठेष्टिकोद्भवत्वमिह तु सर्पमूत्रोच्चारादिसंभवत्वमित्युभयहेतूपादानाद् व्यस्तसमस्तोभयहेतूद्भवत्वं मध्यानां बोद्धव्यम् । दिग्धविद्धसर्पदष्टानां च शरीरकोथे मध्यानां जन्म मतान्तरेण प्रतिपादितमेव । त्रिप्रकारोरगाणामित्यादि दर्वीकरादिभेदेन त्रिप्रकाराणामेतेषां यस्यान्वयाद्यो यादृक् प्रसूतः स तत्स्वरूपां दोषोत्पत्तिं कुर्यात् ॥ ६१ ॥ ६२ ॥—

१ 'काण्डवर्णो' इति पा० । २ 'मेचको रूक्षवर्णः' इति पा० । ३ 'श्वेतो रक्तो' इति पा० । ४ 'रक्तश्चैते मन्दवीर्या मतास्तु' इति पा० । ५ 'रसनस्योपघातो' इति पा० । ६ 'वृश्चिकैर्मध्यमैस्तु' इति पा० ।

श्वेतश्चित्रः श्यामलो लोहिताभो[1]
रक्तः श्वेतो रक्तनीलोदरौ च ॥ ६३ ॥
पीतोऽरक्तो[2] नीलपीतोऽपरस्तु
रक्तो नीलो नीलशुक्लस्तथा च ॥
रक्तो बभ्रुः पूर्ववच्चैकपर्वा
यश्चापर्वा पर्वणी द्वे च यस्य ॥ ६४ ॥
नानारूपा वर्णतश्चापि घोरा
ज्ञेयाश्चैते वृश्चिकाः प्राणचौराः[3] ॥
जन्मैतेषां सर्पकोथात् प्रदिष्टं
देहेभ्यो वा घातितानां विषेण ॥ ६५ ॥
एभिर्दष्टे सर्पवेगप्रवृत्तिः
स्फोटोत्पत्तिर्भ्रान्तिदाहौ ज्वरश्च ॥
खेभ्यः कृष्णं शोणितं याति तीव्रं
तस्मात्[4] प्राणैस्त्यज्यते शीघ्रमेव ॥ ६६ ॥

तीक्ष्णविषाणां लक्षणकर्माण्याह—श्वेतश्चित्र इत्यादि । पूर्ववच्चेति पूर्वे मध्यविषा यथा जिह्वाशोफादिकारकास्तथैवैतेऽपि जिह्वाशोफादि कुर्वन्तीत्यर्थः । एकपर्वेति द्वयोरस्थ्नोः संघातः पर्व, एकं पर्व यस्य स तथा । पर्वणी द्वे च यस्येति चकारेण बहुपर्वाणोऽपि भवन्तीति समुच्चीयते । खेभ्य इति खेभ्यः स्रोतोभ्यः । अरिष्टमिदम् ॥ ६३—६६ ॥

उग्रमध्यविषैर्दष्टं चिकित्सेत् सर्पदष्टवत् ॥
आदंशं स्वेदितं चूर्णैः प्रच्छितं प्रतिसारयेत् ॥६७॥
रजनीसैन्धवव्योषशिरीषफलपुष्पजैः ॥

इदानीं चिकित्सा प्रस्तूयते—उग्रमध्येत्यादि । मूर्च्छा चोग्रा चेत्यनेन सर्पदष्टषष्ठसप्तमवेगलक्षणस्य वचनान्मध्यविषेऽपि सर्पदष्टचिकित्सा कार्या । इहापरामपि चिकित्सामाह—आदंशमित्यादि । प्रतिसारणं घर्षणं, तच्च दुष्टरक्तप्रवर्तनार्थम् । मातुलुङ्गाम्लेत्यादि । मातुलुङ्गाम्लं बीजपूररसः । सुरसाग्रजं तुलसीपल्लवं, मल्लिकाकुसुममिति केचित् । स्वेदे इत्यादि वातकफावजयाय । पाने सर्पिरित्यादि । बहुवातस्य सर्पिःपानं मधुयुतं, बहुपित्तस्य क्षीरं बहुशर्करं चेति योगद्वयम् ॥ ६७ ॥—

मातुलुङ्गाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ॥ ६८ ॥
लेपे, स्वेदे सुखोष्णं च गोमयं हितमिष्यते ॥
पाने क्षौद्रयुतं सर्पिः[5] क्षीरं वा बहुशर्करम् ॥ ६९ ॥
दंशं मन्दविषाणां तु चक्रतैलेन सेचयेत् ॥
विदारीगणसिद्धेन सुखोष्णेनाथवा पुनः ॥ ७० ॥
कुर्याच्चोत्कारिकास्वेदं विषघ्नैरुपनाहयेत्[6] ॥
गुडोदकं वा सुहिमं चातुर्जातकसंयुतम् ॥ ७१ ॥

१ 'लोहितश्च कृष्णः पीतः शुक्लनीलोदरौ च' इति पा० । २ 'अभ्राभासः कापिलो रक्तकोष्ठो यो वा युक्तः कापिलेनोदरेण' इति, 'कृष्णः श्वेतः श्वेतकृष्णौ पवित्रौ रक्ताभ्याभश्चाप्यथान्योन्यचित्रौ' इति च पा० । ३ 'मृत्युरूपाः' इति पा० । ४ 'पश्चात् प्राणान् मुञ्चति क्षिप्रमेव' इति पा० । ५ 'सर्पिश्च सक्षौद्रं' इति पा० । ६ 'विषघ्नैरुपनाहनैः' इति पा० ।

पानमस्मै प्रदातव्यं क्षीरं वा सगुडं हिमम् ॥
शिखिकुक्कुटबर्हाणि सैन्धवं तैलसर्पिषी ॥ ७२ ॥
धूमो हन्ति प्रयुक्तस्तु शीघ्रं वृश्चिकजं विषम् ॥
कुसुम्भपुष्पं रजनी निशा वा कोद्रवं तृणम् ॥ ७३ ॥
एभिर्घृताक्तैर्धूपस्तु पायुदेशे प्रयोजितः ॥
नाशयेदाशु कीटोत्थं वृश्चिकस्य च यद्विषम् ॥७४॥

इदानीं मन्दविषाणां चिकित्सामाह—दंशमित्यादि । चक्रतैलं चक्रपीडितं तिलतैलं, अत्र चक्रशब्दोपादानं हस्तादियन्त्रपीडननिषेधार्थम् । विदारिगणसिद्धेनेत्यादिशब्दस्य लोपाद्विदार्यादिगणसिद्धेन, 'तैलेन' इति शेषः । कुर्याच्चोत्कारिकेत्यादि । उत्कारिका लप्सिका । उत्कारिका तु शिरीषादिविषहरद्रव्यैः पूर्वोक्ता पूर्वकल्पिता च । उपनाहयेद् विषघ्नद्रव्यैरुपनाहस्वेदं कुर्यात् । गुडोदकमित्यादि । बर्हाणि पिच्छानि ॥ ७०–७४ ॥

लूताविषं घोरतमं दुर्विज्ञेयतमं च तत् ॥
दुश्चिकित्स्यतमं चापि भिषग्भिर्मन्दबुद्धिभिः ॥७५॥
सविषं निर्विषं चैतदित्येवं परिशङ्किते ॥
विषघ्नमेव कर्तव्यमविरोधि यदौषधम् ॥ ७६ ॥

लूताविषमादिकारणलक्षणचिकित्सितैर्निर्दिशन्नाह—लूतेत्यादि । घोरतमं कष्टसाध्यं, दुर्विज्ञेयतमम् अतिदुःखेन विज्ञातुं शक्यम् । तस्य दुर्विज्ञेयत्वादेव संशये सति विषहरमेव करणीयमित्याह—सविषमित्यादि । अविरोधि धातुभिः सह यन्न विरुध्यतेऽन्नपानं तत्; न पुनरगदकरणं, धातुविरोधात् ॥ ७५ ॥ ७६ ॥

अगदानां हि संयोगो विषजुष्टस्य युज्यते ॥
निर्विषे मानवे युक्तोऽगदः संपद्यतेऽसुखम् ॥ ७७ ॥
तस्मात् सर्वप्रयत्नेन ज्ञातव्यो विषनिश्चयः ॥
अज्ञात्वा विषसद्भावं भिषग्व्यापादयेन्नरम् ॥ ७८ ॥

तमेव धातुविरोधं दर्शयन्नाह—अगदानामित्यादि । असुखं कष्टम् ॥ ७७ ॥ ७८ ॥

प्रोद्भिद्यमानस्तु यथाऽङ्कुरेण
न व्यक्तजातिः प्रविभाति वृक्षः ॥
तद्वद्दुरालक्ष्यतमं हि तासां
विषं शरीरे प्रविकीर्णमात्रम् ॥ ७९ ॥

लूताविषदुर्विज्ञेयतायामुपमानप्रमाणं निर्दिशन्नाह—प्रोद्भिद्यमान इत्यादि । प्रविकीर्णमात्रं प्रथमं विक्षिप्तमात्रम् , अल्पविस्तृतमित्यर्थः ॥ ७९ ॥

ईषत्सकण्डु प्रचलं सकोठ-
मव्यक्तवर्णं प्रथमेऽहनि स्यात् ॥
अन्तेषु शूनं परिनिम्नमध्यं
प्रव्यक्तरूपं च दिने द्वितीये ॥ ८० ॥
त्र्यहेण तद्दर्शयतीह रूपं
विषं चतुर्थेऽहनि कोपमेति ॥

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । २ 'तस्मात्तेन भिषजा' इति० ।

अतोऽधिकेऽह्नि प्रकरोति जन्तो-
र्विषप्रकोपप्रभवान् विकारान् ॥ ८१ ॥
षष्ठे दिने विप्रसृतं तु सर्वान्
मर्मप्रदेशान् भृशमावृणोति ॥
तत् सप्तमेऽत्यर्थपरीतगात्रं
व्यापादयेन्मर्त्यमतिप्रवृद्धम् ॥ ८२ ॥

ईषत्सकण्डु प्रचलमित्यादि । ईषत्सकण्डु किञ्चित्कण्डूयुक्तं, प्रचलं प्रचलनशीलम् । गयदासस्तु प्रबलमिति पठित्वा व्याख्यानयति—प्रबलम् ईषत् प्रथमदिने, द्वितीयादिषु दिनेषु तु प्रबलतरं क्रमेण प्रबलतमं च; यदाह,—"षष्ठे दिने विप्रसृतं तु सर्वान् मर्मप्रदेशान् भृशमावृणोति"—इति । सकोठं किञ्चित् कोठयुक्तं, कोठश्च वरटीदंशस्थानः । दर्शयतीह रूपमिति रूपं चात्र तन्त्रान्तरोक्तं ज्वररोमहर्षरक्तमण्डलादिकम् । तथा च वृद्धवाग्भटः—"तृतीये सज्वरो रोमहर्षकृद्रक्तमण्डलः । शरावरूपस्तोदाढ्यो रोमकूपेषु सास्रवः"—इति । कोपमेति उन्मार्गप्रवृत्तं भवति, ततोऽधिके पञ्चमदिने उन्मार्गप्रवृत्तं सत् विषकोपप्रभवान् विकारान् करोति । 'तृड्दाहकण्डूप्रबलं' इति केचित् ॥८०–८२॥

यास्तीक्ष्णचण्डोग्रविषा हि लूता-
स्ताः सप्तरात्रेण नरं निहन्युः ॥
अतोऽधिकेनापि निहन्युरन्या
यासां विषं मध्यमवीर्यमुक्तम् ॥ ८३ ॥
यासां कनीयो विषवीर्यमुक्तं
ताः पक्षमात्रेण विनाशयन्ति ॥
तस्मात् प्रयत्नं भिषगत्र कुर्या-
दादंशपाताद्विषघातियोगैः ॥ ८४ ॥

तासां तीक्ष्णमध्यमन्दविषाणां कालावधिमाह—यास्तीक्ष्णचण्डोग्रेत्यादि । तीक्ष्णं दाहपाकस्रावकरं, चण्डम् अतिकोपाटोपकरं; तीक्ष्णचण्डत्वेनोग्रमसह्यं विषं यासां तास्तथा । अतोऽनेनैकादशाहात् परत इति सामर्थ्याद् ग्राह्यम् । तथा चालम्बायनः,—"लूतास्तीक्ष्णविषा हन्युः सप्ताष्टनवभिर्दिनैः । एकादशाहात् परतो विषं यासां तु मध्यमम्"—इति ॥ ८३ ॥ ८४ ॥

विषं तु लालानखमूत्रदंष्ट्रा-
रजःपुरीषैरथ चेन्द्रियेण ॥
सप्तप्रकारं विसृजन्ति लूता-
स्तदुग्रमध्यावरवीर्ययुक्तम् ॥ ८५ ॥
सकण्डुकोठं स्थिरमल्पमूलं
लालाकृतं मन्दरुजं वदन्ति ॥
शोफश्च कण्डूश्च पुलालिका च
धूमायनं चैव नखाग्रदंशे ॥ ८६ ॥
दंशं तु मूत्रेण सकृष्णमध्यं
सरक्तपर्यन्तमवेहि दीर्णम् ॥
दंष्ट्राभिरुग्रं कठिनं विवर्णं
जानीहि दंशं स्थिरमण्डलं च ॥ ८७ ॥

१ 'पुलाकिका' इति पा० ।

रजःपुरीषेन्द्रियजं हि विद्धि
स्फोटं विपकामलपीलुपाण्डुम् ॥

अधिष्ठानविशेषादपि तासां विषं विषे च लिङ्गं दर्शयन्नाह—विषं तु लालेत्यादि । रज आर्तवम्, इन्द्रियं शुक्रम् । सकण्डुकोठमित्यादि । कोठः कोठपिडकाः । शोफ इत्यादि । पुलकिका रोमाञ्चः । धूमायनं धूमोद्गमनमिवाङ्गानाम् । दंशं तु मूत्रेणेत्यादि । रजःप्रभृतिजे 'दंशे' इत्यध्याहारः । विद्धि जानीहि ॥ ८५–८७ ॥—

एतावदेतत् समुदाहृतं तु
वक्ष्यामि लूताप्रभवं पुराणम् ॥ ८८ ॥
सामान्यतो दृष्टमसाध्यसाध्यं
चिकित्सितं चापि यथाविशेषम् ॥ ८९ ॥

इदानीमतीतानागतोक्तैः समानतां विशिष्टतां च विभजन्नाह—एतावदेतदित्यादि । इयत्प्रमाणमेतत् प्रथमादिदिवसाश्रयं लालाद्यधिष्ठानाश्रयं च सर्वलूताविषयं समुदाहृतमागमप्रसिद्धमुक्तमित्यर्थः । वक्ष्यामीत्यादि । लूताप्रभवं लूतानामाद्युत्पत्तिकारणं, पुराणं पुराभवं, सामान्यतो वक्ष्यामीति संबन्धः; तथा दष्टं दंशमप्यसाध्यं साध्यं च सामान्यतो वक्ष्यामीति । चिकित्सितं चेत्यादि । चिकित्सितं यथाविशेषं विशेषानतिक्रमेण; चकाराल्लक्षणमपि विशेषानतिक्रमेण वक्ष्यामीति संबन्धः ॥ ८८ ॥ ८९ ॥

विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम् ।
वशिष्ठं कोपयामास गत्वाऽऽश्रमपदं किल ॥ ९० ॥
कुपितस्य मुनेस्तस्य ललाटात् स्वेदबिन्दवः ॥
अपतन् दर्शनादेव रवेस्तत्समतेजसः ॥ ९१ ॥
तृणे महर्षिणा लूने धेन्वर्थं संभृतेऽपि च ॥
ततो जातास्त्विमा घोरा नानारूपा महाविषाः ॥
अपकाराय वर्तन्ते नृपसाधनवाहने ॥ ९२ ॥
यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः ॥
तस्माल्लूतेति भाष्यन्ते सङ्ख्यया ताश्च षोडश ॥ ९३ ॥

तत्प्रभवमुद्दिशन्नाह—विश्वामित्र इत्यादि । किलेत्यागमसंवादे । तत्समतेजसो रविसमानतेजसो वशिष्ठस्य स्वेदबिन्दवः अपतन् पतिताः । धेन्वर्थं संभृते गवादिचरणार्थं संचिते । मतान्तरेणोत्पत्तिरन्यथा वर्ण्यते,—"अन्ये वदन्ति भुक्तस्य दुष्टस्यान्नस्य मूर्च्छनात् । संभवन्ति विषस्फोटा ये लूताकीटलक्षणम् । यथास्वं धारयन्तस्ते लूताकीटाश्च कीर्तिताः"—इत्यादि ॥ ९०–९३ ॥

कृच्छ्रसाध्यास्तथाऽसाध्या लूतास्तु द्विविधाःस्मृताः
तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु ॥९४॥
त्रिमण्डला तथा श्वेता कपिला पीतिका तथा ॥
आलमूत्रविषा रक्ता कसना चाष्टमी स्मृता ॥ ९५ ॥
ताभिर्दष्टे शिरोदुःखं कण्डूर्दंशे च वेदना ॥
भवन्ति च विशेषेण गदाः श्लैष्मिकवातिकाः ॥९६॥

१ 'लघस्तात्तीक्ष्णवर्चसः' इति प्रा० ।

सौवर्णिका लाजवर्णा जालिन्येणीपदी तथा ॥
कृष्णाऽग्निवर्णा काकाण्डा मालागुणाऽष्टमी तथा ९७
ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ॥
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ९८
पिडका विविधाकारा मण्डलानि महान्ति च ॥
महान्तो मृदवः शोफा रक्ताः श्यावाश्चलास्तथा ९९
सामान्यं सर्वलूतानामेतदादंशलक्षणम् ॥

आलाविषा मूत्रविषा चेति द्वे ॥ ९४–९९ ॥—

विशेषलक्षणं तासां वक्ष्यामि सचिकित्सितम् १००
त्रिमण्डलाया दंशेऽसृक् कृष्णं स्रवति दीर्यते ॥
बाधिर्यं कलुषा दृष्टिस्तथा दाहश्च नेत्रयोः ॥ १०१ ॥
तत्रार्कमूलं रजनी नाकुली पृश्निपर्णिका ॥
पानकर्मणि शस्यन्ते नस्यालेपाञ्जनेषु च ॥ १०२ ॥
श्वेतायाः पिडका दंशे श्वेता कण्डूमती भवेत् ॥
दाहमूर्च्छाज्वरवती विसर्पक्लेदरुक्करी ॥ १०३ ॥
तत्र चन्दनरास्नैलाहरेणुनलवञ्जुलाः ॥
कुष्ठं लामज्जकं वक्रं नलदं चागदो हितः ॥ १०४ ॥
आदंशे पिडका ताम्रा कपिलायाः स्थिरा भवेत् ॥
शिरसो गौरवं दाहस्तिमिरं भ्रम एव च ॥ १०५ ॥
तत्र पद्मककुष्ठैलाकरञ्जककुभत्वचः ॥
स्थिरार्कपर्ण्यपामार्गदूर्वाब्राह्मयो विषापहाः ॥ १०६ ॥
आदंशे पीतिकायास्तु पिडका पीतिका स्थिरा ॥
भवेच्छर्दिर्ज्वरः शूलं मूर्ध्नि रुक् तथाऽक्षिणी ॥१०७॥
तत्रेष्टाः कुटजोशीरतुङ्गपद्मकवञ्जुलाः ॥
शिरीषकिणिहीशेलुकदम्बककुभत्वचः ॥ १०८ ॥
रक्तमण्डनिभे दंशे पिडकाः सर्षपा इव ॥
जायन्ते तालुशोषश्च दाहश्चालविषार्दिते ॥ १०९ ॥
तत्र प्रियङ्गुह्रीबेरकुष्ठलामज्जवञ्जुलाः ॥
अगदः शतपुष्पा च सपिप्पलवटाङ्कुराः ॥ ११० ॥
पूतिर्मूत्रविषादंशो विसर्पी कृष्णशोणितः ॥
कासश्वासवमीमूर्च्छाज्वरदाहसमन्वितः ॥ १११ ॥
मनःशिलालमधुककुष्ठचन्दनपद्मकैः ॥
मधुमिश्रैः सलामज्जैरगदस्तत्र कीर्तितः ॥ ११२ ॥
आपाण्डुपिडको दंशो दाहक्लेदसमन्वितः ॥
रक्ताया रक्तपर्यन्तो विज्ञेयो रक्तसंयुतः ॥ ११३ ॥
कार्यस्तत्रागदस्तोयचन्दनोशीरपद्मकैः ॥
तथैवार्जुनशेलुभ्यां त्वग्भिराम्रातकस्य च ॥ ११४ ॥
पिच्छिलं कसनादंशाद्रुधिरं शीतलं स्रवेत् ॥
कासश्वासौ च तत्रोक्तं रक्तलूताचिकित्सितम् ११५

सामान्यलक्षणमभिधाय तासां विशेषलक्षणं चिकित्सिते च भेदं दर्शयन्नाह—विशेषलक्षणमित्यादि । चकारात् परिषेकेऽपि । श्वेताया इत्यादि । रास्ना गन्धनाकुली । आदंशे इत्यादि । तुङ्गं पद्मकेशरं, पुन्नाग इत्यपरे । वञ्जुलो जलवेतसः; जेज्जटस्तु कम्बुकेति पठित्वा किणिहीति व्याख्यानयति । रक्तमण्डनिभे इत्यादि ।

'रक्तपाद्या' इति क्वचित्, तत्रापि रक्ताया एव ग्रहणम् । पिच्छिलमित्यादि । रक्तलूताचिकित्सितं तोयचन्दनादिकम् ॥ १००–११५ ॥

पुरीषगन्धिरल्पासृक् कृष्णाया दंश एव तु ॥
ज्वरमूर्च्छावमीदाहकासश्वाससमन्वितः ॥ ११६ ॥
तत्रैलावक्रसर्पाक्षीगन्धनाकुलिचन्दनैः ॥
महासुगन्धिसहितैः प्रत्याख्यायागदः स्मृतः ॥११७॥
दंशे दाहोऽग्निवक्त्रायाः स्रावोऽत्यर्थं ज्वरस्तथा ॥
चोषकण्डूरोमहर्षा दाहविस्फोटसंयुतः ॥ ११८ ॥
कृष्णाप्रशमनं चात्र प्रत्याख्याय प्रयोजयेत् ॥
सारिवोशीरयष्ट्याह्वचन्दनोत्पलपद्मकम् ॥ ११९ ॥

इदानीं सौवर्णिकादिष्वसाध्येषु द्वयोः कृष्णाग्निवक्त्रयोः कदाचित्कृच्छ्रसाध्यत्वात् कृच्छ्रसाध्यानन्तरं लक्षणं प्रत्याख्यानपूर्वकं चिकित्सितं चाह—पुरीषगन्धिरित्यादि । सर्पाक्षी लोहितपुष्पा शङ्खपुष्पीभेदः । महासुगन्धिः दुन्दुभिस्वनीयोक्तोऽगदः । दंशे इत्यादि । चोषस्थाने तृष्णेति क्वचित्, संयुत इत्यत्र दंश इति विभक्तिविपरिणामेन योजनीयम् । गयदासस्तु कृष्णाग्निवक्त्रयोर्नियतासाध्यत्वमङ्गीकुर्वन् सौवर्णिकादिक्रमेणाग्रे लक्षणमात्रमेव पठति ॥ ११६–११९ ॥

सर्वासामेव युञ्जीत विषे श्लेष्मातकत्वचम् ॥
भिषक् सर्वप्रकारेण तथा चाक्षीवपिप्पलम् ॥१२०॥

तासामुक्तानां दशानामपि लूतानां विशिष्टं चिकित्सितमभिधाय सामान्यमप्याह—सर्वासामित्यादि । सर्वप्रकारेण पानाभ्यञ्जनादयः । अक्षीवपिप्पलमिति अक्षीवात् महानिम्बाज्जातः पिप्पल अक्षीवपिप्पलः, अन्ये शोभाञ्जनाज्जात इति मन्यन्ते । अन्यत्राप्युक्तं—"अक्षीवाज्जातस्य पिप्पलस्य मणिः सर्वविषापहः । शेलुत्वचो वा" इति । आलम्बायनोऽप्यत्राह,—"लूताविषेषु सर्वेषु पाननस्याञ्जनादिना । प्रयोज्यः पिप्पलोऽक्षीवजातः शेलुत्वचोऽथवा"—इति ॥ १२० ॥

कृच्छ्रसाध्यविषा ह्यष्टौ प्रोक्ता द्वे च यदृच्छया ॥
अवार्यविषवीर्याणां लक्षणानि निबोध मे ॥ १२१ ॥
श्यामः सौवर्णिकादंशः सफेनो मत्स्यगन्धकः ॥
श्वासः कासो ज्वरस्तृष्णा मूर्च्छा चात्र सुदारुणा॥
आदंशे लाजवर्णाया श्यामं पूति स्रवेदसृक् ॥
दाहो मूर्च्छाऽतिसारश्च शिरोदुःखं च जायते १२३
घोरो दंशस्तु जालिन्या राजिमानवदीर्यते ॥
स्तम्भः श्वासस्तमोवृद्धिस्तालुशोषश्च जायते १२४
एणीपद्यास्तथा दंशो भवेत् कृष्णतिलाकृतिः ॥
तृष्णामूर्च्छाज्वरच्छर्दिकासश्वाससमन्वितः॥१२५॥
दंशः काकाण्डिकादष्टे पाण्डुरक्तोऽतिवेदनः ॥
तृण्मूर्च्छाश्वासहृद्रोगहिक्काकासाः स्युरुच्छ्रिताः ॥

रक्तो मालागुणादंशो धूमगन्धोऽतिवेदनः ॥
बहुधा च विशीर्येत दाहमूर्च्छाज्वरान्वितः ॥१२७॥

इदानीमसाध्यानामपि परिहारार्थं लक्षणमाह—कृच्छ्रसाध्येत्यादि । द्वे यदृच्छयेति अवार्यविषवीर्याणां मध्ये द्वे च यदृच्छया सिध्यतः । शेषाणामवार्यविषवीर्याणां षट्संख्यकानां, निबोध जानीहि । श्याम इत्यादि । श्यामो दग्धेष्टकादिवर्णः । घोरो दंश इत्यादि । तमोवृद्धिः पुनः पुनस्तमोदर्शनम् । एणीपद्या इत्यादि । विशीर्येत शटतीत्यर्थः ॥ १२१–१२७ ॥

असाध्यास्वप्यभिहितं प्रत्याख्यायाशु योजयेत् ॥
दोषोच्छ्रायविशेषेण दाहच्छेदविवर्जितम् ॥ १२८ ॥

केचिदसाध्यानामपि चिकित्सितं पठन्ति—असाध्याखित्यादि ॥ १२८ ॥

साध्याभिराभिर्लूताभिर्दष्टमात्रस्य देहिनः ॥
वृद्धिपत्रेण मतिमान् सम्यगादंशमुद्धरेत् ॥ १२९ ॥

इदानीं कृच्छ्रसाध्यानां तात्कालिकं चिकित्सितमाह—साध्याभिराभिरित्यादि । अस्याग्रे केचिदमुं पाठं पठन्ति—'जाम्ब्वौष्ठेनाग्नितप्तेन देहेदाकरवारणात्'-इति ॥ १२९ ॥

अमर्मणि विधानज्ञो वर्जितस्य ज्वरादिभिः ॥
दंशस्योत्कर्तनं कुर्यादल्पश्वयथुकस्य च ॥ १३० ॥
मधुसैन्धवसंयुक्तैरगदैर्लेपयेत्ततः ॥
प्रियङ्गुरजनीकुष्ठसमङ्गामधुकैस्तथा ॥ १३१ ॥
सारिवां मधुकं द्राक्षां पयस्यां क्षीरमोरटम् ॥
विदारीगोक्षुरक्षौद्रमधुकं पाययेत वा ॥ १३२ ॥
क्षीरिणां त्वक्कषायेण सुशीतेन च सेचयेत् ॥
उपद्रवान् यथादोषं विषघ्नैरेव साधयेत् ॥ १३३ ॥

कीदृशस्य दंशस्य छेदं कुर्यादित्याह—अमर्मणि विधानज्ञ इत्यादि । ज्वरादिभिः असाध्यलूतोक्तैः, 'असाध्यानां भिषक् प्राज्ञो न युञ्जीत चिकित्सितम्' इति । मधुसैन्धवेत्यादि । अगदैः महासुगन्ध्यादिभिः । तत इति छेदादनन्तरम् । समङ्गा वराहक्रान्ता । तथेति प्रियङ्ग्वादिभिरपि लेपयेदित्यर्थः । सारिवामित्यादि । सारिवा उत्पलसारिवा, पयस्या अर्कपुष्पी, क्षीरमोरटं मोरट एव । एकत्र योगे मधुकद्वयं स्थलजजलजभेदेन । क्षीरिणामित्यादि ॥ १३०–१३३ ॥

नस्याञ्जनाभ्यञ्जनपानधूमं
तथाऽवपीडं कवलग्रहं च ॥
संशोधनं चोभयतः प्रगाढं
कुर्यात्सिरामोक्षणमेव चात्र ॥ १३४ ॥

लूतासु दशविधमुपक्रममाह—नस्याञ्जनाभ्यञ्जनेत्यादि । अभ्यञ्जनस्थाने आलेपनमिति केचित्। संशोधनमुभयतो वमनविरेचनाख्यं कुर्यात् । सिरामोक्षणमित्यत्र 'रक्तं हरेच्चापि जलायुकाभिः' इति केचित् । एतच्च सर्वं विषहरैरेव दशविधमपि ॥ १३४ ॥

१ 'चोषकण्डूरोमहर्षा विदाहः स्फोटजन्म च' इति पा० । २ 'मूर्ध्नि चात्यर्थवेदना' इति पा० । ३ 'तृष्णामूर्च्छाज्वरश्वासदाहकृत् प्राणनाशनः' इति पा० ।

१ 'साध्याभिरपि लूताभिः' इति पा० । २ 'दहेदाकरणादिति' इति पा० ।

**कीटदष्टव्रणान् सर्वानहिदष्टव्रणानपि ॥**
**आदाहपाकात्तान् सर्वांश्चिकित्सेद्दुष्टवद्भिषग् ॥१३५**

लूतानामपि कीटत्वात् सामान्येनैव कीटविषोत्थव्रणानां तथा तादृशानामहिदष्टव्रणानामपि दुष्टव्रणवच्चिकित्सामाह—कीटदष्टव्रणानित्यादि । आदाहपाकादिति यावद्दाहपाकौ तिष्ठतः; विनिवृत्तयोश्च दाहपाकयोर्वक्ष्यमाणो विधिर्भविष्यति । क्वचित् 'सदाहपाकान्' इति पाठः । दुष्टवत् दुष्टव्रणवत्; दुष्टव्रणोक्तं च 'दुष्टव्रणेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम्' इत्यादि । तत्र शोधनं विषहरद्रव्यैः, तथा लेपादिकमपि विषहरमेव दुष्टव्रणचिकित्सितेन ॥ १३५ ॥

**विनिवृत्ते ततः शोफे कर्णिकापातनं हितम् ॥**
**निम्बपत्रं त्रिवृद्दन्ती कुसुम्भं कुसुमं मधु ॥ १३६ ॥**
**गुग्गुलुः सैन्धवं किण्वं वर्चः पारावतस्य च ॥**
**विषवृद्धिकरं चान्नं हित्वा संभोजनं हितम् ॥१३७॥**

निवृत्तदाहादौ व्रणे या विषोत्पन्ना कर्णिका तस्याश्चिकित्सामाह—विनिवृत्ते इत्यादि । कर्णिका मांसकन्दी, पद्मकर्णिकाकारत्वात् कर्णिका भण्यते । तस्याश्च शोणितपित्तोत्थाया मृदुरुजायाः प्रच्छनमन्तरेणैव पातनं सुकरम् । तान्येव पातनद्रव्याण्याह—निम्बपत्रमित्यादि । किण्वं सुराबीजम् । एतन्निम्बपत्रादिकं द्रव्यं लेपनेन कर्णिकापातने हितं, तथा विषवृद्धिकरं तिलकुलत्थाद्यन्नं वर्जयित्वा यदन्यत् पातनं संभोजनं तत् कर्णिकायाः पातने हितम् । गयदासस्तु निम्बपत्रमित्यस्य स्थाने 'शिखीवंश' इति पठित्वा व्याख्यानयति—शिखी लाङ्गलकी, वंशो वंशत्वक् । किण्वस्थाने दन्तं पठति, दन्तो गोदन्तो गवां दन्तः ॥ १३६ ॥ १३७ ॥

**विषेभ्यः खलु सर्वेभ्यः कर्णिकामरुजां स्थिराम् ॥**
**प्रच्छयित्वा मधून्मिश्रैः शोधनीयैरुपाचरेत् ॥१३८**

कफवातोत्थायाः कर्णिकायाश्चिकित्सामाह—विषेभ्य इत्यादि । अरुजाम् अविद्यमानरुजां, स्थिरां कठिनां । शोधनीयैः निम्बपत्रत्रिवृतादिभिः, दन्तीमूलमदनफलकल्कादिभिर्वा ॥ १३८ ॥

**सप्तषष्टस्य कीटानां शतस्यैतद्विभागशः ॥**
**दष्टलक्षणमाख्यातं चिकित्सा चाप्यनन्तरम् ॥१३९॥**

इदानीं परतन्त्रोदितसंख्याविप्रतिपत्तिनिरासार्थं स्वतन्त्रे व्यासोक्तसंख्याः सुखबोधार्थं च कीटेषु दष्टलक्षणचिकित्सितोपदेशेन परिमाणमुद्दिशन्नाह—सप्तषष्टस्येत्यादि । सप्तषष्टशतस्य कीटानां दष्टलक्षणमाख्यातं कथितं, विभागशः प्रत्येकं दष्टलक्षणादनन्तरं चिकित्सितमपि समाख्यातम् ॥ १३९ ॥

**सविंशमध्यायशतमेतदुक्तं विभागशः ॥**

इदानीं पूर्वतन्त्रस्याध्यायसंख्यायाः परिमाणं यदुद्दिष्टं तन्निर्दिष्टमिति दर्शयन्नाह—सविंशमित्यादि । एतत् सविंशमध्यायशतं, विभागशः सूत्रस्थानादिविभागेनोक्तम् ॥—

**इहोद्दिष्टाननिर्दिष्टानर्थान् वक्ष्याम्यथोत्तरे ॥ १४० ॥**

शालाक्यकौमारकायचिकित्साभूतविद्यानां नाममात्रेणेहोद्दिष्टानां निर्देशाभावात् कथं ज्ञानमित्याह—इहोद्दिष्टानित्यादि । इह विंशत्यधिकाध्यायशते येऽर्थाः शालाक्यादयो नाममात्रेणोद्दिष्टा नतु प्रपञ्चेन निर्दिष्टाः, तानथ अनन्तरमुत्तरे वक्ष्यामि १४०

**सनातनत्वाद्वेदानामक्षरत्वात्तथैव च ॥**
**तथा दृष्टफलत्वाच्च हितत्वादपि देहिनाम् ॥ १४१ ॥**
**वाक्समूहार्थविस्तारात् पूजितत्वाच्च देहिभिः ॥**
**चिकित्सितात् पुण्यतमं न किंचिदपि शुश्रुमः १४२**
**ऋषेरिन्द्रप्रभावस्यामृतयोनेर्भिषग्गुरोः ॥**
**धारयित्वा तु विमलं मतं परमसंमतम् ॥**
**उक्ताहारसमाचार इह प्रेत्य च मोदते ॥ १४३ ॥**

इति सुश्रुतसंहितायां कल्पस्थाने कीटकल्पो नामाष्टमोऽध्यायः ॥ ८ ॥

इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां पञ्चमं कल्पस्थानं समाप्तम् ॥ ५ ॥

चिकित्सितस्योपादेयतामागमप्रत्यक्षफलत्वाभ्यामेव निर्दिशन्नाह—सनातनत्वादित्यादि । चिकित्सितादन्यत् पुण्यतमं न किमपि शुश्रुमः न किमपि अनु गुरुपारम्पर्येण श्रुतवन्तः । कुत इत्याह—सनातनत्वाद्वेदानामिति ।—आयुर्वेदाङ्गानां शल्यादीनां सनातनत्वान्नित्यभवत्वादकृतकत्वादित्यर्थः । एतेनाकृतकत्वाख्यहेतुकेन दोषाभावेण तत्प्रोक्तस्य चिकित्सितस्य पुण्यतमत्वम् । तथा अक्षरत्वादायुर्वेदाङ्गानां शल्यादीनां न क्षरतीत्यक्षरमविचलनात्मकमुच्यते, एतानि चायुर्वेदाङ्गान्यक्षराणि अविचलनात्मकानि याथातथ्यादित्यर्थः, एतस्मादपि चिकित्सितं पुण्यतमम् । आगमप्रमाणमभिधाय प्रत्यक्षं प्रमाणमाह—तथा दृष्टफलत्वाच्चेति । दृष्टफलमपि किंचिद[1]पुण्यतमं यथा स्तेयादीत्याह—हितत्वादपि देहिनामिति । चिकित्सितादित्यस्य स्वरूपविशेषणमाह—वाक्समूहार्थविस्तारादिति ।—वाक्समूहेऽर्थविस्तारो यस्मिन्; अत एव पूजितत्वाच्च देहिभिरिति देहिनः व्याधिपरिमोक्षं स्वस्थरक्षणमिच्छन्त आयुर्वेदं विशिष्टपदपदार्थरूपं स्वसुखकामाः पूजयन्ति । यतश्चिकित्सितमुक्तैर्हेतुभिः पवित्रतमं; तस्मादिन्द्रप्रभावस्य मुनेस्तं वेदमविद्यमानपापलक्षणममलं, परमाणां महतां सम्यङ्मतं पूजितं हृदये धारणात् । उक्ताहारसमाचार उक्तव्याधिपरिमोक्षस्वस्थरक्षणाहाराचारः । इह इहलोके, प्रेत्य परलोकेऽपि, मोदते हृष्यति । गयदासस्तु 'सनातनत्वाद्वेदानामक्षरत्वात्तथैव च' इतीदृशं व्याख्यानयति —सनातनत्वात् नित्यभवत्वादायुषः संतानस्योपकार्यस्य नित्यसद्भावात्तदुपहितकारकोऽप्यायुर्वेदो नित्यः । तत्रायुषः संतानस्यैव सन्ततिनित्यतामुद्दिशन्नाह—अक्षरत्वादिति ।—न क्षरन्तीति अक्षराणि अकारादयः स्वराः कादीनि च व्यञ्जनानि; तद्घटितत्वादायुर्वेदस्यापि नित्यत्वं कारणानुरूपं कार्यमिति कृत्वा ॥ १४१–१४३ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां कल्पस्थानेऽष्टमोऽध्यायः ॥ ८ ॥

---

१ 'आदंशपाकं यत्नेन चिकित्सेत् सर्पदष्टवत्' इति पा० ।

१ 'किंचित् पुण्यतमं यथा—अस्तेयादीत्याह' इति पा० ।

निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता ।

## अथ उत्तरतन्त्रम् ।

### प्रथमोऽध्यायः ।

**अथात औपद्रविकमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

कल्पस्थानानन्तरमुत्तरतन्त्रमारभ्यते, येन कल्पस्थाने विषजस्यागन्तुव्रणस्य विषं[1]मुपद्रवकारि निजव्रणस्यापि रिपुं[2]भिरवचारितविषमुपद्रवभूतमिति तच्चिकित्सितमभिहितम्, अत उपद्रवचिकित्साधिकारसामान्यात् सर्वोपद्रवचिकित्सार्थमुत्तरतन्त्रारम्भः; अथवा सविंशमध्यायशतं परिसमाप्य परिशिष्टत्वा[3]दुत्तरतन्त्रं प्रतिपाद्यं भवति । तस्य च तन्त्रस्योपद्रवानधिकृत्य प्रवृत्तत्वान्निरुक्त्या औपद्रविकत्वं प्राप्तमप्यध्याये व्यवस्थितम् । तदुक्तं सूत्रे—'अधिकृत्य कृतं' इत्यादि । स च निरुक्तिसंपन्नोऽध्यायः प्राक् प्रतिपाद्यो भवतीत्यत आह—अथात इत्यादि । उपद्रवान् रोगानधिकृत्य कृतोऽध्याय औपद्रविकः ॥ १ ॥ २ ॥

**अध्यायानां शते विंशे यदुक्तमसकृन्मया ॥**
**वक्ष्यामि बहुधा सम्यगुत्तरेऽर्थानिमानिति ॥ ३ ॥**
**इदानीं तत् प्रवक्ष्यामि तन्त्रमुत्तरमुत्तमम् ॥**

इदानीमारभ्यमाणस्योत्तरतन्त्रस्य संबन्धं दर्शयन्नाह—अध्यायानामित्यादि । यद्यस्मात् कारणाद्विंशत्यधिकेऽध्यायशते पुनः पुनरुक्तं मया; किं तदित्याह—'इमानर्थान् बहुधोत्तरे वक्ष्यामि' इति; तत्तस्मात् कारणादधुनोत्तरतन्त्रं प्रवक्ष्यामीति संबन्धः । केचित् 'यद्विंशत्यधिके प्रोक्तमध्यायानां शते मया' इति पठन्ति; अपरे तु 'शते सविंशेऽध्यायानां' इति पठन्ति ॥ ३ ॥—

**निखिलेनोपदिश्यन्ते यत्र रोगाः पृथग्विधाः ॥ ४ ॥**
**शालाक्यतन्त्राभिहिता विदेहाधिपकीर्तिताः ॥**
**ये च विस्तरतो दृष्टाः कुमाराबाधहेतवः ॥ ५ ॥**
**षट्सु कायचिकित्सासु ये चोक्ताः परमर्षिभिः ॥**
**उपसर्गादयो रोगा ये चाप्यागन्तवः स्मृताः ॥ ६ ॥**
**त्रिषष्टी रससंसर्गाः स्वस्थवृत्तं तथैव च ॥**
**युक्तार्था युक्तयश्चैव दोषभेदास्तथैव च ॥ ७ ॥**
**यत्रोक्ता विविधा अर्था रोगसाधनहेतवः ॥**

इदानीमुत्तरतन्त्रस्य निखिलव्याधिनिश्चयचिकित्सालक्षणां स्तुतिं निर्दिशन्नाह—निखिलेनेत्यादि । निखिलेन सामस्त्येन । यत्र यस्मिन्नुत्तरतन्त्रे । पृथग्विधा नानाप्रकाराः । के ते नानाप्रकारा रोगा निखिलेनोत्तरेऽभिधास्यन्ते ? इत्याह—शालाक्यशास्त्राभिहिता इत्यादि । विदेहाधिपकीर्तिता इति निमिप्रणीताः षट्सप्ततिर्नेत्ररोगाः, न करालभद्रशौनकादिप्रणीताः । ये च विस्तरतो दृष्टा इति पार्वतकजीवकबन्धकप्रभृतिभिः; कुमाराबाधहेतवः स्कन्दग्रहप्रभृतयः । षट्सु कायचिकित्सासु अग्निवेशभेडजातूकर्णपराशरहारीतक्षारपाणिप्रोक्तासु । उपसर्गादयो ज्वरादयः । आगन्तवः अत्र उन्मादादयः । ननु भूतनिमित्तत्वादुन्मादादीनां कथमागन्तुकत्वं ? यतः प्रहारादिकृता आगन्तवः; सत्यं, बाह्यनिमित्तत्वादुन्मादादीनामागन्तुकत्वम् । **गयी** तु, उपसर्गादयः अमानुषोपसर्गादयः, ते चापस्मारोन्मादा भूतविद्याभिहिताः, त एवागन्तव इति व्याख्यानयति । उत्तरतन्त्रे निखिलेन रोगा एव प्रोक्ता उतान्येऽपि प्रोक्ता ? इति पृष्ट आह—त्रिषष्टी रससंसर्गा इत्यादि । युक्तार्थाः प्रमाणोपपन्नार्थाः । युक्तयः तन्त्रयुक्तयः । अस्याग्रे केचित् 'विदेहाधिपतिः श्रीमान् जनको नाम विश्रुतः । आलम्भयज्ञप्रवणः सोऽयजद्ब्राह्मणै[1]र्वृतः ॥ तस्य यागप्रवृत्तस्य कुपितो भगवान् रविः ॥ दृष्टिं प्रणाशयामास सोऽनुतेपे महत्तपः ॥ दीप्तांशुस्तपसा तेन तोषितः प्रददौ पुनः ॥ चक्षुर्वेदं प्रसन्नात्मा सर्वभूतानुकम्पया ॥' इति पाठं पठन्ति व्याख्यानयन्ति च । तं च **बृहत्पञ्जिकाकारो** न पठति, तस्मान्मयाऽपि न पठितो न व्याख्यातश्च ॥ ४–७ ॥—

**महतस्तस्य तन्त्रस्य दुर्गाधस्याम्बुधेरिव ॥ ८ ॥**
**आदावेवोत्तमाङ्गस्थान् रोगानभिदधाम्यहम् ॥**
**सङ्ख्यया लक्षणैश्चापि साध्यासाध्यक्रमेण च ॥ ९ ॥**

इदानीं सर्वेन्द्रियाधिष्ठानत्वेन प्राणाधिष्ठानत्वेन च शिरः प्रधानमतः प्रथमं शिरःस्थान् व्याधीन् कथयामीति निर्दिशन्नाह—महत इत्यादि । तस्य उत्तरतन्त्रस्यादौ उत्तमाङ्गस्थान् रोगानभिदधामीति संबन्धः । अम्बुधेरिव समुद्रस्येव, महतः अतिविस्तीर्णस्य, दुर्गाधस्य अगाधस्य । संख्यया षट्सप्तत्या विदेहाधिपप्रोक्तया, लक्षणैः व्यञ्जनैः, चकारेण हेतुचिकित्साभ्यां; साध्यासाध्यक्रमेण चेति साध्यासाध्यपरिपाट्या । अथवा लक्षणैः हेतुपूर्वरूपोपशयसंप्राप्तिभिः; चकारेण चिकित्सितमेवानुक्तं समुच्चीयते, केचिच्च क्रमशब्देनैव चिकित्सितं गृह्णन्ति ॥ ८ ॥ ९ ॥

---

१ 'विषवदुपद्रवकारित्वं' इति पा० । २ 'रिपुभिरवचारितविषस्य विषवदुपद्रवकारित्वम्' इति पा० । ३ 'परिशिष्टभूतमुत्तरतन्त्रं' इति पा० । ४ 'तत्र' इति पा० ।

१ 'याचक' इति पा० ।

**विद्याद्द्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसंमितम् ॥**
**द्व्यङ्गुलं सर्वतः सार्धं भिषङ्नयनबुद्बुदम् ॥ १० ॥**
**सुवृत्तं गोस्तनाकारं सर्वभूतगुणोद्भवम् ॥**

तत्र सर्वभूत्तमाङ्गस्थेषु संख्यादिभिर्वाच्येषु नयनगतरोगाभिधानं, सर्वेन्द्रियाणां मध्ये नयनस्य प्रधानत्वात्; तत्रापि नयनस्य पटलव्यधनिमित्तमन्तःप्रवेशायामविस्तारैर्मानम[1]माकारं च दर्शयन्नाह—विद्यादित्यादि । ध्यङ्गुलबाहुल्यमिदमन्तःप्रवेशप्रमाणं, ध्य[2]ङ्गुलमानमाह—स्वाङ्गुष्ठोदरसंमितं; एतेनैतदुक्तं भवति—स्वाङ्गुष्ठोदरसंमितं यदङ्गुलं तदङ्गुलद्वयप्रमाणं नेत्रबुद्बुदस्यान्तःप्रवेशं विद्यात् । द्व्यङ्गुलं सार्धमिति अर्धतृतीयाङ्गुलमित्यर्थः । सर्वत इति आयामतो विस्तरश्चेत्यर्थः । नयनबुद्बुदम् अक्षिगोलकः । सर्वभूतगुणोद्भवं सर्वभूतेभ्यस्तद्गुणेभ्यश्चोद्भवो यस्य तत्तथाविधं; सर्वभूतेभ्यस्तावन्नेत्रबुद्बुदं सिरास्नाय्वस्थिसहितं साश्रुमार्गं चोत्पन्नं, तद्गुणेभ्यश्च रक्तसितकृष्णगुणा उत्पन्नाः; एतेन गुणवद्भूतोत्पन्नमित्यर्थः । केचिद्गुणशब्देन भूतप्रसादं कथयन्ति; तच्च व्याख्यानं जेज्ज[3]टाय न रोचते ॥ १० ॥—

**पलं भुवोऽग्नितो रक्तं वातात् कृष्णं सितं जलात् ११**
**आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे ॥**

येन भूतेन नेत्रबुद्बुदमारभ्यते येन च रक्तादय इति दर्शयन्नाह—पलमित्यादि । पलं मांसं, भुवः पृथिव्याः; अग्नितो रक्तमिति अग्निगुणाद्रक्तं पित्तरूपं; एवं सितं जलादित्यत्रापि व्याख्येयं; अश्रुमार्गा अश्रुस्रोतांसि ॥ ११ ॥

**दृष्टिं चात्र तथा वक्ष्ये यथा ब्रूयाद्विशारदः ॥ १२ ॥**
**नेत्रायामत्रिभागं तु कृष्णमण्डलमुच्यते ॥**
**कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः ॥१३॥**

इदानीं तस्मिन्नेत्रबुद्बुदे यद्दृष्टिमण्डलं तस्य प्रमाणं पूर्वाचार्यप्रतिपादितप्रमाणानुरूपं प्रतिपादयितुमाह—दृष्टिं चेत्यादि । विशारदो विदेहः । कृष्णात् सप्तममिति कृष्णमण्डलात् सप्तमं भागं दृष्टिमिच्छन्ति । दृष्टिविशारदाः शालाकिनः । एतत् प्रमाणं परमतमप्यप्रतिषिद्धत्वादनुमतमेव । तस्य सप्तमांशस्य किं प्रमाणं स्यादिति कथनाय मसूरदलमात्रामित्यग्रे निर्देशः; अथवा शालाकिनां परमतमभिधाय मसूरदलमात्रामिति स्वमतमभिधास्यत्याचार्यः । यद्येवं तर्ह्यातुरोपक्रमणीये 'नवमस्तारकांशो दृष्टिः' इति कथमुक्तवान्? सत्यं, महापुरुषाणां पूर्णायुषां भिन्नविषयमभिधानमिति न दोषः, अतोऽन्यान्यपि समाधानानि पञ्जिकोक्तानि सन्ति, तानि विस्तरभयान्न लिखितानि । केचिदिमं पाठमन्यथा कृत्वाऽऽपातनिकापूर्वकं पठन्ति, स चाभावान्न लिखितः ॥ १२ ॥ १३ ॥

**मण्डलानि च सन्धींश्च पटलानि च लोचने ॥**
**यथाक्रमं विजानीयात् पञ्च षट् च षडेव च ॥१४॥**

इदानीं नयनस्य रोगाधिष्ठानकथनाय मण्डलादिसंख्यामाह—मण्डलानीत्यादि । केचिदेवं पठन्ति—'लोचने मण्डलान्यन्तान् संधींश्च पटलानि च । जानीयात् क्रमशः पञ्च चतुरः षट् षडेव च–' इति । एष पाठो निबन्धकारैर्दूषितः ॥ १४ ॥

**पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां मण्डलानि तु ॥**
**अनुपूर्वं तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् ॥१५॥**

तान्येव पञ्चमण्डलान्याह–पक्ष्मवर्त्मेत्यादि । पक्ष्मादीनां पञ्च मण्डलानि । ते तु मण्डला अनुपूर्वं मध्याः, यथोत्तरं चान्त्याः ॥ १५ ॥

**पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतोऽपरः ॥**
**शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपरः ॥**
**ततः कनीनकगतः षष्ठश्चापाङ्गगः स्मृतः ॥ १६ ॥**

सन्धीनाह—पक्ष्मेत्यादि । कनीनकगतो नासासमीपेऽवस्थि[1]तः, अपाङ्गगो भ्रूपुच्छान्तःस्थितः ॥ १६ ॥

**द्वे वर्त्मपटले विद्याच्चत्वार्यन्यानि चाक्षिणि ॥**
**जायते तिमिरं येषु व्याधिः परमदारुणः ॥ १७ ॥**

पटलान्याह—द्वे इत्यादि । चत्वार्यन्यानि चाक्षिणि अपराण्यपि चत्वारि पटलान्यक्षिणि विद्यात् । येषु चतुर्षु पटलेषु ॥ १७ ॥—

**तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम् ॥**
**मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम् ॥ १८ ॥**
**पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥**

इदानीं तान्येव तिमिरस्याश्रयभूतानि चत्वारि पटलानि चिकित्सार्थं विभजन्नाह—तेज इत्यादि । अत्र तेजःशब्देनालोचकतेजःसमाश्र[2]यं सिरागतं रक्तं बोद्धव्यम् । जलं त्वग्गतो रसधातुः, बाह्यम् अक्षिगोलकस्य प्रथमं पटलं; अन्यत् द्वितीयं, बाहुल्यं स्थूलता ॥ १८ ॥—

**सिराणां कण्डराणां च मेदसः कालकस्य च ॥१९॥**
**गुणाः कालात् परः श्लेष्मा बन्धनेऽक्ष्णोः सिरायुतः**

तेषामेव धातूनां पटलाश्रयाणामुपधातूनां च कै[3]र्मितो नयनेऽस्तित्वं दर्शयन्नाह—सिराणामित्यादि । सिरादीनां कालकास्थिपर्यन्तानां परा गुणा यथोत्तरमुत्कृष्टाः प्रसादा, अक्ष्णोर्बन्धनेऽन्योन्यसंहननेऽधिकृताः । तथा कालकात् परः कालकास्थ्नः सकाशाच्छ्लेष्मा सिरायुतोऽक्ष्णोर्बन्धने पर उत्कृष्टोऽधिकृत इति पिण्डार्थः । सिराणामित्यत्र बहुवचनस्याद्यर्थवाचित्वाद्धमनीनामपि ग्रहणम् । कण्डराणामित्यत्र कण्डराशब्दः स्नायुवाचकः । अन्ये तु सिरादीनां मेदःपर्यन्तानां गुणाः प्रसादाः कालकस्याक्ष्णोः कृष्णभागस्य बन्धनेऽधिकृताः । तथा कालात् परः कृष्णभागाद्यः परः शुक्लो भागस्तस्य बन्धने सिरायुतः श्लेष्मा । केचिदेतदर्थानुकूल्येनैवात्र पाठं पठन्ति,–'सिराणां कण्डराणां च

१ 'मानं कारणं च' इति पा० । २ 'अङ्गुलमानमाह–' इति पा० । ३ 'जेज्जटस्य' इति पा० ।

१ 'नासासमीपव्यवस्थितः' इति पा० । २ 'समाश्रितं' इति पा० । ३ 'कार्यत्वेन' इति पा० ।

मेदसः कृष्णबन्धने । गुणाः कालात् परः श्लेष्मा बन्धनेऽक्ष्णोः सिरायुतः'-इति ॥ १९ ॥—

**सिरानुसारिभिर्दोषैर्विगुणैरूर्ध्वमागतैः ॥ २० ॥**
**जायन्ते नेत्रभागेषु रोगाः परमदारुणाः ॥**

इदानीं नेत्ररोगाणां सामान्यां संप्राप्तिमाह—सिरानुसारिभिरित्यादि । सिरा अत्र नेत्रगताः । विगुणैः प्रकुपितैः । नेत्रभागेषु नेत्रावयवेषु । नेत्रराजिष्विति केचित् पठन्ति; तत्र नेत्राण्येव राजयो नेत्रराजयः । एतेन सर्वनेत्राश्रया अपि लब्धा भवन्ति ॥ २० ॥—

**तत्राविलं ससंरम्भमश्रुकण्डूपदेहवत् ॥ २१ ॥**
**गुरूषातोदरागाद्यैर्जुष्टं चाव्यक्तलक्षणैः ॥**
**सशूलं वर्त्मकोषेषु शूकपूर्णाभमेव च ॥ २२ ॥**
**विहन्यमानं रूपे वा क्रियास्वक्षि यथा पुरा ॥**
**दृष्ट्वैव धीमान् बुध्येत दोषेणाधिष्ठितं तु तत् ॥२३॥**

पूर्वरूपमाह—तत्रेत्यादि । आविलम् आकुलमश्रुपूर्णमित्यर्थः । ससंरम्भम् ईषच्छोफयुक्तम् । उपदेहो मलवृद्धिः । गुरूषातोदरागाद्यैर्जुष्टमिति अत्रादिशब्दः प्रत्येकं योज्यः; तेन गुरुत्वादिभिः श्लेष्मलिङ्गैः, ऊषादिभिः पित्तलिङ्गैः, तोदादिभिः वातलिङ्गैः, रागादिभिः शोणितलिङ्गैः, जुष्टं सेवितम् । ननु यदि गुरुत्वादीनि दोषलिङ्गानि सन्ति तत् कथं पूर्वरूपं ? यतो दोषविशेषेणाव्यक्तं लक्षणं पूर्वरूपं; अत आह—अव्यक्तलक्षणैरिति ।—गुरुत्वादीनामपि तत्र व्यक्तता नास्त्येवेत्यर्थः । सशूलम् ईषच्छूलमित्यर्थः । विहन्यमानमित्यादि । रूपे नीलपीतादौ येन प्रकारेण पूर्वमासीत्ततः स्वयमेव विहन्यमानं क्रियमाणविघातम् । क्रियासु निमेषोन्मेषादिषु चेति । अन्ये तु 'क्रियास्वक्षि यथा पुरा' इत्यत्र 'क्रियास्वक्ष्यागतक्रमम्' इति पठन्ति । तत्रागतक्रमम् आप्तक्रमं, निर्व्यापारमित्यर्थः ॥ २१-२३ ॥

**तत्र संभवमासाद्य यथादोषं भिषग्जितम् ॥**
**विदध्यान्नेत्रजा रोगा बलवन्तः स्युरन्यथा ॥ २४ ॥**

पूर्वरूपे क्रियां निर्दिशन्नाह—तत्रेत्यादि । तत्र नयने, संभवं रोगाणां प्रागुत्पत्तिं, आसाद्य ज्ञात्वा, भिषग्जितम् औषधं, विदध्यात् । 'तत्र संचयमासाद्य' इति केचित् पठन्ति; तत्र संचयशब्दश्चयप्रकोपप्रसरादिषु वर्तते ॥ २४ ॥

**सङ्क्षेपतः क्रियायोगो निदानपरिवर्जनम् ॥**
**वातादीनां प्रतीघातः प्रोक्तो विस्तरतः पुनः ॥ २५ ॥**

किं तद्भिषग्जितं पूर्वरूपे कुर्यादित्याशङ्क्य संक्षेपविस्तराभ्यां तत्र भिषग्जितमाह—संक्षेपत इत्यादि । क्रियाणां संशमनसंशोधनादीनामयमेव सम्यग्योगः । किं तदित्याह—निदानपरिवर्जनमिति ।—निदानानां दोषकारकहेतूनां रोगकारकहेतूनां च सर्वतो वर्जनम् । विस्तरेण पुनर्वातादीनां प्रतीघातः क्रियायोगः प्रोक्तः । येनौषधप्रयोगेण वातादीनां कोपः प्रतिहन्यते स उपक्रम उक्त इत्यर्थः ॥ २५ ॥

१ '°मश्रुपूर्णोपदेहवत्' इति पा० । २ 'गुरूषाचोषरागाद्यैः' इति पा० । ३ 'मण्डपूर्णमिवेत्यर्थः' इति पा० ।

**उष्णाभितप्तस्य जलप्रवेशा-**
**द्दूरेक्षणात् स्वप्नविपर्ययाच्च ॥**
**प्रसक्तसंरोदनकोपशोक-**
**क्लेशाभिघातादतिमैथुनाच्च ॥ २६ ॥**
**शुक्तारनालाम्लकुलत्थमाष-**
**निषेवणाद्वेगविनिग्रहाच्च ॥**
**स्वेदादथो धूमनिषेवणाच्च**
**छर्देर्विघाताद्वमनातियोगात् ॥**
**बाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च**
**नेत्रे विकारान् जनयन्ति दोषाः ॥ २७ ॥**

कानि तानि निदानानि यानि परिहर्तव्यानीत्याह—उष्णेत्यादि । अत्र केचित् 'एवं विदाह्यप्रतिकारिणोऽन्नं' इत्यादि यावत् 'अवाक्शिरोत्युच्छ्रितशायितस्य ज्वरोपतापादृतुपर्ययाच्च' इत्यन्तं पठन्ति, स च पाठः पुनरुक्तिदूषणभयान्नाङ्गीकृतः ॥ २६ ॥ २७ ॥

**वाताद्दश तथा पित्तात् कफाच्चैव त्रयोदश ॥**
**रक्तात् षोडश विज्ञेयाः सर्वजाः पञ्चविंशतिः ॥२८॥**
**तथा बाह्यौ पुनर्द्वौ च रोगाः षट्सप्ततिः स्मृताः ॥**

इदानीं तानेव विकारान् वातादिसंख्यया निर्दिशन्नाह—वातादित्यादि । तथा पित्तात् पित्तादपि दशैव च । बाह्यौ बहिर्निमित्तभवौ । तौ कौ ? एकोऽभिघातोत्पन्नः सनिमित्तः, अन्यः सुरर्षिगन्धर्वादिदर्शनाभिहतशक्तिरनिमित्तः ॥ २८ ॥—

**हताधिमन्थो निमिषो दृष्टिर्गम्भीरिका च या ॥२९॥**
**यच्च वातहतं वर्त्म न ते सिध्यन्ति वातजाः ॥**
**याप्योऽथ तन्मयः काचः साध्याः स्युःसान्यमारुताः**
**शुष्काक्षिपाकाधीमन्थस्यन्दमारुतपर्ययाः ॥**

इदानीं तेषामेव विकाराणां वातादिभेदेन साध्यासाध्ययाप्यत्वं दर्शयन्नाह—हतेत्यादि । तन्मयः वातमयः । साध्याः स्युः सान्यमारुता इति हताधिमन्थादयश्चत्वारो वातजा असाध्याः, एकश्च याप्यः, शुष्काक्षिपाकादयो रोगाः सान्यमारुता अन्यतोवातरोगेण सहिताः पञ्च साध्याः ॥ २९ ॥ ३० ॥—

**असाध्यो ह्रस्वजाड्यो यो जलस्रावश्च पैत्तिकः ३१**
**परिम्लायी च नीलश्च याप्यः काचोऽथ तन्मयः ॥**
**अभिष्यन्दोऽधिमन्थोऽम्लाध्युषितं शुक्तिका च या**
**दृष्टिः पित्तविदग्धा च धूमदर्शी च सिध्यति ॥**

असाध्य इत्यादि । पित्तसंभवौ द्वौ ह्रस्वजाड्यजलस्रावौ साधयितुमशक्यौ, तथा पैत्तिकौ परिम्लायीनीलाख्यौ काचौ यापनार्हौ, अभिष्यन्दादयः षट् साध्याः ॥ ३१ ॥ ३२ ॥—

१ 'विदाह्यसात्म्यातिविरुद्धशीतक्षाराम्लतीक्ष्णोष्णगुरुद्रवान्नैः' इत्यादि यावत् 'एवं विदाह्यप्रतिकारिणोऽन्नं विदग्धमप्युद्गिरतो नरस्य । बाष्पग्रहात्सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः इति पठन्ति' इति पा० ।

असाध्यः कफजः स्रावो याप्यः काचश्च तन्मयः ३३
अभिष्यन्दोऽधिमन्थश्च बलासग्रथितं च यत् ॥
दृष्टिः श्लेष्मविदग्धा च पोथक्यो लगणश्च यः ॥३४॥
क्रिमिग्रन्थिपरिक्लिन्नवर्त्मशुक्लार्मपिष्टकाः ॥
श्लेष्मोपनाहः साध्यास्तु कथिताः श्लेष्मजेषु तु ३५

असाध्य इत्यादि । तन्मयः श्लेष्मज इत्यर्थः । कफजेष्वेक एवासाध्यः, याप्योऽप्येक एव, अभिष्यन्दादयश्चैकादश साध्याः ॥ ३३-३५ ॥

रक्तस्रावोऽजकाजातं शोणितार्शोव्रणान्वितम् ॥
शुक्रं न साध्यं काचश्च याप्यस्तज्जः प्रकीर्तितः ॥३६॥
मन्थस्यन्दौ क्लिष्टवर्त्म हर्षोत्पातौ तथैव च ॥
सिराजाताऽञ्जनाख्या च सिराजालं च यत् स्मृतम्
पर्वण्यथाव्रणं शुक्रं शोणितार्मार्जुनश्च यः ॥
एते साध्या विकारेषु रक्तजेषु भवन्ति हि ॥ ३८ ॥

रक्तस्राव इत्यादि । रक्तस्रावस्तथाऽजका शोणितार्शः क्षतशुक्रकं च रक्ताज्जातं चतुष्टयमप्यसाध्यं, तज्जो रक्तजः काचो याप्यः, मन्थस्यन्दादय एकादश साध्याः ॥ ३६-३८ ॥

पूयास्रावो नाकुलान्ध्यमक्षिपाकात्ययोऽलजी ॥
असाध्याः सर्वजा याप्यः काचः कोपश्च पक्ष्मणः ३९
वर्त्मावबन्धो यो व्याधिः सिरासु पिडका च या ॥
प्रस्तार्यर्माधिमांसार्म स्राय्वर्मोत्सङ्गिनी च या ॥४०॥
पूयालसश्चार्बुदं च श्यावकर्दमवर्त्मनी ॥
तथाऽर्शोवर्त्म शुष्कार्शः शर्करावर्त्म यच्च वै ॥४१॥
सशोफश्चाप्यशोफश्च पाको बहलवर्त्म च ॥
अक्लिन्नवर्त्म कुम्भीका बिसवर्त्म च सिध्यति ॥४२॥

पूयेत्यादि । पूयास्रावादयश्चत्वारोऽसाध्याः, काचपक्ष्मकोपौ याप्यौ, वर्त्मावबन्धादय एकोनविंशतिः साध्याः । केचित्तु 'काचः कोपश्च पक्ष्मण' इत्यत्र 'याप्यो वर्त्मावबन्धश्च काचः कोपश्च पक्ष्मणः । पिल्लाख्यश्चापि यो व्याधिः सिरासु पिडका च या' इति पठन्ति । स च पाठः पञ्जिकया निरस्तः, तस्मादस्माभिरपि परित्यक्तः ॥ ३९-४२ ॥

सनिमित्तोऽनिमित्तश्च द्वावसाध्यौ तु बाह्यजौ ॥

सनिमित्त इत्यादि । तौ द्वावपि सन्निपातनिमित्तौ विवृतौ ॥

षट्सप्ततिर्विकाराणामेषा संग्रहकीर्तिता ॥ ४३ ॥

षडित्यादि । संक्षेपेण कथिता, अथवा संग्रहेण सम्यक् दोषग्रहेण कथिता ॥ ४३ ॥

नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः ॥
शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ॥ ४४ ॥
सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु ॥
बाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ ॥
भूय एतान् प्रवक्ष्यामि सङ्ख्यारूपचिकित्सितैः ॥४५॥

१ 'क्रिमिग्रन्थिः परिक्लिन्नवर्त्म शुक्लार्म पिष्टकः' इति पा० । २ 'ऽवलम्बितम्' इति पा० । ३ 'क्लिन्नवर्त्म' इति पा० । ४ 'संग्रहकीर्तना' इति पा० ।

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे औपद्रविको नाम प्रथमोऽध्यायः ॥ १ ॥

इदानीं तेषां दोषविशेषेण संग्रहं प्रतिपाद्य सन्ध्याद्याश्रयभेदेनापि संग्रहं प्रतिपादयन्नाह—नवेत्यादि । द्वौ बाह्यजौ सर्वाश्रयत्वेऽपि दृष्ट्याश्रितौ मन्तव्यौ, दृष्टेः प्रधानतमत्वात् ॥ ४४ ॥ ४५ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथातः सन्धिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पूर्वस्मिन्नध्याये सन्ध्यादिक्रमेण नयनगतरोगा अभिहिताः, अत औपद्रविकानन्तरं प्राक् सन्धिगता रोगाः प्रतिपाद्या भवन्तीत्यत आह—अथात इत्यादि । गतशब्द आश्रयवचनः ॥ १ ॥ २ ॥

पूयालसः सोपनाहः स्रावाः पर्वणिकाऽलजी ॥
क्रिमिग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नव ॥ ३ ॥

स्रावाः चत्वारः पूयास्राव इत्यादयः ॥ ३ ॥

पक्वः शोफः सन्धिजः संस्रवेद्यः
सान्द्रं पूयं पूति पूयालसः सः ॥

इदानीं तेषां नवानामपि प्रत्येकं लक्षणमाह—पक्व इत्यादि । सन्धिजः कनीनसन्धिजः । पूति दुर्गन्धम् । अयं सन्निपातजः साध्यश्च ॥—

ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकः
कण्डूप्रायो नीरुजस्तूपनाहः ॥ ४ ॥

ग्रन्थिरित्यादि । नाल्पो महानित्यर्थः । अपाक ईषत्पाकः । उपनाहः श्लेष्मोपनाहः । कफजोऽयं साध्यश्च ॥ ४ ॥

गत्वा सन्धीनश्रुमार्गेण दोषाः
कुर्युः स्रावान् रुग्विहीनान् कनीनात् ।
तान् वै स्रावान् नेत्रनाडीमथैके
तस्या लिङ्गं कीर्तयिष्ये चतुर्धा ॥ ५ ॥
पाकः सन्धौ संस्रवेद्यश्च पूयं
पूयास्रावो नैकरूपः प्रदिष्टः
श्वेतं सान्द्रं पिच्छिलं संस्रवेद्यः
श्लेष्मास्रावो नीरुजः स प्रदिष्टः ॥ ६ ॥
रक्तास्रावः शोणितोत्थः सरक्त-
मुष्णं नाल्पं संस्रवेन्नातिसान्द्रम् ॥
पीताभासं नीलमुष्णं जलाभं
पित्तास्रावः संस्रवेत् सन्धिमध्यात् ॥ ७ ॥

१ 'तौ' इति पा० ।

सन्धयो नेत्रान्तर्गताश्चत्वारः । अश्रुमार्गशब्देनात्र सिरा अभिप्रेताः । तथाच **विदेहः**,—"अश्रुस्रावः सिरा गत्वा नेत्रसन्धिषु तिष्ठति । ततः कनीनकं गत्वा चाश्रु कृत्वा कनीनके ॥ ततः स्रवत्यथास्रावं यथादोषमवेदनम्"—इति । अश्रुस्रावशब्देनात्र तत्सहितो दोषोऽभिधीयते । कथं चतुर्धेत्याह—पाक इत्यादि ।–नैकरूप इति अस्य सन्निपातजत्वाद्बहुरूपत्वम् । सन्धिरत्र कनीनकसन्धिः । असाध्योऽयम् । श्वेत इत्यादि ।–अयमप्यसाध्यः । रक्तेत्यादि ।—असावप्यसाध्यः । पीतेत्यादि ।—कनीनकसन्धिमध्यादित्यर्थः । व्याधिस्वभावतो वातास्रावो नास्ति, पित्तजगलगण्डचातुर्थिकवत् । एषोऽप्यसाध्यः ॥५–७॥

**ताम्रा तन्वी दाहशूलोपपन्ना**
**रक्ताज्ज्ञेया पर्वणी वृत्तशोफा ॥**
**जाता सन्धौ कृष्णशुक्लेऽलजी स्या-**
**त्तस्मिन्नेव ख्यापिता पूर्वलिङ्गैः ॥ ८ ॥**

ताम्रेत्यादि । असाध्योऽयम् । अलजीत्यादि । तस्मिन्नेव कृष्णशुक्लसन्धावेव । पूर्वलिङ्गैः पर्वणीलिङ्गैरित्यर्थः । पर्वण्यलज्योः स्थानस्य लक्षणस्य चैक्येऽपि तनुत्वस्थूलत्वाभ्यां भेदः । तन्वी पर्वणी, ततः स्थूला पुनरलजी । इयं सन्निपातजा असाध्या च ॥ ८ ॥

**क्रिमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च**
**कण्डूं कुर्युः क्रिमयः सन्धिजाताः ॥**
**नानारूपा वर्त्मशुक्लस्य सन्धौ**
**चरन्तोऽन्तर्नयनं दूषयन्ति ॥ ९ ॥**
**इति सुश्रुतसंहितायामुत्तरतन्त्रे सन्धिगत-**
**रोगविज्ञानीयो नाम द्विती-**
**योऽध्यायः ॥ २ ॥**

क्रिमीत्यादि । क्रिमीग्रन्थिर्वर्त्मशुक्लयोः सन्धौ भवति । तत्रैव नानारूपाः क्रिमयो वर्त्मनः पक्ष्मणश्च सन्धिं प्राप्ताः कण्डूं जनयन्ति, अन्तश्चरन्तो भक्षयन्तो नयनं दूषयन्ति । असौ कफजः साध्यश्च ॥ ९ ॥

इति श्रीडल्ह(ड्ड)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे द्वितीयोऽध्यायः ॥२॥

---

## तृतीयोऽध्यायः ।

**अथातो वर्त्मगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

सन्धिगतरोगानन्तरं 'वर्त्मशुक्लस्य सन्धौ चरन्तोऽन्तर्नयनं दूषयन्ति' इति वर्त्मनोऽनन्तरनिर्दिष्टत्वाद्वर्त्मगतरोगविज्ञानीयारम्भो युक्त इत्यत आह—अथात इत्यादि ॥ १ ॥ २ ॥

**पृथग्दोषाः समस्ता वा यदा वर्त्मव्यपाश्रयाः ॥**
**सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः ॥ ३ ॥**

१ 'तस्य' इति पा० । २ 'वर्त्मशुक्लान्तसन्धौ' इति पा० ।

**विवर्ध्य मांसं रक्तं च तदा वर्त्मव्यपाश्रयान् ॥**
**विकाराञ्जनयन्त्याशु नामतस्तान्निबोधत ॥ ४ ॥**

संप्राप्तिमाह—पृथगित्यादि । यदा पृथक् समस्ता वा अधिकमूर्च्छिता अतिशयप्रकुपिता दोषा वर्त्मव्यपाश्रयाः अपशब्दस्योपसर्गस्य मध्यवचनत्वाद्वर्त्ममध्यगताः सिरा व्याप्य वर्त्मस्ववतिष्ठन्ते, तदा वर्त्मव्यपाश्रयान् विकारान् शीघ्रं जनयन्तीति संबन्धः । अमुं पाठं **पञ्जिकाकारो** न पठति, **जेज्झट**पठितत्वादस्माभिरपि पठितः ॥ ३ ॥ ४ ॥

**उत्सङ्गिन्यथ कुम्भीका पोथक्यो वर्त्मशर्करा ॥**
**तथाऽर्शोवर्त्म शुष्कार्शस्तथैवाञ्जननामिका ॥ ५ ॥**
**बहलं वर्त्म यच्चापि व्याधिर्वर्त्मावबन्धकः ॥**
**क्लिष्टकर्दमवर्त्माख्यौ श्याववर्त्म तथैव च ॥ ६ ॥**
**प्रक्लिन्नमपरिक्लिन्नं वर्त्म वातहतं तु यत् ॥**
**अर्बुदं निमिषश्चापि शोणितार्शश्च यत् स्मृतम् ॥७॥**
**लगणो बिसनामा च पक्ष्मकोपस्तथैव च ॥**
**एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः ॥ ८ ॥**
**नामभिस्ते समुद्दिष्टा**

ते च वर्त्माश्रया रोगा एकविंशतिरभिहिताः, अतस्तानेव नाम्ना निर्दिशन्नाह—उत्सङ्गिनीत्यादि ॥ ५–८ ॥—

**लक्षणैस्तान् प्रचक्ष्महे ॥**
**अभ्यन्तरमुखी बाह्योत्सङ्गेऽधो वर्त्मनश्च या ॥ ९ ॥**
**विज्ञेयोत्सङ्गिनी नाम तद्रूपपिडकाचिता ॥**

नामतस्तान् समुद्दिश्य लक्षणैराह—लक्षणैरित्यादि । अभ्यन्तरमुखी वर्त्माभ्यन्तरमुखी । बाह्येति बहिर्भवा इव प्रतिभासते, वैस्तृत्सेधेन बहिरप्युन्नतत्वात् । उत्सङ्गेऽधो वर्त्मनश्च येति अधोभागे यद्वर्त्म तस्योत्सङ्गे क्रोडे जाता या, तस्या इव रूपं यासां, तद्रूपाभिर्व्याप्ता; इयं सन्निपातजा साध्या च । **विदेहोक्त**मिहायुक्तं काठिन्यादि चोह्यम् । तथा हि तदुक्तं वचः,–"वर्त्मोत्सङ्गेऽप्यधो जन्तोः सन्निपातात् प्रजायते । अभ्यन्तरमुखी स्थूला बाह्यतश्चापि दृश्यते ॥ पिडका पिडकाभिश्च चिताऽन्याभिः समन्ततः । उत्सङ्गपिडका नाम कठिना मन्दवेदना ॥ सा प्रभिन्ना स्रवेत् स्रावं कुक्कुटाण्डरसोपमम्"—इति ॥९॥—

**कुम्भीकबीजप्रतिमाः पिडका यास्तु वर्त्मजाः ॥१०॥**
**आध्मापयन्ति भिन्ना याः कुम्भीकपिडकास्तु ताः ॥**

कुम्भीका दाडिमाकारफला स्थलकुम्भी । वर्त्मजा इति बहुवचनाद् बाह्या एव भवन्ति । एताः सन्निपातजा अपि साध्याः ॥ १० ॥—

**स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः ॥**
**पिडकाश्च रुजावत्यः पोथक्य इति संज्ञिताः ॥ ११ ॥**

१ 'विवर्ध्य' इति पा० । २ 'पिडकाऽभ्यन्तरमुखी बाह्याऽधोवर्त्मसंश्रया' इति पा० । ३ 'बाह्योत्सेधेन' इति पा० । ४ 'ऽधरे' इति पा० । ५ 'पिडकाः पक्ष्मवर्त्मनोः' इति पा० । ६ 'आध्मायन्ते तु भिन्नाश्च' इति पा० । ७ 'कण्डूस्रावान्विता' इति पा० ।

स्राविण्य इत्यादि । स्राविण्यो बहुस्रावाः । कण्डुरा इति कण्डुयुक्ताः । रुजावत्य इति कफजा अपि वेदनायुक्ता इत्यर्थः । इमाः साध्याः ॥ ११ ॥

**पिडकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता ॥**
**पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा ॥ १२ ॥**

पिडकाभिरित्यादि । इयं सन्निपातजा साध्या च ॥ १२ ॥

**एर्वारुबीजप्रतिमाः पिडका मन्दवेदनाः ॥**
**सूक्ष्माः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥ १३ ॥**

एर्वार्वित्यादि । एर्वारुः ग्रीष्मकर्कटी । वर्त्मस्था वर्त्मनामन्तर्बाह्यतोऽपि तिष्ठति । इदं सन्निपातजमपि साध्यम् ॥ १३ ॥

**दीर्घोऽङ्कुरः खरः स्तब्धो दारुणो वर्त्मसंभवः ॥**
**व्याधिरेष समाख्यातः शुष्कार्श इति संज्ञितः ॥ १४ ॥**

दीर्घ इत्यादि । दारुणः अतिकष्टतरः । वर्त्मसंभवो वर्त्मनामन्तरेव भवति । अयं व्याधिः सन्निपातजोऽपि साध्यः ॥ १४ ॥

**दाहतोदवती ताम्रा पिडका वर्त्मसंभवा ॥**
**मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका ॥ १५ ॥**

दाहेत्यादि । रक्तजेयं साध्या च ॥ १५ ॥

**वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः ॥**
**सवर्णाभिः समाभिश्च विद्याद्बहलवर्त्म तत् ॥ १६ ॥**

वर्त्मेत्यादि । एतदपि सन्निपातजं साध्यं च ॥ १६ ॥

**कण्डूमताऽल्पतोदेन वर्त्मशोफेन यो नरः ॥**
**न समं छादयेदक्षि भवेद्बन्धः स वर्त्मनः ॥ १७ ॥**

कण्डूमतेत्यादि । एष सन्निपातजोऽपि साध्यः ॥ १७ ॥

**मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च ॥**
**अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्म तदादिशेत् ॥ १८ ॥**

मृद्वित्यादि । 'अकस्माच्च स्रवेद्रक्तं' इति क्वचित् पाठः, तं च **पञ्जिकाकारो** न मन्यते । अकस्माच्च कारणं विना द्वयमपि वर्त्म रक्तं भवेत् । तथा च **विदेहः**,—"श्लेष्मदुष्टेन रक्तेन क्लिष्टमांसमिवोभयम् । बन्धुजीवनिभं वर्त्म क्लिष्टवर्त्म तदुच्यते"—इति । एतद्रक्तजं साध्यं च ॥ १८ ॥

**क्लिष्टं पुनः पित्तयुतं विदहेच्छोणितं यदा ॥**
**तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमः ॥ १९ ॥**

क्लिष्टमित्यादि । यदा क्लिष्टारम्भकं श्लेष्मदुष्टं शोणितं पित्तयुक्तं विदहेत् विदाहं गच्छेत्तदा क्लिन्नत्वमापन्नं क्लिष्टमेव वर्त्मकर्दम उच्यते, क्लिन्नत्वमापन्नमार्द्रतां प्राप्तम् । एतत् कफपित्तरक्तारब्धत्वात् सन्निपातजं साध्यं च । 'कृष्णत्वमापन्नम्' इति केचित् पठन्ति, तं पाठं **पञ्जिकाकारो** नाङ्गीकरोति ॥ १९ ॥

**यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम् ॥**
**दाहकण्डूपरिक्लेदि श्याववर्त्मेति तन्मतम् ॥ २० ॥**

यद्वर्त्मेत्यादि । एतदपि सन्निपातजं साध्यं च ॥ २० ॥

**अरुजं बाह्यतः शूनमन्तः क्लिन्नं स्रवत्यपि ॥**
**कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म तदुच्यते ॥ २१ ॥**

अरुजमित्यादि । अरुजमल्परुजं शूनं च बाह्ये, क्लिन्नं स्रवत्यप्यन्तरेव, कण्डूनिस्तोदबहुलं पुनरन्तरेव । अयं रोगः पिल्लाख्यः केनचित् कथितः, तत् **पञ्जिकाकारो** न मन्यते । अयं व्याधिः कफजः साध्यश्च ॥ २१ ॥

**यस्य धौतानि धौतानि संबध्यन्ते पुनः पुनः ॥**
**वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥ २२ ॥**

यस्येत्यादि । यस्य रोगस्य स्थानभूतानि वर्त्मान्यसकृत्प्रक्षालितानि पुनः संबद्धानि भवन्ति पिल्लोपदेहेनान्तर्बहिश्च पाकरहितान्यपि, तदक्लिन्नवर्त्म जानीयात् । एतत् सन्निपातजमपि साध्यं पिल्लाख्यं च । तथा च **विदेहः**,—"प्रक्षालिते तथा मृष्टे आनह्येते पुनः पुनः । अपरिक्लिन्नवर्त्मानं पिल्लाख्यमिति निर्दिशेत्"—इति । अमुं द्वयमपि दृष्टान्तदार्ष्टान्तिकपाठं सूत्रे **जेज्जटाचार्यः** पठति, तन्नेच्छति **गयदासः** ॥ २२ ॥

**विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते ॥**
**एतद्वातहतं विद्यात् सरुजं यदि वाऽरुजम् ॥ २३ ॥**

विमुक्तेत्यादि । निश्चेष्टं निष्क्रियम् । अत एव न निमील्यते न संकुचतीत्यर्थः । अरुजम् अल्परुजम् । इदं वातजमसाध्यं च ॥ २३ ॥

**वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् ॥**
**विज्ञेयमर्बुदं पुंसां सरक्तमवलम्बितम् ॥ २४ ॥**

वर्त्मेत्यादि । वर्त्मान्तरस्थम् अभ्यन्तरस्थमित्यर्थः । विषमं कष्टकारि । ग्रन्थिभूतं ग्रन्थिरिव । सरक्तमवलम्बितमिति किञ्चिद्रक्तता पित्तेन, अवलम्बितत्वमर्बुदत्वेन । 'अवलम्बि च' इति केचित् पठन्ति । सन्निपातजमपीदं साध्यम् ॥ २४ ॥

**निमेषणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः ॥**
**चालयत्यति वर्त्मानि निमेषः स गदो मतः ॥ २५ ॥**

निमेषणीरित्यादि । वर्त्मसंश्रयाः निमेषिणीः सिरा वायुः प्रविष्टः सन् वर्त्मानि चालयतीति संबन्धः । यद्बलेन निमेषोन्मेषौ स्यातां ता निमेषिण्यः सिराः । 'सोऽगदो मत' इति केचित् पठन्ति, तत्रागद अव्यथ इत्यर्थः । असौ वातजोऽसाध्यश्च ॥ २५ ॥

**छिन्नाश्छिन्ना विवर्धन्ते वर्त्मस्था मृदवोऽङ्कुराः ॥**
**दाहकण्डूरुजोपेतास्तेऽर्शः शोणितसंभवाः ॥ २६ ॥**

छिन्ना इत्यादि । ये शोणितसंभवा मृदवो वर्त्मस्था अङ्कुराश्छिन्नाश्छिन्नाः सन्तो विवर्धन्ते तेऽङ्कुरा अर्शः शोणितार्श इति संबन्धः । इदं शोणितार्शो रक्तजमसाध्यं च ॥ २६ ॥

---

१ 'एर्वारुबीजप्रतिमा पिडका मन्दवेदना। सूक्ष्मा खरा च वर्त्मस्था तदर्शोवर्त्म कीर्त्यते' इति पा० । २ 'सकण्डूषापरिक्लेदं' इति पा० ।

१ 'पाकरहितत्वात्' इति पा० । २ 'ऽथवा' इति पा० । ३ 'ग्रन्थिरिवासक्तं' इति पा० । ४ 'चालयेदक्षिवर्त्मानि' इति, 'चालयेदविवर्त्मानि' इति च पा० । ५ 'शोणितसंभवम्' इति पा० । ६ 'शोणितार्शः इति संबन्धः' इति पा० ।

अपाकः कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः ॥
सकण्डूः पिच्छिलः कोलप्रमाणो लगणस्तु सः २७

अपाक इत्यादि । श्लेष्मजोऽयं साध्यश्च ॥ २७ ॥

शूनं यद्वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम् ॥
बिसमन्तर्जल इव बिसवर्त्मेति तन्मतम् ॥ २८ ॥

शूनमित्यादि । यथाऽन्तर्जले बिसं बिसाण्डं तद्वदित्यर्थः । एतत् सर्वजमपि साध्यम् ॥ २८ ॥

दोषाः पक्ष्माशयगतास्तीक्ष्णाग्राणि खराणि च ॥
निर्वर्तयन्ति पक्ष्माणि तैर्घृष्टं[1] चाक्षि दूयते ॥ २९ ॥
उद्धृतैरुद्धृतैः[2] शान्तिः पक्ष्मभिश्चोपजायते ॥
वातातपानलद्वेषी पक्ष्मकोपः स उच्यते ॥ ३० ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे वर्त्मगतरोग-
विज्ञानीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

दोषा इत्यादि । निर्वर्तयन्ति निष्पादयन्ति । पक्ष्माणि प्रतिबालान् । तैः पक्ष्मभिः, अक्षि लोचनं, दूयते उपतप्यते । उद्धृतैरुद्धृतैरिति उन्मूलितैरुन्मूलितैरित्यर्थः; अत्र वीप्सया तेषां पुनः पुनरुद्भवः ख्याप्यते । अस्य पक्ष्मकोपस्य 'उपपक्ष्ममाला' इति अनुक्ता द्वितीया संज्ञा; लोके 'परिवाल' इति वदन्ति । एष रोगः सर्वजो याप्यश्च ॥ २९ ॥ ३० ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां
सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे
तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

अथातः शुक्लगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

वर्त्मगतरोगविज्ञानीयानन्तरं वर्त्ममण्डलाच्छुक्लमण्डलस्यानन्तर्यात्तद्गतरोगविज्ञानीयारम्भो युक्त इत्यत आह—अथात इत्यादि ॥ १ ॥ २ ॥

प्रस्तारिशुक्लक्षतजाधिमांस-
स्नाय्वर्मसंज्ञाः खलु पञ्च रोगाः ॥
स्युः शुक्तिका चार्जुनपिष्टकौ च
जालं सिराणां पिडकाश्च याः स्युः ॥ ३ ॥
रोगा बलासग्रथितेन सार्ध-
मेकादशाक्ष्णोः खलु शुक्लभागे ॥

तानेव रोगान्नामभिराह—प्रस्तारीत्यादि । अर्मशब्दः प्रस्तार्यादिभिः पञ्चभिः सह संबध्यते । जालं सिराणामिति सिराशब्दो जालपिडकाभ्यां संबध्यते; तेन सिराजालं, सिरापिडकाश्चेत्यर्थः ॥ ३ ॥—

प्रस्तारि प्रथितमिहार्म शुक्लभागे
विस्तीर्णं तनु रुधिरप्रभं सनीलम् ॥ ४ ॥

प्रस्तारीत्यादि । प्रथितं प्रख्यातं, विस्तीर्णं विततं, तनु विरलं, रुधिरप्रभं रक्तनिभं, सनीलम् ईषन्नीलम्, एतेनेषन्नीललोहितमित्यर्थः । जेज्जटाचार्यस्तु विदेहोक्तं प्रस्तार्यर्मलक्षणं दृष्ट्वा सनीलमित्यत्र वाशब्दो लुप्तो द्रष्टव्यः, तेन रक्तमीषन्नीलं वेत्यर्थं इति प्रतिपादयति । तथा च विदेहवाक्यं—"समन्ताद्विस्तृतः श्यावो रक्तो वा मांससंचयः । सन्निपातेन दोषाणां प्रस्तार्यर्म तदुच्यते"—इति । त्रिदोषजमिदं साध्यं च ॥ ४ ॥

शुक्लाख्यं मृदु कथयन्ति शुक्लभागे
सश्वेतं सममिह[1] वर्धते चिरेण ॥

शुक्लाख्यमित्यादि । शुक्लाख्यं शुक्लनामार्म । मृदु कोमलं, सश्वेतं किञ्चिच्छ्वेतं; श्लेष्मजमिदं साध्यं च ॥—

यन्मांसं प्रचयमुपैति शुक्लभागे
पद्माभं तदुपदिशन्ति लोहितार्म ॥ ५ ॥

यदित्यादि । प्रचयं वृद्धिम्, उपैति गच्छति, पद्माभम् अरुणपद्मप्रभं, लोहितार्म शोणितार्मेत्यर्थः । एतद्रक्तजं साध्यं च ॥ ५ ॥

विस्तीर्णं मृदु बहलं यकृत्प्रकाशं
श्यावं वा तदधिकमांसजार्म विद्यात् ॥

विस्तीर्णमिति । बहलं स्थूलम् । एतत् सन्निपातजं साध्यं च ॥

शुक्ले यत् पिशितमुपैति वृद्धिमेतत्
स्नाय्वर्मेत्यभिपठितं खरं प्रपाण्डु ॥ ६ ॥

शुक्ले इत्यादि । एतत्त्रिदोषजमपि साध्यम् । खरं खरस्पर्शम् । 'स्नाय्वाभं पिशितांशमुपैति यत्तु स्नाय्वर्म' इत्यपि पाठः । 'खरं च शुक्लं' इति केचित् पठन्ति ॥ ६ ॥

श्यावाः स्युः पिशितनिभाश्च बिन्दवो ये
शुक्त्याभाः सितनयने स शुक्तिसंज्ञः ॥

श्यावा इत्यादि । शुक्त्याभा इति जलशुक्तिरिव किञ्चिद्दीर्घाः शुक्लमण्डले ये बिन्दवः स शुक्तिकाविकार इति संबन्धः । सा[2]ध्योऽयं पित्तजश्च ॥—

एको यः शशरुधिरोपमस्तु बिन्दुः
शुक्लस्थो भवति तमर्जुनं वदन्ति ॥ ७ ॥

एक इत्यादि । रक्तजोऽयं साध्यश्च ॥ ७ ॥

उत्सन्नः सलिलनिभोऽथ पिष्टशुक्लो
बिन्दुर्यो भवति स पिष्टकः सुवृत्तः ॥

उत्सन्न इत्यादि । पिष्टशुक्लः तण्डुलपिष्टवच्छुक्लः, शुक्लत्वेऽप्यच्छत्वात् सलिलनिभः, पिष्टकः पिष्टकनामा । अयं श्लैष्मिकः साध्यश्च ॥—

जालाभः कठिनसिरो महान् सरक्तः
सन्तानः स्मृत इह जालसंज्ञितस्तु ॥ ८ ॥

जालाभ इत्यादि । अनुलोमविलोमविस्तृतसिरानिचयविरचितजालस्येव आभा यस्य स तथा । रक्तो लोहितो लोहित-

---

१ 'तैर्जुष्टं' इति पा० । २ 'उत्पाटितैः पुनः' इति पा० ।

१ 'सममभिवर्धते' इति पा० । २ 'साध्येयं रक्तजा च' इति पा० ।

जनितश्च, सन्तानः सिरासन्तानः । एष सिराजालसंज्ञितो रक्तजः साध्यश्च ॥ ८ ॥

**शुक्लस्थाः सितपिडकाः सिरावृता या-**
**स्ता विद्यादसितसमीपजाः सिराजाः ॥**

शुक्लस्था इत्यादि । सिराजाः 'पिडका' इति शेषः । वास्तु-स्थितसिरावृत्तत्वात् सिराजाः, न तु साक्षात् सिराजाः । एष सन्निपातजः साध्यश्च ॥—

**कांस्याभो भवति सितेऽम्बुबिन्दुतुल्यः**
**स ज्ञेयोऽमृदुररुजो बलासकाख्यः ॥ ९ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रे शुक्लगतरोग-**
**विज्ञानीयो नाम चतुर्थोऽध्यायः ॥ ४ ॥**

कांस्याभ इत्यादि । कांस्यस्येव आभा यस्य स तथा, सित इत्यर्थः । अम्बुबिन्दुतुल्यः वारिबिन्दुरिवोद्गतत्वात् । अमृदुः कठिनः । अरुजः अव्यथः । एतद्वयमपि कफजनितत्वात् नामान्वयेन बलासनामा विकारो बलासज एव । अत्रैव **विदेहः**,—"मारुतोत्पीडितः श्लेष्मा शुक्लभागे व्यवस्थितः । जलबिन्दुरिवोच्छूनो मृदुः कफसमुद्भवः"—इति । पुस्तकान्तरे चान्यथा पाठः, यथा—'सन्तानो भवति सिरावृतः सिते यो बिन्दुर्वा स तु निरुजो बलासकाख्यः'—इति । ईदृशस्य पाठस्य टीकाकारा व्याख्यां न कुर्वन्ति । साध्योऽयं श्लेष्मजश्च ॥ ९ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुत-व्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

**अथातः कृष्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

शुक्लगतरोगविज्ञानीयानन्तरं प्रत्यासत्त्या कृष्णमण्डलगता रोगाः प्रतिपाद्या इत्यत आह—अथात इत्यादि ॥ १ ॥ २ ॥

**यत् सव्रणं शुक्र(क्र)मथाव्रणं वा**
**पाकात्ययश्चाप्यजका तथैव ॥**
**चत्वार एतेऽभिहिता विकाराः**
**कृष्णाश्रयाः संग्रहतः पुरस्तात् ॥ ३ ॥**

तानेव कृष्णगतरोगान्नामभिः प्राह—यदित्यादि । संख्येयनिर्देशादेव चतुःसंख्यायां लब्धायां चतुःसंख्याकरणं तन्त्रान्तरोद्दिष्टातिरिक्तसंख्यानिरासार्थम् । संग्रहतः सम्यगुपादानतः ॥ ३ ॥

**निमग्नरूपं हि भवेत्तु कृष्णे**
**सूच्येव विद्धं प्रतिभाति यद्वै ॥**
**स्रावं स्रवेदुष्णमतीव रुक् च**
**तत् सव्रणं शुक्र(क्र)मुदाहरन्ति ॥ ४ ॥**

तानेव लक्षणैर्निर्दिशन्नाह—निमग्नेत्यादि । निमग्नरूपम् अन्तःप्रविष्टरूपम्, ईषदृश्यरूपमित्यर्थः । सूच्येव विद्धमित्यनेन वर्तुलत्वं दर्शितं, रक्तस्याग्नेयत्वादुष्णाश्रुता अत्यर्थं च पीडा भवति । अव्रणशुक्रे मन्दरुगश्रुता वक्ष्यते, तस्मादस्मिन् सक्षते शुक्रे क्षतयोगान्नेत्रस्य सुकुमारत्वाच्चातीव वेदना युक्ता । अत्र **विदेहः**—"रक्तराजीनिभं कृष्णे विद्रुमाभं प्रलक्ष्यते । सूच्यग्रेणेव तच्छुक्रमुष्णाश्रुस्रावि सव्रणम्—" इति । सव्रणं सक्षतमित्यर्थः । रक्तजमिदमसाध्यं च ॥ ४ ॥

**दृष्टेः समीपे न भवेत्तु यच्च**
**न चावगाढं न च संस्रवेद्धि ॥**
**अवेदनावन्न च युग्मशुक्रं**
**तत्सिद्धिमाप्नोति कदाचिदेव ॥ ५ ॥**

इदानीं तस्यैवावस्थाद्वारेण कादाचित्कं साध्यत्वं दर्शयन्नाह—दृष्टेरित्यादि । संस्रवेद्धीत्यत्र संशब्दोऽतिशयार्थः । अवेदनावत् मन्दवेदनम् ॥ ५ ॥

**विच्छिन्नमध्यं पिशितावृतं वा**
**चलं सिरासक्तमदृष्टिकृच्च ॥**
**द्वित्वग्गतं लोहितमन्ततश्च**
**चिरोत्थितं चापि विवर्जनीयम् ॥ ६ ॥**
**उष्णाश्रुपातः पिडका च कृष्णे**
**यस्मिन् भवेन्मुद्गनिभं च शुक्रम् ॥**
**तदप्यसाध्यं प्रवदन्ति केचि-**
**दन्यच्च यत्तित्तिरिपक्षतुल्यम् ॥ ७ ॥**

तस्यैव कदाचित्साध्यस्य लक्षणं प्रतिपाद्यासाध्यस्य लक्षणं प्रतिपादयन्नाह—विच्छिन्नेत्यादि । विच्छिन्नमध्यमिति विदीर्णमांसत्वान्मध्ये सच्छिद्रमिव । पक्षान्तरमाह—पिशितावृतं वेति, आच्छिन्नमध्यमेवोन्नतमांसेन वेष्टितं वा । चलं सिरासक्तमिति यतः सिरासक्तमत एव चलं, सिरा हि स्वभावत एव चलाः; तदाश्रितं शुक्रमपि चलमेव; अन्ये तु चलं चलदिव न तु साक्षाच्चलमेव । अदृष्टिकृत् दर्शनरोधकृत् । द्वित्वग्गतं द्विपटलाश्रितम् । लोहितमन्ततश्चेति प्रान्तेषु लोहितमित्यर्थः । इदानीं द्विपटलाश्रितस्य लक्षणं दर्शयन्नाह—उष्णेत्यादि । कस्मिंश्चित् पुस्तके 'पिडका च पीता' इति पाठः, स न सङ्गच्छते । तथा च **विदेहः**—"चोषोष्णस्रावदाहास्तु कृष्णे च पिडिकोद्गमः । व्यक्तमुद्गफलाकारं शुक्रं द्वित्वग्गतं भवेत्" इति । एकीयमतमाह—तदित्यादि । यच्चान्यच्छुक्रं तित्तिरिपक्षतुल्यं तदप्यसाध्यं केचिद्वदन्तीति संबन्धः । एतत् परमतमप्यप्रतिषिद्धत्वादनुमतमेव ॥ ६ ॥ ७ ॥

**सितं यदा भात्यसितप्रदेशे**
**स्यन्दात्मकं नातिरुगश्रुयुक्तम् ॥**

---

१ 'कांस्याभो भवति सिरावृतः सिते यो बिन्दुर्वा स तु निरुजो बलासकाख्यः' इति पा० । २ 'कफानिलजनितत्वात्' इति पा० । ३ 'यच्च' इति पा० ।

१ 'सिरासूक्ष्मं' इति पा० । २ 'तच्च संगच्छते' इति पा० ।

विहायसीवाच्छघनानुकारि
तदव्रणं साध्यतमं वदन्ति ॥ ८ ॥

इदानीं सव्रणं शुक्रं प्रतिपाद्याव्रणं प्रतिपादयन्नाह—सित-मित्यादि । स्यन्दात्मकम् अभिष्यन्दकारणं विहायसीव आकाश इव, अच्छघनानुकारि प्रतनुमेघखण्डानुकारीत्यर्थः । रक्तजमिदं साध्यं च ॥ ८ ॥

गम्भीरजातं बहलं च शुक्रं
चिरोत्थितं चापि वदन्ति कृच्छ्रम् ॥

अस्यैवाव्रणस्य शुक्रस्यावस्थाभेदेन कृच्छ्रतां दर्शयन्नाह—गम्भीरेत्यादि । एवंभूतमव्रणमपि शुक्रं कृच्छ्रं वदन्तीति संब-न्धः । गम्भीरजातं द्विपटलाश्रितमित्यर्थः । जेज्जटाचार्यस्तु सव्रणाव्रणशुक्रस्य लक्षणं साध्यासाध्यत्वं च विपरीतक्रमेण पठति, मया तु पञ्जिकाकाराभिप्रायेणानेनैव क्रमेण पठितम् ॥—

संच्छाद्यते[1] श्वेतनिभेन सर्वं
दोषेण यस्यासितमण्डलं तु ॥ ९ ॥
तमक्षिपाकात्ययमक्षिकोप-
समुत्थितं[2] तीव्ररुजं वदन्ति ॥

इदानीं पाकात्ययमाह—संच्छाद्यत इत्यादि । अक्षिकोपात् स-मुत्थितं स्यन्दादुत्पन्नमित्यर्थः । एष त्रिदोषजोऽसाध्यश्च ॥९॥—

अजापुरीषप्रतिमो रुजावान्
सलोहितो लोहितपिच्छिलाश्रुः ॥
विदार्य कृष्णं प्रचयोऽभ्युपैति
तं चाजकाजातमिति व्यवस्येत् ॥ १० ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे कृष्णगतरोग-विज्ञानीयो नाम पञ्चमोऽध्यायः ॥ ५ ॥

अजेत्यादि । अजापुरीषप्रतिम इति विशुष्कच्छगलीपुरीष-तुल्यः । सलोहित ईषल्लोहितः । लोहितपिच्छिलाश्रुरिति लोहितं पिच्छिलं चाश्रु यस्य सः । प्रचयः सामर्थ्यान्मेदसः । एष श्लेष्म-जोऽसाध्यश्च ॥ १० ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुत-व्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातः सर्वगतरोगविज्ञानीयमध्यायं व्याख्या-स्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि । सर्वगतरोगविज्ञानीयः सर्वाश्रयरोगविज्ञा-नीय इत्यर्थः । कृष्णमण्डलप्रत्यासत्त्या दृष्टिगतरोगविज्ञानीयो युज्यते, यश्च दृष्टिगतरोगविज्ञानीयात् पूर्वं सर्वगतरोगविज्ञानी-यारम्भः स दृष्टिगतानां तिमिरादीनामभिष्यन्दनिमित्तत्वं न स्यादिति बोधयति, सन्ध्यादिगतानां च स्यन्दकारणत्वं बोध-यति ॥ १ ॥ २ ॥

स्यन्दास्तु चत्वार इहोपदिष्टा-
स्तावन्त एवेह तथाऽधिमन्थाः ॥
शोफान्वितोऽशोफयुतश्च पाका-
वित्येवमेते दश संप्रदिष्टाः ॥ ३ ॥
हताधिमन्थोऽनिलपर्ययश्च
शुष्काक्षिपाकोऽन्यत एव वातः ॥
दृष्टिस्तथाऽम्लाध्युषिता सिराणा-
मुत्पातहर्षावपि सर्वभागाः ॥ ४ ॥

सर्वाक्षिगतरोगाणां संख्यामाह—स्यन्दा इत्यादि । तावन्त एव चत्वार एव । प्रथमश्लोकेन दश, द्वितीयश्लोकेन सप्त, एवं सप्तदश सर्वाश्रयाः कथिताः ॥ ३ ॥ ४ ॥

प्रायेण सर्वे नयनामयास्तु
भवन्त्यभिष्यन्दनिमित्तमूलाः ॥
तस्मादभिष्यन्दमुदीर्यमाण-
मुपाचरेदाशु हिताय धीमान् ॥ ५ ॥

सर्वेषां नेत्ररोगाणामभिष्यन्दभवत्वात् तत्प्रतीकारस्याशेषन-यनामयप्रतीकारभूतत्वाद्यत्नतः पूर्वरूप एवासौ प्रतिकरणीय इत्याह—प्रायेणेत्यादि । अभिष्यन्दनिमित्तमूला इति अभिष्य-न्दाश्च तन्निमित्तानि च तान्येव मूलं येषां ते तथा । निमित्तश-ब्दाद्दुष्टा दोषा दोषकोपनानि च संगृह्यन्ते । उदीर्यमाणम् उत्पद्यमानम् । 'अभिष्यन्दनिमित्तमूला' इत्यत्र 'अभिष्यन्द-समुद्भवा हि' इति केचित् पठन्ति ॥ ५ ॥

निस्तोदनं स्तम्भनरोमहर्ष-
सङ्घर्षपारुष्यशिरोभितापाः ॥
विशुष्कभावः शिशिराश्रुता च
वाताभिपन्ने नयने भवन्ति ॥ ६ ॥

इदानीं वाताभिष्यन्दलक्षणमाह—निस्तोदनमित्यादि । निस्तोदनं सूच्येव व्यधनम् । स्तम्भनं स्तब्धता । संघर्षः करक-रिमा । शिरोभितापः शिरोव्यथा । 'विशुष्कभावः शिशिराश्रुता च' इत्यत्र 'शुष्काल्पदूषिकहिमाश्रुता च' इति केचित् पठन्ति । तत्र दूषिका नेत्रमलम् । साध्योऽयम् ॥ ६ ॥

दाहप्रपाकौ शिशिराभिनन्दा
धूमायनं बाष्पसमुच्छ्रयश्च ॥
उष्णाश्रुता पीतकनेत्रता च
पित्ताभिपन्ने नयने भवन्ति ॥ ७ ॥

पित्ताभिष्यन्दलक्षणमाह—दाहेत्यादि । शिशिराभिनन्दा शीताभिलाषः । धूमायनं धूमस्येवोद्गमनं, बाष्पसमुच्छ्रयः अश्रु-बाहुल्यम् । अयमपि साध्यः ॥ ७ ॥

उष्णाभिनन्दा गुरुताऽक्षिशोफः
कण्डूपदेहौ सितताऽतिशैत्यम् ॥

---

१ 'अभ्रदलानुकारि' इति पा० । २ 'श्वेतः समाक्रामति सर्वतो हि' इति पा० । ३ '°मक्षिरोगं सर्वात्मकं वर्जयितव्यमाहुः' इति पा० ।

स्रावो मुहुः पिच्छिल एव चापि
कफाभिपन्ने नयने भवन्ति ॥ ८ ॥

श्लेष्माभिष्यन्दलक्षणमाह—उष्णेत्यादि । उपदेहो मलोपलिप्तता, सितता शुक्लता; एषोऽपि साध्यः ॥ ८ ॥

ताम्राश्रुता लोहितनेत्रता च
राज्यः समन्तादतिलोहिताश्च ॥
पित्तस्य लिङ्गानि च यानि तानि
रक्ताभिपन्ने नयने भवन्ति ॥ ९ ॥

रक्ताभिष्यन्दमाह—ताम्रेत्यादि । असावपि साध्यः ॥ ९ ॥

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ॥
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥ १० ॥

अधिमन्थानामभिष्यन्दरोगकृतत्वं दर्शयन्नाह—वृद्धैरित्यादि । तावन्तः चत्वार एव । तीव्रवेदना इत्यत्र वेदनाशब्दः सामान्यपीडावचनः । तेन यथास्वं वातादिदोषवेदनायुक्ता इत्यर्थः; एतेनेदमुक्तं भवति—वातिकादभिष्यन्दाद्वातिक एवाधिमन्थस्तीव्रवातिकनिस्तोदादिसकलवेदनो भवति; एवं पैत्तिकः, श्लैष्मिको, रक्तोत्थितश्चेति ॥ १० ॥

उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा ॥
शिरसोऽर्धं च तं विद्यादधिमन्थं स्वलक्षणैः ॥ ११ ॥

अधिमन्थानां सामान्यलक्षणमाह—उत्पाट्यत इत्यादि । नेत्रं निर्मथ्यते तथेति न केवलं नेत्रमेव निर्मथ्यते शिरसोऽर्धं च तथा निर्मथ्यत इति, अर्धशिरसो वेदना च व्याधिस्वभावात् । स्वलक्षणैर्वातादीनां स्वकीयैर्लक्षणैः । केचिदत्राधिमन्थानां सामान्यलक्षणं न पठन्ति, **पञ्जिकायां** पठितत्वादस्माभिः पठितम् ॥ ११ ॥

नेत्रमुत्पाट्यत इव मथ्यतेऽरणिवच्च यत् ॥
सङ्घर्षतोदनिर्भेदमांससंरब्धमाविलम् ॥ १२ ॥
कुञ्चनास्फोटनाध्मानवेपथुव्यथनैर्युतम् ॥
शिरसोऽर्धं च येन स्यादधिमन्थः स मारुतात् १३

अधिमन्थानां सामान्यलक्षणमुक्त्वा विस्तरेण विशेषलक्षणमाह—नेत्रमित्यादि । सङ्घर्षः करकरिमा । अन्ये तु 'संहर्ष' इति पठन्ति, तत्र संहर्षो रोमाञ्चप्रायो वेदनाविशेषः । तोदः सूचीव्यधनमिव वेदना । निर्भेदः शस्त्रेण विदारणमिव । मांससंरब्धं मांसोपचितमित्यर्थः । आविलं समलम् । एष साध्यः ॥ १२ ॥ १३ ॥

रक्तराजिचितं स्रावि वह्निनेवावदह्यते ॥
यकृत्पिण्डोपमं दाहि क्षारेणाक्तमिव क्षतम् ॥ १४ ॥
प्रपक्वोच्छूनवर्त्मान्तं सस्वेदं पीतदर्शनम् ॥
मूर्च्छाशिरोदाहयुतं पित्तेनाक्ष्यधिमन्थितम् ॥ १५ ॥

पित्ताधिमन्थलक्षणमाह—रक्तराजीत्यादि । दाहि क्षारेणाक्तमिव क्षतमिति क्षारलिप्तक्षतमिव दहनशीलम् । एष व्याधिः साध्यः ॥ १४ ॥ १५ ॥

शोफवन्नातिसंरब्धं स्रावकण्डूसमन्वितम् ॥
शैत्यगौरवपैच्छिल्यदूषिकाहर्षणान्वितम् ॥ १६ ॥
रूपं पश्यति दुःखेन पांशुपूर्णमिवाविलम् ॥
नासाध्मानशिरोदुःखयुतं श्लेष्माधिमन्थितम् ॥१७॥

श्लेष्माधिमन्थलक्षणमाह—शोफवदित्यादि । दूषिका नेत्रमलम् । अयमपि रोगः साध्यः ॥ १६ ॥ १७ ॥

बन्धुजीवप्रतीकाशं ताम्यति स्पर्शनाक्षमम् ॥
रक्तास्रावं सनिस्तोदं पश्यत्यग्निनिभा दिशः ॥१८॥
रक्तमग्नारिष्टवच्च कृष्णभागश्च लक्ष्यते ॥
यद्दीप्तं रक्तपर्यन्तं तद्रक्तेनाधिमन्थितम् ॥ १९ ॥

रक्ताधिमन्थलक्षणमाह—बन्धुजीवेत्यादि । बन्धुजीवो मध्याह्नपुष्पकः, अरिष्टकं कृष्णफलं 'अरीठा' इति लोके । असावपि साध्यः ॥ १८ ॥ १९ ॥

हन्याद्दृष्टिं सप्तरात्रात् कफोत्थो-
ऽधीमन्थोऽसृक्संभवः पञ्चरात्रात् ॥
षड्रात्राद्वै मारुतोत्थो निहन्या-
न्मिथ्याचारात् पैत्तिकः सद्य एव ॥ २० ॥

इदानीं वाताद्यधिमन्थानां सम्यगुपचारसाध्यानां वैद्यातुरयोर्यत्नाधानार्थं मिथ्याचाराद्दृष्टिविनाशावधिं यथादोषं निर्दिशन्नाह—हन्यादित्यादि । मिथ्याचारादिति पदं श्लेष्मोद्भवाद्यधिमन्थेषु सर्वेष्वपि संबध्यते । दृष्टिनाशकालावधिरप्यत्र व्याधिस्वभावात् ॥ २० ॥

कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः ॥
दाहसंहर्षताम्रत्वशोफनिस्तोदगौरवैः ॥ २१ ॥
जुष्टो मुहुः स्रवेच्चास्रमुष्णशीताम्बु पिच्छिलम् ॥
संरम्भी पच्यते यश्च नेत्रपाकः सशोफजः ॥ २२ ॥

सशोफपाकमाह—कण्ड्वित्यादि । संरम्भी शोफयुक्तः ॥ २१ ॥ २२ ॥

शोफहीनानि लिङ्गानि नेत्रपाके त्वशोफजे ॥

अशोफपाकमाह—शोफेत्यादि । लिङ्गानि सशोफपाकलिङ्गानीत्यर्थः । उभावपि पाकौ त्रिदोषजौ साध्यौ च ॥—

उपेक्षणादक्षि यदाऽधिमन्थो
वातात्मकः सादयति प्रसह्य ॥
रुजाभिरुग्राभिरसाध्य एष
हताधिमन्थः खलु नाम रोगः ॥ २३ ॥

सकलनयनशोषलक्षणं हताधिमन्थं दर्शयन्नाह—उपेक्षणादित्यादि । सादयति अवसादयति, शोषयतीत्यर्थः ॥ २३ ॥

अन्तःसिराणां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन् ॥
हताधिमन्थं जनयेत्तमसाध्यं विदुर्बुधाः ॥ २४ ॥

दृष्टिनिर्गमलक्षणं हताधिमन्थं दर्शयन्नाह—अन्तःसिराणामित्यादि । प्रतिक्षिपन् निष्कासयन्नित्यर्थः । यद्यपि हताधिमन्थलक्षणद्वित्वं ज्ञायते तथाऽप्येक एव, अतो न संख्यातिरेकः ।

**जेज्जटाचार्यस्तु** नयनशोषलक्षणहताधिमन्थस्य पाठं न पठति, दृष्टिनिर्गमलक्षणस्य हताधिमन्थस्य पाठं पठति, **पञ्जिकाकारेण च विदेहोक्तं** प्रकारद्वयेन हताधिमन्थलक्षणं दृष्ट्वा न्यूनतादोषभयात् पाठद्वयमपि पठितम् । तथा च **विदेहः—** "अन्तर्गतः सिराणां तु यदा तिष्ठति मारुतः । स तदा नयनं प्राप्य शीघ्रं दृष्टिं निरस्यति ॥ तस्यां निरस्यमानायां निर्मथन्निव मारुतः । नयनं निर्वमत्याशु शूलतोदाधिमन्थनैः ॥ अथवा शोषयेदक्षि क्षीणतेजोबलानलम् । उत्पन्नमिव संशुष्कमवसीदति लोचनम् ॥ हताधिमन्थं तं विद्यादसाध्यं वातकोपतः"— इति ॥ २४ ॥

**पक्ष्मद्वयाक्षिभ्रुवमाश्रितस्तु**
**यत्रानिलः संचरति प्रदुष्टः ॥**
**पर्यायशश्चापि रुजः करोति**
**तं वातपर्यायमुदाहरन्ति ॥ २५ ॥**

वातपर्यायमाह—पक्ष्मेत्यादि । अक्षि लोचनं, भ्रूः प्रसिद्धा । पर्यायशश्चापि रुजः करोति कदाचित् पक्ष्मद्वये, कदाचिदक्षिणि, कदाचिद्भ्रुवीति पर्यायशब्दार्थः । साध्योऽयम् ॥ २५ ॥

**यत् कूणितं दारुणरूक्षवर्त्म**
**विलोकने चाविलदर्शनं यत् ॥**
**सुदारुणं यत् प्रतिबोधने च**
**शुष्काक्षिपाकोपहतं तदक्षि ॥ २६ ॥**

शुष्काक्षिपाकमाह—यदित्यादि । कूणितं निमीलितं, दारुणं कठिनं रूक्षं वर्त्म यस्य तत्तथा । विलोकने चाविलदर्शनमिति यदतिदर्शने आकुलदर्शनमित्यर्थः । सुदारुणं यत् प्रतिबोधने चेति प्रतिबोधने उन्मेषे च यदतिशयेन कठिनं; अन्ये सुदारुणं कृच्छ्रोन्मीलनम् । वातिकोऽयं साध्यश्च ॥ २६ ॥

**यस्यावटूकर्णशिरोहनुस्थो**
**मन्यागतो वाऽप्यनिलोऽन्यतो वा ॥**
**कुर्याद्रुजोऽति भ्रुवि लोचने वा**
**तमन्यतोवातमुदाहरन्ति ॥ २७ ॥**

अन्यतोवातमाह—यस्येत्यादि । अवटुः ग्रीवायाः पश्चिमो भागः । मन्या ग्रीवायाः पार्श्वयोः सिराविशेषः । अन्यतो वेति पृष्ठतो वेत्यर्थः । अन्यतोवात इति यथार्थेयं संज्ञा, यतोऽन्यतः स्थितो वायुरन्यतो वेदनां करोति । वातिकोऽयं साध्यश्च ॥२७॥

**अम्लेन भुक्तेन विदाहिना च**
**संछाद्यते सर्वत एव नेत्रम् ॥**
**शोफान्वितं लोहितकैः सनीलै-**
**रेतादृगम्लाध्युषितं वदन्ति ॥ २८ ॥**

अम्लाध्युषितमाह—अम्लेनेत्यादि । विदाहिना वेति कटुकेन लवणेन वेत्यर्थः । लोहितकैः रागैरित्यर्थः । सनीलैः ईषन्नीलैः । एतादृक् ईदृशमित्यर्थः । अम्लाध्युषितम् अम्लजनितपित्ताध्युषितम् । एष रोगः पैत्तिकः साध्यश्च ॥ २८ ॥

**अवेदना वाऽपि सवेदना वा**
**यस्याक्षिराज्यो हि भवन्ति ताम्राः ॥**
**मुहुर्विरज्यन्ति च ताः समन्ताद्**
**व्याधिः सिरोत्पात इति प्रदिष्टः ॥ २९ ॥**

सिरोत्पातमाह—अवेदनेत्यादि । विरज्यन्ति विरक्ता भवन्ति प्रकृतवर्णा भवन्तीत्यर्थः[1] । रक्तजोऽयं साध्यश्च ॥ २९ ॥

**मोहात् सिरोत्पात उपेक्षितस्तु**
**जायेत रोगस्तु सिराप्रहर्षः ॥**
**ताम्राच्छमस्रं[2] स्रवति प्रगाढं**
**तथा न शक्नोत्यभिवीक्षितुं च ॥ ३० ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रे सर्वगतरोगविज्ञानीयो नाम षष्ठोऽध्यायः ॥ ६ ॥**

सिराहर्षमाह—मोहादित्यादि । अयमपि रक्तजः साध्यश्च ॥ ३० ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गतशालाक्यतन्त्रे षष्ठोऽध्यायः समाप्तः ।

---

## सप्तमोऽध्यायः ।

**अथातो दृष्टिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

सर्वगतरोगविज्ञानीयानन्तरं दृष्टिगतरोगाणां पारिशेष्यादारम्भो युक्त इत्यत आह—अथात इत्यादि ॥ १ ॥ २ ॥

**मसूरदलमात्रां तु पञ्चभूतप्रसादजाम् ॥**
**खद्योतविस्फुलिङ्गाभामिद्धां[3] तेजोभिरव्ययैः ॥ ३ ॥**
**आवृतां पटलेनाक्ष्णोर्बाह्येन विवराकृतिम् ॥**
**शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः ॥ ४ ॥**

तां च दृष्टिं चिकित्सार्थं प्रमाणाकारस्वलक्षणैर्निर्दिशन्नाह— मसूरेत्यादि । मसूरदलमात्रामिति मसूरदलप्रमाणामित्यर्थः । पञ्चभूतप्रसादजामिति पञ्चभूतानां धामभूतात् साराज्जातामित्यर्थः । पञ्चभूतमध्ये एकस्य प्राधान्यमाह—इद्धां तेजोभिरव्ययैरिति; एतेन तेजोमयी दृष्टिरित्युक्तम् । खद्योतविस्फुलिङ्गाभामिति खद्योतो ज्योतिरिङ्गणः, विस्फुलिङ्गः सूक्ष्मोऽग्निकणः; खद्योतविस्फुलिङ्गौ तैजसावपि यथा न दहतस्तथा दृष्टिरपि न दहति । यदि सा खद्योतादिसदृशी तर्हि दिवाकरप्रकाशाद्रूपग्रहणेन न भवितव्यमित्याह—अव्ययैरिति ।—अव्ययैः उपचयापचयरहितैस्तेजोभिर्विशिष्टा । तस्य दृष्टेः कुतो भास्वरता न दृश्यत इत्याह— आवृतां पटलेनाक्ष्णोर्बाह्येनेति; आवृताम् आच्छादितां, बाह्येन तेजो जलाश्रितेन । यद्यपि बाह्यपटलावृतत्वाद्दृष्टे रूपग्रहणसामर्थ्योपघातः प्राप्तः[4], तथाऽपि पटलस्यात्यन्ताच्छत्वाद्रोमकूपविवरान्तरत्वाच्च[5] तेजःपरमाणूनां बहिश्चरत्वे[6] रूपग्रहणसामर्थ्यं दृष्टेर्नो-

१ 'विशेषरक्तवर्णा भवन्तीत्यर्थः' इति श्रीकण्ठदत्तः । २ 'ताम्राभमस्रं' इति पा० । ३ 'सिद्धां' इति पा० । ४ 'दृष्टिगतबाह्यपटलावृतत्वात्' इति पा० । ५ 'रोमकूपविवरान्तर्गतत्वाच्च' इति पा० । ६ 'बहिःशरारुत्वे' इति पा० ।

पहन्यत इत्याह—विवराकृतिमिति ।-विवरं छिद्रं तस्येवाकृतिर्यस्याः सा तथा तां, न तु साक्षात्तत्र छिद्रमस्ति । विवराकारवचनेन पुनर्मृदुतैवोक्ता, न पुनः सर्वथा शुषिरत्वं; तथा च सति पटलानां प्रतिपादितानामप्यनुपपत्तिः स्यात् । दृष्टेः पटलचतुष्टयेऽपि रूपग्रहणसामर्थ्यमनुमातव्यं, कालकास्थ्याश्रिताभ्यन्तरपटलमपि गते दोषे रूपग्रहणविकृतिलक्षणस्य तिमिरस्योक्तेः । शीतसात्म्यामिति । ननु शीतेन तेजोऽभिहन्यते तत् कथं शीतेन सात्म्यं ? उच्यते—पृथग्व्यवस्थितयोर्जलाभ्योर्विरोधो, न पुनः सहोत्पन्नयोरेककार्ययोः; प्रभावाद्वा जलान्तर्गतमप्येतत्तेजो नोपहन्यते ॥ ३ ॥ ४ ॥

**रोगांस्तदाश्रयान् घोरान् षट् च षट् च प्रचक्ष्महे ॥**
**पटलानुप्रविष्टस्य तिमिरस्य च लक्षणम् ॥ ५ ॥**

प्रमाणादिभिश्चिकित्सोपयोगिभिर्दृष्टिमभिधाय तदाश्रयरोगोपवर्णनार्थं पटलचतुष्टयप्रविष्टतिमिरलक्षणोपदेशार्थं च प्रतिपादयन्नाह—रोगानित्यादि । तदाश्रयान् दृष्ट्याश्रयानित्यर्थः । षट् च षट् चेति द्वादशेत्यर्थः ॥ ५ ॥

**सिराभिरभिसंप्राप्य विगुणोऽभ्यन्तरे भृशम् ॥**
**प्रथमे पटले दोषो यस्य दृष्टौ व्यवस्थितः ॥ ६ ॥**
**अव्यक्तानि स रूपाणि सर्वाण्येव प्रपश्यति ॥**

प्रथमपटलगतस्य तिमिरारम्भकदोषस्य संप्राप्तिलेशपूर्वकं लक्षणमाह—सिराभिरित्यादि । अभिसंप्राप्य सम्यग्गत्वा । विगुणो दुष्टः । अभ्यन्तरे सर्वाभ्यन्तरे कालकास्थ्याश्रिते प्रथमपटले । स पुरुषः । 'सर्वाण्येव प्रपश्यति' इत्यत्र 'कदाचिदथ पश्यति' इति **पञ्जिकाकारः** पठति व्याख्यानयति च—कदाचिन्न सर्वकालम् । एतेन स्थानविशेषाद्दोषस्याल्पबलवत्तोक्ता, तदुत्तरेषु क्रमात् बलवत्त्वमिति । तान्यव्यक्तरूपाण्यपि वक्ष्यमाणरूपभ्रमणारुणवर्णादियुक्तानि वातेन, तथा पित्तेनादित्यखद्योतादीनि नीलपीतवर्णानि, एवं कफेन सितवर्णानि, रक्तेन रक्तवर्णानि, सन्निपातेन विचित्राणि । एवं द्वितीयादिपटलेष्वपि व्याख्येयम् ॥ ६ ॥—

**दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते ॥ ७ ॥**
**मक्षिका मशकान् केशाञ्जालकानि च पश्यति ॥**
**मण्डलानि पताकांश्च मरीचीः कुण्डलानि च ॥८॥**
**पैरिप्लवांश्च विविधान् वर्षमभ्रं तमांसि च ॥**
**दूरस्थान्यपि रूपाणि मन्यते च समीपतः ॥ ९ ॥**
**समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥**
**यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति ॥ १० ॥**

द्वितीयपटलगतदोषलक्षणमाह—दृष्टिरित्यादि । द्वितीयं पटलं मेदःश्रितम् । भृशमिति यादृशी प्रथमे पटले ततोऽधिकं विह्वलीभवति । विह्वलत्वमाह—मक्षिका मशकानित्यादि । मक्षिकादीनामभावेऽपि तिमिरारम्भकद्वितीयपटलाश्रितदोषप्रभावेण मक्षिकादीनि यथादोषवर्णानि पश्यति । जालकानि जन्तुलालाविरचितजालकाकाराणि, मण्डलानि वर्तुलरूपाणि । पताकाः ध्वजान् । मरीचीः मृगतृष्णाः । कुण्डलानि कर्णकुण्डलानि । परिप्लवांश्चेति नक्षत्रादीनां गतीः । विविधान् ऊर्ध्वाधस्तिर्यग्गमनेन कृष्णपीतशुक्लवर्णदर्शनेन वा नानाप्रकारान् । वर्षं वृष्टिम् । असद्रूपग्रहणे विह्वलत्वं प्रतिपाद्य सद्रूपग्रहणेऽपि देशापरिज्ञाने दृशोर्विह्वलत्वं प्रतिपादयन्नाह—दूरस्थानीत्यादि । गोचरविभ्रमात् इन्द्रियार्थविभ्रमात् ॥ ७–१० ॥

**ऊर्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते ॥**
**महान्त्यपि च रूपाणि च्छादितानीव वाससा ॥११**
**कर्णनासाक्षियुक्तानि विपरीतानि वीक्षते ॥**
**यथादोषं च रज्येत दृष्टिर्दोषे बलीयसि ॥ १२ ॥**
**अधःस्थिते समीपस्थं दूरस्थं चोपरिस्थिते ॥**
**पार्श्वस्थिते तथा दोषे पार्श्वस्थानि न पश्यति ॥१३**
**समन्ततः स्थिते दोषे सङ्कुलानीव पश्यति ॥**
**दृष्टिमध्यगते दोषे स एकं मन्यते द्विधा ॥ १४ ॥**
**द्विधास्थिते त्रिधा पश्येद्बहुधा चानवस्थिते ॥**
**तिमिराख्यः स वै दोषः**

तृतीयपटलगतदोषलक्षणमाह—ऊर्ध्वमित्यादि । तृतीयं पटलं मांसाश्रितम् । ऊर्ध्वं पश्यतीति आलोकसहायत्वेन दृश ऊर्ध्वमुपलम्भो नाधस्तात् । विपरीतानि कर्णादिहीनानि । यथादोषं चेति सामर्थ्यान्मांसस्थितशोणितसहायेन बलवत्तरदोषेण दृष्टौ राग उत्पद्यत इत्यर्थः । अत एव प्रथमद्वितीयपटलयोः शोणिताभावाद्रागाभावः । अधःस्थिते दृष्टिमण्डलाधोभागस्थिते दोषे इत्यर्थः । सङ्कुलानीवेति मिश्रीभूतानीव वस्तुरूपाणि पश्यति । द्विधा स्थिते 'दोषे' इति शेषः । अनवस्थिते चवले दोषे । तिमिराख्यः तिमिरसंज्ञः, रागप्राप्तस्य च तिमिरस्य 'काच' इति संज्ञा ॥ ११–१४ ॥—

**चतुर्थं पटलं गतः ॥ १५ ॥**
**रुणद्धि सर्वतो दृष्टिं लिङ्गनाशः स उच्यते ॥**
**तस्मिन्नपि तमोभूते नातिरूढे महागदे ॥ १६ ॥**
**चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतः ॥**
**निर्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति ॥१७॥**

चतुर्थपटलगतदोषलक्षणमाह—स इत्यादि । स एव तिमिराख्यः, चतुर्थं पटलं तेजोजलाश्रितं प्राप्तो यदा सर्वतो दृष्टिं रुणद्धि तदा लिङ्गनाश उच्यत इति संबन्धः । लिङ्गनाश इति लिङ्गं चक्षुरिन्द्रियशक्तिः, तस्य नाशो यस्मिन् स लिङ्गनाशो दोषः । तत्राप्यल्पेषु दोषेषु केषांचिद्वस्तुविशेषाणामुपलम्भो भवतीति दर्शयन्नाह—तस्मिन्निति । तस्मिन् लिङ्गनाशे । तमोभूते इति अत्र भूतशब्द उपमाने । नातिरूढे नातिवृद्धे ।

१ 'तदा हि' इति पा० । २ 'परिपूर्वांश्च' इति पा० ।

१ 'चेक्षते' इति पा० । २ 'सङ्कुलानि च' इति पा० । ३ 'मांसस्थितशोणितसहायबलवत्तरे दोषे' इति पा० । ४ 'भ्राजिष्णूनीव पश्यति' इति पा० ।

महागदे प्रधानेन्द्रियतिरोभावकत्वात् । निर्मलानि च तेजांसि अग्न्यादीनि, भ्राजिष्णूनि अन्यान्यपि दीप्तिमन्ति यानि वस्तूनि तानि पश्यतीत्यर्थः ॥ १५ ॥ १७ ॥

**स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः ॥**

तस्यैव लिङ्गनाशस्यापरं संज्ञाद्वयं प्रतिपादयन्नाह—स एवेत्यादि । नीलिकाविशेषिता काचसंज्ञा संजाता यस्य स तथा । काचसंज्ञा च तृतीयेऽपि पटले रागितिमिरस्य रागोत्पत्तिद्वारेण सूचिता । एतेन काचत्वात् पटलद्वयगतयोरपि दोषयोः षट्त्वं न तु द्वादशत्वम् । अस्याग्रे केचित् 'यन्मयस्तन्मयानि' इत्यादिपाठमापातनिकापूर्वकं पठन्ति, स चाभावाच्च लिखितः ॥—

**तत्र वातेन रूपाणि भ्रमन्तीव स पश्यति ॥ १८ ॥**
**आविलान्यरुणाभानि व्याविद्धानि च मानवः ॥**

इदानीं तेषु पटलेषु क्रमेण वातादिदोषारब्धस्य तिमिरस्य लिङ्गानि दर्शयन्नाह—वातेनेत्यादि । आविलानि समलानि, अरुणाभानि ईषद्रक्तानि । व्याविद्धानि वक्राणि ॥ १८ ॥—

**पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान् ॥ १९ ॥**
**शिखिबर्हविचित्राणि नीलकृष्णानि पश्यति ॥**

पित्तजतिमिरलक्षणमाह—पित्तेनेत्यादि । खद्योतो ज्योतिरिङ्गणः । शक्रचापम् इन्द्रधनुः, तडिद्गुणो विद्युल्लता, शिखिबर्हः मयूरपिच्छः ॥ १९ ॥—

**कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च ॥२०॥**
**गौरचामरगौराणि श्वेताभ्रप्रतिमानि च ॥**
**पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रे चैवाभ्रसंप्लवम् ॥ २१ ॥**
**सलिलप्लावितानीव परिजाड्यानि मानवः ॥**

श्लेष्मजतिमिरलक्षणमाह—कफेनेत्यादि । गौरचामरगौराणीति श्वेतचामरवच्छुक्लानि । सितानि चेति सुधौतशुक्लवस्त्रसदृशानि । असूक्ष्माणि स्थूलानि । व्यभ्रे विगतघने । अभ्रसंप्लवं मेघानां सर्वतो गमनम् । सलिलप्लावितानीव परिजाड्यानीति सर्वतः सलिलप्लवनेनेव शुक्लानि स्तिमितानि च रूपाणि पश्यति ॥ २० ॥ २१ ॥—

**तथा रक्तेन रक्तानि तमांसि विविधानि च ॥ २२ ॥**
**हरितश्यावकृष्णानि धूमधूम्राणि चेक्षते ॥**

रक्तजतिमिरलक्षणमाह—तथेत्यादि । धूमधूम्राणि धूमवेष्टितानीव । यद्यपि तिमिरस्य रक्तान्तर्गतदोषजन्यत्वाद्रक्तजसंज्ञा न स्यात्, तथाऽपि रक्तबाहुल्यादुपचाराद्वा रक्तजव्यपदेशः ॥ २२ ॥—

**सन्निपातेन चित्राणि विप्लुतानि च पश्यति ॥ २३ ॥**
**बहुधा वा द्विधा वाऽपि सर्वाण्येव समन्ततः ॥**
**हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च पश्यति २४**

सन्निपातजतिमिरलक्षणमाह—सन्निपातेनेत्यादि । चित्राणि नानावर्णानि विप्लुतानि सर्वतोऽवकीर्णानि । बहुधा बहुत्वं गतानि, द्विधा द्वित्वं गतानि, सर्वाण्येव यावद्द्रष्टव्यानि रूपाणि । हीनाधिकाङ्गानीति न केवलं तृतीये पटले हीनाधिकाङ्गानि पश्यति सन्निपातेन पुनः पटलान्तरेऽपि हीनाधिकाङ्गानि पश्यति । ज्योतींषि तारकाणि ॥ २३ ॥ २४ ॥

**पित्तं कुर्यात् परिम्लायि मूर्च्छितं रक्ततेजसा ॥**
**पीता दिशस्तथोद्यन्तमादित्यमिव पश्यति ॥ २५ ॥**
**विकीर्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेव च ॥**

ननु वातपित्तकफशोणितसन्निपातैः पञ्चभिः पञ्चतिमिराणां चोत्तरावस्थासु काचलिङ्गनाशसंज्ञे कृते, काचाश्च षट् व्याख्येया इति तेषां षट्त्वोपपत्तिहेतुभूतषष्ठपरिम्लायितिमिरकथनाय, तथा परिम्लायितिमिराक्रान्तस्य पुंसो यादृशं रूपग्रहणं भवति तादृग्रूपकथनाय च प्राह—पित्तमित्यादि । मूर्च्छितं संयुक्तं, रक्ततेजसा रक्तप्रसादेन; अन्ये तु रक्तार्थं तेजो रक्ततेजः, तेन मूर्च्छितं; एतेन रक्तार्थं परिणम्यमानरसेन संयुक्तमित्यर्थः । ईदृशे च व्याख्याने नामान्वर्थः सङ्गच्छते । यथा परिम्लायी क्षयी कथ्यते तथा च वक्ष्यति,—'दोषक्षयात् कदाचित् स्यात् स्वयं तत्र च दर्शनम्' इति, तच्च क्षयित्वं लङ्घनादिभिरुपबृंहकरसक्षयात् पित्तक्षयाच्चोपपद्यते । रक्तजपक्षे रक्तक्षयोपपत्तिर्नास्ति । केचित् 'रक्ततेजसा' इत्यत्र 'भक्ततेजसा' इति पठन्ति, व्याख्यानयन्ति च—भक्ततेजसा आहारप्रसादेन रसाख्येनेत्यर्थः । अत्र सात्यकिप्रभृतीनां मतानुलोमेन रक्तमूर्च्छितं पित्तं ह्यपीत्वमवगन्तव्यम् । तथा च रागकथनप्रस्तावे सात्यकिः—"पित्तरक्तोत्थिता पीताश्चित्रिताः सन्निपातजाः"—इति । एक एवासौ परिम्लायी रोगोऽरागप्राप्तः सन् तिमिराख्यः, रागप्राप्तस्तु काचाख्यः, स एव किञ्चिद्दर्शननाशकारी लिङ्गनाशः । सर्वाण्येव तिमिराणि प्रथमद्वितीयपटलगतानि साध्यानि; तृतीयपटलगतानि रागप्राप्त्या काचाख्यानि भवन्ति, तदा याप्यानि ॥ २५ ॥—

**वक्ष्यामि षड्विधं रागैर्लिङ्गनाशमतः परम् ॥ २६ ॥**

तृतीयरागितिमिरस्य काचाख्यां प्राप्तस्य लिङ्गनाशस्य च रागेणैव संख्याषट्त्वं निर्दिशन्नाह—वक्ष्यामीत्यादि । षड्विधं षड्भेदभिन्नम् । तृतीयपटलगतं काचाख्यां प्राप्तं तिमिरमिति शेषः । रागैः वक्ष्यमाणैः अरुणादिभिः । लिङ्गनाशमतः परमिति काचाख्यतिमिरकथनानन्तरं लिङ्गनाशमपि षड्विधं वक्ष्यामि ॥ २६ ॥

**रागोऽरुणो मारुतजः प्रदिष्टः**
**पित्तात् परिम्लाय्यथवाऽपि नीलः ॥**
**कफात् सितः शोणितजस्तु रक्तः**
**समस्तदोषोऽथ विचित्ररूपः ॥ २७ ॥**

तानेवारुणादिकान् रागानाह—राग इत्यादि । परिम्लायी

१ 'मेघरहिते' इति पा० । २ 'मानवः' इति पा० ।

१ 'नामद्वयं' इति पा० । २ 'उपबृंहणकरबलक्षयात् पित्तक्षयाच्चोपपद्यते' इति पा० । ३ 'षड्विधैः' इति पा० । ४ 'समस्तदोषेऽथ विचित्रवर्णः' इति पा० ।

पीत इत्यर्थः । अरुणादिरागैः पञ्चभिस्तावत् पञ्च काचा ज्ञेयाः, षष्ठः काचश्च परिम्लायी रोगः परं रागप्राप्तः । अस्य च पीतवर्णता सात्यकिवचनादवगन्तव्या । एवं षट् काचाः कथिताः ॥ २७ ॥

**रक्तजं मण्डलं दृष्टौ स्थूलकाचानलप्रभम्[1] ॥**
**परिम्लायिनि रोगे स्यान्म्लाय्यानीलं च मण्डलम् ॥**
**दोषक्षयात् कदाचित् स्यात्स्वयं तत्र च दर्शनम् ॥**

अत्र पित्तात् परिम्लायीत्युक्तं तस्य च लक्षणमनुक्तं वक्तुमाह—रक्तजमित्यादि । रक्तजं रक्तप्रसादाज्जातं रक्ततेजसा जातं वा । स्थूलकाचानलप्रभमिति बाहुल्येन स्थूलकाचाभं, वर्णेनानलप्रभम् । अन्ये तु 'अरुणं मण्डलं दृष्टौ स्थूलकाचारुणप्रभं' इति पठन्ति व्याख्यानयन्ति च—अरुणम् अरुणवर्णं । कीदृशमरुणमित्याह—स्थूलकाचारुणप्रभमिति ।—स्थूलकाचस्येवारुणा प्रभा यस्य तत्तथा । एष पाठः **पञ्जिकया दूषितः** । म्लायि क्षयि । आनीलमिति ईषन्नीलम् । अनलप्रभत्वेन च पीतत्वमुक्तमेव, तस्मात् किञ्चिन्नीलपीतमित्यर्थः । अन्ये तु 'म्लायीनीलम्' इति पठन्ति, व्याख्यानयन्ति च—म्लायीनीलं पीतनीलमित्यर्थः । तत्र पीतं रसमूर्च्छितपित्तजनितं, नीलं पुनः रक्तमूर्च्छितपित्तजम् । अत्र तृतीयपटलस्थे रागे दोषव्याधि(प्ति)वशाद्रागस्य मण्डलाकारतैव, न तु ले(रे)खादिप्रकारत्वमिति नियमार्थं पुनर्मण्डलग्रहणमिति । दोषक्षयादित्यादि कर्मक्षयाद्दोषक्षये सञ्जाते कदाचिदाकस्मिकं तत्र परिम्लायिनि रोगे दर्शनं स्यादित्येके; अन्ये तु पित्तसंमूर्च्छाकररससंक्षयात् क्षीणे दोषे तत्र कदाचिद्दर्शनं स्यादिति व्याख्यां कुर्वन्तीति । अयं याप्यः ॥ २८ ॥—

**अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा ॥ २९ ॥**
**पित्तान्मण्डलमानीलं कांस्याभं पीतमेव वा ॥**
**श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम् ॥३०॥**
**चलत्पद्मपलाशस्थः शुक्लो बिन्दुरिवाम्भसः ॥**
**संकुचत्यातपेऽत्यर्थं छायायां विस्तृतो भवेत् ॥३१॥**
**मृद्यमाने च नयने मण्डलं तद्विसर्पति ॥**
**प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ॥ ३२ ॥**
**दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे ॥**
**यथास्वं दोषलिङ्गानि सर्वेष्वेव भवन्ति हि ॥ ३३ ॥**

इदानीं काचाख्यां प्राप्तस्य तिमिरस्य रागेण षट्त्वं प्रतिपाद्य, षड्विधं लिङ्गनाशमतः परं वक्ष्यामीति यदुक्तं तदेव षड्विधत्वं मण्डलरागभेदेन विवृण्वन्नाह—अरुणमित्यादि । परुषं खरस्पर्शम् । आनीलम् ईषन्नीलं, कांस्याभम् आपाण्डुपीतम् । बहलं स्थूलम् । शुक्लो बिन्दुरिवाम्भस इत्यस्याग्रे केचित् 'सङ्कुचत्यातपेऽत्यर्थं छायायां विस्तृतो भवेत्' इति पठन्ति । लिङ्गनाशेऽपि पूर्वोक्तवातादिरूपभ्रमणारुणवर्णादिदोषलिङ्गं ज्ञेयमिति दर्शयितुमाह—यथास्वमित्यादि । यथास्वं दोषलिङ्गानीति पूर्वोक्तवातादितिमिराणां रूपभ्रमणादिलक्षणानीत्यर्थः । एषु लिङ्गनाशेषु केवलश्लेष्मजलिङ्गनाशं विहायान्ये लिङ्गनाशा असाध्याः । अत्र किञ्चिद्दर्शनावस्थां[1] प्राप्तः परिम्लाय्येव रोगः षष्ठो लिङ्गनाशो ज्ञेयः । एवं षड् लिङ्गनाशा उक्ताः ॥ २९–३३ ॥

**षड् लिङ्गनाशाः षडिमे च रोगा**
**दृष्ट्याश्रयाः षट् च षडेव च स्युः ॥**
**तथा नरः पित्तविदग्धदृष्टिः**
**कफेन चान्यस्त्वथ धूमदर्शी ॥ ३४ ॥**
**यो ह्रस्वजाड्यो(त्यो)[2] नकुलान्धता च**
**गम्भीरसंज्ञा च तथैव दृष्टिः ॥**

रागैररुणादिकैः षड्विधं लिङ्गनाशमभिधायापरान् पित्तविदग्धदृष्ट्यादिकान् षडेव निर्दिशन्नाह—षडित्यादि । षड्लिङ्गनाशा इति 'वक्ष्यामि षड्विधं रागैर्लिङ्गनाशमतः परं' इत्यनेनेव लिङ्गनाशानां षट्त्वे प्राप्ते पुनः षडिति यत्संख्याकरणं तन्नियमार्थं, तेन तिमिरकाचलिङ्गनाशानां पृथक् संख्याकरणं न गणनीयं; एतेनैतदुक्तं भवति—षड् लिङ्गनाशाः, षडिमे च रोगा वक्ष्यमाणाः पित्तविदग्धदृष्ट्यादयः, एवं दृष्ट्याश्रया द्वादश । षडिमे च रोगा इति वक्ष्यमाणाः पित्तविदग्धदृष्ट्यादयः । दृष्ट्याश्रयाः षट् च षडेव स्युरिति अत्रापि पूर्वशङ्कया षडेवेति परस्मान्नियमयति; द्वादशैव दृष्ट्याश्रया रोगा भवेयुरित्यर्थः । के ते पित्तविदग्धदृष्ट्यादयः षडित्याह—तथेत्यादि । तथाशब्दो भिन्नक्रमे, कफेन चान्य इत्यत्र संबध्यते; तेन कफेनापि विदग्धदृष्टिरन्य इत्यर्थः ॥ ३४ ॥—

**पित्तेन दुष्टेन गतेन दृष्टिं**
**पीता भवेद्यस्य नरस्य दृष्टिः ॥ ३५ ॥**
**पीतानि रूपाणि च मन्यते यः**
**स मानवः पित्तविदग्धदृष्टिः ॥**
**प्राप्ते तृतीयं पटलं तु दोषे**
**दिवा न पश्येन्निशि वीक्षते च ॥ ३६ ॥**
**([3] रात्रौ स शीतानुगृहीतदृष्टिः**
**पित्तात्पभावादपि तानि पश्येत्) ॥**

पित्तविदग्धदृष्टेर्लक्षणमाह—पित्तेनेत्यादि । दुष्टेन वृद्धेन[4] । निशि वीक्षते चेति रात्रौ शीतोपकृतदृष्टित्वात् पित्ताभावः, अतो रात्रौ रूपदर्शनम् । साध्योऽयम् ॥ ३५ ॥ ३६ ॥—

**तथा नरः श्लेष्मविदग्धदृष्टि-**
**स्तान्येव शुक्लानि हि मन्यते तु ॥ ३७ ॥**
**त्रिषु स्थितोल्पः पटलेषु दोषो**
**नक्तान्ध्यमापादयति प्रसह्य ॥**
**दिवा स सूर्यानुगृहीतचक्षु-[5]**
**रीक्षेत रूपाणि कफाल्पभावात् ॥ ३८ ॥**

१ 'स्थूलकाचारुणप्रभम्' इति पा० ।

१ 'दर्शनानाशावस्थां' इति पा० । २ 'यो ह्रस्वजात्यो' इति पा० । ३ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते । ४ 'वर्द्धेन' इति पा० । ५ 'सूर्यानुगृहीतचक्षुरीक्षेत' इति पा० ।

कफविदग्धदृष्टेर्लक्षणमाह—नर इत्यादि । कफेन दुष्टेन गतेन दृष्टिं सिता भवेद्यस्य नरस्य दृष्टिरिति तथाशब्दार्थः । तान्येव रूपाणि । अयमपि साध्यः ॥ ३८ ॥

**शोकज्वरायासशिरोभितापै-**
**रभ्याहता यस्य नरस्य दृष्टिः ॥**
**सधूमकान् पश्यति सर्वभावां-**
**स्तं धूमदर्शीति वदन्ति रोगम् ॥ ३९ ॥**

धूमदर्शिनो लक्षणमाह—शोकेत्यादि । शिरोभितापः शिरोव्यथा । अयं पित्तजः साध्यश्च ॥ ३९ ॥

**स ह्रस्वजाड्यो दिवसेषु कृच्छ्रा-**
**द्ध्रस्वानि रूपाणि च येन पश्येत् ॥**

ह्रस्वजाड्यलक्षणमाह—स इत्यादि । स पुरुषः । येन विकारेण । अत्र दिवसेषु पश्येदिति वचनाद्रात्रौ न पश्यतीत्यवगम्यते । केचित्तु 'रात्रौ च शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत्' इति पठन्ति; तच्चासङ्गतं, अस्य नक्तान्धताजनकत्वात् । तथा च विदेहः,—"नक्तमन्धास्तु चत्वारो ये पुरस्तात् प्रकीर्तिताः । तेषामसाध्यो नकुलो ह्रस्वजाड्य(त्य)स्तथैव च"—इति । अत्र च दृष्टिमध्यगतः पीतो रागो ज्ञेयः । अस्य पटलचतुष्टयाश्रितपित्तप्रभवत्वादसाध्यत्वम् ॥—

**विद्योतते येन नरस्य दृष्टि-**
**र्दोषाभिपन्ना नकुलस्य यद्वत् ॥ ४० ॥**
**चित्राणि रूपाणि दिवा स पश्येत्**
**स वै विकारो नकुलान्ध्यसंज्ञः ॥**

नकुलान्ध्यलक्षणमाह—विद्योतत इत्यादि । दोषाभिपन्ना दोषैर्व्याप्ता । चित्राणि सर्वदोषवर्णानि । दिवा स पश्येदिति वचनाद्रात्रौ न पश्यतीत्यवगम्यते । सर्वजोऽसाध्यश्च ॥४०॥—

**दृष्टिर्विरूपा श्वसनोपसृष्टा**
**सङ्कुच्यतेऽभ्यन्तरतश्च याति ॥ ४१ ॥**
**रुजावगाढा च तमक्षिरोगं**
**गम्भीरिकेति प्रवदन्ति तज्ज्ञाः ॥**

गम्भीरिकाया लक्षणमाह—दृष्टिरित्यादि । विरूपा विकृतरूपा । श्वसनोपसृष्टा वातोपद्रुता । रुजावगाढा तीव्रवेदना । इयमप्यसाध्या ॥ ४१ ॥—

**बाह्यौ पुनर्द्वाविह संप्रदिष्टौ**
**निमित्ततश्चाप्यनिमित्ततश्च ॥ ४२ ॥**
**निमित्ततस्तत्र शिरोभितापा-**
**ज्ज्ञेयस्त्वभिष्यन्दनिदर्शनैश्च ॥**

हेतुभेदेन बाह्यौ निर्दिशन्नाह—बाह्यावित्यादि । बहिर्भवौ बाह्यौ; यद्यपि प्राक्सूत्रे संक्षेपेणोपदिष्टौ तथाऽपि पुनरिह निमित्तानिमित्तभेदद्वयेन सम्यक् प्रकर्षान्निर्दिष्टावित्यर्थः । तत्र सनिमित्तं दर्शयन्नाह—निमित्तत इत्यादि । तत्र तयोर्मध्ये, शिरोभितापाद् विषपुष्पगन्धस्पृष्टपवनसंपर्कजातात् ,अभिष्यन्दनिदर्शनैरिति अभिष्यन्दलक्षणैरित्यर्थः। अयमसाध्यः ॥४२॥—

**सुरर्षिगन्धर्वमहोरगाणां**
**सन्दर्शनेनापि च भास्वराणाम् ॥ ४३ ॥**
**हन्येत दृष्टिर्मनुजस्य यस्य**
**स लिङ्गनाशस्त्वनिमित्तसंज्ञः ॥**
**तत्राक्षि विस्पष्टमिवावभाति**
**वैदूर्यवर्णा विमला च दृष्टिः ॥ ४४ ॥**

अनिमित्तं दर्शयन्नाह—सुरर्षीत्यादि । अनिमित्त इति अनुपलभ्यमानविशिष्टसुरादिदर्शननिमित्तः । दृष्टिः दर्शनम्। लिङ्गनाश इति दर्शननाश इत्यर्थः । अयमप्यसाध्यः । तस्यैवानिमित्तस्य लक्षणमाह—तत्रेत्यादि । तत्र अनिमित्तसंज्ञके । विस्पष्टमिव विशेषेण प्रसन्नमिव । वैदूर्यवर्णा प्रकृतिवर्णेत्यर्थः । विमलेति विगतास्तिमिरकाचादयो मला यस्यां सा तथा । एतौ सनिमित्तानिमित्तौ सर्वगतावपि दर्शननाशकरत्वादनुक्तावपि दृष्ट्याश्रितौ कथितौ, अतो न संख्यातिरेकः ॥ ४३ ॥ ४४ ॥

**विदीर्यते सीदति हीयते वा**
**नृणामभीघातहता तु दृष्टिः ॥ ४५ ॥**

आगन्तुप्रस्तावादपरमभिघातजमाह—विदीर्यत इत्यादि । सीदति अवसादं याति । एष बाह्यनिमित्तत्वात् सन्निपातान्तर्भूतः ॥ ४५ ॥

**इत्येते नयनगता मया विकाराः**
**संख्याताः पृथगिह षट् च सप्ततिश्च ॥**
**एतेषां पृथगिह विस्तरेण सर्वं**
**वक्ष्येऽहं तदनु चिकित्सितं यथावत् ॥ ४६ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे दृष्टिगतरोगविज्ञानीयो नाम सप्तमोऽध्यायः ॥ ७ ॥**

समुदायसंख्यामाह—इत्येत इत्यादि । संख्याताः सम्यगाख्याताः, सम्यग्गणिता वा । इह शालाक्ये । पुनः षट्सप्ततिसंख्याकारणं नियमार्थं; तेन षट्सप्ततिरेव । एतेन करालादिप्रोक्ता संख्या निराकृता ॥ ४६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

**अथातश्चिकित्सितप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

दृष्टिगतरोगविज्ञानीयानन्तरं सर्वथा प्रतिपन्नसकलनयना-

१ 'ह्रस्वजाड्यो' इति पा० । २ 'ह्रस्वजाड्यलक्षणमाह' इति पा० ।
३ 'अभिष्यन्दनिदर्शनश्च' इति पा० ।

१ 'चिकित्सितप्रविभागीयं' इति पा० ।

मयस्य भिषजश्चिकित्सा न्याय्येति चिकित्साप्रविभागीयारम्भः—अथात इत्यादि । प्रविभागः प्रकर्षेण विभजनं पृथक्करणमित्यर्थः ॥ १ ॥ २ ॥

**षट्सप्ततिर्येऽभिहिता व्याधयो नामलक्षणैः ॥**
**चिकित्सितमिदं तेषां समासव्यासतः शृणु ॥ ३ ॥**

चिकित्सा तु द्विविधा समासाद् व्यासाच्च; तत्र समासेनेहाध्याये विभागं दर्शयन्नाह—षडित्यादि । लक्षणैः हेतुपूर्वरूपरूपोपशयसंप्राप्तिभिः । समासात् संक्षेपादिहैवाध्याये; विस्तरात् पुनर्वाताभिष्यन्दादिषु ॥ ३ ॥

**छेद्यास्तेषु दशैकश्च नव लेख्याः प्रकीर्तिताः ॥**
**भेद्याः पञ्च विकाराः स्युर्व्यध्याः पञ्चदशैव तु ॥४॥**
**द्वादशाऽशस्त्रकृत्याश्च याप्याः सप्त भवन्ति हि ॥**
**रोगा वर्जयितव्याः स्युर्दश पञ्च च जानता ॥**
**असाध्यौ वा भवेतां तु याप्यौ चागन्तुसंज्ञितौ ॥५॥**

तत्राष्टविधशस्त्रकर्मणां मध्ये नेत्रामयेषु चतुर्विधं कर्म प्रयोज्यम्, अतश्चतुर्विधशस्त्रकर्मार्हान् व्याधीन् समासार्थं वर्गीकृत्य प्राह—छेद्या इत्यादि । द्वादशाऽशस्त्रकृत्याश्चेति चकाराद् द्वौ बाह्यजावशस्त्रकृत्यौ । याप्या इति स्नेहादिक्रियया याप्यत्वं, न तु छेद्यादिक्रियया । याप्यसाध्यत्वे च द्वयोरवस्थावशात् । वर्जयितव्या असाध्या इत्यर्थः ॥ ४ ॥ ५ ॥

**अर्शोऽन्वितं भवति वर्त्म तु यत्तथाऽर्शः**
**शुष्कं तथाऽर्बुदमथो पिडकाः सिराजाः ॥**
**जालं सिराजमपि पञ्चविधं तथाऽर्म**
**छेद्या भवन्ति सह पर्वणिकामयेन ॥ ६ ॥**

तानेव छेद्यान् रोगान्नामभिः प्राह—अर्शोऽन्वितमित्यादि । पञ्चविधमर्मेति प्रस्तार्यर्म, शुक्लार्म, रक्तार्म, अधिमांसार्म, स्नाय्वर्मेत्येवं पञ्चविधम् ॥ ६ ॥

**उत्सङ्गिनी बहलकर्दमवर्त्मनी च**
**श्यावं च यच्च पठितं त्विह बद्धवर्त्म ॥**
**क्लिष्टं च पोथकियुतं खलु यच्च वर्त्म**
**कुम्भीकिनी च सह शर्करया च लेख्याः ॥७॥**

लेख्यान्नामभिः प्राह—उत्सङ्गिनीत्यादि । बहलकर्दमवर्त्मनीत्यत्र वर्त्मेति पदं बहलकर्दमाभ्यां प्रत्येकं संबध्यते ॥ ७ ॥

**श्लेष्मोपनाहलगणौ च बिसं च भेद्या**
**ग्रन्थिश्च यः क्रिमिकृतोऽञ्जननामिका च ॥**

भेद्यान्नामभिः प्राह—श्लेष्मेत्यादि । बिसं बिसवर्त्म ॥—

**आदौ सिरा निगदितास्तु ययोः प्रयोगे**
**पाकौ च यौ नयनयोः पवनोऽन्यतश्च ॥ ८ ॥**
**पूयालसानिलविपर्ययमन्थसंज्ञाः**
**स्यन्दास्तु यान्त्युपशमं हि सिराव्यधेन ॥**

व्यध्यान्नामभिः प्राह—आदावित्यादि । आदौ सिरा निगदिताः इत्यादि ययोर्विकारयोः प्रयोगे आदौ सिरा निगदितास्तौ व्यध्यौ, कौ तौ ? सिरोत्पातसिराहर्षौ । पवनोऽन्यतः अन्यतोवातः । मन्थसंज्ञा अधिमन्थाश्चत्वारः; स्यन्दा अभिष्यन्दाश्चत्वार एव ॥ ८ ॥—

**शुष्काक्षिपाककफपित्तविदग्धदृष्टि-**
**ष्वम्लाख्यशुक्रसहितार्जुनपिष्टकेषु ॥ ९ ॥**
**अक्लिन्नवर्त्महुतभुग्ध्वजदर्शिशुक्ति-**
**प्रक्लिन्नवर्त्मसु तथैव बलाससंज्ञे ॥**
**आगन्तुनाऽऽमययुगेन च दूषितायां**
**दृष्टौ न शस्त्रपतनं प्रवदन्ति तज्ज्ञाः ॥ १० ॥**

अशस्त्रकृत्यानाह—शुष्केत्यादि । हुतभुक् ध्वजदर्शी, धूमदर्शीत्यर्थः ॥ ९ ॥ १० ॥

**संपश्यतः षडपि येऽभिहितास्तु काचा-**
**स्ते पक्ष्मकोपसहितास्तु भवन्ति याप्याः ॥**

याप्यानाह—संपश्यत इत्यादि । षडपि ये काचा अभिहितास्ते संपश्यतः पुरुषस्य याप्या भवन्तीति संबन्धः ॥—

**चत्वार एव पवनप्रभवास्त्वसाध्या**
**द्वौ पित्तजौ कफनिमित्तज एक एव ॥**
**अष्टार्धका रुधिरजाश्च गदास्त्रिदोषा-**
**स्तावन्त एव गदितावपि बाह्यजौ द्वौ ॥ ११ ॥**

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे चिकित्सितप्रविभागविज्ञानीयो नामाष्टमोऽध्यायः ॥ ८ ॥

असाध्यानाह—चत्वार इत्यादि । चत्वार एवेति हताधिमन्थनिमिषगम्भीरदृष्टिवातहतवर्त्माख्याश्चत्वारः । द्वाविति ह्रस्वजाड्य(त्य)जलधिस्रावाख्यौ । एक एव कफस्रावाख्यः । अष्टार्धका इति चत्वार इत्यर्थः । के ते चत्वारः ? रक्तस्रावाजकाजातशोणितार्शोव्रणान्वितशुक्राख्याः । तावन्त एवेति चत्वार एवेत्यर्थः । के ते चत्वारः ? पूयास्रावनकुलान्ध्याक्षिपाकात्यालज्याख्याः । बाह्यजौ आगन्तुजौ ॥ ११ ॥

इति श्रीडल्हण(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रेऽष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ।

**अथातो वाताभिष्यन्दप्रतिषेधं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

चिकित्सितप्रविभागीयानन्तरं सर्वेषां नयनामयानामभिष्यन्दमूलत्वात्, तत्रापि पित्तादीनां वातस्यैवावरणत्वेन निदानभूतत्वादादौ वाताभिष्यन्दप्रतिषेधो युक्त इत्यत आह—अथात इत्यादि । अत्रादिशब्दो लुप्तो द्रष्टव्यः, तेन वाताभिष्यन्दादिप्रतिषेधं व्याख्यास्याम इत्यर्थः; प्रतिषेधः चिकित्सितं; एवं पित्ताभिष्यन्दप्रतिषेधादिष्वादिशब्दो द्रष्टव्यः ॥ १ ॥ २ ॥

१ 'समासाद्व्यासतः' इति पा० ।

**पुराणसर्पिषा स्निग्धौ स्यन्दाधीमन्थपीडितौ ॥**
**स्वेदयित्वा यथान्यायं सिरामोक्षेण योजयेत् ॥ ३ ॥**
**संपादयेद्बस्तिभिस्तु सम्यक् स्नेहविरेचितौ ॥**
**तर्पणैः पुटपाकैश्च धूमैराश्च्योतनैस्तथा ॥ ४ ॥**
**नस्यस्नेहपरीषेकैः शिरोबस्तिभिरेव च ॥**

तत्र सिराव्यधसाध्येषु पञ्चदशस्वभिष्यन्दाधिमन्थौ पठितौ, सिराव्यधसाध्यानां चाक्षिरोगाणां शोणितमूलत्वान्मूलोच्छेदार्थं पूर्वं दूष्यनिर्हरणं दर्शयन्नाह–पुराणेत्यादि । पुराणं सर्पिः संवत्सरोषितं घृतम्; अन्ये दशवर्षस्थितं घृतं पुराणं कथयन्ति । यथान्यायं यथाशास्त्रमित्यर्थः । तेन दृष्टेः समीपमुत्तमाङ्गमल्पं स्वेदयेत्, दृष्टिरस्वेद्या । यथान्यायमिति पदं स्नेहपानसिरामोक्षाभ्यां सह योजयेत् । तेन स्नेहोपयौगिकोक्तो विधिः 'प्राक् पाचितामदोषाय' इत्यादिकोऽवधारणीयः । तेनात्रापि दोषव्याधिनिरामतायामेव सर्पिःपानादयो विधेयाः । तथा च तन्त्रान्तरं,—"स्वेदः प्रलेपस्तिक्तान्नं धूमो दिनचतुष्टयम् । लङ्घनं चाक्षिरोगाणामामानां पाचनानि षट् ॥ अञ्जनं सर्पिषः पानं कषायं गुरुभोजनम् । नेत्ररोगेषु सामेषु स्नानं च परिवर्जयेत्"—इति । **विदेहे**ऽपि,—"प्रागेवाक्ष्यामये भक्तं त्रिरात्रमगुरु स्मृतम् । उपवासस्त्र्यहं वा स्याल्लक्तं वाऽप्यशनं हितम् ॥ ततश्चतुर्थे दिवसे व्याधौ संजातलक्षणे । यथोक्तास्तु क्रियाः कार्या नस्यसेकाञ्जनादिकाः"—इति । सिरामोक्षेणेत्यत्र सिरा उपनासिका ललाट्या वा आपाङ्ग्या वा । दूष्यहरणं प्रतिपाद्य दोषचिकित्सितमाह—संपादयेदित्यादि । संपादयेत् योजयेत् । बस्तिभिः स्नेहबस्तिभिर्निरूहैर्वा । सम्यगिति हीनमिथ्यातियोगरहितैः । स्नेहविरेचिताविति स्नेहविरेचनं तु पित्तस्यानुगते पित्तासृगनुगते वा वायौ बलवतो बहुदोषस्य चेति । दुर्बलस्याल्पदोषस्य च पुरुषस्य स्वस्थानगतो मलावृतः स्वतन्त्रो वा बस्तिभिरेवावजेतव्यः । बस्तिरपि मलावृते वाते नैरूहिकः, धातुक्षयजे स्नैहिकः । सम्यक्शब्दो बस्त्यादिषु शिरोबस्त्यन्तेषु संबध्यते । तर्पणादिविधानं क्रियाकल्पे भविष्यति । तत्र सेकः सुखोष्णः, आश्च्योतनं च शीतमेव ॥ ३ ॥ ४ ॥—

**वातघ्नानूपजलजमांसाम्लक्वाथसेचनैः ॥ ५ ॥**
**स्नेहैश्चतुर्भिरुष्णैश्च तत्पीताम्बरधारणैः ॥**
**पयोभिर्वेसवारैश्च साल्वणैः पायसैस्तथा ॥ ६ ॥**
**भिषक् संपादयेदेतावुपनाहैश्च पूजितैः ॥**

पूर्वं स्वेदयित्वेत्युक्तं, तत्र द्रवादिस्वेदानुपपादयन्नाह—वातघ्नेत्यादि । वातघ्नानि भद्रदार्वादीनि । उष्णैः सुखोष्णैः । उष्णैरिति पदं वातघ्नादिभिः संबध्यते । तत्पीताम्बरधारणैरिति चतुःस्नेहमितवस्त्रधारणैरित्यर्थः । साल्वणैरिति साल्वणस्यैकत्वात् कथं बहुवचनं ? सत्यं, यौगिकैरन्यैरपि द्रव्यैः स्वेदः कार्य इति बोधनार्थं बहुवचनं, स्वेदयित्वा सिरामोक्षेण योजयेदित्युक्तम् ॥ ५ ॥ ६ ॥—

**ग्राम्यानूपौदकरसैः स्निग्धैः फलरसान्वितैः ॥ ७ ॥**
**सुसंस्कृतैः पयोभिश्च तयोराहार इष्यते ॥**

न चाभुक्तवतः शस्त्रकर्म कुर्यादित्याशङ्क्याहारमाह—ग्राम्येत्यादि । फलरसान्वितैरिति दाडिमामलकरससंयुक्तैः । सुसंस्कृतैः पयोभिरिति शतावरीशृङ्गवेरप्रभृतिद्रव्यसंस्कृतैरित्यर्थः । तयोः स्यन्दाधिमन्थयोः ॥ ७ ॥—

**तथा चोपरि भक्तस्य सर्पिःपानं(ने)प्रशस्यते[1] ॥ ८ ॥**
**त्रिफलाक्वाथसंसिद्धं केवलं जीर्णमेव वा ॥**
**सिद्धं वातहरैः क्षीरं प्रथमेन गणेन वा ॥ ९ ॥**
**स्नेहास्तैलाद्विना सिद्धा वातघ्नैस्तर्पणे हिताः ॥**

पुराणसर्पिषा स्निग्धावित्युक्तं तस्य च घृतस्यावचारणकालं नियमयन्नाह—तथेत्यादि । केवलम् असंस्कृतम् । वातहरैः भद्रदार्वादिभिः । **जेज्जटाचार्यस्तु** काकोल्यादिभिर्वातहरैरित्याह । उपरि पानं पिबेदिति शेषः । प्रथमेन गणेन विदारिगन्धादिना । **गयदासाचार्यस्तु** सर्वत्रापि घृतं मन्यते । तथा च तद्व्याख्यानम्—"त्रिफलाघृतं व्याधिप्रत्यनीकं, वातहरदेवदार्वादिसिद्धं तु दोषप्रत्यनीकं, वातस्यैव पित्तानुबन्धे सति विदारिगन्धादिसिद्धं"; ईदृशे च व्याख्याने 'सिद्धं वातहरैर्वाऽपि प्रथमेन गणेन वा' इति पाठः ॥ ८ ॥ ९ ॥—

**स्नैहिकः पुटपाकश्च धूमो नस्यं च तद्विधम् ॥ १० ॥**
**नस्यादिषु स्थिराक्षीरमधुरैस्तैलमिष्यते ॥**

पूर्वं तर्पणैरित्युक्तं, तत्र तर्पणद्रव्याण्याह—स्नैहिक इत्यादि । स्नैहिकः पुटपाकः क्रियाकल्पे वक्ष्यमाणः । तद्विधं स्नैहिकमित्यर्थः ॥ १० ॥

**एरण्डपल्लवे मूले त्वचि वाऽऽजं पयः शृतम् ॥११॥**
**कण्टकार्याश्च मूलेषु सुखोष्णं सेचने हितम् ॥**

आन्तरमुपक्रममभिधाय बाह्यमाह—एरण्डेत्यादि । सेचने इत्यत्र चकारो लुप्तो द्रष्टव्यः; तेन न केवलं सेके आश्च्योतने चेत्यर्थः । तत्र सेके सुखोष्णं, आश्च्योतने च शीतमेवेत्यर्थः ॥११॥–

**सैन्धवोदीच्ययष्ट्याह्वपिप्पलीभिः शृतं पयः ॥ १२ ॥**
**हितमर्धोदकं सेके तथाऽऽश्च्योतनमेव च ॥**

सैन्धवेत्यादि । अर्धोदकमिति अर्धमुदकं यस्मिन् क्षीरे तत् क्षीरं सेके हितं तथा आश्च्योतने च; न पुनः पानादौ । सैन्धवादिप्रमाणं तु क्षीरादष्टमांशमेव ॥ १२ ॥—

**ह्रीबेरवक्रमञ्जिष्ठोदुम्बरत्वक्षु साधितम् ॥ १३ ॥**
**साम्भश्छागं पयो वाऽपि शूलाश्च्योतनमुत्तमम् ॥**

ह्रीबेरेत्यादि । ह्रीबेरं वालकम् । वक्रं तगरम् । साम्भ इति चतुर्गुणोदकं, अर्धोदकमिति केचित् । आश्च्योतनम् अक्षिपूरणम् ॥ १३ ॥—

**मधुकं रजनीं पथ्यां देवदारु च पेषयेत् ॥ १४ ॥**
**आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥**

मधुकमित्यादि । केचिदमुं पाठं न पठन्ति ॥ १४ ॥—

---

१ 'भक्तस्योपरि सर्पिस्तौ पिबेतां चापि मानवौ' इति पा० ।

**गैरिकं सैन्धवं कृष्णां नागरं च यथोत्तरम् ॥ १५ ॥**
**द्विगुणं पिष्टमद्भिस्तु गुटिकाञ्जनमिष्यते ॥**

गैरिकमित्यादि । यथोत्तरं द्विगुणमिति गैरिकाद्विगुणं सैन्धवं, सैन्धवाद्विगुणा कृष्णा, ततोऽपि द्विगुणं नागरम् । गुटिकाञ्जनमिष्यते इति स्नैहिकपुटपाकादिजनितकफानुबन्धस्य गुटिकाञ्जनम् । केचिदत्राप्याजेन पयसेति संबध्नन्ति; तेनाजपयसा पिष्टमद्भिर्वा । 'नागरं च यथोत्तरं' इत्यत्र 'गोदन्तं च यथोत्तरं' इति पठन्ति; स च पाठो जेज्झटाचार्येण दूषितः ॥ १५ ॥—

**स्नेहाञ्जनं हितं चात्र वक्ष्यते तद्यथाविधि ॥ १६ ॥**

स्नेहेत्यादि । यथाविधीति विधिमनतिक्रम्य[1], एतेनापतर्पणसिराव्यधकुपितवातेऽभिष्यन्दे स्नेहाञ्जनं हितमित्यर्थः । अत्रैके 'ताम्रपात्रस्थितं मासं सर्पिःसैन्धवैर्वसंयुतं'[2] इति स्नेहाञ्जनमाहुः । अन्ये तु 'वसा चानूपजलजा सैन्धवेन समायुता' इत्यादिना वक्ष्यमाणं स्नेहाञ्जनं कथयन्ति ॥ १६ ॥

**रोगो यश्चान्यतोवातो यश्च मारुतपर्ययः ॥**
**अनेनैव विधानेन भिषक् तावपि साधयेत् ॥ १७ ॥**

वाताभिष्यन्दक्रियामन्यस्मिन्नपि वातजेऽक्षिरोगेऽतिदिशन्नाह—रोग इत्यादि ॥ १७ ॥

**पूर्वभक्तं हितं सर्पिः क्षीरं वाऽप्यथ भोजने ॥**
**वृक्षादन्यां कपित्थे च पञ्चमूले महत्यपि ॥ १८ ॥**
**सक्षीरं कर्कटरसे सिद्धं चात्र घृतं पिबेत् ॥**
**सिद्धं वा हितमत्राहुः पत्तूरार्तगलाग्निकैः ॥ १९ ॥**
**सक्षीरं मेषशृङ्ग्या वा सर्पिर्वीरतरेण वा ॥**

अन्यतोवातमारुतपर्यययोः सामान्यां चिकित्सामभिधाय विशेषचिकित्सामाह—पूर्वभक्तमित्यादि । तदेव घृतमाह—वृक्षादन्यामित्यादि । वृक्षादनी बन्दाकः, वृक्षकलम्बुकेत्यन्ये । वृक्षादन्यादीनां सप्तद्रव्याणामत्र कषायः । अगर्भं घृतमिदम् । सिद्धमित्यादि । पत्तूरः सितिवारः, 'सिरिवाली' इति लोके प्रसिद्धा । आर्तगलः कण्टकफलो जलमुक्तदेशजः, 'ककुभ' इत्यन्ये । अग्निकः अजमोदा । पत्तूरादीनां कषाये क्षीरे च साधितं सर्पिः मेषशृङ्गीक्वाथे वा सक्षीरे साधितम् । वीरतरः शरः वेल्लन्तरो वा, तस्य क्वाथे वा सक्षीरे साधितं सर्पिरन्यतोवातमारुतपर्यययोर्हितम् । इदमपि घृतत्रयमगर्भम् ॥ १८ ॥ १९ ॥—

**सैन्धवं दारु शुण्ठी च मातुलुङ्गरसो घृतम् ॥ २० ॥**
**स्तन्योदकाभ्यां कर्तव्यं शुष्कपाके तदञ्जनम् ॥**
**पूजितं सर्पिषश्चात्र पानमक्ष्णोश्च तर्पणम् ॥ २१ ॥**
**घृतेन जीवनीयेन नस्यं तैलेन चाणुना ॥**
**परिषेके हितं चात्र पयः शीतं ससैन्धवम् ॥ २२ ॥**
**रजनीदारुसिद्धं वा सैन्धवेन समायुतम् ॥**
**सर्पिर्युतं स्तन्यघृष्टमञ्जनं वा महौषधम् ॥ २३ ॥**
**वसा वाऽऽनूपजलजा सैन्धवेन समायुता ॥**
**नागरोन्मिश्रिता किञ्चिच्छुष्कपाके तदञ्जनम् ॥२४॥**

सैन्धवमित्यादि । सैन्धवादिद्रव्यत्रयाणां कल्केन मातुलुङ्गादिद्रव्यचतुष्केण रसक्रियां निष्पाद्य शुष्कपाकेऽञ्जनं कार्यं; यतो रसक्रियाञ्जनमिदम् । पूजितमित्यादि । सर्पिषो 'जीवनीयसिद्धस्य' इति शेषः । अत्र शुष्कपाके नस्यं जीवनीयेन घृतेनैव; अणुना तैलेन वा नस्यं पूजितम् । अणुतैलं तु शालाक्यतन्त्रोक्तं, न पुनर्वातव्याध्युदितम् । परिषेके इत्यादि । शीतमिति शृतशीतमित्यर्थः । ससैन्धवमिति सशब्द ईषदर्थः । रजनीदारुसिद्धं वेत्यत्र क्षीरमिति संबध्यते । सैन्धवेन समायुतम् अल्पसैन्धवयुक्तमित्यर्थः । सर्पिरित्यादि ।—महौषधं वा घृतस्त्रीस्तन्ययुक्तं पाषाणघृष्टमित्यर्थः, अञ्जनं वा । वसेत्यादि ।—आनूपजलजा वा वसा स्तोकसैन्धवयुक्ता किञ्चिच्छुण्ठीयुक्ता पाषाणघृष्टा सती शुष्कपाकेऽञ्जनमिति संबन्धः ॥ २०—२४ ॥

**पवनप्रभवा रोगा ये केचिद्दृष्टिनाशनाः ॥**
**बीजेनानेन मतिमान् तेषु कर्म प्रयोजयेत् ॥ २५ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे वाताभिष्यन्दप्रतिषेधो नाम नवमोऽध्यायः ॥ ९ ॥**

इदानीं वातजेषु तिमिरकाचादिष्वेवैव क्रिया कर्तव्येति दर्शयन्नाह—पवनेत्यादि । दृष्टिनाशनाः तिमिरकाचादयः । बीजेन बीजभूतेन । अनेन वाताभिष्यन्दोक्तकर्मणा । मतिमान् ऊहापोहवित् ॥ २५ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

**अथातः पित्ताभिष्यन्दप्रतिषेधं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

वाताभिष्यन्दप्रतिषेधानन्तरं 'वाताद्दश तथा पित्तात्' इति वचनात् पित्ताभिष्यन्दप्रतिषेधारम्भः—अथात इत्यादि ॥ १ ॥ २ ॥

**पित्तस्यन्दे पैत्तिके चाधिमन्थे**
**रक्तास्रावः स्रंसनं चापि कार्यम् ॥**
**अक्ष्णोः सेकालेपनस्याञ्जनानि**
**पैत्ते च स्याद्यद्विसर्पे विधानम् ॥ ३ ॥**

पित्तेत्यादि । स्रंसनं विरेकः । पित्तविसर्पविधानं 'उशीरलमञ्जकचन्दनानि' इत्यादिप्रलेपाः । पूर्ववदत्राप्यपतर्पणादिभिः कृतामपाचनस्य स्नेहपूर्वकः सिरामोक्षः ॥ ३ ॥

**गुन्द्रां शालिं शैवलं शैलभेदं**
**दार्वीमेलामुत्पलं रोध्रमभ्रम् ॥**
**पद्मात्पत्रं शर्करा दर्भमिक्षुं**
**तालं रोध्रं वेतसं पद्मकं च ॥ ४ ॥**

[1] 'विधेरनतिक्रमात्' इति पा० । [2] 'मांसं सर्पिः सैन्धवसंयुतम्' इति पा० ।

द्राक्षां क्षौद्रं चन्दनं यष्टिकाह्वं
योषित्क्षीरं राज्यनन्ते च पिष्ट्वा ॥
सर्पिःसिद्धं तर्पणे सेकनस्ये
शस्तं क्षीरं सिद्धमेतेषु चाजम् ॥ ५ ॥
योज्यो वर्गो व्यस्त एषोऽन्यथा वा
सम्यङ्नस्येऽष्टार्धसंख्येऽपि नित्यम् ॥

इदानीं पित्तस्याभिष्यन्दयौगिकद्रव्याण्याह—गुन्द्रामित्यादि। गुन्द्रा एरकामेदः, गवेधुकेत्यन्ये, शैवलं दूर्वा, शैलमेदः पाषाणभेदः, चन्दनं रक्तचन्दनं, रात्रिः हरिद्रा, अनन्ता उत्पलसारिवा, योषित्क्षीरं स्त्रीस्तन्यं, शर्करादेः साहचर्यात् कल्कद्रव्ये इक्षुरिति इक्षुरसेन द्रवकार्यम्। व्यस्तः असमस्तः, अन्यथा वा समस्त इत्यर्थः। यद्यपि वर्गत्वात् 'समस्तं वर्गमर्धं वा यथालाभमथापि वा' इति शल्यतन्त्रोक्तपरिभाषयैव समस्तव्यस्तता प्राप्ता, तथाऽपि शालाक्यतन्त्रत्वादत्र पुनरुक्ता। नस्ये अष्टार्धसंख्ये चतुःसंख्ये प्रतिमर्षावपीडनस्यशिरोविरेचनाख्ये ॥४॥ ॥ ५ ॥—

क्रियाः सर्वाः पित्तहर्यः प्रशस्ता-
स्त्र्यहाच्चोर्ध्वं क्षीरसर्पिश्च नस्यम् ॥ ६ ॥

क्रिया इत्यादि। क्षीरसर्पिश्चेति 'भोजने' इति शेषः। नस्यमित्युपलक्षणं, तेनाश्च्योतनसेकाञ्जनादि गृह्यते। यद्यपि 'पैत्ते च स्याद्द्विसर्पे विधानं' इत्यनेनैव पित्तहरी क्रिया कथिता, तथाऽपि तत्र व्याधिप्रत्यनीकतयोक्ता, अत्र तु दोषप्रत्यनीकत्वेनेति न दोषः ॥ ६ ॥

पालाशं स्याच्छोणितं चाञ्जनार्थे
शल्लक्या वा शर्कराक्षौद्रयुक्तम् ॥

रक्तपित्तप्रसादकाञ्जनानां रसक्रिया प्रथमा, अतस्तामाह—पालाशमित्यादि। पालाशं शोणितं किंशुकरसः; अन्ये पलाशत्वपुरमाहुः ॥—

रसक्रियां शर्कराक्षौद्रयुक्तां
पालिन्द्यां वा मधुके वाऽपि कुर्यात् ॥ ७ ॥

अपरामपि रसक्रियामाह—रसक्रियामित्यादि। रसक्रिया फाणिताकृतिः। तथा चोक्तम्—"गृहीत्वा क्काथकल्पेन क्काथं पूतं पुनः पुनः। क्काथयेत् फाणिताकारमेषा प्रोक्ता रसक्रिया" इति। पालिन्दी श्यामा त्रिवृत्, सारिवामन्ये ॥ ७ ॥

मुस्ता फेनः सागरस्योत्पलं च
कृमिघ्नैलाधात्रिबीजाद्रसश्च ॥

अपरमपि रसक्रियाञ्जनमाह—मुस्तेत्यादि। कृमिघ्ना विडङ्गाः, धात्री आमलकं, बीजः पीतसारः 'बीजक' इति यावत्, मुस्तादीनां रसे रसक्रिया कार्या ॥—

तालीशैलगैरिकोशीरशङ्खै-
रेवं युञ्ज्यादञ्जनं स्तन्यपिष्टैः ॥ ८ ॥

वर्त्यञ्जनमाह—तालीशेत्यादि। काशीशैलेति केचित् पठन्ति ॥ ८ ॥

चूर्णं कुर्यादञ्जनार्थे रसो वा
स्तन्योपेतो धातकीस्यन्दनाभ्याम् ॥

चूर्णाञ्जनमाह—चूर्णमित्यादि। रसो वेति रसक्रिया वेत्यर्थः। स्यन्दनोऽनेनैव नाम्ना प्रसिद्धः। केचित् चन्दनाभ्यामिति पठन्ति ॥—

योषित्स्तन्यं शातकुम्भं विघृष्टं
क्षौद्रोपेतं कैंशुकं चापि पुष्पम् ॥ ९ ॥

योषिदित्यादि। शातकुम्भं सुवर्णं, तच्च योषित्स्तन्येन घृष्टमञ्जनम्। क्षौद्रयुक्तं वा किंशुकपुष्पं घृष्टं ताम्रपात्रादावञ्जनम् ॥ ९ ॥

रोध्रं द्राक्षां शर्करामुत्पलं च
नार्याः क्षीरे यष्टिकाह्वं वचां च ॥
पिष्ट्वा क्षीरे वर्णकस्य त्वचं च
तोयोन्मिश्रे चन्दनोदुम्बरे च ॥ १० ॥

रोध्रमित्यादि। रोध्रादिवचान्तं नारीक्षीरे पिष्टमेकमञ्जनम्। वर्णको रोचनिका; तस्यास्त्वक् नारीक्षीरेण पिष्टा द्वितीयमञ्जनम्। अन्ये वर्णकत्वक्शब्देन कर्णिकारवृक्षस्य वल्कलं कथयन्ति, तन्नेच्छति **गयी**। तोयोन्मिश्रे चन्दनोदुम्बरे चेति तृतीयाञ्जनं, तोयोन्मिश्रे बालकयुक्ते, चन्दनं कुचन्दनं; **पञ्जिकाकारस्तु** चन्दनोदुम्बरं भृशतरं चूर्णितं वस्त्रबद्धं तोयप्लुतमाश्च्योतनाञ्जनमाह ॥ १० ॥

कार्यः फेनः सागरस्याञ्जनार्थे
नारीस्तन्ये माक्षिके चापि घृष्टः ॥
योषित्स्तन्ये स्थापितं यष्टिकाह्वं
रोध्रं द्राक्षां शर्करामुत्पलं च ॥ ११ ॥
क्षौमाबद्धं पथ्यमाश्च्योतने वा
सर्पिर्घृष्टं यष्टिकाह्वं सरोध्रम् ॥
तोयोन्मिश्राः काश्मरीधात्रिपथ्या-
स्तद्वच्चाहुः कट्फलं चाम्बुनैव ॥ १२ ॥

कार्य इत्यादि। अपरमाश्च्योतनमाह—नारीत्यादि। यष्टिमधुकादिद्रव्यमतीव चूर्णितं स्त्रीस्तन्यस्थापितं क्षौमवस्त्रावबद्धमाश्च्योतने हितमित्यर्थः। यष्टिकाह्वं सरोध्रमिति यष्टिमधुकरोध्रे वा घृतेघृष्टे पूर्ववदाश्च्योतनम् ॥ ११ ॥ १२ ॥

एषोऽम्लाख्येऽनुक्रमश्चापि शुक्तौ
कार्यः सर्वः स्यात्सिरामोक्षवर्ज्यः ॥ १३ ॥

इदानीमम्लाध्युषितशुक्त्योः सामान्यचिकित्सामाह—एष इत्यादि। केचिदम्लाध्युषितशुक्त्योरशस्त्रकृत्यत्वादेव सिरामोक्षवर्जनं सिद्धम्, अतः 'शिरामोक्षवर्ज्य' इति पाठं न पठन्ति ॥ १३ ॥

१ 'नावने च' इति पा०। २ 'शस्ताऽश्चेषा पित्तहन्त्री क्रिया च त्र्यहादूर्ध्वं क्षीरसर्पिश्च नस्यम्' इति पा०।

१ 'सर्पिर्भृष्टं' इति पा०। २ 'घृतभृष्टे' इति पा०।

सर्पिः पेयं त्रैफलं तैल्वकं वा
पेयं वा स्यात् केवलं यत् पुराणम् ॥

अम्लाध्युषिते विशेषचिकित्सितमाह—सर्पिरित्यादि । आद्यं घृतद्वयं संशोधनं, पुराणघृतं तु संशमनम् ॥—

दोषेऽधस्ताच्छुक्तिकायामपास्ते
शीतैर्द्रव्यैरञ्जनं कार्यमाशु ॥ १४ ॥

शुक्तिकायां विशेषचिकित्सितमाह—दोषे इत्यादि । अधस्तादपास्ते दोषे 'विरेचनेन' इति शेषः ॥ १४ ॥

वैदूर्यं यत् स्फाटिकं वैद्रुमं च
मौक्तं शाङ्खं राजतं शातकुम्भम् ॥
चूर्णं सूक्ष्मं शर्कराक्षौद्रयुक्तं
शुक्तिं हन्यादञ्जनं चैतदाशु ॥ १५ ॥

तान्येव शीतद्रव्याण्याह—वैदूर्यमित्यादि ॥ १५ ॥

युञ्ज्यात् सर्पिर्धूमदर्शी नरस्तु
शेषं कुर्याद्रक्तपित्ते विधानम् ॥
यच्चैवान्यत् पित्तहृच्चापि सर्वं
यद्वीसर्पे पैत्तिके वै विधानम् ॥ १६ ॥

इति श्रीसुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते
शालाक्यतन्त्रे पित्ताभिष्यन्दप्रतिषेधो
नाम दशमोऽध्यायः ॥ १० ॥

धूमदर्शिनश्चिकित्सितमाह—युञ्ज्यादित्यादि । रक्तपित्ते विधानमिति रक्ताभिष्यन्दे पित्ताभिष्यन्दे च चिकित्सितं यदुक्तं तदित्यर्थः । अन्यत् पित्तहृदिति पित्तविदग्धदृष्टेर्यद्विधानं तदत्र योजयेत् । यद्वीसर्पे पैत्तिके वै विधानमिति पित्तविसर्पोक्तं विधानं योजयेदिति संबन्धः ॥ १६ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे
दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

अथातः श्लेष्माभिष्यन्दप्रतिषेधं व्याख्यास्यामः १
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पित्ताभिष्यन्दानन्तरं दोषक्रमेण कफाभिष्यन्दप्रतिषेधारम्भः—अथात इत्यादि ॥ १ ॥ २ ॥

स्यन्दाधिमन्थौ कफजौ प्रवृद्धौ
जयेत् सिराणामथ मोक्षणेन ॥
स्वेदावपीडाञ्जनधूमसेक-
प्रलेपयोगैः कवलग्रहैश्च ॥ ३ ॥
रूक्षैस्तथाऽऽश्च्योतनसंविधानै-
स्तथैव रूक्षैः पुटपाकयोगैः ॥
त्र्यहाऽयहाच्चाप्यपतर्पणान्ते
प्रातस्तयोस्तिक्तघृतं प्रशस्तम् ॥ ४ ॥
तदन्नपानं च समाचरेद्धि
यच्छ्लेष्मणो नैव करोति वृद्धिम् ॥

सिराणामथ मोक्षणेनेत्यत्राथशब्दादयमभिप्रायः—कृतस्नेहादिपूर्वकर्मस्य प्रवृद्धावस्थायां सिरामोक्षः । पूर्वकर्ममाह—स्वेदावपीडेत्यादि । त्र्यहात् त्र्यहादिति अतर्पणप्रेरितदिनचतुष्टयस्य तिक्तद्रव्यसाधितं प्रातः प्रशस्तं घृतं, तेन स्निग्धस्य त्र्यहात् सिरामोक्षः । 'प्रातस्तयोस्तिक्तघृतं प्रशस्तं' इत्यत्र 'तौ प्रातरेवाशु घृतं पिबेतां' इति केचित् पठन्ति । 'तदन्नपानं च समाचरेद्धि' इत्यत्र 'तत् प्रातरन्नं च समाचरेद्धि' इति केचित् पठन्ति; प्रातर्ग्रहणं द्विरन्नकालनिषेधार्थमिति व्याख्यानयन्ति ॥ ३ ॥ ४ ॥—

कुटन्नटास्फोटफणिज्झबिल्व-
पत्तूरपिल्वर्ककपित्थभङ्गैः ॥ ५ ॥
स्वेदं विदध्यात्

स्वेदद्रव्याण्याह—कुटन्नटेत्यादि । कुटन्नटं तगरं; फणिज्झकः तीक्ष्णगन्धः स्वनाम्नैव प्रसिद्धः, अन्ये निर्गुण्डीमाहुः; पत्तूरः शरवालिकः, भङ्गैः पत्रभङ्गैः, अन्ये भङ्गशब्देन पल्लवानाहुः ॥—

अथवाऽनुलेपं
बर्हिष्ठशुण्ठीसुरकाष्ठकुष्ठैः ॥

अनुलेपद्रव्याण्याह—अथवेत्यादि । बर्हिष्ठं बालकम् ॥५॥—

सिन्धूत्थहिङ्गुत्रिफलामधूक-
प्रपौण्डरीकाञ्जनतुत्थताम्रैः ॥ ६ ॥
पिष्टैर्जलेनाञ्जनवर्तयः स्युः
पथ्याहरिद्रामधुकाञ्जनैर्वा ॥
त्रीण्यूषणानि त्रिफला हरिद्रा
विडङ्गसारश्च समानि च स्युः ॥ ७ ॥
बर्हिष्ठकुष्ठामरकाष्ठशङ्ख-
पैठामलव्योषमनःशिलाश्च ॥
पिष्ट्वाऽम्बुना वा कुसुमानि जाति-
करञ्जशोभाञ्जनजानि युञ्ज्यात् ॥ ८ ॥
फलं प्रकीर्यादथवाऽपि शिग्रोः
पुष्पं च तुल्यं बृहतीद्वयस्य ॥
रसाञ्जनं सैन्धवचन्दनं च
मनःशिलाले लशुनं च तुल्यम् ॥ ९ ॥
पिष्ट्वाऽञ्जनार्थं कफजेषु धीमान्
वर्तीर्विदध्यान्नयनामयेषु ॥

वर्त्यञ्जनद्रव्याण्याह—सिन्धूत्थेत्यादि । त्रीण्यूषणानीति त्रिकटुकमित्यर्थः । बर्हिष्ठं वालकम् । अमरकाष्ठं देवदारु । प्रकीर्यः कण्टकिकरञ्जः । केचित् पुष्पमपि प्रकीर्याद्देवेति कथयन्ति । तथा बृहतीद्वयस्य पुष्पं फलं च । आलं हरितालम् । एता

१ 'पश्चात्' इति पा० । २ 'पाठानखव्योषमनःशिलाश्च' इति पा० । ३ 'तुल्यं' इति पा० ।

वर्त्तोऽर्धश्लोकसमापनाः पञ्च त्र्यूषणादिद्रव्यैर्ज्ञेयाः। पञ्जिकायां तु 'व्योषमनःशिलाश्च' इत्यनन्तरं 'मूर्वा च जातीमुकुलानि चापि पिष्ट्वाऽम्बुनैतान् वितरेत्तथैव' इति पठ्यते; व्याख्यानं च—त्र्यूषणाद्यष्टाङ्गमञ्जनं, बर्हिष्ठादि द्वादशाङ्गं, अथवैतेनैन विकल्पवाचिना कण्टकिकरञ्जफलतुल्यांशैर्वक्ष्यमाणैरौषधैरेकमञ्जनं, शिग्रुफलतुल्यांशैर्वक्ष्यमाणैर्द्वितीयमञ्जनम्। 'सिन्धूत्थहिङ्गु' इत्यत्र केचित् 'सिन्धुप्रसूतं' इति पठन्ति ॥ ६–९ ॥—

**रोगे बलासग्रथितेऽञ्जनं ज्ञैः**
**कर्तव्यमेतत् सुविशुद्धकाये ॥ १० ॥**
**नीलान् यवान् गव्यपयोऽनुपीतान्**
**शलाकिनः शुष्कतनून् विदह्य ॥**
**तथाऽर्जकास्फोतकपित्थबिल्व-**
**निर्गुण्डिजातीकुसुमानि चैव ॥ ११ ॥**
**तत्क्षारवत्सैन्धवतुत्थरोचनं**
**पक्वं विदध्यादथ लोहनाड्याम् ॥**
**एतद्बलासग्रथितेऽञ्जनं स्या-**
**देषोऽनुकल्पस्तु फणिज्झकादौ ॥ १२ ॥**

रोगे इत्यादि। ज्ञैरिति कुशलैर्वैद्यैरित्यर्थः। एतद् वक्ष्यमाणं क्षाराञ्जनम्। सुविशुद्धकाये इति सिराव्यधविरेकशिरोविरेकैरित्यर्थः। तदेव क्षाराञ्जनं व्युत्पादयन्नाह—नीलानित्यादि। नीलान् अपक्वान्। गव्यपयोऽनुपीतान् कृष्णगोदुग्धभावितान्, पीतानिति वक्तव्ये अनुपीतानिति यत् कृतं तत् सप्ताहं सप्ताहद्वयं वा भावना कार्येति बोधयति। शलाकिनः शूकयुक्तान्। तदिति भस्मेत्यर्थः। नीलयवादिभस्मप्रस्थं, उष्णोदकाढकेन सह मेलयित्वा पुनः पुनरास्रावयेत्, यावत् क्षारोदकं तीक्ष्णं पिच्छिलं रक्तं च स्यात्, तदा भस्म विहाय तत्र क्षारोदके सैन्धवतुत्थरोचनमावापं क्षारोदकाद्वात्रिंशद्भागं दत्त्वा पचेत्। केचित् सैन्धवादिद्रव्याणि भस्मार्थं न तु आवापार्थमिति वदन्ति, तन्मतेऽप्रतिवापमेव पक्तव्यम्। फणिज्झकादावित्यत्रादिशब्दात् कुसुमादयो गृह्यन्ते ॥ ११–१२ ॥

**महौषधं मागधिकां च मुस्तां**
**ससैन्धवं यन्मरिचं च शुक्लम् ॥**
**तन्मातुलुङ्गस्वरसेन पिष्टं**
**नेत्राञ्जनं पिष्टकमाशु हन्यात् ॥ १३ ॥**

पिष्टकरोगेऽञ्जनमाह—महौषधमित्यादि। मरिचं शुक्लं शोभाञ्जनबीजम् ॥ १३ ॥

**फले बृहत्या मगधोद्भवानां**
**निधाय कल्कं फलपाककाले ॥**
**स्रोतोजयुक्तं च तदुद्धृतं स्या-**
**त्तद्वत्तु पिष्टे**

अपरमप्यञ्जनमाह—फले इत्यादि। फलपाककाले कण्टकारिफलमुद्धृतबीजं सौवीराञ्जनसमभागेन पिप्पलीकल्केन पूरयेत्, तत्कल्कं सप्तरात्रादनन्तरमुद्धृतं महौषधाद्यञ्जनवत् पिष्टकरोगे हितं पथ्यमित्यर्थः ॥—

**विधिरेष चापि ॥ १४ ॥**
**वार्ताकशिग्र्विन्द्रसुरापटोल-**
**किराततिक्तामलकीफलेषु ॥**

कण्टकारिफलविधिमन्यत्रापि फलेऽतिदिशन्नाह—विधिरित्यादि। इन्द्रसुरा इन्द्रवारुणी ॥ १४ ॥—

**कासीससामुद्ररसाञ्जनानि**
**जात्यास्तथा क्षा(को)रकमेव चापि ॥ १५ ॥**
**प्रक्लिन्नवर्त्मन्युपदिश्यते तु**
**योगाञ्जनं तन्मधुनाऽवघृष्टम् ॥**

प्रक्लिन्नवर्त्मनि रोगे योगाञ्जनमाह—कासीसेत्यादि। जात्याः कोरकं जातीकलिका ॥ १५ ॥—

**नादेयमग्र्यं मरिचं च शुक्लं**
**नेपालजाता च समप्रमाणा ॥ १६ ॥**
**समातुलुङ्गद्रव एष योगः**
**कण्डूं निहन्यात् सकृदञ्जनेन ॥**

सर्वेषां कफजाक्षिरोगाणामुपद्रवभूतायाः कण्ड्वाश्चिकित्सामाह—नादेयमित्यादि। नादेयमिति सैन्धवमित्यर्थः। मरिचं च शुक्लमिति शोभाञ्जनबीजमित्यर्थः; अन्ये शुक्लमेव मरिचं कथयन्ति। नेपालजाता मनःशिला ॥ १६ ॥—

**सशृङ्गवेरं सुरदारु मुस्तं**
**सिन्धुप्रभू(सू)तं मुकुलानि जात्याः ॥ १७ ॥**
**सुराप्रपिष्टं त्विदमञ्जनं हि**
**कण्ड्वां च शोफे च हितं वदन्ति ॥**

कण्ड्वामपरमप्यञ्जनमाह—सेत्यादि ॥ १७ ॥—

**स्यन्दाधिमन्थक्रममाचरेच्च**
**सर्वेषु चैतेषु सदाऽप्रमत्तः ॥ १८ ॥**
**(विशेषतो नावनमेव कार्यं**
**संसर्जनं चापि यथोपदिष्टम् ॥)**[1]

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे कफाभिष्यन्दप्रतिषेधो नामैकादशोऽध्यायः ॥ ११ ॥**

इदानीं बलासग्रथितपिष्टकप्रक्लिन्नवर्त्मसु विशेषचिकित्सामभिधाय सामान्यचिकित्सामाह—स्यन्देत्यादि। एतेषु बलासग्रथितपिष्टकप्रक्लिन्नवर्त्मसु। चकारादन्येष्वपि कफजाक्षिरोगेषु। अप्रमत्तः सावधानः ॥ १८ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे एकादशोऽध्यायः ॥ ११ ॥

---

१ 'नीलान् पक्वान्' इति पा०। २ 'मुख्यां' इति पा०। ३ 'फलं बृहत्या मगधोद्भवानामादाय' इति पा०। ४ 'स्रोतोजयुक्तं खलु सप्तरात्रात्तदुद्धृतं स्यात्तु तथैव पथ्यम्' इति पा०।

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते।

## द्वादशोऽध्यायः।

**अथातो रक्ताभिष्यन्दप्रतिषेधं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

वातपित्तकफकृतानभिष्यन्दान् प्रतिपाद्य परिशिष्टं रक्ताभिष्यन्दप्रतिषेधमाह—अथात इत्यादि ॥ १ ॥ २ ॥

**मन्थं स्यन्दं सिरोत्पातं सिराहर्षं च रक्तजम् ॥**
**एकेनैव विधानेन चिकित्सेच्चतुरो गदान् ॥ ३ ॥**

मन्थमित्यादि । अत्र मन्थस्य प्रागुपादानं स्यन्दाद्गरीयस्त्वख्यापनार्थम् ॥ ३ ॥

**व्याध्यार्तांश्चतुरोऽप्येतान् स्निग्धान्कौम्भेन सर्पिषा ॥**
**रसैरुदारैरथवा सिरामोक्षेण योजयेत् ॥ ४ ॥**

तदेव विधानमाह—व्याध्यार्तानित्यादि । व्याधिभिरार्ताः पीडिता व्याध्यार्ताः । कौम्भेन शतवर्षस्थितेनेत्यर्थः । रसैरुदारैरथवेति मांसरसैरधिकस्नेहैर्वा स्निग्धानित्यर्थः । दूष्यहरणं प्रतिपादयन्नाह—सिरेत्यादि ॥ ४ ॥

**विरिक्तानां प्रकामं च शिरांस्येषां विशोधयेत् ॥**
**वैरेचनिकसिद्धेन सितायुक्तेन सर्पिषा ॥ ५ ॥**
**( मज्ज्ञा वा तद्विमिश्रेण मेदसा तच्छृतेन वा ॥ )**

दूष्यहरणं प्रतिपाद्य दोषहरणं प्रतिपादयन्नाह—विरिक्तानामित्यादि । शिरांसीति बहुवचनं प्रतिरोगापेक्षया दूष्येऽपहृते विरेचनेन दोषहरणं, ततः शिरोविरेचनं; तदपि सर्पिषा नतु तैलेन, घृतस्य चक्षुष्यत्वात्, रक्ताविरुद्धत्वाच्च । तस्य संस्कारमाह—वैरेचनिकसिद्धेनेति; शिरोविरेचनद्रव्यसिद्धेन, केचित् त्रिवृतादिद्रव्यसिद्धेनेत्याहुः । केचिदत्र 'मज्ज्ञा वा तद्विपक्वेन' इत्यादिपाठं पठन्ति, स चानार्षः ॥ ५ ॥

**ततः प्रदेहाः परिषेचनानि**
**नस्यानि धूमाश्च यथास्वमेव ॥**
**आश्च्योतनाभ्यञ्जनतर्पणानि**
**स्निग्धाश्च कार्याः पुटपाकयोगाः ॥ ६ ॥**

अन्तःशुद्धिकरं क्रियाक्रममुक्त्वा बहिःशुद्धिकरं क्रियाक्रमसंग्रहमुद्दिशन्नाह—तत इत्यादि । धूमाश्च यथास्वमात्मीयानतिक्रमेण, रक्तस्य दूष्यस्य कफानुबन्धे कफहरद्रव्यवर्तिकृताः, वातानुबन्धे तु स्नैहिकाः; एवमन्यत्रापि यथास्वमिति संबन्धनीयम् । अभ्यञ्जनम् अञ्जनं; तच्च प्रसादनं रक्तपित्ते, सव्रणशुक्रादौ तु रोपणं; अन्ये पुनरभ्यञ्जनमेव शतधौतघृतादिनेच्छन्ति ॥ ६ ॥

**नीलोत्पलोशीरकटङ्कटेरी-**
**कालीययष्टीमधुमुस्तरोध्रैः ॥**
**सपद्मकैर्धौतघृतप्रदिग्धै-**
**रक्ष्णोः प्रलेपं परितः प्रकुर्यात् ॥ ७ ॥**

इदानीं प्रलेपद्रव्याण्याह—नीलोत्पलेत्यादि । कटङ्कटेरी दारुहरिद्रा । कालीयकं दारुहरिद्रानुकारि प्रसिद्धम् । धौतघृतप्रदिग्धैः मिश्रैरित्यर्थः ॥ ७ ॥

**रुजायां चाप्यतिभृशं स्वेदाश्च मृदवो हिताः ॥**
**अक्ष्णोः समन्ततः कार्यं पातनं च जलौकसाम् ॥८॥**
**घृतस्य महती मात्रा पीता चार्तिं नियच्छति ॥**
**पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः ॥ ९ ॥**

परिषेचनाद्युद्दिष्टं यदनिर्दिष्टं तत्पित्ताभिष्यन्दनिर्दिष्टद्रव्यैरतिदिशन् क्रियाक्रमेऽनिर्दिष्टं च निर्दिशन्नाह—रुजायामित्यादि । रुजो हि भवन्ति सिराव्यधादिकृतवातानुबन्धात्, वातावृताद्रक्ताद्वा; तत्र वातजायां तीव्ररुजायां मृदवः स्वेदाः, दूष्यरक्तावरोधाद्बहुशोणितजायां जलौकःपातनं; वातजायामेवान्तरमौषधं घृतस्य महत्या मात्रया पानम्; अल्पशोणितजायां पित्ताभिष्यन्दशमनो विधिः । नियच्छति निवारयति ॥ ८–९ ॥

**कशेरुमधुकाभ्यां वा चूर्णमम्बरसंवृतम् ॥**
**न्यस्तमप्स्वान्तरिक्षासु हितमाश्च्योतनं भवेत् ॥ १० ॥**

आश्च्योतनमाह—कशेर्वित्यादि । अम्बरसंवृतं वस्त्रवेष्टितं, न्यस्तं क्षिप्तं, आन्तरिक्षोदकालाभे आकाशगुणभूयिष्ठं भूमिस्थमुदकं गृह्यते । केचित् परिषेकमप्यनेनैवेच्छन्ति ॥ १० ॥

**पाटल्यर्जुनश्रीपर्णीधातकीधात्रिबिल्वतः ॥**
**पुष्पाण्यथ बृहत्योश्च बिम्बीलोटाच्च तुल्यशः ॥ ११ ॥**
**समक्षिष्ठानि मधुना पिष्टानीक्षुरसेन वा ॥**
**रक्ताभिष्यन्दशान्त्यर्थमेतदञ्जनमिष्यते ॥ १२ ॥**

रक्ताभिष्यन्देऽञ्जनमाह—पाटलीत्यादि । श्रीपर्णी काश्मरी । धात्री आमलकी, बिम्बीलोटो भिल्लोटो हिमाद्रिजो वृक्षः । विरेचनादिभिर्विशुद्धदोषस्य पुरुषस्य शेषदोषोपशान्त्यर्थमञ्जनं योज्यं, न पुनरशुद्धदोषस्येति ॥ ११–१२ ॥

**चन्दनं कुमुदं पत्रं शिलाजतु सकुङ्कुमम् ॥**
**अयस्ताम्ररजस्तुत्थं निम्बनिर्यासमञ्जनम् ॥ १३ ॥**
**त्रपु कांस्यमलं चापि पिष्ट्वा पुष्परसेन तु ॥**
**विपुला याः कृता वर्त्यः पूजिताश्चाञ्जने सदा ॥१४॥**

चन्दनमित्यादि । पत्रं पत्रकम् । अञ्जनं रसाञ्जनम् । पुष्परसेनेति मधुनेत्यर्थः । विपुला यास्ता एव मन्थादिषु चतुर्षु लेखनादिकर्मणि सामर्थ्यात् पूजिता वर्तयः । तदुक्तं,—"हरेणुमात्रा वर्तिः स्याल्लेखनस्य प्रमाणतः । प्रसादनस्य चाध्यर्धा द्विगुणा रोपणस्य तु"—इति ॥ १३–१४ ॥

**स्यादञ्जनं घृतं क्षौद्रं सिरोत्पातस्य भेषजम् ॥**
**तद्वत्सैन्धवकासीसं स्तन्यघृष्टं च पूजितम् ॥ १५ ॥**
**मधुना शङ्खनेपालीतुत्थदार्व्यः ससैन्धवाः ॥**
**रसः शिरीषपुष्पाच्च सुरामरिचमाक्षिकैः ॥ १६ ॥**
**युक्तं तु मधुना वाऽपि गैरिकं हितमञ्जने ॥**

मन्थादीनां चतुर्णां सामान्यचिकित्सितमुक्त्वा सिरोत्पाते विशेषचिकित्सितमाह—स्यादञ्जनमित्यादि । अञ्जनं रसाञ्जनं, घृतं गव्यघृतम् । नेपाली मनःशिला । मरिचं प्रसिद्धं, केचित्

१ 'सौवीराञ्जनं' इति पा० ।

मरिचशब्देन सितमरिचं शोभाञ्जनफलापरपर्यायं वदन्ति । गैरिकं स्वर्णगैरिकम् । एतान्यञ्जनान्यर्धश्लोकिकान्यप्युक्तानि ॥ १५-१६ ॥—

**सिराहर्षेऽञ्जनं कुर्यात् फाणितं मधुसंयुतम् ॥ १७ ॥**
**मधुना तार्क्ष्यजं वाऽपि कासीसं वा ससैन्धवम् ॥**
**वेत्राम्लस्तन्यसंयुक्तं फाणितं च ससैन्धवम् ॥ १८ ॥**

सिराहर्ष इत्यादि । फाणितं मधुयुक्तमेकमञ्जनमिति; मधुयुक्तं तार्क्ष्यजं द्वितीयमञ्जनं, तत्र तार्क्ष्यजं रसाञ्जनं; कासीसं ससैन्धवं मधुयुक्तं तृतीयमञ्जनं; वेत्राम्लस्तन्यसंयुक्तं फाणितं चतुर्थमञ्जनं; तत्र वेत्राम्लम् अम्लवेतसं, अन्ये तु वेत्रं वेत्रकरीरं, अम्लम् अम्लवेतसम्, अम्लीका वेति व्याख्यानयन्ति; यत्तु जेज्जटाचार्येण दूषितम् ॥ १७ ॥ १८ ॥

**पैत्तं विधिमशेषेण कुर्यादर्जुनशान्तये ॥**
**इक्षुक्षौद्रसितास्तन्यदार्वीमधुकसैन्धवैः ॥ १९ ॥**
**सेकाञ्जनं चात्र हितमम्लैराश्च्योतनं तथा ॥**
**सितामधुककट्वङ्गमस्तुक्षौद्राम्लसैन्धवैः ॥ २० ॥**
**बीजपूरककोलाम्लदाडिमाम्लैश्च युक्तितः ॥**
**एकशो वा द्विशो वाऽपि योजितं वा त्रिभिस्त्रिभिः ॥**
**स्फटिकं विद्रुमं शङ्खो मधुकं मधु चैव हि ॥**
**शङ्खक्षौद्रसितायुक्तः सामुद्रः फेन एव वा ॥ २२ ॥**
**द्वाविमौ विहितौ योगावञ्जनेऽर्जुननाशनौ ॥**
**सैन्धवक्षौद्रकतकाः सक्षौद्रं वा रसाञ्जनम् ॥ २३ ॥**
**कासीसं मधुना वाऽपि योज्यमत्राञ्जने सदा ॥**

रक्तार्जुनचिकित्सामाह—पैत्तमित्यादि । पैत्तं पित्ताभिष्यन्दोदितम् । अत्र अर्जुने । अम्लैः धान्याम्लादिभिः । तत्र इक्षुक्षौद्रादिभिः सेकाञ्जने कर्तव्ये, अम्लैः पुनराश्च्योतनमेव कर्तव्यम् । अर्जुनेऽपरमप्याश्च्योतनमाह—सितेत्यादि । एतैः सितादिभिर्दाडिमाम्लपर्यन्तैर्व्यस्तैः समस्तैर्वा युक्तितो दोषबलापेक्षयाऽऽश्च्योतनं कार्यमिति पिण्डार्थः । अर्जुनेऽञ्जनमाह—स्फटिकमित्यादि । विद्रुमः प्रवालः । अर्जुनेऽपरमप्यञ्जनमाह—सैन्धवेत्यादि । सैन्धवक्षौद्रकतका इत्येकमञ्जनं, सक्षौद्रं वा रसाञ्जनमित्यपरं, कासीसं मधुना वाऽपीति तृतीयमञ्जनम् । अत्र अर्जुने ॥ १९-२३ ॥—

**लोहचूर्णानि सर्वाणि धातवो लवणानि च ॥ २४ ॥**
**रत्नानि दन्ताः शृङ्गाणि गणश्चाप्यवसादनः ॥**
**कुक्कुटाण्डकपालानि लशुनं कटुकत्रयम् ॥ २५ ॥**
**करञ्जबीजमेला च लेख्याञ्जनमिदं स्मृतम् ॥**
**पुटपाकावसानेन रक्तविस्रावणादिना ॥ २६ ॥**
**संपादितस्य विधिना कृत्स्नेन स्यन्दघातिना ॥**

लेख्याञ्जनमाह—लोहेत्यादि । सर्वाणि सुवर्णत्रपुसीसताम्ररजतकृष्णलोहादिजातानि । धातवो मनःशिलगैरिकादयः । लवणानि सैन्धवादीनि पञ्च । रत्नानि वैदूर्यमरकतप्रभृतीनि । दन्ता गवादीनामश्वादीनां च । शृङ्गाणि गवादीनामेव । अवसादनो मिश्रकोक्तः कासीसादिः । एतदनिर्दिष्टानामपि लेख्याञ्जनसंज्ञकं ज्ञेयम् । अपरमपि लेख्याञ्जनमाह—कुक्कुटाण्डेत्यादि । लेख्याञ्जनं कीदृग्विधस्यातुरस्य प्रयोज्यमित्याह—पुटपाकावसानेनेत्यादि । रक्तविस्रावणादिना पुटपाकावसानेन, स्यन्दघातिना अभिष्यन्दहननशीलेन, कृत्स्नेन सकलेन विधिना, संपादितस्य सम्यग्योजितस्य; स पुनर्विधिः सिराव्यधविरेचनशिरोविरेचनान्यन्तःपरिमार्जनानि; तथा हि,—"ततः प्रदेहान् परिषेचनानि नस्यानि धूमाश्च यथास्वमेव । आश्च्योतनाभ्यञ्जनतर्पणानि तथैव कार्याः पुटपाकयोगाः"[१]—इति; लेख्याञ्जनं प्रयोजनीयमिति पिण्डार्थः । 'पुटपाकावसादेन' इति केचित् पठन्ति, पुटपाक एवावसादोऽवधिर्यस्य स तथा तेनेति व्याख्यानयन्ति ॥ २४—२६ ॥—

**अनेनापहरेच्छुक्रमव्रणं कुशलो भिषक् ॥ २७ ॥**

इमां चिकित्सामव्रणे शुक्रेऽप्यतिदिशन्नाह—अनेनेत्यादि । अनेन लेख्याञ्जनेन पूर्वोक्तेन रक्तविस्रावणाद्युपक्रमेण संपादितस्यातुरस्याव्रणं शुक्रमपहरेदिति वाक्यार्थः ॥ २७ ॥

**उत्तानमवगाढं वा कर्कशं वाऽपि सव्रणम् ॥**
**शिरीषबीजमरिचपिप्पलीसैन्धवैरपि ॥ २८ ॥**
**शुक्रस्य घर्षणं कार्यमथवा सैन्धवेन तु ॥**
**कुर्यात्ताम्ररजःशङ्खशिलामरिचसैन्धवैः ॥ २९ ॥**
**अन्त्याद्द्विगुणितैरेभिरञ्जनं शुक्रनाशनम् ॥**
**कुर्यादञ्जनयोगौ वा सम्यक् श्लोकार्धिकाविमौ ॥ ३० ॥**
**शङ्खकोलास्थिकतकद्राक्षामधुकमाक्षिकैः ॥**
**क्षौद्रदन्तार्णवमलशिरीषकुसुमैरपि ॥ ३१ ॥**
**क्षाराञ्जनं वा वितरेद्बलासग्रथितापहम् ॥**
**मुद्गान् वा निस्तुषान् भृष्टान् शङ्खक्षौद्रसितायुतान् ॥**
**मधूकसारं मधुना योजयेच्चाञ्जने सदा ॥**
**बिभीतकास्थिमज्जा वा सक्षौद्रः शुक्रनाशनः ॥ ३३ ॥**
**शङ्खशुक्तिमधुद्राक्षामधुकं कतकानि च ॥**
**द्वित्वग्गते सशूले वा वातघ्नं तर्पणं हितम् ॥ ३४ ॥**
**वंशजारुष्करौ तालं नारिकेलं च दाहयेत् ॥**
**विस्राव्य क्षारवच्चूर्णं भावयेत्करभास्थिजम् ॥ ३५ ॥**
**बहुशोऽञ्जनमेतत्स्याच्छुक्रवैवर्ण्यनाशनम् ॥**

इदानीमव्रणशुक्रचिकित्सितमभिधाय सव्रणेऽपि पूर्वं चिकित्सितमुद्दिशन्नाह—उत्तानमित्यादि । सव्रणमपि शुक्रमुत्तानमेकपटलगतम्, अवगाढं वा द्विःयादिपटलगतं, रक्तस्रावणेत्यादिना पूर्वोक्तेन विधिनोपपाद्य, लेखयेदिति समुदायार्थः । ननु सव्रणस्य सन्तर्पणसाध्यत्वात् कथं सव्रणे लेखनमुपयुज्यते ? सत्यं, कर्कशावस्थायां पूर्वं लेखनं प्रयुज्यते पश्चात् सन्तर्पणमिति न दोषः । 'कर्कशं वापि सव्रणं' इत्यत्र 'कर्षयेच्चापि

१ 'शीतांश्च कुर्यात्पुटपाकयोगान्' इति पा० ।

सत्रणं' इति केचित् पठन्ति । एतदवस्थे एव शुक्रे घर्षणमाह—शिरीषबीजेत्यादि । शिला मनःशिला । कुर्यादित्यादि । कौ तौ श्लोकार्धिकौ द्वौ योगावित्याह—शङ्खकोलास्थीत्यादि । कोलास्थि बदरास्थि, कतकं शशपुरीषानुकार्यम्बुप्रसादनं फलं, मधुकं यष्टीमधु, दन्तो गोदन्तः, अर्णवमलं समुद्रफेनम् । क्षाराञ्जनमित्यादि । क्षाराञ्जनं 'नीलान् यवान् गव्यपयोऽनुपीतान्' इत्यादिना श्लेष्माभिष्यन्दोक्तम् । मुद्गानित्यादि । मुद्गान् शङ्खक्षौद्रसितायुतानित्येको योगः, मधूकसारं मधुनेति द्वितीयो योगः । बिभीतकेत्यादि । बिभीतकास्थिमज्जा मधुनेत्येको योगः; शङ्खादिकतकपर्यन्तं मधुनेति द्वितीयो योगः, मधुकं यष्टीमधु । केचित् शङ्खशुक्तीत्यत्र शङ्खाश्मन्तेति पठन्ति । द्वित्वग्गत इत्यादि । द्वित्वग्गते द्विपटलाश्रिते शुक्र इत्यर्थः । केचिदमुं पाठं न पठन्ति, जेज्जटेन पठितत्वादस्माभिः पठितः । वंशजेत्यादि । वंशजो वंशकरीरः, वंशाङ्कुर इति यावत् । अरुष्करादीनां परिपक्वास्थि, अन्ये जटामाहुः । एतेषां वंशजादीनां तिलनालदीपितानां भस्म, तच्च करभास्थिचूर्णसमं प्रत्यहमाकृष्य, षड्गुणोदकेनाष्टगुणोदकेन वा निष्क्राथ्य, पादशेषं बहुशो विस्राव्य, स्वस्थेन तेन सप्ताहं करभास्थिचूर्णं भावयित्वाऽऽतपे शोषयेत्, तच्चूर्णं पुनश्च चूर्णितं कृत्वा, मध्यात्केनाङ्गुल्यग्रेण शलाकया वा संगृह्य शुक्रदेशमात्रं घर्षयेत्, ततस्त्रिफलोदकेनाक्षि प्रक्षालयेत् । शुक्रवैवर्ण्यनाशनमिति शुक्रस्य वैवर्ण्यं विनाशयति न तु शुक्रं, एतेन शुक्रस्य कृष्णतामुत्पादयतीत्यर्थः ॥ २८-३५ ॥—

**अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ३६**
**व्रणं गोमांसचूर्णेन पूरयेत् सर्पिषा सह ॥**
**बहुशोऽवलिखेच्चापि वर्त्मास्योपगतं यदि ॥ ३७ ॥**

असाध्यशुक्रवैवर्ण्यनाशनप्रसङ्गेनासाध्याजकाजातस्य वैकृतनाशनार्थं चिकित्सामाह—अजकामित्यादि । केचिदमुं पाठं न पठन्ति, जेज्जटपठितत्वादस्माभिः पठितः । अत्राजकायामवस्थायां लेखनमपि कर्मातिदिशन्नाह—बहुशोऽवलिखेदित्यादि । अस्य अजकाजातस्य, वर्त्म तुण्डं, उपगतं बहुच्चतां प्राप्तं, तदा तं बहुशोऽवलिखेत् ॥ ३६-३७ ॥

**सशोफश्चाप्यशोफश्च द्वौ पाकौ यौ प्रकीर्तितौ ॥**
**स्नेहस्वेदोपपन्नस्य तत्र विद्ध्वा सिरां भिषक् ॥ ३८ ॥**
**सेकाश्च्योतननस्यानि पुटपाकांश्च कारयेत् ॥**

इदानीं वातपित्तकफशोणितानां पृथगभिष्यन्दप्रतिषेधमभिधाय सान्निपातिकानामप्युपदेष्टुमाह—सशोफ इत्यादि । तत्रेति तयोः पाकयोः । सिराश्चात्र आपाङ्ग्या औपनासिका लालाट्या वा । आश्च्योतनम् अक्षिपूरणम् ॥ ३८ ॥—

**सर्वतश्चापि शुद्धस्य कर्तव्यमिदमञ्जनम् ॥ ३९ ॥**
**ताम्रपात्रस्थितं मांसं सर्पिः सैन्धवसंयुतम् ॥**

१ 'एतदवस्थायामेव शुक्रघर्षणमाह' इति पा० । २ 'ओष्ठः' इति पा० । ३ 'मांसं सर्पिःसैन्धवसंयुतम्' इति पा० ।

**मैरेयं वाऽपि दध्येवं दध्युत्तरकमेव वा ॥ ४० ॥**
**घृतं कांस्यमलोपेतं स्तन्यं वाऽपि ससैन्धवम् ॥**
**मधूकसारं मधुना तुल्यांशं गैरिकेण वा ॥ ४१ ॥**
**सर्पिःसैन्धवताम्राणि योषित्स्तन्ययुतानि वा ॥**

तयोरञ्जनावस्थामुद्दिशन्नाह—सर्वत इत्यादि । सर्वतश्चापि शुद्धस्येति अन्तःपरिमार्जनबहिःपरिमार्जनाभ्यां शुद्धस्येत्यर्थः । इदं वक्ष्यमाणम् । तदेवाञ्जनमाह—ताम्रपात्रस्थितमित्यादि । मैरेयं सुरासवयोरेकत्र सन्धानं, दधि प्रसिद्धं, एवमिति पूर्ववत् ताम्रपात्रस्थितं सैन्धवचूर्णयुक्तमित्यर्थः, दध्युत्तरकं दध्नः सरः । स्नेहाञ्जनं रक्तापकर्षणादिना विरूक्षिताक्षस्य योज्यं; वातोल्बणपाकस्य वा मैरेयं दधि च ताम्रपात्रस्थितं सैन्धवयुक्तं, पित्तोल्बणे नातिविरूक्षिते दध्युत्तरकं च, सशोफस्य च रक्तास्रावादिसंपादितस्य घृतं कांस्यमलयुक्तमञ्जनं स्तन्यं वा सैन्धवयुक्तमञ्जनं, मधूकसारं वा गैरिकेण तुल्यांशं मधुनाऽञ्जनं, घृतादीनि त्रीणि स्तन्येनाञ्जनं, एतानि सावशेषरक्तयोः पाकयोर्योज्यानि ॥ ३९-४१ ॥—

**दाडिमारेवताश्मन्तकोलाम्लैश्च ससैन्धवाम् ॥**
**रसक्रियां वा वितरेत्सम्यक्पाकजिघांसया ॥ ४२ ॥**

रसक्रियामाह—दाडिमेत्यादि । आरेवतः कृतमालकः; 'ऐरावत' इति केचित् पठन्ति, तत्र ऐरावतो नारङ्गम् । ससैन्धवाम् अल्पसैन्धवां, न समसैन्धवामित्यर्थः । रसक्रिया फाणिताकृतिः, तस्याश्च कल्पना पित्ताभिष्यन्दप्रतिषेधे व्याख्याता । 'कोलाम्लैश्च ससैन्धवाम्' इत्यत्र 'कोलाम्लमधुसैन्धवैः' इति केचित् पठन्ति ॥ ४२ ॥

**मांसं सैन्धवसंयुक्तं स्थितं सर्पिषि नागरम् ॥**
**आश्च्योतनाञ्जनं योज्यमबलाक्षीरसंयुतम् ॥ ४३ ॥**

आश्च्योतनमाह—मांसमित्यादि । अबलाक्षीरं स्त्रीस्तन्यं, तच्च पेषणे बोद्धव्यम् । एतच्चाश्च्योतनं सशोफे पाके कफोल्बणे ॥ ४३ ॥

**जात्याः पुष्पं सैन्धवं शृङ्गवेरं**
**कृष्णाबीजं कीटशत्रोश्च सारम् ॥**
**एतत् पिष्टं नेत्रपाकेऽञ्जनार्थं**
**क्षौद्रोपेतं निर्विशङ्कं प्रयोज्यम् ॥ ४४ ॥**

जात्या इत्यादि । कृष्णाबीजं पिप्पलीतण्डुलः । कीटशत्रुः विडङ्गः । निर्विशङ्कं प्रयोज्यमिति पाकयोरञ्जनावस्थायां देयं तदञ्जनमिति तात्पर्यार्थः ॥ ४४ ॥

**पूयालसे शोणितमोक्षणं च**
**हितं तथैवाप्युपनाहनं च ॥**
**कृत्स्नो विधिश्लेष्मणपाकघाती**
**यथाविधानं भिषजा प्रयोज्यः ॥ ४५ ॥**

१ 'मांसं' इति पा० । २ 'निर्विशङ्कैः' इति पा० ।

पूयालसे सन्निपातजे क्रियामाह—पूयालसे इत्यादि । शोणितमोक्षणं च स्नेहस्वेदपूर्वकमेव । उपनाहनमिति यथादोषहरव्रणशोधनचक्षुष्यद्रव्यकृतः प्रलेपो बन्धनं वा । कृत्स्नो विधिरिति अन्तःशुद्धिकरो बहिःशुद्धिकरश्चेत्यर्थः । यथाविधानमिति हितानतिक्रमेणेत्यर्थः ॥ ४५ ॥

**कासीससिन्धुप्रभवार्द्रकैस्तु**
**हितं भवेदञ्जनमेव चात्र ॥**
**क्षौद्रान्वितैरेभिरथोपयुञ्ज्या-**
**दन्यत्तु ताम्रायसचूर्णयुक्तैः ॥ ४६ ॥**

कासीसादिरसक्रियाञ्जनमाह—कासीसेत्यादि । चकारात् पाकयोरुक्तमञ्जनं समुच्चीयते । अत्र पूयालसे । क्षौद्रान्वितैरित्यादि । एभिरेव कासीसादिभिर्मधुना पिष्टैस्ताम्रायसचूर्णयुक्तैरन्यदञ्जनमिति पिण्डार्थः । 'क्षौद्रान्वितैरेभिरथोपयुञ्ज्यात्' इत्यत्र 'क्षौद्रान्वितैरेभिरवान्तरोक्तैः' इति केचित् पठन्ति ॥ ४६ ॥

**स्नेहादिभिः सम्यगपास्य दोषां-**
**स्तृप्तिं विधायाथ यथास्वमेव ॥**
**प्रक्लिन्नवर्त्मानमुपक्रमेत**
**सेकाञ्जनाश्च्योतननस्यधूमैः ॥ ४७ ॥**

इदानीं प्रक्लिन्नवर्त्मनः पिल्लाख्यस्य चिकित्सामुद्दिशन्नाह—स्नेहादिभिरित्यादि । स्नेहादिभिरिति स्नेहसिराव्यधविरेचनशिरोविरेचनास्थापनैः । अपास्य निर्हृत्य । तृप्तिः तर्पणम् । यथास्वं यथात्मीयम् ॥ ४७ ॥

**मुस्ताहरिद्रामधुकप्रियङ्गु-**
**सिद्धार्थरोध्रोत्पलसारिवाभिः ॥**
**क्षुण्णाभिराश्च्योतनमेव कार्य-**
**मत्राञ्जनं चाञ्जनमाक्षिकं स्यात् ॥ ४८ ॥**

सेकाश्च्योतनयोर्द्रव्याण्याह—मुस्तेत्यादि । क्षुण्णाभिरिति अन्तरीक्षोदके तद्गुणे वाऽन्यस्मिन् न्यस्ताभिरित्यर्थः । आश्च्योतनमेव कार्यमिति अत्रानुक्तोऽपि सेकः कार्यः । अन्ये एतैराश्च्योतनमेकमेवेच्छन्ति । अत्राञ्जनमित्यादि । अत्राक्लिन्नवर्त्मनि रसाञ्जनमाक्षिकमञ्जनं स्यात् । 'रोध्रोत्पलसारिवाभिः' इत्यत्र केचित् 'लोध्रासितसारिवाभिः' इति पठन्ति, असितसारिवा श्यामालता; असितं रसाञ्जनमित्यन्ये व्याख्यानयन्ति ॥ ४८ ॥

**पत्रं फलं चामलकस्य पक्त्वा**
**क्रियां विदध्यादथवाऽञ्जनार्थं ॥**
**वंशस्य मूलेन रसक्रियां वा**
**वर्तीकृतां ताम्रकपालपक्वाम् ॥ ४९ ॥**
**रसक्रियां वा त्रिफलाविपक्वां**
**पलाशपुष्पैः खरमञ्जरेर्वा ॥**

रसक्रियाञ्जनमाह—पत्रमित्यादि । पक्त्वेति कषायकल्पेन विपाच्येत्यर्थः । क्रियां रसक्रियां, वंशस्य मूलरसेन वा रसक्रियां, तामेव वा रसक्रियामतिशोषणेन वर्तीकृताम् । ताम्रकपालं ताम्रकटाहः । त्रिफलाया अन्या रसक्रिया, पलाशपुष्पैरन्या, खरमञ्जरेरपामार्गस्यान्या रसक्रियेति ॥ ४९ ॥—

**पिष्ट्वा छगल्याः पयसा मलं वा**
**कांसस्य दग्ध्वा सह तान्तवेन ॥ ५० ॥**
**प्रत्यञ्जनं तन्मरिचैरुपेतं**
**चूर्णेन ताम्रस्य सहोपयोज्यम् ॥**

इदानीं तीक्ष्णाञ्जनदुर्बलस्य नयनस्य प्रत्याश्वासनार्थं प्रत्यञ्जनमाह—पिष्ट्वेत्यादि । कांस्यस्य मलं कार्पासवस्त्रेण सह दग्ध्वा सितमरिचताम्ररजोयुक्तं छगलीदुग्धेन पिष्ट्वा प्रत्यञ्जनं योज्यमिति पिण्डार्थः । पश्चात् प्रशान्तदोषे यदञ्जनं क्रियते तत् प्रत्यञ्जनशब्दवाच्यम् ॥ ५० ॥—

**समुद्रफेनं लवणोत्तमं च**
**शङ्खोऽथ मुद्गो मरिचं च शुक्लम् ॥ ५१ ॥**
**चूर्णाञ्जनं जोङ्यमथापि कण्डू-**
**मक्लिन्नवर्त्मान्युपहन्ति शीघ्रम् ॥**

चूर्णाञ्जनमाह—समुद्रफेनमित्यादि । लवणोत्तमं सैन्धवम् ॥ ५१ ॥—

**प्रक्लिन्नवर्त्मन्यपि चैत एव**
**योगाः प्रयोज्याश्च समीक्ष्य दोषम् ॥ ५२ ॥**

सर्वानप्यक्लिन्नवर्त्मोक्तान् प्रक्लिन्नवर्त्मन्यतिदिशन्नाह—प्रक्लिन्नेत्यादि । एत एवेति पूर्वोक्ताः । समीक्ष्य दोषमिति प्रक्लिन्नवर्त्मनः कफजत्वादेषु मध्ये ये कफहरा योगास्ते प्रयोज्या इत्यर्थः ॥ ५२ ॥

**सकज्जलं ताम्रघटे च घृष्टं**
**सर्पिर्युतं तुत्थकमञ्जनं च ॥ ५३ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे रक्ताभिष्यन्दप्रतिषेधो नाम द्वादशोऽध्यायः ॥ १२ ॥**

प्रक्लिन्नवर्त्मनः सामान्यचिकित्सामुक्त्वा विशेषचिकित्सामाह—सकज्जलमित्यादि । तुत्थकं कज्जलतुल्यभागं ताम्रपात्रे घृष्टं सर्पिर्युतमञ्जनमिति ॥ ५३ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

**अथातो लेख्यरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

रक्ताभिष्यन्दानन्तरमौषधसाध्यान् गदांश्चतुर्ष्वभिष्यन्देष्वभिधाय शस्त्रसाध्यान् प्रतिपादयितुकामो लेख्याञ्जनप्रसङ्गेन

१ 'पिष्टाभिः' इति पा० ।

१ 'योज्यमथापि' इति पा० ।

प्रथमं लेख्यरोगप्रतिषेधमाह—अथात इत्यादि। यद्यपि चिकित्साप्रविभागीयोद्दिष्टात् 'छेद्यास्तेषु दशैकश्च' इत्यादिवचनात् पूर्वं छेद्यरोगाणामुपादानं प्राप्नोति, तथाऽपि लेख्याञ्जनप्रसङ्गाच्छेद्यादिष्वल्पावस्थायां लेखनोपयोगाच्च लेख्यानां प्रागुपादानम् ॥ १ ॥ २ ॥

**नव येऽभिहिता लेख्याः सामान्यस्तेष्वयं विधिः ॥**
**स्निग्धवान्तविरिक्तस्य निवातातपसद्मनि ॥ ३ ॥**
**( आप्तैर्दृढं गृहीतस्य वेश्मन्युत्तानशायिनः ॥ )**
**सुखोदकप्रतप्तेन वाससा सुसमाहितः ॥**
**स्वेदयेद्वर्त्म निर्भुज्य वामाङ्गुष्ठाङ्गुलिस्थितम् ॥ ४ ॥**
**अङ्गुल्यङ्गुष्ठकाभ्यां तु निर्भुग्नं वर्त्म यत्नतः ॥**
**प्लोतान्तराभ्यां न यथा चलति स्रंसतेऽपि वा ॥५॥**
**ततः प्रमृज्य प्लोतेन वर्त्म शस्त्रपदाङ्कितम् ॥**
**लिखेच्छस्त्रेण पत्रैर्वा, ततो रक्ते स्थिते पुनः ॥ ६ ॥**
**स्विन्नं मनोह्वाकासीसव्योषार्द्राञ्जनसैन्धवैः ॥**
**श्लक्ष्णपिष्टैः समाक्षीकैः प्रतिसार्योष्णवारिणा ॥ ७ ॥**
**प्रक्षाल्य हविषा सिक्तं व्रणवत् समुपाचरेत् ॥**
**स्वेदावपीडप्रभृतींस्त्र्यहादूर्ध्वं प्रयोजयेत् ॥ ८ ॥**
**व्यासतस्ते समुद्दिष्टं विधानं लेख्यकर्मणि ॥**

तान् सर्वान् संख्ययाऽभिधाय संक्षेपार्थं तेष्वभिन्नविधिमुपदिशन्नाह—नवेत्यादि। तमेव सामान्यविधिमाह—स्निग्धेत्यादि।—स्निग्धवान्तविरिक्तस्येत्यत्रानुक्तोऽपि स्नेहानन्तरं स्वेदः कार्यः। सुसमाहित इत्यनेन यथा दृशोः पीडा न स्यात्तथा स्वेदयेदिति द्योत्यते। निर्भुज्य परिवर्त्य, उत्तानीकृत्येत्यर्थः। निर्भुग्नम् उत्तानीकृतम्। प्लोतान्तराभ्यां वस्त्रवेष्टिताभ्यामङ्गुल्यङ्गुष्ठाभ्यां यथा न चलति न कम्पते, न वा स्रंसते नाधः पतति, तथा वर्त्म निर्भुज्येत्यर्थः। शस्त्रपदाङ्कितमिति प्रच्छयितव्ये प्रच्छितं, भेदयितव्ये च भिन्नं, छेदनीये च छिन्नमित्यर्थः। वातकफव्याधिकठिनं दारुणं वर्त्म शस्त्रेण लिखेत्, पित्तरक्तगदाक्रान्तं मृदुवर्त्म पुनः शेफालिकादीनां पत्रैर्लिखेत्। पश्चात्कर्माह—तत इत्यादि। स्विन्नं स्वेदितम्। मनोह्वा मनःशिला। आर्द्राञ्जनं रसाञ्जनम्। माक्षीकं सुवर्णमाक्षीकम्। प्रतिसार्य अवघृष्य। हविषा घृतेन। व्रणवत् सद्योव्रणवत् सप्ताहं यावत्, तदूर्ध्वं शारीरव्रणवत्; तच्च पर्णबन्धादिना क्रमेण। स्वेदावपीडेत्यादि। त्र्यहादूर्ध्वं पुनर्व्रणवदेव स्वेदावपीडप्रभृतीन् प्रयोजयेदिति तात्पर्यार्थः। स्वेदावपीडादिकं समासेनाभिधाय विस्तरेणातिदिशन्नाह—व्यासत इत्यादि। विधानं स्वेदावपीडादिकम्। लेख्यकर्मणीति सकललेखनार्हगदकर्मणीत्यर्थः ॥ ३–८ ॥—

**असृगास्रावरहितं कण्डूशोफविवर्जितम् ॥ ९ ॥**
**समं नखनिभं वर्त्म लिखितं सम्यगिष्यते ॥**

इदानीं सम्यग्लिखितस्य वर्त्मनो लक्षणमाह—असृगास्रावरहितमित्यादि। समं निम्नोन्नतत्वरहितम्। नखनिभं नखस्येव निभा यस्य तत्तथा। तदेव व्रणवदुपचरणीयम् ॥ ९ ॥—

**रक्तमक्षि स्रवेत् स्कन्नं क्षताच्छस्त्रकृताद्ध्रुवम् ॥१०॥**
**रागशोफपरिस्रावास्तिमिरं व्याध्यनिर्जयः ॥**
**वर्त्म श्यावं गुरु स्तब्धं कण्डूहर्षोपदेहवत् ॥ ११ ॥**
**नेत्रपाकमुदीर्णं वा कुर्वीताप्रतिकारिणः ॥**
**एतद्दुर्लिखितं ज्ञेयं स्नेहयित्वा पुनर्लिखेत् ॥ १२ ॥**

दुर्लिखितस्य वर्त्मनो लक्षणमाह—रक्तमित्यादि। स्कन्नं स्त्यानम्। व्याध्यनिर्जय इति लेखनसाध्यस्य व्याधेरनुपशमः। अप्रतिकारिण इति तस्य प्रतिक्रियामकुर्वत इत्यर्थः। तत्र चिकित्सामाह—स्नेहयित्वेत्यादि। केचित् 'स्वेदयित्वा' इति पठन्ति ॥ १०–१२ ॥

**व्यावर्तते यदा वर्त्म पक्ष्म चापि विमुह्यति[1] ॥**
**स्यात् सरुक् स्रावबहुलं तदतिस्रावितं विदुः ॥१३॥**
**स्नेहस्वेदादिरिष्टः स्यात् क्रमस्तत्रानिलापहः ॥**

अतिलिखितवर्त्मनो लक्षणमाह—व्यावर्तत इत्यादि। तच्चिकित्सितमाह—स्नेहस्वेदादिरित्यादि। अनिलापहः क्रमोऽन्योऽपि परिषेकादिर्बाह्य आभ्यन्तरो वाऽऽहारादिकः। अनिलापहेन वायुं जित्वा पश्चाद्व्रणवदुपचरणीयम् ॥ १३ ॥—

**वर्त्मावबन्धं क्लिष्टं च बहलं यच्च कीर्तितम् ॥ १४ ॥**
**पोथकीश्चाप्यवलिखेत् प्रच्छयित्वाऽग्रतः शनैः ॥**

इदानीं रोगविशेषे क्वचिदेव प्रच्छनेन रक्तहरणमृदुकरणपूर्वकं लेखनमतिदिशन्नाह—वर्त्मेत्यादि। अवलिखेत् शस्त्रेण, न तु पत्रादिभिः ॥ १४ ॥—

**समं लिखेत्तु मेधावी श्यावकर्दमवर्त्मनी ॥ १५ ॥**

क्वचित् पुनर्लेखनमात्रमेव कर्तव्यं न पुनश्छेदभेदप्रच्छनानीति दर्शयन्नाह—सममित्यादि। समम् एककालमित्यर्थः; अन्ये तु नात्यवगाढं नात्युत्तानमिति सममाहुः ॥ १५ ॥

**कुम्भीकिनीं शर्करां च तथैवोत्सङ्गिनीमपि ॥**
**कल्पयित्वा[2] तु शस्त्रेण लिखेत् पश्चादतन्द्रितः ॥ १६**

कुत्रचिच्छेदपूर्वकं लेखनमाह—कुम्भीकिनीमित्यादि। कल्पयित्वा छित्त्वेत्यर्थः। अतन्द्रितः अनलसः ॥ १६ ॥

**भवेयुर्वर्त्मसु च याः पिडकाः कठिना भृशम् ॥**
**ह्रस्वास्ताम्राश्च ताः पक्वा भिन्द्याद्भित्त्वा लिखेदपि १७**

कस्मिंश्चिद्भेदपूर्वकं लेखनमाह—भवेयुरित्यादि ॥ १७ ॥

**तरुणीश्चाल्पसंरम्भा पिडका बाह्यवर्त्मजाः ॥**
**विदित्वैताः प्रशमयेत् स्वेदालेपनशोधनैः ॥ १८ ॥**

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे लेख्यरोगप्रतिषेधो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

१ 'लेखनप्रसंगाद्' इति पा०। २ 'प्लोतान्तरीकृतं नैव' इति पा०। ३ 'व्योषाञ्जनकसैन्धवैः' इति पा०।

१ 'विमुञ्चति' इति पा०। २ 'कर्तयित्वा' इति पा०।

कुत्रापि वर्त्मरोगे न पूर्वं छेदभेदप्रच्छन्नानि, न चोत्तरकालं लेखनमिति दर्शयन्नाह—तरुणीश्चाल्पेत्यादि ॥ १८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ।

**अथातो भेद्यरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

लेख्यप्रतिषेधानन्तरं भित्त्वा लिखेदिति वचनाद्भेद्यरोगप्रतिषेधारम्भः—अथात इत्यादि ॥ १ ॥ २ ॥

**स्वेदयित्वा बिसग्रन्थिं छिद्राण्यस्य निराशयम् ॥**
**पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत् ॥ ३ ॥**
**कासीसमागधीपुष्पनेपाल्येलायुतेन तु ॥**
**ततः क्षौद्रघृतं दत्त्वा सम्यग्बन्धमथाचरेत् ॥ ४ ॥**

स्वेदयित्वेत्यादि । बिसग्रन्थिं पक्वं स्वेदयित्वा, अनन्तरमस्य पक्वस्य बिसग्रन्थेः खिन्नस्य छिद्राणि निराशयं भित्त्वा, सैन्धवेन कासीसादियुक्तेनावचूर्णयेत् । निराशयमिति आशयस्य उत्सङ्गस्याभावो यथा स्यात्तथा भित्त्वेत्यर्थः । पुष्पं पुष्पाञ्जनं, नेपाली मनःशिला । ततः प्रतिसारणादनन्तरं सन्धानार्थं क्षौद्रघृतदानम् । केचित् 'सम्यग्बन्धमथाचरेत्' इत्यत्र 'बन्धेनोक्तेन योजयेत्' इति पठन्ति । सम्यक्शब्देन शिथिलता बन्धस्य ख्याप्यते ॥ ३ ॥ ४ ॥

**रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च ॥**
**प्रतिसारणमेकैकं भिन्ने लगण इष्यते ॥ ५ ॥**
**महत्यपि च युञ्जीत क्षाराग्नी विधिकोविदः ॥**

लगणस्य चिकित्सामाह—रोचनेत्यादि । रोचना गोरोचना, क्षारो यवक्षारः । एतानि प्रतिसारणान्यल्पे लगणे भिन्ने सति योज्यानि । एकैकमिति वचनेन गोरोचनादिभिरेकैकशः प्रतिसारणं विधेयमित्यर्थः । अल्पलगणचिकित्सामभिधाय महालगणचिकित्सामाह—महत्यपि च युञ्जीतेत्यादि । महति गुरुतरे इति । युञ्जीतेति भिन्ने सति लगणे क्षाराग्नी प्रयुञ्जीत; तदनन्तरं तत्कालमेव क्षाराग्निदग्धव्रणवच्चिकित्सा, पश्चात् सामान्यव्रणवत् । कोविदः पण्डितः ॥ ५ ॥—

**स्विन्नां भिन्नां विनिष्पीड्य भिषगञ्जननामिकाम् ॥ ६ ॥**
**शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥**

स्वयं भिन्नाया अञ्जननामिकायाश्चिकित्सामाह—स्विन्नामित्यादि । भिन्नां स्वयंभिन्नाम् । विनिष्पीड्येति स्नेहस्वेदपूर्वकं निष्पीडनं कृत्वा, शिला मनःशिला, एला सूक्ष्मैला, नतं तगरं, सिन्धूत्थं सैन्धवम् । प्रतिसारयेत् घर्षयेत् ॥ ६ ॥—

**रसाञ्जनमधुभ्यां तु भित्त्वा वा शस्त्रकर्मवित् ॥ ७ ॥**
**प्रतिसार्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ॥**

अभिन्नाञ्जननामिकाचिकित्सामाह—रसाञ्जनेत्यादि । स्वयमभिन्नामञ्जननामिकां पूर्वं स्विन्नां शस्त्रकर्मविद्भित्त्वा रसाञ्जनमधुभ्यां प्रतिसार्य तदुत्तरकालं दीपशिखोद्भवैः कज्जलाख्यैरञ्जनैर्योजयेदिति पिण्डार्थः ॥ ७ ॥—

**सम्यक्स्विन्ने कृमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम् ८**
**त्रिफलातुत्थकासीससैन्धवैश्च रसक्रिया ॥**

क्रिमिग्रन्थिचिकित्सामाह—सम्यगित्यादि । सम्यक्स्विन्ने इति लोचनोचितस्वेदस्विन्ने, अनन्तरं भेदिते प्रतिसारणमिति; अनुक्तमप्यञ्जननामिकोद्दिष्टमञ्जनमधुभ्यां प्रतिसारणं, तदनन्तरं त्रिफलाक्वाथेन तुत्थकासीससैन्धवावापेन रसक्रिया ॥ ८ ॥—

**भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः ॥ ९ ॥**
**लेखयेन्मण्डलाग्रेण समन्तात् प्रच्छयेदपि ॥**

श्लेष्मोपनाहचिकित्सामाह—भित्त्वेत्यादि । श्लेष्मोपनाहो भेद्यः, महान्नीरुजश्च लेख्यः, रक्तानुबन्धश्च प्रच्छनीयः; श्लेष्मोपनाहे भिन्ने लिखिते प्रच्छितेऽपि च पिप्पल्यादिभिरेकमेव प्रतिसारणम् ॥ ९ ॥—

**संस्वेद्य पत्रभङ्गैश्च स्वेदयित्वा यथासुखम् ॥ १० ॥**
**आपाकाद्विधिनोक्तेन पञ्चभेद्यानुपाचरेत् ॥**
**सर्वेष्वेतेषु विहितं विधानं स्नेहपूर्वकम् ॥**
**संपक्वे प्रयतो भूत्वा कुर्वीत व्रणरोपणम् ॥ ११ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे भेद्यरोगप्रतिषेधो नाम चतुर्दशोऽध्यायः ॥ १४ ॥**

एषां पञ्चानामपि भेद्यानां बिसग्रन्थ्यादीनामामानामादौ संशमनं निर्दिशन्नाह—संस्नेह्येत्यादि । पत्रभङ्गैः पत्रखण्डैः; अन्ये पत्रभङ्गशब्देन पल्लवमाहुः । विधिना अपतर्पणादिना सामान्यशोथप्रतीकारेण । स्नेहपूर्वकं विधानमिति स्नेहस्वेदरक्तस्रावविरेचनादि, नयनबुद्बुदजान्यत्र वमनं च ॥ १० ॥ ११ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ।

**अथातश्छेद्यरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

भेद्यरोगप्रतिषेधानन्तरं पारिशेष्याच्छेद्यरोगप्रतिषेधारम्भो युज्यत इत्याह—अथात इत्यादि ॥ १ ॥ २ ॥

१ 'निराश्रयं' इति पा० ।

१ 'पूर्ववत्' इति पा० ।　२ 'रसक्रियाम्' इति पा० ।

**स्निग्धं भुक्तवतो ह्यन्नमुपविष्टस्य यत्नतः ॥**
**संरोषयेत्तु नयनं भिषक् चूर्णैस्तु लावणैः ॥ ३ ॥**

तत्रैकादशसु छेद्येषु प्रथमं पञ्चानामर्मणामेकमेव प्रकारमुपदर्शयिष्यन् प्रथमं तत्प्राक्कर्मैव निर्दिशन्नाह—स्निग्धमित्यादि । स्निग्धं भुक्तवत इति संशुद्धदेहस्य कृतसंसर्जनस्य विचारणाप्रकारेण वा स्निग्धं भुक्तवतः । यत्नत इति यथा नातिपीडा स्यात् । संरोषयेत् अर्मशिथिलीकरणाय संक्षोभयेत् । लावणैः सैन्धवोत्थैः ॥ ३ ॥

**ततः संरोषितं तूर्णं सुस्विन्नं परिघट्टितम् ॥**
**अर्म यत्र वलीजातं तत्रैतल्लगयेद्भिषक् ॥ ४ ॥**
**अपाङ्गं प्रेक्षमाणस्य बडिशेन समाहितः ॥**
**मुचुण्ड्याऽऽदाय मेधावी सूचीसूत्रेण वा पुनः ॥ ५ ॥**
**न चोत्थापयता क्षिप्रं कार्यमभ्युन्नतं तु तत्[1] ॥**
**शस्त्राबाधभयाच्चास्य[2] वर्त्मनी ग्राहयेद्दृढम् ॥ ६ ॥**
**ततः प्रशिथिलीभूतं त्रिभिरेव विलम्बितम् ॥**
**उल्लिखन्मण्डलाग्रेण तीक्ष्णेन परिशोधयेत् ॥ ७ ॥**
**विमुक्तं सर्वतश्चापि कृष्णाच्छुक्लाच्च मण्डलात् ॥**
**नीत्वा कनीनकोपान्तं छिन्द्यान्नातिकनीनकम् ॥ ८ ॥**
**चतुर्भागस्थिते मांसे नाक्षि व्यापत्तिमृच्छति ॥**
**कनीनकवधादस्रं नाडी वाऽप्युपजायते ॥ ९ ॥**
**हीनच्छेदात् पुनर्वृद्धिं शीघ्रमेवाधिगच्छति ॥**

इदानीं यादृशमर्म बडिशेन ग्राह्यं तादृशं निर्दिशन्नाह—तत इत्यादि । परिघट्टितं चालितम् । अर्म यत्र वलीजातमित्यादि । यत्र यस्मिन् प्रदेशे अर्म जातवलीकं स्यात्तत्र प्रदेशे एतदर्म बडिशेन लगयेत् संयोजयेत्, ग्राहयेदित्यर्थः । मुचुण्ड्येत्यादि ।—तदनन्तरं बडिशं मुचुण्ड्या तर्जन्यङ्गुष्ठसन्दंशेनादाय[3] गृहीत्वा सम्यग्योगेनोत्क्षेपयेत् । सूचीसूत्रेण वा पुनरिति मुचुण्ड्या बडिशोत्क्षेपादनन्तरं प्रणिहितंससूत्रसूचीसूत्रेण तदर्म उत्क्षिपेत् । न चोत्थापयतेत्यादि ।—उत्थापयता वैद्येन क्षिप्रं सहसा तदर्मात्युन्नतं न कार्यं, त्रुटनभयात् । वर्त्मनी ग्राहयेदिति ऊर्ध्वं स्थितं वर्त्म ऊर्ध्वमाकृष्य ग्राहयेत्, अधःस्थितमध एवाकृष्य ग्राहयेदित्यर्थः । ततः प्रशिथिलीभूतमित्यादि ।—प्रशिथिलीभूतं विमुक्तनयनगोलकाश्लेषम्[4] । त्रिभिः बडिशादिभिः, न त्वेकेन, त्रुटनभयात्; विलम्बितं विशेषेण लम्बितं धृतमित्यर्थः । उल्लिखन्नित्यादि—उल्लिखन् ऊर्ध्वमेवाधःस्थितं कुर्वन् । परिशोधयेत् सर्वत उन्मूलयेत्, 'अर्मसन्तानं' इति शेषः । कनीनकोपान्तं कनीनकसमीपं, कनीनकश्च नासासमीपस्थोऽक्षिसन्धिः । छिन्द्यादिति क्रियासौकर्यार्थं बडिशमपकृष्य प्रणिहितसूचीसूत्रेणावलम्ब्यार्म छिन्द्यादित्यर्थः । नातिकनीनकमिति अतिक्रान्तकनीनकं यथा न स्यात्तथा छिन्द्यादित्यर्थः । चतुर्भागस्थिते इति अक्षिगोलकस्योपरितने मांसे चतुर्भागेन स्थिते इत्यर्थः, नान्तिके[1] । व्यापत्तिं व्यापदम्, ऋच्छति प्राप्नोतीत्यर्थः । कनीनकवधादित्यादि अतिच्छेदात् कनीनकवधः । अस्रं रक्तम् । नाडीति नाडीव्रणः । अपिशब्दाद्वेदना च । हीनच्छेदात् किं स्यादित्याह—वृद्धिमधिगच्छति; 'अर्म' इति शेषः ॥ ४-९ ॥—

**अर्म यज्जालवद्व्यापि तदप्युन्मार्ज्य[2] लम्बितम् ॥ १० ॥**
**छिन्द्याद्वक्रेण शस्त्रेण वर्त्मशुक्लान्तमाश्रितम् ॥**

यत्र पुनः प्रस्तार्यर्मणि विस्तरत्वादर्मणो वर्त्मद्वयसमीपशुक्लावयवव्यापिनो वलीभावो नास्ति तत्र किं करणीयमिति दर्शयन्नाह—अर्मेत्यादि । यदर्म जालवन्मत्स्यबन्धनजालसदृशं व्यापि व्यापनशीलं तदपि सैन्धवचूर्णेन सहोर्ध्वघृष्टं शिथिलीभूतं वक्रशस्त्रेण बडिशेन लम्बितं मण्डलाग्रेण छिन्द्यादित्यर्थः । वर्त्मशुक्लान्तमाश्रितमिति अत्र वर्त्मनोऽन्तशब्दः समीपवाची, शुक्ले पुनरवयववाची । केचित् 'अर्मवज्जालकं व्यापि'[3] इति पठन्ति; जालकं स्नाय्वर्म, तच्च वक्रेण शस्त्रेण लम्बितमर्मवच्छिन्द्यात्, वर्त्मशुक्लान्तमाश्रितं पुनरर्म उल्लेखप्रकारेण छिन्द्यादिति च व्याख्यानयन्ति ॥ १० ॥—

**प्रतिसारणमक्ष्णोस्तु ततः कार्यमनन्तरम् ॥ ११ ॥**
**यावनालस्य चूर्णेन त्रिकटोर्लवणस्य च ॥**
**स्वेदयित्वा ततः पश्चाद्बध्नीयात् कुशलो भिषक् १२**
**दोषर्तुबलकालज्ञः स्नेहं दत्त्वा यथाहितम् ॥**
**व्रणवत् संविधानं तु तस्य कुर्यादतः परम् ॥ १३ ॥**
**त्र्यहान्मुक्त्वा करस्वेदं दत्त्वा शोधनमाचरेत् ॥**

छेदानन्तरं प्रतिसारणं निर्दिशन्नाह—प्रतिसारणमित्यादि । तत इति कर्मणः । यावनालस्य यवक्षारस्य, लवणस्य सैन्धवस्य । स्वेदयित्वेत्यादि । स्वेदयित्वा 'करेण' इति शेषः । कुशलो बन्धादिवेत्ता । 'दोषर्तुबलकालज्ञ' इति दोषाणां चयादिमुखेन बलकालज्ञः, ऋतूनामादिमध्यावसानेन; अथवा दोषा वातादयः, ऋतवो हेमन्तादयः, बलं क्रियासु सामर्थ्यं, कालश्चावस्थिकः, तान् जानाति यः स तादृशः । स्नेहं दत्त्वा यथाहितमिति सन्धानार्थं घृतादीनां मध्ये यो यस्मै हितस्तं दत्त्वेत्यर्थः । तथाऽनुक्तमपि चक्षुष्यं सद्योव्रणहितं त्रिफलालोध्रचन्दनादिकषायद्रवकल्कपिण्डं दत्त्वा बध्नीयात्, तेनैव च प्रक्षालनम् । व्रणवदित्यादि व्रणवत् संविधानं शोधनरोपणादिकम् । तदेव शोधनविधानं दर्शयन्नाह—त्र्यहादित्यादि ॥ ११-१३ ॥—

**करञ्जबीजामलकमधुकैः साधितं पयः ॥ १४ ॥**

१ 'कार्यमत्युन्नतं' इति पा० । २ 'शस्त्रपातभयाच्चास्य' इति पा० । ३ मुचुण्डी संदंशयन्त्रविशेषः; तल्लक्षणं वाग्भटे प्रोक्तं, यथा—'मुचुण्डी सूक्ष्मदन्तर्जुर्मूले रुचकभूषणा । गम्भीरव्रणमांसानामर्मणः शेषितस्य च" इति । ४ 'नयनगोलकश्लेष्माणं' इति पा० ।

१ 'नान्तिके' इति हस्तलिखितपुस्तके नोपलभ्यते । २ 'तदेष्योन्मार्ज्य' इति पा० । ३ 'अर्मैवं जालकं व्यापि' इति पा० ।

**हितमाश्च्योतनं शूले द्विरह्नः क्षौद्रसंयुतम् ॥**
**मधुकोत्पलकिञ्जल्कदूर्वाकल्कैश्च मूर्धनि ॥ १५ ॥**
**प्रलेपः सघृतः शीतः क्षीरपिष्टः प्रशस्यते ॥**

इदानीमावस्थिकशूलस्य चिकित्सामाह—करञ्जबीजेत्यादि । आश्च्योतनम् अक्षिपूरणम् । द्विरह्न इति दिवसस्य कालद्वयम् । तस्मिन्नेव शूले शिरोलेपं दर्शयन्नाह—मधुकोत्पलकिञ्जल्केत्यादि । उत्पलं नीलोत्पलं, किञ्जल्कः पद्मकेशरम् ॥ १४ ॥ १५ ॥—

**लेख्याञ्जनैरपहरेदर्मशेषं भवेद्यदि ॥ १६ ॥**

शस्त्रकर्मावशिष्टस्यार्मणो लेख्याञ्जनैरेवापहरणं निर्दिशन्नाह—लेख्याञ्जनैरित्यादि । लेख्याञ्जनैरिति 'लोहचूर्णानि सर्वाणि धातवो लवणानि च' इत्यादिना शुक्रनिर्दिष्टैः ॥ १६ ॥

**अर्म चाल्पं दधिनिभं नीलं रक्तमथापि वा ॥**
**धूसरं तनु यच्चापि शुक्रवत्तदुपाचरेत् ॥ १७ ॥**

इदानीं लेख्याञ्जनप्रसङ्गेन यादृशं लेखनसाध्यमर्म तादृशं दर्शयन्नाह—अर्म चाल्पमित्यादि । अल्पं विस्तारेण, दधिनिभं शुक्लार्म, नीलं प्रस्तारि, रक्तं लोहितार्म, धूसरं पाण्डुरं, तनु स्नाय्वर्म, तनु यच्चापीत्यत्र चकारापिशब्दाभ्यां मांसार्मापि यकृत्प्रकाशं श्यावं वा; एतत् पञ्चविधमप्यर्म विस्तीर्णं तनु वा शुक्रवदेव लेख्याञ्जनैरेवोपचरणीयम् ॥ १७ ॥

**चर्माभं बहलं यत्तु स्नायुमांसघनावृतम् ॥**
**छेद्यमेव तदर्म स्यात् कृष्णमण्डलगं च यत् ॥ १८ ॥**

इदानीं यादृशं छेद्यमर्म तादृशं दर्शयन्नाह—चर्माभमित्यादि । चर्मवदाभासते यत्तत्तथा चर्मखण्डवदित्यर्थः । बहलं स्थूलम् । स्नायुमांसघनं स्नायुमांसाभ्यां घनं यथा स्यादेवमावृतं; 'स्नायुमांससिरावृतं' इति केचित् पठन्ति । कृष्णमण्डलगमिति दृष्टिमार्गावरणकारीत्यर्थः ॥ १८ ॥

**विशुद्धवर्णमक्लिष्टं क्रियास्वक्षि गतक्लमम् ॥**
**छिन्नेऽर्मणि भवेत् सम्यग्यथास्वमनुपद्रवम् ॥ १९ ॥**

सम्यक्छिन्नस्यार्मणो लक्षणमाह—विशुद्धवर्णमित्यादि । विशुद्धवर्णमर्मापनयनात् प्रकृतिवर्णमक्षि भवेत् । अक्लिष्टं क्रियास्विति निमेषोन्मेषादिषु न क्लेशवत् । गतक्लमम् अनायासक्लेशरहितम् । केचिदक्लिष्टं निर्दोषं, क्रियास्वक्षि गतक्लमं क्रियासून्मेषादिष्वपि निराबाधं स्यादिति व्याख्यानयन्ति । यथास्वमनुपद्रवमिति हीनातिच्छेदयोर्ये प्रत्येकमुपद्रवास्ते न विद्यमाना यस्य तत्तथेत्यर्थः ॥ १९ ॥

**सिराजाले सिरा यास्तु कठिनास्ताश्च बुद्धिमान् ॥**
**उल्लिखेन्मण्डलाग्रेण बडिशेनावलम्बिताः ॥ २० ॥**

अर्मच्छेदं प्रतिपाद्य सिराजालच्छेदं प्रतिपादयन्नाह—सिराजाले इत्यादि । पूर्ववदेव स्निग्धस्विन्नसंशोधितनयनस्य बडिशेनावलम्बिताः कठिनसिरा मण्डलाग्रेणोर्ध्वं लिखेत् ऊर्ध्वं छिन्द्यादिति पिण्डार्थः । कठिनसिराग्रहणान्मृदूनां सिराणां लेख्याञ्जनं योज्यमिति ज्ञेयम् ॥ २० ॥

**सिरासु पिडका जाता या न सिध्यन्ति भेषजैः ॥**
**अर्मवन्मण्डलाग्रेण तासां छेदनमिष्यते ॥ २१ ॥**

सिराजपिडकासु भेषजैरसिध्यमानासु छेदं दर्शयन्नाह—सिरास्वित्यादि । अर्मवच्छेदनमिति अर्मोक्तं पूर्वकर्मादिकं कृत्वा छेदः कार्यः ॥ २१ ॥

**रोगयोश्चैतयोः कार्यमर्मोक्तं प्रतिसारणम् ॥**
**विधिश्चापि यथादोषं लेखनद्रव्यसंभृतः ॥ २२ ॥**

रोगयोरित्यादि । एतयोः सिराजालसिरापिडकयोः । अर्मोक्तं प्रतिसारणमिति 'यावनालस्य चूर्णेन' इत्याद्युक्तम् । यथादोषं यो विधिर्वाताभिष्यन्दनादिषु निर्दिष्टः स च कार्यो लेखनैर्द्रव्यैः संपादित इत्यर्थः ॥ २२ ॥

**सन्धौ संस्वेद्य शस्त्रेण पर्वणीकां विचक्षणः ॥**
**उत्तरे च त्रिभागे च बडिशेनावलम्बिताम् ॥ २३ ॥**
**छिन्द्यात्ततोऽर्धमग्रे, स्यादश्रुनाडी ह्यतोऽन्यथा ॥**
**प्रतिसारणमत्रापि सैन्धवक्षौद्रमिष्यते ॥ २४ ॥**
**लेखनीयानि चूर्णानि व्याधिशेषस्य भेषजम् ॥**

पर्वणिकापिडकाच्छेदनमाह—सन्धावित्यादि । सन्धौ कृष्णशुक्लसन्धौ, संस्वेद्य सम्यक् स्वेदयित्वा, परं यथा दृशोः पीडा न स्यात्, उत्तरे त्रिभागे बडिशेनावलम्बितां विद्धां[1] गृहीतां, छिन्द्यात्ततोऽर्धमग्रे इति तदनन्तरमग्रेऽर्धं छिन्द्यात् मूलाग्रयोर्भित्त्वा[2] मध्ये तां छिन्द्यादित्यर्थः । तस्यां छिन्नायां प्रतिसारणमाह—प्रतिसारणमित्यादि । शस्त्रकर्मावशिष्टस्य पर्वणीशेषस्य चिकित्सामाह—लेखनीयानीत्यादि ॥ २३ ॥ २४ ॥—

**शङ्खं समुद्रफेनं च मण्डूकीं च समुद्रजाम् ॥ २५ ॥**
**स्फटिकं कुरुविन्दं च प्रवालाश्मन्तकं तथा ॥**
**वैडूर्यं पुलकं मुक्तामयस्ताम्ररजांसि च ॥ २६ ॥**
**समभागानि संपिष्य सार्धं स्रोतोञ्जनेन तु ॥**
**चूर्णाञ्जनं कारयित्वा भाजने मेषशृङ्गजे ॥ २७ ॥**
**संस्थाप्योभयतः कालमञ्जयेत् सततं बुधः ॥**
**अर्माणि पिडकां हन्यात् सिराजालानि तेन वै ॥ २८ ॥**

तान्येव लेखनीयचूर्णान्याह—शङ्खमित्यादि । मण्डूकीं च समुद्रजामिति समुद्रजा मण्डूकी मुक्तानां शुक्तिः । कुरुविन्दः पद्मरागः, 'निशानोपल' इत्यन्ये, अश्मन्तकं सलौपमं (?) मणिविशेषः । वैडूर्यमिति विदूरगिरिसंभवम् अत्यच्छमानीलं, पुलकं स्फटिकमेव पाकाद्वर्णान्तरमापन्नं; केचित् 'वैडूर्योपलकं'[3] इति पठन्ति, तत्र वैडूर्योपलकं वेरुडिकेति व्याख्यानयन्ति । मेषशृङ्ग इङ्गुदीभेदः; केचित् मेषविषाणरचितभाजनं मन्यन्ते ॥ २५–२८ ॥

**अर्शस्तथा यच्च नाम्ना शुष्कार्शोऽर्बुदमेव च ॥**
**अभ्यन्तरं वर्त्मशया विधानं तेषु वक्ष्यते ॥ २९ ॥**

अर्श इत्यादि । अभ्यन्तरं वर्त्मशया इति वर्त्माभ्यन्तराश्रया इत्यर्थः ॥ २९ ॥

---

१ 'विद्धगृहीतां' इति पा० । २ 'मूलाग्रयोर्भित्त्वा' इति पा० । ३ 'वैडूर्योपलकं' इति पा० ।

वर्त्मोपस्वेद्य निर्भुज्य सूच्योत्क्षिप्य प्रयत्नतः ॥
मण्डलाग्रेण तीक्ष्णेन मूले भिन्द्याद्भिषग्वरः ॥ ३० ॥
ततः सैन्धवकासीसकृष्णाभिः प्रतिसारयेत् ॥
स्थिते च रुधिरे वर्त्म दहेत् सम्यक् शलाकया ॥३१
क्षारेणावलिखेच्चापि व्याधिशेषो भवेद्यदि ॥
तीक्ष्णैरुभयतोभागैस्ततो दोषमधिक्षिपेत् ॥ ३२ ॥
वितरेच्च यथादोषमभिष्यन्दक्रियाविधिम् ॥

तदेव विधानमाह—वर्त्मेत्यादि । निर्भुज्य परिवर्त्य, उत्तानं कृत्वेत्यर्थः । केचिदमुमेव पाठमन्यथा कृत्वा पठन्ति, स च वर्तमानपुस्तकेषु न दृश्यते, अतो न लिखितः । तेषां कर्मणि कृते प्रतिसारणमाह—तत इत्यादि । प्रतिसारयेद् घर्षयेत् । शस्त्रकर्मावशिष्टानामर्शआदीनां चिकित्सामाह—स्थित इत्यादि । सम्यग् योगेन, शलाकयेति वस्त्राच्छादितां दृष्टिं कृत्वा अग्नितप्तशलाकया व्याधिशेषं दहेत्, क्षारेणावलिखेच्च । सर्वेष्वेवोक्तेषु छेद्यरोगेष्वनिर्दिष्टं भेषजं निर्दिशन्नाह—तीक्ष्णैरित्यादि । उभयतोभागैः वामनीयविरेचनद्रव्यैः । दोषं व्रणगतां दोषदुष्टिं; एतेनैतदुक्तं भवति—वामनीयविरेचनीयद्रव्याणां कल्ककषायादिना व्रणशुद्धिः कर्तव्येत्यर्थः । केचिद्वमनविरेचनैरेव कफादिकं दोषं निर्हरेदिति मन्यन्ते; एतच्च **पञ्जिकाकारेण** दूषितम् ॥ ३०–३२ ॥—

शस्त्रकर्मण्युपरते मासं च स्यात् सुयन्त्रितः ॥३३॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे छेद्यरोगप्रतिषेधो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

इदानीं छेद्यादिषु परिहार्यपरिहारावधिं दर्शयन्नाह—शस्त्रकर्मणीत्यादि ॥ ३३ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

अथातः पक्ष्मकोपप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

छेद्यरोगप्रतिषेधानन्तरं पक्ष्मकोपे च्छेद्यकर्मसमवायात् पक्ष्मगतरोगप्रतिषेधारम्भो युक्तोऽत आह—अथात इत्यादि । पक्ष्म वर्त्मगतरोममालिका; केचित् पक्ष्मशब्देन पक्ष्माश्रयं वर्त्म कथयन्ति ॥ १ ॥ २ ॥

याप्यस्तु यो वर्त्मभवो विकारः
पक्ष्मप्रकोपोऽभिहितः पुरस्तात् ॥
तत्रोपविष्टस्य नरस्य चर्म
वर्त्मोपरिष्टादनुतिर्यगेव ॥ ३ ॥
भ्रुवोरधस्तात् परिमुच्य भागौ
पक्ष्माश्रितं चैकमतोऽवकृन्तेत् ॥
कनीनकापाङ्गसमं समन्ता-
द्यवाकृति स्निग्धतनोर्नरस्य ॥ ४ ॥
उत्कृत्य शस्त्रेण यवप्रमाणं
बालेन सीव्येद्भिषगप्रमत्तः ॥
दत्त्वा च सर्पिर्मधुनाऽवशेषं
कुर्याद्विधानं विहितं व्रणे यत् ॥ ५ ॥
ललाटदेशे च निबद्धपट्टं
प्राक्स्यूतमत्राप्यपरं च बद्ध्वा ॥
स्थैर्यं गते चाप्यथ शस्त्रमार्गे
बालान् विमुञ्चेत् कुशलोऽभिवीक्ष्य ॥ ६ ॥

पक्ष्मकोपे शस्त्रमग्निः क्षारो भेषजमिति चतुर्विधं कर्म; तत्रादौ शस्त्रकर्म निर्दिशन्नाह—याप्य इत्यादि । पुरस्तात् वर्त्मरोगविज्ञानीये । तत्र पक्ष्मप्रकोपे । स्निग्धदेहस्योपविष्टस्य नरस्य, भ्रुवोरधस्ताद्द्वौ भागौ, तत्र पक्ष्माश्रितमेकं भागं विमुच्य कनीनकापाङ्गयोः समं प्रदेशमनुलक्षीकृत्य, समन्तात् सर्वतः न तु क्वचिदेव, एतेनोपपक्ष्ममालाप्रमाणेन वर्त्मोपरिष्टाद्यवाकृति चर्म तिर्यक् शस्त्रेण निकृन्तेत्, चर्म निकृत्य तदश्वादीनां बालेन सीव्येत् । ततः सन्धानार्थं मधु घृतं च दत्त्वा, प्राक्स्यूतं यत्तत् अपरं यत् स्यूतोद्धृतं तत् एतद्वालाञ्चलद्वयेन ललाटे पट्टं बद्ध्वा व्रणोक्तं विधिं कुर्यादिति पिण्डार्थः । स्थैर्यं गते कठिनीभूते संरूढे इत्यर्थः । शस्त्रमार्गे व्रणे, बालान् सेवनबालान्, विमुञ्चेत् स्यूतरन्ध्रात् क्रमेणापकर्षेदित्यर्थः । केचित् 'विमुञ्चेत्' इत्यत्र 'प्रकल्पयेत्' इति पठन्ति, प्रकल्पयेत् कर्तर्या च्छिन्द्यादिति च व्याख्यानयन्ति ॥ ३–६ ॥

एवं न चेच्छाम्यति तस्य वर्त्म
निर्भुज्य दोषोपहतां वलिं च ॥
ततोऽग्निना वा प्रतिसारयेत्तां
क्षारेण वा सम्यगवेक्ष्य धीरः ॥ ७ ॥

एवमप्यशाम्यति पक्ष्मकोपे उपपक्ष्ममालापरपर्याये कर्मान्तरमाह—एवमित्यादि । निर्भुज्य उत्तानीकृत्वेत्यर्थः । अवेक्ष्य 'शास्त्रम्' इति शेषः ॥ ७ ॥

छित्त्वा समं वाऽप्युपपक्ष्ममालां
सम्यग्गृहीत्वा बडिशैस्त्रिभिस्तु ॥
पथ्याफलेन प्रतिसारयेत्तु
घृष्टेन वा तौवरकेण सम्यक् ॥ ८ ॥

क्षाराग्निभ्यामप्यप्रशाम्यन्त्यामुपपक्ष्ममालायां विध्यन्तरमाह—छित्त्वा सममित्यादि । छित्त्वा द्विधा भावं नीत्वा, उत्पाट्येत्यर्थः । समम् एककालम् । उपपक्ष्ममालां 'दोषाः पक्ष्माशय-

१ 'पक्ष्मगतरोगप्रतिषेधं' इति पा० ।

१ 'कुर्याद्विधिं योऽभिहितो व्रणे तम्' इति पा० । २ 'निबध्य पट्टं' इति पा० । ३ 'शस्त्रमार्गव्रणाद्वालान् विमुञ्चेत्' इति पा०

गताश्तीक्ष्णाग्राणि खराणि च' इत्याद्युक्तलक्षणाम् । पथ्याफलेन जलघृष्टेन प्रतिसारयेत् । केचित् 'पिष्टेन' इति पठन्ति ॥ ८॥

**चत्वार एते विधयो विहन्तुं**
**पक्ष्मोपरोधं पृथगेव शस्ताः ॥**
**विरेचनाश्च्योतनधूमनस्य-**
**लेपाञ्जनस्नेहरसक्रियाश्च ॥ ९ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे पक्ष्मगतरोगप्रतिषेधो नाम षोडशोऽध्यायः ॥ १६ ॥**

उक्तमेवोपसंहरन्नाह—चत्वार इत्यादि । चत्वार एत इति शस्त्राग्निक्षारभेषजानि । पक्ष्मोपरोधं पक्ष्मप्रकोपम् । विहन्तुं विघट्टयितुं न पुनः सर्वथा शमयितुं, तस्य याप्यत्वात् । तथाऽभिष्यन्दोक्ता विरेचनादयो यथावस्थमुपयुक्ताः पृथगेव पक्ष्मोपरोधं विहन्तुं समर्थाः । रसक्रियाश्चेत्यत्र चकारादुपपक्ष्मोत्पाटनम् ॥ ९ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

**अथातो दृष्टिगतरोगप्रतिषेधं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पक्ष्मकोपप्रतिषेधानन्तरं दृष्टिगतानामेव रोगाणामवशिष्टत्वात्तत्प्रतिषेधो युक्त इत्याह—अथात इत्यादि । दृष्टिगतरोगेत्यत्र दृष्टिशब्देन दृष्ट्याश्रयं मण्डलमभिप्रेतम् ॥ १ ॥ २ ॥

**त्रयः साध्यास्त्रयोऽसाध्या याप्याः षट् च भवन्ति हि**

दृष्टिगतद्वादशरोगाणां मध्ये साध्यानां साधनार्थं, याप्यानां यापनार्थमसाध्यानां परिहारार्थमाह—त्रय इत्यादि । धूमदर्शिपित्तविदग्धदृष्टिश्लेष्मविदग्धदृष्टयस्त्रयः साध्याः । त्रयोऽसाध्या इति ह्रस्वजाड्य(त्य)नाकुलान्ध्यगम्भीरिकाख्याः । याप्याः षट् चेति अरुणाद्यो[1] विचित्रवर्णान्ताः षट् काचाः । चकारोऽत्र भिन्नक्रमे; तेन याप्यशब्दानन्तरमुपात्तेन चशब्देन साध्यासाध्यत्वं समुच्चीयते; तेन षण्णां रोगाणामवस्थाविशेषेण साध्यत्वयाप्यत्वासाध्यत्वानि; तथा च ते प्रागवस्थायां साध्याः, उत्तरावस्थायामसाध्याः, परं श्लैष्मिकं लिङ्गनाशं विहाय ॥—

**तत्रैकस्य प्रतीकारः कीर्तितो धूमदर्शिनः ॥ ३ ॥**

तत्र साध्येषु त्रिषु मध्ये धूमदर्शिनः प्रागुक्तमेव प्रतीकारं निर्दिशन्नाह—तत्रेत्यादि । प्रतीकारः हेतुव्याधिविपरीता क्रिया । कीर्तितः पित्ताभिष्यन्दप्रतिषेधे ॥ ३ ॥

**दृष्टौ पित्तविदग्धायां विदग्धायां कफेन च ॥**
**पित्तश्लेष्महरं कुर्याद्विधिं शस्त्रक्षताद्दते ॥ ४ ॥**

[1] 'अरुणादिविचित्रा वर्णतः' इति पा० ।



**नस्यसेकाञ्जनालेपपुटपाकैः सतर्पणैः ॥**
**आद्ये तु त्रैफलं पेयं सर्पिस्त्रैवृतमुत्तरे ॥ ५ ॥**
**तैल्वकं चोभयोः पथ्यं केवलं जीर्णमेव वा ॥**

इदानीं पित्तकफविदग्धदृशोरपि हेतुव्याधिविपरीतं चिकित्सितमाह—दृष्टौ पित्तविदग्धायामित्यादि । पित्तश्लेष्महरं पित्तश्लेष्माभिष्यन्दहरं; तेन पित्तविदग्धदृष्टौ पित्ताभिष्यन्दहरो विधिः, कफविदग्धदृष्टौ तु कफाभिष्यन्दहरो विधिः । शस्त्रक्षताद्दते सिराव्यधं वर्जयित्वा । तमेव पित्तश्लेष्माभिष्यन्दहरं विधिमाह—नस्यसेकेत्यादि । तत्र कफविदग्धदृष्ट्यां कफाभिष्यन्दहरं नस्यादि, पित्तविदग्धदृष्ट्यां तु पित्ताभिष्यन्दहरं नस्यादि । पित्तकफविदग्धदृष्ट्यां वैशेषिकं सामान्यं च स्नेहोपक्रममाह—आद्ये तु त्रैफलमित्यादि । आद्ये पित्तविदग्धदृष्ट्याख्ये, त्रैफलं त्रिफलाक्वाथकल्काभ्यां संस्कृतं घृतं; केचित् 'त्रिफलाया रसप्रस्थं' इत्यादिकं विदेहोक्तं त्रैफलमामनन्ति; तन्नेच्छति गयी । त्रैवृतं त्रिवृतासंस्कृतं, न पुनरपतानकोक्तम् । उत्तरे श्लेष्मविदग्धदृष्ट्याख्ये इति । तिल्वकः पट्टिकारोध्रस्तेन संस्कृतं तैल्वकम् । केवलम् असंस्कृतम् । जीर्णं पुराणम् । अनुक्तमपि स्नेहादनन्तरं वमनादि कर्तव्यं, तन्त्रान्तरदर्शनात् ॥ ४ ॥ ५ ॥—

**गैरिकं सैन्धवं कृष्णा गोदन्तस्य मषी तथा ॥ ६ ॥**
**गोमांसं मरिचं बीजं शिरीषस्य मनःशिला ॥**
**वृन्तं कपित्थान्मधुना स्वयङ्गुप्ताफलानि च ॥ ७ ॥**
**चत्वार एते योगाः स्युरुभयोरञ्जने हिताः ॥**

इदानीं बहिःपरिमार्जनार्थमञ्जनयोगांश्चतुरो निर्दिशन्नाह—गैरिकमित्यादि । तत्र गैरिकमादौ कृत्वा गोदन्तमषीं यावदेको योगः, गोमांसादिको मनःशिलां यावद्द्वितीयो योगः, वृन्तं कपित्थान्मधुनेति तृतीयो योगः, स्वयङ्गुप्ताफलानि मधुनेति चतुर्थो योगः, इति योगचतुष्टयं प्रभावात् पित्तकफविदग्धदृष्ट्योर्हितमित्यर्थः । केचिदत्र पित्तविदग्धदृष्टौ रात्रावञ्जनं, कफविदग्धदृष्टौ दिवेति कालविभागं[1] मन्यन्ते ॥ ६ ॥ ७ ॥—

**कुब्जकाशोकशालाम्रप्रियङ्गुनलिनोत्पलैः ॥ ८ ॥**
**पुष्पैर्हरेणुकृष्णाह्वापथ्यामलकसंयुतैः ॥**
**सर्पिर्मधुयुतैश्चूर्णैर्वेणुनाड्यामवस्थितैः ॥ ९ ॥**
**अञ्जयेद् द्वावपि भिषक् पित्तश्लेष्मविभावितौ ॥**

अधुना द्वयोरपि पुष्पाञ्जनमाह—कुब्जकाशोकेत्यादि । कुब्जकाशोकौ स्वनामप्रसिद्धौ, शालः सर्जभेदः, नलिनम् ईषद्रक्तं पद्मं, उत्पलं नीलोत्पलं, हरेणुः रेणुका, कृष्णाह्वा पिप्पली, वेणुनाड्यामवस्थानं शक्त्युत्कर्षार्थम् । पित्तश्लेष्मविभाविताविति पित्तश्लेष्मविदग्धदृष्टी इत्यर्थः ॥ ८ ॥ ९ ॥—

**आम्रजम्बूद्भवं पुष्पं तद्रसेन हरेणुकाम् ॥ १० ॥**
**पिष्ट्वा क्षौद्राज्यसंयुक्तं प्रयोज्यमथवाऽञ्जनम् ॥**
**नलिनोत्पलकिञ्जल्कगैरिकैर्गोशकृद्रसैः ॥ ११ ॥**
**गुडिकाञ्जनमेतद्वा दिनरात्र्यन्धयोर्हितम् ॥**

[1] 'कालविभागौ' इति पा० ।

इदानीं दिनराव्यन्धाञ्जनद्वयमाह—आम्रेत्यादि । आम्रजम्बूद्भवं यत् पुष्पं तद्रसेन रसचतुर्थांशं हरेणुकाचूर्णं पिष्ट्वा रसक्रियापाकेन विपाच्य मधुघृतयुक्तं दिनराव्यन्धयोः पित्तकफविदग्धदृष्टयपरपर्याययोर्द्वयाञ्जनं योज्यम् । तथा नलिनादिभिर्गोशकृद्रसपिष्टैर्गुटिकाञ्जनं हितं; नलिनम् ईषद्रक्तं पद्मं, उत्पलं नीलोत्पलं, किञ्जल्कः केशरः, स च नलिनोत्पलयोरेव । केचित् 'गोयकृद्रसैः' इति पठन्ति; गोशब्दस्य पशुवाचित्वाद्जादयो गृह्यन्ते; यकृद्रसः कालखण्डरस इति व्याख्यानयन्ति ॥ १० ॥ ११ ॥—

**रसाञ्जनरसक्षौद्रतालीशस्वर्णगैरिकम् ॥ १२ ॥**
**गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥**

अधुना दिवान्ध्ये वैशेषिकं चूर्णाञ्जनमाह—रसाञ्जनेत्यादि । रस इति जातीपत्ररस इत्यर्थः, आमलकीपत्ररस इत्यन्ये । अत्र द्रवद्रव्यैः कठिनद्रव्यभावनां विधाय चूर्णाञ्जनं कर्तव्यम् । पित्तोपहतदृष्टये पित्तविदग्धदृष्टये ॥ १२ ॥—

**शीतं सौवीरकं वाऽपि पिष्ट्वाऽथ रसभावितम् १३**
**कूर्मपित्तेन मतिमान् भावयेद्रौहितेन वा ॥**
**चूर्णाञ्जनमिदं नित्यं प्रयोज्यं पित्तशान्तये ॥ १४ ॥**

अपरमपि चूर्णाञ्जनमाह—शीतेत्यादि । शीतं रसाञ्जनं, कर्पूरमन्ये । सौवीरकं सौवीराञ्जनम् । रसभावितमिति चतुष्पदमृगपक्षिमांसरसभावितमित्यर्थः । केचिद्रस इति सामान्योक्त्या रसाञ्जनसौवीराञ्जनयोरेव रसं संगृह्णन्ति, तदभावे च तयोरेव चूर्णोदकमुदकाढके प्रक्षिप्य अहोरात्रपर्युषितं प्रातर्मर्दितं पूतं स्वरसवत् प्रयोज्यमित्यर्थः । केचिच्च प्रस्तुतत्वाद्रसशब्देन गोशकृद्रसं गृह्णन्ति ॥ १३ ॥ १४ ॥

**काश्मरीपुष्पमधुकदार्वीरोध्ररसाञ्जनैः ॥**
**सक्षौद्रमञ्जनं तद्वद्धितमत्रामये सदा ॥ १५ ॥**

दिवान्ध्ये कल्काञ्जनमाह—काश्मरीपुष्पेत्यादि । अत्रेति पित्तविदग्धदृष्टौ । केचित् काश्मीरपुष्पादिरसक्रियाञ्जनमेतदित्याहुः ॥ १५ ॥

**स्रोतोजं सैन्धवं कृष्णां रेणुकां चापि पेषयेत् ॥**
**अजामूत्रेण ता वर्त्यः क्षणदान्ध्याञ्जने हिताः ॥ १६ ॥**

राव्यान्ध्ये कफविदग्धदृष्टयपरपर्याये वर्त्यञ्जनमाह—स्रोतोजमित्यादि ॥ १६ ॥

**कालानुसारिवां कृष्णां नागरं मधुकं तथा ॥**
**तालीशपत्रं क्षणदे गाङ्गेयं च यकृद्रसे ॥ १७ ॥**
**कृतास्ता वर्तयः पिष्टाश्छायाशुष्काः सुखावहाः ॥**

अपरमपि नक्तान्ध्ये वर्त्यञ्जनमाह—कालानुसारिवामित्यादि । कालानुसारिवा तगरं, क्षणदे द्वे हरिद्रे, गाङ्गेयं मुस्ता । यकृद्रसे छागल्यादिकालखण्डरसे; अन्ये 'शकृद्रसे' इति पठन्ति, शकृद्रसे गोमयरसे इति व्याख्यानयन्ति ॥ १७ ॥—

**मनःशिलाभयाव्योषबलाकालानुसारिवाः ॥ १८ ॥**
**सफेना वर्तयः पिष्टाश्छागक्षीरसमन्विताः ॥**

अन्यदपि राव्यान्ध्ये वर्त्यञ्जनमाह—मनःशिलेत्यादि ॥ १८ ॥—

**गोमूत्रपित्तमदिरायकृद्धात्रीरसे पचेत् ॥ १९ ॥**
**क्षुद्राञ्जनं रसेनान्ययकृतस्त्रैफलेऽपि वा ॥**
**गोमूत्राज्यार्णवमलपिप्पलीक्षौद्रकट्फलैः ॥ २० ॥**
**सैन्धवोपहितं युञ्ज्यान्निहितं वेणुगह्वरे ॥**

इदानीं रसक्रियाञ्जनत्रितयमाह—गोमूत्रेत्यादि । अत्र मूत्रपित्तयकृन्त्यजादीनामेव । मदिरा पिष्टसुरा । गोमूत्रादिरसेन क्षुद्राञ्जनं विपचेदित्येको योगः, क्षुद्राञ्जनं रसक्रियाञ्जनमित्यर्थः; रसेन यकृत इति द्वितीयो योगः; त्रैफलेऽपि वेति तृतीयो योगः । गोमूत्राज्यार्णवमलेत्यादि । एतद्रसक्रियाञ्जनत्रितयमप्येकैकं गोमूत्राज्यादिभिः संयुक्तं वेणुगह्वरे वंशनलिकाभ्यन्तरे व्यवस्थितमञ्जनं राव्यन्धे युञ्ज्यादित्यर्थः ॥ १९ ॥ २० ॥—

**मेदो यकृद्धृतं चाजं पिप्पल्यः सैन्धवं मधु ॥ २१ ॥**
**रसमामलकाच्चापि पक्वं सम्यङ्निधापयेत् ॥**
**कोशे खदिरनिर्माणे तद्वत् क्षुद्राञ्जनं हितम् ॥ २२ ॥**

श्लेष्मविदग्धदृष्टयामपरमपि रसक्रियाञ्जनमाह—मेदो यकृद्धृतं चाजमित्यादि । मेदो यकृद्धृतं चेति त्रयमेतच्छगलीनाम् । मेदोयकृति सर्वमेकीकृत्य रसक्रियापाकेन पक्वं खदिरतरुसारनिर्मितभाजने सूक्ष्ममुखे बृहन्मध्यकुहरे निक्षिप्तं क्षुद्राञ्जनं रसक्रियाञ्जनापरपर्यायं हितमित्यर्थः ॥ २१ ॥ २२ ॥

**हरेणुमगधाजास्थिमज्जैलायकृदन्वितम् ॥**
**यकृद्रसेनाञ्जनं वा श्लेष्मोपहतदृष्टये ॥ २३ ॥**

अन्यदपि कफविदग्धदृष्टावञ्जनमाह—हरेण्वित्यादि । हरेणुः हरेणुका, मगधाजास्थिमज्जेति पिप्पलीवितुषबीजानि । एतद् हरेण्वादि यकृद्द्रवेण पिष्टमञ्जनं श्लेष्मोपहतदृष्टये नक्तान्धाय हितमित्यर्थः । इदमञ्जनमेकीयमताभिप्रायेण **गयदासाचार्येण** पठितं व्याख्यातं च ॥ २३ ॥

**विपाच्य गोधायकृदर्धपाटितं**
**सुपूरितं मागधिकाभिरग्निना ॥**
**निषेवितं तद्यकृदञ्जनेन**
**निहन्ति नक्तान्ध्यमसंशयं खलु ॥ २४ ॥**

इदानीं नक्तान्ध्ये कफविदग्धदृष्टयपरपर्याये प्रयोगमाह—विपाच्येत्यादि । गोधायकृदर्धपाटितं कृत्वा पिप्पलीभिः पूरितं शुचिमृदा लिप्तमग्निना विपाच्य त्र्यहं भक्षितं सत्, तथा तदन्तःस्थिता पिप्पली मधुनाऽञ्जनेन निःसन्देहं नक्तान्ध्यं निहन्तीत्यर्थः ॥ २४ ॥

**तथा यकृच्छागभवं हुताशने**
**विपाच्य सम्यङ्मगधासमन्वितम् ॥**
**प्रयोजितं पूर्ववदाश्वसंशयं**
**जयेत् क्षपान्ध्यं सकृदञ्जनान्नृणाम् ॥ २५ ॥**

१ 'पीतमृदितं' इति पा० ।

१ 'वेणुभाजने' इति पा० ।

नक्तान्ध्येऽपरमपि प्रयोगमाह—तथा यकृच्छागभवमित्यादि । प्रयोजितं पूर्ववदिति यकृद्भक्षणविधिना प्रयोजितं, पिप्पली पुनरञ्जनविधिनेत्यर्थः ॥ २५ ॥

**प्लीहा यकृच्चाप्युपभक्षिते उभे**
**प्रकल्प्य शूल्ये घृततैलसंयुते ॥**
**ते सार्षपस्नेहसमायुतेऽञ्जनं**
**नक्तान्ध्यमाश्वेव हतः प्रयोजिते ॥ २६ ॥**

अपरमपि नक्तान्ध्ययोगमाह—प्लीहेत्यादि । प्लीहा उदरवामपार्श्वस्थं मांसखण्डं, यकृत् दक्षिणपार्श्वस्थं कालखण्डापरपर्यायं, ते उभे अपि प्रस्तुतत्वाद् गोधाच्छागयोरेव ग्राह्ये । प्रकल्प्य खण्डशः कल्पयित्वा । शूल्ये शूलपाकपक्वे ॥ २६ ॥

**नदीजशिम्बीत्रिकटून्यथाञ्जनं**
**मनःशिला द्वे च निशे य(श)कृद्गवाम् ॥**
**सचन्दनेयं गुटिकाऽथवाऽञ्जनं**
**प्रशस्यते वै दिवसेष्वपश्यताम् ॥ २७ ॥**

इदानीं दिवान्ध्ये पित्तविदग्धदृष्ट्यपरपर्यायेऽञ्जनमाह—नदीजेत्यादि । नदीजं सैन्धवं; शिम्बीशब्देनात्र हरितमुद्गाः, चक्षुष्यत्वात्; अन्ये शिम्बीस्थाने शिम्बेति पठन्ति, तत्रापि स एवार्थः; अञ्जनं सौवीराञ्जनम् । गवां छागादीनाम् । चन्दनं रक्तचन्दनम् । गुटिका वटीकृत्याञ्जनं; अथवाऽञ्जनमिति चूर्णाञ्जनमथवेत्यर्थः । विपाच्य गोधायकृदर्धपाटितमित्यादिकं सचन्दनेयं गुटिकाऽथवाऽञ्जनमिति पर्यन्तं योगचतुष्टयं निबन्धकारैरनार्षीकृतं, तैरेव सुभाषितत्वादुपयोगार्हत्वाच्च व्याख्यातं; तस्मान्मयाऽपि पठितं व्याख्यातं च ॥ २७ ॥

**भवन्ति याप्याः खलु ये षडामया**
**हरेदसृक्तेषु सिराविमोक्षणैः ॥**
**विरेचयेच्चापि पुराणसर्पिषा**
**विरेचनाङ्गोपहितेन सर्वदा ॥ २८ ॥**

इदानीं साध्यानां चिकित्सितमभिधाय याप्यानां चिकित्सितमाह—भवन्तीत्यादि । भवन्ति याप्या इति अत्र 'उपेक्ष्यमाणा' इति शेषः, एतेन तेषां प्रागवस्थायां साध्यत्वम् । याप्याः षडामया इति । ननु श्लैष्मिककाचस्य साध्यत्वात् कथं षड् याप्याः? सत्यं, याप्यबाहुल्यादेतद्व्यपदेशः । तेष्विति प्रथमद्वितीयपटलप्राप्तेषु तिमिरावस्थेषु काचेष्वित्यर्थः, न तु रागप्राप्तेषु, यतस्तत्र सिराव्यधनिषेधः; तथा चोक्तं—'तिमिरे रागिणि भिषक् सिरामोक्षं विवर्जयेत्'—इति । सिराविमोक्षणैरित्यनेनैव स्नेहस्वेदौ पूर्वकर्मसंज्ञकावाक्षिप्तौ मन्तव्यौ । विरेचनाङ्गोपहितेनेति विरेचनद्रव्यसंस्कृतेनेत्यर्थः ॥ २८ ॥

**पयोविमिश्रं पवनोद्भवे हितं**
**वदन्ति पञ्चाङ्गुलतैलमेव तु ॥**
**भवेद्घृतं त्रैफलमेव शोधनं**
**विशेषतः शोणितपित्तरोगयोः ॥ २९ ॥**

१ 'उपलक्षिते' इति पा० ।

**त्रिवृद्विरेकः कफजे प्रशस्यते**
**त्रिदोषजे तैलमुशन्ति तत्कृतम् ॥**

सर्वतिमिराणां सामान्यं शोधनमभिधाय विशेषशोधनमाह—पयोविमिश्रमित्यादि । पञ्चाङ्गुलतैलम् एरण्डतैलम् । विशेषतः शोणितपित्तरोगयोरिति त्रैफलं घृतं सर्वतिमिरेषु हितं, अनयोर्विशेषत इत्यर्थः । त्रिवृद्विरेक इति त्रिवृता सिद्धघृतेन विरेक इत्यर्थः । तत्कृतमिति त्रिवृता संस्कृतमित्यर्थः; अन्ये तु तैर्वातपित्तकफघ्नैर्द्रव्यैः संस्कृतं तत्कृतं वदन्ति । द्वन्द्वजेषु तिमिरेषु लनुक्तमपि संशोधनं व्यामिश्रं कर्तव्यम् ॥ २९ ॥—

**पुराणसर्पिस्तिमिरेषु सर्वशो**
**हितं भवेदायसभाजनस्थितम् ॥ ३० ॥**
**हितं च विद्यात्त्रिफलाघृतं सदा**
**कृतं च यन्मेषविषाणनामभिः ॥**

संशोधनमभिधाय सामान्यं संशमनमाह—पुराणसर्पिरित्यादि । सर्वत इति पानाभ्यञ्जननस्यादिषु, सर्वेष्वेव वातादिजन्यनयनविकारेष्वित्यन्ये । त्रिफलाघृतं त्रिफलाक्वाथकल्कपक्वं घृतम् । कृतं संस्कृतं 'घृतं' इति शेषः । मेषविषाणनामभिः मेषशृङ्गीफलैरित्यर्थः ॥ ३० ॥—

**सदाऽवलिह्यात्त्रिफलां सुचूर्णितां**
**घृतप्रगाढां तिमिरेऽथ पित्तजे ॥ ३१ ॥**
**समीरजे तैलयुतां कफात्मके**
**मधुप्रगाढां विदधीत युक्तितः ॥**

सामान्यं संशमनमभिधाय विशेषसंशमनमाह—सदेत्यादि । सदेति नित्यगे आवस्थिके च काले इत्यर्थः । पित्तजे इत्यत्रानुक्तमपि रक्तजं तिमिरं बोद्धव्यं, तत्रापि घृतेन त्रिफलाप्रयोगः । केचित् "सदाऽवलिह्यात्त्रिफलां सुचूर्णितां घृतप्रगाढां तिमिरातुरो नरः । कफाभिभूतः खलु तैलसंयुतां मधुप्रगाढामपि वा प्रयोजयेत्" ईदृशं पाठं पठन्ति; स च जेज्जटाचार्येण दूषितः; तस्मात् पूर्वपाठ एव न्याय्यः ॥ ३१ ॥—

**गवां शकृत्क्वाथविपक्वमुत्तमं**
**हितं तु तैलं तिमिरेषु नावनम् ॥ ३२ ॥**

इदानीं श्लेष्मतिमिरे नस्यमाह—गवां शकृदित्यादि । सामान्यस्नेहपाकपरिभाषया गोशकृत्क्वाथेन तैलमकल्कं पक्तव्यं, एतत्तैलं तन्त्रान्तरदर्शनात् कफजे तिमिरे बोद्धव्यं; अन्ये तु तिमिरेष्विति बहुवचनात् सर्वतिमिरेषु बोद्धव्यमिति वदन्ति ३२

**हितं घृतं केवल एव पैत्तिके**
**ह्यजाविकं यन्मधुरैर्विपाचितम् ॥**

पित्तजे तिमिरे नस्यमाह—हितमित्यादि । केवल एव पैत्तिके नान्यदोषसंसृष्टे तिमिरे इत्यर्थः । मधुरैर्विपाचितमिति काकोल्यादिक्वाथकल्कविपक्वमित्यर्थः । 'केवल एव' इत्यत्र 'केवलमेव' इति केचित् पठन्ति, तत्र केवलमसंस्कृतमित्यर्थः, अजाविकं घृतमिति च व्याख्यानयन्ति ॥—

तैलं स्थिरादौ मधुरे च यद्गणे
तथाऽणुतैलं पवनासृगुत्थयोः ॥ ३३ ॥

वातरक्तजयोस्तिमिरयोर्नस्यमाह—तैलमित्यादि । स्थिरादौ विदारिगन्धादौ, सिद्धमिति शेषः । तथा मधुरे गणे काकोल्यादिके यत् सिद्धं, तथाऽणुतैलं वातव्याधिचिकित्सितोक्तम् ॥ ३३ ॥

सहाश्वगन्धातिबलावरीशृतं
हितं च नस्ये त्रिवृतं यदीरितम् ॥
जलोद्भवानूपजमांससंस्कृता-
द्धृतं विधेयं पयसो यदुत्थितम् ॥ ३४ ॥

केवलवातजे तिमिरे नस्यमाह—सहेत्यादि । सहा मुद्गपर्णी, माषपर्णीत्यन्ये । वरी शतावरी । एतैर्विपक्वं तैलं वातारब्धे तिमिरे नस्ये हितम् । त्रिवृतं यदीरितमिति महावातव्याधिचिकित्सिते त्रिभिः सर्पिर्वसामज्जभिर्वृतं त्रिवृतं तैलं यदीरितं तदत्र हितं; केचिदेतैरेव मुद्गपर्ण्यादिभिर्द्रव्यैस्त्रिवृतं तैलं सिद्धं वातारब्धतिमिरे नस्ये हितमिति वदन्ति । वातारब्धतिमिरे द्वितीयं नस्यमाह—जलोद्भवेत्यादि । जलोद्भवा मत्स्यादयः, आनूपाः कूलचराः, तेषां मांसेन क्षीरपाककल्पेन संस्कृताद्दुग्धान्मथ्यमानाद् यद्धृतमुद्धृतं तत् सहाश्वगन्धादिभिरनन्तरोक्तैर्विपक्वं वातारब्धतिमिरे नस्यं विधेयम् । केचिज्जलोद्भवशब्देन पद्मादीनि गृह्णन्ति, तन्नेच्छन्ति निबन्धकाराः ॥ ३४ ॥

ससैन्धवः क्रव्यभुगेणमांसयो-
र्हितः ससर्पिः समधुः पुटाह्वयः ॥

नस्यमभिधाय पुटपाकमाह—ससैन्धव इत्यादि । क्रव्यभुजो गृध्रादयः, एणः कृष्णसारः । पुटाह्वयः पुटपाकः । तस्य विधानं क्रियाकल्पे वक्ष्यति ॥—

वसाऽथ गृध्रोरगताम्रचूडजा
सदा प्रशस्ता मधुकान्विताऽञ्जने ॥ ३५ ॥

वातजतिमिरे पुटपाकमभिधायाञ्जनमाह—वसेत्यादि । उरगः कृष्णसर्पः, ताम्रचूडः कुक्कुटः, मधुकान्विता यष्टीमधुकसंयुता; एता गृध्रादिजास्तिस्रो वसा यष्टीमधुकचूर्णान्विता एकशो द्विशः समस्ता वाऽञ्जने हिताः ॥ ३५ ॥

प्रत्यञ्जनं स्रोतसि यत्समुत्थितं
क्रमाद्रसक्षीरघृतेषु भावितम् ॥

इदानीं वातजतिमिरे स्नेहाञ्जनेन जडीभूतस्य चक्षुष उपकारार्थं प्रत्यञ्जनमाह—प्रत्यञ्जनमित्यादि। यत् अञ्जनस्यानु प्रयुज्यते तत् प्रत्यञ्जनम् । तत्र तीक्ष्णाञ्जनस्य मृद्वञ्जनमनु प्रयुज्यते, मृद्वञ्जनस्य तीक्ष्णाञ्जनम् । स्रोतसि यत् समुत्थितं सिन्धुस्रोतसि वर्णसार्पणसयोः स्रोतसि वा यत् समुत्थितं स्रोतोञ्जनं, सौवीराञ्जनमित्यन्ये । रसश्च चक्षुष्यमृगपक्षिमांसरसः । पृथक् पृथक् सप्ताहं रसक्षीरघृतेषु भावितं चूर्णाञ्जनं प्रयोज्यम् ॥—

१ 'तैलमाह–' इति पा० ।

स्थितं दशाहत्रयमेतदञ्जनं
कृष्णोरगास्ये कुशसंप्रवेष्टिते ॥ ३६ ॥
तन्मालतीकोरकसैन्धवायुतं
सदाऽञ्जनं स्यात्तिमिरेऽथ रागिणि ॥
सुभावितं वा पयसा दिनत्रयं
काचापहं शास्त्रविदः प्रचक्षते ॥ ३७ ॥

अरागितिमिरचिकित्सितं प्रतिपाद्य वातजरागितिमिरचिकित्सितं प्रतिपादयन्नाह—स्थितमित्यादि । दशाहत्रयं मासमेकमित्यर्थः । एतदञ्जनं स्रोतोञ्जनं, सौवीराञ्जनमित्यन्ये । ततः स्रोतोञ्जनं कृष्णसर्पमुखे यथोदितप्रकारेण निवासितं पश्चान्मालतीकोरकसैन्धवेन समुदायसमभागेन युतमञ्जनं कार्यं; मालतीकोरकाः जातीकुसुमानि । तिमिरेऽथ रागिणि वातकाचे इत्यर्थः । वातकाचेऽपरमप्यञ्जनमाह—सुभावितमित्यादि । अन्ये तु जातीकोरकयुक्तत्वात् वातपित्तकाचापहं वदन्ति, तन्नेच्छति गयी ॥ ३६ ॥ ३७ ॥

हविर्हितं क्षीरभवं तु पैत्तिके
वदन्ति नस्ये मधुरौषधैः कृतम् ॥
तत्तर्पणे चैव हितं प्रयोजितं
सजाङ्गलस्तेषु च यः पुटाह्वयः ॥ ३८ ॥

पित्ततिमिररोगचिकित्सितमाह—हविरित्यादि । हविः घृतं, क्षीरभवं क्षीरमथनोद्धृतं, पैत्तिके 'तिमिरे' इति शेषः । मधुरौषधैः काकोल्यादिभिः, कृतं संस्कृतं; अन्ये तु क्षीरमपि काकोल्यादिभिः साधितं मन्यन्ते, तेन काकोल्यादिसाधितात् क्षीरान्मथ्यमानादुत्थितं घृतं काकोल्यादिभिरेव साधितं पित्तजतिमिरे हितमिति वदन्ति । केचिदिह कृतमित्यस्य स्थाने शृतमिति पठन्ति, तत्र शृतं पक्वम् । तत्तर्पण इत्यादि । न केवलं तद्धृतं नस्ये हितं, किं तर्हि तर्पणेऽक्षिपूरणपर्याये प्रयोजितं हितम् । तथा तेषु मधुरौषधेषु यो जाङ्गलमांसयुक्तः पुटपाकः स पित्ततिमिरे स्नेहार्थं हितः ॥ ३८ ॥

रसाञ्जनक्षौद्रसितामनःशिलाः
क्षुद्राञ्जनं तन्मधुकेन संयुतम् ॥

पित्ततिमिरे रसक्रियाञ्जनमाह—रसाञ्जनमित्यादि । रसाञ्जनादिकृतं क्षुद्राञ्जनं फाणिताकृति पित्ततिमिरे हितम् । क्षुद्राञ्जनमित्यत्र केचिद्रसाञ्जनमिति पठन्ति, तत्रापि स एवार्थः ॥—

समाञ्जनं वा कनकाकरोद्भवं
सुचूर्णितं श्रेष्ठमुशन्ति तद्विदः ॥ ३९ ॥

इदानीं पित्ततिमिरे प्रत्यञ्जनमाह—समाञ्जनमित्यादि । समाञ्जनं तुल्यसौवीराञ्जनं, कनकाकरोद्भवं तुत्थकं, श्रेष्ठम् उत्तमं, उशन्ति इच्छन्ति, प्रत्यञ्जनमित्यध्याहार्यम् । तद्विदः शालाकिनः । केचित् समाञ्जनमित्यत्र रसाञ्जनमिति पठन्ति ॥३९॥

भिल्लोटगन्धोदकसेकसेचितं
प्रत्यञ्जने चात्र हितं तु तुत्थकम् ॥

१ 'सात्यक्युक्तत्वात्' इति पा० ।

पित्ततिमिरेऽपरमपि प्रत्यञ्जनमाह—भिल्लोटेत्यादि भिल्लोटको हिमवदासन्नभूमिजः ककुभानुकारिफलो वृक्षविशेषः, गन्धा एलादिगणोक्ताः, उदकमत्र कषायः, तत्सेकसेचितं तुत्थकं प्रत्यञ्जने हितम् । अन्ये भिल्लोटकस्वाभाविकगन्धोदकसेकसेचितमाहुः । केचिदमुं प्रत्यञ्जनं न पठन्ति ॥—

समेषशृङ्गाञ्जनभागसंमितं
जलोद्भवं काचमलं व्यपोहति ॥ ४० ॥

पित्तजे तिमिरे रागप्राप्ते चिकित्सामाह—समेषेत्यादि । मेषशृङ्गः पुत्रजीवानुकारी वृक्षः, अञ्जनं सौवीराञ्जनं, एतयोर्भागेन अंशेन संमितं तुल्यभागं जलोद्भवं स्रोतोञ्जनं, अञ्जनेन काचमलं पित्तकाचं व्यपोहति । अन्ये जलोद्भवं शङ्खं वदन्ति ॥ ४० ॥

पलाशरोहीतमधूकजा रसाः
क्षौद्रेण युक्ता मदिराग्रमिश्रिताः[1] ॥

पैत्तिके काचे रसक्रियाञ्जनमाह—पलाशरोहीतेत्यादि । पलाशः किंशुकः, रोहितो दाडिमपुष्पतुल्यपुष्पः, मधूकः स्वनामप्रसिद्धो वृक्षविशेषः, एतेषां रसाः; मदिराग्रं मदिराया उपर्यच्छो भागः । किंशुकादिरसक्षौद्रमदिराग्राणि समभागानि आहृत्य रसक्रिया कार्या, सा चाञ्जनात्पित्तकाचमलं व्यपोहति ॥—

उशीरलोध्रत्रिफलाप्रियङ्गुभिः
पचेत्तु नस्यं कफरोगशान्तये ॥ ४१ ॥

इदानीं कफतिमिरे नस्यमाह—उशीरलोध्रेत्यादि । उशीरादिभिर्द्रव्यैः कल्कीकृतैः सामान्यस्नेहपाकपरिभाषयाऽनुक्तमपि तिलतैलं पाचनीयं, विदेहदर्शनात् ॥ ४१ ॥

विडङ्गपाठाकिणिहीङ्गुदीत्वचः
प्रयोजयेद्धूममुशीरसंयुताः ॥

कफतिमिरे धूममाह—विडङ्गेत्यादि । किणिही अपामार्गः । ननु तिमिरे धूमो निषिद्धः, कथमत्रोच्यते? सत्यं, पित्ततिमिरे एव धूमो निषिद्धो न कफजे, अतो न दोषः ॥—

वनस्पतिक्वाथविपाचितं घृतं
हितं हरिद्रानलदे च तर्पणम् ॥ ४२ ॥

कफतिमिरे तर्पणमाह—वनस्पतिक्वाथेत्यादि । वनस्पतयः क्षीरवृक्षाः, तत्कृतक्वाथे चतुर्गुणे हरिद्रानलदकल्कचतुर्थांशं घृतं पक्वं कफतिमिरे तर्पणे अक्षिपूरणापरपर्याये हितम् । नलदम् उशीरम् ॥ ४२ ॥

समागधो माक्षिकसैन्धवाढ्यः
सजाङ्गलः स्यात् पुटपाक एव च ॥

कफतिमिरे पुटपाकमाह—समागध इत्यादि । मागधी पिप्पली । आढ्य उत्कटः । सजाङ्गलः जाङ्गलमृगपक्षिमांसकृतः । केचित् 'आढ्यः' इत्यत्र 'आज्य' इति पठन्ति । तत्राज्यं घृतम् । केचिदमुं पुटपाकं रागिणि कफतिमिरे वदन्ति, तन्नेच्छति गयी ॥—

मनःशिलाव्यूषणशङ्खमाक्षिकैः
ससिन्धुकासीसरसाञ्जनैः क्रियाः ॥ ४३ ॥

कफतिमिरे रसक्रियाञ्जनमाह—मनःशिलेत्यादि । मनःशिलादिभिः कासीसरसाञ्जनान्तैश्चूर्णीकृतैः सलिलचतुर्थांशनिक्षिप्तैरग्निपाकात् फाणिताकृतीकृते रसक्रिया । माक्षिकं मधु ॥ ४३ ॥

हिते च कासीसरसाञ्जने तथा
वदन्ति पथ्ये गुडनागरैर्युते ॥

कफतिमिरेऽपरमपि रसक्रियाञ्जनमाह—हिते इत्यादि । तथेति रसक्रियाञ्जनप्रकारेणेत्यर्थः । पथ्ये इति पथोऽनपेते इत्यर्थः । कफकाचस्य शलाकाकर्मसाध्यत्वात्तत्राञ्जनादिकं न निर्दिष्टम् ॥—

यदञ्जनं वा बहुशो निषेचितं
समूत्रवर्गे त्रिफलोदके शृते ॥ ४४ ॥
निशाचरास्थिस्थितमेतदञ्जनं
क्षिपेच्च मासं सलिलेऽस्थिरे पुनः ॥
मेषस्य पुष्पैर्मधुकेन संयुतं
तदञ्जनं सर्वकृते प्रयोजयेत् ॥ ४५ ॥

सर्वजकाचचिकित्सामाह—यदञ्जनमित्यादि । अञ्जनं स्रोतोञ्जनम् । बहुशो बहून वारान् निषेचितमित्यत्र 'ध्मातं सत्' इत्यध्याहार्यम् । मूत्रवर्गे अष्टस्वपि मूत्रेषु । शृते क्वाथीकृते । निशाचरास्थिस्थितमित्यादि । निशाचराणां गृध्रादीनां नलके विगतमज्जनि मूत्रवर्गादिसेचितं तदञ्जनं निक्षिप्य पश्चान्नलकमुखं पिधाय वहति सरिज्जले निखातकीलकोपरि सूत्रेण बद्ध्वा मासं यावत् स्थापयेत्, ततस्तदुद्धृत्य शोषयित्वा मेषशृङ्गपुष्पयष्टीमधुकचूर्णसमांशं तदञ्जनं सर्वकृते रागितिमिरे प्रयोजयेत् । 'मेषस्य पुष्पैर्मधुकेन संयुतं' इत्यत्र केचिद् 'युतं तु पुष्पैर्मधुशिग्रुकोद्भवैः' इति पठन्ति । तत्र मधुर्मधूकः तस्य सारः, शिग्रुः शोभाञ्जनकस्तस्य पुष्पाणि ॥ ४४ ॥ ४५ ॥

क्रियाश्च सर्वाः, क्षतजोद्भवे हितः
क्रमः परिम्लायिनि चापि पित्तहृत्[1] ॥

सान्निपातिकरागितिमिरस्य चिकित्सामाह—क्रियाश्चेत्यादि । क्रिया अत्र तर्पणपुटपाकादिकाः, सर्वा वातपित्तकफतिमिरोक्ताः, अन्ये तु क्रियाश्च सर्वा वातपित्तकफतिमिरोक्ता रसक्रिया इत्याहुः । रक्ततिमिरे तथा परिम्लायिनि तिमिरे च कः क्रम इत्याह—क्षतजोद्भव इत्यादि । पित्तहृत् क्रमः पित्ततिमिरापहनस्यतर्पणादिक्रम इत्यर्थः । एष एव क्रमोऽरागिणि रक्ततिमिरे, रागिणि पुनः पित्तकाचापहो विधिः ॥—

क्रमो हितः स्यन्दहरः प्रयोजितः
समीक्ष्य दोषेषु यथास्वमेव च ॥ ४६ ॥

इदानीं वातादिजेषु तिमिरेषु रागारागप्राप्तेषु वातादिजनिताभिष्यन्दचिकित्सितमतिदिशन्नाह—क्रम इत्यादि । यथास्वमिति

१ 'मदिराग्रपेषिताः' इति पा० ।

१ 'रोगे च' इति पा० ।

यो यस्यात्मीय इत्यर्थः । तेन वाततिमिरे वाताभिष्यन्दक्रमः, पित्ततिमिरे पित्ताभिष्यन्दोक्तः, एवं शेषेषु ॥ ४६ ॥

दोषोदये नैव च विप्लुतिंगते
द्रव्याणि नस्यादिषु योजयेद्बुधः ॥

स एव वाताभिष्यन्दादिक्रमो वातादितिमिरेषु कदा कर्तव्य इति दर्शयन्नाह—दोषोदय इत्यादि । दोषोदय इति दोषोदयमात्रे तावद्वातस्यन्दाद्युक्तक्रमो न कर्तव्यः । तथा विप्लुतिंगते; कोऽर्थः ? समस्तनयनव्याप्तिपरे स्यन्दोक्तक्रमो न कर्तव्यः । एतेन लङ्घनविरेचननिरूहानुवासनशिरोविरेचनादिना त्र्यहमतिक्रम्य पश्चाद्वातस्यन्दाद्युक्तनस्यादिद्रव्याणि वातादिजनिततिमिरेषु ( नस्यतर्पणादिषु ) योजयेदित्यर्थः । अन्ये 'विप्लुतिंगते' इत्यत्र 'विप्लुते गदे' इति पठन्ति; तत्र विशब्दो विविधार्थः, तेन विविधतां गते गद इत्यर्थः ।—

पुनश्च कल्पेऽञ्जनविस्तरः शुभः
प्रवक्ष्यतेऽन्यस्तमपीह योजयेत् ॥ ४७ ॥

इदानीं क्रियाकल्पे वक्ष्यमाणमञ्जनविस्तरमत्रोपदिशन्नाह—पुनश्चेत्यादि । कल्पे क्रियाकल्पे इत्यर्थः । अन्यः अपरः । तमिति अञ्जनविस्तरमित्यर्थः ॥ ४७ ॥

घृतं पुराणं त्रिफलां शतावरीं
पटोलमुद्गामलकं यवानपि ॥
निषेवमाणस्य नरस्य यत्नतो
भयं सुघोरात्तिमिरान्न विद्यते ॥ ४८ ॥

इदानीं बहिराश्रयं चिकित्सितं प्रतिपाद्यान्तराश्रयं प्रतिपादयन्नाह—घृतमित्यादि ॥ ४८ ॥

शतावरीपायस एव केवल-
स्तथा कृतो वाऽऽमलकेषु पायसः ॥
प्रभूतसर्पिस्त्रिफलोदकोत्तरो
यवौदनो वा तिमिरं व्यपोहति ॥ ४९ ॥

आहारविशेषमाह—शतावरीत्यादि । शतावरीपायस इति शतावरीमूलशृतेन पयसा कृतः शतावरीपायसः, आमलकेषु पायस इति आमलकशृतपयसा कृतः पायस इत्यर्थः । अन्ये तु शतावरीस्वरससिद्धा यवागूः शतावरीपायसः, आमलकस्वरससिद्धा यवागूश्चामलकपायसः । प्रभूतसर्पिरित्यादि प्रचुरघृतो यवौदनो वाट्यसंज्ञकः[1] गृञ्जासंज्ञको वा, त्रिफलोदके प्रचुरे साधित इत्यर्थः ॥ ४९ ॥

जीवन्तिशाकं सुनिषण्णकं च
सतण्डुलीयं वरवास्तुकं च ॥
चिल्ली तथा मूलकपोतिका च
दृष्टेर्हितं शाकुनजाङ्गलं च ॥ ५० ॥
पटोलकर्कोटककारवेल्ल-
वार्ताकुतर्कारिकरीरजानि ॥
शाकानि शिग्र्वार्तगलानि चैव
हितानि दृष्टेर्घृतसाधितानि ॥ ५१ ॥

१ 'वाटीसंज्ञकः' इति पा० ।

आहारोपयोगिचक्षुष्यशाकानाह—जीवन्तिशाकमित्यादि । जीवन्ती डोडिका, सुनिषण्णकं चतुष्पत्री, अन्ये शिखालिकामाहुः, वरवास्तुकं, टङ्कवास्तुकं, चिल्ली क्षेत्रवास्तुकः, मूलकपोतिका बालमूलकं, शाकुनं लावादिकं, जाङ्गलम् एणादिजातं, तर्कारी अरणिका, करीरो गूढपत्रः, शिग्रुः शोभाञ्जनकः, आर्तगलो नीलसहचरः ॥ ५० ॥ ५१ ॥

विवर्जयेत्सिरामोक्षं तिमिरे रागमागते ॥
यन्त्रेणोत्पीडितो दोषो निहन्यादाशु दर्शनम् ॥५२॥

सेव्यमुद्दिश्य परिहार्यमाह—विवर्जयेदित्यादि ॥ ५२ ॥

अरागि तिमिरं साध्यमाद्यं पटलमाश्रितम् ॥
कृच्छ्रं द्वितीये रागि स्यात्तृतीये याप्यमुच्यते ॥५३॥

इदानीं मन्दधियां सुखस्मरणाय साध्यादिभेदमाह—अरागीत्यादि ॥ ५३ ॥

रागप्राप्तेष्वपि हितास्तिमिरेषु तथा क्रियाः ॥
यापनार्थं यथोद्दिष्टाः सेव्याश्चापि जलौकसः ॥५४॥

रागप्राप्तेषु विध्यन्तरं यापनार्थं पूर्वमुक्तमप्यनुवदन्नाह—रागप्राप्तेष्वित्यादि । तृतीयपटलप्राप्तरागितिमिरेषु यापनार्थं तथा क्रिया हिता यथोद्दिष्टा इत्यर्थः । तत्र सिरामोक्षस्य निषिद्धत्वादवश्याकर्षणीयशोणिते उपायान्तरमाह—सेव्या इत्यादि ॥ ५४ ॥

श्लैष्मिके लिङ्गनाशे तु कर्म वक्ष्यामि सिद्धये ॥
न चेदर्धेन्दुघर्माम्बुबिन्दुमुक्ताकृतिः स्थिरः ॥ ५५ ॥
विषमो वा तनुर्मध्ये राजिमान् वा बहुप्रभः ॥
दृष्टिस्थो लक्ष्यते दोषः सरुजो वा सलोहितः ॥५६॥

अनौषधसाध्ये श्लैष्मिके लिङ्गनाशेऽर्धेन्द्वाद्याकृतिविशिष्टो दृष्टिस्थो दोषो न चेल्लक्ष्यते तदा साधनार्थं शस्त्रकर्म वक्ष्यामीति निर्दिशन्नाह—श्लैष्मिक इत्यादि । लिङ्गनाशो दृष्टिनाशः । कर्म शस्त्रकर्म । घर्माम्बुबिन्दुः प्रस्वेदबिन्दुः । आकृतिशब्दोऽर्धेन्द्वादिभिः प्रत्येकं संबन्धनीयः । स्थिरः कठिनः । विषमो वा तनुर्मध्ये इति यतो मध्ये तनुरत एव विषमो निम्नोन्नत इत्यर्थः ॥ ५५ ॥ ५६ ॥

स्निग्धस्विन्नस्य तस्याथ काले नात्युष्णशीतले ॥
यन्त्रितस्योपविष्टस्य स्वां नासां पश्यतः समम् ॥५७॥
मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्त्वा ह्यपाङ्गतः ॥
उन्मील्य नयने सम्यक् सिराजालविवर्जिते ॥ ५८ ॥
नाधो नोर्ध्वं न पार्श्वाभ्यां छिद्रे दैवकृते ततः ॥
शलाकया प्रयत्नेन विश्वस्तं यववक्रया ॥ ५९ ॥
मध्यप्रदेशिन्यङ्गुष्ठस्थिरहस्तगृहीतया ॥
दक्षिणेन भिषक् सव्यं विध्येत् सव्येन चेतरत् ६०
वारिबिन्द्वागमः सम्यग् भवेच्छब्दस्तथा व्यधे ॥

तदेव शस्त्रकर्म निर्दिशन्नाह—स्निग्धस्विन्नस्येत्यादि । नात्युष्णशीते साधारणे मार्गशीर्षे चैत्रे वा । शुक्लभागौ द्वावपि द्वौ शुक्लतारकांशावित्यर्थः । कृष्णात् कृष्णतारकान्तात्, मुक्त्वा परित्यज्य, अपाङ्गतः अपाङ्गसमीपे, विध्येदित्यर्थः । सम्यगिति

नातिप्रसारितं नातिसङ्कुचितं यथा स्यादित्यर्थः । दैवकृते छिद्रे इति छिद्रमिव छिद्रं न परमार्थतश्छिद्रमस्ति । विश्रब्धं असंत्रस्तं यथा स्यात् । सव्यं वामनेत्रं, सव्येन वामहस्तेन, इतरत् दक्षिणनयनम् । सम्यग्विद्धलक्षणमाह—वारिबिन्द्वागम इत्यादि । सम्यगिति पदं व्यध इत्यत्र संबध्यते । असम्यग्व्यधे च रक्तनिर्गमनमशब्दता च ॥ ५७–६०॥—

**संसिच्य विद्धमात्रं तु योषित्स्तन्येन कोविदः॥६१॥**
**स्थिरे दोषे चले वाऽपि स्वेदयेदक्षि बाह्यतः ॥**
**सम्यक् शलाकां संस्थाप्य भङ्गैरनिलनाशनैः ॥६२॥**
**शलाकाग्रेण तु ततो निर्लिखेद्दृष्टिमण्डलम् ॥**
**विध्यतो योऽन्यपार्श्वेऽक्ष्णस्तं रुद्ध्वा नासिकापुटम् ॥**
**उच्छिङ्घनेन हर्तव्यो दृष्टिमण्डलगः कफः ॥**

सम्यग्विद्धे नेत्रे सति किं कार्यमित्याह—संसिच्येत्यादि । योषित्स्तन्येन नारीक्षीरेण । कोविदो धीमान् वैद्यः । स्थिरे अचले । शलाकां संस्थाप्य निश्चलीकृत्य । भङ्गैः पल्लवैः । स्वेदानन्तरं किं कर्तव्यमित्याह—शलाकाग्रेणेत्यादि । ततः स्वेदानन्तरं; दृष्टिमण्डलं निर्लिखेत् श्लेष्मसंहतिविश्लेषार्थम् । शलाकाग्रविनिर्लेखनाद्विश्लिष्टकफस्य निर्हरणोपायमाह—विध्यत इत्यादि । विध्यतोऽक्ष्णोऽन्यपार्श्वे यो नासापुटस्तं नासापुटं रुद्ध्वा दृष्टिमण्डलगः कफ उच्छिङ्घनेन हर्तव्य इति पिण्डार्थः ॥ ६१–६३ ॥—

**निरभ्र इव घर्मांशुर्यदा दृष्टिः प्रकाशते ॥ ६४ ॥**
**तदाऽसौ लिखिता सम्यग् ज्ञेया या चापि निर्व्यथा**
**(एवं त्वशक्ये निर्हर्तुं दोषे प्रत्यागतेऽपि वा ॥६५॥**
**स्नेहाद्यैरुपपन्नस्य व्यधो भूयो विधीयते ॥ )**
**ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥ ६६ ॥**
**घृतेनाभ्यज्य नयनं वस्त्रपट्टेन वेष्टयेत् ॥**
**ततो गृहे निराबाधे शयीतोत्तान एव च ॥ ६७ ॥**
**उद्गारकासक्षवथुष्ठीवनोत्कम्पनानि च ॥**
**तत्कालं नाचरेदूर्ध्वं यन्त्रणा स्नेहपीतवत् ॥ ६८ ॥**

सम्यग्लिखितलक्षणमाह—निरभ्र इत्यादि । निरभ्रो निर्मेघः, घर्मांशुः आदित्यः । ततो दृष्टेष्वित्यादि । शलाकामाहृत्य किं कुर्यादित्याह—घृतेनाभ्यज्येत्यादि । निराबाधे धूलिधूमवातातपादिरहिते । उत्तानशयनमृजूकरणार्थं । उद्गारेत्यादि । क्षवथुः छिक्का । तत्कालमिति यावच्छलाका नेत्रे तिष्ठति । तत ऊर्ध्वं यन्त्रणा आहारादीनां नियमः, स्नेहपीतवत् स्नेहपानोक्तः कार्यः ॥ ६४–६८ ॥

**त्र्यहात् त्र्यहाच्च धावेत कषायैरनिलापहैः ॥**
**वायोर्भयात् त्र्यहादूर्ध्वं स्वेदयेदक्षि पूर्ववत् ॥ ६९ ॥**

त्र्यहादित्यादि । धावेत प्रक्षालयेत् । अनिलापहैः एरण्डमूलादिवातापहचक्षुष्यद्रव्यैः क्षीराम्बुसाधितैः । प्रक्षालनानन्तरं किं कर्तव्यमित्याह—वायोर्भयादित्यादि । पूर्ववदिति बाह्यतो मृदु स्वेदयेदित्यर्थः ॥ ६९ ॥

**दशाहमेवं संयम्य हितं दृष्टिप्रसादनम् ॥**
**पश्चात्कर्म च सेवेत लघ्वन्नं चापि मात्रया ॥ ७० ॥**

दशाहमेवमित्यादि । एवमुत्तानशयनादिना दशाहं नियम्य तदनन्तरं पश्चात्कर्म नस्यतर्पणशिरोबस्त्यादिकं यद्दृष्टिप्रसादनं दृष्टेर्नैर्मल्यजननं तत् सेवेतेति पिण्डार्थः ॥ ७० ॥

**सिराव्यधविधौ पूर्वं नरा ये च विवर्जिताः ॥**
**न तेषां नीलिकां विध्येदन्यत्राभिहिताद्भिषक् ॥७१॥**

इदानीं श्लैष्मिकेऽपि लिङ्गनाशे केषांचित् पुरुषाणां शस्त्रनिषेधं दर्शयन्नाह—सिराव्यधविधौ पूर्वमित्यादि । नरा ये च विवर्जिता इति सिराव्यधविधौ ये नरा बालस्थविरादयो विवर्जितास्तेषां नीलिकां लिङ्गनाशापरपर्यायां न विध्येत् । अन्यत्राभिहितादिति तथाऽभिहितात् कथिताद्दैवकृतच्छिद्रादन्यत्र न विध्येत् । चकारस्तु सिराविद्धैः पुरुषैर्ये क्रोधादयो विवर्जनीयास्तेऽपि नीलिकायां वर्जनीया इति ज्ञापयति ॥ ७१ ॥

**पूर्यते शोणितेनाक्षि सिरावेधाद्विसर्पता ॥**
**तत्र स्त्रीस्तन्ययष्ट्याह्वपक्वं सेके हितं घृतम् ॥ ७२ ॥**

दैवकृतच्छिद्रादन्यत्र कस्माच्च नीलिकां विध्येदित्याह—पूर्यत इत्यादि । विसर्पता शोणितेनाक्षि पूर्यत इत्यर्थः । प्रमादाद्दैवकृतच्छिद्रादन्यत्रापि विद्धे सति व्यापदुपशमनार्थं चिकित्सितमाह—तत्रेत्यादि ॥ ७२ ॥

**अपाङ्गासन्नविद्धे तु शोफशूलाश्रुरक्तताः ॥**
**तत्रोपनाहं भ्रूमध्ये कुर्याच्चोष्णाज्यसेचनम् ॥ ७३ ॥**
**व्यधेनासन्नकृष्णेन रागः कृष्णं च पीड्यते ॥**
**तत्राधःशोधनं सेकः सर्पिषा रक्तमोक्षणम् ॥ ७४ ॥**
**अथाप्युपरि विद्धे तु कष्टा रुक् संप्रवर्तते ॥**
**तत्र कोष्णेन हविषा परिषेकः प्रशस्यते ॥ ७५ ॥**
**शूलाश्रुरागास्त्वत्यर्थमधोवेधेन पिच्छिलः ॥**
**शलाकामनु चास्रावस्तत्र पूर्वचिकित्सितम् ॥ ७६ ॥**
**रागाश्रुवेदनास्तम्भहर्षाश्चातिविघट्टिते ॥**
**स्नेहस्वेदौ हितौ तत्र हितं चाप्यनुवासनम् ॥ ७७ ॥**
**दोषस्त्वधोऽपकृष्टोऽपि तरुणः पुनरूर्ध्वगः ॥**
**कुर्याच्छुक्लारुणं नेत्रं तीव्ररुङ्नष्टदर्शनम् ॥ ७८ ॥**
**मधुरैस्तत्र सिद्धेन घृतेनाक्ष्णः प्रसेचनम् ॥**
**शिरोबस्तिं च तेनैव दद्यान्मांसैश्च भोजनम् ॥ ७९ ॥**

इदानीमस्थानवेधात् संक्षेपेण व्यापदमभिधाय विस्तरेणापि व्यापदो निर्दिशन्नाह—अपाङ्गेत्यादि । तत्र चिकित्सामाह—तत्रोपनाहमित्यादि । चिकित्सामाह—तत्राध इत्यादि । अधः-

---

१ 'ष्ठीवनोज्जृम्भणानि' इति पा० ।

१ 'अधोविद्धे भवन्ति हि' इति पा० । २ 'विदधीत भिषक् तत्र' इति पा० ।

शोधनं विरेकः, रक्तमोक्षणमत्र जलौकोभिः । अथेत्यादि । कष्टा तीव्रा । चिकित्सामाह—तत्र कोष्णेनेत्यादि । शूलेत्यादि । अनु शलाकां शलाकाया अनन्तरमेवेत्यर्थः । चिकित्सामाह—तत्रेत्यादि । पूर्वचिकित्सितं क्षीरस्तन्ययष्ट्याह्वेत्यादिकम् । हर्षो रोमाञ्चप्रायो वेदनाविशेषः, अतिविघट्टिते अतिचालिते । चिकित्सामाह—स्नेहस्वेदावित्यादि । तरुणो लिङ्गनाशमप्राप्तः । चिकित्सामाह—मधुरैरित्यादि । मधुरैः यष्टीमधुकादिभिः तेनैव यष्टीमधुकादिसिद्धेनैव ॥ ७३–७९ ॥

**दोषस्तु संजातबलो घनः संपूर्णमण्डलः ॥**
**प्राप्य नश्येच्छलाकाग्रं तन्वभ्रमिव मारुतम् ॥ ८० ॥**

दोषस्तु संजातेत्यादि ॥ ८० ॥

**मूर्धाभिघातव्यायामव्यवायवमिमूर्च्छनैः ॥**
**दोषः प्रत्येति कोपाच्च विद्धोऽतितरुणश्च यः ॥ ८१ ॥**

निर्लिखितस्यापि दोषस्य पुनरावृत्तिकारणान्याह—मूर्धाभिघातेत्यादि । प्रत्येति आगच्छति । तरुणो लिङ्गनाशमप्राप्तः ॥ ८१ ॥

**शलाका कर्कशा शूलं, खरा दोषपरिस्रुतिम् ॥**
**व्रणं विशालं स्थूलाग्रा, तीक्ष्णा हिंस्यादनेकधा ॥ ८२ ॥**
**जलास्रावं तु विषमा, क्रियासङ्गमथास्थिरा ।**
**करोति**

दुष्टशलाकाजनितव्यापदमाह—शलाकेत्यादि । दोषपरिस्रुतिः दोषस्य समन्तादागमनम् । हिंस्यादनेकधेति अनेकप्रकारं क्षतं करोतीत्यर्थः । विषमा कृशस्थूला । अस्थिरा वृद्धा मुग्धा । 'करोति' इति पदमन्ते निर्दिष्टत्वात् सर्वत्र संबध्यते ॥ ८२ ॥—

**वर्जिता दोषैस्तस्मादेभिर्हिता भवेत् ॥ ८३ ॥**
**अष्टाङ्गुलायता मध्ये सूत्रेण परिवेष्टिता ॥**
**अङ्गुष्ठपर्वसमिता वक्त्रयोर्मुकुलाकृतिः ॥ ८४ ॥**
**ताम्रायसी शातकुम्भी शलाका स्यादनिन्दिता ॥**

वर्जितेत्यादि । एभिर्दोषैरनन्तरोक्तैः कर्कशादिभिर्विरहिता । हिता कार्यकारिणी । शातकुम्भी सुवर्णमयी ॥ ८३ ॥ ८४ ॥—

**रागः शोफोऽर्बुदं चोषो बुद्बुदं शूकराक्षिता ॥ ८५ ॥**
**अधिमन्थादयश्चान्ये रोगाः स्युर्व्यधदोषजाः ॥**
**अहिताचारतो वाऽपि यथास्वं तानुपाचरेत् ॥ ८६ ॥**

इदानीं दुष्टव्यधाद्याहाराचारजान् रोगानाह—राग इत्यादि । चोष आचूष्यत इव वेदनाविशेषः । बुद्बुदं बुद्बुदाकारो मांसनिर्गमः । शूकराक्षिता अधोदृष्टित्वम् । तत्र चिकित्सितमाह—यथास्वमित्यादि । यथास्वं यथात्मीयं, यथादोषमित्यर्थः ॥ ८५ ॥ ८६ ॥

**रुजायामक्षिरागे वा योगान् भूयो निबोध मे ॥**
**गैरिकं सारिवा दूर्वा यवपिष्टं घृतं पयः ॥ ८७ ॥**

१ 'वृद्धः' इति पा० । २ 'मृद्वी' इति पा० ।

**सुखालेपः प्रयोज्योऽयं वेदनारागशान्तये ॥**
**मृदुभृष्टैस्तिलैर्वाऽपि सिद्धार्थकसमायुतैः ॥ ८८ ॥**
**मातुलुङ्गरसोपेतैः सुखालेपस्तदर्थकृत् ॥**
**पयस्यासारिवापत्रमञ्जिष्ठामधुकैरपि ॥ ८९ ॥**
**अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते ॥**
**दारुपद्मकशुण्ठीभिरेवमेव कृतोऽपि वा ॥ ९० ॥**
**द्राक्षामधुककुष्ठैर्वा तद्वत् सैन्धवसंयुतैः ॥**
**रोध्रसैन्धवमृद्वीकामधुकैर्वाऽप्यजापयः ॥ ९१ ॥**
**शृतं सेके प्रयोक्तव्यं रुजारागनिवारणम् ॥**
**मधुकोत्पलकुष्ठैर्वा द्राक्षालाक्षासितायुतैः ॥**
**ससैन्धवैः शृतं क्षीरं रुजारागनिबर्हणम् ॥ ९२ ॥**
**शतावरीपृथक्पर्णीमुस्तामलकपद्मकैः ॥**
**साजक्षीरैः शृतं सर्पिर्दाहशूलनिबर्हणम् ॥ ९३ ॥**
**वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे ॥**
**काकोल्यादिप्रतीवापं तद्युञ्ज्यात् सर्वकर्मसु ॥ ९४ ॥**

इदानीं कर्कशशलाकाजनिते शूले तथा दुष्टव्यधजे च रोगे चिकित्सामुद्दिशन्नाह—रुजायामित्यादि । निबोध जानीहि । सारिवा उत्पलसारिवा । मृदुभृष्टैरित्यादि । सिद्धार्थकः सर्षपः । तदर्थकृत् वेदनारागनाशकृत् । पयस्येत्यादि । पयस्या अर्कपुष्पी, क्षीरकाकोलीत्यन्ये । पत्रं पत्रकम् । दारुपद्मकेत्यादि । एवमेवेति अजाक्षीरान्वितैः दारुपद्मकादिभिः लेपः कार्यः; तद्वद्द्राक्षादिभिरपि । रोध्रसैन्धवेत्यादि । वातघ्नानि भद्रदार्वादीनि । सर्वकर्मसु नस्यालेपनादिषु ॥ ८७–९४ ॥

**शाम्यत्येवं न चेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत् ॥**
**ततः सिरां दहेद्वाऽपि मतिमान् कीर्तितं यथा ९५**

एवमप्यशाम्यति शूले किं कुर्यादित्याह—शाम्यत्येवमित्यादि । सिराऽत्र औपनासिका आपाङ्ग्या लालाट्या वा । न केवलं सिरां मोक्षयेत् दहेद्वा । कीर्तितं यथेति 'भ्रूललाटशङ्खप्रदेशेषु दहेत्' इत्यादिवाक्येन ॥ ९५ ॥

**दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे ॥**
**मेषशृङ्गस्य पुष्पाणि शिरीषधवयोरपि ॥ ९६ ॥**
**सुमनायाश्च पुष्पाणि मुक्ता वैदूर्यमेव च ॥**
**अजाक्षीरेण संपिष्य ताम्रे सप्ताहमावपेत् ॥ ९७ ॥**
**प्रविधाय च तद्वर्तीर्योजयेच्चाञ्जने भिषक् ॥**
**स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिलाम् ॥ ९८ ॥**
**मरिचानि च तद्वर्तीः कारयेच्चापि पूर्ववत् ॥**
**दृष्टिस्थैर्यार्थमेतत्तु विदध्यादञ्जने हितम् ॥ ९९ ॥**

सिराव्यधेनाप्यवशिष्टदोषकलुषिताया दृष्टेः प्रसादनार्थमञ्जने आह—दृष्टेरत इत्यादि । सुमना जाती । आवपेत् प्रतिक्षिपेत् ।

१–२ 'मुखालेपः' इति पा० । ३ 'मधुकपद्मकैः' इति पा० । ४ 'तुल्यानि' इति पा० ।

स्रोतोजं सौवीराञ्जनं विद्रुमं प्रवालम्। मेषशृङ्गस्येत्याद्येकं, स्रोतोजमित्यादि द्वितीयम् ॥ ९६–९९ ॥

**भूयो वक्ष्यामि मुख्यानि विस्तरेणाञ्जनानि च ॥**
**कल्पे नानाप्रकाराणि तान्यपीह प्रयोजयेत् ॥ १०० ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे दृष्टिगतरोगविज्ञानीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥**

भूय इत्यादि । कल्पे क्रियाकल्पे ॥ १०० ॥

इति श्रीडल्ह(ह्र)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

**अथातः क्रियाकल्पं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

प्रागुक्ताध्यायेषु चिकित्सितान्यभिहितानि, तेषु चिकित्सितेषु सर्वत्र तर्पणादेः क्रियाया अभिहितत्वात् संक्षेपार्थमेकत्र तर्पणादिकल्पनविस्तराय क्रियाकल्पः प्रतिपाद्यो भवतीत्याह—अथात इत्यादि । क्रियाणां तर्पणपुटपाकादीनां कल्पनं करणं क्रियाकल्पः ॥ १ ॥ २ ॥

**सर्वशास्त्रार्थतत्त्वज्ञस्तपोदृष्टिरुदारधीः ॥**
**वैश्वामित्रं शशासाथ शिष्यं काशिपतिर्मुनिः ॥ ३ ॥**

क्रियाकल्पविषयेऽपि प्राक्निर्दिष्टं यत् तर्पणादि तत्पूर्वकर्मप्रधानकर्महीनयोगातियोगोत्तरकर्मभिर्निर्दिदिक्षुराह—सर्वशास्त्रेत्यादि। सर्वशास्त्रार्थतत्त्वज्ञादिगुणयुक्तः काशिपतिर्मुनिर्वैश्वामित्रं शिष्यं शशासेति पिण्डार्थः । तपसा दृष्टिर्दर्शनं विशेषज्ञानोदयो यस्यासौ तपोदृष्टिः । उदारा महती धीर्यस्य स उदारधीः । विश्वामित्रस्यापत्यं वैश्वामित्रः सुश्रुतस्तम् । शशास शिक्षितवानित्यर्थः । अथशब्दो मङ्गलार्थः। काशिपतिर्मुनिरिति राजर्षिः धन्वन्तरिरित्यर्थः ॥ ३ ॥

**तर्पणं पुटपाकश्च सेक आश्च्योतनाञ्जने ॥**
**तत्र तत्रोपदिष्टानि तेषां व्यासं निबोध मे ॥ ४ ॥**

कास्ताः क्रिया यासां कल्पनमित्याह—तर्पणमित्यादि । यानि तर्पणपुटपाकादीनि तत्र तत्र वाताभिष्यन्दादावुपदिष्टानि संक्षेपतः कथितानि तेषां विस्तरं मत्सकाशान्निबोध जानीहीति पिण्डार्थः । शिरोबस्तिः सर्वेन्द्रियतर्पणात् तर्पणोक्तेरेवोक्तो मन्तव्यः, पुटपाकसेकाश्च्योतनान्यपि स्नेहयुक्तानि तर्पणरूपत्वात् तर्पण एवान्तर्भवन्ति, यत् पुनरुपादानं पुटपाकादीनां तद्रूक्षाणां पुटपाकादीनां ग्रहणाय कृतमित्यर्थः ॥ ४ ॥

**संशुद्धदेहशिरसो जीर्णान्नस्य शुभे दिने ॥**
**पूर्वाह्णे वाऽपराह्णे वा कार्यमक्ष्णोस्तु तर्पणम् ॥ ५ ॥**

**वातातपरजोहीने वेश्मन्युत्तानशायिनः ॥**
**आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ ॥ ६ ॥**
**समौ दृढावसंबाधौ कर्तव्यौ नेत्रकोशयोः ॥**
**पूरयेद्घृतमण्डस्य विलीनस्य सुखोदके ॥ ७ ॥**
**आपक्ष्माग्रात्ततः स्थाप्यं पञ्च तद्वाक्शतानि तु ॥**
**स्वस्थे, कफे षट्, पित्तेऽष्टौ, दश वाते तदुत्तमम् ॥ ८ ॥**
**रोगस्थानविशेषेण केचित् कालं प्रचक्षते ॥**
**यथाक्रमोपदिष्टेषु त्रीण्येकं पञ्च सप्त च ॥ ९ ॥**
**दश दृष्ट्यामथाष्टौ च वाक्शतानि विभावयेत् ॥**
**ततश्चापाङ्गतः स्नेहं स्रावयित्वाऽक्षि शोधयेत् ॥ १० ॥**
**स्विन्नेन यवपिष्टेन, स्नेहवीर्येरितं ततः ॥**
**यथास्वं धूमपानेन कफमस्य विशोधयेत् ॥ ११ ॥**

तर्पणं कथं कार्यमित्याह—संशुद्धेत्यादि । संशुद्धदेहशिरस इति सिरामोक्षणविरेचननिरूहशिरोविरेचनैः सम्यक्शुद्धकायमस्तकस्येत्यर्थः । वेश्मनि गृहे । आधारौ पाली इत्यर्थः । क्लिन्नेन पानीयालोडितेन । परिमण्डलौ वर्तुलौ, द्वावपि नेत्रकोशौ परिवार्य स्थिताविर्थ्यः । एतेन तिर्यक्पूरणे घृतस्य मात्रोक्ता । समौ अनिम्नोन्नतौ, दृढौ अच्छिद्रौ, असंबाधौ असङ्कटौ । नेत्रकोशयोरित्यत्र 'परितः' इति शेषः । घृतमण्डो घृतस्योपर्यच्छो भागः । सुखोदके उष्णोदके । आपक्ष्माग्रादित्यत्र पूरयेदिति संबन्धनीयम् । आपक्ष्माग्रात् वर्त्मलोमपर्यन्तमित्यर्थः । एतेनोर्ध्वं पूरणे घृतस्य मात्रोक्ता भवति । तर्पणं क्रियत्कालं स्थाप्यमिति दर्शयन्नाह—तत इत्यादि । तत्र प्रमाणमुत्तमं, दोषबलापेक्षया पुनर्ह्रासोऽपि कर्तव्यः । इदानीं स्वमतं प्रदर्श्य परमतमपि दर्शयन्नाह—रोगेत्यादि । रोगस्थानविशेषेणेति सन्धिवर्त्मशुक्लादिभेदेनेत्यर्थः । कथं रोगस्थानविशेषेण कालं प्रचक्षते इत्याह—यथाक्रमोपदिष्टेष्वित्यादि । यथाक्रमकथितेषु सन्ध्यादिरोगस्थानेष्वित्यर्थः । तत्र त्रीणि वाक्शतानि सन्धौ, वर्त्मन्येकं, शुक्ले पञ्च, कृष्णे सप्त, सर्वत्र दश, दृष्टावपि दश अष्टौ वा । तत इत्यादि । अपाङ्गतः अपाङ्गात्, भ्रूपुच्छान्तप्रदेशादित्यर्थः । स्नेहं स्रावयित्वा शलाकाकृतद्वारेण । स्नेहवीर्येरितमित्यादि । स्नेहवीर्येरितं स्नेहशक्त्या प्रेरितम् । ततः स्नेहापनयनानन्तरम् । यथास्वं धूमपानेनेति कफप्रत्यनीकेन शिरोविरेचनधूमपानेनेत्यर्थः ॥ ५–११ ॥

**एकाहं वा त्र्यहं वाऽपि पञ्चाहं चेष्यते परम् ॥**

कति दिनानि तर्पणप्रयोगस्तदाह—एकाहमित्यादि । एकाहं वाते, त्र्यहं पित्ते, पञ्चाहं कफे इति **गयी;** एकाहं **न्यून**दोषे, त्र्यहं मध्यदोषे, पञ्चाहमधिकदोषे इति **जेज्जटाचार्यः।** परमित्युत्कृष्टप्रमाणं यथा स्यात्; एतेनातः परं तर्पणं न योज्यम् । तच्च तर्पणं विदेहानुमतेन निरन्तरं दिनान्तरं द्व्यन्तरं त्र्यन्तरं वा योज्यम् । तथा च **विदेहः,**—"स्वस्थवृत्ते विधातव्यं द्व्यन्तरं तर्पणं भवेत् । अहन्यहनि वातोत्थे, रक्तपित्ते दिनान्तरम् ॥ तर्पणं सन्निपातोत्थे द्व्यन्तरं, त्र्यन्तरं कफे"—इति ॥—

१ 'तपोनिधिः' इति पा० । २ 'सेकयुक्तानि' इति पा० ।

**तर्पणे तृप्तिलिङ्गानि नेत्रस्येमानि लक्षयेत् ॥ १२ ॥**
**सुखस्वप्नावबोधत्वं वैशद्यं वर्णपाटवम् ॥**
**निर्वृतिर्व्याधिविध्वंसः क्रियालाघवमेव च ॥ १३ ॥**

तर्पणे इत्यादि । वैशद्यं मलाभावः । वर्णपाटवं श्वेतत्वादेर्वर्णस्य यथार्थग्रहणं; अन्ये तु नेत्रगतस्यैव शुक्लकृष्णादेर्वर्णस्य वैमल्यमाहुः । निर्वृतिः तात्कालिकं सुखमुत्पन्नम् । क्रियालाघवमिति क्रियाणां निमेषोन्मेषादीनां शीघ्रता; अन्ये तु क्रिया निमेषोन्मेषणादिकाः, लाघवं नेत्रयोरेव लघुतेत्याहुः ॥ १२ ॥ १३ ॥

**गुर्वाविलमतिस्निग्धमश्रुकण्डूपदेहवत् ॥**
**ज्ञेयं दोषसमुत्क्लिष्टं नेत्रमत्यर्थतर्पितम् ॥ १४ ॥**

अतितर्पितस्य नेत्रस्य लक्षणमाह—गुर्वाविलमित्यादि । आविलम् आकुलं, दोषसमुत्क्लिष्टं दोषव्याप्तम् ॥ १४ ॥

**रूक्षमाविलमस्राढ्यमसहं रूपदर्शने ॥**
**व्याधिवृद्धिश्च तज्ज्ञेयं हीनतर्पितमक्षि च ॥ १५ ॥**

हीनतर्पितस्य नयनस्य लक्षणमाह—रूक्षमित्यादि । अस्राढ्यम् अश्रुबहुलम् ॥ १५ ॥

**अनयोर्दोषबाहुल्यात् प्रयतेत चिकित्सिते ॥**
**धूमनस्याञ्जनैः सेकै रूक्षैः स्निग्धैश्च योगवित् ॥ १६ ॥**

इदानीमतितृप्तातृप्तयोश्चिकित्सामुद्दिशन्नाह—अनयोरित्यादि । एतैर्धूमनस्याञ्जनसेकै रूक्षैः पित्तश्लेष्मभूयिष्ठे, वातभूयिष्ठे तु स्निग्धैरिति । योगवित् शास्त्रविद्वैद्यः ॥ १६ ॥

**ताम्यत्यतिविशुष्कं यद्रूक्षं यच्चातिदारुणम् ॥**
**शीर्णपक्ष्माविलं जिह्मं रोगक्लिष्टं च यद्भृशम् ॥ १७ ॥**
**तदक्षि तर्पणादेव लभेतोर्जामसंशयम् ॥**

तर्पणविषयं निर्दिशन्नाह—ताम्यतीत्यादि । ताम्यति अन्धकारमिव पश्यति । अतिविशुष्कम् अश्रुरहितम् । रूक्षम् अस्निग्धच्छवि । दारुणं कठिनवर्त्म । जिह्मं रूपक्रियासु जडम् । ऊर्जा बलम् ॥ १७ ॥—

**दुर्दिनात्युष्णशीतेषु चिन्तायासभ्रमेषु च ॥ १८ ॥**
**अशान्तोपद्रवे चाक्ष्णि तर्पणं न प्रशस्यते ॥**

तर्पणाविषयमाह—दुर्दिनेत्यादि । अशान्तोपद्रवे चेति अशान्ता अस्वल्पीभूता[१] उदीर्णवेदनादय उपद्रवा यत्र तस्मिन् ॥ १८ ॥—

**पुटपाकस्तथैतेषु, नस्यं येषु च गर्हितम् ॥ १९ ॥**
**तर्पणार्हा न ये प्रोक्ताः स्नेहपानाक्षमाश्च ये ॥**

इदानीं पुटपाकस्य विषयाविषयमाह—पुटपाक इत्यादि । पुटपाकस्तथैतेष्विति एतेषु पूर्वोक्तेषु तर्पणार्हेषु पुटपाकस्तथाऽर्हतीत्यर्थः । अयं पुटपाकस्य विषयः, अविषयस्तु नस्यं येषु च गर्हितमित्यादिकः । नस्यं येषु च गर्हितमिति येषु नस्यं गर्हितं तेषु पुटपाकोऽपि गर्हितः । तर्पणार्हा न ये प्रोक्ता इति ये चिन्ताभ्रमगृहीतादयस्तर्पणं नार्हन्ति ते पुटपाकमपि नार्हन्ति । स्नेहपानाक्षमाश्च ये दुर्बलारोचकिप्रभृतयः स्नेहपानं न क्षमन्ते ते पुटपाकमपि न क्षमन्ते इत्यर्थः ॥ १९ ॥—

**ततः प्रशान्तदोषेषु पुटपाकक्षमेषु च ॥ २० ॥**
**पुटपाकः प्रयोक्तव्यो नेत्रेषु भिषजा भवेत् ॥**
**स्नेहनो लेखनीयश्च रोपणीयश्च स त्रिधा ॥ २१ ॥**

इदानीं पुटपाकस्यावश्यिकं कालमुद्दिशन्नाह—तत इत्यादि । एवंभूतेषु नेत्रेषु भिषजा पुटपाकः प्रयोक्तव्यो भवेदिति पिण्डार्थः । प्रशान्तदोषेष्विति प्रशब्दोऽयमादिकर्मणि, तेन प्रथमकर्मशान्तावस्थदोषेष्वित्यर्थः । पुटपाकक्षमेषु चेति तर्पणनस्यस्नेहपानार्हेष्वित्यर्थः; तर्पणाद्यनर्हाणि पुनः पुटपाकं न क्षमन्ते । स्नेहन इत्यादि ॥ २० ॥ २१ ॥

**हितः स्निग्धोऽतिरूक्षस्य स्निग्धस्यापि च लेखनः ॥**
**दृष्टेर्बलार्थमपरः पित्तासृग्व्रणवातनुत् ॥ २२ ॥**

तेषां त्रिविधानामपि विषयमाह—हित इत्यादि । अपर इति रोपणीयः पुटपाक इत्यर्थः । 'हितः स्निग्धोऽतिरूक्षस्य' इत्यत्र 'त्रिविधः स हितो रूक्षे' इति केचित् पठन्ति । 'पित्तासृग्व्रणवातनुत्' इत्यत्र 'पित्तासृग्व्रणनाशन' इति पठन्ति ॥ २२ ॥

**स्नेहमांसवसामज्जमेदःस्वाद्वौषधैः कृतः ॥**
**स्नेहनः पुटपाकस्तु धार्यो द्वे वाक्शते तु सः ॥ २३ ॥**

स्नेहनपुटपाकमाह—स्नेहेत्यादि । स्नेहमांसमिति स्नेहप्रधानं मांसम्, आनूपमित्यर्थः, 'सर्पिर्मांस' इति केचित् पठन्ति । स्वाद्वौषधैः काकोल्यादिभिः, कृतः संस्कृतः ॥ २३ ॥

**जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसंभृतैः ॥**
**कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः ॥ २४ ॥**
**समुद्रफेनकासीसस्रोतोजदधिमस्तुभिः ॥**
**लेखनो वाक्शतं तस्य परं धारणमुच्यते ॥ २५ ॥**

लेखनपुटपाकमाह—जाङ्गलानामित्यादि । जाङ्गला एणादयः । यकृत् कालखण्डानि, मांसानि च कालखण्डासन्नान्येव । विद्रुमः प्रवालः, सिन्धुजं सैन्धवम् ॥ २४ ॥ २५ ॥

**स्तन्यजाङ्गलमध्वाज्यतिक्तद्रव्यविपाचितः ॥**
**लेखनात्रिगुणं धार्यः पुटपाकस्तु रोपणः ॥ २६ ॥**

रोपणपुटपाकमाह—स्तन्यजाङ्गलेत्यादि । स्तन्यं स्त्रीस्तन्यं, जाङ्गलेत्यत्र मांसमिति शेषः; 'मध्वाज्य' इत्यत्र 'मेध्याज्य' इति केचित् पठन्ति, मेध्याज्यं गव्यं घृतमिति व्याख्यानयन्ति २६

**वितरेत्तर्पणोक्तं तु धूमं हित्वा तु रोपणम् ॥**
**स्नेहस्वेदौ द्वयोः कार्यौ, कार्यो नैव च रोपणे ॥ २७ ॥**

इदानीं स्नेहनलेखनयोः पूर्वकर्माह—वितरेदित्यादि । रोपणं पुटपाकं परित्यज्य तर्पणोक्तं धूमं द्वयोर्वितरेत् कुर्यात्, तथा स्नेहस्वेदौ द्वयोरेव कार्याविति पिण्डार्थः ॥ २७ ॥

**एकाहं वा द्व्यहं वाऽपि त्र्यहं वाऽप्यवचारणम् ॥**

एकाहमित्यादि । एकाहं श्लैष्मिके नेत्ररोगे पुटपाकस्यावचा-

[१] 'आमताभूता' ।

रणं, द्व्यहं पैत्तिके, त्र्यहं वातिके; अन्ये तु एकाहं लेखनीयस्यावचारणं, द्व्यहं स्नेहनस्य, त्र्यहं रोपणीयस्येति ॥—

**यन्त्रणा तु क्रियाकालाद्विगुणं कालमिष्यते ॥ २८ ॥**

तर्पणपुटपाकयोरेकत्र परिहार्यकालमुद्दिशन्नाह—यन्त्रणा तु क्रियाकालाद्विगुणमित्यादि । क्रियाकालात् स्नेहपानादेरारभ्य यः कालस्तस्माद् द्विगुणः कालः; न पुनस्तर्पणकालात्, तस्याल्पत्वात् ॥ २८ ॥

**तेजांस्यनिलमाकाशमादर्शं भास्वराणि च ॥**
**नेक्षेत तर्पिते नेत्रे पुटपाककृते तथा ॥ २९ ॥**

परिहार्याण्याह—तेजांस्यनिलमित्यादि । तेजांसि दीपज्वालाप्रभृतीनि, अनिलं संमुखवायुं, भास्वराणि आदित्यादीनि ॥२९॥

**मिथ्योपचारादनयोर्यो व्याधिरुपजायते ॥**
**अञ्जनाश्च्योतनस्वेदैर्यथास्वं तमुपाचरेत् ॥ ३० ॥**

अधुना तयोर्व्यापच्चिकित्साबीजमुद्दिशन्नाह—मिथ्योपचारादित्यादि । अनयोः तर्पणपुटपाकयोः ॥ ३० ॥

**प्रसन्नवर्णं विशदं वातातपसहं लघु ॥**
**सुखस्वप्नावबोध्यक्षि पुटपाकगुणान्वितम् ॥ ३१ ॥**

पुटपाकस्य सम्यग्योगमाह—प्रसन्नवर्णमित्यादि ॥ ३१ ॥

**अतियोगाद्रुजः शोफः पिडकास्तिमिरोद्गमः ॥**

पुटपाकस्यातियोगमाह—अतियोगाद्रुज इत्यादि ॥—

**पाकोऽश्रु हर्षणं चापि हीने दोषोद्गमस्तथा ॥ ३२ ॥**

पुटपाकस्य हीनयोगमाह—पाक इत्यादि । हर्षो वेदनाविशेषोऽन्तःशीतकरः ॥ ३२ ॥

**अत ऊर्ध्वं प्रवक्ष्यामि पुटपाकप्रसाधनम् ॥**
**द्वौ बिल्वमात्रौ श्लक्ष्णस्य पिण्डौ मांसस्य पेषितौ ३३**
**द्रव्याणां बिल्वमात्रं तु द्रवाणां कुडवो मतः ॥**
**तदैकध्यं समालोड्य पत्रैः सुपरिवेष्टितम् ॥ ३४ ॥**
**(काश्मरीकुमुदैरण्डपद्मिनीकदलीभवैः ॥)**[1]
**मृदावलिप्तमङ्गारैः खादिरैरवकूलयेत् ॥ ३५ ॥**
**कतकाश्मन्तकैरण्डपाटलावृषबादरैः ॥**
**सक्षीरद्रुमकाष्ठैर्वा गोमयैर्वाऽपि युक्तितः ॥ ३६ ॥**
**स्विन्नमुद्धृत्य निष्पीड्य रसमादाय तं नृणाम् ॥**
**तर्पणोक्तेन विधिना यथावदवचारयेत् ॥ ३७ ॥**
**कनीनके निषेच्यः स्यान्नित्यमुत्तानशायिनः ॥**
**रक्ते पित्ते च तौ शीतौ कोष्णौ वातकफापहौ ॥ ३८ ॥**

अत ऊर्ध्वमित्यादि । श्लक्ष्णस्य मांसस्य द्वौ पिण्डौ बिल्वमात्रौ प्रत्येकं पलप्रमाणौ कार्यावित्यर्थः । द्रव्याणां बिल्वमात्रमिति स्नेहनलेखनरोपणेषु पुटपाकेषु यथाक्रमं मधुरौषधलेखनद्रव्यतिक्तद्रव्याणां पलप्रमाणमित्यर्थः । द्रवाणां कुडव इति अष्टौ पलानि; केचिच्चत्वारि पलानि, कस्मात्? कुडवादूर्ध्वं द्विगुणपरिभाषा । तत्र स्नेहनपुटपाकस्य पेषणालोडनार्थं मांसरसमधुरौषधकषायक्षीराणि, लेखनस्य मधुमस्तुत्रिफलोदकानि, रोपणस्य तिक्तकषाय इति । अवकूलयेत् विपचेत् । क्षीरद्रुमा वटादयः । युक्तित इति पदमवकूलयेदित्यत्र संबन्धनीयम् । युक्तिस्तु 'पुटपाकस्य पाकोऽयं बहिरारक्तवर्णता' इति । इदानीं तर्पणपुटपाकयोर्दोषोपयोगिधर्मान्तरं निर्दिशन्नाह—रक्ते इत्यादि ॥ ३३–३८ ॥

**अत्युष्णतीक्ष्णौ सततं दाहपाककरौ स्मृतौ ॥**
**अप्लुतौ शीतलौ चाश्रुस्तम्भरुग्घर्षकारकौ ॥ ३९ ॥**
**अतिमात्रौ कषायत्वसङ्कोचस्फुरणावहौ ॥**
**हीनप्रमाणौ दोषाणामुत्क्लेशजननौ भृशम् ॥ ४० ॥**

तर्पणपुटपाकयोर्विरुद्धगुणमात्रयोर्व्यापदो निर्दिशन्नाह—अत्युष्णेत्यादि । अप्लुतौ मन्दप्लुतौ ॥ ३९–४० ॥

**युक्तौ कृतौ दाहशोफरुग्घर्षस्रावनाशनौ ॥**
**कण्डूपदेहदूषीकारक्तराजिविनाशनौ ॥ ४१ ॥**
**तस्मात् परिहरन् दोषान् विदध्यात्तौ सुखावहौ ॥**

युक्तौ कृतावित्यादि । दूषीका नेत्रमलः, दोषान् अत्युष्णतीक्ष्णादिकान् ॥ ४१ ॥—

**व्यापदश्च यथादोषं नस्यधूमाञ्जनैर्जयेत् ॥ ४२ ॥**

इदानीं व्यापच्चिकित्सामाह—व्यापदश्च यथादोषमित्यादि । व्यापदो दाहपाकादिकाः, यथादोषं दोषानतिक्रमेण ॥ ४२ ॥

**आद्यन्तयोश्चाप्यनयोः स्वेद उष्णाम्बुचैलिकः ॥**
**तथा हितोऽवसाने च धूमः श्लेष्मसमुच्छ्रितौ ॥ ४३ ॥**

इदानीं तर्पणपुटपाकयोः पूर्वकर्म पश्चात्कर्म चाह—आद्यन्तयोश्चाप्यनयोरित्यादि । अनयोः तर्पणपुटपाकयोः । स्वेद उष्णाम्बुचैलिक इति उष्णाम्बुसिक्तेन कर्पटेन स्वेद इत्यर्थः । 'तथा हितोऽवसाने च धूमः श्लेष्मसमुत्थितौ' इति केचित् पठन्ति ॥ ४३ ॥

**यथादोषोपयुक्तं तु नातिप्रबलमोजसा ॥**
**रोगमाश्च्योतनं हन्ति सेकस्तु बलवत्तरम् ॥ ४४ ॥**

इदानीमाश्च्योतनसेकावाह—यथादोषोपयुक्तमित्यादि । यथादोषोपयुक्तमिति वातादिजे नेत्ररोगे वातादिहरद्रव्यसिद्धमाश्च्योतनमित्यर्थः । नातिप्रबलं नात्युत्कटं रोगम् । ओजसा शक्त्या । सेकस्तु बलवत्तरमिति यथादोषोपयुक्तः परिषेकः पुनर्बलवत्तरमिति प्रबलं रोगं हन्ति । तौ चाश्च्योतनसेकौ चतुर्थेऽहन्यागतरोगलक्षणे प्रयोक्तव्यौ । तथा च **विदेहः**—"प्रागेवाश्यामये कार्यं त्रिरात्रं लघुभोजनम् । उपवासस्त्र्यहं वा स्यात्पक्वं[1] वाऽप्यशनं त्र्यहम् ॥ ततश्चतुर्थे दिवसे व्याधिं संजातलक्षणम् । समीक्ष्याश्च्योतनैः सेकैर्यथास्वमुपपादयेत्"—इति ॥ ४४ ॥

**तौ त्रिधैवोपयुज्येते रोगेषु पुटपाकवत् ॥**

तावित्यादि । तौ आश्च्योतनसेकौ । त्रिधैवेति स्नेहनलेखन-

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

१ 'चतुर्थेऽहनि गतवेगेऽक्षिण' इति पा० ।

रोपणभेदेन पुटपाकत्रिप्रकाराविलर्थः । तयोश्च पेषणालोडनार्थं द्रवाणि पुटपाकोक्तान्येव । तयोरेव सम्यग्योगो हीनयोगो मिथ्यायोगश्च पुटपाकवत् । आश्च्योतनस्य धारणकालः पुटपाकवत् । परिषेकस्य पुनरिहैवाग्रे धारणकालं कथयिष्यामः । केचिदाश्च्योतनसेकयोः पुटपाकाद् द्विगुणं कालं मन्यन्ते । तन्न, 'सेकस्य द्विगुणः कालः पुटपाकात् परो मत' इत्यत्रोक्तेन सह विरोधापत्तेः ॥—

**लेखने सप्त चाष्टौ वा बिन्दवः स्नैहिके दश ॥ ४५ ॥**
**आश्च्योतने प्रयोक्तव्या द्वादशैव तु रोपणे ॥**

लेखनादीनामाश्च्योतनानां बिन्दुसंख्यामाह—लेखने सप्त चाष्टौ वेत्यादि । लेखने लेखनाश्च्योतने सप्ताष्टौ वा बिन्दवः ॥ ४५ ॥—

**सेकस्य द्विगुणः कालः पुटपाकात् परो मतः ॥ ४६ ॥**

इदानीं परिषेकस्य धारणकालमाह—सेकस्येत्यादि । तत्र लेखनपरिषेकस्य वाक्शतद्वयं धारणकालः, स्नेहनस्य वाक्शतचतुष्टयं, रोपणस्य षड्वाक्शतानि ॥ ४६ ॥

**अथवा कार्यनिर्वृत्तेरुपयोगो यथाक्रमम् ॥**

पक्षान्तरमाह—अथवेत्यादि । कार्यनिर्वृत्तिः व्याधेरुपशमः प्रकृतिवर्णोपपत्तिः क्रियापाटवं वेदनोपशमश्च कार्यं, तस्य निष्पत्तिः कार्यनिर्वृत्तिः । यथाक्रमं शनैः शनैरित्यर्थः । अयं कार्यनिर्वृत्तिलक्षणो धारणकाल आश्च्योतनसेकयोः । अन्ये तु सर्वेषां तर्पणादीनामयं धारणकाल इति वदन्ति । अपरे तु पुटपाकसेकयोरयं कालः; तत्र पुटपाकसेकयोर्द्रव्यभेदतो भेदः ॥—

**पूर्वापराह्णे मध्याह्ने रुजाकालेषु चोभयोः ॥ ४७ ॥**

इदानीमाश्च्योतनसेकयोर्यथादोषं प्रयोगकालमाह—पूर्वापराह्ण इत्यादि । कफजे व्याधौ पूर्वाह्णे लेखनावाश्च्योतनसेकौ प्रयोज्यौ, वातजेऽपराह्णे स्नेहनौ, रक्तपित्तजे मध्याह्ने रोपणौ । रुजाकालेषु चेत्यावस्थिकः कालः, तेन यदैव रुगुत्पद्यते तदैव सेकाश्च्योतनौ प्रयोज्यौ । उभयोः आश्च्योतनसेकयोः । केचित् परिषेकस्यैवायं प्रयोगकाल इति कथयन्ति ॥ ४७ ॥

**योगायोगात् स्नेहसेके तर्पणोक्तान् प्रचक्षते ॥**

इदानीं परिषेकस्य द्रव्यविशेषकृतस्य संक्षेपार्थं योगायोगलक्षणमाह—योगायोगानित्यादि । योगः सम्यग्योगः, अयोगः सम्यग्योगाभावः । तेनायोगशब्देन हीनमिथ्यातियोगाः प्राप्यन्ते, अतः पृथङ्नोक्ताः । अन्ये तु, अयोगे इत्यत्र नशब्देनैव हीनयोगमिथ्यायोगावाक्षिप्तौ, अतियोगस्य तु मात्राकालाभ्यामेव पर्युदासः कृत इति । स्नैहिके केवलघृतपरिषेके । तर्पणोक्तान् सुखस्वप्नावबोधित्वमित्यादीन् । इदं योगायोगलक्षणं केवलं स्नेहपरिषेकस्यैव बोद्धव्यं, क्षीरेक्षुरसादिकृतस्य स्नेहनीयाख्यपरिषेकस्य योगायोगलक्षणं पुटपाकवत् कथितम् ॥—

१ 'द्रव्याणि' इति पा० । २ 'त्रिगुणं' इति पा० ।

**रोगाञ्छिरसि संभूतान् हत्वाऽतिप्रबलान् गुणान् ४८**
**करोति शिरसो बस्तिरुक्ता ये मूर्धतैलिकाः ॥**
**शुद्धदेहस्य सायाह्ने यथाव्याध्यशितस्य तु ॥ ४९ ॥**
**ऋज्वासीनस्य बध्नीयाद्बस्तिकोशं ततो दृढम् ॥**
**यथाव्याधिश्टतस्नेहपूर्णं संयम्य धारयेत् ॥ ५० ॥**
**तर्पणोक्तं दशगुणं यथादोषं विधानवित् ॥**

शिरोबस्तिमाह—रोगानित्यादि । अतिप्रबलान् शिरसि संभूतान् रोगान् शिरोभितापादीन् हत्वा शिरोबस्तिर्ये मूर्धतैलिका गुणा उक्तास्तान् करोतीति संबन्धः । शिरोऽत्र ग्रीवापर्यन्तं ग्राह्यं, नतु षडङ्गुलोत्सेधम् । मूर्धतैलिका गुणा शिरोगतांस्तथा रोगानित्यादयः शिरसः प्रतिपूरणपर्यन्ता अनागताबाधप्रतिषेधोक्ताः । शुद्धदेहस्य वमनादिभिर्निर्मलशरीरस्य; अथवा शुद्धदेहस्य नस्यादिभिर्विशुद्धमस्तकस्य, देहावयवेऽपि देहोपचारात् ; अथवा शिरःशुद्धावपि देहस्य शुद्धिरिति । सायाह्ने दिनावसाने । यथाव्याध्यशितस्येति व्याधिप्रत्यनीकं भुक्तवत इत्यर्थः । ऋज्विति ऋजु यथा स्यादेवं बस्तिकोशं बध्नीयात्, 'केशान्त' इति शेषः । अथवा ऋज्विति आसीनस्य विशेषणम् । बस्तिकोशमित्युक्तेनैव पट्टचेलिकामाषचूर्णादिकमाक्षिप्तम् । यथाव्याधिश्टतस्नेहपूर्णं यथाव्याधिदोषदूष्यहितद्रव्यसिद्धस्नेहपूर्णम् । संयम्य धारयेत् यावत् केशभूमेरुपरि व्यङ्गुलं बद्धा धारयेत् । कियत्कालं शिरोबस्तिं धारयेदित्याह—तर्पणोक्तमित्यादि । तर्पणोक्तमक्षितर्पणकथितकालं दशगुणं शिरोबस्तिरवचार्यः । यथादोषमिति तत्र षण्मात्रासहस्राणि श्लेष्मणि, अष्टौ सहस्राणि पित्ते, दशसहस्राणि वाते इति; अपरं च वातरोगचिकित्सिते शिरोगतवातप्रस्तावे व्याख्यातम् । केचिदमुं पाठमन्यथा पठन्ति, स चाभावान्न लिखितः ॥ ४८–५० ॥—

**व्यक्तरूपेषु दोषेषु शुद्धकायस्य केवले ॥ ५१ ॥**
**नेत्र एव स्थिते दोषे प्राप्तमञ्जनमाचरेत् ॥**
**लेखनं रोपणं चापि प्रसादनमथापि वा ॥ ५२ ॥**

इदानीमञ्जनस्यावस्थिकं कालमुद्दिशन्नाह—व्यक्तरूपेष्वित्यादि । व्यक्तरूपेषु सामतापगमेन व्यक्तात्मरूपप्राप्तेषु । शुद्धकायस्य सिराव्यधविरेचननिरूहशिरोविरेचनैर्हृतमलदेहस्य । केवले अन्यदोषासंसृष्टे । नेत्रे एव स्थिते अक्षिगोलकत्वङ्मात्रस्थिते, न पुनः पक्ष्माद्याश्रिते । प्राप्तं युक्तम् । केचित् 'दोषेषु' इत्यत्र 'रोगेषु' इति पठन्ति, रोगशब्दो दोषेष्वपि वर्तते इति व्याख्यानयन्ति । इदानीमञ्जनभेदं निर्दिशन्नाह—लेखनमित्यादि ॥ ५१ ॥ ५२ ॥

**तत्र पञ्च रसान् व्यस्तानाद्यैकरसवर्जितान् ॥**
**पञ्चधा लेखनं युञ्ज्याद्यथादोषमतन्द्रितः ॥ ५३ ॥**

लेखनमाह—तत्रेत्यादि । पञ्चरसान् पञ्चरसद्रव्याणीत्यर्थः । आद्यैकरसवर्जितान् मधुररसवर्जितान् । पञ्चधेति वातपित्तश्लेष्मरक्तसन्निपातभेदेन । यथादोषं दोषानतिक्रमेण । तत्र वाते अम्ललवणौ, पित्ते तिक्तकषायौ, श्लेष्मणि कटुतिक्तकषायाः,

रक्ते पित्तवत्, सन्निपाते रसद्वयं त्रयं वा। सन्निपातेनैव संसर्गोऽवरुद्धः, अतोऽत्र पृथङ्नोक्तः। लेखनं दोषस्रावणान्नयनस्य रिक्तीकरणम् ॥ ५३ ॥

**नेत्रवर्त्मसिराकोशस्रोतःशृङ्गाटकाश्रितम्।**
**मुखनासाक्षिभिर्दोषमोजसा स्रावयेत्तु तत् ॥ ५४ ॥**

लेखनं यथा दोषस्य स्रावणं कुरुते तथा दर्शयन्नाह—नेत्रेत्यादि। नेत्रवर्त्मनोर्याः सिरा यश्च कोशो यानि च स्रोतांसि तत्र स्थितं दोषं, तथा शृङ्गाटकमर्माश्रितं च दोषं तल्लेखनाञ्जनं मुखादिभिरोजसा प्रभावेण स्रावयेदिति पिण्डार्थः ॥ ५४ ॥

**कषायं तिक्तकं वाऽपि सस्नेहं रोपणं मतम् ॥**
**तत्स्नेहशैत्याद्वर्ण्यं स्याद्दृष्टेश्च बलवर्धनम् ॥ ५५ ॥**

रोपणमाह—कषायेत्यादि। सस्नेहम् ईषद्घृतयुक्तम् ॥ ५५ ॥

**मधुरं स्नेहसंपन्नमञ्जनं तु प्रसादनम् ॥**
**दृष्टिदोषप्रसादार्थं स्नेहनार्थं च तद्धितम् ॥ ५६ ॥**

प्रसादनमाह—मधुरमित्यादि। दृष्टिदोषप्रसादार्थं दृष्टिस्थदोषप्रसादार्थमित्यर्थः ॥ ५६ ॥

**यथादोषं प्रयोज्यानि तानि रोगविशारदैः ॥**
**अञ्जनानि यथोक्तानि प्राह्णसायाह्नरात्रिषु ॥ ५७ ॥**

यथेत्यादि। तानि यथोक्तानि लेखनादीन्यञ्जनानि रोगविशारदैर्वैद्यैर्यथादोषं प्राह्णसायाह्नरात्रिषु प्रयोज्यानीति पिण्डार्थः। तत्र पूर्वाह्ने श्लेष्मरोगे लेखनाञ्जनं, सायाह्ने वातजे, रात्रौ पित्तजे। अन्ये तु आदौ शोधनाञ्जनं, ततो रोपणं; अपरे तु प्रसादनमिति वदन्ति। अपरमपि ऋतुभेदादर्थान्तरमस्ति, तच्च विस्तरभयान्न लिखितम् ॥ ५७ ॥

**गुटिकारसचूर्णानि त्रिविधान्यञ्जनानि तु ॥**
**यथापूर्वं बलं तेषां श्रेष्ठमाहुर्मनीषिणः ॥ ५८ ॥**

इदानीमप्येकैकमञ्जनं गुटिकादिभेदात्त्रिप्रकारमिति दर्शयन्नाह—गुटिकारसेत्यादि। रसोऽत्र घनरसो रसक्रियेत्यर्थः। यथापूर्वं बलं तेषामिति एतेनैतदुक्तं भवति—महाबलानां रोगाणां गुटिकाञ्जनं, मध्यानां रसक्रियाञ्जनं, हीनानां चूर्णाञ्जनम् ॥ ५८ ॥

**हरेणुमात्रा वर्तिः स्याल्लेखनस्य प्रमाणतः ॥**
**प्रसादनस्य चाध्यर्धा द्विगुणा रोपणस्य च ॥ ५९ ॥**

इदानीं प्रमाणावसरः—हरेणुमात्रा वर्तिरित्यादि। हरेणुः वर्तुलकलायः, अध्यर्धा सार्धकलायप्रमाणेत्यर्थः, द्विगुणा द्विकलायप्रमाणेत्यर्थः ॥ ५९ ॥

**रसाञ्जनस्य मात्रा तु यथावर्तिमिता मता ॥**

गुटिकाञ्जनप्रमाणमभिधाय रसक्रियाञ्जनप्रमाणमाह—रसाञ्जनस्येत्यादि। रसाञ्जनस्य रसक्रियाञ्जनस्य, 'रसाञ्जनद्रव्यस्य' इत्येके, तन्मते रसक्रियाञ्जनप्रमाणमन्यत्रान्वेषणीयम्। यथावर्तिमिता मता इति यथास्ववर्तिप्रमाणमात्रेत्यर्थः। तत्र लेखनरसक्रियाञ्जनस्य लेखनवर्तिवत् प्रमाणं, रोपणस्य रोपणवर्तिवत्, प्रसादनस्य प्रसादनवर्तिवत् ॥—

**द्वित्रिचतुःशलाकाश्च चूर्णस्याप्यनुपूर्वशः ॥ ६० ॥**

चूर्णाञ्जनप्रमाणमाह—द्वित्रिचतुरित्यादि। अनुपूर्वशो लेखनादीनामञ्जनानामानुपूर्व्येणेत्यर्थः। तत्र शलाकाद्वयं लेखनचूर्णस्य, तिस्रो रोपणस्य, चतस्रः प्रसादनस्य ॥ ६० ॥

**तेषां तुल्यगुणान्येव विदध्याद्भाजनान्यपि ॥**
**सौवर्णं राजतं शार्ङ्गं ताम्रं वैदूर्यकांस्यजम् ॥ ६१ ॥**
**आयसानि च योज्यानि शलाकाश्च यथाक्रमम् ॥**

इदानीमञ्जनानि किंगुणे किंमये पात्रे स्थापयितव्यानि, तथा किंगुणानि किंमयशलाकानीत्याह—तेषामित्यादि। तुल्यगुणानीति सौवर्णे मधुरं, राजते अम्लं, शार्ङ्गे मेषशृङ्गमये लवणं, ताम्रे लोहमये वा कषायं, वैदूर्ये कटुकं, कांस्ये तिक्तं, शीताञ्जनं तु नलादिमये, एवं समानगुणानि भाजनानि विदध्यात् कुर्यात्। शलाकाश्चैषां भाजनद्रव्यगुणेन यथाक्रममेव व्याख्याताः ॥ ६१ ॥—

**वक्त्रयोर्मुकुलाकारा कलायपरिमण्डला ॥ ६२ ॥**
**अष्टाङ्गुला तनुर्मध्ये सुकृता साधुनिग्रहा ॥**

तासां शलाकानामाकारमुद्दिशन्नाह—वक्त्रयोर्मुकुलाकारेत्यादि। मुकुलाकारा मल्लिकादिमुकुलस्येव निर्गच्छतो यद्वन्मुखं तदाकारा; कलायपरिमण्डलत्वेन तीक्ष्णाग्रत्वनिषेधः; सुकृता कर्कशादिदोषरहिता; साधुनिग्रहा सुखग्रहेत्यर्थः ॥ ६२ ॥—

**औदुम्बर्यश्मजा वाऽपि शारीरी वा हिता भवेत् ६३**

इदानीं ताम्रादिजानां शलाकानां हितत्वं प्रतिपादयन्नाह—औदुम्बरीत्यादि। औदुम्बरी ताम्रमयी, अश्मजा वैदूर्यादिपाषाणजा, शारीरी शृङ्गादिजा, अपिशब्दात् सुवर्णादिजाऽपि हितेत्यर्थः। तथा च तन्त्रान्तरे,—"आयसी रोपणे, ताम्रा लेख्ये, हैमी प्रसादने। शेषा अपि यथादोषं प्रयोज्या रसकोविदैः"—इति। केचित् शारीरीशब्देन अङ्गुलिमाचक्षते, तन्नेच्छति गयी ॥ ६३ ॥

**वामेनाक्षि विनिर्भुज्य हस्तेन सुसमाहितः ॥**
**शलाकया दक्षिणेन क्षिपेत् कानीनमञ्जनम् ॥ ६४ ॥**
**आपाङ्गं वा यथायोगं कुर्याच्चापि गतागतम् ॥**
**वर्त्मोपलेपि वा यत्तदङ्गुल्यैव प्रयोजयेत् ॥ ६५ ॥**

वामेनेत्यादि। निर्भुज्य वक्रीकृत्य। कनीन्यां नासासमीपे नेत्रावयवे अञ्जनं कानीनं, तच्चाञ्जनं कनीनकप्रदेशादपाङ्गं नयेत्, आपाङ्गं चेति अपाङ्गे नेत्रान्ते भवम् आपाङ्गं, तच्चापाङ्गप्रदेशात् कनीनकप्रदेशं नयेत्। परं यथायोगं यथाऽतियोगहीनयोगौ न भवत इत्यर्थः। एवं गतागतमपि कुर्यात्। एतच्छलाकया अन्तर्नयनमञ्जनप्रणिधानं बोद्धव्यम्। अन्तर्नयनप्रणिधानमभिधाय बहिरञ्जनप्रणिधानमाह—वर्त्मेत्यादि। वर्त्मोपलेपि वर्त्मोपलेपनयोग्यम् ॥ ६४ ॥ ६५ ॥

१ 'तत्स्नेहशैत्याद्वर्ण्यं' इति पा०। २ 'पिष्टा वर्तिमिता' इति पा०।

**अक्षि नात्यन्तयोरञ्ज्याद्बाधमानोऽपि वा भिषक् ॥**

अक्षीत्यादि । अन्तयोः कनीनकापाङ्गयोः । नात्यञ्ज्यात् ईषदञ्ज्यात्, क्षतभयात् । बाधमानोऽपि वेति बाधां कुर्वन् वैद्यो वा नाञ्ज्यादित्यर्थः । 'अक्षि नात्यन्तयोरञ्ज्यात्' इत्यत्र 'नात्यन्तमञ्जयेदक्षि' इति केचित् पठन्ति; तत्र च पाठे सर्वत्राप्यत्यन्ताञ्जननिषेधः कृतो भवति ॥—

**न चानिर्वान्तदोषेऽक्षिणि धावनं संप्रयोजयेत् ॥ ६६ ॥**
**दोषः प्रतिनिवृत्तः सन् हन्याद् दृष्टेर्बलं तथा ॥**

इदानीमकाले प्रक्षालननिषेधमाह—न चेत्यादि । न चानिर्वान्तदोषे इति निश्चयेन सम्यग्योगेन न वान्तोऽश्रुदूषिकादिरूपो दोषो येन तस्मिन्नित्यर्थः । धावनं न संप्रयोजयेत् प्रक्षालनं न प्रयोजयेत्, दोषप्रत्यावृत्तिहेतुत्वात् । अकालप्रक्षालनात् किं स्यादित्याह—दोष इत्यादि । प्रतिनिवृत्तः पुनरावृत्तः । तथेत्यकालप्रक्षालनप्रकारेणेत्यर्थः ॥ ६६ ॥—

**गतदोषमपेताश्रु पश्येद्यत् सम्यगम्भसा ॥ ६७ ॥**
**प्रक्षाल्याक्षि यथादोषं कार्यं प्रत्यञ्जनं ततः ॥**

कीदृशं पुनश्चक्षुः प्रक्षाल्यमित्याह—गतदोषमित्यादि । प्रत्यञ्जनं तीक्ष्णाञ्जनेन कटुभूतनयनस्य यदञ्जनं शीतं, तथा शीतेन जडीभूतनयनस्य यत्तीक्ष्णमञ्जनमित्यर्थः । केचिदमुं पाठं न पठन्ति, तमिच्छति **गयी** ॥ ६७ ॥—

**श्रमोदावर्तरुदितमद्यक्रोधभयज्वरैः ॥ ६८ ॥**
**वेगाघातशिरोदोषैश्चार्तानां नेष्यतेऽञ्जनम् ॥**
**रागरुक्तिमिरास्रावशूलसंरम्भसंभवात् ॥ ६९ ॥**

इदानीमञ्जनस्य पूर्वाह्णादिकान् कालान् सामान्येन स्वस्थातुरयोः प्रतिपाद्य, आवस्थिकेषु कालेष्वञ्जननिषेधमाह—श्रमोदावर्तेत्यादि । श्रमादिभिरार्तानां पुरुषाणामञ्जनं नेष्यत इति संबन्धः । केचिदत्र 'शान्ते भीते प्ररुदिते मद्यपीते नवज्वरे । उष्णे वेगाभिघाते च नाञ्जनं संप्रशस्यते' इति पठन्ति, तत्रापि स एवार्थः । कस्माच्छ्रमादिभिरार्तानामञ्जनं नेष्यत इत्याह—रागरुगित्यादि । संरम्भः श्वयथुः ॥ ६८ ॥ ६९ ॥

**निद्राक्षये क्रियाशक्तिं, प्रवाते दृग्बलक्षयम् ॥**
**रजोधूमहते रागस्रावाधीमन्थसंभवम् ॥ ७० ॥**
**संरम्भशूलौ नस्यान्ते, शिरोरुजि शिरोरुजम् ॥**
**शिरःस्नातेऽतिशीते च रवावनुदितेऽपि च ॥ ७१ ॥**
**दोषस्थैर्यादपार्थं स्याद्दोषोत्क्लेशं करोति च ॥**
**अजीर्णेऽप्येवमेव स्यात् स्रोतोमार्गावरोधनात् ॥ ७२ ॥**
**दोषवेगोदये दत्तं कुर्यात्तांस्तानुपद्रवान् ॥**
**तस्मात् परिहरन् दोषानञ्जनं साधु योजयेत् ॥ ७३ ॥**

इदानीं सामान्येनाञ्जनवैगुण्येन व्यापदः प्रदर्श्य प्रतिवैगुण्यं व्यापद आह—निद्राक्षये इत्यादि । क्रियाशक्तिं निमेषोन्मेषणादीनामशक्तिम् 'अञ्जनं करोति' इत्यध्याहार्यम् । केचित् क्रियासङ्गमिति पठन्ति । प्रवाते इत्यादि । दृग्बलं दृष्टेर्बलमित्यर्थः । संरम्भः श्वयथुः । अपार्थम् अकिञ्चित्करम् । एतदुक्तं भवति—एतैः स्नानादिभिः स्थिरीकृतस्य दोषस्य निर्हरणं कर्तुमञ्जनं न शक्नोतीत्यर्थः । एवमेवेत्यपार्थकमञ्जनं स्यात् दोषोत्क्लेशं च करोतीत्यर्थः । उपद्रवान् रागशोफादिकान् । साधु योजयेदिति देशकालावस्थापेक्षमित्यर्थः ॥ ७०–७३ ॥

**लेखनस्य विशेषेण काल एष प्रकीर्तितः ॥**

लेखनस्येत्यादि । लेखनस्य लेखनाञ्जनस्यैष पूर्वोक्तः प्रतिषेधकालः ॥—

**व्यापदश्च जयेदेताः सेकाश्च्योतनलेपनैः ॥ ७४ ॥**
**यथास्वं धूमकवलैर्नस्यैश्चापि समुत्थिताः ॥**

अकालाञ्जनकृतानां व्यापदां चिकित्सितमाह—व्यापद इत्यादि । एता रागरुजाद्याः समुत्थिता व्यापदो यथास्वं सेकादिभिर्जयेदिति संबन्धः ॥ ७४ ॥—

**विशदं लघ्वनास्रावि क्रियापटु सुनिर्मलम् ॥ ७५ ॥**
**संशान्तोपद्रवं नेत्रं विरिक्तं सम्यगादिशेत् ॥**

इदानीं लेखनाञ्जनस्य सम्यग्योगलक्षणमाह—विशदमित्यादि ॥ ७५ ॥—

**जिह्मं दारुणदुर्वर्णं स्रस्तं रूक्षमतीव च ॥ ७६ ॥**
**नेत्रं विरेकातियोगे स्यन्दते चातिमात्रशः ॥**

लेखनाञ्जनस्यातियोगलक्षणमाह—जिह्ममित्यादि । जिह्मं वक्रं, दारुणं कठिनं, स्यन्दते स्रवति ॥ ७६ ॥—

**तत्र संतर्पणं कार्यं विधानं चानिलापहम् ॥ ७७ ॥**

लेखनाञ्जनातियोगप्रतीकारमाह—तत्रेत्यादि । तत्रेति लेखनाञ्जनातियोगे इत्यर्थः ॥ ७७ ॥

**अक्षि मन्दविरिक्तं स्यादुदग्रतरदोषवत् ॥**

लेखनाञ्जनस्य हीनयोगमाह—अक्षि मन्दविरिक्तमित्यादि । उदग्रतरदोषवत् उत्कटतरदोषयुक्तम् ॥—

**धूमनस्याञ्जनैस्तत्र हितं दोषावसेचनम् ॥ ७८ ॥**

हीनयोगप्रतीकारमाह—धूमनस्याञ्जनैरित्यादि । केचिदत्र 'नस्यधूमाञ्जनालेपैर्जयेच्छ्लेष्माणमीरितम्' इति पाठं पठन्ति, तत्रापि स एवार्थः ॥ ७८ ॥

**स्नेहवर्णबलोपेतं प्रसन्नं दोषवर्जितम् ॥**
**ज्ञेयं प्रसादने सम्यगुपयुक्तेऽक्षि निर्वृतम् ॥ ७९ ॥**

प्रसादनाञ्जनस्य सम्यग्योगमाह—स्नेहेत्यादि । निर्वृतं सर्वक्रियाक्षमम्, उपशान्तोपद्रवमिति यावत् ॥ ७९ ॥

**किञ्चिद्धीनविकारं स्यात्तर्पणाद्धि कृतादति ॥**

प्रसादनाञ्जनातियोगमाह—किञ्चिदित्यादि । तर्पणादतिकृतात् सकृदतिकृते प्रसादनाञ्जने किञ्चिद्धीनविकारं चक्षुः स्यादिति तात्पर्यार्थः ॥—

**तत्र दोषहरं रूक्षं भेषजं शस्यते मृदु ॥ ८० ॥**

प्रसादनाञ्जनातियोगचिकित्सामाह—तत्रेत्यादि । दोषहरं

कफहरमित्यर्थः । मृदु मृदुवीर्यं शीतवीर्यमित्यर्थः; उष्णेन हि नयनं दुष्यति न तु प्रसाद्यते ॥ ८० ॥

**साधारणमपि ज्ञेयमेवं रोपणलक्षणम् ॥**
**प्रसादनवदाचष्टे तस्मिन् युक्तेऽतिभेषजम् ॥ ८१ ॥**

इदानीं रोपणाञ्जनस्य सम्यग्योगमतियोगं चातिदेशेनाह—साधारणमित्यादि । एवं रोपणलक्षणमिति प्रसादनाञ्जनस्य सम्यग्योगातियोगप्रकारेण रोपणाञ्जनस्य सम्यग्योगातियोगलक्षणं ज्ञेयम् । परं साधारणं नातिस्निग्धरूक्षमिति यावत् । अन्ये तु रोपणलक्षणमेवं प्रसादनाञ्जनव्यञ्जनेन साधारणं समानं ज्ञेयमिति व्याख्यानयन्ति । रोपणाञ्जनातियोगे चिकित्सामाह—प्रसादनवदित्यादि । तस्मिन् रोपणाञ्जनेऽतिप्रयुक्ते प्रसादनवत् प्रसादनाञ्जनातियोगवद्भेषजमाचष्टे ब्रूयादिति पिण्डार्थः ॥ ८१ ॥

**स्नेहनं रोपणं वाऽपि हीनयुक्तमपार्थकम् ॥**

इदानीं प्रसादनरोपणयोर्हीनयोगमाह—स्नेहनमित्यादि । स्नेहनं प्रसादनाञ्जनम् । अपार्थकम् अकिंचित्करम् ॥—

**कर्तव्यं मात्रया तस्मादञ्जनं सिद्धिमिच्छता ॥ ८२ ॥**

कर्तव्यमित्यादि । मात्रयेति यथा हीनातियोगौ न भवतः । सिद्धिं विकारनिवृत्तिम् । अस्याग्रे विद्यमानपुस्तकेषु 'धूमैर्नस्याञ्जनैर्वाऽपि दोषशेषं शमं नयेत्' इति पाठो विद्यते, स जेज्जटादिभिर्न पठितः, तस्मान्न पठितव्यः ॥ ८२ ॥

**पुटपाकक्रियाद्यासु क्रियास्वेषै(कै)व कल्पना ॥**
**सहस्रशश्चाञ्जनेषु बीजेनोक्तेन पूजिताः ॥ ८३ ॥**

इदानीमञ्जनोक्तेन मधुररसवर्जपञ्चरसेन लेखनाञ्जनकल्पनाबीजेन, तथा तिक्तकषायेण सस्नेहेन रोपणाञ्जनकल्पनाबीजेन, तथा मधुररसेन स्नेहसंपन्नेन प्रसादनाञ्जनकल्पनाबीजेन, पुटपाकाद्यासु क्रियास्वञ्जनेष्वपि लेखनरोपणप्रसादनकल्पनाः सहस्रप्रकाराः कल्पनीया इत्याह—पुटपाकेत्यादि । अञ्जनेषूक्तेन लेखनरोपणप्रसादनाख्येन बीजेन पुटपाकक्रियाद्यासु क्रियासु तथाऽनुक्तेष्वञ्जनेष्वप्यौषधकल्पनाः लेखनरोपणप्रसादनाख्याः सहस्रशः पूजिता इति पिण्डार्थः । पुटपाकक्रियाद्यास्वित्यत्र आदिशब्दात् सेकाश्च्योतनादयो गृह्यन्ते । अन्ये त्वञ्जनोक्तेन हीनयोगातियोगचिकित्साबीजेन पुटपाकादिहीनातियोगचिकित्सितं व्याचक्षते, तन्नेच्छति गयी ॥ ८३ ॥

**दृष्टेर्बलविवृद्ध्यर्थं याप्यरोगक्षयाय च ॥**
**राजार्हाण्यञ्जनाग्र्याणि निबोधेमान्यतः परम् ॥ ८४ ॥**

इदानीं रोगापहरणप्रयोगाण्यञ्जनान्यभिधाय स्वस्थातुरहितान्यञ्जनान्याह—दृष्टेर्बलविवृद्ध्यर्थमित्यादि । दृष्टिर्मसुरदलमात्रा तच्छक्तिबलाधानार्थं स्वस्थेन प्रसादाञ्जनं कार्यम्, आतुरेण याप्यरोगप्रसादनाञ्जनं कार्यं; याप्यरोगाश्च 'संपश्यतः षडपि येऽभिहितास्तु काचा' इत्यादिप्रोक्ताः । केचित्पाप्मरोगक्षयाय चेति पठन्ति, पाप्मशब्देन च स्रावणं कथयन्ति ॥ ८४ ॥

**अष्टौ भागानञ्जनस्य नीलोत्पलसमत्विषः ॥**
**औदुम्बरं शातकुम्भं राजतं च समासतः ॥ ८५ ॥**
**एकादशैतान् भागांस्तु योजयेत् कुशलो भिषक् ॥**
**मूषाक्षिप्तं तदाध्मातमावृतं जातवेदसि ॥ ८६ ॥**
**खदिराश्मन्तकाङ्गारैर्गोशकृद्भिरथापि वा ॥**
**गवां शकृद्रसे मूत्रे दध्नि सर्पिषि माक्षिके ॥ ८७ ॥**
**तैलमद्यवसामज्जसर्वगन्धोदकेषु च ॥**
**द्राक्षारसेक्षुत्रिफलारसेषु सुहिमेषु च ॥ ८८ ॥**
**सारिवादिकषाये च कषाये चोत्पलादिके ॥**
**निषेचयेत् पृथक् चैनं ध्मातं ध्मातं पुनः पुनः ॥८९॥**
**ततोऽन्तरीक्षे सप्ताहं प्लोतबद्धं स्थितं जले ॥**
**विशोष्य चूर्णयेन्मुक्तां स्फटिकं विद्रुमं तथा ॥ ९० ॥**
**कालानुसारिवां चापि शुचिरावाप्य योगतः ॥**
**एतच्चूर्णाञ्जनं श्रेष्ठं निहितं भाजने शुभे ॥ ९१ ॥**
**दन्तस्फटिकवैदूर्यशङ्खशैलासनोद्भवे ॥**
**शातकुम्भेऽथ शार्ङ्गे वा राजते वा सुसंस्कृते ॥**
**सहस्रपाकवत् पूजां कृत्वा राज्ञः प्रयोजयेत् ॥ ९२ ॥**
**तेनाञ्जिताक्षो नृपतिर्भवेत् सर्वजनप्रियः ॥**
**अधृष्यः सर्वभूतानां दृष्टिरोगविवर्जितः ॥ ९३ ॥**

तान्यञ्जनानि दर्शयन्नाह—अष्टावित्यादि । अञ्जनस्य सौवीराञ्जनस्य, स्रोतोजरसाञ्जनस्येत्यन्ये; नीलोत्पलसमत्विषः नीलोत्पलवर्णस्येत्यर्थः; 'नीलोत्पलसुगन्धिनः' इति केचित् पठन्ति । औदुम्बरं ताम्रभागं, शातकुम्भं सुवर्णभागं, राजतं रूप्यभागम्, एतेन ताम्रादीनां प्रत्येकमेकैकं भागं, एवमेकादश भागाः पूर्यन्ते । मूषा मृत्कल्पिता; सा तु धातुवादिनां गृहे प्रसिद्धा । आवृतं विलीनं, जातवेदसि अग्नौ, अङ्गारैः दग्धनिर्वापितकृष्णवर्णकाष्ठखण्डैः, गोशकृद्भिः शुष्कैर्गोपुरीषैः, गवामिति पदं शकृद्रसादिषु सर्पिःपर्यन्तेषु संबध्यते । माक्षिके मधुनि, वसा शुद्धमांसस्नेहः । अन्तरीक्षे तथा जले पानीये । प्लोतबद्धं कर्पटबद्धम् । केचिच्छिक्यारोपितं पानीयमान्तरीक्षं कथयन्ति । विशोष्य सप्तरात्रादनन्तरं तदञ्जनं शोषयित्वेत्यर्थः । मुक्ता मौक्तिकं, विद्रुमं प्रवालं, कालानुसारिवा तगरमूलं, जेज्जटस्तु द्वितीयसारिवामाह । शुचिरिति वैद्यविशेषणम् । आवाप्य प्रक्षिप्य, योगतः अल्पमात्रया । अन्ये तु सौवीराञ्जनादीनां चतुर्थांशेन मुक्तादिचूर्णं प्रक्षिप्येति व्याख्यानयन्ति । निहितं निक्षिप्तम् । असनो बीजकः, शातकुम्भे सुवर्णमये, शार्ङ्गे मेषशृङ्गमये । केचिदत्र स्फटिकवैदूर्यादिभाजनपाठं न पठन्ति; ते चात्र पात्राणां ताम्ररजतसुवर्णानां शुभभाजनं गृह्णन्ति । सहस्रपाकवत् शङ्खदुन्दुभिनिर्घोषादिना, पूज्यं पूजनीयम् । कृत्वेति पदं निहितमित्यत्र संबन्धनीयम् । केचित् सहस्रपाकवत् पूजां कृत्वेति पठन्ति । अधृष्यः अगम्यः । सर्वभूतानां देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागानामष्टानाम् । 'दृष्टिरागविवर्जितं'

इति केचित् पठन्ति, रागशब्देन 'संपश्यतः षडपि येऽभिहितास्तु काचा' इति व्याख्यानयन्ति ॥ ८५-९३ ॥

**कुष्ठं चन्दनमेलाश्च पत्रं मधुकमञ्जनम् ॥**
**मेषशृङ्गस्य पुष्पाणि वक्रं रत्नानि सप्त च ॥ ९४ ॥**
**उत्पलस्य बृहत्योश्च पद्मस्यापि च केशरम् ॥**
**नागपुष्पमुशीराणि पिप्पली तुत्थमुत्तमम् ॥ ९५ ॥**
**कुक्कुटाण्डकपालानि दार्वीं पथ्यां सरोचनाम् ॥**
**मरिचान्यक्षमज्जानं तुल्यां च गृहगोपिकाम् ॥ ९६ ॥**
**कृत्वा सूक्ष्मं ततश्चूर्णं न्यसेदभ्यर्च्य पूर्ववत् ॥**
**एतद्भद्रोदयं नाम सदैवार्हति भूमिपः ॥ ९७ ॥**

कुष्ठमित्यादि । वक्रं तगरं, रत्नानि सप्त पद्मरागमरकतनीलवैदूर्यमुक्ताप्रवालहेमानि । उत्पलस्य नीलोत्पलस्य, पुष्पाणि कुसुमानि, बृहत्योः कण्टकारीद्वयस्यापि कुसुमानि, तुत्थमुत्तमं मयूरग्रीवाख्यं, केचित् तुत्थं खर्परिकातुत्थं, उत्तमं मयूरग्रीवाख्यतुत्थमिति व्याख्यानयन्ति, गृहगोपिका गृहगोधिका, गृहकारिकेत्यन्ये । न्यसेत् शुभे भाजने प्रक्षिपेत् । अभ्यर्च्य शङ्खदुन्दुभिनिर्घोषादिना पूजां कृत्वा । पूर्ववत् यादृग्गुणं पूर्वाञ्जनं तादृग्गुणमेतदपि स्यादित्यर्थः । अन्ये तु पूर्ववत् शङ्खदुन्दुभिनिर्घोषादिनाऽभ्यर्च्येत्याहुः । भद्रोदयं भद्रस्य कल्याणस्य उदयो लाभो यस्मात्तत्तथा; अन्ये तु भद्र उदयो यस्येत्याहुः ॥ ९४-९७ ॥

**वक्रं समरिचं चैव मांसीं शैलेयमेव च ॥**
**तुल्यांशानि समानैस्तैः समग्रैश्च मनःशिला ॥ ९८ ॥**
**पत्रस्य भागाश्चत्वारो द्विगुणं सर्वतोऽञ्जनम् ॥**
**तावच्च यष्टीमधुकं पूर्ववच्चैतदञ्जनम् ॥ ९९ ॥**

वक्रमित्यादि । समानैस्तैः समग्रैश्च मनःशिलेति समभागैः सर्वद्रव्यैः समा मनःशिलेत्यर्थः । पत्रस्य भागाश्चत्वार इति आद्यद्रव्यात् पत्रकस्य चत्वारो भागाः । द्विगुणं सर्वतोऽञ्जनं सर्वस्मादेव समुदिताञ्जनचूर्णाद्द्विगुणं सौवीराञ्जनम्; अन्ये तु अञ्जनशब्देन स्रोतोजरसाञ्जनमाहुः । तावच्च यष्टीमधुकं सौवीराञ्जनप्रमाणं यष्टीमधुकमित्यर्थः । अन्ये तु सर्वद्रव्यसमं यष्टीमधुकमिच्छन्ति । पूर्ववत् पूर्वमष्टौ भागानञ्जनस्येति यदुक्तमञ्जनं तत्तुल्यमेतदप्यञ्जनं फलश्रुत्या शङ्खादिध्वनिपूजनेन भाजनस्थापनेन च । अस्याग्रे केचिदुशीराद्यञ्जनं पठन्ति, तच्चाभावान्न लिखितम् ॥ ९८ ॥ ९९ ॥

**मनःशिलां देवकाष्ठं रजन्यौ त्रिफलोषणम् ॥**
**लाक्षालशुनमञ्जिष्ठासैन्धवैलाः समाक्षिकाः ॥ १०० ॥**
**रोध्रं सावरकं चूर्णमायसं ताम्रमेव च ॥**
**कालानुसारिवां चैव कुक्कुटाण्डदलानि च ॥ १०१ ॥**
**तुल्यानि पयसा पिष्ट्वा गुटिकां कारयेद्बुधः ॥**
**कण्डूतिमिरशुक्लार्मरक्तराज्युपशान्तये ॥ १०२ ॥**

मनःशिलेत्यादि । ऊषणं मरिचम् ॥ १००-१०२ ॥

**कांस्यापमार्जनमसी मधुकं सैन्धवं तथा ॥**
**एरण्डमूलं च समं बृहत्यंशद्वयान्वितम् ॥ १०३ ॥**
**आजेन पयसा पिष्ट्वा ताम्रपात्रे प्रलेपयेत् ॥**
**सप्तकृत्वस्तु ता वर्त्यश्छायाशुष्का रुजापहाः ॥ १०४ ॥**

कांस्यापमार्जनमसीत्यादि । कांस्यापमार्जनमसी कांस्यापमार्जनस्योल्लेखननीलिका, नतं तगरमूलं, बृहत्यंशद्वयान्वितं बृहतीफलयोर्बृहतीमूलयोर्वा आद्यद्रव्याद्यदंशद्वयं तेन समन्वितम् ॥ १०३ ॥ १०४ ॥

**पथ्यातुत्थकयष्ट्याह्वैस्तुल्यैर्मरिचषोडशा ॥**
**पथ्या सर्वविकारेषु वर्तिः शीताम्बुपेषिता ॥ १०५ ॥**

पथ्यातुत्थकेत्यादि । मरिचस्य षोडशभागो यस्याः सा मरिचषोडशा वर्तिः । पथ्या हिता ॥ १०५ ॥

**रसक्रियाविधानेन यथोक्तविधिकोविदः ॥**
**पिण्डाञ्जनानि कुर्वीत यथायोगमतन्द्रितः ॥ १०६ ॥**

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे क्रियाकल्पो नामाष्टादशोऽध्यायः ॥ १८ ॥

सा पुनः शुष्का वर्तिरञ्जनेऽवचार्यमाणा नयने क्षतादिजननीत्याशङ्क्य तस्याः प्रयोगमाह—रसक्रियाविधानेनेत्यादि । रसक्रियाविधानेन रसक्रियाया यद्विधानं नातितनु नातिघनं शलाकोपलेपक्षममङ्गुल्युपलेपक्षमं वा तेनेत्यर्थः । पिण्डाञ्जनानि वर्त्यञ्जनानि शिलापट्टकघृष्टानि पिष्टानि वा । एतेनैतदुक्तं—न कदाचिदपि शुष्कवर्त्या नयनमञ्ज्यादिति तात्पर्यार्थः । यथायोगमिति यथा नयने क्षतादयो न भवेयुरित्यर्थः । अतन्द्रितः अनलसः । केचिदमुं श्लोकमन्यथा व्याख्यानयन्ति, तच्च विस्तरभयान्न लिखितम् ॥ १०६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रेऽष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशतितमोऽध्यायः ।

**अथातो नयनाभिघातप्रतिषेधं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

क्रियाकल्पानन्तरं शारीरदोषनिमित्तानां नयनामयानामुक्तत्वाद्बाह्यनिमित्तस्यावशिष्टत्वाच्चिकित्सार्थं नयनाभिघातप्रतिषेधाध्यायारम्भो युक्त इत्यत आह—अथात इत्यादि । अभिघातशब्देनात्राभिघातजनिता वेदनादयः, तेषां प्रतिषेधश्चिकित्सितम् । स चाभिघातो मूर्तेन दण्डादिना अमूर्तेन भयशोकादिना वा ॥ १ ॥ २ ॥

**अभ्याहते तु नयने बहुधा नराणां**
**संरम्भरागतुमुलासु रुजासु धीमान् ॥**
**नस्यास्यलेपपरिषेचनतर्पणाद्य-**
**मुक्तं पुनः क्षतजपित्तजशूलपथ्यम् ॥ ३ ॥**

दृष्टिप्रसादजननं विधिमाशु कुर्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ॥

तमेवाभिघातं मूर्तदण्डादिजं चिकित्साभेदयोगिनं दर्शयन्नाह—अभ्याहते इत्यादि। नराणां बहुधा अभ्याहते नयने सति संरम्भरागतुमुलासु रुजासु नस्यास्यलेपाद्यं कर्म क्षतजपित्तजशूलपथ्यं यदुक्तं तथा स्निग्धादिभिर्दृष्टिप्रसादजननं विधिं धीमानाशु कुर्यादिति पिण्डार्थः। बहुधा बहुप्रकारम्। तथा च विदेहः,—"तीक्ष्णाञ्जनातिपरिक्लिष्टेषु नेत्रेषु वातातपधूमरजव्यापारकीटमक्षिकामशकस्पर्शादिभिरभिहतेषु सलिलक्रीडाजागरणलङ्घनाप्लुताभिद्रुतेषु श्रान्तक्लान्तेषु भयार्दितेषु दिवाकराभिचन्द्रग्रहनक्षत्रक्रमणकर्मविविधरूपप्रेक्षणाद्यभिहतेषु दुर्बलेषु नेत्रेषु रागदाहतोदशोफपाकघर्षादिवेदनासु"—इति। संरम्भरागाभ्यां तुमुलाः सङ्कुलाः संरम्भरागतुमुलास्तासु। अन्ये तु संरम्भश्च रागश्च तुमुलश्च संरम्भरागतुमुलास्तासु; तुमुलाः प्रचण्डाः, संरम्भः श्वयथुः, इत्यर्थं वदन्ति। क्षतजपित्तजशूलपथ्यमिति रक्ताभिष्यन्दहितं पित्ताभिष्यन्दहितं चेत्यर्थः। अन्ये तु अभिघातजो हि वायुः शोणितपित्तं दूषयन् ताभ्यामेवावृतः शूलं करोतीति तद्धितमिति व्याख्यानयन्ति। दृष्टिप्रसादनं नयनगोलकप्रसादनम् ॥ ३ ॥—

स्वेदाग्निधूमभयशोकरुजाभिघातै-
रभ्याहतामपि तथैव भिषक् चिकित्सेत् ॥४॥

'अभ्याहते तु नयने बहुधा नराणाम्' इत्यत्र मूर्तानां दण्डादीनामभिघाते यच्चिकित्सितमभिहितं तदेव चिकित्सितममूर्तानामपि स्वेदादीनामभिघातेऽतिदिशन्नाह—स्वेदाग्निधूमभयेत्यादि। तथैव चिकित्सेत् पूर्वोक्तप्रकारेण चिकित्सेत्। एवं सप्ताहादर्वागेव। 'अभ्याहते तु नयने' इत्यत्र पूर्ववाक्ये बहुधात्वं मूर्तदण्डाद्यभिघातस्य बोध्यम्, इहामूर्ताभिघातचिकित्सितमभिधीयते ॥ ४ ॥

सद्योहते नयन एष विधिस्तदूर्ध्वं
स्यन्देरितो भवति दोषमवेक्ष्य कार्यः ॥

इदानीं पूर्वोक्तो विधिः सप्ताहादर्वागेव कार्यस्तदूर्ध्वमन्यो विधिरित्याह—सद्योहत इत्यादि। सद्योहते सप्ताहादर्वागेवेत्यर्थः। एष विधिः पूर्वोक्तो विधिः। तदूर्ध्वं सप्ताहादूर्ध्वम्। स्यन्देरितो वाताभिष्यन्दोक्तो विधिः ॥—

अभ्याहतं नयनमीषदथास्यबाष्प-
संस्वेदितं भवति तन्निरुजं क्षणेन ॥ ५ ॥

इदानीं किञ्चिदभ्याहतनयने विशेषचिकित्सितमाह—अभ्याहतमित्यादि। आस्यबाष्पं मुखफूत्कारजनितोष्मा ॥ ५ ॥

साध्यं क्षतं पटलमेकमुभे तु कृच्छ्रे
त्रीणि क्षतानि पटलानि विवर्जयेत्तु ॥
स्यात् पिच्चितं च नयनं ह्रसति चावसन्नं
स्रस्तं च्युतं च हतदृक् च भवेत्तु याप्यम् ॥६॥

विस्तीर्णदृष्टितनुरागमसत्प्रदर्शि,
साध्यं यथास्थितमनाविलदर्शनं च ॥

इदानीं पटलावगाहनविशेषेणाभिघातस्य साध्यकृच्छ्रसाध्यासाध्यविशेषमाह—साध्यं क्षतमित्यादि। केचिदमुं पाठं न पठन्ति। यादृङ्नयनं याप्यं तादृगाह—स्यात् पिच्चितमित्यादि। अवसन्नम् अन्तःप्रविष्टं, स्रस्तं शिथिलं, च्युतम् अवलम्बितं, विस्तीर्णं मण्डलं तथा तनुरागं च यदसत्प्रदर्शि स्यात् तदपि याप्यम्। साध्यमाह—साध्यमित्यादि ॥ ६ ॥—

प्राणोपरोधवमनक्षुतकण्ठरोधै-
रुन्नम्यमाशु नयनं यदतिप्रविष्टम् ॥ ७ ॥

अतिप्रविष्टनेत्रे चिकित्सितमाह—प्राणोपरोधेत्यादि। प्राणायामेन वमनेन छिक्काप्रवर्तनेन तथा कण्ठनिरोधनेन वा उन्नम्यमुन्नमनीयम् ॥ ७ ॥

नेत्रे विलम्बिनि विधिर्विहितः पुरस्ता-
दुच्छिङ्घनं शिरसि वार्यवसेचनं च ॥

अतिनिर्गतनयनस्य चिकित्सितमाह—नेत्र इत्यादि। विलम्बिनि अतिनिर्गते, विधिर्विहितः पुरस्तादिति 'भिन्नं नेत्रकर्मण्यमभिन्नं लम्बते तु यत्' इत्यादिना प्रोक्तः। उच्छिङ्घनं नासिकया वायोरन्तःप्रवेशनम्। वार्यवसेचनं शीतोदकपरिषेकः ॥—

षट्सप्ततिर्नयनजा य इमे प्रदिष्टा
रोगा भवन्त्यमहतां महतां च तेभ्यः ॥ ८ ॥
स्तन्यप्रकोपकफमारुतपित्तरक्तै-
र्बालाक्षिवर्त्मभव एव कुकूणकोऽन्यः ॥

इदानीं वक्ष्यमाणकुकूणकेन षट्सप्ततेः संख्याधिक्यमित्याशङ्क्यमानमाह—षट्सप्ततिरित्यादि। य इमे नयनजा रोगाः षट्सप्ततिः प्रदिष्टास्तेऽमहतां बालानां तथा महतां च भवन्ति। तेभ्यः षट्सप्ततिविकारेभ्यः स्तन्यप्रकोपादिभिर्बालाक्षिवर्त्मभव एव अन्यः कुकूणक इति समुदायार्थः। बालाक्षिवर्त्मभव एव न महतामक्षिवर्त्मनि, अन्यः अपरः। योऽसौ कुकूणको बालानामेव भवति, स कफाभिष्यन्दे अवरुद्धोऽतो न संख्यातिरेकः। 'स्तन्यप्रकोपकफमारुतपित्तरक्तैः' इत्यत्र 'स्तन्यप्रकोपजनितैः पिशितोदयाद्वा' इत्यन्ये पठन्ति; अपरे तु 'पिशितोच्छ्रयात्' इति पठन्ति; तौ च नेच्छति जेज्जटः ॥ ८ ॥—

मृद्नाति नेत्रमतिकण्डुमथाक्षिकूटं
नासाललाटमपि तेन शिशुः स नित्यम् ॥९॥
सूर्यप्रभां न सहते स्रवति प्रवद्धं,
तस्याहरेद्रुधिरमाशु विनिर्लिखेच्च ॥
क्षौद्रायुतैश्च कटुभिः प्रतिसारयेत्तु
मातुः शिशोरभिहितं च विधिं विदध्यात् १०

इदानीं तस्य कुकूणकस्य लक्षणमाह—मृद्नातीत्यादि। नासाललाटमपि मृद्नाति। प्रवद्धं निरन्तरम्। कुकूणकस्य साधन-

माह—तस्याहरेद्रुधिरमित्यादि । आहरेद्रुधिरं जलौकोभिः, विनिर्लिखेत् शेफालिकापत्रैः । कटुभिः त्रिकटुकादिभिः । इदानीं बालस्यौषधाक्षमत्वान्मातुरेवौषधमाह—मातुरित्यादि । यः स्तन्यरोगचिकित्सिते 'स्तन्ये गते विकृतिमाशु भिषक्' इत्यादिविधिरभिहितः, तं शिशोर्या जननी तस्या विदध्यादिति पिण्डार्थः। अन्ये तु द्वयोरेवाभिहितं विधिमिच्छन्ति ॥ ९ ॥ १० ॥

तं वामयेत्तु मधुसैन्धवसंप्रयुक्तैः
पीतं पयः खलु फलैः खरमञ्जरीणाम् ॥ ११ ॥
स्यात्पिप्पलीलवणमाक्षिकसंयुतैर्वा

इदानीं क्षीरपस्य बालस्य स्तन्यसात्म्यत्वात् स्तन्ययुक्तमेव वमनं निर्दिशन्नाह–तं वामयेदित्यादि । मधुसैन्धवसंयुतैः खरमञ्जरीणां फलैः सह पयः स्तन्यं पीतं तं बालं वामयेदिति संबन्धः । खरमञ्जरीणां फलैः अपामार्गफलचूर्णैः । स्यादित्यादि । पिप्पलीसैन्धवादियुतैर्वा खरमञ्जरीणां फलचूर्णैः सह स्तन्यं पीतं वमनकृद्भवेदित्यर्थः ॥ ११ ॥—

नैनं वमन्तमपि वामयितुं यतेत ॥

इदानीमुत्कृष्टदोषत्वात् स्वयं वमन्तं बालकं वमनयोगं दत्त्वा न वामयेदित्याह—नैनमित्यादि । एनमुत्क्लिष्टदोषत्वात्स्वयमेव वमन्तं वामयितुमन्यप्रकारेण वामयितुं न यतेत यत्नं न कुर्वीत, वमनातियोगभयात् ॥—

दत्त्वा वचामशनदुग्धभुजे प्रयोज्य-
मूर्ध्वं ततः फलयुतं वमनं विधिज्ञैः ॥ १२ ॥

क्षीरान्नादस्य तथाऽन्नादस्य च वमनमाह—दत्त्वा वचामित्यादि । अशनदुग्धभुजे क्षीरान्नादाय पूर्वोक्तमेव वमनं वचां दत्त्वा प्रयोज्यम् । अत ऊर्ध्वं क्षीरान्नावस्थातोऽनन्तरमन्नादस्य मदनफलयुतं पूर्वोक्तमेव वमनं सक्षीरमक्षीरं वा योज्यम् ॥१२॥

जम्ब्वाम्रधात्र्यणुदलैः परिधावनार्थं
कार्यं कषायमवसेचनमेव चापि ॥

इदानीं कुकूणके वर्त्मनः प्रक्षालनपरिषेकार्थं कषायमाह—जम्ब्वाम्रधात्र्यणुदलैरित्यादि । धात्री आमलकी, अणुः अश्मन्तकः, परिधावनार्थं प्रक्षालनार्थं, परिषेचनं परिषेक इत्यर्थः ॥–

आश्च्योतने च हितमत्र घृतं गुडूची-
सिद्धं तथाऽऽज्ञुरपि च त्रिफलाविपक्वम् ॥१३॥

प्रक्षालनपरिषेकावभिधाय पूरणार्थमकल्कघृतद्वयमाह—आश्च्योतने इत्यादि । आश्च्योतने अक्षिपूरणे । अत्र कुकूणके गुडूचीस्वरसेन घृतचतुर्गुणेन पक्वं, इदमेकमञ्जनं; त्रिफलाक्वाथेन पक्वं, एतच्च द्वितीयम् ॥ १३ ॥

नेपालजामरिचशङ्खरसाञ्जनानि
सिन्धुप्रसूतगुडमाक्षिकसंयुतानि ॥
स्यादञ्जनं, मधुरसामधुकाम्रकैर्वा

अधुना कुकूणकेऽञ्जनमाह–नेपालजेत्यादि । नेपालजा मनःशिला । सिन्धुप्रसूतं सैन्धवम् । अपरमञ्जनमाह–स्यादञ्जनमित्यादि । मधुरसा मूर्वा । एतैर्मूर्वादिभिस्त्रिभिर्वाऽञ्जनं स्यात् ॥—

कृष्णायसं घृतपयो मधु वाऽपि दग्धम् ॥१४॥

चूर्णाञ्जनमाह—कृष्णायसमित्यादि । कृष्णायसं कृष्णलोहचूर्णम् । एतत् कृष्णलोहादिकं चान्तर्धूमदग्धं चूर्णाञ्जनं भवेत् । तथा च विदेहः,–"लौहचूर्णं च सर्पिश्च मधु क्षीरं च दाहयेत् ॥ एतच्चूर्णाञ्जनं पिष्टं कुमाराणां कुकूणके"–इति ॥ १४ ॥

व्योषं पलाण्डु मधुकं लवणोत्तमं च
लाक्षां च गैरिकयुतां गुटिकाञ्जनं वा ॥
निम्बच्छदं मधुकदार्वि सताम्रलोध्र-
मिच्छन्ति चात्र भिषजोऽञ्जनमंशतुल्यम् ॥१५

गुटिकाञ्जनमाह—व्योषमित्यादि । पलाण्डुः लशुनभेदः, मधुकं यष्टीमधु, लवणोत्तमं सैन्धवम् । गुटिकाञ्जनं वर्त्यञ्जनम् । अपरमपि वर्त्यञ्जनमाह–निम्बच्छदमित्यादि । दार्वी हरिद्राद्वयं; विदेहदर्शनात् । अत्र कुकूणके अञ्जनमित्यत्र गुटिकाशब्दो लुप्तो द्रष्टव्यः; तेन गुटिकाञ्जनमित्यर्थः । अंशतुल्यं निम्बच्छदादिकं समभागमित्यर्थः ॥ १५ ॥

स्रोतोजशङ्खदधिसैन्धवमर्धपक्षं
शुक्रं शिशोर्नुदति भावितमञ्जनेन ॥
स्यन्दे कफादभिहितं क्रममाचरेच्च
बालस्य रोगकुशलोऽक्षिगदं जिघांसुः ॥१६॥

इदानीं कुकूणकप्रसङ्गेन बालानां शुक्रलेखनार्थमञ्जनमाह—स्रोतोजेत्यादि । अस्याञ्जनस्य कल्पनां विदेहदर्शनेन वृद्धवैद्या आहुः । तद्यथा—गव्येन दध्ना पिष्टाभ्यां शङ्खसैन्धवाभ्यां स्रोतोजं रसाञ्जनमर्धपक्षं सार्धसप्तरात्रमसकृल्लेपयेत्; ततोऽनन्तरं तत्स्रोतोजं रसाञ्जनं पिष्ट्वा वर्तिः कार्या, सा अञ्जनेन शिशोः शुक्रं नुदति स्फोटयतीत्यर्थः । केचित् स्रोतोञ्जनशब्देन सौवीराञ्जनमाहुः । केचित् 'शुक्रं शिशोर्नुदति भावितमञ्जनेन' इत्यत्र 'आभावितं शिशुकरोगनुदञ्जनेन' इति पठन्ति । अन्ये तु 'आक्षीरसेन परिभावितमञ्जनार्थं' इति पठन्ति, तन्नेच्छति गयी । पूर्वोक्तमेवौषधं शुक्रेऽतिदिशन्नाह—स्यन्दे कफादभिहितमित्यादि । कफाद्यः स्यन्दस्तत्र स्यन्दे यः क्रमोऽभिहितस्तं क्रमं बालस्याक्षिगदं जिघांसुर्योगकुशलो वैद्य आचरेत् कुर्यादिति संबन्धः; जिघांसुः हन्तुमिच्छुः । केचित् 'स्यन्दे कफादभिहितं क्रमं' इत्यत्र 'स्यन्दकमं कफविनाशनमाचरेच्च' इति पठन्ति । बालस्य कफाधिक्यात् कफस्यन्दक्रमं विदध्यात् । आचरेच्चेति चकारो भिन्नक्रमे, स च कफविनाशनमित्यत्र द्रष्टव्यः; ततोऽन्यमप्यवस्थाकुपितं वातं पित्तं रक्तं चानुबन्धभूतमिहोक्तमवेक्ष्य वातपित्तस्यन्दानुक्रमं रक्ताभिष्यन्दक्रमं चावेक्ष्य यथादोषं योगमुपयोजयेदिति व्याख्यानयन्ति ॥ १६ ॥

समुद्र इव गम्भीरं नैव शक्यं चिकित्सितम् ॥
वक्तुं निरवशेषेण श्लोकानामयुतैरपि ॥ १७ ॥

१ 'तेन' इति पा० ।

सहस्रैरपि वा, प्रोक्तमर्थमल्पमतिर्नरः ॥
तर्कग्रन्थार्थरहितो नैव गृह्णात्यपण्डितः ॥ १८ ॥

कुतः पुनः स क्रमोऽवस्थाविशेषेण स्वग्रन्थे आचार्येण न निबद्ध इत्याह—समुद्र इव गम्भीरमित्यादि । समुद्र इव गम्भीरं चिकित्सितं श्लोकानां सहस्रैरप्ययुतैर्निरवशेषेण वक्तुं नैव शक्यमित्यर्थः; श्लोकानां सहस्रैरप्ययुतैः श्लोककोट्याऽपीत्यर्थः । यदि श्लोककोट्या वक्तुं न शक्यते तर्हि किं ग्रन्थकर्तुरशक्तिरित्याशङ्कमानमाह—प्रोक्तमित्यादि । अल्पमतिरपण्डितो नरो यतस्तर्कग्रन्थार्थरहितोऽतः श्लोककोट्योक्तमप्यर्थं नैव गृह्णातीति संबन्धः; तर्कग्रन्थार्थरहितस्तर्केणोहेन यो ग्रन्थार्थः शास्त्रार्थस्तेन रहित इत्यर्थः ॥ १७ ॥ १८ ॥

तदिदं बहुगूढार्थं चिकित्साबीजमीरितम् ॥
कुशलेनाभिपन्नं तद्बहुधाऽभिप्ररोहति ॥ १९ ॥
तस्मान्मतिमता नित्यं नानाशास्त्रार्थदर्शिना ॥
सर्वमूह्यमगाधार्थं शास्त्रमागमबुद्धिना ॥ २० ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे नयनाभिघातचिकित्सितं नामैकोनविंशोऽध्यायः ॥ १९ ॥

तदिदमित्यादि । यस्मान्निरवशेषेण रोगावस्थानन्त्याच्चिकित्सितस्य वक्तुमशक्यत्वं, शक्यत्वे वा निरूपणस्य निष्फलता, तस्मात् कारणादिदं बहुगूढार्थं चिकित्साया बीजमीरितमिति समुदायार्थः । तदेव चिकित्साबीजं कुशलेन ज्ञातमनेकधा प्ररोहतीत्याह—कुशलेनेत्यादि । कुशलेनावस्थाविदा वैद्येनाभिपन्नमधिगतं तद्बहुधाऽभिप्ररोहति । चिकित्साबीजमिति बीजमिव बीजं, यथैकं बीजं सुभूमौ निक्षिप्तं मूलकाण्डशाखापल्लवादिनाऽनेकधा प्ररोहति तथेदमपीति चिकित्साबीजमित्यर्थः । यस्मात् कुशलेनाधिगतं चिकित्साबीजमनेकधा प्ररोहति तस्मात् कारणान्मतिमता नित्यं नानाशास्त्रार्थदर्शिना आगमबुद्धिना वैद्येन सर्वमगाधार्थं शास्त्रं नित्यमूह्यमिति संबन्धः । नानाशास्त्राणि शालाक्यानि । आगमः आप्तानां शास्त्रं; तथा चोक्तं,—"सिद्धं सिद्धैः प्रमाणैस्तु हितं चात्र परत्र च । आगमः शास्त्रमाप्तानामाप्तास्तत्त्वार्थदर्शिनः"—इति ॥ १९ ॥ २० ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे एकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशतितमोऽध्यायः ।

अथातः कर्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

इन्द्रियगतरोगसामान्याच्छ्रवणगतरोगविज्ञानीयारम्भो युक्त इत्यत आह—अथात इत्यादि । गतशब्द आश्रितपर्यायः ॥ १ ॥ २ ॥

कर्णशूलं प्रणादश्च बाधिर्यं क्ष्वेड एव च ॥
कर्णस्रावः कर्णकण्डूः कर्णवर्चस्तथैव च ॥ ३ ॥
कृमिकर्णप्रतिनाहौ विद्रधिर्द्विविधस्तथा ॥
कर्णपाकः पूतिकर्णस्तथैवार्शश्चतुर्विधम् ॥ ४ ॥
कर्णार्बुदं सप्तविधं शोफश्चापि चतुर्विधः ॥
एते कर्णगता रोगा अष्टाविंशतिरीरिताः ॥ ५ ॥

तानेव कर्णगतरोगान्नामभिः संख्यया चाह—कर्णशूलमित्यादि । कर्णशूलस्य कष्टसाध्यत्वात् प्रागेव निर्देशः । विद्रधिर्द्विविधः—दोषविद्रधिः क्षतविद्रधिश्च; अर्शश्चतुर्विधं—वातपित्तकफसन्निपातैः; अर्बुदं सप्तविधं—वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च, सप्तमं शालाक्यतन्त्रे; शोफश्चतुर्विधः—वातपित्तकफसंनिपातैः । संख्येयनिर्देशादेव संख्यायां लब्धायामष्टाविंशतिरिति भूयः संख्याकरणं नियमार्थं, तेन च विदेहसंख्यया अधिकत्वं मा भूदित्यर्थः ॥ ३–५ ॥

समीरणः श्रोत्रगतोऽन्यथाचरः
समन्ततः शूलमतीव कर्णयोः ॥
करोति दोषैश्च यथास्वमावृतः
स कर्णशूलः कथितो दुराचरः ॥ ६ ॥

कर्णशूलमाह—समीरण इत्यादि । अन्यथाचर इति विमार्गगः । समन्ततः शूलमतीव कर्णयोः करोतीति संबन्धनीयम् । दोषैः कफपित्तरक्तैः, अन्ये तु वायोरेव वाय्वन्तरावरणाद्बहुवचनं समर्थयन्ति । स्वस्य स्वस्य दोषस्य अनतिक्रमेण यथास्वम् । दुराचरो दुःखेनोपचर्यत इत्यर्थः । अन्ये 'दुरासद' इति पठन्ति, दुर्वार इति व्याख्यानयन्ति । यद्यपि शूलबाधिर्यविद्रध्यर्शोर्बुदशोफाः प्राग्निर्दिष्टास्तथाऽपि कर्णरोगसंग्रहार्थं साध्यासाध्यविभागार्थं च पुनर्निर्दिष्टाः; शूलस्तु वातव्याधिनिदाने केवलवातज उक्तः, अत्र पुनर्दोषैरावृत इति न पौनरुक्त्यम् ॥ ६ ॥

यदा तु नाडीषु विमार्गमागतः
स एव शब्दाभिवहासु तिष्ठति ॥
शृणोति शब्दान् विविधांस्तदा नरः
प्रणादमेनं कथयन्ति चामयम् ॥ ७ ॥

कर्णनादमाह—यदा तु नाडीष्वित्यादि । विमार्गमागतः विरुद्धमार्गं प्राप्तः, विमार्गोऽत्र शिर एव, विमार्गगः तिर्यग्गो यदा तिष्ठति, ( स एवेत्येवशब्देन कफाद्यावरणावृतः । अन्ये तु शब्दवहासु नाडीषु स एव वायुर्विमार्गगो यदा निरुद्धयतीति ) तदा विविधान् शब्दान् नरः शृणोतीति व्याख्यानयन्ति । अस्य रोगस्यापीडाकरत्वादरोगत्वं मा भूदिति द्योतनार्थमामयवचनम् ॥ ७ ॥

स एव शब्दानुवहा यदा सिराः
कफानुयातो व्यनुसृत्य तिष्ठति ॥

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

**तदा नरस्याप्रतिकारसेविनो**
**भवेत्तु बाधिर्यमसंशयं खलु ॥ ८ ॥**

बाधिर्यमाह—स एव शब्दानुवहा इत्यादि । स एव शुद्धो वायुः कफानुयातः कफानुगतः । स एवेत्यत्रापिशब्दो लुप्तो द्रष्टव्यः, तेन न केवलं शुद्धो वायुः श्लेष्मान्वितोऽपि वेत्यर्थः । व्यनुसृत्य विविधमार्गमावृत्य । अप्रतिकारसेविनः चिकित्सामकुर्वतः ॥ ८ ॥

**श्रमात् क्षयाद्रूक्षकषायभोजनात्**
**समीरणः शब्दपथे प्रतिष्ठितः ॥**
**विरिक्तशीर्षस्य च शीतसेविनः**
**करोति हि क्ष्वेडमतीव कर्णयोः ॥ ९ ॥**

कर्णक्ष्वेडमाह—श्रमादित्यादि । क्षयो धातुक्षयः । क्ष्वेडः शब्दः । कर्णनादः केवलवातारब्धो नानाविधशब्दान्वितः, कर्णक्ष्वेडस्तु दोषसंसृष्टवातारब्धो वंशघोषानुकारिशब्दान्वितः । तथा च विदेहः,—"मारुतः कफवाताभ्यां संसृष्टः शोणितेन च । कर्णक्ष्वेडनं संजनयेत् क्ष्वेडनं वेणुघोषवत्"—इति; एष कर्णनादक्ष्वेडयोर्भेदः ॥ ९ ॥

**शिरोभिघातादथवा निमज्जतो**
**जले प्रपाकादथवाऽपि विद्रधेः ॥**
**स्रवेत्तु पूयं श्रवणोऽनिलावृतः**
**स कर्णसंस्राव इति प्रकीर्तितः ॥ १० ॥**

कर्णस्रावमाह—शिरोभिघातादित्यादि । विद्रधेः कर्णविद्रधेः ॥ १० ॥

**कफेन कण्डूः प्रचितेन कर्णयो-**
**र्भृशं भवेत् स्रोतसि कर्णसंज्ञिते ॥**

कर्णकण्डूमाह—कफेनेत्यादि । कर्णयोः प्रचितेन संचितेन श्लेष्मणा कर्णस्रोतसि भृशमत्यर्थं कण्डूर्भवेदिति संबन्धः ॥—

**विशोषिते श्लेष्मणि पित्ततेजसा**
**नृणां भवेत् स्रोतसि कर्णगूथकः ॥ ११ ॥**

कर्णगूथकमाह—विशोषित इत्यादि । स्रोतसि संचिते श्लेष्मणि पित्ततेजसा विशोषिते सति कर्णगूथको भवेदिति संबन्धः ॥ ११ ॥

**स कर्णविट्को द्रवतां यदा गतो**
**विलायितो घ्राणमुखं प्रपद्यते ॥**
**तदा स कर्णप्रतिनाहसंज्ञितो**
**भवेद्विकारः शिरसोऽभितापनः ॥ १२ ॥**

कर्णप्रतिनाहमाह—स कर्णेत्यादि । विलयनं पुनः स्नेहस्वेदाभ्याम् । कफमारुताभ्यां सन्निपातेन वा विदेहोक्तत्वात् । शिरसोऽभितापनः सकलशिरोविकारकारीत्यर्थः ॥ १२ ॥

**यदा तु मूर्च्छन्त्यथवाऽपि जन्तवः**
**सृजन्त्यपत्यान्यथवाऽपि मक्षिकाः ॥**
**तदञ्जनत्वाच्छ्रवणो निरुच्यते**
**भिषग्भिराद्यैः कृमिकर्णको गदः ॥ १३ ॥**

कृमिकर्णमाह—यदेत्यादि । मूर्च्छन्ति पतन्ति । जन्तवो मांसकोथजाः कृमयः । अपत्यानि सूक्ष्मकृमीन् । मक्षिका मम्भणाख्या नीलमक्षिकाः । तदञ्जनत्वादित्यादि । आद्यैर्भिषग्भिस्तदञ्जनत्वाच्छ्रवणः कृमिकर्णको निरुक्त इति संबन्धः । तदञ्जनत्वात् कृमिलक्षणत्वात् । आद्यैर्भिषग्भिः विदेहादिभिः । अयं रोगः सान्निपातिकः, विदेहप्रोक्तत्वात् ॥ १३ ॥

**क्षताभिघातप्रभवस्तु विद्रधि-**
**र्भवेत्तथा दोषकृतोऽपरः पुनः ॥**
**सरक्तपीतारुणमस्रमास्रवेत्**
**प्रतोदधूमायनदाहचोषवान् ॥ १४ ॥**

कर्णविद्रधिमाह—क्षताभिघातप्रभव इत्यादि । क्षताभिघातप्रभवस्तु विद्रधिर्भवेदिति छेदः । एतेन क्षतविद्रधिर्दर्शितः । दोषकृतोऽपरः दोषजनितो द्वितीयो विद्रधिः । एतेन दोषजो दर्शितः । स चतुर्विधः । क्षतविद्रधेर्लक्षणमाह—सरक्तपीतारुणमित्यादि । अस्रं रक्तम् । धूमायनं धूमोद्गमनमिव वेदनाविशेषः । चोषवान् आचूष्यत इव । दोषविद्रधेर्लक्षणं दोषलिङ्गैरेव ज्ञातव्यम् । सरक्तपित्तारुणेत्यादिना कर्णपाकलक्षणमुक्तमिति केचित् कथयन्ति; तच्च मह्यं न रोचते, यतो जेज्जटादीनामीदृशोऽभिप्रायो नास्ति ॥ १४ ॥

**भवेत् प्रपाकः खलु पित्तकोपतो**
**विकोथविक्लेदकरश्च कर्णयोः ॥**

कर्णपाकलक्षणमाह—भवेत् प्रपाक इत्यादि ॥—

**स्थिते कफे स्रोतसि पित्ततेजसा**
**विलाय्यमाने भृशसंप्रतापवान् ॥ १५ ॥**
**अवेदनो वाऽप्यथवा सवेदनो**
**घनं स्रवेत् पूति च पूतिकर्णकः ॥**

पूतिकर्णमाह—स्थित इत्यादि । घनं निरन्तरं वारंवारमित्यर्थः । अन्ये घनमिति पूयस्य विशेषणमाहुः । पूति पूयम् ॥ १५ ॥—

**प्रदिष्टलिङ्गान्यर्शांसि तत्त्वत-**
**स्तथैव शोफार्बुदलिङ्गमीरितम् ॥**
**मया पुरस्तात् प्रसमीक्ष्य योजये-**
**दिहैव तावत् प्रयतो भिषग्वरः ॥ १६ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे कर्णगतरोगविज्ञानीयो नाम विंशतितमोऽध्यायः ॥ २० ॥**

अर्शःशोफार्बुदान्याह—प्रदिष्टेत्यादि । शोफार्बुदलिङ्गं शोफस्य अर्बुदस्य च लक्षणमित्यर्थः । तत्त्वतः परमार्थतः । प्रसमीक्ष्य ज्ञात्वा । प्रयोगज्ञो वैद्यः ॥ १६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे विंशोऽध्यायः ॥ २० ॥

## एकविंशतितमोऽध्यायः ।

अथातः कर्णगतरोगप्रतिषेधं व्याख्यास्यामः ॥१॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि । प्रतिषेधः चिकित्सितम् ॥ १ ॥ २ ॥

सामान्यं कर्णरोगेषु घृतपानं रसायनम् ।
अव्यायामोऽशिरःस्नानं ब्रह्मचर्यमकत्थनम् ॥ ३ ॥

कर्णरोगाणां सामान्यं चिकित्सितमाह—सामान्यमित्यादि । घृतपानमत्र ऊर्ध्वभक्तिकम् । अशिरःस्नानं न शिरःस्नानमित्यर्थः । अकत्थनम् अभाषणम् । रसायनमित्यत्र 'रसाशनम्' इति केचित् पठन्ति, मांसरसेन सह भोजनमिति व्याख्यानयन्ति ॥ ३ ॥

कर्णशूले प्रणादे च बाधिर्यक्ष्वेडयोरपि ॥
चतुर्णामपि रोगाणां सामान्यं भेषजं विदुः ॥ ४ ॥

वातजानां चतुर्णां कर्णशूलादीनामेकहेतुत्वादेकामेव चिकित्सामाह—कर्णशूल इत्यादि ॥ ४ ॥

स्निग्धं वातहरैः स्वेदैर्नरं स्नेहविरेचितम् ॥
नाडीस्वेदैरुपचरेत्पिण्डस्वेदैस्तथैव च ॥ ५ ॥

किं तत् सामान्यं चिकित्सितमित्याह—स्निग्धमित्यादि । स्निग्धं स्नेहपानेनाभ्यङ्गेन च । स्नेहविरेचितम् एरण्डतैलादिभिः । स्वेदाध्याये व्यामार्धमात्रेत्यादिना नाडीस्वेदः प्रोक्तः; पिण्डस्वेदः कृशरापायसादिभिः ॥ ५ ॥

बिल्वैरण्डार्कवर्षाभूदधित्थोन्मत्तशिग्रुभिः ॥
वस्तगन्धाश्वगन्धाभ्यां तर्कारीयववेणुभिः ॥ ६ ॥
आरनालशृतैरेभिर्नाडीस्वेदः प्रयोजितः ॥
कफवातसमुत्थानं कर्णशूलं निरस्यति ॥ ७ ॥

नाडीस्वेदोपयोगिद्रव्याण्याह—बिल्वेत्यादि । वर्षाभूः श्वेतपुनर्नवा, दधित्थः कपित्थः, उन्मत्तो धत्तूरकः, शिग्रुः शोभाञ्जनकः, विटपशाकमन्ये । वस्तगन्धा बोबयिका । तर्कारी अरणिका, यववेणुभिरिति वेणुयवः अन्नजातिः । बिल्वैरण्डादिभिः आरनालसिद्धैः केवलवातारब्धे कफावृतवातारब्धे च कर्णशूले स्वेदः प्रयोज्यः; परं केवलवातजे शूले स्नेहपूर्वः स्वेदः, कफावृते पुनः रूक्षः स्वेद इति ॥ ६ ॥ ७ ॥

मीनकुक्कुटलावानां मांसजैः पयसाऽपि वा ॥
पिण्डैः स्वेदं च कुर्वीत कर्णशूलनिवारणम् ॥ ८ ॥

पिण्डस्वेदोपयोगिद्रव्याण्याह—मीनकुक्कुटलावानामित्यादि । पयसाऽपि वेति घनीभूतक्षीरपिण्डेनेत्यर्थः । एतैर्मीनादिभिर्मांसपिण्डैः पृथक् समस्तैर्वा स्वेदः कार्यः ॥ ८ ॥

अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम् ॥
तदङ्गारैः सुसंपूर्णं निदध्याच्छ्रवणोपरि ॥ ९ ॥
यत्तैलं च्यवते तस्मात् खल्लादङ्गारतापितात् ॥
तत् प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥१०॥

शुद्धवातजे शूले स्नेहविशेषस्वेदमुद्दिशन्नाह—अश्वत्थपत्रेत्यादि । खल्लमिति द्विकर्णिकाकारमित्यर्थः । अभ्यज्य तैलेन घृतेन वा, सात्यकिविदेहप्रोक्तत्वात् ॥ ९ ॥ १० ॥

क्षौमगुग्गुल्वगुरुभिः सघृतैर्धूपयेच्च तम् ॥
भक्तोपरि हितं सर्पिर्बस्तिकर्म च पूजितम् ॥ ११ ॥

कर्णस्वेदस्य पश्चात्कर्माह—क्षौमेत्यादि । क्षौमम् अतसीवस्त्रं, बस्तिरत्र शिरोबस्तिः ॥ ११ ॥

निरन्नो निशि तत्सर्पिः पीत्वोपरि पिबेत् पयः ॥
मूर्धबस्तिषु नस्ये च मस्तिष्के परिषेचने ॥ १२ ॥
शतपाकं बलातैलं प्रशस्तं चापि भोजने ॥

इदानीं निरन्नस्य सायमेव कोष्णं पयो निर्दिशन्नाह—निरन्न इत्यादि । निरन्नः पुरुषः । निशि कोष्णं पयोऽनुपानं च सर्पिः पिबेत् । मूर्धेत्यादि । मस्तिष्कः शिरोबस्तिविशेषः, स च स्नेहपिचुप्लोतादिनाऽवचार्यते । शतपाकं वातव्याधिपठितम् । बलातैलं मूढगर्भोक्तं, अन्ये तु बलातैलमेव शतपाकं कृत्वोपयुज्यत इति व्याख्यानयन्ति ॥ १२ ॥—

कण्टकारीमजाक्षीरे पक्त्वा क्षीरेण तेन च ॥ १३ ॥
विपचेत् कुक्कुटवसां कर्णयोस्तत्प्रपूरणम् ॥

कण्टकारीमित्यादि । कण्टकारी चतुष्पलप्रमाणा, तदष्टगुणं क्षीरं, क्षीराच्चतुर्गुणमुदकं दत्त्वा विपचेत्, तेन क्षीरेण कुक्कुटवसां कुडवप्रमाणां पचेत्, तत्कर्णयोः प्रपूरणम् ॥ १३ ॥—

तण्डुलीयकमूलानि फलमङ्कोलजं तथा ॥ १४ ॥
अहिंस्राकेन्दुकान्मूलं सरलं देवदारु च ॥
लशुनं शृङ्गवेरं च तथा वंशावलेखनम् ॥ १५ ॥
कल्कैरेषां तथाऽम्लैश्च पचेत् स्नेहं चतुर्विधम् ॥
वेदनायाः प्रशान्त्यर्थं हितं तत्कर्णपूरणम् ॥ १६ ॥

अपरमपि पूरणमाह—तण्डुलीयकेत्यादि । वंशावलेखनं वंशाच्छोलनम् । कल्को दृषदि पेषितः, स चाद्रवः, स चाष्टपलप्रमाणः, अम्लैः दधितक्रसुराचुक्रमातुलुङ्गरसैः प्रत्येकमष्टाविंशत्यधिकशतप्रमाणैः, स्नेहश्चतुर्विधः सर्पिस्तैलवसामज्जसंज्ञो द्वात्रिंशत्पलप्रमाणः ॥ १४–१६ ॥

लशुनार्द्रकशिग्रूणां मुरङ्ग्या मूलकस्य च ॥
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ १७ ॥
शृङ्गवेररसः क्षौद्रं सैन्धवं तैलमेव च ॥
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥ १८ ॥

लशुनार्द्रकेत्यादि । शिग्रुः मधुशिग्रुः, मुरङ्गी द्वितीयः शोभाञ्जनकः, कदुष्ण ईषदुष्णः । एतेषां लशुनादीनां षण्णां स्वरसा व्यस्ताः समस्ता वा कर्णपूरणे देयाः ॥ १७ ॥ १८ ॥

वंशावलेखनायुक्ते मूत्रे चाजाविके भिषक् ॥
सर्पिः पचेत्तेन कर्णं पूरयेत् कर्णशूलिनः ॥ १९ ॥

१ अस्याग्रे 'कोष्णं पयोनुपानं च तैलमप्यादिशन्ति हि—पूर्वं शिरोबस्तिकर्म च पूजितमित्युक्तं' इत्यधिकः पाठ उपलभ्यते हस्तलिखितपुस्तके ।

वंशेत्यादि । 'मूत्रे चाजाविके भिषक्' इत्यत्र तन्त्रान्तरदर्शनाद्विपर्ययेण सर्पिःपाकः कर्तव्यः; तेन पूर्वमाविके मूत्रे सर्पिः पक्तव्यं, पश्चादाज इति । अन्ये तु पूर्वमाविकमूत्रपक्केन सर्पिषा कर्णपूरणं, पश्चादाजेन मूत्रेणेति विपर्ययं व्याख्यानयन्ति । केचित् सर्पिः पचेदित्यत्र तैलं पचेदिति पठन्ति; तन्न, सर्वनिबन्धैः परिहृतत्वात् ॥ १९ ॥

**महतः पञ्चमूलस्य काण्डमष्टादशाङ्गुलम् ॥**
**क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥ २० ॥**
**यत्तैलं च्यवते तेभ्यो धूतेभ्यो भाजनोपरि ॥**
**ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥ २१ ॥**

दीपिकातैलमाह—महत इत्यादि । काण्डं खण्डं, क्षौमेण अतसीवस्त्रेण, आवेष्ट्य 'त्रिभागम्' इति शेषः । धूतेभ्यो 'अधोमुखम्' इति शेषः । गृह्णाति अपहरति ॥ २० ॥ २१ ॥

**कुर्यादेवं भद्रकाष्ठे कुष्ठे काष्ठे च सारले ॥**
**मतिमान् दीपिकातैलं कर्णशूलनिबर्हणम् ॥ २२ ॥**

कुर्यादेवमित्यादि । चकारादगुर्वैरण्डाग्निमन्थकाष्ठानि गृह्यन्ते ॥ २२ ॥

**अर्काङ्कुरानम्लपिष्टांस्तैलाक्तान् लवणान्वितान् ॥**
**सन्निदध्यात् स्नुहीकाण्डे कोरिते तच्छदावृते ॥२३॥**
**पुटपाकक्रमस्विन्नान् पीडयेदारसागमात् ॥**
**सुखोष्णं तद्रसं कर्णे दापयेच्छूलशान्तये ॥ २४ ॥**
**कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः ॥**
**सुखोष्णैः पूरयेत् कर्णं तच्छूलविनिवृत्तये ॥ २५ ॥**
**कर्णं कोष्णेन चुक्रेण पूरयेत् कर्णशूलिनः ॥**
**समुद्रफेनचूर्णेन युक्त्या चाप्यवचूर्णयेत् ॥ २६ ॥**

अर्काङ्कुरानित्यादि । अयं पाठः सर्वनिबन्धकारैरनार्षीकृतस्तस्मान्न व्याख्यातः ॥ २३-२६ ॥

**अष्टानामिह मूत्राणां मूत्रेणान्यतमेन तु ॥**
**कोष्णेन पूरयेत् कर्णं कर्णशूलोपशान्तये ॥ २७ ॥**

अष्टानामित्यादि । अष्टानां मूत्राणामन्यतमेनैकतमेन ॥ २७ ॥

**मूत्रेष्वम्लेषु वातघ्ने गणे च कथिते भिषक् ॥**
**पचेच्चतुर्विधं स्नेहं पूरणं तच्च कर्णयोः ॥ २८ ॥**

मूत्रेष्वित्यादि । मूत्राणि गवादीनामष्टानाम् । अम्लानि सुरामस्त्वारनालबीजपूरचुक्राणि । वातघ्नो गणो विदारिगन्धादिः ॥ २८ ॥

**एता एव क्रियाः कुर्यात् पित्तघ्नैः पित्तसंयुते ॥**

वातजकर्णरोगे क्रियामभिधाय पित्तजकर्णशूलचिकित्सामाह—एता इत्यादि । एता एव दीपिकादयः क्रियाः । तत्र दीपिका अश्वत्थपत्रखल्लस्नेहसर्पिषा कर्णपूरणं; काञ्जिकेनापि, तस्य स्पर्शने पित्तहरत्वात् । पित्तसंयुते कर्णशूले इत्यर्थः ॥—

**काकोल्यादौ दशक्षीरं तिक्तं चात्र हितं हविः ॥२९॥**
**क्षीरवृक्षप्रवालेषु मधुके चन्दने तथा ॥**
**कल्कक्वाथे परं पक्वं शर्करामधुकैः सरैः ॥ ३० ॥**

पित्तजकर्णशूले सामान्यचिकित्सामभिधाय विशेषचिकित्सामाह—काकोल्यादावित्यादि । काकोल्यादिकल्केन दशगुणक्षीरं घृतं सिद्धं हितं, तथा तिक्तं तिक्तद्रव्यसंस्कृतम्; अन्ये तु तिक्तं कुष्ठचिकित्सितोक्तं घृतं कथयन्ति । क्षीरवृक्षा न्यग्रोधोदुम्बराश्वत्थप्लक्षगर्दभाण्डाः, तेषां पल्लवक्वाथेन काकोल्यादिकल्केन सिद्धं घृतं हितम् । मधुके चन्दने तथेति प्रत्येकं यष्टीमधुकचन्दनक्वाथकल्काभ्यां सिद्धम् । शर्करामधुकैरित्यत्र यष्टीमधुकद्वितयं, अत एव बहुत्वम् । सरैः विरेचनद्रव्यैरित्यर्थः । जेज्जटाचार्यस्तु क्षीरवृक्षप्रवालेष्वित्येकं योगं कथयति, बिम्बीक्वाथ इति द्वितीयं; तौ च योगावनार्षौ कथयन्ति ॥ २९ ॥ ३० ॥

**इङ्गुदीसर्षपस्नेहौ सकफे पूरणे हितौ ॥**
**तिक्तौषधानां यूषाश्च स्वेदाश्च कफनाशनाः ॥ ३१ ॥**

श्लेष्मशूलस्य चिकित्सामाह—इङ्गुदीसर्षपेत्यादि । सकफे 'कर्णशूले' इत्यध्याहारः । तिक्तेत्यादि । स्वेदाश्च कफनाशना इति तापोष्मस्वेदा रूक्षाः ॥ ३१ ॥

**सुरसादौ कृतं तैलं पञ्चमूले महत्यपि ॥**
**मातुलुङ्गरसः शुक्तं लशुनार्द्रकयो रसः ॥ ३२ ॥**
**एकैकः पूरणे पथ्यस्तैलं तेष्वपि वा कृतम् ॥**
**तीक्ष्णा मूर्धविरेकाश्च कवलाश्चात्र पूजिताः ॥ ३३ ॥**

सुरसादौ कृतमित्यादि । तैलद्वितयमेतत् । मातुलुङ्गरस इत्यादि । मातुलुङ्गरसादिना एकैकेनैव सिद्धं तैलं पूरणे पथ्यमित्यर्थः । तीक्ष्णा इत्यादि । तीक्ष्णा मूर्धविरेका इति अपामार्गबीजादिभिः । तीक्ष्णाः कवलाः पिप्पल्यादिभिः ॥ ३२ ॥ ३३ ॥

**कर्णशूलविधिः कृत्स्नः पित्तघ्नः शोणितावृते ॥**

शोणितशूलस्य चिकित्सामाह—कर्णेत्यादि । केचिदमुं पाठं न पठन्ति ॥—

**शूलप्रणादबाधिर्यक्ष्वेडानां तु प्रकीर्तितम् ॥ ३४ ॥**
**सामान्यतो, विशेषेण बाधिर्ये पूरणं शृणु ॥**
**गवां मूत्रेण बिल्वानि पिष्ट्वा तैलं विपाचयेत् ॥३५॥**
**सजलं च सदुग्धं च बाधिर्ये कर्णपूरणम् ॥**

शूलेत्यादि । पञ्जिकाकारस्तु 'सजलं च सदुग्धं च' इत्यत्र पादिकं जलदुग्धाभ्यां' इति पठति ॥ ३४ ॥ ३५ ॥—

**सितामधुकबिम्बीभिः सिद्धं वाऽऽजे पयस्यपि ३६**
**बिम्बीक्वाथे विमथ्योष्णं शीतीभूतं तदुद्धृतम् ॥**
**पुनः पचेद्दशक्षीरं सितामधुकचन्दनैः ॥ ३७ ॥**
**बिल्वाम्बुगाढं तत्तैलं बाधिर्ये कर्णपूरणम् ॥**

सितामधुकेत्यादि । सितामधुकबिम्बीभिः कल्किताभिश्छागीक्षीरे चतुर्गुणे पक्वं तिलतैलमुष्णमेव बिम्बीक्वाथे मथित्वा शीतीभूतं पाणिनाऽऽदाय पुनरपि बिल्वफलक्वाथे विलोडितं

१ 'विशेषस्तु' इति पा० ।

सितशर्करायष्टीमधुरक्तचन्दनैः कल्कीकृतैर्दशगुणे क्षीरे विपचेत् । केचिद् 'बिल्वाम्बुगाढं' इत्यत्र 'विम्ब्यम्बुगाढं' इति पठन्ति ॥ ३६ ॥ ३७ ॥—

**वक्ष्यते यः प्रतिश्याये विधिः सोऽप्यत्र पूजितः ३८**

इदानीं बाधियें कफानुबन्धोऽप्यस्तीत्यनागतावेक्षणेन संक्षेपार्थमतिदेशेन चिकित्सामाह—वक्ष्यते य इत्यादि । सोऽप्यत्र पूजित इति 'नवं प्रतिश्यायमपास्य सर्वमुपाचरेत् सर्पिष एव पानैः' इत्यादिनोक्तः ॥ ३८ ॥

**वातव्याधिषु यश्चोक्तो विधिः स च हितो भवेत् ॥**

शुद्धवातकृते पुनरतीतावेक्षणेन संक्षेपार्थमतिदेशेन निर्दिशन्नाह—वातव्याधिष्वित्यादि । वातव्याध्युक्तो विधिः निवातब्रह्मचर्यादिकः ॥—

**कर्णस्रावे पूतिकर्णे तथैव कृमिकर्णके ॥ ३९ ॥**
**समानं कर्म कुर्वीत योगान् वैशेषिकानपि ॥**

कर्म चिकित्साम् ॥ ३९ ॥—

**शिरोविरेचनं चैव धूपनं पूरणं तथा ॥ ४० ॥**
**प्रमार्जनं धावनं च वीक्ष्य वीक्ष्यावचारयेत् ॥**
**राजवृक्षादितोयेन सुरसादिगणेन वा ॥ ४१ ॥**

किं तत् समानं कर्मेत्याह—शिरोविरेचनमित्यादि । प्रमार्जनं पिचुकूर्चिकया कर्णप्रोञ्छनं, धावनं प्रक्षालनम् । वीक्ष्य वीक्ष्येति प्रत्येकं कर्णप्रस्रावादिषु दोषदूष्यादिमलविशेषं[1] दृष्ट्वा दृष्ट्वेत्यर्थः । राजवृक्षादितोयेनेत्यादि । राजवृक्षादिः आरग्वधादिः॥४०॥४१॥

**कर्णप्रक्षालनं कार्यं चूर्णैरेषां च पूरणम् ॥**
**क्वाथं पञ्चकषायं तु कपित्थरसयोजितम् ॥ ४२ ॥**
**कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥**
**सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः ॥४३॥**
**योजितो मधुना वाऽपि कर्णस्रावे प्रशस्यते ॥**
**लाक्षा रसाञ्जनं सर्जश्चूर्णितं कर्णपूरणम् ॥ ४४ ॥**
**सशैवलं महावृक्षजम्ब्वाम्रप्रसवायुतम् ॥**
**कुलीरशौद्रमण्डूकीसिद्धं तैलं च पूजितम् ॥ ४५ ॥**

समानं कर्माभिधाय वैशेषिकान् योगानाह—कर्णेत्यादि । पञ्चकषायमस्मिन्नेवाध्याये 'तिन्दुकान्यभया रोध्रं समङ्गाऽऽमलकं' इत्यादिना पठिष्यति, अन्ये तु आरग्वधशिरीषजम्बुसर्जाश्वकर्णजं पञ्चकषायचूर्णं कथयन्ति, तच्च टीकापञ्जिकाभ्यां नाङ्गीकृतम् । सर्जत्वगित्यादि । कार्पासी वनकार्पासी । शैवलं दूर्वा, हठमित्यन्ये । महावृक्षः सेहुण्डः, प्रसवाः पल्लवाः । कुलीरः कर्कटशृङ्गी, मण्डूकी ब्राह्मीभेदः । शैवलादिकं प्रसवपर्यन्तं कषायद्रव्यं, कुलीरादिकं च कल्कद्रव्यम् । पूजितं 'कर्णस्रावे कर्णपूरणम्' इत्यध्याहार्यम् ॥ ४२—४५ ॥

**तिन्दुकान्यभया रोध्रं समङ्गाऽऽमलकं मधु ॥**
**पूरणं चात्र[2] पथ्यं स्यात्कपित्थरसयोजितम् ॥ ४६ ॥**

तिन्दुकान्यभया रोध्रमित्यादि । समङ्गा अञ्जलिकारिका, 'वराहक्रान्ता' इत्यपरे । इदं पञ्चकषायचूर्णम् ॥ ४६ ॥

**रसमाम्रकपित्थानां मधूकधवशालजम् ॥**
**पूरणार्थं प्रशंसन्ति तैलं वा तैर्विपाचितम् ॥ ४७ ॥**
**प्रियङ्गुमधुकाम्बष्ठाधातकीशिलपर्णिभिः ॥**
**मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन वा ॥४८॥**
**पचेत्तैलं तदास्रावमवगृह्णाति पूरणात् ॥**

रसमाम्रेत्यादि । आम्रादिपल्लवानां रसः स्वरस एव एकैकः समस्तो वा कर्णपूरणम्, तैर्विपक्वं वा तिलतैलं पूयस्रावे पूरणम् । प्रियङ्गुमधुकाम्बष्ठेत्यादि । प्रियङ्ग्वादिकल्कैः कपित्थपल्लवरसेन चतुर्गुणेन तिलतैलं सिद्धं कर्णस्रावापहम् । अम्बष्ठा सांकुरडा, शिला मनःशिला, पर्णी शालपर्णी ॥ ४७ ॥ ४८ ॥—

**धृतं रसाञ्जनं नार्याः क्षीरेण मधुसंयुतम् ॥ ४९ ॥**
**तत्प्रशस्तं चिरोत्थेऽपि सास्रावे पूतिकर्णके ॥**
**निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुडः ॥ ५० ॥**
**पूरणः पूतिकर्णस्य शमनो मधुसंयुतः ॥**

इदानीं पूतिकर्णस्य विशेषचिकित्सां योगद्वयेनाह—घृष्टमित्यादि ॥ ४९ ॥ ५० ॥

**कृमिकर्णकनाशार्थं कृमिघ्नं योजयेद्विधिम् ॥ ५१ ॥**

कृमिकर्णे वैशेषिकमाह—कृमिकर्णकनाशार्थमित्यादि। कृमिघ्नो विधिः क्रिमिप्रतिषेधे[1] वक्ष्यमाणः ॥ ५१ ॥

**वार्ताकुधूमश्च हितः सार्षपस्नेह एव च ॥**

अपरमपि विशेषचिकित्सितमाह—वार्ताकुधूम इत्यादि । परिणतशुष्कवार्ताकुधूमस्य पानं कर्णधूपनं च, सार्षपस्नेहेन कर्णपूरणं, तन्त्रान्तरोक्तत्वात् ॥—

**कृमिघ्नं हरितालेन गवां मूत्रयुतेन च ॥ ५२ ॥**
**गुग्गुलोः कर्णदौर्गन्ध्ये धूपनं श्रेष्ठमुच्यते ॥**
**छर्दनं धूमपानं च कवलस्य च धारणम् ॥ ५३ ॥**

कृमिकृतदौर्गन्ध्यचिकित्सामाह—कृमिघ्नमित्यादि । कृमिघ्नं विडङ्गसारचूर्णं, तच्च हरितालचूर्णेन युतं गोमूत्रेण पूरणं, गुग्गुलुना धूपनम् । छर्दनमित्यादि । केचिच्छर्दनादिकं क्रियात्रितयं त्रयाणामास्रावादीनां हितमाहुः; तन्न, यतः कृमिकृतदौर्गन्ध्यसान्निध्याद्विदेहादिष्वस्य दर्शनाद्[2] दौर्गन्ध्य एव छर्दनादित्रितयं हितम् ॥ ५२ ॥ ५३ ॥

**कर्णक्ष्वेडे हितं तैलं सार्षपं चैव पूरणम् ॥**
**विद्रधौ चापि कुर्वीत विद्रध्युक्तं चिकित्सितम् ५४**

कर्णक्ष्वेडे हितमित्यादि । कर्णक्ष्वेडे यत् सार्षपं तैलं पूरणे उक्तं तद्विद्रधावपि कुर्वीत; न केवलं तदेव कुर्वीत विद्रध्युक्तं चिकित्सितमपि कुर्वीतेत्यर्थः । वातजे आमे सवेदने विद्रधौ तिलतैलेन सेकः, कफजे पुनः सार्षपतैलेनेति ॥ ५४ ॥

**प्रक्लेद्य धीमांस्तैलेन स्वेदेन प्रविलाप्य च ॥**
**शोधयेत्कर्णविट्कं तु भिषक् सम्यक् शलाकया ॥**

कर्णगूथचिकित्सामाह—प्रक्लेद्येत्यादि ॥ ५५ ॥

१ 'दोषदूष्यादिवलविशेषं' इति पा० । २ 'चातिपथ्यं स्यात्' इति पा० ।

१ 'कर्णप्रतिषेधे' इति पा० । २ 'विदेहादिष्वप्यदर्शनात्' इति पा० ।

**नाडीस्वेदोऽथ वमनं धूमो मूर्धविरेचनम् ॥**
**विधिश्च कफहृत्सर्वैः कर्णकण्डूमपोहति ॥ ५६ ॥**

कर्णकण्डूचिकित्सामाह—नाडीस्वेद इत्यादि । वमनं सस्वेद-वमनं, धूमोऽत्र वैरेचनिकः ॥ ५६ ॥

**अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ॥**
**ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥५७**

कर्णप्रतीनाहे चिकित्सामाह—अथेत्यादि । क्रियां स्नेहस्वेद-नस्यादिकां, प्राप्तां युक्ताम् ॥ ५७ ॥

**कर्णपाकस्य भैषज्यं कुर्यात्पित्तविसर्पवत् ॥**

कर्णपाके चिकित्सामाह—कर्णपाकस्येत्यादि । शीतालेपन-परिषेकादींश्च तच्चिकित्सितोक्तान् कुर्यात् ॥—

**कर्णच्छिद्रे वर्तमानं कीटं क्लेदमलादि वा ॥ ५८ ॥**
**श्लक्ष्णेनापहरेद्धीमानथवाऽपि शलाकया ॥**

शारीरदोषभवकर्णगूथप्रत्याकर्षणचिकित्साप्रसङ्गेनागन्तुकीट-मलादीनामाकर्षणचिकित्सामाह—कर्णच्छिद्र इत्यादि । श्लक्ष्णेना-पहरेत् 'आचूष्य' इति शेषः ॥ ५८ ॥—

**शेषाणां तु विकाराणां प्राक् चिकित्सितमीरितम् ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे कर्णगतरोगप्रतिषेधो नामैकविंशोऽध्यायः ॥ २१ ॥**

इदानीं शालाक्यसिद्धान्तेन चतुर्विधानामर्शसां सप्तविधा-नामर्बुदानां चतुर्विधानां शोफानां किं चिकित्सितमिति पृष्टः शालाक्यतन्त्रस्य न्यूनतादोषं परिजिहीर्षुराह—शेषाणामित्यादि । शेषाणां चतुर्विधानामर्शसां, सप्तविधानाम् अर्बुदानां, चतुर्वि-धानां शोफानां चेत्यर्थः । प्रागिति अर्शआदिचिकित्सिते । ईरितं प्रतिदोषं प्रत्यवस्थं सर्वमुक्तमित्यर्थः ॥ ५९ ॥

इति श्रीडल्हृ(ह्व)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुत-व्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे एकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशतितमोऽध्यायः ।

**अथातो नासागतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि । गतशब्द आश्रयवचनः, तेन नासाश्रित-रोगविज्ञानमधिकृत्य कृतोऽध्यायो नासागतरोगविज्ञानीया-ध्यायः ॥ १ ॥ २ ॥

**अपीनसः पूतिनस्यं[1] नासापाकस्तथैव च ॥**
**तथा शोणितपित्तं च पूयशोणितमेव च ॥ ३ ॥**
**क्षवथुर्भ्रंशथुर्दीप्तो नासानाहः परिस्रवः ॥**
**नासाशोषेण सहिता दशैकाश्चेरिता गदाः ॥ ४ ॥**
**चत्वार्यर्शांसि चत्वारः शोफाः सप्तार्बुदानि च ॥**

१ 'पूतिनासः' इति पा० ।

**प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिताः ॥**
**एकत्रिंशन्मितास्ते तु[1] नासारोगाः प्रकीर्तिताः ॥ ५ ॥**

नासारोगान् नामभिः संख्यया चाह—अपीनस इत्यादि । संख्येयनिर्देशादेव संख्यायां लब्धायां भूयः संख्याकरणं निय-मार्थं; तेन विदेहोक्तसंख्यया अधिकत्वं मा भूत् । 'अपी-नसः पूतिपाकौ पित्तासृक् पूयशोणितम्' इति केचित् पठन्ति ॥ ३-५ ॥

**आनह्यते यस्य विधूप्यते च**
**प्रक्लिद्यते शुष्यति चापि नासा ॥**
**न वेत्ति यो गन्धरसांश्च जन्तु-**
**र्जुष्टं व्यवस्येत्तमपीनसेन ॥ ६ ॥**
**तं चानिलश्लेष्मभवं विकारं**
**ब्रूयात् प्रतिश्यायसमानलिङ्गम् ॥**

अपीनसलक्षणमाह—आनह्यत इत्यादि । आनह्यते कफेन पित्तशोषितेन आनद्धत इव । विधूप्यते धूमायत इव, पित्तात्; प्रक्लिद्यते आर्द्रीभवति कफात्; शुष्यति पित्तात् । गन्धरसान् गन्धान् रसांश्चेत्यर्थः; अन्ये तु गन्धस्य रसा गन्ध-रसाः, रसत्वेर्गन्धस्यार्थत्वात्; याथातथ्येन गन्धं न जानातीत्यर्थः । व्यवस्येत् जानीयात् । केचिदमुं पाठमन्यथा पठन्ति, स चादर्श-नान्न लिखितः ॥ ६ ॥—

**दोषैर्विदग्धैर्गलतालुमूले**
**संवासितो यस्य समीरणस्तु ॥ ७ ॥**
**निरेति पूतिर्मुखनासिकाभ्यां**
**तं पूतिनासं प्रवदन्ति रोगम् ॥**

पूतिनासस्य लक्षणमाह—दोषैरित्यादि । रक्तमपि दोषत्वेन विवक्षितं, तेन दोषैरिति बहुवचनम् । विदग्धैः मूर्च्छितैः स्वरूप-प्रच्युतैर्वा । संवासितः पित्तश्लेष्मरक्तैरात्मविकृतिगन्धेन मिश्री-कृतः । निरेति निर्गच्छति, पूतिः शटितगन्धो वायुः ॥ ७ ॥—

**घ्राणाश्रितं पित्तमरूंषि कुर्या-**
**द्यस्मिन् विकारे बलवांश्च पाकः ॥ ८ ॥**
**तं नासिकापाकमिति व्यवस्ये-**
**द्विक्लेदकोथावपि यत्र दृष्टौ[2] ॥**

नासापाकस्य लक्षणमाह—घ्राणाश्रितमित्यादि । अरूंषि व्रणान् । विक्लेद आर्द्रभावः, कोथः पूतिभावः, एतौ यत्र यस्मिन् विकारे, दृष्टौ दर्शनं गतौ ॥ ८ ॥—

**चतुर्विधं द्विप्रभवं द्विमार्गं**
**वक्ष्यामि भूयः खलु रक्तपित्तम् ॥ ९ ॥**

रक्तपित्तलक्षणमनागतावेक्षणेन निर्दिशन्नाह—चतुर्विधमि-त्यादि । चतुर्विधं वातपित्तकफसन्निपातात्मकम् । द्विप्रभवं द्वौ प्रभवौ यकृत्प्लीहानौ यस्य तं तथा; अन्ये तु स्निग्धरूक्षोष्णभेदेन द्विरुत्पत्तिकारणं मन्यन्ते; अपरे तु द्विप्रभवमामाशयपक्वाशय-प्रभवमाहुः । द्विमार्गम् अधरोत्तरमार्गद्वयम् ॥ ९ ॥

१ 'एकत्रिंशत्सहितैस्तैस्तु' इति पा० । २ 'पापच्यते क्लिद्यति' इति पा० ।

दोषैर्विदग्धैरथवाऽपि जन्तो-
र्ललाटदेशेऽभिहतस्य तैस्तु ॥
नासा स्रवेत् पूयमसृग्विमिश्रं
तं पूयरक्तं प्रवदन्ति रोगम् ॥ १० ॥

पूयरक्तं दोषागन्तुनिमित्तं दर्शयन्नाह—दोषैरित्यादि । विदग्धैः पित्तरक्ताधिक्याद्विरुद्धां परिणतिं प्राप्तैः । ललाटाभिघातोऽपि विरुद्धपाकं प्राप्तो मन्तव्यः ॥ १० ॥

घ्राणाश्रिते मर्मणि संप्र[1]दुष्टे
यस्यानिलो नासिकया निरेति ॥ ११ ॥
कफानुयातो बहुशः सशब्द-
स्तं रोगमाहुः क्षवथुं विधिज्ञाः ॥

क्षवथुरपि दोषजश्चागन्तुजश्च, तत्र पूर्वं दोषजमेव निर्दिशन्नाह—घ्राणेत्यादि । घ्राणाश्रिते मर्मणि शृङ्गाटकाख्ये; 'घ्राणाश्रिते मर्मणि' इत्यत्र 'घ्राणाश्रिते श्लेष्मणि' इति केचित् पठन्ति ॥ ११ ॥—

तीक्ष्णोपयोगादतिजिघ्रतो वा
भावान् कटून्नर्कनिरीक्षणाद्वा ॥ १२ ॥
सूत्रादिभिर्वा तरुणास्थिमर्म-
ण्युद्धाटितेऽन्यः क्षवथुर्निरेति ॥

आगन्तुजं क्षवथुमाह—तीक्ष्णोपयोगादित्यादि । अतिजिघ्रतः आघ्रायतः । भावान् द्रव्याणि । तरुणास्थिमर्म नासावंशास्थिमर्म शृङ्गाटकसंज्ञम् । उद्घाटिते ऊर्ध्वं चालिते ॥ १२ ॥—

प्रभ्रश्यते नासिकयैव यश्च[2]
सान्द्रो विदग्धो लवणः कफस्तु ॥ १३ ॥
प्राक् संचितो मूर्धनि पित्ततप्त-
स्तं भ्रंशथुं व्याधिमुदाहरन्ति ॥

भ्रंशथोर्लक्षणमाह—प्रभ्रश्यत इत्यादि । प्रभ्रश्यते अत्यर्थमधः पतति नासिकयैव, न मुखेन ॥ १३ ॥—

घ्राणे भृशं दाहसमन्विते तु
विनिःसरेद्धूम इवेह वायुः ॥ १४ ॥
नासा प्रदीप्तेव च यस्य जन्तो-
र्व्याधिं तु तं दीप्तमुदाहरन्ति ॥

दीप्तलक्षणमाह—घ्राणे भृशमित्यादि । विनिःसरेत् निर्याति । वायुः निश्वासः । प्रदीप्तेव ज्वलितेव नासा स्यात् ॥ १४ ॥—

कफावृतो वायुरुदानसंज्ञो
यदा स्वमार्गे विगुणः स्थितः स्यात् ॥ १५ ॥
घ्राणं वृणोतीव तदा स रोगो
नासाप्रतीनाह इति प्रदिष्टः ॥

नासाप्रतीनाहलक्षणमाह—कफावृत इत्यादि । नासा प्रतिनह्यते बध्यत इव वातेनेति नासाप्रतीनाहः ॥ १५ ॥—

अजस्रमच्छं सलिलप्रकाशं
यस्याविवर्णं स्रवतीह नासा ॥ १६ ॥
रात्रौ विशेषेण हि तं विकारं
नासापरिस्रावमिति व्यवस्येत् ॥

नासापरिस्रावमाह—अजस्रमच्छमित्यादि । अजस्रम् अनवरतम् । अविवर्णम् अविशिष्टवर्णम् । अत्र रोगे स्रावः शृङ्गाटकाख्यस्रोतसि प्रविलायितात् कफात् । व्यवस्येत् जानीयात् ॥ १६ ॥—

घ्राणाश्रिते श्लेष्मणि मारुतेन
पित्तेन गाढं परिशोषिते च ॥ १७ ॥
समुच्छ्वसित्यूर्ध्वमधश्च कृच्छ्रा-
द्यस्तस्य नासापरिशोष उक्तः ॥

नासाशोषलक्षणमाह—घ्राणाश्रिते इत्यादि । गाढम् अतिशयेन ॥ १७ ॥—

दोषैस्त्रिभिस्तैः पृथगेकशश्च
ब्रूयात्तथाऽर्शांसि तथैव शोफान् ॥ १८ ॥
शालाक्यसिद्धान्तमवेक्ष्य चापि
सर्वात्मकं सप्तममर्बुदं तु ॥

इदानीमुक्तानामर्शआदीनां सामान्येन लक्षणमाह—दोषैरित्यादि । पृथग्दोषैः त्रीण्यर्शांसि, सन्निपातेनैकं, एवं चत्वार्यर्शांसि । तथैव शोफानिति शोफा अपि चत्वार इत्यर्थः । शालाक्यसिद्धान्तमवेक्ष्येति 'वातेन पित्तेन कफेन चापि' इत्यादिना निदानस्थाने षडर्बुदानि निर्दिष्टानि, सप्तमं सर्वात्मकं शालाक्यतन्त्रे ॥ १८ ॥—

रोगः प्रतिश्याय इहोपदिष्टः
स वक्ष्यते पञ्चविधः पुरस्तात् ॥ १९ ॥

प्रतिश्यायस्यानागतावेक्षणेन संक्षेपार्थं लक्षणं निर्दिशन्नाह—रोग इत्यादि ॥ १९ ॥

([1]नासास्रोतोगता रोगास्त्रिंशदेकश्च कीर्तिताः ।

ननु, सर्वाङ्गगतानां कुष्ठादीनामप्यत्र नासायां संभवोऽस्तीति नासारोगाणां सङ्ख्यातिरेकमाशङ्क्याह—नासास्रोतोगता रोगा इत्यादि । नासास्रोतसि गता एव ये रोगास्त एव मयैकत्रिंशदुक्ताः, न पुनरत्र नासायां ये भवन्ति ॥—

स्रोतःपथे यद्विपुलं कोशवच्चार्बुदं भवेत् ॥ २० ॥)

नासागतशोफान् नासार्बुदलक्षणेन पृथक्कुर्वन्नाह—स्रोत इत्यादि । कोशः अन्तःपूरणवस्तु, यादृशमस्यान्तःपूरणवस्तु तादृशमन्तःपूरणकरं वस्तु शोथस्य नास्तीत्यर्थः ॥ २० ॥

शोफास्तु शोफविज्ञाना नासास्रोतोव्यवस्थिताः ।
निदानेऽर्शांसि निर्दिष्टान्येवं तानि विभावयेत् ॥ २१ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे नासागतरोगविज्ञानीयो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

शोफाः पुनः कीदृशा इत्याह—शोफा इत्यादि । शोफो विज्ञानं येषां ते शोफविज्ञानाः; अथवा प्रागुक्तशोफानामिव

१ 'संप्रदुष्टः' इति पा० । २ 'यस्य' इति पा० ।

१ अयं श्लोको हाराणचन्द्रेण न पठितः ।

विज्ञानं येषामिति । निदानेऽर्शांसीत्यादि । एष पाठो द्विरुक्तिभयान्निबन्धकारैर्न पठितः ॥ २१ ॥

इति श्रीडल्ह(ह्व)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशतितमोऽध्यायः ।

**अथातो नासागतरोगप्रतिषेधं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**पूर्वोद्दिष्टे पूतिनस्ये च जन्तोः**
**स्नेहस्वेदौ छर्दनं स्रंसनं च ॥**
**युक्तं भक्तं तीक्ष्णमल्पं लघु स्या-**
**दुष्णं तोयं धूमपानं च काले ॥ ३ ॥**

अपीनसपूतिनस्ययोश्चिकित्सामाह—पूर्वोद्दिष्ट इत्यादि । पूर्वोद्दिष्टे अपीनसे इत्यर्थः । छर्दनं वमनं, स्रंसनं विरेकः । कृतशुद्धेरन्तःसंसर्गं नियमयन्नाह—युक्तमित्यादि । तोयस्य पानं नियमयन्नाह—उष्णं तोयमित्यादि । काले धूमपानकाले ॥ ३ ॥

**हिङ्गु व्योषं वत्सकाख्यं शिवाटी**
**लाक्षा बीजं सौरभं कट्फलं च ॥**
**उग्रा कुष्ठं तीक्ष्णगन्धा विडङ्गं**
**श्रेष्ठं नित्यं चावपीडे करञ्जम् ॥ ४ ॥**

तयोरेवावपीडमुद्दिशन्नाह—हिङ्गु व्योषमित्यादि । व्योषं त्रिकटुकम् । शिवाटी श्वेतपुनर्नवा, शेफालिकेत्यन्ये । उग्रा वचा, तीक्ष्णगन्धा शोभाञ्जनकः । अवपीड्य दीयत इत्यवपीडः । केचिदमुमेव पाठमन्यथा पठन्ति, स चादर्शनान्न लिखितः ॥४॥

**एतैर्द्रव्यैः सार्षपं मूत्रयुक्तं**
**तैलं धीमान्नस्यहेतोः पचेत ॥**

अपीनसपूतिनस्ययोरेतैरेवावपीडनद्रव्यैर्नस्यार्थं तैलसाधनमाह—एतैर्द्रव्यैरित्यादि । केचित् 'अस्मिन् तैले युक्तितः संपचेत मञ्जिष्ठां वै स्रोतसि म्रक्षणार्थं' इति पठन्ति, स चाचार्यैरनार्षीकृतः ॥—

**नासापाके पित्तहृत्संविधानं**
**कार्यं सर्वं बाह्यमाभ्यन्तरं च ॥ ५ ॥**
**हृत्वा रक्तं क्षीरवृक्षत्वचश्च**
**साज्याः सेका योजनीयाश्च लेपाः ॥**

नासापाके भेषजमाह—नासापाके इत्यादि । बाह्यं लेपाभ्यञ्जपरिषेकादि, आभ्यन्तरं पुनराहारस्नेहपानविरेचनादि । साज्याः सघृताः ॥ ५ ॥—

**वक्ष्याम्यूर्ध्वं रक्तपित्तोपशान्ति**

रक्तपित्तस्यानागतावेक्षणेन संक्षेपार्थं चिकित्सितमाह—वक्ष्याम्यूर्ध्वमित्यादि । ऊर्ध्वं रक्तपित्तप्रतिषेधे । उपशान्ति चिकित्सितं 'नासाप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा' इत्यादिकम् ॥—

**नाडीवत्स्यात् पूयरक्ते चिकित्सा ॥ ६ ॥**

पूयरक्तस्य विधानमाह—नाडीवदित्यादि । पूयरक्ते नाडीवत् नाडीतुल्या चिकित्सा, या विसर्पनाडीस्तनरोगचिकित्सिते व्याख्याता ॥ ६ ॥

**वान्ते सम्यक् चावपीडं वदन्ति**
**तीक्ष्णं धूमं शोधनं चात्र नस्यम् ॥**

पूयरक्ते सामान्यां चिकित्सामभिधाय विशेषचिकित्सामाह—वान्ते इत्यादि । अत्र पूयरक्ते; अन्ये तु 'अत्रेति नासापाके' इति व्याख्यानयन्ति । केचित् 'वान्ते सम्यक्' इत्यादिकं क्षवथौ भ्रंशथौ च योजयन्ति ।—

**क्षेप्यं नस्यं मूर्धवैरेचनीयै-**
**र्नाड्या चूर्णं क्षवथौ भ्रंशथौ च ॥ ७ ॥**
**कुर्यात् स्वेदान् मूर्ध्नि वातामयघ्नान्**
**स्निग्धान् धूमान् यच्चदन्यद्धितं च ॥**

क्षवथौ भ्रंशथौ च चिकित्सामाह—क्षेप्यमित्यादि । नस्यमिति प्रधमनमित्यर्थः, पञ्चविधत्वान्नस्यस्य । मूर्धवैरेचनीयैः शिरोविरेचनद्रव्यैः । प्रधमनेन क्षीणे कफे वाते च वृद्धे सति अनिलघ्नान् स्निग्धानित्यर्थः । अन्यदिति शिरोबस्तिमस्तिष्कादिकम् ॥ ७ ॥—

**दीप्ते रोगे पैत्तिकं संविधानं**
**कुर्यात् सर्वं स्वादु यच्छीतलं च ॥ ८ ॥**

दीप्तरोगस्य चिकित्सामाह—दीप्ते इत्यादि । संविधानं कर्मेत्यर्थः, सर्वं बाह्याभ्यन्तरम् ॥ ८ ॥

**नासानाहे स्नेहपानं प्रधानं**
**स्निग्धा धूमा मूर्धबस्तिश्च नित्यम् ॥**
**बलातैलं सर्वथैवोपयोज्यं**
**वातव्याधावन्यदुक्तं च यच्च ॥ ९ ॥**

नासानाहचिकित्सामाह—नासानाहे स्नेहपानमित्यादि । स्नेहपानम् उत्तरभक्तकम् । मूर्धबस्तिश्चेति चकारात् साल्वणोपनाहादयो गृह्यन्ते । सर्वथैवेति पानाभ्यञ्जानुवासनशिरोबस्तिमस्तिष्कादिभिः सर्वैरेव प्रकारैः । अन्यत् अणुतैलादिकम् ॥ ९ ॥

**नासास्रावे घ्राणतश्चूर्णमुक्तं**
**नाड्या देयं योऽवपीडश्च तीक्ष्णः ॥**
**तीक्ष्णं धूमं देवदार्वग्निकाभ्यां**
**मांसं वाऽऽजं युक्तमत्रादिशन्ति ॥ १० ॥**

नासास्रावचिकित्सामाह—नासास्रावे इत्यादि । उक्तं चूर्णं शिरोविरेचनद्रव्यकृतम् । तीक्ष्णोऽवपीडो 'हिङ्गु व्योषं वत्सकाख्यं' इत्यादिना इहैवाध्याये प्रोक्तः । अग्निकः चित्रकः, अजमोदामन्ये । आजं मांसं 'भोजने' इति शेषः ॥ १० ॥

**नासाशोषे क्षीरसर्पिः प्रधानं**
**सिद्धं तैलं चाणुकल्पेन नस्यम् ॥**

सर्पिःपानं भोजनं जाङ्गलैश्च
स्नेहः स्वेदः स्नैहिकश्चापि धूमः ॥ ११ ॥

नासाशोषे चिकित्सामाह—नासाशोषे क्षीरसर्पिरित्यादि । क्षीरसर्पिः आदित उक्तम् । प्रधानं श्रेष्ठम् । नस्ये नस्यविषये । अणुकल्पेन अणुतैलविधानेन वातव्याध्युक्तेन । सर्पिःपानम् अन्तर्भक्तकम् । जाङ्गलैः एणादिमांसैः, स्नेहः स्वेद इत्यर्थः । स्नैहिको धूमो मधूच्छिष्टादिभिः ॥ ११ ॥

शेषान् रोगान् घ्राणजान् सन्नियच्छे-
दुक्तं तेषां यद्यथा संविधानम् ॥ १२ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे नासागतरोगप्रतिषेधो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

अर्शःप्रभृतीनां चिकित्सामाह—शेषानित्यादि । शेषान् रोगानर्शःशोफादीन्, सन्नियच्छेत् चिकित्सेत् । उक्तं संविधानं स्वे स्वे चिकित्सिते ॥ १२ ॥

इति श्रीडल्ह(ह्व)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशतितमोऽध्यायः ।

अथातः प्रतिश्यायप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि । वातं प्रति अभिमुखं श्यायो गमनं कफादीनां यत्र स प्रतिश्यायः । प्रतिषेधः चिकित्सितम् ॥ १ ॥ २ ॥

नारीप्रसङ्गः शिरसोऽभितापो
धूमो रजः शीतमतिप्रतापः ॥
संधारणं मूत्रपुरीषयोश्च
सद्यः प्रतिश्यायनिदानमुक्तम् ॥ ३ ॥

तच्च चिकित्सितमलक्षितानां व्याधीनां न संभवति, अतः प्रतिश्यायलक्षणार्थं पूर्वं सद्योजनकमेव निदानं निर्दिशन्नाह—नारीप्रसङ्ग इत्यादि । नारीप्रसङ्गो नारीष्वतिशयेन प्रवृत्तिः । शिरः अभितप्यते येन स शिरोभितापः । (शिरोभितापो धूमादिः, रजोधूमचयाश्च नासाप्रविष्टा हेतवः ।) केचिदमुं पाठं न पठन्ति; तच्च, यतः सर्वैर्निबन्धकारैरङ्गीकृतोऽयं पाठः ॥ ३ ॥

चयं गता मूर्धनि मारुतादयः
पृथक् समस्ताश्च तथैव शोणितम् ॥
प्रकोप्यमाणा विविधैः प्रकोपणै-
र्नृणां प्रतिश्यायकरा भवन्ति हि ॥ ४ ॥

सद्योजनकं निदानमभिधाय चयादिक्रमेण । कालान्तरजनकमपि निदानमाह—चयमित्यादि । चयं गताः अर्थात् स्वे स्वे स्थाने संचयं प्राप्ताः । मूर्धनीति मूर्धनि प्रतिश्यायकरा भवन्तीति योजनीयम् । यदि स्वे स्वे स्थाने चितास्तत् कथं मूर्धनि प्रतिश्यायकरा इत्याह—प्रकोप्यमाणा इत्यादि । विविधैः प्रकोपणैः बलवद्विग्रहादिभिः क्रोधादिभिर्दिवास्वप्नादिभिश्च । अन्ये तु मूर्धनि संचयं प्राप्ता दोषा इति व्याख्यानयन्ति । ननु स्वस्थानवृद्धिः संचयः, वातपित्तकफरक्तानां शिरसि स्थानं नास्ति, तत्कथं मूर्धनि वातादीनां संचयः? सत्यं, 'यो वायुर्वैकसंचारी' इत्यादिना वायोः शिरसि स्थानमुक्तं, पित्तस्य लग्दृष्टिश्चेति शिरसि स्थानद्वयं, श्लेष्मणः स्थानं शिरसि प्रसिद्धमेव, सिराणां सर्वगत्वाद्रक्तस्यापि शिरसि स्थानं, तस्मात् शिरसि संचयं गता इति युक्तम् ॥ ४ ॥

शिरोगुरुत्वं क्षवथोः प्रवर्तनं
तथाऽङ्गमर्दः परिहृष्टरोमता ॥
उपद्रवाश्चाप्यपरे पृथग्विधा
नृणां प्रतिश्यायपुरःसराः स्मृताः ॥ ५ ॥

प्रतिश्यायस्य पूर्वरूपमाह—शिरोगुरुत्वमित्यादि । क्षवथोः प्रवर्तनं छिक्कायाः प्रवृत्तिः । अङ्गमर्दो वेदनाविशेषः । परिहृष्टरोमता उच्छूनरोमता, उद्धर्षितरोमाञ्च इति यावत् । पृथग्विधा उपद्रवा ज्वरारोचकादयः । पुरःसरा अग्रगामिनः, पूर्वरूपाणीत्यर्थः ॥ ५ ॥

आनद्धा पिहिता नासा तनुस्रावप्रवर्तिनी ॥
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ॥ ६ ॥
स्वरोपघातश्च भवेत् प्रतिश्यायेऽनिलात्मके ॥

वातजप्रतिश्यायस्य लक्षणमाह—आनद्धा पिहितेत्यादि । आनद्धा आध्माता पूरितेव । पिहिता रजःशूकपूर्णेव ॥ ६ ॥—

उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके ॥ ७ ॥
कृशोऽतिपाण्डुः सन्तप्तो भवेत्तृष्णानि(भि)पीडितः
सधूमं सहसा वह्निं वमतीव च मानवः ॥ ८ ॥

पित्तप्रतिश्यायस्य लक्षणमाह—उष्ण इत्यादि । सपीतक ईषत्पीत इत्यर्थः । सधूममिति सधूममिव वह्निं नासया वमतीत्यर्थः । सहसा अकस्मात् ॥ ७ ॥ ८ ॥

कफः कफकृते घ्राणाच्छुक्लः शीतः स्रवेन्मुहुः ॥
शुक्लावभासः शूनाक्षो भवेद्गुरुशिरोमुखः ॥ ९ ॥
शिरोगलौष्ठतालूनां कण्डूयनमतीव च ॥

कफकृतप्रतिश्यायलिङ्गमाह—कफ इत्यादि । कफकृते प्रतिश्याये कफः स्रवेदिति संबन्धनीयम् ॥ ९ ॥—

भूत्वा भूत्वा प्रतिश्यायो योऽकस्माद्विनिवर्तते १०
संपक्वो वाऽप्यपक्वो वा स सर्वप्रभवः स्मृतः ॥
लिङ्गानि चैव सर्वेषां पीनसानां च सर्वजे ॥ ११ ॥

सान्निपातिकस्य लिङ्गं निर्दिशन्नाह—भूत्वेत्यादि । अकस्मात् कारणं विना । सर्वजे प्रतिश्याये सर्वेषां वातादिजानां प्रतिश्यायानां पीनसानां लिङ्गानि भवन्तीति योज्यम् । सान्निपातिकप्रतिश्यायोऽसाध्यः, विदेहोक्तत्वात् ॥ १० ॥ ११ ॥

---

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

१ 'सर्वसरत्वात्' इति पा० ।

**रक्तजे तु प्रतिश्याये रक्तास्रावः प्रवर्तते ॥**
**ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः ॥ १२ ॥**
**दुर्गन्धोच्छ्वासवदनस्तथा गन्धान्न वेत्ति च ॥**
**मूर्च्छन्ति चात्र कृमयः श्वेताः स्निग्धास्तथाऽणवः ॥**
**कृमिमूर्धविकारेण समानं चास्य लक्षणम् ॥**

रक्तजप्रतिश्यायस्य लक्षणमाह—रक्तजे इत्यादि । उरोघातस्तन्त्रान्तरोक्तलक्षणः तेन प्रकर्षेण पीडितः । तदेव तन्त्रान्तरोक्तलक्षणं दर्शयति,—"उरःक्षतं गुरु स्तब्धं पूतिपूर्णकफो रसः । सकासः सज्वरो ज्ञेय उरोघातः सपीनसः"—इति । मूर्च्छन्ति पतन्ति । अत्र रक्तजप्रतिश्याये । कृमयः सूक्ष्माः । कृमिमूर्धविकारेणेत्यादि । कृमिजस्य शिरोरोगस्य यल्लक्षणं तेन समानमस्य लक्षणमित्यर्थः । केचित् 'मूर्च्छन्ति चात्र कृमयः श्वेताः स्निग्धास्तथाऽणवः' इति पाठं रक्तजप्रतिश्यायलक्षणभिन्नं पठन्ति, व्याख्यानयन्ति च—अत्रेति एषु सर्वेष्वेव प्रतिश्यायेषु ॥ १२ ॥ १३ ॥—

**प्रक्लिद्यति पुनर्नासा पुनश्च परिशुष्यति ॥ १४ ॥**
**मुहुरानह्यते चापि मुहुर्विव्रियते तथा ॥**
**निःश्वासोच्छ्वासदौर्गन्ध्यं तथा गन्धान्न वेत्ति च १५**
**एवं दुष्टप्रतिश्यायं जानीयात् कृच्छ्रसाधनम् ॥**

इदानीमेकदोषजेऽपि प्रतिश्याये दुरुपचारतो दोषान्तरप्रकोपाद्दुष्टिं गतस्य लिङ्गमाह—प्रक्लिद्यतीत्यादि ॥ १४ ॥ १५ ॥—

**सर्वे एव प्रतिश्याया नरस्याप्रतिकारिणः ॥ १६ ॥**
**कालेन रोगजनना जायन्ते दुष्टपीनसाः ॥**
**बाधिर्यमान्ध्यमघ्राणं घोरांश्च नयनामयान् ॥**
**कासाग्निसादशोफांश्च वृद्धाः कुर्वन्ति पीनसाः १७**

इदानीं सर्वेषामेव प्रतिश्यायानामुपेक्षया मिथ्याहाराचारिणो नरस्य कालान्तरेण रोगान्तरारम्भकत्वं निर्दिशन्नाह—सर्वे इत्यादि । सर्वे एव प्रतिश्यायाः कालेन रोगजनना भवन्ति, तथा त एव प्रतिश्यायाः क्रमेण दुष्टपीनसा जायन्ते । के ते रोगा इत्याह—बाधिर्यमित्यादि । वृद्धाः प्रतिश्याया बाधिर्यादीन् कुर्वन्तीति पिण्डार्थः । प्रतिश्यायानां पक्वता 'पक्वं घनं चाप्यवलम्बमानं' इत्यादिना ज्ञेया; एतद्विपर्ययेण चामता । केचिद्वृद्धसुश्रुतोक्तम्,—"अरुचिर्विरसं वक्त्रं नासास्रावो रुजाऽरतिः । शिरोगुरुत्वं क्षवथुर्ज्वरश्चामस्य लक्षणम् ॥ तनुत्वमामलिङ्गानां शिरोनासास्यलाघवम् । घनपीतकफत्वं च पक्वपीनसलक्षणम्"—इति प्रतिश्यायानामामपक्वलक्षणं पठन्ति ॥ १६ ॥ १७ ॥

**नवं प्रतिश्यायमपास्य सर्व-**
**मुपाचरेत् सर्पिष एव पानैः ॥**
**स्वेदैर्विचित्रैर्वमनैश्च युक्तैः**
**कालोपपन्नैरवपीडनैश्च ॥ १८ ॥**

इदानीं प्रतिश्यायानां सामान्यं चिकित्सितमाह—नवं प्रतिश्यायमित्यादि । अपास्य परित्यज्य । सर्वेषां प्रतिश्यायानां वातात्मकत्वात् सर्वेषामेव सर्पिःपानम् । कालोपपन्नैः आवस्थिककालयोग्यैः । अवपीडनैः नस्यभेदैः । केचिदत्र, 'पीनसानां च सर्वेषां हेतुर्यस्मात् समीरणः । कफपित्ताधिकेऽप्यस्मात् मारुतं समुपक्रमेत् ॥ तस्मादभिष्यन्दमुदीर्यमाणमुपाचरेदादित एव धीमान् । घृतैः सहिङ्ग्वम्लकटूष्णसिद्धैः स्वेदैर्विचित्रैर्वमनैश्च तीक्ष्णैः ॥ कटुत्रिकं चित्रकतिन्तिडीकं तालीशपत्रं चविकाम्लसंज्ञम् । विचूर्णितं जीरकचूर्णयुक्तमेलात्वचःदलसुरभीकृतं च ॥ मिश्रं पुराणेन गुडेन दद्यात्तत् पीनसानां परिपाचनार्थम् । पक्वं गुडं चापि कटुत्रिकेण घृतप्रगाढं प्रलिहेत् सुखोष्णम् । सर्पिर्गुडाभ्यां कटुकैश्च पक्वान् खादेच्च शक्तूनपि नातिशीतान् । गुडाधिकं चार्द्रकमादिशन्ति शुक्तोषितं[1] तत् परिपाचनार्थम् । शिरोविरेकं वमनं च केचिदामे न दातव्यमिति ब्रुवन्ति"—इति पठन्ति । स च पाठो जेज्जटाचार्येण नाङ्गीकृतः ॥ १८ ॥

**अपच्यमानस्य हि पाचनार्थं**
**स्वेदो हितोऽम्लैरहिमं च भोज्यम् ॥**
**निषेव्यमाणं पयसाऽऽर्द्रकं वा**
**संपाचयेदिक्षुविकारयोगैः ॥ १९ ॥**

नवप्रतिश्यायस्य पाकार्थं चिकित्सामाह—अपच्यमानस्येत्यादि । अहिमम् उष्णं, भोज्यं भोजनम् । अपरमपि पाकार्थं योगमाह—निषेव्यमाणमित्यादि । आर्द्रकं पयसा पाययेत् इक्षुविकारयोगैर्वा । इक्षुविकारा गुडादयः । केचित् 'निषेव्यमाणं पयसाऽऽर्द्रकं वा संपाचयेत् तत् कटुकोपयोगैः'—इति पठन्ति, व्याख्यानयन्ति च—दुग्धेन सहार्द्रकरसः पेयः, अन्ये तु दुग्धेन सह नागरचूर्णं पेयमिति मन्यन्ते; कटुकोपयोगैः कटुद्रव्योपयोगैः । अस्याग्रे केचित् 'ग्राम्याणि मांसानि दधीनि मद्यं माषान् कुलत्थान् लवणं कटूनि । अम्लं तथा चामकमूलकं च तथा घनत्वं[2] तरुणः प्रयाति'—इति पठन्ति; स च न पठनीयः, सर्वनिबन्धकारैः परिहृतत्वात् ॥ १९ ॥

**पक्वं घनं चाप्यवलम्बमानं**
**शिरोविरेकैरपकर्षयेत्तम् ॥**
**विरेचनास्थापनधूमपानै-**
**रवेक्ष्य दोषान् कवलग्रहैश्च ॥ २० ॥**

पक्वप्रतिश्यायस्य निर्हरणमाह—पक्वमित्यादि ॥ २० ॥

**निवातशय्यासनचेष्टनानि**
**मूर्ध्नो गुरूष्णं च तथैव वासः ॥**
**तीक्ष्णा विरेकाः शिरसः सधूमा**
**रूक्षं यवान्नं[3] विजया च सेव्या ॥ २१ ॥**

पक्वप्रतिश्याये सेव्यमाह—निवातेत्यादि । आसनम् उपवेशनं, चेष्टनं क्रीडनम् । मूर्ध्नो मस्तकस्य । वासो वस्त्रम् । विजया हरीतकी ॥ २१ ॥

१ 'कृष्णाः' इति पा० ।

१ 'शुक्तोषितं' इति पा० । २ 'तथा(ऽ)तनुत्वं' इति पा० ।
३ 'पक्वान्नं' इति पा० ।

शीताम्बुयोषिच्छिशिरावगाह-
चिन्तातिरूक्षाशनवेगरोधान् ॥
शोकं च मद्यानि नवानि चैव
विवर्जयेत् पीनसरोगजुष्टः ॥ २२ ॥

सेव्यमुद्दिश्य परिहार्यमाह—शीतेत्यादि ॥ २२ ॥

छर्द्यङ्गसादज्वरगौरवार्त-
मरोचकारत्यतिसारयुक्तम् ॥
विलङ्घनैः पाचनदीपनीयै-
रुपाचरेत् पीनसिनं यथावत् ॥ २३ ॥

इदानीं सोपद्रवस्य पक्वप्रतिश्यायस्यावस्थिकं चिकित्सासूत्रमाह—छर्दीत्यादि । अरतिः न क्वचिदवस्थितिश्चेतसः ॥ २३ ॥

बहुद्रवैर्वातकफोपसृष्टं
प्रच्छर्दयेत् पीनसिनं वयःस्थम् ॥
उपद्रवांश्चापि यथोपदेशं
स्वैर्भेषजैर्भोजनसंविधानैः ॥
जयेद्विदित्वा मृदुतां गतेषु
प्राग्लक्षणेषूक्तमथादिशेच्च ॥ २४ ॥

पक्वप्रतिश्याये वमनावस्थां निर्दिशन्नाह—बहुद्रवैरित्यादि । वातकफोपसृष्टं पीनसिनं बहुद्रवैर्वामयेदिति पिण्डार्थः । वयःस्थं तरुणम् । वान्ते सति किं कुर्यादित्याह—उपद्रवानित्यादि । यथोपदेशं यथाकथितम् । वक्ष्यमाणचिकित्सायाः कालमुद्दिशन्नाह—मृदुतामित्यादि । मृदुतां गतेषु अल्पीभूतेषु, प्राग्लक्षणेषु आमप्रतिश्यायलक्षणेषु, उक्तं वक्ष्यमाणं 'वातिके तु प्रतिश्याये पिबेत्' इत्यादिकं विधानमित्यर्थः । केचित् 'विदित्वा मृदुतां तु तेषां प्राग्लक्षणानां विधिमादिशेच्च' इति पठन्ति ॥ २४ ॥

वातिके तु प्रतिश्याये पिबेत् सर्पिर्यथाक्रमम् ॥
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥ २५ ॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ॥

वातिकप्रतिश्यायस्य चिकित्सामाह—वातिक इत्यादि । यथाक्रमं स्नेहपानक्रमेणेत्यर्थः । प्रथमो गणो विदारिगन्धादिः । कृत्स्नं समस्तम् । अर्दितेरितं अर्दितचिकित्सितोक्तम् ॥ २५ ॥

पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ॥ २६ ॥
परिषेकान् प्रदेहांश्च कुर्यादपि च शीतलान् ॥
श्रीसर्जरसपत्तङ्गप्रियङ्गुमधुशर्कराः ॥ २७ ॥
द्राक्षामधूलिकागोजीश्रीपर्णीमधुकैस्तथा ॥
युज्यन्ते कवलाश्चात्र विरेको मधुरैरपि ॥ २८ ॥

पित्तरक्तकृतयोः प्रतिश्याययोश्चिकित्सामाह—पित्तरक्तोत्थयोरित्यादि । मधुरकैः काकोल्यादिभिः । केचित् 'पित्तरक्तोत्थयोस्तिक्तैः कषायमधुरैर्घृतम्' इति पठन्ति, व्याख्यानयन्ति च—तिक्तानि पटोलादीनि । परिषेकानित्यादि । प्रदेहाः प्रलेपाः । श्रीरिति श्रीवेष्टकः नवनीतधूपः, 'गुग्गुली' इति लोके, सर्जरसो राला, पत्तङ्गं रक्तचन्दनं; मधुलिका गुडूची, मर्कटतृणमपरे, गोजी गोजिह्विका, श्रीपर्णी काश्मीरी । कवला गण्डूषभेदाः । अत्रेति पित्तरक्तोत्थयोः प्रतिश्याययोरित्यर्थः । मधुरैः द्राक्षारग्वधमधुशर्करादिभिः ॥ २६–२८ ॥

धवत्वक्त्रिफलाश्यामातिल्वकैर्मधुकेन च ॥
श्रीपर्णीरजनीमिश्रैः क्षीरे दशगुणे पचेत् ॥ २९ ॥
तैलं कालोपपन्नं तन्नस्यं स्यादनयोर्हितम् ॥

पित्तरक्तकृतयोः प्रतिश्याययोर्नस्यार्थं तैलमाह—धवेत्यादि । धवत्वगादिकल्कैस्तैलचतुर्थांशैर्दशगुणे क्षीरे तैलं पचनीयम् । श्यामा त्रिवृत्, तिल्वकः पट्टिकारोध्रः । कालोपपन्नं निरामताकालयोग्यम् । अनयोः पित्तरक्तोत्थयोः प्रतिश्याययोः ॥ २९ ॥—

कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया ॥ ३० ॥
यवाग्वा वामयेद्वान्तः कफघ्नं क्रममाचरेत् ॥
उभे बले बृहत्यौ च विडङ्गं सत्रिकण्टकम् ॥ ३१ ॥
श्वेतामूलं सदाभद्रां[1] वर्षाभूं चात्र संहरेत् ॥
तैलमेभिर्विपक्वं तु नस्यमस्योपकल्पयेत् ॥ ३२ ॥
सरलाकिणिहीदारुनिकुम्भेङ्गुदिभिः कृताः ॥
वर्तयश्चोपयोज्याः स्युर्धूमपाने यथाविधि ॥ ३३ ॥

कफजप्रतिश्यायचिकित्सामाह—कफजे इत्यादि । तिलमाषविपक्वया यवाग्वा कृसरया वामनीयद्रव्यसिद्धया वामयेत् । वान्तश्च कफघ्नं क्रममन्नसंसर्जनाख्यमाचरेत् । उभे इत्यादि । द्विबलादिभिः कल्कीकृतैस्तैलं सिद्धं नस्ये हितम् । त्रिकण्टको गोक्षुरकः । श्वेता श्वेतस्यन्दः । सदाभद्रा काश्मरी । सरलेत्यादि । सरला त्रिवृत्, किणिही कटभी, दारु देवदारु, निकुम्भा दन्ती ॥ ३०–३३ ॥

सर्पींषि कटुतिक्तानि तीक्ष्णधूमाः कटूनि च ॥
भेषजान्युपयुक्तानि हन्युः सर्वप्रकोपजम् ॥ ३४ ॥
रसाञ्जने सातिविषे मुस्तायां भद्रदारुणि ॥
तैलं विपक्वं नस्यार्थं विदध्याच्चात्र बुद्धिमान् ॥ ३५ ॥

सान्निपातिकप्रतिश्यायचिकित्सामाह—सर्पींषीत्यादि । सर्पींषि घृतानि । कटुतिक्तानि कटुतिक्तद्रव्यसिद्धानीत्यर्थः । कटूनि चेति चकारेण प्रत्येकवातादियुक्ता क्रियाऽप्यनुक्ता समुच्चीयते । रसाञ्जने इत्यादि । अत्रेति सान्निपातिकप्रतिश्याये इत्यर्थः ॥ ३४ ॥ ३५ ॥

मुस्ता तेजोवती पाठा कट्फलं कटुका वचा ॥
सर्षपाः पिप्पलीमूलं पिप्पल्यः सैन्धवाग्निकौ ॥३६॥
तुत्थं करञ्जबीजं च लवणं भद्रदारु च ॥
एतैः कृतं कषायं तु कवले संप्रयोजयेत् ॥ ३७ ॥
हितं मूर्धविरेके च तैलमेभिर्विपाचितम् ॥

मुस्तेत्यादि । तेजोवती काकमर्दनिका, अग्निकः अजमोदा । मुस्तादिभिः कृतः कषायः सान्निपातिके प्रतिश्याये हितः; सर्वेषु प्रतिश्यायेषु हित इत्यन्ये ॥ ३६ ॥ ३७ ॥—

क्षीरमर्धजले क्वाथ्यं जाङ्गलैर्मृगपक्षिभिः ॥ ३८ ॥

१ 'सदां भद्रां' इति पा० ।

पुष्पैर्विमिश्रं जलजैर्वातघ्नैरौषधैरपि ॥
हिमे क्षीरावशिष्टेऽस्मिन् घृतमुत्पाद्य यत्नतः ॥ ३९ ॥
सर्वगन्धसितानन्तामधुकं चन्दनं तथा ॥
आवाप्य विपचेद्भूयो दशक्षीरं तु तद्घृतम् ॥ ४० ॥
नस्ये प्रयुक्तमुद्रिक्तान् प्रतिश्यायान् व्यपोहति ॥
यथास्वं दोषशमनैस्तैलं कुर्याच्च यत्नतः ॥ ४१ ॥

क्षीरमित्यादि । क्षीरं जाङ्गलमांसादिभ्योऽष्टगुणं, अर्धजले क्षीरादर्धं जलं, जाङ्गलैः मृगपक्षिभिः एणादिभिर्लावादिभिश्च, जलजैः पुष्पैः नीलोत्पलादिभिः, वातघ्नैः विदारीगन्धादिभिः, घृतमुत्पाद्य 'तद्दुग्धं मथित्वा' इति वाक्यशेषः । सर्वगन्धा एलादिपरिपठिताः । सिता शर्करा, अनन्ता उत्पलसारिवा, चन्दनं रक्तचन्दनं, आवाप्य प्रक्षिप्य । तद्घृतं क्षीरमथनाद्युत्पन्नं घृतं, प्रतिश्यायान् सर्वान् अपोहति स्फोटयति । दोषशमनैः वातपित्तश्लेष्महरद्रव्यगणैः । यथास्वं यथात्मीयम् । इदमेव तैलं सर्वेषामेव प्रतिश्यायानाम् ॥ ३८-४१ ॥

समूत्रपित्ताश्चोद्दिष्टाः क्रियाः कृमिषु योजयेत् ॥
यापनार्थं कृमिघ्नानि भेषजानि च बुद्धिमान् ॥ ४२ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे प्रतिश्यायप्रतिषेधो नाम चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

रक्तप्रतिश्याये कृमिसंभवो दर्शितः, अतस्तेषामेव कृमीणां यापनार्थं चिकित्सामाह—समूत्रेत्यादि । कृमिघ्ना याः क्रिया उद्दिष्टास्ता गोमूत्रपित्तयुक्ता यापनार्थं कर्तव्याः; तथा कृमिघ्नानि भेषजानि सुरसादीनि च कर्तव्यानि । बुद्धिमान् ऊहापोहवान् वैद्यः । ये तु सर्वेषामेव प्रतिश्यायानां कृमिसंभवत्वं मन्यन्ते तेऽमुं श्लोकमीदृशं व्याख्यानयन्ति—प्रत्येकं वातादिप्रतिश्याये याः क्रिया उद्दिष्टास्ता एव गोमूत्रपित्तयुक्ता यथास्वं कृमिषु योजयेत् ॥ ४२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशतितमोऽध्यायः ।

अथातः शिरोरोगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

शिरो रुजति मर्त्यानां वातपित्तकफैस्त्रिभिः ॥
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥ ३ ॥
सूर्यावर्तानन्तवातार्धावभेदकशङ्खकैः ॥
एकादशप्रकारस्य लक्षणं संप्रवक्ष्यते ॥ ४ ॥

तानेव शिरोरोगान् संख्यया आह—शिरो रुजतीत्यादि । त्रिभिरिति पृथगर्थद्योतनार्थम् । 'शिरो रुजति मर्त्यानाम्' इत्यत्र केचित् 'शिरोरोगा मनुष्याणाम्' इति पठन्ति । रोगशब्दो यद्यपि सामान्यव्याधिवाचकस्तथाऽपि ये पीडाकरा व्याधयस्तेऽत्र गृह्यन्ते, तेन खालित्यादीनामत्रानुपादानमिति व्याख्यानयन्ति । एकादशप्रकारस्येत्यादि । एकादशैवात्र शिरोरोगाः । अन्यतोवातशब्देन अनन्तवातस्य सर्वगतनयनरोगविज्ञानीये प्रोक्तत्वात् । ब्रह्मदेवस्तु विदेहादिषु अनन्तवातस्य पृथक् पाठात् पृथगेवात्र पठनीयः, तेन चैकादश शिरोरोगा इति ब्रूते । अत्र केचिद्विदेहदर्शनात् सूर्यावर्तकविपर्ययमपि पठन्ति । तथा च तद्वचः—"तत्र वातानुगं पित्तं चितं शिरसि तिष्ठति । मध्याह्ने तेजसाऽर्कस्य तद्विवृद्धं शिरोरुजम् ॥ करोति पैत्तिकीं घोरां संशाम्यति दिनक्षये । अस्तं गते प्रभाहीने सूर्ये वायुर्विवर्धते ॥ पित्तं शान्तिमवाप्नोति ततः शाम्यति वेदना । एष पित्तानिलकृतः सूर्यावर्तविपर्ययः"—इति । केचित्सुश्रुताध्यायिनोऽनेन पाठेन सूर्यावर्तकविपर्ययं पठन्ति,—"वातपित्तात् पुरोजाता रुजाऽपैत्यपराह्णतः । सूर्यावर्तः स तु प्रोक्तो विपरीते विपर्ययः"-इति । असौ सूर्यावर्तविपर्ययश्चातुर्थिकविपर्ययवदसूत्रितोऽपि गृह्यते । अत्र केचित् "आलुञ्चयते कम्पति चापि मूर्धा सर्पन्ति मध्ये च पिपीलिका वा । स्कन्धः शिरश्चाप्यवघूर्णते च मूर्च्छा प्रलापश्च तथैव निद्रा ॥ संज्ञाप्रणाशं जनयेद्विनिद्रां प्रातस्ततः पश्यति चातिचित्रम् । गृह्णाति मन्ये हृदयं च रूपैः सर्वैरमीभिः समभिद्रुतस्तु ॥ तिस्रो हि रात्रीर्न स जातु जीवेत्तं शीर्षकं संप्रवदन्ति रोगम्"—इति पठन्ति । स च निबन्धकारैर्नाङ्गीकृतः ॥ १-४ ॥

यस्यानिमित्तं शिरसो रुजश्च
भवन्ति तीव्रा निशि चातिमात्रम् ॥
बन्धोपतापैश्च भवेद्विशेषः
शिरोभितापः स समीरणेन ॥ ५ ॥

इदानीं वातिकशिरोरोगलक्षणमाह—यस्येत्यादि । अनिमित्तम् ईषत्कारणम् । तीव्रवचनात् पित्ते मध्याः रुजो, मध्यः कफे इति बुध्यते । विशेष उपशमः । शिरोभितापः शिरोरोगः ॥ ५ ॥

यस्योष्णमङ्गारचितं यथैव
दह्येत धूप्येत शिरोऽक्षिनासम् ॥
शीतेन रात्रौ च भवेद्विशेषः
शिरोभितापः स तु पित्तकोपात् ॥ ६ ॥

पैत्तिकशिरोरोगलक्षणमाह—यस्येत्यादि ॥ ६ ॥

शिरोगलं यस्य कफोपदिग्धं
गुरु प्रतिष्टब्धमथो हिमं च ॥
शूनाक्षिकूटं वदनं च यस्य
शिरोभितापः स कफप्रकोपात् ॥ ७ ॥

कफजशिरोरोगलक्षणमाह—शिरोगलमित्यादि । उपदिग्धम् उपलिप्तं, गुरु भारिकं, प्रतिष्टब्धम् अप्रचलितरूपमिव, हिमं शीतपूर्णमिव । शिरोभितापः शिरोरोगः । अत्रानुक्तोऽपि विपर्यय-

१ 'सर्वगन्धाः सिताऽनन्तामधुकं' इति पा० । २ 'सूर्यावर्तावभेदाभ्यां शङ्खकेन तथैव च । दशप्रकारस्याप्यस्य' इति पा० । डल्हणव्याख्यानमप्येतत्पाठान्तरानुसारेणैव ज्ञेयम् ।

१ 'भवेच्छिरो धूमवती च नासा' इति पा० ।

सेवयोपशमो गृह्यते । 'शिरोगलं' इत्यत्र 'शिरोभवं' इति केचित् पठन्ति ॥ ७ ॥

शिरोभितापे त्रितयप्रवृत्ते
सर्वाणि लिङ्गानि समुद्भवन्ति ॥

साम्निपातिकशिरोरोगलक्षणमाह—शिरोभितापे इत्यादि ॥

रक्तात्मकः पित्तसमानलिङ्गः
स्पर्शासहत्वं शिरसो भवेच्च ॥ ८ ॥

रक्तजशिरोरोगलक्षणमाह—रक्तात्मक इत्यादि । पित्तजशिरोरोगाद्रक्तजे स्पर्शासहत्वमधिकम् ॥ ८ ॥

वसाबलासक्षतसंभवानां
शिरोगतानामिह संक्षयेण ॥
क्षयप्रवृत्तः शिरसोऽभितापः
कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥ ९ ॥
संस्वेदनच्छर्दनधूमनस्यै-
रसृग्विमोक्षैश्च विवृद्धिमेति ॥

क्षयजशिरोरोगस्य लिङ्गमाह—वसेत्यादि । वसाशब्द उपलक्षणार्थः; तेन देहस्नेहमस्तिष्कमेदोमज्जाशुक्राणि गृह्यन्ते । 'वसाबलासक्षतसंभवानां' इत्यत्र केचित् 'असृग्वसाश्लेष्मसमीरणानां' इति पठन्ति; तन्नेच्छति गयी ॥ ९ ॥—

निस्तुद्यते यस्य शिरोऽतिमात्रं
संभक्ष्यमाणं स्फुटतीव चान्तः ॥ १० ॥
घ्राणाच्च गच्छेत्सलिलं सरक्तं
शिरोभितापः कृमिभिः स घोरः ॥

कृमिकृतशिरोरोगलक्षणमाह—निस्तुद्यते इत्यादि । निस्तुद्यते शूल्यते व्यथ्यत इत्यर्थः । स्फुटतीव शीर्यत इव ॥ १० ॥—

सूर्योदयं या प्रति मन्दमन्द-
मक्षिभ्रुवं रुक् समुपैति गाढम् ॥ ११ ॥
विवर्धते चांशुमता सहैव
सूर्यापवृत्तौ विनिवर्तते च ॥
शीतेन शान्तिं लभते कदाचि-
दुष्णेन जन्तुः सुखमाप्नुयाच्च ॥ १२ ॥
तं भास्करावर्तमुदाहरन्ति
सर्वात्मकं कष्टतमं विकारम् ॥

सूर्यावर्तमाह—सूर्योदयमित्यादि। सूर्यापवृत्तौ सूर्यास्तसमये। कस्मात्प्रवृत्तिनिवृत्ती भवत इति प्रतिपादयन् निमिराह,—"स्वभावशीता तमसोऽभिमूला रात्रिस्तयोद्भूतकफेन मार्गे। रुद्धे मरुत्कोपमियात् प्रभाते रुजं करोत्यत्र शिरोभितापे ॥ मध्याह्नसूर्यातपतापयोगात् कफे विलीने मरुति प्रपन्ने । स्वमार्गमायाति तदा दिनान्ते प्रशान्तिमावर्त इहार्कपूर्वे" इति । सूर्यातपविलीनमस्तुलुङ्गकारणोत्पन्नसूर्यावर्त इति दृढबलाचार्यः। 'उष्णेन जन्तुः सुखमाप्नुयाच्च' इति पाठात्सूर्यावर्तविपर्ययः कथितो बोद्धव्यः । केचिदत्र 'आवर्तसंज्ञः स च सूर्यपूर्वो व्याधिर्मतः पित्तसमीरणाभ्याम्' इति पठन्ति ॥११॥१२॥—

दोषास्तु दुष्टास्त्रय एव मन्यां
संपीड्य घाटासु रुजां सुतीव्राम् ॥ १३ ॥
कुर्वन्ति साक्षिभ्रुवि शङ्खदेशे
स्थितिं करोत्याशु विशेषतस्तु ॥
गण्डस्य पार्श्वे तु करोति कम्पं
हनुग्रहं लोचनजांश्च रोगान् ॥ १४ ॥
अनन्तवातं तमुदाहरन्ति
दोषत्रयोत्थं शिरसो विकारम् ॥

अनन्तवातमाह—दोषास्तु दुष्टास्त्रय इत्यादि । सात्यकिप्रभृतिभिस्तु शिरःकम्परोगोऽसाध्यः पठितः; अस्मिंस्तु शास्त्रे साम्निपातिकशिरोरोगोऽनन्तवात एवान्तर्भवति ॥१३॥१४॥—

यस्योत्तमाङ्गार्धमतीव जन्तोः
संभेदतोदभ्रमशूलजुष्टम् ॥ १५ ॥
पक्षाद्दशाहादथवाऽप्यकस्मा-
त्तस्यार्धभेदं त्रितयाद्व्यवस्येत् ॥

अर्धावभेदमाह—यस्योत्तमेत्यादि । 'तस्यार्धभेदं पवनात् सपित्तात्' इति केचित् 'त्रितयाद्व्यवस्येत्' इत्यत्र 'द्वितयात्' इति वा पाठः ॥ १५ ॥—

शङ्खाश्रितो वायुरुदीर्णवेगः
कृतानुयात्रः कफपित्तरक्तैः ॥ १६ ॥
रुजः सुतीव्राः प्रतनोति मूर्ध्नि
विशेषतश्चापि हि शङ्खयोस्तु ॥
सुकष्टमेनं खलु शङ्खकाख्यं
महर्षयो वेदविदः पुराणाः ॥ १७ ॥
व्याधिं वदन्त्युद्गतमृत्युकल्पं
भिषक्सहस्रैरपि दुर्निवारम् ॥ १८ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे शिरोरोगविज्ञानीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

शङ्खकलक्षणमाह—शङ्खाश्रित इत्यादि । कृतानुयात्रः कृतानुगमः । उद्गतमृत्युकल्पः उपस्थितमृत्युसमः । एष व्याधिस्तु त्र्यहान्मारयति, त्र्यहादनन्तरं कुशलेनोपक्रान्तः सिध्यति ॥ १६-१८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे पञ्चविंशोऽध्यायः ॥ २५ ॥

१ 'मुहुर्भवन्ति' इति पा० । २ 'स्फुरतीव चान्तः' इति पा० ।

## षड्विंशतितमोऽध्यायः ।

**अथातः शिरोरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**
**वातव्याधिविधिः कार्यः शिरोरोगेऽनिलात्मके ॥**
**पयोनुपानं सेवेत घृतं तैलमथापि वा ॥ ३ ॥**

वातव्याधिविधिरिति समस्तो वातव्याधिविधिर्बाह्य आभ्यन्तरोऽपि कर्तव्यः; तत्र बाह्यः स्नेहस्वेदाभ्यङ्गपरिषेकोपनाहशिरोबस्तिनस्यादिः, आभ्यन्तरस्तु स्नेहपानानुवासननिरूहादिः । पयोनुपानमिति वातस्य पित्तानुबन्धस्य घृतं, कफानुबन्धस्य तैलम् । यद्यपि वातव्याधिचिकित्सितातिदेशेनैव घृततैलयोः पानं प्राप्तं, तथाऽपि नियमार्थमेतद्वचनं; अथवा पयोनुपानप्राप्त्यर्थं; अथवा स्नेहादिप्रयोगपरिसमाप्तौ प्रायोगिकमेतद्विधानम् ॥ १-३ ॥

**मुद्रान् कुलत्थान्माषांश्च खादेच्च निशि केवलान् ॥**
**कटूष्णांश्च ससर्पिष्कानुष्णं चानु पयः पिबेत् ॥ ४ ॥**
**पिबेद्वा पयसा तैलं तत्कल्कं वाऽपि मानवः ॥**

मुद्रानित्यादि । मुद्रानां वातकरत्वेऽपि माषाणां श्लेष्मकरत्वेऽपि व्याधिप्रत्यनीकत्वाद्योगशक्तेरचिन्त्यत्वाच्चोपयोगः । कटूष्णानिति कटूष्णद्रव्यसंस्कृतान्, ससर्पिष्कान् सघृतान् । तैलं तिलतैलम् । तत्कल्कं मुद्रादिकल्कं; अन्ये तिलकल्कमाहुः, तन्नेच्छति गयी जेज्जटश्च ॥ ४ ॥—

**वातघ्नसिद्धैः क्षीरैश्च सुखोष्णैः सेकमाचरेत् ॥ ५ ॥**
**तत्सिद्धैः पायसैर्वाऽपि सुखोष्णैर्लेपयेच्छिरः ॥**
**खिन्नैर्वा मत्स्यपिशितैः कृशरैर्वा ससैन्धवैः ॥ ६ ॥**
**चन्दनोत्पलकुष्ठैर्वा सुश्लक्ष्णैर्मगधायुतैः ॥**
**स्निग्धस्य तैलं नस्यं स्यात् कुलीररससाधितम् ॥७॥**
**वरुणादौ गणे क्षुण्णे क्षीरमर्धोदकं पचेत् ॥**
**क्षीरशेषं च तन्मथ्यं शीतं सारमुपाहरेत् ॥ ८ ॥**
**ततो मधुरकैः सिद्धं नस्ये तत् पूजितं हविः ॥**
**तस्मिन् विपक्वे क्षीरे तु पेयं सर्पिः सशर्करम् ॥ ९ ॥**
**धूमं चास्य यथाकालं स्नैहिकं योजयेद्भिषक् ॥**

आभ्यन्तरविधिं प्रतिपाद्य बाह्यविधिमाह—वातघ्नसिद्धैरित्यादि । वातघ्नानि भद्रदार्वादीनि । सेको धारासेकः । तत्सिद्धैः पायसैः वातहरद्रव्यसिद्धगोक्षीरपायसैरित्यर्थः । लेपयेत् उपनाहयेत् । खिन्नैर्वा मत्स्यपिशितैरिति मत्स्यमांसैः स्विन्नैर्वा शिरस्युपनाहः । कृशरैर्वेति तिलतण्डुलमाषकृतयवाग्वोपनाहः; कृशरशब्दोऽकारान्तोऽप्यस्ति । चन्दनादिभिर्वा श्लक्ष्णपिष्टैरुपनाहः । स्निग्धस्येत्यादि । स्निग्धस्य कुलीररसचतुर्गुणे साधितं तैलं नस्यं स्यादिति पिण्डार्थः । वरुणादावित्यादि । क्षुण्णे जर्जरीकृते । तस्मिन् विपक्वे क्षीरे स्थिति वरुणादिगणसिद्धे क्षीरे चतुर्गुणे साधितं काकोल्यादिप्रतिवापं यत् सर्पिस्तच्छर्कराप्रक्षेपं पेयमिति तात्पर्यार्थः । अन्ये तु 'तस्मिन् विपक्वं क्षीरे च' इति पठन्ति; तस्मिन् वरुणादिकाथे क्षीरे च साधितं सर्पिः सशर्करं पिबेदिति च व्याख्यानयन्ति । धूमं चास्येत्यादि । यथाकालं यथावस्थं मधूच्छिष्टप्रभृतिभिः स्नेहमिश्रैः कृतो धूमः स्नैहिकः ॥५-९॥—

**पानाभ्यञ्जननस्येषु बस्तिकर्मणि सेचने ॥ १० ॥**
**विदध्यात्त्रैवृतं धीमान् बलातैलमथापि वा ॥**

पानाभ्यञ्जनेत्यादि । त्रैवृतम् अपतानकचिकित्सितोक्तं, बलातैलं मूढगर्भचिकित्सितोक्तम् ॥ १० ॥—

**भोजयेच्च रसैः स्निग्धैः पयोभिर्वा सुसंस्कृतैः ॥११॥**

भोजयेदित्यादि । रसैः मांसरसैः । सुसंस्कृतैः वातहरद्रव्यसाधितैः ॥ ११ ॥

**पित्तरक्तसमुत्थानौ शिरोरोगौ निवारयेत् ॥**
**शिरोलेपैः ससर्पिष्कैः परिषेकैश्च शीतलैः ॥ १२ ॥**
**क्षीरेक्षुरसधान्याम्लमस्तुक्षौद्रसिताजलैः ॥**

इदानीं पित्तजरक्तजयोस्तुल्यचिकित्सितत्वात् संक्षेपार्थमुभयोरेकं चिकित्सितमाह—पित्तरक्तेत्यादि । शिरोलेपैः मधुरकादिद्रव्यकृतैः, परिषेकैश्च शीतलैः क्षीरेक्षुरसादिकृतैः । तान्येव परिषेकद्रव्याण्याह—क्षीरेक्ष्वित्यादि । सिताजलं शर्करोदकम् ॥ १२ ॥—

**नलवञ्जुलकह्लारचन्दनोत्पलपद्मकैः ॥ १३ ॥**
**वंशशैवलयष्ट्याह्वमुस्ताम्भोरुहसंयुतैः ॥**
**शिरःप्रलेपैः सघृतैर्वैसर्पैश्च तथाविधैः ॥ १४ ॥**
**मधुरैश्च मुखालेपैर्नस्यकर्मभिरेव च ॥**

शिरोलेपद्रव्याण्याह—नलेत्यादि । नलः शुषिरपर्वा स्वनामख्यातः, वञ्जुलो वेतसः, कह्लारं रक्तोत्पलं, चन्दनं रक्तचन्दनम्, उत्पलं नीलोत्पलं, शैवलं दूर्वा, अम्भोरुहं पद्मम् । वैसर्पैश्च तथाविधैरिति विसर्पचिकित्सितोक्तैः प्रलेपैः (चि. अ. १७); तानि तु उशीरलामज्जकचन्दनस्रोतोजमुक्तामणिगैरिकाणि । तथाविधैरिति वचनाद्रक्तपित्तविसर्पप्रलेपप्रकारैर्न तु कफवातविसर्पलेपद्रव्यप्रकारैरित्यर्थः । मधुरैः काकोल्यादिभिः । नस्यमत्र मधुरद्रव्यसंस्कृतेन स्नेहेन कृतम् । पित्तरक्तसमुत्थानौ शिरोरोगौ निवारयेदित्यत्रापि संबन्धनीयम् ॥ १३ ॥ १४ ॥—

**आस्थापनैर्विरेकैश्च पथ्यैश्च स्नेहबस्तिभिः ॥ १५ ॥**
**क्षीरसर्पिर्हितं नस्यं वसा वा जाङ्गला शुभा ॥**

इदानीं रक्तजे पित्तजे च शिरोरोगे वमनं विहाय कर्मचतुष्टयं निर्दिशन्नाह—आस्थापनैरित्यादि । आस्थापनादिभिः पित्तरक्तसमुत्थितौ शिरोरोगौ निवारयेदिति संबन्धः । पथ्यशब्द आस्थापनादिभिस्त्रिभिः संबन्धनीयः । पथ्यैः हितैः । तेन वक्ष्यमाणोत्पलादिनाऽऽस्थापनं विरेचनं च मधुरद्रव्यकृतं, स्नेहबस्तयस्तु मधुरकन्दक्षीरघृतादिकृताः । क्षीरसर्पिरत्र मथ्यमानक्षीरोत्पन्ननवनीतजातम् ॥ १५ ॥—

१ 'कटूष्णान् समसर्पिष्कान्' इति पा० । २-३-४ 'स्निग्धैः' इति पा० ।

१ 'शङ्खशैवलयष्ट्याह्व°' इति पा० ।

उत्पलादिविपक्केन क्षीरेणास्थापनं हितम् ॥ १६ ॥
भोजनं जाङ्गलरसैः सर्पिषा चानुवासनम् ॥
मधुरैः क्षीरसर्पिस्तु स्नेहने च सशर्करम् ॥ १७ ॥

आस्थापनोपयोगिद्रव्याण्याह—उत्पलेत्यादि । सर्पिषा चानुवासनमित्युक्तं तदेव निर्दिशन्नाह—मधुरैरित्यादि । मधुरैः काकोल्यादिभिः, पक्कमिति शेषः । क्षीरसर्पिः क्षीरमथनादुत्थितं, स्नेहने स्नेहवस्तौ, सशर्करं सितशर्कराचूर्णप्रक्षेपम् । अन्ये तु 'मधुरैः क्षीरसर्पिस्तु पक्कं पाने सशर्करम्' इति पठन्ति, तन्नेच्छति गयी ॥ १६ ॥ १७ ॥

पित्तरक्तघ्नमुद्दिष्टं यच्चान्यदपि तद्धितम् ॥

इदानीं संक्षेपार्थमतिदेशेनापरमपि चिकित्सितमाह—पित्तरक्तघ्नमित्यादि । अन्यदपि पानालेपनस्नादि रक्तपित्तघ्नं यदुद्दिष्टं तदत्रापि हितमिति पिण्डार्थः ॥—

कफोत्थितं शिरोरोगं जयेत् कफनिवारणैः ॥ १८ ॥
शिरोविरेकैर्वमनैस्तीक्ष्णैर्गण्डूषधारणैः ॥
अच्छं च पाययेत्सर्पिः स्वेदयेच्चाप्यभीक्ष्णशः ॥ १९ ॥
शिरो मधूकसारेण स्निग्धं चापि विरेचयेत् ॥
इङ्गुदस्य त्वचा वाऽपि मेषशृङ्गस्य वा भिषक् ॥ २० ॥

इदानीं कफजशिरोरोगचिकित्सामाह—कफोत्थितमित्यादि । कफोत्थितं शिरोरोगं कफनिवारणैर्जयेदिति संबन्धः; तानि च कफनिवारणानि शिरोविरेचनादीनि । अच्छं चेति अच्छं केवलं, वमननिर्जितकफस्य प्रकुपितवातविजयार्थं सर्पिःपानं अथवा सर्पिःपानं वमनस्य प्राक्कर्म । अभीक्ष्णशः पुनः पुनः ॥ १८–२० ॥

आभ्यामेव कृतां वर्तिं धूमपाने प्रयोजयेत् ॥
घ्रेयं कट्फलचूर्णं च कवलाश्च कफापहाः ॥ २१ ॥
सरलाकुष्ठशार्ङ्गेष्टादेवकाष्ठैः सरोहिषैः ॥
क्षारपिष्टैः सलवणैः सुखोष्णैर्लेपयेच्छिरः ॥ २२ ॥

शिरोविरेचनावशेषितकफस्योपशमनार्थं धूममाह—आभ्यामित्यादि । आभ्याम् इङ्गुदीमेषशृङ्गीत्वग्भ्याम् । कट्फलचूर्णं घ्रेयं घ्रातव्यं, प्रधमनविशेषोऽयम् । कफापहाः कफहरद्रव्यकृताः । सरलेत्यादि । क्षारपिष्टैः क्षारोदकपिष्टैः, सलवणैः ईषल्लवणैः ॥ २१ ॥ २२ ॥

यवषष्टिकयोश्चान्नं व्योषक्षारसमायुतम् ॥
पटोलमुद्गकौलत्थैर्मात्रावद्भोजयेद्रसैः ॥ २३ ॥

आहारमाह—यवेत्यादि । व्योषं त्रिकटुकं, क्षारो यवक्षारः, यवषष्टिकयोश्चान्नं त्रिकटुकेन कटूकृतं, यवक्षारेण लवणितं, पटोलादीनां यूषैः सह मात्रावद्भोजयेदिति संबन्धः ॥ २३ ॥

शिरोरोगे त्रिदोषोत्थे त्रिदोषघ्नो विधिर्हितः ॥

अधुना त्रिदोषजशिरोरोगस्य सामान्यां चिकित्सामाह—शिरोरोगे इत्यादि । त्रिदोषघ्नो विधिरनन्तरोक्तवातादिजशिरोरोगघ्नो विधिः ॥—

सर्पिःपानं विशेषेण पुराणं वा दिशन्ति हि ॥ २४ ॥

सामान्यचिकित्सितमभिधाय विशेषचिकित्सितमाह—सर्पिःपानमिति । अत्र निबन्धकारैर्बहूक्तं, तच्च विस्तरभयान्न लिखितम् ॥ २४ ॥

क्षयजे क्षयमासाद्य कर्तव्यो बृंहणो विधिः ॥
पाने नस्ये च सर्पिः स्याद्वातघ्नमधुरैः शृतम् ॥ २५ ॥
क्षयकासापहं चात्र सर्पिः पथ्यतमं विदुः ॥

क्षयजचिकित्सामाह—क्षयज इत्यादि । क्षयमासाद्य रक्तादिक्षयेष्वन्यतमं क्षयमवधार्य, शोणितादिक्रियानतिक्रमेण चिकित्सितमित्यर्थः; अन्ये तु क्षयार्थं शोषप्रतिषेधमध्यायमासाद्य, यो बृंहणो विधिराहारौषधाख्यः स कार्यः । पाने नस्ये चेत्यत्र चकारो भिन्नक्रमे सर्पिश्चेत्यत्र द्रष्टव्यः, तेन तैलमपि मधुरद्रव्यसंस्कृतं समुच्चीयते । क्षयकासापहं सर्पिः "कुलीरशुक्तिचटकैणलावान् निष्क्वाथ्य वर्गं मधुरं च कृत्स्नम्" इत्यादिना प्रोक्तम् ॥ २५ ॥—

कृमिभिर्भक्ष्यमाणस्य वक्ष्यते शिरसः क्रिया ॥ २६ ॥
नस्ये हि शोणितं दद्यात्तेन मूर्च्छन्ति जन्तवः ॥
मत्ताः शोणितगन्धेन समायान्ति यतस्ततः ॥ २७ ॥

इदानीं क्रिमिजशिरोरोगावसरे सुदूरविस्तृतबहुक्रिमीणामुत्क्लेशनेनाहरणोपायमुद्दिशन्नाह—कृमिभिरित्यादि । क्रिमिभिर्भक्ष्यमाणस्येव, भक्षितस्य दुःशक्यत्वात्; शिरसः क्रिया वक्ष्यते इति संबन्धः । शोणितनस्यं कृमीणामुत्क्लेशनार्थं, स्रोतोमुखगमनार्थं च । मूर्च्छन्ति मूर्च्छिता भवन्ति मदयुक्ता भवन्ति । समायान्ति समागच्छन्ति । यतस्ततो नासास्रोतःप्रभृतिभिः तत्र चागतानां कृमीणां कूर्चकादिभिर्निर्हरणं कर्तव्यम् ॥ २६ ॥ २७ ॥

तेषां निर्हरणं कार्यं ततो मूर्धविरेचनैः ॥
ह्रस्वशिग्रुकबीजैर्वा कांस्यनीलीसमायुतैः ॥ २८ ॥
कृमिघ्नैरवपीडैश्च मूत्रपिष्टैरुपाचरेत् ॥
पूतिमत्स्ययुतान् धूमान् कृमिघ्नांश्च प्रयोजयेत् २९

इदानीं कूर्चकादिभिरगम्यानां क्रिमीणां निर्हरणार्थं चिकित्सितमाह—तेषामित्यादि । मूर्धविरेचनैः विडङ्गमरिचापामार्गशिग्रुबीजादिभिः; गयी तु वक्ष्यमाणानि ह्रस्वशिग्रुकबीजानि शिरोविरेचनद्रव्याणि मन्यते । ह्रस्वशिग्रुकबीजैरित्यादि । कृमिघ्नैः विडङ्गादिभिः ॥ २८ ॥ २९ ॥

भोजनानि कृमिघ्नानि पानानि विविधानि च ॥

आहारमाह—भोजनानीत्यादि । कृमिघ्नानि कृमिप्रतिषेधपठितानि धान्याम्लप्रभृतीनि सुरसादिसंस्कृतानि ॥—

सूर्यावर्ते विधातव्यं नस्यकर्मादिभेषजम् ॥ ३० ॥

सूर्यावर्तकचिकित्सामाह—सूर्यावर्ते इत्यादि । नस्यकर्मादीत्यादिशब्दाल्लेपपरिषेककवलग्रहशिरोबस्त्यादयः । अन्ये तु

१ 'मेषशृङ्ग्या च' इति पा० । २ 'अत्र क्षारः पानीयः' इति पा० ।

नस्यकर्म आदौ यस्य तन्नस्यकर्मादि, तच्च वमनं विहाय विरेकादिकर्मचतुष्टयम् । ये तु सूर्यावर्तविपर्ययं पठन्ति तत्रापीदमेव चिकित्सितम् ॥ ३० ॥

**भोजनं जाङ्गलप्रायं क्षीरान्नविकृतिर्घृतम् ॥**

आहारं नियमयन्नाह—भोजनेत्यादि ॥—

**तथाऽर्धभेदके व्याधौ प्राप्तमन्यच्च यद्भवेत् ॥ ३१ ॥**
**शिरीषमूलकफलैरवपीडोऽनयोर्हितः ॥**
**वंशमूलककर्पूरैरवपीडं प्रयोजयेत् ॥ ३२ ॥**
**अवपीडो हितश्चात्र वचामागधिकायुतः ॥**
**मधुकेनावपीडो वा मधुना सह संयुतः ॥ ३३ ॥**
**मनःशिलावपीडो वा मधुना चन्दनेन वा ॥**

अर्धावभेदकचिकित्सितमाह—तथाऽर्धभेदके इत्यादि । न केवलं सूर्यावर्ते नस्यकर्मादिभेषजं जाङ्गलप्रायं भोजनं क्षीरान्नविकृतिर्घृतं प्रयोजयेत् तथाऽर्धावभेदकेऽपि । प्राप्तमन्यच्च यद्भवेदिति अन्यदपि स्नेहसिराव्यधावपीडकर्णशूलोक्तदीपिकातैलादि यत् प्राप्तं युक्तं भवेत् तत् कर्तव्यम् । गयी तु अन्यच्छब्देन वक्ष्यमाणं शिरीषमूलकफलैरित्यादिकमिच्छति । शिरीषेत्यादि । अनयोः सूर्यावर्तार्धभेदकयोः । अवपीड्य दीयत इत्यवपीडो नस्यभेद इत्यर्थः । वंशेत्यादि । अत्रेति अनयोः सूर्यावर्तार्धभेदकयोः । मधुकं यष्टीमधुकं, मनःशिलावपीडो मधुनेत्येको योगः, चन्दनेन चेति द्वितीयः । केचिदत्र चन्दनशब्देन मधूकसारं व्याख्यानयन्ति ॥ ३१-३३ ॥—

**तेषामन्ते हितं नस्यं सर्पिर्मधुरसान्वितम् ॥ ३४ ॥**

अवपीडैर्निर्जितकफस्य पश्चात्कर्माह—तेषामित्यादि । तेषाम् अवपीडानाम्, अन्ते अवसाने, मधुरकान्वितं काकोल्यादिगणकल्कशृतं घृतं नस्ये प्रयोज्यम् । अन्ये मधुरसां मूर्वां मन्यन्ते । केचित्तेषामित्यत्र तयोरिति पठन्ति, व्याख्यानयन्ति च—अन्तेऽवपीडानामवसाने मधुरसान्वितसर्पिस्तयोः सूर्यावर्तार्धभेदकयोर्नस्ये हितं, वातपित्तोत्तरावस्थायां घृतनस्यम् ॥ ३४ ॥

**सारिवोत्पलकुष्ठानि मधुकं चाम्लपेषितम् ॥**
**सर्पिस्तैलयुतो लेपो द्वयोरपि सुखावहः ॥ ३५ ॥**
**एष एव प्रयोक्तव्यः शिरोरोगे कफात्मके ॥**

इदानीं शिरोलेपमाह—सारिवेत्यादि । सारिवा प्रसिद्धा, उत्पलं नीलोत्पलम् । अम्लपेषितं काञ्जिकपेषितम् । द्वयोः सूर्यावर्तार्धावभेदकयोः । अयमपि शिरोलेपो वातपित्तोत्तरावस्थायां प्रयोक्तव्यः । एष इत्यादि । एष एवेति शिरीषफलाद्यवपीडः कफनिमित्ते शिरोरोगे प्रयोक्तव्यः । यद्यपि कफशिरोरोगस्य चिकित्सोक्ता तथाऽप्यवसरप्राप्तत्वात् पुनरुक्ता । अन्ये 'शिरोरोगे कफात्मके' इत्यत्र 'क्षयात्मके' इति पठन्ति । तन्नेच्छति जेज्जटाचार्यः । अपरे तु 'एभिरेव प्रयोक्तव्यः शिरोरोगेऽनिलात्मके' इति पठन्ति । एभिरेवेति अनन्तरोक्तसारिवोत्पलकुष्ठादिभिः ॥ ३५ ॥—

**अनन्तवाते कर्तव्यः सूर्यावर्तहरो विधिः ॥ ३६ ॥**
**सिराव्यधश्च कर्तव्योऽनन्तवातप्रशान्तये ॥**
**आहारश्च विधातव्यो वातपित्तविनाशनः ॥ ३७ ॥**
**मधुमस्तकसंयावघृतपूरैश्च भोजनम् ॥**

केचिदत्रानन्तवातचिकित्सितं पठन्ति; तदाह—अनन्तवाते इत्यादि । मधुमस्तकाः खज्जुकाः, संयावः कण्डकघृतैश्चातुर्जातकर्पूरसुगन्धः लप्सिकेति लोके, घृतपूरः 'घेवर' इति प्रसिद्धः ॥ ३६ ॥ ३७ ॥—

**क्षीरसर्पिः प्रशंसन्ति नस्ये पाने च शङ्खके ॥ ३८ ॥**
**जाङ्गलानां रसैः स्निग्धैराहारश्चात्र शस्यते ॥**

शङ्खकचिकित्सामाह—क्षीरेत्यादि । क्षीरसर्पिरिति अर्दितचिकित्सितेऽक्षितर्पणार्थं यदुक्तम् । जाङ्गलानामित्यत्र केचिदौदकानामिति पठन्ति, तन्नेच्छति गयी ॥ ३८ ॥—

**शतावरीं तिलान् कृष्णान् मधुकं नीलमुत्पलम् ३९**
**दूर्वां पुनर्नवां चैव लेपे साध्ववचारयेत् ॥**
**महासुगन्धामथवा पालिन्दीं चाम्लपेषिताम् ॥४०॥**

शिरोलेपमाह—शतावरीमित्यादि । शतावर्यादिभिः क्षीरपिष्टैः शिरोलेपः । महासुगन्धामित्यादि । महासुगन्धा उत्पलसारिवा, सर्पसुगन्धामपरे । पालिन्दी कालवल्ली । अम्लं काञ्जिकम् ॥ ३९ ॥ ४० ॥

**शीतांश्चात्र परीषेकान् प्रदेहांश्च प्रयोजयेत् ॥**

अनुक्तानप्यत्र परिषेकप्रदेहान्निर्दिशन्नाह—शीतानित्यादि । शीतपरिषेकान् शीतवीर्यविदारिगन्धादिकाकोल्याद्युत्पलादिकषायकृतान्, शीतप्रदेहानेतेषामेव कल्कैरम्लपिष्टैः कृतान् ॥—

**अवपीडश्च देयोऽत्र सूर्यावर्तनिवारणः ॥ ४१ ॥**

अवपीडश्चेत्यादि । सूर्यावर्तनिवारणोऽवपीडः 'शिरीषमूलकफलैरवपीडोऽनयोर्हित' इत्याद्युक्तः ॥ ४१ ॥

**कृमिक्षयकृतौ हित्वा शिरोरोगेषु बुद्धिमान् ॥**
**मधुतैलसमायुक्तैः शिरांस्यतिविरेचयेत् ॥ ४२ ॥**
**पश्चात्सर्षपतैलेन ततो नस्यं प्रयोजयेत् ॥**

इदानीं शिरोरोगाणां सामान्यचिकित्सामाह—कृमीत्यादि । कृमिक्षयकृतौ शिरोरोगौ परित्यज्यान्येषु शिरोरोगेषु मधुतैलसमायुक्तैः शिरोविरेचनद्रव्यैर्बुद्धिमान् वैद्यः शिरांसि अतिविरेचयेत्, नस्यं दद्यादित्यर्थः । मूलानिलोन्मूलनत्वात् स्त्यानभूतकफविनाशनत्वाच्च सर्षपतैलेन नस्यम् । अन्ये तु 'पश्चात् सर्पिः सुखोष्णं तु नस्यतस्तु प्रशस्यते' इति पठन्ति; तेषामयमभिप्रायः—शिरोविरेचनेन कफे विजिते सति वातपित्तजयार्थं सर्पिर्नस्यम् ॥ ४२ ॥—

**न चेच्छान्तिं व्रजन्त्येवं स्निग्धस्विन्नांस्ततो भिषक् ४३**
**पश्चादुपाचरेत्सम्यक् सिराणामथ मोक्षणैः ॥**

---

१ 'सूर्यावर्तैरितः' इति पा० ।

इदानीमेतैरप्युपायैर्यदा शान्तिं शिरोरोगा न यान्ति तदा किं कर्तव्यमित्याह—न चेच्छान्तिमित्यादि ॥ ४३ ॥—

**षट्सप्ततिर्नेत्ररोगा दशाष्टादश कर्णजाः ॥ ४४ ॥**
**एकत्रिंशद् घ्राणगताः शिरस्येकादशैव तु ॥**
**इति विस्तरतो द(दि)ष्टाः सलक्षणचिकित्सिताः ४५**
**संहितायामभिहिताः सप्तषष्टिर्मुखामयाः ॥**
**एतावन्तो यथास्थूलमुत्तमाङ्गगता गदाः ॥**
**अस्मिञ्छास्त्रे निगदिताः सङ्ख्यारूपचिकित्सितैः ४६**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे शिरोरोगप्रतिषेधो नाम षड्विंशोऽध्यायः ॥ २६ ॥**

**इति श्रीभगवता धन्वन्तरिणोपदिष्टायां महर्षिणा सुश्रुताचार्येण विरचितायां सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गतं शालाक्यतन्त्रं समाप्तम् ॥**

इदानीं शालाक्यतन्त्रस्यार्थपिण्डमुक्तमुपसंहरन्नाह—षट्सप्ततिरित्यादि । दशाष्टादश अष्टाविंशतिरित्यर्थः । इति शब्द उक्तस्मरणे । ये विस्तरतो द(दि)ष्टाः विस्तरेण विदेहादौ भाषिताः । यथास्थूलं स्थूलानतिक्रमेण, अणुशो भिद्यमानाः पुनरसंख्येयाः । अस्मिन्निति शालाक्यशास्त्रे ॥ ४४–४६ ॥

सद्वृद्धेः प्रसवः पदं सुयशसः सद्वैद्यवन्द्यः श्रिया-
मावासः सुकृती क्रियासु निपुणः श्रीडल्हणाख्यो भिषक् ।
श्रीभादानकनाथसाहलनृपस्यातीव यो वल्लभः
शास्त्रं तस्य निबन्धसंग्रह इति ख्यातं धरित्रीतले ।

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते शालाक्यतन्त्रे षड्विंशोऽध्यायः समाप्तः ॥ २६ ॥

---

## सप्तविंशतितमोऽध्यायः ।

**अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

शालाक्यतन्त्रानन्तरं कौमारतन्त्रं प्रारभ्यते—अथात इत्यादि । बालशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः । तत्र ग्रहा बालानां नव, अष्टौ पुनरबालानां भूतविद्यायां निर्देष्टव्याः । आकृतिः आकारो लिङ्गं कार्यभूतं, नतु स्वभावाख्यम् ॥ १ ॥ २ ॥

**बालग्रहाणां विज्ञानं साधनं चाप्यनन्तरम् ॥**
**उत्पत्तिं कारणं चैव सुश्रुतैकमनाः शृणु ॥ ३ ॥**

तत्र प्रथमं कुमारतन्त्रस्यार्थपिण्डमुद्दिशन्नाह—बालग्रहाणामित्यादि । विज्ञानं विशिष्टज्ञानम् । साधनं चिकित्सितम् । उत्पत्तिः प्रभवः । कारणं हेतुः ॥ ३ ॥

**स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च ॥**
**शकुनी रेवती चैव पूतना चान्धपूतना ॥ ४ ॥**
**पूतना शीतनामा च तथैव मुखमण्डिका ।**
**नवमो नैगमेषश्च यः पितृग्रहसंज्ञितः ॥ ५ ॥**

इदानीं तेषां नवग्रहाणां नामान्याह—स्कन्दग्रह इत्यादि । प्रथमः प्रधानमादि[१] । नवमो नैगमेष इति संख्यानिर्देशादेव संख्यायां लब्धायां भूयो नवम इति संख्याकरणं काश्यपादितन्त्रान्तरोक्ताधिकसंख्यानिराकरणार्थम् । पितृग्रहसंज्ञित इति बालस्यान्यग्रहेभ्यो रक्षकत्वात्पितेव ग्रहः सैव संज्ञा संजाता यस्य स तथा । (नतु भूतविद्यावत् पितृलोकाभिहितग्रह इति) ॥ ४ ॥ ५ ॥

**धात्रीमात्रोः प्राक्प्रदिष्टापचारा-**
**च्छौचभ्रष्टान्मङ्गलाचारहीनान् ॥**
**त्रस्तान् हृष्टांस्तर्जितान् ताडितान् वा**
**पूजाहेतोर्हिंस्युरेते कुमारान् ॥ ६ ॥**

कस्माद्ग्रहा बालान् विशन्तीत्याह—धात्रीत्यादि । धात्री स्तनपायिनी पोषयित्रीत्यर्थः, माता प्रसवित्री । प्राक्प्रदिष्टापचारादिति प्राक् शारीरस्थाने प्रदिष्टोऽपचारः अकृत्यविधिः मांससुरादीनां लौल्यादाचरणं वा । शौचं मूत्रपुरीषादिप्रक्षालनं, मङ्गलं स्वस्तिकस्रग्दामदूर्वावचासर्षपादिस्पर्शनम्, आचारः पापविरोधी, त्रस्तान् उद्विग्नान्, हृष्टान् मुदितान्, तर्जितान् अन्येन[२] केनचिद्विभीषितान् । ताडितान् अभिहतान् । कथं पूजा जायते ? कुसुमादिना भोजनादिना च । अतो हेतोः धात्रीमात्रोरपचाराद्दूषणाद्यन्वितान् बालान् । पूजा चात्रोपलक्षणं; तेन रतिहेतोरपि हिंस्युरिति । ननु, धात्रीमात्रोरपचाराद्बालानामनपराधित्वात् कथं ग्रहहिंसनं ? अत्रोच्यते—बालानां प्राक्तनकर्मयोगत एवापचारं कुरुतः । कुमारानित्युपलक्षणं; तेन कुमारिका अपि हिंस्युः । एते ग्रहा इत्यर्थः ॥ ६ ॥

**ऐश्वर्यस्थास्ते न शक्या विशन्तो**
**देहं द्रष्टुं मानुषैर्विश्वरूपाः ॥**
**आप्तं वाक्यं तत्समीक्ष्याभिधास्ये**
**लिङ्गान्येषां यानि देहे भवन्ति ॥ ७ ॥**

कस्मात्ते ग्रहा देहं विशन्तो नोपलभ्यन्ते इत्याह[३]—ऐश्वर्येत्यादि । एषां ग्रहाणां यानि लिङ्गानि भवन्ति तानि आप्तं वाक्यं समीक्ष्याभिधास्ये कथयिष्ये इति पिण्डार्थः । आप्तं वाक्यम् आप्तैरुक्तं वाक्यम्; आप्ताश्च यथार्थवादिनः[४] ॥ ७ ॥

**शूनाक्षः[५] क्षतजसगन्धिकः स्तनद्विड्**
**वक्रास्यो हतचलितैकपक्ष्मनेत्रः ॥**
**उद्विग्नः सुलुलितचक्षुरल्परोदी**
**स्कन्दार्तो भवति च गाढमुष्टिवर्चाः ॥ ८ ॥**

---

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । २ 'येन केनचित्' इति पा० । ३ 'ननु प्रत्यक्षाविषयत्वात् कृतावेशानां ग्रहाणां केन ज्ञानं भविष्यतीत्याह–' इति पा० । ४ 'तत्त्वार्थवेदिनः' इति पा० । ५ 'स्तब्धाक्षः' इति पा० ।

स्कन्दग्रहार्तलक्षणमाह—शूनाक्ष इत्यादि । क्षतजसगन्धिकः रुधिरसमानगन्धिकः, विस्रगन्ध इत्यर्थः; अन्ये तु क्षतजं रक्तं तत्सगन्धिक ईषद्रुधिरगन्धिक इत्यर्थः । स्तनद्विट् स्तनद्वेषी । वक्रास्यः वक्रमुखः । हतचलितैकपक्ष्मनेत्र इति हतं चलितं चैकपक्ष्म नेत्रे यस्य स तथा । उद्विग्नः उद्विग्नचित्तः । सुलुलितचक्षुः किंचिन्मिलितलोचनः । स्कन्दार्त इति स्कन्दविनोदनार्थं रुद्रेण सृष्टो ग्रहः तेनार्तः, स्कन्दोऽत्र न पुनर्भगवान् कार्तिकेयः । गाढे मुष्टिवर्चसी यस्य स तथा । गयदासस्तु 'स्तब्धाङ्गः' क्षतजसगन्धिकः स्तनद्विट् वक्रास्यो हतचरणैकपक्ष्मनेत्रः' इति पठित्वा 'स्तब्धमङ्गं यस्य स तथा, हतानि एकपादैकपक्ष्मार्धनयनानि यस्य स तथा' इति व्याख्यानयति ॥ ८ ॥

निःसंज्ञो भवति पुनर्भवेत्ससंज्ञः
संरब्धः करचरणैश्च नृत्यतीव ॥
विण्मूत्रे सृजति विनद्य जृम्भमाणः
फेनं च प्रसृजति तत्सखाभिपन्नः ॥ ९ ॥

स्कन्दापस्मारार्तलक्षणमाह—निःसंज्ञ इत्यादि । संरब्धः सम्यक् कलितः सन्, करचरणाभ्यां हस्तपादाभ्यां, नृत्यतीव नर्तनमिव करोति । विनद्य शब्दं कृत्वा; क्वचित् 'विनम्य' इति पाठः, तत्र गात्रविनमनं कृत्वा; विण्मूत्रे मुञ्चतीति व्याख्यानम् । तत्सखाभिपन्नः तच्छब्देन स्कन्दः कथ्यते, तस्य सखा स्कन्दापस्मारः, तेनाक्रान्तः ॥ ९ ॥

स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
संस्राविव्रणपरिपीडितः समन्तात् ॥
स्फोटैश्च प्रचिततनुः सदाहपाकै-
र्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥१०॥

शकुनिग्रहार्तलक्षणमाह—स्रस्ताङ्ग इत्यादि । स्रस्ताङ्गः शिथिलाङ्गः । भयचकितो भीतः । विहङ्गा अत्र मांसादा जलचराश्च । संस्राविव्रणपरिपीडितः पूयास्राविव्रणपरिपीडितः । समन्तात् सर्वतः । अत्रोक्तव्रणस्फोटयोर्विदीर्णाविदीर्णत्वेन भेदः । क्षतः अभिभूतः ॥ १० ॥

रक्तास्यो हरितमलोऽतिपाण्डुदेहः
श्यावो वा ज्वरमुखपाकवेदनार्तः ॥
रेवत्या व्यथिततनुश्च कर्णनासं
मृद्नाति ध्रुवमभिपीडितः कुमारः ॥ ११ ॥

रेवतीग्रहार्तस्य लक्षणमाह—रक्तास्य इत्यादि । हरितमल इति मलोऽत्र विष्ठा मूत्रं च । ज्वरमुखपाकवेदनार्तः ज्वरार्तो मुखपाकवेदनार्तश्च । व्यथिततनुरिति सरुजशरीरः । अभिपीडितो रेवत्या इति संबन्धः ॥ ११ ॥

स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ
विड् भिन्नं सृजति च काकतुल्यगन्धिः ॥
छर्द्याऽऽर्तो हृषिततनूरुहः कुमार-
स्तृष्णालुर्भवति च पूतनागृहीतः ॥ १२ ॥

पूतनाग्रहार्तलक्षणमाह—स्रस्ताङ्ग इत्यादि । न दिवा सुखं स्वपिति न च रात्रौ सुखं स्वपिति । सृजति मुञ्चति । 'स्रस्ताङ्ग' इत्यत्र केचित् 'स्वस्थाङ्ग' इति पठन्ति, स्वस्थाङ्गोऽपि न दिवा न रात्रौ स्वपितीति व्याख्यानयन्ति ॥ १२ ॥

यो द्वेष्टि स्तनमतिसारकासहिक्का-
च्छर्दीभिर्ज्वरसहिताभिरर्द्यमानः ॥
दुर्वर्णः सततमधःशयोऽम्लगन्धि-
स्तं ब्रूयुर्भिषज इहान्धपूतनार्तम् ॥ १३ ॥

अन्धपूतनार्तलक्षणमाह—य इत्यादि । अधःशयः अधोमुखशायी । अम्लगन्धिः काञ्जिकाद्यम्लद्रव्यगन्धिः ॥ १३ ॥

उद्विग्नो भृशमतिवेपते प्ररुद्यात्
संलीनः स्वपिति च यस्य चान्त्रकूजः ॥
विस्राङ्गो भृशमतिसार्यते च यस्तं
जानीयाद्भिषगिह शीतपूतनार्तम् ॥ १४ ॥

शीतपूतनार्तलक्षणमाह—उद्विग्न इत्यादि । संलीनः सम्यग्लीनः, शय्यैकदेशे लग्न इत्यर्थः । विस्राङ्गो विस्रगन्धाङ्गः । 'उद्विग्नो भृशमति' इत्यत्र केचित् 'आक्रन्दत्यतिचकितः' इति पठन्ति ॥ १४ ॥

म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो
बह्वाशी कलुषसिरावृतोदरो यः ॥
सोद्वेगो भवति च मूत्रतुल्यगन्धिः
स ज्ञेयः शिशुरिह वक्त्रमण्डिकार्तः ॥ १५ ॥

मुखमण्डिकाग्रहार्तलक्षणमाह—म्लानाङ्ग इत्यादि । म्लानाङ्गो दुर्बलमध्यशरीरः । सुरुचिरपाणिपादवक्त्र इति सुष्ठु रुचिरं शोभनं हस्तपादवक्त्रं यस्य सः । वक्त्रमण्डिकार्तो मुखमण्डिकार्त इत्यर्थः ॥ १५ ॥

यः फेनं वमति विनम्यते च मध्ये
सोद्वेगं विलपति चोर्ध्वमीक्षमाणः ॥
ज्वर्येत प्रततमथो वसासगन्धि-
र्निःसंज्ञो भवति हि नैगमेषजुष्टः ॥ १६ ॥

नैगमेषग्रहार्तलक्षणमाह——य इत्यादि । मध्ये मध्याङ्गे । सोद्वेगं सत्रासं, विलपति अतिशयेन शब्दं करोति, ऊर्ध्वमीक्षमाणः ऊर्ध्वं पश्यन् । 'विलपति' इत्यत्र केचित् 'विहसति' इति पठन्ति । ज्वर्येत प्रततं सततम् । वसासगन्धिः वसया तुल्यगन्धिः । निःसंज्ञः निर्गतसम्यग्ज्ञानः ॥ १६ ॥

प्रस्तब्धो यः स्तनद्वेषी मुह्यते चाविशन्मुहुः ॥
तं बालमचिराद्धन्ति ग्रहः संपूर्णलक्षणः ॥ १७ ॥

सांप्रतमसाध्यग्रहार्तलक्षणमाह—प्रस्तब्ध इत्यादि । प्रस्तब्धोऽत्यर्थं स्तब्धाङ्गः । मुह्यते मोहं याति । आविशन् आवेशं कुर्वन् । मुहुः वारंवारम् ॥ १७ ॥

विपरीतमतः साध्यं चिकित्सेदचिरार्दितम् ।

साध्यग्रहार्तलक्षणमाह—विपरीतमित्यादि । विपरीतं प्रस्तब्ध-

स्तनद्वेषादिलक्षणैरनुपहतम् । अचिरार्दितम् अल्पकालपीडितम् ।—

गृहे पुराणहविषाऽभ्यज्य बालं शुचौ शुचिः ॥ १८॥
सर्षपान् प्रकिरेत्तेषां तैलैर्दीपं च कारयेत् ॥
सदा सन्निहितं चापि जुहुयाद्धव्यवाहनम् ॥ १९ ॥
सर्वगन्धौषधीबीजैर्गन्धमाल्यैरलङ्कृतम् ॥
अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति संततम् ॥२०॥

साध्यस्य चिकित्सामाह—गृहे इत्यादि । पुराणहविषा जीर्णघृतेन, अभ्यज्य बालं चुपाटित्वा । शुचौ पवित्रदेशे, शुचिः 'भिषग्' इति शेषः । तेषां तैलैः सर्षपाणां तैलैः, दीपं कारयेत् दीपं प्रज्वालयेदित्यर्थः । सदेत्यादि । जुहुयात् होमं कुर्यादित्यर्थः । हव्यवाहनम् अग्निम् । कैर्जुहुयात्? सर्वगन्धौषधीबीजैरिति; सर्वगन्धा एलादिपरिपठिताः, ओषधीबीजानि यवधान्यतिलादीनि, तैर्जुहुयात् । गन्धमाल्यैरलङ्कृतमग्निं बालं वा, सततं वारंवारं न सकृत् । अयं विधिः सर्वग्रहाणां सामान्यः । अग्नय इत्यादि । अग्निं हुत्वा ततो मध्याह्ने बलिं दद्यात् ॥ १८—२० ॥

नमः स्कन्दाय देवाय ग्रहाधिपतये नमः ॥
शिरसा त्वाऽभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम् ॥
नीरुजो निर्विकारश्च शिशुर्मे जायतां द्रुतम् ॥ २१ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे नवग्रहाकृतिविज्ञानीयो नाम (प्रथमोऽध्यायः, आदितः) सप्तविंशोऽध्यायः ॥ २७ ॥

तत्र यं मन्त्रमुच्चरेत्तमाह—नम इत्यादि ॥ २१ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे नवग्रहाकृतिविज्ञानीयो नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशतितमोऽध्यायः ।

अथातः स्कन्धग्रहप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

नवग्रहाकृतिविज्ञानीयानन्तरं विज्ञातनवग्रहाकृतेश्चिकित्सितमुचितं; तत्रापि स्कन्दग्रहस्य प्रथमत्वात्तत्प्रतिषेधाध्याय आरभ्यते–अथात इत्यादि ॥ १ ॥ २ ॥

स्कन्दग्रहोपसृष्टानां कुमाराणां प्रशस्यते ॥
वातघ्नद्रुमपत्राणां निष्काथः परिषेचने ॥ ३ ॥

स्कन्देत्यादि । उपसृष्टानां गृहीतानाम् । द्रुमग्रहणं विटपनिषेधार्थम् । स्कन्दग्रहप्रभावेण तेनाविष्टे बाले वायुः कुप्यतीति वातहरैः सेकादयः कार्याः; अथवा वातघ्नद्रुमाः स्वप्रभावेण ग्रहावेशमपि निवर्तयन्ति, अचिन्त्यशक्तित्वात् ॥ ३ ॥

तेषां मूलेषु सिद्धं च तैलमभ्यञ्जने हितम् ॥
सर्वगन्धसुरामण्डकैडर्यावापमिष्यते ॥ ४ ॥

तेषामित्यादि । तेषां वातघ्नद्रुमाणां बिल्वादीनाम् । सर्वगन्धा एलादिपठिताः, सुरामण्डः सुराया उपर्यच्छो भागः, कैडर्यो महानिम्बः । एतेन बिल्वादिमूलक्वाथेन एलादीनां कल्केन सिद्धं तैलमभ्यञ्जने हितमिष्यत इति सिद्धम् ॥ ४ ॥

देवदारुणि रास्नायां मधुरेषु द्रुमेषु च ॥
सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रयोजयेत् ॥ ५ ॥

देवदारुणीत्यादि । मधुरद्रुमा मधुरवृक्षाः, मधु(धू)कराजादनादयः । पानम् अन्नादस्य बालस्य ॥ ५ ॥

सर्षपाः सर्पनिर्मोको वचा काकादनी घृतम् ॥
उष्ट्राजाविगवां चैव रोमाण्युद्धूपनं शिशोः ॥ ६ ॥

काकादनी काकजङ्घा ॥ ६ ॥

सोमवल्लीमिन्द्रवल्लीं शमीं बिल्वस्य कण्टकान् ॥
मृगादन्याश्च मूलानि ग्रथितान्येव धारयेत् ॥ ७ ॥

सोमवल्लीत्यादि । सोमवल्ली गुडूची, इन्द्रवल्ली मत्स्यांडकैः गण्डदूर्वेति लोके, मृगादनी इन्द्रवारुणी ॥ ७ ॥

रक्तानि माल्यानि तथा पताका
रक्ताश्च गन्धा विविधाश्च भक्ष्याः ॥
घण्टा च देवाय बलिर्निवेद्यः
सुकुक्कुटः स्कन्दग्रहे हिताय ॥ ८ ॥

बलिं निर्दिशन्नाह—रक्तानीत्यादि । तथा पताका रक्तेत्यर्थः । रक्ताश्च गन्धाः कुङ्कुमादिकाः । भक्ष्याः स्वस्तिकमोदकादयः । देवाय स्कन्दनाम्ने, स्कन्दग्रहे वक्ष्यमाणे चत्वराख्ये । हिताय हितार्थं बालकस्य । बलिश्च शुचिना वैद्येन कृतस्नानेन शस्त्रहस्तेन रात्रौ दातव्यः ॥ ८ ॥

स्नानं त्रिरात्रं निशि चत्वरेषु
कुर्यात् पुरं शालियवैर्नवैस्तु ॥
अद्भिश्च गायत्र्यभिमन्त्रिताभिः
प्रज्वालनं व्याहृतिभिश्च वह्नेः ॥ ९ ॥

स्नानमित्यादि । चत्वरेषु चतुष्पथेषु, अपरे चत्वरशब्देन त्रिपथं कथास्थानं चेत्याहुः । पुरं मण्डलम् । अद्भिश्च गायत्र्यभिमन्त्रिताभिः स्नानमिति संबन्धनीयम् । व्याहृतिभिस्तिसृभिः सप्तभिर्दशभिर्वा स्वाहान्ताभिः । स्कन्दग्रहे चत्वराख्ये शालियवैर्विरचितमण्डलाभ्यन्तरसद्मनि पुराभिधाने, त्रिरात्रं रात्रौ बलिस्नानहोमाः कार्याः ॥ ९ ॥

रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम् ॥
अहन्यहनि कर्तव्या या भिषग्भिरतन्द्रितैः ॥ १० ॥
तपसां तेजसां चैव यशसां वपुषां तथा ॥
निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥११॥
ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः ॥
देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥ १२ ॥
देवदेवस्य महतः पावकस्य च यः सुतः ॥
गङ्गोमाकृत्तिकानां च स ते शर्म प्रयच्छतु ॥ १३ ॥

१ 'तैले दीपं' इति पा० ।

१ 'मत्स्याण्डकः' इति पा० ।

**रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः ॥**
**रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः ॥ १४ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे स्कन्दप्रतिषेधो नामा (द्वितीयोऽध्यायः, आदितोऽ) ष्टाविंशोऽध्यायः ॥ २८ ॥**

रक्षामित्यादि । रक्षा स्वस्त्ययनं; मन्त्राणामचिन्त्यशक्तित्वान्मन्त्रमयी रक्षा पापनाशिनी । तपसामित्यादि । वपुषामिति वपुषां निधानं स्थानमित्यनेन कामरूपत्वमुक्तम् । अव्ययो नित्यः । ग्रहाः स्कन्दग्रहादिकाः, तेषां सेना तस्याः पतिः देवसेनापतिः । देवसेनारिपवो दैत्याः । देवदेवस्य रुद्रस्य, उमा पार्वती, कृत्तिकाः षट्संख्योपेताः सप्तर्षिभार्याः । शर्म सुखम् । क्रौञ्चनामा पर्वतः तं सूदयति निहन्तीति क्रौञ्चसूदनः ॥ १०–१४ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे स्कन्दग्रहप्रतिषेधो नामाऽष्टाविंशतितमोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशत्तमोऽध्यायः ।

**अथातः स्कन्दापस्मारप्रतिषेधं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**
**बिल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः ॥**
**परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ॥ ३ ॥**

स्कन्दप्रतिषेधानन्तरं प्रत्यासत्त्या स्कन्दापस्मारप्रतिषेधारम्भो युज्यत इत्याह—बिल्व इत्यादि । गोलोमी दूर्वा ॥१–३॥

**सर्वगन्धविपक्वं तु तैलमभ्यञ्जने हितम् ॥**
**क्षीरवृक्षकषाये च काकोल्यादौ गणे तथा ॥ ४ ॥**
**विपक्तव्यं घृतं चापि पानीयं पयसा सह ॥**

सर्वेत्यादि । सर्वगन्धा एलादिकाः, यथालाभमेलादिकल्केन बिल्वशिरीषादीनां क्वाथेन तैलं पक्तव्यम् । अन्ये तु 'गन्धमूत्रविपक्वम्' इति पठन्ति; गन्धाः सर्वगन्धाः पूर्वोक्ताः, मूत्रं गोमूत्रम् । क्षीरेत्यादि । क्षीरवृक्षकषाये चतुर्गुणे, पयसा दुग्धेन चतुर्गुणेन, काकोल्यादौ गणे कल्कीकृते स्नेहचतुर्थांशे घृतं विपक्तव्यम् । तद्घृतं किं कार्यमित्याह,—पानीयं पातव्यम्, 'अन्नादेन' इति शेषः । अन्ये तु पानीयं चतुर्गुणं दत्त्वा घृतं पक्तव्यमिति मन्यन्ते, शेषं पूर्ववत् ॥ ४ ॥—

**उत्सादनं वचाहिङ्गुयुक्तं स्कन्दग्रहे हितम् ॥ ५ ॥**
**गृध्रोलूकपुरीषाणि केशा हस्तिनखा घृतम् ॥**
**वृषभस्य च रोमाणि योज्यान्युद्धूपनेऽपि च ॥ ६ ॥**

उत्सादनमित्यादि । उत्सादनम् उद्वर्तनम् । स्कन्दग्रहे हितमित्यत्र चकारो लुप्तो ज्ञेयः, तेन स्कन्दग्रहे स्कन्दापस्मारे च हितम् । ('एतदुद्वर्तनं हितम्' इत्यत्रान्ये 'एतदुद्वर्तनेरितम्' इति पठन्ति; तन्न, उत्सादनस्यानुक्तत्वात्) ॥ ५ ॥ ६ ॥

**अनन्तां कुक्कुटीं बिम्बीं मर्कटीं चापि धारयेत् ॥**

अनन्तेत्यादि । अनन्ता उत्पलसारिवा, कुक्कुटी कुक्कुटीशरीरवत् कुसुमचित्रा वल्ली स्फटिकरचितकुक्कुटाण्डतुल्यकन्दा, मर्कटी कपिकच्छुः । धारयेत् शरीरे इति बोद्धव्यम् ॥—

**पक्वापक्वानि मांसानि प्रसन्ना रुधिरं पयः ॥ ७ ॥**
**भूतौदनो निवेद्यश्च स्कन्दापस्मारिणेऽवटे ॥**

पक्वेत्यादि । प्रसन्ना सुरा, रुधिरं छागलस्य, पयो दुग्धम् । भूतौदनः भूतानामोदनः सोपहारो बलिः, उत्खिन्ना माषविकृतिर्बलिरित्यन्ये । अवटे गर्तायाम् ॥ ७ ॥—

**चतुष्पथे च कर्तव्यं स्नानमस्य यतात्मना ॥ ८ ॥**

चतुष्पथे इत्यादि । अस्य बालकस्य । यतात्मना उपवासादियुतेन । 'यतात्मना' इत्यत्र केचित् 'यथाविधि' इति पठन्ति; स्कन्दप्रतिषेधोक्तस्नानविधानेनेति च व्याख्यानयन्ति ॥ ८ ॥

**स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा ॥**
**विशाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः ॥ ९ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे स्कन्दापस्मारप्रतिषेधो नाम (तृतीयोऽध्यायः, आदितः) एकोनत्रिंशोऽध्यायः ॥ २९ ॥**

रक्षामन्त्रमाह—स्कन्देत्यादि । स्कन्दस्य कार्तिकेयस्य, दयितः अभीष्टः, सखा मित्रं, विशाखसंज्ञ इति स्कन्दापस्मारस्य द्वितीयं नाम । शिशोः बालकस्य, शिवोऽस्तु कल्याणकृद्भवतु, विकृताननो विकृतमुखः । 'विशाखसंज्ञस्य' इति केचित् पठन्ति, तत्र स्कन्दस्य विशेषणम् ॥ ९ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे स्कन्दापस्मारप्रतिषेधो नामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

---

## त्रिंशत्तमोऽध्यायः ।

**अथातः शकुनीप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

स्कन्दापस्मारप्रतिषेधानन्तरं शकुनीप्रतिषेधारम्भः, स्कन्दाद्विग्रहप्रतिपादकसूत्रेऽस्या एवानन्तरोक्तत्वादित्याह—अथात इत्यादि ॥ १ ॥ २ ॥

**शकुन्यभिपरीतस्य कार्यो वैद्येन जानता ॥**
**वेतसाम्रकपित्थानां निष्क्वाथः परिषेचने ॥ ३ ॥**

शकुनीत्यादि । अभिपरीतस्य व्याप्तस्य, 'बालस्य' इति शेषः । जानता बुद्धिमता । निष्क्वाथः परिषेचने कार्य इति संबन्धः ॥३॥

**कषायमधुरैस्तैलं कार्यमभ्यञ्जने शिशोः ॥**

कषायेत्यादि । कषाया वटादयः, मधुराणि काकोल्यादीनि; तत्र वटादीनां कषायः, काकोल्यादीनां च कल्कः, ताभ्यां तैलं

साध्यं; प्रत्येकं वटादीनां काकोल्यादीनां च कल्ककषायौ कल्पनीयाविल्यन्ये ॥—

**मधुकोशीरह्रीवेरसारिवोत्पलपद्मकैः ॥ ४ ॥**
**रोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम् ॥**

मधुकेत्यादि । उत्पलं नीलोत्पलम् । प्रदिहेत् लिम्पेत् ॥ ४ ॥—

**व्रणेषूक्तानि चूर्णानि पथ्यानि विविधानि च ॥ ५ ॥**

व्रणेष्वित्यादि । व्रणेषु शकुनीजुष्टबालकव्रणेषु । उक्तानि चूर्णानि द्विव्रणीयाध्याये कीर्तितानि मिश्रकोक्तानि च शोधनरोपणानि । पथ्यानि व्रणितोपासनीयोक्तानि शालिमुद्गदाडिमसैन्धवयवपटोलादीनि; अन्ये तु पथ्यानीति चूर्णानीत्यस्य विशेषणं कुर्वन्ति, तत्र शकुनीजुष्टबालकव्रणानां संदाहपाकरक्तस्रावहराणि चूर्णानि प्रयोक्तव्यानीति संबन्धनीयम् ॥ ५ ॥

**स्कन्दग्रहे धूपनानि तानीहापि प्रयोजयेत् ॥**

स्कन्देत्यादि । धूपनानि सर्षपा इत्यादीनि स्कन्दग्रहोक्तानि, तानीहापि शकुन्यामपि प्रयोजयेत् ॥

**शतावरीमृगैर्वारुनागदन्तीनिदिग्धिकाः ॥ ६ ॥**
**लक्ष्मणां सहदेवां च बृहतीं चापि धारयेत् ॥**

शतावरीत्यादि । मृगैर्वारुः इन्द्रवारुणी, नागदन्ती दन्तिनी, सहदेवा पीतपुष्पा बला, बृहती स्थूलफला ॥ ६ ॥—

**तिलतण्डुलकं माल्यं हरितालं मनःशिला ॥ ७ ॥**
**बलिरेष करञ्जेषु निवेद्यो नियतात्मना ॥**

तिलेत्यादि । एष तिलतण्डुलकमित्यादिको बलिः । करञ्जेषु नक्तमालेषु । नियतात्मना संयतेन्द्रियेण 'करञ्जेषु' इत्यत्रान्ये 'निकुञ्जेषु' इति पठन्ति, निकुञ्जेषु वनेषु ॥ ७ ॥—

**निष्कुटे च प्रयोक्तव्यं स्नानमस्य यथाविधि ॥ ८ ॥**

निष्कुटे इत्यादि । निष्कुटे गृहोपवने, अन्ये निष्कुटं वनगहनमाहुः । यथाविधीति स्कन्दग्रहोक्तो विधिः; तेन शालियवरचितमण्डले गायत्र्यभिमन्त्रितेन जलेन स्नानमिति लभ्यते ॥८॥

**स्कन्दापस्मारशमनं घृतं चापीह पूजितम् ॥**

स्कन्देत्यादि । घृतं देवदारुणि रास्नायामित्यादिकं, चकारोऽत्र सोमवल्क्यादीनामपि धारणं समुच्चिनोति । जेज्जटस्तु स्कन्दग्रहे धूपनानीत्यादिकधूपनपाठान्ते इदं घृतं पठति ॥—

**कुर्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः ॥ ९ ॥**

कुर्यादित्यादि । कुसुमैः शुभैरिति जातीपुष्पनीलोत्पलादिभिः ॥ ९ ॥

**अन्तरीक्षचरा देवी सर्वालङ्कारभूषिता ॥**
**अयोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु ॥ १० ॥**
**दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा ॥**
**लम्बोदरी शङ्कुकर्णी[1] शकुनी ते प्रसीदतु ॥ ११ ॥**

१ 'शङ्खवर्णा' इति पा० ।

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे शकुनीप्रतिषेधो नाम ( चतुर्थोऽध्यायः, आदितः ) त्रिंशोऽध्यायः ॥ ३० ॥**

बालकरक्षामाह—अन्तरीक्षेत्यादि ॥ १० ॥ ११ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे शकुनीप्रतिषेधो नाम त्रिंशत्तमोऽध्यायः ॥३०॥

---

## एकत्रिंशत्तमोऽध्यायः ।

**अथातो रेवतीप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

शकुनीप्रतिषेधानन्तरं रेवत्यामपि मुखपाकवचनात् सव्रणत्वेनैकधर्मत्वाच्च रेवतीप्रतिषेधाध्यायो युज्यत इत्याह—अथात इत्यादि ॥ १ ॥ २ ॥

**अश्वगन्धा च शृङ्गी च सारिवा सपुनर्नवा ॥**
**सहे तथा विदारी च कषायाः सेचने हिताः ॥ ३ ॥**

अश्वगन्धेत्यादि । अजशृङ्गी कर्कटशृङ्गी, उत्तमारणीत्यन्ये । सहे मुद्गमाषपर्ण्यौ । सेचने हिताः प्रत्येकं समुदिताश्च ॥ ३ ॥

**तैलमभ्यञ्जने कार्यं कुष्ठे सर्जरसेऽपि च ॥**
**पलङ्कषायां नलदे तथा गिरिकदम्बके ॥ ४ ॥**

तैलमित्यादि । सर्जरसो रालः, पलङ्कषा गुग्गुलुः, नलदं जटामांसी, गिरिः गिरिकर्णिका; अन्ये गिरिकदम्बो महाकदम्बः स्वनामख्यातः; एतैः कुष्ठादिभिः कल्कीकृतैस्तैलं कार्यम् ॥ ४ ॥

**धवाश्वकर्णककुभधातकीतिन्दुकीषु च ॥**
**काकोल्यादिगणे चैव पानीयं सर्पिरिष्यते ॥ ५ ॥**

धवेत्यादि । अश्वकर्णो गर्दभाण्डः, ककुभः अर्जुनः । तत्र धवादिकषाये काकोल्यादिकल्के च पानीयं सर्पिः पातव्यं घृतमिष्यते । अन्ये तु काकोल्यादिगणेनैव पानीयं घृतमिच्छन्ति, धवाश्वकर्णादीनि पश्चात्तैले संबध्नन्ति[1] ॥ ५ ॥

**कुलत्थाः शङ्खचूर्णं च प्रदेहः सार्वगन्धिकः ॥**
**गृध्रोलूकपुरीषाणि यवा यवफलो घृतम् ॥ ६ ॥**
**सन्ध्ययोरुभयोः कार्यमेतदुद्धूपनं शिशोः ॥**
**वरुणारिष्टकमयं रुचकं सैन्दुकं तथा ॥ ७ ॥**
**सततं धारयेच्चापि कृतं वा पौत्रजीविकम् ॥**
**शुक्लाः सुमनसो लाजाः पयः शाल्योदनं तथा ॥८॥**
**बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना ॥**

कुलत्था इत्यादि । शङ्खचूर्णं सुदग्धशङ्खचूर्णम् । सर्वगन्धा एलादिकाः, तैः कृतो लेपः सार्वगन्धिकः । गृध्रेत्यादि । यवाः प्रसिद्धाः, यवफलो वंशः, अन्ये यवफला दुग्धिकेत्याहुः ।

१ 'संक्षुद्य तैले संयच्छन्ति' इति पा० ।

वरुणारिष्टकमयं वरुणनिम्बकाष्ठघटितं, रुचकं ग्रीवाभरणं मणिकसंज्ञं धारयेत्। ब्रह्मदेवस्त्वरिष्टं फेनिलमाह । सैन्दुकमिति सिन्दुको निर्गुण्डी, तत्काष्ठकृतं रुचकं; तत्फलकृतमित्यन्ये। पुत्रञ्जीवो मध्यवर्तुलतीक्ष्णाग्रफलो जम्बीरपत्रो वृक्षस्तत्काष्ठकृतं रुचकं, तत्फलकृतमित्यन्ये। केचिदत्रारग्वधं पठन्ति । शुक्लेत्यादि शुक्लाः सुमनसः श्वेतकुसुमानि। निवेद्यो दातव्यः। गोतीर्थे सलिलगोपथे। प्रयतात्मना उपवासादिपवित्रेण । तदुक्तं,—"सोपवासः शुचिर्नक्तं सशस्त्रो निर्हरेद्बलिम्" इति ॥६–८॥—

सङ्गमे च भिषक् स्नानं कुर्याद्धात्रीकुमारयोः ॥ ९ ॥
नानावस्त्रधरा देवी चित्रमाल्यानुलेपना ॥
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥ १० ॥
उपासते यां सततं देव्यो विविधभूषणाः ॥
लम्बा कराला विनता तथैव बहुपुत्रिका ॥
रेवती शुष्कनामा या सा ते देवी प्रसीदतु ॥ ११ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे रेवतीप्रतिषेधो नाम (पञ्चमोऽध्यायः, आदितः) एकत्रिंशोऽध्यायः ॥ ३१ ॥

संगम इत्यादि । संगमे नदीद्वयमेलके। रक्षामन्त्रमाह—नानेत्यादि । अपरा देव्यो विविधभूषणा यां रेवतीमुपासते सेवन्ते सा देवी भो बालक ते तव प्रसादं करोतु लोके प्रसादकरा भवतु। रेवती शुष्कनामा शुष्करेवतीत्यर्थः ॥ ९–११ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे रेवतीप्रतिषेधो नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशत्तमोऽध्यायः।

अथातः पूतनाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

रेवतीप्रतिषेधानन्तरं स्त्रीग्रहसामान्यात् पूतनाप्रतिषेधारम्भो युज्यत इत्याह—अथात इत्यादि ॥ १ ॥ २ ॥

कपोतवङ्काऽरलुको वरुणः पारिभद्रकः ॥
आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ॥३॥
वचा वयःस्था गोलोमी हरितालं मनःशिला ॥
कुष्ठं सर्जरसश्चैव तैलार्थे वर्ग इष्यते ॥ ४ ॥

कपोतवङ्केत्यादि । कपोतवङ्का कवडवङ्केति लोके प्रसिद्धा ब्रह्मसुवर्चलापरपर्याया। आस्फोता सारिवा । वयस्था ब्राह्मी, अन्ये गुडूचीमाहुः। गोलोमी दूर्वा। वर्ग इष्यते इति वर्गग्रहणं यथालाभं प्रक्षेपार्थम् । वचादीनां कल्ककषायाभ्यां तैलसाध्यम् ॥ ३ ॥ ४ ॥

हितं घृतं तुगाक्षीर्यां सिद्धं मधुरकेषु च ॥
कुष्ठतालीशखदिरचन्दनस्यन्दने तथा ॥ ५ ॥
देवदारुवचाहिङ्गुकुष्ठं गिरिकदम्बकः ॥
एला हरेणवश्चापि योज्या उद्धूपने सदा ॥ ६ ॥
गन्धनाकुलिकुम्भीके मज्जानो बदरस्य च ॥
कर्कटास्थि घृतं चापि धूपनं सर्षपैः सह ॥ ७ ॥

हितमित्यादि । तुगाक्षीरी वंशलोचना, मधुरकेषु काकोल्यादिषु; काकोल्यादिपाठात्तुगाक्षीरी प्राप्ता, पृथक्पाठो भागद्वयार्थं कुष्ठतालीशादीनां यथालाभनिषेधार्थो वा, ये तुगाक्षीरीं वंशरोचनानुकारिपार्थिवद्रव्यं मन्यन्ते तन्मते द्विरुक्तिर्नास्ति। कल्ककषायाभ्यां सिद्धं घृतं हितमिति संबन्धः। गिरिकदम्बको महाकदम्बः। गन्धनाकुली सुगन्धा रास्ना। कुम्भिका जलजा। जेज्जटाचार्यस्तु न पठत्येतद्देवदार्वादियोगद्वयमपि, गयी तु पठति ॥ ५–७ ॥

काकादनीं चित्रफलां बिम्बीं गुञ्जां च धारयेत् ॥
मत्स्यौदनं च कुर्वीत कृशरां पललं तथा ॥
शरावसंपुटे कृत्वा बलिं शून्यगृहे हरेत् ॥ ८ ॥

काकादनीमित्यादि। काकादनी काकतिन्दुकः, 'काला' इत्यन्ये; चित्रफला इन्द्रवारुणी, चित्राण्डिकेत्यन्ये। मत्स्यौदनं मत्स्यभक्तं; पललं तिलपिष्टम्। 'शून्यगृहे हरेत्' इत्यत्र 'शून्यगृहेतरे' इत्यन्ये, तत्रेतरे खण्डगृहे। केचिदत्रेदृशं पठन्ति 'हरेद्बलिं चोत्कुरटे' इत्यादि; तत्रोत्कुरटः शून्यागारः, शून्याराम इत्यन्ये ॥ ८ ॥

उच्छिष्टेनाभिषेकेण शिशोः स्नपनमिष्यते ॥
पूज्या च पूतना देवी बलिभिः सोपहारकैः ॥ ९ ॥
मलिनाम्बरसंवीता मलिना रूक्षमूर्धजा ॥
शून्यागाराश्रिता[1] देवी दारकं पातु पूतना ॥ १० ॥
दुर्दर्शना सुदुर्गन्धा कराला मेघकालिका ॥
भिन्नागाराश्रया देवी दारकं पातु पूतना ॥ ११ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे (षष्ठोऽध्यायः, आदितः) द्वात्रिंशोऽध्यायः ॥ ३२ ॥

उच्छिष्टेनेत्यादि। उच्छिष्टनाभिषेकेण आचमनोदकेनेत्यर्थः। पूर्वकल्पेन स्नानम्। रक्षामन्त्रः—मलिनेत्यादि ॥ ९–११ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे पूतनाप्रतिषेधो नाम द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशत्तमोऽध्यायः।

अथातोऽन्धपूतनाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पूतनाप्रतिषेधानन्तरं पूतनासामान्यादन्धपूतनाप्रतिषेधारम्भो युज्यत इत्याह—अथात इत्यादि ॥ १ ॥ २ ॥

---

१ 'शून्यारामाश्रिता' इति पा०।

तिक्तकद्रुमपत्राणां कार्यः क्राथोऽवसेचने ॥

तिक्तकेत्यादि । तिक्तकद्रुमा निम्बादयः, तत्पत्रक्राथेन परिषेकः कार्यः ॥—

सुरा सौवीरकं कुष्ठं हरितालं मनःशिला ॥ ३ ॥
तथा सर्जरसश्चैव तैलार्थमुपदिश्यते ॥
पिप्पल्यः पिप्पलीमूलं वर्गो मधुरको मधु ॥ ४ ॥
शालपर्णी बृहत्यौ च घृतार्थमुपदिश्यते ॥

सुरेत्यादि । सौवीरकं विरेचनाध्यायोपदिष्टकाञ्जिकप्रकारः । अत्र तैले सुरासौवीरके तैलात् प्रत्येकं चतुर्गुणे, कुष्ठादीनि कल्कद्रव्याणि चतुर्थांशानि । पिप्पल्य इत्यादि । वर्गो मधुरकः काकोल्यादिः, वर्गग्रहणं यथालाभनिषेधार्थं, पिप्पल्यादीनां कल्कक्राथाभ्यां घृतं विपाच्य शीतीभूते घृते मधु क्षिपेत् । इदं घृतं पानाय ॥ ३ ॥ ४ ॥—

सर्वगन्धैः प्रदेहश्च गात्रेष्वक्ष्णोश्च शीतलैः ॥ ५ ॥

सर्वेत्यादि । प्रदेहो लेपः । शीतलैरन्यैरपि द्रव्यैः ॥ ५ ॥

पुरीषं कौक्कुटं केशांश्चर्म सर्पत्वचं तथा ॥
जीर्णां च भिक्षुसंघाटीं धूमनायोपकल्पयेत् ॥ ६ ॥

पुरीषं कौकुटमिति कुकुटपुरीषं, केशांश्चर्म च कुकुटस्य, केशाश्चर्म च मानुषस्येत्येके; केचित् चर्मेति सर्पस्य वदन्ति, तेन चर्म त्वक् कञ्चुलिका सर्पस्य । जीर्णां च भिक्षुसङ्घाटीमिति भिक्षुरत्र शाक्यभिक्षुर्बौद्धाख्यः परिव्राजकश्च, तयोर्जीर्णसङ्घाटी जीर्णवस्त्रं; तदेकदेशो गृह्यते, एकदेशेऽपि समुदायप्रवृत्तेः; भिक्षुरत्र शाक्यभिक्षुरेवेति जेज्झटः ॥ ६ ॥

कुक्कुटीं मर्कटीं शिम्बीमनन्तां चापि धारयेत् ॥
मांसमामं तथा पक्वं शोणितं च चतुष्पथे ॥ ७ ॥
निवेद्यमन्तश्च गृहे शिशो रक्षानिमित्ततः ॥
शिशोश्च स्नपनं कुर्यात् सर्वगन्धोदकैः शुभैः ॥ ८ ॥
कराला पिङ्गला मुण्डा कषायाम्बरवासिनी ॥
देवी बालमिमं प्रीता संरक्षत्वन्धपूतना ॥ ९ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रेऽन्धपूतनाप्रतिषेधो नाम ( सप्तमोऽध्यायः, आदितः ) त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

कुक्कुटीमित्यादि । कुक्कुटी स्फटिकरचितकुक्कुटाण्डसदृशकन्दा कुक्कुटीशरीरवत् कुसुमचित्रा वल्ली । मर्कटी कपिकच्छुः, मर्कटमूलीत्यन्ये, शुकशिम्बीत्यपरे । अनन्ता सारिवा । अन्तश्च खण्डगृहाभ्यन्तरे । शिशोश्चेति चकारात् धात्र्याश्च स्नपनम् । सर्वगन्धा एलादिकाः । देवी प्रीता सती इमं बालं रक्षत्विति संबन्धः ॥ ७–९ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रेऽन्धपूतनाप्रतिषेधो नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशत्तमोऽध्यायः ।

अथातः शीतपूतनाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अन्धपूतनाप्रतिषेधानन्तरं पूतनासामान्याच्छीतपूतनाप्रतिषेधारम्भो युज्यत इत्याह—अथात इत्यादि ॥ १ ॥ २ ॥

कपित्थं सुवहां बिम्बीं तथा बिल्वं प्रचीबलम् ॥
नन्दीं भल्लातकं चापि परिषेके प्रयोजयेत् ॥ ३ ॥
बस्तमूत्रं गवां मूत्रं मुस्तं च सुरदारु च ॥
कुष्ठं च सर्वगन्धांश्च तैलार्थमवचारयेत् ॥ ४ ॥
रोहिणीसर्जखदिरपलाशककुभत्वचः ॥
निष्क्वाथ्य तस्मिन्निष्क्वाथे सक्षीरं विपचेद्धृतम् ॥ ५ ॥
गृध्रोलूकपुरीषाणि बस्तगन्धामहेस्त्वचः ॥
निम्बपत्राणि मधुकं धूपनार्थं प्रयोजयेत् ॥ ६ ॥
धारयेदपि लम्बां च गुञ्जां काकादनीं तथा ॥

कपित्थमित्यादि । सुवहा गोधापदी । प्रचीबलो मत्स्याक्षकः, काकजङ्घेत्यन्ये । नदीभल्लातकं नदीपिप्पलिका गण्डोपलीति पर्याया । सर्वगन्धा एलादिकाः । अत्र तैले कुष्ठद्वयस्य पाठो भागद्वयार्थः । रोहिणी कट्फलः । रोहिण्यादिक्वाथे त्रिगुणे क्षीरैकभागे घृतं पचेत् । बस्तगन्धा बोथयिका । अहेस्त्वचः सर्पस्य कञ्चुकाः । लम्बा तिक्तालाबूः । काकादनी काकतिन्दुका ॥ ३–६ ॥—

नद्यां मुद्गकृतैश्चान्नैस्तर्पयेच्छीतपूतनाम् ॥ ७ ॥
देव्यै देयश्चोपहारो वारुणी रुधिरं तथा ॥
जलाशयान्ते बालस्य स्नपनं चोपदिश्यते ॥ ८ ॥

नद्यामित्यादि । मुद्गकृतैरन्नैः मुद्गकृतैर्भक्ष्यैः, मुद्गौदनेनेति गयी । उपहारो बलिः । जलाशयान्ते नद्याः समीपे ॥ ७ ॥ ८ ॥

मुद्गौदनाशना देवी सुराशोणितपायिनी ॥
जलाशयालया देवी पातु त्वां शीतपूतना ॥ ९ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे शीतपूतनाप्रतिषेधो नाम ( अष्टमोऽध्यायः, आदितः ) चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

रक्षामाह—मुद्गेत्यादि ॥ ९ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे शीतपूतनाप्रतिषेधाध्यायश्चतुस्त्रिंशत्तमः ॥ ३४ ॥

## पञ्चत्रिंशत्तमोऽध्यायः ।

अथातो मुखमण्डिकाप्रतिषेधं व्याख्यास्यामः १
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

शीतपूतनाप्रतिषेधानन्तरं स्त्रीग्रहसामान्यान्मुखमण्डिकाप्रतिषेधारम्भो युज्यत इत्याह—अथात इत्यादि ॥ १ ॥ २ ॥

कपित्थविल्वतर्कारीवांशीगन्धर्वहस्तकाः ॥
कुबेराक्षी च योज्याः स्युर्बालानां परिषेचने ॥ ३ ॥

कपित्थेत्यादि । तर्कारी अरणिका, वांशी वंशलोचना, कुबेराक्षी काष्ठपाटला, पेटिकेत्यन्ये ॥ ३ ॥

स्वरसैर्भृङ्गवृक्षाणां तथाऽजहरिगन्धयोः ।
तैलं वसां च संयोज्य पचेदभ्यञ्जने शिशोः ॥ ४ ॥

भृङ्गवृक्षाणामिति वातहरबिल्वादिकानां भृङ्गाः पत्रभङ्गाः, तदुपयोगिका वृक्षाः । अजहरिगन्धयोरिति बस्तगन्धाश्वगन्धयोः, अजाश्वगन्धाचतुर्गुणरसेन तैलं वसां च संयोज्य यमकं पचेदिति मन्यन्ते; 'अजहरिगन्धयोः' इत्यत्र च 'तथैव हरिगन्धया' इति पठन्ति ॥ ४ ॥

मधूलिकायां पयसि तुगाक्षीर्या गणे तथा ॥
मधुरे पञ्चमूले च कनीयसि घृतं पचेत् ॥ ५ ॥

मधूलिकायामित्यादि । मधूलिका मर्कटहस्ततृणम् । पयसि गोक्षीरे । अत्र गयी पयःस्विनीति पठति; तत्र क्षीरविदारीगणे; तथा मधुरे काकोल्यादिके, पञ्चमूले कनीयसि शालपर्ण्यादिके । मधूलिकादिकल्कक्काथाभ्यां घृतं पचेत् ॥ ५ ॥

वचा सर्जरसः कुष्ठं सर्पिश्चोद्धूपनं हितम् ॥
धारयेदपि जिह्वाश्च चाषचीरल्लिसर्पजाः ॥ ६ ॥
वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा ॥
मनःशिलां चोपहरेद्गोष्ठमध्ये बलिं तथा ॥ ७ ॥
पायसं सपुरोडाशं बल्यर्थमुपसंहरेत् ॥
मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥ ८ ॥

वचेत्यादि । चाषः कर्णायसः, चीरल्लिः 'चिल्ल' इति लोके, चाषादिजिह्वां धारयेत् । वर्णको रोचनिका कम्पिल्लक इत्यर्थः, कङ्कुष्ठमित्यन्ये । माल्यं पुष्पम् । अञ्जनं रसाञ्जनं, सौवीराञ्जनमित्यन्ये । पारदं शम्भुरेतः । पूर्वकल्पेन शाल्यादिकृतमण्डले गोष्ठमध्ये वर्णकादिबलिमुपहरेत्, अन्ये तु वर्णकादिद्रव्याणि मण्डलार्थं मन्यन्ते । पायसं क्षीरसंसिद्धास्तण्डुलाः, पुरोडाशः अष्टाकपालः पिष्टमयः कपालोपरि पक्कस्तृणाग्निना । मन्त्रेत्यादि मन्त्रपूताभिः गायत्र्या अभिमन्त्रिताभिः । तत्रैव गोष्ठमध्ये ॥ ६–८ ॥

अलङ्कृता रूपवती सुभगा कामरूपिणी ॥
गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका ॥ ९ ॥

रक्षामाह—अलङ्कृतेत्यादि ॥ ९ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे मुखमण्डिकाप्रतिषेधो नाम ( नवमोऽध्यायः, आदितः ) पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे मुखमण्डिकाप्रतिषेधाध्यायः पञ्चत्रिंशत्तमः ॥ ३५ ॥

---

१ 'भृङ्गवृक्षो भृङ्गराज' इति हाराणचन्द्रः ।

## षट्त्रिंशत्तमोऽध्यायः ।

अथातो नैगमेषप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मुखमण्डिकाप्रतिषेधानन्तरं परिशिष्टत्वान्नैगमेषप्रतिषेधारम्भो युक्त इत्याह—अथातो नैगमेषप्रतिषेधमित्यादि ॥ १ ॥ २ ॥

बिल्वाग्निमन्थपूतीकाः कार्याः स्युः परिषेचने ॥
सुरा सबीजं धान्याम्लं परिषेके च शस्यते ॥ ३ ॥
प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः ॥
पचेत्तैलं सगोमूत्रैर्दधिमस्त्वम्लकाञ्जिकैः ॥ ४ ॥

बिल्वाग्निमन्थेत्यादि । पूतीकः चिरबिल्वः । 'सुरा सबीजं धान्याम्लं' इत्यत्रान्ये 'सुरासबीजधान्याम्लैः' इति पठन्ति; तथापाठे सबीजं धान्याम्लं बीजेन सह काञ्जिकमिति । अन्ये तु सुरास्थाने तथेति पठन्ति । सबीजमप्यत्र सौवीरमिति केचित् । प्रियङ्गुसरलेत्यादि । सरला शुक्ला त्रिवृत्, अनन्ता उत्पलशारिवा, कुटन्नटं तगरं; तत्र प्रियङ्ग्वादिकल्कं चतुर्थांशं, दध्यादिद्रव्यैश्चतुर्भिः प्रत्येकं समं तैलं पचेदिति क्रमः ॥ ३ ॥ ४ ॥

पञ्चमूलद्वयक्काथे क्षीरे मधुरकेषु च ॥
पचेद्घृतं च मेधावी खर्जूरीमस्तकेऽपि वा ॥ ५ ॥

पञ्चमूलद्वयक्काथे इति पञ्चमूलद्वयक्काथे दशमूलक्काथे त्रिगुणे, क्षीरे घृतसमे, काकोल्यादिकल्कचतुर्थांशं, खर्जूरीमज्जचतुर्थांशं वा घृतं पानार्थं पचेदित्यर्थः ॥ ५ ॥

वचां वयःस्थां गोलोमीं जटिलां चापि धारयेत् ॥
उत्सादनं हितं चात्र स्कन्दापस्मारनाशनम् ॥ ६ ॥

वचामित्यादि । वयःस्था गुडूची, ब्राह्मीत्यन्ये, गोलोमी दूर्वा, जटिला मांसी । उत्सादनम् उद्वर्तनम् ॥ ६ ॥

सिद्धार्थकवचाहिङ्गुकुष्ठं चैवाक्षतैः सह ॥
भल्लातकाजमोदाश्च हितमुद्धूपनं शिशोः ॥ ७ ॥

सिद्धार्थकेत्यादि । अक्षता यवाः ॥ ७ ॥

मर्कटोलूकगृध्राणां पुरीषाणि नवग्रहे ॥
धूपः सुप्ते जने कार्यो बालस्य हितमिच्छता ॥ ८ ॥

मर्कटेत्यादि । मर्कटादिपुरीषेण रात्रौ सुप्ते लोके बालस्य धूपनम् ॥ ८ ॥

तिलतण्डुलकं माल्यं भक्ष्यांश्च विविधानपि ॥
कुमारपितृमेषाय वृक्षमूले निवेदयेत् ॥ ९ ॥

तिलेत्यादि । विविधान् स्वस्तिकमोदकादीन् । कुमारपितृमेषायेति कुमाराणां पिता रक्षणात्मकत्वात्, मेषो नैगमेषः, तस्मै नैगमेषाय । वृक्षमूले क्षीरवृक्षमूले । निवेदयेत्तिलादिकं बलिम् ॥ ९ ॥

अधस्ताद्वटवृक्षस्य स्नपनं चोपदिश्यते ॥
बलिं न्यग्रोधवृक्षेषु तिथौ षष्ठ्यां निवेदयेत् ॥ १० ॥

अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः ॥
बालं बालपिता देवो नैगमेषोऽभिरक्षतु ॥ ११ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे नैगमेषप्रतिषेधो नाम ( दशमोऽध्यायः, आदितः ) षट्त्रिंशोऽध्यायः ॥ ३६ ॥

रक्षामाह—अधस्तादित्यादि । स्नपनं गायत्र्यभिमन्त्रिताभिरद्भिः । बलिमपि तिलतण्डुलमित्यादिकं वटमूले षष्ठ्यां निवेदयेत् ॥ १० ॥ ११ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे नैगमेषप्रतिषेधाध्यायः षट्त्रिंशत्तमः ॥ ३६ ॥

---

## सप्तत्रिंशत्तमोऽध्यायः ।

अथातो ग्रहोत्पत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

नवग्रहाकृतिविज्ञानं चिकित्सितं चाभिधाय बालग्रहाणामुत्पत्तिं कारणं चाभिधातुं ग्रहोत्पत्त्यध्यायारम्भो युज्यत इत्याह—अथात इत्यादि । ग्रहाणां स्कन्दादीनाम्, उत्पत्तिः आगतिः प्राप्तिः; एतेन क्रीडनार्थं नियोजनमत्रोत्पत्तिः, नाभूतप्रादुर्भावः; कुतः ? तेषां नित्यत्वात् ॥ १ ॥ २ ॥

नव स्कन्दादयः प्रोक्ता बालानां य इमे ग्रहाः ॥
श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहाः ॥ ३ ॥

नवेत्यादि । विग्रहः शरीरं; तत्र च स्कन्दस्कन्दापस्मारनैगमेषाः पुरुषशरीराः, शेषाः स्त्रीशरीराः ॥ ३ ॥

एते गुहस्य रक्षार्थं कृत्तिकोमाग्निशूलिभिः ॥
सृष्टाः शरवणस्थस्य रक्षितस्यात्मतेजसा ॥ ४ ॥

एते इत्यादि । शरवणस्थस्य आत्मतेजसा रक्षितस्यापि रक्षार्थं कृत्तिकादिभिरेते स्कन्दादयो ग्रहाः सृष्टा नियोजिता इत्यर्थः; गुहस्य कार्तिकेयस्य, आत्मतेजसा स्वशक्त्या । ननु स्वभावरक्षितस्य गुहस्य रक्षकैः किं ? उच्यते—यथा स्वशक्त्या अनभिभवनीयस्यापि इन्द्रस्य अन्ये देवा रक्षकाः, प्रभुधर्मत्वात्; तद्वद्गुहस्यापि अन्ये ग्रहा रक्षकाः, प्रभुधर्मत्वात् ॥ ४ ॥

स्त्रीविग्रहा ग्रहा ये तु नानारूपा मयेरिताः ॥
गङ्गोमाकृत्तिकानां ते भागा राजसतामसाः ॥ ५ ॥

स्त्रीत्यादि । स्त्रीविग्रहा नारीशरीराः, नानारूपा मेषादिमुखाः, मया धन्वन्तरिणा, ईरिताः कथिताः । ते स्त्रीविग्रहाः । भागा अंशाः, राजसतामसा मता रजस्तमोमयाः स्मृताः । यद्यपि सर्वग्रहाणां रजस्तमोमयत्वं, तथाऽपि स्त्रीविग्रहाणामेवात्यर्थं रजस्तमोगुणभूयिष्ठत्वं; तद्भूयिष्ठत्वाच्चातिशयेन हिंसात्मकत्वमिति तेभ्यो बालको रक्षितव्यः ॥ ५ ॥

नैगमेषस्तु पार्वत्या सृष्टो मेषाननो ग्रहः ॥
कुमारधारी देवस्य गुहस्यात्मसमः सखा ॥ ६ ॥

नैगमेष इत्यादि । नैगमेषः पुंग्रहः, मेषानन एडकमुखः, बालकौतुकाय सृष्टः । कुमारधारी कुमारपालयिता; 'कुमारहारी' इत्यन्ये पठन्ति, तत्र कुमारान् हरतीत्यर्थः । आत्मसम आत्मतुल्यः, सखा मित्रम् । 'आत्मसम' इत्यत्रान्ये 'आत्मोद्भव' इति पठन्ति, तत्रात्मोद्भवः पुत्रः ॥ ६ ॥

स्कन्दापस्मारसंज्ञो यः सोऽग्निनाऽग्निसमद्युतिः ॥
स च स्कन्दसखा नाम विशाख इति चोच्यते ॥ ७ ॥

स्कन्देत्यादि । अपस्मारविकारलिङ्गलिङ्गितविकारित्वेन स्कन्दापस्मार इत्युच्यते । सोऽग्निना सृष्ट इति संबध्यते । विशाख इति स्कन्दापस्मारस्यापरं नाम ॥ ७ ॥

स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा ॥
बिभर्ति चापरां संज्ञां कुमार इति स ग्रहः ॥ ८ ॥

स्कन्द इत्यादि । त्रिपुरारिणा रुद्रेण सृष्टः ॥ ८ ॥

बाललीलाधरो योऽयं देवो रुद्राग्निसंभवः ॥
मिथ्याचारेषु[1] भगवान् स्वयं नैष प्रवर्तते ॥ ९ ॥

गुहस्य स्कन्दादिभ्यो भेदमाह—बाललीलाधर इत्यादि । लीला चेष्टा, रुद्राग्निसंभव इति रुद्रसंभवोऽग्निसंभवश्च । मिथ्याचारेषु बालेष्वित्यर्थः । स्वयं न प्रवर्तते तदनुचरास्तु प्रवर्तन्ते, कुतः ? यतोऽस्य देवत्वाद्यागादिभिरेव तृप्तिः । 'बाललीलाधर' इत्यत्र 'बाललीलाटन' इत्यन्ये पठन्ति ॥ ९ ॥

कुमारः स्कन्दसामान्यादत्र केचिदपण्डिताः ॥
गृह्णातीत्यल्पविज्ञाना ब्रुवते देहचिन्तकाः ॥ १० ॥

कुमार इत्यादि । कुमारः कार्तिकेयः, स्कन्दसामान्यात् स्कन्दग्रहनामतुल्यत्वाद्बालं गृह्णातीति ये केचिदपण्डिता देहचिन्तका वैद्या ब्रुवते तेऽल्पविज्ञाना अपण्डिताः ॥ १० ॥

ततो भगवति स्कन्दे सुरसेनापतौ कृते ॥
उपतस्थुर्ग्रहाः सर्वे दीप्तशक्तिधरं गुहम् ॥ ११ ॥
ऊचुः प्राञ्जलयश्चैनं वृत्तिं नः संविधत्स्व वै ॥
तेषामर्थे ततः स्कन्दः शिवं देवमचोदयत् ॥ १२ ॥
ततो ग्रहांस्तानुवाच भगवान् भगनेत्रहृत् ॥
तिर्यग्योनिं मानुषं च दैवं च त्रितयं जगत् ॥ १३ ॥
परस्परोपकारेण वर्तते धार्यतेऽपि च ॥
देवा मनुष्यान् प्रीणन्ति तैर्यग्योनींस्तथैव च ॥ १४ ॥
वर्तमानैर्यथाकालं शीतवर्षोष्णमारुतैः ॥
इज्याञ्जलिनमस्कारजपहोमव्रतादिभिः ॥ १५ ॥
नराः सम्यक् प्रयुक्तैश्च प्रीणन्ति त्रिदिवेश्वरान् ॥
भागधेयं विभक्तं च शेषं किञ्चिन्न विद्यते ॥ १६ ॥
तद्युष्माकं शुभा वृत्तिर्बालेष्वेव भविष्यति ॥
कुलेषु येषु नेज्यन्ते देवाः पितर एव च ॥ १७ ॥

---

[1] 'मिथ्या बालेषु' इति पा० ।

ब्राह्मणाः साधवश्चैव गुरवोऽतिथयस्तथा ॥
निवृत्ताचारशौचेषु परपाकोपजीविषु ॥ १८ ॥
उत्सन्नबलिभिक्षेषु भिन्नकांस्योपभोजिषु ॥
गृहेषु तेषु ये बालास्तान् गृह्णीध्वमशङ्किताः॥ १९॥
तत्र वो विपुला वृत्तिः पूजा चैव भविष्यति ॥
एवं ग्रहाः समुत्पन्ना बालान् गृह्णन्ति चाप्यतः ॥२०॥
ग्रहोपसृष्टा बालास्तु दुश्चिकित्स्यतमा मताः ॥

के तर्हि बालान् गृह्णन्तीति पृष्ट आह—तत इत्यादि । ततो गुहरक्षार्थं नवग्रहेषु सृष्टेषु सत्सु, अनन्तरं सुरा देवास्तेषां सेना तस्याः पतौ स्वामिनि गुहे कृते सति, उपतस्थुः आगताः । शक्तिः आयुधविशेषः । ऊचुः उक्तवन्तः । प्राञ्जलयः संयोजितहस्ताः । एनं गुहं प्रति; एनमित्यत्र अन्ये देवेति गुहसंबोधनं पठन्ति । किमूचुः ? वृत्तिं वर्तनं, नः अस्माकं, संविधत्स्व कुरु, वै स्फुटम् । आत्मवृत्त्यर्थमुपस्थितानां ग्रहाणां कार्तिकेयेन किं कृतमित्याह—तेषामित्यादि । ततः स्कन्दः शिवं देवमचोदयत्तेषां ग्रहाणामर्थे, ततो ग्रहवृत्तिप्रार्थनादनन्तरं, स्कन्दः कार्तिकेयः, अचोदयत् प्रार्थितवान् । एवं ग्रहार्थे प्रार्थितः शङ्करः किं कृतवानित्याह—तत इत्यादि । ततः प्रार्थनानन्तरं तान् ग्रहान् प्रति भगवान् भगनेत्रहृत् भगलोचनहारी रुद्र उक्तवान् । किमुक्तवानित्याह—तिर्यगित्यादि । तिर्यग्योनिमानुषदेवानां त्रितयं जगच्छब्दवाच्यं, एतत्रितयं परस्परमन्योन्योपकारेण वर्तते, धार्यतेऽपि चेति चकारात् क्रियते च । तत्र तिर्यग्योनयो गवादयः, ते मनुष्याननुपकुर्वन्ति वहनादिना; मानुषाश्च माषादिदानेन तिर्यग्योनीननुपकुर्वन्ति । देवमानुषयोः परस्परोपकारमाह—देवा इत्यादि । यथाकालं शीतोष्णवर्षादीन् कृत्वा मानुषान् तिर्यग्योनींश्च प्रीणयन्तीति संबन्धः । देवेषु मानुषोपकारमाह—इज्येत्यादि । इज्या यागः, अञ्जलिः करद्वययोजनं, नमस्कारः प्रणामः, जप ओङ्कारपूर्वकं गायत्र्याद्यावर्तनं, होमो लक्षादिसंख्याहुतिभिर्वह्नौ हवनं, व्रतं प्रसिद्धं, सम्यक्प्रयुक्तैः वेदोक्तविधानेन प्रयुक्तैः; इज्याञ्जलिप्रभृतिभिः सम्यक्प्रयुक्तैर्नराश्रिदिवेश्वरान् देवान् प्रीणयन्तीति संबन्धः । भागधेयमित्यादि । भागधेयम् अंशसमूहः, विभक्तं देवादित्रितयेन सर्वमेव विभज्य गृहीतं, शेषम् अवशिष्टं, किञ्चिन्नास्ति यतस्तत्तस्माद्बालग्रहरक्षार्थं सृष्टत्वाद्युष्माकं वृत्तिरपि भो ग्रहा बालेष्वेव भविष्यतीति । अनपराधेषु बालेषु वृत्तिं कल्पयन् शम्भुरपि दोषभाक् स्यादतः सापराधेषु वृत्तिमाह—कुलेष्वित्यादि । नेज्यन्ते न पूज्यन्ते, उत्सन्ने नष्टे बलिभिक्षे येषु तानि तथा, तेषु वृत्तिरिति । अत्र हिंसनमेव वृत्तिः । पूजा चैवेति पुष्पादिना भोजनादिना चेत्यर्थः ॥ ११–२० ॥—

वैकल्यं मरणं चापि ध्रुवं स्कन्दग्रहे मतम् ॥ २१ ॥
स्कन्दग्रहोऽत्युग्रतमः सर्वेष्वेव यतः स्मृतः ॥
अन्यो वा सर्वरूपस्तु न साध्यो ग्रह उच्यते ॥२२॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे ग्रहोत्पत्त्यध्यायो नाम (एकादशोऽध्यायः, आदितः) सप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥

एवमित्यादि । वैकल्यं विकलाङ्गता । ध्रुवं निश्चितम् । स्कन्देत्यादि । सर्वेष्वेव ग्रहेषु मध्ये स्कन्दग्रहो यतोऽत्युग्रतमः, अत एव तद्गृहीतस्य ध्रुवं मरणं, अथ कथंचिज्जीवति तदा वैकल्यमिति । अन्य इत्यादि । अन्यो वा स्कन्दापस्मारादिकः ॥ २१ ॥ २२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे ग्रहोत्पत्त्यध्यायः सप्तत्रिंशत्तमः ॥ ३७ ॥

## अष्टत्रिंशत्तमोऽध्यायः ।

अथातो योनिव्यापत्प्रतिषेधं व्याख्यास्यामः ॥१॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

ग्रहोत्पत्त्यध्यायानन्तरं 'तिर्यग्योनिं मानुषं च' इति वचनेन योनेर्नामसंकीर्तनात् कुमारजन्मविकारकारणत्वाच्च योनेर्व्यापच्चिकित्सितार्थं योनिव्यापत्प्रतिषेधाध्यायारम्भो युज्यत इत्याह—अथात इत्यादि । योनिव्यापदो योनिरोगाः, तेषां प्रतिषेधश्चिकित्सितमिति ॥ १ ॥ २ ॥

प्रवृद्धलिङ्गं पुरुषं याऽत्यर्थमुपसेवते ॥
रूक्षदुर्बलबाला या तस्या वायुः प्रकुप्यति ॥ ३ ॥
स दुष्टो योनिमासाद्य योनिरोगाय कल्पते ॥

प्रवृद्धेत्यादि । रूक्षदुर्बलबाला या स्त्री प्रवृद्धलिङ्गमतिप्रलम्बमेहनं पुरुषमतिशयेन सेवते । तस्या वायुः प्रकोपमापद्यते, स वायुः प्रकुपितः सन् पित्तश्लेष्माणौ कोपयति, अथवा वातः पित्तश्लेष्माणौ स्वहेतुभिः कुपितौ गृहीत्वा योनिरोगाय कल्पते समर्थो भवति ॥ ३ ॥—

त्रयाणामपि दोषाणां यथास्वं लक्षणेन तु ॥ ४ ॥
विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे ॥
मिथ्याचारेण याः स्त्रीणां प्रदुष्टेनार्तवेन च ॥ ५ ॥
जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ।

तेषां योनिरोगाणां सामान्यज्ञानोपायमाह—त्रयाणामित्यादि । यथास्वं लक्षणेन योनिरोगं जानीयादित्यर्थः ॥ ४ ॥ ५ ॥—

उदावर्ता तथा वन्ध्या विप्लुता च परिप्लुता ॥ ६ ॥
वातला चेति वातोत्थाः, पित्तोत्था रुधिरक्षरा ॥
वामिनी स्रंसिनी चापि पुत्रघ्नी पित्तला च या ॥७॥
अत्यानन्दा च या योनिः कर्णिनी चरणाद्वयम् ॥
श्लेष्मला च कफाज्ज्ञेया, षण्डाख्या फलिनी तथा ८
महती सूचिवक्त्रा च सर्वजेति त्रिदोषजा ॥

१ 'वृत्तिर्जीवनं' इति पा० । २ 'शीतोष्णवर्षादिभिः' इति पा० । ३ 'उत्सन्नबलिभिक्षेषु नष्टपूजाभिक्षेषु' इति पा० ।

१ 'चरणीद्वयम्' इति पा० । २ 'श्लैष्मिकी सकफा ज्ञेया' इति पा० । ३ 'मेहनी' इति पा० ।

वातजाः पञ्च योनिव्यापद आह—उदावर्तेत्यादि । उदावर्ता, वन्ध्या, विप्लुता, परिप्लुता, वातला, इति पञ्च वातोत्थाः । पित्तजाः पञ्चाह—रुधिरक्षरा, वामिनी, स्रंसिनी, पुत्रघ्नी, पित्तला, इति पञ्च पित्तोत्थाः । कफजाः पञ्चोच्यन्ते—अत्यानन्दा, कर्णिनी, चरणाद्वयं, श्लेष्मला, इति पञ्च कफोत्थाः । सन्निपातजाः पञ्चोच्यन्ते—षण्ढी, फलिनी, महती, सूचिवक्त्रा, सर्वजा, इति पञ्च सन्निपातजाः ॥ ६-८ ॥—

**सफेनिलमुदावर्ता रजः कृच्छ्रेण मुञ्चति ॥ ९ ॥**
**वन्ध्यां नष्टार्तवां विद्याद्विप्लुतां नित्यवेदनाम् ॥**
**परिप्लुतायां भवति ग्राम्यधर्मे रुजा भृशम् ॥ १० ॥**
**वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ॥**
**चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥ ११ ॥**

वातजानां योनिव्यापदां पृथग्लक्षणमाह—सफेनिलमित्यादि । या उदावर्ता योनिः सा फेनिलं फेनसहितं रज आर्तवं कृच्छ्रेण दुःखेन मुञ्चति । विप्लुता नित्यं रुजावती, परिप्लुता पुनर्व्यवाय एव पीडावतीत्यनयोर्भेदः । वातलेत्यादि । स्तब्धा तनटितेव । शूलं वातशूलं, निस्तोदः सूचीभिरिव व्यधनम् । किं वातलायामेवानिलवेदना भवन्ति उतान्यास्वपीत्याह—चतसृष्वित्यादि । आद्यासु उदावर्तादिष्वपीत्यर्थः ॥ ९-११ ॥

**सदाहं प्रक्षरत्यस्रं यस्यां सा लोहितक्षरा ॥**
**सवातमुद्गिरेद्बीजं वामिनी रजसा युतम् ॥ १२ ॥**
**प्रस्रंसिनी स्यन्दते तु क्षोभिता दुःप्रसूश्च या ॥**
**स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसंस्रवात् ॥१३॥**
**अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता ॥**
**चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥१४॥**

सदाहमित्यादि । अस्रम् आर्तवं, 'सदाहं क्षीयते रक्तं यस्यां सा लोहितक्षया' इति केचित् पठन्ति । बीजं शुक्रम् । उद्गिरेत् वमेत् । रजसा युतम् आर्तवमिश्रम् । स्यन्दते स्रवति, क्षोभिता संचालिता, दुःप्रसूः दुःखेन प्रसूयते या एवंविधा योनिः सा प्रस्रंसिनीति संबन्धः । दुःप्रसूश्चेत्यत्रान्ये 'दुःप्रजायना' इति पठन्ति, दुष्टीभूतापत्यमार्गेति व्याख्यानयन्ति । स्थितमित्यादि । स्थितं स्थितं गर्भं हन्ति नोत्पन्नमात्रम् । चतसृषु आद्यासु लोहितक्षरादिषु । पित्तलिङ्गोच्छ्रयः ओषचोषादिका वेदनाः ॥ १२-१४ ॥

**अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति ॥**
**कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते १५**
**मैथुनेऽचरणी[1] पूर्वं पुरुषादतिरिच्यते ॥**
**बहुशश्चातिचरणादन्या बीजं न विन्दति ॥ १६ ॥**
**श्लेष्मला पिच्छिला योनिः कण्डूयुक्ताऽतिशीतला ॥**
**चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रितिर्भवेत् ॥१७**

अत्यानन्देत्यादि । ग्राम्यधर्मेण मैथुनेन । कर्णिका मांसकन्दी । मैथुनेत्यादि । पूर्वा चरणी अतिरिच्यते मैथुनाचरणेऽधिका भवति; अन्ये 'मैथुनेऽचरणा पूर्वं' इति पठन्ति, शेषं समम् । पुरुषात् पूर्वमतिरिच्यते, अत्यर्थं कण्डूयत इत्यर्थः । बहुशो अतिचरणात् मैथुनात्, अन्या अतिचरणा, बीजं गर्भाङ्कुरजननं, न विन्दति न प्राप्नोति । 'बहुशश्चातिचरणी तयोर्बीजं[1] न तिष्ठति' इति केचित् पठन्ति, अतिचरणा बहुशो मैथुनं व्रजति, तयोश्चरणातिचरणयोर्बीजं न तिष्ठति, स्थितिं न करोतीत्यर्थः । श्लेष्मलेत्यादि । आद्यासु अत्यानन्दादिषु श्लेष्मलिङ्गोच्छ्रितिः पैच्छिल्यकण्ड्वादिकाः ॥ १५-१७ ॥

**अनार्तवस्तना षण्ढी खरस्पर्शा च मैथुने ॥**
**अतिकायगृहीतायास्तरुण्याः फलिनी भवेत् ॥१८॥**
**विवृताऽतिमहायोनिः सूचीवक्त्राऽतिसंवृता ॥**
**सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥ १९ ॥**
**चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रितिर्भवेत् ॥**
**पञ्चासाध्या भवन्तीमा योनयः सर्वदोषजाः ॥ २० ॥**

सान्निपातिकाः पञ्चोच्यन्ते । वन्ध्याषण्ढ्योः सस्तनलनिस्तनत्वे विशेषतः । खरस्पर्शा चेति चकारान्मैथुनद्वेषनिषेधः । अतिकायो बृहत्साधनो नरस्तेन गृहीताया फलिनीति संज्ञा, 'अफलिनी' इत्यन्ये पठन्ति, तत्र अतिकायगृहीता या तरुणी सा अफलिनी अप्रजा इति व्याख्या । अतिविवृता महायोनिरुच्यते । सूचीवक्त्रा अतिसंवृता अत्यर्थसङ्कुचितमुखी, सङ्कुचितमुखेत्युच्यते । सर्वलिङ्गा सर्वचिह्ना, सर्वसमुत्थाना सर्वकारणा, या सा सर्वजा कथ्यते । चतसृष्वित्यादि । चतसृष्वपि चाद्यासु षण्ढीप्रभृतिषु; सर्वलिङ्गोच्छ्रितिरिति रौक्ष्यतोदादिका वातलिङ्गोच्छ्रितयः, चोषादिकाः पित्तलिङ्गोच्छ्रितयः, स्नेहकण्ड्वादिकाः श्लेष्मलिङ्गोच्छ्रितयश्च ॥ १८-२० ॥

**प्रतिदोषं तु साध्यासु स्नेहादिक्रम इष्यते ॥**
**दद्यादुत्तरवस्तींश्च विशेषेण यथोदितान् ॥ २१ ॥**

प्रतीत्यादि । साध्यासु योनिव्यापत्सु प्रतिदोषं यः स्नेहादिक्रमः स इष्यत इत्यर्थः । एतेन यस्य दोषस्य यः प्रत्यनीकः स्नेहस्तेन स्नेहेन संस्नेह्य संस्वेद्य ततो वमनादीन् साध्यास्ववचारयेदित्यर्थः । यथोदितानिति वातादिभेदेनेत्यर्थः ॥ २१ ॥

**कर्कशां शीतलां स्तब्धामल्पस्पर्शां च मैथुने ॥**
**कुम्भीस्वेदैरुपचरेत् सानूपौदकसंयुतैः ॥ २२ ॥**
**मधुरौषधसंयुक्तान् वेशवारांश्च योनिषु ॥**
**निक्षिपेद्धारयेच्चापि पिचुतैलमतन्द्रितः ॥ २३ ॥**
**धावनानि च पथ्यानि कुर्वीतापूरणानि च ॥**

कर्कशामित्यादि । अल्पस्पर्शामिति अतिव्यवायकुद्धवातजनितसुप्तित्वात् । 'शीतलां' इत्यत्रान्ये तु 'तुमुलाम्'[2] इति पठन्ति, तत्र शूलतोदवेदनासङ्कुलामिति व्याख्या । कुम्भीस्वेदैः आनू-

१. 'मैथुनेऽचरणी' इति पा० ।

१ 'तयोश्चरण्यतिचरण्योः' इति पा० । २ 'सशूलां' इति पा० ।

पौदकमांसवातघ्नद्रव्यकाथपूर्णां कुम्भीं कृत्वा भूमौ निखन्य तदुपरि शय्यां संस्थाप्याग्निसन्तप्तलोहपाषाणगुडकान् क्वाथे निक्षिप्य तदुत्थितैर्बाष्पस्वेदैर्योनिप्रदेशमात्रगामिभिरुपचरेत्; अन्ये तु कुम्भीं वातहरद्रव्यानूपौदकमांसपूर्णां सजलां कृत्वा प्रवृत्तोष्माणं गृह्णीयादिति व्याख्यानयन्ति। उपनाहविशेषमाह—मधुरैरित्यादि। मधुराणि काकोल्यादीनि कल्कीकृतानि, तैर्युक्तान् वेशवारान् कृतान्नवर्गोक्तान् योनिषु निक्षिपेत्, पिचुतैलं पिचुना तुलकेन तैलं वातघ्नद्रव्यक्वाथसिद्धं योनिषु धारयेत्। अतन्द्रितो निरन्तरंकारीत्यर्थः। पिचुतैलं बलाशृतमित्यन्ये। धावनानि प्रक्षालनानि। पथ्यानि वातहरौषधसिद्धानीत्यर्थः॥ २२॥ २३॥—

**ओषचोषान्वितासृक्कं कुर्याच्छीतं विधिं भिषक् २४**

शीतं विधिं रक्तपित्तहरम्॥ २४॥

**दुर्गन्धां पिच्छिलां चापि चूर्णैः पञ्चकषायजैः॥**
**पूरयेद्राजवृक्षादिकषायैश्चापि धावनम्॥ २५॥**

दुर्गन्धां पित्तेन, पिच्छिलां कफेन। पञ्च कषाया न्यग्रोधोदुम्बरप्लक्षाश्वत्थगर्दभाण्डाः। तच्चूर्णेन योनिं पूरयेत्। राजवृक्षादिः आरग्वधादिः॥ २५॥

**योन्यां तु पूयस्राविण्यां शोधनद्रव्यसंभृतैः॥**
**सगोमूत्रैः सलवणैः शोधनं हितमिष्यते॥ २६॥**

शोधनद्रव्याणि मिश्रकोक्तानि॥ २६॥

**बृहतीफलकल्कस्य द्विहरिद्रायुतस्य च॥**
**कण्डूमतीमल्पस्पर्शां पूरयेद्धूपयेत्तथा॥ २७॥**
**वर्तिं प्रदद्यात् कर्णिन्यां शोधनद्रव्यसंभृताम्॥**
**प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत्॥ २८॥**
**पिधाय वेशवारेण ततो बन्धं समाचरेत्॥**
**प्रतिदोषं विदध्याच्च सुरारिष्टासवान् भिषक्॥ २९॥**
**प्रातः प्रातर्निषेवेत रसोनादुद्धृतं रसम्॥**
**क्षीरमांसरसप्रायमाहारं विदधीत च॥ ३०॥**

तथाशब्दाद्धूपनमपि बृहतीफलादिभिरेव॥ २७—३०॥

**शुक्रार्तवादयो दोषाः स्तनरोगाश्च कीर्तिताः॥**
**क्लैब्यस्थानानि मूढस्य गर्भस्य विधिरेव च॥ ३१॥**
**गर्भिणीप्रतिरोगेषु चिकित्सा चाप्युदाहृता॥**
**सर्वथा तां प्रयुञ्जीत योनिव्यापत्सु बुद्धिमान्॥**
**अपप्रजातारोगांश्च चिकित्सेदुत्तराद्भिषक्॥ ३२॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कुमारतन्त्रे योनिव्यापत्प्रतिषेधो नाम (द्वादशोऽध्यायः, आदितोऽ)ष्टत्रिंशत्तमोऽध्यायः॥ ३८॥**

शुक्रेत्यादि। शुक्रार्तवादयो दोषाः शुक्रशोणितशुद्धिशारीरे सलक्षणचिकित्सिता उक्ताः; आदिशब्दाद्धात्रीस्तन्यदोषाश्च। स्तनरोगा विसर्पनाडीस्तनरोगनिदाने, तच्चिकित्सिते तच्चिकित्सा उक्ता। क्लैब्यस्थानानि क्लैब्यकारणानि क्षीणबलीयवाजीकरणोदितानि। मूढगर्भस्येति स्थानानीत्यत्रापि संबध्यते, तेन मूढगर्भस्य स्थानानि कारणानि, विधिरेव च क्रिया चेत्यर्थः। एतद्वयं मूढगर्भनिदाने तच्चिकित्सिते चोक्तम्। गर्भिणीप्रतिरोगेष्विति गर्भिणीप्रतिरोगेषु गर्भिण्या मासानुमासं प्रतिरोगेषु रक्तस्रावादिषु चिकित्सोक्ता। चिकित्सा चेति चकाराद्गर्भिण्याः स्वस्थाया अपि चिकित्सा उदाहृता गर्भिणीव्याकरणशारीरे। केचित् 'गर्भिणीप्रतिरोगेषु' इत्यत्र 'गर्भिणीप्रतिमासेषु' इति पठन्ति। तां चिकित्सां योनिव्यापत्स्वपि सर्वथा प्रयुञ्जीतेत्यर्थः। अपप्रजाता अकालप्रसूता, तस्या रोगान् ज्वरादिकान्। तानुत्तरादुत्तरतन्त्रोक्तज्वरादिचिकित्सितात्। रोगांश्चेति चकार उत्तरतन्त्रादित्यत्र योजनीयः। तेनापप्रजातारोगानुत्तरादुत्तरतन्त्रोक्ताच्चिकित्सेत्, चकारादपतानकादीन् संहितोक्तेन विधिना चिकित्सेदित्यर्थः। अन्ये तु 'उत्तरान्' इति पठन्ति, उत्तरकालभाविनोऽपतानकादीन् भिषक् चिकित्सेत्, 'स्वैश्चिकित्सितैः' इति शेषः॥ ३१॥ ३२॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे योनिव्यापत्प्रतिषेधाध्यायोऽष्टत्रिंशत्तमः॥३८॥

**उत्तरतन्त्रे द्वितीयं कौमारतन्त्रं समाप्तम्॥ २॥**

---

## एकोनचत्वारिंशत्तमोऽध्यायः।

**अथातो ज्वरप्रतिषेधं व्याख्यास्यामः॥ १॥**
**यथोवाच भगवान् धन्वन्तरिः॥ २॥**

कुमारतन्त्रानन्तरं कायचिकित्सारम्भः; यतः कुमारतन्त्रावसाने 'अपप्रजातारोगांश्च चिकित्सेदुत्तराद्भिषक्' इति वाक्ये उत्तरादित्यनेन कायचिकित्सितस्य सूचितत्वात्, अथवा कुमाराणामपि ज्वराद्युत्पत्तौ सत्यां कायचिकित्सितस्योपयोगित्वात्। अत्र कायशब्देन दोषधातुमलसंघात उच्यते, तेन कायस्थितानां ज्वरादीनां चिकित्सा कायचिकित्सा, मञ्चाः क्रोशन्तीतिवत्। अन्ये कायशब्देन कायाग्निं वदन्ति, यैतोऽग्निं व्याप्य वै ज्वरादयो भवन्ति। अपरे दुष्टकायः कायः तस्य चिकित्सा कायचिकित्सेत्याहुः। तस्यामपि कायचिकित्सायां बहुषूपद्रवेषु रुद्रकोपसंभवतया ज्वरस्य गरीयस्त्वात् पूर्वं ज्वरप्रतिषेधारम्भ इत्याह—अथात इत्यादि। अथशब्दोऽनन्तरार्थः। कुतोऽनन्तरमित्याह—अत इति; अस्मात् पूर्वाध्यायादित्यर्थः; अतःशब्दो हेतौ वा, यतोऽयं ज्वरो रुद्रकोपसंभवतया गरीयानतो हेतोरित्यर्थः। प्रतिषेधः चिकित्सा। विः विशेषे विविधप्रकारे च; आङ् अभिव्याप्तौ, आभिमुख्ये वा; व्याख्यास्यामः प्रकर्षेण कथयिष्यामः॥ १॥ २॥

**येनामृतमपां मध्यादुद्धृतं पूर्वजन्मनि॥**
**यतोऽमरत्वं संप्राप्तास्त्रिदशास्त्रिदिवेश्वरात्॥ ३॥**

---

१ 'निस्तन्द्र इत्यर्थः' इति पा०। २ 'पिण्डैरापूरणं हितम्' इति पा०। ३-४ 'क्लैब्योत्थानानि' इति पा०।

१ 'तत्र स्थितानां' इति पा०। २ 'यतोऽग्निव्याप्त्यैव' इति पा०।

**शिष्यास्तं देवमासीनं पप्रच्छुः सुश्रुतादयः ॥**
**व्रणस्योपद्रवाः प्रोक्ता व्रणिनामप्यतः परम् ॥ ४ ॥**
**समासाद् व्यासतश्चैव ब्रूहि नो भिषजांवर ॥**

इदानीं ज्वरप्रतिषेधरूपां धन्वन्तरिस्तुतिं प्रतिपादयन् ज्वरप्रतिपादनहेतुकं धन्वन्तरिं गुरुं प्रति शिष्याणां प्रश्नमाह—येनामृतमपामित्यादि । येन धन्वन्तरिणा । अपां मध्यात् क्षीरार्णवमध्यात् । उद्धृतम् आनीतम् । पूर्वजन्मनि देवत्वे सति । यतो यस्मात् । त्रिदशेश्वरात् धन्वन्तरेः । अमरत्वं संप्राप्ताः अमृतदानेन; त्रिदशा देवा अमृतप्राप्त्या अमरत्वं संप्राप्ताः । तं देवं धन्वन्तरिनामानम् । आसीनम् उपविष्टम् । पप्रच्छुः पृष्टवन्तः । **जेज्जटाचार्यस्तु** 'त्रिदशास्त्रिदशेश्वरा' इति पठित्वा यतो यस्मात् धन्वन्तरेस्त्रिदशा देवा अमृतप्राप्त्या अमरत्वं संप्राप्ताः सन्तः त्रिदशेश्वराः सञ्जाता इति व्याख्यानयन्ति । अत्र येनामृतमित्यादिश्लोके अमृतामरयोर्नाम ज्वरप्रतिषेधादौ मङ्गलार्थमुक्तम् । यद्यपि प्राक् सुश्रुतस्य प्रश्नकर्तृत्वेन प्राधान्यं, तथाऽप्यत्र सर्वेषामनुग्रहाय प्रश्नेऽधिकारः । किं पप्रच्छुरित्याह—व्रणस्योपद्रवा इत्यादि । व्रणस्योपद्रवा वेदनावर्णास्रावादयः । प्रोक्ता व्रणास्रावविज्ञानीयादिषु । व्रणिनामिति व्रणिनः पुरुषाः, तेषामुपद्रवा ज्वरातीसारादयः, तान् समासात् संक्षेपतः, व्यासतो विस्तारात्; हे भिषजांवर नोऽस्माकं ब्रूहि । अन्ये तु व्रणस्योपद्रवा वर्णास्राववेदनादयः प्रोक्ताः, व्रणिनामपि समासात् प्रोक्ताः; तथा च—"विसर्पः पक्षघातश्च सिरास्तम्भोऽपतानकः । मोहोन्मादौ व्रणरुजा ज्वरस्तृष्णा हनुग्रहः ॥ कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः । षोडशोपद्रवाः प्रोक्ता व्रणिनां व्रणचिन्तकैः"—इति; व्यासतश्चातः परं ब्रूहीति व्याख्यानयन्ति ॥ ३ ॥ ४ ॥—

**उपद्रवेण जुष्टस्य व्रणः कृच्छ्रेण सिध्यति ॥ ५ ॥**
**उपद्रवास्तु व्रणिनः कृच्छ्रसाध्याः प्रकीर्तिताः ॥**
**प्रक्षीणबलमांसस्य शेषधातुपरिक्षयात् ॥ ६ ॥**
**तस्मादुपद्रवान् कृत्स्नान् ब्रूहि नः सचिकित्सितान् ॥**
**सर्वकायचिकित्सासु ये दृष्टाः परमर्षिणा ॥ ७ ॥**

न परं व्रणितोपद्रवाणामनभिहितत्वात् तान् प्रति प्रश्नः, किं तर्हि सोपद्रवस्य कृच्छ्रेण व्रणप्रशान्तिः व्रणितोपद्रवाणां च कृच्छ्रसाध्यत्वमिति हेतुद्वयेन पुनः शिष्याणां प्रश्नमाह—उपद्रवेण जुष्टस्येत्यादि । उपद्रवेण ज्वरादिना युक्तस्य पुरुषस्य; अन्ये तु 'उपद्रवेण जुष्टस्तु' इति व्रणविशेषणं पठन्ति, तन्मते उपद्रवेण व्रणवेदनोदिना[1], जुष्टो व्याप्तः । कृच्छ्रेण कष्टेन । व्रणिन उपद्रवा ज्वरादिकाः, विसर्पादिका इत्यन्ये । कीदृशस्य व्रणिन उपद्रवाः कृच्छ्रसाध्याः इत्याह—प्रक्षीणबलमांसस्येत्यादि । बलम् उत्साहलक्षणं, मांसम् उपचयलक्षणम् । शेषधातवो मेदःप्रभृतयः, तेषां परिक्षयात्; रक्तस्य तु मांसाश्रयत्वान्मांसग्रहणेनैव ग्रहणम् । तस्मादिति यस्मादुपद्रवजुष्टस्यातिकृच्छ्रत्वं तस्मात् कृत्स्नान् समस्तानुपद्रवान् सचिकित्सितान् नोऽस्माकं ब्रूहीति संबन्धः । सर्वकायचिकित्सास्विति सर्वस्मिन् काये चिकित्सा तासु । ये दृष्टा उपद्रवा ज्वरादयः । परमर्षिणा धन्वन्तरिणा । अत्र चिकित्साशब्देन प्रतिकार उच्यते; अन्ये त्वत्र चिकित्साशब्देन चिकित्साशास्त्रमभिधाय मूलतन्त्राणामौपधेनवौरभ्रादीनां चिकित्साशास्त्राणामवरोधं मन्यन्ते; अपरे 'षट्सु कायचिकित्सासु' इति पठन्ति, तेषां मते षट्शब्देन **अग्निवेशभेडजातूकर्णहारीतक्षारपाणिपराशर**प्रोक्ताः षट् चिकित्सा लभ्यन्ते; अत्र पक्षे 'परमर्षिणा' इत्यत्र 'परमर्षिभिः' इति पाठः ॥ ५–७ ॥

**तेषां तद्वचनं श्रुत्वा प्राब्रवीद्भिषजांवरः ॥**
**ज्वरमादौ प्रवक्ष्यामि स रोगानीकराट् स्मृतः ॥८॥**
**रुद्रकोपाग्निसंभूतः सर्वभूतप्रतापनः ॥**
**तैस्तैर्नामभिरन्येषां सत्त्वानां परिकीर्त्यते ॥ ९ ॥**

तेषामित्यादि । तेषां शिष्याणाम् । भिषजांवरो धन्वन्तरिः । ज्वरमादावित्यादि । स इति ज्वरः । रोगानीकराडिति रोगसमूहस्य राजा । तैस्तैर्नामभिः पाकलाभितापखोरकभ्रमरकादिभिः । अन्येषां सत्त्वानां गजाश्वादीनाम् ॥ ८ ॥ ९ ॥

**जन्मादौ निधने चैव प्रायो विशति देहिनम्[1] ॥**
**अतः सर्वविकाराणामयं राजा प्रकीर्तितः ॥ १० ॥**

इदानीमुक्तमेव रोगसमूहराट्त्वं सहेतुकं कृत्वा प्रतिपादयति—जन्मेत्यादि । प्रायो विशेषेण ॥ १० ॥

**ऋते देवमनुष्येभ्यो नान्यो विषहते तु तम् ॥**
**कर्मणा लभते यस्माद्देवत्वं मानुषादपि ॥ ११ ॥**
**पुनश्चैव च्युतः स्वर्गान्मानुष्यमनुवर्तते ॥**
**तस्मात्ते देवभावेन सहन्ते मानुषा ज्वरम् ॥ १२ ॥**
**शेषाः सर्वे विपद्यन्ते तैर्यग्योना ज्वरार्दिताः ॥**

तिर्यग्योनयस्तेन पीडिता विपद्यन्त एवेति प्रतिपादयितुं ज्वरप्रभावमाह—ऋते इत्यादि । ऋते विना । नान्यो विषहते नान्यः सोढुं शक्नोति । देवाः स्वतपोमाहात्म्यात् सहन्ते; मनुष्याः कथं सोढुं समर्थाः ? उच्यते—कर्मणेत्यादि; एनं पाठं केचिन्न पठन्ति, ईदृशे क्रमे निश्चयो नास्ति यत्स्वर्गाच्च्युतो मानुष एव भवति ॥ ११ ॥ १२ ॥—

**स्वेदावरोधः[2] सन्तापः सर्वाङ्गग्रहणं तथा ॥ १३ ॥**
**विकारा युगपद्यस्मिन् ज्वरः स परिकीर्तितः ॥**

इदानीं ज्वरस्य स्वरूपमाह—स्वेदावरोध इत्यादि । स्वेदावरोधः स्वेदानिर्गमः; एतच्च प्रायिकं लक्षणं, पैत्तिके स्वेदनिर्गमात् । सन्ताप इति सन्तापयतीति संशब्दान्मानसोऽपि तापोऽभिप्रेतः; तथा चोक्तं,—'सन्तापो देहमानस' इति । सर्वाङ्गग्रहणं वेदनया । युगपदिति एककाले । स्वेदावरोधे' इत्यत्र 'वेगोपरोधः' इत्यन्ये पठन्ति; वेगोपरोधो वातमूत्रपुरीषादीनामनिर्गमः ॥ १३ ॥—

---

१ 'वर्णवेदनादिना' इति पा० ।

१ 'देहिनः' इति 'देहिनाम्' इति च पा० । २–३–४ 'स्वेदोपरोधः' इति पा० ।

**दोषैः पृथक् समस्तैश्च द्वन्द्वैरागन्तुरेव च ॥ १४ ॥**
**अनेककारणोत्पन्नः स्मृतस्त्वष्टविधो ज्वरः ॥**

अतः परं हेतुभेदाज्ज्वरस्यानेकत्वमाह—दोषैरित्यादि । पृथक् त्रयः, समस्तैर्दोषैरेकः, द्वन्द्वजास्त्रयः, आगन्तुरेकः, एवमनेककारणोत्पन्नोऽपि ज्वरोऽष्टविधत्वं न त्यजति ॥ १४ ॥—

**दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपणैः ॥ १५ ॥**
**व्याप्य देहमशेषेण ज्वरमापादयन्ति हि ॥**
**दुष्टाः स्वहेतुभिर्दोषाः प्राप्यामाशयमूष्मणा ॥ १६ ॥**
**सहिता रसमागत्य रसस्वेदप्रवाहिणाम् ॥**
**स्रोतसां मार्गमावृत्य मन्दीकृत्य हुताशनम् ॥ १७ ॥**
**निरस्य बहिरूष्माणं पक्तिस्थानाच्च केवलम् ॥**
**शरीरं समभिव्याप्य स्वकालेषु ज्वरागमम् ॥ १८ ॥**
**जनयन्त्यथ वृद्धिं वा स्ववर्णं च त्वगादिषु ॥**

ज्वरस्य संप्राप्तिमाह—दोषाः प्रकुपिता इत्यादि । दोषाः प्रकुपिताश्चयानुपूर्व्या; स्वेषु कालेषु प्रावृट्शरद्वसन्तेषु अहोरात्रिकेषु च; एतेन प्राकृतो ज्वर उक्तः । स्वैः प्रकोपणैरिति बलवद्विग्रहादिकोधादिदिवास्वापादिभिर्व्रणप्रश्नोक्तैः । अनेन च वैकृतः । ग्रन्थदेवस्तु सन्निपातप्रकोपस्य हेतूनत्र पृथगाह; यथा,—"विषमाध्यशनात्यशनं लकुचामफलं बिलोद्भवे सलिलम् । पिण्याकमाममूलकसर्षपशाकं यवैः कृता च सुरा ॥ कृशशुष्कामिषशाकं यावकमशनं च पर्वते वासः । व्यापन्नाम्बुसुरादधिकन्दं पिडकोच्छ्रितिर्देहे ॥ मृद्विषगरादिभक्षणमनार्तवं दुर्दिनं पुरोवातः । अन्नपरिवर्तभूतावेशौ पीडा ग्रहर्क्षसंभूता ॥ अनुचितभेषजगन्धाघ्राणं पापस्य कर्मणोऽभ्यासः । स्नेहस्वेदादीनां मिथ्यायोगः पुराकृतं कर्म ॥ स्त्रीणां विषमप्रसवो मिथ्यायोगः प्रसूतानाम् । स्नेहस्वेदादीनां रसायनस्यापि च व्यापत् ॥ एते हेतव उक्ताः प्रकोपणे सन्निपातस्य"—इति । अशेषेण सामस्त्येन । आपादयन्ति जनयन्ति । अन्ये 'दोषाः प्रकुपिता गाढमपथ्याहारसेवनः' इति पठन्ति । अत्र गाढशब्देन प्राकृतः, अपथ्याहारसेविन इत्यनेन वैकृतः । अन्ये ज्वरसंप्राप्तिमनेन पाठेन पठन्ति, तद्यथा—दुष्टाः स्वहेतुभिरित्यादि । दुष्टाः प्रकुपिताश्चयादिरूपेण, स्वेषु कालेषु प्राकृतं ज्वरं, स्वहेतुभिराद्यसंप्राप्तिश्लोकव्याख्यातैर्बलवद्विग्रहादिभिर्वैकृतम् । ऊष्मणा वह्नयूष्मणा सहिता धातूष्मणा दोषोष्मणा वा सहिता दोषा रसं हृदयस्थमागत्य, हुताशनं जठराग्निं मन्दीकृत्य, ऊष्माणमग्नेरेव, पक्तिस्थानात् अग्निस्थानात्, बहिः निरस्य निक्षिप्य, केवलं सर्वं, स्वकालेषु आर्तवेषु अहोरात्रिकेषु च ज्वरागमं जनयन्ति, अथवा वृद्धिमागतस्य; स्ववर्णं नखलङ्घनादिषु जनयन्ति ॥ १५–१८ ॥—

**मिथ्यातियुक्तैरपि च स्नेहाद्यैः कर्मभिर्नृणाम् ॥१९॥**
**विविधादभिघाताच्च रोगोत्थानात् प्रपाकतः ॥**
**श्रमात् क्षयादजीर्णाच्च विषात्सात्म्यर्तुपर्ययात् ॥२०॥**
**ओषधीपुष्पगन्धाच्च शोका[1]न्नक्षत्रपीडया ॥**
**अभिचाराभिशापाभ्यां मनोभूताभिशङ्कया ॥ २१ ॥**
**स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः ॥**
**स्तन्यावतरणे चैव ज्वरो दोषैः प्रवर्तते ॥ २२ ॥**

न केवलमेवं स्वप्रकोपणैर्व्रणप्रश्नोक्तैः प्रकुपिता दोषा ज्वरमापादयन्ति, अपि तु तेऽन्यैरपि कारणैरित्यत आह—मिथ्यातियुक्तैरित्यादि । मिथ्यातियुक्तैः अयथाविधियुक्तैरतियुक्तैश्च । स्नेहाद्यैः स्नेहस्वेदवमनविरेचनादिकैः । नृणां ज्वरो दोषैः प्रवर्तते इति संबन्धः; 'प्रवर्तत' इत्यत्र 'प्रकुप्यति' इति केचित् । विविधादभिघातात् शस्त्रलोष्टकाष्ठादिप्रहारात् । रोगोत्थानात् रोगा विद्रध्यादयस्तेषामुत्थानात् । श्रमात् अतिव्यायामात् । प्रपाकस्तेषामेव । आमात् अजीर्णात् । क्षयात् राजयक्ष्मणः । सात्म्यर्तुपर्ययात् सात्म्यविपर्ययादृतुविपर्ययाच्च । ओषधीशब्दस्यादौ विषशब्दो लुप्तो द्रष्टव्यः, तेन विषौषधीपुष्पगन्धात् । नक्षत्रं जन्मनक्षत्रं, तस्य पीडा तथा क्रूरग्रहाणां बाधा तया । अभिचारो यन्त्रमन्त्राद्यभिपीडनम्, अभिशापो द्विजगुरुसिद्धानामभिशपनं, ताभ्याम् । मनोभूताभ्यामभिशङ्काशब्दः संबध्यते, अभिशङ्काशब्देन अभिषङ्गत्वं कथ्यते; तेन मनोऽभिषङ्गेण कामाद्यभिषङ्गेणेत्यर्थः, भूतशब्देन देवादिग्रहा उच्यन्ते, तेन देवादिग्रहाभिषङ्गेणेत्यर्थः । अपप्रजातानाम् असम्यक्प्रसूतानां, प्रजातानां सम्यक्प्रसूतानाम्, अहितैः कृत्वा । स्तन्यस्य क्षीरस्य, अवतरणे प्रथममुन्मुखीभवने ॥ १९–२२ ॥

**तैर्वेगवद्भिर्बहुधा समुद्भ्रान्तैर्विमार्गगैः ॥**
**विक्षिप्यमाणोऽन्तरग्निर्भवत्याशु बहिश्चरः ॥ २३ ॥**
**रुणद्धि चाप्यपांधातुं यस्मात्तस्माज्ज्वरातुरः ॥**
**भवत्यत्युष्णगात्रश्च ज्व[2]रितस्तेन चोच्यते ॥ २४ ॥**

एवं ज्वरहेतूनुदाहृत्य यथोष्णगात्रत्वं स्यात्तथा दर्शयति—तैर्वेगवद्भिर्बहुधेत्यादि । तैः दोषैः । वेगवद्भिः प्रसरणशीलैः । समुद्भ्रान्तैः इतश्चेतश्च विक्षिप्तैः । विमार्गगैः तिर्यग्गतैः । विक्षिप्यमाणः प्रेर्यमाणः । अन्तरग्निर्बहिश्चरो भवति 'रोमकूपैः' इति शेषः । अपांधातुं स्वेदं, रुणद्धि । स एव बहिर्निःसृतोऽन्तरग्निर्यस्मादपांधातुं रुणद्धि तस्मादत्युष्णसर्वाङ्गो भवति, यतोऽत्युष्णसर्वाङ्गः स्यात्तेन कारणेन ज्वरित इत्युच्यते । अन्ये तु 'ज्वरितस्तेन चोच्यते' इत्यत्र 'न च खिद्यति सर्वशः' इति पठन्ति ( व्याख्यानैयन्ति च सर्वत्र न खिद्यति, च क्वचित् खिद्यतीत्यर्थः ) ॥ २३ ॥ २४ ॥

**श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः ॥**
**इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥ २५ ॥**
**जृम्भाऽङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः ॥**
**अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे ॥ २६ ॥**

---

१ 'कोपान्नक्षत्रपीडनात्' इति पा० । २ 'न च खिद्यति सर्वतः' इति पा० । ३ अयं पाठः क्वचित्पुस्तके नोपलभ्यते ।

सामान्यतो, विशेषात्तु जृम्भाऽत्यर्थं समीरणात् ॥
पित्तान्नयनयोर्दाहः, कफान्नान्नाभिनन्दनम् ॥ २७ ॥
सर्वलिङ्गसमवायः सर्वदोषप्रकोपजे ॥
द्वयोर्द्वयोस्तु रूपेण संसृष्टं द्वन्द्वजं विदुः ॥ २८ ॥

इदानीं पूर्वरूपमाह—श्रम इत्यादि । अरतिः शयनासनादौ सर्वत्रापि सुखाभावः । नयनप्लवो नयनयोरश्रुपूर्णता । आतपादिष्विच्छादिशब्दग्रहणाच्छय्यासनग्रहणम् । तमः अन्धकारदर्शनम् । अप्रहर्ष आनन्दाभावः । उत्पत्स्यति भाविनि ज्वरे । सामान्यतः सर्वस्मिन्नेव ज्वरे । प्रत्येकदोषजज्वरे पूर्वरूपमाह—विशेषात्तु जृम्भाऽत्यर्थमित्यादि । न अन्नाभिनन्दनम् अन्नानभिलाषः ॥ २५-२८ ॥

वेपथुर्विषमो वेगः कण्ठौष्ठपरिशोषणम् ॥
निद्रानाशः क्षुतः स्तम्भो गात्राणां रौक्ष्यमेव च २९
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं बद्धविट्कता ॥
जृम्भाऽऽध्मानं तथा शूलं भवत्यनिलजे ज्वरे ॥३०

वातादिजत्वेन ज्वरस्य लक्षणान्याह—वेपथुरित्यादि । वेपथुः कम्पः । विषमो वेग इति कदाचिदतिशयितः कदाचिन्मन्दश्च वेगः । क्षुतः स्तम्भः क्षुत् छिक्का तस्याः स्तम्भोऽनिर्गमनं; 'क्षुत' इत्यत्र अन्ये 'क्षव' इति पठन्ति; तन्मते क्षवः छिक्का, स्तम्भो गात्रस्य । ननु, वातज्वरमोक्षेऽपि छिक्का स्यात्, तत् कथं ज्वरागममोक्षयोर्ज्ञानम् ? उच्यते—अपरवेपथ्वादिवातज्वरलक्षणानामभावाज्ज्वरमोक्षो बोद्धव्यः । रौक्ष्यमेव चेति गात्राणां ( रूक्षग्रहणेनैव कृष्णारुणवर्णयुक्तमिति ज्ञेयं ); चकारात् कृष्णविण्मूत्रत्वं समुच्चीयते; अन्ये तु 'गात्राणां रौक्ष्यमेव च' इत्यत्र 'श्यावाङ्गमलनेत्रता' इति पठन्ति । शिरसः पृथगुपादानमत्यर्थं शिरोरुग्भवतीति ज्ञापनार्थम्; अन्यथा गात्ररुगित्यनेनैव तत्प्राप्तेः । 'जृम्भाध्माने भ्रमः शूलं' इत्यन्ये पठन्ति ॥२९॥३०॥

वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः ॥
कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते ॥ ३१ ॥
प्रलापः कटुता वक्त्रे मूर्च्छा दाहो मदस्तृषा ॥
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ॥ ३२ ॥

वेग इत्यादि । 'प्रलापः कटुता वक्त्रे' इत्यत्र 'प्रलापस्तिक्तवक्त्रत्वं' इति केचित् पठन्ति । मदः पूगफलेनेव मत्तता ॥ ३१ ॥ ३२ ॥

गौरवं शीतमुत्क्लेशो रोमहर्षोऽतिनिद्रता ॥
स्रोतोरोधो रुगल्पत्वं प्रसेको मधुरास्यता ॥ ३३ ॥
नात्युष्णगात्रता छर्दिरङ्गसादोऽविपाकता ॥
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता३४

गौरवमित्यादि । गौरवं गात्राणां, उत्क्लेशः श्लेष्मनिष्ठीवनं, प्रसेको लालास्रावः, अङ्गसादः अङ्गग्लानिः । अन्ये त्वेवं पठन्ति—'स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता । शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च ॥ गौरवं शीतमुत्क्लेशो रोमहर्षोऽतिनिद्रता । प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता' इति । स्तैमित्यं निश्चलत्वं ज्वरितस्य, वेगोऽपि स्तिमितः सततस्थितो निश्चलः, अन्ये तु स्तिमितो वेगो मन्द उद्गमः ॥ ३३ ॥ ३४ ॥

निद्रानाशो भ्रमः श्वासस्तन्द्रा सुप्ताङ्गताऽरुचिः ॥
तृष्णा मोहो मदः स्तम्भो दाहः शीतं हृदि व्यथा ३५
पक्तिश्चिरेण दोषाणामुन्मादः श्यावदन्तता ॥
रसना परुषा कृष्णा सन्धिमूर्धास्थिजा रुजः ॥ ३६ ॥
निर्भुग्ने कलुषे नेत्रे कर्णौ शब्दरुगन्वितौ ॥
प्रलापः स्रोतसां पाकः कूजनं चेतनाच्युतिः ॥३७॥
स्वेदमूत्रपुरीषाणामल्पशः सुचिरात् स्रुतिः ॥

एकैकदोषजं ज्वरमभिधाय सान्निपातिकमाह—निद्रानाश इत्यादि । भ्रमश्चक्रारूढस्येव भ्रमणम् । तन्द्रालक्षणमुच्यते "इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः । निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत्"—इति । सुप्ताङ्गता गात्राणां स्पर्शाज्ञता, मोहोऽत्र मूर्च्छा, मदः पूगफलेनेव मत्तता, स्तम्भः स्तब्धता । उन्मादो मानसो विकारः । रसना जिह्वा, परुषा कर्कशा । सन्धिमूर्धास्थिजा रुज इति सन्धिरुजा मूर्धरुजा अस्थिरुजा च; अन्ये सन्ध्यादिस्थाने 'लोठनं शिरसो रुजा' इति पठन्ति, लोठनं शिरसो विधूननम् । निर्भुग्ने कुटिले, कलुषे मलिने । शब्दरुगन्वितौ शब्दान्वितौ रुगन्वितौ च कर्णौ भवतः । प्रलापः असंबद्धभाषणम् । स्रोतसां मुखनासादिरन्ध्राणाम् । कूजनम् अव्यक्तशब्दोत्थानं कण्ठे । चेतनाच्युतिः चित्तनाशः । अल्पशः सुचिरात् स्रुतिरिति अल्पमल्पं कृत्वा चिरकालेन निःसरतीत्यर्थः ॥ ३५-३७ ॥—

सर्वजे सर्वलिङ्गानि

निद्रानाश इत्यादिपाठेन विकृतिविषमसमवेतस्य सन्निपातस्य लक्षणमभिधाय प्रकृतिसमसमवेतस्य लक्षणमाह—सर्वजे इत्यादि । सर्वदोषजे सर्वलिङ्गानि प्रत्येकवातादिज्वरोक्तलक्षणानि ॥—

विशेषं चात्र मे शृणु ॥ ३८ ॥
नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तप्रेक्षी हतस्वरः ॥
खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्जितः ॥ ३९ ॥
सास्रो निर्भुग्नहृदयो भक्तद्वेषी हतप्रभः ॥
श्वसन्निपतितः शेते प्रलापोपद्रवायुतः ॥ ४० ॥
तमभिन्यासमित्याहुर्हतौजसमथापरे ॥

इदानीमभिन्यासादिसंज्ञाभिः सन्निपातभेदमाह—विशेषमित्यादि । विशेषं भेदम् । अत्र सन्निपातज्वरे । नात्युष्णशीतः साधारणाङ्गस्पर्शः । भ्रान्तप्रेक्षी सर्वपदार्थायथार्थदर्शी । सास्रः

१ 'विषमो वेगः हीनाधिकभावेन' इति पा० । २ 'तन्मते वातज्वरे छिक्का संभवति' इति पा० । ३ अयं पाठः क्वचिन्नोपलभ्यते । ४ 'विड्लत्वं' इति पा० । ५ 'कफजेऽक्ष्यादिशुक्लता' इति पा० ।

१ 'समले' इति पा० । २ 'सास्रनिर्भुग्ननयनः' इति पा० । ३ 'इदानीमन्वर्थाभिः संज्ञाभिः' इति पा० ।

अश्रुपूर्णनेत्रः। निर्भुग्नहृदयः कुटिलहृदयः। श्वसन् श्वासं कुर्वन्। निपतित इव शेते, एतेन विकलाङ्ग उक्तः। प्रलाप एवोपद्रवस्तेन आयुतोऽत्यर्थयुक्तः। तं सन्निपातमेदम् ॥ ३८-४० ॥—

**सन्निपातज्वरं कृच्छ्रमसाध्यमपरे विदुः ॥ ४१ ॥**

मतभेदेन सन्निपातज्वरस्य कृच्छ्रसाध्यत्वमसाध्यत्वं चोच्यते—सन्निपातज्वरमित्यादि। असमस्तलक्षणत्वे कृच्छ्रसाध्यत्वं, समस्तलक्षणत्वे विवृद्धदोषत्वेऽग्नौ च नष्टे सत्यसाध्यत्वम् ॥४१॥

**निद्रोपेतमभिन्यासं क्षीणमेनं हतौजसम् ॥**
**संन्यस्तगात्रं संन्यासं विद्यात्सर्वात्मके ज्वरे ॥४२॥**

अभिन्यासस्य भेदमाह—निद्रेत्यादि। तमेव निद्रोपेतमभिन्यासं विद्यात्, एनं क्षीणं सन्तं हतौजसं विद्यात्, तमेव च संन्यस्तगात्रं संन्यासमिति। केचिदमुमभिन्यासप्रतिपादकं वाक्यं न पठन्ति। निद्रोपेतमभिन्यासमित्यादिपाठस्याग्रे 'प्रलिम्पन्निव गात्राणि पर्वणां गौरवेण च' इत्यादिना 'मन्दज्वरप्रलापस्तु सशीतः स्यात्प्रलेपकः' इत्यन्तेनापरतन्त्रोक्तपाठेन प्रलेपकलक्षणं केचित् पठन्ति, तच्च न पठनीयं; 'तथा प्रलेपको ज्ञेय' इत्यादिपाठेन स्वतन्त्रे तस्य पठितत्वात्। 'नित्यं मन्दज्वर' इत्यादिना क्षारपाणिप्रोक्तं वातबलासकलक्षणमपरे पठन्ति, तदपि न पठनीयं, 'प्रलेपकं वातबलासकं च' इत्यनेन तस्योक्तेः। नित्यं मन्दज्वर इत्यादिपाठस्याग्रेऽन्ये तृणपुष्पकलक्षणमधीयन्ते,—"पुष्पेभ्यो गन्धरजसी तेजस्विभ्यो यदाऽनिलः। उपादाय मनुष्यस्य प्राणापानौ नियच्छति ॥ सौक्ष्म्यादनुसृतो धातून् मर्माण्यपि च तेजसा। कर्म चित्तं बलं ज्ञानं तदाऽस्याभ्येति मारुतः ॥ कर्मादिषु निरुद्धेषु स्वपितीति सुहृज्जनः। मन्यते हतचित्तत्वादोजस्युपरते सति ॥ तस्यादितः शिरोरोगः ससंज्ञस्यैव जायते। विगन्धं च सुगन्धं च दृष्ट्वाऽकस्मात् स मूर्च्छति ॥ तृणपुष्पकमित्येवं ज्वरं विद्याद्विचक्षणः"—इति; तच्चौषधीगन्धजे ज्वरे तथौपत्यके चान्तर्भूतत्वान्नाध्येयमिति ॥ ४२ ॥

**ओजो विस्रंसते यस्य पित्तानिलसमुच्छ्रयात् ॥**
**स गात्रस्तम्भशीताभ्यां शयनेप्सुरचेतनः ॥ ४३ ॥**
**अपि जाग्रत् स्वपन् जन्तुस्तन्द्रालुश्च प्रलापवान् ॥**
**संहृष्टरोमा स्रस्ताङ्गो मन्दसन्तापवेदनः ॥ ४४ ॥**
**ओजोनिरोधजं तस्य जानीयात् कुशलो भिषक् ॥**

केचिदत्र हतौजसलक्षणं पठन्ति; यथा—ओजो विस्रंसते यस्येत्यादि। स ज्वरी गात्रस्तम्भशीताभ्यां कृत्वा शयनेप्सुः स्वपितुमिच्छुः, जाग्रदवस्थायां स्वप्नावस्थायां च चेतनारहितो भवति, तस्य सन्निपातिन एतद्गात्रस्तम्भादिकमोजोनिरोधजं लक्षणं जानीयात्। यद्यपि तन्त्रान्तरे सन्निपातभेदास्त्रयोदश प्रोक्ताः, तथाऽपि दोषोत्कर्षापकर्षतारतम्येन धात्वावरणभेदेन च सन्निपातभेदानामानन्त्यान्नेह प्रदर्शिताः ॥ ४३ ॥ ४४ ॥—

१ 'धर्मेण' इति पा०। २ 'शयने स्यादचेतनः' इति पा०।

**सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ॥ ४५ ॥**
**पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥**

सन्निपातज्वरस्य मोक्षवधयोरवधिमाह—सप्तमे दिवसे प्राप्ते इत्यादि। शीघ्रमध्यमन्दशक्तित्वाद्वातादीनां सप्तमे दिने वाताधिकः सन्निपातज्वरः, दशमे दिने पित्ताधिकः, द्वादशे दिने श्लेष्माधिको विमुञ्चति मलपाकात्, हन्ति च धातुपाकात्; यदि हि तस्य दीर्घजीवनं(ने) कर्मास्ति तदा मलपाको भवति, अन्यथा धातुपाकः। अन्ये तु सप्ताहेऽभिन्यासो, दशाहे हतौजाः, द्वादशाहे संन्यासः, मलपाकात् प्रशमं याति धातुपाकाद्धन्तीति मन्यन्ते। धातुपाकस्य लक्षणमाह—"संबाध्यमानो हृदि नाभिदेशे गात्रेषु वा पाकरुजोज्झितेषु। पक्वेष्विवाचैति रुजं ज्वरार्तः स धातुपाकी कथितो भिषग्भिः"—इति। शकुनैररिष्टैर्वा मरणकारी धातुपाकी(को) ज्ञेय इति वृद्धाः। 'द्वादशेऽपि वा' इत्यत्रापिशब्दाद्भालुकिप्रोक्तः सन्निपातज्वरस्य मोक्षवधयोरवधिः प्राप्यते। तेन "सप्तमी द्विगुणा या तु नवम्येकादशी तथा। एषा त्रिदोषमर्यादा मोक्षाय च वधाय च" इति लब्धम्। पुनर्घोरतर इति पुनःशब्दात् पूर्वं घोर आसीत् ततः पुनर्घोरतर इति लभ्यते ॥ ४५ ॥—

**द्विदोषोच्छ्रायलिङ्गास्तु द्वन्द्वजास्त्रिविधाः स्मृताः ४६**

इदानीं प्रकृतिसमवेतास्त्रिविधा द्वन्द्वजज्वरा उच्यन्ते—द्विदोषोच्छ्रायलिङ्गा इत्यादि। द्विदोषोच्छ्रायेत्युच्छ्रायग्रहणं द्वयोर्दोषयोः स्वकारणोच्छ्रितत्वज्ञापनार्थं त्रिविधत्वमत्र समवृद्धद्विदोषजापेक्षयेति ॥ ४६ ॥

**तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ॥**
**कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तथा ॥ ४७ ॥**
**पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥**

इदानीं विकृतिविषमसमवेतान् द्वन्द्वजज्वरानाह—तृष्णेत्यादि। कण्ठास्यशोषः कण्ठशोषो मुखशोषश्च। वमथुः छर्दिः। यतोऽयं विकृतिविषमसमवेतः अतो वातपैत्तिके ज्वरे रोमहर्षारुच्योरभिधानं, कफपैत्तिके तन्द्राभिधानम् ॥ ४७ ॥—

**स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च ॥ ४८ ॥**
**शिरोग्रहः प्रतिश्यायः कासः स्वेदप्रवर्तनम् ॥**
**सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ ४९ ॥**

स्तैमित्यं निश्चलत्वं ज्वरितस्य, पर्वणां भेदो ग्रन्थिस्फुटनं, शिरोग्रहः शिरो गृहीतमिव मन्यते, प्रतिश्यायो नासास्रावः ॥ ४८ ॥ ४९ ॥

**लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा ॥**
**मुहुर्दाहो मुहुः शीतं श्लेष्मपित्तज्वराकृतिः ॥ ५० ॥**
**( जृम्भाध्मानमदोत्कम्पपर्वभेदपरिक्षयाः ॥**
**तृट्प्रलापाभितापाः स्युर्ज्वरे मारुतपैत्तिके ॥ १ ॥**
**शूलकासकफोत्क्लेशशीतवेपथुपीनसाः ॥**
**गौरवारुचिविष्टम्भा वातश्लेष्मसमुद्भवे ॥ २ ॥**

**शीतदाहारुचिस्तम्भस्वेदमोहमदभ्रमाः ॥**
**कासाङ्गसादहृल्लासा भवन्ति कफपैत्तिके ॥ ३ ॥ )**

लिप्तेत्यादि । लिप्तास्यता तिक्तास्यता च । जेज्जटाचार्यस्तु द्वन्द्वजज्वरपाठमेकमेव पठति—जृम्भेत्यादिना । अयं वा पठनीयः पूर्वो वा, न तु द्वयम् ॥ ५० ॥

**कृशानां ज्वरमुक्तानां मिथ्याहारविहारिणाम् ॥**
**दोषः स्वल्पोऽपि संवृद्धो देहिनामनिलेरितः ॥ ५१ ॥**
**सततान्येद्युष्कत्र्याख्यचातुर्थान् सप्रलेपकान् ॥**
**कफस्थानविभागेन यथासंख्यं करोति हि ॥ ५२ ॥**

सन्ततज्वरमभिधायेदानीं विषमज्वरान् सततादीनाह—कृशानामित्यादि । कृशानां मिथ्याहारविहारिणां ज्वरमुक्तानां च मिथ्याहारविहारिणां दोषः स्वल्पोऽपि 'अपथ्यैः कृत' इति शेषः, पुनर्मिथ्याहारविहाराभ्यामभिसंवृद्धो वातप्रेरितः सन् सततादीन् यथासंख्यं कफस्थानविभागेन करोतीति सम्बन्धः । कफस्थानानि आमाशयोरःकण्ठशिरःसन्धयो यथासंख्यं कथ्यन्ते । तत्र आमाशयस्थः सततं करोति, स च प्रतिदिनं कालद्वयानुवर्तनात् किञ्चिन्न्यूनः, उरःस्थो अन्येद्युष्कं, कण्ठस्थः तृतीयकं, शिरस्थः चतुर्थकं, सन्धिस्थः प्रलेपकं, सर्वेषु कफस्थानेषु व्यवस्थितो दोषः सन्ततं करोतीति ज्ञातव्यम् । दोषशब्दोऽत्र पृथग्द्वन्द्वसमस्तरूपो वातादिर्ग्राह्यः । अनिलेरितत्वं च वातस्यापि स्थितस्य बाह्यहेतुप्रचुरीभूतेनापरेण वातेन संभवति ॥ ५१ ॥ ५२ ॥

**अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते ॥**
**ततश्चामाशयं प्राप्य दोषैः कुर्याज्ज्वरं नृणाम् ॥ ५३ ॥**

यथा उरआदिस्थितो दोषोऽन्येद्युष्कादीन् करोति तथाऽऽह—अहोरात्रादित्यादि । अहोरात्रादुरःस्थो दोष आमाशयं प्राप्य अन्येद्युष्कं करोति अन्यस्मिन् दिवसे, कण्ठस्थितो द्वाभ्यामहोरात्राभ्यां तृतीयकं तृतीयदिवसे, शिरःस्थितः स्थानत्रयमतिक्रम्य चतुर्थकं चतुर्थदिवसे, सन्धिषु स्थितो नित्यमेव प्रलेपकं करोति, स च राजयक्ष्मिणामेव ॥ ५३ ॥

**तथा प्रलेपको ज्ञेयः शोषिणां प्राणनाशनः ॥**
**दुश्चिकित्स्यतमो मन्दः सुकष्टो धातुशोषकृत् ॥ ५४ ॥**

प्रलेपकलक्षणमाह—तथा प्रलेपको ज्ञेय इत्यादि । दुश्चिकित्स्यतम इति हेतुभावेन सन्निपातात्मकत्वात् । मन्दो मन्दवेगः । सुकष्ट इति हेतुफलभावेन मारणात्मकत्वात् ॥ ५४ ॥

**कफस्थानेषु वा दोषस्तिष्ठन् द्वित्रिचतुर्षु वा ॥**
**विपर्ययाख्यान् कुरुते विषमान् कृच्छ्रसाधनान् ५५**

विषमज्वरानभिधाय तद्विपर्ययज्वरानाह—कफस्थानेष्वित्यादि । कफस्थानयोर्द्वयोरुरआमाशययोस्तिष्ठन् दोषोऽन्येद्युष्कविपर्ययं करोति; कस्तद्विपर्ययः ? अहोरात्रे पूर्वाह्णादीनामेककालं मुक्त्वा समस्ताहोरात्रं भवतीति । एवं त्रिषु कफस्थानेषु कण्ठोरआमाशयेषु तिष्ठन् दोषस्तृतीयकविपर्ययं करोति, यस्तृतीयदिने विमुञ्चति । चतुर्षु कफस्थानेषु शिरःकण्ठोरआमाशयेषु तिष्ठन् दोषश्चतुर्थकविपर्ययं करोति, स चतुर्थेऽह्नि मुञ्चतीति । सततस्य तु विपर्ययो न भवति, एकस्मिन्नेव कफस्थाने स्थितेन दोषेण तत्करणाद् व्याधिस्वभावाद्वा । कफस्थानेषु वा दोष इत्यत्र दोषशब्दः पृथग्द्वन्द्वसमस्तदोषप्रतिपादकः ॥ ५५ ॥

**परो हेतुः स्वभावो वा विषमे कैश्चिदीरितः ॥**
**आगन्तुश्चानुबन्धो हि प्रायशो विषमज्वरे ॥ ५६ ॥**

विषमज्वराणां नियतैककालागमने एकीयमतेन हेतुमाह—पर इत्यादि । परो भूतादिः, हेतुः कारणं, स्वभावो वेति विषमज्वरे हेतुरित्यर्थः । अन्ये तु विषमज्वरे स्वभावो वा पर उत्कृष्टो हेतुः कैश्चिदाचार्यैरीरित इति व्याख्यानयन्ति । विषमज्वरे भूतादिर्हेतुरुक्तस्तस्य समर्थनमाह—आगन्तुरित्यादि । प्रायशो बाहुल्येन, आगन्तुः भूतादिः, अनुबन्धः कारणं, हीति यस्मादर्थे ॥ ५६ ॥

**वाताधिकत्वात् प्रवदन्ति तज्ज्ञा-**
**स्तृतीयकं चापि चतुर्थकं च ॥**
**औपत्यके मद्यसमुद्भवे च**
**हेतुं ज्वरे पित्तकृतं वदन्ति ॥ ५७ ॥**
**प्रलेपकं वातबलासकं च**
**कफाधिकत्वेन वदन्ति तज्ज्ञाः ॥**
**मूर्च्छानुबन्धा विषमज्वरा ये**
**प्रायेण ते द्वन्द्वसमुत्थितास्तु ॥ ५८ ॥**

इदानीमुक्तानामन्येषां चारम्भकदोषकथनायाह—वातेत्यादि । यद्यपि तन्त्रान्तरे 'कफपित्तात्त्रिकग्राही' इत्यादिना तृतीयचतुर्थकयोर्द्वन्द्वदोषसमुद्भवत्वं प्रतिपादितं, तथाऽपि स्वतन्त्रे पित्तश्लेष्मलिङ्गत्वेऽपि तयोर्वाताधिकत्वं ज्ञेयम् । औपत्यके पर्वतासन्नभूमिसमुद्भवे ज्वरे । पित्तकृतमिति तत्र औपत्यकमद्यसमुद्भवयोः पित्तं कारणं हेतुं वदन्ति; तत्र औपत्यके ज्वरे पर्वतासन्नभूमिस्थितानां तीक्ष्णोष्णवीर्याणामुग्रगन्धानामौषधीनां पित्तकारित्वं, मद्यसमुद्भवे तु मद्यमेव पित्तकारी हेतुः । अन्ये तु 'औपत्यपानात्ययसंप्रभूते हेतुं ज्वरे पित्तमुदाहरन्ति' इति पठन्ति । प्रलेपके यद्यपि वायुरेव प्रेरयिता, तथाऽपि सन्धीनां श्लेष्मस्थानत्वाच्छ्लेष्मोत्कटोऽयं, अन्यशास्त्रोपपन्नाश्चार्थास्तद्विदेभ्य एव ज्ञातव्या इति प्रमाणात्तन्त्रान्तराद्वा वातबलासको ज्ञेयः । तथा च,—"नित्यं मन्दज्वरो रूक्षः शूनः कृच्छ्रेण सिध्यति । स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी"—इति । मूर्च्छानुबन्धा इत्यादि । मूर्च्छानुबन्धाः सततमूर्च्छा ये विषमज्वरास्ते प्रायेण द्वन्द्वसमुच्छ्रिताः; एवंविधास्ते विषमा दुश्चिकित्स्याश्च भवन्ति ।

---

१ 'क्षामाणां' इति पा० । २ 'किञ्चिन्मूलः' इति पा० । ३ 'घोरं' इति पा० । ४ 'प्रलेपकस्त्वविषमः' इति मञ्जुकोशे पाठः ।

१ 'समस्ताहोरात्रभवनं' इति पा० । २ 'तथाऽपि स्वतन्त्रे वायुना जन्येते, परतन्त्रे पित्तश्लेष्मभ्यां, तस्मादाहुशैत्यपित्तश्लेष्मलिङ्गत्वेऽपि' इति पा० । ३ 'सर्वाङ्गश्लेष्मभूयिष्ठो भवेद्वातबलासकः' इति पा० ।

'मुञ्चानुबन्धा' इत्येके पठन्ति; तत्र मुञ्चन्ति अनुबध्नन्ति ये ते मुञ्चानुबन्धाः सततकादयः सविपर्ययाः । केचित् 'मुक्त्वाऽनुबन्धान्' इति पठन्ति; तत्र, अनुबन्धान् अनुबन्धज्वरानेव विषमान् मुक्त्वा येऽन्ये विषमज्वरास्ते द्वन्द्वसमुत्थिता इति । अन्ये तु व्याख्यानयन्ति—अनुबन्धानुपद्रवज्वरान्मुक्त्वा येऽन्ये मौलाः सततकादयो विषमज्वरत्वेनाभिमतास्ते प्रायेण द्वन्द्वसमुत्थिताः; प्रायोग्रहणात् पृथक्समस्तैश्च जन्यन्ते इति ॥५७॥५८॥

**त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ॥**
**तयोः प्रशान्तयोः[1] पित्तमन्ते दाहं करोति च ॥५९॥**
**करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ॥**
**प्रशान्ते कुरुतस्तस्मिञ्छीतमन्ते च तावपि ॥ ६० ॥**
**द्वावेतौ दाहशीतादी ज्वरौ संसर्गजौ स्मृतौ ॥**
**दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यश्च स स्मृतः ॥६१॥**

अतः परं सततादीनां शीतदाहपूर्वत्वेन द्वैविध्यमाह—त्वक्स्थावित्यादि । तयोः श्लेष्मानिलयोः, प्रशान्तयोः स्वकालापगमात् प्रत्यनीकप्राप्त्या वा । अन्ते दाहं करोति चेत्यत्र चकारात् मोहमूर्च्छादयः । तस्मिन् पित्ते । तावपि श्लेष्मानिलौ; अपिशब्दात् वमथुतन्द्रादयः । यद्यप्येतौ ज्वरौ दोषत्रयजौ तथाऽप्यत्र दोषद्वयोक्त्या संसर्गजावित्युक्तं, एककार्यकरत्वात्कफवातयोरेकेन व्यपदेशाद्वेत्यन्ये । द्वयोः दाहपूर्वशीतपूर्वकयोः । कष्टः कृच्छ्रसाध्य इति विशेषणद्वयोपादानादत्यर्थं दुःसाध्यत्वं दर्शितं; दाहपूर्वोऽत्यन्तकष्टसाध्यः, शीतपूर्वः सुखसाध्य इति कुतः? रोगशक्तेरचिन्त्यत्वात् ॥ ५९–६१ ॥

**प्रसक्तश्चाभिघातोत्थश्चेतनाप्रभवस्[2]तु यः ॥**

अभिघातकामादिजयोरप्यत्यन्तकष्टत्वं दर्शयन्नाह—प्रसक्त इत्यादि । प्रसक्तः प्रकर्षेण सङ्गी, एतच्चाभिघातोत्थचेतनाप्रभवज्वरयोर्विशेषणम् । अभिघातोत्थः काष्ठलोष्ठाद्यभिघातजः । चेतनाप्रभवः कामादिजः ॥—

**रात्र्यह्नोः षट्सु कालेषु कीर्तितेषु यथा पुरा ॥६२॥**
**प्रसह्य विषमोऽभ्येति मानवं बहुधा ज्वरः ॥**

इदानीं सततादीनां स्वकालेषूद्गमं दर्शयति—रात्र्यह्नोरित्यादि । षट्सु कालेषु पूर्वाह्णमध्याह्नापराह्णप्रदोषार्धरात्रप्रत्यूषेषु, कीर्तितेषु कथितेषु, यथा पुरा येन प्रकारेण पूर्वं व्रणप्रश्नाध्याये । तत्र पूर्वाह्णप्रदोषयोः कफस्य, मध्याह्नार्धरात्रयोः पित्तस्य, अपराह्णप्रत्यूषयोर्वातस्य प्रकोप इति; एवं पूर्वोक्तकथितेषु स्वस्वदोषप्रकोपकालेषु प्रसह्य हठाद्विषमो ज्वरोऽभ्येति अभि समन्ततो व्याप्य मानवमागच्छति । बहुधेति अहोरात्रे कालद्वयं, एककालं, एकदिनानन्तरं, द्विदिनानन्तरं; अन्ये तु व्याख्यानयन्ति—बहुधा कदाचिच्छीतः, कदाचिदुष्णः, कदाचिद्धस्तपादयोः, कदाचिदंसाद्यवयवेषु, नियतकालं, चिरकालमल्पकालं चेति । एतेन विषमज्वराणामानन्त्यमुक्तम् ॥ ६२ ॥—

**स चापि विषमो देहं न कदाचिद्विमुञ्चति ॥ ६३ ॥**
**ग्लानि[1]गौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते ॥**
**वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते ॥ ६४ ॥**

विषमज्वराणामुपशान्तवेगानामपि देहावस्थानं दर्शयति—स चापीत्यादि । विषमो विषमज्वरः । समाहारत्वेन कार्श्यादिति सिद्धे यत् कार्श्येभ्य इति बहुवचनं तेन लक्षणान्तरमपि गृह्यते । तथा च,—"शिरसो गौरवं ग्लानिर्नातिश्रद्धा च भोजने । माधुर्यमथ वैरस्यं तिक्तत्वमथवा पुनः । वक्त्रस्य जायते यस्मात् प्रवेगेऽपि गते सति । तस्मात्तु नियतो लीनः शरीरे विषमज्वरः"—इति ॥ ६३ ॥ ६४ ॥

**धात्वन्तरस्थो लीनत्वान्न सौक्ष्म्यादुपलभ्यते ॥**
**अल्पदोषेन्धनः क्षीणः क्षीणेन्धन इवानलः ॥ ६५ ॥**

यदि वेगापगमेऽपि न विमुच्यते तर्हि किमिति नोपलभ्यत इत्याह—धात्वन्तरस्थो लीनत्वादित्यादि । एकस्माद्धातोरन्यो धातुः धात्वन्तरं तत्रस्थः, अन्ये तु धात्वन्तरशब्देन सप्त कलाः कथयन्ति । लीनत्वादेकदेशस्थितत्वात् । सूक्ष्मत्वात् अणुत्वात् । अल्पदोषेत्यादि अल्पदोष इव इन्धनत्वेन क्षीणोऽल्पीभूतो ज्वरः; 'अल्पदोषा एव इन्धनं यस्य स अल्पदोषेन्धनः' इत्यन्ये ॥६५॥

**दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः ॥**
**धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥ ६६ ॥**

इदानीं **भोजभालुकिपुष्कलावत**प्रभृतीनां शल्यतन्त्रविदां मतेन विषमज्वरोत्पत्तिमभिधाय कायचिकित्साविदाम**ग्निवेशा**दीनां मतेन धातुस्थानैर्दोषैर्विषमज्वराणामुत्पत्तिं दर्शयति—दोष इत्यादि । अहितसंभूतः अपथ्याद्वृद्धिं गतः । ज्वरोत्सृष्टस्य ज्वरमुक्तस्य, वाशब्देन कृशस्येति समुच्चीयते । कृशानामित्यादिना कफस्थानविभागेन प्राक् सततादयो दर्शिताः, अत्र तु धात्वन्तरगतभेदेनेति न पुनरुक्तता ॥ ६६ ॥

**संततं[2] रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः ॥**
**मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः ॥ ६७ ॥**
**कुर्याच्चातुर्थकं घोरमन्तकं रोगसंकरम् ॥**

इदानीं रसादीनां धातूनां मध्ये यं यं धातुमाश्रित्य दोषो यं यं विषमज्वरमारभते तं तं दर्शयन्नाह—सततं रसरक्तस्थ इत्यादि । रसरक्तस्थो दोषः सततं ज्वरं करोति, येऽपि 'दोषो रक्ताश्रयः प्रायः करोति सततज्वरं' इति पठन्ति तैरपि प्रायोग्रहणाद्रसोऽङ्गीकर्तव्यः, यतो रसमादाय दोषा ज्वरमापादयन्ति । अन्ये तु सततमित्यत्रैव संततमिति पठन्ति, तत्र संततमित्येतस्याग्रे सततमिति शब्दो लुप्तो ज्ञेयः; तेन रसस्थः संततं, रक्तस्थः सततमिति व्याख्यानयन्ति । केचित्तु सतत-

१ 'तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः' इति पा० ।
२ 'चेतनाप्रसवः' इति पा० ।

१ 'यस्माद्गौरववैवर्ण्यकार्श्येभ्यो न विमुच्यते' इति पा० ।
२ 'सन्ततं' इति पा० ।

पर्यायं सन्ततं मन्यन्ते । संततज्वरस्य विषमज्वरत्वं नास्ति, तत्सन्निधौ पाठान्तरेण व्याख्यानान्तरेण च यद्ग्रहणं तत् संततापेक्षया सततादीनां विषमत्वाद् विषमत्वप्रतिपादनार्थं; अन्यथा किमपेक्ष्यैषां विषमत्वं भवेत् । स दोषः पिशिताश्रितोऽन्येद्युष्कं कुर्यादिति संबन्धः । मेदोगतो दोषस्तृतीयेऽह्नि कुर्यात् तृतीयकं ज्वरमिति बोद्धव्यम् । घोरं कष्टकारिणम् । अन्तकं यमसदृशं, मारणात्मकत्वाच्चिरं क्लेशनत्वार्थं ॥ ६७ ॥—

**केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥ ६८ ॥**

इदानीं धात्वन्तरस्थदोषारब्धत्वेऽपि सततकादावेकीयमतेन भूताभिषङ्गं हेतुमाह—केचिदित्यादि । भूताभिषङ्गो ग्रहावेशः । पूर्वं दोषप्रस्तावे दोषोत्थिता एव परं विषमज्वरा भूतादिजा अपि भवन्तीति प्रतिपादनार्थं 'परो हेतुः स्वभावो वा' इत्यादि पठितं; इह तु धात्वाश्रितप्रकरणत्वादिति न पौनरुक्त्यम् ॥६८॥

**सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ॥**
**सन्तत्या योऽविसर्गी स्यात्सन्ततः स निगद्यते ६९**

सन्निपातारब्धस्य संततज्वरस्य 'सप्तमे दिवसे प्राप्ते' इत्यादिना मोक्षवधयोरवधिमभिधायेदानीमेकदोषजद्विदोषजस्य विसर्गकालावधिद्वारेण[2] लक्षणमाह—सप्ताहमित्यादि । सन्तत्या नैरन्तर्येण, अविसर्गी अविसर्जनशीलः । अयं च सुखसाध्यः; यदुक्तं,—"सन्ततज्वर एवान्यः स्वल्पदुर्बलकारणः । एकदोषो द्विदोषो वा सुखसाध्यः प्रकीर्तितः"-इति ॥ ६९ ॥

**अहोरात्रे सततको द्वौ कालावनुवर्तते ॥**
**अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्तते ॥ ७० ॥**
**तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥**

सततादीनां लक्षणमाह—अहोरात्र इत्यादि । पूर्वाह्णादीनां कालानां मध्ये कालद्वयमनुवर्तते । एककालमिति अन्येद्युष्को ज्वरः अहोरात्रादन्यस्मिन्नहोरात्रे एककालमागच्छतीत्यर्थः । तृतीयकस्तृतीयेऽह्नीत्यत्रैककालमिति संबध्यते । चतुर्थकश्चतुर्थेऽह्नीत्यत्रापि एककालमिति योज्यम् । अत्र दोषोत्कर्षापकर्षाभ्यामधिककालत्वं हीनकालत्वमपि च ज्ञातव्यं, न तु नियमः ॥ ७० ॥—

**वातेनोदीर्यमाणाश्च हीयमाणाश्च सर्वतः ॥**
**एकद्विदोषा मर्त्यानां तस्मिन्नेवोदितेऽहनि ॥ ७१ ॥**
**वेलां तामेव कुर्वन्ति ज्वरवेगे मुहुर्मुहुः ॥**
**(वातेनोद्धूयमानस्तु यथा पूर्येत सागरः ॥ ७२ ॥**
**वातेनोदीरितास्तद्वद्दोषाः कुर्वन्ति वै ज्वरान् ॥**
**यथा वेगागमे वेलां छादयित्वा महोदधेः ॥ ७३ ॥**
**वेगहानौ तदेवाम्भस्तत्रैवान्तर्निलीयते ॥**
**दोषवेगोदये तद्वदुदीर्येत ज्वरोऽस्य वै ॥ ७४ ॥**
**वेगहानौ प्रशाम्येत यथाऽम्भः सागरे तथा ॥)**

इदानीं धातुस्थदोषारब्धानां विषमज्वराणामुद्गमकालं पूर्वोक्तमेवाह—वातेनेत्यादि । तस्मिन् पूर्वे, उदिते कथिते विषमज्वराणां संबन्धिन्यहनि दिने, मानुषाणामेकद्विदोषाः पृथग्द्वन्द्वभावेन स्थिता वातेनोत्कटीक्रियमाणा हीयमाणा आकृष्यमाणाश्च सर्वतः, तामेव पूर्वाह्णादिकां वेलां ज्वरवेगविषये मुहुर्मुहुः कुर्वन्ति । 'ज्वरवेगात्' इति केचित्; तत्र ज्वरवेगाद्धेतोस्तां वेलां कुर्वन्ति । केचिदत्र 'वातेनोद्धूयमानास्तु' इत्यादिकं यावत् 'प्राप्ते प्राप्ते प्रवर्तते' इत्यन्तं ग्रन्थपाठं पठन्ति; स च उक्तार्थः, अतः सर्वैरपि **निबन्धकारैः** परिहृतः, तस्मान्न पठनीयः ॥ ७१-७४ ॥—

**विविधेनाभिघातेन ज्वरो यः संप्रवर्तते ॥ ७५ ॥**
**यथादोषप्रकोपं तु तथा मन्येत तं ज्वरम् ॥**

इदानीं वातादिकृतान् सप्तज्वरानभिधाय आगन्तुज्वरमनेकमेदभिन्नं दर्शयन्नाह—विविधेनाभिघातेनेत्यादि । विविधेनेति शस्त्रलोष्टकाष्ठादिना, दोषप्रकोपजत्वेऽपि आद्यनिमित्तेन व्यपदेशादभिघातज इत्युच्यते ॥ ७५ ॥—

**श्यावास्यता विषकृते दाहातीसारहृद्ग्रहाः ॥ ७६ ॥**
**अभक्तरुक् पिपासा च तोदो मूर्च्छा बलक्षयः ॥**
**ओषधीगन्धजे मूर्च्छा शिरोरुक् वमथुः क्षवः ७७**
**कामजे चित्तविभ्रंशस्तन्द्राऽऽलस्यमरोचकः ॥**
**हृदये वेदना चास्य गात्रं च परिशुष्यति ॥ ७८ ॥**
**भयात् प्रलापः शोकाच्च भवेत् कोपाच्च वेपथुः ॥**
**अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ॥७९॥**
**भूताभिषङ्गादुद्वेगहास्यकम्पनरोदनम् ॥**

केषुचिद्विशिष्टेषु निमित्तेषु वैशेषिकं लक्षणमाह—श्यावास्यतेत्यादि । विषस्य त्रिदोषकरत्वेऽप्यत्यन्तपित्तकरत्वात् श्यावास्यता स्यात् । अभक्तरुक् अरोचकः । औषधिगन्धजे मूर्च्छेत्यादि । वमथुः छर्दिः, क्षवः छिक्का । कामजे इत्यादि । चित्तविभ्रंशः किंकर्तव्यतामूढत्वम् । भयादित्यादि । प्रलापः असंबद्धभाषणं; यद्यपि प्रलाप इति सामान्यं लक्षणं तथाऽपि निदानादिभिः कृत्वा विशेषो ज्ञातव्य इति । वेपथुः कम्पः । अभिचारेत्यादि । अभिचारो मन्त्रादिभिर्मारणप्रयोगः, अभिशापो ब्रह्मर्षिगुरुसिद्धानामाक्रोशः । भूताभिषङ्गादित्यादि । भूतानां देवादिग्रहाणामभि समन्ततो भावेन सङ्गो भूताभिषङ्गः । उद्वेग उद्विग्नचित्तता ॥ ७६-७९ ॥—

**श्रमक्षयाभिघातेभ्यो देहिनां कुपितोऽनिलः ॥ ८० ॥**
**पूरयित्वाऽखिलं देहं ज्वरमापादयेद्भृशम् ॥**

श्रमादिजानां ज्वराणां संप्राप्तिद्वारेण लक्षणमाह—श्रमेत्यादि । पूरयित्वा व्याप्य ॥ ८० ॥—

**रोगाणां तु समुत्थानाद्विदाहागन्तुतस्तथा ॥ ८१ ॥**
**ज्वरोऽपरः संभवति तैस्तैरन्यैश्च हेतुभिः ॥**
**दोषाणां स तु लिङ्गानि कदाचिन्नातिवर्तते ॥ ८२ ॥**

१ अस्याग्रे 'चिरकालं रोगोत्पादकं' इत्यधिकं पठ्यते कस्मिंश्चित्पुस्तके । २ 'कस्मिंश्चित् कालावधिद्वारेण' इति पा० । ३ अयं पाठः कस्मिंश्चित्पुस्तके नोपलभ्यते ।

१ 'दाहातीसारहृद्गदाः' इति पा० ।

इदानीमन्यथाऽऽगन्तुज्वरं विवक्षुराह—रोगाणामित्यादि । रोगाणां विद्रध्यादीनां; विदाहागन्तुतस्तथेति विदाहतः पाकात् तेषामेव, आगन्तुतः अभिघातात्, अपक्वविद्रध्यादिपाटनादित्यर्थः; अन्ये तु विदाहतः सामान्यसन्तापात्, आगन्तुतः सामान्याभिघातादिभिरिति व्याख्यानयन्ति । ज्वरोऽपरोऽन्यः, भेदात् । तैस्तैरन्यैश्च हेतुभिरिति विद्रध्यादिसमुत्थानात् प्रागुक्तैरन्यैश्च ज्वरकारिभिर्हेतुभिः । स त्विति स पुनर्ज्वरो हेतुभेदाद्भिन्नोऽपि वातादीनां लिङ्गानि नातिवर्तते न परित्यज्य याति ॥ ८१ ॥ ८२ ॥

गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ॥
रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥ ८३ ॥
रक्तनिष्ठीवनं दाहः स्वेदश्छर्दनविभ्रमौ ॥
प्रलापः पिटिका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥८४॥
पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता ॥
ऊष्माऽन्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ८५
भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च ॥
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ॥८६॥
भेदोऽस्थ्नां कुञ्च(ज)नं श्वासो विरेकश्छर्दिरेव च ॥
विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे ॥ ८७ ॥
तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा ॥
अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ॥
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ॥ ८८ ॥
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥
दग्ध्वेन्धनं यथा वह्निर्धातून् हत्वा यथा विषम् ८९
कृतकृत्यो व्रजेच्छान्तिं देहं हत्वा तथा ज्वरः ॥

केचिदत्र रसादिधातुगतज्वरस्य लक्षणं पठन्ति,—"रसस्थे तु ज्वरे वत्स ! लक्षणानि निबोध मे । गुरुत्वं दैन्यमुत्क्लेशः सदनं छर्द्यरोचकौ ॥ रागोष्णपिटिकास्तृष्णा सरक्तं ष्ठीवनं भ्रमः । दाहो मूर्च्छाऽरुचिश्छर्दिः प्रलापो रक्तसंस्थिते ॥ पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता । [1]ऊष्माऽन्तर्मोहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ वेगस्तीव्रः पिपासा च मूर्च्छा छर्दिः प्रलपकः । गन्धस्य चासहत्वं च मेदःस्थे ग्लान्यरोचकौ ॥ विरेकवमने चोभे त्वस्थिभेदः प्रकूजनम् । विक्षेपणं च गात्राणां श्वासश्चास्थिगते ज्वरे ॥ हिक्का कासो महाश्वासस्तमसश्च प्रवेशनम् । [2]मर्मच्छेदो बहिः शैत्यं दाहोऽन्तश्चैव मज्जगे ॥ तस्मान्मरणमाप्नोति शुक्रस्याप्युपसर्पणे । शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः"—इति । एतच्च न पठनीयम् । कुतः ? यतः सर्वशरीरं सन्ततेन व्याप्तं, सततादिभिश्च रसादिधातव इति कुतोऽपरो [3]रसादिधातुगतज्वरावकाश इति रसादिस्थज्वराणां पाठो न पठनीय एवेति **जेज्जटाचार्या**भिमतम् । **श्रीगयदासाचार्येण** चायं पाठोऽन्यादृशः पठितो व्याख्यातश्च, तन्मतानुसारिभिरस्माभिरपि पठ्यते व्याख्यायते च—गुरुतेत्यादि । गुरुता गात्राणाम् । सदनं च गात्राणामेव । दैन्यं ग्लानिः । अस्येति प्राणिनः । यद्यपि रसैकधातुप्राप्त्या सन्तत एवायं तथाऽप्यनुक्तधात्वाश्रितलक्षणकथनार्थमत्र निर्देशः । रक्तेत्यादि । मोहो विगतचित्तता । पिण्डिकेत्यादि । पिण्डिकोद्वेष्टनं जङ्घाक्रोडे जानुनोऽधोभागे पीडा । ऊष्माऽन्तः अन्तर्दाहः । विक्षेपः अङ्गविक्षेपः । भृशमित्यादि । असहिष्णुता क्रोधनत्वं, केचित्तु स्वगन्धस्यासहिष्णुत्वमिति मन्यन्ते । कुञ्चनं संकोचः, स च सान्निध्यादस्थ्नामित्यनेन संबध्यते । तम इत्यादि । तमःप्रवेशनम् अन्धकारदर्शनम् । महाश्वासो वक्ष्यमाणलक्षणः । मर्मच्छेदश्चेति हृदयस्य छेदनमिव । शुक्रस्थानगत इति । ननु शुक्रगे ज्वरे मरणमित्युक्तं तन्न, शुक्रं सर्वदेहगतं ततश्च रसादिधात्वभिभवेनापि शुक्रप्राप्तेस्तद्गतेऽपि मरणमिति । नैवं, सर्वशरीरस्थस्यापि शुक्रस्य कलान्तरितत्वेन त्वचां क्रमेण मर्मप्राप्तेः । यद्येवमनुक्रमादेव शुक्रं ज्वरेण कथं प्राप्यत इति चेत् ? धात्वन्तरानतिक्रम्य शुक्रमार्गगमनादिति । शुक्रगतो ज्वरोऽ[1]परव्यापाराभावाद्देहघातेनैवोपशाम्यतीति दर्शयति—दग्ध्वेत्यादि । मृतशरीरे ऊष्माभावाज्ज्वरोपशमो ज्ञायते, विषाक्तकाण्डविद्धसर्पदष्टमृगादेर्मरणाद्विषोपशान्तिः प्रतीयते ॥ ८३-८९ ॥—

वातपित्तकफोत्थानां ज्वराणां लक्षणं यथा ॥ ९० ॥
तथा तेषां भिषग्ब्रूयाद्रसादिष्वपि बुद्धिमान् ॥
समस्तैः सन्निपातेन धातुस्थमपि निर्दिशेत् ॥ ९१ ॥
द्वन्द्वजं द्वन्द्वजैरेव दोषैश्चापि वदेत् कृतम् ॥

इदानीं धातुगतानामपि ज्वराणामुक्तैरेव वातादिज्वरलक्षणैर्दोषात्मकत्वेनावगम इति दर्शयति—वातेत्यादि । यथा येन प्रकारेण वातादिज्वराणां लक्षणं, तथा तेन प्रकारेण तेषां वातादिज्वराणां रसादिषु सप्तसु धातुषु गतानां लक्षणं बुद्धिमान् भिषक् ब्रूयादिति संबन्धः । समस्तैः दोषलक्षणैः द्वन्द्वजं ज्वरं, द्वन्द्वजैरेवेति द्विदोषजनितैः । दोषैश्चापीति दोषलक्षणैः धातुस्थं वदेदिति ॥ ९० ॥ ९१ ॥—

गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया ॥ ९२ ॥
आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च ॥

गम्भीर इत्यादि । आनद्धत्वेन दोषपुरीषविबन्धेन । आनद्धत्वेन चेत्यत्र चकारात् प्रलापभ्रमसन्ध्यस्थिशूलादिपरिग्रहः; [2]एतद्विपर्ययेणान्ये ज्वरा ज्ञेयाः ॥ ९२ ॥—

[3]हतप्रभेन्द्रियं क्षीणमरोचकनिपीडितम् ॥ ९३ ॥
गम्भीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत् ॥

गम्भीरज्वरस्यासाध्यत्वमाह—हतेत्यादि । हतप्रभेन्द्रियं हतशरीरदीप्तिं तथा हतश्रोत्रचक्षुरादिशक्तिकम् । अन्ये प्रभाशब्देन इन्द्रियशक्तिं वदन्ति; तेन हतेन्द्रियशक्तिकमित्यर्थः ।

१ 'ऊष्मान्तर्मोहविक्षेपौ' इति पा० । २ 'मर्मभेदः' इति, 'पर्वभेदः' इति च पा० । ३ 'अपरो रसादिगतज्वरवेगकालः' इति पा० ।

१ 'ज्वरोऽपरव्यापाराभावात्' इति पा० । २ 'एतद्विपर्ययेणोत्तानज्वरो ज्ञेयः' इति पा० । ३ 'क्षामं दुरात्मानमुपद्रुतम्' इति पा० ।

गम्भीर इव गम्भीरोऽन्तर्वेगः, तीक्ष्णोऽतिदुःसहो बहिरन्तश्च वेगः, ताभ्यामन्योन्यमार्तं पीडितं; एतेन क्षीणं गम्भीरार्तं विवर्जयेत्, तीक्ष्णवेगार्तं च क्षीणमिति । 'अरोचकनिपीडितं' इत्यत्र 'दुरात्मानमुपद्रुतं' इति तथा 'उपद्रवनिपीडितं' इति च केचित् पठन्ति । दुरात्मानं दुःखितान्तःकरणं, उपद्रुतं ज्वरोपद्रवैः । 'अपरे दुरात्मभिरुपद्रुतम्' इति पठन्ति, तत्र प्रेतभूतपिशाचरक्षोभिः पीडितम् ॥ ९३ ॥—

**हीनमध्याधिकैर्दोषैस्त्रिसप्तद्वादशाहिकः ॥ ९४ ॥**
**ज्वरवेगो भवेत्तीव्रो यथापूर्वं सुखक्रियः ॥**

अतोऽनन्तरं तीक्ष्णवेगस्य सुखक्रियत्वमाह—हीनेत्यादि । हीनैर्दोषैस्त्र्यहं सुखक्रियस्तीक्ष्णवेगः, मध्यैः सप्ताहं, अधिकैर्द्वादशाहानीति । अत्र हीनमध्यत्वं वृद्ध्यपेक्षया । यथापूर्वं सुखक्रिय इति द्वादशाहिकात्तीक्ष्णवेगात् सप्ताहिकः सुचिकित्स्यः, सप्ताहिकात्तीक्ष्णवेगात् त्र्याहिकः सुचिकित्स्यः । हीनमध्याधिकैर्दोषैस्त्रिसप्तद्वादशाहिक इति यदुक्तं तदवधिमात्रद्योतकं; तेन दोषतारतम्याद्दोषभेदानामानन्त्यादुक्तावधेर्न्यूनो न्यूनतरो न्यूनतमो, अधिकोऽधिकतरोऽधिकतमोऽप्यवधिर्बोद्धव्यः ॥ ९४ ॥—

**कालो ह्येष यमश्चैव नियतिर्मृत्युरेव च ॥ ९५ ॥**
**तस्मिन् व्यपगते देहाज्जन्मेह पुनरुच्यते ॥**
**इति ज्वराः समाख्याताः कर्मेदानीं प्रवक्ष्यते ॥ ९६ ॥**

इदानीं कालनामभिर्विशेषणैर्मारणात्मकत्वं ज्वरस्य सूचयन् तन्मुक्तस्य पुनर्जन्म प्रतिपादयति—काल इत्यादि । इतिशब्दो निदानपरिसमाप्तौ । कर्मेत्यादि । कर्मचिकित्सा ॥ ९५ ॥ ९६ ॥

**ज्वरस्य पूर्वरूपेषु वर्तमानेषु बुद्धिमान् ॥**
**पाययेत घृतं स्वच्छं ततः स लभते सुखम् ॥ ९७ ॥**
**विधिर्मारुतजेष्वेष, पैत्तिकेषु विरेचनम् ॥**
**मृदु, प्रच्छर्दनं तद्वत्कफजेषु विधीयते ॥ ९८ ॥**

ज्वरस्येत्यादि । ज्वरस्येति निरामवातजनितस्य । घृतं पुराणं, तस्य कालादिसंस्कारेण विशेषगुणकारित्वात् । स्वच्छं सुष्ठु अच्छं केवलं, स्वच्छवचनाद्द्रव्यान्तरयोगो निषिध्यते, न तु संस्कारः पाकेन कालेन च । मारुतजेषु श्रमक्षयादिकुपितवातज्वरपूर्वरूपेषु, नत्वामाशयानुपूर्व्योत्पन्नेषु सामवातज्वरपूर्वरूपेषु । अत एव बुद्धिमान् पाययेदित्युक्तम् । एष सर्पिःपानविधिः । सुखमिति तावदच्छं केवलं घृतं पातव्यं यावत् सुखं प्राप्नोति, तदनन्तरं लघुभोजनादि । पैत्तिकेषु पित्तज्वरपूर्वरूपेषु । मृदु अतीक्ष्णम् । तद्वन्मृदु । कफजेषु कफज्वरपूर्वरूपेषु ॥ ९७ ॥ ९८ ॥

**सर्वेद्विदोषजेषूक्तं यथादोषं विकल्पयेत् ॥**

सर्वेत्यादि । सर्वेषु सन्निपातज्वरपूर्वरूपेषु, द्विदोषजेषु द्वन्द्वज्वरपूर्वरूपेषु; उक्तं यथादोषं सर्पिःपानादिकं, विकल्पयेत् अवधारयेत् ॥—

**अस्नेहनीयोऽशोध्यश्च संयोज्यो लङ्घनादिना ॥ ९९ ॥**

इदानीं घृताद्यनर्हस्य ज्वरपूर्वरूपे किं विधेयमित्याह—अस्नेहनीय इत्यादि । अस्नेहनीयोऽजीर्णी तरुणज्वरीत्यादिकः । अशोध्यो वमनविरेचनायोग्यः । लङ्घनादिनेत्यादिग्रहणात् षडङ्गादिशृतशीतोष्णोदकादिकं गृह्यते ॥ ९९ ॥

**रूपप्राग्रूपयोर्विद्यान्नानात्वं वह्निधूमवत् ॥**

अथ नवज्वरे स्नेहसंशोधनवर्जनात् कथं पूर्वरूपे तदुपदेश इत्याह—रूपप्राग्रूपयोरित्यादि । रूपप्राग्रूपयोः नानात्वं पृथक्त्वं वह्निधूमवत् विद्यात्; वह्निधूमदृष्टान्तेन नानात्वमनयोर्न घटपटादिवत्, अतोऽनयोर्ज्ञाने यत्नो विधेयः ।—

**प्रव्यक्तरूपेषु हितमेकान्तेनापतर्पणम् ॥ १०० ॥**

पूर्वरूपे चिकित्सितमभिधाय रूपे चिकित्सितमाह—प्रव्यक्तरूपेष्वित्यादि । एकान्तेन अतिशयेन । अतर्पणमत्र उपवासः, शेषाणामतर्पणभेदानामवस्थाविशेषेण वक्ष्यमाणत्वात् । तेनामाशयानुपूर्व्योत्पन्नेषु ज्वरेषूपवासादिषु हितमित्यर्थः ॥ १०० ॥

**आमाशयस्थे दोषे तु सोत्क्लेशे वमनं परम् ॥**

अवस्थाविशेषेणापतर्पणविशेषमाह—आमाशयस्थे इत्यादि । हृल्लासलालाप्रसेकादिना दोषोत्क्लेशो ज्ञेयः ॥—

**आनद्धः स्तिमितैर्दोषैर्यावन्तं कालमातुरः ॥ १०१ ॥**
**कुर्यादनशनं तावत्ततः संसर्गमाचरेत् ॥**

लङ्घनं कियन्तं कालं कार्यमित्याह—आनद्ध इत्यादि । यावन्तं कालमातुरः स्तिमितैर्दोषैरप्रचलितरूपैरानद्धो बद्ध इव भवेत्तावन्तं कालं लङ्घयेदिति संबन्धः । स्तिमितत्वं च दोषाणामामरसावनद्धत्वात् । तत आनद्धत्वे निवृत्ते, अन्नाभिलाषे सति, संसर्गं पेयादिकमाचरेत् । अन्ये श्लोकोत्तरार्धमन्यथा पठन्ति,—"कालं तावन्तमश्नीयाल्लघ्वन्नं तु विरिक्तवत्" इति । लघ्वन्नमिति अत्रान्नद्रव्यकृतं लघ्वन्नं; विरिक्तवदित्यनेन मात्रालघुत्वम् ॥ १०१ ॥—

**न लङ्घयेन्मारुतजे क्षयजे मानसे तथा ॥ १०२ ॥**
**अलङ्घ्याश्चापि ये पूर्वं द्विव्रणीये प्रकीर्तिताः ॥**

उचितस्यापि लङ्घनस्य क्वचिन्निषेधमाह—न लङ्घयेदित्यादि । क्षयजे धातुक्षयजे यक्ष्मज्वरे वा, मानसे कामक्रोधादिसंभूते । अलङ्घ्या "गर्भिणीवृद्धबालैर्दुर्बलभीरुभिः" इत्यनेनोक्ताः । अन्ये तु व्याख्यानयन्ति—मारुतजे ज्वरे न लङ्घयेत्; किंभूते? क्षयजे । एतेन धातुक्षयप्रकुपितवातज इत्युक्तं; अथवा क्षयजे न लङ्घयेत्; किंभूते? मारुतजे । एतेन यक्ष्मज्वरे मारुतसंभूते न लङ्घयेत् । ( यैः सामावस्थायां मारुतज्वरो यक्ष्मज्वरश्च स लङ्घनीय एव, निरामे मारुतजे ज्वरे न लङ्घयेत् ) ॥ १०२ ॥—

**अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ॥ १०३ ॥**
**ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम् ॥**

अतो लङ्घनवर्णनमाह—अनवस्थितदोषाग्नेरित्यादि । अनवस्थितदोषाग्नेरिति 'पुरुषस्य' इति शेषः । तत्र दोषा अनव-

१ 'तत्वामाशयानुपूर्व्योत्पन्नेषु' इति पा० । २ अयं पाठो हस्तलिखितपुस्तके कचिन्नोपलभ्यते । ३ अयं पाठो हस्तलिखितपुस्तकेषु नोपलभ्यते ।

स्थिताः स्थानान्तरगमनात्, वह्निश्चानवस्थितो बहिर्विक्षिप्तत्वात्। आहारेच्छा हृदि काङ्क्षा, मुखोपनीतस्याहारस्य रसनेन्द्रियस्येच्छा रुचिः ॥ १०३ ॥—

**सृष्टमारुतविण्मूत्रं क्षुत्पिपासाऽसहं लघुम् ॥१०४॥**
**प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात् सुलङ्घितम् ॥**

सम्यग्लङ्घितलक्षणमाह—सृष्टमारुतविण्मूत्रमित्यादि। सृष्टमारुतविण्मूत्रमिति अधःप्रवृत्तवातपुरीषमूत्रं, क्षुत्पिपासासहमिति सम्यग्लङ्घनादेकस्मिन्नेव काले ये क्षुत्पिपासे समवेते भवतस्ते सोढुमशक्तम्। तथा च तन्त्रान्तरं,—"वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे। हृदयोदरकण्ठास्यशुद्धौ तन्द्राक्लमे गते॥ स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये। कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि–" इति। लघुम् अङ्गगौरवादिरहितम्। आत्मा अन्तःकरणम्। क्षामं सर्वाक्षमम्। एवंभूतं सुलङ्घितं विद्यात् ॥ १०४ ॥—

**बलक्षयस्तृषा शोषस्तन्द्रानिद्राभ्रमक्लमाः ॥ १०५ ॥**
**उपद्रवाश्च श्वासाद्याः संभवन्त्यतिलङ्घनात् ॥**

अतिलङ्घनलक्षणमाह—बलक्षय इत्यादि। बलक्षय इति कालजयुक्तिजसहजानां बलानां हानिः, अथवा बलक्षय ओजःक्षयः। शोषो मुखशोषः। तन्द्रा शारीरोक्तलिङ्गा निद्राभेदः। निद्रा प्रसिद्धा। ननु श्लेष्मणा निद्रा उत्पद्यते, अतिलङ्घनात्तु श्लेष्मक्षये जाते कथं सा उत्पद्यते? सत्यं; निद्रेव निद्रेत्युपमया चेष्टोपरमान्निद्रात्वेन विवक्षिता। अन्ये तु तन्द्रानिद्रयोर्मध्ये अकारप्रश्लेषं मन्यन्ते, ततश्चानिद्रेति व्याख्यानयन्ति। भ्रमः चक्रारूढस्येव भ्रमणं, क्लमः अनायासश्रमः। आदिशब्दात् कासस्वरक्षयच्छर्दिहिक्कादयः। तन्त्रान्तरोक्तपर्वभेदादीन्यतिलङ्घनलक्षणानि• सुलङ्घनलक्षणोक्तप्रसन्नात्मेन्द्रियादिवैपरीत्यादधिगन्तव्यानि ॥ १०५ ॥—

**दीपनं कफविच्छेदि पित्तवातानुलोमनम् ॥ १०६ ॥**
**कफवातज्वरार्तेभ्यो हितमुष्णाम्बु तृट्छिदम् ॥**
**तद्धि मार्दवकृद्दोषस्रोतसां**

अर्धावशिष्टोदकगुणमाह—दीपनमित्यादि। कफविच्छेदि स्त्यानश्लेष्मणो विच्छेदकम्। कफवातज्वरार्तेभ्य इति बहुवचननिर्देशात् कफज्वरार्तवातज्वरार्तकफवातज्वरार्तेभ्यो हितमित्यर्थः। यद्यपि पानीयवर्गे उष्णोदकगुणा वर्णितास्तथाऽपि तत्रोक्तगुणेभ्योऽधिकविधानार्थमत्रोक्ताः। यद्येवं तर्ह्येते गुणास्तत्रैव कुतो न निर्दिष्टाः? स्वस्थातुरयोरप्युष्णोदकस्य हितत्वापादनार्थं; तच्चोष्णोदकं मार्दवकृत् मृदुकारि; दोषस्रोतसां दोषवहस्रोतसाम्, अथवा दोषाणां स्रोतसां मृदुत्वं विदधाति। एवंगुणमप्युष्णोदकं ज्वरेऽल्पं देयमित्याहुराचार्याः ॥ १०६ ॥

**शीतमन्यथा ॥ १०७ ॥**
**सेव्यमानेन तोयेन ज्वरः शीतेन वर्धते ॥**

शीतोदकगुणमाह—शीतमन्यथेत्यादि। शीतम् अक्वथितम्। अन्यथा उष्णोदकगुणविपरीतगुणम्। किं शीतोदकमुष्णाम्बुगुणविपरीतमेव स्यादुतान्यत् किमपि कुरुत इत्याह—सेव्यमानेनेत्यादि ॥ १०७ ॥—

**पित्तमद्यविषोत्थेषु शीतलं तिक्तकैः शृतम् ॥१०८॥**
**गाङ्गेयनागरोशीरपर्पटोदीच्यचन्दनैः ॥**

इदानीं शृतशीतस्य गुणमाह—पित्तेत्यादि। पित्तमद्यविषोत्थेषु ज्वरेषु तिक्तकैः शृतशीतलं जलं देयं, केवलं वा शृतशीतलं जलं देयं, तन्त्रान्तरवचनात्। तान्येव तिक्तद्रव्याण्याह—गाङ्गेयेत्यादि। गाङ्गेयं मुस्तम्, उदीच्यं वालकं, चन्दनं रक्तचन्दनम्। कल्पनोच्यते—गाङ्गेयादिसर्वद्रव्यं कर्षमात्रमुदकप्रस्थे क्वाथ्यार्धशृतं कृत्वा प्रयोक्तव्यं; वृद्धवैद्यास्तु गाङ्गेयादिसर्वद्रव्यपलमुदकाढके पक्त्वाऽर्धाढकमवशेषयन्ति। यद्यप्यतिक्ता शुण्ठी तथाऽपि पाचनीयत्वेन यौगिकत्वादस्मिन् योगे प्रक्षेपः। तन्त्रान्तरे तु, "कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि। अर्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ"—इति। पञ्जिकाकारस्तु पूर्वार्धमेव पठति नोत्तरार्धं; तिक्तकैस्तिक्तद्रव्यैः पर्पटादिभिरिति च व्याख्यानयन्ति ॥ १०८ ॥

**दीपनी पाचनी लघ्वी ज्वरार्तानां ज्वरापहा ॥१०९॥**
**अन्नकाले हिता पेया यथास्वं पाचनैः कृता ॥**

दीपनीत्यादि। अन्नकाले स्वस्थवृत्ताभिधास्यमाने 'विसृष्टे विण्मूत्रे' इत्यादिके, 'दिनान्ते' इत्यन्ये। यथास्वं पाचनैः कृता पञ्चमूलीप्रभृतिभिः संस्कृता। अन्ये तु पाचनैरित्यत्र बहुवचनमाद्यर्थे, तेन दीपनपाचनसंशमनीयादिभिः संस्कृतेति व्याख्यानयन्ति। पुनः पेयागुणाभिधानमुष्णोदकगुणाभिधानवत्, अतो न पुनरुक्तिः ॥ १०९ ॥

**बहुदोषस्य मन्दाग्नेः सप्तरात्रात् परं ज्वरे ॥ ११० ॥**
**लङ्घनाम्बुयवागूभिर्यदा[1] दोषो न पच्यते ॥**
**तदा तं मुखवैरस्यतृष्णारोचकनाशनैः ॥ १११ ॥**
**कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत् ॥**

कृतलङ्घनादेर्ज्वरिणो यस्यामवस्थायां पाचनं देयं तामाह—बहुदोषस्येत्यादि। ननु, तन्त्रान्तरे स्वेदतिक्तकरसौ पाचनार्थमुक्तौ, तावत्र कस्मान्न निर्दिष्टौ? सत्यं, उष्णोदकविधानेन तावत् कफवातज्वरस्य स्वेदो लब्धः, षडङ्गकल्पनया पानीयसंस्कारेण च तिक्तकरसो गृहीत इत्यत्र द्वावपि निर्दिष्टौ। मुखवैरस्यतृष्णारोचकनाशनैरिति वक्ष्यमाणैः मरुत्पित्तकफज्वरपाचनैः, वातादिलक्षणत्वाद्वदनवैरस्यादीनाम्। कषायैः क्वाथैः। आमदोषपाचनार्थं यवागूः कथमामे प्रयुज्यते? सत्यं, द्विप्रकारा ह्यामता प्रभूता अल्पा च, तत्र प्रभूतामतां विहायाल्पामतायां प्रयुज्यत इति न दोषः ॥ ११० ॥ १११ ॥—

**पञ्चमूलीकषायं तु पाचनं पवनज्वरे ॥ ११२ ॥**
**सक्षौद्रं पैत्तिके मुस्तकटुकेन्द्रयवैः कृतम् ॥**

१ 'लङ्घनान्ते यवागूभिः' इति पा०।

**पिप्पल्यादिकषायं तु कफजे परिपाचनम् ॥ ११३ ॥**
**द्वन्द्वजेषु तु संसृष्टं दद्या-**

तान्येव पाचनानि प्रतिदोषमाह—पञ्चमूलीत्यादि । पञ्चमूली महती । अन्ये तु कफानुगे वातज्वरे महती, पित्तानुगे च कनीयसी, इति द्विविधामपि पञ्चमूलीं गृह्णन्ति । संसृष्टं मिश्रम् । सन्निपातचिकित्सा द्वन्द्वजचिकित्सायामेवान्तर्भूता, अतः पृथङ्नोक्ता ॥ ११२ ॥ ११३ ॥—

**द्थ विवर्जयेत् ॥**
**पीताम्बुर्लङ्घितो भुक्तोऽजीर्णी क्षीणः पिपासितः ११४**

येषां पाचनमहितं तानाह—अथेत्यादि । विवर्जयेत् 'पाचनम्' इति शेषः । पीताम्बुः सद्य एव पीतोदकः । लङ्घितः कृतोपवासः । भुक्तः सद्य एव कृताहारः । अजीर्णी अपरिपक्वभोजनः ॥ ११४ ॥

**( तीक्ष्णे ज्वरे गुरौ देहे विबद्धेषु मलेषु च ॥**
**सामदोषं विजानीयाज्ज्वरं पक्वमतोऽन्यथा ॥ )**
**मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च ॥**
**पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥ ११५ ॥**

इदानीं पक्वदोषलक्षणमाह—मृदावित्यादि । तत् वक्ष्यमाणशमनशोधनाख्यमौषधम् ॥ ११५ ॥

**दोषप्रकृतिवैकृत्यादेकेषां पक्वलक्षणम् ॥**

एकीयमतमाह—दोषप्रकृतिवैकृत्यादित्यादि । दोषप्रकृतिवैकृत्यादिति ज्वरोत्पादिकाया दोषप्रकृतेरुच्छूनताया अन्यथात्वादित्यर्थः ॥—

**हृदयोद्वेष्टनं तन्द्रा लालास्रुतिररोचकः ॥ ११६ ॥**
**दोषाप्रवृत्तिरालस्यं विबन्धो बहुमूत्रता ॥**
**गुरूदरत्वमस्वेदो न पक्तिः शकृतोऽरतिः ॥ ११७ ॥**
**स्वापः स्तम्भो गुरुत्वं च गात्राणां वह्निमार्दवम् ॥**
**मुखस्याशुद्धिरग्लानिः प्रसङ्गी बलवाञ्ज्वरः ॥ ११८ ॥**
**लिङ्गैरेभिर्विजानीयाज्ज्वरमामं विचक्षणः ॥**

इदानीं सामान्यमामज्वरलक्षणमाह—हृदयोद्वेष्टनमित्यादि । हृदयोद्वेष्टनं हृदयस्य आमोटनमिव । दोषाप्रवृत्तिः वातादीनां निश्चलता । विबन्धो विड्वातयोरप्रवर्तनम् । अरतिः न कुत्रचिदवस्थितिश्चेतसः । अग्लानिः ईषच्छान्तिः । प्रसङ्गी संसक्तः । एतानि लक्षणानि प्रायेण सप्तरात्रं यावद्भवन्ति । अमुं पाठं **पञ्जिकाकारो** 'लालाप्रसेको हृल्लासो हृदयाशुद्ध्यरोचकाः । तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ॥ क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवाञ्ज्वरः । आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम्' इत्यादिना ग्रन्थेन पठति ॥ ११६–११८ ॥—

**सप्तरात्रात्परं केचिन्मन्यन्ते देयमौषधम् ॥ ११९ ॥**
**दशरात्रात्परं केचिद्दातव्यमिति निश्चिताः ॥**

इदानीं कषायरसस्यौषधस्योपयोगकालं परमतेनाह—सप्तेत्यादि । औषधं कषायरसमपि, ननु तिक्तरसमेव, तस्य सामेऽप्युपयोगार्हत्वात् । ननु, 'मृदौ ज्वरे लघौ देहे' इत्यादिनैव पक्वलक्षणेऽभिहिते भेषजदानमुक्तं, तत्कथं सप्तरात्रादित्यादिकं परमतमङ्गीक्रियते ? सत्यं, सप्तरात्रादर्वाक् पाचनस्यापि निषेधार्थं सप्तरात्रग्रहणं, दशाहादनन्तरमविद्यमानेऽपि पाकलक्षणे औषधं देयमिति दर्शनार्थं च दशरात्रग्रहणम् । निश्चिता निश्चयकारिणो वैद्याः ॥ ११९ ॥—

**पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते ॥ १२० ॥**
**अचिरज्वरितस्यापि देयं स्याद्दोषपाकतः ॥**

यदा पुनः सप्ताहादर्वागपि पित्तज्वरोऽल्पदोषश्च शीघ्रं पाकं यायात्तदौषधं देयमित्याह—पैत्तिके इत्यादि । अल्पकालसमुत्थितेऽपि पैत्तिके ज्वरे यदौषधं देयं दातव्यं भवेत् तत्तदा देयमिति पिण्डार्थः । वाशब्दात् वातश्लेष्मादिज्वरे दोषपाके सत्यौषधं देयम् ॥ १२० ॥—

**भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥ १२१ ॥**
**शोधनं, शमनीयं तु करोति विषमज्वरम् ॥**

कस्माद्दोषाणां पाके सत्येवौषधं देयमित्याह—भेषजमित्यादि । शोधनमौषधमामदोषस्य पुरुषस्य ज्वरं ज्वलयति दीपयतीत्यर्थः; शमनीयं तु पुनरौषधं दत्तं विषमज्वरं करोति । केचित् 'ज्वलयति' इत्यत्र 'वर्धयति' इति पठन्ति ॥ १२१ ॥—

**च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ॥ १२२ ॥**
**अतिप्रवर्तमानं च साधयेदतिसारवत् ॥**

इदानीं ज्वरिणामावस्थिकं कर्तव्यमाह—च्यवमानमित्यादि । उत्क्लिष्टमिति यतो ज्वरेणामाशयाच्चालितमत एव च्यवमानं, मलं वातादिकं, सदाऽऽमावस्थायां पक्वावस्थायां च । अतिसारवदित्यनेन पाचयन् संग्रहं नयेदित्यर्थः सूच्यते । मलोऽत्र न पुरीषमेव, अनिर्गमने वमनादिभिर्निर्हरणोपदेशात् ॥ १२२ ॥—

**यदा कोष्ठानुगाः पक्वा विबद्धाः स्रोतसां मलाः १२३**
**अचिरज्वरितस्यापि तदा दद्याद्विरेचनम् ॥**

तर्हि कदा शोधनं प्रयोज्यमित्याह—यदा कोष्ठानुगा इत्यादि । विरेचनमत्र शोधनं, न लघोरेचनमेव । केचित् पूर्वत्र अस्मिंश्च वाक्ये मलं पुरीषं कथयन्ति ॥ १२३ ॥—

**पक्वो ह्यनिर्हृतो दोषो देहे तिष्ठन् महात्ययम् १२४**
**विषमं वा ज्वरं कुर्याद्बलव्यापदमेव च ॥**
**तस्मान्निर्हरणं कार्यं दोषाणां वमनादिभिः ॥ १२५ ॥**

पक्वदोषोपेक्षणे दूषणमाह—पक्व इत्यादि । अनिर्हृतो वमनादिना, महात्ययं गम्भीरं, बलव्यापदं बलापचयं कुर्यात् । तस्मादित्यादि । निर्हरणम् ईषद्धरणम् ॥ १२४ ॥ १२५ ॥

१ अयं श्लोकः केषुचित्पुस्तकेषु न पठ्यते ।

१ 'सप्तरात्रादिकं' इति पा० । २ 'यदा पुनर्वातपित्तकफज्वरोऽल्पदोषस्य शीघ्रं पाकं याति तदौषधं देयमित्याह—पैत्तिके इत्यादि' । इति पा० ।

**प्राक्कर्म वमनं चास्य कार्यमास्थापनं तथा ॥**
**विरेचनं तथा कुर्याच्छिरसश्च विरेचनम् ॥ १२६ ॥**
**क्रमशः**

इदानीं क्रमशो वमनादिपरिपाटीमाह—प्रागित्यादि । यद्यपि प्रथमं लङ्घनस्योपदेशः, तथाऽप्यवस्थाप्राप्तत्वाद्वमनस्यापि प्राक्कर्मत्वम् । क्रमश इति क्रमेण, न युगपत्; अथवा लङ्घनपाचनानन्तरं स्नेहादिना कोष्ठप्राप्तेषु दोषेषु मध्यमावस्थायां ज्वरस्येति क्रमशो देयम् । प्राक्कर्म वमनं चास्येत्यत्र चकारादग्रेऽनुवासनमित्यपि ॥ १२६ ॥—

**बलिने देयं वमनं श्लैष्मिके ज्वरे ॥**
**पित्तप्राये विरेकस्तु कार्यः प्रशिथिलाशये ॥१२७॥**
**सरुजेऽनिलजे कार्यं सोदावर्ते निरूहणम् ॥**
**कटीपृष्ठग्रहार्तस्य दीप्ताग्नेरनुवासनम् ॥ १२८ ॥**
**शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम् ॥**
**कफाभिपन्ने शिरसि कार्यं मूर्धविरेचनम् ॥१२९ ॥**

यादृशस्य पुंसो यदात्मके ज्वरे वमनादिकं प्रयुज्यते तदाह—बलिने इत्यादि । बलिने पुरुषाय श्लैष्मिके ज्वरे वमनं देयम्, 'आमाशयस्थे दोषे तु सोत्क्लेशे' इत्यादिना या पूर्वं वमनावस्था कथिता तस्यां जातायामित्यर्थः । पित्तप्राये पित्तबाहुल्ये, प्रशिथिलाशये अस्तब्धपक्काशये । तुशब्दाद्वमनमपि पित्ते देयम् । तथा च,—"उपस्थिते श्लेष्मपित्ते व्याधावामाशयाश्रये । वमनार्थं प्रयुञ्जीत भिषग्देहमदूषयन्"—इति । सरुजे कोष्ठरुग्युक्ते । सोदावर्ते सविबन्धे । शिरोगौरवशूलघ्नमित्यादिकं मूर्धविरेचनमिति । जीर्णज्वरे मूर्धविरेचनं न तु तरुणज्वरे परं सान्निपातकं विहाय, सान्निपातके पुनः संज्ञाप्रबोधनार्थं तरुणेऽपि प्रयुज्यते । पञ्जिकाकारस्तु 'क्रमेण बलिने देयं वमनं श्लैष्मिके ज्वरे' इत्यत्र 'आमाशयस्थे दोषे तु सोत्क्लेशे वमने परम्' इत्यादि पूर्वोक्तमेव पाठं पठति ॥ १२७–१२९ ॥

**दुर्बलस्य समाध्मातमुदरं सरुजं दिहेत् ॥**
**दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ १३० ॥**
**अम्लपिष्टैः सुखोष्णैश्च**

अतः परं दुर्बलस्योदरलेपमाह—दुर्बलस्येत्यादि । दारु देवदारु, हैमवती वचा, अम्लं काञ्जिकम् ॥ १३० ॥—

**पवने तूर्ध्वमागते ॥**
**रुद्धमूत्रपुरीषाय गुदे वर्तिं निधापयेत् ॥ १३१ ॥**

वर्तिविषयमाह—पवने इत्यादि । वर्तिरत्र दारुहैमवत्यादिभिः कृता, अन्ये तु मदनफलसैन्धवपिप्पल्यादिभिर्यौगिकैर्द्रव्यैः कृता इति व्याख्यानयन्ति ॥ १३१ ॥

**पिप्पलीपिप्पलीमूलयवानीचव्यसाधिताम् ॥**
**पाययेत यवागूं वा मारुताद्यनुलोमिनीम् ॥ १३२ ॥**

ऊर्ध्वगतपवने रुद्धमूत्रपुरीषस्यान्यत् किं कुर्यादित्याह—पिप्पलीत्यादि ॥ १३२ ॥

**शुद्धस्योभयतो यस्य ज्वरः शान्तिं न गच्छति ॥**
**सशेषदोषरूक्षस्य तस्य तं सर्पिषा जयेत् ॥ १३३ ॥**

सशेषदोषत्वाद्रूक्षत्वाच्च ज्वरेऽप्रशाम्यति सति रूक्षस्य शुद्धस्य प्रतीकारमाह—शुद्धस्येत्यादि ॥ १३३ ॥

**कृशं चैवाल्पदोषं च शमनीयैरुपाचरेत् ॥**
**उपवासैर्बलस्थं तु ज्वरे सन्तर्पणोत्थिते ॥ १३४ ॥**

शोधनविधिमभिधाय संशमनविधिमाह—कृशमित्यादि । उपवासैरिति भोजनपरित्यागैः । जेज्जटाचार्यस्तु—उपवासस्यापि संशमनीयत्वाद्विशिष्टविषये तन्नियोगमाह—उपवासैरित्यादि । उपवासैरिति बहुवचनाद्दशविधमपि लङ्घनं यथावस्थं योज्यम् । तथा च,—"चतुष्प्रकारा संशुद्धिः पिपासामारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम्"—इति । ईदृशे च व्याख्याने संशमनप्रस्तावेऽपि पुनः शोधनमभिहितं भवति ॥ १३४ ॥

**क्लिन्नां यवागूं मन्दाग्निं तृषार्तं पाययेन्नरम् ॥**

संशमनेष्वाहारस्य वरत्वात्तदभिधानमाह—क्लिन्नामित्यादि । क्लिन्नाम् अल्पसिक्थत्वेन; 'क्लिन्नां' इत्यत्र 'तन्वीं' इति केचित् पठन्ति, तत्रापि स एवार्थः ॥—

**तृट्छर्दिदाहघर्मार्ते मद्यपं लाजतर्पणम् ॥ १३५ ॥**
**सक्षौद्रमम्भसा पश्चाज्जीर्णे यूषरसौदनम् ॥**
**उपवासश्रमकृते क्षीणं(णे) वाताधिके ज्वरे ॥१३६॥**
**दीप्ताग्निं भोजयेत् प्राज्ञो नरं मांसरसौदनम् ॥**
**मुद्गयूषौदनश्चापि हितः कफसमुत्थिते ॥ १३७ ॥**
**स एव सितया युक्तः शीतः पित्तज्वरे हितः ॥**

यवागूवनर्हस्य तर्पणमाह—तृडित्यादि । हित इति 'अन्नकाले' इति शेषः । स इत्यादि । स एव मुद्गयूष एव ॥ १३५–१३७ ॥——

**दाडिमामलमुद्गानां यूषश्चानिलपैत्तिके ॥ १३८ ॥**
**ह्रस्वमूलकयूषस्तु वातश्लेष्माधिके हितः ॥**
**पटोलनिम्बयूषस्तु पथ्यः पित्तकफात्मके ॥ १३९ ॥**
**दाहच्छर्दियुतं क्षामं निरन्नं तृष्णयाऽर्दितम् ॥**
**सिताक्षौद्रयुतं लाजतर्पणं पाययेत च ॥ १४० ॥**

द्वन्द्वज्वराणां पथ्यमाह—दाडिमेत्यादि । ह्रस्वमूलको लघुमूलकः । लाजतर्पणं पाययेत चेत्यत्र द्रवानुक्तेः शीतोदकेन लाजतर्पणपानं; केचिच्छृतशीतेन पानमिच्छन्ति, अन्ये तु ज्वरापहैः फलरसैः पानं लाजतर्पणस्य पथ्यमाहुः ॥१३८–१४०॥

**कफपित्तपरीतस्य ग्रीष्मेऽसृक्पित्तिनस्तथा ॥**
**मद्यनित्यस्य न हिता यवागूस्तमुपाचरेत् ॥ १४१ ॥**
**यूषैरम्लैरनम्लैर्वा जाङ्गलैश्च रसैर्हितैः ॥**

१ 'ह्रस्वमूलकयूषेण भोजयेत् कफवातिके' इति पा० ।
२ 'मुक्ते' इति पा० ।

इदानीं प्रशस्ताया यवाग्वा विशिष्टविषयेऽहितत्वं दर्शयन्नाह—कफपित्तपरीतस्येत्यादि । कफपित्तपरीतस्य कफपित्ताभ्यां मिलिताभ्यां व्याप्तस्य । यद्यपि रक्तपित्तप्रतिषेधे घृतमिश्राया यवाग्वा हितत्वमभिधास्यति, तथाऽप्यत्र ज्वरे सति रक्तपित्ते यवागूरहिता, संयोगे पुनस्तथेति तस्य यवागूरहिता । तस्य पथ्यमाह—तमुपाचरेदित्यादि । यूषैः अम्लैरनम्लैर्वेति विकल्पः सात्म्यापेक्षया अग्न्यपेक्षया च । यूषजाङ्गलरसोपदेशोऽपि सात्म्यापेक्षया अवस्थापेक्षया च । यूषो मुद्गादियूषः । कफपित्तपरीतादीनां दाहाद्यभिभूतानां यूषरसोपदेशस्तत्र कालिको मन्तव्यः ॥ १४१ ॥—

**मद्यं पुराणं मन्दाग्नेर्यवान्नोपहितं हितम् ॥ १४२ ॥**

इदानीं शमनत्वान्मद्यतक्रेऽवस्थावशेन द्रव्यान्तरोपहिते हिततया दर्शयन्नाह—मद्यमित्यादि । मद्यं पुराणं सम्यक् पक्वं, दीपनीयत्वात् कफघ्नत्वाच्च ॥ १४२ ॥

**सव्योषं वितरेत्तक्रं कफारोचकपीडिते ॥**

तक्रप्रयोगमाह—सव्योषमित्यादि । सव्योषं त्रिकटुकसंस्कृतं, वितरेत् दद्यात् ॥—

**कृशोऽल्पदोषो दीनश्च नरो जीर्णज्वरार्दितः ॥१४३॥**
**विबद्धः सृष्टदोषश्च रूक्षः पित्तानिलज्वरी ॥**
**पिपासार्तः सदाहो वा पयसा स सुखी भवेत् १४४**

क्षीरावस्थामाह—कृश इत्यादि । दीनः क्लिष्टचित्तः । विबद्धदोषः अप्रवृत्तदोषः, सृष्टदोषः च्युतदोषः । ननु, यदि विबद्धदोषे क्षीरं प्रयुज्यते तत्कथं प्रच्युतेऽपि प्रयुज्यते ? सत्यं, उभयशक्तिकत्वात् प्रच्युतेऽपि प्रयुज्यते; अथवा प्रच्युतो दोषः स्तोकस्तोकेन यस्य प्रवर्तते, अत्र सोऽभिप्रेतः; ततः सम्यग्दोषप्रवर्तनार्थं भेदनं क्षीरं च्युतदोषेऽपि प्रयुज्यते इत्यर्थः । एष पाठो निबन्धकारैः कियन्मात्रः पठितः कियन्मात्रश्च परित्यक्तः, अस्माभिर्वृद्धपठितत्वात् सर्वोऽपि लिखितः ॥ १४३ ॥ १४४ ॥

**तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥**

तरुणज्वरे पयः पीतं सत् किं कुर्यादित्याह—तदेवेत्यादि । तदेवेति पयः । तरुणे तरुणज्वरे ॥—

**सर्वज्वरेषु सुलघु मात्रावद्भोजनं हितम् ॥ १४५ ॥**
**वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्धनम् ॥**

इदानीं सर्वज्वरोचितस्याहारस्य यथाकालमुपयोगमाह—सर्वज्वरेष्वित्यादि । सुलघु पुराणरक्तशाल्यादि, मात्रावत् अल्पं, वेगापाये ज्वरवेगहानौ, अन्यथा उक्तप्रकारवैपरीत्येन, तत् भोजनं, हि यस्मादर्थे । केचित् 'वेगापाये' इत्यत्र 'दिनापाये' इति पठन्ति; दिनान्ते इति च व्याख्यानयन्ति । 'सर्वज्वरेषु सप्ताहं मात्रावल्लघु भोजयेत्' इतीदृशं पूर्वार्धं केचित् पठन्ति, स च निबन्धेषु न दृश्यते ॥ १४५ ॥—

**ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत् ॥ १४६ ॥**
**अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा ॥**
**स क्षीणः कृच्छ्रतां याति यात्यसाध्यत्वमेव च १४७**
**तस्माद्रक्षेद्बलं पुंसां बले सति हि जीवितम् ॥**
**गुर्वभिष्यन्द्यकाले च ज्वरी नाद्यात् कथञ्चन १४८**
**न तु तस्याहितं भुक्तमायुषे वा सुखाय वा ॥**

इदानीं जीर्णज्वरितस्यारुचावपि हितभोजनोपदेशमाह—ज्वरित इत्यादि । अस्य जीर्णज्वरिणो यदि हितभोजने कथञ्चिदरुचिस्तदा हितमेवानेकप्रकाराभिः कल्पनाभिर्मुखप्रियं कृत्वाऽरुचिनिवृत्त्यर्थं ज्वरितोऽश्नीयात् । तथा च तन्त्रान्तरं,—"सातत्यात् स्वाद्वभावाच्च पथ्यं द्वेष्यत्वमागतम् । कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः"—इति । कस्मादेवंविधमपि कृत्वा ज्वरितोऽश्नीयादित्याह—अन्नकाले ह्यभुञ्जान इत्यादि । अन्ये तु यद्यस्य जीर्णज्वरिणोऽरुचिः स्यात्तदा अहितमप्यश्नीयादिति व्याख्यानयन्ति । ननु, यद्यरुचौ सत्यामहितभोजनं क्रियते तदा 'गुर्वभिष्यन्द्यकाले च' इत्याद्युत्तरोक्तश्लोकेन सह कथं न विरोधः ? सत्यं, अहितस्य सातत्यसेवननिराकरणार्थं गुर्वभिष्यन्द्यकाले चेत्यादिश्लोकः । गुर्वित्यादि अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजननम् । कथञ्चन सकृदपि । तुशब्दो यस्मादर्थे, तेन यस्मादहितं भुक्तं भोजनं ज्वरितस्य न आयुषोऽर्थे सुखार्थे वा भवति, तस्माद्गुर्वादि न भक्षयेत् । यद्यपि कैश्चिन्निबन्धकारैरेष पाठो न पठितस्तथाऽपि सर्वनिबन्धोपजीविना मया पञ्जिकाकारपठितत्वात् पठितः ॥ १४६–१४८ ॥—

**संततं विषमं वाऽपि क्षीणस्य सुचिरोत्थितम् १४९**
**ज्वरं संभोजनैः पथ्यैर्लघुभिः समुपाचरेत् ॥**

इदानीं दुर्बलस्य चिरोत्थिते ज्वरे पथ्यसंभोजनैर्बृंहणविधिमाह—संततमित्यादि । संततं नित्यलग्नं, विषमं सततान्येद्युष्कादिकम् । संभोजनैः यथेष्टभोजनैः ॥ १४९ ॥—

**मुद्गान्मसूरांश्चणकान् कुलत्थान् समकुष्ठकान् १५०**
**आहारकाले यूषार्थं ज्वरिताय प्रदापयेत् ॥**

मुद्गान् मसूरांश्चणकानित्यादि । पूर्वं दोषप्रत्यनीकत्वदर्शनार्थं मुद्गादियूषाणामुपादानं, अत्र तु विकारप्रत्यनीकत्वदर्शनार्थम्, अतो न पुनरुक्तिः ॥ १५० ॥—

**पटोलपत्रं वार्ताकं कठिल्लं पापचैलिकम् ॥ १५१ ॥**
**कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम् ॥**
**पत्रं गुडूच्याः शाकार्थं ज्वरितानां प्रदापयेत् ॥१५२॥**

पटोलपत्रमित्यादि । कठिल्लं पुनर्नवाशाकं, पापचैलिकं पाठाशाकं, गोजिह्वां गोजीशाकम् ॥ १५१ ॥ १५२ ॥

**लावान् कपिञ्जलानेणान् पृषतान्छरभान्छशान् ॥**
**कालपुच्छान् कुरङ्गांश्च तथैव मृगमातृकान् ॥१५३॥**
**मांसार्थे मांससात्म्यानां ज्वरितानां प्रदापयेत् ॥**

---

१ 'यूषरसोपदेशस्तात्कालिकः' इति पा० । २ 'कासघ्नत्वाच्च' इति पा० । ३ 'तदेव तु पयः पीतं तरुणे हन्ति मानवम्' इति पा० ।

१ 'हितानीति प्रकल्पयेत्' इति पा० ।

लावानित्यादि । कपिञ्जलो गौरतित्तिरिः, एणः कृष्णमृगः, पृषतः चित्रमृगः 'चीतल' इति लोके, शरभः अष्टपादुष्ट्रप्रमाणो महाशृङ्गः, कालपुच्छः स च प्रसिद्धः, कुरङ्गः चतुःशृङ्गः 'मेदुली' इति लोके । मांसार्थे मांसप्रयोगे; केचिन्मांसार्थे बृंहणार्थे इति व्याख्यानयन्ति, 'मांसं मांसेन वर्धते' इत्युक्तत्वात् ॥ १५३ ॥—

**सारसक्रौञ्चशिखिनः कुक्कुटांस्तित्तिरां(रीं)स्तथा ॥**
**गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ॥**

अतः परं सारसादीनामप्रशस्तत्वं परमतेन दर्शयन्नाह—सारसक्रौञ्चशिखिन इत्यादि । सारसो रक्तचञ्चुकः पक्षिविशेषः, क्रौञ्चः 'क्रौंच' इति प्रसिद्धः, शिखी मयूरः, तित्तिरः कृष्णतित्तिरिः, तित्तिरिशब्द अकारान्तोऽप्यस्ति । यद्यपि मांसवर्गे कुक्कुटतित्तिरी परमुष्णौ दर्शितौ न सारसादयस्तथाऽप्यत एव विधानात् 'उष्णौ मयूरतित्तिरौ' इति दर्शनात् सारसादयोऽप्युष्णा ज्ञेयाः ॥ १५४ ॥—

**ज्वरितानां प्रकोपं तु यदा याति समीरणः ॥ १५५ ॥**
**तदैतेऽपि हि शस्यन्ते मात्राकालोपपादिताः ।**

निषिद्धानामपि सारसादीनामवस्थायां ज्वरे प्रयोगमाह—ज्वरितानामित्यादि ॥ १५५ ॥—

**परिषेकान् प्रदेहांश्च स्नेहान् संशोधनानि च ॥१५६॥**
**( स्नानाभ्यङ्गदिवास्वप्नशीतव्यायाममयोषितः ) ॥**
**कषायगुरुरूक्षाणि क्रोधादीनि तथैव च ॥ १५७ ॥**
**सारवन्ति च भोज्यानि वर्जयेत्तरुणज्वरी ॥**
**तथैव नवधान्यादि वर्जयेच्च समासतः ॥ १५८ ॥**

इदानीं नवज्वरे यानि वर्जनीयानि तान्याह—परिषेकानित्यादि । परिषेको धाराप्रसेकः । अवगाहः जलपूर्णकटाहादौ निमज्जनम् । स्नेहान् स्नेहपानम् । संशोधनानि वमनादीनि । कषायः कषायद्रव्यकृतः क्वाथः । क्रोधादीनीत्यत्र आदिशब्दाच्छोकादीनि । सारवन्ति स्निग्धान्यभिष्यन्दीनि च । नवधान्यादिवर्गस्तक्रान्तो व्रणितोपासनीयोक्तः । समासतः संक्षेपतः । यद्यपि परिषेकादिवर्जनमामज्वरलक्षणानन्तरं पठितुमुचितं स्यात्, तथाऽपि नवज्वरे भेषजस्यात्यन्तनिषेधज्ञापनार्थं तत्र नोक्तम् । केचिदमुमेव पाठमीदृशं पठन्ति—'परिषेकान् प्रदेहांश्च स्नेहान् संशोधनानि च । सारवन्ति च भोज्यानि वर्जयेत्तरुणज्वरी ॥ तथैव नवधान्यानि क्रोधादीनि च वर्जयेत्' इति व्याख्यानयन्ति च—स्नाननिषेधादवगाहनिषेधो बोद्धव्यः, अभ्यङ्गनिषेधश्च स्नेहनिषेधात्, क्रोधादीनि चेत्यत्र चकारात् कषायो गृहीतव्यः ॥ १५६–१५८ ॥

**अनवस्थितदोषाग्नेरेभिः सन्धुक्षितो ज्वरः ॥**
**गम्भीरतीक्ष्णवेगत्वं यात्यसाध्यत्वमेव च ॥ १५९ ॥**

इदानीं नवज्वरे परिषेकादिसेवनात्किं स्यादित्याह—अनवस्थितेत्यादि । अनवस्थितदोषाग्नेः नवज्वरिणः, एभिः परिषेकादिभिः सन्धुक्षितो वृद्धो ज्वरो गम्भीरादिवेगित्वं यातीति पिण्डार्थः । अनवस्थितदोषा विमार्गगाः, वह्निरनवस्थितो बहिर्गमनात् ॥ १५९ ॥—

**शीततोयदिवास्वप्नक्रोधव्यायाममयोषितः ॥**
**न सेवेत ज्वरोत्सृष्टो यावन्न बलवान् भवेत् ॥१६०॥**
**मुक्तस्यापि ज्वरेणाशु दुर्बलस्याहितैर्ज्वरः ॥**
**प्रत्यापन्नो दहेद्देहं शुष्कं वृक्षमिवानलः ॥ १६१ ॥**
**तस्मात्कार्यः परीहारो ज्वरमुक्तैर्विरिक्तवत् ॥**
**यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ १६२ ॥**

इदानीं ज्वरमुक्तस्य शीततोयादिनिषेधार्थमाह—शीतेत्यादि । ज्वरोत्सृष्टो ज्वरविमुक्तः । इदानीं ज्वरमुक्तस्य शीततोयादिसेवनात् किं स्यादित्याह—मुक्तस्येत्यादि । अहितैः शीततोयादिभिः । प्रत्यापन्नः पुनरागतः । दहेत् विनाशयेत् । यस्मादहितसेवनात् पुनरागतो ज्वरो देहं दहेत्, तस्मादहितानां परिहारो ज्वरमुक्तेन पुरुषेण कार्य इति पिण्डार्थः । प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथेति दोषाणामविकृतकार्यकारित्वेन दोषतः प्रकृतिस्थत्वं ज्ञेयं, व्यायामादिसेवनसामर्थ्येन च प्राणतः प्रकृतिस्थत्वं ज्ञेयम् ॥ १६०–१६२ ॥

**ज्वरे प्रमोहो भवति स्वल्पैरप्यवचेष्टितैः ॥**
**निषण्णं भोजयेत्तस्मान्मूत्रोच्चारौ च कारयेत् ॥१६३**

ज्वरे आयासनिषेधार्थमाह—ज्वरे इत्यादि । ज्वरे ज्वरकर्शिते पुरुषे । प्रमोहोऽत्र मूर्च्छा । अवचेष्टितैः उत्थानचङ्क्रमणादिभिः । निषण्णं शय्यायामेव आसीनमुपविष्टमिति यावत्, मूत्रोच्चारौ च कारयेदित्यत्रापि निषण्णमिति संबन्धनीयम् । उच्चारो विष्ठा ॥ १६३ ॥

**अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु ॥**
**शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नरः १६४**

अतः परं ज्वरोपशमेऽरोचकादिप्रतिषेधार्थमाह—अरोचके इत्यादि । गात्रसादः अङ्गग्लानिः । शान्त इव शान्तो लीनज्वर इत्यर्थः, नतु सर्वथोपशान्तज्वरः, यस्मादुपशान्तज्वरेऽरोचकादीनामभाव एव । शोध्यः शोधनीयः । अनुबन्धभयात् पुनरुद्भवशङ्कया ॥ १६४ ॥

**न जातु स्नापयेत् प्राज्ञः सहसा ज्वरकर्शितम् ॥**
**तेन संदूषितो ह्यस्य पुनरेव भवेज्ज्वरः ॥ १६५ ॥**

अतः परं ज्वरकर्शितस्य स्नाननिषेधमाह—न जातु स्नापयेदित्यादि । जातु कथञ्चन । प्राज्ञो वैद्यः । सहसा शीघ्रं, यावद्बलं न प्राप्नोतीत्यर्थः । तेन स्नानेन ॥ १६५ ॥

**चिकित्सेच्च ज्वरान् सर्वान्निमित्तानां विपर्ययैः ॥**
**श्रमक्षयाभिघातोत्थे मूलव्याधिमुपाचरेत् ॥ १६६ ॥**
**क्षीणामपप्रजातानां स्तन्यावतरणे च यः ॥**
**तत्र संशमनं कुर्याद्यथादोषं विधानवित् ॥ १६७ ॥**

१ 'तर्पयेत्' इति पा० ।

इदानीं संक्षेपतः सर्वज्वरचिकित्सामाह—चिकित्सेदित्यादि । निमित्तानां कारणानां, विपर्ययैः विपरीतैः; यथा—संतर्पणोत्थेऽपतर्पणम्, अपतर्पणजे संतर्पणमिति । श्रमक्षयाभिघातोत्थे इत्यादि । मूलव्याधिमित्यत्र व्याधिशब्दो दोषे प्रवर्तते, कारणे कार्योपचारात्; तेन मूलदोषं वायुं, श्रमादिभिर्वातकोपादित्यर्थः । स्त्रीणामित्यादि । अपप्रजाताः पतितगर्भाः स्त्रियः, तासां यो ज्वरः, तथा स्तन्यावतरणे च स्त्रीणां यो ज्वरः, तत्र संशमनं कुर्यादिति पिण्डार्थः । यथादोषमिति यस्य दोषस्य तत्र प्रकोपो भवेत्तस्य प्रत्यनीकं संशमनं कुर्यादित्यर्थः । संशमनशब्देन पाचनमपि गृहीतम् । केचिदमुं पाठं न पठन्ति; श्रीजेज्जटाचार्यपठितत्वादस्माभिः पठितः ॥ १६६ ॥ १६७॥

**अतः संशमनीयानि कषायाणि निबोध मे ॥**
**सर्वज्वरेषु देयानि यानि वैद्येन जानता ॥ १६८ ॥**

एवं संक्षेपेण चिकित्सामुपदिश्य, अधुना संशमनकषायान् विवक्षुराह—अत इत्यादि । निबोध जानीहि । मे मत्सकाशात् ॥ १६८ ॥

**पिप्पलीसारिवाद्राक्षाशतपुष्पाहरेणुभिः ॥**
**कृतः कषायः सगुडो हन्याच्छ्वसनजं ज्वरम् ॥१६९॥**

इदानीं प्रथमं वातज्वरे संशमनमाह—पिप्पलीत्यादि । सारिवा उत्पलसारिवा, हरेणुः रेणुका । श्वसनजं वातजम् । पिप्पल्यादिद्रव्यपलमुदकस्य षोडशभिः पलैरुत्क्वाथ्य, चतुर्भागावशिष्टं पलचतुष्टयं गृहीत्वा, गुडकर्षसंयुक्तं पाययेत् । तथा चोक्तम्,—"भेषजात् षोडशगुणं जलं; क्वाथ्यं पलं मतम् । चतुर्भागावशेषं तु पेयमेवं सुखार्थिना"—इति । क्वाथ्यद्रव्यस्य यत् पलं प्रमाणं तदुत्तमानां; तथा चोक्तम्,—"उत्तमस्य पलं मानं त्रिभिः कर्षैश्च मध्यमे । जघन्यस्य पलार्धं च स्नेहक्वाथौषधेषु च"—इति । वृद्धवैद्याश्च मध्यमप्रमाणेनाष्टौ शरावानुदकस्य प्रक्षिप्याष्टभागावशेषितं शरावमेकं गृह्णन्ति, शेषं सममेव व्याख्यानयन्ति; गुडावापमपि वृद्धवैद्या न मन्यन्ते ॥ १६९ ॥

**शृतं शीतकषायं वा गुडूच्याः पेयमेव तु ॥**

शृतमित्यादि । शृतम् अनन्तरोक्तकल्पनया क्वाथीकृतम् । उष्णोदकपाचिताद्द्रव्याद्रात्रिपर्युषिताद्यो रसोऽभिनिर्याति स शीतकषायशब्दवाच्यः । तथा चोक्तं—"द्रव्यादापोत्थितात्तोये प्रतप्ते संस्थितान्निशि । कषायो योऽभिनिर्याति स शीतः समुदाहृतः–" इति । शृतकषायपानं कफानुबन्धवातज्वरे, पित्तानुबन्धे तु शीतकषायपानमिति ॥—

**बलादर्भश्वदंष्ट्राणां कषायं पादशेषितम् ॥ १७० ॥**
**शर्कराघृतसंयुक्तं पिबेद्वातज्वरापहम् ॥**

बलादर्भश्वदंष्ट्राणामित्यादि । श्वदंष्ट्रा गोक्षुरकः, कषायः पूर्वोक्तकल्पनया कथितः । शर्कराघृतयोः प्रमाणं कर्षम् ॥१७०॥—

**शतपुष्पावचाकुष्ठदेवदारुहरेणुकाः ॥ १७१ ॥**
**कुस्तुम्बुरूणि नलदं मुस्तं चैवाप्सु साधयेत् ॥**
**क्षौद्रेण सितया चापि युक्तः क्वाथोऽनिलाधिके १७२**

शतपुष्पेत्यादि । हरेणुका रेणुका, कुस्तुम्बुरु धान्यकं नलदम् उशीरम् । शर्कराक्षौद्रप्रमाणं पूर्ववत् । शतपुष्पादिहरेणुकान्तैरेको योगः परं शर्कराहीनः; कुस्तुम्बुरुप्रभृतिभिश्च द्वितीयः ॥ १७१ ॥ १७२ ॥

**द्राक्षागुडूचीकाश्मर्यत्रायमाणाः ससारिवाः ॥**
**निष्क्वाथ्य सगुडं क्वाथं पिबेद्वातकृते ज्वरे ॥१७३॥**
**गुडूच्याः स्वरसो ग्राह्यः शतावर्याश्च तत्समः ॥**
**निहन्यात्सगुडः पीतः सद्योऽनिलकृतं ज्वरम् १७४**

द्राक्षागुडूचीत्यादि । काश्मर्यं गम्भारीफलम् । सगुडमिति क्वाथोपरि कर्षप्रमाणस्य गुडस्य पश्चात्क्षेपः ॥ १७३ ॥ १७४ ॥

**घृताभ्यङ्गस्वेदलेपानवस्थासु च योजयेत् ॥**

घृतेत्यादि । ननु, यथाप्रतिज्ञं कषायेषु वाच्येषु स्नेहनाद्युपदेशः कुतोऽभिधीयते ? उच्यते—वातज्वरप्रतीकारप्रस्तावात् । अवस्थासु शीतोद्गमादिषु । तत्र जीर्णज्वरे त्वग्गते घृताभ्यङ्गः, शीतोद्गमे च स्वेदलेपाविति ॥—

**श्रीपर्णीचन्दनोशीरपरूषकमधूकजः ॥ १७५ ॥**
**शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरम् ॥**

पैत्तिकज्वरसंशमनमाह—श्रीपर्णीत्यादि । श्रीपर्णीशब्देन गम्भारीफलं, चन्दनं रक्तचन्दनं, परूषकं स्वनामप्रसिद्धं, मधूको गुडपुष्पः[1], तस्यापि फलं ग्राह्यम् । यावत्प्रमाणया शर्करया मधुरः क्वाथो भवति तावत्येव शर्करा प्रक्षेप्तव्या, वृद्धवैद्या आदिद्रव्यसमां शर्करामाहुः ॥ १७५ ॥—

**पीतं पित्तज्वरं हन्यात्सारिवाद्यं सशर्करम् ॥१७६॥**

पीतं पित्तज्वरमित्यादि । सारिवाद्यं सारिवादिद्रव्यगणजातं कषायकल्पनया निष्क्वाथ्य कर्षप्रमाणशर्करायुतं पीतं सत् पित्तज्वरं हन्यादिति संबन्धः ॥ १७६ ॥

**सयष्टीमधुकं हन्यात्तथैवोत्पलपूर्वकम् ॥**

सयष्टीमधुकमित्यादि । उत्पलादिगणोक्तं द्रव्यजातं सयष्टीमधुकं[2] निष्क्वाथ्य पीतं सत् पित्तज्वरं हन्यादिति संबन्धः । यद्यपि उत्पलादिगणेनैव यष्टीमधुकं प्राप्तं तथाऽपि पुनः सयष्टीमधुकमिति यत्कृतं तद्यष्टीमधुकस्य भागद्वयप्रतिपादनार्थम् ॥—

**शृतं शीतकषायं वा सोत्पलं शर्करायुतम् ॥ १७७ ॥**

शृतमित्यादि । शृतं शीतकषायं वेति विकल्पो दाहादितारतम्याद्यपेक्षया । सोत्पलमित्यत्र आदिशब्दो लुप्तो द्रष्टव्यः; तेन, उत्पलादिगणसहितम्, उत्पलादिगणकृतमित्यर्थः ॥ १७७ ॥

**गुडूचीपद्मरोध्राणां सारिवोत्पलयोस्तथा ॥**
**शर्करामधुरः क्वाथः शीतः पित्तज्वरापहः ॥ १७८॥**

---

१ 'मांसी' इति पा० । २ 'यष्टीमधु' इति पा० ।

गुडूचीत्यादि । पद्मं कमलम्, उत्पलम् ईषन्नीलम् । एते च सर्वे एवानन्तरोक्ताः पाक्यकषायाः शीतकषाया वा दोषादिबलं दृष्ट्वा वैद्येन योज्याः ॥ १७८ ॥

**द्राक्षारग्वधयोश्चापि काश्मर्यस्याथवा पुनः ॥**
**स्वादुतिक्तकषायाणां कषायैः शर्करायुतैः ॥ १७९ ॥**
**सुशीतैः शमयेत्तृष्णां प्रवृद्धां दाहमेव च ॥**

इदानीं पित्तज्वरे आवस्थिकं क्रममाह—द्राक्षारग्वधयोरित्यादि । द्राक्षारग्वधयोश्चापीत्येको योगः, काश्मर्यस्याथवेति द्वितीयः, स्वादुतिक्तकषायाणामिति तृतीयः । आरग्वधः कृतमालफलं, काश्मर्यं गम्भारीफलम् । स्वादुतिक्तकषायाणामिति स्वादूनि द्राक्षामधुकसारिवादीनि, तिक्तानि दुरालभापर्पटककिराततिक्तकप्रभृतीनि, कषायाणि पद्मोत्पलप्रभृतीनि, तेषां कषायैः । सुशीतैरिति शीतकषायैरेवेति **कार्तिककुण्डाचार्यः, जेज्जटाचार्यस्तु** पूर्वं क्वथितैः पश्चाच्छीतीकृतैरिति मन्यते ॥ १७९ ॥—

**शीतं मधुयुतं तोयमाकण्ठाद्वा पिपासितम् ॥१८०॥**
**वामयेत्पाययित्वा तु तेन तृष्णा प्रशाम्यति ॥**

पित्तज्वरेऽपरमावस्थिकं कार्यमाह—शीतं मधुयुतमित्यादि । यद्यपि संशमनप्रस्तावे वमनं नोपयुक्तं, तथाऽपि प्रवृद्धायां तृष्णायां वमनस्यापि संशमनकार्यकरत्वादुपदेशः ॥ १८० ॥—

**क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनायुतैः ॥ १८१ ॥**
**अन्तर्दाहे विधातव्यमेभिश्चान्यैश्च शीतलैः ॥**

क्षीरैरित्यादि । क्षीरिकषायैः वटादिक्वाथैः, विधातव्यं पानलेपनपरिषेकावगाहादिकम् । **कार्तिककुण्डस्तु** बहिःपरिमार्जनमेवेच्छति । अन्यैश्च शीतलैः काकोल्यादिभिः शीतवीर्यैः, तथा शीतस्पर्शैरपीत्यर्थः ॥ १८१ ॥—

**पद्मकं मधुकं द्राक्षां पुण्डरीकमथोत्पलम् ॥ १८२ ॥**
**यवान् भृष्टानुशीराणि समङ्गां काश्मरीफलम् ॥**
**निदध्यादप्सु चालोड्य निशापर्युषितं ततः ॥ १८३ ॥**
**क्षौद्रेण युक्तं पिबतो ज्वरदाहौ प्रशाम्यतः ॥**

पित्तज्वरावस्थायां शीतकषायमाह—पद्मकं मधुकमित्यादि । समङ्गा अञ्जलिकारिका, वराहक्रान्तामपरे । यद्यपि काश्मरीफलमित्युक्तं तथाऽपि काश्मरीफलमज्जा गृह्यते, अत्यन्तपित्तहरत्वात् । निदध्यात् धारयेत् । अप्सु चालोड्येति अर्धक्वथिताम्बुनि प्रतप्ते आलोड्येत्यर्थः; अथवा अनुष्णमपि वार्यौषधान्वितं पर्युषितं शीतकषायस्, अविशेषात् । ज्वरदाहौ प्रशाम्यत इति ज्वरश्च दाहश्च, तौ प्रशाम्यतः; एतेन ज्वरसंयुक्तो दाहः शाम्यति, तथा ज्वरं विनाऽपि यो दाहः सोऽपि शाम्यतीत्यर्थः । अन्ये तु 'ज्वरो दाहश्च शाम्यति' इति पठन्ति । तत्र पाठे ज्वरोऽपि शाम्यतीति लभ्यते । अनेन शीतकषायविधानेनान्यान्यपि शीतकषायाणि कार्याणि । केचित् 'पद्मकं मधुकं द्राक्षां पुण्डरीकमथोत्पलम्' इति पाठं न पठन्ति ॥ १८२ ॥ १८३ ॥—

**जिह्वातालुगलक्लोमशोषे मूर्ध्नि च दापयेत् ॥ १८४ ॥**

पित्तज्वरावस्थायां मूर्धप्रलेपमाह—जिह्वातालुगलक्लोमेत्यादि । क्लोम तिलकम् । मूर्ध्नि मस्तके । दापयेत् पद्मकादिशीतकषायस्य जिह्वादिशोषे मस्तकरुजासु चाभ्यन्तरमुपयोगः स्पर्शे चेति व्याख्यानयन्ति । ननु, कषायाधिकारे कथं मूर्ध्नि लेपो गण्डूषश्च निर्दिश्यते ? उच्यते—कषायाणीति बाहुल्येन निर्देशात्; यथा छत्रिणः, तेनादोष इति ॥ १८४ ॥

**केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥**
**शर्करादाडिमाभ्यां वा द्राक्षाखर्जूरयोस्तथा ॥१८५॥**
**वैरस्ये धारयेत्कल्कं गण्डूषं च तथा हितम् ॥**

पित्तज्वरे आवस्थिकं क्रममाह—केशरमित्यादि । केशरादिः मधुसैन्धवसंयुतमित्यन्त एको योगः, शर्करादिः खर्जूरयोस्तथेत्यन्तो द्वितीयः । वैरस्ये मुखवैरस्ये । धारयेत् 'मुखे' इति शेषः । कल्को दृषदि पेषितः सद्रवः । तथा हितमिति विशिष्टदोषारब्धज्वरप्रत्यनीकमित्यर्थः । केचिज्जिह्वाताल्वादिशोषे मातुलुङ्गकेशरस्यैव केवलं मधुसैन्धवयुक्तस्य मूर्ध्नि धारणमिच्छन्ति, तथा द्राक्षाखर्जूरकल्कस्य शर्करादाडिमयुतस्य वैरस्ये आस्ये धारणमिच्छन्ति । यद्यपि मुखवैरस्यं वातलिङ्गं, तथाऽपि पित्तादपि वैरस्यं ज्ञेयं, तन्त्रान्तरोक्तत्वात् । केचित् 'पद्मकं मधुकं द्राक्षां' इत्यादिकं 'गण्डूषं च तथा हितं' इति पर्यन्तं न पठन्ति; स च पाठः पठनीयः, सर्वनिबन्धकारैः पठितत्वात् ॥ १८५ ॥—

**सप्तच्छदं गुडूचीं च निम्बं स्फूर्जकमेव च ॥ १८६ ॥**
**क्वाथयित्वा पिबेत् क्वाथं सक्षौद्रं कफजे ज्वरे ॥**

कफज्वरसंशमनान्याह—सप्तच्छदमित्यादि । सप्तच्छदः सप्तपर्णः, स्फूर्जको वनकुरण्टकाकारः फणिज्जकापरपर्यायः । क्वाथमित्यत्र कल्कमित्यन्ये । पिबेत् परं शीतीकृतं, मधुना उष्णेन सह निषिद्धत्वात्; मधु चात्र क्वाथ्यद्रव्यचतुर्थांशम् ॥ १८६ ॥—

**कटुत्रिकं नागपुष्पं हरिद्रा कटुरोहिणी ॥ १८७ ॥**
**कौटजं च फलं हन्यात् सेव्यमानं कफज्वरम् ॥**

कटुत्रिकमित्यादि । नागपुष्पं नागकेशरम् । सेव्यमानम् असकृदुपयोगात् ॥ १८७ ॥—

**हरिद्रां चित्रकं निम्बमुशीरातिविषे वचाम् ॥१८८॥**
**कुष्ठमिन्द्रयवान् मूर्वां पटोलं चापि साधितम् ॥**
**पिबेन्मरिचसंयुक्तं सक्षौद्रं कफजे ज्वरे ॥ १८९ ॥**

हरिद्रामित्यादि । मूर्वा चोरस्नायुः, 'सक्षौद्रं' इत्यत्र 'सगुडं' इत्यन्ये पठन्ति ॥ १८८ ॥ १८९ ॥

**सारिवातिविषाकुष्ठपुराख्यैः सदुरालभैः ॥**
**मुस्तेन च कृतः क्वाथः पीतो हन्यात् कफज्वरम् १९०**

सारिवातिविषाकुष्ठेत्यादि । पुरो गुग्गुलुः ॥ १९० ॥

मुस्तं वृक्षकबीजानि त्रिफला कटुरोहिणी ॥
परूषकाणि च क्काथः कफज्वरविनाशनः ॥ १९१ ॥

मुस्तमित्यादि । वृक्षकबीजानि इन्द्रयवाः ॥ १९१ ॥

राजवृक्षादिवर्गस्य कषायो मधुसंयुतः ॥
कफवातज्वरं हन्याच्छीघ्रं कालेऽवचारितः ॥१९२॥

इदानीं यद्यप्युद्देशशास्त्रसामर्थ्यात् कफज्वरचिकित्सानन्तरं सन्निपातज्वरचिकित्सितं पठितुमुचितं, तथाऽपि सन्निपाते द्वन्द्वज[1]चिकित्सा कर्तव्येति दर्शनार्थं पूर्वं द्वन्द्वजचिकित्सामाह— राजवृक्षादिवर्गस्येत्यादि । राजवृक्षादिः आरग्वधादिः, कालेऽवचारित औषधकाले दत्तः । पूर्वोक्तं वातपित्तद्वन्द्वजक्रमं विहाय वातश्लेष्मद्वन्द्वजचिकित्सितं प्रथमं यदत्र कृतं तत् केवलकफज्वरेऽपि वातश्लेष्मद्वन्द्वजचिकित्सितं विधेयमिति दर्शनार्थम् ॥ १९२ ॥

नागरं धान्यकं भार्गीमभयां सुरदारु च ॥
वचां पर्पटकं मुस्तं भूतीकमथ कट्फलम् ॥ १९३ ॥
निष्काथ्य कफवातोत्थे क्षौद्रहिङ्गुसमन्वितम् ॥
दा(पा)तव्यं श्वासकासघ्नं श्लेष्मोत्सेके गलग्रहे १९४
हिक्कासु कण्ठश्वयथौ शूले हृदयपार्श्वजे ॥

नागरमित्यादि । भूतीकं सुगन्धितृणं 'रोहिषं' इति प्रसिद्धम् । निष्काथ्य पूर्वोक्तया कषायकल्पनया । मधु कर्षप्रमाणम् । हिङ्गु माषकप्रमाणं, "माषिके हिङ्गुसिन्धूत्थे" इति वचनात् । श्लेष्मोत्सेके श्लेष्मवृद्धौ । हृदयपार्श्वजे इत्यत्रापि 'शूले' इति संबध्यते । एष योगः शृङ्गीसहितः कट्फलादिः । केचिदमुं पाठं देवदार्वभयेत्यादिना पठन्ति ॥१९३॥१९४॥—

बलापटोलत्रिफलायष्ट्याह्वानां वृषस्य च ॥ १९५ ॥
क्काथो मधुयुतः पीतो हन्ति पित्तकफज्वरम् ॥
कटुकाविजयाद्राक्षामुस्तपर्पटकैः कृतः ॥ १९६ ॥
कषायो नाशयेत् पीतः श्लेष्मपित्तभवं ज्वरम् ॥
भार्गीवचापर्पटकधान्यहिङ्ग्वभयाघनैः ॥ १९७ ॥
काश्मर्यनागरैः क्काथः सक्षौद्रः श्लेष्मपित्तजे ॥
सशर्करामक्षमात्रां कटुकामुष्णवारिणा ॥ १९८ ॥
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ॥

बलापटोलत्रिफलेत्यादि । विजया हरीतकी । भार्गीवचेत्यादि । अक्षमात्रां कर्षप्रमाणाम् ॥ १९५-१९८ ॥—

किराततिक्तममृतां द्राक्षामामलकं शटीम् ॥ १९९ ॥
निष्काथ्य वातपित्तोत्थे तं क्काथं सगुडं पिबेत् ॥
रास्ना वृषोऽथ त्रिफला राजवृक्षफलैः सह ॥२००॥
कषायः साधितः पीतो वातपित्तज्वरं जयेत् ॥

किराततिक्तमित्यादि । जेज्जटाचार्यस्तु सन्निपातज्वरचिकित्सां पठित्वा द्वन्द्वजचिकित्सां पठति, 'दोषैः पृथक् समस्तैश्च द्वन्द्वैरागन्तुभिस्तथा' इत्युक्तत्वात् ॥ १९९ ॥ २०० ॥—

१ 'द्वन्द्वेन' इति पा० ।

सर्वदोषसमुत्थे तु संसृष्टानवचारयेत् ॥ २०१ ॥

इदानीं समसन्निपातज्वरचिकित्सामाह—सर्वदोषेत्यादि । सर्वदोषसमुत्थे समसन्निपाते । संसृष्टानवचारयेदिति वातादिविहितान् कषायानेकीकृत्य प्रयुञ्जीतेत्यर्थः । अस्याग्रे केचित् '[1]वर्धनैः क्षपणैर्वापि' इत्यादिकं पाठं पठन्ति, स च वर्तमानेषु पुस्तकेषु न दृश्यते, अतो न लिखितः ॥ २०१ ॥

यथादोषोच्छ्रयं चापि ज्वरान् सर्वानुपाचरेत् ॥

विषमसन्निपातचिकित्सामाह—यथादोषोच्छ्रयमित्यादि । यथादोषोच्छ्रयमिति यस्य दोषस्य उच्छ्रयो भवति तद्दोषप्रतीकारेणेत्यर्थः । सर्वान् विषमसन्निपातज्वरान् । एतत् सामान्यं सर्वेषामेव ज्वराणां चिकित्सितेषु आगन्तूनामपि चिकित्सिते च ॥—

वृश्चीवबिल्ववर्षाभ्वः पयश्चोदकमेव च ॥ २०२ ॥
पचेत् क्षीरावशिष्टं तु तद्धि सर्वज्वरापहम् ॥

सामान्यसन्निपातचिकित्सां निर्दिदिक्षुरादौ क्षीरस्य जीवनतया क्षीरप्रयोगमाह—वृश्चीवेत्यादि । वृश्चीवः श्वेतपुनर्नवा, वर्षाभूः रक्तपुनर्नवा । पचेदिति "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषं कर्तव्यं क्षीरपाके त्वयं विधिः"—इति परिभाषया । केचिदग्रिमश्लोकोक्तमेवोदकप्रमाणमिच्छन्ति । अन्ये एनं योगद्वयं मन्यन्ते, तन्त्रान्तरोक्तत्वात्; वृश्चीवबिल्वमित्येको योगः, वर्षाभ्वादिः द्वितीयः ॥ २०२ ॥—

उदकांशास्त्रयः क्षीरं शिंशपासार[2]संयुतम् ॥ २०३ ॥
तत् क्षीरशेषं कथितं पेयं सर्वज्वरापहम् ॥

सन्निपातेऽपरमपि क्षीरयोगमाह—उदकांशास्त्रय इत्यादि । उदकांशास्त्रयः क्षीरांशापेक्षया, क्षीरस्याष्टौ पलानि, शिंशपासारः पलप्रमितः ॥ २०३ ॥—

नलवेतसयोर्मूले मूर्वायां देवदारुणि ॥ २०४ ॥
कषायं विधिवत् कृत्वा पेयमेतज्ज्वरापहम् ॥
हरिद्रा भद्रमुस्तं च त्रिफला कटुरोहिणी ॥ २०५ ॥
पिचुमन्दः पटोली च देवदारु निदिग्धिका ॥
एषां कषायः पीतस्तु सन्निपातज्वरं जयेत् ॥२०६॥
अविपक्तिं प्रसेकं च शोफं कासमरोचकम् ॥
त्रैफलो वा ससर्पिष्कः क्काथः पेयस्त्रिदोषजे ॥२०७॥

नलवेतसयोरित्यादि । कषायं विधिवत् कृत्वेति पूर्वोक्तकषायकल्पनया । क्षीरसाध्यायामवस्थायामयमपि योगो देयः । केचिन्नलवेतसादियोगं न पठन्ति; स च पठनीयः, सर्वनिबन्धकारैः पठितत्वात् ॥ २०४-२०७ ॥

अनन्तां बालकं मुस्तां नागरं कटुरोहिणीम् ॥
सुखाम्बुना प्रागुदयात्पाययेताक्षसंमितम् ॥ २०८ ॥

१ "वर्धनेनैकदोषस्य क्षपणेनेतरस्य वा । कफस्थानानुपूर्व्या वा संनिपातज्वरं जयेत्" इति चरकः । २ 'शिंशपासारमेव च' इति पा० ।

**एष सर्वज्वरान् हन्ति दीपयत्याशु चानलम् ॥**

अनन्तामित्यादि । अनन्ता दुरालभा । सुखाम्बुना अत्रोष्णोदकेन पलप्रमितेन । प्रागुदयादिति अत्रोदयः सूर्यस्य बोद्धव्यः; न तु ज्वरस्य; तेन सूर्योदयात् पूर्वं देयं, एतेन प्रातरेव । अक्षसंमितं कर्षसमम् । सुखाम्बुना प्रागुदयात्' इत्यत्र 'पिष्ट्वा सुखाम्बुना कल्कं' इति केचित् पठन्ति ॥ २०८ ॥—

**द्रव्याणि दीपनीयानि तथा वैरेचनानि च ॥ २०९ ॥**
**एकशो वा द्विशो वाऽपि ज्वरघ्नानि प्रयोजयेत् ॥**

इदानीमुक्तानुक्तसंग्रहार्थमाह—द्रव्याणि दीपनीयानीत्यादि । दीपनीयानि पिप्पल्यादीनि, वैरेचनानि त्रिवृदभयादीनि, ज्वरघ्नानि दीर्घज्वरघ्नानि । प्रयोजयेत् दोषबलमपेक्ष्य सन्निपातजीर्णज्वरावस्थायामेकशो द्विशो वा दापयेत् । ये त्वेवं वदन्ति–पिप्पल्यादीनि प्रायशः कटुकानि, तानि च ज्वरे न प्रायोगिकान्युष्णवीर्यत्वात्; विरेचनान्यपि गुरुत्वादयौगिकानि; तेषां सम्यक् शास्त्रावबोधो नास्ति, पिप्पल्यादीनां ज्वरे पठितत्वात् ॥ २०९ ॥—

**सर्पिर्मध्वभयातैललेहोऽयं सर्वजं ज्वरम् ॥ २१० ॥**
**शान्तिं नयेत्त्रिवृच्चापि सक्षौद्रा प्रबलं ज्वरम् ॥**

सर्पिरित्यादि । प्रबलं दाहादिसमन्वितम् । लेहावस्था च तन्त्रान्तराज्ज्ञेया । तथा च तन्त्रान्तरं—"पथ्यातैलघृतक्षौद्रैर्लेहो दाहश्रमज्वरान् । कासासृक्पित्तवीसर्पश्वासान् हन्ति वमीरपि"–इति । 'सक्षौद्रा विषमज्वरं' इति केचित् पठन्ति; तन्न, विषमज्वरस्य परतोऽभिधास्यमानत्वात् ॥ २१० ॥—

**ज्वरे तु विषमे कार्यमूर्ध्वं चाधश्च शोधनम् ॥२११॥**

इदानीं विषमज्वरचिकित्सामाह—ज्वरे त्वित्यादि । ऊर्ध्वशोधनं वमनं, तच्च कफाधिके विषमज्वरे । अधःशोधनं विरेचनं, तच्च पित्ताधिके । एतेन सर्वेष्वेव विषमज्वरेषु कफपित्ताधिकतया वमनविरेचने प्रयोक्तव्ये इत्युक्तम् । अन्ये तु विषमज्वरे इत्यत्र यद्यपि विषमज्वरशब्देन संततं विहायान्ये विषमज्वराः प्रोक्ताः, तथाऽप्यत्र तृतीयचतुर्थकौ ग्राह्यौ, यतस्तयोरेव साधारणं वातादिहरमास्थापनविरेचनवमनादिकं युक्तमिति व्याचक्षते ॥ २११ ॥

**घृतं प्लीहोदरोक्तं वा निहन्याद्विषमज्वरम् ॥**

घृतमित्यादि । प्लीहोदरोक्तं घृतं षट्पलं, तच्च कफोत्तरे विषमज्वरे देयं, तीक्ष्णत्वात् ॥—

**गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्दितः ॥ २१२ ॥**

गुडप्रगाढामित्यादि । गुडप्रगाढां किंचिदधिककर्षगुडप्रतिवापयुतां त्रिफलां पिबेत्, 'क्वथितां' इति शेषः । विषमार्दितो विषमज्वरपीडितः ॥ २१२ ॥

**गुडूचीनिम्बधात्रीणां कषायं वा समाक्षिकम् ॥**

गुडूचीनिम्बधात्रीणामित्यादि । धात्री आमलकी । एष योगश्चातुर्थकज्वरघ्नः, समानतन्त्रोक्तत्वात् ॥—

**प्रातः प्रातः ससर्पिष्कं रसोनमुपयोजयेत् ॥२१३॥**

प्रातः प्रातः ससर्पिष्कमित्यादि ॥ २१३ ॥

**त्रिचतुर्भिः पिबेत् क्वाथं पञ्चभिर्वा समन्वितैः ॥**
**मधुकस्य पटोलस्य रोहिण्या मुस्तकस्य च ॥२१४॥**
**हरीतक्याश्च सर्वोऽयं त्रिविधो योग इष्यते ॥**

मधुकादीनां हरीतक्यन्तानां द्रव्याणां त्रिभिः, चतुर्भिः, पञ्चभिर्वा द्रव्यैः समन्वितैः कृतं क्वाथं पिबेदिति संबन्धः । मधुकं यष्टीमधु, रोहिणी कटुका, मुस्तं प्रसिद्धम् । सर्वोऽयं त्रिविधो योग इष्यते; अयं मधुकादियोगस्त्रिप्रकारो वक्ष्यते । कथं? मधुकपटोलरोहिणीभिस्त्रिरेको योगः, मधुकपटोलरोहिणीमुस्तकैश्चतुर्भिर्द्वितीयः, मधुकपटोलरोहिणीमुस्तकहरीतकीभिः पञ्चभिस्तृतीयः, एवं त्रयो योगाः । केचिन्मुस्तकस्थाने 'वत्सकं' पठित्वाऽन्यथा व्याख्यानयन्ति; तद्यथा—मधुकादिहरीतकीपर्यन्तानां द्रव्याणां रसभेदवत् त्रियोगचतुष्कसंयोगपञ्चसंयोगसंस्कृतं क्वाथं पिबेत्; तद्यथा,—मधुकपटोलरोहिणीभिः, मधुकपटोलवत्सकैः, मधुकपटोलहरीतकीभिः, मधुकरोहिणीवत्सकैः, मधुकरोहिणीहरीतकीभिः, मधुकवत्सकहरीतकीभिः, पटोलरोहिणीवत्सकैः, पटोलवत्सकहरीतकीभिः, पटोलरोहिणीहरीतकीभिः, रोहिणीवत्सकहरीतकीभिः, एवं त्रिभिर्द्रव्यैर्दशविकल्पा भवन्ति; मधुकपटोलरोहिणीवत्सकैः, मधुकपटोलरोहिणीहरीतकीभिः, मधुकरोहिणीवत्सकहरीतकीभिः, मधुकपटोलवत्सकहरीतकीभिः, पटोलरोहिणीवत्सकहरीतकीभिः, एवं चतुर्भिः पञ्च विकल्पाः; मधुकरोहिणीवत्सकपटोलकहरीतकीभिः पञ्चभिरेकः; इत्थं त्रिप्रकारस्यापि योगस्य षोडश विकल्पा भवन्ति, ते च सूक्ष्ममतिना वैद्येन दोषापेक्षया प्रयोक्तव्याः ॥ २१४ ॥—

**सर्पिःक्षीरसिताक्षौद्रमागधीर्वा यथाबलम् ॥ २१५ ॥**
**दशमूलीकषायेण मागधीर्वा प्रयोजयेत् ॥**

सर्पिःक्षीरसिताक्षौद्रेत्यादि । सर्पिःप्रभृतीनां समुदितानामयं प्रयोगो विषमज्वरे ज्ञेयः । दशमूलीकषायेण पातव्यकषायकल्पनया क्वथितेन, कर्षणप्रमाणां पिप्पलीं पिबेत्, यस्मादयं पिप्पलीवर्धमानो न भवति ॥ २१५ ॥—

**पिप्पलीवर्धमानं वा पिबेत् क्षीररसाशनः ॥२१६॥**

वर्धमानपिप्पलीप्रयोगमाह—पिप्पलीवर्धमानमित्यादि । वर्धमानपिप्पलीप्रयोगो वातव्याधिचिकित्सितमवलोक्य कर्तव्यः ॥ २१६ ॥

**ताम्रचूडस्य मांसेन पिबेद्वा मद्यमुत्तमम् ॥**

ताम्रचूडस्येत्यादि । ताम्रचूडः कुक्कुटः । मद्यमुत्तमं मार्द्वीकं सरकं च । जेज्जटाचार्यस्तु मार्द्वीकस्थाने माध्वीकमाह । कुक्कुटमांसेन सहोत्तममद्यपानं वातप्रधानस्य मन्दाग्नेश्च । एतानि

१ 'प्रागुक्तोष्णोदकेन' इति पा० ।

१ 'समन्वितम्' इति पा० । २ 'उच्यते' इति पा० ।

वक्ष्यमाणानि पूर्वोक्तानि च यद्यपि विषमज्वरे पठितानि, तथाऽपि जीर्णज्वरेऽपि देयानि ॥—

**कोलाग्निमन्थत्रिफलाक्काथे दध्ना घृतं पचेत् ॥२१७॥**
**तिल्वकावापमेतद्धि विषमज्वरनाशनम् ॥**

कोलाग्निमन्थत्रिफलेत्यादि । कोलं पञ्चकोलं, तिल्वकः पट्टिकारोध्रः । कल्पनामाह—पञ्चकोलादिद्रव्याणां पलशतं, पानीयपलानि द्वादशाधिकानि पञ्चशतानि, एकीकृत्य विपचेत्, यावच्चतुर्थांशमष्टाविंशत्यधिकशतं निष्पद्यते; तेन क्काथेन चतुर्गुणेन तथा चतुर्गुणेन च दध्ना द्वात्रिंशत्पलप्रमितं घृतम्, अष्टपलप्रमाणं तिल्वकावापं दत्त्वा पचेत् । अनेन विधिनाऽनुक्तप्रमाणानि तैलघृतानि पाचनीयानि । ब्रह्मदेवाचार्यस्तु पञ्चकोलादीनां कषायत्रयेण पृथक् स्नेहचतुर्गुणेन तथा चतुर्थेन दध्ना स्नेहचतुर्गुणेन च घृतं तिल्वकावापं साधयति; तच्च प्रमादव्याख्यानं, पञ्चकोलादिकषायत्रयस्य जेज्जटादिष्वनुक्तेः ॥२१७॥—

**पिप्पल्यतिविषाद्राक्षासारिवाबिल्वचन्दनैः ॥२१८॥**
**कटुकेन्द्रयवोशीरसिंहीतामलकीघनैः ॥**
**त्रायमाणास्थिराधात्रीविश्वभेषजचित्रकैः ॥ २१९ ॥**
**पक्वमेतैर्घृतं पीतं विजित्य विषमाग्निताम् ॥**
**जीर्णज्वरशिरःशूलगुल्मोदरहलीमकान् ॥ २२० ॥**
**क्षयकासं ससंतापं पार्श्वशूलानपास्यति ॥**

पिप्पल्यतिविषेत्यादि । सारिवा उत्पलसारिवा सुगन्धमूला, सिंही बृहत्कण्टकारिका, तामलकी दरफलिका, भूम्यामलकीति लोके, स्थिरा शालपर्णी, तेषां कल्ककषायाभ्यां घृतं साधयेत् ॥ २१८-२२० ॥—

**गुडूचीत्रिफलावासात्रायमाणायवासकैः ॥ २२१ ॥**
**क्वथितैर्विधिवत्पक्वमेतैः कल्कीकृतैः समैः ॥**
**द्राक्षामागधिकाम्भोदनागरोत्पलचन्दनैः ॥ २२२ ॥**
**पीतं सर्पिः क्षयश्वासकासजीर्णज्वरान् जयेत् ॥**

गुडूचीत्रिफलेत्यादि । एभिः द्राक्षादिभिः ॥२२१॥२२२॥—

**कलशीबृहतीद्राक्षात्रायन्तीनिम्बगोक्षुरैः ॥ २२३ ॥**
**बलापर्पटकाम्भोदशालपर्णीयवासकैः ॥**
**पक्वमुत्क्वथितैः सर्पिः कल्कैरेभिः समन्वितम् २२४**
**शटीतामलकीभार्गीमेदामलकपौष्करैः ॥**
**क्षीरद्विगुणसंयुक्तं जीर्णज्वरमपोहति ॥ २२५ ॥**
**शिरःपार्श्वरुजाकासक्षयप्रशमनं परम् ॥**

कलशीत्यादि । कलशी पृश्निपर्णी, त्रायन्ती त्रायमाणा, अम्भोदो मुस्ता । एभिः शट्यादिभिः । अनुक्तमपि चतुर्गुणं जलं देयं, तद्विना पाको न स्यादिति वृद्धभिषजः ॥ २२३-२२५ ॥—

**पटोलीपर्पटारिष्टगुडूचीत्रिफलावृषैः ॥ २२६ ॥**
**कटुकाम्बुदभूनिम्बयासयष्ट्याह्वचन्दनैः ॥**
**दार्वीशक्रयवोशीरत्रायमाणाकणोत्पलैः ॥ २२७ ॥**
**धात्रीभृङ्गरजोभीरुकाकमाचीरसैर्घृतम् ॥**
**सिद्धमाश्वपचीकुष्ठज्वरशुक्रार्जुनव्रणान् ॥ २२८ ॥**
**हन्यान्नयनवदनश्रवणघ्राणजान् गदान् ॥**

पटोलीपर्पटारिष्टेत्यादि । पटोल्यादीनां कुष्ठान्तानां कल्कैः, धात्र्यादीनां स्वरसैश्च घृतं पाचनीयम् । अरिष्टो निम्बः, वृषो वासकः, अम्बुदो मुस्तं, भूनिम्बः किराततिक्तकः, यासो दुरालभा, शक्रयवः इन्द्रयवः, उत्पलं कुष्ठम् ॥ २२६-२२८ ॥—

**विडङ्गत्रिफलामुस्तमञ्जिष्ठादाडिमोत्पलैः ॥ २२९ ॥**
**प्रियङ्ग्वेलैलवालूकचन्दनामरदारुभिः ॥**
**बर्हिष्ठकुष्ठरजनीपर्णिनीसारिवाद्वयैः ॥ २३० ॥**
**हरेणुकात्रिवृद्दन्तीवचातालीशकेसरैः ॥**
**द्विक्षीरं विपचेत्सर्पिर्मालतीकुसुमैः सह ॥ २३१ ॥**
**जीर्णज्वरश्वासकासगुल्मोन्मादगरापहम् ॥**
**एतत्कल्याणकं नाम सर्पिर्माङ्गल्यमुत्तमम् ॥ २३२ ॥**
**अलक्ष्मीग्रहरक्षोऽग्निमान्द्यापस्मारपापनुत् ॥**
**शस्यते नष्टशुक्राणां वन्ध्यानां गर्भदं परम् ॥ २३३ ॥**
**मेध्यं चक्षुष्यमायुष्यं रेतोमार्गविशोधनम् ॥**

विडङ्गत्रिफलामुस्तेत्यादि । उत्पलं नीलोत्पलं[1], एला सूक्ष्मैला, एलवालुकं कुष्ठगन्धिकं, चन्दनं रक्तचन्दनं, अमरदारुः देवदारुः, बर्हिष्ठं वालुकं, रजनीद्वयं पिण्डहरिद्रा दारुहरिद्रा च, पर्णिनीद्वयं शालपर्णी पृश्निपर्णी च, सारिवाद्वयं सारिवा उत्पलसारिवा च । विडङ्गादिद्रव्यकल्कमष्टपलप्रमाणं गव्यघृतप्रस्थं चोदकस्य चतुर्भिः प्रस्थैः साधयेत् । कार्त्तिककुण्डस्तु इदं घृतमन्यथा पठति, स चादर्शनान्न लिखितः ॥ २२९-२३३ ॥—

**एतैरेव तथा द्रव्यैः सर्वगन्धैश्च साधितम् ॥ २३४ ॥**
**कपिलाया घृतप्रस्थं सुवर्णमणिसंयुतम् ॥**
**तत्क्षीरेण सहैकध्यं प्रसाध्य कुसुमैरिमैः ॥ २३५ ॥**
**सुमनश्चम्पकाशोकशिरीषकुसुमैर्वृतम् ॥**
**तथा नलदपद्मानां केशरैर्दाडिमस्य च ॥ २३६ ॥**
**तिथौ प्रशस्ते नक्षत्रे साधकस्यातुरस्य च ॥**
**कृतं मनुष्यदेवाय ब्राह्मणैरभिमन्त्रितम् ॥ २३७ ॥**
**दत्तं सर्वज्वरान् हन्ति महाकल्याणकं त्विदम् २३८**
**दर्शनस्पर्शनाभ्यां च सर्वरोगहरं शिवम् ॥**
**अधृष्यः सर्वभूतानां वलीपलितवर्जितः ॥ २३९ ॥**
**अस्याभ्यासाद्धृतस्येह जीवेद्वर्षशतत्रयम् ॥**

महाकल्याणकमाह—एतैरेव तथा द्रव्यैरित्यादि । एतैर्द्रव्यैस्तथा सर्वगन्धैश्च कपिलाघृतप्रस्थं सुवर्णादियुक्तं, तत्साधितं सर्पिरेतैः सुमनादिजैः कुसुमैः कपिलाक्षीरेण सहैकध्यं कृतं, पुनः प्रसाध्य ब्राह्मणैरभिमन्त्रितं, वैद्यातुरयोः प्रशस्ततिथ्यादौ मनुष्यदेवाय राज्ञे दत्तमिदं कल्याणकं घृतं सर्वज्वरान् हन्तीति

[1] 'नीलोत्पलम्' इति पा० ।

पिण्डार्थः । एतैः कल्याणकोक्तैर्विडङ्गादिभिः, सर्वगन्धैः एलादिपठितैः, मणिभिः स्फटिकादिभिः । तत्क्षीरेण कपिलाक्षीरेण । सुमना जाती, वृतं वुक्तं, नलदं मांसी, पद्मं लोहितपद्मम् । साधकस्य वैद्यस्य । मनुष्यदेवाय नृपतये । अधृष्यः अजेयः । एतद्घृतं पाकद्वयसाधितं बोद्धव्यम् ॥ २३४–२३९ ॥—

**गव्यं दधि च मूत्रं च क्षीरं सर्पिः शकृद्रसः ॥२४०॥**
**समभागानि पाच्यानि कल्कांश्चैतान् समावपेत् ॥**
**त्रिफलां चित्रकं मुस्तं हरिद्रातिविषे वचाम् ॥२४१॥**
**विडङ्गं त्र्यूषणं चव्यं सुरदारु तथैव च ॥**
**पञ्चगव्यमिदं पानाद्विषमज्वरनाशनम् ॥ २४२ ॥**

गव्यमित्यादि । शकृद्रसो गोपुरीषोत्थरसः । पाच्यानि पचनीयानि । कल्कप्रमाणमत्र स्नेहचतुर्थांशम् ॥ २४०–२४२ ॥

**पञ्चगव्यमृते गर्भात्पाच्यमन्यद्**

अगर्भपञ्चगव्यमाह—पञ्चगव्यमृते गर्भादित्यादि । अन्यत् द्वितीयं पञ्चगव्यम् । ऋते गर्भादिति द्वितीयं पञ्चगव्यं कल्कं विना पचनीयम्; एतेनैतदुक्तं भवति—पूर्वं पञ्चगव्यं सकल्कं, एतच्च द्वितीयमकल्कं; फलं च तुल्यम् ॥—

**वृषेण च ॥**
**बलयाऽथ परं पाच्यं गुडूच्या तद्वदेव तु ॥ २४३ ॥**
**जीर्णज्वरे च शोफे च पाण्डुरोगे च पूजितम् ॥**

इदानीं पञ्चगव्योक्तत्रिफलादिकल्केन वृषादिपृथक्स्वरसत्रयेण घृतत्रयस्य साधनं निर्दिशन्नाह—वृषेण चेत्यादि । तद्वदिति पूर्वोक्तकल्पनयेत्यर्थः । तद्वच्छब्दो घृतत्रयेऽपि संबध्यते ॥ २४३ ॥—

**एतेनैव तु कल्पेन घृतं पञ्चाविकं पचेत् ॥**
**पञ्चाजं पञ्चमहिषं चतुरुष्ट्रमथापि च ॥ २४४ ॥**

इदानीं पञ्चगव्योक्तविधिना पञ्चाविकादीनि घृतानि पचनीयानीति दर्शयन्नाह—एतेनैव तु कल्पेनेत्यादि । अनेनैव कल्पेन पूर्वोक्तपञ्चगव्यविधिना । चतुरुष्ट्रं शकृद्रसवर्जनेन ॥ २४४ ॥

**त्रिफलोशीरशम्पाककटुकातिविषाघनैः ॥**
**शतावरीसप्तपर्णगुडूचीरजनीद्वयैः ॥ २४५ ॥**
**चित्रकत्रिवृतामूर्वापटोलारिष्टवालकैः ॥**
**किराततिक्तकवचाविशालापद्मकोत्पलैः ॥ २४६ ॥**
**सारिवाद्वययष्ट्याह्वचविकारक्तचन्दनैः ॥**
**दुरालभापर्पटकत्रायमाणाटरूषकैः ॥ २४७ ॥**
**रास्नाकुङ्कुममञ्जिष्ठामागधीनागरैस्तथा ॥**
**धात्रीफलरसैः सम्यग्द्विगुणैः साधितं हविः २४८**
**परिसर्पज्वरश्वासगुल्मकुष्ठनिवारणम् ॥**
**पाण्डुप्लीहाग्निसादिभ्य एतदेव परं हितम् ॥ २४९ ॥**
**पटोलकटुकादार्वीनिम्बवासाफलत्रिकम् ॥**
**दुरालभापर्पटकत्रायमाणाः पलोन्मिताः ॥ २५० ॥**
**प्रस्थमामलकानां च क्वाथयेत्सलिलार्मणे ॥**
**तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ २५१ ॥**
**कल्कैः कुटजभूनिम्बघनयष्ट्याह्वचन्दनैः ॥**
**सपिप्पलीकैस्तत्सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥२५२**
**घ्राणकर्णाक्षिवदनवर्त्मरोगव्रणापहम् ॥**
**रक्तपित्तकफस्वेदक्लेदपूयोपशोषणम् ॥ २५३ ॥**
**कामलाज्वरवीसर्पगण्डमालाहरं परम् ॥**

त्रिफलेत्यादि । शुक्रयोः नेत्रगतरोगयोः ॥२४५–२५३॥—

**शृतं पयः शर्करा च पिप्पल्यो मधुसर्पिषी ॥२५४॥**
**पञ्चसारमिदं पेयं मथितं विषमज्वरे ॥**
**क्षतक्षीणे क्षये श्वासे हृद्रोगे चैतदिष्यते ॥ २५५ ॥**

पञ्चसारमाह—शृतं पय इत्यादि । शृतं पयः क्वथितं दुग्धं, मथितं 'हस्तेन' इति शेषः ॥ २५४ ॥ २५५ ॥

**लाक्षाविश्वनिशामूर्वामञ्जिष्ठास्वर्जिकामयैः ॥**
**षड्गुणेन च तक्रेण सिद्धं तैलं ज्वरान्तकृत् ॥२५६॥**

इदानीमन्तःपरिमार्जनमभिधाय बहिःपरिमार्जनार्थं तैलमाह—लाक्षेत्यादि । विश्वं शुण्ठी, निशा हरिद्रा, मूर्वा चोरस्नायुः, आमयं कुष्ठम् । लाक्षादिकल्कस्याष्टौ पलानि, तैलस्य द्वात्रिंशत्पलानि, तैलात् षड्गुणेन तक्रेण तैलं साधनीयम् । ज्वरान्तकृत् शीतपूर्वदाहपूर्वयोर्विनाशकारीत्यर्थः ॥ २५६ ॥

**क्षीरिवृक्षासनारिष्टजम्बूसप्तच्छदार्जुनैः ॥**
**शिरीषखदिरास्फोटामृतवल्ल्याटरूषकैः ॥ २५७ ॥**
**कटुकापर्पटोशीरवचातेजोवतीघनैः ॥**
**साधितं तैलमभ्यङ्गादाशु जीर्णज्वरापहम् ॥ २५८ ॥**

क्षीरिवृक्षेत्यादि । क्षीरिवृक्षा न्यग्रोधादयः, असनो बीजकः, अरिष्टो निम्बः, सप्तच्छदः सप्तपर्णः, अर्जुनः ककुभः, आस्फोटा सारिवा अर्को वा, तेजोवती काकमर्दनिका । क्षीरिवृक्षादिकल्केनाष्टपलमितेन तैलप्रस्थं चतुर्गुणजलेन साधयेत् ॥ २५७ ॥ २५८ ॥

**निर्विषैर्भुजगैर्नागैर्विनीतैः कृततस्करैः ॥**
**त्रासयेदागमे चैनं तदहर्भोजयेन्न च ॥ २५९ ॥**
**अत्यभिष्यन्दिगुरुभिर्वामयेद्वा पुनः पुनः ॥**
**मद्यं तीक्ष्णं पाययेत घृतं वा ज्वरनाशनम् ॥ २६० ॥**
**पुराणं वा घृतं काममुदारं वा विरेचनम् ॥**
**निरूहयेद्वा मतिमान् सुस्विन्नं तदहर्नरम् ॥ २६१ ॥**

इदानीं विषमज्वराणां विशिष्टावस्थायां भूताभिषङ्गजादीनां वा विषमज्वराणां चिकित्सामाह—निर्विषैरित्यादि । निर्विषैः भुजगैः डुण्डुभाहिपताकाप्रभृतिभिः, नागैः हस्तिभिः, विनीतैः हस्तिशिक्षाविद्भिर्विनम्रीकृतैः, कृततस्करैः मिथ्याध्यारोपित-

१ 'पूर्वोक्तकल्कयुक्तमित्यर्थः' इति पा० ।

१ 'विनीतफलैः' इति पा० ।

चौरैः । आगमे ज्वरागमकाले, यस्माज्ज्वरारम्भोन्मुखस्य दोषस्य निर्विषभुजगादिभयात् क्षुभितेन वायुना विक्षेपणं क्रियते तस्माज्ज्वरानुत्पादो ज्वरकालविसारकत्वाद्वा । तदहरिति ज्वरागमनदिने, न भोजयेन्न चाश्नीयात्; शेषदोषक्षपणार्थम् । अल्पाभिष्यन्दिगुरुभिरित्यादि । अल्पाभिष्यन्दिगुरुभिः क्षीरदधियवागूभिः मदनफलसंस्कृताभिर्वामयेत्, तदहरिति शेषः । अल्पाभिष्यन्द्यादिभिर्यद्वमनं तद्बलरक्षणार्थम् । मद्यं तीक्ष्णमित्यादि । घृतं वा ज्वरनाशनं षट्पलं; यद्येवं 'घृतं प्लीहोदरोक्तं यत्' इत्यनेन तस्योक्तेः कुतः पुनरभिधानम्? उच्यते, कामं तत्पानस्य तदहः प्रतिपादनार्थम् । पुराणं घृतमौषधार्थं संस्कृतं पाययेत् । कामं स्वेच्छया, उदारं विरेचनमपीडाकरं, नल्पशिथिलाशयस्य विरेचनानर्हस्य विधेयम् । तं विरेचनार्थं पुनर्निरूहयेत् । तदहरिति सर्वत्र संबन्धनीयम् ॥ २५९-२६१ ॥

**अजाव्योश्चर्मरोमाणि वचा कुष्ठं पलङ्कषा ॥**
**निम्बपत्रं मधुयुतं धूपनं तस्य दापयेत् ॥ २६२ ॥**

विषमज्वरे धूपनमाह—अजेत्यादि । अजा छागी, अविः मेषी, पलङ्कषा गुग्गुलुः । विषमज्वरोक्तोऽप्यसौ योगो जीर्णज्वरे भूतविषमज्वरे च प्रयोक्तव्यः, समानतन्त्रोक्तत्वात् ॥ २६२ ॥

**बैडालं वा शकृद्योज्यं वेपमानस्य धूपनम् ॥**

अवस्थाविशेषेण धूपनमाह—बैडालमित्यादि । बैडालं शकृत् बिडालविष्ठा ॥—

**पिप्पली सैन्धवं तैलं नेपाली चेक्षणाञ्जनम् ॥२६३॥**

विषमज्वरेऽञ्जनमाह—पिप्पलीत्यादि । यद्यपि अञ्जनमित्युक्तेऽपि नेत्राञ्जनं प्राप्तं, तथाऽप्यत्रेक्षणाञ्जनमिति यदुक्तं तदभ्यञ्जवाचिनोऽञ्जनशब्दस्य निषेधार्थम् ॥ २६३ ॥

**उदरोक्तानि सर्पींषि यान्युक्तानि पुरा मया ॥**
**कल्पोक्तं चाजितं सर्पिः सेव्यमानं ज्वरं जयेत् २६४**

इदानीं विषमज्वरेऽतिदेशेन चिकित्सितमाह—उदरोक्तानि सर्पींषीत्यादि । कल्पोक्तं कल्पस्थानोक्तम् । अजितम् अजेयाख्यम् । केचित् 'यान्युक्तानि पुरा मया' इत्यत्र 'कुर्यात् सर्वगणेषु च' इति पठन्ति, सर्वज्वरसमूहेष्विति च व्याख्यानयन्ति । अपरे तु 'सर्वज्वरेषु च' इति पठन्ति ॥ २६४ ॥

**भूतविद्यासमुद्दिष्टैर्बन्धावेशनपूजनैः ॥**
**जयेद्भूताभिषङ्गोत्थं**

भूतज्वरे चिकित्सितमतिदेशेनाह—भूतविद्यासमुद्दिष्टैरित्यादि । बन्धः समन्त्रे रज्ज्वादिभिः, आवेशनं समन्त्रसर्षपादिताडनं, पूजनं बल्युपहारस्तुत्यादिभिः । यद्यपि निदानप्रस्तावे पूर्वं विषादिज्वरस्योपदेशः पश्चाद्भूताभिषङ्गजस्य, तथाऽप्यत्र पूर्वं यद्भूताभिषङ्गज्वरचिकित्सितमुक्तं तद्भूतविद्यासमुद्दिष्टस्य विधेर्विषमज्वरेऽपि हितत्वं बोधयति ॥—

**विज्ञानाद्यैश्च मानसम् ॥ २६५ ॥**

विज्ञानाद्यैरिति मानसे ज्वरे विज्ञानाद्यैर्जयेदिति संबन्धः । आदिशब्दात् धैर्यस्मृतिज्ञानसमाधयो गृह्यन्ते । मानसं कामशोकक्रोधभयजम् । विज्ञानाद्यैरित्यत्र 'मनःसान्त्वैश्च' इति केचित् पठन्ति, मनःप्रसादनैरिति च व्याख्यानयन्ति ॥ २६५ ॥

**श्रमक्षयोत्थे भुञ्जीत घृताभ्यक्तो रसौदनम् ॥**

श्रमक्षयोत्थे भुञ्जीतेत्यादि । यद्यपि रसौदनभोजनं पूर्वमेवोक्तं, तथाऽपि घृताभ्यङ्गयोगादधिकफलदर्शनार्थमत्रोक्तम् ॥—

**अभिशापाभिचारोत्थौ ज्वरौ होमादिना जयेत् २६६**

अभिशापाभिचारोत्थावित्यादि । अभिशापः सिद्धादीनामाक्रोशः, अभिचारो यन्त्रमन्त्रादिभिरवपीडनं, आदिशब्दात् शान्तिप्रायश्चित्तमङ्गलजपादयः ॥ २६६ ॥

**दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडितम् ॥**

दानस्वस्त्ययनातिथ्यैरित्यादि । स्वस्त्ययनम् आशीर्वादः, आतिथ्यम् अतिथिपूजनम् । उत्पातः अनिष्टसूचकं निर्घातादि, ग्रहा आदित्यादयः ॥—

**अभिघातज्वरे कुर्यात् क्रियामुष्णविवर्जिताम् २६७**
**कषायमधुरां स्निग्धां यथादोषमथापि वा ॥**

अभिघातज्वरे कुर्यादित्यादि । यस्माद्वातरक्तबहुलोऽभिघातज्वरः तस्मादेवंभूतात्तत्र क्रियाः कार्याः ॥ २६७ ॥—

**ओषधीगन्धविषजौ विषपित्तप्रसाधनैः ॥ २६८ ॥**
**जयेत् कषायं च हितं सर्वगन्धकृतं तथा ॥**
**निम्बदारुकषायं वा हितं सौमनसं यथा ॥ २६९ ॥**

ओषधीगन्धविषजावित्यादि । विषपित्तप्रसाधनैः विषपित्तचिकित्सितैरित्यर्थः । अन्ये 'विषपीतप्रसाधनैः' इति पठन्ति, व्याख्यानयन्ति च—विषपीतस्य यानि प्रसाधनानि चिकित्सितानि तैरित्यर्थः । ओषधीगन्धविषजज्वरयोरपरमपि योगमाह—जयेदित्यादि । सर्वगन्धकृतम् एलादिकृतं, सौमनसं जातीकृतम् । भूताभिषङ्गादिजानां ज्वराणां विषमज्वरमध्ये व्यतिक्रमेण यदुपादानं तद्भूताभिषङ्गादिजा अपि ज्वराः प्रायेण वैषम्येण भवन्तीति बोधयति ॥ २६८ ॥ २६९ ॥

**यवान्नविकृतिः सर्पिर्मद्यं च विषमे हितम् ॥**

यवान्नविकृतिरित्यादि । यवान्नविकृतिः यवभक्ष्यविकारः । सर्पिर्मद्ययोर्विषमज्वरेऽत्यन्तहितत्वोपादानार्थं पुनरभिधानम् । अन्ये 'यावान्नविकृतिः' इति पठन्ति; यावान्नो यवौदनः, विकृतिः यवविकारः; यद्यपि यवविकृतिशब्देनैव यवौदनो लब्धस्तथाऽपि यवौदनस्यात्यन्तहितत्वोपादानार्थं यावान्नग्रहणमिति च व्याख्यानयन्ति ॥—

**संपूजयेद्द्विजान् गाश्च देवमीशानमम्बिकाम् ॥२७०॥**

विषमज्वरे युक्तिव्यपाश्रयं चिकित्सितमभिधायेदानीं दैवव्यपाश्रयमाह—संपूजयेदित्यादि । ईशानो महेश्वरः, अम्बिका चण्डी, द्विजादिपूजनाद्दुरितोपशान्तिर्धर्मोत्पत्तिश्च ॥ २७० ॥

कफवातोत्थयोश्चापि ज्वरयोः शीतपीडितम् ॥
दिह्यादुष्णेन वर्गेण परश्चोष्णो विधिर्हितः ॥ २७१ ॥
सिञ्चेत् कोष्णैरारनालशुक्तगोमूत्रमस्तुभिः ॥
दिह्यात् पलाशैः पिष्टैर्वा सुरसार्जकशिग्रुजैः ॥२७२॥
क्षारतैलेन वाऽभ्यङ्गः सशुक्तेन विधीयते ॥
पानमारग्वधादेश्च क्वथितस्य विशेषतः ॥ २७३ ॥
अवगाहः सुखोष्णश्च वातघ्नक्वाथयोजितः ॥
जित्वा शीतं क्रमैरेभिः सुखोष्णजलसेचितम् २७४
प्रवेश्यौर्णिककार्पासकौशेयाम्बरसंवृतम् ॥
शाययेत् क्षामदेहं च कालागुरुविभूषितम् ॥२७५॥
स्तनाढ्या रूपसंपन्नाः कुशला नवयौवनाः ॥
भजेयुः प्रमदा गात्रैः शीतदैन्यापहाः शुभाः ॥२७६॥
शरच्छशाङ्कवदना नीलोत्पलविलोचनाः ॥
स्फुरितभ्रूलताभङ्गललाटतटकम्पनाः ॥ २७७ ॥
प्रलम्बबिम्बप्रचलद्बिम्बीफलनिभाधराः[1] ॥
कृशोदर्योऽतिविस्तीर्णजघनोद्वहनालसाः ॥ २७८ ॥
कुङ्कुमागुरुदिग्धाङ्ग्यो घनतुङ्गपयोधराः ॥
सुगन्धिधूपितश्लक्ष्णस्रस्तांशुकविभूषणाः ॥ २७९ ॥
गाढमालिङ्गयेयुस्तं तरुं वनलता इव ॥
प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत् पुनः ॥२८०॥
तासामङ्गपरिष्वङ्गनिवारितहिमज्वरम् ॥
भोजयेद्धितमन्नं च यथा सुखमवाप्नुयात् ॥ २८१ ॥

इदानीं जीर्णज्वराणां द्वन्द्वजानां बहिःपरिमार्जनप्रलेपाभिषेकाभ्यङ्गशयनानुलेपनस्त्रीसंवाहनादिकमाह—कफवातोत्थयोश्चापि ज्वरयोरित्यादि । दिह्यात् लिम्पेत् । उष्णेन वर्गेण भद्रदार्वादिना सुरसादिना एलादिना वा । परश्चोष्णो विधिरिति पर उत्कृष्टः, उष्णो विधिः स्वेदः । आरनालं काञ्जिकं, शुक्तं चुक्रं तच्च तण्डुलाम्बुसौवीरादिभिः कृतसन्धानं, तथा च तन्त्रान्तरे पठ्यते—"प्रस्थमेकं तु भक्तस्य त्रयं सौवीरकस्य च । अर्धं प्रस्थं तु दध्नश्च भिषगम्लस्य दापयेत् ॥ पलषोडशकं चैव शोधितस्यार्द्रकस्य च । सैन्धवं पिप्पलीं चैव चूर्णीकृत्य विनिक्षिपेत् ॥ स्थापयेत् सुदृढे भाण्डे सर्पिषा परिभाविते । हेमन्ते वासराण्यष्टौ वसन्ते षट् दिनानि च ॥ प्रावृट्काले चतुरहं वर्षास्वपि च वासयेत् । अत ऊर्ध्वं क्षिपेच्चूर्णं चातुर्जातात्पलद्वयम्"—इत्यादि । अस्य शुक्तस्य गुणवर्णनं बहुत्वान्न लिखितम् । पलाशैः पत्रैः । अर्जकः कुठेरकः; अन्ये सितपर्णासमाहुः; शिग्रुः शोभाञ्जनानुकारी विटपः, शोभाञ्जनमपरे । क्षारतैलं क्षारेण सिद्धं तैलं क्षारतैलमाहुः; अपरे तन्त्रान्तरोक्तं 'शुष्कमूलकशुण्ठीनां क्षार' इत्यादिकं क्षारतैलमिच्छन्ति; तन्न, तस्य सशुक्तस्य सशुक्तेनेति विशेषणवैयर्थ्यात् । अवगाहो द्रवपूर्णभाजने निमज्जनं, सुखोष्ण ईषदुष्णः । क्रमैरेभिः उष्णवर्गप्रलेपादिभिः । प्रवेश्य 'निवातागारे' इति शेषः । और्णिका नानाप्रकाराः कम्बलाः, कार्पासाः कार्पासतन्तुरचिताः, कौशेयाः कोशकारक्रिमिलालातन्तुरचिताः 'तसर'[1] इति लोके । क्षामदेहमित्यादि । एवंभूताः स्त्रियो ग्लानदेहं कृष्णागुरुविभूषितं पुरुषं मृदुमर्दनार्थं गात्रैः कृत्वा भजेयुरिति संबन्धः । कुशलाः कामसूत्रज्ञाः । दैन्यं क्लिष्टचेतनात्वम् । शरच्छशाङ्कवदना इत्यादि । एवंविधाश्च ललनास्तं पुरुषं गाढमालिङ्गयेयुरिति संबन्धः । प्रह्लादमित्यादि । अस्य पुरुषस्य प्रह्लादं हर्षं ज्ञात्वा ताः पूर्वोक्तवनिता अपनयेत्, अन्यथा तत्संसर्गान्महाननर्थ इति । हितमन्नं वातश्लेष्महरम् आहारम् । 'अवगाहः सुखोष्णश्च वातघ्नक्वाथसंयुतः' इत्यत्र 'अवगाहः सुखोष्णश्च वातघ्नः क्वाथभोजने' इति केचित् पठन्ति, व्याख्यानयन्ति च–वातघ्नोऽवगाहः कार्यः, सुखोष्णे च क्वाथभोजने कार्ये । अत्र द्वितीयश्चकारो लुप्तो ज्ञेयः; तेन क्वाथभोजनेऽपि वातघ्ने बोद्धव्ये । प्रवेश्यौर्णिकेत्यत्र 'प्रवेण्यौर्णिके' इति केचित् पठन्ति, व्याख्यानयन्ति च–प्रवेणी सूचीवाणाख्यो वस्त्रविशेषः । 'कालागुरुविभूषितं' इत्यत्र 'कृष्णागुरुविभावितं' इति केचित् पठन्ति, कृष्णागुरुलिप्तमिति च व्याख्यानयन्ति ॥ २७१–२८१ ॥

दाहाभिभूते तु विधिं कुर्याद्दाहविनाशनम् ॥
मधुफाणितयुक्तेन निम्बपत्राम्भसाऽपि वा ॥२८२॥
दाहज्वरार्तं मतिमान् वामयेत् क्षिप्रमेव च ॥
शतधौतघृताभ्यक्तं दिह्याद्वा यवशक्तुभिः ॥ २८३ ॥
कोलामलकसंयुक्तैः शुक्तधान्याम्लसंयुतैः ॥
अम्लपिष्टैः सुशीतैश्च फेनिलापल्लवैस्तथा ॥ २८४ ॥
अम्लपिष्टैः सुशीतैर्वा पलाशतरुजैर्दिहेत् ॥
बदरीपल्लवोत्थेन फेनेनारिष्टकस्य च ॥ २८५ ॥
लिप्तेऽङ्गे दाहतृण्मूर्च्छाः प्रशाम्यन्ति च सर्वशः ॥

दाहाभिभूते इत्यादि । दाहविनाशनविधिः वक्ष्यमाणः । ननु यथा शीतप्रतीकारे पूर्वं 'कफवातोत्थयोश्चापि ज्वरयोः शीतपीडितम्' इत्युक्तं तथाऽत्रापि पित्तज्वराभिभूत इति कथं नोक्तं? सत्यं, ज्वररहितदाहे असौ विधिः कार्य इति दर्शनार्थम् । मधुफाणितयुक्तेनेत्यादि । 'मधुफाणितमिश्रेण' इति केचित् पठन्ति । ते च 'अपि वा' इति शब्दं पादपूरणार्थं वर्णयित्वा निम्बपत्राम्भसेत्यस्य विशेषणमाचक्षते । यद्यपि कफे वमनं प्रयुज्यते न पित्ते, तथाऽपि प्रवृद्धं पित्तं किञ्चिद्वमनेनापि निर्ह्रियते । तथा च तन्त्रान्तरं,–"स्वस्थानगतमुत्क्लिष्टमग्निनिर्वापकं भिषक् । पित्तं ज्ञात्वा विरेकेण वमनेनाथवा हरेत्"—इति । अपरे तु 'मधुफाणितमिश्रेण निम्बपत्राम्भसा पिबेत्' इति पठन्ति । शतधौतघृताभ्यक्तमित्यादि । शतवारान् शीतजलेन धौतं फेनिलं घृतं शतधौतघृतम् । दिह्यात् लिम्पेत् । शुक्तं चुक्रं, धान्याम्लं काञ्जिकं;

१ 'प्रलम्बविलसत्काञ्च्यो बिम्बीफलनिभाधराः' इति पा० ।

१ 'तसरीकृता इत्यर्थः' इति पा० ।

'शुक्तधान्याम्लसंयुतैः' इत्यत्रापरे तु 'धान्याम्लैरपि बुद्धिमान्' इति पठन्ति; तत्र धान्याम्लयुक्तैर्यवशक्तुभिरिति ज्ञेयम् । अम्लपिष्टैरित्यादि । अम्लं काञ्जिकं, फेनिला उपोदिका । तथाशब्दात् कोलामलकशुक्तसंयुक्तैः फेनिलापल्लवैर्लिम्पेदिति ज्ञेयम् । अम्लपिष्टैः सुशीतैरित्यादि । पलाशतरुजैः पलाशपल्लवैः । अरिष्टो निम्बः, फेनिलावृक्षो वा । फेनकल्पनामाह—बदरीपल्लवान् काञ्जिकपिष्टान् काञ्जिकपूर्णभाजने निक्षिप्य करेण विलोडयेत्, ततो यः फेन उत्तिष्ठेत् तेन लिम्पेत् ॥२८२-२८५॥—

**यवार्धकुडवं पिष्ट्वा मञ्जिष्ठार्धपलं तथा ॥ २८६ ॥**
**अम्लप्रस्थशतोन्मिश्रं तैलप्रस्थं विपाचयेत् ॥**
**एतत् प्रह्लादनं तैलं ज्वरदाहविनाशनम् ॥ २८७ ॥**

प्रह्लादनतैलमाह—यवार्धकुडवमित्यादि । अम्लप्रस्थशतोन्मिश्रं काञ्जिकप्रस्थशतयुक्तम् ॥ २८६ ॥ २८७ ॥

**न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यो गणः ॥**
**उत्पलादिर्गणो यस्तु पिष्टैर्वा तैः प्रलेपयेत् ॥ २८८ ॥**
**तत्कषायाम्लसंसिद्धाः स्नेहाश्चाभ्यञ्जने हिताः ॥**
**तेषां शीतकषाये वा दाहार्तमवगाहयेत् ॥ २८९ ॥**
**दाहवेगे त्वतिक्रान्ते तस्मादुद्धृत्य मानवम् ॥**
**परिषिच्याम्बुभिः शीतैः प्रलिम्पेच्चन्दनादिभिः २९०**
**ग्लानं वा दीनमनसमाश्लिषेयुर्वराङ्गनाः ॥**
**पेलवक्षौमसंवीताश्चन्दनार्द्रपयोधराः ॥ २९१ ॥**
**विभ्रत्योऽब्जस्रजश्चित्रा मणिरत्नविभूषिताः ॥**
**भजेयुस्ताः स्तनैः शीतैः स्पृशन्त्योऽम्बुरुहैः सुखैः ॥**
**प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत् पुनः ॥**
**हितं च भोजयेदन्नं तथाऽऽप्नोति सुखं महत् ॥२९२॥**

तत्कषायाम्लसंसिद्धा इति न्यग्रोधादिकाकोल्याद्युत्पलादिक्वाथकाञ्जिकविपक्वा इत्यर्थः । तेषामित्यादि । तेषां न्यग्रोधादीनाम् । दाहवेगे त्वतिक्रान्ते इत्यादि । तस्मात् न्यग्रोधादिप्रभृतिशीतकषायावगाहात् । चन्दनादिना चन्दनादिगणेन; अपरे तु चन्दनं श्रीचन्दनम्, आदिशब्दात् उशीरलामज्जकादय इति व्याख्यानयन्ति । ग्लानं वा दीनमनसमित्यादि । दीनमनसं क्लिष्टचित्तम् । आश्लिषेयुः आलिङ्गेयुः । पेलवं सुकुमारं, क्षौमं दुकूलं, पट्टवस्त्रमित्यर्थः । संवीताः सम्यगाच्छादिताः । विभ्रत्यो धारयन्त्यः, अब्जस्रज उत्पलादिमालाः, चित्रा नानावर्णाः । भजेयुरित्यादि । ताः स्त्रियः, अम्बुरुहैः सुखैरुत्पलादिभिर्विकचैः स्पृशन्त्यः, स्तनैः कृत्वा भजेयुरिति पिण्डार्थः । हितमन्नं पित्तहरम् ॥ २८८-२९२ ॥

**पित्तज्वरोक्तं शमनं विरेकोऽन्यद्धितं च यत् ॥**

ज्वरदाहेऽतिदेशेनापरमपि चिकित्सितमाह—पित्तज्वरोक्तमित्यादि । अन्यदपि यद्धितं भवेत्तत्कर्तव्यमित्यर्थः ॥—

१ 'विरेकस्तद्धितं' इति पा० ।

**निर्हरेत्पित्तमेवादौ दोषेषु समवायिषु ॥ २९४ ॥**
**दुर्निवारतरं तद्धि ज्वरार्तानां विशेषतः ॥**

इदानीं दाहप्रतीकारप्रस्तावे संसर्गज्वरे तावत् प्रकृतिकालापेक्षया क्वचित् सन्निपातेऽपि पित्तस्यादौ प्रतीकारार्थमाह—निर्हरेदित्यादि । समवायिषु संसर्गिषु, ननु सन्निपातेषु; तत्र प्रतीकारस्यादावुक्तत्वात् । पित्तान्वितसंसर्गस्य द्वित्वात् समवायिष्वित्यत्र बहुवचनं न संभवति, तथाऽपि कालप्रकृत्यपेक्षया सन्निपातेऽपि कफविरोधेनादौ कदाचित् पित्तस्य प्रतिक्रिया कार्येति दर्शनार्थं बहुवचनम् । अन्ये तु 'शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु' इति पठन्ति, व्याख्यानयन्ति च—समवायिषु ज्वरेषु सन्निपातज्वरेष्वादौ पित्तं शमयेत् लङ्घनाम्बुयवाग्वादिभिः प्रकृतिस्थं कुर्यात्, यस्मादग्निमुपहत्य ज्वरो भवति, अग्निश्च पित्तान्तर्गतः, तस्मात् पित्तसंशमने आदौ यत्नः कार्यः । तथा चोक्तं,—"समवाये तु दोषाणां पूर्वं पित्तमुपाचरेत् । ज्वरे चैवातिसारे च सर्वत्रान्यत्र मारुतम्"—इति । ननु, सन्निपातज्वरेष्वादावन्यत्रामश्लेष्मणो निर्हरणं कथितं, तथा च—"सन्निपातज्वरे पूर्वं कुर्यादामविशोषणम् । पश्चाच्छ्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ"—इति, तत् कथमत्र सन्निपातेष्वादौ पित्तशमनं ? सत्यं, शमनशब्देनात्र प्रकृतिस्थापनमुच्यते न निर्हरणमित्यदोषः । दुर्निवारतरमिति वातकफावपि समवाये दुर्निवारौ पित्तं च दुर्निवारतरम् । हि यस्मादर्थे । अत्र निबन्धकारैर्बहूक्तं तच्च शिष्यबुद्धिव्याकुलहेतुत्वात् परिहृतम् ॥ २९४ ॥—

**छर्दिमूर्च्छापिपासादीनविरोधाज्ज्वरस्य च ॥ २९५ ॥**
**उपद्रवाञ्जयेच्चापि प्रत्यनीकेन हेतुना ॥**

इदानीं ज्वरचिकित्सितमभिधायोपद्रवचिकित्सितमाह—छर्दिमूर्च्छेत्यादि । छर्द्यादीनुपद्रवान् ज्वरस्याविरोधेन प्रत्यनीकेन हेतुना जयेदिति संबन्धः । ननु, छर्द्यादय उपद्रवाः कथं प्रोच्यन्ते, यावता ज्वरलक्षणान्येतानि ? सत्यं, ये ज्वरेण सहोत्पन्नाश्छर्द्यादयस्ते ज्वरलक्षणानि, ये तु ज्वरस्योत्तरकालजास्त उपद्रवाः; तथा चोक्तं,—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः । उपक्रमाविरोधी च स उपद्रव उच्यते"—इति । यद्यपि प्रागुक्तात्—'सोपद्रवमन्योन्याविरोधेनोपचरेद्बलवन्तमुपद्रवं च'—इति वाक्यादेवान्योन्याविरोधेन चिकित्सा सिद्धा, तथाऽपि 'अविरोधाज्ज्वरस्य' इति यत् पुनरुक्तं तन्नियमार्थं; तेन बलवन्तमुपद्रवं विहायान्यत्र सर्वत्राप्यविरोधेनैव चिकित्सा कर्तव्येति; अन्ये तु पूर्वं सामान्येनोक्तमत्र तु विशेषेणेति न दोषः । प्रत्यनीकेन स्वचिकित्सितेन । यद्येवं तर्हि हेतुनेति पदं व्यर्थं; तन्न, युक्तिव्यपाश्रयदैवव्यपाश्रयसत्त्वावजयेति त्रिप्रकारस्यापि चिकित्सितस्य संग्रहार्थत्वात्; अथवा हेतुग्रहणं

१ 'पित्तान्वितसंसर्गस्यापि द्वयत्वात्' इति पा० । २ 'पित्तसंशमनोत्पादे यत्नः' इति पा० । ३ 'उपक्रमाविघाती' इति पा० ।

हेतुविपरीतप्राप्त्यर्थं, यस्मात्रिविधमौषधं-हेतुविपरीतं व्याधिविपरीतं, तदर्थकारि चेति ॥ २९५ ॥—

**विशेषमपरं चात्र शृणूपद्रवनाशनम् ॥ २९६ ॥**
**मधुकं रजनी मुस्तं दाडिमं साम्लवेतसम् ॥**
**अञ्जनं तिन्तिडीकं च नलदं पत्रमुत्पलम् ॥ २९७ ॥**
**त्वचं व्याघ्रनखं चैव मातुलुङ्गरसो मधु ॥**
**दिह्यादेभिर्ज्वरार्तस्य मधुशुक्तयुतैः शिरः ॥ २९८ ॥**
**शिरोभितापसंमोहवमिहिक्काप्रवेपथून् ॥**
**प्रदेहो नाशयत्येष ज्वरितानामुपद्रवान् ॥ २९९ ॥**

विशेषमपरमित्यादि । अञ्जनं रसाञ्जनं, नलदं मांसी, पत्रं पत्रकं, उत्पलं नीलोत्पलं, व्याघ्रनखो नखः । मधुशुक्तं जम्बीररसकृतः सन्धानविशेषः; तथा चोक्तं,—"जम्बीरस्य फलरसं पिप्पलीचूर्णसंयुतम् । मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् ॥ मासेन तज्जातरसं मधुशुक्तं प्रकीर्तितम्"—इति । प्रदिह्यात् लिम्पेत् । शिरोभितापः शिरोरुक् । संमोहो मूर्च्छा ॥ २९६-२९९ ॥

**मधूकमथ ह्रीबेरमुत्पलानि मधूलिकाम् ॥ ३०० ॥**
**लीढ्वा चूर्णानि मधुना सर्पिषा च जयेद्वमिम् ॥**
**कफप्रसेकासृक्पित्तहिक्काश्वासांश्च दारुणान् ॥३०१॥**

मधूकमित्यादि । ह्रीबेरं वालकं, मधूलिका जलयष्टी ॥ ३०० ॥ ३०१ ॥

**लिहन् ज्वरार्तस्त्रिफलां पिप्पलीं च समाक्षिकाम् ॥**
**कासे श्वासे च मधुना सर्पिषा च सुखी भवेत् ३०२**

लिहन् ज्वरार्तस्त्रिफलामित्यादि । अत्र योगे यन्मधुनो वारद्वयमुपादानं तदेकस्य मधुनः पेष्यद्रव्यवत् प्रमाणं, अन्यस्य त्वालोडनवत्प्रमाणम् ॥ ३०२ ॥

**विदारी दाडिमं लोध्रं दधित्थं बीजपूरकम् ॥**
**एभिः प्रदिह्यान्मूर्धानं तृड्दाहार्तस्य देहिनः ॥३०३॥**

विदारीमित्यादि । दधित्थं कपित्थम् ॥ ३०३ ॥

**दाडिमस्य सितायाश्च द्राक्षामलकयोस्तथा ॥**
**वैरस्ये धारयेत् कल्कं गण्डूषं च यथाहितम् ॥३०४॥**
**क्षीरेक्षुरसमाक्षीकसर्पिस्तैलोष्णवारिभिः ॥**

दाडिमस्येत्यादि । वैरस्ये मुखवैरस्ये । क्षीरेक्षुरसमाध्वीकेत्यादि । माक्षीकं मधु, अत्रापि मुखवैरस्ये धारयेदिति योजनीयम् ॥ ३०४ ॥—

**शून्ये मूर्ध्नि हितं नस्यं जीवनीयशृतं घृतम् ॥३०५॥**

शून्ये इत्यादि । शून्ये रिक्ते । जीवनीयानि काकोल्यादीनि दश । तथा चोक्तं,—"जीवन्ती काकोल्यौ द्वे मेदे मुद्गमाषपर्ण्यौ च । जीवकर्षभकौ मधुकं चेति गणो जीवनीयाख्यः" ॥३०५॥

**चूर्णितैस्त्रिफलाश्यामात्रिवृत्पिप्पलिसंयुतैः ॥**
**सक्षौद्रः शर्करायुक्तो विरेकस्तु प्रशस्यते ॥ ३०६ ॥**
**पक्वे पित्तज्वरे रक्ते चोर्ध्वगे वेपथौ तथा ॥**

चूर्णितैरित्यादि । श्यामा वृद्धदारकः । ऊर्ध्वगे ऊर्ध्वप्रवृत्ते रक्ते ॥ ३०६ ॥—

**कफवातोत्थयोरेवं स्नेहाभ्यङ्गैर्विशोधयेत् ॥ ३०७ ॥**

कफवातोत्थयोरेवमित्यादि । विशोधयेत् विशुद्धिं नयेत्, शमं नयेदिति तात्पर्यार्थः । कफवाताविति कर्मपदं शेषीभूतमत्र योजनीयम् ॥ ३०७ ॥

**हृतदोषो भ्रमार्तस्तु लिह्यात् क्षौद्रसिताभयाः ॥**

हृतेत्यादि । हृतदोषोऽपि यो भ्रमार्तो भवेत् स क्षौद्रेण सिताभया लिह्यादिति पिण्डार्थः ॥—

**वातघ्नमधुरैर्योज्या निरूहा वातजे ज्वरे ॥ ३०८ ॥**
**अवेक्ष्य दोषं प्राणं च यथास्वं चानुवासनाः ॥**

इदानीं वातज्वरे निरूहद्रव्याण्याह—वातघ्नमधुरैरित्यादि । वातघ्ना भद्रदार्वादयः, मधुराः काकोल्यादयः । अवेक्ष्य दोषं प्राणं चेति हीनमध्योत्तमादिभेदेन दोषं बलं च वीक्ष्येत्यर्थः । तेनाल्पप्रकुपितदोषे अल्पो निरूहः, मध्यमे मध्यमः, उत्तमे उत्तमः; एवं बलेऽपि । यथास्वं चानुवासना इति वातहरद्रव्यसाधितस्नेहानुवासना योज्या इति ॥ ३०८ ॥—

**उत्पलादिकषायाद्या(ढ्या)श्चन्दनोशीरसंयुताः ३०९**
**शर्करामधुराः शीताः पित्तज्वरहरा मताः ॥**
**आम्रादीनां त्वचं शङ्खं चन्दनं मधुकोत्पले ॥ ३१० ॥**
**गैरिकाञ्जनमञ्जिष्ठामृणालान्यथ पद्मकम् ॥**
**श्लक्ष्णपिष्टं तु पयसा शर्करामधुसंयुतम् ॥ ३११ ॥**
**सुपूतं शीतलं बस्तिं दह्यमानाय दापयेत् ॥**

पित्तज्वरे निरूहद्रव्याण्याह—उत्पलादिकषायाद्या इत्यादि । आद्याः प्रधानाः । उत्पलादिकषायाद्या इत्यादि विशेषणयुक्ता निरूहा ज्ञेयाः । पित्तज्वरे निरूहद्रव्याण्यभिधायापराण्यपि निरूहद्रव्याण्याह—आम्रादीनां न्यग्रोधादिगणान्तर्भूतत्वात् पूर्वद्रव्याणि विहाय आम्रादिकानि द्रव्याणि नन्दीवृक्षकपर्यन्तानि ग्राह्याणि । चन्दनं रक्तचन्दनम्, उत्पलं नीलोत्पलम्, अञ्जनं स्रोतोऽञ्जनं, तदभावे रसाञ्जनं सौवीराञ्जनं वा, मृणालं बिसं, पद्मकं पद्मकाष्ठं, बस्तिः निरूहबस्तिः ॥ ३०९-३११ ॥—

**ज्वरदाहापहं तेषु सिद्धं चैवानुवासनम् ॥ ३१२ ॥**

पित्तज्वरेऽनुवासनद्रव्याण्यतिदेशेनाह—ज्वरदाहापहमित्यादि । तेषु न्यग्रोधादिलक्प्रभृतिषु ॥ ३१२ ॥

**आरग्वधगणक्वाथाः पिप्पल्यादिसमायुताः ॥**
**सक्षौद्रमूत्रा देयाः स्युः कफज्वरविनाशनाः ॥३१३॥**

---

१ 'विभज्य' इति पा० । २ 'आम्रादीनां न्यग्रोधाद्यन्तर्गणा-(ता)नां, तेन न्यग्रोधादिगणे आम्रपूर्वद्रव्याणि विहायाम्रादिकानि द्रव्याणि गणसमाप्तिपर्यन्तानि ग्राह्याणि' इति पा० ।

कफज्वरे निरूहद्रव्याण्याह—आरग्वधेत्यादि । देयाः स्युः दातव्या भवेयुः, 'निरूहा' इति शेषः । अन्ये तु 'आरग्वधादिसंसिद्धाः कफजे क्षौद्रसंयुताः । ज्वरं हन्युर्निरूहाश्च तत्सिद्धाश्चानुवासनाः'—इति पठन्ति ॥ ३१३ ॥

**कफघ्नैरेव संसिद्धा द्रव्यैश्चाप्यनुवासनाः ॥**

कफजेऽनुवासनमाह—कफघ्नैरित्यादि । कफघ्नैर्द्रव्यैः आरग्वधादिभिः ॥—

**संसर्गे सन्निपाते च संसृष्टा बस्तयो हिताः ॥३१४॥**

संसर्गसन्निपातयोर्निरूहद्रव्याण्याह—संसर्गे इत्यादि । संसर्गे सन्निपातादौ, संसृष्टा मिलिताः, बस्तयो निरूहा इति ॥ ३१४ ॥

**संसृष्टैरेव संसृष्टा द्रव्यैश्चाप्यनुवासनाः ॥**

संसर्गसन्निपातयोरतिदेशेनानुवासनद्रव्याण्याह—संसृष्टैरित्यादि । संसृष्टैः संमिलितैः, संसृष्टा मिलिताः ।—

**वातरोगापहाः सर्वे स्नेहा ये सम्यगीरिताः ॥३१५॥**
**विना तैलं त एव स्युर्योज्या मारुतजे ज्वरे ॥**

इदानीं वातज्वरेऽनुवासनविषये तैलनिषेधमाह—वातरोगापहा इत्यादि । सर्वे स्नेहाः सर्पिस्तैलवसामज्जानः, योज्याः 'अनुवासने' इति शेषः ॥ ३१५ ॥—

**निखिलेनोपयोज्याश्च त एवाभ्यञ्जनादिषु ॥ ३१६॥**

वातज्वरेऽनुवासननिषिद्धस्यापि तैलस्याभ्यञ्जनादौ प्रयोगमाह—निखिलेनेत्यादि । निखिलेन सामस्त्येन । एतेन तैलस्यापि ग्रहणम् । त एव सर्पिस्तैलवसामज्जान एव । एते चत्वारः स्नेहा व्यस्ताः समस्ता वा संस्कृताश्च प्रयोज्याः । अत एव षट्कट्वरादितैलमपि शस्यते ॥ ३१६ ॥

**पैत्तिके मधुरैस्तिक्तैः सिद्धं सर्पिश्च पूज्यते ॥**

पित्तज्वरे पुनरभ्यञ्जनार्थं विशिष्टं स्नेहमाह—पैत्तिके मधुरैरित्यादि । पूज्यते अभ्यञ्जनादिषु ॥—

**श्लैष्मिके कटुतिक्तैश्च, संसृष्टानीतरेषु च ॥ ३१७॥**

श्लैष्मिके पानाभ्यञ्जनार्थं स्नेहविशेषमाह—श्लैष्मिके इत्यादि । कटुतिक्तैश्चेत्यत्र सर्पिः सिद्धमिति योजनीयम् । यद्यपि कफस्य तुल्यगुणं सर्पिस्तथाऽपि विशिष्टसंस्कारवशात् कफेऽपि सर्पिः प्रयुज्यते । अन्ये तु चकारात् अनुक्तमपि तैलं कथयन्ति; तन्न, अन्यतन्त्रसंवादाभावात् संसर्गसन्निपातेष्वभ्यञ्जनार्थं विशिष्टस्नेहमाह—संसृष्टानीतरेषु चेति ।—संसृष्टानि सर्पिरादीनि अन्योन्यमिश्राणि तथा वातादिहरद्रव्यैर्मिश्रैरेव साधितानि च; इतरेषु सन्निपातेषु ॥ ३१७ ॥

**हृतावशेषं पित्तं तु त्वक्स्थं जनयति ज्वरम् ॥**
**पिबेदिक्षुरसं तत्र शीतं वा शर्करोदकम् ॥३१८॥**
**शालिषष्टिकयोरन्नमश्नीयात् क्षीरसंप्लुतम् ॥**

इदानीं हृतावशेषस्य पित्तस्य प्रतीकारमाह—हृतावशेषमित्यादि । तत्र हृतावशेषपित्तज्वरे । अन्नम् ओदनम् । यद्यपि त्वक्स्थिते पित्ते बहिःपरिमार्जनं युक्तं नान्तःपरिमार्जनं, तैथाऽपि तद्वीर्ययुक्तस्य रसस्य सर्वतोगमनादन्तःपरिमार्जनमुक्तम् ॥ ३१८ ॥—

**कफवातोत्थयोरेव स्वेदाभ्यङ्गौ प्रयोजयेत् ॥ ३१९॥**

इदानीं कफवातयोरपि हृतावशेषयोः प्रतीकारार्थमाह—कफवातोत्थयोरेवेत्यादि । कफवातोत्थयोरिति हृतावशेषकफवातज्वरयोरित्यर्थः ॥ ३१९ ॥

**घृतं द्वादशरात्रात्तु देयं सर्वज्वरेषु च ॥**
**तेनान्तरेणाशयं स्वं गता दोषा भवन्ति हि ॥ ३२०॥**

अधुना यावता कालेन ज्वरे सर्पिर्देयं तावन्तं कालं सकारणं दर्शयन्नाह—घृतमित्यादि । सर्वज्वरेषु चेति ये ज्वरा लङ्घनोष्णोदकपानपेयापाचनैस्तु पक्वास्तेषु सर्वज्वरेषु द्वादशाहादनन्तरं घृतं देयम् । तेनान्तरेण तेनावसरेण तेन कालेनेत्यर्थः, द्वादशरात्रादूर्ध्वमिति तात्पर्यार्थः । आशयं स्वं गता दोषा इति स्थानमात्मीयं प्राप्ता वातादयो भवन्ति, पाकप्राप्तत्वात् । यद्यप्यष्टाहेन दशाहात्परं वा ज्वरपाको भवति तथाऽपि सन्निपातज्वरस्य द्वादशाहेन पाको भवतीति दर्शनार्थं द्वादशाहग्रहणम् । केचिदत्र नस्यार्थं घृतं पठन्ति; तन्न पठनीयं, नस्यार्थघृतस्य गण्डूषोत्तरं प्रागेवै पठितत्वात् ॥ ३२० ॥

**धातून् प्रक्षोभयन् दोषो मोक्षकाले बलीयते ॥**
**तेन व्याकुलचित्तस्तु म्रियमाण इवेहते ॥ ३२१ ॥**

शान्तिं गच्छत्यपि ज्वरे यथा क्लेशातिशयो भवति तथा दर्शयन्नाह—धातूनित्यादि । मोक्षकाले धातूंश्चालयन् दोषो बलीयते बलीवाचरतीति पिण्डार्थः । ननु, प्रक्षीणावस्थायां कस्माद्दोषो बलीवाचरति? सत्यं, प्रभावात्; यथा दीपो निर्वाणावस्थायां महतीं ज्वालां प्रदर्शयन् निर्वाणं यौति, तद्वदयमपि ज्वरारम्भको दोषो बलीयत इति । केचित् बलीयते बलीयान् गच्छति इति व्याख्यानयन्ति, ईयते इति इदधातोर्दिवादिकस्य कर्तरि प्रयोगात् । अपरे तु 'अवलीयते' इति पठन्ति, व्याख्यानयन्ति च—अवलीयते तादृग्रूपेण नोपलभ्यते । तेन दोषेण, म्रियमाण इवेहते मुमूर्षुवद्गात्रविक्षेपणादिकां क्रियां करोतीत्यर्थः ॥ ३२१ ॥

**लघुत्वं शिरसः स्वेदो मुखमापाण्डु पाकि च ॥**
**क्षवथुश्चान्नकाङ्क्षा च ज्वरमुक्तस्य लक्षणम् ॥३२२॥**

ज्वरमुक्तलक्षणमाह—लघुत्वमित्यादि । लघुत्वं शिरस इति शिरोलघुत्वं, आपाण्डु ईषत्पाण्डु, क्षवथुः छिक्का । ज्वरातीसारयोर्महाव्याधित्वान्मुक्तिलक्षणं कथितं नान्येषाम् । केचिदाचार्या 'धातून् प्रक्षोभयन् दोष' इत्यादिकमनन्तरोक्तं

१ 'तथा तद्वीर्यान्वितरसस्य सर्वतो व्यानविक्षेपणेन त्वचामपि स्पर्शनात्' इति पा० । २ 'केचित्तदेव' इति पा० । ३ 'प्रयोगादिपठितत्वात्' इति पा० । ४ 'निर्वाणयति' इति पा० । ५ 'इति पाठं मन्यन्ते, ते च व्याख्यानयन्ति' इति पा० ।

सन्निपातज्वरमुक्तिलक्षणं, 'लघुत्वं शिरस' इत्यादिकं चेतरज्वरमुक्तिलक्षणमिति ब्रुवते ॥ ३२२ ॥

शम्भुक्रोधोद्भवो घोरो बलवर्णाग्निसादकः ॥
रोगराट् रोघसंघातो ज्वर इत्युपदिश्यते ॥ ३२३ ॥
व्यापित्वात् सर्वसंस्पर्शात् कृच्छ्रत्वादन्तसंभवात् ॥
अन्तको ह्येष भूतानां ज्वर इत्युपदिश्यते ॥ ३२४ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे ज्वरप्रतिषेधो नाम (प्रथमोऽध्यायः, आदित) एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

इदानीं ज्वरस्यातिशयेन प्रतीकरणाय गरीयस्त्वं दर्शयन्नाह—शम्भुक्रोधोद्भव इत्यादि । एतैर्हेतुभिर्ज्वरोऽन्तक इत्युपदिश्यत इति संबन्धः । व्यापित्वमस्य पुरुषपश्वादिसर्वप्राणिव्यापनात्, सर्वसंस्पर्शित्वं समनस्केन्द्रियस्य देहस्य तापनात्, कृच्छ्रत्वम् अग्नेरुपघातादत्यन्तपीडाकरत्वाद्वा, अन्तसंभवत्वं चापरव्याधिग्रस्तस्यापि पुरुषस्य ज्वरेणैव प्राणनाशित्वात् । अन्तक इव अन्तकः, अन्तकारित्वात् । यद्यप्ययमध्यायो निबन्धकारैरन्यक्रमपाठैः पठितः, तथाऽपि मया यथा गुरुणोपदिष्टस्तेन क्रमेण पठितः ॥ ३२३ ॥ ३२४ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गतकायचिकित्सायां ज्वरप्रतिषेधाध्याय एकोनचत्वारिंशत्तमः ॥ ३९ ॥

---

## चत्वारिंशत्तमोऽध्यायः ।

अथातोऽतीसारप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

ज्वरप्रतिषेधानन्तरमभ्युपघातपूर्वकत्वसामान्यादतीसारप्रतिषेधारम्भः प्राप्तः—अथेत्यादि । अतिसरणम् अतीसारः, तस्य प्रतिषेधः चिकित्सितं; तथा चोक्तं—"अतिरत्यर्थवचने, सरतिर्गतिकर्मणि । तस्मात्तदत्यन्तसरणादतीसार इति स्मृतः" इति ॥ १ ॥ २ ॥

गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः ॥
विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः ॥ ३ ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषाद्भयात् ॥
शोकाद्दुष्टाम्बुमद्यातिपानात् सात्म्यर्तुपर्ययात् ॥ ४ ॥
जलातिरमणैर्वेगविघातैः कृमिदोषतः ॥
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ ५ ॥

यतो विज्ञातेऽतिसारे चिकित्सितं क्रियते, अतस्तद्विज्ञानार्थं पूर्वं निदानमाह—गुर्वतिस्निग्धेत्यादि । गुरु मात्रागुणविपाकेभ्यः । अतिशब्दः स्निग्धादिभिः स्थूलान्तैः प्रत्येकं संबध्यते । स्थूलं स्थूलावयवं पिष्टान्नादि । यद्यपि गुरुग्रहणेनैव स्निग्धस्थूलयोः प्राप्तिः, तथाऽप्यतिशयेनातीसारहेतुत्वापादनार्थं तयोर्ग्रहणम् । विरुद्धं हिताहितीयोक्तम्, अध्यशनम् अजीर्णभोजनम्, अजीर्णानि आमविदग्धादीनि । स्नेहाद्यैरिति स्नेहवमनविरेचननिरूहानुवासनैः । अतियुक्तैः अतियोगयुक्तैः । मिथ्याप्रयुक्तैः असम्यग्युक्तैः, यद्यपि मिथ्याप्रयुक्तैरित्यनेनैवातियोगः प्राप्तस्तथाऽप्यतिशयेनातीसारहेतुत्वापादनार्थमतियोगग्रहणम् । विषात् दूषीविषात् । दुष्टाम्बुमद्यातिपानात् वीर्यविपाकस्पर्शैर्दुष्टमम्बु, मद्यं पुनर्दुष्टं नवं व्यापन्नमकालजं वा, तयोराधिक्येन पानात् । सात्म्यर्तुपर्ययात् सात्म्यविपर्ययात् ऋतुविपर्ययाच्चेत्यर्थः । यद्येवं तर्हि असात्म्यैश्चापि भोजनैरिति निष्फलं; तन्न, विशेषहेतुत्वात् । जलातिरमणैः पानीयातिक्रीडनैः । वेगविघातैः मूत्रादिवेगावरोधैः । कृमिदोषतः कृमिप्रकोपात् । केचिदाचार्या गुर्वतिस्निग्धरूक्षेत्यादिसूत्रात् पूर्वमतीसारस्य प्रागुत्पत्तिं पठन्ति, तद्यथा,—"दीर्घसत्रेण यजतः पृषध्रस्य महात्मनः । आलम्भ्याः पशवः क्षीणास्ततो गावः प्रकल्पिताः ॥ तासामुपाकृतानां च गवामत्यर्थसेवनात् । असात्म्यत्वादथोष्णत्वाद्गौरवाच्च विशेषतः ॥ अतिस्नेहाच्च संक्षीणो जाठरोऽग्निस्तदा किल । अतीसारः पुरोत्पन्नो दोषधातुमलाश्रयः ॥ अथ तेनैव कल्पेन संप्रत्येष महागदः"—इति ॥ ३–५ ॥

संशम्यापांधातुरन्तः कृशानुं
वर्चोमिश्रो मारुतेन प्रणुन्नः ॥
वृद्धोऽतीवाधः सरत्येष यस्मा-
द्व्याधिं घोरं तं त्वतीसारमाहुः ॥ ६ ॥

लक्षणं तस्य वक्ष्यते इत्यभिधाय संप्राप्तिरपि लक्षणं भवत्यतो हेतोर्निरुक्तिद्वारेण संप्राप्तिमाह—संशम्यापांधातुरित्यादि । यस्मादन्तरग्निं संशम्य अपांधातुरेवम्भूतोऽतीवाधः सरति तस्मादतीसारमाचार्या आहुरिति पिण्डार्थः । संशम्य मन्दीकृत्य । अपांधातुः कायद्रवः श्लेष्मपित्तरसादिकः । अन्ये तु कफदुष्टं रसं स्वेदं चापांधातुशब्देनाहुः । वर्चोमिश्रः पुरीषयुक्तः । प्रणुन्नः प्रेरितः । वृद्धो वृद्धिं गतः ॥ ६ ॥

एकैकशः सर्वशश्चापि दोषैः
शोकेनान्यः षष्ठ आमेन चोक्तः ॥
केचित् प्राहुर्नैकरूपप्रकारं
नैवेत्येवं काशिराजस्त्ववोचत् ॥ ७ ॥
दोषावस्थास्तस्य नैकप्रकाराः
काले काले व्याधितस्योद्भवन्ति ॥

इदानीमतीसाराणां संख्यामाह—एकैकश इत्यादि । संख्येयनिर्देशादेव संख्यायां लब्धायां षष्ठ इति संख्याकरणं नियमार्थं; तेन द्वन्द्वजा अतीसारा न भवन्ति, व्याधिस्वभावादिति सूचितम् । येऽन्ये तन्त्रान्तरीया वातादिभिर्व्यस्तैः समस्तैश्च चत्वारो, भयशोकाभ्यां च द्वौ, इत्यनया परिपाट्या षट्त्वं मन्यन्ते,

तेषामीदृशोऽभिप्रायः—आमजोऽतीसारः सन्निपातजेऽवरुद्धः, 'आमाजीर्णात् प्रद्रुताः क्षोभयन्तः' इत्युक्तत्वात् । केश्चिद्धारीतादिभिर्द्वन्द्वजादिभेदेन बहवोऽतिसाराः पठिताः, ते धन्वन्तरेरनभिमताः, अतस्तन्निषेधार्थमाह—केचित् प्राहुरित्यादि । केचिन्नैकरूपप्रकारमतीसारमाहुः; कुतः ? द्वन्द्वजरक्तातीसारादिभेदेन बहुप्रकारत्वात्, काशिराजश्च तमतीसारमेव द्वन्द्वजादिभेदेन बहुप्रकारमिति हेतोर्नैवावोचत्; कोऽसौ हेतुर्यद्द्व्यादनन्तप्रकारं तं नावोचदित्याह—दोषावस्था इत्यादि; दोषावस्था आमपक्वरक्ताद्याः, तस्य अतीसारिणः, काले काले खे खे काले; तत्र प्रथमा आमावस्था, ततः पक्वावस्था, तथा पित्तातीसारे पित्तलसेवनाद्रक्तातीसारावस्था भवति; एवमेकदोषारब्धेऽप्यतीसारे दोषान्तरानुबन्धेन द्वन्द्वजाभासता ज्ञेया । एतेनैतदुक्तम्—अतीसारः षट्प्रकार एव, याश्च आमपक्वरक्तान्यदोषानुबन्धाद्यास्तत्रानेकप्रकारा अवस्थास्ता दोषाणामेवेत्यर्थः ॥ ७ ॥—

हृन्नाभिपायूदरकुक्षितोद-
गात्रावसादानिलसन्निरोधाः ॥ ८ ॥
विट्सङ्ग आध्मानमथाविपाको
भविष्यतस्तस्य पुरःसराणि ॥

इदानीमतीसारस्य पूर्वरूपमाह—हृन्नाभिपायूदरेत्यादि । हृत् हृदयं, पायु गुदं, तोदशब्दो हृदादिभिः कुक्षिपर्यन्तैः प्रत्येकं संबध्यते । यद्यप्युदरग्रहणेनैव नाभिकुक्षी अपि प्राप्येते, तथाऽपि नाभिकुक्ष्यभिधानं विशेषेण तत्र तोदो भवतीति दर्शनार्थम् । पुरःसराणि पूर्वरूपाणीत्यर्थः ॥ ८ ॥—

शूलाविष्टः सक्तमूत्रोऽन्त्रकूजी
स्रस्तापानः सन्नकट्यूरुजङ्घः ॥ ९ ॥
वर्चो मुञ्चत्यल्पमल्पं सफेनं
रूक्षं श्यावं सानिलं मारुतेन ॥

इदानीं वातातीसारस्य लक्षणमाह—शूलाविष्ट इत्यादि । शूलाविष्टः शूलार्दितः । सक्तमूत्रो विबद्धमूत्रः । अन्त्रकूजी गुडगुडशब्दयुक्तः । स्रस्तापानः अधश्च्युतगुदः । सन्नकट्यूरुजङ्घः शिथिलकट्यूरुजङ्घः । अल्पमल्पमिति चान्यातिसारापेक्षया । सानिलं सशब्दवातयुतम् । श्यावशब्दोऽत्र ग्रगास्रावोक्तारुणभस्मकपोतास्थिवर्णानुपलक्षयति ॥ ९ ॥—

दुर्गन्ध्युष्णं वेगवन्मांसतोय-
प्रख्यं भिन्नं स्विन्नदेहोऽतितीक्ष्णम् ॥ १० ॥
पित्तात् पीतं नीलमालोहितं वा
तृष्णामूर्च्छादाहपाकज्वरार्तः ॥

पित्तातीसारलक्षणमाह—दुर्गन्धीत्यादि । एवम्भूतः पुरुष एवम्भूतं वर्चः पित्तादतीसार्यत इति संबन्धः । वेगवत् अतिशयेन सवेगम् । मांसतोयप्रख्यं मांसधावनोदकसदृशम् । भिन्नं स्फुटितम्, अतितीक्ष्णम् अतिशयेन तीक्ष्णं, तच्च मक्षिकाणामपसर्पणेन ज्ञेयम् । दाहो गुदे जठरे वा, पाको गुदे एव ज्ञेयः ॥ १० ॥—

तन्द्रानिद्रागौरवोत्क्लेशसादी
वेगाशङ्की सृष्टविट्कोऽपि भूयः ॥ ११ ॥
शुक्लं सान्द्रं श्लेष्मणा श्लेष्मयुक्तं
भक्तद्वेषी निःस्वनं हृष्टरोमा ॥

श्लेष्मातीसारलक्षणमाह—तन्द्रानिद्रेत्यादि । तन्द्रा शारीरोक्तलक्षणनिद्राभेदः, उत्क्लेशः थूत्करणं, सादी अङ्गग्लानियुक्तः । सृष्टविट्क इत्यादि । सृष्टविट्कोऽपि पुरुषो भूयः पुनर्वेगाशङ्की भवतीत्यर्थः । सान्द्रं घनम् । निःस्वनं निःशब्दम् । हृष्टरोमा उद्धर्षितरोमा ॥ ११ ॥—

तन्द्रायुक्तो मोहसादास्यशोषी
वर्चः कुर्यान्नैकवर्णं तृषार्तः ॥ १२ ॥
सर्वोद्भूते सर्वलिङ्गोपपत्तिः
कृच्छ्रश्चायं बालवृद्धेष्वसाध्यः ॥

इदानीं सन्निपातातीसारलक्षणमाह—तन्द्रायुक्त इत्यादि । नैकवर्णं किं तर्हि सर्वदोषवर्णम् । सर्वलिङ्गोपपत्तिः सर्वलिङ्गप्राप्तिः ॥ १२ ॥—

तैस्तैर्भावैः शोचतोऽल्पाशनस्य
बाष्पावेगः पक्तिमाविध्य(श्य)जन्तोः ॥ १३ ॥
कोष्ठं गत्वा क्षोभयत्यस्य रक्तं
तच्चाधस्तात् काकणन्तीप्रकाशम् ॥
वर्चोमिश्रं निःपुरीषं सगन्धं
निर्गन्धं वा सार्यते तेन कृच्छ्रात् ॥ १४ ॥
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं
रोगो वैद्यैः कष्ट एष प्रदिष्टः ॥

शोकजलक्षणमाह—तैस्तैर्भावैरित्यादि । एवम्भूतस्य पुरुषस्य बाष्पावेगः कोष्ठं गत्वा, पक्तिमाविध्य, रक्तमस्य क्षोभयतीति संबन्धः । तैस्तैर्भावैः बन्धुवियोगादिभिः, शोचतः शोकं कुर्वतः, बाष्पावेगः शोकोत्थतेज उद्रेकः, पक्तिमग्निं पक्तिहेतुत्वात्, आविध्य आकुलीकृत्य, क्षोभयति । तच्चेति रक्तं, अधस्तादिति पदं क्षोभयतीत्यनेन संबन्धनीयं, अन्ये सार्यते तेन इत्यत्र संबध्नन्ति । काकणन्ती गुञ्जा । सगन्धं निर्गन्धं वेति सपुरीषापुरीषत्वादित्यर्थः । केचिदत्र अल्पाशनस्येत्यस्यानन्तरं शोकोत्पन्न इत्यतः प्राक् अन्यथा पठन्ति 'शुष्कं भुक्तं तेज ऊष्मगृहीतं कोष्ठं गत्वा रक्तमत्यर्थमुष्णम् । गुञ्जाप्रख्यं प्रेरयेच्चाप्यधस्ताद्वर्चोयुक्तं निष्पुरीषं सगन्धम् ॥ निर्गन्धं वा सार्यते सोऽतिसारः' इति । व्याख्यानयन्ति च,—शुष्कं शुष्कतां गतं, अल्पत्वात्; भुक्तं भोजनं, तेजः शोकोत्थं तेजः, ऊष्मगृहीतम् ऊष्मणा गृहीतम् ॥ १३ ॥ १४ ॥—

आमाजीर्णोपद्रुताः क्षोभयन्तः
कोष्ठं दोषाः संप्रदुष्टाः सभक्तम् ॥ १५ ॥

१ 'एकदोषारब्धे' इति पा० ।

नानावर्णं नैकशः सारयन्ति
कृच्छ्राज्जन्तोः षष्ठमेनं वदन्ति ॥ १६ ॥

आमातीसारलक्षणमाह—आमाजीर्णेत्यादि । दोषाः संप्रदुष्टाः कोष्ठं क्षोभयन्तः सन्तो नानावर्णं कृच्छ्रात् सरुक् एकशो न, अपितु बहुशः सारयन्तीति पिण्डार्थः । आमाजीर्णोपद्रुताः आमाख्येनाजीर्णेनोदीरिताः, क्षोभयन्तः चालयन्तः, 'मलं' इति शेषः । सभक्तं ससिक्थम् । अत्र पुनः षष्ठसंख्यावचनं नियमार्थं, तेन भयस्नेहाजीर्णविसूचिकार्शोऽजीर्णादिनिमित्ता अतीसारा न पृथग्गणनीयाः, यतस्ते दोषजेष्वेवान्तर्भूताः । एनम् आमजम् । केचित् 'संप्रदुष्टाः सभक्तम्' इत्यत्र 'धातुसङ्घान् मलांश्च' इति पठन्ति; धातुसङ्घान् रक्तादीन्, मलान् पुरीषादीन्, 'दूषयित्वा' इति शेषः, इति च व्याख्यानयन्ति । यद्यपि सर्वातीसाराणामादावामातीसारत्वं, तथाऽपि प्रभूतामजनितत्वादामजस्य पृथगुपादानं, एवं सान्निपातिकत्वेऽप्यस्य पृथगुपादानं समाधेयम् ॥ १५ ॥ १६ ॥

संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ॥
पुरीषं भृशदुर्गन्धि विच्छिन्नं चामसंज्ञकम् ॥ १७ ॥

इदानीमामातीसारस्य लक्षणमाह—संसृष्टमेभिर्दोषैरित्यादि । संसृष्टमेभिर्दोषैः पूर्वनिर्दिष्टैर्वातादिलिङ्गैर्गुरुतरैर्व्याप्तमित्यर्थः । अवसीदति ब्रुडति । विच्छिन्नम् अल्पाल्पप्रवर्तकं; 'विच्छिन्नम्' इत्यत्र 'पिच्छिलम्' इति केचित् पठन्ति ॥ १७ ॥

एतान्येव तु लिङ्गानि विपरीतानि यस्य तु ॥
लाघवं च मनुष्यस्य तस्य पक्वं विनिर्दिशेत् ॥ १८ ॥

आमलक्षणमभिधाय पक्वलक्षणमाह—एतान्येवेत्यादि । एतान्येव लिङ्गानि अनन्तरोक्तापक्वलिङ्गानि । चकारात् कफदुष्टिरहितं पुरीषं समुच्चीयते । 'मनुष्यस्य' इत्यत्र 'पुरीषस्य' इति केचित् पठन्ति; व्याख्यानयन्ति च—यद्यपि न्यस्तमप्स्ववसीदतीत्यस्य वैपरीत्येनैव पुरीषलाघवं प्राप्तं, तथाऽपि पुनर्लाघवोपादानं कफदुष्टिरहितत्वबोधनाय । ननु, कफसंसृष्टः पक्वोऽपि मलो निमज्जति, तत् कथं पक्वकफातीसारज्ञानम्? उच्यते—तदितरलक्षणैरेव ॥ १८ ॥

सर्पिर्मेदोवेसवाराम्बुतैल-
मज्जाक्षीरक्षौद्ररूपं स्रवेद्यत् ॥
मञ्जिष्ठाभं मस्तुलुङ्गोपमं वा
विस्रं शीतं प्रेतगन्ध्यञ्जनाभम् ॥ १९ ॥
राजीमद्वा चन्द्रकैः सन्ततं वा
पूयप्रख्यं कर्दमाभं तथोष्णम् ॥
हन्यादेतद्यत् प्रतीपं भवेच्च
क्षीणं हन्युश्चोपसर्गाः प्रभूताः ॥ २० ॥
असंवृतगुदं क्षीणं दुराध्मातमुपद्रुतम् ॥
गुदे पक्वे गतोष्माणमतीसारकिणं त्यजेत् ॥ २१ ॥

इदानीमतीसाराणां परिहारार्थमसाध्यलक्षणमाह—सर्पिरित्यादि । वेसवारं विशिष्टसंस्कारसंस्कृतं मांसं खानिस्कापरपर्यायं, तेन मिश्रमम्बु वेसवाराम्बु; रूपशब्दः सर्पिरादिभिः प्रत्येकं संबध्यते । मस्तुलुङ्गोऽर्धविलीनचतुःस्नेहाकारो मस्तकमज्जा तत्सदृशम् । विस्रम् आमगन्धि, शटितमृतकगन्धतुल्यगन्धमित्यर्थः । अञ्जनाभं सौवीराञ्जनाभम् । राजीमत् नीलपीतादिरेखायुक्तम् । चन्द्रकैः मयूरपिच्छाभैः, सन्ततं व्याप्तम् । यत् प्रतीपं यथास्वदोषलिङ्गेभ्यो विपरीतलिङ्गम्, अन्ये तु अरिष्टलिङ्गमाहुः । उपसर्गा उपद्रवाः, ते च तन्त्रान्तरे पठिता ज्वरशोफादयः । उक्तं च,—"शोफं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् । छर्दिं हिक्कां च मूर्च्छां च दृष्ट्वाऽतीसारिणं त्यजेत्" इति । प्रभूता बहवः । एते उपद्रवाः क्षीणमतीसारिणं हन्युरिति योजनीयम् । असंवृतगुदम् असङ्कुचितगुदमित्यर्थः । क्षीणम् उत्साहोपचयबलरहितं, दुरात्मानम् अजितेन्द्रियम् । उपद्रुतम् अवारणीयोक्तैरुपद्रवैर्जुष्टम् । गुदे पक्वे गतोष्माणं गुदे पक्वे सति यस्य ऊष्मा बहिर्निर्गतो विनष्टस्तादृशमतिसारिणं त्यजेत् । केचित् 'दुरात्मानं' इत्यत्र 'सदाऽऽध्मातं' इति पठन्ति, सदाऽऽध्मानयुक्तमिति च व्याख्यानयन्ति ॥ १९–२१ ॥

शरीरिणामतीसारः संभूतो येन केनचित् ॥
दोषाणामेव लिङ्गानि कदाचिन्नातिवर्तते ॥ २२ ॥
स्नेहाजीर्णनिमित्तस्तु बहुशूलप्रवाहिकः ॥
विसूचिकानिमित्तस्तु चान्योऽजीर्णनिमित्तजः ॥
विषार्शःकृमिसंभूतो यथास्वं दोषलक्षणः ॥ २३ ॥

इदानीं षट्संख्याधिक्यशङ्कानिषेधार्थमितराणामतीसाराणां दोषजेष्वेवान्तर्भावार्थमाह—शरीरिणामित्यादि । येन केनचित् 'हेतुना' इति शेषः । यस्माद्बहुनिमित्तजोऽप्यतीसारो दोषलिङ्गानि नातिवर्तते नातिक्रामति तस्माद्यथास्वदोषलक्षणादतीसारो ज्ञेय इत्यर्थः । एतेन न षट्संख्याधिक्यम् । केचित् 'शरीरिणामतीसारः' इत्यादिपाठमामजातिसारलक्षणादनन्तरं पठन्ति, युक्तश्चायं तथैव पाठः; परं जेज्जटाचार्यवचनानुरोधेनात्र पठितः; जेज्जटाचार्यं विहायान्ये टीकाकारा अस्यानन्तरं पाठं न पठन्ति, क्षोदक्षमत्वाभावात् ॥२२॥२३॥

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः ॥
अतः सर्वेऽतिसारास्तु ज्ञेयाः पक्वामलक्षणैः ॥ २४ ॥

इदानीमामपक्वलक्षणज्ञाने भिषजो यत्नातिशयं प्रतिपादयन्नाह—आमपक्वक्रममित्यादि । पक्वामलक्षणैः पूर्वोक्तैरेव ॥२४॥

तत्रादौ लङ्घनं कार्यमतिसारेषु देहिनाम् ॥
ततः पाचनसंयुक्तो यवाग्वादिक्रमो हितः ॥ २५ ॥

इदानीं चिकित्सावसरः—तत्रादौ लङ्घनमित्यादि । तत्रेति वाक्योपक्रमे । लङ्घनम् उपवासः । आदौ प्रथमतः । यस्मात् सर्वे

१ 'चामसंस्कृतम्' इति पा० ।

१ 'यो दोषो यत्र चान्तर्भवति तथैव भावार्थमाह' इति पा० ।
२ 'आदौ तु लङ्घनं कार्यं' इति पा० ।

एवातीसारा आदावामत्वं भजन्तेऽत आमशमनार्थमादौ लङ्घनं, ततो लङ्घनादनन्तरम् । आदिशब्दात् यूषरसादयो गृह्यन्ते । एतद्यवागूयूषरसादिकं यदस्य हितं भवति तत्तदवस्थां बुद्ध्वा दद्यात् । केचित् 'तत्रादौ लङ्घनं कार्यं' इत्यस्य स्थाने 'हितं लङ्घनमेवादौ' इत्यादिपाठं पठन्ति, स च मया न दृष्ट इति न दर्शितः ॥२५॥

**अथवा वामयित्वाऽऽमे शूलाध्माननिपीडितम् ॥**
**पिप्पलीसैन्धवाम्भोभिर्लङ्घनाद्यैरुपाचरेत् ॥ २६ ॥**

अवस्थाविशेषेण पक्षान्तरमाह—अथवा वामयित्वेत्यादि । आमेऽतीसारे शूलादिपीडितं पुरुषं पिप्पलीसैन्धवाम्भोभिर्वामयित्वा लङ्घनाद्यैरुपाचरेदिति संबन्धः । लङ्घनाद्यैरिति लङ्घनस्वेदोष्णोदकपानादिभिः । ननु, अग्निमान्द्यादतीसारप्रवृत्तिः, तत् कथमग्निमान्द्यजनकस्य वमनस्य तत्रोपदेशः? सत्यम्, अतिप्रवृत्तदोषप्रतिबन्धार्थं च वमनं प्रयुज्यते ॥ २६ ॥

**कार्यं च वमनस्यान्ते प्रद्रवं लघुभोजनम् ॥**
**खडयूषयवागूषु पिप्पल्याद्यं च योजयेत् ॥ २७ ॥**

वमनादनन्तरं यत् कार्यं तदाह—कार्यमित्यादि । प्रद्रवं प्रकृष्टद्रवं यवागूयूषादि । ननु, भोजेनातीसारे द्रवस्य निषेधो दर्शितस्तत् कथमत्र द्रवाणां यवाग्वादीनां प्रयोगः? सत्यं, भोजे केवलस्यैव द्रवस्य निषेधो न संस्कृतस्येत्यदोषः । अन्ये तु प्रगतद्रवं प्रद्रवं कथयन्ति । तन्न, अतीसारे यवागूपदेशात् । खडयूषयवागूषु पिप्पल्याद्यं च योजयेदिति ष(ख)डयूषः कपित्थदाडिममरिचादिभिः सुपक्वं तक्रम्, अन्ये तु षडा दाडिमतक्रशाकादिसंस्कृता द्रवाः, यूषा मुद्गमसूरादिकृताः ॥ २७ ॥

**अनेन विधिना चामं यस्य वै नोपशाम्यति ॥**
**हरिद्रादिं वचादिं वा पिबेत् प्रातः स मानवः ॥२८॥**

षडयूषादिभिरपच्यमानेऽतीसारे पाचनार्थमाह—अनेन विधिना चाममित्यादि । आमम् आमातीसारः । प्रातःशब्दो निरन्नताद्योतकः ॥ २८ ॥

**आमातीसारिणां कार्यं नादौ संग्रहणं नृणाम् ॥**
**तेषां दोषा विबद्धाः प्राग्जनयन्त्यामयानिमान् ॥२९॥**
**प्लीहपाण्ड्वामयानाहमेहकुष्ठोदरज्वरान् ॥**
**शोफगुल्मग्रहण्यर्शःशूलालसकहृद्ग्रहान् ॥ ३० ॥**

आमातिसारे आदौ संग्रहादोषमाह—आमातीसारिणामित्यादि । तेषाम् आमातिसारिणाम् । विबद्धा विशेषेण बद्धा संगृहीता इत्यर्थः । अन्ये आमातीसारिणामित्यादिपाठस्य स्थाने 'दोषस्तम्भनमादौ तु न कर्तव्यं विजानता । तस्मादौ बध्यमानस्तु[१] बली कुर्यादुपद्रवान्' इति पठन्ति । अपरे तु अन्यथा पाठं पठन्ति, स चाप्रसिद्ध इति न दर्शितः ॥ २९ ॥ ३० ॥

**सशूलं बहुशः कृच्छ्राद्विबद्धं योऽतिसार्यते ।**
**दोषान् सन्निचितान् तस्य पथ्याभिः संप्रवर्तयेत् ३१**

इदानीमावस्थिकं क्रममाह—सशूलमित्यादि । विबद्धं विबद्धमिव अल्पाल्पप्रवृत्तिः । सन्निचितान् सञ्चयगतान्, प्रवृद्धानित्यर्थः । संप्रवर्तयेदित्यत्र बहुश इति संबन्धनीयम् । यस्मात् सन्निचिताः शूलकारिणो दोषा विरेचनेनाधःपतन्ति तस्मादतीसारेऽपि विरेचनं प्रयुज्यते ॥ ३१ ॥

**योऽतिद्रवं प्रभूतं च पुरीषमतिसार्यते ॥**
**तस्यादौ वमनं कुर्यात् पश्चाल्लङ्घनपाचनम् ॥ ३२ ॥**

अपरमावस्थिकमाह—योऽतिद्रवमित्यादि । यस्माद्वमनमूर्ध्वमार्गहरणद्वारेणोदकधातोरुच्छेदकारी तस्मात् प्रयुज्यते ॥ ३२ ॥

**स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्यते ॥**
**अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥३३॥**

स्तोकमित्यादि । वाशब्दोऽभयापिप्पलीकल्कैरित्यत्र संबन्धनीयः । यद्यपि 'सशूलं बहुश' इत्यनेनैव स्तोकं विबद्धमित्यस्यार्थः प्राप्तः, तथाऽपि पिप्पलीसंयोगस्याधिकस्य दर्शनार्थं पुनरभिधानम् ॥ ३३ ॥

**आमे च लङ्घनं शस्तमादौ पाचनमेव वा ॥**

तत्र लङ्घनं परं यदि तस्यैव विकल्पकार्थमाह—आमे च लङ्घनमित्यादि । आमातीसारे लङ्घनं कार्यं परं यदि लङ्घने क्षमं शरीरमन्नानभिलाषश्च भवति, अतो विपर्यये आदौ पाचनमिति ॥—

**योगाश्चात्र प्रवक्ष्यन्ते त्वामातीसारनाशनाः ॥ ३४ ॥**

योगाश्चात्रेत्यादि । योगाः पाचनयोगाः ॥ ३४ ॥

**कलिङ्गातिविषाहिङ्गुसौवर्चलवचाभयाः ॥**
**देवदारुवचामुस्तानागरातिविषाभयाः ॥ ३५ ॥**
**अभया धान्यकं मुस्तं पिप्पली नागरं वचा ॥**
**नागरं धान्यकं मुस्तं वालकं बिल्वमेव च ॥ ३६ ॥**
**मुस्तं पर्पटकं शुण्ठी वचा प्रतिविषाऽभया ॥**
**अभयाऽतिविषा हिङ्गु वचा सौवर्चलं तथा ॥ ३७ ॥**
**चित्रकः पिप्पलीमूलं वचा कटुकरोहिणी ॥**
**पाठा वत्सकबीजानि हरीतक्यो महौषधम् ॥ ३८ ॥**
**मूर्वा निर्दहनी पाठा त्र्यूषणं गजपिप्पली ॥**
**सिद्धार्थका भद्रदारु शताह्वा कटुरोहिणी ॥ ३९ ॥**
**एला सावरकं कुष्ठं हरिद्रे कौटजा यवाः ॥**
**मेषशृङ्गी त्वगेले च कृमिघ्नं वृक्षकाणि च ॥ ४० ॥**
**वृक्षादनी वीरतरुर्बृहत्यौ द्वे सहे तथा ॥**
**अरलुत्वक् तैन्दुकी च दाडिमी कौटजी शमी ॥४१॥**
**पाठा तेजोवती मुस्तं पिप्पली कौटजं फलम् ॥**
**पटोलं(ली) दीप्यको बिल्वं हरिद्रे देवदारु च ॥४२॥**
**विडङ्गमभया पाठा शृङ्गवेरं घनं वचा ॥**
**वचा वत्सकबीजानि सैन्धवं कटुरोहिणी ॥ ४३ ॥**
**हिङ्गुर्वत्सकबीजानि वचा बिल्वशलाटु च ॥**
**नागरातिविषे मुस्तं पिप्पल्यो वात्सकं फलम् ॥४४॥**

१ 'वर्धमानस्तु' इति पा० ।

महौषधं प्रतिविषा मुस्तं चेत्यामपाचनाः ॥
प्रयोज्या विंशतिर्योगाः श्लोकार्धविहितास्त्विमे ४५
धान्याम्लोष्णाम्बुमद्यानां पिबेदन्यतमेन वा ॥
निष्क्वाथान् वा पिबेदेषां सुखोष्णान् साधु साधितान्

तानेव पाचनयोगानाह—कलिङ्गेत्यादि । कलिङ्गा इन्द्रयवाः । प्रतिविषा श्यामकन्दाऽतिविषाभेदः । महौषधं शुण्ठी । मूर्वा चोरस्नायुः, निर्दहनी चित्रकः, त्र्यूषणं त्रिकटुकम् । सिद्धार्थकाः श्वेतसर्षपाः, कटुरोहिणी कटुका । सावरकं रोध्रं, हरिद्रे हरिद्राद्वयं, कौटजा यवा इन्द्रयवाः । मेषशृङ्गी कर्कटशृङ्गी, त्वक् त्वचा, कृमिघ्नं विडङ्गं, वृक्षकः कुटजः, वृक्षादनी बन्दाकः, वीरतरुः शरः, बृहत्यौ क्षुद्रफला स्थूलफला च, द्वे सहे मुद्गपर्णी माषपर्णी च । अरलुः श्योनाकभेदः तस्य त्वक्, अन्ये श्योनाकमरलुशब्देनाहुः त्वक्शब्दोऽर्थवशात् तिन्दुकी चेत्यादिष्वपि संबन्धनीयः । तेजोवती काकमर्दनिका । दीप्यको यवानी, अन्ये अजमोदामाहुः । शृङ्गवेरं शुण्ठी, बिल्वशलाटु कोमलं बिल्वं, वात्सकं फलम् इन्द्रयवाः । श्लोकार्धविहिता अर्धश्लोकैः कृता इत्यर्थः । धान्याम्लादीनां मध्यादन्यतमेन कलिङ्गकादिचूर्णं पिबेत् । एतेषां निष्क्वाथान् साधु साधितान् मात्रया साधितान् पिबेदिति । एतद्वृद्धवैद्या नेच्छन्ति, बहुद्रव्यसाधिताम्बुसंस्कृताहारस्यारुचिकरत्वात् ॥ ३५–४६ ॥

पयस्युत्क्वाथ्य मुस्तानां विंशतिं त्रिगुणाम्भसि ॥
क्षीरावशिष्टं तत्पीतं हन्त्यामं शूलमेव च ॥ ४७ ॥
निखिलेनोपदिष्टोऽयं विधिरामोपशान्तये ॥
हरीतकीमतिविषां हिङ्गु सौवर्चलं वचाम् ॥ ४८ ॥
पिबेत् सुखाम्बुना जन्तुरामातीसारपीडितः ॥
पटोलं दीप्यकं बिल्वं वचापिप्पलिनागरम् ॥ ४९ ॥
मुस्तं कुष्ठं विडङ्गं च पिबेद्वाऽपि सुखाम्बुना ॥
शृङ्गवेरं गुडूचीं च पिबेदुष्णेन वारिणा ॥ ५० ॥
लवणान्यथ पिप्पल्यो विडङ्गानि हरीतकी ॥
चित्रकं शिंशपा पाठा शार्ङ्गेष्टा लवणानि च ॥ ५१ ॥
हिङ्गुर्वृक्षकबीजानि लवणानि च भागशः ॥
हस्तिदन्त्यथ पिप्पल्यः कल्कावक्षसमौ स्मृतौ ॥५२॥
वचा गुडूचीकाण्डानि योगोऽयं परमो मतः ॥
एते सुखाम्बुना योगा देयाः पञ्च सतां मताः ॥५३॥
निवृत्तेष्वामशूलेषु यस्य न प्रगुणोऽनिलः ॥
स्तोकं स्तोकं रुजामच्च सशूलं योऽतिसार्यते ॥५४॥
सक्षारलवणैर्युक्तं मन्दाग्निः स पिबेद्घृतम् ॥
क्षीरनागरचाङ्गेरीकोलदध्यम्लसाधितम् ॥ ५५ ॥
सर्पिरच्छं पिबेद्वापि शूलातीसारशान्तये ॥
दध्ना तैलघृतं पक्वं सव्योषाजातिचित्रकैः ॥ ५६ ॥
सबिल्वपिप्पलीमूलदाडिमैर्वा रुगन्वितैः ॥
निखिलो विधिरुक्तोऽयं वातश्लेष्मोपशान्तये ॥५७॥
तीक्ष्णोष्णवर्ज्यमेनं तु विदध्यात्पित्तजे भिषक् ॥
यथोक्तमुपवासान्ते यवागूश्च प्रशस्यते ॥ ५८ ॥
बलयोरंशुमत्यां च श्वदंष्ट्राबृहतीषु च ॥
शतावर्यां च संसिद्धाः सुशीता मधुसंयुताः ॥५९॥

सशूलेऽतिसारे योगानाह—पयसीत्यादि ॥ ४७–५९ ॥

मुद्गादिषु च यूषाः स्युर्द्रव्यैरेतैः सुसंस्कृताः ॥

यवागूविषये यूषमाह—मुद्गादिषु चेत्यादि । मुद्गादिष्वित्यादिशब्दात् वनमुद्गकलायमसूरादिवर्गग्रहणम् । द्रव्यैरेतैरिति बलादिभिः । क्वाथकल्पना अत्रापि पूर्ववत् ॥—

मृदुभिर्दीपनैस्तिक्तैर्द्रव्यैः स्यादामपाचनम् ॥ ६० ॥
हरिद्रातिविषापाठावत्सबीजरसाञ्जनम् ॥
रसाञ्जनं हरिद्रे द्वे बीजानि कुटजस्य च ॥ ६१ ॥
पाठा गुडूची भूनिम्बस्तथैव कटुरोहिणी ॥
एतैः श्लोकार्धनिर्दिष्टैः क्वाथाः स्युः पित्तपाचनाः ६२

पैत्तिके आमातीसारे परं पाचनमाह—मृदुभिर्दीपनैरित्यादि । एवंविधिष्टैस्तिक्तैर्दुरालभागुडूच्यतिविषाप्रभृतिभिरामपाचनं पित्तातीसारे बोद्धव्यम् । ननु, तिक्तानि शीतवीर्याणि कथमामातीसारे पाचनानि ? उच्यते, ज्वरातीसारादौ तिक्तान्यपि पाचनान्येवाभिमतानि; उक्तं च,—'स्वेदनं लङ्घनं कालो यवाग्वस्तिक्तको रसः । पाचनान्यविपक्वानाम्—' इति । अन्ये तु तिक्तकानि अर्कागरुप्रभृतीन्युष्णवीर्याणि पाचनीयानि; नान्यानि, तेषां शीतवीर्यत्वात् । अतीसारे अर्कादीनामयौगिकत्वात्तान्येव तिक्तद्रव्याण्याह—हरिद्रातिविषापाठेत्यादि । हरिद्रादिभिः पित्तपाचनाः क्वाथाः श्लोकार्धनिर्दिष्टाः स्युरिति संबन्धः ॥ ६०–६२ ॥

मुस्तं कुटजबीजानि भूनिम्बं सरसाञ्जनम् ॥
दार्वी दुरालभा बिल्वं वालकं रक्तचन्दनम् ॥ ६३ ॥
चन्दनं वालकं मुस्तं भूनिम्बं सदुरालभम् ॥
मृणालं चन्दनं रोध्रं नागरं नीलमुत्पलम् ॥ ६४ ॥
पाठा मुस्तं हरिद्रे द्वे पिप्पली कौटजं फलम् ॥
फलत्वचं वत्सकस्य शृङ्गवेरं घनं वचा ॥ ६५ ॥
षडेतेऽभिहिता योगाः पित्तातीसारनाशनाः ॥

अपरान् योगान् सिद्धतमान् सामपित्तपाचनार्थमाह—मुस्तमित्यादि । भूनिम्बं किरातं, सरसाञ्जनं रसाञ्जनसहितम् । दार्वी दारुहरिद्रा, बिल्वं बिल्वफलम् । मृणालं पद्मनालं, चन्दनं रक्तचन्दनं, रोध्रं शाबरं, नागरं शुण्ठी । घनं मुस्तम् । अभिहिता योगाः 'श्लोकार्धेन' इति शेषः । पूर्वेभ्यो विंशतियोगेभ्यो हरिद्रातिविषेत्यादियोगास्तथा मुस्तं कुटजबीजानीत्यादयो योगाः सिद्धतमाः, अतः पृथक् पठिताः । वातकफोत्थयोरतीसारयोः पाचनेन वातकफपाकात् पित्तानुबन्धः स्यात्, अतस्तत्संशमनार्थं मुस्तं कुटजबीजानीत्यादयो योगा निर्दिष्टा इति केचिद्व्याख्यानयन्ति । अत एव पक्वातीसारचिकित्सित-

१ 'वचा बिडम्' इति पा० ।

प्रकरणात् प्राक् पित्तारब्धपक्वातीसारस्य चिकित्सा तैरभिहिता ॥ ६३–६५ ॥

**विल्वशक्रयवाम्भोदवालकातिविषाकृतः ॥**
**कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥ ६६ ॥**

अतः परमपरं सिद्धतमं योगमाह—बिल्वेत्यादि । बिल्वं बिल्वफलं कोमलं, शक्रयवा इन्द्रयवाः, अम्भोदो मुस्ता, अतिविषाकृत इति कृतग्रहणं शीतकषायादिनिवृत्त्यर्थम् । अयं योगश्चिरप्रवृत्तेऽपि सामे सशोणिते दृश्यते ॥ ६६ ॥

**मधुकोत्पलविल्वाब्दह्रीवेरोशीरनागरैः ॥**
**कृतः काथो मधुयुतः पित्तातीसारनाशनः ॥ ६७ ॥**

मधुकोत्पलबिल्वाब्देत्यादि । मधुकं यष्टीमधु, उत्पलं नीलोत्पलम् । अब्दं मुस्तं, ह्रीवेरं वालकं; मधुकादिद्रव्यैः कृतः काथः सुशीतो मधुयुतः पित्तातीसारनाशनो भवतीति संबन्धः ॥ ६७ ॥

**यदा पक्वोऽप्यतीसारः सरत्येव मुहुर्मुहुः ॥**
**ग्रहण्या मार्दवाज्जन्तोस्तत्र संस्तम्भनं हितम् ॥६८॥**

पक्वातीसारस्य सरणे किं कार्यमित्याह—यदा पक्वोऽप्यतीसार इत्यादि । ग्रहण्या मार्दवात् अभिस्तम्भात् । संस्तम्भनं संग्रहणम् ॥ ६८ ॥

**समङ्गा धातकीपुष्पं मञ्जिष्ठा लोध्रमुस्तकम् ॥**
**शाल्मलीवेष्टको रोध्रं वृक्षदाडिमयोस्त्वचौ ॥ ६९ ॥**
**आम्रास्थिमध्यं लोध्रं च विल्वमध्यं प्रियङ्गवः ॥**
**मधुकं शृङ्गवेरं च दीर्घवृन्तत्वगेव च ॥ ७० ॥**
**चत्वार एते योगाः स्युः पक्वातीसारनाशनाः ॥**
**उक्ता य उपयोज्यास्ते सक्षौद्रास्तण्डुलाम्बुना ॥७१॥**

तानेव स्तम्भनयोगानाह—समङ्गा धातकीपुष्पमित्यादि । समङ्गा लज्जालुका, अन्ये वराहक्रान्तामाहुः । शाल्मलीवेष्टकः शाल्मलीनिर्यासकः, अन्ये वेष्टकं वृन्तमाहुः; वृक्षः कुटजः । आम्रास्थिमध्यम् आम्रफलमज्जा । शृङ्गवेरं शुण्ठी, दीर्घवृन्तत्वक् अरलुत्वक्, अन्ये श्योनाकत्वगित्याहुः । चत्वार एते योगाः श्लोकार्धोक्ताः । अन्ये तु–'समङ्गाधातकीपुष्पमञ्जिष्ठारोध्रमुस्तकम् । शाल्मलीवेष्टकं वाऽपि विदध्याद्योगमुत्तमम्' इत्येकेनैव शाल्मलीवेष्टकेनापरं पञ्चमं योगं मन्यन्ते; तत एव च 'एते हि पञ्चयोगाः स्युः पक्वातीसारनाशनाः' इति पठन्ति । सर्वेऽपि पक्वातीसारनाशनाः स्युः । अन्ये तु पित्तातीसारनाशना इति व्याख्यानयन्ति । कथमेते योगा उपयोज्या इत्याह—उक्ता इत्यादि । ये योगाः समङ्गादिका उक्तास्ते सक्षौद्रास्तण्डुलाम्बुना उपयोज्या इत्यर्थः ॥ ६९–७१ ॥

**मौस्तं कषायमेकं वा पेयं मधुसमायुतम् ॥**
**लोध्राम्बष्ठाप्रियङ्ग्वादीन् गणानेवं प्रयोजयेत् ७२**

१ 'भासात्' इति पा० ।

मौस्तं कषायमेकमित्यादि । कषायमेकं वेति कथमेतदुच्यते मधुपानीययोरपि विद्यमानत्वात्? नैवं, तयोः संस्कारत्वेनाप्रधानत्वात् । अयं योगः पक्वपित्तरक्तातीसारे विशेषेण बोद्धव्यः; सामान्ये पक्वातीसारे केचिन्मन्यन्ते, तथा चोक्तं 'पक्वातीसारिणे देयो मुस्ताक्वाथः समाक्षिकः' इति । रोध्राद्यम्बष्ठादिप्रियङ्ग्वादीन् गणानेवमिति क्वाथान् कृत्वा मधुप्रक्षेपेण सहोपयोजयेदित्यर्थः ॥ ७२ ॥

**पद्मां समङ्गां मधुकं विल्वजम्बूशलाटु च ॥**
**पिबेत्तण्डुलतोयेन सक्षौद्रमगदङ्करम् ॥ ७३ ॥**

पद्मां समङ्गामित्यादि । पद्मा भार्गी, समङ्गा लज्जालुका, बिल्वजम्बूशलाटु चेति बिल्वफलं कोमलं, जम्बूफलं च कोमलम् । अगदङ्करमत्र अतीसारहरमित्यर्थः ॥ ७३ ॥

**कच्छुरामूलकल्कं वाऽप्युदुम्बरफलोपमम् ॥**
**पयस्या चन्दनं पद्मा सितामुस्ताब्जकेशरम् ॥ ७४ ॥**
**पक्वातिसारं योगोऽयं जयेत्पीतः सशोणितम् ॥**

कच्छुरामूलकल्कं वेत्यादि । कच्छुरा कङ्कतिका, तन्मूलकल्कमुदुम्बरफलोपमं कर्षप्रमाणं सक्षौद्रं तण्डुलाम्बुना पिबेदिति संबध्यते । पयस्या चन्दनमित्यादि । पयस्या अर्कपुष्पी, अन्ये दुग्धिकामाहुः, क्षीरकाकोलीमपरे; चन्दनं रक्तचन्दनं, पद्मा भार्गी, सिता शर्करा, अब्जकेशरं पद्मकेशरम् । सशोणितमिति पित्तातीसारमेव नतु रक्तातीसारं, तच्चिकित्साया वक्ष्यमाणत्वात् । 'पक्वातीसारं योगोऽयं' इत्यत्रान्ये 'पित्तातीसारं योगोऽयं' इति पठन्ति । पीत इति कथितकषायविधिनेत्यर्थः ॥ ७४ ॥—

**निरामरूपं शूलार्तं लङ्घनाद्यैश्च कर्षितम् ॥ ७५ ॥**
**नरं रूक्षमवेक्ष्याग्निं सक्षारं पाययेद्घृतम् ॥**

इदानीं घृतपानार्हमतीसारिणमाह—निरामरूपमित्यादि । पक्वातीसारप्रस्तावे निरामरूपमिति प्राप्तमतस्तदभिधानमतिशयेन निरामरूपप्रापणार्थम् । अवेक्ष्याग्निं 'दीप्तं' इति शेषः । सक्षारं यवक्षारसहितं, स्वर्जिकाक्षारसहितमित्यन्ये । निरामरूपमित्याद्यारभ्य वातचिकित्सितं शूलस्यान्यथाऽसंभूतेरित्यन्ये वदन्ति ॥ ७५ ॥

**बलाबृहत्यंशुमतीकच्छुरामूलसाधितम् ॥ ७६ ॥**
**मधूक्षितं समधुकं पिबेच्छूलैरभिद्रुतः ॥**

बलाबृहत्यंशुमतीत्यादि । 'घृतं' इत्यनुवर्तते । मधूक्षितम् ईषन्मात्रमधुयुक्तमित्यर्थः । समधुकं यष्टीमधुसहितं, वक्ष्यमाणयोगे यष्टीमधुकस्य प्रक्षेपदर्शनादत्रापि प्रक्षेपः । शूलैरभिद्रुतः शूलैरार्तः ॥ ७६ ॥—

**दार्वीविल्वकणाद्राक्षाकटुकेन्द्रयवैर्घृतम् ॥ ७७ ॥**
**साधितं हन्त्यतीसारं वातपित्तकफात्मकम् ॥**
**दध्ना चाम्लेन संपक्वं सव्योषाजाजिचित्रकम् ॥७८॥**
**सचव्यपिप्पलीमूलं दाडिमैर्वा रुगर्दितः ॥**

दार्वीबिल्वकणाद्राक्षेत्यादि । दार्वी दारुहरिद्रा, कणा पिप्पली । अतीसारं वातपित्तकफात्मकं व्यस्तैः समस्तैश्च दोषैरारब्धम् ॥ ७७ ॥ ७८ ॥—

**पयो घृतं च मधु च पिबेच्छूलैरभिद्रुतः ॥ ७९ ॥**
**सिताजमोदकट्वङ्गमधुकैरवचूर्णितम् ॥**

पयो घृतमित्यादि । क्षीरघृतमधूनि समांशानि शर्कराजमोदारलुयष्टीमधुकैश्चूर्णितैरवचूर्ण्य शूलैरभिद्रुतः पिबेदिति संबन्धः ॥ ७९ ॥—

**अवेदनं सुसंपक्वं दीप्ताग्नेः सुचिरोत्थितम् ॥ ८० ॥**
**नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥**

पुटपाकस्य विषयमाह—अवेदनं सुसंपक्वमित्यादि । नानावर्णमित्यनेन सान्निपातिकोऽतीसारः पुटपाकस्य विषय इति दर्शितम् ॥ ८० ॥—

**त्वक्पिण्डं दीर्घवृन्तस्य पद्मकेसरसंयुतम् ॥ ८१ ॥**
**काश्मरीपद्मपत्रैश्चावेष्ट्य सूत्रेण संदृढम् ॥**
**मृदाऽवलिप्तं सुकृतमङ्गारेष्ववकूलयेत् ॥ ८२ ॥**
**स्विन्नमुद्धृत्य निष्पीड्य रसमादाय तं ततः ॥**
**शीतं मधुयुतं कृत्वा पाययेतोदरामये ॥ ८३ ॥**
**जीवन्तीमेषशृङ्ग्यादिष्वेवं द्रव्येषु साधयेत् ॥**

पुटपाकविधिमाह—त्वक्पिण्डमित्यादि । दीर्घवृन्तस्य अरलुकस्य । अवकूलयेत् पचेत् । उदरामयोऽत्र अतीसारः । अरलुकस्य त्वचं पद्मकेसरं च समभागं गृहीत्वा संपिष्ट्वा तत्पिण्डं पद्मकाश्मरीपत्रपुटके निक्षिप्य सूत्रेणावेष्ट्य मृत्तिकया निर्धूमखदिराङ्गारेषु तावत् पचेद् यावद्बाह्ये रक्तवर्णता भवति, ततोऽङ्गारेभ्य आकृष्य तत्पिण्डं निष्पीड्य स्वरसं गृहीत्वा शीतीभूतं च कर्षप्रमितमधुसहितमतीसारे क्वाथमात्रया पाययेत् । अनेन विधिना सर्वपुटपाककल्पना । ये च सुकृतमिति कुशवेष्टितमिति व्याख्यानयन्ति, तन्मते 'सूत्रेणावेष्ट्य' इति पाठो नास्ति । जीवन्तीमेषशृङ्ग्यादिष्वेवमित्यादि । जीवन्ती उत्तरापथे महाकन्दा कर्कोटिकासदृशपत्रा, लाटविषये तु मूलिनी महाप्रताना । आदिशब्दात् पाठाशटीप्रभृतीनां ग्रहणम् । एवमिति यथा अरलुत्वक्पुटपाकविधिरेवमत्रापीत्यर्थः । अन्ये त्वेवं पठन्ति—'जीवन्तीमेषशृङ्गेषु चैवं वृन्तेषु कारयेत्' इति ॥ ८१–८३ ॥—

**तित्तिरिं लुञ्चितं सम्यक् निष्कृष्टान्त्रं तु पूरयेत् ८४**
**न्यग्रोधादित्वचां कल्कैः पूर्ववच्चावकूलयेत् ॥**
**रसमादाय तस्याथ सुस्विन्नस्य समाक्षिकम् ॥ ८५॥**
**शर्करोपहितं शीतं पाययेतोदरामये ॥**

तित्तिरिं लुञ्चितमित्यादि । तित्तिरिं कृष्णतित्तिरिं; निष्कृष्टान्त्रमित्युपलक्षणं, तेन तुण्डपादवर्जितमिति च लभ्यते । पूर्ववच्चावकूलयेदिति कृष्णतित्तिरिं पादतुण्डान्त्रवर्जितं कृत्वा न्यग्रोधादिवल्कलकल्केन कोष्ठं पूरयित्वा काश्मरीपद्मपत्रपुटके निक्षिप्य कुशैरावेष्ट्य मृत्तिकया लिप्त्वा खदिराङ्गारेषु पचेत्; स्वरसप्रमाणं मधुशर्कराप्रक्षेपप्रमाणं पूर्ववदिति । **श्रीब्रह्मदेवस्तु** व्याख्यानयति—न्यग्रोधादीत्यादिशब्दात् पलाशनन्दीवृक्षादीनां ग्रहणं, कुतः ? तेषां संग्राहकत्वात्; ननु सामस्त्येन न्यग्रोधादिगणस्य; कुतः ? स्तम्भकत्वात्; तथा चोक्तं—"संग्राहि स्तम्भनाद्भिन्नं यथा तदभिदध्महे । आग्नेयगुणभूयिष्ठं तोयांशं परिशोषयेत् ॥ संगृह्णाति मलं तत्स्याद्ग्राहि शुण्ठ्यादयो यथा । समीरगुणभूयिष्ठं शीतत्वाद्यत्नभस्यतः ॥ विधाय वृद्धिं स्तभ्नाति स्तम्भनं तद्यथा वटः" इति । अयं च वातपित्तातीसारे कर्तव्यः ॥ ८४ ॥ ८५ ॥—

**लोध्रचन्दनयष्ट्याह्वदार्वीपाठासितोत्पलान् ॥ ८६ ॥**
**तण्डुलोदकसंपिष्टान् दीर्घवृन्तत्वगन्वितान् ॥**
**पूर्ववत् कूलितात्तस्माद्रसमादाय शीतलम् ॥ ८७ ॥**
**मध्वाक्तं पाययेच्चैतत् कफपित्तोदरामये ॥**

लोध्रचन्दनयष्ट्याह्वेत्यादि । लोध्रादिनीलोत्पलान्तानरलुत्वक्सहितान् तण्डुलोदकसंपिष्टान् पूर्ववत्कूलितान् पुटपाकविधिना पक्वान्, अस्मात् पिष्टस्विन्नरोध्रादिकल्कात् रसं गृहीत्वा शीतं मधुयुतं पाययेदिति संबन्धः ॥ ८६ ॥ ८७ ॥—

**एवं प्ररोहैः कुर्वीत वटादीनां विधानवत् ॥ ८८ ॥**
**पुटपाकान् यथायोगं जाङ्गलोपहितान् शुभान् ॥**

एवं प्ररोहैरित्यादि । एवं पूर्वोक्तप्रकारेण, वटादीनां प्ररोहैः शाखाधोभागनिःसृतजटाभिरित्यर्थः । आदिशब्दात् प्लक्षगर्दभाण्डादिप्ररोहाणां ग्रहणम् । विधानवत् यथायोगमवस्थापेक्षमित्यर्थः । जाङ्गलोपहितानिति अत्र जाङ्गलशब्देन लावककपिञ्जलादीनां ग्रहणं, लघुत्वात् । वटाद्यवरोहजाङ्गलमांसपुटपाककल्पना पूर्ववत् ॥ ८८ ॥—

**बहुश्लेष्म सरक्तं च मन्दवातं चिरोत्थितम् ॥ ८९ ॥**
**कौटजं फाणितं वाऽपि हन्त्यतीसारमोजसा ॥**
**अम्बष्ठादिमधुयुतं पिप्पल्यादिसमन्वितम् ॥ ९० ॥**

बहुश्लेष्म सरक्तमित्यादि । फाणितमिव फाणितं, स्त्यानमध्वाकृति । ओजसा शक्त्या आत्मप्रभावेण । अत्र कल्पना—बृहत्फलशुक्लकुसुमस्निग्धपत्रस्य पुन्नामधेयस्य कुटजस्य वल्कं गृहीत्वा षोडशगुणे अष्टगुणे चतुर्गुणे वा जले क्वाथयित्वा अर्धावशिष्टं क्वाथमादाय वस्त्रगालितं कृत्वा पुनस्तावत् पचेत् यावत् पक्वफाणिताकृतिः स्यात्, ततस्तन्मध्येऽम्बष्ठादिमधुपिप्पल्यादिचूर्णं चतुर्थांशं निक्षिप्य अवतार्यमिति । अन्ये तु कुटजत्वक्स्वरसं गृहीत्वा तावत् क्वाथयेद्यावत् फाणिताकृतिर्भवतीति व्याख्यानयन्ति ॥ ८९ ॥ ९० ॥

**पृश्निपर्णीबलाबिल्ववालकोत्पलधान्यकैः ॥**
**सनागरैः पिबेत् पेयां साधितामुदरामयी ॥ ९१ ॥**

पृश्निपर्ण्यादि । बिल्वं बिल्वफलं कोमलं, उत्पलं नीलोत्पलं, सनागरैः सशुण्ठीकैः । उदरामयी अतीसारी । पेयार्थं क्वाथकल्पना पूर्ववत् ॥ ९१ ॥

**अरलुत्वक् प्रियङ्गुं च मधुकं दाडिमाङ्कुरान् ॥**
**आवाप्य पिष्ट्वा दधनि यवागूं साधयेद्द्रवाम् ॥ ९२ ॥**
**एषा सर्वानतीसारान् हन्ति पक्वानसंशयम् ॥**

अरलुत्वगित्यादि । दाडिमाङ्कुरान् दाडिमकोमलपत्राणि । अरलुत्वगादीन् पिष्ट्वा दधनि निक्षिप्य यवागूं साधयेदित्यर्थः । अत्र पिष्ट्वेति यदुक्तं तदरलुत्वगादिकाथेन यवागूसाधननिषेधार्थम् । साधयेद्द्रवामिति यथा नातिसान्द्रा भवतीत्यर्थः । एषा यवागूः । पक्वातिसारप्रस्तावात् पक्वाभिधानस्य प्राप्तस्य पुनर्ग्रहणेन एषा यवागूः पक्वातीसारे अतिशयेन हितेति ज्ञापयति ॥ ९२ ॥—

**रसाञ्जनं सातिविषं त्वग्बीजं कौटजं तथा ॥ ९३ ॥**
**धातकी नागरं चैव पाययेत्तण्डुलाम्बुना ॥**
**सशूलं रक्तजं घ्नन्ति एते मधुसमायुताः ॥ ९४ ॥**

रसाञ्जनमित्यादि । एते योगाः । सशूलं रक्तजं 'अतीसारं' इति शेषः । अन्ये तु 'हन्ति योगोऽयं मधुसंयुतः' इति पठित्वा एक एव योगोऽयमिति मन्यन्ते ॥ ९३ ॥ ९४ ॥

**मधुकं बिल्वपेशी च शर्करामधुसंयुता ॥**
**अतीसारं निहन्युश्च शालिषष्टिकयोः कणाः ॥ ९५ ॥**
**तद्वल्लीढं मधुयुतं बदरीमूलमेव तु ॥**

मधुकमित्यादि । शालिषष्टिकयोः कणाः इति अत्रापि शर्करामधुसंयुता इति संबन्धनीयम् । अयमपरो योगो मधुकं बिल्वपेशी चेत्यादियोगस्याग्रे कैश्चित् पठ्यते । तद्यथा—'योगान् सांग्राहिकांश्चान्यान् पिबेत् सक्षौद्रशर्करान् । न्यग्रोधादिषु कुर्याच्च पुटपाकान् यथेरितान्'—इति ॥ ९५ ॥—

**बदर्यर्जुनजम्ब्वाम्रशल्लकीवेतसत्वचः ॥ ९६ ॥**
**शर्कराक्षौद्रसंयुक्ताः पीता घ्नन्त्युदरामयम् ॥**

बदर्यर्जुनेत्यादि । अर्जुनः ककुभः; बदर्यादीनां त्वचः शर्कराक्षौद्रयुताः पीता उदरामयमतीसारं घ्नन्तीत्यर्थः ॥ ९६ ॥—

**एतैरेव यवागूंश्च षडान् यूषांश्च कारयेत् ॥ ९७ ॥**
**पानीयानि च तृष्णासु द्रव्येष्वेतेषु बुद्धिमान् ॥**

एतैरेव यवागूंश्चेत्यादि । एतैरेव बदर्यादिभिः । षडा दाडिमगोरसादिना घनपल्लवफलादिभिः कृताः । 'रसाञ्जनं सातिविषं' इत्यादिकं 'द्रव्येष्वेतेषु बुद्धिमान्' इत्यन्तं रक्तातीसारचिकित्सितं **कार्तिकाचार्यो** न पठति, रक्तातीसारस्यानङ्गीकृतत्वात्; पित्तातीसारावस्थायां च यो रक्तातीसारस्तस्य चिकित्सा 'पित्तातिसारी यो मर्त्य' इत्यादिना वक्ष्यमाणाऽस्ति; **श्रीजेज्जटाचार्येणैव** पाठो विमृश्यैव सर्वोऽपि पठितस्तन्मतानुसारिणा **श्रीब्रह्मदेवेनापि** ॥ ९७ ॥—

**कृतं शाल्मलिवृन्तेषु कषायं हिमसंज्ञितम् ॥ ९८ ॥**
**निशापर्युषितं पेयं सक्षौद्रं मधुकान्वितम् ॥**

कृतं शाल्मलिवृन्तेषु कषायमित्यादि । कषायं हिमसंज्ञितमिति शीतकषायमित्यर्थः; नतु क्वथितं, हिमशब्दोपादानात् । शीतकषायविधिमाह—द्रव्यचूर्णमुपादाय अहोरात्रं तुल्ये जले स्थापयेत्, ततो मृदितं वस्त्रपूतं पलचतुष्टयप्रमाणं मधु यष्टीमधु च कर्षप्रमाणं प्रक्षिप्य पेयमित्यर्थः ॥ ९८ ॥—

**विबद्धवातविट् शूलपरीतः सप्रवाहिकः ॥ ९९ ॥**
**सरक्तपित्तश्च पयः पिबेत्तृष्णासमन्वितः ॥**
**यथाऽमृतं तथा क्षीरमतीसारेषु पूजितम् ॥ १०० ॥**
**चिरोत्थितेषु तत् पेयमपां भागैस्त्रिभिः शृतम् ॥**
**दोषशेषं हरेत्तद्धि तस्मात्पथ्यतमं स्मृतम् ॥ १०१ ॥**
**हितः स्नेहविरेको वा बस्तयः पिच्छिलाश्च ये ॥**
**पिच्छिलस्वरसे सिद्धं हितं च घृतमुच्यते ॥ १०२ ॥**

चूर्णादीनभिधाय क्षीरपानस्य विषयमाह—विबद्धवातविट् शूलपरीत इत्यादि । विबद्धः अवरुद्धो वातोविट् च यस्य सः, तथा शूलपरीतः, तथा प्रवाहिकायुक्तः, तथा रक्तपित्तान्वित इति विषयचतुष्टयमस्य क्षीरस्य । पयः पिबेदित्युक्तं तत् कीदृशं पेयमित्याह—अपां भागैरित्यादि; अपां भागैरित्युपादानात् केवलजलेन क्षीरसाधनमत्रोक्तम् । दोषशेषहारित्वं क्षीरस्य प्रभावात् । तत् क्षीरम् । हि यस्मादर्थे । स्नेहविरेकोऽत्र विरेचनीयद्रव्यसंस्कृतेन स्नेहेन स्वभावेन विरेचनस्नेहेन वा । बस्तयः पिच्छिलाश्च ये बस्तयो बस्तिविकारोक्तवक्ष्यमाणाश्च । पिच्छिला अरलुशाल्मलीप्रभृतयः, तेषां स्वरसे सिद्धं घृतं बस्तौ हितमित्यर्थः ॥ ९९-१०२ ॥

**शकृता यस्तु संसृष्टमतिसार्येत शोणितम् ॥**
**प्राक् पश्चाद्वा पुरीषस्य सरुक् सपरिकर्तिकः ॥ १०३ ॥**
**क्षीरिशुङ्गाश्टतं सर्पिः पिबेत् सक्षौद्रशर्करम् ॥**

अवस्थावशेन चिकित्सितमाह—शकृतेत्यादि । शकृता पुरीषेण संसृष्टं सरुक् सशूलं, सपरिकर्तिकः बस्तिगुदमेढ्रेषु परिकृन्तनमिव वातवेदना परिकर्तिका तत्सहित इत्यर्थः । क्षीरिशुङ्गाः वटाश्वत्थादीनां नूतनपत्राङ्कुराः । घृतपाकप्रमाणं स्नेहाध्यायोक्तं, क्षौद्रशर्कराप्रक्षेपः प्रत्येकं कर्षप्रमाणः ॥ १०३ ॥—

**दार्वीत्वक्पिप्पलीशुण्ठीलाक्षाशक्रयवैर्घृतम् ॥ १०४ ॥**
**संयुक्तं भद्ररोहिण्या पक्वं पेयादिमिश्रितम् ॥**
**त्रिदोषमप्यतीसारं पीतं हन्ति सुदारुणम् ॥ १०५ ॥**

तस्यामेवावस्थायामपरमपि घृतमाह—दार्वीत्वगित्यादि । दार्वीत्वक् दारुहरिद्रात्वक् । अन्ये दार्वी दारुहरिद्रा, त्वक् त्वचमाहुः । भद्ररोहिणी कटुका । दार्वीत्वगादिभिर्भद्ररोहिणीपर्यन्तैः स्नेहचतुर्थांशैरुदकचतुर्गुणं घृतं पक्वं पेयायवागूप्रभृतिभिर्युक्तं पीतं त्रिदोषमप्यतीसारं हन्तीति संबन्धः ॥ १०४ ॥ १०५ ॥

**गौरवे वमनं पथ्यं यस्य स्यात् प्रबलः कफः ॥**
**ज्वरे दाहे सविड्बन्धे मारुताद्रक्तपित्तवत् ॥ १०६ ॥**

प्रागामावस्थायां वमनमभिधायेदानीं पक्वावस्थायामपि वमनमाह—गौरवे वमनमित्यादि । गौरवे जठरगौरवे, रक्तपित्तवदिति यथा रक्तपित्तेऽधोगते वमनं तथा अतीसारेऽपि गौरवादियुक्ते यस्य पुरुषस्य प्रबलः कफो भवेत्, मारुतात् विड्बन्धे च सति वमनं पथ्यमिति संबन्धः । ननु वमनं कथमतीसारघ्नम्? उच्यते–द्रवश्लेष्मणः क्षयाद्विपरीतमार्गचिकित्साप्रभावाद्वा ॥ १०६ ॥

**संपक्के बहुदोषे च विबन्धे मूत्रशोधनैः ॥**
**कार्यमास्थापनं क्षिप्रं तथा चैवानुवासनम्[1] ॥ १०७ ॥**

आस्थापनानुवासनविषयमाह—संपक्केत्यादि । संपक्के 'अतीसारे' इति शेषः । विबन्धे अधोवातादीनामप्रवृत्तौ । मूत्रशोधनैः तृणपञ्चमूलीपाषाणभेदगोक्षुरप्रभृतिभिः । आस्थापनं निरूहः ॥ १०७ ॥

**प्रवाहणे[2] गुदभ्रंशे मूत्राघाते कटिग्रहे ॥**
**मधुराम्लैः शृतं तैलं सर्पिर्वाऽप्यनुवासनम् ॥ १०८ ॥**

अनुवासनस्यापरं विषयमाह—प्रवाहणे इत्यादि । गुदभ्रंशे गुदनिःसरणे, मधुरैः काकोल्यादिभिः, अम्लैः बीजपूरककपित्थचुक्रिकावृक्षाम्लकाञ्जिकादिभिः ॥ १०८ ॥

**गुदपाकस्तु पित्तेन यस्य स्यादहिताशिनः ॥**
**तस्य पित्तहराः सेकास्तत्सिद्धाश्चानुवासनाः ॥ १०९ ॥**

गुदपाक इत्यादि । यस्य अतीसारिणः, अहिताशिनः अपथ्यभोजिनः । तत्र गुदपाके पित्तहराः सेकाः क्षीरेक्षुरसशर्करोदकमधुरौषधकषायैः कृताः, तत्सिद्धाः पित्तहरैः सिद्धा अनुवासनाः स्नेहाः । यद्यपि गुदपाकः पित्तेनैव स्यात्तथाऽपि 'गुदे पक्के गतोष्माणमतीसारकिणं त्यजेत्' इति यो गुदपाकोऽभिहितस्तत्परिहारार्थमहिताशित्वेन प्रकुपितपित्तजनितगुदपाकचिकित्सार्थं च 'गुदपाकस्तु पित्तेन' इत्युक्तम् ॥ १०९ ॥

**दधिमण्डसुराबिल्वसिद्धं तैलं समारुते ॥**
**भोजने च हितं क्षीरं कच्छुरामूलसाधितम् ॥ ११० ॥**

तैलानुवासनविषयमाह—दधीत्यादि । दधिमण्डो दधिमस्तु । दधिमण्डादिभिः सिद्धं तैलमनुवासने देयमित्यर्थः । समारुते 'अतीसारे' इति शेषः । कच्छुरा कङ्कतिका, 'शूकशिम्बा' इत्येके, 'दुरालभा' इत्यन्ये ॥ ११० ॥

**अल्पाल्पं बहुशो रक्तं सरुग्य उपवेश्यते ॥**
**यदा वायुर्विबद्धश्च पिच्छाबस्तिस्तदा हितः ॥ १११ ॥**

पिच्छाबस्तेर्विषयमाह—अल्पाल्पमित्यादि । बहुशो बहून् वारान्, सरुक् सवेदनं, य उपवेश्यते अतिसार्यते, तस्य तदा पिच्छाबस्तिर्हित इति संबन्धः । पिच्छाबस्तिः पिच्छिलद्रव्यैः कृतः; स च 'बदर्यैरावतीशेलुशाल्मली' ( चि. अ. ३८ ) इत्यादिना निरूहक्रमोक्तः; जेज्जटाचार्यस्तु 'अत्रैवाध्याये वक्ष्यमाणानां 'कपित्थशाल्मलीफञ्जी' इत्यादिद्रव्याणां कल्कपिण्डं पुटपाकविधिना संस्वेद्य निष्पीड्य रसमानीय तेन रसेन सक्षीरेण पिच्छाबस्तिर्देयः, अथवा कपित्थादिद्रव्यकल्कं क्षीरेणालोड्य पिच्छाबस्तिर्देयः' इति मन्यते ॥ १११ ॥

**प्रायेण गुददौर्बल्यं दीर्घकालातिसारिणाम् ॥**
**भवेत्तस्माद्धितं तेषां गुदे तैलावचारणम् ॥ ११२ ॥**

दीर्घकालातिसारिणां गुददौर्बल्ये चिकित्सितमाह—प्रायेण गुददौर्बल्यमित्यादि । तैलावचारणं पिचुसेकानुवासनैः; सदाहे गुददौर्बल्ये पुनर्घृतमवचारणीयम् ॥ ११२ ॥

**कपित्थशाल्मलीफञ्जीवटकार्पासदाडिमाः ॥**
**यूथिका कच्छुरा शेलुः शणश्चुचूश्च दाधिकाः ॥ ११३ ॥**

अतीसारशूले चिकित्सितमाह—कपित्थशाल्मलीत्यादि । फञ्जी पाठभेदः, अन्ये भार्गीमाहुः । कच्छुरा कङ्कतिका, अन्ये दुरालभामाहुः । शेलुः श्लेष्मातकः । दाधिका दध्ना संस्कृताः । हितशब्दोऽत्र वक्ष्यमाणः संबध्यते, स चार्थाद्बहुवचनान्तो द्रष्टव्यः । कपित्थादयश्चुचूपर्यन्ता दध्ना संस्कृता हिता इत्यर्थः ॥ ११३ ॥

**शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ॥**
**बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम् ॥ ११४ ॥**
**एष आहारसंयोगे हितः सर्वातिसारिणाम् ॥**

पेयाद्युपयोगद्रव्याण्याह—शालपर्णीत्यादि । एष शालपर्ण्यादिः । आहारसंयोगे पेयादिसंस्कारे; संस्कारश्च शालपर्ण्यादिद्रव्यपलचतुष्टयं जलाढके साधयित्वा अर्धशृतेन तेन पेयादि साधनीयं; वृद्धवैद्यास्तु बहुद्रव्यसाधिताम्बुसंस्कृताहारस्यारुचिकरत्वादाढकेऽम्भसि पलमात्रं द्रव्यं साधयन्ति । भक्तादिसाधने द्रवप्रमाणं तन्त्रान्तराज्ज्ञेयं; तथा हि—"भक्तं पञ्चगुणे तोये यवागूं षड्गुणे पचेत् । चतुर्दशगुणे पेयां विलेपीं च चतुर्गुणे"—इति । एष शालपर्ण्यादिर्दशाङ्गत्वेन प्रसिद्धः ॥ ११४ ॥—

**तिलकल्को हितश्चात्र मौद्गो मुद्गरसस्तथा ॥ ११५ ॥**

तिलकल्क इत्यादि । मौद्गो मुद्गस्य कल्कः ॥ ११५ ॥

**पित्तातिसारी यो मर्त्यः पित्तलान्यतिषेवते ॥**
**पित्तं प्रदुष्टं तस्याशु रक्तातीसारमावहेत् ॥ ११६ ॥**
**ज्वरं शूलं तृषां दाहं गुदपाकं च दारुणम् ॥**

इदानीं पित्तातीसारस्यैवावस्थाविशेषं रक्तातीसारमाह—पित्तातिसारी यो मर्त्य इत्यादि । पित्तलान्येवेति अन्नपानादीनि । दारुणं कष्टसाध्यम् ॥ ११६ ॥—

**यो रक्तं शकृतः पूर्वं पश्चाद्वा प्रतिसार्यते ॥ ११७ ॥**
**स पल्लवैर्वटादीनां ससर्पिः साधितं पयः ॥**
**पिबेत् सशर्कराक्षौद्रमथवाऽप्यभिमथ्य तत् ॥ ११८**
**नवनीतमथो लिह्यात्तक्रं चानुपिबेत्ततः ॥**

पित्तातीसारस्यैवावस्थान्तरमभिधाय चिकित्सितमाह—यो रक्तमित्यादि । सः पित्तातीसारयुक्तः पुरुषः । वटादीनां न्यग्रोधादीनाम्; अत्र न्यग्रोधादिपल्लवानां पलार्धं, क्षीरपलचतुष्टयं, चतुर्गुणं जलं च दत्त्वा साधयित्वा क्षीरा-

[1] 'तथैवाप्यनुवासनम्' इति पा० । [2] 'प्रवाहेण' इति पा० ।

वशेषं प्राह्यं, तच्च घृतकर्षैकयुतं मध्याग्निः पिबेत् । अभिमथ्य विलोड्य । तत्क्षीरं तदुत्पन्नं नवनीतं च शर्करामधुयुतं लिह्यादित्यर्थः । अन्ये तु वटादिपल्लवशृतं क्षीरं मधुघृतशर्करादियुक्तं पिबेदिति मन्यन्ते; तत एव च नवनीतं केवलं लिह्यात्, ततस्तक्रं पिबेदिति वदन्ति ॥ ११७ ॥ ११८ ॥—

प्रियालशाल्मलीप्लक्षशल्लकीतिनिशत्वचः ॥ ११९ ॥
क्षीरे विमृदिताः पीताः सक्षौद्रा रक्तनाशनाः ॥

प्रियालशाल्मलीप्लक्षेत्यादि । प्रियालादीनां त्वचः पृथक् पृथक् पेयाः सामस्त्येन वा । प्रियालः चारः, प्लक्षः पर्कटी, तिनिशः स्यन्दनः । क्षीरे अजाक्षीरे, तन्त्रान्तरोक्तत्वात् । विमृदिता आलोडिताः । सक्षौद्रा मधुसहिताः ॥ ११९ ॥—

मधुकं शर्करां लोध्रं पयस्यामथ सारिवाम् ॥१२०॥
पिबेच्छागेन पयसा सक्षौद्रं रक्तनाशनम् ॥

मधुकं शर्करां लोध्रमित्यादि । पयस्या अर्कपुष्पी ॥१२०॥–

मञ्जिष्ठां सारिवां लोध्रं पद्मकं कुमुदोत्पलम् ॥१२१॥
पिबेत् पद्मां च दुग्धेन छागेनासृक्प्रशान्तये ॥

मञ्जिष्ठां सारिवामित्यादि । पद्मकं प्रसिद्धं, कुमुदं श्वेतम्, उत्पलं नीलं, पद्मा भार्गी । मञ्जिष्ठादीनि कल्कीकृतानि चूर्णितानि वा छागदुग्धेन पिबेदित्यर्थः ॥ १२१ ॥—

शर्करोत्पललोध्राणि समङ्गा मधुकं तिलाः ॥१२२॥
तिलाः कृष्णाः सयष्ट्याह्वाः समङ्गा चोत्पलानि च ॥
तिला मोचरसो लोध्रं तथैव मधुकोत्पलम् ॥१२३॥
कच्छुरा तिलकल्कश्च योगाश्चत्वार एव च ॥
आजेन पयसा पेयाः सरक्ते मधुसंयुताः ॥ १२४ ॥

शर्करोत्पललोध्राणीत्यादि । समङ्गा वराहक्रान्ता । तिलाः कृष्णाः कृष्णतिलाः, सयष्ट्याह्वा यष्टीमधुसहिताः । मोचरसः शाल्मलीनिर्यासः । कच्छुरा कच्छुतिका । सरक्ते पुरीषे 'स्रवति' इति शेषः । शर्करेत्यादिचत्वारो योगाः श्लोकार्धिका मधुसहिताः सरक्ते पुरीषे छागदुग्धेन पेया इत्यर्थः ॥१२२–१२४॥

द्रवे सरक्ते स्रवति बालबिल्वं सफाणितम् ॥
सक्षौद्रतैलं प्रागेव लिह्यादाशु हितं हि तत् ॥१२५॥

सरक्ते अद्रवे च पुरीषे सरति चिकित्सितमभिधाय सरक्तद्रवातीसारिणश्चिकित्सितमाह—द्रवे सरक्ते इत्यादि । द्रवे द्रवमले, 'उदकधातौ' इत्यन्ये । फाणितं काकवी, सक्षौद्रतैलं मधुतैलसहितं, प्रागेवेति भोजनात् पूर्वं हितम् । 'आशु हितम्' इत्यत्र 'हितकरम्' इत्यन्ये पठन्ति ॥ १२५ ॥

कोशकारं घृते भृष्टं लाजचूर्णं सिता मधु ॥
सशूलं रक्तपित्तोत्थं लीढं हन्त्युदरामयम् ॥१२६॥

कोशकारमित्यादि । कोशकार इक्षुभेदः । अत्र विधिः—निस्त्वचं कोशकारस्य सूक्ष्मखण्डं घृते भृष्ट्वा पेषयित्वा लाजशर्कराचूर्णमिश्रं मधुना लिहन् रक्तपित्तोत्थं सशूलमुदरामयमतीसारं हन्तीत्यर्थः ॥ १२६ ॥

बिल्वमध्यं समधुकं शर्कराक्षौद्रसंयुतम् ॥
तण्डुलाम्बुयुतो योगः पित्तरक्तोत्थितं जयेत्॥१२७॥

बिल्वमध्यमित्यादि । अवस्थावशेन पित्ताद्रक्ताद्वा उत्थितं, न तु रक्तपित्ताभ्यामेवोत्थितं, एवं सत्यतीसाराणां सप्तत्वं स्यात् ॥ १२७ ॥

योगान् सांग्राहिकांश्चान्यान् पिबेत्सक्षौद्रशर्करान् ॥
न्यग्रोधादिषु कुर्याच्च पुटपाकान् यथेरितान् ॥१२८॥

अत्र सांग्राहिकानिति सामान्योक्तावपि पित्तातिसारोक्तानिति प्रत्येतव्यम्, औपयिकत्वात् । ननु, न्यग्रोधादिषु पुटपाका दर्शिताः, तत्कथं पुनरभिधीयन्ते ? उच्यते—न्यग्रोधादिषु कुर्याच्चेति यथेरितान् पुटपाकान् कुर्यादिति योजनात् ॥ १२८ ॥

गुदपाके च ये उक्तास्तेऽत्रापि विधयः स्मृताः ॥

गुदपाके चेत्यादि । ये उक्ताः सेकादयस्ते पित्तरक्तोत्थितेऽतीसारे हिताः ॥—

रुजायां चाप्रशाम्यन्त्यां पिच्छाबस्तिर्हितो भवेत् ॥

अवस्थावशेन पुनः पिच्छाबस्तिमाह—रुजायामित्यादि ॥ १२९ ॥

सक्तविड् दोषबहुलं दीप्ताग्निर्योऽतिसार्यते ॥
विडङ्गत्रिफलाकृष्णाकषायैस्तं विरेचयेत् ॥ १३० ॥
अथवैरण्डसिद्धेन पयसा केवलेन वा ॥
यवागूर्वितरेच्चास्य वातघ्नैर्दीपनैः कृताः ॥ १३१ ॥

इदानीमवस्थापेक्षमतीसारे विरेचनमाह—सक्तविडित्यादि । सक्तविट् विबद्धपुरीषः । दोषबहुलमिति दोषशब्दोऽत्र पुरीषवचनः, तेन पुरीषबहुलमित्यर्थः । तम् अतीसारिणं, विडङ्गादिकषायैर्विरेचयेदित्यर्थः । अथवेत्यादि । एरण्डमूलसिद्धेन केवलेन क्षीरेण विरेचयेदिति संबन्धः । विरेचितस्य किं कार्यमित्याह—यवागूरित्यादि । वातघ्नैर्दीपनैरिति शालिपर्ण्यादिभिः । ननु, 'स्तोकं स्तोकं विबद्धम्' इत्यादावसम्यक्प्रवर्तमाने पुरीषे विरेचनमुक्तम्, अत्रातिप्रवर्तमाने कथं विरेकः ? उच्यते—अत्रातीसारातिप्रवर्तकस्य प्रकुपितपित्तस्य विरेचनेन निराकरणादित्यदोषः ॥ १३० ॥ १३१ ॥

दीप्ताग्निर्निष्पुरीषो यः सार्यते फेनिलं शकृत् ॥
स पिबेत् फाणितं शुण्ठीदधितैलपयोघृतम् ॥१३२॥

अतोऽतीसारस्यैवावस्थान्तरान्वितस्य निःसीरकसंज्ञकस्य लक्षणं चिकित्सितं चाह—दीप्ताग्निर्निष्पुरीषो य इत्यादि । निष्पुरीषः क्षीणवर्चाः, फेनिलं शकृत् फेनवत् पुरीषमित्यर्थः । फाणितं काकवी, तैलं तिलतैलं, पयो दुग्धं, फाणितमित्यादिकं घृतान्तमेकीकृत्य पिबेदित्यर्थः ॥ १३२ ॥

स्विन्नानि गुडतैलाभ्यां भक्षयेद्बदराणि च ॥

अत्रैव द्वितीयं योगमाह—स्विन्नानीत्यादि ॥—

स्विन्नानि पिष्टवद्वाऽपि समं बिल्वशलाटुभिः १३३

तृतीययोगमाह—स्विन्नानीत्यादि । स्विन्नानि 'बदराणि'

१ 'द्रवति' इति पा० । २ 'इक्षुभमेदः' इति पा० । 'कोशकारो नाम कौशेयवस्त्रोपादानभूततन्तूत्पादकः कीटविशेषः' इति हाराणचन्द्रः ।

१ 'निश्चारकसंज्ञिकस्य' इति पा० ।

इति शेषः । पिष्टवदिति पिष्टस्वेदनविधिनेत्यर्थः । समं बिल्वशलाटुभिः बालबिल्वफलैः सहेत्यर्थः । एतेन बिल्वशलाटुभिः सह बदराणि पिष्टस्वेदनविधिना खिन्नानि शीतीभूतानि गुडतैलाभ्यामश्नीयादित्यर्थः । अन्ये त्वन्यथा पठन्ति—'सुखिन्नान् पिष्टवद्वाऽपि माषान् बिल्वशलाटुभिः' इति । माषानिति क्षीणपुरीषस्य पुरीषजननार्थं माषोपदेशः ॥ १३३ ॥

दध्नोपयुज्य कुल्माषान् श्वेतामनुपिबेत् सुराम् ॥

चतुर्थं योगमाह—दध्नोपयुज्येत्यादि । कुल्माषान् आस्तरखिन्नान् यवपिष्टमयान् । श्वेतां सुरां पैष्टीम् । कुल्माषान् दध्ना सहोपयुज्य पैष्टीं सुरां पिबेदित्यर्थः ॥—

शशमांसं सरुधिरं समङ्गां सघृतं दधि ॥ १३४ ॥
खादेद्विपाच्य सेवेत मृद्वन्नं शकृतः क्षये ॥

पञ्चमं योगमाह—शशमांसमित्यादि । समङ्गा लज्जालुका, दधिसंयुतं कल्कं शशरुधिरेणैव प्राश्नीयान्मलसंक्षये इति । अन्ये 'समङ्गां' इत्यत्र 'समांशं' इति पठन्ति, व्याख्यानयन्ति च—शशमांसरुधिरेण समांशं तुल्यं कृत्वा सघृतं सदधि विपाच्य खादेदित्यर्थः । सेवेत मृद्वन्नमिति मृद्वन्नमत्र पुरीषजनकं माषादिकं संस्कृतम् । शकृतः क्षये पुरीषक्षये ॥१३४॥—

संस्कृतो यमके माषयवकोलरसः शुभः ॥ १३५ ॥
भोजनार्थं प्रदातव्यो दधिदाडिमसाधितः ॥

वर्चःक्षये यूषप्रयोगमाह—संस्कृत इत्यादि । यमके घृततैले, रसोऽत्र क्वाथः; माषादियूषो घृततैलसंस्कृतो दधिदाडिमाभ्यां सह साधितश्च क्षीणपुरीषस्य भोजनार्थं प्रदातव्य इत्यर्थः ॥ १३५ ॥—

विडं बिल्वशलाटूनि नागरं चाम्लपेषितम् ॥१३६॥
दध्नः सरश्च यमके भृष्टो वर्चःक्षये हितः ॥

क्षीणवर्चसः अपरं योगमाह—विडमित्यादि । विडं लवणभेदः, दध्नः सरो दध्न उपरितनो भागः । यमके घृततैले ॥ १३६ ॥—

सशूलं क्षीणवर्चा यो दीप्ताग्निरतिसार्यते ॥
स पिबेद्दीपनैर्युक्तं सर्पिः संग्राहकैः सह ॥ १३७ ॥

विशिष्टावस्थाहितमष्टमयोगमाह—सशूलमित्यादि । दीपनैः चित्रकादिभिः, संग्राहकैः धातकीबिल्वशलाटुप्रभृतिभिः । यः क्षीणपुरीषो दीप्ताग्निरतिसार्यते स चित्रकादिधातक्यादिद्रव्यचूर्णयुक्तमपक्वमेव सर्पिः पिबेदित्यर्थः ॥ १३७ ॥

वायुः प्रवृद्धो निचितं बलासं
नुदत्यधस्तादहिताशनस्य ॥
प्रवाहमाणस्य मुहुर्मलाक्तं
प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः ॥ १३८ ॥

इदानीं प्रवाहिकासंज्ञमतीसारभेदमाह—वायुरित्यादि । निचितं संचयप्राप्तं, बलासं श्लेष्माणं, नुदति प्रेरयति, अधस्ताद् गुदमार्गे, प्रवाहमाणस्य प्रेर्यमाणस्य, मुहुः वारंवारं, मलाक्तम् ईषत्पुरीषमिश्रं, 'श्लेष्माणं' इति शेषः; एतेनैतदुक्तं भवति—यत्र रोगे वातप्रेरितं कफं पुरुषः प्रेरयति, तां प्रवाहिकां कफं प्रवाहमाणस्य प्रेर्यमाणस्य तज्ज्ञाः प्रवदन्तीति संबन्धः । बलासमित्युपलक्षणं, तेन पित्तं रक्तं वा निचितमिति ज्ञेयम् ॥ १३८ ॥

प्रवाहिका वातकृता सशूला
पित्तात् सदाहा सकफा कफाच्च ॥
सशोणिता शोणितसंभवा तु
ताः स्नेहरूक्षप्रभवा मतास्तु ॥ १३९ ॥
तासामतीसारवदादिशेच्च
लिङ्गं क्रमं चामविपक्वतां च ॥

वातादिभेदेन प्रवाहिकामाह—प्रवाहिका वातकृतेत्यादि । स्नेहरूक्षप्रभवा इति स्नेहरूक्षाभ्यां प्रभवो यासां तास्तथा; एतच्च प्रायिकम् । ताः प्रवाहिकाः । तासामित्यादि । तासां प्रवाहिकाणां; यद्यपि वातादिभेदेन प्रागेव प्रवाहिकाणां लक्षणमुक्तं तथाऽप्यतीसारवदादिशेच्च लिङ्गमित्यभिधानमधिकलिङ्गज्ञापनार्थम् । क्रमं क्रियाक्रमम् । आमविपक्वताम् आमतां विपक्वतां चेत्यर्थः ॥ १३९ ॥—

न शान्तिमायाति विलङ्घनैर्या
योगैरुदीर्णा यदि पाचनैर्वा ॥ १४० ॥
तां क्षीरमेवाशु शृतं निहन्ति
तैलं तिलाः पिच्छिलवस्तयश्च ॥

लङ्घनाद्युपक्रमैर्या प्रवाहिका न प्रशाम्यति तां कथं चिकित्सेदित्याह—न शान्तिमित्यादि । उदीर्णा उत्कटा या प्रवाहिका लङ्घनैः पाचनयोगैर्वा शान्तिं न याति तां क्षीरादिकं हन्तीति संबन्धः ॥ १४० ॥—

आर्द्रैः कुशैः संपरिवेष्टितानि
वृन्तान्यथार्द्राणि हि शाल्मलीनाम् ॥१४१॥
पक्वानि सम्यक् पुटपाकयोगे-
नापोथ्य तेभ्यो रसमाददीत ॥
क्षीरं शृतं तैलहविर्विमिश्रं
कल्केन यष्टीमधुकस्य वाऽपि ॥ १४२ ॥
बस्तिं विदध्याद्भिषगप्रमत्तः
प्रवाहिकामूत्रपुरीषसङ्गे ॥

पिच्छाबस्तिमाह—आर्द्रैः कुशैरित्यादि । बस्तिं पिच्छाबस्तिम्; अस्य प्रमाणं निरूहोक्तविधिनोक्तं (चि. अ. ३८) ज्ञातव्यम् । अप्रमत्तः सावधानः ॥ १४१ ॥ १४२ ॥—

द्विपञ्चमूलीकथितेन शूले
प्रवाहमाणस्य समाक्षिकेण ॥ १४३ ॥
क्षीरेण चास्थापनमग्र्यमुक्तं

१ 'तद्रुधिरेणैव' इति पा० । २ 'दीप्ताग्निस्तूर्णमतिसार्यते' इति पा० ।

अवस्थाविशेषे[1] आस्थापनोपदेशमाह—द्विपञ्चमूलीत्यादि । द्विपञ्चमूलीकथितेन दशमूलीकथितेन । आस्थापनं निरूहः । अग्र्यं श्रेष्ठम् । क्षीरपाककल्पेन दशमूलीसाधितेन क्षीरेण मधुसहितेनास्थापनं श्रेष्ठमुक्तं, प्रवाहमाणस्य शूले भवतीति संबन्धः ॥ १४३ ॥—

तैलेन युञ्ज्यादनुवासनं च ॥

अनुवासनमाह—तैलेनेत्यादि । द्विपञ्चमूलीसाधितक्षीरसिद्धेन तैलेनानुवासनं युञ्ज्यादित्यर्थः; न पुनरपक्वतैलेन, तस्य व्यापत्करत्वात् ॥—

वातघ्नवर्गे लवणेषु चैव
तैलं च सिद्धं हितमन्नपाने ॥ १४४ ॥

अन्नसंस्कारार्थं पानार्थं च तैलमाह—वातघ्नवर्गे इत्यादि । वातघ्नवर्गे विदारिगन्धादौ, लवणेषु सैन्धवसौवर्चलादिषु; अत्र विदारिगन्धादिक्वाथेन सैन्धवाद्यावापेन सिद्धं तैलमन्नसंस्कारे पाने च हितमित्यर्थः । अन्ये तु 'लवणेषु च' इत्यत्र 'मधुरेषु' इति पठन्ति, एवमन्यत्र दृष्टत्वात् ॥ १४४ ॥

लोध्रं विडं बिल्वशलाटु चैव
लिह्याच्च तैलेन कटुत्रिकाढ्यम् ॥

लेहप्रयोगमाह—लोध्रं विडमित्यादि । कटुत्रिकाढ्यमिति त्रिकटुप्रधानं स्पष्टत्रिकटुकमित्यर्थः ॥—

दध्ना ससारेण समाक्षिकेण
भुञ्जीत निश्चा(ःसा)रकपीडितस्तु ॥१४५॥
सुतप्तकुप्यक्वथितेन वाऽपि
क्षीरेण शीतेन मधुप्लुतेन ॥
शूलार्दितो व्योषविदारिगन्धा-
सिद्धेन दुग्धेन हिताय भोज्यः ॥ १४६ ॥
वातघ्नसांग्राहिकदीपनीयैः
कृतान् षडांश्चाप्युपभोजयेच्च ॥
खादेच्च मत्स्यान् रसमाप्नुयाच्च
वातघ्नसिद्धं सघृतं सतैलम् ॥ १४७ ॥
एणाव्यजानां तु वटप्रवालैः
सिद्धानि सार्धं पिशितानि खादेत् ॥
मेध्य(घ)स्य सिद्धं त्वथ वाऽपि रक्तं
बस्तस्य दध्ना घृततैलयुक्तम् ॥ १४८ ॥
खादेत् प्रदेहैः शिखिलावजैर्वा
भुञ्जीत यूषैर्दधिमिश्रमुख्यैः ॥
माषान् सुसिद्धान् घृतमण्डयुक्तान्
खादेच्च दध्ना मरिचोपदंशान् ॥ १४९ ॥

लोध्रादिकं लीढ्वा भोजनमाह—दध्ना ससारेणेत्यादि । दध्ना ससारेण उपरितनस्निग्धभागसराख्यसहितेन, समाक्षिकेण मधुसहितेन, एवंविधेन दध्ना सह भोजनं कुर्वीतेत्यर्थः । निश्चारकः प्रवाहिकाभेदः पुरीषक्षयापरपर्यायः, तेन पीडितः;—अन्ये तु निश्चारकाभिधानेन अतिसारः[1] प्रवाहिका चोच्यते इति मन्यन्ते, अत्रोक्तयोगानामुभयहितत्वापादनार्थम् । नन्वयमर्थः 'तासामतीसारवदादिशेच्च' इत्यनेन प्राप्तः, पुनरत्राभिधानेन किं प्रयोजनम् ? उच्यते—अत्रोक्तयोगाः प्रवाहिकायां विशेषेण हिता इति ज्ञापनार्थम् । सुतप्तेत्यादि ।—सुतप्तसुवर्णरूप्येतरलोहप्रक्षेपक्वथितेन क्षीरेण; अन्ये त्वघटितं रूप्यादिकं कुप्यमाचक्षते; केचित् कुप्यस्थाने कूर्पमिति पठन्ति व्याख्यानयन्ति च—कूर्पो दक्षिणापथे पाषाणविशेषः शङ्खमुण्डाकृतिः रसायनवादेषु प्रयुज्यते । एवंविधेन क्षीरेण वा भुञ्जीतेति संबध्यते । व्योषं त्रिकटु । विदारिगन्धेत्यत्र आदिशब्दो लुप्तो ज्ञेयः, तेन विदारिगन्धादिगणो गृह्यते । त्रिकटुविदारिगन्धादिगणसिद्धेन क्षीरेण शूलार्दितो निश्चारकी हिताय भोज्य इति संबन्धः । वातघ्नेत्यादि ।—वातघ्नानि शालपर्ण्यादीनि, भद्रदार्वादीनीत्यन्ये; सांग्राहिकाणि बिल्वपाठाचाङ्गेरीप्रभृतीनि; दीपनीयानि चित्रकशुण्ठ्यादीनि । षडा सदाडिमा गोरसादाना घनाः । कृताः संस्कृताः । मत्स्यान् सांग्राहिकान् रोहितशकुल्यादीन् । रसं लावादिमांसरसम् । आप्नुयात् पिबेत्, धातूनामनेकार्थत्वात् । वातघ्नानि शालपर्णीपृश्निपर्णीबृहत्यादीनि, तैः सिद्धं; बदरादिसंस्कृतमित्यन्ये व्याख्यानयन्ति । सघृतं सतैलमिति घृततैलेन भृष्टं, वातघ्नसिद्धं घृततैलभृष्टं मांसरसमाप्नुयादिति संबन्धः । एणाव्यजानामित्यादि ।—एणः कृष्णसारः, अविः मेडः, अजा छागी, वटप्रवालैः वटकोमलपल्लवैः, पिशितानि मांसानि; एणादीनां पिशितानि वटप्रवालैः सह सिद्धानि खादेदिति संबन्धः । मेध्यस्येत्यादि ।—मेधो यज्ञस्तदर्हो मेध्यः तस्य; एतेन मेदुरस्येत्युक्तं, यज्ञे तस्यार्हत्वात् । रक्तं स्त्यानं रक्तम्, अत एव खादेदित्युपपन्नम् । बस्तस्य छागस्य । दध्नेति दध्ना सहितमित्यर्थः । 'मेध्यस्य' इत्यत्रान्ये 'मेध्यं च' इति पठन्ति; तत्र मेध्यमिति रक्तस्य विशेषणम्; मेध्यस्य बस्तस्य रक्तं, घृततैलभृष्टं दध्ना संस्कृतं खादेदिति संबन्धः । खादेत् प्रदेहैरित्यादि । पाकेन घनीभूता रसाः प्रदेहाः, तैः । शिखी मयूरः, कुक्कुट इत्यन्ये । प्रलेपैरित्यन्ये पठन्ति । ( तत्रापि स एवार्थः । शिखिलावजैः प्रदेहैश्च सह संस्कृतं तद्रक्तं खादेदिति संबध्नीयात्; अन्ये प्रदेहैरिति भुञ्जीतेत्यत्र संबध्नन्ति । ) यूषैः माषादियूषैः । माषानित्यादि ।—सुसिद्धान् सुस्विन्नान्, घृतमण्डस्तु घृतस्य स्त्यानस्य उपरिस्थो[3] भागस्तेन युक्तान्, मरिचोपदंशान् मरिचावचूर्णितान्; सुस्विन्नान् माषान् घृतमण्डमिश्रान् मरिचावचूर्णितान् खादेदिति संबन्धः ॥१४५–१४९॥

महारुजे मूत्रकृच्छ्रे भिषग् बस्तिं प्रदापयेत् ॥
पयोमधुघृतोन्मिश्रं मधुकोत्पलसाधितम् ॥ १५० ॥
स बस्तिः शमयेत्तस्य रक्तं दाहमथो ज्वरम् ॥

१ 'अवस्थायां' इति पा० । २ 'रसान्' इति पा० ।

१ 'आतिसारिकः' इति पा० । २ अन्ये तु 'दधिदाडिमाम्लैः' इति पठन्ति, 'तत्र दधिदाडिमाम्लैर्यूषैर्भुञ्जीतेति संबन्धः' इति पा० । ३ 'उपर्यच्छो भागः' इति पा० ।

आहारमुपदिश्य बस्तिमाह—महारुजे इत्यादि । बस्तिं निरूहम् । मधुकं यष्टीमधु, उत्पलं नीलोत्पलम् । मधुकनीलोत्पलसाधितेन क्काथेन क्षीरमधुघृतोन्मिश्रितेन बस्तिं भिषक् प्रदापयेत्, स च दत्तः सन् रक्तमित्यादिकं शमयेदिति संबन्धः । यद्यपि प्रवाहिकायां प्रागेव बस्तिरभिहितस्तत्प्र-[1]सङ्गेनैतावपि बस्ती अभिधेयौ भवतः, तथाऽप्यत्र विशिष्टावस्थायां निश्चारकसंज्ञायां महारुजाद्यनुबन्धे विशिष्टौ बस्ती प्रतिपादितौ ॥ १५० ॥—

**मधुरौषधसिद्धं च हितं तस्यानुवासनम् ॥ १५१ ॥**
**रात्रावहनि वा नित्यं रुजार्तो यो भवेन्नरः ॥**

निरूहबस्तिमभिधायानुवासनमाह—मधुरौषधसिद्धमित्यादि । मधुरौषधानि काकोल्यादीनि तैः सिद्धं; रुजार्तो यो नरो भवेत् तस्य मधुरौषधसिद्धमनुवासनं रात्रौ दिने वा हितमिति संबन्धः । यद्यपि रात्रावनुवासनं निषिद्धं तथाऽपि नित्यं शूलार्ते रुग्दाहज्वरसद्भावे सति रात्रावपि देयम् ॥ १५१ ॥—

**यथा यथा सतैलः स्याद्वातशान्तिस्तथा तथा १५२**
**प्रशान्ते मारुते चापि शान्तिं याति प्रवाहिका ॥**
**तस्मात् प्रवाहिकारोगे मारुतं शमयेद्भिषक् ॥१५३॥**

प्रवाहिकारोगेऽनुवासनसाफल्यमाह—यथेत्यादि । याति उपशान्ति गच्छतीत्यर्थः ॥ १५२ ॥ १५३ ॥

**पाठाजमोदाकुटजोत्पलं[2] च**
**शुण्ठी समा मागधिकाश्च पिष्टाः ॥**
**सुखाम्बुपीताः शमयन्ति रोगं**

प्रवाहिकारोगे दीपनीयौषधमाह—पाठाजमोदेत्यादि । सुखाम्बु ईषदुष्णाम्बु । पाठादयः पिप्पल्यन्ताः समास्तुल्याः पिष्टाः सुखाम्बुना पीता रोगं प्रवाहिकाख्यं शमयन्तीति संबन्धः ॥—

**मेध्याण्डसिद्धं सघृतं पयो वा ॥ १५४ ॥**

मेध्याण्डसिद्धमित्यादि । मेध्याण्डं छागलाण्डं, तत्सिद्धं पयः क्षीरं सघृतं प्रवाहिकां शमयेदित्यत्रापि संबध्यते । क्षीरपाकविधिः प्रागुक्तः ॥ १५४ ॥

**शुण्ठीं घृतं सक्षवकं सतैलं**
**विपाच्य लीढ्वाऽऽमयमाशु हन्यात् ॥**

शुण्ठीमित्यादि । क्षवकः छिक्काकरः फणिज्जकाकारो लोके 'छिंकिनी' इति प्रसिद्धः । अत्र विधिः—शुण्ठीक्षवककल्कं सघृततैलमवलेहविधिना विपाच्य लीढ्वा आमयं प्रवाहिकाख्यमाशु हन्यादिति संबन्धः ॥—

**गजाशनाकुम्भिकदाडिमानां**
**रसैः कृता तैलघृते सदध्नि ॥ १५५ ॥**
**बिल्वान्विता पथ्यतमा यवागू-**

गजाशनेत्यादि । गजाशना शल्लकी, कुम्भिका पानीयकुम्भिका, रसैः क्काथैः, कृता संस्कृता । बिल्वान्विता बिल्वगर्भान्विता । शल्लक्यादिक्काथैर्बिल्वगर्भान्विता तैलघृते संस्कृता दध्नि सिद्धा यवागूः पथ्यतमेति संबन्धः ॥ १५५ ॥—

**र्धारोष्णदुग्धस्य तथा च पानम् ॥**

प्रवाहिकायां क्षीरपानस्य पथ्यतमत्वमाह—धारोष्णदुग्धस्येत्यादि । तथेति पथ्यतममित्यर्थः ॥—

**लघूनि पथ्यान्यथ दीपनानि**
**स्निग्धानि भोज्यान्युदरामयेषु ॥ १५६ ॥**
**हिताय नित्यं वितरेद्विभज्य**
**योगांश्च तांस्तान् भिषगप्रमत्तः ॥ १५७ ॥**

इदानीमुपसंहारमाह—लघूनीत्यादि । भोज्यानि भोजनप्रकारान् । उदरामयेषु अतीसारप्रवाहिकाख्येषु । वितरेत् दद्यात् । विभज्येति दोषविशेषमवस्थां च । अन्ये तु 'पथ्यानि योगांश्च विभज्य' इति संबध्नन्ति । योगांश्च तांस्तानिति लघुदीपनस्निग्धान् । अप्रमत्तः सावधानः ॥ १५६ ॥ १५७ ॥

**तृष्णापनयनी लघ्वी दीपनी बस्तिशोधनी ॥**
**ज्वरे चैवातिसारे च यवागूः सर्वदा हिता ॥१५८॥**

एकान्तहितत्वार्थं यवाग्वा गुणकीर्तनमाह—तृष्णापनयनीत्यादि । तृष्णापनयनी पिपासाहरी । सर्वदा सर्वास्ववस्थासु, यतो ज्वरातिसारयोरग्निमान्द्यं भवति, यवागूश्चाग्निदीप्तिकरी, अतः सर्वदा हिता ॥ १५८ ॥

**रूक्षाज्जाते क्रिया स्निग्धा रूक्षा स्नेहनिमित्तजे ॥**
**भयजे सान्त्वनापूर्वा शोकजे शोकनाशिनी ॥१५९॥**
**विषार्शःकृमिसंभूते हिता चोभयशर्मदा ॥**

रोगप्रत्यनीकं चिकित्सितमभिधाय हेतुविपरीतमाह—रौक्ष्यादित्यादि । रूक्षाज्जाते 'अतीसारे' इति शेषः; स्निग्धा क्रिया 'हिता' इति शेषः । भयजे अतीसारे सान्त्वनापूर्वा शा(सा)मप्रयोगपूर्वा । शोकजे पुत्रमित्रकलत्रादिवियोगजे । विषादिसंभूतेऽतीसारे उभयशर्मदा विषार्शःकृमिहिता तज्जनितातिसारे हिता चेत्यर्थः; एतेन हेतुव्याधिप्रत्यनीका क्रियोक्ता ॥१५९॥—

**छर्दिमूर्च्छातृडाद्यांश्च साधयेदविरोधतः ॥ १६० ॥**

अतीसारोपद्रवचिकित्सितमाह—छर्दीत्यादि । अविरोधतः इति 'मूलव्याधेः' इति शेषः ॥ १६० ॥

**समवाये तु दोषाणां पूर्वं पित्तमुपाचरेत् ॥**
**ज्वरे चैवातिसारे च सर्वत्रान्यत्र मारुतम् ॥१६१॥**

नन्वतीसारे त्रयाणां दोषाणां द्वयोर्वा संयोगे पूर्वं को दोष उपचर्यत इत्याह—समवाये तु दोषाणामित्यादि । समवायोऽत्र संयोगः । दोषाणामिति त्रयाणां द्वयोर्वा । किं दोषाणां संयोगे सर्वत्रापि पूर्वं पित्तमुपचरणीयमित्याह—ज्वरे चैवेत्यादि । सर्वत्रान्यत्र मारुतमिति ज्वरातीसारौ विहायान्येषु रोगेषु सर्वत्र वातमुपाचरेदित्यर्थः । यद्यपि ज्वरचिकित्सिते 'शमयेत्' पित्तमेवादौ इत्यादिना ज्वरे दोषाणां समवाये पूर्वं पित्तमुपाचरेदिति प्रोक्तं, तथाऽप्यत्र 'ज्वरे चैव' इति पुनर्यदुक्तं तज्ज्वरेऽतिशयेन पूर्वं पित्तमुपाचरेदिति प्रतिपादना-

१ 'तत्प्रसंगत एवैतावपि' इति पा० । २ 'कुटजस्य बीजैः' इति पा० ।

र्थम् । ये च तन्त्रान्तरीया अतीसारे पूर्वं वातोपक्रममिच्छन्ति तेषामयमभिप्रायः—यत्रातीसारे कफवातसमवायः स्यात्तत्र पूर्वं वातमुपाचरेत्, यस्मात् पाचनेन आमकफक्षयाद्वायोर्वृद्धिः ॥ १६१ ॥

**यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ॥**
**दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥ १६२ ॥**

इदानीमतीसारनिवृत्तिलक्षणमाह—यस्योच्चारमित्यादि । उच्चारं पुरीषम् । सम्यगिति प्रवृत्तिशङ्कारहितम् । वातोऽत्र अधोवातः । दीप्ताग्नेरिति प्रथमावस्थापेक्षया; तेन अतीसारे निवृत्तेऽपि मन्दाग्नेरिति वक्ष्यमाणं न विरुध्यते । लघुकोष्ठस्य उदरगौरवरहितस्य । स्थितो निवृत्तः । उदरामयः अतीसारः १६२

**कर्मजा व्याधयः केचिद्दोषजाः सन्ति चापरे ॥**
**कर्मदोषोद्भवाश्चान्ये**

अवश्यं वक्तव्यत्वादस्य वस्तुन एष प्रदेश इत्यतोऽत्र व्याधीनां कर्मजादिभेदेन त्रैविध्यमाह—कर्मजा व्याधय इत्यादि । तत्र पथ्यैरतानां सद्वृत्तरतानां शास्त्रोक्ताहारविहारसेविनां हेमन्तशिशिरे रक्तपित्ताद्युत्पद्यते, वसन्ते वातव्याध्युत्पत्तिः, प्रावृषि श्लेष्मव्याध्युत्पत्तिरित्यादयो निमित्तमन्तरेण ये चोत्पद्यन्ते ते कर्मजाः; यान् पुनरसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामलक्षणैः मिथ्याहारविहारैः शास्त्रविरुद्धैरासेव्यमानैर्दोषाः कुपिता व्याधीन् जनयन्ति ते दोषजाः; उभयहेतुजाः कर्मदोषजाः ॥—

**कर्मजास्तेष्वहेतुकाः ॥ १६३ ॥**
**नश्यन्ति त्वक्रियाभिस्ते क्रियाभिः कर्मसंक्षये ॥**

तेषां मध्ये कर्मजानां तत्र लक्षणमाह—कर्मजास्तेष्वहेतुकाः; तेषु कर्मजादिषु त्रिषु कर्मजा अहेतुका दोषागन्तुहेतुरहिताः । नश्यन्तीत्यादि ते कर्मजाः, तु पुनः, अक्रियाभिः अचिकित्साभिः, क्रियाभिः प्रायश्चित्तजपहोमोपहारादिरूपाभिः । कर्मसंक्षये व्याधिजनककर्मक्षये । ये व्याधयोऽहेतुका उत्पद्यन्ते अक्रियाभिश्च कर्मक्षये सति नश्यन्ति ते कर्मजा इति संबन्धः ॥ १६३ ॥—

**शाम्यन्ति दोषसंभूता दोषसंक्षयहेतुभिः ॥ १६४ ॥**

दोषजानां लक्षणमाह—शाम्यन्तीत्यादि । ये दोषसंक्षयहेतुभिः शाम्यन्ति ते दोषजा इत्यर्थः ॥ १६४ ॥

**तेषामल्पनिदाना ये प्रतिकष्टा भवन्ति च ॥**
**मृदवो बहुदोषा वा कर्मदोषोद्भवास्तु ते ॥ १६५ ॥**

कर्मदोषजानां लक्षणमाह—तेषामित्यादि । तेषां कर्मादिजानाम् । अल्पनिदाना अल्पकारणा अल्पोत्पादकदोषाः । प्रतिकष्टा इति प्रतिशब्द इत्थम्भूतार्थे; तेनेत्थंभूता अपि ये कष्टा भवन्ति, बहुदोषारब्धाश्च ये मृदवो भवन्ति, ते कर्मदोषोद्भवा व्याधय इति संबन्धः ॥ १६५ ॥

१ 'पथ्यरतानां' इति हस्तलिखितपुस्तके न पठ्यते । २ 'सूत्रेण' इति पा० ।

**कर्मदोषक्षयकृता तेषां सिद्धिर्विधीयते ॥**

कर्मदोषोद्भवानां चिकित्सितमाह—कर्मेत्यादि । तेषाम् उभयजानाम् । कर्मदोषक्षयकृता इति कर्मक्षयकृता यागदानमन्त्रबल्युपहारदेवताराधनगुरुपूजनादिना, दोषक्षयकृता स्नेहस्वेदनवमनादिना । सिद्धिः साधनं, विधीयते क्रियते ॥—

**दुष्यति ग्रहणी जन्तोरग्निसादनहेतुभिः ॥ १६६ ॥**

प्रकृतमिदानीं प्रस्तूयते—तत्रानुत्पन्नातीसारस्यापि ग्रहणीरोगसंभवमाह—दुष्यतीत्यादि । दुष्यति विकृतिं याति । ग्रहणी पित्तधरा कला वह्न्यधिष्ठानत्वेन संजाता । जन्तोः प्राणिनः, अग्निसादनहेतुभिः अग्निनिर्वापणकारणैः, एतेनातीसारं विनाऽपि ग्रहणीरोगसंभव उक्तः ॥ १६६ ॥

**अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ॥**
**भूयः संदूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥ १६७ ॥**
**तस्मात्कार्यः परीहारस्त्वतीसारे विरिक्तवत् ॥**
**यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ १६८ ॥**

उत्पन्नातीसारस्य यथा ग्रहणीरोगोत्पत्तिस्तथा दर्शयन्नाह—अतीसारे इत्यादि । निवृत्तेऽपीति अपिशब्दादनिवृत्तेऽपि । भूयः पुनरपि । ग्रहणीमिति अग्न्यधिष्ठानम् । तस्मादित्यादि यस्मात् पुनर्दूषितो वह्निर्ग्रहण्याख्यमधिष्ठानं दूषयति तस्मादतीसारे विरिक्तवत् परीहारः कार्य इति संबन्धः । परीहारकालावधिमाह—यावदित्यादि ॥ १६७ ॥ १६८ ॥

**षष्ठी पित्तधरा नाम या कला परिकीर्तिता ॥**
**पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्तिता ॥ १६९ ॥**

अथ केयं ग्रहणी यां दूषितो वह्निर्दूषयतीत्याह—षष्ठी पित्तधरेत्यादि । या कला परिकीर्तिता गर्भव्याकरणे शारीरे प्रोक्ता ॥ १६९ ॥

**ग्रहण्या बलमग्निर्हि स चापि ग्रहणीं श्रितः ॥**
**तस्मात् संदूषिते वह्नौ ग्रहणी संप्रदुष्यति ॥ १७० ॥**

यथाऽग्नौ दूषिते सति ग्रहणी प्रदुष्यति तथा दर्शयति—ग्रहण्या इत्यादि । हि यस्मादर्थे, यस्माद्ग्रहण्या अग्न्यधिष्ठानभूताया बलमग्निः स, चाप्यग्निर्ग्रहणीं श्रितो ग्रहणीमाश्रितः, तस्मादग्नौ प्रदूषिते ग्रहणी संप्रदुष्यतीति ॥ १७० ॥

**एकशः सर्वशश्चैव दोषैरत्यर्थमुच्छ्रितैः ॥**
**सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ १७१ ॥**
**पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ॥**
**ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ १७२ ॥**

कैः प्रदुष्यतीत्याह—एकश इत्यादि । अत्यर्थमुच्छ्रितैः अत्यन्तवृद्धैः, एकशो वातादिभिः, सर्वशः सर्वैर्दोषैः, सा ग्रहणी दुष्टा सती भुक्तमन्नं, बहुशो बहून् वारान्, आममपक्वमेव विमुञ्चति । किं सा दुष्टा सती आममेव परं विमुञ्चतीत्याह—पक्वं वेत्यादि । आयुर्वेदविदः अष्टाङ्गज्ञाः ॥ १७१ ॥ १७२ ॥

१ 'संजाता' इति हस्तलिखितपुस्तके न पठ्यते ।

**तस्योत्पत्तौ विदाहोऽन्ने सदनालस्यतृट्क्लमाः ॥**
**बलक्षयोऽरुचिः कासः कर्णक्ष्वेडोऽन्त्रकूजनम् १७३**

अतो ग्रहणीरोगस्य पूर्वरूपमाह—तस्योत्पत्तावित्यादि । तस्य ग्रहणीरोगस्य । विदाहोऽन्ने अन्नं भुक्तं विदह्यतीत्यर्थः । सदनम् अङ्गसादः, आलस्यम् अनुत्साहः, तृट् पिपासा, क्लमो विनाऽपि व्यायामं श्रमः । कर्णक्ष्वेडः अनेकविधहुङ्कारादिशब्दश्रवणम् । 'विदाहोऽन्ने' इत्यत्रान्ये 'विदाहोऽन्तः' इति पठन्ति, अन्तःकोष्ठेऽन्नं विदाहमापादयतीति व्याख्यानयन्ति च ॥१७३॥

**अथ जाते भवेज्जन्तुः शूनपादकरः कृशः ॥**
**पर्वरुग्लौल्यतृट्छर्दिज्वरारोचकदाहवान् ॥ १७४ ॥**
**उद्गिरेच्छुक्ततिक्ताम्ललोहधूमामगन्धिकम् ॥**
**प्रसेकमुखवैरस्यतमकारुचिपीडितः ॥ १७५ ॥**

पूर्वरूपानन्तरं रूपमाह—अथेत्यादि । पर्वरुक् सन्धिपीडा, लौल्यं सर्वरसेषु लोलुपत्वम् । उद्गिरेत् वमेत् । शुक्तं चुक्रम् । गन्धशब्दो लोहादिभिः प्रत्येकं संबध्यते । प्रसेको लालास्रावः । तमकः श्वासविशेषः, अन्ये तु तमकं मोहमाचक्षते । पीडितशब्दः प्रसेकादिभिः प्रत्येकं संबध्यते । अत्र पाठे 'निर्मांसो वा कृशः' इत्यन्ये पठन्ति, तत्र निर्मांसः अत्यन्तक्षीणमांसः, कृशः अल्पमांसः । अत्रारोचकशब्दोपादानादेवारुचिः प्राप्ता, पुनररुच्यभिधानमस्मिन् रोगेऽरुचेरवश्यम्भावसूचनार्थम् ॥ १७४ ॥ १७५ ॥

**वाताच्छूलाधिकैः पायुहृत्पार्श्वोदरमस्तकैः ॥**
**पित्तात् सदाहैर्गुरुभिः कफात्त्रिभ्यस्त्रिलक्षणैः १७६**

अत ऊर्ध्वं वातादिभेदेन ग्रहणीलक्षणान्याह—वातादित्यादि । पायुः गुदः, हृत् हृदयं, पार्श्वे द्वे; पाय्वादिमस्तकान्तैः शूलाधिकैर्वाताद्ग्रहणीरोगो ज्ञातव्य इति; एवं सर्वत्र संबन्धनीयम् । एभिरेव पाय्वादिभिः सदाहैः पित्ताद्ग्रहणी, गुरुभिः पाय्वादिभिः कफात्, त्रिलक्षणैरिति शूलाधिकैः सदाहैर्गुरुभिः पाय्वादिभिः; त्रिभ्यो दोषेभ्यः, 'ग्रहणी' इति शेषः ॥ १७६ ॥

**दोषवर्णैर्नखैस्तद्वद्विण्मूत्रनयनाननैः ॥**
**हृत्पाण्डूदरगुल्मार्शःप्लीहाशङ्की च मानवः ॥१७७॥**

किमेतैरेव लक्षणैर्ग्रहणीरोगो ज्ञेयोऽथवाऽन्यैरपीत्याह—दोषवर्णैरित्यादि । दोषवर्णैरिति कृष्णारुणनीलपीतरक्तासितपाण्डुभिर्नखैः, तद्वदिति कृष्णादिवर्णैर्विडादिभिश्च 'ग्रहणीरोगो ज्ञेय' इति शेषः । हृत्पाण्डूदरादिरोगाशङ्की च मानवो भवति, 'प्रवर्धमाने ग्रहणीरोगे' इति वाक्यशेषः ॥ १७७ ॥

**यथादोषोच्छ्रयं तस्य विशुद्धस्य यथाक्रमम् ॥**
**पेयादिं वितरेत् सम्यग्दीपनीयोपसंभृतम् ॥ १७८ ॥**
**ततः पाचनसंग्राहिदीपनीयगणत्रयम् ॥**
**पिबेत् प्रातः सुरारिष्टस्नेहमूत्रसुखाम्बुभिः ॥ १७९ ॥**
**तक्रेण वाऽथ तक्रं वा केवलं हितमुच्यते ॥**
**क्रिमिगुल्मोदरार्शोघ्नीः क्रियाश्चात्रावचारयेत् ॥१८०॥**
**चूर्णं हिङ्ग्वादिकं चात्र घृतं वा प्लीहनाशनम् ॥**

अत ऊर्ध्वं ग्रहणीरोगचिकित्सितमाह—यथेत्यादि । दोषोच्छ्रयो दोषोद्रेकः । तस्येति ग्रहणीरोगिणः । तत्र यथादोषोच्छ्रयं विशुद्धस्येति वातोद्रेके निरूहेण, पित्तोद्रेके विरेकेण, कफोद्रेके वमनेन । यथाक्रममिति यथास्वं शुद्धिप्रकरणोक्तक्रमेणेत्यर्थः । पेयादिमित्यादिशब्दात् विलेपीयूषमृद्वोदनादिकम् । वितरेत् दद्यात् । सम्यक् यथोक्तम् । दीपनीयोपसंभृतमिति पञ्चकोलाद्यग्निदीपनद्रव्ययुक्तम् । 'यथादोषोच्छ्रयं' इत्यत्रान्ये 'यथादोषबलं' इति पठन्ति, तत्र दोषबलानतिक्रमेण विशुद्धस्येत्यर्थः । तत इत्यादि । तत इति पेयादिक्रमानन्तरम् । पाचनसंग्राहिदीपनीयगणत्रयमिति गणशब्दः प्रत्येकं संबध्यते; तेन पाचनद्रव्यगणो हरिद्रादिः, संग्राहीगणः अम्बष्ठादिः, दीपनीयगणः पिप्पल्यादिः; एतद्गणत्रयं दोषकालसात्म्याद्यपेक्षया सुरारिष्टादिभिस्तक्रान्तैः प्रातः पिबेदित्यर्थः । तक्रं वेत्यादि संग्राहिदीपनीयलघुत्वात् "एका शान्तिरनेकस्य" इति वचनात् । क्रिम्यादिघ्नी क्रियाऽत्रापि करणीयेत्याह—क्रिमीत्यादि । अत्रेति ग्रहणीरोगे । अवचारयेत् प्रयोजयेत् । ननु, ग्रहणीरोगो वातादिभेदेन चतुर्विधः प्रोक्तः, तत्कथं चिकित्सितं तथा नोक्तं? उच्यते—यथादोषोच्छ्रयमित्यत्राप्यनुवर्तनीयम्; तेन क्रिम्यादिघ्नी क्रिया यथादोषोच्छ्रयमवचारयेदिति न दोषः । हिङ्ग्वादिचूर्णादिकं ग्रहण्यामप्यतिदिशन्नाह—चूर्णमित्यादि । हिङ्ग्वादिचूर्णं महावातव्याध्युक्तं, घृतं वा प्लीहनाशनमिति षट्पलादिकं, अवचारयेदित्यत्रापि संबध्यते ॥ १७८–१८० ॥—

**कल्केन मगधादेश्च चाङ्गेरीस्वरसेन च ॥ १८१ ॥**
**चतुर्गुणेन दध्ना च घृतं सिद्धं हितं भवेत् ॥**

चाङ्गेरीघृतमाह—कल्केनेत्यादि । मगधादेः पिप्पल्यादेः । चाङ्गेरी अम्लपत्रिका, तस्याः स्वरसेन स्नेहचतुर्गुणेन, पिप्पल्यादिकल्केन स्नेहचतुर्थांशेन, दध्ना च चतुर्गुणेन, सिद्धं घृतं हितं भवेदित्यर्थः ॥ १८१ ॥

**सर्वथा दीपनं सर्वं ग्रहणीरोगिणां हितम् ॥**

इदानीं ग्रहणीरोगेऽशेषसंग्रहार्थमाह—सर्वथेत्यादि । सर्वथा सर्वप्रकारेण । दीपनम् अग्निदीपनम्; यत् अग्निदीपनं तत्सर्वं ग्रहणीरोगिणां सर्वथा हितमिति संबन्धः ॥—

**ज्वरादीनविरोधाच्च साधयेत् स्वैश्चिकित्सितैः १८२**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रेऽतिसारप्रतिषेधो नाम**
**( द्वितीयोऽध्यायः, आदितः )**
**चत्वारिंशोऽध्यायः ॥४०॥**

अतोऽनन्तरं ग्रहणीरोगोपद्रवाणां ज्वरारोचकादीनां प्रतिकारमाह—ज्वरादीनित्यादि । ज्वरादीनित्यादिशब्दादरोचकशूलकरपादशोफादीनां ग्रहणम् । अविरोधाच्चेति 'मूलव्याधेः' इति शेषः । यद्यपि **निबन्धकारै**रयमध्यायो व्यस्तपाठेन पठि-

तत्तथाऽपि मया मद्गुरुणा येन क्रमेणोपदिष्टस्तथाऽयं पठितो व्याख्यातश्च ॥ १८२ ॥

इति श्रीडल्ह(ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुत-व्याख्यायामुत्तरतन्त्रान्तर्गतकायचिकित्सायामतिसार-प्रतिषेधाध्यायश्चत्वारिंशत्तमः ॥ ४० ॥

## एकचत्वारिंशत्तमोऽध्यायः ।

**अथातः शोषप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अतीसारप्रतिषेधानन्तरं शोषेऽप्यतीसारसंभूतेरथवा ज्वरातीसाराभ्यां शोषस्योत्पत्तेः शोषप्रतिषेधारम्भो युक्त इत्यत आह—अथात इत्यादि । अथेत्यादिकं पूर्ववद्याख्येयम् । शोषप्रतिषेधं शोषचिकित्सितम् ॥ १ ॥ २ ॥

**अनेकरोगानुगतो बहुरोगपुरोगमः ॥**
**दुर्विज्ञेयो दुर्निवारः शोषो व्याधिर्महाबलः ॥ ३ ॥**

ननु, शोषचिकित्सितं व्याख्यास्याम इति प्रतिज्ञां कृत्वा निदानाभिधाने को हेतुः? उच्यते-अज्ञातरोगस्य वैद्यस्य चिकित्सायां प्रागल्भ्यं न स्यादतो निदानारम्भ इति; तथा चोक्तं—"रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्"—इति । प्रागेव विकारस्वभावाभिधानाय वाक्यमाह—अनेकरोगानुगत इत्यादि । अनेकरोगा उपद्रवसंज्ञकाः, तैरनुगत आश्रितः । बहवो रोगाः श्वासकासाङ्गसादकफसंस्रवादयः, पुरोगमाः पूर्वरूपत्वेनोपस्थिता यस्य स तथा । दुर्विज्ञेय इति त्रिदोषलिङ्गत्वादंशांशबलविकल्पनाभिः प्रकुपितदोषाणां लिङ्गदर्शनात् । दुर्निवार इति दोषाणां परस्परविरुद्धोपक्रमत्वात्; दुर्निवारत्वाच्च कृच्छ्रोऽयं महाबलः ॥ ३ ॥

**संशोषणाद्रसादीनां शोष इत्यभिधीयते ॥**
**क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते पुनः ॥ ४ ॥**
**राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः ॥**
**तस्मात्तं राजयक्ष्मेति केचिदाहुः पुनर्जनाः ॥ ५ ॥**

इदानीमस्य व्याधेर्यथा शोषक्षयराजयक्ष्मेति नामानि तथाऽऽह—संशोषणाद्रसादीनामित्यादि । क्रिया चिकित्सा, कायवाग्ध्यानसं वा कर्म, तस्य क्षयकरत्वात् । राज्ञ इति 'द्विजानां' इति शेषः । चन्द्रमसः चन्द्रस्य, आमयो यक्ष्मा रोगः, केचिदिति आत्रेयप्रभृतयः; यस्मादेष आमयो द्विजानां राज्ञश्चन्द्रमसश्चन्द्रस्याभूत्तस्मात् तं रोगं केचित् पुनर्जना राजयक्ष्मेति ब्रुवते; यतोऽयं यक्ष्मा रोगो रोगाणां राजा अतो राजयक्ष्मेति वाग्भटो व्याख्यानयति । किलेति वार्तायाम् । एवं खलु यथा श्रूयते-पूर्वं दक्षनामा प्रजापतिरभूत्, तस्य बह्वयो दुहितरो बभूवुः, तेन च सप्ताधिका विंशतिः कन्यकाश्चन्द्राय विवोढुं दत्ताः, स चन्द्रमास्तासु मध्ये रोहिण्यामेवानुरक्तो बभूव, ततश्च सशोकाभिरखिन्याद्विभिर्दुहितृभिरात्मपितरि दक्षसंज्ञके चन्द्रस्य रोहिण्यामासक्तिवृत्तान्तो निवेदितः, ततो दुहितॄणां वार्तामाकर्ण्य, चन्द्रमाहूय, सर्वास्वपि निजपुत्रीषु समतया वर्तनाय चन्द्रोऽभिहितः, स च तथेति स्वीकृत्यापि स्वगुरोर्वचनमनादृत्य न तासु समवर्तत, ततो दक्षप्रजापतेः क्रोधो निश्वासरूपेण मूर्तिमान् भूत्वा निःसृत्य यक्ष्मरूपेण रोहिण्यामतिप्रसङ्गेनाविलं चन्द्रमाविशत्, ततोऽसौ तेन रोगेणाभिभूतः सन् गतप्रभो गतोत्साहश्च संजातः, गुरुवचनातिक्रमेण दोषं मत्वा तमेव दक्षनामानं गुरुं शरणं गतवान्, ततोऽनन्तरं देववैद्याभ्यामश्विभ्यां स चिकित्सितः, ततः प्राप्तबलश्चन्द्रो ( रराजातीव सुप्रभः ) लब्धगुरुप्रसादोऽश्विभ्यां चिकित्सितोऽभूत् । एवं च सति कर्मदोषजो व्याधिरिति दर्शितम् ॥ ४ ॥ ५ ॥

**स व्यस्तैर्जायते दोषैरिति केचिद्वदन्ति हि ॥**

एकीयमतेनास्य व्याधेः पृथग्दोषजत्वमाह—स व्यस्तैरित्यादि । स व्याधिः । व्यस्तैः पृथग्भूतैः ॥

**एकादशानामेकस्मिन् सान्निध्यात्तन्त्रयुक्तितः ॥ ६ ॥**
**क्रियाणामविभागेन प्रागेकोत्पादनेन च ॥**
**एक एव मतः शोषः सन्निपातात्मको ह्यतः ॥ ७ ॥**

परमतनिराकरणाय स्वमतमाह—एकादशानामित्यादि । एकादशानामिति स्वरभेदशूलादीनाम् । एकस्मिन्निति राजयक्ष्मरोगे; अन्ये तु राजयक्ष्मातुर इति व्याख्यानयन्ति, सान्निध्यादिति विद्यमानत्वात् । तन्त्रयुक्तितः अर्थयुक्तितः; अन्ये तन्त्रेऽत्र तन्त्रेति पठन्ति; तत्र तस्मिन्, युक्तितो युक्तिवशादिति व्याख्यानयन्ति । का सा युक्तिः? यद्वशेनैक एव शोष इत्याह—क्रियाणामविभागेनेति ।—चिकित्सानामपृथक्त्वेन दर्शितत्वादित्यर्थः । एकत्वे तृतीयं हेतुमाह—प्रागेकोत्पादनेन चेति ।—यस्मात् पूर्वं दक्षेण क्रुद्धेनैकस्योत्पादनं कृतम् । हिः यस्मादर्थे; यस्मात् शोषस्यैकत्वे हेतुत्रितयमत्रोक्तम्, अत एक एव शोषः सन्निपातात्मको मत इति संबन्धः ॥ ६ ॥ ७ ॥

**उद्रेकात्तत्र लिङ्गानि दोषाणां निपतन्ति हि ॥**

ननु, यदि सन्निपातात्मक एक एवायं तत् कथमत्र एकैकदोषैः पृथग्लिङ्गज्ञानमित्याह—उद्रेकादित्यादि । उद्रेकात् आधिक्यात् । तत्र शोषे । हिशब्दो हेतौ, स च हेतुर्बहुप्रकारोऽपि चतुर्विधत्वं न त्यजति ॥—

**क्षयाद्वेगप्रतीघातादाघाताद्विषमाशनात् ॥ ८ ॥**
**जायते कुपितैर्दोषैर्व्याप्तदेहस्य देहिनः ॥**

१ 'केचिदाहुर्मनीषिणः' इति पा० । २ 'यथा' इति मुद्रितपुस्तके न पठ्यते ।

१ 'विवोढुं' इति पा० । २ 'चन्द्रवृत्तान्तः' इति पा० । ३ 'तयेरयुपक्रम्यापि' इति पा० । ४ 'अपि याप्योऽभूत्' इति पा० । ५ 'तन्त्रयुक्तित इत्यर्थापत्तेः' इति पा० । ६ 'अनेकदोषपृथग्लिङ्गज्ञानं' इति पा० ।

तमेव चतुर्विधं हेतुमाह—क्षयाद्वेगप्रतीघातादित्यादि । क्षयात् रसादिशुक्रान्तानां धातूनां क्षयात् । वेगप्रतीघातात् वातमूत्रपुरीषादीनां प्रवृत्त्युन्मुखानामवरोधात् । आघातात् पतनादितः, अयथाबलमारम्भादिति बोद्धव्यम् । विषमाशनादिति अप्राप्तातीतकालबह्वल्पभोजनात् । क्षयादित्यादिहेतुभिः कुपितैर्दोषैर्व्याप्तदेहस्य शोषो जायते इति संबन्धः । अन्ये त्वेवं पठन्ति—'वेगाघातात् पूरणाद्वा सङ्घातात् संक्षयादपि' इति; व्याख्यानयन्ति च—पूरणं विषमाशनमभिप्रेतं, सङ्घातोऽत्र साहसः, शेषं पूर्ववद्व्याख्येयम् ॥ ८ ॥—

**कफप्रधानैर्दोषैर्हि रुद्धेषु रसवर्त्मसु ॥ ९ ॥**

कफप्रधानैरित्यादि । कफप्रधानैः उत्कटकफैः । हिशब्दो हेतौ । रसवर्त्मस्वित्यत्रादिशब्दो लुप्तो ज्ञेयः; वर्त्म मार्गः, तेन रसादिवाहिनीषु धमनीष्वित्यर्थः ॥ ९ ॥

**अतिव्यवायिनो वाऽपि क्षीणे रेतस्यनन्तरम् ॥**
**क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥ १० ॥**

अपरप्रकारेण धातुक्षयाद्राजयक्ष्मसंभवं दर्शयन्नाह—अतीत्यादि । अतिव्यवायिनः अत्यर्थं ग्राम्यधर्मसेविनः । क्षीणे रेतसि शुक्रे, शुक्रक्षयश्च मेढ्रवृषणवेदनेत्यादिना ज्ञेयः । अनन्तरं रेतसः क्षयादित्यर्थः । क्षीयन्ते धातवः सर्वे इति परं यदि स्त्रीभ्यो न निवर्तते । ननु, रसवर्त्मरोधाद्रसेन रक्तस्याबृंहणात्तदपचयः रक्तापचयाच्च मांसस्यापचय इत्यादिपूर्वपूर्वधातुक्षीणतया कृत्वा शुक्रस्य युक्तः क्षयः, शुक्रक्षये तु पूर्वधातूनां कथं क्षयः ? उच्यते—यथा महाजलाधारपरिक्षये तत्र प्रविशतां जलप्रायाणां ( जन्तूनां ) क्षयस्तद्वदत्रापीति । स्वमार्गावरोधाद्रसोऽसञ्चरन् किं करोति ? हृदये विदह्यते, कासवेगेन मुखमार्गात् पिच्छिलबहलविस्रहरितपीतश्वेतः प्रवर्तते ॥ १० ॥

**भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् ॥**
**स्वरभेदश्च जायेत षड्रूपे राजयक्ष्मणि ॥ ११ ॥**

इदानीं मध्यबलदोषारब्धस्य शोषस्य षड्रूपाणि दर्शयन्नाह—भक्तद्वेषो ज्वर इत्यादि । स्वरभेदः घर्घरादिस्वरः ॥ ११ ॥

**स्वरभेदोऽनिलाच्छूलं संलोचश्चांसपार्श्वयोः ॥**
**ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥ १२ ॥**
**शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ॥**
**कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः ॥ १३ ॥**

षड्रूपाणि निर्दिश्य दोषभेदेनैकादशरूपाणि बलवत्समदोषारब्धस्य शोषस्य दर्शयन्नाह—स्वरभेद इत्यादि । संलोचो लुञ्चनमिव, अंसयोः पार्श्वयोः; 'संलोच' इत्यत्रान्ये 'संकोच' इति पठन्ति, तत्र संकोचनमिवेत्यर्थः । शिरसः परिपूर्णत्वं 'कफेन' इति शेषः । अभक्तच्छन्दो भक्तारुचिः । कण्ठस्य चोद्ध्वंसः कण्ठभङ्गः; अन्ये उद्ध्वंस उत्कासिकेति व्याख्यानयन्ति । स्वरभेदादिलिङ्गत्रयं राजयक्ष्मणि वातेन, ज्वरादीनि चत्वारि पित्तेन, शिरसः परिपूर्णत्वादीनि चत्वारि कफेन; एवं षड्रूपाण्यपि वातादिभेदेन ज्ञेयानि ॥ १२ ॥ १३ ॥

**एकादशभिरेभिर्वा षड्भिर्वाऽपि समन्वितम् ॥**
**( कासातीसारपार्श्वार्तिस्वरभेदारुचिज्वरैः ॥ १४ ॥**
**त्रिभिर्वा पीडितं लिङ्गैर्ज्वरकासासृगामयैः ॥ )**
**जह्याच्छोषार्दितं जन्तुमिच्छन् सुविपुलं यशः ॥ १५ ॥**

इदानीं रूपप्रस्तावाद्बहुरूपान्वितस्यासाध्यत्वमाह[1]—एकादशभिरित्यादि । एतैरेभिः स्वरभेदोऽनिलाच्छूलमित्यादिकैः, षड्भिर्वाऽपीति भक्तद्वेषो ज्वर इत्यादिभिः, अपिशब्दात्त्रिभिर्वा श्वासकासासृगामयैस्तन्त्रान्तरोक्तैः, समन्वितमिति समुच्चीयते । जह्यादिति त्यजेत्, परं वह्नौ मन्दे बलमांसक्षये सतीति बोद्धव्यम् । ननु, सर्वरूपादर्धत्रिरूपौ लघुतरौ, तत्कथं तावप्यसाध्यौ ? उच्यते—बलवह्न्यपचये कालप्रकर्षात्तयोरपि महत्त्वात्; एतेन सर्वरूपोपपन्न एवासाध्यः, इतरौ तु कालप्रकर्षेणेति । अयं पाठः पुस्तकान्तरेष्वन्यथा पठ्यते, स च निबन्धकारैर्न पठितः ॥ १४ ॥ १५ ॥

**व्यवायशोकस्थाविर्यव्यायामाध्वोपवासतः ॥**
**व्रणोरःक्षतपीडाभ्यां शोषानन्ये वदन्ति हि ॥ १६ ॥**

एकीयमतेन शोषभेदान्निर्दिशन्नाह—व्यवायशोकेत्यादि । व्यवायः स्त्रीसेवा, शोकः पुत्रादिवियोगेन चित्तोद्वेगः, स्थाविर्यं वृद्धत्वं; अन्ये वार्धक्यमिति पठन्ति, तत्राप्येकोऽर्थः; व्यायामः शरीरायासजनकं कर्म; अध्वा दीर्घमार्गाटनं; व्यवायाद्युपवासान्तैर्हेतुभिस्तथा व्रणपीडया उरःक्षतपीडया चान्ये शोषान् वदन्तीति संबन्धः ॥ १६ ॥

**व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ॥**
**पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः ॥ १७ ॥**

व्यवायशोषिणो लक्षणान्याह—व्यवायेत्यादि । शुक्रस्य क्षयलिङ्गैरिति 'शुक्रक्षये मेढ्रवृषणवेदना' इत्यादिभिः । यथापूर्वमिति यथापूर्वं तत्र शुक्रस्य पूर्वं मज्जा, मज्ज्ञोऽस्थि, अस्थ्नो मेदः, मेदसो मांसं, मांसस्य रक्तमित्येवं क्षीयन्ते धातवः प्राग्वदेव दर्शितन्यायात्, परं यदि स्त्रीभ्यो न निवर्तते ॥ १७ ॥

**प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ॥**
**विना शुक्रक्षयकृतैर्विकारैरभिलक्षितः ॥ १८ ॥**

शोकशोषिणमाह—प्रध्यानशील इत्यादि । प्रध्यानशीलः चिन्तापरः, स्रस्ताङ्गः अवसन्नगात्रः । तादृश इति व्यवायशोषितवदभिलक्षितः, परं शुक्रक्षयकृतैर्लिङ्गैर्विना; एतेन पाण्डुदेह इत्यर्थः ॥ १८ ॥

**जराशोषी कृशो मन्दवीर्यबुद्धिबलेन्द्रियः ॥**
**कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः(नः)[2] १९**

---

१ 'बहुरूपो राजयक्ष्मा असाध्यस्तमाह' इति पा० । २ 'श्वसनो' इति पा० ।

**ष्ठीवति श्लेष्मणा हीनं गौरवारुचिपीडितः ॥**
**संप्रस्रुतास्यनासाक्षः सुप्तरूक्षमलच्छविः ॥ २० ॥**

जराशोषिणमाह—जराशोषी कृशो मन्देत्यादि । मन्दशब्दो वीर्यादिभिः प्रत्येकं संबध्यते, वीर्यं शक्तिः, बलम् ओजो हृदि स्थितं सप्तधातुधामभूतम् । पुनरेरुचिकथनमत्यन्तारोचकख्यापनार्थम् । संप्रस्रुतेत्यादि संप्रस्रुतशब्द आस्यादिभिस्त्रिभिः प्रत्येकं संबध्यते । आस्यं मुखकुहरम्, अक्षि लोचनम् । सुप्तरूक्षत्वं प्रभायाः, रूक्षत्वं च मलस्य; यद्यपि सुप्तरूक्षत्वं त्वचि भवति न प्रभायां, तथाऽपि 'मञ्चाः क्रोशन्ति' इतिवदुपचारात् प्रभायां बोद्धव्यम् । जेज्जटाचार्यस्तु जराशोषिणो लक्षणमत्र न पठति, सप्ततेस्तूर्ध्वं क्षीयमाणेत्यादिना आतुरोपक्रमणीये उक्तत्वात् ॥ १९ ॥ २० ॥

**अध्वप्रशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः ॥**
**प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥ २१ ॥**

अध्वशोषिणमाह—अध्वप्रशोषीत्यादि । स्रस्ताङ्गः शिथिलगात्रावयवः । प्रसुप्तमात्रावयव इत्यनेन अकर्मण्यशरीरप्रदेश उक्तः । शुष्कशब्दः क्लोमादिभिः प्रत्येकं संबध्यते; क्लोम तिलकम्, आननं मुखकुहरम् । संभृष्टपरुषच्छविरिति दग्धस्येव परुषा छविर्यस्येत्यर्थः; केचित् 'संभृष्टपरुषच्छविः' इत्यत्र 'संसृष्टपरुषच्छविः' इति पठित्वा संसृष्टा परुषा छविः यस्य स इति व्याख्यानयन्ति । यद्यपि जराशोष्यनन्तरं व्यायामशोषी वाच्यो नाध्वशोषी, तथाऽप्यध्वशोषिलक्षणानां व्यायामशोषिण्यतिदेशात् पूर्वमत्राध्वशोषी निर्दिष्टः । यद्येवं तर्हि व्यायामशोषिलक्षणान्येव कुतोऽध्वशोषिणि नातिदिश्यन्ते ? सत्यम्, उरःक्षतलिङ्गानामधिकानां व्यायामशोषिणि सद्भावात् । केचिदत्र 'तृडङ्गमर्ददौर्बल्यपारुष्यैरर्दितोऽध्वना' इति पाठं पठन्ति, तत्रापि स एवार्थः ॥ २१ ॥

**व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ॥**
**उरःक्षतकृतैर्लिङ्गैः संयुक्तश्च क्षताद्विना ॥ २२ ॥**

व्यायामशोषिणमाह—व्यायामशोषी भूयिष्ठमित्यादि । एभिरेवेति अनन्तरोक्तैः अध्वशोषिलक्षणैरित्यर्थः । उपवासशोषिलक्षणं दोषधातुमलक्षयवृद्धिविज्ञानीयोक्तं 'तत्र वातलाहारसेविन' इत्यादिकं ज्ञातव्यम् ॥ २२ ॥

**रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ॥**
**व्रणितस्य भवेच्छोषः स चासाध्यतमः स्मृतः ॥२३॥**

व्रणशोषिलक्षणमाह—रक्तक्षयादित्यादि । व्रणशोषिणो वैशेषिकलक्षणानुपदेशात् सामान्यलक्षणं ज्ञेयम् । यद्येवं कुतोऽस्य पृथगभिधानमिति चेत्, विशिष्टकारणतया असाध्यतमत्वख्यातेः ॥ २३ ॥

१ 'तथैवारुच्चिपीडितः' इति 'तथैवारतिपीडितः' इति च पा० । २ 'पुनररुच्चिकरणं' इति पा० । ३ 'व्रणितस्य भवेच्छोषो दोषैः साध्यतमः स च' इति हस्तलिखितपुस्तके पाठ उपलभ्यते । ४ 'साध्यतमत्वख्यातेः' इति पा० ।

**व्यायामभाराध्ययनैरभिघातातिमैथुनैः ॥**
**कर्मणा चाप्युरस्येन वक्षो यस्य विदारितम् ॥**
**तस्योरसि क्षते रक्तं पूयः श्लेष्मा च गच्छति ॥२४॥**
**कासमानश्छर्दयेच्च पीतरक्तासितारुणम् ॥**
**संतप्तवक्षाः सोऽत्यर्थं दूयनात्परिताम्यति ॥ २५ ॥**
**दुर्गन्धवदनोच्छ्वासो भिन्नवर्णस्वरो नरः ॥**

उरःक्षतशोषिणमाह—व्यायामेत्यादि । कर्मणा चाप्युरस्येनेति धनुराकर्षणादिनेत्यर्थः । क्षते अतिदारिते । असितम् ईषत्कृष्णम्, अरुणम् ईषद्रक्तम् । दूयनात् अतिवेदनात्, परिताम्यति मोहं याति । दुर्गन्धशब्दो वदनोच्छ्वासाभ्यां संबध्यते ॥२४॥२५॥—

**केषांचिदेवं शोषो हि कारणैर्भेदमागतः ॥ २६ ॥**
**न तत्र दोषलिङ्गानां समस्तानां निपातनम् ॥**

एकीयमतमाह—केषांचिदित्यादि । केषांचिदाचार्याणां मते एवं व्यवायादिभिरनेकैः कारणैः कृत्वा हि यस्मात् शोषो भेदमागतः; अत एक एव स्वमते शोषो नेतरे व्यवायादिजाः । कुतो व्यवायादिजाः शोषा न भवन्तीत्याह—न तत्रेत्यादि । तत्र तेषु व्यवायादिजेषु ॥ २६ ॥—

**क्षया एव हि ते ज्ञेयाः प्रत्येकं धातुसंज्ञिताः ॥ २७ ॥**

यदि ते व्यवायादिजाः शोषाः न भवन्ति तर्हि किंनामधेया भवन्तीत्याह—क्षया एवेत्यादि । ते व्यवायादिजाः क्षया एव, किंविशिष्टाः ? प्रत्येकं धातुसंज्ञिताः धातुक्षयसंज्ञका इत्यर्थः । यतः शुक्रमारभ्य विलोमेन व्यवायादिभिर्धातूनां यथापूर्वं संक्षयात् ॥ २७ ॥

**चिकित्सितं तु तेषां हि प्रागुक्तं धातुसंक्षये ॥ २८ ॥**

तेषां किंचिच्चिकित्सितमाह—चिकित्सितं तु तेषामित्यादि । धातुसंक्षये दोषधातुमलक्षयवृद्धिविज्ञानीयाध्याये ॥ २८ ॥

**श्वासाङ्गसादकफसंस्रवतालुशोष-**
**च्छर्द्यग्निसादमदपीनसपाण्डुनिद्राः ॥**
**शोषे भविष्यति भवन्ति स चापि जन्तुः**
**शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ २९ ॥**
**स्वप्नेषु काकशुकशल्लकिनीलकण्ठ-**
**गृध्रास्तथैव कपयः कृकलासकाश्च ॥**
**तं वाहयन्ति स नदीर्विजलाश्च पश्ये-**
**च्छुष्कांस्तरून् पवनधूमदवार्दितांश्च ॥ ३० ॥**

इदानीमेकीयमतं प्रदर्श्य संप्राप्त्यनन्तरं राजयक्ष्मणः पूर्वरूपाण्याह—श्वासाङ्गसादकफसंस्रवेत्यादि । अङ्गसादः अङ्गानामनुत्साहः, अग्निसादः अग्निमान्द्यम् । मदः पूगफलेनेव मत्तता । मांसपरो मांसाभिलाषी । रिरंसुः रन्तुमिच्छुः । शल्लकी गोधानुकारी वज्रशकलः, 'शल्लक' इति लोके प्रसिद्धः, नीलकण्ठो मयूरः, गृध्रः आमिषाशी योजनदृष्टिः । कपयो वानराः । कृक-

१ 'कर्मभिश्चाप्यनौरस्यैर्वक्षो' इति पा० ।

लासः कृकण्टकः 'गिरगिट' इति पूर्वदेशीया भाषन्ते । तं शोषिणं, वाहयन्ति प्रापयन्ति स शोषी । ननु, संप्राप्त्यनन्तरं पूर्वरूपेषु वक्तव्येषु कथं रूपाण्यभिधाय पूर्वरूपोपादानं कृतम्? उच्यते—रूपाण्यव्यक्तानि पूर्वरूपाण्यस्येति प्रतिपादनार्थम् ॥ २९ ॥ ३० ॥

**महाशनं क्षीयमाणमतीसारनिपीडितम् ॥**
**शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत् ॥ ३१ ॥**

वर्ज्यमाह—महाशनमित्यादि । मुष्को वृषणम् । 'यक्ष्मिणम्' इत्यत्रान्ये 'शोषिणम्' इति पठन्ति ॥ ३१ ॥

**उपाचरेदात्मवन्तं दीप्ताग्निमकृशं नवम् ॥**

उपक्रम्यमाह—उपाचरेदात्मवन्तमित्यादि । आत्मवन्तं जितेन्द्रियम् ॥—

**स्थिरादिवर्गसिद्धेन घृतेनाजाविकेन च ॥ ३२ ॥**
**स्निग्धस्य मृदु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ॥**
**आस्थापनं तथा कार्यं शिरसश्च विरेचनम् ॥ ३३ ॥**

तदेव चिकित्सितमाह—स्थिरादिवर्गसिद्धेनेत्यादि । स्थिरादिः विदारिगन्धादिः । मृदु यत् कर्शनं न भवतीत्यर्थः । आस्थापनं निरूहः । तथेति मृद्वित्यर्थः । शिरसो विरेचनं नस्यम् ॥ ३२ ॥ ३३ ॥

**यवगोधूमशालींश्च रसैर्भुञ्जीत शोषितः ॥**

शोषितस्य पश्चात्कर्म आह—यवगोधूमेत्यादि । रसैः जाङ्गलमांसरसैः ॥—

**दृढेऽग्नौ बृंहयेच्चापि निवृत्तोपद्रवं नरम् ॥ ३४ ॥**

बृंहणविषयमाह—दृढेऽग्नावित्यादि । निवृत्तोपद्रवमिति प्रशान्तस्वरभेदादिकमित्यर्थः ॥ ३४ ॥

**व्यवायशोषिणं प्रायो भजन्ते वातजा गदाः ॥**
**बृंहणीयो विधिस्तस्मै हितः स्निग्धोऽनिलापहः ॥३५॥**

इदानीं व्यवायशोषिणो विशिष्टं चिकित्सितमाह—व्यवायेत्यादि । 'व्यवायशोषिणम्' इत्यादिवाक्यं केचिन्नेच्छन्ति, 'क्रियाणां चाविभागेन' इत्युक्तस्य व्याघातात् ॥ ३५ ॥

**काकानुलूकान्नकुलान् बिडालान्**
**गण्डूपदान् व्यालबिलेशयाखून् ॥**
**गृध्रांश्च दद्याद्विविधैः प्रवादैः**
**ससैन्धवान् सर्षपतैलभृष्टान् ॥ ३६ ॥**
**देयानि मांसानि च जाङ्गलानि**
**मुद्गाढकीसूपरसांश्च हृद्याः ॥**
**खरोष्ट्रनागाश्वतराश्वजानि**
**देयानि मांसानि सुकल्पितानि ॥ ३७ ॥**
**मांसोपदंशांश्च पिबेदरिष्टान्**
**मार्द्वीकयुक्तान् मदिरांश्च सेव्याः ॥**

**अर्कामृताक्षारजलोषितेभ्यः**
**कृत्वा यवेभ्यो विविधांश्च भक्ष्यान् ॥ ३८ ॥**
**खादेत्, पिबेत् सर्पिरजाविकं वा**
**कृशो यवाग्वा सह भक्तकाले ॥**
**सर्पिर्मधुभ्यां त्रिकटु प्रलिह्या-**
**च्चव्याविडङ्गोपहितं क्षयार्तः ॥ ३९ ॥**

शोषिणां यानि मांसान्यादेयानि तान्याह—काकानुलूकान्नकुलानित्यादि । बिडाला ग्राम्यादिभेदेन षट्प्रकारा मार्जाराः; तथा च—"ग्राम्यो वन्यस्तोयजातः पक्षिमार्जारविज्जकौ । सुगन्धवृषणश्चेति मार्जाराः षट् प्रकीर्तिताः"—इति । व्याला व्याघ्रादयः, बिलेशयाः श्वाविच्छल्लकीप्रभृतयः आखुरत्र वृक्षमूषिकः । विविधैः प्रवादैरिति "काकांस्तित्तिरिशब्देन मत्स्यशब्देन चोरगान् । भृष्टमत्स्यान्त्रशब्देन दद्याद्गण्डूपदानपि" इत्यादिभिर्नानाप्रकारैर्वचनैः । एवंप्रकारेण दाने किं प्रयोजनमिति चेत्? अजुगुप्सया भक्षणं भक्षितस्य चानुल्लेखनम् । तथा चोक्तं—"जानन् जुगुप्सुर्नैवाद्याज्जग्धं वा पुनरुल्लिखेत् । तस्माच्छद्मोपसिद्धानि मांसान्येतानि दापयेत्"—इति । जाङ्गलानि जङ्घालविष्किरप्रतुदजानि, शेषजाङ्गलवर्गाणामत्र विशेषेणाभिधानात् । यद्यपि जाङ्गलशब्देनैव गृध्रादयोऽपि लब्धाः, तथाऽप्यत्यन्तबृंहणत्वाद्गृध्रादीनां पृथगुपादानम् । मुद्गाढकीसूपरसाः स्रोतःशुद्धिकरत्वाद्धृद्याः । नागो हस्ती, अश्वतरो वेशरः । सुकल्पितानि वेशवारीकृतानि नानाप्रकारप्रकल्पितानि । तथा च **वृद्धभोजः**—"खरोष्ट्राश्वतरं नागं मांसं मांसाभिवृद्धये । दद्यान्माहिषशब्देन वेसवारीकृतं भिषक्"—इति । मांसोपदंशानरिष्टान् अभयारिष्टप्रभृतीन्, मार्द्वीकयुक्तान् द्राक्षासवयुक्तान्, मदिरा मद्यम् । भक्ष्यान्निर्देष्टुमाह—अर्कामृतक्षारजलोषितेभ्य इत्यादि । अर्कगुडूचीक्षारपानीयोषितेभ्यो यवेभ्यो भक्ष्यान् कृत्वा खादेदिति संबन्धः । उषितेभ्यो रात्रौ स्थितेभ्यः । अर्कादिभस्म चतुर्गुणेन जलेन गालयित्वा पचेद्यावदर्धावशिष्टं भवति । तथा चोक्तं—"पानाय भोजनायाथ भस्म स्राव्यं चतुर्गुणे । जलेऽर्धमवशिष्टे(ष्टं) तु क्षाराम्भो ग्राह्यमिष्यते"—इति । पिबेदित्यादि । अजाविकं वेति आजं वा आविकं वेत्यर्थः । अजेत्यत्र ह्रस्वत्वं छन्दोऽनुरोधात् । भक्तकाले भोजनकाले । सर्पिर्मधुभ्यामित्यादि । उपहितं संयुक्तम् ॥ ३६–३९ ॥

**मांसादमांसेषु घृतं च सिद्धं**
**शोषापहं क्षौद्रकणासमेतम् ॥**

मांसादमांसेष्वित्यादि । मांसादा गृध्रादयः, तन्मांसरसे चतुर्गुणे सिद्धं सर्पिः क्षौद्रपिप्पलीयुक्तं शोषापहं भवति । क्षौद्रकणेत्यत्र दन्तिकणेति केचित् पठन्ति ॥—

**द्राक्षासितामागधिकावलेहः**
**सक्षौद्रतैलः क्षयरोगघाती ॥ ४० ॥**

---

१ 'नरं' इति पा० । २ 'प्रकारैः' इति पा० । ३ 'मुद्गाढकीयूपरसांश्च' इति पा० ।

१ 'एवंप्रकारदानैः' इति पा० । २ 'नान्यप्रकारकल्पितानि' इति ।

घृतेन चाजेन समाक्षिकेण
तुरङ्गगन्धातिलमाषचूर्णम् ॥

द्राक्षेत्यादि । अवलेहोऽयम् ॥ ४० ॥—

सिताश्वगन्धामगधोद्भवानां
चूर्णं घृतक्षौद्रयुतं प्रलिह्यात् ॥ ४१ ॥

सिताश्वगन्धेत्यादि । सिता शर्करा, मगधोद्भवा पिप्पली ४१

क्षीरं पिबेद्वाऽप्यथ वाजिगन्धा-
विपक्वमेवं लभतेऽङ्गपुष्टिम् ॥

क्षीरमित्यादि । वाजिगन्धाविपक्वं सामान्यक्षीरपाकपरिभाषया । वाजिगन्धा अश्वगन्धा ॥—

तदुत्थितं क्षीरघृतं सिताढ्यं
प्रातः पिबेद्वाऽपि पयोनुपानम् ॥ ४२ ॥

तदुत्थितं क्षीरघृतमित्यादि । तदुत्थितम् अश्वगन्धाविपक्वक्षीरोत्थं, क्षीरघृतं क्षीराद्विलोडितादुद्धृतं घृतम् ॥ ४२ ॥

उत्सादने चापि तुरङ्गगन्धा
योज्या यवाश्चैव पुनर्नवे च ॥

उद्वर्तनमुपचर्यार्थमाह—उत्सादने इत्यादि । उत्सादनम् उद्वर्तनम् । तुरङ्गगन्धा अश्वगन्धा । पुनर्नवे श्वेतरक्ते द्वे । ननु, शोषे बृंहणमुपयुज्यते, एताश्च विलेखनाः, ततः कथं तदुपयोगः ? सत्यं, बाह्योपयोगेन तेषां बृंहणत्वेनोपयोगात् ॥—

कृत्स्ने वृषे तत्कुसुमैश्च सिद्धं
सर्पिः पिबेत्क्षौद्रयुतं हिताशी ॥ ४३ ॥
यक्ष्माणमेतत् प्रबलं च कासं
श्वासं च हन्यादपि पाण्डुतां च ॥

कृत्स्ने इत्यादि । कृत्स्ने वृषे इति समूलपत्रशाखाङ्कुरे । वासकाङ्गेभ्यः क्वाथे, तत्कुसुमैः वासकपुष्पैः, 'कल्कीकृतैः'[1] इति शेषः । सिद्धं सर्पिरिति चतुर्गुणक्वाथेन पुष्पकल्केनाष्टमभागेन च । तथा चोक्तं,—"शणस्य कोविदारस्य वृषस्य च पृथक् पृथक् । कल्काश्यत्वान्न शंसन्ति पुष्पकल्कं चतुष्पलम्"—इति ॥४३॥

शकृद्रसा गोश्वगजाव्यजानां
क्वाथा मिताश्चापि तथैव भागैः ॥ ४४ ॥
मूर्वाहरिद्राखदिरद्रुमाणां
क्षीरस्य भागस्त्वपरो घृतस्य ॥
भागान् दशैतान् विपचेद्विधिज्ञो
दत्त्वा त्रिवर्गं मधुरं च कृत्स्नम् ॥ ४५ ॥
कटुत्रिकं चैव सभद्रदारु
घृतोत्तमं यक्ष्मनिवारणाय ॥

शकृद्रसा इत्यादि । गोश्वगजाविच्छगलीनां प्रत्येकं शकृद्रसाः, तथैव मूर्वाहरिद्राखदिरद्रुमाणां क्वाथभागैर्मिताः खल्पा भागाः, तथा क्षीरस्यापरो नवमो भागः, घृतस्य दशम इति, एतान् दशभागान् त्रिवर्गादिकेन कल्केन विपचेदिति संबन्धः । मूर्वा चोरस्नायुः । खदिरद्रुमाणामिति द्रुमग्रहणं मध्यमवयसः खदिरस्य ग्रहणार्थम् । त्रिवर्गः त्रिफला । मधुरं च कृत्स्नं काकोल्यादिकम्; अपरेऽष्टवर्गमाहुः ॥ ४४ ॥ ४५ ॥—

द्वे पञ्चमूल्यौ वरुणं करञ्जं
भल्लातकं बिल्वपुनर्नवे च ॥ ४६ ॥
यवान् कुलत्थान् बदराणि भार्गीं
पाठां हुताशं समहीकदम्बम् ॥
कृत्वा कषायं विपचेद्धि तस्य
षड्भिर्हि पात्रैर्घृतपात्रमेकम् ॥ ४७ ॥
व्योषं महावृक्षपयोऽभयां च
चव्यं सुराह्वं लवणोत्तमं च ॥
एतद्धि शोषं जठराणि चैव
हन्यात् प्रमेहांश्च सहानिलेन ॥ ४८ ॥

द्वे पञ्चमूल्यावित्यादि । द्वे पञ्चमूल्यौ दशमूलमित्यर्थः । बिल्वस्य पृथक्पाठादत्र फलं ग्राह्यम् । हुताशः चित्रकः, महीकदम्बो मुण्डितिका । कृत्वा कषायमिति दशमूलादीनामष्टषष्ट्यधिकानि सप्तशतपलानि चतुर्गुणेनाम्भसा निष्क्वाथ्य चतुर्भागावशिष्टः क्वाथो ग्राह्यः । तस्य क्वाथस्य, पात्रैः आढकैः । कल्कद्रव्याण्याह—व्योषमित्यादि । व्योषं त्रिकटुकं, महावृक्षपयः सेहुण्डक्षीरं, सुराह्वं देवदारु, लवणोत्तमं सैन्धवम्; केचित् 'लवणोत्तमम्' इत्यत्र 'मगधोद्भवां' इति पठित्वा पिप्पलीमिति व्याख्यानयन्ति । प्रमेहांश्च सहानिलेनेति वातिकानपि प्रमेहान् हन्तीत्यर्थः; एतच्च स्तुतिपरं[1], वातिकमेहानामसाध्यत्वात् ॥ ४६–४८ ॥

गोश्वाव्यजेभैणखरोष्ट्रजातैः
शकृद्रसक्षीररसक्षतोत्थैः ॥
द्राक्षाश्वगन्धामगधासिताभिः
सिद्धं घृतं यक्ष्मविकारहारि ॥ ४९ ॥

गोश्वाव्यजेभैणेत्यादि । गोश्वादीनां शकृद्रसक्षीरमांसरसरुधिरैः द्राक्षादीनां कल्केन सिद्धं घृतं यक्ष्मविकारान् हन्तीति संबन्धः । इभा हस्तिनी, एणः कृष्णसारः । क्षीरं यथासंभवं ग्राह्यं, न तु सर्वेषाम् ॥ ४९ ॥

पलाजमोदामलकाभयाक्ष-
गायत्र्यरिष्टासनशालसारान् ॥
विडङ्गभल्लातकचित्रकोग्रा-
कटुत्रिकाम्भोदसुराष्ट्रजांश्च ॥ ५० ॥
पक्त्वा जले तेन पचेद्धि सर्पि-
स्तस्मिन् सुसिद्धे त्ववतारिते च ॥
त्रिंशत्पलान्यत्र सितोपलाया
दत्त्वा तुगाक्षीरिपलानि षट् च ॥ ५१ ॥

---

१ 'कल्कं' इति पा० ।

१ 'स्तुतिवचः' इति पा० ।

प्रस्थे घृतस्य द्विगुणं च दद्यात्
क्षौद्रं ततो मन्थहतं विदध्यात् ॥
पलं पलं प्रातरतः प्रलिह्य
पश्चात् पिबेत् क्षीरमतन्द्रितश्च ॥ ५२ ॥
एतद्धि मेध्यं परमं पवित्रं
चक्षुष्यमायुष्यमथो यशस्यम् ॥
यक्ष्माणमाशु व्यपहन्ति चैतत्
पाण्ड्वामयं चैव भगन्दरं च ॥ ५३ ॥
श्वासं च हन्ति स्वरभेदकास-
हृत्प्लीहगुल्मग्रहणीगदांश्च ॥
न चात्र किंचित् परिवर्जनीयं
रसायनं चैतदुपास्यमानम् ॥ ५४ ॥

एलाजमोदेत्यादि । एलादिकान् सुराह्वजान्तान् कषायकल्पेन विपाच्य, तेन क्वाथेन सर्पिर्विपचेदिति संबन्धः । तस्मिन् क्वाथे सिद्धे पूते शर्करायास्त्रिंशत्पलानि दद्यात्, तुगाक्षीर्याश्च षट्पलानि, तथा घृतस्य प्रस्थे द्विगुणं द्विप्रस्थमितं क्षौद्रं दद्यात् । अक्षं बिभीतकं, गायत्री खदिरः, अरिष्टो निम्बः, असनो बीजकः, शालः प्रसिद्धः, सारशब्दः खदिरादिभिः संबध्यते । उग्रा वचा, अम्भोदो मुस्तं, सुराह्वजा तुवरमृत्तिका । तुगाक्षीरी वंशलोचनम्; अन्ये वंशलोचनानुकारिपार्थिवद्रव्यमाहुः । मन्थहतं खजविलोडितम् । अतो अस्माद्रसायनात् । अतन्द्रितः अनलसः । मेध्यं मेधाजनकम् ॥ ५०-५४ ॥

प्लीहोदरोक्तं विहितं च सर्पि-
स्त्रीण्येव चान्यानि हितानि चात्र ॥

अत्र रसायनेऽपराण्यपि घृतान्यतिदेशेनाह—प्लीहोदरोक्तं विहितमित्यादि । प्लीहोदरोक्तं षट्पलकं, त्रीण्येव चान्यानि उदरोक्तान्येव; तद्यथा—एकं 'हरीतकीचूर्णप्रस्थं' इत्यादिकं, द्वितीयं 'गव्ये पयसि महावृक्षक्षीरम्' इत्यादि, तृतीयं 'चव्यचित्रकदन्त्यतिविषा' इत्यादिकम् । अत्र शोषे । एतानि स्रोतोवरोधशान्त्यर्थं रेचनत्वेन हितानि ॥—

उपद्रवांश्च स्वरवैकृतादीन्
जयेद्यथास्वं प्रसमीक्ष्य शास्त्रम् ॥ ५५ ॥

स्वरभेदादीनां चिकित्सितमतिदेशेनाह—उपद्रवांश्च स्वरवैकृतादीनित्यादि । यथास्वं यस्य यदात्मीयं स्वरभेदादिशास्त्रं, तत् प्रसमीक्ष्येत्यर्थः ॥ ५५ ॥

अजाशकृन्मूत्रपयोघृताख्य-
श्चांसालयानि प्रतिसेवमानः ॥
स्नानादिनानाविधिना जहाति
मासादशेषं नियमेन शोषम् ॥ ५६ ॥

इदानीमजायाः सर्वप्रकारेणोपयोगमाह—अजाशकृन्मूत्रेत्यादि । अजाशकृदादिकं यथासंभवं स्नानादिविधिना पुरुषः सेवमानोऽशेषं शोषं मासाज्जहातीति संबन्धः । अजाशब्दः शकृदादिभिरालयान्तैः प्रत्येकं संबध्यते । आलयं गृहम्, अजानामेव ॥ ५६ ॥

रसोनयोगं विधिवत् क्षयार्तः
क्षीरेण वा नागबलाप्रयोगम् ॥
सेवेत वा मागधिकाविधानं
तथोपयोगं जतुनोऽश्मजस्य ॥ ५७ ॥

रसोनयोगमित्यादि । विधिवत् यथाशास्त्रम् । क्षीरेणेति नागबलाप्रयोगमागधिकाविधानाभ्यां संबध्यते । तथेति क्षीरेणेत्यर्थः । जतुनः अश्मजस्य शिलाजतुनः ॥ ५७ ॥

शोकं स्त्रियं क्रोधमसूयनं च
त्यजे-

इदानीं परिहार्यमाह—शोकं स्त्रियमित्यादि । क्रोधः पराभिद्रोहलक्षणः; असूयनं परगुणेषु दोषारोपणम् ॥—

दुदारान् विषयान् भजेत ॥
वैद्यान् द्विजातींस्त्रिदशान् गुरूंश्च
वाचश्च पुण्याः शृणुयाद्द्विजेभ्यः ॥ ५८ ॥

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे (तृतीयोऽध्यायः, आदित) एकचत्वारिंशोऽध्यायः ॥ ४१ ॥**

इदानीं दैवव्यपाश्रयां चिकित्सामाह—उदारानित्यादि । उदारा विषया धर्माविरुद्धा मनोनुकूलाश्च शब्दादयः । भजेत सेवेत । द्विजातीन् विप्रान्, त्रिदशान् देवान्, गुरून् पितृमातृप्रभृतीन् । पुण्या वाचो वेदोक्ता रुद्रस्तुतिप्रभृतयः ॥ ५८ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे शोषप्रतिषेधनामैकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशत्तमोऽध्यायः ।

अथातो गुल्मप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

शोषप्रतिषेधानन्तरं रिष्टोक्तक्रमानुक्रमेण गुल्मप्रतिषेधारम्भो युज्यत इत्याह—अथातो गुल्मप्रतिषेधमित्यादि ॥ १ ॥ २ ॥

यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्ठमागताः ॥
जनयन्ति नृणां गुल्मं स पञ्चविध उच्यते ॥ ३ ॥

तत्र निदानानन्तरयीकत्वात् प्रतिषेधस्यादौ गुल्मानां हेतुसंप्राप्तिसंख्या आह—यथोक्तैरित्यादि । यथोक्तैः कोपनैः व्रणप्रश्नोक्तैर्बलवद्विग्रहादिक्रोधादिदिवास्वप्नादिभिः । आमपक्वाग्निरक्तमूत्राशयहृदयोण्डुकफुप्फुसाश्च कोष्ठशब्दवाच्याः, तथा चोक्तम्—'स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते' इति । गुल्मः पञ्चविधः—पृथग्दोषैः त्रयः, समस्तैः एकः, रक्तेन अपरः, एवं पञ्चविधः ।

एतच्च प्रायोवचनं, द्वन्द्वजगुल्मानां सद्भावात् । तथा चोक्तम्—"व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेद्भेषजकल्पनार्थम्—" इति, तथा व्रणप्रश्नोक्तप्रसरतया पञ्चदशप्रकारगुल्मसंभवात् । यथोक्तैः कोपनैरित्यादिर्हेतुः, दोषाः कुपिता इत्यादिः संप्राप्तिः, स पञ्चविध इत्येषा संख्या ॥ ३ ॥

**हृद्बस्त्योरन्तरे ग्रन्थिः संचारी यदि वाऽचलः ॥**
**चयापचयवान् वृत्तः स गुल्म इति कीर्तितः ॥ ४ ॥**

गुल्मस्य रूपमाह—हृद्बस्त्योरन्तरे ग्रन्थिरित्यादि । हृद्बस्त्योः हृदये च बस्तौ च, वा तयोरेवान्तरे; तेन सर्वमुदरमाक्षिप्तम् । संचारी चलनशीलः, वाताधिक्यात् । अचल एकस्थानशायी, वायोरल्पत्वात् । चयापचयवान् कदाचिदुपचितः कदाचिदपचित इति, विचित्रक्रियत्वाद्वायोः । वृत्तो वर्तुलः । केचित् 'हृन्नाभ्योरन्तरे' इति पठन्ति; ते च नाभिग्रहणेनैव सामीप्याद्वस्तिं गृह्णन्ति । 'चयापचयवान्' इत्यत्र 'स्थिरोपचयवान्' इति केचित् पठन्ति, स्थिर उपचयो वृद्धिर्यस्य स इति च व्याख्यानयन्ति ४

**पञ्च गुल्माश्रया नृणां पार्श्वे हृन्नाभिबस्तयः ॥**

इदानीं तत्राप्युदरे पञ्चगुल्माश्रयानाह—पञ्च गुल्माश्रया इत्यादि । सुबोधमेतत् । कार्तिककुण्डस्त्वेनं पाठं 'स व्यस्तैर्जायते दोषैः' इत्यादिवाक्यादनन्तरं पठति ॥—

**गुंपितानिलमूलत्वाद्गूढमूलोदयादपि ॥ ५ ॥**
**गुल्मवद्वा विशालत्वाद्गुल्म इत्यभिधीयते ॥**

अथ गुल्मनिरुक्तिमाह—गुंपितानिलमूलत्वादित्यादि । गुंपितानिलमूलत्वात् आकुलीकृतवायुमूलत्वात्, एतेन सर्वगुल्मानां वायुः कारणम् । गूढमूलोदयादिति गूढमूलाः कन्दादयः, तेषामिवोदयादुत्पत्तेः; अन्ये तु गूढमूलो गुप्तकारण उदयो यस्य स तथा तस्मात्, मूलस्य वायोर्गूढत्वमावृतत्वमुच्यते तत्प्रकोपहेतुविध्यात्; तथा च—"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च"—इति । गुल्मवत् मनुष्यादिसंहतिवत् । विशालत्वात् विस्तीर्णत्वात् । एतेनैतदुक्तं भवति—यथा संहतिविशेषेणावस्थिता मनुष्यवृक्षादयो गुल्मव्यपदेशं भजन्ते—मनुष्यगुल्मो वृक्षगुल्म इति, एवमत्रापि दृष्टान्तत्रयं गुल्मस्य दोषत्रयोद्भवत्वप्रदर्शनार्थम् । 'गुपितानिलमूलत्वात्' इत्यत्र 'कुपितानिलमूलत्वात्' इति केचित् पठन्ति । तत्रापि स एवार्थः । 'गूढमूलोदयात्' इत्यत्रापरे 'गूढगूल्मोदयात्' इति पठन्ति, व्याख्यानयन्ति च—गूढस्य लतादिवृतस्य गुल्मस्येव वर्तुलविटपस्येव उदयादुत्पत्तेर्गुल्म इत्यर्थः ॥ ५ ॥—

**स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः ॥ ६ ॥**
**अन्तः सरति यस्माच्च न पाकमुपयात्यतः ॥**

इदानीं यथा न पच्यते गुल्मस्तथाऽऽह—स यस्मादित्यादि । स गुल्मो यस्मात् कारणादात्मनि स्वावयवे चयं निचयं गच्छति याति; अप्स्विव बुद्बुद उद्गच्छति उद्गतिं याति, तथा गुल्मरूपोऽपि दोषः स्वावयवे उद्गच्छति उद्गतिं याति; अन्तः अभ्यन्तरे, सरति भ्राम्यति । एवम्भूतः प्रायेण वातिको भवति, स च न पच्यते; इतरे च गुल्मा यदा रक्तादिदूष्यमधिष्ठाय अवतिष्ठन्ते तदा कदाचित् पच्यन्ते । तथा चोक्तम्—"रक्तपित्तातिवृद्धत्वात् क्रियामनुपलभ्य वा । यदि गुल्मो विदह्येत शस्त्रं तत्र भिषग्जितम्"—इति । अथैवमन्तर्विद्रधेर्गुल्मस्य च शीघ्रमन्दपाकित्वेन भेदः ॥ ६ ॥—

**स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः ॥ ७ ॥**
**पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः ॥**

इदानीं 'स पञ्चविध उच्यते' इत्यस्यैव विवरणमाह—स व्यस्तैर्जायते दोषैरित्यादि । स गुल्मः, व्यस्तैः एकैकैः; उच्छ्रितैः प्रकुपितैः, रक्तेन आर्तवरक्तेन; चकारात् धातुरक्तेनापि गुल्मो जायते, स च पुंसां स्त्रीणां च भवति; तस्य च पृथगुपादानं न कृतं, पैत्तिकगुल्मसमानलक्षणतया तत्रैवावरोधात् ॥ ७ ॥—

**सदनं मदन्ता वह्नेराटोपोऽन्त्रविकूजनम् ॥ ८ ॥**
**विण्मूत्रानिलसङ्गश्च सौहित्यासहता तथा ॥**
**द्वेषोऽन्ने वायुरूर्ध्वं च पूर्वरूपेषु गुल्मिनाम् ॥ ९ ॥**

गुल्मपूर्वरूपाण्याह—सदनमित्यादि । आटोप उदरापूरः । सङ्गो निरोधः । सौहित्यासहता तृप्त्यक्षमत्वम् । वायुः ऊर्ध्वं सन्ततोद्गार इत्यर्थः ॥ ८ ॥ ९ ॥

**हृत्कुक्षिशूलं मुखकण्ठशोषो**
**वायोर्निरोधो विषमाग्निता च ॥**
**ते ते विकाराः पवनात्मकाश्च**
**भवन्ति गुल्मेऽनिलसंभवे तु ॥ १० ॥**

वातगुल्मलक्षणमाह—हृत्कुक्षिशूलमित्यादि । विषमाग्निता चेति चकारान्मुखवैरस्यं ग्राह्यम् । ते ते विकाराः स्तम्भकम्पादयः । केचिद्वातगुल्मलक्षणं 'आध्मानशूले भवतोऽतिमात्रं' इत्यादिना पाठेन पठन्ति; स चाभावान्न लिखितः ॥ १० ॥

**स्वेदज्वराहारविदाहदाहा-**
**स्तृष्णाऽङ्गरागः कटुवक्त्रता च ॥**
**पित्तस्य लिङ्गान्यखिलानि यानि**
**पित्तात्मके तानि भवन्ति गुल्मे ॥ ११ ॥**

पित्तगुल्मलक्षणमाह—स्वेदेत्यादि । आहारविदाहः भुक्तमात्रस्याहारस्याम्लिकादिसद्भावः । पित्तस्य लिङ्गानि भ्रममदमूर्च्छादीनि । पित्तगुल्मलक्षणमपि केचिदन्यपाठेन पठन्ति । यथा—'अम्लीभवत्यन्नमथो ज्वरश्च दाहः पिपासा कटुवक्त्रता च । पित्तस्य लिङ्गानि च कीर्तितानि भवन्ति पित्तप्रभवे तु गुल्मे' इति ॥ ११ ॥

**स्तैमित्यमन्नेऽरुचिरङ्गसाद-**
**श्छर्दिः प्रसेको मधुरास्यता च ॥**

---

१-२-३-'कुपितानिलमूलत्वात्' इति पा० । ४ 'वनस्पत्यादिसंहतिवत्' इति पा० । ५ 'लतादिच्छन्नस्य' इति पा० ।

१ 'सोऽप्यभावान्न लिखितः' इति पा० ।

**कफस्य लिङ्गानि च यानि तानि**
**भवन्ति गुल्मे कफसंभवे तु ॥ १२ ॥**

कफगुल्मलक्षणमाह—स्तैमित्यमित्यादि । स्तैमित्यं स्तिमितता । अन्ने अरुचिः अन्नानभिलाषः । प्रसेको लालास्रावः । कफस्य लिङ्गानि गौरवशैत्यादीनि । कफगुल्ममपि केचित् "अन्ने न लिप्सा गुरुगात्रता च छर्दिः प्रसेको मधुरास्यता च" इत्यादिपाठेन पठन्ति, सोऽप्यभावान्न दर्शितः ॥ १२ ॥

**सर्वात्मकः सर्वविकारयुक्तः**
**सोऽसाध्य उक्तः,**

सन्निपातगुल्मलक्षणमाह—सर्वात्मक इत्यादि । सर्वविकारयुक्तः प्रत्येकवातादिगुल्मोक्तलक्षणसहितः । 'सर्वात्मके सर्वरुजोपपत्तिः' इति केचित् पठन्ति, व्याख्यानयन्ति च—सर्वलिङ्गोपपत्तिरिति वक्तव्ये सर्वरुजोपपत्तिरिति यत्कृतं तन्महारुजत्वप्रतिपादनार्थम् । केचिदत्र निचयगुल्मं पुरीषलसिकारक्तजन्यं दक्षिणपार्श्वाश्रितं पठन्ति । तस्य विशेष उच्यते,—"सिराजालपरिच्छन्नो दाहरागज्वरान्वितः । कूर्मवद्रक्तपर्यन्तस्त्रिदोषः स न सिध्यति"—इति । केचिच्च गुल्मावस्थाविशेषमुपस्तम्भनामान्तरं पठन्ति—"पयो ह्यम्लसमायुक्तं दधिभावं व्रजेद्यथा । यत्नहीनस्य गुल्मोऽपि तथोपस्तम्भतां व्रजेत् ॥ अम्भोवहे स्तम्भयित्वा स्रोतसी कोष्ठसंश्रितः । उदरे प्रति सन्तिष्ठेदुपस्तम्भं तु तं विदुः"–इति ॥—

**क्षतजं प्रवक्ष्ये ॥**

**नवप्रसूताऽहितभोजना या**
**या चामगर्भं विसृजेदृतौ वा ॥ १३ ॥**
**वायुर्हि तस्याः परिगृह्य रक्तं**
**करोति गुल्मं सरुजं सदाहम् ॥**
**पैत्तस्य लिङ्गेन समानलिङ्गं**
**विशेषणं चाप्यपरं निबोध ॥ १४ ॥**
**न स्पन्दते नोदरमेति वृद्धिं**
**भवन्ति लिङ्गानि च गर्भिणीनाम् ॥**
**तं गर्भकालातिगमे चिकित्स्य-**
**मसृग्भवं गुल्ममुशन्ति तज्ज्ञाः ॥ १५ ॥**

आर्तवरक्तजगुल्मं हेत्वादिभिराह—क्षतजमित्यादि । क्षतजशब्देनार्तवरक्तमुच्यते, कारणे कार्योपचारात् । आमगर्भः षण्मासं यावत् । ऋतावित्यत्रापि अहितभोजनेति संबध्यते । पैत्तस्य पित्तजगुल्मस्य । विशेषणं विशेषम् । निबोध जानीहि । न स्पन्दते न चलति, 'अङ्गैः' इति शेषः । अन्ये तु परतो निषेधस्योभयत्र संबन्धात् स्पन्दते इत्येव वर्णयन्ति; तेन पिण्डितः स्पन्दत एवेत्यर्थः; तथा चोक्तम्—'यः स्पन्दते पिण्डित एव नाङ्गैः' ( च. चि. अ. ५ )—इति । गर्भिणीनां लिङ्गानि श्रमादीनि सदनान्तान्यत्र व्याधिस्वभावाद्भवन्ति । तं रक्तगुल्मम् । गर्भकालातिगमे प्रसूतिकालेऽतिक्रान्ते; प्रसूतिकालादनन्तरं पिण्डीभूते रक्तगुल्मे स्नेहादिनोपस्कृतदेहायाः सुखसाध्यत्वम् । उक्तं च—"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्" इति । केचिदेवं व्याख्यानयन्ति—'मासे व्यतीते दशमे चिकित्स्यः' इति वक्तव्ये 'तं गर्भकालातिगमे चिकित्स्यम्' इति यत्कृतं तद्रक्तगुल्मे सम्यगुपेचिते प्रसूतिकालादर्वागपि चिकित्सा करणीयेति बोधयति ॥ १३–१५ ॥

**वातगुल्मार्दितं स्निग्धं युक्तं स्नेहविरेचनैः ॥**
**उपाचरेद्यथाकालं निरूहैः सानुवासनैः ॥ १६ ॥**

अतः परं चिकित्सामाह—वातगुल्मार्दितमित्यादि । स्निग्धमवस्थापेक्षया चतुर्भिरपि स्नेहैः । यथाकालमिति 'पक्षाद्विरेको वान्तस्य' इत्यादिनोक्तस्य कालस्यानतिक्रमेणेत्यर्थः; 'यथाकालं' इत्यत्र 'यथायोगं' इति पठित्वा यथावस्थमिति व्याख्या नयन्ति ॥ १६ ॥

**पित्तगुल्मार्दितं स्निग्धं काकोल्यादिघृतेन तु ॥**
**विरिक्तं मधुरैर्योगैर्निरूहैः समुपाचरेत् ॥ १७ ॥**

पित्तगुल्मार्दितमित्यादि । मधुरैर्योगैः आरग्वधादिभिः क्षीरशर्करादिभिश्च; अन्ये तु 'भित्त्वा द्विधेक्षुम्' इत्याद्युक्तैर्मधुरैर्योगैरिति व्याख्यानयन्ति । निरूहैः समुपाचरेन्मधुरैरेव ॥ १७ ॥

**श्लेष्मगुल्मार्दितं स्निग्धं पिप्पल्यादिघृतेन तु ॥**
**तीक्ष्णैर्विरिक्तं तद्रूपैर्निरूहैः समुपाचरेत् ॥ १८ ॥**

श्लेष्मगुल्मार्दितमित्यादि । तीक्ष्णैः दन्तीद्रवन्तीप्रभृतीभिः । तद्रूपैर्निरूहैस्तीक्ष्णैः 'आरग्वधादिभिः क्वाथः' इत्यादिभिरित्यर्थः । सर्वगुल्मेषु स्नेहस्वेदौ प्रयोज्यौ, वातारब्धत्वात् ॥ १८ ॥

**सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ॥**

सन्निपातोत्थिते गुल्मे इत्यादि । ननु, पूर्वं सान्निपातिको गुल्मोऽसाध्य उक्तः, तत् कथं त्रिदोषघ्नो विधिर्हित इत्युच्यते ? सत्यं, यथा विषमसन्निपातजो गुल्मोऽसाध्यस्तथा समसन्निपातजोऽभिनवो बलवति पुरुषे कृच्छ्रसाध्यः, अतोऽत्र चिकित्सितमुक्तम् । तथा चोक्तं—"सन्निपातोत्थितो गुल्मस्त्रिरोत्थोऽसमदोषजः । वर्जनीयोऽन्यथा कृच्छ्रसाध्यो बलवतो मतः"–इति ॥—

**पित्तवद्रक्तगुल्मिन्या नार्याः कार्यः क्रियाविधिः ॥१९**
**विशेषमपरं चास्याः शृणु रक्तविभेदनम् ॥**
**पलाशक्षारतोयेन सिद्धं सर्पिः प्रयोजयेत् ॥ २० ॥**
**दद्यादुत्तरबस्तिं च पिप्पल्यादिघृतेन तु ॥**
**उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः ॥ २१ ॥**

पित्तवद्रक्तगुल्मिन्या इत्यादि । पित्तवत् पित्तगुल्मवत् ।

१ 'तन्महारुजासूचनार्थम्' इति पा० । २ 'गुल्मावस्थाविशेषप्राप्त्या नामान्तरं' इति पा० । ३ 'प्रसवेदृतौ' इति पा० । ४ 'क्षतजशब्देनात्र रक्तमुच्यते' इति पा० ।

१ 'हेतवः' इति पा० । २ 'सम्यक् ज्ञाते' इति पा० । ३ 'वातसद्भावात्' इति पा० । ४ 'यस्मात्' इति पा० । ५ 'पलाशभस्मतोयेन' इति पा० ।

पित्तगुल्मचिकित्सया प्रतिकृतस्य रक्तगुल्मस्य विशेषचिकित्सामाह—विशेषमपरं चास्या इत्यादि । पलाशक्षारतोयेन पलाशभस्मगालितेन जलेन । केचित्तोयशब्दं क्वाथे वर्णयन्ति । स च क्षारक्काथः स्नेहोपयोगोक्तविधिना कार्यः । पिप्पल्यादिगणकल्कक्काथाभ्यां साधितघृतेन । उष्णैरिति पिप्पल्यादिप्रभृतिभिः । विधिरासृग्दर इति रक्तपित्तोक्तो विधिः; कुत एतत्? असृग्दरे रक्तपित्तविध्यतिदेशात्; असृग्दरविध्यतिदेशेन रक्तपित्तविध्यतिदेशं कुर्वन्नेतज्ज्ञापयति—अधोगतरक्तपित्तचिकित्सितमत्र कार्यमिति ॥ १९–२१ ॥

**आनूपौदकमज्जानो वसा तैलं घृतं दधि ॥**
**विपक्वमेकतः शस्तं वातगुल्मेऽनुवासनम् ॥ २२ ॥**

वातगुल्मेऽनुवासनमुद्दिशन्नाह—आनूपौदकमज्जान इत्यादि । आनूपा गजगवयादयः, औदका मत्स्यादयः । वसाऽपि आनूपादीनामेव । विपक्वमेकत इति एतच्च स्नेहमेकीकृत्य विपक्वम्, अर्थाद्वातहरैर्द्रव्यैरिति बोद्धव्यम् ॥ २२ ॥

**जाङ्गलैकशफानां तु वसा सर्पिश्च पैत्तिके ॥**

पैत्तिके गुल्मेऽनुवासनमाह—जाङ्गलैकशफानामित्यादि । अत्र जाङ्गलशब्देन जङ्गालविष्किरौ प्रधानतया गृह्येते । एकशफा अश्ववेशरादयः । वसा सर्पिश्चेति अत्रापि विपक्वमिति संबध्यते । तेनैतद्वयं पित्तहरैर्द्रव्यैर्विपक्वं पैत्तिके गुल्मेऽनुवासनं योज्यमिति ॥—

**तैलं जाङ्गलमज्जान एवं गुल्मे कफोत्थिते ॥ २३ ॥**

कफगुल्मेऽनुवासनमाह—तैलं जाङ्गलमज्जान इत्यादि । एवमिति कफहरद्रव्यैर्विपक्वमनुवासनं शस्तमित्यर्थः ॥ २३ ॥

**धात्रीफलानां स्वरसे षडङ्गं विपचेद्घृतम् ॥**
**शर्करासैन्धवोपेतं तद्धितं वातगुल्मिने ॥ २४ ॥**

वातादिजगुल्मेष्वनुवासनमभिधाय वातापहघृतान्याह—धात्रीफलानामित्यादि । धात्रीफलानां स्वरसे चतुर्गुणे; षडङ्गमिति षट्पलकं; तेनात्र पञ्चकोलयवक्षारकल्कमिति लभ्यते । शर्करासैन्धवोपेतमिति शर्करासैन्धवप्रक्षेपयुक्तं तद्घृतं वातगुल्मिने हितमित्यर्थः ॥ २४ ॥

**चित्रकव्योषसिन्धूत्थपृथ्वीकाचव्यदाडिमैः ॥**
**दीप्यकग्रन्थिकाजाजीहपुषाधान्यकैः समैः ॥ २५ ॥**
**दध्यारनालबदरमूलकस्वरसैर्घृतम् ॥**
**तत्पिबेद्वातगुल्माग्निदौर्बल्याटोपशूलनुत् ॥ २६ ॥**

चित्रकादिघृतमाह—चित्रकव्योषेत्यादि । पृथ्वीका हिङ्गुपत्रिका, 'कृष्णजीरक' इत्यन्ये; दीप्यकः अजमोदा, ग्रन्थिकं पिप्पलीमूलम् । समैरिति 'कल्कीकृतैः' इत्यध्याहार्यम् । दध्यादीनि मूलकस्वरसान्तानि प्रत्येकं घृताच्चतुर्गुणानि ॥२५॥२६॥

**हिङ्गुसौवर्चलाजाजीविडदाडिमदीप्यकैः ॥**
**पुष्करव्योषधान्याम्लवेतसक्षारचित्रकैः ॥ २७ ॥**
**शटीवचाजगन्धैलासुरसैश्च विपाचितम् ॥**
**शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥ २८ ॥**

हिङ्ग्वाद्यं घृतमाह—हिङ्गुसौवर्चलेत्यादि । धान्यं धान्यकम् । अजगन्धा बोवयिका । सुरसः तुलसी । हिङ्ग्वादीनां सुरसान्तानां कल्के दध्ना चतुर्गुणेन विपाचितं सर्पिः शूलादिहरमिति संबन्धः ॥ २७ ॥ २८ ॥

**विडदाडिमसिन्धूत्थहुतभुग्व्योषजीरकैः ॥**
**हिङ्गुसौवर्चलक्षाररुग्वृक्षाम्लाम्लवेतसैः ॥ २९ ॥**
**बीजपूररसोपेतं सर्पिर्दधिचतुर्गुणम् ॥**
**साधितं दाधिकं नाम गुल्महृत् प्लीहशूलजित् ॥३०॥**

दाधिकसंज्ञं घृतमाह—विडदाडिमसिन्धूत्थेत्यादि । हुतभुक् चित्रकः । क्षारो यवक्षारः, रुक् कुष्ठं, वृक्षाम्लं तिन्तिडीकम् । बीजपूरकरसोऽत्र चतुर्गुणः, द्रवद्रव्यत्वात् ॥ २९ ॥ ३० ॥

**रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितम् ॥**
**सुरारनालदध्यम्लमूलकस्वरसैः सह ॥ ३१ ॥**
**व्योषदाडिमवृक्षाम्लयवानीचव्यसैन्धवैः ॥**
**हिङ्ग्वम्लवेतसाजाजीदीप्यकैश्च समांशिकैः ॥ ३२॥**
**सिद्धं गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान् ॥**
**कासापस्मारमन्दाग्निप्लीहशूलानिलाञ्जयेत् ॥ ३३ ॥**

रसोनादिघृतमाह—रसोनस्वरसे इत्यादि । पञ्चमूलरसान्वितमिति बिल्वादिपञ्चमूलक्काथान्वितम् । आरनालं काञ्जिकं, दध्यम्लं दधिमस्तु । दीप्यकः अजमोदा । रसोनस्वरसादिमूलकस्वरसान्तैः षड्भिर्द्रवैर्घृतसमैः, व्योषादिद्रव्यैः कल्कितैः सर्पिश्चतुर्थांशैः, सिद्धं सर्पिर्गुल्मादीन् जयेदिति संबन्धः ॥ ३१–३३ ॥

**दधि सौवीरकं सर्पिः क्वाथौ मुद्गकुलत्थजौ ॥**
**पञ्चाढकानि विपचेदावाप्य द्विपलान्यथ ॥ ३४ ॥**
**सौवर्चलं सर्जिकां च देवदार्वथ सैन्धवम् ॥**
**वातगुल्मापहं सर्पिरेतद्दीपनमेव च ॥ ३५ ॥**

दधि सौवीरकमित्यादि । दध्यादीनि चत्वारि पृथगाढकप्रमाणानि, सौवर्चलादीनि द्विपलान्यावाप्य सर्पिराढकं विपचेत्, अयमत्र सिद्धः पाठः, पारंपर्याविच्छेदसरणात् । वर्तमानपुस्तकेषु चायं पठ्यते—कुलत्थमूलकक्वाथेत्यादि ॥ ३४ ॥ ३५ ॥

**तृणमूलकषाये तु जीवनीयैः पचेद्घृतम् ॥**
**न्यग्रोधादिगणे वाऽपि गणे वाऽप्युत्पलादिके॥३६॥**
**रक्तपित्तोत्थितं घ्नन्ति घृतान्येतान्यसंशयम् ॥**

पित्तजरक्तजगुल्मयोर्घृतान्याह—तृणमूलकषाये इत्यादि । अत्र तृणमूलशब्दात्तृणपञ्चमूलकषाये इति बोद्धव्यम् । जीवनीयैरिति काकोल्यादिभिः कल्कीकृतैरित्यर्थः । न्यग्रोधादिगणे क्वाथीकृते इति ज्ञेयम् । वाऽपीत्यपिशब्दो जीवनीयैः पचेद्घृत-

---

१ 'मृदुकृतस्य' इति पा० । २ 'वर्तयन्ति' इति पा० । ३ 'अपराणि घृतान्याह' इति पा० ।

मिति समुच्चिनोति । एवमुत्पलादावपि ग्राह्यम् । रक्तपित्तोत्थितं 'गुल्मं' इति शेषः ॥ ३६ ॥—

**आरग्वधादौ विपचेद्दीपनीययुतं घृतम् ॥ ३७ ॥**
**क्षारवर्गे पचेच्चान्यत् पचेन्मूत्रगणेऽपरम् ॥**
**घ्नन्ति गुल्मं कफोद्भूतं घृतान्येतान्यसंशयम् ॥ ३८ ॥**

कफगुल्मे घृतान्याह—आरग्वधादौ विपचेदित्यादि । आरग्वधादाविति क्वाथीकृते । दीपनीययुतमिति पिप्पल्यादिकल्कयुतम् । एकं घृतम् । क्षारवर्गे इति मुष्ककादारभ्य यावच्चतस्रः कोशातकीरिति क्षारवर्गे, मुष्ककादिगणे इत्यन्ये व्याख्यानयन्ति । अत्रापि दीपनीययुतमिति संबध्यते, तेन क्षारवर्गद्रवे[1] पिप्पल्यादिकल्कयुतं घृतं पचेदित्यर्थः; द्वितीयं घृतमित्यर्थः । पचेन्मूत्रगणेऽपरमिति मूत्रगणे गोमूत्रादिकेऽष्टसंख्याकेऽपरं तृतीयं घृतम् । अत्रापि दीपनीययुतमिति संबध्यते । 'मूत्रगणेऽपरम्' इत्यत्रान्ये 'दीपनीयगणेऽपरम्' इति पठन्ति, तच्च टीकाकारा अनार्षं वर्णयन्ति । केचिदिदं कफगुल्मचिकित्सितं वातगुल्मचिकित्सानन्तरं पठित्वा वातावरकं कफशान्तये कफहन्तॄण्यपि घृतानि वातगुल्मे शस्तानीति व्याख्यानयन्ति ॥ ३७ ॥ ३८ ॥

**यथादोषोच्छ्रयं चापि चिकित्सेत्साम्निपातिकम् ॥**

एवं घृतान्यभिधायाधुना साम्निपातिके दोषोद्रेकेण घृतचूर्णादिभिश्चिकित्सितमाह—यथेत्यादि । यथादोषोच्छ्रयं यो यो दोष उच्छ्रित उत्कटस्तच्चिकित्सया चिकित्सेदित्यर्थः । 'यथादोषोच्छ्रयं' इत्यत्रान्ये 'यथादोषबलं' इति पठन्ति; तत्राप्येकोऽर्थः ॥—

**चूर्णं हिङ्ग्वादिकं वाऽपि घृतं वा प्लीहनाशनम् ३९**
**पिबेद्गुल्मापहं काले सर्पिस्तैल्वकमेव वा ॥**

तच्च यथादोषोच्छ्रयं चिकित्सितं वाते जिते सति कार्यमिति वातहरविधिमाह—चूर्णमित्यादि । चूर्णं हिङ्ग्वादिकमिति हिङ्गुत्रिकटुकेत्यादिना वातव्याध्युक्तम् । घृतं वा प्लीहनाशनमिति षट्पलकमित्यर्थः । यद्यपि षट्पलं घृतं तन्त्रान्तरे कफगुल्महरत्वेन दर्शितं, तथाऽप्यत्र विलक्षणैकद्रव्यत्वाद्वातगुल्महरत्वम् । काले उत्पन्नमात्र एव षट्पलकं घृतं हितं, काले अवस्थायामित्यन्ये । सर्पिस्तैल्वकमिति तिल्वकः पट्टिकारोध्रः, तेन संस्कृतं तैल्वकं, वातव्याध्युक्तं वा ॥ ३९ ॥—

**तिलेक्षुरकपालाशसार्षपं यावनालजम् ॥ ४० ॥**
**भस्म मूलकजं चापि गोजाविखरहस्तिनाम् ॥**
**मूत्रेण महिषीणां च पालिकैश्चावचूर्णितैः ॥ ४१ ॥**
**कुष्ठसैन्धवयष्ट्याह्वनागरकृमिघातिभिः ॥**
**साजमोदैश्च दशभिः सामुद्राच्च पलैर्युतम् ॥ ४२ ॥**
**अयःपात्रेऽग्निनाऽल्पेन पक्त्वा लेह्य(ह)मथोद्धरेत् ॥**
**तस्य मात्रां पिबेद्दध्ना सुरया सर्पिषाऽपि वा ॥ ४३ ॥**
**धान्याम्लेनोष्णतोयेन कौलत्थेन रसेन वा ॥**
**गुल्मान् वातविकारांश्च क्षारोऽयं हन्त्यसंशयम् ४४**

पानीयं क्षारमाह—तिलेत्यादि । इक्षुरकः कोकिलाक्षकः । नागरकस्थाने केचित्त्र्यूषणं पठन्ति । कृमिघाति विडङ्गम् । तिलादीनां मूलकान्तानां भस्म गवादिमूत्रगणेन चतुर्गुणेन क्षारकल्पेन परिस्राव्य कुष्ठादिभिरजमोदान्तैः पालिकैः सामुद्रात् समुद्रलवणाद्दशभिः पलैश्चूर्णितैर्युतं लोहपात्रे मृदुना चाग्निना लेह्यं पक्त्वा उद्धरेदिति संबन्धः । अन्ये तु व्याख्यानयन्ति–तिलादिभस्मपलशतं गवादिमूत्रेण चतुर्गुणेन निष्क्वाथ्य पादभागिकमवशेष्य, तच्चतुर्थांशं कुष्ठादिचूर्णमावाप्य तावत् पचेद्यावल्लेह्यं भवति । दध्नेत्याद्यनेकावलोडनद्रव्योपदेशो दोषकालाद्यपेक्षया । वातविकारान् तूनीप्रभृतीन् ॥ ४०–४४ ॥

**स्वर्जिकाकुष्ठसहितः क्षारः कैतकिजोऽपि वा ॥**
**तैलेन शमयेत् पीतो गुल्मं पवनसंभवम् ॥ ४५ ॥**

श्लोकेन योगद्वयमाह—स्वर्जिकेत्यादि । क्षारो यवक्षारः । तत्र स्वर्जिकाकुष्ठसहितो यवक्षारस्तैलेनैको योगः; कैतकिजोऽपि वेत्यत्रापि क्षार इति संबध्यते, तेन कैतकिजोऽपि वा क्षारस्तैलेनेति द्वितीयो योगः । गौडास्तु कैतकिक्षारः स्वर्जिकाकुष्ठसहितस्तैलेनेत्येकमेव योगं मन्यन्ते ॥ ४५ ॥

**पीतं सुखाम्बुना वाऽपि स्वर्जिकाकुष्ठसैन्धवम् ॥**

क्षारावलेहमभिधाय चूर्णमाह—पीतमित्यादि । सुखाम्बुना ईषदुष्णोदकेन । गुल्मं हन्तीत्यत्रापि संबध्यते ॥—

**वृश्चीव(र)मुरुबूकं च वर्षाभूर्बृहतीद्वयम् ॥ ४६ ॥**
**चित्रकं च जलद्रोणे पक्त्वा पादावशेषितम् ॥**
**मागधीचित्रकक्षौद्रलिप्ते कुम्भे निधापयेत् ॥ ४७ ॥**
**मधुनः प्रस्थमावाप्य पथ्याचूर्णार्धसंयुतम् ॥**
**तुषोषितं दशाहं तु जीर्णभक्तः पिबेन्नरः ॥ ४८ ॥**
**अरिष्टोऽयं जयेद्गुल्ममविपाकमरोचकम् ॥**

वृश्चीवाद्यरिष्टमाह—वृश्चीवेत्यादि वृश्चीवः शुक्लपुनर्नवा । उरुबूकः शुक्लैरण्डः । वर्षाभूः रक्तपुनर्नवा । बृहतीद्वयमिति एका अणुफला, द्वितीया कण्टकिनी स्थूलफला । वृश्चीवादीनां चित्रकान्तानामाढकम्; अन्ये पलशतं मन्यन्ते, द्रोणेऽम्भसि पलशतमित्यादिपरिभाषितत्वात् । पादावशेषितं चतुर्थांशावशिष्टं क्वाथं, मगधादिप्रमाणं यावन्मात्रेण कुम्भस्य सम्यग्लेपनं भवति, पथ्याचूर्णार्धसंयुक्तं हरीतकीचूर्णाष्टपलसंयुतम् । तुषोषितं तुषमध्ये स्थितम् । जीर्णभक्तः परिणताहारः लघुकोष्ठ इति यावत् । पिबेत् प्रातरेव ॥ ४६–४८ ॥—

**पाठानिकुम्भरजनीत्रिकटुत्रिफलाग्निकम् ॥ ४९ ॥**
**लवणं वृक्षबीजं च तुल्यं स्याद्नवो गुडः ॥**
**पथ्याभिर्वा युतं चूर्णं गवां मूत्रयुतं पचेत् ॥ ५० ॥**
**गुटिकास्तद्घनीभूतं कृत्वा खादेदभुक्तवान् ॥**
**गुल्मप्लीहाग्निसादांस्ता नाशयेयुरशेषतः ॥ ५१ ॥**

---

१ 'क्षारवर्गद्रवे' इति पा० ।

१ 'आलोड्य' इति पा० । २ 'पृथ्वीकामुरुबूकं च' इति पा० । ३ 'तुषोषितं इति पा० । ४ 'चणकफला' इति पा० । ५ 'पथ्याभिः सहितं चूर्णं' इति पा० ।

**हृद्रोगं ग्रहणीदोषं पाण्डुरोगं च दारुणम् ॥**

पाठेत्यादि । निकुम्भा दन्ती । अग्निकः चित्रकः, 'अग्निमन्थ' इत्यन्ये, 'मोरट' इत्यपरे । वृक्षबीजम् इन्द्रयवः । अनवं गुडं पुराणं गुडम् । पाठादिचूर्णं समपुराणगुडयुतं खादेत्, अथवा तदेव चूर्णं हरीतकीभिः सह गोमूत्रेण पचेत्, तं च घनीभूतं गुटिकाः कृत्वा प्रातरेव खादेत् । हरीतकीप्रमाणं चूर्णाच्चतुर्थांशं, गोमूत्रं तु चतुर्गुणम् ॥ ४९-५१ ॥—

**सशूले सोन्नतेऽस्पन्दे दाहपाकरुगन्विते ॥ ५२ ॥**
**गुल्मे रक्तं जलौकोभिः सिरामोक्षेण वा हरेत् ॥**

इदानीमवस्थायां गुल्मे रक्तमोक्षणमाह—सशूले इत्यादि । अस्पन्दे अचले । पाकरुगन्विते पाकवेदनायुक्ते, जलौकोभी रक्तं हरेत् गुल्मस्थाने एव, सिरामोक्षेण तु बाह्वोः, तत्रान्तरोक्तत्वात् । केचित् 'अलाबुपातनं चापि गुल्मे शस्तं कफात्मके' इति पठन्ति ॥ ५२ ॥—

**सुखोष्णा जाङ्गलरसाः सुस्निग्धा व्यक्तसैन्धवाः ५३**
**कटुत्रिकसमायुक्ता हिताः पाने तु गुल्मिनाम् ॥**

गुल्मिनां जाङ्गलरसस्य पानमाह—सुखोष्णा इत्यादि । सुखोष्णा ईषदुष्णाः । जाङ्गलरसा जङ्गालविष्किरमांसरसाः संस्कृताः । सुस्निग्धाः सम्यक् स्नेहसंस्कृताः । हिता इति 'यथादोषं' इति शेषः ॥ ५३ ॥—

**पेया वातहरैः सिद्धाः कौलत्थाः संस्कृता रसाः ५४**
**खलाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः ॥**

भोजनार्थमाह—पेयेत्यादि । वातहरैः भद्रदार्वादिभिः । संस्कृताः स्नेहादिभिः । खलाः कपित्थदाडिमतक्रशाकादिसंस्कृताः 'कचिला' इति प्रसिद्धाः । सपञ्चमूलाः पञ्चमूलसहिताः, एतेन पञ्चमूलसहितैः कपित्थादिभिः कृता इत्यर्थः । भोजने हिता यथादोषमित्युपस्कारः ॥ ५४ ॥—

**बद्धवर्चोनिलानां तु साद्रर्कं क्षीरमिष्यते ॥ ५५ ॥**

अवस्थावशेन गुल्मे भोजनविशेषमाह—बद्धेत्यादि । बद्धवर्चोनिलानां निरुद्धपुरीषवायूनाम् । साद्रर्कम् आर्द्रकसहितम् । इष्यते 'भोजने' इति शेषः ॥ ५५ ॥

**कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक् ॥**

आन्तरोपचारमभिधायावस्थायां बाह्योपचारं स्वेदमाह—कुम्भीपिण्डेष्टकास्वेदानित्यादि । कुम्भीप्रभृतिस्वेदाः स्वेदाध्याये अभिहिताः । निपुणतया स्वेदान् कारयेत् ॥—

**गुल्मिनः सर्व एवोक्ता दुर्विरेच्यतमा भृशम् ॥५६॥**
**अतश्चैतांस्तु सुस्विन्नान् स्रंसनेनोपपादयेत् ॥**

वातश्लेष्मात्मके सशूले कठिने च गुल्मे गुल्मिनो विरेकमाह—गुल्मिन इत्यादि । सुस्विन्नानिति स्नेहो हि स्वेदेनैवाक्षिप्तः, तेन सम्यक् स्निग्धस्विन्नान् । स्रंसनेन विरेकेण । उपपादयेत् योजयेत् ॥ ५६ ॥—

**विम्लापनाभ्यञ्जनानि तथैव दहनानि च ॥ ५७ ॥**
**उपनाहाश्च कर्तव्याः सुखोष्णाः साल्वणादयः ॥**
**उदरोक्तानि सर्पींषि मूत्रवर्तिक्रियास्तथा ॥ ५८ ॥**
**लवणानि च योज्यानि यान्युक्तान्यनिलामये ॥**

किं गुल्मे विरेक एव कार्य उतान्यदपीत्याह—विम्लापनाभ्यञ्जनानीत्यादि । विम्लापनम् अङ्गुल्यादिना गुल्मस्य मर्दनं, दहनं जाम्बवौष्ठादिना । साल्वणादय इत्यत्र आदिशब्दः प्रकारे; तेन साल्वणप्रकारा अन्येऽप्युपनाहस्वेदाः पच्यमानाभिमुखे गुल्मे कार्याः । उदरोक्तानि सर्पींषि 'हरीतकीचूर्णप्रस्थं' इत्यादिकानि । मूत्रवर्तिक्रियास्तथेति उदरोक्ता 'वमनशिरोविरेचनद्रव्याणां' इत्यादिकाः । लवणानि पत्रलवणस्नेहलवणकल्याणलवणानि । अनिलामये वातव्याधौ । केचित् 'सर्पींषि' इत्यस्याग्रे 'चूर्णानि' इति पठित्वा नाराचकादय इति व्याख्यानयन्ति ॥ ५७ ॥ ५८ ॥—

**वातवर्चोनिरोधे तु सामुद्रार्द्रकसर्षपैः ॥ ५९ ॥**
**कृत्वा पायौ विधातव्या वर्तयो मरिचोत्तराः ॥**

इदानीं मूत्रवर्तिप्रयोगावस्थामपरवर्तिं चाह—वातेत्यादि । सामुद्रं समुद्रलवणं, समुद्रफेनमपरे । मरिचोत्तरा मरिचप्रधानाः ॥ ५९ ॥—

**दन्तीचित्रकमूलेषु तथा वातहरेषु च ॥ ६० ॥**
**कुर्यादरिष्टान् सर्वांश्च श्लोकस्थाने यथेरितान् ॥**

दन्तीचित्रकमूलेष्वित्यादि । वातहरेषु विदारिगन्धाप्रभृतिषु । श्लोकस्थाने यथेरितानिति यथा सूत्रस्थाने विरेचनकल्पे आसवकरणमुक्तं, तेनैव प्रकारेणात्रापि दन्त्यादिक्काथेऽरिष्टानासवान् कुर्यात् । अन्ये तु 'श्लोकस्थाने' इत्यत्र द्वितीयं स्थानशब्दं लुप्तं वर्णयन्ति, लुप्तस्थानशब्देन गुल्मप्रतिषेधं गृह्णन्ति । तेनात्रोक्तवृश्चीवाद्यरिष्टवद्दन्त्यादिकाथे मधुपथ्याचूर्णप्रक्षेपेणारिष्टकरणं, सूत्रस्थानोक्तप्रकारेण वाऽऽसवकरणम् ॥ ६० ॥—

**खादेद्वाऽप्यङ्कुरान् भृष्टान् पूतीकनृपवृक्षयोः ६१ ॥**

खादेदित्यादि । अङ्कुरान् कोमलपल्लवान् । भृष्टानिति 'स्नेहेन' इति शेषः; अन्ये अग्निना भृष्टानित्याहुः, तन्मते वातकारिणोऽप्यङ्कुरा व्याधिप्रत्यनीकत्वाद्गुल्मे हिताः । पूतीकः चिरबिल्वः, नृपवृक्षो गिरिमालकः ॥ ६१ ॥

**ऊर्ध्ववातं मनुष्यं च गुल्मिनं न निरूहयेत् ॥**

इदानीं गुल्मे हितस्यापि निरूहस्यावस्थायां निषेधमाह—ऊर्ध्ववातमित्यादि । ऊर्ध्ववातम् ऊर्ध्ववातयुक्तं गुल्मिनं मनुष्यं न निरूहयेदिति संबन्धः । केचिदिमं पाठं न पठन्ति ॥—

**पिबेत्त्रिवृन्नागरं वा सगुडां वा हरीतकीम् ॥ ६२ ॥**
**गुग्गुलुं त्रिवृतां दन्तीं द्रवन्तीं सैन्धवं वचाम् ॥**
**मूत्रमद्यपयोद्राक्षारसैर्वीक्ष्य बलाबलम् ॥ ६३ ॥**

१ 'विलेपनाभ्यञ्जनानि' इति पा० २ 'चूर्णवर्तिक्रियास्तथा' इति पा० ।

पिबेदित्यादि । पिबेदिति वक्ष्यमाणेन मूत्रमद्यादिद्रवेण; अन्ये पानीयेन पिबेदित्याहुः । त्रिवृन्नागरमित्येको योगः, सगुडां वा हरीतकीमिति द्वितीयः । गुग्गुलुमित्यादि । द्रवन्ती चीरितपत्रा दन्तीभेदः । पयः दुग्धं, द्राक्षारसः द्राक्षास्वरसः । वीक्ष्य बलाबलमिति 'दोषादीनां' इति वाक्यशेषः । अत्रापि पिबेदिति संबन्धनीयम् ॥ ६२ ॥ ६३ ॥

**एवं पीलूनि भृष्टानि पिबेत् सलवणानि तु ॥**

एवमित्यादि । एवमिति मूत्रादिभिरित्यर्थः । ( भृष्टानि स्नेहेन ) ॥—

**पिप्पलीपिप्पलीमूलचव्यचित्रकसैन्धवैः ॥ ६४ ॥**
**युक्ता हन्ति सुरा गुल्मं शीघ्रं काले प्रयोजिता ॥**

पिप्पलीत्यादि । सुरा पैष्टी । हन्तीत्यत्र शीघ्रमिति संबध्यते । काले आध्मानादिकायामवस्थायाम् ॥ ६४ ॥—

**बद्धविण्मारुतो गुल्मी भुञ्जीत पयसा यवान् ॥६५॥**
**कुल्माषान् वा बहुस्नेहान् भक्षयेल्लवणोत्तरान् ॥**

बद्धेत्यादि । पयसा दुग्धेन । यवान् वाट्यादिकृतान् । कुल्माषान् यवपिष्टमयान् भक्ष्यान् । लवणोत्तरान् सैन्धवप्रधानान् ॥ ६५ ॥—

**अथास्योपद्रवः शूलैः कथंचिदुपजायते ॥ ६६ ॥**
**शूलं निखानितमिवासुखं येन तु वेत्त्यसौ ॥**

इदानीं गुल्मोपद्रवमाह—अथेत्यादि । अस्य गुल्मस्य, उपद्रवः पश्चात्कालभावी कथञ्चित् स्वहेतुभिरित्यर्थः । शूल उपजायते । शूलं निखानितमिव कीलकं निखानितमिवेत्यर्थः ॥ ६६ ॥—

**तत्र विण्मूत्रसंरोधः कृच्छ्रोच्छ्वासः स्थिराङ्गता ६७**
**तृष्णा दाहो भ्रमोऽन्नस्य विदग्धपरिवृद्धिता ॥**
**रोमहर्षोऽरुचिश्छर्दिर्भुक्तवृद्धिर्जडाङ्गता ॥ ६८ ॥**
**वाय्वादिभिर्यथासङ्ख्यं मिश्रैर्वा**

तस्यैवोपद्रवस्य दोषविशेषेण लिङ्गं संख्यां चाह—तत्रेत्यादि । तत्रेत्युपद्रवे शूले । स्थिराङ्गता कठिनाङ्गता । अन्नस्य विदग्धपरिवृद्धिता अन्नस्य विदाहे शूलस्य परिवृद्धिर्भवतीत्यर्थः । भुक्तवृद्धिरिति भुक्तस्य वृद्धिः भुक्तमात्रे शूलस्य वृद्धिर्भवतीत्यर्थः । जडाङ्गता अङ्गानां जडता । मिश्रैरिति द्वन्द्वैः सान्निपातिकैश्चेत्यर्थः । विण्मूत्रसंरोध इत्यादिकं वातजशूललक्षणं, तृष्णादाह इत्यादिकं पित्तजशूललक्षणं, रोमहर्षोऽरुचिरित्यादिकं श्लेष्मजशूललक्षणं, द्विदोषलिङ्गं द्वन्द्वैः, सर्वलिङ्गं समस्तैः ॥ ६७ ॥ ६८ ॥—

**वीक्ष्य योजयेत् ॥**
**पथ्यात्रिलवणं क्षारं हिङ्गुतुम्बुरुपौष्करम् ॥ ६९ ॥**
**यवानीं च हरिद्रां च विडङ्गान्यम्लवेतसम् ॥**
**विदारीत्रिफलाऽभीरुश्रृङ्गाटीगुडशर्कराः ॥ ७० ॥**
**काश्मरीफलयष्ट्याह्वपरूषकहिमानि च ॥**
**षड्ग्रन्थातिविषादारुपथ्यामरिचवृक्षजान् ॥ ७१ ॥**
**कृष्णामूलकचव्यं च नागरक्षारचित्रकान् ॥**
**उष्णाम्लकाञ्जिकक्षीरतोयैः श्लोकसमापनान् ॥७२॥**
**यथाक्रमं विमिश्रांश्च द्वन्द्वे सर्वांश्च सर्वजे ॥**

अतः परमुपद्रवशूलस्य चिकित्सितमाह—वीक्ष्येत्यादि । वीक्ष्येति वातादिभेदेन शूलमित्यर्थः । त्रिलवणं सैन्धवसौवर्चलविडानि । क्षारो यवक्षारः । अभीरुः शतावरी, शृङ्गाटी जलजं द्रव्यं त्रिकण्टकफलं । गुडशर्करा गाङ्गेटीफलम् । हिमं चन्दनम् । षड्ग्रन्था वचा । वृक्षज इन्द्रयवः । मूलकं पिप्पलीमूलम् । उष्णशब्दोऽम्लकाञ्जिकादिभिः संबध्यते । श्लोकसमापनान् 'योगान्' इति शेषः । यथाक्रममिति पथ्याद्यम्लवेतसान्तमुष्णाम्लकाञ्जिकेन वातिके, विदार्यादिहिमान्तमुष्णक्षीरेण पैत्तिके, षड्ग्रन्थादिचित्रकान्तमुष्णतोयेन श्लैष्मिके; विमिश्रं द्वन्द्वे इति पथ्यादिविदार्यादी वातपैत्तिके, पथ्यादिषड्ग्रन्थादी वातश्लैष्मिके, विदार्यादिषड्ग्रन्थादी पित्तश्लैष्मिके, सर्वांश्च पथ्यादीन् त्रीन् सन्निपाते ॥ ६९–७२ ॥—

**तथैव सेकावगाहप्रदेहाभ्यङ्गभोजनम् ॥ ७३ ॥**
**शिशिरोदकपूर्णानां भाजनानां च धारणम् ॥**
**वमनोन्मर्दनस्वेदलङ्घनक्षपणक्रियाः ॥ ७४ ॥**
**स्नेहादिश्च क्रमः सर्वो विशेषेणोपदिश्यते ॥**

किमेतदेवोपद्रवशूले कार्यमुतान्यदपीत्याह—तथैवेत्यादि । तथैवेति यथासंख्यमित्यर्थः । तेन सेकादिकं वातिके, शिशिरोदकादिकं पैत्तिके, वमनादिकं श्लैष्मिके । स्नेहादिकमथ यथादोषं यथावस्थं सर्वेषामेव, द्वन्द्वजे द्वयं, सान्निपातिके समस्तम् । क्षपणक्रिया अन्या अपि कफक्षयकरी ॥ ॥ ७३ ॥ ७४ ॥—

**वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम् ॥७५॥**
**न खादेदालुकं गुल्मी मधुराणि फलानि च ॥**

गुल्मोपद्रवमभिधाय गुल्मे वर्ज्यमाह—वल्लूरं मूलकमित्यादि । वल्लूरं शुष्कमांसम् । वैदलं मुद्गवनमुद्गादिकम् । आलुकं पिण्डालुकादिभेदेनानेकप्रकारम् । मधुराणि फलानि क्षीरवृक्षफलानि चोचमोचादीनि च । चकारादेवंविधान्यन्यान्यपि वर्ज्यानि । अस्याग्रे केचित् 'लघ्वन्नं दीपनं स्निग्धमुष्णं वातानुलोमनम् । बृंहणं च भवेद्यच्च तद्धितं सर्वगुल्मिनाम् ॥ स्थानेऽवसेको रक्तस्य बाहुमध्ये सिराव्यधः । स्वेदोऽनुलोमनं चैव प्रशस्तं सर्वगुल्मिनाम्' इत्यादिकं पठन्ति; स चाभावान्न लिखितः । ( इति डल्हणेनान्यग्रन्थदर्शनादुक्तम् ) ॥ ७५ ॥—

१ 'पिष्टानि' इति पा० । २ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । ३ 'शूलं' इति पा० । ४ 'शूलं निखानितमिव सुखं येन न वेत्त्यसौ' इति पा० ।

१ 'उपद्रवलिङ्गस्य' इति पा० । २ 'गाङ्गेटी बला' इति पा० । ३ अयं पाठो मुद्रितपुस्तके नोपलभ्यते ।

**विना गुल्मेन यच्छूलं गुल्मस्थानेषु जायते ॥ ७६ ॥**
**निदानं तस्य वक्ष्यामि रूपं च सचिकित्सितम् ॥**

गुल्मोपद्रवं शूलमभिधायेदानीं केवलं शूलमाह—विनेत्यादि । गुल्मस्थानेषु गुल्मप्रतिषेधोक्तेषु । अन्ये 'विना गुल्मेन' इत्यादि-श्लोकं परित्यज्य 'अथातः शूलप्रतिषेधं व्याख्यास्यामः' इति प्रतिज्ञां पठित्वा वातमूत्रपुरीषाणां निग्रहादित्यादिना पृथगेव शूलाध्यायं पठन्ति; ते च पूर्वपरिपाटीं त्यजन्ति । अपरे विना गुल्मेनेत्या-दिकं समस्तमपि असौ श्रुतं भणित्वा परित्यजन्ति । अस्माभिस्तु सर्वमतानुसारिभिर्जेज्जटाभिप्रायेण पठितः ॥ ७६ ॥—

**वातमूत्रपुरीषाणां निग्रहादतिभोजनात् ॥ ७७ ॥**
**अजीर्णाध्यशनायासविरुद्धान्नोपसेवनात् ॥**
**पानीयपानात् क्षुत्काले विरूढानां च सेवनात् ७८**
**पिष्टान्नशुष्कमांसानामुपयोगात्तथैव च ॥**
**एवंविधानां द्रव्याणामन्येषां चोपसेवनात् ॥ ७९ ॥**
**वायुः प्रकुपितः कोष्ठे शूलं संजनयेद्भृशम् ॥**
**निरुच्छ्वासी भवेत्तेन वेदनापीडितो नरः ॥ ८० ॥**

शूलस्य हेतुं संप्राप्तिं चाह—वातमूत्रपुरीषाणामित्यादि । निग्रहात् वेगकालेऽवरोधात् । अजीर्णम् आमविदग्धादिभेदभि-न्नम् । अध्यशनं साजीर्णभोजनम् । आयासः शरीरायासजनकं कर्म । विरुद्धान्नं हिताहितीयोक्तम् । विरूढानां विगतरोहाणाम-ङ्कुरितानां वा । एवंविधानां दोषप्रकोपणानाम् । कोष्ठे सर्वस्मि-न्नुदरे । निरुच्छ्वासः निरुद्धोच्छ्वासः । तेन शूलेन । वातमूत्रपु-रीषाणां निग्रहादित्यादिरन्येषां चोपसेवनादित्यन्तो हेतुः, वायुः प्रकुपित इत्यादिश्च संप्राप्तिः ॥ ७७–८० ॥

**शङ्कुस्फोटनवत्तस्य यस्मात्तीव्राश्च वेदनाः ॥**
**शूलासक्तस्य लक्ष्यन्ते तस्माच्छूलमिहोच्यते ॥ ८१ ॥**

तत् कस्माच्छूलमुच्यत इत्याह—शङ्क्वित्यादि । शङ्कु-स्फोटनवत् कीलकाहननवत्तीव्रा वेदनाः, तस्य व्याधितस्य, शूलासक्तस्य शूलिनः; एतेनैतदुक्तं भवति—यथा कस्यचित् कीलकाहननेन तीव्रा वेदना लक्ष्यते तद्वत्तस्य यस्माद्वेदना लक्ष्यते तस्माच्छूलमिहोच्यते ॥ ८१ ॥

**निराहारस्य यस्यैव तीव्रं शूलमुदीर्यते ॥**
**प्रस्तब्धगात्रो भवति कृच्छ्रेणोच्छ्वसितीव च ॥ ८२ ॥**
**वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥**
**एतैर्लिङ्गैर्विजानीयाच्छूलं वातसमुद्भवम् ॥ ८३ ॥**

वातशूललक्षणमाह—निराहारस्येत्यादि ॥ ८२ ॥ ८३ ॥

**तृष्णा दाहो मदो मूर्च्छा तीव्रं शूलं तथैव च ॥**
**शीताभिकामो भवति शीतेनैव प्रशाम्यति ॥ ८४ ॥**
**एतैर्लिङ्गैर्विजानीयाच्छूलं पित्तसमुद्भवम् ॥**

पित्तशूललक्षणमाह—तृष्णेत्यादि । शीताभिकामः शीताभि-लाषः । प्रशाम्यति 'शूलं' इति शेषः ॥ ८४ ॥—

**शूलेनोत्पीड्यमानस्य हृल्लास उपजायते ॥ ८५ ॥**
**अतीव पूर्णकोष्ठत्वं तथैव गुरुगात्रता ॥**
**एतच्छ्लेष्मसमुत्थस्य शूलस्योक्तं निदर्शनम् ॥ ८६ ॥**

कफशूललक्षणमाह—शूलेनेत्यादि । हृल्लासः थूत्करणम् । निदर्शनं लक्षणम् ॥ ८५ ॥ ८६ ॥

**सर्वाणि दृष्ट्वा रूपाणि निर्दिशेत्सान्निपातिकम् ॥**
**सन्निपातसमुत्थानमसाध्यं तं विनिर्दिशेत् ॥ ८७ ॥**
**शूलानां लक्षणं प्रोक्तं**

सान्निपातिकशूललक्षणमाह—सर्वाणीत्यादि । ननु, कैश्चित् पूर्वाचार्यैर्दोषभेदेन नियतं स्थानं शूलस्योक्तम् । तथाहि,—"वातात्मकं बस्तिगतं वदन्ति, पित्तात्मकं चापि वदन्ति नाभ्याम् । हृत्पार्श्वकुक्षौ कफसन्निविष्टं, सर्वेषु देशेषु च सन्नि-पातात्"—इति; तत् कथमत्र तथा नोक्तम् । सत्यं, कुपित-दोषाणां स्वाशये पराशये च व्याध्युत्पादकत्वान्न नियतं स्थान-मस्ति, अतस्तथा नोक्तम् ॥ ८७ ॥—

**चिकित्सां तु निबोध मे ॥**
**आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत् ॥ ८८ ॥**
**तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥**

चिकित्सामित्यादि । निबोध जानीहि । मे मत्सकाशात् । आशुकारीत्यादि । आशुकारी शीघ्रमत्ययकारित्वात् । हि यस्मात् । तं वातम् । तस्येत्यादि ।—तस्य पुरुषस्य, शूलाभिपन्नस्य वातिकशूलक्रान्तस्य; अन्ये तु तस्य वातस्य यच्छूलं तेन आक्रान्तस्येत्याहुः ॥ ८८ ॥—

**पायसैः कृशरापिण्डैः स्निग्धैर्वा पिशितैर्हितः ॥ ८९ ॥**

स च स्वेदः कैर्द्रव्यैः कार्य इत्याह—पायसैरित्यादि । पायसो दुग्धसिद्धास्तण्डुलाः । कृशरापिण्डैः तिलतण्डुलमाषकृतयवागू-पिण्डैः । हित इति 'स्वेद' इति शेषः ॥ ८९ ॥

**त्रिवृच्छाकेन वा स्निग्धमुष्णं भुञ्जीत भोजनम् ॥**
**चिरबिल्वाङ्कुरान् वापि तैलभृष्टांस्तु भक्षयेत् ॥ ९० ॥**
**वैहङ्गांश्च रसान् स्निग्धान् जाङ्गलान् शूलपीडितः ॥**
**यथालाभं निषेवेत मांसानि बिलशायिनाम् ॥ ९१ ॥**

भोजनमाह—त्रिवृच्छाकेनेत्यादि । स्निग्धादिगुणं भोजनं त्रिवृच्छाकेन सह भुञ्जीतेति पिण्डार्थः । चिरबिल्वाङ्कुरानित्यादि । अङ्कुराः प्ररोहाः । वैहङ्गांश्चेत्यादि । जाङ्गलान् वैहङ्गान्, लावादि-कृतानित्यर्थः । बिलेशयाः श्वाविच्छल्लकादयः ॥ ९० ॥ ९१ ॥

**सुरा सौवीरकं चुक्रं मस्तूदश्वित्तथा दधि ॥**
**सकाललवणं पेयं शूले वातसमुद्भवे ॥ ९२ ॥**

सुरा सौवीरकमित्यादि । सुरा पिष्टभवा । सौवीरकं काञ्जिक-भेदः । चुक्रं शुक्तम् । मस्तु दधिमस्तु । उदश्वित् अर्धोदकं तक्रम् । तथेति यथालाभमित्यर्थः । काललवणशब्देन यद्यपि निर्गन्धसौवर्चलमुच्यते, तथाऽप्यत्र गन्धवत्सौवर्चलं ग्राह्यं, तन्त्रान्तरोक्तत्वात् ॥ ९२ ॥

१ 'शङ्कास्फोटनवत्' इति पा० । २ 'कण्टकहननेनेव' इति पा० ।

**कुलत्थयूषो युक्ताम्लो लावकीयूषसंस्कृतः ॥**
**ससैन्धवः समरिचो वातशूलविनाशनः ॥ ९३ ॥**

कुलत्थयूष इत्यादि । युक्तं मात्रयोपहितमम्लं दाडिमादिकं यत्र स युक्ताम्लः । लावकीयूषसंस्कृत इति लावकेन कृतो यूषो लावकीयूषः, तेन संस्कृतः ॥ ९३ ॥

**विडङ्गशिग्रुकम्पिल्लपथ्याश्यामाम्लवेतसान् ॥**
**सुरसामश्वमूत्रीं च सौवर्चलयुतान् पिबेत् ॥ ९४ ॥**
**मद्येन वातजं शूलं क्षिप्रमेव प्रशाम्यति ॥**

विडङ्गेत्यादि । शिग्रुः विटपशाकं, शोभाञ्जनमपरे । श्यामा अरुणमूला त्रिवृत् । सुरसा तुलसी । अश्वमूत्री शल्लकी ॥ ९४ ॥—

**पृथ्वीकाजाजिचविकायवानीव्योषचित्रकाः ॥ ९५ ॥**
**पिप्पल्यः पिप्पलीमूलं सैन्धवं चेति चूर्णयेत् ॥**
**तानि चूर्णानि पयसा पिबेत् काम्बलिकेन वा ॥९६॥**
**मध्वासवेन चुक्रेण सुरासौवीरकेण वा ॥**
**अथवै(चै)तानि चूर्णानि मातुलुङ्गरसेन वा ॥९७॥**
**तथा बदरयूषेण भावितानि पुनः पुनः ॥**
**तानि हिङ्गुप्रगाढानि सह शर्करया पिबेत् ॥ ९८ ॥**
**सह दाडिमसारेण वर्तिः कार्या भिषग्जिता ॥**
**सा वर्तिर्वातिकं शूलं क्षिप्रमेव व्यपोहति ॥ ९९ ॥**
**गुडतैलेन वा लीढा पीता मद्येन वा पुनः ॥**

पृथ्वीकेत्यादि । पृथ्वीका हिङ्गुपत्रिका । अजाजी उत्तरापथे जीरकविशेषः । काम्बलिकेन दधिमस्त्वम्लसिद्धयूषेण । चुक्रं शुक्तम् । सौवीरकं विरेचनद्रव्यविकल्पकथितम् । पक्षान्तरमाह—अथवेत्यादि । एतानि पूर्वोक्तानि चूर्णानि, बीजपूरकरसेन बदरयूषेण वा पुनः पुनर्भावितानि हिङ्गूत्कटानि शर्करया सह मातुलुङ्गरसेनैव पिबेदिति पिण्डार्थः । सह दाडिमसारेणेत्यादि ।—तैरेव चूर्णैर्दाडिमसारेण सह भिषग्जिता वैद्येन वर्तिर्वा कार्या । सा च वर्तिर्गुडतैलेन लीढा मद्येन वा पीता सती वातिकं शूलं क्षिप्रमेव हन्तीत्यर्थः ॥ ९५–९९ ॥—

**बुभुक्षाप्रभवे शूले लघु संतर्पणं हितम् ॥ १०० ॥**
**उष्णैः क्षीरैर्यवागूभिः स्निग्धैर्मांसरसैस्तथा ॥**

बुभुक्षाप्रभवे इत्यादि । लध्विति मात्रया स्वभावेन च । सन्तर्पणं भोजनम् । उष्णैरिति क्षीरादिभिः संबध्यते ॥१००॥–

**वातशूले समुत्पन्ने रूक्षं स्निग्धेन भोजयेत् ॥ १०१ ॥**
**सुसंस्कृताः प्रदेयाः स्युर्घृतपूरा विशेषतः ॥**
**वारुणीं च पिबेज्जन्तुस्तथा संपद्यते सुखी ॥ १०२ ॥**
**एतद्वातसमुत्थस्य शूलस्योक्तं चिकित्सितम् ॥**

वातेत्यादि । सुसंस्कृताः शुण्ठीमरिचादिभिः । प्रदेया दातव्याः । घृतपूरा घृतपूपा इत्यर्थः । वारुणी सुरा । तथा तेन प्रकारेण । सुखी संपद्यते सुखी भवतीत्यर्थः । उपसंहारमाह—एतद्वातसमुत्थस्येत्यादि ॥ १०१ ॥ १०२ ॥—

**अथ पित्तसमुत्थस्य क्रियां वक्ष्याम्यतः परम् १०३**
**स सुखं छर्दयित्वा तु पीत्वा शीतोदकं नरः ॥**
**शीतलानि च सेवेत सर्वाण्युष्णानि वर्जयेत् ॥१०४॥**

वातशूलोपक्रममभिधायेदानीं पित्तशूलचिकित्सामाह—अथेत्यादि । अथेति वाक्यालङ्कारे, वाक्योपक्रमे इत्यन्ये । तदेव चिकित्सितमाह—स इत्यादि । स पित्तशूली नरः, शीतोदकं पीत्वा, सुखं यथा भवति तथा छर्दयित्वा, शीतलानि भजेत, उष्णानि सर्वाणि वर्जयेदिति पिण्डार्थः ॥ १०३ ॥ १०४ ॥

**मणिराजतताम्राणि भाजनानि च सर्वशः ॥**
**वारिपूर्णानि तान्यस्य शूलस्योपरि निक्षिपेत् ॥१०५॥**

मणिराजतताम्राणीत्यादि । राजतं रूप्यमयम् । सर्वश आमुखात् । अस्य पित्तशूलिनः ॥ १०५ ॥

**गुडः शालिर्यवाः क्षीरं सर्पिःपानं विरेचनम् ॥**
**जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् १०६**
**रसान् सेवेत पित्तघ्नान् पित्तलानि विवर्जयेत् ॥**
**पालाशं धान्वनं वाऽपि पिबेद्यूषं सशर्करम् ॥१०७॥**

गुडेत्यादि । पित्तघ्नान् रसान् जाङ्गलवर्गे यानि निर्दिष्टानि पित्तहराणि मांसानि तत्कृतान् रसानित्यर्थः । पित्तलानीत्यादि । पित्तलानि अन्नपानादीनि । पालाशं यूषं मांसादमांसरसमित्यर्थः । धान्वनं जाङ्गलमांसरसम् ॥ १०६ ॥ १०७ ॥

**परूषकाणि मृद्वीकाखर्जूरोदकजान्यपि ॥**
**तत् पिबेच्छर्करायुक्तं पित्तशूलनिवारणम् ॥ १०८ ॥**

परूषकाणीत्यादि । परूषकाणि परूषकफलानि । उदकजानि पद्मानि ॥ १०८ ॥

**अशने भुक्तमात्रे तु प्रकोपः श्लैष्मिकस्य च ॥**
**वमनं कारयेत्तत्र पिप्पलीवारिणा भिषक् ॥ १०९ ॥**

श्लैष्मिकशूलचिकित्सामाह—अशने इत्यादि । अशने भोजने । श्लैष्मिकस्य श्लेष्मशूलस्य । तत्र श्लेष्मशूले । पिप्पलीवारिणा पिप्पलीयुक्तपानीयेन, अन्ये वारिशब्दं क्वाथे वर्तयन्ति, अपरे पिप्पलीशब्देन मदनफलबीजानि कथयन्ति ॥ १०९ ॥

**रूक्षः स्वेदः प्रयोज्यः स्यादन्याश्चोष्णाः क्रिया हिताः**
**पिप्पली शृङ्गवेरं च श्लेष्मशूले भिषग्जितम् ॥११०॥**

रूक्षः स्वेदः प्रयोज्य इत्यादि ।—रूक्षः स्वेदः स्निग्धरहितः करीषादिकृतः । पिप्पलीशृङ्गवेरप्रयोगश्चूर्णकल्कक्वाथादिविधिना ॥ ११० ॥

**पाठां वचां त्रिकटुकं तथा कटुकरोहिणीम् ॥**
**चित्रकस्य च निर्यूहे पिबेद्यूषं सहार्जकम् ॥ १११ ॥**

पाठामित्यादि । पाठादीनि द्रव्याणि चूर्णितानि कल्कितानि

१ 'सुरसामश्वकर्णं च' इति पा० ।

१ 'निर्यूहं' इति पा० ।

वा चित्रकस्य निर्यूहे क्वाथे पिबेदित्येको योगः । यूषं सहार्जकमिति द्वितीयो योगः । यूषं शूलहरशिम्बिधान्ययूषम् । अर्जकः कुठेरकः ॥ १११ ॥

एरण्डफलमूलानि मूलं गोक्षुरकस्य च ॥
शालपर्णीं पृश्निपर्णीं बृहतीं कण्टकारिकाम् ॥११२॥
दद्याच्छृगालविन्नां च सहदेवां तथैव च ॥
महासहां क्षुद्रसहां मूलमिक्षुरकस्य च ॥ ११३ ॥
एतत् संभृत्य संभारं जलद्रोणे विपाचयेत् ॥
चतुर्भागावशेषं तु यवक्षारयुतं पिबेत् ॥ ११४ ॥
वातिकं पैत्तिकं वाऽपि श्लैष्मिकं सान्निपातिकम् ॥
प्रसह्य नाशयेच्छूलं छिन्नाभ्रमिव मारुतः ॥ ११५ ॥

एरण्डद्वादशकमाह—एरण्डेत्यादि । शृगालविन्ना पृश्निपर्णीभेदः । महासहा माषपर्णी । क्षुद्रसहा मुद्गपर्णी । इक्षुरकः कोकिलाक्षकः । संभृत्य एकीकृत्य । एरण्डादिद्रव्यसंभारः चतुःषष्टिपलप्रमितः; तुलाप्रमित इत्यन्ये । प्रसह्य बलात्कारेण । पिबेदित्यनेनाभ्यवहारेणात्र सूच्यते; तेन तृष्णायां पानमाचमनं वा तेन कार्यम्, अन्यथा द्रोणचतुर्थांशस्य साधितस्य जलस्थापरक्वाथवत् पलद्वयपाने वैयर्थ्यं स्यात् । यद्यप्ययं योगः सर्वशूलहरस्तथाप्यत्यन्तकफशूलहरत्वादत्रोक्तः । केचित् 'मूलं चेक्षुरकस्य' इत्यत्र 'दद्याच्चैवेक्षुवालिकाम्' इति पठित्वा खग्गलीमिति व्याख्यानयन्ति ॥ ११२–११५ ॥

पिप्पली स्वर्जिकाक्षारो यवाश्चित्रक एव च ॥
सेव्यं चैतत् समानीय भस्म कुर्याद्विचक्षणः ॥११६॥
तदुष्णवारिणा पीतं श्लेष्मशूले भिषग्जितम् ॥

पिप्पलीत्यादि । सेव्यम् उशीरं, तत् भस्म ॥ ११६ ॥—

रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः ११७
स संरुद्धः करोत्याशु सोध्मानं गुडगुडायनम् ॥
सूचीभिरिव निस्तोदं कृच्छ्रोच्छ्वासी तदा नरः ११८
नान्नं वाञ्छति नो निद्रामुपैत्यर्तिनिपीडितः ॥
पार्श्वशूलः स विज्ञेयः कफानिलसमुद्भवः ॥ ११९ ॥

यद्यपि चत्वारः शूलाः, तथापि दोषधातुमलसंसर्गादायतनविशेषान्निमित्ततश्चैषां विकल्प इति कृत्वा पार्श्वादिशूलमाह—रुणद्धीत्यादि । स वायुः । आध्मानम् उदरापूरः । गुडुगुडायनमत्र अव्यक्तशब्दः । नो निद्रामुपैति न निद्रां प्राप्नोतीत्यर्थः ॥ ११७–११९ ॥

तत्र पुष्करमूलानि हिङ्गु सौवर्चलं विडम् ॥
सैन्धवं तुम्बुरुं पथ्यां चूर्णं कृत्वा तु पाययेत् १२०
पार्श्वहृद्बस्तिशूलेषु यवक्काथेन संयुतम् ॥
सर्पिः प्लीहोदरोक्तं वा घृतं वा हिङ्गुसंयुतम् ॥१२१॥
बीजपूरकसारं वा पयसा सह साधितम् ॥
एरण्डतैलमथवा मद्यमस्तुपयोरसैः ॥ १२२ ॥
भोजयेच्चापि पयसा जाङ्गलेन रसेन वा ॥

पार्श्वशूले चिकित्सितमाह—तत्रेत्यादि । पुष्करमूलादीनि द्रव्याणि चूर्णं कृत्वा पार्श्वादिशूलेषु यवक्काथेन संयुतं पाययेदिति पिण्डार्थः । यद्यप्ययं योगोऽपतन्त्रकेऽपि पठितः, तथाऽप्यत्राम्लवेतसाभावात् पुनः पठितः । सर्पिः प्लीहोदरोक्तमित्यादि प्लीहोदरोक्तं सर्पिः षट्पलं, हिङ्गुसंयुतं घृतं वा असिद्धमेव । पयसा क्षीरेण, साधितं क्वथितं, बीजपूरकसारं बीजपूरकफलबीजम्, अत्रापि पाययेदिति संबध्यते । केचित् 'बीजपूरकसारं च' इत्यत्र 'पिबेद्बीजकसारं च' इति पठन्ति । एरण्डतैलमित्यादि ।—एरण्डतैलं वा मद्यादिभिर्यथासात्म्यं यथादोषं च प्रातरेव पिबेत्, जीर्णे च क्षीरेण जाङ्गलरसेन वा भोजयेत् ॥ १२०–१२२ ॥—

प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्य मारुतः ॥ १२३ ॥
तदाऽस्य भोजनं भुक्तं सोपस्तम्भं न पच्यते ॥
उच्छ्वसित्यामशकृता शूलेनाहन्यते मुहुः ॥ १२४ ॥
नैवासने न शयने तिष्ठन्[1] वा लभते सुखम् ॥
कुक्षिशूल इति ख्यातो वातादामसमुद्भवः ॥ १२५ ॥

कुक्षिशूलमाह—प्रकुप्यतीत्यादि । आक्रम्य मन्दीकृत्य । सोपस्तम्भं स्तब्धतान्वितम् । उच्छ्वसिति उच्छ्वासं करोति 'पुरुष' इति शेषः । आमशकृता अपक्वपुरीषेण । तिष्ठन् ऊर्ध्वीभवन् ॥ १२३–१२५ ॥

वमनं कारयेत्तत्र लङ्घयेद्वा यथाबलम् ॥
संसर्गपाचनं कुर्यादम्लैर्दीपनसंयुतैः ॥ १२६ ॥

कुक्षिशूले चिकित्सामाह—वमनं कारयेत्तत्रेत्यादि । तत्र कुक्षिशूले । यथाबलं बलस्यानतिक्रमेण । संसर्गपाचनं पेयादिक्रमपाचनम् । अम्लैः दाडिमतक्रादिभिः । दीपनसंयुतैरिति पञ्चकोलयुतैः ॥ १२६ ॥

नागरं दीप्यकं चव्यं हिङ्गु सौवर्चलं विडम् ॥
मातुलुङ्गस्य बीजानि तथा श्यामोरुबूकयोः ॥१२७॥
बृहत्याः कण्टकार्याश्च क्वाथं शूलहरं पिबेत् ॥

क्वाथमाह—नागरं दीप्यकमित्यादि । नागरादिक्वाथं हिङ्गुसौवर्चलविडप्रक्षेपं पिबेदिति पिण्डार्थः । बीजानीतिशब्दो मातुलुङ्गादिभिः कण्टकारीपर्यन्तैः सह संबध्यते । श्यामा वृद्धदारकः । उरुबूकः रक्तैरण्डः, शुक्लैरण्डमपरे । बृहती अणुफला स्थूलफला वा ॥ १२७ ॥—

वचा सौवर्चलं हिङ्गु कुष्ठं सातिविषाऽभया ॥१२८॥
कुटजस्य च बीजानि सद्यःशूलहराणि तु ॥
विरेचने[2] प्रयुञ्जीत ज्ञात्वा दोषबलाबलम् ॥ १२९ ॥

कुक्षिशूले विरेचनमाह—वचेत्यादि । वचादीनि कुटजबीजान्तानि सद्यःशूलहराणि विरेचने दोषबलाबलं ज्ञात्वा प्रयुञ्जी-

१ 'शालिपर्णीं पृष्ठपर्णीं' इति पा० । २ 'ध्मानं गुडगुडायनम्' इति पा० ।

१ 'तिष्ठन् स' इति 'तिष्ठन्न' इति च पा० । २ 'विरेचनं' इति पा० ।

तेति पिण्डार्थः । दोषबलाबलमित्यत्रादिशब्दो लुप्तो द्रष्टव्यः, तेन प्रकृत्यादीनपि ज्ञात्वेत्यर्थः ॥ १२८ ॥ १२९ ॥

**स्नेहबस्तीन्निरूहांश्च कुर्याद्दोषनिबर्हणान् ॥**

किं कुक्षिशूले विरेचनमेव युज्यते उतान्यदपीत्याह—स्नेहबस्तीनित्यादि ॥—

**उपनाहाः स्नेहसेका धान्याम्लपरिषेचनम् ॥ १३० ॥**
**अवगाहाश्च शस्यन्ते यच्चान्यदपि तद्धितम् ॥**

कुक्षिशूले उपनाहादिस्वेदस्य प्रशस्तत्वमाह—उपनाहा इत्यादि । उपनाहाः साल्वणप्रकाराः । धान्याम्लं काञ्जिकम् । अवगाहो वातहरद्रवपूर्णद्रोण्यादिनिमज्जनम् । यच्चान्यदपीत्यादि । तद्धितं कुक्षिशूलहितं यदन्यदपि भवति तदस्य शस्यते इत्यर्थः ॥ १३० ॥—

**कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः ॥ १३१ ॥**
**हृदिस्थः कुरुते शूलमुच्छ्वासारोधकं परम् ॥**
**स हृच्छूल इति ख्यातो रसमारुतसंभवः ॥ १३२ ॥**

हृच्छूलमाह–कफेत्यादि । अवरुद्धो रुद्धः । रसमूर्च्छितो रससंयुतः । उच्छ्वासारोधकं उच्छ्वासस्य आसमन्ताद्रोधकमित्यर्थः । एतद्धृच्छूलं यस्माद्धृद्रोगविलक्षणं तस्माद्धृद्रोगाद्भिन्नं, तथा संप्राप्तिभेदाच्च ॥ १३१ ॥ १३२ ॥

**तत्रापि कर्माभिहितं यदुक्तं हृद्विकारिणाम् ॥**

हृच्छूले हृद्रोगोक्तां क्रियामतिदिशन्नाह—तत्रापि कर्माभिहितमित्यादि । यद्धृद्विकारिणां हृद्रोगिणां कर्मोक्तं तदत्रापि हृच्छूलेऽभिहितमिति पिण्डार्थः ॥—

**संरोधात् कुपितो वायुर्बस्तिमावृत्य तिष्ठति ॥ १३३ ॥**
**बस्तिवङ्क्षणनाभीषु ततः शूलोऽस्य जायते ॥**
**विण्मूत्रवातसंरोधी बस्तिशूलः स मारुतात् १३४**

बस्तिशूलमाह—संरोधादित्यादि । संरोधात् मूत्रपुरीषादीनामित्यर्थः । बस्तिः मूत्राधारः, वङ्क्षणः गण्डकः ॥ १३३ ॥ १३४ ॥

**नाभ्यां वङ्क्षणपार्श्वेषु कुक्षौ मेढ्रान्त्रमर्दकः ॥**
**मूत्रमावृत्य गृह्णाति मूत्रशूलः स मारुतात् ॥ १३५ ॥**

मूत्रशूलमाह—नाभ्यामित्यादि । यदा मेढ्रान्त्रमर्दको वायुरावृत्य अवरुध्य मूत्रं गृह्णाति, तदा नाभ्यादिषु शूलो जायते । स च मारुतात् मूत्रशूलो ज्ञेयः ॥ १३५ ॥

**वायुः प्रकुपितो यस्य रूक्षाहारस्य देहिनः ॥**
**मलं रुणद्धि कोष्ठस्थं मन्दीकृत्य तु पावकम् ॥ १३६ ॥**
**शूलं संजनयंस्तीव्रं स्रोतांस्यावृत्य तस्य हि ॥**
**दक्षिणं यदि वा वामं कुक्षिमादाय जायते ॥ १३७ ॥**

**सर्वत्र वर्धते क्षिप्रं भ्रमंस्तथ सघोषवान् ॥**
**पिपासा वर्धते तीव्रा भ्रमो मूर्च्छा च जायते १३८**
**उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति ॥**
**विट्शूलमेतज्जानीयाद्भिषक् परमदारुणम् ॥ १३९ ॥**

पुरीषशूलमाह—वायुरित्यादि । एवंभूतस्य देहिनो वह्निं मन्दीकृत्य स्रोतांसि चावृत्य प्रकुपितो वायुस्तीव्रं शूलं संजनयन् कोष्ठस्थं मलं रुणद्धि, तस्य च दक्षिणं वामं वा कुक्षिं गृहीत्वा शूलोऽय जायते, स च सर्वत्र भ्रमन् घोषवान् शब्दयुक्तो वर्धते इति पिण्डार्थः । उच्चारितः संजातपुरीषवेगः । नाधिगच्छति न प्राप्नोति । परमदारुणम् अतिशयकष्टकारि ॥ १३६–१३९ ॥

**क्षिप्रं दोषहरं कार्यं भिषजा साधु जानता ॥**
**स्वेदनं शमनं चैव निरूहाः स्नेहबस्तयः ॥ १४० ॥**
**पूर्वोद्दिष्टान् पाययेत योगान् कोष्ठविशोधनान् ॥**
**उदावर्तहराश्चास्य क्रियाः सर्वाः सुखावहाः ॥ १४१ ॥**

इदानीं बस्तिशूलादीनां सामान्यचिकित्सामाह—क्षिप्रमित्यादि । दोषहरं शोधनम् । साधु शोभनम् । शमनं संशमनम् ॥ १४० ॥ १४१ ॥

**अतिमात्रं यदा भुक्तं पावके मृदुतां गते ॥**
**स्थिरीभूतं तु तत्कोष्ठे वायुरावृत्य तिष्ठति ॥ १४२ ॥**
**अविपाकगतं ह्यन्नं शूलं तीव्रं करोत्यति ॥**
**मूर्च्छाऽऽध्मानं विदाहश्च हृदुत्क्लेशो विलम्बिका ॥**
**विरिच्यते छर्दयति कम्पतेऽथ विमुह्यति ॥**
**अविपाकाद्भवेच्छूलस्त्वन्नदोषसमुद्भवः ॥ १४४ ॥**

अतिमात्रमित्यादि । अविपाकगतम् अविपाकं प्राप्तम् ॥ १४२–१४४ ॥

**वमनं लङ्घनं स्वेदः पाचनं फलवर्तयः ॥**
**क्षारांश्चूर्णानि गुटिकाः शस्यन्ते शूलनाशनाः १४५**

तस्य चिकित्सितमाह—वमनमित्यादि ॥ १४५ ॥

**गुल्मावस्थाः क्रियाः कार्या यथावत् सर्वशूलिनाम् ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे गुल्मप्रतिषेधो नाम (चतुर्थोऽध्यायः, आदितः) द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥**

इदानीमुपसंहारमाह—गुल्मावस्था इत्यादि । यथावत् यथावस्थम् ॥ १४६ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायामुत्तरतन्त्रे कायचिकित्सायां गुल्मप्रतिषेधो नाम द्विचत्वारिंशत्तमोऽध्यायः॥ ४२ ॥

---

१ 'उच्छ्वासरोधकं' इति पा० । २ 'संश्रितः' इति पा० । ३ 'यदा मेढ्रान्त्रमर्दक इति मेढ्रे मूत्रान्त्रं मेढ्रान्त्रं, तद्गृह्णाति यः सर्वथा एवंविधो वायुरावृत्य' इति पा० ।

१ 'शूलं तत्र सघोषवत्' इति पा० । २ 'शूलो जायते' इति पा० । ३ 'क्षारचूर्णानि' इति पा० ।

## त्रिचत्वारिंशत्तमोऽध्यायः ।

**अथातो हृद्रोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

गुल्मप्रतिषेधानन्तरं स्थानसामीप्यान्नामसङ्कीर्तनाद्वा हृद्रोगप्रतिषेधो युक्त इत्यत आह—अथात इत्यादि ॥ १ ॥ २ ॥

**वेगाघातोष्णरूक्षान्नैरतिमात्रोपसेवितैः ॥**
**विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि(ति)भोजनैः ॥३**
**दूषयित्वा रसं दोषा विगुणा हृदयं गताः ॥**
**कुर्वन्ति हृदये बाधां हृद्रोगं तं प्रचक्षते ॥ ४ ॥**

इदानीं प्रतिज्ञानन्तरं पूर्ववद्धृद्रोगस्य हेतुसंप्राप्ती आह—वेगेत्यादि । एतैर्वेगाघातादिहेतुभिर्विगुणाः कुपिता दोषा हृदयं गत्वा रसं दूषयित्वा हृदये बाधां कुर्वन्ति, तं हृद्रोगं प्रचक्षते आचार्या इति संबन्धः । वेगाघात इत्यत्र आघातशब्दो द्विरावर्तयितव्यः, तेन वेगाघात आघातश्च; तत्र वेगाघातो वेगावरोधः, आघातो लगुडादिप्रहारः । विरुद्धं हिताहितीयोक्तम्, अध्यशनं साजीर्णभोजनम्, अजीर्णम् आमविदग्धादिकम् । बाधाग्रहणं बाधावैचित्र्यज्ञापनार्थम् । वेगाघातादिरसात्म्यभोजनान्तो हेतुः, दूषयित्वेत्यादिका संप्राप्तिः । हृद्रोगे पूर्वरूपानभिधानमव्यक्तलक्षणानामेव पूर्वरूपत्वेनाभिमतत्वात्; अन्ये जातिमात्रपरिच्छेदात् पूर्वरूपावगमः ॥ ३ ॥ ४ ॥

**चतुर्विधः स दोषैः स्यात् क्रिमिभिश्च पृथक् पृथक् ॥**
**लक्षणं तस्य वक्ष्यामि चिकित्सितमनन्तरम् ॥ ५ ॥**

तस्य संख्यामाह—चतुर्विध इत्यादि । स हृद्रोगः । दोषैः एकैकैः सन्निपतितैश्च, क्रिमिभिरिति क्रिमिभिः सहेत्यर्थः । ननु, तन्त्रान्तरे पञ्च हृद्रोगाः पठिताः, तत् कथमत्र चत्वारः? सत्यं, त्रिदोषहृद्रोगोत्तरावस्थैव क्रिमिहृद्रोगः, तेन न पञ्च हृद्रोगाः । पृथक् पृथगित्यादि । अनन्तरं लक्षणानन्तरमित्यर्थः ॥ ५ ॥

**आयम्यते मारुतजे हृदयं तुद्यते तथा ॥**
**निर्मथ्यते दीर्यते च स्फोट्यते पाट्यतेऽपि च ॥६॥**

वातिकहृद्रोगलक्षणमाह—आयम्यत इत्यादि । आयम्यते दीर्घीक्रियत इव, मारुतजे हृद्रोगे, तुद्यते प्रतोदेन व्यथ्यत इव, निर्मथ्यते विलोड्यत इव, दीर्यते आरयेव, पाट्यते द्विधा क्रियत इव ॥ ६ ॥

**तृष्णोषादाहचोषाः स्युः पैत्तिके हृदयक्लमः ॥**
**धूमायनं च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥७॥**

पैत्तिकहृद्रोगलक्षणमाह—तृष्णेत्यादि । ऊषा प्रादेशिको दाहः । चोषः चूष्यत इव वेदनाविशेषः । पैत्तिके पित्तजे हृद्रोगे । धूमायनं धूमोद्गमनमिव ॥ ७ ॥

**गौरवं कफसंस्रावोऽरुचिः स्तम्भोऽग्निमार्दवम् ॥**
**माधुर्यमपि चाऽऽस्यस्य बलासावतते हृदि ॥ ८ ॥**

श्लैष्मिकहृद्रोगलक्षणमाह—गौरवमित्यादि । स्तम्भो जडिमा । बलासावतते श्लेष्मच्छन्ने ॥ ८ ॥

**उत्क्लेशः ष्ठीवनं तोदः शूलो हृल्लासकस्तमः ॥**
**अरुचिः श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत् ॥ ९ ॥**

त्रिदोषजहृद्रोगलक्षणमाह—उत्क्लेश इत्यादि । ष्ठीवनं थूत्करणम् । हृल्लासो लालास्रुतिः । तमः अन्धकारदर्शनं श्वासो वा । तम इत्यत्र 'सान्निपातिके भवेत्' इति वाक्यशेषः । तत्र तोदशूलौ वातेन, उत्क्लेशहृल्लासष्ठीवनानि श्लेष्मणा, तमः पित्तेनेति । केचित् 'अरुचिः श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत्' इत्यन्तं सान्निपातिकहृद्रोगलक्षणं मन्यन्ते । त्रिदोषजहृद्रोगस्यैवापचारात् क्रिमीन् प्राप्तस्य लक्षणमाह—अरुचिरित्यादि । क्रिमिजे इति त्रिदोषजहृद्रोग एवापचारेणोत्तरावस्थायां क्रिमिनिपातात् क्रिमिज इत्युच्यते । तथा च तन्त्रान्तरम्,—"त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते । तिलक्षीरगुडादीनि ग्रन्थिस्तस्योपजायते ॥ मर्मैकदेशे संक्लेदं रसश्चाप्युपगच्छति । संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः"—इति, अतो न संख्यातिरेकः । केचित् सान्निपातिको हृद्रोगो व्याधिस्वभावान्न भवत्येवेत्याहुः; तन्न, समानतन्त्रे त्रिदोषजदर्शनात् ॥ ९ ॥

**भ्रमक्लमौ सादशोषौ ज्ञेयास्तेषामुपद्रवाः ॥**

वातादिजानां क्रिमिहीनानां हृद्रोगिणामुपद्रवानाह—भ्रमेत्यादि । भ्रमः चक्रारूढस्येव भ्रमणं, क्लमः अनायासः श्रमः । सादः अङ्गसादः । शोषो मुखस्य धातूनां च । यद्यपि भ्रमादयो वातपित्तात्मकास्तथाऽपि व्याधिस्वभावाच्छ्लैष्मिकेऽपि भवन्ति ॥—

**क्रिमिजे क्रिमिजातीनां श्लैष्मिकाणां च ये मताः १०**

क्रिमिजस्योपद्रवानाह—क्रिमिजे क्रिमिजातीनामित्यादि । श्लैष्मिकाणामिति क्रिमिजातीनामित्यस्य विशेषणम् । तेन श्लैष्मिकाणां क्रिमिजातीनां य एव उपद्रवास्त एव क्रिमिजे हृद्रोगे मता इत्यर्थः ॥ १० ॥

**वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम् ॥**
**द्विपञ्चमूलकाथेन सस्नेहलवणेन तु ॥ ११ ॥**
**पिप्पल्येलावचाहिङ्गुयवभस्मानि सैन्धवम् ॥**
**सौवर्चलमथो शुण्ठीमजमोदां च चूर्णितम् ॥ १२ ॥**
**फलधान्याम्लकौलत्थदधिमद्यासवादिभिः ॥**
**पाययेत विशुद्धं च स्नेहेनान्यतमेन वा ॥ १३ ॥**

इदानीं वातहृद्रोगचिकित्सामाह—वातोपसृष्टे इत्यादि । वातोपसृष्टे हृदये वातहृद्रोगे इत्यर्थः । यद्यपि वाते वमनं न शस्तं, तथाऽपि वातस्य कफस्थानगतत्वादत्र वमनं शस्तमेव, तथा पित्तजेऽपि । वमनानन्तरं यत् कार्यं तदाह—पिप्पलीत्यादि । यवभस्म यवक्षारः । फलानि मातुलुङ्गादिफलानि, तेषां रसोऽभिप्रेतः । मद्यासवौ मद्यवर्गोक्तौ । स्नेहेनान्यतमेन वा चतुःस्नेहमध्ये एकेन स्नेहेनेत्यर्थः ॥ ११–१३ ॥

**भोजयेज्जीर्णशाल्यन्नं जाङ्गलैः सघृतै रसैः ॥**
**वातघ्नसिद्धं तैलं च दद्याद्वस्ति प्रमाणतः ॥ १४ ॥**

१ 'पञ्चमः क्रिमिभिस्तथा । पृथग्लिङ्गं प्रवक्ष्यामि' इति पा० ।
२ 'पीड्यते' इति पा० ।

वातहृद्रोगे पथ्यमाह—भोजयेदित्यादि । किं वातहृद्रोगे एतदेव कार्यमुतान्यदपीत्याह—वातघ्नसिद्धमित्यादि । वातघ्नसिद्धं भद्रदार्वादिपक्वम् । प्रमाणतः यथाप्रमाणम् ॥ १४ ॥

**श्रीपर्णीमधुकक्षौद्रसितोत्पलजलैर्वमेत् ॥**
**पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम् ॥ १५ ॥**
**घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान् ॥**

पित्तहृद्रोगे वमनमाह—श्रीपर्णीत्यादि । श्रीपर्णी काश्मरी, मधुकं यष्टीमधु, सिता शर्करा, उत्पलं कुष्ठम् । अत्र जलशब्दो न क्काथत्वेन सर्वत्र संबन्धनीयः, क्षौद्रादीनां क्काथेऽनुपयोगात् । सेवेत मधुरैरित्यादि । मधुरैः शृतं काकोल्यादिभिः पक्वम् । पित्तज्वरविनाशनान् कषायान् 'चन्दनोशीरश्रीपर्णी–' इत्यादिनोक्तान् ॥ १५ ॥—

**तृप्तस्य च रसैर्मुख्यैर्मधुरैः सघृतैर्भिषक् ॥ १६ ॥**
**सक्षौद्रं वितरेद्बस्तौ तैलं मधुकसाधितम् ॥**

पित्तहृद्रोगे स्नेहबस्तिमाह—तृप्तस्येत्यादि । रसैर्मुख्यैः एणादिमांसरसैः । मधुरैः अम्लादिसंस्कृतैः । मधुकसाधितमेकेनैव यष्टीमधुकेन पक्वं; अन्ये जीवनीयसाधितमाहुः ॥ १६ ॥—

**वचानिम्बकषायाभ्यां वान्तं हृदि कफात्मके ॥१७॥**
**चूर्णं तु पाययेतोक्तं वातजे भोजयेच्च तम् ॥**
**फलादिमथ मुस्तादिं त्रिफलां वा पिबेन्नरः ॥ १८ ॥**
**श्यामात्रिवृत्कल्कयुतं घृतं वाऽपि विरेचनम् ॥**
**बलातैलैर्विदध्याच्च बस्तिं बस्तिविशारदः ॥ १९ ॥**

श्लैष्मिकहृद्रोगे चिकित्सामाह—वचेत्यादि । श्लेष्महृद्रोगे वचानिम्बकषायाभ्यां वान्तं वातजे हृद्रोगे उक्तं 'चूर्णं पिप्पल्येला–' इत्यादिकं पाययेदिति पिण्डार्थः । न केवलं तच्चूर्णं पाययेत् भोजयेच्च तमिति तं वातजे हृद्रोगे उक्तं चूर्णं भोजयेच्च भक्तेन सह खादेदित्यर्थः । फलादिमथ मुस्तादिमित्यादि ।—फलादिः मदनफलादिः संशोधनसंशमनीयोक्तः । मुस्तादिः द्रव्यसंग्रहणीयोक्तः । श्यामात्रिवृत्कल्कयुतमित्यादि ।—श्यामा वृद्धदारकः । अत्र पिबेदिति संबध्यते । बलातैलैरित्यादि । वातादिचिकित्सितं सर्वमेवानुक्तमपि त्रिदोषजे कार्यम् ॥ १७–१९ ॥

**क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् ॥**
**दध्ना च पललोपेतं त्र्यहं, पश्चाद्विरेचयेत् ॥ २० ॥**
**सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः ॥**
**विडङ्गगाढं धान्याम्लं पाययेताप्यनन्तरम् ॥ २१ ॥**
**हृदयस्थाः पतन्त्येवमधस्तात् क्रिमयो नृणाम् ॥**
**यवान्नं वितरेच्चास्य सविडङ्गमतः परम् ॥ २२ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे हृद्रोगप्रतिषेधो नाम (पञ्चमोऽध्यायः, आदितः) त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥**

१ 'जाङ्गलैः' इति पा० । २ 'वितरेद्बस्तिं' इति पा० । ३ 'भोजयेद्धृतम्' इति पा० । ४ 'बलातैलं विदध्यात्' इति पा० ।

क्रिमिहृद्रोगचिकित्सामाह—क्रिमिहृद्रोगिणमित्यादि । पिशितौदनं सपललं दध्ना सह क्रिमिहृद्रोगिणं त्र्यहं भोजयेत् क्रिमीणामुत्क्लेशनार्थं; पिशितं मांसं, पललोपेतं भृष्टतिलचूर्णयुक्तम् । क्रिम्युत्क्लेशानन्तरं किं कुर्यादित्याह—पश्चादित्यादि । सुगन्धिभिर्योगैः विरेचनकल्पोक्तैः 'शर्कराक्षौद्रसंयुक्तं' इत्यादिभिः । सलवणैर्योगैरिति 'समास्त्रिवृन्नागरकाभयाः स्युः' इत्यादिभिः । साजाजिशर्करैरिति सुगन्धियोगसलवणयोगविशेषणं, साजाजिकानां वैरेचनिकनामनिर्देशात्; तेन, अजाजिशर्करासहितैः सुगन्धिभिर्योगैरथवा सलवणैरप्यजाज्यादियुक्तैर्विरेचयेत् । पीतविरेकस्यानुपानमाह—विडङ्गगाढमित्यादि । विडङ्गगाढं विडङ्गोत्कटम् । धान्याम्लं काञ्जिकम् । एवं पूर्वोक्तेन विधानेन । केचित् 'सलवणैः' इत्यत्र 'सपललैः' इति पठित्वा सभृष्टतिलकल्कैः सुगन्धिभिर्योगैर्विरेचयेदिति व्याख्यानयन्ति । क्रिमिहृद्रोगे वमनं न योज्यं, क्रिमिजर्जरहृदयत्वात्; अत एव सुगन्धियोगैर्विरेचनमुक्तं, वमनशङ्काभयात् । धान्याम्लपानादनन्तरं किं कुर्यादित्याह—यवान्नं वितरेदित्यादि । वितरेत् दद्यात् । अत इति विरेकात् ॥ २०—२२ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे हृद्रोगप्रतिषेधो नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥

---

## चतुश्चत्वारिंशत्तमोऽध्यायः ।

**अथातः पाण्डुरोगप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

हृद्रोगप्रतिषेधानन्तरं संख्यासाम्यात् तीक्ष्णाम्लकटुकादिहृद्रोगचिकित्सितस्य हेतुत्वात् पाण्डुरोगप्रतिषेधारम्भो युक्त इत्याह—अथात इत्यादि । अत्रादिशब्दद्वयं लुप्तं द्रष्टव्यं, तेन पाण्ड्वादिरोगादिप्रतिषेधमिति । तत्र प्रथमेनादिशब्देन कृष्णपीतमिश्रा वर्णा ग्राह्याः, कामलादयो द्वितीयेन; अपरे तु पाण्डुवर्णाधिक्यात् सर्वे एव पाण्डुरोगाः प्रोच्यन्त इति मत्वा एकमेवादिशब्दं लुप्तं वर्णयन्ति; ते च आदिशब्दात् कामलादीन् गृह्णन्ति । अपरे त्वादिशब्दं विनाऽपि कामलादीन् गृह्णन्ति, पाण्डुरोगान्तर्भावात्तेषामिति ॥ १ ॥ २ ॥

**व्यवायमम्लं लवणानि मद्यं**
**मृदं दिवास्वप्नमतीव तीक्ष्णम् ॥**
**निषेवमाणस्य विदूष्य रक्तं**
**कुर्वन्ति दोषास्त्वचि पाण्डुभावम् ॥ ३ ॥**

पाण्डुरोगस्य हेतुसंप्राप्ती आह—व्यवायमम्लमित्यादि । व्यवायादीनि निषेवमाणस्य पुरुषस्य दुष्टा दोषा रक्तं विदूष्य त्वचि पाण्डुभावं कुर्वन्तीति पिण्डार्थः । व्यवायः स्त्रीसेवा, स च सर्वदोषप्रकोपकः, अन्ये तु वातपित्तप्रकोपकत्वं व्यवायस्य मन्यन्ते

१ 'विरेचनादनन्तरं' इति पा० ।

भारहरणादौ कोधादौ च तत्पाठात् । अम्ललवणयोः पित्तकफकरत्वम् । मृत्तिका सर्वदोषप्रकोपणी, नानाविधत्वात्; तथा चोक्तम्,—"कषाया मारुतं, पित्तमूषरा, मधुरा कफम् । कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तं विरूक्षयेत्"-इति । दिवास्वप्नः त्रिदोषप्रकोपकः । तीक्ष्णं पित्तकोपि । एवं यथास्वं यथासंभवं हेतुरुक्तः । विदूष्य रक्तमित्यादिका संप्राप्तिः । अतीव तीक्ष्णमित्यत्र आदिशब्दो लुप्तो द्रष्टव्यः; तेन पिष्टपयोमाषतिलादीनां ग्रहणम् । केचित् 'मृन्मयमत्स्यामिषतीक्ष्णपिष्टपयोदिवास्वप्नतिलेक्षुमाषान् । निषेवमाणस्य-' इति पठन्ति, शेषं समम् । तेऽपि लुप्तादिशब्दात् व्यवायादीनि गृह्णन्ति । अपरे 'अतीव तीक्ष्णम्' इत्यत्र 'अतीवरूक्षम्' इति पठन्ति ॥ ३ ॥

पाण्ड्वामयोऽष्टार्धविधः प्रदिष्टः
पृथक्समस्तैर्युगपच्च दोषैः ॥

संख्यामाह—पाण्ड्वित्यादि । अष्टार्धविधः चतुर्विधः; कथं चतुर्विध इत्याह—पृथगित्यादि । पृथग्दोषैः त्रयः, समस्तैः एकः । युगपदिति पदं दोषत्रयस्यैककालप्रकोपसूचनार्थम् । यद्यपि तन्त्रान्तरे मृज्जः पाण्डुरोगः पञ्चमः कथितः, तथाऽप्यत्र मृज्जस्त्रिदोषज एवान्तर्भूतः, वक्ष्यमाणाश्च कामलादयः पाण्डुरोगस्यैव पर्यायाः; अतोऽत्र चत्वार एव । केचित् पाण्ड्वामयस्त्वष्टविध इति पठन्ति । तन्मते पृथग्दोषैः त्रयः, समस्तैः एकः, मृद्भक्षणात् एकः, द्वे कामले च, एको हलीमकः, एवं पाण्डुरोगोऽष्टविधः । तथा च तन्त्रान्तरम्—"वातेन पित्तेन कफेन चापि त्रिदोषमृद्भक्षणसंभवः स्यात् । द्वे कामले चैकहलीमकश्च स चाष्टधैवं त्विह पाण्डुरोगः"—इति ॥—

सर्वेषु चैतेष्विह पाण्डुभावो
यतोऽधिकोऽतः खलु पाण्डुरोगः ॥ ४ ॥

यद्यपि वातादिभेदेन कृष्णादिवर्णत्वमभिधास्यति, तथाऽप्यस्य विकारस्य पाण्डुवर्णाधिक्यात् पाण्डुरोगव्यपदेश इति दर्शयन्नाह—सर्वेषु चैतेष्विह पाण्डुभाव इत्यादि ॥ ४ ॥

त्वक्स्फोटनं ष्ठीवनगात्रसादौ
मृद्भक्षणं प्रेक्षणकूटशोथः ॥
विण्मूत्रपीतत्वमथाविपाको
भविष्यतस्तस्य पुरःसराणि ॥ ५ ॥

इदानीं पाण्डुरोगपूर्वरूपाण्याह—त्वगित्यादि । त्वक्स्फोटः त्वचां स्फुटनम् । ष्ठीवनं थूत्करणम् । यद्यप्यत्र मृद्भक्षणं कथितं, तथाऽपि मृद्भक्षणे इच्छा गम्यते । प्रेक्षणम् अक्षि । अविपाक आहारस्य । पुरःसराणि अग्रेसराणि ॥ ५ ॥

स कामलापानकिपाण्डुरोगः
कुम्भाह्वयो लाघर(व)कोऽलसाख्यः ॥
विभाष्यते लक्षणमस्य कृत्स्नं
निबोध वक्ष्याम्यनुपूर्वशस्तंत् ॥ ६ ॥

तस्यैव पाण्डुरोगस्य पर्यायानाह—स इत्यादि । स रोगः कामलादिकाभिः संज्ञाभिर्विभाष्यते विविधं भाष्यते । अस्येति कामलादिपर्यायैर्निर्दिष्टस्य रोगस्य । अनुपूर्वशः पूर्वं पूर्वमनुपूर्वेणेत्यर्थः । तं पाण्डुरोगम् ॥ ६ ॥

कृष्णेक्षणं कृष्णसिरावनद्धं
तद्वर्णविण्मूत्रनखाननं च ॥
वातेन पाण्डुं मनुजं व्यवस्ये-
च्छुक्तं तथाऽन्यैस्तदुपद्रवैश्च ॥ ७ ॥

वातिकपाण्डुरोगलक्षणमाह—कृष्णेक्षणमित्यादि । कृष्णेक्षणं कृष्णाक्षिकम् । तद्वर्णविण्मूत्रनखाननं कृष्णवर्णविण्मूत्रनखमित्यर्थः । तदुपद्रवैः वातोपद्रवैः ॥ ७ ॥

पीतेक्षणं पीतसिरावनद्धं
तद्वर्णविण्मूत्रनखाननं च ॥
पित्तेन पाण्डुं मनुजं व्यवस्ये-
च्छुक्तं तथाऽन्यैस्तदुपद्रवैश्च ॥ ८ ॥

पैत्तिकपाण्डुरोगलक्षणमाह—पीतेत्यादि । तद्वर्णं पीतवर्णम् । तदुपद्रवैः पित्तोपद्रवैरित्यर्थः ॥ ८ ॥

शुक्लेक्षणं शुक्लसिरावनद्धं
तद्वर्णविण्मूत्रनखाननं च ॥
कफेन पाण्डुं मनुजं व्यवस्ये-
च्छुक्तं तथाऽन्यैस्तदुपद्रवैश्च ॥ ९ ॥

श्लैष्मिकपाण्डुरोगलक्षणमाह—शुक्लेत्यादि । तद्वर्णं शुक्लवर्णं, तदुपद्रवैः कफोपद्रवैः ॥ ९ ॥

सर्वात्मके सर्वमिदं व्यवस्येद्

सान्निपातिकपाण्डुरोगलक्षणमाह—सर्वात्मके सर्वमिदमित्यादि । सर्वात्मके सान्निपातिके पाण्डुरोगे, सर्वं समस्तम्, इदं वातादिजपाण्डुरोगलक्षणं, व्यवस्येत् जानीयात् ॥—

वक्ष्यामि लिङ्गान्यथ कामलायाः ॥
यो ह्यामयान्ते सहसाऽन्नमम्ल-
मद्यादपथ्यानि च तस्य पित्तम् ॥ १० ॥
करोति पाण्डुं वदनं विशेषात्
पूर्वैरितौ तन्द्रिबलक्षयौ च ॥

इदानीं पाण्डुरोगपर्यायभूताया अपि कामलाया लक्षणमाह—वक्ष्यामीत्यादि । ननु, यदि पाण्डुरोगस्य पर्यायः कामला, तत् कथं तस्य लक्षणान्युक्तानि? सत्यं, यथा पाण्डुरोगाणां वातादिजानां प्रतिस्वं भेदो विद्यते तथाऽस्यापीति न दोषः; एतेन कामलादीनां संज्ञानां विशिष्टावस्थाविषयत्वाद्विशिष्टत्वं,

१ 'तम्' इति पा० । 'अत्र कामलेति कामशब्दोऽयं साधारणशब्दविशेषात्स्वल्पे भक्ताद्यभिलाषे प्रवर्तते, तं लातीति कामला । दुष्टत्वेन कुत्सितोऽपानोऽपानकः, सोऽस्यास्तीति अपानकी, कामलकाख्योऽपानकिपाण्डुरोगः कामलापानकिपाण्डुरोगः । कुम्भकामलकाख्योऽपानकिपाण्डुरोगस्त्वत्र कुम्भाह्वय उच्यते, भीमो भीमसेन इतिवत् । रोगस्यास्य कुम्भकामलेति संज्ञा तन्त्रान्तरे उपदिश्यते । स एव पुनर्ज्वरादिभिर्लाघवं करोति, सत्यपि सामर्थ्ये कर्मस्वनुत्साहं च जनयतीत्यलसाख्योऽपानकिपाण्डुरोगस्तु लाघवक उच्यते' इति हाराणचन्द्रः ।

१ 'तन्द्राविलत्वं प्रथमोदितांश्च' इति पा० ।

पर्यायत्वं पाण्डुरोगत्वापरित्यागात् । तान्येव लिङ्गान्याह—य इत्यादि । 'वक्ष्यामि लिङ्गान्यथ कामलाया' इत्यभिधाय कामला-कारणवचनं भविष्यन्त्या अपि तस्याः परिज्ञानार्थम् । आम-यान्ते पाण्डुरोगान्ते अन्यरोगान्ते च । सहसा शीघ्रम् । अम्लम-म्लम् अम्लभोजनम् । पाण्डुमित्यत्र देहमिति शेषः । 'पूर्वैरितौ तन्द्रिबलक्षयौ च' इति शारीरस्थाने गर्भव्याकरणाध्याये तन्द्रा कथिता, सूत्रस्थाने दोषादिक्षयवृद्ध्यध्याये बलक्षय इत्यर्थः । ननु, तन्द्राशब्दस्य व्युत्पादितत्वात् कथं तन्द्रिबलक्षयाविति ? सत्यं, कृष्यादेराकृतिगणत्वेनेक्प्रत्ययान्तत्वेन साधु । अन्ये 'तन्द्राऽबलत्वं प्रथमोदितं च' इति पठन्ति; तत्रापि स एवार्थः । अपरे 'प्रथमोदितांश्च' इति पठन्ति; ते च पाण्डुरोगोक्तलिङ्गविशे-षान् गृह्णन्ति । 'पाण्डुवदनम्' इत्यत्र 'पीतवदनम्' इति केचित् पठन्ति, तं चानार्षं टीकाकारा भाषन्ते ॥ १० ॥—

भेदस्तु तस्याः खलु कुम्भसाह्वः
शोफो महांस्तत्र च पर्वभेदः ॥ ११ ॥

इदानीं कामलाभेदमाह—भेद इत्यादि । तत्रेति कुम्भ-साह्वे । पर्वभेदः सन्धिपीडा । कुम्भसाह्वः तन्त्रान्तरे कुम्भ-कामलेति कथ्यते ॥ ११ ॥

ज्वराङ्गमर्दभ्रमसादतन्द्रा-
क्षयान्वितो लाघर(व)कोऽलसाख्यः ॥

तस्यैव कुम्भसाह्वस्यावस्थायां संज्ञान्तरमाह—ज्वराङ्गमर्दे-त्यादि । स एव कुम्भसाह्वो ज्वरादियुक्तो लाघरकोऽलसाख्यः स्यादिति पिण्डार्थः । लाघरकः कथ्यते अलसकश्च कथ्यत इत्यर्थः । अङ्गमर्दो वेदनाविशेषः, स्फुटनिकेत्यपरे । अन्ये पाण्डुरोग एव ज्वरादियुक्तः कुम्भसाह्वः कथ्यत इति मन्यन्ते । अस्यैव अवस्थामेदं[1] पानकीति तन्त्रान्तरीयाः पठन्ति । तद्यथा—"सन्तापो भिन्नवर्चस्त्वं बहिरन्तश्च पीतता । पाण्डुता नेत्र-रोगश्च पानकीलक्षणं वदेत्"—इति ॥—

तं वातपित्ताद्धरिपीतनीलं[2]
हलीमकं नाम वदन्ति तज्ज्ञाः ॥ १२ ॥

इदानीं हलीमकलक्षणमाह—तमित्यादि । तं पाण्डुरोगम् । कुम्भसाह्वो यदा हरितपीतनीलः स्यात्, तदा तज्ज्ञाः कायचिकि-त्साविदो हलीमकं नाम वदन्ति । हरि हरितं, नीलं श्यावम् । केचित्तु 'तं वातपित्ताभिपरीतलिङ्गं' इति पठित्वा वातपित्ता-भ्यामभिपरीतं संवद्धं लिङ्गं यस्य तथेति व्याख्यानयन्ति ॥१२॥

उपद्रवास्तेष्वरुचिः पिपासा
छर्दिर्ज्वरो मूर्धरुजाऽग्निसादः ॥
शोफस्तथा कण्ठगतोऽबलत्वं
मूर्च्छा क्लमो हृदयपीडनं च ॥ १३ ॥

इदानीं पाण्डुरोगोपद्रवानाह—उपद्रवा इत्यादि । तेषु पाण्डु-रोगेषु । मूर्धरुजा शिरोव्यथा । अबलत्वं निर्बलत्वम् । सोप-द्रवस्य पाण्डुरोगस्य कृच्छ्रसाध्यत्वमसाध्यत्वं च यथावस्थं बोद्ध-व्यम् ॥ १३ ॥

साध्यं तु पाण्ड्वामयिनं समीक्ष्य
स्निग्धं घृतेनोर्ध्वमधश्च शुद्धम् ॥
संपादयेत् क्षौद्रघृतप्रगाढै-
र्हरीतकीचूर्णयुतैः प्रयोगैः ॥ १४ ॥
पिबेद्घृतं वा रजनीविपक्वं
यत्त्रैफलं तैल्वकमेव वाऽपि ॥
विरेचनद्रव्यकृतं पिबेद्वा
योगांश्च वैरेचनिकान् घृतेन ॥ १५ ॥

इदानीं चिकित्सितमाह—साध्यमित्यादि । साध्यपाण्डुरोग-ज्ञानं वक्ष्यमाणासाध्यलक्षणविपर्ययादरिष्टलक्षणवैपरीत्याच्च । घृते-नेति कट्वरकल्याणकदाधिकमहातिक्तपञ्चगव्यादिना, अन्ये केव-लेनैव गव्यघृतेनेत्याहुः । यदत्र पाण्डुरोगेषु घृतेनैव स्नेहनमुक्तं तत्तेषां पित्तभूयिष्ठत्वाद्रक्तदूष्यत्वाच्च । यद्यपि पाण्डुरोगे ऊर्ध्वशोधनं निषिद्धं, तथाऽपि ऋतुदेशप्रकृतिकालशरीरापेक्षया मृदु वमनं देयम् । तथा च तन्त्रान्तरम् ,—"कालं च देशप्र-कृती शरीरं समीक्ष्य दद्याद्वमनं विधिज्ञः । वान्तस्य तीक्ष्णान्य-नुलोमनानि कल्पोपदिष्टानि भिषग्विदध्यात्"—इति । वमना-नन्तरं वक्ष्यमाणैः शालिप्रभृतिभिः कृतसंसर्जनकमस्य दोष-शमनार्थमाह—संपादयेदित्यादि । शुद्धं पाण्डुरोगिणमेवंभूतैः प्रयोगैर्वक्ष्यमाणयोगैः शेषदोषशमनार्थं संपादयेत् सम्यक् योजयेदित्यर्थः । ननु, सर्पिर्मधुहरीतकीयुक्तमेकमेवायोरजोयो-गमभिधास्यति, तत् कथं प्रयोगैरिति बहुवचनं ? सत्यं, प्रदे-शान्तरोक्तानां नवायसप्रभृतीनामत्र शस्तत्वात् । पिबेद्घृतं वेत्यादि । रजनीविपक्वं हरिद्राकल्कसाधितम् । त्रैफलं त्रिफला-साधितम् । तैल्वकमिति तिल्वकः पट्टिकारोध्रः, तेन साधित-मित्यर्थः; अन्ये तैल्वकं वातव्याध्युक्तमाहुः । विरेचनद्रव्यकृतमि-त्यादि ।—त्रिवृदादिसंस्कृतं घृतं; वैरेचनिकान् योगान् विरेचन-द्रव्यविकल्पोक्तान्, तांश्च घृतेन पिबेत् ॥ १४ ॥ १५ ॥

मूत्रे निकुम्भार्धपलं विपाच्य
पिबेदभीक्ष्णं कुडवार्धमात्रम् ॥
खादेद्गुडं वाऽप्यभयाविपक्वं[1]-
मारग्वधादिक्वथितं पिबेद्वा ॥ १६ ॥

इदानीं पाण्डुरोगेऽपराण्यपि विरेचनान्याह—मूत्रे इत्यादि । निकुम्भा दन्ती, तस्या अर्धपलं महिषीमूत्रे षोडशगुणे विपाच्य, चतुर्भागावशिष्टं कुडवार्धमात्रं पलद्वयमात्रं, विरेकाय पिबेदित्यर्थः । गुड इक्षुविकृतिः । अभयाविपक्वं हरीतकीका-थविपक्वं, अन्ये अभयाविपक्वं गुडकं सहरीतकीप्रभृतिकमाहुः । अपरे 'अभयाविमिश्रम्' इति पठन्ति । मुहुर्वैरेचनिकयोगनिर्दे-शात्[2] पाण्डुरोगे विरेचनस्यात्यन्तहितत्वं ज्ञेयम् ॥ १६ ॥

१ 'अवस्थाविशेषः पानकीति' इति पा० । २ 'वातपित्ताभिपरी-तलिङ्गं' इति पा० ।

१ 'अभयाविमिश्रं' इति पा० । २ 'बहुविरेकयोगनिर्देशात्' इति पा० ।

अयोरजोव्योषविडङ्गचूर्णं
लिह्याद्धरिद्रां त्रिफलान्वितां वा ॥
सर्पिर्मधुभ्यां विदधीत वाऽपि
शास्त्रप्रदेशाभिहितांश्च योगान् ॥ १७ ॥

किं पाण्डुरोगे पूर्वोक्तमेव कार्यमुतान्यदपीत्याह—अय इत्यादि । अयोरजोव्योषविडङ्गचूर्णमित्येको योगः । हरिद्रां त्रिफलान्वितामिति द्वितीयो योगः । अयोरजो लोहचूर्णम् । व्योषं त्रिकटुकम् । 'लिह्यात्' इत्यत्र 'मधुसर्पिर्भ्याम्' इति संबन्धनीयम् । हरिद्रां पिण्डहरिद्राम् । केचित् हरिद्राशब्देन आदौ दारुशब्दलोपात् दारुहरिद्रां गृह्णन्ति । विदधीत वाऽपीत्यादि । विदधीत कुर्वीत । शास्त्रप्रदेशाभिहितांश्च योगान् शास्त्रेऽन्यप्रदेशोक्तान् नवायसादीन् ॥ १७ ॥

हरेच्च दोषान् बहुशोऽल्पमात्रान्
श्वयेद्धि दोषेष्वतिनिर्हृतेषु ॥

इदानीं पाण्डुरोगे यत् शोधनमुक्तं तदल्पमात्रया कर्तव्यमित्याह—हरेच्च दोषानित्यादि । बहुशो बहून् वारान् । अल्पमात्रान् स्तोकस्तोकान् । कस्मात् स्तोकान् स्तोकान् हरेदित्याह—श्वयेद्धि दोषेष्वित्यादि । श्वयेत् श्वयथुं प्राप्नुयात् । हि यस्मादर्थे । अत्र पाठान्तरं—'हरेच्च दोषान् बहुशोऽल्पमात्रान् शुद्धेषु दोषेष्वभिनिर्हृतेषु' इति । शुद्धेषु दुष्टिरहितेषु; अभिनिर्हृतेष्वित्यभिशब्दः सम्यगर्थः, अतियोगस्यानिष्टत्वात् ॥—

धात्रीफलानां रसमिक्षुजं च
मन्थं पिबेत् क्षौद्रयुतं हिताशी ॥ १८ ॥

धात्रीफलानामित्यादि । धात्रीफलानामामलकफलानां स्वरसं क्षौद्रयुतं पिबेदित्येको योगः । इक्षुजं रसं क्षौद्रयुतमिति द्वितीयः । मन्थमिति "शक्तवः सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुताः"-इत्याद्युक्तलक्षणं क्षौद्रयुतमिति तृतीयः । तथा च तन्त्रान्तरम्—"पिबेत् सुशीतलान् मन्थान् घृताक्तान् मधुसंयुतान् । सक्षौद्रं वा रसं धात्र्या इक्षोर्वाऽपि हिताशनः"-इति । तन्त्रान्तरे पाण्डुरोगे मन्थशब्देन विशिष्टो मन्थ उच्यते । तद्यथा—"धात्रीफलरसे शक्तूनिक्षूणां च रसे तथा । पाण्डुर्मधुसमायुक्तं पिबेन्मन्थं सुशीतलम्"—इति ॥ १८ ॥

उभे बृहत्यौ रजनीं शुकाख्यां
काकादनीं चापि सकाकमाचीम् ॥
आदारिबिम्बीं सकदम्बपुष्पीं
विपाच्य सर्पिर्विपचेत् कषाये ॥ १९ ॥
तत् पाण्डुतां हन्त्युपयुज्यमानं
क्षीरेण वा मागधिका यथाग्नि ॥

उभे इत्यादि । शुकाख्या चर्मकारवटः, अन्ये शुकशिम्बामाहुः । काकादनी काकतिन्दुकः । आदारिबिम्बीं सकदम्बपुष्पीमित्यादि ।—आदारी वेल्लन्तरसदृशपुष्पा आलिरिति लोके, बिम्बी रास्नानुकारिविटपा लोहितफला च; कार्तिककुण्डस्तु आदारिबिम्बी आउलिरिति प्रसिद्धेति व्याख्यानयति । कदम्बपुष्पी भूमिकदम्बः, अलम्बुषामपरे । एतानि कषायकल्पेन विपाच्य, तस्मिन् कषाये सर्पिर्घृतं विपचेत् । क्षीरेण वेत्यादि । मागधिका वा क्षीरेण सह यथाग्नि उपयुज्यमाना पाण्डुतां हन्तीत्यर्थः ॥ १९ ॥—

हितं च यष्टीमधुजं[1] कषायं
चूर्णं समं वा मधुनाऽवलिह्यात् ॥ २० ॥

हितं चेत्यादि । यष्टीमधुककषायं मधुना सममित्येको योगः । चूर्णं वा यष्टीमधुकस्य मधुना समं मधुना सह लिह्यादिति द्वितीयः । अन्ये 'चूर्णं समं वा मधुनाऽवलिह्यात्' इत्यत्र 'चूर्णं लिहेद्वा मधुना द्वितीयम्' इति पठन्ति; तत्रापि स एवार्थः ॥ २० ॥

गोमूत्रयुक्तं त्रिफलादलानां
दत्त्वाऽऽयसं चूर्णमनल्पकालम् ॥
प्रवालमुक्ताञ्जनशङ्खचूर्णं
लिह्यात्तथा काञ्चनगैरिकोत्थम् ॥ २१ ॥

गोमूत्रयुक्तमित्यादि । त्रिफलादलानां चूर्णमायसं चूर्णं दत्त्वा गोमूत्रयुक्तमनल्पकालं चिरकालं लिह्यात् । त्रिफलादलानामिति दलशब्दः अष्ठीलापरिहारार्थम् । अन्ये 'गोमूत्रयुक्तं त्रिफलादलानां' इत्यत्र 'गोमूत्रपीतत्रिफलादलानां' इति पठन्ति, गोमूत्रभावितत्रिफलादलानामिति व्याख्यानयन्ति । प्रवालेत्यादि । प्रवालो विद्रुमः, मुक्ता मौक्तिकम्, अञ्जनं रसाञ्जनम् । तथेति गोमूत्रयुक्तमनल्पकालं लिह्यादित्यर्थः । काञ्चनगैरिकोत्थमित्यत्रापि तथेति संबध्यते; तेन सुवर्णगैरिकचूर्णं गोमूत्रयुतं चिरकालं लिह्यादित्यर्थः । 'गोमूत्रपीतां त्रिफलां सपिष्टां' इति केचित् पठन्ति, गोमूत्रपीतां गोमूत्रभावितां मधुना अवलिह्यादिति व्याख्यानयन्ति ॥ २१ ॥

आजं शकृत्स्यात्[2] कुडवप्रमाणं
विडं हरिद्रा लवणोत्तमं च ॥
पृथक् पलांशानि समग्रमेत-
च्चूर्णं हिताशी मधुनाऽवलिह्यात् ॥ २२ ॥

आजमित्यादि । आजं शकृत् छागलीपुरीषम् । कुडवप्रमाणं चतुष्पलमात्रम् । विडं लवणम् । लवणोत्तमं सैन्धवम् । पृथक्पलांशानि विडादीनि पृथक्पलमात्राणीत्यर्थः । समग्रं समस्तम् ॥ २२ ॥

मण्डूरलोहाग्निविडङ्गपथ्या-
व्योषांशकः सर्वसमानताप्यः ॥
मूत्रासुतोऽयं[3] मधुनाऽवलेह्यः
पाण्ड्वामयं हन्त्यचिरेण घोरम् ॥ २३ ॥

इदानीं पाण्डुरोगे सिद्धतमं योगमाह—मण्डूरेत्यादि । मण्डूरं लोहकिट्टानुकारि द्रव्यम् । अग्निः चित्रकः । व्योषं त्रिकटुकम् । मण्डूरादीनां व्योषपर्यन्तानामंशः समो भागो यस्मिन् स तथेत्यर्थः । ताप्यो माक्षिकधातुः । मूत्रासुतः मूत्रे उषितः मूत्रसन्धित इत्यर्थः ॥ २३ ॥

---

१ 'यष्टीमधुकं' इति पा० । २ 'शकृद्रर' इति पा० । ३ 'मूत्रायुतोऽयं' इति पा० ।

विभीतकायोमलनागराणां
चूर्णं तिलानां च गुडश्च मुख्यः ॥
तक्रानुपानो वटकः प्रयुक्तः
क्षिणोति घोरानपि पाण्डुरोगान् ॥ २४ ॥

अपरमपि सिद्धतमं योगमाह—विभीतकेत्यादि । अयोमलं लोहसिङ्घाणकम् । तिलानां कृष्णतिलानामपि चूर्णम् । गुडश्च मुख्य इति सर्वसमो गुडो नार्धगुड इत्यर्थः । क्षिणोति हन्ति । यद्यप्येतद्योगद्वयमनार्षं तथाऽपि सिद्धतमत्वेनास्मद्गुरुसंमतत्वादस्माभिः पठितम् ॥ २४ ॥

सौवर्चलं हिङ्गु किराततिक्तं
कलायमात्राणि सुखाम्बुना वा ॥
मूर्वाहरिद्रामलकं च लिह्यात्
स्थितं गवां सप्तदिनानि मूत्रे ॥ २५ ॥
मूलं बलाचित्रकयोः पिबेद्वा
पाण्ड्वामयार्तोऽक्षसमं हिताशी ॥
सुखाम्बुना वा लवणेन तुल्यं
शिग्रोः फलं क्षीरभुजोपयोज्यम् ॥ २६ ॥

सौवर्चलमित्यादि । सौवर्चलादीनामेकत्वेन निर्दिष्टानां बहुवचनान्तं कलायमात्राणीति विशेषणं सौवर्चलादीनां प्रत्येकं कलायमात्रेति प्रमाणबोधनार्थम् । सुखाम्बुना वा ईषदुष्णाम्बुना, 'लिहेत्' इति वाक्यशेषः । वाशब्दोऽत्र योगापेक्षया । मूर्वेत्यादि । मूर्वादिकं सप्तदिनानि गवां मूत्रे स्थितं लिह्यात् । मूर्वा चोरस्नायुः । बलाचित्रकयोः समुदितयोर्मूलकल्कं वा कर्षसमं हिताशी पाण्डुरोगार्तो मूत्रेण सुखाम्बुना वा पिबेदित्यर्थः । कार्तिककुण्डस्तु 'मूर्वाहरिद्रामलकं पिबेद्वा स्थितं गवां सप्तदिनानि मूत्रे' इति पठति; तत्र तन्त्रयुक्तिवशात् 'यत्र तत्' इति पदं द्रष्टव्यं, तेन यत्र मूर्वादिकं स्थितं तत् पिबेदित्यर्थः । तथा च तन्त्रान्तरम्—"निशामलकमूर्वाभिर्भावितं सप्त वासरान् । गोमूत्रं पिबतः पाण्डुः कामला च प्रणश्यति"-इति । सुखाम्बुना उष्णोदकेन । लवणेन सैन्धवेन । तुल्यं समम् । शिग्रोः फलं शोभाञ्जनकफलम् । कलायमात्रमित्यनुवर्तनीयं, सैन्धवस्यापि हिङ्गुवदधिकमात्रस्यानभिमतत्वात् । क्षीरभुजा दुग्धाशनेन । उपयोज्यं पानादिविधिना ॥ २५ ॥ २६ ॥

न्यग्रोधवर्गस्य पिबेत् कषायं
शीतं सिताक्षौद्रयुतं हिताशी ॥
शालादिकं चाप्यथ सारचूर्णं
धात्रीफलं वा मधुनाऽवलिह्यात् ॥ २७ ॥

न्यग्रोधवर्गस्येत्यादि । न्यग्रोधवर्गस्य न्यग्रोधादिगणस्य । कषायं क्वाथपाकपरिभाषया कथितम् । शालादिकं चाप्यथ सारचूर्णमित्यादि । शालसारादिचूर्णं मधुना अवलिह्यात्, आमलकचूर्णं वेत्यर्थः ॥ २७ ॥

विडङ्गमुस्तत्रिफलाजमोद-
परूषकव्योषविनिर्दहन्यः ॥
चूर्णानि कृत्वा गुडशर्करे च
तथैव सर्पिर्मधुनी शुभे च ॥ २८ ॥
संभारमेतद्विपचेन्निधाय
सारोदके सारवतो गणस्य ॥
जातं च लेह्यं मतिमान् विदित्वा
निधापयेन्मोक्षकजे समुद्गे ॥ २९ ॥
हन्त्येष लेहः खलु पाण्डुरोगं
सशोथमुग्रामपि कामलां च ॥

विडङ्गमुस्तत्रिफलेत्यादि । एतानि विडङ्गादिद्रव्याणि चूर्णीकृतानि, सारवतो गणस्य सारोदके शालसारादिगणसारक्वाथे, निधाय निक्षिप्य, तथा शुभे निर्मले कृत्वा गुडशर्करे सर्पिर्मधुनी च निक्षिप्य, ऐकध्यं तावत् पचेत् यावल्लेह्यं स्यात्, ततश्च संजातलेह्यं विदित्वा मतिमान् वैद्यो मोक्षकजे समुद्गे मोक्षकमये संपुटे निधापयेत् निक्षिपेदिति पिण्डार्थः । विनिर्दहनी चित्रकः । गुडशर्काविडङ्गादिद्रव्यचूर्णप्रमाणं सारोदकचतुर्थांशेन, मधुसर्पिःप्रमाणमपि तथैव । ननु, उष्णयोगेन मधु विरुध्यते, तत् कथं मधुना सहावलेहपाकः ? सत्यम्, उष्णेन सह मधुनोऽभ्यवहारे विरोधो न पाके; तथा च तन्त्रान्तरे—'सक्षौद्रां शर्करां पक्त्वा' इत्यादि । यद्यप्यत्र पाण्डुरोगचिकित्सितं सामान्येनोक्तं, तथाऽप्येतदेव चिकित्सितं द्रव्यस्वरूपेण विकल्प्य यथादोषं योज्यम् । तथा च तन्त्रान्तरम्—"पाण्डुरोगप्रशान्त्यर्थमिदमुक्तं चिकित्सितम् । विकल्प्यैवं च भिषजा यथादोषबलं प्रति ॥ स्नेहप्रायं पवनजे, तिक्तशीतं तु पैत्तिके । श्लैष्मिके कटुरूक्षोष्णं, मिश्रं स्यात् सान्निपातिके" ( च. चि. अ. १६ ) इति ॥ २८ ॥ २९ ॥—

सशर्करा कामलिनां त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी ॥ ३० ॥

अतः परं कामलाचिकित्सितमाह—सशर्करेत्यादि । त्रिभण्डी त्रिवृत्, सशर्करा कामलिनां हिता । गवाक्षी इन्द्रवारुणी, सा सगुडा हिता, शुण्ठ्यपि सगुडा ॥ ३० ॥

कालेयके चापि घृतं विपक्वं
हितं च तत् स्याद्रजनीविमिश्रम् ॥

कालेयके इत्यादि । कालेयकं दारुहरिद्रानुकारि द्रव्यं, तत्कल्कसाधितं घृतं, रजनीविमिश्रं हरिद्राचूर्णप्रक्षेपयुतम् ॥—

धातुं नदीजं जतु शैलजं वा
कुम्भाह्वये मूत्रयुतं पिबेद्वा ॥ ३१ ॥

कुम्भाह्वयचिकित्सामाह—धातुमित्यादि । नदीजं धातुं सुवर्णमाक्षिकम् । तच्च मूत्रयुतं पिबेत् । जतु शैलजं वेति शिलाजतु वा मूत्रयुतं पिबेत् ॥ ३१ ॥

१ 'तक्रानुपानं वटकाप्रयुक्तं' इति पा० ।

१ 'चूर्णानि कृत्वा' इति पा० । २ 'क्षौद्रयुतम्' इति पा० ।

मूत्रे स्थितं सैन्धवसंप्रयुक्तं
मासं पिबेद्वाऽपि हि लोहकिट्टम् ॥

मूत्रे स्थितमित्यादि । गोमूत्रे मासमुषितं लोहकिट्टं लोहमलं तेनैव मूत्रेण चूर्णितं सैन्धवयुक्तं कुम्भाह्वये पिबेत् । लोहकिट्टमित्यत्र हिरण्यकिट्टमिति केचित् पठन्ति; तन्नेच्छन्ति निबन्धकाराः, हिरण्यस्यामलत्वात् ॥—

दग्ध्वाऽक्षकाष्ठैर्मलमायसं वा
गोमूत्रनिर्वापितमष्टवारान् ॥ ३२ ॥
विचूर्ण्य लीढं मधुनाऽचिरेण
कुम्भाह्वयं पाण्डुगदं निहन्यात् ॥
सिन्धूद्भवं वाऽग्निसमं च कृत्वा
क्षिप्त्वा च मूत्रे सकृदेव तप्तम् ॥ ३३ ॥
लौहं च किट्टं बहुशश्च तप्त्वा
निर्वाप्य मूत्रे बहुशस्तथैव ॥
एकीकृतं गोजलपिष्टमेत-
द्दैकध्यमावाप्य पचेदुखायाम् ॥ ३४ ॥
यथा न दह्येत तथा विशुष्कं
चूर्णीकृतं पेयमुदश्विता तत् ॥
तक्रौदनाशी विजयेत रोगं
पाण्डुं तथा दीपयतेऽनलं च ॥ ३५ ॥

कुम्भाह्वये सिद्धतमं योगमाह—दग्ध्वेत्यादि । सिन्धूद्भवं सैन्धवम् । अग्निसमं कृत्वा बिभीतकाग्निना अग्निवर्णं कृत्वेत्यर्थः । सकृत् एकवारम् । लौहं च किट्टमिति लोहसिंहाणकमित्यर्थः । निर्वाप्य निर्वापितं कृत्वा । एकीकृतं समभागेन मिश्रीकृतं, गोजलपिष्टं निर्वापणावशिष्टपञ्चगुणे गोमूत्रे पिष्टम्, उखायां स्थाल्यां निक्षिप्य, मुखं पिधाय, यथा बाष्पो बहिर्न निःसरति यथा न दह्येत तथा विपचेत् । ततश्च विशुष्कं चूर्णीकृतमुदश्विता मथितेन सह पेयम् । जीर्णे च तक्रौदनं भोजयेदित्यर्थः । अयमसौश्रुतोऽपि पूर्वोक्तहेतुत्वादस्माभिः पठितः । अस्य योगस्य तन्त्रान्तरे बिभीतकलवणमिति संज्ञा ॥ ३२–३५ ॥

द्राक्षागुडूच्यामलकीरसैश्च
सिद्धं घृतं लाघर(व)के हितं च ॥

इदानीं लाघरकचिकित्सामाह—द्राक्षेत्यादि ।—

गौडानरिष्टान् मधुशर्कराश्च
मूत्रासवान् क्षारकृतांस्तथैव ॥ ३६ ॥
स्निग्धान् रसानामलकैरुपेतान्
कोलान्वितान् वाऽपि हि जाङ्गलानाम् ॥
सेवेत शोफाभिहितांश्च योगान्
पाण्ड्वामयी शालियवांश्च नित्यम् ॥ ३७ ॥

इदानीं तन्त्रान्तरोक्तान् सर्वानेवाभयारिष्टादीन् भोजनं च संगृह्णन्नाह—गौडानित्यादि । गौडानरिष्टान् अभयारिष्टादीन् । मधुशर्कराश्चेति मधुशब्देन मध्वासवः, स च लोहारिष्टप्रभृतिकः; शर्कराशब्देन शर्करासवः । मूत्रासवान् कुष्ठचिकित्सितोक्तान् । क्षारकृतानासवान् श्लीपदपठितान् । स्निग्धान् रसान् स्नेहभृष्टान् जाङ्गलानां मांसरसान्; आमलकैरुपेतान् आमलकफलसंस्कृतान्, कोलान्वितान् वेति बदरसंस्कृतान्; विकल्पाभिधानं सात्म्यापेक्षया । शोफाभिहितान् योगान् देवदारुशुण्ठीरसादिकान् । शालयो रक्तशाल्यादयः ॥ ३६ ॥ ३७ ॥

श्वासातिसारारुचिकासमूर्च्छा-
तृड्छर्दिशूलज्वरशोफदाहान् ॥
तथाऽविपाकस्वरभेदसादान्
जयेद्यथास्वं प्रसमीक्ष्य शास्त्रम् ॥ ३८ ॥

पाण्डुरोगोपद्रवचिकित्सामाह—श्वासेत्यादि । एतान् श्वासादीनुपद्रवान्, यथास्वं शास्त्रं यथात्मीयं चिकित्साशास्त्रं प्रसमीक्ष्य जयेत् । केचिदमुं पाठमन्यथा पठन्ति,—'तृष्णां ज्वरं छर्दिमथातिसारं मूर्च्छां क्षयं श्वासमनन्नलिप्साम् । तथाऽविपाकस्वरभेदसादान् जयेद्यथावत् प्रसमीक्ष्य शास्त्रम्'—इति । ननु, ज्वरातिसारान्वितस्य तस्यासाध्यत्वेन वक्ष्यमाणत्वात् कुतो ज्वरातिसारयोश्चिकित्सातिदेशः ? उच्यते, अचिरोत्थितयोस्तयोः सतोः पाण्डुरोगिणः प्रतिकार्यत्वात् ॥ ३८ ॥

अन्तेषु शूनं परिहीनमध्यं
म्लानं तथाऽन्तेषु च मध्यशूनम् ॥
गुदे च शेफस्यथ मुष्कशूनं
प्रताम्यमानं च विसंज्ञकल्पम् ॥ ३९ ॥
विवर्जयेत् पाण्डुकिनं यशोऽर्थी
तथाऽतिसारज्वरपीडितं च ॥ ४० ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे पाण्डुरोगप्रतिषेधो नाम (षष्ठोऽध्यायः, आदितः) चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

इदानीमनुपक्रम्यस्य पाण्डुरोगिणो लक्षणमाह—अन्तेषु शूनमित्यादि । अन्तेषु हस्तपादमुखेषु । परिहीनमध्यं कृशमध्यकायम् । म्लानं कृशम् । गुदे च शेफसीत्यत्रापि शूनमिति संबन्धनीयं, शेफो योनिलिङ्गम् । मुष्कशूनम् अण्डकोषशूनम् । यद्यपि मध्यशूनमित्यनेनैव गुदादिशोफः प्राप्तः, तथाऽप्यन्ते म्लानतां विनाऽपि गुदादिशोफी त्याज्य इति दर्शनार्थं गुदादिशोफकथनम् । प्रताम्यमानं मूर्च्छन्तम् । विसंज्ञकल्पं विचेतनप्रायम् । यद्यपि मूर्च्छायेन विसंज्ञकल्पमिति प्राप्तं, तथाऽप्यभिधानं विसंज्ञकल्पस्य विशेषेणासाध्यताप्रतिपादनार्थम् । अतिसारज्वरपीडितम् अतिसारज्वराभ्यां पीडितमित्यर्थः । यद्यपि पानकीहलीमकचिकित्सितं नोक्तं, तथाऽपि पाण्डुरोगचिकित्सितं तयोरपि कर्तव्यम् ॥ ३९ ॥ ४० ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे पाण्डुरोगप्रतिषेधो नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

१ 'श्वासमनल्पशोथम्' इति पा० । २ 'मुष्कयोश्च शूनं, प्रताम्यन्तमसंज्ञकल्पम्' इति पा० ।

## पञ्चचत्वारिंशत्तमोऽध्यायः ।

**अथातो रक्तपित्तप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पाण्डुरोगप्रतिषेधानन्तरं दूष्यसाम्याद्रक्तपित्तप्रतिषेधारम्भो युक्त इत्यत आह—अथात इत्यादि ॥ १ ॥ २ ॥

**क्रोधशोकभयायासविरुद्धान्नातपानलान् ॥**
**कट्वम्ललवणक्षारतीक्ष्णोष्णातिविदाहिनः ॥ ३ ॥**
**नित्यमभ्यसतो दुष्टो रसः पित्तं प्रकोपयेत् ॥**
**विदग्धं स्वगुणैः पित्तं विदहत्याशु शोणितम् ॥ ४ ॥**
**ततः प्रवर्तते रक्तमूर्ध्वं चाधो द्विधाऽपि वा ॥**

निदानानन्तरीयकत्वात् प्रतिषेधस्यादौ रक्तपित्तनिदानभूते हेतुसंप्राप्ती आह—क्रोधशोकभयायासेत्यादि । क्रोधादीनि नित्यमभ्यस्यतो निषेवमाणस्य पुरुषस्य दुष्टिं गतो रसः पित्तं प्रकोपयेत्, ततश्च विदग्धं दुष्टं पित्तं स्वगुणैः तीक्ष्णोष्णादिभिः शोणितं विदहति प्रदूषयति, तत ऊर्ध्वमधो वा रक्तं प्रवर्तेत इति पिण्डार्थः । तीक्ष्णमुष्णकट्वम्ललवणक्षारव्यतिरिक्तं ज्योतिष्मत्य-पामार्गफलादिकम् । आयासः श्रमः । विरुद्धान्नं हिताहितीयोक्तम् । क्रोधशोकेत्यादिः हेतुः, नित्यमभ्यस्यत इत्यादिः संप्राप्तिः । 'कट्वम्ललवण–' इत्यत्र केचित् 'तीक्ष्णमुष्णाम्ललवणं दिवास्वप्नं विदाहि यत्' इति पठन्ति ॥ ३ ॥ ४ ॥—

**आमाशयाद्व्रजेदूर्ध्वमधः पक्वाशयाद्व्रजेत् ॥ ५ ॥**
**विदग्धयोर्द्वयोश्चापि द्विधाभागं प्रवर्तते ॥**
**केचित् सयकृतः प्लीह्नः प्रवदन्त्यसृजो गतिम् ॥६॥**

तद्रक्तं यथोर्ध्वमधो वा द्विधाऽपि वा प्रवर्तते तथा दर्शयन्नाह—आमाशयादित्यादि । यद्यपि रक्तस्य यकृत्प्लीहस्थानत्वादामाशयपक्वाशयाभ्यां प्रवर्तनं न संभवति, तथाऽपि प्रकुपितरक्तस्य तत्रापि गमनात् प्रवर्तनं ताभ्यां संभवत्येव । विदग्धयोश्चाप्युभयोरिति दुष्टयोरामपक्वाशययोरित्यर्थः । तयोश्च दुष्टिः दुष्टरुधिरसंयोगात् । एकीयमतमाह—केचिदित्यादि । सयकृतः कालखण्डसहितात् । एतदप्यनुमतम्, अप्रतिषेधात् । अस्मिन् पाठे अङ्गीकृतेऽपि पूर्ववाक्येन सह न विरोधः, यतो यकृत्प्लीहाभ्यामेव रक्तं प्रवर्तते परमामपक्वाशयमधिष्ठाय ॥ ५ ॥ ६ ॥

**ऊर्ध्वं साध्यमधोयाप्यमसाध्यं युगपद्गतम् ॥**

त्रिप्रकारस्य रक्तपित्तस्य साध्ययाप्यासाध्यत्वमाह—ऊर्ध्वमित्यादि । ऊर्ध्वं साध्यमिति यदा दौर्बल्याद्युपद्रवहीनं मांसप्रक्षालनाभमित्याद्यसाध्यलक्षणरहितमेकदोषानुगं भवति तदा साध्यं, यदा तु तदेव शान्तिं गत्वा पुनर्भवति मार्गान्तरं वा याति अल्पोपद्रवम् अल्पासाध्यलक्षणयुक्तं द्विदोषानुगं च भवति तदा याप्यं, यदा च बहूपद्रवयुक्तं बह्वसाध्यलक्षणयुक्तं त्रिदोषानुगतं च भवति तदा असाध्यम् । अधो याप्यमिति अल्पोपद्रवमसाध्यलक्षणहीनं द्विदोषानुगं च भवति तदा अधोगं याप्यं; यदा च त्रिदोषानुगमसाध्यलक्षणयुक्तं तदा वर्ज्यं, यदा चैकदोषानुगं निरुपद्रवं वर्ज्यलक्षणासंयुक्तं तदा साध्यम् । असाध्यं युगपद्गतमिति यदा त्रिदोषानुगं बहूपद्रवमसाध्यलक्षणयुक्तं भवति तदा असाध्यं, यदा चान्यथा तदा याप्यमित्यर्थः । युगपद्गतम् उभयमार्गप्रवृत्तमित्यर्थः ॥—

**सदनं शीतकामित्वं कण्ठधूमायनं वमिः ॥ ७ ॥**
**लोहगन्धिश्च निःश्वासो भवत्यस्मिन् भविष्यति ॥**

अथ पूर्वरूपमाह—सदनमित्यादि । सदनम् अङ्गग्लानिः । कण्ठधूमायनं कण्ठे धूमोद्गमनमिव वेदनेत्यर्थः । अस्मिन् रक्तपित्ते ॥ ७ ॥—

**बाह्यासृग्लक्षणैस्तस्य सङ्ख्यादोषोच्छ्रितीर्विदुः ॥ ८ ॥**

रक्तपित्तस्य संख्यां दोषोच्छ्रयं चातिदेशेनाह—बाह्यासृग्लक्षणैस्तस्येत्यादि । बाह्यासृग्लक्षणैरिति शोणितवर्णनीयोक्तैः 'फेनिलमरुणम्' इत्यादिभिः, तस्य रक्तपित्तस्य, संख्या सप्तविधा । ननु, पित्तेन विदग्धेन विदग्धं रक्तं रक्तपित्तमुच्यते, तत् कथं पित्तादपि पृथगुद्दिश्यते? उच्यते, तद्रक्तान्तरेण संसर्गात् । दोषोच्छ्रितिः दोषाधिक्यम् ॥ ८ ॥

**दौर्बल्यश्वासकासज्वरवमथुमदा-**
**स्तन्द्रितादाहमूर्च्छा**
**भुक्ते चान्ने विदाहस्त्वधृतिरपि सदा**
**हृद्यतुल्या च पीडा ॥**
**तृष्णा कण्ठस्य भेदः शिरसि च दवनं**
**पूतिनिष्ठीवनं च**
**द्वेषो भक्तेऽविपाको विरतिरपि रते**
**रक्तपित्तोपसर्गाः ॥ ९ ॥**

इदानीं रक्तपित्तोपद्रवानाह—दौर्बल्यश्वासकासेत्यादि । वमथुः छर्दिः । मदः पूगफलेनेव मत्तता । अधृतिः असन्तोषः । अतुल्या असाधारणा । कण्ठस्य भेदः कण्ठक्षणनम् । शिरसि च दवनं सन्तापः । विरतिरपि रतेः सुखस्यापि विनाशो भवतीत्यर्थः । उपसर्गा उपद्रवाः । 'भुक्ते चान्ने विदाह' इत्यत्र 'भुक्ते घोरो विदाह' इत्यन्ये पठन्ति । तत्र सप्तमी षष्ठ्यर्थे, तेन भुक्तस्य आहारस्य घोरो महान् विदाह इत्यर्थः । 'कण्ठस्य भेद' इत्यत्र 'कोष्ठस्य भेद' इत्यपरे पठन्ति; कोष्ठशब्देन कोष्ठस्थो मलस्तस्य भेद इति च व्याख्यानयन्ति । तदेतत् पाठद्वयमूर्ध्वाधःप्रवृत्तिरूपं यथासंभवं बोद्धव्यं, एकत्र द्वयोरप्यनौपयिकत्वात् । शिरसि च दवनमित्यत्र 'प्रविततसिरता' इति केचित् पठन्ति, सिराततगात्रतेति व्याख्यानयन्ति । 'विरतिरपि रतेः' इत्यत्र अपरे 'विनतिरपि भवेत्' इति पठन्ति; विनतिः शरीरस्य विनमनम् । अपरे 'विकृतिरपि भवेत्' इति पठन्ति, तत्रापि कायस्याकुञ्चनात्मिका विकृतिरित्यर्थः ॥ ९ ॥

---

१ 'विदग्धयोश्चाप्युभयोः' इति पा० । २ 'द्विधामार्गं' इति पा० । ३ 'युगपद्गतिः' इति पा० ।

१ 'तपनं' इति पा० ।

मांसप्रक्षालनाभं क्वथितमिव च यत्
कर्दमाम्भोनिभं वा
मेदःपूयास्रकल्पं[1] यकृदिव यदि वा
पक्वजम्बूफलाभम् ॥
यत् कृष्णं यच्च नीलं भृशमतिकुणपं
यत्र चोक्ता विकारा-
स्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा
यच्च तुल्यं विभाति ॥ १० ॥

असाध्यरक्तपित्तलक्षणमाह—मांसप्रक्षालनाभमित्यादि । मांसप्रक्षालनाभं मांसधावनतोयाभम् । कर्दमाम्भोनिभं कर्दमेन मिश्रितं यदम्भस्तोयं तन्निभम् । मेदःपूयास्रकल्पं मेदःपूयरक्तसदृशमित्यर्थः । अतिकुणपं शटितशवगन्धि । उक्ता विकारा दौर्बल्यश्वासादयः, 'प्रभूता' इति वाक्यशेषः । तद्वर्ज्यमिति ऊर्ध्वाधोमार्गत्वेन साध्यं याप्यं च यदुक्तं भवति तदप्येवंविधम् असाध्यम् । सुरपतिधनुः इन्द्रधनुः । 'क्वथितमिव च यत्' इत्यत्र 'क्वथितमिव यकृत्' इति पठित्वा पक्वकालखण्डतुल्यमिति व्याख्यानयन्ति ॥ १० ॥

नादौ संग्राह्यमुद्रिक्तं यदसृग्बलिनोऽश्नतः ॥
तत् पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहम् ॥ ११ ॥

आदौ बलवति रक्तपित्ते संग्रहणनिषेधमाह—नादौ संग्राह्यमुद्रिक्तमित्यादि । यत् रक्तपित्तम्, उद्रिक्तम् अतिशयेन वृद्धिं गतं, तद्बलयुक्तस्याश्नतश्च पुरुषस्यादौ न संग्राह्यं; यस्मात्तदादौ संगृहीतं सत् पाण्ड्वादिरोगावहं भवति ॥ ११ ॥

अधःप्रवृत्तं वमनैरूर्ध्वगं च विरेचनैः ॥
जयेदन्यतरद्वाऽपि क्षीणस्य शमनैरसृक् ॥ १२ ॥

तर्हि तत्र किं कुर्यादित्याह—अधःप्रवृत्तं वमनैरित्यादि । संशोधनार्हस्य बलवतो नरस्याधोगं रक्तपित्तं बहुदोषं वमनैर्जयेत्, एवंविधस्योर्ध्वगं विरेचनैरित्यर्थः । ननु, अधोगं वातानुगं भवति, ऊर्ध्वगं च कफानुगं, तत् कथं तयोर्वमनविरेचने युज्येते? सत्यं, व्याधिप्रत्यनीकत्वाद्युज्येते एव; तथा च तन्त्रान्तरं—"अधोगं वमनैर्धीमानूर्ध्वगं रेचनैर्जयेत्"—इति । अन्यतरद्वेति ऊर्ध्वगमधोगं वा क्षीणस्य पुरुषस्य शमनैर्जयेदिति न वमनविरेकैः; तथा च तन्त्रान्तरम्—"ऊर्ध्वगं वाऽप्यधोगं वा क्षीणस्य शमनैर्जयेत्"—इति ॥ १२ ॥

अतिप्रवृद्धदोषस्य पूर्वं लोहितपित्तिनः ॥
अक्षीणबलमांसाग्नेः कर्तव्यमपतर्पणम् ॥ १३ ॥

इदानीं संशोधनार्हस्य लङ्घनमपि हितमिति दर्शयन्नाह—अतिप्रवृद्धदोषस्येत्यादि । अपतर्पणं लङ्घनम् ॥ १३ ॥

लङ्घितस्य ततः पेयां विदध्यात् स्वल्पतण्डुलाम् ॥
रसयूषौ प्रदातव्यौ सुरभिस्नेहसंस्कृतौ ॥
तर्पणं पाचनं लेहान् सर्पींषि विविधानि च ॥ १४ ॥

लङ्घनादनन्तरं किं कुर्यादित्याह—लङ्घितस्येत्यादि विदध्यात् कुर्यात् । किं रक्तपित्ते पेयामेव विदध्यादुतान्यदपीत्याह—तर्पणमित्यादि । तर्पणमिति मृद्वीकामधुकादिसाधितजलेन सशर्करेणालोडिताः सघृतक्षौद्रा लाजशक्तवः । पाचनं ह्रीबेरचन्दनोशीरपर्पटमुस्तसाधितजलपानम् । लेहानिति वक्ष्यमाणान् मधुकशोभाञ्जनकादिपुष्पैः कृतान् सघृतक्षौद्रान् । विविधानि सर्पींषि वासाघृतादीनि । तत्राधोगे पेया हिता यदि मारुतो बली न स्यात्, मारुतश्चेद्बली भवति तदा मांसरस एव; ऊर्ध्वगे च तर्पणं हितम् । तथा च तन्त्रान्तरम्—"अधोवहे यवाग्वादि न चेत् स्यान्मारुतो बली । ऊर्ध्वगे तर्पणं शस्तं यथादोषमथापि वा"—इति । केचित् 'लङ्घितस्य ततो युक्त्या लघ्वन्नमवचारयेत्' इति पठन्ति, व्याख्यानयन्ति च—युक्त्या मात्रया प्रत्यनीकं चेत्यर्थः ॥ १४ ॥

द्राक्षामधुककाश्मर्यसितायुक्तं विरेचनम् ॥
यष्टीमधुकयुक्तं च सक्षौद्रं वमनं हितम् ॥ १५ ॥

पूर्वमुद्दिष्टं यद्वमनविरेचनं तयोर्द्रव्याण्याह—द्राक्षामधुककाश्मर्येत्यादि । द्राक्षादियुक्तं विरेचनद्रव्यकल्पोक्तं मृदु विरेचनं, यष्टीमधुकक्षौद्रयुक्तं वमनद्रव्यविकल्पोक्तं मृदु वमनं हितम् ॥ १५ ॥

पयांसि शीतानि रसाश्च जाङ्गलाः
सतीनयूषाश्च सशालिषष्टिकाः ॥
पटोलशेलूसुनिषण्णयूथिका-
वटातिमुक्ताङ्कुरसिन्दुवारजम् ॥ १६ ॥
हितं च शाकं घृतसंस्कृतं सदा
तथैव धात्रीफलदाडिमान्वितम् ॥
रसाश्च पारावतशल्लकूर्मजा-
स्तथा यवाग्वो विहिता घृतोत्तराः ॥ १७ ॥
सन्तानिकाश्चोत्पलवर्गसाधिते
क्षीरे प्रशस्ता मधुशर्करोत्तराः ॥
हिमाः प्रदेहा मधुरा गणाश्च ये
घृतानि पथ्यानि च रक्तपित्तिनाम् ॥ १८ ॥

वमनविरेचनद्रव्याण्यभिधाय भोजनद्रव्याणि प्रतिपादयति—पयांसीत्यादि । शीतानि उत्पलादिद्रव्यक्वथितशीतानि, तानि तु पित्तप्राये । जाङ्गलरसा एणादिलावादिकृताः, ते च वातानुबन्धे । सतीनयूषा वर्तुलकलाययूषाः, ते च कफानुगे रक्तपित्ते हिताः । पटोलेत्यादि । शेलुः दक्षिणापथजं शाकं, श्लेष्मान्तकमपरे । सुनिषण्णकः शिरवालिका, चतुष्पर्णीत्यपरे । अतिमुक्त आवन्तकः । अङ्कुराः कोमलपल्लवाः पटोलादीनाम् । सिन्दुवारः निर्गुण्डी । एतान्यपि शाकानि कफानुगे शस्तानीति । पटोलेत्यत्र केचित् जीवन्तीति पठन्ति । रसाश्चेत्यादि । जाङ्गलरसाभिधानेनैव पारावतरसस्यापि परिग्रहे तदभिधानं विशेषेण रक्तपित्ते हितत्वापादनार्थम् । धात्रीदाडिमे संस्कारार्थम् । यवाग्वः अभिहिताः । सन्तानिका घृतस्योपरितनः स्त्यानो

१ 'मेदःपूयास्थिकल्पं' इति पा० ।

भागः । घृतोत्तरा घृतप्रधानाः । हिमाः प्रदेहा इत्यादि । हिमाः प्रदेहाः शीता लेपाः; ते च न्यग्रोधादिप्रभृतिशीतलगणकृताः । मधुरा गणाः काकोल्यादयः । ते च पानादिना योज्याः । घृतानि मधुरगणसाधितानि तन्त्रान्तरसंवादात् । पथ्यानि हितानि ॥ १६–१८ ॥

मधूकशोभाञ्जनकोविदारजैः
प्रियङ्गुकायाः कुसुमैश्च चूर्णितैः ॥
भिषग्विदध्याच्चतुरः समाक्षिकान्
हिताय लेह्यानसृजः प्रशान्तये ॥ १९ ॥
लिह्याच्च दूर्वावटजांश्च पल्लवान्
मधुद्वितीयान् सितकर्णिकस्य च ॥
हितं च खर्जूरफलं समाक्षिकं
फलानि चान्यान्यपि तद्गुणान्यथ ॥ २० ॥

मधूकेत्यादि । मधूकादिपुष्पैरेकैकैश्चूर्णितैस्त्रयो लेहाः, प्रियङ्गुकायाः कुसुमैश्चतुर्थो लेहः । अपरानपि लेह्यानाह–लिह्यादित्यादि । दूर्वावटपल्लवान् मधुद्वितीयान् लिह्यादित्येको योगः । सितकर्णिकः श्वेतकर्णिकारः, तस्यापि पल्लवान् मधुद्वितीयान् लिह्यादिति द्वितीयो योगः । केचित् समुदितमेकं योगं मन्यन्ते; तन्नेच्छन्ति निबन्धकाराः, समानतन्त्रसंवादात् । 'दूर्वावटजांश्च पल्लवान्' इत्यत्रापरे 'दुग्धद्रुमपल्लवान्' इति पठित्वा वटादिपल्लवानिति व्याचक्षते । किं रक्तपित्ते एतदेव हितमुतान्यदपीत्याह—हितमित्यादि । समाक्षिकं समधु । अनुक्तसंग्रहायाह—फलानि चान्यान्यपीत्यादि । अन्यानि फलानि काश्मर्यादीनि । तद्गुणानि खर्जूरफलतुल्यगुणानि ॥ १९ ॥ २० ॥

रक्तातिसारप्रोक्तांश्च योगानत्रापि योजयेत् ॥

इदानीं रक्तपित्तेऽतिदेशेन चिकित्सामाह—रक्तातीसारप्रोक्तांश्चेत्यादि । रक्तातीसारप्रोक्तान् योगान् 'प्रियालमज्जिका' इत्यादीन् । अस्याग्रे **कार्तिककुण्डः** 'नीलोत्पलानां मधुना भस्म वाऽपि परिस्रुतम्' इत्यादियोगं पठति, स च **जेज्जटाचार्येण** 'सक्षौद्रमिन्दीवरभस्म' इत्यादिना अग्रे पठितः ॥—

शुद्धेक्षुकाण्डमापोथ्य नवे कुम्भे हिमाम्भसा ॥ २१ ॥
योजयित्वा क्षिपेद्रात्रावाकाशे सोत्पलं तु तत् ॥
प्रातः स्रुतं क्षौद्रयुतं पिबेच्छोणितपित्तवान् ॥ २२ ॥

शुद्धेक्षुकाण्डमापोथ्येत्यादि । शुद्धेक्षुकाण्डानि निर्वल्कलेक्षुकाण्डानि, आपोथ्य अवक्षुद्य । हिमाम्भसा योजयित्वेत्यादि शीतलजलेन योजयित्वा नवे घटे रात्रावाकाशे निरावरणस्थाने क्षिपेत् धारयेत्, ततश्च प्रातःकाले स्रुतं गालितं नीलोत्पलचूर्णमधुभ्यां युतं शोणितपित्तवान् नरः पिबेत् ॥ २१ ॥ २२ ॥

पिबेच्छीतकषायं वा जम्ब्वाम्रार्जुनसंभवम् ॥
उदुम्बरफलं पिष्ट्वा पिबेत्तद्रसमेव वा ॥ २३ ॥

पिबेदित्यादि । पिबेदित्यत्र मधुयुतमित्यनुक्तमपि संबध्यते, समानतन्त्रसंवादात् । उदुम्बरफलमित्यादि । उदुम्बरफलं पिष्ट्वा तद्रसं गृहीत्वा मधुयुतं पिबेत् ॥ २३ ॥

त्रपुषीमूलकल्कं वा सक्षौद्रं तण्डुलाम्बुना ॥
पिबेदक्षसमं कल्कं यष्टीमधुकमेव वा ॥ २४ ॥
चन्दनं मधुकं रोध्रमेवमेव समं पिबेत् ॥
करञ्जबीजमेवं वा सिताक्षौद्रयुतं पिबेत् ॥ २५ ॥
मज्जानमिङ्गुदस्यैवं पिबेन्मधुकसंयुतम् ॥
सुखोष्णं लवणं बीजं कारञ्जं दधिमस्तुना ॥ २६ ॥
पिबेद्वाऽपि त्र्यहं मर्त्यो रक्तपित्ताभिपीडितः ॥
रक्तपित्तहराः शस्ताः षडेते योगसत्तमाः ॥ २७ ॥

इदानीं रक्तपित्ते सिद्धतमान् षड्योगानाह—त्रपुसीमूलकल्कमित्यादि । सक्षौद्रं कर्षोन्मितमधुसहितं, तण्डुलाम्बुना कल्काच्चतुर्गुणेनेत्यर्थः । अक्षसमं कर्षप्रमाणं, एवमेवेति सक्षौद्रं तण्डुलाम्बुनेत्यर्थः । करञ्जबीजादियोगद्वयं कफानुबन्धे ऊर्ध्वगे शस्तम् । मज्जानमिङ्गुदस्येत्यादि सितामधुयुतमेव(क)मेव पिबेदित्यर्थः ॥ २४–२७ ॥

पथ्याश्चैवावपीडेषु घ्राणतः प्रस्रुतेऽसृजि ॥

अनन्तरोक्ताः षड्योगा घ्राणगे रक्तेऽवपीडनेऽपि योज्या इत्याह—पथ्या इत्यादि । पथ्या हिताः, अनन्तरोक्ताः त्रपुसीमूलकल्कमित्यादि षड्योगाः इति शेषः ॥—

अतिनिस्रुतरक्तो वा क्षौद्रयुक्तं पिबेदसृक् ॥
यकृद्वा भक्षयेदाजमामं पित्तसमायुतम् ॥ २८ ॥

असृगिति शरीरधातुसामान्यात् एणादीनामित्यर्थः । यकृत् कालखण्डम् ॥ २८ ॥

पलाशवृक्षस्वरसे विपक्वं
सर्पिः पिबेत् क्षौद्रयुतं सुशीतम् ॥
वनस्पतीनां स्वरसैः कृतं वा
सशर्करं क्षीरघृतं पिबेद्वा ॥ २९ ॥
द्राक्षामुशीराण्यथ पद्मकं सिता
पृथक्पलांशान्युदके समावपेत् ॥
स्थितं निशां तद्रुधिरामयं जयेत्
पीतं पयो वाऽम्बुसमं हिताशिनः ॥ ३० ॥
तुरङ्गवर्चःस्वरसं समाक्षिकं
पिबेत् सिताक्षौद्रयुतं वृषस्य वा ॥
लिहेत्तथा वास्तुकबीजचूर्णं
क्षौद्रान्वितं तण्डुलसाह्वयं वा ॥ ३१ ॥
लिह्याच्च लाजाञ्जनचूर्णमेक-
मेवं सिताक्षौद्रयुतां तुगाख्याम् ॥
द्राक्षां सितां तिक्तकरोहिणीं च
हिमाम्बुना वा मधुकेन युक्ताम् ॥ ३२ ॥
पथ्यामहिंस्रां रजनीं घृतं च
लिह्यात्तथा शोणितपित्तरोगी ॥

वनस्पतीनां वटादीनाम् । क्षीरघृतं क्षीरोत्थं घृतम् । पयो

१ 'स्रुतस्य' इति पा० । २ 'मधूकशोभाञ्जनकोविदारजैः कुसुमैस्त्रयो लेह्याः' इति पा० ।

वाऽम्बुसममिति दुग्धं जलं च तुल्यमित्यर्थः । केचिदेवं पठन्ति—'वासाकषायं सघितं पिबेद्वा तुरङ्गवर्चःस्वरसं समाक्षिकम्' इति । लिह्यात्तथा वास्तुकबीजचूर्णमित्यादि ।—वास्तुकबीजचूर्णं टङ्कवास्तुकबीजचूर्णं क्षौद्रान्वितं लिहेत् । तण्डुलसाह्वयं वेति तण्डुलीयं क्षौद्रान्वितं वा लिह्यादित्यर्थः । केचिदेवं पठन्ति—'सतण्डुलीयं मधुनाऽवलेहयेत् सितायुतं वास्तुकमूलमेव वा' इति । लिह्याच्चेत्यादि । लाजा भृष्टधान्यानि । अञ्जनं रसाञ्जनम् । एकं प्रधानं, एवं क्षौद्रेणेत्यर्थः । 'लाजाञ्जनचूर्णम्' इत्यत्र 'कालाञ्जनचूर्णम्' इति केचित् पठन्ति; तत्र कालाञ्जनं सौवीराञ्जनम् । सिताक्षौद्रयुतमित्यादि । तुगाख्या वंशरोचनानुकारि पार्थिवं द्रव्यं, अन्ये वंशरोचनामाहुः; तां च शर्कराक्षौद्रयुतां लिह्यात् । द्राक्षां सितामित्यादि । द्राक्षादीनि त्रीणि द्रव्याणि यष्टीमधुकेन युतानि शीतोदकेन वा लिह्यात् । पथ्यामित्यादि । पथ्या हरीतकी, रजनी हरिद्रा, एतानि हरीतकीप्रभृतीनि द्रव्याणि घृतेन सह लिह्यात् । अयं योगः कण्ठगे प्रसृते च रक्तपित्ते योज्यः । केचित् 'रजनीं घृतं च' इत्यत्र 'रजनीद्वयं च' इति पठन्ति, ते च शीतोदकेनैव लेह्यमिच्छन्ति; अयं पाठः समानतन्त्रविरोधादन्याय्यः ॥ २९-३२ ॥—

वासाकषायोत्पलमृत्प्रियङ्गु-
रोध्राञ्जनाम्भोरुहकेशराणि ॥ ३३ ॥
पीत्वा सिताक्षौद्रयुतानि जह्यात्
पित्तासृजो वेगमुदीर्णमाशु ॥

इदानीं वेगवति रक्तपित्ते सिद्धतमं योगमाह—वासाकषायोत्पलेत्यादि । उत्पलं नीलोत्पलं मृत् केदारमृत्तिका, अम्भोरुहकेशरं पद्मकेशरम् । कल्पनामाह—पीत्वा सिताक्षौद्रयुतानि जह्यादित्यादि । वासाकषायमुत्पलमृदादिचूर्णप्रक्षेपं सिताक्षौद्रयुतं पीत्वा नरो रक्तपित्तस्योदीर्णमुद्रिक्तं वेगमाशु जह्यात् शीघ्रं परित्यजेत् ॥ ३३ ॥—

गायत्रिजम्ब्वर्जुनकोविदार-
शिरीषरोध्राशनशाल्मलीनाम् ॥ ३४ ॥
पुष्पाणि शिग्रोश्च विचूर्ण्य लेहो
मध्वन्वितः शोणितपित्तरोगे ॥

गायत्रिजम्ब्वर्जुनकोविदारेत्यादि । गायत्री खदिरः, अर्जुनः ककुभः, कोविदारः काञ्चनारः, अशनो बीजकः । शिग्रुः शोभाञ्जनकः ॥ ३४ ॥—

सक्षौद्रमिन्दीवरभस्मवारि
करञ्जबीजं मधुसर्पिषी च[१] ॥ ३५ ॥
जम्ब्वर्जुनाम्रक्वथितं च तोयं
घ्नन्ति त्रयः पित्तमसृक् च योगाः ॥

इदानीं रक्तपित्ते त्रीन् योगानाह—सक्षौद्रमिन्दीवरभस्मेत्यादि । इन्दीवरभस्मवारि इन्दीवरक्षारोदकं सक्षौद्रं पिबेदित्येको योगः । करञ्जबीजं मधुसर्पिषा चेति करञ्जबीजं मधुसर्पिषा वा लिह्यादिति द्वितीयो योगः । जम्ब्वर्जुनाम्रक्वथितं तोयमित्यादि ।—जम्ब्वादिक्वथितं तोयं सक्षौद्रं पिबेदिति तृतीयो योगः । एषु मध्ये अन्त्यौ योगौ कण्ठान्तःस्थिते रक्तपित्ते योज्यौ[१] ॥ ३५ ॥—

मूलानि पुष्पाणि च मातुलुङ्ग्याः
पिष्ट्वा पिबेत्तण्डुलधावनेन ॥ ३६ ॥
घ्राणप्रवृत्ते जलमाशु देयं
सशर्करं नासिकया पयो वा ॥

मूलानीत्यादि । मातुलुङ्गो बीजपूरकः, 'मधुकर्कटी' इति अन्ये । घ्राणप्रवृत्ते जलमाशु देयमित्यादि । घ्राणप्रवृत्ते रक्तपित्ते सशर्करं पानीयं दुग्धं वा सशर्करं नासिकया देयम् । केचित् 'नासिकया' इत्यत्र 'नासिकयोः' इति पठन्ति ॥ ३६ ॥—

द्राक्षारसं क्षीरघृतं पिबेद्वा
सशर्करं चेक्षुरसं हिमं वा ॥ ३७ ॥

घ्राणप्रवृत्तेऽपरमपि नस्ययोगमाह—द्राक्षारसमित्यादि । द्राक्षारसं सशर्करं नासिकया पिबेत्, क्षीरघृतं क्षीरमथनोद्भूतं तद्वा सशर्करं नासिकया पिबेत्, इक्षुरसं हिमं वा तथैव पिबेत्, इत्थं त्रयो योगाः कल्पनीयाः । तथा च तन्त्रान्तरं—"द्राक्षारसस्य नस्यं नस्यं वा क्षीरसर्पिषः सपदि । इक्षो रसस्य नस्यं सशर्करं रक्तमुद्भवति"—इति ॥ ३७ ॥

शीतोपचारं मधुरं च कुर्या-
द्विशेषतः शोणितपित्तरोगे ॥

सर्वतन्त्रोक्तचिकित्सासंग्रहार्थमाह—शीतोपचारमित्यादि । शीतोपचारं दाहादिषु बाह्येऽपि कुर्यादिति ॥—

द्राक्षाघृतक्षौद्रसितायुतेन
विदारिगन्धादिविपाचितेन ॥ ३८ ॥
क्षीरेण चास्थापनमभ्यमुक्तं
हितं घृतं चाप्यनुवासनार्थम् ॥

रक्तपित्ते आस्थापनार्थं क्षीरमनुवासनार्थं च घृतमाह—द्राक्षेत्यादि । विदारिगन्धादिगणसाधितेन क्षीरेण घृतक्षौद्रसितायुतेनास्थापनं रक्तपित्तेऽभ्युक्तं, तथा चानुवासनार्थं घृतं हितम् । तच्च घृतं यष्टीमधुकसाधितं, अपक्वस्य स्नेहस्य व्यापत्करत्वात् । अन्ये विदारिगन्धादिसाधितक्षीरेण घृतपाकमिच्छन्ति ॥ ३८ ॥—

प्रियङ्गुरोध्राञ्जनगैरिकोत्पलैः
सुवर्णकालीयकरक्तचन्दनैः ॥ ३९ ॥
सिताश्वगन्धाम्बुदयष्टिकाह्वयै-
र्मृणालसौगन्धिकतुल्यपेषितैः ॥
निरूह्य चैनं पयसा समाक्षिकै-
र्घृतप्लुतैः शीतजलावसेचितम् ॥ ४० ॥
क्षीरौदनं भुक्तमथानुवासये-
द्धृतेन यष्टीमधुसाधितेन च ॥

१ 'मधु शर्करा च' इति पा० ।

१ 'आद्यौ योगौ कण्ठनेत्रस्थिते' इति पा० ।

अधोवहं शोणितमेष नाशये-
त्तथाऽतिसारं रुधिरस्य दुस्तरम् ॥ ४१ ॥
विरेकयोगे त्वति चैव शस्यते

अपरेऽपि रक्तपित्ते आस्थापनानुवासने आह—प्रियङ्गुरोध्राञ्जनगैरिकोत्पलैरित्यादि । अञ्जनं सौवीराञ्जनम् । गैरिकं सामान्यगैरिकम् । उत्पलं नीलोत्पलं; नागकेशरमपरे । सुवर्णं सुवर्णगैरिकम्, अन्तलोपात् । कालीयकं दारुहरिद्रानुकारि द्रव्यम् । अम्बुदो मुस्ता । यष्टिकाह्वयो मधुयष्टिका । मृणालं पद्मकेशरम् । सौगन्धिकं कुमुदभेदः । प्रियङ्ग्वादिभिः सौगन्धिकान्तैस्तुल्यैः पेषितैः कल्कीकृतैः समघृतैः पयसा सहैनं रक्तपित्तिनं निरूहयेत् । ततश्च शीतलजलावसेचितं क्षीरौदनं भुक्तं पुरुषं यष्टीमधुकसाधितेन घृतेनानुवासयेत् । अधोवहं शोणितमधोगं रक्तपित्तम् । एष आस्थापनानुवासनप्रयोगः । अतिसारं रुधिरस्येति रक्तातिसारमित्यर्थः । विरेकयोगे त्वतीति विरेकातियोगे ॥ ३९–४१ ॥—

वाम्यश्च रक्ते विजिते बलान्वितः ॥ ४२ ॥

वाम्यश्च रक्ते इत्यादि । निरूहनानुवासनाभ्यां विजिते रक्तपित्ते सति बलान्वितः पुरुषो वाम्यो वामनीयः, अधोमार्गप्रवृत्तिनिवारणार्थम् । अत्र **कार्तिककुण्डेन** बहूक्तं, तच ग्रन्थगौरवभयात् परिहृतम् ॥ ४२ ॥

एवंविधा उत्तरबस्तयश्च
मूत्राशयस्थे रुधिरे विधेयाः ॥

विशिष्टस्थानगे रक्तपित्ते विशिष्टचिकित्सामाह—एवंविधा उत्तरबस्तयश्चेत्यादि । एवंविधा अनन्तरोक्तास्थापनानुवासनतुल्याः । मूत्राशयस्थे बस्तिस्थे मूत्रस्रोतःप्रवृत्ते च ॥—

प्रवृत्तरक्तेषु च पायुजेषु
कुर्याद्विधानं खलु रक्तपैत्तम् ॥ ४३ ॥

अर्शसः अतिप्रवृत्तौ च रक्तपित्तचिकित्सितमतिदिशन्नाह—प्रवृत्तरक्तेष्वित्यादि । पायुजेषु अर्शःसु ॥ ४३ ॥

विधिश्चासृग्दरेऽप्येष स्त्रीणां कार्यो विजानता ॥
शस्त्रकर्मणि रक्तं च यस्यातीव प्रवर्तते ॥ ४४ ॥

विधिश्चासृग्दरेऽप्येष इत्यादि । एष विधिः अधोगरक्तपित्तघ्नो विधिः । विजानता वैद्येन असृग्दरे कार्यः । न केवलमसृग्दरे एव एष विधिः कार्यः किन्तु यस्य शस्त्रकर्मणि कृते अतिरक्तं प्रवर्तते तस्याप्येष एव विधिः कार्यः । केचिदत्रैवासृग्दरलक्षणं पठन्ति । तद्यथा—'दहेदधो वङ्क्षणदेशमस्याः श्रोणीं च पृष्ठं च तथैव वृक्कौ । असृग्दरं चापि करोति नार्या गर्भाशयार्तिं त्वचिरेण घोराम्'–इति । ये त्वत्र पठन्ति ते शुक्रशोणितशुद्धावसृग्दरलक्षणं न पठन्ति ॥ ४४ ॥

त्रयाणामपि दोषाणां शोणितेऽपि च सर्वशः ॥
लिङ्गान्यालोक्य कर्तव्यं चिकित्सितमनन्तरम् ॥४५॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे रक्तपित्तप्रतिषेधो नाम
( सप्तमोऽध्यायः, आदितः ) पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥

किं रक्तपित्तघ्नो विधिः रक्तपित्ताख्ये रोगेऽसृग्दरे शस्त्रकर्मण्यतिरक्तप्रवृत्तौ चाविशेषेणैव कार्य उत किंचिदपेक्ष्येत्याह—त्रयाणामपि दोषाणामित्यादि । त्रयाणामपि दोषाणां पृथग्द्वन्द्वसमस्तानां लिङ्गानि शोणितवर्णनीयोक्तानि शोणिते सर्वश आलोक्यानन्तरं चिकित्सितं कर्तव्यं, असृग्दरे वा शस्त्रकर्मणि रक्तातिप्रवृत्तौ रक्तपित्तघ्नो विधिः कार्य इत्यर्थः । अत्राधोवहस्य नाशनं यापनं वाऽभिप्रेतं, तेन सान्निपातिकस्याक्षीणमांसाग्नेर्याप्यत्वमभिप्रेतम् । अत्र **कार्तिककुण्ड** आपातनिकापूर्वं गर्भिणीत्यादिपाठं पठति, स चाभावान्न लिखितः ॥ ४५ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां
सुश्रुतव्याख्यायामुत्तरतन्त्रे कायचिकित्सायां
पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशत्तमोऽध्यायः ।

अथातो मूर्च्छाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अथात इत्यादि ॥ १ ॥ २ ॥

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः ॥
वेगाघातादभीघाताद्धीनसत्त्वस्य वा पुनः ॥ ३ ॥
करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च ॥
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥४॥
हृत्पीडा जृम्भणं ग्लानिः संज्ञानाशो बलस्य च ॥
सर्वासां पूर्वरूपाणि, यथास्वं ता विभावयेत्[1] ॥ ५ ॥

इदानीं दोषजमूर्च्छाया हेतुसंप्राप्ती आह—क्षीणस्येत्यादि । एवंभूतस्य पुरुषस्य वेगाघातादिभिर्हेतुभिरुग्रा दोषा यदा बाह्याभ्यन्तरेषु करणायतनेषु निविशन्ते तदा मानवा मूर्च्छन्तीति पिण्डार्थः । हीनसत्त्वस्य अल्पसत्त्वस्य । करणायतनेषु बुद्धीन्द्रियकर्मेन्द्रियमनोबुद्ध्यहङ्कारस्थानेषु । उग्रा अतिप्रवृद्धाः प्रसृताश्च । बाह्येष्वाभ्यन्तरेषु चेति बाह्यकरणायतनानि कर्मेन्द्रियाणि, आभ्यन्तरकरणायतनानि मनोबुद्ध्यहङ्कारस्थानानि । आभ्यन्तरकरणायतनस्य हृदयस्यैकत्वात् कथं बहुवचनं ? सत्यं, अन्तःसंज्ञावहनाडीनामप्यन्तःकरणायतनत्वेनाभिमतत्वात् । निविशन्ते अवतिष्ठन्ते । अपरे करणायतनशब्देनैव करणानि कथयन्ति, उपचारात् । तेन बाह्याभ्यन्तरेषु करणेषु यदा दोषा निविशन्ते तदा मानवा मूर्च्छन्तीत्यर्थः । अन्ये त्वन्यथा

---

१ 'कुक्षि' इति पा० ।

१ 'यथास्वमुपलक्षयेत्' इति पा० ।

व्याख्यानयन्ति—करणायतनेषु यदा दोषा निविशन्ते तथा बाह्याभ्यन्तरेषु करणेषु निविशन्ते तदा मानवा मूर्च्छन्तीति ॥ ३—५ ॥

**संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः ॥**
**तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥ ६ ॥**
**सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ॥**
**मोहो मूर्च्छेति तां प्राहुः**

यया प्रक्रियया मानवो मूर्च्छति तामाह–संज्ञेत्यादि । सुखदुःखव्यपोहकृत् सुखदुःखनाशकृत्, सुखदुःखनाशश्च संज्ञानाशात्; संज्ञानाशस्तु संज्ञावहनाडीपिधानात् । अन्ये सुखदुःखे सत्त्वरजसी, तयोर्व्यपोहो नाशस्तं करोतीति व्याख्यानयन्ति ॥ ६ ॥—

**षड्विधा सा प्रकीर्तिता ॥ ७ ॥**
**वातादिभिः शोणितेन मद्येन च विषेण च ॥**
**षट्स्वप्येतासु पित्तं हि प्रभुत्वेनावतिष्ठते ॥ ८ ॥**

संख्यामाह—षड्विधेत्यादि । ये तन्त्रान्तरीया वातादिभिः शोणितेन च चतुर्विधां मूर्च्छामिच्छन्ति तेषामयमाशयः—मद्यविषयोस्त्वनन्तरोक्तपाण्डुरोगवत् पृथगुपादानं, तेन स्वमते षड्विधैव मूर्च्छा । सर्वास्वपि मूर्च्छासु पित्तं कर्तृत्वेन प्रधानमित्याह—षट्स्वित्यादि । प्रभुत्वेनावतिष्ठते इतरदोषावाक्रम्य वर्तत इत्यर्थः । वेगाघातादिः हेतुः; करणायतनेष्वित्यादिः संप्राप्तिः ॥ ७ ॥ ८ ॥

**अपस्मारोक्तलिङ्गानि तासामुक्तानि तत्त्वतः ॥**

वातादिजानां तिसृणां लिङ्गमपस्मारोक्तलिङ्गातिदेशेनाह—अपस्मारेत्यादि । अपस्मारोक्तलिङ्गानि यथास्वं तासां जानीयादित्यर्थः । केचित् 'अपस्मारोक्तलिङ्गानि' इत्यत्र 'अपस्मारेण लिङ्गानि' इति पठित्वा व्याख्यानयन्ति—दन्तनखखादनाक्षिवैकृतलालास्रावादिरहितान्यपस्मारेण तुल्यानि लक्षणानि यथास्वमुपलक्षयेदित्यर्थः । तथा च तन्त्रान्तरं,—"सर्वाकृतिः सन्निपातादपस्मार इवागतः । स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः"—इति ॥—

**पृथिव्यम्भस्तमोरूपं रक्तगन्धश्च तन्मयः ॥ ९ ॥**
**तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः ॥**

वातजादीनां तिसृणां लिङ्गान्यतिदिश्य रक्तजायाः संप्राप्तिं लक्षणं चाह—पृथिवीत्यादि । पृथ्वी अम्भश्च द्वयमपि तमोरूपं तमोबहुलं; तथा चोक्तं पुरा–'तमोबहुला पृथिवी, सत्त्वतमोबहुला आपः' इति, रक्तगन्धश्च तन्मय इति पृथिव्यम्भःसमुद्भवः; पाञ्चभौतिकेऽपि रक्ते पृथिव्यम्भसोः प्राधान्यात् । मूर्च्छन्ति भुवि मानवा इत्येतेन गन्धस्य तमोबहुलत्वमुक्तम् । ननु, गन्धः पार्थिवस्तत्कथं पृथिव्यम्भःसमुद्भव इत्युच्यते? सत्यं, परस्परोपकार्यत्वात् । मूर्च्छन्ति भुवि मानवा इति ये मानवा पृथिवीगुणबहुलास्तामसा इत्यर्थः । ननु, यदि रक्तगन्धो मूर्च्छाजनकः, तर्हि किमिति सर्वेषामेव न मूर्च्छामुत्पादयति? सत्यं, ये हीनसत्त्वास्तेषां मूर्च्छामुत्पादयति न सर्वेषाम् । अपरे 'रक्तगन्धश्च तन्मय' इत्यन्यथा व्याचक्षते, तद्यथा—तन्मयः पृथिव्यम्भोमयः; अत्र यथासंभवं व्याख्यानं; तेन रक्तमम्भोमयं, द्रवत्वात्; गन्धश्च पृथिवीमयः, पार्थिवत्वाद्गन्धस्य; तेन तमोभूयिष्ठायाः पृथिव्याः सकाशाद्गन्धस्य जातत्वाद्गन्धोऽपि तमोबहुल एव, कारणानुरूपत्वात् कार्यस्य; शेषं समम् । अन्ये तु 'पृथिव्यम्भस्तमोरूपं रक्तं गन्धश्च तन्मय' इति पठन्ति; पृथिवी चाम्भश्च पृथिव्यम्भसी, तयोः संबन्धि यत्तमः, तद्रूपं तद्बहुलं तल्लक्षणं वा रक्तं, गन्धश्च तन्मय इति तमोमय इत्यर्थः; तमोबहुलपृथिव्युत्पन्नत्वाद्गन्धस्य । एतेन तमोभूयिष्ठपृथिव्यम्भउत्पन्नरक्तस्य धातुजनितत्वाद्गन्धस्य स्वयं तमोभूयिष्ठत्वाच्च रक्तगन्धो मानवैराघ्रातः सन् हृद्यवस्थितं तमो वर्धयन् मूर्च्छामापादयति, 'सर्वभावानां सामान्यं वृद्धिकारणम्' इत्युक्तत्वात् । ननु, तमोबहुलत्वाद्रक्तं मूर्च्छाजनकं तर्हि तमोभूयिष्ठे एते पृथिव्यम्भसी कुतो मूर्च्छां नोत्पादयतः? सत्यं, पृथिव्यम्भसी सात्म्यतया स्वरूपतश्च मूर्च्छां नोत्पादयतः । अन्ये तु पठन्ति—'पृथिव्यम्भस्तमोरूपं रक्तगन्धेन तु त्रयम्' इति; व्याख्यानयन्ति च—पृथिव्यम्भस्तमसां रूपं स्वलक्षणं यस्य रक्तस्य तत्पृथिव्यम्भस्तमोरूपं; रक्तगन्धेन कृत्वा तु पुनस्त्रयं सत्त्वरजस्तमसां गुणानां त्रितयं 'रक्ते ज्ञायते' इति वाक्यशेषः । ननु, गन्धेन कृत्वा कथं गुणानां त्रितयं रक्ते ज्ञायते इति चेत्? सत्यं, रक्ते गन्धो विशेो वर्तते, गन्धश्च गुणविशेषः, उक्तं च,–"तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः—" इति, ते च विशेषास्त्रिगुणाः; उक्तं च,–"सर्वे एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ति" इति । किन्त्वत्र तमोगुणस्याधिक्यं ज्ञेयम् । एतेनैतदुक्तं भवति—पृथिव्यम्भस्तमःस्वलक्षणस्य रक्तस्य गन्धेन त्रिगुणेन तमोगुणविशिष्टेन मानवा मूर्च्छन्ति ॥ ९ ॥—

**द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति ॥ १० ॥**

स्वमतं प्रदर्श्य परमतमाह—द्रव्यस्वभाव इत्येके इत्यादि ॥ १० ॥

**गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः ॥**
**त एव तस्माज्जायेत मोहस्ताभ्यां यथेरितः ॥ ११ ॥**

विषमद्योत्थे आह–गुणा इत्यादि । त एव गुणा रूक्षादयः । मोहो मूर्च्छा । ताभ्यां विषमद्याभ्याम् । यथेरितो यथाकथित इत्यर्थः । अथ विषमद्यविकारयोः सामान्येनैव मूर्च्छाप्रणयनात्

१ 'तासु षट्स्वपि' इति पा० । २ 'रक्तगन्धस्तदन्वयः' इति पा० । ३ 'तमोरूपमिति तमःस्वरूपम्' इति पा० । ४ 'रक्तगन्धस्तदन्वयः' इति पा० ।

१ 'अथाकाशपवनेत्यादौ अपां चतुर्गुणत्वेन दर्शितत्वात् कथं तदन्वयेनापि गन्धो व्यपदिश्यत इति चेत्? न, परस्परोपकारादित्युक्तेः । एवमपि भूतान्तरे पृथिवीनिमित्तत्वाद्गन्धस्येति व्याख्यानं 'कार्तिककुण्डात्' इति पा० । २ 'तीव्रतमत्वेन' इति पा० । ३ 'यथेरित इति स्वैः स्वैर्विकारैर्विषकल्पपानात्ययोर्यथाकथितैरित्यर्थः' इति पा० । ४ 'विषमद्याधिकारयोः' इति पा० ।

कथमत्र विशिष्टमभिधानम्? उच्यते—तत्र इतरलक्षणैः सह तद्ग्रहणार्थम्। ननु, यदि विषमद्ययोस्तुल्या गुणाः स्थिताः, तत् किमिति विषवन्मद्यं मारणात्मकं न स्यात्? सत्यं, मद्ये तेषां गुणानामनतितीव्रत्वेनावस्थानात्। यद्येवं तर्हि 'गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः' इति कथं न व्याहन्यते? सत्यं, तीव्रतरशब्दादग्रे तीव्रशब्दो मध्ये लुप्तो द्रष्टव्यः। तेन विषे तीव्रतरत्वेन ते गुणाः स्थिताः, मद्ये तीव्रत्वेनेत्यर्थः। तथा च तन्त्रान्तरम्,—"विषस्य ये गुणा दृष्टाः सन्निपातप्रकोपणाः। त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः॥ त एव तैस्तात्ताभ्यां[1] तु मोही स्यातां यथेरितौ" (च. चि. अ. २४)—इति ॥११॥

**स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः॥**

रुधिरजमूर्च्छालक्षणमाह—स्तब्धाङ्गदृष्टिस्त्वसृजेत्यादि। स्तब्धशब्दोऽङ्गदृष्टिभ्यां संबध्यते। गूढोच्छ्वासः अस्पष्टश्वासः॥—

**मद्येन विलपंश्छेते नष्टविभ्रान्तमानसः॥**
**गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत्॥१२॥**

मद्यजमूर्च्छालक्षणमाह—मद्येनेत्यादि। विलपन्निति विलापं कुर्वन्। नष्टविभ्रान्तमानस इति नष्टमानसः अपस्मरणः[2] विभ्रान्तमानसो विक्षिप्तचेताः। जरां पाकम्॥ १२॥

**वेपथुस्वप्नतृष्णाः स्युः स्तम्भश्च विषमूर्च्छिते॥**
**वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः॥१३॥**

विषजमूर्च्छालक्षणमाह—वेपथुस्वप्नतृष्णाः स्युरित्यादि। वेपथुः कम्पः। स्तम्भः स्तब्धता। वेदितव्यमित्यादि। मूलादिकन्दान्तस्य विषस्य यथास्वं यानि लक्षणानि तैः कृत्वा विषमूर्च्छितस्य पुंसो यथास्वं यथात्मीयं विषं ज्ञेयम्॥ १३॥

**सेकावगाहौ मणयः सहाराः**
**शीताः प्रदेहा व्यजनानिलाश्च॥**
**शीतानि पानानि च गन्धवन्ति**
**सर्वासु मूर्च्छास्वनिवारितानि॥१४॥**

अतः परं चिकित्सितमाह—सेकावगाहावित्यादि। मणयः सहारा इति मणयो मुक्तास्फटिकप्रभृतयः। ते च सहारा हारारोपिता हिता इत्यर्थः। व्यजनानिला व्यजनानां वायवः। शीताः प्रदेहाः चन्दनोत्पलप्रभृतिकृताः प्रलेपाः। शीतानि पानानि च गन्धवन्तीति यानि शीतानि गन्धवन्ति च पानानि तानीत्यर्थः। अनिवारितानि प्रशस्तानि॥ १४॥

**सिताप्रियालेक्षुरसप्लुतानि**
**द्राक्षामधूकस्वरसान्वितानि॥**
**खर्जूरकाश्मर्यरसैः शृतानि**
**पानानि सर्पींषि च जीवनानि॥१५॥**

तान्येव शीतानि गन्धवन्ति च पानान्याह—सिताप्रियालेक्षुरसप्लुतानीत्यादि। खर्जूरकाश्मर्यरसैः शृतानि सिताप्रियालादियुतानि पानानि पानकानि सर्वास्वनिवारितानि। न केवलं पानान्येवानिवारितानि सर्पींषि च जीवनानीति काकोल्यादिसिद्धानीत्यर्थः। केचित् पानानीत्यत्र सिद्धानीति पठन्ति, ते च घृतविशेषणं मन्यन्ते॥ १५॥

**सिद्धानि वर्गे मधुरे पयांसि**
**सदाडिमा जाङ्गलजा रसाश्च॥**
**तथा यवा लोहितशालयश्च**
**मूर्च्छासु पथ्याश्च सदा सतीनाः॥१६॥**

किमेतान्येव सर्वमूर्च्छासु हितान्युतान्यान्यपीत्याह—सिद्धानीत्यादि। मधुरे वर्गे काकोल्यादौ। पयांसि सर्वाण्यपि दुग्धानि, सर्वेषां क्षीराणां मूर्च्छाहरत्वात्। सदाडिमा दाडिमेन संस्कृताः, जाङ्गलजा रसाः। मूर्च्छासु ये भोजने हितास्तानाह—तथेत्यादि। पथ्या हिताः, 'भोजने' इति शेषः। सतीनो वर्तुलकलायः॥ १६॥

**भुजङ्गपुष्पं मरिचान्युशीरं**
**कोलस्य मध्यं च पिबेत् समानि॥**
**शीतेन तोयेन[1] बिसं मृणालं**
**क्षौद्रेण कृष्णां सितया च पथ्याम्॥१७॥**

भुजङ्गपुष्पमित्यादि। भुजङ्गपुष्पं नागकेशरम्। कोलस्य मध्यं बदरमज्जा। एतानि भुजङ्गपुष्पादीनि समानि तुल्यानि शीततोयेन सह पिबेत्। न केवलमेतान्येव शीततोयेन सह पिबेत् बिसं मृणालं चापि शीततोयेन पिबेत्; बिसं बिसेन्द्रकं, मृणालं पद्मनालम्। क्षौद्रेण कृष्णामिति मधुना सह पिप्पलीं पिबेदित्यर्थः; अन्ये लिहेदिति मन्यन्ते। सितया च पथ्यामिति हरीतकीं शर्करया सह पिबेदित्यर्थः॥ १७॥

**कुर्याच्च नासावदनावरोधं**
**क्षीरं पिबेद्वाऽप्यथ मानुषीणाम्॥**
**मूर्च्छां प्रसक्तां तु शिरोविरेकै-**
**र्जयेदभीक्ष्णं वमनैश्च तीक्ष्णैः[2]॥१८॥**

अतः परं किं कुर्यादित्याह—कुर्यादित्यादि। नासावक्त्रयोरवरोधेन व्याप्युद्यान्तैः प्रविष्टो मारुतो रुद्धानि स्रोतांसि विवृण्वन् मूर्च्छामपहन्ति; नारीक्षीरं चातिशीतलत्वात्। मूर्च्छामित्यादि। प्रसक्तां भूयो भूयोऽनुसङ्गिनीम्। शिरोविरेकैः नस्यैः। अभीक्ष्णं पुनः पुनः। यद्यपि सर्वमूर्च्छायां पित्तं प्रधानं, तीक्ष्णे नस्यवमने न युक्तेऽस्य, तथाऽपि संज्ञावहस्रोतोनिरोधशान्तिकरत्वाद् व्याधिप्रत्यनीकत्वाच्च हिते एव। केचित् 'तीक्ष्णैः' इत्यत्र 'पथ्यैः' इति पठन्ति; तत्र पित्तश्लेष्महरैरित्यर्थः॥ १८॥

**[3]हरीतकीक्वाथशृतं घृतं वा**
**धात्रीफलानां स्वरसैः कृतं वा॥**
**द्राक्षासितादाडिमलाजवन्ति**
**शीतानि नीलोत्पलपद्मवन्ति॥१९॥**

१ 'तस्य ताभ्यां' इति पा०। २ 'अपस्मरणयुक्तः' इति पा०।

१ 'सतीनतोयेन' इति पा०। २ 'अन्तः प्रवृद्धो' इति पा०। ३ 'हरीतकीक्वाथशृतं पिबेद्वा' इति पा०।

पिबेत् कषायाणि च गन्धवन्ति
पित्तज्वरं यानि शमं नयन्ति ॥

हरीतकीकाथशृतमित्यादि। हरीतकीकाथेन शृतं सिद्धं हरीतकीकाथशृतम्। धात्रीफलानाम् आमलकफलानां स्वरसैः। द्राक्षासितेत्यादि। यानि कषायाणि श्रीपर्ण्यादिकृतानि पित्तज्वरं शमं नयन्ति तानि द्राक्षासितादाडिमलाजवन्ति तत्प्रधानानि पिबेत्। नीलोत्पलपद्मवन्ति नीलोत्पलपद्मप्रधानानि। गन्धवन्ति गन्धद्रव्याढ्यानि। नीलोत्पलपद्मवन्तीत्यादिकं पित्तज्वरहरकषायविशेषणम् ॥ १९ ॥—

प्रभूतदोषस्तमसोऽतिरेकात्
संमूर्च्छितो नैव विबुध्यते यः ॥ २० ॥
संन्यस्तसंज्ञो भृशदुश्चिकित्स्यो
ज्ञेयस्तदा बुद्धिमता मनुष्यः ॥

इदानीं मूर्च्छाया अवस्थायां संज्ञान्तरमाह—प्रभूतदोष इत्यादि। यः प्रभूतदोषो मनुष्यः संमूर्च्छितः सन् तमसोऽतिरेकान्नावबुध्यते नावबोधं प्राप्नोति स दुश्चिकित्स्यो मतिमता वैद्येन संन्यस्तसंज्ञो ज्ञेय इति पिण्डार्थः। संन्यस्तसंज्ञ इति मृत्युमुखे वर्तमानत्वात् संन्यस्त इव संन्यस्तः ॥ २० ॥—

यथाऽऽमलोष्टं सलिले निषिक्तं
समुद्धरेदाश्वविलीनमेव ॥ २१ ॥
तद्वच्चिकित्सेत्त्वरया भिषक्त-
मस्वेदनं मृत्युवशं प्रयातम् ॥

इदानीं संन्यस्तस्य शीघ्रं प्रतीकाराय दृष्टान्तमाह—यथाऽऽमलोष्टमित्यादि। आमलोष्टम् आममृत्पिण्डम्। तं संन्यस्तसंज्ञम्। अस्वेदनं प्रस्वेदरहितम् ॥ २१ ॥—

तीक्ष्णाञ्जनाभ्यञ्जनधूमयोगै-
स्तथा नखाभ्यन्तरतोत्रपातैः ॥ २२ ॥
वादित्रगीतानुनयैरपूर्वै-
र्विघट्टनैर्गुप्तफलावघर्षैः ॥

कैश्चिकित्सेदित्याह—तीक्ष्णाञ्जनाभ्यञ्जनेत्यादि। तीक्ष्णशब्दोऽञ्जनादिभिः प्रत्येकं संबध्यते। तोत्राणि सूचिप्रकाराणि। वादित्रं वीणादि। अनुनयः सान्त्वनापूर्वकं वचनादि। विघट्टनैः विविधप्रकारेण चालनैः। गुप्तफलावघर्षैः कपिकच्छूफलावघर्षणैः। अन्ये गुप्तफलं वृषणं, तस्यावघर्षणैः पीडनैरित्यर्थः। केचिद्विघट्टनैरित्यत्र 'विस्मापनैः'[1] इति पठन्ति; तत्र आश्चर्यकारकैरित्यर्थः। एतैरुपचारैः उपाचरेत् आसंज्ञाप्राप्तेः ॥२२॥—

आभिः क्रियाभिश्च न-लब्धसंज्ञः
सानाहलालाश्वसनश्च वर्ज्यः ॥ २३ ॥

आभिः क्रियाभिरित्यादि। आभिः क्रियाभिः अनन्तरोक्ताभिस्तीक्ष्णाञ्जनादिभिः। सानाहलालाश्वसनश्च आनाहादियुक्तः; श्वसनः श्वास इत्यर्थः ॥ २३ ॥

१ 'शान्तिपूर्वकं' इति पा०।

प्रबुद्धसंज्ञं वमनानुलोम्यै-
स्तीक्ष्णैर्विशुद्धं लघुपथ्यभुक्तम् ॥
फलत्रिकैश्चित्रकनागराढ्यै-
स्तथाऽश्मजाताज्जतुनः प्रयोगैः ॥
सशर्करैर्मासमुपक्रमेत
विशेषतो जीर्णघृतं स पाय्यः ॥ २४ ॥

तीक्ष्णाञ्जनादिभिर्लब्धसंज्ञे संन्यासिनि पश्चात्कर्माह—प्रबुद्धेत्यादि। तीक्ष्णाञ्जनादिभिः प्रबुद्धसंज्ञं संन्यासिनं तीक्ष्णैर्वमनानुलोम्यैर्वमनविरेचनैर्विशुद्धं, अन्नसंसर्जनक्रमेण च लघुपथ्यभुक्तं, त्रिफलाचित्रकशुण्ठीभावितैः सशर्करैः शिलाजतुप्रयोगैः वज्रकवटककल्पनया कल्पितैर्मासं यावदुपक्रमेत, शेषदोषोपशमनार्थम्। जीर्णं घृतं दशाब्दिकं पाय्यः पाययितव्यः ॥ २४ ॥

यथास्वं च ज्वरघ्नानि कषायाण्युपयोजयेत् ॥
सर्वमूर्च्छापरीतानां विषजायां विषापहम् ॥ २५ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे मूर्च्छाप्रतिषेधो नाम (अष्टमोऽध्यायः, आदितः) षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥

यथास्वं च ज्वरघ्नानीति यथास्वं यथादोषं ज्वरेषु यानि कषायाण्युक्तानि तानि तद्दोषजमूर्च्छास्वपि[1] योज्यानि। विषापहमिति कल्पस्थानोक्तं विषमोहशमनं नस्याञ्जनादिकम् ॥ २५ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशत्तमोऽध्यायः।

अथातः पानात्ययप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मूर्च्छाप्रतिषेधानन्तरं पित्तप्रधानसाम्यात् असंवित्तिजनकसाम्याच्च पानात्ययप्रतिषेधारम्भो युक्त इत्यत आह—अथात इत्यादि। पानात्यय इत्यत्र आदिशब्दो लुप्तो ज्ञेयः, तेन परमदादीनां ग्रहणम् ॥ १ ॥ २ ॥

मद्यमुष्णं तथा तीक्ष्णं सूक्ष्मं विशदमेव च ॥
रूक्षमाशुकरं चैव व्यवायि च विकाशि च ॥ ३ ॥

तत्रादौ मद्यगुणप्रणयनं, एवंगुणमपि मद्यं मिथ्योपयुक्तं पानात्ययादिकं करोतीति प्रतिपादनार्थम्[2]। मद्यमित्यादि। आशुकरं शीघ्रकारि। व्यवायि सर्वं देहं व्याप्य पश्चात् पाकं याति। विकाशि सन्धिबन्धविमोचकम्। यद्यपि सूत्रस्थाने मद्यगुणा उक्तास्तथाऽप्यधिकरुग्यापन्नार्थमत्राप्युक्ताः ॥ ३ ॥

१ 'सर्वदोषजमूर्च्छास्वपि' इति पा०। २ 'इदानीं पूर्वं मद्यगुणानाह–' इति पा०। ३ 'मद्यगुणप्रतिपादनं' इति पा०।

**औष्ण्याच्छीतोपचारं तत्तैक्ष्ण्याद्धन्ति मनोगतिम् ॥**
**विशत्यवयवान् सौक्ष्म्याद्वैशद्यात्कफशुक्रनुत् ॥ ४ ॥**
**मारुतं कोपयेद्रौक्ष्यादाशुत्वाच्चाशुकर्मकृत् ॥**
**हर्षदं च व्यवायित्वाद्विकाशित्वाद्विसर्पति ॥ ५ ॥**

मद्यगुणानभिधाय कर्माण्याह—औष्ण्यादित्यादि । 'औष्ण्याच्छीतोपचारम्' इत्यनेन पित्तकोपित्वं सूचितम् । मनोगतिं बाह्याध्यात्मिकां करणप्राप्तिम् । अवयवान् हृदयौजःप्रभृतीन् । हर्षदं मनोहर्षकरं; न तु पुंस्त्वदं, शुक्रहरत्वात् ॥ ४ ॥ ५ ॥

**तदम्लं रसतः प्रोक्तं लघु रोचनदीपनम् ॥**
**केचिल्लवणवर्ज्यांस्तु रसानत्रादिशन्ति हि ॥ ६ ॥**

मद्यस्य कर्माभिधाय रसमाह—तदम्लं रसत इत्यादि । तत् मद्यम् । अम्लम् अम्लरसोत्कटं, तेन इतरेऽपि पञ्चरसा अनुरसत्वेन मद्ये बोद्धव्याः । तथा चोक्तम्,—"मद्यस्य षड्रसत्वेऽपि व्यक्तोऽम्लो रस उच्यते—" इति । एकीयमतमाह—केचिल्लवणवर्ज्यानित्यादि ॥ ६ ॥

**स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ॥**
**भवेदायुःप्रकर्षाय बलायोपचयाय च ॥ ७ ॥**

एवंगुणमपि मद्यं यथा सेव्यमानं गुणाय भवति तथाऽऽह—स्निग्धैस्तदन्नैरित्यादि । स्निग्धैरित्युपलक्षणं; तेन इतरेऽपि मद्यविपरीतगुणाः शीतादयो ज्ञेयाः । तत् मद्यम् । बलाय ओजसे, उपचयाय च मांसोपचयाय ॥ ७ ॥

**काम्यता मनसस्तुष्टिर्धैर्यं तेजोऽतिविक्रमः ॥**
**विधिवत् सेव्यमाने तु मद्ये सन्निहिता गुणाः ८ ॥**

अनन्तरोक्तविधिना सेव्यमानेन मद्येन काम्यतादयोऽपि गुणा भवन्तीति दर्शयन्नाह—काम्यतेत्यादि । काम्यता कमनीयत्वम् । तेजः प्रभा । सन्निहिताः सम्यगवस्थिताः ॥ ८ ॥

**तदेवानन्नमज्ञेन सेव्यमानममात्रया ॥**
**कायाग्निना ह्यग्निसमं समेत्य कुरुते मदम् ॥ ९ ॥**

विधिरहितं सेव्यमानं मद्यं यत् करोति तदाह—तदेवानन्नमित्यादि । तदेव मद्यम्, अग्निसमं वह्नितुल्यम्, अज्ञेन उक्तमद्यपानविधानानभिज्ञेन, अनन्नम् अन्नरहितम् अतिमात्रया च सेव्यमानं, कायाग्निना जठरानलेन, समेत्य मिलित्वा, मदं कुरुते इति पिण्डार्थः ॥ ९ ॥

**मदेन करणानां तु भावान्यत्वे कृते सति ॥**
**निगूढमपि भावं स्वं प्रकाशीकुरुतेऽवशः ॥ १० ॥**

मदेनावशः पुरुषो यत् करोति तदाह—मदेनेत्यादि । करणानां मनोबुद्धीन्द्रियाणां, भावान्यत्वे स्वरूपान्यथात्वे कृते सति, निगूढमपि संवृतमपि, भावम् अभिप्रायं, स्वम् आत्मीयं प्रकाशीकुरुते प्रकटीकुरुते, अवशो मदपरवश इति पिण्डार्थः ॥ १० ॥

**त्र्यवस्थश्च मदो ज्ञेयः पूर्वो मध्योऽथ पश्चिमः ॥**

अथ कतिप्रकारो मद इत्याह—त्र्यवस्थश्चेत्यादि । त्र्यवस्थः त्रिप्रकारः । ते च त्रयः प्रकाराः पूर्वादयः ॥—

**पूर्वे वीर्यरतिप्रीतिहर्षभाष्यादिवर्धनम् ॥ ११ ॥**

पूर्वमदलक्षणमाह—पूर्वे इत्यादि । पूर्वे प्रथमे मदे, वीर्यम् उत्साहलक्षणं, रतिः हर्षः, प्रीतिः तृप्तिः, हर्षः तुष्टिः; आदिशब्दात् हास्यादयः ॥ ११ ॥

**प्रलापो मध्यमे मोहो युक्तायुक्तक्रियास्तथा ॥**

मध्यमदलक्षणमाह—प्रलाप इत्यादि । युक्तायुक्तक्रिया इति कदाचिद्युक्ताः कदाचिद्युक्ताः क्रिया इत्यर्थः ॥—

**विसंज्ञः पश्चिमे शेते नष्टकर्मक्रियागुणः ॥ १२ ॥**

पश्चिममदलक्षणमाह—विसंज्ञ इत्यादि । पश्चिमे पश्चिममदे । नष्टकर्मक्रियागुण इति नष्टानि कर्माणि क्रियागुणाः क्रियाफलानि च यस्य स तथा; अत्र गुणशब्दः फले वर्तते । केचित्, 'बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारुचिवृद्धिहेतुः । संपाठगीतस्वरवर्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि ॥ अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः । आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन ॥ गच्छेदगम्यां न गुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्टसंज्ञः । ब्रूयाच्च गुह्यानि हृदिस्थितानि मत्तो मदेन प्रवरेण मर्त्यः' इति पठन्ति; व्याख्यानयन्ति च—अव्यक्तबुद्धिस्मृतिवागिति अस्पष्टबुद्धिस्मरणवचनः; विचेष्टो विगतकायपरिस्पन्दः, सोन्मत्तलीलाकृतिरिति सह उन्मत्तलीलाकृतिभ्यां वर्तते इति तथा उन्मत्तक्रीडाकार इत्यर्थः । अयं पाठः पूर्वो वा पठनीयः, न तु पाठद्वयं पठनीयम् ॥ १२ ॥

**श्लैष्मिकानल्पपित्तांश्च स्निग्धान्मांसोपसेविनः ॥**
**पानं न बाधतेऽत्यर्थं विपरीतांस्तु बाधते ॥ १३ ॥**

इदानीं पुरुषविशेषेण सेव्यमानं मद्यं नातिबाधां कुरुते इत्याह—श्लैष्मिकानल्पपित्तांश्चेत्यादि । विपरीतान् पित्ताधिकरूक्षातिमात्रसेविनः ॥ १३ ॥

**निर्भक्तमेकान्तत एव मद्यं**
**निषेव्यमाणं मनुजेन नित्यम् ॥**
**उत्पादयेत् कष्टतमान् विकारा-**
**नापादयेच्चापि शरीरभेदम् ॥ १४ ॥**

निर्भक्तमेकान्तत एव मद्यमित्यादि । निर्भक्तम् आहाररहितम् । शरीरभेदं देहनाशम् । यद्यप्ययमर्थस्तदेवानन्नमित्यादिनैवोक्तः तथाऽपि निर्भक्तमिति यदत्र पुनरुक्तं तन्निर्भक्तपानस्यातिगर्हितत्वख्यापनार्थम् ॥ १४ ॥

**क्रुद्धेन भीतेन पिपासितेन**
**शोकाभितप्तेन बुभुक्षितेन ॥**
**व्यायामभाराध्वपरिक्षतेन**
**वेगावरोधाभिहतेन चापि ॥ १५ ॥**
**अत्यम्लभक्ष्यावततोदरेण**
**साजीर्णभुक्तेन तथाऽबलेन ॥**

---

१ 'आशुकारि तत्' इति पा० ।

१ 'हर्षः' इति पा० । २ 'मांसोपसेविनः' इति पा० ।

उष्णाभितप्तेन च सेव्यमानं
करोति मद्यं विविधान् विकारान् ॥ १६ ॥

इदानीं क्रुद्धादिभिः सेव्यमानं मद्यं विकारान् जनयतीति प्रतिपादयितुमाह—क्रुद्धेनेत्यादि । व्यायामभाराध्वपरिक्षतेनेति व्यायामादिभिः परिखिन्नेनेत्यर्थः । अभिहतेन पीडितेन । अत्यम्लभक्ष्यावततोदरेण अत्यम्लभक्षणावृतजठरेण ॥ १५ ॥ १६ ॥

पानात्ययं परमदं पानाजीर्णमथापि वा ॥
पानविभ्रममुग्रं च तेषां वक्ष्यामि लक्षणम् ॥ १७ ॥

के ते विविधा विकारास्तानाह—पानात्ययमित्यादि ॥ १७ ॥

स्तम्भाङ्गमर्दहृदयग्रहतोदकम्पाः
पानात्ययेऽनिलकृते शिरसो रुजश्च ॥
स्वेदप्रलापमुखशोषणदाहमूर्च्छाः
पित्तात्मके वदनलोचनपीतता च ॥ १८ ॥
श्लेष्मात्मके वमथुशीतकफप्रसेकाः
सर्वात्मके भवति सर्वविकारसंपत् ॥

इदानीं पानात्ययस्य वातादिभेदेन लक्षणमाह—स्तम्भेत्यादि । स्तम्भः स्तब्धता ॥ १८ ॥—

ऊष्माणमङ्गगुरुतां विरसाननत्वं
श्लेष्माधिकत्वमरुचिं मलमूत्रसङ्गम् ॥ १९ ॥
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा-
स्तृष्णां रुजां शिरसि सन्धिषु चापि भेदम् ॥

परमदलक्षणमाह—ऊष्माणमित्यादि । विरसाननत्वं विरसमुखत्वम् । श्लेष्माधिकत्वं कफोत्कर्षत्वम् । परस्य तु मदस्य परमदस्येत्यर्थः । भेदमिति भेद इव भेदः । परमदादीनां त्रयाणां दोषत्रयजनितत्वात् पृथग्दोषलिङ्गं नोक्तम् ॥ १९ ॥—

आध्मानमुद्गिरणमम्लरसो विदाहो-
ऽजीर्णस्य पानजनितस्य वदन्ति लिङ्गम् ॥२०॥
ज्ञेयानि तत्र भिषजा सुविनिश्चितानि
पित्तप्रकोपजनितानि च कारणानि ॥

पानाजीर्णलक्षणमाह—आध्मानमित्यादि । उद्गिरणं छर्दिः । अजीर्णस्य पानजनितस्य पानाजीर्णस्य । कारणानि लक्षणानि, कारणस्यापि व्याधिलक्षणत्वात् ॥ २० ॥—

हृद्गात्रतोदवमथुज्वरकण्ठधूम-
मूर्च्छाकफस्रवणमूर्धरुजो विदाहः ॥ २१ ॥
द्वेषः सुरान्नविकृतेषु च तेषु तेषु
तं पानविभ्रममुशन्त्यखिलेन धीराः ॥

पानविभ्रमलक्षणमाह—हृदित्यादि । वमथुः छर्दिः, कण्ठधूमः कण्ठे धूमोद्वमनमिवें, मूर्धरुजा शिरःपीडा ॥ २१ ॥—

हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमति(पि)पानहतं विजह्यात् ॥२२॥
जिह्वौष्ठदन्तमसितं त्वथवाऽपि नीलं
पीते च यस्य नयने रुधिरप्रभे च ॥

इदानीमसाध्यलक्षणमाह—हीनोत्तरौष्ठमित्यादि । हीनोत्तरौष्ठः स्वभावौष्ठादल्पौष्ठः । अमन्ददाहं तीव्रदाहम् । कदाचिदतिशीतं कदाचित्तीव्रदाहम् । पानहतं पानपीडितम् । विजह्यात् त्यजेत् । असितं कृष्णम् । पीते पीतवर्णे ॥ २२ ॥—

हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं भजन्ते ॥ २३ ॥

इदानीमुपद्रवानाह—हिक्काज्वरावित्यादि । वमथुः छर्दिः, वेपथुः कम्पः ॥ २३ ॥

तेषां निवारणमिदं हि मयोच्यमानं
व्यक्ताभिधानमखिलेन विधिं निबोध ॥

तेषां निवारणमित्यादि । तेषां पानात्ययादीनाम् ॥—

मद्यं तु चुक्रमरिचार्द्रकदीप्यकुष्ठ-
सौवर्चलायुतमलं पवनस्य शान्त्यै ॥ २४ ॥
पृथ्वीकदीप्यकमहौषधहिङ्गुभिर्वा
सौवर्चलेन च युतं वितरेत् सुखाय ॥

तमेव विधिमाह—मद्यमित्यादि । दीप्यकः अजमोदा, यवानीत्यपरे । सौवर्चलायुतम् ईषत्सौवर्चलयुक्तम् । अलं समर्थम् । पवनस्य वातजमदात्ययस्य । वितरेत् दद्यात् ॥ २४ ॥—

आम्रातकाम्रफलदाडिममातुलुङ्गैः
कुर्याच्छुभान्यपि च षाडवपानकानि ॥ २५ ॥
सेवेत वा फलरसोपहितान् रसादी-
नानूपवर्गपिशितान्यपि गन्धवन्ति ॥

किं मदात्यये मद्यमेव सेव्यमुतान्यदपीत्याह—आम्रातकाम्रेत्यादि । दाडिममत्र अम्लमेव । षाडवो यूषविशेषः । आम्रातकादिभिः क्वथितैरिक्षुविकारयुतैः षाडवः कार्यः । तथा च तन्त्रान्तरे षाडवकल्पना,—"युतमिक्षुविकारेण क्वथितं चूतजं फलम् । घृतशुण्ठीतिलयुतं विज्ञेयो घनषाडवः"—इति । फलरसोपहितान् मातुलुङ्गरसयुक्तान् । रसादीन् मांसरसयूषादीन् । आनूपवर्गपिशितानि कूलचरादिवर्गमांसानि । गन्धवन्तीति प्रभूतहिङ्गुजीरकादियुतानि ॥ २५ ॥—

पित्तात्मके मधुरवर्गकषायमिश्रं
मद्यं हितं समधुशर्करमिष्टगन्धम् ॥ २६ ॥

पित्तजमदात्ययचिकित्सामाह—पित्तात्मके मधुरवर्गकषायमिश्रमित्यादि । मधुरवर्गो गुडूचीवर्जितः काकोल्यादिः, तन्त्रान्तरसंवादात् । इष्टगन्धम् एलात्वक्पत्रकाद्यैः सुरभीकृतम् ॥ २६ ॥

पीत्वा च मद्यमपि चेक्षुरसप्रगाढं
निःशेषतः क्षणमवस्थितमुल्लिखेच्च ॥
लावैणतित्तिरिरसांश्च पिबेदनम्लान्
मौद्गान् सुखाय सघृतान् ससितांश्च यूषान् ॥

पित्तात्मके मदात्यये वमनमाह—पीत्वेत्यादि । उल्लिखेत्

१ 'कफोत्कट्यं' इति पा० । २ 'धूमोद्वहनमिव' इति 'धूमोद्गमनमिव' इति च पा० ।

१ 'दीप्यकाढ्यं' इति पा० ।

वमेत् । यद्यपि पित्ते वमनं न कार्यं तथाऽपि पित्तस्य कफस्थानगतत्वाद्वमनं हितमेव, व्याधिप्रत्यनीकत्वाद्वा । किं पित्तात्मके एतदेव कार्यमुतान्यदपीत्याह—लावैणतित्तिरिरसानित्यादि । केचित् 'मौद्गान् सुखाय सघृतान् ससितांश्च यूषान्' इत्यत्र 'मौद्गान् सशर्करघृतान् स हिताय यूषान्' इति पठन्ति; स इति पित्तपानात्ययीति च व्याख्यानयन्ति ॥ २७ ॥

पानात्यये कफकृते कफमुल्लिखेच्च
मद्येन बिम्बिविदुलोदकसंयुतेन ॥
सेवेत तिक्तकटुकांश्च रसानुदारान्
यूषांश्च तिक्तकटुकोपहितान् हिताय ॥ २८ ॥

कफजमदात्ययचिकित्सामाह—पानात्यये कफकृते इत्यादि । बिम्बी ओष्ठोपमफला, विदुलो वेतसः । कफमदात्ययेऽपरमप्यौषधमाह—सेवेतेत्यादि । तिक्तकटुकान् तिक्तकटुकद्रव्यसंस्कृतान् । रसान् मांसरसान्; उदारान् जाङ्गलजान्, मेदस्कानित्यर्थः । यूषान् मुद्गादियूषान् । तिक्तानि दुरालभादीनि, कटुकानि पिप्पल्यादीनि, उपहितान् संस्कृतान् ॥ २८ ॥

पथ्यं यवान्नविकृतानि च जाङ्गलानि
श्लेष्मघ्नमन्यदपि यच्च निरत्ययं स्यात् ॥

श्लेष्मजपानात्ययेऽपरमपि यद्धितं तदाह—पथ्यमित्यादि । पथ्यं हितम् । यवान्नविकृतानि यवान्नानि विविधप्रकारैः कृतानीत्यर्थः । अत्र अन्नशब्दः पेयलेह्यव्यवच्छेदकः । जाङ्गलानि जाङ्गलमांसानि । निरत्ययं निर्दोषम् ॥—

कुर्याच्च सर्वमथ सर्वभवे विधानं
द्वन्द्वोद्भवे द्वयमवेक्ष्य यथाप्रधानम् ॥ २९ ॥

सन्निपातजद्वन्द्वजमदात्ययचिकित्सामाह—कुर्यादित्यादि । सर्वं प्रत्येकदोषजपानात्ययचिकित्सितम् । सर्वभवे संनिपातोद्भवे । द्वन्द्वभवे द्वन्द्वजे । यथाप्रधानं योगप्रधानमित्यर्थः; एतेन समसन्निपाते सर्वप्रधानं कार्यम्, एकतमाधिक्ये च तत्प्रधानमित्यर्थः; एवं द्वन्द्वजेऽपि ॥ २९ ॥

सामान्यमन्यदपि यच्च समग्रमग्र्यं
वक्ष्यामि यच्च मनसो मदकृत् सुखं च ॥

सामान्यमन्यदपीत्यादि । अन्यदपि यत् सामान्यं मनसो हर्षकृत् वक्ष्यामि तत् समग्रमपि सर्वेषामग्र्यं श्रेष्ठं सुखं च, सुखहेतुत्वादित्यर्थः ॥—

त्वङ्नागपुष्पमगधैलमधूकधान्यैः
श्लक्ष्णैरजाजिमरिचैश्च कृतं समांशैः ॥ ३० ॥
पानं कपित्थरसवारिपरूषकाढ्यं
पानात्ययेषु विधिवत्स्रुतमम्बरान्ते ॥
ह्रीवेरपद्मपरिपेलवसंप्रयुक्तैः
पुष्पैर्विलिप्य करवीरजलोद्भवैश्च ॥ ३१ ॥
पिष्टैः सपद्मकयुतैरपि सारिवाद्यैः
सेकं जलैश्च वितरेदमलैः सुशीतैः ॥
त्वक्पत्रचोचमरिचैलभुजङ्गपुष्प-
श्लेष्मातकप्रसववल्कगुडैरुपेतम् ॥ ३२ ॥
द्राक्षायुतं हृतमलं मदिरामयार्तै-
स्तत्पानकं शुचि सुगन्धि नरैर्निषेव्यम् ॥
पिष्ट्वा पिबेच्च मधुकं कटुरोहिणीं च
द्राक्षां च मूलमसकृत् त्रपुषीभवं यत् ॥ ३३ ॥
कार्पासिनीमथ[1] च नागबलां च तुल्यां
पीत्वा सुखी भवति साधु सुवर्चलां च ॥

पानात्ययचिकित्सामाह—त्वगित्यादि । नागपुष्पं नागकेशरम्, एला सूक्ष्मैला, अजाजी उत्तरापथे प्रसिद्धो जीरकविशेषः । समांशैः तुल्यभागैः । पानं पानकम् । कपित्थरसः कपित्थस्वरसः । स्रुतं गालितम् । अम्बरान्ते वस्त्रान्ते । ह्रीवेरेत्यादि । ह्रीवेरादियुक्तैः करवीरजलोद्भवैः पुष्पैः पिष्टैर्विलिप्य पद्मकयुतैः सारिवादिभिश्च प्रलिप्य, अमलैः सुशीतैश्च जलैः सेकं वितरेत् दद्यादिति पिण्डार्थः । ह्रीवेरः वालकम् । पद्मकं पद्मकाष्ठं, जलोद्भवपुष्पत्वेन पद्मस्य परिग्रहात् । कार्तिककुण्डस्तु 'सपद्मकयुतैः' इत्यनेन पद्मकसहितप्रियङ्ग्वाद्यभिधाय तेन युक्तैः करवीरादिपुष्पैर्ह्रीवेरादियुक्तैरिति व्याख्यानयति, पद्मकं जलजं मन्यते । परिपेलवो वन्यकः । जलोद्भवैः नीलोत्पलप्रभृतिभिः । सपद्मकयुतैरपि सारिवाद्यैरिति सपद्मकः पद्मकसहितः प्रियङ्ग्वादिः, तेन युतैः सारिवादिभिरित्यर्थः । त्वगित्यादि ।—त्वक् वनवासिकात्वक् । श्लेष्मातकप्रसवं बहुवारपुष्पम् । हृतमलं वस्त्रगालितम् । मदिरामयार्तैः पानात्ययपीडितैः । सुगन्धि शोभनगन्धि । केचित् त्वक्पत्रशब्देन त्वक्पत्रिकामाहुः । पिष्ट्वेत्यादि । असकृदिति साध्विति च पदं पिष्ट्वेत्यत्र संबन्धनीयम् । मधुकादिस्त्रपुसीमूलान्त एको योगः । कार्पासिनीमित्यादिः साधुसुवर्चलां चेत्यन्तो द्वितीयः । कार्पासिनी वनकार्पासिनी । सुवर्चला सूर्यभक्ता । कार्पासिनीमथ चेत्यत्र कार्पासमेवमथेति केचित् पठन्ति, कार्पासं कार्पासीमूलं, एवमसकृत् पिष्ट्वेति च व्याख्यानयन्ति ॥ ३०-३३ ॥—

काश्मर्यदारुविडदाडिमपिप्पलीषु
द्राक्षान्वितासु कृतमम्बुनि पानकं यत् ॥ ३४ ॥
तद्बीजपूरकरसायुतमाशु पीतं
शान्तिं परां परमदे त्वचिरात् करोति ॥

परमदे चिकित्सामाह—काश्मर्येत्यादि । काश्मर्यं गम्भारीफलं, कृतं संस्कृतं, अम्बुनि पानीये ॥ ३४ ॥—

द्राक्षासितामधुकजीरकधान्यकृष्णा-
स्वेवं कृतं त्रिवृतया च पिबेत्तथैव ॥ ३५ ॥
सौवर्चलायुतमुदाररसं फलाम्लं
भार्गीश्रृतेन च जलेन हितोऽवसेकः ॥ ३६ ॥

परमदे पानकान्तरमाह—द्राक्षेत्यादि । द्राक्षादिषु द्रव्येषु एवं बीजपूरकरससंस्कारेण कृतं पानकं त्रिवृतया त्रिजटया च कृतं पानकं पिबेत् । तथैव सौवर्चलायुतमित्यादि ।—उदाररसं जाङ्गलमांसरसं, सौवर्चलायुतम् ईषत्सौवर्चलायुतं, दाडिमाद्यम्लफलेनाम्लं तथैव पिबेदित्यर्थः । अवसेकः परिषेकः ॥ ३५ ॥ ३६ ॥

[1] 'कार्पासमूलमथ' इति पा० ।

इक्ष्वाकुधामार्गववृक्षकाणि
काकाह्वयोदुम्बरिकाश्च दुग्धे ॥
विपाच्य तस्याञ्जलिना वमेद्धि
मद्यं पिबेच्चाह्नि गते त्वजीर्णे ॥ ३७ ॥

पानाजीर्णचिकित्सामाह—इक्ष्वाकित्यादि । इक्ष्वाकादीनि द्रव्याणि क्षीरपाकविधानेन दुग्धे विपाच्य तस्य कुडवेनाजीर्णे पानाजीर्णे वमेत, ततश्च अह्नि दिवसे गते अतीते सति मद्यं पिबेत् अग्निदीपनार्थम् । इक्ष्वाकुः तिक्तालाबूः । धामार्गवः पीतघोषः । वृक्षकः कुटजफलम् । काकाह्वया उदुम्बरिकागो(का)ष्ठोदुम्बरिका । अन्ये गते त्वजीर्णे अपगते पानाजीर्णे इति व्याख्यानयन्ति ॥ ३७ ॥

त्वक्पिप्पलीभुजगपुष्पविडैरुपेतं
सेवेत हिङ्गुमरिचैलयुतं फलाम्लम् ॥
उष्णाम्बुसैन्धवयुतास्त्वथवा विडत्वक्-
चव्यैलहिङ्गुमगधाफलमूलशुण्ठीः ॥ ३८ ॥
हृद्यैः खडैरपि च भोजनमत्र शस्तं

किंमयं मद्यं पानाजीर्णे पिबेदित्याह—त्वगित्यादि । त्वक्पिप्पलीप्रभृतियुतं मद्यं सेवेत, तथा हिङ्गुमरिचादियुतं मद्यं सेवेत । भुजगपुष्पं नागपुष्पम् । फलाम्लं दाडिमबीजपूरकादिभिरम्लीकृतं मद्यम् । उष्णाम्बुसैन्धवयुता इत्यादि । अत्रापि सेवेतेति संबध्यते । मगधाफलमूलमिति पिप्पल्याः फलमूलमित्यर्थः । भोजनमाह—हृद्यैरित्यादि । खडा यूषविशेषाः । अत्र पानाजीर्णे । 'हृद्यैः' इत्यत्र 'मद्यैः' इत्यन्ये पठन्ति । अपरे 'खडैः' इत्यत्र 'फलैः' इति पठन्ति । 'विडत्वक्' इत्यत्र 'यथोक्तं' इति केचित् पठन्ति ॥ ३८ ॥—

द्राक्षाकपित्थफलदाडिमपानकं यत् ॥
तत् पानविभ्रमहरं मधुशर्कराढ्य-
माम्रातकोलरसपानकमेव चापि ॥ ३९ ॥
खर्जूरवेत्रककरीरपरूषकेषु[1]
द्राक्षात्रिवृत्सु च कृतं ससितं हिमं वा ॥
श्रीपर्णियुक्तमथवा तु पिबेदिमानि
यष्ट्याह्वयोत्पलहिमाम्बुविमिश्रितानि ४०
क्षीरिप्रवालबिसजीरकनागपुष्प-
पत्रैलवालुसितसारिवपद्मकानि ॥
आम्रातभव्यकरमर्दकपित्थकोल-
वृक्षाम्लवेत्रफलजीरकदाडिमानि ॥ ४१ ॥

पानविभ्रमचिकित्सामाह—द्राक्षाकपित्थेत्यादि । अत्र फलशब्देन विशिष्टानि मातुलुङ्गादिफलानि गृह्यन्ते । न केवलं द्राक्षादिपानकं मधुशर्कराढ्यं पानविभ्रमे शस्तम्, आम्रातकोलरसपानकमपि । अथवा खर्जूरादिषु कृतं संस्कृतं सशर्करं श्रीपर्णीयुक्तं हिमं पानकं पानविभ्रमे शस्तम् । करीरो मरुदेशजः, तस्य फलम् । श्रीपर्णीयुक्तं काश्मरीफलयुक्तम् । अथवेत्यादि ।—अथवा इमानि क्षीरिप्रवालादीनि दाडिमान्तानि यष्ट्याह्वयोत्पलहिमाम्बुविमिश्रितानि अत्र पानविभ्रमे पिबेत् । यष्ट्याह्वयोत्पलहिमाम्बुविमिश्रितानीति यष्टीमधुनीलोत्पलयुक्तं यत् हिमाम्बु तेन विमिश्रितानीत्यर्थः । क्षीरिप्रवाला वटादिपल्लवाः । भव्यं तालफलप्रमाणम् उत्तरापथजम्, अन्ये कर्मरङ्गमाहुः ॥ ३९-४१ ॥

सेवेत वा मरिचजीरकनागपुष्प-
त्वक्पत्रविश्वचविकैलयुतान् रसांश्च ॥
सूक्ष्माम्बरस्रुतहिमांश्च सुगन्धिगन्धान्
पानोद्भवान्नुदति सप्तगदानशेषान् ॥ ४२ ॥

इदानीं पानात्ययादीनां चिकित्सामाह—सेवेतेत्यादि । रसान् मांसरसान् । समग्रान् संपूर्णान्; संपूर्णत्वं चैषां मरिचादिभिः सर्वैरेवान्वितत्वम् । सूक्ष्माम्बरस्रुतहिमान् सूक्ष्मवस्त्रगालितशीतानित्यर्थः । सुगन्धिगन्धान् अत्यर्थमगुर्वादिधूपितान् । नुदति स्फोटयति । पानोद्भवान् सप्तगदान् चत्वारो मदात्ययाः, त्रयश्च परमदपानाजीर्णपानविभ्रमाः, पानात्ययप्रभवत्वात्तेषां; एवं सप्त ॥ ४२ ॥

पञ्चेन्द्रियार्थविषया मृदुपानयोगा
हृद्याः सुखाश्च मनसः सततं निषेव्याः[1] ॥
पानात्ययेषु विकटोरुनितम्बवत्यः
पीनोन्नतस्तनभरानतमध्यदेशाः ॥ ४३ ॥
प्रौढाः स्त्रियोऽभिनवयौवनपीनगात्र्यः
सेव्याश्च पञ्चविषयातिशयस्वभावाः ॥ ४४ ॥

एवं पानात्ययादीनां चिकित्सितमभिधायाधुना पानात्ययचिकित्सामेवाह—पञ्चेन्द्रियार्थविषया इत्यादि । पञ्चेन्द्रियार्थविषया इति पञ्चेन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः, तेषां विषयाः करणानि । मृदुपानयोगाः मृदुमद्ययोगाः; ते च पैष्टिकगौडिकमाध्वीकादयः । हृद्या हृदयहिता हृदयप्रियाश्च । सुखाः सुखकराः । विकटोरुनितम्बवत्यः विकटौ श्रेष्ठौ विस्तीर्णौ वा ऊरू यासां ता विकटोरवः, नितम्बवत्यः श्रेष्ठनितम्बाः; यस्मादत्र प्रशंसायां वतुप्प्रत्ययः । पीनोन्नतस्तनभरानतमध्यदेशाः पीनोन्नतस्तनभरेण आनत ईषन्नम्रो मध्यदेशो यासां तास्तथा । प्रौढाः कामक्षमाः । पञ्चविषयाः शब्दाद्यतिशयाः, त एव स्वभावो यासां तास्तथा । श्रीब्रह्मदेवस्तु पञ्चानां विषयाणामतिशयेन स्व आत्मीयो भावोऽभिप्रायो[2] यासां तास्तथा । 'पञ्चेन्द्रियार्थविषयातिशयस्वभावा[3]' इत्यन्ये पठन्ति, व्याख्यानयन्ति च—पञ्चेन्द्रियार्थविषयाणां शब्दादीनामतिशयो यासां तास्तथेत्यर्थः ॥ ४३ ॥ ४४ ॥

पिबेद्रसं पुष्पफलोद्भवं वा
सितामधूकत्रिसुगन्धियुक्तम् ॥
संचूर्ण्य संयोज्य च नागपुष्पै-
रजाजिकृष्णामरिचैश्च तुल्यैः ॥ ४५ ॥

१ 'खर्जूरवेत्रकरवीरपरूषकेषु' इति पा० ।

१ 'नियोज्याः' इति पा० । २ 'भावः सत्ता' इति पा० ।
३ '०स्वभावात्' इति पा० ।

अपरं पानात्यये किं कार्यमित्याह—पिबेद्रसं पुष्पफलोद्भवमित्यादि। पुष्पफलोद्भवं कूष्माण्डोद्भवम्। मधूको गुडपुष्पः। त्रिसुगन्धि त्रिजातकम् ॥ ४५ ॥

**वर्षाभूयष्ट्याह्वमधूकलाक्षा-**
**त्वक्कर्बुदाराङ्कुरजीरकाणि ॥**
**द्राक्षां च कृष्णामथ केशरं च**
**क्षीरे समालोड्य पिबेत् सुखेप्सुः[1] ॥ ४६ ॥**

वर्षाभूयष्ट्याह्वेत्यादि। वर्षाभूप्रभृतीनि केशरान्तानि क्षीरे समालोड्य सुखेप्सुः पुरुषः पिबेदिति पिण्डार्थः। वर्षाभूः श्वेतपुनर्नवा, त्वक् चोचं, कर्बुदाराङ्कुराः काञ्चनाराङ्कुराः ॥ ४६ ॥

**भवेच्च मद्येन तु येन पातितः**
**प्रकामपीतेन सुरासवादिना ॥**
**तदेव तस्मै विधिवत् प्रदापये-**
**द्विपर्यये भ्रंशमवश्यमृच्छति[2] ॥ ४७ ॥**

मदात्ययेषु सामान्यमद्यपाने उक्तेऽपि विशेषविधिमाह—भवेदित्यादि। येन सुरासवादिना मद्येन प्रकामपीतेन पुरुषः पातितो भवेत्, तदेव सुरासवादिकं मद्यं तस्मै पुरुषाय विधिवत् सौवर्चलादियुक्तं प्रदापयेत्। कस्मात्तदेव तस्मै प्रदापयेदित्याह—विपर्यय इत्यादि। यस्माद्विपर्यये कृते असौ पुरुषो, भ्रंशं क्लेशं, ऋच्छति प्राप्नोति, तस्मात्तदेव मद्यं तस्मै प्रदापयेदित्यर्थः ॥ ४७ ॥

**यथा नरेन्द्रोपहतस्य कस्यचि-**
**द्भवेत् प्रसादस्तत एव नान्यतः ॥**
**ध्रुवं तथा मद्यहतस्य देहिनो**
**भवेत् प्रसादस्तत एव नान्यतः ॥ ४८ ॥**

मद्यपीडितस्य पुंसो यथा मद्यादेव स्वास्थ्यं स्यात्तथा दृष्टान्तमाह—यथेत्यादि। तत इति नरेन्द्रादित्यर्थः। द्वितीयततःशब्देन मद्यं परामृश्यते ॥ ४८ ॥

**विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते ॥**
**तस्य पानात्ययोद्दिष्टा विकाराः संभवन्ति हि ॥४९॥**

इदानीमनुक्तसंग्रहायाह—विच्छिन्नमद्य इत्यादि। विच्छिन्नमद्यः त्यक्तमद्यः। सहसा अविमृश्यैव। पानात्ययोद्दिष्टा ध्वंसकादयः। तथा च तन्त्रान्तरम्,—"विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते। भवेतां मारुतात् कष्टौ तस्य ध्वंसकविक्षयौ"—इत्यादि ॥ ४९ ॥

**मद्यस्याग्नेयवायव्यौ गुणावम्बु(म्भो)वहानि तु ॥**
**स्रोतांसि शोषयेयातां तेन तृष्णोपजायते ॥ ५० ॥**

मद्यपानाद्यथा तृष्णोत्पत्तिस्तथाऽऽह—मद्यस्येत्यादि। आग्नेयवायव्यौ गुणौ तैक्ष्ण्यरूक्षौ। अम्बुवहानि स्रोतांसीत्यत्राम्बुवहस्रोतःशब्देनाम्बु कथ्यते, उपचारात्। अन्ये तु व्याख्यानयन्ति—यैः स्रोतोभिरुदकं वहन्ति तान्येव स्रोतांसि तौ तीक्ष्णरूक्षौ गुणौ शोषयित्वा तत आधारस्रोतःशोषात्तदाश्रयस्याम्बुनोऽपि शोषः, तेन हेतुना मद्येनापि तृषोपजायते। 'मद्यस्य' इत्यादिपाठस्थाने केचित् 'मद्यमाग्नेयभावात्' इत्यादि पाठं पठन्ति, स चाभावान्न लिखितः ॥ ५० ॥

**पाटलोत्पलकन्देषु मुद्गपर्ण्यां च साधितम् ॥**
**पिबेन्मागधिकोन्मिश्रं तत्राम्भो हिमशीतलम् ५१**

मद्यजतृष्णाचिकित्सामाह—पाटलेत्यादि। पाटला सुगन्धिपुष्पवृक्षः, उत्पलव्यक्तिबहुत्वात् कन्देष्विति बहुत्वमुक्तम्। तत्रेति तृष्णायाम्। हिमः तुषारः, तद्वच्छीतलं हिमशीतलम्। पाटलादिसाधितमम्भो हिमशीतलं पिप्पलीचूर्णमिश्रं तृष्णायां पिबेदिति पिण्डार्थः ॥ ५१ ॥

**सर्पिस्तैलवसामज्जदधिभृङ्गरसैर्युतम् ॥**
**क्वाथेन बिल्वयवयोः सर्वगन्धैश्च पेषितैः ॥ ५२ ॥**
**पक्वमभ्यञ्जने श्रेष्ठं**

तृष्णायां क्वाथमभिधायोपचारार्थं स्नेहमाह—सर्पिस्तैलवसामज्जेत्यादि। भृङ्गरसो भृङ्गराजरसः। बिल्वं बिल्वफलम्। यवाः प्रसिद्धाः। सर्वगन्धा एलादिपठिताः। पेषिताः कल्कीकृताः। दधिभृङ्गरसैरिति द्विभेदभिन्नभृङ्गापेक्षया रसस्यापि द्विविधत्वं, ततो बहुवचनम्। दध्ना भृङ्गरसेन बिल्वयवयोः क्वाथेन प्रत्येकं चतुर्गुणेन सर्वगन्धैः कल्कीकृतैः स्नेहचतुर्थांशैः सर्पिस्तैलं वसा मज्जेति चतुःस्नेहं पक्वमभ्यञ्जने शस्तमिति संबन्धः। अन्येऽत्र मज्जास्थाने दुग्धं पठन्ति, व्याख्यानयन्ति च—तैलवसेति यद्यपि द्रवद्रव्यमध्ये तैलवसे पठिते तथाऽपि स्नेहस्य स्नेहान्तरेणासंस्कारात् सर्पिस्तैलवसेति स्नेहस्य त्रयं दुग्धादिचतुर्द्रवैः पक्वमभ्यञ्जने शस्तमिति ॥ ५२ ॥—

**सेके क्वाथश्च शीतलः ॥**

अभ्यञ्जनस्नेहमभिधाय सेकमाह—सेके क्वाथ इत्यादि। सेके परिषेके। क्वाथश्च शीतल इति मधुरशीतद्रव्यकृतो हिमसन्निभः। एतावभ्यङ्गसेकौ सतृषि मदात्यये कार्यौ; अन्ये मद्यजतृष्णायामेवाभ्यङ्गसेकाविच्छन्ति ॥—

**रसवन्ति च भोज्यानि यथास्वमवचारयेत् ॥ ५३ ॥**
**पानकानि सुशीतानि हृद्यानि सुरभीणि च ॥**

सतृषि मदात्यये भोज्यानि निर्दिशन्नाह—रसवन्तीत्यादि। रसवन्ति प्रचुरमधुररसानि। भोज्यानि भक्तानि। यथास्वं यथादोषप्रत्यनीकमिति; एतेन यद्भोज्यं यस्य दोषस्य प्रत्यनीकं तद्दोषजे सतृषि मदात्यये तद्भोज्यमवचारयेदित्यर्थः। पानकानि द्राक्षादाडिमादिकृतानि। हृद्यानि मनःप्रियाणि। सुरभीणि कर्पूराद्यधिवासितानि ॥ ५३ ॥—

**त्वचं प्राप्तस्तु पानोष्मा पित्तरक्ताभिमूर्च्छितः ॥**
**दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥ ५४ ॥**

इदानीं मद्योष्मणो दाहकारित्वमतिदेशेन तज्जन्यदाहस्य चिकित्सितं च श्लोकेनाह—त्वचमित्यादि। पानोष्मा मद्यपानोष्मा। पित्तरक्ताभिमूर्च्छितः पित्तरक्तसंपृक्तः। घोरं

१ 'सुखोष्णम्' इति पा०। २ 'भ्रंशमसौ च गच्छति' इति पा०।

भयावहम् । पित्तवत्तत्र भेषजं मधुरशीतादि । 'पानोष्मा' इत्यत्र 'मद्योष्मा' इति केचित् पठन्ति ॥ ५४ ॥

शीतं विधानमत ऊर्ध्वमहं प्रवक्ष्ये
दाहप्रशान्तिकरमृद्धिमतां नराणाम् ॥
तत्रादितो मलयजेन हितः प्रदेह-
श्चन्द्रांशुहारतुहिनोदकशीतलेन ॥ ५५ ॥
शीताम्बुशीतलतरैश्च शयानमेनं
हारैर्मृणालवलयैरबलाः स्पृशेयुः ॥
भिन्नोत्पलोज्वलहिमे शयने शयीत
पत्रेषु वा सजलबिन्दुषु पद्मिनीनाम् ॥५६॥

दाहप्रतीकारमतिदेशेनाभिधायेश्वराणां पुरुषाणां विशिष्टं प्रतीकारमाह—शीतमित्यादि । तत्रेति दाहे । आदित इति आदौ । मलयजेनेति सुरभिचन्दनेन । प्रदेहः प्रतनुर्लेपः । मलयजविशेषणमाह—चन्द्रांशुहारतुहिनोदकशीतलेनेति ।— हारो मुक्ताहारः, तुहिनोदकं हिमपानीयं, तद्वच्छीतलेनेत्यर्थः । अन्ये 'चन्द्रांशुहारहिमनिर्मलशीतलेन' इति, अपरे 'चन्द्रांशुहारकरकाहिमशीतलेन' इति पठन्ति । करकाः स्फटिकगुटिकाकारा वृष्टिजलजाः पाषाणाः, हिमं तुषारः, शेषं समम् । शीताम्बुशीतलतरैः शीतोदकवदतिशयशीतलैः । एतद्विशेषणं हारैर्मृणालवलयैरित्यनयोः । 'शीताम्बुशीतलकरैः' इत्यन्ये; शीताम्बुवत् शीतलहस्तैः । शयानं विश्रान्तं न तु स्वपन्तं, तादृग्दाहार्तस्य निद्राया असंभवात् । अन्ये 'मृणालवलयैः' इत्यत्र 'तुषारविमलैः' इति पठित्वा हारैरित्यस्य विशेषणं मन्यन्ते । अबलाः प्रौढस्त्रियः । स्पृशेयुः स्पर्शनं कुर्युः । दाहार्तस्य सुखोत्पादनाय शयनमाह—भिन्नोत्पलोज्वलहिमे इति । —प्रफुल्लनीलोत्पलोज्वलशीतले एवंविधे शयने शयीत । पक्षान्तरमाह—पत्रेषु वेत्यादि । सजलबिन्दुषु पद्मिनीनां पत्रेषु वा शयीतेति संबन्धः ॥ ५५ ॥ ५६ ॥

आसादयन् पवनमाहृतमङ्गनाभिः
कह्लारपद्मदलशैवलसंचयेषु ॥
कान्तैर्वनान्तपवनैः परिमृश्यमानः
शक्तश्चरेद्भवनकाननदीर्घिकासु ॥ ५७ ॥

किं कुर्वन् शयीतेत्याह—आसादयन्नित्यादि । आसादयन् प्राप्नुवन् । कं? पवनं । किंभूतम्? आहृतम् आनीतम् । अङ्गनाभिः स्त्रीभिः; व्यजनादिभिः कृत्वेत्यूह्यम् । कह्लारपद्मदलशैवलसंचयेषु शयीतेति संबध्यते । कह्लारं सौगन्धिकोत्पलम् । अन्ये 'संचयेषु' इत्यत्र 'संचयेभ्यः' इति पठित्वा कह्लारपद्मदलशैवलसंचयेभ्योऽबलाभिराहृतमिति संबध्नन्ति । एवंविधैः शयनैराह्लादितः सन् किं कुर्यादित्याह—कान्तैरित्यादि । कान्तैः कमनीयैर्मृदुशीतसुगन्धिभिः, वनान्तपवनैः आम्रादिवाटिकासमीपवातैः, परिमृश्यमानः स्पृश्यमानः, शक्तः समर्थः सन्, चरेत् भ्रमेत् । कासु भवनकाननदीर्घिकासु गृहोद्यानससोपानपुष्करिणीषु । अन्ये 'कान्तैः' इत्यत्र 'शीतैः' इति, 'वनान्तपवनैः' इत्यत्र 'जलान्तपवनैः,' 'परिमृश्यमान' इत्यत्र 'परिमृज्यमानः,' 'शक्तः' इत्यत्र 'प्रीतः' इति पठन्ति ॥ ५७ ॥

दाहाभिभूतमथवा परिषेचयेत्तं
लामज्जकाम्बुरुहचन्दनतोयतोयैः ॥
विस्राविताां हृतमलां नववारिपूर्णां
पद्मोत्पलाकुलजलामधिवासिताम्बुम् ॥ ५८ ॥
वापीं भजेत हरिचन्दनभूषिताङ्गः
कान्ताकरस्पृशनकर्कशरोमकूपः ॥

दाहाभिभूतमित्यादि । अथवा तमातुरं दाहपीडितं परिषेचयेत् । कैः? लामज्जकेत्यादिभिः; लामज्जकं पर्वतोद्भूतमूलं, अन्ये उशीरमाहुः; अम्बुरुहं पद्मोत्पलादिकं; चन्दनमत्र श्वेतं, तस्यैव दाहहरत्वात्; तोयं वालकं; एषां तोयैः क्वाथैः । विस्राविताामिति निःसारितपूर्वपानीयाम् । हृतमलाम् आकृष्टपङ्कादिकाम्, नववारिपूर्णाम् अपरनिर्मलजलभृतां; पद्मोत्पलाकुलजलां पद्मम् ईषच्छुक्लं, उत्पलानि नीलोत्पलानि, तैर्व्याप्तजलाम् । अधिवासिताम्बुं प्रचुरचन्दनादिप्रक्षेपेण सुगन्धितजलाम् । एवंविधां वापीं भजेत सेवेत, 'दाहार्त आतुर' इति शेषः । किंभूतः सन्? चन्दनभूषिताङ्गः श्वेतचन्दनानुलिप्तगात्रः । पुनः किंभूतः? कान्तेत्यादिविशेषणयुक्तः ॥ ५८ ॥—

तत्रैनमम्बुरुहपत्रसमैः स्पृशन्त्यः
शीतैः करोरुवदनैः कठिनैः स्तनैश्च ॥ ५९ ॥
तोयावगाहकुशला मधुरस्वभावाः
संहर्षयेयुरबलाः सुकलैः प्रलापैः ॥

तत्र तस्यां वाप्यम् । एनं दाहार्तम् । अम्बुरुहं कमलं, तस्य पत्रसमैः पत्रतुल्यैः; एतच्च शीतैः करोरुवदनैरित्यस्य विशेषणम् । 'वदनैः' इत्यत्र 'जघनैः' इत्यन्ये । मधुरस्वभावा मृदुप्रचाराः । सुकलैः प्रलापैः शोभनकलयुक्तैः प्रकृष्टवचनैः । तत्र वाप्यामेवंविधैः करोरुवदनैः स्तनैश्च कठिनैः स्पृशन्त्योऽबलाः प्रौढस्त्रियस्तोयावगाहकुशला मृदुप्रचाराः सुकलैः प्रलापैरेनं दाहार्तं संहर्षयेयुः तुष्टिमुत्पादयेयुरिति संबन्धः ॥५९॥—

धारागृहे प्रगलितोदकदुर्दिनाभे
क्लान्तः शयीत सलिलानिलशीतकुक्षौ ॥६०॥
गन्धोदकैः सकुसुमैरुपसिक्तभूमौ
पत्राम्बुचन्दनरसैरुपलिप्तकुड्ये ॥
जात्युत्पलप्रियककेशरपुण्डरीक-
पुन्नागनागकरवीरकृतोपचारे ॥ ६१ ॥

---

१ 'शयानमेवं' इति पा० । २ 'श्वेतचन्दनेन' इति पा० । ३ 'पवनमाहृतमिष्टगन्धं' इति पा० । ४ 'शीतैर्वनान्तपवनैः' इति पा० । ५ 'प्रीतः' इति पा० । ६ 'व्यजनादिनिमित्तत्वेनेत्यूह्यम्' इति पा० ।

१ 'परिषेचयेत्तं' इति पा० । २ 'लामज्जकाम्बुरुहचन्दनतोयतोयैः' इति, 'शीतैरुशीरजलचन्दनवारिभिस्तम्' इति च पा० । ३ 'अधिवासितां च' इति पा० । ४ 'मधुरैः' इति 'कुशलैः' इति च पा० । ५ '°कृतोपकारे' इति पा० ।

**तस्मिन् गृहे कमलरेण्वरुणे शयीत**
**यत्नाहृतानिलविकम्पितपुष्पदाम्नि ॥**

धारागृहे इत्यादि । प्रगलितं गलितुं प्रवृत्तं यदुदकं तेन दुर्दिनस्येव आभा यस्य तत्तथा । क्लान्तो ग्लानियुक्तः, 'आतुर' इति शेषः । सलिलेन मिश्रितोऽनिलः सलिलानिलस्तेन शीतः कुक्षिरभ्यन्तरं यस्य तत् तत्र । 'सजलाम्बुदशीतकुक्षौ' इत्यन्ये पठन्ति; तत्र सजलमेघवच्छीताभ्यन्तरप्रदेशे । गन्धोदकैः एलादिगन्धद्रव्यकषायैः । सकुसुमैः जातीकुसुमादियुतैः । अन्ये 'सकुसुमैरुपसिक्तभूमौ' इत्यत्र 'पटुभिरुक्षितभूमिभागे' इति पठन्ति; तत्र एलादिकषायैः पटुभिर्व्यक्तगन्धैः सिक्तो भूमिप्रदेशो यत्र । पत्रं पत्रकम्, अम्बु वालकं, चन्दनं श्वेतचन्दनं; रसोऽत्र क्वाथः । कुड्यं भित्तिः । एतेषामेव कल्कक्वाथाभ्यामुपलिप्तभित्तिके । 'उपदिग्धकुड्ये' इत्यन्ये; तत्राप्येक एवार्थः । जाती प्रसिद्धा, उत्पलं नीलोत्पलं, प्रियको बीजकः, केशरो बकुलः, पुण्डरीकं श्वेतपद्मं, पुन्नागो देववल्लभः स्वनामप्रसिद्धः, नागं नागकेशरं, करवीरोऽत्र रक्तकरवीरः, अत्रैतेषां पुष्पाणि ग्राह्याणि; तैः कृतोपचारे कृतरचनाविशेषे धारागृहे । अन्ये त्वेवं पठन्ति —'मांसीतमालतृणकुङ्कुमपद्मपत्रजात्युत्पलाग्रकरवीरकृतोपकारे' इति । तमालं पत्रकं, तृणं सुगन्धितृणं, पद्मपत्रकं कमलपत्रं, जात्युत्पले पूर्ववत्, अग्रकरवीरो रक्तकरवीरः, शेषं सममिति । तस्मिन् गृहे धारागृहे । कमलरेण्वरुणे कमलधूलीवद्रक्ताङ्गे इति धारागृहविशेषणम् । यत्नाहृतानिलविकम्पितपुष्पदाम्नि प्रकारान्त[1]रानीतवातचालितपुष्पमालायुक्ते ॥ ६० ॥ ६१ ॥—

**हेमन्तविन्ध्यहिमवन्मलयाचलानां**
**शीताम्भसां सकदलीहरितद्रुमाणाम् ॥ ६२ ॥**
**उद्भिन्ननीलनलिनाम्बुरुहाकराणां**
**चन्द्रोदयस्य च कथाः शृणुयान्मनोज्ञाः ॥**
**म्लानं प्रतान्तमनसं मनसोऽनुकूलाः**
**पीनस्तनोरुजघना हरिचन्दनाक्ताः[2] ॥ ६३ ॥**
**ता एनमार्द्रवसनाः सह संविशेयुः**
**श्लिष्ट्वाऽबलाः शिथिलमेखलहारयष्ट्यः ॥६४॥**

एवंविधे धारागृहे शयानः किं कुर्यादित्याह—हेमन्तेत्यादि । हेमन्तः ऋतुः; मलयान्तै[3]रचलशब्दः प्रत्येकं संबध्यते, तेनात्र विन्ध्यवनादिपरिहारः । तेषां विशेषणत्रयमाह—शीताम्भसां शीतपानीयानाम् । सकदलीहरितद्रुमाणां कदलीहरितवृक्षसहितानाम् । उद्भिन्ननीलनलिनाम्बुरुहाकराणाम् उद्भिन्नानि विकसितानि नीलनलिनानि नीलोत्पलानि अम्बुरुहाणि पुण्डरीकरक्तोत्पलादीनि तेषामाकराः तद्युक्तजलाशयाः ते उत् ऊर्ध्वप्रदेशे येषामित्यर्थः; तेषामेवंविधानां पर्वतानां मनोज्ञाः कथाः शृणुयात् । चन्द्रोदयस्य चेति कथाः शृणुयादित्यर्थः । मनोज्ञा मनोनुकूलाः । एवमपि सुखमनाप्नुवन्तं कथमुपाचरेदित्याह—म्लानमित्यादि । म्लानं ग्लानियुक्तम् । प्रतान्तमनसं दीनमनस्कम् । पीनानि मांसलानि स्तनोरुजघनानि यासां तास्तथा; जघनं स्त्रीकट्यग्रभागः । हरिचन्दनाक्ताः रक्तचन्दनानुलिप्ताः; अन्ये 'घनसारदिग्धा' इति पठन्ति, तत्र चन्दनानुलिप्ताः । ता इति अबला इत्यर्थः । एनं दाहार्तिमन्तम् । आर्द्रवसना आर्द्रवस्त्राः[1] । सह संविशेयुरिति दाहार्तेन सह विश्रामं कुर्युरित्यर्थः । श्लिष्ट्वा आलिङ्ग्य । अबलाः स्त्रियः । किंभूताः ? शिथिलमेखलहारयष्ट्य इति शिथिला लम्बमाना मेखला क्षुद्रसुवर्णघण्टिकायुक्तः कटिदोरकः, हारयष्टिः मौक्तिकमाला यासां तास्तथा । ता अबलाः मनसोऽनुकूला इत्यादिविशेषणविशिष्टाः, म्लानं प्रतान्तमनसमातुरं श्लिष्ट्वा तेनैव सह संविशेयुरिति संबन्धः । केचित् 'श्लिष्ट्वा' इत्यत्र 'श्लिष्य' इति पठन्ति, व्याख्यानयन्ति च—श्लिष्य आश्लिष्य; छन्दोनुरोधेन आङ्शब्दलोपः ॥ ६२-६४ ॥

**हर्षयेयुर्नरं नार्यः स्वगुणै रहसि स्थिताः ॥**
**ताः शैत्याच्छमयेयुश्च पित्तपानात्ययान्तरम्[2] ॥ ६५ ॥**

हर्षयेयुरित्यादि । हर्षयेयुः तुष्टिं नयेयुः । नरमिति दाहार्तम् । नार्यः स्त्रियः । कैर्हर्षयेयुः ? स्वगुणैः मृदुभाषणादिभिः । रहसि स्थिता एकान्ते स्थिताः । ता नार्यः । शैत्यात् 'आत्मन' इति शेषः । शमयेयुः शान्तिं नयेयुः । किं शमयेयुः ? पित्तपानात्ययान्तरं पित्तपानात्ययभेदम् ॥ ६५ ॥

**तृड्[3]दाहरक्तपित्तेषु कार्योऽयं भेषजक्रमः ॥**
**सामान्यतो**

इमं विधिमन्यत्राप्यतिदिशन्नाह—तृडित्यादि । तृट् पिपासा, दाहो नानाप्रकारो वक्ष्यमाणः । अयम् अनन्तरोक्तः । भेषजक्रम औषधविधिः कार्यः ॥—

**विशेषं तु शृणु दाहेष्वशेषतः ॥ ६६ ॥**

तृडादिषु सामान्यतो विधिमुद्दिश्य दाहेषु विशेषविधिमाह—विशेषमित्यादि । दाहेष्विति बहुवचनं नानाप्रकारत्वेन दाहस्याभिधास्यमानत्वात्; अत एव अशेषत इत्युक्तम्, अशेषेष्वित्यर्थः ॥ ६६ ॥

**कृत्स्नदेहानुगं रक्तै[4]मुद्रिक्तं दहति ह्यति ॥**
**संचूष्यते दह्यते च ताम्राभस्ताम्रलोचनः ॥ ६७ ॥**
**लोहगन्धाङ्गवदनो वह्निनेवावकीर्यते ॥**
**तं विलङ्घ्य विधानेन संसृष्टाहारमाचरेत् ॥ ६८ ॥**
**अप्रशाम्यति दाहे च रसैस्तृप्तस्य जाङ्गलैः ॥**
**शाखाश्रया यथान्यायं रोहिणीर्व्यधयेत् सिराः ॥६९॥**

इदानीं रक्ता[5]दिदाहलक्षणं तेषामेव विशिष्टं चिकित्सितं चाह—कृत्स्नदेहानुगमित्यादि । कृत्स्नदेहानुगं सकलदेहव्याप्तम् ।

१ 'प्रकारान्तरप्रेरितवातचालितपुष्पमालायुक्ते' इति पा० । २ 'घनसारदिग्धाः' इति पा० । ३ 'हेमन्तादिभिर्मलयान्तैरचलशब्दः प्रत्येकं संबध्यते, तेन हेमन्तर्तुविन्ध्यवनादिपरिहारः' इति पा० ।

१ 'स्निग्धमितवसनाः' इति पा० । २ 'पित्तपानात्ययं स्त्रियः' इति पा० । ३ 'रक्तपित्ततृषादाहेष्वयमेव विधिः स्मृतः' इति पा० । ४ 'रक्तं' इति हस्तलि. पु. पा० । ५ 'पित्तादिदाहलक्षणं' इति हस्तलि. पु. पा० ।

उद्रिक्तं प्रवृद्धम् । हिशब्द एवार्थे । संचूष्यते आकृष्यत इव वेदनाविशेषः । 'दह्यते' इत्यत्र 'उष्यते' इत्यन्ये; तत्र उष्यते दह्यत इत्यर्थः । ताम्राभः ताम्रप्रभः । ताम्रलोचनो लोहिताक्षः । लोहगन्धशब्दोऽङ्गवदनाभ्यां संबध्यते । वह्निनेवावकीर्यते ज्वलिताङ्गारैरिवात्मानमाचितं मन्यते, अनेन दाहातिशयः प्रतिपादितः । तमिति रक्तदाहार्तम् । विलङ्घ्येति विविधप्रकारं लङ्घयित्वा । विधानेन क्रमेण, संसृष्टाहारं कृततर्पणादिकर्म, आचरेदिति कुर्यात्, 'वैद्यप्रयुक्तं' इति शेषः । एवमप्यप्रशाम्यति दाहे किं कुर्यादित्याह—अप्रशाम्यतीत्यादि । अप्रशाम्यति दाहे जाङ्गले रसैस्तृप्तस्य शाखाश्रया बाहुजङ्घाश्रयाः रोहिणीः लोहिताः सिरा यथान्यायं व्यधयेदिति संबन्धः; यथान्यायं सिराव्यधविधानोक्तेन न्यायेनेत्यर्थः ॥ ६७-६९ ॥

**पित्तज्वरसमः पित्तात् स चाप्यस्य विधिर्हितः ॥**

अतः परं दाहस्य पित्तज्वरेण सह समत्वं तच्चिकित्सितं चाह—पित्तज्वरसम इत्यादि ॥

**तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम् ॥७०॥**
**सबाह्याभ्यन्तरं देहं दहेद्वै मन्दचेतसः ॥**
**संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य चेष्टते ॥७१॥**

तृण्णिरोधजे दाहे चिकित्सितं निर्दिशन्नाह—तृष्णानिरोधादित्यादि । अब्धातौ पानीयधातौ । तेजः पित्तोष्मा । समुद्धतम् अत्यर्थंवृद्धम् । एवंविधं तेजो देहं सबाह्याभ्यन्तरं मन्दचेतस आतुरस्य वै स्फुटं दहेदित्यर्थः । स दह्यमानदेहः किं कुर्यादित्याह—जिह्वां निष्कृष्येत्यादि । जिह्वां निष्कृष्य निःसार्येत्यर्थः । चेष्टते हस्तपादादिविक्षेपणं करोति, 'दाहार्तः' इति शेषः । अन्ये 'जिह्वा निःसृत्य वेपते' इति पठन्ति, तत्र दाहार्तस्य जिह्वा निःसृत्य कम्पते इत्यर्थः ॥ ७० ॥ ७१ ॥

**तत्रोपशमयेत्तेजस्त्वब्धातुं च विवर्धयेत् ॥**
**पाययेत् काममम्भश्च शर्कराढ्यं पयोऽपि वा ॥७२॥**
**शीतमिक्षुरसं मन्थं वितरेच्चेरितं विधिम् ॥**

तत्रेत्यादि । तत्र तृष्णानिरोधजे दाहे । उपशमयेत् शान्तिं नयेत् मधुरशीतादिभिः । तेजः पित्तोष्माणम् । अत्रान्ये 'तस्य तेजः प्रशमयेत्' इति पठन्ति; तत्र तस्येति दाहार्तस्य, शेषं समम् । अब्धातुं च विवर्धयेदिति स्वयोनिवर्धनैः मधुरस्निग्धशीतलैः । अम्भः पानीयम् । तं तृष्णानिरोधजदाहार्तम् । किम्भूतमम्भः ? शर्कराढ्यं प्रभूतशर्करायुक्तम् । किमम्भ एव पाययेदित्याह—पयोऽपि चेति ।—शर्कराढ्यं दुग्धं वेत्यर्थः । मन्थं "शक्तवः सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुताः" इत्याद्युक्तलक्षणम् । वितरेच्चेरितं विधिमिति पित्तज्वरहरम् । केचित् 'वितरेच्चेतरं विधिम्' इति पठन्ति; तत्र पित्तज्वरोक्तात् इतरोऽन्यः पित्तहरो विधिरित्यर्थः ॥ ७२ ॥—

१ 'पित्तदाहार्तं' इति ह. लि. पु. पाठः । २ 'यथाभ्यासं' इति पा० । ३ 'समुत्थितम्' इति पा० । ४ 'वेपते' इति पा० । ५ 'इच्छयाऽम्भश्च' इति 'इच्छायाऽम्भस्तं' इति पा० । ६ 'वितरेत्स्वरितं' इति पा० ।

**असृजा पूर्णकोष्ठस्य दाहो भवति दुःसहः ॥ ७३ ॥**
**विधिः सद्योव्रणीयोक्तस्तस्य लक्षणमेव च ॥**

असृजा पूर्णकोष्ठस्येत्यादि । असृजा रक्तेन । पूर्णकोष्ठस्य संभृतोदरस्य । दुःसहः रौद्रः । विधिः चिकित्सा । तस्येति दाहार्तस्य । लक्षणमेवेति सद्योव्रणीयोक्तमित्यर्थः 'असृजा' इत्यत्र 'असृजः' इति षष्ठ्यन्तं केचित् पठन्ति, पूरणार्थे षष्ठीं व्याख्यानयन्ति च ॥ ७३ ॥—

**धातुक्षयोक्तो यो दाहस्तेन मूर्च्छातृषान्वितः ॥७४॥**
**क्षामस्वरः क्रियाहीनो भृशं सीदति पीडितः ॥**
**रक्तपित्तविधिस्तस्य हितः स्निग्धोऽनिलापहः ॥७५॥**

धातुक्षयोक्तो यो दाह इत्यादि । धातुक्षयोक्तो रक्तक्षयोक्तः । यच्चात्र रक्तक्षयोक्त इति पाठो न कृतः, तदितरधातुक्षयेऽपि दाहो भवतीति ज्ञापनार्थम् । तेन धातुक्षयजदाहेन । क्षामस्वरो दुर्बलस्वरः । क्रियाहीनः कायिकमानसचेष्टाहीनः । पीडितो 'दाहेन' इति शेषः ॥ ७४ ॥ ७५ ॥

**क्षतजेनाश्नतश्चान्यः शोचतो वाऽप्यनेकधा ॥**
**तेनान्तर्दह्यतेऽत्यर्थं तृष्णामूर्च्छाप्रलापवान् ॥ ७६ ॥**
**तमिष्टविषयोपेतं सुहृद्भिरभिसंवृतम् ॥**
**क्षीरमांसरसाहारं विधिनोक्तेन साधयेत् ॥ ७७ ॥**

'असृजा पूर्णकोष्ठस्य' इत्यादिना कोष्ठस्थेन रक्तेन दाहमभिधायेदानीं प्रकारान्तरेणाह—क्षतजेनाश्नतश्चान्य इत्यादि । क्षतजेन रक्तेन । अश्नतः भोजनं कुर्वतः । अन्यो 'दाह' इति शेषः । शोचतो वाऽप्यनेकधेति अनेकप्रकारं शोकं कुर्वतः । शोकं कुर्वतो भोजनं कुर्वतो वाऽपि नरस्यान्यो दाहो रक्तेन भवतीति संबन्धः । तेन दाहेन, अन्तः अभ्यन्तरं दह्यते । मूर्च्छातृष्णाप्रलापवान् 'आतुरो भवति' इति शेषः । तम् आतुरम् । इष्टविषयोपेतम् अभिलषितशब्दस्पर्शादिसंयुक्तम् । सुहृद्भिः मित्रैः । अभिसंवृतं समन्ततः परिवृतम् । विधिनोक्तेन साधयेत् दाहशान्तिकरेण प्रागुक्तेन विधानेन शान्तिं नयेत् ॥ ७६ ॥ ७७ ॥

**मर्माभिघातजोऽप्यस्ति स चासाध्यतमः स्मृतः ॥**

मर्माभिघातज इत्यादि । मर्माभिघातजः सद्यः कालान्तरे वा प्राणहरमर्माभिघातजः । यद्येवं तर्हि असाध्यत्वं प्राप्तमेव, स चासाध्यतमः स्मृत इति व्यर्थम् । नैवं, स चासाध्यतमः स्मृत इत्यस्मादेव सद्यःकालान्तरप्राणहरमर्मजो ज्ञायत इत्यदोषः । 'स चासाध्यतमः स्मृतः' इत्यत्रान्ये 'सोऽसाध्यः सप्तमो मत' इति पठन्ति । अत एव च दाहगणनां कुर्वन्ति—त्वचं प्राप्तस्तु पानोष्मेत्यादिः प्रथमो दाहः, कृत्स्नदेहानुगं पित्तमित्यादिर्द्वितीयः तृष्णानिरोधादित्यादिस्तृतीयः, असृजा पूर्णकोष्ठस्येत्यादिश्चतुर्थः, धातुक्षयोक्त इत्यादिः पञ्चमः, क्षतजेनाश्नतश्चान्यः शोचतो वाऽपीत्यादिः षष्ठः, सप्तमश्च मर्माभिघातजः ॥—

१ 'दाहोऽन्यः स्यात्सुदुस्तरः' इति पा० । २ 'स सीदेद्भृशपीडितः' इति पा० । ३ 'सोऽसाध्यः सप्तमो मतः' इति पा० । ४ 'सद्यःकालान्तर' इति हस्तलिखितपुस्तके नोपलभ्यते ।

**सर्वं एव च वर्ज्याः स्युः शीतगात्रेषु देहिषु ॥७८॥**
**( एवंविधो भवेद्यस्तु मदिरामयपीडितः ॥ )**

अवस्थायां सर्वेषामपि दाहानां वर्जनमाह—सर्वं एवेत्यादि। सर्व एव 'दाहा' इति शेषः ॥ ७८ ॥

**प्रशान्तोपद्रवे चापि शोधनं प्राप्तमाचरेत् ॥ ७९ ॥**

दाहानां पुनरावृत्तिनिषेधाय विधानमाह—एवंविधो भवेदित्यादि। प्रशान्तोपद्रवे निवृत्ततृष्णादिके 'आतुरे' इति शेषः। शोधनं विरेचनं, पित्तहरत्वात्। प्राप्तं यथादोषप्रत्यनीकम्। आचरेत् कुर्यात् 'वैद्य' इति शेषः। अन्ये शोधनशब्देन वमनमपि कथयन्ति। तद्वमनं दाहकारिणि पित्ते कफस्थानगे कार्यम्। अन्ये 'प्रशान्तोपद्रवश्चापि' इति पठन्ति; तत्र एवंविध आतुरः शोधनमाचरेदिति व्याख्यानयन्ति ॥ ७९ ॥

**सजीरकाण्यार्द्रकशृङ्गवेर-**
**सौवर्चलान्यर्धजलप्लुतानि ॥**
**मद्यानि हृद्यान्यथ गन्धवन्ति**
**पीतानि सद्यः शमयन्ति तृष्णाम् ॥ ८० ॥**

यथा पीयमानं मद्यं तृष्णाकरं न भवति तथा प्राह—सजीरकाणीत्यादि। सजीरकाणि जीरकसहितानि। आर्द्रकं प्रसिद्धं, शृङ्गवेरं शुण्ठी। आर्द्रकस्यादौ सहशब्दो बोद्धव्यः; तेन 'आर्द्रकशृङ्गवेरसौवर्चलानि' इति मद्यानीत्यस्य विशेषणम्। अर्धजलप्लुतानि अर्धपानीयमिश्रितानि। हृद्यानि मनःप्रियाणि। गन्धवन्ति प्रशस्तगन्धानि। एवंविधानि मद्यानि पीतानि सन्ति सद्यस्तृष्णां शमयन्तीति पिण्डार्थः ॥ ८० ॥

**जलप्लुतश्चन्दनभूषिताङ्गः**
**स्रग्वी सभक्तां पिशितोपदंशाम् ॥**
**पिबन् सुरां नैव लभेत रोगान्**
**मनोनुविघ्नं च मदं न याति ॥ ८१ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे मदात्ययप्रतिषेधो नाम ( नवमोऽध्यायः, आदितः ) सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥**

किम्भूतः सन्मद्यपः किंभूतां सुरां पिबन् पानजरोगान् मनोविघातकं च मदं न प्राप्नोतीत्याह—जलप्लुत इत्यादि। जलप्लुतो जलार्द्रगात्रः। चन्दनभूषिताङ्गः चन्दनानुलिप्तशरीरः। स्रग्वी पुष्पमालायुक्तः। सभक्तां भक्तेन सहिताम्। पिशितोपदंशां मांसभक्षणसहिताम्। रोगान् पानजानित्यर्थः। मनोनुविघ्नं च मदं न याति मनोविघातकं मदं न प्राप्नोति। एतेनोत्तरौ मदौ नाधिगच्छतीत्युक्तम्। अन्ये 'मनोमतिघ्नं च मदं न याति' इति पठन्ति; तत्र मनोबुद्धिप्रमोहलक्षणं मदं न प्राप्नोतीत्यर्थः ॥ ८१ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥

१ 'अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते। २ 'कफाशयस्थे' इति पा०। ३ 'मनोमतिघ्नं च' इति पा०।

## अष्टचत्वारिंशत्तमोऽध्यायः।

**अथातस्तृष्णाप्रतिषेधमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पानात्ययप्रतिषेधानन्तरं मद्यहेतुत्वात्तुल्यचिकित्सितत्वाच्च तृष्णाप्रतिषेधारम्भो युक्त इत्यत आह—अथात इत्यादि ॥१॥२॥

**सततं यः पिबेद्वारि न तृप्तिमधिगच्छति ॥**
**पुनः काङ्क्षति तोयं च तं तृष्णार्दितमादिशेत् ॥ ३ ॥**

तृष्णारोगस्वरूपकथनाय यादृशस्तृष्णार्दितो भवति तादृशमाह—सततं य इत्यादि। नाधिगच्छति न प्राप्नोति ॥ ३ ॥

**संक्षोभशोकश्रममद्यपाना-**
**द्रूक्षाम्ललशुष्कोष्णकटूपयोगात् ॥**
**धातुक्षयाल्लङ्घनसूर्यतापात्**
**पित्तं च वातश्च भृशं प्रवृद्धौ ॥ ४ ॥**
**स्रोतांसि संदूषयतः समेतौ**
**यान्यम्बुवाहीनि शरीरिणां हि ॥**
**स्रोतःस्वपांवाहिषु दूषितेषु**
**जायेत तृष्णाऽतिबला ततस्तु ॥ ५ ॥**

तृष्णाया हेतुसंप्राप्ती आह—संक्षोभशोकश्रमेत्यादि। संक्षोभः अत्यर्थचलनम्। श्रम आयासजः खे(खे)दः। समेतौ मिलितौ। अम्बुवाहीनि स्रोतांसि जिह्वागलतालुक्लोमजानि रसवाहिन्यश्च धमन्यः। अतिबला अतिशयेन बलयुक्ता तृष्णा। संक्षोभेत्यादिकः सूर्यतापान्तो हेतुः, 'पित्तं च वातश्च भृशम्' इत्यादिका 'जायेत तृष्णाऽतिबला ततस्तु' इत्यन्ता संप्राप्तिः ॥ ४ ॥ ५ ॥

**तिस्रः स्मृतास्ताः क्षतजा चतुर्थी**
**क्षयात्तथाऽन्याऽऽमसमुद्भवा च ॥**
**स्यात् सप्तमी भक्तनिमित्तजा तु**
**निबोध लिङ्गान्यनुपूर्वशस्तु ॥ ६ ॥**

तृष्णासंख्यामाह—तिस्र इत्यादि। तिस्र इति वातपित्तकफैः। यद्यपि कफस्य स्तैमित्यात्तृष्णाजनकत्वं न संभवति, तथाऽपि वृद्धः श्लेष्मा यदा वातं पित्तेन सह आवृणोति तदा ताभ्यां संशोष्यमाणस्तृष्णां जनयति। ता इति तृष्णाः। क्षतजा व्रणनिमित्ता। चतुर्थीति चतुर्थग्रहणादाद्यानां चतसृणां तृष्णानां सुखसाध्यत्वं रसक्षयामसमुद्भवयोर्दुःसाध्यत्वं च बोधयति। क्षयात् रसक्षयात्, 'रसक्षयाद्या क्षयसंभवा सा' इति वक्ष्यमाणवचनात्। अन्या अपरा। आमसमुद्भवा अजीर्णजा। भुक्तनिमित्तजा चेति स्निग्धादिभोजननिमित्ता। यद्यपि तन्त्रान्तरे पञ्चैव तृष्णा निर्दिष्टाः, तथाऽप्यत्र निदानभेदेन चिकित्साभेदात् सप्त निर्दिष्टाः। या च स्वभावजा तस्या अत्रानधिकारः, स्वस्थोजस्करचिकित्सितविषयत्वात्; या च बुभुक्षाप्रभवा सा

१ 'कषाययोगात्' इति पा०। २ 'तृष्णा प्रतिबला' इति पा०। ३ 'लिङ्गानि तासां शृणु चौषधानि' इति पा०। ४ 'संग्रहे' इति हस्तलिखितपुस्तकेषु पाठ उपलभ्यते।

ज्वराधिकारे सम्यग्लङ्घनलक्षणत्वेनोक्ता, तस्या अप्यनधिकारत्वेनागणनं; या च पित्तज्वरलिङ्गत्वेन कथिता सा पैत्तिकायामवरुद्धा या च पानजा सा क्षयजायामवरुद्धेति; अतो न संख्यातिरेकः । निबोध जानीहि । अनुपूर्वशः यथाक्रमेण । केचित् 'लिङ्गानि तासां शृणु सौषधानि' इति पठन्ति ॥ ६ ॥

ताल्वोष्ठकण्ठास्यविशोषदाहाः
संतापमोहभ्रमविप्रलापाः ॥
पूर्वाणि रूपाणि भवन्ति तासा-
मुत्पत्तिकालेषु विशेषतस्तु ॥ ७ ॥

तृष्णायाः पूर्वरूपमाह—ताल्वोष्ठकण्ठास्येत्यादि । विशोषदाहा इति ताल्वादिभिः सह प्रत्येकं संबध्यते । विशोषो विशेषेण शोषः । सन्तापो घर्मादिभिरिव । मोहो वैचित्त्यम् । विप्रलापो विविधप्रकारेण भाषणम् । तासां तृष्णानाम् । उत्पत्तिकालेषु विशेषतस्त्विति तानि पूर्वरूपाणि अतिशयेनोत्पत्तिकालेषु संभवन्तीत्यर्थः ॥ ७ ॥

शुष्कास्यता मारुतसंभवायां
तोदस्तथा शङ्खशिरःसु चापि ॥
स्रोतोनिरोधो विरसं च वक्त्रं
शीताभिरद्भिश्च विवृद्धिमेति ॥ ८ ॥

वातजतृष्णालक्षणमाह—शुष्कास्यता मारुतसंभवायामित्यादि । शुष्कास्यता मुखशोषः । शङ्खशिरःसु शङ्खयोः शिरसि चेत्यर्थः । स्रोतोनिरोधः कर्णस्रोतोनिरोधः । विरसं विरुद्धरसम् । एति प्राप्नोति । केचित् 'शुष्कास्यता' इत्यत्र 'क्षामास्यता' इति पठित्वा वक्तुं चर्वयितुं चासामर्थ्यमिति व्याख्यानयन्ति । 'शङ्खशिरःसु चापि' इत्यत्र 'शङ्खशिरोगलेषु' इति केचित् पठन्ति ॥ ८ ॥

मूर्च्छाप्रलापारुचिवक्त्रशोषाः
पीतेक्षणत्वं प्रततश्च दाहः ॥
शीताभिकाङ्क्षा मुखतिक्तता च
पित्तात्मिकायां परिधूपनं च ॥ ९ ॥

पित्तजतृष्णालक्षणमाह—मूर्च्छेत्यादि । मूर्च्छा चेतनाच्युतिः । पीतेक्षणत्वं पीतनेत्रता । प्रततः सन्ततः । शीताभिकाङ्क्षा शीतेच्छा । परिधूपनं धूमोद्गम(द्व)नमिव ॥ ९ ॥

कफावृताभ्यामनिलानलाभ्यां
कफोऽपि शुष्कः प्रकरोति तृष्णाम् ॥
निद्रा गुरुत्वं मधुरास्यता च
तयाऽर्दितः शुष्यति चातिमात्रम् ॥ १० ॥

कण्ठोपलेपो मुखपिच्छिलत्वं
शीतज्वरश्छर्दिररोचकश्च ॥
कफात्मिकायां गुरुगात्रता च
शाखासु शोफस्त्वविपाक एव ॥
एतानि रूपाणि भवन्ति तस्यां
तयाऽर्दितः काङ्क्षति नाति चाम्भः ॥ ११ ॥

कफजतृष्णालक्षणमाह—कफावृताभ्यामित्यादि । अनिलानलाभ्यां वातपित्ताभ्याम् । गुरुत्वमुदरे बोद्धव्यम् । तयाऽर्दितः कफतृष्णया पीडितः । कण्ठोपलेपः कण्ठे मलवृद्धिः । मुखपिच्छिलत्वं श्लेष्मणा लिप्तमुखत्वम् । शीतज्वरः शीतपूर्वो ज्वरः । गुरुगात्रता हस्तपादशिरोगुरुत्वम् । शाखासु बाहुपादेषु । शोफः श्वयथुः । अविपाक आहारस्यापचनम् । नातिकाङ्क्षति नात्यभिलषतीत्यर्थः । केचिदमुं पाठमन्यथा पठन्ति—'बाष्पावरोधात् कफसंवृतेऽग्नौ तृष्णा बलासेन भवेत्तथा च' इति; शेषं निद्रेत्यादि समम् ॥ १० ॥ ११ ॥

क्षतस्य रुक्शोणितनिर्गमाभ्यां
तृष्णा चतुर्थी क्षतजा मता तु ॥
तयाऽभिभूतस्य निशादिनानि
गच्छन्ति दुःखं पिबतोऽपि तोयम् ॥ १२ ॥

क्षतजतृष्णालक्षणमाह—क्षतस्येत्यादि । क्षतस्य व्रणिनः पुरुषस्य या तृष्णा भवेत् सा चतुर्थी क्षतजा । तया च पीडितस्य पुंसः तोयं पिबतोऽपि निशादिनानि दुःखं गच्छन्तीति संबन्धः ॥ १२ ॥

रसक्षयाद्या क्षयजा मता सा
तयाऽर्दितः शुष्यति दह्यते च ॥
अत्यर्थमाकाङ्क्षति चापि तोयं
तां सन्निपातादिति केचिदाहुः ॥ १३ ॥
रसक्षयोक्तानि च लक्षणानि
तस्यामशेषेण भिषग्व्यवस्येत् ॥

रसक्षयाच्च क्षयजेत्यादि । मता कथिता । आकाङ्क्षति अभिलषति । तां सन्निपातादिति केचिदाहुरिति रात्र्यहोः षट्सु कालेष्वत्यर्थं पानीयपानेनापि तदनुपशमात् । परमतमप्रतिषिद्धम् अनुमतम् । रसक्षयोक्तानि लक्षणानि 'रसक्षये हृत्पीडा कम्पः' इत्यादीनि । 'रसक्षयोत्थानि' इति केचित् पठन्ति । तस्यां क्षयजतृष्णायाम् । व्यवस्येत् जानीयात् ॥ १३ ॥—

त्रिदोषलिङ्गाऽऽमसमुद्भवा च
हृच्छूलनिष्ठीवनसादयुक्ता ॥ १४ ॥

१ '°वितोददाहाः' इति पा० । २ 'वितोदः सूच्यादिभिरिव विविधवेदनाः' इति पा० । ३ 'शङ्खशिरोगलेषु' इति पा० । ४ 'रसाम्बुवाहिधमनीनिरोधः' इति पा० । ५ 'बाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णा बलासेन भवेत्तु तत्र' इति पा० । ६ 'तृष्णार्दितः' इति पा० ।

१ 'मुखे पैच्छिल्यम्' इति पा० । २ 'भवेत्सा' इति पा० । ३ 'रसक्षयाद्या क्षयसंभवा सा तयाऽभिभूतस्तु निशादिनेषु । पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः' इति पा० ।

आमजतृष्णालक्षणमाह—त्रिदोषलिङ्गामसमुद्भवेत्यादि । त्रिदोषलिङ्गा दोषत्रयलिङ्गयुक्ता, अजीर्णतो दोषत्रयकोपात् । निष्ठीवनं थुत्थुत्थिका । सादः अङ्गग्लानिः ॥ १४ ॥

स्निग्धं तथाऽम्लं लवणं च भुक्तं
गुर्वन्नमेवातितृषां करोति ॥

भक्तजतृष्णालक्षणमाह—स्निग्धं तथाऽम्लमित्यादि । तृषां तृष्णाम् । एषा कफात्, वातपित्ते तु सर्वास्वपि कारणे (?) ॥—

क्षीणं विचित्तं बधिरं तृषार्तं
विवर्जयेन्निर्गतजिह्वमाशु ॥ १५ ॥

इदानीमवस्थायां सर्वासां वर्जनमाह—क्षीणं विचित्तमित्यादि । विचित्तं नष्टमनस्कम् । तृषार्तं तृष्णापीडितं मनुष्यम् ॥ १५ ॥

तृष्णाभिवृद्धावुदरे च पूर्णे
तं वामयेन्मागधिकोदकेन ॥
विलोभनं चात्र हितं विधेयं
स्याद्दाडिमाम्रातकमातुलुङ्गैः ॥ १६ ॥
तिस्रः प्रयोगैरिह सन्निवार्याः
शीतैश्च सम्यग्रसवीर्यजातैः ॥

इदानीं चिकित्सावसरः—तृष्णाभिवृद्धावित्यादि । वामयेत् छर्दयेत्, परं क्षयजां विहाय; तत्र हि क्षीणधातुत्वाद्वमनमनुचितम् । तथा च तन्त्रान्तरम्,—"उल्लेखनं तु तृष्णासु क्षयादन्यत्र युज्यते"—इति । मागधिकोदकेन पिप्पलीमिश्रितजलेन । विलोभनं विशिष्टो लोभः । कैर्विलोभनं विधेयं स्यादित्याह—दाडिमाम्रातकेत्यादि । एतेन तल्लालासावाय तस्य पुरतो दाडिमाद्यम्लफलमन्ये खादेयुरित्युक्तं, अन्ये नानाप्रकाराभिः कथाभिरपि विलोभनमिच्छन्ति । केचिद्विलोभनमित्यत्र विलङ्घनमिति पठन्ति; विलङ्घनं लघुभोजनं न तु लङ्घनं, तस्य पित्तकरत्वादिति च व्याख्यानयन्ति । तिस्रः वातपित्तकफजास्तृष्णाः । सन्निवार्या निवारणीयाः । प्रयोगैः वक्ष्यमाणैः । सम्यग्रसवीर्यजातैरिति संपूर्णरसवीर्यैरित्यर्थः ॥ १६ ॥—

गण्डूषमम्लैर्विरसे च वक्त्रे
कुर्याच्छुभैरामलकस्य चूर्णैः ॥ १७ ॥

गण्डूषमम्लैरित्यादि । अम्लैः मद्यारनालमातुलुङ्गादिभिः । विरसे चेति चकार आमलकस्य चूर्णैरित्यत्र द्रष्टव्यः । तेन न केवलमम्लैर्गण्डूषं कुर्यात् आमलकस्य चूर्णैरपीत्यर्थः ॥ १७ ॥

सुवर्णरूप्यादिभिरग्नितप्तै-
र्लोष्टैः कृतं वा सिकतादिभिर्वा ॥
जलं सुखोष्णं शमयेत्तु तृष्णां
सशर्करं क्षौद्रयुतं हिमं वा ॥ १८ ॥

सुवर्णरूप्यादिभिरित्यादि । सुवर्णादिभिर्लोष्टैः सिकतादिभिर्वा अग्नितप्तैः कृतं संस्कृतं जलं सुखोष्णं पीतं सत् तृष्णां शमयेत्, तदेव वा हिमीकृतं शर्करामधुयुक्तं पीतं सत् तृष्णां शमयेदिति पिण्डार्थः ॥ १८ ॥

पञ्चाङ्गिकाः पञ्चगणा य उक्ता-
स्तेष्वम्बु सिद्धं प्रथमे गणे वा ॥
पिबेत् सुखोष्णं मनुजोऽचिरेण
तृषो विमुच्येत हि वातजायाः ॥ १९ ॥

सामान्यचिकित्सितमभिधायेदानीं विशिष्टचिकित्सितमाह—पञ्चाङ्गिकाः पञ्चगणा इत्यादि । पञ्चाङ्गिकाः पञ्चगणा ये उक्ताः पञ्चमूलानि । प्रथमे गणे विदारिगन्धादौ ॥ १९ ॥

पित्तघ्नवर्गैस्तु कृतः कषायः
सशर्करः क्षौद्रयुतः सुशीतः ॥
पीतस्तृषां पित्तकृतां निहन्ति
क्षीरं शृतं वाऽप्यथ जीवनीयैः ॥ २० ॥

पित्तजतृष्णाचिकित्सितमाह—पित्तघ्नवर्गैरित्यादि । पित्तघ्नवर्गैः उत्पलसारिवादिकाकोल्यादिभिः । कृतः संस्कृतः । जीवनीयैः काकोल्यादिभिः ॥ २० ॥

बिल्वाढकीकन्यकपञ्चमूली-
दर्भेषु सिद्धं कफजां निहन्ति ॥
हितं भवेच्छर्दनमेव चात्र
तप्तेन निम्बप्रसवोदकेन ॥ २१ ॥

कफजतृष्णाचिकित्सितमाह—बिल्वाढकीकन्यकपञ्चमूलीत्यादि । कन्यकपञ्चमूली लघुपञ्चमूलम् । अत्र कफजतृष्णायाम् । निम्बप्रसवोदकेन निम्बपल्लवोदकेन । केचित् 'बिल्वाढकीकण्टकपञ्चमूलीदर्भेषु' इति पठन्ति । कण्टकिपञ्चमूलं करमर्दकत्रिकण्टकेत्यादिनोक्तम् । अपरे 'बिल्वाढकीकण्टकपञ्चकोलदर्भेषु' इति पठन्ति । तं च पाठं कार्तिककुण्डो नेच्छति, सर्वतृष्णासु पित्तसद्भावेन पञ्चकोलस्यानुचितत्वात् ॥ २१ ॥

सर्वासु तृष्णास्वथवाऽपि पैत्तं
कुर्याद्विधिं तेन हि ता न सन्ति ॥

इदानीं सर्वतृष्णासु पित्तघ्नो विधिः कार्य इति दर्शयन्नाह—सर्वासु तृष्णास्वथवेत्यादि । पैत्तं विधिं वक्ष्यमाणं मधुरशीतादिभिः पानालेपनपरिषेकादिकम् । तेन पैत्तेन विधिना, हि यस्मात् ताः तृष्णाः, न सन्ति न भवन्ति ॥—

पर्यागतोदुम्बरजो रसस्तु
सशर्करस्तत्कथितोदकं वा ॥ २२ ॥
वर्गस्य सिद्धस्य च सारिवादेः
पातव्यमम्भः शिशिरं तृषार्तैः ॥

---

१ 'गुर्वन्नमेवाशु' इति पा० । २ 'विलेपनं चात्र हितं वदन्ति' इति पा० । ३ 'तृष्णा प्रयोगैरिह सा निवार्या' इति पा० । ४ 'सिकतोपलैर्वा' इति पा० ।

१ 'तैरम्बु' इति पा० । २ 'मनुजोऽल्पशस्तु' इति पा० । ३ '°कण्टकपञ्चमूली°' इति पा० । ४-५ 'बिल्वाढकीकण्टकपञ्चकोलदर्भेषु' इति पा० । ६ 'तेन विना न शान्तिः' इति पा० ।

अपरमपि सर्वतृष्णासु विधिमाह—पर्यागतोदुम्बरज इत्यादि । पर्यागतोदुम्बरजो रस इति पक्वोदुम्बरस्वरसः । तत्क्वथितोदकं पक्वोदुम्बरक्वथितजलम् । सिद्धस्य क्वाथपानपरिभाषया । शिशिरं शीतलम् ॥ २२ ॥—

कशेरुशृङ्गाटकपद्ममोच-
विसेक्षुसिद्धं क्षतजां निहन्ति ॥ २३ ॥

क्षतजतृष्णाचिकित्सितमाह—कशेरुशृङ्गाटकेत्यादि । मोचा कदली । बिसं पद्ममूलम् । सिद्धमित्यत्र 'तोयं' इति शेषः ॥ २३ ॥

लाजोत्पलोशीरकुचन्दनानि
दत्त्वा प्रवाते निशि वासयेत्तु ॥
तदुत्तमं तोयमुदारगन्धि
सितायुतं क्षौद्रयुतं वदन्ति ॥ २४ ॥
द्राक्षाप्रगाढं च हिताय वैद्य-
स्तृष्णार्दितेभ्यो वितरेन्नरेभ्यः ॥

इदानीं क्षतजतृष्णायां योगान्तरमाह—लाजोत्पलोशीरकुचन्दनानीत्यादि । एतानि लाजोत्पलादीनि दत्त्वा तोयं जलं प्रवाते निशि वासयेत्, ततश्च तदुदकमुदारगन्धि सुगन्धिपुष्पाधिवासितं सिताक्षौद्रयुतं क्षतजतृष्णायामुत्तमं वदन्ति । तदुदकं यथा प्रयुज्यते तदा(था)ह—द्राक्षाप्रगाढमित्यादि । केचिदनन्तरोक्तं 'कशेरुशृङ्गाटक–' इत्यादिकं तथा 'लाजोत्पलोशीरकुचन्दनानि' इत्यादिकं चैकैत्र कृत्वाऽन्यथा पठन्ति, ते च कशेर्वादिसिद्धे तोये लाजोत्पलादीनि दत्त्वा निशि वासयेदिति योजयन्ति; ते च कशेर्वादिकं 'कुर्यात् कषायाणि यथेरितानि' इति पर्यन्तं सामान्यतृष्णाचिकित्सितमिति मन्यन्ते, स च पाठोऽभावान्न दर्शितः ॥ २४ ॥—

ससारिवादौ तृणपञ्चमूले
तथोत्पलादौ प्रथमे गणे च ॥ २५ ॥
कुर्यात् कषायं च यथेरितेन

क्षतजतृष्णायामपराण्यपि योगान्तराण्याह—ससारिवादौ तृणपञ्चमूले इत्यादि । ससारिवादौ सारिवादिगणसहिते । एतद्विशेषणं तृणपञ्चमूलोत्पलादीनाम् । तृणपञ्चमूले कुशकाशनलदर्भेत्यादिके । उत्पलादौ उत्पलरक्तोत्पलेत्यादिके । प्रथमो गणो विदारिगन्धादिः । यथेरितेनेति पूर्वोक्तविधानेन । एतेन लाजादि दत्त्वा प्रवाते निशि वासनं शर्करादिप्रक्षेपश्च लभ्यते । 'यथेरितेन' इत्यत्र केचित् 'यथैतदुक्तम्' इति पठन्ति; तत्रापि स एवार्थः ॥ २५ ॥—

मधूकपुष्पादिषु चापरेषु ॥
राजादनक्षीरिकपीतनेषु
षट् पानकान्यत्र हितानि च स्युः ॥ २६ ॥

क्षतजतृष्णायां षट्पानकान्याह—मधूकपुष्पादिष्वित्यादि । मधूकपुष्पादिषु मधूकशोभाञ्जनकोविदारप्रियङ्गुपुष्पेषु चतुर्षु रक्तपित्तघ्नगणपठितेषु; अन्ये मधूकपुष्पद्राक्षाकाश्मर्यखर्जूरेषु चतुर्षु रक्तपित्तपठितेष्विति वदन्ति । राजादनः चारः, अन्ये क्षीरिकामाहुः । क्षीरिकपीतन आर्द्रशिरीषः, अन्ये क्षीरीति द्रव्यान्तरमिच्छन्ति; तथा सति सप्तद्रव्यत्वेन संख्यातिरेकः स्यात् । पानकानि कषायाणि । अत्रापि यथेरितेनेति योज्यं; तेन लाजादि दत्त्वा प्रवाते निशि वासनं शर्करादिप्रक्षेपश्च गृह्यते । अत्र क्षतजतृष्णायाम् । केचित् 'ससारिवादौ' इत्यादिना 'क्षीरिकपीतनेषु' इति पर्यन्तेन षट्पानकानि वदन्ति; तन्न, सारिवादेस्तृणपञ्चमूलादीनां विशेषणत्वेनोक्तत्वात् पञ्च पानकानि स्युः । अपरे तु कशेर्वादिमारभ्य षट्पानकानीच्छन्ति; तदपि न, तस्य पृथग्दर्शितत्वात् ॥ २६ ॥

सतुण्डिकेराण्यथवा पिबेत्तु
पिष्टानि कार्पाससमुद्भवानि ॥

क्षतजतृष्णायामपरमपि योगान्तरमाह—सतुण्डिकेराण्यथवेत्यादि । तुण्डिकेरी वनकार्पासी । कार्पाससमुद्भवानि कार्पासफलानि । एतेन वनग्राम्यकार्पासीफलानि पिष्टानि पातव्यानि । **कार्तिककुण्डस्तु** 'सर्वासु तृष्णास्वथवा' इत्यादिकं 'कार्पाससमुद्भवानि' इत्यन्तं सर्वासु तृष्णासु चिकित्सितं मन्यते ॥—

क्षतोद्भवां रुग्विनिवारणेन
जयेद्रसानामसृजश्च पानैः ॥ २७ ॥

क्षतजतृष्णायामपरमपि चिकित्साविशेषमाह—क्षतोद्भवामित्यादि । रुग्विनिवारणेन क्षतोद्भवरुगपनयनेन । रसानां मांसरसानाम् । असृज इति एणादिशोणितस्येत्यर्थः ॥ २७ ॥

क्षयोत्थितां क्षीरघृतं निहन्या-
न्मांसोदकं वा मधुकोदकं वा ॥

क्षयजायास्तृष्णायाश्चिकित्सितमाह—क्षयोत्थितां क्षीरघृतमित्यादि । क्षीरघृतं क्षीरमथनोद्भूतं घृतं क्षीरमिश्रितं घृतं वा । मांसोदकं मांसरसस्याच्छो भागः सौरावाख्यः । मधुकोदकं यष्टीमधुकोदकम् । केचिदत्र माषोदकमिति पठित्वा माषयूषमिति व्याख्यानयन्ति ॥—

आमोद्भवां बिल्ववचायुतैस्तु
जयेत् कषायैरथ दीपनीयैः ॥ २८ ॥
आम्रातभल्लातबलायुतानि
पिबेत् कषायाण्यथ दीपनानि ॥

आमजायाश्चिकित्सामाह—आमोद्भवामित्यादि । दीपनीयैः पिप्पल्यादिद्रव्यकृतैः । आम्रातेत्यादि । आम्रातकादियुतानि दीपनानि कषायाणि आमजतृष्णायां पिबेदित्यर्थः ॥ २८ ॥—

१ 'बिसेषु सिद्धम्' इति पा० । २ 'तथैव' इति पा० । ३ अयं हस्तलिखितपुस्तके नोपलभ्यते । ४ 'मधुरे' इति पा० । ५ 'यथैव युक्तं' इति पा० ।

१ 'तेन पुष्पाधिवासनं शर्कराद्यावापश्च गृह्यते' इति पा० । २ 'दीपनानीम्' इति पा० ।

गुर्वन्नजातां वमनैर्जयेच्च
क्षयादृते सर्वकृतां च तृष्णाम् ॥ २९ ॥

भक्तजतृष्णाचिकित्सामाह—गुर्वन्नजातामित्यादि । गुर्वन्नजातां तृष्णां वमनैर्जयेदित्यर्थः । किं गुर्वन्नजातामेव वमनैर्जयेदुतान्यामपीत्याह—क्षयादित्यादि । क्षयादृते इति क्षयजां विहाय, सर्वदोषारब्धां तृष्णामपि वमनैर्जयेदिति पिण्डार्थः । क्षयजाऽपि सर्वदोषारब्धा, तस्यां क्षीणधातुत्वाद्वमनं न कार्यमिति द्योतनार्थं क्षयादृते इति कृतम् । सर्वकृताम् आमजामित्यर्थः, तस्या अपि दोषत्रयोत्पन्नत्वात् । अन्ये तु 'क्षयादृते सर्वकृताश्च तृष्णा' इति पठन्ति, क्षयजां विहाय अन्याः सर्वा अपि तृष्णा वमनैर्जयेदिति व्याख्यानयन्ति ॥ २९ ॥

श्रमोद्भवां मांसरसो निहन्ति
गुडोदकं वाऽप्यथवाऽपि मन्थः ॥

तृष्णाप्रसङ्गेन श्रमादिजातानामपि तृष्णानां प्रतीकारमाह—श्रमोद्भवामित्यादि । मन्थः 'सक्तवः सर्पिषाऽभ्यक्ता' इत्याद्युक्तः । यदा श्रमजतृष्णा वातोल्बणा भवति तदा तां मांसरसो निहन्ति, यदा पित्तोल्बणा तदा मन्थ इति तात्पर्यार्थः ॥—

भक्तोपरोधात्तृषितो यवागू-
मुष्णां पिबेन्मन्थमथो हिमं च ॥ ३० ॥

भक्तोपरोधादित्यादि । भक्तोपरोधात् आहारनिरोधात् । उष्णां यवागूं वातोत्कटायां, हिमं मन्थं च पित्तोत्कटायां, पिबेदिति पर्यवसितोऽर्थः ॥ ३० ॥

या स्नेहपीतस्य भवेच्च तृष्णा
तत्रोष्णमम्भः प्रपिबेन्मनुष्यः ॥

या स्नेहपीतस्य भवेदित्यादि । यद्यपि 'स्नेहपीतस्य चेत्तृष्णा पिबेत्' इत्यादिनैव स्नेहजतृष्णाचिकित्सितं प्रागुक्तं, तथाऽपि प्रकरणान्तरत्वाद्दार्ढ्यार्थं पुनरुक्तम् ॥—

मद्योद्भवामर्धजलं निहन्ति
मद्यं तृषां याऽपि च मद्यपस्य ॥ ३१ ॥

मद्योद्भवामर्धजलमित्यादि । यद्यपि मदात्ययप्रस्तावे मद्यजतृष्णाचिकित्सितमुक्तं, तथाऽप्यधिकरणवशात् पुनरुक्तमतो न दोषः ॥ ३१ ॥

तृष्णोद्भवां[1] हन्ति जलं सुशीतं
सशर्करं सेक्षुरसं तथाऽम्भः ॥

तृष्णोद्भवामित्यादि । तृष्णोद्भवामिति हृद्रोगकर्षितस्य पुरुषस्योत्तरकालोत्पन्नामित्यर्थः । सशर्करं सुशीतं पानीयं तथा इक्षुरससहितं च पानीयं तृष्णोद्भवां तृष्णां हन्तीति पिण्डार्थः । **कार्तिककुण्डस्तु** 'श्रमोद्भवां मांसरसो निहन्ति' इत्यारभ्य तृष्णोद्भवां[2] हन्ति जलं सुशीतं सशर्करं सेक्षुरसं तथाऽम्भः' इति यावन्न पठति; अस्माभिस्तु **श्रीजेज्जटेन** पठितत्वात् पठितः ॥—

स्वैः स्वैः कषायैर्वमनानि तासां
तथा ज्वरोक्तानि च पाचनानि ॥ ३२ ॥

पूर्वं तृष्णासु वमनान्युक्तानि, तानि च यैर्द्रव्यैः क्रियन्ते तान्याह—स्वैः स्वैरित्यादि । स्वैः स्वैः कषायैः आत्मीयैरात्मीयैः क्वाथैः; एतेनैतदुक्तं—यासु छर्दिषु शमनाय ये कषाया उक्तास्तैरेव वमनानि तासु योज्यानि, तथा ज्वरोक्तानि पाचनानि च कार्याणि ॥ ३२ ॥

लेपावगाहौ परिषेचनानि
कुर्यात्तथा शीतगृहाणि चापि ॥
संशोधनं क्षीररसौ घृतानि
सर्वासु लेहान्मधुरान् हिमांश्च ॥ ३३ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे (दशमोऽध्यायः, आदितः) अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

सर्वतृष्णासु पित्तहरो विधिः कार्य इति यत् प्रागुक्तं तमेव पित्तहरविधिमाह—लेपावगाहावित्यादि । संशोधनं विरेचनं, पित्तहरत्वात् ॥ ३३ ॥

इति श्रीडल्ह(ड)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे तृष्णाप्रतिषेधो नामाष्टचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशत्तमोऽध्यायः ।

अथातश्छर्दिप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

तृष्णाप्रतिषेधानन्तरं तृष्णोपचारतुल्यत्वात्तृष्णाप्रतिषेधे छर्देरुपादानाच्च छर्दिप्रतिषेधारम्भो युक्त इत्यत आह—अथात इत्यादि ॥ १ ॥ २ ॥

अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ॥
अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः ॥३॥
श्रमात् क्षयात्तथोद्वेगादजीर्णात् कृमिदोषतः ॥
नार्याश्चापन्नसत्त्वायास्तथाऽतिद्रुतमश्नतः ॥ ४ ॥
अत्यन्तामपरीतस्य छर्देर्वै संभवो ध्रुवम् ॥
(बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ॥ ५ ॥)[1]

छर्देर्हेतुमाह—अतिद्रवैरित्यादि । एवंभूतस्य पुरुषस्य अतिद्रवादिभिः कारणैश्छर्देः संभव उत्पत्तिर्भवेदिति संबन्धः । अहृद्यैः अप्रियैः । उद्वेग उद्वेजनम् । आपन्नसत्त्वाया गर्भिण्याः ।

---

१–२ 'उष्णोद्भवं' इति पा० ।

१ अयमर्धश्लोको हाराणचन्द्रेण न पठितः ।

अतिद्रुतम् अतिशीघ्रम् । अश्नतो भोजनं कुर्वतः । अत्यन्तामपरीतस्य अत्यर्थमामवेष्टितस्य । केचित् 'अत्यन्तामपरीतस्य' इत्यत्र 'बीभत्सैर्हेतुभिश्चान्यैः' इति पठन्ति; पूयामेध्यादिदर्शनगन्धाघ्राणादैर्घृणाकरैरिति च व्याख्यानयन्ति ॥ ३—५ ॥

**छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ॥**
**निरुच्यते छर्दिरिति दोषो वक्त्राद्विनिश्चरन् ॥ ६ ॥**

छर्दिनिरुक्तिमाह—छादयन्नाननमित्यादि । छादयन् पूरयन्, आननं वक्त्रं, प्रवृत्तेराभिमुख्येनावस्थितत्वं वेगः, अर्दयन् दुःखयन्, अङ्गभञ्जनैः अङ्गव्यथाभिः, वक्त्राद्विनिश्चरन् वक्त्राद्विनिर्गच्छन्; वेगैः कृत्वा मुखं पूरयन् अङ्गव्यथाभिश्च पीडयन् वक्त्रान्निर्गच्छन् दोषच्छर्दिरिति निरुच्यत इति संबन्धः । केचित् 'वक्त्राद्विनिश्चरन्' इत्यत्र 'वक्त्रं प्रधावितः' इति पठित्वा मुखं गत इति व्याख्यानयन्ति ॥ ६ ॥

**दोषानुदीरयन् वृद्धानुदानो व्यानसङ्गतः ॥**
**ऊर्ध्वमागच्छति भृशं विरुद्धाहारसेवनात् ॥ ७ ॥**

छर्दिसंप्राप्तिमाह—दोषानुदीरयन्नित्यादि । व्यानसङ्गतः व्यानेन सह एकीभूत उदानः, विरुद्धाहारसेवनात् विरुद्धानामाहाराणां सेवनात्, वृद्धान् प्रकुपितान् दोषानुदीरयन् भृशमूर्ध्वमागच्छतीति संबन्धः । केचित् 'ईरयन् श्लेष्मपित्ते तु उदानो व्यानसंगतः । ऊर्ध्वमागच्छति रसो विरुद्धाहारसेविनाम्' इति पठन्ति; तं च कार्तिककुण्डो नेच्छति, यतो 'दोषो वक्त्रं प्रधावित' इत्यनेन गतार्थ, तथा रससहितस्य च दोषस्योर्ध्वगमनं रसदोषजत्वेन छर्द्याः पठितत्वेन सिद्धम् ॥ ७ ॥

**प्रसेको हृदयोत्क्लेशो भक्तस्यानभिनन्दनम् ॥**
**पूर्वरूपं मतं छर्द्या**

केचित् पूर्वरूपं न पठन्ति, युक्तं च पठितुं; समानतन्त्रपठितत्वात् ॥—

**यथास्वं च विभावयेत् ॥ ८ ॥**

पूर्वरूपानन्तरं प्रव्यक्तरूपता भवति, तल्लक्षणान्याह—यथास्वं च विभावयेदिति । पूर्वरूपं यथास्वमीयं प्रव्यक्तं रूपावस्थायां विभावयेत् विशेषेण प्रसेकस्य कषायाम्लमधुररसत्वेन भावयेत् जानीयादित्यर्थः ॥ ८ ॥

**प्रच्छर्दयेत् फेनिलमल्पमल्पं**
**शूलार्दितोऽभ्यर्दितपार्श्वपृष्ठः ॥**
**श्रान्तः सघोषं बहुशः कषायं**
**जीर्णेऽधिकं साऽनिलजा वमिस्तु ॥ ९ ॥**

वातजच्छर्दिलक्षणमाह—प्रच्छर्दयेदित्यादि । अभ्यर्दितपार्श्वपृष्ठः पीडितपार्श्वपृष्ठः । सघोषं सशब्दम् । एवम्भूतः पुरुषो यत्र रोगे एवंविधं छर्दयेत् जीर्णे चाधिकं छर्दयेत् सा वमिरनिलजा ज्ञेयेति संबन्धः । केचिदमुमन्यथा पठन्ति, स चाभावान्न दर्शितः ॥ ९ ॥

**योऽम्लं भृशं वा कटुतिक्तवक्त्रः**
**पीतं सरक्तं हरितं वमेद्वा ॥**
**सदाहचोषज्वरवक्त्रशोषो**
**मूर्च्छान्वितः पित्तनिमित्तजा सा ॥ १० ॥**

पित्तजच्छर्दिलक्षणमाह—योऽम्लमित्यादि । भृशमम्लं कटुकं वा यो वमेत् । सदाहशब्दश्चोषज्वराभ्यां संबध्यते; चोष आचूष्यत इव वेदना ॥ १० ॥

**यो हृष्टरोमा मधुरं प्रभूतं**
**शुक्लं हिमं सान्द्रकफानुविद्धम् ॥**
**अभक्तरुग्गौरवसादयुक्तो**
**वमेद्वमी सा कफकोपजा स्यात् ॥ ११ ॥**

कफजवमिलक्षणमाह—यो हृष्टरोमेत्यादि । हृष्टरोमा उद्धर्षितरोमाञ्चः । प्रभूतं बहु । सान्द्रं घनं । कफानुविद्धं कफमिश्रम् । अभक्तरुक् अन्नारुचिः । सादः अङ्गग्लानिः ॥ ११ ॥

**सर्वाणि रूपाणि भवन्ति यस्यां**
**सा सर्वदोषप्रभवा मता तु ॥**

सान्निपातिकवमिलक्षणमाह—सर्वाणीत्यादि । सर्वाणि रूपाणि वातजादिसमस्तच्छर्दिरूपाणि । यद्यपि तन्त्रान्तरे सन्निपाताख्यच्छर्दिलक्षणमुक्तं, तथाऽप्यत्र क्षीणस्येत्यादिना वक्ष्यमाणेन सा द्वितीया सूचिता, अतश्च नोक्ता ॥—

**बीभत्सजा दौहृदजाऽऽमजा च**
**सात्म्यप्रकोपात् कृमिजा च या हि ॥**
**सा पञ्चमी तां च विभावयेत्तु**
**दोषोच्छ्रयेणैव यथोक्तमादौ ॥ १२ ॥**

इदानीं कारणभेदादनेकप्रकारामपि पञ्चमीमेकामेव निर्दिशन्नाह—बीभत्सजेत्यादि । बीभत्सजा द्विष्टाशुचिपूत्यमेध्यादिकाद्घृणाकराज्जाता । दौहृदजा दौहृदविमाननाज्जाता, अन्ये दौहृदजां गर्भनिमित्तामाहुः । आमजा विसूच्यादिजाता । सात्म्यप्रकोपात् अकस्मात् सात्म्यत्यागात् । कृमिभिः कृता कृमिजा । बीभत्सजादि यावत्सा पञ्चमी, तां च दोषोच्छ्रयेणैव विभावयेत् । अन्ये तु व्याख्यानयन्ति—या कृमिजा सा पञ्चमी, तां च दोषोच्छ्रयेणैव विभावयेदिति ॥ १२ ॥

**शूलहृल्लासबहुला कृमिजा च विशेषतः ॥**
**कृमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥ १३ ॥**

१ 'वक्त्रं प्रधावितः' इति पा० । २ 'विरुद्धाहारसेविनाम्' इति पा० । ३ 'हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः । द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम्' इति पा० । ४ 'यश्छर्दयेत्' इति पा० ।

१ 'मूर्च्छान्विता' इति पा० । २ '॰गौरवसादयुक्तं' इति पा० । ३ 'सान्निपातिकयाश्छर्देर्द्वित्वमुक्तं' इति पा० । ४ 'याऽसात्म्यतो वा' इति पा० । ५ 'या स्यात्' इति पा० । ६ 'तांश्च' इति पा० । ७ 'शूलहृल्लासभूयिष्ठा' इति पा० ।

इदानीं कृमिजाया विशिष्टलिङ्गमाह—शूलहृल्लासबहुलेत्यादि । हृल्लासः थूत्करणम् ॥ १३ ॥

**क्षीणस्योपद्रवैर्युक्तां सासृक्पूयां सचन्द्रिकाम् ॥**
**छर्दिं प्रसक्तां कुशलो नारभेत चिकित्सितुम् ॥१४॥**

इदानीं सर्वासामेव च वमीनामवस्थायामसाध्यत्वमाह—क्षीणस्येत्यादि । नारभेतेति पदं क्षीणस्येत्यादिभिः प्रत्येकं योजनीयम् । तेन क्षीणस्य छर्दिं चिकित्सितुं नारभेत, तथा उपद्रवैर्युक्तां नारभेत, तथा सासृक्पूयां नारभेतेत्यादि द्रष्टव्यम् । प्रसक्तां निरन्तरप्रवृत्ताम् ॥ १४ ॥

**आमाशयोत्क्लेशभवा हि सर्वा-**
**स्तस्माद्धितं लङ्घनमेव तासु ॥ १५ ॥**

इदानीं सामान्येन सर्वासामपि वमीनां चिकित्सामाह—आमाशयोत्क्लेशभवा इत्यादि । आमाशयोत्क्लेशभवा इति आमाशयमुत्क्लिश्य दोषैर्जन्यन्त इति तात्पर्यार्थः । हितं लङ्घनं 'बलिन' इति वाक्यशेषः । तासु छर्दिषु ॥ १५ ॥

**वमीषु बहुदोषासु छर्दनं हितमुच्यते ॥**
**विरेचनं वा कुर्वीत यथादोषोच्छ्रयं भिषक् ॥ १६ ॥**

वमीषु बहुदोषास्वित्यादि । बहुदोषास्विति प्रबलकफासु, अन्यथा सान्निपातिक्यामेव वमनं प्राप्नुयात्; ततश्च बहुवचनं घटते । यथादोषोच्छ्रयमिति दोषोच्छ्रयं दोषाधिक्यमवेक्ष्य १६

**संसर्गश्चानुपूर्वेण यथास्वं भेषजायुतः ॥**

शोधनानन्तरं किं कर्तव्यमित्याह—संसर्गश्चानुपूर्वेणेत्यादि । संसर्गोऽन्नसंसर्गः पेयादिः, तर्पणादिकमन्ये, अनुपूर्वेण 'पेयां विलेपीमकृतं कृतं च यूषं' इत्यादिक्रमेण । यथास्वं भेषजायुत इति वातादेर्यदात्मीयं प्रत्यनीकमौषधं तेन आयुतः ईषद्युत इत्यर्थः ॥—

**लघूनि परिशुष्काणि सात्म्यान्यन्नानि चाचरेत् १७**

अन्नसंसर्जनानन्तरं किं कर्तव्यमित्याह—लघूनीत्यादि । लघूनि मात्रास्वभावाभ्यां लघूनि । परिशुष्काणि शष्कुल्यादीनि । सात्म्यानि ऋतुव्याधिविपरीतानि । केचिल्लघूनीत्यादिकं वमनार्हसंशमनमिच्छन्ति, वमनावशिष्टदोषशेषस्य शमनसाध्यत्वात् ॥ १७ ॥

**यथास्वं च कषायाणि ज्वरघ्नानि प्रयोजयेत् ॥**

इदानीं वमीषु सामान्यं चिकित्सितमतिदेशेनाह—यथास्वमित्यादि । यथास्वं यथात्मीयम् । एतेन वातादिज्वरहराणि कषायाणि वातादिजासु छर्दिषु योजयेदित्यर्थः ॥—

**हन्यात् क्षीरघृतं पीतं छर्दिं पवनसंभवाम् ॥ १८ ॥**
**ससैन्धवं पिबेत् सर्पिर्वातच्छर्दिनिवारणम् ॥**
**मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥**
**यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत् ॥ १९ ॥**
**पिबेद्वा व्यक्तसिन्धूत्थं फलाम्लं वैष्किरं रसम् ॥**
**सुखोष्णलवणं चात्र हितं स्नेहविरेचनम् ॥ २० ॥**

इदानीं वातजवमीचिकित्सितमाह—हन्यादित्यादि । क्षीरघृतमिति क्षीरमथनोद्भूतं घृतं क्षीरयुक्तं वा घृतं क्षीरघृतं; क्षीरोदकमिति वा पाठः । सलवणं सर्पिराह–ससैन्धवमित्यादि । सर्पिरपक्वमेव । उक्तं च **वाग्भटेन**–"हन्ति मारुतजां छर्दिं सर्पिः पीतं ससैन्धवम्" ( वा. चि. अ. ६ ) इति । पञ्चमूलीकृतां शालपर्ण्यादिकेन बिल्वादिकेन वा कृताम् । यूषमाह—मुद्गामलकयूषो वेत्यादि । सर्पिरिह यूषसंतलनार्थम् । ससैन्धवः सैन्धवयुक्तः । यवागूमित्यादि । पञ्चमूली महतीति **चन्द्रिकाकारः**; स्वल्पेति **चक्रपाणिः** । रसमाह—पिबेद्वा व्यक्तसिन्धूत्थमित्यादि । किम्भूतं ? व्यक्तसिन्धूत्थं प्रकटलवणम् । वैष्किरं लावादिमांसरसम् । तथा फलाम्लं फलेन दाडिममातुलुङ्गादिनाऽम्लमम्लतां प्राप्तम् । विरेचनमाह—सुखोष्णलवणं चात्रेति । अत्र वातच्छर्द्यां, स्नेहविरेचनं स्नेहेन एरण्डतैलादिना विरेचनं स्नेहविरेचनम् । सुखोष्णलवणं सुखं सुखकरमुष्णं लवणं यस्मिन् तत् । उक्तं च **वाग्भटेन**,–"कोष्णं सलवणं चात्र हितं स्नेहविरेचनम्" ( वा. चि. अ. ६ )—इति । अथवा सुखोष्णं लवणं चात्र' इति पाठः ॥ १८–२० ॥

**पित्तोपशमनीयानि पाक्यानि शिशिराणि च ॥**
**कषायाण्युपयुक्तानि घ्नन्ति पित्तकृतां वमीम् ॥२१॥**
**शोधनं मधुरैश्चात्र द्राक्षारससमायुतैः ॥**
**बलवत्यां प्रशंसन्ति सर्पिस्तैल्वकमेव च ॥ २२ ॥**

इदानीं पित्तजवमीचिकित्सितमाह—पित्तोपशमनीयानीत्यादि । पित्तोपशमनीयानि पित्तज्वरशमनानि, 'यथास्वं च कषायाणि ज्वरघ्नानि प्रयोजयेत्' इत्युक्तत्वात् । पाक्यानि शृतानि । शिशिराणि शीतकषायाणि । शोधनं वमनं विरेचनं वा; केचिच्छोधनशब्देन विरेचनमेव कथयन्ति, पित्तजायां तस्य प्रशस्तत्वात् । अत्र पित्तच्छर्द्याम् । मधुरैः शोधनद्रव्यैर्द्राक्षारससमायुतैः शोधनं विरेकवमनरूपं प्रशंसन्ति । बलवत्यां तैल्वकं सर्पिः वातव्याध्युक्तं, रोध्रसंस्कृतं वा ॥ २१ ॥ २२ ॥

**आरग्वधादिनिर्यूहं दशाङ्गयोगमेव वा ॥**
**पाययेताथ सक्षौद्रं कफजायां चिकित्सकः ॥ २३ ॥**

कफच्छर्दिचिकित्सितमाह—आरग्वधादिनिर्यूहमित्यादि ।

---

१ 'ताभ्यः' इति पा० । २ 'ताभ्यः छर्दिभ्यः' इति पा० । ३ 'दोषाधिक्येन' इति पा० । ४ 'संसर्गाश्चानुपूर्वेण यथास्वं भेषजायुतान्' इति पा० ।

१ 'अस्याग्रे हस्तलिखितपुस्तकेऽयं पाठ उपलभ्यते, त्रुटितं हि टिप्पणं संपूर्यते तत्र मयाऽणुबुद्धिना । क्षमन्तु सन्तो मम बुद्धिसागरा यतो भवन्तो गुणग्राहका भुवि'। २ 'पानानि' इति पा० । ३ 'पित्तोपशमनीयानि पित्तशान्तिकराणि पानानि पित्तकृतां वमीं घ्नन्ति । किंभूतानि ? शिशिराणि शीतलानि, तथा कषायाण्युपयुक्तानि कषायैर्द्रव्यैरुपयुक्तानि' इति पा० । ४ 'आरग्वधादिभिर्यूषं' इति पा० ।

निर्यूहं कषायम् । दशाङ्गयोगमिति "नागरं धान्यकं भार्गीमभयां सुरदारु च । वचां पर्पटकं मुस्तं भूतीकमथ कट्फलम् ॥ विनिष्क्वाथ्य पिबेत्" इति केचिद्दशाङ्गशब्दमूलमाहुः; तं च **कार्तिककुण्डो** नेच्छति, छर्दिहरत्वेनानभ्युपगमात् । **कार्तिकस्तु** दशाङ्गशब्देन 'कटुका चित्रकम्' इत्यादिकं कफज्वरोक्तमाह । यद्यपि 'कटुका चित्रकम्' इत्यादिकं 'यथास्वं च कषायाणि ज्वरघ्नानि प्रयोजयेत्' इत्यनेनैव प्राप्तं, तथाऽपि पुनस्तदुपादानं मरिचरहितस्योपयोगार्थम् । अन्ये दशाङ्गशब्देनातिसारोक्तं शालिपर्ण्यादिकमाहुः; तमपि दशमूलं निरामहेतुनैव नेच्छति **कार्तिककुण्डः** ॥ २३ ॥

**कृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम् ॥**
**तिसृष्वपि भवेत् पथ्यं माक्षिकेण समन्वितम् ॥२४॥**

सन्निपातजायाश्चिकित्सितमाह—कृतमित्यादि । विधिवत् यथोक्तशीतकषायविधिना । हिमसंज्ञितं शीतकषायाख्यम् । तिसृषु वातपित्तकफजासु, अपिशब्दात् सन्निपातजास्वपि । सान्निपातिकी छर्दिर्बाहुल्येनासाध्या, अतस्तस्याश्चिकित्सितं नोक्तम् । शीतकषायविधानं च भेषजपलं क्षुण्णमुष्णाम्बुचतुष्पलाप्लुतं निशि संस्थितं ग्राह्यमिति । तन्त्रान्तरे यथा—"द्रव्यादापोत्थितात्तोये प्रतप्ते निशि संस्थितात् । कषायो योऽभिनिर्याति स शीतः समुदाहृतः ॥ षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः । आप्लुतं भेषजपलं रसाख्यस्य पलद्वयम्"—इति । प्रचारस्तु भिषजां भेषजपल एव जलपलद्वयेनेति । ननु, गुडूची शाकवर्गे कफपित्तमात्रशमनी पठिता, तत्कथमस्याः शीतकषायो वातादित्रयजासु शस्तत्वेनोपदिश्यते ? उच्यते—मधुयोगमहिम्ना दोषत्रयेऽपि हितत्वमस्याः । किंवा शाकवर्गे पत्रमस्याः कफपित्तहरमुक्तं, लता तु वातं शमयति; तदुक्तं **चरके**—"अमृता संग्राहकदीपनीयवातहरश्लेष्मशोणितविबन्धप्रशमनानां"—इति ॥ २४ ॥

**बीभत्सजां हृद्यतमैर्दौहृदीं काङ्क्षितैः फलैः ॥**
**लङ्घनैर्वमनैश्चामां सात्म्यैः[1] सात्म्यप्रकोपजाम् ॥२५॥**
**कृमिहृद्रोगवच्चापि कृमिजां साधयेद्वमीम् ॥**

बीभत्सजादिष्वौषधमाह—बीभत्सजामित्यादि । दौहृदीं दौहृदविमाननजातां वमिं; अन्ये गर्भजामाहुः । आमाम् आमजाम् । वमनं तावत् सर्वास्वेवोपदिष्टम्, आमजायां पुनर्वमनकथनं बलं विनाऽप्यत्र वमनं कार्यमिति प्रतिपादनार्थम्, अन्यथा ह्यामाद्यापत्तिः । सात्म्यप्रकोपजां सात्म्यपरित्यागजाम् ॥ २५ ॥—

**वितरेच्च यथादोषं शस्तं विधिमनन्तरम् ॥ २६ ॥**

यथादोषमतिदेशेन चिकित्सामाह—वितरेच्च यथादोषमित्यादि । यथादोषमिति दोषानतिक्रमेण; यथादोषप्रकृत्यापादनाय स्वं स्वं चिकित्सितं कार्यं, तदनन्तरं दोषचिकित्सितं; अत एवौषधमत्र न निर्दिष्टम् । अन्ये तु सर्वास्वेव छर्दिषु पुनरावृत्तिनिवारणार्थमेतत् कर्तव्यमित्याहुः । 'शस्तं' इत्यत्र 'व्यस्तं' इत्यन्ये पठन्ति ॥ २६ ॥

**दधित्थरससंसक्तां पिप्पलीं माक्षिकान्विताम् ॥**
**मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्यः प्रवि(ति)मुच्यते ॥२७॥**
**समाक्षिका मधुरसा पीता वा तण्डुलाम्बुना ॥**
**तर्पणं वा मधुयुतं तिसृणामपि भेषजम् ॥ २८ ॥**
**स्वयङ्गुप्तां सयष्ट्याह्वां तण्डुलाम्बुमधुद्रवाम् ॥**
**पिबेद्यवागूमथवा सिद्धां पत्रैः करञ्जजैः ॥ २९ ॥**
**युक्ताम्ललवणाः पिष्टाः कुस्तुम्बुर्योऽथवा हिताः ॥**
**तण्डुलाम्बुयुतं खादेत् कपित्थं त्र्यूषणेन वा ॥ ३० ॥**
**सिताचन्दनमध्वाक्तं लिह्याद्वा मक्षिकाशकृत् ॥**
**पिबेत् पयोऽग्नितप्तं च निर्वाप्य गृहगोधिकाम्[1] ॥३१॥**
**सर्पिःक्षौद्रयुतान् वाऽपि लाजशक्तून् पिबेत्तथा ॥**
**सर्पिःक्षौद्रसितोपेतां मागधीं वा लिहेत्तथा ॥ ३२ ॥**
**धात्रीरसे चन्दनं वा घृष्टं मुद्गदलाम्बुना ॥**
**कोलामलकमज्जानं लिह्याद्वा त्रिसुगन्धिकम् ॥३३॥**
**सक्षौद्रां शालिलाजानां यवागूं वा पिबेन्नरः ॥**
**प्रेयाण्युपहरेच्चापि मनोघ्राणसुखानि च ॥ ३४ ॥**
**जाङ्गलानि च मांसानि शुभानि पानकानि[2] च ॥**
**भोजनानि विचित्राणि कुर्यात्सर्वास्वतन्द्रितः ॥ ३५ ॥**

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे छर्दिप्रतिषेधो नाम (एकादशोऽध्यायः, आदितः) एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

सामान्येन छर्दिचिकित्सामाह—दधित्थरससंयुक्तामित्यादि । दधित्थः कपित्थः, माक्षिकान्वितां मधुयुक्तां; दधित्थरसं पिप्पलीमधुकयुक्तं पीत्वा छर्दिं जयतीति पिण्डार्थः । समाक्षिकेत्यादि । मधुरसा मूर्वा । तण्डुलाम्बुना तण्डुलधावनोदकेन । तर्पणं लाजसक्तुकृतं, लाजानां छर्दिहरत्वात् । तिसृणामिति तिसृणां वातादिजानां, छर्दीनां, एतेन त्रिदोषजच्छर्दिहरत्वमस्योक्तं भवति; यतो यत् वातादिजासु पृथक् तिसृषु भेषजं तदेव मिलितवातादित्रयजाया अपि प्रकृतिसमवेताया हितम् । तथा चोक्तम्,—"यैषा पृथक्त्वेन मया क्रियोक्ता तां सन्निपातेषु च तीक्ष्णबुद्ध्या । रोगेषु दोषाभिबलाद्यपेक्षया कुर्याद्भिषक् शास्त्रविधौ विचक्षणः"—इति । स्वयंगुप्तामित्यादि । स्वयंगुप्ता कपिकच्छूः । तण्डुलाम्बुमधुद्रवामिति तण्डुलाम्बुमधुनि द्रवे यस्यां सा तामित्यर्थः; मधु कर्षप्रमाणं, तण्डुलाम्बु चतुर्गुणम् । अथवा करञ्जजैः पत्रैः सह सिद्धां यवागूं पिबेत्,

१ 'सात्म्यैश्चासात्म्यकोपजाम्' इति पा० ।

१ 'गृहगोपिकाम्' इति पा० । २ 'स्वादुवत्पानकानि' इति पा० ।

श्लेष्मभूयिष्ठायामित्युपस्कारः । युक्ताम्ललवणा इत्यादि । युक्ताम्ललवणा उचितप्रमाणाम्ललवणयुक्ताः । पिष्टा दृषदि पिष्टाः । कुस्तुम्बुर्यो धान्यकाः । केचिद्युक्ताम्ललवणा इति पदं यवाग्वाऽपि संबध्नन्ति । तण्डुलाम्बिवत्यादि । त्र्यूषणं त्रिकटुकं; योगद्वयमेतत्; अथवा कपित्थं तण्डुलाम्बुयुतं खादेत्; त्र्यूषणेन वा युतं खादेत् । सिता शर्करा । चन्दनं रक्तचन्दनम् । सितादियुक्तं मक्षिकापुरीषं वा लिह्यात् । पिबेदित्यादि । अभितप्तां गृहगोधिकां पयसि निर्वाप्य तत् पयः पिबेदित्यर्थः । पयो जलम् । अत्र गृहगोधि(पि)काशब्देन वरमठीकृतं मृन्मयं गृहमुच्यते उपचारात् । अथवा सर्पिःक्षौद्रयुतान् लाजशक्तून् पिबेत् । धात्रीरसे चन्दनं वा घृष्टं मुद्गदलाम्बुना पिबेत् । कोलादिमज्जानं मधुना लिह्यात् । त्रिसुगन्धिकं त्रिजातकं वा मधुना लिह्यात् । अथवा शालिलाजानां यवागूं पिबेत् । प्रेयाण्युपाहरेदित्यादि । मनोज्ञानि सुखानि चेति चेतोनासिकाह्लादजनकानि प्रेयाणि सुगन्धद्रव्याणि, तथा सुखानि आयत्यां सुखजनकानि । तथा जाङ्गलानि मांसानि शूल्यानि शूलप्रोतानि पक्वानि तथा शुभानि पानकानि च सुखजनकानि उपाहरेत् । भोजनानि विचित्राणि नानाप्रकाराणि कुर्यात् । अतन्द्रितः अनलसः ॥ २७—३५ ॥

इति श्रीडल्ह(ड)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायामुत्तरतन्त्रे छर्दिप्रतिषेधो नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

## पञ्चाशत्तमोऽध्यायः ।

**अथातो हिक्काप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

छर्दिप्रतिषेधानन्तरं तुल्यसंख्यत्वात् कतिपयनिदानसाम्याच्च हिक्काप्रतिषेधं व्याख्यातुं प्रतिजानीते,—अथात इत्यादि ॥ १ ॥ २ ॥

**विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः ॥**
**शीतपानासनस्थानरजोधूमानिलानलैः ॥ ३ ॥**
**व्यायामकर्मभाराध्ववेगाघातापतर्पणैः ॥**
**आमदोषाभिघातस्त्रीक्षय[1]दोषप्रपीडनैः ॥ ४ ॥**
**विषमाशनाध्यनशनैस्तथा समशनैरपि ॥**
**हिक्का श्वासश्च कासश्च नृणां समुपजायते ॥ ५ ॥**

हिक्काया निदानमाह—विदाहिगुरुविष्टम्भीत्यादि । विदाह्यादिभिर्हिक्कादयस्त्रयो जायन्ते इत्यन्वयः । विदाहीनि मरीचसर्षपमद्यप्रभृतीनि । गुरूणि गुणतः पाकतश्च । विष्टम्भीनि करीरप्रभृतीनि । रूक्षाणि चणकादीनि । अभिष्यन्दीनि अभिमुखेन स्यन्दितुं शीलं येषां तानि, अभिष्यन्दनशीलानि मत्स्यमाषफाणितादीनि । शीतशब्दः पानादिभिस्त्रिभिः संबध्यते । रजो धूलिः, सा च धूमवन्नासाप्रवेशात् कारणम् । व्यायामकर्म धनुराकर्षणादिव्यापारः । वेगाघातो वेगधारणम् । अपतर्पणम् अनशनादि । प्रपीडनशब्द आमदोषादिभिः प्रत्येकं संबध्यते । आमदोषः "ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् । दुष्टमामाशयगतं रसमामं प्रचक्षते"—इत्युक्तलक्षणः । कासश्वासोऽपि एकनिदानप्रतिपादनार्थं पुनरभिहित इति ॥ ३–५ ॥

**मुहुर्मुहुर्वायुरुदेति सस्वनो**
**यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् ॥**
**स घोषवानाशु हिनस्त्यसून् यत-**
**स्ततस्तु हिक्केति भिषग्भिरुच्यते ॥ ६ ॥**

हिक्कानां स्वरूपं निरुक्तिं चाह—मुहुरित्यादि । वायुरत्र सोदानः प्राण इत्याहुः । मुहुर्मुहुरुदेति ऊर्ध्वमेति । सस्वनः शब्दवान् । ऊर्ध्वगतिमेव विशिनष्टि—यकृदित्यादि । अत्र प्लिहो ह्रस्वेकारत्वं छन्दोऽनुरोधात् । मुखादिति ल्यब्लोपे पञ्चमी, तेन यकृत्प्लीहान्त्राणि मुखमानीय निःक्षिपन् निःसारयन्नित्यर्थः । मुखादिवेत्यादि मुखशब्देन प्राणोदकान्नवाहीनि स्रोतांसि लभ्यन्ते । उक्तं च,—'प्राणोदकान्नवाहीनि स्रोतांसि विकृतोऽनिलः' इति । स घोषवानित्यादिना हिक्कानिरुक्तिः । यतः स वायुः घोषवान् सन् आशु शीघ्रमसून् प्राणान् हिनस्ति ततो बुधैः 'हिक्का' इत्युच्यते । सस्वन इत्यनेन गतत्वाद् घोषवानित्यभिधानं निरुक्तिप्रदर्शनार्थम् । हिक्केति निरुक्तौ पृषोदरादित्वाद्रूपसिद्धिः । हिग् इति कृत्वा कायति शब्दायते इति 'हिक्का' इति शाब्दिकाः ॥ ६ ॥

**अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा ॥**
**वायुः कफेनानुगतः पञ्च हिक्काः करोति हि ॥ ७ ॥**

तासां भेदं संप्राप्तिं चाह—अन्नजामित्यादि । वायुः कफेनानुगतः सन् अन्नजादिभेदेन पञ्च हिक्काः करोति । यमलैव चरके व्यपेतेति नाम्ना पठ्यते, अन्नपाने व्यपेते परिणते जायत इत्यतो हेतोः । 'कफेनानुगतः प्राणः' इति वा पाठः । प्राणोऽत्र वायुरिति ॥ ७ ॥

**मुखं कषायमरतिर्गौरवं कण्ठवक्षसोः ॥**
**पूर्वरूपाणि हिक्कानामाटोपो जठरस्य च ॥ ८ ॥**

हिक्कानां पूर्वरूपमाह—मुखमित्यादि । मुखं कषायं वातात्, न तु कफान्माधुर्यं, व्याधिप्रभावात् । अरतिः न कुत्रचिदवस्थितिश्चेतसः । केचित् पूर्वरूपं न पठन्ति, कफवातोद्भवस्य गौरवादेरनुमानग्राह्यत्वात् ॥ ८ ॥

**त्वरमाणस्य चाहारं भुञ्जानस्याथवा घनम् ॥**
**वायुरन्नैरवस्तीर्णः[1] कटुकैरर्दितो भृशम् ॥ ९ ॥**
**हिक्कयत्यूर्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥**

१ '°क्षयरोगप्रपीडनैः' इति पा० ।

१ 'पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः' इति पा० ।

अन्नजालक्षणमाह—त्वरमाणस्येत्यादि । अन्नजादीनां साध्यत्वेन प्राशस्त्यात् पूर्वमभिधानम् । आहारं त्वरमाणस्य अथवा घनं गुरुमन्नं भुञ्जानस्य अन्नैरवस्तीर्ण आच्छादितो वायुः तथा कटुकैर्भृशमर्दितो वायुरूर्ध्वगो भूत्वा हिक्कयति हिक्कां करोति, भिषक् ताम् अन्नजां विद्यात् जानीयात्; यद्यप्यन्नजायां वायुः कारणं, तथाऽप्यन्नेन तत्पीडनात्तद्व्यपदेशः ॥ ९ ॥—

चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्तते ॥ १० ॥
कम्पयन्ती शिरोग्रीवं यमलां तां विनिर्दिशेत् ॥

यमलालक्षणमाह—चिरेणेत्यादि । या हिक्का चिरेण यमलैर्वेगैः संप्रवर्तते सा यमला, यमलैर्वेगैर्युगपद्वारद्वयं हिक्कते इत्यर्थः । कम्पयन्ती शिरोग्रीवमित्युपलक्षणं; तेन चरकोक्ताः प्रलापवमितृष्णावैचित्त्यजृम्भाविप्लुताक्षत्वमुखशोषाश्च बोद्धव्या इति **गयदासः** । इयमसाध्याऽपि बलवतः स्थिरधातोरिन्द्रियस्य सत्त्ववतश्च सिध्यति ॥ १० ॥—

विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्तते ॥ ११ ॥
क्षुद्रिका नाम सा हिक्का जत्रुमूलात् प्रधाविता ॥

क्षुद्रालक्षणमाह—विकृष्टकालैरित्यादि । विकृष्टकालैरिति चिरेण वेगैर्जायते । किंभूता? जत्रुमूलात् प्रधाविता आगता, सा क्षुद्रिकाख्या । जत्रुः कण्ठोरसोः सन्धिरिति **जेज्जटः**; जत्रु ग्रीवामूलं, तद्ग्रहणेन हृदयक्लोमकण्ठानामपि ग्रहणमिति **गयदासः** ॥ ११ ॥—

नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी ॥१२॥
शुष्कौष्ठकण्ठजिह्वास्यश्वासपार्श्वरुजाकरी ॥
अनेकोपद्रवयुता गम्भीरा नाम सा स्मृता ॥ १३ ॥

गम्भीरालक्षणमाह—नाभिप्रवृत्तेत्यादि । या हिक्का नाभिप्रवृत्ता नाभितः प्रवृत्तिर्यस्याः सा, अत एव अस्या गम्भीरत्वं; घोरा कष्टसाध्या । शुष्केत्यादि शुष्कशब्द ओष्ठादिभिश्चतुर्भिः संबन्धनीयः । तथा अनेकोपद्रववती अनेकोपद्रवैर्ज्वरश्वासतृष्णादिभिर्युक्ता, सा गम्भीरा नाम स्मृता; इयमसाध्या ॥१२॥१३॥

मर्माण्यापीडयन्तीव सततं या प्रवर्तते ॥
देहमायम्य वेगेन घोषयत्यतितृष्यतः ॥
महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी ॥ १४ ॥

महाहिक्कालक्षणमाह—मर्माणीत्यादि । मर्माणि बस्तिहृदयशिरांसि; अन्ये नाभिहृदयस्तनमूलान्याहुः । आयम्य विस्तार्य, 'आयस्य' इति पाठे स एवार्थः । घोषवती सशब्दा । इयमप्यसाध्या ॥ १४ ॥

आयम्यते हिक्कतोऽङ्गानि यस्य
दृष्टिश्चोर्ध्वं ताम्यते यस्य गाढम् ॥
क्षीणोऽन्नद्विट् कासते यश्च हिक्की
तौ द्वावन्त्यौ वर्जयेद्धिक्कमानौ ॥ १५ ॥

१ 'घनं सान्द्रं' इति पा० । २ 'यमलैर्वेगैर्भूयो वेगद्वयं करोतीत्यर्थः' इति पा० । ३ 'तृष्णार्तस्य महात्मना' इति पा० । ४ 'क्षौति यश्चातिमात्रं' इति पा० ।

इदानीं साध्यानामपि हिक्कानामवस्थाविशेषेऽसाध्यत्वमाह—आयम्यत इत्यादि । यस्य पुंसो हिक्कतो हिक्कां कुर्वतो देह आयम्यते दीर्घीक्रियत इव; तथैव दृष्टिश्चोर्ध्वं 'भवति' इति शेषः, दृष्टिशब्देनात्र दृष्ट्यधिष्ठानं विवक्षितं, नतु दर्शनेन्द्रियशक्तिः । गाढम् अतिशयेन, ताम्यते आकुल्यते देह इति संबन्ध इति **जेज्जटगयदासौ**; 'ताम्यते यश्च' इति पाठान्तरं, ताम्यते मुह्यति हिक्की । क्षीणस्तथा अन्नद्विट् तथा क्षौति क्षुतं करोति । तौ द्वाविति आयम्यत इत्यादिना नित्यमित्यन्तेन एकावस्थो हिक्की, क्षीण इत्यादिना अतिमात्रान्तेनापरः । साध्यानामपि मध्ये एवंविधौ वर्जयेदित्यर्थः; गम्भीरामहत्योः स्वभावादेवासाध्यत्वात्तद्युक्तौ हिक्किनौ, अन्त्यौ अन्तपठितौ, असाध्यौ । पाठान्तराणि व्याख्याविशेषाश्च विस्तरभयान्न लिखिताः ॥ १५ ॥

प्राणायामोद्वेजनत्रासनानि
सूचीतोदैः संभ्रमश्चात्र शस्तः ॥

इदानीं हिक्कानां चिकित्सितमाह—प्राणायामोद्वेजनेत्यादि । अत्र हिक्कासु, प्राणायामादि शस्तमिति संबन्धः । प्राणायामो वायोर्निरोधः । यद्यपि रेचकपूरककुम्भकभेदात् प्राणायामस्त्रिविधः, तथाऽप्यूर्ध्वगतिनिरोधात् कुम्भक एवात्र । त्रासनमल्पसत्त्वस्य भयोत्पादकैर्वाक्यैः । उद्वेजनं परुषवचनैः । सूचीतोदैः संभ्रमः सूचीव्यथाभिर्मनस आकुलीकरणम् । एतच्च प्रायः क्षुद्रायामन्नजायां च योजनीयम् ॥—

यष्ट्याह्वं वा माक्षिकेणावपीडे
पिप्पल्यो वा शर्कराचूर्णयुक्ताः ॥ १६ ॥

नस्यमाह—यष्ट्याह्वं वेत्यादि । वाशब्दोऽत्र भिन्नक्रमे । यष्ट्याह्वं यष्टीमधु, माक्षिकेण मधुना, अवपीडे शस्तं; पिप्पल्यो वा शर्कराचूर्णयुक्ता अवपीडे शस्ता इति योजनीयम् ॥ १६ ॥

सर्पिः कोष्णं क्षीरमिक्षो रसो वा
नातिक्षीणे छर्दनं शान्तिहेतोः ॥

सर्पिरित्यादि । सर्पिःप्रभृतिकं पानं हितम् । छर्दनं वमनम् । 'शान्तिहेतोः' इत्यत्रान्ये 'स्रंसनं च' इति पठित्वा विरेचनं चेति व्याख्यानयन्ति; तं च नेच्छन्ति **श्रीजेज्जटाचार्याः**, समतन्त्रेष्वपि हिक्कासु विरेचनस्याननुक्तत्वात् ॥—

नारीपयःपिष्टमशुक्लचन्दनं
घृतं सुखोष्णं च ससैन्धवं तथा ॥ १७ ॥
चूर्णीकृतं सैन्धवमम्भसाऽथवा
निहन्ति हिक्कां च हितं च नस्यतः ॥

नस्यत्रयमाह—नारीपय इत्यादि । नारीपयःपिष्टमशुक्लचन्दनं रक्तचन्दनं नस्यतो नस्यात् हितमित्येको योगः । अशुक्लचन्दनं सुखोष्णं घृतं चेति द्वितीयः । सुखोष्णम् ईषदुष्णम् । अथवाऽम्भसा चूर्णीकृतं सैन्धवं चेति तृतीयः । एतानि त्रीणि नस्यानि दोषाद्यपेक्षया योज्यानि ॥ १७ ॥—

१ 'स्रंसनं च' इति पा० ।

युञ्ज्याद्धूमं शालनिर्यासजातं
नैपालं वा गोविषाणोद्भवं वा ॥ १८ ॥
सर्पिःस्निग्धैश्चर्मवालैः कृतं वा
हिक्कास्थाने स्वेदनं चापि कार्यम् ॥

नस्यानन्तरं लीनदोषनिर्हरणार्थं धूमानाह—युञ्ज्यादित्यादि । शालनिर्यासः सर्जरसः । नैपालं मनःशिलाजातं धूमम् । गोविषाणोद्भवं गोशृङ्गोद्भवधूमं, चर्मवालैर्गोरेव । स्वेदनमाह–हिक्केत्यादि । हिक्कास्थाने कण्ठस्तनान्तरे । केचिच्चर्मवालैः स्वेदनमिच्छन्ति ॥ १८ ॥—

क्षौद्रोपेतं गैरिकं काञ्चनाह्वं
लिह्याद्भस्म ग्राम्यसत्त्वास्थिजं वा ॥ १९ ॥
तद्वच्छ्वाविन्मेषगोशल्य(ल्ल)कानां
रोमाण्यन्तर्धूमदग्धानि चात्र ॥
मध्वाज्याक्तं बर्हिपत्रप्रसूत-
मेवं भस्मौदुम्बरं तैल्वकं वा ॥ २० ॥
स्वर्जिक्षारं बीजपूराद्रसेन
क्षौद्रोपेतं हन्ति लीढ्वाऽऽशु हिक्काम् ॥

लेहानाह—क्षौद्रोपेतमित्यादि । काञ्चनाह्वं गैरिकं सुवर्णगैरिकं दाक्षिणात्यप्रसिद्धं क्षौद्रोपेतं लिह्यादित्यर्थः । ग्राम्यसत्त्वा गवादयस्तेषामस्थिजं भस्म क्षौद्रोपेतं लिह्यात् । तद्वदिति क्षौद्रोपेतं श्वाविधादीनां रोमजं भस्म लिह्यात् । श्वावित् सेढिका, तस्याः सूचय एव लोमानि । अन्तर्धूमदग्धानीति एतेषां रोमाणि घटमध्ये निक्षिप्य मुखं पिधाय दग्धानीत्यर्थः । अत्र हिक्कासु । 'अत्र' इत्यत्र 'आर्ते' इति केचित् पठन्ति । किमेतावदेव लीढ्वा हिक्कां हन्त्युतान्यदपीत्याह—मध्वित्यादि । बर्हिपत्रप्रसूतं मयूरपिच्छचन्द्रिकोत्पन्नं भस्म मधुघृतोपेतं, एवं पूर्वोक्तगुणम् । मधुघृते अत्र न तुल्यभागे; उक्तं च,—"भजतो विषरूपत्वं तुल्यांशे मधुसर्पिषी"—इति । औदुम्बरं तैल्वकं वा भस्म एवं मयूरपत्रवन्मधुघृतोपेतं हिक्काघ्नम् । स्वर्जिक्षारमित्यादि । यस्मात् हिक्का श्लेष्मावरुद्धमार्गवातजा तस्मान्मार्गविशुद्ध्यर्थमेते लेहा देयाः ॥ १९ ॥ २० ॥—

सर्पिःस्निग्धा घ्नन्ति हिक्कां यवाग्वः
कोष्णग्रासाः पायसो वा सुखोष्णः ॥ २१ ॥

इदानीमाहाराश्रितं हिक्कानामौषधमाह—सर्पिरित्यादि । कोष्णग्रासाः सुखोष्णकवलाः । पायसमाह—पायसो वा सुखोष्ण इति हन्तीत्यनुवर्तते ॥ २१ ॥

शुण्ठीतोये साधितं क्षीरमाजं
तद्वत् पीतं शर्करासंयुतं वा ॥
आतृप्तेर्वा सेव्यमानं निहन्याद्
घ्रातं हिक्कामाशु मूत्रं त्वजाव्योः ॥ २२ ॥

क्षीरमाह—शुण्ठीतोये साधितमित्यादि । शुण्ठीतोये क्षीराच्चतुर्गुणे साधितमजादुग्धं पीतं तद्वत् हिक्काहरं भवति; शर्करासंयुतं वा साधितं दुग्धमातृप्तेः सेव्यमानं हिक्कां निहन्यादित्यर्थः ॥ २२ ॥

सपूतिकीटं लशुनोग्रगन्धा-
हिङ्ग्वञ्जमाचूर्ण्य सुभावितं तत् ॥

घ्रेयप्रसंगेन घ्रेययोगमाह—सपूतिकीटमित्यादि । लशुनादिकमञ्जान्तमाचूर्ण्य तच्चूर्णं सपूतिकीटं पूतिकीटचूर्णसहितं, पूतिकीटो 'भोंदुलिका' इति लोके, सुभावितमजाव्योरेव मूत्रेण बहून् वारान् भावितं, घ्रातं हिक्कां निहन्यादित्यर्थः ॥—

क्षौद्रं सितां वारणकेशरं च
पिबेद्रसेनेक्षुमधूकजेन ॥ २३ ॥

हिक्काघ्नं पानमाह—क्षौद्रमित्यादि । वारणकेशरं नागकेशरं, क्षौद्रादिकमिक्षुमधूकजेन रसेन पिबेदिति संबन्धः; अत्र मधुनो द्रवत्वाच्चूर्णाभावः, तेन मधुनः प्रक्षेपः । मधुमात्रा तु "षोडशाच्चतुर्भागं वातपित्तकफार्तिषु । क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा" इति इक्षुरसमधूकस्वरसौ तु लेहाच्चतुर्गुणौ । उक्तं च—"कर्षश्चूर्णस्य कल्कस्य गुटिकानां तु सर्वशः । द्रवशुक्त्याऽवलेढव्यः पातव्यश्च चतुर्गुणे" ॥ २३ ॥

पिबेत् पलं वा लवणोत्तमस्य
द्वाभ्यां पलाभ्यां हविषः समग्रम् ॥

योगान्तरमाह—पिबेत् पलमित्यादि । लवणोत्तमस्य सैन्धवस्य । समग्रमिति इयमुत्तममात्रेति बोधार्थं, तेन हीनबलादिकमवेक्ष्य हीनमात्रमपि पिबेदित्यर्थः ॥—

हरीतकीं कोष्णजलानुपानां
पिबेद्धृतं क्षारमधूपपन्नम् ॥ २४ ॥
रसं कपित्थान्मधुपिप्पलीभ्यां
शुक्तिप्रमाणं प्रपिबेत् सुखाय ॥ २५ ॥

हरीतक्यादियोगत्रयमाह—हरीतकीमित्यादि । घृतं कोष्णं कृत्वा क्षीरमधुभ्यामुपपन्नं युक्तं पिबेत् । शुक्तिप्रमाणमिति अर्धपलप्रमाणम् । प्रसृतप्रमाणमित्यर्थः । अर्धपलमितं मधु, पिप्पलीप्रमाणं कर्षमात्रम् । कपित्थाद्रसं स्वरसं, सुखाय आरोग्याय पिबेत् । हरीतकीमित्याद्येको योगः, पिबेद्धृतमित्यादिर्द्वितीयः, रसं कपित्थादित्यादिस्तृतीयः ॥ २४ ॥ २५ ॥

कृष्णां सितां चामलकं च लीढं
सशृङ्गवेरं मधुनाऽथवाऽपि ॥
कोलास्थिमज्जाञ्जनलाजचूर्णं
हिक्का निहन्यान्मधुनाऽवलीढम् ॥ २६ ॥

कृष्णादियोगमाह—कृष्णां सितामित्यादि । अथवेति पूर्वयोगापेक्षया परयोगापेक्षया वा । कृष्णां पिप्पलीं, सितां शर्करां, शृङ्गवेरं शुण्ठीं; कृष्णां सितां च मधुना लिह्यादित्येको योगः, सशृङ्गवेरमामलकं मधुनेति द्वितीयः । कार्तिककुण्डस्तु कृष्णा-

१ 'यवाग्व आह' इति पा० ।

१ 'हिङ्ग्वम्बुनाऽऽचूर्ण्य' इति पा० । २ 'पूतिकीटो वर्षाकालोद्भवः पीलिन्दिकेति प्रसिद्धः' इति पा० । ३ 'पिचुप्रमाणं' इति पा० ।

मित्यादिकमेकमेव योगमिच्छति, विकल्पं तु पूर्वयोगापेक्षया । कोलमज्जादियोगमाह—कोलास्थिमज्जेत्यादि । कोलास्थिमज्जा बदरास्थिजातं बीजं, अञ्जनं सौवीराञ्जनं, लाजाः पुष्पितं धान्यम् । मधु चूर्णाद्द्विगुणितं पातव्यम् ॥ २६ ॥

पाटलायाः फलं पुष्पं गैरिकं कटुरोहिणी ॥
खर्जूरमध्यं मागध्यः काशीशं दधिनाम च ॥ २७ ॥
चत्वार एते योगाः स्युः प्रतिपादप्रदर्शिताः ॥
मधुद्वितीयाः कर्तव्यास्ते हिक्कासु विजानता ॥ २८ ॥

पाटलादिकयोगचतुष्टयमाह—पाटलायाः फलं पुष्पमित्यादि । एते चत्वारो योगाः प्रतिपादं पादिका योगाः, प्रदर्शिता उक्ताः । पाटल्याः सफलं पुष्पं क्षौद्रेणैत्येको योगः । गैरिकं स्वर्णगैरिकं, कटुरोहिणी तिक्ता, क्षौद्रेणेति द्वितीयो योगः । खर्जूरमध्यं मागध्यो मधुयुक्ता इति तृतीयो योगः; खर्जूरमध्यं खर्जूरमस्तकमज्जा, अन्ये खर्जूरास्थीन्याहुः । काशीशं स्वनामख्यातं दधिनाम कपित्थं, मधुनेति चतुर्थो योगः; 'काशीशं दधि ना सह' इति केचित् पठन्ति; काशीशं दधि च ना पुरुषः लिह्यादिति व्याख्यानयन्ति ॥ २७ ॥ २८ ॥

कपोतपारावतलावश(ल)क-
श्वदंष्ट्रगोधावृषदंशजान् रसान् ॥
पिबेत् फलाम्लानहिमान् ससैन्धवान्
स्निग्धांस्तथैवर्ष्यमृगद्विजोद्भवान् ॥ २९ ॥

रसानाह—कपोतपारावतलावेत्यादि । कपोतादिपक्षिणां रसान् मांसरसान्, फलाम्लान् दाडिमादिसंस्कृतान्, अहिमान् उष्णान्, सैन्धवयुक्तान् स्निग्धान् घृताढ्यान् पिबेत् । वृषदंशो वनमार्जारः, गोधा पञ्चनखा । तथैव ऋष्यादिजान् रसान् पिबेत् । मृगद्विजा जङ्गालविष्किराः । ऋष्यलावकयोः पृथगुपादानं विशेषेण तयोर्हिक्काहरत्वप्रतिपादनार्थम् ॥ २९ ॥

विरेचनं पथ्यतमं ससैन्धवं
घृतं सुखोष्णं च सितोपलायुतम् ॥
सदागतावूर्ध्वगतेऽनुवासनं
वदन्ति केचिच्च हिताय हिक्किनाम् ॥ ३० ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते काय-
चिकित्सातन्त्रे हिक्काप्रतिषेधो नाम
(द्वादशोऽध्यायः, आदितः) पञ्चा-
शत्तमोऽध्यायः ॥ ५० ॥

विस्तरोक्तां चिकित्सां संक्षेपेणाह—विरेचनं पथ्यतममित्यादि । विरेचनं वायोरनुलोमार्थं बलवत आतुरस्य योज्यम् । सदागतौ वायौ । परमतमप्यनुमतमनिषेधात् । यद्यपि हिक्कासु बस्तिर्निषिद्धः, तथाऽप्यूर्ध्वगते वायौ प्रयुज्यते, अवस्थावशात् । यद्यप्येते योगाः सामान्येनोक्ताः, तथाऽपि दोषोच्छ्रायमवेक्ष्य यथावस्थं प्रयोज्याः ॥ ३० ॥

१ 'भर्जिततण्डुलाः' इति पा० । २ 'बीजपूरादिरसयुक्तान्' इति पा० । ३ 'ऋक्षो भल्लूकः, द्विजा लावादयः' इति पा० ।



इति श्रीडल्ह(ल्ल)णविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायामुत्तरतन्त्रे हिक्काप्रतिषेधो नाम
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

## एकपञ्चाशत्तमोऽध्यायः ।

अथातः श्वासप्रतिषेधं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

यैरेव कारणैर्हिक्का बहुभिः संप्रवर्तते ॥
तैरेव कारणैः श्वासो घोरो भवति देहिनाम् ॥ ३ ॥

हिक्काप्रतिषेधानन्तरं तुल्यहेत्वादिसाम्यात् श्वासप्रतिषेधारम्भः; अत एव वेगवदूर्ध्वगतवातयोगित्वसाधर्म्यात् हिक्काश्वासचिकित्सितमेकमेवोक्तं चरके । श्वासनिदानमाह—यैरेवेत्यादि । यैरेवेति विदाह्यादिभिः । कारणैः हेतुभिः । बहुभिः अनेकैः, बहुभिरिति कथनं श्वासस्य बहुप्रकारत्वसूचनार्थम् । हिक्का संप्रवर्तते जायते, तैरेव कारणैः श्वासो देहिनां प्राणिनां भवति । किंविशिष्टः? घोरः । **कार्तिककुण्डस्तु** अमुं पाठमयुक्तं वदति, हिक्काप्रतिषेध एव हिक्काश्वासयोस्तुल्यहेतुत्वप्रतिपादितत्वात्; मया पुनः **श्रीजेज्जट**पठितत्वात् पठितः ॥ १–३ ॥

विहाय प्रकृतिं वायुः प्राणोऽथ कफसंयुतः ॥
श्वासयत्यूर्ध्वगो भूत्वा तं श्वासं परिचक्षते ॥ ४ ॥

इदानीं श्वाससंप्राप्तिमाह—विहायेत्यादि । प्राणो वायुः, प्रकृतिं विहाय विगुणो भूत्वेत्यर्थः, ऊर्ध्वगो भूत्वा तथा कफसंयुतः सन् यदा श्वासयति तं बुधाः श्वासं परिचक्षते कथयन्ति । प्राणो वायुः कफसंयुत इत्युक्तेऽपि तत्रान्येऽपि दोषाः समुच्चीयन्ते; यदुक्तं तन्त्रान्तरे–"क्षुद्रको वातिकः श्लेष्मभूयिष्ठस्तमकः स्मृतः । छिन्नः पित्तप्रधानः स्यादन्यौ मारुतकोपजौ"–इति ॥ ४ ॥

क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चधा ॥
भिद्यते स महाव्याधिः श्वास एको विशेषतः ॥ ५ ॥

श्वासभेदानाह—क्षुद्रक इत्यादि । स श्वास एकोऽपि क्षुद्रकादिभेदात् पञ्चधा भिद्यते । संख्येयनिर्देशादेव पञ्चप्रकारत्वे सिद्धे पञ्चवचनं तमकभेदस्य प्रतमकस्य पृथक्संख्यानिषेधार्थम् ॥ ५ ॥

प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा ॥
आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च ॥ ६ ॥

पूर्वरूपमाह—प्राग्रूपं तस्येत्यादि । तस्य श्वासस्य हृत्पीडादिकं प्राग्रूपं भवति ॥ ६ ॥

किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्तते ॥
निषण्णस्यैति शान्तिं च स क्षुद्र इति संज्ञितः ॥ ७ ॥

क्षुद्रश्वासं लक्षयति—किञ्चिदारभमाणस्येत्यादि । यस्य

१ 'तन्त्रान्तरे दोषोत्कटत्वमुच्यते; यथा–' इति पा० ।

किञ्चित् कर्म आरभमाणस्य पुरुषस्य यः श्वासः प्रवर्तते निषण्णस्य च शान्तिमेति स क्षुद्रः श्वास इति संज्ञितः ॥ ७ ॥

**तृट्स्वेदवमथुप्रायः कण्ठघुर्घुरिकान्वितः ॥**
**विशेषाद्दुर्दिने ताम्येच्छ्वासः स तमको मतः ॥ ८ ॥**
**घोषेण महताऽऽविष्टः सकासः सकफो नरः ॥**
**यः श्वसित्यबलोऽन्नद्विट् सुप्तस्तमकपीडितः ॥ ९ ॥**
**स शाम्यति कफे हीने स्वपतश्च विवर्धते ॥**
**मूर्च्छाज्वराभिभूतस्य ज्ञेयः प्रतमकस्तु सः ॥ १० ॥**

तमकलक्षणमाह—तृट्स्वेदेत्यादि । सः तमकः श्वासो मतः । किंविशिष्टः ? तृट्स्वेदवमथुप्रायः । तृट् तृष्णा, स्वेदः प्रस्वेदः, वमथुः थूत्कृतिः, कण्ठे घुर्घुरिकया अन्वितो युक्तः । प्रतमकलक्षणमाह—मूर्च्छेत्यादि ॥ ८–१० ॥

**आध्मातो दह्यमानेन बस्तिना सरुजं नरः ॥**
**सर्वप्राणेन विच्छिन्नं श्वस्याच्छिन्नं तमादिशेत् ॥ ११ ॥**

छिन्नलक्षणमाह—आध्मातो दह्यमानेनेत्यादि ॥ ११ ॥

**निःसंज्ञः पार्श्वशूलार्तः शुष्ककण्ठोऽतिघोषवान् ॥**
**संरब्धनेत्रस्त्वायम्य यः श्वस्यात् स महान् स्मृतः ॥**

महाश्वासलक्षणमाह—निःसंज्ञ इत्यादि । निःसंज्ञः चेतनारहितः, संरब्धनेत्रः सशोथलोचनः, आयम्य द्विधीभूयेव, श्वस्यात् श्वासं कुर्यात्, स महान् महाश्वासः । अत्र आश्रयाश्रयिणोरभेदात् महाश्वास एव 'महान्'शब्देनोच्यते; एवं सर्वत्र ॥ १२ ॥

**मर्मस्वायम्यमानेषु श्वसन्मूढो मुहुश्च यः ॥**
**ऊर्ध्वप्रेक्षी हतरवस्तमूर्ध्वश्वासमादिशेत् ॥ १३ ॥**

ऊर्ध्वश्वासलक्षणमाह—मर्मस्वित्यादि । मर्मसु हृद्बस्तिशिरःसु । आयम्यमानेषु आकृष्यमाणेषु । मूढो निश्चेष्टः । मुहुः अनवरतम् । ऊर्ध्वप्रेक्षी ऊर्ध्वप्रेक्षणशीलः । हतरवो हतस्वनः ॥ १३ ॥

**क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते ॥**
**त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च ॥ १४ ॥**

इदानीं श्वासानां साध्यासाध्यत्वमाह—क्षुद्र इत्यादि । कृच्छ्रः कृच्छ्रसाध्यः । त्रयः श्वासाः छिन्नश्वासमहाश्वासोर्ध्वश्वासाः । तमको दुर्बलस्य चेति दुर्बलस्य पुंसस्तमकश्वासो न सिध्यतीत्यर्थः; चकारात् तन्त्रान्तरोक्तं 'ज्वरमूर्च्छादियुक्तस्य' इत्यपि लभ्यते ॥ १४ ॥

**स्नेहबस्तिं विना केचिदूर्ध्वं चाधश्च शोधनम् ॥**
**मृदु प्राणवतां श्रेष्ठं श्वासिनामादिशन्ति हि ॥ १५ ॥**

इदानीं चिकित्सामाह—स्नेहबस्तिं विनेत्यादि । यद्यपि श्वासे स्नेहबस्तिः प्राङ्निषिद्धः, तथाऽप्यत्र पुनर्निषेधकरणं श्वासेऽवस्थावशेनापि तस्याप्रयोगार्थम् । विना ऋते । ऊर्ध्वं शोधनं वमनम्, अधः शोधनं विरेकः; मृदु अपीडाकरम्, एतद्वमनविरेकयोर्विशेषणम् । प्राणवतां बलवताम् । आदिशन्ति कथयन्ति । परमतमप्रतिषिद्धमनुमतमेव ॥ १५ ॥

१ 'स वै तमकपीडितः' इति पा० । २ 'स्नेहबस्तिमृते' इति पा० ।

**श्वासे कासे च हिक्कायां हृद्रोगे चापि पूजितम् ॥**
**घृतं पुराणं संसिद्धमभयाविडरामठैः ॥ १६ ॥**

श्वासे नित्योपयोगिकं घृतमाह—श्वासे इत्यादि । अभयादिभिः संसिद्धं पुराणं घृतं श्वासादिषु पूजितमिति संबन्धः । पुराणं दशवर्षस्थितम् । रामठं हिङ्गु ॥ १६ ॥

**सौवर्चलाभयाबिल्वैः संस्कृतं वाऽनवं घृतम् ॥**
**पिप्पल्यादिप्रतीवापं सिद्धं वा प्रथमे गणे ॥ १७ ॥**
**सपञ्चलवणं सर्पिः श्वासकासौ व्यपोहति ॥**

सौवर्चलाभयाबिल्वैरित्यादि । सौवर्चलादिभिः सिद्धमनवं पुराणं घृतं श्वासादिषु संयोज्यमिति संबन्धः । पिप्पल्यादिप्रतीवापमित्यादि ।—पिप्पल्यादिप्रतीवापं पिप्पल्यादिकल्के सिद्धम् । प्रथमो गणो विदारिगन्धादिः, तस्य क्वाथेन सिद्धम् । सपञ्चलवणमिति सिद्धं सत् पञ्चलवणप्रक्षेपं पातव्यमित्यर्थः । विकल्पाभिधानं पूर्वयोगापेक्षया । केचित् पञ्चलवणेन सह सिद्धमिति मन्यन्ते; तन्नेच्छन्ति निबन्धकाराः, समानतन्त्रविरोधात् ॥ १७ ॥—

**हिंस्राविडङ्गपूतीकत्रिफलाव्योषचित्रकैः ॥ १८ ॥**
**द्विक्षीरं साधितं सर्पिश्चतुर्गुणजलाप्लुतम् ॥**
**कोलमात्रैः पिबेत्तेद्धि श्वासकासौ व्यपोहति ॥ १९ ॥**
**अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ॥**
**कृत्स्ने वृषकषाये वा पचेत् सर्पिश्चतुर्गुणे ॥ २० ॥**
**तन्मूलकुसुमावापं शीतं क्षौद्रेण योजयेत् ॥**

हिंस्राविडङ्गेत्यादि । हिंस्रा वृहद्दहिंस्रा, पूतीकः चिरबिल्वः । द्विक्षीरं द्विगुणक्षीरम् । सर्पिः प्रस्थप्रमाणम् । कोलमात्रैः अर्धकर्षप्रमाणैः; अन्ये कल्कस्याल्पीयस्त्वात् कोलशब्देन कर्षमिच्छन्ति । केचिदस्याग्रे 'कृत्स्ने वृषकषाये वा पचेत्' इत्यादि पठन्ति; तन्नेच्छति **श्रीजेज्जटः**, 'वासाघृतं षट्पलं च घृतं चात्र हितं भवेत्' इति वक्ष्यमाणवचनेन वासाघृतस्य कथनात् ॥ १८–२० ॥—

**शृङ्गीमधूलिकाभार्गीशुण्ठीतार्क्ष्यसिताम्बुदैः ॥ २१ ॥**
**सहरिद्रैः सयष्ट्याह्वैः समैरावाप्य योगतः ॥**
**घृतप्रस्थं पचेद्धीमान् शीततोये चतुर्गुणे ॥ २२ ॥**
**श्वासं कासं तथा हिक्कां सर्पिरेतन्नियच्छति ॥**

शृङ्गीत्यादि । शृङ्गी कर्कटशृङ्गी । मधूलिका तृणजातिः 'मर्कट' इति लोके । तार्क्ष्यं रसाञ्जनम् । अम्बुदो मुस्ता । आवाप्य प्रक्षिप्य । योगतः युक्तितः, यावत्प्रमाणेन कल्केन उत्कटगन्धादिकं न स्यात्तावत्प्रमाणः कल्को देयो न तु स्नेहचतुर्थांशेन, योगत इत्यभिधानमन्तरेणैव तथा सिद्धेः । यद्यपि स्नेहाच्चतुर्गुणो द्रव इति सामान्यपरिभाषावशादेव जलचातुर्गुण्यं सिद्धं, तथाऽपि चतुर्गुणे इति करणं साहचर्याद्वक्ष्यमाण-

१ 'संयोज्यं' इति पा० । २ 'पचेत्तद्धि' इति पा० ।

सुवहादियोगोक्तजलद्वैगुण्यमत्रापि मा भूदिति दर्शनार्थम् । नियच्छति निवारयति ॥ २१ ॥ २२ ॥—

**सुवहा कालिका भार्गी शुकाख्या नैचुलं फलम् ॥२३॥**
**काकादनी शृङ्गवेरं वर्षाभूर्बृहतीद्वयम् ॥**
**कोलमात्रैर्घृतप्रस्थं पचेदेभिर्जलद्विकम् ॥ २४ ॥**
**कदूष्णं पीतमेतद्धि श्वासामयविनाशनम् ॥**

सुवहा कालिका भार्गीत्यादि । सुवहा गोधापदी, कालिका कालेयकं, शुकाख्या चर्मकारवटः, शुकशिम्बामपरे, नैचुलं फलं जलवेतसफलं, काकादनी वायसतिन्दुकः, वर्षाभूः श्वेतपुनर्नवा, बृहतीद्वयं स्थूलफला चणकफला च, कोलमात्रैः अर्धकर्षप्रमाणैः सुवहादिभिरित्यर्थः; अन्ये कर्षप्रमाणैरिति मन्यन्ते; तन्न, समानतन्त्रविरोधात् । जलद्विकं द्विगुणजलमित्यर्थः ॥ २३ ॥ २४ ॥—

**सौवर्चलयवक्षारकटुकाव्योषचित्रकैः ॥ २५ ॥**
**वचाभयाविडङ्गैश्च[1] साधितं श्वासशान्तये ॥**
**गोपवल्ल्युदके सिद्धं स्यादन्यद्द्विगुणे घृतम् ॥ २६ ॥**

सौवर्चलयवक्षारेत्यादि । व्योषं त्रिकटुकम् । सौवर्चलादीनां विडङ्गान्तानां कल्केन द्रवेण वा अनुक्तेनापि जलेन साधितं घृतं पीतं सत् श्वासशान्तये भवतीति योज्यम् । गोपवल्ल्युदके सिद्धमित्यादि । गोपवल्ल्युदके सारिवाक्वाथे । अन्यदिति घृतविशेषणम् । द्विगुणे घृतद्विगुणे गोपवल्लीक्वाथे ॥२५॥२६॥

**पञ्चैतानि हवींष्याहुर्भिषजः श्वासकासयोः ॥**

इदानीं हिंस्रादिपञ्चघृतानामत्यर्थं श्वासहिततमत्वप्रतिपादनार्थमुपसंहारमाह—पञ्चैतानि हवींष्याहुरित्यादि । पञ्चैतानीति हिंस्रादिशृङ्ग्यादिसुवहादिसौवर्चलादिगोपवल्ल्यादीनि ।—

**तालीशतामलक्युग्राजीवन्तीकुष्ठसैन्धवैः ॥ २७ ॥**
**बिल्वपुष्करभूतीकसौवर्चलकणाग्निभिः ॥**
**पथ्यातेजोवतीयुक्तैः सर्पिर्जलचतुर्गुणम् ॥ २८ ॥**
**हिङ्गुपादयुतं सिद्धं सर्वश्वासहरं परम् ॥**
**वासाघृतं षट्पलं वा घृतं चात्र हितं भवेत् ॥ २९ ॥**

तालीशतामलकीत्यादि । तामलकी दलफलिका, उग्रा वचा, जीवन्ती पटोलसमानपत्रा कन्दवती पश्चिमदेशे प्रसिद्धा, लाटदेशे स्थूलवल्ली विलक्षणैव, पुष्करं पुष्करमूलं, भूतीकं रोहिषं, कणा पिप्पली, अग्निः चित्रकः, तेजोवती काकमर्दनिका । हिङ्गुपादयुतमिति एकद्रव्यचतुर्थांशेन हिङ्गुनेत्यर्थः । केचिदमुं पाठमन्यथा पठन्ति, स चाभावान्न लिखितः । वासाघृतं षट्पलं चेत्यादि वासाघृतं 'कृत्स्ने वृषे तत्कुसुमैः' इत्यादिना रक्तपित्तोक्तं, पित्तप्रधाने श्वासे हितं; षट्पलं वातव्याध्युक्तं, तच्च वातप्रधाने श्वासे ॥ २७–२९ ॥

**तैलं दशगुणे सिद्धं भृङ्गराजरसे शुभे ॥**
**सेव्यमानं यथान्यायं श्वासकासौ व्यपोहति ॥ ३० ॥**

पित्तवातप्रधानयोः श्वासयोः स्नेहमभिधायेदानीं कफप्रधाने स्नेहमाह—तैलमित्यादि । यथान्यायं यो यो यथा न्याय्यस्तथा; एतेन यथायोग्यतया विचारणात्स्नेहमच्छपानं वा योज्यमित्युक्तम् । अन्ये यथान्यायं यथाव्याधीत्याहुः । व्यपोहति नाशयति ॥ ३० ॥

**फलाम्ला विष्किररसाः स्निग्धाः प्रव्यक्तसैन्धवाः ॥**
**एणादीनां शिरोभिर्वा कौलत्था वा सुसंस्कृताः ३१**
**हन्युः श्वासं च कासं च संस्कृतानि पयांसि च ॥**

फलाम्ला विष्किररसा इत्यादि । फलाम्ला दाडिमबीजपूरादिना अम्लीकृताः । विष्किररसा लावादिमांसरसाः । प्रव्यक्तसैन्धवा उत्कटसैन्धवाः । एणादीनां शिरोभिर्वेति कृष्णहरिणादिमस्तकैर्वा कृता मांसरसा वातहरा इत्यर्थः । आदिशब्दात् गौरहरिणादयः । कौलत्था वा सुसंस्कृताः कुलत्थसंस्कृता यूषाः । संस्कृतानि पयांसि 'वातहरैः पञ्चमूलप्रभृतिभिः' इति शेषः ॥ ३१ ॥—

**तिमिरस्य[1] च बीजानि कर्कटाख्या च चूर्णिता ॥३२॥**
**दुरालभाऽथ पिप्पल्यः कटुकाख्या हरीतकी ॥**
**श्वाविन्मयूररोमाणि कोला मागधिकाकणाः ॥ ३३ ॥**
**भार्गीत्वक् शृङ्गवेरं च शर्करा शल्लकाङ्गजम् ॥**
**नृत्तकौण्डकबीजानि[2] चूर्णितानि तु केवलम् ॥ ३४ ॥**
**पञ्च श्लोकार्धिकास्त्वेते लेहा ये सम्यगीरिताः ॥**
**सर्पिर्मधुभ्यां ते लेह्याः कासश्वासार्दितैर्नरैः ॥ ३५ ॥**

तिमिरस्येत्यादि । तिमिरो नखरागिपत्रः 'तिवरिया' इति प्रसिद्धः, कर्कटाख्यः कर्कटशृङ्गी; केचित् 'कर्कटाख्या' इत्यत्र 'कर्कटाख्यश्च' इति पठन्ति, तत्र कर्कटाख्यः तृणजातिः । श्वावित् सेढिका, तस्याः सूचय एव रोमाणि । कोला चव्यम् । मागधिकाकणा पिप्पलीतण्डुलाः । शल्लकाङ्गजं शल्लकशकलं; अन्ये 'शल्लका गजं' इति पठन्ति, तत्र शल्लका शल्लकी, गजं नागकेशरम् । नृत्तकौण्डको मर्कटकः; केचित् 'नृत्तकौण्डकबीजानि' इत्यत्र 'नीचैःकदम्बबीजानि' इति पठन्ति, तत्र नीचैःकदम्बबीजानि लघुकदम्बबीजानि । श्लोकार्धिका अर्धश्लोकनिर्दिष्टाः ॥ ३२–३५ ॥

**सप्तच्छदस्य पुष्पाणि पिप्पलीश्चापि मस्तुना ॥**
**पिबेत् संचूर्ण्य मधुना धानाश्चाप्यथ भक्षयेत् ॥३६॥**

सप्तच्छदस्येत्यादि । सप्तच्छदस्य पुष्पाणि पिप्पलीश्च संचूर्ण्य मस्तुना सह पिबेदिति योज्यम् । सप्तच्छदः सप्तपर्णः । धाना भृष्टयवाः । केचित् मधुनेति पदं धानाश्चाप्यथ भक्षयेदित्यत्र संबध्नन्ति ॥ ३६ ॥

**अर्काङ्कुरैर्भावितानां यवानां साध्वनेकशः ॥**
**तर्पणं वा पिबेदेषां सक्षौद्रं श्वासपीडितः ॥ ३७ ॥**
**शिरीषकदलीकुन्दपुष्पं मागधिकायुतम् ॥**
**तण्डुलाम्बुयुतं पीत्वा जयेच्छ्वासानशेषतः ॥ ३८ ॥**

---

१ 'घृतं वचाविडङ्गैश्च' इति पा० ।

१ 'तिनिशस्य' इति पा० । २ 'त्रिकण्टकस्य बीजानि' इति पा० ।

यादृशानां यवानां धाना भक्षयेत्तादृशानाह—अर्काङ्कुरैर्भावितानामित्यादि। अर्काङ्कुरैः अर्कपल्लवपुष्पकृतैः क्वाथैः। साधु शोभनं यथा भवतीत्यर्थः। अनेकश इति भावितानामित्यत्र योज्यम्। तर्पणं वा पिबेदेषामित्यादि। तर्पणं सक्तवः। एषां पूर्वोक्तानामर्काङ्कुरैर्भावितयवानामित्यर्थः। शिरीषेत्यादि। शिरीषादिपुष्पं पिप्पलीयुतं तण्डुलाम्बुना पीत्वा अशेषतो निःशेषान् श्वासान् जयेदिति संबन्धः। कुन्दो निर्गन्धं श्वेतपुष्पम्। तण्डुलाम्बु तण्डुलप्रक्षालनोदकम्॥ ३७॥ ३८॥

**कोलमज्जां तालमूलमृष्यचर्ममसीमपि॥**
**लिह्यात् क्षौद्रेण भार्गीं वा सर्पिर्मधुसमायुताम्॥३९॥**
**नीचैःकदम्बबीजं वा सक्षौद्रं तण्डुलाम्बुना॥**

कोलमज्जामित्यादि। कोलमज्जा बदरमज्जा, मज्जाशब्द आकारान्तोऽप्यस्ति, तेन मज्जामिति साधुपाठः। 'तालमूलम्' इत्यत्र 'तालमूलीम्' इति केचित् पठन्ति; तत्र तालमूली मुषली। नीचैःकदम्बबीजमित्यादि। नीचैःकदम्बबीजं लघुकदम्बबीजम्। 'तण्डुलाम्बुना' इत्यत्र 'पेयम्' इत्यध्याहार्यम्। केचित् 'नीपं कदम्बं रक्तं च तत् पीतं तण्डुलाम्बुना' इति पठन्ति, व्याख्यानयन्ति च—नीपं बृहत्कदम्बफलं, कदम्बं लघुकदम्बवृक्षफलं, रक्तमिति विशेषणादनयोः पक्वयोर्ग्रहणं' यतः परिपक्वं रक्तं भवति, पिष्टं पाने देयमिति यावत्। अपरे तु तण्डुलाम्बुना पीतं सुदारुणान् श्वासान् हन्तीति योजयन्ति। ये पूर्वं पञ्चलेहप्रस्तावे 'नीचैःकदम्बबीजानि' इति पठन्ति तन्मतेऽप्यत्र न पुनरुक्तता, यतः पूर्वं मधुसर्पिर्भ्यां विलिहन् श्वासान् हन्तीति लेहः, अत्र तु तण्डुलाम्बुना पानम्॥ ३९॥—

**द्राक्षां हरीतकीं कृष्णां कर्कटाख्यां दुरालभाम्॥ ४०**
**सर्पिर्मधुभ्यां विलिहन् हन्ति श्वासान् सुदारुणान्॥**

द्राक्षां हरीतकीमित्यादि। कृष्णा पिप्पली। कर्कटाख्या कर्कटशृङ्गी॥ ४०॥—

**हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शटीम्॥४१॥**
**लिह्यात्तैलेन तुल्यानि श्वासार्तो हितभोजनः॥**

हरिद्रामित्यादि। कणा पिप्पली। केचिदमुं पाठमन्यथा पठन्ति, स चाभावान्न दर्शितः॥ ४१॥—

**गवां पुरीषस्वरसं मधुसर्पिःकणायुतम्॥ ४२॥**
**लिह्याच्छ्वासेषु कासेषु वाजिनां वा शकृद्रसम्॥**

गवां पुरीषस्वरसमित्यादि। गोशकृद्रसपिप्पल्यौ मधुघृताभ्यां लिह्यात्, अश्वशकृद्रसपिप्पल्यौ वा मधुघृताभ्यां लिह्यात्॥ ४२॥—

**पाण्डुरोगेषु शोथेषु ये योगाः संप्रकीर्तिताः॥४३॥**
**श्वासकासापहास्तेऽपि कासघ्ना ये च कीर्तिताः॥**

इदानीं पाण्डुरोगाद्युक्तयोगानत्राप्यतिदिशन्नाह—पाण्डुरोगेष्वित्यादि पाण्डुरोगादिप्रतिषेधेषु ये योगाः कथितास्तेऽपि श्वासकासापहाः, कासघ्ना ये च कीर्तितास्तेऽपि। केचिदमुं पाठं न पठन्ति॥ ४३॥—

**भार्गीत्वक् त्र्यूषणं तैलं हरिद्रां कटुरोहिणीम्॥४४॥**
**पिप्पलीं मरिचं चण्डां गोशकृद्रसमेव च॥**

भार्गीत्वगित्यादि। अत्र लिह्यादिति संबन्धनीयम्॥४४॥—

**तलकोटस्य बीजेषु पचेदुत्कारिकां शुभाम्॥ ४५॥**
**सेव्यमाना निहन्त्येषा श्वासानाशु सुदुस्तरान्॥**

तलकोटस्येत्यादि। तलकोटः अङ्कोठः। उत्कारिका लप्सिका। केचित् 'भार्गीत्वक्' इत्यादिकं 'तलकोटस्य बीजेषु' इतिपर्यन्तमुत्कारिकार्थं मन्यन्ते॥ ४५॥—

**पुराणसर्पिः पिप्पल्यः कौलत्था जाङ्गला रसाः॥४६॥**
**सुरा सौवीरकं हिङ्गु मातुलुङ्गरसो मधु॥**
**द्राक्षामलकबिल्वानि शस्तानि श्वासिहिक्किनाम्॥ ४७**

इदानीं श्वासे हिक्कायां चान्यदपि यद्धितं तदाह—पुराणसर्पिरित्यादि। कौलत्थाः कुलत्थैः संस्कृताः। जाङ्गला रसा एणादीनामेव मांसरसाः। सौवीरकं विरेचनकल्पोक्तम्॥४६॥४७॥

**श्वासहिक्कापरिगतं स्निग्धैः स्वेदैरुपाचरेत्॥**
**आर्कं लवणतैलाभ्यां तैरस्य ग्रथितः कफः॥ ४८॥**
**खस्थो विलयनं याति मारुतश्च प्रशाम्यति॥**

श्वासे तत्प्रसङ्गेन च हिक्कायामपि तुल्यं प्रतीकारमाह—श्वासहिक्कापरिगतमित्यादि। श्वासहिक्कापरिगतं श्वासहिक्काव्याप्तम्। स्निग्धैः स्वेदैः साल्वणप्रभृतिभिः। आर्कं लवणतैलाभ्यां सैन्धवतिलतैलाभ्यां चुप्पटितम् आतुरमित्यर्थः। तैः स्निग्धस्वेदैः। ग्रथितः घनीभूतः। खस्थः स्रोतःस्थितः। विलयनं द्रवभावम्॥ ४८॥—

**स्विन्नं ज्ञात्वा ततश्चैव भोजयित्वा रसौदनम्॥४९॥**
**वातश्लेष्मविबन्धे वा भिषग् धूमं प्रयोजयेत्॥**
**मनःशिलादेवदारुहरिद्राच्छदनामिषैः॥ ५०॥**
**लाक्षोरुबूकमूलैश्च कृत्वा वर्तीर्विधानतः॥**

स्वेदे कृतेऽपि यदा वातकफानुबन्धो नोपशाम्यति तदा किं कर्तव्यमित्याह—स्विन्नमित्यादि। स्विन्नं ज्ञात्वा रसौदनं भोजयित्वा वातकफानुबन्धे सति युक्तं धूमं प्रयोजयेदिति पिण्डार्थः। केषां धूमं प्रयोजयेदित्याह—मनःशिलेत्यादि। छदनं पत्रकम्, आमिषं गुग्गुलुः। उरुबूकमूलं रक्तैरण्डमूलम्। विधानतः धूमनस्यकवलग्रहचिकित्सितोक्तविधानेन॥ ४९॥५०॥—

**सर्पिर्यवमधूच्छिष्टशालनिर्यासजं तथा॥ ५१॥**

अपरमपि धूममाह—सर्पिरित्यादि। मधूच्छिष्टं मदनम्। शालनिर्यासो राला। सर्पिर्यवादिजं धूमं तथा तेनैव प्रकारेण प्रयोजयेदिति पिण्डार्थः॥ ५१॥

१ 'निरवशेषान्' इति पा०। २ 'तैलेन विलिहन् हन्याच्छ्वासान् प्राणहरानपि' इति पा०। ३ 'मधुमागधिकायुतम्' इति पा०।

१ 'अन्यथा पठन्ति' इति पा०। २ 'युक्तैः' इति 'युक्तं' इति च पा०। ३ 'स्निग्धं' इति पा०। ४ 'सर्पिर्नैवमधूच्छिष्ट०' इति पा०।

**शृङ्गबालखुरस्नायुत्वक् समस्तं गवामपि ॥**

अपराण्यपि धूमद्रव्याण्याह—शृङ्गबालखुरेत्यादि । गवां शृङ्गादिकं त्वक्पर्यन्तं समस्तमपि धूमार्थं प्रयोजयेत् । स्नायुः धनुर्ज्याबन्धनार्थं द्रव्यं 'नहारु' इति लोके ॥—

**तुरुष्कशल्लकीनां च गुग्गुलोः पद्मकस्य च ॥ ५२ ॥**

तुरुष्केत्यादि । तुरुष्कः सिह्लकः । तुरुष्कादिपद्मकान्तानां वा धूमं प्रयोजयेत् ॥ ५२ ॥

**एते सर्वे ससर्पिष्का धूमाः कार्या विजानता ॥**

पूर्वोक्तधूमानामुपसंहारमाह—एत इत्यादि । एते पूर्वोक्ता धूमाः ससर्पिष्काः सघृता विजानता वैद्येन कार्याः ॥—

**बलीयसि कफग्रस्ते वमनं सविरेचनम् ॥ ५३ ॥**

श्वासिहिक्किनामवस्थायां विरेचनमाह—बलीयसीत्यादि । बलीयसि बलयुक्ते पुरुषे, वमनं सविरेचनं 'मृदु हितम्' इत्यत्राध्याहार्यम् ॥ ५३ ॥

**दुर्बले चैव रूक्षे च तर्पणं हितमुच्यते ॥**
**जाङ्गलोरभ्रजैर्मांसैरानूपैर्वा सुसंस्कृतैः ॥ ५४ ॥**

दुर्बले इत्यादि । तर्पणं सन्तर्पणम् । कैस्तर्पणं प्रयोक्तव्यमित्याह—जाङ्गलोरभ्रजैरित्यादि । जाङ्गला एणादयो लावादयश्च । उरभ्रो मेषः । आनूपाः कच्छपादयः । सुसंस्कृतैः सूदशास्त्रोक्तविधिना ॥ ५४ ॥

**निदिग्धिकां चामलकप्रमाणां**
**हिङ्ग्वर्धयुक्तां मधुना सुयुक्ताम् ॥**
**लिहन्नरः श्वासनिपीडितो हि**
**श्वासं जयत्येव बलाद्व्यहेण ॥ ५५ ॥**

इदानीं श्वासे सिद्धतमं योगमाह—निदिग्धिकामित्यादि । निदिग्धिका कण्टकारी, तां कल्कीकृतामामलकप्रमाणां तदर्धप्रमाणेन हिङ्गुना मधुना च युक्तां श्वासपीडितो नरः पुरुषो लिहन् बलात् श्वासमाशु त्र्यहाज्जयेदिति संबन्धः । एतत् सर्वं श्वासचिकित्सितं सामान्यमपि द्रव्यस्वरूपमभिसमीक्ष्य विशेषाद्बूयमिति ॥ ५५ ॥

**यथाऽग्निरिद्धः पवनानुविद्धो**
**वज्रं यथा वा सुरराजमुक्तम् ॥**
**रोगास्तथैते खलु दुर्निवाराः**
**श्वासश्च कासश्च विलम्बिका च ॥ ५६ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे हिक्काश्वासप्रतिषेधो नाम (त्रयोदशोऽध्यायः, आदितः) एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥**

श्वासस्य तत्प्रसङ्गेन च कासादीनामपि दुःखोपचर्यत्वख्यापनार्थमाह—यथाऽग्निरिद्ध इत्यादि । इद्धः दीप्तः । पवनानुविद्धो वातसहितः ॥ ५६ ॥

इति श्रीडल्ह(ड)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे हिक्काश्वासप्रतिषेधो नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशत्तमोऽध्यायः ।

**अथातः कासप्रतिषेधमध्यायं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

श्वासप्रतिषेधानन्तरं वातकफप्राधान्यत्वसाम्यात्तुल्यचिकित्सितत्वाच्च कासप्रतिषेधारम्भः—अथात इत्यादि ॥ १ ॥ २ ॥

**उक्ता ये हेतवो नृणां रोगयोः श्वासहिक्कयोः ॥**
**कासस्यापि च विज्ञेयास्त एवोत्पत्तिहेतवः ॥ ३ ॥**

इदानीमतिदेशेन कासहेतूनाह—उक्ता इत्यादि ॥ ३ ॥

**धूमोपघाताद्रजसस्तथैव**
**व्यायामरूक्षान्ननिषेवणाच्च ॥**
**विमार्गगत्वादपि भोजनस्य**
**वेगावरोधात् क्षवथोस्तथैव ॥ ४ ॥**
**प्राणो ह्युदानानुगतः प्रदुष्टः**
**संभिन्नकांस्यस्वनतुल्यघोषः ॥**
**निरेति वक्त्रात् सहसा सदोषः**
**कासः स विद्वद्भिरुदाहृतस्तु ॥ ५ ॥**

कासस्य संप्राप्तिनिरुक्ती आह—प्राण इत्यादि । प्राणो वायुः, उदानानुगत उदानवायुमिलितः, ऊर्ध्वगतित्वादुदानस्य, प्रदुष्टः कोपमापन्नः सन्, संभिन्नकांस्यस्वरतुल्यघोष इति जर्जरितकांस्यशब्दानुकारी स्वरः, निरेति निर्गच्छति । सदोषः सदुष्टिरित्यर्थः; दुष्टिश्चात्र तादृग्विधशब्दप्राणवायुनिर्गमनात्मिकैव; केचित् 'सदोष' इत्यत्र 'सघोष' इति पठन्ति, व्याख्यानयन्ति च—सघोषः तादृग्विधप्राणनिर्गमनोत्थस्वरयुक्तः । स प्राणो वायुः 'कास' इत्युदाहृतः ॥ ४ ॥ ५ ॥

**स वातपित्तप्रभवः कफाच्च**
**क्षतात्तथाऽन्यः क्षयजोऽपरश्च ॥**
**पञ्चप्रकारः कथितो भिषग्भि-**
**र्विवर्धितो यक्ष्मविकारकृत् स्यात् ॥ ६ ॥**

काससंख्यामाह—स वातपित्तप्रभव इत्यादि । स इति कासः । क्षतात् क्षतजः । क्षयजः शुक्रक्षयजः । संख्येयनिर्देशादेव संख्यायां सिद्धायां पञ्चप्रकार इति संख्याकरणं नियमार्थम् । तेन वातादिकृतकासस्य पञ्चप्रकाराः, न पुनर्निमित्तान्तरभेदाद्भेदः । यक्ष्मविकारकृत् राजयक्ष्मकृत्, रोगस्यापि व्याधिकारणत्वात् । यद्यपि क्षयादुत्पन्नकासस्य क्षयकर्तृत्वं न संभवति, तथाऽपि पूर्वावस्थातोऽधिकं क्षयं करोति, अतः क्षयजकास-

१ 'खलु कासहेतुः' इति पा० ।

स्यापि क्षयकर्तृत्वम्, अथवा बहुषु छत्रिषु गच्छत्सु केषुचिदच्छत्रिष्वपि छत्रिणो यान्तीति व्यपदेशवत् क्षयजकासस्यापि क्षयकर्तृत्वव्यपदेशः। केचित् 'पञ्चप्रकारः पठितो भिषग्भिर्विशेषतो लक्षणतः पुराणैः' इति पठन्ति ॥ ६ ॥

भविष्यतस्तस्य तु कण्ठकण्डू-
भोज्योपरोधो गलतालुलेपः ॥
स्वशब्दवैषम्यमरोचकोऽग्नि-
सादश्च लिङ्गानि भवन्त्यमूनि ॥ ७ ॥

कासपूर्वरूपमाह—भविष्यतस्तस्येत्यादि । भोज्योपरोधः ग्रासस्य गले सङ्गः । स्वशब्दवैषम्यमिति ईषत्प्रकृतिस्वरवैकृतम् । अग्निसादः अग्निमान्द्यम् । केचित् कासपूर्वरूपं न पठन्ति, रूपाणामेवाव्यक्तानां प्राग्रूपसद्भावात्; तन्न, समानतन्त्रविरोधात् ॥ ७ ॥

हृच्छङ्खमूर्धोदरपार्श्वशूली
क्षामाननः क्षीणबलस्वरौजाः ॥
प्रसक्तमन्तःकफमीरणेन
कासेत्तु शुष्कं स्वरभेदयुक्तः ॥ ८ ॥

वातकासलक्षणमाह—हृच्छङ्खमूर्धोदरेत्यादि । क्षामाननः क्षीणमुखक्रियः। क्षीणबलस्वरौजा इति बलं कर्मनिर्वर्तनक्षमता, ओजो हृदि स्थितं प्रसिद्धमेव । प्रसक्तमित्यादि । प्रसक्तं यथा भवति तथाऽन्तःकफं यथा भवति शुष्कं च यथा भवति तथा कासेदित्यर्थः; प्रसक्तं निरन्तरं, अन्तःकफम् अभ्यन्तरकफं, शुष्कं श्लेष्मरहितम् । ईरणेन वायुना । स्वरभेदयुक्तो भिन्नस्वर इत्यर्थः । 'हृच्छङ्खमूर्धोदरपार्श्वशूलम्' इति केचित् पठन्ति, तत्रापि स एवार्थः ॥ ८ ॥

उरोविदाहज्वरवक्त्रशोषै-
रभ्यर्दितस्तिक्तमुखस्तृषार्तः ॥
पित्तेन पीतानि वमेत् कटूनि
कासेत् स पाण्डुः परिदह्यमानः ॥ ९ ॥

पित्तकासलक्षणमाह—उरोविदाहज्वरेत्यादि । अभ्यर्दितः पीडितः । तिक्तमुखो निम्बादिभक्षणेनेव । पाण्डुत्वमत्र पित्तकृतं बोद्धव्यं, तेन पाण्डुः पीतवर्णः । परिदह्यमानो दाहयुक्तः ॥ ९ ॥

प्र(वि)लिप्यमानेन मुखेन सीदन्
शिरोरुजार्तः कफपूर्णदेहः ॥
अभक्तरुग्गौरवसादयुक्तः
कासेत ना सान्द्रकफं कफेन ॥ १० ॥

कफकासलक्षणमाह—प्रलिप्यमानेनेत्यादि । प्रलिप्यमानेन मुखेन श्लेष्मणा लिप्यमानेन मुखेन । सीदन् पतन् । शिरोरुजार्तः शिरोव्यथापीडितः; यद्यपि शिरोरुजा वातजन्या अतो वातिक एव कासे संभवति, तथाऽपि कफजेऽपि कासे वायुसद्भावात् शिरोरुजा युक्तैव । कफपूर्णदेहः गुरुशरीर इत्यर्थः । अभक्तरुक् भोजनारुचिः। सादः अङ्गग्लानिः। ना पुरुषः ॥ १० ॥

वक्षोऽतिमात्रं विहतं तु यस्य
व्यायामभाराध्ययनाभिघातैः ॥
विश्लिष्टवक्षाः स नरः सरक्तं
ष्ठीवत्यभीक्ष्णं क्षतजं तमाहुः ॥ ११ ॥

उरःक्षतकासलक्षणमाह—वक्षोऽतिमात्रमित्यादि । वक्षः स्तनयोरन्तरालं, अन्ये तु जत्रुक्रोडपार्श्वानामन्तरालं वक्ष इत्याहुः। विहतं विशेषेण पीडितम् । अभिघातो लगुडप्रहारादिः। विश्लिष्टवक्षाः अवसन्नवक्षाः । सरक्तं ष्ठीवति 'कफं' इति शेषः। तस्यावस्थायामसाध्यत्वमाह—स इत्यादि। स क्षतजकासी। उरःक्षतस्य उरःक्षतजकासस्य चायं भेदः—उरःक्षती पूर्वमेव सरक्तादिकं कफं ष्ठीवति, उरःक्षतजकासी तु पूर्वं शुष्कं कासते पश्चात् सशोणितं ष्ठीवति । तथा चोक्तं—"रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत् । स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम्" ( च. चि. अ. १८ ) इति । किंच उरःक्षते गात्रशूलादीनि लक्षणानि पूर्वमेव भवन्ति, तज्जकासे स्वसाध्यावस्थायामेवेत्यतोऽपि भेदः ॥ ११ ॥

स गात्रशूलज्वरदाहमोहान्
प्राणक्षयं चोपलभेत कासी ॥
शुष्यन् विनिष्ठीवति दुर्बलस्तु
प्रक्षीणमांसो रुधिरं सपूयम् ॥ १२ ॥
ससर्वलिङ्गं भृशदुश्चिकित्स्यं
चिकित्सितज्ञाः क्षयजं वदन्ति ॥

क्षयजकासलक्षणमाह—शुष्यन्नित्यादि । 'विनिष्ठीवति' इति पदं रुधिरं सपूयमित्यत्र संबध्यते । ससर्वलिङ्गमिति सह सर्वैर्लिङ्गैर्वर्तते यः स ससर्वलिङ्गः सर्वदोषलिङ्गयुक्त इत्यर्थः । चिकित्सितज्ञाः कायचिकित्साविदः । क्षयजं शुक्रक्षयजम् । यद्यपि सामान्यक्षयशब्देन रसादिक्षयः प्राप्तस्तथाऽप्यत्र शुक्रक्षयो ग्राह्यः, तज्जनितत्वात् क्षयकासस्य सर्वधातुक्षयस्य च । यद्यपि क्षयस्य क्षयकासस्य च भेदो नोपलभ्यते, तथाऽपि क्षये यानि कासज्वरादीनि लक्षणानि भवन्ति तान्येकदोषारब्धानि, क्षयजकासे पुनस्तानि त्रिदोषारब्धानीत्यतो भेदः । तथा च तन्त्रान्तरम्,—"क्षये कासादिकं लिङ्गमेकदोषकृतं मतम् । तदेव तत्कृते कासे सर्वदोषान्वितं बुधैः–" इति ॥ १२ ॥—

वृद्धत्वमासाद्य भवेत्तु यो वै
याप्यं तमाहुर्भिषजस्तु कासम् ॥ १३ ॥

इदानीं कासस्यावस्थायां याप्यत्वमाह—वृद्धत्वमित्यादि । वृद्धत्वं स्थविरत्वम् ॥ १३ ॥

१ 'सशब्दवैषम्य०' इति पा० । २ 'प्रसक्तवेगश्च समीरणेन' इति पा० । ३ 'कासेद्धृशं' इति पा० ।

१ 'क्षतजः स उक्तः' इति पा० । २ 'तं सर्वलिङ्गं' इति पा० । ३ 'तमाहुः' इति पा० । ४ 'भवत्यथो वै' इति पा० ।

श्रृङ्गीवचाकट्फलकत्तृणाब्द-
धान्याभयाभार्ग्यमराह्वविश्वम् ॥
उष्णाम्बुना हिङ्गुयुतं तु पीत्वा
बद्धास्यमप्याशु जहाति कासम् ॥ १४ ॥

इदानीं सामान्यं कासचिकित्सितमाह—शृङ्गीवचाकट्फलकत्तृणाब्देत्यादि । शृङ्गी कर्कटशृङ्गी । अब्दं मुस्ता । अमराह्वो देवदारुः । बद्धास्यं चिरंकालं व्याप्य आस्ये स्थितिकरं, चिरकालानुबद्धमिति तात्पर्यार्थः । अत्र पूर्वं सामान्यचिकित्साकरणं कासे आशु चिकित्सा कर्तव्येति द्योतनार्थम् । मधुपर्पटकरहितः कट्फलादिरयम् ॥ १४ ॥

फलत्रिकव्योषविडङ्गश्रृङ्गी-
रास्नावचापद्मकदेवकाष्ठैः ॥
लेहः समैः क्षौद्रसिताघृताक्तः
कासं निहन्यादचिरादुदीर्णम् ॥ १५ ॥

फलत्रिकव्योषविडङ्गेत्यादि । फलत्रिकं त्रिफला, व्योषं त्रिकटु, देवकाष्ठं देवदारु ॥ १५ ॥

पथ्यां सितामामलकानि लाजां
समागधीं चापि विचूर्ण्य शुण्ठीम् ॥
सर्पिर्मधुभ्यां विलिहीत कासी
ससैन्धवां वोष्णजलेन कृष्णाम् ॥ १६ ॥

पथ्यामित्यादि । पथ्यादीनि चूर्णयित्वा मधुघृताभ्यां कासी विलिहीतेत्यर्थः । केचित् पथ्यादिकं लाजपर्यन्तमेकं योगं, समागधीं वाऽपि विचूर्ण्य शुण्ठीमिति द्वितीयं योगं मन्यन्ते । ससैन्धवामित्यादि । कृष्णा पिप्पली; 'उष्णजलेन' इत्यत्र 'पिबेत्' इत्यध्याहार्यं, समानतन्त्रदर्शनात् । तथा च—"पिबेत् ससैन्धवां कृष्णां कासघ्नीं कोष्णवारिणा"—इति ॥ १६ ॥

खादेद्गुडं नागरपिप्पलीभ्यां
द्राक्षां च सर्पिर्मधुनाऽवलिह्यात् ॥
द्राक्षां सितां मागधिकां च तुल्यां
सशृङ्गवेरं मधुकं तुगां च ॥ १७ ॥
लिह्याद्घृतक्षौद्रयुतां समांशां
सितोपलां वा मरिचांशयुक्ताम् ॥
धात्रीकणाविश्वसितोपलाश्च
संचूर्ण्य मण्डेन पिबेच्च दध्नः ॥ १८ ॥

योगद्वयमाह—खादेद्गुडमित्यादि । नागरपिप्पलीभ्यां 'युक्तं' इति शेषः । द्राक्षां सितामित्यादि । द्राक्षामित्यादिको मागधिकां च तुल्यामित्येतत्पर्यन्त एको योगः । अत्र च 'खादेत्' इति संबन्धनीयं, समानतन्त्रदर्शनात् । तथा च,–"शर्करामागधीद्राक्षाः कासी खादेत् समांशिकाः"–इति । सशृङ्गवेरमित्यादिकः घृतक्षौद्रयुतं समांशमित्यन्तो द्वितीयो योगः । तुगा वंशलोचना, अन्ये वंशलोचनानुकारि पार्थिवं द्रव्यमाहुः । सितोपलामित्यादिर्मरिचांशयुक्तामितिपर्यन्तस्तृतीयः । सितोपलां शर्करां, मरिचांशयुक्तां मरिचभागयुक्ताम् । अत्रापि लिह्यादिति संबन्धनीयम् । धात्रीकणेत्यादि । धात्री आमलकीफलं, कणा पिप्पली, विश्वं शुण्ठी, सितोपला शर्करा । दध्नो मण्डेन मस्तुना ॥ १७ ॥ १८ ॥

हरेणुकां मागधिकां च तुल्यां
दध्ना पिबेत् कासगदाभिभूतः ॥
उभे हरिद्रे सुरदारुशुण्ठीं
गायत्रिसारं च पिबेत् समांशम् ॥ १९ ॥
बस्तस्य मूत्रेण सुखाम्बुना वा
दन्तीं द्रवन्तीं च सतिल्वकाख्याम् ॥
भृष्टानि सर्पींष्यथ बादराणि
खादेत् पलाशानि ससैन्धवानि ॥ २० ॥

हरेणुकामित्यादि । गायत्रिसारः खदिरसारः । उभे हरिद्रे इत्यादिर्बस्तस्य मूत्रेणेति पर्यन्तमेको योगः । सुखाम्बुना वेत्यादिर्द्वितीयः; सुखाम्बु उष्णोदकम् । द्रवन्ती चीरितपत्रा दन्तीभेदः । सतिल्वकाख्यामिति पट्टिकालोध्रसहितामित्यर्थः । भृष्टानि सर्पींषीत्यादि । बादराणि पलाशानि बदरीपत्राणि ॥ १९ ॥ २० ॥

कोलप्रमाणं प्रपिबेद्धि हिङ्गु
सौवीरकेणाम्लरसेन वाऽपि ॥

कोलप्रमाणमित्यादि । कोलप्रमाणं कर्षप्रमाणम् । सौवीरकेण काञ्जिकेन । अम्लरसेन बीजपूरकरसेन । यद्यपि हिङ्गु अल्पप्रमाणमेव हितं, तथाप्यर्धकर्षप्रमाणं हिङ्गु प्रयुज्यते, रोगविशेषेणाधिकप्रमाणस्यापि हितत्वात् । केचित् 'सौवीरकेणाम्लरसेन वाऽपि' इत्यत्र 'सौवीरकेणापि समातुलुङ्गम्' इति पठित्वा बीजपूरकेण सह हिङ्गु पिबेदिति व्याख्यानयन्ति ॥—

क्षौद्रेण लिह्यान्मरिचानि वाऽपि
भार्गीवचाहिङ्गुकृता च वर्तिः ॥ २१ ॥
धूमे प्रशस्ता घृतसंप्रयुक्ता
वेणुत्वगेलालवणैः कृता वा ॥

क्षौद्रेणेत्यादि । धूमे धूमविषये, प्रशस्ता हिता, वर्तिः 'षोडशाङ्गुलनेत्रन्यस्ता पीता सती' इति शेषः । वेणुत्वक् वंशच्छल्ली । लवणैः सैन्धवैः ॥ २१ ॥—

मुस्तेङ्गुदीत्वङ्मधुकाह्वमांसी-
मनःशिलालैश्छगलाम्बुपिष्टैः ॥ २२ ॥
विधाय वर्तीश्च पयोऽनुपानं
धूमं पिबेद्वातबलासकासी ॥

१ 'बद्धस्थितिकं' इति पा० । २ 'रास्नाबलापद्मकदेवकाष्ठैः' इति पा० ।

१ 'मुस्तां' इति पा० । २ 'सातिल्वकांशाम्' इति पा० ।

अपराण्यपि धूमद्रव्याण्याह—मुस्तेत्यादि । इङ्गुदीत्वक् इङ्गुदीवल्कलम् । आलं हरितालम् । छगलाम्बु छागमूत्रम् । विधाय कृत्वा । पयोनुपानं दुग्धानुपानम् । धूमं पिबेत् पूर्वोक्तविधानेन । यद्यपि पूर्वोक्तयोगानां दोषापेक्षया विषयो नोक्तः, तथाऽपि योगानां रसादीन् बुद्ध्वा यथादोषं वैद्यः पूर्वोक्तयोगान् प्रयोजयेत् ॥ २२ ॥—

पिबेच्च सीधुं मरिचान्वितं वा
तेनाशु कासं जयति प्रसह्य ॥ २३ ॥

पिबेच्च सीधुमित्यादि । सीधुः शस्यकः । तेन मरिचान्वितसीधुना । जयति 'आतुर' इति शेषः । प्रसह्य हठात् ॥ २३ ॥

द्राक्षाम्बुमञ्जिष्ठपुराह्वयाभिः
क्षीरं शृतं माक्षिकसंप्रयुक्तम् ॥

द्राक्षाम्बुमञ्जिष्ठेत्यादि । अम्बु वालकम् । पुराह्वया शल्लकी, गुग्गुलुमपरे । क्षीरमित्यत्र 'पिबेत्' इति शेषः । 'केचित् 'मञ्जिष्ठशुण्ठीजलगोस्तनीभिः क्षीरं घृतं माक्षिकसंयुतं वा' इतीदृशं पाठं पठन्ति ॥—

निदिग्धिकानागरपिप्पलीभिः
खादेच्च मुद्गान्मधुना सुसिद्धान् ॥ २४ ॥

निदिग्धिकेत्यादि । सुसिद्धान् सुपक्वान् मुद्गान् निदिग्धिकादिभिश्चूर्णिताभिः सार्धं मधुना च खादेदिति । तथा च,—"क्षुद्रामृतानागरपिप्पलीभिः खादेच्च मुद्गानथ साधुसिद्धान्" इति । केचित् 'निदिग्धिकामूलसमांशसिद्धान्' इति पठन्ति, तत्र कण्टकारीमूलतुल्यभागेन सह खिन्नानित्यर्थः । अपरे 'कटुकोपगाढान्' इति पठित्वा त्रिकटुप्रगाढानिति व्याख्यानयन्ति ॥ २४ ॥

उत्कारिकां सर्पिषि नागराढ्यां
पक्त्वा समूलैस्त्रुटिकोलपत्रैः ॥
एभिर्निषेवेत कृतां च पेयां
तन्वीं सुशीतां मधुना विमिश्राम् ॥ २५ ॥

उत्कारिकामित्यादि । उत्कारिकां लप्सिकाम् । नागराढ्यां शुण्ठ्यधिकाम् । अत्रापि 'खादेत्' इति संबन्धनीयम् । 'त्रुटिकोलपत्रैः' इत्यत्र 'वटकोलपत्रैः' इत्यन्ये पठन्ति । एभिरित्यादि । एभिरिति पूर्वोक्तैः उत्कारिकादिद्रव्यैः । तन्वीम् अल्पसिक्थां बहुद्रवाम् ॥ २५ ॥

यत् क्लीह्नि सर्पिर्विहितं षडङ्गं
तद्वातकासं जयति प्रसह्य ॥
विदारिगन्धादिकृतं घृतं वा
रसेन वा वासकजेन पक्वम् ॥ २६ ॥

१ 'घृतं माक्षिपसंप्रयुक्तम्' इति पा० । २ मुद्गान् सह साधु पक्वान्' इति पा० । ३ 'तन्वीमल्पसंस्कारां विरलसिक्थां च' इति पा० ।

सामान्यचिकित्सितमभिधायेदानीमतिदेशेन वातकासचिकित्सितमाह—यत् क्लीह्नि सर्पिरित्यादि । षडङ्गं षट्पलं षट्पलस्य षडङ्गाख्या द्वितीया संज्ञेति प्रतिपादनार्थं षडङ्गकथनम् । तच्च षट्पलप्रमाणं पक्तव्यम् । विदारिगन्धादिगणक्वाथकल्कसंस्कृतम् । रसेन क्वाथेन ॥ २६ ॥

विरेचनं स्नैहिकमत्र चोक्त-
मास्थापनं चाप्यनुवासनं च ॥
धूमं पिबेत् स्नैहिकमप्रमत्तः
पिबेत् सुखोष्णं घृतमेव चात्र ॥ २७ ॥
हिता यवाग्वश्च रसेषु सिद्धाः
पयांसि लेह्याः सघृतास्तथैव ॥

विरेचनमित्यादि । अत्र वातकासे । आस्थापनं निरूहणम् । ननु, कासे बस्तिनिषेधात् कथमत्रास्थापनमुच्यते ? सत्यं; निषिद्धमप्यास्थापनं वातकासे प्रयुज्यते, दोषप्रत्यनीकत्वात् । धूमं पिबेदित्यादि । अत्र 'यथोक्तविधिना' इति शेषः । स्नैहिकं मधूच्छिष्टसर्जरसवसादिभिः कृतम् । अप्रमत्तः सावधानः । सुखोष्णम् ईषदुष्णम् । घृतम् असंस्कृतम् । अत्र वातकासेऽन्यदपि यद्धितं तदाह—हिता यवाग्वश्चेत्यादि । रसेषु सिद्धाः मांसरसेषु सिद्धाः । पयांसि वातहरद्रव्यसिद्धानि । लेह्याः पूर्वोक्ताः ॥ २७ ॥—

प्रच्छर्दनं कायशिरोविरेका-
स्तथैव धूमाः कवलग्रहाश्च ॥ २८ ॥
उष्णाश्च लेह्याः कटुका निहन्युः
कफं विशेषेण विशोषणं च ॥
कटुत्रिकं चापि वदन्ति पथ्यं
घृतं कृमिघ्नस्वरसे विपक्वम् ॥ २९ ॥
निर्गुण्डिपत्रस्वरसे च पक्वं
सर्पिः कफोत्थं विनिहन्ति कासम् ॥
पाठाविडव्योषविडङ्गसिन्धु-
त्रिकण्टरास्नाहुतभुग्बलाभिः ॥ ३० ॥
शृङ्गीवचाम्भोधरदेवदारु-
दुरालभाभार्ग्यभयाशटीभिः ॥
सम्यग्विपक्वं द्विगुणेन सर्पि-
र्निदिग्धिकायाः स्वरसेन चैतत् ॥ ३१ ॥
श्वासाग्निसादस्वरभेदभिन्ना-
न्निहन्त्युदीर्णानपि पञ्च कासान् ॥

कफकासचिकित्सितमाह—प्रच्छर्दनमित्यादि । प्रच्छर्दनं वमनम् । कायशिरोविरेका इति कायविरेको विरेचनं, शिरोविरेको नस्यभेदः; स च पिप्पल्यादिकृतः । तथैव धूमा विरेचना इत्यर्थः । उष्णा लेह्याः कटुद्रव्यकृता इत्यर्थः । कटुकाः कफहरकटुकद्रव्यकृताः । कफं कफकासं, कारणे कार्योपचारात् ।

१ 'जयति' इति पा० ।

विशोषणं लघुरूक्षाल्पभोजनम्, अन्ये नानाप्रकारलङ्घनमाहुः; तथा चोक्तम्,—"चतुःप्रकारा संशुद्धिः पिपासा मारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम्"—इति । पथ्यं हितम् । कृमिघ्नस्वरसे विपक्कमार्द्रविडङ्गस्वरसविपक्कं, स्वरसालाभे च पूर्वोक्तकल्पनया सविडङ्गचूर्णं रात्रिपर्युषितं जलं ग्राह्यम् । अन्ये तु कृमिघ्नशब्देन कृमिघ्नानि यानि द्रव्याणि सुरसादीनि तान्याहुः । निर्गुण्डिपत्रस्वरसे च पक्कमित्यादि निर्गुण्डिपत्रस्वरसे नीलसिन्धुवारस्वरसे, नीलसिन्धुवारश्च शेफालिकेति लोके । पाठेत्यादि । व्योषं त्रिकटुकम् । सिन्धु सैन्धवम् । त्रिकण्टो गोक्षुरकः । हुतंभुक् चित्रकः । अम्भोधरः मुस्तम् । स्वरभेदभिन्नान् कांस्यपात्रादिस्वरभेदेन भिन्नान् । पञ्च कासान् हन्तीति स्तुतिवाक्यं, तस्मात् कफकासं हन्तीति ज्ञातव्यं, कफकासप्रस्तावात् । यद्यपि वातकासानन्तरं पित्तकासाभिधानं युक्तं न कफकासाभिधानं, तथाऽपि कफकासप्रतिकारस्योभयहितत्वप्रतिपादनार्थं कथनम् ॥ २८-३१ ॥—

विदारिगन्धोत्पलसारिवादीन्
निष्काथ्य वर्गं मधुरं च कृत्स्नम् ॥ ३२ ॥
घृतं पचेदिक्षुरसाम्बुदुग्धैः
काकोलिवर्गं च सशर्करं तत् ॥
प्रातः पिबेत् पित्तकृते च कासे
रतिप्रसूते क्षतजे च कासे ॥ ३३ ॥

इदानीं पित्तजक्षयजक्षतकासानां चिकित्सितमाह—विदारिगन्धेत्यादि । आदिशब्दो विदारिगन्धादिभिः सह प्रत्येकं संबध्यते; तेन विदारिगन्धादिः, उत्पलादिः, सारिवादिश्च । मधुरं वर्गं काकोल्यादिकम् । कृत्स्नं समग्रम् । अत्रापि निष्काथ्येति संबध्यते । द्रवप्रमाणं च प्रत्येकं स्नेहसमम् । तथा च परिभाषा—"पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेहसमान्याहुरर्वाक् स्याच्चतुर्गुणम्"—इति । काकोलिवर्गं 'कल्कीकृते' इति शेषः । सशर्करं शर्कराप्रक्षेपम् । प्रातः पूर्वाह्णे, पित्तादिकासे पिबेत् ॥ ३२ ॥ ३३ ॥

खर्जूरभार्गीमगधाप्रियाल-
मधूलिकैलामलकैः समांशैः ॥
चूर्णं सिताक्षौद्रघृतप्रगाढं
त्रीन् हन्ति कासानुपयुज्यमानम् ॥ ३४ ॥

खर्जूरभार्गीत्यादि । प्रियालः चारः । मधूलिका मर्कटकः । समांशैः तुल्यप्रमाणैः । त्रीन् कासान् पित्तोरःक्षतक्षयजान् । खर्जूरादिभिस्तुल्यभागैः कृतं चूर्णं सिताक्षौद्रघृतप्रगाढं लेहत्वेनोपयुज्यमानं त्रीन् कासान् हन्तीति पिण्डार्थः । पित्तकासचिकित्सितं यदत्रोरःक्षतक्षयकासाभ्यां सहैव कथितं तदुभयतुल्यचिकित्सितत्वख्यापनार्थम् ॥ ३४ ॥

रक्ताहरिद्राञ्जनवह्निपाठा-
मूर्वोपकुल्या विलिहेत् समांशाः ॥
क्षौद्रेण कासे क्षतजे क्षयोत्थे
पिबेद्घृतं चेक्षुरसे विपक्कम् ॥ ३५ ॥

रक्तेत्यादि । रक्ता मञ्जिष्ठा, अञ्जनं सौवीराञ्जनं, समानतन्त्रदर्शनात्, वह्निः अजमोदा, मूर्वा चोरस्नायुः, उपकुल्या पिप्पली । समांशाः तुल्यभागाः । मञ्जिष्ठादीनि पिप्पल्यन्तानि द्रव्याणि तुल्यभागानि चूर्णीकृतानि क्षतजे क्षयोत्थे च कासे मधुना विलिहेत्, चकारात् पित्तकासेऽपि; इक्षुरसे विपक्कं वा घृतं पिबेदिति पिण्डार्थः ॥ ३५ ॥

चूर्णं पिबेदामलकस्य वाऽपि
क्षीरेण पक्कं सघृतं हिताशी ॥

तेषामपरमपि चिकित्सितमाह—चूर्णमित्यादि । आमलकस्य चूर्णं सघृतं विपक्कं हिताशी क्षीरेण सह पिबेदिति संबन्धः । 'हिताशी' इत्यत्र 'हिताय' इति केचित् पठन्ति; तत्र कासशान्तये इति व्याख्यानम् ॥—

चूर्णानि गोधूमयवोद्भवानि
काकोलिवर्गश्च कृतः सुसूक्ष्मः ॥ ३६ ॥
कासेषु पेयस्त्रिषु कासवद्भिः
क्षीरेण सक्षौद्रघृतेन वाऽपि ॥

पित्तजादिकासत्रयेऽपरमपि चिकित्सितमाह—चूर्णानीत्यादि । गोधूमादिचूर्णानि चूर्णीकृतः काकोल्यादिगणश्च मधुघृतयुक्तेन दुग्धेन पित्तोरःक्षतक्षयजकासवद्भिः पुरुषैः पेय इत्यर्थः । केचिद्गोधूमचूर्णादिचूर्णत्रयं यथाक्रमं त्रिषु कासेषु त्रिभिरेव क्षीरादिभिर्द्रवैः पेयमिच्छन्ति ॥ ३६ ॥—

गुडोदकं वा क्वथितं पिबेद्धि
क्षौद्रेण शीतं मरिचोपदंशम् ॥ ३७ ॥

गुडोदकमित्यादि । गुडोदकं शीतकषायविधिना गृहीतं, क्वथितमिति पक्कमित्यर्थः; एतेन शीतकषायीकृतस्य गुडोदकस्य पश्चात्किंचित्पक्कस्य शीतीभूतस्य क्षौद्रेण सह पानमित्यर्थः । वेति विकल्पस्तु पूर्वयोगापेक्षया । मरिचोपदंशं समरिचभक्षणम् ॥ ३७ ॥

प्रस्थत्रयेणामलकीरसस्य
शुद्धस्य दत्त्वाऽर्धतुलां गुडस्य ॥
चूर्णीकृतैर्ग्रन्थिकचव्यजीर-
व्योषेभकृष्णाह्वपुषाजमोदैः ॥ ३८ ॥
विडङ्गसिन्धुत्रिफलायवानी-
पाठाग्निधान्यैश्च पिचुप्रमाणैः ॥
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टा-
वष्टौ च तैलस्य पचेद्यथावत् ॥ ३९ ॥
तं भक्षयेदक्षफलप्रमाणं
यथेष्टचेष्टस्त्रिसुगन्धियुक्तम् ॥

१ 'कफकासचिकित्सितस्य क्षयजहितत्वप्रतिपादनार्थं इति पा० ।
२ 'वर्गान्' इति पा० ।

अनेन सर्वे ग्रहणीविकाराः
सश्वासकासस्वरभेदशोथाः ॥ ४० ॥
शाम्यन्ति चायं चिरमन्तरङ्गे-
र्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ॥
स्त्रीणां च वन्ध्यामयनाशनः स्यात्
कल्याणको नाम गुडः प्रतीतः ॥ ४१ ॥

कल्याणगुडमाह—प्रस्थत्रयेणेत्यादि । शुद्धस्य निर्मलस्य । अर्धतुलां पञ्चाशत्पलानि । ग्रन्थिकं पिप्पलीमूलं, व्योषं त्रिकटु, इभकृष्णा हस्तिपिप्पली, सिन्धु सैन्धवं, अग्निः चित्रकः । पिचुप्रमाणैः कर्षप्रमाणैः; 'पलप्रमाणैः' इत्यन्ये पठन्ति; तन्न, समानतन्त्रविरोधात् । 'दत्त्वा त्रिवृच्चूर्णपलानि चाष्टौ' इत्यत्र 'ईषत्तैलभृष्टानि' इति शेषः, त्रिवृतो रेचनीयतास्फोटनार्थं वृद्धपारम्पर्यस्मरणात् । यथावत् मृदुमध्यक्रूरकोष्ठक्रमानुरूपं खरमृदुमध्यपाकेनेत्यर्थः । अयमिति कल्याणकः । पुंस्त्वस्य शुक्रस्य, अत्रापि हतस्येति संबध्यते । कल्याणक इति कल्याणकरणात् ॥ ३८–४१ ॥—

द्विपञ्चमूलेभकणात्मगुप्ता-
भार्गीशटीपुष्करमूलविश्वान् ॥
पाठामृताग्रन्थिकशङ्खपुष्पी-
रास्नाश्च्यपामार्गबलायवासान् ॥ ४२ ॥
द्विपालिकान् न्यस्य यवाढकं च
हरीतकीनां च शतं गुरूणाम् ॥
द्रोणे जलस्याढकसंयुते च
क्वाथे कृते पूतचतुर्थभागे ॥ ४३ ॥
पचेत्तुलां शुद्धगुडस्य दत्त्वा
पृथक् च तैलात् कुडवं घृताच्च ॥
चूर्णं च तावन्मगधोद्भवाया
देयं च तस्मिन्मधु सिद्धशीते ॥ ४४ ॥
रसायनात् कर्षमतो विलिह्या-
द्द्वे चाभये नित्यमथाशु हन्यात् ॥
तद्राजयक्ष्मग्रहणीप्रदोष-
शोफाग्निमान्द्यस्वरभेदकासान् ॥ ४५ ॥
पाण्ड्वामयश्वासशिरोविकारान्
हृद्रोगहिक्काविषमज्वरांश्च ॥
मेधाबलोत्साहमतिप्रदं च
चकार चैतद्भगवानगस्त्यः ॥ ४६ ॥

अगस्त्यावलेहमाह—द्विपञ्चमूलेत्यादि । द्विपञ्चमूलं दशमूलम् । इभकणा गजपिप्पली । आत्मगुप्ता कपिकच्छूः । ग्रन्थिकं पिप्पलीमूलम् । अग्निः चित्रकः । यवासो धन्वयवासकः, पूर्वपदलोपात् । न्यस्य प्रक्षिप्य । यवाढकं चतुःषष्टिपलानि । गुरूणाम् अतिस्थूलानाम् । जलद्रोणे द्वादशाधिकपञ्चशतपलेषु । द्विपञ्चमूलादीन् प्रत्येकं द्विपलप्रमाणान् यवाढकं च तथा हरीतकीशतं जलद्रोणे प्रक्षिप्य तावत् पचेद्यावत् पादावशेषितं, ततश्च तस्मिन् कषाये वस्त्रपूते गुडतुलां शुद्धस्विन्नहरीतकीशतं तथा घृततैलयोः प्रत्येकमष्टौ पलानि प्रक्षिप्य पचेत् यावत्तन्तुमत्त्वाज्जलपतितं न शीर्यते, ततश्च पिप्पलीचूर्णं चतुष्पलं मधु चाष्टपलप्रमाणं दत्त्वा स्थापयेत्, ततः तस्माद्रसायनात्, कल्कम् अर्धपलप्रमाणं लिह्यात्, हरीतकीद्वयं च खादेत् । एतद्रसायनं भगवता अगस्त्येन कृतम् ॥४२–४६॥

कुलीरशुक्तीचटकैणलावा-
न्निष्काथ्य वर्गं मधुरं च कृत्स्नम् ॥
पचेद्घृतं तत्तु निषेव्यमाणं
हन्यात् क्षतोत्थं क्षयजं च कासम् ॥ ४७ ॥
शतावरीनागबलाविपक्वं
घृतं विधेयं च हिताय कासिनाम् ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे कासप्रतिषेधो नाम ( चतुर्दशोऽध्यायः, आदितः ) द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

कुलीरशुक्तीत्यादि । कुलीरः कर्कटः, शुक्तिः जलशुक्तिः, चटको ग्रामचटकः, एणः कृष्णमृगः, मधुरवर्गः काकोल्यादिः, कृत्स्नं समग्रम् । केचित् 'निष्काथ्य वर्गैर्मधुरैस्तथाऽन्यं' इति पठित्वा काकोल्यादिसहितानि लावादीनि निष्काथ्य तथा अन्यैर्मधुरैर्जीवनीयैः कल्कीकृतैर्घृतं पचेदिति व्याख्यानयन्ति । चकारात् पित्तजकासमपि । शतावरीनागबलेत्यादि । केचित् शतावरीनागबलाकल्के घृतं सिद्धमिच्छन्ति; तन्न, समानतन्त्रविरोधात् ॥ ४७ ॥—

इति श्रीडल्ह(ड)णविरचितायां निबन्धसंग्रहाख्यायां
सुश्रुतव्याख्यायामुत्तरतन्त्रे कासप्रतिषेधो नाम
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

## त्रिपञ्चाशत्तमोऽध्यायः ।

अथातः स्वरभेदप्रतिषेधमध्यायं व्याख्यास्यामः १
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

श्वासकासप्रतिषेधानन्तरमूर्ध्वगतत्वसामान्यात् श्वासकासचिकित्सितसाध्यत्वाच्च स्वरभेदप्रतिषेधारम्भो युक्त इत्यत आह—अथात इत्यादि । स्वरभेदः स्वरोपघातः ॥ १ ॥ २ ॥

अत्युच्चभाषणविषाध्ययनातिगीत-
शीतादिभिः प्रकुपिताः पवनादयस्तु ॥
स्रोतःसु ते स्वरवहेषु गताः प्रतिष्ठां
हन्युः स्वरं भवति चापि हि षड्विधः सः ॥३॥

स्वरभेदहेतुसंप्राप्तिसंख्या आह—अत्युच्चभाषणेत्यादि । अध्ययनम् अनवरतं वेदादिपाठः । अतिगीतं निरन्तरं मङ्गल-

१ 'द्विपालिकांशांश्च' इति पा० ।

१ 'शतावरीनागबलादिकाथे' इति पा० । २ '°विषाध्ययनाभिघात°' इति पा० ।

दिगानम् । शीतादिभिरित्यत्रादिशब्दात् पित्तकफकोपहेतवो गृह्यन्ते । यदत्र अत्युच्चभाषणादीनां वातकोपहेतूनामेव साक्षात् कथनं कृतं न पित्तकफकोपहेतूनां तत् स्वरोपघातकर्तृत्वे वायोः प्राधान्यख्यापनार्थम् । अन्ये तु शीतादीत्यत्र आदिशब्देन गुरुलघुस्निग्धरूक्षादीन् गुणान् गृह्णन्ति । स्वरवहेषु स्रोतःसु शब्दवाहिनीषु धमनीषु, ते वातादयः, गताः प्राप्ताः, प्रतिष्ठां स्थितिम् । षड्विधः षट्प्रकारः; पृथक् वातादिभिस्त्रयः, सन्निपातेनैकः, मेदःक्षयाभ्यां प्रत्येकमेकः; एवं षट्प्रकारः । ननु, समानतन्त्रे 'वातात् पित्तात् कफात् कासाद्रक्तवेगात् सपीनसात्' (च. चि. अ. ८) इत्यत्र यथा षड्विधः स्वरभेद उक्तस्तेन सार्धं कथं न विरोधः । सत्यं, कासजप्रतिश्यायजयोर्लिङ्गत्वेनोक्तत्वाद्ग्रहणं, रक्तजस्य तु कफग्रहणेनैव ग्रहणं, यतो रक्तं कफयुक्तं स्वरभेदं करोति समानतन्त्रोक्तत्वात् । यद्येवं तर्हि कथं न संख्याधिक्यं? सत्यं, कासजप्रतिश्यायजयोर्वातिकत्वेन ग्रहणम् । अत्युच्चभाषणेत्यादिको हेतुः, प्रकुपिताः पवनादय इत्यादिका संप्राप्तिः, भवति चापि हि षड्विधः स इति संख्या ॥ ३ ॥

वातेन कृष्णनयनाननमूत्रवर्चा
भिन्नं शनैर्वदति गद्गदवत् स्वरं च ॥

वातिकस्वरभेदलक्षणमाह—वातेनेत्यादि । कृष्णशब्दो नयनादिभिर्वर्चःपर्यन्तैः संबध्यते । भिन्नम् अनवस्थितम् । उक्तं च तन्त्रान्तरे—"स्वरभेदो भवेद्वाताद्रूक्षः क्षामश्चलः स्वरः" (च. चि. अ. ८)—इति । 'गद्गदवत् स्वरम्' इत्यत्र केचित् 'गर्दभवत् स्वरं' इति पठन्ति ॥—

पित्तेन पीतवदनाक्षिपुरीषमूत्रो
ब्रूयाद्गलेन परिदाहसमन्वितेन[1] ॥ ४ ॥

पित्तजस्वरभेदलक्षणमाह—पित्तेनेत्यादि । पीतशब्दो वदनादिभिर्मूत्रान्तैः संबध्यते । 'स विदाहसमन्वितेन' इति केचित् पठन्ति, तत्र स इति स्वरभेदी पुरुषः ॥ ४ ॥

कृच्छ्रात् कफेन सततं कफरुद्धकण्ठो
मन्दं शनैर्वदति चापि दिवा विशेषैः[2] ॥

कफजस्वरभेदलक्षणमाह—कृच्छ्रादित्यादि । सततम् अनवरतम् । कफरुद्धकण्ठः श्लेष्मावृतकण्ठः । मन्दं शनैरिति मन्दं मन्दमित्यर्थः । दिवा विशेष इति दिवसे विशेषो भवेत्, कफक्षयात् । 'दिवा विशेषात्' इति केचित् पठन्ति; रात्रौ तावत् कफरुद्धकण्ठत्वान्न वदत्येव, दिवा पुनः कफापचयाद्विशेषो भवति, तस्माच्च विशेषान्मन्दं मन्दं वदतीति व्याख्यानयन्ति ॥—

सर्वात्मके भवति सर्वविकारसंप-
दव्यक्तता च वचसस्तमसाध्यमाहुः ॥ ५ ॥

सान्निपातिकस्वरभेदलक्षणमाह—सर्वात्मक इत्यादि । सर्वात्मके सन्निपातोत्थस्वरभेदे । सर्वविकारसंपद् वातादिलिङ्गप्रादुर्भावः । अव्यक्तता च वचसः अस्पष्टवाक्त्वम् । तं सान्निपातिकस्वरभेदम् ॥ ५ ॥

धूप्येत वाक् क्षयकृते क्षयमाप्नुयाच्च
वागेष चा(वा)पि हतवाक् परिवर्जनीयः ॥

क्षयजस्वरभेदलक्षणमाह—धूप्येतेत्यादि । धूप्येत मुखाद्धूममिवोद्वमति, 'ब्रुवन्' इति वाक्यशेषः । क्षयमाप्नुयाद् वागिति वचनक्षयं प्राप्नुयात् 'वातात्' इति शेषः ॥—

अन्तर्गलं[1] स्वरमलक्ष्यपदं चिरेण
मेदश्चयाद्[2]वदति दिग्धगलौष्ठतालुः ॥ ६ ॥
क्षीणस्य वृद्धस्य कृशस्य चापि
चिरोत्थितो यश्च सहोपजातः ॥
मेदस्विनः सर्वसमुद्भवश्च
स्वरामयो यो न स सिद्धिमेति ॥ ७ ॥

मेदोजस्वरभेदलक्षणमाह—अन्तर्गलमित्यादि । अन्तर्गलं गलस्यान्तरे । स्वरं वदति शब्दं करोति । 'अन्तर्गतं' इति केचित् पठन्ति, तत्रापि स एवार्थः । यतोऽन्तर्गलं स्वरं वदति अत एव अलक्ष्यपदमिति, न लक्ष्यन्ते पदानि यस्येत्यर्थः । मेदश्चयात् मेदोवृद्धेः । दिग्धं मेदोदिग्धं गलौष्ठतालु यस्य स तथा । 'मेदोऽन्वयात्' इति केचित् पठन्ति ॥ ६ ॥ ७ ॥

स्निग्धान् स्वरातुरनरानपकृष्टदोषान्
न्यायेन तान् वमनरेचनबस्तिभिश्च ॥
नस्यावपीडमुखधावनधूमलेहैः
संपादयेच्च[3] विविधैः कवलग्रहैश्च[4] ॥ ८ ॥

स्वरभेदस्य सामान्यचिकित्सामाह—स्निग्धानित्यादि । यद्यपि कफजमेदोजयोः स्वरभेदयोरपतर्पणसाध्यत्वात् स्नेहनं न युक्तं, तथाऽपि यथादोषप्रत्यनीकैर्यथादोषप्रत्यनीकसाधितैश्च स्नेहैः स्नेहनं युक्तमेव, अथवा मेदःकफजयोरपि वायुसद्भावात् स्नेहनोपदेशः । अपकृष्टदोषान् आकृष्टदोषान्; अत्र वमनविरेचनबस्तिभिरिति संबध्यते । न्यायेन यथाविधीत्यर्थः । वमनादिभिरपकृष्टदोषान् स्वरभेदातुरान् किं कुर्यादित्याह—नस्यावपीडेत्यादि । अवपीड्य दीयते इत्यवपीडो नस्यभेदः । मुखधावनं गण्डूषादि । संपादयेत् योजयेत् । विविधैः दोषप्रत्यनीकत्वेन नानाप्रकारैः । कवलग्रहैः गण्डूषभेदैः । तथा च—"सुखं संचार्यते या तु गण्डूषे सा प्रकीर्तिता । असंचार्या तु या मात्रा कवले सा प्रकीर्तिता"—इति ॥ ८ ॥

यः श्वासकासविधिरादित एव चोक्त-
स्तं चाप्यशेषमवतारयितुं यतेत ॥

१ 'च विदाहसमन्वितेन' इति पा० । २ 'विशेषात्' इति पा० ।

१ 'अन्तर्गतस्वरं' इति पा० । २ 'मेदोऽन्वयात्' इति पा० । ३ 'संयोजयेच्च' इति पा० । ४ 'भिषग्वरैः' इति पा० ।

अन्यदपि स्वरभेदचिकित्सितमतिदेशेनाह—य इत्यादि । श्वासकासप्रतिषेधे सामान्येनादौ यः श्वासकासविधिरुद्दिष्टस्तं विधिं समस्तमपि यथादोषं कर्तुं यतेतेति पिण्डार्थः ॥—

वैशेषिकं च विधिमूर्ध्वमतो वदामि
तं वै स्वरातुरहितं निखिलं निबोध ॥ ९ ॥

वैशेषिकमित्यादि । अत इति सामान्यचिकित्सानन्तरम् । तं वै स्वरातुरहितमिति स्वरभेदातुरहितम् । निबोध जानीहि ॥९॥

स्वरोपघातेऽनिलजे भुक्तोपरि घृतं पिबेत् ॥
कासमर्दकवार्ताकमार्कवस्वरसे शृतम् ॥ १० ॥
पीतं घृतं हन्त्यनिलं सिद्धमार्तगले रसे ॥

तमेव वैशेषिकविधिमाह—स्वरोपघात इत्यादि । भुक्तोपरि भोजनोपरि । मार्कवो भृङ्गराजः, शृतं पक्कम् । अनिलं वातजस्वरभेदम्, उपचारात् । आर्तगलः ककुभः ॥ १० ॥—

यवक्षाराजमोदाभ्यां चित्रकामलकेषु वा ॥ ११ ॥
देवदार्वग्निकाभ्यां वा सिद्धमाजं समाक्षिकम् ॥

अपरमपि वातजे घृतत्रयमाह—यवक्षाराजमोदाभ्यामित्यादि । अग्निको अजमोदा । आजं 'घृतं' इति शेषः । समाक्षिकं समधु । अत्रापि पीतमिति योज्यम् ॥ ११ ॥—

सुखोदकानुपानो वा ससर्पिष्को गुडौदनः ॥ १२ ॥

वातिके पथ्ययोगमाह—सुखोदकानुपान इत्यादि । सुखोदकम् ईषदुष्णोदकम् । केचिदमुं योगं पैत्तिके मन्यन्ते; तन्न, समानतन्त्रेषु वातिकस्वरभेद एव प्रयुक्तत्वात् ॥ १२ ॥

क्षीरानुपानं पित्ते तु पिबेत् सर्पिरतन्द्रितः ॥

पैत्तिकस्वरभेदचिकित्सामाह—क्षीरानुपानमित्यादि । अतन्द्रितः अनलसः ॥—

अश्नीयाच्च ससर्पिष्कं यष्टीमधुकपायसम् ॥ १३ ॥

पैत्तिके पथ्ययोगमाह—अश्नीयादित्यादि । यष्टीमधुकपायसमिति यष्टीमधुकसाधितक्षीरसिद्धांस्तण्डुलान्; अथवा यष्टीमधुकान्वितं पायसं यष्टीमधुकपायसम् ॥ १३ ॥

लिह्यान्मधुरकाणां वा चूर्णं मधुघृताप्लुतम् ॥
शतावरीचूर्णयोगं बलाचूर्णमथापि वा ॥ १४ ॥

लिह्यादित्यादि । मधुरकाणां काकोलीप्रभृतीनाम् । शतावरीचूर्णयोगमिति शतावरीचूर्णस्य योगः संयोगो यत्र तत्तथा, अत्रापि मधुघृताप्लुतं लिह्यादिति संबन्धनीयम् ॥ १४ ॥

पिबेत् कटूनि मूत्रेण कफजे स्वरसंक्षये ॥
लिह्याद्वा मधुतैलाभ्यां भुक्त्वा खादेत् कटूनि वा ॥

कफजस्वरभेदचिकित्सामाह—पिबेदित्यादि । कटूनि त्रिकटुकादीनि । मूत्रेण गोमूत्रेण प्राधान्यात् । स्वरसंक्षये स्वरभेदे । लिह्याद्वा मधुतैलाभ्यामित्यादि मधुतैलाभ्यां वा कटूनि त्रिकटुकप्रभृतीनि लिह्यात्, भुक्त्वा वा तानि खादेत् ॥ १५ ॥

स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ॥

मेदोजस्वरभेदे कफजचिकित्सामतिदिशन्नाह—स्वरोपघात इत्यादि कफवत् कफजस्वरभेदवत् ॥—

सर्वजे क्षयजे चापि प्रत्याख्यायाचरेत् क्रियाम्॥१६॥

सान्निपातिकक्षयजयोरसाध्ययोरपि चिकित्सा कर्तव्येत्याह—सर्वज इत्यादि । प्रत्याख्याय असाध्यत्वेन निराकृत्य । आचरेत् कुर्यात् । क्रियामिति सान्निपातिके सर्वेषां वातादिस्वरभेदानां सर्वमेव चिकित्सितं कार्यं, क्षयजे तु क्षयोक्तमिति; केचिदुभयोरपि सामान्यचिकित्सितं कुर्यादित्याहुः ॥ १६ ॥

शर्करामधुमिश्राणि शृतानि मधुरैः सह ॥
पिबेत् पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ १७ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे छर्दिप्रतिषेधो नाम (पञ्चदशोऽध्यायः, आदितः) त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

अत्युच्चभाषणोत्थस्वरभेदस्य वातात्मकत्वेऽपि निमित्तभेदमाश्रित्य विशिष्टां चिकित्सामाह—शर्करेत्यादि । मधुरैः काकोल्यादिभिः शृतानि पयांसि शर्करामधुमिश्राणि पिबेदिति पिण्डार्थः । पयांसीत्यत्र बहुवचनं गोमहिष्यजानां क्षीरपरिग्रहाय ॥ १७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे स्वरभेदप्रतिषेधो नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

## चतुःपञ्चाशत्तमोऽध्यायः ।

अथातः क्रिमिरोगप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥
अजीर्णाध्यशनासात्म्यविरुद्धमलिनाशनैः ॥
अव्यायामदिवास्वप्नगुर्वतिस्निग्धशीतलैः ॥ ३ ॥
माषपिष्टान्नविदलबिसशालूककसेरुकैः ॥
पर्णशाकसुराशुक्तदधिक्षीरगुडेक्षुभिः ॥ ४ ॥
पललानूपपिशितपिण्याकपृथुकादिभिः ॥
स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तं च कुप्यति ॥ ५ ॥
क्रिमीन् बहुविधाकारान् करोति विविधाश्रयान् ॥
आमपक्वाशये तेषां कफविड्जन्मनां पुनः
धमन्यां रक्तजानां च प्रसवः प्रायशः स्मृतः ॥ ६ ॥

केषांचित् क्रिमीणां सामान्यं हेतुमाह—अजीर्णेत्यादि । अजीर्णम् आमविदग्धादिभेदभिन्नं, अध्यशनम् अजीर्णभोजनं असात्म्यं यत् सेवितं सुखार्थं न संपद्यते, विरुद्धं हिताहितीयोक्तं, मलिनं

समलम् । पिष्टान्नं तण्डुलपिष्टादि, विदलं मकुष्ठादि, बिसं बिसाण्डकं, शालुः पद्मकन्दः । पर्णशाकं पत्रशाकं, सूक्तं संधानकविशेषः । पललः तिलकल्कः, आनूपपिशितम् आनूपमांसं, पिण्याकं यन्त्रपीडिततिलखली, 'पीता' इति लोके, पृथुकः चिपिटकः, आदिशब्दादेवंप्रकारा अन्येऽपि । बहुविधाकारान् विविधाकारान् । विविधाश्रयानिति नानाप्रकाराश्रयानित्यर्थः । प्रसव उत्पत्तिः । प्रायोग्रहणादन्यत्रापि संभवो ज्ञातव्यः । केचिदत्र अजीर्णाध्यशनादिकं हेतुगणं न पठन्ति, तेषां च हेत्ववगतिर्वक्ष्यमाणात् 'क्षीराणि मांसानि' इत्यादिप्रतिषेधविधानात्; मया तु सुखबोधार्थं हेतुगणः पठितः । अपरे तु 'अजीर्णभोजी मधुराम्लनित्यो द्रवप्रियः पिष्टगुडोपभोक्ता । व्यायामजातानि च वर्ज्यमानः खप्रादिवान् वै लभते क्रिमींस्त्वा' इति पठन्ति ॥ १-६ ॥

**विंशतेः क्रिमिजातीनां त्रिविधः संभवः स्मृतः ॥**
**पुरीषकफरक्तानि, तासां वक्ष्यामि विस्तरम् ॥ ७॥**

इदानीं विंशतिसंख्यानामपि क्रिमिजातीनां कारणत्रैविध्यमाह—विंशतेरित्यादि । जातिग्रहणं क्रमीणामानन्त्यख्यापनार्थं; तचानन्त्यं विंशत्यामेवावरुद्धं, अतो विंशतिसंख्याकरणं सार्थकम् । संभवः कारणम् । कस्त्रिविधः संभव इत्याह—पुरीषेत्यादि । ननु, अजीर्णाध्यशनादयो हेतव उक्ताः, कथं पुरीषादयश्च उच्यन्ते ? सत्यं, अजीर्णादयः पुरीषादीनां हेतवः, पुरीषादयश्च क्रमीणामिति । यद्यपि क्रम्यारम्भका न पुरीषादयः, तथाऽप्युपचारात् पुरीषादीनामपि क्रम्यारम्भकत्वम् । पुरीषाद्यधिष्ठिता दोषाः पुरीषादि, घृतादिदग्धवत्; एतेनाजीर्णादिभिः प्रकुपिता दोषाः पुरीषादीन्यधिष्ठाय क्रमीन् जनयन्ति । तासां क्रिमिजातीनाम् । केचित् 'विस्तरं' इत्यत्र 'लक्षणं' इति पाठान्तरं सव्याख्यानं पठन्ति; तच शिष्यबुद्धिव्याकुलत्वहेतुत्वात् परित्यक्तम् ॥ ७ ॥

**अजवा विजवाः किप्याश्चिप्या गण्डूपदास्तथा ॥**
**चूरवो द्विमुखाश्चैव ज्ञेयाः सप्त पुरीषजाः ॥ ८ ॥**

पुरीषजक्रिमिनामान्याह—अजवा इत्यादि । अजवादयो द्विमुखान्ताः सप्त पुरीषजाः क्रमयः ॥ ८ ॥

**श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रतिसरन्ति च ॥**
**तेषामेवापरे पुच्छैः पृथवश्च भवन्ति हि ॥ ९ ॥**
**शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलसंक्षयाः ॥**
**प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजैः ॥ १० ॥**

पुरीषजानां लक्षणमाह—श्वेता इत्यादि । य एते पुरीषजाः क्रमयः श्वेताः सूक्ष्माश्च भवन्ति, ते बाहुल्येनाद्यद्वयशाद्गुदं तुदन्ति प्रतिसरन्ति च । तेषामेव सप्तानां मध्ये अपरे पुच्छैः पृथवो भवन्ति । पुरीषजैः सप्तभिः क्रमिभिः शूलाग्निमान्द्यादयो भवन्ति । विष्टम्भो गुडगुडाशब्दः । प्रसेको लालास्रावः । विड्भेदः द्रवपुरीषता ॥ ९ ॥ १० ॥

**रक्ता गण्डूपदा दीर्घा गुदकण्डूनिपातिनः ॥**
**शूलाटोपशकृद्भेदपक्तिनाशकराश्च ते ॥ ११ ॥**

तेषामेव सप्तानां पुरीषजानां मध्ये गण्डूपदानां लक्षणं कर्म चाह—रक्ता इत्यादि । पक्तिनाशकरा अग्निनाशकराः, कारणे कार्योपचारात् ॥ ११ ॥

**दर्भपुष्पा महापुष्पाः प्रलूनाश्चिपिटास्तथा ॥**
**पिपीलिका दारुणाश्च कफकोपसमुद्भवाः ॥ १२ ॥**

कफक्रिमिनामान्याह—दर्भपुष्पा इत्यादि । दर्भपुष्पादिका दारुणपर्यन्ताः कफकोपजाः षट् क्रमयः ॥ १२ ॥

**रोमशा रोममूर्धानः सपुच्छाः श्यावमण्डलाः ॥**
**रूढधान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा ॥ १३ ॥**

तेषामाकृतिमाह—रोमशा इत्यादि । रोमशाः सर्वतो रोमान्विताः । रोममूर्धानः सरोममस्तकाः । श्यावमण्डलाः श्याममण्डलयुक्ताः ॥ १३ ॥

**मज्जादा नेत्रलेढारस्तालुश्रोत्रभुजस्तथा ॥**

तेषामेव कर्मविशेषेण संज्ञान्तरमाह—मज्जादा इत्यादि ॥—

**शिरोहृद्रोगवमथुप्रतिश्यायकराश्च ते ॥ १४ ॥**

तेषां सर्वेषामेव कर्माण्याह—शिरोहृद्रोगेत्यादि । रोगशब्दः शिरोहृद्भ्यां संबध्यते, तेन शिरोरोगो हृद्रोगश्च, वमथुः छर्दिः । चकारात् अन्यानपि कफजव्याधीन् कुर्वन्ति । ते कफजाः क्रमयः ॥ १४ ॥

**केशरोमनखादाश्च दन्तादाः किक्किशास्तथा ॥**
**कुष्ठजाः सपरीसर्पा ज्ञेयाः शोणितसंभवाः ॥ १५ ॥**

रक्तजक्रिमिनामान्याह—केशरोमेत्यादि । केशादाद्याः परीसर्पान्ताः सप्त रक्तजाः क्रमयः ॥ १५ ॥

**ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा ॥**

तेषामाकृतिमाह—त इत्यादि । ते रक्तजाः क्रमयः । पृथवः स्थूलाः ॥—

**रक्ताधिष्ठानजान् प्रायो विकारान् जनयन्ति ते ॥ १६॥**

तेषां कर्माण्याह—रक्ताधिष्ठानजानित्यादि । रक्ताधिष्ठानजान् व्याधिसमुद्देशीयोक्तान् कुष्ठविसर्पपिडकादीन् ॥ १६ ॥

**माषपिष्टान्नविदलपर्णशाकैः पुरीषजाः ॥**
**मांसमाषगुडक्षीरदधितैलैः कफोद्भवाः ॥ १७ ॥**
**विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥**
**ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः ॥ १८ ॥**
**भक्तद्वेषोऽतिसारश्च संजातक्रिमिलक्षणम् ॥**

१ 'व्यायामवर्जी च दिवाशयानो विरुद्धभुक् संलभते क्रिमींस्तु' इति माधवनिदाने पा० । २ 'अयवा वियवाः' इति पा० ।

१ 'उपचारात्' इति पा० ।

पुरीषजादिकृमीणां सामान्यकारणमभिधायेदानीं विशेषकारणमाह—माषपिष्टान्नविदलेत्यादि । पिष्टान्नं तण्डुलादिपिष्टजम् ॥ १७ ॥ १८ ॥—

**दृश्यास्त्रयोदशाद्यास्तु कृमीणां परिकीर्तिताः ॥१९॥**
**केशादाद्यास्त्वदृश्यास्ते द्वावाद्यौ परिवर्जयेत् ॥**

इदानीं कृमीणां दृश्यादृश्यत्वेन साध्यासाध्यत्वेन च विभागकरणार्थमाह—दृश्या इत्यादि । आद्यास्त्रयोदशेति अजवाद्या दारुणान्ता इत्यर्थः । केशादाद्या इति केशादाद्याः परीसर्पान्ता रक्तजाः कृमय इत्यर्थः । द्वावाद्याविति रक्तजापेक्षयैव आद्यौ, तेन केशादरोमादाविलर्थः । तथा चोक्तम्—"असाध्यौ द्वौ तु विज्ञेयौ रोमकेशादसंज्ञितौ" इति ॥ १९ ॥—

**एषामन्यतमं ज्ञात्वा जिघांसुः स्निग्धमातुरम् ॥२०॥**
**सुरसादिविपक्केन सर्पिषा वान्तमादितः ॥**
**विरेचयेत्तीक्ष्णतरैर्योगै-**

निदानमभिधायेदानीं चिकित्सावसरः—एषामन्यतममित्यादि । एषां क्रिमीणां मध्ये अन्यतममेकतमं जिघांसुः, स्निग्धमातुरं सुरसादिगणविपक्केन सर्पिषा स्निग्धमातुरं ज्ञात्वा, आदितश्च वान्तं तीक्ष्णतरैर्योगैः कफघ्नैर्विरेचनकल्पोक्तैर्विरेचयेदिति पिण्डार्थः । 'दुष्टे च कोष्ठे कृमिभिर्मनुष्यं न वामयेत्' इत्यादिना कृमियुक्तस्य पुंसो वमननिषेधः, तथाऽपि कृमियुक्तस्य प्रथमावस्थायां वमनं शस्तम्, अतो वान्तमादित इत्युक्तम् ॥ २० ॥—

**रास्थापयेच्च तम् ॥ २१ ॥**
**यवकोलकुलत्थानां सुरसादेर्गणस्य च ॥**
**विडङ्गस्नेहयुक्तेन क्राथेन लवणेन च ॥ २२ ॥**

विरेकानन्तरं किं कुर्यादित्याह—आस्थापयेदित्यादि । तम् आतुरं यवकोलादीनां क्राथेन तथा सुरसादिगणस्य क्राथेन विडङ्गसाधितस्नेहयुक्तेन सैन्धवलवणान्वितेनास्थापयेदिति पिण्डार्थः । गणस्य चेति चकारात् सुरसादिकल्कोऽपि ग्राह्यः ॥ २१ ॥ २२ ॥

**प्रत्यागते निरूहे तु नरं स्नातं सुखाम्बुना ॥**
**युञ्ज्यात् कृमिघ्नैरशनैस्ततः शीघ्रं भिषग्वरः ॥२३॥**
**स्नेहेनोक्तेन चैनं तु योजयेत् स्नेहवस्तिना ॥**

आस्थापनानन्तरं किं कुर्यादित्याह—प्रत्यागत इत्यादि । प्रत्यागते व्याघुटिते पतिते इत्यर्थः । सुखाम्बुना उष्णोदकेन । कृमिघ्नैरशनैः कृमिघ्नद्रव्यसाधितैः स्वभावतः कृमिघ्नैश्च । स्नेहेनोक्तेन विडङ्गसाधितस्नेहेन । स्नेहवस्तिना अनुवासनेन ॥२३॥—

**ततः शिरीषकिणिहीरसं क्षौद्रयुतं पिबेत् ॥ २४ ॥**

अतोऽनन्तरं कृतान्नसंसर्गः किं कुर्यादित्याह—तत इत्यादि । तत इति अनुवासनानन्तरम् । किणिही कटभी ॥ २४ ॥

**केबूकस्वरसं वाऽपि पूर्ववत्तीक्ष्णभोजनः ॥**

पानान्तरमाह—केबूकेत्यादि । केबूकः 'केमुर' इति नाम्ना प्रसिद्धः । पूर्ववदिति क्षौद्रयुतमित्यर्थः । तीक्ष्णभोजनः तीक्ष्णद्रव्यसंस्कृताहारः ॥—

**पलाशबीजस्वरसं कल्कं वा तण्डुलाम्बुना ॥ २५ ॥**

अपरमपि पानयोगमाह—पलाशबीजेत्यादि । पलाशबीजस्वरसं कल्कं वेति पलाशबीजकल्कं वा तण्डुलाम्बुना पिबेदित्यर्थः ॥ २५ ॥

**पारिभद्रकपत्राणां क्षौद्रेण स्वरसं पिबेत् ॥**
**पत्तूरस्वरसं वाऽपि पिबेद्वा सुरसादिजम् ॥ २६ ॥**

अपरमपि पानयोगमाह—पारिभद्रकपत्राणामित्यादि । पारिभद्रः पर्वतनिम्बः । पत्तूरः शिखालिका । सुरसादिकः सुरसादिगणः ॥ २६ ॥

**लिह्याद्श्वशकृच्चूर्णं वैडङ्गं वा समाक्षिकम् ॥**

कृमिघ्नमवलेहयोगमाह—लिह्यादित्यादि । अश्वशकृच्चूर्णं घोटकपुरीषचूर्णम् । वैडङ्गं विडङ्गचूर्णम् । 'वैडङ्गम्' इत्यत्र 'बैडालम्' इति केचित् पठन्ति; तत्र बिडालविट्चूर्णमिति व्याख्यानम् ॥—

**पत्रैर्मूषिकपर्ण्या वा सुपिष्टैः पिष्टमिश्रितैः ॥ २७ ॥**
**खादेत् पूपलिकाः पक्वा धान्याम्लं च पिबेदनु ॥**

क्रिमिघ्नपूपलिकामाह—पत्रैर्मूषिकपर्ण्या वेत्यादि । मूषिकपर्णी दन्ती, अन्ये मूषिककर्णाख्यं द्रव्यान्तरमाहुः । पिष्टमिश्रितैः यवपिष्टमिश्रितैः, तस्य विशेषेण क्रिमिहरत्वात् । धान्याम्लं काञ्जिकम् । अन्विति पूपलिकाभक्षणानन्तरम् । यद्यपि 'क्षीराणि मांसानि घृतानि च' इत्यादिग्रन्थोक्तादम्लवर्जनादत्र काञ्जिकस्यापि वर्जनं प्राप्नोति, तथाऽपि काञ्जिकस्य प्रायोगिकत्वात् क्रिमिहरत्वाच्चात्र काञ्जिकानुपानं, तथा हि गुणोपवर्णने काञ्जिकं कृमिघ्नत्वेन दृष्टम् ॥ २७ ॥—

**सुरसादिगणे पक्वं तैलं वा पानमिष्यते ॥ २८ ॥**
**विडङ्गचूर्णयुक्तैर्वा पिष्टैर्भक्ष्यांस्तु कारयेत् ॥**

कृमिघ्नतैलमाह—सुरसादिगणे इत्यादि । तैलमिति सुरसादिगणे 'क्वाथकल्कीकृते' इति शेषः । विडङ्गेत्यादि । पिष्टैः यवादिपिष्टैः । भक्ष्यान् लड्डूकादीन् । विकल्पविधानं पूर्वयोगापेक्षया ॥ २८ ॥—

**तत्कषायप्रपीतानां तिलानां स्नेहमेव वा ॥ २९ ॥**

तत्कषायप्रपीतानामित्यादि । तत्कषायप्रपीतानां विडङ्गक्काथभावितानाम् । अत्रापि कारयेदिति संबन्धनीयम् ॥ २९ ॥

**इवाविधः शकृतश्चूर्णं सप्तकृत्वः सुभावितम् ॥**
**विडङ्गानां कषायेण त्रैफलेन तथैव च ॥ ३० ॥**

१ 'केजक' इति पा० । २ 'विडङ्गचूर्णपिष्टाभ्यां तस्मिन् भक्ष्यं तु कारयेत्' इति पा० ।

**क्षौद्रेण लीढ्वाऽनुपिबेद्रसमामलकोद्भवम् ॥**
**अक्षाभयारसं वाऽपि**

श्वाविध इत्यादि । श्वाविधः सेढायाः, शकृत् विष्ठा, तस्याश्चूर्णं सप्तवारान् विडङ्गक्वाथेन भावितं पुनस्त्रिफलाक्वाथेन तथैव भावितं, क्षौद्रेण लीढ्वा, अनु पश्चात्, आमलकोद्भवं बिभीतकोद्भवं वा हरीतकीरसं वाऽपि क्षौद्रेण पिबेदिति संबन्धः ॥ ३० ॥—

**विधिरेषोऽयसामपि ॥ ३१ ॥**

अमुमेव विधिं लौहचूर्णानामप्यतिदिशन्नाह—विधिरित्यादि । एष विधिः श्वाविधः शकृच्चूर्णविधिः । अयसामपीति त्रपुसीसताम्ररजतकृष्णलोहानामपि । एतेनैतदुक्तं भवति—प्रत्येकं लोहादिचूर्णानां श्वावित्पुरीषचूर्णविधानवद्विधिः कार्यः ॥ ३१ ॥

**पूतीकस्वरसं वाऽपि पिबेद्वा मधुना सह ॥**
**पिबेद्वा पिप्पलीमूलमजामूत्रेण संयुतम् ॥ ३२ ॥**
**सप्तरात्रं पिबेद्धृष्टं त्रपु वा दधिमस्तुना ॥**

पूतीकः चिरबिल्वः । पिबेदित्यादि । अजामूत्रेण छगमूत्रेण । पिबेद्धृष्टमित्यादि । त्रपु रङ्गं, 'कथीर' इति लोके । दधिमस्तुग्रहणम् अन्यमस्तुनिषेधार्थं; अन्ये 'दधिमस्तुना' इत्यत्र दधिग्रहणं कूर्चिकामस्तुपरिहारार्थमिति व्याख्यानयन्ति । तन्न, दधिमस्तुग्रहणेन कूर्चिकामस्तुग्रहणमसंभवं, सर्वनिबन्धविरोधात् समानतन्त्रविरोधाच्च ॥ ३२ ॥—

**पुरीषजान् कफोत्थांश्च हन्यादेवं कृमीन् भिषक् ॥**

यत् पूर्वमेतच्चिकित्सितमुक्तं तत् पुरीषकफजानां कार्यमिति दर्शयन्नाह—पुरीषजानित्यादि । एवमिति पूर्वोक्तेन विधिनेत्यर्थः ॥ ३३ ॥

**शिरोहृद्घ्राणकर्णाक्षिसंश्रितांश्च पृथग्विधान् ॥**
**विशेषेणाञ्जनैर्नस्यैरवपीडैश्च साधयेत् ॥ ३४ ॥**

पुरीषकफजानां सामान्यचिकित्सितमभिधायेदानीं कफजानामाश्रयविशेषेण चिकित्सामाह—शिरोहृद्घ्राणेत्यादि । शिरःप्रभृतिसंश्रितान् नानाप्रकारान् कृमीन् विशेषेणाञ्जनादिभिः साधयेदिति पिण्डार्थः । चकारात् गण्डूषकवलग्रहादिभिरपि । अन्ये तु यद्यप्यञ्जनादिकं सामान्येनोक्तं, तथाऽप्यञ्जनं नेत्रस्थे, नस्यावपीडौ घ्राणशिरःसंश्रिते च, विशेषेणाञ्जनादीनां नेत्रादिजकृमिहरत्वात्; हृद्गतानां कर्णगतानां चार्थवशादेव कृमिजहृद्रोगकृमिकर्णकचिकित्सितैश्चिकित्सा कार्या; चकारात् शिरःस्थितानां कृमीणां कृमिशिरोरोगचिकित्सितैश्चिकित्सा कार्येति गृह्यत इति व्याख्यानयन्ति । 'संश्रितान्' इत्यत्र 'व्रणजान्' इति केचित् पठन्ति; अन्ये 'संश्रितान्' इत्यत्र 'संस्रुतान्' इति पठन्ति; कर्णस्थाने च वक्त्रं पठन्ति ॥ ३४ ॥

**शकृद्रसं तुरङ्गस्य सुशुष्कं भावयेदति ॥**
**निष्क्वाथेन विडङ्गानां चूर्णं प्रधमनं तु तत् ॥ ३५ ॥**

शिरःप्रभृतिसंश्रितकृमिघ्नं प्रधमनमाह—शकृद्रसमित्यादि । शकृद्रसं तुरङ्गस्येति घोटकपुरीषस्य रसमित्यर्थः । सुशुष्कमिति पुरीषरसस्य विशेषणम् । प्रधमनमिति नासायां चूर्णप्रक्षेपणं ज्ञेयम् ॥ ३५ ॥

**अयश्चूर्णान्यनेनैव विधिना योजयेद्भिषक् ॥**
**सकांस्यनीलं तैलं च नस्यं स्यात्सुरसादिके ॥ ३६ ॥**

अमुमेव प्रधमनविधिं लोहचूर्णेष्वतिदिशन्नाह—अयश्चूर्णानीत्यादि । अनेनेति घोटपुरीषस्वरसप्रधमनविधानेन । सकांस्यनीलं कांस्यापमार्जनमषीसहितम् । 'सुरसादिके' इत्यत्र 'विपक्वं' इति शेषः । तेन सुरसादिगणक्वाथविपक्वं तैलं कांस्यमषीसहितं नस्यं स्यादिति । तथा चोक्तं,—"सुरसादिशृतं तैलं नस्यं कांस्यमलान्वितम्—" इति ॥ ३६ ॥

**इन्द्रलुप्तविधिश्चापि विधेयो रोमभोजिषु ॥**

रोमादादीनामतिदेशेन चिकित्सामाह—इन्द्रलुप्तेत्यादि । रोमभोजिषु रोमादेषु । चकारेण केशभोजिष्वपीन्द्रलुप्तविधिः कार्य इति समुच्चीयते ॥—

**दन्तादानां समुद्दिष्टं विधानं मुखरोगिकम् ॥ ३७ ॥**

दन्तादानामप्यतिदेशेन चिकित्सितमाह—दन्तादानामित्यादि । मुखरोगिकं कृमिदन्तोक्तं, विशेषेण कृमिदन्तोक्तचिकित्सितस्य दन्तानां हितत्वात् । यद्यपि रोमाददन्तादानां रक्तजत्वात् रक्तजसामान्यचिकित्सानन्तरमिन्द्रलुप्तविध्यादिकं विशेषचिकित्सितं कर्तुमुचितं भवति, तथाऽपि कफजा अपि रोमदन्तभक्षणं कुर्वन्तीति प्रव्यक्तकटुकं भोजनं हितं भवेदिति प्रतिपादनार्थं रोमदन्तादानां प्रथमं चिकित्सितमुक्तम् ॥ ३७ ॥

**रक्तजानां प्रतीकारं कुर्यात् कुष्ठचिकित्सिते ॥**

इदानीं सामान्यचिकित्सितं रक्तजानामतिदेशेनाह—रक्तजानामित्यादि । 'कुष्ठचिकित्सिते' इत्यत्र पूर्वोक्तमेव समुद्दिष्टमिति पदं संबन्धनीयम् । केचित् 'कुष्ठचिकित्सितात्' इति पठन्ति ॥—

**सुरसादिं तु सर्वेषु सर्वथैवोपयोजयेत् ॥ ३८ ॥**

सुरसादिं तु सर्वेष्वित्यादि । सर्वेषु पुरीषजादिषु । सर्वथैव अन्नपानस्नानादिविधिना ॥ ३८ ॥

**प्रव्यक्ततिक्तकटुकं भोजनं च हितं भवेत् ॥**

भोजने विध्यन्तरमाह—प्रव्यक्तेत्यादि । प्रव्यक्ततिक्तकटुकमिति तिक्तकटुकोत्कटमित्यर्थः ॥—

**कुलत्थक्षारसंसृष्टं क्षारपानं च पूजितम् ॥ ३९ ॥**[1]

पानेऽपि विध्यन्तरमाह—कुलत्थेत्यादि । कुलत्थक्षारसंसृष्टं कुलत्थभस्मोदकसंयुक्तम् ? क्षारपानं यवक्षारपानं, तथा चोक्तं विश्वामित्रेण—"यावशूकस्य पानं तु कुलत्थक्षारवारिणा"—इति । केचित् 'कुलत्थक्षार-' इत्यत्र 'विडङ्गक्षार-' इति पठन्ति ॥ ३९ ॥

१ 'कुलत्थक्वाथसंसृष्टं क्षीरपानं च पूजितम्' इति पा० ।

**क्षीराणि मांसानि घृतानि चैव**
**दधीनि शाकानि च पर्णवन्ति ॥**
**समासतोऽम्लान्मधुरान् हिमांश्च**
**कृमीन् जिघांसुः परिवर्जयेत्तु ॥ ४० ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे कृमिप्रतिषेधो नाम ( षोडशोऽध्यायः, आदितः ) चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥**

प्रवृत्तिलक्षणं चिकित्सितमभिधायेदानीं निवृत्तिलक्षणं चिकित्सितमाह—क्षीराणि मांसानीत्यादि । यद्यपि 'संक्षेपतः क्रियायोगो निदानपरिवर्जनम्' इति वाक्यादेव क्षीरादीनां निषेधविधिः सिद्धः, तथाऽपि क्षीरादीनां प्रतिषेधकरणं नियमार्थं; तेन कृमीणां निदानमपि क्षीरादिकं मदात्यये मद्यवद्भेषजं मा भूदित्यर्थः ॥ ४० ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे कृमिप्रतिषेधो नाम चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

## पञ्चपञ्चाशत्तमोऽध्यायः ।

**अथात उदावर्तप्रतिषेधमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

कृमिप्रतिषेधानन्तरं कृमिचिकित्सितस्य कटुतिक्तकषायादेरुदावर्तहेतुत्वादुदावर्तप्रतिषेधारम्भो युक्त इत्यत आह—अथात इत्यादि । उत् ऊर्ध्वं वातविण्मूत्रादीनां आवर्तो भ्रमणं यस्मिन् रोगे स उदावर्तः; अन्ये पुरीषं वायुना वर्तुलीकृतमुदावर्तं मन्यन्ते, लोकप्रसिद्धत्वात् ॥ १ ॥ २ ॥

**अधश्चोर्ध्वं च भावानां प्रवृत्तानां स्वभावतः ॥**
**न वेगान् धारयेत् प्राज्ञो वातादीनां जिजीविषुः ॥३॥**

वेगधारणस्यैकान्तेनोदावर्तहेतुत्वाद्वेगधारणनिषेधमाह—अधश्चोर्ध्वं चेत्यादि । अधोभावा मूत्रादयः, ऊर्ध्वभावा उद्गारादयः, तेषां भावानां वातादीनां वेगान् न धारयेत् । किम्भूतानां ? स्वभावतः प्रवृत्तानां, प्रकृत्यैव स्वाशयच्युतानामित्यर्थः । एतेनैतेऽप्रवृत्ता बलान्नोदीरणीया इति सूचयति । जिजीविषुः जीवितुमिच्छुः पुरुषः । केचित् 'प्राज्ञः' इत्यत्र 'प्राप्तान्' इति पठन्ति । ते च व्याख्यानयन्ति—वेगग्रहणेनैव प्राप्तानिति प्राप्तं यस्मादप्राप्तो वेगो न भवति, अतः प्राप्तग्रहणमधिकं[1], तेनाधिकेन प्राप्तग्रहणेन केषाञ्चित् प्राप्ता अपि वेगा धारणीया इत्यर्थाधिक्यमावेदयति; तथा च तन्त्रान्तरे—"इमांस्तु धारयेद्वेगान् हितैषी प्रेत्य चेह च । लोभेर्ष्याद्वेषमात्सर्यरागादीनां यतेन्द्रियः[2]"—इति । तच्च व्याख्यानं न युक्तं, यस्माद्विशेषाभिधानादेव लोभादीनां वेगधारणं सिद्धं; तस्मात् प्राप्तान् उन्मुखीभूतानिति व्याख्यानं युक्तम् । अन्ये तु वातादीनां प्राप्तान् युक्तान् वेगान् न धारयेत्, न तु साहसादिवेगान् न धारयेदिति व्याख्यानयन्ति ॥ ३ ॥

**वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः ॥**
**व्याहन्यमानैरुदितैरुदावर्तो निरुच्यते ॥ ४ ॥**

उदावर्तस्य निरुक्तिद्वारा कारणान्याह—वातविण्मूत्रेत्यादि । अश्रु नेत्रोदकं, क्षवः छिक्का; इन्द्रियमत्र शुक्रमभिप्रेतं, 'शुक्राश्मरी तत्स्रवणं भवेद्वा' इत्यादिवक्ष्यमाणवचनात्; **अभिधाने** चेन्द्रियशब्दः शुक्रे दृष्टः; तथाच तद्वचः—"श्रोत्रवागादि सत्त्वं च शुक्रं चेन्द्रियमुच्यते"—इति । व्याहन्यमानैः अवरुध्यमानैः । उदितैरिति ऊर्ध्वंगतैः ॥ ४ ॥

**क्षुत्तृष्णाश्वासनिद्राणामुदावर्तो विधारणात् ॥**

अन्येषामपि विधारणादुदावर्तसंभवमाह—क्षुत्तृष्णेत्यादि । वातविण्मूत्रादिकात् क्षुत्तृष्णादीनां भिन्नपाठो वातादीनां सन्निहितकारणत्वं तथा क्षुदादीनां विप्रकृष्टकारणत्वं सूचयति; अथवा अनेन भिन्नपाठेन वक्ष्यमाणं हेतुमाहाराश्रितं सूचयति । यथा—'वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः' इत्यादि । ये क्षुदादीनां भिन्नपाठं न पठन्ति; तन्मते ईदृशः पाठः,—'वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः । क्षुत्तृष्णाश्वासनिद्राणां धृत्योदावर्तसंभवः' इति । धृत्या धारणेनेत्यर्थः । ननु, अधोवेगरोधादपानप्रकोपादुदावर्तसंभवो युक्तः, अश्रुजृम्भादिवेगधारणात् कथं तस्योत्पत्तिः ? सत्यं, अश्रुजृम्भादिवेगरोधात् कोष्ठगतो वायुर्यदा भवति तदाऽपानप्रकोपादुदावर्तसंभवः ॥—

**तस्याभिधास्ये व्यासेन लक्षणं च चिकित्सितम् ॥५॥**

तस्याभिधास्ये इत्यादि । तस्य उदावर्तस्य । अभिधास्ये कथयिष्यामि । व्यासेन विस्तरेण ॥ ५ ॥

**त्रयोदशविधश्चासौ भिन्न एतैस्तु कारणैः ॥**

तस्य संख्यामाह—त्रयोदशविध इत्यादि । भिन्नो भेदं गतः । एतैः कारणैः पूर्वोक्तैर्वातविण्मूत्रादिभिः ॥—

**अपथ्यभोजनाच्चापि वक्ष्यते च तथाऽपरः ॥ ६ ॥**

वातादिवेगरोधात्त्रयोदशोदावर्तानभिधायेदानीं कारणभेदादपरमप्याह—अपथ्येत्यादि । अपरो वाताद्यवरोधजेभ्योऽन्यः ६

**आध्मानशूलौ हृदयोपरोधं**
**शिरोरुजं श्वासमतीव हिक्काम् ॥**
**कासप्रतिश्यायगलग्रहांश्च**
**बलासपित्तप्रसरं च घोरम् ॥ ७ ॥**
**कुर्यादपानोऽभिहतः स्वमार्गे**
**हन्यात् पुरीषं मुखतः क्षिपेद्वा ॥**

वातजोदावर्तलक्षणमाह—आध्मानशूलावित्यादि । हृदयोपरोधं हृदयावरणम् । बलासपित्तप्रसरं श्लेष्मपित्तप्रसरणम् ।

---

१ 'प्राप्तग्रहणमधिकं सत् केषांचित्' इति पा० । २ 'जितेन्द्रियः' इति पा० ।

अभिहतः अवरुद्धः । स्वमार्गे गुदे । हन्यात् पुरीषं पुरीषक्षयं कुर्यात् क्षिपेदित्यत्रापि पुरीषमिति संबन्धनीयम् । गलग्रहांश्चेति चकारात् किम्यादीनां समानतन्त्रनिर्दिष्टानां ग्रहणम् । अपानावरोधेन प्राणादीनामपि प्रकोपात् शिरोरुक्कासादिसंभवो युक्तः ॥ ७ ॥—

आटोपशूलौ परिकर्तनं च
सङ्गः पुरीषस्य तथोर्ध्ववातः ॥ ८ ॥
पुरीषमास्यादपि वा निरेति
पुरीषवेगेऽभिहते नरस्य ॥

पुरीषजोदावर्तलक्षणमाह—आटोपशूलावित्यादि । आटोप उदरापूरः । परिकर्तनं गुदमेढ्रबस्त्यादिषु कृन्तनमिव वेदना । ऊर्ध्ववातो बहूद्गारता । आस्यात् मुखात् । निरेति निर्गच्छति । परिकर्तनं चेति चकारात् पिण्डिकोद्वेष्टनादयः ॥ ८ ॥—

मूत्रस्य वेगेऽभिहते नरस्तु
कृच्छ्रेण मूत्रं कुरुतेऽल्पमल्पम् ॥ ९ ॥
मेढ्रे गुदे वङ्क्षणबस्तिमुष्क[1]-
नाभिप्रदेशेष्वथवाऽपि मूर्ध्नि ॥
आनद्धबस्तिश्च[2] भवन्ति तीव्राः
शूलाश्च शूलैरिव भिन्नमूर्तेः[3] ॥ १० ॥

मूत्रोदावर्तलक्षणमाह—मूत्रस्येत्यादि । वङ्क्षणम् उदरोरुसन्धिः । मुष्कौ अण्डौ । मूर्ध्नि उत्तमाङ्गे । आनद्धबस्तिः आध्मातमूत्राधारः । 'आनद्धबस्तेः' इति केचित् पठन्ति, ते च आनद्धबस्तेर्मूर्ध्नि शूला भवन्तीति योजयन्ति । तन्न, समानतन्त्रविरोधात् । भिन्नमूर्तेः भिन्नशरीरस्य ॥ ९ ॥ १० ॥

मन्यागलस्तम्भशिरोविकारा
जृम्भोपघातात् पवनात्मकाः स्युः ॥
श्रोत्राननघ्राणविलोचनोत्था
भवन्ति तीव्राश्च तथा विकाराः ॥ ११ ॥

जृम्भोदावर्तलक्षणमाह—मन्येत्यादि । स्तम्भशब्दो मन्यागलाभ्यां प्रत्येकं संबध्यते । गलस्तम्भो गलग्रहः । शिरोविकाराः सूर्यावर्तादयः । पवनात्मकाः कम्पसुप्त्यादयः, चकारात् अरुचिविभ्रमादयश्च ॥ ११ ॥

आनन्दजं शोकसमुद्भवं वा
नेत्रोदकं प्राप्तममुञ्चतो हि ॥
शिरोगुरुत्वं नयनामयाश्च
भवन्ति तीव्राः सह पीनसेन ॥ १२ ॥

अश्रुजोदावर्तलक्षणमाह—आनन्दजमित्यादि । नेत्रोदकम् अश्रु, प्राप्तं प्रवृत्त्युन्मुखम् । पीनसोऽत्र प्रतिश्यायः, समानतन्त्रदर्शनात् । चकारात् प्रतिश्यायादयः ॥ १२ ॥

भवन्ति गाढं क्षवथोर्विघाता-
च्छिरोक्षिनासाश्रवणेषु रोगाः ॥
कण्ठास्यपूर्णत्वमतीव तोदः
कूजश्च वायोरुत वाऽप्रवृत्तिः ॥ १३ ॥

छिक्काजोदावर्तलक्षणमाह—भवन्तीत्यादि । क्षवथोर्विघातात् छिक्कावरोधात् । कण्ठास्यपूर्णत्वमिति कण्ठमुखे वायुना पूर्णे इव भवतः । अतीव तोदः अतीव व्यथा, कण्ठमुखयोरेव । केचित् 'कण्ठस्य' इति पठन्ति, तन्मते कण्ठस्यैव पूर्णत्वं तोदश्च । कूजः अव्यक्तवचनम् । वायोरप्रवृत्तिः उच्छ्वासावरोधः । उत वा अथवेत्यर्थः । चकारात् मन्यास्तम्भादयः ॥ १३ ॥

उद्गारवेगेऽभिहते भवन्ति
घोरा विकाराः पवनप्रसूताः ॥

उद्गारजोदावर्तलक्षणमाह—उद्गारवेग इत्यादि । घोराः कष्टतराः । 'घोराः' इत्यत्र 'जन्तोः' इति केचित् पठन्ति । पवनप्रसूताः कम्पहिक्काहृद्विबन्धादयः ॥—

छर्देर्विघातेन भवेच्च कुष्ठं
येनैव दोषेण विदग्धमन्नम् ॥ १४ ॥

छर्दिजोदावर्तलक्षणमाह—छर्देर्विघातेनेत्यादि । कुष्ठग्रहणमत्र शीतपित्तकोठाद्युपलक्षणार्थम् । येनैव दोषेण विदग्धमन्नमिति येनैव वाताद्यन्यतमेन दोषेण विदग्धं दुष्टमन्नं भवेत्तद्दोषाधिकमेव कुष्ठं स्यादित्यर्थः । चकारात् अरोचकादयः ॥ १४ ॥

मूत्राशये पायुनि मुष्कयोश्च[1]
शोफो रुजो मूत्रविनिग्रहश्च ॥
शुक्राश्मरी तत्स्रवणं भवेद्वा
ते ते विकारा विहते तु शुक्रे ॥ १५ ॥

शुक्रजोदावर्तलक्षणमाह—मूत्राशय इत्यादि । मूत्राशये बस्तौ, पायुनि गुदे, शोफः श्वयथुः; रुजोऽपि मूत्राशयादिष्वेव भवन्ति । मूत्रविनिग्रहो मूत्राप्रवृत्तिः । तत्स्रवणं शुक्रस्रवणं, समानतन्त्रप्रत्ययात् । ते ते विकारा इति हृत्पीडाङ्गमर्दादयः शुक्रवेगविघातजाः समानतन्त्रोक्ताः ॥ १५ ॥

तन्द्राङ्गमर्दारुचिविभ्रमाः स्युः[2]
क्षुधोऽभिघातात् कृशता च दृष्टेः ॥

क्षुज्जोदावर्तलक्षणमाह—तन्द्रेत्यादि । तन्द्रा वैकारिकी निद्रा; अङ्गमर्दः अङ्गोद्वेष्टनमिव वेदना, स्फुटनिकेत्यन्ये; विभ्रमः अत्यर्थं चकारूढस्येव भ्रमणम् । कृशता च दृष्टेः दृष्टिमान्द्यम्; चकारात् दौर्बल्यादयस्तन्त्रान्तरोक्ता ग्राह्याः ॥—

कण्ठास्यशोषः श्रवणावरोध-
स्तृष्णाभिघाताद्धृदये व्यथा च ॥ १६ ॥

तृष्णाजोदावर्तलक्षणमाह—कण्ठास्यशोष इत्यादि । श्रवणावरोधो बाधिर्यम् । चकारात् श्रमखेदादयः समानतन्त्रोक्ताः ॥ १६ ॥

१ 'वङ्क्षणमुष्कयोश्च' इति पा० । २ 'आनद्धबस्तेः' इति पा० । ३ 'विद्धशरीरस्य' इति पा० ।

१ 'वा गुदमुष्कयोश्च' इति पा० । २ 'तन्द्राङ्गमर्दावरुचिः श्रमश्च' इति पा० ।

श्रान्तस्य निःश्वासविनिग्रहेण
हृद्रोगमोहावथवाऽपि गुल्मः ॥

उच्छ्वासजोदावर्तलक्षणमाह—श्रान्तस्येत्यादि । श्रान्तस्य द्रुतगमनादिना खिन्नस्य । श्रान्तस्येत्यनेनाश्रान्तस्य श्वासधारणादपि पीडा न भवतीति सूच्यते । मोहो वैचित्त्यम् ॥—

जृम्भाऽङ्गमर्दोऽङ्गशिरोक्षिजाड्यं
निद्राभिघातादथवाऽपि तन्द्रा ॥ १७ ॥

निद्राजोदावर्तलक्षणमाह—जृम्भेत्यादि । जाड्यशब्दोऽङ्गादिभिः संबध्यते; जाड्यम् अपाटवं, गौरवमिति तात्पर्यार्थः ॥ १७ ॥

तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरभिद्रुतम् ॥
शकृद्वमन्तं मतिमानुदावर्तिनमुत्सृजेत् ॥ १८ ॥

परित्याज्योदावर्तलक्षणमाह—तृष्णार्दितमित्यादि । परिक्लिष्टम् अत्यर्थमवसन्नं, क्रियारहितमिति यावत्; अन्ये समन्ततो भावेन क्लेशमुपगतं परिक्लिष्टं मन्यन्ते । अभिद्रुतं पीडितम् । उत्सृजेत् परित्यजेत् ॥ १८ ॥

सर्वेष्वेतेषु विधिवदुदावर्तेषु कृत्स्नशः ॥
वायोः क्रिया विधातव्याः स्वमार्गप्रतिपत्तये ॥ १९ ॥
सामान्यतः पृथक्त्वेन क्रियां भूयो निबोध मे ॥

सर्वोदावर्तेषु वायोः सद्भावात् सामान्येन वातहरीं क्रियामाह—सर्वेष्वेतेष्वित्यादि । विधिवत् यथाविधि । कृत्स्नशः सामस्त्येन । क्रियाः स्नेहस्वेदादिकाः । स्वमार्गप्रतिपत्तये वायोरात्ममार्गप्रवर्तनाय । सामान्यतः सामान्येन । 'सर्वेषु' इत्यत्र 'नवसु' इति पठित्वा वातजोदावर्तादिषु नवसंख्येषु वायोः क्रिया विधातव्येति व्याख्यानयन्ति; तन्न, बुभुक्षोद्भवादिष्वपि चतुर्षूदावर्तेषु वायोः सद्भावाद्वातहरी क्रिया क्रियत इति । पृथक्त्वेन क्रियामित्यादि । पृथक्त्वेन प्रत्येकम् ॥ १९ ॥—

आस्थापनं मारुतजे स्निग्धस्विन्ने विशिष्यते ॥ २० ॥

आस्थापनमित्यादि । आस्थापनं निरूहः, तच्चानुलोमिकवातहरद्रव्यकृतम् । स्निग्धस्विन्ने 'आतुरे' इति शेषः । विशिष्यते विशिष्टं भवति, विशेषेण क्रियत इति तात्पर्यार्थः ॥ २० ॥

पुरीषजे तु कर्तव्यो विधिरानाहिको भवेत् ॥

पुरीषज इत्यादि । आनाहिको विधिः फलवर्त्यादिको वातव्याध्युक्तो विसूच्यां वक्ष्यमाणो वा । तुशब्दात् अनुक्तमन्यदपि पुरीषानुलोमनं कर्तव्यम् ॥—

सौवर्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत् ॥ २१ ॥
एलां वाऽप्यथ मद्येन क्षीरं वाऽपि पिबेन्नरः ॥
धात्रीफलानां स्वरसं सजलं वा पिबेत्र्यहम् ॥ २२ ॥
रसमश्वपुरीषस्य गर्दभस्याथवा पिबेत् ॥
मांसोपदंशं मधु वा पिबेद्वा सीधु गौडिकम् ॥ २३ ॥

भद्रदारु घनं मूर्वां हरिद्रां मधुकं तथा ॥
कोलप्रमाणानि पिबेदान्तरिक्षेण वारिणा ॥ २४ ॥
दुःस्पर्शास्वरसं वाऽपि कषायं कुङ्कुमस्य च ॥
एर्वारुबीजं तोयेन पिबेद्वाऽलवणीकृतम् ॥ २५ ॥
पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा ॥

सौवर्चलाढ्यामित्यादि । सौवर्चलाढ्यां सौवर्चलोत्कटाम् । मदिरां मद्यम् । तुशब्दात् सर्पिषोऽवपीडनादिकं समानतन्त्रोक्तं ग्राह्यम् । किं मदिरामेव पिबेदथवाऽन्यदपीत्याह—एलामित्यादि । धात्रीफलानां स्वरसं सजलं वेति न केवलं दुग्धं पिबेदामलकरसं सोदकं पिबेदित्यर्थः । 'गर्दभस्य' इत्यत्रापि 'पुरीषरसम्' इति संबध्यते । मांसोपदंशं मांसभक्षणसहितं, मधु मद्यम् । तच्च द्राक्षोद्भवं, समानतन्त्रदर्शनात् । तथा च तद्वचः,—"द्राक्षोद्भवं चापि पिबेन्मद्यं मांसोपदंशकम्"—इति । गौडिकं सीधु गुडकृतं सत्त्वकम्; अत्रापि मांसोपदंशमिति संबध्यते । भद्रदार्वित्यादि । भद्रदारु देवदारु । घनं मुस्ता । मूर्वा चोरस्नायुः । मधुकं यष्टीमधु । कोलप्रमाणानि अर्धकर्षप्रमाणानि । दुःस्पर्शा दुरालभा । एर्वारुः ग्रीष्मकर्कटिका । अलवणीकृतम् ईषत्सैन्धवयुक्तम् । पञ्चमूली लघुपञ्चमूलं, समानतन्त्रसंवादात्; तथा चोक्तम्—"लघुना पञ्चमूलेन शृतं क्षीरं पिबेन्नरः"—इति ॥ २१–२५ ॥—

योगांश्च वितरेदत्र पूर्वोक्तानश्मरीभिदः ॥ २६ ॥
मूत्रकृच्छ्रक्रमं चापि कुर्यान्निरवशेषतः ॥
भूयो वक्ष्यामि योगान् यान् मूत्राघातोपशान्तये ॥

इदानीं मूत्रजोदावर्ते अश्मरीमूत्रकृच्छ्रमूत्राघातचिकित्सितान्यतिदिशन्नाह—योगांश्च वितरेदित्यादि । वितरेत् दद्यात् । अत्र मूत्रजोदावर्ते । पूर्वोक्तान् 'कुशः काशः शरः' इत्यादिनाऽश्मरीचिकित्सितोक्तान् । भूयः अतिशयेन । 'वक्ष्यामि यान् योगान्' इत्यत्रापि 'तान् कुर्यात्' इति संबध्यते ॥ २६ ॥ २७ ॥

स्नेहैः स्वेदैरुदावर्तं जृम्भाजं समुपाचरेत् ॥

जृम्भणजोदावर्तचिकित्सितमाह—स्नेहैरित्यादि । स्नेहैः स्वेदैरिति पदद्वयेऽपि बहुवचनाच्चतुर्भिः स्नेहैश्चतुर्भिश्च स्वेदैरित्यर्थः ॥—

अश्रुमोक्षोऽश्रुजे कार्यः स्निग्धस्विन्नस्य देहिनः ॥ २८ ॥

अश्रुजोदावर्तचिकित्सामाह—अश्रुमोक्ष इत्यादि । अश्रुमोक्षः अश्रुनिःसारणम् । अत्र छत्त्रचकारनिर्देशात्तीक्ष्णभञ्जनादिकं वक्ष्यमाणमत्रापि संबन्धनीयम् ॥ २८ ॥

तीक्ष्णाञ्जनावपीडाभ्यां तीक्ष्णगन्धोपशिङ्घनैः ॥
वर्तिप्रयोगैरथवा क्षवसक्तिं प्रवर्तयेत् ॥ २९ ॥
(तीक्ष्णौषधप्रधमनैरथवाऽऽदित्यरश्मिभिः ॥)

क्षवजोदावर्तचिकित्सितमाह—तीक्ष्णाञ्जनावपीडाभ्यामित्यादि । तीक्ष्णशब्दोऽञ्जनावपीडाभ्यां सह संबध्यते । अवपीडो

१ 'धावनादिना' इति पा० । २ 'विधातव्या' इति पा० ।

नस्यभेदः। तीक्ष्णगन्धोपशिङ्घनैः मरिचादिचूर्णावघ्राणैः। वर्तिप्रयोगा धूमवर्तिप्रयोगाः। अत्र क्षुतादिशब्दात् अर्करश्मिविलोकनादयो गृह्यन्ते। तथा च—"तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः। प्रवर्तयेत् क्षुतिं सक्ताम्"—इत्यादि। क्षवसक्तिं छिकाया अप्रवर्तनम्। केचित्तीक्ष्णाञ्जनावपीडाभ्यामिति पदमश्रुजोदावर्त एव मन्यन्ते न क्षवजे, अनौपयिकत्वात्तन्त्रान्तरविरोधाच्च॥ २९॥—

**उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत्॥ ३०॥**
**सुरां सौवर्चलवतीं बीजपूररसान्विताम्॥**

उद्गारजे क्रमोपेतमित्यादि। क्रमोपेतं धूमनस्यकवलग्रहचिकित्सितोक्तक्रमसंयुक्तम्। किमुद्गारजे स्नैहिकं धूममेवाचरेदुतान्यदपीत्याह—सुरामित्यादि॥ ३०॥—

**छर्द्याघातं यथादोषं सम्यक् स्नेहादिभिर्जयेत्॥३१॥**
**सक्षारलवणोपेतमभ्यङ्गं चात्र दापयेत्॥**

छर्द्याघातमित्यादि। छर्द्याघातं छर्द्याघातजमुदावर्तं, कारणे कार्योपचारात्। यथादोषं दोषस्थानतिक्रमेण। आदिशब्दात् वमनादयः। सक्षारलवणोपेतम् ईषद्यवक्षारसैन्धवसंयुक्तं; यद्यपि तन्त्रान्तरे तैलाभ्यङ्ग उक्तस्तथाऽप्यत्र वृद्धसंप्रदायाद्घृताभ्यङ्गः कार्यः। चकारात् व्यायामोपवासादयो गृह्यन्ते। 'वम्याघातं' इति केचित् पठन्ति॥ ३१॥—

**वस्तिशुद्धिकरावापं चतुर्गुणजलं पयः॥ ३२॥**
**आवारिनाशात् कथितं पीतवन्तं प्रकामतः॥**
**रमयेयुः प्रिया नार्यः शुक्रोदावर्तिनं नरम्॥ ३३॥**

वस्तिशुद्धिकरावापमित्यादि। वस्तिशुद्धिकरावापं कूष्माण्डकतृणपञ्चमूलादिप्रक्षेपम्। प्रक्षेपद्रव्यप्रमाणं क्षीराष्टांशेन। पयः क्षीरम्। प्रकामतः स्वेच्छया नार्यः शुक्रोदावर्तिनं नरं रमयेयुः भजेयुः। यदत्र रमणे स्त्रीणां कर्तृत्वेनाभिधानं तत् शुक्रोदावर्तिनो हर्षोपचिक्यसंजननार्थम्। प्रिया मनोनुकूलाः। तुप्तचकारात् ताम्रचूडादयस्तन्त्रान्तरोक्ता ग्राह्याः॥ ३२॥ ३३॥

**क्षुद्विघाते हितं स्निग्धमुष्णमल्पं च भोजनम्॥**

क्षुद्विघाते हितमित्यादि। चकारात् लघ्वपि॥—

**तृष्णाघाते पिबेन्मन्थं यवागूं वाऽपि शीतलाम् ३४**

तृष्णाघाते पिबेन्मन्थमित्यादि। मन्थः सघृतशीतलजलप्लुताः सक्तवः। यवागूरत्र पेया। अपिशब्दात् शीतलजलावगाहपानादिकं ग्राह्यम्॥ ३४॥

**भोज्यो रसेन विश्रान्तः श्रमश्वासातुरो नरः॥**

भोज्यो रसेनेत्यादि। भोज्यो भोजयितव्यः। रसेन मांसरसेन॥—

**निद्राघाते पिबेत् क्षीरं स्वप्याच्चेष्टकथा नरः॥ ३५॥**

निद्राघाते पिबेत् क्षीरमित्यादि। क्षीरं गोक्षीरं न माहिषं, प्रधानकल्पनाश्रयणात् समानतन्त्रदर्शनाच्च। तथा च तन्त्रान्तरम्,—"निद्राघाते पिबेत् क्षीरं गोस्तनादथवा नरः–" इति। इष्टकथा अनुकूलकथाः, 'शृणुयात्' इति शेषः। 'इष्टकथारतः' इति पाठान्तरम्। स्वप्यात् निद्रां गच्छेत्॥ ३५॥

**आध्मानाद्येषु रोगेषु यथास्वं प्रयतेत हि॥**
**यच्च यत्र भवेत्प्राप्तं तच्च तस्मिन् प्रयोजयेत्॥ ३६॥**

उदावर्तचिकित्सितमभिधायेदानीं तदुपद्रवचिकित्सितमाह—आध्मानाद्येषु रोगेष्वित्यादि। आध्मानाद्येषु वेगावरोधजातेषु। आदिशब्दात् शूलपरिकर्तिकापुरीषसङ्गादीनां ग्रहणम्। यथास्वं यस्याध्मानादेर्यदात्मीयमौषधं वातव्याध्यादिचिकित्सितोक्तं तेन प्रयतेत प्रयत्नं कुर्वीत। अन्यदप्युचितं चिकित्सितमाध्मानादिषु कार्यमित्याह—यच्चेत्यादि। यदौषधं यस्मिन् आध्मानादौ प्राप्तं युक्तम्॥ ३६॥

**वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः॥**
**भोजनैः कुपितः सद्य उदावर्तं करोति हि॥ ३७॥**
**वातमूत्रपुरीषासृक्कफमेदोवहानि वै॥**
**स्रोतांस्युदावर्तयति पुरीषं चातिवर्तयेत्॥ ३८॥**
**ततो हृद्वस्तिशूलार्तो गौरवारुचिपीडितः॥**
**वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः॥ ३९॥**
**श्वासकासप्रतिश्यायदाहमोहवमिज्वरान्॥**
**तृष्णाहिक्काशिरोरोगमनःश्रवणविभ्रमान्॥ ४०॥**
**लभते च बहूनन्यान् विकारान् वातकोपजान्॥**

'अपथ्यभोजनाच्चापि वक्ष्यते च तथाऽपरः' इति यदुक्तं तस्यावसरः—वायुरित्यादि। कोष्ठानुगो वायुरत्र अपानः, समानतन्त्रदर्शनात्। तस्य लक्षणमाह—वातेत्यादि। उदावर्तयति ऊर्ध्वमावर्तयति, अधोवहानि स्रोतांस्यूर्ध्ववहानि करोतीत्यर्थः। पुरीषं चातिवर्तयेदिति उष्ट्रादिपुरीषवत् कठिनं कुर्यादित्यर्थः। ततः तस्माद्धेतोः। विभ्रमो व्यापद्विशेषः। अन्यान् आध्मानप्रत्याध्मानादीन्॥ ३७-४०॥—

**तं तैललवणाभ्यक्तं स्निग्धं स्विन्नं निरूहयेत्॥४१॥**
**दोषतो भिन्नवर्चस्कं भुक्तं चाप्यनुवासयेत्॥**

तस्य चिकित्सितमाह—तं तैलेत्यादि। तम् उदावर्तिनम्। दोषत इत्यादि। भिन्नवर्चस्कं निरूहभिन्नपुरीषं पुरुषं दोषमपेक्ष्य भुक्तवन्तमनुवासयेदिति संबन्धः। केचिदत्रानुवासनं निरूहातियोगव्यापत्प्रशमनार्थं मन्यन्ते; तन्न, समानतन्त्रविरोधात्; तथा च,—"उदावर्तं त्वपथ्योत्थे सुनिरूढं ततो भिषक्। यथादोषं भुक्तवन्तमाशु चैवानुवासयेत्"—इति। केचित् 'भिन्नवर्चस्कं' इत्यत्र 'भिन्नवर्चांसि' इति पठित्वा अनुलोमनीयानि भुक्तवन्तमिति व्याख्यानयन्ति॥ ४१॥—

**न चेच्छान्तिं व्रजत्येवमुदावर्तः सुदारुणः॥ ४२॥**
**अथैनं बहुशः स्विन्नं युञ्ज्यात् स्नेहविरेचनैः॥**

निरूहानुवासनाभ्यामप्यप्रशाम्यत्सुदावर्ते चिकित्सितमाह—न चेच्छान्तिमित्यादि। एवं पूर्वोक्तविधिना। एनम् उदावर्तिनम्। स्विन्नं स्निग्धस्विन्नम्, आदिलोपात्। स्नेहविरेचनैरेरण्डतैलादिभिः॥ ४२॥—

१ 'रमयेरन्' इति पा०। २ 'स्वप्याच्चेष्टकथारतः' इति पा०।

१ 'मनुरंजनकथाः' इति पा०।

**पाययेत त्रिवृत्पीलुयवानीरम्लपाचनैः ॥ ४३ ॥**
**हिङ्गुकुष्ठवचास्वर्जिविडङ्गं वा द्विरुत्तरम् ॥**
**योगावेतावुदावर्तं शूलं चानिलजं हतः ॥ ४४ ॥**

अपथ्यजोदावर्ते योगद्वयमाह—पाययेतेत्यादि । पीलुः उष्ट्रप्रियो गुडफलः, भादानके 'पीलु' इति प्रसिद्धः । अम्लपाचनैः अम्लं काञ्जिकं, पाचनानि चित्रकादीनि, तैः सह पाययेदित्यर्थः । त्रिवृदादिः एको योगः, हिङ्ग्वादिस्तु द्वितीयः । स्वर्जी स्वर्जिकाक्षारः । द्विरुत्तरमिति आद्याच्च द्रव्यादुत्तरोत्तरं द्रव्यं द्विगुणं ग्राह्यम् । द्विरुत्तरमिति पदं न पूर्वयोगे संबन्धनीयं, 'द्विरुत्तरा हिङ्गुवचा सकुष्ठा' इत्यादिना तन्त्रान्तरे दर्शितत्वात् । यवानीरित्यत्र यवागूमिति केचित् पठन्ति । अपरे 'अम्लपाचनैः' इत्यत्र 'अम्लपानकैः' इति पठित्वा अम्लद्रवैरिति व्याख्यानयन्ति ॥ ४३ ॥ ४४ ॥

**देवदार्वग्निकौ कुष्ठं शुण्ठीं पथ्यां पलङ्कषाम् ॥**
**पौष्कराणि च मूलानि तोयस्यर्धाढके पचेत् ॥ ४५ ॥**
**पादावशिष्टं तत् पीतमुदावर्तमपोहति ॥**

देवदार्वग्निकावित्यादि । अग्निकः अजमोदा । पथ्या हरीतकी । पलङ्कषा गुग्गुलुः । अर्धाढकं द्वात्रिंशत्पलानि, पादावशिष्टम् अष्टपलप्रमितं, वृद्धवैद्यव्यवहारात्तन्त्रान्तरदर्शनाच्च । तथा च तन्त्रान्तरे उक्तम्,—"कुष्ठं पलङ्कषां पथ्यां शुण्ठीं दार्वग्निपुष्करम् । द्वात्रिंशता तोयपलैः पक्त्वा पादावशेषितम् । पाययेत्"—इत्यादि । यद्यपि 'क्वाथस्याञ्जलिरिष्यते' इति परिभाषा विद्यते, तथाऽपि मानानुक्तौ परिभाषाश्रयणं न पुनरुक्ते माने । केचिदर्धाढकं चतुःषष्टिपलानि मन्यन्ते, ते च षोडशपलोन्मितं क्वाथं पाययन्ति; अपरे क्वाथबाहुल्यात् क्रमशः क्वाथपानमिच्छन्ति न पुनरेकस्मिन्नेव दिवसे; तन्न, समानतन्त्रविरोधात् ॥ ४५ ॥—

**मूलकं शुष्कमार्द्रं च वर्षाभूः पञ्चमूलकम् ॥ ४६ ॥**
**आरेवतफलं चाप्सु पक्त्वा तेन घृतं पचेत् ॥**
**तत् पीयमानं शास्त्युग्रमुदावर्तमशेषतः ॥ ४७ ॥**

उदावर्ते पानार्थं घृतमाह—मूलकमित्यादि । शुष्कमिति मूलार्द्रकयोर्विशेषणम् । वर्षाभूः पुनर्नवा । पञ्चमूलकं बिल्वादिपञ्चमूलम् । आरेवतफलं गिरिमालकफलम् । पक्त्वेति क्वाथपाकपरिभाषया । तेन क्वाथेन । शास्ति हन्तीत्यर्थः ॥ ४६ ॥ ४७ ॥

**वचामतिविषां कुष्ठं यवक्षारं हरीतकीम् ॥**
**कृष्णां निर्दहनीं चापि पिबेदुष्णेन वारिणा ॥ ४८ ॥**

वचामतिविषामित्यादि । निर्दहनी अग्निमन्थः, गणिकारिकेत्यन्ये ॥ ४८ ॥

**इक्ष्वाकुमूलं मदनं विशल्यातिविषे वचाम् ॥**
**कुष्ठं किण्वाग्निकौ चैव पिबेत्तुल्यानि पूर्ववत् ॥ ४९ ॥**
**मूत्रेण देवदार्वग्नित्रिफलाबृहतीः पिबेत् ॥**

इक्ष्वाकुमूलमित्यादि । इक्ष्वाकुः कटुतुम्बी । विशल्या काष्ठपाटला, इन्द्रवारुणीत्यन्ये । किण्वं सुराबीजं; अग्निकः अजमोदा । पूर्ववदिति उष्णोदकेनेत्यर्थः । मूत्रेण गोमूत्रेण । अग्निः चित्रकः ॥ ४९ ॥—

**यवप्रस्थं फलैः सार्धं कण्टकार्या जलाढके ॥ ५० ॥**
**पक्त्वाऽर्धप्रस्थशेषं तु पिबेद्धिङ्गुसमन्वितम् ॥**

यवप्रस्थमित्यादि । कण्टकारीफलयवयोः समुदितेन समभागेन प्रस्थं षोडशपलानि । जलाढकं तोयस्य चतुःषष्टिपलानि, वृद्धवैद्यव्यवहारादत्र तोयद्वैगुण्यपरिभाषा नाद्रियते । अर्धप्रस्थशेषम् अष्टौ पलानि । अत्र क्वाथस्याष्टौ पलानि बहुत्वात् कथं पातव्यानीति नाशङ्कनीयं, "ऋषयस्त्वेव जानन्ति द्रव्यसंयोगजं फलम्"—इत्युक्तेः । ये तु पूर्वोक्तदेवदार्वादिपानवदत्रापि तोयस्य मानाधिक्यमिच्छन्ति, ते कण्टकारिफलान्यपि प्रस्थप्रमितानि गृह्णन्ति । केचित् 'यवप्रस्थं पले द्वे च कण्टकार्याः' इति पठन्ति ॥ ५० ॥—

**मदनालाबुबीजानि पिप्पलीं सनिदिग्धिकाम् ॥ ५१ ॥**
**संचूर्ण्य प्रधमेन्नाड्या विशत्येतद्यथा गुदम् ॥**

मदनालाबुबीजानीत्यादि । मदनं मदनफलं, तस्य बीजानि **वैतरणसंवादात्** । तथा च तद्वचः,—"मदनालाबुनोर्बीजं कण्टकारीकणान्वितम्"—इत्यादि । निदिग्धिका कण्टकारी । एतानि संचूर्ण्य नाड्या प्रधमेत् मुखादिवायुना कृत्वा गुदे प्रेरयेत् ॥ ५१ ॥—

**चूर्णं निकुम्भकम्पिल्लश्यामेक्ष्वाकग्निकोद्भवम् ॥ ५२ ॥**
**कृतवेधनमागध्योर्लवणानां च साधयेत् ॥**
**गवां मूत्रेण ता वर्तीः कारयेत्तु गुदानुगाः ॥**
**सद्यः शर्मकरावेतौ योगावमृतसंमतौ ॥ ५३ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे उदावर्तप्रतिषेधो नाम (सप्तदशोऽध्यायः, आदितः) पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥**

चूर्णमित्यादि । निकुम्भो दन्तीवृक्षः, कम्पिल्लः रोचनिका, श्यामा अरुणमूला त्रिवृत्, इक्ष्वाकुः कटुतुम्बी, अग्निकः अजमोदा, कृतवेधनं कोशातकीभेदः, मागधी पिप्पली, लवणानि सैन्धवादीनि, गुदानुगा गुदप्रवेशयोग्यप्रमाणा । शर्मकरौ सुखकरौ । एतौ योगाविति मदनादिचूर्णप्रधमनयोगवर्तियोगौ । अमृतसंमितौ अमृततुल्यौ, जीवनीयात्मकत्वात् । वर्तिकल्पनां कथयति—निकुम्भादीनां चूर्णं गोमूत्रेण पक्त्वा घने शीतीभूते च सति वर्तीः कारयेत् ॥ ५२ ॥ ५३ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे उदावर्तप्रतिषेधो नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

१ 'चापि नियच्छतः' इति पा० । २ 'वचां' इति पा० । ३ 'शमयेदुदावर्तमशेषतः' इति पा० ।

१ 'योगसंयोगजं' इति पा० ।

## षट्पञ्चाशत्तमोऽध्यायः ।

**अथातो विसूचिकाप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

उदावर्तप्रतिषेधानन्तरमुदावर्ताश्रितवातप्रतिलोम्यकृतमन्दाग्नेर्विसूचिकाहेतुत्वाद्विसूचिकाप्रतिषेधारम्भो युक्त इत्यत आह—अथात इत्यादि । विसूचिकेत्यत्र आदिशब्दो लुप्तो द्रष्टव्यः, तेनालसकविलम्बिकयोर्ग्रहणम् ॥ १ ॥ २ ॥

**अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम् ॥**
**विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥ ३ ॥**

विसूच्यादीनां कारणमाह—अजीर्णमाममित्यादि । यदीरितमिति 'अन्नपानविधौ' इति शेषः । तस्मात् अजीर्णात् । यदत्र चतुर्थाजीर्णस्य रसशेषस्योपादानं न कृतं तदपरिणाममात्रत्वेन तस्य विसूच्याद्यारम्भकत्वाभावादेकीयमतत्वेनोक्तत्वाच्च । विसूच्यलसकाभ्यां यद्विलम्बिकायाः पृथग्विभक्तिनिर्देशः कृतः, तत्तस्या असाध्यत्वावबोधनार्थम्, इतरयोश्च प्रायः कृच्छ्रसाध्यत्वबोधनार्थम् ॥ ३ ॥

**सूचीभिरिव गात्राणि तुदन् संतिष्ठतेऽनिलः ॥**
**यस्याजीर्णेन सा वैद्यैरुच्यते ति[1] विसूचिका ॥ ४ ॥**

विसूच्या निरुक्तिमाह—सूचीभिरित्यादि । वैद्यैः आद्यैरित्यर्थः । उच्यते ति 'वर्णागम-' इत्यादिना इकारलोपात् साधुः । 'तुदन्' इत्यत्र 'भिन्दन्' इति केचित् पठन्ति । यदत्र विसूच्यादीनां प्राग्रूपं न भणितं तद्रूपाण्येवाल्पान्यासां प्राग्रूपं, न तु प्राग्रूपान्तरमस्तीति बोधयति ॥ ४ ॥

**न तां परिमिताहारा लभन्ते विदितागमाः ॥**
**मूढास्तामजितात्मानो लभन्ते कलुषाशयाः[2] ॥ ५ ॥**

इदानीमजीर्णपरिवर्जने यत्नातिशयः कार्य इति प्रतिपादनार्थमाह—न तामित्यादि । परिमिताहारा अनिषिद्धाशनं भुञ्जानाः । विदितागमा ज्ञातभोजनोपदेशाः । मूढाः पशुतुल्याः, सेव्यासेव्याहारानभिज्ञा इत्यर्थः । अजितात्मानः अजितेन्द्रियाः । कलुषाशयाः प्रदुष्टामाशयाः, आमाशयदुष्टिश्च दुष्टान्नसंपर्काद्वातादिकोपाच्च; केचित् 'अशनलोलुपाः' इति पठन्ति ॥ ५ ॥

**मूर्च्छातिसारौ वमथुः पिपासा**
**शूलं भ्रमोद्वेष्टनजृम्भदाहाः ॥**
**वैवर्ण्यकम्पौ हृदये रुजश्च**
**भवन्ति तस्यां शिरसश्च भेदः ॥ ६ ॥**

विसूचिकालक्षणमाह—मूर्च्छातिसारावित्यादि । वमथुः छर्दिः । उद्वेष्टनं जङ्घादीनां मोटनं, खल्लीति लोके । तस्यां विसूचिकायाम् । शिरसश्च भेदः शिरोविदारणमिव वेदना ॥ ६ ॥

**कुक्षिरानह्यतेऽत्यर्थं प्रताम्यति विकूजति ॥**
**निरुद्धो मारुतश्चापि कुक्षौ विपरिधावति[1] ॥ ७ ॥**
**वातवर्चोनिरोधश्च कुक्षौ यस्य भृशं भवेत् ॥**
**तस्यालसकमाचष्टे तृष्णोद्गारावरोधकौ[2] ॥ ८ ॥**

अलसकलक्षणमाह—कुक्षिरित्यादि । कुक्षिः उदरम् । आनह्यते आध्मानयुक्तो भवति । अत्यर्थमतिशयं यथा तथा । ताम्यति तमसि प्रविशतीव । विकूजति अव्यक्तशब्दं करोति । विपरिधावति विशेषेण समन्ताद्गच्छति ॥ ७ ॥ ८ ॥

**दुष्टं तु भुक्तं कफमारुताभ्यां**
**प्रवर्तते नोर्ध्वमधश्च यस्य ॥**
**विलम्बिकां तां भृशदुश्चिकित्स्या-**
**माचक्षते[3] शास्त्रविदः पुराणाः ॥ ९ ॥**

विलम्बिकालक्षणमाह—दुष्टमित्यादि । भुक्तं भोजनम् । दुष्टमित्यत्र 'कफमारुताभ्याम्' इति संबन्धनीयम् । यद्यपि विलम्बिका बाहुल्येन विदग्धाजीर्णाज्जायते, विदग्धाजीर्णाच्च पित्तं दुष्टं न वायुर्दुष्टो भवति न वा श्लेष्मा, तथाऽपि पित्तदुष्ट्या[4] इतरयोरपि दुष्टिः, तस्मात् कफमारुताभ्यां दुष्टमित्युक्तम्; एवं बाहुल्येन आमाविष्टत्वोत्थितयोर्विसूच्यलसकयोः[5] कफवाताधिकयोरपीतरदोषसद्भावो ज्ञेयः । 'दुष्टम्' इत्यत्र 'लीनम्' इति केचित् पठन्ति । इयमेव विलम्बिका तन्त्रान्तरे 'दण्डालसक' इति नाम्ना कथ्यते ॥ ९ ॥

**यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः ॥**
**दोषेण येनावततं स्वलिङ्गैस्तं लक्षयेदामसमुद्भवैश्च[6] ॥**

इदानीं पूर्वोक्तलक्षणविशेषमतिदेशेनाह—यत्रस्थमाममित्यादि । यत्रस्थं यस्मिन् देशे स्थितं, येन च दोषेणावततं व्याप्तमामं स्यात्, तमेव देशं यस्माद्विशेषेण रुजेत् तस्मात् कारणात्तं देशं तद्दोषलक्षणैर्विकारजातैस्तोदादिभिरामसमुद्भवैश्च लिङ्गैः स्तम्भाध्मानादिभिर्लक्षयेदिति पिण्डार्थः । ननु, यत्रस्थमित्यनेन आमस्थानकथनेन किं प्रयोजनं? यस्माद्यत्र स्थितो विकृतो दोषो भविष्यति तत्रैव रुजं करिष्यति? सत्यं, नैवं सर्वत्र, यथा गण्डमालादौ पिण्डिकास्थितस्यापि दोषस्य ग्रीवादौ विकारकर्तृत्वदर्शनात् । आमपीडितदेशावबोधश्चात्र सुखचिकित्साकरणार्थमुक्तः । अर्थात् यत्र यस्मिन् स्थाने स्थितमाममजीर्णं विरुजेद्विशिष्टं रुजं कुर्यात् तमेव देशं लक्षयेद्वैद्यः, कैर्विकारजातैः? आमसमुद्भवैः स्तम्भगौरवादिभिः । ब्रह्मदेवस्तु येन दोषेण वाताद्यन्यतमेनानुगतमामजं दोषं स्वलिङ्गैर्वाताद्यन्यतमदोषलिङ्गैर्लक्षयेदिति व्याख्यानयति । अपरेऽन्यथा पठित्वा व्याख्यानयन्ति, तच्च शिष्यबुद्धिव्याकुलकर्तृत्वाद्ग्रन्थगौरवभयाच्च परिहृतम् ॥ १० ॥

---

१ 'तु' इति पा० । २ 'ऽशनलोलुपाः' इति पा० ।

१ 'कुक्षावुपरि धावति' इति पा० । २ 'तृष्णोद्गारौ तु यस्य तु' इति पा० । ३ 'तु विवर्जनीयां' इति पा० । ४ 'पित्तदुष्टावितरयोरपि' इति पा० । ५ 'आमाविष्टश्चोच्छ्रितयोः' इति पा० । ६ 'शरीरं तल्लक्षणैरामसमुद्भवैश्च' इति पा० ।

य: श्यावदन्तौष्ठनखोऽल्पसंज्ञ-
श्छर्द्यर्दितोऽभ्यन्तरयातनेत्रः ॥
क्षामस्वरः सर्वविमुक्तसन्धि-
र्यायान्नरः सोऽपुनरागमाय ॥ ११ ॥

असाध्यलक्षणमाह—य इत्यादि । श्यावशब्दो दन्तादिभिः प्रत्येकं संबध्यते । अल्पसंज्ञो मन्दचेतनः । अभ्यन्तरयातनेत्रः क्षीणदृष्टिः । अपुनरागमाय अपुनरावृत्तये ॥ ११ ॥

साध्यासु पार्ष्ण्योर्दहनं प्रशस्त-
मग्निप्रतापो वमनं च तीक्ष्णम् ॥
पक्के ततोऽन्ने तु विलङ्घनं स्यात्
संपाचनं चापि विरेचनं च ॥ १२ ॥

इदानीं चिकित्सितमाह—साध्यास्वित्यादि । साध्यासु विसूचिकासु । पार्ष्णिदहनमत्र संज्ञाप्रबोधनार्थमधोऽतिप्रवृत्तिवारणार्थं च । अग्निप्रतापनम् आमपाचनार्थम् । तीक्ष्णं च वमनमन्नशल्यनिर्हरणार्थम् । साध्यास्विति पदमसाध्यपरिहारार्थं, साध्यज्ञाने यत्नातिशयप्रतिपादनार्थं च । पाकाभिमुखेऽन्ने दोषशेषनिर्हरणार्थमाह—पक्क इत्यादि । पक्के पाकाभिमुखे । विलङ्घनं विविधलङ्घनं, तच्च यथावस्थं योज्यं; अन्ये विशिष्टं लङ्घनमाहुः, तच्चोपवासः । संपाचनमत्र स्वेदादिभिः । विरेचनमत्र फलवर्त्यादिभिः । यद्यपि विरेचनमत्र सामान्येनोक्तं, तथाऽपि विष्टम्भे सति ज्ञातव्यम् । अन्ये तु पठन्ति 'वान्ते ततोऽन्ने तु विलङ्घनं स्यात् संपाचनं रेचनदीपने च' इति । ते च विसूच्यां वमने प्रयुक्ते पश्चाद्विलङ्घनादिकं योज्यमिति मन्यन्ते । पाचनमतीसारोक्तं 'देवदार्वभया–' इत्यादिकं, दीपनं पिप्पल्यादिकं, शेषं पूर्ववत् । अन्ये 'पक्के ततोऽन्ये तु' इति पठन्ति, ते च पक्षाद्विरेचनं देयमिति केचिन्मन्यन्त इति व्याख्यानयन्ति; तत्र टीकाकृद्भिर्बहु व्याहृतं तच्च ग्रन्थगौरवभयात् परित्यक्तम् ॥ १२ ॥

विशुद्धदेहस्य हि सद्य एव
मूर्च्छातिसारादिरुपैति शान्तिम् ॥

कस्माद्विसूच्यां वमनविरेचने प्रयोक्तव्ये इत्याह—विशुद्धदेहस्येत्यादि । हि यस्मात् । उपैति गच्छति ॥—

आस्थापनं चापि वदन्ति पथ्यं
सर्वासु योगानपरान्निबोध ॥ १३ ॥

इदानीमास्थापनस्यापि हितत्वं दर्शयितुमाह—आस्थापनमित्यादि । यद्यपि 'तत्रोन्मादभयशोकपिपासारोचकाजीर्णार्श–' इत्यादिनाऽजीर्णे आस्थापननिषेध उक्तः, तथाऽप्यत्र पाकाभिमुखेऽन्ने विष्टम्भनाशनाय पाचनपूर्वकमास्थापनमपि शस्यते । सर्वासु विसूचीषु; केचित् सर्वासु विसूच्यलसकविलम्बिकास्विति मन्यन्ते । 'सर्वासु' इत्यत्र केचित् 'सर्वांश्च' इति पठन्ति, ते वक्ष्यमाणयोगविशेषणं कुर्वन्ति । योगानित्यादि । अपरान् वक्ष्यमाणान् । निबोध जानीहि । 'अपक्कस्य पाचनार्थं पक्कस्य चानुलोमनार्थं' इति शेषः ॥ १३ ॥

पथ्यावचाहिङ्गुकलिङ्गगृञ्ज-
सौवर्चलैः सातिविषैश्च चूर्णम् ॥
सुखाम्बुपीतं विनिहन्त्यजीर्णं
शूलं विसूचीमरुचिं च सद्यः ॥ १४ ॥

तानेव योगानाह—पथ्येत्यादि । कलिङ्ग इन्द्रयवः । गृञ्जनो रसोनभेदः । अजीर्णम् आमशेषः, न तु तरुणाजीर्णं; तत्रौषधनिषेधात् । विसूचीति शेषा नतु सद्योत्था विसूची, तत्राप्यौषधनिषेधात् ॥ १४ ॥

क्षारागदं वा लवणं विडं वा
गुडप्रगाढानथ सर्षपान् वा ॥
अम्लेन वा सैन्धवहिङ्गुयुक्तौ
सबीजपूर्णौ सघृतौ त्रिवर्गौ ॥ १५ ॥
कटुत्रिकं वा लवणैरुपेतं
पिबेत् स्नुहीक्षीरविमिश्रितं तु ॥
कल्याणकं वा लवणं पिबेत्तु
यदुक्तमादावनिलामयेषु ॥ १६ ॥

क्षारागदमित्यादि । क्षारागदं 'धवाश्वकर्णशिरीष–' (क. अ. ६) इत्यादिना दुन्दुभिस्वनीयोक्तम् । लवणं विडलवणम् । अत्राप्युष्णाम्बुना पिबेदिति संबन्धनीयम् । गुडप्रगाढानित्यादि । गुडप्रगाढान् गुडाढ्यान् । अम्लेनेत्यादि । अम्लेन काञ्जिकेन । सबीजपूरौ बीजपूरसहितौ । सघृतौ तुल्यप्रमाणौ । त्रिवर्गौ त्रिफलात्रिकटुकौ । 'सबीजपूरौ' इत्यत्र केचित् 'सशाकबीजौ' इति पठित्वा शाकवृक्षबीजसहिताविति व्याख्यानयन्ति । यदुक्तमादाविति 'गण्डीरपलाश–' (चि. अ. ४) इत्यादिना वातव्याधिचिकित्सिते यदुक्तमित्यर्थः । 'आमेष्वनिलामयेषु' इति केचित् पठित्वा आमवाते इति व्याख्यानयन्ति । अत्रापि अम्लेनेति संबध्यते ॥ १५ ॥ १६ ॥

कृष्णाजमोदक्षवकाणि वाऽपि
तुल्यौ पिबेद्वा मगधानिकुम्भौ ॥
दन्तीयुतं वा मगधोद्भवानां
कल्कं पिबेत् कोषवतीरसेन ॥ १७ ॥
उष्णाभिरद्भिर्मगधोद्भवानां
कल्कं पिबेन्नागरकल्कयुक्तम् ॥

कृष्णाजमोदेत्यादि । क्षवः फणिज्जकाकारः प्रायशः पारियात्रे भवति । 'क्षवकाणि वाऽपि' इत्यत्र 'क्षवकाग्निकान् वा' इति केचित् पठन्ति । अत्रापि अम्लेनेति संबध्यते । तुल्यौ पिबेद्वेत्यादि । निकुम्भो दन्ती । अत्राप्यम्लेनेति संबध्यते । मग-

१ 'दोषशेषनिवारणार्थमाह' इति पा० । २ 'पक्के विष्टब्धे सति' इति पा० । ३ 'टीकाकृद्भिर्यदुक्तं' इति पा० ।

१ 'गुडोत्कटान्' इति पा० ।

धानिकुम्भपानं विष्टम्भे सति विरेकार्थम् । केचिदुष्णोदकेन पानमिच्छन्ति । दन्तीयुतमित्यादि । कोषवती घोषकः । केचित् "उष्णाभिरद्भिर्मगधोद्भवानां कल्कं पिबेन्नागरचूर्णयुक्तम्" ईदृशं पठन्ति ॥ १७ ॥—

व्योषं करञ्जस्य फलं हरिद्रे
मूलं समं चाप्यथ मातुलुङ्ग्याः ॥ १८ ॥
छायाविशुष्का गुटिकाः कृतास्ता
हन्युर्विसूचीं नयनाञ्जनेन ॥

विसूच्यां प्रमीलकादिशान्त्यर्थमञ्जनमाह—व्योषमित्यादि । केचिन्मातुलुङ्गीं मधुकर्कटीमाहुः । विसूचीशब्देन विसूचीजनिताः प्रमीलकशिरोरोगादयो गृह्यन्ते, कारणे कार्योपचारात्; अथवा विसूचीमेवाञ्जनप्रभावात् हन्युः ॥ १८ ॥—

सुवामितं साधुविरेचितं वा
सुलङ्घितं वा मनुजं विदित्वा ॥ १९ ॥
पेयादिभिर्दीपनपाचनीयैः
सम्यक्क्षुधार्तं समुपक्रमेत ॥

शुद्धस्य सुलङ्घितस्य पथ्यदानार्थमाह—सुवामितमित्यादि । केचिदत्र "कुष्ठं चागुरु पत्रं च रास्नाशिग्रुवचालचम् । पिष्टमम्लेन तच्छ्रेष्ठं विसूच्यामङ्गमर्दनम् ॥ चित्रकं पूतिपिण्याकं कुष्ठं भल्लातकानि च । द्वौ क्षारौ सैन्धवं चैव शुक्तं तैलं विपाचयेत् ॥ एतदुद्वर्तनं कुर्यात् प्रदेहं वा विचक्षणः ।" इति योगद्वयं पठन्ति; तन्न पठितव्यं, समानतन्त्रादर्शनात् ॥ १९ ॥—

आमं शकृद्वा निचितं क्रमेण
भूयो विबद्धं विगुणानिलेन ॥ २० ॥
प्रवर्तमानं न यथास्वमेनं
विकारमानाहमुदाहरन्ति ॥

इदानीं विसूचिकातुल्यचिकित्सितत्वाद्विसूचिकोपद्रवत्वाच्चानुक्तमप्यानाहमाह—आममित्यादि । आमम् अपक्वान्नरसः, शकृत् पुरीषं, निचितं वृद्धिगतं, विबद्धम् अवरुद्धं, विगुणानिलेन उन्मार्गवायुना, न प्रवर्तमानमिति नाधःप्रवर्तमानमित्यर्थः, यथास्वं यथामार्गमित्यर्थः; एवम् आमं निचितं विगुणानिलेन विबद्धं सत् स्वमार्गेऽप्रवर्तमानं शकृद्वा एवंभूतमानाहं विकारमुदाहरन्तीति पिण्डार्थः । केचिदाममिति शकृद्विशेषणं मन्यन्ते; तन्न, समानतन्त्रे आमादप्यानाहस्य दर्शितत्वात् । तथा च तद्वचः—"आनाहे त्वामसंभूते विड्डूतेऽपि वा भिषक्"—इत्यादि ॥ २० ॥—

तस्मिन् भवन्त्यामसमुद्भवे तु
तृष्णाप्रतिश्यायशिरोविदाहाः ॥ २१ ॥
आमाशये शूलमथो गुरुत्वं
हृल्लास उद्गारविघातनं च ॥

आमजानाहलक्षणमाह—तस्मिन्नित्यादि । तस्मिन् आनाहे । गुरुत्वमपि आमाशये आमजानाहे प्रायशो भवति । केचित् 'हृल्लास' इत्यत्र 'हृत्स्तम्भ' इति पठित्वा हृदयस्य विबन्धत्वमिति व्याख्यानयन्ति । उद्गारविघातनम् उद्गारस्यासम्यक्प्रवृत्तिः । केचिदामसमुद्भवे आमाशयसमुद्भवे इति व्याख्यानयन्ति, पदेष्वपि पदैकदेशप्रयोगात्; ते च आमाशयसमुद्भवमामादेवेच्छन्ति; तत्रापि स एव तात्पर्यार्थः ॥ २१ ॥—

स्तम्भः कटीपृष्ठपुरीषमूत्रे
शूलोऽथ मूर्च्छा सं शकृद्वमेच्च ॥ २२ ॥
श्वासश्च पक्वाशयजे भवन्ति
लिङ्गानि चात्रालसकोद्भवानि ॥

पुरीषजानाहलक्षणमाह—स्तम्भ इत्यादि । स्तम्भशब्दः कट्यादिभिर्मूत्रान्तैः सह प्रत्येकं संबध्यते । शूलोऽप्यत्र कट्यादिष्वेव । स पुरुषः । पक्वाशयजे आनाहे इत्यर्थः । 'मञ्चाः क्रोशन्ति' इतिवदुपचारात् पक्वाशयशब्देनात्र पुरीषमभिप्रेतं, अथ च बाहुल्येन पक्वाशये भवति । केचित् पक्वाशयजे पक्वाशयस्थे आनाहे इति व्याख्यानयन्ति । ते च पक्वाशयोद्भूत आनाहः पुरीषाद्भवति इतीच्छन्ति; तथाऽपि स पूर्वोक्त एव परिफलितार्थः ॥ २२ ॥—

आमोद्भवे वान्तमुपक्रमेत
संसर्गभक्तक्रमदीपनीयैः ॥ २३ ॥

संप्रत्यामोत्थानाहचिकित्सामाह—आमोद्भव इत्यादि । आमोद्भवे अविपक्वरसजे आनाहे । केचिदामोद्भवे आमाशयोद्भवे, पदेष्वपि पदैकदेशप्रयोगात् । एष पक्षश्चानन्तरमेव विवृतः । वान्तं कृतवमनं नरम् । संसर्गभक्तक्रमः पेयादिक्रमः । दीपनीयानि पिप्पल्यादिसाधितानि ॥ २३ ॥

अथेतरं यो न शकृद्वमेत्त-
मामं जयेत् स्वेदनपाचनैश्च ॥

पुरीषजानाहचिकित्सामाह—अथेतरमित्यादि । यः पुमान् शकृत् पुरीषं न वमेत्, तस्य पुंसस्तमानाहमितरं पुरीषजम् आमान्वितं स्वेदनादिभिर्जयेदिति संबन्धः । यस्तु शकृद्वमेत्तस्य आमं न जयेत्, तथा सत्यसाध्यत्वादिति भावः । **कार्तिककुण्डस्तु** इतरं पक्वाशयजानाहवन्तं नरं, मलर्थीयप्रत्ययान्तत्वात् । असावपि पक्षोऽनन्तरं विवृतः । 'स्वेदनपाचनीयैः' इत्यत्र च **कार्तिककुण्डः** 'स्वेद्य यथाविधानं' इति पठित्वा व्याख्यानयति —स्वेद्य स्वेदयित्वा, उपसर्गलोपात् साधु; यथाविधानमिति विण्मूत्रानुलोमनविधानेन ॥—

विसूचिकायां परिकीर्तितानि
द्रव्याणि वैरेचनिकानि यानि ॥ २४ ॥
तान्येव वर्तीर्विरचेद्विचूर्ण्य
महिष्यजावीभगवां तु मूत्रैः ॥
स्विन्नस्य पायौ विनिवेश्य ताश्च
चूर्णानि चैषां प्रधमेत्तु नाड्या ॥ २५ ॥

१ 'तथाऽपि' इति पा० । २ 'च शकृद्वमिश्च' इति पा० ।

अतिदेशेनानाहचिकित्सामाह—विसूचिकायामित्यादि। विसूचिकायां परिकीर्तितानि कथितानि यानि वैरेचनिकानि द्रव्याणि दन्त्यादीनि, तानि विचूर्ण्य महिष्यादीनां मूत्रैर्विपाच्य वर्तीर्विरचेत् कुर्यात्। ताश्च वर्तीः खिन्नस्य नरस्य गुदे विनिवेश्य, एषां वैरेचनिकानामेव चूर्णानि नाड्या प्रधमेदिति संबन्धः। इभो हस्ती ॥ २४ ॥ २५ ॥

मूत्रेषु संसाध्य यथाविधानं
द्रव्याणि यान्यूर्ध्वमधश्च यान्ति ॥
काथेन तेनाशु निरूहयेच्च
मूत्रार्धयुक्तेन समाक्षिकेण ॥ २६ ॥
त्रिभण्डियुक्तं लवणप्रकुञ्चं
दत्त्वा विरिक्तक्रममाचरेच्च ॥

आनाहे निरूहमाह—मूत्रेषु संसाध्येत्यादि। यानि द्रव्याणि ऊर्ध्वमधश्च यान्ति तानि मूत्रेषु यथाविधानं संसाध्य तेन काथेनार्धमूत्रान्वितेन समाक्षिकेण त्रिभण्डियुक्तलवणं प्रकुञ्चं दत्त्वा निरूहयेदिति पिण्डार्थः। मूत्रेष्विति अनन्तरोक्तेषु महिष्यादिजेषु। संसाध्य पक्त्वा। यथाविधानं क्वाथपाकविधिना। द्रव्याणि यान्यूर्ध्वमधश्च यान्ति संशोधनसंशमनीयोक्तानि कोशातक्यादीनि। आशु शीघ्रम्। मूत्रार्धयुतेन अर्धमूत्रान्वितेन क्वाथेन। **कार्तिककुण्ड**स्तु मात्रार्धयुक्तेनेति पठति, व्याख्यानयति च—अर्धमात्रिकेणेति। माक्षिकं मधु। त्रिभण्डियुक्तं लवणप्रकुञ्चमिति त्रिवृत्सहितमेव सैन्धवपलमित्यर्थः। विरिक्तक्रमं सम्यग्विरिक्तस्य यः क्रमस्तमाचरेदित्यर्थः; केचित् आचरेदित्यन्तर्भावितकारितार्थं मन्यन्ते; तेन, आचरेत् वैद्येनाचारयेदित्यर्थः। इदमास्थापनमानाहे पाचनोत्तरकालं देयं, न त्वामावस्थायाम् ॥ २६ ॥—

एष्वेव तैलेन च साधितेन
प्राप्तं यदि स्यादनुवासयेच्च ॥ २७ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे विसूचिकाप्रतिषेधो नाम (अष्टादशोऽध्यायः, आदितः) षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

आनाहेऽनुवासनमाह—एष्वेवेत्यादि। एष्विति अनन्तराभिहितनिरूहोक्तेषु कोशातक्यादिषु। प्राप्तं प्राप्तकालं प्राप्तावस्थमित्यर्थः; एतेन परिपक्वामं सुनिरूढं वातकोपे सत्यनुवासयेदित्यर्थः ॥ २७ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे विसूचिकाप्रतिषेधो नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

१ 'वितरेत् दद्यात्' इति पा०।

## सप्तपञ्चाशत्तमोऽध्यायः।

अथातोऽरोचकप्रतिषेधमध्यायं व्याख्यास्यामः॥१॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

विसूचिकाप्रतिषेधानन्तरं रसदोषजत्वसाम्यादग्निमान्द्यहेतुत्वसाम्याच्चारोचकप्रतिषेधारम्भः—अथात इत्यादि। अत्र आदिशब्दो लुप्तो द्रष्टव्यः; तेनाविपाकस्यापि ग्रहणम् ॥ १ ॥ २ ॥

दोषैः पृथक् सह च चित्तविपर्ययाच्च
भक्तायनेषु हृदि चावतते प्रगाढम् ॥
नान्ने रुचिर्भवति तं भिषजो विकारं
भक्तोपघातमिह पञ्चविधं वदन्ति ॥ ३ ॥

संप्राप्तिद्वारेण संख्यामाह—दोषैरित्यादि। दोषैः पृथगिति त्रयः, सह चेति समस्तैः एकः, चित्तविपर्ययात् कामशोकभयादिभिर्विलुप्तचित्तत्वात्, चित्तविपर्ययात्तु एकः; केचित् 'चित्तविपर्ययात्' इत्यत्र 'शोकसमुच्छ्रयात्' इति पठन्ति, तन्मते कामादिजानामसंग्रहः। भक्तायनेषु अन्नवहेषु स्रोतःसु। भक्तायनमिति जिह्वोपलक्षणं, समानतन्त्रदर्शनात्। तथा च—"पृथग्दोषैः समस्तैश्च जिह्वाहृदयसंसृतैः। जायतेऽरुचिराहारे द्विष्टैरन्यैश्च मानसैः"–इति। अवतते इति भक्तायनेष्वित्यत्रापि वचनविपरिणामात् संबन्धनीयम्। अवतते व्याप्ते। भक्तोपघातम् अरोचकं; अरोचकाभक्तच्छन्दान्नद्वेषाः पर्याया बोद्धव्याः; कैश्चिदेषां परस्परं भेदोऽङ्गीक्रियते। तथा च **वृद्धभोजः**,—"प्रक्षिप्तं तु मुखे चान्नं जन्तोर्न स्वदते मुहुः। अरोचकः स विज्ञेयो, भक्तद्वेषमतः शृणु ॥ चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वाऽपि भोजनम्। द्वेषमायाति यज्जन्तुर्भक्तद्वेषः स उच्यते ॥ यस्य नान्ने भवेच्छ्रद्धा सोऽभक्तच्छन्द उच्यते–" इत्यादि। इह अस्मिन् शास्त्रे। संख्येयनिर्देशादेव संख्यायां सिद्धायां पञ्चविधमिति संख्याकरणं नियमार्थं; तेन कामादिजा अरोचकाः पृथङ्न गणनीयाः ॥ ३ ॥

हृच्छूलपीडनयुतं विरसाननत्वं
वातात्मके भवति लिङ्गमरोचके तु ॥

वातिकारोचकलक्षणमाह—हृच्छूलपीडनयुतमित्यादि। हृच्छूलपीडनयुतमिति विरसाननत्वमित्येतस्य विशेषणम्। अपरे तु हृत् हृदयं शूलपीडनाभ्यां युक्तं भवतीति व्याख्यानयन्ति। अरोचकानां प्राग्रूपानभिधानं रूपाणामेवाव्यक्तानां प्राग्रूपत्वात् ॥—

हृद्दाहचोषबहुता मुखतिक्तता च
मूर्च्छा सतृड् भवति पित्तकृते तथैव ॥ ४ ॥

पित्तजारोचकलक्षणमाह—हृद्दाहचोषेत्यादि। हृद्दाहचोषबहुतेति हृदि हृदये दाहचोषयोर्बाहुल्यमित्यर्थः। चोष आचूष्यत इव वेदना। अन्ये 'हृद्दाहचोषबहुलं' इति पठित्वा हृदयं दाहचोषबहुलं भवतीति व्याख्यानयन्ति ॥ ४ ॥

१ 'यो जन्तुः' इति पा०।

**कण्डूगुरुत्वकफसंस्रवसादतन्द्राः**
**श्लेष्मात्मके मधुरमास्यमरोचके तु ॥**

कफजारोचकलक्षणमाह—कण्डूगुरुत्वेत्यादि । कफसंस्रवः श्लेष्मच्युतिः, सादः अङ्गग्लानिः, आस्यं मुखम् । केचित् 'सादतन्द्रा' इत्यत्र 'कण्ठसादा' इति पठित्वा अभ्यवहरणायशक्तिरिति व्याख्यानयन्ति ॥—

**सर्वात्मके पवनपित्तकफा बहूनि**
**रूपाण्यथास्य हृदये समुदीरयन्ति ॥ ५ ॥**

सान्निपातिकारोचकलक्षणमाह—सर्वात्मक इत्यादि । सर्वात्मके सान्निपातिकारोचके पवनादयो दोषा बहूनि रूपाण्यस्य हृदये समुदीरयन्ति कुर्वन्तीति पिण्डार्थः । यद्यपि सान्निपातिके हृद्रोगे सर्वजारोचके च बाहुल्येन समान्येवं लिङ्गानि भवन्ति, तथाऽपि संप्राप्तिभेदात् किञ्चिल्लक्षणभेदाच्च तयोर्भेदः। सान्निपातिकारोचकोऽसाध्यः, "सर्वात्मकं चापि विवर्जयेत" इति समानतन्त्रोक्तत्वात् ॥ ५ ॥

**संरागशोकभयविप्लुतचेतसस्तु**
**चिन्ताकृतो भवति सोऽशुचिदर्शनाच्च ॥**

अवशिष्टं पञ्चममरोचकमाह—संरागशोकेत्यादि । संरागः कामः । विप्लुतचेतसः विकृतचित्तस्य । स अरोचकः । अशुचिदर्शनात् अमेध्यवस्तुदर्शनात् बीभत्सादिदर्शनादित्यर्थः । चिन्ताकृतस्यारोचकस्य भिन्नलक्षणनिर्देशात् शेषेषु यथादोषं लक्षणानि ज्ञातव्यानि, कामादिभिः सर्वैर्वातादिप्रकोपात् । तथा च "कामशोकभयाद्वायुः क्रोधात् पित्तं च कुप्यति । श्लेष्मा तु हर्षणात्"–इति । अन्ये तु चिन्ताकृतारोचकस्य वातादिभेदेन लक्षणानि पठन्ति; तद्यथा,—"वातात्मके विरसमास्यमरोचके तु, पित्तेन तिक्तकटुकं, मधुरं कफेन । सर्वैरुपेतमथ सर्वजमेव विद्याद्दैन्यं भृशं भवति शोकसमुद्भवे तु"—इति । अयं पाठो न पठनीयः, अनार्षत्वात् ॥—

**वाते वचाम्बुवमनं कृतवान् पिबेच्च**
**स्नेहैः सुराभिरथवोष्णजलेन चूर्णम् ॥ ६ ॥**
**कृष्णाविडङ्गयवभस्महरेणुभार्गी-**
**रास्नैलहिङ्गुलवणोत्तमनागराणाम् ॥**

इदानीं वातिकारोचकचिकित्सामाह—वात इत्यादि । वाते वातजे अरोचके, कारणे कार्योपचारात् । वचाम्बुवमनं कृतवानिति वचाक्वाथेन कृतवमनो नरः । केचित् एलशब्देन एलवालुकं मन्यन्ते, पदेऽपि पदैकदेशप्रवृत्तेः । 'एलजलेन' इत्यत्र 'उष्णजलेन' इति पाठान्तरम् । लवणोत्तमं सैन्धवम् । इदं चूर्णं वमनैः शुद्धाशयस्य देयम् । कार्तिककुण्डोऽमुं पाठमन्यथा पठति, स चाभावान्न लिखितः ॥ ६ ॥—

**पित्ते गुडाम्बुमधुरैर्वमनं प्रशस्तं**
**स्नेहः ससैन्धवसितामधुसर्पिरिष्टः ॥ ७ ॥**

पित्तजारोचकचिकित्सामाह—पित्ते इत्यादि । पित्ते पित्तजारोचके, उपचारात् । मधुरं काकोल्यादि । अत्रापि पूर्ववदवचारणम् ॥ ७ ॥

**निम्बाम्बुवामितवतः कफजेऽनुपानं**
**राजद्रुमाम्बु मधुना तु सदीप्यकं स्यात् ॥**

कफारोचकचिकित्सामाह—निम्बाम्बुवामितवत इत्यादि । निम्बाम्बु निम्बक्वाथः, निम्बाम्बुना वामितवतः पुंसः गिरिमालकक्वाथः समधुः साजमोदश्चानुपानं स्यात्; 'कृतभोजनस्य' इति शेषः; समानतन्त्रदर्शनात् । केचिद्दीप्यकशब्देन यवानीमाहुः ॥—

**चूर्णं यदुक्तमथवाऽनिलजे तदेव**

कफजारोचकेऽतिदेशेन चिकित्सामाह—चूर्णमित्यादि । चूर्णं यदुक्तमिति 'कृष्णाविडङ्गयवभस्म' इत्यादिकम् । तच्चूर्णं कफजे वातानुबन्धे सति देयम् ॥—

**सर्वैश्च सर्वकृतमेवमुपक्रमेत ॥ ८ ॥**

सान्निपातिकारोचकचिकित्सामाह—सर्वैरित्यादि । सर्वैरिति वातादिजारोचकहरैः पूर्वोक्तैरेव । सर्वकृतं सान्निपातिकमरोचकम् । एवमिति पूर्ववत्, वमनादि कारयित्वेति यावत् । उपक्रमेत 'प्रत्याख्याय' इति शेषः, असाध्यत्वात्तस्य ॥ ८ ॥

**द्राक्षापटोलविडवेत्रकरीरनिम्ब-**
**मूर्वाभयाक्षबदरामलकेन्द्रवृक्षैः ॥**
**बीजैः करञ्जनृपवृक्षभवैश्च पिष्टैर्-**
**लेहं पचेत् सुरभिमूत्रयुतं यथावत् ॥ ९ ॥**
**मुस्तां वचां त्रिकटुकं रजनीद्वयं च**
**भार्गीं च कुष्ठमथ निर्दहनीं च पिष्ट्वा ॥**
**मूत्रेऽविजे द्विरदमूत्रयुते पचेद्वा**
**पाठां तुगामतिविषां रजनीं च मुख्याम् ॥ १० ॥**
**मण्डूकिमर्कममृतां च सलाङ्गलाख्यां**
**मूत्रे पचेत्तु महिषस्य विधानविद्वा ॥**
**एताश्च सन्ति चतुरो लिहतस्तु लेहान्**
**गुल्मारुचिश्वसनकण्ठहृदामयाश्च ॥ ११ ॥**

इदानीं चतुर्णामप्यरोचकानां यथासंख्येन चतुरो लेहानाह—द्राक्षापटोलेत्यादि । द्राक्षादिः सुरभिमूत्रयुतं यथावदित्यन्त एको लेहः । मुस्तादिः मूत्रेऽविजे इतिपर्यन्तो द्वितीयः । द्विरदमूत्रादी रजनीं च मुख्यामित्यन्तः तृतीयः । मण्डूकीत्यादिः चतुर्थः । करीरो गूढपत्रो मरुदेशेऽतिप्रसिद्धः कण्टकिवृक्षः; मूर्वा चोरस्नायुः; अभया हरीतकी, केचिदभयं मन्यन्ते, तन्मते उशीरं, अक्षं बिभीतकं; इन्द्रवृक्षः कुटजः; नृपवृक्षः गिरिमालकः । सुरभिमूत्रयुतं कल्कचतुर्गुणगोमूत्रयुतं, "मूत्रेण चतुर्गुणेन" इत्यादिकाश्यपीयसंवादात् । यथावदिति लेहं पचेदित्यत्र योज्यं, तेन यथावल्लेहं पचेत्; कोऽर्थः? यावल्लेहपाकलक्षणं तन्तुमुद्रादि जायते तावत् पचेदित्यर्थः । निर्दहनी

१ 'पवनादीनामेव' इति पा० ।

चित्रकः, अजमोदा इत्यन्ये । अविजे मेषोत्थे । असावपि पूर्ववल्लेहवत् पक्तव्यः । द्विरदमूत्रं हस्तिमूत्रम् । तुगा वंशरोचनानुकारि पार्थिवं द्रव्यमाहुः । रजनीं च मुख्यां पिण्डहरिद्राम् । अयमपि पूर्वविधिनैव पक्तव्यः । मण्डूकी ब्राह्मी, अमृता गुडूची, लाङ्गली कलिकारिका । असावपि पूर्ववत् पक्तव्यः । 'एतास्र सन्ति चतुरोऽभ्यसतश्च' इति केचित् पठन्ति । 'एतान् वदन्ति भिषजश्चतुरश्च लेहान् गुल्मारुचिश्वसनकण्ठहृदामयेषु' इत्यपरे पठन्ति ॥ ९-११ ॥

**सात्म्यान् स्वदेशरचितान् विविधांश्च भक्ष्यान्**
**पानानि मूलफलषाडवरागयोगान् ॥**
**अद्यादसांश्च विविधान् विविधैः प्रकारै-**
**र्भुञ्जीत चापि लघुरूक्षमनःसुखानि ॥ १२ ॥**

सात्म्यानित्यादि । सात्म्यान् सुखकरान् । 'सात्म्यान् स्वदेशरचितान् विविधैः प्रकारैर्भुञ्जीत वाऽपि लघुरूक्षमनाः सुखेन' इत्यन्ये पठन्ति । स्वदेशरचितान् विविधांश्च भक्ष्यानिति यस्मिन् देशे ये भक्ष्या बाहुल्येनोपयुज्यन्ते तानित्यर्थः । पानानीत्यत्रापि विविधानीति योज्यं, तेन यथारुचि फलानि शर्करान्वितानि कर्पूरचतुर्जातकसुगन्धीनि गृह्यन्ते । मूलं पिप्पलीमूलादि । फलं दाडिमादि । षाडवा रसालाद्याः । रागाः कपित्थरागादयः । केचित् "सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकया कृतः ॥ मधुराम्लकटूनां तु संस्काराः षाडवा मताः" इत्याहुः; अपरे तु षाडवशब्देन यवानीषाडवमाहुः, तन्त्रान्तरसंवादात्; रागशब्देन च रागषाडवं मत्वा द्राक्षादाडिमाद्यन्वितं मुद्गयूषमिति च व्याख्यानयन्ति । रसान् विविधान् मांसरसान् मधुरादिरसान् वा । लघुरूक्षभोजनं श्लेष्मस्थानगतत्वादरोचकस्य । मनःसुखं मनोनुकूलम् । केचित् सात्म्यानिति सात्म्यदेशरोगर्तुप्रकृत्यादीन्यवेक्ष्य भक्ष्यादि कुर्यादिति मन्यन्ते ॥ १२ ॥

**आस्थापनं विधिवदत्र विरेचनं च**
**कुर्यान्मृदूनि शिरसश्च विरेचनानि ॥**

निषिद्धस्यापि निरूहस्यारोचके प्रयोगमाह—आस्थापनमित्यादि । आस्थापनं निरूहः । विधिवत् यथाविधि । अत्र अरोचके । यद्यपि 'तत्रोन्मादभयशोक–' इत्यादिनाऽरोचके आस्थापननिषेधः; तथाऽपि वमनादिक्रमोत्तरकालं वातानुबन्धे सति देयं, न त्वादौ ॥—

**त्रीण्यूषणानि रजनीत्रिफलायुतानि**
**चूर्णीकृतानि यवशूकविमिश्रितानि ॥ १३ ॥**
**क्षौद्रायुतानि वितरेन्मुखबोधनार्थं-**

त्रीण्यूषणानीत्यादि । त्रीण्यूषणानीति त्रिकटुकम् । यवशूको यवक्षारः । वितरेत् दद्यात् । मुखबोधनार्थमिति मुखबोधे सत्यरोचकहानिरित्यर्थः । अवलेहप्रयोग एषः ॥ १३ ॥—

**मन्यानि तिक्तकटुकानि च भेषजानि ॥**

१ 'स्वदेशरन्वितान्' इति पा० । २ 'मुखधावनार्थम्' इति पा० ।

**मुस्तादिराजतरुवर्गदशाङ्गसिद्धैः**
**काथैर्जयेन्मधुयुतैर्विविधैश्च लेहैः ॥ १४ ॥**
**मूत्रासवैर्गुडकृतैश्च तथा त्वरिष्टैः**
**क्षारासवैश्च मधुमाधवतुल्यगन्धैः ॥**

अनुक्तसंग्रहार्थमाह—अन्यानीत्यादि । मुस्तादिः मुस्ताकुष्ठहरिद्रेत्यादिः, राजतरुवर्गः आरग्वधमदनगोपघोण्टेत्यादिः, दशाङ्गं दशमूलम् । जयेत् 'अरोचकं' इति शेषः । मधुयुता लेहा मुस्ताद्यादिकृता एव ग्राह्याः । केचित् 'विविधैश्च योगैः' इति पठित्वा वातश्लेष्महरैरिति व्याख्यानयन्ति । मूत्रासवैरित्यादि मूत्रेण आसूयन्त इति मूत्रासवाः । तैश्च किम्भूतैः? गुडकृतैः कुष्ठचिकित्सितोक्तविधिना गुडमध्वादिकृतैरित्यर्थः । अरिष्टैः अभयारिष्टादिभिः । क्षारासवैरिति मध्वादिभिः पलाशक्षारपानीयेन सह निष्पादितैर्महाकुष्ठाभिहितैः । मधुमाधवतुल्यगन्धैरिति मधु क्षौद्रं, माधवं मधुकृतं मद्यं, तयोस्तुल्यगन्धैरित्यर्थः ॥ १४ ॥—

**स्यादेष एव कफवातहते विधिश्च**
**शान्ति गते हुतभुजि प्रशमाय तस्य ॥ १५ ॥**

पूर्वोक्तमेव विधिमविपाकेऽतिदिशन्नाह—स्यादेष इत्यादि । एष एव विधिरनन्तरोक्त एव । यदत्र कफवातयोरुपादानं न पित्तनिमित्तस्य तत् पित्तादविपाको न भवतीति दर्शयति । शान्ति गते हुतभुजि अविपाके इत्यर्थः, कारणे कार्योपचारात्; उपचारेण यदत्राविपाकग्रहणं कृतं, न साक्षात्तदप्यग्निमान्द्यमविपाकस्य कारणमिति सूचयति । शान्ति गते मन्दतां प्राप्ते, हुतभुजि जाठराग्नौ । तस्येत्यत्र चकारो लुप्तो द्रष्टव्यः, तेन तस्य च प्रशमनाय; कोऽर्थः? अरोचकस्यापि । कार्तिक ईदृशं व्याख्यानं न मन्यते, तस्याविपाकस्यैव प्रशमायेति प्रतिपादयति । ये चाग्निमान्द्य एवैनं विधिमिच्छन्ति न त्वरोचकाविपाके, तन्मतेऽस्मिन्नध्यायेऽविपाको न वक्तव्यः ॥ १५ ॥

**इच्छाभिघातभयशोकहतेऽन्तरग्नौ**
**भावान् भवाय वितरेत् खलु शक्यरूपान् ॥**
**अर्थेषु चाप्यपचितेषु पुनर्भवाय**
**पौराणिकैः श्रुतिशतैरनुमानयेत्तम् ॥ १६ ॥**
**दैन्यं गते मनसि बोधनमत्र शस्तं**
**यद्यत् प्रियं तदुपसेव्यमरोचके तु ॥ १७ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रेऽरोचकप्रतिषेधो नाम (एकोनविंशोऽध्यायः, आदितः) सप्तपञ्चाशत्तमोऽध्यायः ॥५७॥**

इदानीं पञ्चमारोचकचिकित्सामाह—इच्छाभिघातेत्यादि । इच्छाभिघातो वाञ्छितस्याप्राप्तिः । भावान् पदार्थान् । भवाय

१ अस्याग्रे 'इच्छाभिघातजस्य' इत्यधिकं पठ्यते क्वचित् पुस्तके । २ 'चातिपतितेषु' इति पा० । ३ 'अनुभावयेत्तम्' इति पा० ।

अर्थवशात् रुच्युत्पादनाय । वितरेत् दद्यात् । कीदृशान् भावान्? शक्यरूपान् प्राप्यानित्यर्थः । ये तावत् प्राप्या भावास्तान् इच्छाविघाताद्यरोचके वितरेत् । ये पुनरप्राप्यास्तद्विषये किं कुर्यादित्याह—अर्थेष्वित्यादि । अर्थेषु पदार्थेषु, अपचितेषु नष्टेषु अप्राप्तेष्वित्यर्थः । पुनरिति अपचितेष्वित्यत्र योज्यम् । भवाय रुच्युत्पादनायेत्यर्थः । पौराणिकैः श्रुतिशतैरनुमानयेदिति नलरामाद्युपाख्यानैरन्यैश्च तथाविधैरनुमानयेत् प्रबोधयेदित्यर्थः । केचित् पौराणिकैः श्रुतिपथैरिति पठन्ति; पौराणिकैः पुराणोक्तैः, श्रुतिपथैः वाक्यैः, श्रुतिः श्रवणं सैव पन्था मार्गो येषां तानि तथोक्तानीति व्याख्यानयन्ति । दैन्यं गते मनसि क्लिष्टचेतसीत्यर्थः । बोधनम् आश्वासनैर्हितोपदेशैश्च । केचिदमुं पाठं न पठन्ति ॥ १६ ॥ १७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां
सुश्रुतव्याख्यायामुत्तरतन्त्रेऽरोचकप्रतिषेधो नाम
सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

## अष्टापञ्चाशत्तमोऽध्यायः ।

**अथातो मूत्राघातप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अरोचकप्रतिषेधानन्तरं पारिशेष्यान्मूत्राघातप्रतिषेधारम्भः; परिशेषत्वं च मूत्राघातमूत्रकृच्छ्रयोरेकत्वेन विवक्षितत्वात् कायचिकित्सायां चापरस्याध्यायस्याभावात् । अथात इत्यादि । मूत्राघातो मूत्रावरोधः, केचिदाघातशब्देन दुष्टिमाहुः न त्ववरोधं, मूत्रशुक्रमूत्रसादयोर्मूत्रावरोधासंभवात् ॥ १ ॥ २ ॥

**वातकुण्डलिकाऽष्ठीला वातबस्तिस्तथैव च ॥**
**मूत्रातीतः सजठरो मूत्रोत्सङ्गः क्षयस्तथा ॥ ३ ॥**
**मूत्रग्रन्थिर्मूत्रशुक्रमुष्णवातस्तथैव च ॥**
**मूत्रौकसादौ द्वौ चापि रोगा द्वादश कीर्तिताः ॥४॥**

इदानीं सुखबोधार्थं मूत्राघातान्नामभिः प्राह—वातेत्यादि । अष्ठीलेति वाताष्ठीलेत्यर्थः । या निदानस्थाने वाताष्ठीला भणिता सा भिन्ना, आध्मानादिलक्षणरहितत्वात्[1] । संख्येयनिर्देशादेव संख्यायां सिद्धायां द्वादशेति संख्याकरणं तन्त्रान्तरोक्ताधिकसंख्यानिवारणार्थम् ॥ ३ ॥ ४ ॥

**रौक्ष्याद्वेगविघाताद्वा वायुरन्तरमाश्रितः[2] ॥**
**मूत्रं चरति संगृह्य विगुणः कुण्डलीकृतः ॥ ५ ॥**
**सृजेदल्पाल्पमथवा सरुजस्कं शनैः शनैः ॥**
**वातकुण्डलिकां तं तु व्याधिं विद्यात् सुदारुणम्॥६॥**

वातकुण्डलिकाया हेतुसंप्राप्तिलक्षणान्याह—रौक्ष्यादित्यादि । अन्तरमाश्रित इति बस्तिमध्यमाश्रित इत्यर्थः । मूत्रं चरति संगृह्येति मूत्रं गृहीत्वा वायुश्चरति भ्रमतीत्यर्थः । कुण्डलीकृत इति कुण्डलाकृत्या वर्तुलीभूतः । सृजेत् प्रवर्तयेत् । सरुजस्कं सवेदनं मूत्रम् । रौक्ष्याद्वेगविघातादिति व्यवहितः सन्निहितश्च हेतुरुक्तः, वायुरन्तरमाश्रित इत्यादिसंप्राप्तिः, कुण्डलीकृत इत्यादिलक्षणम् । 'मूत्रमल्पाल्पमथवा सरुजं संप्रवर्तते' इति केचित् पठन्ति । अपरे 'सरुजं संप्रवर्तयेत्' इति पठन्ति । सर्वेषां मूत्राघातानां वायुरेव प्रायशः कारणं बोद्धव्यम् ॥५॥६॥

**शकृन्मार्गस्य बस्तेश्च वायुरन्तरमाश्रितः ॥**
**अष्ठीलावद्घनं ग्रन्थिं करोत्यचलमुन्नतम् ॥ ७ ॥**
**विण्मूत्रानिलसङ्गश्च तत्राध्मानं च जायते ॥**
**वेदना च परा बस्तौ वाताष्ठीलेति तां विदुः ॥ ८ ॥**

अष्ठीलाया हेतुसंप्राप्तिलक्षणान्याह—शकृन्मार्गस्येत्यादि । शकृन्मार्गो गुदः, बस्तिः मूत्राधारः, वायुरत्र अपानो गुदबस्तिस्थरोगकरत्वात्, अन्तरं मध्यम् । अष्ठीला उत्तरापथे दीर्घवर्तुलपाषाणविशेषः, अन्ये चर्मकाराणां लौहीं भाण्डीमाहुः । अचलम् ईषच्चलम् । आध्मानं बस्तौ बोद्धव्यम् । अपानो वायुरत्र हेतुः, शकृन्मार्गस्येत्यादिः संप्राप्तिः, शेषं लक्षणम् ॥७॥८॥

**वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ॥**
**निरुणद्धि मुखं तस्य बस्तेर्बस्तिगतोऽनिलः ॥ ९ ॥**
**मूत्रसङ्गो भवेत्तेन बस्तिकुक्षिनिपीडितः ॥**
**वातबस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥१०॥**

वातबस्तेर्हेतुसंप्राप्तिलक्षणान्याह—वेगमित्यादि । अकुशलो मूर्खः । तस्य मूर्खस्य । मूत्रसङ्गो मूत्रस्याप्रवृत्तिः । तेन व्याधिना बस्तिकुक्षिनिपीडित इति बस्तिकुक्षेर्निपीडनं विद्यते यस्य(त्र) स तथा; निपीडितं निपीडनं वेदनेत्यर्थः । कृच्छ्रप्रसाधनः कष्टसाध्यः । वेगं विधारयेदिति हेतुः, निरुणद्धि मुखं तस्य बस्तेरिति संप्राप्तिः, शेषं लक्षणम् ॥ ९ ॥ १० ॥

**वेगं सन्धार्य मूत्रस्य यो भूयः स्रष्टुमिच्छति ॥**
**तस्य नाभ्येति यदि वा कथञ्चित्संप्रवर्तते ॥ ११ ॥**
**प्रवाहतो मन्दरुजमल्पमल्पं पुनः पुनः ॥**
**मूत्रातीतं तु तं विद्यान्मूत्रवेगविघातजम् ॥ १२ ॥**

मूत्रातीतस्य हेतुं संप्राप्तिं लक्षणं चाह—वेगमित्यादि । वेगं प्रवृत्त्युन्मुखत्वं, तं सन्धार्य सम्यग्धृत्वा, भूयः पुनः, स्रष्टुमिच्छति मोक्तुं वाञ्छति । नाभ्येति मूत्रं नागच्छतीत्यर्थः । प्रवाहत इति निकुन्थनादित्यर्थः । यद्यपि वेगं सन्धार्य मूत्रस्येत्यनेनैव मूत्रविघातजत्वमस्य व्याधेः प्राप्तं, तथाऽपि पुनर्मूत्रवेगविघातजमिति करणं मूत्रविघातोत्थवातजत्वप्रतिपादनार्थम् । वेगं सन्धार्येत्यादिर्हेतुः, यो भूयः स्रष्टुमिच्छतीत्यादिः संप्राप्तिः, शेषं लक्षणम् ॥ ११ ॥ १२ ॥

**मूत्रस्य विहते वेगे तदुदावर्तहेतुना ॥**
**अपानः कुपितो वायुरुदरं पूरयेद्भृशम् ॥ १३ ॥**
**नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् ॥**
**तं मूत्रजठरं विद्यादधःस्रोतोनिरोधनम् ॥ १४ ॥**

---

१ '°लक्षणहेतुत्वात्' इति पा० । २ 'वायुर्बस्तौ सवेदनम्' इति पा० ।

मूत्रजठरस्य हेत्वादिकमाह—मूत्रस्येत्यादि । तदुदावर्तहेतुनेति तदुदावर्तो मूत्रोदावर्तः स एव हेतुस्तेनेत्यर्थः; एतेन मूत्रवेगेऽवरुद्धे सति तदुदावर्तहेतुनाऽपानो वायुः कुपितः सन् उदरं पूरयेत्, ततश्च नाभेरधोभागे तीव्रपीडमाध्मानं जनयेत्; तं मूत्रजठरमधःस्रोतोनिरोधनं विद्यात् मूत्रपुरीषमार्गावरोधकं जानीयादित्यर्थः । केचित् 'अधोबस्तिनिरोधजम्' इति पठन्ति । ये तु 'अपानः कुपितो वायुः' इत्यादिकमेव मूत्रजठरं पठन्ति, ते 'मूत्रस्य वेगे विहते तदुदावर्तहेतुना' इति पाठं मूत्रातीतपाठमध्ये पठन्ति । तथा च सति ते प्रकोपकारणानुक्तावपानप्रकोपकारणं बलवद्विग्रहादिकं मन्यन्ते । तादृशश्च पाठो न वृद्धचित्ताह्लादकरः । मूत्रस्य वेगे विहते इत्यादिर्हेतुः, उदरं पूरयेद्भृशमित्यादिः संप्राप्तिः, शेषं लक्षणम् ॥ १३ ॥ १४ ॥

**बस्तौ वाऽप्यथवा नाले मणौ वा यस्य देहिनः ॥**
**मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः ॥ १५ ॥**
**स्रवेच्छनैरल्पमल्पं सरुजं वाऽथ नीरुजम् ॥**
**विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः ॥१६॥**

मूत्रोत्सङ्गस्य हेत्वादिकमाह—बस्तावित्यादि । नाले मेढ्रस्रोतसि । मणौ मेढ्राग्रदेशे । यद्यपि नाले इत्यनेनैव मणेरपि ग्रहणं संजातं, तथाऽपि मणेरुपादानं मणावत्यन्तमूत्रोत्सङ्गप्रतिपादनार्थम् । सज्जेत अवरुध्येत । 'सरक्तम्' इत्यत्र 'संसक्तम्' इति पाठे संसक्तं संबद्धम् । प्रवाहतः निकुन्थनादित्यर्थः । सरुजम् अतिवातप्रकोपात्, नीरुजं हीनवातप्रकोपात् । विगुणानिलज इति विमार्गवायुजः, वायोर्विमार्गगमनं मार्गावरोधात् स्वहेतुभिश्च; केचिन्मार्गावरोधमेव विमार्गगमने कारणमिच्छन्ति । विगुणानिलजो व्याधिरिति हेतुः, बस्तावित्यादिः संप्राप्तिः, शेषं लक्षणम् ॥ १५ ॥ १६ ॥

**रूक्षस्य क्लान्तदेहस्य बस्तिस्थौ पित्तमारुतौ ॥**
**सदाहवेदनं कृच्छ्रं कुर्यातां मूत्रसंक्षयम् ॥ १७ ॥**

मूत्रक्षयस्य हेत्वादिकमाह—रूक्षस्येत्यादि । क्लान्तदेहस्य ग्लानदेहस्य । यद्यपि रूक्षग्लानदेहत्वं न पित्तप्रकोपकारणं तथाऽपि वातान्वितपित्तस्य प्रकोपकं ज्ञेयम् । कुर्याताम् उत्पादयेताम् । कृच्छ्रं कष्टजननम् । मूत्रसङ्क्षयमिति मूत्रशोषणान्मूत्रसङ्क्षयो रोगः । रूक्षस्येत्यादिः हेतुः, बस्तिस्थावित्यादिः संप्राप्तिः, शेषं लक्षणम् । 'बस्तिस्थौ पित्तमारुतौ' इत्यत्र 'बस्तौ तिष्ठन् सदागतिः' इति केचित् पठन्ति; स चानार्षः पाठः ॥ १७ ॥

**अभ्यन्तरे बस्तिमुखे वृत्तोऽल्पः स्थिर एव च ॥**
**वेदनावानति सदा मूत्रमार्गनिरोधनः ॥ १८ ॥**
**जायते सहसा यस्य ग्रन्थिरश्मरिलक्षणः ॥**
**स मूत्रग्रन्थिरित्येवमुच्यते वेदनादिभिः ॥ १९ ॥**

मूत्रग्रन्थेर्हेत्वादिकमाह—अभ्यन्तर इत्यादि । अभ्यन्तरे बस्तिमुखे इति बस्तिद्वारस्याभ्यन्तरे इत्यर्थः । वृत्तो वर्तुलः । स्थिरः अचलः । मूत्रमार्गनिरोधनः मूत्रवाहिस्रोतोनिरोधकारीत्यर्थः । सहसा झटिति । अश्मरीलक्षण इत्यत्र वेदनादिभिरिति संबध्यते । तेन वेदनाभिः कृत्वा अश्मर्यास्तुल्यलक्षणो न त्वधिष्ठानादिभिरश्मरीतुल्यलक्षणः, एष एवाश्मरीमूत्रग्रन्थ्योर्भेदः; तथा अश्मर्यां रक्तसंबन्धो नास्ति, मूत्रग्रन्थौ तु तन्त्रान्तरदर्शनाद्रक्तसंबन्धो ज्ञेय इत्यपि भेदः । तथा च तद्वचः,—"रक्तं वातकफादुष्टं बस्तिद्वारे सुदारुणम् । ग्रन्थिं कुर्यात् स कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ॥ अश्मरीसमशूलं तं मूत्रग्रन्थिं प्रचक्षते"—इति । अभ्यन्तर इत्यादिसंप्राप्तिः, वेदनावानित्यादिलक्षणं, हेतुरत्रानुक्तोऽपि उष्णवातहेतुसाहचर्यात् पित्तं ज्ञेयः । यद्येवं तर्हि उष्णवाते वायुरपि हेतुरुक्तः; सोऽत्र किमिति न गृह्यते ? सत्यं, मूत्रग्रन्थेर्व्यतिक्रमपाठादेव वायुरत्र कारणं न भवतीति ज्ञेयम् ॥ १८ ॥ १९ ॥

**प्रत्युपस्थितमूत्रस्तु मैथुनं योऽभिनन्दति ॥**
**तस्य मूत्रयुतं रेतः सहसा संप्रवर्तते ॥ २० ॥**
**पुरस्ताद्वाऽपि मूत्रस्य पश्चाद्वाऽपि कदाचन ॥**
**भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥ २१ ॥**

मूत्रशुक्रस्य हेत्वादिकमाह—प्रत्युपस्थितेत्यादि । प्रत्युपस्थितमूत्र इति संजातमूत्रवेग इत्यर्थः । यः पुरुषः, मैथुनमभिनन्दति इच्छति करोतीति तात्पर्यार्थः । रेतः शुक्रम् । पुरस्ताद्वाऽपि मूत्रस्य आदावित्यर्थः । भस्मोदकप्रतीकाशं भस्ममिश्रितपानीयतुल्यम् । एतच्च रेतोविशेषणम् । यः पुरुषः संजातमूत्रवेगः सन् मैथुनं करोति तस्य पुंसो भस्मोदकप्रतीकाशं मूत्रयुतं रेतो मूत्रस्यादौ कदाचित् पश्चाद्वा वायोर्विचित्रक्रियाकरत्वात् प्रवर्तते, तन्मूत्रशुक्रमुच्यत इति फलितोऽर्थः । अत्र हेतुसंप्राप्त्यादिकं स्वयमप्यूह्य ज्ञेयम् ॥ २० ॥ २१ ॥

**व्यायामाध्वातपैः पित्तं बस्तिं प्राप्यानिलावृतम् ॥**
**बस्तिं मेढ्रं गुदं चैव प्रदहन् स्रावयेदधः ॥ २२ ॥**
**मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा ॥**
**कृच्छ्रात् प्रवर्तते जन्तोरुष्णवातं वदन्ति तम् ॥२३॥**

व्यायामाध्वातपैरित्यादि । अनिलावृतं वातान्वितं पित्तम् । हारिद्रं हरिद्रावर्णम् । सरक्तम् ईषद्रक्तवर्णमीषच्छोणितं वा । रक्तं वेति केवलं शोणितम्, अत्यन्तरक्तवर्णं मूत्रं वेत्यर्थः । ननु, अत्रोद्देशसूत्रपाठान्मूत्रग्रन्थिमूत्रशुक्रयोरुपादानं प्राप्नोति नोष्णवातस्य, तत् कथमत्रोष्णवातो निर्दिष्टः ? उच्यते—यथा मूत्रक्षयस्य वातपित्ते हेतू, तथाऽस्यापि त एव हेतू इति हेतुसाम्याद्व्यतिक्रमेणोष्णवातो निर्दिष्टः । यद्येवं तर्हि उद्देशेऽप्युष्णवातो मूत्रक्षयानन्तरमेव किमिति न पठितः ? सत्यं, मूत्रग्रन्थौ केवलपित्तस्यानुवर्तनार्थमुष्णवातो मूत्रक्षयानन्तरं पठितः । व्यायामादिको हेतुः, बस्तिं प्राप्येत्यादिः संप्राप्तिः, शेषं लक्षणम् ॥ २२ ॥ २३ ॥

१ 'सरक्तं चापि प्रवाहतः' इति पा० । २ 'वेदनावानभिष्यन्दी' इति पा० । ३ 'वेदवादिभिः' इति पा० ।

१ 'रक्तग्रन्थि' इति पा० । २ 'क्षारपानीयतुल्यम्' इति पा० । ३ 'पश्चादपि' इति पा० ।

विशदं पीतकं मूत्रं सदाहं बहलं तथा ॥
शुष्कं भवति यच्चापि रोचनाचूर्णसन्निभम् ॥ २४ ॥
मूत्रौकसादं तं विद्याद्रोगं पित्तकृतं बुधः ॥
पिच्छिलं संहतं श्वेतं तथा कृच्छ्रप्रवर्तनम् ॥ २५ ॥
शुष्कं भवति यच्चापि शङ्खचूर्णप्रपाण्डुरम् ॥
मूत्रौकसादं तं विद्यादामयं द्वादशं कफात् ॥ २६ ॥

मूत्रौकसादलक्षणमाह—विशदमित्यादि । विशदं पिच्छिलविपरीतम् । पीतकं पीतवर्णम् । बहलं स्थूलं घनमित्यर्थः । शुष्कमिति आतपादिना शुष्कम् । रोचना गोरोचना । द्वितीयमूत्रौकसादलक्षणमाह—पिच्छिलमित्यादि । पिच्छिलमिति विशदविपरीतम्, संहतं घनम्, श्वेतं श्वेतवर्णम्, कृच्छ्रप्रवर्तनं दुःखेन प्रवर्तत इत्यर्थः । द्वादशेति पुनरुपादानं मूत्रौकसादयोरेकनामत्वादेव मन्दमतीनां चेतस्येकत्वं मा भूदिति द्योतनार्थम् ॥ २४-२६ ॥

कषायकल्कसर्पींषि भक्ष्यान् लेहान् पयांसि च ॥
क्षारमद्या(ध्वा)सवस्वेदान् वस्तींश्चोत्तरसंज्ञितान्२७
विदध्यान्मतिमांस्तत्र विधिं चाश्मरिनाशनम् ॥

मूत्राघातानां चिकित्सामाह—कषायेत्यादि । कायः कषायः, कल्को दृषदि पेषितः सद्रवः । भक्ष्यान् लड्डुकप्रभृतीन् । पयांसि क्षीराणि । आसवो मद्यभेदः । स्वेदा उपनाहाद्याः । वस्तींश्चोत्तरसंज्ञितानिति उत्तरबस्तीनित्यर्थः । चकारात् स्नेहविरेचनमपि । विदध्यात् कुर्यात् । मतिमानिति ऊहापोहविद्वैद्यः । तत्र मूत्राघातरोगे । विधिमश्मरीसाधनमश्मरीचिकित्सितोक्तम् । ननु, यथा वातादिभेदेन भिन्ना मूत्राघाता दर्शिताः, तथैव चिकित्साऽपि भिन्ना वक्तुमुचिता, तत् कथमत्र सामान्येन चिकित्सोक्ता ? उच्यते,—सर्वेषु मूत्राघातेषु यतो वातः कारणम् अतः सामान्येन चिकित्सितं वक्तुमुचितं भवति; एवं यदि तत्र वायुरेव कारणं किं तर्हि तत्र पित्तकफावप्यारम्भकत्वेन निर्दिष्टौ, तत् कथमेकैव चिकित्सा सर्वेषु मूत्राघातेषु क्रियते ? सत्यं, सर्वेऽपि मूत्राघाताः प्रायशो वातजन्याः पित्तकफौ पुनरावरकौ; तस्मात्तेषामेकैव चिकित्सा दोषादिबलविकल्पं द्रव्यतत्त्वं रोगतत्त्वं च ज्ञात्वा भिषजा प्रयोज्या, अत एव मतिमानित्युक्तवानाचार्यः । केचिदत्र 'अतः परं प्रवक्ष्यामि मूत्रदोषस्य भेषजम्' इत्यादिपाठं पठन्ति, स च कषायकल्पमित्यनेनोपसंगृहीत इति न दर्शितः । अपरे तु 'स्त्रीणामतिप्रसङ्गेन' इत्यादिपाठं पठन्ति, स च नार्षः ॥ २७ ॥—

मूत्रोदावर्तयोगांश्च कार्त्स्न्येनात्र प्रयोजयेत् ॥ २८ ॥

मूत्राघातेषु मूत्रोदावर्तचिकित्सितमतिदेशेनाह—मूत्रोदावर्तेत्यादि । मूत्रोदावर्तयोगा य उदिता भवन्ति तेऽत्र योज्या इति अत्रार्थः । मूत्रोदावर्तयोगान् 'सौवर्चलाढ्यां मदिराम्' इत्यादिमूत्रोदावर्तप्रतिषेधोक्तान् । कार्त्स्न्येन सामस्त्येन । एतेन यस्यामवस्थायां ये मूत्रोदावर्तयोगा उचिता भवन्ति तेऽत्र योज्या इत्यर्थः । कार्त्स्न्येनेत्यत्र कार्तिककुण्डेन बहुधा प्रजल्पितं, तत्तु शिष्यबुद्धिव्याकुलहेतुत्वाद्ग्रन्थगौरवभयाच्च परिहृतम् । अत्र मूत्राघाते ॥ २८ ॥

कल्कमेर्वारुबीजानामक्षमात्रं ससैन्धवम् ॥
धान्याम्लयुक्तं पीत्वैव मूत्रकृच्छ्रात् प्रमुच्यते ॥२९॥

कल्कमित्यादि । एर्वारुः ग्रीष्मकर्कटिका । अक्षमात्रं कर्षप्रमाणम् । धान्याम्लं काञ्जिकम् । केचिदमुं पाठमन्यथा पठन्ति, स चाभावाच्च लिखितः ॥ २९ ॥

सुरां सौवर्चलवतीं मूत्रकृच्छ्री पिबेन्नरः ॥
मधु मांसोपदंशं वा पिबेद्वाऽप्यथ गौडिकम् ॥ ३० ॥

सुरामित्यादि । सुरा पिष्टकृता । मधु मद्यं; तच्च मधुकृतं, समानतन्त्रदर्शनात् । तथा च,—"मांसोपदंशं मधुना मद्यं वाऽपि पिबेन्नरः—" इति । मांसोपदंशं मांसभक्षणयुतम् । गौडिकं गुडकृतं मद्यम् ॥ ३० ॥

पिबेत् कुङ्कुमकर्षं वा मधूदकसमायुतम् ॥
रात्रिपर्युषितं प्रातस्तथा सुखमवाप्नुयात् ॥ ३१ ॥

पिबेदित्यादि । मधूदकं मधुयुक्तमुदकम् । प्रातरिति पिबेदित्यत्र योज्यं; तेन प्रभाते पिबेदित्यर्थः ॥ ३१ ॥

दाडिमाम्लां युतां मुख्यामेलाजीरकनागरैः ॥
पीत्वा सुरां सलवणां मूत्रकृच्छ्रात् प्रमुच्यते ॥ ३२॥

दाडिमाम्लामित्यादि । दाडिमाम्लां दाडिमेनाम्लीकृताम् । युतामित्यत्र एलाजीरकनागरैरिति योज्यम् । सुरां मुख्यां पैष्टीमित्यर्थः । सलवणां सैन्धवयुक्ताम् ॥ ३२ ॥

पृथक्पर्ण्यादिवर्गस्य मूलं गोक्षुरकस्य च ॥
अर्धप्रस्थेन तोयस्य पचेत् क्षीरचतुर्गुणम् ॥ ३३ ॥
क्षीरावशिष्टं तच्छीतं सिताक्षौद्रयुतं पिबेत् ॥
नरो मारुतपित्तोत्थमूत्राघातनिवारणम् ॥ ३४ ॥

पृथक्पर्ण्यादिवर्गस्येत्यादि । पृथक्पर्ण्यादिवर्गो विदारिगन्धादिकः ॥ ३३ ॥ ३४ ॥

निष्पीड्य वाससा सम्यग्वर्चो रासभवाजिनोः ॥
रसस्य कुडवं तस्य पिबेन्मूत्ररुजापहम् ॥ ३५ ॥

निष्पीड्येत्यादि । वर्चः पुरीषम् । रासभो गर्दभः । वाजी घोटकः । कुडवं चत्वारि पलानि ॥ ३५ ॥

मुस्ताभयादेवदारुमूर्वाणां मधुकस्य च ॥
पिबेदक्षसमं कल्कं मूत्रदोषनिवारणम् ॥ ३६ ॥

मुस्तेत्यादि । मूर्वा चोरस्नायुः । मधुकं यष्टीमधु । अक्षसमं कर्षप्रमाणम् ॥ ३६ ॥

१ 'चापरं' इति पा० । २ 'कुतोऽत्र' इति पा० । ३ 'कार्त्स्न्येनेह' इति पा० ।

१ 'इह' इति पा० । २ 'दाडिमाम्लयुतां' इति पा० । ३ 'सिताघृतयुतं' इति पा० ।

**अभयामलकाक्षाणां कल्कं बदरसंमितम् ॥**
**अम्भसाऽलवणोपेतं पिबेन्मूत्ररुजापहम् ॥ ३७ ॥**

अभयेत्यादि । अक्षो विभीतकः । बदरसंमितम् अर्धकर्षप्रमाणम् । अम्भसा पानीयेन । अलवणोपेतं किंचित्सैन्धवयुतम् ॥ ३७ ॥

**उदुम्बरसमं कल्कं द्राक्षाया जलसंयुतम् ॥**
**पिबेत् पर्युषितं रात्रौ शीतं मूत्ररुजापहम् ॥ ३८ ॥**

उदुम्बरसमं कर्षप्रमाणं, द्राक्षायाः कल्कम् उदुम्बरसमं जलान्वितं रात्रिपर्युषितं पिबेदिति पिण्डार्थः ॥ ३८ ॥

**निदिग्धिकायाः स्वरसं पिबेत् कुडवसंमितम् ॥**
**मूत्रदोषहरं कल्य–**

निदिग्धिका कण्टकारिका । कुडवसंमितं चतुष्पलोन्मितम् । कल्यं प्रातरित्यर्थः ॥—

**मथवा क्षौद्रसंयुतम् ॥ ३९ ॥**
**प्रपीड्यामलकानां तु रसं कुडवसंमितम् ॥**
**पीत्वाऽगदी भवेज्जन्तुर्मूत्रदोषरुजातुरः ॥ ४० ॥**

अथवेत्यादि । प्रपीड्येति वाससा गालयित्वेत्यर्थः । कुडवं चत्वारि पलानि । अगदी भवेत् नीरोगो भवेत् ॥ ३९ ॥ ४० ॥

**धात्रीफलरसेनैवं सूक्ष्मैलां वा पिबेन्नरः ॥**

धात्रीफलरसेनैवमित्यादि । धात्रीफलरसेन आमलकरसेन । एवमिति क्षौद्रयुतामित्यर्थः ॥—

**पिष्ट्वाऽथवा सुशीतेन शालितण्डुलवारिणा ॥ ४१ ॥**
**तालस्य तरुणं मूलं त्रपुसस्य रसं तथा ॥**
**श्वेतं कर्कटकं चैव प्रातस्तु पयसा पिबेत् ॥ ४२ ॥**

पिष्ट्वेत्यादि । तालस्याभिनवं मूलं पिष्ट्वा शालितण्डुलोदकेन पिबेत्, त्रपुसस्वरसमथ वा पिबेत् । त्रपुसः सुधावासः । श्वेतमित्यादि । श्वेतं कर्कटकं त्रपुसम् । पयसा क्षीरेण, समानतन्त्रदर्शनात्; 'त्रपुसं वाऽथ दुग्धेन मूत्रदोषहरं पिबेत्' इति ॥ ४१ ॥ ४२ ॥

**शृतं वा मधुरैः क्षीरं सर्पिर्मिश्रं पिबेन्नरः ॥**
**मूत्रदोषविशुद्ध्यर्थं तथैवाश्मरिनाशनम् ॥ ४३ ॥**

शृतमित्यादि । मधुरैः काकोल्यादिभिः । अयं योगो मूत्रशुक्रस्य बाहुल्येन बोद्धव्यः ॥ ४३ ॥

**बलाश्वदंष्ट्राक्रौञ्चास्थिकोकिलाक्षकतण्डुलान् ॥**
**शतपर्वकमूलं च देवदारु सचित्रकम् ॥ ४४ ॥**
**अक्षबीजं च सुरया कल्कीकृत्य पिबेन्नरः ॥**
**मूत्रदोषविशुद्ध्यर्थं तथैवाश्मरिनाशनम् ॥ ४५ ॥**

बलाश्वदंष्ट्रेत्यादि । बला स्वनामख्याता, श्वदंष्ट्रा गोक्षुरकः, क्रौञ्चः पक्षिविशेषः, 'कैचर' इति लोके, कोकिलाक्षकः खग्गली, शतपर्वको जलगण्डीरः । अक्षबीजं बिभीतकमज्जा । एतद्बलादिकं कल्कीकृत्य मूत्रदोषविशुद्ध्यर्थं पिबेदित्यर्थः । तथाऽश्मरीचिकित्सितोक्तमपि मूत्रदोषविशुद्ध्यर्थं पिबेदित्यर्थः । अश्मरीचिकित्सितं यदत्र वारंवारं भणितं, तदत्यन्तहितत्वापादनार्थम् । केचित् **भोज**संवादाद् बलादिकं योगचतुष्टयं मन्यन्ते; तन्न, वृद्धानामसंमतत्वात् ॥ ४४ ॥ ४५ ॥

१ 'वारि' इति पा० । २ 'शुक्रदोषहरं परम्' इति पा० ।
३ 'तथैवाश्मरिशोधनम्' इति पा० ।

**पाटलाक्षारमाहृत्य सप्तकृत्वः परिस्रुतम् ॥**
**पिबेन्मूत्रविकारघ्नं संसृष्टं तैलमात्रया ॥ ४६ ॥**

पाटलाक्षारमित्यादि । सप्तकृत्वः सप्तवारान् । परिस्रुतं गालितम् । संसृष्टं संयुक्तम् । तैलमात्रया स्तोकेन तैलेन । अत्र मात्राशब्दोऽल्पवाची । यथा—"मात्रां खादेद्बुभुक्षितः" इत्यादिषु । अत्र क्षारस्य तोयस्य च प्रमाणं क्षारकल्पोक्तं ज्ञातव्यम् । तेन चतुर्गुणेन जलेन क्षारः परिस्रावणीयः ॥ ४६ ॥

**नलाश्मभेददर्भेक्षुत्रपुसैर्वारुबीजकान् ॥**
**क्षीरे परिशृतान् तत्र पिबेत् सर्पिःसमायुतान् ४७**

नलाश्मभेदेत्यादि । नलः स्वनामप्रसिद्धः शुषिरपर्वा, अश्मभेदः पाषाणभेदः, एर्वारुः ग्रीष्मकर्कटिका, बीजकः असनसारः । **कार्तिककुण्ड**स्तु वृद्धकाश्यपीयसंवादात्त्रपुसैर्वारुबीजान्येवाचक्षते, बीजकानित्यत्र स्वार्थिकाश्च प्रकृतिलिङ्गवचनान्यतिक्रामन्तीत्युक्तत्वात् पुंलिङ्गतेति च कथयति तत्र । मूत्राघाते ॥ ४७ ॥

**पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ॥**
**क्षारोदकेन मतिमान् त्वगेलोषणचूर्णकम् ॥ ४८ ॥**
**पिबेद्गुडेन मिश्रं वा लिह्याल्लेहान् पृथक् पृथक् ॥**

पाटल्या इत्यादि । यावशूको यवक्षारः । पारिभद्रः पर्वतनिम्बः, अन्ये पारिभद्रशब्देन कण्टकिवृक्षं रक्तकुसुमं फलभद्रसंज्ञकं वदन्ति । ऊषणं पिप्पली । पाटल्यादीनां क्षारोदकेन सह त्वगेलोषणचूर्णं पिबेत्, पाटल्यादिक्षारोदकगुडकृतान् लेहान् वा लिह्यात् । **कार्तिककुण्ड**स्तु 'त्वगेलोषणचूर्णकं' इत्यत्र 'त्वगेलोषणसंयुतम्' इति पठति । तत्र पाटल्यादितिलान्तानां द्रव्याणां यत् चूर्णं तत् क्षारोदकेन मुष्ककक्षारोदकेन पिबेत्, तत्कृतान्वा पृथक् पृथक् त्वगेलोषणसंयुतान् लेहान् गुडमिश्रितान् लिह्यादिति व्याख्यानयति । तथा च **विश्वामित्रः**—"पाटल्याः पारिभद्राद्वा तिलाद्वाऽपि यवाग्रजात् । कणैलात्वग्युतं चूर्णं मुष्ककक्षारवारिणा ॥ पिबेद्गुडेन मिश्रं वा लिह्याल्लेहान् पृथक् पृथक्"—इति । 'गतिमान्' इत्यत्र 'मदिरां' इति केचित् पठन्ति, तथा 'गुडेन मिश्रं वा' इत्यत्र 'गुडोपदंशं वा' इति च पठन्ति । तच्च पाठद्वयमनार्षम् ॥ ४८ ॥—

**अत ऊर्ध्वं प्रवक्ष्यामि मूत्रदोषे क्रमं हितम् ॥ ४९ ॥**
**स्नेहस्वेदोपपन्नानां हितं तेषु विरेचनम् ॥**
**ततः संशुद्धदेहानां हिताश्चोत्तरबस्तयः ॥ ५० ॥**

१ 'गुडोपदंशान्' इति पा० ।

सामान्येनं च क्रियाक्रमार्थमाह—अत ऊर्ध्वमित्यादि । तेषु मूत्रदोषेषु । 'तेषु विरेचनं' इत्यत्र 'स्नेहविरेचनं' इति केचित् पठन्ति । कार्त्तिककुण्डस्तु इमं पाठं न पठति, 'कषायकल्कसर्पींषि' इत्यादिनैव गतार्थत्वात् । जेज्जटाचार्यस्तु स्निग्धशुद्धदेहानां पूर्वोक्ता योगाः प्रयोक्तव्या इत्यावेदनाय पठति, तत्पठितत्वान्मयाऽपि पठितः ॥ ४९ ॥ ५० ॥

स्त्रीणामतिप्रसङ्गेन शोणितं यस्य दृश्यते ॥
मैथुनोपरमस्तस्य बृंहणश्च विधिः स्मृतः ॥ ५१ ॥

अत्र च केचिन्मूत्रदोषप्रसङ्गेन मूत्रमार्गप्रवृत्तरक्तस्यापि विधानं कथयन्ति—स्त्रीणामित्यादि । अतिप्रसङ्गेन अत्यन्तसेवया । मैथुनोपरमो मैथुननिवृत्तिः । बृंहणश्च विधिः मांसक्षीरघृतादिसेवनम् । अमुमपि पाठं कार्त्तिककुण्डो न पठति, शुक्रक्षयलिङ्गैनैवोक्तत्वात् संख्यातिरेकभयाच्च; जेज्जटस्तु प्रकरणात् तथा शिष्यसुखबोधार्थं पठति; तत्पठितत्वान्मयाऽपि पठितः ॥ ५१ ॥

ताम्रचूडवसा तैलं हितं चोत्तरबस्तिषु ॥
विधानं तस्य पूर्वं हि व्यासतः परिकीर्तितम् ॥ ५२ ॥

किमेतदेव तत्र रक्ते हितमुतान्यदपीत्याह—ताम्रचूडेत्यादि । ताम्रचूडवसा कुक्कुटवसा, विधानं विधिः, उत्तरबस्तिषु उत्तरबस्तिचिकित्सिते, तस्य उत्तरबस्तेः, 'व्यासतः' इत्यत्र 'व्यापदः' इति केचित् पठन्ति ॥ ५२ ॥

क्षौद्रार्धपात्रं दत्त्वा च पात्रं तु क्षीरसर्पिषः ॥
शर्करायाश्च चूर्णं च द्राक्षाचूर्णं च तत्समम् ॥ ५३ ॥
स्वयङ्गुप्ताफलं चैव तथैवेक्षुरकस्य च ॥
पिप्पलीचूर्णसंयुक्तमर्धभागं प्रकल्पयेत् ॥ ५४ ॥
तदैकध्यं समानीय खजेनाभिप्रमन्थयेत् ॥
ततः पाणितलं चूर्णं लीढ्वा क्षीरं ततः पिबेत् ॥ ५५ ॥
एतत् सर्पिः प्रयुञ्जानः शुद्धदेहो नरः सदा ॥
मूत्रदोषाञ्जयेत् सर्वानन्ययोगैः सुदुर्जयान् ॥ ५६ ॥
जयेच्छोणितदोषांश्च वन्ध्या गर्भं लभेत च ॥
नारी चैतत् प्रयुञ्जाना योनिदोषात् प्रमुच्यते ॥ ५७ ॥

क्षौद्रार्धपात्रमित्यादि । क्षौद्रार्धपात्रं मध्वर्धाढकं, क्षीरसर्पिषः क्षीरसंमथनोत्थघृतस्य । स्वयङ्गुप्ताफलादीनां पिप्पल्यन्तानां चूर्णमर्धभागं प्रकल्पयेदित्यर्थः । स्वयङ्गुप्ता कपिकच्छूः, इक्षुरकः कोकिलाक्षकः, खजेन मन्थनदण्डेन; पाणितलं चूर्णमिति अङ्गुलिरहितं हस्ततलं चूर्णमित्यर्थः; अन्ये पाणितलशब्देन कर्षं वदन्ति ॥ ५३–५७ ॥

बला कोलास्थि मधुकं श्वदंष्ट्राऽथ शतावरी ॥
मृणालं च कशेरुश्च बीजानीक्षुरकस्य च ॥ ५८ ॥
सहस्रवीर्याऽंशुमती पयस्या सह कालया ॥
शृगालविन्नाऽतिबला बृंहणीयो गणस्तथा ॥ ५९ ॥
एतानि समभागानि मतिमान् सह साधयेत् ॥
चतुर्गुणेन पयसा गुडस्य तुलया सह ॥ ६० ॥
द्रोणावशिष्टं तत् पूतं पचेत्तेन घृताढकम् ॥
तत् सिद्धं कलशे स्थाप्यं क्षौद्रप्रस्थेन संयुतम् ॥ ६१ ॥
सर्पिरेतत् प्रयुञ्जानो मूत्रदोषात् प्रमुच्यते ॥
तुगाक्षीर्याश्च चूर्णानि शर्करायास्तथैव च ॥ ६२ ॥
क्षौद्रेण तुल्यान्यालोड्य प्रशस्तेऽहनि लेहयेत् ॥
तस्य खादेद्यथाशक्ति मात्रां क्षीरं ततः पिबेत् ॥ ६३ ॥
शुक्रदोषाञ्जयेन्मर्त्यः प्राश्य सम्यक् सुयन्त्रितः ॥
व्यवायक्षीणरेतास्तु सद्यः संलभते सुखम् ॥ ६४ ॥
ओजस्वी बलवान्मर्त्यः पिबन्नेव च हृष्यति ॥

अगर्भं बलाघृतमाह—बलेत्यादि । कोलास्थि बदरमज्जा, मधुकं यष्टीमधु, श्वदंष्ट्रा गोक्षुरकः, इक्षुरकः कोकिलाक्षः, सहस्रवीर्या दूर्वा, अंशुमती शालपर्णी, पयस्या अर्कपुष्पी, दुग्धिकामन्ये, काला कालानुसारिवा, श्रीपर्णिकामन्ये, शृगालविन्ना पृश्निपर्णी, बृंहणीयो गणो गुडूचीवर्जितः काकोल्यादिः "गुडूचीरहितो वर्गः काकोल्यादिरुदाहृतः । बृंहणीयः" इत्यादिसमानतन्त्रसंवादात् । चतुर्गुणेन पयसा दुग्धेन, जलेनेत्यन्ये । पूतं वस्त्रगालितम् । पचेत्तेन घृताढकमिति अकल्कमेव । कार्त्तिककुण्डस्त्वमुं योगमन्यथा पठति व्याख्यानयति च, स च ग्रन्थगौरवभयान्न लिखितः । केचिदेनमनार्षं वदन्ति; तन्न, सुकीरसुधीरादिभिष्टीकाकृद्भिरार्षत्वेन वर्णितत्वात् ॥ ५८–६४ ॥—

चित्रकः सारिवा चैव बला कालानुसारिवा ॥ ६५ ॥
द्राक्षा विशाला पिप्पल्यस्तथा चित्रफला भवेत् ॥
तथैव मधुकं पथ्यां दद्यादामलकानि च ॥ ६६ ॥
घृताढकं पचेदेभिः कल्कैः कर्षसमन्वितैः ॥
क्षीरद्रोणे जलद्रोणे तत्सिद्धमवतारयेत् ॥ ६७ ॥
शीतं परिस्रुतं चैव शर्कराप्रस्थसंयुतम् ॥
तुगाक्षीर्याश्च तत् सर्वं मतिमान् परिमिश्रयेत् ॥ ६८ ॥
ततो मितं पिबेत्काले यथादोषं यथाबलम् ॥
वातरेताः श्लेष्मरेताः पित्तरेतास्तु यो भवेत् ॥ ६९ ॥
रक्तरेता ग्रन्थिरेताः पिबेदिच्छन्नरोगताम् ॥
जीवनीयं च वृष्यं च सर्पिरेतद्बलावहम् ॥ ७० ॥
प्रज्ञाहितं च धन्यं च सर्वरोगापहं शिवम् ॥
सर्पिरेतत् प्रयुञ्जाना स्त्री गर्भं लभतेऽचिरात् ॥ ७१ ॥

---

१ 'परमतेन' इति 'एकीयमतेन' इति च पा० । २ 'सिच्यते' इति पा० । ३ 'पठित्वा तात्पर्यवृत्त्यां नाङ्गीकरोति । तथा ताम्रचूडेत्यादिकं तच्चिकित्सितमप्यरुच्या परमतेन प्रतिपादयति' इति पा० । ४ 'सर्वान् ये च स्युर्भृशदुर्जयाः' इति पा० ।

१ 'कल्कैरिक्षुसमन्वितैः' इति पा० । २ 'प्रजाहितं' इति पा० ।

असृग्दोषाश्रयेचापि योनिदोषांश्च संहतान् ॥
मूत्रदोषेषु सर्वेषु कुर्यादेतच्चिकित्सितम् ॥ ७२ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे मूत्राघातप्रतिषेधो नाम ( विंशोऽध्यायः, आदितः ) अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

महाबलं घृतमाह—चित्रक इत्यादि । चित्रफला गुडदुग्धिका इन्द्रवारुणीपर्याया । तुगाक्षीर्याश्चेत्यत्रापि प्रस्थसंयुतमिति संबध्यते । मितं मात्रोपेतम् । यथाबलमित्यस्य प्राक् अग्निशब्दो लुप्तो द्रष्टव्य; तेन यथाग्निबलमित्यर्थः । केचिदिदं घृतं न पठन्ति ॥ ६५–७२ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे मूत्राघातप्रतिषेधो नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

## ऊनषष्टितमोऽध्यायः ।

अथातो मूत्रकृच्छ्रप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥

यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

मूत्राघातप्रतिषेधानन्तरं बस्तिगतत्वसामान्यान्मूत्रकृच्छ्रप्रतिषेधारम्भः—अथात इत्यादि । मूत्रकृच्छ्रं दुःखेन मूत्रप्रवृत्तिः । 'मूत्रकृच्छ्रप्रतिषेधम्' इत्यत्र 'मूत्रोपघातप्रतिषेधं' इत्यन्ये पठन्ति, तेऽप्युपघातशब्देन कृच्छ्रतां वदन्ति; अपरे 'मूत्रदोषप्रतिषेधं' इति पठन्ति, तत्रापि तादृगेवाभिप्रायः । ननु, अश्मरीमूत्राघातोदावर्तादिषु मूत्रकृच्छ्रस्योक्तत्वात् किमर्थं पुनरत्र तदभिधानं ? सत्यं, चिकित्सालक्षणकार्यभेदात् तथा समानतन्त्रेऽपि पृथङ्निर्दिष्टत्वाच्च पुनस्तेषामुपादानम् । केचिच्च पुनरुक्तिभयादेवामुमध्यायं न पठन्ति ॥ १ ॥ २ ॥

वातेन पित्तेन कफेन सर्वै-
स्तथाऽभिघातैः शकृदश्मरीभ्याम् ॥
तथाऽपरः शर्करया सुकष्टो
मूत्रोपघातः कथितोऽष्टमस्तु ॥ ३ ॥

वातेनेत्यादि । मूत्रोपघातो मूत्रकृच्छ्र एवेत्यर्थः । अष्टम इति संख्याकरणं नानाप्रकारस्याप्यश्मरीजस्य मूत्रकृच्छ्रस्यैकत्वेन ग्रहणमिति प्रतिपादनार्थम् । केचिदुत्तरार्धमीदृशं पठन्ति,—'शुक्रोद्भवं शर्करया च कष्टं मूत्रस्य कृच्छ्रं प्रवदन्ति तज्ज्ञाः' इति । स चानार्षः पाठः ॥ ३ ॥

अल्पमल्पं समुत्पीड्य मुष्कमेहनबस्तिभिः ॥
फलद्भिरिव कृच्छ्रेण वाताघातेन मेहति ॥ ४ ॥

वातकृच्छ्रलक्षणमाह—अल्पमल्पमित्यादि । अल्पमल्पं स्तोकं स्तोकं, समुत्पीड्य अर्थवशान्मुष्कमेहनादिकमेव पीडयित्वा । मुष्कः अण्डं, मेहनं लिङ्गं, बस्तिः मूत्राधारः । फलद्भिरिव स्फुटद्भिरिव । कृच्छ्रेण दुःखेन; एतत् पदं मेहतीत्यत्र संबन्धनीयम् । वाताघातेन वातकृच्छ्रेणेत्यर्थः । मेहति मूत्रयति । कार्तिककुण्डोऽमुं पाठमन्यथा पठति, स चाभावान्न दर्शितः ॥ ४ ॥

हारिद्रमुष्णं रक्तं वा मुष्कमेहनबस्तिभिः ॥
अग्निना दह्यमानाभैः पित्ताघातेन मेहति ॥ ५ ॥

पित्तकृच्छ्रलक्षणमाह—हारिद्रमुष्णमित्यादि । हारिद्रं हरिद्रावर्णं, रक्तं रक्तवर्णम्, एतद्द्वयं न्यूनाधिकपित्तप्रकोपवशात् । दह्यमानाभैः अत्यन्तदाहपरीतैः । पित्ताघातेन पित्तकृच्छ्रेण ॥५॥

स्निग्धं शुक्लमनुष्णं च मुष्कमेहनबस्तिभिः ॥
संहृष्टरोमा गुरुभिः श्लेष्माघातेन मेहति ॥ ६ ॥

कफकृच्छ्रलक्षणमाह—स्निग्धमित्यादि । अनुष्णम् ईषदुष्णम् । संहृष्टरोमा उद्धर्षितरोमा । गुरुभिः भारिकैः । श्लेष्माघातेन श्लेष्मकृच्छ्रेण ॥ ६ ॥

दाहशीतरुजाविष्टो नानावर्णं मुहुर्मुहुः ॥
ताम्यमानस्तु कृच्छ्रेण सन्निपातेन मेहति ॥ ७ ॥

सान्निपातिकलक्षणमाह—दाहशीतेत्यादि । आविष्टो युक्तः । नानावर्णं पीतरक्तशुक्लादिवर्णम् । ताम्यमानोऽत्यर्थं तमः प्रविशन् । कृच्छ्रेण अतिकष्टेन ॥ ७ ॥

मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च ॥
स्रोतःसु मूत्राघातस्तु जायते भृशवेदनः[1] ॥ ८ ॥
वातबस्तेस्तु तुल्यानि तस्य लिङ्गानि लक्षयेत् ॥
शकृतस्तु प्रतीघाताद्वायुर्विगुणतां गतः ॥ ९ ॥
आध्मानं च सशूलं च मूत्रसङ्गं करोति हि ॥

मूत्रवाहिषु शल्येनेत्यादि ॥ ८ ॥ ९ ॥—

अश्मरीहेतुकः पूर्वं मूत्राघात उदाहृतः ॥ १० ॥

अश्मरीत्यादि । पूर्वं निदानस्थानेऽश्मरीहेतुको मूत्राघात उदाहृतः ॥ १० ॥

अश्मरी शर्करा चैव तुल्ये संभवलक्षणैः[2] ॥
शर्करायाा विशेषं तु शृणु कीर्तयतो मम ॥ ११ ॥
पच्यमानस्य पित्तेन भिद्यमानस्य वायुना ॥
श्लेष्मणोऽवयवा भिन्नाः शर्करा इति संज्ञिताः १२
हृत्पीडा वेपथुः शूलं कुक्षौ वह्निः सुदुर्बलः[3] ॥
ताभिर्भवति मूर्च्छा च मूत्राघातश्च दारुणः ॥ १३ ॥
मूत्रवेगनिरस्तासु तासु शाम्यति वेदना ॥
यावदन्या[4] पुनर्नैति गुडिका स्रोतसो मुखम् ॥१४॥
शर्करासंभवस्यैतन्मूत्राघातस्य लक्षणम् ॥

---

१ अयं पाठः क्वचित्पुस्तके न पठ्यते ।

१ 'भृशदारुणः' इति पा० । २ 'तुल्यसंभवलक्षणा' इति पा० । ३ 'कुक्षावग्निश्च दुर्बलः' इति पा० । ४ 'यावदस्याः' इति पा० ।

यद्यपि शर्कराकृच्छ्रमश्मरीजकृच्छ्रं च तुल्यं तथाऽपि किञ्चिद्भेदमाश्रित्य शर्कराकृच्छ्रं भिन्नमाह—अश्मरीत्यादि । पच्यमानस्येति पक्वस्येत्यर्थः, अर्थवशात् श्लेष्मण एव; भिद्यमानस्येति भिन्नस्येत्यर्थः, भाविनि भूतवदुपचारात् । वेपथुः कम्पः । सुदुर्बलो मन्दः । ताभिः शर्कराभिः । मूत्रवेगनिरस्तासु मूत्रस्याधोवेगेन निःसृतास्वित्यर्थः । नैति नागच्छति । कार्तिककुण्डस्त्वमुं पाठं बहुधा व्याकुलीकृत्य पठति, स तु ग्रन्थगौरवभयात् परित्यक्तः । यद्यपि अश्मरीशर्करामूत्रकृच्छ्रे निदानस्थाने भणिते, तथाऽपि प्रकरणवशात् किञ्चिल्लक्षणाधिक्याच्चात्रापि भणिते ॥ ११-१४ ॥—

**चिकित्सितमथैतेषामष्टानामपि वक्ष्यते ॥ १५ ॥**

इदानीं मूत्रकृच्छ्रचिकित्सामाह—चिकित्सितमित्यादि । एतेषां मूत्रकृच्छ्राणाम् ॥ १५ ॥

**अश्मरीं च समाश्रित्य यदुक्तं प्रसमीक्ष्य तत् ॥**
**यथादोषं प्रयुञ्जीत स्नेहादिमपि च क्रमम् ॥ १६ ॥**

तदेव चिकित्सितमतिदेशेनाह—अश्मरीमित्यादि । अश्मरीमाश्रित्य यत् प्राक् चिकित्सितमुक्तं स्नेहादिक्रमश्च, तद्यथादोषं प्रसमीक्ष्य प्रयुञ्जीत कुर्यात् । एतेनैतदुक्तम्—अश्मरीचिकित्सिते वातादिभेदेन यो विधिरुक्तस्तं तथा स्नेहादिमपि च क्रमं प्रयुञ्जीत कुर्यात् । चकारात् प्रागुक्तमूत्राघातचिकित्सितमपि ॥ १६ ॥

**श्वदंष्ट्राश्मभिदौ कुम्भीं हपुषां कण्टकारिकाम् ॥**
**बलां शतावरीं रास्नां वरुणं गिरिकर्णिकाम् ॥ १७ ॥**
**तथा विदारिगन्धादिं संहृत्य त्रैवृतं पचेत् ॥**
**तैलं घृतं वा तत् पेयं तेन वाऽप्यनुवासनम् ॥ १८ ॥**
**दद्यादुत्तरबस्तिं च वातकृच्छ्रोपशान्तये ॥**

इदानीं वातकृच्छ्रचिकित्सितमाह—श्वदंष्ट्रेत्यादि । श्वदंष्ट्रा गोक्षुरकः । अश्मभित् पाषाणभेदः । कुम्भी स्थलकुम्भी यस्यास्त्वक् वक्रा भवति । गिरिकर्णिका अपराजिताभेदः । विदारिगन्धादिः प्रथमो गणः । संहृत्य एकीकृत्य । त्रैवृतं तैलं घृतं चेति तत्र त्रिभिर्घृतवसामज्जभिर्वृतं तैलं, तैलवसामज्जभिर्वृतं घृतं वा त्रैवृतम् । तैलं घृतं वेति विकल्पः सात्म्यापेक्षया वातादिबलापेक्षया वा ज्ञेयः ॥ १७ ॥ १८ ॥—

**श्वदंष्ट्रास्वरसे तैलं सगुडक्षीरनागरम् ॥ १९ ॥**
**पक्त्वा तत् पूर्ववद्योज्यं तत्रानिलरुजापहम् ॥**

अपरमपि वातकृच्छ्रचिकित्सितमाह—श्वदंष्ट्रेत्यादि । कल्कद्रव्यमध्ये पठितमपि क्षीरं द्रवत्वेन बोद्धव्यम् । योज्यं पानानुवासनोत्तरबस्तिषु । अनिलरुजापहं वातोत्थकृच्छ्रनाशनमित्यर्थः ॥ १९ ॥—

१ 'प्रकरणान्तरत्वात्' इति पा० । २ 'वक्रं' इति पा० । ३ 'श्वेतस्यन्दा' इति पा० ।



**तृणोत्पलादिकाकोलीन्यग्रोधादिगणैः कृ(शृ)तम् २०**
**पीतं घृतं पित्तकृच्छ्रं नाशयेत् क्षीरमेव वा ॥**

पित्तोत्थकृच्छ्रभेषजमाह—तृणोत्पलादीत्यादि । घृतं तृणादिसंस्कृतं ग्राह्यं; क्षीरमेव वेति विकल्पः सात्म्यापेक्षयाऽग्निबलापेक्षया च भवति ॥ २० ॥—

**दद्यादुत्तरबस्तिं च पित्तकृच्छ्रोपशान्तये ॥ २१ ॥**

अन्यदपि पित्तकृच्छ्रभेषजमाह—दद्यादित्यादि । दद्यादुत्तरबस्तिमिति 'तृणादिसंस्कृतस्नेहेन' इति शेषः । यद्यपि वक्ष्यमाणत्रिविधबस्तिग्रहणेनोत्तरबस्तिर्गृहीतः, तथाऽपि पित्तकृच्छ्रे उत्तरबस्तिरत्यन्तं हित इति ज्ञापनार्थं पृथगप्युत्तरबस्तिर्निर्दिष्टः ॥ २१ ॥

**एभिरेव कृतः स्नेहस्त्रिविधेष्वपि बस्तिषु ॥**
**हितं विरेचनं चेक्षुक्षीरद्राक्षारसैर्युतम् ॥ २२ ॥**

अपरमपि पित्तकृच्छ्रविधिमाह—एभिरित्यादि । एभिरेव अनन्तरोक्तैस्तृणोत्पलादिप्रभृतिभिरेव । त्रिविधेषु बस्तिषु निरूहानुवासनोत्तरबस्तिषु । अन्ये निरूहस्थाने शिरोबस्तिं मन्यन्ते; तन्न, समानतन्त्रविरोधात् । रसशब्द इक्षावपि संबन्धनीयः ॥ २२ ॥

**सुरसोषकमुस्तादौ वरुणादौ च यत् कृतम् ॥**
**तैलं तथा यवाग्वादि कफाघाते प्रशस्यते ॥ २३ ॥**

कफकृच्छ्रचिकित्सितमाह—सुरसोषकेत्यादि । सुरसादौ ऊषकादौ मुस्तादौ वरुणादौ च यत् कृतं तैलं, तथा यवाग्वादि, तत् कफाघाते प्रशस्यते । यवाग्वादिरित्यत्र आदिशब्दाद्विलेप्यादयः; ते च सुरसादिसंस्कृता एव बोद्धव्याः । कफाघाते कफकृच्छ्रे ॥ २३ ॥

**यथादोषोच्छ्रयं कुर्यादेतानेव च सर्वजे ॥**

सन्निपातोत्थमूत्रकृच्छ्रचिकित्सामाह—यथादोषोच्छ्रयमित्यादि ।—यथादोषाधिक्यम् । एतानेवेति अनन्तरोक्तवातादिकृच्छ्रहरयोगान् । सर्वजे सान्निपातिके कृच्छ्रे । एतेनैतदुक्तं भवति—सान्निपातिके कृच्छ्रे यस्य दोषस्याधिक्यं दृश्यते तद्दोषोक्तकृच्छ्रहरयोगोत्कटान् पूर्वोक्तवातादिकृच्छ्रयोगानेकीकृत्य कुर्यादिति ॥—

**फल्गुवृश्चीरदर्भाश्मसारचूर्णं च वारिणा ॥ २४ ॥**
**सुरेक्षुरसदर्भाम्बुपीतं कृच्छ्ररुजापहम् ॥**

अपरमपि सान्निपातिककृच्छ्रयोगमाह—फल्गुवृश्चीरेत्यादि । फल्गुवृश्चीरादीनां चूर्णं वारिणा पीतं यथादोषं सुरेक्षुरसादिमिश्रं पीतं कृच्छ्ररुजापहं, अर्थवशात् सान्निपातिककृच्छ्ररुजापहं भवतीति पिण्डार्थः । फल्गुः काकोदुम्बरिका । वृश्चीरः शुक्लपुनर्नवा । अश्मसारं शिलाजतु ॥ २४ ॥—

१ 'संस्कृतम्' इति पा० । २ 'कफकृच्छ्रे' इति पा० । ३ 'लोहं' इति पा० ।

**तथाऽभिघातजे कुर्यात् सद्योव्रणचिकित्सितम् २५**

अभिघातजकृच्छ्रस्यातिदेशेन चिकित्सितमाह—तथेत्यादि । अभिघातजे अभिघातजमूत्रकृच्छ्रे, सद्योव्रणचिकित्सितमित्यत्र लुप्तचकारनिर्देशात् वातकृच्छ्रशान्तिक्रिया कार्या ॥ २५ ॥

**मूत्रकृच्छ्रे शकृज्जाते कार्या वातहरी क्रिया ॥**
**स्वेदावगाहावभ्यङ्गवस्तिचूर्णक्रियास्तथा ॥ २६ ॥**

पुरीषकृच्छ्रेऽतिदेशेन चिकित्सितमाह—मूत्रेत्यादि । शकृज्जे तामेव वातहरीं क्रियां विवृणोति—स्वेदावगाहावित्यादि । स्वेदादयश्चात्र वातव्याध्युक्ता ग्राह्याः ॥ २६ ॥

**ये त्वन्ये तु तथा कृच्छ्रे तयोः प्रोक्तः क्रियाविधिः २७**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते कायचिकित्सातन्त्रे मूत्रकृच्छ्रप्रतिषेधो नाम ( एकविंशतितमोऽध्यायः, आदितः ) एकोनषष्टितमोऽध्यायः ॥ ५९ ॥**

अश्मरीशर्करोत्पन्नयोः कृच्छ्रयोश्चिकित्सामाह—ये इत्यादि । ये द्वे अन्ये कृच्छ्रे अश्मरीशर्करोत्थे तयोः क्रियाविधिः प्रोक्तः अश्मरीशर्कराचिकित्सिते । अपरे 'द्वौ तथाऽन्यौ तु यौ कृच्छ्रौ' इति पठन्ति, तत्रापि स एवार्थः ॥ २७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः ।

**अथातोऽमानुषोपसर्गप्रतिषेधमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

कायचिकित्सापारिशेष्यात् भूतविद्यामारब्धुकाम आदौ मूत्रकृच्छ्रानन्तरं मूत्रकृच्छ्रे प्रतिक्षणमल्पाल्पं मेहतोऽसम्यगाचमनेनाशौचादमानुषोपसर्गसंभावनायाममानुषजन्यव्याधिप्रतिषेधारम्भो युक्त इत्यत आह—अथात इत्यादि । अथेति कायचिकित्सानन्तरम् । अत इति हेतौ । हेतुश्चापातनिकायामेव प्रकटीकृतः । अमानुषा देवादिग्रहाः, तेषामुपसर्ग उपद्रवः, तस्य प्रतिषेधः चिकित्सितं, तद्विविधप्रकारमाभिमुख्येन शिष्याणां व्याख्यास्यामः । अन्ये तु 'अमानुषोपसर्ग' इत्यत्र 'अमानुषाबाध' इति पठन्ति; अमानुषाणि भूतानि, तेषामाबाधा पीडेति व्याख्यानयन्ति ॥ १ ॥ २ ॥

**निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः ॥**
**इति यत् प्रागभिहितं विस्तरस्तस्य वक्ष्यते ॥ ३ ॥**

निशाचरेभ्य इत्यादि । अत्र निशाचरा देवादिग्रहा उच्यन्ते, निशाविहारित्वादसृगादिभोजनत्वाच; यद्व्रणितोपासनीये 'रक्षांसि' इत्युक्तं तद्रक्षसां विशेषेण तथास्वरूपख्यापनाय । प्रागिति द्विव्रणीये । अन्ये तु निशाचरशब्देन राक्षसानेवाहुः ॥ ३ ॥

**गुह्यानागतविज्ञानमनवस्थाऽसहिष्णुता ॥**
**क्रिया वाऽमानुषी यस्मिन् सग्रहः परिकीर्त्यते ॥४॥**

इदानीं सामान्यग्रहलक्षणमाह—गुह्येत्यादि । गुह्यं गुप्तम्, अनागतं भावि, तयोर्विज्ञानम् । अनवस्था अनवस्थितिः । असहिष्णुता क्रोधनत्वम् । अमानुषी क्रिया वरदानादिका, लङ्घनप्लवनादिकेत्यन्ये, अमानुषी या मानुषैः कर्तुं न शक्यते । यस्मिन् आतुरे । सग्रहो ग्रहसहितः ॥ ४ ॥

**अशुचिं भिन्नमर्यादं क्षतं वा यदि वाऽक्षतम् ॥**
**हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापि वा ॥ ५ ॥**

यादृशं भूतानि हिंसन्ति, यादृशं वा जिघृक्षन्ति, तमाह—अशुचिमित्यादि । भिन्नमर्यादं त्यक्तोचितकमम्, अभक्ष्यभक्षणे अगम्यागमने तथा हिंसादौ च प्रवृत्तत्वात्; क्षतं व्रणितम्, अक्षतं व्रणरहितमपि शौचादिहीनं हिंस्युः । हिंसाविहारो वधक्रीडा, तदर्थं; सत्कारार्थं पूजार्थं; अन्ये विहारशब्देन रतिं मन्यन्ते, तत्र हिंसायां या रतिस्तदर्थम् ॥ ५ ॥

**असङ्ख्येया ग्रहगणा ग्रहाधिपतयस्तु ये ॥**
**व्यज्यन्ते विविधाकारा भिद्यन्ते ते तथाऽष्टधा ॥६॥**

ग्रहाणामसंख्येयत्वं ग्रहाधिपानां चाष्टत्वं दर्शयन्नाह—असंख्येया इत्यादि । ग्रहाधिपतयो देवदैत्यादयः । तुशब्दः पुनरर्थे । व्यज्यन्ते पृथक् प्रतीयन्ते । विविधाकारा विविधलक्षणाः । ते पुनरष्टधा भिद्यन्ते । अन्ये तु 'ग्रहाधिपतिभिस्तु ते । व्यञ्जनैः' इति पठित्वा व्याख्यानयन्ति—ते ग्रहगणा यद्यप्यसंख्येयास्तथाऽपि ग्रहाधिपतिभिः स्वस्वामिभिः कृत्वा अष्टधा भिद्यन्ते अष्टभेदभिन्ना भवन्तीत्यर्थः; किंविशिष्टास्ते ? व्यञ्जनैर्विविधाकारा विलक्षणाः ॥ ६ ॥

**देवास्तथा शत्रुगणाश्च तेषां**
**गन्धर्वयक्षाः पितरो भुजङ्गाः ॥**
**रक्षांसि या चापि पिशाचजाति-**
**रेषोऽष्टको देवगणो ग्रहाख्यः ॥ ७ ॥**

तेषामष्टविधत्वमाह—देवतास्तथेत्यादि । दीव्यन्तीति देवाः । तेषां देवानां शत्रुगणा दैत्यसमूहाः । गन्धर्वा देवगायना हाहाहूहूप्रभृतयः । यक्षाः कुबेरादयः । पितरः अग्निष्वात्तादयः । भुजङ्गा वासुकिप्रभृतयः । रक्षांसि मनुष्यभक्षणकारीणि हेतिप्रहेतिकुलजातानि । पिशाचाः पिशिताशनाः, तेषां जातिः ॥ ७ ॥

**संतुष्टः शुचिरपि चेष्टगन्धमाल्यो**
**निस्तन्द्री ह्यवितथसंस्कृतप्रभाषी ॥**
**तेजस्वी स्थिरनयनो वरप्रदाता**
**ब्रह्मण्यो भवति नरः स देवजुष्टः ॥ ८ ॥**

---

१ 'विमदादिकाः' इति पा० ।

देवादिग्रहगृहीतानां प्रत्येकं लक्षणमाह—सन्तुष्ट इत्यादि । शुचिः शौचयुक्तः । इष्टानि अभिलषितानि गन्धमाल्यानि यस्य सः; गन्धाः कुङ्कुमचन्दनादिकाः, माल्यानि पुष्पाणि । 'शुचि-रपि चेष्टमाल्यगन्ध' इत्यत्रान्ये 'शुचिरहतेष्टगन्धमाल्य' इति पठन्ति, अनुपहतगन्धमाल्य इति व्याख्यानयन्ति । अवित-थसंस्कृतप्रभाषी अवितथप्रभाषी संस्कृतप्रभाषी च, अवितथं यथार्थम् । स्थिरनयनो निमेषरहितः ॥ ८ ॥

संस्वेदी द्विजगुरुदेवदोषवक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टिः ॥
सन्तुष्टो भवति न चान्नपानजातै-
र्दुष्टात्मा भवति च देवशत्रुजुष्टः ॥ ९ ॥

संस्वेदीत्यादि । संस्वेदी प्रस्वेदयुक्तः । जिह्माक्षो वक्रलोचनः । विमार्गदृष्टिः विमार्गदर्शनः, नास्तिक इत्यर्थः । अन्नं भक्तादि, पानं जलादि, तेषां जातैः समूहैः । दुष्टात्मा दुष्टस्वभावः । देवशत्रुजुष्टो दैत्यग्रहजुष्ट इत्यर्थः ॥ ९ ॥

हृष्टात्मा पुलिनवनान्तरोपसेवी
स्वाचारः प्रियपरिगीतगन्धमाल्यः ॥
नृत्यन् वै प्रहसति चारु चाल्पशब्दं
गन्धर्वग्रहपरिपीडितो मनुष्यः ॥ १० ॥

हृष्टात्मेत्यादि । हृष्टात्मा हर्षयुक्तः । पुलिनवनान्तरोपसेवी पुलिनवनमध्ये क्रीडनशीलः; पुलिनं जलमध्योत्थितभूतप्रदेशः । स्वाचारः शोभनाचारः । प्रियाणि परिगीतगन्धमाल्यानि यस्य स तथा । चारु यथा भवति एवं नृत्यम् अल्पशब्दं यथा तथा प्रहसति ईषद्धसतीत्यर्थः । एवंभूतो मनुष्यो गन्धर्वग्रहजुष्टो ज्ञेयः ॥ १० ॥

ताम्राक्षः प्रियतनुरक्तवस्त्रधारी
गम्भीरो द्रुतमतिरल्पवाक् सहिष्णुः ॥
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीडितो मनुष्यः ॥ ११ ॥

ताम्राक्ष इत्यादि । ताम्राक्षो रक्तनेत्रः । प्रियतनुरक्तवस्त्रधारी कमनीयसूक्ष्मरक्तवस्त्रपरिधानशीलः । गम्भीरो गम्भीरशीलः, प्रचुरसत्त्व इत्यर्थः । द्रुतमतिः उद्भ्रान्तमनाः, अल्पवाक् अल्प-वक्ता, सहिष्णुः क्षमायुक्तः ॥ ११ ॥

प्रेतेभ्यो विसृजति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः ॥
मांसेप्सुस्तिलगुडपायसाभिकाम-
स्तद्भक्तो भवति पितृग्रहाभिभूतः ॥ १२ ॥

प्रेतेभ्य इत्यादि । प्रेतेभ्यो मृतेभ्यः, विसृजति ददाति, संस्तरेषु दर्भसंस्तरेषु, पिण्डान् अन्नमयान्, शान्तात्मा शान्तस्वभावः । जलमपि चेति न परं दर्भसंस्तरेषु पिण्डान् ददाति अपि तु अपसव्यहस्तो दक्षिणहस्तो जलमपि ददाति चेत्यर्थः । पायसः क्षीरसिद्धाः तण्डुलाः । अभिकामः अभिला-षुकः । तद्भक्तः तिलादिभोजनः ॥ १२ ॥

भूमौ यः प्रसरति सर्पवत् कदाचित्
सृक्किण्यौ विलिखति जिह्वया तथैव ॥
निद्रालुर्गुडमधुदुग्धपायसेप्सु-
र्विज्ञेयो भवति भुजङ्गमेन जुष्टः ॥ १३ ॥

य इत्यादि । यो भूमौ सर्पवत् प्रसरति उरसा भ्रमति स भुजङ्गमेन जुष्ट इति संबन्धः । सृक्किण्यौ ओष्ठप्रान्तौ । विलि-खति विलेढि, धातूनामनेकार्थत्वात् । तथैवेति सर्पवत् । अन्ये तु 'तथैव' इत्यत्र 'प्रसक्तं' इति पठन्ति, तत्र प्रसक्तं सन्ततं विलेढीत्यर्थः ॥ १३ ॥

मांसासृग्विविधसुराविकारलिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः ॥
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विड् भवति च रक्षसा गृहीतः ॥ १४ ॥

मांसासृगित्यादि । विविधाः सुराविकारा माध्वीकादयः । लिप्सुः आस्वादयितुमिच्छुः । शौचद्विट् शौचं द्वेष्टि अशुचि-रित्यर्थः ॥ १४ ॥

उद्ध्वस्तः कृशपरुषश्चिरप्रलापी
दुर्गन्धो भृशमशुचिस्तथाऽतिलोलः ॥
बह्वाशी विजनहिमाम्बुरात्रिसेवी
व्याविग्नो भ्रमति रुदन् पिशाचजुष्टः ॥ १५ ॥

उद्ध्वस्त इत्यादि । उद्ध्वस्तो विकृतदर्शनः । कृशो दुर्बलः । परुषः कर्कशः । चिरप्रलापी चिरकालं बहुक्षणं व्याप्य प्रलापी । अतिलोलः अतिचपलः । अन्ये तु 'अतिलोलुः' इति पठित्वा अशनलोलुप इति व्याख्यानयन्ति, यथा—भीमो भीम-सेन इति । बह्वाशी प्रचुरभोक्ता । विजनं निर्जनस्थानं, हिमा-म्बुसेवी शीताम्बुसेवी, रात्रिसेवी रात्रिविहारीत्यर्थः । व्याविग्न उद्विग्नः । अन्ये त्वत्र 'व्याचेष्टं' इति पठन्ति, विरुद्धचेष्टं यथा भवति तथा भ्रमतीत्येवं व्याख्यानयन्ति ॥ १५ ॥

स्थूलाक्षस्त्वरितगतिः स्वफेनलेही
निद्रालुः पतति च कम्पते च योऽति ॥
यश्चाद्रिद्विरदनगादिविच्युतः सन्
संसृष्टो न भवति वार्धकेन जुष्टः ॥ १६ ॥

असाध्यलक्षणमाह—स्थूलाक्ष इत्यादि । स्वफेनलेहीति एते-नास्य मुखे फेनागमनमप्युक्तम् । यो ग्रहेण संसृष्टः स्थूलाक्ष इत्यादिलक्षणयुक्तः स्यात् स न भवति विनश्यतीत्यर्थः । यश्च अद्र्यादेर्विच्युतः पतितः सन् ग्रहेण संसृज्यते सोऽपि

१ 'द्रुतगतिः' इति पा० । २ 'द्रुतगतिः उत्तालगमनः' इति पा० । ३ 'तद्भक्तः' इति पा० ।

१ 'विलिहति' इति पा० । २ 'व्याचेष्टं' इति पा० ।

विनश्यति । अद्रिः पर्वतः, द्विरदो हस्ती, नगो वृक्षः, आदिशब्दात् श्वभ्रनदीतटादयः । वार्धकेन जुष्टः वृद्धभावेन गृहीत इत्यर्थः; अन्ये 'वर्धकेन' इति पठन्ति, वर्धकेन छेदकेन हिंसार्थिना केनचिद्ग्रहेण जुष्टो गृहीत इति व्याख्यानयन्ति ॥ १६ ॥

**देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि ॥**
**गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ ॥१७॥**
**कृष्णक्षये च पितरः पञ्चम्यामपि चोरगाः ॥**
**रक्षांसि निशि पैशाचाश्चतुर्दश्यां विशन्ति च ॥१८॥**

इदानीं देवादिग्रहाणां ग्रहणकालमाह—देवग्रहा इत्यादि । असुरा असुरग्रहाः । सन्ध्ययोरपीत्यत्र अपिशब्दः पादपूरणे । प्रायशोऽष्टम्यामिति प्रायःशब्दात् सन्ध्ययोरपि गन्धर्वा विशन्तीति लभ्यते । पितरः पितृग्रहाः । कृष्णक्षये कृष्णपक्षक्षये, अमावस्यायामित्यर्थः । पञ्चम्यामपीति अपिशब्दात् कृष्णपक्षक्षयेऽपि । उरगा नागग्रहाः ॥ १७ ॥ १८ ॥

**दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा ॥**
**स्वमणिं भास्करस्योस्रा यथा देहं च देहधृक् ॥**
**विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणम् ॥१९॥**

ननु, देहं विशन्तो ग्रहाः कुतो न लक्ष्यन्त इत्याह—दर्पणादीनित्यादि । दर्पण आदर्शः, आदिशब्दात् जलस्नेहखड्गादिग्रहणम् । स्वमणिं सूर्यकान्तं, भास्करस्योस्राः सूर्यरश्मयः । देहं गर्भशरीरं, देहधृक् जीवः; अन्ये देहधृक्शब्देन मनः प्रतिपादयन्ति । ननु, भूतैः शरीरेऽनुप्रवेशः क्रियते न तु शरीरिणि, तत् कथं शरीरिणमिति ? उच्यते—अत्र शरीरिशब्देन शरीरमभिप्रेतं, स्थानिनि स्थानोपचारात् । यथा छायाशीतोष्णादयो दर्पणप्राणिप्रभृतीन् विशन्तो न दृश्यन्ते तद्वद्ग्रहा अपीत्यर्थः । अत्र छायादिदृष्टान्तचतुष्टयेन आर्थैर्हेतुभिः शरीरं क्षोभयित्वैवानुप्रविश्य लिङ्गैरात्मानं दर्शयन्तीत्यर्थः । यथा देहं च देहधृगित्यनेन स्वमूर्तिमन्तर्निधाय विशन्तीति प्रदर्शितम् ॥ १९ ॥

**तपांसि तीव्राणि तथैव दानं**
**व्रतानि धर्मो नियमाश्च सत्यम् ॥**
**गुणास्तथाऽष्टावपि तेषु नित्या**
**व्यस्ताः समस्ताश्च यथाप्रभावम् ॥ २० ॥**

इदानीं ग्रहाणां तीव्रतपोनियमादियुक्तत्वं प्रभाववत्त्वं च दर्शयितुमाह—तपांसि तीव्राणीत्यादि । तपः तपनलक्षणम् उपवासादि । व्रतानि शास्त्रोदितविधिना भोजनादिनियमनादि । धर्मः कायवाङ्मनसां सुचरितम् । गुणाः तथाऽष्टाविति अणिमा, लघिमा, महिमा, गरिमा, प्राप्तिः, प्राकाम्यं, ईशित्वं, वशित्वं, इत्यष्टौ; अन्ये तु—आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया । दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम्"—इत्यष्टविधमैश्वर्यमाहुः । तेषु ग्रहेष्वेते गुणा नित्या न कादाचित्काः । व्यस्ता द्वित्रिचतुराः । समस्ताः सर्वे । यो यस्य प्रभाव इति यथाप्रभावम् । तत्र व्यस्ता गुणा असुरादिग्रहाणां, समस्ता देवग्रहाणाम् ॥ २० ॥

**न ते मनुष्यैः सह संविशन्ति**
**न वा मनुष्यान् क्वचिदाविशन्ति ॥**
**ये त्वाविशन्तीति वदन्ति मोहा-**
**त्ते भूतविद्याविषयादपोह्याः ॥ २१ ॥**

तपोनियमादियुक्ता हि देवादिग्रहाः कथंचिदप्यशुचिं देहं नाविशन्तीत्याह—न ते मनुष्यैरित्यादि । ते देवयोनयो मनुष्यैः सह न संविशन्ति एकत्र न भवन्तीत्यर्थः । न वा मनुष्यान् मानुषदेहान् क्वचिदाविशन्ति अनुप्रविशन्तीत्यर्थः । ये पुनर्वैद्या आविशन्तीति मोहादज्ञानात् प्रवदन्ति ते वैद्या भूतविद्याविषयादपोह्या अपसारणीयास्त्याज्या इत्यर्थः । 'अपोह्या' इत्यत्र 'अपेता' इत्यन्ये पठन्ति, तत्र ग्रहज्ञानाद्बाह्या इत्यर्थः ॥ २१ ॥

**तेषां ग्रहाणां परिचारका ये**
**कोटीसहस्रायुतपद्मसंख्याः ॥**
**असृग्वसामांसभुजः सुभीमा**
**निशाविहाराश्च तमाविशन्ति ॥ २२ ॥**

के तर्हि गृह्णन्तीत्याह—तेषामित्यादि । तेषां देवादीनां, परिचारकाः प्रेष्याः कर्मकरा इत्यर्थः । कोटी शतलक्षप्रमाणं, अयुतं दशसहस्रं, एतेन कोट्याः शतलक्षपरिमितायाः यत् सहस्रं तादृशैर्दशभिः सहस्रैरत्रायुतं बोद्धव्यं, तेषां पद्मं चतुर्दशप्रमाणं तदेव संख्या येषां ते तथा । प्राक् 'असंख्येया ग्रहगणा' इत्यभिधाय अत्र कोट्यादिसंख्याया अभिधानं ग्रहगणानामन्योन्यसादृश्यख्यापनार्थम् । सुभीमा अत्यर्थं भयङ्कराः । निशाविहारा रात्रौ भ्रमणशीलाः ॥ २२ ॥

**निशाचराणां तेषां हि ये देवगणमाश्रिताः ॥**
**ते तु तत्सत्त्वसंसर्गाद्विज्ञेयास्तु तदञ्जनाः ॥ २३ ॥**

देवाद्यनुचराणां स्वप्रभूणामिवानुकारो भवतीत्याह—निशाचराणामित्यादि । तेषां निशाचराणामनुचराणां मध्ये ये अनुचरा यं देवगणमाश्रितास्ते तदञ्जनाः तल्लक्षणा विज्ञेया इति संबन्धः । कुत इत्याह—तत्सत्त्वसंसर्गात् देवादिसत्त्वसंयोगादित्यर्थः ॥ २३ ॥

**देवग्रहा इति पुनः प्रोच्यन्तेऽशुचयश्च ये ॥**
**देववच्च नमस्यन्ते प्रत्यर्च्यन्ते च देववत् ॥ २४ ॥**

देवग्रहा इत्यादि । ये पुनरनुचराः शुचयस्ते देवग्रहा इति प्रोच्यन्ते । कुतः ? यतः शुचयः, शुचित्वं पुनस्तत्संसर्गादेव । देववच्च नमस्यन्ते देववन्नमस्क्रियन्ते । प्रत्यर्च्यन्ते देववदित्यर्थः । अन्ये तु व्याख्यानयन्ति—तदञ्जनास्तद्देवाकारास्तथाविधा एव भवन्तीत्याह—अशुचयस्तु ते; ते पुनरशुचयो

१ 'भ स्वतः क्रिया' इति पा० ।

१ 'शुचयश्च ये' इति पा० ।

मोहान्धत्वादशुद्धाः, अत एव गृह्णन्ति । देववन्नमस्कारः पूजा च तदङ्गत्वादेव ॥ २४ ॥

**स्वामिशीलक्रियाचाराः क्रम एष सुरादिषु ॥**
**निर्ऋतेर्या दुहितरस्तासां स प्रसवः स्मृतः ॥ २५ ॥**

स्वामिशीलक्रियाचारा इत्यादि । शीलं स्वभावः । क्रमश्चायं पूर्वोक्तदेवग्रहशुचित्वादिकः । सुरादिषु, देवग्रहेषु, यतस्तेऽपि स्वामिशीलक्रियाचाराः । देवग्रहा इत्यादिकं च श्लोकं **कार्तिककुण्डो** न पठति । तदङ्गत्वेनैवास्यार्थस्य लब्धत्वात् । ननु, यदि 'तत्सत्त्वसंसर्गाच्छुचयः' तत् कथं मांसादिभुज इत्याह— निर्ऋतेर्या दुहितर इत्यादि । निर्ऋती रक्षसां पितामहः, तस्य या दुहितरः पुत्र्यस्तासां स देवाद्यनुचरगणः प्रसवः, अतः प्रसूतिभावं न त्यजति ॥ २५ ॥

**सत्यत्वादपवृत्तेषु वृत्तिस्तेषां गणैः कृता ॥**

तेषां वृत्तिविषयमाह—सत्यत्वादित्यादि । सत्यत्वात् शास्त्रोक्तानुष्ठानात् । अपवृत्तेषु विपरीतानुष्ठानपरेषु । गणैः ग्रहगणैः । तेषामनुचराणां वृत्तिः कृता । केचित् 'गणैः' इत्यत्र 'ग्रहैः' इति पठित्वा ग्रहैः कृता वृत्तिरिति च व्याख्यानयन्ति ॥—

**हिंसाविहारा ये केचिद्देवभावमुपाश्रिताः ॥ २६ ॥**
**भूतानीति कृता संज्ञा तेषां संज्ञाप्रवक्तृभिः ॥**

अतो ग्रहाणां भूतसंज्ञत्वं दर्शयन्नाह—हिंसाविहारा इत्यादि । हिंसाविहारा वधक्रीडनाः । देवभावं देवरूपम् । तेषां हिंसाविहाराणां भूतानीति संज्ञा कृता ॥ २६ ॥—

**ग्रहसंज्ञानि भूतानि यस्माद्वेत्त्यनया भिषक् ॥ २७ ॥**
**विद्यया भूतविद्यात्वमत एव निरुच्यते ॥**

भूतविद्याया निरुक्तिमाह—ग्रहसंज्ञानीत्यादि ॥ २७ ॥—

**तेषां शान्त्यर्थमन्विच्छन् वैद्यस्तु सुसमाहितः ॥२८॥**
**जपैः सनियमैर्होमैरारभेत चिकित्सितुम् ॥**

इदानीं चिकित्सितमाह—तेषामित्यादि । तेषां देवाद्यनुचराणाम् । सुसमाहितः सुष्ठु सावधानः, आत्मानं परिरक्षन्नित्यर्थः । जपैरित्यादि । जपैः ओङ्कारपूर्वकगायत्र्याद्यावर्तनैरयुतलक्षकोटिप्रयुतोपलक्षितैः । एतेन दैवव्यपाश्रयं चिकित्सितमुक्तम् ॥ २८ ॥—

**रक्तानि गन्धमाल्यानि बीजानि मधुसर्पिषी ॥२९॥**
**भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरुच्यते ॥**

सर्वग्रहाणां सामान्यचिकित्सामाह—रक्तानीत्यादि । रक्तानि गन्धमाल्यानि कुङ्कुमरक्तकरवीरादीनि । बीजानि सर्षपयवप्रभृतीनि । भक्ष्याश्च सर्वे लड्डुकफेनकगुडादयः ॥ २९ ॥—

१ 'स्वामिशीलक्रियाचारक्रमा एव सुरादिषु । निर्ऋतेर्या दुहितरस्तासां सप्रसवाः स्मृताः' इति हाराणचन्द्रसंमतः पाठः । २ 'दिव्यं भावमुपाश्रिताः' इति पा० । ३ 'बीजानि यन्त्रलिखितानि बीजाक्षराणि' इति पा० ।

**वस्त्राणि गन्धमाल्यानि मांसानि रुधिराणि च ३०**
**यानि येषां यथेष्टानि तानि तेभ्यः प्रदापयेत् ॥**

सर्वेषां देवादिग्रहाणां विशेषचिकित्सितमाह—वस्त्राणीत्यादि । यानि वस्त्रादीनि येषां देवाद्यनुचराणां यथा यादृशानि इष्टानि तानि वस्त्रादीनि तेभ्यः प्रदापयेदिति संबन्धः । इष्टत्वं च वस्त्रादिवस्तूनां विविधानां 'सन्तुष्टः शुचिरपि चेष्टगन्धमाल्यः' इत्यादिग्रहलक्षणतोऽपि ज्ञातव्यम् । 'वस्त्राणि मद्यमांसानि क्षीराणि' इति क्वचित् पाठः ॥ ३० ॥—

**हिंसन्ति मनुजान् येषु प्रायशो दिवसेषु तु ॥ ३१ ॥**
**दिनेषु तेषु देयानि तद्भूतविनिवृत्तये ॥**

वस्त्रादिप्रदानकालमाह—हिंसन्ति मनुजानित्यादि । देयानि वस्त्रादीनि ॥ ३१ ॥—

**देवग्रहे देवगृहे हुत्वाऽग्निं प्र(दा)पयेद्बलिम् ॥३२॥**
**कुशस्वस्तिकपूपाज्यच्छत्रपायससंभृतम् ॥**

बलिप्रदानाय व्याख्यानमाह—देवेत्यादि । देवगृहे देवायतने, कुशा दर्भाः, स्वस्तिको यवादिचूर्णैः कृतोऽधोभागे विस्तीर्ण ऊर्ध्वभागे तीक्ष्णो मध्ये वलित्रयमुद्राङ्कितो भक्ष्यविशेषः, पूपः पूपलिका, आज्यं घृतम्; एतैः संभृतं बलिं दापयेदित्यर्थः ॥ ३२ ॥—

**असुराय यथाकालं विदध्याच्चत्वरादिषु ॥ ३३ ॥**

असुराय यथाकालमित्यादि । असुराय असुरग्रहाय । यथाकालमिति सन्ध्याकाले । विदध्यात् दद्यात्, बलिमित्यर्थः । चत्वरादिषु चतुष्पथ्यादिषु ॥ ३३ ॥

**गन्धर्वस्य गवां मध्ये मद्यमांसाम्बुजाङ्गलम् ॥**

गन्धर्वस्येत्यादि । अम्बु पानीयं, जाङ्गलं मांसं, तच मांसोपादानाल्लब्धम्, अतः पृथगुपादानं तस्य विशेषपरिग्रहार्थम्; अन्ये 'मद्यमांसाम्बुजाकुलं' इति पठन्ति, मद्यमांसाम्बुजाकुलं मद्याद्याकुलं संभृतं बलिमित्यर्थः । पुष्पप्रियत्वात् गन्धर्वाणामम्बुजं कमलोत्पलादि ॥—

**हृद्ये वेश्मनि यक्षस्य कुल्माषासृक्सुरादिभिः ॥३४॥**
**अतिमुक्तककुन्दाब्जैः पुष्पैश्च वितरेद्बलिम् ॥**

हृद्ये इत्यादि । कुल्माषासृक्सुरादिभिः कुल्माषा यवपिष्टकृताः शृङ्गाटकादयः, असृक् रक्तम्, आदिशब्दात् भक्ष्यादयः । अतिमुक्तककुन्दाब्जैरिति अतिमुक्तको माधवीलता 'अवेतक' इति लोके, अम्बुजानि उत्पलादीनि । कुल्माषादिभिरतिमुक्तकादिपुष्पैश्च मनोज्ञे गृहे यक्षस्य बलिं दद्यादित्यर्थः ॥ ३४ ॥—

**नद्यां पितृग्रहायेष्टं कुशास्तरणभूषितम् ॥ ३५ ॥**

नद्यामित्यादि । इष्टं बलिं तिलगुडपायसादिकम् ॥ ३५ ॥

**तत्रैवोपहरेच्चापि नागाय विविधं बलिम् ॥**

तत्रैवेत्यादि । तत्रैव नद्याम् । विविधं गुडमध्वासवपायसैर्नानाप्रकारम् ॥—

१ 'वस्त्राणि मद्यमांसानि क्षीराणि' इति पा० । २ 'मद्यं मांसं च जाङ्गलम्' इति पा० ।

**चतुष्पथे राक्षसस्य भीमेषु गहनेषु वा ॥ ३६ ॥**

चतुष्पथ इत्यादि । अत्रापि 'वितरेद्बलिं' इति संबध्यते । विविधं मांसासृक्सुराविकारैरनेकप्रकारम् । किं चतुष्पथे एव बलिं दद्यादित्याह—भीमेषु गहनेषु वा; 'स्थानेषु' इत्यध्याहार्यम् ॥ ३६ ॥

**शून्यागारे पिशाचस्य तीव्रं बलिमुपाहरेत् ॥**

शून्यागार इत्यादि । तीव्रं बलिं आममांसपशूपहारमद्योत्कटम् ॥—

**पूर्वैमाचरितैर्मन्त्रैर्भूतविद्यानिदर्शितैः ॥ ३७ ॥**
**न शक्या बलिभिर्जेतुं योगैस्तान् समुपाचरेत् ॥**

पूर्वोक्तविधानेन जेतुमशक्यानां विशेषविधानमाह—पूर्वेमित्यादि ॥ ३७ ॥—

**अजर्क्षचर्मरोमाणि शल्यकोलूकयोस्तथा ॥ ३८ ॥**
**हिङ्गु मूत्रं च बस्तस्य धूममस्य प्रयोजयेत् ॥**
**एतेन शाम्यति क्षिप्रं बलवानपि यो ग्रहः ॥ ३९ ॥**

प्रायोगैरित्युक्तमतस्तानेव योगानाह—अजेत्यादि । अजः छगलः ॥ ३८ ॥ ३९ ॥

**गजाह्वपिप्पलीमूलव्योषामलकसर्षपान् ॥**
**गोधानकुलमार्जारऋष्यपित्तप्रपेषितान् ॥ ४० ॥**
**नस्याभ्यञ्जनसेकेषु विदध्याद्योगतत्त्ववित् ॥**

गजाह्वेत्यादि । गजाह्वा गजपिप्पली । मार्जारो बिडालः, ऋष्यो नीलाण्डो मृगभेदः, पित्तशब्दो गोधादिभिः प्रत्येकं संबध्यते । तेन गजाह्वादीन् गोधादिपित्तपेषितान्नस्यादिषु दद्यादिति संबन्धः । अन्ये ऋष्यस्थाने मत्स्येति पठन्ति; तन्न, आद्यपुस्तके ऋष्यस्य पाठो दृश्यते न मत्स्यस्य । नस्यादिषु पित्तपिष्टेन कथं सेकः कर्तुं पार्यत इत्यतः किञ्चित्तोयमालोडनार्थं देयम् । अत एव योगतत्त्वविदित्युक्तम् । अन्ये तु 'नस्याभ्यञ्जनयोगेषु' इति पठन्ति, अभ्यञ्जनमत्र अञ्जनमभिप्रेतं नस्यसाहचर्यादिति च व्याख्यानयन्ति । मार्जारऋष्य(क्ष)पित्तप्रपेषितानित्यत्रासंहितानिर्देशश्छन्दोभङ्गभीतेः ॥ ४० ॥—

**खराश्वाश्वतरोलूककरभश्वशृगालजम् ॥ ४१ ॥**
**पुरीषं गृध्रकाकानां वराहस्य च पेषयेत् ॥**
**बस्तमूत्रेण तत्सिद्धं तैलं स्यात् पूर्ववद्धितम् ॥ ४२ ॥**

खराश्वेत्यादि । खराश्वादीनां पुरीषं बस्तमूत्रेण पेषयेत्, ततस्तेन कल्केन छागमूत्रेण तत्सिद्धं तैलं पूर्ववद्धितं स्यादिति संबन्धः । खरो गर्दभः, अश्वतरो वेसरः, करभ उष्ट्रः, श्वा कुक्कुरो मांसवर्गे प्रोक्तलक्षणः । वराहस्य चेति चकारेण पुरीषं समुच्चीयते । तत् तैलं पूर्ववन्नस्याभ्यञ्जनसेकेषु विदध्यादित्यर्थः ॥ ४१ ॥ ४२ ॥

**शिरीषबीजं लशुनं शुण्ठीं सिद्धार्थकं वचाम् ॥**

**मञ्जिष्ठां रजनीं कृष्णां बस्तमूत्रेण पेषयेत् ॥ ४३ ॥**
**वर्त्यश्छायाविशुष्कास्ताः सपित्ता नयनाञ्जनम् ॥**

शिरीषबीजमित्यादि । सिद्धार्थकः श्वेतसर्षपः । कृष्णा पिप्पली । सपित्ता गोपित्तान्विता, प्रधानकल्पनया; अन्ये श्रुतत्वाद्गोधाद्यन्यतमपित्तं गृह्णन्ति । शिरीषबीजादीनि बस्तमूत्रेण पेषयेत्, ततो वर्त्यः सगोपित्ता छायाशुष्काः, ताभिर्नयनाञ्जनं कार्यमित्यर्थः ॥ ४३ ॥—

**नक्तमालफलं व्योषं मूलं श्योनाकबिल्वयोः ॥ ४४ ॥**
**हरिद्रे च कृता वर्त्यः पूर्ववन्नयनाञ्जनम् ॥**

नक्तमालफलमित्यादि । कृता वर्त्यः पूर्ववदिति बस्तमूत्रनिष्पिष्टाः छायाविशुष्काश्च सपित्ताः कार्याः ॥ ४४ ॥—

**सैन्धवं कटुकां हिङ्गुं वयःस्थां च वचामपि ॥**
**बस्तमूत्रेण संपिष्टं मत्स्यपित्तेन पूर्ववत् ॥ ४५ ॥**
**ये ये ग्रहा न सिध्यन्ति सर्वेषां नयनाञ्जनम् ॥**

ये ये ग्रहा इत्यादि । वयःस्था गुडूची । बस्तमूत्रेणेत्यत्र वाशब्दो लुप्तो द्रष्टव्यः; तेन बस्तमूत्रेण वा पिष्टं मत्स्यपित्तेन वेति लभ्यते । पूर्ववत् छायाशुष्कमञ्जनं कार्यमित्यर्थः ॥ ४५ ॥—

**पुराणसर्पिर्लशुनं हिङ्गु सिद्धार्थकं वचा ॥ ४६ ॥**
**गोलोमी चाजलोमी च भूतकेशी जटा तथा ॥**
**कुक्कुटा सर्पगन्धा च तथा काणविकाणिके ॥ ४७ ॥**
**वज्रप्रोक्ता वयःस्था च शृङ्गी मोहनवल्लिका ॥**
**अर्कमूलं त्रिकटुकं लता स्रोतोजमञ्जनम् ॥ ४८ ॥**
**नैपाली हरितालं च रक्षोघ्ना ये च कीर्तिताः ॥**
**सिंहव्याघ्रर्क्षमार्जारद्वीपिवाजिगवां तथा ॥ ४९ ॥**
**श्वाविच्छल्यकगोधानामुष्ट्रस्य नकुलस्य च ॥**
**विट्त्वग्रोमवसामूत्ररक्तपित्तनखादयः ॥ ५० ॥**
**अस्मिन् वर्गे भिषक् कुर्यात्तैलानि च घृतानि च ॥**
**पानाभ्यञ्जननस्येषु तानि योज्यानि जानता ॥ ५१ ॥**
**अवपीडेऽञ्जने चैव विदध्याद्गुटिकीकृतम् ॥**
**विदधीत परीषेके कथितं, चूर्णितं तथा ॥ ५२ ॥**
**उद्धूलने, श्लक्ष्णपिष्टं प्रदेहे चावचारयेत् ॥**
**एष सर्वविकारांस्तु मानसानपराजितः ॥ ५३ ॥**
**हन्यादल्पेन कालेन स्नेहादिरपि च क्रमः ॥**

पुराणसर्पिरित्यादि । लशति भिनत्ति रोगानिति लशुनम् । सिद्धार्थकः सिद्धप्रयोगारम्भकत्वात् श्वेतसर्षपः । गोलोमी दूर्वा । अजलोमी श्वेतदूर्वा । भूतकेशी मांसी । जटा गन्धमांसी । कुक्कुटा कुक्कुटाख्यिम्बी, वर्तमानप्रतिषु कुक्कुटीति दृश्यते, कुक्कुटी कुक्कुटसदृशकन्दा महौषधिः । सर्पगन्धा वयासु

१ 'ऋष्यपित्तप्रभावितान्' इति पा० । २ 'गृध्रजं क(न्य)ङ्कोर्वराहस्य' इति पा० । ३ 'क(न्य)ङ्कुर्मांसवर्गे प्रोक्तलक्षणः' इति पा० ।

१ 'ऋष्यप्रोक्ता' इति पा० । २ 'विट्त्वग्रोमवसामज्जरक्तमूत्रनखत्वचः' इति पा० । ३ 'क्रमात्' इति पा० ।

छत्राकारा । काणविकाणिके काकोलीक्षीरकाकोल्यौ । तथेत्यत्र तिक्तेति, 'विकाणिके' इत्यत्र 'विषाणिके' इति च केचित् पठन्ति । तिक्ता कटुतुम्बी, विषाणिका मेषशृङ्गी । वज्रप्रोक्ता वज्रकन्दः, स्नुहीत्यन्ये; 'वज्रप्रोक्ता' इत्यत्रान्ये 'ऋष्यप्रोक्ता' इति पठन्ति; वयःस्था गुडूची । शृङ्गी कर्कटशृङ्गी । मोहनवल्लिका वटपत्रिका । लता प्रियङ्गुः । स्रोतोजनं पर्णसानद्यां सिन्धुनदे वा भवति । तल्लक्षणम्,—"वल्मीकशिखराकारं रूपे नीलोत्पलद्युति । स्रोतोञ्जनं प्रशंसन्ति तच्च प्रत्यञ्जने हितम्—" इति । नैपाली मनःशिला । रक्षोघ्ना ये प्रकीर्तिता इति श्वेतसर्षपाः । 'रक्षोघ्नं यच्च कीर्तितं' इत्यन्ये, तत्र रुद्राक्षं; अपरे तु 'यच्चद्रक्षोघ्नमीरितं' इति पठन्ति, गुग्गुलुप्रभृतीनीति च व्याख्यानयन्ति । ऋक्षो भल्लूकः । द्वीपी चित्रकः । मार्जारो बिडालः । वाजी घोटकः । श्वावित् सेहि(डि)केति लोके । शल्यको गोधानुकारी वज्रशल्यकः । विट् पुरीषम् । नखत्वचः शस्त्रेण तनूकृतनखस्य तनूनि खण्डानि । अस्मिन् वर्गे पुराणसर्पिरित्यादिके यावद्रक्तमूत्रत्वगन्ते, तैलानि घृतानि च भिषक् कुर्यात्; तानि च पानादिषु जानता वैद्येन योज्यानीति संबन्धः । 'अस्मिन् वर्गे' इति वर्गग्रहणात् असमस्तेनाप्यनेन तैलादिकं कर्तव्यमित्यर्थः । अवपीडो नस्यभेदः । गुटिकीकृतं वर्तीकृतम् । अस्मिन् वर्ग इति अवपीड इत्यादिष्वनुवर्त्य संबध्यते । तेनास्मिन् वर्गे यत् कथितं क्वाथस्तत् परिषेके विदधीत, तथा चूर्णितमुद्वर्तने विदधीत, श्लक्ष्णपिष्टं प्रदेहे अवचारयेदित्यर्थः । एष गणोऽपराजितो नाम सर्वविकारान् मानसान् ग्रहकृतांश्चोन्मादादीनल्पेन कालेन निहन्यादिति संबन्धः; अन्ये अपराजितानिति पठन्ति, तत्र अपरैः प्रयोगैरजितान् मानसान् विकारानिति व्याख्येयम् । किमेष एव गणः परमेतान् विकारान् हन्यादित्याह—स्नेहादिरपि च क्रमः । आदिशब्दात् स्वेदवमनविरेकादि ॥ ४६–५३ ॥—

**न चाचौक्षं प्रयुञ्जीत प्रयोगं देवताग्रहे ॥ ५४ ॥**

न चाचौक्षमित्यादि । अचौक्षमपवित्रं प्रयोगं देवताग्रहे देवादिग्रहे न प्रयुञ्जीतेत्यर्थः । अन्ये न चायुक्तमिति पठन्ति ॥५४॥

**ऋते पिशाचादन्यत्र प्रतिकूलं न चाचरेत् ॥**

देवताग्रह इत्यत्र सामान्यवचनात् सर्वेष्वपि ग्रहेषु निषेधः प्राप्त इत्यत आह—ऋते पिशाचादित्यादि । ऋते पिशाचात् पिशाचग्रहं विहाय, अन्येषु ग्रहेषु, प्रतिकूलं निषिद्धम्; अन्यत्रेत्यत्रापि ऋते पिशाचादिति संबध्यते; तेन पिशाचादन्यत्र प्रतिकूलं न च आचरेत्; एतेन पिशाचग्रहे अचौक्षं प्रतिकूलं चोचितमित्युक्तम् ॥—

**वैद्यातुरौ निहन्युस्ते ध्रुवं क्रुद्धा महौजसः ॥ ५५ ॥**

पिशाचादन्यत्र प्रतिकूलाचरणे किं स्यादित्याह—वैद्यातुरौ निहन्युरित्यादि । ते देवादिग्रहा ध्रुवमवश्यमनुचिताचरणात् क्रुद्धाः सन्तो वैद्यातुरौ निहन्युरित्यर्थः । महौजसः महाप्रभावाः ॥ ५५ ॥

१ 'न चायुक्तं' इति पा० ।

**हिताहितीये यच्चोक्तं नित्यमेव समाचरेत् ॥**

हिताहारादिकं निर्दिशन्नाह—हिताहितीये यदित्यादि । यच्चोक्तं रक्तशाल्यादिकं तन्नित्यमेव आचरेदित्यर्थः । 'हिताहितीये' इत्यत्र 'हिताहितं च' इत्यन्ये पठित्वा व्याख्यानयन्ति—प्रणितोपासनीयोक्तं हिताहितीयोक्तं च हितविधानं नित्यं समाचरेदहितं च परिहरेदित्यर्थः ॥—

**ततः प्राप्स्यति सिद्धिं च यशश्च विपुलं भिषक् ५६**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते भूतविद्यातन्त्रेऽमानुषोपसर्गप्रतिषेधो नाम (प्रथमोऽध्यायः, आदितः) षष्टितमोऽध्यायः ॥ ६० ॥**

हिताचरणफलमाह—तत इत्यादि । ततो हिताहितप्रतिपादितक्रियाचरणात् ग्रहमुक्तिलक्षणं सिद्धिमातुरः प्राप्स्यति, भिषक् विपुलं यशश्च प्राप्स्यतीति । कार्तिककुण्डस्त्वमुं पाठं न पठति ॥ ५६ ॥

इति श्रीडल्ह(ड्ह)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रेऽमानुषोपसर्गप्रतिषेधो नाम षष्टितमोऽध्यायः ॥ ६० ॥

---

## एकषष्टितमोऽध्यायः ।

**अथातोऽपस्मारप्रतिषेधमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अमानुषोपसर्गप्रतिषेधानन्तरं मनःप्रदुष्टिसामान्यात् ग्रहचिकित्सितस्यात्रापि शस्तत्वादपस्मारप्रतिषेधारम्भः—अथात इत्यादि । अथेत्यादिकं पूर्ववद्व्याख्येयम् । अपशब्दो गमनार्थः, स्मारः स्मरणं, अपगतः स्मारो यस्मिन् रोगे सोऽपस्मारः; तस्य प्रतिषेधः चिकित्सितम् ॥ १ ॥ २ ॥

**स्मृतिर्भूतार्थविज्ञानमपश्च परिवर्जने ॥**
**अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥ ३ ॥**

अपस्मारस्य निरुक्तिमाह—स्मृतिरित्यादि । भूतार्थज्ञानापस्मरणादयं व्याधिरपस्मार इति प्रोक्तः । अन्तकृत् विनाशकृत्, अपस्मरणभावाज्जलाग्न्यादौ प्रपतनात्; अन्ये तु अन्तकृदवस्थायां, सा चावस्था 'अपस्मरन्तं बहुशः क्षीणं' इत्यादिका ॥३॥

**मिथ्यातियोगेन्द्रियार्थकर्मणामभिसेवनात् ॥**
**विरुद्धमलिनाहारविहारकुपितैर्मलैः ॥ ४ ॥**
**वेगनिग्रहशीलानामहिताशुचिभोजिनाम् ॥**
**रजस्तमोभिभूतानां गच्छतां च रजस्वलाम् ॥ ५ ॥**
**तथा कामभयोद्वेगक्रोधशोकादिभिर्भृशम् ॥**
**चेतस्यभिहते पुंसामपस्मारोऽभिजायते ॥ ६ ॥**

अपस्मारोत्पत्तिकारणस्य चित्ताभिघातस्य हेतूनाह—मिथ्येत्यादि । अत्रायोगो लुप्तो द्रष्टव्यः, तेन मिथ्यायोगायोगातियोगैः; केचित् मिथ्यादियोगेति पठित्वा आदिशब्देनैव अतियोगमयोगं च गृह्णन्ति । इन्द्रियार्थानां स्पर्शादीनां, कर्मणां कायवाङ्मनसानाम् । अथ शब्दादीनां मिथ्यायोगादयः कथ्यन्ते—तत्र

परुषेष्टविनाशादिश्रवणं मिथ्यायोगः, पटहाद्यतिशब्दश्रवणमतियोगः, सर्वशोऽश्रवणमयोगः; तथा शीतादिस्पर्शानां वैपरीत्येनोपसेवनं मिथ्यायोगः, अतिशीतादीनामतिसेवनमतियोगः; सर्वशोऽसेवनमयोगः; अतिविकृतादिदर्शनं मिथ्यायोगः, अतितेजसामतिदर्शनमतियोगः, सर्वथाऽनवलोकनमयोगः; तथाऽयोग्यरसानामादानं मिथ्यायोगः, रसानामत्यादानमतियोगः, रसानां सर्वथाऽनादानमयोगः; पूत्याद्याघ्राणं मिथ्यायोगः, अतितीक्ष्णादिगन्धानामत्याघ्राणमतियोगः, सर्वशोऽघ्राणमयोगः; तथा कायिककर्मणो व्यायामादेर्निषिद्धकालादिषु सेवनं मिथ्यायोगः, अतिसेवनमतियोगः, सर्वशोऽनुपसेवनमयोगः; तथा वाचनिककर्मणः परुषानृतादिभाषणं मिथ्यायोगः, अतिवाचनादिकमतियोगः, सर्वथा मौनमयोगः; तथा मानसकर्मणः शोकादिचिन्तनं मिथ्यायोगः, अतिमात्रचिन्तनादिकमतियोगः, सर्वथाचिन्तनमयोगः । विरुद्धं हिताहितीयोक्तम् । मलिनशब्द आहारविहाराभ्यां संबध्यते; तत्र मलिनाहारः पूतिद्विष्टामेध्यपर्युषिताः, मलिनो विहारो दृष्टादृष्टार्थः स्मार्तवचनात् ज्ञातव्यः । कुपितैर्मलैरित्यत्र मला वातपित्तश्लेष्माणो रजस्तमसी च, देहमलिनीकरणादुच्यन्ते । वेगेत्यादि । वेगा विण्मूत्रादीनां तेषां वेगानां निग्रहो धारणं, तत्र शीला वेगनिग्रहरताः । अहिताशुचिभोजिनामिति यद्यप्येषोऽर्थो विरुद्धमलिनाहारात् इत्यनेनैव प्राप्तः, तथाऽप्यत्यर्थहेतुत्वापादनार्थं पुनः पाठः । रजस्वलां दृष्टार्तवाम् । एतैर्हेतुभिश्चित्ते उपहते दूषिते सति अपस्मारोऽभिजायते ॥ ४-६ ॥

**हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ॥**
**निद्रानाशश्च तस्मिंस्तु भविष्यति भवन्त्यथ ॥ ७ ॥**

हेतूनभिधाय पूर्वरूपमाह–हृदित्यादि । प्रमूढता अतिशयेन विचेतनत्वम् । तस्मिन् अपस्मारे ॥ ७ ॥

**संज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः ॥**
**रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा ॥ ८ ॥**
**विक्षिपन् हस्तपादं च विजिह्मभ्रूर्विलोचनः ॥**
**दन्तान् खादन् वमन् फेनं विवृताक्षः पतेत् क्षितौ ९**
**अल्पकालान्तरं चापि पुनः संज्ञां लभेत सः ॥**
**सोऽपस्मार इति प्रोक्तः**

प्राग्रूपमभिधाय रूपमाह—संज्ञावहेष्वित्यादि । संज्ञावहेषु स्रोतःस्विति कथं बहुवचनं, यतो धमनीव्याकरणे 'द्वाभ्यां प्रबुध्यते' इत्यनेन द्वे एव संज्ञावहे स्रोतसी उक्ते ? सत्यं, द्वयोरपि स्रोतसोः सूक्ष्माणां प्रतानानां बहुत्वात् स्रोतःस्वित्युक्तम् । दोषव्याप्तेषु वातादिदोषाभिभूतेषु । रजस्तमःपरीतेषु रजस्तमोव्याप्तेषु । मूढो मोहयुक्तः । केन कृत्वा मूढः ? भ्रान्तेन चेतसा चित्तभ्रान्त्येत्यर्थः । विक्षिपन् इतस्ततः क्षिपन् । विजिह्मभ्रूः विलोचनः वक्रभ्रूनेत्रः । विवृताक्ष उच्छलिताक्षः । यस्मिन् विकारे विक्षिपन् हस्तपादमित्यादिचेष्टः सन् आतुरः क्षितौ पतति स विकारोऽपस्मार इति प्रोक्त इति संबन्धः ॥८॥९॥—

**स च दृष्टश्चतुर्विधः ॥ १० ॥**
**वातपित्तकफैर्नॄणां चतुर्थः सन्निपाततः ॥**

अपस्मारस्य संख्यामाह—स च दृष्ट इत्यादि । चतुर्विध इति संख्याकरणं द्वन्द्वजापस्मारनिषेधार्थम् । द्वन्द्वजासंभवस्तु व्याधिस्वभावात् । चातुर्विध्यं विवृण्वन्नाह—वातपित्तकफैरित्यादि । वातादिभिः त्रयः ॥ १० ॥—

**वेपमानो दशन् दन्तान् श्वसन् फेनं वमन्नपि ॥११॥**
**यो ब्रूयाद्विकृतं सत्त्वं कृष्णं मामनुधावति ॥**
**ततो मे चित्तनाशः स्यात् सोऽपस्मारोऽनिलात्मकः॥**

वातादिजत्वेनापस्मारलक्षणमाह—वेपमान इत्यादि । वेपमानः कम्पमानः । दशन् खादन् दन्तान् । श्वसन् श्वासं कुर्वन् । विकृतं विकृतरूपं सत्त्वम् । कृष्णमित्यत्र कृष्णसत्त्वदर्शनम्, असत एव संज्ञावहस्रोतोगतवातप्रभावात्; न पुनः सत्त्वं पिशाचादिकं भूतमभिप्रेतम् । तन्त्रान्तरेऽपि "परुषारुणकृष्णानि पश्येद्रूपाणि चानिलात्" इत्यादिना कृष्णादिरूपदर्शनमेवोक्तम् । एवं पित्तकफापस्मारयोरपि बोद्धव्यम् ॥११॥१२॥

**तृट्तापस्वेदमूर्च्छार्तो धुन्वन्नङ्गानि विह्वलः ॥**
**यो ब्रूयाद्विकृतं सत्त्वं पीतं मामनुधावति ॥ १३ ॥**
**ततो मे चित्तनाशः स्यात् स पित्तभव उच्यते ॥**

पित्तापस्मारलक्षणमाह—तृडित्यादि । तृट् पिपासा । तापः सन्तापः । धुन्वन् विक्षिपन् । अङ्गानि हस्तपादादीनि । विह्वलो विकलः ॥ १३ ॥—

**शीतहृल्लासनिद्रार्तः पतन् भूमौ वमन् कफम् ॥१४॥**
**यो ब्रूयाद्विकृतं सत्त्वं शुक्लं मामनुधावति ॥**
**ततो मे चित्तनाशः स्यात् सोऽपस्मारः कफात्मकः॥**

कफजापस्मारलक्षणमाह—शीतहृल्लासेत्यादि । हृल्लासः थूत्करणम् ॥ १४ ॥ १५ ॥

**हृदि तोदस्तृडुत्क्लेदस्त्रिष्वप्येतेषु संख्यया ॥**

वाताद्यपस्मारेषु प्रत्येकमेकैकं लक्षणमाह—हृदि तोद इत्यादि । हृदि तोदो व्यथा,–वातिके; तृट् पिपासा,–पैत्तिके; उत्क्लेशः श्लेष्मनिष्ठीवनं,–कफजे; एतेषु त्रिषु वातादिजापस्मारेषु यथासंख्यं हृत्तोदादिलक्षणं ज्ञेयमिति संबन्धः ॥—

**प्रलापः कूजनं क्लेशः प्रत्येकं तु भवेदिह ॥ १६ ॥**

वातादिजापस्मारेषु प्रत्येकं प्रलापादिलक्षणत्रितयमाह—प्रलापः कूजनमित्यादि । प्रलापादिकं त्रयं वातादिजापस्मारेषु त्रिष्वपि प्रत्येकं बोद्धव्यं न यथासंख्यम् ॥ १६ ॥

**सर्वलिङ्गसमवायः सर्वदोषप्रकोपजे ॥**

सर्वजापस्मारलक्षणमाह—सर्वलिङ्गसमवाय इत्यादि । सर्वलिङ्गसमवायो वातादिलिङ्गसमावेशः । सर्वदोषप्रकोपज इति प्रकोपोपादानात् स्वकीयकारणप्रकुपितदोषत्रयज इति बोद्धव्यं, न कुपितैकदोषप्रकोपितसर्वदोषज इति ॥—

१ 'सूक्ष्मादिदर्शनं मिथ्यायोगः' इति पा० । २ 'स्मृतिषु विज्ञातव्यः' इति पा० । ३ 'चालयन्' इति पा० ।

**अनिमित्तागमाद्व्याधेर्गमनादकृतेऽपि च ॥ १७ ॥**
**आगमाद्याप्यपस्मारं वदन्त्यन्ये न दोषजम् ॥**

स्वमतेनापस्मारस्य दोषजत्वं प्रदर्श्य परमतेनागन्तुकत्वमाह—अनिमित्तागमादित्यादि । अनिमित्तागमात् अकारणोत्पादनात्, आकस्मिकोद्भवादित्यर्थः । गमनादकृतेऽपि चेत्यत्र 'प्रतीकारे' इति शेषः; तेन प्रतीकारे अकृतेऽपि व्याधेर्गमनादुपशमादित्यर्थः । अकृतेऽपीत्यत्र अकृतादिति क्वचित्; तत्र, अकृतात् प्रतीकाराद्भेषजेनेति द्रष्टव्यम् । आगमाचेति स्वकीयात्; न पुनश्चेतरस्मात्, तत्र दोषजत्वेनापस्मारस्य दर्शितत्वात् । 'वदन्त्यन्ये न दोषजं' इत्यत्र अन्ये 'वदन्त्यन्योन्यदोषजम्' इति पठन्ति, अन्योन्यदोषजं रजस्तमोदोषजमित्यर्थः । अपरे तु 'अन्योन्यदूषणात्' इति पठन्ति । तत्र कायमनसोरन्योन्यदूषणात् ॥१७॥—

**क्रमोपयोगाद्दोषाणां क्षणिकत्वात्तथैव च ॥ १८ ॥**
**आगमाद्वैश्वरूप्याच्च स तु निर्वर्ण्यते बुधैः ॥**
**देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित् ॥१९॥**
**शरदि प्रतिरोहन्ति तथा व्याधिसमुद्भवः ॥**
**स्थायिनः केचिदल्पेन कालेनाभिप्रवर्धिताः ॥ २० ॥**
**दर्शयन्ति विकारांस्तु विश्वरूपान्निसर्गतः ॥**
**अपस्मारो महाव्याधिस्तस्माद्दोषज एव तु ॥ २१ ॥**

परमतनिराकरणाय स्वमतमाह—क्रमोपयोगादित्यादि । स तु पुनरपस्मारः क्रमोपयोगादित्यादिहेतुभिश्चतुर्भिर्दोषज एव बुधैः पण्डितैर्निर्वर्ण्यते कथ्यत इत्यर्थः । अत्र हेतुमाह—क्रमोपयोगाद्दोषाणामिति संचयादिक्रमेण दोषाणां विकारजननयोगादित्यर्थः; एतेन, अनिमित्तागमाद्व्याधेरिति हेतुर्निराकृतः । तथा सर्वपारिषदत्वादायुर्वेदस्य सौगतमतमवलम्ब्य 'गमनादकृतेऽपि च' इत्यस्य हेतोर्निराकरणाय हेतुमाह—क्षणिकत्वात्तथैव चेति । तथैव वातादीनां क्षणिकत्वाद्द्वितीयोऽपि हेतुर्निराकृतः । यतो यावन्मात्रो दोषवेगोऽभूत् तावन्मात्रस्यापगमादकृतेऽपि प्रतीकारे व्याधेरपगमः । तृतीयं हेतुमाह—आगमाचेति; स्वतन्त्रात् परतन्त्राच्चेत्यर्थः । तत्रागमे स्वतन्त्रे परतन्त्रे च वातिक-पैत्तिक-श्लैष्मिक-सान्निपातिकाश्चत्वारोऽपस्मारा अभिहिता इति । चतुर्थं हेतुमाह—वैश्वरूप्याचेति विश्वेषां समस्तानां वातपित्तश्लेष्मणां मनोदोषयो रजस्तमसोश्च रूपं नानाप्रकारं लिङ्गं यस्यापस्मारस्य स तथा, तद्भावो वैश्वरूप्यं तस्मात् । 'स तु' इत्यत्रान्ये 'तत्र' इति पठन्ति, व्याख्यानयन्ति च—तत्र अपस्मारे । यदेवं तर्हि वातपित्तश्लेष्मणां सदैव देहे सद्भावात् सन्ततमपस्मारः स्यादतस्तन्निराकरणार्थमाह—देवे वर्षतीत्यादि । वर्षत्यपि मेघे भूमौ सुकृष्टायामपि अङ्कुरजननसमर्थान्यपि कानिचिद्बीजानि शरद्येव प्ररोहन्ति, तथा सर्वरोगबीजानां वातादीनां कदाचित् कस्यचिदपस्मारादिव्याधेरङ्कुरस्थानीयस्य निदानादिसन्निधानेऽपि दूष्यादिसमुदायेनैव समुद्भवो भवतीत्यर्थः । अन्ये त्वन्यथा व्याख्यानयन्ति—ननु, संचयादिक्रमेणोपयोगश्चेद्दोषाणां तदा पुनः कथमल्पेनैव कालेन तद्विकारोद्गमः स्यादित्यत आह—देवेऽवर्षतीत्यादि । अवर्षति देवे यथा शरत्काले भूमौ स्तिमितात् कानिचिद्बीजानि प्ररोहन्त्येव, तथाऽल्पेनापि कालेन शरीरस्था दोषाः किंचिदुपचिता विकारं जनयन्तीति । एतदेव स्पष्टीकुर्वन्नाह—स्थायिन इत्यादि । स्थायिनः अवश्यमवस्थायिनो वातादयः, परं केचिदल्पेनापि कालेनाभिप्रवर्धिताः सन्तो विश्वरूपान् नानारूपान् विकारान् दर्शयन्ति । कुतः ? निसर्गतो दूषणस्वभावादित्यर्थः । अपस्मारो महाव्याधिरित्यादि । तस्मादिति पूर्वोक्तक्रमोपयोगादिहेतुसमूहादपस्मारो दोषजो न तु भूतावेशज इति सिद्धान्तः १८–२१

**तस्य कार्यो विधिः सर्वो य उन्मादेषु वक्ष्यते ॥**
**पुराणसर्पिषः पानमभ्यङ्गश्चैव पूजितः ॥ २२ ॥**
**उपयोगो ग्रहोक्तानां योगानां तु विशेषतः ॥**
**ततः सिध्यन्ति ते सर्वे योगैरन्यैश्च साधयेत् ॥**
**शिग्रुकट्वङ्गकिण्वाहिनिम्बत्वग्रससाधितम् ॥ २३ ॥**
**चतुर्गुणे गवां मूत्रे तैलमभ्यञ्जने हितम् ॥**

इदानीं चिकित्सितमाह—तस्य कार्यो विधिरित्यादि । तस्य अपस्मारस्य । ननु, उन्मादे यो विधिः पठिष्यमाणोऽस्ति तं विधिमपस्मारे निर्दिश्य तत्रैव किमिति नातिदिश्यते ? उच्यते,—उन्मादे तस्यातिशयेन हितत्वादित्यर्थः । अभ्यङ्गश्चैवेति पुराणसर्पिषा, अस्य त्रिदोषघ्नत्वात् । ग्रहोक्तविधिमुपदिशति—उपयोग इत्यादि । शिग्रुकट्वङ्गेत्यादि । शिग्रुः शोभाञ्जनकः, कट्वङ्गः अरलुः, स्योनाक इत्यन्ये, किणिही श्वेतस्यन्दः; त्वग्रससाधितमिति त्वग् वल्कलं, रसः स्वरसः; एतेन कल्कस्वरसाभ्यां साधितमिति बोद्धव्यम् । गवां मूत्रे इति चेतोविकारहरत्वेन हस्तिच्छागमेडमूत्राणां निर्दिष्टत्वात्तन्निषेधार्थं 'गवां मूत्रे' इति कृतम् । तैलं तिलतैलम् ॥ २२ ॥ २३ ॥—

**गोधानकुलनागानां पृषतर्क्षगवामपि ॥ २४ ॥**
**पित्तेषु सिद्धं तैलं च पानाभ्यङ्गेषु पूजितम् ॥**

द्वितीयतैलमाह—गोधानकुलनागानामित्यादि । नागो हस्ती । पृषतः चित्रलो मृगः । ऋक्षो भल्लूकः । गोधादीनां पित्तेषु पृथक् स्नेहसमेषु सिद्धं तैलमित्यर्थः ॥ २४ ॥—

**तीक्ष्णैरुभयतोभागैः शिरश्चापि विशोधयेत् ॥२५॥**

तैलमभिधाय शिरोविरेचनमाह—तीक्ष्णैरित्यादि । तीक्ष्णैरुभयतोभागैः विषाणिकाब्राह्मीकारवेल्लकादिभिः । अन्ये तु 'तीक्ष्णैरुभयतोभागैः शिरसश्च विरेचनैः' इति पठन्ति, व्याख्यानयन्ति च—तीक्ष्णैरित्युभयत्र संबध्यते । तेन उभयतोभागैर्वमनविरेचनैस्तीक्ष्णैश्च शिरोविरेचनैरुपाचरेदिति संबध्यते ॥ २५ ॥

१ 'बोद्धव्यम्' इति पा० । २ 'नानारूपत्वादपस्मारस्य दोषान्विता नानारूपत्वेन संभवन्ति, तस्माद्दोषजा एवापस्मारा इति' इति पा० । ३ '°व्याधिविशेषस्य' इति पा० ।

१ 'स्विन्नम्' इति पा० ।

**पूजां रुद्रस्य कुर्वीत तद्गणानां च नित्यशः ॥**

केचिदत्र दैवव्यपाश्रयं चिकित्सितं पठन्ति—पूजां रुद्रस्येत्यादि ॥—

**वातिकं बस्तिभिश्चापि पैत्तिकं तु विरेचनैः ॥ २६ ॥**
**कफजं वमनैर्धीमानपस्मारमुपाचरेत् ॥**

सामान्यं चिकित्सितं निर्दिश्य वातादिभेदेनापस्माराणां चिकित्सां निर्दिशन्नाह—वातिकमित्यादि । केचिदिमं पाठं पञ्चगव्याख्यघृतपाठस्याग्रे पठन्ति ॥ २६ ॥—

**कुलत्थयवकोलानि शणबीजं पलङ्कषाम् ॥ २७ ॥**
**जटिलां पञ्चमूल्यौ द्वे पथ्यां चोत्क्वाथ्य यत्नतः ॥**
**बस्तमूत्रयुतं सर्पिः पचेत्तद्वातिके हितम् ॥ २८ ॥**

वातादिजापस्मारेषु घृतं निर्दिशन्नाह—कुलत्थेत्यादि । कोलं बदरम् । पलङ्कषा गुग्गुलुः । जटिला मांसी । पञ्चमूल्यौ द्वे इति शालिपर्ण्यादिर्बिल्वादिश्च, एरण्डबिल्वाद्ये इत्यन्ये । पथ्या हरीतकी । 'यत्नत' इत्यत्रान्ये 'योगत' इति पठन्ति । योगतोग्रहणात् क्वाथमूत्रयोर्मध्ये एकं चतुर्गुणमेकं च समं ग्राह्यमिति व्याख्यानयन्ति ॥ २७ ॥ २८ ॥

**काकोल्यादिप्रतीवापं सिद्धं च प्रथमे गणे ॥**
**पयोमधुसितायुक्तं घृतं तत् पैत्तिके हितम् ॥ २९ ॥**

काकोल्यादिप्रतीवापमित्यादि । काकोल्यादिप्रतीवापं काकोल्यादिकल्कम् । सिद्धं च प्रथमे गणे विदारिगन्धादिके क्वाथीकृते इति ज्ञेयम् । कुतः ? काकोल्यादिकल्कोपदेशात् । पयः क्षीरम् । सिता शर्करा । क्षीरादिप्रक्षेपयुक्तं घृतं हितम् ॥ २९ ॥

**कृष्णावचामुस्तकाद्यैर्युक्तमारग्वधादिके ॥**
**पक्वं च मूत्रवर्गे तु श्लेष्मापस्मारिणे हितम् ॥ ३० ॥**

कृष्णावचेत्यादि । कृष्णावचामुस्तकाद्यैरिति पिप्पल्यादिवचादिमुस्ताद्यैः क्वथितैः, आरग्वधादिकैः कल्कीकृतैः, मूत्रवर्गेऽष्टविधे सिद्धं पक्वं घृतं श्लेष्मापस्मारिणे हितमित्यर्थः । अन्ये मूत्रवर्गेऽष्वित्यत्र चेतोविकारहरत्वेन छागोरभ्रहस्तिमूत्राणि गृह्णन्ति ॥३०॥

**सुरद्रुमवचाकुष्ठसिद्धार्थव्योषहिङ्गुभिः ॥**
**मञ्जिष्ठारजनीयुग्मसमङ्गात्रिफलाम्बुदैः ॥ ३१ ॥**
**करञ्जबीजशैरीषगिरिकर्णीहुताशनैः ॥**
**सिद्धं सिद्धार्थकं नाम सर्पिर्मूत्रचतुर्गुणम् ॥ ३२ ॥**
**कृमिकुष्ठगरश्वासबलासविषमज्वरान् ॥**
**सर्वभूतग्रहोन्मादानपस्मारांश्च नाशयेत् ॥ ३३ ॥**

सिद्धार्थकं सर्पिराह—सुरद्रुमेत्यादि । सुरद्रुमः देवदारु । सिद्धार्थः सर्षपः । व्योषं शुण्ठीमरीचपिप्पल्यः । रजनीयुग्मं हरिद्राद्वयम् । समङ्गा लज्जालुः । अम्बुदो मुस्ता । शैरीषं शिरीषबीजम् । गिरिकर्णी श्वेतस्यन्दा । हुताशनः चित्रकः । एतैः कल्कीकृतैर्मूत्रचतुर्गुणं सर्पिः सिद्धं सिद्धार्थकं नामेति संबन्धः । गरः कृत्रिमं विषम् । बलासः श्लेष्मा ॥ ३१–३३ ॥

**दशमूलेन्द्रवृक्षत्वङ्मूर्वाभार्गीफलत्रिकैः ॥**
**शम्पाकश्रेयसीसप्तपर्णापामार्गफल्गुभिः ॥ ३४ ॥**
**शृतैः कल्कैश्च भूनिम्बपूतीकव्योषचित्रकैः ॥**
**त्रिवृत्पाठानिशायुग्मसारिवाद्वयपौष्करैः ॥ ३५ ॥**
**कटुकायासदन्त्युग्रानीलिनीक्रिमिशत्रुभिः ॥**
**सर्पिरेभिश्च गोक्षीरदधिमूत्रशकृद्रसैः ॥ ३६ ॥**
**साधितं पञ्चगव्याख्यं सर्वापस्मारभूतनुत् ॥**
**चातुर्थकक्षयश्वासानुन्मादांश्च नियच्छति ॥ ३७ ॥**

पञ्चगव्यमाह—दशमूलेत्यादि । इन्द्रवृक्षः कुटजः, तस्य त्वक्; अन्ये त्वक्शब्देन त्वचमाहुः । मूर्वा चोरस्नायुः । फल्गुः काष्ठोदुम्बरिका । शृतैः क्वथितैः । भूनिम्बः किरातकः । पूतीकः चिरबिल्वः । व्योषं त्रिकटुकम् । निशायुग्मं हरिद्राद्वयम् । सारिवाद्वयम् आस्फोता कार्कवल्ली[2] च । पौष्करं पुष्करमूलम् । यासो दुरालभा, दन्ती दन्तिनी, उग्रा वचा, नीलिनी रजनिका शारदफला, कृमिशत्रुः विडङ्गम्, दशमूल्यादिभिः काष्ठोदुम्बरिकान्तैः क्वथितैर्भूनिम्बादिभिः कृमिशत्रुपर्यन्तैः । कल्कीकृतैर्गोक्षीरादिभिः प्रत्येकं स्नेहसमैः साधितं सर्पिः पञ्चगव्याख्यं सर्वापस्मारादीन्नियच्छतीत्यर्थः ॥ ३४–३७ ॥

**भार्गीशृते पचेत् क्षीरे शालितण्डुलपायसम् ॥**
**त्र्यहं शुद्धाय तं भोक्तुं वराहायोपकल्पयेत् ॥ ३८ ॥**
**ज्ञात्वा च मधुरीभूतं तं विशस्यान्नमुद्धरेत् ॥**
**त्रीन् भागांस्तस्य चूर्णस्य किण्वभागेन संसृजेत् ३९**
**मण्डोदकार्थे देयश्च भार्गीक्वाथः सुशीतलः ॥**
**शुद्धे कुम्भे निदध्याच्च संभारं तं सुरां ततः॥ ४०॥**
**जातगन्धां जातरसां पाययेदातुरं भिषक् ॥**

भार्गीशृते इत्यादि । भार्गीशृते क्षीरे शालितण्डुलपायसं पचेदिति संबन्धः । अत्र क्षीरसाधनविधिः—चतुर्थांशं भार्गीकल्कं दत्त्वा चतुर्गुणेन जलेन क्षीरं साधनीयम् । त्र्यहं शुद्धाय त्रिदिनमुपोषिताय वराहाय तं पायसं भोक्तुं प्रकल्पयेत् दद्यादित्यर्थः । मधुरीभूतं श्लेष्मसंसृष्टं विदाहावस्थामप्राप्तम्; अन्ये तु मधुरीभूतं विषीभूतमिति व्याख्यानयन्ति, यतो मधुरशब्दो विषे वर्तते । अथ पायसः कथं विषीभवतीति चेत् ? सत्यं, आधारप्रभावात् । विषीभूतं वराहस्यैव लालास्रावमूर्च्छादिविषलिङ्गैर्ज्ञातव्यम् । तं वराहं, विशस्य हत्वा, अन्नं विषीभूतमुद्धरेत् । तस्य चूर्णस्येत्यादि । तस्य उद्धृतस्यान्नस्य शोषितचूर्णीकृतस्य त्रीन् भागान् किण्वभागेन संसृजेत् सुराबीजैकभागेन मिश्रयेत् । मण्डोदकार्थं सन्धानार्थं भार्गीक्वाथो देयः । अन्ये तु मण्डः सुरामण्डः, दकार्थे उदकार्थे भार्गीक्वाथश्च देय इति व्याख्यानयन्ति । शुद्धे कुम्भे इति कृतसंस्कारे चातुर्जातकघृतमधुपिप्पल्यादिविलिप्ते इत्यर्थः । पायसचूर्णकिण्वभागचतुष्टये भार्गीक्वाथस्तावानेव देयो यावता सम्यक्-

१ 'कटुकामदयन्त्युग्राः' इति पा० । २ 'काकवल्ली' इति पा० । ३ 'नुदतीत्यर्थः' इति पा० । ४ 'पिप्पल्यन्तविलिप्ते' इति पा० ।

सुराभावं प्राप्नोति, तद्विदश्च कल्पपालाः प्रष्टव्याः । सुरानिष्पत्तिकालप्रमाणं च जातरसामित्यनेनोक्तम् ॥ ३८-४० ॥—

**सिरां विध्येदथ प्राप्तां मङ्गल्यानि च धारयेत् ॥४१॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते भूतविद्यातन्त्रेऽपस्मारप्रतिषेधो नाम (द्वितीयोऽध्यायः, आदितः) एकषष्टितमोऽध्यायः ॥ ६१ ॥**

सिरामित्यादि । प्रोक्तां उरोपाङ्गललाटजाम् । अन्ये तु प्राप्तामिति पठन्ति, हनुसन्धिमध्यगतामिति च व्याख्यानयन्ति । मङ्गल्यानि मणितोपासनीयोक्तानि छत्रातिछत्रादीनि । अपरे तु 'मङ्गल्यादि च कारयेत्' इति पठन्ति, तत्र मङ्गल्यमथर्ववेदविहितमिति व्याख्यानयन्ति ॥ ४१ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रेऽपस्मारप्रतिषेधो नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः ।

**अथात उन्मादप्रतिषेधमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अपस्मारप्रतिषेधानन्तरं मनोगतसाम्यात् तुल्यचिकित्सितत्वादुन्मादप्रतिषेधारम्भः—अथात इत्यादि । अथात इत्यादिकं पूर्ववद्व्याख्येयम् ॥ १ ॥ २ ॥

**मदयन्त्युद्ध(द्ग)ता दोषा यस्मादुन्मार्गमाश्रिताः[2] ॥**
**मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः[3] ॥ ३ ॥**

इदानीमुन्मादं निर्वक्ति—मदयन्तीत्यादि । मदयन्ति मनोभ्रमणं कुर्वन्ति । उद्धता उपचिताः । अन्ये 'उद्गता' इति पठन्ति; तत्र उद्गता उद्वृत्ता उन्मार्गमागता मनोवहानि स्रोतांसि प्राप्ताः । यद्धृदयप्रदूषणं चेतोमोहनं च तन्त्रान्तरे प्रोक्तं, तदत्र उन्मार्गमागता इत्यनेन तथा मदयन्तीत्यनेन च संगृहीतमिति पृथङ्नोक्तम् । अपस्मारोक्तदोषप्रकोपहेतव उन्मादेऽपि सान्निध्याद्बोद्धव्या इति श्रीजेज्जटाचार्यः । उन्मादहेतवस्तन्त्रान्तरे यथा—"विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम् । उन्मादहेतुर्भयहर्षपूर्वो मनोभिघातो विषमाश्च चेष्टाः" ( च. चि. अ. ९ ) इति । प्रवृद्धा दोषा मनोवहस्रोतांसि प्राप्ताः सन्तो यस्मान्मनो भ्रमयन्ति, अतोऽयं मानसो व्याधिरिति संबन्धः ॥ ३ ॥

**एकैकशः[4] समस्तैश्च दोषैरत्यर्थमूर्च्छितैः ॥**
**मानसेन च दुःखेन स पञ्चविध उच्यते ॥ ४ ॥**
**विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजम् ॥**
**स चाप्रवृद्धस्तरुणो मदसंज्ञां[1] बिभर्ति च ॥ ५ ॥**

दोषैर्मनोदुःखेन च पञ्चविधमुन्मादमाह—एकैकशः समस्तैश्चेत्यादि । एकैकशो दोषैः त्रयः, समस्तैर्दोषैः एकः, मानसदोषदुःखेन चैकः, एवं स उन्मादः पञ्चविध उच्यते । ननु, विषजोऽपि षष्ठोऽस्ति तत् किमिति सोऽपि स पञ्चविध इत्यत्रैव न निर्दिष्टः ? उच्यते—तस्य भिन्नचिकित्सितत्वात् पृथङ्निर्देशः । अत एवाह—यथास्वं तत्र भेषजमिति । स चाप्रवृद्ध इत्यादि ।—स उन्मादः, अप्रवृद्धः अल्पलिङ्गः, तरुणः अल्पमात्रः । कैश्चिन्मदशब्देन मद्यस्य प्रथमो वेग उच्यते, ते तु रोगमेव रोगकारणं मन्यन्ते । अत्र तूत्पन्नमात्रस्याल्पलिङ्गस्य चोन्मादस्य मदसंज्ञा ॥ ४ ॥ ५ ॥

**मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम् ॥**
**अत्युत्साहोऽरुचिश्चान्ने स्वप्ने कलुषभोजनम्[2] ॥ ६ ॥**
**वायुनोन्मथनं चापि भ्रमश्चक्रगतस्य[3] वा ॥**
**यस्य स्यादचिरेणैव उन्मादं सोऽधिगच्छति ॥ ७ ॥**

इदानीं पूर्वरूपमाह—मोहोद्वेगावित्यादि । मोहो मनसो वैचित्त्यम् । स्वनः श्रोत्रे कर्णयोः शब्दः । गात्राणामपकर्षणं दुर्बलीभवनम् । कलुषभोजनं[4] समलभोजनम् । वायुनोन्मथनम् आकुलीकरणं, 'हृदयस्य' इति शेषः । चक्रगतस्य वेत्यत्र वाशब्द इवार्थे, तेन कुलालचक्रस्थितस्येव भ्रम इत्यर्थः । यस्य पुरुषस्य मोहोद्वेगादिकं स्यात्, सोऽचिरेणैव उन्मादमधिगच्छति प्राप्नोतीति संबन्धः । अचिरेणैव उन्मादमित्यत्र छन्दोभङ्गभयादसंहितानिर्देशः ॥ ६ ॥ ७ ॥

**रूक्षच्छविः परुषवाग्धमनीततो वा**
**शीतातुरः[5] कृशतनुः स्फुरिताङ्गसन्धिः ॥**
**आस्फोटयत्यटति गायति नृत्यशीलो**
**विक्रोशति भ्रमति चाप्यनिलप्रकोपात् ॥ ८ ॥**

पूर्वरूपानन्तरं वातजमुन्मादमाह—रूक्षच्छविरित्यादि । परुषवाक् कर्कशवचनः । धमनीततः सिराव्याप्तः । शीतातुरः शीतपीडित इत्यर्थः । 'श्वासातुर' इत्यन्ये पठन्ति । विक्रोशति रोदिति । भ्रमति कम्पते, अटतीत्यनेन चलनस्योक्तत्वात् । केचित् रूक्षच्छविरित्यादिश्लोकार्धं न पठन्ति; जेज्जटाचार्यास्तु रूक्षच्छविरित्यादिश्लोकार्धं पठन्ति, अनिलादिति सिद्धे अनिलप्रकोपादिति प्रकोपग्रहणात् पारुष्यकार्कश्यारुणवर्णता जीर्णे बलवत्त्वं च गृह्यते इति व्याख्यानयन्ति ॥ ८ ॥

**तृट्स्वेददाहबहुलो बहुभुग्विनिद्र-**
**श्छायाहिमानिलजलान्तविहारसेवी ॥**
**तीक्ष्णो हिमाम्बुनिचयेऽपि स वह्निशङ्की**
**पित्ताद्दिवा नभसि पश्यति तारकाश्च ॥ ९ ॥**

पित्तोन्मादमाह—तृट्स्वेदेत्यादि । तृट्स्वेददाहबहुल इति बहुलशब्दः तृडादिभिः प्रत्येकं संबध्यते । सेवीशब्दः छाया-

---

१ 'रत्नखचितकुण्डलच्छत्रादीनि' इति पा० । २ 'उन्मार्गमाश्रिताः' इति पा० । ३ 'कीर्त्यते' इति पा० । ४ 'एकशोऽथ' इति पा० ।

१ 'यैस्तु मदः पृथग्रोगः कथितः' इति पा० । २ 'कलुषमञ्जनम्' इति पा० । ३ 'भ्रमश्च क्रमतस्तथा' इति पा० । ४ 'कलुषमञ्जनं समलजकमञ्जनं' इति पा० । ५ 'श्वासातुरः' इति पा० ।

दिभिः संबध्यते । जलान्तविहारसेवीति पानीयसमीपविचरणशील इत्यर्थः । तीक्ष्णः कोपनः । अपि चेति चकारात् पीतनयनत्वादि विज्ञेयम् । दिवा दिने । नभसि आकाशे ॥ ९ ॥

छर्द्यग्निसादसदनारुचिकासयुक्तो
योषिद्विविक्तरतिरल्पमतिप्रचारः ॥
निद्रापरोऽल्पकथनोऽल्पभुगुष्णसेवी
रात्रौ भृशं भवति चापि कफप्रकोपात् ॥१०॥

कफोन्मादमाह—छर्द्यग्नीत्यादि । अग्निसादः अग्निमान्द्यम् । सदनम् अङ्गानामनुत्साहः । योषित्सु विविक्ते एकान्ते च रतिर्यस्य स योषिद्विविक्तरतिः । अल्पमतिप्रचार इति अल्पमतिरल्पप्रचारश्च । अल्पकथनः अल्पभाषणः । रात्रौ भृशं भवति चेति चकारो रात्रौ इत्यस्याग्रे द्रष्टव्यः, तेन रात्रौ भुक्ते च भृशं भवतीति सिद्धम् । अपिशब्दाच्च नखादिशौक्ल्यादिकं ज्ञेयम् ॥ १० ॥

सर्वात्मके पवनपित्तकफा यथास्वं
संहर्षिता इव च लिङ्गमुदीरयन्ति ॥ ११ ॥

सान्निपातिकमाह—सर्वात्मके इत्यादि । सर्वात्मके सान्निपातिके उन्मादे पवनपित्तकफाः संहर्षिता इव यथास्वं लिङ्गमुदीरयन्तीति संबन्धः । संहर्षिता इवेति स्पर्धावन्त इव सर्वेऽप्यतिशयेन कुपिता इत्यर्थः । अयं पाठो निबन्धकारैः पठितो व्याख्यातश्च । अन्ये त्वेवं पठन्ति,—'सर्वात्मके त्रिभिरपि व्यतिमिश्रितानि रूपाणि वातकफपित्तकृतानि विद्यात् । संपूर्णलक्षणमसाध्यमुदाहरन्ति सर्वात्मकं क्वचिदपि प्रवदन्ति साध्यम्' इति । अयं च **श्रीजेज्झटेन** एकीयमतेन दर्शितो न तु व्याख्यातः, तस्मादेकीयमतेनैवास्य संबन्धः कथ्यते । प्रत्येकं वातादिकृतानि रूपाणि व्यतिमिश्रितानि सर्वात्मके उन्मादे विद्यादिति संबन्धः । एवं संबन्धे त्रिभिरपीत्यनेन किं प्रयोजनम्? उच्यते—त्रिभिरपि स्वहेतुभिः कुपितैरिति ज्ञापनार्थम् । अस्याग्रे त एवं पठन्ति 'संपूर्णलक्षणमसाध्यमुदाहरन्ति सर्वात्मकं क्वचिदपि प्रदिशन्ति साध्यम्' इति ॥ ११ ॥

चौरैर्नरेन्द्रपुरुषैररिभिस्तथाऽन्यै-
र्वित्रासितस्य धनबान्धवसंक्षयाद्वा ॥
गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतरो मनसो विकारः ॥ १२ ॥

मनोदुःखजमुन्मादं प्रतिपादयितुकामः पूर्वं मनसो दुःखकरान् हेतून् विकारोत्पत्तिसहितानाह—चौरैरित्यादि । अरिभिः शत्रुभिः, तथाऽन्यैरिति अतिशयरौद्रैः अकारणवैरिभिः शार्दूलादिभिर्वा । गाढम् अत्यर्थं, क्षते पीडिते, प्रियया रिरंसोः प्रियया सह रन्तुमिच्छोः; 'तस्या अप्राप्तौ' इत्यध्याहार्यम् । मनसि गाढं क्षते इति बोध्यम् । मनसो विकारो मानस उन्मादः ॥ १२ ॥

चित्रं स जल्पति मनोनुगतं विसंज्ञो
गायत्यथो हसति रोदिति मूढसंज्ञः[1] ॥

तस्य लक्षणमाह—चित्रमित्यादि । चित्रं नानाप्रकारम् । मनोनुगतमिति यदेवास्य मनसि स्थितं तदबुद्धिपूर्वकं यत्किंचिदेव जल्पति । मनोनुगतं विसंज्ञो गायति उत्क्रान्तस्मृतित्वाद्विसंज्ञो गायति; विसंज्ञो विपरीतसंज्ञः, न तु विगतसंज्ञः, भाषणगानादिकरणात् । मूढसंज्ञ इति च पदं हेतुफलभावेन समर्थनीयम्[1] ॥—

रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः
श्यावाननो विषकृतेऽथ[2] भवेत् परासुः ॥१३॥

विषोन्मादमाह—रक्तेक्षण इत्यादि । हतबलेन्द्रियभा इति बलम् उत्साहोपचयलक्षणम्, इन्द्रियाणि चक्षुरादीनि, भाः कान्तिः । अन्ये तु 'हतबलेन्द्रियवाक्' इति पठन्ति, व्याख्यानयन्ति च—वागित्युपादानम् अत्यर्थं वागुपघातसूचनार्थम्, अन्यथेन्द्रियग्रहणेनैव सिद्धेः । सुदीनः सुष्ठु ग्लानः । श्यावानन इति धवलकपिलकृष्णमिश्रवर्णमुखः । अथ भवेत् परासुरिति उपेक्षणान्म्रियत इत्यर्थः । अन्ये 'विषकृतेन भवेद्विसंज्ञः' इति पठन्ति; तत्र विसंज्ञो विपरीतसंज्ञः; विषमत्र दूषीविषम् ॥१३॥

स्निग्धं स्विन्नं तु मनुजमुन्मादार्तं विशोधयेत् ॥
तीक्ष्णैरुभयतोभागैः शिरसश्च विरेचनैः ॥ १४ ॥
विविधैरवपीडैश्च सर्षपस्नेहसंयुतैः ॥
योजयित्वा तु तच्चूर्णं घ्राणे तस्य प्रयोजयेत् ॥ १५ ॥

निदानं निर्दिश्य चिकित्सामाह—स्निग्धमित्यादि । तीक्ष्णैरुभयतोभागैरिति विषाणिकादेवदालिकाकारवेल्लिकादिभिः । शिरसश्च विरेचनैरिति विडङ्गतण्डुलादिभिः । विविधैः नानाप्रकारैः । अवपीडैः नस्यभेदैः । चेतोविकारशमनैः अमानुषोपसर्गप्रतिषेधोक्तैः । सर्षपस्नेहसंयुतैः अवपीडैरित्यर्थः । योजयित्वेति उन्मादार्तं । तु पुनः । तच्चूर्णं सर्षपस्नेहसंयुक्तम् । उन्मादार्तस्य वमनादिना हृदयकोष्ठेन्द्रियशिरःशुद्धौ मनःप्रसादात् स्मृतिसंज्ञालाभादुन्मादोपशम इति व्यपदेशः ॥ १४ ॥ १५ ॥

सततं धूपयेच्चैनं श्वगोमांसैः सुपूतिभिः ॥
सर्षपाणां च तैलेन नस्याभ्यङ्गौ[3] हितौ सदा ॥ १६ ॥

धूपनस्याभ्यङ्गानाह—सततमित्यादि । एनम् उन्मादार्तम् । सुपूतिभिः सुष्ठु शटितैः । शटितैश्चापि धूपनेन मनः प्रकृतिमायाति, प्रभावात् ॥ १६ ॥

दर्शयेदद्भुतान्यस्य वदेन्नाशं प्रियस्य वा ॥
भीमाकारैर्नरैर्नागैर्दान्तैर्व्यालैश्च निर्विषैः ॥ १७ ॥
भीषयेत् संयतं पाशैः कशाभिर्वाऽथ ताडयेत् ॥
यन्त्रयित्वा सुगुप्तं वा त्रासयेत्तं तृणाग्निना ॥ १८ ॥
जलेन तर्जयेद्वाऽपि रज्जुघातैर्विभावयेत् ॥
बलवांश्चापि संरक्षेत् जलेऽन्तः परिवासयेत् ॥
प्रतुदेदारया चैनं मर्माघातं विवर्जयेत् ॥

१ 'चापि मूढः' इति पा० ।

१ 'संबन्धनीयम्' इति पा० । २ 'विषकृते च भवेद्विसंज्ञः' इति पा० । ३ 'नस्यं' इति पा० ।

वेश्मनोऽन्तः प्रविश्यैनं रक्षंस्तद्वेश्म दीपयेत् ॥१९॥
सापिधाने जरत्कूपे सततं वा निवासयेत् ॥

दर्शयेदित्यादि । अद्भुतानि अदृष्टपूर्वाणि भीषणानि । अस्य उन्मादार्तस्य । नाशं विनाशं प्रियस्य वस्तुनो वदेत् । भीमाकारैः रौद्ररूपैः । नागैः हस्तिभिः । दान्तैः शिक्षावद्भिः । व्यालैः सर्पैः । निर्विषैः गोनसादिभिः । भीषयेत् भयमुत्पादयेत् । पाशैः निगडादिभिः । संयतं बद्धम् । कशाभिः चर्मयष्टिभिः । निगडादिबन्धनं भ्रान्तमनसः कूपाभ्यादिप्रवेशनिरासार्थं क्रियासुखकरत्वार्थं च । प्रतुदेत् व्यथयेत् । आरया तीक्ष्णाग्रया शलाकया । एनम् उन्मादिनं, वेश्मनो गृहस्य, अन्तः मध्ये, प्रवेश्य रक्षन्, तद्वेश्म दीपयेत् प्रज्वालयेत् । कूपे निर्जले जलेन वर्जिते । जलेन तर्जयेद्वाऽपीति तप्तेनेति द्रष्टव्यं, तप्तमपि विशेषवृत्तेः; यत उक्तं तन्त्रान्तरे—"कपिकच्छ्वाऽथवा तप्तैर्लोहतैलजलैः स्पृशेत् ।"—( वा. उ. अ. ६ ) इति ॥ १७-१९ ॥—

त्र्यहात्त्र्यहाद्यवागूश्च तर्पणान् वा प्रदापयेत् ॥ २० ॥
केवलानम्बुयुक्तान् वा कुल्माषान् वा बहुश्रुतः ॥
हृद्यं यद्दीपनीयं च तत्पथ्यं तस्य भो(यो)जयेत् २१
(विडङ्गत्रिफलामुस्तमञ्जिष्ठादाडिमोत्पलैः ॥
श्यामैलवालुकैलाभिश्चन्दनामरदारुभिः ॥ २२ ॥
बर्हिष्ठरजनीकुष्ठपर्णिनीसारिवाद्वयैः ॥
हरेणुकात्रिवृद्दन्तीवचातालीसकेशरैः ॥ २८ ॥
द्विक्षीरं साधितं सर्पिर्मालतीकुसुमैः सह ॥
गुल्मकासज्वरश्वासक्षयोन्मादनिवारणम् २४ ॥
एतदेव हि संपक्कं जीवनीयोपसंभृतम् ॥
चतुर्गुणेन दुग्धेन महाकल्याणमुच्यते ॥ २५ ॥
अपस्मारं ग्रहं शोषं क्लैब्यं कार्श्यमबीजताम् ॥
घृतमेतन्निहन्त्याशु ये चादौ गदिता गदाः ॥ २६ ॥
बर्हिष्ठकुष्ठमञ्जिष्ठाकटुकैलानिशाह्वयैः ॥
तगरत्रिफलाहिङ्गुवाजिगन्धामरद्रुमैः ॥ २७ ॥
वचाऽजमोदाकाकोलीमेदामधुकपद्मकैः ॥
सशर्करं हितं सर्पिः पक्कं क्षीरचतुर्गुणम् ॥ २८ ॥
बालानां ग्रहजुष्टानां पुंसां दुष्टाल्परेतसाम् ॥
ख्यातं फलघृतं स्त्रीणां वन्ध्यानां चाशु गर्भदम् ॥)

आहारं निर्दिशन्नाह—त्र्यहादित्यादि । त्र्यहादेकान्तरेणेत्यर्थः । तर्पणान् केवलान् सक्तूनम्बुना युक्तान् दद्यादिति संबन्धः । अन्ये तर्पणमिति पठित्वा तर्पणं लाजा इति व्याख्यानयन्ति । कुल्माषान् वेति यवपिष्टमयान् भक्ष्यान् । अत्र यवाग्वाद्युपदेशो मध्यमन्दबलवदग्निसात्म्याद्यपेक्षया । बहुश्रुतो बहुविचक्षणो भिषक् । हृद्यं हृदयहितं यत् तत् स्रोतःशुद्ध्यर्थं देयम् । अस्याग्रे केचित् कल्याणकं पठन्ति; तन्न, ज्वरप्रतिषेधे

१ 'कूपे चक्रपिधाने वा' इति पा० । २ 'दद्यात्स कूकलेन वा' इति पा० । ३ 'अहः अहः स्थित्वा यवागूं सक्तून् वा केवलानम्बुनाऽऽक्तान् दद्यात्' इति पा० ।

तस्य पठितत्वात्; तत्र त्वतिक्रान्तावेक्षणतन्त्रयुक्त्याऽतिदेष्टव्यं फलघृतमिति केचित् पठन्ति; तच्च न पठनीयं, सर्वनिबन्धकारैर्निषिद्धत्वात् ॥ २०-२९ ॥

ब्राह्मीमैन्द्रीं विडङ्गानि व्योषं हिङ्गु सुरां जटाम् ॥
विषघ्नीं लशुनं रास्नां विशल्यां सुरसां वचाम् ३०
ज्योतिष्मतीं नागरं च अनन्तामभयां तथा ॥
सौराष्ट्रीं च समांशानि गजमूत्रेण पेषयेत् ॥ ३१ ॥
छायाविशुष्कास्तद्वर्तीर्योजयेद्विधिकोविदः ॥
अवपीडेऽञ्जनेऽभ्यङ्गे नस्ये धूमे प्रलेपने ॥ ३२ ॥

ब्राह्मीत्यादि । ब्राह्मी मण्डूकपर्णी, अन्ये लवणिकामाहुः । ऐन्द्री इन्द्रवारुणी, अन्ये मत्स्याक्षकमेदमाहुः । सुरा सुराह्वं, अन्तलोपात्; अन्ये तु इन्द्रसुरा इन्द्रवारुणी, इन्द्रशब्दलोपात् । जटा जटामांसी । विषघ्नी हरिद्रा, अन्ये निर्विषामाहुः । विशल्या गुडूची । सुरसा तुलसी । ज्योतिष्मती काकमर्दनी । नागरं शुण्ठी । अत्रान्ये 'नागविघ्नाम्' इति पठन्ति, नागविघ्ना इन्द्रवारुणीभेदः, वृश्चिकपत्रिकेत्यपरे । अनन्ता उत्पलसारिवा । अभया हरीतकी । सौराष्ट्री तुवरिका । विधिकोविदो विधिज्ञो वैद्यः ॥ ३०-३२ ॥

उरोपाङ्गललाटेषु सिराश्चास्य विमोक्षयेत् ॥

उरोपाङ्गेत्यादि । उरः स्तनयोरन्तरालम् । अत्रापाङ्गशब्दः शङ्खे वर्तते, सामीप्यात्; न त्वपाङ्गः शङ्खसन्धिः; कुतः ? तत्रैकस्या एव व्यध्यसिराया निर्दिष्टत्वात् । अस्य उन्मादिनः । भूतविद्यासिद्धान्तादुरःप्रभृतिषु सिराव्यधनमुक्तं, सिराव्यधविधितश्च शङ्खसन्धौ; अतोऽत्र उन्मादे उभयत्रापि सिराव्यधनमिष्टम् ॥—

अपस्मारक्रियां चापि ग्रहोद्दिष्टां च कारयेत् ॥३३॥

इदानीमतिदेशचिकित्सितमाह—अपस्मारेत्यादि । अत्रापस्मारक्रियाया अतिदेशेन वातादिजोन्मादचिकित्सितं प्राप्तं, अतोऽत्र चिकित्सादौ पृथग्दोषजचिकित्सितं नोक्तम् । एवमन्यदप्यनुक्तं पूरणीयम् ॥ ३३ ॥

शान्तदोषं विशुद्धं च स्नेहवस्तिभिराचरेत् ॥

शान्तदोषमित्यादि । शान्तदोषं शान्तोन्मादं, विशुद्धं वमनादिना, स्नेहवस्तिभिराचरेदिति पुनरुन्मादोद्गमनिषेधार्थम् ॥—

उन्मादेषु च सर्वेषु कुर्याच्चित्तप्रसादनम् ॥
मृदुपूर्वां मदेऽप्येवं क्रियां मूर्छ्रीं प्रयोजयेत् ॥ ३४ ॥
शोकशल्यं व्यपनयेदुन्मादे पञ्चमे भिषक् ॥
विषजे मृदुपूर्वां च विषघ्नीं कारयेत् क्रियाम् ॥३५॥

इति सुश्रुतसंहितायामुत्तरतन्त्रान्तर्गते भूतविद्यातन्त्रे उन्मादप्रतिषेधो नाम ( तृतीयोऽध्यायः, आदितः ) द्विषष्टितमोऽध्यायः ॥ ६२ ॥

१ 'नागविघ्नां' इति पा० । २ 'अजामूत्रेण' इति पा० । ३ 'भूतविद्याप्रतिपादिते उरःप्रभृतिष्विवत्रापाङ्गशब्देन सामीप्याच्छङ्खे सिराव्यधनमुक्तं, न तु नेत्रान्ते एव, तत्र सिराव्यधनिषेधात् । सिराव्यधविधितश्चापाङ्गसमीपे' इति पा० ।

उन्मादेष्वित्यादि । मृदुपूर्वां मृदुसंशोधनपूर्वां, क्रियां मूर्ध्नी मृद्वञ्जनाभ्यञ्जनादिकां, प्रयोजयेदिति संबन्धः । एवं पूर्वप्रकारेणेत्यर्थः । शोकशल्यं व्यपनयेदित्यादि व्यपनयेदिति इष्टप्रापणसान्त्वनाश्वासनादिभिः । पञ्चमे मनोदुःखजे । विषजे मृदुपूर्वामित्यादि । मृदुपूर्वां मृदुशोधनपूर्वां, विषघ्नीं क्रियां कल्पोपदिष्टां, कारयेदिति ॥ ३४ ॥ ३५ ॥

निबन्धान् निखिलान् दृष्ट्वा वैद्यः श्रीभरतात्मजः ।
भूतविद्यास्पदं स्पष्टं चक्रे श्रीडल्हणः सुधीः ॥ १ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे उन्मादप्रतिषेधो नाम द्विषष्टितमोऽध्यायः समाप्तः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ।

**अथातो रसभेदविकल्पमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अथ भूतविद्यां परिसमाप्य औपद्रविके तन्त्रभूषणानां रसभेदादीनामध्यायानां सूचितत्वात् तन्त्रभूषणानारब्धुकामस्तत्रोक्तक्रमानुसारेण रसभेदविकल्पाध्यायमाह—अथात इत्यादि । अथात इत्यादि पूर्ववद्व्याख्येयम् । रसभेदविकल्पमिति रसा मधुरादयः पूर्वं व्याख्याताः, रसानां भेदेन द्वित्रिकादिभेदेन विकल्पो विभजनं यस्मिन् स तथा, अथवा रसभेदानां विकल्पो दोषभेदवशादवचारणं यस्मिन् स तथा, तम् ॥ १ ॥ २ ॥

**दोषाणां पञ्चदशधा प्रसरोऽभिहितस्तु यः ॥**
**त्रिषष्ट्या रसभेदानां तत्प्रयोजनमुच्यते ॥ ३ ॥**

रसभेदकथने प्रयोजनमाह—दोषाणामित्यादि । यः पञ्चदशप्रकारो व्रणप्रश्नाध्याये दोषाणां प्रसर उक्तः, तद्रसभेदानां त्रिषष्ट्याः प्रयोजनमुच्यत इति संबन्धः । अत्र पञ्चदशधेत्युपलक्षणं, तेन दोषभेदानां त्रिषष्टिरपि गृह्यते । अयमभिप्रायः—त्रिषष्टिप्रकाराणामपि दोषभेदानामुपयोगार्थं रसभेदा उक्ताः ॥३॥

**अविदग्धा विदग्धाश्च भिद्यन्ते ते त्रिषष्टिधा ॥**
**रसभेदत्रिषष्टिं तु वीक्ष्य वीक्ष्यावचारयेत् ॥ ४ ॥**

कीदृशा रसास्त्रिषष्टिभेदान् यान्तीत्याह—अविदग्धा इत्यादि । अविदग्धा असंयुक्ता एकाकिनः समवायतो भिद्यन्त इत्यर्थः । विदग्धाः संयोगतः समवायतश्च संयुक्ता रसान्तरसंयोगाद्भिद्यन्ते । विदग्धशब्दः संयुक्ते वर्तते, धातूनामनेकार्थत्वात् । भिद्यन्ते एकैकेनानुगमनाद्भेदं यान्तीत्यर्थः । ते रसाः । तत्र यथासंभवं केचित् संयोगतः केचित् समवायेतश्च भिद्यन्ते । संयुक्ता यथा—बदरकपित्थफलादिकं मधुराम्लं (१), उष्ट्रीक्षीरोरभ्रमांसादिकं मधुरलवणं (२), कुकुरेश्रगालमांसादिकं मधुरकटुकं (३), श्रीवाससर्जरसादिकं मधुरतिक्तं (४) तैलधन्वनफलादिकं मधुरकषायं (५); ऊषकादिकम् अम्ललवणं (६), चुक्रादिकम् अम्लकटुकं (७), सुरादिकम् अम्लतिक्तं (८), हस्तिनीदधिशुकमांसादिकम् अम्लकषायं (९); त्रपुसीसादिकं लवणतिक्तं (१०), गोमूत्रस्वर्जिकादिकं लवणकटुकं (११), समुद्रफेनादिकं लवणकषायं (१२); कर्पूरजातीफलादिकं तिक्तकटुकं (१३), लवलीफलहस्तिनीघृतादिकं तिक्तकषायं (१४); भल्लातकमज्जाहरितालादिकं कटुकषायम् (१५); एवं द्विरसभेदाः पञ्चदशधा दर्शिताः । अतः परं रसत्रितयभेदा वक्ष्यन्ते—हस्तिमांसादिकं मधुराम्ललवणं (१), शल्यकमांसादिकं मधुराम्लकटुकं (२), गोधूमोत्थसुरादिकं मधुराम्लतिक्तकं (३), मस्तुतक्रादिकं मधुराम्लकषायं (४), काणकपोतमांसादिकं मधुरलवणकटुकं (५), शम्बूकादिमांसं मधुरलवणतिक्तं (६), पद्मकन्दादिकं गुडसंयुक्तं मधुरलवणकषायं (७), तृणशून्याफलशुष्ककुसुम्बर्यादिकं मधुरकटुतिक्तकं (८), गोधामांसैरण्डतैलादिकं मधुरकटुकषायं (९), गुडूचीशाखामृगामिषतुवरकतैलादिकं मधुरतिक्तकषायं (१०), रौप्यशिलाजत्वादिकम् अम्ललवणकटुकं (११), हस्तिमूत्रादिकम् अम्ललवणतिक्तं (१२), सरोमकं हस्तिनीदध्यादि अम्ललवणकषायं (१३), मरिचसंस्कृतसुरादिकम् अम्लकटुतिक्तकं (१४), अम्लवेतसादिकम् अम्लकटुकषायं (१५), कीरमांसयुतसुरादिकम् अम्लतिक्तकषायं (१६), अविमूत्रादिकं लवणकटुतिक्तं (१७), अरुष्करं सरोमकं लवणकटुकषायं (१८), समुद्रफेनादिकं लवणतिक्तकषायं (१९), कृष्णागरुसुरदारुस्नेहादिकं कटुतिक्तकषायं (२०); एवं त्रिकभेदा विंशतिर्दर्शिताः । अतः परं चतुःसंयोगाः पञ्चदशप्रकारा वक्ष्यन्ते—गोमूत्रान्वितशिलाजतुप्रभृतिकं मधुराम्ललवणकटुकं (१), गोमूत्रैकशफक्षीरादिकं मधुराम्ललवणतिक्तकं (२) सैन्धवान्विततक्रादिकं मधुराम्ललवणकषायं (३), लशुनान्वितं सुरादिकं मधुराम्लकटुतिक्तं (४), काञ्जिकान्वितैरण्डतैलादि खदिरान्वितशिलाह्वादिकं च मधुराम्लकटुकषायं (५), उदुम्बरान्वितं यवासशर्करादिकं मधुराम्लतिक्तकषायं (६), वार्ताकफलादिकं मधुरलवणतिक्तकटुकं (७), गोमूत्रान्विततैलादिकं मधुरलवणकटुकषायं (८), तिलगुग्गुल्वादिकं मधुरकटुतिक्तकषायं (९), समुद्रफेनशर्कराचित्रकान्वितबदरादि मधुरलवणतिक्तकषायं (१०), सुवर्चलान्वितहस्तिनीदध्यादि-

१ 'वैद्यश्रीभरताङ्गभूः' इति पा० । २ 'अथादयः पूर्ववद् व्याख्येयाः' इति पा० । ३ 'रसभेदानामुपयोगार्थं दोषभेदा उक्ताः' इति पा० । ४ 'त्रिषष्टिभेदं' इति पा० । ५ 'समवायतो द्विकादिभेदेन रसद्रव्यान्तरद्वारेण कथ्यन्ते' इति पा० ।

१ 'कुङ्कुमकेशरशृगालमांसादिकं' इति पा० । २ 'द्विरसयोनयः' इति पा० । ३ 'रसत्रिकसंयोगो वक्ष्यते' इति पा० । ४ 'सिञ्चितिकाफलादिकं' इति पा० । ५ 'कटुकासंस्कृतगुडादिकं' इति पा० । ६ 'मथितसंस्कृतसुरादिकं' इति पा० । ७ 'आध्यादिकं' इति पा० । ८ 'शिलाजतुप्रभृतिकं' इति पा० । ९ 'समुद्रफेनसंयुक्तं चन्दनं मधुरलवणतिक्तकषायम्' इति पा० । १० 'सुवर्चलासंयुक्तलवणाद्यन्वितमदिरादिकं' इति पा० ।

कृतसुरादिकम् अम्ललवणकटुतिक्तं (११), सौवर्चलान्वितहस्तिनीदध्यादिकम् अम्ललवणकटुकषायं (१२), औद्भिदलवणान्वितं शुक्रमांसादिकम् अम्ललवणतिक्तकषायं (१३), बालमूलकहस्तिनीदध्यादिकम् अम्लकटुतिक्तकषायं (१४), सरोमकं बालबिल्वादिकं लवणकटुतिक्तकषायं (१५); एवं चतुष्करससंयोगाः पञ्चदश कथिताः। अतः परं पञ्चरससंयोगाः षड् वक्ष्यन्ते—आमकरमर्दान्वितं भृष्टवार्ताकफलादिकं मधुराम्ललवणतिक्तकषायं (१), कटुत्रययवक्षारान्विततक्रादिकं मधुराम्ललवणकटुकषायम् (२), औद्भिदान्विततक्रादिकं मधुराम्ललवणतिक्तकषायं (३), हरीतकीधात्रीफलादिकं मधुराम्लकटुतिक्तकषायं (४), रसोनादिकं मधुरलवणकटुतिक्तकषायं (५), भल्लातकरौप्यशिलाजतुमिश्रितनिम्बादिकम् अम्ललवणकटुतिक्तकषायं (६); एवं पञ्चरससंयोगाः षड् दर्शिताः। अतः परं षड्रसं वक्ष्यते—एणमांसादिकं मधुराम्ललवणकटुतिक्तकषायम्। अतः परमेकैकरसानाह—सन्तानिकागोदुग्धादिकं मधुरं, (१) आमकरमर्दादिकम् अम्लं (२), रोमकादिकं लवणं (३), चव्यादिकं कटुकं (४), निम्बपर्पटादिकं तिक्तं (५), पद्मन्यग्रोधाद्यङ्कुरादिकं कषायं (६); एवं षट् कथिताः। अनेन प्रकारेण त्रिषष्टिः कथिताः। **कार्तिककुण्डस्त्वमुं** पाठमन्यथा आपातनिकां कृत्वा व्याख्यानयति; तद्यथा—दोषाणां पञ्चदशधा प्रसरो भेदः, तस्य बहुभिस्त्रिषष्टिरसभेदैः सह प्रयोगो दुर्घटः, अतो दोषभेदानामपि बहुलमाह—अविदग्धा इत्यादि। अविदग्धा अप्रकुपिताः; विदग्धाः कुपिता दोषाः; यद्यस्मिन् पाठे दोषाणां त्रिषष्टिभेदा उक्ताः, तर्हि पूर्वपाठे पञ्चदशधा प्रसरः किमित्युक्तः? सत्यं, कुपितदोषस्यात्यन्तचिकित्सनीयत्वप्रतिपादनार्थम्; अन्यत् ग्रन्थगौरवभयात् परित्यक्तम्॥ ४॥

**एकैकेनानुगमनं भागशो यदुदीरितम्॥**
**दोषाणां, तत्र मतिमान् त्रिषष्टिं तु प्रयोजयेत्॥५॥**

पूर्वमविदग्धा विदग्धाश्च रसा एकैकेनानुगमनाद्भिद्यन्त इत्युक्तं, तदेव स्मारयति—एकैकेनानुगमनमित्यादि। भागशः अंशांशतया। रसानामेकैकेनानुगमनं प्रवर्तनं यदुदीरितमस्मिन्नध्याये भणितं, तद्वशात्ते रसास्त्रिषष्टिधा भिद्यन्त इति पूर्ववाक्येन सह संबन्धः। तां च रसभेदत्रिषष्टिं, मतिमान् ऊहापोहविद्वैद्यः, तत्र दोषभेदेषु प्रयोजयेत्। मतिमानिति पदात् यादृशा एव दोषाणां हीनाधिकभावेन भेदास्तादृशा एव रसभेदा योज्या इति सूचयति। अन्ये तु 'एवमेवानुगमनं' इति पठित्वा दोषाणामेवं भागशोंऽशांशबलविकल्पेनैकं प्रत्येकस्यानुगमनं दोषभेदीये यदुदीरितं तत्र रसभेदत्रिषष्टिं योजयेदिति। यद्यपि दोषभेदीये यद्वक्ष्यते इति सुन्दरं ननु यदुदीरितमिति, तथाऽपि भाविनि भूतवदुपचाराद्दोषभेदीये यदुदीरितमिति कृतम्। अपरेऽत्रामुं पाठमन्यथा पठित्वा बहु जल्पन्ति, तच्च ग्रन्थगौरवभयाच्छिष्यबुद्धिव्याकुलहेतुत्वाच्च परित्यक्तम्॥ ५॥

**यथाक्रमप्रवृत्तानां द्विकेषु मधुरो रसः॥**
**पञ्चानुक्रमते योगानम्लश्चतुर एव तु॥ ६॥**
**त्रींश्चानुगच्छति रसो लवणः कटुको द्वयम्॥**
**तिक्तः कषायमन्वेति ते द्विका दश पञ्च च॥ ७॥**

**तद्यथा—मधुराम्लः १, मधुरलवणः २, मधुरकटुकः ३, मधुरतिक्तः ४, मधुरकषायः ५, एते पञ्चानुक्रान्ता मधुरेण; अम्ललवणः १, अम्लकटुकः २, अम्लतिक्तः ३, अम्लकषायः ४, एते चत्वारोऽनुक्रान्ता अम्लेन; लवणकटुकः १, लवणतिक्तः २, लवणकषायः ३, एते त्रयोऽनुक्रान्ता लवणेन; कटुतिक्तः १, कटुकषायः २, द्वावेतावनुक्रान्तौ कटुकेन; तिक्तकषायः १ एक एवानुक्रान्तस्तिक्तेन; एवमेते पञ्चदश द्विकसंयोगा व्याख्याताः॥८॥**

इदानीं रसभेदत्रिषष्टिं ग्रन्थेनैव विवृण्वन्नाह—यथाक्रममित्यादि। यथाक्रमप्रवृत्तानामिति मधुरादिक्रमप्रवृत्तानां रसानामित्यर्थः। द्विकेषु द्विकसंयोगेषु। अनुक्रमते अनुगच्छति, अनुगतो भवतीत्यर्थः। दश पञ्चेति पञ्चदशेत्यर्थः। यद्यपि सूत्रस्थाने रसविशेषविज्ञानीयाध्याये पञ्चदश द्विका इत्यादिना द्विकसंयोगादीनां संख्या उक्ताः, तथाऽपि पुनरत्र संख्याकरणं नियमार्थम्। तेन इयन्त एव रसभेदा गणनीया न तन्त्रान्तरोक्तास्तरतमयोगादिजा इत्यर्थः। तेषामेव द्विकानां पञ्चदशसंख्याकानामुदाहरणान्याह—तद्यथेत्यादि। मधुराम्लौ विद्येते यत्र संयोगे स मधुराम्लः। एवं शेषेष्वपि ज्ञेयम्॥ ६-८॥

**त्रिकान् वक्ष्यामः—**

**आदौ प्रयुज्यमानस्तु मधुरो दश गच्छति॥**
**षडम्लो लवणस्तस्मादर्धमेकं तथा कटुः॥ ९॥**

**तद्यथा-मधुराम्ललवणः १, मधुराम्लकटुकः२, मधुराम्लतिक्तः ३, मधुराम्लकषायः ४, मधुरलवणकटुकः ५, मधुरलवणतिक्तः ६, मधुरलवणकषायः ७, मधुरकटुकतिक्तः ८, मधुरकटुकषायः ९, मधुरतिक्तकषायः १०, एवमेषां दशानां त्रिकसंयोगानामादौ मधुरः प्रयुज्यते; अम्ललवणकटुकः १, अम्ललवणतिक्तः २, अम्ललवणकषायः ३, अम्लकटुतिक्तः ४, अम्लकटुकषायः ५, अम्लतिक्तकषायः ६, एवमेषां षण्णामादावम्लः प्रयुज्यते; लवणकटुतिक्तः १, लवणकटुकषायः २, लवणतिक्तकषायः ३, एवमेषां त्रयाणामादौ लवणः प्रयुज्यते; कटुतिक्तकषायः १, एवमेकस्यादौ कटुकः प्रयुज्यते; एवमेते त्रिकसंयोगा विंशतिर्व्याख्याताः॥ १०॥**

१ 'एकैकेनानुगमनाद्भागशो य उदीरिताः' इति पा०।
२ 'रसानां' इति पा०।

१ 'एवमेते पञ्चदश द्विकाः' इति पा०। २ 'रसः' इति पा०।

आद्यावित्यादि । दशेति दशयोगानित्यर्थः । तस्मादर्धमिति त्रीनित्यर्थः । तेषामेव त्रिकानां विंशतिसंख्याकानामुदाहरणान्याह—मधुराम्लेत्यादि । मधुराम्ललवणा विद्यन्ते यत्र स मधुराम्ललवणः । एवं शेषेष्वपि व्याख्येयम् ॥ ९ ॥ १० ॥

चतुष्कान् वक्ष्यामः ।—
चतुष्करससंयोगान्मधुरो दश गच्छति ॥
चतुरोऽम्लोऽनुगच्छेच्च लवणस्त्वेकमेव तु ॥ ११ ॥

मधुराम्ललवणकटुकः १, मधुराम्ललवणतिक्तः २, मधुराम्ललवणकषायः ३, मधुराम्लकटुकतिक्तः ४, मधुराम्लकटुकषायः ५, मधुराम्लतिक्तकषायः ६, मधुरलवणकटुकतिक्तः ७, मधुरलवणकटुकषायः ८, मधुरलवणतिक्तकषायः ९, मधुरकटुतिक्तकषायः १०, एवमेषां दशानामादौ मधुरः प्रयुज्यते; अम्ललवणकटुतिक्तः १, अम्ललवणकटुकषायः २, अम्ललवणतिक्तकषायः ३, अम्लकटुतिक्तकषायः ४, एवमेषां चतुर्णामादावम्लः; लवणकटुतिक्तकषायः १, एवमेकस्यादौ लवणः; एवमेते चतुष्करससंयोगाः पञ्चदश कीर्तिताः ॥ १२ ॥

चतुष्कानित्यादि । दशेति 'योगान्' इति शेषः । तेषां चतुष्करससंयोगे पञ्चदशसंख्याकानामुदाहरणान्याह—मधुराम्लेत्यादि । मधुराम्ललवणकटुका विद्यन्ते यत्र योगे स मधुराम्ललवणकटुकः; एवं शेषेष्वपि ॥ ११ ॥ १२ ॥

पञ्चकान् वक्ष्यामः ।—
पञ्चकान् पञ्च मधुर एकमम्लस्तु गच्छति ॥ १३ ॥

मधुराम्ललवणकटुतिक्तः १, मधुराम्ललवणकटुकषायः २, मधुराम्ललवणतिक्तकषायः ३, मधुराम्लकटुतिक्तकषायः ४, मधुरलवणकटुतिक्तकषायः ५, एवमेषां पञ्चानामादौ मधुरः प्रयुज्यते; अम्ललवणकटुतिक्तकषायः १, एवमेकस्यादावम्लः; एवमेते षट् पञ्चकसंयोगा व्याख्याताः ॥ १४ ॥

पञ्चकानित्यादि । पञ्चकानिति पञ्चरससमूहान् । पञ्चेति पञ्चसंख्याकान् 'योगान्' इति शेषः । तेषामेव षण्णामुदाहरणान्याह—मधुराम्लेत्यादि ॥ १३ ॥ १४ ॥

षट्कमेकं वक्ष्यामः; एकस्तु षट्कसंयोगः—मधुराम्ललवणकटुतिक्तकषायः; एष एक एव षड्रसंयोगः ॥ १५ ॥

तस्य षट्कस्योदाहरणमाह—मधुराम्लेत्यादि ॥ १५ ॥

एकैकश्च षड्रसा भवन्ति—मधुरः १, अम्लः २, लवणः ३, कटुकः ४, तिक्तः ५, कषायः ६, इति ॥ १६ ॥

एषामुदाहरणान्याह—मधुरेत्यादि ॥ १६ ॥

भवति चात्र—[1]
एषा त्रिषष्टिर्व्याख्याता रसानां रसचिन्तकैः[2] ॥
दोषभेदत्रिषष्ट्यां तु प्रयोक्तव्या विचक्षणैः ॥ १७ ॥

इति सुश्रुतसंहितायामुत्तरतन्त्रे तन्त्रभूषणाध्यायेषु रसभेदविकल्पाध्यायो नाम ( प्रथमः, आदितः ) त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

उपसंहारमाह—भवति चात्रेत्यादि । अनुरसो हीनरसः । दोषभेदत्रिषष्ट्यां दोषभेदीयाध्याये वक्ष्यमाणायाम् । यद्यपि परस्परं भिन्नाः सन्तो रसा बहवो भवन्ति, तथाऽपि षट्त्वं नातिवर्तन्ते; यथा वातादिदोषा बहुधा भिन्ना अपि त्रित्वं न त्यजन्ति तथा रसा अपि षट्त्वं नातिवर्तन्ते ॥ १७ ॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

## चतुःषष्टितमोऽध्यायः ।

अथातः स्वस्थवृत्तमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

रसभेदविकल्पानन्तरं पूर्वोक्तक्रमेणैव स्वस्थवृत्तारम्भः—अथात इत्यादि । वृत्तम् आचारः । केचित् स्वस्थरक्षणीयमिति पठित्वा स्वस्थस्य रक्षणं यस्मिन्नध्याये स तथा, तं व्याख्यास्याम इति व्याख्यानयन्ति ॥ १ ॥ २ ॥

सूत्रस्थाने समुद्दिष्टः स्वस्थो भवति यादृशः ॥
तस्य[3] यद्रक्षणं तद्धि चिकित्सायाः प्रयोजनम् ॥३॥

इदानीमतिदेशेन स्वस्थलक्षणं चिकित्साप्रयोजनं चाह—सूत्रेत्यादि । समुद्दिष्टः 'समदोषः समाग्निश्च' ( सू. अ. १५ ) इत्यादिना दोषधातुमलक्षयवृद्धिविज्ञानीयाध्याये । तादृशस्वस्थस्य रक्षणं भाविव्याधिनिवारणत्वेन पालनम् । हि स्फुटार्थः । ये तु 'सूत्रस्थान' इत्यादि श्लोकार्धं न पठन्ति ते 'समदोषः' इत्यादिकं सूत्रस्थानोक्तं स्वस्थलक्षणमत्रापि पठन्ति, अनुवादत्वेन न पौनरुक्त्यमिति मन्यन्ते । 'चिकित्सायाः प्रयोजनं' इत्यत्र 'चिकित्सायाः परं वपुः' इति केचित् पठन्ति ॥ ३ ॥

तस्य यद्वृत्तमुक्तं हि रक्षणं च मयाऽऽदितः ॥
तस्मिन्नर्थाः समासोक्ता विस्तरेणेह वक्ष्यते ॥ ४ ॥

ननु, चानागतबाध एव स्वस्थवृत्तस्य दर्शितत्वात् कस्मात् पुनरत्र तदभिधानमित्याशङ्क्याह—तस्येत्यादि । तस्य स्वस्थस्य । आदितः अनागतबाधे । तस्मिन् अनागतबाधोक्तस्वस्थवृत्ते । समासोक्ताः संक्षेपेणैवोक्ताः । इह अस्मिन्नध्याये, वक्ष्यते 'स्वस्थवृत्तं'

---

१ 'भवति चात्र' इति क्वचित्पुस्तके न पठ्यते । २ 'रसानुरसचिन्तकैः' इति पा० । ३ 'तस्यादितो रक्षणं हि चिकित्सायां मयोदितम्' इति पा० ।

इति शेषः । केचित् 'विस्तरस्तस्य वक्ष्यते' इति पठन्ति, तस्येति स्वस्थवृत्तस्य । अपरे 'विस्तरश्चात्र वक्ष्यते' इति पठित्वा 'तेषामर्थानां विस्तरोऽत्र वक्ष्यते' इति व्याख्यानयन्ति ॥ ४ ॥

यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम् ॥
तेषु तेषु प्रदातव्याः रसास्ते ते विजानता ॥ ५ ॥

ऋत्वाश्रयं स्वस्थवृत्तं संक्षेपेणाह—यस्मिन्नित्यादि । देहिनामित्यत्र देहिशब्देनाभेदोपचाराच्छरीरमुच्यते; न आत्मा, तस्य निर्विकारत्वात् । तेषु तेष्विति धातुषु । ते ते रसाः तद्दोषप्रत्यनीका रसाः । अत्र रसशब्देन रसवन्ति द्रव्याणि भण्यन्ते, केवलरसस्योपयोगासंभवात् । विजानता वैद्येन ॥ ५ ॥

प्रक्लिन्नत्वाच्छरीराणां वर्षासु भिषजा खलु ॥
मन्देऽग्नौ कोपमायान्ति सर्वेषां मारुतादयः ॥ ६ ॥
तस्मात् क्लेदविशुद्ध्यर्थं दोषसंहरणाय च ॥
कषायतिक्तकटुकै रसैर्युक्तमपद्रवम् ॥ ७ ॥
नातिस्निग्धं नातिरूक्षमुष्णं दीपनमेव च ॥
देयमन्नं नृपतये यज्जलं चोक्तमादितः ॥ ८ ॥
तप्तावरतमम्भो वा पिबेन्मधुसमायुतम् ॥
अह्नि मेघानिलाविष्टेऽत्यर्थशीताम्बुसङ्कुले ॥ ९ ॥
तरुणत्वाद्विदाहं च गच्छन्त्योषधयस्तदा ॥
मतिमांस्तन्निमित्तं च नातिव्यायाममाचरेत् ॥ १० ॥
अत्यम्बुपानावश्यायग्राम्यधर्मातपांस्त्यजेत् ॥
भूबाष्पपरिहारार्थं शयीत च विहायसि ॥ ११ ॥
शीते साग्नौ निवाते च गुरुप्रावरणे गृहे ॥
यायान्नागवधूभिश्च प्रशस्तागुरुभूषितः ॥ १२ ॥
दिवास्वप्नमजीर्णं च वर्जयेत्तत्र यत्नतः ॥

आर्तवविधिं संक्षेपेणाभिधायेदानीं विस्तरेणाह—प्रक्लिन्नत्वादित्यादि । प्रक्लिन्नत्वात् अत्यन्तार्द्रत्वात् । भिषजेति पदं 'देयमन्नम्' इत्यत्र योज्यम् । प्रक्लिन्नत्वादिति अग्निमान्द्यहेतुः, यतोऽम्बुगुणबाहुल्येनाग्निमान्द्यं भवति । ननु, वर्षासु संचयरूपतया पित्तमेव कुपितमस्ति नेतरौ, तत् कथं कुप्यन्ति मारुतादय इत्युक्तं? सत्यं, प्रावृट्प्रकुपितो वायुरुपशमहेत्वभावाद्वर्षास्वपि कुपित एवानुवर्तते, कफश्च मेघनिःस्यन्दादिहेतुभिरसंचितोऽपि कुप्यति, अतो युक्त एव दोषत्रयप्रकोपः । अथवा अग्निमान्द्याद्दोषत्रयप्रकोपः; तथा चोक्तं,—'शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ' इति । तस्मादिति यतो वर्षासु शरीरक्लेदो दोषप्रकोपश्च भवति तस्मादित्यर्थः । दोषसंरक्षणं च संचयादिनिवारणेन ज्ञेयम् । रसैर्युक्तमित्यन्नमित्येतस्य विशेषणम् । अपद्रवम् अपगतद्रवं, द्रवहीनमित्यर्थः; अन्ये 'अथाद्रवं' इति पठन्ति, ईषद्द्रवमिति च व्याख्यानयन्ति । नातिस्निग्धं नातिरूक्षं साधारणमित्यर्थः । नृपतिग्रहणम् ईश्वरोपलक्षणार्थम् । यज्जलं चोक्तमादित इति 'वर्षास्वन्तरिक्षं' इत्यादिना पानीयवर्गे कथितम् । तप्तावरतं शृतशीतं, तत् संचितपित्तोपशमनार्थम् । मधुसमायुतं समधु, एतच्चानुबलस्य कफस्योपशमनार्थम् । ननु, 'वर्षासु न पिबेत्तोयं' इत्यनेन सह कथमेतन्न विरुध्यते? उच्यते,—न पिबेदित्यस्यात्यल्पपाने व्यवस्थितेः । तरुणत्वात् अभिनवत्वात् । विदाहम् अम्लपाकम् । तदा वर्षाकाले, तन्निमित्तं विदाहकारणात् । नातिव्यायाममाचरेदित्यनेन मृदुव्यायाममाचरेदित्युक्तं; स च शरीरक्लेदोपशोषार्थं वह्निसन्धुक्षणार्थं च । अवश्यायो विनामेघं सूक्ष्मजलकणानिपातः । ग्राम्यधर्मो मैथुनम् । आतपो घर्मः । तथेति नाचरेदित्यर्थः । विहायःशब्देनात्र धवलगृहोपरिभूरभिप्रेता, अन्ये मञ्चादिकं मन्यन्ते । शीते साग्निनिवातगृहे शयनं वातकोपोपशमनाय । गुरुप्रावरणो गुरुवस्त्रावृताङ्गः पुरुषः । गृहे इत्यत्रापि शयीत इति योज्यम् । यायाद् गच्छेत् । नागवधूभिरिति हस्तिनीगमनं च कर्दमाम्बुनोः परिहारार्थम् । प्रशस्तागुरुभूषित इति अगुरुणः शैत्यनिर्वारकत्वात् । अजीर्णं चेति चकारात् पूर्वानिलमुदमन्थं च वर्जयेत् । सरिज्जलमविहितत्वेनैव वर्ज्यम् । तत्रेति वर्षासु । अतिव्यायामादेर्निषेध्यगणत्वाद्दिवास्वप्नाजीर्णयोः पृथगुपादानमत्यन्तनिषेधार्थम् ॥ ६–१२ ॥—

सेव्याः शरदि यत्नेन कषायस्वादुतिक्तकाः ॥ १३ ॥
क्षीरेक्षुविकृतिक्षौद्रशालिमुद्गादिजाङ्गलाः ॥
श्वेतस्रजश्चन्द्रपादाः प्रदोषे लघु चाम्बरम् ॥ १४ ॥
सलिलं च प्रसन्नत्वात् सर्वमेव तदा हितम् ॥
सरःस्वाप्लवनं चैव कमलोत्पलशालिषु ॥ १५ ॥
प्रदोषे शशिनः पादाश्चन्दनं चानुलेपनम् ॥
तिक्तस्य सर्पिषः पानैरसृक्स्रावैश्च युक्तितः ॥ १६ ॥
वर्षासूपचितं पित्तं हरेच्चापि विरेचनैः ॥
नोपेयात्तीक्ष्णमम्लोष्णं क्षारं स्वप्नं दिवाऽऽतपम् १७
रात्रौ जागरणं चैव मैथुनं चापि वर्जयेत् ॥
( स्वादुशीतजलं मेध्यं शुचिस्फटिकनिर्मलम् ॥ १८ ॥
शरच्चन्द्रांशुनिर्धौतमगस्त्योदयनिर्विषम् ॥
प्रसन्नत्वाच्च सलिलं सर्वमेव तदा हितम् ॥ १९ ॥
सचन्दनं सकर्पूरं वासश्चामलिनं लघु ॥
भजेच्च शारदं माल्यं सीधोः पानं च युक्तितः ॥ २० ॥
पित्तप्रशमनं यच्च तच्च सर्वं समाचरेत् ॥ )

वार्षिकं विधिमभिधाय शारदमाह—सेव्या इत्यादि । क्षीरेक्षुविकृतीत्यत्र विकृतिशब्दः क्षीरेक्षुभ्यां संबध्यते; क्षीरवि-

१ 'वर्षासु खलु देहिनाम्' इति पा० । २ 'संघ(ह)र्षात्' इति पा० । ३ 'दोषसंरक्षणाय च' इति पा० । ४ 'एव वर्तते' इति पा० । ५ 'कुप्यति मनाक्' इति पा० । ६ 'शरीरेऽग्निमान्द्यं' इति पा० ।

१ 'विदाहकारणम्' इति पा० । २ 'रात्रिनिपातिनः सूक्ष्मजलकणाः' 'उस' इति लोके इति पा० । ३ 'दुष्टकर्दमस्खलनयोः' इति पा० । ४ 'शीतशमकत्वात्' इति पा० । ५ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

कृतिः, इक्षुविकृतिरिति । क्षौद्रं मधु । शाल्यो विविधाः । मुद्गादीनामित्यादिशब्दाज्जीर्णा यवगोधूमादयो गृह्यन्ते । जाङ्गला इति एणाद्या लावाद्याश्च । श्वेतस्रजः शुक्लपुष्पमालाः । चन्द्रपादाः चन्द्ररश्मयः । प्रदोषे रात्रिप्रथमप्रहरार्धे । लघु चाम्बरं सूक्ष्मवस्त्रम् । सलिलं च प्रसन्नत्वादिति । यद्यपि 'शरदि सर्वं प्रसन्नत्वात्' इत्यनेनैव सर्वं जलं प्राप्तं, तथाऽपि प्रकरणान्तरत्वादुपादानम् । सरःसु दिव्यखातेषु । आप्लवनं प्रतरणम् । कमलोत्पलशालिषु कमलोत्पलश्री[1]राजिषु, शालिष्वित्यत्र शोभिष्विति केचित् पठन्ति; कमलादियुक्ताया विशेषेण पित्तहरत्वम् । प्रदोषे शशिनः पादा इति पुनरभिधानं प्रदोषे एवावश्यं चन्द्रपादसेवा कार्या नतु सर्वरात्रं, अनुबलकफस्याभिष्यन्दभयात् । पित्तसंशमनमभिधायेदानीं संशोधनमाह—तिक्तस्येत्यादि । तिक्तघृतपानं कफरक्तप्रत्यनीकत्वात् । असृङ्मोक्षणं च रक्तस्य प्रदुष्टत्वात् । युक्ति इति योगतः, आतुरबलादिकं वीक्ष्येत्यर्थः । सेव्यमभिधाय वर्ज्यमाह—नोपेयादित्यादि । नोपेयात् न सेवेत । स्वप्नं दिवेति दिवास्वापम् । मैथुनं चापीत्यत्र अपिशब्दादवश्यायपुरोवातादिकमपि समानतन्त्रोक्तं वर्जयेत् ॥ १३–२० ॥—

([2]हेमन्तः शीतलो रूक्षो मन्दसूर्योऽनिलाकुलः ॥२१॥
ततस्तु शीतमासाद्य वायुस्तत्र प्रकुप्यति ॥
कोष्ठस्थः शीतसंस्पर्शादन्तःपिण्डीकृतोऽनलः २२
रसमुच्छोषयत्याशु तस्मात् स्निग्धं तदा हितम् ॥)
हेमन्ते लवणक्षारतिक्ताम्लकटुकोत्कटम् ॥ २३ ॥
ससर्पिस्तैलमहिममशनं हितमुच्यते ॥
तीक्ष्णान्यपि च पानानि पिबेदगु[3]रुभूषितः ॥ २४ ॥
तैलाक्तस्य सुखोष्णे च वारिकोष्ठेऽवगाहनम् ॥
साङ्गारयाने महति कौशेयास्तरणास्तृते ॥ २५ ॥
शयीत शयने तैस्तैर्वृतो गर्भगृहोदरे ॥
स्त्रीः स्निग्धाऽगुरुधूपाढ्याः पीनोरुजघनस्तनीः २६
प्रकामं च निषेवेत मैथुनं तर्पितो नृपः ॥
([4]मधुरं तिक्तकटुकमम्लं लवणमेव च ॥ २७ ॥
अन्नपानं तिलान् माषाञ्छाकानि च दधीनि च ॥
तथेक्षुविकृतीः शालीन् सुगन्धांश्च नवानपि ॥२८॥
प्रसहानूपमांसानि क्रव्यादविलशायिनाम् ॥
औदकानां प्लवानां च पादिनां चोपसेवयेत् ॥ २९ ॥
मद्यानि च प्रसन्नानि यच्च किञ्चित् बलप्रदम् ॥
कामतस्तन्निषेवेत पुष्टिमिच्छन् हिमागमे ॥ ३० ॥
दिवास्वप्नमजीर्णं च वर्जयेत्तत्र यत्नतः ॥)
एष एव विधिः कार्यः शिशिरे समुदाहृतः ॥ ३१ ॥

इदानीं हैमन्तिकं विधिमाह—हेमन्त इत्यादि । अहिमम् उष्णम् । अशनं भोजनं, पानानि मद्यादीनि । अगुरुभूषितः[1] अगुरुचूर्णावलिप्तः । वारिकोष्ठे पाषाणादिविरचिते कुशूलाकारे जलपात्रे । साङ्गारयाने अङ्गारपूर्णशकटिकासहिते, एतद्गर्भगृहोदरे इत्येतस्य विशेषणम् । महति विस्तीर्णे । कौशेयास्तरणास्तृते पट्टवस्त्रीयतूलिकाच्छादिते । कौशेयमित्युपलक्षणं, तेन प्रावाराजिनादीनि तन्त्रान्तरोक्तानि गृह्यन्ते । तैस्तैरिति शीतापहैस्तन्त्रान्तरोक्तैर्वस्त्रविशेषैः, वृत इति आच्छादिताङ्गः पुरुषः । गर्भगृहोदरे इति बृहद्गृहमध्ये अपरं यत् क्षुद्रगृहं तस्याभ्यन्तरे । गर्भगृहोदरे इत्युपलक्षणं, तेन भूगृहमपि गृह्यते । स्निग्धा आलिङ्ग्य । पीनं मांसलं, ऊरु जानुवङ्क्षणयोर्मध्यं, जघनं कट्या अग्रिमभागः । ननु, तन्त्रान्तरे 'गोरसानिक्षुविकृतीः' इत्यादिना यादृश आहारो हेमन्ते दर्शितस्तादृशः किमिति न निर्दिष्टः? सत्यं, हेमन्ते संचीयमानस्य कफस्य शैत्यात् प्रकुपितस्य वातस्योपशमनार्थं साधारण एव विधिर्यस्मादुक्तः, अतः साधारणविधिरत्र निर्दिष्टो न तादृश आहारः । यद्येवं तर्हि तन्त्रान्तरे तादृश एवाहारः कुतो निर्दिष्ट इति चेत्? उच्यते—हेमन्ते शीतानिलस्पर्शसंरुद्धो बली वह्निर्यदि तादृशमाहारं न लभते तदा धातुक्षयमावहति, धातुक्षयाच्च तीव्रवातकोपः स्यादिति भयात्तन्त्रान्तरे तादृश आहारो दर्शितः । ([2]अथवा यस्माद्धेमन्ते प्रबलाग्नित्वादपथ्यक्षमो देहो भवति ) । कार्तिककुण्डोऽमुं पाठमन्यथा पठति, स चाभावाच्च लिखितः । हेमन्तशिशिरयोस्तुल्यत्वाद्धैमन्तिक एव विधिः शिशिरेऽपि सेव्यः; अतः शिशिरविधानं पृथङ्नोक्तम् । यत्केचिदत्र वर्ज्यविधानं '.........प्राग्वातं रूक्षभोजनम् । वातलानि च द्रव्याणि शीतस्नानं च वर्जयेत्' इति पठन्ति; स त्वनार्षः पाठः, परंपराविच्छेदास्मरणात् समानतन्त्रानभिधानाच्च ॥ २१–३१ ॥

([3]हेमन्ते निचितः श्लेष्मा शैत्याच्छीतशरीरिणाम् ॥
औष्ण्याद्वसन्ते कुपितः कुरुते च गदान् बहून् ३२
ततोऽम्लमधुरस्निग्धलवणानि गुरूणि च ॥
वर्जयेद्गमनादीनि कर्माण्यपि च कारयेत् ॥ ३३ ॥
षष्टिकान्नं यवाञ्छीतान् मुद्गान् नीवारकोद्रवान् ॥
लावादिविष्किररसैर्द्ध्यायूषैश्च युक्तितः ॥ ३४ ॥
पटोलनिम्बवार्ताकतिक्तकैश्च हिमात्यये ॥
सेवेन्मध्वासवारिष्टान् सीधुमाध्वीकमाधवान् ३५
व्यायाममञ्जनं धूमं तीक्ष्णं च कवलग्रहम् ॥
सुखाम्बुना च सर्वार्थान् सेवेत कुसुमागमे ॥३६॥)
तीक्ष्णरूक्षकटुक्षारकषायं कोष्णमद्रवम् ॥
यवमुद्गमधुप्रायं वसन्ते भोजनं हितम् ॥ ३७ ॥
व्यायामोऽत्र नियुद्धाध्वशिलानिर्घातजो हितः ॥
उत्सादनं तथा स्नानं वनिताः काननानि च ॥ ३८॥

१ 'कमलोत्पलश्रविषु' इति पा० । २ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । ३ 'पिबेदगुरुरूषितः' इति पा० । ४ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

१ 'अगुरुरूषितः अगुरुचूर्णावगुण्ठितः' इति पा० । २ अयं पाठः कचित् पुस्तके न पठ्यते । ३ अयं पाठः कचित् पुस्तके न पठ्यते ।

**सेवेत निर्हरेच्चापि हेमन्तोपचितं कफम् ॥**
**शिरोविरेकवमननिरूहकवलादिभिः ॥ ३९ ॥**
**वर्जयेन्मधुरस्निग्धदिवास्वप्नगुरुद्रवान् ॥**

वसन्तविधिमाह—औष्ण्यादित्यादि । कोष्णम् ईषदुष्णम् । अद्रवं द्रवरहितम् । यवमुद्गमधुप्रायं यवादिबहुलम् । व्यायामः शरीरायासजनकं कर्म । अत्र वसन्ते । नियुद्धादिकं व्यायाम इत्येतस्य विवरणम् । नियुद्धं बाहुयुद्धम्, अध्वा मार्गगमनं, शिलानिर्घातः पाषाणास्फालनम् । उत्सादनम् उद्वर्तनम् । वनिताः स्त्रियः । संशमनमभिधाय संशोधनमाह—निर्हरेच्चापीत्यादि । शिरोविरेकः नस्यम् । यद्यपि बाहुल्येन वाते निरूहोऽभिहितः, तथाऽपि सर्वदोषहरत्वात् कफेऽपि योज्यः । तथा च,—"बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते"—इत्यादि । कवलो गण्डूषभेदः । वर्ज्यमाह—वर्जयेदित्यादि । मधुरादिवर्जनम् उत्क्लेशपरिहारार्थम् । केचिदत्र 'हेमन्ते निचितः श्लेष्मा' इत्यादिकं पाठं पठन्ति, स च ग्रन्थगौरवभयात् परित्यक्तः ॥ ३२ ॥ ३९ ॥—

**व्यायाममुष्णमायासं मैथुनं परिशोषि च ॥ ४० ॥**
**रसांश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्जयेत् ॥**

यस्माद्ग्रीष्मे व्यायामादिसेवनात्तीव्रतरा रोगा भवन्त्यतो व्यायामादिसेवां त्यजेदिति प्रतिपादनार्थं ग्रैष्मं विधिं विवक्षुरादौ वर्जनीयानाह—व्यायाममित्यादि । तत्रायासस्याल्पक्लेशतया व्यायामतो भेदः । उष्णम् आतपादिकम् । मैथुनमिति यद्यपि पूर्वमनागताबाधे ग्रीष्मकाले पक्षान्मैथुनमुक्तं, तथाऽप्यत्र यत्तस्य सर्वथा निषेधाभिधानं तद्ग्रीष्मस्यातिरूक्षताप्रतिपादनार्थम् । परिशोषि शोषणात्मकम् । अग्निगुणोद्रिक्ता रसाः कट्वम्ललवणाः ॥ ४० ॥—

**सरांसि सरितो वापीर्वनानि रुचिराणि च ॥ ४१ ॥**
**चन्दनानि परार्ध्यानि स्रजः सकमलोत्पलाः ॥**
**तालवृन्तानिलाहारांस्तथा शीतगृहाणि च ॥ ४२ ॥**
**घर्मकाले निषेवेत वासांसि सुलघूनि च ॥**
**शर्कराखण्डदिग्धानि सुगन्धीनि हिमानि च ॥४३॥**
**पानकानि च सेवेत मन्थांश्चापि सशर्करान् ॥**
**भोजनं च हितं शीतं सघृतं मधुरद्रवम् ॥ ४४ ॥**
**शृतेन पयसा रात्रौ शर्करामधुरेण च ॥**
**प्रत्यग्रकुसुमाकीर्णे शयने हर्म्यसंस्थिते ॥ ४५ ॥**
**शयीत चन्दनार्द्राङ्गः स्पृश्यमानोऽनिलैः सुखैः ॥**

अतःपरं सेवनीयानाह—सरांसीत्यादि । सरांसि अमनुष्यखातानि जलाधाराणि, सरित् नदी, वापी पाषाणादिबद्धा ससोपाना स्वल्पा जलाधारिका । वनानि रुचिराणीति सच्छायानि मनोहराणि काननानि । परार्ध्यानि उत्कृष्टानि । तालवृन्तानिलान् तालपत्रविरचितव्यजनपवनान् । दिग्धानि युक्तानि । सुगन्धीनि कर्पूरादिवासितानि । हिमानि शीतलानि । पानकानि चेति चकारान्मद्योचितस्य बहूदकं मद्यं केचिदिच्छन्ति । मधुरद्रवो रसालपानकादिर्यत्र भोजने तन्मधुरद्रवम् । मन्थान् जलघृताक्तसक्तून् । शृतेन पयसा क्वथितेन दुग्धेन । भोजनं रात्रौ हितमित्युक्ते दिवा मन्थादिपानमेवेति गम्यते । तथा च तन्त्रान्तरं—"दिवा पानानि शीतानि हितं रात्रौ च भोजनम् । ससर्पिःशर्करं शीतं शृतेन पयसा युतम्—" इति । प्रत्यग्रकुसुमाकीर्णे इति नूतनपुष्पास्तृते । हर्म्यसंश्रिते धवलगृहोपरिस्थिते । शयीतेत्यत्रापि रात्राविति संबध्यते; तेन रात्रौ हर्म्यपृष्ठे शयीत, दिवा तु शीतगृहे । तथा च तन्त्रान्तरम्—'दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले । भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्यमस्तके" ( च. सू. अ. ६ ) इति । सुखैः सुखोत्पादकैः । अत्र केचिद्बहूनि पाठान्तराणि मन्यन्ते; तानि तु विस्तरभयान्न लिखितानि ॥ ४१-४५ ॥—

**तापात्यये हिता नित्यं रसा ये गुरवस्त्रयः ॥ ४६ ॥**
**पयो मांसरसाः कोष्णास्तैलानि च घृतानि च ॥**
**बृंहणं चापि यत्किञ्चिदभिष्यन्दि तथैव च ॥ ४७ ॥**
**निदाघोपचितं चैव प्रकुप्यन्तं समीरणम् ॥**
**निहन्यादनिलघ्नेन विधिना विधिकोविदः ॥ ४८ ॥**
**(नदीजलं रूक्षमुष्णमुदमन्थं तथाऽऽतपम् ॥**
**व्यायामं च दिवास्वप्नं व्यवायं चात्र वर्जयेत् ॥४९॥**
**नवान्नरूक्षशीताम्बुसक्तूंश्चापि विवर्जयेत् ॥**
**यवषष्टिकगोधूमान् शालींश्चाप्यनवांस्तथा ॥ ५० ॥**
**हर्म्यमध्ये निवाते च भजेच्छय्यां मृदूत्तराम् ॥**
**सविषप्राणिविण्मूत्रलालादिष्ठीवनादिभिः ॥ ५१ ॥**
**समाप्लुतं तदा तोयमान्तरीक्षं विषोपमम् ॥**
**वायुना विषदुष्टेन प्रावृषेण्येन दूषितम् ॥ ५२ ॥**
**तद्धि सर्वोपयोगेषु तस्मिन् काले विवर्जयेत् ॥**
**अरिष्टासवमैरेयान् सोपदंशांस्तु युक्तितः ॥ ५३ ॥**
**पिबेत् प्रावृषि जीर्णांस्तु रात्रौ तानपि वर्जयेत् ॥**
**निरूहैर्बस्तिभिश्चान्यैस्तथाऽन्यैर्मारुतापहैः ॥ ५४ ॥**
**कुपितं शमयेद्वायुं वार्षिकं चाचरेद्विधिम् ॥**

एवं नैदाघं विधिमुपदिश्याधुना प्रावृषेण्यं ब्रवीति—तापात्यय इत्यादि । गुरवस्त्रयो रसा मधुराम्ललवणाः । बृंहणं चापि यत्किञ्चिदभिष्यन्दि तथैव चेति आदानकर्शितस्याप्यायनार्थम् । यद्यपि मधुरत्वेनैव पयःप्रभृतिकं प्राप्तं तथाऽपि तेषामुपादानमत्यन्तहितत्वापादनार्थम् । बृंहणं चात्यर्थकर्शितस्योपचयार्थम् । यत् किंचिदिति तृप्तिजनकम् । निदाघोपचितं ग्रीष्मकालसंचितं, प्रकुप्यन्तं प्रकोपं गच्छन्तं, समीरणं वातम् । अनिलघ्नेन विधिना स्नेहस्वेदादिना । विधिकोविदो विधानपण्डितः ।

१ 'अतः परं ग्रैष्मं विधिं विवक्षुर्वर्ज्यसेवातस्तीव्ररोगप्रादुर्भूतेरादौ वर्जनीयानाह' इति पा० । २ 'द्विदलान्नकृतं भक्ष्यम्' इति पा० । ३ 'शर्कराखण्डदुग्धानि' इति पा० ।

अत्रापि केचित् पाठान्तरं पठन्ति, तद[1]पि ग्रन्थगौरवभयात्त्यक्तम्। ननु, वर्षाहेमन्तग्रीष्मेषु दोषसंचय एव वमनादिना संशोधनं निषेवतः शरद्वसन्तप्रावृट्सु दोषप्रकोप एव नास्ति, कुतस्तत्रोक्तो विधिः सार्थकः, तथा चान्यत्राप्युक्तं,—'संचयेऽपहृता दोषा लभन्ते नोत्तरा गतीः'—इति। नैवं, हेलन्तरवशात्र संचयपूर्वकः प्रकोपस्तत्र प्रतिदोषप्रकोपं संचय एव विधिः संशोधनाख्य उक्तः; यस्तु संचयो यथर्तुविधिसेविनः, तत्र स्वस्थवृत्तविधिना संशमनं कार्यम् ॥ ४६-५४ ॥—

**ऋतावृतौ य एतेन विधिना वर्तते नरः ॥ ५५ ॥**
**घोरानृतुकृतान् रोगान्नाप्नोति स कदाचन ॥**

एवमार्तवविधिमभिधायेदानीं तम[2]नुसरतो मानवस्य स्वास्थ्यलाभमाह—ऋतावृतावित्यादि। एतेन अनन्तरोक्तेन। ऋतुकृतानिति ऋतु[3]कृतशीतोष्णादिभिः कृतान्। रोगान् ज्वरादिकान्। कार्तिकस्तु 'दोषान्' इति पठित्वा दोषान् वातादीन् विकृतानिति व्याख्यानयति। अन्ये तु व्याख्यानयन्ति—ऋतकृतानिति कृतशब्दस्यादौ विशब्दो लुप्तो द्रष्टव्यः, तेन ऋतुविकृतिकृतान् वातादिदोषान्नाप्नुयादित्यर्थः ॥ ५५ ॥—

**अत ऊर्ध्वं[4] द्वादशाशनप्रविचारान् वक्ष्यामः। तत्र शीतोष्णस्निग्धरूक्षद्रवशुष्कैककालिकद्विकालिकौषधयुक्तमात्राहीनदोषप्रशमनवृत्त्यर्थाः ॥ ५६ ॥**

अतः परमशनप्रविचारान् विवक्षुराह—अत ऊर्ध्वमित्यादि। अशनं भोजनं, विचारोऽत्र पृथग्भावः। ननु, द्वादशाशनप्रविचारस्य रोगविषयत्वात् स्वस्थवृत्तेऽशनप्रविभागविधानमयुक्तं? उच्यते—स्वस्थेऽपि व[5]यःप्रकृतिभेदेन सात्म्यासात्म्यतया चाहारप्रविचारस्योचितत्वात्। तानेव द्वादशाशनप्रविभागानाह—तत्रेत्यादि। तत्र तेषु द्वादशाशनप्रविभागेषु, शीतादयो द्वादशविधा आहारा अपि वृत्त्यर्थाः ॥ ५६ ॥

**तृष्णोष्णमद्दाहार्तान् रक्तपित्तविषातुरान् ॥**
**मूर्च्छार्तान् स्त्रीषु च क्षीणान् शीतैरन्नैरुपाचरेत् ५७**

स्वस्थवृत्ताधिकारे शीतादीनामाहाराणां क्रमेण विषयानाह—(शीताहारविषयमाह)—तृष्णेत्यादि। शीतैरिति तृष्णादिक्षीणान्तैः प्रत्येकं संबध्यते; तृष्णादिपीडितान् नरान् शीतस्पर्शैः शीतवीर्यैश्चान्नपानैरुपाचरेदित्यर्थः। मदो मद्यशोणितोत्थो विकारः। अन्नैरिति बहुवचनेन पानस्यापि स्वीकारः ॥ ५७ ॥

**कफवातामयाविष्टान् विरिक्तान् स्नेहपायिनः ॥**
**[6]अक्लिन्नकायांश्च नरानुष्णैरन्नैरुपाचरेत् ॥ ५८ ॥**

उष्णाहारविषयमाह—कफेत्यादि। कफवातामयाविष्टानिति कफवातरोगाक्रान्तान्। [1]अक्लिन्नकायानिति क्लेदरहितशरीरान् ॥ ५८ ॥

**वातिकान् रूक्षदेहांश्च व्यवायोपहतांस्तथा ॥**
**व्यायामिनश्चापि नरान् स्निग्धैरन्नैरुपाचरेत् ॥५९॥**

स्निग्धाहारविषयमाह—वातिकानित्यादि। वातिकानिति वातप्रकृतीन्। वातिकानामेव रूक्षदेहत्वाद् वातिकानित्येतावतैव रूक्षदेहानिति सिद्धं, विशेषेणाभिधानमवातिकानामपि निमित्ततो रूक्षदेहतापन्नानां स्निग्धान्नेनोपचरणार्थम् ॥ ५९ ॥

**मेदसाऽभिपरीतांस्तु स्निग्धान्[2]मेहातुरानपि ॥**
**कफाभिपन्नदेहांश्च रूक्षैरन्नैरुपाचरेत् ॥ ६० ॥**

रूक्षभोजनविषयमाह—मेदसाऽभिपरीतानित्यादि। मेदसाऽभिपरीतानिति मेदोव्याप्तशरीरानित्यर्थः। कफाभिपन्नदेहान् कफव्याप्तशरीरान्। स्निग्धानिति स्निग्धशरीरान्। कार्तिकस्तु स्निग्धानित्यत्र स्थूलानिति पठित्वा व्याख्यानयति—मेदसाऽभिपरीतानित्युक्ते स्थूलानिति लब्धे तदभिधानं मेदोदुष्टिभ्यो विशेषेण स्थाल्ये रूक्षभोजनप्रतिपादनार्थम् ॥ ६० ॥

**शुष्कदेहान् पिपासार्तान् दुर्बलानपि च द्रवैः ॥**

द्रवभोजनविषयमाह—शुष्कदेहानित्यादि। शुष्कदेहादिकान् द्रवबहुलैरन्नैरुपाचरेत् ॥—

**प्रक्लिन्नकायान् व्रणिनः शुष्कैर्मेहिन एव च ॥ ६१ ॥**

शुष्काहारविषयमाह—प्रक्लिन्नेत्यादि। प्रक्लिन्नकायानिति कु[3]ष्ठिप्रभृतीन् कुथितशरीरान्। व्रणिन इति क्लिन्नव्रणयुक्तान्। व्रणितोपासनीये व्रणिनो द्रवोत्तरमशनमुक्तं, तदक्लिन्नशुद्धव्रणविषयम्। यदा प्रक्लिन्नकायानिति व्रणिन इत्यस्य विशेषणं तदा अव्रणानां क्लिन्नकायानां शुष्कान्नैरुपचरणं न स्यात्, न च तथेष्यते, तस्मान्नैवं विशेषणम्; अत्र[4] तु सक्लेदत्वाच्छुष्कं व्यवस्थितमिति ॥ ६१ ॥

**एककालं भवेद्[5]देयो दुर्बलाग्निविवृद्धये ॥**

एककालमित्यादि। एककालमपि हीनमात्र एव आहारो दातव्यः, वक्ष्यमाणवाक्यात्। 'दुर्बलाग्निविवृद्धये' इत्यत्र 'दुर्बलस्याग्निवृद्धये' इति केचित् पठन्ति। तत्र दुर्बलशब्देनैव देहदौर्बल्यादग्निदौर्बल्यमिच्छन्ति ॥—

**समाग्नये तथाऽऽहारो द्विकालमपि पूजितः ॥६२॥**

समाग्नय इत्यादि। न केवलं द्विकालमपि तु 'अन्नेन कुक्षेर्द्वावंशौ' इत्याद्युक्तमात्रान्वितोऽपीत्यशब्देन समुच्चीयते ॥ ६२ ॥

---

१ 'तच्च जेज्जटटीकायां न दृश्यते' इति पा०। २ 'तमनुभवतो गुणलाभमाह' इति पा०। ३ ऋतूपाधिभिः शीतोष्णादिभिः' इति पा०। ४ 'अशनस्य भोजनस्य प्रविचारान् प्रकृष्टान् विचारणान् अवचारणरूपान् कथयिष्यामः। ननु चामयाप्रस्तुतत्वात् स्वस्थवृत्तेऽशनप्रविभागाभिधानं कथमौपयिकं?' इति पा०। ५ 'वयसि अशनप्रविचारस्योचितत्वात्' इति पा०। ६ 'प्रक्लिन्नदेहांश्च' इति पा०।

१ 'प्रक्लिन्नकायानिति क्लेदादिसहितशरीरान्' इति, 'कारणान्तरेणार्द्रतामापन्नान्' इति च पा०। २ 'स्थूलान्' इति पा०। ३ 'धातुवृद्ध्या आर्द्रीभूतशरीरान्' इति पा०। ४ 'अन्यत्र' इति पा०। ५ 'देयः कालमयोभयम्' इति पा०।

**औषधद्वेषिणे देयस्तथौषधसमायुतः ॥**

औषधद्वेषिण इत्यादि । औषधसमायुतः 'आहार' इति शेषः ॥—

**मन्दाग्नये रोगिणे च मात्राहीनः प्रशस्यते ॥ ६३ ॥**

हीनमात्रस्य भोजनस्य विषयमाह—मन्दाग्नय इत्यादि । मन्दानलाय रोगयुक्ताय च मात्राहीन आहारो देयः; परमेककालमेव, पूर्ववाक्यात् ॥ ६३ ॥

**यथर्तुदत्तस्त्वाहारो दोषप्रशमनः स्मृतः ॥**

यथर्त्वित्यादि । यथर्तुदत्त इति ऋतुं ऋतुं प्रति यथाविहितो यथाप्रवृत्त आहारो दोषप्रशमनः कथित इत्यर्थः ॥—

**अतः परं तु स्वस्थानां वृत्त्यर्थं सर्व एव च ॥**
**प्रविचारानिमानेवं द्वादशात्र प्रयोजयेत् ॥ ६४ ॥**

अत इत्यादि । अतः परमिति अनन्तरोक्ताद्दोषप्रमनाहारात् परमूर्ध्वम् । वृत्त्यर्थमिति शरीरधारणार्थम् । स्वस्थानामिति समधातूनां समदोषप्रकृतीनां च । सर्व एवेति समसर्वरस आहारः स्मृत इत्यर्थः ॥ ६४ ॥

**अत ऊर्ध्वं दशौषधकालान् वक्ष्यामः । तत्रा-भक्तं प्राग्भक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्तरं चेति दशौषधकालाः ॥ ६५ ॥**

अतो दशौषधकालान्निर्दिशन्नाह—अत ऊर्ध्वमित्यादि । तेष्वौषधकालेष्वभक्तादिकं दशप्रकारमौषधं योज्यम् । औषधकालान् प्रत्येकं निर्दिशन्नाह—तत्रेत्यादि । 'अभक्तम्' इत्यस्य स्थाने 'निर्भक्तम्' इत्यन्ये पठन्ति ॥ ६५ ॥

**तत्राभक्तं तु यत् केवलमेवौषधमुपयुज्यते ॥ ६६ ॥**

तत्राभक्तमित्यादेरौषधकालोद्देशस्य प्रपञ्चमाह—तत्राभक्तमित्यादि । तत्र तेष्वभक्तादिषु मध्ये यत् केवलमन्नरहितमौषधमुपयुज्यते तदभक्तम् ॥ ६६ ॥

**वीर्याधिकं भवति भेषजमन्नहीनं**
**हन्यात्तथाऽऽमयमसंशयमाशु चैव ॥**
**तद्बालवृद्धवनितामृदवस्तु पीत्वा**
**ग्लानिं परां समुपयान्ति बलक्षयं च ॥ ६७ ॥**

अभक्तस्य स्वरूपमभिधाय गुणं विषयं च प्रतिपादयन्नाह—वीर्याधिकमित्यादि । वनिता स्त्री, मृदवः सुकुमाराः । बालादीनामभक्तौषधनिषेधमभिदधद्बालादिभ्य इतरं तु अभक्तविषयं बोधयति । तत्राभक्तं स्वित्यादिकं भाष्यं, वीर्याधिकमित्यादिका गुणाः, बालवृद्धवनितामृदुविपर्ययो विषयः । कार्तिकस्तु सर्वेषामभक्तादीनां प्रागेव स्वरूपमभिधाय पश्चात् सर्वेषां गुणान् विषयांश्च प्रतिपादयति ॥ ६७ ॥

**प्राग्भक्तं नाम यत् प्राग्भक्तस्योपयुज्यते ॥ ६८ ॥**

प्राग्भक्तस्येति भक्तस्यादावित्यर्थः ॥ ६८ ॥

**शीघ्रं विपाकमुपयाति बलं न हिंस्या-**
**दन्नावृतं न च मुहुर्वदनान्निरेति ॥**
**प्राग्भक्तसेवितमथौषधमेतदेव**
**दद्याच्च वृद्धशिशुभीरुकृशाङ्गनाभ्यः ॥६९॥**

प्राग्भक्तस्य गुणं विषयं चाह—शीघ्रमित्यादि । आहारावृतत्वान्मुहुर्मुहुर्वारंवारं वक्त्राद्बहिर्न निरेति । विपाकं सुखपरिणामम् । न चेति निरेतीत्यत्र संबध्यते । वदनात् मुखकुहरात् । निरेति निर्गच्छति । औषधमेतदेवेति प्राग्भक्ताख्यमौषधम् ॥ ६९ ॥

**अधोभक्तं नाम-यदधो भक्तस्येति ॥ ७० ॥**

अधोभक्तस्य स्वरूपमाह—अधोभक्तमित्यादि । अधोभक्तस्येति भोजनान्त इत्यर्थः ॥ ७० ॥

**मध्येभक्तं नाम-यन्मध्ये भक्तस्य पीयते ॥ ७१ ॥**

मध्येभक्तमाह—मध्येभक्तमित्यादि ॥ ७१ ॥

**पीतं यदन्नमुपयुज्य तदूर्ध्वकाये**
**हन्याद्गदान् बहुविधांश्च बलं ददाति ॥**
**मध्ये तु पीतमपहन्त्यविसारिभावा-**
**द्ये मध्यदेहमभिभूय भवन्ति रोगाः ॥ ७२ ॥**

अधोभक्तमध्येभक्तयोर्गुणमाह—पीतमित्यादि । बलं ददातीति ऊर्ध्वकाय एव । मध्ये तु पीतं 'भक्तस्य' इति शेषः । अविसारिभावात् अविप्रसरणस्वभावात् । मध्यदेशं कोष्ठम् । अभिभूय व्याप्य ॥ ७२ ॥

**अन्तराभक्तं नाम-यदन्तरा पीयते पूर्वापरयोर्भक्तयोः ॥ ७३ ॥**

अन्तराभक्तमाह—अन्तराभक्तमित्यादि । अन्तराभक्तं यत् पूर्वापरयोर्भक्तयोरन्तरा मध्ये पीयते, पूर्वापरयोरिति प्रातःसायन्तनयोर्भोजनयोरित्यर्थः ॥ ७३ ॥

**सभक्तं नाम-यत् सह भक्तेन ॥ ७४ ॥**

सभक्तमाह—सभक्तमित्यादि । सभक्तं भक्तेन सह साधितं, भक्तयुक्तं वा ॥ ७४ ॥

**पथ्यं सभक्तमबलाबलयोर्हि नित्यं**
**तद्द्वेषिणामपि तथा शिशुवृद्धयोश्च ॥**
**हृद्यं मनोबलकरं त्वथ दीपनं च**
**पथ्यं सदा भवति चान्तरभक्तकं यत् ॥ ७५ ॥**

---

१ 'द्वादशान्नप्रविचारानेतानेव प्रचक्षते' इति पा० । २ 'तत्र निर्भक्तं' इति पा० । ३ 'इदानीं दशौषधकालारम्भः, तानुद्देशतो निर्दिशन्नाह' इति पा० । ४ 'तदामयम०' इति पा० । ५ 'तद्बालवृद्धयुवतीमृदवोऽथ पीत्वा' इति पा० ।

१ 'यद्भुक्त्वा पीयते' इति पा० । २ 'तु यत् पूर्वापरयोर्भक्तयोरन्तरे' इति पा० । ३ 'सभक्तं नाम औषधेषु यत् साध्यते भक्तम्' इति पा० ।

अन्तराभक्तसभक्तयोर्गुणविषयावाह—हृद्यमित्यादि । हृद्यं हृदयाय हितम् । मनोबलकरमिति मनोबलं मनःसामर्थ्यं, तत्करोतीत्यर्थः । अबलाबलयोरिति स्त्रीदुर्बलयोरित्यर्थः । तद्वेषिणामिति भेषजद्वेषिणामित्यर्थः ॥ ७५ ॥

सामुद्गं नाम-यद्भक्तस्यादावन्ते च पीयते ॥७६॥
दोषे द्विधा प्रविसृते तु समुद्गसंज्ञ-
माद्यन्तयोर्यदशनस्य निषेव्यते तु ॥ ७७ ॥

सामुद्गमाह—सामुद्गमित्यादि । द्विधा प्रविसृते ऊर्ध्वाधःप्रसृते इत्यर्थः । दोषे समुद्गसंज्ञं निषेव्यते इति संबन्धः । ननु, सामुद्गविवरणे भक्तस्यादावन्ते चेत्युपादानात् 'आद्यन्तयोर्यदशनस्य' इति गतार्थम् ? उच्यते—चूर्णकल्कादीनामपि समुद्गसंज्ञार्थं पुनरुक्तिः, अन्यथाऽनन्तरोक्तस्य 'पीतं' इत्यस्यानुवर्तनात् पानस्यैव समुद्गसंज्ञा स्यात् ॥ ७६ ॥ ७७ ॥

मुहुर्मुहुर्नाम—सभक्तमभक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते ॥ ७८ ॥

श्वासे मुहुर्मुहुरतिप्रसृते च कासे
हिक्कावमीषु स वदन्त्युपयोज्यमेतत् ॥ ७९ ॥

मुहुर्मुहुरौषधमाह—मुहुर्मुहुरित्यादि । मुहुर्मुहुः भक्तसहितं भक्तरहितं वा यदौषधं वारं वारं प्रयुज्यते तन्मुहुर्मुहुरित्यर्थः । मुहुर्मुहुरित्येतच्छ्वासकासादिषूपयोज्यम् ॥ ७८ ॥ ७९ ॥

ग्रासं तु-यत्पिण्डव्यामिश्रम् ॥ ८० ॥

ग्रासमाह—पिण्डव्यामिश्रमिति कवलव्यामिश्रमित्यर्थः । तन्त्रान्तरदर्शनात् ग्रासं ग्रासमिति बोद्धव्यम् ॥ ८० ॥

ग्रासान्तरं तु यद्ग्रासान्तरेषु ॥ ८१ ॥

ग्रासान्तरमाह—ग्रासान्तरेष्विति कवलान्तरेष्वित्यर्थः ८१

ग्रासेषु चूर्णमबलाग्निषु दीपनीयं
वाजीकराण्यपि तु योजयितुं यतेत ॥
ग्रासान्तरेषु वितरेद्वमनीयधूमान्
श्वासादिषु प्रथितदृष्टगुणांश्च लेहान् ॥ ८२ ॥

अनयोर्विषयमाह—ग्रासेष्वित्यादि । अबलाग्निषु दुर्बलाग्निषु । वमनीयधूमानिति स्नायुचर्मखुरप्रभृतिभिः कृतान् ॥ ८२ ॥

एवमेते दशौषधकालाः ॥ ८३ ॥

सांप्रतं संग्रहमाह—एवमित्यादि ॥ ८३ ॥

विसृष्टे विण्मूत्रे विशदकरणे देहे च सुलघौ
विशुद्धे चोद्गारे हृदि सुविमले वाते च सरति ॥

१ 'तु' इति पा० । २ 'मुहुर्मुहुर्यत् सभक्तमभक्तं वा तन्मुहुर्मुहुः' इति पा० । ३ 'ग्रासान्तरं नाम यदुभयोर्ग्रासयोर्मध्ये प्रयुज्यते' इति पा० । ४ 'ग्रासेषु पीतमुपयाति विपकमाशु वृद्धेऽबलेषु च हितं प्रवदन्ति सन्तः' इति पा० ।

तथाऽन्नश्रद्धायां क्रमपरिगमे कुक्षौ च शिथिले
प्रदेयस्त्वाहारो भवति भिषजां कालः स तु मतः ॥८४

इति सुश्रुतसंहितायामुत्तरतन्त्रे तन्त्रभूषणाध्यायेषु स्वस्थवृत्ताध्यायो नाम ( द्वितीयोऽध्यायः, आदितः ) चतुःषष्टितमोऽध्यायः ॥६४॥

एवमौषधकालान् प्रदर्श्याऽधुनाऽऽहारस्य श्रेयस्करत्वात्तत्कालमाह—विसृष्टे इत्यादि । ( प्रत्यर्तुविहिताहारो हि कालोपयुक्तः सुखलाय संपद्यते, अतस्तत्कालं नियमयन्नाह—विसृष्टे इत्यादि । ) विसृष्टे विण्मूत्रे इति प्रवृत्ते विण्मूत्रे । विशदकरणे इति विशदानि करणानि यस्मिन् देहे स विशदकरणः तस्मिन्, विशदेन्द्रिये इत्यर्थः । देहे सुलघाविति शरीरे गुरुत्वरहिते इत्यर्थः । विशुद्धे चोद्गारे इति मधुराम्लधूमगन्धिवियुक्ते इत्यर्थः । हृदि सुविमले इति निराकुले हृदये इत्यर्थः । वाते सरतीति अधः प्रवहति वाते इत्यर्थः । अन्नश्रद्धायां भक्ताकाङ्क्षायामित्यर्थः । क्रमपरिगमे इति अनायासश्रमरहिते इत्यर्थः । कुक्षौ च शिथिले इति बुभुक्षोदयात् स्रस्ते कुक्षौ स्तब्धतारहिते इत्यर्थः । आहारो दातव्यो भवति भिषजा वैद्येन, यतः कालः स तु मतः स एव मत इत्यर्थः । तु शब्दोऽत्र अवधारणार्थः । भिषग्ग्रहणं वैद्यप्रत्यवेक्षितस्याहारस्य भोज्यत्वप्रतिपादनार्थम् ॥ ८४ ॥

इति श्रीडल्ह(ड)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## पञ्चषष्टितमोऽध्यायः ।

अथातस्तन्त्रयुक्तिमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

स्वस्थवृत्तानन्तरं स्वस्थविध्यर्थस्य तन्त्रयुक्तिभिः प्रसाधनात्तन्त्रयुक्त्यध्यायारम्भः—अथात इत्यादि । अथात इति पूर्ववत् व्याख्येयम् । त्रायते शरीरमनेनेति तन्त्रं शास्त्रं चिकित्सा च, तस्य युक्तयो योजनास्तन्त्रयुक्तयः, ता अधिकृत्य कृतोऽध्यायः, तम् । वेदोत्पत्तिवदत्र तद्धितलोपः । ताश्च तन्त्रयोजना द्विविधाः—वाक्ययोजना अर्थयोजनाश्च; तत्र वाक्ययोजना योगोद्देशनिर्देशाद्याः, अर्थयोजना अधिकरणपदार्थादयः ॥१॥२॥

द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति शास्त्रे । तद्यथा—अधिकरणं १, योगः २, पदार्थः ३, हेत्वर्थः ४, उद्देशः ५, निर्देशः ६, उपदेशः ७, अपदेशः ८, प्रदेशः ९, अतिदेशः १०, अपवर्जः ११, वाक्यशेषः १२, अर्थापत्तिः १३, विपर्ययः १४, प्रसङ्गः १५, एकान्तः १६, अनेकान्तः १७, पूर्वपक्षः १८, निर्णयः १९, अनुमतं २०, विधानम् २१, अनागतावेक्षणम् २२, अतिक्रान्तावेक्षणं २३, संशयः २४, व्याख्यानं २५, स्वसंज्ञा २६, निर्वचनं २७, निदर्शनं २८,

१ 'चिकित्सितम्' इति पा० ।

**नियोगः २९, विकल्पः ३०, समुच्चयः ३१, ऊह्यम् ३२, इति ॥ ३ ॥**

संख्याभेदेन तन्त्रयुक्तीर्निर्दिशन्नाह—द्वात्रिंशदित्यादि । शास्त्रे सौश्रुते । अधिकरणमित्यादिसंख्येयनिर्देशादेव द्वात्रिंशत् संख्या लब्धा, अतस्तत्करणमन्यतन्त्रोक्ताः षट्त्रिंशच्चत्वारिंशद्वा तन्त्रयुक्तय इति संख्यानिषेधार्थम् । शास्त्रे इत्यत्रान्ये समासेनेति पठित्वा व्याख्यानयन्ति—अन्यत्र विस्तरेण षट्त्रिंशच्चत्वारिंशद्वा तन्त्रयुक्तयः; अत्र द्वात्रिंशदिति समासेनोक्तम् । कतमास्तास्तन्त्रयुक्तय इत्याह—तद्यथेत्यादि । तद्यथेति निदर्शनम् । अधिकरणादीनि सूत्रकार एव व्याख्यास्यति ॥ ३ ॥

**अत्रासां तन्त्रयुक्तीनां किं प्रयोजनम् ? उच्यते—वाक्ययोजनमर्थयोजनं च ॥ ४ ॥**

एवं तन्त्रयुक्तीरुद्देशतः प्रतिपाद्य तासां तन्त्रयुक्तीनां प्रयोजनमाह—अत्रासामित्यादि । अत्र चिकित्साशास्त्रे । वाक्ययोजनमर्थयोजनं चेति वाक्यस्यासंबद्धस्य योजनं संबन्धनं वाक्ययोजनं, लीनस्यासङ्गतस्य चार्थस्य प्रकाशनं सङ्गतीकरणं चार्थयोजनम् । तत्र कासांचित्तन्त्रयुक्तीनां योगोद्देशनिर्देशादीनां वाक्ययोजनं, कासांचिदधिकरणपदार्थोह्यादीनामर्थयोजनं प्रयोजनम् ॥ ४ ॥

**भवन्ति चात्र श्लोकाः—**

**असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम् ॥**
**स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तितः ॥ ५ ॥**
**व्यक्ता नोक्तास्तु ये ह्यर्था लीना ये चाप्यनिर्मलाः ॥**
**लेशोक्ता ये च केचित्स्युस्तेषां चापि प्रसाधनम् ॥६॥**

अत्रैव पूर्वाचार्यपठितौ श्लोकावधिकार्थख्यापनायाह—असद्वादिप्रयुक्तानामित्यादि । असद्वादिनो हि प्रतिरसपाकवादिनः पाकत्रयवादिनो गुणकर्तृत्ववादिनो वेत्यादयः । प्रतिषेधनम् अपदेशादिभिस्तन्त्रयुक्तिभिः परपक्षदूषणम् । स्ववाक्यसिद्धिः स्ववाक्यस्थापनं निर्णयाख्यया तन्त्रयुक्त्या । यथा—प्रतिरसं पाक इत्यसद्वादिदर्शनमपदेशाख्यया तन्त्रयुक्त्या द्रव्यादिविज्ञाने निराकृतं, तत्रैव द्विविधः पाक इत्यादिस्वमतसाधनं निर्णयाख्यया तन्त्रयुक्त्या कृतम् । व्यक्ता नोक्ताः स्पष्टतया नोक्ताः । लीना असम्यग्दर्शिताः । अनिर्मला लेशेनोक्ताः । तेषां प्रसाधनं योगप्रभृतिभिः क्रियते ॥ ५ ॥ ६ ॥

**यथाऽम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ॥**
**प्रबोधस्य प्रकाशार्थं तथा तन्त्रस्य युक्तयः ॥ ७ ॥**

केचिदत्र तन्त्रयुक्तीनां स्तुत्यर्थं श्लोकं पठन्ति—यथाऽम्बुजवनस्यार्क इत्यादि । एष च श्लोकष्टीकासु मूलत्वेन न वर्णितः ॥ ७ ॥

**तत्र यमर्थमधिकृत्योच्यते तदधिकरणं; यथा—रसं दोषं वा ॥ ८ ॥**

अतः परमुद्दिष्टानां तन्त्रयुक्तीनां विवरणमाह—तत्रेत्यादि । तत्र तासु तन्त्रयुक्तिषु मध्ये; यमर्थमधिकृत्य अपरे अर्था अभिधीयन्ते तदधिकरणसंज्ञं भवति उदाहरणमाह—रसं दोषं वेति । एतेनैतदुक्तं भवति—रसं दोषं वा अधिकृत्य यत्तदुल्लेखाभावेऽप्यर्थजातमभिहितं तत् सर्वं तदधिकारे प्रतीयत इत्यर्थः ॥ ८ ॥

**येन वाक्यं युज्यते स योगः । यथा—**
**'तैलं पिबेच्चामृतवल्लिनिम्ब-**
**हिंस्राभयावृक्षकपिप्पलीभिः ॥**
**सिद्धं बलाभ्यां च सदेवदारु**
**हिताय नित्यं गलगण्डरोगे' ॥**

**इत्यत्र तैलं सिद्धं पिबेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धमिति प्रयुक्तं, एवं दूरस्थानामपि पदानामेकीकरणं योगः ॥ ९ ॥**

योगाख्यां तन्त्रयुक्तिमाह—येनेत्यादि । येन व्यत्यासोक्तानां सन्निकृष्टविप्रकृष्टानां पदानामेकीकरणं स योग इत्यर्थः । व्यत्यासेनोक्तं पदयोगं दर्शयन्नाह—तैलमित्यादि । विपर्ययेणोक्तस्य पदस्यैकीकरणं योग इत्यर्थः । येनेत्यादि सूत्रं, येन व्यत्यासोक्तानां इत्यादिसूत्रार्थः, यथेत्याद्युदाहरणम् । एवं सन्निकृष्टस्य विपर्ययोक्तस्य पदस्यापहरणं मुख्यमेकीकरणं प्रतिपाद्य दूरस्थानामप्युद्देशेनाह—एवं दूरस्थानामपीति ॥ ९ ॥

**योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः, पदस्य पदयोः पदानां वाऽर्थः पदार्थः; अपरिमिताश्च पदार्थाः । यथा—स्नेहस्वेदाञ्जनेषु निर्दिष्टेषु द्वयोस्त्रयाणां वाऽर्थानामुपपत्तिर्दृश्यते, तत्र योऽर्थः पूर्वापरयोगसिद्धो भवति स ग्रहीतव्यः; यथा—**

१ 'कियत्यस्तन्त्रयुक्तय इत्याह—' इति पा० । २ 'समासेनेत्यर्थः । व्यासतश्च षट्त्रिंशत्तन्त्रयुक्तयः कैश्चित् प्रतिपादिताः । अत्र संख्येयनिर्देशादेव संख्यालाभे सति संख्योपादानं नियमार्थं कृतम्' इति पा०. । ३ 'तन्त्रयुक्तिभिः' इति पा० । ४ 'व्यत्यासोक्ताश्च' इति पा० । ५ 'क्वचित्तन्त्रे' इति पा० । ६ 'व्यत्यासोक्ता विपर्ययेणोक्ताः' इति पा० । ७ 'असद्वादिप्रयुक्तानां वचनानां प्रतिषेधनं परमतं निराकृत्य स्वमतयोजना, असद्वादिवाक्यप्रतिषेधयुक्त्यो द्रव्यादिविज्ञाने दर्शिताः । स्ववाक्यं मधुरकटुकावित्यादिकं स्वमतस्थापनं, इदमपि तत्रैव दर्शितम् । व्यत्यासोक्ता विपर्ययेणोक्ताः, ते विपर्ययाख्यतन्त्रयुक्त्या व्याख्यायन्ते; लीना असम्यग्दर्शिता विशेषाद्भ्यादिवाचकाः, ते प्रकरणादिभिः स्पष्टीक्रियन्ते । अमर्मोपहते देशे सिरास्नाय्वस्थिवर्जिते' इत्यादिका ह्यर्था अनिर्मलाः, ते व्याख्यानादिभिरूह्यादिभिर्व्यज्यन्ते । तेषां चापि प्रसाधनं तन्त्रयुक्तिभिः क्रियते' इति पा० ।

१ 'प्रबोध्यस्य' इति पा० । २ 'अस्यायमर्थः—यमर्थमधिकृत्य येऽर्था अभिधीयन्ते तदधिकरणसंज्ञं सर्वस्याभिधेयस्येति । तमेवार्थमाह—यथा—रसं दोषं चेति, रसविज्ञाने रसमधिकृत्य दोषविज्ञाने दोषमधिकृत्य चोच्यत इति' इति पा० ।

**'वेदोत्पत्तिमध्यायं व्याख्यास्याम' इत्युक्ते सन्दिह्यते बुद्धिः—कतमस्य वेदस्योत्पत्तिं वक्ष्यतीति, यतः ऋग्वेदादयस्तु वेदाः; 'विद विचारणे, विद्लृ लाभे,' इत्येतयोश्च धात्वोरनेकार्थयोः प्रयोगात्, तत्र पूर्वापरयोगमुपलभ्य प्रतिपत्तिर्भवति-आयुर्वेदोत्पत्तिमयं विवक्षुरिति; एष पदार्थः ॥ १० ॥**

पदार्थाभिधां तन्त्रयुक्तिमाह—योऽर्थोऽभिहित इत्यादि । पद्यते गम्यते येनार्थ इति सूत्रस्यापि पदत्वात् सूत्रे योऽर्थः प्रतिपादितः स पदार्थः । पदार्थाख्यतन्त्रयुक्तिप्रतिपादकं लक्षणमभिधायेदानीं तद्व्याख्यातुकामः प्रथमं तदवयवस्य समासमभिधत्ते—पदस्येत्यादि । अधुना बहुषु पदार्थेषु निर्धार्य विशिष्टपदार्थग्रहणाय पदार्थबहुत्वं प्रतिपादयति—अपरिमिता इत्यादि । कथमित्याह-यथेत्यादि । तत्र स्नेहशब्दे निर्दिष्टे हि गुणप्रेमसर्पिषां त्रयाणामर्थानामुपपत्तिर्दृश्यते, स्वेदशब्देनापि साग्निनिरग्निकयोरूष्मणोः प्राप्तिः, अञ्जनशब्देनापि नयनाञ्जनाभ्यञ्जयोः प्राप्तिः, तेषु पदार्थेषु यादृशः पदार्थो गृह्यते तादृशमाह—तत्र योऽर्थ इत्यादि । पूर्वोक्तपरोक्तवाक्यसंबन्धेनोपपन्नो योऽर्थो भवति स ग्रहीतव्य इत्यर्थः । उदाहरणमाह—यथा वेदोत्पत्तिमित्यादि । सन्दिह्यते सन्देहं गच्छतीत्यर्थः । कथं सन्दिह्यत इत्याह—कतमस्येत्यादि । यतः ऋग्वेदादयो वेदास्ततः कतमस्या वेदस्योत्पत्तिं वक्ष्यतीति सन्दिह्यते, तस्मिन् सन्देहे यथा प्रत्ययार्थः स्वीकर्तव्यस्तथाऽऽह—विदित्यादि—'आयुर्वेदमिच्छाम इहोपदिश्यमानम्' इत्यस्मिन्नायुर्वेदशब्दः श्रूयते, अतोऽत्र वेद आयुर्वेद इत्यभिप्रायः ॥ १० ॥

**यदन्यदुक्तमन्यार्थसाधकं भवति स हेत्वर्थः । यथा—मृत्पिण्डोऽद्भिः प्रक्लिद्यते तथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति ॥ ११ ॥**

हेत्वर्थतन्त्रयुक्तेर्लक्षणमाह—यदन्यदित्यादि । उदाहरणमाह—यथा मृदित्यादि । अत्र बाह्येन मृत्पिण्डदृष्टान्तेन माषदुग्धयोगादिभिराभ्यन्तरो व्रणप्रक्लेदः साध्यते ॥ ११ ॥

**समासवचनमुद्देशः । यथा—शल्यमिति ॥ १२ ॥**

उद्देशलक्षणमाह—समासेत्यादि । संक्षेपेण भणनमुद्देश इत्यर्थः । उदाहरणमाह—यथा शल्यमिति । सर्वमेवाबाधजननं संक्षेपेण शल्यमुच्यते, न तु शारीरागन्तुभेदेन प्रपञ्चनात् ॥ १२ ॥

**विस्तरवचनं निर्देशः । यथा-शारीरमागन्तुकं चेति ॥ १३ ॥**

निर्देशलक्षणमाह—विस्तरेत्यादि । विस्तरेण भाषणं निर्देश इत्यर्थः । उदाहरणमाह—यथा शारीरमागन्तुकं चेति । शारीरशल्यमागन्तुकं च शल्यमिति शल्यं द्विविधमुच्यते ॥ १३ ॥

**एवमित्युपदेशः । यथा—'तथा न जागृयाद्रात्रौ दिवास्वप्नं च वर्जयेत्' इति ॥ १४ ॥**

उपदेशलक्षणमाह—एवमित्यादि । एवं कुर्यादित्युपदेश इत्यर्थः । उदाहरणमाह—यथेत्यादि । ननु, उपदेशनियोगयोः को भेदः ? उच्यते, प्रायिक उपदेशः, यथा—रात्रौ न जागृयादिति प्रायिकत्वेनोपन्यस्तं, कफाद्यभिभूते तु तत्र रात्रिजागरणस्यापि शस्तत्वात्; दिवा न स्वापं कुर्यादित्यपि प्रायिकं, ग्रीष्मे तृष्णाद्यन्वये च दिवास्वापस्योचितत्वात्; नियोगश्चाप्रायिकः, यथा—पथ्यमेव भोक्तव्यमिति; यद्यपि 'ज्वरितोऽहितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत्' इत्यादिनाऽपथ्यभोजनस्याप्यवकाशः, तथाऽपि तदानीमपथ्यस्यैव पथ्यत्वमिति नियोगस्य व्यभिचारो नास्ति ॥ १४ ॥

**अनेन कारणेनेत्यपदेशः, यथाऽपदिश्यते—मधुरः श्लेष्माणमभिवर्धयतीति ॥ १५ ॥**

अपदेशलक्षणमाह—अनेनेत्यादि । अनेन कारणेनेति कार्यं प्रति हेतुकथनमपदेश इत्यर्थः । उदाहरणमाह—यथापदिश्यत इत्यादि । यथापदिश्यत इति उदाहरणोपक्रमे । द्रव्यविशेषो मधुरः कुतः श्लेष्माणं वर्धयति ? अत्र मधुरः श्लेष्माणं वर्धयति अर्थाभिजभावेन मधुरत्वेन वर्धयति ॥ १५ ॥

**प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः । यथा—देवदत्तस्यानेन शल्यमुद्धृतं तथा यज्ञदत्तस्याप्ययमुद्धरिष्यतीति ॥ १६ ॥**

प्रदेशमाह—प्रकृतस्येत्यादि । उदाहरणमाह—यथा देवदत्तस्येत्यादि । अत्र यज्ञदत्तस्य शल्योद्धरणं प्रस्तुतं, तद्देवदत्तस्य शल्योद्धरणेनातिक्रान्तेन साध्यते ॥ १६ ॥

**प्रकृतस्यानागतस्य साधनमतिदेशः । यथा-यतोऽस्य वायुरूर्ध्वमुत्तिष्ठते तेनोदावर्ती स्यादिति ॥ १७ ॥**

अतिदेशमाह—प्रकृतस्येत्यादि । अनागतस्य भविष्यतः । उदाहरणमाह—यथा यत इत्यादि । अत्र वायोरूर्ध्वमुत्थानं

---

१ 'वेदस्यायमुत्पत्तिं विवक्षुरिति' इति पा० । २ 'पद्यते गम्यतेऽनेनार्थोऽस्मिन्निति व्युत्पत्त्या सूत्रस्यापि पदत्वं, अतः सूत्रोक्तार्थस्यापि पदार्थता अन्ये तु सूत्रपदे इति पठित्वा व्याख्यानयन्ति—सूत्रस्य पदं सूत्रपदं तस्मिन् योऽर्थः स पदार्थः । पदे इत्येकत्वनिर्देशादेकस्यैव पदस्य योऽर्थः स एव परं पदार्थः स्यादित्यत आह—पदस्येत्यादि । अनेकार्थं पदं दर्शयन्नाह—तत्र स्नेहेत्यादि । स्नेहशब्दो मैत्र्यां रसधातौ सर्पिरादौ च वर्तते; स्वेदशब्दोऽग्निस्वेदोष्मस्वेदादिषूक्तः, अञ्जनशब्दो नेत्राञ्जनाभ्यञ्जयोः पूर्वापरयोगसिद्ध इति पूर्वापरसंबन्धी यो योगः प्रकृतिप्रत्ययसंबन्धः तेन सिद्धः, वृद्धव्यवहाराद्यः सिद्ध इत्यन्ये । तमेव संशयमाह—कतमस्येत्यादि ।' इति पा० । ३ 'यदुक्तमुभयार्थसाधकं' इति पा० ।

१ 'तस्माद्' इति पा० । २ हाराणचन्द्रस्तु 'इतरत्र विहितस्य विधेरितरत्र प्रयोगायोपदेशोऽतिदेशः; यथा—'एष एव विधिः कार्यः शिशिरे समुदाहृतः' इति' पठति, अयमेव साधुपाठः ।

प्रकृतम् । तेन प्रस्तुतेन अनागतं भविष्यदुदावर्तित्वं साध्यते । उदावर्ती स्यात् उदावर्ती संभाव्येत ॥ १७ ॥

**अभिव्याप्यापकर्षणमपवर्गः । यथा—अस्वेद्या विषोपसृष्टाः, अन्यत्र कीटविषादिति ॥ १८ ॥**

अपवर्गमाह—अभिव्याप्येत्यादि । ( गुणक्रियादिभिः सर्वतो वा अभिव्याप्य कस्यचित् पदार्थस्य तेभ्यो गुणक्रियादिभ्यः पृथक्करणम् अपवर्गः ) । उदाहरणमाह—यथा अस्वेद्या इत्यादि । उत्सर्गरूपतया विषोपसृष्टानस्वेद्यान् प्रतिपाद्यापवादमाह—अन्यत्रेत्यादि ॥ १८ ॥

**येन पदेनानुक्तेन वाक्यं समाप्येत स वाक्यशेषः । यथा—शिरःपाणिपादपार्श्वपृष्ठोदरोरसामित्युक्ते पुरुषग्रहणं विनाऽपि गम्यते पुरुषस्येति ॥ १९ ॥**

वाक्यशेषमाह—येनेत्यादि । उदाहरणमाह—यथा शिर इत्यादि । गम्यते ज्ञायत इत्यर्थः ॥ १९ ॥

**यदकीर्तितमर्थादापद्यते साऽर्थापत्तिः । यथा—ओदनं भोक्ष्ये इत्युक्तेऽर्थादापन्नं भवति—नायं पिपासुर्यवागूमिति ॥ २० ॥**

अर्थापत्तिमाह—यदकीर्तितमित्यादि । अकीर्तितम् अप्रतिपादितम् । तदुदाहरणमाह—यथौदनमित्यादि । नायं पातुमिच्छुर्यवागूमित्यर्थः ॥ २० ॥

**यद्यत्राभिहितं तस्य प्रातिलोम्यं विपर्ययः । यथा—कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्या इति ॥ २१ ॥**

विपर्ययमाह—यद्यत्राभिहितमित्यादि । प्रातिलोम्यं विपरीतम् । उदाहरणमाह—यथा कृशाल्पेत्यादि । विपर्ययेण विपरीतमेव गम्यते, अर्थापत्त्या अविपरीत एवार्थः प्रतीयत इत्यनयोर्भेदः ॥ २१ ॥

**प्रकरणान्तरेण समापनं[2] प्रसङ्गः, यद्वा प्रकरणान्तरितो योऽर्थोऽसकृदुक्तः[3] समाप्यते स प्रसङ्गः । यथा—पञ्चमहाभूतशरीरिसमवायः पुरुषस्तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय, भूतचिन्तायां पुनरुक्तं-यतोऽभिहितं पञ्चमहाभूतशरीरिसमवायः पुरुष इति, स खल्वेष कर्मपुरुषश्चिकित्साधिकृत इति ॥ २२ ॥**

प्रसङ्गमाह—प्रकरणान्तरेणेत्यादि । प्रकरणान्तरेणेति प्रकरणान्तरोक्तेनार्थेनेत्यर्थः । समानं तुल्यम् । उदाहरणमाह—यथेत्यादि । प्रकरणान्तरेषु असकृदुक्तः पुनः पुनरुक्तः । समाप्यते समाप्तिं नीयते । तदेव कथ्यते—यथेत्यादि । अपरे तु 'अधिकरणान्तरितो योऽर्थोऽसकृदुक्त' इति पठित्वा व्याख्यानयन्ति—स्नेहविरेकाधिकारयोर्नवज्वरी निषिद्धः, पुनर्ज्वराधिकारे तरुणज्वरिणः स्नेहशोधने निषिद्धे इति अधिकरणेऽन्तरितस्यार्थस्यासकृदुक्तिः ॥ २२ ॥

**(सर्वत्र[1])यदवधारणेनोच्यते स एकान्तः । यथा—त्रिवृद्विरेचयति, मदनफलं वामयति(एव) ॥ २३ ॥**

एकान्तलक्षणमाह—सर्वत्रेत्यादि । अवधारणेन अविकल्पेन, नियमेनेत्यर्थः; उदाहरणेऽवधारणवाचिन एवकारस्य निर्देशात् । उदाहरणमाह—यथा त्रिवृद्विरेचयतीति ॥ २३ ॥

**क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकान्तः । यथा—केचिदाचार्या ब्रुवते द्रव्यं प्रधानं, केचिद्रसं, केचिद्वीर्यं केचिद्विपाकमिति ॥ २४ ॥**

अनेकान्तमाह—क्वचित्तथेत्यादि । उदाहरणमाह—यथा केचिदाचार्या ब्रुवते द्रव्यं प्रधानमित्यादि । स्पष्टार्थः ॥ २४ ॥

**आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः । यथा—कथं वातनिमित्ताश्चत्वारः प्रमेहा असाध्या भवन्तीति ॥ २५ ॥**

पूर्वपक्षमाह—आक्षेपेत्यादि । उदाहरणमाह—यथेत्यादि । अत्रैव दोषजानां साध्यत्वेनोपलब्धेरिति हेतोः पूर्वपक्षावतारः । निर्णयाङ्गत्वेनार्थसाधनत्वमेव संशयस्यापि ॥ २५ ॥

**तस्योत्तरं निर्णयः । यथा—शरीरं प्रपीड्य पश्चादधो गत्वा वसामेदोमज्जानुविद्धं मूत्रं विसृजति वातः, एवमसाध्या वातजा इति ॥ २६ ॥**

**तथा चोक्तम्—**

**कृत्स्नं शरीरं निष्पीड्य मेदोमज्जावसायुतः ॥**
**अधः प्रकुप्यते वायुस्तेनासाध्यास्तु वातजाः ॥ २७ ॥**

निर्णयमाह—तस्योत्तरमित्यादि । तस्य पूर्वपक्षस्य यदुत्तरं स निर्णय इत्यर्थः । उदाहरणमाह—यथा शरीरमित्यादि । यतः शरीरपीडादिकं कृत्वा वसाद्यन्वितं मूत्रं वातो विसृजति, अतो मज्जाक्षये पूर्वपूर्वधातुक्षयादसाध्यत्वमित्यर्थः ॥ २६ ॥ २७ ॥

**परमतमप्रतिषिद्धमनुमतम् । यथा—अन्यो ब्रूयात्—सप्त रसा इति, तच्चाप्रतिषेधादनुमन्यते कथंचिदिति ॥ २८ ॥**

अनुमतमाह—परमतमित्यादि । अप्रतिषिद्धम् अधिगतमित्यर्थः । उदाहरणमाह—यथेत्यादि । कथञ्चिदिति केनापि प्रकारेणेत्यर्थः ॥ २८ ॥

**प्रकरणानुपूर्व्याऽभिहितं विधानम् । यथा—सक्थिमर्माण्येकादश प्रकरणानुपूर्व्याऽभिहितानि २९**

विधानमाह—प्रकरणेत्यादि । प्रकरणानुपूर्व्याऽभिहितमिति यथाक्रममुक्तम् । चन्द्रनन्दनेन च 'परिपाट्याऽर्थकथनं विधानम्' इति विधानलक्षणं कृतम् । उदाहरणमाह—यथा सक्थीत्यादि । मर्मणां प्रकरणानुपूर्व्या अभिधानं क्षिप्रतलहृदयेत्यादिकम् ॥ २९ ॥

१ 'यद्विहितं' इति पा० । २ 'समानं' इति पा० । ३ 'योऽर्थः पुनरुक्तः' इति पा० ।

१ अयं पाठः कचित्पुस्तके नोपलभ्यते ।

**एवं वक्ष्यतीत्यनागतावेक्षणम् । यथा—श्लोकस्थाने ब्रूयात्—चिकित्सितेषु वक्ष्यामीति ॥ ३० ॥**

अनागतावेक्षणमाह—एवमित्यादि । अनागतस्य भविष्यतः अवलोकनं कार्यार्थमवेक्षणमित्यर्थः । उदाहरणमाह—यथा श्लोकेत्यादि ॥ ३० ॥

**यत्पूर्वमुक्तं तदतिक्रान्तावेक्षणम् । यथा—चिकित्सितेषु ब्रूयात्—श्लोकस्थाने यदीरितमिति ॥३१॥**

अतिक्रान्तावेक्षणमाह—यदित्यादि । अतिक्रान्तस्य अतीतस्य अवेक्षणम् । उदाहरणमाह—यथा चिकित्सितेष्वित्यादि ॥ ३१ ॥

**उभयहेतुदर्शनं संशयः । यथा—तलहृदयाभिघातः प्राणहरः, पाणिपादच्छेदनमप्राणहरमिति ॥ ३२ ॥**

संशयमाह—उभयेत्यादि । उभयोर्विसदृशयोरर्थयोर्हेतुः तस्य दर्शनम् । उदाहरणमाह—यथा तलेत्यादि । ननु, एतत् संशयज्ञानार्थमुदाहृतं, संशयोऽस्ति कुतः? तलहृदयाभिघातस्य तथा पाण्यादिच्छेदस्य प्राणहरत्वाप्राणहरत्वाभ्यां पृथग्दर्शितत्वात् । सत्यं, परं यत्र घातच्छेदयोर्द्वयोः सद्भावस्तत्र किं तलहृदयाभिघातान्मरणमुत पाणिपादच्छेदाजीवनमित्येवं संशयः ॥३२॥

**तन्त्रेऽतिशयोपवर्णनं व्याख्यानम् । यथा—इह पञ्चविंशतिकः पुरुषो व्याख्यायते, अन्येष्वायुर्वेदतन्त्रेषु भूतादिप्रभृत्यारभ्य चिन्ता ॥ ३३ ॥**

व्याख्यानमाह—तन्त्रे इत्यादि । तन्त्रे शास्त्रे । अतिशयस्य अतिरिक्तस्यार्थस्य उपवर्णनं ख्यापनं व्याख्यानम् । 'तत्रातिशय' इति पाठे तत्रेति निर्धारणे । उदाहरणमाह—यथा इहेत्यादि । पञ्चविंशतिकः पुरुष इति पञ्चविंशतितम इत्यर्थः, अव्यक्तादीनामष्टानां प्रकृतिविकारैः षोडशभिः सह चतुर्विंशतित्वात् । पुरुष इति क्षेत्रज्ञः । स्वमतमभिधाय परमतमाह—अन्येष्वायुर्वेदतन्त्रेष्वित्यादि । भूतादिस्तामसोऽहङ्कारः; एतेन भूतादिमहङ्कारमारभ्यान्यायुर्वेदतन्त्रेषु चिन्ता नत्वव्यक्तमारभ्येति ॥ ३३ ॥

**अन्यशास्त्रासामान्या स्वसंज्ञा । यथा—मिथुनमिति मधुसर्पिषोर्ग्रहणं; लोकप्रसिद्धमुदाहरणं वा ॥ ३४ ॥**

स्वसंज्ञामाह—अन्यशास्त्रासामान्या स्वसंज्ञेत्यादि । अन्यानि शास्त्राणि आयुर्वेदादपराणि व्याकरणादीनि तेषु, असामान्या

१ 'उभयथा दर्शनं यथा–किं पित्तव्यतिरेकादन्योऽग्निः, आहोस्वित् पित्तमेवाग्निरिति' इति पा० । २ 'अत्राश्रयघातेनाश्रितोपघातात् पाणौ पादे वा छिन्ने सति तलहृदयस्याप्याहतत्वमिति प्राणहरणमप्राणहरणं वा भवत्विति संशयः स्यादिति' इति पा० । ३ 'भूतादिमारभ्य चिन्तेति' इति, 'भूतादिप्रकृतिविकृत्यारब्धचिन्तः' इति च पा० । ४ 'भूतादिप्रभृतीनि अहङ्कारमारभ्येत्यर्थः । एतेनान्यत्र पञ्चविंशतिकः पुरुषः' इति पा० । ५ 'यथा मिथुनीभूतयोर्वातपित्तयोर्वातश्लेष्मणोः पित्तश्लेष्मणोश्च द्वन्द्वशब्देन ग्रहणं, तथाभूतयोश्च तैलसर्पिषोर्यमकशब्देनेति' इति पा० ।

असाधारणा, तत्राननुगता स्वशास्त्रेष्वेव प्रयोजनवतीत्यर्थः । उदाहरणमाह—यथा मिथुनमित्यादि । ननु, स्वसंज्ञाप्रणयनं व्यवहारार्थं क्रियते, न चात्र मिथुनसंज्ञया यन्मधुसर्पिषोर्ग्रहणं तद्द्वारेण व्यवहारो दृश्यते? उच्यते—उदाहरणमात्रमेतद्यथाकथंचिदिति । अत एव पक्षान्तरमाह—लोके प्रसिद्धमुदाहरणं वा । स्वसंज्ञया प्राह्यमित्यर्थः । यथा चतुर्षु स्नेहेषु महास्नेहसंज्ञा । अतः परं केचिदधीयते–यथोष्णभयात् छायामनुसरतीति । ते तूदाहरणमपि तन्त्रयुक्तिष्विच्छन्ति । तन्न युक्तं, उद्देशसूत्रे उदाहरणाख्यतन्त्रयुक्तेरनुक्तेः, संख्याधिक्यप्रसक्तेश्च, तस्माद्यथोष्णेत्यादिकोऽपपाठ एवेति ॥ ३४ ॥

**निश्चितं वचनं निर्वचनम् । यथा—आयुर्विद्यतेऽस्मिन्ननेन वा आयुर्विन्दतीत्यायुर्वेदः ॥ ३५ ॥**

निर्वचनमाह—निश्चितमित्यादि । उदाहरणमाह—यथा आयुर्विद्यतेऽस्मिन् इत्यादि ॥ ३५ ॥

**दृष्टान्तव्यक्तिर्निदर्शनम् । यथा—अग्निर्वायुना सहितः कक्षे वृद्धिं गच्छति तथा वातपित्तकफदुष्टो व्रण इति ॥ ३६ ॥**

निदर्शनमाह—दृष्टान्तव्यक्तिरित्यादि । दृष्टान्तेन व्यक्तिर्यस्मिन् वाक्ये तत्तथा । एतेनैतदुक्तं भवति—दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनमिति । अत एव च निदर्शनात् हेत्वर्थो भिद्यते, हेत्वर्थस्य दृष्टान्तमात्रत्वात् । उदाहरणमाह—यथा अग्निरित्यादि । तथेति अभिवृद्धिं गच्छतीत्यर्थः ॥ ३६ ॥

**इदमेव कर्तव्यमिति नियोगः । यथा—पथ्यमेव भोक्तव्यमिति ॥ ३७ ॥**

नियोगमाह—इदमित्यादि । उदाहरणमाह—यथा पथ्यमित्यादि । ( क्वचिन्नियोगो व्यभिचरति, यथा—ज्वरितस्यारुचौ सात्म्यमपथ्यमपि दीयते; तदुक्तं—'ज्वरितोऽहितमश्नीयाद्यस्य त्वरुचिर्भवेत् । अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा' इति । तन्त्रान्तरेऽप्युक्तं—''उत्पद्यते हि साऽवस्था देशकालबलं प्रति । यस्यां कार्यमकार्यं स्याद्वर्जितं कार्यमेव च'—इति ) ॥ ३७ ॥

**इदं चेदं चेति समुच्चयः । यथा—मांसवर्गे एणहरिणादयो लावतित्तिरिशारङ्गाश्च प्रधानानीति ॥ ३८ ॥**

समुच्चयमाह—इदमित्यादि । उदाहरणमाह—यथा मांसेत्यादि । एणादयः प्रधानानि लावादयश्च प्रधानानीति समुच्चयश्च ॥ ३८ ॥

**इदं वेदं वेति विकल्पः । यथा—रसौदनः सघृता यवागूर्वा ( भवत्विति ) ॥ ३९ ॥**

१ 'दृष्टान्तेन दर्शनं निदर्शनम्' इति, 'दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनम्' इति च पा० । २ 'कोष्ठे' इति पा० । ३ 'अन्यार्थसाधकमात्रत्वात्' इति पा० । ४ अयं पाठः कस्मिंश्चित्पुस्तके नोपलभ्यते । ५ 'अस्य चानैकान्तिकत्वं प्रागेव परिहृतम्' इति पा० ।

विकल्पमाह—इदं वेत्यादि । प्रत्येकं वाशब्दोपादानमत्रोदाहरणे यत्न कृतं तदेकेनापि वाशब्देन बहुषु विकल्पतादर्शनार्थं; क्वचित् वाशब्दं विनाऽपि विकल्पो भवति, यथैकं रोगं प्रति बहुषु योगेषु वाशब्दं विनाऽप्यन्यतमो योगो योज्य इति विकल्पः । उदाहरणमाह—यथा रसौदन इत्यादि ॥ ३९ ॥

**यदनिर्दिष्टं बुद्ध्याऽवगम्यते तदूह्यम् । यथा—अभिहितमन्नपानविधौ चतुर्विधं चान्नमुपदिश्यते—भक्ष्यं भोज्यं लेह्यं पेयमिति, एवं चतुर्विधे वक्तव्ये द्विविधमभिहितम्; इदमत्रोह्यम्—अन्नपाने विशिष्टयोर्द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवतीति; चतुर्विधश्चाहारः प्रविरलः, प्रायेण द्विविध एव; अतो द्वित्वं प्रसिद्धमिति । किञ्चान्यत्—अन्नेन भक्ष्यमवरुद्धं, घनसाधर्म्यात्; पेयेन लेह्यं, द्रवसाधर्म्यात् ॥ ४० ॥**

सांप्रतमूह्याख्यां तन्त्रयुक्तिमाह—यदित्यादि । अनिर्दिष्टमिति साक्षादित्यर्थः । उदाहरणमाह—यथाऽभिहितमित्यादि । कथमत्रोह्यं भवतीति कथनायाह—भक्ष्यं भोज्यं लेह्यं पेयमिति चतुर्धा वक्तव्ये द्विविधमभिहितमत्रोह्यं भवति चातुर्विध्यमत्रोह्यं भवतीत्यर्थः । बुद्धिगम्यमूह्यं प्राक् प्रतिपादितं तत् कीदृश्या बुद्ध्या गम्यत इत्याह—अन्नपाने इत्यादि । अन्नपानयोर्विशिष्टयोरभ्यवहार्ययोर्ग्रहणे चतुर्णामभ्यवहार्यविशेषाणां भक्ष्यभोज्यलेह्यपेयानां ग्रहणं भवतीति । चातुर्विध्यमेव किमिति नोक्तमित्याशङ्क्याह-चतुर्विध इत्यादि । प्रविरल इति प्रकर्षेण विरलः क्वचित्कथंचिद्भावात् । प्रकारान्तरेणापि चतुर्विधत्वमाह—किञ्चान्यदित्यादि । अत्र केचित्पूर्वपक्षं कुर्वन्ति वाक्यार्थस्यास्पष्टाविद्यमानस्य योजनादूह्यं न तन्त्रयुक्तिरिति, लीनस्यानिर्दिष्टस्य चार्थस्य वाक्यादेवोहनेनोभयरूपस्य योजनादूह्यं तन्त्रयुक्तेरेव ॥ ४० ॥

**भवन्ति चात्र—**

**सामान्यदर्शनेनासां व्यवस्था संप्रदर्शिता ॥**
**विशेषस्तु यथायोगमुपधार्यो विपश्चिता ॥ ४१ ॥**
**द्वात्रिंशद्युक्तयो ह्येतास्तन्त्रसारगवेषणे ॥**
**मया सम्यग्विनिहिताः शब्दार्थन्यायसंयुताः ॥४२॥**
**यो ह्येता विधिवद्वेत्ति दीपीभूतास्तु बुद्धिमान् ॥**
**स पूजार्हो भिषक्छ्रेष्ठ इति धन्वन्तरेर्मतम् ॥ ४३ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रे तन्त्रभूषणाध्यायेषु तन्त्रयुक्तिर्नाम ( तृतीयोऽध्यायः, आदितः ) पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥**

१ 'बुद्धिगम्यं तदूह्यम्' इति, 'बुद्धिमता तदूह्यम्' इति च पा० । २ 'किंचान्यत् अन्नेन भक्ष्यमवरुद्धमन्नसाधर्म्यात्, पेयेन लेह्यं, द्रवसाधर्म्यात्; चतुर्विधश्चाहारः प्रायेण द्विविधः प्रसिद्ध इति' इति पा० । ३ 'सामान्यलक्षणेनैवा व्यासतः संप्रदर्शिताः' इति पा० । ४ 'शब्दन्यायार्थसंयुताः' इति पा० ।

एवं तन्त्रयुक्तीरभिधायोपसंहरन् प्रतिपादिततन्त्रयुक्तिविशेषप्रतिपत्तये श्लोकमाह—भवन्ति चात्रेत्यादि । तन्त्रयुक्तीनां विशेषो यथासंबन्धं विदुषा उपधारणीय इत्यर्थः । कार्तिकस्तु द्वात्रिंशद्युक्तय इत्यादिकं श्लोकद्वयं पठति ॥ ४१-४३ ॥

इति श्रीडल्ह(ह्)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ।

**अथातो दोषभेदविकल्पमध्यायं व्याख्यास्यामः १ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

तन्त्रयुक्त्यनन्तरं परिशिष्टत्वाद्दोषभेदाध्यायारम्भः—अथात इत्यादि । अथेत्यादिकं पूर्ववद्व्याख्येयम् । धातून् दूषयन्तीति दोषा वातादयः, तेषां भेदः पृथक्संसर्गसन्निपातभेदेन, तस्य विकल्पनमेकैकाद्यनुगमनेन नानात्वकरणं प्रपञ्चनं दोषभेदविकल्पः, तमधिकृत्य कृतः, तम् ॥ १ ॥ २ ॥

**अष्टाङ्गवेदविद्वांसं दिवोदासं महौजसम् ॥**
**छिन्नशास्त्रार्थसंदेहं सूक्ष्मागाधागमोदधिम् ॥ ३ ॥**
**विश्वामित्रसुतः श्रीमान् सुश्रुतः परिपृच्छति ॥**

अष्टाङ्गेत्यादि । अष्टाङ्गानि शल्यादीनि वाजीकरणान्तानि, तान्येव वेद आयुर्वेदः, तेन तत्र वा विद्वान् यस्तम् । महौजसं महाप्रभावम् । सूक्ष्मा लीनार्थाः, अगाधा दुरवगाहा ये आगमा एवोदधयस्ते सन्त्यस्मिन्निति । श्रीमानिति राजश्रिया ब्राह्म्या वा अलङ्कृतः । ननु, विश्वामित्रो गाधिराजः, तत्सुतत्वेन राजश्रिया योगो युक्तः, कथं ब्राह्म्या श्रियेति ? सत्यं, विश्वामित्रस्य ब्राह्मण्यं तपसा, ततो ब्राह्म्या श्रिया योगो युक्त एव । अन्ये तु क्षत्रियाणां ब्रह्मर्षिजातत्वेनोभययोग इति मन्यन्ते, अपरे तु विद्यासमाप्त्या ब्राह्म्या श्रिया योग इति मन्यन्ते । तथा चोक्तम्—"विद्यासमाप्तौ ब्राह्मं वा सत्त्वमार्षमथापि वा । ध्रुवमाविशति ज्ञानात्तस्माद्वैद्यो द्विजः स्मृतः"—इति ॥ ३ ॥—

**द्विषष्टिर्दोषभेदा ये पुरस्तात्परिकीर्तिताः ॥ ४ ॥**
**कति तत्रैकशो ज्ञेया द्विशो वाऽप्यथवा त्रिशः ॥**

द्विषष्टिरित्यादि । पुरस्तात्परिकीर्तिताः इति रसभेदविकल्पे । कुतो द्विषष्टिर्दोषभेदास्त्रिषष्टी रसभेदा इति ? उच्यते—"द्विषष्टिर्दोषभेदाः स्यू रसभेदास्त्रिषष्टिधा । स्वास्थ्यं त्रिषष्टं विज्ञेयं तत्र षड्रसयोजनम्"—इति । कति तत्रैकशो ज्ञेया द्विशो वाऽप्यथवा त्रिश इत्याह—"एकशः षट् द्विशस्त्वेकविंशतिश्चतुरन्विता । त्रिशो द्वात्रिंशदित्येवं त्रयो दोषास्त्रिषष्टिधा"-इति ॥ ४ ॥—

**तस्य तद्वचनं श्रुत्वा संशयच्छिन्महातपाः ॥ ५ ॥**
**प्रीतात्मा नृपशार्दूलः सुश्रुतायाह तत्त्वतः ॥**

शिष्यप्रश्नमाकर्ण्य गुरुराह—तस्येत्यादि । तस्येति सुश्रुतस्य । तत् इति पूर्वोक्तम् । संशयच्छिदिति संदेहच्छेत्ता ।

१ 'अष्टाङ्गायुर्वेदविदं' इति पा० । २ 'नानार्थत्वात्' इति पा० । ३ 'नरशार्दूलः' इति पा० ।

प्रीतात्मा तृप्तान्तःकरणः । नृपशार्दूलो राजसत्तमः । तत्त्वत इति यथार्थभावेन ॥ ५ ॥—

**त्रयो दोषा धातवश्च पुरीषं मूत्रमेव च ॥ ६ ॥**
**देहं सन्धारयन्त्येते ह्यव्यापन्ना रसैर्हितैः ॥**

किमाह भगवानित्याह—त्रय इत्यादि । त्रयो दोषा वातादयः, धातवः सप्त रसादयः । अव्यापन्ना अविकृतिंगताः । रसैर्हितैरिति मधुरादिरसैः पथ्यैरित्यर्थः । ननु, यथाप्रश्नं प्रत्युत्तरे वाच्ये किमर्थं कति तत्रैकश इत्यादिप्रश्नस्योत्तरार्थे त्रयो दोषा इत्याद्यभिधानम् ? उच्यते—धातूनां मलानां च दोषसंसर्गे दोषव्यपदेश इत्यादिप्रतिपादनार्थं; अत एवासृजा सह पुरा पञ्चदश प्रसरा अभिहिताः । यद्येवं तर्हि मांसादिभिः सह प्रसरः कुतो न कीर्तितः ? उच्यते—असंख्येयत्वात् । अथ कथं तदधिगन्तव्यमिति चेत्, दोषलिङ्गैनैव । तथा चात्र वक्ष्यति—तस्मात् प्रसङ्गं संयम्येत्यादि । ननु, दोषधातुमलमूलं हि शरीरमित्यनेनैव दोषादिकार्यत्वमभिहितं; न च शरीराद्देहो भिन्नार्थः, तयोः पर्यायशब्दत्वात्; तत्कथं पुनरुच्यते—एते देहं धारयन्तीति ? उच्यते—देहशब्देनात्र कर्मपुरुषस्य चिकित्साधिकृतस्य विवक्षितत्वात् ॥ ६ ॥—

**पुरुषः षोडशकलः प्राणाश्चैकादशैव ये ॥ ७ ॥**
**रोगाणां तु सहस्रं यच्छतं विंशतिरेव च ॥**
**शतं च पञ्च द्रव्याणां त्रिसप्तत्यधिकोत्तरम् ॥ ८ ॥**
**व्यासतः कीर्तितं तद्धि**

कीदृशः पुनरयं देहशब्दाभिधेयः कर्मपुरुष इति पूर्वप्रतिपादितस्यैव कर्मपुरुषस्य स्वरूपं वाच्यं, तत्प्रसंगेनापरमपि प्राणादिकं यत्तत्प्रतिपादयितुं सुखस्मरणार्थं प्रतिपादयति—पुरुष इत्यादि । अत्रैके कलाशब्देन पञ्चभूतानि एकादशेन्द्रियाणीति षोडशविकारा इति व्याचक्षते, परमेतन्नायुर्वेदे प्रमाणीकृतम् । अन्ये तु कलाशब्दमङ्गप्रत्यङ्गेष्वामनन्ति—शिरोग्रीवापाणिपादपार्श्वपृष्ठोदरांसीत्यष्टाङ्गानि, चिबुकनासौष्ठवङ्क्षणाङ्गुष्ठाङ्गुलिपार्ष्णिगुल्फाः प्रत्यङ्गानीति । स्वतन्त्रपरतन्त्राभिप्रायानुवर्तिभिराचार्यैः कलाशब्दो गुणवाची पठितः । ते च सर्वभूतचिन्ताशारीरोक्तसुखदुःखेच्छोद्वेगप्रयत्नादीन् षोडशगुणानाचक्षते । चतुष्पादं षोडशकलं भेषजं **चरकाचार्येणोक्तं**; तत्र षोडशकलं षोडशगुणमिति व्याख्यानयन्ति । प्राणाश्चैकादशेति अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः । योऽसौ भूतात्मा स एव षोडशकलः, संयोगिन एव प्राणव्यपदेशभाजः, इत्येकादशत्वम् । रोगाणां तु सहस्रं यच्छतं विंशतिरेव चेति विंशत्यधिकैकादशशतानि रोगाणाम् । अत्र सौश्रुते तन्त्रे षट्स्थानेषु प्रोक्ता रोगाः श्लोकैरभिधीयन्ते ।—

"हीनातिदग्धैः क्षारेण, त्रयः क्षुद्रादयोऽग्निना ।
चतुर्थो धूमविहतः पञ्च शोणितदुष्टयः ॥ १ ॥
दोषधातुमलादीनां द्वात्रिंशत् क्षयवृद्धितः ।
द्वे स्थौल्यकार्श्ये त्रिविधो विस्रंसाद्यो बलक्षयः ॥ २ ॥
षट् शोफाः षड् व्रणा वह्नित्रितयं विषमादिकम् ।
आमं विदग्धं विष्टब्धमजीर्णं च तथा त्रिधा ॥ ३ ॥
इति षट्षष्टिरातङ्काः सूत्रस्थाने निदर्शिताः ।
आमपक्वाशये श्रोत्रे तथेन्द्रियचतुष्टये ॥ ४ ॥
त्वगामिषसिरास्नायुसन्ध्यस्थिमज्जसंभवाः ।
शुक्रे चैकाङ्गसर्वाङ्गगताः सप्ताधिका दश ॥ ५ ॥
त्रयोदशावृतैरन्यैर्दोषैः स्युर्मारुतैः खलु ।
चतुर्विधं वातरक्तमाक्षेपश्चापतानकः ।
पक्षाघातोऽपतन्त्रश्च मन्यास्तम्भोऽर्दितस्तथा ॥ ६ ॥
गृध्रसी सह विश्वाच्या शिरः क्रोष्टुकपूर्वकम् ।
खञ्जः पङ्गुः कलयाख्यः कण्टकः पाददाहकृत् ॥ ७ ॥
पादहर्षोऽवबाहुश्च मूकमिन्मिणगद्गदाः ।
तून्याध्मानद्वयेऽष्ठीलाद्वयमर्शांसि षट् तथा ॥ ८ ॥
चर्मकीलश्चतस्रश्चाश्मर्यः पञ्च भगन्दराः ।
तथाऽष्टादश कुष्ठानि किलासानि पुनस्त्रिधा ॥ ९ ॥
प्रमेहा विंशतिः प्रोक्ताः पिडिका नव तत्कृताः ।
उदराणि तथाऽष्टौ च मूढगर्भस्तथाऽष्टधा ॥ १० ॥
बाह्या विद्रधयः षट् स्युस्तथाऽन्तःस्थाः स्मृता दश ।
विसर्पनाडीस्तनजास्तथैव पञ्च पञ्च च ॥ ११ ॥
ग्रन्थयः सप्त चैका स्यादपची सप्तधाऽर्बुदम् ।
गलगण्डास्त्रयः सप्त वृद्धयः परिकीर्तिताः ॥ १२ ॥
उपदंशा मताः पञ्च श्लीपदं च तथा त्रिधा ।
भग्ना अष्टादश ज्ञेयाः शूकदोषास्तथैव च ।
चत्वारिंशत्तथाऽष्टौ च क्षुद्ररोगाः प्रकीर्तिताः ॥ १३ ॥
अष्टावोष्ठभवा दन्तमूलेषु दश पञ्च च ॥ १४ ॥
अष्टौ दन्तेषु जिह्वायां पञ्च तालुगता नव ।
कण्ठे चाष्टादश ज्ञेयाश्चतुःसर्वसरा गदाः ॥ १५ ॥
एवं मुखे सप्तषष्टिरिति स्थाने द्वितीयके ।
द्वाचत्वारिंशदधिका त्रिशती परिकीर्तिता ॥ १६ ॥
अष्टौ शुक्रगता रोगा अष्टावार्तवदुष्टयः ।
चत्वारोऽसृग्दराः प्रोक्ता अपातस्त्वपराकृतः ॥ १७ ॥
मक्कल्लीनशोषाश्च नैगमेशाहृतस्तथा ।
नागोदरः सुतिर्गर्भे शारीरे सप्तविंशतिः ॥ १८ ॥
अथ मेदोनिलावेगाच्छ्वयथुः सरुजश्च यः ।
आढ्यवातः सर्वसराः शोफाः पञ्च प्रकीर्तिताः ।
कर्णपाल्यामयाः पञ्च क्लैब्यमुक्तं चतुर्विधम् ॥ १९ ॥
वान्तरेचितयोः प्रोक्ता व्यापदो दश पञ्च च ।
षण्नेत्रप्रणिधानस्य नेत्रस्यैकादशैव तु ॥ २० ॥
पञ्च बस्तिकृतास्तत्र चत्वारः पीडने कृताः ।
एकादश द्रव्यकृताः सप्त शय्याकृतास्तथा ॥ २१ ॥

१ 'शतानि पञ्च द्रव्याणां त्रिसप्तत्यधिकानि च' इति पा० ।
२ 'तस्य पुरुषस्य, सुखदुःखेच्छादयो भूतचिन्ताशारीरोक्ताः षोडश गुणाः' इति पा० ।

१ 'आमपक्वाशयश्रोत्रेष्विन्द्रियाधिष्ठितेषु च' इति पा० ।
२ '°सन्धिकीकसमज्जसु' इति पा० । ३ 'जठरा मूढगर्भाः स्युरष्टवष्टौ तथैकशः' इति पा० । ४ 'क्लीबाः पञ्चविधास्तथा' इति पा० ।

चत्वारिंशच्चतस्रश्च वैश्यतो व्यापदस्तथा ।
कोष्ठायासादिकाः पञ्च दश चातुरहेतुकाः ॥ २२ ॥
स्नेहस्य कारणान्यष्टावष्टावप्युपागमकृन्ति च ।
इति नेत्रादिदोषेण षष्टिः सप्त समासतः ॥ २३ ॥
एवं चिकित्सितस्थाने रुजोऽष्टानवतिस्तथा ।
अन्नादिरक्षाविज्ञाने विंशतिर्विषहेतुकाः ॥ २४ ॥
वेगाः स्युः स्थावरे दर्वीकरमण्डलिनां विषे ।
राजिलवैकरञ्जानां प्रत्येकं सप्त सप्त च ॥ २५ ॥
मूषिकासु दशाष्टौ च सप्त वेगा अलर्कजाः ।
सप्तषष्टिशतं चात्र कीटानां विषदायिनाम्[1] ॥ २६ ॥
सप्तचत्वारिंशद्युतं कल्पस्थाने शतद्वयम् ।
नव सन्ध्याश्रयाः प्रोक्ता वर्त्मजाश्चैकविंशतिः ॥ २७ ॥
शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ।
सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु ॥ २८ ॥
बाह्यजौ द्वौ नेत्ररोगाविति षट्सप्ततिः स्मृताः ।
कुकूणकः शिशोरेव कर्णेऽष्टाविंशतिर्नृणाम् ॥ २९ ॥
एकत्रिंशद्घ्राणगताः सप्रतिश्यायपञ्चकाः ।
एकादश[2] शिरोरोगाः परं शालाक्यसंज्ञिते ॥ ३० ॥
आतङ्कानां शतं प्रोक्तं षट्चत्वारिंशता युतम् ।
नव बालग्रहा योनिव्यापदो विंशतिः स्त्रियाः ॥ ३१ ॥
एवं कुमारतन्त्रेऽस्मिन्नेकोनत्रिंशदामयाः ।
अष्टौ ज्वरा ह्यतीसाराः षट् चतस्रः प्रवाहिकाः ॥ ३२ ॥
चत्वारो ग्रहणीदोषा यक्ष्मैको गुल्मपञ्चकम् ।
हृद्रोगाः पञ्च चत्वारः पाण्ड्वाख्याः कामलाद्वयम् ॥३३॥
हलीमकः पानकी च रक्तपित्तं चतुर्विधम् ।
षट्प्रकारा मता मूर्च्छा विकाराः सप्त मद्यजाः ॥ ३४ ॥
दाहाः पञ्च तृषः सप्त छर्दयः पञ्च देहिनाम् ।
हिक्काः श्वासास्तथा कासाः प्रत्येकं पञ्च पञ्च च ॥ ३५ ॥
स्वरभेदास्तथा षट् स्युर्विंशतिः कृमिजातयः ।
नवोदावर्तका दृष्टा विसूच्यलसस एव च ॥ ३६ ॥
आनाहौ द्वावामविद्धौ तथाऽरोचकपञ्चकम् ।
मूत्राघाता द्वादश स्युरिति कायचिकित्सिते ॥ ३७ ॥
आमयानां शतं प्रोक्तं चत्वारिंशच्च सप्त च ।
देवता-दैत्य-गन्धर्व-यक्ष-पित्र-हि-रक्षसाम् ॥ ३८ ॥
पिशाचस्याभिषङ्गेण गदाश्चाष्टौ प्रकीर्तिताः ।
अपस्माराश्च चत्वार उन्मादाः षडुदीरिताः ॥ ३९ ॥
अष्टादशगदा भूतविद्यायां सूक्ष्मदर्शिभिः ।
एवं हि सौश्रुते तन्त्रे काशीराजेन कीर्तिताः ॥ ४० ॥
रोगाणां तु सहस्रं यच्छतं विंशतिरेव च ।

व्यासतो विस्तरतः । हिशब्दो हेत्वर्थे, यस्मात् कारणात् ॥ ७ ॥ ८ ॥—

१ 'सप्तार्धं तु शतं चात्र कीटानां विषदर्पिणाम्' इति पा० ।
२ 'दश वृद्धाः शिरोरोगाः' इति पा० ।

**भिन्ना दोषास्त्रयो गुणाः ॥**
**द्विषष्टिधा भवन्त्येते भूयिष्ठमिति निश्चयः ॥ ९ ॥**

भिन्ना इत्यादि । भिन्ना भेदंगता द्विषष्टिधा भवन्तीत्यर्थः । त्रयो दोषा वातपित्तश्लेष्माणः । गुणा गुणमयाः सत्त्वरजस्तमोमयाः । तद्यथा—रजोभूयिष्ठो मारुतः, रजो हि प्रवर्तकं सर्वभावानां; पित्तं सत्त्वोत्कटं, लघुप्रकाशकत्वात्, रजोयुक्तं वेत्येके; कफः तमोबहुलः, गुरुप्रावरणात्मकत्वादित्याहुर्भिषजः । यद्येवं तत् कथं कफप्रकृतिके पुंसि सत्त्वगुणोपपन्नता पठिता? उच्यते—गुणद्वितयमपि कफे ज्ञातव्यं, 'सत्त्वतमोबहुला आपः' इत्युक्तत्वात् ॥ ९ ॥

**त्रय एव पृथक् दोषा द्विशो नव समाधिकैः ॥**
**त्रयोदशाधिकैकद्विसममध्योल्वणैस्त्रिशः ॥ १० ॥**
**पञ्चाशदेवं तु सह भवन्ति क्षयमागतैः ॥**
**क्षीणमध्याधिकक्षीणक्षीणवृद्धैस्तथाऽपरैः ॥ ११ ॥**
**द्वादशैवं समाख्यातास्त्रयो दोषा द्विषष्टिधा ॥**

कथमेते द्विषष्टिधा भवन्तीत्याह—त्रय एवेत्यादि । तत्र पृथक् प्रत्येकं, दोषा वातपित्तश्लेष्माणस्त्रय एव, इतरौ च द्वौ स्वस्थाविति ज्ञेयौ । वृद्धो वातः स्वस्थौ पित्तश्लेष्माणौ १, वृद्धं पित्तं स्वस्थौ वातश्लेष्माणौ २, वृद्धः श्लेष्मा स्वस्थे वातपित्ते ३, इति । द्विशो नव समाधिकैरिति तत्र समवृद्धाभ्यां द्वाभ्यां दोषाभ्यां त्रयः संसर्गा भवन्ति; यथा—वातपित्ते समे वृद्धे स्वस्थः श्लेष्मा १, वातश्लेष्माणौ समौ वृद्धौ स्वस्थं पित्तं २, पित्तश्लेष्माणौ समौ वृद्धौ स्वस्थो वातः ३, इति । अन्यतराधिकवृद्धाभ्यां षट्; तद्यथा—वातपित्तयोर्वृद्धयोर्वातोऽधिको वृद्धः स्वस्थः श्लेष्मा १, वातपित्तयोर्वृद्धयोः पित्तमधिकवृद्धं स्वस्थः श्लेष्मा २, वातश्लेष्मणोर्वृद्धयोर्वातोऽधिकवृद्धः स्वस्थं पित्तं ३, वातश्लेष्मणोर्वृद्धयोः श्लेष्माऽधिकवृद्धः स्वस्थं पित्तं ४, पित्तश्लेष्मणोर्वृद्धयोः पित्तमधिकं वृद्धं स्वस्थो वातः ५, पित्तश्लेष्मणोर्वृद्धयोः श्लेष्मा अधिकवृद्धः स्वस्थो वातः ६ । त्रिशस्तु वृद्धैस्त्रयोदश; तत्र त्रिभिरधिकैरेकः अधिकैकदोषास्त्रयः, अधिकद्विदोषास्त्रयः, सममध्योल्बणदोषाः षट् । तद्यथा—वातपित्तश्लेष्मणां वृद्धानां वातोऽधिकवृद्धः १, वातपित्तश्लेष्मणां वृद्धानां पित्तमधिकवृद्धं २, वातपित्तश्लेष्मणां वृद्धानां श्लेष्माऽधिकवृद्धः ३ । अथाधिकद्विवृद्धदोषाः; तद्यथा,—वातपित्तश्लेष्मणां वृद्धानां वातपित्ते अधिकवृद्धे १, वातपित्तश्लेष्मणां वृद्धानां वातश्लेष्माणौ अधिकवृद्धौ २, वातपित्तश्लेष्मणां वृद्धानां पित्तश्लेष्माणावधिकवृद्धौ ३ । क्षीणो वातः स्वस्थौ पित्तश्लेष्माणौ १, क्षीणं पित्तं स्वस्थौ वातश्लेष्माणौ २, क्षीणः श्लेष्मा स्वस्थे वातपित्ते ३, एवं पृथक् त्रय एव । अथ हीनमध्योल्बणवृद्धाः षडुच्यन्ते, तत्र समः

१ 'क्षीणमध्याधिकैश्चैकक्षीणवृद्धास्तथाऽपरे' इति पा० । २ 'द्विशो नव, तत्र समैस्त्रयः, तद्यथा;' इति पा० । ३ 'अधिकैस्तु षड्भेदाः' इति पा० ।

समवृद्धो हीनवृद्ध इत्यर्थः; तद्यथा—हीनवृद्धो वातः, मध्यवृद्धं पित्तं, अधिकवृद्धः श्लेष्मा १; हीनवृद्धो वातः, मध्यवृद्धः श्लेष्मा, अधिकवृद्धं पित्तं २; हीनवृद्धं पित्तं, अधिकवृद्धो वातः, मध्यवृद्धः श्लेष्मा ३; मध्यवृद्धो वातः, हीनवृद्धं पित्तं, अधिकवृद्धः श्लेष्मा ४; हीनवृद्धः श्लेष्मा, अधिकवृद्धं पित्तं, मध्यवृद्धो वातः ५; अधिकवृद्धो वातः, मध्यवृद्धं पित्तं हीनवृद्धः श्लेष्मा ६ । सर्वदोषैः समवृद्धैरेकः । उक्तं च तन्त्रान्तरे—"द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट् । समैश्चैको विकारास्ते सन्निपातास्त्रयोदश"–इति । पञ्चाशदित्यादि । एवमनेन प्रकारेण क्षयमागतैः पञ्चविंशतिदोषभेदैः सह पञ्चाशद्भवन्ति । तद्यथा—वातपित्तकफैरेकैकैः क्षीणैस्त्रयो भेदा भवन्ति, द्विशो नव प्रोच्यन्ते । तद्यथा—वातपित्ते समक्षीणे स्वस्थः श्लेष्मा १, वातश्लेष्माणौ समक्षीणौ स्वस्थं पित्तं २, पित्तश्लेष्माणौ समहीनौ स्वस्थो वातः ३ । अधिकक्षीणाः षट्; तद्यथा–वातपित्तयोः क्षीणयोर्वातोऽधिकक्षीणः स्वस्थः श्लेष्मा १, वातपित्तयोः क्षीणयोः पित्तमधिकक्षीणं स्वस्थः श्लेष्मा २, वातश्लेष्मणोः क्षीणयोर्वातोऽधिकक्षीणः स्वस्थं पित्तं ३, वातश्लेष्मणोः क्षीणयोः श्लेष्माऽधिकक्षीणः स्वस्थं पित्तं ४, पित्तश्लेष्मणोः क्षीणयोः पित्तमधिकक्षीणं स्वस्थो वातः ५, पित्तश्लेष्मणोः क्षीणयोः श्लेष्माऽधिकक्षीणः स्वस्थो वातः ६ । अथ क्षीणदोषत्रयभेदास्त्रयोदश प्रोच्यन्ते; तत्र—त्रिभिरपि समक्षीणैरेकः; अधिकैकैकक्षीणैश्च त्रयः । यथा,—वातपित्तश्लेष्मणां क्षीणानां वातोऽधिकक्षीणः १, वातपित्तश्लेष्मणां क्षीणानां पित्तमधिकक्षीणं २, वातपित्तश्लेष्मणां क्षीणानां श्लेष्मा अधिकक्षीणः ३ । अथाधिकक्षीणद्विदोषाः; तद्यथा—वातपित्तश्लेष्मणां क्षीणानां वातपित्ते अधिकक्षीणे १, वातपित्तश्लेष्मणां क्षीणानां वातश्लेष्माणावधिकक्षीणौ २, वातपित्तश्लेष्मणां क्षीणानां पित्तश्लेष्माणावधिकक्षीणौ ३ । अथ हीनमध्योल्बणक्षीणाः षट् प्रोच्यन्ते; तद्यथा,—हीनक्षीणो वातः, मध्यक्षीणं पित्तं, अधिकक्षीणः श्लेष्मा १; मध्यक्षीणो वातः, हीनक्षीणं पित्तं, अधिकक्षीणः श्लेष्मा २; अधिकक्षीणो वातः, मध्यक्षीणं पित्तं, हीनक्षीणः श्लेष्मा ३; हीनक्षीणो वातः, अधिकक्षीणं पित्तं, मध्यक्षीणः श्लेष्मा ४; अधिकक्षीणो वातः, हीनक्षीणं पित्तं, मध्यक्षीणः श्लेष्मा ५; मध्यक्षीणो वातः, अधिकक्षीणं पित्तं, हीनक्षीणः श्लेष्मा ६। क्षीणेत्यादि अत्र मध्यशब्देन स्वस्थोऽभिधीयते, अधिकशब्देन च वृद्धः । तत्र क्षीणमध्याधिकभेदेन षट् । तद्यथा—क्षीणो वातः, स्वस्थं पित्तं, वृद्धः श्लेष्मा १; क्षीणो वातः, वृद्धं पित्तं, स्वस्थः श्लेष्मा २; स्वस्थो वातः, पित्तं क्षीणं, वृद्धः श्लेष्मा ३; वृद्धो वातः, क्षीणं पित्तं, स्वस्थः, श्लेष्मा ४; स्वस्थो वातः, पित्तं वृद्धं, क्षीणः श्लेष्मा ५; वृद्धो वातः, स्वस्थं पित्तं, क्षीणः श्लेष्मा ६ । अथ द्विक्षीणैकवृद्धांस्त्रीनाह—वातपित्ते क्षीणे वृद्धः श्लेष्मा १, वातश्लेष्माणौ क्षीणौ पित्तं वृद्धं २, पित्तश्लेष्माणौ क्षीणौ वातो वृद्धः ३ । अथ द्विवृद्धैकक्षीणानाह—वातपित्ते वृद्धे क्षीणः श्लेष्मा १, वातश्लेष्माणौ वृद्धौ क्षीणं पित्तं २, पित्तश्लेष्माणौ वृद्धौ क्षीणो वातः ३ । एवमनेन प्रकारेण, समाख्याताः कथिताः, त्रयो दोषा वातपित्तश्लेष्माणः । स्वस्थैस्तु वातपित्तश्लेष्मभिः स्वास्थ्यं त्रिषष्टमिति अयमेवार्थः श्लोकैरुच्यते । तद्यथा,—

पृथग्वृद्धैर्मरुत्पित्तकफैर्भेदत्रयं भवेत् ।
संसर्गे तु भवन्त्येषां भेदास्तुल्याधिकेन च ॥ १ ॥
वातपित्ते समे वृद्धे समावेवं मरुत्कफौ ।
समौ पित्तकफावेवं स्युस्त्रयस्तुल्यवृद्धितः ॥ २ ॥
वृद्धिंगते मरुत्पित्ते पवनस्त्वधिकस्तयोः ।
अन्यस्मिन् पित्तमधिकं वृद्धयोर्वातपित्तयोः ॥ ३ ॥
वृद्धौ समीरणकफावेतयोरधिकोऽनिलः ।
अधिके तु तयोरेव भवेद्भेदान्तरं कफे ॥ ४ ॥
वृद्धौ पित्तकफौ तद्वदेतयोः पित्तमुत्कटम् ।
वृद्धयोरेतयोरेव बलासस्त्वधिकः पुनः ॥ ५ ॥
इत्येकाधिकसंसर्गदोषभेदा भवन्ति षट् ।
एवमेतैः समुद्दिष्टा भेदास्तुल्याधिकैर्नव ॥ ६ ॥
पूर्वैः सह भवन्त्येवं विकल्पा द्वौ तथा दश ।
सन्निपातेषु जायन्ते दोषभेदास्त्रयोदश ।
एकस्तत्र विकल्पः स्याद्वृद्धिप्राप्तैः समैस्त्रिभिः ।
वृद्धिंगतेषु सर्वेषु तेषु वृद्धतमो मरुत् ॥ ७ ॥
पुनः पित्तं पुनः श्लेष्मेत्येकाधिकतमैस्त्रयः ।
प्रवृद्धे वातपित्ते च भेदोऽन्यस्मिन् बलासतः ॥ ८ ॥
मरुत्कफौ तथा पित्ताद्वातः पित्तकफादपि ।
आधिक्येन द्वयोरेवं दोषभेदास्त्रयो मताः ॥ ९ ॥
हीनमध्याधिकैर्दोषैर्विकल्पाः संभवन्ति षट् ।
अन्योन्यापेक्षया तेषां हीनवृद्धः समीरणः ॥ १० ॥
मध्यवृद्धं तथा पित्तं श्लेष्मा तत्राधिको मतः ।
मध्यः समीरणोऽन्यस्मिन् हीनं पित्तं कफोऽधिकः ॥ ११ ॥
मध्यं पित्तं मरुत्तीव्रः स्वल्पः श्लेष्माऽपरत्र तु ।
मध्यः श्लेष्मोल्बणं पित्तं हीनो वातस्तथा स्थितः ॥ १२ ॥
मध्यः श्लेष्मोल्बणो वायुः पित्तं हीनं तथा स्थितम् ॥ १३ ॥
मध्यवातोऽधिकं पित्तं हीनवृद्धस्तथा कफः ।
एवमेते भवन्त्यत्र सन्निपातास्त्रयोदश ॥ १४ ॥
पूर्वैर्द्वादशभिः सार्धं विकल्पाः पञ्चविंशतिः ।
यथा वृद्धैस्तथा क्षीणैर्दोषैः स्युः पञ्चविंशतिः ॥ १५ ॥
क्षीणस्वस्थाधिकैरेभिर्दोषभेदा भवन्ति षट् ।
क्षीणः समीरणस्तत्र स्वस्थं पित्तं कफोऽधिकः ॥ १६ ॥
क्षीणो वायुः कफः स्वस्थः पित्तमत्राधिकं तथा ।
क्षीणं पित्तं मरुत् स्वस्थो भेदोऽन्यस्मिन् बली कफः ॥१७॥
क्षीणं पित्तं कफः स्वस्थः प्रवृद्धस्त्वधिको मरुत् ।
श्लेष्मा क्षीणोऽनिलः स्वस्थः पित्तमत्र तथोल्बणम् ॥ १८ ॥

---

१ 'मन्दोऽन्यत्र तु मारुतः' इति पा० । २ 'क्षयादप्येवमेवैते भवेयुः पञ्चविंशतिः' इति पा० ।

कफः क्षीणः समं पित्तं प्रवृद्धस्तु समीरणः ।
क्षीणस्वस्थाधिकैरेवं मेदाः षट् परिकीर्तिताः ॥ १९ ॥
क्षयंगते मरुत्पित्ते प्राप्तो वृद्धिं तथा कफः ।
क्षीणौ समीरणकफौ तथा स्यात् पित्तमुल्कटम् ॥ २० ॥
क्षीणौ पित्तकफौ तद्वन्नभस्वान् स्यात्तु वृद्धिमान् ।
द्वौ क्षीणावेकवृद्धश्चैवं मेदत्रयमिति स्मृतम् ॥ २१ ॥
वातपित्ते गते वृद्धिं संप्राप्तश्च क्षयं कफः ।
वृद्धौ वातकफौ तद्वत् पित्तं चाथ क्षयं गतम् ॥ २२ ॥
तद्वत् पित्तकफौ वृद्धौ प्रक्षीणः पवनः पुनः ।
एकक्षीणद्विवृद्धैश्च त्रयो भेदा भवन्त्यमी ॥ २३ ॥
क्षीणमध्याधिकैस्त्वेवं मेदा द्वादश कीर्तिताः ।
प्रकृतिस्थैः समीराद्यैस्तथैकः परिकीर्तितः ॥ २४ ॥
त्रिषष्टिर्दोषभेदानामिति सम्यक्प्रकल्पिता ॥ इति ।

एतेषां वातपित्तश्लेष्मणां वृद्धक्षीणानां लक्षणान्युच्यन्ते— तद्यथा—वातवृद्धौ वाग्बाहुल्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमूष्मकामिता निद्रानाशोऽल्पबलत्वं गाढवर्चस्त्वं चेति, पित्तवृद्धौ पीतावभासता सन्तापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्बल्यं पीतविण्मूत्रनेत्रत्वं चेति, श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्यं गौरवमवसादस्तन्द्रा निद्रा सन्ध्यस्थिविश्लेषश्च । वातक्षये मन्दचेष्टता अल्पवाक्त्वमप्रहर्षो मूढसंज्ञता च, पित्तक्षये मन्दोष्माग्निता निष्प्रभता च, श्लेष्मक्षये रूक्षताऽन्तर्दाह आमाशयेतरश्लेष्माशयशिरसां शून्यता सन्धिशैथिल्यं तृष्णा दौर्बल्यं च । एवमेतैर्लक्षणैः प्रकृतिसमसमवेतानां वृद्धानां क्षीणानां च वातपित्तश्लेष्मणामवगमो मिश्रैश्च लक्षणैः संसर्गसन्निपातावगम इति । क्षीणमध्याधिकद्व्येकक्षीणवृद्धानां केषाञ्चिल्लक्षणानि लिख्यन्ते । तद्यथा—

एको वृद्धः समश्चैकः क्षीणस्त्वेको यदा भवेत् ।
क्षीण एकः प्रवृद्धौ द्वौ क्षीणौ द्वौ वृद्धिमांस्तथा ॥ २५ ॥
एक एव स्थितस्तत्र व्यक्तरूपेण देहिनि ।
प्रवृद्धो मारुतः पित्तं प्रकृतिस्थं कफक्षये ॥ २६ ॥
गृहीत्वा स्थानतो यत्र यत्राङ्गेषु विसर्पति ।
तत्र तत्रास्थिरो दाहः श्रमः खेदो बलक्षयः ॥ २७ ॥
क्षीणे पित्ते यदा वायुर्वृद्धोऽवस्थः समं कफम् ।
विकर्षति तदा शूलं शैत्यमत्यन्तगौरवम् ॥ २८ ॥
वृद्धं कफक्षये पित्तं प्रकृतिस्थं प्रभञ्जनम् ।
यदा रुणद्ध्यस्य तदा दाहः शूलः प्रजायते ॥ २९ ॥
वृद्धं वातक्षये पित्तं प्रकृतिस्थं यदा कफम् ।
निरुणद्धि तदा तस्य स्युस्तन्द्रागौरवज्वराः ॥ ३० ॥
श्लेष्मा वृद्धो यदा वायुः समः पित्तपरिक्षये ।
निरुणद्धि तदा तस्य गौरवं शीतकज्वरम् ॥ ३१ ॥
कफोऽनिलक्षये पित्तं प्रकृतिस्थं यदा बली ।
निरुणद्धि तदा तस्य मृद्वग्नित्वं शिरोव्यथा ॥ ३२ ॥
प्रलापो गुरुता तन्द्रा निद्रा स्यात्तु सुहृद्रुजा ।
ष्ठीवनं पित्तकफयोर्नखादीनां च पीतता ॥ ३३ ॥
कफः पित्तेन संयुक्तो बलहानिं भृशं क्षयम् ।
करोत्यपाकमरुचिं गौरवं गात्रसादताम् ॥ ३४ ॥
मारुतेन युतः श्लेष्मा हीनपित्तः समाचरन् ।
करोति मृदुतां वह्नेर्भक्ते नात्राभिलाषिताम् ॥ ३५ ॥
वेपनं गौरवं स्तम्भशैत्यतोदांस्तथाऽचिरात् ।
शुक्लत्वं च नखादीनां पारुष्यं वपुषोऽपि च ॥ ३६ ॥
कुपितौ पित्तपवनौ परिक्षीणकफे यदा ।
उद्वेष्टनं श्रमं तोदं कुरुते स्फोटनं तथा ॥ ३७ ॥
तथाऽङ्गमर्ददाहौ च चोषं धूमनधूपने ।
श्लेष्माऽपिधत्ते स्रोतांसि यदा पित्तानिलक्षये ॥ ३८ ॥
चेष्टानाशं तदा कुर्यान्मूर्च्छां वाग्भङ्गमेव च ।
देहौजः स्रंसयत् पित्तं वातश्लेष्मक्षये तृषाम् ॥ ३९ ॥
कुर्यादिन्द्रियदौर्बल्यं मूर्च्छां ग्लानिं क्रियाक्षयम् ।
मर्माणि पीडयन् वायुः श्लेष्मपित्तपरिक्षये ॥ ४० ॥
संज्ञाप्रणाशं कुरुते प्रकम्पं विदधाति च ।
दर्शयन्ति प्रवृद्धाः स्वं लिङ्गं दोषा हि केवलम् ॥ ४१ ॥
क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म कुर्वते ।
समं रक्षञ्जयन् वृद्धं क्षीणं दोषं च वर्धयन् ॥ ४२ ॥
विधिनाऽनेन विषमं सन्निपातं जयेद्भिषक् । इति ॥१०॥११॥

**मिश्रा धातुमलैर्दोषा यान्त्यसंख्येयतां पुनः ॥ १२ ॥**
**तस्मात् प्रसङ्गं संयम्य दोषभेदविकल्पनैः ॥**
**रोगं विदित्वोपचरेद्रसभेदैर्यथेरितैः ॥ १३ ॥**
**भिषक् कर्ताऽथ करणं रसा दोषास्तु कारणम् ॥**
**कार्यमारोग्यमेवैकमनारोग्यमतोऽन्यथा ॥ १४ ॥**

धातुभिरसृगादिभिर्मिश्रा मलैश्चासंख्येयतां यान्ति । तत्र वातस्य धातुमलमिश्रस्य लक्षणं वातव्याधिनिदाने प्रोक्तम् । पित्तश्लेष्मणोस्तु **वृद्धवाग्भटः** प्राह—

पित्तं त्वचि स्थितं कुर्याद्विस्फोटकमसूरिकाः ।
रक्ते विसर्पं दाहं च मांसे मांसावकोथनम् ॥ १ ॥
सदाहान् मेदसि ग्रन्थीन् स्वेदतृड्भ्रमनं भृशम् ।
अस्थिदाहं भृशं मज्ज्ञि हारिद्रनखनेत्रताम् ॥ २ ॥
पूतिपीतावभासं च शुक्रं शुक्रसमाश्रितम् ।
सिरागतं क्रोधनतां प्रलापं स्नायुगं तृषाम् ॥ ३ ॥
कोष्ठगं मदतृड्दाहान् व्यापिनोऽन्यांश्च यक्ष्मणः ।
श्लेष्मा त्वचि स्थितः कुर्यात् स्तम्भं श्वेतावभासताम् ॥ ४ ॥
पाण्ड्वामयं शोणितगो मांसस्थश्चार्बुदापचीः ।

१ 'द्विक्षीणैरेकवृद्धैश्च' इति पा० । २ 'वाक्पारुष्यं' इति पा० । ३ 'स्थितो यत्र तत्र यस्त्वाङ्गनीमि तद्' इति पा० । ४ 'श्रमो भेदो बलक्षयः' इति पा० । ५ 'वृद्धः कर्षेत्समं कफम् । विदधाति' इति पा० ।

१ 'शुक्रश्चरन् हीनबलस्वरम्' इति पा० ।

आर्द्रचर्मावनद्धाभगात्रतां त्वचि गौरवम् ॥ ५ ॥
मेदोगः स्थूलतां मेहमस्त्रां स्तब्धत्वमस्थिगः ।
मज्जगः शुक्रनेत्रत्वं शुक्रस्थः शुक्रसंचयम् ॥ ६ ॥
विबन्धं गौरवं चाति सिरास्थः स्तब्धगात्रताम् ।
स्नायुगः सन्धिशूलत्वं कोष्ठगो जठरोन्नतिम् ॥ ७ ॥
अरोचकाविपाकौ च तांस्तांश्च कफजान् गदान् ।
विण्मूत्रयोः साश्रययोस्तत्र तत्रोपदिश्यते ॥ ८ ॥
उपतापोपघातौ च स्वाश्रयेन्द्रियगैर्मलैः ॥इति॥१२-१४॥

**अध्यायानां तु षट्षष्ट्या ग्रथितार्थपदक्रमम् ॥**
**एवमेतदशेषेण तन्त्रमुत्तरमृद्धिमत् ॥ १५ ॥**

१ अस्याग्रे 'राजमृगाङ्काभिधानेन बहवो रोगाः प्रदर्शिताः । अन्यैस्तु मुनिभिरग्निवेशभेडजातुकर्णपराशरहारीतक्षारपाणिनिमिकाङ्कायनगार्ग्यगालवप्रभृतिभिर्बहवो रोगाः कथिताः । तस्मात् प्रसङ्गं संयम्य परित्यज्य हितमेवाचरणीयम् ।' इत्यधिकं पठ्यते क्वचित्पुस्तके ।

**स्पष्टगूढार्थविज्ञानमगाढमन्दचेतसाम् ॥**
**यथाविधि यथाप्रश्नं भवतां परिकीर्तितम् ॥ १६ ॥**

**सहोत्तरं त्वेतदधीत्य सर्वं**
**ब्राह्मं विधानेन यथोदितेन ॥**
**न हीयतेऽर्थान्मनसोऽभ्युपेता-**
**देतद्वचो ब्राह्ममतीव सत्यम् ॥ १७ ॥**

**इति सुश्रुतसंहितायामुत्तरतन्त्रे दोषभेदविकल्पो नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥**

निबन्धान् बहुशो वीक्ष्य वैद्यः श्रीभरतात्मजः ।
उत्तरस्थानमकरोत् सुस्पष्टं डल्हणो भिषक् ॥१५-१७॥

इति श्रीडल्ह(ह्ल)णविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

**इति सौश्रुते आयुर्वेदशास्त्रे उत्तरस्थानं समाप्तम् ॥ १५-१७ ॥**

**समाप्तमिदं सुश्रुततन्त्रम् ॥**

सुश्रुतसंहिता।

निबन्धसंग्रहाख्यव्याख्यया,
निदानस्थानस्य
न्यायचन्द्रिकाटीकया च सहिता।

सूत्र-निदान-शारीर-चिकित्सा-
कल्पस्थानोत्तरतन्त्रात्मिका।



POST CARD

ADDRE




Sri

Ramesh chandra
Rakshit

5, Jagadis nath Roy Lane
Beadon St P.O.

Calcutta




# सुश्रुतसंहिता ।

निबन्धसंग्रहव्याख्यया, निदानस्थानस्य

न्यायचन्द्रिकाटीकया च सहिता ।

...दान-... ...आरम्भिका ।

सम । अनाविद्धम् अनाकु-
लम् । चे ष्टाप्रचारमिति चेष्टाप्रचार
आकुष

इति श्र न्धसंग्रहाख्यायां सुश्रुत-
यो ऽध्यायः ॥ ३ ॥

यः ।

अथातं ं व्याख्यास्यामः ॥१॥
यथ रैः ॥ २ ॥
आमाः यथाक्रमम् ॥
देयः सुखाम्बुना ॥ ३ ॥
चित्रवे विषाऽभया ॥
वातव्य धरणः स्मृतः ॥ ४ ॥

प्रथ माह—आमाशयेत्यादि ।
छर्दयित व सोत्क्लेशे पुरुषे बहुदोषे
बलवति कफस्थानत्वात् । यथाक्र-
ममिति परकालकर्तव्यताः सर्वैवा-
क्षिप्ताः ाककायशुद्धिसंसर्जनभोज-
नादयः रण इति षण्णां चित्रका-
दीनां ध षड्धरणो योगः । तत्र
धरणप्र पात्रैर्भवति । सुखाम्बुना
ईषदुष्ण थं सप्तदिनान्युपयुज्यन्ते ?
उच्यते- चाष्टादशनिष्पावैर्भवति,
तत्र ष यो नि
भवन्ति, निष्पावाः
सप्तमं पड्धरण
षड्धरण 'कटुका
इति के मन श
एव वात ाकादयः,
वातकां धिप्रशम
महाव्या ः ॥ १-

पक्वाश रेचनम
बस्तय लवणो

पक्व पक्वाशये
रेचनं बस्तयः
"शोधन ताः" (
इत्याया स्नेहलवण
दयः; आहार
लवणोत्र ाह—
द्विविधः र्मध्ये पि
स्नेहविरे भिर्वा,
वायोर्मे कषाय

तत्र मलावृतवायौ विदारीकल्कसिद्धः स्नेहयुक्तो व्यक्तोष्णक्षारश्च बस्तिः, श्लेष्मावृतवायौ व्यक्तक्षारोष्णो बस्तिः; (त्रिवृदादिद्रव्यैर्मूत्रविदारीकल्कसिद्धः) पित्तावृते पुनरक्षारबस्तिः शीतः; शेषं समम् ॥ ५ ॥

**कार्यो बस्तिगते चापि विधिर्बस्तिविशोधनः ॥**

बस्तिगतस्य वायोश्चिकित्सितमाह—कार्य इत्यादि । बस्तिविशोधनो विधिरिति अश्मरीचिकित्सितोक्तो मूत्राघाताद्युक्तश्च॥–

**श्रोत्रादिषु प्रकुपिते कार्यश्चानिलहा क्रमः ॥ ६ ॥**

श्रोत्रादिषु प्रकुपितवायोश्चिकित्सितमाह—श्रोत्रेत्यादि । आदिशब्दात्त्वग्घ्राणजिह्वानेत्राणीन्द्रियाणि गृह्यन्ते । अत्र क्रमः "स्नेहः स्वेदस्तथाऽभ्यङ्ग" इत्यादिको दोषदूष्यप्रत्यनीको यथायथं कार्यः, स चेन्द्रियसात्म्यमपेक्ष्य कर्तव्यः; तेन स्नेहशब्दसामान्येऽपि नेत्रयोः क्षीरसर्पिस्तर्पणं, तैलतर्पणं पुनः कर्णादिष्विति ॥ ६ ॥

**स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि च ॥**
**त्वङ्मांसासृक्सिराप्राप्ते कुर्यात् चासृग्विमोक्षणम् ७**

धातूपधातुगस्य वायोश्चिकित्सितमाह—स्नेहेत्यादि । स्नेहाभ्यङ्गोपनाहांश्चेत्यत्र चकारेण त्वग्गतवायौ द्रव्यमप्यन्नपानमनुक्तं समुच्चीयते । त्वगत्र रसः, सिराः पुनरसृज उपधातुः, प्राप्ते गते इत्यर्थः । रक्तगते वायौ रक्तस्रावो रक्ताधिष्ठानवातनिवृत्त्यर्थः । यदा द्रव्यप्रभावविशेषेण खर्जूरमातुलुङ्गसौवर्चलादिस्नेहाभ्यङ्गादिभिर्न प्रशममेति तदा नियमेन रक्तावरणं परिज्ञाय रक्तमोक्षणं कर्तव्यं, न पुनरन्यथा । मेदोगते पुनरिहानिले चिकित्सा नोपदिष्टा, तस्य स्नेहाविषयत्वेन वातव्याधिकर्मणाम-
वरणप्रसङ्गेन मेदोगतमनिलं

र्दनानि च ॥
द्रायावतन्द्रितः ॥ ८ ॥
वायोश्चिकित्सामाह—स्नेहे-
श्च । अतन्द्रितः अनलसः;
दर्शयति ॥ ८ ॥

ामन्थेन दारिते ॥
चूषयेत्पवनं बली ॥ ९ ॥
ोर्दिशन्नाह–निरुद्धे इत्यादि ।
पाणिमन्थेन आराशस्त्रेण
निधाय, मुखमारुता चूषणेन
बलयुक्तः । 'बाह्याभ्यन्तर-
तत्र बाह्यस्नेहः परिषेकावगा-
ाभ्यन्तरस्तु पानबस्त्यादिः;
॥ ९ ॥

न पठ्यते । २ 'दारयेत्'

